॥ श्रीगणेशायनमः ॥ बीजांकुरद्रुमसमेश्वरसूत्रविश्वान्मो[illegible] यूयमभेदबुध्या ॥ दास्याय बीजशतगर्भफलाभमेकं गोपालमेत्र कलया[illegible] जगान्नदा[illegible] ॥ परसृष्टवर्पुर्युजेव यत्रेशता परधिया निजमायया वा ॥ सृ[illegible] संगचितावपीष्टा तस्मिन्ममास्तु रतिरात्मनि लक्ष्मणार्ये॥२॥प्रणम्य नारायणतीर्थवर्यान् धीरेशमिश्रांश्च हमीरपु र्यान् ॥ प्राचां गुरूणां हृदयानुरूपं कुर्मः सभापर्वणि भावदी[illegible] ॥तत्र पूर्वस्मिन्पर्वण्यंते शार्ङ्गकाः ज्ञानबलादेव वन्हिमुखाद्विमुक्ता इत्युक्तं तच्च ज्ञानं भगवद्भक्ति बलादेव लभ्यत इति प्रतिपादनायेदं सभापर्व आरभ्यते । तत्र भक्तावपि रुच्युत्पादनार्थं भक्तिबलेनैव पांडवानां दिव्यसभालाभाद्यैश्वर्यं द्वेषेणापि भगवद्ध्यानं भगवत्सायुज्यमापकमिति शिशुपालनि र्याणेन ध्यानमाहात्म्यं निरपराधिष्वपि पांडवेष्वभक्तानां दुर्योधनादीनां द्वेषोत्पत्त्याऽभक्तदोषाः द्यूते द्रौपदीत्राणेन भगवतो भक्तपक्षपातित्वं समर्थानामपि पांडवानां सापराधेष्वपि

॥ श्रीवेदव्यासायनमः ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींचैवततोजयमुदीरयेत् १ ॥ वैशंपायनउवाच ॥ ततोऽब्रवीन्मयःपार्थं वासुदेवस्यसन्निधौ ॥ प्रांजलिःश्लक्ष्णयावाचापूजयित्वापुनःपुनः २ ॥ मयउवाच ॥ अस्मात्कृष्णात्सुसंरब्धात्पावकाच्चदिधक्षतः ॥ त्वयात्रातोऽस्मिकौंतेयब्रूहिकिंकरवाणिते ३ ॥ अर्जुनउवाच ॥ कृतमेवत्वयासर्वंस्वस्तिगच्छमहासुर ॥ प्रीतिमान्भवमेनित्यंप्रीतिमंतोवयंचते ४ ॥ मयउवाच ॥ युक्तमेतत्त्वयिविभोयथाऽऽत्थपुरुषर्षभ ॥ प्रीतिपूर्वमहंकिंचित्कर्तुमिच्छामिभारत ५ अहंहिविश्वकर्माविदानवानांमहाकविः ॥ सोऽहंवैत्वत्कृतेकर्तुंकिंचिदिच्छामि पांडव ६ ॥ अर्जुनउवाच ॥ प्राणकृच्छ्राद्विमुक्तंत्वमात्मानंमन्यसेमया ॥ एवंगतेनशक्ष्यामिकिंचित्कारयितुंत्वया ७ नचापितवसंकल्पंमोघमिच्छामिदानव ॥ कृष्णस्यक्रियतांकिंचित्तथाप्रतिकृतंमयि ८ चोदितोवासुदेवस्तुमयेनभरतर्षभ ॥ मुहूर्तमिवसंदध्यौकिमयंचोद्यतामिति ९ ततोविचिंत्यमनसालोकनाथःप्रजापतिः ॥ चोदयामासतंकृष्णःसभाविक्रियतामिति १० यदित्वंकर्तुकामोऽसिप्रियंशिल्पवतांवर ॥ धर्मराजस्यदैतेययादृशीमिहमन्यसे ११ यांकृतांनानुकुर्वंतिमानवाःप्रेक्ष्यविष्ठिताः ॥ मनुष्यलोकेसकलेतादृशींकुरुवैसभाम् १२ यत्रदिव्यानभिप्रायान्पश्येमहिकृतांस्त्वया ॥ आसुरान्मानुषांश्चैव सभांतांकुरुवैमय १३ ॥ वैशंपायनउवाच ॥ प्रतिगृह्यतुतद्वाक्यंसंप्रहृष्टोमयस्तदा ॥ विमानप्रतिमांचक्रेपांडवस्यशुभांसभाम् १४ ततःकृष्णश्चपार्थश्चधर्मराजेयुधिष्ठिरे ॥ सर्वमेतत्समावेद्यदर्शयामासतुर्मयम् १५

दुर्योधनादिष्वप्रकोपेन भक्तानां तितिक्षा चेति भक्तगुणाश्च दर्शिताः। तत्रोपकर्त्रे प्रत्युपकारोऽवश्यं कर्त्तव्य इत्येतद्दर्शयितुं पांडवार्थे मयेन वन्हितो मोचितेनाऽभूतपूर्वा सभा कृतेति तावद्वर्ण्यते । ततोऽब्रवीन्मयः पार्थमित्यादिना २ खांडवदाहे कृष्णाच्चक्रेण जिघांसतः ३।४।५ विश्वं कर्म कृतिसाध्यं यस्य स विश्वकर्मा महाकविः शिल्पपंडितः ६ एवंगते प्रत्युपकारार्थं प्राप्ते त्वयिसति ७।८ संदध्यौ विचारितवान् ९।१० हेदैतेय हेदानव ११।१२ आसुरान्मानुषानित्युपलक्षणं देवगंधर्वादीनामप्यभिप्रायान् लेपचित्रे लेख्यचित्रे च चतुर्दशभुवनांतरस्थतत्तज्जातीयस्वाभाविकनानाविधलीलाप्रदर्शनेन मनोवृत्तीः पश्येम । यद्दर्शनेन ब्रह्मांडांतरवर्ति सर्वं वस्तुजातं दृष्टप्रायं भवतीत्यर्थः१३ विमानप्रतिमेति नाम विमानसदृशीं वा १४।१५

१६ पूर्वदेवो वृषपर्वा दानवस्तस्य चरितं बिंदुसरसि यज्ञकरणादि १७ आश्वस्य स्वस्थचित्तो भूत्वा प्रचक्रमे आरब्धवान् १८। १९। २० किष्कुर्हस्तः। सर्वतश्चतुर्दिक्षु २१ ॥ इति सभापर्वणि नैलकंठीये भारतभावदीपे प्रथमोऽध्यायः ॥ १ ॥ ॥ उषित्वेति १। २। ३। ४ अर्थ्यं अर्थादनपेतं तथ्यं सत्यं । लघु स्वल्पाक्षरं । युक्तं युक्तिमत् । अत एवानुत्तरं पूर्वपक्षवदप्रत्याख्येयं । तथ्यं पथ्यं हितं वाक्यं गुरु स्वल्पाक्षरं मृदु । इति पाठे पथ्यं सन्मार्गादनपेतं गुरु बह्वर्थं ५ स्वजनगामीनि मात्रादिषु स्वबांधवेषु कुशलसंदेशरूपाणि ६ भामिनीं दीप्तिमतीं भाविनीमिति पाठे सद्भावयुक्तां ७ ववंदे चे ति। पुरुषसत्तमः पुरुषेष्वन्नमयप्राणमयमनोमयविज्ञानमयानंदमयेषु पंचस्वाद्यो व्यवहारतः सत्यः उत्तरोत्तरेषां तु पूर्वपूर्वाधिष्ठानत्वात्तत्तदपेक्षया सत्यतरत्वं पुच्छं ब्रह्म तु षष्ठं तेषामधिष्ठानभूतं मोक्षेऽप्यबाध्यत्वात्सत्तमः । ननु कथं सत्तमे 'अस्थूलमनणु निष्कलं निष्क्रियं शांतं' इत्यादिश्रुतेः

तस्मैयुधिष्ठिरःपूजांयथार्हमकरोत्तदा ॥ सतुतांप्रतिजग्राहमयःसत्कृत्यभारत १६ सपूर्वदेवचरितंतदातत्रविशांपते ॥ कथयामासदैतेयःपांडुपुत्रेषुभारत १७ सकालंकंचिदाश्वस्यविश्वकर्माविचिंत्यतु ॥ सभांप्रचक्रमेकर्तुंपांडवानांमहात्मनाम् १८ अभिप्रायेणपार्थानांकृष्णस्यचमहात्मनः ॥ पुण्येऽहनिमहातेजाःकृतकौतुकमंगलः १९ तर्पयित्वाद्विजश्रेष्ठान्पायसेनसहस्रशः ॥ धनंबहुविधंदत्वातेभ्यएवचवीर्यवान् २० सर्वर्तुगुणसंपन्नांदिव्यरूपांमनोरमाम् ॥ दशकिष्कुसहस्रांतांमापयामाससर्वतः २१ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिसभाक्रियापर्वणिसभास्थाननिर्णयेप्रथमोऽध्यायः ॥ १ ॥ ॥ वैशंपायनउवाच ॥ उषित्वाखांडवप्रस्थेसुखवासंजनार्दनः ॥ पार्थैःप्रीतिसमायुक्तैःपूजनार्होऽभिपूजितः १ गमनायमतिंचक्रेपितुर्दर्शनलालसः ॥ धर्मराजमथामंत्र्यपृथांचपृथुलोचनः २ ववंदेचरणौमूर्ध्नाजगद्वंद्यःपितृष्वसुः ॥ सतयामूर्ध्न्युपाघ्रातःपरिष्वक्तश्चकेशवः ३ ददर्शानंतरंकृष्णोभगिनींस्वांमहायशाः ॥ तामुपेत्यहृषीकेशःप्रीत्याबाष्पसमन्वितः ४ अर्थ्यंतथ्यंहितंवाक्यंलघुयुक्तमनुत्तरम् ॥ उवाचभगवान्भद्रांसुभद्रांभद्रभाषिणीम् ५ तयास्वजनगामीनिश्रावितोवचनानिसः ॥ संपूजितश्चाप्यसकृत्शिरसाचाभिवादितः ६ तामनुज्ञायवार्ष्णेयःप्रतिनंद्यचभामिनीम् ॥ ददर्शानंतरंकृष्णांधौम्यंचापिजनार्दनः ७ ववंदेचयथान्यायंधौम्यंपुरुषसत्तमः ॥ द्रौपदींसांत्वयित्वाचआमंत्र्यचजनार्दनः ८

सर्वविशेषशून्ये नामरूपवंदनादिक्रियायोगो घटेतेति चेत् अत्रब्रूमः 'कौलिके प्रतिमाद्वारा चैत्रे भोग इवेशता। असंगे भूम्नि जीवौघकल्पितोपाधियोगतः'। अनादौ संसारे जीवेश्वरविभागस्याप्यनादित्वाद्रज्ज्वां भुजंग इव जीवौघस्याविद्यया शुद्धेऽपि चिदात्मनि ईशसूत्रादिकं कल्पितमिदमेव ब्रह्मणः शरीरमिति भावयति तद्वत् । यथा च प्रतिमाद्वारा चैत्रस्य [illegible] भवत्येवं शुद्धायामपि चिति जीवौघकल्पितोपाधिद्वारा ईशनादिकं भवति । यथा कौलिकः प्रतिमां कृत्वेदमेव चैत्रस्य चाकल्पितं शरीरांतरमस्तीति प्रतिमानिमित्तकोऽपि भो[illegible]च्छेदेनैवजायते न प्रतिमावच्छेदेन। चितेस्तु तदभावाद्विभुत्वाच्च परकल्पितोपाध्यवच्छेदेनैव नियंतृत्वादिकं भवति । तत्राकर्मजत्वाच्चितौ न संसृज्यते यथा जीवे भोग[illegible] पतसर्पगतं भीषणत्वं रज्ज्वां । एवं च व्यवहारतः संसारस्याद्यंतशून्यत्वात्तत्कारणी

वक्तव्यं किमुत ईशादिकारणीभूतायाः कृष्णमूर्तेः। तथा हि बीजांकुरतरूपमेष्वीशसूत्रविराट्सुअ मंतबीजगर्भफलोपमः श्रीकृष्णोऽनंतकोटिब्रह्माण्डनायक इति प्रसिद्धं अयमेव श्रीमच्छं
करभगवत्पादैर्वेदांतसारे वनवृक्षदृष्टांतेन समष्टिव्यष्टिरूपेण स्थूलसूक्ष्मकारणानि प्रतिपाद्य समष्टि वनदृष्टांतेन प्रतिपादितः। 'शास्त्रेऽप्यंतस्तद्धर्मोपदेशात्' इत्यत्र 'य एषोंऽतरादित्ये
हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्राणनखात् सर्व एव सुवर्णस्तस्य यथाकप्यासं पुंडरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदेति ह वै सर्वेभ्यः
पाप्मभ्यो य एवं वेद' इति नामरूपवंतमादित्यमंडलांतर्वर्तिनं नारायणमुदाहृत्य तस्य ऋक् च साम च गेष्णाविति नाराणस्य कृत्स्नप्रपंचात्मके ऋक्सामे अंगुलिपर्वणी इत्युक्तं। ततो
ऽनंतकोटिब्रह्मांडाश्रयत्वं सूर्याकृतेर्ब्रह्मणो युज्यते। अयमेव नंदनंदनो महामायावी सुप्तिप्रलयकैवल्येषु कर्मोपरमेसाति जगदिंद्रजालं स्वमूर्त्यासह तिरोधायापास्तसमस्तविशेषं

भ्रातॄनभ्यगमद्विद्वान्पार्थेनसहितोबली ॥ भ्रातृभिःपंचभिःकृष्णोवृतःशक्रइवामरैः ९ यात्राकालस्ययोग्यानिकर्माणिगरुडध्वजः ॥ कर्तुकामःशुचिर्भूत्वा
स्नातवान्समलंकृतः १० अर्चयामासदेवांश्चद्विजांश्चयदुपुंगवः ॥ माल्यजाप्यनमस्कारैर्गंधैरुच्चावचैरपि ११ सकृत्वासर्वकार्याणिप्रतस्थेतस्थुषांवरः ॥
उपेत्यसयदुश्रेष्ठोबाह्यकक्षाद्विनिर्गतः १२ स्वस्तिवाच्यार्हतोविप्रान्दधिपात्रफलाक्षतैः ॥ वसुप्रदायचततःप्रदक्षिणमथाकरोत् १३ कांचनंरथमास्थायता
र्क्ष्यकेतनमाशुगम् ॥ गदाचक्रासिशार्ङ्गाद्यैरायुधैरावृतंशुभम् १४ तिथावप्यथनक्षत्रेमुहूर्तेचगुणान्विते ॥ प्रययौपुंडरीकाक्षःशैब्यसुग्रीववाहनः १५ अन्वा
रुरोहचाप्येनंप्रेम्णाराजायुधिष्ठिरः ॥ अपास्यचास्ययंतारंदारुकंयंतृसत्तमम् १६ अभीषून्संप्रजग्राहस्वयंकुरुपतिस्तदा ॥ उपारुह्यार्जुनश्चापिचामर
व्यजनंसितम् १७ रुक्मदंडंबृहद्द्वाहुर्विदुधावप्रदक्षिणम् ॥ तथैवभीमसेनोऽपियमाभ्यांसहितोबली १८ पृष्ठतोऽनुययौकृष्णमृत्विक्पौरजनैःसह ॥ सत
थाभ्रातृभिःसर्वैःकेशवःपरवीरहा १९ अन्वीयमानःशुशुभेशिष्यैरिवगुरुःप्रियैः ॥ पार्थमामंत्र्यगोविंदःपरिष्वज्यसुपीडितम् २० युधिष्ठिरंपूजयित्वाभीम
सेनंयमौतथा ॥ परिष्वक्तोभृशंतैस्तुयमाभ्यामभिवादितः २१ योजनार्धमथोगत्वाकृष्णःपरपुरंजयः ॥ युधिष्ठिरंसमामंत्र्यानिवर्तस्वेतिभारत २२ त
तोऽभिवाद्यगोविंदःपादौजग्राहधर्मवित् ॥ उत्थाप्यधर्मराजस्तुमूर्ध्न्युपाघ्रायकेशवम् २३ पांडवोयादवश्रेष्ठंकृष्णंकमललोचनम् ॥ गम्यतामित्यनुज्ञाप्य
धर्मराजोयुधिष्ठिरः २४

ब्रह्मात्मानं प्रापयति कर्मशेषसत्त्वेपुनरुद्भावयति च। ततश्चास्य स्वाविद्याभावादसंगत्वं पराविद्याकल्पितोपाधिसंबंधात्प्रतिमाया भोजकत्ववन्नियंतृत्वमविद्यायाश्चाद्यंतशून्यत्वात्त
न्नित्यत्वं चेतिसिद्धं। ततश्चासंगत्वाद्युक्तमस्य पुरुषसत्तमत्वं जनगमयितृत्वरूपजनार्दनत्वेन नियंतृत्वं नियंतृत्वादेवच 'उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्' इति वक्ष्यमाणरीत्या
जनशिक्षार्थं धौम्यवंदनेन वैदिकमर्यादापरिपालकत्वं द्रौपदीसांत्वनेन च सुहृदनुग्राहकत्वं चेत्यादि सर्वं समंजसं। अयमेवार्थो मंगलश्लोकाभ्यामस्माभिः संगृहीतो न विस्मर्तव्यः
८ भ्रातॄन् पितृष्वसुः पुत्रान् ९। १०। ११ तस्थुषां स्थितिमतां वरः सनातन इत्यर्थः १२। १३। १४। १५। १६ अभीषून् रथाश्वरश्मीन् १७। १८। १९ सुपीडितं गाढं यथा
भवति तथा परिष्वज्य २०। २१। २२। २३। २४

संविदं पुनरेष्यामीति निश्चयं कृत्वा २५ लोचनैरिति सर्वेंद्रियाग्राह्यमपि परमात्मानं प्रथमं प्रतिमादिषु संचिंत्य । मनोभिरिति पश्चात्प्रतिमां त्यक्त्वा मनसैव चिंतयेदित्युक्तं २६ २७ मनसो लये शौरिर्मानसमूर्तिरूपोंऽतर्दधे । अत एव ते अकामा निर्विकल्पसमाधिस्थाः । 'यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' इति श्रुतेः । यतो गोविंदे निर्विकल्पे ब्रह्मणि गतं लीनं मानसं येषां ते तथाभूताः २८ निवृत्त्येति समाधिसुखानुभवानंतरं व्युत्थानं ध्वनितं २९ स गत्वेति पाठे गत्वा शीघ्रगमनशीलः । गमेरन्येभ्योऽपि दृश्यत इति क्वनिप् । अनुदात्तोपदेशेत्यनुनासिकलोपे ह्रस्वस्येति तुगागमः ३० । ३१ । ३२ । ३३ । ३४ । ३५ कल्पयामास एवमेवं करिष्यामीति

ततस्तैःसंविदंकृत्वायथावन्मधुसूदनः ॥ निवर्त्यचतथाकृच्छ्रात्पांडवान्सपदानुगान् २५ स्वांपुरींप्रययौहृष्टोयथाशक्रोऽमरावतीम् ॥ लोचनैरनुजग्मुस्तेतमादृष्टिपथात्तदा २६ मनोभिरनुजग्मुस्तेकृष्णंप्रीतिसमन्वयात् ॥ अतृप्तमनसामेवतेषांकेशवदर्शने २७ क्षिप्रमंतर्दधेशौरिश्चक्षुषांप्रियदर्शनः ॥ अकामाएवपार्थास्तेगोविंदगतमानसाः २८ निवृत्त्योपययुस्तूर्णंस्वंपुरंपुरुषर्षभाः ॥ स्यंदनेनाथकृष्णोऽपित्वरितंद्वारकामगात् २९ सात्वतेनचवीरेणपृष्ठतोयायिनातदा ॥ दारुकेणचसूतेनसहितोदेवकीसुतः ॥ सगतोद्वारकांविष्णुर्गरुत्मानिववेगवान् ३० ॥ वैशंपायनउवाच ॥ निवृत्यधर्मराजस्तुसहभ्रातृभिरच्युतः ॥ सुहृत्परिवृतोराजाप्रविवेशपुरोत्तमम् ३१ विसृज्यसुहृदःसर्वान्भ्रातॄन्पुत्रांश्चधर्मराट् ॥ मुमोदपुरुषव्याघ्रोद्रौपद्यासहितोनृप ३२ केशवोऽपिमुदायुक्तःप्रविवेशपुरोत्तमम् ॥ पूज्यमानोयदुश्रेष्ठैरुग्रसेनमुखैस्तथा ३३ आहुकंपितरंवृद्धंमातरंचयशस्विनीम् ॥ अभिवाद्यबलंचैवस्थितःकमललोचनः ३४ प्रद्युम्नसांबनिशठांश्चारुदेष्णंगदंतथा ॥ अनिरुद्धंचभानुंचपरिष्वज्यजनार्दनः ३५ सवृद्धैरभ्यनुज्ञातोरुक्मिण्याभवनंययौ ॥ मयोऽपिसमहाभागःसर्वरत्नविभूषिताम् ॥ विधिवत्कल्पयामाससभांधर्मसुतायवै ३६ ॥ इतिश्रीमहाभारतेसभापर्वणिसभाक्रियापर्वणिभगवद्यानेद्वितीयोऽध्यायः ॥ २ ॥
॥ वैशंपायनउवाच ॥ अथाब्रवीन्मयःपार्थमर्जुनंजयतांवरम् ॥ आपृच्छेत्वांगमिष्यामिपुनरेष्यामिचाप्यहम् १ उत्तरेणतुकैलासंमैनाकंपर्वतंप्रति ॥ यियक्षमाणेषुपुरादानवेषुमयाकृतम् २ चित्रंमणिमयंभांडंरम्यंबिंदुसरःप्रति ॥ सभायांसत्यसंधस्ययदासीद्वृषपर्वणः ३ आगमिष्यामितद्गृह्ययदितिष्ठतिभारत ॥ ततःसभांकरिष्यामिपांडवस्ययशस्विनीम् ४ मनःप्रल्हादिनींचित्रांसर्वरत्नविभूषिताम् ॥ अस्तिबिंदुसरस्युग्रागदाचकुरुनंदन ५ निहिताभावयाम्येवंराज्ञाहत्वारणेरिपून् ॥ सुवर्णबिंदुभिश्चित्रागुर्वीभारसहादृढा ६

मनसिविचारयामासेत्यर्थः ॥ ३६ ॥ ॥ इति सभा० नैलकंठीये भारतभा० द्वितीयोऽध्यायः ॥ २ ॥ ॥ ३ ॥ अथेति । १ । २ भांडमिव भांडं मूलधनं विचित्ररंगोपादानद्रव्यं कृतं हिंगुलादिवन्निर्मितं मणिमयं मणिप्रचुरं । येन कृत्रिममयूरादीनां चंद्रकलोचनादीनि क्रियंते ३ । ४ । ५ राज्ञा वृषपर्वणा निहिता सेदानीमप्यस्तीति भावयामीति योज्यं । ततोऽर्वाग्भीमसेनं विना तदुद्यमनयोग्यस्य पुंसोऽजातत्वादिति भावः । भारसहा गदांतरेण सन्निपाते सत्यविचाल्या यतो दृढा ६

सा वै शतसहस्रस्य लक्षस्य गदालक्षेण तुल्येत्यर्थः। स्वर्णभारसहस्रस्येति पाठे तु 'तुलां पलशतं प्राहुर्भारः स्याद्विंशतिस्तुला' इति शास्त्रोक्तमानेन गुर्वीत्यर्थः ७।८ प्रागुदीचीमैशानीं उत्तरेणोत्तरतः ९ हिरण्यशृंगो मैनाकावयवभूतो गिरिः १० ईश्वरेण प्रजापतिना ११।१२ दृष्टांततः शास्त्रसिद्धांततः १३ भूतपतिर्महादेवः सृष्ट्वा सृष्टिकर्त्ता। अत्रापि गत्वेतिवत् कनिप् १४।१५ शिष्टसंप्रतिपत्तये इति पाठेऽपि शिष्टान् धर्मानुष्ठाने प्रवर्त्तयितुमित्यर्थः १६।१७ स्फाटिकं स्फटिक इत्युपलक्षणं नानारत्नमयं सितसारंगपिशंगादिवर्णानां महामणीनां चूर्णानि यथापेक्षितं मिश्राणि शुकपारावतमयूरजपादाडिमजंबूफलवर्णाद्यवांतरमिश्ररंगरचनार्थं वृषपर्वयागे सभार्थं संपादितं तत्रोपयुक्तावशिष्टमानीतवानित्यर्थः १८ किंकरैः

सावैशतसहस्रस्यसंमिताशत्रुघातिनी ॥ अनुरूपाचभीमस्यगांडीवंभवतोयथा ७ वारुणश्चमहाशंखोदेवदत्तःसुघोषवान् ॥ सर्वमेतत्प्रदास्यामिभवतेनात्रसंशयः ८ इत्युक्त्वासोऽसुरःपार्थंप्रागुदीचींदिशंगतः ॥ अथोत्तरेणकैलासान्मैनाकंपर्वतंप्रति ९ हिरण्यशृंगःसुमहान्महामणिमयोगिरिः ॥ रम्यंबिंदुसरोनामयत्रराजाभगीरथः १० द्रष्टुंभागीरथींगंगामुवासबहुलाःसमाः ॥ यत्रेष्टंसर्वभूतानामीश्वरेणमहात्मना ११ आहृताःक्रतवोमुख्याःशतंभरतसत्तम ॥ यत्रयूपामणिमयाश्चैत्याश्चापिहिरण्मयाः १२ शोभार्थंविहितास्तत्रनतुदृष्टांततःकृताः ॥ यत्रेष्ट्वासगतःसिद्धिंसहस्राक्षःशचीपतिः १३ यत्रभूतपतिःसृष्ट्वासर्वाँल्लोकान्सनातनः ॥ उपास्यतेतिग्मतेजाःस्थितोभूतैःसहस्रशः १४ नरनारायणौब्रह्मायमःस्थाणुश्चपंचमः ॥ उपासतेयत्रसत्रंसहस्रयुगपर्यये १५ यत्रेष्टंवासुदेवेनसत्रैर्वर्षगणान्बहून् ॥ श्रद्दधानेनसततंधर्मसंप्रतिपत्तये १६ सुवर्णमालिनोयूपाश्चैत्याश्चाप्यतिभास्वरान् ॥ ददौयत्रसहस्राणिप्रयुतानिचकेशवः १७ तत्रगत्वासजग्राहगदांशंखंचभारत ॥ स्फाटिकंचसभाद्रव्यंयदासीद्वृषपर्वणः १८ किंकरैःसहरक्षोभिर्यदरक्षन्महद्धनम् ॥ तदगृह्णान्मयस्तत्रगत्वासर्वंमहासुरः १९ तदाहृत्यचतांचक्रेसोऽसुरोऽप्रतिमांसभाम् ॥ विश्रुतांत्रिषुलोकेषुदिव्यांमणिमयींशुभाम् २० गदांचभीमसेनायप्रवरांप्रददौतदा ॥ देवदत्तंचार्जुनायशंखप्रवरमुत्तमम् २१ यस्यशंखस्यनादेनभूतानिप्रचकंपिरे ॥ सभाचसामहाराजशातकुंभमयद्रुमा २२ दशकिष्कुसहस्राणिसमंतादायताऽभवत् ॥ यथावह्नेर्यथार्कस्यसोमस्यचयथासभा २३ भ्राजमानातथाऽत्यर्थंदधारपरमंवपुः ॥ अभिघ्नतीवप्रभयाप्रभामर्कस्यभास्वराम् २४ प्रबभौज्वलमानेवदिव्यादिव्येनवर्चसा ॥ नवमेघप्रतीकाशादिवमावृत्यविष्ठिता ॥ आयताविपुलारम्याविपाप्माविगतक्लमा २५ उत्तमद्रव्यसंपन्नारत्नप्राकारतोरणा ॥ बहुचित्राबहुधनासुकृताविश्वकर्मणा २६ नदाशार्हीसुधर्मावाब्रह्मणोवाऽथतादृशी ॥ सभारूपेणसंपन्नायांचक्रेमतिमान्मयः २७

रक्षसां जातिविशेषैः १९।२०।२१।२२।२३।२४ दिव्या दिव्येन वर्चसा अलौकिकेन च तेजसा नवमेघप्रतीकाशा नवभिर्मेघैरिव मेघैश्चित्तक्षेत्रे चमत्कारामृतवर्षिभिः शृंगारादिभीरसैस्तत्तच्चित्रेष्वभिनीय प्रदर्शितैः शोभमाना दिवमावृत्य व्याप्याभिभूयेति यावत्। विष्ठिता विशेषेण स्थिता। विपाप्मा पापघ्नी दिव्यतेजःसंपन्नत्वात्। विगतक्लमा श्रमच्छेदिनी। व्यूढास्त्वत्र विचित्रमणिवेदिकेति पाठं कल्पयंति २५ प्राकारः परिधिभित्तिः तोरणानि बहिर्द्वाराणि। प्राकारमालिनीत्यपि पाठः २६ दश अहिंसादीन् यमनियमानर्हंति ते दशार्हा भगवद्भक्ता बलिबाणप्रभृतयस्तेषामियं दाशार्ही। सात्वतीति पाठे सात्परमात्मा सोऽस्त्येषां ते सात्वंतस्तेषामियं सात्वतीति स एवार्थः २७

वहंतीति सभाया जंगमत्वमुक्तं अत एव विमानप्रतिमेति नाम तस्या युक्तं २८ २९ नलिनीं कमलवतीं सरसीं । वैदुर्यैरिंद्रनलिमणिमयैः पत्रैर्व्याप्तां मणिनालमयांबुजां मणिमयनालां कनकांबुजां च 'मयः शिल्पिनि दैत्यानां करभेऽश्वतरेपि च'इति विश्वः 'करभःकलभो वाऽष्टापदे'इति च विश्वः । मणिनालोज्वलांबुजामिति पाठे तु मणिमयानि नालेषु विकस्वराण्यंबुजानि यस्यां सा तथा । मणिमयनालेषु स्वच्छांबुजां वा ३० पद्मसौगंधिकवतीं पद्माकारैः सौगंधिकैः पद्मरागैर्युक्तां । पद्मरागमयपद्मामित्यर्थः । 'सौगंधिकं तु कल्हारेपद्मरागेच'इति मेदिनी । हैमसौगंधिकवतीमिति पाठे स्पष्टार्थः । पुष्पितैर्विकसितैः । निष्पंकेति विद्यमानमपि सलिलमतिस्वच्छत्वादाश्रयरूपेणैव प्रकाशते न स्वरूपेण स्फटिकजपाकुसुमवत् । अनेन तत्र स्थलभ्रमकारणमुक्तं ३१ मंदानिलेन समुद्धूतां समुच्छलितबिंदुं । अत एव सर्वतः प्रसृतनलिनीपत्रेषु मुक्तातुल्यैर्जलबिंदुभिराचितां व्याप्तां । महामणिमयाः



तांस्मतत्रमयेनोकारक्षंतिचवहंतिच ॥ सभामष्टौसहस्राणिकिंकरानामराक्षसाः २८ अंतरिक्षचराघोरामहाकायामहाबलाः ॥ रक्ताक्षाःपिंगलाक्षाश्वशुक्तिकर्णाःप्रहारिणः २९ तस्यांसभायांनलिनींचकाराप्रतिमांमयः ॥ वैदूर्यपत्रविततांमणिनालमयांबुजाम् ३० पद्मसौगंधिकवतींनानाद्विजगणायुताम् ॥ पुष्पितैःपंकजैश्चित्रांकूर्मैर्मत्स्यैश्वकांचनैः ॥ चित्रस्फटिकसोपानांनिष्पंकसलिलांशुभाम् ३१ मंदानिलसमुद्धूतांमुक्ताबिंदुभिराचिताम् ॥ महामणिशिलापट्टबद्धपर्यंतवेदिकाम् ३२ मणिरत्नाचितांतांतुकेचिदभ्येत्यपार्थिवाः ॥ दृष्ट्वाऽपिनाभ्यजानंतते‌ऽज्ञानात्प्रपतंत्युत ३३ तांसभामभितोनित्यंपुष्पवंतोमहाद्रुमाः ॥ आसन्नानाविधालीलाःशीतच्छायामनोरमाः ३४ काननानिसुगंधीनिपुष्करिण्यश्वसर्वशः ॥ हंसकारंडवोपेताश्चक्रवाकोपशोभिताः ३५ जलजानांचपद्मानांस्थलजानांचसर्वशः ॥ मारुतोगंधमादायपाण्डवान्स्मनिषेवते ३६ ईदृशींतांसभांकृत्वामासैःपरिचतुर्दशैः ॥ निष्ठितांधर्मराजायमयोराजन्यवेदयत् ३७ ॥ इतिश्रीमहाभारतेसभापर्वणिसभाक्रियापर्वणिसभानिर्माणेतृतीयोऽध्यायः ॥ ३ ॥ ॥ वैशंपायनउवाच ॥ ततःप्रवेशनंतस्यांचक्रेराजायुधिष्ठिरः ॥ अयुतंभोजयित्वातुब्राह्मणानांनराधिपः १ साज्येनपायसेनैवमधुनामिश्रितेनच ॥ भक्ष्यैर्मूलैःफलैश्चैवमांसैर्वाराहहारिणैः ॥ कृसरेणाथजीवंत्याहविष्येणचसर्वशः २ मांसप्रकारैर्विविधैःखाद्यैश्चापितथानृप ॥ चोष्यैश्वविविधैराजन्पेयैश्चबहुविस्तरैः ३

शिलापट्टा दीर्घचतुरस्रपाषाणास्तैर्बद्धाः पर्यंते समीपे चतुर्दिक्षु वेदिकाः यस्यास्तां ३२ मणिरत्नाचितां तां नलिनीं त्वभ्येत्याधिगस्य ज्ञात्वा । अयं भावः अदृष्टपूर्वैरतिभास्वरैः पत्रनालपुष्पैराच्छन्नत्वात्सलिलस्य काचमय्यां वैदूर्यमणिमय्यां वा भुवि कृत्रिमाण्येव कमलादीनीति भ्रमान्मणिरत्नचिता भूमिरेवेयमिति तां नलिनीं ज्ञात्वा स्थलभ्रमाज्जले पतंतीति ३३ तां सभामभित इति कर्मप्रवचनीययोगात् द्वितीया तस्याः सभायाः समंतत इत्यर्थः ३४ पुष्करिण्यस्तटाकाः ३५ । ३६ परिचतुर्दशैश्चतुर्दशाधिकैः ॥ ३७ ॥ ॥ इति सभापर्वणि नैलकंठीये भारतभावदीपे तृतीयोऽध्यायः ॥ ३ ॥ तत इति १ कृसरेण तिलमिश्रौदनेन । 'ओदनस्तिलमिश्रस्तु कृसरः परिकीर्तितः । तिलकल्कान्विनिक्षिप्य श्रितो वा कृसरो भवेत्' इति गृह्यविदः । जीवंत्या पाकविशेषेण ओदनस्यैव यवनभाषया विरिंजि इत्युच्यते । शाकविशेषेणेत्यन्ये २ । ३

अहतैः अनुपभुक्तैः ४ । ५ दैवतानि द्वारादिषु स्थानेषु पितामहादीनि । 'द्वारे पितामहं विंद्यात्' इति गृह्यात् ६ मल्लाः बाहुयोधिनः झल्ला लकुटयोधिनः ७ । ८ । ९ । १०

अहतैश्चैववासोभिर्माल्यैरुच्चावचैरपि ॥ तर्पयामासविप्रेंद्रान्नानादिग्भ्यःसमागतान् ४ ददौतेभ्यःसहस्राणिगवांप्रत्येकशःपुनः ॥ पुण्याहघोषस्तत्रासीदि वस्पृगिवभारत ५ वादित्रैर्विविधैर्दिव्यैर्गंधैरुच्चावचैरपि ॥ पूजयित्वा कुरुश्रेष्ठोदैवतानिनिवेश्यच ६ [तत्रमल्लानटाझल्लासूतवैतालिकास्तथा ॥ उपत स्थुर्महात्मानंधर्मपुत्रंयुधिष्ठिरम् ७ तथासकृत्वापूजांतांभ्रातृभिःसहपांडवः ॥ तस्यांसभायांरम्यायांरेमेशक्रोयथादिवि ८ सभायामृषयस्तस्यांपांडवैःसहआ सते ॥ आसांचक्रुर्नरेंद्राश्चनानादेशसमागताः ९ असितोदेवलःसत्यःसर्पिर्मालीमहाशिराः ॥ अर्वावसुःसुमित्रश्चमैत्रेयःशुनकोबलिः १० बकोदाल्भ्यःस्थूल शिराःकृष्णद्वैपायनःशुकः ॥ सुमंतुर्जैमिनिःपैलोव्यासशिष्यास्तथावयम् ११ तित्तिरिर्याज्ञवल्क्यश्चससुतोलोमहर्षणः ॥ अप्सुहोम्यश्चधौम्यश्चअणीमांड व्यकौशिकौ १२ दामोष्णीषस्त्रैबलिश्चपर्णादोघटजानुकः ॥ मौंजायनोवायुभक्षःपाराशर्यश्चसारिकः १३ बलिवाकःसिनीवाकःसत्तपालःकृतश्रमः ॥ जातूकर्णः शिखावांश्चआलंबःपारिजातकः १४ पर्वतश्चमहाभागोमार्कंडेयोमहामुनिः ॥ पवित्रपाणिःसावर्णोभालुकिर्गालवस्तथा १५ जंघाबंधुश्चरैभ्यश्चकोपवेगस्तथा भृगुः ॥ हरिबभ्रुश्चकौंडिन्योबभ्रुमालीसनातनः १६ काक्षीवानौशिजश्चैवनाचिकेतोऽथगौतमः ॥ पैंग्योवराहःशुनकःशांडिल्यश्चमहातपाः १७ कुक्कुरोवेणुजंघोऽ थकालापःकठएवच ॥ मुनयोधर्मविद्वांसोधृतात्मानोजितेंद्रियाः १८ [एतेचान्येचबहवोवेदवेदांगपारगाः ॥ उपासतेमहात्मानंसभायामृषिसत्तमाः १९ कथयं तःकथाःपुण्याधर्मज्ञाःशुचयोऽमलाः ॥ तथैवक्षत्रियश्रेष्ठाधर्मराजमुपासते २० श्रीमान्महात्माधर्मात्मामुंजकेतुर्विवर्धनः ॥ संग्रामजिद्दुर्मुखश्चउग्रसेनश्चवी र्यवान् २१ कक्षसेनःक्षितिपतिःक्षेमकश्चापराजितः ॥ कंबोजराजःकमठःकंपनश्चमहाबलः २२ सततंकंपयामासयवनानेकएवयः ॥ बलपौरुषसंपन्नान् कृतास्त्रानमितौजसः ॥ यथासुरान्कालकेयान्देवोवज्रधरस्तथा २३ जटासुरोमद्रकानांचराजाकुंतिःपुलिंदश्चकिरातराजः ॥ तथांऽगवांगौसहपुंड्रकेणपां ड्योंड्रराजौचसहांध्रकेण २४ अंगोवंगःसुमित्रश्चशैब्यश्चामित्रकर्शनः ॥ किरातराजःसुमनायवनाधिपतिस्तथा २५ चाणूरोदेवरातश्चभोजोभीमर थश्चयः ॥ श्रुतायुधश्चकालिंगोजयसेनश्चमागधः २६ सुकर्माचेकितानश्चपुरुश्चामित्रकर्शनः ॥ केतुमान्वसुदानश्चवैदेहोऽथकृतक्षणः २७ सुधर्माचा निरुद्धश्चश्रुतायुश्चमहाबलः ॥ अनूपराजोदुर्धर्षःक्रमजिच्चसुदर्शनः २८ शिशुपालःसहसुतःकरूषाधिपतिस्तथा ॥ वृष्णीनांचैवदुर्धर्षाःकुमारादेवरूपिणः २९ आहुकोविपृथुश्चैवगदःसारणएवच ॥ अक्रूरःकृतवर्माचसत्यकश्चशिनेःसुतः ३०

११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ कालकेयाः कालकाया अपत्यान्यसुराः २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० ।

३१ । ३२ । ३३ रौरवाजिनवाससोमृगचर्मपरीधानाः ३४ । ३५ । ३६ सप्तविंशतिश्चित्रसेनाद्या गंधर्वगणाः ३७ साम्यं तालविशेषः शंपेत्यपि पाठः शंपा दक्षिण हस्तगृहीततालविशेषः । 'शंपादक्षिणपातस्तु वामे ताल इति स्मृतः'इत्युक्तेः । प्रमाणे गीतवाद्यतालानां ध्वनिसाम्ये । लये द्रुतमध्यविलंबिते । स्थाने उरः शिरः कंठादौ ३८ ३९ । ४० । ४१ इति सभापर्वणि नैलकंठीये भारतभावदीपे चतुर्थोऽध्यायः ॥४॥ अथ तत्रोपविष्टेष्विति । अत्र नारदो युधिष्ठिरं प्रश्नमुखेन राजधर्माननुशास्ति १ तत्र शास्तुः स्व रूपं तावद्व्याचष्टे अस्यापि कणिकतुल्यता माभूदिति वेदोपनिषदां वेत्तेति वेदाः ऋग्यजुःसामाथर्वाणः । उपनिषदो रहस्यविद्याश्चतुर्विधाः । तत्र कर्मांगावबद्धोपासनं 'उषावा अश्व स्य मेध्यस्य शिरः' इत्यादिशास्त्रविहितं कर्मांगेष्वश्वादिषु विराड्दृष्टिकरणं । प्रतीकोपासनं 'अन्नं ब्रह्मेत्युपासीत आदित्यो ब्रह्मेत्यादेशः' इत्यादित्यादिमूर्तिषु ब्रह्मदृष्टिकरणं अहंग्रहोपासनं 'त्वं वा अहमस्मि भगवो देव ते अहं वै त्वमसि'इति व्यतिहारेणात्मनो देवतायाश्चाभेदचिंतनं । ज्ञानं ब्रह्मात्मानुभवः । वेदानां कर्मप्रतिपादकानांतदंतर्गतानामुपनि

भीष्मकोऽथाकृतिश्चैवद्युमत्सेनश्ववीर्यवान् ॥ केकयाश्चमहेष्वासायज्ञसेनश्चसौमकिः ३१ केतुमान्वसुमांश्चैवकृतास्त्रश्चमहाबलः ॥ एतेचान्येचबहवःक्ष त्रियामुख्यसंमताः ३२ उपासतेसभायांस्मकुंतीपुत्रंयुधिष्ठिरम् ॥ अर्जुनंयेचसंश्रित्यराजपुत्रामहाबलाः ३३ अशिक्षंतधनुर्वेदंरौरवाजिनवाससः ॥ तु त्रैवाशिक्षिताराजन्कुमारावृष्णिनंदनाः ३४ रौक्मिणेयश्चसांबश्चयुयुधानश्चसात्यकिः ॥ सुधर्माचानिरुद्धश्चशैब्यश्चनरपुंगवः ३५ एतेचान्येचबहवोरा जानःपृथिवीपते ॥ धनंजयसखाचात्रनित्यमास्तेस्मतुंबुरुः ३६ उपासतेमहात्मानमासीनंसप्तविंशतिः ॥ चित्रसेनःसहामात्योगंधर्वाप्सरसस्तथा ३७ गी तवादित्रकुशलाःसाम्यतालविशारदाः ॥ प्रमाणेऽथलयेस्थानेकिन्नराःकृतनिश्रमाः ३८ संचोदितास्तुंबुरुणागंधर्वसहितास्तदा ॥ गायंतिदिव्यतानैस्ते यथान्यायंमनस्विनः ३९ पांडुपुत्रानृषींश्चैवरमयंतउपासते ॥ तस्यांसभायामासीनाःसुव्रताःसत्यसंगराः ४० दिवीवदेवाब्रह्माणंयुधिष्ठिरमुपासते ४१ ॥ इतिम०भा०सभापर्वणिसभाक्रियापर्वणिसभाप्रवेशोनामचतुर्थोऽध्यायः ४ ॥ समाप्तंचसभाक्रियापर्व ॥ ॥ छ ॥ ॥ अथलोकपालसभाख्यानपर्व ॥ ॥ वैशंपायनउवाच ॥ ॥ अथतत्रोपविष्टेषुपांडवेषुमहात्मसु ॥ महत्सुचोपविष्टेषुगंधर्वेषुचभारत १ वेदोपनिषदांवेताऋषिःसुरगणार्चितः ॥ इतिहा सपुराणज्ञःपुराकल्पविशेषवित् २ न्यायविद्धर्मतत्त्वज्ञःषडंगविदनुत्तमः ॥ ऐक्यसंयोगनानात्वसमवायविशारदः ३

षदां च वेत्ता पाठतोऽर्थतश्च ज्ञाता । अत एव ऋषिः गंता फलं प्रति वेदोक्तकृत्स्नफलभागी कृतानुष्ठानत्वात् । अत एव सुरगणार्चितः । इतिहासपुराणे प्रसिद्धे । पुराकल्पो बहुकर्तृ कमन्वाख्यानं 'देवासुराः संयत्ता आसन्'इत्यादिकं वेदोक्तं । विशेषः एककर्तृकमन्वाख्यानं परिकृत्याख्यं । 'हरिश्चंद्रो ह वैधस ऐक्ष्वाको राजाऽपुत्र आस'इत्यादि तस्य योग बलात् प्रत्यक्षदर्शी २ न्यायः पंचांगमधिकरणं । यथा 'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरं ॥ संगतिश्चेति पंचांगं शास्त्रेऽधिकरणं विदुः' । अत्र यूपस्य स्वरुं करोतीति वा क्यं विषयः । तत्र षष्ठी यूपसंबंधीतिकर्तव्यतालक्षणार्था उत यूपावयवलक्षणार्थेतिसंदेहो विशयः । एतावेव पूर्वोत्तरपक्षौ ज्ञेयौ । कल्पनालाघवानुग्रहादुत्तरः सिद्धांतः । फलमनुष्ठानभे दः । पूर्वपक्षे तक्षणाष्टाश्रीकरणादिना काष्ठांतरं यूपसदृशं निर्मातव्यं । सिद्धांते एकदेशस्य पृथक्करणमात्रमिति । इदमेव पंचकं मोक्षधर्मेषूक्तं । 'सूक्ष्मं सांख्यक्रमौ चोभौ निर्णयः—

सप्रयोजनः । पंचैतान्यनुजानीहि वाक्यमित्युच्यते बुधैः'इति । सूक्ष्मं गहनार्थत्वाद्विषयः । सांख्यमेवमेवं वेति विचारः । क्रमोऽतिक्रमः सिद्धांतस्य पूर्वपक्ष इत्यर्थः । निर्णयः सिद्धांतः । प्रयोजनं फलमिति । वाक्यं वाक्यार्थनिर्णयोपायः । एवं पूर्वोत्तरमीमांसाधिकरणानि न्यायास्तद्वित् । धर्मज्ञो मन्वादिप्रणीतशास्त्रतत्त्वज्ञः । षडंगवित् शिक्षा कल्पो व्याकरणं छन्दोविचितिनिरुक्तं ज्योतिषमिति षड्वेदांगानि । अनुत्तमोऽत्युत्कृष्टः । ऐक्यसंयोगनानात्वसमवायविशारदः ऐक्यादित्रयं सर्वेष्वपि शास्त्रेषु समानं । यथा मीमांसायां समिधो यजतीत्यादिप्रयाजाद्यंगवाक्यानां दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति महावाक्येनैकवाक्यत्वमैक्यं । संयोगनानात्वं संयोगपृथक्त्वं । यथा दध्ना जुहोतीति वाक्यान्नित्यमपि दधि दध्नेंद्रियकामस्येति वाक्यांतरेणेंद्रियार्थमपि पृथग्विधीयते तेन द्वयमपि युगपद्दध्ना साध्यत इति । समवायः एकस्मिन्कर्मण्यनेकेषां धर्माणां सन्निपातः । यथा इष्टिपशुसोमात्मके राजसूये इष्ट्यादीनां दर्शादित्रिकद्वयस्येव साक्षात्परमाऽपूर्वजनकत्वे उपनिपातो न त्वंगानामिव परंपरया परमापूर्वोपकारकत्वं । यद्वा 'तमेतं वेदानुवचनेन ब्राह्मणाविविदिषंति यज्ञेन दानेन तपसाऽनाशकेन'इति आत्मविविदिषोत्पादकापूर्वे वेदानुवचनादीनामेककार्यकारित्वलक्षणमैक्यं । नन्वेककर्मांगत्वाभावे कथमेषामैक्यमत आह संयोगनानात्वेति । स्वस्ववाक्योत्पन्नानां पृथक्फलानामप्येषां संयोगपृथक्त्वन्यायेन विविदिषार्थत्वमपि युक्तमेवेत्यर्थः । नन्वेषां समुच्चितानामेककार्यकारित्वे समुच्चयासंभवः राजसूयादीनां ब्राह्मणाद्यनुपयोगित्वात् प्रत्येकं चेदितरवैयर्थ्यमित्याशंक्याह । समवायविशारद इति समवायो यथाधिकारं कर्मसंबधः । अयमर्थः ब्राह्मणादीनां राजसूयादिष्वनधिकारान्न तत्प्राप्तिः । विविदिषायाः पापनिवृत्तिफलकैर्नित्यैरेवोत्पत्तेर्न तदर्थं फलतो निषिद्धानां श्येनादीनां प्राप्तिः । अत एव हेतुद्वयात्पवित्रेष्ट्यादिकं काम्यमपि न निवार्यते । नित्यानामपि न सर्वेषां

वक्ताप्रगल्भोमेधावीस्मृतिमान्नयवित्कविः ॥ परापरविभागज्ञःप्रमाणकृतनिश्चयः ४

समुच्चयः विविदिषाख्यदृष्टफलकत्वात् । तस्मान्न सर्वकर्मसमुच्चयो नापीतरवैयर्थ्यमिति । एवंरूप एव समुच्चयोऽत्र समवायशब्दार्थः । अस्मिंस्त्रये विशारदो विवेकसमर्थः । यद्वा ऐक्यं साधर्म्यात्पृथिव्यादीनां द्रव्यत्वेन रूपेण । संयोगनानात्वमसाधारणधर्मसंबधस्तेन पृथिवीत्वजलत्वादिरूपेण भेदोऽपि समवायः शरीरे पंचानामपि भूतानां मेलकः । एतेषां तत्त्वं साधर्म्यं वैधर्म्यं संकरं च ज्ञातुं कुशल इत्यर्थः ॥ ३ ॥ न केवलं ज्ञातुमेव कुशलः किंतु वक्तुमित्याह वक्तेति । वक्ताऽपि समानाधिकरण एवेत्याह प्रगल्भ इति असंबद्धप्रलापी नेत्यर्थः । यतो मेधावी ऊहापोहकुशलः । तादृशोऽपि स्मृतिमान् अधीतं न नाशितवानित्यर्थः । नयविद्दायविभागादिव्यवहारवित् । कविरनागतदर्शी । परापरविभागज्ञः परापरयोर्ज्ञानकांडकर्मकांडयोर्विभागो यथायोग्यं शिष्येषु विभजनं तज्ज्ञः । यतः प्रमाणकृतनिश्चयः प्रमाणं प्रत्यक्षानुमानागमादि । तच्च द्विविधं लौकिकमलौकिकं च आद्यं घटवह्निस्वर्गादिविषयं । द्वितीयम् निर्विशेषात्मवस्तुतत्त्वविषयम् । तथाहि अहंकारादिकमात्मनि सुषुप्त्यादावदृष्टत्वान्मिथ्येति तत्र प्रत्यक्षं सुप्तौ निर्विशेषत्वं । तथा द्रष्टृदृश्यौ एकोपादानकौ भास्यभासकत्वात् श्रोत्रशब्दवत् भास्यभासकौ च दृश्यद्रष्टारौ तस्मादेकोपादानकौ यौ न तथा तौ नैकोपादानकौ यथा शब्दघ्राणाविति व्यतिरेकतो वा साध्यसिद्धौ सत्यामुपादानोपादेययोरभेदाद्दृङ्मात्रं वस्तुतत्त्वमिति सिद्ध्यतिअनुमानादप्यात्मनो निर्विशेषत्वम् । घटज्ञानं पटज्ञानमिति दृशि विशेषदर्शनानुभवस्य घटाकाशादिवदौपाधिकत्वात् । तथाऽगमोऽप्यात्मनो निर्विशेषत्वे प्रसिद्धः । 'अस्थूलमनणु निर्गुणं निष्क्रियम्' इत्यादिः ४

नन्वनुमानबलाच्चन्द्रप्रादेशिकत्वप्रत्यक्षं यजमानः प्रस्तर इत्यादिरागमश्च शिथिलीक्रियते । अनुमानमपि नरशिरःकपालं शुचि प्राण्यंगत्वात् शंखवदित्यादिकं 'नारं स्पृष्ट्वाऽस्थि स
स्नेहं सवासा जलमाविशेत्' इत्यागमेन । तथा च सर्वमपि प्रमाणं सदोषमतस्तत्र कृतनिश्चयत्वं दूरापेतमित्याशंक्याह पंचावयवयुक्तस्य वाक्यस्य गुणदोषवित् । तत्र परं बोधयितुं
प्रवृत्तस्यानुमानवाक्ये प्रतिज्ञादयः पंचावयवाः । तत्र पर्वतो वह्निमानिति प्रतिज्ञा । धूमादिति हेतुः । यथा महानस इति दृष्टांत उदाहरणम् । धूमवांश्चायमित्युपनयः । तस्माद्व
ह्निमानिति निगमनं । अस्मिन्वाक्ये गुणोऽनुकूलतर्को यदि वह्निमान्न स्यात्तर्हि धूमवानपि न स्यात् । दोषो ह्रदो वह्निमानित्यादावाश्रयासिद्धिप्रभृतिः । तावुभौ वेत्तीति तथा ।
तथा चानुमानं प्रत्यक्षागमौ शिथिलीकरोतु । व्रीहिमसूरादौ शुचित्वाशुचित्वविभागस्य शास्त्रैकगम्यत्वात् तत्रानुकूलतर्काभाव एवानुमानबाधको न त्वागम इति स्थितं । त
था च लौकिकप्रमाणाधिकारिणे अपरं कर्मकांडमेव विभजते इतरस्येतरदिति विवेकः । ५ । यथावत्कृतनिश्चयः लौकिकानां प्रमाणानां प्रामाण्यमादाय धर्मार्थकामानां पुरु
षार्थत्वनिश्चयः । इतरेषां प्रामाण्यमुपजीव्यमप्युपमृद्य मोक्षरसस्य पुरुषार्थत्वनिश्चयः । तदा लौकिकप्रमाणबाधात् । वेदा अवेदा इति श्रुतेः । 'लौकिकं तद्वदेवेदं प्रमाणं त्वा
त्मनिश्चयात्' इत्यभियुक्तोक्तेश्च । आत्मनिश्चयादर्वागेवेति शेषः । आ आत्मनिश्चयादिति वा छेदः । महामतिः आत्मज्ञः । 'आत्मनो वा अरे दर्शनेन मत्या विज्ञानेनेदं सर्वं
विदितम्'इति तस्यैव सार्वज्ञ्यश्रुतेः ६ सांख्ययोगविभागज्ञः सांख्यं वेदांतविचारः योगश्चित्तवृत्तिनिरोधः अनयोर्विभाग उपयोगः तत्र श्रवणात्मको वाक्यार्थविचारः प्र
माणगतासंभावनानिवृत्त्युपयोगी मननाख्यः श्रुतस्यार्थस्य तर्केणानुसंधानरूपो विचारः प्रमेयगतासम्भावनानिवृत्त्युपयोगी अद्वैतमेव वेदो वदति युक्तियुक्तं चैतदेवेति सांख्यवि

पंचावयवयुक्तस्यवाक्यस्यगुणदोषवित् ॥ उत्तरोत्तरवक्ताचवदतोऽपिबृहस्पतेः ५ धर्मकामार्थमोक्षेषुयथावत्कृतनिश्चयः ॥ तथाभुवनकोशस्यसर्वस्या
स्यमहामतिः ६ प्रत्यक्षदर्शीलोकस्यातिर्यगूर्ध्वमधस्तथा ॥ सांख्ययोगविभागज्ञोनिर्विवित्सुःसुरासुरान् ७

भागः । निदिध्यासनापरपर्यायो योगः अनात्मसु देहादिष्वात्मप्रत्ययरूपां विपरीतभावनां निवर्त्य ज्ञातृज्ञानज्ञेयाभाववंतं दृङ्मात्रप्रत्ययं गोचरयतीति योगविभागः । ये तु
'द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव । योगो वृत्तिनिरोधो हि ज्ञानं सम्यगवेक्षणं'इति वासिष्ठवचनमुदाहृत्य चित्तनाशाख्यात्मदर्शनस्य द्वावुपायाविति वदंति । तेषां
'तमेव विदित्वातिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय'इति श्रुतिविरोधः । संवादिभ्रमवद्योगोऽपि ज्ञानं जनयित्वैव फलद इति चेत्तस्योपसर्जनत्वं कर्मणामिव स्यात्तथा च नोपा
यांतरं योग इत्यापतति । वासिष्ठवाक्यं तु क्रमभेदमाह नतूपायभेदं । तथा च कृतोपास्तेर्योग उपसर्जनं वाक्यार्थसंभवं ज्ञानं प्रधानं । अकृतोपास्तेस्तु ज्ञानमुपसर्जनं योगः प्र
धानं । यथा दृष्टगोपिंडस्याप्यगृहीतशब्दार्थसंगतिकस्य इयं गौरिति वाक्यमेव गवाज्ञाननुत्नचक्षुस्तेन विषयीकृतेऽपि गोपिंडे गोबुभुत्सानुवृत्तेः । एवं साक्षात्कृतत्वंपदार्थस्यापि त
त्वमसीति वाक्यमेव संसारानर्थमूलब्रह्माज्ञानस्य निवर्तकं न मनस्तेन दृष्टेपि त्वमर्थे ब्रह्माज्ञानानुवृत्तिदर्शनात् । एवं सास्नादिमती गौरिति लक्षणतो ज्ञातगोपदार्थस्यापि गो
पिंडदर्शनमेव गोबुभुत्सानिवर्तकं न तु वाक्यं । तथा श्रवणादिना ज्ञातब्रह्मपदार्थस्यापि योगादेव दर्शनं न तु वाक्यात् तेन तंत्वौपनिषदं पुरुषं पृच्छामीति । मनसैवानुद्रष्ट
व्यमिति च शब्दमनसोर्ज्ञानकरणत्वानुवादकश्रुत्योर्व्यवस्था सिद्ध्यति । तदिदमुक्तं सांख्ययोगविभागज्ञ इति । विभागो हि द्वयोः समुच्चित्यैककार्यकारित्वे सति संभवति न
तु व्रीहियववद्विकल्पैककार्यकारित्वे इत्यास्तां तावत् । 'सांख्ययोगौ पृथग्बालाः प्रवदंति न पंडिताः' इत्यत्र प्रपंचयिष्यमाणत्वात् । एवं ब्राह्मया विद्यया संपन्नत्वमुक्त्वा

राजयोगविद्यांतरसंपत्तिमप्याह निर्विवित्सुः सुरासुरानित्यादिना । निर्विवित्सुः विविस्सुर्विचारं कर्तुमिच्छुः निर्विवित्सुस्त्वाद्विरोधी उभयेषां धीप्रमोषणेन कलहप्रवर्तकः । यद्वा निर्वेदो युद्धादुपरातिस्तं कर्तुमिच्छुर्लोकनाशभयादित्यर्थः । एतेन भेदाभिज्ञत्वमुक्तं ७ संधिः साम । विग्रहो निग्रहो दण्ड इत्यर्थः अनुमानविभागवित् स्वपरशक्तिबलाबलेऽनुमानतो निश्चित्य विभागं विभजनं परामात्यादिभ्यो धनप्रदानं तद्वित् । अनुमाय विभागविदिति गौडाः पठंति । एवं च नीतिशास्त्रप्रसिद्धोपायचतुष्टयाभिज्ञत्वमुक्तं । षाड्गुण्यविधियुक्तश्च षड्गुणाः संधिविग्रहयानासनद्वैधीभावसमाश्रयाख्यास्त एव षाड्गुण्यं । स्वार्थेष्यञ् । तस्य विधिरज्ञातज्ञापनं तेन युक्तः । सर्वदा विजिगीषुभ्यः षाड्गुण्यादिकमुपदिशति स्वस्य निःशत्रुत्वेऽप्या धिकारिकत्वात् । तत्र संधिविग्रहौप्रत्येकं द्विविधौ । प्रबलदुर्बलयोर्विजिगीषावतोः समभूमौ युद्धप्रसंगे आद्यो विग्रहमिच्छति दंडेनैव परः संधिमिच्छति दानेनेति । तयोरेव दुर्ब लोऽभेद्यदुर्गाश्रितश्चेद्बलवताऽपि सह देशोल्लुंठनादिना विग्रहमिच्छति । इतरस्तु तेन सहाल्पकरग्रहेणापि संधिमेवेच्छति । तथा च दुर्बलद्वारकौ संधिविग्रहावन्यौ प्रबलद्वारका वन्यौ । तदिदमुक्तंरामायणे 'द्वियोनी संधिविग्रहौ' इति । तत्र प्रबलयोर्निर्विग्रहः यानासनयोः प्रयोजकः । दुर्बलयोनिः संधिर्द्वैधीभावसमाश्रययोः । तथोक्तं कामंदकीये । 'संधेश्च

संधिविग्रहतत्त्वज्ञस्त्वनुमानविभागवित् ॥ षाड्गुण्यविधियुक्तश्चसर्वशास्त्रविशारदः ८ युद्धगांधर्वसेवीचसर्वत्राप्रतिघस्तथा ॥ एतैश्चान्यैश्चबहुभिर्युक्तोगुणग णैर्मुनिः ९ लोकाननुचरन्सर्वानागमत्तांसभांनृप ॥ नारदःसुमहातेजाऋषिभिःसहितस्तदा १० पारिजातेनराजेंद्रपर्वतेनचधीमता ॥ सुमुखेनचसौम्येन देवर्षिरमितद्युतिः ११ सभास्थान्पांडवान्द्रष्टुंप्रीयमाणोमनोजवः ॥ जयाशीर्भिस्तुतंविप्रोधर्मराजानमार्चयत् १२ तमागतमृषिंदृष्ट्वानारदंसर्वधर्मवि त् ॥ सहसापांडवश्रेष्ठःप्रत्युत्थायानुजैःसह १३ अभ्यवादयतप्रीत्याविनयावनतस्तदा ॥ तदर्हमासनंतस्मैसंप्रदाययथाविधि १४ गांचैवमधुपर्कंचसंप्र दायार्घ्यमेवच ॥ अर्चयामासरत्नैश्चसर्वकामैश्चधर्मवित् १५ तुतोषचयथावच्चपूजांप्राप्ययुधिष्ठिरात् ॥ सोर्चितःपांडवैःसर्वैर्महर्षिर्वेदपारगः ॥ धर्मकामार्थ संयुक्तंपप्रच्छेदंयुधिष्ठिरम् १६

विग्रहस्यापि द्वैगुण्यं संप्रचक्षते ॥ यानासने विग्रहस्य रूपं संधेः परं द्वयम्' इति द्वौ गुणभूतौ यस्य स द्विगुणः स च स च तौ तयोर्भावो द्वैगुण्यं तत्र यानं विजिगीषोरारिं प्रति या त्रा । आसनं कदाचिच्छक्तिप्रतिबंधे च तत्रैव शत्रोर्दुर्गमावेष्टय तत्र धान्यादिप्रवेशनं प्रतिबध्नताऽवस्थानं । बलवता विग्रहे बलवत्तरेणतच्छत्रुणा संधिं कृत्वा उभयत्र दासोऽस्मी ति वाचैवात्मसमर्पणं कर्तव्यं न कर्मणेति स द्वैधीभावः । यथोक्तं तत्रैव 'बलिनोर्द्विषतोर्मध्ये वाचाऽऽत्मानं समर्पयन् । द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः' इति । अरिणा पी ड्यमानस्य बलवद्दुर्गभूपालाद्याश्रयणं समाश्रयः । एवं चोपायांतर्गतौ संधिविग्रहावन्यौ षाड्गुण्यांतर्गतौ चान्याविति न पुनरुक्तिः ८ युद्धगांधर्वसेवी तदुभयप्रिय इत्यर्थः सर्वत्र सर्वासु विद्यासु सर्वेषु कर्मसु चाऽप्रतिघोऽप्रतिहतः । पूर्णशक्तित्वात् । अन्यैरसंगत्वकारुण्यादिभिः मुनिरात्मतत्त्वानुसंधानवान् ९ आगमदागतवान् । १० । ११ । आर्चयत् पूजितवान् १२ । १३ । १४ । १५ । १६

कच्चिदर्थाश्च कल्पंत इति । कच्चिदिति कामप्रवेदने स्वाभिप्रायाविष्करणे । त्वदीया अर्थाः स्वकार्ये यागदानकुटुंबभरणादौ समर्था भवंत्विति ममाभिप्राय इत्यर्थः । एवं करिष्यामि यथैतदुक्तमित्यंते राज्ञांगीकृतत्वापदुपेशपरोयं ग्रंथ इत्यवसीयते । अर्थधर्मकाममोक्षांस्त्वदीयानविहतानिच्छामीति क्रमेण पादचतुष्टयार्थः । कच्चिदिति सर्वत्र संबंधनीयं । तत्रापि मनश्चांऽतरात्मनि प्रणिधीयमानं न प्रतिहन्यते वृत्त्यंतरैरित्यंत्यपादार्थः १७ त्रिषूत्तमाधममध्यमेषु ऋत्विक्पुरोहितादिषु धर्मेण सहितां वृत्तिं वर्तसे दंडयद्द्वेष्यादिष्वर्थेन सहितां प्रजासु पालनषड्भागहाराभ्यां धर्मार्थसहितामिति विवेकः । धर्मार्थौ च धर्मार्थौ चेति द्वंद्वैकशेषः तैः सहितामिति समासः १८ कच्चिदर्थेनेति । अर्थलोभाद्धर्मबाधो नीचानां धर्मलोभादर्थबाधो विरक्तानां कामेन प्रीतिसारेण तात्कालिकसुखाभासप्रदर्शनबलेन मोहयता धर्मार्थयोर्बाधः कामुकानां प्रसक्तः । त्वयि राज्यप्रातिकूलानां नीचत्वविरक्तत्वकामुकत्वानामभावमिच्छामीत्यर्थः १९ परस्परविरोधिनामेषां कथमेकेनानुष्ठानमित्याशंक्य कालभेदेनेत्याह कच्चिदर्थमिति । 'पूर्वाह्णे चाचरेद्धर्मं मध्यान्हेऽर्थमुपार्जयेत् । सायान्हे चाचरेत्काममित्येषा वैदिकी श्रुतिः' इति दक्षोक्तकालव्यवस्थामास्थाय त्रिवर्गं सेवेतेत्यर्थः । सदावरदेति संबोधनेन परानुग्रहरूपो धर्मः सर्वस्मिन्नपि काले कर्तव्य इति सूचयति । समभिज्ञे पाठे अत्रैषम्येणात्मसाम्येनेत्यर्थः २० कच्चिद्राजेति षड्गुणाः 'वक्ता प्रगल्भो मेधावी स्मृतिमान्नयवित्कविः' इति नारदस्तुतौ सूचिता वक्तृत्वादयः । अत्र राजगुणेषु वक्तृत्वं चारामात्यादिषु यथायोग्यं

॥ नारदउवाच ॥ कच्चिदर्थाश्चकल्पंतेधर्मेचरमतेमनः ॥ सुखानिचानुभूयंतेमनश्चनविहन्यते १७ कच्चिदाचरितंपूर्वैर्नरदेवपितामहैः ॥ वर्तसेवृत्तिमक्षुद्रांधर्मार्थसहितांत्रिषु १८ कच्चिदर्थेनवाधर्मंधर्मेणार्थमथापिवा ॥ उभौवाप्रीतिसारेणनकामेनप्रबाधसे १९ कच्चिदर्थंचधर्मंचकामंचजयतांवर ॥ विभज्यकालेकालज्ञःसदावरदसेवसे २० कच्चिद्राजगुणैःषड्भिःसप्तोपायांस्तथाऽनघ ॥ बलाबलंतथासम्यक्चतुर्दशपरीक्षसे २१

कार्योपदेशकौशलं । प्रागल्भ्यं

शत्रुदमनादावुत्कर्षप्रदर्शनं । मेधावित्वं तर्ककौशलं । स्मृतिमान्कविरिति चातीतानागतयोः परामर्शित्वं । नयविदिति नीतिशास्त्रवित्त्वं । एतै राजगुणैरुपायान्बलाबलमन्यांश्चतुर्दश त्वं परीक्षसे इति योजना । हेअनघ चतुर्दशभी राजदोषैर्वर्जित ते च वक्ष्यंते 'नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रतां । अदर्शनं ज्ञानवतामालस्यं पंचवृत्तितां । एकचिंतनमर्थानामनर्थज्ञैश्च चिंतनं । निश्चितानामनारंभं मंत्रस्यापरिरक्षणं । मंगलाद्यप्रयोगं च प्रत्युत्थानं च सर्वतः । कच्चित्त्वं वर्जयस्येतान् राजदोषांश्चतुर्दश' इति । नास्तिक्यं परलोकापलापः । प्रमादोऽनवधानता । दीर्घसूत्रतां चिरक्रियत्वं । पंचवृत्तितां पंचेंद्रियपरवशतां । अर्थानां प्रयोजनानामेकचिंतनमेकेनैव चिंतनं । अनर्थज्ञैर्विपरीतार्थदर्शिभिः सह चिंतनं मंत्रः । मंगलमुत्सवः । आदिपदाद्देवपूजादि तस्याप्रयोगमननुष्ठानं प्रत्युत्थानं च सर्वतः युगपत्सर्वदिगवस्थितशत्रूद्देशेन दंडयात्रेति तदर्थः यद्वा अघं पराजयमूलं विंशतिवर्गस्तद्रहित स च कामंदकीये उक्तः । 'बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः । भीरुको भीरुजनको लुब्धो लुब्धजनस्तथा । विरक्तप्रकृतिश्चैव विषयेष्वपि सक्तिमान् । अनेकचित्तमंत्रश्च देवब्राह्मणनिंदकः । दैवोपहतकश्चैव दैवचिंतक एव च । दुर्भिक्षव्यसनोपेतो बलव्यसनसंकुलः । अदेशस्थो बहुरिपुर्युक्तो कालेन यश्च सः । सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी । एतैः संधिं न कुर्वीत विग्रही स्यात्तु केवलम्' इति । उपायाः सप्त सामदानभेददंडमंत्रौषधेंद्रजालाख्याः । बलाबलं स्वपरपक्षयोः साम्यं । परस्य हीनता स्वस्य वा हीनतेति त्रिविधं । यथायोगं बुद्ध्यादिभिः-

सामादयः परीक्षणीयाः किमनेन शत्रुणा साम कर्त्तव्यं न वा । कर्तुमारब्धं चेत् सिद्ध्यति न वा । सिद्धं चेदंते कुशलं न वेति चारप्रेषणादिना च बलाबलप्रभृतिकं परीक्षणीयं । तथा चतुर्दश देशादयोऽपि परीक्षणीयाः । ते च नीतिशास्त्रोक्ताः ! 'देशो दुर्गं रथो हस्तिवाजियोधाधिकारिणः । अंतःपुरान्नगणनाः शास्त्रलेख्यधनासवाः । परीक्ष्या ह्यधिपास्ते षां चतुर्दश नरेश्वरैः'इति । योधाः शूराः । अधिकारिणो देशपालदुर्गपालसेनापत्यादयः । गणना अश्वरथधनादीनां संख्या । लेख्यमायव्ययनिर्णयाय सर्वस्य पत्रारोहकरणं । धनं पर्याप्तमपर्याप्तं चेति विचार्यं । आसवाः मद्यवदपकारिणः प्रच्छन्नशत्रवः । असव इति पाठे असुर्बलमित्यर्थः । बलाबलेन सम्यक्त्वमिति पाठे स्वीयं परकीयं च देशादिकमुक्तविधेन बलाबलेन बुद्ध्या चारैश्च परीक्षणीयमित्यर्थः २१ एतदेवाह कच्चिदात्मानमिति । आत्मानं प्रबलं परान् दुर्बलान्परीक्ष्य सेवसे राज्यं । तथा विपरीते जयमूलस्य कोशस्य वृद्धये सं धाय परैः सह साम कृत्वाऽष्टौ कर्माणि । 'कृषिर्वणिक्पथो दुर्गं सेतुः कुंजरबंधनं । खन्याकरकरादानं शून्यानां च निवेशनं । अष्टौ संधानकर्माणि प्रयुक्तानि मनीषिभिः'इति शास्त्रो क्तानि सेवसे । कुंजरबंधनं बहुभक्षकत्वात्तेषां यथाविभागं ग्रामीणधनैरेव ग्रामे ग्रामे पोषणार्थं बंधनं । खनी रत्नाद्युत्पत्तिस्थानं आकरः सुवर्णाद्युत्पत्तिस्थानमिति भेदः । खननमात्रे ण धमनादिनाऽभिमुखीकरणेन च तयोस्तल्लाभहेतुत्वात् २२ कृष्यादिनाऽपि कोशवृद्धिः स्वाम्यादिप्रकृतिसप्तकस्य परैर्धनादिना मोहने कृते सति न भवतीत्यत आह कच्चित्प्रकृतय

कच्चिदात्मानमन्वीक्ष्यपरांश्चजयतांवर ॥ तथासंधायकर्माणिअष्टौभारतसेवसे २२ कच्चित्प्रकृतयःसप्तनलुप्ताभरतर्षभ ॥ आढ्यास्तथाऽव्यसनिनःस्वनुर क्ताश्चसर्वशः २३ कच्चिन्नकृतकैर्दूतैर्येचाप्यपरिशंकिताः ॥ त्वत्तोवातवचामात्यैर्भिद्यतेमंत्रितंतथा २४ मित्रोदासीनशत्रूणांकच्चिद्वेत्सिचिकीर्षितम् ॥ कच्चित्संधिंयथाकालंविग्रहंचोपसेवसे २५

इति सप्त । 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानिच । राज्यांगानि प्रकृतयः पौराणां श्रेणयोऽपि च'इति कोशोक्ताः । तत्र स्वामिरूपा प्रकृतिः सप्तविधा । 'दुर्गाध्यक्षो बलाध्यक्षो ध र्माध्यक्षश्चमूपतिः । पुरोधा वैद्यदैवज्ञौ सप्त प्रकृतयः स्मृताः' इति प्रोक्ताः । बलाध्यक्षो बलस्य चतुरंगस्याहारादिदानेनपालकः । धर्मः कार्यमात्रं । चमूपतिर्युद्धे चम्वाः प्रणेता । अ मात्यो मंत्री । सुहृन्न्यायान्यायविभागकर्ता पर्षद्रूपः । एते न तावका लुप्ताः परैर्मोहिता माभूवन् । लुप्यतेर्मोहनार्थस्येदं रूपं लुप्ताश्चेद्दुर्गादीनामेव नाशापत्तिरित्यर्थः । अथवा त एवा ढ्याःसंतो व्यसनिनो द्यूतपानादिरताः माभूवन् । 'हृष्टो दृप्यति दृप्तो धर्ममतिक्रामति धर्मातिक्रमात्पापं करोति'इति स्मृतेरस्त्याढ्यस्य व्यसनप्रसक्तिस्तदाऽपि न कोशादीनां वृद्धिः स्यात् । कथं तर्हिस्युः सर्वप्रकारैः स्वनुरक्ता अत्यंतं स्वामिकार्ये प्रीतिमंतः २३ दुर्गाध्यक्षादीनां लोभतो विपरीतकार्यकारित्वेन नाशहेतुत्वं प्रसिद्धं । अमात्यसुहृदोस्तु लोभने कथं नाशहेतुत्वमित्याशंक्य मंत्रभेदेनेत्याह कच्चिन्नेत्यादिना अपरिशंकिताः । येषु दौष्ट्यशंका नास्ति तैः कृतकैः कृत्रिमैः सुहृद्भूतैर्दूतैरुभयवेतनैस्तत्र मंत्रितं मंत्रो न भिद्यते प्रकाश्यते कच्चित् । तर्कैर्दूतैर्वेति पाठे सम्यगपि मंत्रितं कुयुक्तिभिर्न विप्लाव्यत इत्यर्थः । त्वत्तो वा कृतकमित्रं प्रति कथयतोऽमात्यैर्वाकृतकैर्मंत्रितं भिद्यत इति सर्वत्र संबंधनीयं २४ मित्रेति मित्रं सम्यक् परीक्ष्य तेन सह संमंत्र्य बलवता शत्रुणा संधिं दुर्बलेन सह विग्रहं मध्यमेनोभयवेतनेनोदासीनेन राज्ञा च सह वृत्तिं साम्येन स्थितिं च कुर्यादिति सार्द्धश्लोकार्थः २५

तत्र मित्रैः कैर्गुणैः परीक्षितेत्यत आह कच्चिदात्मसमा इति । शुद्धाचारत्वं कुलीनत्वं च नैर्मल्यस्यासाधारणं लिंगं । शुद्धाः संबोधनक्षमा इत्यत्र शुचयो जीवितक्षमा इति पाठे आप न्मग्नस्य राज्ञ उज्जीवने क्षमा इत्यर्थः २६ किमेवंविधेन मंत्रेणेत्यत आहार्धेन विजयइति २७ मंत्रभेदो माभूदित्युक्तं तत्फलमाह कच्चित्संवृतेति २८ कच्चिन्निद्रेति यथाकालं स्वप्नप्रबो धवता ब्राह्मे मुहूर्तेऽमात्यादिभिः सह कृतस्य मंत्रस्य पर्यालोचनं कर्त्तव्यं । 'ब्राह्मे मुहूर्ते चोत्थाय चिंतयेदात्मनो हितम्' इति स्मृतेस्तदा निर्णीतोऽर्थो न विस्मर्तव्य इत्यवसायात् २९ कच्चिन्मंत्रेति । 'षट्कर्णो भिद्यते मंत्र' इति प्रसिद्धेर्द्वाभ्यामेव मंत्रयितव्यमित्यर्थः । मंत्रभेदो न कर्त्तव्य इत्युक्तं तदुपसंहरति कच्चित्त इति ३० स्वाम्यमात्यादिप्रकृतिसप्तकानुग्रहात् कृष्यादिकर्माष्टकसिद्धितश्च कोशवृद्धिरित्युक्तं तदनुवदति विशेषविधानार्थं कच्चिदर्थानिति अर्थानर्थप्राप्त्युपायान् । लघुमूलानल्पव्ययसाध्यान् । महोदयान् प्रचुरफलान् तादृशान्कृ ष्याद्यारंभकर्तॄनन्यान्वैश्यादीन् । तेभ्योऽपि करादानेन कोशवृद्धिरेव भवतीति भावः ३१ कच्चिन्न सर्वे इति । कर्मणा अंत्यंते बध्यंत इति कर्मांताः कृष्यादिकर्मबद्धाः कृषीवलादयः

कच्चिद्वृत्तिमुदासीनेमध्यमेचानुमन्यसे ॥ कच्चिदात्मसमावृद्धाःशुद्धाःसंबोधनक्षमाः २६ कुलीनाश्चानुरक्ताश्चकृतास्तेवीरमंत्रिणः ॥ विजयोमंत्रमूलोहि राज्ञोभवतिभारत २७ कच्चित्संवृतमंत्रैस्तेअमात्यैःशास्त्रकोविदैः ॥ राष्ट्रंसुरक्षितंतातशत्रुभिर्नविलुप्यते २८ कच्चिन्निद्रावशंनैषिकच्चित्कालेविबुद्ध्यसे ॥ कच्चिच्चापररात्रेषुचिंतयस्यर्थमर्थवित् २९ कच्चिन्मंत्रयसेनैकःकच्चिन्नबहुभिःसह ॥ कच्चित्तेमंत्रितोमंत्रोनराष्ट्रंपरिधावति ३० कच्चिदर्थान्विनिश्चित्यलघुमू लान्महोदयान् ॥ क्षिप्रमारभसेकर्तुंनविघ्नयसितादृशान् ३१ कच्चिन्नसर्वेकर्मांताःपरोक्षास्तेविशंकिताः ॥ सर्वेवापुनरुत्सृष्टाःसंसृष्टंचात्रकारणम् ३२ आप्तैरलुब्धैःक्रमिकैस्तेचकच्चिदनुष्ठिताः ॥ कच्चिद्राजन्कृतान्येवकृतप्रायाणिवापुनः ३३ विदुस्तेवीरकर्माणिनानवाप्तानिकानिचित् ॥ कच्चित्कार णिकाधर्मेसर्वशास्त्रेषुकोविदाः ॥ कारयंतिकुमारांश्चयोधमुख्यांश्चसर्वशः ३४ कच्चित्सहस्रैर्मूर्खाणामेकंक्रीणासिपंडितम् ॥ पंडितोह्यर्थकृच्छ्रेषुकुर्यान्निः श्रेयसंपरम् ३५ कच्चिद्दुर्गाणिसर्वाणिधनधान्यायुधोदकैः ॥ यंत्रैश्चपरिपूर्णानितथाशिल्पिधनुर्धरैः ३६ एकोऽप्यमात्योमेधावीशूरोदांतोविचक्षणः ॥ राजानंराजपुत्रंवाप्रापयेन्महतींश्रियम् ३७

कच्चित्ते परोक्षा अज्ञाता न संति । अथवा विशंकिताः अविश्वास्याः न संति । अथवा पुनरुत्सृष्टाः पुनःपुनस्त्यक्तोपात्ताः संसृष्टं स्नेहः । 'संसृष्टं त्रिषु संगते' इति मेदिनी चिरपरिग्र हात् ज्ञाताःविश्वास्याः स्निग्धाश्च कर्मकरा अत्र महोदये कर्मणि कारणमुदयनिमित्तं ज्ञात्वा तादृशानेव संगृह्णीयादित्यर्थः ३२ एतदेवाहार्द्धेन आप्तैरिति । क्रमिकैर्वृद्धक्रमागतैः । ते च कृष्यादयश्चकच्चिदिति मंत्रगुप्तिवत्कर्मगुप्तिरपि कर्त्तव्येत्यर्थः ३३ अनवाप्तान्यनारब्धानि न विदुः कच्चिदिति आवृत्त्या योज्यं । कोशवृद्ध्युपायमुक्त्वा बलवृद्ध्युपायमाह कच्चित्का रणिका इति ! कारणं ज्ञापनं शिष्येभ्योविद्याप्रतिपादनं तदर्थं चरंति ते कारणिकाः कृपद्रोणसदृशा आचार्याः कारयंति शिक्षयंति ३४ सुहृद्वर्गामात्यसंपदं क्रमेण त्रिभिराह कच्चित्सहस्रैरित्यादिभिः । अर्थकृच्छ्रेषु प्रयोजनसंकटेषु । निःश्रेयसं कल्याणं । ३५ । ३६ । ३७ ।

षष्ठीं राष्ट्रसंपदमाह कच्चिदष्टादशान्येष्विति । तीर्थानि मंत्रिप्रभृतीन्यष्टादश यान्यवगाह्य राजा कृतकृत्यो भवति । तानि चोक्तानि नीतिशास्त्रे । 'मंत्री पुरोहितश्चैव युवराजश्च भूप तिः ॥ पंचमो द्वारपालश्च षष्ठोऽन्तर्वेशिकस्तथा ॥ कारागाराधिकारी च द्रव्यसंचयकृत्तथा ॥ कृत्याकृत्येषु चार्थानां नवमो विनियोजकः ॥ प्रदेष्टा नगराध्यक्षः कार्यनिर्मा णकृत्तथा ॥ धर्माध्यक्षः सभाध्यक्षो दंडपालस्त्रिपंचमः ॥ षोडशो दुर्गपालश्च तथा राष्ट्रांतपालकः ॥ अटवीपालकांतानि तीर्थान्यष्टादशैव तु ॥ चारान्विचारयेत्तीर्थेष्वा त्मनश्च परस्य च ॥ पाखंडादीनविज्ञातानन्योन्यमितरेष्वपि ॥ मंत्रिणं युवराजं च हित्वा स्वेषु पुरोहितम्' इति । एषां तीर्थशब्दवाच्यत्वे हलायुधः । 'योनौ जलावतारे च मं त्र्याद्यष्टादशस्वपि ॥ पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपि' इति । परेषामष्टादशसु स्वस्य मंत्रिपुरोहितयुवराजवर्जं पंचदशसु च तीर्थेषु चारानन्यैः परस्परं चाविज्ञातांस्त्रींस्त्री न्प्रयुज्य तत्रत्यां वार्तां सर्वचारसंवादे तथ्यां जानीयात् ज्ञात्वा च स्वप्रजानामनुरंजनेन परप्रजानां दुःखितानामभयदानादिना आकर्षणेन च स्वराष्ट्रं वर्धयेदित्युक्तं भवति ३९ पूर्वोक्तानां गौणस्वामिनां संपदं विवक्षुर्मुख्यस्वामिसंपदं तावदाह कच्चिद्द्विषामिति । अविदितः परकिंकरैः । प्रतिपन्नः सावधानः । प्रतियत्त इति पाठे प्रतीकारे यत्नवान् । नित्ययु

कच्चिदष्टादशान्येषुस्वपक्षेदशपंचच ॥ त्रिभिस्त्रिभिरविज्ञातैर्वेत्सितीर्थानिचारकैः ३८ कच्चिद्द्विषामविदितःप्रतिपन्नश्चसर्वदा ॥ नित्ययुक्तोरिपून्सर्वा न्वीक्षसेरिपुसूदन ३९ कच्चिद्विनयसंपन्नःकुलपुत्रोबहुश्रुतः ॥ अनसूयुरनुप्रष्टासत्कृतस्तेपुरोहितः ४० कच्चिदग्निषुतेयुक्तोविधिज्ञोमतिमानृजुः ॥ हुतं चहोष्यमाणंचकालेवेदयतेसदा ४१ कच्चिदंगेषुनिष्णातोज्योतिषःप्रतिपादकः ॥ उत्पातेषुचसर्वेषुदैवज्ञःकुशलस्तव ४२ कच्चिन्मुख्यामहत्स्वेवमध्यमे षुचमध्यमाः ॥ जघन्याश्चजघन्येषुभृत्याःकर्मसुयोजिताः ॥ अमात्यानुपधातीतान्पितृपैतामहान्शुचीन् ॥ श्रेष्ठान्श्रेष्ठेषुकच्चित्त्वंनियोजयसिकर्मसु ४३ कच्चिन्नोग्रेणदंडेनभृशमुद्विजसेप्रजाः ॥ राष्ट्रंतवानुशासंतिमंत्रिणोभरतर्षभ ४४ कच्चित्त्वांनावजानंतियाजकाःपतितंयथा ॥ उग्रप्रतिग्रहीतारंकामयानमिव स्त्रियः ४५ कच्चिद्धृष्टश्चशूरश्चमतिमान्धृतिमान्शुचिः ॥ कुलीनश्चानुरक्तश्चदक्षःसेनापतिस्तव ४६

क्तो नित्योद्योगी ३९ विनयसंपन्नः शिक्षायुक्तः । कुलपुत्रः सत्कुलजः । अनसूयुः परगुणेषु दोषारोपमकुर्वन् । अनुप्रष्टा शास्त्रचर्चाकुशलः । असंकीर्ण इति पाठे सदसद्विवेकवान् ४० ऋजुरकुटिलः ४१ अंगेषु सामुद्रिकशास्त्रोक्तरीत्या अंगानां परीक्षायां । उत्पातेषु दिव्यभौमशारीरेषु धूमकेतुभूकंपवामनेत्रस्फुरणादिष्वागाम्यशुभसूचकेषु ४२ सेनापत्याकर कोशाध्यक्षकृष्याद्यवेक्षणानि मुख्यमध्यमनीचानि । उपधातीतान् छलरहितान् श्रेष्ठेषु मंत्रकार्येषु ४३ । ४४ पतितमिति व्यतिरेकदृष्टांतः नावजानंति नावमन्यंते तत्र हेतुः उग्रप्र तिग्रहीतारं उग्रमिति क्रियाविशेषणं । यद्वा उग्रं हिंस्रं कर्म तेन प्रतिग्रहीतारं धनस्य प्रजापीडकमित्यर्थः । 'यथोक्तं प्रजापीडनसंतापात्समुद्भूतो महानलः ॥ राज्ञः प्राणान् बलं कोशं नादग्ध्वा विनिवर्तते' इति । तथा च नाशहेतुकर्मकारिणोऽवज्ञैवोचिताऽतस्त्वया तन्न कर्तव्यमित्यर्थः । कामयानं कामतो यानं पर्यटनं यस्य तं स्वैरिणमिव भ्रष्टत्वादर तिप्रदत्वाच्च स्त्रियोऽवमन्यंते तद्वत् ४५ हृष्टो धनमानादिना ४६

धृष्टावदाताः प्रगल्भा निष्कपटाश्च अत एव विक्रांता जयं कृतवंतः । एवं गौणस्वामिसंपदमुक्त्वा तद्वृद्धिहेतुमाह त्वया सत्कृत्य मानिता इत्यादिना ४७ भक्तमहरहर्देयं धान्या
दि । वेतनं मासांतदेयं वित्तं । विकर्षणं कालातिक्रमः ४८ दौर्गत्यात् दारिद्र्यण ४९ प्रधानतः मंत्रिणमारभ्यमंत्रिप्रभृतय इत्यर्थः ५० सांपरायिकान् संग्रामहितान् शूरान् गज
रथतुरगारोहान् पदातींश्चार्थान्प्रयोजनानि नानुशास्ति । सर्वस्यैकाधिपत्ये तद्भेदेन सर्वनाशो युगपदेव स्यादिति भावः ५१ कच्चित्पुरुषेति । कृतज्ञो भवेदिति भावः ५२ कच्चिद्विद्ये
ति । बुद्धिदान् मानयस्वेति भावः ५३ कच्चिद्दारानिति । जीवतां शूराणां विश्वासार्थं । व्यसनं चेति परलोकार्थं ५४ तदेवाह युद्धे वेति ५५ सर्वस्या इति प्रजानुकूल्यमपि जयहेतुः
५६ एवं विजयहेतुं प्रकृतिसंपदमुक्त्वा विजयकालमाह कच्चिद्व्यसनिनामिति । व्यसनैः 'स्त्री द्यूतं मृगया मद्यं नृत्यं गीतं वृथाटनं ॥ वाद्यं निंदा दिवास्वापो व्यसनानि नृणां दश'
इत्युक्तैर्युक्तं । त्रिविधं बलं मंत्रकोशभृत्यबलानि । प्रभुमंत्रोत्साहशक्तीर्वा ५७ पार्ष्णिमूलं पार्ष्णिग्राहकः आदिर्यस्य तत् द्वादशविधं मंडलं तच्चोक्तं कामंदकीये । 'अमात्यराष्ट्रदुर्गा
णि कोशो दंडश्च पंचमः ॥ एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः ॥ संपन्नस्तु प्रकृतिभिर्महोत्साहः कृतश्रमः ॥ जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः ॥ अरिर्मित्रमरे

कच्चिद्बलस्यतेमुख्याःसर्वयुद्धविशारदाः ॥ धृष्टावदाताविक्रांतास्त्वयासत्कृत्यमानिताः ४७ कच्चिद्बलस्यभक्तंचवेतनंचयथोचितम् ॥ संप्राप्तकालेदात
व्यंददासिनविकर्षसि ४८ कालातिक्रमणादेतेभक्तवेतनयोर्भृताः ॥ भर्तुःकुर्वंतिदौर्गत्यात्सोऽनर्थःसुमहान्स्मृतः ४९ कच्चित्सर्वेऽनुरक्तास्त्वांकुलपुत्राःप्रधा
नतः ॥ कच्चित्प्राणांस्तवार्थेषुसंत्यजंतिसदायुधि ५० कच्चिन्नैकोबहूनर्थान्सर्वशःसांपरायिकान् ॥ अनुशास्तियथाकामंकामात्माशासनातिगः ५१ क
च्चित्पुरुषकारेणपुरुषःकर्मशोभयन् ॥ लभतेमानमधिकंभूयोवाभक्तवेतनम् ५२ कच्चिद्विद्याविनीतांश्चनरान्ज्ञानविशारदान् ॥ यथार्हंगुणतश्चैवदानेना
भ्युपपद्यसे ५३ कच्चिद्दारान्मनुष्याणांतवार्थेमृत्युमीयुषाम् ॥ व्यसनंचाभ्युपेतानांबिभर्तिभरतर्षभ ५४ कच्चिद्भयादुपगतंक्षीणंवारिपुमागतम् ॥
युद्धेवाविजितंपार्थपुत्रवत्परिरक्षसि ५५ कच्चित्त्वमेवसर्वस्याःपृथिव्याःपृथिवीपते ॥ समश्चानभिशंक्यश्चयथामातायथापिता ५६ कच्चिद्व्यसनिनंशत्रुं
निशम्यभरतर्षभ ॥ अभियासिजवेनैवसमीक्ष्यत्रिविधंबलम् ५७ यात्रामारभसेदिष्ट्याप्राप्तकालमरिंदम ॥ पार्ष्णिमूलंचविज्ञायव्यवसायंपराजयम् ५८

मित्रं मित्रमित्रमतः परं ॥ अथारिमित्रमित्रं च विजिगीषोः पुरस्कृताः ॥ पार्ष्णिग्राहस्ततः पश्चादाक्रंदस्तदनंतरं ॥ आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः ॥ अरेश्च विजिगीषोश्च
मध्यमो भूम्यनंतरः ॥ अनुग्रहे संहतयोर्व्यस्तयोर्निग्रहे प्रभुः ॥ मंडलाद्बहिरेतेषामुदासीनो बलाधिकः ॥ अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः' इति । विजिगीषुशत्रू तयोर्मित्रे
तन्मित्रे चेति त्रीणि द्वंद्वानि क्रमेण पुरतः । विजिगीषोः पृष्ठतः पार्ष्णिग्राहाक्रंदौ पार्ष्णिग्राहः पृष्ठरक्षकः । आक्रंदः प्रोत्साहकः । एतयोरनुग्राहकावासारौ तत्तत्पृष्ठगतौ पार्ष्णिग्रा
हासार आक्रंदासारश्चेतिदश पुरुषाः । विजिगीषुशत्र्वोः पार्श्वे मध्यमः सर्वेषां पार्श्वे उदासीनः । इति मंडलं पार्ष्णिमूलमित्युच्यते । व्यवसायं कृत्यनिश्चयं कृत्यं च 'अलब्धवेत
नो लुब्धो मानी चाप्यवमानितः ॥ क्रुद्धश्च कोपितोऽकस्मात्तथा भीतिश्च भीषितः ॥ यथाभिलाषितैः कामैर्भिंद्यादेतांश्चतुर्विधान् ॥ परकीयान् स्वकीयांस्तु रक्षेद्विजयकामुकः'
इति नीतिशास्त्रोक्तं । पराजयं पराजयमूलानां व्यसनानां परपक्षे सद्भावं स्वपक्षे चाभावं विज्ञाय दिष्ट्या विशेषतो दैवज्ञादिद्वारा ज्ञात्वा । तत्र दैवं व्यसनं पंचविधं मानुषं-

च पंचविधं । यथोक्तंकामंदकीये । ‘हुताशनो जलं व्याधिदुर्भिक्षं मरकस्तथा । इति पंचविधं दैवं व्यसनं मानुषं परं । अयुक्तेभ्यश्च चोरेभ्यः परेभ्यो राजवल्लभात् । पृथिवीपतिलो भाच्च प्रजानां पंचधा भयम्’ इति ५८ उपच्छन्नानि परैरलक्ष्याणि । रत्नानि उत्कृष्टवस्तूनि भेदायेत्यर्थः ५९ । ६० स्वनुष्ठिताः शोभनेन पुरुषेण सम्यगनुष्ठिताः । विधिवद्गुणाः ये सामादयः विधिवदनुष्ठिताः संतो गुणाः हिताय भवंत्यन्यथा विपरीताय यथोक्तमभियुक्तैः । चतुर्थोपायसाध्ये तु रिपौ सांत्वमपक्रियेति । यद्वा सामादयोऽवश्यमनुष्ठेयाः यतो राज्ञां गुणाः संधिविग्रहयानासनद्वैधीभावसंश्रयाः विधिवदग्निहोत्रादिविधिवदवश्यानुष्ठेयाः तदकरणे स्वराष्ट्रभंगादिना जातेन प्रजापीडनेन राज्ञां दोषोत्पत्तिः ६१ मूलं स्वराज्यं दृढम प्रत्यर्थिभिःशूरैरधिष्ठितं सत् दृढं परानभिभाव्यं कृत्वा ६२ अष्टांगसंयुक्ता‘रथा नागा हया योधाः पत्तयः कर्मकारकाः । चारा दैशिकमुख्याश्च ध्वजिन्यष्टांगिका मता’ । चतुर्विधबला मौलमैत्रभृत्यार्टविकैर्बलैर्युक्ता बलमुख्यैः सेनापतिभिः प्रतिवर्धिनी प्रातिकूल्येनच्छेदिनी ६३ लवःसस्यच्छेदनकालः मुष्टिःसस्यानां गोपनकालः दुर्भिक्षमिति यावत् । लूञ् छेदने मुष

बलस्यचमहाराजदत्त्वावेतनमग्रतः ॥ कच्चिच्चबलमुख्येभ्यःपरराष्ट्रेपरंतप ॥ उपच्छन्नानिरत्नानिप्रयच्छसियथार्हतः ५९ कच्चिदात्मानमेवाग्रेविजित्य विजितेंद्रियः ॥ परान्‌जिगीषसेपार्थप्रमत्तानजितेंद्रियान् ६० कच्चित्तेयास्यतःशत्रून्पूर्वंयांतिस्वनुष्ठिताः ॥ सामदानंचभेदश्चदंडश्चविधिवद्गुणाः ६१ कच्चिन्मूलंदृढंकृत्वापरान्यासिविशांपते ॥ तांश्चविक्रमसेजेतुंजित्वाचपरिरक्षसि ६२ कच्चिदष्टांगसंयुक्ताचतुर्विधबलाचमूः ॥ बलमुख्यैःसुनीताते‌द्विषतां प्रतिवर्धिनी ६३ कच्चिल्लवंचमुष्टिंचपरराष्ट्रेपरंतप ॥ अविहायमहाराजनिहंसिसमरेरिपून् ६४ कच्चित्स्वपरराष्ट्रेषुबहवोऽधिकृतास्तव ॥ अर्थान्समाधि तिष्ठंतिरक्षंतिचपरस्परम् ६५ कच्चिदभ्यवहार्याणिगात्रसंस्पर्शनानिच ॥ घ्रेयाणिचमहाराजरक्षंत्यनुमतास्तव ६६ कच्चित्कोशश्चकोष्ठंचवाहनंद्वारमा युधम् ॥ आयश्चकृतकल्याणैस्तवभक्तैरनुष्ठितः ६७ कच्चिदाभ्यंतरेभ्यश्चबाह्येभ्यश्चविशांपते ॥ रक्षस्यात्मानमेवाग्रेतांश्चस्वेभ्योमिथश्चतान् ६८ क च्चिन्नपानेद्यूतेवाक्रीडासुप्रमदासुच ॥ प्रतिजानंतिपूर्वाह्णेव्ययंव्यसनजंतव ६९

स्तेये आभ्यामधिकरणे घक्तिनौ । परराष्ट्रे क्षेत्रस्थेषु सस्येषु सुखलब्धान्नैर्दुर्भिक्षे च राजकुललब्धभक्तोपजीविभिर्निरन्नताक्रांताः शत्रवः सुखं जेया इत्यर्थः ६४ स्वपरराष्ट्रेषु स्वेति दृष्टांतार्थं स्वराष्ट्रे इव परराष्ट्रे प्रविष्टाः बहवोऽधिकृताः स्थाने स्थाने स्थिताः स्थानपत्यादयोऽर्थान् प्रयोजनानि प्रजावशीकरणकरग्रहणादीनि रक्षंति च परस्परं संभूय परकीय मागतं सेनापत्यादिकमभिभूय राष्ट्रं स्वीयांश्च रक्षंतीत्यर्थः ६५ अभ्यवहार्याणि भक्ष्याणि । गात्रसंस्पर्शनानि वस्त्राणि । संघर्षणानीति पाठे चंदनागुरुकुंकुमकस्तूरिकादीनि । घ्रेया णि उत्तमधूपादीनि । अनुमताः विश्वस्ताः । तव त्वदर्थं रक्षंति न तु देशांतरोत्पन्नानि तानि स्वयमेव स्वीकुर्वंतीत्यर्थः ६६ कोशो धनगृहं । कोष्ठं धान्यस्थानं ६७ आभ्यंतरेभ्यः सूदादिभ्यः । बाह्येभ्यः सेनापत्यादिभ्यः । तानुभयान्स्वेभ्यः पुत्रामात्यादिभ्यः । तानपि मिथः पुत्रममात्यादमात्यं च पुत्राद्रक्षसि ६८ कच्चिन्नेति पानादिव्यसनजं व्ययं तव पूर्वाह्णेधर्माचरणकाले भृत्याः न प्रतिजानंति नावेदयंति । आवेदने हि तदानीमागताः शिष्टाः पुरोहितादयः पानादिदुर्व्यसनासक्तं त्वां ज्ञात्वा त्यजेयुरिति भावः ६९

सुभिक्षसाम्यदुर्भिक्षेष्वायस्य पादेन पादाभ्यां त्रिभिः पादैर्वा व्ययः संशुद्ध्यते पूर्यते । सर्वथाऽपि कोशवृद्धिः कार्येति भावः ७० दुर्गतात् दरिद्रान् ७१ अनुतिष्ठंति निवेदयंति ७२ अनुप्रौढत्वहितकामत्वज्ञानानंतरं प्रियान् कर्मभ्योऽपकर्षोऽधिकारच्युतिः सा च पूर्वं किल्बिषमप्राप्य दोषमदृष्ट्वा न कर्तव्येत्यर्थः ७३ । ७४ अप्राप्तव्यवहाराः अप्रौढाः ७५ । ७६ देवमातृका वृष्टिनिष्पाद्यसस्या ७७ प्रत्येकं च शतं प्रतिशतमेकवृद्ध्येति संबंधः । एकैकः प्रतिमासं वर्धनीय इत्यर्थः । पादिकं च शतं वृद्ध्येति पाठे तु वर्षस्य शतचतुर्थांशो वृद्धिः तथा च किंचिदधिकाद्वयुत्तरवृद्धिः। आद्ये संबंधके वृद्धिरन्यत्र निर्बंधके इति विभागः यत्तु । 'द्विकं त्रिकं चतुष्कं च पंचकं च समं शतं । मासस्य वृद्धिं गृह्णीयात्' इति त्रिकादि पक्षस्त्वाध मर्णिकव्यवसायानुसारेणेति ज्ञेयं ७८ वार्ता कृषिर्वाणिज्यं पाशुपाल्यं कुसीदं चेति चतुर्विधा ७९ कच्चिच्छूरा इति । प्रतिग्रामं पंचपंचेति । स्वनुष्ठिताः शोभनमनुष्ठितमनुष्ठानं येषां ते

कच्चिदायस्यचार्द्धेनचतुर्भागेनवापुनः ॥ पादभागैस्त्रिभिर्वाऽपिव्ययःसंशुद्ध्यतेतव ७० कच्चिज्ज्ञातीन्गुरून्वृद्धान्वणिजःशिल्पिनःश्रितान् ॥ अभीक्ष्ण मनुगृह्णासिधनधान्येनदुर्गतान् ७१ कच्चिदायव्ययेयुक्ताःसर्वेगणकलेखकाः ॥ अनुतिष्ठंतिपूर्वाह्णेनित्यमायंव्ययंतव ७२ कच्चिदर्थेषुसंप्रौढान्हितकामा ननुप्रियान् ॥ नापकर्षसिकर्मभ्यःपूर्वमप्राप्यकिल्बिषम् ७३ कच्चिद्विदित्वापुरुषानुत्तमाधममध्यमान् ॥ त्वंकर्मस्वनुरूपेषुनियोजयसिभारत ७४ कच्चि न्नलुब्धाश्चौरावावैरिणोवाविशांपते ॥ अप्राप्तव्यवहारावातवकर्मस्वनुष्ठिताः ७५ कच्चिन्नचौरैर्लुब्धैर्वाकुमारैःस्त्रीबलेनवा ॥ त्वयावापीड्यतेराष्ट्रंकच्चित्तु ष्टाःकृषीवलाः ७६ कच्चिद्राष्ट्रेतडागानिपूर्णानिचबृहंतिच ॥ भागशोविनिविष्टानिनकृषिर्देवमातृका ७७ कच्चिन्नभक्तंबीजंचकर्षकस्यावसीदति ॥ प्रत्ये कंचशतंवृद्ध्याददास्यृणमनुग्रहम् ७८ कच्चित्स्वनुष्ठितातातवार्तातेसाधुभिर्जनैः ॥ वार्तायांसंश्रितस्तातलोकोऽयंसुखमेधते ७९ कच्चिच्छूराःकृतप्रज्ञाःपं चपंचस्वनुष्ठिताः ॥ क्षेमंकुर्वंतिसंहत्यराजन्जनपदेतव ८० कच्चिन्नगरगुप्त्यर्थंग्रामानगरवत्कृताः ॥ ग्रामवच्चकृताःप्रांतास्तेचसर्वेत्वदर्पणाः ८१ कच्चि द्बलेनानुगताःसमानिविषमाणिच ॥ पुराणिचौरानिघ्नंतश्चरंतिविषयेतव ८२ कच्चित्स्त्रियःसांत्वयसिकच्चिताश्चसुरक्षिताः ॥ कच्चिन्नश्रद्दधास्यासांकच्चि द्गुह्यंनभाषसे ८३ कच्चिदात्ययिकंश्रुत्वातदर्थमनुचिंत्यच ॥ प्रियाण्यनुभवञ्शेषेनत्वमंतःपुरेनृप ८४ कच्चिद्द्वौप्रथमौयामौरात्रेःसुप्त्वाविशांपते ॥ संचिंतयसिधर्मार्थौयामउत्थायपश्चिमे ८५

तथा । ते च प्रशास्ता समाहर्ता संविधाता लेखकः साक्षी चेति । समाहर्ता प्रजाभ्यो द्रव्यमुद्गृह्यैकीकृत्य राज्ञेऽर्पयिता । संविधाता प्रजासमाहर्त्रोरेकवाक्यताघटकः संहत्य एकी भूय ८० नगरवदित्यनेन बहुभिः शूरैरधिष्ठिताः ग्रामाः । बहुतरैर्नगराणि । बहुतमैर्जनपदेश्वरस्थानं पुरसंज्ञं । ग्रामाः शूद्रजनबहुलाः । आपणादियुक्तं नगरं । प्रांताः सीमास्था आ टविकानां ग्रामाः । ते च सर्वे त्वदर्पणाः ते प्रांतग्रामनगरपुरेशास्त्वय्येव कृताकृतस्य धनस्य चार्पणं निवेदनं येषां ते तथाभूताः । प्रांताधिपो ग्रामाधिपतौ सोऽपि नगराधिपतौ सोऽपि देशाधिपतौ सोऽपि साक्षाद्राज्ञि सर्वं निवेदयतीत्यर्थः ८१ विषमाणि सदुर्गाणि निघ्नंतो ये चरंति तान् बलेन सहितः पुराध्यक्षोऽनुद्रवेदित्यर्थः । समेषु विषमेष्वपीति पाठे विषमेषु ईतिकालेषु । अतिवृष्ट्याद्य ईतयः ८२ आसां वचनं आसां पुरश्च गुह्यं न भाषसे ८३ आत्ययिकमकल्याणं ८४ पश्चिमे चतुर्थे तस्मादेव द्वौ प्रथमौ द्वितीयतृतीयावित्यर्थः ८५

८६ । ८७ यमवत् स हि दंड्येषु क्रूरः पूज्येषु विनयवान्तद्वत् ८८ आबाधं दुःखं नियमेन पथ्याशनादिना मानसमाबाधम् ८९ अष्टांगायां चिकित्सायां । 'निदानं पूर्वलिंगानि रूपाण्युपशयस्तथा । संप्राप्तिरौषधी रोगी परिचारक एव च'इत्यष्टावंगानि । अथवा रोगो रोगहेतुः आरोग्यमारोग्यहेतुः तेषां लक्षणानिच ९० अर्थिनो याचकाः । प्रत्यर्थिनः परंपरागतवृत्तिप्रतिबंधात्क्षुब्धचित्ताः । प्रत्येत्य तदर्थिनः शत्रवो वा । न शब्दद्वयेन पश्येदेवेत्युच्यते ९१ । ९२ । ९३ कच्चिन्नेति । योऽरिर्बलेन पूर्वं परिपीडित एव न हतः स एव कालांतरे मंत्रेणोभाभ्यां च मंत्रबलाभ्यां कच्चिद्बलवान्नेति योजना । कच्चित्ते इति पाठे ते तव बले सैन्ये योऽरिः पूर्वपीडित इत्यादि पूर्ववत् ९४ प्रधानतः प्राधान्येन । हृताः दानमा

कच्चिदर्थयसेनित्यंमनुष्यान्समलंकृतः ॥ उत्थायकालेकालज्ञैःसहपांडवमंत्रिभिः ८६ कच्चिद्रक्तांबरधराःखड्गहस्ताःस्वलंकृताः ॥ उपासतेत्वामभितो रक्षणार्थमरिंदम ८७ कच्चिद्दंडयेषुयमवत्पूज्येषुचविशांपते ॥ परीक्ष्यवर्तसेसम्यगप्रियेषुप्रियेषुच ८८ कच्चिच्छारीरमाबाधमौषधैर्नियमेनवा ॥ मानसं वृद्धसेवाभिःसदापार्थापकर्षसि ८९ कच्चिद्वैद्याश्चिकित्सायामष्टांगायांविशारदाः ॥ सुहृदश्चानुरक्ताश्चशरीरेतेहिताःसदा ९० कच्चिनलोभान्मोहाद्वामा नाद्वापिविशांपते ॥ अर्थिप्रत्यर्थिनःप्राप्तान्नपश्यसिकथंचन ९१ कच्चिन्नलोभान्मोहाद्वाविश्रंभात्प्रणयेनवा ॥ आश्रितानांमनुष्याणांवृत्तिंत्वंसंरुणत्सिवै ९२ कच्चित्पौरानसहितायेचतेराष्ट्रवासिनः ॥ त्वयासहविरुध्यंतेपरैःक्रीताःकथंचन ९३ कच्चिन्नदुर्बलःशत्रुर्बलेनपरिपीडितः ॥ मंत्रेणबलवान्कश्चिदुभाभ्यां चकथंचन ९४ कच्चित्सर्वेऽनुरक्तास्त्वांभूमिपालाःप्रधानतः ॥ कच्चित्प्राणांस्त्वदर्थेषुसंत्यजंतित्वयाहृताः ९५ कच्चित्तेसर्वविद्यासुगुणतोऽर्चाप्रवर्तते ॥ ब्राह्मणानांचसाधूनांतवनैःश्रेयसीशुभा ॥ दक्षिणास्त्वंददास्येषांनित्यंस्वर्गापवर्गदाः ९६ कच्चिद्धर्मेत्रयीमूलेपूर्वैराचरितेजनैः ॥ यतमानस्तथाकर्तुंतस्मिन्कर्मणिवर्तसे ९७ कच्चित्तवगृहेऽन्नानिस्वादून्यश्नंतिवैद्विजाः ॥ गुणवंतिगुणोपेतास्तवाध्यक्षंसदक्षिणम् ९८ कच्चित्क्रतूनेकचित्तोवाजपेयांश्चसर्वशः॥ पुंडरीकांश्चकात्स्न्र्येनयतसेकर्तुमात्मवान् ९९ कच्चिज्ज्ञातीन्गुरून्वृद्धान्दैवतांस्तापसानपि ॥ चैत्यांश्चवृक्षान्कल्याणान्ब्राह्मणांश्चनमस्यसि १०० कच्चिच्छोकोनमन्युर्वात्वयाप्रोत्पाद्यतेऽनघ ॥ अपिमंगलहस्तश्चजनःपार्श्वेऽनुतिष्ठति १०१ कच्चिदेषाचतेबुद्धिर्वृत्तिरेषाचतेऽनघ ॥ आयुष्याचयशस्या चधर्मकामार्थदर्शिनी २ एतयावर्तमानस्यबुद्ध्याराष्ट्रंनसीदति ॥ विजित्यचमहींराजासोऽत्यंतंसुखमेधते १०३



नाभ्यां वशीकृताः । आहृता इति वा पाठः ९५ विद्यासु साधूनां ब्राह्मणानां गुणतो गुणं दृष्ट्वाऽर्चा पूजा प्रवर्तते ९६ तथाकर्तुं पूर्वैराचरितवत्कर्तुं तस्मिंस्त्रयीमूले ९७ तवाध्यक्षं त्वत्समक्षं सदाक्षिणं सदक्षिणालाभं यथा स्यात्तथाऽश्नात ९८ । ९९ चैत्यान्स्थंडिलवतो ग्रामसूचकान् वृक्षान् १०० शोको नीचानां । मन्युः श्रेष्ठानां । मंगलहस्तो मंगलप्रदो मंत्रादिवित् पुरोहितादिः । अनुतिष्ठति स्वस्त्ययनं करोति १०१ या एषा इदानीं वृत्तिरस्ति सैव सार्वदिकी कच्चिदस्तीत्यर्थः २ । १०३

कच्चिदार्य इति। आर्यो विशुद्धात्मा च सन्नपि कस्मिंश्चिन्निंद्ये कर्मणि निमित्ते क्षारितो धनधान्यादिना रिक्तः कृतः।'राजभिः कृतदंडास्तु शुद्ध्यंति मलिनाजनाः'इत्यादिशास्त्रप्रामाण्याच्छुचिरपि सन्अदृष्टशास्त्रकुशलैरनुपासितपंडितैर्मूर्खैरमात्यैः कच्चिन्न वध्यते हन्यतेअधिकधनलोभात्। अदृष्ट इति सविसर्गपाठे तु शास्त्रकुशलैरमात्यैरज्ञात इत्यर्थः ४ दुष्टः स्वभावतः तत्कारी दुष्टकर्मकारी तज्ज्ञैश्चोरान्वेषिभिः कोष्ठपालैर्दृष्टः सकारणश्चोरितद्रव्यसहितो गृहीतो विसृतश्चेति योजना ५ उत्पन्नानिति। चो वार्थे आढ्यस्य दारिद्रस्य वाऽर्थानुत्पन्नान् बीजकणिश्नन्यायेन स्वल्पकालेनैव बहुगुणां वृद्धिं प्राप्तान् तवामात्याः मिथ्या अनृतान् चौर्यादिनाऽन्यायेनार्जितानिति कच्चिन्न पश्यंति। जनैः पिशुनैः। हृताः

कच्चिदार्योविशुद्धात्माक्षारितश्चौरकर्मणि ॥ अदृष्टशास्त्रकुशलैर्नलोभाद्वध्यतेशुचिः १०४ दुष्टोगृहीतस्तत्कारीतज्ज्ञैर्दृष्टःसकारणः ॥ कच्चिन्नमुच्यतेस्तेनो द्रव्यलोभान्नरर्षभ ५ उत्पन्नान्कच्चिदाढ्यस्यदरिद्रस्यचभारत ॥ अर्थान्नमिथ्यापश्यंतितवामात्याहृताजनैः ६ नास्तिक्यमनृतंक्रोधंप्रमादंदीर्घसूत्रताम् ॥ अदर्शनंज्ञानवतामालस्यंपंचवृत्तिताम् ॥ एकचिंतनमर्थानामनर्थज्ञैश्चचिंतनम् ७ निश्चितानामनारंभंमंत्रस्यापरिरक्षणम् ॥ मंगलाद्यप्रयोगंचप्रत्युत्थानंचसर्वतः ८ कच्चित्त्वंवर्जयस्येतान्राजदोषांश्चतुर्दश ॥ प्रायशोयैर्विनश्यंतिकृतमूलाअपिपार्थिवाः ९ कच्चित्तेसफलावेदाःकच्चित्तेसफलंधनम् ॥ कच्चित्तेसफलादाराःकच्चित्तेसफलंश्रुतम् १० ॥ ॥ युधिष्ठिरउवाच ॥ ॥ कथंवैसफलावेदाःकथंवैसफलंधनम् ॥ कथंवैसफलादाराःकथंवैसफलंश्रुतम् ११ ॥ ॥ नारदउवाच ॥ ॥ अग्निहोत्रफलावेदादत्तभुक्तफलंधनम् ॥ रतिपुत्रफलादाराःशीलवृत्तफलंश्रुतम् १२ ॥ ॥ वैशंपायनउवाच ॥ ॥ एतदाख्यायसमुनिर्नारदोवैमहातपाः ॥ पप्रच्छानंतरमिदंधर्मात्मानंयुधिष्ठिरम् १३ ॥ ॥ नारदउवाच ॥ ॥ कच्चिदभ्यागताद्दूराद्वणिजोलाभकारणात् ॥ यथोक्तमवहार्यंतेशुल्कंशुल्कोपजीविभिः १४ कच्चित्तेपुरुषाराजन्पुरेराष्ट्रेचमानिताः ॥ उपानयंतिपण्यानिउपधाभिरवंचिताः १५ कच्चिच्छृणोषिवृद्धानांधर्मार्थसहितागिरः ॥ नित्यमर्थविदांतातयथाधर्मार्थदर्शिनाम् १६ कच्चित्तेकृषितंत्रेषुगोषुपुष्पफलेषुच ॥ धर्मार्थंचद्विजातिभ्योदीयतेमधुसर्पिषी १७ द्रव्योपकरणंकिंचित्सर्वदासर्वशिल्पिनाम् ॥ चातुर्मास्यावरंसम्यङ्नियतंसंप्रयच्छसि १८ कच्चित्कृतंविजानीषेकर्तारंचप्रशंससि ॥ सतांमध्येमहाराजसत्करोषिचपूजयन् ११९

हृतविवेकाः। पाठांतरे धनैर्हृता वशीकृताः। लुब्धो हि लिप्सुः परत्रासं तमपि दोषमारोप्य तद्वित्तं जिहीर्षतीति प्रसिद्धं ६ नास्तिक्यमित्यादिसार्द्धश्लोकत्रयं व्याख्यातम् ७।८ ९।१०।११। १२। १३ कच्चिदभ्यागता इति अवहार्यंते दाप्यंते शुल्कं राजग्राह्यं करं १४ पण्यानि विक्रेयद्रव्याणिउपधाभिश्छलैः १५। १६ कृषितंत्रेषु कृष्युत्पाद्येषु पुष्पफलेष्वार्द्रशुष्कधान्येषु। तथा गोषु जातेषु पुष्पफलेषु दुग्धघृतरूपेषूत्पन्नेषु सत्सु। मधुसर्पिषी। 'अन्नं वै मधु' इति श्रुतेर्धान्यादिकमन्नं घृतं च यल्लोके ब्रह्मोत्तरमित्युच्यते १७ द्रव्यं शिल्पिनां वेतनं उपकरणं स्वकार्यसाधनसामग्री। यथा चित्रोत्पादने रंजकद्रव्यादि चातुर्मास्यावरं मासचतुष्टयपर्याप्तानधिकम् १८। ११९

सूत्रं संक्षेपवाक्यं व्यवस्था वा । हस्त्यादीनां लक्षणपरीक्षाचिकित्सौषधोद्दीपनमादनादिप्रकारप्रतिपादकग्रंथसिद्धांतमात्रसंक्षेपयुक्तान् गृह्णासि तत्तदाचार्येभ्यः १२० यंत्राण्याग्नेयौष
धबलेन सीसकांस्यदृषद्गोलप्रक्षेपकाणि लोहमयानि भाषायां नालशब्दाभिधेयानि तेषां सूत्रं सूचकं शास्त्रं । नागरं नगरहितम् २१ अस्त्राणि मंत्रप्रयुक्तानि शस्त्राणि । ब्रह्मदंड अ
भिचारिकविद्या २२ व्यालः सर्पः व्याघ्रादेरप्येतदुपलक्षणम् २३ प्रव्राजितान् जातिबहिष्कृतान् अन्नमात्रार्थिनो दीनान् २४ । २५ । २६ । २७ उपसंहरति एवं यो वर्तत इति
१२८ ॥ ॥ इति॰ सभापर्वणि नैलकंठीये भारतभावदीपे पंचमोऽध्यायः ५ ॥ ॥ संपूज्याथाभ्यनुज्ञात इति १ । २ । ३ । ४ । ५ । ६ दिव्यसभालाभाद्गर्वितो युधिष्ठिर उवा

कच्चित्सूत्राणिसर्वाणिगृह्णासिभरतर्षभ ॥ हस्तिसूत्राश्वसूत्राणिरथसूत्राणिवाविभो १२० कच्चिदभ्यस्यतेसम्यग्गृहेतेभरतर्षभ ॥ धनुर्वेदस्यसूत्रंवैयंत्र
सूत्रंचनागरम् २१ कच्चिदस्त्राणिसर्वाणिब्रह्मदंडश्चतेऽनघ ॥ विषयोगास्तथासर्वेविदिताःशत्रुनाशनाः २२ कच्चिदग्निभयाच्चैवसर्वंव्यालभयात्तथा ॥ रोगर
क्षोभयाच्चैवराष्ट्रंस्वंपरिरक्षसि २३ कच्चिदंधांश्चमूकांश्चपंगून्व्यंगानबांधवान् ॥ पितेवपासिधर्मज्ञतथाप्रव्रजितानपि २४ षडनर्थामहाराजकच्चित्तेपृष्ठतः
कृताः ॥ निद्राऽऽलस्यंभयंक्रोधोमार्दवंदीर्घसूत्रता २५ ॥ ॥ वैशंपायनउवाच ॥ ॥ ततःकुरूणामृषभोमहात्माश्रुत्वागिरोब्राह्मणसत्तमस्य ॥ प्रण
म्यपादावभिवाद्यतुष्टोराजाऽब्रवीन्नारदंदेवरूपम् २६ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ एवंकरिष्यामियथात्वयोक्तंप्रज्ञाहिमेभूयएवाभिवृद्धा ॥ उक्त्वा
तथाचैवचकारराजालेभेमहींसागरमेखलांच २७ ॥ ॥ नारदउवाच ॥ ॥ एवंयोवर्ततेराजाचातुर्वर्ण्यस्यरक्षणे ॥ सविहृत्येहसुसुखीशक्रस्यैति
सलोकताम् १२८ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिलोकपालसभाख्यानपर्वणिनारदप्रश्नमुखेनराजधर्मानुशासनेपंचमोऽध्यायः ५ ॥ ॥ ६ ॥
॥ वैशंपायनउवाच ॥ ॥ संपूज्याथाभ्यनुज्ञातोमहर्षेर्वचनात्परम् ॥ प्रत्युवाचानुपूर्व्येणधर्मराजोयुधिष्ठिरः १ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ भ
गवन्न्याय्यमाहैतंयथावद्धर्मनिश्चयम् ॥ यथाशक्तियथान्यायंक्रियतेऽयंविधिर्मया २ राजभिर्यद्यथाकार्यंपुरावैतन्नसंशयः ॥ यथान्यायोपनीतार्थंकृतंहेतु
मदर्थवत् ३ वयंतुसत्पथंतेषांयातुमिच्छामहेप्रभो ॥ नतुशक्यंतथागंतुंयथातैर्नियतात्मभिः ४ ॥ वैशंपायनउवाच ॥ एवमुक्त्वासधर्मात्मावाक्यंतदभिपू
ज्यच ॥ मुहूर्तात्प्राप्तकालंचदृष्ट्वालोकचरंमुनिम् ५ नारदंसुस्थमासीनमुपासीनोयुधिष्ठिरः ॥ अपृच्छत्पांडवस्तत्रराजमध्येमहाद्युतिः ६ ॥ युधिष्ठिर
उवाच ॥ भवान्संचरतेलोकान्सदानानाविधान्बहून् ॥ ब्रह्मणानिर्मितान्पूर्वंप्रेक्षमाणोमनोजवः ७ ईदृशीभविताकाचिद्दृष्टपूर्वासभाक्वचित् ॥ इतोवाश्रे
यसीब्रह्मंस्तन्ममाचक्ष्वपृच्छतः ८ ॥ ॥ वैशंपायनउवाच ॥ ॥ तच्छ्रुत्वानारदस्तस्यधर्मराजस्यभाषितम् ॥ पांडवंप्रत्युवाचेदंस्मयन्मधुरयागिरा ९

च भवानिति । संचरते । समोगम्यृच्छीतिसूत्रे गमेर्गत्यर्थमात्रोपलक्षणपरत्वाच्चरेरपि तङ् कर्मव्यतिहारे वा तङ् । त्वं हि लोकेषु संचरसि लोकाश्च हार्दाकाशनिष्ठे त्वयि संचरंती
ति वाऽर्थः तेन सर्वज्ञत्वमुक्तं । पूर्वं मनुष्यसृष्टेः प्राङ्निर्मितान् देवलोकानित्यर्थः ७ क्वचिदिति देवलोकापेक्षया मनुष्यलोके क्वचित्काले वा भविता भवित्री । अनागतदर्शित्वात्तव
तदपि विदितमेवेत्यर्थः ८ स्मयन् युधिष्ठिरस्यापि गर्वोऽभूद्देवतामहाभाग्याज्ञानं चेति विस्मयं प्राप्नुवन् ९

मानुषेषु न दृष्टा नश्रुतेति अग्रेऽपि न द्रक्ष्यते न श्रोष्यते पूर्वकल्पसमानरूपत्वादुत्तरस्यापीत्यर्थः १० कैलासेति कुबेरस्येत्यर्थः ११ गतक्लमामविद्यादिक्लेशैर्वर्जितां तेन पूर्वांसु तत्स त्वं ज्ञायते दिव्यादिव्यैरिति । दिव्या दिविभवा रंभोर्वश्यादयः । अदिव्यास्तदन्ये मानुषाः पित्रादयः । 'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठंति तेन स पितृलोकेन संपन्नो महीयते' इति ब्रह्मलोके तत्सत्त्वस्यापि श्रवणात् । अभिप्रेयंते संकल्प्यंते इत्यभिप्रायाः विषयास्तैः । विश्वरूपिणीं भावकसंकल्पानुसारिनानारूपवर्ती मान

॥ नारदउवाच ॥ ॥ मानुषेषुनमेतातदृष्टपूर्वानचश्रुता ॥ सभामणिमयीराजन्यथेयंतवभारत १० सभांतुपितृराजस्यवरुणस्यचधीमतः ॥ कथयिष्ये तथेंद्रस्यकैलासनिलयस्यच ११ ब्रह्मणश्चसभांदिव्यांकथयिष्येगतक्लमाम् ॥ दिव्यादिव्यैरभिप्रायैरुपेतांविश्वरूपिणीम् १२ देवैःपितृगणैःसाध्यैर्यज्वभिर्नियतात्मभिः ॥ जुष्टांमुनिगणैःशांतैर्वेदयज्ञैःसदक्षिणैः ॥ यदितेश्रवणेबुद्धिर्वर्ततेभरतर्षभ १३ नारदेनैवमुक्तस्तुधर्मराजोयुधिष्ठिरः ॥ प्रांजलिर्भ्रातृभिःसार्द्धंतैश्चसर्वैर्द्विजोत्तमैः १४ नारदंप्रत्युवाचेदंधर्मराजोमहामनाः ॥ सभाःकथयताःसर्वाःश्रोतुमिच्छामहेवयम् १५ किंद्रव्यास्ताःसभाब्रह्मन्किंविस्ताराःकिमायताः ॥ पितामहंचकेतस्यांसभायांपर्युपासते १६ वासवंदेवराजंचयमंवैवस्वतंचके ॥ वरुणंचकुबेरंचसभायांपर्युपासते १७ एतत्सर्वंयथान्यायंब्रह्मर्षेवदतस्तव ॥ श्रोतुमिच्छामसहिताःपरंकौतूहलंहिनः १८ एवमुक्तःपांडवेननारदःप्रत्यभाषत ॥ क्रमेणराजन्दिव्यास्ताःश्रूयंतामिहनःसभाः १९ ॥ इतिश्रीमहाभारतेसभापर्वणिलोकपालसभाख्यानपर्वणियुधिष्ठिरसभाजिज्ञासायांषष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ नारदउवाच ॥ शक्रस्यतुसभादिव्याभास्वराकर्मनिर्मिता ॥ स्वयंशक्रेणकौरव्यनिर्जितार्कसमप्रभा १ विस्तीर्णायोजनशतंशतमध्यर्द्धमायता ॥ वैहायसीकामगमापंचयोजनमुच्छ्रिता २ जराशोकक्लमापेतानिरातंकाशिवाशुभा ॥ वेश्मासनवतीरम्यादिव्यपादपशोभिता ३ तस्यांदेवेश्वरःपार्थसभायांपरमासने ॥ आस्तेशच्यामहेंद्राण्याश्रियालक्ष्म्याचभारत ४ बिभ्रद्वपुरनिर्देश्यंकिरीटीलोहितांगदः ॥ विरजोंबरश्चित्रमाल्योह्रीकीर्तिद्युतिभिःसह ५ तस्यामुपासतेनित्यंमहात्मानंशतक्रतुम् ॥ मरुतःसर्वशोराजन्सर्वेचगृहमेधिनः ६ सिद्धादेवर्षयश्चैवसाध्यादेवगणास्तथा ॥ मरुत्वंतश्चसहिताभास्वंतोहेममालिनः ७ एतेसानुचराःसर्वेदिव्यरूपाःस्वलंकृताः ॥ उपासतेमहात्मानंदेवराजमरिंदमम् ८ तथादेवर्षयःसर्वेपार्थशक्रमुपासते ॥ अमलाधूतपाप्मानोदीप्यमानाइवाग्नयः ९

सीमित्यर्थः १२ जुष्टां सेवितां यदि श्रवणे बुद्धिर्वर्तते तर्हि कथयिष्ये इति पूर्वेण संबंधः १३ । १४ । १५ । १६ । १७ । १८ । १९ ॥ ॥ इति सभापर्वणि नैलकंठीये भारतभावदीपे षष्ठोऽध्यायः ६ ॥ ॥ शक्रस्येति कर्मभिर्विश्वकर्मणो यत्नैर्निर्मिता शक्रेण निर्जिता चेति संबंधः १ अध्यर्द्धं सार्धमायता दीर्घा वैहायसी खेचरी २ निरातंका निर्भया । शिवा शांतजना शुभा कल्याणावहा ३ शच्या नामतः श्रिया शोभया ४ । ५ मरुतो गृहमेधिन इति सामानाधिकरण्यम् ६ । ७ । ८ । ९

सोमसुतः सोमाभिषवकर्त्तारः सोमयाजिन इति यावत् १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ अर्थःअर्थाद्यभिमानिन्यो देवताः २० ब्रह्मणोंऽगाद्य प्र
सूतोऽग्निरंगिरा इति विश्रुतः । 'दक्षिणाग्निर्गार्हपत्याहवनीयाविति त्रयी । निर्मथ्यो वैद्युतः शूरः संवर्त्तो लौकिकस्तथा । जाठरो विषगः क्रव्यात् क्षेमवान् वैष्णवस्तथा । दस्यु

तेजस्विनःसोमसुतोविशोकाविगतज्वराः ॥ पराशरःपर्वतश्चतथासावर्णिगालवौ १० शंखश्चलिखितश्चैवतथागौरशिरामुनिः ॥ दुर्वासाःक्रोधनःश्येनस्त
थादीर्घतमामुनिः ११ पवित्रपाणिःसावर्णिर्याज्ञवल्क्योऽथभालुकिः ॥ उद्दालकःश्वेतकेतुस्तांडचोभांडायनिस्तथा १२ हविष्मांश्चगरिष्ठश्चहरिश्चंद्रश्चपा
र्थिवः ॥ हृद्यश्चोदरशांडिल्यःपाराशर्यःकृषीबलः १३ वातस्कंधोविशाखश्चविधाताकालएवच ॥ करालदंतस्त्वष्टाचविश्वकर्माचतुंबुरुः १४ अयोनि
जायोनिजाश्चवायुभक्षाहुताशिनः ॥ ईशानंसर्वलोकस्यवज्रिणंसमुपासते १५ सहदेवःसुनीथश्चवाल्मीकिश्चमहातपाः ॥ समीकःसत्यवाक्चैवप्रचेताःसत्य
संगरः १६ मेधातिथिर्वामदेवःपुलस्त्यःपुलहःक्रतुः ॥ मरुत्तश्चमरीचिश्चस्थाणुश्चात्रमहातपाः १७ कक्षीवान्गौतमस्तार्क्ष्यस्तथावैश्वानरोमुनिः ॥ मु
निःकालकवृक्षीयआश्राव्योऽथहिरण्मयः १८ संवर्तोदेवहव्यश्चविष्वक्सेनश्चवीर्यवान् ॥ दिव्याआपस्तथौषध्यःश्रद्धामेधासरस्वती १९ अर्थोधर्मश्चका
मश्चविद्युतश्चैवपांडव ॥ जलवाहास्तथामेघावायवस्तनयित्नवः २० प्राचीदिग्यज्ञवाहाश्चपावकाःसप्तविंशतिः ॥ अग्नीषोमौतथेंद्राग्नीमित्रश्चसविताऽर्य
मा २१ भगोविश्वेचसाध्याश्चगुरुःशुक्रस्तथैवच ॥ विश्वावसुश्चित्रसेनःसुमनस्तरुणस्तथा २२ यज्ञाश्चदक्षिणाश्चैवग्रहास्तोभाश्चभारत ॥ यज्ञवाहाश्च
येमंत्रास्सर्वेतत्रसमासते २३ तथैवाप्सरसोराजन्गंधर्वाश्चमनोरमाः ॥ नृत्यवादित्रगीतैश्चहास्यैश्चविविधैरपि २४ रमयंतिस्मनृपतेदेवराजंशतक्रतुम् ॥
स्तुतिभिर्मंगलैश्चैवस्तुवंतःकर्मभिस्तथा २५ विक्रमैश्चमहात्मानंबलवृत्रनिषूदनम् ॥ ब्रह्मराजर्षयश्चैवसर्वेदेवर्षयस्तथा २६ विमानैर्विविधैर्दिव्यैर्दीप्य
मानाइवाग्नयः ॥ स्रग्विणोभूषिताःसर्वेयांतिचायांतिचापरे २७ बृहस्पतिश्चशुक्रश्चनित्यमास्तांहितत्रवै ॥ एतेचान्येचबहवोमहात्मानोयतव्रताः २८ वि
मानैश्चंद्रसंकाशैस्सोमवत्प्रियदर्शनाः ॥ ब्रह्मणःसदृशाराजन्भृगुःसप्तर्षयस्तथा २९ एषासभामयाराजन्दृष्टापुष्करमालिनी ॥ शतक्रतोर्महाबाहोयाम्या
मपिसभांशृणु ३० इतिश्रीमहाभारतेसभापर्वणिलोकपालसभाख्यानपर्वणिइंद्रसभावर्णनंनामसप्तमोऽध्यायः ॥ ७ ॥ ॥ ८ ॥ नारदउवाच ॥
कथयिष्येसभांयाम्यांयुधिष्ठिरनिबोधताम् ॥ वैवस्वतस्ययांपार्थविश्वकर्माचकारह १

मान् बलदश्चैव शांतः पुष्टो विभावसुः । ज्योतिष्मान्भरतो भद्रः स्विष्टकृद्वसुमान् क्रतुः । सोमश्च पितृमांश्चैव पावकाः सप्तविंशतिः' २१ । २२ एवं यज्ञदक्षिणादयः २३ । २४
२५ । २६ । २७ । २८ । २९ पुष्करमालिनी नामतः ३० ॥ ॥ इति सभापर्वणि नैलकंठीये भारतभावदीपे सप्तमोऽध्यायः ७ ॥ ॥ ७ ॥ ॥ कथयिष्ये इति १

तैजसी ज्योतिर्मयी सौवर्णी वा भूयसी महती पूर्वसभातः २ सर्वतः कामरूपिणी यस्यां सर्वं वस्तु संकल्पसमकालमेव सत्रात्मकं भवतीत्यर्थः ३ । ४ कामाः काम्यमाना विषयाः प्रभूतं बहुलं भक्ष्यमपूपादि भोज्यमोदनादि ५ लेह्यं खंडशर्करादि चोष्यमिक्षुकांडादि स्रजः परंपराः तस्य भक्ष्याद्यन्नस्यकामफलाः आम्रादेरपिपसनादिकफलमुद्भवाति कामानुसारादित्यर्थः ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ [राम इति रामलक्ष्मणयोर्विष्णुशेषरूपेण स्वस्थानस्थयोरपि प्रतिमारूपेण उपासकानुग्रहार्थमत्रावस्थानं बोध्यं] १८

तैजसीसासभाराजन्बभूवशतयोजना ॥ विस्तारयामसंपन्नाभूयसीचापिपांडव २ अर्कप्रकाशाभ्राजिष्णुःसर्वतःकामरूपिणी ॥ नातिशीतानचात्युष्णामनसश्चप्रहर्षिणी ३ नशोकोनजरातस्यांक्षुत्पिपासेनचाप्रियम् ॥ नचदैन्यंक्लमोवाऽपिप्रतिकूलंनचाप्युत ४ सर्वेकामाःस्थितास्तस्यांयेदिव्यायेचमानुषाः ॥ सारवच्चप्रभूतंचभक्ष्यभोज्यमरिंदम ५ लेह्यंचोष्यंचपेयंचहृद्यंस्वादुमनोहरम् ॥ पुण्यगंधाःस्रजस्तस्यनित्यंकामफलाद्रुमाः ६ रसवंतिचतोयानिशीतान्युष्णानिचैवहि ॥ तस्यांराजर्षयःपुण्यास्तथाब्रह्मर्षयोऽमलाः ७ यमंवैवस्वतंतातप्रहृष्टाःपर्युपासते ॥ ययातिर्नहुषःपूरुर्मांधातासोमकोनृगः ८ त्रसदस्युश्चराजर्षिःकृतवीर्यःश्रुतश्रवाः ॥ अरिष्टनेमिःसिद्धश्चकृतवेगःकृतिर्निमिः ९ प्रतर्दनःशिबिर्मत्स्यःपृथुलाक्षोबृहद्रथः ॥ वार्तोमरुत्तःकुशिकःसांकाश्यःसांकृतिर्ध्रुवः १० चतुरश्वःसदस्योर्मिःकार्तवीर्यश्चपार्थिवः ॥ भरतःसुरथश्चैवसुनीथोनिशठोऽनलः ११ दिवोदासश्चसुमनाअंबरीषोभगीरथः ॥ व्यश्वःसदश्वोवध्र्यश्वःपृथुवेगःपृथुश्रवाः १२ पृषदश्वोवसुमनाःक्षुपश्चसुमहाबलः ॥ रुषद्गुर्वृषसेनश्चपुरुकुत्सोध्वजीरथी १३ आर्ष्टिषेणोदिलीपश्चमहात्माचाप्युशीनरः ॥ औशीनरिःपुंडरीकःशर्यातिःशरभःशुचिः १४ अंगोऽरिष्टश्चवेनश्चदुष्यंतःसृंजयोजयः ॥ भांगासुरिःसुनीथश्चनिषधोऽथवहीनरः १५ करंधमोबाल्हिकश्चसुद्युम्नोबलवान्मधुः ॥ ऐलोमरुत्तश्चतथाबलवान्पृथिवीपतिः १६ कपोतरोमातृणकःसहदेवार्जुनौतथा ॥ व्यश्वःसाश्वःकृशाश्वश्चशशबिंदुश्चपार्थिवः १७ रामोदाशरथिश्चैवलक्ष्मणोऽथप्रतर्दनः ॥ अलर्कःकक्षसेनश्चगयोगौराश्वएवच १८ जामदग्न्यश्चरामश्चनाभागसगरौतथा ॥ भूरिद्युम्नोमहाश्वश्चपृथाश्वोजनकस्तथा १९ राजावैन्योवारिसेनःपुरुजिज्जनमेजयः ॥ ब्रह्मदत्तस्त्रिगर्तिश्चराजोपरिचरस्तथा २० इंद्रद्युम्नोभीमजानुर्गौरपृष्ठोऽनघोलयः ॥ पद्मोऽथमुचुकुंदश्चभूरिद्युम्नःप्रसेनजित् २१ अरिष्टनेमिःसुद्युम्नःपृथुलाश्वोऽष्टकस्तथा ॥ शतंमत्स्यानृपतयःशतंनीपाःशतंहयाः २२ धृतराष्ट्राश्चैकशतमशीतिर्जनमेजयाः ॥ शतंचब्रह्मदत्तानांवीरिणामीरिणांशतम् २३ भीष्माणांद्विशतेऽप्यत्रभीमानांतुतथाशतम् ॥ शतंचप्रतिविंध्यानांशतंनागाःशतंहयाः २४ पलाशानांशतंज्ञेयंशतंकाशकुशादयः ॥ शांतनुश्चैवराजेंद्रपांडुश्चैवपितातव २५ उशंगवःशतरथोदेवराजोजयद्रथः ॥ वृषदर्भश्चराजर्षिर्बुद्धिमान्सहमंत्रिभिः २६

१९ । २० । २१ । २२ धृतराष्ट्राश्चैकशतमिति पुराणेषु प्रायेणाधिकारिणामेव कीर्तनात्तेषां च प्रतिकल्पं समाननामरूपकर्मत्वादनेककल्पं धर्मसभावासिनां तेषां बहुत्वं युक्तं । सेनापत्यादिशब्दवदधिकारवाचित्वाद्धृतराष्ट्रादिशब्दानां २३ । २४ अयमेव न्यायः पलशादियज्ञियद्रव्याद्यभिमानिदेवतासु ज्ञेय इत्याशयवानाह पलाशानामिति २५ । २६

२७ । २८ । २९ । ३० कालचक्रंचेति संवत्सराद्यभिमानिन्योदेवताः दुष्कृतकर्माणोविद्याविहीनकर्ममात्रनिष्ठाः ३१ । ३२ । ३३ असंबाधाअसंकीर्णा ३४ । ३५ संन्यासिनः निष्कामकर्मकर्तारः काम्यानांकर्मणांत्यागिनोवा । पूर्वेषामपिआपस्तंबेनतद्यथाऽऽम्रेफलार्थेनिर्मिते छायागंधइत्यनूत्पद्येते । एवंधर्मंचर्यमाणमर्थाअनूत्पद्यन्तइति आनुषंगिकफलभागित्वदर्शनात् निर्मितेरोपिते अर्थादिव्यान्नपानादयः ३६ । ३७ । ३८ । ३९ । ४० पुष्करैर्मूर्तिमद्भिस्तीर्थविशेषैर्मालिनींशोभिनीम् ४१ ॥ इतिसभापर्वणिनैलकंठीये भारतभावदी

अथापरेसहस्राणियेगताःशशबिंदवः ॥ इष्ट्वाऽश्वमेधैर्बहुभिर्महद्भिर्भूरिदक्षिणैः २७ एतेराजर्षयःपुण्याःकीर्तिमंतोबहुश्रुताः ॥ तस्यांसभायांराजेंद्रवैवस्वतमुपासते २८ अगस्त्योऽथमतंगश्चकालोमृत्युस्तथैवच ॥ यज्वानश्चैवसिद्धाश्चयेचयोगशरीरिणः २९ अग्निष्वात्ताश्चपितरःफेनपाश्चोष्मपाश्चये ॥ सुधावंतोबर्हिषदोमूर्तिमंतस्तथाऽपरे ३० कालचक्रंचसाक्षाच्चभगवान्हव्यवाहनः ॥ नरादुष्कृतकर्माणोदक्षिणायनमृत्यवः ३१ कालस्यनयनेयुक्तायमस्यपुरुषाश्चये ॥ तस्यांशिंशपपालाशास्तथाकाशकुशादयः ३२ उपासतेधर्मराजंमूर्तिमंतोजनाधिप ॥ एतेचान्येचबहवःपितृराजसभासदः ॥ नशक्याःपरिसंख्यातुंनामभिःकर्मभिस्तथा ३३ असंबाधाहिसापार्थरम्याकामगमासभा ॥ दीर्घकालंतपस्तप्त्वानिर्मिताविश्वकर्मणा ३४ ज्वलंतीभासमानाचतेजसास्वेनभारत ॥ तामुग्रतपसोयांतिसुव्रताःसत्यवादिनः ३५ शांताःसंन्यासिनःशुद्धाःपूताःपुण्येनकर्मणा ॥ सर्वेभास्वरदेहाश्चसर्वेचविरजोंबराः ३६ चित्रांगदाश्चित्रमाल्याःसर्वेज्वलितकुंडलाः ॥ सुकृतैःकर्मभिःपुण्यैःपारिबर्हैश्चभूषिताः ३७ गंधर्वाश्चमहात्मनःसंघशश्चाप्सरोगणाः ॥ वादित्रंनृत्यगीतंचहास्यंलास्यंचसर्वशः ३८ पुण्याश्चगंधाःशब्दाश्चतस्यांपार्थसमंततः ॥ दिव्यानिचैवमाल्यानिउपतिष्ठंतिनित्यशः ३९ शतंशतसहस्राणिधर्मिणांतंप्रजेश्वरम् ॥ उपासतेमहात्मानंरूपयुक्तामनस्विनः ४० ईदृशीसासभाराजन्पितृराज्ञोमहात्मनः ॥ वरुणस्यापिवक्ष्यामिसभांपुष्करमालिनीम् ४१ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिलोकपालसभाख्यानपर्वणियमसभावर्णनंनामाष्टमोऽध्यायः ८ ॥ ॥ ध ॥ ॥ नारदउवाच ॥ ॥ युधिष्ठिरसभादिव्यावरुणस्यामितप्रभा ॥ प्रमाणेनयथायाम्याशुभप्राकारतोरणा १ अंतःसलिलमास्थायविहिताविश्वकर्मणा ॥ दिव्यैरत्नमयैर्वृक्षैःफलपुष्पप्रदैर्युता २ नीलपीतैःसिताःश्यामैःसितैर्लोहितकैरपि ॥ अवतानैस्तथागुल्मैर्मंजरीजालधारिभिः ३ तथाशकुनयस्तस्यांविचित्रामधुरस्वराः ॥ अनिर्देश्यावपुष्मंतःशतशोऽथसहस्रशः ४ सासभासुखसंस्पर्शानशीतानचघर्मदा ॥ वेश्मासनवतीरम्यासितावरुणपालिता ५ यस्यामास्तेसवरुणोवारुण्याचसमन्वितः ॥ दिव्यरत्नांबरधरोदिव्याभरणभूषितः ६ स्रग्विणोदिव्यगंधाश्चदिव्यगंधानुलेपनाः ॥ आदित्यास्तत्रवरुणंजलेश्वरमुपासते ७ वासुकिस्तक्षकश्चैवनागश्चैरावतस्तथा ॥ कृष्णश्चलोहितश्चैवपद्मश्चित्रश्चवीर्यवान् ८

पेअष्टमोध्यायः ॥ ८ ॥ ॥ युधिष्ठिरेति १ दिव्यैरितितस्यामित्युत्तरश्लोकादपकृष्यते २ अव तानैर्वितानवद्वृक्षस्वरूपाच्छादकैर्लताप्रतानैः सिता बद्धाः प्रदेशाइतिशेषः ३ वपुष्मंतः प्रशस्तदेहाः ४ । ५ वारुण्यावरुणान्या माख्यावा ६ । ७ । ८

९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ संपतता समागच्छता ३० ॥ ॥ इतिश्री



कंबलाश्वतरौनागौघृतराष्ट्रबलाहकौ ॥ मणिमान्कुंडधारश्चकर्कोटकधनंजयौ ९ पाणिमान्कुंडधारश्चबलवान्पृथिवीपते ॥ प्रह्लादोमुषिकादश्चतथैवजन
मेजयः १० पताकिनोमंडलिनःफणावंतश्चसर्वशः ॥ एतेचान्येचबहवःसर्पास्तस्यांयुधिष्ठिर ॥ उपासतेमहात्मानंवरुणंविगतक्लमाः ११ बलिर्वैरोच
नोराजानरकःपृथिवींजयः ॥ संह्रादोविप्रचित्तिश्चकालखंजाश्चदानवाः १२ सुहनुर्दुर्मुखःशंखःसुमनाःसुमतिस्ततः ॥ घटोदरोमहापार्श्वःक्रथनःपिठर
स्तथा १३ विश्वरूपःस्वरूपश्चविरूपोऽथमहाशिराः ॥ दशग्रीवश्चवालीचमेघवासादशावरः १४ टिट्टिभोविटभूतश्चसंह्रादश्चेंद्रतापनः ॥ दैत्यदानव
संघाश्चसर्वेरुचिरकुंडलाः १५ स्रग्विणोमौलिनश्चैवतथादिव्यपरिच्छदाः ॥ सर्वेलब्धवराःशूराःसर्वेविगतमृत्यवः १६ तेतस्यांवरुणंदेवंधर्मपाशधरंसदा ॥
उपासतेमहात्मानंसर्वेसुचरितव्रताः १७ तथासमुद्राश्चत्वारोनदीभागिरथीचसा ॥ कालिंदीविदिशावेणानर्मदावेगवाहिनी १८ विपाशाचशतद्रुश्चचंद्र
भागासरस्वती ॥ इरावतीवितस्ताचसिंधुर्देवनदीतथा १९ गोदावरीकृष्णवेणाकावेरीचसरिद्वरा ॥ किंपुनाचविशल्याचतथावैतरणीनदी २० तृती
याज्येष्ठिलाचैवशोणश्चापिमहानदः ॥ चर्मण्वतीतथाचैवपर्णाशाचमहानदी २१ सरयूर्वारवत्याथलांगलीचसरिद्वरा ॥ करतोयातथाऽऽत्रेयीलौहित्यश्च
महानदः २२ लंघतीगोमतीचैवसंध्यात्रिस्रोतसीतथा ॥ एताश्चान्याश्चराजेंद्रसुतीर्थालोकविश्रुताः २३ सरितःसर्वतश्चान्यास्तीर्थानिचसरांसिच ॥
कूपाश्चसप्रस्रवणादेहवंतोयुधिष्ठिर २४ पल्वलानितडागानिदेहवंत्यथभारत ॥ दिशस्तथामहीचैवतथासर्वेमहीधराः २५ उपासतेमहात्मानंसर्वेजलच
रास्तथा ॥ गीतवादित्रवंतश्चगंधर्वाप्सरसांगणाः २६ स्तुवंतोवरुणंतस्यांसर्वएवसमासते ॥ महीधरारत्नवंतोरसायेचप्रतिष्ठिताः २७ कथयंतःसुमधु
राःकथास्तत्रसमासते ॥ वारुणश्चतथामंत्रीसुनाभःपर्युपासते २८ पुत्रपौत्रैःपरिवृतोगोनाम्नापुष्करेणच ॥ सर्वेविग्रहवंतस्तेतमीश्वरमुपासते २९ एषा
मयासंपततावारुणीभरतर्षभ ॥ दृष्टपूर्वासभारम्याकुबेरस्यसभांश्रृणु ३० ॥ इतिमहाभारते स० लोकपालसभाख्यानपर्वणिवरुणसभावर्णने नवमो
ऽध्यायः ॥ ९ ॥ ॥ नारदउवाच ॥ सभावैश्रवणीराजन्शतयोजनमायता ॥ विस्तीर्णासप्ततिश्चैवयोजनानितिसितप्रभा १ तपसानिर्जिताराजन्स्वयंवै
श्रवणेनसा ॥ शशिप्रभाप्रावरणाकैलासशिखरोपमा २ गुह्यकैरुह्यमानासाखेविषक्तेवशोभते ॥ दिव्याहेममयैरुच्चैःप्रासादैरुपशोभिता ३ महारत्नवती
चित्रादिव्यगंधामनोरमा ॥ सिताभ्रशिखराकाराप्लवमानेवदृश्यते ४ दिव्याहेममयैरंगैर्विद्युद्भिरिवचित्रिता ॥ तस्यांवैश्रवणोराजाविचित्राभरणांबरः ५



समापर्वणिनैलकंठीयेभारतभावदीपे नवमोऽध्यायः ९ ॥ ॥ सभेति १ शशिप्रभाप्रावरणा शशिप्रभामपि धावल्येनातिरस्करोतीत्यर्थः २ विषक्तालग्ना ३ । रंगैरितिच्छेदः ४ ५

६ । ७ मनोह्लदयसंल्हादीतिपाठे मनाश्चित्तं ह्लदयंकदंबगोलकाकृतिर्मांसखंडः ८ दिव्यतानैरम्यैस्तानैर्गीतशास्त्रप्रसिद्धैरेकोनपंचाशत्संख्यैः ९ । १० । ११ । १२ । १३ । १४

स्त्रीसहस्त्रैर्वृतःश्रीमानास्तेज्वलितकुंडलः ॥ दिवाकरनिभेपुण्येदिव्यास्तरणसंवृते ॥ दिव्यपादोपधानेचनिषण्णःपरमासने ६ मंदाराणामुदाराणां
वनानिपरिलोडयन् ॥ सौगंधिकवनानांचगंधंगंधवहोवहन् ७ नलिन्याश्चालकाख्यायानंदनस्यवनस्यच ॥ शीतोह्लयसदंह्लादीवायुस्तमुपसेवते ८
तत्रदेवाःसगंधर्वागणैरप्सरसांवृताः ॥ दिव्यतानैर्महाराजगायंतिस्मसभागताः ९ मिश्रकेशीचरंभाचचित्रसेनाशुचिस्मिता ॥ चारुनेत्राघृताचीचमेन
कापुंजिकस्थला १० विश्वाचीसहजन्याचप्रम्लोचाउर्वशीइरा ११ वर्गाचसौरभेयीचसमीचीबुद्बुदालता ॥ एताःसहस्त्रशश्चान्यानृत्यगीतविशारदाः १२
उपतिष्ठंतिधनदंगंधर्वाप्सरसांगणाः ॥ अनिशंदिव्यवादित्रैर्नृत्यगीतैश्चसासभा १३ अशून्यारुचिराभातिगंधर्वाप्सरसांगणैः ॥ किन्नरानामगंधर्वानरा
नामतथाऽपरे १४ मणिभद्रोऽथधनदःश्वेतभद्रश्चगुह्यकः ॥ कशेरकोगंडकंडूःप्रद्योतश्चमहाबलः १५ कुस्तुंबरुःपिशाचश्चगजकर्णोविशालकः ॥ वराहक
र्णस्ताम्रौष्ठःफलकक्षःफलोदकः १६ हंसचूडःशिखावर्तोहेमनेत्रोविभीषणः ॥ पुष्पाननःपिंगलकःशोणितोदःप्रवालकः १७ वृक्षवास्यनिकेतश्चचीरवासाश्च
भारत ॥ एतेचान्येचबहवोयक्षाःशतसहस्त्रशः १८ सदाभगवतीलक्ष्मीस्तत्रैवनलकूबरः ॥ अहंचबहुशस्तस्यांभवंत्यन्येचमद्विधाः १९ ब्रह्मर्षयोभवंत्यत्रत
थादेवर्षयोऽपरे ॥ क्रव्यादाश्चतथैवान्येगंधर्वाश्चमहाबलाः २० उपासतेमहात्मानंतस्यांधनदमीश्वरं ॥ भगवान्भूतसंघैश्चवृतःशतसहस्त्रशः २१ उमापतिःप
शुपतिःशूलभृद्भगनेत्रहा ॥ त्र्यंबकोराजशार्दूलदेवीचविगतक्लमा २२ वामनैर्विकटैःकुब्जैःक्षतजाक्षैर्महारवैः ॥ मेदोमांसाशनैरुग्रैरुग्रधन्वामहाबलः २३ ना
नाप्रहरणैरुग्रैर्वातैरिवमहाजवैः ॥ वृतःसखायमन्वास्तेसदैवधनदंनृप २४ प्रहृष्टाःशतशश्चान्येबहुशःसपरिच्छदाः ॥ गंधर्वाणांचपतयोविश्वावसुर्हहाहुहूः
२५ तुंबुरुःपर्वतश्चैवशैलूषश्चतथाऽपरः ॥ चित्रसेनश्चगीतज्ञस्तथाचित्ररथोऽपिच २६ एतेचान्येचगंधर्वाधनेश्वरमुपासते ॥ विद्याधराधिपश्चैवचक्र
धर्मासहानुजैः २७ उपाचरतितत्रस्मधनानामीश्वरंप्रभुम् ॥ किन्नराःशतशस्तत्रधनानामीश्वरंप्रभुम् २८ आसतेचापिराजानोभगदत्तपुरोगमाः ॥ द्रुमः
किंपुरुषेशश्चउपास्तेधनदेश्वरं २९ राक्षसाधिपतिश्चैवमहेंद्रोगंधमादनः ॥ सहयक्षैःसगंधर्वैःसहसर्वैर्निशाचरैः ३० विभिषणश्चधर्मिष्ठउपास्तेभ्रातरंप्रभुम् ॥
हिमवान्पारियात्रश्चविंध्यकैलासमंदराः ३१ मलयोदर्दुरश्चैवमहेंद्रोगंधमादनः ॥ इंद्रकीलःसुनाभश्चतथादिव्यौचपर्वतौ ३२ एतेचान्येचबहवःसर्वेमेरुपु
रोगमाः ॥ उपासतेमहात्मानंधनानामीश्वरंप्रभुम् ३३ नंदीश्वरश्चभगवान्महाकालस्तथैवच ॥ शंकुकर्णमुखाःसर्वेदिव्याःपारिषदास्तथा ३४

१५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४

३५ । ३६ । ३७ आस्तेइत्यावृत्त्या योजनीयं । यदाभवः कदाचित्कुबेरसमामध्यास्ते तदाकुबेरोऽपि भवादनुज्ञांप्राप्य तन्निकटआस्तेउपविशाति ३८ । ३९ । ४० ॥ इति०म०भा० नैलकंठीयेभारतभावदीपे दशमोऽध्यायः ॥ १० ॥ ॥ पितामहेति १ देवयुगेकृतयुगे २ । ३ मानसीमित्यनेनभौतिकत्वव्यावृत्तिः तथाहि ।'आतिवाहिकएवाऽयंत्वादृशैश्चित्तदेहकः । आधिभौतिकयाबुद्ध्या गृहीतश्चिरभावनात्'इति वासिष्ठोक्तरीत्याप्रपंचस्य त्रैविध्यंदृश्यते । तत्रायंस्थूलभूतमयआधिभौतिकः सूक्ष्मभूतमयआतिवाहिकः। सएवअतिअत्यंतंकार्योका रंवोढुं समर्थोऽतिवाहीसूक्ष्मभूतसंघस्तेननिर्वृत्तइतियोगात् । अतएवतत्रेंद्रादिलोकरूपेस्वर्गे ।'यन्नदुःखेनसंभिन्नंनचग्रस्तमनंतरं । अभिलाषोपनीतंचतत्सुखं स्वःपदास्पदम्'इति

काष्ठःकुटीमुखोदंतीविजयश्चतपोधिकः ॥ श्वेतश्चवृषभस्तत्रनर्दन्नास्तेमहाबलः ३५ धनदंराक्षसाश्चान्येपिशाचाश्चउपासते ॥ पारिषदैःपरिवृतमुपा यांतंमहेश्वरम् ३६सदाहिदेवदेवेशंशिवंत्रैलोक्यभावनम् ॥ प्रणम्यमूर्ध्नापौलस्त्योबहुरूपमुमापतिम् ३७ ततोऽभ्यनुज्ञांसंप्राप्यमहादेवाद्धनेश्वरः ॥ आस्ते कदाचिद्भगवान्भवोधनपतेःसखा ३८ निधिप्रवरमुख्यौचशंखपद्मौधनेश्वरौ ॥ सर्वान्निधीन्प्रगृह्याथउपास्तांवैधनेश्वरम् ३९ सासभाताद्दशीरम्यामया दृष्टांतरिक्षगा ॥ पितामहसभांराजन्कीर्तयिष्येनिबोधताम् ४० ॥ इतिश्रीमहाभारतेसभापर्वणिलोकपालसभाख्यानपर्वणिधनदसभावर्णनंनामदशमो ऽध्यायः ॥ १० ॥ ॥ नारदउवाच ॥ पितामहसभांतातकथ्यमानांनिबोधमे ॥ शक्यतेयानानिर्देष्टुमेवंरूपेतिभारत १ पुरादेवयुगेराजन्नादित्यो भगवान्दिवः ॥ आगच्छन्मानुषंलोकंदिदृक्षुर्विगतक्लमः २ चरन्मानुषरूपेणसमांदृष्ट्वास्वयंभुवः ॥ सतामकथयन्मह्यंदृष्ट्वातत्वेनपांडव ३ अप्रमेयांस भांदिव्यांमानसींभरतर्षभ ॥ अनिर्देश्यांप्रभावेणसर्वभूतमनोरमाम् ४ श्रुत्वागुणानहंतस्याःसभायाःपांडवर्षभ ॥ दर्शनेप्सुस्तथाराजन्नादित्यमिदमब्रु वम् ५ भगवन्द्रष्टुमिच्छामिपितामहसभांशुभाम् ॥ येनवातपसाशक्याकर्मणावाऽपिगोपते ६ औषधैर्वातथायुक्तैरुत्तमापापनाशिनी ॥ तन्ममाचक्ष्वभगव न्पश्येयंतांसभांयथा ७ सतन्ममवचःश्रुत्वासहस्रांशुर्दिवाकरः ॥ प्रोवाचभरतश्रेष्ठव्रतंवर्षसहस्रिकम् ८ ब्रह्मव्रतमुपास्स्वत्वंप्रयतेनांतरात्मना ॥ ततोऽ हंहिमवत्पृष्ठेसमारब्धोमहाव्रतम् ९ ततःसभगवान्सूर्योमामुपादायवीर्यवान् ॥ आगच्छत्तांसभांब्राह्मींविपाप्माविगतक्लमः १० एवंरूपेतिसाशक्यानानि र्देष्टुंनराधिप ॥ क्षणेनहिबिभर्त्यन्यदनिर्देश्यंवपुस्तथा ११ नवेदपरिमाणंवासंस्थानंचापिभारत ॥ नचरूपंमयातादृक्दृष्टपूर्वंकदाचन १२

स्वर्गपदनिर्वचनंसंगच्छते । संभिन्नंमिश्रं । ग्रस्तंभोगोत्तरपापावहं । अभिलाषःसंकल्पः । तत्राप्याधिभौतिकस्य तत्त्वमातिवाहिकः। रज्जुरिवभुजंगस्य । अस्यापितत्त्वं चि त्तमेवतदिदमुक्तंचित्तदेहकइति । तादृशीचप्रजापतिसभाऽतो मानसत्वंतत्रयुक्तं ४ । ५ । ६ औषधैर्ज्योतिष्मत्यादिभिः कल्पोक्तप्रकारेणसाधितैः ७ । ८ ब्रह्मव्रतंहार्दब्रह्मो पासनं ९ ततःसइति सूर्यद्वारेणतेविरजाःप्रयांतीति ब्रह्मसभाप्रवेशेऽधिदैवं प्रत्यक्षसूर्यस्यैवद्वारत्वं अध्यात्मंतुइडाख्यसूर्यनाडीद्वारा १० एवमितिमानसत्वादेव रज्जूरगवत्सत्यसतीवे तिनिर्वक्तुं नशक्या क्षणेनेतिरज्जुर्यथा भावकबुद्ध्यनुरोधात् स्रक्सर्पदंडधारादिरूपा तथेयमपिवैकुंठकैलासादिरूपेणभातीत्यर्थः ११ । १२

१३ स्तंभैरिति यतो नक्षरानापक्षयवन्यतःशाश्वतीनित्या । 'एतत्सत्यंब्रह्मपुरम्'इतिश्रुतेः १४ । १५ अतिचंद्रमितिस्वयमित्यव्ययं स्वयमहंकरोमि स्वयंत्वंकरोषि सस्वयं कृतवानित्यादि प्रयोगादव्याकृतप्रत्यगात्मवाचकं सएवप्रभाप्रकाशकं ज्योतिर्यस्यांसास्वयंप्रभा । नामरेहिसूर्यादीनां घटादिप्रकाशकत्वंदृष्टं तदात्मनएवेति साधयितुंसूर्या द्यभावकाले स्वप्नंप्रकृत्यात्रायंपुरुषःस्वयंज्योतिरिति श्रुत्यासाटोपमुक्तं १६ तस्यामिति सःमहत्तत्त्वाभिमानी सूक्ष्ममनआख्यः । यंप्रकृत्यस्मर्यते । 'मनोमहान्मतिर्ब्रह्मा पूर्बु द्धिःख्यातिरीश्वरः । प्रज्ञासंविच्चितिश्चैव स्मृतिश्चपरिपठ्यते'इति । अतएवभगवान्सर्वैश्वर्यवान् देवमाययास्वाविद्यया विदधल्लोकानितिशेषः । विदधद्देवमानुषानितिपाठेऽपि

सुसुखासासदाराजन्नशीतानचघर्मदा ॥ नक्षुत्पिपासेनग्लानिंप्राप्यतांप्राप्नुवंत्युत १३ नानारूपैरिवकृतामणिभिःसासुभास्वरैः ॥ स्तंभैर्नचधृतासा तुशाश्वतीनचसाक्षरा १४ दिव्यैर्नानाविधैर्भावैर्भासद्भिरमितप्रभैः १५ अतिचंद्रंचसूर्यंचशिखिनंचस्वयंप्रभा ॥ दीप्यतेनाकपृष्ठस्थाभर्त्सयंतीवभास्क रम् १६ तस्यांसभगवानास्तेविदधद्देवमायया ॥ स्वयमेकोऽनिशंराजन्सर्वलोकपितामहः १७ उपतिष्ठंतिचाप्येनंप्रजानांपतयःप्रभुम् ॥ दक्षःप्रचे ताःपुलहोमरीचिःकश्यपःप्रभुः १८ भृगुरत्रिर्वसिष्ठश्चगौतमोऽथतथांऽगिराः ॥ पुलस्त्यश्चक्रतुश्चैवप्रह्लादःकर्दमस्तथा १९ अथर्वांगिरसश्चैववालखिल्या मरीचिपाः ॥ मनोंऽतरिक्षंविद्याश्चवायुस्तेजोजलंमही २० शब्दस्पर्शौतथारूपंरसोगंधश्चभारत ॥ प्रकृतिश्चविकारश्चयच्चान्यत्कारणंभुवः २१ अग स्त्यश्चमहातेजामार्कंडेयश्चवीर्यवान् ॥ जमदग्निर्भरद्वाजःसंवर्तश्च्यवनस्तथा २२ दुर्वासाश्चमहाभागऋष्यशृंगश्चधार्मिकः ॥ सनत्कुमारोभगवान्योगाचा र्योमहातपाः २३ असितोदेवलश्चैवजैगीषव्यश्चतत्त्ववित् ॥ ऋषभोजितशत्रुश्चमहावीर्यस्तथामणिः २४ आयुर्वेदस्तथाऽष्टांगोदेहवांस्तत्रभात ॥ चंद्रमाः सहनक्षत्रैरादित्यश्चगभस्तिमान् २५ वायवःक्रतवश्चैवसंकल्पःप्राणएवच ॥ मूर्तिमंतोमहात्मानोमहाव्रतपरायणाः २६ एतेचान्येचबहवोब्रह्माणंसमुपस्थि ताः ॥ अर्थोधर्मश्चकामश्चहर्षोद्वेषस्तपोदमः २७ आयांतितस्यांसहितागंधर्वाप्सरसांगणाः ॥ विंशतिःसप्तचैवान्येलोकपालाश्चसर्वशः २८ शुक्रोबृहस्प तिश्चैवबुधोंऽगारकएवच ॥ शनैश्चरश्चराहुश्चग्रहाःसर्वेतथैवच २९ मंत्रोरथंतरंचैवहरिमान्वसुमानपि ॥ आदित्याःसाधिराजानोनामद्वंद्वैरुदाहृताः ३० म रुतोविश्वकर्माचवसवश्चैवभारत ॥ तथापितृगणाःसर्वेसर्वाणिचहवींष्यथ ३१ ऋग्वेदःसामवेदश्चयजुर्वेदश्चपांडव ॥ अथर्ववेदश्चतथासर्वशास्त्राणिचैवह ३२

स्वाविद्ययेत्यध्याहार्यम् । एकोऽनिशं सत्स्वपिस्वसृष्टेषु पदार्थेष्वैंद्रजालिकवदेकएवेत्यर्थः १७ एकस्यैवविद्यैकव्यंग्यं सार्वात्म्यमहंमनुरभवं सूर्यश्चेत्यादिश्रुतिप्रसिद्धं प्रपंच यति उपतिष्ठंतीत्यादिनाऽध्यायशेषेण १८ । १९ । २० यच्चान्यत्कालादृष्टादि २१ । २२ । २३ । २४ । २५ । २६ । २७ सप्तचैवान्येइति सप्तविंशतिर्नक्षत्राणीत्येके । अन्येतु विं शतिर्गंधर्वाप्सरसांगणाः सप्तचान्ये गंधर्वामुख्याः तेच । 'हंसोहहाहुहूर्विश्वावसुर्वररुचिस्तथा । वृषणस्तुंबुरुश्चैव गंधर्वाःसप्तकीर्तिताः'इति २८ । २९ मंत्रःसामगानाश्रयभूतोग्नआयाही त्यादिः । रथंतरंसामविशेषः । हरिमान्वसुमानिति कर्मविशेषयोरिंद्रनामनी । साधिराजानःसेंद्राः । नामद्वंद्वैरग्नीषोमैंद्राग्न्यादिभिः ३० हवींषि व्रीहिपश्वादिजीवाः ३१ । ३२

उपवेदाः 'आयुर्वेदोधनुर्वेदोगांधर्वश्चार्थशास्त्रकम्, इति । अंगानिशिक्षादीनि ३३ दुर्गतरणी वाणी प्रणवः साचसप्तविधाअकारउकारो मकारोअर्धमात्रानादोःबिंदुः शक्तिरितिसप्तप्रकाराः शांतरूपाऽधिष्ठानप्रापिकेत्यर्थः । संस्कृतप्राकृतपैशाच्यपभ्रंशललितमागधगद्यरूपाइत्यन्ये ३४ । ३५ । ३६ । ३७ संवत्सराः षष्टिः प्रभवादयः तेचपंचपंचएकैकंयुगं । चतुर्विधो मानुषोऽहोरात्रः षष्टिघटिकाभिः । पैत्रोमासेन । दैवोवत्सरेण । ब्राह्मःकल्पेनेति । कालचक्रंद्वादशराश्यात्मकम् ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ वैराजाःविराट्प्रभ

इतिहासोपवेदाश्ववेदांगानिचसर्वशः ॥ ग्रहायज्ञाश्वसोमश्वदेवताश्चापिसर्वशः ३३ सावित्रीदुर्गतरणीवाणीसप्तविधातथा ॥ मेधाधृतिःश्रुतिश्चैवप्रज्ञाबुद्धिर्यशःक्षमा ३४ सामानिस्तुतिशस्त्राणिगाथाश्वविविधास्तथा ॥ भाष्याणितर्कयुक्तानिदेहवंतिविशांपते ३५ नाटकाविविधाःकाव्याःकथाख्यायिककारिकाः ॥ तत्रतिष्ठंतितेपुण्यायेचान्येगुरुपूजकाः ३६ क्षणालवामुहूर्ताश्वदिवारात्रिस्तथैवच ॥ अर्धमासाश्वमासाश्वऋतवःषट्चभारत ३७ संवत्सराःपंचयुगमहोरात्रश्चतुर्विधः ॥ कालचक्रंचतद्दिव्यंनित्यमक्षयमव्ययम् ३८ धर्मचक्रंतथाचापिनित्यमास्तेयुधिष्ठिर ॥ आदितिर्दितिर्दनुश्चैवसुरसाविनताइरा ३९ कालिकासुरभीदेवीसरमाचाथगौतमी ४० प्रभाकद्रूश्ववैदेव्यौदेवतानांचमातरः ॥ रुद्राणीश्रीश्वलक्ष्मीश्वभद्राषष्ठीतथाऽपरा ४१ पृथिवीगांगतादेवीन्हीःस्वाहाकीर्तिरेवच ॥ सुरादेवीशचीचैवतथापुष्टिररुंधती ४२ संवृत्तिराशानियतिःसृष्टिर्देवीरतिस्तथा ॥ एताश्वान्याश्ववैदेव्यउपतस्थुःप्रजापतिम् ४३ आदित्यावसवोरुद्रामरुतश्वाश्विनावपि ॥ विश्वेदेवाश्वसाध्याश्वपितरश्वमनोजवाः ४४ पितॄणांचगणान्विद्धिसप्तैवपुरुषर्षभ ॥ मूर्तिमंतोवैचत्वारस्त्रयश्चापिशरीरिणः ४५ वैराजाश्वमहाभागाअग्निष्वात्ताश्वभारत ॥ गार्हपत्यानाकचराःपितरोलोकविश्रुताः ४६ सोमपाएकशृंगाश्वचतुर्वेदाःकलास्तथा ॥ एतेचतुर्षुवर्णेषुपूज्यंतेपितरोनृप ४७ एतैराप्यायितैःपूर्वंसोमश्चाप्याय्यतेपुनः ॥ तएतेपितरःसर्वेप्रजापतिमुपस्थिताः ४८ उपासतेचसंहृष्टाब्रह्माणममितौजसम् ॥ राक्षसाश्वपिशाचाश्वदानवागुह्यकास्तथा ४९ नागाःसुपर्णाःपशवःपितामहमुपासते ॥ स्थावराजंगमाश्चैवमहाभूतास्तथाऽपरे ५० पुरंदरश्वदेवेंद्रोवरुणोधनदोयमः ॥ महादेवःसहोमोऽत्रसदागच्छातिसर्वशः ५१ महासेनश्वराजेंद्रसदोपास्तेपितामहम् ॥ देवोनारायणस्तस्यांतथादेवर्षयश्वये ५२ ऋषयोवालखिल्याश्वयोनिजाऽयोनिजास्तथा ॥ यच्चकिंचित्रिलोकेऽस्मिन्दृश्यतेस्थाणुजंगमम् ॥ सर्वंतस्यांमयादृष्टमितिविद्धिनराधिप ५३ अष्टाशीतिसहस्राणिऋषीणामूर्ध्वरेतसाम् ॥ प्रजावतांचपंचाशदृषीणामपिपांडव ५४

वाः सप्तपितृगणाअग्निष्वात्तादयः ४६ । ४७ । ४८ । ४९ । ५० महादेवईश्वरोपिसहोमोब्रह्मविद्यासहितस्तत्रैवांतर्भूतः ५१ नारायणश्वाविद्याप्राप्यः शुद्धआत्मापि तत्रैव प्राप्यत इत्यर्थः ५२ एकस्यापिसावार्दम्यमुक्तमुपसंहरतियच्चेति ५३ तत्प्राप्त्यधिकारिणआह अष्टाशीतीति ५४

तेस्मतत्रेत्यादिना यत्कौषीतकीयेश्रुतं पर्यंकस्थंब्रह्म तेनसह संवादादिकं च तदुपबृंहयति । ५५ । ५६ । ५७ । ५८ । ५९ । ब्रह्म्याश्रिया शमोदमस्तपःशौचमित्यादिनाप्रसि द्धयाशमादिसंपत्त्या ६० । ६१ । ६२ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेएकादशोऽध्यायः ॥ ११ ॥ ॥ राजसूयमुपोद्धातयतिप्रायशइत्यादिना १ । २ । ३ । ४ । ५ सहस्र वर्षव्रतप्राप्यां ब्रह्मसभामुपेक्ष्य हरिश्चंद्रप्राप्तामिंद्रसभां शक्यप्रवेशांमत्वा तत्साधनंपृच्छति एकएवेति ६ । ७ । ८ । ९ यन्मांपृच्छसीत्यादेर्दाशार्हनगरींप्रतीत्यंतस्यपरमतात्प

तेस्मतत्रयथाकामंदृष्ट्वासर्वेदिवौकसः ॥ प्रणम्यशिरसातस्मैसर्वेयांतियथागमम् ५५ अतिथीनागतान्देवान्दैत्यान्नागांस्तथाद्विजान् ॥ यक्षान्सुपर्णान्का लेयान्गंधर्वाप्सरसस्तथा ५६ महाभागानमितधीर्ब्रह्मालोकपितामहः ॥ दयावान्सर्वभूतेषुयथार्हंप्रतिपद्यते ५७ प्रतिगृह्यतुविश्वात्मास्वयंभूरमितद्युतिः ॥ सांत्वमानार्थसंभोगैर्युनक्तिमनुजाधिप ५८ तथातैरुपयातैश्चप्रतियद्भिश्चभारत ॥ आकुलासासभाताततभवतिस्मसुखप्रदा ५९ सर्वतेजोमयीदिव्याब्रह्म र्षिगणसेविता ॥ ब्राह्म्याश्रियादीप्यमानाशुशुभेविगतक्लमा ६० सासभातादृशीदृष्टामयालोकेषुदुर्लभा ॥ सभेयंराजशार्दूलमनुष्येषुयथातव ६१ एता मयादृष्टपूर्वाःसभादेवेषुभारत ॥ सभेयंमानुषेलोकेसर्वश्रेष्ठतमातव ६२ ॥ इतिश्रीमहाभारतेसभापर्वणिलोकपालसभाख्यानपर्वणिब्रह्मसभावर्णनंनामएका दशोऽध्यायः ११ ॥ ४ ॥ ॥ ४ ॥ ॥ युधिष्ठिरउवाच ॥ प्रायशोराजलोकस्तेकथितोवदतांवर ॥ वैवस्वतसभायांतुयथावदसिमेप्र भो १ वरुणस्यसभायांतुनागास्तेकथिताविभो ॥ दैत्येंद्राश्चापिभूयिष्ठाःसरितःसागरास्तथा २ तथाधनपतेर्यक्षागुह्यकाराक्षसास्तथा ॥ गंधर्वाप्सरस श्चैवभगवांश्चवृषध्वजः ३ पितामहसभायांतुकथितास्तेमहर्षयः ॥ सर्वेदेवनिकायाश्चसर्वशास्त्राणिचैवह ४ शक्रस्यतुसभायांतुदेवाःसंकीर्तितामुने ॥ उद्देशतश्चगंधर्वाविविधाश्चमहर्षयः ५ [एकएवतुराजर्षिर्हरिश्चंद्रोमहामुने ॥ कथितस्तेसभायांवैदेवेंद्रस्यमहात्मनः] ६ किंकर्मतेनाचरितंतपोवानियतव्र त ॥ येनासौसहशक्रेणस्पर्द्धतेसुमहायशाः ७ पितृलोकगतश्चैवत्वयाविप्रपितामम ॥ दृष्टःपांडुर्महाभागःकथंवापिसमागतः ८ किमुक्तवांश्चभगवंस्तन्म माचक्ष्वसुव्रत ॥ त्वत्तःश्रोतुंसर्वमिदंपरंकौतूहलंहिमे ९ ॥ नारदउवाच ॥ ॥ यन्मांपृच्छसिराजेंद्रहरिश्चंद्रंप्रतिप्रभो ॥ तत्तेऽहंसंप्रवक्ष्यामिमा हात्म्यंतस्यधीमतः १० सराजाबलवानासीत्सम्राट्सर्वमहीक्षिताम् ॥ तस्यसर्वेमहीपालाःशासनावनताःस्थिताः ११ तेनैकंरथमास्थायजैत्रंहेमविभू षितम् ॥ शस्त्रप्रतापेनाजिताद्वीपाःसप्तजनेश्वर १२ सनिर्जित्यमहींकृत्स्नांसशैलवनकाननाम् ॥ आजहारमहाराजराजसूयंमहाक्रतुम् १३

र्यं । शक्रलोकप्रापको राजसूयोऽतियत्नसाध्यः सिद्धश्चतीव्रानर्थहेतुरतो ब्रह्मसभाप्रापकमेव व्रतमनुष्ठेयमिति । अवांतरतात्पर्यंतु भूभारहरणार्थं ब्रह्मणाप्रेरितोनारदः सर्वसंहार हेतुंराजसूयं युधिष्ठिरद्वाराकारयितुं युधिष्ठिरंकृष्णंचोद्योजयतीति १० 'येनेष्टंराजसूयेनमंडलस्येश्वरश्चयः । शास्तियश्चाज्ञयाराज्ञः ससम्राडितिशब्द्यते' ११ 'जंबूद्वीपः कुशद्वीपः शाकःक्रौंचश्चशाल्मलिः । गोमेदःपुष्करश्चैव सप्तद्वीपाःप्रकीर्तिताः' १२ । १३

१४ । १५ प्रसर्पोऽग्निविसर्जनमितिनिवंटुः १६ । १७ । १८ । १९ । २० । २१ । २२ त्वाह त्वामाह २३ । २४ । २५ । २१ । २७ संकल्पं कामं गंतासिगमिष्यसि २८

तस्यसर्वेमहीपालाधनान्याजन्हुराज्ञया ॥ द्विजानांपरिवेष्टारस्तस्मिन्यज्ञेचतेऽभवन् १४ प्रादाच्चद्रविणंप्रीत्यायाचकानांनरेश्वरः ॥ यथोक्तवंतस्तेत स्मिस्ततःपंचगुणाधिकम् १५ अतर्पयच्चविविधैर्वसुभिर्ब्राह्मणांस्तदा ॥ प्रसर्पकालेसंप्राप्तेनानादिग्भ्यःसमागतान् १६ भक्ष्यभोज्यैश्चविविधैर्यथाकामपुर स्कृतैः ॥ रत्नौघतर्पितैस्तुष्टैर्द्विजैश्चसमुदाहृतम् ॥ तेजस्वीचयशस्वीचनृपेभ्योभ्यधिकोऽभवत् १७ एतस्मात्कारणाद्राजन्हरिश्चंद्रोविराजते ॥ तेभ्योराजसहस्रेभ्यस्तद्विद्धिभरतर्षभ १८ समाप्यचहरिश्चंद्रोमहायज्ञंप्रतापवान् ॥ अभिषिक्तश्चशुशुभेसाम्राज्येननराधिप १९ येचान्येचमहीपालारा जसूयंमहाक्रतुम् ॥ यजंतेतेसहेंद्रेणमोदंतेभरतर्षभ २० येचापिनिधनंप्राप्ताःसंग्रामेष्वपलायिनः ॥ तेतत्सदनमासाद्यमोदंतेभरतर्षभ २१ तपसायेचती व्रेणत्यजंतीहकलेवरम् ॥ तेतत्स्थानंसमासाद्यश्रीमंतोभांतिनित्यशः २२ पिताचत्वाऽऽहकौंतेयपांडुःकौरवनंदन ॥ हरिश्चंद्रेश्रियंदृष्ट्वानृपतौजातवि स्मयः २३ विज्ञायमानुषंलोकमायांतंमांनराधिप ॥ प्रोवाचप्रणतोभूत्वावदेथास्त्वंयुधिष्ठिरम् २४ समर्थोऽसिमहींजेतुंभ्रातरस्तेस्थितावशे ॥ राजसूयं क्रतुश्रेष्ठमाहरस्वेतिभारत २५ त्वयीष्टवतिपुत्रेऽहंहरिश्चंद्रवदाशुवै ॥ मोदिष्येबहुलाःशश्वत्समाःशक्रस्यसंसादि २६ एवंभवतुवक्ष्येऽहंतवपुत्रंनराधिपम् ॥ भूर्लोकंयदिगच्छेयमितिपांडुमथाऽब्रुवम् २७ तस्यत्वंपुरुषव्याघ्रसंकल्पंकुरुपांडव ॥ गंतासित्वंमहेंद्रस्यपूर्वैःसहसलोकताम् २८ बहुविघ्नश्चनृपतेक्रतु रेषस्मृतोमहान् ॥ छिद्राण्यस्यतुवांछंतियज्ञघ्नाब्रह्मराक्षसाः २९ युद्धंचक्षत्रशमनंपृथिवीक्षयकारणम् ॥ किंचिदेवनिमित्तंचभवत्यत्रक्षयावहम् ३० ए तत्संचिंत्यराजेंद्रयत्क्षेमंतत्समाचर ॥ अप्रमत्तोत्थितोनित्यंचातुर्वर्ण्यस्यरक्षणे ३१ भवएधस्वमोदस्वधनैस्तर्पयचद्विजान् ॥ एतत्तेविस्तरेणोक्तंयन्मां त्वंपरिपृच्छसि ॥ आपृच्छेत्वांगमिष्यामिदाशार्हनगरींप्रति ३२ ॥ वैशंपायनउवाच ॥ ॥ एवमाख्यायपार्थेभ्योनारदोजनमेजय ॥ जगामतैर्वृ तोराजन्नृषिभिर्यैःसमागतः ३३ गतेतुनारदेपार्थोभ्रातृभिःसहकौरवः ॥ राजसूयंक्रतुश्रेष्ठंचिंतयामासपार्थिवः ३४ ॥ इतिश्रीमहाभारतेसभापर्व णिलोकपालसभाख्यानपर्वणिपांडुसंदेशकथनेद्वादशोऽध्यायः ॥ १२ ॥ समाप्तंचलोकपालसभाख्यानपर्व ॥ अथराजसूयारंभपर्व ॥ ॥ ५ ॥ वैशंपायनउवाच ॥ ऋषेस्तद्वचनंश्रुत्वानिशश्वासयुधिष्ठिरः ॥ चिंतयन्राजसूयेष्टिंनलेभेशर्मभारत १ राजर्षीणांचतंश्रुत्वामहिमानंमहात्मनाम् ॥ यज्वनां कर्मभिःपुण्यैर्लोकप्राप्तिंसमीक्ष्यच २ हरिश्चंद्रंचराजर्षिंरोचमानंविशेषतः ॥ यज्वानंयज्ञमाहर्तुंराजसूयमियेषसः ३ युधिष्ठिरस्ततःसर्वानर्चयित्वास भासदः ॥ प्रत्यर्चितश्चतैःसर्वैर्यज्ञायैवमनोदधे ४ सराजसूयंराजेंद्रकुरूणामृषभस्तदा ॥ आहर्तुंप्रवणंचक्रेमनःसंचिंत्यचासकृत् ५

२९ । ३० । ३१ । ३२ । ३३ । ३४ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिनैलकंठीये भारत भावदीपे द्वादशोऽध्यायः ॥ १२ ॥ ॥ ५ ॥ ॥ ऋषेरिति १ । २ । ३ । ४ । ५

६ । ७ दीयतामित्युवाचेतिशेषः पाठांतरेतुस्पष्टं ८ । ९ । १० अविग्रहाःकलहशून्याः ११ वार्धुषीवृद्ध्युपजीविका यज्ञसत्वानि क्रतूनांसामर्थ्यानि सद्यःपुष्कलफलप्रदत्वा दिविषयाणि १२ अनुकर्षं दारिद्र्याद्राजकीयद्रव्यस्यातीतवर्षस्य ऋणत्वेनधारणं । निष्कर्षकरार्थंप्रजापीडनं । मूर्छनंवृद्धिः । १३ । १४ । १५ । षट्सुसंधिविग्रहादिषु यस्य प्रियादिकर्तुं नैगमैर्वणिग्भिःसह आसन्नितशेषः इतरेनृपावाणिग्वचेन करदीकृताइत्यर्थः तत्रतस्मिन्नविषयोदेशः १६ कामतोयथेष्टमुपयुंजानैर्दिव्यान्नवस्त्रादिभोगंकुर्वद्भिः यतो लोभजैर्विमोहोत्थै राजसैर्वृत्तिविशेषैस्तृष्णादिभिस्तादृशैरपिवव्र्वेवृद्धिमानभूत् १७ यस्मिन्विषये राजन् राज्ञि पितृतः पितृगुणैर्नीतिशिक्षणादिभिः । मातृतोमातृगुणैर्वात्सल्या

भूयश्चाद्भुतवीर्यौजाधर्ममेवानुचिंतयन् ॥ किंहितंसर्वलोकानांभवेदितिमनोदधे ६ अनुगृह्णन्प्रजाःसर्वाःसर्वधर्मभृतांवरः ॥ अविशेषेणसर्वेषांहितंचक्रे युधिष्ठिरः ७ सर्वेषांदीयतांदेयंमुष्णन्कोपमदावुभौ ॥ साधुधर्मेतिधर्मेतिनान्यच्छ्रूयेतभाषितम् ८ एवंगतेततस्तस्मिन्पितरीवाश्वसन्जनाः ॥ नतस्य विद्यतेद्वेष्टाततोऽस्याजातशत्रुता ९ परिग्रहान्नरेंद्रस्यभीमस्यपरिपालनात् ॥ शत्रूणांक्षपणाच्चैवबीभत्सोःसव्यसाचिनः १० धीमतःसहदेवस्यधर्माणामनु शासनात् ॥ वैनत्यात्सर्वतश्चैवनकुलस्यस्वभावतः ॥ अविग्रहावीतभयाःस्वकर्मनिरताःसदा ११ निकामवर्षाःस्फीताश्चआसन्जनपदास्तथा ॥ वार्धुषी यज्ञसत्वानिगोरक्षंकर्षणंवणिक् १२ विशेषात्सर्वमेवैतत्संजज्ञेराजकर्मणा ॥ अनुकर्षंचनिष्कर्षंव्याधिपावकमूर्छनम् १३ सर्वमेवनतत्रासीद्धर्मनित्येयुधि ष्ठिरे ॥ दस्युभ्योवंचकेभ्यश्चराज्ञःप्रतिपरस्परम् १४ राजवल्लभतश्चैवनाश्रूयतमृषाकृतम् ॥ प्रियंकर्तुमुपस्थातुंबलिकर्मस्वकर्मजम् १५ अभिहर्तुंनृपाः षट्सुपृथक्जात्यैश्चनैगमैः ॥ ववृधेविषयस्तत्रधर्मनित्येयुधिष्ठिरे १६ कामतोऽप्युपयुंजानैराजसैर्लोभजैर्जनैः ॥ सर्वव्यापीसर्वगुणीसर्वसाहःससर्वराट् १७ यस्मिन्नधिकृतःसम्राड्भ्राजमानोमहायशाः ॥ यत्रराजन्दशदिशःपितृतोमातृतस्तथा ॥ अनुरक्ताःप्रजाआसन्नागोपालाद्द्विजातयः १८ ॥ वैशंपा यनउवाच ॥ ॥ समंत्रिगःसमानाय्यभ्रातॄंश्चवदतांवरः ॥ राजसूयंप्रतितदापुनःपुनरपृच्छत १९ तेपृच्छमानाःसहिताववचोऽर्थ्यंमंत्रिणस्तदा ॥ यु धिष्ठिरंमहाप्राज्ञंयियक्षुमिदमब्रुवन् २० येनाभिषिक्तोनृपतिर्वारुणंगुणमृच्छति ॥ तेनराजाऽपितंकृत्स्नंसम्राड्गुणमभीप्सति २१ तस्यसम्राड्गुणार्हस्यभवतः कुरुनंदन ॥ राजसूयस्यसमयंमन्यंतेसुहृदस्तव २२ तस्ययज्ञस्यसमयःस्वाधीनःक्षत्रसंपदा ॥ साम्नाषडग्नयोयस्मिंश्चीयंतेशंसितव्रतैः २३ दर्वीहोमा नुपादायसर्वान्यःप्राप्नुतेक्रतून् ॥ अभिषेकंचयस्यांतेसर्वजितेनचोच्यते २४ समर्थोऽसिमहाबाहोसर्वेतेवशगावयम् ॥ अचिरात्त्वंमहाराजराजसूयमवा प्स्यसि २५ अविचार्यमहाराजराजसूयेमनःकुरु ॥ इत्येवंसुहृदःसर्वेपृथक्चसहचाब्रुवन् २६

दिभिः १८ । १९ । २० वारुणंगुणंजलधातुजयं सम्राड्गुणंभूधातुजयं २१ । २२ अग्नयःअग्निस्थापनार्थानिस्थंडिलानि साम्नासामवेदविहितैर्मंत्रैश्चीयंतेरच्यंते २३ दर्वी ति दर्वीहोमोऽग्निहोत्रादिस्तत्प्रभृतीन्सर्वान् क्रतून्निष्टिपशुसोमयागान्प्राप्नुते व्याप्नोति तत्समुदायात्मकइत्यर्थः। अभिषेकफलंसर्वजित्त्वं । 'आत्रेयोऽग्नमभिषिषेच तस्माद्वंगंसमंतंसर्वतः पृ थिवींजयन्परियाय' इतिश्रुतं २४ । २५ । २६

धृष्टंप्रगल्भंइष्टंआप्ततमं वरिष्ठंश्रेष्ठतमम् २७ । २८ । २९ कथंभवेत्फलवतीतिशेषः ३० । ३१ । ३२ आत्मवान्जितचित्तः ३३ विममृशे कथंयज्ञःसिद्धचेत् कथं वालोकानशोनस्या दितिविमर्शंकृतवान् । सामर्थ्यंपृथ्वींजेतुं । योगंधनसंपत्तिं । व्ययागमौधनस्यैव ३४ एतान्सम्यक् संख्यादिनाधियाचविमृश्य । ३५ । ३६ । सर्वस्मात् लोक्यतइतिलोको दृश्यंमूलाज्ञानंतस्मात्परं । 'तमसःपरस्तात्' इतिश्रुतेः । अतएवाऽप्रमेयं वाङ्मनसातीतत्वात् । कामात् । बहुस्यांप्रजायेयेत्यादिश्रुतादीक्षणानन्तकर्मवशत्वात् ३७ देवानांसं

सधर्म्यंपांडवस्तेषांवचःश्रुत्वाविशांपते ॥ धृष्टमिष्टंवरिष्ठंचजग्राहमनसाऽरिहा २७ श्रुत्वासुहृद्वचस्तच्चजानंश्चाप्यात्मनः क्षमम् ॥ पुनःपुनर्मनोदध्रे राजसूयायभारत २८ सभ्रातृभिःपुनर्धीमानृत्विग्भिश्चमहात्मभिः ॥ मंत्रिभिश्चापिसहितोधर्मराजोयुधिष्ठिरः ॥ धौम्यद्वैपायनाद्यैश्चमंत्रयामासमंत्रवित् २९ ॥ युधिष्ठिरउवाच ॥ ॥ इयंयाराजसूयस्यसम्राडर्हस्यसुक्रतोः ॥ श्रद्दधानस्यवदतःस्पृहामेसाकथंभवेत् ३० ॥ वैशंपायनउवाच ॥ एवमुक्तास्तुतेतेनराज्ञाराजीवलोचन ॥ इदमूचुर्वचःकालेधर्मराजंयुधिष्ठिरम् ३१ अर्हस्त्वमसिधर्मज्ञराजसूयंमहाक्रतुम् ॥ अथैवमुक्तेनृपतावृत्विग्भिरृषिभिस्तथा ३२ मंत्रिणोभ्रातरश्चास्यतद्वचःप्रत्यपूजयन् ॥ सतुराजामहाप्राज्ञःपुनरेवात्मनाऽऽत्मवान् ३३ भूयोविममृशेपार्थोलोकानांहितकाम्यया ॥ सामर्थ्ययोगंसंप्रेक्ष्यदेशकालौव्ययागमौ ३४ विमृश्यसम्यक्चधियाकुर्वन्प्राज्ञोनसीदति ॥ नहियज्ञसमारंभःकेवलात्मविनिश्चयात् ३५ भवतीतिसमाज्ञाय यत्नतःकार्यमुद्वहन् ॥ सनिश्चयार्थंकार्यस्यकृष्णमेवजनार्दनम् ३६ सर्वलोकात्परंमत्वाजगाममनसाहरिम् ॥ अप्रमेयंमहाबाहुंकामाज्जातमजंनृषु ३७ पांडवस्तर्कयामासकर्मभिर्देवसंमतैः ॥ नास्यकिंचिदविज्ञातंनास्यकिंचिदकर्मजम् ३८ नसकिंचिन्नविषहेदितिकृष्णममन्यत ॥ सतुतांनैष्ठिकींबुद्धिंकृत्वापार्थोयुधिष्ठिरः ३९ गुरुवद्भूतगुरवेप्राहिणोद्दूतमंजसा ॥ शीघ्रगेनरथेनाशुसदूतःप्राप्ययादवान् ४० द्वारकावासिनंकृष्णंद्वारवत्यांसमासदत् ॥ दर्शनाकांक्षिणंपार्थंदर्शनाकांक्षयाऽच्युतः ४१ इंद्रसेनेनसहितइंद्रप्रस्थमगात्तदा ॥ व्यतीत्यविविधान्देशांस्त्वरावानक्षिप्रवाहनः ४२ इंद्रप्रस्थगतंपार्थमभ्यगच्छज्जनार्दनः ॥ सगृहेपितृवद्भ्रात्राधर्मराजेनपूजितः ४३ भीमेनचततोऽपश्यत्स्वसारंप्रीतिमान्पितुः ॥ प्रीतःप्रीतेनसुहृदारेमेससहितस्तदा ४४ अर्जुनेनयमाभ्यांचगुरुवत्पर्युपासितः ॥ तंविश्रांतंशुभेदेशेक्षणिनंकल्पमच्युतम् ॥ धर्मराजःसमागम्यज्ञापयत्स्वप्रयोजनम् ४५ ॥ युधिष्ठिरउवाच ॥ ॥ प्रार्थितोराजसूयोमेनचासौकेवलेप्सया ॥ प्राप्यतेयेनतत्तेहिविदितंकृष्णसर्वशः ४६ यस्मिन्सर्वंसंभवतियश्चसर्वत्रपूज्यते ॥ यश्चसर्वेश्वरोराजाराजसूयंसविंदति ४७ तंराजसूयंसुहृदःकार्यमाहुःसमेत्यमे ॥ तत्रमेनिश्चिततमंतवकृष्णगिराभवेत् ४८ केचिद्धिसौहृदादेवनदोषंपरिचक्षते ॥ स्वार्थहेतोस्तथैवान्येप्रियमेववदंत्युत ४९

मतैःकर्मभिर्बालेनापिपूतनावधादिभिः । संमितैरितिपाठे देवकर्मतुल्यैरित्यर्थः । अनुजानता । नास्येति सर्वज्ञः सर्वकृत् सर्वसहइतिपादत्रयार्थः । ३८ । ३९ । भूतगुरवेऽपि गुरुवदाशीर्वादसंदेशादिनायुक्तं ४० । ४१ । ४२ भ्रात्रापितृष्वसृजेन ४३ । ४४ क्षणिनंसावसरं कल्पंसमर्थं ४५ । ४६ । ४७ । ४८ । ४९

५० । ५१ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ सर्वैरिति। सर्वराजजयाद्राजसूयेऽधिक्रियते । राजजयश्चप्रधानमल्लनिर्बर्हणन्यायेन जरासंधवधेनैव जायतइत्यभिप्रेत्याह जानतइत्यादिना। १ अवरजमर्वाग्जातम् । यद्भार्यत्पलायनपरमवशेषितंक्षत्रं तस्मादवरान्नीचाज्जातंनीचजम् । अतएवक्षत्रसंज्ञितंनतुक्षत्रकर्मयोग्यम् २ तैश्चायंकुलसंकल्पःसर्वक्षत्रसमुदायेनसंकेतःकृतो यः सर्वक्षत्रजित्सःअस्माकंमध्येसम्राड् राज्ञामपिराजाभविष्यतीतिवक्ष्यमाणः । निदेशवाग्भिः पूर्वपूर्वोपदेशवाक्यैः । हप्रसिद्धं तत्तेविदितम्। निदेशभाग्भिरितिपाठे अस्वतंत्रैःक्षत्रियैरित्यर्थः ३ तत्रपूर्वमैलःसम्राड्जातइत्याह ऐलस्येति ऐलःपुरूरवाः इक्ष्वाकुर्वंशस्यचमनोरिलाइक्ष्वाकुश्च । तत्रइलायाः पुरूरवादयः इक्ष्वाकोर्ना

प्रियमेवपरीप्संतेकेचिदात्मनियाद्धितम्॥ एवंप्रायाश्चदृश्यंतेजनवादाःप्रयोजने ५० त्वंतुहेतूनतीत्यैतान्कामक्रोधौव्युदस्यच ॥ परमंयत्क्षमंलोकेयथा वद्भकुमर्हसि ५१ इतिश्रीमहाभारतेसभापर्वणिराजसूयारंभपर्वणिवासुदेवागमनेत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ कृष्णउवाच ॥ ॥ सर्वैर्गुणैर्महाराजराजसूयंत्वमर्हसि ॥ जानतस्त्वेवतेसर्वंकिंचिद्वक्ष्यामिभारत १ जामदग्न्येनरामेणक्षत्रंयदवशेषितम् ॥ तस्मादवरजंलोकेयदिदंक्षत्रसंज्ञितम् २ कृतोऽयंकुलसंकल्पःक्षत्रियैर्वसुधाधिप ॥ निदेशवाग्भिस्तत्तेहविदितंभरतर्षभ ३ ऐलस्येक्ष्वाकुवंशस्यप्रकृतिंपरिचक्षते ॥ राजानःश्रेणिबद्धाश्चतथाऽन्येक्षत्रियाभुवि ४ ऐलवंश्याश्चयेराजंस्तथैवेक्ष्वाकवोनृपाः ॥ तानिचैकशतंविद्धिकुलानिभरतर्षभ ५ ययातेस्त्वेवभोजानांविस्तरोगुणतोमहान् ॥ भजतेऽद्यमहाराजविस्तरंसचतुर्दिशम् ६ तेषांतथैवतांलक्ष्मींसर्वक्षत्रमुपासते ॥ इदानीमेववैराजन्जरासंधोमहीपतिः ७ अभिभूयश्रियंतेषांकुलानामभिषेचितः ॥ स्थितोमूर्ध्निनरेंद्राणामोजसाऽऽक्रम्यसर्वशः ८ सोऽवनींमध्यमांभुक्त्वामिथोभेदममन्यत ॥ प्रभुर्यस्तुपरोराजायस्मिन्नेकवशेजगत् ९ ससाम्राज्यंमहाराजप्राप्तोभवतियोगतः ॥ तंसराजाजरासंधंसंश्रित्यकिलसर्वशः १० राजन्सेनापतिर्जातःशिशुपालःप्रतापवान् ॥ तमेवचमहाराजशिष्यवत्समुपस्थितः ११ वक्रःकरूषाधिपतिर्मायायोधीमहाबलः ॥ अपरौचमहावीर्यौमहात्मानौसमाश्रितौ १२ जरासंधंमहावीर्यंतौहंसडिंभकावुभौ ॥ वक्रदंतःकरूषश्चकरभोमेघवाहनः ॥ मूर्ध्नादिव्यमणिंबिभ्रद्यमद्भुतमणिंविदुः १३ मुरुंचनरकंचैवशास्तियोयवनाधिपः ॥ अपर्यंतबलोराजाप्रतीच्यांवरुणोयथा १४ भगदत्तोमहाराजवृद्धस्तवपितुःसखा ॥ सवाचाप्रणतस्तस्यकर्मणाचविशेषतः १५ स्नेहबद्धश्चमनसापितृवद्भक्तिमांस्त्वयि ॥ प्रतीच्यांदक्षिणंचांतंपृथिव्याःप्रतियोनृपः १६

भागादयश्चेतिसोमसूर्यवंशीयराजसु द्वौमुख्यौ तयोःप्रकृतिं प्रजामिवप्रजांकरदत्वात् । काऽसौप्रकृतिरित्यतआह राजानइति श्रेणिबद्धास्तंत्यांदाम्नाबलीवर्दाइवाऽऽज्ञयाबद्धाः ४ वंशद्वयेऽप्येवंक्रमतःशतं सम्राजांकुलानि जातानीत्याहऐलवंश्याइति ५ ययातेर्वंशेइतिशेषः अद्यसंप्रति ६ इदानीमेवाभिषेचितोनरेंद्रैरितिशेषः ७ । ८ मध्यमांमथुरादेशरूपामस्मदीयामस्मासुद्वारवतींगतेषुभुक्त्वा मिथोऽस्माभिःसह भेदंवैरममन्यत तेनसःअस्मान्सर्वश्रेष्ठान्जित्वा सएवसाम्राज्यंप्राप्तइत्याहप्रभुरित्यादिना चतुर्जस्तुपरोराजेतिपाठे चतुर्जोजरासंधः द्वेमातरौपिताजराराक्षसीचेतिचतुर्भ्योजातत्वात् ९ । १० । ११ । १२ । १३ । १४ भगदत्तोमध्यस्थइत्याह भगेति १५ । १६

त्वत्पक्षेतुकुंतिभोजएकएवेत्याह मातुलइति १७ पौंड्रकोऽपिपरपक्षेएवास्तीत्याह जरेति १८ । १९ । २० अस्मच्छ्वशुरोभीष्मकोऽपिपरपक्षएवास्तीत्याह चतुर्थेति पृथिव्याश्चतुर्थांशभाक् २१ । २२ । २३ सःबलंकुलंचाऽऽत्मनोनज्ञातवान्यतोमच्छत्रुपक्षेगत्वा मयाजामात्राऽपिसह कलहमिच्छतीतिभावः २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२

मातुलोभवतःशूरःपुरुजित्कुंतिवर्द्धनः ॥ सतेसन्नतिमानेकःस्नेहतःशत्रुसूदनः १७ जरासंधंगतस्त्वेवपुरायोनमयाहतः ॥ पुरुषोत्तमविज्ञातोयोऽसौचेदिषुदुर्मतिः १८ आत्मानंप्रतिजानातिलोकेऽस्मिन्पुरुषोत्तमम् ॥ आदत्तेसततंमोहाद्यःसचिन्हंचमामकम् १९ वंगपुंड्रकिरातेषुराजाबलसमन्वितः ॥ पौंड्रकोवासुदेवेतियोऽसौलोकेऽभिविश्रुतः २० चतुर्थभाङ्महाराजभोजइंद्रसखोबली ॥ विद्याबलाद्योव्यजयत्सपांडचक्रथकैशिकान् २१ भ्रातायस्याकृतिःशूरोजामदग्न्यसमोऽभवत् ॥ सभक्तोमागधंराजाभीष्मकःपरवीरहा २२ प्रियाण्याचरतःप्रह्वान्सदासंबंधिनस्ततः ॥ भजतोनभजत्यस्मानप्रियेषुव्यवस्थितः २३ नकुलंसबलंराजन्नभ्यजानात्तथाऽऽत्मनः ॥ पश्यमानोयशोदीप्तंजरासंधमुपस्थितः २४ उदीच्याश्चतथाभोजाःकुलान्यष्टादशप्रभो ॥ जरासंधभयादेवप्रतीचींदिशमास्थिताः २५ शूरसेनाभद्रकाराबोधाःशाल्वाःपटच्चराः ॥ सुस्थलाश्वसुकुट्टाश्चकुलिंदाःकुंतिभिःसह २६ शाल्वायनाश्चराजानःसोदर्यानुचरैःसह ॥ दक्षिणायेचपांचालाःपूर्वाःकुंतिषुकोशलाः २७ तथोत्तरांदिशंचापिपरित्यज्यभयार्दिताः ॥ मत्स्याःसन्यस्तपादाश्चदक्षिणांदिशमाश्रिताः २८ तथैवसर्वपांचालाजरासंधभयार्दिताः ॥ स्वराज्यंसंपरित्यज्यविद्रुताःसर्वतोदिशम् २९ कस्यचित्त्वथकालस्यकंसोनिर्मथ्ययादवान् ॥ बार्हद्रथसुतेदेव्यावुपागच्छद्वृथामतिः ३० अस्तिःप्राप्तिश्चनाम्नातेसहदेवानुजेऽबले ॥ बलेनतेनस्वज्ञातीनभिभूयवृथामतिः ३१ श्रैष्ठ्यंप्राप्तःसतस्यासीदतीवापनयोमहान् ॥ भोजराजन्यवृद्धैश्चपीड्यमानैर्दुरात्मना ३२ ज्ञातित्राणमभीप्सद्भिरस्मत्संभावनाकृता ॥ दत्वाऽक्रूरायसुतनुंतामाहुकसुतांतदा ३३ संकर्षणद्वितीयेनज्ञातिकार्यंमयाकृतम् ॥ हतौकंससुनामानौमयारामेणचाप्युत ३४ भयेतुसमतिक्रांतेजरासंधेसमुद्यते ॥ मंत्रोऽयंमंत्रितोराजन्कुलैरष्टादशावरैः ३५ अनारमंतोनिघ्नंतोमहास्त्रैःशत्रुघातिभिः ॥ नहन्यामोवयंतस्यत्रिभिर्वर्षशतैर्बलम् ३६ तस्यह्यमरसंकाशौबलेनबलिनांवरौ ॥ नामभ्यांहंसडिंभकावशस्त्रनिधनावुभौ ३७ [तावुभौसहितौवीरौजरासंधश्चवीर्यवान् ॥ त्रयस्त्रयाणांलोकानांपर्याप्ताइतिमेमतिः] ३८ नहिकेवलमस्माकंयावंतोऽन्येचपार्थिवाः ॥ तथैवतेषामासीच्चबुद्धिर्बुद्धिमतांवर ३९ अथहंसइतिख्यातःकश्चिदासीन्महान्नृपः ॥ रामेणसहतस्तत्रसंग्रामेऽष्टादशावरे ४० हतोहंसइतिप्रोक्तमथकेनापिभारत ॥ तच्छ्रुत्वाडिंभकोराजन्यमुनांऽभस्यमज्जत ४१ विनाहंसेनलोकेऽस्मिन्नाहंजीवितुमुत्सहे ॥ इत्येतांमतिमास्थायडिंभकोनिधनंगतः ४२ तथातुडिंभकंश्रुत्वाहंसःपरपुरंजयः ॥ प्रपेदेयमुनामेवसोऽपितस्यांन्यमज्जत ४३

३३ । ३४ कुलैर्मंत्रिपुरोहितश्चैवेत्यादिनाप्राक्प्रदर्शितैः ३५ नहन्यामोनहतवंतः वर्षशतैर्वर्षशततुल्यैस्त्रिभिर्वर्षैरित्यर्थः ३६ । ३७ । ३८ । ३९ सहंसः हतः मरणतुल्यांमूर्छांमापितः ४० । ४१ । ४२ । ४३

४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० ॥ ॥

तौसराजाजरासंधःश्रुत्वाचनिधनंगतौ ॥ पुरंशून्येनमनसाप्रययौभरतर्षभ ४४ ततोवयममित्रघ्नतस्मिन्प्रतिगतेनृपे ॥ पुनरानंदिनःसर्वेमथुरायांवसा
महे ४५ यदात्वभ्येत्यपितरंसावैराजीवलोचना ॥ कंसभार्याजरासंधंदुहितामागधंनृपम् ॥ चोदयत्येवराजेंद्रपतिव्यसनदुःखिता ४६ पतिघ्नंमेजहीत्ये
वंपुनःपुनररिंदम ॥ ततोवयंमहाराजतंमंत्रंपूर्वमंत्रितम् ४७ संस्मरंतोविमनसोव्यपयातानराधिप ॥ पृथक्त्वेनमहाराजसंक्षिप्यमहतींश्रियम् ४८ प
लायामोभयात्तस्यससुतज्ञातिबांधवाः ॥ इतिसंचिंत्यसर्वेस्मप्रतीचींदिशमाश्रिताः ४९ कुशस्थलींपुरींरम्यांरैवतेनोपशोभिताम् ॥ ततोनिवेशंतस्यां
चक्रुतवंतोवयंनृप ५० तथैवदुर्गसंस्कारंदेवैरपिदुरासदम् ॥ स्त्रियोऽपियस्यांयुध्येयुःकिमुवृष्णिमहारथाः ५१ तस्यांवयममित्रघ्ननिवसामोऽकुतोभयाः ॥
आलोच्यगिरिमुख्यंतंमागधंतीर्णमेवच ५२ माधवाःकुरुशार्दूलापरांमुदमवाप्नुवन् ॥ एवंवयंजरासंधादभितःकृतकिल्बिषाः ५३ सामर्थ्यवंतःसंबंधाद्गोमंतं
समुपाश्रिताः ॥ त्रियोजनायतंसद्मत्रिस्कंधंयोजनावधि ५४ योजनांतेशतद्वारंवीरविक्रमतोरणम् ॥ अष्टादशावरैर्नद्धंक्षत्रियैर्युद्धदुर्मदैः ५५ अष्टादश
सहस्राणिभ्रातॄणांसंतिनःकुले ॥ आहुकस्यशतंपुत्राएकैकस्त्रिदशावरः ५६ चारुदेष्णःसहभ्रात्राचक्रदेवोऽथसात्यकिः ॥ अहंचरौहिणेयश्चसांबःप्रद्युम्नएवच
५७ एवमेतेरथाःसप्तराजन्नन्यान्निबोधमे ॥ कृतवर्माह्यनाधृष्टिःसमीकःसमितिंजयः ५८ कंकःशंकुश्चकुंतिश्चसप्तैतेवैमहारथाः ॥ पुत्रौचांधकभोजस्यवृद्धो
राजाचतेदश ५९ वज्रसंहननावीरावीर्यवंतोमहारथाः ॥ स्मरंतोमध्यमंदेशंवृष्णिमध्येव्यवस्थिताः ६० सत्वंसम्राड्गुणैर्युक्तःसदाभरतसत्तम ॥ क्षत्रेसम्राज
मात्मानंकर्तुमर्हसिभारत ६१ [नतुशक्यंजरासंधेजीवमानेमहाबले ॥ राजसूयस्त्वयाऽवाप्तुमेषाराजन्मतिर्मम] ६२ तेनरुद्धाहिराजानःसर्वेजित्वागिरिव्रजे ॥
कंदरेपर्वतेंद्रस्यसिंहेनेवमहाद्विपाः ६३ सहिराजाजरासंधोयियक्षुर्वसुधाधिपैः ॥ महादेवंमहात्मानमुमापतिमरिंदम ६४ आराध्यतपसोग्रेणनि
र्जितास्तेनपार्थिवाः ॥ प्रतिज्ञायाश्चपारंसगतःपार्थिवसत्तम ६५ सहिनिर्जित्यनिर्जित्यपार्थिवान्पृतनागतान् ॥ पुरमानीयबद्धाचचकारपुरुषव्रजम् ६६
वयंचैवमहाराजजरासंधभयात्तदा ॥ मथुरांसंपरित्यज्यगताद्वारवतींपुरीम् ६७ यदित्वेनंमहाराजयज्ञंप्राप्तुमभीप्ससि ॥ यतस्वतेषांमोक्षायजरासं
धवधायच ६८ समारंभोनशक्योऽयमन्यथाकुरुनंदन ॥ राजसूयस्यकात्स्न्र्येनकर्तुंमतिमतांवर ६९ इत्येषामेमतीराजन्यथावामन्यसेऽनघ ॥ एवंगते
ममाचक्ष्वस्वयंनिश्चित्यहेतुभिः ७० ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिराजसूयारंभपर्वणिकृष्णवाक्येचतुर्दशोऽध्यायः १४ ॥ ॥ छ ॥
॥ युधिष्ठिरउवाच ॥ उक्तंत्वयाबुद्धिमतायन्नान्योवक्तुमर्हति ॥ संशयानांहिनिर्मोक्तात्वन्नान्योविद्यतेभुवि १

॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपे चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ छ ॥ १

२ । ३ राजसूयंदुष्प्रापंमत्वाशममेवपरंमन्वानआहविशालेति भूमिरिवास्थिरानिश्चयात्मिकाचित्तवृत्तिः साबहुलाविषयभेदाद्बहुप्रकारा इदंसाधयिष्यइत्येवंरूपा । अतएवविशाला शालेवशालाआवरणं निरावरणाब्रह्मलोकायापिस्पृहयाति । बहुरत्नसमाचिताबहुभिरनंतैस्तत्तज्जात्युत्कृष्टैर्विषयैर्व्याप्ताऽतः पुरुषः कार्येषुस्वस्यबलाबलंनजानाति । सदूरंगत्वाबुद्धेःपरां निष्ठांप्रत्यगात्मरूपांप्राप्य श्रेयोमोक्षाख्यंविजानातिनान्यथा । बहुषुदुष्प्रापेष्वर्थेषुव्यासक्तचित्तत्वात् । यथोक्तंभगवता'व्यवसात्मिकाबुद्धिरेकेहकुरुनंदन । बहुशाखाह्यनंताश्चबुद्धयोऽ व्यवसायिनां'इति व्यवसायस्तत्त्वनिश्चयइति । प्राग्वस्तुभूमिर्मंत्रस्याविषयः । विशालाविस्तीर्णा । बहुशाखापुरुषभेदेनबुद्धिभेदात् बहुलाबहूपायविस्फुरणात् । अतएवबहुभिर्मंत्रज्ञैः सहमंत्र्यते । बहुभिर्भूहिरण्यहस्त्यश्वरथमित्रस्त्रीप्रभृतिभिरनेकैरत्नैःसमन्विता । एतस्यांमंत्रभूमौविगाह्यमानायांदूरंगत्वा अंगपंचकषड्गुणशक्तित्रयसिद्धित्रयसप्तोपायादिसमस्तनीतिभूमिमवगाह्य । अतस्त्वमेवसर्वज्ञोऽस्मद्धितैषी कार्याकार्यनिश्चयंवेत्सीतिभावः ४ 'यत्पृथिव्यांव्रीहियवंहिरण्यंपशवःस्त्रियः । नालमेकस्यतत्सर्वमितिमत्वाशमंव्रजेत्' इत्युक्तेः शमए

गृहेगृहेहिराजानःस्वस्यस्वस्याप्रियंकराः ॥ नचसाम्राज्यमाप्तास्तेसम्राट्शब्दोहिकृच्छ्रभाक् २ कथंपरानुभावज्ञःस्वंप्रशंसितुमर्हति ॥ परेणसमवेतस्तु यःप्रशस्यःसपूज्यते ३ विशालाबहुलाभूमिर्बहुरत्नसमाचिता ॥ दूरंगत्वाविजानातिश्रेयोवृष्णिकुलोद्वह ४ शममेवपरंमन्येशमात्क्षेमंभवेन्मम ॥ आरंभे पारमेष्ठ्यंतुनप्राप्यमितिमेमतिः ५ एवमेतेहिजानंतिकुलेजातामनस्विनः ॥ कश्चित्कदाचिदेतेषांभवेच्छ्रेष्ठोजनार्दन ६ वयंचैवमहाभागजरासंधभया तदा ॥ शंकिताःस्ममहाभागदौरात्म्यात्तस्यचानघ ७ अहंहितवदुर्द्धर्षभुजवीर्याश्रयःप्रभो ॥ नात्मानंबलिनंमन्येत्वयितस्माद्विशंकिते ८ त्वत्सकाशाच्चरामाच्चभीमसेनाच्चमाधव ॥ अर्जुनाद्वामहाबाहोहंतुंशक्योनवेतिवै ॥ एवंजानन्हिवार्ष्णेयविमृशामिपुनःपुनः ९ त्वंमेप्रमाणभूतोऽसिसर्वकार्येषुकेशव ॥ तच्छ्रुत्वाचाब्रवीद्भीमोवाक्यंवाक्यविशारदः १० ॥ ॥ भीमउवाच ॥ ॥ अनारंभपरोराजावल्मीकइवसीदति ॥ दुर्बलश्चानुपायेनबलिनंयोऽधितिष्ठति ११ अतंद्रितश्चप्रायेणदुर्बलोबलिनंरिपुम् ॥ जयेत्सम्यक्प्रयोगेणनीत्याऽर्थानात्मनोहितान् १२ कृष्णेनयोमयिबलंजयःपार्थेधनंजये ॥ मागधंसाधयिष्यामइष्टिंत्रयइवाग्नयः १३ ॥ ॥ कृष्णउवाच ॥ ॥ अर्थानारभतेबालोनानुबंधमवेक्षते ॥ तस्मादरिंनमृष्यंतिबालमर्थपरायणम् १४ जित्वाजय्यान्यौवनाश्विःपालनाच्चभगीरथः ॥ कार्तवीर्यस्तपोवीर्याद्बलात्तुभरतोविभुः १५

वश्रेयानित्याहशममिति शमस्वीकारेहेतुमाह आरंभे राजसूयारंभेक्रतुफलंपारमेष्ठ्यंपरमेष्ठितादात्म्यंदुष्प्रापंअशक्तत्वादस्माकमित्यर्थः ५ कृष्णमेवोद्दिश्याहएवमिति एतेऽस्मदीयाः समासदः मनस्विनोभीमादयः श्रेष्ठः सर्वान्जेतुंसमर्थोभविष्यतीतिजानंति ६ नत्वस्माकंमध्ये तादृशः कश्चिदस्तीत्याहवयंचेति ७ शंकायांहेतुमाहअहंहीति ८ तथाऽपित्वत्प्रभृतीनांचतुर्णांमध्येकश्चिदेनंहंतुंसमर्थोऽस्तिनवेतिविमृशामि युष्माकमप्यनंतशक्तित्वंजानन्नित्याहत्वत्सकाशादिति ९ । १० । ११ नीत्याऽर्थान्नीतिप्राप्यानर्थान् नीत्येतितृतीयांतंवा १२ मागधंजरासंधम् १३ भीमप्रकोपयन्कृष्णउवाच अर्थानिति बालोऽव्युत्पन्नः । अनुबंधंविपाकम् । अर्थपरायणंस्वकार्यतत्परम् । नमृष्यंतिनविचारयंति १४ यौवनाश्विर्मांधाता जय्यान्जेतव्यान् बाह्यांतरशत्रून्जित्वा । जयादयः पंचसाम्राज्यहेतवइतिभावः । हित्वाकरानितिपाठे करत्यागादयः पंच १५

सर्वाकारंजयादिपंचप्रकारम् । यौवनाश्विप्रभृतय एकैकेनगुणेनसाम्राज्यंप्राप्तास्त्वंतुतत्सर्वैरपिगुणैरिच्छसीतिभावः १६ तानेवगुणानाह निग्राह्याः निग्रहमर्हंतितेनिग्राह्याः विजिताः शत्रवएवलक्षणं ध्वजो यस्यसाम्राज्यस्य । एतेनजयपूर्वकं तन्मुख्यमित्युक्तं तच्चयौवनाश्वेदृष्टं । प्राप्तिःपालनं भगीरथेप्राप्तिरिति साम्राज्यलक्षणमित्येकदेशानुषंगेणयोज्यम् । साचधर्मादिलक्षणैःसहिते तियोज्यम् । धर्मोयोगःकार्त्तवीर्ये । अर्थावृद्धिर्भरते । नयोनीतिर्बलंभरते १७ बार्हद्रथोजरासंधइत्यतःप्राक् मंत्रान्वश्यानतुमृशन्नेवमेवसतांयुगे । निग्राह्यलक्षणंप्राप्तोधर्मार्थनयलक्षणैःइतिपठंति । जरासंधस्तत्साम्राज्यं निग्राह्यलक्षणंप्राप्तइति सार्द्धेनसंबंधः । किंभूतः सः धर्मार्थनयलक्षणैःधर्मोलाभोनीतिश्चएतैर्लक्षणैः सतांयुगेसंघेएवमेव वयमिव मंत्रान्विचारान् वश्यान्स्वकृतिसाध्याननुमृशन्ननुतिष्ठन् सर्वाकारं साम्राज्यमिच्छतस्तत्र जरासंधः प्रतिकूलोस्तीतिविद्धि । तर्हिसएव सम्राडस्त्विति चेत्तस्य राजपीडाकरत्वान्नेत्याह नचेति । १८ । १९ । नोऽस्माभिर्नचदृष्टः जरासंधेन अभागोऽस्वीकृतः । पुरुषतःमूर्द्धाभिषिक्तेषुपुरुषेषु । तेनसर्वे व

ऋद्धचामरुतस्तान्पंचसम्राजस्त्वनुशुश्रुम ॥ साम्राज्यमिच्छतस्तेतुसर्वाकारंयुधिष्ठिर १६ निग्राह्यलक्षणंप्राप्तिर्धर्मार्थनयलक्षणैः १७ बार्हद्रथोजरासंधस्तद्विद्धिभरतर्षभ ॥नचैनमनुरुद्धचंतेकुलान्येकशतंनृपाः॥ तस्मादिहबलादेवसाम्राज्यंकुरुतेहिसः१८ रत्नभाजोहिराजानोजरासंधमुपासते ॥ नचतुष्यतितेनापिबाल्यादनयमास्थितः १९ मूर्द्धाभिषिक्तंनृपतिंप्रधानपुरुषोबलात् ॥ आदत्तेनचनोदृष्टोऽभागःपुरुषतःक्वचित् २० एवंसर्वान्वशेचक्रेजरासंधःशतावरान् ॥ तंदुर्बलतरोराजाकथंपार्थउपैष्यति २१ प्रोक्षितानांप्रमृष्टानांराज्ञांपशुपतेर्गृहे ॥ पशूनामिवकाप्रीतिर्जीवितेभरतर्षभ २२ क्षत्रियःशस्त्रमरणोयदाभवतिसत्कृतः॥ ततःस्ममागधंसंख्येप्रतिबाधेमयद्वयम् २३ षडशीतिःसमानीताःशेषाराजंश्चतुर्दश ॥ जरासंधेनराजानस्ततःक्रूरंप्रवत्स्यते २४ प्राप्नुयात्सयशोदीप्तंतत्रयोविघ्नमाचरेत् ॥ जयेद्यश्चजरासंधंससम्राण्णियतंभवेत् २५ ॥ इ०म०भा०सभाप०राजसूयारंभप०कृष्णवाक्येपंचदशोऽध्यायः॥१५॥

॥ युधिष्ठिरउवाच ॥ ॥ सम्राड्गुणमभीप्सन्वैयुष्मान्स्वार्थपरायणः ॥ कथंप्रहिणुयांकृष्णसोऽहंकेवलसाहसात् १ भीमार्जुनावुभौनेत्रेमनोमन्येजनार्दनम् ॥ मनश्चक्षुर्विहीनस्यकीदृशंजीवितंभवेत् २ जरासंधबलंप्राप्यदुष्पारंभीमविक्रमम् ॥ यमोऽपिनविजेताजौतत्रवःकिंविचेष्टितम् ३

शीकृताइत्यर्थः २० शतावरान्शतन्यूनान् २१ प्रमृष्टानांरुद्रदेवत्योऽयामिति प्रत्येकमभिमृष्टानां २२ तदासत्कृतोभवतीत्यध्याहृत्य योज्यं । ततोराज्ञांनिग्रहाद्धेतोः प्रतिबाधेमहंतुमाशास्महे यन्मागधंप्रतिबाधेम तत्ततोहेतोरितियोज्यं २३ क्रूरंराजवधाख्यं कर्म पशुपतयेबलिदानं प्रवत्स्यतेकारयिष्यति २४ तंदुर्बलतरोराजाकथंपार्थ उपैष्यतीतितस्य दुर्जयत्वमुक्त्वाऽपि तज्जयएव साम्राज्यहेतुरित्याहप्राप्नुयादिति सएवादौजेतव्य इत्यभिप्रायः २५ ॥ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेपंचदशोऽध्यायः ॥ १५ ॥ ॥ सम्राडिति । एवंजरासंधाद्भीषितो राजा कृष्णेनयइत्यादिनाश्लोकेन भीमेनोक्तउपायो दुष्करइत्याह युष्मान्कृष्णभीमार्जुनान् प्रहिणुयांजरासंधवधार्थमितिशेषः १ । २ विजेताजेष्यति श्रमोऽपिविजयेताजाविति गौडपाठेतु श्रमःश्रमणोदुर्बलोऽपि जरासंधेसहायेसति विजयेत शत्रूनितिशेषः । ३

अर्थांतरेइष्टफलाद्विपरीतफलेकार्ये युक्तंपुरुषंप्रतिअनर्थःप्रतिपद्यतेप्राप्नोति तस्मात्कार्याकर्तुमिष्टाप्रतिपत्तिः राजसूयबुद्धिर्नयुक्ता ४ कार्यस्यसंन्यासं कर्ममात्रस्यत्यागं नतुक्रतुमात्रस्य । काषायंसुलभमित्यंतेदर्शनात् पारिव्राज्यमेव रोचयेइत्यर्थः ५ । ६ वीर्यमुत्साहः । पक्षोवासुदेवः । भूमिर्मंत्रपूर्वकःकार्यनिश्चयः । बलंशारीरसेनादिरूपंसामर्थ्यम् ७ वैद्याः विद्यावंतः बलेनेति उत्साहएवश्रेयानित्यर्थः ८ । ९ । १० । ११ सिद्धिर्योगोऽत्यंताभिनिवेश इतियावत् । 'सिद्धिर्निष्पत्तियोगयोः'इतिविश्वः । तच्चसिद्धिरूपंवीर्यं । कर्म परिस्पंदो दैवंभाग्यं तदुभयापेक्षं । नोपयुज्यते नकार्यक्षमोभवति १२ तेनप्रमादेन शत्रुभ्यःशत्रुतः १३ । १४ तस्मादुत्साहवता कर्मैवकर्तव्यं जायायेत्याह जरेति १५

अस्मिंस्त्वर्थांतरेयुक्तमनर्थःप्रतिपद्यते ॥ तस्मान्नप्रतिपत्तिस्तुकार्यायुक्तामतामम ४ यथाऽहंविमृशाम्येकस्तत्तावच्छ्रूयतांमम ॥ संन्यासंरोचयेसाधुकार्यस्यास्यजनार्दन ॥ प्रतिहंतिमनोमेऽद्यराजसूयोदुराहरः ५ वैशंपायनउवाच ॥ पार्थःप्राप्यधनुःश्रेष्ठमक्षय्यौचमहेषुधी ॥ रथंध्वजंसभांचैवयुधिष्ठिरमभाषत ६ ॥ अर्जुनउवाच ॥ धनुःशस्त्रंशरावीर्यंपक्षोभूमिर्यशोबलम् ॥ प्राप्तमेतन्मयाराजन्दुष्प्रापंयदभीप्सितम् ७ कुलेजन्मप्रशंसंतिवैद्याःसाधुसुनिष्ठिताः ॥ बलेनसदृशंनास्तिवीर्यंतुममरोचते ८ कृतवीर्यकुलेजातोनिर्वीर्यःकिंकरिष्यति ॥ निर्वीर्येतुकुलेजातोवीर्यवांस्तुविशिष्यते ९ क्षत्रियःसर्वशोराजन्यस्यवृत्तिर्द्विषज्जये ॥ सर्वैर्गुणैर्विहीनोऽपिवीर्यवान्हितरेद्रिपून् १० सर्वैरपिगुणैर्युक्तोनिर्वीर्यःकिंकरिष्यति ॥ गुणीभूतागुणाःसर्वेतिष्ठंतिहिपराक्रमे ११ जयस्यहेतुःसिद्धिर्हिकर्मदैवंचसंश्रितम् ॥ संयुक्तोहिबलैःकश्चित्प्रमादान्नोपयुज्यते १२ तेनद्वारेणशत्रुभ्यःक्षीयतेसबलोरिपुः १३ दैन्यंयथाबलवतितथामोहोबलान्विते ॥ तावुभौनाशकौहेतूराज्ञात्याज्यौजयार्थिना १४ जरासंधविनाशंचराज्ञांचपरिरक्षणम् ॥ यदिकुर्यामयज्ञार्थंकिंततःपरमंभवेत् १५ अनारंभेहिनियतोभवेदगुणनिश्चयः ॥ गुणान्निःसंशयाद्राजन्नैर्गुण्यंमन्यसेकथम् १६ काषायंसुलभंपश्चान्मुनीनांशममिच्छताम् ॥ साम्राज्यंतुभवेच्छक्यंवयंयोत्स्यामहेपरान् १७ ॥ इतिश्रीमहाभारतेसभापर्वणिराजसूयारंभपर्वणिजरासंधवधमंत्रणेषोडशोऽध्यायः ॥ १६ ॥वासुदेवउवाच ॥ जातस्यभारतेवंशेतथाकुंत्याःसुतस्यच ॥ यावैयुक्तामतिःसेयमर्जुनेनप्रदर्शिता १ नस्मम्रत्युंवयंविद्मरात्रौवायदिवादिवा ॥ नचापिकंचिदमरमयुद्धेनानुशुश्रुम २ एतावदेवपुरुषैःकार्यंहृदयतोषणम् ॥ नयेनविधिदृष्टेनयदुपक्रमतेपरान् ३ सुनयस्यानपायस्यसंयोगेपरमःक्रमः ॥ संगत्याजायतेऽसाम्यंसाम्यंचनभवेद्द्वयोः ४

अकरणेदोषमाह अनारंभइति कर्मणइतिशेषः । आरब्धमपिप्रतिकूलंचेत्तत्राह गुणात्पूर्वोक्ताद्धनुरादिसंपत्तिरूपात् नैर्गुण्यमशक्तत्वम् १६ पश्चादशक्तत्वनिश्चयादूर्ध्वं काषायंगैरिकरक्तंवस्त्रं १७ ॥ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेषोडशोऽध्यायः ॥ १६ ॥ ॥ जातस्येति १ । २ । ३ सुनयस्यशोभनस्यमंत्रस्य । अनपायस्य दैवादिप्रातिकूल्यहीनस्य । संयोगेप्राप्तौसत्यां परमउत्कृष्टः क्रमःउपक्रमःसिध्यति । तेनचसंगत्या द्वयोर्मेलनेनासाम्यमन्यतरोत्कर्षोजायते चकारोहेतौ । यतोद्वयोर्युध्यतोःसाम्यंनभवति तस्माद्विनायुद्धमशक्तत्वनिश्चयायोगादशक्तिशंकया तूष्णीमवस्थानं पराभवहेतुरितिभावः ४

विपक्षेदोषमाह अनयस्यानुपायस्य संयुगेपरमः क्षयइति । ननुपरस्यापि नयादिमत्त्वे कथंस्वस्यजयःस्यादित्याशंक्याह । संशयोजायतेसाम्याज्जयश्चनभवेद्द्वयोरिति । द्वयोरुपायादि साम्येतु द्वयोरपि परस्परभयाज्जये संशयएव भवति । नतुजयः स्यात् पराजयोवा । किंतु ताटस्थ्येन द्वावपितिष्ठतइत्यर्थः ५ साम्येऽप्यारंभवैफल्यमित्याशंक्य स्वस्योत्कर्ष माह सार्द्धेन तेवयमिति ६ नन्वेवंमहतो राजकस्योत्थापने क्रतुविघ्नएव भवेदित्याशंक्याह व्यूढेति ७ । ८ उत्कर्षेकामप्राप्तिःसिद्धा साम्यंतुनैवभवेदित्याह एकइति । श्रियं सा

अनयस्यानुपायस्यसंयुगेपरमःक्षयः ॥ संशयोजायतेसाम्याज्जयश्चनभवेद्द्वयोः ५ तेवयंनयमास्थायशत्रुदेहसमीपगाः ॥ कथमंतंनगच्छेमवृक्षस्येवनदी रयाः ॥ पररंध्रेपराक्रांताःस्वरंध्रावरणेस्थिताः ६ व्यूढानीकैरतिबलैर्नयुद्धचेदरिभिःसह ॥ इतिबुद्धिमतांनीतिस्तन्मयापीहरोचते ७ अनवद्याह्यसं बुद्धाःप्रविष्टाःशत्रुसद्मतत् ॥ शत्रुदेहमुपाक्रम्यतंकामंप्राप्नुयामहे ८ एकोह्येवश्रियंनित्यंबिभर्तिपुरुषर्षभः ॥ अंतरात्मेवभूतानांतत्क्षयंनैवलक्षये ९ अ थवैनंनिहत्याजौशेषेणापिसमाहताः ॥ प्राप्नुयामततःस्वर्गंज्ञातित्राणपरायणाः १० ॥ युधिष्ठिरउवाच ॥ कृष्णकोयंजरासंधःकिंवीर्यःकिंपराक्रमः ॥ य स्त्वांस्पृष्ट्वाग्निसदृशंनदग्धःशलभोयथा ११ ॥ कृष्णउवाच ॥ शृणुराजन्जरासंधोयद्वीर्योयत्पराक्रमः ॥ यथाचोपेक्षितोऽस्माभिर्बहुशःकृतविप्रियः १२ अक्षौहिणीनांतिसृणांपतिःसमरदर्पितः ॥ राजाबृहद्रथोनाममगधाधिपतिर्बली १३ रूपवान्वीर्यसंपन्नःश्रीमानतुलविक्रमः ॥ नित्यंदीक्षांकिततनुःशत क्रतुरिवापरः १४ तेजसासूर्यसंकाशःक्षमयापृथिवीसमः ॥ यमांतकसमःक्रोधेश्रियावैश्रवणोपमः १५ तस्याभिजनसंयुक्तैर्गुणैर्भरतसत्तम ॥ व्याप्तेयंपृ थिवीसर्वासूर्यस्येवगभस्तिभिः १६ सकाशिराजस्यसुतेयमजेभरतर्षभ ॥ उपयेमेमहावीर्योरूपद्रविणसंयुते ॥ तयोश्चकारसमयंमिथःसपुरुषर्षभः १७ नातिवर्तिष्यइत्येवंपत्नीभ्यांसन्निधौतदा ॥ सताभ्यांशुशुभेराजापत्नीभ्यांवसुधाधिपः १८ प्रियाभ्यामनुरूपाभ्यांकरेणुभ्यामिवद्विपः ॥ तयोर्मध्यगतश्चा पिरराजवसुधाधिपः १९ गंगायमुनयोर्मध्येमूर्तिमानिवसागरः ॥ विषयेषुनिमग्नस्यतस्ययौवनमभ्यगात् २० नचवंशकरःपुत्रस्तस्याजायतकश्चन ॥ मंगलैर्बहुभिर्होमैःपुत्रकामाभिरिष्टिभिः ॥ नाससादनृपश्रेष्ठःपुत्रंकुलविवर्द्धनम् २१ अथकाक्षीवतःपुत्रंगौतमस्यमहात्मनः ॥ शुश्रावतपसिश्रांतमुदारंचं डकौशिकम् २२ यदृच्छयाऽऽगतंतंतुवृक्षमूलमुपाश्रितम् ॥ पत्नीभ्यांसहितोराजासर्वरत्नैरतोषयत् २३ तमब्रवीत्सत्यधृतिःसत्यवागृषिसत्तमः ॥ प रितुष्टोऽस्मिराजेंद्रवरंवरयसुव्रत २४

प्राज्यलक्ष्मीं । तत्तस्मादन्यतरजयनिश्चयाद्धेतोरहं क्षयं स्वीयं नैवोपलक्षये किंतु परस्यैव क्षयो भविष्यतीत्यर्थः । तत्क्षयंचैवेति पाठे तस्यजरासंधस्यक्षयं लक्षयेसंभावये ९ निहत्यसंप्राप्य शेषेणवधेन वधहेतुनाशत्रुणा 'शेषःसंकर्षणेऽनंते उपयुक्तेतरे वधे' इतिविश्वः । ज्ञातयो जरासंधबद्धाराजानः १० । ११ । १२ पतिः पालकः १३ । १४ यमोवैवस्वतः अंतकःकालः १५ । १६ । १७ नातिवर्तिष्ये वैषम्यंनकरिष्ये १८ । १९ । २० । २१ । २२ । रत्नैर्मुनियोग्यैरुत्कृष्टद्रव्यैः २३ । २४

२५ । २६ । २७ अवानमशुष्कं सरसमितियावत् । 'आमेफलेशलाटुःस्याच्छुष्केवानमुभेत्रिषु'इत्यमरः । अवातमिति पाठे नास्ति पातयिता वातोयस्यतत् २८ । २९ । ३० ३१ । यथासमयंयथाप्रतिज्ञं नातिवर्तिष्येइति दर्शितरीत्या ३२ । ३३ । ३४ प्रजायेतांसुषुवतुः ३५ स्फिक् कट्याअधोभागः ३६ तेशकले ३७ गर्भसंप्लवे गर्भपातेसति ३८

ततःसभार्यःप्रणतस्तमुवाचबृहद्रथः ॥ पुत्रदर्शननैराश्याद्बाष्पसंदिग्धयागिरा २५ ॥ राजोवाच ॥ भगवन्राज्यमुत्सृज्यप्रस्थितोऽहंतपोवनम् ॥ किं वरेणाल्पभाग्यस्यकिंराज्येनाप्रजस्यमे २६ ॥ कृष्णउवाच ॥ एतच्छ्रुत्वामुनिर्ध्यानमगमत्क्षुभितेंद्रियः ॥ तस्यैवचाम्रवृक्षस्यछायायांसमुपाविशत् २७ तस्योपविष्टस्यमुनेरुत्संगेनिपपातह ॥ अवानमशुकादष्टमेकमाम्रफलंकिल २८ तत्प्रगृह्यमुनिश्रेष्ठोहृदयेनाभिमंत्र्यच ॥ राज्ञेददावप्रतिमंपुत्रसंप्राप्तिकारणम् २९ उवाचचमहाप्राज्ञस्तंराजानंमहामुनिः ॥ गच्छराजन्कृतार्थोऽसिनिवर्तस्वनराधिप ३० एतच्छ्रुत्वामुनेर्वाक्यंशिरसाप्रणिपत्यच ॥ मुनेःपादौमहाप्राज्ञःसनृपःस्वगृहंगतः ३१ यथासमयमाज्ञायतदासनृपसत्तमः ॥ द्वाभ्यामेकंफलंप्रादात्पत्नीभ्यांभरतर्षभ ३२ तेतदाम्रंद्विधाकृत्वाभक्षयामासतुःशुभे ॥ भावित्वादपिचार्थस्यसत्यवाक्यतयामुनेः ३३ तयोःसमभवद्गर्भःफलप्राशनसंभवः ॥ तेचदृष्ट्वासनृपतिःपरांमुदमवापह ३४ अथकालेमहाप्राज्ञयथासमयमागते ॥ प्रजायेतामुभेराजन्शरीरशकलेतदा ३५ एकाक्षिबाहुचरणेअर्द्धोदरमुखस्फिचे ॥ दृष्ट्वाशरीरशकलेप्रवेपतुरुभेभृशम् ३६ उद्विग्नेसहसंमंत्र्यतेभगिन्यौतदाऽबले ॥ सजीवेप्राणिशकलेतत्यजातेसुदुःखिते ३७ तयोर्धात्र्यौसुसंवीतेकृत्वातेगर्भसंप्लवे ॥ निर्गम्यांतःपुरद्वारात्समुत्सृज्याभिजग्मतुः ३८ तेचतुष्पथनिक्षिप्तेजरानामाथराक्षसी ॥ जग्राहमनुजव्याघ्रमांसशोणितभोजना ३९ कर्तुकामासुखवहेशकलेसातुराक्षसी ॥ संयोजयामासतदाविधानबलचोदिता ४० तेसमानीतमात्रेतुशकलेपुरुषर्षभ ॥ एकमूर्तिधरोवीरःकुमारःसमपद्यत ४१ ततःसाराक्षसीराजन्विस्मयोत्फुल्ललोचना ॥ नशशाकसमुद्वोढुंवज्रसारमयंशिशुम् ४२ बालस्ताम्रतलंमुष्टिंकृत्वाचास्येनिधायसः ॥ प्राक्रोशदतिसंरब्धःसतोयइवतोयदः ४३ तेनशब्देनसंभ्रांतःसहसांऽतःपुरेजनः ॥ निर्जगामनरव्याघ्रराज्ञासहपरंतप ४४ तेचाबलेपरिम्लानेपयःपूर्णपयोधरे ॥ निराशेपुत्रलाभायसहसैवाभ्यगच्छताम् ४५ तेऽथदृष्ट्वातथाभूतेराजानंचेष्टसंततिम् ॥ तंचबालंसुबलिनंचिंतयामासराक्षसी ४६ नार्हामिविषयेराज्ञोवसंतीपुत्रगृद्धिनः ॥ बालंपुत्रमिमंहंतुंधार्मिकस्यमहात्मनः ४७ सातंबालमुपादायमेघलेखेवभास्करम् ॥ कृत्वाचमानुषंरूपमुवाचवसुधाधिपम् ४८ ॥ ॥ राक्षस्युवाच ॥ ॥ बृहद्रथसुतस्तेऽयंमयादत्तःप्रगृह्यताम् ॥ तवपत्नीद्वयेजातोद्विजातिवरशासनात् ॥ धात्रीजनपरित्यक्तोमयाऽयंपरिरक्षितः ४९ ॥ ॥ कृष्णउवाच ॥ ॥ ततस्तेभरतश्रेष्ठकाशिराजसुतेशुभे ॥ तंबालमभिपद्याशुप्रस्रवैरभ्यषिंचताम् ५० ततःसराजासंहृष्टःसर्वंतदुपलभ्यच ॥ अपृच्छद्धेमगर्भाभांराक्षसींतामराक्षसीम् ५१

३९ सुखवहे एकीकृतयोर्वहनंहि सुखेनभवतीतिप्रसिद्धं ४० समानीतमात्रे संयोजितमात्रे ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० अराक्षसींवेषतः ५१

कामया कामेनयातीतीच्छाविहारिणी ॥ ५२ ॥ ॥ इतिसभापर्वणि नैलकंठीये भारत भावदीपेसप्तदशोध्यायः ॥ १७ ॥ ॥ जरेति १ । २ । ३ तिष्ठमाना सुस्थिरा ४ । ५ । ६ । ७

॥ राजोवाच ॥ ॥ कात्वंकमलगर्भाभेममपुत्रप्रदायिनी ॥ कामयाब्रूहिकल्याणिदेवताप्रतिभासिमे ५२ इतिश्रीमहाभारतेसभापर्वणिराजसूयारंभपर्वणिजरासंधोत्पत्तौसप्तदशोऽध्यायः १७ ॥ ॥ ७ ॥ ॥ राक्षस्युवाच ॥ ॥ जरानामाऽस्मिभद्रंतेराक्षसीकामरूपिणी ॥ तववेश्मनिराजेंद्रपूजितान्यवसंसुखम् १ गृहेगृहेमनुष्याणांनित्यंतिष्ठामिराक्षसी ॥ गृहदेवीतिनाम्नावैपुरासृष्टास्वयंभुवा २ दानवानांविनाशायस्थापितादिव्यरूपिणी ॥ योमांभक्त्यालिखेत्कुड्येसपुत्रांयौवनान्विताम् ३ गृहेतस्यभवेद्वृद्धिरन्यथाक्षयमाप्नुयात् ॥ त्वद्गृहेतिष्ठमानाऽहंपूजिताऽहंसदाविभो ४ लिखिताचैवकुड्येषुपुत्रैर्बहुभिरावृता ॥ गंधपुष्पैस्तथाधूपैर्भक्ष्यभोज्यैःसुपूजिता ५ साऽहंप्रत्युपकारार्थंचिंतयाम्यनिशंतव ॥ तवेमेपुत्रशकलेदृष्टवत्यास्मिधार्मिक ६ संश्लेषितेमयादैवात्कुमारःसमपद्यत ॥ तवभाग्यान्महाराजहेतुमात्रमहंत्विह ७ मेरुंवाखादितुंशक्ताकिंपुनस्तवबालकम् ॥ गृहसंपूजनात्तुष्टयामयाप्रत्यर्पितस्तव ८ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ एवमुक्त्वातुसाराजंस्तत्रैवांतरधीयत ॥ ससंगृह्यकुमारंतंप्रविवेशगृहंनृपः ९ तस्यबालस्ययत्कृत्यंतच्चकारनृपस्तदा ॥ आज्ञापयच्चराक्षस्यामगधेषुमहोत्सवम् १० तस्यनामाकरोच्चैवपितामहसमःपिता ॥ जरयासंधितोयस्माज्जरासंधोभवत्वयम् ११ सोऽवर्धतमहातेजामागधाधिपतेःसुतः ॥ प्रमाणबलसंपन्नोहुताहुतिरिवानलः ॥ मातापित्रोर्नंदिकरःशुक्लपक्षेयथाशशी १२ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिराजसूयारंभपर्वणिजरासंधोत्पत्तौअष्टादशोऽध्यायः १८ ॥ ॥ ७ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ कस्यचित्त्वथकालस्यपुनरेवमहातपाः ॥ मगधेषूपचक्रामभगवांश्चंडकौशिकः १ तस्यागमनसंहृष्टःसामात्यःसपुरःसरः ॥ सभार्यःसहपुत्रेणनिर्जगामबृहद्रथः २ पाद्यार्घ्याचमनीयैस्तमर्चयामासभारत ॥ सनृपोराज्यसहितंपुत्रंतस्मैन्यवेदयत् ३ प्रतिगृह्यचतांपूजांपार्थिवाद्भगवानृषिः ॥ उवाचमागधंराजन्प्रहृष्टेनांतरात्मना ४ सर्वमेतन्मयाज्ञातंराजन्दिव्येनचक्षुषा ॥ पुत्रस्तुशृणुराजेंद्रयादृशोऽयंभविष्यति ५ अस्यरूपंचसत्वंचबलमूर्जितमेवच ॥ एषश्रियासमुदितःपुत्रस्तवनसंशयः ६ प्रापयिष्यतितत्सर्वंविक्रमेणसमान्वितः ॥ अस्यवीर्यवतोवीर्यंनानुयास्यंतिपार्थिवाः ७ पततोवैनतेयस्यगतिमन्येयथाखगाः ॥ विनाशमुपयास्यंतियेचास्यपरिपंथिनः ८ देवैरपिविसृष्टानिशस्त्राण्यस्यमहीपते ॥ नरुजंजनयिष्यंतिगिरेरिवनदीरयाः ९ सर्वमूर्धाभिषिक्तानामेषमूर्ध्निज्वलिष्यति ॥ प्रभाहरोऽयंसर्वेषांज्योतिषामिवभास्करः १० एनमासाद्यराजानःसमृद्धबलवाहनाः ॥ विनाशमुपयास्यंतिशलभाइवपावकम् ११ एषश्रियःसमुदिताःसर्वराज्ञांग्रहीष्यति ॥ वर्षास्विवोदीर्णजलानदीर्नदनदीपतिः १२ एषधारयितासम्यक्चातुर्वर्ण्यंमहाबलः ॥ शुभाशुभमिवस्फीतासर्वसस्यधराधरा १३

८।९।१०।११ नंदिकरः समृद्धिकृत् ॥ १२ ॥ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेअष्टादशोऽध्यायः ॥१८॥ ॥७॥ कस्येति १।२।३।४।५।६।७।८।९।१०।११।१२।१३

८

सर्वभूतात्मभूतस्य सर्वेषांभूतानामात्मवत्प्रियतमस्येत्यर्थः १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ अशस्त्रनिधनौ नविद्यतेशस्त्रेण निधनं ययोस्तौ २६ । २७ नीतिहेतोर्बलीयसास्पर्धानकर्त्तव्येतिनीतिस्तदर्थं ॥ २८ ॥ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेएकोनविंशतितमोऽध्यायः ॥ १९ ॥ ॥ छ ॥ ॥ छ ॥

अस्याज्ञावशगा सर्वेभविष्यंतिनराधिपाः ॥ सर्वभूतात्मभूतस्यवायोरिवशरीरिणः १४ एषरुद्रंमहादेवंत्रिपुरांतकरंहरम् ॥ सर्वलोकेष्वतिबलःसाक्षाद्द्रक्ष्यतिमागधः १५ एवंब्रुवन्नेवमुनिःस्वकार्यमिवचिंतयन् ॥ विसर्जयामासनृपंबृहद्रथमथारिहन् १६ प्रविश्यनगरींचापिज्ञातिसंबंधिभिर्वृतः ॥ अभिषिच्यजरासंधंमगधाधिपतिस्तदा १७ बृहद्रथोनरपतिःपरांनिर्वृतिमाययौ ॥ अभिषिक्तेजरासंधेतदाराजाबृहद्रथः ॥ पत्नीद्वयेनानुगतस्तपोवनचरोऽभवत् १८ ततोवनस्थेपितरिमात्रोश्चैवविशांपते ॥ जरासंधःस्ववीर्येणपार्थिवानकरोद्वशे १९ ॥ ॥ वैशंपायनउवाच ॥ ॥ अथदीर्घस्यकालस्यतपोवनचरोनृपः ॥ सभार्यःस्वर्गमगमत्तपस्तप्त्वाबृहद्रथः २० जरासंधोऽपिनृपतिर्यथोक्तंकौशिकेनतत् ॥ वरप्रदानमखिलंप्राप्यराज्यमपालयत् २१ निहतेवासुदेवेनतदाकंसेमहीपतौ ॥ जातोवैवैरनिर्बंधःकृष्णेनसहतस्यवै २२ भ्रामयित्वाशतगुणमेकोनंयेनभारत ॥ गदाक्षिप्ताबलवतामागधेनगिरिव्रजात् २३ तिष्ठतोमथुरायांवैकृष्णस्याद्भुतकर्मणः ॥ एकोनयोजनशतेसापपातगदाशुभा २४ दृष्ट्वापौरैस्तदासम्यग्गदाचैवनिवेदिता ॥ गदावसानंतत्ख्यातंमथुरायाःसमीपतः २५ तस्याऽऽस्तांहंसडिंभकावशस्त्रनिधनावुभौ ॥ मंत्रेमतिमतांश्रेष्ठौनीतिशास्त्रेविशारदौ २६ यौतौमयातेकथितौपूर्वमेवमहाबलौ ॥ त्रयस्त्रयाणांलोकानांपर्याप्ताइतिमेमतिः २७ एवमेषतदावीरबालिभिःकुकुरांधकैः ॥ वृष्णिभिश्चमहाराजनीतिहेतोरुपेक्षितः २८ ॥ इतिश्रीमहाभारतेसभापर्वणिराजसूयारंभपर्वणिजरासंधप्रशंसायामेकोनविंशतितमोऽध्यायः ॥ १९ ॥ ॥ समाप्तंचराजसूयारंभपर्व ॥ ॥ अथजरासंधवधपर्व ॥ ॥ वासुदेवउवाच ॥ ॥ पतितौहंसडिंभकौकंसश्चसगणोहतः ॥ जरासंधस्यनिधनेकालोऽयंसमुपागतः १ नशक्योऽसौरणेजेतुंसर्वैरपिसुरासुरैः ॥ प्राणयुद्धेनजेतव्यःसइत्युपलभामहे २ मयिनीतिर्बलंभीमेरक्षिताचावयोर्जयः ॥ मागधंसाधयिष्यामइष्टिंत्रयइवाग्नयः ३ त्रिभिरासादितोऽस्माभिर्विजनेसनराधिपः ॥ नसंदेहोयथायुद्धमेकेनाप्युपयास्यति ४ अवमानाच्चलोभाच्चबाहुवीर्याच्चदर्पितः ॥ भीमसेनेनयुद्धायध्रुवमप्युपयास्यति ५ अलंतस्यमहाबाहुर्भीमसेनोमहाबलः ॥ लोकस्यसमुदीर्णस्यनिधनायांतकोयथा ६ यदिमेहृदयंवेत्सियदितेप्रत्ययोमयि ॥ भीमसेनार्जुनौशीघ्रंन्यासभूतौप्रयच्छमे ७ ॥ वैशंपायनउवाच ॥ ॥ एवमुक्तोभगवताप्रत्युवाचयुधिष्ठिरः ॥ भीमार्जुनौसमालोक्यसंप्रहृष्टमुखौस्थितौ ८ ॥ युधिष्ठिरउवाच ॥ ॥ अच्युताच्युतमामैवंव्याहरामित्रकर्शन ॥ पांडवानांभवान्नाथोभवंतंचाश्रितावयम् ९

पतिताविति १ । २ जयोऽर्जुनः ३ । ४ । ५ । ६ । ७ । ८ । ९

१० । ११ । १२ । १३ । १४ । १५ बलौघःसेनाप्रवाहोविचक्षणैःप्रणेतव्यः । अन्याथाअंधजडवदकिंचित्करंबलमित्यर्थः १६ एतदेवसदृष्टांतमाह यतइति । धीवराःवरधियो
यतोयस्मिन्देशे निम्नमयत्नतआक्रमणीयं स्थानंभवति तंहिततः द्वितीयार्थेतसिः । इष्टंनिरुपद्रवंदेशंप्रति जडंसैन्यंनयंति नतुमृत्युमुखेमहावीरस्याग्रेपातयंति अत्रदृष्टांतः यथा
धीवरानदीजलजीविनोयतश्छिद्रंकुल्यारूपं ततस्तेनैवमार्गेणजलंवारि इष्टंकेदारादिप्रदेशंनयंतितद्वत् १७ बलापेक्षयानीतिरेवश्रेष्ठेत्युपसंहरति तस्मादिति १८ । १९ । २० । २१

यथावदासिगोविंदसर्वंतदुपपद्यते ॥ नहित्वमग्रतस्तेषांयेषांलक्ष्मीःपराङ्मुखी १० निहतश्चजरासंधोमोक्षिताश्चमहीक्षितः ॥ राजसूयश्चमेलब्धोनिदेशेतव
तिष्ठतः ११ क्षिप्रमेवयथात्वेतत्कार्यंसमुपपद्यते ॥ अप्रमत्तोजगन्नाथतथाकुरुनरोत्तम १२ त्रिभिर्भवद्भिर्हिविनानाहंजीवितुमुत्सहे ॥ धर्मकामार्थरहितो
रोगार्तइवदुःखितः १३ नशौरिणाविनापार्थोनशौरिःपांडवंविना ॥ नाजेयोऽस्त्यनयोर्लोकेकृष्णयोरितिमेमतिः १४ अयंचबलिनांश्रेष्ठःश्रीमानपिवृकोदरः ॥ युवाभ्यांसहितोवीरःकिंनकुर्यान्महायशाः १५ सुप्रणीतोबलौघोहिकुरुतेकार्यमुत्तमम् ॥ अंधंबलंजडंप्राहुःप्रणेतव्यंविचक्षणैः १६ यतोहिनिम्नं
भवतिनयंतिहिततोजलम्॥यतश्छिद्रंततश्चापिनयंतेधीवराजलम् १७ तस्मान्नयविधानज्ञंपुरुषंलोकविश्रुतम् ॥ वयमाश्रित्यगोविंदंयतामःकार्यसिद्धये
१८ एवंप्रज्ञानयबलंक्रियोपायसमन्वितं ॥ पुरस्कुर्वीतकार्येषुकृष्णंकार्यार्थसिद्धये १९ एवमेवयदुश्रेष्ठयावत्कार्यार्थसिद्धये ॥ अर्जुनःकृष्णमन्वेतुभीमो
न्वेतुधनंजयं ॥ नयोजयोबलंचैवविक्रमोसिद्धिमेष्यति २० ॥ वैशंपायनउवाच ॥ ॥ एवमुक्तास्ततःसर्वेभ्रातरोविपुलौजसः ॥ वार्ष्णेयःपांडवेयौ
चप्रतस्थुर्मागधंप्रति २१ वर्चस्विनांब्राह्मणानांस्नातकानांपरिच्छदम् ॥ आच्छाद्यसुहृदांवाक्यैर्मनोज्ञैरभिनंदिताः २२ अमर्षादभितप्तानांज्ञा
त्यर्थंमुख्यतेजसाम् ॥ रविसोमाग्निवपुषांदीप्तमासीत्तदावपुः २३ हतंमेनेजरासंधंदृष्ट्वाभीमपुरोगमौ ॥ एककार्यसमुद्यंतौकृष्णौयुद्धेऽपराजितौ २४ ई
शौहितौमहात्मानौसर्वकार्यप्रवर्तिनौ ॥ धर्मकामार्थलोकानांकार्याणांचप्रवर्तकौ २५ कुरुभ्यःप्रस्थितास्तेतुमध्येनकुरुजांगलम् ॥ रम्यंपद्मसरोगत्वा
कालकूटमतीत्यच २६ गंडकींचमहाशोणंसदानीरांतथैवच ॥ एकपर्वतकेनद्यःक्रमेणैत्याव्रजंतते २७ उत्तीर्यसरयूंरम्यांदृष्ट्वापूर्वांश्चकोसलान् ॥ अती
त्यजग्मुर्मिथिलांमालांचर्मण्वतींनदीम् २८ अतीत्यगंगांशोणंचत्रयस्तेप्राङ्मुखास्तदा ॥ कुशचीरच्छदाजग्मुर्मागधंक्षेत्रमच्युताः २९ तेशश्वद्गोध
नाकीर्णमंबुमंतंशुभद्रुमम् ॥ गोरथंगिरिमासाद्यददृशुर्मागधंपुरम् ३० ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिजरासंधवधपर्वणिकृष्णपांडवमागधयात्रायां
विंशोऽध्यायः २० ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

परिच्छदमजिनदंडकमंडलुकाषायादिरूपांसामग्रीमाच्छाद्यस्वीकृत्य तयास्वंवेषंतिरोधायवा २२ । २३ । २४ ईशौनरनारायणौ सर्वाणिकार्याणिनिमेषोन्मेषादिमहाप्रलयांतानि
वर्त्तयितुंशीलंययोस्तौ नियंतारावित्यर्थः २५ । २६ । २७ । २८ । २९ ॥ ३० ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपे विंशोऽध्यायः ॥ २० ॥

एषमागधःमगधदेशसंबंधी निवेशोविन्यासः १।२।३।४।५ गौतमस्यक्षयादिति क्षयादैश्वर्यात् असौशूद्रायांजातोऽपिकाक्षीवदादीनां वंशोमानववंशंभजते। सगौतमस्यनृपाणा
मुपर्यनुग्रहः ६ गौतमस्यक्षयंगृहं ७ गौतमौको गौतमस्य ओकोगृहं ८।९।१०।११।१२।१३ पुरस्यागिरिं पुरप्राकारसंलग्नंगिरितुल्यं महास्तंभं 'बुरुज' इतिभाषायांप्रसिद्धं १४
चैत्यकंनगरसूचकं १५ यत्रेति मांसादंमांसाहारमृषभं वृषभाकारंदैत्यमाससादहतवान्। भेरीर्दुंदुभीन्। मासतालाभिर्मासेनतालोध्वनिपरिच्छेदोयासां ताभिराकृतिभिरुपल
क्षिताइतियोज्यं। महतोहिकांस्यादिभाजनस्यसकृदाहतस्य चिरकालानुवर्त्तीध्वनिरितिप्रसिद्धं। पूर्वैतुमासशब्देनद्वादशसंख्या तालशब्देन मध्यमांगुष्ठप्रमाणंचोक्त्वा द्वादश

॥ वासुदेवउवाच ॥ ॥ एषपार्थमहान्भातिपशुमान्नित्यमंबुमान् ॥ निरामयःसुवेश्माढ्योनिवेशोमागधःशुभः १ वैहारोविपुलःशैलोवराहोवृषभस्तथा ॥
तथाऋषिगिरिस्तातशुभाश्चैत्यकपंचमाः २ एतेपंचमहाशृंगाःपर्वताःशीतलद्रुमाः ॥ रक्षंतीवाभिसंहत्यसंहतांगागिरिव्रजम् ३ पुष्पवेष्टितशाखाग्रैर्गंध
वद्भिर्मनोहरैः ॥ निगूढाइवलोध्राणांवनैःकामिजनप्रियैः ४ शूद्रायांगौतमोयत्रमहात्मासंशितव्रतः ॥ औशीनर्यामजनयत्काक्षीवाद्यान्सुतान्मुनिः ५
गौतमस्यक्षयात्तस्माद्यथाऽसौतत्रसद्मनि ॥ भजतेमागधंवंशंसनृपाणामनुग्रहः ६ अंगवंगादयश्चैवराजानःसुमहाबलाः ॥ गौतमक्षयमभ्येत्यरमंतेस्म
पुराऽर्जुन ७ वनराजीस्तुपश्येमाःपिप्पलानांमनोरमाः ॥ लोध्राणांचशुभाःपार्थगौतमौकःसमीपजाः ८ अर्बुदःशक्रवापीचपन्नगौशत्रुतापनौ ॥ स्वस्ति
कस्यालयश्चात्रमणिनागस्यचोत्तमः ९ अपरिहार्यामेघानांमागधामनुनाकृताः ॥ कौशिकोमणिमांश्चैवचक्रातेचाप्यनुग्रहम् १० एवंप्राप्यपुरंरम्यंदु
राधर्षंसमंततः ॥ अर्थसिद्धिंत्वनुपमांजरासंधोऽभिमन्यते ११ वयमासादनेतस्यदर्पमद्यहरेमहि ॥ ॥ वैशंपायनउवाच ॥ ॥ एवमुक्त्वाततःसर्वेभ्रात
रोविपुलौजसः १२ वार्ष्णेयःपांडवौचैवप्रतस्थुर्मागधंपुरम् ॥ हृष्टपुष्टजनोपेतंचातुर्वर्ण्यसमाकुलम् १३ स्फीतोत्सवमनाधृष्यमासेदुश्चगिरिव्रजम् ॥
ततोद्वारमनासाद्यपुरस्यगिरिमुच्छ्रितम् १४ बार्हद्रथैःपूज्यमानंतथानगरवासिभिः ॥ मागधानांतुरुचिरंचैत्यकांतरमाद्रवन् १५ (यत्रमांसादमृषभमा
ससादबृहद्रथः ॥ तंहत्वामासतालाभिस्तिस्रोभेरीरकारयत्) १६ स्वपुरेस्थापयामासतेनचानह्यचर्मणा ॥ यत्रताःप्राणदन्भेर्योदिव्यपुष्पावचूर्णिताः
१७ भंक्त्वाभेरीत्रयंतेऽपिचैत्यप्राकारमाद्रवन् ॥ द्वारतोऽभिमुखाःसर्वेययुर्नानायुधास्तदा १८ मागधानांसुरुचिरंचैत्यकंतंसमाद्रवन् ॥ शिरसी
वसमाघ्नंतोजरासंधंजिघांसवः १९ स्थिरंसुविपुलंशृंगंसुमहत्तत्पुरातनम् ॥ अर्चितंगंधमाल्यैश्चसततंसुप्रतिष्ठितम् २० विपुलैर्बाहुभिर्वीरा
स्तेऽभिहत्याभ्यपातयन् ॥ ततस्तेमागधंहृष्टाःपुरंप्रविविशुस्तदा २१

तालप्रमाणाभिरितिव्याचक्षते। आकृतिभिःसंमिताइत्यध्याहृत्ययोजनाउभयत्रसमाना। 'तालःकरतलेंऽगुष्ठमध्यमाभ्यांचसंमिते। गीतकालक्रियामानेतालःखड्गादिमुष्टिषु'इति
विश्वः। मांसनालाभिरितिगौडपाठेतु मांसस्यनालवद्वेष्टनकर्त्रीभिर्मांसनालाभिर्वध्रीभिः १६ तेनचर्मणाचानह्योतिव्यवहितेनसंबंधः अवचूर्णिताअवकीर्णाव्याप्ताइत्यर्थः यत्र
पुरस्यगिरौ १७।१८ चैत्यकं चित्या दृषदांचयनेनविर्वृत्तं १९ शृंगं तंगिरिमेवशृंगवदुच्छ्रितं भाषायां 'मनुरा' इतिप्रसिद्धं २०।२१

२२ पर्यग्न्यकुर्वन् ज्वलतोल्मुकेनपरितोभ्राम्यमाणेनयज्ञियंपशुमिवपर्यग्निकृतवंतः २३ । २४ । २५ । २६ विरागवसनाःविचित्ररागवसनाः २७ गोत्रासंगोष्ठं २८ । २९ कक्षाःद्वारदे
शाउत्तममध्यमाधमाधमजनावस्थितियोग्याः ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ स्वस्त्यस्तुकुशलंराजन् कुशलंनिर्विघ्नंयथास्यात्तथा स्वस्तिसुतरांयदस्त्यविना

एतस्मिन्नेवकालेतुब्राह्मणावेदपारगाः ॥ दृष्ट्वातुदुर्निमित्तानिजरासंधमदर्शयन् २२ पर्यग्न्यकुर्वंश्चनृपंद्विरदस्थंपुरोहिताः ॥ ततस्तच्छांतयेराजाजरासं
धःप्रतापवान् ॥ दीक्षितोनियमस्थोऽसावुपवासपरोऽभवत् २३ स्नातकव्रतिनस्तेतुबाहुशस्त्रानिरायुधाः ॥ युयुत्सवःप्रविविशुर्जरासंधेनभारत ॥
२४ भक्ष्यमाल्यापणानांचददृशुःश्रियमुत्तमां ॥ स्फीतांसर्वगुणोपेतांसर्वकामसमृद्धिनीं २५ तांतुदृष्ट्वासमृद्धिंतेवीथ्यांतस्यांनरोत्तमाः ॥ राजमार्गेणगच्छं
तःकृष्णभीमधनंजयाः ॥ बलाद्गृहीत्वामाल्यानिमालाकारान्महाबलाः २६ विरागवसनाःसर्वेस्रग्विणोमृष्टकुंडलाः ॥ निवेशनमथाजग्मुर्जरासंधस्यधीम
तः २७ गोवासमिववीक्षंतःसिंहाहैमवतायथा ॥ शालस्तंभनिभास्तेषांचंदनागुरुरूषिताः २८ अशोभंतमहाराजबाहवोयुद्धशालिनां ॥ तान्दृष्ट्वाद्विरद
प्रख्यान्शालस्कंधानिवोद्गतान् ॥ व्यूढोरस्कान्मागधानांविस्मयःसमपद्यत २९ तेत्वतीत्यजनाकीर्णाःकक्षास्तिस्रोनरर्षभाः ॥ अहंकारेणराजानमुपत
स्थुर्गतव्यथाः ॥ ३० तान्पाद्यमधुपर्कार्हान्गवार्हान्सत्कृतिंगतान् ॥ प्रत्युत्थायजरासंधउपतस्थेयथाविधि ३१ उवाचचैतान्राजाऽसौस्वागतंवोऽ
स्त्वितिप्रभुः ॥ मौनमासीत्तदापार्थभीमयोर्जनमेजय ३२ तेषांमध्येमहाबुद्धिःकृष्णोवचनमब्रवीत् ॥ वक्तुंनायातिराजेंद्रएतयोर्नियमस्थयोः ३३ अर्वाङ्
निशीथात्परतस्त्वयासार्धंवदिष्यतः ॥ यज्ञागारेस्थापयित्वाराजाराजगृहंगतः ३४ ततोऽर्धरात्रेसंप्राप्तेयातोयत्रस्थिताद्विजाः ॥ तस्यह्येतद्व्रतंराजन्बभू
वभुविविश्रुतम् ३५ स्नातकान्ब्राह्मणान्प्राप्तान्श्रुत्वाससमितिंजयः ॥ अप्यर्धरात्रेनृपतिःप्रत्युद्गच्छतिभारत ३६ तांस्त्वपूर्वेणवेषेणदृष्ट्वासनृपसत्तमः ॥
उपतस्थेजरासंधोविस्मितश्चाभवत्तदा ३७ तेतुदृष्ट्वैवराजानंजरासंधंनरर्षभाः ॥ इदमूचुरमित्रघ्नाःसर्वेभरतसत्तम ३८ स्वस्त्यस्तुकुशलंराजन्नितितत्रव्य
वस्थिताः ॥ तंनृपंनृपशार्दूलप्रेक्षमाणाःपरस्परं ३९ तानब्रवीज्जरासंधस्तथापांडवयादवान् ॥ आस्यतामितिराजेंद्रब्राह्मणच्छद्मसंवृतान् ४० अथोप
विविशुःसर्वेत्रयस्तेपुरुषर्षभाः ॥ संप्रदीप्तास्त्रयोलक्ष्म्यामहाध्वरइवाग्नयः ४१ तानुवाचजरासंधःसत्यसंधोनराधिपः ॥ विगर्हमाणःकौरव्यवेशग्रहणवैकृता
न् ॥ नस्नातकव्रताविप्राबहिर्माल्यानुलेपनाः ४२ भवंतीतिनृलोकेऽस्मिन्विदितंममसर्वशः ॥ केयूरंपुष्पवंतश्चभुजैर्ज्याकृतलक्षणैः ४३ बिभ्रतःक्षात्रमोजश्च
ब्राह्मण्यंप्रतिजानथ ॥ एवंविरागवसनाबहिर्माल्यानुलेपनाः ॥ सत्यंवदतकेयूयंसत्यंराजसुशोभते ४४ चैत्यकस्यगिरेःशृंगंभित्त्वाकिमिहछद्मना ॥
अद्वारेणप्रविष्टाःस्थनिर्भयाराजकिल्बिषात् ४५

शिभोक्षपदं तत्रेऽस्तु । कृष्णसमक्षंमरिष्यमाणस्य तत्प्राप्यवश्यंभावादितिभावः । माजीवेत्यर्थः ३९। ४० । ४१ बहिर्माल्यानुलेपनाःबहिःसमावर्तनादिनिमित्तंविना ४२।४३।४४।४५

वाचिवीर्य नतुक्रियायां त्रिलिंगस्थं अन्यलिंगमन्यत्कर्मेत्यर्थः ४६ अर्हणांपूजां अस्मदागमे अस्मान्प्रत्यागमने ४७ । ४८ । ४९ स्नातकत्वेसमर्थ्य बहिर्माल्यत्वादिकमपेक्षात्रियत्वेन स
मर्थयते विशेषेत्यादिना ५० दचस्तस्यवाग्वीर्यवत्त्वस्य ५१ । ५२ अद्वारेणेत्यादिनावैरंप्रकाशयति ५३ । ५४ इतिश्रीमहाभारतेसभापर्वणिनैलकंठीयेभारतभावदीपेएकविंशो

वदध्वंवाचिवीर्यंचब्राह्मणस्यविशेषतः ॥ कर्मचैतद्विलिंगस्थंकिंवोऽद्यप्रसमीक्षितम् ४६ एवंचमामुपास्थायकस्माच्चविधिनाऽर्हणां ॥ प्रणीतांनानुगृह्णीत
कार्यंकिंवाऽस्मदागमे ४७ एवमुक्तेततःकृष्णःप्रत्युवाचमहामनाः ॥ स्निग्धगंभीरयावाचावाक्यंवाक्यविशारदः ॥ ४८ ॥ कृष्णउवाच ॥ ॥ स्नातका
न्ब्राह्मणान्राजन्विद्धचस्मांस्त्वंनराधिप ॥ स्नातकव्रतिनोराजन्ब्राह्मणाःक्षत्रियाविशः ४९ विशेषनियमाश्चैषामविशेषाश्चसंत्युत ॥ विशेषवांश्चसततंक्ष
त्रियःश्रियमृच्छति ५० पुष्पवत्सुध्रुवाश्रीश्चपुष्पवंतस्ततोवयं ॥ क्षत्रियोबाहुवीर्यस्तुनतथावाक्यवीर्यवान् ॥ अप्रगल्भंवचस्तस्यतस्माद्बार्हद्रथेरितम्
५१ स्ववीर्यंक्षत्रियाणांतुबाह्वोर्धातान्यवेशयत् ॥ तद्दिदृक्षसिचेद्राजन्द्रष्टाऽस्यद्यनसंशयः ५२ अद्वारेणरिपोर्गेहंद्वारेणसुहृदोगृहान् ॥ प्रविशंतिनराधीरा
द्वाराण्येतानिधर्मतः ५३ कार्यवंतोगृहानेत्यशत्रुतोनार्हणांवयं ॥ प्रतिगृह्णीमतद्विद्धिएतन्नःशाश्वतंव्रतं ५४ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिजरासंध
वधपर्वणिकृष्णजरासंधसंवादेएकविंशोऽध्यायः ॥ २१ ॥ ॥ जरासंधउवाच ॥ ॥ नस्मरामिकदावैरंकृतंयुष्माभिरित्युत ४ चिंतयंश्चनपश्यामि
भवतांप्रतिवैकृतं १ वैकृतेवाऽसतिकथंमन्यध्वंमामनागसम् ॥ अरिंवैब्रूतहेविप्राःसतांसमयएषहि २ अथधर्मोपघाताद्धिमनःसमुपतप्यते ॥ योऽना
गसिप्रसजातिक्षत्रियोहिनसंशयः ३ अतोऽन्यथाचरँल्लोकेधर्मज्ञःसन्महारथः ॥ वृजिनांगतिमाप्नोतिश्रेयसोऽप्युपहंतिच ॥ त्रैलोक्येक्षत्रधर्मोहिश्रेयान्वै
साधुचारिणां ॥ नान्यंधर्मंप्रशंसंतियेचधर्मविदोजनाः ५ तस्यमेऽद्यास्थितस्येहस्वधर्मेनियतात्मनः ॥ अनागसंप्रजानांचप्रमादादिवजल्पथ ६
श्रीकृष्णउवाच ॥ ॥ कुलकार्यंमहाबाहोकश्चिदेकःकुलोद्वहः ॥ वहतेयस्तन्नियोगाद्वयमभ्युद्यतास्त्वयि ७ त्वयाचोपहृताराजन्क्षत्रियालोकवासिनः ॥
तदागःक्रूरमुत्पाद्यमन्यसेकिमनागसम् ८ राजाराज्ञःकथंसाधून्हिंस्यान्नृपतिसत्तम ॥ तद्राज्ञःसंनिगृह्यत्वंरुद्रायोपजिहीर्षसि ९ अस्मांस्तदेनोपगच्छेत्कृ
तंबार्हद्रथत्वया । वयंहिशक्ताधर्मस्यरक्षणेधर्मचारिणः १० मनुष्याणांसमालंभोनचदृष्टःकदाचन ॥ सकथंमानुषैर्देवंयष्टुमिच्छसिशंकरम् ११

ऽध्याय ॥ २१ ॥ ॥ ७ ॥ ॥ वैकृतमपकारः १ कथमरिंमन्यध्वंतद्ब्रूत एषःसत्यवचनस्यसमयःमर्यादा २ प्रसजातिप्रसंजयत्यर्थंद्रव्योपघातमारोपयति सःक्षत्रियः
वृजिनांकष्टांगतिमाप्नोतिनसंशयइतियोजना ३ उपहंतिचात्मानं ४ । ५ । प्रजानांचानागसंजल्पथ विपरीतमर्थंवदथ ६ वैरमूलंप्रकाशयतिकुलेति ७ । ८ । ९ एनोपगच्छेद् एनः
पापंकर्तृउपगच्छेत्प्राप्नुयात् संधिरार्षः १० । ११

ननु'ब्रह्मणेब्राह्मणमालभेत'इत्यादिना सर्वजातीयानांसर्वकर्मणांमानुषाणामालंभो देवतार्थंवधःश्रूयते इत्याशंक्याह सवर्णोहीति १२। १३।१४। १५ अभिजनंसजातीयंपाल्यतयाजा
नन् १६। १७ स्वर्गोति। ब्रह्मवेदः। यशः तपोवेदोक्तंकर्मच। स्वर्गयोनिःसुखहेतुः। युद्धेमृत्युश्चाव्यभिचारवान्स्वर्गहेतुः। वेदादीनामव्रतादीन्प्रतिस्वर्गहेतुत्वंनास्ति युद्धेमृत्युस्तुनतथे
त्यर्थः १८ एषयुद्धेमृत्युः। ऐंद्रःइंद्रसंबंधी। वैजयंतःप्रासादः। तत्प्राप्तिहेतुरित्यर्थः येनलब्धेनसमाहितःपूर्णः१९ स्वर्गमार्गहेतोर्विग्रहोवैरमस्माभिःसह यथातवपुण्यातिशयान्नतथाऽन्य

सवर्णोहिसवर्णानांपशुसंज्ञांकरिष्यसि ॥ कोऽन्यएवंयथाहित्वंजरासंधवृथामतिः १२ यस्यांयस्यामवस्थायांयद्यत्कर्मकरोतियः ॥ तस्यांतस्यामवस्थायां
तत्फलंसमवाप्नुयात् १३ तेत्वांज्ञातिक्षयकरंवयमार्त्तानुसारिणः ॥ ज्ञातिवृद्धिनिमित्तार्थंविनिहंतुमिहागताः १४ नास्तिलोकेपुमानन्यःक्षत्रियेष्वितिचैव
तत् ॥ मन्यसेसचतेराजन्सुमहान्बुद्धिविप्लवः १५ कोहिजानन्नभिजनमात्मवान्क्षत्रियोनृप ॥ नाविशेत्स्वर्गमतुलंरणानंतरमव्ययम् १६ स्वर्गंह्येवस
मास्थायरणयज्ञेषुदीक्षिताः ॥ जयंतिक्षत्रियालोकांस्तद्विद्धिमनुजर्षभ १७ स्वर्गयोनिर्महद्ब्रह्मस्वर्गयोनिर्महद्यशः ॥ स्वर्गयोनिस्तपोयुद्धेमृत्युःसोऽव्य
भिचारवान् १८ एषह्यैंद्रोवैजयंतोगुणैर्नित्यंसमाहितः ॥ येनासुरान्पराजित्यजगत्पातिशतक्रतुः १९ स्वर्गमार्गायकस्यस्याद्विग्रहोवैयथातव ॥ मागधैर्विपु
लैःसैन्यैर्बाहुल्यबलदर्पितः २० मावमंस्थाःपरान्राजन्नास्तिवीर्यंनरेनरे ॥ समंतेजस्त्वयाचैवविशिष्टंवानरेश्वर २१ यावदेतदसंबुद्धंतावदेवभवेत्तव ॥
विषह्यमेतदस्माकमतोराजन्ब्रवीमिते २२ जहित्वंसदृशेष्वेवमानंदर्पंचमागध ॥ माऽगमःससुतामात्यःसबलश्चयमक्षयम् २३ दंभोद्भवःकार्तवीर्यउत्तर
श्चबृहद्रथः ॥ श्रेयसोह्यवमन्येहविनेशुःसबलान्नृपाः २४ युयुक्षमाणास्त्वत्तोहिनवयंब्राह्मणाध्रुवम् ॥ शौरिरस्मिहृषीकेशोनृवीरौपांडवाविमौ ॥ अनयोर्मा
तुलेयंचकृष्णंमांविद्धितेरिपुं २५ त्वामाह्वयामहेराजन्स्थिरोयुध्यस्वमागध ॥ मुंचवानृपतीन्सर्वान्गच्छवात्वंयमक्षयम् २६ जरासंधउवाच ॥ ॥ ना
जितान्वैनरपतीनहमादद्मिकांश्चन ॥ अजितःपर्यवस्थाताकोऽत्रयोनमयाजितः २७ क्षत्रियस्यैतदेवाहुर्धर्म्यंकृष्णोपजीवनं ॥ विक्रम्यवशमानीयकामं
तोयत्समाचरेत् २८ देवतार्थमुपाहृत्यराज्ञःकृष्णकथंभयात् ॥ अहमद्यविमुच्येयंक्षात्रंव्रतमनुस्मरन् २९ सैन्यंसैन्येनव्यूढेनएकएकेनवापुनः ॥ द्वाभ्यां
त्रिभिर्वायोत्स्येऽहंयुगपत्पृथगेववा ३० ॥ वैशंपायनउवाच ॥ एवमुक्त्वाजरासंधःसहदेवाभिषेचनम् ॥ आज्ञापयत्तदाराजायुयुत्सुर्भीमकर्मभिः ३१

९
स्यास्ति अत्रहेतुः क्षत्रियावमानइत्याह मागधैरिति सैन्यैरेवनबाहुबलेन २०। २१ विषह्यमसह्यंविगतःसह्यःसोढुंयोग्यःसोढायस्यतत्। यद्वा तवैतावद्बलमस्माकंविषह्यंसुसहम् २२
२३। २४ युयुक्षमाणास्त्वत्तोहि त्वत्तस्त्वांयुयुक्षमाणाः योगः कपटेनहननंतत्कर्तुमिच्छंतः। 'योगोविश्रब्धघातिनि'इतिविश्वः। मुमुक्षमाणाइतिपाठे नृपानितिशेषः ब्राह्मणब्रुवा इति
पाठेब्राह्मणाधमाः २५। २६ अजितोऽन्यैरितिशेषः पर्यवस्थाताशत्रुः २७। २८। २९ व्यूढेनव्यूहरचनयास्थितेन ३०। ३१

३२ हंसडिंभकावेवकौशिकचित्रसेनावित्याह ययोरिति ३३ । ३४ मधुभिर्यादवैः ३५ नहंतुमियेषेत्यन्वयः तत्रहेतुःब्राह्मीमिति ॥ ३६ ॥ ॥ इतिसभापर्वणि नैलकंठीयेभारतभावदीपे द्वाविंशोऽध्यायः ॥ २२ ॥ ॥ ततइति १ । २ । ३ आदायपुरोहितःउपतस्थेइतिसार्द्धसंबंधः । अगदानौषधानि । निर्वृतीर्वेदनानिच दुःखमूर्छयोःकालेसुखसंज्ञाकराणि ४ समनह्यत्सन्नद्धोबभूव ५ । ६ । ७ । ८ । ९ । १० कक्षैर्दोर्मूलैःकक्षांप्रकोष्ठगतांरज्जुंधुन्वानौ यतस्तत्रकक्षेआस्फोटंचक्रतुः । बाहुमूलास्फालनेनांगदबंधरज्जुशेषं कंपयंतावित्यर्थः ११ १२

सतुसेनापतिंराजासस्मारभरतर्षभ ॥ कौशिकंचित्रसेनंचतस्मिन्युद्धउपस्थिते ३२ ययोस्तेनामनीराजन्हंसेतिडिंभकेतिच ॥ पूर्वंसंकथितंपुंभिर्नृलोकेलोकसत्कृते ३३ तंतुराजन्विभुःशौरीराजानंबलिनांवरम् ॥ स्मृत्वापुरुषशार्दूलःशार्दूलसमविक्रमम् ३४ सत्यसंधोजरासंधंभुविभीमपराक्रमम् ॥ भागमन्यस्यनिर्दिष्टमवध्यंमधुभिर्मृधे ३५ नात्मनात्मवतांमुख्यइयेषमधुसूदनः ॥ ब्राह्मीमाज्ञांपुरस्कृत्यहंतुंहलधरानुजः ३६ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिजरासंधवधपर्वणिजरासंधयुद्धोद्योगेद्वाविंशोऽध्यायः २२ ॥ ॥ वैशंपायनउवाच ॥ ॥ ततस्तंनिश्चितात्मानंयुद्धाययदुनंदनः ॥ उवाचवाग्मीराजानंजरासंधमधोक्षजः १ ॥ कृष्णउवाच ॥ त्रयाणांकेनतेराजन्योद्धुमुत्सहतेमनः ॥ अस्मदन्यतमेनेहसज्जीभवतुकोयुधि २ एवमुक्तःसनृपतिर्युद्धंवव्रेमहाद्युतिः ॥ जरासंधस्ततोराजाभीमसेनेनमागधः ३ आदायरोचनांमाल्यंमंगल्यान्यपराणिच ॥ धारयन्नगदान्मुख्यान्निर्वृतीर्वेदनानिच ॥ उपतस्थेजरासंधंयुयुत्सुंवैपुरोहितः ४ कृतस्वस्त्ययनोराजाब्राह्मणेनयशस्विना ॥ समनह्यज्जरासंधःक्षात्रंधर्ममनुस्मरन् ५ अवमुच्यकिरीटंसकेशान्समनुगृह्यच ॥ उदतिष्ठज्जरासंधोवेलातिगइवार्णवः ६ उवाचमतिमान्राजाभीमंभीमपराक्रमः ॥ भीमयोत्स्येत्वयासार्द्धंश्रेयसानिर्जितंवरम् ७ एवमुक्त्वाजरासंधोभीमसेनमरिंदमः ॥ प्रत्युद्ययौमहातेजाःशक्रंबलइवासुरः ८ ततःसंमंत्र्यकृष्णेनकृतस्वस्त्ययनोबली ॥ भीमसेनोजरासंधमाससादयुयुत्सया ९ ततस्तौनरशार्दूलौबाहुशस्त्रौसमीयतुः ॥ वीरौपरमसंहृष्टावन्योन्यजयकांक्षिणौ १० करग्रहणपूर्वंतुकृत्वापादाभिवंदनम् ॥ कक्षैःकक्षांविधुन्वानावास्फोटंतत्रचक्रतुः ११ स्कंधेदोर्भ्यांसमाहत्यनिहत्यचमुहुर्मुहुः ॥ अंगमंगैःसमाश्लिष्यपुनरास्फालनंविभो १२ चित्रहस्तादिकंकृत्वाकक्षाबंधंचचक्रतुः ॥ गलगंडाभिघातेनसस्फुलिंगेनचाशनिम् १३ बाहुपाशादिकंकृत्वापादाहताशिरावुभौ ॥ उरोहस्तंततश्चक्रेपूर्णकुंभौप्रयुज्यतौ १४

चित्रहस्तादिकंहस्तस्यातिवेगेनाकुंचनप्रसारणोपर्यधश्चालनमुष्टीकरणानिचित्रहस्ताः । आदिपदात्पादस्याप्याकुंचनादि । कक्षाबंधंपरस्परकक्षायांहस्तौकृत्वाबंधनं । गलेतिगलेगंडेनभालदेशेनाभिघातस्तेन । पाषाणसदृशांगत्वात्तयोरभिघातेन विस्फुलिंगोत्पत्त्याऽशनिंवज्रमिवससृजतुरित्यर्थः १३ बाहुपाशादिकंचरणपाशआदिशब्दार्थः पादाभ्यांआहताः शिराःस्नायवोयाभ्यांतौ । दृढप्रहारेणनाडीपर्यंतप्राविविद्धनावंतावित्यर्थः । उरोहस्तंउरसि चपेटाप्रहारं । पूर्णकुंभौ ग्रथितांगुलिभ्यांहस्ताभ्यांपरशिरसःपीडनं पूर्णकुंभः । द्विस्वंपरस्परंद्वावपिचक्रतुरितिवक्तुं १४

१५ तलेनचपेटया १६ आवृत्यजत्रुदेशेपृष्ठंकृत्वा बाहुभिर्बद्धुत्वाद्वावपिमिथः उदरमादायप्रचक्रतुःप्रचिक्षिपतुः । कूर्विक्षेपेऽस्यरूपं १७ एवंकटयांसुपार्श्वेचप्रचक्रतुः । तक्षवंतौ तक्ष स्तनूकरणंगात्रसंकोचइत्यर्थःतद्वंतौ । अधोहस्तमुदरस्याधस्ताद्धस्तंकृत्वा हस्ताभ्यामुदरमावेष्टय स्वकंठेस्वोरासिचकंठोरःसमीपेआनीयाक्षिपदास्फालितवान् १८ पृष्ठस्यभूसंबंधे नजातंभंगंपराभवं । बाहुभ्यामुदरादिनिपीडनेसंपूर्णमूर्च्छाम् १९ तृणपीडंरज्जूकरणेतृणमिवयत्रबाह्वादिकंव्यावर्त्यतेतद्युद्धंतृणपीडं । पूर्णयोगंयोगोविश्रब्धघातनंतत्पूर्णं । अन्यत्रमु ष्टेःपातंप्रदर्श्यान्यत्रपातनमित्यर्थः । एवमादीनिपादाकर्षणशीर्षकक्षीकरणादीनि २० । २१ । २२ निग्रहःहस्ताभ्यांकंधराकर्षणेनशत्रोरधोमुखीकरणं । प्रग्रहःशत्रोरुत्तानपात

करसंपीडनंकृत्वागर्जंतौवारणाविव ॥ नर्दंतौमेघसंकाशौबाहुप्रहरणावुभौ १५ तलेनाहन्यमानौतुअन्योन्यंकृतवीक्षणौ ॥ सिंहाविवसुसंक्रुद्धावाकृष्याकृ ष्ययुध्यताम् १६ अंगेनांगंसमापीड्यबाहुभ्यामुभयोरपि ॥ आवृत्यबाहुभिश्चापिउदरंचप्रचक्रतुः १७ उभौकटयांसुपार्श्वेतुतक्षवंतौचशिक्षितौ ॥ अधोहस्तंस्वकंठेतूदरस्योरसिचाक्षिपत् १८ सर्वातिक्रांतमर्यादंपृष्ठभंगंचचक्रतुः ॥ संपूर्णमूर्च्छांबाहुभ्यांपूर्णकुंभंप्रचक्रतुः १९ तृणपीडंयथाकामंपूर्ण योगंसमुष्टिकम् ॥ एवमादीनियुद्धानिप्रकुर्वंतौपरस्परम् २० तयोर्युद्धंततोद्रष्टुंसमेताःपुरवासिनः ॥ ब्राह्मणावणिजश्चैवक्षत्रियाश्चसहस्रशः २१ शूद्रा श्चनरशार्दूलस्त्रियोवृद्धाश्चसर्वशः ॥ निरंतरमभूत्तत्रजनौघैरभिसंवृतम् २२ तयोरथभुजाघातान्निग्रहप्रग्रहात्तथा ॥ आसीत्सुभीमसंपातोवज्रपर्वतयो रिव २३ उभौपरमसंहृष्टौबलेनबलिनांवरौ ॥ अन्योन्यस्यांतरंप्रेप्सूपरस्परजयैषिणौ २४ तद्भीममुत्सार्यजनंयुद्धमासीदुपह्वरे ॥ बलिनोःसंयुगेराजन् वृत्रवासवयोरिव २५ प्रकर्षणाकर्षणाभ्यामनुकर्षविकर्षणैः ॥ आचकर्षतुरन्योन्यंजानुभिश्चावजघ्नतुः २६ ततःशब्देनमहताभर्त्सयंतौपरस्परम् ॥ पा षाणसंघातनिभैःप्रहारैरभिजघ्नतुः २७ व्यूढोरस्कौदीर्घभुजौनियुद्धकुशलावुभौ ॥ बाहुभिस्समसज्जेतामायसैःपरिघैरिव २८ कार्तिकस्यतुमासस्यप्रवृत्तं प्रथमेऽहनि॥अनाहारंदिवारात्रमविश्रांतमवर्तत२९तद्वृत्तंतुत्रयोदश्यांसमवेतंमहात्मनोः॥चतुर्दश्यांनिशायांतुनिवृत्तोमागधःक्लमात् ३० तंराजानंतथाक्लां तंदृष्ट्वाराजन्जनार्दनः॥उवाचभीमकर्माणंभीमंसंबोधयन्निव३१क्लांतःशत्रुर्नकौंतेयलभ्यःपीडयितुंरणे ॥पीड्यमानोहिकार्त्स्न्येनजह्याज्जीवितमात्मनः ३२ तस्मात्तेनैवकौंतेयपीडनीयोजनाधिपः॥सममेतेनयुध्यस्वबाहुभ्यांभरतर्षभ३३एवमुक्तःसकृष्णेनपांडवःपरवीरहा॥जरासंधस्यतद्रूपंज्ञात्वाचक्रेमतिंवधे३४

नार्थपादाकर्षणं २३ । २४ उत्सार्यजनं हस्तबाहुबंधेनपरस्परापसारणाद्दूरीकृतप्रेक्षकजनं । उपह्वरेयुद्धभूमौ । उपह्वरेइतिपाठेनिकटदेशे २५ प्रकर्षणेपश्चादपसारणेइतरोऽनुक र्षत्यवाङ्मुखंपातयितुं । आकर्षणेअर्वाक्कर्षणेइतरोविकर्षति तिर्यङ्नयतीत्यर्थः । आचकर्षतुःदेहौविलिलिखतुः प्रहारैरितिशेषः २६ । २७ नियुद्धंनिरायुधयुद्धं २८ अनाहारंनास्त्याहरण माहारउपसंहारोयस्यतत् । अविश्रांतंनविशेषेणश्रांतोऽन्यतरोयस्मिंस्तत्तथा २९ तद्वृत्तंतादृशप्रकारंयुद्धंत्रयोदश्यांसमवेतं त्रयोदशीपर्यंतंजातमितिशेषः । क्लमात्क्लमंप्राप्यानि वृत्तःनिगृहीतप्रवृत्तोऽभूत् ३० संबोधयन्निव शिष्टाचारप्रदर्शनव्याजेनशत्रुवधकालंसूचयन्निव ३१ । ३२ तस्मात्त्वया ३३ तद्रूपंक्लांतरूपं ३४

सरंभंकोपं ॥ ३५ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेत्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ भीमसेनइति ॥ १ ॥ अनुरोधितुंनिरो द्धुं प्राणेनबलेन २ । ३ । ४ । ५ जानुभ्यांधनुर्य ष्टिवत्पृष्ठंसंक्षिप्यविनाम्य ६ । ७ । ८ । ९ । १० कुलद्वारिगृहद्वारि ११ भ्रातरौभीमार्जुनौ बांधवान्जरासंधबद्धान्नृपान् १२ तेकृष्णंरत्नभुजंचक्रुरित्यन्वयः १३ । १४ सोदर्यवान्

ततस्तमजितंजेतुंजरासंधंवृकोदरः ॥ संरंभंबलिनांश्रेष्ठोजग्राहकुरुनंदनः ३५ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिजरासंधवधपर्वणिजरासंधक्लांतौत्रयो विंशोऽध्यायः २३ ॥ ॥ ध ॥ ॥ वैशंपायनउवाच ॥ ॥ भीमसेनस्ततःकृष्णमुवाचयदुनंदनम् ॥ बुद्धिमास्थायविपुलांजरासंधवधे प्सया १ नायंपापोमयाकृष्णयुक्तःस्यादनुरोधितुम् ॥ प्राणेनयदुशार्दूलबद्धकक्षेणवाससा २ एवमुक्तस्ततःकृष्णःप्रत्युवाचवृकोदरम् ॥ त्वरयन्पुरुष व्याघ्रोजरासंधवधेप्सया ३ यत्तेदैवंपरंसत्वंयच्चतेमातरिश्वनः ॥ बलंभीमजरासंधेदर्शयाशुतदद्यवै ४ एवमुक्तस्तदाभीमोजरासंधमरिंदमः ॥ उत्क्षिप्य भ्रामयामासबलवंतंमहाबलः ५ भ्रामयित्वाशतगुणंजानुभ्यांभरतर्षभ ॥ बभंजपृष्ठंसंक्षिप्यानिष्पिष्यविननादच ६ करेगृहीत्वाचरणंद्वेधाचक्रेमहाबलः ७ तस्यनिष्पिष्यमाणस्यपांडवस्यचगर्जतः ॥ अभवत्तुमुलोनादःसर्वप्राणिभयंकरः ८ वित्रेसुर्मागधाःसर्वेस्त्रीणांगर्भाश्चसुस्रुवुः ॥ भीमसेनस्यनादेनजरासं धस्यचैवह ९ किंनुस्याद्धिमवान्भिन्नःकिंनुस्विद्दीर्यतेमही ॥ इतिवैमागधाजज्ञुर्भीमसेनस्यनिःस्वनात् १० ततोराज्ञःकुलद्वारिप्रसुप्तमिवतंनृपम् ॥ रा त्रौगतासुमुत्सृज्यनिश्चक्रमुररिंदमाः ११ जरासंधरथंकृष्णोयोजयित्वापताकिनम् ॥ आरोप्यभ्रातरौचैवमोक्षयामासबांधवान् १२ तेवैरत्नभुजंकृष्णंर त्नार्हाःपृथिवीश्वराः ॥ राजानश्चक्रुरासाद्यमोक्षितामहतोभयात् १३ अक्षतःशस्त्रसंपन्नोजितारिःसहराजभिः ॥ रथमास्थायतंदिव्यंनिर्जगामगिरिव्रजात् १४ यःससोदर्यवान्नामद्वियोधीकृष्णसारथिः ॥ अभ्यासघातीसंदृश्योदुर्जयःसर्वराजभिः १५ भीमार्जुनाभ्यांयोधाभ्यामास्थितःकृष्णसारथिः ॥ शुशुभे रथवर्योऽसौदुर्जयःसर्वधन्विभिः १६ शक्रविष्णूहिसंग्रामेचेरतुस्तारकामये ॥ रथेनतेनवैकृष्णउपारुह्यययौतदा १७ तप्तचामीकराभेणकिंकिणीजाल मालिना ॥ मेघनिर्घोषनादेनजैत्रेणामित्रघातिना १८ येनशक्रोदानवानांजघाननवतीर्नव ॥ तंप्राप्यसमहृष्यंतरथंतेपुरुषर्षभाः १९ ततःकृष्णं महाबाहुंभ्रातृभ्यांसहितंतदा ॥ रथस्थंमागधादृष्ट्वासमपद्यंतविस्मिताः २० हयैर्दिव्यैःसमायुक्तोरथोवायुसमोजवे ॥ अधिष्ठितःसशुशुभेकृष्णेना तीवभारत २१ असंगोदेवविहितस्तस्मिन्रथवरेध्वजः ॥ योजनाद्ददृशेश्रीमानिंद्रायुधसमप्रभः २२ चिंतयामासकृष्णोऽथगरुत्मंतंसचाभ्ययात् ॥ क्षणेतस्मिन्सतेनासीच्चैत्यवृक्षइवोत्थितः २३

भीमयुक्तः । द्वियोधी द्वाभ्यां हस्ताभ्यांशराणांप्रक्षेपात् । अभ्यासघाती । पुनःपुनरावृत्तिरभ्यासस्तंपरकीयंहंतुंशीलमस्यधनुर्विद्यायांपरोत्कर्षजेता । संदृश्योरमणीयांगः १५ । १६ शक्रविष्णूइति हिशब्दइवार्थे । तारकामये तारकातारावृहस्पतिभार्या सैवआमयवद्विनाशहेतुर्यस्मिन् । आमयोरोगः १७ । १८ । १९ । २० । २१ असंगोरथस्पर्शहीनः २२ चैत्यवृक्षोग्रामादिचिह्नभूतोवृक्षः २३

२४ । २५ रिष्यतेहिंस्यते विष्यतेइत्यपिपाठः २६ । २७ । २८ । २९ ३० । ३१ । ३२ ३३ । ३४ । ३५ । ३५ पार्थिवत्वंसाम्राज्यं ३७ । ३८ कृच्छ्रान्मोचितेभ्योधनग्रहणंयशोहा

व्यादितास्यैर्महानादैःसहभूतैर्ध्वजालयैः ॥ तस्मिन्रथवरेतस्थौगरुत्मान्पन्नगाशनः २४ दुर्निरीक्ष्योहिभूतानांतेजसाऽभ्यधिकंबभौ ॥ आदित्यइव मध्याह्नेसहस्रकिरणावृतः २५ नससज्जतिवृक्षेषुशस्त्रैश्चापिनरिष्यते ॥ दिव्योध्वजवरोराजन्दृश्यतेचेहमानुषैः २६ तमास्थायरथंदिव्यंपर्जन्यसमनिः स्वनम् ॥ निर्ययौपुरुषव्याघ्रःपांडवाभ्यांसहाच्युतः २७ यंलेभेवासवाद्राजावसुस्तस्माद्बृहद्रथः ॥ बृहद्रथात्क्रमेणैवप्राप्तोबार्हद्रथंनृप २८ सनिर्यायम हाबाहुःपुंडरीकेक्षणस्ततः ॥ गिरिव्रजाद्बहिस्तस्थौसमदेशेमहायशाः २९ तत्रैनंनागराःसर्वेसत्कारेणाभ्ययुस्तदा ॥ ब्राह्मणप्रमुखाराजन्विधिदृष्टेनक र्मणा ३० बंधनाद्विप्रमुक्ताश्चराजानोमधुसूदनम् ॥ पूजयामासुरूचुश्चस्तुतिपूर्वमिदंवचः ३१ नैतच्चित्रंमहाबाहोत्वयिदेवकिनंदने ॥ भीमार्जुनबलो पेतेधर्मस्यप्रतिपालनम् ३२ जरासंधन्हदेघोरेदुःखपंकेनिमज्जतां ॥ राज्ञांसमभ्युद्धरणंयदिदंकृतमद्यवै ३३ विष्णोसमवसन्नानांगिरिदुर्गेसुदारुणे ॥ दि ष्ट्यामोक्षाद्यशोदीप्तमाप्तंतेयदुनंदन ३४ किंकुर्मःपुरुषव्याघ्रशाधिनःप्रणतिस्थितान् ॥ कृतमित्येवतद्विद्धिनृपैर्यद्यपिदुष्करम् ३५ तानुवाचहृषीकेशः समाश्वास्यमहामनाः ॥ युधिष्ठिरोराजसूयंक्रतुमाहर्तुमिच्छति ३६ तस्यधर्मप्रवृत्तस्यपार्थिवत्वंचिकीर्षतः ॥ सर्वैर्भवद्भिर्विज्ञायसाहाय्यंक्रियतामिति ३७ ततःसुप्रीतमनसस्तेनृपानृपसत्तम ॥ तथेत्येवाब्रुवन्सर्वेप्रतिगृह्यास्यतांगिरम् ३८ रत्नभाजंचदाशार्हंचक्रुस्तेपृथिवीश्वराः ॥ कृच्छ्राज्जग्राहगोविंदस्ते षांतदनुकंपया ३९ जरासंधात्मजश्चैवसहदेवोमहामनाः ॥ निर्ययौसजनामात्यःपुरस्कृत्यपुरोहितम् ४० सनीचैःप्रणतोभूत्वाबहुरत्नपुरोगमः ॥ सहदे वोनृणांदेवंवासुदेवमुपस्थितः ४१ भयार्त्तायततस्तस्मैकृष्णोदत्वाऽभयंतदा ॥ आददेऽस्यमहार्हाणिरत्नानिपुरुषोत्तमः ४२ अभ्यषिंचतत्रैवजरासंधात्म जंमुदा ॥ गत्वैकत्वंचकृष्णेनपार्थाभ्यांचैवसत्कृतः ४३ विवेशराजाद्युतिमान्बार्हद्रथपुरंनृप ॥ अभिषिक्तोमहाबाहुर्जारासंधिर्महात्मभिः ४४ कृष्ण स्तुसहपार्थाभ्यांश्रियापरमयायुतः ॥ रत्नान्यादायभूरीणिप्रययौपुरुषर्षभः ४५ इंद्रप्रस्थमुपागम्यपांडवाभ्यांसहाच्युतः ॥ समेत्यधर्मराजानंप्रीयमा णोऽभ्यभाषत ४६ दिष्ट्याभीमेनबलवान्जरासंधोनिपातितः ॥ राजानोमोक्षिताश्चैवबंधनान्नृपसत्तम ४७ दिष्ट्याकुशलिनौचेमौभीमसेनधनंजयौ ॥ पुनःस्वनगरंप्राप्तावक्षतावितिभारत ४८ ततोयुधिष्ठिरःकृष्णंपूजयित्वायथार्हतः ॥ भीमसेनार्जुनौचैवप्रहृष्टःपरिषस्वजे ४९ ततःक्षीणेजरासं धेभ्रातृभ्यांविहितंजयम् ॥ अजातशत्रुरासाद्यमुमुदेभ्रातृभिःसहः ५०

निकरमितिसंकटात् ३९ । ४० ४१ । ४२ एकत्वंसख्यं यथावयः ज्येष्ठानुक्रमेण प्रथमंभीमेन ततःकृष्णेन ततोऽर्जुनेन ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५०

५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० इतिस०नै०मा०भा०चतुर्विंशोऽध्यायः ॥ २४ ॥ क्षत्रियस्यशत्रुजयेनधनार्जनंधर्मःइतिशिष्टाचारेणदर्शयितुं पांडवानांदिग्विजयमुपक्रामयतिसप्तभिरध्यायैः । पार्थःप्राप्यधनुःश्रेष्ठमित्यादिना १ पक्षोवासुदेवःभूमिर्दुर्गं २ । ३ । ४ । ५ ६ । ७ । ८।९।१० खांडवप्रस्थंखांडवदाहेनरुध्यापितं स्थानं ११

यथावयःसमागम्यभ्रातृभिःसहपांडवः ॥ सत्कृत्यपूजयित्वाचविससर्जनराधिपान् ५१ युधिष्ठिराभ्यनुज्ञातास्तेनृपाहृष्टमानसाः ॥ जग्मुःस्वदेशांस्त्वरितायानैरुच्चावचैस्ततः ५२ एवंपुरुषशार्दूलोमहाबुद्धिर्जनार्दनः ॥ पांडवैर्घातयामासजरासंधमरिंतदा ५३ घातयित्वाजरासंधंबुद्धिपूर्वमरिंदमः ॥ धर्मराजमनुज्ञाप्यपृथांकृष्णांचभारत ५४ सुभद्रांभीमसेनंचफाल्गुनंयमजौतथा ॥ धौम्यमामंत्रयित्वाचप्रययौस्वांपुरींप्रति ५५ तेनैवरथमुख्येनमनसस्तुल्यगामिना ॥ धर्मराजविसृष्टेनदिव्येनानादयन्दिशः ५६ ततोयुधिष्ठिरमुखाःपांडवाभरतर्षभ ॥ प्रदक्षिणमकुर्वंतकृष्णमक्लिष्टकारिणम् ५७ ततोगतेभगवतिकृष्णेदेवकिनंदने ॥ जयंलब्ध्वासुविपुलंराज्ञांदत्वाऽभयंतदा ५८ संवर्धितंयशोभूयःकर्मणातेनभारत ॥ द्रौपद्याःपांडवाराजन्परांप्रीतिमवर्धयन् ५९ तस्मिन्कालेतुयद्युक्तंधर्मकामार्थसंहितम् ॥ तद्राजाधर्मतश्चक्रेप्रजापालनकीर्तनम् ६० ॥ इतिश्रीम०स०जरासंधवधपर्वणिजरासंधवधेचतुर्विंशोऽध्यायः ॥ २४ ॥

॥ समाप्तंचेदंजरासंधवधपर्व ॥ अथदिग्विजयपर्व ॥ वैशंपायनउवाच ॥ पार्थःप्राप्यधनुश्रेष्ठमक्षय्यौचमहेषुधी ॥ रथंध्वजंसभांचैवयुधिष्ठिरमभाषत १ ॥ ॥ अर्जुनउवाच ॥ ॥ धनुरस्त्रंशरावीर्यंपक्षोभूमिर्यशोबलम् ॥ प्राप्तमेतन्मयाराजन्दुष्प्रापंयदभीप्सितम् २ तत्रकृत्यमहंमन्येकोशस्यपरिवर्धनम् ॥ करमाहारयिष्यामिराज्ञःसर्वान्नृपोत्तम ३ विजयायप्रयास्यामिदिशंधनदपालिताम् ॥ तिथावथमुहूर्तेचनक्षत्रेचाभिपूजिते ४ ॥ वैशंपायनउवाच ॥ ॥ धनंजयवचःश्रुत्वाधर्मराजोयुधिष्ठिरः ॥ स्निग्धगंभीरनादिन्यातंगिराप्रत्यभाषत ५ स्वस्तिवाच्यार्हतोविप्रान्प्रयाहिभरतर्षभ ॥ दुर्हृदामप्रहर्षायसुहृदांनंदनायच ६ विजयस्तेध्रुवंपार्थप्रियंकाममवाप्स्यसि ॥ इत्युक्तःप्रययौपार्थःसैन्येनमहतावृतः ७ अग्निदत्तेनदिव्येनरथेनाद्भुतकर्मणा ॥ तथैवभीमसेनोऽपियमौचपुरुषर्षभौ ८ ससैन्याःप्रययुःसर्वेधर्मराजेनपूजिताः ॥ दिशंधनपतेरिष्टामजयत्पाकशासनिः ९ भीमसेनस्तथाप्राचींसहदेवस्तुदक्षिणाम् ॥ प्रतीचींनकुलोराजन्दिशंव्यजयतास्त्रवित् १० खांडवप्रस्थमध्यस्थोधर्मराजोयुधिष्ठिरः ॥ आसीत्परमयालक्ष्म्यासुहृद्गणवृतःप्रभुः ११ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिदिग्विजयपर्वणिदिग्विजयसंक्षेपकथनेपंचविंशोऽध्यायः ॥ २५ ॥

॥ जनमेजयउवाच ॥ दिशामभिजयंब्रह्मन्विस्तरेणानुकीर्तय ॥ नहितृप्यामिपूर्वेषांश्रृण्वानश्चरितंमहत् १ ॥ वैशंपायनउवाच ॥ धनंजयस्यवक्ष्यामिविजयंपूर्वमेवते ॥ यौगपद्येनपार्थैर्हिनिर्जितेयंवसुंधरा २ पूर्वंकुलिंदविषयेवशेचक्रेमहीपतीन् ॥ धनंजयोमहाबाहुर्नातितीव्रेणकर्मणा ३

॥ इतिसभापर्वणिनीलकंठीयेभारतभावदीपेपंचविंशोऽध्यायः ॥ २५ ॥ १ । २ । ३

४ । ५ । ६ । ७ । ८ । ९ १० । ११ । १२ । १३ । १४ । १५ । १६ ॥ इतिश्रीमहाभारतेसभापर्वणिनीलकंठीयेभारतभावदीपेषड्विंशोध्यायः ॥ २६ ॥ ॥ ७ ॥ ॥ एवमिति॥

आनर्त्तान्कालकूटांश्चकुलिंदांश्चविजित्यसः ॥ सुमंडलंचावजितंकृतवान्सहसैनिकम् ४ सतेनसहितोराजन्सव्यसाचीपरंतपः ॥ विजिग्येशाकलंद्वीपंप्रतिविंध्यंचपार्थिवम् ५ शाकलद्वीपवासाश्चसप्तद्वीपेषुयेनृपाः ॥ अर्जुनस्यचसैन्यैस्तैर्विग्रहस्तुमुलोऽभवत् ६ सतानपिमहेष्वासान्विजिग्येभरतर्षभ ॥ तैरेवसहितःसर्वैःप्राग्ज्योतिषमुपाद्रवत् ७ तत्रराजामहानासीद्भगदत्तोविशांपते ॥ तेनासीत्सुमहद्युद्धंपांडवस्यमहात्मनः ८ सकिरातैश्चचीनैश्चवृतःप्राग्ज्योतिषोऽभवत् ॥ अन्यैश्चबहुभिर्योधैःसागरानूपवासिभिः ९ ततःसदिवसानष्टौयोधयित्वाधनंजयम् ॥ प्रहसन्नब्रवीद्राजासंग्रामविगतक्लमम् १० उपपन्नंमहाबाहोत्वयिकौरवनंदन ॥ पाकशासनदायादेवीर्यमाहवशोभिनि ११ अहंसखामहेंद्रस्यशक्रादनवरोरणे ॥ नशक्ष्यामिचतेतातस्थातुंप्रमुखतोयुधि १२ त्वमीप्सितंपांडवेयब्रूहिकिंकरवाणिते ॥ यद्वक्ष्यसिमहाबाहोतत्करिष्यामिपुत्रक १३ ॥ अर्जुनउवाच ॥ कुरूणामृषभोराजाधर्मपुत्रोयुधिष्ठिरः ॥ धर्मज्ञःसत्यसंधश्चयज्वाविपुलदक्षिणः १४ तस्यपार्थिवतामीप्सेकरस्तस्मैप्रदीयतां ॥ भवान्पितृसखाचैवप्रीयमाणोमयापिच ॥ ततोनाज्ञापयामित्वांप्रीतिपूर्वंप्रदीयताम् १५ ॥ भगदत्तउवाच ॥ कुंतीमातर्यथामेत्वंतथाराजायुधिष्ठिरः ॥ सर्वमेतत्करिष्यामिकिंचान्यत्करवाणिते १६ ॥ इ० म० स० दिग्विजयप० अर्जुनदिग्विजयेभगदत्तजयेषड्विंशोऽध्यायः ॥ २६ ॥ ॥ वैशंपायनउवाच ॥ एवमुक्तःप्रत्युवाचभगदत्तंधनंजयः ॥ अनेनैवकृतंसर्वंभविष्यत्यनुजानता १ तंविजित्यमहाबाहुःकुंतीपुत्रोधनंजयः ॥ प्रययावुत्तरांतस्माद्दिशंधनदपालिताम् २ अंतर्गिरिंचकौंतेयस्तथैवचबहिर्गिरिम् ॥ तथैवोपगिरिंचैवविजिग्येपुरुषर्षभः ३ विजित्यपर्वतान्सर्वान्येचतत्रनराधिपाः ॥ तान्वशेस्थापयित्वाचधनान्यादायसर्वशः ४ तैरेवसहितःसर्वैरनुरज्यचतान्नृपान् ॥ उलूकवासिनंराजन्बृहंतमुपजग्मिवान् ५ मृदंगवरनादेनरथनेमिस्वनेनच ॥ हस्तिनांचनिनादेनकंपयन्वसुधामिमाम् ६ ततोबृहंतस्त्वरितोबलेनचतुरंगिणा ॥ निष्क्रम्यनगरात्तस्माद्योधयामासफाल्गुनम् ७ सुमहान्सन्निपातोऽभूद्धनंजयबृहंतयोः ॥ नशशाकबृहंतस्तुसोढुंपांडवविक्रमम् ८ सोऽविषह्यतमंमत्वाकौंतेयंपर्वतेश्वरः ॥ उपावर्त्ततदुर्धर्षोरत्नान्यादायसर्वशः ९ सतद्राज्यमवस्थाप्यउलूकसहितोययौ ॥ सेनाबिंदुमथोराजन्राज्यादाशुसमाक्षिपत् १० मोदापुरंवामदेवंसुदामानंसुसंकुलम् ॥ उलूकानुत्तरांश्चैवतांश्चराज्ञःसमानयत् ११ तत्रस्थःपुरुषैरेवधर्मराजस्यशासनात् ॥ किरीटीजितवान्राजन्देशान्पंचगणांस्ततः १२ सदेवप्रस्थमासाद्यसेनाबिंदोःपुरंप्रति ॥ बलेनचतुरंगेणनिवेशमकरोत्प्रभुः १३ सतैःपरिवृतःसर्वैर्विष्वगश्वंनराधिपम् ॥ अभ्यगच्छन्महातेजाःपौरवंपुरुषर्षभ १४

नेनैवकरदानेनैव अनुजानताअनुज्ञांदत्तवता १ । २ । ३ । ४ । ५ । ६ । ७ सन्निपातःसंघर्षः ८ । ९ १० । ११ । १२ । १३ । १४

१९ उत्सवसंकेतान् स्त्रीपुंसयोः परस्परप्रीतिरेवरत्यर्थसंकेतः नतुदांपत्यव्यवस्था पशूनामिवयत्रास्तीत्यर्थः १६ मंडलैः क्षुद्रराज्यैः १७ । १८ अभिसारींनगरीम् १९ । २० । २१ । २२ २३ प्रागुत्तरामैशानीम् २४ । २५ । २६ । २७ जवनान्धावनेशीघ्रान् आशुगान् यदृच्छयाचलनसमर्थान् २८ निष्कुटंशैलविशेषम् २९ ॥ ॥ इतिसभापर्वणिनैलकंठीयेभार

विजित्यचाहवेशूरान्पार्वतियान्महारथान् ॥ जिगायसेनयाराजन्पुरंपौरवरक्षितम् १५ पौरवंयुधिनिर्जित्यदस्यून्पर्वतवासिनः ॥ गणानुत्सवसंकेतानज यत्सप्तपांडवः १६ ततःकाश्मीरकान्वीरान्क्षत्रियान्क्षत्रियर्षभः ॥ व्यजयल्लोहितंचैवमंडलैर्दशभिःसह १७ ततस्त्रिगर्तान्कौंतेयंदार्वान्कोकनदास्तथा ॥ क्षत्रियाबहवोराजन्नुपावर्त्तंतसर्वशः १८ अभिसारींततोरम्यांविजिग्येकुरुनंदनः ॥ उरगावासिनंचैवरोचमानंरणेऽजयत् १९ ततःसिंहपुरंरम्यंचित्रायुधसुर क्षितम् ॥ प्राधमद्बलमास्थायपाकशासनिराहवे २० ततःसुह्मांश्चचोलांश्चकिरीटीपांडवर्षभः ॥ सहितःसर्वसैन्येनप्रामथत्कुरुनंदनः २१ ततःपरम विक्रांतोबाल्हीकान्पाकशासनिः ॥ महतापरिमर्देनवशेचक्रेदुरासदान् २२ गृहीत्वातुबलंसारंफाल्गुनःपांडुनंदनः ॥ दरदान्सहकांबोजैरजयत्पाकशास निः २३ प्रागुत्तरांदिशंयेचवसंत्याश्रित्यदस्यवः ॥ निवसंतिवनेयेचतान्सर्वानजयत्प्रभुः २४ लोहान्परमकांबोजानृषिकानुत्तरानपि ॥ सहितांस्ता न्महाराजव्यजयत्पाकशासनिः २५ ऋषिकेष्वपिसंग्रामोबभूवातिभयंकरः ॥ तारकामयसंकाशःपरस्त्वृषिकपार्थयोः २६ सविजित्यततोराजन्नृषिकानर णमूर्धनि ॥ शुकोदरसमांस्तत्रहयानष्टौसमानयत् २७ मयूरसदृशानन्यानुत्तरानपरानपि ॥ जवनानाशुगांश्चैवकरार्थंसमुपानयत् २८ सविनिर्जित्यसं ग्रामेहिमवंतंसनिष्कुटम् ॥ श्वेतपर्वतमासाद्यन्यविशत्पुरुषर्षभः २९ इतिश्रीमहाभारतेसभापर्वणिदिग्विजयपर्वणिफाल्गुनदिग्विजयेनानादेशजयेसप्त विंशोऽध्यायः॥ २७ ॥ ॥ वैशंपायनउवाच ॥ सश्वेतपर्वतंवीरःसमतिक्रम्यवीर्यवान् ॥ देशंकिंपुरुषावासंद्रुमपुत्रेणरक्षितम् १ महतासन्निपातेनक्ष त्रियांतकरेणह ॥ अजयत्पांडवश्रेष्ठःकरेचैनंन्यवेशयत् २ तंजित्वाहाटकंनामदेशंगुह्यकरक्षितम् ॥ पाकशासनिरव्यग्रःसहसैन्यःसमासदत् ३ तांस्तुसां त्वेननिर्जित्यमानसंसरउत्तमम् ॥ ऋषिकुल्यास्तथासर्वाददर्शकुरुनंदनः ४ सरोमानसमासाद्यहाटकानभितःप्रभुः ॥ गंधर्वरक्षितंदेशमजयत्पांडवस्ततः ५ तत्रतित्तिरिकल्माषान्मंडूकाख्यान्हयोत्तमान् ॥ लेभेसकरमत्यंतंगंधर्वनगरात्तदा ६ उत्तरंहरिवर्षंतुससमासाद्यपांडवः ॥ इयेषजेतुंतंदेशंपाकशास ननंदनः ७ ततएनंमहावीर्यंमहाकायामहाबलाः ॥ द्वारपालाःसमासाद्यहृष्टावचनमब्रुवन् ८ पार्थनेदंत्वयाशक्यंपुरंजेतुंकथंचन ॥ उपावर्तस्वकल्याण पर्याप्तमिदमच्युत ९ इदंपुरंयःप्रविशेद्ध्रुवंनसभवेन्नरः ॥ प्रीयामहेत्वयावीरपर्याप्तोविजयस्तव १० नचात्रकिंचिज्जेतव्यमर्जुनात्रप्रदृश्यते ॥ उत्तराः कुरवोह्येतेनात्रयुद्धंप्रवर्तते ११ प्रविष्टोऽपिहिकौंतेयनेहद्रक्ष्यासिकिंचन ॥ नहिमानुषदेहेनशक्यमत्राभिवीक्षितुम् १२

तभावदीपेसप्तविंशोऽध्यायः २७ ॥ ॥ ७ ॥ ॥ सद्गति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ नसभवेन्म्रियेतेत्यर्थः १० । ११ । १२

१३ । १४ । १५ क्षुमाअतसीविशेषः । 'क्षुमाऽतसीनीलिकयोः' इतिमेदिनी । तत्तंतुनिर्मितानिक्षौमान्याजिनानिच १६ १७ । १८ । १९ । २० । २१ ॥ ॥ इतिसभापर्वणिनैलकंठीये भारतभावदीपेअष्टाविंशोऽध्यायः ॥ २८ ॥ ॥ छ ॥ ॥ एतस्मिन्निति १ बलचक्रेणसेनासमूहेन दंशितेनसन्नद्धेन २ । ३ । ४ दशार्णान् देशान् निरायुधं बाहुयुद्धं ५ आधि

अथेहपुरुषव्याघ्रकिंचिदन्यच्चिकीर्षसि ॥ तत्प्रब्रूहिकरिष्यामोवचनात्तवभारत १३ ततस्तानब्रवीद्राजन्नर्जुनःप्रहसन्निव ॥ पार्थिवत्वंचिकीर्षामिधर्मराजस्यधीमतः १४ नप्रवेक्ष्यामिवोदेशंविरुद्धंयादिमानुषैः ॥ युधिष्ठिराययत्किंचित्करपण्यंप्रदीयताम् १५ ततोदिव्यानिवस्त्राणिदिव्यान्याभरणानिच ॥ क्षौमाजिनानिदिव्यानितस्यतेप्रददुःकरम् १६ एवंसपुरुषव्याघ्रोविजित्यदिशमुत्तराम् ॥ संग्रामान्सुबहून्कृत्वाक्षत्रियैर्दस्युभिस्तथा १७ सविनिर्जित्यराज्ञस्तान्करेचविनिवेश्यतु ॥ धनान्यादायसर्वेभ्योरत्नानिविविधानिच १८ हयांस्तित्तिरिकल्माषान्शुकपत्रनिभानपि ॥ मयूरसदृशानन्यान्सर्वाननिलरंहसः १९ वृतःसुमहताराजन्बलेनचतुरंगिणा ॥ आजगामपुनर्वीरःशक्रप्रस्थंपुरोत्तमम् २० धर्मराजायतत्पार्थोधनंसर्वंसवाहनम् ॥ न्यवेदयदनुज्ञातस्तेनराज्ञागृहान्ययौ २१ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिदिग्विजयपर्वणिअर्जुनोत्तरदिग्विजयेअष्टाविंशोऽध्यायः ॥२८॥ ॥ छ ॥

॥ वैशंपायनउवाच ॥ ॥ एतस्मिन्नेवकालेतुभीमसेनोऽपिवीर्यवान् ॥ धर्मराजमनुज्ञाप्यययौप्राचींदिशंप्रति १ महताबलचक्रेणपरराष्ट्रावमर्दिना ॥ हस्त्यश्वरथपूर्णेनदंशितेनप्रतापवान् २ वृतोभरतशार्दूलोद्विषच्छोकविवर्धनः ॥ सगत्वानरशार्दूलःपंचालानांपुरंमहत् ३ पंचालान्विविधोपायैःसांत्वयामासपांडवः ॥ ततःसगंडकाञ्शूरोविदेहान्भरतर्षभः ४ विजित्याल्पेनकालेनदशार्णानजयत्प्रभुः ॥ तत्रदाशार्णकोराजासुधर्मालोमहर्षणम् ॥ कृतवान्भीमसेनेनमहद्युद्धंनिरायुधम् ५ भीमसेनस्तुतदृष्ट्वातस्यकर्ममहात्मनः ॥ अधिसेनापतिंचक्रेसुधर्माणंमहाबलम् ६ ततःप्राचींदिशंभीमोययौभीमपराक्रमः ॥ सैन्येनमहताराजन्कंपयन्निवमेदिनीम् ७ सोऽश्वमेधेश्वरंराजन्रोचमानंसहानुगम् ॥ जिगायसमरेवीरोबलेनबलिनांवरः ८ सतंनिर्जित्यकौंतेयोनातितीव्रेणकर्मणा ॥ पूर्वदेशंमहावीर्योविजिग्येकुरुनंदनः ९ ततोदक्षिणमागम्यपुलिंदनगरंमहत् ॥ सुकुमारंवशेचक्रेसुमित्रंचनराधिपम् १० ततस्तुधर्मराजस्यशासनाद्भरतर्षभः ॥ शिशुपालंमहावीर्यमभ्यगाज्जनमेजय ११ चेदिराजोऽपितच्छ्रुत्वापांडवस्याचिकीर्षितम् ॥ उपनिष्क्रम्यनगरात्प्रत्यगृह्णात्परंतप १२ तौसमेत्यमहाराजकुरुचेदिवृषौतदा ॥ उभयोरात्मकुलयोःकौशल्यंपर्यपृच्छताम् १३ ततोनिवेद्यतद्राष्ट्रंचेदिराजोविशांपते ॥ उवाचभीमंप्रहसन्किमिदंकुरुषेऽनघ १४ तस्यभीमस्तदाऽचख्यौधर्मराजचिकीर्षितम् ॥ सचतंप्रतिगृह्यैवतथाचक्रेनराधिपः १५ ततोभीमस्तत्रराजन्नुषित्वात्रिदशाःक्षपाः ॥ सत्कृतःशिशुपालेनययौसबलवाहनः १६ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिदिग्विजयपर्वणिभीमदिग्विजयेएकोनत्रिंशोऽध्यायः २९॥

चक्रेइतिसंबंधः । जित्वातस्यबलंज्ञात्वासैनापत्यं तस्मैदत्तवानित्यर्थः । अधिसेनापतिंसेनापतिष्वधिकं मुख्यंचक्रे इतिवाऽर्थः ६ । ७ । ८ । ९ । १० । ११ । १२ वृषौश्रेष्ठौ १३ । १४ । १५ त्रिदशाः त्र्यधिकादशत्रयोदश १६ ॥ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेएकोनत्रिंशोऽध्यायः ॥ २९ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

ततइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ सुह्माः राढाः मागधानभ्यधाद्बली करंप्रयच्छतेत्युक्तवान् पूर्वमेवपराक्रांतत्वात् १६ । १७

॥ वैशंपायनउवाच ॥ ॥ ततःकुमारविषयेश्रेणिमंतमथाजयत् ॥ कोसलाधिपतिंचैवबृहद्बलमरिंदमः १ अयोध्यायांतुधर्मज्ञंदीर्घयज्ञंमहाबलम् ॥
अजयत्पांडवश्रेष्ठोनातितीव्रेणकर्मणा २ ततोगोपालकक्षंचसोत्तरानपिकोसलान् ॥ मल्लानामधिपंचैवपार्थिवंचाजयत्प्रभुः ३ ततोहिमवतःपार्श्वंसमभ्ये
त्यजलोद्भवम् ॥ सर्वमल्पेनकालेनदेशंचक्रेवशंबली ४ एवंबहुविधान्देशान्विजिग्येभरतर्षभः ॥ भल्लाटमभितोजिग्येशुक्तिमंतंचपर्वतम् ५ पांडवःसुम
हावीर्योबलेनबलिनांवरः ॥ सकाशिराजंसमरेसुबाहुमनिवर्तिनम् ६ वशेचक्रेमहाबाहुर्भीमोभीमपराक्रमः ॥ ततःसुपार्श्वमभितस्तथाराजपतिंक्रथम्
७ युध्यमानंबलात्संख्येविजिग्येपांडवर्षभः ॥ ततोमत्स्यान्महातेजामलदांश्चमहाबलान् ८ अनघानभयांश्चैवपशुभूमिंचसर्वशः ॥ निवृत्यचमहाबाहु
र्मदधारंमहीधरम् ९ सोमधेयांश्चनिर्जित्यप्रययावुत्तरामुखः ॥ वत्सभूमिंचकौंतेयोविजिग्येबलवान्बलात् १० भर्गाणामधिपंचैवनिषादाधिपतिंतथा ॥
विजिग्येभूमिपालांश्चमणिमत्प्रमुखान्बहून् ११ ततोदक्षिणमल्लांश्चभोगवंतंचपर्वतम् ॥ तरसैवाजयद्भीमोनातितीव्रेणकर्मणा १२ शर्मकान्वर्मकांश्चैव
व्यजयत्सांत्वपूर्वकम् ॥ वैदेहकंचराजानंजनकंजगतीपतिम् १३ विजिग्येपुरुषव्याघ्रोनातितीव्रेणकर्मणा ॥ शकांश्चबर्बरांश्चैवअजयच्छद्मपूर्वकम् १४
वैदेहस्थस्तुकौंतेयइंद्रपर्वतमंतिकात् ॥ किरातानामधिपतीनजयत्सप्तपांडवः १५ ततःसुह्मान्प्रसुह्मांश्चसपक्षानतिवीर्यवान् ॥ विजित्ययुधिकौंतेयोमा
गधानभ्यधाद्बली १६ दंडंचदंडधारंचविजित्यपृथिवीपतीन् ॥ तैरेवसहितैःसर्वैर्गिरिव्रजमुपाद्रवत् १७ जारासंधिंसांत्वयित्वाकरेचविनिवेश्यह ॥ तै
रेवसहितैःसर्वैःकर्णमभ्यद्रवद्बली १८ सकंपयन्निवमहींबलेनचतुरंगिणा ॥ युयुधेपांडवश्रेष्ठःकर्णेनामित्रघातिना १९ सकर्णंयुधिनिर्जित्यवशेकृत्वाचभा
रत ॥ ततोविजिग्येबलवान्राज्ञःपर्वतवासिनः २० अथमोदागिरौचैवराजानंबलवत्तरम् ॥ पांडवोबाहुवीर्येणनिजघानमहामृधे २१ ततःपुंड्राधिपंवी
रंवासुदेवंमहाबलम् ॥ कौशिकीकच्छनिलयंराजानंचमहौजसम् २२ उभौबलभृतौवीरावुभौतीव्रपराक्रमौ ॥ निर्जित्याजौमहाराजवंगराजमुपाद्रवत् २३
समुद्रसेनंनिर्जित्यचंद्रसेनंचपार्थिवम् ॥ ताम्रलिप्तंचराजानंकर्वटाधिपतिंतथा २४ सुह्मानामधिपंचैवयेचसागरवासिनः ॥ सर्वान्म्लेच्छगणांश्चैववि
जिग्येभरतर्षभः २५ एवंबहुविधान्देशान्विजित्यपवनात्मजः ॥ वसुतेभ्यउपादायलौहित्यमगमद्बली २६ ससर्वान्म्लेच्छनृपतीन्सागरानूपवासिनः ॥
करमाहारयामासरत्नानिविविधानिच २७ चंदनागुरुवस्त्राणिमणिमौक्तिककंबलम् ॥ कांचनंरजतंचैवविद्रुमंचमहाधनम् २८ तेकोटिशतसंख्येनकौं
तेयंमहतातदा ॥ अभ्यवर्षन्महात्मानंधनवर्षेणपांडवम् २९

१८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९

३० ॥ ॥ इतिश्रीमन्महाभारतेसभापर्वणिनैलकंठीयेभारतभावदीपेत्रिंशोऽध्यायः ॥ ३० ॥ ॥ तथैवेति ॥ १ ॥ २ ॥ ३ ॥ पटच्चरान् चोरदेशान् ४ । ५ । ६ । ७ । ८ । ९ । १०

इंद्रप्रस्थमुपागम्यभीमोभीमपराक्रमः॥ निवेदयामासतदाधर्मराजायतद्धनम् ३०॥इतिश्रीमहाभारतेसभापर्वणिभीमप्राचीदिग्विजयेत्रिंशोऽध्यायः॥३०॥
॥ वैशंपायनउवाच ॥ तथैवसहदेवोऽपिधर्मराजेनपूजितः ॥ महत्यासेनयाराजन्प्रययौदाक्षिणांदिशम् १ सशूरसेनान्कात्स्न्र्येनपूर्वमेवाजयत्प्रभुः ॥ मत्स्यराजंचकौरव्योवशेचक्रेबलाद्बली २ अधिराजाधिपंचैवदंतवक्रंमहाबलम् ॥ जिगायकरदंचैवकृत्वाराज्येन्यवेशयत् ३ सुकुमारंवशेचक्रेसुमित्रंचनराधिपम् ॥ तथैवापरमत्स्यांश्चव्यजयत्सपटच्चरान् ४ निषादभूमिंगोशृंगंपर्वतप्रवरंतथा ॥ तरसैवाजयद्धीमान्श्रेणिमंतंचपार्थिवम् ५ नरराष्ट्रंचनिर्जित्य कुंतीभोजमुपाद्रवत् ॥ प्रीतिपूर्वंचतस्यासौप्रतिजग्राहशासनम् ६ ततश्चर्मण्वतीकूलेजंभकस्यात्मजंनृपम् ॥ ददर्शवासुदेवेनशेषितंपूर्ववैरिणा ७ चक्रेतेनससंग्रामंसहदेवेनभारत ॥ सतमाजौविनिर्जित्यदक्षिणाभिमुखोययौ ८ सेकानपरसेकांश्चव्यजयत्सुमहाबलः ॥ करंतेभ्यउपादायरत्नानिविविधानिच ९ ततस्तैनैवसहितोनर्मदामभितोययौ ॥ विंदानुविंदावावंत्यौसैन्येनमहतावृतौ ॥ जिगायसमरेवीरावाश्विनेयःप्रतापवान् १० ततोरत्नान्युपादायपुरंभोजकटंययौ ॥ तत्रयुद्धमभूद्राजन्दिवसद्वयमच्युत ११ सविजित्यदुराधर्षंभीष्मकंमाद्रिनंदनः ॥ कोशलाधिपतिंचैवतथावेणातटाधिपम् १२ कांतारकांश्चसमरेतथाप्राक्कोशलान्नृपान् ॥ नाटकेयांश्चसमरेतथाहेरंबकान्युधि १३ मारुधंचविनिर्जित्यरम्यग्राममथोबलात् ॥ नाचीनानर्बुकांश्चैवराज्ञश्चैवमहाबलः १४ तांस्तानाटविकान्सर्वानजयत्पांडुनंदनः ॥ वाताधिपंचनृपतिंवशेचक्रेमहाबलः १५ पुलिंदांश्चरणेजित्वाययौदक्षिणतःपुरः ॥ युयुधेपांड्यराजेनदिवसंनकुलानुजः १६ तंजित्वासमहाबाहुःप्रययौदक्षिणापथम् ॥ गुहामासादयामासकिष्किंधांलोकविश्रुताम् १७ तत्रवानरराजाभ्यांमैंदेनद्विविदेनच ॥ युयुधेदिवसान्सप्तनचतौविकृतिंगतौ १८ ततस्तुष्टौमहात्मानौसहदेवायवानरौ ॥ ऊचतुश्चैवसंहृष्टौप्रीतिपूर्वमिदंवचः १९गच्छपांडवशार्दूलरत्नान्यादायसर्वशः ॥ अविघ्नमस्तुकार्यायधर्मराजायधीमते २० ततोरत्नान्युपादायपुरींमाहिष्मतींययौ ॥ तत्रनीलेनराज्ञासचक्रेयुद्धंनरर्षभः २१ पांडवःपरवीरघ्नःसहदेवःप्रतापवान् ॥ ततोऽस्यसुमहद्युद्धमासीद्भीरुभयंकरम् २२ सैन्यक्षयकरंचैवप्राणानांसंशयावहम् ॥ चक्रेतस्यहिसाहाय्यंभगवान्हव्यवाहनः २३ ततोरथाहयानागाःपुरुषाःकवचानिच ॥ प्रदीप्तानिव्यदृश्यंतसहदेवबलेतदा २४ ततःसुसंभ्रांतमनाबभूवकुरुनंदनः ॥ नोत्तरंप्रतिवक्तुंचशक्तोऽभूज्जनमेजय २५ ॥ जनमेजयउवाच ॥ किमर्थंभगवान्वन्हिःप्रत्यमित्रोऽभवद्युधि ॥ सहदेवस्ययज्ञार्थंघटमानस्यवैद्विज २६

११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ प्रत्यमित्रःशत्रुः २६

पारदादिकः स्वेनानूढाया अपि परकीयत्वात् परदारासक्तः गृहीतः विवशः २७ । २८ । २९ चकमे मानुषस्वरूपेण शब्दतः कामयामास एवंसर्वेषामपि ग्रहे इत्युक्तं सर्वेषामिति तथाचसः उपनीतः स्वीकृतः नीलस्य राज्ञो अविदितइतिशेषः ३० । ३१ । ३२ । ३३ । ३४ शोभनः सुतरांवा इष्टकृत् प्रियकृत् अतिशयेनास्विष्टकृत्तमः छंदयामास प्रीणितवान् ३५ । ३९ छंदतः इच्छातः अनतिग्राह्याः अत्यंतं सुग्रहाः नबभूवुः सर्वासां अग्निना परिगृहीतत्वात् ३७ अप्रतिवारणे प्रातिकूल्येन स्त्रीणां वारणं कर्तुं नशक्तः कश्चिद्द्रविष्यतीतिवरः तदेवाह स्वैरिण्य इति भर्तुरन्य

॥ वैशंपायनउवाच ॥ तत्रमाहिष्मतीवासी भगवान्हव्यवाहनः ॥ श्रूयते हि गृहीतो वै पुरस्तात्पारदारिकः २७ नीलस्य राज्ञो दुहिता बभूवातीव शोभना ॥ साऽग्निहोत्रमुपातिष्ठद्बोधनाय पितुः सदा २८ व्यजनैर्धूयमानोऽपि तावत्प्रज्वलते न सः ॥ यावच्चारुपुटौष्ठेन वायुना न विधूयते २९ ततः स भगवानग्निश्चकमे तां सुदर्शनाम् ॥ नीलस्य राज्ञः सर्वेषामुपनीतश्च सोऽभवत् ३० ततो ब्राह्मणरूपेण रममाणो यदृच्छया ॥ चकमे तां वरारोहां कन्यामुत्पललोचनाम् ॥ तं तु राजा यथाशास्त्रमशासद्धार्मिकस्तदा ३१ प्रजज्वाल ततः कोपाद्भगवान्हव्यवाहनः ॥ तं दृष्ट्वा विस्मितो राजा जगाम शिरसाऽवनिम् ३२ ततः कालेन तां कन्यां तथैव हि तदा नृपः ॥ प्रददौ विप्ररूपाय वन्हये शिरसानतः ३३ प्रतिगृह्य च तां सुभ्रूं नीलराज्ञः सुतां तदा ॥ चक्रे प्रसादं भगवांस्तस्य राज्ञो विभावसुः ३४ वरेणच्छंदयामास तं नृपं स्विष्टकृत्तमः ॥ अभयं च स जग्राह स्वसैन्ये वै महीपतिः ३५ ततः प्रभृति ये केचिदज्ञानात्तां पुरीं नृपाः ॥ जिगीषंति बलाद्राजंस्ते दह्यंते स्म वन्हिना ३६ तस्यां पुर्यां तदा चैव माहिष्मत्यां कुरूद्वह ॥ बभूवुरनतिग्राह्या योषितश्छंदतः किल ३७ एवमग्निर्वरं प्रादात्स्त्रीणामप्रतिवारणे ॥ स्वैरिण्यस्तत्र नार्यो हि यथेष्टं विचरंत्युत ३८ वर्जयंति च राजानस्तत्पुरं भरतर्षभ ॥ भयादग्नेर्महाराज तदा प्रभृति सर्वदा ३९ सहदेवस्तु धर्मात्मा सैन्यं दृष्ट्वा भयार्दितम् ॥ परीतमग्निना राजन्नाकंपत यथाऽचलः ॥ उपस्पृश्य शुचिर्भूत्वा सोऽब्रवीत्पावकं ततः ४० ॥ ॥ सहदेवउवाच ॥ ॥ त्वदर्थोऽयं समारंभः कृष्णवर्त्मन्नमोऽस्तु ते ॥ मुखं त्वमसि देवानां यज्ञस्त्वमसि पावक ४१ पावनात्पावकश्चासि वहनाद्धव्यवाहनः ॥ वेदास्त्वदर्थं जाता वै जातवेदास्ततो ह्यसि ४२ चित्रभानुः सुरेशश्च अनलस्त्वं विभावसो ॥ स्वर्गद्वारस्पृशश्चासि हुताशो ज्वलनः शिखी ४३ वैश्वानरस्त्वं पिंगेशः प्लवंगो भूरितेजसः ॥ कुमारसूस्त्वं भगवान्रुद्रगर्भो हिरण्यकृत् ४४ अग्निर्ददातु मे तेजो वायुः प्राणं ददातु मे ॥ पृथिवी बलमादध्याच्छिवं चापो दिशंतु मे ४५ अपांगर्भ महासत्व जातवेदः सुरेश्वर ॥ देवानां मुखमग्ने त्वं सत्येन विपुनीहि माम् ४६ ऋषिभिर्ब्राह्मणैश्चैव दैवतैरसुरैरपि ॥ नित्यं सुहुत यज्ञेषु सत्येन विपुनीहि माम् ४७ धूमकेतुः शिखी च त्वं पापहाऽनिलसंभवः ॥ सर्वप्राणिषु नित्यस्थः सत्येन विपुनीहि माम् ४८ एवं स्तुतोऽसि भगवन्प्रीतेन शुचिना मया ॥ तुष्टिं पुष्टिं श्रुतं चैव प्रीतिं चाग्ने प्रयच्छ मे ४९ ॥ वैशंपायनउवाच ॥ इत्येवं मंत्रमाग्नेयं पठन्यो जुहुयाद्विभुम् ॥ ऋद्धिमान्सततं दांतः सर्वपापैः प्रमुच्यते ५०

स्यवाशरीरे प्रविश्याग्निरेवास्मांकं भोगं करोतीति निश्चयादित्यर्थः ३८ । ३९ ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ तुष्टिं अलंबुद्धिम् प्रीतिं सुखम् ४९ आग्नेयं मंत्रं श्लोकरूपं मंत्राष्टकं जुहुयात्पायसादिना स्वाहांतैर्मंत्रैर्होमं कुर्यात् ५०

॥३०॥ ॥३१॥ ॥३०॥

५१ । ५२ अत्यगात्एनंआतिक्रम्यसैन्यंनददाहेत्यर्थः ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७०

॥ सहदेवउवाच ॥ ॥ यज्ञविघ्नमिमंकर्तुंनार्हस्त्वंहव्यवाहन ॥ एवमुक्त्वातुमाद्रेयःकुशैरास्तीर्यमेदिनीम् ५१ विधिवत्पुरुषव्याघ्रःपावकप्रत्युपाविशत् ॥ प्रमुखेतस्यसैन्यस्यभीतोद्विग्नस्यभारत ५२ नचैनमत्यगाद्वह्निर्वेलामिवमहोदधिः ॥ तमुपेत्यशनैर्वह्निरुवाचकुरुनंदनम् ५३ सहदेवंनृणांदेवंसांत्वपूर्वमिदंवचः ॥ उत्तिष्ठोत्तिष्ठकौरव्यजिज्ञासेयंकृतामया ॥ वेद्मिसर्वमभिप्रायंतवधर्मसुतस्यच ५४ मयातुरक्षितव्येयंपुरीभरतसत्तम ॥ यावद्राज्ञोहिनीलस्यकुलेवंशधराइति ५५ ईप्सितंतुकरिष्यामिमनसस्तवपांडव ५६ ततउत्थायहृष्टात्माप्रांजलिःशिरसानतः ॥ पूजयामासमाद्रेयःपावकंभरतर्षभ ५७ पावकेविनिवृत्तेतुनीलोराजाऽभ्यगात्तदा ॥ पावकस्याज्ञयाचैनमर्चयामासपार्थिवः ५८ सत्कारेणनरव्याघ्रंसहदेवंयुधांपतिम् ॥ प्रतिगृह्यचतांपूजांकरेचविनिवेश्यच ५९ माद्रीसुतस्ततःप्रायाद्विजयीदाक्षिणांदिशम् ॥ त्रैपुरंसवशेकृत्वाराजानममितौजसम् ६० निजग्राहमहाबाहुस्तरसापौरवेश्वरम् ॥ आकृतिंकौशिकाचार्यंयत्नेनमहताततः ६१ वशेचक्रेमहाबाहुःसुराष्ट्राधिपतिंतदा ॥ सुराष्ट्रविषयस्थश्चप्रेषयामासरुक्मिणे ६२ राज्ञेभोजकटस्थायमहामात्रायधीमते ॥ भीष्मकायसधर्मात्मासाक्षादिंद्रसखायवै ६३ सचास्यप्रतिजग्राहससुतःशासनंतदा ॥ प्रीतिपूर्वंमहाराजवासुदेवमवेक्ष्यच ६४ ततःसरत्नान्यादायपुनःप्रायात्युधांपतिः ॥ ततःशूर्पारकंचैवतालाकटमथापिच ६५ वशेचक्रेमहातेजादंडकांश्चमहाबलः ॥ सागरद्वीपवासांश्चनृपतीन्म्लेच्छयोनिजान् ६६ निषादान्पुरुषादांश्चकर्णप्रावरणानपि ॥ येचकालमुखानामनरराक्षसयोनयः ६७ कृत्स्नंकोल्लगिरिंचैवसुरभीपट्टनंतथा ॥ द्वीपंताम्राव्हयंचैवपर्वतंरामकंतथा ६८ तिमिंगिलंचसनृपंवशेकृत्वामहामतिः ॥ एकपादांश्चपुरुषान्केरलान्वनवासिनः ६९ नगरींसंजयंतींचपाषंडंकरहाटकम् ॥ दूतैरेववशेचक्रेकरंचैनानदापयत् ७० पांड्यांश्चद्रविडांश्चैवसहितांश्चोड्रकेरलैः ॥ अंध्रांस्तालवनांश्चैवकलिंगानुष्ट्रकर्णिकान् ७१ आटवींचपुरींरम्यांयवनानांपुरंतथा ॥ दूतैरेववशेचक्रेकरंचैनानदापयत् ७२ ततःकच्छगतोधीमान्दूतान्माद्रवतीसुतः ॥ प्रेषयामासराजेंद्रपौलस्त्यायमहात्मने ॥ बिभीषणायधर्मात्माप्रीतिपूर्वमरिंदमः ७३ सचास्यप्रतिजग्राहशासनंप्रीतिपूर्वकम् ॥ तच्चकालकृतंधीमानभ्यमन्यतसप्रभुः ७४ ततःसंप्रेषयामासरत्नानिविविधानिच ॥ चंदनागुरुकाष्ठानिदिव्यान्याभरणानिच ७५ वासांसिचमहार्हाणिमणींश्चैवमहाधनान् ॥ न्यवर्तततततोधीमान्सहदेवःप्रतापवान् ७६ एवंनिर्जित्यतरसासांत्वेनविजयेनच ॥ करदान्पार्थिवान्कृत्वाप्रत्यागच्छदरिंदमः ७७ धर्मराजायतत्सर्वंनिवेद्यभरतर्षभ ॥ कृतकर्मासुखंराजन्नुवासजनमेजय ७८ ॥ ॥ इतिश्रीमन्महाभारतेसभापर्वणिसहदेवदक्षिणदिग्विजयेएकत्रिंशोऽध्यायः ३१ ॥ ॥ ७ ॥ ॥ ७ ॥

७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ ॥ ॥ इतिसभापर्वणिटीकायांएकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

नकुलस्येति १ । २ । ३ रोहीतकंगिरिम् ४ मत्तमयूरसंज्ञैःक्षत्रियैः ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ पुटभेदनंपत्तनम् १४ । १५ । १६ । १७ करभाणांउष्ट्राणाम् १८ । १९ । २० ॥ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेद्वात्रिंशोऽध्यायः ३२ ॥ ॥ रक्षणात् शत्रूणांदस्यूनाम् १ बलीनांकराणां निकामंयथेष्टंवर्षतीतिनिकामवर्षी

॥ वैशंपायनउवाच ॥ ॥ नकुलस्यतुवक्ष्यामिकर्माणिविजयंतथा ॥ वासुदेवजितामाशांयथाऽसावजयत्प्रभुः १ निर्यायखांडवप्रस्थात्प्रतीचीमभितो दिशम् ॥ उद्दिश्यमतिमान्प्रायान्महत्यासेनयासह २ सिंहनादेनमहतायोधानांगर्जितेनच ॥ रथनेमिनिनादैश्चकंपयन्वसुधामिमाम् ३ ततोबहुध नंरम्यंगवाढ्यंधनधान्यवत् ॥ कार्तिकेयस्यदयितंरोहीतकमुपाद्रवत् ४ तत्रयुद्धंमहच्चासीच्छूरैर्मत्तमयूरकैः ॥ मरुभूमिंसकात्स्न्येंनतथैवबहुधान्यकम् ५ शैरीषकंमहेत्थंचवशेचक्रेमहाद्युतिः ॥ आक्रोशंचैवराजर्षितेनयुद्धमभून्महत् ६ तान्दशार्णान्सजित्वाचप्रतस्थेपांडुनंदनः ॥ शिबींस्त्रिगर्तानंबष्ठा न्मालवान्पंचकर्पटान् ७ तथामध्यमकेयांश्चवाटधानान्द्विजानथ ॥ पुनश्चपरिवृत्याथपुष्करारण्यवासिनः ८ गणानुत्सवसंकेतान्व्यजयत्पुरुषर्षभः ॥ सिंधुकूलाश्रितायेचग्रामणीयामहाबलाः ९ शूद्राभीरगणाश्चैवयेचाश्रित्यसरस्वतीम् ॥ वर्तयंतिचयेमत्स्यैर्येचपर्वतवासिनः १० कृत्स्नंपंचनदंचैवत थैवामरपर्वतम् ॥ उत्तरज्योतिषंचैवतथादिव्यकटंपुरम् ११ द्वारपालंचतरसावशेचक्रेमहाद्युतिः ॥ रामठान्हारहूणांश्चप्रतीच्याश्चैवयेनृपाः १२ ता न्सर्वान्सवशेचक्रेशासनादेवपांडवः ॥ तत्रस्थःप्रेषयामासवासुदेवायभारत १३ सचास्यगतभीराजन्प्रतिजग्राहशासनम् ॥ ततःशाकलमभ्येत्यमद्राणां पुटभेदनम् १४ मातुलंप्रीतिपूर्वेणशल्यंचक्रेवशेबली ॥ सतेनसत्कृतोराज्ञासत्कारार्होविशांपते १५ रत्नानिभूरीण्यादायसंप्रतस्थेयुधांपतिः ॥ ततः सागरकुक्षिस्थान्म्लेच्छान्परमदारुणान् १६ पल्हवान्बर्बरांश्चैवकिरातान्यवनाञ्शकान् ॥ ततोरत्नान्युपादायवशेकृत्वाचपार्थिवान् ॥ न्यवर्ततकुरु श्रेष्ठोनकुलश्चित्रमार्गवित् १७ करभाणांसहस्राणिकोशंतस्यमहात्मनः ॥ ऊहुर्दशमहाराजकृच्छ्रादिवमहाधनम् १८ इंद्रप्रस्थगतंवीरमभ्येत्यसयुधिष्ठि रम् ॥ ततोमाद्रीसुतःश्रीमान्धनंतस्मैन्यवेदयत् १९ एवंविजित्यनकुलोदिशंवरुणपालिताम् ॥ प्रतीचींवासुदेवेनानिर्जितांभरतर्षभ २० ॥ ॥ इ तिश्रीमन्महाभारतेसभापर्वणिदिग्विजयपर्वणिनकुलप्रतीचीजयेद्वात्रिंशोऽध्यायः ३२ ॥ ॥ समाप्तंचदिग्विजयपर्व ॥ ॥ अथराजसूयपर्व ॥

॥ वैशंपायनउवाच ॥ ॥ रक्षणाद्धर्मराजस्यसत्यस्यपरिपालनात् ॥ शत्रूणांक्षपणाच्चैवस्वकर्मनिरताःप्रजाः १ बलीनांसम्यगादानाद्धर्मतश्चानुशा सनात् ॥ निकामवर्षीपर्जन्यःस्फीतोजनपदोऽभवत् २ सर्वारंभाःसुप्रवृत्तागोरक्षाकर्षणंवणिक् ॥ विशेषात्सर्वमेवैतत्संजज्ञेराजकर्मणः ३ दस्युभ्योवंच केभ्योवाराजन्प्रतिपरस्परम् ॥ राजवल्लभतश्चैवनाश्रूयंतमृषागिरः ४ अवर्षंचातिवर्षंचव्याधिपावकमूर्छनम् ॥ सर्वमेतत्तदानासीद्धर्मनित्येयुधिष्ठिरे ५

स्फीतःसमृद्धः २ सुप्रवृत्ताः स्वस्यपरेषांचहितावहाः नतुक्रूराः राजकर्मणः राज्ञः पुण्यात् ३ दस्युभ्यःचोरेभ्यः वंचकेभ्यःधूर्तेभ्यः राज्ञोराजवल्लभतोवा मृषागिरोवा नाश्रूयंतसर्वेऽपि सत्यवादिनः राजवदित्यर्थः दस्यवोऽपिपरस्परंनवंचयंति नाप्यन्यानेवंअन्यत्रएतेज्ञातितःखलाअपिनतरकर्मकुर्वंतीत्यर्थः ४ मूर्छनंप्रदीपनम् ५

जग्मुः राजानंप्रतीतिशेषः नान्यैः जिगीषादिभिः ६ निचयोभांडागारम् ७ कोशोधनम् कोष्ठंवस्त्रधान्यादि तयोःपरीमाणम् ८ । ९ ऋषिर्नारायणः अदृश्यइतिच्छेदः विजानतांविदुषां
अदृश्यःप्रत्यगात्मत्वात् अविजानतांतुकार्यकारणरूपेणदृश्यः । तथाचश्रुतिः 'अविज्ञातंविजानतांविज्ञातमविजानतां'इति १० प्रभवउत्पत्तिस्थानंअप्ययोलयस्थानम् ११ प्राकारः

प्रियंकर्तुमुपस्थातुंबलिकर्मस्वभावजम् ॥ अभिहर्तुंनृपाजग्मुर्नान्यैःकार्यैःकथंचन ६ धर्म्यैर्धनागमैस्तस्यववृधेनिचयोमहान् ॥ कर्तुंयस्यनशक्येतक्षयो
वर्षशतैरपि ७ स्वकोष्ठस्यपरीमाणंकोशस्यचमहीपतिः ॥ विज्ञायराजाकौंतेयोयज्ञायैवमनोदधे ८ सुहृदश्चैवयेसर्वेपृथक्सहिताऽब्रुवन् ॥ यज्ञकालस्तव
विभोक्रियतामत्रसांप्रतम् ९ अथैवंब्रुवतामेवंतेषामभ्याययौहरिः ॥ ऋषिःपुराणोवेदात्माऽदृश्यश्चैवविजानताम् १० जगतस्तस्थुषांश्रेष्ठःप्रभवश्चाप्य
यश्चह ॥ भूतभव्यभवन्नाथःकेशवःकेशिसूदनः ११ प्राकारःसर्ववृष्णीनामापत्स्वभयदोऽरिहा ॥ बलाधिकारेनिक्षिप्यसम्यगानकदुंदुभिम् १२ उच्चावच
मुपादायधर्मराजायमाधवः ॥ धनौघंपुरुषव्याघ्रोबलेनमहताऽऽवृतः १३ तंधनौघमपर्यंतंरत्नसागरमक्षयम् ॥ नादयन्रथघोषेणप्रविवेशपुरोत्तमम् १४
पूर्णमापूरयंस्तेषांद्विषच्छोकावहोऽभवत् ॥ असूर्यमिवसूर्येणनिवातमिववायुना ॥ कृष्णेनसमुपेतेनजहृषेभारतंपुरम् १५ तंमुदाऽभिसमागम्यसत्कृत्य
चयथाविधि ॥ सपृष्ट्वाकुशलंचैवसुखासीनंयुधिष्ठिरः १६ धौम्यद्वैपायनमुखैर्ऋत्विग्भिःपुरुषर्षभ ॥ भीमार्जुनयमैश्चैवसहितःकृष्णमब्रवीत् १७ ॥ यु
धिष्ठिरउवाच ॥ ॥ त्वत्कृतेपृथिवीसर्वामद्वशेकृष्णवर्तते ॥ धनंचबहुवार्ष्णेयत्वत्प्रसादादुपार्जितम् १८ सोऽहमिच्छामितत्सर्वंविधिवद्देवकीसुत ॥ उप
योक्तुंद्विजाग्र्येभ्योहव्यवाहेचमाधव १९ तदहंयष्टुमिच्छामिदाशार्हसहितस्त्वया ॥ अनुजैश्चमहाबाहोतन्माऽऽज्ञातुमिहार्हसि २० तद्दीक्षापयगोविंदत्वमात्मा
नंमहाभुज ॥ त्वयीष्टवतिदाशार्हविपाप्माभविताह्यहम् २१ मांवाऽप्यभ्यनुजानीहिसहैभिरनुजैर्विभो ॥ अनुज्ञातस्त्वयाकृष्णप्राप्नुयांक्रतुमुत्तमम् २२
॥वैशंपायनउवाच॥ तंकृष्णःप्रत्युवाचेदंबहूक्त्वागुणविस्तरम् ॥ त्वमेवराजशार्दूलसम्राडर्होमहाक्रतुम् ॥ संप्राप्नुहित्वयाप्राप्तेकृतकृत्यास्ततोवयम् २ यजस्वा
भीप्सितंयज्ञंमयिश्रेयस्यवस्थिते ॥ नियुंक्ष्वत्वंचमांकृत्येसर्वंकर्ताऽस्मितेवचः २४ ॥ युधिष्ठिरउवाच ॥ सफलःकृष्णसंकल्पःसिद्धिश्चनियतामम ॥ यस्यमे
त्वंहृषीकेशयथेप्सितमुपस्थितः २५॥ वैशंपायनउवाच ॥ अनुज्ञातस्तुकृष्णेनपांडवोभ्रातृभिःसह ॥ ईजितुंराजसूयेनसाधनान्युपचक्रमे २६ ततस्त्वाज्ञाप
यामासपांडवोरिनिबर्हणः ॥ सहदेवंयुधांश्रेष्ठंमंत्रिणश्चैवसर्वशः २७ अस्मिन्क्रतौयथोक्तानियज्ञांगानिद्विजातिभिः ॥ तथोपकरणंसर्वंमंगलानिचसर्वशः २८

प्राकारइवरक्षकः बलाधिकारेसेनाधिपत्यम् १२ । १३ । १४ जहृषेहर्षंप्राप १५ । १६ । १७ । १८ । १९ मामांअनुज्ञातुम् । तदनुज्ञातुमर्हसीत्यपिपाठः २० त्वंदीक्षस्वेतिवक्तव्ये
आत्मानंदीक्षापयेत्युक्तिः अकर्तुरात्मनोदीक्षणायोगादौपाधिकमेव प्रतिबिंबचलतन्यायेनैवतस्यदीक्षापनंज्ञेयम् २१ । २२ । २३ श्रेयसिकल्याणकरे २४ । २५ । २६ । २७ । २८

अधियज्ञान्यज्ञियान्संभारान्आज्यपश्वादीन् २९ । ३० काम्यंतइतिकामाःमृष्टान्नादीनि ३१ । ३२ । ३३ । धनंजयानांधनंजयगोत्राणांमध्येश्रेष्ठःसुसामानामआंगिरसः ३४ । ३५ होत्रगाःसप्तसंख्याः ३६ ऊहयित्वाचतंविधिंराजसूयेनयक्ष्येस्वाराज्यमवाप्नवानीतिसंकल्पादिरूपमूहंकृत्वादेवयजनंयज्ञस्थानम् ३७ शरणानिपत्नीशालादीन्यग्न्यगाराणि ३८ । ३९

अधियज्ञांश्चसंभारान्धौम्योक्तान्क्षिप्रमेवहि ॥ समानयंतुपुरुषायथायोगंयथाक्रमम् २९ इंद्रसेनोविशोकश्चपूरुश्चार्जुनसारथिः ॥ अन्नाद्याहरणेयुक्ताःसंतुमत्प्रियकाम्यया ३० सर्वकामाश्चकार्यंतांरसगंधसमन्विताः ॥ मनोरथप्रीतिकराद्विजानांकुरुसत्तम ३१ तद्वाक्यसमकालंचकृतंसर्वंन्यवेदयत् ॥ सहदेवोयुधांश्रेष्ठोधर्मराजेयुधिष्ठिरे ३२ ततोद्वैपायनोराजन्नृत्विजःसमुपानयत् ॥ वेदानिवमहाभागान्साक्षान्मूर्तिमतोद्विजान् ३३ स्वयंब्रह्मत्वमकरोत्तस्यसत्यवतीसुतः ॥ धनंजयानामृषभःसुसामासामगोऽभवत् ३४ याज्ञवल्क्योबभूवाथब्रह्मिष्ठोऽध्वर्युसत्तमः ॥ पैलोहोतावसोःपुत्रोधौम्येनसहितोऽभवत् ३५ एतेषांपुत्रवर्गाश्चशिष्याश्चभरतर्षभ ॥ बभूवुर्होत्रगाःसर्वेवेदवेदांगपारगाः ३६ तेवाचयित्वापुण्याहमूहयित्वाचतंविधिम् ॥ शास्त्रोक्तंपूजयामासुस्तद्देवयजनंमहत् ३७ तत्रचक्रुरनुज्ञाताःशरणान्युतशिल्पिनः ॥ गंधवंतिविशालानिवेश्मानीवदिवौकसाम् ३८ ततआज्ञापयामाससराजाराजसत्तमः ॥ सहदेवंतदासद्योमंत्रिणंपुरुषर्षभः ३९ आमंत्रणार्थंदूतांस्त्वंप्रेषयस्वाशुगान्द्रुतम् ॥ उपश्रुत्यवचोराज्ञःसदूतान्प्राहिणोत्तदा ४० आमंत्रयध्वंराष्ट्रेषुब्राह्मणान्भूमिपानथ ॥ विशश्चमान्यान्शूद्रांश्चसर्वानानयतेतिच ४१ ॥ वैशंपायनउवाच ॥ ॥ समाज्ञप्तास्ततोदूताःपांडवेयस्यशासनात् ॥ आमंत्रयांबभूवुश्चआनयंश्चापरान्द्रुतम् ॥ तथापरानपिनरानात्मनःशीघ्रगामिनः ४२ ततस्तेतुयथाकालंकुंतीपुत्रंयुधिष्ठिरम् ॥ दीक्षयांचक्रिरेविप्राराजसूयायभारत ४३ दीक्षितःसतुधर्मात्माधर्मराजोयुधिष्ठिरः ॥ जगामयज्ञायतनंवृतोविप्रैःसहस्रशः ४४ भ्रातृभिर्ज्ञातिभिश्चैवसुहृद्भिःसचिवैःसह ॥ क्षत्रियैश्चमनुष्येंद्रैर्नानादेशसमागतैः ४५ अमात्यैश्चनरश्रेष्ठोधर्मोविग्रहवानिव ॥ आजग्मुर्ब्राह्मणास्तत्रविषयेभ्यस्ततस्ततः ४६ सर्वविद्यासुनिष्णातावेदवेदांगपारगाः ॥ तेषामावसथांश्चक्रुर्धर्मराजस्यशासनात् ४७ बह्वन्नाच्छादनैर्युक्तान्सगणानांपृथक्पृथक् ॥ सर्वर्तुगुणसंपन्नान्शिल्पिनोऽथसहस्रशः ४८ तेषुतेन्यवसन्राजन्ब्राह्मणाभृशसत्कृताः ॥ कथयंतःकथाबह्वीःपश्यंतोनटनर्तकान् ४९ भुंजतांचैवविप्राणांवदतांचमहास्वनः ॥ अनिशंश्रूयतेतत्रमुदितानांमहात्मनाम् ५० दीयतांदीयतामेषांभुज्यतांभुज्यतामिति ॥ एवंप्रकाराःसंजल्पाःश्रूयंतेस्मात्रनित्यशः ५१ गवांशतसहस्राणिशयनानांचभारत ॥ रुक्मस्ययोषितांचैवधर्मराजःपृथक्ददौ ५२ प्रावर्ततैवंयज्ञःसपांडवस्यमहात्मनः ॥ पृथिव्यामेकवीरस्यशक्रस्येवत्रिविष्टपे ५३ ततोयुधिष्ठिरोराजाप्रेषयामासपांडवम् ॥ नकुलंहास्तिनपुरंभीष्मायपुरुषर्षभः ५४

४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ ४९ । ५० । ५१ रुक्मस्यकांचनस्यशयनानांतूलिकादिसहितानांतल्पादीनाम् ५२ । ५३ । ५४

५५ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ सगत्वेति । १ । २ । ३ । ४ । ५ । ६ । । ७ । ८ ॥ यज्ञसेनोद्रुपदः ॥ ९ । १० । ११ । १२ ।

द्रोणायधृतराष्ट्रायविदुरायकृपायच ॥ भ्रातृणांचैवसर्वेषांयेऽनुरक्तायुधिष्ठिरे ॥ ५५ ॥ ॥ इतिश्रीमन्महाभारतेसभापर्वणिराजसूयपर्वणिराजनिमंत्रणं नामत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ वैशंपायनउवाच ॥ ॥ सगत्वाहास्तिनपुरंनकुलःसमितिंजयः ॥ भीष्ममामंत्रयांचक्रेधृतराष्ट्रंचपांडवः ॥ १ ॥ सत्कृत्यामंत्रितास्तेनआचार्यप्रमुखास्ततः ॥ प्रययुःप्रीतमनसोयज्ञंब्रह्मपुरःसराः ॥ २ ॥ संश्रुत्यधर्मराजस्ययज्ञंयज्ञविदस्तदा ॥ अन्येचशतशस्तुष्टैर्मनोभिर्भरतर्षभ ॥ ३ ॥ द्रष्टुकामाःसभांचैवधर्मराजंचपांडवम् ॥ दिग्भ्यःसर्वेसमापेतुःक्षत्रियास्तत्रभारत ॥ ४ ॥ समुपादायरत्नानिविविधानिमहांतिच ॥ धृतराष्ट्रश्चभीष्मश्चविदुरश्चमहामतिः ॥ ५ ॥ दुर्योधनपुरोगाश्चभ्रातरःसर्वएवते ॥ गांधारराजःसुबलःशकुनिश्चमहाबलः ॥ ६ ॥ अचलोवृषकश्चैवकर्णश्चरथिनांवरः ॥ तथाशल्यश्चबलवान्बाल्हिकश्चमहाबलः ॥ ७ ॥ सोमदत्तोऽथकौरव्योभूरिर्भूरिश्रवाःशलः ॥ अश्वत्थामाकृपोद्रोणःसैंधवश्चजयद्रथः ॥ ८ ॥ यज्ञसेनःसपुत्रश्चशाल्वश्चवसुधाधिपः ॥ प्राग्ज्योतिषश्चनृपतिर्भगदत्तोमहारथः ॥ ९ ॥ सतुसर्वैःसहम्लेच्छैःसागरानूपवासिभिः ॥ पार्वतीयाश्चराजानोराजाचैवबृहद्बलः ॥ १० ॥ पौंड्रकोवासुदेवश्चवंगःकालिंगकस्तथा ॥ आकर्षःकुंतलश्चैवमालवाश्चांध्रकास्तथा ॥ ११ ॥ द्राविडाःसिंहलाश्चैवराजाकाश्मीरकस्तथा ॥ कुंतिभोजोमहातेजाःपार्थिवोगौरवाहनः ॥ १२ ॥ बाल्हिकाश्चापरेशूराराजानःसर्वएवते ॥ विराटःसहपुत्राभ्यांमावेल्लश्चमहाबलः ॥ १३ ॥ राजानोराजपुत्राश्चनानाजनपदेश्वराः ॥ शिशुपालोमहावीर्यःसहपुत्रेणभारत ॥ १४ ॥ आगच्छत्पांडवेयस्ययज्ञंसमरदुर्मदः ॥ रामश्चैवानिरुद्धश्चकंकश्चसहसारणः ॥ १५ ॥ गदप्रद्युम्नसांबाश्चचारुदेष्णश्चवीर्यवान् ॥ उल्मुकोनिशठश्चैववीरश्चांगावहस्तथा ॥ १६ ॥ वृष्णयोनिखिलाश्चान्येसमाजग्मुर्महारथाः ॥ एतेचान्येचबहवोराजानोमध्यदेशजाः ॥ १७ ॥ आजग्मुःपांडुपुत्रस्यराजसूयंमहाक्रतुम् ॥ ददुस्तेषामावसथान्धर्मराजस्यशासनात् १८ बहुभक्षान्वितान्राजन्दीर्घिकावृक्षशोभितान् ॥ तथाधर्मात्मजःपूजांचक्रेतेषांमहात्मनाम् १९ सत्कृताश्चयथोद्दिष्टान्जग्मुरावसथान्नृपाः ॥ कैलासशिखरप्रख्यान्मनोज्ञान्द्रव्यभूषितान् २० सर्वतःसंवृतानुच्चैःप्राकारैःसुकृतैःसितैः ॥ सुवर्णजालसंवीतान्मणिकुट्टिमभूषितान् २१ सुखारोहणसोपानान्महासनपरिच्छदान् ॥ स्रग्दामसमवच्छन्नानुत्तमागुरुगंधिनः २२ हंसेंदुवर्णसदृशानायोजनसुदर्शनान् ॥ असंबाधान्समद्वारान्युतानुच्चावचैर्गुणैः २३ बहुधातुनिबद्धांगान्हिमवच्छिखराणिच ॥ विश्रांतास्तेततोऽपश्यन्भूमिपाभूरिदक्षिणम् २४

१३ । १४ । १५ । १६ । १७ । १८ दीर्घिका गृहवापी १९ । २० मणिकुट्टिमंमणिबद्धाभूमिः २१ । २२ । २३ आवस्थान्अपश्यन्नितिअनुकृष्टेनसंबंधःचश्वार्थे २४

१५ । इतिसभापर्वणिनैलकंठीयेभारतभावदीपेचतुस्त्रिंशोऽध्यायः ३४ ॥ ॥ पितामहमिति ॥ १ । २ प्रणयंतुप्रकर्षेण श्रेयःप्रापयंतुअभिमंत्रिताः प्रार्थिताः संतः ३ । ४ । ५ । ६ हिरण्यस्यकांचनस्यसुवर्णस्यशोभनवर्णस्य ७ स्वामिवत्स्वीयवदित्यर्थः ८ अर्हणानिउपायनानि ९ सर्वलोकसमावृत्तःसर्वैःउपायनप्रदैर्लोकैः समावृत्तः वेष्टितः पिप्रीषुःप्रीणयितुमिच्छुः १० । ११ । १२ सविमानाग्रैःद्रष्टुमागतानांदेवानांविमानैःसहितानिसंलग्नानिअग्राणिउपरिभागायेषांतैः १३ लोकराजविमानैःइंद्रादिलोकपालविमानैःलोकराजःस्वर्गोवातत्रस्थविमा

वृतंसदस्यैर्बहुभिर्धर्मराजंयुधिष्ठिरम् ॥ तत्सदःपार्थिवैःकीर्णंब्राह्मणैश्चमहर्षिभिः ॥ भ्राजतेस्मतदाराजन्नाकपृष्ठंयथाऽमरैः ॥ २९ ॥ ॥ इतिश्रीमन्महाभारतेसभापर्वणिराजसूयपर्वणिनिमंत्रितराजागमनेचतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ ॥ वैशंपायनउवाच ॥ ॥ पितामहंगुरुंचैवप्रत्युद्गम्ययुधिष्ठिरः ॥ अभिवाद्यततोराजन्निदंवचनमब्रवीत् ॥ १ ॥ भीष्मंद्रोणंकृपंद्रौणिंदुर्योधनविविंशती ॥ अस्मिन्यज्ञेभवंतोमामानुगृह्णंतुसर्वशः ॥ २ ॥ इदंवःसुमहच्चैवयदिहास्तिधनंमम ॥ प्रणयंतुभवंतोमांयथेष्टमभिमंत्रिताः ॥ ३ ॥ एवमुक्त्वासतान्सर्वान्दीक्षितःपांडवाग्रजः ॥ युयोजसयोथायोगमधिकारेष्वनंतरम् ४ भक्ष्यभोज्याधिकारेषुदुःशासनमयोजयत् ॥ परिग्रहेब्राह्मणानामश्वत्थामानमुक्तवान् ॥५॥ राज्ञांतुप्रतिपूजार्थंसंजयंसंन्ययोजयत् ॥ कृताकृतपरिज्ञानेभीष्मद्रोणौमहामती ॥ ६ ॥ हिरण्यस्यसुवर्णस्यरत्नानांचान्ववेक्षणे ॥ दक्षिणानांचवैदानेकृपंराजान्ययोजयत् ॥ ७ ॥ तथाऽन्यान्पुरुषव्याघ्रांस्तस्मिंस्तस्मिन्न्ययोजयत् ॥ बाल्हिकोधृतराष्ट्रश्चसोमदत्तोजयद्रथः ॥ नकुलेनसमानीतास्स्वामिवत्तत्ररेमिरे ८ क्षत्ताव्ययकरस्त्वासीद्विदुरःसर्वधर्मवित् ॥ दुर्योधनस्त्वर्हणानिप्रतिजग्राहसर्वशः ॥ ९ ॥ चरणक्षालनेकृष्णोब्राह्मणानांस्वयंह्यभूत् ॥ सर्वलोकसमावृतःपिप्रीषुःफलमुत्तमम् ॥ १० ॥ द्रष्टुकामःसभांचैवधर्मराजंयुधिष्ठिरम् ॥ नकश्चिदाहरत्तत्रसहस्रावरमर्हणम् ॥ ११ ॥ रत्नैश्चबहुभिस्तत्रधर्मराजमवर्द्धयत् ॥ कथंतुममकौरव्योरत्नदानैःसमाप्नुयात् १२ यज्ञमित्येवराजानःस्पर्धमानाददुर्धनम् ॥ भवनैःसविमानाग्रैःसोदर्कैर्बलसंवृतैः १३ लोकराजविमानैश्चब्राह्मणावसथैःसह ॥ कृतैरावसथैर्दिव्यैर्विमानप्रतिमैस्तथा ॥ १४ ॥ विचित्रैरत्नवद्भिश्चऋद्ध्यापरमयायुतैः ॥ राजभिश्चसमावृत्तैरतीवश्रीसमृद्धिभिः ॥ अशोभतसदोराजन्कौंतेयस्यमहात्मनः ॥ १५ ॥ ऋद्ध्याचवरुणंदेवंस्पर्धमानोयुधिष्ठिरः ॥ षडग्निनाथयज्ञेनसोऽयजद्दक्षिणावता ॥ १६ ॥ सर्वाञ्जनान्सर्वकामैःसमृद्धैःसमतर्पयत् अन्नवान्बहुभक्ष्यश्चभुक्तवज्जनसंवृतः ॥ रत्नोपहारसंपन्नोबभूवसमागमः १७ इडाज्यहोमाहुतिभिर्मंत्रशिक्षाविशारदैः ॥ तस्मिन्हितवृपुर्देवास्ततेयज्ञेमहर्षिभिः १८ यथादेवास्तथाविप्रादक्षिणान्नमहाधनैः ॥ ततृपुःसर्ववर्णाश्चतस्मिन्यज्ञेमुदान्विताः १९ ॥ ॥ इतिश्रीमन्महाभारतेसभापर्वणिराजसूयपर्वणियज्ञकरणेपंचत्रिंशोऽध्यायः ॥ ३५ ॥ ॥ समाप्तंचराजसूयपर्व ॥ अथार्घाहरणपर्व ॥

नैःस्वर्गिणामप्याश्चर्यकरोऽयंयज्ञइत्यर्थः १४ कौंतेयस्ययज्ञइतिशेषः १५ ऋद्ध्यातुवरुणंदेवमित्यादेरध्यायशेषस्यतात्पर्यंसर्वांगसंपूर्णोऽयं यज्ञइत्यर्थःषडग्निनाषड्अग्नयः आरंभणीयः क्षत्रःधृतिःव्युष्टिः द्विरात्रःदशपेय इति १६ रत्नोपहारसंपन्नइत्यत्र रक्षोपहारकर्मण्यइतिपाठे रक्षसांनाशेसाधुनाकर्मणायुक्तः १७ इडाकर्मस्विष्टकृदूर्ध्वंशिष्टंहविःप्रतिपत्तिकर्ममंत्रशिक्षाविशारदैः मंत्रेषुशिक्षायाचहस्तक्रियायांचविशारदैर्ऋत्विग्भिः १८ । १९ ॥ ॥ इतिसभापर्वणि नैलकंठीये भारतभावदीपे पंचत्रिंशोऽध्यायः ॥ ३५ ॥ ॥ ७ ॥

ततोऽभिषेचनीयेऽन्हिब्राह्मणाराजभिःसहेत्यादिका शिशुपालवधांता दशाध्यायी नानाविधमतभेदोपन्यासपूर्वकंकृष्णशिशुपालरूपकेणब्रह्मणिजीवस्यमहाकाशमठाकाशन्यायेनलयं दर्शयतितत्रकथापक्षेप्रत्यक्षवृत्त्यैव लभ्योर्थःस्पष्टः अध्यात्मपक्षेतुपरोक्षवृत्तिलभ्यतयातत्त्वंदुर्व्याख्येयमितिप्रकाश्यते तदेवअभिषेचनीये राजसूयांगभूते सोमयागविशेषे १।२ कर्मांतरं मध्येमध्येकर्मविरामकालं उपासंतः उपगच्छंतः प्राप्नुवंतः । असगतावित्यस्यरूपम् । कर्मच्छिद्रंप्राप्यजल्पकथांचक्रुरित्यर्थः । अमितौजसः बहुप्रतिभावंतः ३ एवमेतदितिस्वपक्षस्थापनं नचाप्येवमितिपरपक्षदूषणं एवंप्रतिवादिपक्षेऽपि । बहवस्तुसामान्याः वितंडांस्वपक्षपरपक्षस्थापनाहीनांकथाम् ४ कृशानुयुक्तिदौर्बल्यात् अकृशानुयुक्तिप्राबल्यात् तत्रविपरीतं

॥ वैशंपायनउवाच ॥ ततोऽभिषेचनीयेऽन्हिब्राह्मणाराजभिःसह ॥ अंतर्वेदींप्रविविशुःसत्कारार्हामहर्षयः १ नारदप्रमुखास्तस्यामंतर्वेद्यांमहात्मनः ॥ समासीनाःशुशुभिरेसहराजर्षिभिस्तदा २ समेताब्रह्मभवनेदेवादेवर्षयस्तथा ॥ कर्मांतरमुपासंतोजजल्पुरमितौजसः ३ इदमेवंनचाप्येवमेवमेवंन चान्यथा ॥ प्रत्यूचुर्बहवस्तत्रवितंडावादिनोद्विजाः ४ कृशानर्थांस्ततःकेचिदकृशांस्तत्रकुर्वते ॥ अकृशांश्चकृशांश्चक्रुर्हेतुभिःशास्त्रनिश्चयैः ५ तत्रमेधाविनःकेचिदनुमानैःप्रपूरितम् ॥ विचिक्षिपुर्यथाश्येनानभोगतमिवामिषम् ६ केचिद्धर्मार्थकुशलाःकेचित्तत्रमहाव्रताः ॥ रेमिरेकथयंत श्चसर्वभाष्यविदांवराः ७ सावेदिर्वेदसंपन्नैर्देवद्विजमहर्षिभिः ॥ आबभासेसमाकीर्णानक्षत्रैर्द्यौरिवायता ८ नतस्यांसन्निधौशूद्रःकश्चिदासीन्नचा व्रती ॥ अंतर्वेद्यांतदाराजन्युधिष्ठिरनिवेशने ९ तांतुलक्ष्मीवतोलक्ष्मींतदायज्ञविधानताम् ॥ तुतोषनारदःपश्यन्धर्मराजस्यधीमतः १० अथचिंतांसमापेदेसमुनिर्मनुजाधिप ॥ नारदस्तुतदापश्यन्सर्वक्षत्रसमागमम् ११ सस्मारचपुरावृत्तांकथांतांपुरुषर्षभ ॥ अंशावतरणेयाऽसौ ब्रह्मणोभवनेऽभवत् १२ देवानांसंगमंतंतुविज्ञायकुरुनंदन ॥ नारदःपुंडरीकाक्षंसस्मारमनसाहरिम् १३ साक्षात्सविबुधारिघ्नःक्षत्रेनारायणोविभुः ॥ प्रतिज्ञांपालयंश्चेमांजातःपरपुरंजयः १४ संदिदेशपुरायोऽसौविबुधान्भूतकृत्स्वयम् ॥ अन्योन्यमभिनिघ्नंतःपुनर्लोकानवाप्स्यथ १५ इतिनारा यणःशंभुर्भगवान्भूतभावनः ॥ आदिश्यविबुधान्सर्वानजायतयदुक्षये १६ क्षितावंधकवृष्णीनांवंशेवंशभृतांवरः ॥ परयाशुशुभेलक्ष्म्यानक्षत्राणा मिवोडुराट् १७ यस्यबाहुबलंसेंद्राःसुराःसर्वउपासते ॥ सोऽयंमानुषवन्नामहरिरास्तेऽरिमर्दनः १८ अहोबतमहद्भूतंस्वयंभूर्यमिदंस्वयम् ॥ आदा स्यतिपुनःक्षत्रमेवंबलसमन्वितम् १९ इत्येतांनारदश्चिंतांचिंतयामासधर्मवित् ॥ हरिंनारायणंज्ञात्वायज्ञैरीज्यंतमीश्वरम् २०

कुर्वंतिहेतुभिर्नानाविधैस्तर्कैः ५ । ६ तत्रेति परोक्तस्यदूषणेएवादृताः नतुशास्त्रतत्त्वेइतिभावः ७ । ८ । ९ । १० अथचिंतांसमापेदेइत्यादि तस्यौसबहुमानतइत्यंतोग्रंथः नारदस्यपूर्वा परानुसंधानात्क्षत्रक्षयस्यातःपरंउपक्रमोजातइति चिंताचित्तव्यथास्मृतिर्वा अंशावतरणात्प्राक्ब्रह्मसभायांनिश्चितस्यभूभारहरणस्याभूदित्यर्थः ११ । १२ । १३ क्षत्रेक्षत्रियजातौःजा तःआविर्भूतः १४ । १५ नारायणस्यैवशंभुत्वंचतुर्वक्त्रापरपर्यायंभूतभावनत्वंचेतियुक्तं एकस्यैवत्रिमूर्तिधारित्वात् यदुक्षयेयदुगृहे १६ । १७ । १८ महद्भूतंमहाविष्णुः स्वयंभूः अस्मदा दिवच्छरीरव्यपाश्रयत्वेनापिभवनंनसहतेइत्यर्थः आदास्यतिआचक्रेत्तुमिच्छति पुनरिति असकृदेतदनेनकर्मकृतमस्तीतिसूचितम् १९ । २०

धर्मविदांश्रेष्ठोनारदः धर्मराजस्य यज्ञैरिज्यम् २१ । २२ संयुजंसंबंधिनंश्वशुरादिम् प्रियंमित्रम् २३।२४ एकैकशः प्रत्येकम् अथ अथापिएषांमध्येवरिष्ठायप्रथममितिशेषः २५।२६ बुद्ध्याबुध्यतिजानातिवस्तुतत्वमनयेतिबुद्धिः श्रवणमननध्यानात्मिकाचेतोवृत्तिः तयानिश्चित्यसाक्षात्कृत्य अर्हणीयतमं अर्हणीयाःब्राह्मणाः देवताप्रसादहेतुत्वात् अर्हणीयतराः देवाः कामपूरकत्वात् अर्हणीयतमआत्मासर्वस्यतत्प्रीत्यर्थत्वात् तथाचश्रुतिः । 'नवाअरेदेवानांकामायदेवाःप्रियाभवंत्यात्मनस्तुकामायदेवाःप्रियाभवंतीतितदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादंतरंयदयमात्मा'इतिच । भुवीत्यनेनात्मैवकर्मभूमावर्हणीयः । 'इहचेदवेदीदथसत्यमस्तिनचेदवेदीर्महतीविनष्टिः'इतिश्रुतेरन्यत्रतदलाभात् २७ एवमात्मनोजिज्ञास्यत्वमुक्त्वास्वरूपमाहएषहीति एषपुरोवर्तीश्रीकृष्णः सूर्यश्चज्योतिषांपदार्थप्रकाशकानांसूर्यचंद्राग्नित्रागादीनांचंद्राग्नितारादीनां च समस्तानांसम्यगस्तंगतानांस्वप्नावस्थायामन्हिच मध्येऽतस्तपन्नाभातीतियोजना । अयंभावः नतावदग्निः स्वयंज्योतिः सूर्यकांतादिद्वारासूर्यस्यैवइंधनादौतिद्रूपेणारूढत्वात् । नापिचंद्रतारादि तस्यजलमयस्यसूर्यज्योतिषैवभास्यत्वात् यथाऽयंदृष्टांतएवंचक्षुरादयोऽपिनस्वशक्त्याप्रकाशकाः किंतुआत्मसत्तानुवेधादेव तथा यथाग्न्याद्यभावेऽपिसूर्यः इतरानिरपेक्षः प्रकाशयति एवमात्माचक्षुराद्यु

तस्मिन्धर्मविदांश्रेष्ठोधर्मराजस्यधीमतः ॥ महाध्वरेमहाबुद्धिस्तस्थौसबहुमानतः २१ ततोभीष्मोऽब्रवीद्राजन्धर्मराजंयुधिष्ठिरम् ॥ क्रियतामर्हणंराज्ञांयथार्हमितिभारत २२ आचार्यमृत्विजंचैवसंयुजंचयुधिष्ठिर ॥ स्नातकंचप्रियंप्राहुःषडर्घ्यार्हान्नृपंतथा २३ एतानर्घ्यानभिगतानाहुःसंवत्सरोषितान् ॥ तइमेकालपूगस्यमहतोऽस्मानुपागताः २४ एषामेकैकशोराजन्नर्घआनीयतामिति ॥ अथचैषांवरिष्ठायसमर्थायोपनीयताम् २५ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ कस्मैभवान्मन्यतेऽर्घमेकस्मैकुरुनंदन ॥ उपनीयमानंयुक्तंचतन्मेब्रूहिपितामह २६ ॥ ॥ वैशंपायनउवाच ॥ ॥ ततोभीष्मःशांतनवोबुद्ध्यानिश्चित्यवीर्यवान् ॥ वार्ष्णेयंमन्यतेकृष्णंपूजनीयतमंभुवि २७ एषह्येषांसमस्तानांतेजोबलपराक्रमैः ॥ मध्येतपन्निवाभातिज्योतिषामिवभास्करः २८ असूर्यमिवसूर्येणनिर्वातमिववायुना ॥ भासितंल्हादितंचैवकृष्णेनेदंसदोहिनः २९

परमेऽपिस्वप्नेस्वप्रकाशेनैवसर्ववासनामयं पदार्थजातंप्रकाशयाति । तस्यभासासर्वमिदंविभाति । अत्रायंपुरुषः स्वयंज्योतिरित्यादिश्रुतिभ्यः तेजोबलपराक्रमैः तेजः प्रकाशः बलं तेजोंतराभिभवसामर्थ्यं पराक्रमः निरवशेषेणतमोनाशकत्वंचदृष्टांतेतेजआदि दार्ष्टांतिकेतु चित्प्रकाशः बलंअबाध्यत्वम् पराक्रमःसर्वोपादानत्वेनसर्वव्यापकत्वंच । कथापक्षेतुतेजः कांतिः बलंपराभिभवसामर्थ्यम् पराक्रमः संग्रामोद्यमः २८ असूर्यमिवेति । यथागाढांधकारस्थंघटादिअसत्कल्पंअप्रकाशमानं च तस्यसत्तास्फूर्तीसूर्येणैवभवतः । एवंअहंकारादेर्घटांतस्यार्थजातस्यसत्ताप्रकाशौ चिदधीनाविवेतिपूर्वोक्तस्यैवविवरणम् एवंतथानिवातेवातशून्येऽपवरके निदाघे विद्यमानान्जंतून्वातएवाल्हादयाति एवंअयंस्वरूपानंदेनजगदाल्हादयति । 'एषह्येवानंदयातिएतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंति'इतिश्रुतेः सोऽयंप्रत्यग्दशिरूपएवसन् दर्पणेनमुखमिव स्वमाययापराग्दृश्यत्वमिवापादितः पूजनीयः अत्र हिदेहाद्युपाधिविस्मरणेन लब्धपदंचित्तंमोक्षायकल्पते तथोक्तंभगवतापतंजलिना । 'बहिरकल्पितावृत्तिर्महाविदेहातत्संयमात्प्रकाशावरणक्षयइति' बहिः मूर्धादौ अकल्पिता देहादिप्रत्ययेनासंकीर्णा महाविदेहेति धारणाया नाम २९

३० । ३१ । ३२ इतिश्रीमन्महाभारतेसभापर्वणिनैलकंठीयेभारतभावदीपेषट्त्रिंशोऽध्यायः ३६ ॥ ॥ ७ ॥ ॥ कर्तृत्वादिकं कृष्णेवास्तवमेव नतुमायिकमाविद्यकंवा शरीरमात्रस्यकर्मजन्यत्वनियमात् मिथ्याभूतस्यापिवास्तवार्थक्रियाकारित्वेशुक्तिरजतादेरपिरजतोचितद्रवीभावापत्तेश्चेत्यभिसंदधानोजैमिनिमतानुसारीशिशुपालः वर्णाश्रमवयस्तपोविद्यादिभिरेवपुंसांश्रैष्ठ्याश्रैष्ठ्यविभागंबहुमन्यमानःनृपांतरसाधारण्येन कृष्णमपूज्यं करोति नायमिति । वार्ष्णेय वृष्णिषूत्पन्न इति पूर्वोक्तंस्वयंभूत्वं निराकृतं तद्धिआत्मनः सर्वसाधा

तस्मैभीष्माभ्यनुज्ञातस्सहदेवःप्रतापवान् ॥ उपजन्हेऽथविधिवद्वार्ष्णेयायार्घमुत्तमम् ३० प्रतिजग्राहतत्कृष्णःशास्त्रदृष्टेनकर्मणा ॥ शिशुपालस्तुतांपूजांवासुदेवेनचक्षमे ३१ सउपालभ्यभीष्मंचधर्मराजंचसंसदि ॥ अपाक्षिपद्वासुदेवंचेदिराजोमहाबलः ३२ ॥ ॥ इतिश्रीमन्महाभारतेसभापर्वणि अर्घाहरण०कृष्णार्घदानेषट्त्रिंशोऽध्यायः ३६ ॥ ॥ शिशुपालउवाच ॥ नायमर्हतिवार्ष्णेयस्तिष्ठत्स्विहमहात्मसु ॥ महीपतिषुकौरव्यराजवत्पार्थिवार्हणम् १ नायंयुक्तःसमाचारःपांडवेषुमहात्मसु ॥ यत्कामात्पुंडरीकाक्षंपांडवार्चितवानसि २ बालायूयंनजानीध्वंधर्मःसूक्ष्मोहिपांडवाः ॥ अयंचस्मृत्यतिक्रांतोह्यापगेयोऽल्पदर्शनः ३ त्वादृशोऽधर्मयुक्तोहिकुर्वाणःप्रियकाम्यया ॥ भवत्यभ्यधिकंभीष्मोलोकेष्ववमतःसताम् ४ कथंह्यराजादाशार्होमध्येसर्वमहीक्षिताम् ॥ अर्हणामर्हतितथायथायुष्माभिरर्चितः ५ अथवामन्यसेकृष्णंस्थविरंकुरुपुंगव ॥ वसुदेवेस्थितेवृद्धेकथमर्हतितत्सुतः ६ अथवावासुदेवोऽपिप्रियकामोऽनुवृत्तवान् ॥ द्रुपदेतिष्ठतिकथंमाधवोऽर्हतिपूजनम् ७ आचार्यंमन्यसेकृष्णमथवाकुरुनंदन ॥ द्रोणेतिष्ठतिवार्ष्णेयंकस्मादर्चितवानसि ८ ऋत्विजंमन्यसेकृष्णमथवाकुरुनंदन ॥ द्वैपायनेस्थितेवृद्धेकथंकृष्णोऽर्चितस्त्वया ९ भीष्मेशांतनवेराजन्स्थितेपुरुषसत्तमे ॥ स्वच्छंदमृत्युकेराजन्कथंकृष्णोऽर्चितस्त्वया १० अश्वत्थाम्निस्थितेवीरेसर्वशास्त्रविशारदे ॥ कथंकृष्णस्त्वयाराजन्नर्चितःकुरुनंदन ११ दुर्योधनेचराजेंद्रेस्थितेपुरुषसत्तमे ॥ कृपेचभारताचार्येकथंकृष्णस्त्वयार्चितः १२ द्रुमंकिंपुरुषाचार्यमतिक्रम्यतथार्चितः ॥ भीष्मकेचैवदुर्द्धर्षेपांडुवत्कृतलक्षणे १३ नृपेचरुक्मिणीश्रेष्ठेएकलव्येतथैवच ॥ शल्येमद्राधिपेचैवकथंकृष्णस्त्वयाऽर्चितः १४ अयंचसर्वराज्ञांवैबलश्लाघीमहाबलः ॥ जामदग्न्यस्यदयितःशिष्योविप्रस्यभारत १५ येनात्मबलमाश्रित्यराजानोयुधिनिर्जिताः ॥ तंचकर्णमतिक्रम्यकथंकृष्णस्त्वयाऽर्चितः १६ नैवर्त्विङ्नैवचाचार्योनराजामधुसूदनः ॥ अर्चितश्चकुरुश्रेष्ठकिमन्यत्प्रियकाम्यया १७ अथवाऽभ्यर्चनीयोऽयंयुष्माकंमधुसूदनः ॥ किंराजभिरिहानीतैरवमानायभारत १८ वयंतुनभयादस्यकौंतेयस्यमहात्मनः ॥ प्रयच्छामःकरान्सर्वेनलोभान्नचसांत्वनात् १९ अस्यधर्मप्रवृत्तस्यपार्थिवत्वंचिकीर्षतः ॥ करानस्मैप्रयच्छामःसोऽयमस्मान्नमन्यसे २०

रणं देहस्यतुअस्मदादिवद्देवक्यांजातत्वात्दुर्वचमिति भावः १ । २ आपगेयोभीष्मः ३ । ४ । ५ ननुअस्मदादिवज्जातोऽप्यराजापि वृद्धत्वादिनाहेतुनापूज्यःकृष्णइत्याशंक्य निराचष्टे अथवामन्यसेइत्यादिना ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०

प्राप्तोलक्षणंराजचिन्हं छत्रचामरादि सप्राप्तलक्षणः । प्राप्तापन्नेचद्वितीययेतिसमासः । तदन्योऽप्राप्तलक्षणस्तम् वस्तुवृत्त्याऽपिअताद्दशं असंगचिन्मात्रत्वात् ।'अलक्षणमचिंत्यं'इत्या दिश्रुतेरितिवाग्देवतायास्तात्पर्यम् २१ । २२ धर्मच्युतत्वमेवाह योऽयमिति राजानंकंसम् २३ । २४ । २५ । २६ अयुक्तामिति आत्मनःअयुक्तांपूजां अद्वैते पूज्यपूज्यकभा वाभावेनभेदस्यायोगात् तथापिहविषोनिःस्पंदंलेशंप्राशितुं द्रौपदीशाकशेषवत्प्राशनायप्राप्य द्विचंद्रादिवन्माययाभेदमारूढोभक्तोपहृतत्वात्तावदेवबहुमन्यसे निर्जनेनिर्मनुष्येअंतरि क्षेश्वसतीतिश्वावायुः ।'मातरिश्वासदागतिः'इतिकोशः । मातर्यंतरिक्षेश्वसतीतियास्कःइतिसरस्वत्याशयः । कथापक्षेतुस्पष्टएवार्थः २७ प्रलंभंतेअवलंबंते २८ । २९ । ३० । ३१ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ ततइति १ अधर्मश्चेति वेदैकगम्यापरदेवताकृष्णो नतर्कगम्या तर्कबलेनतुतांप्रत्याचक्षाणस्यशाकल्य

किमन्यदवमानाद्धियदेनंराजसंसदि ॥ अप्राप्तलक्षणंकृष्णमर्घेणार्चितवानसि २१ अकस्माद्धर्मपुत्रस्यधर्मात्मेतियशोगतम् ॥ कोहिधर्मच्युतेपूजामेवंयु क्तांनियोजयेत् २२ योऽयंवृष्णिकुलेजातोराजानंहतवान्पुरा ॥ जरासंधंमहात्मानमन्यायेनदुरात्मवान् २३ अद्यधर्मात्मताचैवव्यपकृष्टायुधिष्ठिरात् ॥ दर्शितंकृपणत्वंचकृष्णेऽर्घस्यनिवेदनात् २४ यदिभीताश्चकौंतेयाःकृपणाश्चतपस्विनः ॥ ननुत्वयाऽपिबोद्धव्यंयांपूजांमाधवार्हसि २५ अथवाकृपणैरे तामुपनीतांजनार्दन ॥ पूजामनर्हःकस्मात्त्वमभ्यनुज्ञातवानसि २६ अयुक्तामात्मनःपूजांत्वंपुनर्बहुमन्यसे ॥ हविषःप्राप्यनिःस्पंदंप्राशिताश्वेवनिर्जने २७ नत्वयंपार्थिवेंद्राणामपमानःप्रयुज्यते ॥ त्वामेवकुरवोव्यक्तंप्रलंभंतेजनार्दन २८ क्लीबेदारक्रियायाद्दगंधेवारूपदर्शनम् ॥ अराज्ञोराजवत्पूजातथा तेमधुसूदन २९ दृष्टोयुधिष्ठिरोराजादृष्टोभीष्मश्चयादृशः ॥ वासुदेवोऽप्ययंदृष्टःसर्वमेतद्यथातथम् ३० इत्युक्त्वाशिशुपालस्तानुत्थायपरमासनात् ॥ निर्ययौसदसस्तस्मात्सहितोराजभिस्तदा ३१ इतिश्रीमन्महाभारतेसभापर्वणिअर्घाभिहरणेशिशुपालक्रोधोनामसप्तत्रिंशोऽध्यायः ३७ ॥ वैशंपायन उवाच ॥ ततोयुधिष्ठिरोराजाशिशुपालमुपाद्रवत् ॥ उवाचचैनंमधुरंसांत्वपूर्वमिदंवचः १ नेदंयुक्तंमहीपालयादृशंवैत्वमुक्तवान् ॥ अधर्मश्चपरोराजन् पारुष्यंचनिरर्थकम् २ नहिधर्मंपरंजातुनावबुध्येतपार्थिवः ॥ भीष्मःशांतनवस्त्वेनंमाऽवमंस्थास्त्वमन्यथा ३ पश्यचैतान्महीपलांस्त्वत्तोवृद्धतरान्बहू न् ॥ मृष्यंतेचार्हणांकृष्णेतद्वत्त्वंक्षंतुमर्हसि ४ वेदतत्त्वेनकृष्णंहिभीष्मश्चेदिपतेभृशम् ॥ नह्येनंत्वंतथावेत्थयथैनंवेदकौरवः ५ ॥ भीष्मउवाच ॥ ना स्मैदेयोह्यनुनयोनायमर्हतिसांत्वनम् ॥ लोकवृद्धतमेकृष्णेयोऽर्हणांनाभिमन्यते ६

स्येवतवाधर्मोमहान्भवतीत्यर्थः यतःपारुष्यंचनिरर्थकम् परूंषि पर्वणिखंडाः भेदइतियावत् परूंष्येवपारुष्यंस्वार्थेष्यञ्तन्निरर्थकं स्वप्नगजवदर्थशून्यमाभासमात्रम् पौरुषंचेतिपाठे पुरुषधर्मःकर्तृत्वादिः पौरुषम् तदपि सुप्तिसमाध्यादौप्रत्य गात्मनिअदर्शनात्रज्जूरगादिवदाभासमात्रं तत्राधिष्ठानभूतंआत्मवस्तुकृष्णएवानिराधिष्ठानकभ्रमायोगात् कथापक्षेपारुष्यंदुर्वाक्यत्वम् २ एतच्चयोगबलेनैवभीष्मोवेदेत्याहनही ति परोधर्मः अयंतुपरमोधर्मोयद्योगेनात्मदर्शनमिति याज्ञवल्क्योक्तः यतस्त्वं भीष्मोवेदाऽतोऽस्यवचस्यविश्वासोनकर्तव्यइत्यर्थः ३ । ४ । ५ अनुनयःनयोयुक्तिस्तामनुपश्चात् भवतीतिअनुनयो मननानंतरभाविध्यानं योगइतियावत् तनास्मैअसंभावनाग्रस्ताय देयः । पक्षेअनुनयःकुपितप्रसादनं सगुणोपास्त्यभावादनाधिकारिणेइत्यर्थः सांत्वनंशमम् ६

तत्रमूढंमूढभाषयैवबोधयेदितिन्यायेन शिशुपालमतमनुसृत्यैवकृष्णस्याधिक्यमाह द्वाभ्याम् क्षत्रियइति ७ । ८ इतोऽप्यधिकमाह नहीति त्रैलोक्यांतर्गतानांब्रह्मादीनामित्यर्थः ९
इदानींतनक्षत्रियेभ्यःऋषभाःश्रेष्ठाःहिरण्याक्षादयः वार्ष्णेयेसर्वंप्रतिष्ठितंविलीनम् किंकनककुंडलन्यायेन नेत्याह निखिलेनेति सत्यामपिकनकबुद्धौकुंडलबुद्ध्यनपायात् रज्जुसर्पन्या
येनैवेयंसंप्रतिष्ठा । ज्ञानादेवतुकैवल्यमिति श्रुतेश्च । पक्षांतरेतुब्रह्मणःकनकवत्परिणामित्वं कुंडलस्येव प्रपंचस्य क्रिययाप्रविलाप्यत्वंचस्यात् । तथा च 'असंगोह्ययं पुरुषः'इत्यसंगत्व
श्रुतेर्ज्ञानादेवेत्यवधारणस्यचव्याकोपइतिदिक् १० । ११ उक्तार्थेप्रमाणमाहज्ञानवृद्धाइत्यादिना १२ कर्माणिपूतनावधादीनि १३ । १४ कृतार्थंकृतंअर्थउपकारम् १५ । १६
१७ वैश्यानामिति लक्ष्मीपतित्वात्पुराणपुरुषत्वाच्च १८ । १९ नियताऽच्युतेऽकर्मजत्वात् अन्यत्र कर्मजत्वादेषामस्थैर्यं भवतीत्यर्थः २० लोकसंपन्नंज्ञानसंपन्नम् २१ । २२

क्षत्रियःक्षत्रियंजित्वारणेरणकृतांवरः ॥ योमुंचतिवशेकृत्वागुरुर्भवतितस्यसः ७ अस्यांहिसमितौराज्ञामेकमप्यजितंयुधि ॥ नपश्यामिमहीपालंसात्व
तीपुत्रतेजसा ८ नहिकेवलमस्माकमयमर्च्यतमोऽच्युतः ॥ त्रयाणामपिलोकानामर्चनीयोमहाभुजः ९ कृष्णेनहिजितायुद्धेबहवःक्षत्रियर्षभाः ॥ जग
त्सर्वंचवार्ष्णेयेनिखिलेनप्रतिष्ठितम् १० तस्मात्सत्स्वपिवृद्धेषुकृष्णमर्चामनेतरान् ॥ एवंवक्तुंनचार्हस्त्वंमाभूत्तेबुद्धिरीदृशी ११ ज्ञानवृद्धामयाराजन्
बहवःपर्युपासिताः ॥ तेषांकथयतांशौरेरहंगुणवतोगुणान् १२ समागतानामश्रौषंबहून्बहुमतान्सताम् ॥ कर्माण्यपिचयान्यस्यजन्मप्रभृतिधीमतः १३
बहुशःकथ्यमानानिनरैर्भूयःश्रुतानिमे ॥ नकेवलंवयंकामाच्चेदिराजजनार्दनम् १४ नसंबंधंपुरस्कृत्यकृतार्थंवाकथंचन ॥ अर्चामहेऽर्चितंसद्भिर्भुविभूत
सुखावहम् १५ यशःशौर्यंजयंचास्यविज्ञायार्चांप्रयुंज्महे ॥ नचकश्चिदिहास्माभिःसुबालोऽप्यपरीक्षितः १६ गुणैर्वृद्धानतिक्रम्यहरिरर्च्यतमोमतः ॥
ज्ञानवृद्धोद्विजातीनांक्षत्रियाणांबलाधिकः १७ वैश्यानांधान्यधनवान्शूद्राणामेवजन्मतः ॥ पूज्यतायांचगोविंदेहेतूद्वावपिसंस्थितौ १८ वेदवेदांगवि
ज्ञानंबलंचाप्यधिकंतथा ॥ नृणांलोकेहिकोऽन्योऽस्तिविशिष्टःकेशवादृते १९ दानंदाक्ष्यंश्रुतंशौर्यंह्रीःकीर्तिर्बुद्धिरुत्तमा ॥ संततिःश्रीर्धृतिस्तुष्टिःपुष्टि
श्चनियताऽच्युते २० तमिमंलोकसंपन्नमाचार्यंपितरंगुरुम् ॥ अर्घ्यमर्चितमर्चार्हंसर्वेसंक्षंतुमर्हथ २१ ऋत्विग्गुरुर्विवाह्यश्चस्नातकोनृपतिःप्रियः ॥ सर्व
मेतद्धृषीकेशस्तस्मादभ्यर्चितोऽच्युतः २२ कृष्णएवहिलोकानामुत्पत्तिरपिचाव्ययः ॥ कृष्णस्यहिकृतेविश्वमिदंभूतंचराचरम् २३ एषप्रकृतिरव्यक्ता
कर्ताचैवसनातनः ॥ परश्चसर्वभूतेभ्यस्तस्मात्पूज्यतमोऽच्युतः २४

लोकदृष्ट्याकृष्णमाहात्म्यमुक्त्वाशास्त्रदृष्ट्याऽपितदाह कृष्णएवेति उत्पत्तिरपिउपादानमपि अव्ययःअविनाशीअपरिणामित्वात् रज्जुवत्परिणाम्युपादानस्यनाशावश्यंभावादिति
भावः अप्यय इति पाठेलयस्थानम् कृष्णस्यकृतेकृष्णार्थंसर्वशेषित्वात्कृतेइत्यव्ययंतादर्थ्येनिपात्यते भूतंउत्पन्नंतेनविनाश्यपिएतत्कृष्णएवसत्य इत्यपिज्ञेयम् २३ नन्वपरिणामित्वे
कृष्णस्यकथं परिणामिनमाकाशादिकं प्रत्युपादानत्वं कारणस्यकार्यसजातीयत्वनियमादित्याशंक्याह एषप्रकृतिः उपादानंजगतः अव्यक्ता अप्रकटारज्जुरिवस्पष्टमदृष्टासर्पस्यकर्त्री
महदहंकारादिरप्ययमेव । परिणामवादिविवर्तेऽपि कार्यस्यकारणानन्यत्वात् महदादेश्चविवर्तरूपत्वात् । नन्वन्योऽन्यत्रान्यत्कल्पयति महदादेस्तुकथंसदात्मनिस्वस्वकल्पकत्वमि
त्याशंक्याह सनातन इति। सुप्तिप्रलयादावपितेषांसंस्कारात्मनासत्त्वमस्तिअतः कदाचित्प्रतीयमानत्वान्मिथ्यात्वेऽपि भ्रमतत्संस्कारपरंपरायाबीजांकुरवदनादित्वान्महदादेरपिसना

तनोऽनादिरेवेत्यर्थः । नन्वेवंघृतकाठिन्यवदात्मनि महदादेराविर्भावतिरोभावौउक्तौस्यातां तथाचात्मसमसत्ताकत्वं तयोःस्यादित्यतआह परइति सर्वभूतेभ्यउत्पन्नेभ्योमहदादिभ्योऽतिरिक्तः महदाद्युपादानं त्वज्ञानमेव नतुचिदात्मा तदपि रज्ज्वज्ञानवत्तदनाद्यपिबाधसतिवस्तुवृत्त्याकालत्रयेऽपि तत्कार्यंनासीदितिप्रत्ययात् । यादृशोयक्षस्तादृशोबलिरितिन्यायेन कार्यवत्अनिर्वचनीयत्वमेवकल्प्यते अतःकृष्णएवपरोनत्वज्ञानंत्रैकालिकबाधविषयत्वात्तस्येति भावः । पूज्यतमइति निरुपाधिकप्रेमविषयत्वेनसर्वशेषित्वंप्रत्यगात्मत्वंचोक्तम् अच्युतइति भोक्तृत्वरूपविकारनिषेधः अहंकारस्यैव भोक्तृत्वादात्मनि च जलचंद्रचांचल्यवत्तदुपधानात्कल्पितमितिभावः २४ अतएवकृष्णाद्वैतं सिद्धमित्याह बुद्धिरित्यादिना प्रतिष्ठितं रज्जूरगवत्कृष्णानन्यत्वादित्यर्थः बुद्धिरहंकारः मनइतींद्रियाण्येकादश महान्महत्तत्त्वं वायुरित्यादिपंचकेनपंचतन्मात्राणांस्थूलभूतानांचग्रहणम् चतुर्विधं

बुद्धिर्मनोमहद्वायुस्तेजोंऽभःखंमहीचया ॥ चतुर्विधंचयद्भूतंसर्वंकृष्णेप्रतिष्ठितम् २५ आदित्यश्चंद्रमाश्चैवनक्षत्राणिग्रहाश्चये ॥ दिशश्चविदिशश्चैवसर्वंकृष्णेप्रतिष्ठितम् २६ अग्निहोत्रमुखावेदागायत्रीछंदसांमुखम् ॥ राजामुखंमनुष्याणांनदीनांसागरोमुखम् २७ नक्षत्राणांमुखंचंद्रआदित्यस्तेजसांमुखम् ॥ पर्वतानांमुखंमेरुर्गरुडःपततांमुखम् २८ ऊर्ध्वंतिर्यगधश्चैवयावतीजगतोगतिः ॥ सदेवकेषुलोकेषुभगवान्केशवोमुखम् २९ अयंतुपुरुषोबालःशिशुपालोनबुध्यते ॥ सर्वत्रसर्वदाकृष्णंतस्मादेवंप्रभाषते ३० योह्येवंधर्मंविचिनुयादुत्कृष्टंमतिमान्नरः ॥ सवैपश्येद्यथाधर्मंनतथाचेदिराडयम् ३१ सवृद्धबालेष्वथवापार्थिवेषुमहात्मसु ॥ कोनार्हंमन्यतेकृष्णंकोवाप्येनंनपूजयेत् ३२ अथैनांदुष्कृतांपूजांशिशुपालोव्यवस्यति ॥ दुष्कृतायांयथान्याय्यंतथाऽयंकर्तुमर्हति ३३ इतिश्रीमन्महाभारतेसभापर्वणिअर्घाभिहरणेभीष्मवाक्यंनामअष्टत्रिंशोऽध्यायः ॥ ३८ ॥ वैशंपायनउवाच ॥ एवमुक्त्वाततोभीष्मोविरराममहाबलः ॥ व्याजहारोत्तरंतत्रसहदेवोऽर्थवद्वचः १ केशवंकेशिहंतारमप्रमेयपराक्रमम् ॥ पूज्यमानंमयायोवःकृष्णंनसहतेनृपाः २ सर्वेषांबलिनांमूर्ध्निमयेदंनिहितंपदम् ॥ एवमुक्तेमयासम्यगुत्तरंप्रब्रवीतुसः ३ सएवहिमयावध्योभविष्यतिनसंशयः ॥ मतिमंतश्चयेकेचिदाचार्यंपितरंगुरुम् ४ अर्च्यमर्चितमर्घार्हमनुजानंतुतेनृपाः ॥ ततोनव्याजहारैषांकश्चिद्बुद्धिमतांसताम् ५ मानिनांबलिनांराज्ञांमध्येवैदर्शितेपदे ॥ ततोऽपतत्पुष्पवृष्टिःसहदेवस्यमूर्द्धनि ६ अदृश्यरूपावाचश्चाप्यब्रुवन्साधुसाध्विति ॥ आविध्यदजिनंकृष्णंभविष्यद्भूतजल्पकः ७ सर्वसंशयनिर्मोक्तानारदःसर्वलोकवित् उवाचाखिलभूतानांमध्येस्पष्टतरंवचः ८ कृष्णंकमलपत्राक्षंनार्चयिष्यंतियेनराः ॥ जीवन्मृतास्तुतेज्ञेयानसंभाष्याःकदाचन ९

जरायुजादिभौतिकम् २५ । २६ । २७ । २८ । २९ सर्वत्रसर्वदासत्तास्फूर्तिप्रदत्वेनसंतमितिशेषः ३० उत्कृष्टंधर्मंआत्मदर्शनम् ३१ । ३२ । ३३ ॥ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेअष्टत्रिंशोऽध्यायः ॥ ३८ ॥ ॥ यएवंविधःकृष्णः सएववसुदेवसूनुरिति सहदेवप्रतिज्ञानारदवचनाभ्यां निश्चेतुमध्यायमारभतेएवमुक्त्वेत्यादिना १ अप्रमेयोनिर्गुणत्वात् परंपश्चाद्धाविकार्यंतत्आक्रामतिव्याप्नोतीतिपराक्रमउपादानम् अप्रमेयश्चासौपराक्रमश्चेतिसमासः शुद्धशबलब्रह्मरूपोऽयं केशिहंतेत्यर्थः २ । ३ । ४ । ५ । ६ कृष्णंश्यामम् ७ । ८ ननुउपाध्यविवक्षयाब्रह्मभावोऽस्मदादीनामप्यस्ति तद्विवक्षायांतुफलशलाट्ववत्कृष्णस्यास्माकंच ज्ञानैश्वर्यतारतम्येऽपितस्यव्यावृत्तत्त्वेनास्मदादिवदुभयविधब्रह्मभावो

नास्त्येवेत्याशंक्याहकृष्णमिति यथापरिमाणतारतम्यस्यविश्रांतिराकाशादौ देशतःकालतश्चपरिच्छेदाभावात्दृष्टा तथाऐश्वर्यतारतम्यस्यापिद्रष्टव्या । ननु प्रलयेकार्यमात्रनाशस्यवक्तव्यत्वात्कथंकृष्णविग्रहस्यकालापरिच्छेद्यत्वंयुज्येतेतिचेन्न तस्याकार्यत्वात् नहिपूर्वोदाहृतस्य हिरण्यश्मश्रुत्वादिविशिष्टस्यब्रह्मणः कार्यत्वंवक्तुंशक्यं । अंतवत्त्वधर्मोपदेशादिति न्यायविरोधात्शास्त्रांत्यन्यायविरोधाच्च । तन्नहिनित्यसिद्धेश्वरादर्वाचीनानां ज्ञानध्यानसिद्धानामीश्वराणामैश्वर्यं वियदादिजगत्सृष्टिसंहारादिव्यापारवर्जितेनसह भोगसाम्यमात्रम् हेतुश्चात्रोक्तः असन्निहितत्वादिति भौतिकपदार्थसृष्ट्यादिसमकालेहि तेषांसृष्टिप्रलयावितिनतेभूतोत्पत्तिलयकालेसन्निहिताः अयंतुतदानीमपिसन्निहितोऽस्तीतिनित्यएव व्यवहारतःसर्गपरंपरायाआद्यंतशून्यत्वात्तद्धेतुहेतोरस्यापि तथात्वंदुर्वारम् । नन्वस्यनित्यत्वेतल्लोकादेरपि नित्यत्वंवाच्यम् । तथाचाद्वैतक्षतिरितिचेत्भ्रांतोसि यथात्रैलोक्यनाशेऽपि ब्रह्मलोकाद्यस्ति तथाब्रह्मलोकनाशेऽपि तल्लोकादिकमस्ति यथासत्स्वपिब्रह्मलोकादिषु अस्मदादीनांशुद्धकैवल्यमप्रतिहतं तथातस्मिन्नपिसतिभविष्यतीतिकानोहानिः । येतुतल्लोक

॥ वैशंपायनउवाच ॥ ॥ पूजयित्वाचपूजार्हान्ब्रह्मक्षत्रविशेषवित् ॥ सहदेवोनृणांदेवःसमापयतकर्मतत् १० तस्मिन्नभ्यर्चितेकृष्णेसुनीथःशत्रुकर्षणः ॥ अतिताम्रेक्षणःकोपादुवाचमनुजाधिपान् ११ स्थितःसेनापतिर्योऽहंमन्यध्वंकिंतुसांप्रतम् ॥ युधितिष्ठामसन्नह्यसमेतान्वृष्णिपांडवान् १२ इतिसर्वान्समुत्साह्यराज्ञस्तान्चेदिपुंगवः ॥ यज्ञोपघातायततःसोऽमंत्रयतराजभिः १३ तत्राहूतागताःसर्वेसुनीथप्रमुखागणाः ॥ समदृश्यंतसंक्रुद्धाविवर्णवदनास्तथा १४ युधिष्ठिराभिषेकंचवासुदेवस्यचार्हणम् ॥ नस्याद्यथातथाकार्यमेवंसर्वेतदाऽब्रुवन् १५ निष्कर्षान्निश्चयात्सर्वेराजानःक्रोधमूर्च्छिताः ॥ अब्रुवंस्तत्रराजानोनिर्वेदादात्मनिश्चयात् १६ सुहृद्भिर्वार्यमाणानांतेषांहिवपुराबभौ ॥ आमिषादपकृष्टानांसिंहानामिवगर्जताम् १७ तंबलौघमपर्यंतंराजसागरमक्षयम् ॥ कुर्वाणंसमयंकृष्णोयुद्धायबुबुधेतदा १८ ॥ इतिश्रीमन्महाभारतेसभापर्वणिअर्घाभिहरणसमाप्तिर्नामऊनचत्वारिंशोऽध्यायः॥३९॥

॥ समाप्तंचेदमर्घाभिहरणपर्व ॥ अथशिशुपालवधपर्व ॥ वैशंपायनउवाच ॥ ततःसागरसंकाशंदृष्ट्वानृपतिमंडलम् ॥ संवर्तवाताभिहतंभीमंक्षुब्धमिवार्णवम् १ रोषात्प्रचलितंसर्वमिदमाहयुधिष्ठिरः ॥ भीष्मंमतिमतांमुख्यंवृद्धंकुरुपितामहं२ बृहस्पतिंबृहत्तेजाःपुरुहूतइवाऽरिहा ॥ असौरोषात्प्रचलितोमहान्नृपतिसागरः॥ अत्रयत्प्रतिपत्तव्यंतन्मेब्रूहिपितामह ३ यज्ञस्यचनविघ्नःस्यात्प्रजानांचहितंभवेत् ॥ यथासर्वत्रतत्सर्वंब्रूहिमेऽद्यपितामह ४ इत्युक्तवतिधर्मज्ञेधर्मराजेयुधिष्ठिरे ॥ उवाचेदंवचोभीष्मस्ततःकुरुपितामहः ५ माभैस्त्वंकुरुशार्दूलश्वासिंहंहंतुमर्हति ॥ शिवःपंथाःसुनीतोऽत्रमयापूर्वतरंवृतः ६

१३ माप्तिरेव कैवल्यमित्याहुस्तदश्रोतमिति व्युत्पादितमन्यत्र । 'केचिदाहुरिमं सांबंकेचिद्विष्णुंपरेरविम् ॥ केचिद्गणेशंकेप्यंबांमद्विधाः पार्थसारथिम्' ॥ तस्माद्युक्तंकमलपत्राक्षस्य पूर्वोक्तरीत्याअसंगस्यसाक्षाद्ब्रह्मत्वं इतरेषांतूपाधितादात्म्यव्यवहितमिति महान्भेदइतियुक्तंकृष्णस्यार्चनीयतमत्वम् । प्रत्यग्दृशेरेवदेहेंद्रियाद्युपाधिसान्निध्यात् मुकुरमुखवत्कृष्णरूपेण चरमेजन्मनि परागदृश्यात्मनाभासमानत्वादिति दिक् ९ । १० । ११ । १२ । १३ सुनीथः शिशुपालः १४ । १५ निर्वेदात् अपमानेन देहादौ वैराग्यात् आत्मनिश्चयात्स्वबलवत्त्वनिश्चयात् १६ । १७ समयं संकेतम् १८ ॥ ॥ इति सभापर्वणि नैलकंठीये भारतभावदीपे ऊनचत्वारिंशोऽध्यायः ॥ ३९ ॥ तत इति १ । २ अत्रस्वंतंभवेद्यन्न इति पाठे नः अस्माकं स्वंतं शुभोदर्कम् ३ । ४ । ५ शिवः पंथाः कृष्णाश्रयरूपः सुनीतः सुनीतिसहितः ६

७।८।९।१० नूनमेतदिति । 'यद्यद्विभूतिमत्सत्त्वंश्रीमदूर्जितमेववा ॥ तत्तदेवावगच्छत्वंममतेजोंऽशसंभवं'इतिभगवद्वचनात् शिशुपालेऽपिविभूतिमत्त्वात्पूर्वंभगवत्पार्षदत्वाच्चपारमेश्व रंज्ञानैश्वर्यादिरूपं तेजोऽस्तितत्स्यादामंतद्देहपातेनैव तंहंतुमिच्छतीत्यर्थः । पुनःशब्दो हिरण्याक्षाद्यपेक्षया ११ । १२ आदातुं संहर्तुंविष्ठवते विपर्ययंप्राप्नोति १३ कुतः कृष्णोऽन्ये षांतेजांस्यादत्तेनतुतानिपृथक्तिष्ठंतीत्यतआहचतुर्विधानामिति चेतनाचेतनप्रपंचस्य जले तरंगबुद्बुदन्यायेनतत्रैवोत्पत्तिप्रलययोः श्रवणात् । एष योनिः सर्वस्यप्रभवाप्ययौहिभूताना मिति तदनन्यत्वाच्चसर्वस्येति भावः १४ । १५ ॥ इतिसभापर्वणि नैलकंठीयेभारतभावदीपे चत्वारिंशोऽध्यायः ॥ ४० ॥ ॥ ननुबिभीषिकाभिर्बह्वीभिरित्यादिग्रंथोभगवन्निं दापरत्वान्नभूतार्थवादः किंतुध्यानमात्रंध्येयसारूप्यप्रापकं तद्यद्वेषेणापिकर्तव्यमित्यतिशयोक्तिमात्रंध्यानविधेस्तावकम् । अन्यथाभगवन्निंदाकृतांवेनादीनां 'भगवन्निंदयावेनोद्वि जैस्तमसिपातितः' इत्यादिदोषस्मरणमनुपपन्नंस्यात् । बृहदारण्यकपंचमे च ब्रह्मविदं याज्ञवल्क्यंद्विषतःशाकल्यस्यसद्योमृत्युरुक्तोऽस्थ्नांचसंस्काराभावेनदुर्गतिश्चसूचिता साक्षा द्ब्रह्मद्विषस्तुततोऽप्यधिकंदुःखं वक्तव्यंस्यात् । अत्रचद्विषतोऽपिशिशुपालस्यापराधशतंक्षांत्वा तस्मै भगवतास्वसायुज्यंदत्तमित्युच्यते तस्मान्निंदाग्रंथःप्रकरणासंगतेर्भगवत्यसमवेत

प्रसुप्तेहियथासिंहेश्वानस्तस्मिन्समागताः ॥ भषेयुःसहिताःसर्वेतथेमेवसुधाधिपाः ७ वृष्णिसिंहस्यसुप्तस्यतथाऽमीप्रमुखेस्थिताः ॥ भषंतेतातसंक्रु द्धाःश्वानःसिंहस्यसन्निधौ ८ नहिसंबुध्यतेयावत्सुप्तःसिंहइवाच्युतः ॥ तेनसिंहीकरोत्येतान्नृसिंहश्चेदिपुंगवः ९ पार्थिवान्पार्थिवश्रेष्ठःशिशुपालोऽप्यचे तनः ॥ सर्वान्सर्वात्मनातातनेतुकामोयमक्षयम् १० नूनमेतत्समादातुंपुनरिच्छत्यधोक्षजः ॥ यदस्यशिशुपालस्यतेजस्तिष्ठतिभारत ११ विप्लुताचा स्यभद्रंतेबुद्धिर्बुद्धिमतांवर ॥ चेदिराजस्यकौंतेयसर्वेषांचमहीक्षिताम् १२ आदातुंचनरव्याघ्रोऽयंयमिच्छत्ययंतदा ॥ तस्यविप्लवतेबुद्धिरेवंचेदिपते र्यथा १३ चतुर्विधानांभूतानांत्रिषुलोकेषुमाधवः ॥ प्रभवश्चैवसर्वेषांनिधनंचयुधिष्ठिर १४ ॥ ॥ वैशंपायनउवाच ॥ ॥ इतितस्यवचःश्रुत्वाततश्चे दिपतिर्नृपः ॥ भीष्मंरूक्षाक्षरावाचःश्रावयामासभारत १५ ॥ ॥ इतिश्रीमन्महाभारतेसभापर्वणिशिशुपालवधपर्वणियुधिष्ठिराश्वासनंनामचत्वारिं शोऽध्यायः ४० ॥ ॥ ४१ ॥ ॥ शिशुपालउवाच ॥ ॥ बिभीषिकाभिर्बह्वीभिर्भीषयन्सर्वपार्थिवान् ॥ नव्यपत्रपसेकस्माद्वृद्धःसन्कुलपांसनः १

त्वाच्चाभूतार्थवादएव तथाहि । त्रिविधोऽर्थवादः 'विरोधेगुणवादःस्यादनुवादोऽवधारिते ॥ भूतार्थवादस्तद्धानादर्थवादस्त्रिधामतः' इत्युक्तलक्षणः । एतेषांक्रमादुदाहरणानि । 'प्रजा पतिरात्मनोवपामुदक्खिदत्'स्ववपोत्खनने देहस्यैवनाशोभवतीत्यभूतार्थवादोऽयम् । 'अग्निर्हिमस्यभेषजम् । मेधातिथिंहकाण्वायनं मेषो भूत्वेंद्रो जहार'इत्यादीनि । तस्मादिह निंद कस्ययुक्तिर्विरुद्धेत्यभूतार्थवाद एवेति चेन्न तद्वत्कृत्स्नस्यापि भारतस्य तथात्वापत्तेः । अनन्यगतिकप्रकरणबाधापत्तेश्चानर्थक्यप्रतिहतानां विपरीतंबलाबलमितिन्यायेनाकाशादि श्रुतिवन्निंदाश्रुतिरपिगौण्यावृत्त्या ब्रह्मपरतयानेयेति युक्तमुत्पश्यामः । अत एव श्रीमद्भागवतेऽपि हरिनिंदाग्रंथः स्तुतिपरत्वेनैवव्याख्यातः श्रीधरस्वामिभिः । एवं भीष्मेणप्रबोधि तःशिशुपालः स्वबोधमाविश्चिकीर्षुर्भीष्मंतावन्महीकरोति बिभीषिकाभिरिति । हेनव्यप सःत्वं कुलपांमध्येवृद्धःसन्नः अस्मान्पार्थिवान्बह्वीभिर्बिभीषिकाभिः भीषयन्कस्मान्नपसे इतियोजना नोतुंस्तोतुं योग्यं नव्यं पाति गोपायतीति हे नव्यप हे परमेश्वरतत्त्वगूहनपर कुलपांकुलपतीनां कुलतारकाणां ब्रह्मविदांमध्ये वृद्धःसन्नः अस्मान्पार्थिवान् शरीराकार परिणतपृथिवीमात्रनिष्ठान् पृथिव्यंशबाहुल्याद्शरीरस्यपृथिवीत्वम् । 'यच्छरीरंसापृथिवी'इतिश्रुतेश्च । देहाभिमानयुक्तान् बह्वीभिर्नानाविधभेदवतीभिर्बिभीषिकाभिः संसारभीतिहेतु

भिःप्रमातृत्वप्रमुखाभिःकर्तृत्वभोक्तृत्वादिभिः भीषयन्भीषयितुंकिमितिप्रपसे त्वयावृद्धेनास्माकंसंसारभयंप्रदर्शनीयमेव नतुतत्रास्माकमनधिकारमाशंक्यभीतिहरंतत्त्वंगोपनीयमित्यर्थः १ ननु वस्तुतत्त्वमपिउक्तमेवेत्याशंक्य यथा ज्ञातं तथानोक्तमित्याह युक्तमिति तृतीयायां प्रकृतावैर्त्ततात्वयाए तदेवधर्मादपेतार्थं वक्तुंयुक्तमित्यन्वयः। द्वेप्रकृतीपरिणामिन्यौ माया तस्यां चित्प्रतिबिंबश्च। तृतीयाप्रकृतिस्त्वेतदुभयाध्यासाधिष्ठानं निर्विशेषंवस्तु तत्रवर्ततावर्तमानेनतन्मात्रनिष्ठेनत्वया धर्मादपेतःमोक्षःतस्याकर्मसाध्यत्वात्तदर्थं। धर्मादित्यलुक्समासः। मोक्षार्थंएतदेवतृतीयप्रकृतिरूपं वक्तुंयुक्तम् नतुसगुणं। अस्माकंब्रह्मलोकांतस्योपासनाफलस्यानपेक्षितत्वादित्यर्थः। एवंचयथाज्ञातंतथानोक्तमित्युक्तंभवति उक्तेऽर्थेहेतुमाह त्वंहिसर्व कुरूत्तम इति २ एतदेवसदृष्टांतंविवृणोतिनावीति यथाऽरित्रकर्णधारादिमत्यां महानाविसंबद्धाक्षुद्रानौः पारंप्राप्नोति। यथावांऽधंशरीरंजडत्वात् अंधःअन्नं। 'भिस्सास्त्रीभक्तमंधोऽन्नं'इत्यमरः। अन्वियातअनुलक्षीकृत्यचलेत्। अन्नंब्रह्माणइतिश्रुतेरनुभवाच्च। तथाभूताःत्वदधीनगतयस्त्वदधीनजीविनाश्च कौरव्याः येषांचास्मदादीनां त्वंअग्रणीःपुरोभूत्वापुरुषार्थप्रापकस्तेऽपितथाभूताएवेत्यर्थः। तस्मादनन्यगतिकानामस्माकंअवश्यं त्वयाउपदेशःकर्तव्यइतिभावः ३ पूतनेति अस्यसगुणब्रह्मणः प्रव्यथितंनिर्गुणेऽपिगुणारोपेण वस्तुतत्त्वगो

युक्तमेतत्तृतीयायांप्रकृतौवर्तताત्वया ॥ वक्तुंधर्मादपेतार्थंत्वंहिसर्वकुरूत्तमः २ नाविनौरिवसंबद्धायथांऽधोऽवांधमन्वियात् ॥ तथाभूताहिकौरव्यायेषां भीष्मत्वमग्रणीः ३ पूतनाघातपूर्वाणिकर्माण्यस्यविशेषतः ॥ त्वयाकीर्तयताऽस्माकंभूयःप्रव्यथितंमनः ४ अवलिप्तस्यमूर्खस्यकेशवंस्तोतुमिच्छतः ॥ कथंभीष्मनतेजिव्हाशतधेयंविदीर्यते ५ यत्रकुत्साप्रयोक्तव्याभीष्मबालतरैर्नरैः ॥ तमिमंज्ञानवृद्धःसन्गोपंसंस्तोतुमिच्छसि ६ यद्यनेनहताबाल्येशकुनिश्चित्रमत्रकिम् ॥ तौवाऽश्ववृषभौभीष्मयौनयुद्धविशारदौ ७ चेतनारहितंकाष्ठंयद्यनेननिपातितम् ॥ पादेनशकटंभीष्मतत्रकिंकृतमद्भुतम् ८ वल्मीकमात्रःसप्ताहंयद्यनेनधृतोऽचलः ॥ तदागोवर्द्धनोभीष्मनतच्चित्रंमतंमम ९ भुक्तमेतेनबह्वन्नंक्रीडतानगमूर्धनि ॥ इतितेभीष्मशृण्वानाःपरेविस्मयमागताः १० यस्यचानेनधर्मज्ञभुक्तमन्नंबलीयसः ॥ सचानेनहतःकंसइत्येतन्नमहाद्भुतम् ११

पनात्दुःखितंमित्यर्थः ४ अवेति। लिप्तस्यमूर्खस्यइच्छतइतिकर्मणिषष्ठ्यः। लिप्तंविषयसंगिनंमूर्खंमूढंमां केशवंस्तोतुमिच्छंतंअत्र तुच्छमपिभगवद्भक्तंमांपालय हितोपदेशेनेतिभावः। अत्याश्चर्यमेतदित्याह कथमिति हेभीष्महेवित् हेविद्वन् नतेनम्रेमादृशेऽपि उपनतेशिष्येइयंजिव्हात्वदीया त्वयाशतधाकथंनईर्यतेप्रेर्यतेअनेकैः प्रकारैः तत्त्वंप्रतिपादयितुमितिशेषः ५ यत्रेतियत्रसगुणे कुत्सानिंदाबालतरैः आपातत उपनिषन्मात्राध्येतृभिर्बटुभिः। बालेतरैरितिपाठेवृद्धैरपि। 'यन्मनसानमनुतेयेनाहुर्मनोऽमतं ॥ तदेवब्रह्मत्वंविद्धिनेदंयदिदमुपासते'इत्यब्रह्मत्वेकुत्साप्रयोक्तव्या। तमिमंगोपयतीतिगोपःतंगोपं व्यधिकरणेद्वितीये। तस्यशबलस्यगूहनकर्तारं शुद्धंसंस्तोतुंसम्यक्प्रस्तोतुमिच्छसि। प्रार्थनायांपंचमोलकारः। तंप्रस्तोतुंइच्छांकुर्वित्यर्थः ६ अनंतब्रह्मांडाधिपे मायाविन्यपिपूतनाघातादिकमत्यंततुच्छमित्याह यद्यनेनेत्यादिना शकुनिःपूतना पाठांतरेशकुनिवत्खेचरस्तृणावर्तः ७। ८। ९। इति ते त्वत्तःशृण्वानाः विस्मयमागताः नाहमित्यर्थः १० यस्यचेतियस्यद्रौपद्यादेः अन्नंअदनीयं शाकलेशादिभुक्तं सचकंसः कामयमानो दुर्वासः स्तृप्त्यादिकं इच्छन्अनेनकृष्णेनहतः गतःअनुसृतः। हंतेर्गत्यर्थत्वात्। तदिष्टंसंपादितमित्यर्थः। सर्वात्मनिकृष्णेशाकलेशेनतृप्ते विश्वतृप्तिर्जातेत्यपि नाद्भुतमित्यर्थः ११

नतेनग्नेशिष्यसमीपेकथयतांसतांमुखात्इदंत्वदुक्तंपूतनावधादि मयाश्रुतम् । किंज्ञातस्यार्थस्यानिरूपणेनेतिभावः । हेकुलाधमकुलंगृहंअधमंयस्य गृहातीत सन्यासधर्मरत । यत्तुत्वा कथंअहंवक्ष्येवोढुंशक्ष्येतत्कुरु आमधर्मज्ञं अपक्वधर्मःक्षयिष्णुफलत्वात्कर्मोपास्तीतदभिज्ञं मांप्रति तदेववाक्यंअपूर्वार्थप्रतिपादकंवचः निर्गुणब्रह्मविषयंकुरु । तद्वाहंज्ञातुंशक्ष्येइत्यर्थः १२ स्त्रीष्विति प्रतिश्रेयोऽङ्गीकारः यश्चस्वीयत्वेनांगीकृतस्तस्मिन्नित्यर्थः । 'प्रतिश्रयःसभायांचाश्रये'इतिमेदिनी १३ हिंसायाअनिष्टसाधनत्वमुक्तं तत्त्वयिविज्ञानवतिवितथंव्यर्थम् । 'हत्वाऽपिसइमाँल्लोकान्नहंति ननिबध्यते'इत्युक्तेः १४ ज्ञानेति ज्ञातज्ञापनंव्यर्थमित्यर्थः १५ गोघ्नइति गांवाचंहंति हिनस्ति । 'यतोवाचोनिवर्तंते'इति श्रुतेः । स्वस्माद्व्यावर्तयति त था स्त्रीवस्त्रीसृष्टौसहायभूता मायातद्धंता वाचामायिकस्य गुणवतःस्तुतिःकर्तव्या असौत्वमायःवागतीतः कथंसंस्तवमर्हति नकथमपीति १६ मतिमतांमतिमद्भिःश्रेष्ठः प्रशस्यतमः संभावयतीति जनार्दनः संसारवर्द्धनेनजनपीडनकरः मायावीईश्वरः त्वद्वाक्यात् तववश्यवचसोवाक्यात्एतत्सर्वं पूतनाघातादिआत्मनि संभावयतिसत्यत्वेनैवदर्शयति श्रेष्ठेनत्वया यदेववक्तव्यंतदेवलोकःसत्यमित्यध्यवस्यति वस्तुतस्तु एतत्सर्वं कृष्णेक्रियारोपणंवितथं । 'निष्कलंनिष्क्रियं' इत्यादिश्रुतेः १७ तत्र'सर्वेब्रह्मवदिष्यंतिसंप्राप्तेतुकलौयुगे । नानुतिष्ठं

नतेश्रुतमिदंभीष्मनूनंकथयतांसताम् ॥ यद्वक्ष्येत्वामधर्मज्ञंवाक्यंकुरुकुलाधम १२ स्त्रीषुगोषुनशस्त्राणिपातयेद्ब्राह्मणेषुच ॥ यस्यचान्नानिभुंजीतयत्रच स्यात्प्रतिश्रयः १३ इतिसंतोऽनुशासंतिसज्जनंधर्मिणःसदा ॥ भीष्मलोकेहितत्सर्वंवितथंत्वयिदृश्यते १४ ज्ञानवृद्धंचवृद्धंचभूयांसंकेशवंमम ॥ अजानतइवाख्यासिसंस्तुवन्कौरवाधम १५ गोघ्नःस्त्रीघ्नश्चसन्भीष्मत्वद्वाक्याद्यदिपूज्यते ॥ एवंभूतश्चयोभीष्मकथंसंस्तवमर्हति १६ असौमतिमतांश्रेष्ठोयएषजगतःप्रभुः ॥ संभावयतिचाप्येवंत्वद्वाक्याच्चजनार्दनः ॥ एवमेतत्सर्वमितितत्सर्वंवितथंध्रुवम् १७ नगाथागाथिनंशास्तिबहुचेदपिगायति ॥ प्रकृतिंयांतिभूतानिभूलिंगशकुनिर्यथा १८ नूनंप्रकृतिरेषातेजघन्यानात्रसंशयः ॥ अतःपापीयसीचैषांपांडवानामपीष्यते १९ येषामर्च्यतमःकृष्णस्त्वंचयेषांप्रदर्शकः ॥ धर्मवांस्त्वमधर्मज्ञसतांमार्गादवप्लुतः २० कोहिधर्मिणमात्मानंजानन्ज्ञानविदांवरः ॥ कुर्याद्यथात्वयाभीष्मकृतंधर्ममवेक्षता २१ चेत्त्वंधर्मंविजानासियदिप्राज्ञमतिस्तव ॥ अन्यकामाहिधर्मज्ञाकन्यकाप्राज्ञमानिना ॥ अंबानामेतिभद्रंतेकथंसाऽपहृतात्वया २२ तांत्वयाऽपहृतांभीष्मकन्यांनैषितवान्यतः ॥ भ्रातावैचित्रवीर्यस्तेसतांमार्गमनुष्ठितः २३

तिमैत्रेयाशिश्नोदरपरायणाः' इति । शब्दमात्रंवदंति नशमादिपराभवंति तादृशोभीष्मोनभवतीत्याह द्वाभ्यां नगाथेति । भूलिंगोनामभूशायीपक्षी मासाहसमित्यनिशंवदन्नपि सिंहदंष्ट्रांतरस्थंमांसमादत्तेस्वयं साहसमतिशायितंकरोति तथानाहिंसादिकंकर्तव्यमितिवदन्नन्योहिंसामेवकरोतीत्यर्थः १८ त्वंतुअस्मिन्चरमेजन्मनि यथावदासितथैवकरोषीत्याहनूनमिति प्रकृतिःशरीरंजघन्याच रंडा तथापांडवानामपिप्रकृतिर्जघन्याऽतः हेतोःपापीयसी वेदोक्तधर्मसंरक्षकतरा । पातीतिपाःवेदोक्तोधर्मइति पाखंडपदनिर्वचनेऽव्यासेनैवव्याख्यातत्वात् तंपातीतिपापाअतिशयेनपापा पापीयसीतियोगात् १८ चरमदेहत्वेगमकमाह येषामिति अतोहेतोः सर्वथात्वंअवेतिसंबंधः । कंअवेत्युच्यते यःअधर्मज्ञःधर्मज्ञोनभवतियश्चसतांमार्गात् प्लुतश्च्युतःतमितियत्त च्छब्दाध्याहारेण योज्यम् २ यथावदासितथाकरोषीत्येतद्दर्शयितुं भीष्मस्यब्रह्मचर्यदार्ढ्यंस्तौतिपंचभिः कोहीति धर्मिणंधर्मेऽधिकारिणम्२१ अन्येति हेप्राज्ञमानिनात्वया त्वदाया कन्यका सात्वत्तःकथंभद्रंआप नकथंचन दृढत्वात्तवब्रह्मचर्यस्य २२ तव भ्राताऽपि तादृशइत्याह तामिति यदर्थं हृता सभ्राताऽपि तांनैषितवान् अन्यकामाहीति पूर्वोक्तहेतोरेवेत्यर्थः२३

अंबानाम्न्याप्राथ्र्यमानेनापि त्वयाब्रह्मचर्यंनत्यक्तमित्युक्ता धर्मसंकटेऽपित्वयातन्नत्यक्तमित्याह दारयोरिति यस्यविचित्रवीर्यस्य हेप्राज्ञ तवमिषतःपश्यतः मानिनःमानवतः २४ को
हिधर्मइति हेभीष्म तेतवनिकटे अहिर्ह्रत्रासुरस्तस्यधर्मो दंभदर्पादिःकोऽस्ति नकोऽपीत्यर्थः । तवकोपिदंभादिरासुरोधर्मोनास्ति अतः यदिदंधारयासि ब्रह्मचर्यतद्वृथा व्यासेनेव त्व
याऽपिभ्रातृक्षेत्रेषु अपत्योत्पादनंकर्तुंयुक्तमेवासीदित्यर्थः । वाशब्दौइवार्थे । ल्यब्लोपेपंचम्यौ । मोहंप्राप्येवक्लीबत्वंप्राप्येवमूर्च्छितवत् क्लीबवचासंभावितविष्ठवं तवब्रह्मचर्यमित्य
र्थः २५ नत्विति हेधर्मज्ञकचिदपि साधनेशमदमादौ तवउपचयंवृद्धिंनपश्यामीतिन अपितुपश्याम्येव । हितेहितनिमित्तंत्वयावृद्धाश्च सेविताइत्यपिपश्यामि तत्र लिंगंयएवंधर्ममब्रवी
रिति २६ एवंकृष्णस्यैवपूज्यत्वरूपं धर्मइष्टंदत्तमितिसार्द्धश्लोकत्रयंवाक्यं इष्टादिकं अपत्यस्यषोडशीमपिकलांनार्हति अनपत्यस्यचव्रतादिकं मोघमित्येवंअन्येनराः कथयंतीति
योजना २७ । २८ सत्वंअनपत्यःसन् मिथ्याधर्मै आध्यासिकधर्मोऽपत्योत्पादनादिःतस्य अनुसारकःतंअनुसर्तुं वृद्धोवयोतीतत्वादयोग्योऽसीत्यर्थः । अनुशासनादितिपाठे मिथ्याध

दारयोर्यस्यचान्येनमिषतःप्राज्ञमानिनः ॥ तवजातान्यपत्यानिसज्जनाचरितेपथि २४ कोहिधर्मोऽस्तितेभीष्मब्रह्मचर्यमिदंवृथा ॥ यद्धारयसिमोहा
द्वाक्लीबत्वाद्वानसंशयः २५ नत्वहंतवधर्मज्ञपश्याम्युपचयंकचित् ॥ नहितेसेवितावृद्धायएवंधर्ममब्रवीः २६ इष्टंदत्तमधीतंचयज्ञाश्वबहुदक्षिणाः ॥ सर्व
मेतदपत्यस्यकलांनार्हतिषोडशीम् २७ व्रतोपवासैर्बहुभिःकृतंभवतिभीष्मयत् ॥ सर्वंतदनपत्यस्यमोघंभवतिनिश्चयात् २८ सोनपत्यश्चवृद्धश्चमिथ्या
धर्मानुसारकः ॥ हंसवत्त्वमपीदानींज्ञातिभिःप्राप्नुयावधम् २९ एवंहिकथयंत्यन्येनराज्ञानविदःपुरा ॥ भीष्मयत्तदहंसम्यक्वक्ष्यामितवशृण्वतः ३० वृद्धःकि
लसमुद्रांतिकश्चिद्धंसोऽभवत्पुरा ॥ धर्मवागन्यथावृत्तःपक्षिणःसोऽनुशास्तिच ३१ धर्मंचरतमाऽधर्ममितितस्यवचःकिल ॥ पक्षिणःशुश्रुवुर्भीष्मसततंसत्य
वादिनः ३२ अथास्यभक्ष्यमाजह्रुःसमुद्रजलचारिणः ॥ अंडजाभीष्मतस्यान्येधर्मार्थमितिशुश्रुम ३३ तेचतस्यसमभ्याशेनिक्षिप्यांडानिसर्वशः ॥ समुद्रां
भस्यमज्जंतचरंतोभीष्मपक्षिणः ३४ तेषामंडानिसर्वेषांभक्षयामासपापकृत् ॥ सहंसःसंप्रमत्तानामप्रमत्तःस्वकर्मणि ३५ ततःप्रक्षीयमाणेषुतेषुतेष्वंडजोऽप
रः ॥ अशंकतमहाप्राज्ञःसकदाचिददर्शह ३६ ततःसकथयामासदृष्ट्वाहंसस्यकिल्बिषम् ॥ तेषांपरमदुःखार्तःसपक्षीसर्वपक्षिणाम् ३७ ततःप्रत्यक्षतोदृष्ट्वा
पक्षिणस्तेसमीपगाः ॥ निजघ्नुस्तंतदाहंसंमिथ्यावृत्तंकुरूद्वह ३८ तेत्वांहंससधर्माणमपीमेवसुधाधिपाः ॥ निहन्युर्भीष्मसंक्रुद्धाःपक्षिणस्तमिवांडजम् ३९

र्मानुशासनंदेहाभिमानियोग्यंशास्त्रंविहायानपत्यश्च वृद्धश्चजातोसीतिसंबंधः तस्मात्हंसवत्संन्यासिवत्ज्ञातिभ्यः ज्ञानेभ्यः तत्त्वज्ञानात्श्रवणादिव्यापारभेदात् बहुत्वंवधंगतिंमोक्षं
गत्यर्थस्यहंतेरिदंरूपं श्रवणमनननिदिध्यासनैः सम्यगनुष्ठितैरात्मानंप्राप्नुहीत्यर्थः २९ यस्त्वनृताभिसंधिःशब्देनैवज्ञानंवदति नचध्यानेनसाक्षात्करोति सवध्यतइत्यस्मिन्नर्थेहं
साख्यायिकामाह एवंहीत्यादिनाकुरूद्वहेत्यंतेन ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ तेत्वामिति तेइमेवसुधायाः शरीररूपायाःपृथ्व्याः अधिपाश्चालकाः प्रा
णाएकादशेंद्रियाणि च त्वांनिहन्युरपि इतरानिवनानायोनिपातेन हिंस्युरपि नतुहिंसितवंतः । तत्रहननेदृष्टांतः संक्रुद्धाः पक्षिणस्तमंडजामिवेति । अपिकाका हिंसाया अभावं द्योतयति
तत्रहेतुः हंससधर्माणं । हंसाः ध्यानाभिक्षवः तत्तुल्यंसदा ध्यायिनं जितप्राणेंद्रियगणमित्यर्थः ३९

शाब्दंपांडित्यमेवलोकेबहुलं नत्वार्थिकमित्यर्थः पूर्वोक्तकथार्थसंग्राहिकागाथाऽस्तीत्याह गाथामिति ४० अभिहतेकामादिभिः रौषि वदसि धर्मं एतत्तवअशुचि अंडभक्षणकर्म वाच मतीयतेउक्तिविरुद्धमित्यर्थः ४१ ॥ इतिसभापर्वणिनैलकंठीये भारतभावदीपेएकाचत्वारिंशोऽध्यायः ॥ ४१ ॥ एवंभीष्मप्रशंसामुखेन हरिंस्तुत्वासंप्रति जरासंधस्तुत्याऽपि तंस्तौ ति समेइत्यादिना 'निर्दोषं हिसमंब्रह्म'इतिगीतोक्तेः समेब्रह्मणि जरासंधोऽपि बहुमतः श्रेष्ठः यःअयं प्रत्यगात्मादासइतिमत्वाऽनेन स्वामिनाकृष्णेन युद्धंन इयेष नेच्छितवान् १ अनेनेत्यन्वादेशादयमर्थस्य प्रतीचः तदर्थेन कृष्णेनाभेदंदर्शयाति केशवेनेति कःब्रह्मा २ केशवादिभिर्यत्कृतं तदेवाह अद्वारेणेत्यादिना कृष्णेन जरासंधानुग्रहार्थंगच्छता गजेंद्रा नुग्रह इव चतुर्भुजं गरुडारूढंस्वंरूपंनप्रकाशितं किंतुप्रसिद्धमपि कृष्णरूपं ब्राह्मणवेषेणाच्छादितं तत्तब्रह्मासाधुमन्यते अन्यथा सर्वेषांतत्स्वरूपदर्शा ब्रह्मलोकोल्लंघनेन ब्रह्मणोप मानोभवतीति दुःसहंतत्तस्य तथाचश्रुतिः 'तस्मादेषांतन्न प्रियंयदेतन्मनुष्या विदुः' इति । एषांदेवानां एतत्ब्रह्म अद्वारेणप्रवेशादिकं मानुषं नाट्यमनुकुर्वतः शत्रुत्वाभिनयार्थं युक्तमेतत्लौकिकमर्यादाप्रदर्शनार्थम् ३ स्तुतिपक्षेचतुर्थी षष्ठ्यर्थे दुरात्मनो लोकस्याग्रे अस्मैकृष्णाय पाद्यंदातुंनेषितं तत्स्वरूपगूहनायेतिभावः ४ विकृतं भोजनप्रत्या

गाथामप्यत्रगायंतियेपुराणविदोजनाः ॥ भीष्मयांतांचतेसम्यक्कथयिष्यामिभारत ४० अंतरात्मन्यभिहतेरौषिपत्ररथाशुचि ॥ अंडभक्षणकर्मैतत्तव वाचमतीयते ४१ इतिश्रीमन्महाभारतेसभापर्वणिशिशुपालवधपर्वणिशिशुपालवाक्येएकचत्वारिंशोऽध्यायः ॥ ४१ ॥ शिशुपालउवाच ॥ समेबहुमतो राजाजरासंधोमहाबलः ॥ योऽनेनयुद्धंनेयेषदासोऽयमितिसंयुगे १ केशवेनकृतंकर्मजरासंधवधेतदा ॥ भीमसेनार्जुनाभ्यांचकस्तत्साध्वितिमन्यते २ अद्वारेणप्रविष्टेनछद्मनाब्रह्मवादिना ॥ दृष्टःप्रभावःकृष्णेनजरासंधस्यभूपतेः ३ येनधर्मात्मनाऽऽत्मानंब्रह्मण्यमविजानता ॥ नेषितंपाद्यमस्मैतद्दातुम ग्रेदुरात्मने ४ भुज्यतामितितेनोक्ताःकृष्णभीमधनंजयाः ॥ जरासंधेनकौरव्यकृष्णेनविकृतंकृतम् ५ यद्ययंजगतःकर्तायथैनंमूर्खमन्यसे ॥ कस्मान्नब्राह्म णंसम्यगात्मानमवगच्छति ६ इदंत्वाश्चर्यभूतंमेयदिमेपांडवास्त्वया ॥ अपकृष्टाःसतांमार्गान्मन्यंतेतत्तसाध्विति ७ अथवानैतदाश्चर्यंयेषांत्वमसिभार त ॥ स्त्रीसधर्माचवृद्धश्चसर्वार्थानांप्रदर्शकः ८ ॥ वैशंपायनउवाच ॥ तस्यतद्वचनंश्रुत्वारूक्षंरूक्षाक्षरंबहु ॥ चुकोपबलिनांश्रेष्ठोभीमसेनःप्रतापवान् ९

ख्यानंवैराभिनयायेत्यर्थः ५ एवंकृष्णेनसह जीवतैवैकमत्यंप्राप्यांते कृष्णदर्शनेनैवप्राणांस्त्यजता तत्सायुज्यं प्राप्तमित्याह यद्ययमिति अयंजरासंधाख्यो जीवएवजगतः कर्ताभवेत् तर्हिएनं मूर्खंप्रतियथातथाकस्मात् अन्यसेचेष्टसे मूर्खवदेनंकथं मन्यसेइत्यर्थः । अत्रोत्तरग्रंथात् कृष्णस्तुतौ भीष्मेण पूतनावधादि असकृज्जरासंधपराजयांतं च वाक्यजातमुक्तमितिज्ञेयम् अयंच ब्राह्मणं ब्राह्मणवेषेणागतंकृष्णं मरणकालेपि कस्मात्आत्मानं प्रत्यगात्मभावेन सम्यक्नावगच्छति किंतुअवगच्छत्येव अयंभावः । जीवश्चेत्पर स्ताहिंजीवेन कृतंपरेणैव कृतमितिजीवो नस्तोतव्यः पर्यनुयोक्तव्यो वा । 'कोह्येवान्यात्कः प्राण्यात्यदेष आकाशआनंदो न स्यात्'इतिश्रुतेः । तस्यैवसर्वचेष्टाप्रवर्तकत्वात् । तथा 'अंतेमतिः सागतिः'इति स्मृतेरंतेकृष्णं पश्यतःकृष्णभावः सिद्धइतितस्य लोकदृष्ट्या कृष्णद्रोहित्वेपि न काचिद्धानिः अंतेकृष्णदर्शनहेतोरनेकजन्मांतरानुष्ठितस्य पुण्यपुंजस्यस त्वात्पुण्यवानेवेति स मंतव्यइति ६ एवंमूर्खाणां । विरुद्धवदाभासमानैर्वाक्यैः कृष्णंतद्भक्तांश्च स्तुत्वा संप्रत्यनुपदोक्तरीत्या सद्यःकैवल्यप्राप्तये कृष्णसन्निधौ मृत्युसंपादनार्थं ता नेवनिंदति स्पष्टार्थैर्वाक्यैः । इदं त्वित्यादिना । तुशब्दउक्तवैपरीत्यद्योतनार्थः ७ । ८ रूक्षं अर्थतः रूक्षाक्षरं शब्दतश्च ९

१० । ११ । १२ महासेनं कार्तिकेयम् १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेद्विचत्वारिंशोऽध्यायः॥४२॥रराम शब्दंचकार १

तथापद्मप्रतीकाशेस्वभावयतविस्तृते ॥ भूयःक्रोधाभिताम्राक्षेरक्तेनेत्रेबभूवतुः १० त्रिशिखांभ्रुकुटींचास्यददृशुःसर्वपार्थिवाः ॥ ललाटस्थांत्रिकूटस्थां गंगांत्रिपथगामिव ११ दंतान्संदशतस्तस्यकोपाद्ददृशुराननम् ॥ युगांतेसर्वभूतानिकालस्येवजिघत्सतः १२ उत्पतंतंतुवेगेनजग्राहैनंमनास्विनम् ॥ भीष्मएवमहाबाहुर्महासेनमिवेश्वरः १३ तस्यभीमस्यभीष्मेणवार्यमाणस्यभारत ॥ गुरुणाविविधैर्वाक्यैःक्रोधःप्रशममागतः १४ नातिचक्रामभीष्मस्य सहिवाक्यमरिंदमः ॥ समुद्धृतोघनापायेवेलामिवमहोदधिः १५ शिशुपालस्तुसंक्रुद्धेभीमसेनेजनाधिप ॥ नाकंपततदावीरःपौरुषेस्वेव्यवस्थितः १६ उत्पतंतंतुवेगेनपुनःपुनररिंदमः ॥ नसतंचिंतयामाससिंहःक्रुद्धोमृगंयथा १७ प्रहसंश्चाब्रवीद्वाक्यंचेदिराजःप्रतापवान् ॥ भीमसेनमभिक्रुद्धंदृष्ट्वाभीमपराक्रमम् १८ मुंचैनंभीष्मपश्यंतुयावदेनंनराधिपाः ॥ मत्प्रभावविनिर्दग्धंपतंगमिववन्हिना १९ ततश्चेदिपतेर्वाक्यंश्रुत्वातत्कुरुसत्तमः ॥ भीमसेनमुवाचेदंभीष्मोमतिमतांवरः २० ॥ ॥ इतिश्रीमन्महाभारतेसभापर्वणिशिशुपालवधपर्वणिभीमक्रोधेद्विचत्वारिंशोऽध्यायः ४२ ॥ ॥ भीष्मउवाच ॥ ॥ चेदिराजकुलेजातस्त्र्यक्षएषचतुर्भुजः ॥ रासभारावसदृशंरराससननादच १ तेनास्यमातापितरौत्रेसतुस्तौसबांधवौ ॥ वैकृतंतस्यतौदृष्ट्वात्यागाय कुरुतांमतिम् २ ततःसभार्यंनृपतिंसामात्यंसपुरोहितम् ॥ चिंतासंमूढहृदयंवागुवाचाशरीरिणी ३ एषतेनृपतेपुत्रःश्रीमान्जातोबलाधिकः ॥ तस्मादस्मान्नभेतव्यमव्यग्रःपाहिवैशिशुम् ४ नचैवैतस्यमृत्युर्वैनकालःप्रत्युपस्थितः ॥ मृत्युर्हंतास्यशस्त्रेणसचोत्पन्नोनराधिप ५ संश्रुत्योदाहृतंवाक्यंभूतमंतर्हितंततः ॥ पुत्रस्नेहाभिसंतप्ताजननीवाक्यमब्रवीत् ६ येनेदमीरितंवाक्यंममैतंतनयंप्रति ॥ प्रांजलिस्तंनमस्यामिब्रवीतुसपुनर्वचः ७ याथातथ्येनभगवान्देवोवायदिवेतरः ॥ श्रोतुमिच्छामिपुत्रस्यकोऽस्यमृत्युर्भविष्यति ८ अंतर्भूतंततोभूतमुवाचेदंपुनर्वचः ॥ यस्योत्संगेगृहीतस्यभुजावभ्यधिकावुभौ ९ पतिष्यतःक्षितितलेपंचशीर्षाविवोरगौ ॥ तृतीयमेतद्बालस्यललाटस्थंतुलोचनम् १० निमज्जिष्यतियंदृष्ट्वासोऽस्यमृत्युर्भविष्यति ॥ त्र्यक्षंचतुर्भुजंश्रुत्वातथाचसमुदाहृतम् ११ पृथिव्यांपार्थिवाःसर्वेअभ्यागच्छन्दिदृक्षवः ॥ तान्पूजयित्वासंप्राप्तान्यथार्हंसमहीपतिः १२ एकैकस्यनृपस्यांकेपुत्रमारोपयत्तदा ॥ एवंराजसहस्राणांपृथक्त्वेनयथाक्रमम् १३ शिशुरंकेसमारूढोनतत्प्रापनिदर्शनम् ॥ एतदेवतुसंश्रुत्यद्वारवत्यांमहाबलौ १४ ततश्चेदिपुरींप्राप्तौसंकर्षणजनार्दनौ ॥ यादवौयादवींद्रष्टुंस्वसारंतौपितुस्तदा १५

२ । ३ । ४ मृत्युः स्थूलदेहवियोगः कालः यमः मृत्युः हंता ५ । ६ । ७ । ८ । ९ । १० तथाचेति रासभारावसदृशंसमुदाहृतंशब्दम् ११ । १२ । १३ निदर्शनं बाहुपातादिकंज्ञापकम् १४

कुशलंबलकोशादिवृद्धिः अनामयं आरोग्यम् १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । अपराधशतमिति हिप्रसिद्धं वधार्हाणामन्येषामपिमयाऽपराधशतं क्षाम्यं हेपितृष्वसःतेपुत्रस्यतु संबंधवशात्सर्वथाक्षाम्यमेवेत्यर्थः २४ यःअह्वयतेयुद्धायेति शेषः २५ ॥ इतिसभापर्वणि नैलकंठीयेभारतभावदीपे त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ ॥ नैषे ति कृष्णस्यैवविनिश्चयइत्यनेन कृष्णप्रेरितोऽयंप्रलपतीत्युक्तम् १ कालपरीतात्माकालेनग्रस्तदेहः २ हरेस्तेजोंऽशस्यास्य शिशुपालस्यएषहारिस्तंस्वांशंआदातुं संहर्तुमिच्छति । पुनःशब्दोहिरण्यकशिप्वाद्यपेक्षया ३ । ४ । समुमूर्षुःकृष्णंकोपयितुं मिथ्यैवसंक्रुद्धोऽपिसन् उत्तरंउत्कृष्टतरंवचनंउवाच ५ पुनस्तदेवाहद्विषतांनइति समानाधिकरणेषष्ठ्यौ केशव

अभिवाद्ययथान्यायंयथाश्रेष्ठंनृपंचताम् ॥ कुशलानामयंपृष्ट्वानिषण्णौरामकेशवौ १६ साभ्यर्च्यतौतदावीरौप्रीत्याचाभ्यधिकंततः ॥ पुत्रंदामोदरोत्संगेदेवी संन्यदधात्स्वयम् १७ न्यस्तमात्रस्यतस्यांकेभुजावभ्यधिकावुभौ ॥ पेततुस्तच्चनयनंन्यमज्जतललाटजम् १८ तद्दृष्ट्वाव्यथितात्रस्तावरंकृष्णमयाचत ॥ ददस्वमेवरंकृष्णभयार्तायामहाभुज १९ त्वंह्यार्तानांसमाश्वासोभीतानामभयप्रदः ॥ एवमुक्तस्ततःकृष्णःसोऽब्रवीद्यदुनंदनः २० माभैस्त्वंदेविधर्मज्ञेन मत्तोऽस्तिभयंतव ॥ ददामिकंवरंकिंचकरवाणिपितृष्वसः २१ शक्यंवायादिवाशक्यंकरिष्यामिवचस्तव ॥ एवमुक्राततःकृष्णमब्रवीद्यदुनंदनम् २२ शि शुपालस्यापराधान्क्षमेथास्त्वंमहाबल ॥ मत्कृतेयदुशार्दूलविद्धचेनंमेवरंप्रभो २३ ॥ श्रीकृष्णउवाच ॥ अपराधशतंक्षाम्यंमयाह्यस्यपितृष्वसः ॥ पु त्रस्यतेवधार्हस्यमात्वंशोकेमनःकृथाः २४ ॥ भीष्मउवाच ॥ एवमेषनृपःपापःशिशुपालःसुमंदधीः ॥ त्वांसमाहूयतेवीरगोविंदवरदर्पितः २५ ॥ इतिश्री मन्महाभारतेसभापर्वणिशिशुपालवधपर्वणिशिशुपालवृत्तांतकथनेत्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ ॥ भीष्मउवाच ॥ नैषाचेदिपतेर्बुद्धिर्ययात्वाह्वयते ऽच्युतम् ॥ नूनमेषजगद्भर्तुःकृष्णस्यैवाविनिश्चयः १ कोहिमांभीमसेनाद्यक्षितावर्हतिपार्थिवः ॥ क्षेप्तुंकालपरीतात्मायथैषकुलपांसनः २ एषह्यस्यमहा बाहुस्तेजोंऽशश्चहरेर्ध्रुवम् ॥ तमेवपुनरादातुमिच्छत्युततथाविभुः ३ येनैषकुरुशार्दूलशार्दूलइवचेदिराट् ॥ गर्जत्यतीवदुर्बुद्धिःसर्वानस्मानचिंतयन् ४ ॥ वैशंपायनउवाच ॥ ततोनममृषेचैद्यस्तद्भीष्मवचनंतदा ॥ उवाचचैनंसंक्रुद्धःपुनर्भीष्ममथोत्तरम् ५ ॥ शिशुपालउवाच ॥ द्विषतांनोऽस्तुभीष्मैष प्रभावःकेशवस्ययः ॥ यस्यसंस्तववक्तात्वंबंदिवत्सततोत्थितः ६ संस्तवेचमनोभीष्मपरेषांरमतेयदि ॥ तदासंस्तौषिराज्ञस्त्वमिमंहित्वाजनार्दनम् ७ दरदं स्तुहिबाल्हीकमिमंपार्थिवसत्तमम् ॥ जायमानेनयेनेयमभवद्दारितामही ८ वंगांगविषयाध्यक्षंसहस्राक्षसमंबले ॥ स्तुहिकर्णमिमंभीष्ममहाचापविकर्षणम् ९

स्ययःप्रभावःसःद्विषतां तंद्विषतामप्यस्माकमस्तु ६ एवंईश्वरप्रभावंप्रार्थ्य तन्मूलहेतुंद्वेषमाहेतरस्तवेन संस्तवेचेत्यादिना हित्वेतिदधातेःरूपं जनार्दनंहादिनिधाय तद्रूपत्वेन इत रान्राज्ञःस्तुहीत्यर्थः निंदापक्षेत्वृजुरेवार्थः ७ जायमानेनेतिपाठे दारिता मीमेनमातुरंकात्पतताशिलेव येनमही विदारिता । यजमानेनेति पाठ ऋत्विग्भ्यो दित्सताभयंप्रा पिता । ब्राह्मणानामाधिपत्ये खलनिग्रहायोगादिति भावः ८ । ९

१० । ११ । १२ । १३ । १४ वैप्रतिसमः विगतःप्रतिसमोयस्यसतथा स्वार्थेतद्धितः अतुलइत्यर्थः १५ केशवंअतिक्रम्यजयद्रथं किंप्रशंससीतियोज्यं निंदापक्षेतुस्पष्टएवार्थः १६ । १७
१८ । १९ । २० । २१ शल्यादीनिति स्तवायस्तूयतेइतिव्युत्पत्त्यास्तवः परमेश्वरःतस्मैतत्प्राप्तये किंनस्तौषि अपितुसर्वान् परमेश्वरत्वेनैवस्तुहीत्यर्थः २२ किंहीति पितामात्रेतिवत्
सहार्थयोगाभावेऽपि तृतीया वृद्धतमेनत्वयासह कथयतांउपादिशतांवृद्धानां वचनं यतोमयानश्रुतंअतः किंकर्तुंशक्यं अज्ञत्वादकिंचित्करोऽहमित्यर्थः २३ एवंस्वगर्वंपरिहृत्ययत् ज्ञा
नंतदाहआत्मेति देहबुद्ध्या आत्मपरयोःस्तवोवा ईश्वरबुद्ध्यातयोर्द्वेषोवानकर्तव्यइति लेखतःनःअस्माभिः श्रुतमितियोज्यम् २४ अस्तव्यंवाचामगोचरत्वात् मोहात् मोहंअज्ञानं
आश्रित्येतिल्यप्लोपे पंचमी मायिकैर्गुणैःसर्वैश्वर्यादिभिः निर्विशेषचिन्मात्रस्यकेशवस्यस्तवं कश्चिदतदभिज्ञोनानुमन्यते २५ एतदेवाहकथमिति भोभीष्मअजस्य अविद्योपाधेर्जी

यस्येमेकुंडलेदिव्येसहजेदेवनिर्मिते ॥ कवचंचमहाबाहोबालार्कसदृशप्रभम् १० वासवप्रतिमोयेनजरासंधोऽतिदुर्जयः ॥ विजितोबाहुयुद्धेनदेहभेदंचलं
भितः ११ द्रोणंद्रोणिंचसाधुत्वंपितापुत्रौमहारथौ ॥ स्तुहिस्तुत्यावुभौभीष्मसततंद्विजसत्तमौ १२ ययोरन्यतरोभीष्मसंक्रुद्धःसचराचराम् ॥ इमांवसु
मतींकुर्यान्निःशेषामितिमेमतिः १३ द्रोणस्यहिसमंयुद्धेनपश्यामिनराधिपम् ॥ नाश्वत्थाम्नःसमंभीष्मनचतौस्तोतुमिच्छसि १४ पृथिव्यांसागरांता
यांयोवैप्रतिसमोभवेत् ॥ दुर्योधनंतंराजेंद्रमतिक्रम्यमहाभुजम् १५ जयद्रथंचराजानंकृतास्त्रंदृढविक्रमम् ॥ द्रुमंकिंपुरुषाचार्यंलोकेप्रथितविक्रमम् ॥ अति
क्रम्यमहावीर्यंकिंप्रशंससिकेशवम् १६ वृद्धंचभारताचार्यंतथाशारद्वतंकृपम् ॥ अतिक्रम्यमहावीर्यंकिंप्रशंससिकेशवम् १७ धनुर्द्धराणांप्रवरंरुक्मिणंपुरु
षोत्तमम् ॥ अतिक्रम्यमहावीर्यंकिंप्रशंससिकेशवम् १८ भीष्मकंचमहावीर्यंदंतवक्रंचभूमिपम् ॥ भगदत्तंयूपकेतुंजयत्सेनंचमागधम् १९ विराटद्रुपदौचो
भौशकुनिंचबृहद्बलम् ॥ विंदानुविंदावावंत्यौपांड्यंश्वेतमथोत्तमम् २० शंखंचसुमहाभागंवृषसेनंचमानिनम् ॥ एकलव्यंचविक्रांतंकालिंगंचमहारथ
म् ॥ अतिक्रम्यमहावीर्यंकिंप्रशंससिकेशवम् २१ शल्यादीनपिकस्मात्त्वंनस्तौषिवसुधाधिपान् ॥ स्तवाययदितेबुद्धिर्वर्ततेभीष्मसर्वदा २२ किं
हिशक्यंमयाकर्तुंयद्वृद्धानांत्वयानृप ॥ पुराकथयतांनूनंनश्रुतंधर्मवादिनाम् २३ आत्मनिंदाऽऽत्मपूजाचपरनिंदापरस्तवः ॥ अनाचरितमार्याणामिति
तेभीष्मनःश्रुतम् २४ यदस्तव्यमिमंशश्वन्मोहात्संस्तौषिभक्तितः ॥ केशवंतच्चतेभीष्मनकश्चिदनुमन्यते २५ कथंभोजस्यपुरुषेवर्गपालेदुरात्मनि ॥
समावेशयसेसर्वंजगत्केवलकाम्यया २६

वस्यपुरुषेपुरिशये अंतरात्मनिसाचिदानंदरूपे वर्गः देहेंद्रियादिसंघातःतस्यपालयितरि ।‘कोह्येवान्यात्कःप्राण्यात् यदेषआकाशआनंदोनस्यात्’ इति श्रुतेः । अदुरात्मनि उपाधिव
र्मकालुष्याद्दुःस्थित आत्मादुरात्मा विराट्सूत्रेश्वराख्यः तद्भिन्नेजगत्कथं समावेशयसे नाहिमुद्वदन्यायेनात्रजगत्समावेशः अपरिणामित्वादस्य किंतर्हिरज्जुसर्पन्यायेन तथाचाज्ञा
नमेवजगदुपादानं अयंतुतदाधिष्ठानमात्रम् यथोक्तम् । ‘अस्यद्वैतेंद्रजालस्य यदुपादानकारणं ॥ अज्ञानंतदुपाश्रित्य ब्रह्मकारणमुच्यते’ इति । केवलस्यनिर्गुणस्यकाम्यया इच्छयास
गुणोपासकानांनिर्गुणप्राप्तिः सद्योनसंभवतीत्यर्थः । पक्षेभोजस्यकंसस्यवर्गपालेगोसंघपाले २६

अथचेति तेत्वत्संबंधिनां एषांपुंसांबुद्धिः प्रकृतिंनयाति स्वकारणेनलीयते तर्हि भूलिंगशकुनिर्यथाऽन्यद्वदत्यन्यत्करोति तद्वत्तेशुद्धंकामयंते शबलंवदंतीत्यर्थः भुवंलिंगतीति भूलिंगो बिलशायीपक्षिविशेषः । एषेतिपाठेएषाअस्मदीयाबुद्धिः तेत्वदीयात्वद्वत्तेतियोज्यं तदास्वस्यैवशकुन्युपमत्वम् २७ अर्थविगर्हिताः उक्तिविपरीतक्रियया अर्थोविगर्हितोयासांताः २८ वाशतेशब्दंकरोति २९ मांसार्गलंदंष्ट्रांतरलग्नस्य मांसस्यबहिर्निर्गतभागंउल्लोलम् ३० इच्छतइति साहिपक्षिणीमृत्युमुखे प्रविष्टापितदुपेक्षयाजीवंतीयथा लोकानुपदिशतिमासाहस मिति तथात्वमपिदेहधारित्वान्मृत्युमुखेपतितोपि मृत्युनाउपेक्षितोजीवसि अस्मांश्चोपदिशसिमृत्युमुखे नपतितव्यमितितत्रहेतुः अधर्मिष्ठेति सर्वधर्मशून्यंब्रह्म अधर्मितन्निष्ठ । ब्रह्मनिष्ठो हिमृत्युमुखेनपततीति वेदशास्त्रप्रसिद्धम् ३१ अत्रैवहेत्वंतरमाह इच्छतामिति पूजायांबहुवचनम् शंतनोःस्वपितुरिच्छयावरदानेनापि जीवसीत्यर्थः लोकविद्विति द्विष्टकर्मेतिचछेदः लो

अथचैषानतेबुद्धिःप्रकृतिंयातिभारत ॥ मयैवकथितंपूर्वंभूलिंगशकुनिर्यथा २७ भूलिंगशकुनिर्नामपार्श्वेहिमवतःपरे ॥ भीष्मतस्याःसदावाचःश्रूयंतेऽर्थविगर्हिताः २८ मासाहसमितीदंसासततंवाशतेकिल ॥ साहसंचात्मनाऽतीवचरंतीनावबुध्यते २९ साहिमांसार्गलंभीष्ममुखात्सिंहस्यखादतः ॥ दंतांतरविलग्नंयत्तदादत्तेऽल्पचेतना ३० इच्छतःसाहिसिंहस्यभीष्मजीवत्यसंशयम् ॥ तद्वत्त्वमप्यधर्मिष्ठसदावाचःप्रभाषसे ३१ इच्छतांभूमिपालानांभीष्मजीवस्यसंशयम् ॥ लोकविद्विष्टकर्माहिनान्योऽस्तिभवतासमः ३२ ॥ ॥ वैशंपायनउवाच ॥ ॥ ततश्चेदिपतेःश्रुत्वाभीष्मःसकटुकंवचः ॥ उवाचेदंवचोराजंश्चेदिराजस्यशृण्वतः ३३ इच्छतांकिलनामाहंजीवाम्येषांमहीक्षिताम् ॥ सोहंनगणयाम्येतांस्तृणेनापिनराधिपान् ३४ एवमुक्तेतुभीष्मेणततःसंचुक्रुशुर्नृपाः ॥ केचिज्जहृषिरेतत्रकेचिद्भीष्मंजगर्हिरे ३५ केचिदूचुर्महेष्वासाःश्रुत्वाभीष्मस्यतद्वचः ॥ पापोऽवलिप्तोवृद्धश्चनायंभीष्मोऽर्हतिक्षमाम् ३६ हन्यतांदुर्मतिर्भीष्मःपशुवत्साध्वयंनृपाः ॥ सर्वैःसमेत्यसंरब्धैर्दह्यतांवाकटाग्निना ३७ इतितेषांवचःश्रुत्वाततःकुरुपितामहः ॥ उवाचमतिमान्भीष्मस्तानेववसुधाधिपान् ३८ उक्तस्योक्तस्यनेहांतमहंसमुपलक्षये ॥ यत्तुवक्ष्यामितत्सर्वंशृणुध्वंवसुधाधिपाः ३९ पशुवद्घातनंवामेदहनंवाकटाग्निना ॥ क्रियतांमूर्ध्निवोन्यस्तंमयेदंसकलंपदम् ४० एषतिष्ठतिगोविंदःपूजितोऽस्माभिरच्युतः ॥ यस्यवस्त्वरतेबुद्धिर्मरणायसमाधवम् ४१ कृष्णमाह्वयतामद्ययुद्धेचक्रगदाधरम् ॥ यावदस्यैवदेवस्यदेहंविशतुपातितः ४२ ॥ ॥ इतिश्रीमन्महाभारतेसभापर्वणिशिशुपालवधपर्वणिभीष्मवाक्येचतुश्चत्वारिंशोऽध्यायः ४४ ॥ ॥ ४ ॥ ॥ वैशंपायनउवाच ॥ ॥ ततःश्रुत्वैवभीष्मस्यचेदिराडुरुविक्रमः ॥ युयुत्सुर्वासुदेवेनवासुदेवमुवाचह १

कआत्मा 'आत्मानमेवलोकमुपासीत' इतिश्रुतेः तद्वित्तद्विद्विष्टंद्वेषयुक्तंहिस्वंक्षात्रंकर्मयस्येत्येवंविधोपिक्षत्रियोऽपि अत्यंतंब्रह्मविदसीत्यर्थः । पक्षांतरेतुस्पष्टार्थएवग्रंथः ३२ । ३३ एवंगूढाभिसंधिनाशिशुपालेन स्तुतोपिभीष्मः तस्याभिलषितंकैवल्यंदातुं तदुक्तीनांरूढयानिंदापरत्वमाश्रित्य वैरमुद्योतयन्नुवाच इच्छतांकिलेत्यादिना ३४ । ३५ । ३६ कटाग्निनाकक्षाग्निना ३७ । ३८ । ३९ । ४० । ४१ कृष्णमिति देहंविशत्वित्यनेनस्वस्य शिशुपालीयंवैकुंठात्पतनादिकंपूर्ववृत्तंविदितमस्तीतिदर्शितम् ४२ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ॥ उरुविक्रमःउरुर्महान् विश्वव्यापी विक्रमः पादविक्षेपोयस्य सशिशुपालो हरिणासहाभेदात् १

तावत्तरणं गच्छयावत्त्वांनिहन्मि ।निश्चयेनप्राप्नोमि हंतेर्गत्यर्थत्वेन प्राप्त्यर्थत्वात्सद्यःकैवल्येप्सुं मां जरासंधमिव जितमात्रं मा मुंचेत्यर्थः सहितं सर्वपांडवैरिति पांडवानामपि विष्णवंशत्वंदर्शयति २ अवध्याःअवधौ मर्यादायांसाधवः मर्यादापरिपालकाः मेमताः एषसेतुर्विधृतिरेषां लोकानामसंभेदायेति परमात्मनस्तावन्मर्यादाविधारकत्वं स्पष्टं तदंश त्वात्पांडवानामपीत्यर्थः । अत्रहेतुमाह नृपतीनिति अराजा नास्तिरंजकोऽस्मादन्य इतिअराजा । 'एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति । एषह्येवानंदयाति'इत्यादिना परमात्मनएव मुख्यरंजकत्वश्रुतेः ३ त्वांदासं त्वा अंदासमितिच्छेदः त्वात्वांअंदो बंधः । अदिबंधनेधातुः । तंअस्याति क्षिपतीतिअंदासंबंधनाशकम् बाल्यादारभ्येतिशेषः दुर्मतिंअ

आव्हयेत्वांरणंगच्छमयासार्द्धंजनार्दन ॥ यावदद्यनिहन्मित्वांसहितंसर्वपांडवैः २ सहत्वयाहिमेवध्याःसर्वथाकृष्णपांडवाः ॥ नृपतीन्समतिक्रम्ययैरराजा त्वमर्चितः ३ येत्वांदासमराजानंबाल्यादर्चंतिदुर्मतिम् ॥ अनर्हमर्हवत्कृष्णवध्यास्तइतिमेमतिः ४ इत्युक्त्वाराजशार्दूलस्तस्थौगर्जन्नमर्षणः ॥ एवमुक्त स्ततःकृष्णोमृदुपूर्वमिदंवचः ॥ उवाचपार्थिवान्सर्वान्ससमक्षंचवीर्यवान् ५ एषनःशत्रुरत्यंतंपार्थिवाःसात्वतीसुतः ॥ सात्वतानांनृशंसात्मानाहितोऽनपका रिणाम् ६ प्राग्ज्योतिषपुरंयातानस्मान्ज्ञात्वानृशंसकृत् ॥ अदहद्द्वारकामेषस्वस्रीयःसन्नराधिपाः ७ क्रीडतोभोजराजस्यएषरैवतकेगिरौ ॥ हत्वावध्वा चतान्सर्वानुपायात्स्वपुरंपुरा ८ अश्वमेधेहयंमेध्यमुत्सृष्टंरक्षिभिर्वृतम् ॥ पितुर्मेयज्ञविघ्नार्थमहरत्पापनिश्चयः ९ सौवीरान्प्रतियातांचबभ्रोरेषतप स्विनः ॥ भार्यामभ्यहरन्मोहादकामांतामितोगताम् १० एषमायाप्रतिच्छन्नःकरूषार्थेतपस्विनीम् ॥ जहारभद्रांवैशालींमातुलस्यनृशंसकृत् ११ पितृष्वसुःकृतेदुःखंसुमहन्मर्षयाम्यहम् ॥ दिष्ट्याहीदंसर्वराज्ञांसन्निधावद्यवर्तते १२ पश्यंतिहिभवंतोऽद्यमय्यतीवव्यतिक्रमम् ॥ कृतानितुपरोक्षं मेयानितानिनिबोधत १३ इमंत्वस्यनशक्ष्यामिक्षंतुमद्यव्यतिक्रमम् ॥ अवलेपाद्वधार्हस्यसमग्रेराजमंडले १४ रुक्मिण्यामस्यमूढस्यप्रार्थनाऽऽसी न्मुमूर्षतः ॥ नचतांप्राप्तवान्मूढःशूद्रोवेदश्रुतीमिव १५ ॥ वैशंपायनउवाच ॥ ॥ एवमादिततःसर्वेसहितास्तेनराधिपाः ॥ वासुदेववचःश्रुत्वाचे दिराजंव्यगर्हयन् १६ तस्यतद्वचनंश्रुत्वाशिशुपालःप्रतापवान् ॥ जहासस्वनवद्धासंवाक्यंचेदमुवाचह १७ मत्पूर्वांरुक्मिणींकृष्णसंसत्सुपरिकीर्तयन् ॥ विशेषतःपार्थिवेषुव्रीडांनकुरुषेकथम् १८ मन्यमानोहिकःसत्सुपुरुषःपरिकीर्तयेत् ॥ अन्यपूर्वांस्त्रियंजातुत्वदन्योमधुसूदन १९

र्हं दुःस्थितांमतिंप्रवेष्टुंअनर्हमित्यर्थः अर्हवत् पूज्यवत्तेऽपिवध्याः अवोपसर्गस्य भागुरिमतेन अकारलोपः पूर्ववदर्थः ४ । ५ एवंगूढाशयेन स्तुतोऽपि भगवान् रूढयर्थाभिप्रायेण लोकदृष्ट्यातंहंतुंवैरमाविष्करोति एषनःशत्रुरित्यादिना नहितः सुप्सुपेति समासःनैकधेत्यादिवत् द्वेषीत्यर्थः ६ । ७ । ८ । ९ सौवीरान् देशविशेषान् इतोहस्तिनापुरात्गतां प्रस्थितां सुवीरात्प्रतिपत्तौ चेतिपाठेप्रतिपत्तौविवाहकाले बभ्रोर्यादवस्य १० दोषांतरमाहएषइति करूषार्थेकरूषोदेशभेदः तद्राजार्थेअण् मायाप्रतिच्छन्नः कपटेनतद्वेषंकृत्वेत्यर्थः वैशाली विशालापुरी तदधिपस्यकन्याम् ११ । १२ तानिपूर्वोक्तानिनिबोधत १३ । १४ । १५ । १६ । १७ । मत्पूर्वांपित्रादिभिःपूर्वमह्यंप्रतिश्रुताम् १८ मन्यमानःस्वीकुर्वाणः १९

क्षमक्षमस्व श्रद्धापितृष्वसुर्वचांसि अवश्यानुष्ठेयत्वबुद्धिः २० । २१ । २२ याचतःइतिपाठेयाचनं याचःतस्मात्प्रथमार्थेतसिः २३ याचितंमया दत्तम्प्रतिश्रुतं तानिशतं आपराद्धानि वधयिष्यामिवधं प्रापयिष्यामि । ण्यंतात्वधशब्दात् लृट् २४ । २५ तेजोलिंगशरीरंअग्र्यं संसारा नादित्वयाऽनादि २६।२७ तच्चभगवतास्वमहिमानं प्रकाशयतासर्वेषां दृष्टिविषयी

क्षमवायदितेश्रद्धामावाकृष्णममक्षम ॥ क्रुद्धाद्वापिप्रसन्नाद्वाकिंमेत्वत्तोभविष्यति २० तथाब्रुवतएवास्यभगवान्मधुसूदनः ॥ मनसाऽचिंतयच्चक्रंदैत्यवर्ग निषूदनम् २१ एतस्मिन्नेवकालेतुचक्रेहस्तगतेसति ॥ उवाचभगवानुच्चैर्वाक्यंवाक्यविशारदः २२ शृण्वंतुमेमहीपालायेनैतत्क्षमितंमया ॥ अपराध शतंक्षाम्यंमातुरस्यैवयाचने २३ दत्तंमयायाचितंचतद्वैपूर्णंहिपार्थिवाः ॥ अधुनावधयिष्यामिपश्यतांवोमहीक्षिताम् २४ एवमुक्त्वायदुश्रेष्ठश्चेदिरा जस्यतत्क्षणात् ॥ व्यपाहरच्छिरःक्रुद्धश्चक्रेणामित्रकर्षणः २५ सपपातमहाबाहुर्वज्राहतइवाचलः ॥ ततश्चेदिपतेर्देहात्तेजोऽग्र्यंददृशुर्नृपाः २६ उत्पतंतं महाराजगगनादिवभास्करम् ॥ ततःकमलपत्राक्षंकृष्णंलोकनमस्कृतम् ॥ ववंदेतत्तदातेजोविवेशचनराधिप २७ तदद्भुतममन्यंतदृष्ट्वासर्वेमहीक्षितः ॥ यद्विवेशमहाबाहुंतत्तेजःपुरुषोत्तमम् २८ अनभ्रेप्रववर्षद्यौःपपातज्वलिताशनिः ॥ कृष्णेननिहतेचैद्येचचालचवसुंधरा २९ ततःकेचिन्महीपालानाब्रु वंस्तत्रकिंचन ॥ अतीतवाक्पथेकालेप्रेक्षमाणाजनार्दनम् ३० हस्तैर्हस्ताग्रमपरेप्रत्यपिंषन्नमर्षिताः ॥ अपरेदशनैरोष्ठानदशन्क्रोधमूर्छिताः ३१ रहश्चकेचिद्वार्ष्णेयंप्रशशंसुर्नराधिपाः ॥ केचिदेवतुसंरब्धामध्यस्थास्त्वपरेऽभवन् ३२ प्रहृष्टाःकेशवंजग्मुःसंस्तुवंतोमहर्षयः ॥ ब्राह्मणाश्चमहा त्मानःपार्थिवाश्चमहाबलाः ३३ शशंसुर्निर्वृताःसर्वेदृष्ट्वाकृष्णस्यविक्रमम् ॥ पांडवस्त्वब्रवीद्भ्रातॄन्सत्कारेणमहीपतिम् ३४ दमघोषात्मजंवीरंसंस्कारय तमाचिरम् ॥ तथाचकृतवंतस्तेभ्रातुर्वैशासनंतदा ३५ चेदीनामाधिपत्येचपुत्रमस्यमहीपतेः ॥ अभ्यषिंचत्तदापार्थःसहतैर्वसुधाधिपैः ३६ ततःसकु रुराजस्यक्रतुःसर्वसमृद्धिमान् ॥ यूनांप्रीतिकरोराजन्सबभौविपुलौजसः ३७ शांतविघ्नःसुखारंभःप्रभूतधनधान्यवान् ॥ अन्नवान्बहुभक्ष्यश्चकेशवेनसुरक्षि तः ३८ समापयामासचतंराजसूयंमहाक्रतुम् ॥ तंतुयज्ञंमहाबाहुरासमाप्तेर्जनार्दनः ॥ ररक्षभगवाञ्शौरिःशार्ङ्गचक्रगदाधरः ३९ ततस्त्ववभृथस्नातंधर्मा त्मानंयुधिष्ठिरम् ॥ समस्तंपार्थिवंक्षत्रमुपगम्येदमब्रवीत् ४० दिष्ट्यावर्द्धसिधर्मज्ञसाम्राज्यंप्राप्तवानसि ॥ आजमीढाजमीढानांयशःसंवर्धितंत्वया ४१ कर्मणैतेन राजेंद्रधर्मश्चसुमहान्कृतः ॥ आपृच्छामोनरव्याघ्रसर्वकामैःसुपूजिताः ४२ स्वराष्ट्राणिगमिष्यामस्तदनुज्ञातुमर्हसि ॥ श्रुत्वातुवचनंराज्ञांधर्मराजोयुधिष्ठिरः ४३

कृतंतेनअद्भुततमंएतद्दर्शनम् । यद्विवेशमहाबाहुंतत्तेजः पुरुषोत्तममित्यंतस्यशिशुपालवधस्य तात्पर्यं द्वेषादिनाप्यंतेभगवत्स्मरणं तत्प्राप्तिहेतुरितियथोक्तंश्रीमद्भागवते । 'गोप्यःकामाद्भ यात्कंसो द्वेषाच्चैद्यादयोनृपाः ॥ संबंधाद्वृष्णयः स्नेहाद्यूयंभक्त्या वयंप्रभो' इति कृष्णंप्राप्ताइतिशेषः २८।२९।३०।३१।३२।३३।३४।३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३

४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ सभाजयतप्रीणितवान् ५९ । ६० । ६१ । ६२ । ६३ संगृह्यानिरुध्य ६४ । ६५ त्वात्वांसंविदंसमयं ६६ अनुगमनादिशिष्टाचारप्रदर्शकोऽध्यायशेषःस्पष्टार्थः ६७ । ६८ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेपंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ समाप्तेराजसूयेतु

यथार्हपूज्यनृपतीन्भ्रातॄन्सर्वानुवाचह ॥ राजानःसर्वएवैतेप्रीत्याऽस्मान्समुपागताः ४४ प्रस्थिताःस्वानिराष्ट्राणिमामापृच्छ्यपरंतपाः ॥ तेऽनुव्रजत भद्रंवोविषयांतंनृपोत्तमान् ४५ भ्रातुर्वचनमाज्ञायपांडवाधर्मचारिणः यथार्हंनृपतीन्सर्वानेकैकंसमनुव्रजन् ४६ विराटमन्वयात्तूर्णंधृष्टद्युम्नःप्रतापवान् ॥ धनंजयोयज्ञसेनंमहात्मानंमहारथम् ४७ भीष्मंचधृतराष्ट्रंचभीमसेनोमहाबलः ॥ द्रोणंतुससुतंवीरंसहदेवोयुधांपतिः ४८ नकुलःसुबलंराजन्सहपुत्रं समन्वयात् ॥ द्रौपदेयाःससौभद्राःपार्वतीयान्महारथान् ४९ अन्वगच्छंस्तथैवान्यान्क्षत्रियान्क्षत्रियर्षभाः ॥ एवंसुपूजिताःसर्वेजग्मुर्विप्राःसहस्रशः ५० गतेषुपार्थिवेंद्रेषुसर्वेषुब्राह्मणेषुच ॥ युधिष्ठिरमुवाचेदंवासुदेवःप्रतापवान् ५१ आपृच्छेत्वांगमिष्यामिद्वारकांकुरुनंदन ॥ राजसूयंक्रतुश्रेष्ठंदिष्ट्या त्वंप्राप्तवानसि ५२ तमुवाचैवमुक्तस्तुधर्मराजोजनार्दनम् ॥ तवप्रसादाद्गोविंदप्राप्तःक्रतुवरोमया ५३ क्षत्रंसमग्रमपिचत्वत्प्रसादाद्वशेस्थितम् ॥ उपादाय बलिमुख्यंमामेवसमुपस्थितम् ५४ कथंत्वद्गमनार्थंमेवाणीवितरतेऽनघ ॥ नह्यहंत्वामृतेवीररतिंप्राप्नोमिकर्हिचित् ५५ अवश्यंचैवगंतव्याभवताद्वारका पुरी ॥ एवमुक्तःसधर्मात्मायुधिष्ठिरसहायवान् ५६ अभिगम्याब्रवीत्प्रीतःपृथांपृथुयशाहरिः ॥ साम्राज्यंसमनुप्राप्ताःपुत्रास्तेऽद्यपितृष्वसः ५७ सिद्धा र्थावसुमंतश्चसात्वंप्रीतिमवाप्नुहि ॥ अनुज्ञातस्त्वयाचाहंद्वारकांगंतुमुत्सहे ५८ सुभद्रांद्रौपदींचैवसभाजयतकेशवः ॥ निष्क्रम्यांतःपुरात्तस्माद्युधिष्ठिर सहायवान् ५९ स्नातश्चकृतजप्यश्चब्राह्मणान्स्वस्तिवाच्यच ॥ ततोमेघवपुःप्रख्यंस्यंदनंचसुकल्पितम् ६० योजयित्वामहाबाहुर्दारुकःसमुपस्थितः ॥ उपस्थितंरथंदृष्ट्वाताक्ष्र्यप्रवरकेतनम् ६१ प्रदक्षिणमुपावृत्यसमारुह्यमहामनाः ॥ प्रययौपुंडरीकाक्षस्ततोद्वारवतींपुरीम् ६२ तंपद्भ्यामनुवव्राजध र्मराजोयुधिष्ठिरः ॥ भ्रातृभिःसहितःश्रीमान्वासुदेवंमहाबलम् ६३ ततोमुहूर्तंसंगृह्यस्यंदनप्रवरंहरिः ॥ अब्रवीत्पुंडरीकाक्षःकुंतीपुत्रंयुधिष्ठिरम् ६४ [अ प्रमत्तःस्थितोनित्यंप्रजाःपाहिविशांपते ॥ पर्जन्यमिवभूतानिमहाद्रुममिवद्विजाः ६५ बांधवास्त्वोपजीवंतुसहस्राक्षमिवामराः] ॥ कृत्वापरस्परेणैवंसंवि दंकृष्णपांडवौ ६६ अन्योन्यंसमनुज्ञाप्यजग्मतुःस्वगृहान्प्रति ॥ गतेद्वारवतींकृष्णेसात्वतप्रवरेनृप ६७ एकोदुर्योधनोराजाशकुनिश्चापिसौबलः ॥ तस्यांसभायांदिव्यायामूषतुस्तौनरर्षभौ ६८ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिशिशुपालवधोनामपंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ ॥ समाप्तंच शिशुपालवधपर्व ॥ ॥ अथद्यूतपर्व ॥ ॥ वैशंपायनउवाच ॥ ॥ समाप्तेराजसूयेतुक्रतुश्रेष्ठेसुदुर्लभे ॥ शिष्यैःपरिवृतोव्यासःपुरस्तात्समपद्यत १

क्रतुश्रेष्ठेसुदुर्लभे इत्यादेः सभायांरमणीयायांतस्यामास्वनराधिप इत्यंतस्याध्यायस्यतात्पर्यंकुलक्षयनिमित्तभूतस्यक्वापुरुषस्यमरणमेवश्रेयइति सर्वैःसहमैत्याजीवितव्यमिति १

१५

२ । ३ । ४ । ५ । ६ । ७ । ८ । दिव्या अशनिपातादयः । आंतरिक्षा धूमकेत्वादयः । पार्थिवाः भूकंपादयः ९ । १० । ११ । १२ कपालिंकपालिनं सुपांसुलुगिति आर्षे द्वितीयालोपे सतिपरमेव्योमन्नित्यादिवत् प्रातिपदिकमात्रंशिष्यते । विभक्तेः स्थानिवत्त्वान्नलोपाभावस्तस्यचापदांतस्थत्वादनुस्वारोऽपिभवतीति । मत्वर्थीयंप्रत्ययांतंवाकल्प्यंएवमन्यत्रापिज्ञेयम्

सोऽभ्ययादासनात्तूर्णंभ्रातृभिःपरिवारितः ॥ पाद्येनासनादानेनपितामहमपूजयत् २ अथोपविश्यभगवान्कांचनेपरमासने ॥ आस्यतामितिचोवाचधर्मराजंयुधिष्ठिरम् ३ अथोपविष्टंराजानंभ्रातृभिःपरिवारितम् ॥ उवाचभगवान्व्यासस्तत्तद्वाक्यविशारदः ४ दिष्ट्यावर्धसिकौंतेयसाम्राज्यंप्राप्यदुर्लभम् ॥ वर्धिताःकुरवःसर्वेत्वयाकुरुकुलोद्वह ५ आपृच्छेत्वांगमिष्यामिपूजितोऽस्मिविशांपते ॥ एवमुक्तःसकृष्णेनधर्मराजोयुधिष्ठिरः ६ अभिवाद्योपसंगृह्यपितामहमथाब्रवीत् ॥ ॥ युधिष्ठिरउवाच ॥ ॥ संशयोद्विपदांश्रेष्ठममोत्पन्नःसुदुर्लभः ७ तस्यनान्योऽस्तिवक्तावैत्वामृतेद्विजपुंगव ॥ उत्पातांस्त्रिविधान्प्राहनारदोभगवानृषिः ८ दिव्यांश्चैवांतरिक्षांश्चपार्थिवांश्चपितामह ॥ अपिचैद्यस्यपतनाच्छन्नमौत्पातिकंमहत् ९ ॥ ॥ वैशंपायनउवाच ॥ राज्ञस्तुवचनंश्रुत्वापराशरसुतःप्रभुः ॥ कृष्णद्वैपायनोव्यासइदंवचनमब्रवीत् १० त्रयोदशसमाराजन्नुत्पातानांफलंमहत् ॥ सर्वक्षत्रविनाशायभविष्यतिविशांपते ११ त्वामेकंकारणंकृत्वाकालेनभरतर्षभ ॥ समेतंपार्थिवंक्षत्रंक्षयंयास्यतिभारत ॥ दुर्योधनापराधेनभीमार्जुनबलेनच १२ स्वप्नेद्रक्ष्यसिराजेंद्रक्षपांतेत्वंवृषध्वजम् ॥ नीलकंठंभवंस्थाणुंकपालिंत्रिपुरांतकम् १३ उग्रंरुद्रंपशुपतिंमहादेवमुमापतिम् ॥ हरंशर्वंवृषंशूलंपिनाकिंकृत्तिवाससम् १४ कैलासकूटप्रतिमंवृषभेऽवस्थितंशिवम् ॥ निरीक्षमाणंसततंपितृराजाश्रितांदिशम् १५ एवमीदृशकंस्वप्नंद्रक्ष्यसित्वंविशांपते ॥ मातत्कृतेह्यनुध्याहिकालोहिदुरतिक्रमः १६ स्वस्तितेऽस्तुगमिष्यामिकैलासंपर्वतंप्रति ॥ अप्रमत्तःस्थितोदांतःपृथिवींपरिपालय १७ ॥ ॥ वैशंपायनउवाच ॥ एवमुक्त्वासभगवान्कैलासंपर्वतंययौ ॥ कृष्णद्वैपायनोव्यासःसहशिष्यैःश्रुतानुगैः १८ गतेपितामहेराजाचिंताशोकसमन्वितः ॥ निःश्वसन्नुष्णमसकृत्तमेवार्थंविचिंतयन् १९ कथंतुदैवंशक्येतपौरुषेणप्रबाधितुम् ॥ अवश्यमेवभवितायदुक्तंपरमर्षिणा २० ततोऽब्रवीन्महातेजाःसर्वान्भ्रातृन्युधिष्ठिरः ॥ श्रुतंवैपुरुषव्याघ्रायन्मांद्वैपायनोऽब्रवीत् २१ तदातद्वचनंश्रुत्वामरणेनिश्चितामतिः ॥ सर्वक्षत्रस्यनिधनेयद्यहंहेतुरीप्सितः २२ कालेननिर्मितस्तातकोममार्थोऽस्तिजीवतः ॥ एवंब्रुवंतंराजानंफाल्गुनःप्रत्यभाषत २३ माराजन्कश्मलंघोरंप्राविशोबुद्धिनाशनम् ॥ संप्रधार्यमहाराजयत्क्षमंतत्समाचार २४ ततोऽब्रवीत्सत्यधृतिर्भ्रातृन्सर्वान्युधिष्ठिरः ॥ द्वैपायनस्यवचनंतत्रैवसमचिंतयन् २५ अद्यप्रभृतिभद्रंवःप्रतिज्ञांमेनिबोधत ॥ त्रयोदशसमास्तातकोममार्थोऽस्तिजीवतः २६ नप्रवक्ष्यामिपरुषंभ्रातृनन्यांश्चपार्थिवान् ॥ स्थितोनिदेशेज्ञातीनांयोक्ष्येतत्समुदाहरन् २७

१३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ ॥

२८।२९।३०।३१।३२।३३॥ इतिसभापर्वणि नैलकंठीयेभारतभावदीपेषट्चत्वारिंशोऽध्यायः॥ ४६॥ वसन्दुर्योधनस्तस्यामित्याद्यध्यायद्वयस्यतात्पर्यंपापिष्ठःपरकल्याणंदृष्ट्वाम
रणमिच्छतिछलेनपरलक्ष्मींवाहर्तुमिच्छति निर्घृणइति १ अभिप्रायान्देवादीनांक्रीडातत्स्थानाद्यभिनयप्रदर्शकचित्रादिगतानाशयविशेषान् । नागसाह्वयेनागेनहस्तिनासमानना

एवंमेवर्त्तमानस्यस्वसुतेष्वितरेषुच॥ भेदोनभवितालोकेभेदमूलोहिविग्रहः २८ विग्रहंदूरतोरक्षन्नप्रियाण्येवसमाचरन्॥ वाच्यतांनगमिष्यामिलोकेषु
मनुजर्षभाः २९ भ्रातुर्ज्येष्ठस्यवचनंपांडवाःसंनिशम्यतत्॥ तमेवसमवर्त्तंतधर्मराजहितेरताः ३० संसत्सुसमयंकृत्वाधर्मराड्भ्रातृभिःसह॥ पितॄंस्तर्प्य
यथान्यायंदेवताश्चविशांपते ३१ कृतमंगलकल्याणोभ्रातृभिःपरिवारितः॥ गतेषुक्षत्रियेंद्रेषुसर्वेषुभरतर्षभ ३२ युधिष्ठिरःसहामात्यःप्रविवेशपुरोत्तमम्॥
दुर्योधनोमहाराजशकुनिश्चापिसौबलः॥ सभायांरमणीयायांतत्रैवास्तेनराधिप ३३ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणियुधिष्ठिरसमयेषट्चत्वारिं
शोऽध्यायः॥४६॥ ॥ वैशंपायनउवाच॥ वसन्दुर्योधनस्तस्यांसभायांपुरुषर्षभ॥ शनैर्ददर्शतांसर्वांसभांशकुनिनासह १ तस्यांदिव्यानभिप्रायान्द
दर्शकुरुनंदनः॥ नदृष्टपूर्वायेतेननगरेनागसाह्वये २ सकदाचित्सभामध्येधार्त्तराष्ट्रोमहीपतिः॥ स्फाटिकंस्थलमासाद्यजलमित्यभिशंकया ३ स्ववस्त्रोत्क
र्षणंराजाकृतवान्बुद्धिमोहितः॥ दुर्मनाविमुखश्चैवपरिचक्रामतांसभाम् ४ ततःस्थलेनिपतितोदुर्मनाव्रीडितोनृपः॥ निःश्वसन्विमुखश्चापिपरिचक्राम
तांसभाम् ५ ततःस्फाटिकतोयांवैस्फाटिकांबुजशोभिताम्॥ वापींमत्वास्थलमिवसवासाःप्रापतज्जले ६ जलेनिपतितंदृष्ट्वाभीमसेनोमहाबलः॥ जहास
जहसुश्चैवकिंकराश्चसुयोधनम् ७ वासांसिचशुभान्यस्मैप्रददूराजशासनात्॥ तथागतंतुतंदृष्ट्वाभीमसेनोमहाबलः ८ अर्जुनश्चयमौचोभौसर्वेतेप्राहसंस्त
दा॥ नामर्षयत्ततस्तेषामवहासममर्षणः ९ आकारंरक्षमाणस्तुनसतान्समुदैक्षत॥ पुनर्वसनमुत्क्षिप्यप्रतरिष्यन्निवस्थलम् १० आरुरोहततःसर्वेजहसु
श्चपुनर्जनाः॥ द्वारंतुपिहिताकारंस्फाटिकंप्रेक्ष्यभूमिपः॥ प्रविशन्नाहतोमूर्ध्निव्याघूर्णितइवस्थितः ११ तादृशंचपरंद्वारंस्फाटिकोरुकपाटकम्॥ विघ
ट्टयन्कराभ्यांतुनिष्क्रम्याग्रेपपातह १२ द्वारंतुविवृताकारंसमापेदेपुनश्चसः॥ तद्वृत्तंचेतिमन्वानोद्वारस्थानादुपारमत् १३ एवंप्रलंभान्विविधान्प्राप्य
तत्रविशांपते॥ पांडवेयाभ्यनुज्ञातस्ततोदुर्योधनोनृपः १४ अप्रहृष्टेनमनसाराजसूयेमहाक्रतौ॥ प्रेक्ष्यतामद्भुतामृद्धिंजगामगजसाह्वयम् १५ पांडव
श्रीप्रतप्तस्यध्यायमानस्यगच्छतः॥ दुर्योधनस्यनृपतेःपापामतिरजायत १६ पार्थान्सुमनसोदृष्ट्वापार्थिवांश्चवशानुगान्॥ कृत्स्नंचापिहितंलोकमाकु
मारंकुरूद्वह १७ महिमानंपरंचापिपांडवानांमहात्मनाम्॥ दुर्योधनोधार्त्तराष्ट्रोविवर्णःसमपद्यत १८ सतुगच्छन्ननेकाग्रःसभामेकोऽन्वचिंतयत्॥
श्रियंचतामनुपमांधर्मराजस्यधीमतः १९ प्रमत्तोधृतराष्ट्रस्यपुत्रोदुर्योधनस्तदा॥ नाभ्यभाषत्सुबलजंभाषमाणंपुनःपुनः २०

म्निहस्तिनापुरे २ द्यूतमूलमुपोद्घातयतिसकदाचिदिति ३।४।५।६।७।८।९।१०।११।१२ तद्वृत्तंव.दर्शं १३ प्रलंभान्वंचनानि १४।१५।१६।१७।१८ अनेकाग्रो विक्षिप्तचित्तः १९।२०

कुतोमूलंकुतएतस्यदुःखस्यमूलमुत्पन्नमित्यर्थः कुतोहेतोर्मूलंस्वस्थानंप्रतिनिःश्वसन्नगच्छसीतिवा २१ श्वेताश्वस्यार्जुनस्य २२ । २३ शुचिशुक्रौज्येष्ठाषाढौतयोरागमेग्रीष्मर्तौ २४ पदानुगःप्रतीकारकर्त्ता २५ । २६ अयुक्तामितिच्छेदः २७ । २८ । २९ ३० । ३१।३२ सोऽहंनस्त्रीयाविवशत्वात्सपत्न्याअपिश्रियंसहते । किंतुपुमानस्मीत्यर्थः । तर्हियुद्धेनैवपांडवान्जेतुमिच्छेत्यतआहनचाप्यस्त्री अर्जुनादिवदस्त्रबलहीनः । तदपिसंपादयेत्यतआहनपुमानिति परेषामिवात्युत्कृष्टमस्त्रबलंसाधयितुमसमर्थः । तर्हिक्लीबोऽसीतिचेत्तत्राहनापुमानिति ।

अनेकाग्रंतुतंदृष्ट्वाशकुनिःप्रत्यभाषत ॥ दुर्योधनकुतोमूलंनिःश्वसन्निवगच्छसि २१ ॥ दुर्योधनउवाच ॥ दृष्ट्वेमांपृथिवींकृत्स्नांयुधिष्ठिरवशानुगां ॥ जितामस्त्रप्रतापेनश्वेताश्वस्यमहात्मनः २२ तंचयज्ञंयथाभूतंदृष्ट्वापार्थस्यमातुल ॥ यथाशक्रस्यदेवेषुतथाभूतंमहाद्युते: २३ अमर्षेणतुसंपूर्णोदह्यमानो दिवानिशम् ॥ शुचिशुक्रागमेकालेशुष्येत्तोयमिवाल्पकम् २४ पश्यसात्वतमुख्येनशिशुपालोनिपातितः ॥ नचतत्रपुमानासीत्कश्चित्तस्यपदानुगः २५ दह्यमानाहिराजानःपांडवोत्थेनवह्निना ॥ क्षांतवंतोऽपराधंतेकोहितत्क्षंतुमर्हति २६ वासुदेवेनतत्कर्मयथाऽयुक्तंमहत्कृतम् ॥ सिद्धंचपांडुपुत्राणांप्रतापेनमहात्मनां २७ तथाहिरत्नान्यादायविविधानिनृपान्नृपम् ॥ उपातिष्ठंतकौंतेयंवैश्याइवकरप्रदाः २८ श्रियंतथागतांदृष्ट्वाज्वलंतीमिवपांडवे ॥ अमर्षवशमापन्नोदह्यामिनतथोचितः २९ एवंसनिश्चयंकृत्वाततोवचनमब्रवीत् ॥ पुनर्गांधारनृपतिंदह्यमानइवाग्निना ३० वह्निमेवप्रवेक्ष्यामिभक्षयिष्यामिवाविषम् ॥ अपोवाऽपिप्रवेक्ष्यामिनहिशक्ष्यामिजीवितुम् ३१ कोहिनामपुमाँल्लोकेमर्षयिष्यातिसत्ववान् ॥ सपत्नानृद्धचतोदृष्ट्वाहीनमात्मानमेवच ३२ सोऽहंनस्त्रीनचाप्यस्त्रीनपुमान्नापुमानपि ॥ योऽहंतांमर्षयाम्यद्यतादृशींश्रियमागतां ३३ ईश्वरत्वंपृथिव्याश्चवसुमत्तांचतादृशीम् ॥ यज्ञंचतादृशंदृष्ट्वामादृशःकोनसंज्वरेत् ३४ अशक्तश्चैकएवाहंतामाहर्तुंनृपश्रियम् ॥ सहायांश्चनपश्यामितेनमृत्युंविचिंतये ३५ दैवमेवपरंमन्येपौरुषंचनिरर्थकम् ॥ दृष्ट्वाकुंतीसुतेशुद्धांश्रियंतामहतांतथा ३६ कृतोयत्नोमयापूर्वंविनाशेतस्यसौबल ॥ तच्चसर्वमतिक्रम्यसंवृद्धोऽप्स्विवपंकजम् ३७ तेनदैवंपरंमन्येपौरुषंचनिरर्थकम् ॥ धार्तराष्ट्राश्चहीयंतेपार्थावर्धंतिनित्यशः ३८ सोऽहंश्रियंचतांदृष्ट्वासभांतांचतथाविधाम् ॥ रक्षिभिश्चावहासंतंपरितप्येयथाऽग्निना ३९ समामभ्यनुजानीहिमातुलाद्यसुदुःखितम् ॥ अमर्षंचसमाविष्टंधृतराष्ट्रेनिवेदय ४० ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणिदुर्योधनसंतापेसप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥ शकुनिरुवाच ॥ दुर्योधननतेऽमर्षःकार्यःप्रतियुधिष्ठिरम् ॥ भागधेयानिहिस्वानिपांडवाभुंजतेसदा १

नस्त्रीतिपूर्वमेवोक्तमतोऽपुमानित्यनेनक्लीबइवग्राह्यः । नाप्यत्यंतमसमर्थोऽस्मीत्यर्थः । योऽहंशत्रुश्रियंसहिष्ये । तस्मात्तदपहरणेकश्चित्कपटोपायोऽन्वेषणीयइतिभावः ३३ । ३४ मृत्युंविचिंतयेइति शकुनेःसामर्थ्यंजानतातस्यस्वेष्टार्थसाधनेउद्योगंजनयितुमुक्तम् ३५ । ३६ । ३७ । ३८ । ३९ अनुजानीहिमर्तुमितिशेषः ४० ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेसप्तचत्वारिंशोध्यायः ॥ ४७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ दुर्योधनइति १

२ । ३ । ४ । ५ । ६ । ७ । ८।९।१०।११।१२।१३।१४।१५।१६ जुषस्वप्रीत्यासेवस्व १७ अप्रमादेन प्रमादकृतभ्रात्रादिनाशव्यतिरेकेण १८। १९ देवनेद्यूते २० दीप्तांवृद्धिमतीं २१

विधानंविविधाकारंपरंतेषांविधानतः ॥ अनेकैरभ्युपायैश्चत्वयानशकिताःपुरा २ आरब्धाऽपिमहाराजपुनःपुनररिंदम ॥ विमुक्ताश्चनरव्याघ्राभागधे यपुरस्कृताः ३ तैर्लब्धाद्रौपदीभार्याद्रुपदश्चसुतैःसह ॥ सहायःपृथिवीलाभेवासुदेवश्चवीर्यवान् ४ लब्धश्चानभिभूतार्थैःपित्र्योंशःपृथिवीपते ॥ विवृद्ध स्तेजसातेषांतत्रकापरिदेवना ५ धनंजयेनगांडीवमक्षय्यौचमहेषुधी ॥ लब्धान्यस्त्राणिदिव्यानितोषयित्वाहुताशनम् ६ तेनकार्मुकमुख्येनबाहुवीर्येण चात्मनः ॥ कृतावशेमहीपालास्तत्रकापरिदेवना ७ अग्निदाहान्मयंचापिमोक्षयित्वासदानवम् ॥ सभांतांकारयामाससव्यसाचीपरंतपः ८ तेनचैवमये नोक्ताःकिंकरानामराक्षसाः ॥ वहंतितांसभांभीमास्तत्रकापरिदेवना ९ यच्चासहायतांराजन्नुक्तवानसिभारत ॥ तन्मिथ्याभ्रातरोहीमेतवसर्वेवशानुगाः १० द्रोणस्तवमहेष्वासःसहपुत्रेणवीर्यवान् ॥ सूतपुत्रश्चराधेयोगौतमश्चमहारथः ११ अहंचसहसोदर्यैःसौमदत्तिश्चपार्थिवः ॥ एतैस्त्वंसहितःसर्वैर्जय कृत्स्नांवसुंधराम् १२ ॥ ॥ दुर्योधनउवाच ॥ ॥ त्वयाचसहितोराजन्नेतैश्चान्यैर्महारथैः ॥ एतानेवविजेष्यामियदित्वमनुमन्यसे १३ एतेषुविजि तेष्वद्यभविष्यतिमहीमम ॥ सर्वेचपृथिवीपालाःसभासाचमहाधना १४ ॥ ॥ शकुनिरुवाच ॥ ॥ धनंजयोवासुदेवोभीमसेनोयुधिष्ठिरः ॥ नकुलः सहदेवश्चद्रुपदश्चसहात्मजैः १५ नैतेयुधिपराजेतुंशक्यादेवगणैरपि ॥ महारथामहेष्वासाःकृतास्त्रायुद्धदुर्मदाः १६ अहंतुतद्विजानामिविजेतुंयेनशक्य ते ॥ युधिष्ठिरंस्वयंराजंस्तन्निबोधजुषस्वच १७ ॥ ॥ दुर्योधनउवाच ॥ ॥ अप्रमादेनसुहृदामन्येषांचमहात्मनाम् ॥ यदिशक्याविजेतुंतेतन्ममा चक्ष्वमातुल १८ ॥ ॥ शकुनिरुवाच ॥ ॥ द्यूतप्रियश्चकौंतेयोनसजानातिदेवितुम् ॥ समाहूतश्चराजेंद्रोनशक्ष्यतिनिवर्तितुम् १९ देवनेकुशल श्चाहंनमेस्तिसदृशोभुवि ॥ त्रिषुलोकेषुकौरव्यतंत्वंद्यूतेसमाह्वय २० तस्याक्षकुशलोराजन्नादास्येऽहमसंशयम् ॥ राज्यंश्रियंचतांदीप्तांत्वदर्थंपुरुषर्षभ २१ इदंतुसर्वंत्वंराज्ञेदुर्योधननिवेदय ॥ अनुज्ञातस्तुतेपित्राविजेष्येतान्नसंशयः २२ ॥ ॥ दुर्योधनउवाच ॥ ॥ त्वमेवकुरुमुख्यायधृतराष्ट्रायसौब ल ॥ निवेदययथान्यायंनाहंशक्ष्येनिवेदितुम् २३ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणिदुर्योधनसंतापेअष्टचत्वारिंशोऽध्यायः ४८ ॥ ॥ वै शंपायनउवाच ॥ ॥ अनुभूयतुराज्ञस्तंराजसूयंमहाक्रतुम् ॥ युधिष्ठिरस्यनृपतेर्गांधारीपुत्रसंयुतः १ प्रियकृन्मतमाज्ञायपूर्वंदुर्योधनस्यतत् ॥ प्र ज्ञाचक्षुषमासीनंशकुनिःसौबलस्तदा २ दुर्योधनवचःश्रुत्वाधृतराष्ट्रंजनाधिपम् ॥ उपगम्यमहाप्राज्ञंशकुनिर्वाक्यमब्रवीत् ३ ॥ शकुनिरुवाच ॥ दुर्योध नोमहाराजविवर्णोहरिणःकृशः ॥ दीनश्चिंतापरश्चैवतंविद्धिमनुजाधिप ४ नवैपरीक्षसेसम्यगसह्यंशत्रुसंभवम् ॥ ज्येष्ठपुत्रस्यहृच्छोकंकिमर्थंनावबुध्यसे ५

२२ । २३ ॥ इतिसभापर्वणिनैलकंठीये भारतभावदीपेअष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥ अनुभूयेति १ । २ । ३ विवर्णः पूर्ववर्णाद्धीनवर्णःहरिणःपांडुःदीनःक्षीणदर्पः ४ । ५

कुतोमूलंकिंमूलं कुतइतिप्रथमार्थेतसिः ६ । ७ । ८ पिशितौदनंमांसमयमन्नं आजानेयाःजात्यश्वाः ९ विहाराःक्रीडास्थानानि १० वाचिबद्धंवाग्व्यापारमात्रसाध्यं ११ १२ प्रकृतीःप्रजाःक्लेशान्मुमुक्षुर्मोचयितुमिच्छन्नेव पुरुषइत्युच्यते १३ त्वत्प्रकृतयोनिष्क्लेशाएवसंतीत्यतआह यतः संतोषऐश्वर्येऽलंबुद्धिः श्रियंविद्यमानामपिहंतीतिसंतुष्टस्य प्रजाः क्लेशंप्राप्नुवंत्येवेत्यर्थः अभिमानंगर्वं अनुक्रोशोदया भयं स्वोच्छेदद्दष्टिः महत्पदमितिशेषः १४ । १५ ऋद्ध्यचतोवर्द्धमानान् आत्मानामितिच्छेदः । पूर्वरूपमार्षं । निशम्य विज्ञायअदृश्यामपिव्यवहितत्वात् कौंतेयश्रियंमनसोद्यतां पश्यन्निवविवर्णोऽस्मीत्यर्थ १६ । १७ । १८ कदलीमृगाःहरिणविशेषास्तेषां मोकान्यजिनानितान्येव कृष्ण

॥ धृतराष्ट्रउवाच ॥ ॥ दुर्योधनकुतोमूलंभृशमार्त्तोऽसिपुत्रक ॥ श्रोतव्यश्चेन्मयासोऽर्थोब्रूहिमेकुरुनंदन ६ अयंत्वांशकुनिःप्राहविवर्णंहरिणंकृशम् ॥ चिंतयंश्चनपश्यामिशोकस्यतवसंभवम् ७ ऐश्वर्यंहिमहत्पुत्रत्वयिसर्वंप्रतिष्ठितम् ॥ भ्रातरःसुहृदश्चैवनाचरंतितवाप्रियम् ८ आच्छादयसिप्रावारान् श्नासिपिशितौदनम् ॥ आजानेयावहंत्यश्वाःकेनासिहरिणःकृशः ९ शयनानिमहार्हाणियोषितश्चमनोरमाः ॥ गुणवंतिचवेश्मानिविहाराश्चयथासुखम् १० देवानामिवतेसर्वंवाचिबद्धंनसंशयः ॥ सदीनइवदुर्धर्षकस्माच्छोचसिपुत्रक ११ ॥ दुर्योधनउवाच ॥ अश्नाम्याच्छादयेचाहंयथाकुपुरुषस्तथा ॥ अमर्षंधारयेचोग्रंनिनीषुःकालपर्ययम् १२ अमर्षणःस्वाःप्रकृतीरभिभूयपरंस्थितः ॥ क्लेशान्मुमुक्षुःपरजान्सवैपुरुषउच्यते १३ संतोषोवैश्रियंहंतिह्यभिमानंचभारत ॥ अनुक्रोशभयेचोभेयैर्वृतोनाश्नुतेमहत् १४ नमांप्रीणातिमद्भुक्तंश्रियंदृष्ट्वायुधिष्ठिरे ॥ अतिज्वलंतींकौंतेयेविवर्णकरणींमम १५ सपत्नानृद्ध्यतोऽस्मानंहीयमानंनिशम्यच ॥ अदृश्यामपिकौंतेयःश्रियंपश्यन्निवोद्यताम् १६ तस्मादहंविवर्णश्चदीनश्चहरिणःकृशः ॥ अष्टाशीतिसहस्राणि स्नातकागृहमेधिनः १७ त्रिंशद्दासीकएकैकोयान्बिभर्तियुधिष्ठिरः ॥ दशान्यानिसहस्राणिनित्यंतत्रान्नमुत्तमम् ॥ भुंजतेरुक्मपात्रीभिर्युधिष्ठिरनिवेशने १८ कदलीमृगमोकानिकृष्णश्यामारुणानिच ॥ कांबोजःप्राहिणोत्तस्मैपरार्ध्यानपिकंबलान् ॥ गजयोषिद्गवाश्वस्यशतशोऽथसहस्रशः १९ त्रिंशतंचोष्ट्रवामीनांशतानिविचरंत्युत ॥ राजन्याबलिमादायसमेताहिनृपक्षये २० पृथग्विधानिरत्नानिपार्थिवाःपृथिवीपते ॥ आहरन्क्रतुमुख्येऽस्मिन्कुंतीपुत्रायभूरिशः २१ नक्वचिद्धिमयातादृग्दृष्टपूर्वोनचश्रुतः ॥ यादृग्धनागमोयज्ञेपांडुपुत्रस्यधीमतः २२ अपर्यंतंधनौघंतंदृष्ट्वाशत्रोरहंनृप ॥ शर्मनैवाभिगच्छामिचिंतयानोविशांपते २३ ब्राह्मणावाटधानाश्चगोमंतःशतसंघशः ॥ त्रिखर्वंबलिमादायद्वारितिष्ठंतिवारिताः २४ कमंडलूनुपादायजातरूपमयान्शुभान् ॥ एतद्धनंसमादायप्रवेशंलेभिरेनच २५

श्यामारुणानिचित्रवर्णानीत्यर्थः १९ । २० । २१ । २२ । २३ वाटाः क्षेत्रादिवृत्तयस्तासां धाना अभिनवोद्भेदोयेषांते इतिव्यधिकरणोबहुव्रीहिः सस्यादिसंपन्नक्षेत्रादिवृत्तिमंतइत्यर्थः । 'वाटोवृत्तौचमार्गेचेति । धानाभ्रष्टयवेप्रोक्ताधान्याकेऽभिनवोद्भिदि'इतिविश्वः । त्रिखर्वंखर्वत्रयसंख्यं २४ कमंडलूनिति । 'इंद्रियंवाएतदस्मिन्लोकेयद्दधि'इति खंडे बह्वृचब्राह्मणेदधिमधुघृतमापश्चेत्यभिषेकद्रव्याणि विहितानि । तत्रेतरेषामग्रेदर्शनादिहकमंडलून घृतपूर्णानितिद्रष्टव्यम् २५

यथैवेति अमरः सोमस्तस्य स्त्रियओषधयः । तद्दिव्यंमधुअस्मै कांस्यं कांस्यपात्रस्थंकृत्वा आहार्षीत् । अर्थात्सोमएव । तथावारुणंवरुणप्रेषितं दधिप्रसिद्धं कलशइवकलशोजल पूर्णत्वात्ससमुद्रआहार्षीत् । दधिरितिपुंस्त्वमार्षंलेखकप्रमादोवा । अन्येतुकलशोदधिः समुद्रः । मध्वमृतं । जलमित्यन्ये । अमरस्त्रियोनद्यः । वारुणं वरुणसंबंधीतिव्याचक्षते २६ शैक्यंवरत्रामयं पात्राधारभूतंशिक्यं'कावडी'इतिप्रसिद्धं तत्रस्थितंपात्रंशैक्यं एतेनसामुद्रयआपउक्ताः । अन्याअपिपुण्याआपोऽभिषेकार्थमुक्ताः प्रदेशांतरे । 'वापीकूपतडागेभ्योन्ह देभ्यःसरसस्तथा ॥ चतुर्भ्यश्चसमुद्रेभ्यः पल्वलादभिसंधितः ॥ प्रयागादेवयजनाज्जलान्यादायसर्वतः ॥ गंगासरस्वतीचैवनर्मदाचदृषद्वती ॥ एभ्योजलंसमादायतत्राभिषिषिचु र्द्विजाः'इति २७ । २८ पतत्रिणःखेचरजातीयाःतैरेवोत्तरसमुद्रजलमानीतमित्यर्थः अन्यथाचतुर्भ्यश्चसमुद्रेभ्य इत्यनुपपन्नंस्यात् २९ । ३० परिविष्यतांपरिवेष्यमाणानां संज्ञासं

यथैवमधुशक्रायधारयंत्यमरास्त्रियः ॥ तदस्मैकांस्यमाहार्षीद्वारुणंकलशोदधिः २६ शंखप्रवरमादायवासुदेवोऽभिषिक्तवान् ॥ शैक्यंरुक्मसहस्रस्यबहुरत्न विभूषितम् २७ दृष्ट्वाचममतत्सर्वंज्वररूपमिवाभवत् ॥ गृहीत्वातत्तुगच्छंतिसमुद्रौपूर्वदक्षिणौ २८ तथैवपश्चिमंयांतिगृहीत्वाभरतर्षभ ॥ उत्तरंतुनग च्छंतिविनाताततपत्रिणः २९ तत्रगत्वार्जुनोदंडमाजहारामितंधनम् ॥ इदंचाद्भुतमत्रासीत्तन्मेनिगदतःशृणु ३० पूर्णेशतसहस्रेतुविप्राणांपरिविष्यता म् ॥ स्थापितातत्रसंज्ञाऽभूच्छंखोध्मायतिनित्यशः ३१ मुहुर्मुहुःप्रणदतस्तस्यशंखस्यभारत ॥ अनिशंशब्दमश्रौषंततोरोमाणिमेऽहृषन् ३२ पार्थि वैर्बहुभिःकीर्णमुपस्थानंदिदृक्षुभिः ॥ अशोभतमहाराजनक्षत्रैर्द्यौरिवामला ३३ सर्वरत्नान्युपादायपार्थिवावैजनेश्वर ॥ यज्ञेतस्यमहाराजपांडुपुत्रस्यधीम तः ३४ वैश्याइवमहीपालाद्विजातिपरिवेषकाः ॥ नसाश्रीर्देवराजस्ययमस्यवरुणस्यच ॥ गुह्यकाधिपतेर्वापियाश्रीराजन्युधिष्ठिरे ३५ तांदृष्ट्वापांडुपु त्रस्यश्रियंपरमिकामहम् ॥ शांतिंनपरिगच्छामिदह्यमानेनचेतसा ३६ ॥ ॥ शकुनिरुवाच ॥ ॥ यामेतामतुलांलक्ष्मींदृष्टवानसिपांडवे ॥ तस्याःप्रा प्तावुपायंमेशृणुसत्यपराक्रम ३७ अहमक्षेष्वभिज्ञातःपृथिव्यामपिभारत॥हृदयज्ञःपणज्ञश्चविशेषज्ञश्चदेवने३८द्यूतप्रियश्चकौंतेयोनचजानातिदेवितुम् ॥ आहूतश्चैष्यतिव्यक्तंद्यूतादपिरणादपि३९नियतंतंविजेष्यामिकृत्वातुकपटंविभो॥आनयामिसमृद्धिंतांदिव्यांचोपाह्वयस्वतम् ४०॥वैशंपायनउवाच॥एवमु क्तःशकुनिनाराजादुर्योधनस्ततः॥धृतराष्ट्रमिदंवाक्यमपदांतरमब्रवीत् ४१अयमुत्सहतेराजन्श्रियमाहर्तुमक्षवित् ॥ द्यूतेनपांडुपुत्रस्यतदनुज्ञातुमर्हसि४२

केतः ३१ । ३२ उपतिष्ठंत्यस्मिन्नित्युपस्थानंसभां ३३ उपादायस्थिताइतिशेषः ३४ । ३५ । ३६ । ३७ अक्षेषुपाशेष्वभिज्ञातः कुशलः । हृदयज्ञःपातयिष्यमाणानामक्षाणां जयपराजयावहत्वाभिज्ञः । पणज्ञस्तदनुसारेणद्रव्यप्रयोगवित् । विशेषज्ञो दिक्कालाद्यानुकूल्याभिज्ञः ३८ द्यूतात्द्यूतहेतोःरणाद्रणहेतोः ३९ कपटमक्षाधिष्ठात्र्यादेवताया वशीकरणं यद्वा । सर्वतश्चतुष्कोणतयाद्वादशधारेष्वक्षेषुषट्तलानिभवंति । येषुत्रिषुत्रिषुदेवयित्रोर्नामनी लिख्येते । तत्रकपटमंतःसुषिरमक्षं कृत्वापरनामांकितप्रदेशंगर्भे गुरुद्रव्यसंश्लिष्टं कृत्वा पातितस्याक्षस्यस्वनामैवोपरिभवतितदास्वस्यजयः परस्यनामाधस्थं तस्यपराजयइति ४० । ४१ अपदांतरमनुपदमेव ४२

४३ । ४४ त्वाऽसौ त्वात्वामसौ निवर्तयिष्यति । त्वाऽसावित्यादेर्विवर्णतांचैव सशोकतांचित्यंतस्य दुर्योधनविलापस्यतात्पर्यं पुण्यवतामीश्वरप्रसादलभ्यांवृद्धिंदृष्ट्वा पापिनांपरिता पोभवतीति ४५ । ४६ । ४७ । ४८ रत्नैःसंस्तीर्यरत्नखचितां कृत्वा तक्ष्णोवर्धकिनः सर्वशःसर्वदेशीयान् ४९ । ५० । ५१ ५२ । ५३ व्यवसायंविनिश्चयं ५४ । ५५ दिष्टंदैवं५६ ५७

॥ धृतराष्ट्रउवाच ॥ ॥ क्षत्तामंत्रीमहाप्राज्ञःस्थितोयस्यास्मिशासने ॥ तेनसंगम्यवेत्स्यामिकार्यस्यास्यविनिश्चयम् ४३ सहिधर्मंपुरस्कृत्यदीर्घदर्शी परंहितम् ॥ उभयोःपक्षयोर्युक्तंवक्ष्यत्यर्थविनिश्चयम् ४४ ॥ ॥ दुर्योधनउवाच ॥ ॥ निवर्तयिष्यतित्वाऽसौयदिक्षत्तासमेष्यति ॥ निवृत्तेत्वयि राजेंद्रमरिष्येहमसंशयम् ४५ सत्वंमयिमृतेराजन्विदुरेणसुखीभव ॥ भोक्ष्यसेपृथिवींकृत्स्नांकिंमयात्वंकरिष्यसि ४६ ॥ ॥ वैशंपायनउवाच ॥ ॥ आर्तवाक्यंतुतत्तस्यप्रणयोक्तंनिशम्यसः ॥ धृतराष्ट्रोऽब्रवीत्प्रेष्यान्दुर्योधनमतेस्थितः ४७ स्थूणासहस्रैर्बृहतींशतद्वारांसभांमम ॥ मनोरमांदर्शनीयामाशुकुर्वंतुशिल्पिनः ४८ ततःसंस्तीर्यरत्नैस्तांतक्ष्णआनाय्यसर्वशः ॥ सुकृतांसुप्रवेशांचनिवेदयतमेशनैः ४९ दुर्योधनस्यशांत्यर्थमितिनिश्चित्य भूमिपः ॥ धृतराष्ट्रोमहाराजप्राहिणोद्विदुरायवै ५० अपृष्ट्वाविदुरंस्वस्यनासीत्कश्चिद्विनिश्चयः ॥ द्यूतेदोषांश्चजानन्सपुत्रस्नेहादकृष्यत ५१ तच्छ्रुत्वाविदुरोधीमान्कलिद्वारमुपस्थितम् ॥ विनाशमुखमुत्पन्नंधृतराष्ट्रमुपाद्रवत् ५२ सोऽभिगम्यमहात्मानंभ्राताभ्रातरमग्रजम् ॥ मूर्ध्नाप्रणम्यचरणाविदंवचनमब्रवीत् ५३ ॥ ॥ विदुरउवाच ॥ ॥ नाभिनंदामितेराजन्व्यवसायमिमंप्रभो ॥ पुत्रैर्भेदोयथानस्याद्द्यूतहेतोस्तथाकुरु ५४ ॥ ॥ धृतराष्ट्रउवाच ॥ ॥ क्षत्तःपुत्रेषुपुत्रैर्मेकलहोनभविष्यति ॥ यदिदेवाःप्रसादंनःकरिष्यंतिनसंशयः ५५ अशुभंवाशुभंवाऽपिहितंवायदिवाऽहितम् ॥ प्रवर्ततांसुहृद्द्यूतंदिष्टमेतन्नसंशयः ५६ मयिसन्निहितेद्रोणेभीष्मेत्वयिचभारत ॥ अनयोदैवविहितोनकथंचिद्भविष्यति ५७ गच्छत्वंरथमास्थायहयैर्वातसमैर्जवे ॥ खांडवप्रस्थमद्यैवसमानययुधिष्ठिरम् ५८ नवाच्योव्यवसायोमेविदुरैतद्ब्रवीमिते ॥ दैवमेवपरंमन्येयेनैतदुपपद्यते ५९ इत्युक्तोविदुरोधीमान्नेदमस्तीतिचिंतयन् ॥ आपगेयंमहाप्राज्ञमभ्यगच्छत्सुदुःखितः ६० ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणिदुर्योधनसंतापेएकोनपंचाशत्तमोऽध्यायः ४९ ॥ ॥ ७ ॥ ॥ जनमेजयउवाच ॥ ॥ कथंसमभवद्द्यूतंभ्रातृणांतन्महात्ययम् ॥ यत्रतद्व्यसनंप्राप्तंपांडवैर्मेपितामहैः १ केचतत्रसभास्ताराराजन्नोब्रह्मवित्तम ॥ केचैनमन्वमोदंतकेचैनंप्रत्यषेधयन् २ विस्तरेणैतदिच्छामिकथ्यमानंत्वयाद्विज ॥ मूलंह्येतद्विनाशस्यपृथिव्याद्विजसत्तम ३ ॥ ॥ सौतिरुवाच ॥ ॥ एवमुक्तस्ततोराज्ञाव्यासशिष्यःप्रतापवान् ॥ आचचक्षेऽथयद्वृत्तंतत्सर्वंवेदतत्त्ववित् ४ ॥ वैशंपायनउवाच ॥ ॥ शृणुमेविस्तरेणेमांकथांभारतसत्तम ॥ भूयएवमहाराजयदितेश्रवणेमतिः ५

५८ । ५९ आपगेयंभीष्मम् ६० ॥ इतिसभापर्वणिनैलकंठीये भारतभावदीपेएकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ ॥ कथमिति व्यसनमापत्तत् १ सभास्ताराःसभासदः २ । ३ । ४ । ५

६ । ७ । ८ । ९ । १० भेदोवैरं ११ । १२ । १३ । १४ । १५ संमूर्छितमितिपाठेविवृद्धं १६ आमर्षमसहिष्णुताम् १७ साधारणी विशेषरहिता १८ स्थिरःस्थावरः पाषाणतुल्यो ऽस्मि यतोनविदीर्णोभवामि १९ आवर्जिताः दासवद्वशगाः २० पर्युदस्ताःदूराक्षिप्ताः २१ ज्येष्ठोवयोऽधिकः श्रेष्ठःप्रशस्यतमःयुक्तोनियुक्तः २२ अर्घहारिणांबहुमूल्यवतां रत्नाना

विदुरस्यमतिंज्ञात्वाधृतराष्ट्रोंऽबिकासुतः ॥ दुर्योधनमिदंवाक्यमुवाचविजनेपुनः ६ अलंद्यूतेनगांधारेविदुरोनप्रशंसति ॥ नह्यसौसुमहाबुद्धिरहितंनोवदिष्यति ७ हितंहिपरमंमन्येविदुरोयत्प्रभाषते ॥ क्रियतांपुत्रतत्सर्वमेतन्मन्येहितंतव ८ देवर्षिर्वासवगुरुर्देवराजायधीमते ॥ यत्प्राहशास्त्रंभगवान्बृहस्पतिरुदारधीः ॥ तद्वेदविदुरःसर्वंसरहस्यंमहाकविः ९ स्थितस्तुवचनेतस्यसदाऽहमपिपुत्रक ॥ विदुरोवाऽपिमेधावीकुरूणांप्रवरोमतः १० उद्धवोवामहाबुद्धिर्वृष्णीनामर्चितोनृप ॥ तदलंपुत्रद्यूतेनद्यूतेभेदोहिदृश्यते ११ भेदेविनाशोराज्यस्यतत्पुत्रपरिवर्जय ॥ पित्रामात्राचपुत्रस्ययद्वैकार्यंपरंस्मृतम् १२ प्राप्तस्त्वमसितन्नामपितृपैतामहंपदम् ॥ अधीतवान्कृतीशास्त्रेलालितःसततंगृहे १३ भ्रातृज्येष्ठःस्थितोराज्येविंदसेकिंनशोभनम् ॥ पृथग्जनैरलभ्यंयद्भोजनाच्छादनंपरम् १४ तत्प्राप्तोऽसिमहाबाहोकस्माच्छोचसिपुत्रक ॥ स्फीतंराष्ट्रंमहाबाहोपितृपैतामहंमहत् १५ नित्यमाज्ञापयन्भासिदिविदेवेश्वरोयथा ॥ तस्यतेविदितप्रज्ञशोकमूलमिदंकथम् ॥ समुत्थितंदुःखकरंतन्मेशंसितुमर्हसि १६ ॥ दुर्योधनउवाच ॥ अश्नाम्याच्छादयामीतिप्रपश्यन्पापपूरुषः ॥ नामर्षंकुरुतेयस्तुपुरुषःसोऽधमःस्मृतः १७ नमांप्रीणातिराजेंद्रलक्ष्मीःसाधारणीविभो ॥ ज्वलितामेवकौंतेयेश्रियंदृष्ट्वाचविव्यथे १८ सर्वांचपृथिवींचैवयुधिष्ठिरवशानुगाम् ॥ स्थिरोऽस्मियोऽहंजीवामिदुःखादेतद्ब्रवीमिते १९ आवर्जिताइवाभांतिनीपाश्चित्रककौकुराः ॥ कारस्कारालोहजंघायुधिष्ठिरनिवेशने २० हिमवत्सागरानूपाःसर्वेरत्नाकरास्तथा ॥ अंत्याःसर्वेपर्युदस्तायुधिष्ठिरनिवेशने २१ ज्येष्ठोऽयमितिमांमत्वाश्रेष्ठश्चेतिविशांपते ॥ युधिष्ठिरेणसत्कृत्ययुक्तोरत्नपरिग्रहे २२ उपस्थितानांरत्नानांश्रेष्ठानामर्घहारिणाम् ॥ नादृश्यतपरःपारोनापरस्तत्रभारत २३ नमेहस्तःसमभवद्वसुतत्प्रतिगृह्णतः ॥ अतिष्ठंतमयिश्रांतेगृह्यदूराहृतंवसु २४ कृतांबिंदुसरोरत्नैर्मयेनस्फाटिकच्छदाम् ॥ अपश्यंनलिनींपूर्णामुदकस्येवभारत २५ वस्त्रमुत्कर्षतिमयिप्राहसत्सवृकोदरः ॥ शत्रोर्ऋद्धिविशेषेणविमूढंरत्नवर्जितम् २६ तत्रस्मयदिशक्तःस्यांपातयेऽहंवृकोदरम् ॥ यदिकुर्यांसमारंभंभीमंहंतुंनराधिप २७ शिशुपालइवास्माकंगतिःस्यान्नात्रसंशयः ॥ सपत्नेनावहासोमेसमांदहतिभारत २८ पुनश्चतादृशीमेववापींजलजशालिनीम् ॥ मत्वाशिलासमांतोयेपतितोऽस्मिनराधिप २९

मश्वगजादितत्तज्जात्युत्कृष्टवस्तूनां पुरःस्थितानांप्रांतापरांतौ देशतइयत्ताधारणं चक्षुषानकर्तुंशक्यमित्यर्थः २३ समभवत्समर्थोनाभवत् अतिष्ठंतमतीक्षांकृतवंतः वसूनआहर्तारो वसुदातुं २४ स्फाटिकाश्छदाइवछदाः उपकंठस्थसोपानादयोयस्यास्तां बिंदुसरसःसकाशादाहृतैरत्नैः २५ । २६ । २७ । २८ । २९

३० । ३१ प्रलंभं वंचनां ३२ । ३३ । ३४ । ३५ । ३६॥ इतिसभापर्वणिनैलकंठीये भारतभावदीपे पंचाशत्तमोऽध्यायः ॥ ५० ॥ यन्मयेति १ फलतःसंख्यापरिच्छेदतो भूमितोदेशभेदतोवा नाविदमितिसंबंधः अपितथापिमुख्यतोवक्ष्यमाणंधनं प्रतिपद्यस्वेत्यर्थः यद्वा फलतोजातंवस्त्रादि भूमितो जातंहीरादि २ और्णान्मेषरोमजान् । बैलान्बिलवासिमूषकादिरोमजान् । वार्षदंशान्बिडालरोमजान् जातरूपपरिष्कृतान्सुवर्णतंतुनिर्मितान्बिंदुभिर्वाचित्रितान् और्णाःप्रावाराअन्यान्याजिनानीतिवाविभागः ३ तित्तिरिकल्माषान् तित्तिरिपक्षिवच्चित्रान् । उष्ट्रा वाम्योगर्दभाश्वसंकरजाः । उभयेऽपिपीलवादिनापुष्टिंगताः ४ गोवासनाबलीवर्दपोषकाः क्षेत्रादिवृत्तिमंतोब्राह्मणाः । तथादासनीया दास्ययोग्याःशूद्रादयो ब्राह्मणा

तत्रमांप्राहसत्कृष्णःपार्थेनसहसुस्वरम् ॥ द्रौपदीचसहस्त्रीभिर्व्यथयंतीमनोमम ३० क्लिन्नवस्त्रस्यतुजलेकिंकराराजनोदिताः ॥ ददुर्वासांसिमेऽन्यानितच्च दुःखंपरंमम ३१ प्रलंभंचशृणुष्वान्यद्वदतोमेनराधिप ॥ अद्वारेणविनिर्गच्छन्द्वारसंस्थानरूपिणा ॥ अभिहत्याशिलांभूयोललाटेनास्मिविक्षतः ३२ तत्रमांयमजौदूरादालोक्याभिहतंतदा ॥ बाहुभिःपरिगृह्णीतांशोचंतौसहितावुभौ ३३ उवाचसहदेवस्तुतत्रमांविस्मयान्निव ॥ इदंद्वारमितोगच्छराजन्निति पुनःपुनः ३४ भीमसेनेनतत्रोक्तोधृतराष्ट्रात्मजेतिच ॥ संबोध्यप्रहसित्वाचइतोद्वारंनराधिप ३५ नामधेयानिरत्नानांपुरस्तान्नश्रुतानिमे ॥ यानि दृष्टानिमेतस्यामनस्तपतितन्मे ३६ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणिदुर्योधनसंतापेपंचाशत्तमोऽध्यायः ॥ ५० ॥ ॥ दुर्योधनउवाच ॥ यन्मयापांडवेयानांदृष्टंतच्छृणुभारत ॥ आहृतंभूमिपालैर्हिवसुमुख्यंततस्ततः १ नाविदंमूढमात्मानंदृष्ट्वाहंतदरेर्धनम् ॥ फलतोभूमितोवापिप्रतिपद्यस्व भारत २ और्णान्बैलान्वार्षदंशान्जातरूपपरिष्कृतान् ॥ प्रावाराजिनमुख्यांश्चकांबोजःप्रददौबहून् ३ अश्वांस्तित्तिरिकल्माषांस्त्रिशतंशुकनासिकान् ॥ उष्ट्रवामीस्त्रिशतंचपुष्टाःपीलुशमीगुदैः ४ गोवासनाब्राह्मणाश्चदासनीयाश्चसर्वशः ॥ प्रीत्यर्थंतेमहाराजधर्मराज्ञोमहात्मनः ५ त्रिखर्वंबलिमादायद्वारितिष्ठंतिवारिताः ॥ ब्राह्मणावाटधानाश्चगोमंतःशतसंघशः ६ कमंडलूनुपादायजातरूपमयाञ्शुभान् ७ एवंबलिंसमादायप्रवेशंलेभिरेनच ॥ शतंदासीसहस्राणां कार्पासिकनिवासिनाम् ८ श्यामास्तन्व्योदीर्घकेश्योहेमाभरणभूषिताः ॥ शूद्राविप्रोत्तमार्हाणिरांकवाण्यजिनानिच ९ बलिंचकृत्स्नमादायभरुकच्छनिवासिनः ॥ उपनिन्युर्महाराजहयान्गांधारदेशजान् १० इंद्रकृष्टैर्वर्त्तयंतिधान्यैर्येचनदीमुखैः ॥ समुद्रनिष्कुटेजाताःपारेसिंधुचमानवाः ११ तेवैरामाः पारदाश्चअभीराःकितवैःसह ॥ विविधंबलिमादायरत्नानिविविधानिच १२

एववातादृशाः । यथोक्तं मूर्खान्ब्राह्मणान्प्रकृत्य पुष्करप्रादुर्भावे । 'यस्यनैवंश्रुतंराजन्नगृहीतंविशांपते । कामंतंधार्मिकोराजा शूद्रकर्माणिकारयेत्'इति । अस्मिन्पक्षेत्रिखर्वत्रीणियाजनाध्यापनप्रतिग्रहाः खर्वाणिन्युब्जानिधनलाभरूपफलहीनानि येषांतेत्रिखर्वाः । विद्याध्ययनसत्कर्मशून्यत्वाद्याजनादिहीनाइत्यर्थः। तैस्त्रिखर्वसंज्ञैःप्रदेयोबलिःत्रिखर्वबलिस्तमित्यर्थः वारिताइत्यनेनतेषामत्यंतहीनता दर्शिता ५ । ६ । ७ कार्पासिकोदेशविशेषः ८ । ९ भरुकच्छोदेशःकांचनमयः सजलप्रदेशोयस्मिन्सतथा'भरुर्भर्तरिकांचने । अथकच्छःस्यादनये' इतिविश्वः १० समुद्रसमीपस्थनिष्कुटे गृहोद्याने समुद्रनिष्कुटे । इंद्रकृष्टैरिंद्रेणैवाकृष्टैर्नतुकर्षणादिक्लेशेरियकयत्नापेक्षैर्वनधान्यैः । वृष्टयभावेतुनदीमुखैर्नदीप्रभवैः ११ । १२

फलजंमधूकादिजातीयं १३ । १४ । १५ अश्मसाराहीरपद्मरागादिमणयस्तन्मयं भांडंभूषणं । 'भांडंभूषणमात्रेऽपि'इतिविश्वः । त्सरुःखड्गमुष्टिः १६ द्व्यक्षादयःप्राच्यदेशभेदाः १७
नानावर्णान्रासभान् १८ । १९ प्रमाणेनदैर्घ्यपुष्ट्यादिना रागेणरम्यवर्णेनचसंपन्नानाधिकान् २० ।२१ । २२ । २३ । २४ । २५। २६ कुटीकृतंचित्रगुच्छाकारंकृतं । 'स्यात्कुटीकुंभदा

अजाविकंगोहिरण्यंखरोष्ट्रंफलजंमधु ॥ कंबलान्विविधांश्चैवद्वारितिष्ठंतिवारिताः १३ प्राग्ज्योतिषाधिपःशूरोम्लेच्छानामधिपोबली ॥ यवनैःसहितोरा
जाभगदत्तोमहारथः १४ आजानेयान्हयान्शीघ्रानादायानिलरंहसः ॥ बलिंचकृत्स्नमादायद्वारितिष्ठतिवारितः १५ अश्मसारमयंभांडंशुद्धदंतत्सरून
सीन् ॥ प्राग्ज्योतिषाधिपोदत्वाभगदत्तोऽव्रजत्तदा १६ द्व्यक्षांस्त्र्यक्षान्ललाटाक्षान्नानादिग्भ्यःसमागतान् ॥ औष्णीकानंतवासांश्चरोमकान्पुरुषादकान् १७
एकपादांश्चतत्राहमपश्यंद्वारिवारितान्॥राजानोबलिमादायनानावर्णाननेकशः १८कृष्णग्रीवान्महाकायान्रासभान्दूरपातिनः॥ आजन्हुर्दशसाहस्रान्विनी
तान्दिक्षुविश्रुतान् १९ प्रमाणरागसंपन्नान्वंक्षुतीरसमुद्भवान् ॥बल्यर्थंददतस्तस्मैहिरण्यंरजतंबहु २० दत्वाप्रवेशंप्राप्तास्तेयुधिष्ठिरनिवेशने ॥ इंद्रगोपक
वर्णाभान्शुकवर्णान्मनोजवान् २१ तथैवेंद्रायुधनिभान्संध्याभ्रसदृशानपि ॥ अनेकवर्णानारण्यान्गृहीत्वाऽश्वान्महाजवान् २२ जातरूपमनर्घ्यंचददु
स्तस्यैकपादकाः ॥ चीनान्शकांस्तथाओड्रान्बर्बरान्वनवासिनः २३ वार्ष्णेयान्हारहूणांश्चकृष्णान्हैमवतांस्तथा ॥ नीपानूपानधिगतान्विविधान्द्वारवा
रितान् २४ बल्यर्थंददतस्तस्यनानारूपाननेकशः ॥ कृष्णग्रीवान्महाकायान्रासभान्शतपातिनः ॥ अहार्षुर्दशसाहस्रान्विनीतान्दिक्षुविश्रुतान्
२५ प्रमाणरागस्पर्शाढ्यंबाल्हीचीनसमुद्भवम् ॥ और्णंचरांकवंचैवकीटजंपट्टजंतथा २६ कुटीकृतंतथैवात्रकमलाभंसहस्रशः ॥ श्लक्ष्णंवस्त्रमकार्पासमा
विकंमृदुचाजिनम् २७ निशितांश्चैवदीर्घासीनृष्टिशक्तिपरश्वधान् ॥ अपरांतसमुद्भूतांस्तथैवपरशून्शितान् २८ रसान्गंधांश्चविविधान्रत्नानिच
सहस्रशः ॥ बलिंचकृत्स्नमादायद्वारितिष्ठंतिवारिताः २९ शकास्तुषाराःकंकाश्चरोमशाःशृंगिणोनराः ॥ महागजान्दूरगमान्गणितानर्बुदान्हयान् ३०
शतशश्चैवबहुशःसुवर्णंपद्मसंमितम् ॥ बलिमादायविविधंद्वारितिष्ठंतिवारिताः ३१ आसनानिमहार्हाणियानानिशयनानिच ॥ मणिकांचनचित्राणिगजदं
तमयानिच ३२ कवचानिविचित्राणिशस्त्राणिविविधानिच ॥ रथांश्चविविधाकारान्जातरूपपरिष्कृतान् ३३ हयैर्विनीतैःसंपन्नान्वैयाघ्रपरिवारितान् ॥
विचित्रांश्चपरिस्तोमान्रत्नानिविविधानिच ३४ नाराचानर्धनाराचान्शस्त्राणिविविधानिच ॥ एतद्दत्वामहद्द्रव्यंपूर्वदेशाधिपान्नृपाः ॥ प्रविष्टायज्ञसद
नंपांडवस्यमहात्मनः ३५ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणिदुर्योधनसंतापेएकपंचाशत्तमोऽध्यायः ॥ ५१ ॥

स्यांचमुरायांचित्रगुच्छके'इतिविश्वः २७ अपरांतात्पाश्चिमदेशात्समुद्भूतान् २८ रसान्रसवंतितर्बुजादीनि । गंधान्गंधवंतिमृगमदादीनि २९ । ३० । ३१ । ३२ । ३३ वैयाघ्रपरिवा
रितान्व्याघ्रचर्मणापरिवृतान् । परिस्तोमान्गजकंबलान् 'परिस्तोमःकुथोद्वयोः'इत्यमरः ३४ । ३५ ॥ इतिसभापर्वणिनैलकंठीये भारतभावदीपेएकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ॥

दायं करार्थदेयंधनं । 'दायोदाने यौतकादिधने'इति विश्वः १ । २ । ३ । ४ कृष्णानित्यादयोमणिभेदाः पाठांतरे हिमजं हिमालयजम् ५ । ६ । ७ लौहित्यंपर्वतम् ८ । ९ कालीय कस्यकृष्णागुरोः १० । ११ निचितंराशीकृतं पर्वतेभ्योऽपि भूरिवर्चसंतेजस्वि । अर्शआद्यच् १२ । १३ । १४ । १५ । १६ । १७ । १८ कृतकालाःकृतप्रस्तावाः कृतद्वाराइति पाठे

॥ दुर्योधनउवाच ॥ दायंतुविविधंतस्मैशृणुमेगदतोऽनघ ॥ यज्ञार्थंराजभिर्दत्तंमहांतंधनसंचयम् १ मेरुमंदरयोर्मध्येशैलोदामभितोनदीं ॥ येतेकीचकवे णूनांछायांरम्यामुपासते २ खसाएकासनाह्यर्हाःप्रदरादीर्घवेणवः ॥ पारदाश्चकुलिंदाश्चतंगणाःपरतंगणाः ३ तद्वैपिपीलिकंनामउद्धृतंयत्पिपीलिकैः ॥ जातरूपंद्रोणमेयमहार्षुःपुंजशोनृपाः ४ कृष्णान्ललामांश्चमरान्शुक्लांश्चान्यान्शशिप्रभान् ॥ हिमवत्पुष्पजंचैवस्वादुक्षौद्रंतथाबहु ५ उत्तरेभ्यःकुरुभ्यश्चाप्य पोढंमाल्यमंबुभिः ॥ उत्तरादपिकैलासादोषधीःसुमहाबलाः ६ पार्वतीयाबलिंचान्यमाहृत्यप्रणताःस्थिताः ॥ अजातशत्रोर्नृपतेर्द्वारितिष्ठंतिवारिताः ७ येपरार्धेहिमवतःसूर्योदयगिरौनृपाः ॥ कारूषेचसमुद्रांतेलौहित्यमभितश्चये ८ फलमूलाशनायेचकिराताश्चर्मवाससः ॥ क्रूरशस्त्राःक्रूरकृतस्तांश्चप श्याम्यहंप्रभो ९ चंदनागुरुकाष्ठानांभारान्कालीयकस्यच ॥ चर्मरत्नसुवर्णानांगंधानांचैवराशयः १० कैरातकीनामयुतंदासीनांचविशांपते ॥ आहृ त्यरमणीयार्थान्दूरजान्मृगपक्षिणः ११ निचितंपर्वतेभ्यश्चाहिरण्यंभूरिवर्चसं ॥ बलिंचकृत्स्नमादायद्वारितिष्ठंतिवारिताः १२ कैरातादरदादर्वाःशूरावैय मकास्तथा ॥ औदुंबरादुर्विभागाःपारदाबाल्हिकैःसह १३ काश्मीराश्चकुमाराश्चघोरकाहंसकायनाः ॥ शिबित्रिगर्तयौधेयाराजन्याभद्रकेकयाः १४ अंबष्ठाः कौकुरास्तार्क्ष्यावस्त्रपाःपल्हवैःसह ॥ वशातलाश्चमौलेयाःसहक्षुद्रकमालवैः १५ पौंड्रिकाःकुकुराश्चैवशकाश्चैवविशांपते ॥ अंगावंगाश्चपुंड्राश्चशाणवत्यागयास्त था १६ सुजातयःश्रोणिमंतःश्रेयांसःशस्त्रधारिणः ॥ अहार्षुःक्षत्रियावित्तंशतशोऽजातशत्रवे १७ वंगाःकलिंगामगधास्ताम्रलिप्ताःसुपुंड्रकाः ॥ दौवालि काःसागरकाःपत्रोर्णाःशैशवास्तथा १८ कर्णप्रावरणाश्चैवबहवस्तत्रभारत ॥ तत्रस्थाद्वारपालैस्तेप्रोच्यंतेराजशासनात् ॥ कृतकालाःसुबलयस्ततोद्वार मवाप्स्यथ १९ ईषादंतान्हेमकक्षान्पद्मवर्णान्कुथावृतान् ॥ शैलाभान्नित्यमत्तांश्चाप्यभितःकाम्यकंसरः २० दत्वैकैकोदशशतान्कुंजरान्कवचावृतान् ॥ क्षमावंतःकुलीनाश्चद्वारेणप्राविशंस्तथा २१ एतेचान्येचबहवोगणादिग्भ्यःसमागताः ॥ अन्यैश्चोपाहृतान्यत्ररत्नानीहमहात्मभिः २२ राजाचित्ररथो नामगंधर्वोवासवानुगः ॥ शतानिचत्वार्यददद्धयानांवातरंहसां २३ तुंबुरुस्तुप्रमुदितोगंधर्वोवाजिनांशतं ॥ आम्रपत्रसवर्णानामददद्धेममालिनां २४ कृतीरा जाचकौरव्यःशूकराणांविशांपते ॥ अददद्गजरत्नानांशतानिसुबहून्यथ २५ विराटेनतुमत्स्येनबल्यर्थंहेममालिनाम् ॥ कुंजराणांसहस्रेद्वेमत्तानांसमुपाहृते २६

द्वारंप्रतीहारेणसख्यम् १९ ईषादंतान् लांगलदंडतुल्यदंतान् हेमकक्षाः सुवर्णवरत्राः २० । २१ । २२ । २३ । २४ शूकराःदेशभेदास्तेषाम् २५ । २६

२७ । २८ यज्ञसेनेनदत्तानीतिशेषः २९ । ३० । ३१ । ३२ । ३३ । ३४ समुद्रसारंमुक्ताफलादि ३५ कुथान्करिकंबलान् ३६ । ३७ । ३८ । ३९ पर्यस्तइवमूर्देशोऽपि स्वर्गीभूत
इव उपग्राहानुपहारान् ४० । ४१ । ४२ प्रमीयमाणंखार्यादिना मानेनगण्यमानं आममपक्वं ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ ॥ इतिसभापर्वणिनैलकंठीये भारतभावदी

पांशुराष्ट्राद्वसुदानोराजाषड्विंशतिंगजान् ॥ अश्वानांचसहस्रेद्वेराजन्कांचनमालिनाम् २७ जवसत्वोपपन्नानांवयस्थानांनराधिप ॥ बलिंचकृत्स्नमादाय
पांडवेभ्योन्यवेदयत् २८ यज्ञसेनेनदासीनांसहस्राणिचतुर्दश ॥ दासानामयुतंचैवसदाराणांविशांपते ॥ गजयुक्तामहाराजरथाःषड्विंशतिस्तथा २९ रा
ज्यंचकृत्स्नंपार्थेभ्योयज्ञार्थंवैनिवेदितम् ॥ वासुदेवोऽपिवार्ष्णेयोमानंकुर्वन्किरीटिनः ३० अददद्गजमुख्यानांसहस्राणिचतुर्दश ॥ आत्माहिकृष्णःपार्थस्य
कृष्णस्यात्माधनंजयः ३१ यद्ब्रूयादर्जुनःकृष्णंसर्वंकुर्यादसंशयम् ॥ कृष्णोधनंजयस्यार्थेस्वर्गलोकमपित्यजेत् ३२ तथैवपार्थःकृष्णार्थेप्राणानपिपरित्य
जेत् ॥ सुरभींश्चंदनरसान्हेमकुंभसमास्थितान् ३३ मलयाद्दर्दुराच्चैवचंदनागुरुसंचयान् ॥ मणिरत्नानिभास्वंतिकांचनंसूक्ष्मवस्त्रकम् ३४ चोलपांड्या
वपिद्वारंनलेभातेह्युपस्थितौ ॥ समुद्रसारंवैदूर्यंमुक्तासंघांस्तथैवच ३५ शतशश्चकुथांस्तत्रसिंहलाःसमुपाहरन् ॥ संवृतामणिचीरैस्तुश्यामास्ताम्रांत
लोचनाः ३६ तान्गृहीत्वानरास्तत्रद्वारितिष्ठंतिवारिताः ॥ प्रीत्यर्थंब्राह्मणाश्चैवक्षत्रियाश्चविनिर्जिताः ३७ उपाजह्रुर्विशश्चैवशूद्राःशुश्रूषवस्तथा ॥
प्रीत्याचबहुमानाच्चअभ्युपागच्छन्युधिष्ठिरम् ३८ सर्वेम्लेच्छाःसर्ववर्णाआदिमध्यांतजास्तथा ॥ नानादेशसमुत्थैश्चनानाजातिभिरेवच ३९ पर्यस्तइव
लोकोऽयंयुधिष्ठिरनिवेशने ॥ उच्चावचानुपग्राहान्राजभिःप्रापितान्बहून् ४० शत्रूणांपश्यतोदुःखान्मुमूर्षामेऽभ्यजायत ॥ भृत्यास्तुयेपांडवानांतांस्तेव
क्ष्यामिपार्थिव ४१ येषामामंचपक्वंचसंविधत्तेयुधिष्ठिरः ॥ अयुतंत्रीणिपद्मानिगजारोहाःससादिनः ४२ रथानामर्बुदंचापिपादाताबहवस्तथा ॥ प्रमीय
माणमामंचपच्यमानंतथैवच ४३ विसृज्यमानंचान्यत्रपुण्याहस्वनएवच ॥ नाभुक्तवंतंनापीतंनालंकृतमसत्कृतम् ४४ अपश्यंसर्ववर्णानांयुधिष्ठिरनि
वेशने ॥ अष्टाशीतिसहस्राणिस्नातकागृहमेधिनः ४५ त्रिंशद्दासीकएकैकोयान्बिभर्तियुधिष्ठिरः ॥ सुप्रीताःपरितुष्टाश्चतेह्याशंसंत्यरिक्षयम् ४६ दशा
न्यानिसहस्राणियतीनामूर्ध्वरेतसाम् ॥ भुंजतेरुक्मपात्रीभिर्युधिष्ठिरनिवेशने ४७ अभुक्तंभुक्तवद्वापिसर्वमाकुब्जवामनम् ॥ अभुंजानायाज्ञसेनीप्रत्य
वैक्षद्विशांपते ४८ द्वौकरौनप्रयच्छेतांकुंतीपुत्रायभारत ॥ सांबंधिकेनपांचालाःसख्येनांधकवृष्णयः ४९ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतप
र्वणिदुर्योधनसंतापेद्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ ॥ छ ॥ ॥ दुर्योधनउवाच ॥ ॥ आर्यास्तुयेवैराजानःसत्यसंधामहाव्रताः ॥ पर्याप्त
विद्यावक्तारोवेदांतावभृथप्लुताः १ धृतिमंतोह्रीनिषेवाधर्मात्मानोयशस्विनः ॥ मूर्धाभिषिक्तास्तेचैनंराजानःपर्युपासते २

पेद्विपंचाशत्तमोध्यायः ॥ ५२ ॥ ॥ आर्यास्त्विति १ ह्रीनिषेवाःलज्जावंतः । ह्रीनिषेधाइतिपाठे ह्रीरेवाकार्यान्निषेधिकायेषांते २

१७

३ । ४ । ५ अनुकर्षरथाधःस्थितदारु ६ । ७ अक्षान्शकटान् हेमनद्धान्धनपूर्णान् । 'अक्षःकर्षेतुषेचक्रे शकटव्यवहारयोः' इतिविश्वः ८ उपासंगंनिषंगं त्सरुं शोभनमुष्टिअसिखड्गं शैक्यंशिक्यधृतंपात्रं ९ । । १० । ११ । १२ । १३ । १४ वारुणंशंखंकलशोदधिः समुद्रः निष्कसहस्रेणसुवर्णेन सुकृतंआलिप्तंशंखं १५ कश्मलोमूर्च्छा १६ । १७ । १८ । १९ मांच

॥४९॥ दक्षिणार्थंसमानीताराजभिःकांस्यदोहनाः ॥ आरण्याबहुसाहस्राअपश्यंस्तत्रतत्रगाः ३ आजन्हुस्तत्रसत्कृत्यस्वयमुद्यम्यभारत ॥ अभिषेकार्थमव्यग्राभांडमुच्चावचंनृपाः ४ बाल्हीकोरथमाहार्षीज्जांबूनदविभूषितम् ॥ सुदक्षिणस्तुयुयुजेश्वेतैःकांबोजजैर्हयैः ५ सुनीथःप्रीतिमांश्चैवह्यनुकर्षंमहाबलः ॥ ध्वजंचेदिपतिश्चैवमहार्षीत्स्वयमुद्यतम् ६ दाक्षिणात्यःसन्नहनंस्रगुष्णीषेचमागधः ॥ वसुदानोमहेष्वासोराजेंद्रंषाष्टिहायनम् ७ मत्स्यस्त्वक्षान्हेमनद्धानेकलव्यउपानहौ ॥ आवंत्यस्त्वभिषेकार्थमापोबहुविधास्तथा ८ चेकितानउपासंगंधनुःकाश्यउपाहरत् ॥ असिंचसुत्सरुंशल्यःशैक्यंकांचनभूषणम् ९ अभ्यषिंचत्ततोधौम्योव्यासश्चसुमहातपाः ॥ नारदंचपुरस्कृत्यदेवलंचासितंमुनिम् १० प्रीतिमंतउपातिष्ठन्नभिषेकंमहर्षयः ॥ जामदग्न्येनसहितास्तथाऽन्येवेदपारगाः ११ अभिजग्मुर्महात्मानोमंत्रवद्भूरिदक्षिणम् ॥ महेंद्रमिवदेवेंद्रंदिविसप्तर्षयोयथा १२ अधारयच्छत्रमस्यसात्यकिःसत्यविक्रमः ॥ धनंजयश्चव्यजनेभीमसेनश्चपांडवः १३ चामरेचापिशुद्धेद्वेयमौजगृहतुस्तथा ॥ उपागृह्णाद्यमिंद्रायपुराकल्पेप्रजापतिः १४ तमस्मैशंखमाहार्षीद्वारुणंकलशोदधिः ॥ शैक्यंनिष्कसहस्रेणसुकृतंविश्वकर्मणा १५ तेनाभिषिक्तःकृष्णेनतत्रमेकश्मलोऽभवत् ॥ गच्छंतिपूर्वादपरंसमुद्रंचापिदक्षिणम् १६ उत्तरंतुनगच्छंतिविनातातपतत्रिभिः ॥ तत्रस्मदध्मुःशतशःशंखान्मंगलकारकान् १७ प्राणदंतसमाध्मातास्ततोरोमाणिमेऽहृषन् ॥ प्रापतन्भूमिपालाश्चयेतुहीनाःस्वतेजसा १८ धृष्टद्युम्नःपांडवाश्चसात्यकिःकेशवोऽष्टमः ॥ सत्वस्थावीर्यसंपन्नाह्यन्योन्यप्रियदर्शनाः ॥ १९ विसंज्ञान्भूमिपान्दृष्ट्वामांचतेप्राहसंस्तदा ॥ ततःप्रहृष्टोबीभत्सुःप्रादाद्धेमविषाणिनाम् २० शतान्यनडुहांपंचद्विजमुख्येषुभारत ॥ नरांतिदेवोनाभागोयौवनाश्वोमनुर्नच २१ नचराजापृथुर्वैन्योनचाप्यासीद्भगीरथः ॥ ययातिर्नहुषोवापियथाराजायुधिष्ठिरः २२ यथाऽतिमात्रंकौंतेयःश्रियापरमयायुतः ॥ राजसूयमवाप्यैवंहरिश्चंद्रइवप्रभुः २३ एतांदृष्ट्वाश्रियंपार्थेहरिश्चंद्रेयथाविभो ॥ कथंतुजीवितंश्रेयोममपश्यसिभारत २४ अंधेनेवयुगंनद्धंविपर्यस्तंनराधिप ॥ कनीयांसोविवर्द्धंतेज्येष्ठाहीयंतएवच २५ एवंदृष्ट्वानाभिविंदामिशर्मसमीक्षमाणोऽपिकुरुप्रवीर ॥ तेनाहमेवंकृशतांगतश्चविवर्णतांचैवसशोकतांच २६ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणिदुर्योधनसंतापेत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ ७ ॥

विसंज्ञांदृष्ट्वा २० । २१ । २२ २३ । २४ युगंद्वापराख्यंअंधेनेवविधात्रा नद्धंसंबद्धमतएवविपर्यस्तं २५ । २६ ॥ इतिसभापर्वणिनैलकंठीये भारतभावदीपेत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥

त्वविज्ञात ज्येष्ठाया अपत्यंज्यैष्ठिनेयः । कल्याण्यादीनामिनङ्ढक्क १ अभ्युत्पन्नंपरकपटानभिज्ञं । समानार्थंतुल्यधनं । तुल्यमित्रंत्वन्मित्राद्रोहिणं । अद्विषंतंचत्वामपीतिशेषः २ । ३ सप्तगायत्र्यादीनिच्छंदांसि तंतवइवयस्ययज्ञपटस्यतं ४ । ५ । ६ । ७ । ८ । ९ । १० अंतर्वेद्यांयज्ञे ११ ॥ इतिसभापर्वणिनैलकंठीये भारतभावदीपे चतुःपंचाशत्तमोऽध्या यः ॥ ५४ ॥ ॥ यस्येति कार्योदर्कनिर्णायकमूहापोहकौशलंप्रज्ञा १ नाविनौरिवेत्यस्वातंत्र्यं द्वितीयोविकल्पः २ आहरिष्यंतिराजानस्तवापिविपुलंधनमित्युक्तंतत्राह भविष्य

धृतराष्ट्रउवाच ॥ त्वंवैज्येष्ठोज्यैष्ठिनेयःपुत्रमापांडवान्द्विषः ॥ द्वेष्टाह्यसुखमादत्तेयथैवनिधनंतथा १ अभ्युत्पन्नसमानार्थंतुल्यमित्रंयुधिष्ठिरम् ॥ अद्विषंतंकथंद्विष्यात्त्वादृशोभरतर्षभ २ तुल्याभिजनवीर्यश्चकथंभ्रातुःश्रियंनृप ॥ पुत्रकामयसेमोहान्मैवंभूःशाम्यमाशुचः ३ अथयज्ञविभूतिंतांकांक्षसेभ रतर्षभ ॥ ऋत्विजस्तवतन्वंतुसप्ततंतुंमहाध्वरम् ४ आहरिष्यंतिराजानस्तवापिविपुलंधनम् ॥ प्रीत्याचबहुमानाच्चरत्नान्याभरणानिच ५ अनार्याच रितंतातपरस्वस्पृहणंभृशम् ॥ स्वसंतुष्टःस्वधर्मस्थोयःसवैसुखमेधते ६ अव्यापारःपरार्थेषुनित्योद्योगःस्वकर्मसु ॥ रक्षणंसमुपात्तानामेतद्वैभवलक्षण म् ७ विपत्तिष्वव्यथोदक्षोनित्यमुत्थानवान्नरः ॥ अप्रमत्तोविनीतात्मानित्यंभद्राणिपश्यति ८ बाहूनिवैतान्माच्छेत्सीःपांडुपुत्रास्तथैवते ॥ भ्रातॄणांत द्धनार्थेवैमित्रद्रोहंचमाकुरु ९ पांडोःपुत्रान्माद्विषस्वेहराजंस्तथैवतेभ्रातृधनंसमग्रम् ॥ मित्रद्रोहेतातमहानधर्मःपितामहायेतवतेऽपितेषाम् १० अंतर्वे द्यांददद्वित्तंकामाननुभवन्प्रियान् ॥ क्रीडन्स्त्रीभिर्निरातंकःप्रशाम्यभरतर्षभ ११ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणिदुर्योधनसंतापेचतुःपंचाशत्त मोऽध्यायः ॥ ५४ ॥ ॥ दुर्योधनउवाच ॥ यस्यनास्तिनिजाप्रज्ञाकेवलंतुबहुश्रुतः ॥ नसजानातिशास्त्रार्थंदर्वीसूपरसानिव १ जानन्वैमोहयसिमां नाविनौरिवसंयता ॥ स्वार्थेकिंनावधानंतेउताहोद्वेक्षिमांभवान् २ नसंतीमेधार्तराष्ट्रायेषांत्वमनुशासिता ॥ भविष्यमर्थमाख्यासिसर्वदाकृत्यमात्मनः ३ परनेयोऽग्रणीर्यस्यसमार्गान्प्रतिमुह्यति ॥ पंथानमनुगच्छेयुःकथंतस्यपदानुगाः ४ राजन्परिणतप्रज्ञोवृद्धसेवीजितेंद्रियः ॥ प्रतिपन्नान्स्वकार्येषुसंमो हयसिनोभृशम् ५ लोकवृत्ताद्राजवृत्तमन्यदाहबृहस्पतिः ॥ तस्माद्राज्ञाऽप्रमत्तेनस्वार्थश्चिंत्यःसदैवहि ६ क्षत्रियस्यमहाराजजयेवृत्तिःसमाहिता ॥ स वैधर्मस्त्वधर्मोवास्ववृत्तौकापरीक्षणा ७ प्रकालयेद्दिशःसर्वाःप्रतोदेनेवसारथिः ॥ प्रत्यमित्रश्रियंदीप्तांजिघृक्षुर्भरतर्षभ ८ प्रच्छन्नोवाप्रकाशोवायोगोयो ऽरिंप्रबाधते ॥ तद्वैशस्त्रंशस्त्रविदांनशस्त्रंछेदनंस्मृतम् ९ शत्रुश्चैवाहिमित्रंचनलेख्यंनचमातृका ॥ योवैसंतापयतियंसशत्रुःप्रोच्यतेनृप १०

मितिकृत्यमिदानीमेवानुष्ठेयमर्थंद्यूतेनशत्रुश्रीहरणरूपंप्रयोजनं तद्भविष्यंयज्ञकालिकं वदसि ३ ननुविदुरोद्यूतंनमन्यते इत्याशंक्याह परनेयइति अस्माकमग्रणीस्त्वं विदुराशिक्ष णीयोमाभूरित्यर्थः ४ जानन्नेवाहंतवाहितंवदामीतिचेत्तत्राहराजन्निति मोहमेवददासि नतुहितंवदसीत्यर्थः ५ प्रशाम्यभरतर्षभेतित्वदुक्तो निवृत्तिरूपोधर्मो बुभूषुणामस्माकंनेष्ट इत्याहलोकेत्यादिना ६ । ७ । ८ । ९ ननुविप्रियकर्ताशत्रुर्नचपांडवास्तथासंतीत्याशंक्याह शत्रुरिति १०

११ । १२ । १३ । ब्राह्मणंसंन्यासिनम् १४ साधारणीतुल्यावृत्तिर्जीविका एकामिषत्वमित्यर्थः १५ । १६ । १७ मातेरोचिष्टरुचिकरीमाभूत् । सत्ववतांबुद्धिमतां । नयोनीतिःधि ष्ठितःस्थितः । अयंनयोधीमद्भिःशिरसावोढव्यइत्यर्थः १८ जन्मवृद्धिमिवजन्मप्रभृतिजीवदेहादेर्यां वृद्धिःस्वाभाविकीतामिव । एधतेवर्धते । सद्योऽर्थानांवृद्धिर्येनससद्योवृद्धिः । वि क्रमःपराक्रमः १९ नाप्राप्येतिपांडवैश्वर्यमप्राप्यअनवाप्य अदृष्ट्वेतियावत् । संशयोवितर्कोनभविष्यतिनाभविष्यत् वितर्कमेवाहअवाप्स्येइति पांडवैश्वर्यंदृष्ट्वाइदंहर्तव्यंवामयामर्तव्यं

असंतोषःश्रियोमूलंतस्मात्तंकामयाम्यहम् ॥ समुच्छ्रयेयोयततेसराजन्परमोनयः ११ ममत्वंहिनकर्तव्यमैश्वर्येबाधनेऽपिवा ॥ पूर्वावाप्तंहरंत्यन्येराजध र्महितंविदुः १२ अद्रोहसमयंकृत्वाचिच्छेदनमुचेःशिरः ॥ शक्रःसाऽभिमतातस्यरिपौवृत्तिःसनातनी १३ द्वावेतौग्रसतेभूमिःसर्पोबिलशयानिव ॥ राजा नंचाविरोद्धारंब्राह्मणंचाप्रवासिनम् १४ नास्तिवैजातितःशत्रुःपुरुषस्यविशांपते ॥ येनसाधारणीवृत्तिःसशत्रुर्नेतरोजनः १५ शत्रुपक्षंसमृध्यंतंयोमोहा त्समुपेक्षते ॥ व्याधिराप्यायितइवतस्यमूलंछिनत्तिसः १६ अल्पोऽपिह्यरिरत्यर्थंवर्धमानःपराक्रमैः ॥ वल्मीकोमूलजइवग्रसतेवृक्षमंतिकात् १७ आज मीढरिपोर्लक्ष्मीर्मातेरोचिष्टभारत ॥ एषभारःसत्ववतांनयःशिरसिधिष्ठितः १८ जन्मवृद्धिमिवार्थानांयोवृद्धिमभिकांक्षते ॥ एधतेज्ञातिषुसवैसद्योवृद्धि र्हिविक्रमः १९ नाप्राप्यपांडवैश्वर्यंसंशयोमेभविष्यति ॥ अवाप्स्येवाश्रियंतांहिशिष्येवानिहतोयुधि २० एतादृशस्यकिंमेऽद्यजीवितेनविशांपते ॥ वर्धं तेपांडवानित्यंवयंत्वस्थिरवृद्धयः २१ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणिदुर्योधनसंतापेपंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥ ॥ शकुनिरुवाच ॥ यांत्वमेतांश्रियंदृष्ट्वापांडुपुत्रेयुधिष्ठिरे ॥ तप्यसेतांहरिष्यामिद्यूतेनजयतांवर १ आहूयतांपरंराजन्कुंतीपुत्रोयुधिष्ठिरः ॥ अगत्वासंशयमहमयुध्वाचचमूमु खे २ अक्षान्क्षिपन्नक्षतःसन्विद्वानविदुषोजये ॥ ग्लहान्धनूंषिमेविद्धिशरानक्षांश्चभारत ३ अक्षाणांहृदयंमेज्यांरथंविद्धिममास्फुरम् ४ ॥ दुर्योधनउ वाच ॥ अयमुत्सहतेराजन्श्रियमाहर्तुमक्षवित् ॥ द्यूतेनपांडुपुत्रेभ्यस्तदनुज्ञातुमर्हसि ५ ॥ धृतराष्ट्रउवाच ॥ ॥ स्थितोऽस्मिशासनेभ्रातुर्विदुरस्य महात्मनः ॥ तेनसंगम्यवेत्स्यामिकार्यस्यास्यविनिश्चयम् ६ ॥ दुर्योधनउवाच ॥ ॥ व्यपनेष्यतितेबुद्धिंविदुरोमुक्तसंशयः ॥ पांडवानांहितेयु क्तोनतथाममकौरव ७ नारभेतान्यसामर्थ्यात्पुरुषःकार्यमात्मनः ॥ मतिसाम्यंद्वयोर्नास्तिकार्येषुकुरुनंदन ८ भयंपरिहरन्मंदआत्मानंपरिपाल यन् ॥ वर्षासुक्लिन्नकटवत्तिष्ठन्नेवावसीदति ९ नव्याधयोनापियमःप्राप्तुंश्रेयःप्रतीक्षते ॥ यावदेवभवेत्कल्पस्तावच्छ्रेयःसमाचरेत् १० ॥ धृतरा ष्ट्रउवाच ॥ ॥ सर्वथापुत्रबलिभिर्विग्रहोमेनरोचते ॥ वैरंविकारंसृजतितद्वैशस्त्रमनायसम् ११

वेत्येववितर्कोजातइत्यर्थः २० अस्थिरावृद्धिर हिवावृद्धिःसंपद्येषां २१ ॥ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेपंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥ ॥ यांत्वमिति १ । २ ग्लहान् पणान् ३ आस्फुरमक्षविन्यासपातनादिस्था नम् ४ । ५ । ६ । ७ नारभेतेति परबुद्धिर्विनाशायेतिभावः ८ भयंभयशंकाहेतुंद्यूतादिकंपरिहरन् ९ कल्पःसमर्थः १० विकारं पूर्वावस्थाच्युतिं । अनायसमलोहजम् ११

अनर्थंद्यूताख्यमनर्थहेतुं । संग्रंथनंगुंफनं १२ पुराणैर्नलादिभिः । व्यवहारःप्रवृत्तिः । प्रणीतःअनुष्ठितः । अत्ययोनाशः । संप्रहारोयुद्धं १३ स्वर्गद्वारंसुखद्वारंशत्रूणामभिभवो धनला भश्चसुखंतच्चनकेवलेनधनेनयज्ञादिद्वारावा । अतएवविशिष्टंश्रेष्ठंदुरोदरंद्यूतं १४ उपाक्रम्यसंस्मृत्यभाविभवितुमैश्वर्यंकर्तुंशीलमस्येतिभाविनश्रेयस्करमित्यर्थः १५ दृष्टंज्ञातंबु द्धिविद्यानुगेनबुद्धिरूहापोहकौशलं । विद्याशास्त्राध्ययनं दिव्यंज्ञानंवा १६ परमंप्रयत्नादधिकंदुस्तरं यत्नशतेनाप्यपरिहार्यं १७ क्रोशमात्रंआयतां दीर्घांतद्विस्तारां क्रोशमात्रवि

अनर्थमर्थंमन्यसेराजपुत्रसंग्रंथनंकलहस्यातियाति ॥ तद्वैप्रवृत्तंतुयथाकथंचित्सृजेदसीन्निशितान्सायकांश्च १२ दुर्योधनउवाच ॥ द्यूतेपुराणैर्व्यवहारः प्रणीतस्तत्रात्ययोनास्तिनसंप्रहारः ॥ तद्रोचतांशकुनेर्वाक्यमद्यसभांक्षिप्रंत्वमिहाज्ञापयस्व १३ स्वर्गद्वारंदीव्यतांनोविशिष्टंतद्वर्तिनांचापितथैवयुक्त म् ॥ भवेदेवंह्यात्मनातुल्यमेवदुरोदरंपांडवैस्त्वंकुरुष्व १४ ॥ ॥ धृतराष्ट्रउवाच ॥ ॥ वाक्यंनमेरोचतेयत्त्वयोक्तंयत्तेप्रियंतत्क्रियतांनरेंद्र ॥ पश्चा त्तप्स्यसेतदुपाक्रम्यवाक्यंनहीदृशंभाविवचोहिधर्म्यम् १५ दृष्टंह्येतद्विदुरेणैवसर्वंविपश्चिताबुद्धिविद्यानुगेन ॥ तदेवैतदवशस्याभ्युपैतिमहद्भयंक्षत्रियजी वघाति १६ ॥ ॥ वैशंपायनउवाच ॥ ॥ एवमुक्त्वाधृतराष्ट्रोमनीषीदैवंमत्वापरमंदुस्तरंच ॥ शशासोच्चैःपुरुषान्पुत्रवाक्येस्थितोराजादैवसंमूढचे ताः १७ सहस्रस्तंभांहेमवैदूर्यचित्रांशतद्वारांतोरणस्फाटिकाख्याम् ॥ सभामग्र्यांक्रोशमात्रायतांमेतद्विस्तारामाशुकुर्वंतुयुक्ताः १८ श्रुत्वातस्यत्वरिता निर्विशंकाःप्राज्ञादक्षास्तांतदाचक्रुराशु ॥ सर्वद्रव्याण्युपजह्रुःसभायांसहस्रशःशिल्पिनश्चैवयुक्ताः १९ कालेनाल्पेनाथनिष्ठांगतांतांसभांरम्यांबहुरत्नां विचित्रां ॥ चित्रैर्हैमैरासनैरभ्युपेतामाचख्युस्तेतस्यराज्ञःप्रतीताः २० ततोविद्वान्विदुरंमंत्रिमुख्यमुवाचेदंधृतराष्ट्रोनरेंद्रः ॥ युधिष्ठिरंराजपुत्रंचग त्वामद्वाक्येनक्षिप्रमिहानयस्व २१ सभेयंमेबहुरत्नाविचित्राशय्यासनैरुपपन्नामहार्हैः ॥ सादृश्यतांभ्रातृभिःसार्द्धमेत्यसुहृद्द्यूतंवर्त्ततामत्रचेति २२ ॥ इ तिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणियुधिष्ठिरानयनेषट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥ ॥ ध ॥ ॥ वैशंपायनउवाच ॥ मतमाज्ञायपुत्रस्यधृतराष्ट्रो नराधिपः ॥ मत्वाचदुस्तरंदैवमेतद्राजंश्चकारह १ अन्यायेनतथोक्तस्तुविदुरोविदुषांवरः ॥ नाभ्यनंदद्वचोभ्रातुर्वचनंचेदमब्रवीत् २ ॥ विदुरउवाच ॥ नाभिनंदेनृपतेप्रैषमेतंमैवंकृथाःकुलनाशाद्बिभेमि ॥ पुत्रैर्भिन्नैःकलहस्तेध्रुवंस्यादेतच्छंकेद्यूतकृतेनरेंद्र ३ ॥ धृतराष्ट्रउवाच ॥ नेहक्षत्तःकलहस्तप्यते मांनचेद्दैवंप्रतिलोमंभविष्यत् ॥ धात्रातुदिष्टस्यवशेकिलेदंसर्वंजगच्चेष्टतिनस्वतंत्रम् ४

स्तारां युक्ताः सन्नद्धाः १८ । १९ निष्ठांनिष्पन्नत्वं । हैमैरास्तरैरितिपाठेसुवर्णतंतुनिर्मितैःकशिपुभिः २०।२१।२२ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेषट्पंचाशत्तमोऽध्यायः ॥५६॥ मतमाज्ञायेति १ । २ प्रैषमाज्ञावचनं । द्यूतकृतेद्यूतनिमित्तं ३ दिष्टस्यदैवस्यवशेधात्रास्थापयित्रा अंतर्यामिणाप्रयोजकेनइदंजगच्चेष्टतितथाचश्रुतिः । 'एषह्येवसाधुकर्मकारयतितं यमेभ्योलोकेभ्यउन्निनीषते । एषह्येवासाधुकर्मकारयतितंयमधोनिनीषते' इति । पूर्वकर्मापेक्षईशएव सत्यसतिवामार्गे प्रवर्त्तयतीतिश्रुतेरर्थः । तिष्ठतीतिपाठेकार्यमनुतिष्ठतीत्यर्थः ४

९ ॥ इतिसभापर्वणिनैलकंठीये भारतभावदीपेसप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ ॥ ततइति १ तत्पुरमितिसंबंधः द्विजातिभिस्त्रैवर्णिकैः २ । ३ तंप्रतिधृतराष्ट्रंअपृच्छत् ४ कुशलेनअस्मत्कुशलहेतोः ५ आत्मरतिःआत्मनः स्वस्योत्कर्षएवरातिर्यस्य । नतुधर्ममन्वीक्षतेइतिभावः । दृढात्मेतिपाठे कठिनचित्तः ६ अव्ययंधनादेरविनाशं ७ रम्यतांक्रीडाक्रीयताम् ८ दुरोदराद्यूतकाराः । कितवान्धूर्त्तान्कपटिन इतियावत् । इत्यामतःइतिहेतोः । जुषस्वरोचय ९ बुद्ध्यमानः । 'अन्येजायांपरिमृशंत्यस्ययस्यागृधद्वेदनेवाज्यक्षः । पितामाताभ्रातर एनमाहुरजानीमोनयताबद्धमेतम्'इतिश्रुत्युक्तान् द्यूतदोषान् जानन् । अक्षःपाशोयस्यवेदनेबुद्धौ । अगृधत्गर्धं कृतवान् । वाजीवेगवान् । अक्षैर्दीव्येइतियस्यबुद्धि

तदद्यविदुरप्राप्यराजानंममशासनात् ॥ क्षिप्रमानयदुर्धर्षंकुंतीपुत्रंयुधिष्ठिरम् ९ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूत०युधिष्ठिरानयनेसप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ ॥ वैशंपायनउवाच ॥ ततःप्रायाद्विदुरोश्वैरुदारैर्महाजवैर्बलिभिःसाधुदांतैः ॥ बलान्नियुक्तोधृतराष्ट्रेणराज्ञामनीषिणांपांडवानांसकाशे १ सोऽभिपत्यतदध्वानमासाद्यनृपतेःपुरम् ॥ प्रविवेशमहाबुद्धिःपूज्यमानोद्विजातिभिः २ सराजगृहमासाद्यकुबेरभवनोपमम् ॥ अभ्यागच्छतधर्मात्माधर्मपुत्रंयुधिष्ठिरम् ३ तंवैराजासत्यधृतिर्महात्माअजातशत्रुर्विदुरंयथावत् ॥ पूजापूर्वंप्रतिगृह्याजमीढस्ततोऽपृच्छद्धृतराष्ट्रंसपुत्रम् ४ युधिष्ठिरउवाच ॥ विज्ञायतेतेमनसोऽप्रहर्षःकच्चित्क्षत्तःकुशलेनागतोऽसि ॥ कच्चित्पुत्राःस्थविरस्यानुलोमावशानुगाश्चापिविशोऽथकच्चित् ५ विदुरउवाच ॥ राजामहात्माकुशलीसपुत्रआस्तेवृतोज्ञातिभिरिंद्रकल्पः ॥ प्रीतोराजन्पुत्रगुणैर्विनीतोविशोकएवात्मरतिर्महात्मा ६ इदंतुत्वांकुरुराजोऽभ्युवाचपूर्वंपृष्ट्वाकुशलंचाव्ययंच ॥ इयंसभात्वत्सभातुल्यरूपाभ्रातॄणांतेदृश्यतामेत्यपुत्र ७ समागम्यभ्रातृभिःपार्थतस्यांसुहृद्द्यूतंक्रियतांरम्यतांच ॥ प्रीयामहेभवतांसंगमेनसमागताःकुरवश्चापिसर्वे ८ दुरोदराविहितायेतुतत्रमहात्मनाधृतराष्ट्रेणराज्ञा ॥ तान्द्रक्ष्यसेकितवान्सन्निविष्टानित्यागतोऽहंनृपतेतज्जुषस्व ९ युधिष्ठिरउवाच ॥ द्यूतेक्षत्तःकलहोविद्यतेनःकोवैद्यूतंरोचतेबुध्यमानः ॥ किंवाभवान्मन्यतेयुक्तरूपंभवद्वाक्येसर्वएवस्थितास्म १० विदुरउवाच ॥ जानाम्यहंद्यूतमनर्थमूलंकृतश्चयत्नोऽस्यमयानिवारणे ॥ राजाचमांप्राहिणोत्त्वत्सकाशंश्रुत्वाविद्वन्श्रेयइहाचरस्व ११ युधिष्ठिरउवाच ॥ केतत्रान्येकितवादीव्यमानाविनाराज्ञोधृतराष्ट्रस्यपुत्रैः ॥ पृच्छामित्वांविदुरब्रूहिनस्तान्यैर्दीव्यामःशतशःसन्निपत्य १२ विदुरउवाच ॥ गांधारराजःशकुनिर्विशांपतेराजाऽतिदेवीकृतहस्तोमताक्षः ॥ विविंशतिश्चित्रसेनश्चराजासत्यव्रतःपुरुमित्रोजयश्च १३

रुत्पन्नासस्द्यएव पराभूयतइत्यर्थः । तथाऽपिआज्ञागुरूणां ह्यविचारणीयेतिन्यायेनत्त्वदुक्तमवश्यमनुतिष्ठेयमित्याहकिंवेति सर्वेवयंपांडवाः १० द्यूतेकृतेइहलोकहानिर्गुर्वाज्ञोल्लंघनेपरलोकहानिरतःश्रेयआमुष्मिकंहितं गुर्वाज्ञापालनंप्रशस्तंतदेवआचरेत्यर्थः ११ शतशःशतेनधनेन असंख्यातेनेत्यर्थः सन्निपत्यसंगम्य १२ अतिअतिक्रम्यमर्यादां देवितुंशीलमस्यसःअतिदेवी । युष्मद्देहदारादिकमपि पणीकरिष्यतीत्यर्थः । कृतहस्तःयथेष्टमक्षपातने कुशलः यतोमताक्षःज्ञाताक्षतत्त्वः । यद्वाऽतिदेवीकृतहस्तइत्येकंपदं देवीराज्ञीद्रौपदीतस्यांकृतोव्यापारितोहस्तोयैस्ते तदभिलाषवंतोदुर्योधनाद्यास्तानप्यतिक्रांतः अतिदेवीकृतहस्तः । तेद्रौपदींहर्तुमेवेच्छंति अयंतुद्यूतेन हरिष्यतीत्यर्थः १३

महाभयाःमहत्भयंयेभ्यस्ते मायोपधाःकपटपुरस्कारशीलाः १४ दुरोदरंद्यूतं । 'दुरोदरोद्यूतकारेपणेद्यूतेदुरोदरम्'इतिविश्वः १५ ननिवर्त्ते निवृत्तंमांपरेकृपणोऽयमितिवक्ष्यंतीतिभावः १६ प्रायात्रिकंप्रकृष्टा धनदारादिसहितायात्राप्रयात्रा तस्यामुपयुक्तंसर्वंप्रायात्रिकंशकटवाम्यादि । सगणोभ्रात्रादिगणयुक्तः । सानुयात्रःसर्वसेवकयुक्तः । आदिश्रत्तुंशीलमस्यतत आदिकृतांतमुखं कृत्वाविधाय १७ नमुजानंतोऽपिकुलक्षयावहायद्यूताय कुतोनिर्गताइत्यतआह दैवमिति दैवंप्राक्तनं कर्म धातुस्तद नुरोधेन प्रवर्तयितुः सितःबद्धः १८ क्षत्रावैदुरेण

॥ युधिष्ठिरउवाच ॥ ॥ महाभयाःकितवाःसन्निविष्टामायोपधादेवितारोऽत्रसंति ॥ धात्रातुदिष्टस्यवशेकिलेदंसर्वंजगत्तिष्ठतिनस्वतंत्रम् १४ नाहंराज्ञोधृतराष्ट्रस्यशासनान्नगंतुमिच्छामिकवेदुरोदरम् ॥ इष्टोहिपुत्रस्यपितासदैवतदस्मिकर्त्ताविदुरात्थमांयथा १५ नचाकामःशकुनिनादेविताऽहंनचेन्मांजिष्णुराह्वयितासभायाम् ॥ आहूतोहंननिवर्त्तेकदाचित्तदाहितंशाश्वतंवैव्रतंमे १६ ॥ वैशंपायनउवाच ॥ ॥ एवमुक्त्वाविदुरंधर्मराजःप्रायात्रिकंसर्वमाज्ञाप्यतूर्णं ॥ प्रायाच्छ्वोभूतेसगणःसानुयात्रःसहस्त्रीभिर्द्रौपदीमादिकृत्वा १७ दैवंहिप्रज्ञांमुष्णातिचक्षुस्तेजइवापतत् ॥ धातुश्चवशमन्वेतिपाशैरिवनरःसितः १८ इत्युक्त्वाप्रययौराजासहक्षत्त्रायुधिष्ठिरः ॥ अमृष्यमाणस्तस्याथसमाह्वानमरिंदमः १९ बाल्हिकेनरथंयत्तमास्थायपरवीरहा ॥ परिच्छन्नोययौपार्थोभ्रातृभिःसहपांडवः २० राजश्रियादीप्यमानोययौब्रह्मपुरःसरः ॥ धृतराष्ट्रेणचाहूतःकालस्यसमयेनच २१ सहास्तिनपुरंगत्वाधृतराष्ट्रगृहंययौ ॥ समियायचधर्मात्माधृतराष्ट्रेणपांडवः २२ तथाभीष्मेणद्रोणेनकर्णेनचकृपेणच ॥ समियाययथान्यायंद्रौणिनाचविभुःसह २३ समेत्यचमहाबाहुःसोमदत्तेनचैवह ॥ दुर्योधनेनशल्येनसौबलेनचवीर्यवान् २४ येचान्येतत्रराजानःपूर्वमेवसमागताः ॥ दुःशासनेनवीरेणसर्वैर्भ्रातृभिरेवच २५ जयद्रथेनचतथाकुरुभिश्चापिसर्वशः ॥ ततःसर्वैर्महाबाहुर्भ्रातृभिःपरिवारितः २६ प्रविवेशगृहंराज्ञोधृतराष्ट्रस्यधीमतः ॥ ददर्शतत्रगांधारींदेवींपतिमनुव्रताम् २७ स्नुषाभिःसंवृतांशश्वत्ताराभिरिवरोहिणीम् ॥ अभिवाद्यसगांधारींतयाचप्रतिनंदितः २८ ददर्शपितरंवृद्धंप्रज्ञाचक्षुषमीश्वरम् २९ राज्ञामूर्द्धन्युपाघ्रातास्तेचकौरवनंदनाः ॥ चत्वारःपांडवाराजन्भीमसेनपुरोगमाः ३० ततोहर्षःसमभवत्कौरवाणांविशांपते ॥ तान्दृष्ट्वापुरुषव्याघ्रान्पांडवान्प्रियदर्शनान् ३१ विविशुस्तेऽभ्यनुज्ञातारत्नवंतिगृहाणिच ॥ ददृशुश्चोपयातांस्तान्द्रौपदीप्रमुखाःस्त्रियः ३२ याज्ञसेन्याःपरामृद्धिंदृष्ट्वाप्रज्वलितामिव ॥ स्नुषास्ताधृतराष्ट्रस्यनातिप्रमनसोऽभवन् ३३



१९ बाल्हिकदेशजेनाश्वेन जातावेकवचनं । 'अथबाल्हीकंबाल्हिकंधीरहिंगुनोः । द्वावेतौपुंसिदेशस्यप्रभेदेतुरगांतरे'इतिमेदिनी । परिच्छन्नःपरिवृतोभ्रातृभिः वैश्वसह । परिच्छिन्नइ विपाठेअल्पपरिवारः २० ब्रह्मपुरःसरोब्राह्मणपुरःसरः कालस्यसमयेनसंकेतेन अमुकस्मिन्दिने आगंतव्यमित्येवंरूपेण २१ समियायधृतराष्ट्रेणसहसंगतः तेनपरिष्वक्तइत्यर्थः २२ २३ । २४ । २५ । २६ । २७ । २८ ददर्शपितरंधृतराष्ट्रंप्राति पुनरागतइत्यर्थः २९ एवमन्येऽपिचक्रुरित्याह राज्ञेति राज्ञाधृतराष्ट्रेण ३० । ३१ । ३२ प्रमनसःसंतुष्टचित्ताः ३३

संविदंमिथःकथां व्यायामःश्रमःपूर्वोयेषांतानि प्रतिकर्मकेशप्रसाधनादिपरिष्कारं ३४ । ३५ । ३६ रतिविहारिणां स्त्रीसंगेनक्रीडतां ३७ । ३८ इतिसभापर्वणिनैलकंठीयेभारतभावदी पेअष्टपंचाशत्तमोऽध्यायः ५८ ॥ प्रविश्येति ॥ १ ॥ समेयानायथार्हमाशीर्नत्यादिनासंगतिंकुर्वाणाः स्पर्ध्यानिस्पर्धाकराणि पश्यतांस्पृहणीयानीतियावत् २ । ३ उपस्तीर्णाआस्फुरा ख्येनाक्षपातनवाससा उपरिस्तीर्णा कृतक्षणाःकृतसंकेताः उप्त्वापातयित्वा ४ निकृतिर्वंचनं । देवनंद्यूतं । पापंपापहेतुः । यतोनचनीतिः । द्यूतेसत्यंनास्तीत्यर्थः ५ निकृतौशाठ्येएवं शाठ्येन ६ संख्यांसम्यक्ख्यानंजयपराजयद्वारविवेकं । निकृतौछलेपरेणक्रियमाणे । विधिज्ञोद्यूतेतिकर्त्तव्यताऽभिज्ञः यश्चमहामतिर्जयावहंपणंकृत्वापराजयावहं चिकित्सतिसद्यूतं जानातिसचप्रक्रियासु द्यूतक्रियासुसर्वंकर्त्तुं सहतेउत्सहते ७ यत्तुदेवनंपापमित्युक्तंतत्राह अक्षग्लहइति पाशाधीनोग्लहः पणोजयपराजयरूपोव्यवहारः सप्रतिकूलश्चेन्नोयुष्माकमस्मा

ततस्तेपुरुषव्याघ्रागत्वास्त्रीभिस्तुसंविदम् ॥ कृत्वाव्यायामपूर्वाणिकृत्यानिप्रतिकर्मच ३४ ततःकृताह्निकाःसर्वेदिव्यचंदनभूषिताः ॥ कल्याणमनस श्चैवब्राह्मणान्स्वस्तिवाच्यच ॥ मनोज्ञमशनंभुक्त्वाविविशुःशरणान्यथ ३५ उपगीयमानानारीभिरस्वपन्कुरुपुंगवाः ॥ अनंतरंचतत्प्राप्यप्रीताःपरपुरं जयाः ३६ जगामतेषांसारात्रिःपुण्यारतिविहारिणाम् ॥ स्तूयमानाश्चविश्रांताःकालेनिद्रामथात्यजन् ३७ सुखोषितास्तेरजनींप्रातःसर्वेकृताह्निकाः ॥ सभांरम्यांप्रविविशुःकितवैरभिनंदिताः ३८ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणियुधिष्ठिरसभागमनेऽष्टपंचाशत्तमोऽध्यायः ५८ ॥वैशंपायनउवाच॥ प्रविश्यतांसभांपार्थायुधिष्ठिरपुरोगमाः ॥ समेत्यपार्थिवान्सर्वान्पूजार्हानभिपूज्यच १ यथावयःसमेयानाउपविष्टायथार्हतः ॥ आसनेषुविचित्रेषुस्प र्ध्यास्तरणवत्सुच २ तेषुतत्रोपविष्टेषुसर्वेष्वथनृपेषुच ॥ शकुनिःसौबलस्तत्रयुधिष्ठिरमभाषत ३ ॥ शकुनिरुवाच ॥ उपस्तीर्णासभाराजन्सर्वेत्वयिकृ तक्षणाः ॥ अक्षानुप्त्वादेवनस्यसमयोऽस्तुयुधिष्ठिर ४ ॥ युधिष्ठिरउवाच ॥ निकृतिर्देवनंपापंनक्षात्रोऽत्रपराक्रमः ॥ नचनीतिर्ध्रुवाराजन्किंत्वंद्यूतंप्रशं ससि ५ नहिमानंप्रशंसंतिनिकृतौकितवस्यहि ॥ शकुनेमैवंनोजैषीरमार्गेणनृशंसवत् ६ ॥ शकुनिरुवाच ॥ योवेत्तिसंख्यांनिकृतौविधिज्ञश्चेष्टास्वखिन्नः कितवोऽक्षजासु ॥ महामतिर्यश्चजानातिद्यूतंसवैसर्वंसहतेप्रक्रियासु ७ अक्षग्लहःसोऽभिभवेत्परंनस्तेनैवदोषोभवतीहपार्थ ॥ दीव्यामहेपार्थिवमाविशंकां कुरुष्वपाणंचचिरंचमाकृथाः ८ ॥ युधिष्ठिरउवाच ॥ एवमाहायमसितोदेवलोमुनिसत्तमः ॥ इमानिलोकद्वाराणियोवैभ्राम्यतिसर्वदा ९ इदंवैदेवनंपापं निकृत्याकितवैःसह ॥ धर्मेणतुजयोयुद्धेतत्परंनतुदेवनम् १० नार्याम्लेच्छंतिभाषाभिर्माययानचरंत्युत ॥ अजिह्ममशठंयुद्धमेतत्सत्पुरुषव्रतम् ११

कंचदीव्यतांमध्येपरमभिभवेत् । तेनैवअक्षग्लहेनैव दोषःपराभवाख्योभवतिनत्वत्र स्वेच्छयाकपटंकर्त्तुंशक्यं दैवाधीनत्वादक्षपातस्येत्यर्थः । पाणंपणनीयद्रव्यंचकुरुष्व । वचनेनप्र त्यक्षेणवापुरःकुरुष्वेत्यर्थः ८ अयमसितः योलोकद्वाराणि स्वर्गापवर्गप्रापकाणि कर्मज्ञानादीनिभ्राम्यति तेषुसंचरतिसोऽयमेवमाहेतिसंबंधः ९ द्विविधंदेवनमक्षैःशास्त्रैश्च तत्राद्यं निंदित्वापरंप्रशंसति इदंवेति १० म्लेच्छंत्यपशब्दंकुर्वंतिभाषाभिर्गीर्भिः । माययाकपटेननचरंति नकर्मकुर्वंति । वाचादेहेनच कौटिल्यं नकुर्वंतीतिभावः । अतएवअजिह्मं कुटिलं । अशठं कुटिलपुरुषहीनम् ११

ब्राह्मणार्थायब्राह्मणप्रयोजनाय शिक्षितुंविद्यामुपादातुं यतामहेयेनवित्तेनतद्वैवित्तमपहर्त्तुंमाऽतिदेवीः सर्वस्वस्यपणीकरणेनातिद्यूतं माकृथाः १२ नन्वक्षपाताधीनोजयस्तवापि समा
नइत्याशंक्याहनिकृत्येति निकृत्या नीचकर्मणाइह कितवस्यएतद्वृत्तंकृतिनोनपूज्यते । सतांनप्रशस्यमित्यर्थः १३ निकृत्याजीगीषाख्येन नीचकर्मणाबहूनिमेअकृता कर्त्वानियुध्यै
त्वेनसंत्वेनपृच्छै इतिमंत्रवर्णाद्युद्धेनवादेनवा जिगीषानीचमेवकर्म तथाऽपिजनाः व्यावहारिकालोकास्तां जिगीषयाशत्रुंप्रति गतिंनिकृतिं नीचकर्मत्वेननाहुः । श्रुतेर्विरक्तविषयत्वादि
त्यर्थः । आकृताकर्त्तुमयोग्यानिकर्त्वानि कर्त्तव्यानिभविष्यंति । तान्येवाह त्वेनएकेन युध्यैत्वेनसंपृच्छै इतिश्रुत्यर्थः १४ दार्ष्टांतिकमाहअक्षैरिति १५ । १६ एवंत्वंनिकृतिंछलंम

शक्तितोब्राह्मणार्थायशिक्षितुंप्रयतामहे ॥ तद्वैवित्तंमाऽतिदेवीर्माजैषीःशकुनेपरान् १२ निकृत्याकामयेनाहंसुखान्युतधनानिवा ॥ कितवस्येहकृतिनो वृत्तमेतन्नपूज्यते १३ ॥ ॥ शकुनिरुवाच ॥ ॥ श्रोत्रियःश्रोत्रियानेतिनिकृत्यैवयुधिष्ठिर ॥ विद्वानविदुषोऽभ्येतिनाहुस्तांनिकृतिंजनाः १४ अक्षैर्हिशिक्षितोऽभ्येतिनिकृत्यैवयुधिष्ठिर ॥ विद्वानविदुषोऽभ्येतिनाहुस्तांनिकृतिंजनाः १५ अकृतास्त्रंकृतास्त्रश्चदुर्बलंबलवत्तरः ॥ एवंकर्मसुसर्वेषुनिकृत्यैवयुधिष्ठिर ॥ विद्वानविदुषोऽभ्येतिनाहुस्तांनिकृतिंजनाः १६ एवंत्वंमामिहाभ्येत्यनिकृतिंयदिमन्यसे ॥ देवनाद्विनिवर्त्तस्वयदितेविद्यतेभयम् १७ ॥ युधिष्ठिरउवाच ॥ ॥ आहूतोननिवर्त्तेयमितिमेव्रतमाहितम् ॥ विधिश्चबलवान्राजन्दिष्टस्यास्मिवशेस्थितः १८ अस्मिन्समागमेकेनदेवनंमेभविष्यति ॥ प्रतिपाणश्चकोऽन्योऽस्तिततोद्यूतंप्रवर्त्तताम् १९ ॥ दुर्योधनउवाच ॥ अहंदाताऽस्मिरत्नानांधनानांचविशांपते ॥ मदर्थेदेविताचायंशकुनिर्मातुलोमम २० युधिष्ठिरउवाच ॥ अन्येनान्यस्यवैद्यूतंविषमंप्रतिभातिमे ॥ एतद्विद्वन्नुपादत्स्वकाममेवंप्रवर्त्तताम् २१ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतप०युधिष्ठिरशकुनिसंवादेएकोनषष्टितमोऽध्यायः ॥ ५९ ॥ वैशंपायनउवाच ॥ उपोह्यमानेद्यूतेतुराजानःसर्वएवते ॥ धृतराष्ट्रंपुरस्कृत्यविविशुस्तांसभांततः १ भीष्मोद्रोणःकृपश्चैवविदुरश्चमहामतिः ॥ नातिप्रीतेनमनसातेऽन्ववर्त्तंतभारत २ तेद्वंद्वशःपृथक्चैवसिंहग्रीवामहौजसः ॥ सिंहासनानिभूरीणिविचित्राणिचभेजिरे ३शुशुभेसासभाराजन्राजभिस्तैःसमागतैः ॥ देवैरिवमहाभागैःसमवेतैस्त्रिविष्टपम् ४ सर्वेवेदविदःशूराःसर्वेभास्वरमूर्त्तयः ॥ प्रावर्त्ततमहाराजसुहृद्द्युतमनंतरम् ५ युधिष्ठिरउवाच ॥ अयंबहुधनोराजन्सागरावर्त्तसंभवः ॥ मणिर्हारोत्तरःश्रीमान्कनकोत्तमभूषणः ६ एतद्राजन्ममधनंप्रतिपाणोऽस्तिकस्तव ॥ येनमांत्वंमहाराजधनेनप्रतिदीव्यसे ७॥ दुर्योधनउवाच॥ संतिमेमणयश्चैवधनानिसुबहूनिच ॥ मत्सरश्चनमेऽर्थेषुजयस्वैनंदुरोदरम् ८

न्यसेतर्हिश्रोत्रियादश्रोत्रियइव विद्यावतोमत्तः पराभवभीतस्त्वंद्यूताद्विनिवर्त्तस्वेत्यर्थः १७ विधिःकारयिताऽन्तर्यामी दिष्टंदैवं १८ प्रतिपाणश्चकोऽन्योऽस्ति । प्रतिपाणःपणप्रति
भूः ! तवाल्पधनत्वान्मत्तुल्यो धनिकःकोऽन्यो देविताऽस्तीतिभावः । पणश्चैवहिकोन्यस्त इतिपाठेतु पणःपणनकर्त्ताको न्यस्तस्त्वया । मृत्युमुखेइतिशेषः । तवमयासहदेवितुमन
ईत्वादितिभावः १९ । २० । २१ ॥ इतिस०नै०भा०भा०एकोनषष्टितमोऽध्यायः ॥ ५९ ॥ उपोह्यमाने उपस्थाप्यमाने १ । २ । ३ । ४ । ५ । ६ प्रतिपाणःएतत्तुल्यमोल्यं
द्यूतार्थंस्थापितंवस्तु ७ दुरोदरंपणं अर्थेषु त्वयापि तेषु मत्सरोहीनमौल्यत्वादिदोषबुद्धिः ८

९ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेषष्टितमोऽध्यायः ॥ ६० ॥ ॥ मत्तेति कैतवकेन कितवैर्निर्वृत्तेनकपटेन । अरीहणादिस्वादुन्मत्तगर्वित १ साष्टपलशतंसुवर्णानांनिष्कः भांडिन्योमंजूषाः कुंडिन्यइतिपाठे कुंडिन्यःपात्रविशेषाःभरिताः पूरिताः हिरण्यंघनं जातरूपमकुप्यं स्वर्णरौप्यात्मकं २ । ३ सहस्रसमितःसहस्ररथतुल्यः । वैयाघ्रोव्याघ्रचर्मावनद्धः । स्वचक्रोपस्करइतिपाठेस्वस्यचक्रं समुदायस्तत्रोपस्करउल्लासादिना शत्रुप्रतिकारेयत्नोयेनसः । किंकिणीनांक्षुद्रघंटिकानां जालेनसंवृतः ४ उपावहदानीतवान् ५ कुररःपक्षिविशेषस्तेनतुल्यप्रभाःकुररच्छायाः । कुमुदच्छायाःइतिपाठांतरं । एषांपदाद्भूमौन्यस्ताद्भूमिमुपस्पृशन् भूचरोनमुच्येत । अतिदूरस्थोऽपिभूचरएषां पादाक्रांतएवभवतीत्यर्थः । येनमुच्यंतेपदाभूमि

वैशंपायनउवाच ॥ ततोजग्राहशकुनिस्तानक्षानक्षतत्त्ववित् ॥ जितमित्येवशकुनिर्युधिष्ठिरमभाषत ॥ ९ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणि द्यूतारंभेषष्टितमोऽध्यायः ॥ ६० ॥ ॥ युधिष्ठिरउवाच ॥ मत्तकैतवकेनैवयज्जितोऽस्मिदुरोदरे ॥ शकुनेहंतदीव्यामोग्लहमानाःपरस्परम् १ संति निष्कसहस्रस्यभांडिन्योभरिताःशुभाः ॥ कोशोहिरण्यमक्षय्यंजातरूपमनेकशः ॥ एतद्राजन्ममधनंतेनदीव्याम्यहंत्वया २ वैशंपायनउवाच ॥ कौरवाणांकुलकरंज्येष्ठंपांडवमच्युतम् ॥ इत्युक्तःशकुनिःप्राहजितमित्येवतंनृपम् ३ युधिष्ठिरउवाच ॥ अयंसहस्रसमितोवैयाघ्रःसुप्रतिष्ठितः ॥ सुचक्रोपस्करःश्रीमान्किंकिणीजालमंडितः ४ संह्रादनोराजरथोयइहास्मानुपावहत् ॥ जैत्रोरथवरःपुण्योमेघसागरनिःस्वनः ५ अष्टौयंकुररच्छायाःसदश्वाराष्ट्रसंमताः ॥ वहंतिनैषांमुच्येतपदाद्भूमिमुपस्पृशन् ॥ एतद्राजन्धनंमह्यंतेनदीव्याम्यहंत्वया ६ ॥ वैशंपायनउवाच ॥ एवंश्रुत्वाव्यवसितोनिकृतिंसमुपाश्रितः ॥ जितमित्येवशकुनिर्युधिष्ठिरमभाषत ७ युधिष्ठिरउवाच ॥ शतंदासीसहस्राणितरुण्योहेमभद्रिकाः ॥ कंबुकेयूरधारिण्योनिष्ककंठ्यःस्वलंकृताः ८ महार्हमाल्याभरणाःसुवस्त्राश्चंदनोक्षिताः ॥ मणीन्हेमचबिभ्रत्यश्चतुःषष्टिविशारदाः ९ अनुसेवांचरंतीमाःकुशलानृत्यसामसु ॥ स्नातकानाममात्यानांराज्ञांचममशासनात् ॥ एतद्राजन्ममधनंतेनदीव्याम्यहंत्वया १० वैशंपायनउवाच ॥ एतच्छ्रुत्वाव्यवसितोनिकृतिंसमुपाश्रितः ॥ जितमित्येवशकुनिर्युधिष्ठिरमभाषत ११ युधिष्ठिरउवाच ॥ एतावंतिचदासानांसहस्राण्युतसंतिमे ॥ प्रदक्षिणानुलोमाश्चप्रावारवसनाःसदा १२ प्राज्ञामेधाविनोदांतायुवानोमृष्टकुंडलाः ॥ पात्रीहस्तादिवारात्रमतिथीन्भोजयंत्युत ॥ एतद्राजन्ममधनंतेनदीव्याम्यहंत्वया १३ ॥ ॥ वैशंपायनउवाच ॥ एतच्छ्रुत्वाव्यवसितोनिकृतिंसमुपाश्रितः ॥ जितमित्येवशकुनिर्युधिष्ठिरमभाषत १४

मुपस्पृशन्निितिपाठेउपस्पृशन्नित्येकत्वमार्षं । भूचराःयेनमुच्यंते अतिक्रम्यंतेइत्यर्थः ६ । ७ हेमभद्रिकाःहेममयाःभद्रिकाः मांगलिकालंकाराः मंगलसूत्रादयोयासांताः । कंबवःशंखवलयानि निष्कोवक्षोभूषणं ८ चतुःषष्टिषुकलासुविशारदाः । कलानामानितु श्रीमद्भागवतदशमस्कंधटीकायां श्रीधरस्वामिभिर्दर्शितानि ९ स्नातकादीनामनुसेवां पादप्रक्षालनादिरूपां सेवामनुपश्चाच्चरंति परिचरंति सामगीतिः प्रीत्युत्पादनंवा १० । ११ प्रावारवसनाः पट्टांबराच्छादनाः १२ । १३ । १४

नागागजाः । हेमकक्षाःसुवर्णगजरज्जवः । कृतापीडाःकृतभूषणाः । पद्मिनोगलगंडस्थलादिषुपद्मचिन्हिताः। हेममालिनःस्वर्णमालावंतः १५ ईषालांगलदंडःअष्टकरेणवःअष्टहस्तिनीकाः १६ । १७ । १८ दंडोध्वजदंडः १९ भृतिंवेतनंतच्चमासकालिकंनत्वान्हिकं । वार्षिकंचेतिवक्तुंपुनर्वेतनग्रहणं २० दुरात्मवान्दुष्टचित्तः २१ । २२ । २३ । २४ । २५ । २६

युधिष्ठिरउवाच ॥ सहस्रसंख्यानागामेमत्तास्तिष्ठंतिसौबल ॥ हेमकक्षाःकृतापीडाःपद्मिनोहेममालिनः १५ सुदांताराजवहनाःसर्वशब्दक्षमायुधि ॥ ईषादंतामहाकायाःसर्वेचाष्टकरेणवः १६ सर्वेचपुरभेत्तारोनवमेघनिभागजाः ॥ एतद्राजन्ममधनंतेनदीव्याम्यहंत्वया १७ वैशंपायनउवाच ॥ इत्येवंवादिनंपार्थंप्रहसन्निवसौबलः ॥ जितमित्येवशकुनिर्युधिष्ठिरमभाषत १८ युधिष्ठिरउवाच ॥ रथास्तावंतएवेमेहेमदंडाःपताकिनः ॥ हयैर्विनीतैःसंपन्नारथिभिश्चित्रयोधिभिः १९ एकैकोह्यत्रलभतेसहस्रपरमांभृतिम् ॥ युध्यतोऽयुध्यतोवाऽपिवेतनंमासकालिकम् ॥ एतद्राजन्ममधनंतेनदीव्याम्यहंत्वया २० वैशंपायनउवाच ॥ इत्येवमुक्तेवचनेकृतवैरोदुरात्मवान् ॥ जितमित्येवशकुनिर्युधिष्ठिरमभाषत २१ युधिष्ठिरउवाच ॥ अश्वांस्तित्तिरिकल्माषान्गांधर्वान्हेममालिनः ॥ ददौचित्ररथस्तुष्टोयांस्तान्गांडीवधन्वने २२ युद्धेजितःपराभूतःप्रीतिपूर्वमरिंदमः ॥ एतद्राजन्ममधनंतेनदीव्याम्यहंत्वया २३ वैशंपायनउवाच ॥ एतच्छ्रुत्वाव्यवसितोनिकृतिंसमुपाश्रितः ॥ जितमित्येवशकुनिर्युधिष्ठिरमभाषत २४ युधिष्ठिरउवाच ॥ रथानांशकटानांचश्रेष्ठानांचायुतानिमे ॥ युक्तान्येवहितिष्ठंतिवाहैरुच्चावचैस्तथा २५ एवंवर्णस्यवर्णस्यसमुच्चीयसहस्रशः ॥ यथासमुदितावीराःसर्वेवीरपराक्रमाः २६ क्षीरंपिबंतस्तिष्ठंतिभुंजानाःशालितंडुलान् ॥ षष्टिस्तानिसहस्राणिसर्वेविपुलवक्षसः ॥ एतद्राजन्ममधनंतेनदीव्याम्यहंत्वया २७ वैशंपायनउवाच ॥ एतच्छ्रुत्वाव्यवसितोनिकृतिंसमुपाश्रितः ॥ जितमित्येवशकुनिर्युधिष्ठिरमभाषत २८ युधिष्ठिरउवाच ॥ ताम्रलोहैःपरिवृतानिधयोयेचतुःशताः ॥ पंचद्रौणिकएकैकःसुवर्णस्याहतस्यवै २९ जातरूपस्यमुख्यस्यअनर्घ्येयस्यभारत ॥ एतद्राजन्ममधनंतेनदीव्याम्यहंत्वया ३० वैशंपायनउवाच ॥ एतच्छ्रुत्वाव्यवसितोनिकृतिंसमुपाश्रितः ॥ जितमित्येवशकुनिर्युधिष्ठिरमभाषत ३१ ॥ ॥ इतिश्रीमहाभारतेसभा०द्यूतपर्वणिदेवनेएकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ वैशंपायनउवाच ॥ एवंप्रवर्तितेद्यूतेघोरेसर्वापहारिणि ॥ सर्वसंशयनिर्मोक्ताविदुरोवाक्यमब्रवीत् १ ॥ विदुरउवाच ॥ महाराजविजानीहियत्त्वांवक्ष्यामिभारत ॥ मुमूर्षोरौषधमिवनरोचेतापितेश्रुतम् २ यद्वैपुराजातमात्रोरुरावगोमायुवद्विस्वरंपापचेताः ॥ दुर्योधनोभारतानांकुलघ्नःसोऽयंयुक्तोभवतांकालहेतुः ३ गृहेवसंतंगोमायुंत्वंवैमोहान्नबुध्यसे ॥ दुर्योधनस्यरूपेणशृणुकाव्यांगिरंमम ४

२७ । २८ ताम्रलोहैःपरिवृतास्ताम्रभाजनेषुलोहभाजनेषु चमुद्रितमुखेषुनिहिताइत्यर्थः निधिर्निक्षेपद्रव्यंअहतस्यकेवलस्य २९ । ३० । ३१ ॥ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेएकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ ६२ ॥ ॥ एवमिति १ । २ रुरावशब्दंकृतवान् ३ काव्यांकविनाशुक्रेणोक्तांनीतिंगिरम् ४

माध्विकोमधुपण्यवान् प्रपातंभृगुं । प्रपतंत्यस्मादितिव्युत्पत्तेः । मज्जतितत्रैवमधुनिनिमग्नोभवति । ततःप्रपतनंचाधिगच्छाति ५ मधुवन्मधुनेवमत्तोविवशः ६ । ७ नियोगाद्दैवयोगात् ८ । ९ चित्रबर्हान्मयूरान् १० । ११ जंभत्यागनिमित्तं सर्वज्ञः सर्वेषांप्राणिनांभावंचित्ताशयंजानातीतितथाभूतः काव्यः शुक्रःअयंसर्वशत्रुभयंकर इतिभाषतेस्म । सर्वेषांस्वपरपक्षीयाणांशत्रुश्च भयंकरश्चेतिसतथा । त्यजेत्कुलार्थेपुरुषमिति भाषतइतियोज्यं १२ न्यपीडयत्हतवान् लोभान्मांसलोभात् १३ आयतिमुत्तरकालंपरलोकमुपकारिणांवधात्व्यनाशयत् । तदात्वंसांप्रतं । इहापिसुखप्राप्त्यंधनं व्यनाशयत् । ततस्मादर्थकामोधनकामः १४ पत्रिहापक्षिहा पुष्पमिव पुष्पमुपहार्यधनं १५ अंगारकारीवृक्षशाखांत

मधुवैमाध्विकोलब्ध्वाप्रपातंनैवबुध्यते ॥ आरुह्यतंमज्जतिवापतनंचाधिगच्छाति ५ सोयंमत्तोऽक्षद्यूतेनमधुवन्नपरीक्षते ॥ प्रपातंबुध्यतेनैववैरंकृत्वामहारथैः ६ विदितंमेमहाप्राज्ञभोजेष्वेवासमंजसम् ॥ पुत्रंसंत्यक्तवान्पूर्वंपौराणांहितकाम्यया ७ अंधकायादवाभोजाःसमेताःकंसमत्यजन् ॥ नियोगात्तुहतेतस्मिन्कृष्णेनामित्रघातिना ८ एवंतेज्ञातयःसर्वेमोदमानाःशतंसमाः ॥ त्वन्नियुक्तःसव्यसाचीनिगृह्णातुसुयोधनम् ९ निग्रहादस्यपापस्यमोदंतांकुरवःसुखम् ॥ काकेनेमांश्चित्रबर्हान्शार्दूलान्क्रोष्टुकेनच ॥ क्रीणीष्वपांडवान्राजन्मामज्जीःशोकसागरे १० त्यजेत्कुलार्थेपुरुषंग्रामस्यार्थेकुलंत्यजेत् ॥ ग्रामंजनपदस्यार्थेआत्मार्थेपृथिवींत्यजेत् ११ सर्वज्ञःसर्वभावज्ञःसर्वशत्रुभयंकरः ॥ इतिस्मभाषतेकाव्योजंभत्यागेमहासुरान् १२ हिरण्यष्ठीविनःकांश्चित्पक्षिणोवनगोचरान् ॥ गृहेकिलकृतावासान्लोभाद्राजान्यपीडयत् ॥ सचोपभोगलोभांधोहिरण्यार्थीपरंतप १३ आयतिंचतदात्वंचउभेसद्योव्यनाशयत् ॥ तदर्थकामस्तद्वत्त्वंमाद्रुहःपांडवान्नृप १४ मोहात्मातप्स्यसेपश्चात्पत्रिहापुरुषोयथा ॥ जातंजातंपांडवेभ्यःपुष्पमादत्स्वभारत १५ मालाकारइवारामेस्नेहंकुर्वन्पुनःपुनः ॥ वृक्षानंगारकारीवमैनान्धाक्षीःसमूलकान् ॥ माऽगमःससुतामात्यःसबलश्चयमक्षयम् १६ समवेतान्हिकःपार्थान्प्रतियुध्येतभारत ॥ मरुद्भिःसहितोराजन्नपिसाक्षान्मरुत्पतिः १७ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणिविदुरहितवाक्येद्विषष्टितमोध्यायः ६२ ॥ विदुरउवाच ॥ ॥ द्यूतंमूलंकलहस्याभ्युपैतिमिथोभेदंमहतेदारुणाय ॥ तदास्थितोऽयंधृतराष्ट्रस्यपुत्रोदुर्योधनःसृजतेवैरमुग्रम् १ प्रातिपेयाःशांतनवाभीमसेनाःसबाल्हिकाः ॥ दुर्योधनापराधेनकृच्छ्रंप्राप्स्यंतिसर्वशः २ दुर्योधनोमदेनैषक्षेमंराष्ट्रंव्यपोहति ॥ विषाणंगौरिवमदात्स्वयमारुजतेऽऽत्मनः ३ यश्चित्तमन्वेतिपरस्यराजन्वीरःकविःस्वामवमन्यदृष्टिम् ॥ नावंसमुद्रेइवबालनेत्रामारुह्यघोरेव्यसनेनिमज्जेत् ४

निघर्षणेनवन्ह्युपादकोवायुरिव त्वमेतेषांपरस्परसंघर्षणेन कुलक्षयंमाकुर्वित्यर्थः १६ । १७ ॥ इतिसभापर्वणि नैलकंठीयेभारतभावदीपे द्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ द्यूतमिति द्यूतंदारुणायभयाय अभ्युपैतीतिसंबंधः १ प्रातिपेयाःप्रतीपान्वयजाः । कृच्छ्रंसंकटं २ क्षेमंव्यपोहाति राष्ट्रमुपद्रुतंकरोतीत्यर्थः आरुजते भंगंनयाति । आत्मनःपूर्वरूपमार्ष ३ अन्वेतिअनुसरति । कविःक्रांतदर्शी । स्वांदृष्टिंक्रांतदर्शित्वं । बालनेत्रामव्युत्पन्ननेतृकाम् ४

ग्लहतपणंकरोति । प्रीयायसेअतिशयेन प्रीयसे । यङंताऽयंअप्रथमस्यापियकारस्याद्वित्वमार्षं । प्रियायसइति ऱ्हस्वपाठेतुप्रियमिवआचरसे । अतिनर्माऽतिविनोदएवांतेसंप्रहारो युद्धंआजायतेयुद्धरूपेण परिणमते अतः समुन्मज्जातिसंप्रहार इतिपाठः ५ आकर्षस्तेऽवाक्फलःसुप्रणीतः आकर्षोद्यूतं । आवाङ्नीचगामि फलंयस्यसोऽवाक्फलः हानिमृत्युनरक प्रद इत्यर्थः । सुप्रणीतःसम्यक्प्रणीत उपस्थापितः शकुनिनेत्युपहासः । 'आकर्षःशारिफलके पाशकेद्यूतइंद्रिये' इतिविश्वः । आकर्षस्तेस्वेधनेकुप्रणीतइतिपाठे स्वंधनंराज्यपुत्रा दितत्रआकर्षो धनाद्याकर्षणसाधनं काष्ठादिमयोहस्तः कुत्सितेनशकुनिना प्रणीतः । यतोऽयंद्यूतरूपः समाधिर्नियमो मंत्रपदोमंत्रपूर्वको भवतांहृदिप्ररूढः । किंतावतेत्यतआहयु धिष्ठिरेणेति अयमेव आकर्षःकलहः कलहरूपेणपरिणंस्यत इत्यर्थः ६ तत्फलमाहप्रातिपेयाइति काव्यां कविनादीर्घदर्शिनामया ईरितां मंदंदुर्योधनं । मात्यगाद्वइतिपाठे वःयु ष्माकंमध्येकश्चिदिमं कलहवैश्वानरं माऽत्यगादतिक्रम्य माऽगात् । किंतुअर्वागेव शाम्यध्वमित्याहोत्तरार्धेन ७ अयुद्धेनप्रशामयस्वेति राजानंप्रत्युक्तं । युद्धेकोदोषइत्यतआह यदेतिद्वीपइवद्वीपः आपत्समुद्रे मज्जतामाश्रयः ८ प्रभवउत्पत्तिः यावदिच्छेस्तावत्तेधनमस्तीत्यर्थः । अत्यंततृष्णाऽप्यफलेत्याह बव्हिति जयःअजयःजितवान् किंतेतवततःस्मान्न

दुर्योधनोग्लहतेपांडवेनप्रीयायसेत्वंजयतीतितच्च ॥ अतिनर्माजायतेसंप्रहारोयतोविनाशःसमुपैतिपुंसाम् ५ आकर्षस्तेऽवाक्फलःसुप्रणीतोहृदिप्रौढो मंत्रपदःसमाधिः ॥ युधिष्ठिरेणकलहस्तवायमचिंतितोऽभिमतःस्वबंधुना ६ प्रातिपेयाःशांतनवाःश्रृणुध्वंकाव्यांवाचंसंसदिकौरवाणाम् ॥ वैश्वानरंप्रज्व लितंसुघोरंमायास्यध्वंमंदमनुप्रपन्नाः ७ यदामन्युंपांडवोऽजातशत्रुर्नसंयच्छेदक्षमदाभिभूतः ॥ वृकोदरःसव्यसाचीयमौचकोऽत्रद्वीपःस्यात्तुमुलेवस्त दानीम् ८ महाराजप्रभवस्त्वंधनानांपुराद्यूतान्मनसायावदिच्छेः ॥ बहुवित्तान्पांडवांश्चेज्जयस्त्वंकिंतेतत्स्याद्वसुविंदेहपार्थान् ९ जानीमहेदेवितंसौबल स्यवेदद्यूतेनिकृतिंपार्वतीयः ॥ यतःप्राप्तःशकुनिस्तत्रयातुमायूयुधोभारतपांडवेयान् १० ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणिविदुरवाक्येत्रि षष्टितमोऽध्यायः ६३ ॥ ॥ दुर्योधनउवाच ॥ ॥ परेषामेवयशसाश्लाघसेत्वंसदाछन्नःकुत्सयन्धार्तराष्ट्रान् ॥ जानीमहेविदुरयत्प्रियस्त्वंबालानि वास्मानवमन्यसेनित्यमेव १ सविज्ञेयःपुरुषोऽन्यत्रकामोनिंदाप्रशंसेहितथायुनक्ति ॥ जिव्हाकथंतेहृदयंव्यनक्तियोनज्यायसःकृथामनसःप्रातिकूल्यम् २

किमपि । अतोहेतोर्वसु विंदेहपार्थान् पार्थानेवधनरूपेण विंदलभस्व । वसुजित्वेहपार्थानितिपाठे वसुजित्वावसुजयशीलः । अन्येभ्योऽपिदृश्यंतइति जयतेःक्वनिप् । तादृशस्त्वंपा र्थानेवईहईहस्व इच्छाविषयान्कुरु । तेनैवतवमहाँल्लाभइत्यर्थः ९ वेदजानीते निकृतिंछलं मायूयुधःमायोधयः १० ॥ इतिसभापर्वणिनैलकंठीये भारतभावदीपे त्रिषष्टितमोऽध्या यः ॥ ६३ ॥ ॥ परेषामिति यत्प्रियःयेप्रियायस्य बालान्मूर्खान् । अस्मिन्पादेऽक्षराधिक्यमार्षम् १ सइति अन्यत्रइष्टजयेऽनिष्टपराजयेचकामोऽभिलाषो यस्यसोऽन्यत्रकामोवि ज्ञेयः । तत्रलिंगमिष्टप्रशंसा अनिष्टनिंदाचेत्याहनिंदेति तेतवजिव्हाकथं हृदयंहृदिस्थमस्मासुद्वेषंव्यनक्ति अवाच्यमपि प्रकटयतीत्यर्थः । जिव्हामनस्तेहृदयंव्यनक्तिज्यायोऽत रान्मनसःप्रातिकूल्यमितिपाठे जिव्हावागिंद्रियं तत्सहितं मनस्तत्प्रवर्तकमंतःकरणंतत्तेतवहृदयं बुद्धिमाशयंव्यनक्ति यतः अंतरान्मनसःअपेक्षया बाह्यं वाचःप्रातिकूल्यंज्यायः । विद्यमानोऽप्यस्मासु द्वेषोलोकलज्जाभयात् त्वया वाचा नवक्तव्यइत्यर्थः २

१९

एतदेवाहउत्संगेचेति पापीयःपापतरं भर्तृघ्नत्वात्स्वामिद्रोहात् पापीयमाहुरितिपाठे पाषायहितं तस्मैहितमितिच्छः ३ संप्रयोगऐक्यंसख्यमित्यर्थः । संप्रयोगादस्माभिःसहसख्यं कृत्वातान्प्रशंसन् मुहुर्वारंवारंद्वेषंयासि । अस्मद्वेष्योभवसीत्यर्थः । संप्रमोहादित्यापिपाठः । तेषांसखाभूत्वामौख्यादस्माभिःसहद्वेषंकरोषि । संबंधस्यसाम्येसत्येतदयुक्तमित्यर्थः ४ अक्षमंक्षंतुमयोग्यंनिगूहते गुह्यंसर्वोऽपि । त्वंतुतत्प्रकाशयसीतिभावः । तदाश्रितःपार्थिवाश्रितः पार्थिवंधृतराष्ट्रंयतोयथेष्टंभाषसे ५ । ६ अहंदुर्योधनःकर्तेतिचमामंस्थामामन्यस्व । माऽवमंस्थाइतिपाठेमामितिशेषः । तितिक्षून्क्षमावतःक्षिणुक्षपय । नात्रास्माकमपराधइत्यर्थः ७ कस्तर्हिकर्तेत्यतआह एकइतिप्रवणात्निम्नात् ८ भिनत्तियेनानियुक्तः स्वीयमपिशिरस्ताडयतीत्यर्थः । भोजयतोणिचश्चेतितङ् । साक्षान्मृत्युमप्यहिंसर्पं योरक्षयतेइत्यर्थः । एवमनिष्टेऽपिकर्मणि सएवमांप्रेरयतीत्यर्थः । तेनशासनेनशास्यमेवामित्रं विंदतिप्राप्नोति ९

उत्संगेचव्यालइवाहितोऽसिमार्जारवत्पोषकंचोपहंसि ॥ भर्तृघ्नंत्वांनहिपापीयआहुस्तस्मात्क्षत्तःकिंनबिभेषिपापात् ३ जित्वाशत्रून्फलमाप्तंमहद्वैमाऽस्मान्क्षत्तःपरुषाणीहवोचः ॥ द्विषद्भिस्त्वंसंप्रयोगाभिनंदीमुहुर्द्वेषंयासिनःसंप्रयोगात् ४ अमित्रतांयातिनरोऽक्षमंब्रुवन्निगूहतेगुह्यममित्रसंस्तवे ॥ तदाश्रितोऽपत्रपकिंनुबाधसेयदिच्छसित्वंतदिहाभिभाषसे ५ मानोऽवमंस्थाविद्ममनस्तवेदंशिक्षस्वबुद्धिंस्थविराणांसकाशात् ॥ यशोरक्षस्वविदुरसंप्रणीतंमाव्याप्रतःपरकार्येषुभूस्त्वम् ६ अहंकर्तेतिविदुरमाचमंस्थामानोनित्यंपरुषाणीहवोचः ॥ नत्वांपृच्छामिविदुरयद्धितंमेस्वस्तिक्षत्तर्मातितिक्षून्क्षिणुत्वम् ७ एकःशास्तानद्वितीयोऽस्तिशास्तागर्भेशयानंपुरुषंशास्तिशास्ता ॥ तेनानुशिष्टःप्रवणादिवांभोयथानियुक्तोऽस्मितथाभवामि ८ भिनत्तिशिरसाशैलमहिंभोजयतेचयः ॥ धीरेवकुरुतेतस्यकार्याणामनुशासनम् ॥ योबलादनुशास्तीहसोऽमित्रंतेनविंदति ९ मित्रतामनुवृत्तंतुसमुपेक्षेतपंडितः ॥ प्रदीप्ययःप्रदीप्ताग्निंप्राक्चिरंनाभिधावति ॥ भस्मापिनसविंदेतशिष्टंक्वचनभारत १० नवासयेत्पारवर्ग्यंद्विषंतंविशेषतःक्षत्तरहितंमनुष्यम् ॥ सयत्रेच्छसिविदुरतत्रगच्छसुसांत्वितात्यसतीस्त्रीजहाति ११ ॥ विदुरउवाच ॥ एतावतापुरुषंयेत्यजंतितेषांसख्यमंतवद्ब्रूहिराजन् ॥ राज्ञांहिचित्तानिपरिप्लुतानिसांत्वंदत्वामुसलैर्घातयंति १२ अबालत्वंमन्यसेराजपुत्रबालोऽहमित्येवसुमंदबुद्धे ॥ यःसौहृदेपुरुषंस्थापयित्वापश्चादेनंदूषयतेसबालः १३

समुपेक्षेतशासनमितिशेषः स्वरपालकत्वेनत्वन्मित्रं मांत्वमेवंमाशाधीत्यर्थः । यदुक्तंवैराग्निप्रशमयस्वेति तत्राहप्रदीप्येति प्रकर्षेणदीप्तोदीपनीयोऽग्निर्यस्य सप्रदीप्ताग्निःकर्पूरस्तं प्राक्पूर्वंप्रदीप्ययःशमयितुंचिरंनाभिधावति सतस्यकर्पूरस्य भस्मापिनविंदति । तथाचैवंपांडवान्प्रकोप्य यदिसमूलान्नाशयामि तर्ह्येतेमांनिर्मूलमुन्मूलयिष्यंतीतिभावः । अत्रप्रदीप्यप्राक्प्रदीप्ताद्भिप्रामुंरत्नानिधावतीतिपाठांतरंनिर्मूलं १० पारवर्ग्यंपरवर्गेशत्रुसंघेजातं ११ एतावतानीतिशिक्षणेन साक्षिवत्पुत्रेमायिवा पक्षपातमकुर्वन्ब्रूहि राजन् हेधृतराष्ट्रराज्ञांहीति परिप्लुतानिद्वेषेणेतिशेषः । तर्हितेसांत्वंदत्वाघातयंति कोपंप्रच्छादयंत्येव । अयंतुकोपप्रकाशनान्न राजनीतिविदितिभावः १२ अबालत्वंपंडितत्वमात्मनइतिशेषः । बालोऽहंविदुरइतिचमन्यसेतद्विपरीतामित्याह यइतिसुहृत्सुअविश्वासकृदेवबालइत्यर्थः । अबालस्त्वमितिपाठेत्वंबाल इतिदुर्योधनेकाकूक्त्यायोज्यं १३

ध्रुवंस्थिरंराज्यादिकंनरोचेन्नरोचते । यद्वाध्रुवंनिश्चितंहितोपदेष्टेतिशेषः । भरतर्षभस्यत्युपहासः १४ । १५ यत्तुपरुषाणिमावोचइत्युक्तंतत्राह लभ्यतइति पथ्यंपरिणामेहितं १६ । १७
हेमहाराजयमसंतोनापिबंतितं सतांपेयंमन्युंदैन्यंपिब । मन्युर्दैन्येक्रतौक्रुधीत्युक्तं । तच्चाव्याधिजंकिंतुकटुजंदूषणजं । 'दूषणेकटु'इतिविश्वः । तीक्ष्णंमर्मच्छित् । उष्णंतापजनकं । यशो
मुषंकीर्तिघ्नं । परुषंरूक्षं । निःस्नेहंपूतिगंधि पूतिदुष्टं तद्गंधि दुष्टवदाभासमानं । औषधमप्येतादृशंअव्याधये जायतेतदव्याधिजं । कटुजंकटुक्यादिकटुद्रव्यजं । तीक्ष्णंवेदनाकरं । उ

नश्रेयसेनीयतेमंदबुद्धिस्त्रीश्रोत्रियस्येवगृहेप्रदुष्टा ॥ ध्रुवंनरोचेद्भरतर्षभस्यपतिःकुमार्याइवषाष्टिवर्षः १४ अतःप्रियंचेदनुकांक्षसेत्वंसर्वेषुकार्येषुहिताहि
तेषु ॥ स्त्रियश्चराजन्जडपंगुकांश्चपृच्छत्वंवैतादृशांश्चैवसर्वान् १५ लभ्यतेखलुपापीयान्नरोनुप्रियवागिह ॥ अप्रियस्यहिपथ्यस्यवक्ताश्रोताचदुर्लभः ॥
१६ यस्तुधर्मपरश्चस्याद्धित्वाभर्तुःप्रियाप्रिये ॥ अप्रियाण्याहपथ्यानितेनराजासहायवान् १७ अव्याधिजंकटुजंतीक्ष्णमुष्णंयशोमुषंपरुषंपूतिगंधिम् ॥
सतांपेयंयन्नपिबंत्यसंतोमन्युंमहाराजपिबप्रशाम्य १८ वैचित्रवीर्यस्ययशोधनंचवांछाम्यहंसहपुत्रस्यशश्वत् ॥ यथातथातेऽस्तुनमश्चतेऽस्तुममापिच
स्वस्तिदिशंतुविप्राः १९ आशीविषान्नेत्रविषान्कोपयेन्नचपंडितः ॥ एवंतेऽहंवदामीदंप्रयतःकुरुनंदन ॥ २० ॥ इतिश्रीमहाभारतेसभापर्वणिविदुरहि
तवाक्येचतुःषष्टितमोऽध्यायः ॥ ६४ ॥ ॥ शकुनिरुवाच ॥ बहुवित्तंपराजैषीःपांडवानांयुधिष्ठिर ॥ आचक्ष्ववित्तंकौंतेययदितेऽस्त्यपराजितम् १
॥ युधिष्ठिरउवाच ॥ ममवित्तमसंख्येयंयदहंवेदसौबल ॥ अथत्वंशकुनेकस्माद्वित्तंसमनुपृच्छसि २ अयुतंप्रयुतंचैवशंकुंपद्मंतथार्बुदम् ॥ खर्वंशंखंनि
खर्वंचमहापद्मंचकोटयः ३ मध्यंचैवपरार्धंचसपरंचात्रपण्यताम् ॥ एतन्ममधनंराजंस्तेनदीव्याम्यहंत्वया ४ वैशंपायनउवाच ॥ एतच्छ्रुत्वाव्यवसितो
निकृतिंसमुपाश्रितः ॥ जितमित्येवशकुनिर्युधिष्ठिरमभाषत ५ ॥ युधिष्ठिरउवाच ॥ गवाश्वंबहुधेनूकमसंख्येयमजाविकम् ॥ यत्किंचिदनुपर्णाशांप्राक्
सिंधोरपिसौबल ॥ एतन्ममधनंसर्वंतेनदीव्याम्यहंत्वया ६ ॥ वैशंपायनउवाच ॥ एतच्छ्रुत्वाव्यवसितोनिकृतिंसमुपाश्रितः ॥ जितमित्येवशकुनिर्युधि
ष्ठिरमभाषत ७ ॥ युधिष्ठिरउवाच ॥ पुरंजनपदोभूमिरब्राह्मणधनैःसह ॥ अब्राह्मणाश्चपुरुषाराजन्शिष्टंधनंमम ॥ एतद्राजन्ममधनंतेनदीव्याम्यहंत्व
या ८ ॥ वैशंपायनउवाच ॥ एतच्छ्रुत्वाव्यवसितोनिकृतिंसमुपाश्रितः ॥ जितमित्येवशकुनिर्युधिष्ठिरमभाषत ९ ॥ युधिष्ठिरउवाच ॥ राजपुत्राइमे
राजन्शोभंतेयैर्विभूषिताः ॥ कुंडलानिचनिष्काश्चसर्वंराजविभूषणम् ॥ एतन्ममधनंराजंस्तेनदीव्यामहंत्वया १०

ष्णंजाड्यनाशकं । यशोमुषंकामोद्दीपनेन । परुषंघृतादिसाधनहीनं पूतिगंधिलशुनादिवद्दुर्गंधि । पिबमन्युमौषधंवागिल । प्रशाम्यप्रशममारोग्यंचप्राप्नुहि १८ शश्वन्निरंतरं १९
आशीविषान्दंष्ट्राविषान् । नेत्रविषान्दृष्टिविषान् । शस्त्रेणक्रोधदृष्ट्याच पांडवास्त्वांधक्ष्यंतीतिभावः २० ॥ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेचतुःषष्टितमोऽध्यायः ॥ ६४ ॥
बह्विति पराजैषीर्हारितवान् १ । २ । ३ सपरंसाधिकंपरार्धादप्यधिकं ४ । ५ पर्णाशा नदी ६ । ७ । ८ ; ९ । १०

११ । १२ । १३ । १४ अप्रियवत्ताप्रियमपि द्यूते स्यजामीत्यर्थः १५ । १६ । १७ सुमनसांपरस्परमैकमत्यवतांभेदंवैमत्यं १८ मत्तः वित्तविवशचित्तत्वेनाधर्मकर्त्ता । सगर्त्तेनरकेस्थाणु स्थाणुत्वमृच्छतिप्राप्नोति । आर्छतीतिपाठे आङ्पूर्वस्यरूपं । ज्येष्ठोवयसाऽधिकः । वरिष्ठोगुणैरधिकः १९ मत्तत्वमेवाहस्वप्नइति मत्तस्य ममवचः क्षंतव्यमितिभावः २० संख्येसंग्रामे

॥ वैशंपायनउवाच ॥ ॥ एतच्छ्रुत्वाव्यवसितोनिकृतिंसमुपाश्रितः ॥ जितमित्येवशकुनिर्युधिष्ठिरमभाषत ११ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ श्यामोयुवालोहिताक्षःसिंहस्कंधोमहाभुजः ॥ नकुलोग्लहएवैकोविद्ध्येतन्ममतद्धनम् १२ ॥ ॥ शकुनिरुवाच ॥ ॥ प्रियस्तेनकुलोराजन्राजपुत्रोयुधिष्ठिर ॥ अस्माकंवशतांप्राप्तोभूयःकेनेहदीव्यसे १३ ॥ ॥ वैशंपायनउवाच ॥ एवमुक्त्वातुतानक्षान्शकुनिःप्रत्यदीव्यत ॥ जितमित्येवशकुनिर्युधिष्ठिरमभाषत १४ ॥ युधिष्ठिरउवाच ॥ अयंधर्मान्सहदेवोऽनुशास्तिलोकेह्यस्मिन्पंडिताख्यांगतश्च ॥ अनर्हताराजपुत्रेणतेनदीव्याम्यहंचाप्रियवत्प्रियेण १५ ॥ वैशंपायनउवाच ॥ एतच्छ्रुत्वाव्यवसितोनिकृतिंसमुपाश्रितः ॥ जितमित्येवशकुनिर्युधिष्ठिरमभाषत १६ ॥ शकुनिरुवाच ॥ माद्रीपुत्रौप्रियौराजंस्तवेमौविजितौमया ॥ गरीयांसौतुतेमन्येभीमसेनधनंजयौ १७ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ अधर्मंचरसेनूनंयोनावेक्षसिवैनयम् ॥ योनःसुमनसांमूढविभेदंकर्तुमिच्छसि १८ ॥ ॥ शकुनिरुवाच ॥ ॥ गर्त्तेमत्तःप्रपततेप्रमत्तःस्थाणुमृच्छति ॥ ज्येष्ठोराजन्वरिष्ठोऽसिनमस्तेभरतर्षभ १९ स्वप्नेतानिनदृश्यंतेजाग्रतोवायुधिष्ठिर ॥ कितवायानिदीव्यंतःप्रलपंत्युत्कटाइव २० ॥ ॥ युधिष्ठिरउवाच ॥ ॥ योनःसंख्येनौरिवपारनेताजेतारिपूणांराजपुत्रस्तरस्वी ॥ अनर्हतालोकवीरेनतेनदीव्याम्यहंशकुनेफाल्गुनेन २१ ॥ वैशंपायनउवाच ॥ एतच्छ्रुत्वाव्यवसितोनिकृतिंसमुपाश्रितः ॥ जितमित्येवशकुनिर्युधिष्ठिरमभाषत २२ ॥ ॥ शकुनिरुवाच ॥ ॥ अयंमयापांडवानांधनुर्धरःपराजितःपांडवःसव्यसाची ॥ भीमेनराजन्दयितेनदीव्ययत्कैतवंपांडवतेऽवशिष्टम् २३ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ योनोनेतायोयुधिनःप्रणेतायथावज्रीदानवशत्रुरेकः ॥ तिर्यक्प्रेक्षीसन्नतभ्रूर्महात्मासिंहस्कंधोयश्चसदात्यमर्षी २४ बलेनतुल्योयस्यपुमान्नविद्यतेगदाभृतामग्र्यइहारिमर्दनः ॥ अनर्हताराजपुत्रेणतेनदीव्याम्यहंभीमसेनेनराजन् २५ ॥ ॥ वैशंपायनउवाच ॥ ॥ एतच्छ्रुत्वाव्यवसितोनिकृतिंसमुपाश्रितः ॥ जितमित्येवशकुनिर्युधिष्ठिरमभाषत २६ ॥ ॥ शकुनिरुवाच ॥ बहुवित्तंपराजैषीर्भ्रातॄंश्चसहयाद्विपान् ॥ आचक्ष्ववित्तंकौंतेययदितेऽस्त्यपराजितम् २७ ॥ युधिष्ठिरउवाच ॥ अहंविशिष्टःसर्वेषांभ्रातॄणांदयितस्तथा ॥ कुर्यामहंजितःकर्मस्वयमात्मन्युपप्लुते २८ ॥ वैशंपायनउवाच ॥ एतच्छ्रुत्वाव्यवसितोनिकृतिंसमुपाश्रितः ॥ जितमित्येवशकुनिर्युधिष्ठिरमभाषत २९ ॥ शकुनिरुवाच ॥ एतत्पापिष्ठमकरोर्यदात्मानंपराजयेः ॥ शिष्टेसतिधनेराजन्पापआत्मपराजयः ३०

तरस्वीवेगवान् २१ । २२ कैतवंकितवेभ्यआहर्तव्यंधनं २३ । २४ । २५ । २६ । २७ उपप्लुतेजिते २८ । २९ पापिष्ठमत्यधमं पापःपापहेतुः ३०

ग्लहेपणविषये राजानंप्रतिएवमुक्त्वाराज्ञां पांडवानांपराजयंचलोकवीरान्प्रतिउक्त्वा शकुनिरुवाचेत्युत्तरेणसंबंधः ३१ आत्मानंप्रतिपणंपुनर्जय दास्यान्मोचय । नोचेद्द्रौपदीवाऽस्म
दासीभविष्यतीत्यर्थः ३२ नातिरोहिणीनातिरक्ता ३३ शारदोत्पलसेविन्यालक्ष्म्या रूपेणसमानया । श्रियालावण्यसौभाग्यादिरूपयाचसमानया । श्रीतिभिन्नंपदं छांदसस्तृतीयाया
लुक्पूर्वसवर्णोवा ३४ तथैवेतिलक्ष्मीसाम्यमुच्यते ३५ धर्मकामार्थसिद्धिं धर्मकामयोरर्थयोः सिद्धिर्ययासातथातां । अर्थामितिपाठे सिद्धिमिवसिद्धिं ३६ । ३७ मल्लिकेवसुरभिरि

॥ वैशंपायनउवाच ॥ ॥ एवमुक्त्वामताक्षस्तान्ग्लहेसर्वानवस्थितान् ॥ पराजयंलोकवीरानुक्त्वाराज्ञांपृथक्पृथक् ३१ ॥ शकुनिरुवाच ॥ ॥ अ
स्तितेवैप्रियाराजन्ग्लहएकोऽपराजितः ॥ पणस्वकृष्णांपांचालींतयाऽत्मानंपुनर्जय ३२ ॥ युधिष्ठिरउवाच ॥ नैवह्रस्वानमहतीनकृशानातिरोहिणी ॥
नीलकुंचितकेशीचतयादीव्याम्यहंत्वया ३३ शारदोत्पलपत्राक्ष्याशारदोत्पलगंधया ॥ शारदोत्पलसेविन्यारूपेणश्रीसमानया ३४ तथैवस्यादानृशं
स्यात्तथास्याद्रूपसंपदा ॥ तथास्याच्छीलसंपत्त्यायामिच्छेत्पुरुषःस्त्रियम् ३५ सर्वैर्गुणैर्हिसंपन्नामनुकूलांप्रियंवदाम् ॥ यादृशींधर्मकामार्थसिद्धिमिच्छे
न्नरःस्त्रियम् ३६ चरमंसंविशातियाप्रथमंप्रतिबुध्यते ॥ आगोपालाविपालेभ्यःसर्वंवेदकृताकृतम् ३७ आभातिपद्मवद्वक्त्रंसस्वेदंमल्लिकेवच ॥ वेदीमध्यादी
र्घकेशीताम्रास्यानातिलोमशा ३८ तयैवंविधयाराजन्पांचाल्याऽहंसुमध्यया ॥ ग्लहंदीव्यामिचार्वंग्याद्रौपद्याहंतसौबल ३९ ॥ वैशंपायनउवाच ॥
एवमुक्तेतुवचनेधर्मराजेनधीमता ॥ धिग्धिगित्येववृद्धानांसभ्यानांनिःसृतागिरः ४० चुक्षुभेसासभाराजन्राज्ञांसंजज्ञिरेशुचः ॥ भीष्मद्रोणकृपादीनां
स्वेदश्चसमजायत ४१ शिरोगृहीत्वाविदुरोगतसत्त्वइवाभवत् ॥ आस्तेध्यायन्नधोवक्त्रोनिःश्वसन्निवपन्नगः ४२ धृतराष्ट्रस्तुतंहृष्टःपर्यपृच्छत्पुनःपुनः ॥
किंजितंकिंजितमितिह्याकारंनाभ्यरक्षत ४३ जहर्षकर्णोऽतिभृशंसहदुःशासनादिभिः ॥ इतरेषांतुसभ्यानांनेत्रेभ्यःप्रापतज्जलम् ४४ सौबलस्त्वभिधायै
वंजितकाशीमदोत्कटः ॥ जितमित्येवतानक्षान्पुनरेवान्वपद्यत ४५ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणिद्रौपदीपराजयेपंचषष्टितमोऽध्यायः६५॥
॥ दुर्योधनउवाच ॥ एहिक्षत्तर्द्रौपदीमानयस्वप्रियांभार्यांसंमतांपांडवानाम् ॥ संमार्जतांवेश्मपरैतुशीघ्रंतत्रास्तुदासीभिरपुण्यशीला १ ॥ विदुरउवाच ॥
दुर्विभाषंभाषितंत्वादृशेननमंदसंबुद्ध्यसिपाशबद्धः ॥ प्रपातेत्वंलंबमानोनवेत्सिव्याघ्रान्मृगःकोपयसेऽतिवेलम् २ आशीविषास्तेशिरसिपूर्णकोपामहा
विषाः ॥ माकोपिष्ठाःसुमंदात्मन्मागमस्त्वंयमक्षयम् ३ नहिदासीत्वमापन्नाकृष्णाभवितुमर्हति ॥ अनीशेनहिराज्ञैषापणेन्यस्तेतिमेमतिः ४

तिशेषः संमोदोमल्लिकेवचेतिगौडपाठे संमोदः परिमलः वेदीवकृशमध्या ३८ सुमध्ययासुंदरमध्यया ३९ । ४० । ४१ । ४२ आकारंहर्षकृतं स्वाभिप्रायं ४३ । ४४ एवमभिधाय
अस्तितेवैप्रियाराजन्नित्यादिकमुक्त्वा जितकाशीजयशोभी ४५ ॥ इतिसभापर्वणि नैलकंठीयेभारतभावदीपे पंचषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ एहीति वेश्मसंमार्जता परैतु
पराकृताधिकृतासती एतुआयातु १ दुर्विभाषंदुर्विकल्पं २ । ३ । ४

वेणुःवेनापरनामाराजा सहिऐश्वर्यंप्राप्य मान्यान्अमानयन् सद्योनष्टःएवमयमपीत्यर्थः ५ अरुंतुदःमर्मभेदी । नृशंसवादी परुषवादी । हीनतःनीचेन कर्मणाद्यूतादिना परं शत्रुंअ
भ्याददीतवशेकुर्वीत उषतींदाहिकां । रुशतीमितिपाठे अकल्याणीं । पापलोक्यांनरकावहां ६ । ७ अजोहिशस्त्रमागिलात्किलैकडाति इयंकथा वनेकचरप्रसिद्धा एकोऽजः शस्त्रम
गिलत्गिलितुमारब्धस्ततस्तदशक्नुवन् भूमौआस्यंनिपात्यपद्भ्यामुत्त्वाल्य भोक्तुमारब्धः ततस्तस्मिन्नुच्चालितेसति शिरसासहस्वस्यकंठस्य निकृंतनंप्राप्यममार । तद्वत्त्वमपिपांडवैर्वैरं
शस्त्रेणस्वहननंमाकृथाइतिप्राञ्चः । कश्चित्किलमत्स्यघाती बडिशंधान्यपिष्टेनोपलिप्य यावज्जलाशयेपातयति तावद्गृहच्छागेनचापलात्तत्सपिष्टमेवगिलितं तन्निष्कासने विदीर्ण
कंठश्छागो ममारेत्याख्यायिकाऽत्र दृष्टांतार्थमुक्ता । पदयोजनातु एकःअजः घोरंशस्त्रंबडिशमगिलत्गिलितवान् । कुतोऽस्यघोरत्वंतत्राह अस्यअजस्याशिरसासह भूमौशस्त्रेविपन्ने
विशेषेणप्राप्तेसति स्वस्यकंठस्यानिकृंतनं कर्त्तनंछेदहेतुःयतोऽभवादित्यन्वयः । अजकंठस्थंशस्त्रं सूत्रेणाकृष्यमाणंतच्छिरसासहैव तद्देहाद्विभक्तमभूदित्यर्थः । पद्भिरपास्यभूमिमि

अयंधत्तेवेणुरिवात्मघातीफलंराजाधृतराष्ट्रस्यपुत्रः ॥ द्यूतंहिवैरायमहाभयायमत्तोनबुध्यत्ययमंतकालम् ५ नारुंतुदःस्यान्ननृशंसवादीनहीनतःपरमभ्याददीत ॥ ययाऽस्यवाचापरउद्विजेतनतांवदेदुषतींपापलोक्याम् ६ समुच्चरंत्यतिवादाश्चवक्त्राद्यैराहतःशोचतिरात्र्यहानि ॥ परस्यनामर्मसुतेपतंतितान्पंडितोनावसृजेत्परेषु ७ अजोहिशस्त्रमगिलत्किलैकःशस्त्रेविपन्नेशिरसाऽस्यभूमौ ॥ निकृंतनंस्वस्यकंठस्यघोरंतद्वद्वैरंमाकृथाःपांडुपुत्रैः ८ नकिंचिदित्थंप्रवदंतिपार्थावनेचरंवागृहमेधिनंवा ॥ तपस्विनंवापरिपूर्णविद्यंभषंतिहैवंश्वनराःसदैव ९ द्वारंसुघोरंनरकस्यजिह्मंनबुध्यतेधृतराष्ट्रस्यपुत्रः ॥ तमन्वेतारोबहवःकुरूणांद्यूतोदयेसहदुःशासनेन १० मज्जंत्यलाबूनिशिलाःप्लवंतेमुह्यंतिनावोंऽभसिशश्वदेव ॥ मूढोराजाधृतराष्ट्रस्यपुत्रोनमेवाचःपथ्यरूपाःशृणोति ११ अंतोनूनंभविताऽयंकुरूणांसुदारुणःसर्वहरोविनाशः ॥ वाचःकाव्याःसुहृदांपथ्यरूपानश्रूयंतेवर्धतेलोभएव १२ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणिविदुरवाक्येषट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ धिगस्तुक्षत्तारमितिब्रुवाणोदर्पेणमत्तोधृतराष्ट्रस्यपुत्रः ॥ अवैक्षतप्रातिकामींसभायामुवाचचैनंपरमार्यमध्ये १ ॥ ॥ दुर्योधनउवाच ॥ ॥ प्रातिकामिन्द्रौपदीमानयस्वनतेभयंविद्यतेपांडवेभ्यः ॥ क्षत्ताह्ययंविवदत्येवभीतोनचास्माकंवृद्धिकामःसदैव २

तिपाठेतुशस्त्रेविपन्नेपद्भिर्भूमिमपास्य कंठस्यकृंतनंछेदनं आपेत्यध्याहृत्ययोज्यं । अयंभावःपशुकंठान्निष्कास्यमानेबडिशे पशुरेव अंतरिक्षस्थोऽभवन्नतुततो बडिशंवियुज्यते ततश्चप
शोर्मरणनिश्चयाद्बडिशार्थी तस्यकंठच्छेदंकृतवानिति एवंबडिशस्थानीया द्रौपदींस्पृशन् छागइव त्वमपिनंक्ष्यसीतिभावः ८ पार्थाःनकिंचिद्वदंति । श्वनरास्तुन।किंचिद्वदंतिअन्य
दुर्वाक्यादितिशेषः । वनेचरंवानप्रस्थं । भषंतिहैवंश्वनराः शुनकतुल्याःनराःआपत्सु धीरानुद्दिश्यभषंति । धीरास्तुधीरत्वादेवतन्नगणयंतीत्यपिपांडवान्प्रत्यापयतीति ध्वनिः ९
द्यूतोदयेद्यूतकृतेउत्कर्षे १० अलाबुमज्जनादिवत्हितमप्यहितवद्दुष्टानांभातीत्याश्चर्यम् ११ अंतोनाशकरः १२ ॥ ॥ इतिसभापर्वणिनैलकंठीये भारतभावदीपेषट्षष्टितमो
ऽध्यायः ॥ ६६ ॥ ॥ छ ॥ ॥ धिगस्त्विति अधिब्रुवाणइतिपाठेइतिशब्दाध्याहारः । अधिकंनिर्मर्यादं ब्रुवाणइत्यर्थः । प्रातिकामीशब्दईकारांतइन्नंतश्च १ विवदतिविपरीतंवदति २

सिंहगोष्ठंसिंहस्थानं ३ । ४ कैतवंकितवेभ्योदेयंधनं ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ लघीयान्नीचतरः १४ संविधाताईश्वरः । स्पर्शौसुखदुःखे वृद्धबालौ पंडितमूर्खौ

॥ वैशंपायउवाच ॥ ॥ एवमुक्तःप्रातिकामीससूतःप्रायाच्छीघ्रंराजवचोनिशम्य ॥ प्रविश्यचश्वेवहिसिंहगोष्ठंसमासदन्महिषींपांडवानाम् ३ ॥ प्रा
तिकाम्युवाच ॥ ॥ युधिष्ठिरोद्यूतमदेनमत्तोदुर्योधनोद्रौपदित्वामजैषीत् ॥ सात्वंप्रपद्यस्वधृतराष्ट्रस्यवेश्मनयामित्वांकर्मणेयाज्ञसेनि ४ ॥ ॥ द्रौपद्यु
वाच ॥ ॥ कथंत्वेवंवदसिप्रातिकामिन्कोहिदीव्येद्भार्ययाराजपुत्रः ॥ मूढोराजाद्यूतमदेनमत्तोह्यभून्नान्यत्कैतवमस्यकिंचित् ५ ॥ ॥ प्रातिकाम्यु
वाच ॥ ॥ यदानाभूत्कैतवमन्यदस्यतदाऽदेवीत्पांडवोऽजातशत्रुः ॥ न्यस्ताःपूर्वंभ्रातरस्तेनराज्ञास्वयंचात्मात्वमथोराजपुत्रि ६ ॥ ॥ द्रौपद्युवाच ॥
गच्छत्वंकितवंगत्वासभायांपृच्छसूतज ॥ किंतुपूर्वंपराजैषीरात्मानमथवानुमाम् ७ एतज्ज्ञात्वासमागच्छततोमांनयसूतज ॥ ज्ञात्वाचिकीर्षितमहंरा
ज्ञोयास्यामिदुःखिता ८ ॥ ॥ वैशंपायनउवाच ॥ ॥ सभांगत्वासचोवाचद्रौपद्यास्तद्वचस्तदा ॥ युधिष्ठिरंनरेंद्राणांमध्येस्थितमिदंवचः ९ क
स्येशोनःपराजैषीरितित्वामाहद्रौपदी ॥ किंतुपूर्वंपराजैषीरात्मानमथवापिमाम् १० युधिष्ठिरस्तुनिश्चेतागतसत्त्वइवाभवत् ॥ नतंसूतंप्रत्युवाचवचनं
साध्वसाधुवा ११ ॥ ॥ दुर्योधनउवाच ॥ ॥ इहैवागत्यपांचालीप्रश्नमेनंप्रभाषताम् ॥ इहैवसर्वेशृण्वंतुतस्याश्चैतस्ययद्वचः १२ ॥ ॥ वैशंपा
यनउवाच ॥ ॥ सगत्वाराजभवनंदुर्योधनवशानुगः ॥ उवाचद्रौपदींसूतःप्रातिकामीव्यथन्निव १३ ॥ ॥ प्रातिकाम्युवाच ॥ ॥ सभ्यास्त्वमी
राजपुत्र्याह्वयंतिमन्येप्राप्तःसंशयःकौरवाणाम् ॥ नवैसमृद्धिंपालयतेलघीयान्यस्त्वांसभांनेष्यतिराजपुत्रि १४ ॥ द्रौपद्युवाच ॥ एवंनूनंव्यदधात्संविधा
तास्पर्शावुभौस्पृशतोवृद्धबालौ ॥ धर्मंत्वेकंपरमंप्राहलोकेसनःशमंधास्यतिगोप्यमानः १५ सोऽयंधर्मोमाऽत्यगात्कौरवान्वैसभ्यान्गत्वापृच्छधर्म्यंवचोमे ॥
तेमांब्रूयुर्निश्चितंतत्करिष्येधर्मात्मानोनीतिमंतोवरिष्ठाः १६ श्रुत्वासूतस्तद्वचोयाज्ञसेन्याःसभांगत्वाप्राहवाक्यंतदानीम् ॥ अधोमुखास्तेनचकिंचिदूचु
र्निर्बंधंतंधार्तराष्ट्रस्यबुद्ध्वा १७ ॥ वैशंपायनउवाच ॥ युधिष्ठिरस्तुतच्छ्रुत्वादुर्योधनचिकीर्षितम् ॥ द्रौपद्याःसंमतंदूतंप्राहिणोद्भरतर्षभ १८ एकवस्त्राह्य
धोनीवीरोदमानारजस्वला ॥ सभामागम्यपांचालिश्वशुरस्याग्रतोभव १९ अथत्वामागतांदृष्ट्वाराजपुत्रींसभांतदा ॥ सभ्याःसर्वेविनिंदेरन्मनोभिर्धृतरा
ष्ट्रजम् २० सगत्वात्वरितंदूतःकृष्णायाभवनंनृप ॥ न्यवेदयन्मतंधीमान्धर्मराजस्यनिश्चितम् २१ पांडवाश्चमहात्मानोदीनादुःखसमन्विताः ॥ सत्येना
तिपरीतांगानोदीक्षंतेस्मकिंचन २२ ततस्त्वेषांमुखमालोक्यराजादुर्योधनःसूतमुवाचहृष्टः ॥ इहैवैतामानयप्रातिकामिन्प्रत्यक्षमस्याःकुरवोब्रुवंतु २३

स्पृशतःप्राप्नुतः शमंस्वास्थ्यं । धास्यतिकरिष्यति गोप्यमानः रक्ष्यमाणः १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३

मानंदुर्योधनस्याज्ञाभंगेन तस्य श्रेष्ठत्वंविहायतिरस्कृत्य २४ उद्विजतेबिभेति अवशाः अस्मद्दासत्वात् २५ । २६ परेहि धि क्कृतासतीएहि २७ । २८ ऊर्मिमत्सुवेणीरूपेणसंनिवेशिततयाच मवहन्नदीजलवन्निम्नोन्नतेषुकुमयःवेण्यलंकारास्तद्वत्सुवा २९ । ३० । ३१ । ३२ कृष्णाजिष्णूहरिनरौ नारायणनरावित्यर्थः ३९ यथोपजोषंयथारुचि ३४ । ३५ उपनीतशास्त्राःअध्या

ततःसूतस्तस्यवशानुगामीभीतश्चकोपाद्द्रुपदात्मजायाः ॥ विहायमानंपुनरेवसभ्यानुवाचकृष्णांकिमहंब्रवीमि २४ ॥ दुर्योधनउवाच ॥ दुःशासनैषम मसूतपुत्रोद्वृकोदरादुद्विजतेऽल्पचेताः ॥ स्वयंप्रगृह्यानययाज्ञसेनींकिंतेकरिष्यंत्यवशाःसपत्नाः २५ ततःसमुत्थायसराजपुत्रःश्रुत्वाभ्रातुःशासनंरक्तदृष्टिः ॥ प्रविश्यतद्वेश्ममहारथानामित्यब्रवीद्द्रौपदींराजपुत्रीम् २६ एह्येहिपांचालिजिताऽसिकृष्णेदुर्योधनंपश्यविमुक्तलज्जा ॥ कुरून्भजस्वायतपत्रनेत्रेधर्मेण लब्धाऽसिसभांपरेहि २७ ततःसमुत्थायसुदुर्मनाःसाविवर्णमामृज्यमुखंकरेण ॥आर्ताप्रदुद्रावयतःस्त्रियस्तावृद्धस्यराज्ञःकुरुपुंगवस्य २८ ततोजवेनाभिस साररोषाद्दुःशासनस्तामभिगर्जमानः ॥ दीर्घेषुनीलेष्वथचोर्मिमत्सुजग्राहकेशेषुनरेंद्रपत्नीम् २९ येराजसूयावभृथेजलेनमहाक्रतौमंत्रपूतेनसिक्ताः ॥ ते पांडवानांपरिभूयवीर्यंबलात्प्रमृष्टाधृतराष्ट्रजेन ३० सतांपराकृष्यसभासमीपमानीयकृष्णामतिदीर्घकेशीम् ॥ दुःशासनोनाथवतीमनाथवच्चकर्षवायुःक दलीमिवार्ताम् ३१ साकृष्यमाणानमितांगयष्टिःशनैरुवाचाथरजस्वलाऽस्मि ॥ एकंचवासोममसंदबुद्धेसभांनेतुंनार्हसिमामनार्य ३२ ततोऽब्रवीत्तांप्रस भंनिगृह्यकेशेषुकृष्णेषुतदासकृष्णाम् ॥ कृष्णंचजिष्णुंचहरिंनरंचत्राणायविक्रोशतियाज्ञसेनी ३३ ॥ ॥ दुःशासनउवाच ॥ ॥ रजस्वलावाभव याज्ञसेनीएकांबरावाऽप्यथवाविवस्त्रा ॥ द्यूतेजिताचासिकृताऽसिदासीदासीषुवासश्चयथोपजोषम् ३४ ॥ ॥ वैशंपायनउवाच ॥ ॥ प्रकीर्णकेशी पतितार्धवस्त्रादुःशासनेनव्यवधूयमाना ॥ ह्रीमत्यमर्षेणचदह्यमानाशनैरिदंवाक्यमुवाचकृष्णा ३५ ॥ ॥ द्रौपद्युवाच ॥ ॥ इमेसभायामुपनीत शास्त्राःक्रियावंतःसर्वएवेंद्रकल्पाः ॥ गुरुस्थानागुरवश्चैवसर्वेतेषामग्रेनोत्सहेस्थातुमेवम् ३६ नृशंसकर्मंस्त्वमनार्यवृत्तमामाविवस्त्रांकुरुमाविकार्षीः ॥ न मर्षयेयुस्तवराजपुत्राःसेंद्राऽपिदेवायदितेसहायाः ३७ धर्मेस्थितोधर्मसुतोमहात्माधर्मश्चसूक्ष्मोनिपुणोपलक्ष्यः ॥ वाचाऽपिभर्तुःपरमाणुमात्रमिच्छा मिदोषंनगुणान्विसृज्य ३८ इदंत्वकार्यंकुरुवीरमध्येरजस्वलांयत्परिकर्षसेमाम् ॥ नचापिकश्चित्कुरुतेऽत्रकुत्सांध्रुवंतवेदंमतमभ्युपेतः ३९ धिगस्तु नष्टःखलुभारतानांधर्मस्तथाक्षत्रविदांचवृत्तम् ॥ यत्रह्यतीतांकुरुधर्मवेलांप्रेक्षंतिसर्वेकुरवःसभायाम् ४०

पितशास्त्राः । गुरुस्थानाःगुरुतुल्यस्थानाःपित्रादितुल्याः । एवमेकवस्त्रत्वेन ३६ । ३७ निपुणोपलक्ष्यःसूक्ष्मबुद्धिमद्भिरेवज्ञेयः वाचेति नाहमपराधिनीभार्याऽस्मीतिभावः ३८ कश्चिद पितवकुत्सांनकुरुते किंतुसर्वोऽपिजनस्त्वदीयंमतमभ्युपेतः ३९ ४०

अस्यराज्ञोधृतराष्ट्रस्य ४१ । ४२ । ४३ आधूयआकृष्य ४४ । ४५ । ४६ भर्तुर्वशतां दासभार्याऽपिदास्येवेतिभावः ४७ जितोऽस्मीतिवदतात्मैवपराजितो नतुस्त्री ४८ नचराजज येनैवत्वज्जयः सिद्ध्यति द्यूतमर्यादाविदा शकुनिनैवतवपृथक्पणीकरणादित्याह द्यूतेइति राजातु पराज्ञयात्वांपणीकृतवान्नस्वेच्छयाऽतोऽस्वामी कथंपणितवानितिराज्ञोऽपि दोषोनास्ति । तथाचशकुनिबुद्ध्यैव त्वमजिता तत्र शकुनिर्नमन्यतेइत्याह नेति यतःपणीकृताअतः प्रागजिता । यतश्चपरदासेनपणीकृता ततोऽप्यजितैवेतिभावः ४९ नाविकृत

द्रोणस्यभीष्मस्यचनास्तिसत्त्वंक्षत्तुस्तथैवास्यमहात्मनोपि ॥ राज्ञस्तथाहीममधर्ममुग्रंनलक्षयंतेकुरुवृद्धमुख्याः ४१ ॥ वैशंपायनउवाच ॥ ॥ तथाब्रुवंतीकरुणंसुमध्यमाभर्तॄन्कटाक्षैःकुपितानपश्यत् ॥ सापांडवान्कोपपरीतदेहान्संदीपयामासकटाक्षपातैः ४२ हृतेनराज्येनतथाधनेनरत्नैश्चमुख्यैर्नतथाबभूव ॥ यथात्रपाकोपसमीरितेनकृष्णाकटाक्षेणबभूवदुःखम् ४३ दुःशासनश्चापिसमीक्ष्यकृष्णामवेक्षमाणांकृपणान्पतींस्तान् ॥ आधूयवेगेनविसंज्ञकल्पामुवाचदासीतिहसन्सशब्दम् ४४ कर्णस्तुतद्वाक्यमतीवहृष्टःसंपूजयामासहसन्सशब्दम् ॥ गांधारराजःसुबलस्यपुत्रस्तथैवदुःशासनमभ्यनंदत् ४५ सभ्यास्तुयेतत्रबभूवुरन्येताभ्यामृतेधार्तराष्ट्रेणचैव ॥ तेषामभूदुःखमतीवकृष्णांदृष्ट्वासभायांपरिकृष्यमाणाम् ४६ ॥ भीष्मउवाच ॥ नधर्मसौक्ष्म्यात्सुभगेविवेक्तुंशक्नोमितेप्रश्नमिमंयथावत् ॥ अस्वाम्यशक्तःपणितुंपरस्वंस्त्रियाश्चभर्तुर्वशतांसमीक्ष्य ४७ त्यजेतसर्वांपृथिवींसमृद्धांयुधिष्ठिरोधर्ममथोनजह्यात् ॥ उक्तंजितोऽस्मीतिचपांडवेनतस्मान्नशक्नोमिविवेक्तुमेतत् ४८ द्यूतेऽद्वितीयःशकुनिर्नरेषुकुंतीसुतस्तेनानिसृष्टकामः ॥ नमन्यतेतांनिकृतिंयुधिष्ठिरस्तस्मान्नतेप्रश्नमिमंब्रवीमि ४९ ॥ द्रौपद्युवाच ॥ ॥ आहूयराजाकुशलैरनार्यैर्दुष्टात्मभिर्नैकृतिकैःसभायां ॥ द्यूतप्रियैर्नातिकृतप्रयत्नःकस्मादयंनामनिसृष्टकामः ५० अशुद्धभावैर्निकृतिप्रवृत्तैरबुध्यमानःकुरुपांडवाग्र्यः ॥ संभूयसर्वैश्चजितोऽपियस्मात्पश्चादयंकैतवमभ्युपेतः ५१ तिष्ठंतिचेमेकुरवःसभायामीशाःसुतानांचतथास्नुषाणां ॥ समीक्ष्यसर्वेममचापिवाक्यंविब्रूतमेप्रश्नमिमंयथावत् ५२ ॥ वैशंपायनउवाच ॥ तथाब्रुवंतींकरुणंरुदंतीमवेक्षमाणांकृपणान्पतींस्तान् ॥ दुःशासनःपरुषाण्यप्रियाणिवाक्यान्युवाचामधुराणिचैव ५३ तांकृष्यमाणांचरजस्वलांचस्रस्तोत्तरीयामतदर्हमाणाम् ॥ वृकोदरःप्रेक्ष्ययुधिष्ठिरंचचकारकोपंपरमार्तरूपः ५४ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणिद्रौपदीप्रश्नेसप्तषष्टितमोऽध्यायः ॥ ६७ ॥

प्रयत्नोऽनभ्यस्तद्यूतः । राजामांसभायामाहूय कथंनिसृष्टकामः अनीशोऽपिसन् मदाह्वानेनशत्रून्सकामान्कथंकृतवानित्यर्थः ५० जितोऽपीति आत्मपराजयावसानत्वाद्द्यूतस्य कथंततोऽप्युपरिदेवितवानित्यर्थः ५१ विब्रूतविस्पष्टंब्रूत नतुभीष्मवत्संदिग्धमितिभावः ५२ तथेति भीष्मेणद्रौपदीमाहात्म्यख्यापनायप्रश्नस्योत्तरंनोक्तं । दुःशासनस्तुपांडवपक्षपातिनाऽपिभीष्मेणसंशयोपन्यासादस्माकमेवजयइतिमन्वानो यत्किंचित्प्रललापेत्यर्थः ५३ परमर्तंतम् ५४ ॥ इतिसभापर्वणिनैलकंठीये भारतभावदीपेसप्तषष्टितमोऽध्यायः ॥ ६७ ॥

भवंतीति १ । २ । ३ । ४ । ५ तेतवपुरइतिशेषः संप्रधक्ष्यामि ६ । ७ । ८ परकामेनपरेच्छया ९ एवमिति एवंत्वदुक्तप्रकारेण अस्मिन्प्रस्तुते विषयेकृतंकुशलं धर्मपालनाख्यं यदि नविद्यांनजानीयां तर्हिबाहूदहेयमेव । यतोजानाम्यतो नदहामीत्यर्थः १० । ११ । १२ । १३ । १४ सर्वतोदिशं सर्वदेशीयाः १५ । १६ । १७ । १८ । १९ महीक्षितांराज्ञां ग्रा

॥ भीमउवाच ॥ भवंतिगेहेबंधक्यःकितवानांयुधिष्ठिर ॥ नताभिरुतदीव्यंतिदयाचैवास्तितास्वपि १ काश्योयद्धनमाहार्षीद्द्रव्यंयच्चान्यदुत्तमम् ॥ तथाऽन्येपृथिवीपालायानिरत्नान्युपाहरन् २ वाहनानिधनंचैवकवचान्यायुधानिच ॥ राज्यमात्मावयंचैवकैतवेनहृतंपरैः ३ नचमेतत्रकोपोऽभूत्सर्वस्येशोहिनोभवान् ॥ इमंत्वतिक्रमंमन्येद्रौपदीयत्रपण्यते ४ एषाह्यनर्हतीबालापांडवान्प्राप्यकौरवैः ॥ त्वत्कृतेक्लिश्यतेक्षुद्रैर्नृशंसैरकृतात्मभिः ५ अस्याःकृतेमन्युरयंत्वयिराजन्निपात्यते ॥ बाहूतेसंप्रधक्ष्यामिसहदेवाग्निमानय ६ ॥ अर्जुनउवाच ॥ ॥ नपुराभीमसेनत्वमीदृशीर्वदितागिरः ॥ परैस्तेनाशितंनूनंनृशंसैर्धर्मगौरवम् ७ नसकामाःपरेकार्याधर्ममेवाचरोत्तमम् ॥ भ्रातरंधार्मिकंज्येष्ठंकोऽतिवर्तितुमर्हति ८ आहूतोहिपरैराजाक्षात्रंव्रतमनुस्मरन् ॥ दीव्यतेपरकामेनतन्नःकीर्तिकरंमहत् ९ ॥ भीमसेनउवाच ॥ ॥ एवमस्मिन्कृतंविद्यांयदिनाहंधनंजय ॥ दीप्तेऽग्नौसहितौबाहूनिर्दहेयंबलादिव १० ॥ वैशंपायनउवाच ॥ ॥ तथातान्दुःखितान्दृष्ट्वापांडवान्धृतराष्ट्रजः ॥ क्लिश्यमानांचपांचालींविकर्णइदमब्रवीत् ११ याज्ञसेन्यायदुक्तंतद्वाक्यंविब्रूतपार्थिवाः ॥ अविवेकेनवाक्यस्यनरकःसद्यएवनः १२ भीष्मश्चधृतराष्ट्रश्चकुरुवृद्धतमावुभौ ॥ समेत्यनाहतुःकिंचिद्विदुरश्चमहामतिः १३ भारद्वाजश्चसर्वेषामाचार्यःकृपएवच ॥ कुतएतावपिप्रश्नंनाहतुर्द्विजसत्तमौ १४ येत्वन्येपृथिवीपालाःसमेताःसर्वतोदिशम् ॥ कामक्रोधौसमुत्सृज्यतेब्रुवंतुयथामति १५ यदिदंद्रौपदीवाक्यमुक्तवत्यसकृच्छुभा ॥ विमृश्यकस्यकःपक्षःपार्थिवावदतोत्तरम् १६ एवंसबहुशःसर्वानुक्तवांस्तान्सभासदः ॥ नचतेपृथिवीपालास्तमूचुःसाध्वसाधुवा १७ उक्त्वासकृत्तथासर्वान्विकर्णःपृथिवीपतीन् ॥ पाणौपाणिंविनिष्पिष्यनिःश्वसन्निदमब्रवीत् १८ विब्रूतपृथिवीपालावाक्यंमावाकथंचन ॥ मन्येन्याय्यंयदत्राहंतद्धिवक्ष्यामिकौरवाः १९ चत्वार्याहुर्नरश्रेष्ठाव्यसनानिमहीक्षिताम् ॥ मृगयांपानमक्षांश्चग्राम्येचैवातिरक्तताम् २० एतेषुहिनरःसक्तोधर्ममुत्सृज्यवर्तते ॥ यथाऽयुक्तेनचकृतांक्रियांलोकोनमन्यते २१ तदयंपांडुपुत्रेणव्यसनेवर्तताभृशम् ॥ समाहूतेनकितवैरास्थितोद्रौपदीपणः २२ साधारणीचसर्वेषांपांडवानामनिंदिता ॥ जितेनपूर्वंचानेनपांडवेनकृतःपणः २३ इयंचकीर्तिताकृष्णासौबलेनपणार्थिना ॥ एतत्सर्वंविचार्याहंमन्येनविजितामिमाम् २४

म्येस्त्रीभोगे २० तथेति कृताऽप्यकृतैव सा क्रियेत्यर्थः २१ समाहूतेनप्रेरितेन २२ सर्वेषांभार्या कथमेकेन पणीकर्तुं शक्येत्याह साधारणीति २३ एतत्सर्वं राज्ञो व्यसनित्वं जितत्वं परप्रवर्तितत्वं द्रौपद्याः साधारणत्वंचेति हेतुचतुष्कम् २४

२५ । २६ वैकृतानिविपरीतानि २७ । २८ तान्येवाहयदिति २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ प्राज्ञवादिकःप्राज्ञमानी ३८ अवकीर्यसमंततस्त्यक्त्वा ३९ ४० आकृष्यमाणइति हरिः सर्वदुःखसंहर्त्ताखलसंहर्त्तावा । गोविंदोगवामिंद्रियाणांविंदतीतिविंदोलब्धा । सर्वेंद्रियचालकत्वात्सन्निहितो मांकथंनजानासि । संनिहितोऽप्यशक्तः किंकुर्यादतआहद्वारकावासिन्निति एकरात्रेणैवस्वीयानापदःसकाशादुद्धर्तुंसमुद्रमध्येपुरीनिर्माणं तांपुरींप्रतिसर्वनगरस्ययुगपत्प्रापणंचकुर्वंतस्तव ममत्राणमीषत्करमित्यर्थः । ननुस न्निहितःशक्तश्चकिमितिदुष्टानानुगृह्णीयादतआह कृष्ण स्मृतमात्रएवसर्वदोषकर्षण । ननुतथापि'अनृतंसाहसंमायामूर्खत्वमतिलोभता॥ अशौचंनिर्दयत्वंचस्त्रीणांदोषाःस्वभावजाः'इत्युक्तेः

एतच्छ्रुत्वामहान्नादःसभ्यानामुदतिष्ठत ॥ विकर्णंशंसमानानांसौबलंचापिनिंदताम् २५ तस्मिन्नुपरतेशब्देराधेयःक्रोधमूर्छितः ॥ प्रगृह्यरुचिरंबाहुमि दंवचनमब्रवीत् २६ ॥ कर्णउवाच ॥ दृश्यंतेवैविकर्णेहवैकृतानिबहून्यपि ॥ तज्जातस्तद्विनाशाययथाग्निररणिप्रजः २७ एतेनकिंचिदप्याहुश्चोदिता ह्यपिकृष्णया ॥ धर्मेणविजितामेतांमन्यंतेद्रुपदात्मजाम् २८ त्वंतुकेवलबाल्येनधार्त्तराष्ट्रविदीर्यसे ॥ यद्ब्रवीषिसभामध्येबालःस्थविरभाषितम् २९ नच धर्मंयथावत्त्वंवेत्सिदुर्योधनावर ॥ यद्ब्रवीषिजितांकृष्णांनाजितेतिसुमंदधीः ३० कथंह्यविजितांकृष्णांमन्यसेधृतराष्ट्रज ॥ यदासभायांसर्वस्वंन्यस्तवान्पां डवाग्रजः ३१ अभ्यंतराचसर्वस्वेद्रौपदीभरतर्षभ ॥ एवंधर्मजितांकृष्णांमन्यसेनाजितांकथं ३२ कीर्तिताद्रौपदीवाचाअनुज्ञाताचपांडवैः ॥ भवत्यवि जिताकेनहेतुनैषामतातव ३३ मन्यसेवासभामेतामानीतामेकवाससम् ॥ अधर्मेणेतितत्रापिश्रृणुमेवाक्यमुत्तमम् ३४ एकोभर्त्तास्त्रियादेवैर्विहितःकुरुनं दन ॥ इयंत्वनेकवशगाबंधकीतिविनिश्चिता ३५ अस्याःसभामानयनंनचित्रमितिमेमतिः ॥ एकांबरधरत्वंवाऽप्यथवाऽपिविवस्त्रता ३६ यच्चैषांद्रविणं किंचिद्याचैषायेचपांडवाः ॥ सौबलेनेहतत्सर्वंधर्मेणविजितंवसु ३७ दुःशासनसुबालोऽयंविकर्णःप्राज्ञवादिकः ॥ पांडवानांचवासांसिद्रौपद्याश्चाप्युपाहर ३८ तच्छ्रुत्वापांडवाःसर्वेस्वानिवासांसिभारत ॥ अवकीर्योत्तरीयाणिसभायांसमुपाविशन् ३९ (ततोदुःशासनोराजन्द्रौपद्यावसनंबलात् ॥ सभामध्येस माक्षिप्यव्यपाक्रष्टुंप्रचक्रमे ४० ॥ वैशंपायनउवाच ॥ आकृष्यमाणेवसनेद्रौपद्याचिंतितोहरिः ॥ गोविंदद्वारकावासिन्कृष्णगोपीजनप्रिय ४१ कौरवैः परिभूतांमांकिंनजानासिकेशव ॥ हेनाथहेरमानाथव्रजनाथार्तिनाशन ॥ कौरवार्णवमग्नांमामुद्धरस्वजनार्दन ४२ कृष्णकृष्णमहायोगिन्विश्वात्मन्विश्वभा वन ॥ प्रपन्नांपाहिगोविंदकुरुमध्येऽवसीदतीम् ४३

स्वाभाविकस्त्रीदोषोनापनेतुंशक्यो नह्याशीविषदंष्ट्रामृतस्रवाकर्तुंशक्येत्यतआह गोपीजनप्रिय नरेषुतावदत्यंतंनीचागोपास्तत्स्त्रियस्तुततोऽपिनीचतरास्तास्वपितवानुग्रहोदृश्यते किमुत मादृश्यांत्वदेकशरणायां त्वयैवराजसूयाभिषेकेणानुगृहीतायामितिभावः ४१ केशव कश्चअश्चईशश्चब्रह्मविष्णुरुद्रास्तैःसहवातिगच्छतीतिकेशव ब्रह्मादीनामपिप्रवर्त्तक तदा त्मकेति । अतः सर्वथात्वंमामनुगृह्णीष्वेतिभावः आर्तिनाशनेति गोवर्द्धनोद्धरणदावाग्निपानादिनाव्रजवासिनामार्तिस्त्वयैवयथानाशिता तथाममाप्यार्तिंनाशयेतिभावः ४२ विश्वा त्मन्विश्वांतर्यामिन्नित्यर्थः । विश्वभावन विश्वकर्त्तः अंतर्यामित्वेनशत्रुंवाऽस्मिन्नर्थेउदासीनंकुरु । अथवाविश्वकर्तृत्वेन वस्त्राणिबहूनिसमर्पयेतिभावः ४३

भामिनीदीप्तिमती स्वस्मिन् भगवदनुग्रहनिश्चयाच्छत्रूनगणयंतीत्यर्थः ४४ गद्गरितःकरुणातिशयाद्गद्गदकंठः ४५ धर्मोऽवरितःधर्मएवअंतरंवस्त्रंतद्वाराङ्गतवान् । गत्वाचतांत्रस्त्रपूगैः समावृणोच्च ४६ । ४७ नानारागाणिचविरागाणि केवलश्वेतानिच । 'नास्त्यकार्यंकदर्याणां नास्त्यक्षाम्यंमहात्मनां ॥ नास्त्युपेक्ष्यंहरेर्भक्तइतिद्यूतेप्रदर्शितम्' ॥ ४८ । ४९ शशा







इत्यनुस्मृत्यकृष्णंसाहरिंत्रिभुवनेश्वरम् ॥ प्रारुदद्दुःखिताराजन्मुखमाच्छाद्यभामिनी ४४ याज्ञसेन्यावचःश्रुत्वाकृष्णोगह्वरितोऽभवत् ॥ त्यक्त्वाशय्यासनंपद्भ्यांकृपालुःकृपयाऽभ्यगात् ४५ कृष्णंचविष्णुंचहरिंनरंचत्राणायविक्रोशातियाज्ञसेनी ॥ ततस्तुधर्मोंतरितोमहात्मासमावृणोद्वैविविधैःसुवस्त्रैः ४६ आकृष्यमाणेवसनेद्रौपद्यास्तुविशांपते ॥ तद्रूपमपरंवस्त्रंप्रादुरासीदनेकशः ४७ नानारागविरागाणिवसनान्यथवैप्रभो ॥ प्रादुर्भवंतिशतशोधर्मस्यपरिपालनात् ४८ ततोहलहलाशब्दस्तत्रासीद्घोरदर्शनः ॥ तदद्भुततमंलोकेवीक्ष्यसर्वेमहीभृतः ॥ शशंसुर्द्रौपदींतत्रकुत्संतोधृतराष्ट्रजम् ४९ शशापतत्रभीमस्तुराजमध्येबृहत्स्वनः ॥ क्रोधाद्विस्फुरमाणौष्ठोविनिष्पिष्यकरेकरम् ५० ॥ भीमउवाच ॥ इदंमेवाक्यमादध्वंक्षत्रियालोकवासिनः ॥ नोक्तपूर्वंनरैरन्यैर्नचान्योयद्वदिष्यति ५१ यद्येतदेवमुक्त्वाऽहंनकुर्यांपृथिवीश्वराः ॥ पितामहानांपूर्वेषांनाहंगतिमवाप्नुयाम् ५२ अस्यपापस्यदुर्बुद्धेर्भारतापसदस्य च ॥ नपिबेयंबलाद्वक्षोभित्त्वाचेद्रुधिरंयुधि ५३ ॥ वैशंपायनउवाच ॥ तस्यतेतद्वचःश्रुत्वारौद्रंलोमप्रहर्षणम् ॥ प्रचक्रुर्बहुलांपूजांकुत्संतोधृतराष्ट्रजम् ५४ यदातुवाससांराशिःसभामध्येसमाचितः ॥ ततोदुःशासनःश्रांतोव्रीडितःसमुपाविशत् ५५ धिक्शब्दस्तुततस्तत्रसमभूल्लोमहर्षणः ॥ सभ्यानां नरदेवानांदृष्ट्वाकुंतीसुतांस्तथा ५६ नविब्रुवंतिकौरव्याःप्रश्नमेतमितिस्मह ॥ सुजनःक्रोशतिस्मात्रधृतराष्ट्रंविगर्हयन् ५७ ततोबाहूसमुत्क्षिप्यनिवार्यचसभासदः ॥ विदुरःसर्वधर्मज्ञइदंवचनमब्रवीत् ५८ ॥ विदुरउवाच ॥ द्रौपदीप्रश्नमुक्त्वैवंरोरवीतित्वनाथवत् ॥ नचविब्रूततंप्रश्नंसभ्याधर्मोऽत्रपीड्यते ५९ सभांप्रपद्यतेह्यार्तःप्रज्वलन्निवहव्यवाट् ॥ तंवैसत्येनधर्मेणसभ्याःप्रशमयंत्युत ६० धर्मप्रश्नमतोब्रूयादार्यःसत्येनमानवः ॥ विब्रूयुस्तत्रतंप्रश्नंकामक्रोधबलातिगाः ६१ विकर्णेनयथाप्रज्ञमुक्तःप्रश्नोनराधिपाः ॥ भवंतोऽपिहितंप्रश्नंविब्रुवंतुयथामति ६२ योहिप्रश्नंनविब्रूयाद्धर्मदर्शीसभांगतः ॥ अनृतेयाफलावाप्तिस्तस्याःसोऽर्धंसमश्नुते ६३ यःपुनर्वितथंब्रूयाद्धर्मदर्शीसभांगतः ॥ अनृतस्यफलंकृत्स्नंसंप्राप्नोतीतिनिश्चयः ६४ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ प्रल्हादस्यचसंवादंमुनेरांगिरसस्यच ६५ प्रल्हादोनामदैत्येंद्रस्तस्यपुत्रोविरोचनः ॥ कन्याहेतोरांगिरसंसुधन्वानमुपाद्रवत् ६६

पशपथंकृतवान् ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ धर्मपीडामेवाह सभामिति आर्तस्यात्राणेन सभ्यानां धर्मनाशोऽस्त्येवयथोक्तं । 'नसभांप्रविशेत्प्राज्ञः सभ्यदोषाननुस्मरन् ॥ अब्रुवन्विब्रुवन्वाऽपि नरोभवतिकिल्बिषी' इति ६० । ६१ । ६२ एतदेवाहयोहिप्रश्नमित्यादिना ६३ । ६४ आंगिरसस्यसुधन्वनः ६५ । ६६

केशिन्याकन्यया विरोचनसुधन्वानौपृष्टौ युवयोःकोज्यायान् कुलशीलादिनाश्रेष्ठइति तौचस्वंस्वंज्यायस्त्वं प्रतिजानानौ प्राणेनैव पण्येनदेवनंपणंचक्रतुः। प्राणयोरितिविषयसप्तमी। प राजितेनयावज्जीवं जेतुर्दास्यंकर्तव्यमित्यर्थः प्राणानामीश्वरस्तवेत्युपसंहारात् ६७। ६८ विवदनान्मृषावादाद्वब्रह्मदंडः ब्रह्मणानिर्मितःकालदंडः। ब्रह्मशापइत्यपिकेचित् ६९ ७० व्यथितःकंपयुक्तः ७१। ७२। ७३ अविब्रुवन्नविस्पष्टमब्रुवन् ७४ मोकर्णशिथिलःउभयपक्षस्पर्शी प्रतिमुंचाति क्षिपति ७५ अंजसात्त्वतः ७६ धर्मोऽधर्मेणविद्धः द्वयोर्विवदतोर

अहंज्यायानहंज्यायानितिकन्येप्सयातदा ॥ तयोर्देवनमत्रासीत्प्राणयोरितिनःश्रुतम् ६७ तयोःप्रश्नविवादोऽभूत्प्रल्हादंतावपृच्छताम् ॥ ज्यायान्कआ वयोरेकःप्रश्नंप्रब्रूहिमामृषा ६८ सवैविवदनाद्भीतःसुधन्वानंविलोकयन् ॥ तंसुधन्वाऽब्रवीत्क्रुद्धोब्रह्मदंडइवज्वलन् ६९ यदिवैवक्ष्यसिमृषाप्रल्हादाथ नवक्ष्यसि ॥ शतधातेशिरोवज्रीवज्रेणप्रहरिष्यति ७० सुधन्वनातथोक्तःसन्व्यथितोऽश्वत्थपर्णवत् ॥ जगामकश्यपंदैत्यःपरिप्रष्टुंमहौजसम् ७१ प्र ल्हादउवाच ॥ त्वंवैधर्मस्यविज्ञातादैवस्येहासुरस्यच ॥ ब्राह्मणस्यमहाभागधर्मकृच्छ्रमिदंशृणु ७२ योवैप्रश्नंनविब्रूयाद्वितथंचैवनिर्दिशेत् ॥ केवैतस्य परेलोकास्तन्ममाचक्ष्वपृच्छतः ७३ ॥ कश्यपउवाच ॥ जानन्नविब्रुवन्प्रश्नान्कामात्क्रोधाद्भयात्तथा ॥ सहस्रंवारुणान्पाशानात्मनिप्रतिमुंचति ७४ साक्षीवाऽविब्रुवन्साक्ष्यंगोकर्णशिथिलश्चरन् ॥ सहस्रंवारुणान्पाशानात्मनिप्रतिमुंचति ७५ तस्यसंवत्सरेपूर्णेपाशएकःप्रमुच्यते ॥ तस्मात्सत्यंतुवक्त व्यंजानतासत्यमंजसा ७६ विद्धोधर्मोह्यधर्मेणसभांयत्रोपपद्यते ॥ नचास्यशल्यंकृंतंतिविद्धास्तत्रसभासदः ७७ अर्धंहरतिवैश्रेष्ठःपादोभवतिकर्तृषु ॥ पादश्चैवसभासत्सुयेननिंदंतिनिंदितम् ७८ अनेनाभवतिश्रेष्ठोमुच्यंतेचसभासदः ॥ एनोगच्छतिकर्तारंनिंदार्होयत्रनिंद्यते ७९ वितथंतुवदेयुर्येधर्मंप्र ल्हादपृच्छते ॥ इष्टापूर्तंचतेघ्नंतिसप्तसप्तपरावरान् ८० हृतस्वस्यहियद्दुःखंहतपुत्रस्यचैवयत् ॥ ऋणिनःप्रतियच्चैवस्वार्थाद्भ्रष्टस्यचैवयत् ८१ स्त्रियाः पत्याविहीनायाराज्ञाग्रस्तस्यचैवयत् ॥ अपुत्रायाश्चयद्दुःखंव्याघ्राघ्रातस्यचैवयत् ८२ अध्यूढायाश्चयद्दुःखंसाक्षिभिर्विहतस्यच ॥ एतानिवैसमान्या हुर्दुःखानित्रिदिवेश्वराः ८३ तानिसर्वाणिदुःखानिप्राप्नोतिवितथंब्रुवन् ॥ समक्षदर्शनात्साक्षीश्रवणाच्चेतिधारणात् ८४ तस्मात्सत्यंब्रुवन्साक्षीधर्मार्थाभ्यां नहीयते ॥ कश्यपस्यवचःश्रुत्वाप्रल्हादःपुत्रमब्रवीत् ८५ श्रेयान्सुधन्वात्वत्तोवैमत्तःश्रेयांस्तथाऽङ्गिराः ॥ मातासुधन्वनश्चापिमातृतःश्रेयसीतव ॥ विरोचनसुधन्वाऽयंप्राणानामीश्वरस्तव ८६



कःस्वयंमिथ्यावादीसन्नितरंधर्मिष्ठंमिथ्यावादीतिवदति सोऽयमधर्मेण धर्मस्यवेधः तत्राऽवचनान्मिथ्यावचनात्संदिग्धवचनाद्वा येधर्मशल्यंननिकृंतंति नच्छिंदंति तएव तेनाधर्मे णविद्धाभवंति ७७ तदेवविवृणोतिअर्धमिति अर्धमधर्मस्येतिशेषःश्रेष्ठःसभापतिः ७८। ७९ इष्टंयागादि। आपूर्तंवाप्यादि। परावरान्भूतान्भाविनश्च ८०। ८१। ८२ अध्यूढायाः कृतसपत्नीकायाः ८३ समक्षेतिसाक्षाद्दर्शनाद्वा आप्तवाक्याद्वाअधिगतस्यार्थस्य धारणात्साक्षीत्यर्थः ८४ तस्मादिति लोभादिदोषात्तस्यविद्वावनेतुधर्माद्धीयतएवेत्यभिप्रायः ८५।८६

८७ । ८८ । ८९ । ९० ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपे अष्टषष्टितमोऽध्यायः ॥ ६८ ॥ पुरस्तादिति । तावत्प्रतीक्ष दुःप्रज्ञदुःशासन नराधमेत्यतःपरंपुरस्तादिति पठंतिके चित् प्रतीक्षप्रतीक्षस्व १ । २ । ३ । ४ द्दश्यामिपृथग्जनस्त्रीवत्दृश्यमिवात्मानंकरोमि ५ । ६ । ७ विगाहेपर्यालोचयामि ८ । ९ पांडूनांपांडवानां। आर्षस्तद्धितलुक् । पार्षतस्यधृष्टद्युम्नस्य । कथमियांप्राप्नुयां १० । ११ । १२ । १३ । १४ । किमज्ञत्वान्नविवेक्तुमर्हसि नेत्याहबलवानिति बलवान् कर्णदुर्योधनादिर्यद्ब्रूतेसएवधर्मः । परस्तुदुर्बलेनोक्तोऽभिहतः । धर्मोऽप्यधर्मोभवतीतिभावः । अभिहितःपरैरितिपाठे त्वधर्मवेलायामपिपरैर्बलवद्भिरुक्त एवधर्मोभवतिनदुर्बलोक्त इत्याकारंप्रश्लिष्ययोज्यं १५ ननुबलवत्तरस्त्वमेवसत्यंब्रूहीत्यतआ

सुधन्वोवाच ॥ ॥ पुत्रस्नेहंपरित्यज्ययस्त्वंधर्मेव्यवस्थितः ॥ अनुजानामितेपुत्रंजीवत्वेषशतंसमाः ८७ ॥ विदुरउवाच ॥ ॥ एवंवैपरमंधर्मंश्रुत्वासर्वेसभासदः ॥ यथाप्रश्नंतुकृष्णायामन्यध्वंतत्रकिंपरम् ८८ ॥ वैशंपायनउवाच ॥ विदुरस्यवचःश्रुत्वानोचुःकिंचनपार्थिवाः ॥ कर्णोदुःशासनंत्वाहकृष्णांदासींगृहान्नय ८९ तांवेपमानांसव्रीडांप्रलपंतींस्मपांडवान् ॥ दुःशासनःसभामध्येविचकर्षतपस्विनीम् ९० ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणिद्रौपद्याकर्षणेऽष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ॥ द्रौपद्युवाच ॥ ॥ पुरस्तात्करणीयंमेनकृतंकार्यमुत्तरम् ॥ विव्हलाऽस्मिकृताऽनेनकर्षताबलिनाबलात् १ अभिवादंकरोम्येषांकुरूणांकुरुसंसदि ॥ नमेस्यादपराधोऽयंयदिदंनकृतंमया २ ॥ वैशंपायनउवाच ॥ ॥ सातेनचसमाधूतादुःखेनचतपस्विनी ॥ पतिताविललापेदंसभायामतथोचिता ३ ॥ द्रौपद्युवाच ॥ ॥ स्वयंवरेयाऽस्मिनृपैर्दृष्टारंगेसमागतैः ॥ नदृष्टपूर्वाचान्यत्रसाहमद्यसभांगता ४ यांनवायुर्नचादित्योदृष्टवंतौपुरागृहे ॥ साऽहमद्यसभामध्येदृश्यामिजनसंसदि ५ यांनमृष्यंतिवातेनस्पृश्यमानांगृहेपुरा ॥ स्पृश्यमानांसहंतेऽद्यपांडवास्तांदुरात्मना ६ मृष्यंतिकुरवश्चेमेमन्येकालस्यपर्ययम् ॥ स्नुषांदुहितरंचैवक्लिश्यमानामनर्हतीं ७ किंन्वतःकृपणंभूयोयदहंस्त्रीसतीशुभा ॥ सभामध्यंविगाहेऽद्यक्वनुधर्मोमहीक्षिताम् ८ धर्म्यांस्त्रियंसभांपूर्वेननयंतीतिनःश्रुतम् ॥ सनष्टःकौरवेयेषुपूर्वोधर्मःसनातनः ९ कथंहिभार्यापांडूनांपार्षतस्यस्वसासती ॥ वासुदेवस्यचसखीपार्थिवानांसभामियाम् १० तामिमांधर्मराजस्यभार्यांसदृशवर्णजाम् ॥ ब्रूतदासीमदासींवातत्करिष्यामिकौरवाः ११ अयंमांसुदृढंक्षुद्रःकौरवाणांयशोहरः ॥ क्लिश्नातिनाऽहंतत्सोढुंचिरंशक्ष्यामिकौरवाः १२ जितांवाप्यजितांवापिमन्यध्वंमांयथानृपाः ॥ तथाप्रत्युक्तमिच्छामितत्करिष्यामिकौरवाः १३ ॥ भीष्मउवाच ॥ उक्तवानस्मिकल्याणिधर्मस्यपरमागतिः ॥ लोकेनशक्यतेज्ञातुमपिविज्ञैर्महात्मभिः १४ बलवांश्चयथाधर्मंलोकेपश्यतिपूरुषः ॥ सधर्मोधर्मवेलायांभवत्यभिहतःपरः १५ नविवेक्तुंचतेप्रश्नमिमंशक्नोमिनिश्चयात् ॥ सूक्ष्मत्वाद्गहनत्वाच्चकार्यस्यास्यचगौरवात् १६

हनेति विवेक्तुं विविच्यवक्तुं । अयमस्याशयःयद्येतामजितासीतिवक्ष्ये तदाऽन्यायांविना पीडितैषा सद्यःकोपेनकौरवान्नाशयेत् । तथाचद्रौपद्यपमानजोवा कुरुनाशजोवादोषोमहानितिसंशयेधर्मतत्त्वस्यसूक्ष्मत्वाद्दुर्विवेकत्वं । दैवकार्यमेवकौरवनाशेन भवतीत्यशक्यं । सर्वेषांवध्यानामिह संप्रयोगाभावाद्गहनमिदं । पांडवानामशक्तत्वात्परदासत्वाच्च तत्स्वामिनांकौरवाणांनाशनं द्रौपद्याअपिदोषाय स्वामिस्वामिनाशस्य सुतरामकार्यत्वादितिहेतुत्रयंविविच्याकथनेइति १६

ननु बलवत्कृतिरेवधर्मश्चेत् स्वधर्मेणबलवत्तराहमेनान्शापाग्निनाधक्ष्येइत्याशंक्याह नूनमिति अवश्यभाविनिकार्येनत्वयातपोव्ययःकर्त्तव्यइति भावः १७ इदमेववृत्तंत्वद्वर्तारो
ऽप्यास्थिताअतस्त्वमपितथैवातिष्ठस्वेतिद्वाभ्यामाह कुलेष्विति १८। १९। २०। २१॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेएकोनसप्ततितमोऽध्यायः॥ ६९॥ तथात्विति
१।२।३।४।५।६ सभ्याःप्रशशंसुःतेषांचेलाश्चेटाः मेष्यास्तुवेषानिववेधान्तत्रतत्रसमाचारप्रापणं परस्परेणचक्षुःसंकेतंवाचक्रुः। सभायांदुर्योधनेनोक्तमात्रावार्त्तासद्यःसर्वत्रप्र

नूनमंतःकुलस्यास्यभवितानचिरादिव॥ तथाहिकुरवःसर्वेलोभमोहपरायणाः १७ कुलेषुजाताःकल्याणिव्यसनैराहताभृशम्॥ धर्म्यान्मार्गान्नच्यवंते
येषांनस्त्वंवधूःस्थिता १८ उपपन्नंचपांचालितदेवंवृत्तमीदृशम्॥ यत्कृच्छ्रमपिसंप्राप्ताधर्ममेवान्ववेक्षसे १९ एतेद्रोणादयश्चैववृद्धाधर्मविदोजनाः॥ शून्यैः
शरीरैस्तिष्ठंतिगतासवइवानताः२०युधिष्ठिरस्तुप्रश्नेऽस्मिन्प्रमाणमितिमेमतिः॥अजितांवाजितांवेतिस्वयंव्याहर्तुमर्हति२१॥इतिश्रीमहाभारतेसभापर्व
णिद्यूतपर्वणिभीष्मवाक्येएकोनसप्ततितमोऽध्यायः ६९॥ ॥ वैशंपायनउवाच॥ तथातुदृष्ट्वाबहुतत्रदेवींरोरूयमाणांकुररीमिवार्त्ताम्॥नोचुर्वचःसाध्वथवा
ऽप्यसाधुमहीक्षितोधार्त्तराष्ट्रस्यभीताः १ दृष्ट्वातथापार्थिवपुत्रपौत्रांस्तूष्णींभूतान्धृतराष्ट्रस्यपुत्रः॥ स्मयन्निदंवचनंबभाषेपांचालराजस्यसुतांतदा
नीम् २॥ दुर्योधनउवाच॥ तिष्ठत्वयंप्रश्नउदारसत्त्वेभीमेऽर्जुनेसहदेवेतथैव॥ पत्यौचतेनकुलेयाज्ञसेनिवदंत्वेतेवचनंत्वत्प्रसूतम् ३ अनीश्वरंविब्रुवं
त्वार्यमध्येयुधिष्ठिरंतवपांचालिहेतोः॥ कुर्वंतुसर्वेचानृतंधर्मराजंपांचालित्वंमोक्ष्यसेदासभावात् ४ धर्मेस्थितोधर्मसुतोमहात्मास्वयंचेदंकथयत्विंद्रकल्पः॥
ईशोवातेह्यनीशोऽथवैषवाक्यादस्यक्षिप्रमेकंभजस्व ५ सर्वेहीमेकौरवेयाःसभायांदुःखांतरेवर्त्तमानास्तवैव॥ नविब्रुवंत्यार्यसत्त्वायथावत्पतींश्चतेसमवेक्ष्या
ल्पभाग्यान् ६॥ वैशंपायनउवाच॥ ततःसभ्याःकुरुराजस्यतस्यवाक्यंसर्वेप्रशशंसुस्तथोच्चैः॥ चेलावेधांश्चापिचक्रुर्नदंतोहाहेत्यासीदपिचैवार्तनादः
७ श्रुत्वातुतद्वाक्यमनोहरंतद्धर्षश्चासीत्कौरवाणांसभायाम्॥सर्वेचासन्पार्थिवाःप्रीतिमंतःकुरुश्रेष्ठंधार्मिकंपूजयंतः ८ युधिष्ठिरंचतेसर्वेसमुदैक्षंतपार्थि
वाः॥ किंनुवक्ष्यतिधर्मज्ञइतिसाचीकृताननाः ९ किंनुवक्ष्यतिबीभत्सुरजितोयुधिपांडवः॥ भीमसेनोयमौचोभौभृशंकौतूहलान्विताः १० तस्मिन्नुप
रतेशब्देभीमसेनोऽब्रवीदिदम्॥ प्रगृह्यरुचिरंदिव्यंभुजंचंदनचर्चितम् ११॥ भीमसेनउवाच॥ यद्येषगुरुरस्माकंधर्मराजोमहामनाः॥ नप्रभुःस्या
त्कुलस्यास्यनवयंमर्षयेमहि १२ ईशोनःपुण्यतपसांप्राणानामपिचेश्वरः॥ मन्यतेऽजितमात्मानंयद्येषविजितावयम् १३

कीर्णेत्यर्थः। चेलावेधान्वस्त्रभ्रामणानीतिश्रावः। तत्रैवहाहेति कौरवपक्षपातिष्वेव। पांडवानांन्यायपक्षपातिनांप्रमाणीकरणे द्रौपदीदास्यान्मुक्ताभविष्यति तेनचसर्वेषामस्माकंदुःखं
भविष्यतीत्यभिप्रायः ७।८ साचितिर्यक् ९। १०। ११ यद्ययंनःकुलस्यप्रभुर्नस्यात्तर्हिनमर्षयेमहि यतोऽयंप्रभुस्ततोमर्षयामहे इत्यर्थः १२ ईशइतिअजितमितिच्छेदः द्रौपदीपणनात्
प्रागितिशेषः। यद्ययमात्मानमजितंमन्यते तर्हिवयंपूर्वमेव भवद्भिर्जिताःसंतःइदानींविजिताः द्रौपद्यर्थमिथ्यावादेनघुतरांजिताःस्मइत्यर्थः। अतोद्रौपदीनदासभावमापन्नेतिभावः १३

नन्वजितेनापित्वया किंस्यात्तत्राहनहीत्यादि १४ । १५ पाशसितःपाशबद्धः १६ तलासिभिश्चपेटाखङ्गैः १७ । १८ ॥ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेसप्ततितमोऽध्यायः ॥ ७० ॥ क्वचित्'त्रयःकिलेमेसधनाःसमायांभीष्मःक्षत्ताकौरवाणांगुरुश्च । येस्वामिनंदुष्टतमंवदंतिवांछंतिवृद्धिंनचविक्षिपंति'इतिश्लोकःप्रथमः 'त्रयःकिलेमे अधना'इतिद्वितीयः । सधनाःसमर्थाधर्मोल्लंघनेइत्यर्थः । वृद्धिंस्वामिनोमूलच्छेदं । नचविक्षिपंतिपापकरणे व्याकुलाश्चनभवंति । दासस्यपत्नीर्हीनेश्वरा दासधनंचसर्वंहीनेश्वरंसत् भद्रेकल्याणमाजि तयोरीश्वरेद्वयमपितन्नयसनीयमित्यर्थः । तथाचस्मृतिः । 'त्रयएवाधनालोके भार्यादासस्तथासुतः ॥ यत्तेसमधिगच्छंति यस्यैतेतस्यतद्धनम्'इति । तथाचराजजयेनैवतत्पत्न्यपिजितेव ननु

नहिमुच्येतमेजीवन्पदाभूमिमुपस्पृशन् ॥ मर्त्यधर्मापरामृश्यपांचाल्यामूर्धजानिमान् १४ पश्यध्वंह्यायतौवृत्तौभूजौमेपरिघाविव ॥ नैतयोरंतरंप्राप्य मुच्येतापिशतक्रतुः १५ धर्मपाशसितस्त्वेवंनाधिगच्छामिसंकटम् ॥ गौरवेणनिरुद्धश्चनिग्रहादर्जुनस्यच १६ धर्मराजनिसृष्टस्तुसिंहःक्षुद्रमृगानिव ॥ धार्त्तराष्ट्रानिमान्पापान्निष्पिषेयंतलासिभिः १७ ॥ वैशंपायनउवाच ॥ तमुवाचतदाभीष्मोद्रोणोविदुरएवच ॥ क्षम्यतामिदमित्येवंसर्वंसंभाव्यतेत्वयि १८ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणिभीमवाक्येसप्ततितमोऽध्यायः ७० ॥ ॥ कर्णउवाच ॥ ॥ त्रयःकिलेमेह्यधनाभवंतिदासः पुत्रश्चास्वतंत्राचनारी ॥ दासस्यपत्नीत्वधनस्यभद्रेहीनेश्वरादासधनंचसर्वम् १ प्रविश्यराज्ञःपरिवारंभजस्वतत्तेकार्यंशिष्टमादिश्यतेऽत्र ॥ ईशास्तुसर्वेतवराजपुत्रिभवंतिवैधार्त्तराष्ट्रानपार्थाः २ अन्यंवृणीष्वपतिमाशुभाविनियस्माद्दास्यंनलभसिदेवनेन ॥ अवाच्यावैपतिषुकामवृत्तिर्नित्यंदास्येविदितंतत्तवास्तु ३ पराजितोनकुलोभीमसेनोयुधिष्ठिरःसहदेवार्जुनौच ॥ दासीभूतात्वंहिवैयाज्ञसेनिपराजितास्तेपतयोनैवसंति ४ प्रयोजनंजन्मनिकिंनमन्यतेपराक्रमंपौरुषंचैवपार्थः ॥ पांचाल्यस्यद्रुपदस्यात्मजामिमांसभामध्येयोऽत्यदेवीद्ग्लहेषु ५ ॥ वैशंपायनउवाच ॥ तद्वैश्रुत्वाभीमसेनोऽत्यमर्षीभृशंनिःशश्वासतदाऽऽर्तरूपः ॥ राजानुगोधर्मपाशानुबद्धोदहन्निवैनंक्रोधसंरक्तदृष्टिः ६ ॥ भीमउवाच ॥ नाहंकुप्येसूतपुत्रस्यराजन्नेषसत्यंदासधर्मःप्रदिष्टः ॥ किंविद्विषोवैमामेवंव्याहरेयुर्नदेवीस्त्वंयद्यनयानरेंद्र ७ ॥ वैशंपायनउवाच ॥ भीमसेनवचःश्रुत्वाराजादुर्योधनस्तदा ॥ युधिष्ठिरमुवाचेदंतूष्णींभूतमचेतनम् ८ भीमार्जुनौयमौचैवस्थितौतेनृपशासने ॥ प्रश्नंब्रूहिचकृष्णांत्वमजितांयदिमन्यसे ९ एवमुक्त्वातुकौंतेयमपोह्यवसनंस्वकम् ॥ स्मयन्निवैक्ष्यपांचालीमैश्वर्यमदमोहितः १० कदलीदंडसदृशंसर्वलक्षणसंयुतम् ॥ गजहस्तप्रतीकाशंवज्रप्रतिमगौरवम् ११ अभ्युत्स्मयित्वाराधेयंभीममाधर्षयन्निव ॥ द्रौपद्याःप्रेक्षमाणायाःसव्यमूरुमदर्शयत् १२

तत्राजितेनजितेनवापराजितेतिविमर्शःसंभवतीतिभावः १ परिवारंदारान्भजस्व पादसंवाहनादिनासेवस्व २ अन्यमिति पतिजयेनात्मजयं चमन्यसेचेदपतिकात्वं रत्यर्थमन्यंपतिंवृणीष्व । पतिषुकामवृत्तिर्यथेष्टंवर्त्तनं लोकेस्त्रीणामवाच्यं दास्येतुतद्विदितंप्रसिद्धं । अतःपरिमितपतिकाद्दारभावादनंतपतिकं दास्यमेवतवास्त्वितिभावः ३ नैवसंत्यस्मद्दासाःपांडवाअस्माभिःप्रत्याख्याताश्चेत्त्वांनैवभोक्तुंसमर्थाभवेयुरितिभावः ४ प्रयोजनमिति यइमांअत्यदेवीत्सजन्मनिप्रयोजनंजन्मसाफल्यंकिंनमन्यतेअपितुमन्यतएव । एवंपराक्रमादावपियोज्यम् ५ । ६ एषदासधर्मः भर्तुरुत्कर्षवर्णनम् ७ । ८ । ९ अपोह्यापकृष्य १० । ११ अभ्युत्स्मयित्वाप्रोत्साह्य १२

१३ । १४ । १५ उदपादिःउत्पन्नः १६ अतिद्यूतंपणितद्रव्यमर्यादामतिक्रांतं । योगक्षेमौयोगोलब्धेनराज्यादिनासंबंधस्तस्यक्षेमःकल्याणं । 'कुशलंक्षेममस्त्रियाम्'इत्यमरः १७ परिषत्सभा । संप्रदुष्येत्धर्मातिक्रमादिदिविशेषः । किंतवोयुधिष्ठिरःअपराजितात्मासन् पूर्वंचेत्ग्लहिष्यत्पणीकृतवानभविष्यत्तर्हि साभवद्दासीस्यादेवेतिभावः १८ यस्ययेनधनेनामीशोदी

भीमसेनस्तमालोक्यनेत्रेउत्फाल्यलोहिते ॥ प्रोवाचराजमध्येतंसभांविश्रावयन्निव १३ पितृभिःसहससालोक्यंमास्मगच्छेद्वृकोदरः ॥ यद्येतमूरुंगदया नभिंद्यांतिमहाहवे १४ क्रुद्धस्यतस्यसर्वेभ्यःस्रोतोभ्यःपावकार्चिषः ॥ वृक्षस्येवविनिश्चेरुःकोटरेभ्यःप्रदह्यतः १५ ॥ विदुरउवाच ॥ परंभयंपश्यतभीमसेनात्तद्बुद्ध्यध्वंपार्थिवाःप्रातिपेयाः ॥ दैवेरितोनूनमयंपुरस्तात्परोऽनयोभरतेषूदपादि १६ अतिद्यूतंकृतमिदंधार्त्तराष्ट्रायस्मात्स्त्रियंविवदध्वंसभायाम् ॥ योगक्षेमौनश्यतोवःसमग्रौपापान्मंत्रान्कुरवोमंत्रयंति १७ इमंधर्मंकुरवोजानताशुध्वस्तेधर्मेपरिषत्संप्रदुष्येत् ॥ इमांचेत्पूर्वंकितवोऽग्लहिष्यदीशोऽभविष्यदपराजितात्मा १८ स्वप्नेयथैतद्धिजितंधनंस्यादेवंमन्येयस्यदीव्यत्यनीशः ॥ गांधारराजस्यवचोनिशम्यधर्मादस्मात्कुरवोमाऽपयात १९ ॥ दुर्योधनउवाच ॥ भीमस्यवाक्येतद्वदेवार्जुनस्यस्थितोऽहंवैयमयोश्चैवमेव ॥ युधिष्ठिरंतेप्रवदंत्वनीशमथोदास्यान्मोक्ष्यसेयाज्ञसेनि २० ॥ अर्जुनउवाच ॥ ईशोराजापूर्वमासीद्ग्लहेनःकुंतीसुतोधर्मराजोमहात्मा ॥ ईशस्त्वयंकस्यपराजितात्मातज्जानीध्वंकुरवःसर्वएव २१ ॥ वैशंपायनउवाच ॥ ततोराज्ञोधृतराष्ट्रस्यगेहेगोमायुरुच्चैर्व्याहरदग्निहोत्रे ॥ तंरासभाःप्रत्यभाषंतराजन्समंततःपक्षिणश्चैवरौद्राः २२ तंवैशब्दंविदुरस्तत्त्ववेदीशुश्रावघोरंसुबलात्मजा च ॥ भीष्मोद्रोणोगौतमश्चापिविद्वान्स्वस्तिस्वस्तीत्यपिचैवाहुरुच्चैः २३ ततोगांधारीविदुरश्चापिविद्वांस्तमुत्पातंघोरमालक्ष्यराज्ञे ॥ निवेदयामासतुरार्तवत्तदाततोराजावाक्यमिदंबभाषे २४ ॥ धृतराष्ट्रउवाच ॥ हतोऽसिदुर्योधनमंदबुद्धेयस्त्वंसभायांकुरुपुंगवानाम् ॥ स्त्रियंसमाभाषसिदुर्विनीतविशेषतोद्रौपदींधर्मपत्नीम् २५ एवमुक्त्वाधृतराष्ट्रोमनीषीहितान्वेषीबांधवानामपायात् ॥ कृष्णांपांचालीमब्रवीत्सांत्वपूर्वंविमृश्यैतत्प्रज्ञयातत्त्वबुद्धिः २६ ॥ धृतराष्ट्रउवाच ॥ वरंवृणीष्वपांचालिमत्तोयदभिवांछसि ॥ वधूनांहिविशिष्टामेत्वंधर्मपरमासती २७ ॥ द्रौपद्युवाच ॥ ददासिचेद्वरंमह्यंवृणोमिभरतर्षभ ॥ सर्वधर्मानुगःश्रीमानदासोऽस्तुयुधिष्ठिरः २८ मनस्विनमजानंतोमैवंब्रूयुःकुमारकाः ॥ एषवैदासपुत्रेहिप्रतिविंध्यंममात्मजम् २९ राजपुत्रःपुराभूत्वायथानान्यःपुमान्क्वचित् ॥ राजभिर्लालितस्यास्यनयुक्तादासपुत्रता ३०

व्यतित् स्वप्नेयथा धनमाभासजितंतद्वदित्यर्थः 'यस्यैतेतस्यतद्धनम्'इतिस्मृतिस्तु दासभावेऽर्जितंधनंस्वामिगामीत्याह नतुततःप्राक्तनमपीति मापयातमागच्छत १९ । २० । २१ अग्निहोत्रेगृह्याग्निसमीपे २२ सुबलात्मजागांधारी २३ । २४ । २५ । २६ । २७ । २८ प्रतिविंध्यंयुधिष्ठिरसुतम् २९ । ३०

स्ववशानपराधीनान् ३२ । ३३ वरमादातुंनोत्सहेयतोऽनर्हा ३४ अनर्हस्त्वमेवाहएकामिति ३५ पापीयांसोदासभावेननीचाः वेत्स्यंतिलप्स्यंति । त्रिद्लृ लाभेइत्यस्यरूपं ३६ ॥ इति सभा०नै०भा०एकसप्ततितमोऽध्यायः ॥ ७१ ॥ यानइति १ । २ अप्लवेनौकाहीनेअप्रतिष्ठेअगाधे अंभसीवांभसिविपत्समुद्रे ३ । ४ ज्योतींषिलोकप्रकाशकान्यपत्यंकर्मविद्याचेति । यतोयस्माद्धेतोस्ततोज्योतिस्त्रयात्प्रजाः स्थावरजंगमाःसृष्टाःअयंभावः । कर्मोपास्तिप्राप्यंलोकद्वयमपत्यप्राप्यश्चायंलोकः । तथाचश्रुतिः। 'सोऽयंलोकःपुत्रेणैवजय्योनान्येनकर्मणा पितृलोकोविद्ययादेवलोकः'इति । विद्याउपासनापितृलोकःस्वर्गःदेवलोकोब्रह्मलोकः ५ मरणानंतरमेतान्येवज्योतींष्युपकुर्वंतीत्याह अमेध्येइतिअमेध्येअशुचौ ६ तत्रइति नःदाराणामितिसं

॥ धृतराष्ट्रउवाच ॥ एवंभवतुकल्याणियथात्वमभिभाषसे ॥ द्वितीयंतेवरंभद्रेददामिवरयस्वह ॥ मनोहिमेवितरतिनैकंत्वंवरमर्हसि ३१ ॥ द्रौपद्युवाच॥ सरथौसधनुष्कौचभीमसेनधनंजयौ ॥ यमौचवरयेराजन्नदासान्स्ववशानहम् ३२ ॥ धृतराष्ट्रउवाच ॥ तथाऽस्तुतेमहाभागेतथात्वंनंदिनीच्छसि ॥ तृतीयंवरयास्मत्तोनासिद्वाभ्यांसुसंस्कृता ॥ त्वंहिसर्वस्नुषाणांमेश्रेयसीधर्मचारिणी ३३ ॥ द्रौपद्युवाच ॥ लोभोधर्मस्यनाशायभगवन्नाहमुत्सहे ॥ अनर्हावरमादातुंतृतीयंराजसत्तम ३४ एकमाहुर्वैश्यवरंद्वौतुक्षत्रस्त्रियोवरौ ॥ त्रयस्तुराज्ञोराजेंद्रब्राह्मणस्यशतंवराः ३५ पापीयांसइमेभूत्वासंतीर्णाःपतयोमम ॥ वेत्स्यंतिचैवभद्राणिराजन्पुण्येनकर्मणा ३६ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणिद्रौपदीवरलाभेएकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥

॥ कर्णउवाच ॥ यानश्रुतामनुष्येषुस्त्रियोरूपेणसंमताः ॥ तासामेतादृशंकर्मनकस्याश्चनशुश्रुम १ क्रोधाविष्टेषुपार्थेषुधार्तराष्ट्रेषुचाप्यति ॥ द्रौपदीपांडुपुत्राणांकृष्णाशांतिरिहाभवत् २ अप्लवेंभसिमग्नानामप्रतिष्ठेनिमज्जताम् ॥ पांचालीपांडुपुत्राणांनौरेषापारगाऽभवत् ३ ॥ वैशंपायनउवाच ॥ तद्वैश्रुत्वाभीमसेनःकुरुमध्येत्यमर्षणः ॥ स्त्रीगतिःपांडुपुत्राणामित्युवाचसुदुर्मनाः ४ ॥ भीमउवाच ॥ त्रीणिज्योतींषिपुरुषइतिवैदेवलोऽब्रवीत् ॥ अपत्यंकर्मविद्याचयतःसृष्टाःप्रजास्ततः ५ अमेध्येवैगतप्राणेशून्येज्ञातिभिरुज्झिते ॥ देहेत्रितयमेवैतत्पुरुषस्योपयुज्यते ६ तत्रोज्योतिरभिहतंदाराणामभिमर्शनात् ॥ धनंजयकथंस्वित्स्यादपत्यमभिमृष्टजम् ७ ॥ अर्जुनउवाच ॥ नचैवोक्तानचानुक्ताहीनतःपरुषागिरः ॥ भारतप्रतिजल्पंतिसदातूत्तमपूरुषाः ८ स्मरंतिसुकृतान्येवनवैराणिकृतान्यपि ॥ संतःप्रतिविजानंतोलब्धसंभावनाःस्वयम् ९ ॥ भीमउवाच ॥ इहैवैतांस्तुरासर्वान्हन्मिशत्रून्समागतान् ॥ अथनिष्क्रम्यराजेंद्रसमूलान्हन्मिभारत १०

बंधःतत्परलोकीयमपत्यादिकंज्योतिरस्मदीयानांदाराणामभिमर्शनादभिहतं । अभितःसर्वतोहतंगतंज्ञातमस्माभिरित्यर्थः । अभिहितमितिपाठेओहाङ्गतावित्यस्यरूपं । यःसंसदिपरदारान्स्प्रष्टुंनत्रपते सविविक्तेऽवश्यं पारदारिकःस्यादेवेति भावः । एवंसर्वान्निंदित्वाकर्णसमुद्दिश्याह । धनंजयेति तथाचाभिमृष्टजं परैःअभिमृष्टेभ्योदारेभ्योजातमपत्यंकथंस्वित्स्यात् संकरजत्वान्नीचकर्मकृदेवस्यात् । सूतबीजाद्वीरोत्पत्तेरसंभवात् कंसवत्कर्णोऽप्यसुरबीजोद्भवः क्रूरकर्मकरत्वादितिभावः ७ हीनतोहीनैःप्रतिजल्पंतिप्रत्युत्तरयंति ८ प्रतिविजानंतः कृतस्यप्रतीकारंजानंतः लब्धसंभावनाः प्राप्तपूजाः ९ इहैवैतांस्तूरासर्वान् तूरात्वरया त्वरतेः क्विपि ज्वरत्वरेत्युपधावकारयोरूठ् । एतान्स्तुतानित्यपपाठः निष्क्रम्यइतःस्थानादितिशेषः समूलान् कोशदेशदुर्गादिसहितान् १०

विवदितेनविवादेन ११ । १२ । १३ स्रोतोभ्योनिर्गममार्गेभ्यः १४ । १५ जोषंतूष्णींआस्वउपविश १६ । १७ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेद्विसप्ततितमोऽध्यायः ७२॥
राजन्निति १ अरिष्टंनिर्विघ्नम् २ । ३ । ४ यतइति शांतिरेवबुद्धेःफलमित्यर्थः अदारुणिकाष्ठभिन्नेपाषाणादौ मृदुरेवबाध्यतइत्यर्थः ५ बाधनेऽपि सतांवृत्तमाह नेति ६ संतइति

किंनोविवदितेनेहकिमुक्तेनचभारत ॥ अद्यैवैतान्निहन्मीहप्रशाधिपृथिवीमिमाम् ११ इत्युक्त्वाभीमसेनस्तुकनिष्ठैर्भ्रातृभिःसह ॥ मृगमध्येयथासिंहोमुहुर्मुहुरुदैक्षत १२ सांत्व्यमानोवीक्षमाणःपार्थेनाक्लिष्टकर्मणा ॥ खिद्यत्येवमहाबाहुरंतर्दाहेनवीर्यवान् १३ क्रुद्धस्यतस्यस्रोतोभ्यःकर्णादिभ्योनराधिप ॥ सधूमःसस्फुलिंगार्चिःपावकःसमजायत १४ भ्रुकुटीकृतदुष्प्रेक्ष्यमभवत्तस्यतन्मुखम् ॥ युगांतकालेसंप्राप्तेकृतांतस्येवरूपिणः १५ युधिष्ठिरस्तमावार्यबाहुनाबाहुशालिनम् ॥ मैवमित्यब्रवीच्चैनंजोषमास्स्वेतिभारत १६ निवार्यचमहाबाहुंकोपसंरक्तलोचनम् ॥ पितरंसमुपातिष्ठद्धृतराष्ट्रंकृतांजलिः १७ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणिभीमक्रोधेद्विसप्ततितमोध्यायः ॥ ७२ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ राजन्किंकरवामस्तेप्रशाध्यस्मांस्त्वमीश्वरः ॥ नित्यंहिस्थातुमिच्छामस्तवभारतशासने १ ॥ धृतराष्ट्रउवाच ॥ ॥ अजातशत्रोभद्रंतेअरिष्टंस्वस्तिगच्छत ॥ अनुज्ञाताःसहधनाःस्वराज्यमनुशासत २ इदंचैवावबोद्धव्यंवृद्धस्यममशासनम् ॥ मयानिगदितंसर्वंपथ्यंनिःश्रेयसंपरम् ३ वेत्थत्वंतातधर्माणांगतिंसूक्ष्मांयुधिष्ठिर ॥ विनीतोऽसिमहाप्राज्ञवृद्धानांपर्युपासिता ४ यतोबुद्धिस्ततःशांतिःप्रशमंगच्छभारत ॥ नादारुणिपतेच्छस्त्रंदारुण्येतन्निपात्यते ५ नवैराण्यभिजानंतिगुणान्पश्यंतिनागुणान् ॥ विरोधंनाधिगच्छंतियेतउत्तमपूरुषाः ६ स्मरंतिसुकृतान्येवनवैराणिकृतान्यपि ॥ संतःपरार्थंकुर्वाणानावेक्षंतेप्रतिक्रियाम् ७ संवादेपरुषाण्याहुर्युधिष्ठिरनराधमाः ॥ प्रत्याहुर्मध्यमास्त्वेतेऽनुक्ताःपरुषमुत्तरम् ८ नचोक्तानैवचानुक्तास्त्वहिताःपरुषागिरः ॥ प्रतिजल्पंतिवैधीराःसदातूत्तमपूरुषाः ९ स्मरंतिसुकृतान्येवनवैराणिकृतान्यपि ॥ संतःप्रतिविजानंतोलब्ध्वाप्रत्ययमात्मनः १० असंभिन्नार्थमर्यादाःसाधवःप्रियदर्शनाः ॥ तथाचरितमार्येणत्वयाऽस्मिन्सत्समागमे ११ दुर्योधनस्यपारुष्यंतत्तातहृदिमाकृथाः ॥ मातरंचैवगांधारींमांचत्वंगुणकांक्षया १२ उपस्थितंवृद्धमंधंपितरंपश्यभारत ॥ प्रेक्षापूर्वंमयाद्यूतमिदमासीदुपेक्षितम् १३ मित्राणिद्रष्टुकामेनपुत्राणांचबलाबलम् ॥ अशोच्याःकुरवोराजन्येषांत्वमनुशासिता १४ मंत्रीचविदुरोधीमान्सर्वशास्त्रविशारदः ॥ त्वयिधर्मोऽर्जुनेधैर्यंभीमसेनेपराक्रमः १५ श्रद्धाचगुरुशुश्रूषायमयोःपुरुषाग्र्ययोः ॥ अजातशत्रोभद्रंतेखांडवप्रस्थमाविश ॥ भ्रातृभिस्तेऽस्तुसौभ्रात्रंधर्मेतेधीयतांमनः १६

प्रत्युपकाराशयाउपकारंनकुर्वंतीत्यर्थः ७ अधममध्यमोत्तमानांकलहप्रसंगेवृत्तमाहसंवादइति ८ दुर्वचोभिरुक्ताअनुक्तावा संतोऽहितादुःखकर्त्रीः यतःपरुषाः मर्मच्छिदस्तादृशीर्गिरः ९ संतइति आत्मौपम्येन परस्यापि दुःखंमाभूदिति जानंतइत्यर्थः १० । ११ । १२ । १३ । १४ । १५ भ्रातृभिर्दुर्योधनादिभिः १६

सर्वसमर्थंकृत्वामदुक्तंयत्तत्तथैवास्त्विति प्रतिज्ञाय १७ । १८ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेत्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ ॥ अनुज्ञातानिति १ धृतराष्ट्रेणयथाप्रतिज्ञं सुहृद्द्यूतेकृतेऽपि पुरुषकाराद्बलवत्तरंदैवंकौरवान्सर्वभूपक्षयहेतौ अनुद्यूतेप्रावर्तयदित्याह अनुज्ञातानिति २ भरतश्रेष्ठोभरतस्यदुर्योधनस्यदृष्ट्याश्रेष्ठःप्रशस्यतमोदुःशासनः ३ स्थ

॥ वैशंपायनउवाच ॥ इत्युक्तोभरतश्रेष्ठधर्मराजोयुधिष्ठिरः ॥ कृत्वाऽर्यसमयंसर्वंप्रतस्थेभ्रातृभिःसह १७ तेरथान्मेघसंकाशानास्थायसहकृष्णया ॥ प्रययुर्हृष्टमनसइंद्रप्रस्थंपुरोत्तमम् १८ ॥ इतिश्रीमहाभारतेसभापर्वणिद्यूतपर्वणिधृतराष्ट्रवरप्रदानपूर्वकमिंद्रप्रस्थंप्रतियुधिष्ठिरगमनेत्रिसप्ततितमोध्यायः ॥ ७३ ॥ ॥ समाप्तंचद्यूतपर्व ॥ ॥ अथानुद्यूतपर्व ॥ ॥ जनमेजयउवाच ॥ ॥ अनुज्ञातांस्तान्विदित्वासरत्नधनसंचयान् ॥ पांडवान्धार्तराष्ट्राणांकथमासीन्मनस्तदा १ वैशंपायनउवाच ॥ ॥ अनुज्ञातांस्तान्विदित्वाधृतराष्ट्रेणधीमता ॥ राजन्दुःशासनःक्षिप्रंजगामभ्रातरंप्रति २ दुर्योधनंसमासाद्यसामात्यंभरतर्षभ ॥ दुःखार्तोभरतश्रेष्ठइदंवचनमब्रवीत् ३ ॥ दुःशासनउवाच ॥ ॥ दुःखेनैतत्समानीतंस्थविरोनाशयत्यसौ ॥ शत्रुसाद्गमयद्द्रव्यं तद्बुध्यध्वंमहारथाः ४ अथदुर्योधनःकर्णःशकुनिश्चापिसौबलः ॥ मिथःसंगम्यसहिताःपांडवान्प्रतिमानिनः ५ वैचित्रवीर्यंराजानंधृतराष्ट्रंमनीषिणम् ॥ अभिगम्यत्वरायुक्ताःश्लक्ष्णंवचनमब्रुवन् ६ ॥ दुर्योधनउवाच ॥ नत्वयेदंश्रुतंराजन्यज्जगादबृहस्पतिः ॥ शक्रस्यनीतिंप्रवदन्विद्वान्देवपुरोहितः ७ सर्वोपायैर्निहंतव्याःशत्रवःशत्रुसूदन ॥ पुरायुद्धाद्बलाद्वाऽपिप्रकुर्वंतितवाहितम् ८ तेवयंपांडवधनैःसर्वान्संपूज्यपार्थिवान् ॥ यदितान्योधयिष्यामःकिंवैनःपरिहास्यति ९ अहीनाशीविषान्क्रुद्धान्नाशायसमुपस्थितान् ॥ कृत्वाकंठेचपृष्ठेचकःसमुत्स्रष्टुमर्हति १० आत्तशस्त्रारथगताःकुपितास्तातपांडवाः ॥ निःशेषंवःकरिष्यंतिक्रुद्धाह्याशीविषाइव ११ सन्नद्धोह्यर्जुनोयातिविधृत्यपरमेषुधी ॥ गांडिवंमुहुरादत्तेनिःश्वसंश्चानिरीक्षते १२ गदांगुर्वींसमुद्यम्यत्वरितश्चवृकोदरः ॥ स्वरथंयोजयित्वाऽऽशुनिर्यातइतिनःश्रुतं १३ नकुलःखड्गमादायचर्मचाप्यर्द्धचंद्रवत् ॥ सहदेवश्चराजाचचक्रुराकारमिंगितैः १४ तेत्वास्थायरथान्सर्वेबहुशस्त्रपरिच्छदान् ॥ अभिघ्नंतोरथव्रातान्सेनायोगायनिर्ययुः १५ नक्षंस्यंतेतथाऽस्माभिर्जातुविप्रकृताहिते ॥ द्रौपद्याश्चपरिक्लेशं कस्तेषांक्षंतुमर्हति १६ पुनर्दीव्यामभद्रंतेवनवासायपांडवैः ॥ एवमेतान्वशेकर्तुंशक्ष्यामःपुरुषर्षभ १७ तेवाद्वादशवर्षाणिवयंवाद्यूतनिर्जिताः ॥ प्रविशेममहारण्यमजिनैःप्रतिवासिताः १८

विरोवृद्धइतिसाधिक्षेपमुक्तं शत्रुसात्शत्रुवशं गमयदगमयत्प्रापितवान् ४ पांडवान्प्रतिप्रतिकर्तुं ५ । ६ त्वयाइदंकिंनश्रुतमिति काकान्त्रोयोजनाअपितुश्रुतमेव ७ पुरायुद्धात्युद्धमकृत्वेत्यर्थः बलाद्युद्धेनवायेअहितंकुर्वंति तेनिहंतव्याइतियोजना ८ तान्पांडवान्परिहास्यतिनंक्ष्यति ९ । १० । ११ परमेषुधीश्रेष्ठौनिषंगौ १२ । १३ आकारमभिप्रायमिंगितैश्चेष्टितैः चक्रुःआविश्चक्रुः कूविक्षेपेइत्यस्यरूपं १४ सेनायोगायसैन्यमेलनाय १५ नक्षंस्यंतेनक्षमांकरिष्यंते जातुकदाचित् विप्रकृताःविकारंप्रापिताः तेषांमध्ये १६ । १७ । १८

सजनेनसमानजनेनाज्ञाताः १९ । २० सविद्यामक्षवशीकरणविद्यासहिताम् २१ सारवद्बलवत् २२ । २३ व्यध्वगतान्दूरगतान् २४ वैश्यापुत्रोयुयुत्सुः २५ । २६ अकामानांद्यूतमनि च्छतांसताम् २७ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेचतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ ॥ अथेति १ । २ । ३ मतिंमाभिमंऽस्थाः अभिमतांमाकुरु ४ धमेदुद्बोधयेत् ५

त्रयोदशंसजनेनअज्ञाताःप्रतिवत्सरम् ॥ ज्ञाताश्चपुनरन्यानिवनेवर्षाणिद्वादश १९ निवसेमवयंतेवातथाद्यूतंप्रवर्त्ततां ॥ अक्षानुप्त्वापुनर्द्यूतमिदंकुर्वं तुपांडवाः २० एतत्कृत्यतमंराजन्नस्माकंभरतर्षभ ॥ अयंहिशकुनिर्वेदसविद्यामक्षसंपदम् २१ दृढमूलावयंराज्येमित्राणिपरिगृह्यच ॥ सारवद्विपुलंसै न्यंसत्कृत्यचदुरासदम् २२ तेचत्रयोदशंवर्षंपारयिष्यंतिचेद्व्रतम् ॥ जेष्यामस्तान्वयंराजन्रोचतांतेपरंतप २३ ॥ धृतराष्ट्रउवाच ॥ तूर्णंप्रत्यानयस्वै तान्कामंव्यध्वगतानपि ॥ आगच्छंतुपुनर्द्यूतमिदंकुर्वंतुपांडवाः २४ ॥ वैशंपायनउवाच ॥ ततोद्रोणःसोमदत्तोबाह्लीकश्चैवगौतमः ॥ विदुरोद्रोणपुत्रश्च वैश्यापुत्रश्चवीर्यवान् २५ भूरिश्रवाःशांतनवोविकर्णश्चमहारथः ॥ माद्यूतमित्यभाषंतशमोऽस्त्विवतिचसर्वशः २६ अकामानांचसर्वेषांसुहृदामर्थदर्शिनाम् ॥ अकरोत्पांडवाह्वानंधृतराष्ट्रःसुतप्रियः २७ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिअनुद्यूतपर्वणियुधिष्ठिरप्रत्यानयनेचतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ ॥

॥ वैशंपायनउवाच ॥ अथाब्रवीन्महाराजधृतराष्ट्रंजनेश्वरम् ॥ पुत्रहार्दाद्धर्मयुक्तागांधारीशोककर्शिता १ जातेदुर्योधनेक्षत्तामहामतिरभाषत ॥ नीयतांपरलोकायसाध्वयंकुलपांसनः २ व्यनदज्जातमात्रोहिगोमायुरिवभारत ॥ अंतोनूनंकुलस्यास्यकुरवस्तन्निबोधत ३ मानिमज्जीःस्वदोषेणमहाप्सुत्वंहि भारत ॥ माबालानामशिष्टानामभिमंस्थामतिंप्रभो ४ माकुलस्यक्षयेघोरेकारणंत्वंभविष्यसि ॥ बद्धंसेतुंकोऽनुभिंद्याद्धमेच्छांतंचपावकम् ५ शमेस्थिता न्कोऽनुपार्थान्कोपयेद्भरतर्षभ ॥ स्मरंतंत्वामाजमीढंस्मारयिष्याम्यहंपुनः ६ शास्त्रंनशास्तिदुर्बुद्धिंश्रेयसेचेतरायच ॥ नवैवृद्धोबालमतिर्भवेद्राजन्क थंचन ७ त्वन्नेत्राःसंतुतेपुत्रामात्वांदीर्णाःप्रहासिषुः ॥ तस्मादयंमद्वचनात्त्यज्यतांकुलपांसनः ८ तथातेनकृतंराजन्पुत्रस्नेहान्नराधिप ॥ तस्यप्राप्तंफलं विद्धिकुलांतकरणाययत् ९ शमेनधर्मेणनयेनयुक्तायातेबुद्धिःसाऽस्तुतेमाप्रमादीः ॥ प्रध्वंसिनीक्रूरसमाहिताश्रीर्मृदुप्रौढागच्छतिपुत्रपौत्रान् १० अथाब्र वीन्महाराजोगांधारींधर्मदर्शिनीम् ॥ अंतःकामंकुलस्यास्तुनशक्नोमिनिवारितुम् ११ यथेच्छंतितथैवास्तुप्रत्यागच्छंतुपांडवाः ॥ पुनर्द्यूतंचकुर्वंतुमाम काःपांडवैःसह १२ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिअनुद्यूतपर्वणिगांधारीवाक्येपंचसप्ततितमोऽध्यायः ७५ ॥ ॥ ७ ॥ ॥ ७ ॥

६ । ७ त्वन्नेत्रास्त्वमेवनेतायेषांतेत्वन्नेत्राः दीर्णास्त्वत्तो भिन्नमर्यादाःसंतःप्रहासिषुः जीवितत्यागेनेतिशेषः ८ । ९ माप्रमादीरनवहितोमाभूः मृदुप्रौढामृदुषुसमाहितासति प्रौढाभूत्वा १० अंतोनाशःकामंयथेष्टम् ११ । १२ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेपंचसप्ततितमोऽध्यायः ॥ ७५ ॥

ततइति १ । २ । ३ । ४ । असंभवेइति धृतराष्ट्रमुद्दिश्योक्तम् ५ । ६ । ७ यथोपजोषं यथासुखम् ८ पूजितमिष्टम् ९ । १० । ११ । १२ । १३ । १४ व्यवसाये निश्चयेन १५ संवे गादतिशयात् १६ एनंदुर्योधनंहेभरतर्षभहेधृतराष्ट्र १७ न्हियाकार्पण्यदोषान्निवृत्तइतिलज्जा याधर्मसंयोगात्तीर्थाद्यटनजात् १८ । १९ । २० गजाश्वादिकंबहुधेनूकंबहुदोग्ध्रीकंपणी

॥ वैशंपायनउवाच ॥ ततोव्यध्वगतंपार्थंप्रातिकामीयुधिष्ठिरम् ॥ उवाचवचनाद्राज्ञोधृतराष्ट्रस्यधीमतः १ उपास्तीर्णासभाराजन्नक्षानुप्त्वायुधिष्ठिर ॥ एहिपांडवदीव्येतिपितात्वाऽऽहेतिभारत २ ॥ युधिष्ठिरउवाच ॥ धातुर्नियोगाद्भूतानिप्राप्नुवंतिशुभाशुभम् ॥ ननिवृत्तिस्तयोरस्तिदेवितव्यंपुनर्यदि ३ अक्षद्यूतेसमाह्वानंनियोगात्स्थविरस्यच॥जानन्नपिक्षयकरंनातिक्रमितुमुत्सहे४ ॥वैशंपायनउवाच॥ असंभवेहेममयस्यजंतोस्तथाऽपिरामोलुलुभेमृगाय॥ प्रायःसमासन्नपराभवाणांधियोविपर्यस्ततराभवंति५इतिब्रुवन्निववृतेभ्रातृभिःसहपांडवः॥जानंश्चशकुनेर्मायांपार्थोद्यूतमियात्पुनः ६विविशुस्तेसभांतांतुपुन रेवमहारथाः॥व्यथयंतिस्मचेतांसिसुहृदांभरतर्षभाः ७ यथोपजोषमासीनाःपुनर्द्यूतप्रवृत्तये॥ सर्वलोकविनाशायदैवेनोपनिपीडिताः८ ॥शकुनिरुवाच॥ अमुंचत्स्थविरोयद्वोधनंपूजितमेवतत् ॥ महाधनंग्लहंत्वेकंशृणुमेभरतर्षभ ९ वयंवाद्वादशाब्दानियुष्माभिर्द्यूतनिर्जिताः ॥ प्रविशेममहारण्यंरौरवा जिनवाससः १० त्रयोदशंचसजनेअज्ञाताःपरिवत्सरम् ॥ ज्ञाताश्चपुनरन्यानिवनेवर्षाणिद्वादश ११ अस्माभिर्निर्जितायूयंवनेद्वादशवत्सरान् ॥ वस ध्वंकृष्णयासार्धमजिनैःप्रतिवासिताः १२ त्रयोदशंचसजनेअज्ञाताःपरिवत्सरम् ॥ ज्ञाताश्चपुनरन्यानिवनेवर्षाणिद्वादश १३ त्रयोदशेचनिर्वृत्तेपुनरेव यथोचितम् ॥ स्वराज्यंप्रतिपत्तव्यमितरैरथवेतरैः १४ अनेनव्यवसायेनसहास्माभिर्युधिष्ठिर ॥ अक्षानुप्त्वापुनर्द्यूतमेहिदीव्यस्वभारत १५ अथसभ्याः सभामध्येसमुच्छ्रितकरास्तदा ॥ ऊचुरुद्विग्नमनसःसंवेगात्सर्वएवहि १६ ॥ सभ्याऊचुः ॥ अहोधिग्बांधवानैनंबोधयंतिमहद्भयम् ॥ बुद्ध्याबुद्ध्येन्नवा बुद्ध्येदयंवैभरतर्षभ १७ ॥ वैशंपायनउवाच ॥ जनप्रवादान्सुबहून्शृण्वन्नपिनराधिपः ॥ ह्रियाचधर्मसंयोगात्पार्थोद्यूतमियात्पुनः १८ जानन्नपिमहा बुद्धिःपुनर्द्यूतमवर्तयत् ॥ अप्यासन्नोविनाशःस्यात्कुरूणामितिचिंतयन् १९ ॥ युधिष्ठिरउवाच ॥ कथंवैमद्विधोराजास्वधर्ममनुपालयन् ॥ आहूतोवि निवर्तेतदीव्यामिशकुनेत्वया २० ॥ शकुनिरुवाच ॥ गवाश्वंबहुधेनूकमपर्यंतमजाविकम् ॥ गजाःकोशोहिरण्यंचदासीदासाश्चसर्वशः २१ एषनोग्लह एवैकोवनवासायपांडवाः ॥ यूयंवयंवाविजितावसेमवनमाश्रिताः २२ त्रयोदशंचवैवर्षमज्ञाताःसजनेतथा ॥ अनेनव्यवसायेनदीव्यामपुरुषर्षभाः २३ समुत्क्षेपेणचैकेनवनवासायभारत ॥ प्रतिजग्राहतंपार्थोग्लहंजग्राहसौबलः ॥ जितमित्येवशकुनिर्युधिष्ठिरमभाषत २४ ॥ ॥ इतिश्रीमहाभारतेसभाप र्वणिअनुद्यूतपर्वणिपुनर्युधिष्ठिरपराभवेषट्सप्ततितमोऽध्यायः ॥ ७६ ॥

कृतमिति शेषः २१ संप्रत्येकएवपणइत्याह एषइति २२ । २३ समुत्क्षेपेणएकेनैवव वनो पक्षेपेणसकृद्द्वयाहृतमात्रेणेत्यर्थः प्रतिजग्राह तंग्लहमंगीचकार ततः सौबलोग्लहं जग्राह पाशंपातितवान् २४॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेषट्सप्ततितमोऽध्यायः ॥७६॥

तवइति दीक्षाव्रतग्रहणं तत्संजातंयेषांतेदीक्षिताः १ । २ पांडोःस्त्रियौपांड्वौ ऊङुतइत्यूङंतात्स्त्रीभ्योढगितिढकितयोरपत्यानिपांडवेयाः ३ समैः सैर्वर्वर्त्मभिर्मार्गैःअस्थलैः आगंतृभिरतिसंकीर्णत्वात्स्थलहीनैः । संप्रयाता अस्मान्प्रतीतिशेषः । सर्वेऽद्यदेवा अनुकूलाइत्यर्थः । गुणैःश्रीमत्त्वादिभिर्ज्येष्ठास्तथाश्रेष्ठावयसा । अतएवश्रेयांसःप्रशस्यतराः ४ । ५ प्रहासिषुःसभायांदुर्योधनं जलेपतितंदृष्ट्वाहासंकृतवंतः ६ सन्नाहानुष्णीषकवचकटिबंधादीन् । भानुमंतिसुवर्णतंतुमयत्वाद्दीप्तिमंति । विवास्यंतांपरिधाप्यंतां । रुरुःकृष्णमृगः ७ ईदृशाअस्मत्सदृशाःअफलानिर्वीर्याः ८ इदंचेतियत्तइवेतिच्छेदः । यदिदंरौरववासः । आहवेषुयज्ञेषु । यान्येवसंग्रामनामानितानि यज्ञनामानीतियास्कः । ईदृशानांदीक्षितानामिव पांडवा

॥ वैशंपायनउवाच ॥ ततःपराजिताःपार्थावनवासायदीक्षिताः ॥ अजिनान्युत्तरीयाणिजगृहुश्चयथाक्रमम् १ अजिनैःसंवृतान्दृष्ट्वाहृतराज्यानरिंदमान् ॥ प्रस्थितान्वनवासायततोदुःशासनोऽब्रवीत् २ प्रवृत्तंधार्तराष्ट्रस्यचक्रंराज्ञोमहात्मनः ॥ पराजिताःपांडवेयाविपत्तिंपरमांगताः ३ अद्यदेवाःसंप्रयाताःसमैर्वर्त्मभिरस्थलैः ॥ गुणज्येष्ठास्तथाश्रेष्ठाःश्रेयांसोयद्वयंपरैः ४ नरकंपातिताःपार्थादीर्घकालमनंतकम् ॥ सुखाच्चहीनाराज्याच्चविनष्टाःशाश्वतीःसमाः ५ धनेनमत्तायेतेस्मधार्तराष्ट्रान्प्रहासिषुः ॥ तेनिर्जिताहृतधनावनमेष्यंतिपांडवाः ६ चित्रान्सन्नाहानवमुंचंतुचैषांवासांसिदिव्यानिचभानुमंति ॥ विवास्यंतांरुरुचर्माणिसर्वेयथाग्लहंसौबलस्याभ्युपेताः ७ नसंतिलोकेषुपुमांसईदृशाइत्येवयेभावितबुद्धयःसदा ॥ ज्ञास्यंतितेऽऽत्मानमिमेऽद्यपांडवाविपर्ययेषंढतिलाइवाफलाः ८ इदंहिवासोयदिवेदृशानांमनस्विनांरौरवमाहवेषु ॥ अदीक्षितानामजिनानियद्वद्बलीयसांपश्यतपांडवानाम् ९ महाप्राज्ञःसौमकिर्यज्ञसेनःकन्यांपांचालींपांडवेभ्यःप्रदाय ॥ अकर्षीद्वैसुकृतंनेहकिंचित्क्लीबाःपार्थाःपतयोयाज्ञसेन्याः १० सूक्ष्मप्रावारानजिनोत्तरीयान्दृष्ट्वाऽरण्येनिर्धनानप्रतिष्ठान् ॥ कांत्वंप्रीतिंलप्स्यसेयाज्ञसेनिपतिंवृणीष्वेहयमन्यमिच्छसि ११ एतेहिसर्वेकुरवःसमेताःक्षांतादांताःसुद्रविणोपपन्नाः ॥ एषांवृणीष्वैकतमंपतित्वेनत्वांनयेत्कालविपर्ययोऽयम् १२ यथाऽफलाःषंढतिलायथाचर्ममयामृगाः ॥ तथैवपांडवाःसर्वेयथाकाकयवाअपि १३ किंपांडवांस्त्वंपतितानुपास्यमोघःश्रमःषंढतिलानुपास्य ॥ एवंनृशंसःपरुषाणिपार्थानश्रावयद्धृतराष्ट्रस्यपुत्रः १४ तद्वैश्रुत्वाभीमसेनोऽत्यमर्षीनिर्भर्त्स्योच्चैःसन्निगृह्यैवरोषात् ॥ उवाचचैनंसहसैवोपगम्यसिंहोयथाहैमवतःशृगालम् १५ ॥ भीमसेनउवाच ॥ क्रूरपापजनैर्जुष्टमकृतार्थंप्रभाषसे ॥ गांधारविद्ययाहित्वंराजमध्येविकत्थसे १६ यथातुदसिमर्माणिवाक्शरैरिहनोभृशम् ॥ तथास्मारयितातेऽहंकृंतन्मर्माणिसंयुगे १७ येचत्वामनुवर्ततेक्रोधलोभवशानुगाः ॥ गोप्तारःसानुबंधांस्तान्नेताऽस्मियमसादनम् १८

नांदृश्यते । तद्वतद्वत्पश्यत । यद्वद्दीक्षितानांकैवर्त्तादीनामजिनानीतियोजना । अदीक्षायामपिदीक्षितवासांसिवसानाः कैवर्त्तकवद्दृश्यंतइत्यर्थः ९ यज्ञसेनोद्रुपदः १० सूक्ष्मप्रावारांस्तुच्छपरिधानीयवस्त्रान् । अप्रतिष्ठान् हृतस्थानान् ११ कालविपर्ययःक्लेशकालःत्वाननेयन्नकर्षेत् । नत्वातपेदित्यपिपाठः १२ काकयवानिस्तंडुलंतृणधान्यं १३ । १४ । १५ गांधारस्यशकुनेर्विद्यया । नतुबाहुबलेनेतिभावः १६ स्मारयितास्मारयिष्यामि १७ सानुबंधान्सपुत्रबांधवान् १८

अजिनैर्विवासितमाच्छादितं तावन्मात्रयासंपत्त्यासहराज्याद्बहिष्कृतमित्यर्थः । धर्मेणनिबद्धोनिरुद्धोमार्गो रिपुमर्दनारंभोयस्यतं । मधुपर्केगौगौरितित्रिर्निवेदिताया गोर्वधउत्सर्ग श्चदृष्टः तत्सामान्यादंतकरूपायातिथयेनिवेदिताःपांडवपशवउत्सृष्टास्ते पुनर्वयंमृत्युमुखात्प्रमुक्ता इत्युत्सृष्टमात्राएववेगेनपलायंते पुनरस्मानयंमावाधिष्टेतितेषांपरिहासेनव्याकुली करणायपुनराह्वानंक्रियतेगौर्गौरिति । मृत्युभयात्पशुवत्प्राणभयात्पलायंतइतिपांडवानांकातरत्वसूचकोऽयमुपहासः । अस्योत्तरंद्रोणपर्वणि भीमसेनोवक्ष्यति । 'येऽस्मान्पूर्वंप्रनृ

॥ वैशंपायनउवाच ॥ एवंब्रुवाणमाजिनैर्विवासितंदुःशासनस्तंपरिनृत्यतिस्म ॥ मध्येकुरूणांधर्मनिबद्धमार्गंगौगौरितिस्माह्वयन्मुक्तलज्जः १९ भीमसेन उवाच ॥ नृशंसपरुषंवक्तुंशक्यंदुःशासनत्वया ॥ निकृत्याहिधनंलब्ध्वाकोविकत्थितुमर्हति २० मैवस्मसुकृतांलोकान्गच्छेत्पार्थोवृकोदरः ॥ यदिवक्षो हितेभित्वानपिबेच्छोणितंरणे २१ धार्तराष्ट्रान्रणेहत्वामिषतांसर्वधान्विनां ॥ शमंगंताऽस्मिनचिरात्सत्यमेतद्ब्रवीमिते २२ ॥ वैशंपायनवाच ॥ तस्यराजा सिंहगतेःसखेलंदुर्योधनोभीमसेनस्यहर्षात् ॥ गतिंस्वगत्याऽनुचकारमंदोनिर्गच्छतांपांडवानांसभायाः २३ नैतावताकृतमित्यब्रवीत्तंवृकोदरःसंनिवृत्तार्ध कायः ॥ शीघ्रंहित्वांनिहतंसानुबंधंसंस्मार्याहंप्रतिवक्ष्यामिमूढ २४ एवंसमीक्ष्यात्मनिचावमानंनियम्यमन्युंबलवान्समानी ॥ राजानुगःसंसदिकौरवाणां विनिष्क्रामन्वाक्यमुवाचभीमः २५ ॥ भीमसेनउवाच ॥ अहंदुर्योधनंहंताकर्णंहंताधनंजयः ॥ शकुनिंचाक्षकितवंसहदेवोहनिष्यति २६ इदंचभूयोवक्ष्यामि सभामध्येबृहद्वचः ॥ सत्यंदेवाःकरिष्यंतियन्नोयुद्धंभविष्यति २७ सुयोधनमिमंपापंहंताऽस्मिगदयायुधि ॥ शिरःपादेनचास्याहमधिष्ठास्यामिभूतले २८ वाक्यशूरस्यचैवास्यपरुषस्यदुरात्मनः ॥ दुःशासनस्यरुधिरंपाताऽस्मिमृगराडिव २९ ॥ अर्जुनउवाच ॥ नैवंवाचाव्यवसितंभीमविज्ञायतेसताम् ॥ इतश्चतुर्दशेवर्षेद्रष्टारोयद्भविष्यति ३० ॥ भीमसेनउवाच ॥ दुर्योधनस्यकर्णस्यशकुनेश्चदुरात्मनः ॥ दुःशासनचतुर्थानांभूमिःपास्यतिशोणितम् ३१ ॥ अर्जुनउवाच ॥ असूयितारंद्रष्टारंप्रवक्तारंविकत्थनम् ॥ भीमसेननियोगात्तेहंताऽहंकर्णमाहवे ३२ अर्जुनःप्रतिजानीतेभीमस्यप्रियकाम्यया ॥ कर्णं कर्णानुगांश्चैवरणेहंताऽस्मिपत्रिभिः ३३ येचान्येप्रतियोत्स्यंतिबुद्धिमोहेनमांनृपाः ॥ तांश्चसर्वानहंबाणैर्नेताऽस्मियमसादनम् ३४ चलेद्धिहिमवा न्स्थानान्निष्प्रभःस्याद्दिवाकरः ॥ शैत्यंसोमात्प्रणश्येतमत्सत्यंविचलेद्यदि ३५ नप्रदास्यतिचेद्राज्यमितोवर्षेचतुर्दशे ॥ दुर्योधनोऽभिसत्कृत्यसत्यमेत द्भविष्यति ३६ ॥ वैशंपायनउवाच ॥ इत्युक्तवतिपार्थेतुश्रीमान्माद्रवतीसुतः ॥ प्रगृह्यविपुलंबाहुंसहदेवःप्रतापवान् ३७

त्यंतिमुहुर्गौरितिगौरिति ॥ तान्वयंप्रतिनृत्यामः पुनर्गौरितिगौरिति'इति । उत्सृष्टान्पशूनिवभीषयितुमाह्वयंतो येऽस्मान्पूर्वंप्रनृत्यंति तानेवयुद्धेविदारितान् दृष्ट्वानृत्यामइतितदर्थः १९ । २० । २१ मिषतांपश्यतां २२ । २३ प्रतिवक्ष्यामि अस्यपरिहासस्योत्तरमितिशेषः २४ आत्मनिचित्ते २५ । २६ । २७ । २८ परुषस्यकर्कशस्य २९ व्यवसितंचिकीर्षितं द्रष्टारःद्रक्ष्यामः ३० । ३१ द्रष्टारंसुतेजकंप्रवक्तारंकुबुद्धेः ३२ । ३३ । ३४ । ३५ । ३६ । ३७

३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ ॥ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेसप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ ॥ ७ ॥ आमंत्रयामीति १ । २

सौबलस्यवधंप्रेप्सुरिदंवचनमब्रवीत् ॥ क्रोधसंरक्तनयनोनिःश्वसन्निवपन्नगः ३८ ॥ सहदेवउवाच ॥ अक्षान्यान्मन्यसेमूढगांधाराणांयशोहर ॥ नैतेऽ क्षानिशिताबाणास्त्वयैतेसमरेवृताः ३९ यथाचैवोक्तवान्भीमस्त्वामुद्दिश्यसबांधवम् ॥ कर्ताऽहंकर्मणस्तस्यकुरुकार्याणिसर्वशः ४० हंताऽस्मितरसा युद्धेत्वामेवेहसबांधवम् ॥ यदिस्थास्यसिसंग्रामेक्षत्रधर्मेणसौबल ४१ सहदेववचःश्रुत्वानकुलोऽपिविशांपते ॥ दर्शनीयतमोनृणामिदंवचनमब्रवीत् ॥ ४२ ॥ नकुलउवाच ॥ ॥ सुतेयंयज्ञसेनस्यद्यूतेऽस्मिन्धृतराष्ट्रजैः ॥ यैर्वाचःश्रावितारूक्षाःस्थितैर्दुर्योधनप्रिये ४३ तान्धार्तराष्ट्रान्दुर्वृत्तान्मुमूर्षून्का लनोदितान् ॥ गमयिष्यामिभूयिष्ठानहंवैवस्वतक्षयम् ४४ निदेशाद्धर्मराजस्यद्रौपद्याःपदवींचरन् ॥ निर्धार्तराष्ट्रांपृथिवींकर्ताऽस्मिनचिरादिव ४५ वैशंपायनउवाच ॥ ॥ एवंतेपुरुषव्याघ्राःसर्वेव्यायतबाहवः ॥ प्रतिज्ञाबहुलाःकृत्वाधृतराष्ट्रमुपागमन् ४६ ॥ इतिश्रीमहाभारतेसभापर्वणिअनुद्यूत पर्वणिपांडवप्रतिज्ञाकरणेसप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ आमंत्रयामिभरतांस्तथावृद्धंपितामहम् ॥ राजानंसोमदत्तंचमहा राजंचबाल्हिकम् १ द्रोणंकृपंनृपांश्चान्यानश्वत्थामानमेवच ॥ विदुरंधृतराष्ट्रंचधार्तराष्ट्रांश्चसर्वशः २ युयुत्सुंसंजयंचैवतथैवान्यान्सभासदः ॥ सर्वाना मंत्र्यगच्छामिद्रष्टाऽस्मिपुनरेत्यवः ३ ॥ वैशंपायनउवाच ॥ ॥ नचकिंचिदथोचुस्तंह्रियासन्नायुधिष्ठिरम् ॥ मनोभिरेवकल्याणंदध्युस्तेतस्यधीमतः ४ ॥ विदुरउवाच ॥ ॥ आर्यापृथाराजपुत्रीनारण्यंगंतुमर्हति ॥ सुकुमारीचवृद्धाचनित्यंचैवसुखोचिता ५ इहवत्स्यातिकल्याणीसत्कृताममवेश्मनि ॥ इतिपार्थाविजानीध्वमगदंवोऽस्तुसर्वशः ६ ॥ पांडवाऊचुः ॥ ॥ तथेत्युक्त्वाब्रुवन्सर्वेयथानोवदसेऽनघ ॥ त्वंपितृव्यःपितृसमोवयंचत्वत्परायणाः ७ यथा ऽऽज्ञापयसेविद्वंस्त्वंहिनःपरमोगुरुः ॥ यच्चान्यदपिकर्तव्यंतद्विधत्स्वमहामते ८ ॥ विदुरउवाच ॥ ॥ युधिष्ठिरविजानीहिममेदंभरतर्षभ ॥ नाधर्मेणाजि तःकश्चिद्व्यथतेवैपराजये ९ त्वंवैधर्मविजानीषेयुद्धेजेताधनंजयः ॥ हंताऽरीणांभीमसेनोनकुलस्त्वर्थसंग्रही १० संयंतासहदेवस्तुधौम्योब्रह्मविदुत्तमः ॥ धर्मार्थकुशलाचैवद्रौपदीधर्मचारिणी ११ अन्योन्यस्यप्रियाःसर्वेतथैवप्रियदर्शनाः ॥ परैरभेद्याःसंतुष्टाःकोवोनस्पृहयेदिह १२ एषवैसर्वकल्याणःसमाधि स्तवभारत ॥ नैनंशत्रुर्विषहतेशक्रेणापिसमोऽप्युत १३ हिमवत्यनुशिष्टोऽसिमेरुसावर्णिनापुरा ॥ द्वैपायनेनकृष्णेननगरेवारणावते १४ भृगुतुंगेचरामे णदृषद्वत्यांचशंभुना ॥ अश्रौषीरसितस्यापिमहर्षेरंजनंप्रति १५ कल्माषीतीरसंस्थस्यगतस्त्वंशिष्यतांभृगोः ॥ द्रष्टासदानारदस्तेधौम्यस्तेऽयंपुरोहि तः १६ माहासीःसांपरायेत्वंबुद्धिंतामृषिपूजिताम् ॥ पूरूरवसमैलंत्वंबुद्ध्याजयसिपांडव १७

द्रष्टाऽस्मिद्रक्ष्यामि ३ आसन्नाःनम्राः ४

५ अमदमारोग्यम् ६ । ७ । ८ ममंमतामिति शेषः ९ । १० । ११ । १२ समाधिर्मनःस्वास्थ्यकरोनियमः १३ । १४ । १५ । १६ माहासीर्मात्यज सांपरायेपरलोकविषये १७

विधारणेनियमने १८ विसर्गेदानेसंयमेवशीकरणे । पूर्वश्लोकाद्धृतमनाइत्यनुकृष्ययोज्यं । आत्मप्रदानंसर्वहितार्थं शरीरादेर्व्यापारणं । उपजीवनंजीवनहेतुत्वं । ऐंद्रेइतिलोकपालगुणान्पंचभूतगुणांश्च सर्वसंपत्तिहेतून्जयादीन्प्राप्नुहीत्यर्थः १९ । २० । २१ । २२ । २३ । २४ ॥ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेअष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ तस्मि

शक्त्याजयसिराज्ञोन्यानृषीन्धर्मोपसेवया ॥ ऐंद्रेजयेधृतमनायाम्येकोपविधारणे १८ तथाविसर्गेकौबेरेवारुणेचैवसंयमे ॥ आत्मप्रदानंसौम्यत्वमद्भ्यश्चैवोपजीवनम् १९ भूमेःक्षमाचतेजश्चसमग्रंसूर्यमंडलात् ॥ वायोर्बलंप्राप्नुहित्वंभूतेभ्यश्चात्मसंपदम् २० अगदंवोऽस्तुभद्रंवोद्रक्ष्यामिपुनरागतान् ॥ आपद्धर्मार्थकृच्छ्रेषुसर्वकार्येषुवापुनः २१ यथावत्प्रतिपद्येथाःकालेकालेयुधिष्ठिर ॥ आपृष्टोऽसीहकौंतेयस्वस्तिप्राप्नुहिभारत २२ कृतार्थंस्वस्तिमंतंत्वांद्रक्ष्यामःपुनरागतम् ॥ नहिवोवृजिनंकिंचिद्वेदकश्चित्पुराकृतम् २३ ॥ वैशंपायनउवाच ॥ एवमुक्तस्तथेत्युक्त्वापांडवःसत्यविक्रमः ॥ भीष्मद्रोणौनमस्कृत्यप्रातिष्ठतयुधिष्ठिरः २४ इतिश्रीमहाभारतेसभापर्वणिअनुद्यूतपर्वणियुधिष्ठिरवनप्रस्थानेऽष्टसप्ततितमोऽध्यायः ७८ ॥ ॥ वैशंपायनउवाच ॥ तस्मिन्संप्रस्थितेकृष्णापृथांप्राप्ययशस्विनीम् ॥ अपृच्छद्भृशदुःखार्तायाश्चान्यास्तत्रयोषितः १ यथार्हंवंदनाश्लेषान्कृत्वागंतुमियेषसा ॥ ततोनिनादःसुमहान्पांडवांतःपुरेऽभवत् २ कुंतीचभृशसंतप्ताद्रौपदींप्रेक्ष्यगच्छतीम् ॥ शोकविह्वलयावाचाकृच्छ्राद्वचनमब्रवीत् ३ वत्सेशोकोनतेकार्यःप्राप्येदंव्यसनंमहत् ॥ स्त्रीधर्माणामभिज्ञासिशीलाचारवतीतथा ४ नत्वांसंदेष्टुमर्हामिभर्तॄन्प्रतिशुचिस्मिते ॥ साध्वीगुणसमापन्नाभूषितंतेकुलद्वयम् ५ सभाग्याःकुरवश्चेमेयेनदग्धास्त्वयाऽनघे ॥ अरिष्टंव्रजपंथानंमदनुध्यानबृंहिता ६ भाविन्यर्थेहिसत्स्त्रीणांवैकृतंनोपजायते ॥ गुरुधर्माभिगुप्ताचश्रेयःक्षिप्रमवाप्स्यसि ७ सहदेवश्चमेपुत्रःसदाऽवेक्ष्योवनेवसन् ॥ यथेदंव्यसनंप्राप्यनायंसीदेन्महामतिः ८ तथेत्युक्त्वातुसादेवीस्रवन्नेत्रजलाविला ॥ शोणिताक्तैकवसनामुक्तकेशीविनिर्ययौ ९ तांक्रोशंतींपृथादुःखादनुवव्राजगच्छतीम् ॥ अथापश्यत्सुतान्सर्वान्हृताभरणवाससः १० रुरुचर्मावृततनून्ह्रियाकिंचिदवाङ्मुखान् ॥ परैःपरीतान्संहृष्टैःसुहृद्भिश्चानुशोचितान् ११ तदवस्थान्सुतान्सर्वानुपसृत्यातिवत्सला ॥ स्वजमानाऽवदच्छोकात्तत्तद्विलपतीबहु १२ ॥ कुंत्युवाच ॥ कथंसद्धर्मचारित्रान्वृत्तस्थितिविभूषितान् ॥ अक्षुद्रान्दृढभक्तांश्चदैवतेज्यापरान्सदा १३ व्यसनंवःसमभ्यागात्कोऽयंविधिविपर्ययः ॥ कस्यापध्यानजंचेदमागःपश्यामिवोधिया १४ स्यात्तुमद्भाग्यदोषोऽयंयाऽहंयुष्मानजीजनम् ॥ दुःखायासभुजोऽत्यर्थंयुक्तानप्युत्तमैर्गुणैः १५

न्निति १ । २ । ३ । ४ । । ५ अरिष्टंनिर्विघ्नं मदनुध्यानबृंहिता स्त्रीगुणेनपातिव्रत्येनयुक्ताऽपि मातृगुणेनवात्सल्येनापिवर्द्धिता । भर्तृषुभक्तिस्नेहवतीभवेतिभावः ६ । ७ । ८ शोणिताक्तैकवसनारजस्वला ९ । १० । ११ स्वजमानाआलिंगमाना १२ । १३ अपध्यानजंक्रोधजम् १४ । १५

ऋद्धिविनाकृताः संपद्विहीनाः वृद्धीतिपाठेऽपि सएवार्थः १६ शतशृंगात्पर्वतात् १७ पुत्राधिंपुत्रविषयांमनःपीडाम् १८ । १९ अभिसंधितावृता मह्यंमम २० भोपुत्रकाःवोयु
ष्मान्नविहास्ये २१ असुधर्मेप्राणधारणेअंतवति विनाशवति प्रमादतः पांडोरिवममांतर्किंनुनैवविहितः २२ । २३ अनादिनिधनमिति द्वारकावासिन्युपाधिमांते उत्पत्तिनाशयोर्निरा
करणम् । अनुपाधौकारणोपाधौवातयोरप्रसक्तेः । अतएवोत्पत्तौचतुर्भुजंरूपमेववसुदेवेनदृष्टं । यत्तु'शरीरंवासुदेवस्यरामस्यचमहात्मनः । अर्जुनोदाहयामासपुरुषैराप्तकारिभिः'इति

कथंवत्स्यथदुर्गेषुवनेऋद्धिविनाकृताः ॥ वीर्यसत्त्वबलोत्साहतेजोभिरकृशाःकृशाः १६ यद्येतदेवमज्ञास्यंवनेवासोहिवोध्रुवम् ॥ शतशृंगान्मृतेपांडौनाग
मिष्यंगजाह्वयम् १७ धन्यंवःपितरंमन्येतपोमेधान्वितंतथा ॥ यःपुत्राधिमसंप्राप्यस्वर्गेच्छामकरोत्प्रियाम् १८ धन्यांचातींद्रियज्ञानामिमांप्राप्तांपरांग
तिम् ॥ मन्येतुमाद्रींधर्मज्ञांकल्याणींसर्वथैवतु १९ रत्याम्त्याचगत्याचययाऽहमभिसंधिता ॥ जीवितप्रियतांमह्यंधिङ्मांसंक्लेशभागिनीम् २० पुत्रकानावि
हास्येवःकृच्छ्रलब्धान्प्रियान्सतः ॥ साऽहंयास्यामिहिवनंहाकृष्णेकिंजहासिमाम् २१ अंतवत्यसुधर्मेऽस्मिन्धात्राकिंनुप्रमादतः ॥ ममांतोनैवविहितस्ते
नायुर्नजहातिमाम् २२ हाकृष्णद्वारकावासिन्क्वासिसंकर्षणानुज ॥ कस्मान्नत्रायसेदुःखान्मांचेमांश्चनरोत्तमान् २३ अनादिनिधनंयेत्वामनुध्यायंतिवै
नराः ॥ तांस्त्वंपासीत्ययंवादःसगतोव्यर्थतांकथम् २४ इमेसद्धर्ममाहात्म्ययशोवीर्यानुवर्तिनः ॥ नार्हंतिव्यसनंभोक्तुंनन्वेषांक्रियतांदया २५ सेयंनी
त्यर्थविज्ञेषुभीष्मद्रोणकृपादिषु ॥ स्थितेषुकुलनाथेषुकथमापदुपागता २६ हापांडोहामहाराजक्वासिकिंसमुपेक्षसे ॥ पुत्रान्विवास्यतःसाधूनरि
भिर्द्यूतनिर्जितान् २७ सहदेवनिवर्तस्वननुत्वमसिमेप्रियः ॥ शरीरादपिमाद्रेयमांमात्याक्षीःकुपुत्रवत् २८ व्रजंतुभ्रातरस्तेऽमीयदिसत्याभिसंधिनः ॥ म
त्परित्राणजंधर्ममिहैवत्वमवाप्नुहि २९ ॥ वैशंपायनउवाच ॥ एवंविलपतींकुंतीमभिवाद्यप्रणम्यच ॥ पांडवाविगतानंदावनायैवप्रवव्रजुः ३० विदुरश्चा
पितामार्तांकुंतीमाश्वास्यहेतुभिः ॥ प्रावेशयद्गृहंक्षत्तास्वयमार्ततरःशनैः ३१ धार्तराष्ट्रस्त्रियस्ताश्चनिखिलेनोपलभ्यतत् ॥ गमनंपरिकर्षंचकृष्णाया
द्यूतमंडले ३२ रुरुदुःसुस्वनंसर्वाविनिंदंत्यःकुरून्भृशम् ॥ दध्युश्चसुचिरंकालंकरासक्तमुखांबुजाः ३३ राजाचधृतराष्ट्रस्तुपुत्राणामनयंतदा ॥ ध्या
यन्नुद्विग्नहृदयोनशांतिमधिजग्मिवान् ३४ सचिंतयन्ननेकाग्रःशोकव्याकुलचेतनः ॥ क्षत्तुःसंप्रेषयामासशीघ्रमागम्यतामिति ३५ ततोजगामविदुरोधृत
राष्ट्रनिवेशनम् ॥ तंपर्यपृच्छत्संविग्नोधृतराष्ट्रोजनाधिपः ३६ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिअनुद्यूतपर्वणिद्रौपदीकुंतीसंवादेएकोनाशीतित
मोऽध्यायः ७९ ॥ ॥ ७९ ॥ ॥ वैशंपायनउवाच ॥ तमागतमथोराजाविदुरंदीर्घदर्शिनम् ॥ साशंकइवपप्रच्छधृतराष्ट्रोंऽबिकासुतः १

शरीरदाहवचनं तद्वनुत्पत्तिवचनाविरोधात्तिरोभानमात्राभिप्रायम् २४ । २५ । २६ । २७ । २८ । २९ । ३० हेतुभिर्दैवप्राबल्यादिप्रतिपादकैर्वचनैः ३१ । ३२ । ३३ । ३४ अनेका
ग्रोव्याकुलचित्तः ३५ । ३६ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणिनैलकंठीयेभारतभावदीपेएकोनाशीतितमोऽध्यायः ॥ ७९ ॥ ॥ ७९ ॥ ॥ तमागतमिति १

२ शंसकथय ३ । ४ । ५ । ६ । ७ याम्यानिदक्षदैवतानि ८ । ९ । १० घृणीदयावान् ११ । १२ । १३ । १४ । १५ असक्ताः परस्परमलग्नाः १६ । १७ । १८ । १९

धृतराष्ट्रउवाच ॥ ॥ कथंगच्छतिकौंतेयोधर्मपुत्रोयुधिष्ठिरः ॥ भीमसेनःसव्यसाचीमाद्रीपुत्रौचपांडवौ २ धौम्यश्चैवकथंक्षत्तर्द्रौपदीचयशस्विनी ॥ श्रोतुमिच्छाम्यहंसर्वंतेषांशंसविचेष्टितम् ३ ॥ विदुरउवाच ॥ वस्त्रेणसंवृत्यमुखंकुंतीपुत्रोयुधिष्ठिरः ॥ बाहूविशालौसंपश्यन्भीमोगच्छतिपांडवः ४ सिकतावपन्सव्यसाचीराजानमनुगच्छति ॥ माद्रीपुत्रःसहदेवोमुखमालिप्यगच्छति ५ पांसूपलिप्तसर्वांगोनकुलश्चित्तविह्वलः ॥ दर्शनीयतमोलोकेराजानमनुगच्छति ६ कृष्णातुकेशैःप्रच्छाद्यमुखमायतलोचना ॥ दर्शनीयाप्ररुदतीराजानमनुगच्छाति ७ धौम्योरौद्राणिसामानियाम्यानिचविशांपते ॥ गायन्गच्छतिमार्गेषुकुशानादायपाणिना ८ ॥ धृतराष्ट्रउवाच ॥ ॥ विविधानीहरूपाणिकृत्वागच्छंतिपांडवाः ॥ तन्ममाचक्ष्वविदुरकस्मादेवंव्रजंतिते ९ ॥ विदुरउवाच ॥ निकृतस्यापितेपुत्रैर्हृतेराज्येधनेषुच ॥ नधर्माच्चलतेबुद्धिर्धर्मराजस्यधीमतः १० योऽसौराजाघृणीनित्यंधार्तराष्ट्रेषुभारत ॥ निकृत्याभ्रंशितःक्रोधान्नोन्मीलयतिलोचने ११ नाऽहंजनंनिर्दहेयंदृष्ट्वाघोरेणचक्षुषा ॥ सपिधायमुखंराजातस्माद्गच्छतिपांडवः १२ यथाचभीमोव्रजतितन्मेनिगदतःशृणु ॥ बाह्वोर्बलेनास्तिसमोममेतिभरतर्षभ १३ बाहूविशालौकृत्वाऽसौतेनभीमोऽपिगच्छति ॥ बाहूविदर्शयन्राजन्बाहुद्रविणदर्पितः १४ चिकीर्षन्कर्मशत्रुभ्योबाहुद्रव्यानुरूपतः ॥ प्रदिशन्शरसंपातान्कुंतीपुत्रोऽर्जुनस्तदा १५ सिकतावपन्सव्यसाचीराजानमनुगच्छति ॥ असक्ताःसिकतास्तस्ययथासंप्रतिभारत ॥ असक्तंशरवर्षाणितथामोक्ष्यतिशत्रुषु १६ नमेकश्चिद्विजानीयान्मुखमद्येतिभारत ॥ मुखमालिप्यतेनासौसहदेवोऽपिगच्छाति १७ नाहंमनांस्याददेयंमार्गेस्त्रीणामितिप्रभो ॥ पांसूपलिप्तसर्वांगोनकुलस्तेनगच्छति १८ एकवस्त्राप्ररुदतीमुक्तकेशीरजस्वला ॥ शोणितेनाक्तवस्त्रनाद्रौपदीवाक्यमब्रवीत् १९ यत्कृतेऽहामिदंप्राप्तातेषांवर्षेचतुर्दशे ॥ हतपत्योहतसुताहतबंधुजनप्रियाः २० बहुशोणितदिग्धांग्योमुक्तकेश्योरजस्वलाः ॥ एवंकृतोदकाभार्याःप्रवेक्ष्यंतिगजाह्वयम् २१ कृत्वातुनैर्ऋतान्दर्भान्धीरोधौम्यःपुरोहितः ॥ समानिगायन्याम्यानिपुरतोयातिभारत २२ हतेषुभरतेष्वाजौकुरूणांगुरवस्तदा ॥ एवंसामानिगास्यंतीत्युक्त्वाधौम्योऽपिगच्छाति २३ हाहागच्छंतिनोनाथाःसामवेक्षध्वमीदृशं ॥ अहोधिक्कुरुवृद्धानांबालानामिवचेष्टितं २४ राष्ट्रेभ्यःपांडुदायादाँल्लोभान्निर्वासयंतिये ॥ अनाथाःस्मवयंसर्वेवियुक्ताःपांडुनंदनैः २५ दुर्विनीतेषुलुब्धेषुकाप्रीतिःकौरवेषुनः ॥ इतिपौराःसुदुःखार्त्ताःक्रोशंतिस्मपुनःपुनः २६ एवमाकारलिंगैस्तेव्यवसायंमनोगतम् ॥ कथयंतश्चकौंतेयावनंजग्मुर्मनस्विनः २७ एवंतेषुनराग्र्येषुनिर्यत्सुगजसाह्वयात् ॥ अनभ्रेविद्युतश्चासन्भूमिश्चसमकंपत २८

हतपत्योहतभर्तृकाः २० । २१ नैर्ऋतान्निर्ऋतिकोणगान् २२ । २३ । २४ । २५ । २६ व्यवसायंनिश्चयम् २७ निर्यत्सुगच्छत्सु २८

२९ प्रत्याहरंति नगरसमीपेप्रेतमांसास्थ्यादन्यानयंति प्रतिकूलंभषंतिवा ३० । ३१ । ३२ । ३३ । ३४ ब्राह्मींश्रियमणिमाद्यैश्वर्यं सर्वेषुलोकेषुकामचारम् ३५ द्वीपमाश्रयम् ३६ ३७ । ३८ सराजकान्राजसमूहसहितान् ३९ । ४० । ४१ । ४२ । ४३ । ४४ देवदत्तोदेवैर्दत्तःसाध्वसोभयंमूर्तिमत् ४५ । ४६ संगमःसंग्रामःसृष्टप्राणः प्राणत्यागेनापीत्यर्थः

राहुरग्रसदादित्यमपर्वणिविशांपते ॥ उल्काचाप्यपसव्येनपुरंकृत्वाव्यशीर्यत २९ प्रत्याहरंतिक्रव्यादागृध्रगोमायुवायसाः ॥ देवायतनचैत्येषुप्राकाराट्टालकेषुच ३० एवमेतेमहोत्पाताःप्रादुरासन्दुरासदाः ॥ भरतानामभावायराजन्दुर्मंत्रितेतव ३१ ॥ वैशंपायनउवाच ॥ एवंप्रवदतोरेवतयोस्तत्राविशांपते ॥ धृतराष्ट्रस्यराज्ञश्चविदुरस्यचधीमतः ३२ नारदश्चसभामध्येकुरूणामग्रतःस्थितः ॥ महर्षिभिःपरिवृतोरौद्रंवाक्यमुवाचह ३३ इतश्चतुर्दशेवर्षेविनंक्ष्यंतीहकौरवाः ॥ दुर्योधनापराधेनभीमार्जुनबलेनच ३४ इत्युक्त्वादिवमाक्रम्याक्षिप्रमंतरधीयत ॥ ब्राह्मींश्रियंसुविपुलांबिभ्रद्देवर्षिसत्तमः ३५ ततोदुर्योधनःकर्णःशकुनिश्चापिसौबलः ॥ द्रोणंद्वीपममन्यंतराज्यंचास्मैन्यवेदयन् ३६ अथाब्रवीत्ततोद्रोणोदुर्योधनममर्षणम् ॥ दुःशासनंचकर्णंचसर्वानेवचभारतान् ३७ अवध्यान्पांडवान्प्राहुर्देवपुत्रान्द्विजातयः ॥ अहंवैशरणंप्राप्तान्वर्तमानोयथाबलम् ३८ गंतासर्वात्मनाभक्त्याधार्तराष्ट्रान्सराजकान् ॥ नोत्सहेयंपरित्यक्तुंदैवंहिबलवत्तरम् ३९ धर्मतःपांडुपुत्रावैवनंगच्छंतिनिर्जिताः ॥ तेचद्वादशवर्षाणिवनेवत्स्यंतिपांडवाः ४० चरितब्रह्मचर्याश्चक्रोधामर्षवशानुगाः ॥ वैरंनिर्यातयिष्यंतिमहद्दुःखायपांडवाः ४१ मयाचभ्रंशितोराजन्द्रुपदःसखिविग्रहे ॥ पुत्रार्थमयजद्राजावधायममभारत ४२ याजोपयाजतपसापुत्रंलेभेसपावकात् ॥ धृष्टद्युम्नंद्रौपदींचवेदीमध्यात्सुमध्यमाम् ४३ धृष्टद्युम्नस्तुपार्थानांस्यालःसंबंधतोमतः ॥ पांडवानांप्रियरतस्तस्मान्मांभयमाविशत् ४४ ज्वालावर्णोदेवदत्तोधनुष्मान्कवचीशरी ॥ मर्त्यधर्मतयातस्मादद्यमेसाध्वसोमहान् ४५ गतोहिपक्षतांतेषांपार्षतःपरवीरहा ॥ रथातिरथसंख्यायांयोग्रणीरर्जुनोयुवा ४६ सृष्टप्राणोभृशतरंतेनचेत्संगमोमम ॥ किमन्यद्दुःखमधिकंपरमंभुविकौरवाः ४७ धृष्टद्युम्नोद्रोणमृत्युरितिविप्रथितंवचः ॥ मद्वधायश्रुतोऽप्येषलोकेचाप्यतिविश्रुतः ४८ सोऽयंनूनमनुप्राप्तस्त्वत्कृतेकालउत्तमः ॥ त्वरितंकुरुतश्रेयोनैतदेतावताकृतम् ४९ मुहूर्तंसुखमेवैतत्तालच्छायेवहैमनी ॥ यजध्वंचमहायज्ञैर्भोगानश्नीतदत्तच ५० इतश्चतुर्दशेवर्षेमहत्प्राप्स्यथवैशसम् ॥ द्रोणस्यवचनंश्रुत्वाधृतराष्ट्रोऽब्रवीदिदम् ५१ सम्यगाहगुरुःक्षत्तरुपावर्तयपांडवान् ॥ यदितेननिवर्तंतेसत्कृतायांतुपांडवाः ॥ सशस्त्ररथपादाताभोगवंतश्चपुत्रकाः ५२ ॥ ॥ इतिश्रीमहाभारतेसभापर्वणि अनुद्यूतपर्वणि विदुरधृतराष्ट्रद्रोणवाक्ये अशीतितमोऽध्यायः ॥ ८० ॥ ॥ ७ ॥

परममनंवम् ४७ । ४८ नैतदेतावताकृतंएतच्छ्रेयःकल्याणं नैतावतापांडवनिर्वासनमात्रेणकृतंभवति ४९ हैमनी हेमंतसंबंधिनी ५० वैशसंनाशम् ५१ । ५२ ॥ ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेअशीतितमोऽध्यायः ॥ ८० ॥

वनंगतेष्विति १ । २ । ३ युद्धशौंडैर्युद्धेदक्षैः ४ । ५ ६ । ७ अवाचीनानिविपरीतानि ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १९ शेषंहतावशेषंकतिपयानामेकस्यवा

॥ वैशंपायनउवाच ॥ वनंगतेषुपार्थेषुनिर्जितेषुदुरोदरे ॥ धृतराष्ट्रंमहाराजतदाचिंतासमाविशत् १ तंचिंतयानमासीनंधृतराष्ट्रंजनेश्वरम् ॥ निःश्व संतमनेकाग्रमितिहोवाचसंजयः २ ॥ संजयउवाच ॥ अवाप्यवसुसंपूर्णांवसुधांवसुधाधिप ॥ प्रव्राज्यपांडवान्राज्याद्राजन्किमनुशोचसि ३ ॥ धृतरा ष्ट्रउवाच ॥ अशोच्यत्वंकुतस्तेषांयेषांवैरंभविष्यति ॥ पांडवैर्युद्धशौंडैर्हिबलवद्भिर्महारथैः ४ ॥ संजयउवाच ॥ तवेदंसुकृतंराजन्महद्वैरमुपस्थितम् ॥ विनाशोयेनलोकस्यसानुबंधोभविष्यति ५ वार्यमाणोहिभीष्मेणद्रोणेनविदुरेणच ॥ पांडवानांप्रियांभार्यांद्रौपदींधर्मचारिणीम् ६ प्राहिणोदानयेहेतिपु त्रोदुर्योधनस्तव ॥ सूतपुत्रंसुमंदात्मानिर्लज्जःप्रातिकामिनम् ७ यस्मैदेवाःप्रयच्छंतिपुरुषायपराभवम् ॥ बुद्धिंतस्यापकर्षंतिसोऽवाचीनानिपश्यति ८ बुद्धौकलुषभूतायांविनाशेसमुपस्थिते ॥ अनयोनयसंकाशोहृदयान्नापसर्पति ९ अनर्थाश्चार्थरूपेणअर्थाश्चानर्थरूपिणः ॥ उत्तिष्ठंतिविनाशायनूनंत च्चास्यरोचते १० नकालोदंडमुद्यम्यशिरःकृंततिकस्यचित् ॥ कालस्यबलमेतावद्विपरीतार्थदर्शनम् ११ आसादितमिदंघोरंतुमुलंलोमहर्षणम् ॥ पांचा लीमपकर्षद्भिःसभामध्येतपस्विनीम् १२ अयोनिजांरूपवतींकुलेजातांविभावसोः ॥ कोनुतांसर्वधर्मज्ञांपरिभूययशस्विनीम् १३ पर्यानयेत्सभामध्येविना दुर्द्यूतदेविनम् ॥ स्त्रीधर्मिणीवरारोहाशोणितेनपरिप्लुता १४ एकवस्त्राऽथपांचालीपांडवानभ्यवैक्षत ॥ हृतस्वान्हृतराज्यांश्चहृतवस्त्रान्हृतश्रियः १५ विहीनान्सर्वकामेभ्योदासभावमुपागतान् ॥ धर्मपाशपरिक्षिप्तानशक्तानिवविक्रमे १६ क्रुद्धांचानर्हतींकृष्णांदुःखितांकुरुसंसदि ॥ दुर्योधनश्चकर्णश्चकटुका न्यभ्यभाषताम् १७ इतिसर्वमिदंराजन्नाकुलंप्रतिभातिमे ॥ धृतराष्ट्रउवाच ॥ तस्याःकृपणचक्षुर्भ्यांप्रदह्येतापिमेदिनी १८ अपिशेषंभवेदद्यपुत्रा णांममसंजय ॥ भरतानांस्त्रियःसर्वागांधार्यासहसंगताः १९ प्राक्रोशन्भैरवंतत्रदृष्ट्वाकृष्णांसभागताम् ॥ धर्मिष्ठांधर्मपत्नींचरूपयौवनशालिनीम् २० प्र जाभिःसहसंगम्यह्यनुशोचंतिनित्यशः ॥ अग्निहोत्राणिसायाह्नेनचाहूयंतसर्वशः २१ ब्राह्मणाःकुपिताश्चासन्द्रौपद्याःपरिकर्षणे ॥ आसीन्निष्ठानकोघो रोनिर्घातश्चमहानभूत् २२ दिवउल्काश्चापतंतराहुश्चार्कमुपाग्रसत् ॥ अपर्वणिमहाघोरंप्रजानांजनयन्भयम् २३ तथैवरथशालासुप्रादुरासीद्धुताशनः ॥ ध्वजाश्चापिव्यशीर्यंतभरतानामभूतये २४ दुर्योधनस्याग्निहोत्रेप्राक्रोशन्भैरवंशिवाः ॥ तास्तदाप्रत्यभाषंतरासभाःसर्वतोदिशः २५ प्रातिष्ठततोभी ष्मोद्रोणेनसहसंजय ॥ कृपश्चसोमदत्तश्चबाल्हीकश्चमहामनाः २६

जीवनंभविष्यतीत्यर्थः १९ । २० । २१ निष्ठानकःप्रलयदुंदुभिश्रंडवातइत्यर्थः । निष्टानकइतिपाठेऽपिसएवार्थः निर्घातोवज्रशब्दः २२ । २३ । २४ शिवाः शृगालाः २५ । २६

२६ अनुज्ञासिषमनुज्ञातवान् अडभावआर्षः पाठांतिरतुसुगमम् २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ ॥ ॥ इति श्रीमत्पदवाक्यमाणमर्यादाधुरंधरचतुर्धरवंशावतंसश्रीगोविंदसूरिसूनुश्रीनीलकंठविरचिते भारतभावदीपे सभापर्वार्थप्रकाशे एकाशीतितमोऽध्यायः ॥ ८१ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥

ततोऽहमब्रुवंतत्रविदुरेणप्रचोदितः ॥ वरंददानिकृष्णायैकांक्षितंयद्यदिच्छाति २७ अवृणोत्तत्रपांचालीपांडवानामदासताम् ॥ सरथान्सधनुष्कांश्चाप्यनुज्ञासिषमप्यहम् २८ अथाब्रवीन्महाप्राज्ञोविदुरःसर्वधर्मवित् ॥ एतदंतास्तुभरतायद्वःकृष्णासभांगता २९ येषापांचालराजस्यसुतासाश्रीरनुत्तमा ॥ पांचालीपांडवानेतान्दैवसृष्टोपसर्पति ३० तस्याःपार्थाःपरिक्लेशंनक्षंस्यंतेह्यमर्षणाः ॥ वृष्णयोवामहेष्वासाःपंचालावामहारथाः ३१ तेनसत्याभिसंधेनवासुदेवेनरक्षिताः ॥ आगमिष्यतिबीभत्सुःपंचालैःपरिवारितः ३२ तेषांमध्येमहेष्वासोभीमसेनोमहाबलः ॥ आगमिष्यतिधुन्वानोगदांदंडमिवांतकः ३३ ततोगांडीवनिर्घोषंश्रुत्वापार्थस्यधीमतः ॥ गदावेगंचभीमस्यनालंसोढुंनराधिपाः ३४ तत्रमेरोचतेनित्यंपार्थैःसामनविग्रहः ॥ कुरुभ्योहिसदामन्येपांडवान्बलवत्तरान् ३५ तथाहिबलवान्राजाजरासंधोमहाद्युतिः ॥ बाहुप्रहरणेनैवभीमेननिहतोयुधि ३६ तस्यतेशमएवास्तुपांडवैर्भरतर्षभ ॥ उभयोःपक्षयोर्युक्तंक्रियतामविशंकया ३७ एवंकृतेमहाराजपरंश्रेयस्त्वमाप्स्यसि ॥ एवंगावल्गणेक्षत्ताधर्मार्थसहितंवचः ३८ उक्तवान्नगृहीतंवैमयापुत्रहितैषिणा ३९ ॥ इतिश्रीमहाभारतेशतसाहस्र्यांसंहितायांवैयासक्यांसभापर्वणिअनुद्यूतपर्वणिधृतराष्ट्रसंजयसंवादेएकाशीतितमोऽध्यायः ॥ ८१ ॥ ॥ समाप्तमनुद्यूतपर्व ॥ सभापर्वसमाप्तम् ॥ एतत्सर्वंसभापर्वमयाख्यातंमहर्षयः ॥ अध्यायाःसप्ततिर्ज्ञेयास्तथाद्वौचात्रसंख्यया ॥ १ ॥ श्लोकानांद्विसहस्रेतुसप्तश्लोकशतानिच ॥ श्लोकाश्चैकादशतथापर्वण्यस्मिन्प्रकीर्तिताः ॥ २ ॥ अस्यानंतरमारण्यकंपर्वभविष्यति तस्यायमाद्यःश्लोकः ॥ जनमेजयउवाच ॥ एवंद्यूतजिताःपार्थाःकोपिताश्चदुरात्मभिः ॥ धार्त्तराष्ट्रैःसहामात्यैर्निकृत्याद्विजसत्तम ॥ १ ॥ अथास्मिन्पर्वणिवृत्तांताः ॥ मयाभिगमनम् ॥ सभानिर्माणम् ॥ सभाप्रवेशः ॥ नारदागमनम् ॥ कच्चित्प्रश्नः ॥ ॥ देवसभावर्णनम् ॥ राजसूयमंत्रः ॥ जरासंधोत्पत्तिः ॥ जरासंधवधः ॥ राजमोक्षणम् ॥ दिग्विजयः ॥ राजसूयः ॥ राज्ञामागमनम् ॥ बल्याहरणम् ॥ ॥ राज्ञांनियोगः ॥ अर्घाभिहरणम् ॥ शिशुपालकोपः ॥ शिशुपालवधः ॥ यज्ञसमाप्तिः ॥ वासुदेवगमनम् ॥ दुर्योधननिवासः ॥ सभायांदुर्योधनावहासः ॥ दुर्योधनामर्षः ॥ दुर्योधनचिंता ॥ धृतराष्ट्रमंत्रः ॥ पांडवाह्वानम् ॥ पांडवपराजयः ॥ द्यूतेनराज्यहरणम् ॥ द्रौपदीप्रकर्षणम् ॥ द्रौपदीवरप्रदानम् ॥ अनुद्यूतम् ॥ पांडवपराजयः ॥ वनप्रस्थानमिति ॥ ॥ श्रीकृष्णार्पणमस्तु ॥

॥ अत्रापिपूर्वपूर्वलिपिकरप्रमादादिनाऽध्यायाधिक्यंश्लोकाधिक्यंचदृश्यते परंकुत्राधिक्यंजातंतन्निश्चयोनभवति ॥

॥ श्रीगणेशायनमः ॥ श्रीमल्लारयेनमः ॥ श्रीमद्गोपालमानम्यप्राचीनाचार्यवर्त्मना ॥ विराटपर्वमद्योतीभावदीपोवितन्यते ॥ १ ॥ तत्रपूर्वस्मिन्पर्वणि'दिष्ट्याथापंचसुरक्तोऽसिदिष्ट्याथातेषट्पदी जिता। द्वेपूर्वेमध्यमेद्वेचद्वेचांत्येसांपरायिके'। इति'शांतोदांतउपरतस्तितिक्षुःसमाहितोभूत्वाऽऽत्मन्येवात्मानंपश्यति' इतिश्रुतिप्रसिद्धेष्वात्मदर्शनसाधनेषु शमादिषुरक्तः षडूर्मिलक्षणांषट्पदीं जातमात्रस्याशनापिपासे प्ररूढस्यशोकमोहौ वृद्धस्यजरामृत्यूइति लोके।'योऽशनायापिपासेशोकंमोहंजरांमृत्युमत्येति'इतिवेदेचप्रसिद्धांजयतीत्युक्तं तांजितवतात्वव्यक्तलिंगेनस्थेयं। आरब्धं तिक्यांकृतकृत्यतायांतु व्यक्तलिंगेनापिभाव्यमित्येतत्पांडवाचरणप्रदर्शनेनदर्शयितुंविराटपर्वारभते। तत्र'वर्षंत्रयोदशमिदंमत्प्रसादात्कुरूद्वहाः।विराटनगरेगूढाअविज्ञाताश्चरिष्यथ'इतिप्राक्

॥ श्रीगणेशायनमः ॥ श्रीवेदव्यासायनमः ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींचैवततोजयमुदीरयेत् १ ॥ जनमेजयउवाच ॥ कथं विराटनगरेममपूर्वपितामहाः ॥ अज्ञातवासमुषितादुर्योधनभयार्दिताः २ पतिव्रतामहाभागासततंब्रह्मवादिनी ॥ द्रौपदीचकथंब्रह्मन्नज्ञातादुःखिताऽवसत् ३ ॥ वैशंपायनउवाच ॥ यथाविराटनगरेतवपूर्वपितामहाः ॥ अज्ञातवासमुषितास्तच्छृणुष्वनराधिप ४ तथासतुवराँल्लब्ध्वाधर्मोधर्मभृतांवरः ॥ गत्वाऽऽश्रमंब्राह्मणेभ्यआचख्यौसर्वमेवतत् ५ कथयित्वातुतत्सर्वंब्राह्मणेभ्योयुधिष्ठिरः ॥ अरणीसहितंतस्मैब्राह्मणायन्यवेदयत् ६ ततोयुधिष्ठिरोराजाधर्मपुत्रोमहामनाः ॥ संनिवर्त्यानुजान्सर्वानितिहोवाचभारत ७ द्वादशेमानिवर्षाणिराज्यविप्रोषितावयम् ॥ त्रयोदशोऽयंसंप्राप्तःकृच्छ्रात्परमदुर्वसः ८ ससाधुकौंतेयइतोवासमर्जुनरोचय ॥ संवत्सरमिमंयत्रवसेमाविदिताःपरैः ९ ॥ अर्जुनउवाच ॥ तस्यैववरदानेनधर्मस्यमनुजाधिप ॥ अज्ञाताविचरिष्यामोनराणांनात्रसंशयः १० तत्रवासायराष्ट्राणिकीर्तयिष्यामिकानिचित् ॥ रमणीयानिगुप्तानितेषांकिंचित्स्मरोचय ११ संतिरम्याजनपदाबह्वन्नाःपरितःकुरून् ॥ पंचालाश्चेदिमत्स्याश्चशूरसेनाःपटच्चराः १२ दशार्णानवराष्ट्राश्चमल्लाःशाल्वायुगंधराः ॥ कुंतिराष्ट्रंचविपुलंसुराष्ट्रावंतयस्तथा १३ एतेषांकतमोराजन्निवासस्तवरोचते ॥ यत्रवत्स्यामहेराजन्संवत्सरमिमंवयम् १४ ॥ युधिष्ठिरउवाच ॥ श्रुतमेतन्महाबाहोयथासभगवान्प्रभुः ॥ अब्रवीत्सर्वभूतेशस्तत्तथानतदन्यथा १५ अवश्यंत्वेववासार्थंरमणीयंशिवंसुखम् ॥ संमंत्र्यसहितैःसर्वैर्वस्तव्यमकुतोभयैः १६ मत्स्योविराटोबलवानभिरक्तोऽथपांडवान् ॥ धर्मशीलोवदान्यश्चवृद्धश्चसततंप्रियः १७ विराटनगरेतातसंवत्सरमिमंवयम् ॥ कुर्वंतस्तस्यकर्माणिविहरिष्यामभारत १८

८६

थितधर्मवाक्यार्थमनुवदन् जनमेजयउवाच कथमिति पूर्वःपितापरीक्षित् तस्यपितामहाः अज्ञातवासंयथास्यात्तथाकथंउषिताः वासंकृतवंतः। समूलघातंन्यवधीदितिवत्कषादित्वाद्वसतेरनुप्रयोगः वासमितिणमुलंतम् २ ब्रह्मवादिनीश्रीकृष्णकीर्तनशीला ३। ४। ५ अरणीसहितंअरण्योर्मिथुनं। अरणीसहितंमंथमितिपाठे मंथोऽग्निनिर्मथनदंडस्तमरणीभ्यांसहितं ब्राह्मणायन्यवेदयदित्यर्थः ६ संनिवर्त्यएकत्रआनीय। अत्रवर्ततिर्गत्यर्थः नचपुनरावर्ततइत्यादिप्रयोगदर्शनात्। संनिकृष्येतिपाठेऽपिसएवार्थः ७ अयंसंवत्सरः संवत्सरमिमामितिवाक्यशेषात् ८ वत्स्यामइतिपाठेअविदिताइतिच्छेदः ९ नराणामज्ञाताइतिसंबंधः १०। ११। १२। १३। १४ प्रभुर्धर्मः।'यद्यपिस्वेनरूपेणचरिष्यथमहीमिमां ॥ नवोविज्ञास्यतेकश्चित्त्रिषुलोकेषुकश्चन'इत्यब्रवीत् १५ यद्यप्येवंतथापि कंचित्प्रच्छन्नतयावस्तव्यमेवेत्याह अवश्यंत्वेवेति १६। १७। १८

वक्ष्यामहेनिर्वोढुंशक्ष्यामहेइति वहेरिदंरूपं प्रवृत्तप्रत्येकमितिशेषः १९ । २० । २१ । २२ । २३ सभास्तारःसभ्यः । 'सभासदःसभास्तारा:'इत्यमरः । कंकोनामतः ।'कंकइछ्मद्विजेख्यातोलो हएष्ठकृतांतयोः'इतिविश्वकोशात् । स्वस्यकृतांतसूनुत्वेनआत्मावैपुत्रनामासीतिश्रुतेस्तदनन्यत्वात् तन्नाम्नोधारणेमिथ्यावादित्वंनभविष्यतीतिभावः । मताक्षःबृहदश्वात्तज्ञातअक्षतत्त्वः प्रियदेवनःक्रीडाप्रियः २४ दांतान्गजदंतमयान् । दंतःपर्वतसानुतत्सदृशान्वा शारीन् निर्वर्त्स्यामिचालयिष्यामि । 'दंतःसानुनिकथ्यते'इतिविश्वः । तानेवचतुर्वर्णानाह वैदूर्यान्हरितमणिमयान् नीलान् । कांचनान् सौवर्णान्पीतान् । ज्योतींषिचरसाश्च ज्योतीरसास्तैःसह ज्योतिःशब्देनात्रलोहितंलक्ष्यते । 'यदग्नेरोहितंरूपंतेजसस्तद्रूपम्'इतिश्रुतेः ज्योतीरूपाःलोहिताः । रसः

यानियानिचकर्माणितस्यवक्ष्यामहेवयम् ॥ आसाद्यमत्स्यंतत्कर्मप्रवृत्तकुरुनंदनाः १९ ॥ अर्जुनउवाच ॥ नरदेवकथंतस्यराष्ट्रेकर्मकरिष्यसि ॥ विराटनगरेसाधोरंस्यसेकेनकर्मणा २० मृदुर्वदान्योह्रीमांश्चधार्मिकःसत्यविक्रमः ॥ राजंस्त्वमापदाऽऽक्लिष्टःकिंकरिष्यसिपांडव २१ नदुःखमुचितंकिंचिद्राजावेदयथाजनः ॥ सइमामापदंप्राप्यकथंघोरांतरिष्यसि २२ ॥ युधिष्ठिरउवाच ॥ शृणुध्वंयत्करिष्यामिकर्मवैकुरुनंदनाः ॥ विराटमनुसंप्राप्यराजानंपुरुषर्षभाः २३ सभास्तारोभविष्यामितस्यराज्ञोमहात्मनः ॥ कंकोनामद्विजोभूत्वामताक्षःप्रियदेवनः २४ वैदूर्यान्कांचनान्दांतान्फलैर्ज्योतीरसैःसह ॥ कृष्णाक्षाँल्लोहिताक्षांश्चनिर्वर्त्स्यामिमनोरमान् २५ विराटराजंरमयन्सामात्यंसहबांधवम् ॥ नचमांवेत्स्यतेकश्चित्तोषयिष्येचतंनृपम् २६ आसंयुधिष्ठिरस्याहंपुराप्राणसमःसखा ॥ इतिवक्ष्यामिराजानंयदिमांसोऽनुयोक्ष्यते २७ इत्येतद्वोमयाख्यातंविहरिष्याम्यहंयथा ॥ वृकोदरविराटेत्वंरंस्यसेकेनहेतुना २८ ॥ इतिश्रीमहाभारतेविराटपर्वणिपांडवप्रवेशपर्वणियुधिष्ठिरादिमंत्रणेप्रथमोऽध्यायः ॥ १ ॥ ॥ भीमसेनउवाच ॥ पौरोगवोब्रुवाणोऽहंबल्लवोनामभारत ॥ उपस्थास्यामिराजानंविराटमितिमेमतिः १ सूपानस्यकरिष्यामिकुशलोऽस्मिमहानसे ॥ कृतपूर्वाणियान्यस्यव्यंजनानिसुशिक्षितैः २ तान्यप्यभिभविष्यामिप्रीतिंसंजनयन्नहम् ॥ आहरिष्यामिदारूणांनिचयान्महतोऽपिच ३ यत्प्रेक्ष्यविपुलंकर्मराजासंयोक्ष्यतेसमाम् ॥ अमानुषाणिकुर्वाणस्तानिकर्माणिभारत ४ राज्ञस्तस्यपरेप्रेष्यामंस्यंतेमांयथानृपम् ॥ भक्ष्यान्नरसपानानांभविष्यामितथेश्वरः ५ द्विपावाबलिनोराजन्वृषभावामहाबलाः ॥ विनिग्राह्यायदिमयानिग्रहीष्यामितानपि ६

पारदःतद्रूपाःश्वेताः । तैरुभयैःसहचतुर्वर्णसंपत्तिः तथा फलैः शारीरस्थापनार्थानिकोष्ठयुक्तानिकाष्ठादिमयानिफलकानितैःसह तेषांनिर्वर्तनेकरणमाह कृष्णाक्षान्कृष्णाःअक्षाःपाशाः येषांचालनार्थमितिकृष्णाक्षास्तान् शारीनेव तथालोहिताक्षानित्यपि २५ । २६ युधिष्ठिराख्यस्यशरीरस्ययथाप्राणउत्थापकस्तद्वच्चिदात्माऽपीतिप्राणसाम्येन युधिष्ठिरात्मैवविवक्षितइतिभावः । अनुयोक्ष्यते प्रश्नंकरिष्यति २७ । २८ ॥ इतिश्रीमहाभारते विराटपर्वणि नीलकंठीये भारतभावदीपे प्रथमोऽध्यायः ॥ १ ॥ ॥ ७ ॥ ॥ पौरोगवः पुरःपुरस्तादगावो रश्मयोयस्यसपुरोगुर्वायुः पिंडोत्पत्तौहिप्रथमं रजोरेतसोःकल्के वायुरश्मिभूतःप्राणआविर्भवति पश्चादिंद्रियांतराणीतिशास्त्रप्रसिद्धं तस्यपुत्रःपौरोगवः । लोकेतुपौरोगवोमहानसाध्यक्षः बल्लवःसूपकारः एतदेवममान्वर्थनाम १ । २ । ३ । ४ ईश्वरःयथेष्टंविनियोगकर्ताऽतएवनृपोयथा तथाप्रियोऽहंलोकानांभविष्यामीत्युक्तम् ५ । ६

नियोत्स्यामि निहीनंयथास्यात्तथामारणवर्जंयोत्स्यामि ७ तदेवाह नत्विति ८ आरालिकोगोविकर्त्तासूपकर्त्तानियोधकइति अरालाःमत्तगजास्तैःसहक्रीडतितान्जयतिवा आरालिकः । 'अरालःकुटिलेसर्जरसेवैमत्तदंतिनि'इतिविश्वः । गोविकर्त्तागवांमहतांबलीबर्दानामपिविकर्त्ता दमनेनविकृतिजनकः । वृषभानवामहाबलान्निग्रहीष्यामीत्युपक्रमात् । सूपकर्त्ता मुद्गादिविकारकर्त्ता । पक्षेसुतरामुपकर्त्ता । नियोधकःमारणवर्जमल्लयुद्धकर्ता । पक्षेनितरांयोधकः । विषमश्लोकीकृतस्तु आरालिकः प्रकृतीनांगुणदोषसूचको हस्तिदमकोवा । तथा चविक्रमादित्यः'आरालिकःसूचनकोहस्तिनांदमकस्तथा'इति । गोविकर्त्तागवांवाचांविकर्त्तागद्यपद्यादिभेदानांप्रयोक्तेति । केचित्तु'आरालिकोऽन्नपाकीस्यात्सूपकर्त्तातुशाककृत' ॥ तैलान्नं

येचकेचिन्नियोत्स्यंतिसमाजेषुनियोधकाः ॥ तानहंहिनियोत्स्यामिरतिंतस्यविवर्द्धयन् ७ नत्वेतान्युद्ध्यमानान्वैहनिष्यामिकथंचन ॥ तथैतान्पातयिष्यामियथायास्यंतिनक्षयम् ८ आरालिकोगोविकर्त्तासूपकर्त्तानियोधकः ॥ आसंयुधिष्ठिरस्याहमितिवक्ष्यामिपृच्छतः ९ आत्मानमात्मनारक्षंश्चरिष्यामिविशांपते ॥ इत्येतत्प्रतिजानामिविहरिष्याम्यहंयथा १० ॥ युधिष्ठिरउवाच ॥ यमग्निर्ब्राह्मणोभूत्वासमागच्छन्नृणांवरम् ॥ दिधक्षुःखांडवंदावंदाशार्हसहितंपुरा ॥ ११ महाबलंमहाबाहुमजितंकुरुनंदनम् ॥ सोऽयंकिंकर्मकौंतेयःकरिष्यतिधनंजयः १२ योऽयमासाद्यतंदावंतर्पयामासपावकम् ॥ विजित्यैकरथेनेंद्रंहत्वापन्नगराक्षसान् १३ वासुकेःसर्पराजस्यस्वसारंहृतवांश्चयः ॥ श्रेष्ठोयःप्रतियोधानांसोऽर्जुनःकिंकरिष्यति १४ सूर्यःप्रतपतांश्रेष्ठोद्विपदांब्राह्मणोवरः ॥ आशीविषश्चसर्पाणामग्निस्तेजस्विनांवरः १५ आयुधानांवरंवज्रंककुद्मीचगवांवरः ॥ ह्रदानामुदधिःश्रेष्ठःपर्जन्योवर्षतांवरः १६ धृतराष्ट्रश्चनागानांहस्तिष्वैरावणोवरः ॥ पुत्रःप्रियाणामधिकोभार्याचसुहृदांवरा १७ यथैतानिविशिष्टानिजात्यांजात्यांवृकोदर ॥ एवंयुवागुडाकेशःश्रेष्ठःसर्वधनुष्मताम् १८ सोऽयमिंद्रादनवरोवासुदेवान्महाद्युतिः ॥ गांडीवधन्वाबीभत्सुःश्वेताश्वःकिंकरिष्यति १९ उषित्वापंचवर्षाणिसहस्राक्षस्यवेश्मनि ॥ अस्त्रयोगंसमासाद्यस्ववीर्यान्मानुषाद्भुतम् ॥ दिव्यान्यस्त्राणिचाप्तानिदेवरूपेणभास्वता २० यंमन्येद्वादशंरुद्रमादित्यानांत्रयोदशम् ॥ वसूनांनवमंमन्येग्रहाणांदशमंतथा २१ यस्यबाहूसमौदीर्घौज्याघातकठिनत्वचौ ॥ दक्षिणेचैवसव्येचगवामिववहःकृतः २२ हिमवानिवशैलानांसमुद्रःसरितामिव ॥ त्रिदशानांयथाशक्रोवसूनामिवहव्यवाट् २३ मृगाणामिवशार्दूलोगरुडःपततामिव ॥ वरःसन्नह्यमानानांसोऽर्जुनःकिंकरिष्यति २४ ॥ अर्जुनउवाच ॥ प्रतिज्ञांषंढकोऽस्मीतिकरिष्यामिमहीपते ॥ ज्याघातौहिमहांतौमेसंवर्तुंनृपदुष्करौ २५ वलयैश्छादयिष्यामिबाहूकिणकृताविमौ ॥ कर्णयोःप्रतिमुच्याहंकुंडलेज्वलनप्रभे २६

पचतेयस्तुगोविकर्तासउच्यते'इत्यप्युदाहरंतितत्रमूलंद्रष्टव्यं ९ । १० । ११ । १२ । १३ वासुकेःस्वसारमुलूपींहृतवान् सौंदर्येणेतिशेषः १४ सर्पाणांसरीसृपाणां आशीविषोदंष्ट्राविषः १५ १६ । १७ । १८ । १९ मानुषेषुअद्भुतंमानुषाद्भुतं २० । २१ गवांवृषभाणांस्कंधेइव वहः युगघर्षणजःकिणःकृतः । एतस्यैवगोपनंकठिनमितिभावः २२ । २३ पततांपक्षिणां २४ षंढकोऽस्मीति षंढोगोपतिःश्रीगोपालस्तस्यमतिकृतिरवतारांतरंषंढकः कृष्णसखाऽस्मीत्यर्थः । पक्षेक्लीबः । 'षंढोवर्षवरेक्लीबेगोपतौवंध्यपूरुषे'इतिविश्वः । संवर्तुंपिधातुं २५ । २६

पिनद्धाः कंबवः शंखवलयानि येन सः पिनद्धकंबुः तृतीयां प्रकृतिं स्त्रीपुंसापेक्षया क्लीबत्वं तृतीयं गतः प्राप्तः नरइति रलयोर्डलयोश्चाभेदान्नरः बृहंश्चासौ नरश्चेति नारायणसख आद्यो नरइत्यर्थः स्त्रीत्वंस्वरूपगोपनार्थम् २७ आख्यायिकाः पूर्वराजचरितानि २८ । २९ समुदाचारं समीचीनमुत्कृष्टतरं महावदान्यत्वादिरूपं ताभिः कृतं बहुकर्म च वदन् मायया कपटक्लीबवेषेण आत्मानं शरीरं आत्मना बुद्ध्या ३० परितश्चारयितुं शीलं यस्याः सा परिचारिणी सैव परिचारिका द्रौपद्याः भर्तेति गूढो भिसंधिः । पक्षे परिचारिका सेवाकर्त्री ३१ । ३२ ॥ इतिश्रीमहाभार

पिनद्धकंबुः पाणिभ्यां तृतीयां प्रकृतिं गतः ॥ वेणीकृतशिरा राजन्नाम्ना चैव बृहन्नला २७ पठन्नाख्यायिकाश्चैव स्त्रीभावेन पुनः पुनः ॥ रमयिष्ये महीपाल मन्यांश्चांतःपुरे जनान् २८ गीतं नृत्यं विचित्रं च वादित्रं विविधं तथा ॥ शिक्षयिष्याम्यहं राजन्विराटस्य पुरस्त्रियः २९ प्रजानां समुदाचारं बहुकर्मकृतं वदन् ॥ छादयिष्यामि कौंतेय माययात्मानमात्मना ३० युधिष्ठिरस्य गेहे वै द्रौपद्याः परिचारिका ॥ उषिताऽस्मीति वक्ष्यामि पृष्टो राज्ञा च पांडव ३१ एतेन विधिना छन्नः कृतके नयथाऽनलः ॥ विहरिष्यामि राजेंद्र विराटभवने सुखम् ३२ ॥ इतिश्रीमहाभारते विराटपर्वणि पांडवप्रवेशपर्वणि युधिष्ठिरादिमंत्रणे द्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥ वैशंपायन उवाच ॥ इत्येवमुक्त्वा पुरुषप्रवीरस्तथाऽर्जुनो धर्मभृतां वरिष्ठः ॥ वाक्यं तथाऽसौ विरराम भूयो नृपोऽपरं भ्रातरमाबभाषे १ ॥ युधिष्ठिर उवाच ॥ किं त्वं नकुल कुर्वाणस्तत्र तात चरिष्यसि ॥ कर्म तत्त्वं समाचक्ष्व राज्ये तस्य महीपतेः ॥ सुकुमारश्च शूरश्च दर्शनीयः सुखोचितः २ ॥ नकुल उवाच ॥ अश्वबंधो भविष्यामि विराटनृपतेरहम् ॥ सर्वथा ज्ञानसंपन्नः कुशलः परिरक्षणे ३ ग्रंथिको नाम नाम्नाऽहं कर्मैतत्सुप्रियं मम ॥ कुशलोऽस्म्यश्वशिक्षायां तथैवाश्वचिकित्सने ॥ प्रियाश्च सततं मेऽश्वाः कुरुराज यथा तव ४ ये मामामंत्रयिष्यंति विराटनगरे जनाः ॥ तेभ्य एवं प्रवक्ष्यामि विहरिष्याम्यहं यथा ५ पांडवेन पुरा तात अश्वेष्वधिकृतः पुरा ॥ विराटनगरे छन्नश्चरिष्यामि महीपते ६ ॥ युधिष्ठिर उवाच ॥ सहदेव कथं तस्य समीपे विहरिष्यसि ॥ किं वा त्वं कर्म कुर्वाणः प्रच्छन्नो विहरिष्यसि ७ ॥ सहदेव उवाच ॥ गोसंख्याता भविष्यामि विराटस्य महीपतेः ॥ प्रतिषेद्धा च दोग्धा च संख्याने कुशलो गवाम् ८ तंतिपाल इति ख्यातो नाम्नाऽहं विदितस्त्वथ ॥ निपुणं चरिष्यामि व्येतु ते मानसो ज्वरः ९ अहं हि सततं गोषु भवता प्रहितः पुरा ॥ तत्र मे कौशलं सर्वमवबुद्धं विशांपते १० लक्षणं चरितं चापि गवां यच्चापि मंगलम् ॥ तत्सर्वं मे सुविदितमन्यच्चापि महीपते ११ वृषभानपि जानामि राजन्पूजितलक्षणान् ॥ येषां मूत्रमुपाघ्राय अपि वंध्या प्रसूयते १२ सोऽहमेवं चरिष्यामि प्रीतिरत्र हि मे सदा ॥ न च मां वेत्स्यते कश्चित्तोषयिष्ये च पार्थिवम् १३

ते विराटपर्वणि नीलकंठीये भारतभावदीपे द्वितीयोऽध्यायः ॥ २ ॥ ॥ ७ ॥ इत्येवमिति १ । २ परिरक्षणे अश्वानामिति शेषः ३ ग्रंथान् आयुर्वेदं आध्वर्यवं च वेत्तीति ग्रंथिकोऽश्विनोः सुतत्वात् । 'अश्विनौ वै देवानां भिषजावश्विनावध्वर्यू' इति श्रुतेः ४ । ५ अश्वेषु नास्ति श्वो येषां ते शूराः समरे तृणीकृतप्राणास्तेषु अधिकृतो मुख्य इति गूढाशयः । पक्षे स्पष्टोऽर्थः ६ । ७ संख्याने परीक्षायां ८ तंतिपालः तंतिर्बलीवर्दा यस्यां दीर्घस्थूलरज्ज्वां वाणिग्भिरल्पैर्दामभिर्बद्धव्यं ते सा प्रकृतोपयोगिनी । गूढाभिसंधौ तु तंतिर्वाक् । 'तस्य वाकंतिर्नामानि दामानि' इति श्रुतेर्वाक्पालः युष्मद्वचनार्थानुष्ठातेत्यर्थः ९ । १० । ११ । १२ । १३

इयंहीति माताकुलवृत्तिः आदिभूमिः गौर्वा । ‘ मातागौर्यादिजननीगोब्रह्माण्यादिभूमिषु’ इतिमेदिनी । स्वसाअंबिका पार्वतीवत्पूज्येत्यर्थः । ‘एषतेरुद्रभागःसहस्वस्त्रांबिकयातंजुषस्वशरद्वा अस्यांबिकास्वसा’ इतिमंत्रब्राह्मणदर्शनात् । ‘जायागार्हपत्यःपुत्रोऽन्वाहार्यपचनः’ इतितस्या अपिदेवतात्वेनसंस्तवात् । ‘ मातासत्यवतीभूमिर्धेनुर्ज्येष्ठास्वसाभवेत्’ इत्यप्युदाहरंति १४ । १५ बालानित्यनूतना १६ यतोयस्मिन्दिनेजाता ततआरभ्यमाल्यादीन्भोगानेववेत्ति नक्लेशानित्यर्थः १७ सैरंध्रीति सीरंप्रतिसिरांतःपटःध्रियतेऽनयाऽस्यैवेतिसीरंध्रासैवसैरंध्री स्वार्थेतद्धितः अंतःपुरपरिचारिकाराजभार्यावा । ‘ सैरंध्रीपरवेश्मस्थाशिल्पकृत्स्ववशास्त्रियां ॥ वर्णसंकरसंभूतस्त्रीमहिल्लिकयोरपि’ इतिविश्वः । मतल्लिकयोरितिमेदिनीपाठः । आद्ये महिल्लिकारा

॥ युधिष्ठिरउवाच ॥ इयंहिनःप्रियाभार्याप्राणेभ्योऽपिगरीयसी ॥ मातेवपरिपाल्याचपूज्याज्येष्ठेवचस्वसा १४ केनस्मद्रौपदीकृष्णाकर्मणाविचरिष्यति ॥ नहिकिंचिद्विजानातिकर्मकर्तुंयथास्त्रियः १५ सुकुमारीचबालाचराजपुत्रीयशस्विनी ॥ पतिव्रतामहाभागाकथंनुविचरिष्यति १६ माल्यगंधानलंकारान्वस्त्राणिविविधानिच ॥ एतान्येवाभिजानातियतोजाताहिभामिनी १७ ॥ द्रौपद्युवाच ॥ सैरंध्र्योऽरक्षितालोकेभुजिष्याःसंतिभारत ॥ नैवमन्याःस्त्रियोयांतिइति लोकस्यनिश्चयः ॥ साऽहंब्रुवाणासैरंध्रीकुशलाकेशकर्मणि १८ युधिष्ठिरस्यगेहेवैद्रौपद्याःपरिचारिका ॥ उषिताऽस्मीतिवक्ष्यामिपृष्टाराज्ञाचभारत १९ आत्मगुप्ताचरिष्यामियन्मांत्वंपरिपृच्छसि २० सुदेष्णांप्रत्युपस्थास्येराजभार्यांयशस्विनीम् ॥ सारक्षिष्यतिमांप्राप्तांमाभूत्तेदुःखमीदृशम् २१ ॥ युधिष्ठिरउवाच ॥ कल्याणंभाषसेकृष्णेकुलेजाताऽसिभामिनि ॥ नपापमभिजानासिसाध्वीसाधुव्रतेस्थिता २२ यथानदुर्हृदःपापाभवंतिसुखिनःपुनः ॥ कुर्यास्तत्त्वंहि कल्याणिलक्षयेयुर्नतेतथा २३ ॥ इतिश्रीमहाभा॰विराटपर्वणिपांडवप्रवेशपर्वणियुधिष्ठिरादिमंत्रणेतृतीयोऽध्यायः ॥ ३ ॥ युधिष्ठिरउवाच ॥ कर्माण्युक्तानि युष्माभिर्यानियानिकरिष्यथ ॥ ममचापियथाबुद्धिरुचिताविधिनिश्चयात् १ पुरोहितोऽयमस्माकमग्निहोत्राणिरक्षतु ॥ सूदपौरोगवैःसार्द्धंद्रुपदस्यनिवेशने २ इंद्रसेनमुखाश्चेमेरथानादायकेवलान् ॥ यांतुद्वारवतींशीघ्रमितिमेवर्ततेमतिः ३ इमाश्चनार्योद्रौपद्याःसर्वाश्चपरिचारिकाः ॥ पंचालानेवगच्छंतु सूदपौरोगवैःसह ४ सर्वैरपिचवक्तव्यंनप्राज्ञायंतपांडवाः ॥ गताह्यस्मानपाहायसर्वेद्वैतवनादिति ५ ॥ वैशंपायनउवाच ॥ एवंतेऽन्योन्यमामंत्र्यकर्माण्युक्त्वापृथक्पृथक् ॥ धौम्यमामंत्रयामासुःसचतान्मंत्रमब्रवीत् ६ ॥ धौम्यउवाच ॥ विहितंपांडवाःसर्वंब्राह्मणेषुसुहृत्सुच ॥ यानेप्रहरणे चैवतथैवाग्निषुभारत ७

जदाराः । द्वितीयेमतल्लिकाःप्रशस्तस्त्रियइति । दासीपक्षेअरक्षिताइतिच्छेदः स्ववशाइत्युक्तेः पक्षेरक्षिताइत्येव । भुजिष्यापालनीयापालयित्रीच । भुजपालनाभ्यवहारयोरित्यस्यरूपं । नैवमन्याःस्त्रियोरूपवतीर्यांतिप्राप्नुवंतिपश्यंतीतरेइत्यर्थः । दासीइतिभावः । पक्षेनैवंप्रकाशे यांतिसंचरंतीत्यर्थः १८ द्रौपद्याःपरिचारिकेतिराहोःशिरइतिवदभेदेऽपिभेदोपचारः द्रौपदीरूपायुधिष्ठिरस्यपरिचारिकेत्यर्थः १९ । २० । २१ । २२ । २३ ॥ इतिश्रीमहाभारतेवि॰ नी॰ भा॰ तृतीयोऽध्यायः ॥ ३ ॥ ॥ कर्माणीति १ अग्निहोत्राणिअग्निहोत्रपात्राण्यरणीसहितानि होमसाधनभूताधेनूर्वा २ । ३ । ४ नप्राज्ञायंतेतियथार्थमेव रहस्येत्वतैर्मत्स्यदेशेवस्तव्यमि तिमंत्रितत्वात् ५ । ६ विहितंशास्त्रोक्तं ब्राह्मणादिषुउपस्थितेषु परिचर्यादिकंपांडवाःसर्वंजानंतीतिविशेषः यानेविजययात्रायां प्रहरणेयुद्धे यद्यप्येवंतथाऽपिकिंचिद्वक्ष्यामीतिभावः ७

तदेवाह त्वयेति त्वयायुधिष्ठिरेण इदंलोकवृत्तं प्राकृतजनशीलं । अरक्ष्यमाणासुस्त्रीषुसाध्वीष्वपिअन्यायकल्पनं अतःकृष्णारक्ष्यैवेत्यर्थः ८ विद्वांसोऽपिसुहृद्भिःप्रीत्याऽवश्यंबोधनीयाए
वेत्याह विदितेचापीति एवंसौहार्दप्रदर्शनेनधर्मादयोऽनुसृताभवंतीतिभावः ९ हंतेत्यनुकंपायां राजवसतिंराजकुलेवासं तद्विधिमित्यर्थः १० दुर्वसंदुःखेनवस्तुंशक्यं ११ । १२ दृष्टद्वा
रः प्रतीहारद्वारानिवेद्यैवराजानंद्रष्टुमिच्छेन्नत्वननुज्ञातइत्यर्थः दिष्टेत्यपिपाठः पांठातरे रहस्येषुमंत्रकार्येषु नविश्वसेत् संमतोऽस्मीतिबुद्ध्यातत्रनगच्छेत् । पुत्रादिष्वपिअविश्वस्ताराजा
नोमंत्रविप्लवभयात्सद्योमारयेयुरितिभावः । तदेवेति परेणसहवैरंमाभूदितिपरासनंनान्विच्छेत् १३ यानंपरकीयमितिशेषः १४ दुष्टचारिणोदुष्टाचाराः यत्रयत्रद्यूतमद्यवेश्यादिस्था
नेषुस्वनगरस्थपरकीयचारमंडलेवाआसीनमेनं द्यूतादिप्रियोऽयंपरैर्भेदितोऽयमितिशंकेरंस्तत्रनोपविशेत् । राजगामिपैशून्यभयादित्यर्थः १५ नानुशिष्यात्इदमित्थंकुर्वितिनाज्ञापयेत्
तूष्णींमौनेन कालेपराक्रमसमये समभिपूजयेतस्तुवीत १६ स्तुतिरप्यभूतार्थानकर्तव्येत्याह असूयंतीति दूषयंतीत्यर्थः १७ येंऽतःपुरचराः यांश्चराजाद्वेष्टि येचराज्ञोऽहिताद्वेष्टारस्तैः

त्वयारक्षाविधातव्याकृष्णायाःफाल्गुनेनच ॥ विदितंवोयथासर्वंलोकवृत्तमिदंतव ८ विदितेचापिवक्तव्यंसुहृद्भिरनुरागतः ॥ एषधर्मश्चकामश्च अर्थश्चैवस
नातनः ९ अतोऽहमपिवक्ष्यामिहेतुमत्रनिबोधत ॥ हंतेमांराजवसतिंराजपुत्राब्रवीम्यहम् १० यथाराजकुलंप्राप्यसर्वान्दोषांस्तरिष्यथ ॥ दुर्वसंचैवकौरव्य
जानताराजवेश्मनि ११ अमानितैर्मानितैर्वाअज्ञातैःपरिवत्सरम् ॥ ततश्चतुर्दशेवर्षेचरिष्यथयथासुखम् १२ दृष्टद्वारोलभेद्द्रष्टुंराजस्वेषुनविश्वसेत् ॥ तदे
वासनमन्विच्छेद्यत्रनाभिपतेत्परः १३ योनयानंनपर्यंकंनपीठंनगजंरथम् ॥ आरोहेत्संमतोस्मीतिसराजवसतिंवसेत् १४ यत्रयत्रैनमासीनंशंकेरन्दुष्टचारिणः ॥
नतत्रोपविशेद्योवैसराजवसतिंवसेत् १५ नचानुशिष्याद्राजानमपृच्छंतंकदाचन ॥ तूष्णींत्वेनमुपासीतकालेसमभिपूजयेत् १६ असूयंतिहिराजानोजनानन
ृतवादिनः ॥ तथैवचावमन्यंतेमंत्रिणंवादिनंमृषा १७ नैषांदारेषुकुर्वीतमैत्रींप्राज्ञःकदाचन ॥ अंतःपुरचरायेचद्वेष्टियानहिताश्चये १८ विदितेचास्यकुर्वी
तकार्याणिसुलघून्यपि ॥ एवंविचरतोराज्ञिनक्षतिर्जायतेक्वचित् १९ गच्छन्नपिपरांभूमिमपृष्टोह्यनियोजितः ॥ जात्यंधइवमन्येतमर्यादामनुचिंतयन् २०
नहिपुत्रंननप्तारंनभ्रातरमरिंदमाः ॥ समतिक्रांतमर्यादंपूजयंतिनराधिपाः २१ यत्नाच्चोपचरेदेनमग्निवद्देववच्चिह ॥ अनृतेनोपचीर्णोहिहन्यादेवनसंशयः २२
यद्यद्भर्ताऽनुयुंजीततत्तदेवानुवर्तयेत् ॥ प्रमादमवलेपंचकोपंचपरिवर्जयेत् २३ समर्थनासुसर्वासुहितंचप्रियमेवच ॥ संवर्णयेत्तदेवास्याप्रियादपिहितंभवेत् २४

सर्वैःसह मैत्रींनकुर्यात् १८ राज्ञिराजसान्निधौ विचारतोविचारपूर्वकंवसतोनक्षतिर्मानहन्यादिर्जायते १९ गच्छन्निति परांउत्कृष्टांभूमिंनित्यंगच्छन्आसनार्थंप्राप्नुवन् राज्ञाअपृष्टोऽसंभा
षितोऽनियोजितः स्वेस्थानेउपविशेत्यनाज्ञप्तो जात्यंधइवतत्स्थानमपश्यंतमिवात्मानंमन्येत यावद्राजा नसंभाषते नाप्यासनंदिशति तावत्प्रतीक्षेतैवेत्यर्थः २० अन्यथादोषमाह नही
ति २१ यत्नादिति अतिसान्निध्यादग्निरिवराजादहति अवज्ञानाद्देवइवसर्वंहरतीत्यर्थः । अनृतेनकूटकार्षापणादिनाउपचीर्णआराधितःहन्यादेव २२ भर्ताराजाअनुयुंजीतआज्ञाप
येत्पृच्छेद्वा अनुवर्तयेत् कुर्यात्वदेद्वा । प्रमादंअनवधानतां अवलेपंशौर्यादिगर्वं २३ समर्थनासुकार्याकार्यपरीक्षासु हितंपरिणामसुखं प्रियंश्रुतिसुखंचवदेत् । उभयोःसमुच्चयासंभवे प्रियादपि
हितंभवेत् प्रियंत्यक्त्वाऽपियद्धितंभवेत्तदेववदेन्नतुहितविरोधिप्रियंवदेदित्यर्थः २४

अस्यसर्वार्थेषुसर्वेष्वर्थसाधनेषु अनुकूलोयत्नवान्भवेत् नतुप्रातिकूल्यमालस्यंवाकुर्यादित्यर्थः २९ पंडितःपरिहासकः । 'पंडितःसिल्हकेकवा' इतिविश्वः । खंडितइतिपाठेविच्छिद्यनसेवेत किंत्वविच्छेदेनैवसेवेतेत्यर्थः । अप्रमत्तोऽवहितः २६ स्वस्थानात्राजदत्तान्नविकंपेतनचलेत् २७ पंडितोविद्यावान् राजानंकथामभीरभयन् पार्श्वेतिष्ठेत् रक्षिणांराजगोप्तॄणांतुस्थानंपृष्ठतः २८ शूरेणपंडितेनवा पुरस्तात् आसनंउपवेशनंनकर्तव्यमित्यर्थः । राज्ञांसंदर्शने समक्षंप्रवृत्तमपिभक्तवेतनादिदानं अहंपूर्विकयानाकारितःसन् नसंजयेत्स्वीकुर्यात् २९ एतत्तुधार्ष्ट्यं दरिद्राणामपिव्यलीकस्थानमप्रियपदं किमुतराज्ञामितिभावः उत्तमंपरमं नेति राज्ञोदितमनृतंबहिर्नप्रकाशयेत् ३० हियस्मात्अनृतवादिनोनृपान् हियतोऽन्येराजानोऽसूयंति दोषवत्वेनकीर्तयंति । तस्मात्स्वामिनोऽकीर्तिकरंनवदेदित्यर्थः । अवमन्यंतेराजानइतिशेषः ३१ प्रियोभोगवांश्चभवतीतिसंबंधः ३२ । ३३ । ३४ नचेति क्रोधचापलयोःसूचकमोष्ठादीनांसमाक्षेपंप्रचालनं नकुर्यादित्यर्थः । वातंमुखजं अधस्तनंवा शनैरितरेणाज्ञातंयथाभवेत्तथाकुर्यादित्यर्थः ३५ हास्येति अन्यस्यराजसेवकस्य हास्यवस्तुषुहास्यास्पदेषु अय

अनुकूलोभवेच्चास्यसर्वार्थेषुकथासुच ॥ अप्रियंचाहितंयत्स्यात्तदस्मैनानुवर्णयेत् २५ नाहमस्यप्रियोस्मीतिमत्वासेवेतपंडितः ॥ अप्रमत्तश्चसततंहितंकुर्यात्प्रियंचयत् २६ नास्यानिष्टानिसेवेतनाहितैःसहसंवदेत् ॥ स्वस्थानान्नविकंपेतसराजवसतिंवसेत् २७ दक्षिणंवाऽथवामंवापार्श्वमासीतपंडितः ॥ रक्षिणांह्यात्तशस्त्राणांस्थानंपश्चाद्विधीयते २८ नित्यंहिप्रातिषिद्धंतुपुरस्तादासनंमहत् ॥ नचसंदर्शनेकिंचित्प्रवृत्तमपिसंजयेत् २९ अपिह्येतद्दरिद्राणांव्यलीकस्थानमुत्तमम् ॥ नमृषाभिहितंराज्ञांमनुष्येषुप्रकाशयेत् ३० असूयंतिहिराजानोनरानानृतवादिनः ॥ तथैवचावमन्यंतेनरान्पंडितमानिनः ३१ शूरोऽस्मीतिनदृप्तःस्याद्बुद्धिमानितिवापुनः ॥ प्रियमेवाचरन्राज्ञःप्रियोभवतिभोगवान् ३२ ऐश्वर्यंप्राप्यदुष्प्रापंप्रियंप्राप्यचराजतः ॥ अप्रमत्तोभवेद्राज्ञःप्रियेषुचहितेषुच ॥ ३३ यस्यकोपोमहाबाधःप्रसादश्चमहाफलः ॥ कस्तस्यमनसाऽपीच्छेदनर्थंप्राज्ञसंमतः ३४ नचोष्ठौनभुजौजानूनचवाक्यंसमाक्षिपेत् ॥ सदावातंचवाचंचष्ठीवनंचाचरेच्छनैः ३५ हास्यवस्तुषुचान्यस्यवर्तमानेषुकेषुचित् ॥ नातिगाढंप्रहृष्येतनचाप्युन्मत्तवद्धसेत् ३६ नचातिधैर्येणचरेद्गुरुतांहिव्रजेत्ततः ॥ स्मितंतुमृदुपूर्वेणदर्शयेतप्रसादजम् ३७ लाभेनहर्षयेद्यस्तुनव्यथेद्योऽवमानितः ॥ असंमूढश्चयोनित्यंसराजवसतिंवसेत् ३८ राजानंराजपुत्रंवासंवर्णयतियःसदा ॥ अमात्यःपंडितोभूत्वासचिरंतिष्ठतेप्रियः ३९ प्रगृहीतश्चयोऽमात्योनिगृहीतस्त्वकारणैः ॥ ननिर्वदतिराजानंलभतेसंपदंपुनः ४० प्रत्यक्षंचपरोक्षंचगुणवादीविचक्षणः ॥ उपजीवीभवेद्राज्ञोविषयेयोऽपिवाभवेत् ४१ अमात्योहिबलाद्भोक्तुंराजानंप्रार्थयेतयः ॥ नसतिष्ठेच्चिरंस्थानंगच्छेच्चप्राणसंशयम् ४२



थास्थितेषुउष्णीषादिषुवर्तमानेषुनिमित्तेषु तदीयवैकल्येनातिगाढंनप्रहृष्येत्नापिहसेत् । तावतैवराजानरंनंक्षुद्रंमन्यंतइतिभावः । नचैवंभूतेनिमित्तेसतिधैर्येणकाष्ठवत्स्थेयमित्याह नातीति ३६ गुरुतांजडतां किमप्ययंनजानातीतिवदेयुरितिभावः । अतएवस्मितंमृदुपूर्वंकिंचिद्दर्शयेदेव ३७ नहर्षयेत्नहृष्येत् असंमूढःसेवायामेकाग्रः ३८ राजातदाश्रितास्तोतव्याएवेत्याह राजानमिति संवर्तयतीतिपाठेऽनुसरति तिष्ठतेप्रकाशते ३९ ननिर्वदतिननिंदति दंडितोऽप्यमात्यःपुनरभ्युदयकामोराजानंननिंदेदित्यर्थः ४० योराज्ञोविषयेभवेत्देशेवसेत् योवाराज्ञउपजीवीसराज्ञोगुणवादीस्यादितिसंबंधः ४१ बलाद्धठात् भोक्तुंकुटिलीकर्तुं येनकेनाचिद्व्याजेनलोकान्दंडयेतिशिक्षयन्यः प्रार्थयेत् सराज्ञःप्रियोऽपि बहुजनविरोधात्चिरंस्थानंपदंनातिष्ठेत्नाधितिष्ठेत् । अवश्यंपदच्युतोभवेदित्यर्थः । भोक्तुमितिभुजकौटिल्येइत्यस्यरूपं ४२

श्रेयइति राज्ञःसकाशादात्मनःस्वस्यश्रेयोधनमानादिलाभंदृष्ट्वा परमन्यं सदासर्वदा राज्ञासार्धं नसंवदेन्नसंवादयेत् किंतुमहाराजोनमत्तादृशान्मंत्रेलक्षयतीत्येवलोकेपरंदर्शयेत् । योग्य भूमिषु गुह्ये पराष्ट्रिकैःसहसंलापेवा राजानंविशेषयेत्राज्ञोऽपेक्षाया स्वीयंशौर्यं यौक्तिकत्वंवाधिकंदर्शयेत् । तेनराजाप्रीयतइतिभावः ४३ अम्लानःउत्साही । बलवान्धीबलयुक्तः । मृदुःअनिष्ठुरः । दांतोजितेंद्रियःसुशिक्षितोवा ४४ अन्यस्मिन्पुंसिकस्यचित्कार्यस्यार्थेप्रेष्यमाणे एहिइदंकुर्वित्युच्यमानेसतियस्तदागमनात्पूर्वंसमुत्पतेत्तत्कार्यंकर्तुंसशीघ्रकारी राजवसतिंवसेत् ४५ आंतरेधनदारसंरक्षणादौ बाह्येसामंतजये आदिष्टआज्ञप्तो नैवकंपेत नैवसंशयंभयंवाकुर्यात् अनिःसंशयोनिर्भयश्चतत्कार्यंकुर्यादेवेत्यर्थः ४६ प्रियाणांप्रियाणिस्त्रीपुत्रान्नपानादिसुखानि दुःखेनप्रवासादिना ४७ समवेषं वस्त्रालंकारादिकं राज्ञासमानंनकुर्यात् । उच्चैःअतिशयेन बहुधाबहुप्रकारं नकुर्यात्नभिंद्यादित्यर्थः ४८ धनंउत्कोचादिना

श्रेयःसदाऽऽत्मनोदृष्ट्वापरंराज्ञानसंवदेत् ॥ विशेषयेच्चराजानंयोग्यभूमिषुसर्वदा ४३ अम्लानोबलवान्शूरश्छायेवानुगतःसदा ॥ सत्यवादीमृदुर्दांतःसराजवसतिंवसेत् ४४ अन्यस्मिन्प्रेष्यमाणेतुपुरस्ताद्यःसमुत्पतेत् ॥ अहंकिंकरवाणीतिसराजवसतिंवसेत् ४५ आंतरेचैवबाह्येचराज्ञायश्चाथसर्वदा ॥ आदिष्टोनैवकंपेतसराजवसतिंवसेत् ४६ योवैगृहेभ्यःप्रवसन्प्रियाणांनानुसंस्मरेत् ॥ दुःखेनसुखमन्विच्छेत्सराजवसतिंवसेत् ४७ समवेषंनकुर्वीतनोच्चैःसन्निहितोवसेत् ॥ नमंत्रंबहुधाकुर्यादेवंराज्ञःप्रियोभवेत् ४८ नकर्मणिनियुक्तःसन्धनंकिंचिदपिस्पृशेत् ॥ प्राप्नोतिहिहरन्द्रव्यंबंधनंयदिवावधम् ४९ यानंवस्त्रमलंकारंयच्चान्यत्संप्रयच्छति ॥ तदेवधारयेन्नित्यमेवंप्रियतरोभवेत् ५० एवंसंयम्यचित्तानियत्नतःपांडुनंदनाः ॥ संवत्सरमिमंताततथाशीलाबुभूषत ॥ अथस्वविषयंप्राप्ययथाकामंकरिष्यथ ५१ ॥ युधिष्ठिरउवाच ॥ अनुशिष्टाःस्मभद्रंतेनैतद्वक्ताऽस्तिकश्चन ॥ कुंतीमृतेमातरंनोविदुरंवामहामतिम् ५२ यदेवानंतरंकार्यंतद्भवान्कर्तुमर्हति ॥ तारणायास्यदुःखस्यप्रस्थानायजयायच ५३ ॥ वैशंपायनउवाच ॥ एवमुक्तस्ततोराज्ञाधौम्योऽथद्विजसत्तमः ॥ अकरोद्विधिवत्सर्वंप्रस्थानेयद्विधीयते ५४ तेषांसमिध्यतानग्नीन्मंत्रवच्चजुहावसः ॥ समृद्धिवृद्धिलाभायपृथिवीविजयायच ५५ अग्नीन्प्रदक्षिणीकृत्यब्राह्मणांश्चतपोधनान् ॥ याज्ञसेनींपुरस्कृत्यषडेवाथप्रवव्रजुः ५६ गतेषुतेषुवीरेषुधौम्योऽथजपतांवरः ॥ अग्निहोत्राण्युपादायपांचालानभ्यगच्छत ५७ इंद्रसेनादयश्चैवयथोक्ताःप्राप्ययादवान् ॥ रथानश्वांश्चरक्षंतःसुखमूषुःसुसंवृताः ५८ ॥ इतिश्रीमहाभारतेविराटपर्वणिपांडवप्रवेशपर्वणिधौम्योपदेशेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ४ ॥

प्राप्तंकिंचिदपिअत्यल्पमपिनस्पृशेत् ४९ यदसंप्रयच्छतिराजा तदेवराजदत्तं यानादिकंधारयेत् नतुतदन्यस्मैदद्यादित्यर्थः ५० संयम्यनिगृह्य इमंत्रयोदशंसंवत्सरं हेतातयुधिष्ठिर यूयं सर्वेतथाशीलाःयथोक्तसद्वृत्ताःसंतोबुभूषत ऐश्वर्यंप्राप्तुमिच्छत । अथअनंतरं स्वविषयंस्वदेशंप्राप्य यथाकामंयथेष्टंकरिष्यथ क्रीडामितिशेषः ५१ । ५२ अनंतरंअनुपदंकार्यंशांतिकंपौष्टिकंच । अस्यअज्ञातवासदुःखस्यतारणाय प्रस्थानाय शत्रून्प्रतियोद्धुंगमनाय जयायचयत्कर्मप्रभवतितत्कर्तुमर्हति ५३ । ५४ समिध्यउद्दीप्य समृद्धिर्जनाभिसंपत्तिः । वृद्धिर्युद्धे विशेषः । लाभोराज्यस्य । लब्धायाअपिपृथिव्याविजयायवशीकरणाय ५५ षट् द्रौपद्यासहिताः ५६ । ५७ । ५८ । इतिविराटपर्वणिनीलकंठीये भारतभावदीपेचतुर्थोऽध्यायः ॥ ४ ॥

तेवीराइति निस्त्रिंशःखड्गः कलापिनस्तूणवंतः । ततायुधेतिपाठे सज्जीकृतधनुषः ततायुधाश्चते कलापिनश्चेतिविग्रहः १ बद्धंगोधातलंज्याघातवारणारव्यमंगुलित्राणंचयैस्तेबद्धगोधांगु
लित्राणाः 'गोधातलनिहाकयोः'इतिमेदिनी १ । २ । ३ अंतरेणमध्यतः मत्स्यस्यैवराज्ञोलुब्धाव्याधाःस्मइतिब्रुवाणाः । पक्षेराज्याकांक्षिणः । 'लुब्ध आकांक्षिणिव्याधे'इतिमेदिनी । वि

वैशंपायनउवाच ॥ तेवीराबद्धनिस्त्रिंशास्तथाबद्धकलापिनः ॥ बद्धगोधांगुलित्राणाःकालिंदीमभितोययुः १ ततस्तेदक्षिणंतीरमन्वगच्छन्पदातयः ॥ निवृत्तवनवासाहिस्वराष्ट्रंप्रेप्सवस्तदा ॥ वसंतोगिरिदुर्गेषुवनदुर्गेषुधन्विनः २ विध्यंतोमृगजातानिमहेष्वासामहाबलाः ॥ उत्तरेणदशार्णांस्तेपंचालान्दक्षिणेनच ३ अंतरेणयकृल्लोमान्शूरसेनांश्चपांडवाः ॥ लुब्धाब्रुवाणामत्स्यस्यविषयंप्राविशन्वनात् ४ धन्विनोबद्धनिस्त्रिंशाविवर्णाःश्मश्रुधारिणः ॥ ततोजनपदंप्राप्यकृष्णाराजानमब्रवीत् ५ पश्यैकपद्योदृश्यंतेक्षेत्राणिविविधानिच ॥ व्यक्तंदूरेविराटस्यराजधानीभविष्यति ॥ वसामेहापरांरात्रिंबलवान्मेपरिश्रमः ६ ॥ युधिष्ठिरउवाच ॥ धनंजयसमुद्यम्यपांचालींवहभारत ॥ राजधान्यांनिवत्स्यामोविमुक्ताश्चवनादितः ७ ॥ वैशंपायनउवाच ॥ तामादायार्जुनस्तूर्णंद्रौपदींगजराडिव ॥ संप्राप्यनगराभ्यासमवतारयदर्जुनः ८ सराजधानींसंप्राप्यकौंतेयोर्जुनमब्रवीत् ॥ क्वायुधानिसमासज्यप्रवेक्ष्यामःपुरंवयम् ९ सायुधाश्चप्रवेक्ष्यामोवयंतातपुरंयदि ॥ समुद्वेगंजनस्यास्यकरिष्यामोनसंशयः १० गांडीवंचमहद्गाढंलोकेचविदितंनृणाम् ॥ तच्चेदायुधमादायगच्छामोनगरंवयम् ॥ क्षिप्रमस्मान्विजानीयुर्मनुष्यानात्रसंशयः ११ ततोद्वादशवर्षाणिप्रवेष्टव्यंवनेपुनः ॥ एकस्मिन्नपिविज्ञातेप्रतिज्ञातंहिनस्तथा १२ ॥ अर्जुनउवाच ॥ इयंकूटेमनुष्येंद्रगहनामहतीशमी ॥ भीमशाखादुरारोहाश्मशानस्यसमीपतः १३ नचापिविद्यतेकश्चिन्मनुष्यइतिमेमतिः ॥ योऽस्मान्निदधतोद्रष्टाभवेच्छस्त्राणिपांडवाः १४ उत्पथेहिवनेजातामृगव्यालनिषेविते ॥ समीपेचश्मशानस्यगहनस्यविशेषतः १५ समाधायायुधंशम्यांगच्छामोनगरंप्रति ॥ एवमत्रयथायोगंविहरिष्यामभारत १६ ॥ वैशंपायनउवाच ॥ एवमुक्त्वासराजनंधर्मराजंयुधिष्ठिरम् ॥ प्रचक्रमेनिधानायशस्त्राणांभरतर्षभ १७ येनदेवान्मनुष्यांश्चसर्वांश्चैकरथोऽजयत् ॥ स्फीतान्जनपदांश्चान्यानजयत्कुरुपुंगवः १८ तदुदारंमहाघोषंसपत्नबलसूदनम् ॥ अपज्यमकरोत्पार्थोगांडीवंसुभयंकरम् १९ येनवीरःकुरुक्षेत्रमभ्यरक्षत्परंतपः ॥ अमुंचद्धनुषस्तस्यज्यामक्षय्यांयुधिष्ठिरः २० पांचालान्येनसंग्रामेभीमसेनोऽजयत्प्रभुः ॥ प्रत्यषेधद्बहूनेकःसपत्नांश्चैवदिग्जये २१ निशम्ययस्यविस्फारंव्यद्रवंतरणात्परे ॥ पर्वतस्येवदीर्णस्यविस्फोटमशनेरिव २२ सैंधवंयेनराजानंपर्यामृषितवानथ ॥ ज्यापाशंधनुषस्तस्यभीमसेनोऽवतारयत् २३ अजयत्पश्चिमामाशांधनुषायेनपांडवः ॥ माद्रीपुत्रोमहाबाहुस्ताम्रास्योमितभाषिता २४

षयंमत्स्यस्यैवदेशं लुब्धरवाामिनयार्थैविवर्णाः ४ । ५ एकपद्यः क्षेत्रगामिनःक्षुद्रमार्गाः ६ । ७ । ८ । ९ । १० । ११ । १२ कूटेइववूटेउच्चप्रदेशे । 'मायाद्रिशृंगयोःकूटम्'इतिमेदिनी । दुरारो
हा श्मशानस्थत्वात् १३ । १४ उत्पथेमार्गाद्बहिर्भूते १५ । १६ । १७ । १८ संपन्नबलानां देवाराधनप्राप्तबलानामसुरादीनामपिसूदनं १९ । २० । २१ । २२ सैंधवंजयद्रथम् २३ । २४

संक्रंदनःशत्रूणामाक्रंदनकरः २५ अपज्यंज्यारहितं २६ विपाठान्बाणविशेषान् तादृशान्क्षुरधारांश्च २७ अन्वशासतआज्ञापितवान् २८ तस्याःशम्याःअवकाशानि भागुरिमतेनअल्लोपः अवकाशाख्यानिसुषिरस्थानानि २९ वर्षतिमेघः तिरोवर्षाणिअसंमुखानिवर्षाणिवृष्टीः यत्रापश्यत तत्रपर्यबंधतपर्यबध्नात् ३०। ३१ पूतिकंअमंगलं अशित्यधिकशतवर्षा नोऽस्माकंइयमितिशवनिर्देशः। पक्षे शमीआयुधरक्षकत्वान्मातेवास्माकमित्यभिसंधिः ३२ कुलधर्मोऽयंक्षत्रधर्मोऽयंयदायुधसंगोपनमितिगुढआशयः। पक्षे अयंमातुर्वृक्षेबंधनाख्यः ३३ । ३४ । ३५ वत्स्यंतोव

तस्यमौर्वीमपाकर्षच्छूरःसंक्रंदनोयुधि ॥ कुलेनास्तिसमोरूपेयस्येतिनकुलःस्मृतः २५ दक्षिणांदक्षिणाचारोदिशंयेनाजयत्प्रभुः ॥ अपज्यमकरोद्वीरःसहदेवस्तदायुधम् २६ खड्गांश्चदीप्तान्दीर्घांश्चकलापांश्चमहाधनान् ॥ विपाठान्क्षुरधारांश्चधनुर्भिर्निदधुःसह २७ ॥ वैशंपायनउवाच ॥ अथान्वशासन्नकुलंकुंतीपुत्रोयुधिष्ठिरः ॥ आरुह्येमांशमींवीरधनूंष्येतानिनिक्षिप २८ तामुपारुह्यनकुलोधनूंषिनिदधेस्वयम् ॥ यानितस्यावकाशानिदिव्यरूपाण्यमन्यत २९ यत्रचापश्यतसवैतिरोवर्षाणिवर्षति ॥ तत्रतानिदृढैःपाशैःसुगाढंपर्यबंधत ३० शरीरंचमृतस्यैकंसमबध्नंतपांडवाः ॥ विवर्जयिष्यंतिनरादूरादेवशमीमिमाम् ३१ आबद्धंशवमत्रेतिगंधमाघ्रायपूतिकम् ॥ अशीतिशतवर्षेयंमातानइतिवादिनः ३२ कुलधर्मोऽयमस्माकंपूर्वैराचरितोऽपिवा ॥ समासज्ज्याथवृक्षेऽस्मिन्नितिवैव्याहरंतिते ३३ आगोपालाविपालेभ्यआचक्षाणाःपरंतपाः ॥ आजग्मुर्नगराभ्याशंपार्थाःशत्रुनिबर्हणाः ३४ जयोजयंतोविजयोजयत्सेनोजयद्बलः ॥ इतिगुह्यानिनामानिचक्रेतेषांयुधिष्ठिरः ३५ ततोयथाप्रतिज्ञाभिःप्राविशन्नगरंमहत् ॥ अज्ञातचर्यांवत्स्यंतोराष्ट्रेवर्षंत्रयोदशम् ३६ ॥ इतिश्रीमहाभारतेविराटपर्वणिपांडवप्रवेशपर्वणिपुरप्रवेशेअस्त्रसंस्थापनेपंचमोऽध्यायः ॥ ५ ॥ ॥ वैशंपायनउवाच ॥ विराटनगरंरम्यंगच्छमानोयुधिष्ठिरः ॥ अस्तुवन्मनसादेवींदुर्गांत्रिभुवनेश्वरीम् १ यशोदागर्भसंभूतांनारायणवरप्रियाम् ॥ नंदगोपकुलेजातांमंगल्यांकुलवर्धिनीम् २ कंसविद्रावणकरीमसुराणांक्षयंकरीम् ॥ शिलातटविनिक्षिप्तामाकाशंप्रतिगामिनीम् ३ वासुदेवस्यभगिनींदिव्यमाल्यविभूषिताम् ॥ दिव्यांबरधरांदेवींखड्गखेटकधारिणीम् ४ भारावतरणेपुण्येयेस्मरंतिसदाशिवाम् ॥ तान्वैतारयतेपापात्पंकेगामिवदुर्बलाम् ५ स्तोतुंप्रचक्रमेभूयोविविधैःस्तोत्रसंभवैः ॥ आमंत्र्यदर्शनाकांक्षीराजादेवींसहानुजः ६ नमोऽस्तुवरदेकृष्णेकुमारिब्रह्मचारिणि ॥ बालार्कसदृशाकारेपूर्णचंद्रनिभानने ७ चतुर्भुजेचतुर्वक्त्रेपीनश्रोणिपयोधरे ॥ मयूरपिच्छवलयेकेयूरांगदधारिणि ॥ भासिदेवियथापद्मानारायणपरिग्रहः ८

स्तुमिच्छंतः ३६ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपेपंचमोऽध्यायः ॥ ५ ॥

गच्छमानःगच्छन् दुर्गांदुर्गमसंकटतारिणीं १ नारायणेनदत्तायेवराः। उमेतिभद्रकालीतिदेवास्त्वांपूजयिष्यंतीत्येवमादयोविष्णुपुराणादौश्रुतास्तत्प्रियांमंगल्यां मंगलप्रदां २ शिलातटेकंसेनैवविनिक्षिप्तासतीआकाशंगतातां ३ खेटकंचर्म ४ । ५ स्तोत्रार्थमेवसंभवउद्भवोयेषांनाम्नां वरदेइत्यादीनांतैः आमंत्र्यसंबोध्य स्तोतुंप्रचक्रमेइतिपूर्वेणसंबंधः ६ कृष्णेकृष्णस्वरूपे ७ चतुर्भुजेचतुर्वक्त्रेइतिविष्णुब्रह्मरूपत्वमुक्तं । मयूरपिच्छाभानिइंद्रनीलादिमणिखचितानिवलयानियस्यास्तथाविधे । पद्मालक्ष्मीः अतएवनारायणपरिग्रहोविष्णुकांता ८

ब्रह्मचर्यमित्यनन्यगामित्वंदर्शितं तेनलौकिकलक्ष्मीतोव्यावृत्तिः कृष्णच्छवि र्नीलमेघस्तेनसमाकृष्णाकृष्णवर्णा ९ अष्टभुजामाह बिभ्रतीति विपुलौ वराभयप्रदत्वेनऊर्जितौद्वौबाहू । तत एकःपात्रीपात्रवान् । पंकजीपंकजवान् । घंटीघंटावान्पंचमः १० पाशंधनुर्महाचक्रंचबिभ्रतीतिपूर्वेणान्वयः । एतान्येवविविधान्यायुधानि । कुंडलपूर्णौ यौद्वौकर्णौताभ्यांविराजिता ११ के

स्वरूपंब्रह्मचर्यंचविशदंतवखेचरि ॥ कृष्णच्छविसमाकृष्णासंकर्षणसमानना ९ बिभ्रतीविपुलौबाहूशक्रध्वजसमुच्छ्रयौ ॥ पात्रीचपंकजीघंटीस्त्रीविशुद्धाचया भुवि १० पाशंधनुर्महाचक्रंविविधान्यायुधानिच ॥ कुंडलाभ्यांसुपूर्णाभ्यांकर्णाभ्यांचविभूषिता ११ चंद्रविस्पर्द्धिनादेविमुखेनत्वंविराजसे ॥ मुकुटेनाविचि त्रेणकेशबंधेनशोभिना १२ भुजंगाभोगवासेनश्रोणिसूत्रेणराजता ॥ विभ्राजसेचाबद्धेनभोगेनेवेहमंदरः १३ ध्वजेनशिखिपिच्छानामुच्छ्रितेनविराजसे ॥ कौ मारंव्रतमास्थायत्रिदिवंपावितंत्वया १४ तेनत्वंस्तूयसेदेविदत्रिदशैःपूज्यसेऽपिच ॥ त्रैलोक्यरक्षणार्थायमहिषासुरनाशिनि ॥ प्रसन्नामेसुरश्रेष्ठेदयांकुरुशिवा भव १५ जयात्वंविजयाचैवसंग्रामेचजयप्रदा ॥ ममापिविजयंदेहिवरदात्वंचसांप्रतम् १६ विंध्येचैवनगश्रेष्ठेतवस्थानंहिशाश्वतम् ॥ कालिकालिमहाकालिसी धुमांसपशुप्रिये १७ कृतानुयात्राभूतैस्त्वंवरदाकामचारिणि ॥ भारावतारियेचत्वांसंस्मरिष्यंतिमानवाः १८ प्रणमंतिचयेत्वांहिप्रभातेतुनराभुवि ॥ नतेषां दुर्लभंकिंचित्पुत्रतोधनतोऽपिवा १९ दुर्गात्तारयसेदुर्गेतत्त्वंदुर्गास्मृताजनैः ॥ कांतारेष्ववसन्नानांमग्नानांचमहार्णवे २० दस्युभिर्वानिरुद्धानांत्वंगतिःपरमा नृणाम् ॥ जलप्रतरणेचैवकांतारेष्वटवीषुच २१ येस्मरंतिमहादेविनचसीदंतितेनराः ॥ त्वंकीर्तिःश्रीर्धृतिःसिद्धिर्ह्रीर्विद्यासंततिर्मतिः २२ संध्यारात्रिःप्रभा निद्राज्योत्स्नाकांतिःक्षमादया ॥ नृणांचबंधनंमोहंपुत्रनाशंधनक्षयम् २३ व्याधिंमृत्युंभयंचैवपूजितानाशयिष्यसि ॥ सोऽहंराज्यात्परिभ्रष्टःशरणंत्वांप्रपन्नवान् २४ प्रणतश्चयथामूर्ध्नातवदेविसुरेश्वरि ॥ त्राहिमांपद्मपत्राक्षिसत्येसत्याभवस्वनः २५ शरणंभवमेदुर्गेशरण्येभक्तवत्सले ॥ एवंस्तुताहिसादेवीदर्शयामासपांड वम् २६ उपगम्यतुराजानमिदंवचनमब्रवीत् ॥ देव्युवाच ॥ शृणुराजन्महाबाहोमदीयंवचनंप्रभो २७ भविष्यत्यचिरादेवसंग्रामेविजयस्तव ॥ ममप्रसादा न्निर्जित्यहत्वाकौरववाहिनीम् २८ राज्यंनिष्कंटकंकृत्वाभोक्ष्यसेमेदिनींपुनः ॥ भ्रातृभिःसहितोराजन्प्रीतिंप्राप्स्यसिपुष्कलाम् २९ मत्प्रसादाच्चतेसौख्यमारो ग्यंचभविष्यति ॥ येचसंकीर्त्तयिष्यंतिलोकेविगतकल्मषाः ३० तेषांतुष्टाप्रदास्यामिराज्यमायुर्वपुःसुतम् ॥ प्रवासेनगरेचापिसंग्रामेशत्रुसंकटे ३१

शबंधेनकबरीरूपेण १२ वेणींवर्णयतिभुजंगेति भुजंगाभोगवासेन सर्पशरीराकारेणवासोवासना तेनतद्वाकारउपलक्ष्यते । कटिसूत्रेणसह राजताशोभमानेन । कटिसूत्रोपरिलंबमानयावे ण्येत्यर्थः । भोगेनभुजंगफणया तद्वताभुजंगेनेत्यर्थः । भोगिनेवेतियुक्तःपाठः १३ । १४ शिवाकल्याणरूपा १५ । १६ । १७ कृतानुयात्रानित्यमनुसृता भूतैर्ब्रह्माद्यैःप्राचीनैः १८ । १९ कांतारेमहारण्ये २० कांतारेदुर्गममार्गे २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ संकीर्त्तयिष्यंतिमामितिशेषः ३० । ३१

३२ । ३३ । ३४ । ३५ ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपेदुर्गास्तवःषष्ठोऽध्यायः ॥ ६ ॥ ॥ वैदूर्यरूपान्कांचनांश्वशारीन् इदंश्वेतरक्तशारीणांशारिफलकस्यचोपलक्षणं । अक्षान्पाशांश्चवाससाप्रतिमुच्यबद्ध्वा कक्षेपरिगृह्यआव्रजादितिसंबंधः १ । २ । ३ नचिरेणशीघ्रमेव ४ विशोविश्यान् ५ नतुद्विजोऽयंद्विजवेषोऽपिराजेवभविष्यतीत्यर्थः ६ शरीरलिंगैः आजानुबाहुत्वादिभिः तामरसींपद्मिनीं । एतेनस्वाभिभवशंकादर्शिता ७ द्विजंत्रैवर्णिकत्वात् ८ कामचरःत्वदिच्छानुवर्ती ९ प्रीत्याऽऽत्मना प्रीतिमतामनसा कामेनरागेण तातेतिश्रेष्ठत्वा

अटव्यांदुर्गकांतारेसागरेगहनेगिरौ ॥ येस्मरिष्यंतिमांराजन्यथाऽहंभवतास्मृता ३२ नतेषांदुर्लभंकिंचिदस्मिँल्लोकेभविष्यति ॥ इदंस्तोत्रवरंभक्त्याशृणुयाद्वापठेतवा ३३ तस्यसर्वाणिकार्याणिसिद्धिंयास्यंतिपांडवाः ॥ मत्प्रसादाच्चवःसर्वान्विराटनगरेस्थितान् ३४ नप्रज्ञास्यंतिकुरवोनरावातन्निवासिनः ॥ इत्युक्त्वावरदादेवीयुधिष्ठिरमरिंदमम् ॥ रक्षांकृत्वाचपांडूनांतत्रैवांतरधीयत ३५ ॥ ॥ इतिश्रीमहाभारतेविराटपर्वणिपांडवप्रवेशपर्वणिदुर्गास्तवेषष्ठोऽध्यायः ॥ ६ ॥ ॥ ५ ॥ ॥ वैशंपायनउवाच ॥ ततोविराटंप्रथमंयुधिष्ठिरोराजासभायामुपविष्टमाव्रजत् ॥ वैदूर्यरूपान्प्रतिमुच्यकांचनानक्षान्सकक्षेपरिगृह्यवाससा १ नराधिपोराष्ट्रपतिंयशस्विनंमहायशाःकौरववंशवर्द्धनः ॥ महानुभावोनरराजसत्कृतोदुरासदस्तीक्ष्णविषोयथोरगः २ बलेनरूपेणनरर्षभोमहानपूर्वरूपेणयथामरस्तथा ॥ महाभ्रजालैरिवसंवृतोरविर्यथाऽनलोभस्मवृतश्चवीर्यवान् ३ तमापतंतंप्रसमीक्ष्यपांडवंविराटराडिंदुमिवाभ्रसंवृतम् ॥ समागतंपूर्णशशिप्रभाननंमहानुभावंनचिरेणदृष्टवान् ४ मंत्रिद्विजान्सूतमुखान्विशस्तथायेचापिकेचित्परितःसमासते ॥ पप्रच्छकोऽयंप्रथमंसमेयिवान्नृपोपमोऽयंसमवेक्षतेसभाम् ५ नतुद्विजोऽयंभवितानरोत्तमःपतिःपृथिव्याइतिमेमनोगतम् ॥ नचास्यदासोनरथोनकुंजरःसमीपतोभ्राजतिचायमिंद्रवत् ६ शरीरलिंगैरुपसूचितोह्ययंमूर्धाभिषिक्तइतिमेमनोगतम् ॥ समीपमायातिचमेगतव्यथोयथागजस्तामरसींमदोत्कटः ७ वितर्कयंतंतुनरर्षभस्तथायुधिष्ठिरोऽभ्येत्यविराटमब्रवीत् ॥ सम्राड्विजानात्विहजीवनार्थिनंविनष्टसर्वस्वमुपागतंद्विजम् ८ इहाहमिच्छामितवानघांतिकेवस्तुंयथाकामचरस्तथाविभो ॥ तमब्रवीत्स्वागतमित्यनंतरंराजाप्रहृष्टःप्रतिसंगृहाणच ९ तंराजसिंहंप्रतिगृह्यराजाप्रीत्याऽऽत्मनाचैवमिदंबभाषे ॥ कामेनतातामिवदाम्यहंत्वांकस्यासिराज्ञोविषयादिहागतः १० गोत्रंचनामापिचशंसतत्त्वतःकिंचापिशिल्पंतवविद्यतेकृतम् ११ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ युधिष्ठिरस्यासमहंपुरासखावैयाघ्रपद्यःपुनरस्मिविप्रः ॥ अक्षान्प्रयोक्तुंकुशलोऽस्मिदेविनांकंकोतिनाम्नास्मिविराटविश्रुतः १२

त्संबोधयति १० शिल्पंकौशलं किंविषयं तवत्वया कृतंसंपादितम् ११ युधिष्ठिरस्येति लोके । पक्षेयुधिष्ठिरोऽहंतवसखास्यासंभूयासमितिसंबंधः । अस्तेराशीर्लिङिच्छांदसआर्द्धधातुकत्वाभावः तेनभूभावःअसोरित्यल्लोपाभावश्चनभवतः सलोपाभावोऽपिच्छांदसः । युधिष्ठिरस्याहमहंसखेतिपाठेऽपि युधिष्ठिरोऽहंममसखास्याःभवेतिसंबंधः हमितितुपादपूरणार्थोनिपातः । पक्षे । अहमहमितिद्विरुक्तिः सार्वभौमोऽपरसेवांचिकीर्षामीति चिंतयावैचित्र्यसूचिका । वैयाघ्रपद्यःव्याघ्रपात्गोत्रेभवः व्याघ्रइवपततीतिव्याघ्रपाद्यमस्तस्यकुलेजातोवैयाघ्रपद्यः । गर्गादित्वाद्यञ् । यद्वा ।

वैयाघ्रं व्याघ्रचर्म तेन परिवृतो रथोऽपि वैयाघ्रः सएवपद्यं पादक्रमणीयं वाहनमस्येति वैयाघ्रपद्यः । परिवृतो रथ इत्यधिकृत्य द्वैपवैयाघ्रादित्यत्र् । विप्रः विशेषेण प्राति पूरयति ब्राह्मणादीन् ध
नादिभिरिति विप्रः । धर्मसूनुत्वाद्वा विप्रोऽहं । ब्राह्मण इति पाठे तु ब्रह्मविदि विमुख्य एवार्थो ग्रहीतुं शक्यः कंक इति कृतां तनामेति प्रागेवोक्तं । अक्षान्प्रयोक्तुं कुशलः बृहदश्वशिष्यत्वात् १२
देविनः देवनशीलाः १३ प्राप्तोविवाद इति द्यूतिनां मध्ये इति शेषः द्यूतकृतां मध्ये हीनतः हीनात् पराजितात् यं कंचकमपि प्रथमं राजानं राजपुत्रं वा मुख्यं जयवंतं प्रथमशब्दोऽत्र श्रेष्ठवाची तं प्रति
विवादः प्राप्तो न विद्यते इति न । सत्यगंधरहिते द्यूते पराजिता जयवद्भिः सह नित्यं कलहं कुर्वंत्येवेत्यर्थः । हे विशांपते हे मत्स्येत्यादरार्थं द्विः संबोधयति यस्मादेवं तस्मात् कश्चन कोऽपि मया
जितो मे मदीयं धनं न धारयेत् । अहं कलहाद्भीतस्त्वमेव सत्यं ज्ञात्वा मदीयं धनं दापयेत्यर्थः १४ तेतव अप्रियमिति च्छेदः यथाऽहं विषये देशे प्रभुस्तथा कंकोऽपीति योजना १९ अंतर्धनदा

विराटउवाच ॥ ददामि ते हंत वरं यमिच्छसि प्रशाधि मत्स्यान्वशगो ह्यहं तव ॥ प्रियाश्च धूर्ता मम देविनः सदा भवांश्च देवोपम राज्यमर्हति १३ ॥ युधिष्ठिरउवाच ॥
प्राप्तो विवादः प्रथमं विशांपते न विद्यते कंचन मत्स्य हीनतः ॥ न मे जितः कश्चन धारयेद्धनं वरो ममैषोऽस्तु तव प्रसादजः १४ ॥ विराटउवाच ॥ हन्यामवश्यं यदि ते
ऽप्रियं चरेत् प्रव्राजयेयं विषयाद्द्विजांस्तथा ॥ शृण्वंतु मे जानपदाः समागताः कंको यथाऽहं विषये प्रभुस्तथा १५ समानयानो भविताऽसि मे सखा प्रभूतवस्त्रो बहुपान
भोजनः ॥ पश्येस्त्वमंतश्च बहिश्च सर्वदा कृतं च ते द्वारमपावृतं मया १६ ये त्वाऽनुवादेयुरवृत्तिकर्शिता ब्रूयाश्च तेषां वचनेन मां सदा ॥ दास्यामि सर्वं तदहं न सं
शयो न ते भयं विद्यति सन्निधौ मम १७ ॥ वैशंपायनउवाच ॥ एवं स लब्ध्वा तु वरं समागमं विराटराजेन नरर्षभस्तदा ॥ उवास धीरः परमार्चितः सुखी न चापि कश्चि
च्चरितं बुबोध तत् १८ ॥ इति श्रीमहाभारते विराटपर्वणि पांडवप्रवेशपर्वणि युधिष्ठिरप्रवेशो नाम सप्तमोऽध्यायः ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ अथापरो भीम
बलः श्रिया ज्वलन्नुपाययौ सिंहविलासविक्रमः ॥ खजां च दर्वीं च करेण धारयन्नसिं च कालांगमकोशमव्रणम् १ स सूदरूपः परमेण वर्चसा रविर्यथा लोकमिमं प्रकाश
यन् ॥ सकृष्णवासा गिरिराजसारवांस्तं मत्स्यराजं समुपेत्य तस्थिवान् २ तं प्रेक्ष्य राजा रमयन्नुपागतं ततोऽब्रवीज्जानपदान्समागतान् ॥ सिंहोन्नतांसोऽयमतीव रू
पवान्प्रदृश्यते को नु नरर्षभो युवा ३ अदृष्टपूर्वः पुरुषो रविर्यथा वितर्कयन्नास्य लभामि निश्चयम् ॥ तथाऽस्य चित्तं ह्यपि संवितर्कयन्नरर्षभस्यास्य न यामि तत्त्वतः ४
दृष्ट्वैव चैनं तु विचारयन्नहं गंधर्वराजो यदि वा पुरंदरः ॥ जानीत कोऽयं मम दर्शने स्थितो यदीप्सितं तल्लभतां च माचिरम् ५

रादीन् बहिः सैन्यारामादीन् पश्येः पर्यालो
चय अपावृतं अनावृतं १६ अनुवादेयुः पूर्वं देहीत्युक्त्या दत्तस्यैव क्षेत्रारामादेः प्रतिवर्षं पुनर्देहीति राजवचनं यदाधिकारिणं प्रति तदनुवादस्तन्निमित्तं ये त्वा प्रति अयुः प्राप्नुयुस्तेषां वचनेन सदाऽप्र
वसरेऽपि मां ब्रूयाः । क्षणमपि ब्राह्मणवृत्तेः प्रतिबंधो माभूदित्याशयः १७ वरं श्रेष्ठं समागमं प्रीतिं १८ ॥ इति० महाभारते वि० नील० सप्तमोऽध्यायः ॥ ७ ॥ खजां मंथनदंडं अंगारावक्षेपणं
वा हस्ताकारं पिष्टविकारप्रमथनार्थं वा दंडं । 'खजा मंथप्रहस्तयोः' इति विश्वः । दर्वीं शाकादिपरिवेषणार्थं असिं मांसाद्यवकर्तनार्थं खड्गं कालांगं कृष्णायसमयं तीक्ष्णमित्यर्थः । अकोशं पिधान
हीनम् १ गिरिराजसारः महामेरुवत्कठिनदेहः यद्वा गिरिराजसारो लोहं तेन तद्विकाररूपं पात्रजातं लक्ष्यते भक्ष्यद्रव्यपाकार्थं स्नेहपाकार्थं वा तद्वान् २।३ तत्त्वतः तत्त्वं न यामि न प्राप्नोमि ४।५

अवदत् उक्तवान् अच्युतो धर्मः फलमदत्वा न च्यवत इति योगात्तस्यानुजं ६ सूदः पाककर्ता बल्लवो नामतः ७ । ८ । ९ । १० तवकर्म नचैवसमंमन्ये इतरकर्मणेति शेषः आतिमानुषंकर्मवदसी त्यर्थः ११ । १२ । १३ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ ७ ॥ वेल्लिताग्रान् आकुंचिताग्रान् समुत्क्षिप्य वेणीकृत्य १ जुगूहेगोपितवती २ । ३।४ युयुक्षति योजयितुमिच्छति पुपूषतीतिपाठेपोषयितुमिच्छति ५ । ६ । ७ । ८ नैवंरूपात्वमसि किंतुदासान्दासीश्चप्रेषयंतीव बहूनांस्वामिन्यसीत्यर्थः ९ नोच्चौनबहिर्निर्गतौ गूढावित्यर्थः । नोच्चौ

विराटवाक्येनचतेनचोदितानराविराटस्यसुशीघ्रगामिनः ॥ उपेत्यकौंतेयमथाब्रुवंस्तदायथासराजाऽवदताच्युतानुजम् ६ ततोविराटंसमुपेत्यपांडवस्त्वदीन रूपंवचनंमहामनाः ॥ उवाचसूदोऽस्मिनरेंद्रबल्लवोभजस्वमांव्यंजनकारमुत्तमम् ७ ॥ विराटउवाच ॥ नसूदतांबल्लवश्रद्दधामितेसहस्रनेत्रप्रतिमोविराजसे ॥ श्रियाचरूपेणचविक्रमेणचप्रभाससेत्वंनृवरोनरेष्विव ८ ॥ भीमउवाच ॥ नरेंद्रसूदः परिचारकोऽस्मितेजानामिसूपान्प्रथमंचकेवलान् ॥ आस्वादितायेनृपते पुराऽभवन्युधिष्ठिरेणापिनृपेणसर्वशः ९ बलेनतुल्यश्चनविद्यतेमयानियुद्धशीलश्चसदैवपार्थिव ॥ गजैश्चसिंहैश्चसमेयिवानहंसदाकरिष्यामितवानघप्रियम् ॥ १० ॥ विराटउवाच ॥ ददामितेहंतवरान्महानसेतथाचकुर्याःकुशलंप्रभाषसे ॥ नचैवमन्येतवकर्मयत्समंसमुद्रनेमिंपृथिवींत्वमर्हसि ११ यथाहिकामोभवतस्तथा कृतंमहानसेत्वंभवमेपुरस्कृतः ॥ नराश्चयेतत्रसमाहिताःपुराभवांश्चतेषामधिपोमयाकृतः १२ ॥ वैशंपायनउवाच ॥ तथासभीमोविहितोमहानसेविराटराज्ञो दयितोऽभवद्दृढम् ॥ उवासराज्येनचतंपृथग्जनोबुबोधतत्रानुचराश्चकेचन १३ ॥ इतिश्रीमहाभारतेविराटपर्वणि पांडवप्रवेशपर्वणिभीमप्र० अष्टमोऽध्यायः ॥ ८ ॥ ॥ वैशंपायनउवाच ॥ ततःकेशान्समुत्क्षिप्यवेल्लिताग्राननिंदितान् ॥ कृष्णान्सूक्ष्मान्मृदून्दीर्घान्समुद्ग्रथ्यशुचिस्मिता १ जुगूहेदक्षिणेपार्श्वेमृदूनसितलोचना ॥ वासश्चपरिधायैकंकृष्णासुमलिनंमहत् २ कृत्वावेषंचसैरंध्र्यास्ततोव्यचरदार्तवत् ॥ तांनराःपरिधावंतींस्त्रियश्चसमुपाद्रवन् ३ अपृच्छंश्चैवतांदृष्ट्वाकात्वंकिंचचिकीर्षसि ॥ सातानुवाचराजेंद्रसैरंध्र्यहमिहागता ४ कर्मचेच्छामिवैकर्तुंतस्ययोमांयुयुक्षति ॥ तस्यारूपेणवेषेणश्लक्ष्णयाचतथा गिरा ॥ नश्रद्दधततांदासीमन्नहेतोरुपस्थिताम् ५ विराटस्यतुकैकेयीभार्यापरमसंमता ॥ आलोकयंतीददृशेप्रासादाद्द्रुपदात्मजाम् ६ सासमीक्ष्यतथारूपामनाथामेकवाससम् ॥ समाहूयाब्रवीद्भद्रेकात्वंकिंचचिकीर्षसि ७ सातामुवाचराजेंद्रसैरंध्र्यहमुपागता ॥ कर्मचेच्छाम्यहंकर्तुंतस्ययोमांयुयुक्षति ८ ॥ सुदेष्णोवाच ॥ नैवंरूपाभवंत्येवयथावदसिभामिनि ॥ प्रेषयंतीववैदासीर्दासांश्चविविधान्बहून् ९ नोच्चगुल्फासंहतोरुस्त्रिगंभीराषडुन्नता ॥ रक्तापंचसुरक्तेषुहंसगद्गदभाषिणी १० सुकेशीसुस्तनीश्यामापीनश्रोणिपयोधरा ॥ तेनतेनैवसंपन्नाकाश्मीरीवितुरंगमी ११

गुल्फौपादग्रंथीयस्याःसा तथात्रिगंभीरा त्रिषु शब्दबुद्धिनाभीषुगहना । षडुन्नता षट्सुनासिकाक्षिद्वयश्रोत्रनखस्तनकृकाटिकासुउन्नता । पंचसुस्थानेषु पादपाणितलनेत्रांतोष्ठजिह्वानखेषु एतान्येवसंज्ञया पंचरक्तानितेषुरक्ता । हंसवत्गद्गदंकिंचिल्लुप्ताक्षरंमधुरंवाभाषते साहंसगद्गदभाषिणी १० तेनतेनलक्षणेनमंदगतित्वादिना ११

अरालेवक्रेकृष्णेवापक्ष्मणीययोस्तादृशेनयनेयस्याःसा । तथाकंबुग्रीवा शंखवत्रेखात्रयांकितग्रीवा । गूढशिरागुप्तनाडिका ११ । १३ । १४ । १५ । १६ सैरंध्रीभुजिष्यापदे प्राकृद्यर्थेऽव्या ख्याते १७ कर्तुंसंस्कर्तुं १८ । १९ कृष्णांचभार्यांपांडूनामितिस्वात्मना स्वस्याराधनंसंभवतीतिनेयंमृषोक्तिः २० । २१ राजात्वांचेन्नइच्छतितदात्वांमूर्ध्नित्रासये परंतुराजात्वांसर्वेणचेतसा गच्छेत्स्पृहयेदेवेतिशंके २२ त्वंस्त्रीणामपिमोहकरी।किमुतपुंसामित्याह स्त्रियइति २३ वृक्षा।नितिवृक्षाअपित्वांदृष्ट्वास्तब्धाःसंतीत्यर्थः २४। २५ प्रसक्तंआसक्तियुक्तंयथास्यात्तथा २६ एवमनेनै

अरालपक्ष्मनयनाबिंबोष्ठीतनुमध्यमा ॥ कंबुग्रीवागूढशिरापूर्णचंद्रनिभानना १२ शारदोत्पलपत्राक्ष्याशारदोत्पलगंधया ॥ शारदोत्पलसेविन्यारूपेणसदृ शीश्रिया १३ कात्वंब्रूहियथाभद्रेनासिदासीकथंचन ॥ यक्षीवायदिवादेवीगंधर्वीयदिवाऽप्सराः १४ देवकन्याभुजंगीवानगरस्याथदेवता ॥ विद्याधरीकिन्नरी वायदिवारोहिणीस्वयम् १५ अलंबुषामिश्रकेशीपुंडरीकाऽथमालिनी ॥ इंद्राणीवारुणीवात्वंत्वष्टुर्धातुःप्रजापतेः ॥ देव्योदेवेषुविख्यातास्तासांत्वंकतमाशुभे १६ ॥ द्रौपद्युवाच ॥ नास्मिदेवीनगंधर्वीनासुरीनचराक्षसी ॥ सैरंध्रीतुभुजिष्याऽस्मिसत्यमेतद्ब्रवीमिते १७ केशान्जानाम्यहंकर्तुंपिंषेसाधुविलेपनम् ॥ म ल्लिकोत्पलपद्मानांचंपकानांतथाशुभे १८ ग्रथयिष्येविचित्राश्चस्रजःपरमशोभनाः ॥ आराधयंसत्यभामांकृष्णस्यमहिषींप्रियाम् १९ कृष्णांचभार्यांपांडूनां कुरूणामेकसुंदरीम् ॥ तत्रतत्रचराम्येवंलभमानासुभोजनम् २० वासांसियावंतिलभेतावत्तावद्रमेतथा ॥ मालिनीत्येवमेनामस्वयंदेवीचकारसा ॥ साऽहम द्यागतादेविसुदेष्णेत्वन्निवेशनम् २१ ॥ सुदेष्णोवाच ॥ मूर्ध्नित्वांवासयेयंवैसंशयोमेनविद्यते ॥ नचेदिच्छतिराजात्वांगच्छेत्सर्वेणचेतसा २२ स्त्रियोराजकु लेयाश्चयाश्चेमाममवेश्मनि ॥ प्रसक्तास्त्वांनिरीक्षंतेपुमांसंकंनमोहयेः २३ वृक्षांश्चावस्थितान्पश्ययइमेममवेश्मनि ॥ तेऽपित्वांसन्नमंतीवपुमांसंकंनमोहयेः २४ राजाविराटःसुश्रोणिदृष्ट्वावपुरमानुषम् ॥ विहायमांवरारोहेगच्छेत्सर्वेणचेतसा २५ यंहित्वमनवद्यांगितरलायतलोचने ॥ प्रसक्तमभिवीक्षेथाःसकामवश गोभवेत् २६ यश्चत्वांसततंपश्येत्पुरुषश्चारुहासिनि ॥ एवंसर्वानवद्यांगिसचानंगवशोभवेत् २७ अध्यारोहेद्यथावृक्षान्वधायैवात्मनोनरः ॥ राजवेश्मनिते सुभ्रुगृहेतुस्यात्तथामम २८ यथाचकर्कटीगर्भमाधत्तेमृत्युमात्मनः ॥ तथाविधमहंमन्येवासंतवशुचिस्मिते २९ ॥ द्रौपद्युवाच ॥ नास्मिलभ्याविराटेननचा न्येनकदाचन ॥ गंधर्वाःपतयोमह्यंयुवानःपंचभामिनि ३० पुत्रागंधर्वराजस्यमहासत्वस्यकस्यचित् ॥ रक्षंतितेचमांनित्यंदुःखाचारातथाह्यहम् ३१ योमेन दद्यादुच्छिष्टंनचपादौप्रधावयेत् ॥ प्रीणेरंस्तेनवासेनगंधर्वाःपतयोमम ३२

वल्लीवृक्षादिस्तब्धीभावचिन्हेन २७ । २८ कर्कटीषट्पादवान्जंतुः २९ मह्यंमम गंधर्वाइतिदेवतां शजत्वादमानुषत्वमात्रंविवक्षितं अतिमानुषकर्माणइत्यर्थः ३० गंधर्वतुल्योराजा गंधर्वराजःपांडुस्तस्येतिगूढोऽभिसंधिः दुःखादुःखवतीतिदुःखदाचाहं परपत्नीत्वात् आरासिंहीव सिंहीपैररनाक्रमणीया । ‘आरःपुंसितरोर्भेदेतथाकर्कटदंष्ट्रिणोः’इतिमेदिनी । आरशब्दाद्दंतत्वात्स्त्रियांटाप् । स्वयमेवतीक्ष्णव्रताऽस्मीतिभावः । दुःखाचारेति क्लेशकालोऽयंक्रियान्ममास्तीतिदर्शयति ३१ । ३२

परांतनुंप्रविश्येत्यनेनपरलोकंगच्छेदेवेत्युक्तम् ३३ तेऽपिदुःखशीलाः केनचिन्निमित्तेनदुःखंसहंतीत्यर्थः । बलवंतश्चतेप्रियाश्च ३४ हेनंदिनिसुखदे ३५ । ३६ । ३७ ॥ इतिवि० नी० भा० नवमोऽध्यायः ॥ ९ ॥ ॥ ७ ॥ ॥ उपयादुपायात् १ । २ । ३ । ४ वेशोरूपांतरप्रकाशनंकर्मयस्यसवैश्यः । अरिष्टनेमिःअप्रतिहतचक्रोऽस्मीतिगूढोऽभिसंधिः । कुरुपुंगवानां

योहिमांपुरुषोगृध्येद्यथाऽन्याःप्राकृताःस्त्रियः ॥ तामेवनिवसेद्रात्रिंप्रविश्यचपरांतनुम् ३३ नचाप्यहंचालयितुंशक्याकेनचिदंगने ॥ दुःखशीलाहिगंधर्वास्तेचमेबलवत्प्रियाः ३४ प्रच्छन्नाश्चापिरक्षंतितेमांनित्यंशुचिस्मिते ॥ सुदेष्णोवाच ॥ एवंत्वांवासयिष्यामियथात्वंनंदिनिच्छसि ३५ नचपादौनचोच्छिष्टंस्प्रक्ष्यसित्वंकथंचन ॥ वैशंपायनउवाच ॥ एवंकृष्णाविराटस्यभार्ययापरिसांत्विता ३६ उवासनगरेतस्मिन्पतिधर्मवतीसती ॥ नचैनांवेदतत्रान्यस्तत्त्वेनजनमेजय ३७ ॥ इतिश्रीमहाभारतेविराटपर्वणिपांडवप्रवेशपर्वणिद्रौपदीप्रवेशेनवमोऽध्यायः ॥ ९ ॥ वैशंपायनउवाच ॥ सहदेवोऽपिगोपानांकृत्वावेषमनुत्तमम् ॥ भाषांचैषांसमास्थायविराटमुपयादथ १ गोष्ठमासाद्यातिष्ठंतंभवनस्यसमीपतः ॥ राजाऽथदृष्ट्वापुरुषान्प्राहिणोज्जातविस्मयः २ तमायांतमभिप्रेक्ष्यभ्राजमानंनरर्षभम् ॥ समुपस्थायवैराजापप्रच्छकुरुनंदनम् ३ कस्यवात्वंकुतोवात्वंकिंवात्वंतुचिकीर्षसि ॥ नहिमेदृष्टपूर्वस्त्वंतत्त्वंब्रूहिनरर्षभ ४ संप्राप्यराजानममित्रतापनंततोऽब्रवीन्मेघमहौघनिःस्वनः ॥ वैश्योऽस्मिनाम्नाऽहमरिष्टनेमिर्गोसंख्यआसंकुरुपुंगवानाम् ५ वस्तुंत्वयीच्छामिविशांवरिष्ठतान्राजसिंहान्नहिवेद्मिपार्थान् ॥ नशक्यतेजीवितुमप्यकर्मणानचत्वदन्योममरोचतेनृपः ६ ॥ विराटउवाच ॥ त्वंब्राह्मणोयदिवाक्षत्रियोऽसिसमुद्रनेमीश्वररूपवानसि ॥ आचक्ष्वमेतत्त्वममित्रकर्शननवैश्यकर्मत्वयिविद्यतेक्षमम् ७ कस्यासिराज्ञोविषयादिहागतःकिंवाऽपिशिल्पंतवविद्यतेकृतम् ॥ कथंत्वमस्मासुनिवत्स्यसेसदावदस्वकिंचापितवेहवेतनम् ८ ॥ सहदेवउवाच ॥ पंचानांपांडुपुत्राणांज्येष्ठोभ्रातायुधिष्ठिरः ॥ तस्याष्टशतसाहस्रागवांवर्गाःशतंशतम् ९ अपरेशतसाहस्राद्विस्तावंतस्तथाऽपरे ॥ तेषांगोसंख्यआसंवैतंतिपालेतिमांविदुः १० भूतंभव्यंभविष्यंचयच्चसंख्यागतंगवाम् ॥ नमेऽस्त्यविदितंकिंचित्समंताद्दशयोजनम् ११ गुणाःसुविदितात्यासन्ममतस्यमहात्मनः ॥ आसीच्चसमयादृष्टःकुरुराजोयुधिष्ठिरः १२ क्षिप्रंचगावोबहुलाभवंतिनतासुरोगोभवतीहकश्चन ॥ तैस्तैरुपायैर्विदितंममैतदेतानिशिल्पानिमयिस्थितानि १३ वृषभांश्चापिजानामिराजन्पूजितलक्षणान् ॥ येषांमूत्रमुपाघ्रायअपिवंध्याप्रसूयते १४ ॥ विराटउवाच ॥ शतंसहस्राणिसमाहितानिसवर्णवर्णस्यविमिश्रितान्गुणैः ॥ पशून्सपालान्भवतेददाम्यहंत्वदाश्रयामेपशवोभवंत्विह १५

पांडवानांमध्येगोसंख्यः गोइतिइंद्रियवाचित्वात्पंचानांसंख्यायस्यसगोसंख्यः पंचसंख्यः पंचमइत्यर्थः ५ तान्राजसिंहान् वर्तमानकाले राजमूर्धस्थानूनवेद्मिनोपलभे । स्त्रग्वीध्वस्तइतिवद्विशेषणादर्शनाद्विशिष्टादर्शनमुक्तमित्यदोषः ६ । ७ । ८ । ९ गोसंख्योगवांपरीक्षकः तंतिपालःवचनकरः १० संख्यागतंपरीक्षायामवगतम् ११ । १२ । १३ । १४ समानोवर्णोयेषांतेसवर्णाः वर्णस्यवर्णेनविमिश्रिताश्चपाटलादयः विभक्तिलोपआर्षः सवर्णाश्चवर्णविमिश्रिताश्चतांस्तत्तद्गुणैरुपलक्षितान् १५

राज्ञोराज्यकर्तुः विराटपतेः प्रजापालकस्य भरणंवेतनम् १६ ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपेदशमोऽध्यायः ॥ १० ॥ अदृश्यतदृष्टः रूपसंपदाउपलक्षितः प्राकारवप्रेस्थितैः तत्समीपेवास्थितोऽदृश्यतदृष्टः । प्रतिमुच्यपरिधाय दीर्घेकुंडलेताटंके । कंबूनांशंखानामुपरिकंबुपरिहाटकेकनकमयेवलयेचपरिमुच्य १ दीर्घान्मूर्धजान्बाहूच प्रविकीर्यप्रसार्य २ । ३ । ४ । ५

॥ वैशंपायनउवाच ॥ तथासराज्ञोविदितोविराटपतेरुवासतत्रैवसुखंनरोत्तमः ॥ नचैनमन्येऽपिविदुःकथंचनप्रादाच्चतस्मैभरणंयथेप्सितम् १६ ॥ इतिश्रीमहाभारतेविराटपर्वणिपांडवप्रवेशपर्वणिसहदेवप्रवेशेदशमोऽध्यायः ॥ १० ॥ वैशंपायनउवाच ॥ अथापरोऽदृश्यतरूपसंपदास्त्रीणामलंकारधरोबृहत्पुमान् ॥ प्राकारवप्रेप्रतिमुच्यकुंडलेदीर्घेचकंबूपरिहाटकेशुभे १ बाहूचदीर्घान्प्रविकीर्यमूर्धजान्महाभुजोवारणतुल्यविक्रमः ॥ गतेनभूमिंप्रतिकंपयंस्तदाविराटमासाद्यसभासमीपतः २ तंप्रेक्ष्यराजोपगतंसभातलेव्याजात्प्रतिच्छन्नमरिप्रमाथिनम् ॥ विराजमानंपरमेणवर्चसासुतंमहेंद्रस्यगजेंद्रविक्रमम् ३ सर्वानपृच्छच्चसभानुचारिणःकुतोऽयमायातिपुरानमेश्रुतः ॥ नचैनमूचुर्विदितंतदानराःसविस्मयंवाक्यमिदंनृपोऽब्रवीत् ४ सत्वोपपन्नःपुरुषोऽमरोपमःश्यामोयुवावारणयूथपोपमः ॥ आमुच्यकंबूपरिहाटकेशुभेविमुच्यवेणीमपिनह्यकुंडले ५ स्रग्वीसुकेशःपरिधायचान्यथाशुशोभधन्वीकवचीशरीयथा ॥ आरुह्ययानंपरिधावतांभवान्सुतैःसमोमेभववामयासमः ६ वृद्धोह्यहंवैपरिहारकामःसर्वान्मत्स्यांस्तरसापालयस्व ॥ नैवंविधाःक्लीबरूपाभवंतिकथंचनेतिप्रतिभातिमेमनः ७ ॥ अर्जुनउवाच ॥ गायामिनृत्याम्यथवादयामिभद्रोऽस्मिनृत्येकुशलोऽस्मिगीते ॥ त्वमुत्तरायैप्रदिशस्वमांस्वयंभवामिदेव्यानरदेवनर्तकः ८ इदंतुरूपंममयेनकिंतवप्रकीर्तयित्वाभृशशोकवर्द्धनम् ॥ बृहन्नलांमांनरदेवविद्धिसुतंसुतांवापितृमातृवर्जिताम् ९ ॥ विराटउवाच ॥ ददामितेहंतवरंबृहन्नलेसुतांचमेनर्तययाश्चतादृशीः ॥ इदंतुतेकर्मसमंनमेमतंसमुद्रनेमिंपृथिवींत्वमर्हसि १० ॥ वैशंपायनउवाच ॥ बृहन्नलांतामभिवीक्ष्यमत्स्यराट्कलासुनृत्येषुतथैववादिते ॥ संमंत्र्यराजाविविधैःस्वमंत्रिभिःपरीक्ष्यचैनंप्रमदाभिराशुवै ११ अपुंस्त्वमप्यस्यनिशम्यचस्थिरंततःकुमारीपुरमुत्ससर्जतम् ॥ सशिक्षयामासचगीतवादितंसुतांविराटस्यधनंजयःप्रभुः १२ सखीश्चतस्याःपरिचारिकास्तथाप्रियश्चतासांसबभूवपांडवः १३ तथाससत्रेणधनंजयोवसन्प्रियाणिकुर्वन्सहताभिरात्मवान् ॥ तथाचतंतत्रनजज्ञिरेजनाबहिश्चरावाऽप्यथचांतरेचराः १४ ॥ इतिश्रीमहाभारतेविराटपर्वणिपांडवप्रवेशपर्वणिअर्जुनप्रवेशोनामएकादशोऽध्यायः ॥ ११ ॥ वैशंपायनउवाच ॥ अथापरोऽदृश्यतपांडवःप्रभुर्विराटराजंतरसासमेयिवान् ॥ तमापतंतंददृशेपृथग्जनोविमुक्तमभ्रादिवसूर्यमंडलम् १ सवैहयानैक्षततांस्ततस्ततःसमीक्षमाणंसददर्शमत्स्यराट् ॥ ततोऽब्रवीत्याननुगान्नरेश्वरःकुतोऽयमायातिनरोऽमरोपमः २

६ परिहारकामः अमात्येषुराज्यभारंन्यस्तुकामः ७ देव्याउत्तरायाः ८ येनहेतुनाइदंरूपंममजातंतत्कीर्तनं तवनिकटेव्यर्थंशोककरंचेत्यर्थः ९ तेसमंत्वदाकृत्यायुक्तंनइतिमेममतम् १० । ११ अपुंस्त्वंक्लीबत्वं निशम्यआलोच्य १२ । १३ सत्रेणकैतवेन । 'सत्रमाच्छादनेयज्ञेसदादानेचकैतवे' इतिविश्वः । नजज्ञिरेनज्ञातवंतः १४ ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपे एकादशोऽध्यायः ॥ ११ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ १ । २

३ । ४ । ५ । ६ । प्रकृतिंजातिं । विनयंशिक्षां । प्रतिपत्तिंदोषनिराकरणप्रकारं । चिकित्सीतंव्याध्युपशमोपायम् ७ कातरंभीरु वडवाअश्वा अतएवग्रंथिकमश्वशास्त्रज्ञम् ८

स्वयंहयानीक्षातिमामकान्दृढंभुवंहयज्ञोभविताविचक्षणः ॥ प्रवेश्यतामेषसमीपमाशुमेविभातिवीरोहियथाऽमरस्तथा ३ अभ्येत्यराजानममित्रहाऽब्रवीज्जयोऽस्तुतेपार्थिवभद्रमस्तुवः ॥ हयेषुयुक्तोनृपसंमतःसदातवाश्वसूतोनिपुणोभवाम्यहम् ४॥ विराटउवाच ॥ ददामियानानिधनंनिवेशनंममाश्वसूतोभवितुंत्वमर्हसि ॥ कुतोऽसिकस्यासिकथंत्वमागतःप्रब्रूहिशिल्पंतवविद्यतेचयत् ५ ॥ नकुलउवाच ॥ पंचानांपांडुपुत्राणांज्येष्ठोभ्रातायुधिष्ठिरः॥ तेनाहमश्वेषुपुरानियुक्तःशत्रुकर्शन ६ अश्वानांप्रकृतिंवेद्मिविनयंचापिसर्वशः ॥ दुष्टानांप्रतिपत्तिंचकृत्स्नंचैवचिकित्सितम् ७ नकातरंस्यान्ममजातुवाहनंनमेऽस्तिदुष्टावडवाकुतोहयाः ॥ जनस्तुमामाहसचापिपांडवोयुधिष्ठिरोग्रंथिकमेवनामतः ८॥ विराटउवाच ॥ यदस्तिकिंचिन्ममवाजिवाहनंतदस्तुसर्वंत्वदधीनमद्यवै॥ येचापिकेचिन्ममवाजियोजकास्त्वदाश्रयाःसारथयश्चसंतुमे ९ इदंतवेष्टंयदिवैसुरोपमब्रवीहियत्तेप्रसमीक्षितंवसु ॥ नतेऽनुरूपंहयकर्मविद्यतेप्रभासिराजेवहिसंमतोमम १० युधिष्ठिरस्येवहिदर्शनेनमेसमंतवेदंप्रियमत्रदर्शनं ॥ कथंतुभृत्यैःसविनाकृतोवनेवसत्यनिंद्योरमतेचपांडवः ११॥ वैशंपायनउवाच ॥ तथासगंधर्ववरोपमोयुवाविराटराज्ञामुदितेनपूजितः॥ नचैनमन्येऽपिविदुःकथंचनप्रियाभिरामंविचरंतमंतरा १२ एवंहिमत्स्येन्यवसंतपांडवायथाप्रतिज्ञाभिरमोघदर्शनाः॥ अज्ञातचर्यांव्यचरन्समाहिताःसमुद्रनेमीपतयोऽतिदुःखिताः १३ ॥ इतिश्रीमहाभारतेविराटपर्वणिपांडवप्रवेशपर्वणिनकुलप्रवेशेद्वादशोऽध्यायः ॥ १२ ॥ ॥ समाप्तंचेदंप्रवेशपर्व ॥ अथसमयपालनपर्व ॥ ॥ जनमेजयउवाच ॥ एवंतेमत्स्यनगरेप्रच्छन्नाःकुरुनंदनाः ॥ अतऊर्ध्वंमहावीर्याःकिमकुर्वतवैद्विज १ ॥ वैशंपायनउवाच ॥ एवंमत्स्यस्यनगरेप्रच्छन्नाःकुरुनंदनाः ॥ आराधयंतोराजानंयदकुर्वततच्छृणु २ तृणबिंदुप्रसादाच्चधर्मस्यचमहात्मनः ॥ अज्ञातवासमेवंतुविराटनगरेऽवसन् ३ युधिष्ठिरःसभास्तारोमत्स्यानामभवत्प्रियः ॥ तथैवचविराटस्यसपुत्रस्यविशांपते ४ सह्यक्षहृदयज्ञस्तान्क्रीडयामासपांडवः ॥ अक्षवत्यांयथाकामंसूत्रबद्धानिवद्विजान् ५ अज्ञातंचविराटस्यविजित्यवसुधर्मराट् ॥ भ्रातृभ्यःपुरुषव्याघ्रोयथार्हंसंप्रयच्छति ६ भीमसेनोऽपिमांसानिभक्ष्याणिविविधानिच ॥ अतिसृष्टानिमत्स्येनविक्रीणीतेयुधिष्ठिरे ७ वासांसिपरिजीर्णानिलब्धान्यंतःपुरेऽर्जुनः ॥ विक्रीणानश्चसर्वेभ्यःपांडवेभ्यःप्रयच्छति ८ सहदेवोऽपिगोपानांवेषमास्थायपांडवः ॥ दधिक्षीरंघृतंचैवपांडवेभ्यःप्रयच्छति ९ नकुलोऽपिधनंलब्ध्वाकृतेकर्मणिवाजिनाम् ॥ तुष्टेतस्मिन्नरपतौपांडवेभ्यःप्रयच्छति १०

९ । १० । ११ । १२ । १३ ॥ इतिश्रीम॰ विराटपर्वणिनीलकंठीयेभारतभावदीपे नकुलप्रवेशोनामद्वादशोऽध्याय ॥ १२ ॥ एवमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०

११ संपादयंतोऽन्योन्यमाराधयंतः गर्भधृताइवप्रच्छन्नत्वेन सेवाश्रमेणषदुःखिताइत्यर्थः १२ । १३ ब्रह्मणउत्सवः शरदिनवधान्योत्पत्तौसर्वैःक्रियते सचदेशविशेषेप्रसिद्धः १४ यथाब्रह्मणःसमाजेब्रह्मलोके कैलासेवापशुपतेःसमाजेइव मत्स्येषुसमापेतुरितिसंबंधः १५ । १६ स्ववदाताःअत्यंतनिर्मलाः मनस्विनःप्रीतमनसः लब्धलक्षाःप्राप्तविजयाः १७ । १८ सूदेनभीमेन १९ दुःखेनैव पारतंत्र्यात्प्राकट्यभयाद्वादुःखं नतुभंगभयात् विवृतेप्रकाशे २० । २१ कक्षांपरिकरं । कच्छामितिपाठेऽपिसएवार्थः । यद्वाकक्षांरज्जुं रज्ज्वापाटनभयान्मल्लैरंगुल्योबध्यंतइतिप्रसिद्धेरंगुलीर्बद्धेत्यर्थः २२ । २३ । २४ । २५ । २६ कृतंकचिद्देशेनिपीडनं प्रतिकृतंतस्यमोचनं । सुसंकटैःमुष्टिग्रहणेनकृशीकृतैः । सकंटकैरितिपाठेसकवचैःसकिणैर्वा । 'कंटकोबाहुचरणकवचेकठिनेकिणे'इतिविश्वः । संनिपातोऽगसंघट्टनं । अवधूतंतेनैवदूरीकरणं । प्रमाथादयउक्तामल्लशास्त्रे । 'निपात्यपेषणंभूमौप्रमाथइतिकथ्यते । यत्तूत्थाप्यांगमथनंतदुन्मथनमुच्यते'

कृष्णातुसर्वान्भर्तॄंस्तान्निरीक्षंतीतपस्विनी ॥ यथापुनरविज्ञातातथाचरतिभामिनी ११ एवंसंपादयंतस्तेतदाऽन्योन्यंमहारथाः ॥ विराटनगरेचेरुःपुनर्गर्भधृताइव १२ साशंकाधार्तराष्ट्रस्यभयात्पांडुसुतास्तदा ॥ प्रेक्षमाणास्तदाकृष्णामूषुश्छन्नानराधिप १३ अथमासेचतुर्थेतुब्रह्मणःसुमहोत्सवः ॥ आसीत्समृद्धोमत्स्येषुपुरुषाणांसुसंमतः १४ तत्रमल्लाःसमापेतुर्दिग्भ्योराजन्सहस्रशः ॥ समाजेब्रह्मणोराजन्यथापशुपतेरिव १५ महाकायामहावीर्याःकालखंजाइवासुराः ॥ वीर्योन्मत्ताबलोदग्राराज्ञासमभिपूजिताः १६ सिंहस्कंधकटिग्रीवाःस्ववदातामनस्विनः ॥ असकृल्लब्धलक्षास्तेरंगेपार्थिवसन्निधौ १७ तेषामेकोमहानासीत्सर्वमल्लानथाह्वयत् ॥ आवल्गमानंतंरंगेनोपतिष्ठतिकश्चन १८ यदासर्वेविमनसस्तेमल्लाहतचेतसः ॥ अथसूदेनतंमल्लंयोधयामासमत्स्यराट् १९ नोद्यमानस्तदाभीमोदुःखेनैवाकरोन्मतिम् ॥ नहिशक्नोतिविवृतेप्रत्याख्यातुंनराधिपम् २० ततःसपुरुषव्याघ्रःशार्दूलशिथिलश्चरन् ॥ प्रविवेशमहारंगंविराटमभिपूजयन् २१ बबंधकक्षांकौंतेयस्ततःसंहर्षयन्जनम् ॥ ततस्तुवृत्रसंकाशंभीमोमल्लंसमाह्वयत् २२ जीमूतंनामतंतत्रमल्लंप्रख्यातविक्रमम् ॥ तावुभौसुमहोत्साहावुभौभीमपराक्रमौ २३ मत्ताविवमहाकायौवारणौषष्टिहायनौ ॥ ततस्तौनरशार्दूलौबाहुयुद्धंसमीयतुः २४ वीरौपरमसंहृष्टावन्योन्यजयकांक्षिणौ ॥ आसीत्सुभीमःसंपातोवज्रपर्वतयोरिव २५ उभौपरमसंहृष्टौबलेनातिबलावुभौ ॥ अन्योन्यस्यांतरंप्रेप्सूपरस्परजयैषिणौ २६ उभौपरमसंहृष्टौमत्ताविवमहागजौ ॥ कृतप्रतिकृतैश्चित्रैर्बाहुभिश्चसुसंकटैः ॥ सन्निपातावधूतैश्चप्रमाथोन्मथनैस्तथा २७ क्षेपणैर्मुष्टिभिश्चैववराहोद्धूतनिःस्वनैः ॥ तलैर्वज्रनिपातैश्चप्रसृष्टाभिस्तथैवच २८ शलाकानखपातैश्चपादोद्धूतैश्चदारुणैः ॥ जानुभिश्चाश्मनिर्घोषैःशिरोभिश्चावघट्टनैः २९ तद्युद्धमभवद्घोरमशस्त्रंबाहुतेजसा ॥ बलप्राणेनशूराणांसमाजोत्सवसन्निधौ ३० अरज्यतजनःसर्वःसोत्कृष्टनिनदोत्थितः ॥ बलिनोःसंयुगेराजन्वृत्रवासवयोरिव ३१



२७ 'क्षेपणंकथ्यतेयत्तुस्थानात्प्रच्यावनंहठात् । उभयोर्भुजयोर्मुष्टिरुरोमध्येनिपात्यते । मुष्टिरित्युच्यतेतज्ज्ञैर्मल्लविद्याविशारदैः । अवाङ्मुखंस्कंधगतंभ्रामयित्वातथैवयः । क्षिप्तस्यशब्दःसभवेद्वराहोद्धूतनिःस्वनः' । तलैर्वज्रनिपातैर्वज्रवद्दृढपातैश्चपेटैः । 'अंगुल्यःप्रसृतायास्तुताःप्रसृष्टाउदीरिताः' २८ 'ऋज्वीदृढारुषाक्षिप्ताशलाकासागुलीस्मृता' । तस्यानखपातैः । पादोद्धूतैःपादप्रसारणेनाक्षेपैः । जानुभिःशिरोभिश्चकृतैरवघट्टनैरास्फालनैः । अश्मनिर्घोषैरित्युभयविशेषणं २९ अशस्त्रंनियुद्धंयथोक्तंतत्रैव । 'बाहुयुद्धंहिमल्लानामशस्त्रमृषिभिःस्मृतं । मृतस्यतस्यनस्वर्गोयशोनेहापिविद्यते'इति । बलप्राणेन बलेनशारीरबलेन प्राणेनमानसबलेनच ३० सोत्कृष्टनिनदः हीहीशब्दोच्चारणेनपराजितस्यसमुत्थापनंतत्सहितः ३१

'आकृष्यक्रोडीकरणंप्रकर्षणमुदाहृतं । आकर्षणंलीलयैवसंमुखीकरणंस्मृतं । पुरःपश्चात्पार्श्वयोश्चाभ्याकर्षोभ्रमणंतथा । पश्चात्प्रपातनंवेगाद्विकर्षणमुदाहृतम्' ३२ । ३१ । ३४ । ३५

प्रकर्षणाकर्षणयोरभ्याकर्षविकर्षणैः ॥ आकर्षतुरथान्योन्यंजानुभिश्चापिजघ्नतुः ३२ ततः शब्देनमहताभर्त्सयंतौपरस्परम् ॥ व्यूढोरस्कौदीर्घभुजौनियुद्धकुशलावुभौ ॥ बाहुभिःसमसज्जेतामायसैःपरिघैरिव ३३ चकर्षदोर्भ्यामुत्पात्यभीमोमल्लममित्रहा ॥ निनदंतमभिक्रोशन्शार्दूलइववारणम् ३४ समुद्यम्यमहाबाहुर्भ्रामयामासवीर्यवान् ॥ ततोमल्लाश्चमत्स्याश्चविस्मयंचक्रिरेपरम् ३५ भ्रामयित्वाशतगुणंगतसत्वमचेतनम् ॥ प्रत्यपिंषन्महाबाहुर्मल्लंभुविवृकोदरः ३६ तस्मिन्विनिहतेवीरेजीमूतेलोकविश्रुते ॥ विराटःपरमंहर्षमगच्छद्बांधवैःसह ३७ प्रहर्षात्प्रददौवित्तंबहुराजामहामनाः ॥ बल्लवायमहारंगेयथावैश्रवणस्तथा ३८ एवंससुबहून्मल्लान्पुरुषांश्चमहाबलान् ॥ विनिघ्नन्मत्स्यराजस्यप्रीतिमाहरदुत्तमाम् ३९ यदास्यतुल्यःपुरुषोनकश्चित्तत्रविद्यते ॥ ततोव्याघ्रैश्चसिंहैश्चद्विरदैश्चाप्ययोधयत् ४० पुनरंतःपुरगतःस्त्रीणांमध्येवृकोदरः ॥ योध्यतेसविराटेनसिंहैर्मत्तैर्महाबलैः ४१ बीभत्सुरपिगीतेनस्वनृत्येनचपांडवः ॥ विराटंतोषयामाससर्वाश्चांतःपुरस्त्रियः ४२ अश्वैर्विनीतैर्जवनैस्तत्रतत्रसमागतैः ॥ तोषयामासराजानंनकुलोनृपसत्तमम् ४३ तस्मैप्रदेयंप्रायच्छत्प्रीतोराजाधनंबहु ॥ विनीतान्वृषभान्दृष्ट्वासहदेवस्यचाभितः ॥ धनंददौबहुविधंविराटःपुरुषर्षभः ४४ द्रौपदीप्रेक्ष्यतान्सर्वान्क्लिश्यमानान्महारथान् ॥ नातिप्रीतमनाराजन्निःश्वासपरमाऽभवत् ४५ एवंतेन्यवसंस्तत्रप्रच्छन्नाःपुरुषर्षभाः ॥ कर्माणितस्यकुर्वाणाविराटनृपतेस्तदा ४६ ॥ इतिश्रीमहा० वि० प० समयपालनप० जीमूतवधेत्रयोदशोऽध्यायः ॥ १३ ॥ समाप्तंचेदंसमयपालनपर्व ॥ अथकीचकवधपर्व ॥ ॥ वैशंपायनउवाच ॥ वसमानेषुपार्थेषुमत्स्यस्यनगरेतदा ॥ महारथेषुच्छन्नेषुमासादशसमाययुः १ याज्ञसेनीसुदेष्णांतुशुश्रूषंतीविशांपते ॥ आवसत्परिचारार्हासुदुःखंजनमेजय २ तथाचरंतींपांचालींसुदेष्णायानिवेशने ॥ तांदेवींतोषयामासतथाचांतःपुरस्त्रियः ३ तस्मिन्वर्षेगतप्रायेकीचकस्तुमहाबलः ॥ सेनापतिर्विराटस्यददर्शद्रुपदात्मजाम् ४ तांदृष्ट्वादेवगर्भाभांचरंतींदेवतामिव ॥ कीचकःकामयामासकामबाणप्रपीडितः ५ सतुकामाग्निसंतप्तःसुदेष्णामभिगम्यवै ॥ प्रहसन्निवसेनानीरिदंवचनमब्रवीत् ६ नेयंमयाजातुपुरेहदृष्टाराज्ञोविराटस्यनिवेशनेशुभा ॥ रूपेणचोन्मादयतीवमांभृशंगंधेनजातामदिरेवभामिनी ७ कादेवरूपाहृदयंगमाशुभेह्याचक्ष्वमेकस्यकुतोऽत्रशोभने ॥ चित्तंहिनिर्मथ्यकरोतिमांवशेनचान्यदत्रौषधमस्तिमेमतम् ८ अहोतवेयंपरिचारिकाशुभाप्रत्यग्ररूपाप्रतिभातिमामियम् ॥ अयुक्तरूपंहिकरोतिकर्मतेप्रशास्तुमांयच्चममास्तिकिंचन ९ प्रभूतनागाश्वरथंमहाजनंसमृद्धियुक्तंबहुपानभोजनम् ॥ मनोहरंकांचनचित्रभूषणंगृहंमहच्छोभयतामियंमम १० ततःसुदेष्णामनुमंत्र्यकीचकस्ततःसमभ्येत्यनराधिपात्मजाम् ॥ उवाचकृष्णामभिसांत्वयंस्तदामृगेंद्रकन्यामिवजंबुकोवने ११

गतसत्वंनष्टबुद्धिंअतएवअचेतनंशवभूतम् ३६ । ३७ । ३८ । ३९ । ४० ४१।४२।४३।४४।४५।४६ ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपेत्रयोदशोऽध्यायः ॥ १३ ॥वसमानेष्विति १।२।३।४।५।६।७अन्यदौषधंएतांविना ८ प्रत्यग्ररूपादिव्यरूपा ९।१०।११

११ । १३ परपुष्टःकोकिलः १४ । १५ भूतिःईश्वरी ऐश्वर्याभिमानिनीदेवता १६ अनंगांगविहारिणी स्मरदेहेनक्रीडंती रतिरित्यर्थः १७ ईक्षणपक्ष्माणांनेत्रपक्ष्मणांस्मितंईषदुन्मीलनंतदेव
ज्योत्स्नोपमंमनसआह्लादकरं । लक्ष्माणमितिपाठेवक्रचंद्रविशेषणम् १८ । १९ सुजातौउन्नतौ निरंतरौपृथुत्वात्संश्लिष्टौ २० कुड्मलेतिमुकुलीभूतपद्माकारौ २१ कराग्रंअंगुष्ठादिमध्यमांतो

कात्वंकस्यासिकल्याणिकुतोवात्वंवरानने ॥ प्राप्ताविराटनगरंतत्त्वमाचक्ष्वशोभने १२ रूपमग्र्यंतथाकांतिःसौकुमार्यमनुत्तमम् ॥ कांत्याविभातिवक्त्रंतेशशां
कइवनिर्मलम् १३ नेत्रेसुविपुलेसुभ्रुपद्मपत्रनिभेशुभे ॥ वाक्यंतेचारुसर्वांगिपरपुष्टरुतोपमम् १४ एवंरूपामयानारीकाचिदन्यामहीतले ॥ नदृष्टपूर्वासुश्रो
णियादृशीत्वमनिंदिते १५ लक्ष्मीःपद्मालयाकात्वमथभूतिःसुमध्यमे ॥ ह्रीःश्रीःकीर्तिरथोकांतिरासांकात्वंवरानने १६ अतीवरूपिणीकिंत्वमनंगांगविहारि
णी ॥ अतिविभ्राजसेसुभ्रुप्रभेवेंदोरनुत्तमा १७ अपिचेक्षणपक्ष्माणांस्मितज्योत्स्नोपमंशुभम् ॥ दिव्यांशुरश्मिभिर्वृत्तंदिव्यकांतिमनोरमम् १८ निरीक्ष्यवक्त्र
चंद्रंतेलक्ष्म्याऽनुपमयायुतम् ॥ कृत्स्नेजगतिकोनेहकामस्यवशगोभवेत् १९ हारालंकारयोग्यौतुस्तनौचोभौसुशोभनौ ॥ सुजातौसहितौलक्ष्म्यापीनौवृत्तौ
निरंतरौ २० कुड्मलांबुरुहाकारौतवसुभ्रुपयोधरौ ॥ कामप्रतोदाविवमांतुदतश्चारुहासिनि २१ वलीविभंगचतुरंस्तनभारविनामितम् ॥ कराग्रसंमितंमध्यं
तवेदंतनुमध्यमे २२ दृष्ट्वैवचारुजघनंसरित्पुलिनसंनिभम् ॥ कामव्याधिरसाध्योमामप्याक्रामतिभामिनि २३ जज्वालचाग्निमदनोदावाग्निरिवनिर्दयः ॥ त्व
त्संगमाभिसंकल्पविवृद्धोमांदहत्ययम् २४ आत्मप्रदानवर्षेणसंगमांभोधरेणच ॥ शमयस्ववरारोहेज्वलंतंमन्मथानलम् २५ मच्चित्तोन्मादनकरामन्मथस्यशरो
त्कराः ॥ त्वत्संगमाशानिशितास्तीव्राःशशिनिभानने ॥ मह्यंविदार्यहृदयमिदंनिर्दयवेगिताः २६ प्रविष्टाह्यसितापांगिप्रचंडाश्चंडदारुणाः ॥ अत्युन्मादसमा
रंभाःप्रीत्युन्मादकरामम ॥ आत्मप्रदानसंभोगैर्मामुद्धर्तुमिहार्हसि २७ चित्रमाल्यांबरधरासर्वाभरणभूषिता ॥ कामंप्रकामंसेवत्वंमयासहविलासिनि २८ नार्ह
सीहासुखंवस्तुंसुखार्हासुखवर्जिता ॥ प्राप्नुह्यनुत्तमंसौख्यंमत्तस्त्वंमत्तगामिनि २९ स्वादून्यमृतकल्पानिपेयानिविविधानिच ॥ पिबमानामनोज्ञानिरममाणा
यथासुखम् ३० भोगोपचारान्विविधान्सौभाग्यंचाप्यनुत्तमम् ॥ पानंपिबमहाभागेभोगैश्चानुत्तमैःशुभैः ३१ इदंहिरूपंप्रथमंतवानघेनिरर्थकंकेवलमद्यभामि
नि ॥ अधार्यमाणास्रगिवोत्तमाशुभानशोभसेसुंदरिशोभनासती ३२ त्यजामिदारान्ममयेपुरातनाभवंतुदास्यस्तवचारुहासिनि ॥ अहंचतेसुंदरिदासवत्स्थितःस
दाभविष्येवशगोवरानने ३३ ॥ द्रौपद्युवाच ॥ अप्रार्थनीयामिहमांसूतपुत्राभिमन्यसे ॥ निहीनवर्णांसैरंध्रींबीभत्सांकेशकारिणीम् ३४ परदाराऽस्मिभद्रंतेन
युक्तंतवसांप्रतम् ॥ दयिताःप्राणिनांदाराधर्मंसमनुचिंतय ३५ परदारेनतेबुद्धिर्जातुकार्याकथंचन ॥ विवर्जनंह्यकार्याणामेतत्सुपुरुषव्रतम् ३६

वितस्तिस्तेनसंमितंकृशमित्यर्थः २२ । २३ अग्निमदनो मदनाग्निः २४ । २५ । २६ अत्युन्मादंमरणकालीनंसन्निपातंसमारभंते ते अत्युन्मादसमारंभाः त्वदलाभेमरिष्याम्येवेतिभावः
२७ कामंस्मरं प्रकाममतिशयितम् २८ मत्तःमुहिलभस्व २९ । ३० । ३१ । ३२ । ३३ अभिमन्यसे कामयसे ३४ । ३५ । ३६

मिथ्याभिगृध्नः वितथाभिनिवेशी महद्भयं मृत्युं ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० मन्यसे लिप्ससे । शिशोश्चंद्रवदहं तव दुर्लभाऽस्मीति भावः ५१ तेषांप्रियामिति तेषांप्रसिद्धानांगंधर्वाणांप्रियांप्रार्थयतस्तेतव भुविगत्वादिवंवागत्वा शरणंत्राता कश्चिन्नभविष्यति । अतएवहेकीचक तेतवकामांधस्य सादृशाद्दृष्टिर्बुद्धिरितियावत् याशुभंस्वीयंअर्थयेतकामयेत । शुभेच्छारूपातवनास्तीत्यर्थः । तेनचशुभेनपरदारानिवृत्तिरूपेण कामितेन संजीवनंभवतीतिशेषः । अन्यथामरिष्यसीत्यर्थः । नमेभुवीतिपाठे

मिथ्याभिगृध्नोहिनरःपापात्मामोहमास्थितः ॥ अयशःप्राप्नुयाद्घोरंमहद्वाप्राप्नुयाद्भयम् ३७ ॥ वैशंपायनउवाच ॥ एवमुक्तस्तुसैरंध्र्याकीचकःकाममोहितः ॥ जानन्नपिसुदुर्बुद्धिःपरदाराभिमर्शने ३८ दोषान्बहून्प्राणहरान्सर्वलोकविगर्हितान् ॥ प्रोवाचेदंसुदुर्बुद्धिर्द्रौपदीमजितेंद्रियः ३९ नार्हस्येवंवरारोहेप्रत्याख्यातुंवरानने ॥ मांमन्मथसमाविष्टंत्वत्कृतेचारुहासिनि ४० प्रत्याख्यायचमांभीरुवशगंप्रियवादिनम् ॥ नूनंत्वमसितापांगिपश्चात्तापंकरिष्यसि ४१ अहंहिसुभ्रुराज्यस्यकृत्स्नस्यास्यसुमध्यमे ॥ प्रभुर्वासयिताचैववीर्येचाप्रतिमःक्षितौ ४२ पृथिव्यांमत्समोनास्तिकश्चिदन्यःपुमानिह ॥ रूपयौवनसौभाग्यैर्भोगैश्चानुत्तमैःशुभैः ४३ सर्वकामसमृद्धेषुभोगेष्वनुपमेष्विह ॥ भोक्तव्येषुचकल्याणिकस्माद्दास्येरताह्यसि ४४ मयादत्तमिदंराज्यंस्वामिन्यसिशुभानने ॥ भजस्वमांवरारोहेभुंक्ष्वभोगाननुत्तमान् ४५ एवमुक्तातुसासाध्वीकीचकेनाशुभंवचः ॥ कीचकंप्रत्युवाचेदंगर्हयंत्यस्यतद्वचः ४६ ॥ सैरंध्र्युवाच ॥ मासूतपुत्रमुह्यस्वमाऽद्यत्यक्ष्यस्वजीवितम् ॥ जानीहिपंचभिर्घोरैर्नित्यंमामभिरक्षिताम् ४७ नचाप्यहंत्वयालभ्यागंधर्वाःपतयोमम ॥ तेत्वांनिहन्युःकुपिताःसाध्वलंमाव्यनीनशः ४८ अशक्यरूपंपुरुषैरध्वानंगंतुमिच्छसि ॥ यथानिश्चेतनोबालःकूलस्थःकूलमुत्तरम् ॥ तर्तुमिच्छतिमंदात्मातथात्वंकर्तुमिच्छसि ४९ अंतर्महींवायदिवोर्ध्वमुत्पतेःसमुद्रपारंयदिवाप्रधावसि ॥ तथाऽपितेषांनविमोक्षमर्हसिप्रमाथिनोदेवसुताहिखेचराः ५० त्वंकालरात्रीमिवकश्चिदातुरःकिंमांदृढंप्रार्थयसेऽद्यकीचक ॥ किंमातुरंकेशयितोयथाशिशुश्चंद्रंजिघृक्षुरिवमन्यसेहिमाम् ५१ तेषांप्रियांप्रार्थयतोनतेभुविगत्वादिवंवाशरणंभविष्यति ॥ नवर्ततेकीचकतेदृशाशुभंयातेनसंजीवनमर्थयेतसा ५२ ॥ इतिश्रीमहाभारतेविराटपर्वणिकीचकवधपर्वणिकीचककृष्णासंवादेचतुर्दशोध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ प्रत्याख्यातोराजपुत्र्यासुदेष्णांकीचकोऽब्रवीत् ॥ अमर्यादेनकामेनघोरेणाभिपरिप्लुतः १ यथाकैकेयिसैरंध्रीसमेयात्तद्विधीयताम् ॥ येनोपायेनसैरंध्रीभजेन्मांगजगामिनी ॥ तंसुदेष्णेपरीप्सस्वप्राणान्मोहात्प्रहासिषम् २

तेषांप्रियांप्रार्थयतो मेमम कोऽपित्रातानभविष्यतीति दृशाबुद्धिस्तवनास्तीतिसंबंधः । यातेचसंजीवनमर्थयत्तमितिपाठेतु यादृष्टिस्तेतवसंजीवनंचभवति कीदृशंसंजीवनं अर्थयत्तंवस्त्वधीनं । तस्माद्वितथाभिनिवेशिनस्तेजीवनंनास्तीत्यर्थः ५२ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपेचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥ १ समेयात् मामुपगच्छेत् माऊहादिविच्छेदः ऊहाद्वितर्कात्तं उपायंगुप्तयापरीप्सस्वेतियोज्यं प्राणान्मामहासिषमितिच २

३ कृष्णायाःप्रार्थ्यर्थेंउद्योगंउद्यमंचानुचिंत्येतियोज्यं ४ पर्वणिमद्यपायिनांउत्सवकालेचतुर्दश्यादौ । समुद्दिश्य अद्याहंसुदेष्णार्थमन्नादिकंकारयामीतिकीर्तयित्वाख्यापयित्वा ५ त्रि जनेएकांते निरवग्रहेनिष्प्रतिबंधे ६ । ७ । ८ उपमंत्रितामार्थिता ९ पानंमद्यं सुरामन्नंचेत्युपक्रमात् तस्यैव पिपासा पातुमिच्छा १० । ११ । १२ । १३ । १४ । १५ । १६ । १७

॥ वैशंपायनउवाच ॥ तस्यसाबहुशःश्रुत्वावाचंविलपतस्तदा ॥ विराटमहिषीदेवीकृपांचक्रेमनस्विनी २ स्वमंत्रमभिसंधायतस्यार्थमनुचिंत्यच ॥ उद्योगंचैवकृष्णायाःसुदेष्णासूतमब्रवीत् ४ पर्वणित्वंसमुद्दिश्यसुरामन्नंचकारय ॥ तत्रैनांप्रेषयिष्यामिसुराहारींतवांतिकम् ५ तत्रसंप्रेषितामेनांविजनेनिरवग्रहे ॥ सांत्वयेथायथाकामंसांत्वमानारमेद्यदि ६ ॥ वैशंपायनउवाच ॥ इत्युक्तःसविनिष्क्रम्यभगिन्यावचनात्तदा ॥ सुरामाहारयामासराजार्हांसुपरिष्कृताम् ७ भक्ष्यांश्चविविधाकारान्बहूंश्चोच्चावचांस्तदा ॥ कारयामासकुशलैरन्नंपानंसुशोभनम् ८ तस्मिन्कृतेतदादेवीकीचकेनोपमंत्रिता ॥ सुदेष्णांप्रेषयामाससैरंध्रींकीचकालयम् ९ ॥ सुदेष्णोवाच ॥ उत्तिष्ठगच्छसैरंध्रिकीचकस्यनिवेशनम् ॥ पानमानयकल्याणिपिपासामांप्रबाधते १० ॥ सैरंध्र्युवाच ॥ नगच्छेयमहंतस्यराजपुत्रिनिवेशनम् ॥ त्वमेवराज्ञिजानासियथासानिरपत्रपः ११ नचाहमनवद्यांगितववेश्मनिभामिनि ॥ कामवृत्ताभविष्यामिपतीनांव्यभिचारिणी १२ त्वंचैवदेविजानासियथासमयःकृतः ॥ प्रविशंत्यामयापूर्वंतववेश्मनिभामिनि १३ कीचकस्तुसुकेशांतेमूढोमदनदर्पितः ॥ सोऽवमंस्यतिमांदृष्ट्वानयास्येतत्रशोभने १४ संतिबह्व्यस्तवप्रेष्याराजपुत्रिवशानुगाः ॥ अन्यांप्रेषयभद्रंतेसहिमामवमंस्यते १५ ॥ सुदेष्णोवाच ॥ नैवत्वांजातुहिंस्यात्सइतःसंप्रेषितांमया ॥ इत्युक्त्वाप्रददौपात्रंसपिधानंहिरण्मयम् १६ साशंकमानारुदतीदैवंशरणमीयुषी ॥ प्रातिष्ठतसुराहारीकीचकस्यनिवेशनम् १७ ॥ सैरंध्र्युवाच ॥ यथाऽहमन्यंभर्तृभ्योनाभिजानामिकंचन ॥ तेनसत्येनमांप्राप्तांमाकुर्यात्कीचकोवशे १८ ॥ वैशंपायनउवाच ॥ उपातिष्ठतसासूर्यंमुहूर्तमबलाततः ॥ सतस्यास्तनुमध्यायाःसर्वंसूर्योऽवबुद्धवान् १९ अंतर्हितंततस्तस्यारक्षोरक्षार्थमादिशत् ॥ तच्चैनांनाजहात्तत्रसर्वावस्थास्वनिंदिताम् २० तांमृगीमिवसंत्रस्तांदृष्ट्वाकृष्णांसमीपगाम् ॥ उदतिष्ठन्मुदासूतोनावंलब्ध्वेवपारगः २१ ॥ ॥ इतिश्रीमहाभारतेविराटपर्वणिकीचकवधपर्वणिद्रौपदीसुराहरणेपंचदशोऽध्यायः ॥ १५ ॥ छ ॥ कीचकउवाच ॥ स्वागतंतेसुकेशांतेसुव्युष्टारजनीमम ॥ स्वामिनीत्वमनुप्राप्ताप्रकुरुष्वममप्रियम् १ सुवर्णमालाःकंबूश्चकुंडलेपरिहाटके ॥ नानापत्तनजेशुभ्रेमणिरत्नंचशोभनम् २ आहरंतुचवस्त्राणिकौशिकान्यजिनानिच ॥ अस्तिमेशयनंदिव्यंत्वदर्थमुपकल्पितम् ॥ एहितत्रमयासार्द्धंपिबस्वमधुमाधवीम् ३ ॥ द्रौपद्युवाच ॥ अप्रैषीद्राजपुत्रीमांसुराहारींतवांतिकम् ॥ पानमाहरमेक्षिप्रंपिपासामेऽतिचाब्रवीत् ४

१८ । १९ । २० ॥ २१ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपेपंचदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥ १ ॥ परितोहाटकेययोस्ते परिहाटकेकुंडले ताटंकेइत्यर्थः २ मधुमाधवीं मधुपुष्पजांमदिरां ३ सुराहारींसुरामाहर्तुकामां पिपासामेऽति प्रेमम अतिपिपासा ४

५ । ६ । ७ । ८ विधुन्वानाकंपमाना ९ । १० अपोवाहदुरीचकार ११ । १२ । १३ । १४ धूमच्छायाःकर्म नेत्रेकर्तृणी अभजतां । छायामित्येकवचनांतःपाठःस्वच्छः १५ । १६ अंगुष्ठं

कीचकउवाच ॥ अन्याभद्रेनयिष्यंतिराजपुत्र्याःप्रतिश्रुतम् ॥ इत्येनांदक्षिणेपाणौसूतपुत्रःपरामृशत् ५ ॥ द्रौपद्युवाच ॥ यथैवाहंनाभिचरेकदाचित्पतीन्मदाद्भिमनसाऽपिजातु ॥ तेनैवसत्येनवशीकृतंत्वांद्रष्टाऽस्मिपापंपरिकृष्यमाणम् ६ ॥ वैशंपायनउवाच ॥ सतामभिप्रेक्ष्यविशालनेत्रांजिघृक्षमाणःपरिभर्त्सयंतीम् ॥ जग्राहतामुत्तरवस्त्रदेशेसकीचकस्तांसहसाऽऽक्षिपंतीम् ७ प्रगृह्यमाणातुमहाजवेनमुहुर्विनिश्वस्यचराजपुत्री ॥ तयासमाक्षिप्ततनुःसपापःपपातशाखीवनिकृत्तमूलः ८ साग्रहीताविधुन्वानाभूमावाक्षिप्यकीचकम् ॥ सभांशरणमागच्छद्यत्रराजायुधिष्ठिरः ९ तांकीचकःप्रधावंतींकेशपाशेपरामृशत् ॥ अथैनांपश्यतोराज्ञःपातयित्वापदाऽवधीत् १० तस्ययोऽसौतदाऽर्केणराक्षसःसंनियोजितः ॥ सकीचकमपोवाहवातवेगेनभारत ११ सपपाततदाभूमौरक्षोबलसमाहतः ॥ विघूर्णमानोनिश्चेष्टश्छिन्नमूलइवद्रुमः १२ तांचासीनौददृशतुर्भीमसेनयुधिष्ठिरौ ॥ अमृष्यमाणौकृष्णायाःकीचकेनपराभवम् १३ तस्यभीमोवधंप्रेप्सुःकीचकस्यदुरात्मनः ॥ दंतैर्दंतांस्तदारोषान्निष्पिपेषमहामनाः १४ धूमच्छायाह्यभजतांनेत्रेचोच्छ्रितपक्ष्मणी ॥ सस्वेदाभ्रुकुटीचोग्राललाटेसमवर्तत १५ हस्तेनममृदेचैवललाटंपरवीरहा ॥ भूयश्चत्वरितःक्रुद्धःसहसोत्थातुमैच्छत १६ अथावमृद्नादंगुष्ठमंगुष्ठेनयुधिष्ठिरः ॥ प्रबोधनभयाद्राजाभीमंतंप्रत्यषेधयत् १७ तंमत्तमिवमातंगंवीक्षमाणंवनस्पतिम् ॥ सतमावारयामासभीमसेनंयुधिष्ठिरः १८ आलोकयसिकिंवृक्षंसूददारुकृतेननु वै ॥ यदितेदारुभिःकृत्यंबहिर्वृक्षान्निगृह्यताम् १९ सासभाद्वारमासाद्यरुदतीमत्स्यमब्रवीत् ॥ अवेक्षमाणासुश्रोणीपतींस्तान्दीनचेतसः २० आकारमभिरक्षंतीप्रतिज्ञाधर्मसंहिता ॥ दह्यमानेवरौद्रेणचक्षुषाद्रुपदात्मजा २१ ॥ द्रौपद्युवाच ॥ येषांवैरीनस्वपितिषष्ठेऽपिविषयेवसन् ॥ तेषांमांमानिनींभार्यांसूतपुत्रःपदाऽवधीत् २२ येदद्युर्नचयाचेयुर्ब्रह्मण्याःसत्यवादिनः ॥ तेषांमांमानिनींभार्यांसूतपुत्रःपदाऽवधीत् २३ येषांदुंदुभिनिर्घोषोज्याघोषःश्रूयतेऽनिशम् ॥ तेषांमांमानिनींभार्यांसूतपुत्रःपदाऽवधीत् २४ येचतेजस्विनोदांताबलवंतोऽतिमानिनः ॥ तेषांमांमानिनींभार्यांसूतपुत्रःपदाऽवधीत् २५ सर्वलोकमिमंहन्युर्धर्मपाशसितास्तुये ॥ तेषांमांमानिनींभार्यांसूतपुत्रःपदाऽवधीत् २६ शरणंयेप्रपन्नानांभवंतिशरणार्थिनाम् ॥ चरंतिलोकेप्रच्छन्नाःक्वनुतेऽद्यमहारथाः २७ कथंतेसूतपुत्रेणवध्यमानांप्रियांसतीम् ॥ मर्षयंतियथाक्लीबाबलवंतोऽमितौजसः २८ क्वनुतेषाममर्षश्चवीर्यंतेजश्चवर्तते ॥ नपरीप्संतियेभार्यांवध्यमानांदुरात्मना २९

पादांगुष्ठं अंगुष्ठेनहस्तांगुष्ठेन आचारादेवंज्ञेयं १७ १८ । १९ । २० अभिरक्षंतीगूहमाना धर्मसंहिताधर्मबद्धा २१ षष्ठेविषये देशपंचकव्यवधानेऽपिनस्वपिति तेषांसार्वभौमत्वात् यद्वा । बाह्येंद्रियग्राह्यपंचविषयापेक्षया षष्ठेमनोमात्रग्राह्ये स्वप्नमनोरथादिरूपेऽपिविषयेनस्वपिति मयार्दितःसन् किमुतलोकेनस्वपितीत्यर्थः २२ । २३ । २४ । २५ सिताःबद्धाः २६ । २७ । २८ । २९

२० । ३१ । ३२ । ३३ । ३४ । कौशलं साध्वसाधुनिर्णयेइतिशेषः किंनुकथंनु ३५ । ३६ । ३७ । ३८ । ३९ माऽत्रस्थाःअत्रमास्थाःमातिष्ठ ४० । ४१ । ४२ शैलूषीव नटीव निर्लज्जा ४३

मयाऽत्रशक्यंकिंकर्तुंविराटेधर्मदूषके ॥ यःपश्यन्मांमर्षयतिवध्यमानामनागसम् ३० नराजाराजवत्किंचित्समाचरतिकीचके ॥ दस्यूनामिवधर्मस्तेनहिसंसदि शोभते ३१ नाहमेतेनयुक्तंवैहंतुंमत्स्यतवांतिके ॥ सभासदोऽत्रपश्यंतुकीचकस्यव्यतिक्रमम् ३२ कीचकोनचधर्मज्ञोनचमत्स्यःकथंचन ॥ सभासदोऽप्यध र्मज्ञायएनंपर्युपासते ३३ ॥ वैशंपायनउवाच ॥ एवंविधैर्वचोभिःसातदाकृष्णाऽश्रुलोचना ॥ उपालभतराजानंमत्स्यानांवरवर्णिनी ३४ ॥ विराटउवाच ॥ परोक्षंनाभिजानामिविग्रहंयुवयोरहम् ॥ अर्थतत्त्वमविज्ञायकिंनुस्यात्कौशलंमम ३५ ॥ वैशंपायनउवाच ॥ ततस्तुसभ्याविज्ञायकृष्णांभूयोऽभ्यपूजयन् ॥ साधुसाध्वितिचाप्याहुःकीचकंचव्यगर्हयन् ३६ ॥सभ्याऊचुः ॥ यस्येयंचारुसर्वांगीभार्यास्यादायतेक्षणा ॥ परोलाभस्तुतस्यस्यान्नचशोचेत्कथंचन ३७ न हीदृशीमनुष्येषुसुलभावरवर्णिनी ॥ नारीसर्वानवद्यांगीदेवीमन्यामहेवयम् ३८ ॥ वैशंपायनउवाच ॥ एवंसंपूजयंतस्तेकृष्णांप्रेक्ष्यसभासदः ॥ युधिष्ठिरस्य कोपात्तुललाटेस्वेदआगमत् ३९ अथाब्रवीद्राजपुत्रींकौरव्योमहिषींप्रियाम् ॥ गच्छसैरंध्रिमाऽत्रस्थाःसुदेष्णायानिवेशनम् ४० भर्तारमनुरुंधंत्यःक्लिश्यंतेवी रपत्नयः ॥ शुश्रूषयाक्लिश्यमानाःपतिलोकंजयंत्युत ४१ मन्येनकालंक्रोधस्यपश्यंतिपतयस्तव ॥ तेनत्वांनाभिधावंतिगंधर्वाःसूर्यवर्चसः ४२ अकालज्ञा ऽसिसैरंध्रिशैलूषीवविरोदिषि ॥ विघ्नंकरोषिमत्स्यानांदीव्यतांराजसंसदि ४३ गच्छसैरंध्रिगंधर्वाःकरिष्यंतितवप्रियम् ॥ व्यपनेष्यंतितेदुःखंयेनतेविप्रियंकृतम् ४४ ॥ सैरंध्र्युवाच ॥ अतीवतेषांघृणिनामर्थेऽहंधर्मचारिणी ॥ तस्यतस्यैवतेवध्यायेषांज्येष्ठोऽक्षदेविता ४५ ॥ वैशंपायनउवाच ॥ इत्युक्त्वाप्राद्रवत्कृ ष्णासुदेष्णायानिवेशनम् ॥ केशान्मुक्त्वाचसुश्रोणीसंरंभाल्लोहितेक्षणा ४६ शुशुभेवदनंतस्यारुदत्याःसुचिरंतदा ॥ मेघलेखाविनिर्मुक्तंदिवीवशशिमंडलम् ॥ ४७ ॥ सुदेष्णोवाच ॥ कस्त्वाऽवधीद्वरारोहेकस्माद्रोदिषिशोभने ॥ कस्याद्यनसुखंभद्रेकेनतेविप्रियंकृतम् ४८ ॥ द्रौपद्युवाच ॥ कीचकोमाऽवधीत्तत्रसुरा हारींगतांतव ॥ सभायांपश्यतोराज्ञोयथैवविजनेवने ४९ ॥ सुदेष्णोवाच ॥ घातयामिसुकेशांतेकीचकंयदिमन्यसे ॥ योऽसौत्वांकामसंमत्तोदुर्लभामवमन्यते ५० सैरंध्र्युवाच ॥ अन्येचैनंवधिष्यंतियेषामागःकरोतिसः ॥ मन्येचैवाद्यसुव्यक्तंयमलोकंगमिष्यति ५१ ॥ इतिश्रीमहाभारतेवि० कीचकव०द्रौपदीपरिभ वेषोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ साहतासूतपुत्रेणराजपत्नीयशस्विनी ॥ वधंकृष्णापरीप्संतीसेनावाहस्यभामिनी १ जगा मावासमेवाथसातदाद्रुपदात्मजा ॥ कृत्वाशौचंयथान्यायंकृष्णासातनुमध्यमा २



दुःखंदुःखयितारं व्यपनेष्यंतिजीवितादितिशेषः ४४ घृणिनांदयावतां तेषामर्थेतस्यतस्यसर्वस्यैवतेवध्याःस्युः ४५ । ४६ । ४७ । ४८ पश्यतोराज्ञइत्यनादरेषष्ठी राजानंलक्षीकृत्येत्यर्थः ४९ ५० । ५१ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपे षोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ सेनावाहस्य सेनापतेःकीचकस्य १ । २

३।४।५।६ यःतत्कर्मपदाहतिरूपंकृतवान् तस्मिन्जीवति ७।८।९ संमूर्छितेवव्द्धिंशोभारूपांप्राप्तेवप्रजज्वालअशोभत १० सर्वश्वेतेवेति पांचालीद्रौपदी वरर्षभंवरणीयंपतिंश्रेष्ठंभीमसेनंउपलक्ष्य वासितेव पुष्पिणीत्वेनकामातुरेव उपातिष्ठतसमीपेस्थितवती वस्तुतोनकामातुरा किंतुद्वेषातुरैवेतिभावः । तत्रदृष्टांतद्वयं इवशब्दःकाकाक्षिवदुभयत्रसंबध्यते सर्वश्वेतैवमाहेयीवचेति । सर्वश्वेताबकी यथाकामातुरावरर्षभंपतिमितिएकः । तस्याःकामातुरत्वेहेतुः वनेजातेति जलेजातातेनजलसामीप्येलब्धाहारत्वेनउन्मत्तत्वंसूच्यते । तथामाहेयीगौः साऽपिवासितासतीवरर्षभंसांडंबलीवर्दं । तस्याअपिवासितात्वेविशेषणं त्रिहायणीति त्रिवर्षाहिगौर्यौवनारूढाकामातुराचभवति । अन्येतु'श्वेतःसितेराजहंसेकैलासेद्वीपभूपयोः'इतिकोशमुदाहृत्यसर्वश्वेताहंसीतिव्याचक्षते । तत्रसर्वपदंव्यर्थं हंसस्यलोहितलोचनास्यचरणत्वात्प्रतिकूलंच । यद्यपि'त्रिहायणीत्रिवर्षागौः'इतिचकोशात् त्रिहायणीपदेनैवगौर्लभ्यते तथापितत्कामातुरत्वज्ञापनार्थमुपक्षीणंसद्विशेष्यसमर्पकंपदांतरमपेक्षतएवेतिनव्यर्थविशेषणत्वं । अन्येव्याख्यानप्रकाराःसर्वेऽनेनैवदोषेणग्रस्ताइत्युपेक्षिताः ११ मध्यमंपांडुनंदनंभीमसेनं । यमयोःसहजातत्वेनपौर्वापर्याभावात्तौकनिष्ठावेवयुधिष्ठिरोज्येष्ठएव । मध्यमत्वंभीमार्जुनयोरेवविश्रांतं तत्रापिअत्रप्रकरणात्अर्जुनस्यसंप्रतिपुंस्त्वाभावाच्च मध्यमत्वंभीमसेनेएवमुख्यमित्याशयेनैवैतदुक्तं । परिष्वजतपर्यष्वजतआलिंगितवती १२।१३ गांधारंस्वरविशेषं मूर्छतीमूर्छयंती १४।१५ सोपसंग्रहेसतूलिके १६।१७ विद्यांजानीयां १८ ज्ञास्यामिउपायंचिंतयिष्यामि क्षमंयोग्यं १९।२०

गात्राणिवाससीचैवप्रक्ष्याल्यसलिलेनसा ॥ चिंतयामासरुदतीतस्यदुःखस्यनिर्णयम् ३ किंकरोमिक्वगच्छामिकथंकार्यंभवेन्मम ॥ इत्येवंचिंतयित्वासाभीमंवैमनसाऽगमत् ४ नान्यःकर्ताऋतेभीमान्ममाद्यमनसःप्रियम् ॥ ततउत्थायरात्रौसाविहायशयनंस्वकम् ५ प्राद्रवन्नाथमिच्छंतीकृष्णानाथवतीसती ॥ भवनंभीमसेनस्यक्षिप्रमायतलोचना ६ दुःखेनमहतायुक्तामानसेनमनस्विनी ॥ सैरंध्र्युवाच ॥ तस्मिन्जीवतिपापिष्ठेसेनावाहेममद्विषि ७ तत्कर्मकृतवानद्यकथंनिद्रांनिषेवसे ॥ वैशंपायनउवाच ॥ एवमुक्त्वाऽथतांशालांप्रविवेशमनस्विनी ८ यस्यांभीमस्तथाशेतेमृगराजइवश्वसन् ॥ तस्यारूपेणसाशालाभीमस्यचमहात्मनः ९ संमूर्छितेवकौरव्यप्रजज्वालचतेजसा ॥ सावैमहानसंप्राप्यभीमसेनंशुचिस्मिता १० सर्वश्वेतेवमाहेयीवनेजातात्रिहायणी ॥ उपातिष्ठतपांचालीवासितेववरर्षभम् ११ सालतेवमहाशालंफुल्लंगोमतितीरजम् ॥ परिष्वजतपांचालीमध्यमंपांडुनंदनम् १२ बाहुभ्यांपरिरभ्यैनंप्राबोधयदनिंदिता ॥ सिंहंसुप्तंवनेदुर्गेमृगराजवधूरिव १३ भीमसेनमुपाश्लिष्यद्धस्तिनीवमहागजम् ॥ वीणेवमधुरालापागांधारंसाधुमूर्छती ॥ अभ्यभाषतपांचालीभीमसेनमनिंदिता १४ उत्तिष्ठोत्तिष्ठकिंशेषेभीमसेनयथामृतः ॥ नामृतस्यहिपापीयान्भार्यामालभ्यजीवति १५ ससंप्रहायशयनंराजपुत्र्याप्रबोधितः ॥ उपातिष्ठतमेघाभःपर्यंकेसोपसंग्रहे १६ अथाब्रवीद्राजपुत्रींकौरव्योमहिषींप्रियाम् ॥ केनास्यर्थेनसंप्राप्तात्वरितेवममांतिकम् १७ नतेप्रकृतिमान्वर्णःकृशापांडुश्चलक्ष्यसे ॥ आचक्ष्वपरिशेषेणसर्वंविद्यामहंयथा १८ सुखंवायदिवादुःखंद्वेष्यंवायदिवाप्रियम् ॥ यथावत्सर्वमाचक्ष्वश्रुत्वाज्ञास्यामियत्क्षमम् १९ अहमेवहितेकृष्णेविश्वास्यःसर्वकर्मसु ॥ अहमापत्सुचापित्वांमोक्षयामिपुनःपुनः २०

२१ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपेसप्तदशोऽध्यायः ॥ १७ ॥ १ सभाशाला तस्यां परिषत्सजनसमाजस्तस्यमध्य तदाद्यूतकाले २ । ३ सैंधवेनजयद्रथेन ४ । ५ । ६ । ७ ८ । ९ । १० प्रव्रज्यंप्रव्रजनं व्रजयजोर्भावेक्यप् तस्मैप्रव्रज्याय ११ निष्कःसुवर्णपलंतेषांसहस्रेण १२ रुक्मंस्वर्णरूपंहिरण्यं । 'तस्माद्रजतः॰हिरण्यमश्रुजम्'इतिश्रुतौ हिरण्यश

शीघ्रमुक्त्वायथाकामंयत्तेकार्यंविवक्षितम् ॥ गच्छवैशयनायैवपुरानान्येनबुध्यते २१ ॥ इतिश्रीमहाभारतेविराटपर्वणिकीचकवधपर्वणिद्रौपदीभीमसंवादेसप्तदशोऽध्यायः ॥ १७ ॥ ॥ द्रौपद्युवाच ॥ अशोच्यत्वंकुतस्तस्यायस्याभर्तायुधिष्ठिरः ॥ जानन्सर्वाणिदुःखानिकिंमांत्वंपरिपृच्छसि १ यन्मांदासीप्रवादेनप्रातिकामीतदाऽनयत् ॥ सभापरिषदोमध्येतन्मांदहतिभारत २ पार्थिवस्यसुतानामकानुजीवतिमादृशी ॥ अनुभूयेदृशंदुःखमन्यत्रद्रौपदींप्रभो ३ वनवासगतायाश्चसैंधवेनदुरात्मना ॥ परामर्शोद्वितीयोवैसोढुमुत्सहतेतुका ४ मत्स्यराज्ञःसमक्षंतुतस्यधूर्तस्यपश्यतः ॥ कीचकेनपरामृष्टाकानुजीवतिमादृशी ५ एवंबहुविधैःक्लेशैःक्लिश्यमानांचभारत ॥ नमांजानासिकौंतेयकिंफलंजीवितेनमे ६ योऽयंराज्ञोविराटस्यकीचकोनामभारत ॥ सेनानीःपुरुषव्याघ्रश्यालःपरमदुर्मतिः ७ समांसैरंध्रिवेषेणवसंतींराजवेश्मनि ॥ नित्यमेवाहदुष्टात्माभार्याममभवेतिवै ८ तेनोपमंत्र्यमाणायावधार्हेणसपत्नहन् ॥ कालेनेवफलंपक्वंहृदयंमेविदीर्यते ९ भ्रातरंचविगर्हस्वज्येष्ठंदुर्द्यूतदेविनम् ॥ यस्याऽस्मिकर्मणाप्राप्तादुःखमेतदनंतकम् १० कोहिराज्यंपरित्यज्यसर्वस्वंचात्मनासह ॥ प्रव्रज्यायैवदीव्येतविनादुर्द्यूतदेविनम् ११ यदिनिष्कसहस्रेणयच्चान्यत्सारवद्धनम् ॥ सायंप्रातरदेविष्यदपिसंवत्सरान्बहून् १२ रुक्मंहिरण्यंवासांसियानंयुग्यमजाविकम् ॥ अश्वाश्वतरसंघाश्चनजातुक्षयमावहेत् १३ सोऽयंद्यूतप्रवादेनश्रियःप्रत्यवरोपितः ॥ तूष्णीमास्तेयथामूढःस्वानिकर्माणिचिंतयन् १४ दशनागसहस्राणिहयानांहेममालिनाम् ॥ यंयांतमनुयांतीहसोऽयंद्यूतेनजीवति १५ रथाःशतसहस्राणिनृपाणाममितौजाम् ॥ उपासंतमहाराजमिंद्रप्रस्थेयुधिष्ठिरम् १६ शतंदासीसहस्राणांयस्यनित्यंमहानसे ॥ पात्रीहस्तंदिवारात्रमतिथीन्भोजयत्युत १७ एषनिष्कसहस्राणिप्रदायददतांवरः ॥ द्यूतजेनह्यनर्थेनमहतासमुपाश्रितः १८ एनंहिस्वरसंपन्नाबहवःसूतमागधाः ॥ सायंप्रातरुपातिष्ठन्सुमृष्टमणिकुंडलाः १९ सहस्रमृषयोयस्यनित्यमासन्सभासदः ॥ तपःश्रुतोपसंपन्नाःसर्वकामैरुपस्थिताः २० अष्टाशीतिसहस्राणिस्नातकागृहमेधिनः ॥ त्रिंशद्दासीकएकैकोयान्बिभर्तियुधिष्ठिरः २१ अप्रतिग्राहिणांचैवयतीनामूर्ध्वरेतसाम् ॥ दशचापिसहस्राणिसोऽयमास्तेनरेश्वरः २२ आनृशंस्यमनुक्रोशंसंविभागस्तथैवच ॥ यस्मिन्नेतानिसर्वाणिसोऽयमास्तेनरेश्वरः २३ अंधान्वृद्धांस्तथाऽनाथान्बालान्राष्ट्रेषुदुर्गतान् ॥ बिभर्तिविविधान्राजाधृतिमान्सत्यविक्रमः ॥ संविभागमनानित्यमानृशंस्याद्युधिष्ठिरः २४

ण्यस्यरजतेऽपिदर्शनात् । यानंगजादि । युग्यंयुगोपेतंरथशकटादि । अश्वावडवा १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ यतीनांदशसहस्राणिबिभर्तीतिपूर्वेणान्वय २२ आनृशंस्यंअनैष्ठुर्यं अनुक्रोशंदयां २३ । २४

निरयंपारतंत्र्यं कंकोहमितियुधिष्ठिरोब्रूते । कंकव्रतयुधिष्ठिरइतिपाठे कंकव्रतश्चासौयुधिष्ठिरश्चेतिसमासः २५ । २६ । २७ । २८ । २९ सदस्यंसभासदम् ३० । ३१ । ३२ । ३३
॥ इतिविराटपर्वणिनील० भारतभावदीपेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ ७ ॥ ॥ इदमिति १ हीनेनीचे असमेविषमे २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ प्रियसंवासात्प्रियस्यभी



सएषनिरयंप्राप्तोमत्स्यस्यपरिचारकः ॥ सभायांदेविताराज्ञःकंकोब्रूतेयुधिष्ठिरः २५ इंद्रप्रस्थेनिवसतःसमयेयस्यपार्थिवाः ॥ आसन्बलिभृतःसर्वेसोऽद्यान्यै र्भृतिमिच्छति २६ पार्थिवाःपृथिवीपालायस्यासन्वशवर्तिनः ॥ सवशेविवशोराजापरेषामद्यवर्तते २७ प्रताप्यपृथिवींसर्वांरश्मिमानिवतेजसा ॥ सोऽयंराज्ञो विराटस्यसभास्तारोयुधिष्ठिरः २८ यमुपासंतराजानःसभायामृषिभिःसह ॥ तमुपासीनमद्यान्यंपश्यपांडवपांडवम् २९ सदस्यंसमुपासीनंपरस्यप्रियवादि नम् ॥ दृष्ट्वायुधिष्ठिरंकोपोवर्द्धतेमामसंशयम् ३० अतदर्हंमहाप्राज्ञंजीवितार्थेऽभिसंस्थितम् ॥ दृष्ट्वाकस्यनदुःखंस्याद्धर्मात्मानंयुधिष्ठिरम् ३१ उपास्तेस्मस भायांयंकृत्स्नावीरवसुंधरा ॥ तमुपासीनमप्यन्यंपश्यभारतभारतम् ३२ एवंबहुविधैर्दुःखैःपीड्यमानामनाथवत् ॥ शोकसागरमध्यस्थांकिंमांभीमनपश्यसि ३३ ॥ इतिश्रीम० वि० प० की० व० द्रौपदीभीमसंवादे अष्टादशोऽध्यायः ॥ १८ ॥ ॥ ७ ॥ ॥ द्रौपद्युवाच ॥ इदंतुतेमहद्दुःखंयत्प्रवक्ष्यामि भारत ॥ नमेऽभ्यसूयाकर्त्तव्यादुःखादेतद्ब्रवीम्यहम् १ सूदकर्मणिहीनेत्वमसमेभरतर्षभ ॥ ब्रुवन्बल्लवजातीयःकस्यशोकंनवर्द्धयेः २ सूपकारंविराटस्यबल्लवं त्वांविदुर्जनाः ॥ प्रेष्यत्वंसमनुप्राप्तंततोदुःखतरंनुकिम् ३ यदामहानसेसिद्धेविराटमुपतिष्ठसि ॥ ब्रुवाणोबल्लवःसूदस्तदासीदतिमेमनः ४ यदाप्रहृष्टःसम्राट् त्वांसंयोधयतिकुंजरैः ॥ हसंत्यंतःपुरेनार्योममतूद्विजतेमनः ५ शार्दूलैर्महिषैःसिंहैरागारेयोध्यसेयदा ॥ कैकेय्याःप्रेक्षमाणायास्तदामेकश्मलंभवेत् ६ ततउ त्थायकैकेयीसर्वास्ताःप्रत्यभाषत ॥ प्रेष्याःसमुत्थिताश्चापिकैकेयींताःस्त्रियोऽब्रुवन् ७ प्रेक्ष्यमामनवद्यांगींकश्मलोपहतामिव ॥ स्नेहात्संवासजाद्धर्मात्सूदमेषा शुचिस्मिता ८ योध्यमानंमहावीर्यमियंसमनुशोचति ॥ कल्याणरूपासैरंध्रीबल्लवश्चापिसुंदरः ९ स्त्रीणांचित्तंचदुर्ज्ञेयंयुक्तरूपौचमेमतौ ॥ सैरंध्रीप्रियसंवासा न्नित्यंकरुणवादिनी १० अस्मिन्राजकुलेचेमौतुल्यकालनिवासिनौ ॥ इतिब्रुवाणावाक्यानिसामांनित्यमतर्जयत् ११ क्रुध्यंतींमांचसंप्रेक्ष्यसमशंकतमांत्वयि ॥ तस्यांतथाब्रुवत्यांतुदुःखंमांमहदाविशत् १२ त्वय्येवंनिरयंप्राप्तेभीमेभीमपराक्रमे ॥ शोकेयौधिष्ठिरेमग्नानाहंजीवितुमुत्सहे १३ यःसदेवान्मनुष्यांश्चसर्वांश्चै करथोऽजयत् ॥ सोऽयंराज्ञोविराटस्यकन्यानांनर्त्तकोयुवा १४ योऽतर्पयदमेयात्माखांडवेजातवेदसम् ॥ सोंऽतःपुरगतःपार्थकूपेऽग्निरिवसंवृतः १५ यस्मा द्भयममित्राणांसदैवपुरुषर्षभात् ॥ सलोकपरिभूतेनवेषेणास्तेधनंजयः १६ यस्यज्याक्षेपकठिनौबाहूपरिघसन्निभौ ॥ सशंखपरिपूर्णाभ्यांशोचन्नास्तेधनंजयः १७ यस्यज्यातलनिर्घोषात्समकंपंतशत्रवः ॥ स्त्रियोगीतस्वनंतस्यमुदिताःपर्युपासते १८

मसेनस्य संवासःसहवासःसंबंधस्तस्मात् तस्मिन्रहस्यादिभिःसहयो ध्यमानेसाति करुणवादिनीदीनवादिनीभवति १० संवासमेवाहअस्मिन्निति ११ । १२ निरयंदुःखम् १३ । १४ । १५ लोकेपरिभूतेनर्निदितेन १६ शंखपरिपूर्णाभ्यांबाहुभ्याम् १७ । १८

१९ । २० । २१ स्प्रष्टुंआकलयितुंयमितिशेषः यस्येत्यपिपठंति अप्रतिमानीतिच्छेदः २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ दिशोनश्यंति शोकेनआंध्यमायातीत्यर्थः ३० आ

किरीटंसूर्यसंकाशंयस्यमूर्द्धन्यशोभत ॥ वेणीविकृतकेशांतःसोऽयमद्यधनंजयः १९ तंवेणीकृतकेशांतंभीमधन्वानमर्जुनम् ॥ कन्यापरिवृतंदृष्ट्वाभीमसीदतिमे मनः २० यस्मिन्नस्त्राणिदिव्यानिसमस्तानिमहात्मनि ॥ आधारःसर्वविद्यानांसधारयतिकुण्डले २१ स्प्रष्टुंराजसहस्राणितेजसाऽप्रतिमानिवै ॥ समरेनाभ्यवर्तंतवेलामिवमहार्णवः २२ सोऽयंराज्ञोविराटस्यकन्यानांनर्तकोयुवा ॥ आस्तेवेषप्रतिच्छन्नःकन्यानांपरिचारकः २३ यस्यस्मरथघोषेणसमकंपतमेदिनी ॥ सपर्वतवनाभीमसहस्थावरजंगमा २४ यस्मिन्जातेमहाभागेकुंत्याःशोकोव्यनश्यत ॥ सशोचयतिमामद्यभीमसेनतवानुजः २५ भूषितंतमलंकारैःकुंडलैःपरिहाटकैः ॥ कंबुपाणिनमायांतंदृष्ट्वासीदतिमेमनः २६ यस्यनास्तिसमोवीर्येकश्चिदुर्व्यांधनुर्धरः ॥ सोऽद्यकन्यापरिवृतोगायन्नास्तेधनंजयः २७ धर्मेशौर्येचसत्येच जीवलोकस्यसंमतम् ॥ स्त्रीवेषविकृतंपार्थंदृष्ट्वासीदतिमेमनः २८ यदाह्येनंपरिवृतंकन्याभिर्देवरूपिणम् ॥ प्रभिन्नमिवमातंगंपरिकीर्णंकरेणुभिः २९ मत्स्यमर्थपतिंपार्थंविराटंसमुपस्थितम् ॥ पश्यामितुर्यमध्यस्थंदिशोनश्यंतिमेतदा ३० नूनमार्यानजानातिकृच्छ्रंप्राप्तंधनंजयम् ॥ अजातशत्रुंकौरव्यंमग्नंदुर्द्यूतदेविनम् ३१ तथादृष्ट्वायवीयांसंसहदेवंगवांपतिम् ॥ गोषुगोवेषमायांतंपांडुभूताऽस्मिभारत ३२ सहदेवस्यवृत्तानिचिंतयंतीपुनःपुनः ॥ ननिद्रामभिगच्छामि भीमसेनकुतोरतिम् ३३ नविंदामिमहाबाहोसहदेवस्यदुष्कृतम् ॥ यस्मिन्नेवंविधंदुःखंप्राप्नुयात्सत्यविक्रमः ३४ दूयामिभरतश्रेष्ठदृष्ट्वातेभ्रातरंप्रियम् ॥ गोषुगोवृषसंकाशंमत्स्येनाभिनिवेशितम् ॥ ३५ संरब्धंरक्तनेपथ्यंगोपालानांपुरोगमम् ॥ विराटमभिनंदंतमथमेभवतिज्वरः ३६ सहदेवंहिमेवीरंनित्यमार्याप्रशंसति ॥ महाभिजनसंपन्नःशीलवान्वृत्तवानिति ३७ ह्रीनिषेवोमधुरवाक्धार्मिकश्चप्रियश्चमे ॥ सतेऽरण्येषुवोढव्योयाज्ञसेनिक्षपास्वपि ३८ सुकुमारश्चशूरश्च राजानंचाप्यनुव्रतः ॥ ज्येष्ठापचायिनंवीरंस्वयंपांचालिभोजयेः ३९ इत्युवाचहिमांकुंतीरुदतीपुत्रगृद्धिनी ॥ प्रव्रजंतंमहारण्यंतंपरिष्वज्यतिष्ठती ४० तंदृष्ट्वा व्यापृतंगोषुवत्सचर्मक्षपाशयम् ॥ सहदेवंयुधांश्रेष्ठंकिंनुजीवामिपांडव ४१ यस्त्रिभिर्नित्यसंपन्नोरूपेणास्त्रेणमेधया ॥ सोऽश्वबंधोविराटस्यपश्यकालस्यपर्ययम् ४२ अभ्यकीर्यंतवृंदानिदामग्रंथिमुदीक्षतम् ॥ विनयंतंजवेनाश्वान्महाराजस्यपश्यतः ४३ अपश्यमेनंश्रीमंतंमत्स्यंभ्राजिष्णुमुत्तमम् ॥ विराटमुपतिष्ठंतंदर्शयंतंचवाजिनः ४४ किंनुमांमन्यसेपार्थसुखिनीतिपरंतप ॥ एवंदुःखशताविष्टायुधिष्ठिरनिमित्ततः ४५

र्याश्वश्रूः ३१ गोवेषंमहोक्षसदृशं ३२ । ३३ । ३४ दूयामिखेदंप्राप्नोमि ३५ रक्तनेपथ्यं रक्तंगैरिकादिधातुमयंनेपथ्यमलंकारोयस्य ३६ । ३७ । ३८ ज्येष्ठापचायिनंज्येष्ठपूजकं ३९ । ४० वत्सचर्मणिक्षपायांशेतेइतितं वत्सचर्मक्षपाशयम् ४१ । ४२ अभ्यकीर्यंतव्यशीर्यंत वृंदानिशत्रूणामितिशेषः दामग्रंथिंग्रंथिकम् ४३ एनंनकुलं वाजिनोऽश्वान्दर्शयंतं विराटंविराटाय ४४ । ४५

४६ म्रियमाणेषुजीवत्सु ॥ ४७ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपे एकोनविंशोऽध्यायः ॥ १९ ॥ ॥ सैरंध्र्यावेषेणसैरंध्रीवेषेण शौचदाशृज्जलादिशौचसाधनप्रदा १ । २ । ३ ४ पुरुषस्यदुर्योधनादेः यःकालः सएवकालएव प्रतिपालयेकालमितिशेषः ५ कालएवसर्वंविपरीतंकरोतीत्याह दत्वेति येस्वयंदातारस्तएवकालेनदरिद्राःसंतोयाचकाभवंतीत्यर्थः । तथाअन्यान्हत्वापरैरपिवध्यंतिवध्यंते । पातयित्वाअन्यान् तएवान्यैःपात्यंतइति ६ अतिभारोदुष्करंदैवस्यकिमपिनास्ति । अस्यदैवस्यअतिवर्त्तनंअतिक्रमणंचनास्ति केनचित्कृतमितिशेषः । दैवस्यप्राधान्यप्रतिपादकमागमंप्रतिपालयेमानये । दैवाधीनाऽस्मीतिमत्वानशोचामीत्यर्थः ७ स्थितमिति यथारिक्तंसरःपुनःकालेनपूर्यते एवमहमपिपुनःश्रियंप्राप्स्याम्ये

अतःप्रतिविशिष्टानिदुःखान्यन्यानिभारत ॥ वर्ततेमयिकौंतेयवक्ष्यामिशृणुतान्यपि ४६ युष्मासुम्रियमाणेषुदुःखानिविविधान्युत ॥ शोषयंतिशरीरंमेकिंनु दुःखमतःपरम् ४७ ॥ इतिश्रीमहाभारतेविराटपर्वणिकीचकवधपर्वणिद्रौपदीभीमसंवादेएकोनविंशोऽध्यायः ॥ १९ ॥ द्रौपद्युवाच ॥ अहंसैरंध्रिवेषेणचरंती राजवेश्मनि ॥ शौचदाऽस्मिसुदेष्णायाअक्षधूर्तस्यकरणात् १ विक्रियांपश्यमेतीव्रांराजपुत्र्याःपरंतप ॥ आत्मकालमुदीक्षंतिसर्वेदुःखंकिलांतवत् २ अनित्याकिलमर्त्यानामर्थसिद्धिर्जयाजयौ ॥ इतिकृत्वाप्रतीक्षामिभर्तॄणामुदयंपुनः ३ चक्रवत्परिवर्ततेह्यर्थाश्चव्यसनानिच ॥ इतिकृत्वाप्रतीक्षामिभर्तॄणामुदयंपुनः ४ यएवहेतुर्भवतिपुरुषस्यजयावहः ॥ पराजयेचहेतुश्चसइतिप्रतिपालये ॥ किंमांनप्रतिजानीषेभीमसेनमृतामिव ५ दत्वायाचंतिपुरुषाहत्वावध्यंतिचापरे ॥ पातयित्वाचपात्यंतेपरैरितिचमेश्रुतम् ६ नदैवस्यातिभारोऽस्तिनचैवास्यातिवर्तनम् ॥ इतिचाप्यागमंभूयोदैवस्तप्रतिपालये ७ स्थितंपूर्वंजलंयत्रपुनस्तत्रैवगच्छति ॥ इतिपर्यायमिच्छंतीप्रतीक्षेउदयंपुनः ८ दैवेनकिलयस्यार्थःसुनीतोऽपिविपद्यते ॥ दैवस्यचागमेयत्नस्तेनकार्योविजानता ९ यत्तुमेवचनस्यास्यकथितस्यप्रयोजनम् ॥ पृच्छमांदुखितांतत्त्वंपृष्टाचात्रब्रवीमिते १० महिषीपांडुपुत्राणांदुहिताद्रुपदस्यच ॥ इमामवस्थांसंप्राप्तामदन्याकाजिजीविषेत् ११ कुरून्परिभवेत्सर्वान्पंचालानपिभारत ॥ पांडवेयांश्वसंप्राप्तोममक्लेशोह्यरिंदम १२ भ्रातृभिःश्वशुरैःपुत्रैर्बहुभिःपरिवारिता ॥ एवंसमुदितानारीकात्वन्या दुःखिताभवेत् १३ नूनंहिबालयाधातुर्मयावैविप्रियंकृतम् ॥ यस्यप्रसादाद्दुर्नीतंप्राप्ताऽस्मिभरतर्षभ १४ वर्णावकाशमपिमेपश्यपांडवयादृशम् ॥ तादृशोमेनतत्रासीद्दुःखेपरमकेतदा १५ त्वमेवभीमजानीषेयन्मेपार्थसुखंपुरा ॥ साऽहंदासीत्वमापन्नानशांतिमवशालभे १६

वेतिनिश्चयेन पर्यायंकालवैपरीत्यंइच्छंती ८ यस्यपुंसोऽर्थोदैवेनविपद्यतेनश्यति तेनदैवस्यैवआगमेआनुकूल्येयत्नःकार्यः । दैवान्नष्टोऽर्थः पुनर्जपहोमादिनाआहर्त्तव्यइत्यर्थः ९ १० । ११ कुरूनिति ममसंबंधीमन्निमित्तकः कचग्रहादिरयंक्लेशः पांडवेयान्पांडोःस्त्रीपांडवीकुंतीतस्याःपुत्रान्युष्मान्प्राप्तःसन् कुरून्भीष्मादीन्पंचालान्द्रुपदादींश्चपरिभवेन्नाशयेदित्यर्थः १२ समुदितासम्यगुदयवत्यपि एवं काऽन्यादुःखिताभवेन्नकाऽपि श्रीमतामापदोनदृष्टाएव ममतुदृष्टाइतिमहदाश्चर्यमितिभावः १३ बाल्यानतुमौढ्या तं बाल्येकृतमपराधंनस्मरामि यस्यप्रसादादिदंदुर्नीतंदुरवस्थांप्राप्ताऽस्मि १४ वर्णावकाशोदीप्तिसंकोचः । वन्यान्नवल्कलधारणयुक्तात्स्वातंत्र्यादिव्यान्नवस्त्रसंयुक्तंपारतंत्र्यमतिदुःखदमितिभावः । तत्रवने इदानींयथादीप्तिसंकोचोऽस्ति नतथावनेआसीदित्यर्थः १५ अवशापराधीना १६

अदैविकंनकिंतुदैविकमेव १७ विनिपातंपराभवं १८ । १९ । २० । २१ । २२ । २३ पुराकिणवंतौनैवाऽभूतौ किंत्विदानीमेवजातावित्यर्थः २४ । २५ वर्णकोविलेपनं । 'वर्णकश्चारणेऽस्त्रीतुचंदनेचविलेपने'इतिमेदिनी । 'वर्णकोऽस्त्रीविलेपनम्'इत्यमरः २६ । २७ बाष्पकलयाबाष्पेणगद्गदया मंजुलयावा घट्टयंतीकंपयंतीव २८ कर्तव्येमर्तव्ये क्वहिंसायामि

नादैविकमहंमन्येयत्रपार्थोधनंजयः ॥ भीमधन्वामहाबाहुरास्तेच्छन्नइवानलः १७ अशक्यावेदितुंपार्थप्राणिनांवैगतिर्नरैः ॥ विनिपातमिमंमन्येयुष्माकंह्यविचिंतितम् १८ यस्याममुखप्रेक्षायूयमिंद्रसमाःसदा ॥ साप्रेक्षेमुखमन्यासामवराणांवरासती १९ पश्यपांडवमेऽवस्थांयथानार्हामिवैतथा ॥ युष्मासुध्रियमाणेषुपश्यकालस्यपर्ययम् २० यस्याःसागरपर्यंताप्रथिवीवशवर्तिनी ॥ आसीत्साऽद्यसुदेष्णायाभीताऽहंवशवर्तिनी २१ यस्याःपुरःसराआसन्पृष्ठतश्चानुगामिनः ॥ साऽहमद्यसुदेष्णायाःपुरःपश्चाच्चगामिनी २२ इदंतुदुःखंकौंतेयममासह्यंनिबोधतत् ॥ यानजातुस्वयंपिंषेगात्रोद्वर्तनमात्मनः ॥ अन्यत्रकुंत्याभद्रंतेसापिनष्म्यद्यचंदनम् २३ पश्यकौंतेयपाणीमेनैवाऽभूतांहियौपुरा ॥ इत्यस्यदर्शयामासकिणवंतौकरावुभौ २४ बिभेमिकुंत्यायानाहंयुष्माकंवाकदाचन ॥ साद्याऽग्रतोविराटस्यभीतातिष्ठामिकिंकरी २५ किंनुवक्ष्यतिसम्राण्मांवर्णकःसुकृतोनवा ॥ नान्यपिष्टंहिमत्स्यस्यचंदनंकिलरोचते २६ ॥ वैशंपायनउवाच ॥ साकीर्तयंतीदुःखानिभीमसेनस्यभामिनी ॥ रुरोदशनकैःकृष्णाभीमसेनमुदीक्षती २७ साबाष्पकलयावाचानिःश्वसंतीपुनःपुनः ॥ हृदयंभीमसेनस्यघट्टयंतीदमब्रवीत् २८ नाल्पंकृतंमयाभीमदेवानांकिल्बिषंपुरा ॥ अभाग्यायत्रजीवामिकर्तव्येसतिपांडव २९ ॥ वैशंपायनउवाच ॥ ततस्तस्याःकरौसूक्ष्मौकिणबद्धौवृकोदरः ॥ मुखमानीयवैपत्न्यारुरोदपरवीरहा ३० तौगृहीत्वाचकौंतेयोबाष्पमुत्सृज्यवीर्यवान् ॥ ततःपरमदुःखार्तइदंवचनमब्रवीत् ३१ ॥ इतिश्रीमहा० विराटप० कीचकवधप० द्रौपदीभीमसं० विंशोऽध्यायः ॥ २० ॥ भीमसेनउवाच ॥ धिगस्तुमेबाहुबलंगांडीवंफाल्गुनस्यच ॥ यत्तेरक्तौपुराभूत्वापाणीकृतकिणाविमौ १ सभायांतुविराटस्यकरोमिकदनंमहत् ॥ तत्रमेकारणंभातिकौंतेयोयत्प्रतीक्षते २ अथवाकीचकस्याहंपोथयामिपदाशिरः ॥ ऐश्वर्यमदमत्तस्यक्रीडन्निवमहाद्विपः ३ अपश्यस्त्वांयदाकृष्णेकीचकेनपदाहताम् ॥ तदैवाहंचिकीर्षामिमत्स्यानांकदनंमहत् ४ तत्रमांधर्मराजस्तुकटाक्षेणन्यवारयत् ॥ तदहंतस्यविज्ञायस्थितएवास्मिभामिनि ५ यच्चराष्ट्रात्प्रच्यवनंकुरूणामवधश्चयः ॥ सुयोधनस्यकर्णस्यशकुनेःसौबलस्यच ६ दुःशासनस्यपापस्ययन्मयानाहृतंशिरः ॥ तन्मेदहतिगात्राणिहृदिशल्यमिवार्पितम् ॥ माधर्मंजहिसुश्रोणिक्रोधंजहिमहामते ७ इमंतुसमुपालंभंत्वत्तोराजायुधिष्ठिरः ॥ शृणुयाद्वाऽपिकल्याणिकृत्स्नंजह्यात्सजीवितम् ८ धनंजयोवासुश्रोणियमौवातनुमध्यमे ॥ लोकांतरगतेष्वेषुनाहंशक्ष्यामिजीवितुम् ९

त्यस्यरूपं २९ । ३० ॥ ३१ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपेविंशोऽध्यायः ॥ २० ॥ ॥ ७ ॥ धिगिति १ सभायामिति कारणंप्राकट्यंमाभूदितिहेतुः प्रतीक्षतेतदेवसूचयन्मामवेक्षते । अन्यथातदानीमेव कदनंकरोमि कृतंस्यादित्यर्थः २ पोथयामिचूर्णीकरोमि ३ । ४ । ५ । ६ नाहृतंछित्वानानीतं ७ । ८ । ९

अन्वपद्यत अनुसृतवती १० । ११ । १३ । १४ । १५ । १६ मादीर्घं अदीर्घं अल्पमित्यर्थः सुप्सुपेतिसमासः क्षमक्षमस्व मासमर्धंचेतिसार्धमासमित्यर्थः १७ । १८ अनंतरः आसन्नः सन्न द्धोभवेतियावत् १९ कैकेयीसुदेष्णा नेयात्नगच्छेत् २० तंभावं राजाऽस्यांकीचकहतायांविरक्तःस्यादित्येवंरूपमभिप्रायं २१ । २२ । २३ । २४ क्षणंस्वीकारं २५ । २६ व







पुरासुकन्याभार्याचभार्गवंच्यवनंवने ॥ वल्मीकभूतंशाम्यंतमन्वपद्यतभामिनी १० नारायणीचेंद्रसेनारूपेणयदितेश्रुता ॥ पतिमन्वचरद्वृद्धंपुरावर्षसहस्रिणम् ११ दुहिताजनकस्यापिवैदेहीयदितेश्रुता ॥ पतिमन्वचरत्सीतामहारण्यनिवासिनम् १२ रक्षसानिग्रहंप्राप्यरामस्यमहिषीप्रिया ॥ क्लिश्यमानाऽपिसुश्रोणिराममेवान्वपद्यत १३ लोपामुद्रातथाभीरुवयोरूपसमन्विता ॥ अगस्तिमन्वयाद्धित्वाकामान्सर्वानमानुषान् १४ द्युमत्सेनसुतंवीरंसत्यवंतमनिंदिता ॥ सावित्र्यनुचचारैकायमलोकंमनस्विनी १५ यथैताःकीर्तितानार्योरूपवत्यःपतिव्रताः ॥ तथात्वमपिकल्याणिसर्वैःसमुदितागुणैः १६ मादीर्घंक्षमकालंत्वंमासमर्द्धंचसंमितम् ॥ पूर्णेत्रयोदशेवर्षेराज्ञांराज्ञीभविष्यसि १७ ॥ द्रौपद्युवाच ॥ आर्तयैतन्मयाभीमकृतंबाष्पप्रमोचनम् ॥ अपारयंत्यादुःखानिनराजानमुपालभे १८ किमुक्तेनव्यतीतेनभीमसेनमहाबल ॥ प्रत्युपस्थितकालस्यकार्यस्यानंतरोभव १९ ममेहभीमकैकेयीरूपाभिभवशंकया ॥ नित्यमुद्विजतेराजाकथंनेयादिमामिति २० तस्याविदित्वातंभावंस्वयंचानृतदर्शनः ॥ कीचकोऽयंसुदुष्टात्मासदाप्रार्थयतेहिमाम् २१ तमहंकुपिताभीमपुनःकोपंनियम्यच ॥ अब्रुवंकामसंमूढमात्मानंरक्षकीचक २२ गंधर्वाणामहंभार्यापंचानांमहिषीप्रिया ॥ तेत्वांनिहन्युःकुपिताःशूराःसाहसकारिणः २३ एवमुक्तःसुदुष्टात्माकीचकःप्रत्युवाचह ॥ नाहंबिभेमिसैरंध्रिगंधर्वाणांशुचिस्मिते २४ शतंशतसहस्राणिगंधर्वाणामहंरणे ॥ समागतंहनिष्यामित्वंभीरुकुरुमेक्षणम् २५ इत्युक्तेचाब्रुवंमत्तंकामातुरमहंपुनः ॥ नत्वंप्रतिबलश्चैषांगंधर्वाणांयशस्विनाम् २६ धर्मेस्थिताऽस्मिसततंकुलशीलसमन्विता ॥ नेच्छामिकंचिद्वध्यंतंतेनजीवसिकीचक ॥ २७ एवमुक्तःसदुष्टात्माप्राहसत्स्वनवत्तदा ॥ अथमांतत्रकैकेयीप्रेषयत्प्रणयेनतु २८ तेनैवदेशितापूर्वंभ्रात्राप्रियचिकीर्षया ॥ सुरामानयकल्याणिकीचकस्यनिवेशनात् २९ सूतपुत्रस्तुमांदृष्ट्वामहत्सांत्वमवर्तयत् ॥ सांत्वेप्रतिहतेक्रुद्धःपरामर्शमनाऽभवत् ३० विदित्वातस्यसंकल्पंकीचकस्यदुरात्मनः ॥ तथाऽहंराजशरणंजवेनैवप्रधाविता ३१ संदर्शनेतुमांराज्ञःसूतपुत्रःपरामृशत् ॥ पातयित्वातुदुष्टात्मापदाऽहंतेनताडिता ३२ प्रेक्षतेस्मविराटस्तुकंकस्तुबहवोजनाः ॥ रथिनःपीठमर्दाश्चहस्त्यारोहाश्चनैगमाः ३३ उपालब्धोमयाराजाकंकश्चापिपुनःपुनः ॥ ततोनवारितोराज्ञानतस्याविनयःकृतः ३४

ध्यंतंवध्यमानं २७ । २८ । २९ अवर्तयत्कृतवान् सांत्वंप्रियवादं ३० राजशरणंराजाधिष्ठितंस्थानं ३१ संदर्शनेप्रत्यक्षं ३२ पीठमर्दाःराजप्रियाः । 'पीठमर्दोऽतिधृष्टेस्यान्नायकस्यप्रियेऽपिच' इतिमेदिनी । नैगमाःनागराःवणिजोवा । 'नैगमःस्यादुपनिषद्वणिजोर्नागरेऽपिच' इतिमेदिनी ३३ तस्यकीचकस्याविनयः नकृतःननाशितः ३४

सारथिर्युद्धेसहायः नरस्यराज्ञः स्त्रियःसुदेष्णायाश्चसंमतःसंबंधित्वात् ३५ तर्हिकथंतयोर्विप्रियंतद्वधेनकर्त्तव्यमित्याशंक्याह शूरइति मुग्धवान्मौढ्यंगतवान् दारामर्शीतवैवस्त्रियंमांस्पृष्टवान् ३६ तिष्ठतेस्थिरोभवति बुभूषतिप्राप्नुमिच्छति ३७ । ३८ दर्शनेदर्शनेप्रतिदर्शनं सएवंराजवल्लभःकामात्माच यदिमांहन्यात्ताडयेत् ताडनभयाद्वाऽहंयदिजीवितंजह्यां तत्तर्हिधर्मेयतमानानांभवतांधर्मोनशिष्यति शौर्यंव्यर्थंस्यादित्यर्थः ३९ एतदेवाह समयमिति समयंमर्यादांत्रयोदशवर्षरूपां भार्यापोषणीयानभविष्यति ४० । ४१ जायात्आविर्भवेत् वदतांक्र

योऽयंराज्ञोविराटस्यकीचकोनामसारथिः ॥ त्यक्तधर्मानृशंसश्चनरस्त्रीसंमतःप्रियः ३५ शूरोऽभिमानीपापात्मासर्वार्थेषुचमुग्धवान् ॥ दारामर्शीमहाभागलभतेऽर्थान्बहूनपि ३६ आहरेदपिवित्तानिपरेषांक्रोशतामपि ॥ नतिष्ठतेस्मसन्मार्गेनचधर्मंबुभूषति ३७ पापात्मापापभावश्चकामबाणवशानुगः ॥ अविनीतश्चदुष्टात्माप्रत्याख्यातःपुनःपुनः ३८ दर्शनेदर्शनेहन्याद्यदिजह्यांचजीवितम् ॥ तद्धर्मेयतमानानांमहान्धर्मोनशिष्यति ३९ समयंरक्षमाणानांभार्यावोनभविष्यति ॥ भार्यायांरक्ष्यमाणायांप्रजाभवतिरक्षिता ४० प्रजायांरक्ष्यमाणायामात्माभवतिरक्षितः ॥ आत्माहिजायतेतस्यांतेनजायांविदुर्बुधाः ४१ भर्त्तातुभार्ययारक्ष्यःकथंजायान्ममोदरे ॥ वदतांवर्णधर्मश्चब्राह्मणानामितिश्रुतः ४२ क्षत्रियस्यसदाधर्मोनान्यःशत्रुनिबर्हणात् ॥ पश्यतोधर्मराजस्यकीचकोमांपदाऽवधीत् ४३ तवचैवसमक्षेवैभीमसेनमहाबल ॥ त्वयाह्यहंपरित्रातातस्माद्घोराज्जटासुरात् ४४ जयद्रथंतथैवत्वमजैषीर्भ्रातृभिःसह ॥ जहीममपिपापिष्ठंयोऽयंमामवमन्यते ४५ कीचकोराजवाल्लभ्याच्छोककृन्ममभारत ॥ तमेवंकामसंमत्तंभिंधिकुंभमिवाश्मनि ४६ योनिमित्तमनर्थानांबहूनांममभारत ॥ तंचेज्जीवंतमादित्यःप्रातरभ्युदयिष्यति ४७ विषमालोड्यपास्यामिमाकीचकवशंगमम् ॥ श्रेयोहिमरणंमह्यंभीमसेनतवाग्रतः ४८ ॥ वैशंपायनउवाच ॥ इत्युक्त्वाप्रारुदत्कृष्णाभीमस्योरःसमाश्रिता ॥ भीमश्चतांपरिष्वज्यमहत्सांत्वंप्रयुज्यच ४९ आश्वासयित्वाबहुशोभृशमार्त्तांसुमध्यमाम् ॥ हेतुतत्त्वार्थसंयुक्तैर्वचोभिर्द्रुपदात्मजाम् ५० प्रमृज्यवदनंतस्याःपाणिनाऽश्रुसमाकुलम् ॥ कीचकंमनसाऽगच्छत्सृक्किणीपरिसंलिहन् ॥ उवाचचैनांदुःखार्तांभीमःक्रोधसमन्वितः ५१ ॥ इति श्रीमहाभारतेविराटपर्वणिकीचकवधपर्वणिद्रौपदीसांत्वनेएकविंशोऽध्यायः ॥ २१ ॥ ७ ॥ भीमसेनउवाच ॥ तथाभद्रेकरिष्यामियथात्वंभीरुभाषसे ॥ अद्यतंसूदयिष्यामिकीचकंसहबांधवम् १ अस्याःप्रदोषेशर्वर्याःकुरुष्वानेनसंगतम् ॥ दुःखंशोकंचनिर्धूययाज्ञसेनिशुचिस्मिते २ यैषानर्तनशालेहमत्स्यराजेनकारिता ॥ दिवाऽत्रकन्यानृत्यंतिरात्रौयांतियथागृहम् ३ तत्रास्तिशयनंदिव्यंदृढांगंसुप्रतिष्ठितम् ॥ तत्रास्यदर्शयिष्यामिपूर्वप्रेतान्पितामहान् ४ यथाचत्वांनपश्येयुःकुर्वाणांतेनसंविदम् ॥ कुर्यास्तथात्वंकल्याणियथासन्निहितोभवेत् ५

थयतांब्राह्मनांमुखात्वर्णधर्मश्चश्रुतः ४२ । ४३ । ४४ । ४५ । ४६ अभ्युदयिष्यतिअभ्युदेष्यति ४७ कीचकवशंमागमंनगच्छेयं ४८ । ४९ हेतुभिर्युक्तिभिःतत्त्वार्थैर्यथार्थभूतैश्चार्थैःसंयुक्तानितैः ५० आगच्छत्स्मृतवान् सृक्किणीगल्लयोरभ्यंतरे परिसंलिहन्जिव्हयापरामृशन् ५१ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपे एकविंशोऽध्यायः ॥ २१ ॥ ॥ तथेति १ प्रदोषेरजनीमुखे संगतंसंभाषणं निर्धूयअप्रकाश्य २ । ३ दृढांगंकाष्ठफलकमयं ४ । ५

६ । ७ अहनंहतवान् ८ । ९ । १० नौआवयोः ११ समयंसंकेतं प्रतिपद्यस्वस्वीकुरु १२ । १३ । १४ । १५ । १६ । १७ दिवसार्द्धंअहोरात्रार्द्धं दिनमेकमपिमा

वैशंपायनउवाच ॥ तथातौकथयित्वातुबाष्पमुत्सृज्यदुःखितौ ॥ रात्रिशेषंतमत्युग्रंधारयामासतुर्हृदि ६ तस्यांरात्र्यांव्यतीतायांप्रातरुत्थायकीचकः ॥ गत्वाराजकुलायैवद्रौपदीमिदमब्रवीत् ७ सभायांपश्यतोराज्ञःपातयित्वापदाऽहनम् ॥ नचैवालभसेत्राणमभिपन्नाबलीयसा ८ प्रवादेनेहमत्स्यानांराजानाम्नाऽयमुच्यते ॥ अहमेवहिमत्स्यानांराजावैवाहिनीपतिः ९ मांसुखंप्रतिपद्यस्वदासोभीरुभवामिते ॥ अह्नायतवसुश्रोणिशतंनिष्कान्ददाम्यहम् १० दासीशतंचतेदद्यांदासानामपिचापरम् ॥ रथंचाश्वतरीयुक्तमस्तुनौभीरुसंगमः ११ ॥ द्रौपद्युवाच ॥ एवंमेसमयंत्वद्यप्रतिपद्यस्वकीचक ॥ नत्वांसखावाभ्रातावाजानीयात्संगतंमया १२ अनुप्रवादाद्भीताऽस्मिगंधर्वाणांयशस्विनाम् ॥ एवंमेप्रतिजानीहिततोऽहंवशगातव १३ ॥ कीचकउवाच ॥ एवमेतत्करिष्यामियथासुश्रोणिभाषसे ॥ एकोभद्रेगमिष्यामिशून्यमावसथंतव १४ समागमार्थंरंभोरुत्वयामदनमोहितः ॥ यथात्वांनैवपश्येयुर्गंधर्वाःसूर्यवर्चसः १५ ॥ द्रौपद्युवाच ॥ यदेतन्नर्तनागारंमत्स्यराजेनकारितम् ॥ दिवाऽत्रकन्यानृत्यंतिरात्रौयांतियथागृहम् १६ तमिस्रेतत्रगच्छेथागंधर्वास्तन्नजानते ॥ तत्रदोषःपरिहृतोभविष्यतिनसंशयः १७ ॥ वैशंपायनउवाच ॥ तमर्थमपिजल्पंत्याःकृष्णायाःकीचकेनह ॥ दिवसार्द्धंसमभवन्मासेनैवसमंनृप १८ कीचकोऽथगृहंगत्वाभृशंहर्षपरिप्लुतः ॥ सैरंध्रीरूपिणंमूढोमृत्युंतन्नावबुद्धवान् १९ गंधाभरणमाल्येषुव्यासक्तःसविशेषतः ॥ अलंचकेतदात्मानंसत्वरःकाममोहितः २० तस्यतत्कुर्वतःकर्मकालोदीर्घइवाभवत् ॥ अनुचिंतयतश्चापितामेवायतलोचनाम् २१ आसीदभ्यधिकाचापिश्रीःश्रियंप्रमुमुक्षतः ॥ निर्वाणकालेदीपस्यवर्तीमिवदिधक्षतः २२ कृतसंप्रत्ययस्तस्याःकीचकःकाममोहितः ॥ नाजानाद्दिवसंयांतंचिंतयानःसमागमम् २३ ततस्तुद्रौपदीगत्वातदाभीमंमहानसे ॥ उपातिष्ठतकल्याणीकौरव्यंपतिमंतिकम् २४ तमुवाचसुकेशांताकीचकस्यमयाकृतः ॥ संगमोनर्तनागारेयथाऽवोचःपरंतप २५ शून्यंसनर्तनागारमागमिष्यतिकीचकः ॥ एकोनिशिमहाबाहोकीचकंतंनिषूदय २६ तंसूतपुत्रंकौंतेयकीचकंमददर्पितम् ॥ गत्वात्वंनर्तनागारंनिर्जीवंकुरुपांडव २७ दर्पाच्चसूतपुत्रोऽसौगंधर्वानवमन्यते ॥ तंत्वंप्रहरतांश्रेष्ठह्रदान्नागमिवोद्धर २८ अश्रुदुःखाभिभूतायाममप्रार्जस्वभारत ॥ आत्मनश्चैवभद्रंतेकुरुमानंकुलस्यच २९ ॥ भीमसेनउवाच ॥ स्वागतंतेवरारोहेयन्मांविदयसेप्रियम् ॥ नह्यन्यंकंचिदिच्छामिसहायंवरवर्णिनि ३० यामेप्रीतिस्त्वयाऽख्याताकीचकस्यसमागमे ॥ हत्वाहिडिंबंसाप्रीतिर्ममासीद्वरवर्णिनि ३१ सत्यंभ्रातॄंश्चधर्मंचपुरस्कृत्यब्रवीमिते ॥ कीचकंनिहनिष्यामिवृत्रंदेवपतिर्यथा ३२

सेनसममौत्कंठ्यादभूत् १८ । १९ । २० । २१ । २२ कृतसंप्रत्ययःकृतविश्वासः नाजानात्नज्ञातवान् २३ । २४ । २५ । २६ । २७ ह्रदात्यमुनाह्रदान्नागंकालियंकृष्णोयथाउद्धृतवांस्तद्वत्त्वमेनमिहलोकाद्दूरेपातयेतिभावः २८ । २९ । ३० । ३१ । ३२

३३ । ३४ । ३५ । ३६ तस्यतेनादृश्यमानः नागोहस्ती अलभ्यांस्वाम् ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ यत्कृतंयदर्जितंधनादितत्सर्वं तेतुभ्यंप्रापितंदं

तंगह्वरेप्रकाशेवापोथयिष्यामिकीचकम् ॥ अथचेदपियोत्स्यंतिहिंसेमत्स्यानपिध्रुवम् ३३ ततोदुर्योधनंहत्वाप्रतिपत्स्येवसुंधराम् ॥ कामंमत्स्यमुपास्तांहि कुंतीपुत्रोयुधिष्ठिरः ३४ ॥ द्रौपद्युवाच ॥ यथानसंत्यजेथास्त्वंसत्यंवैमत्कृतेविभो ॥ निगूढस्त्वंतथापार्थकीचकंतंनिषूदय ३५ ॥ भीमसेनउवाच ॥ एवमे तत्करिष्यामियथात्वंभीरुभाषसे ॥ अद्यतंसूदयिष्यामिकीचकंसहबांधवैः ३६ अदृश्यमानस्तस्याथतमस्विन्यामनिंदिते ॥ नागोबिल्वमिवाक्रम्यपोथयि ष्याम्यहंशिरः ॥ अलभ्यामिच्छतस्तस्यकीचकस्यदुरात्मनः ३७ ॥ वैशंपायनउवाच ॥ भीमोऽथप्रथमंगत्वारात्रौच्छन्नउपाविशत् ॥ मृगंहरिरिवादृश्यःप्रत्या कांक्षतकीचकम् ३८ कीचकश्चाप्यलंकृत्ययथाकाममुपागमत् ॥ तांवेलांनर्तनागारंपांचालीसंगमाशया ३९ मन्यमानःससंकेतमागारंप्राविशच्चतत् ॥ प्रवि श्यचसतद्वेश्मतमसासंवृतंमहत् ४० पूर्वागतंततस्तत्रभीममप्रतिमौजसम् ॥ एकांतावस्थितंचैनमाससाददुर्मतिः ४१ शयानंशयनेतत्रसूतपुत्रःपरामृश त् ॥ जाज्वल्यमानंकोपेनकृष्णाधर्षणजेनह ४२ उपासंगम्यचैवैनंकीचकःकाममोहितः ॥ हर्षोन्मथितचितात्मास्मयमानोऽभ्यभाषत ४३ प्रापितंतेमयावि त्तंबहुरूपमनंतकम् ॥ यत्कृतंधनरत्नाढ्यंदासीशतपरिच्छदम् ४४ रूपलावण्ययुक्ताभिर्युवतीभिरलंकृतम् ॥ गृहंचांतःपुरंसुभ्रुक्रीडारतिविराजितम् ॥ त त्सर्वंत्वांसमुद्दिश्यसहसाऽहमुपागतः ४५ अकस्मान्मांप्रशंसंतिसदागृहगताःस्त्रियः ॥ सुवासादर्शनीयश्चनान्योऽस्तित्वादृशःपुमान् ४६ ॥ भीमसेनउवाच ॥ दिष्ट्यात्वंदर्शनीयोऽथदिष्ट्याऽऽत्मानंप्रशंससि ॥ ईदृशस्तुत्वयास्पर्शःस्पृष्टपूर्वोनकर्हिचित् ४७ स्पर्शंवेत्सिविदग्धस्त्वंकामधर्मविचक्षणः ॥ स्त्रीणांप्रीतिकरो नान्यस्त्वत्समःपुरुषस्त्विह ४८ ॥ वैशंपायनउवाच ॥ इत्युक्त्वातंमहाबाहुर्भीमोभीमपराक्रमः ॥ सहसोत्पत्यकौंतेयःप्रहस्येदमुवाचह ४९ अद्यत्वांभगिनीपा पंकृष्यमाणंमयाभुवि ॥ द्रक्ष्यतेऽद्रिप्रतीकाशंसिंहेनेवमहागजम् ५० निराबाधात्वयिहतेसैरंध्रीविचरिष्यति ॥ सुखमेवचरिष्यंतिसैरंध्र्याःपतयःसदा ५१ त तोजग्राहकेशेषुमाल्यवत्सुमहाबलः ॥ सकेशेषुपरामृष्टोबलेनबलिनांवरः ५२ आक्षिप्यकेशान्वेगेनबाह्वोर्जग्राहपांडवम् ॥ बाहुयुद्धंतयोरासीत्क्रुद्धयोर्नरसिंह योः ५३ वसंतेवासिताहेतोर्बलवद्गजयोरिव ॥ कीचकानांतुमुख्यस्यनराणामुत्तमस्यच ५४ वालिसुग्रीवयोर्भ्रात्रोःपुरेवकपिसिंहयोः ॥ अन्योन्यमभिसंरब्धौ परस्परजयैषिणौ ५५ ततःसमुद्यम्यभुजौपंचशीर्षाविवोरगौ ॥ नखदंष्ट्राभिरन्योन्यंघ्नतःक्रोधविषोद्धतौ ५६ वेगेनाभिहतोभीमःकीचकेनबलीयसा ॥ स्थि रप्रतिज्ञःसरणेपदान्नचलितःपदम् ५७ तावन्योन्यंसमाश्लिष्यप्रकर्षंतौपरस्परम् ॥ उभावपिप्रकाशेतेप्रवृद्धौवृषभाविव ५८

त्वमितिसंबंधः ४४ अतःपरंत्वांसमुद्दिश्याहमत्रागतोऽस्मि ४५ प्रशंसंतित्वयाऽहंवृतइतिहेतोरित्यभिप्रायः ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ वासिताहेतोर्हस्तिनीनिमित्तम् ५४ । ५५ । ५६ । ५७ । ५८

५९ करटामुखंगंडस्थलस्थंमदानिर्गमस्थानं । 'करटोगजगंडेस्यात्'इतिमेदिनी ६० । ६१ । ६२ । ६३ । ६४ आकलितमाक्रांतं द्रुतपदंचलितस्थानंयथास्यात्तथास्थितम् ६५ । ६६ । ६७ ६८ । ६९ सहित्वासोढ्वा बलादहीयतबलहीनोऽभूत् ७० वक्षस्यानीयानतंभुग्नंकृत्वा तन्नाभिनाचिछरःसंयोज्येत्यर्थः ७१ । ७२ गृहीत्वाचेतिपाठे इवार्थेचः ७३ योक्त्रयामासबबंध रशनया

तयोर्ह्यासीत्सुतुमुलःसंप्रहारःसुदारुणः ॥ नखदंतायुधवतोर्व्याघ्रयोरिवदृप्तयोः ५९ अभिपत्याथबाहुभ्यांप्रत्यगृह्णादमर्षितः ॥ मातंगइवमातंगंप्रभिन्नकरटामुखम् ६० सचाप्येनंतदाभीमःप्रतिजग्राहवीर्यवान् ॥ तमाक्षिपत्कीचकोऽथबलेनबलिनांवरः ६१ तयोर्भुजविनिष्पेषादुभयोर्बलिनोस्तदा ॥ शब्दःसमभवद्घोरोवेणुस्फोटसमोयुधि ६२ अथैनमाक्षिप्यबलाद्गृहमध्येवृकोदरः ॥ धूनयामासवेगेनवायुश्चंडइवद्रुमम् ६३ भीमेनचपराम्रष्टोदुर्बलोबलिनारणे ॥ प्रास्पंदतयथाप्राणंविचकर्षचपांडवम् ६४ ईषदाकलितंचापिक्रोधाद्द्रुतपदंस्थितम् ॥ कीचकोबलवान्भीमंजानुभ्यामाक्षिपद्भुवि ६५ पातितोभुविभीमस्तुकीचकेनबलीयसा ॥ उत्पपाताथवेगेनदंडपाणिरिवांतकः ६६ स्पर्द्धयाचबलोन्मत्तौतावुभौसूतपांडवौ ॥ निशीथेपर्यकर्षेतांबलिनौनिर्जनेस्थले ६७ ततस्तद्भवनंश्रेष्ठंप्राकंपतमुहुर्मुहुः ॥ बलवच्चापिसंक्रुद्धावन्योन्यंप्रतिगर्जतः ६८ तलाभ्यांसतुभीमेनवक्षस्यभिहतोबली ॥ कीचकोरोषसंतप्तःपदान्नचलितःपदम् ६९ मुहूर्तंतुसतंवेगंसहित्वाभुविदुःसहम् ॥ बलादहीयततदासूतोभीमबलार्दितः ७० तंहीयमानंविज्ञायभीमसेनोमहाबलः ॥ वक्षस्यानीयवेगेनममर्दैनंविचेतसम् ७१ क्रोधाविष्टोविनिःश्वस्यपुनश्चैनंवृकोदरः ॥ जग्राहजयतांश्रेष्ठःकेशेष्वेवतदाभृशम् ७२ गृहीत्वाकीचकंभीमोविरराजमहाबलः ॥ शार्दूलःपिशिताकांक्षीगृहीत्वेवमहामृगम् ७३ ततएनंपरिश्रांतमुपलभ्यवृकोदरः ॥ योक्त्रयामासबाहुभ्यांपशुंरशनयायथा ७४ नदंतंचमहानादंभिन्नभेरीसमस्वनम् ॥ भ्रामयामाससुचिरंविस्फुरंतमचेतसम् ७५ प्रगृह्यतरसादोर्भ्यांकंठंतस्यवृकोदरः ॥ अपीडयतकृष्णायास्तदाकोपोपशांतये ७६ अथतंभग्नसर्वांगंव्याविद्धनयनांबरम् ॥ आक्रम्यचकटीदेशेजानुनाकीचकाधमम् ॥ अपीडयतबाहुभ्यांपशुमारममारयत् ७७ तंविषीदंतमाज्ञायकीचकंपांडुनंदनः ॥ भूतलेभ्रामयामासवाक्यंचेदमुवाच ह ७८ अद्याहमनृणोभूत्वाभ्रातुर्भार्यापहारिणम् ॥ शांतिंलब्धास्मिपरमांहत्वासैरंध्रिकंटकम् ७९ इत्येवमुक्त्वापुरुषप्रवीरस्तंकीचकंक्रोधसरागनेत्रः ॥ अस्रस्तवस्त्राभरणंस्फुरंतमुद्भ्रांतनेत्रंव्यसुमुत्ससर्ज ८० निष्पिष्यपाणिनापाणिंसंदष्टौष्ठपुटंबली ॥ समाक्रम्यचसंक्रुद्धोबलेनबलिनांवरः ८१ तस्यपादौचपाणीचशिरोग्रीवांचसर्वशः ॥ कायेप्रवेशयामासपशोरिवपिनाकधृक् ८२ तंसंमथितसर्वांगंमांसपिंडोपमंकृतम् ॥ कृष्णायादर्शयामासभीमसेनोमहाबलः ८३ उवाचचमहातेजाद्रौपदींयोषितांवराम् ॥ पश्यैनमेहिपांचालिकामुकोयंयथाकृतः ८४

रज्ज्वा ७४ । ७५ दोर्भ्यांपाणिभ्याम् ७६ व्याविद्धेअतिपीडनात्अधःक्षिप्ते नयनेनयनगोलकेअंबरंवस्त्रंचयस्य नयनाकाशोवा पशुमारं पशुंमारयित्वेवेतियज्ञियपशुवदित्यर्थः ७७ । ७८ सैरंध्रिकंटकं'हस्वत्वंसमासनिमित्तम् ७९ । ८० । ८१ तस्यपादौचेति कायेदेहमध्यभागेतत्तन्निर्गममार्गेणैवांगान्यंतःप्रवेश्य । 'योअस्मैरेवान्नसुनोतिसोमं निररत्नौमघवातंदधाति'इतिश्रुतमरत्नौनिर्धानमेतदेवज्ञेयं रेवान्धनवान्नविधानंनिष्क्रुष्यस्थापनम्८२कृष्णायाःद्रौपद्यै८३।८४

८५ । ८६ सुकेशांते सुष्ठुकौटिल्येनविराजमानाःकेशांतायस्याः । शोभतइत्युपहासः एवमेवधार्त्तराष्ट्रान्मारयिष्यामीतिभावः ८७ रोषस्यशमंअंतं फलस्यजातत्वात् ८८ । ८९

एवमुक्त्वामहाराजभीमोभीमपराक्रमः ॥ पादेनपीडयामासतस्यकायंदुरात्मनः ८५ ततोऽग्निंतत्रप्रज्वाल्यदर्शयित्वातुकीचकम् ॥ पांचालींसतदावीरइदंवच नमब्रवीत् ८६ प्रार्थयंतिसुकेशांतेयेत्वांशीलगुणान्विताम् ॥ एवंतेभीरुवध्यंतेकीचकःशोभतेयथा ८७ तत्कृत्वादुष्करंकर्मकृष्णायाःप्रियमुत्तमम् ॥ तथासकी चकंहत्वागत्वारोषस्यवैशमम् ८८ आमंत्र्यद्रौपदींकृष्णांक्षिप्रमायान्महानसम् ॥ कीचकंघातयित्वातुद्रौपदीयोषितांवरा ॥ प्रहृष्टागतसंतापासभापालानुवाचह ८९ कीचकोऽयंहतःशेतेगंधर्वैःपतिभिर्मम ॥ परस्त्रीकामसंमत्तस्तत्रागच्छतपश्यत ९० तच्छ्रुत्वाभाषितंतस्यानर्तनागाररक्षिणः ॥ सहसैवसमाजग्मुरादायोल्काः सहस्रशः ९१ ततोगत्वाऽथतद्वेश्मकीचकंविनिपातितम् ॥ गतासुंददृशुर्भूमौरुधिरेणसमुक्षितम् ९२ पाणिपादविहीनंतुदृष्ट्वाचव्यथिताऽभवन् ॥ निरीक्षं तितत‌ःसर्वेपरंविस्मयमागताः ९३ अमानुषंकृतंकर्मतंदृष्ट्वाविनिपातितम् ॥ क्वास्यग्रीवाक्वचरणौक्वपाणीक्वशिरस्तथा ॥ इतिस्मतंपरीक्षंतेगंधर्वेणहतंतदा ९४ ॥ इतिश्रीमहाभारतेविराटपर्वणि कीचकवधपर्वणिकीचकवधेद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ तस्मिन्कालेसमागम्यसर्वे तत्रास्यबांधवाः ॥ रुरुदुःकीचकंदृष्ट्वापरिवार्यसमंततः १ सर्वेसंहृष्टरोमाणःसंत्रस्ताःप्रेक्ष्यकीचकम् ॥ तथासंभिन्नसर्वांगंकूर्मंस्थलइवोद्धृतम् २ पोथितंभीमसे नेनतमिंद्रेणेवदानवम् ॥ संस्कारयितुमिच्छंतोबहिर्नेतुंप्रचक्रमुः ३ ददृशुस्तेततःकृष्णांसूतपुत्राःसमागताः ॥ अदूराच्चानवद्यांगींस्तंभमालिंग्यतिष्ठतीम् ४ समवेतेषुसर्वेषुतामूचुरुपकीचकाः ॥ हन्यतांशीघ्रमसतीयत्कृतेकीचकोहतः ५ अथवानैवहंतव्यादह्यतांकामिनासह ॥ मृतस्यापिप्रियंकार्यंसूतपुत्रस्यसर्वथा ६ ततोविराटमूचुस्तेकीचकोऽस्याःकृतेहतः ॥ सहानेनाद्यदह्येमतदनुज्ञातुमर्हसि ७ पराक्रमंतुसूतानांमत्वाराजाऽन्वमोदत ॥ सैरंध्र्याःसूतपुत्रेणसहदाहंविशांपतिः ८ तांसमासाद्यवित्रस्तांकृष्णांकमललोचनाम् ॥ मोमुह्यमानांतेतत्रजगृहुःकीचकाभृशम् ९ ततस्तुतांसमारोप्यनिबद्ध्यचसुमध्यमाम् ॥ जग्मुरुद्यम्यते सर्वेश्मशानाभिमुखास्तदा १० ह्रियमाणातुसाराजन्सूतपुत्रैरनिंदिता ॥ प्राक्रोशन्नाथमिच्छंतीकृष्णानाथवतीसती ११ ॥ द्रौपद्युवाच ॥ जयोजयंतोविजयो जयत्सेनोजयद्बलः ॥ तेमेवाचंविजानंतुसूतपुत्रानयंतिमाम् १२ येषांज्यातलनिर्घोषोविस्फूर्जितमिवाशनेः ॥ व्यश्रूयतमहायुद्धेभीमघोषस्तरस्विनाम् १३ रथघोषश्चबलवान्गंधर्वाणांतरस्विनाम् ॥ तेमेवाचंविजानंतुसूतपुत्रानयंतिमाम् १४ ॥ वैशंपायनउवाच ॥ तस्यास्ताःकृपणावाचःकृष्णायाःपरिदेवितम् ॥ श्रुत्वैवाभ्यापतद्भीमःशयनादविचारयन् १५ ९० । ९१ । ९२ । ९३ । ९४ ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपेद्वाविंशोऽध्यायः ॥ २२ ॥

तस्मिन्निति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५

१६ व्यायतंव्यापरंयत्नंकृत्वा वेषंचविपरिवर्त्य गंधर्ववेषसदृशंकृत्वा १७ अभ्यवस्कंद्यनिपत्य द्रुममारुह्य ततश्चद्रौपदीनयनप्रदेशंदृष्ट्वेत्यर्थः १८ । १९ मूर्धशुष्कमितिशोषणोन्मुखत्वेनातिपक्वत्वंसूच्यते २० परिरभ्यउपक्रम्यउत्पाटनार्थंयत्नंकृत्वा उत्पाटितंचतंस्कंधेआरोपयामास व्यामंप्रसारितयोर्बाह्वोरंतरम् २१ । २२ । २३ । २४ । २५

॥ भीमसेनउवाच ॥ अहंशृणोमितेवाचंत्वयासैरंध्रिभाषिताम् ॥ तस्मात्तेसूतपुत्रेभ्योभयंभीरुनविद्यते १६ ॥ वैशंपायनउवाच ॥ इत्युक्त्वासमहाबाहुर्विजृंभेजिघांसया ॥ ततःसव्यायतंकृत्वावेषंविपरिवर्त्यच १७ अद्वारेणाभ्यवस्कंद्यनिर्जगामबहिस्तदा ॥ सभीमसेनःप्राकारादारुह्यतरसाद्रुमम् १८ श्मशानाभिमुखःप्रायाद्यत्रतेकीचकागताः ॥ सलंघयित्वाप्राकारंनिसृत्यचपुरोत्तमात् ॥ जवेनपतितोभीमःसूतानामग्रतस्तदा १९ चितासमीपेगत्वासतत्रापश्यद्वनस्पतिम् ॥ तालमात्रंमहास्कंधंमूर्धशुष्कंविशांपते २० तंनागवदुपक्रम्यबाहुभ्यांपरिरभ्यच ॥ स्कंधमारोपयामासदशव्यामंपरंतपः २१ सतंवृक्षंदशव्यामंसस्कंधविटपंबली ॥ प्रगृह्याभ्यद्रवत्सूतान्दंडपाणिरिवांतकः २२ ऊरुवेगेनतस्याथन्यग्रोधाश्वत्थकिंशुकाः ॥ भूमौनिपतितावृक्षाःसंघशस्तत्रशेरते २३ तंसिंहमिवसंक्रुद्धंदृष्ट्वागंधर्वमागतम् ॥ वित्रेसुःसर्वशःसूताविषादभयकंपिताः २४ गंधर्वोबलवानेतिक्रुद्धउद्यम्यपादपम् ॥ सैरंध्रीमुच्यतांशीघ्रंयतोनोभयमागतम् २५ तेतुदृष्ट्वातदाऽऽविद्धंभीमसेनेनपादपम् ॥ विमुच्यद्रौपदींतत्रप्राद्रवन्नगरंप्रति २६ द्रवतस्तांस्तुसंप्रेक्ष्यसवज्रीदानवानिव ॥ शतंपंचाधिकंभीमःप्राहिणोद्यमसादनम् २७ वृक्षेणैतेनराजेंद्रप्रभंजनसुतोबली ॥ ततआश्वासयत्कृष्णांसविमुच्यविशांपते २८ उवाचचमहाबाहुःपांचालींतत्रद्रौपदीम् ॥ अश्रुपूर्णमुखींदीनांदुर्धर्षःसवृकोदरः २९ एवंतेभीरुवध्यंतेयेत्वांक्लिश्यंत्यनागसम् ॥ प्रैहित्वंनगरंकृष्णेनभयंविद्यतेतव ३० अन्येनाहंगमिष्यामिविराटस्यमहानसम् ३१ ॥ वैशंपायनउवाच ॥ पंचाधिकंशतंतच्चनिहतंतेनभारत ॥ महावनमिवच्छिन्नंशिश्येविगलितद्रुमम् ३२ एवंतेनिहताराजन्शतंपंचचकीचकाः ॥ सचसेनापतिःपूर्वमित्येतत्सूतषट्शतम् ३३ तद्दृष्ट्वामहदाश्चर्यंनरानार्यश्चसंगताः ॥ विस्मयंपरमंगत्वानोचुःकिंचनभारत ३४ ॥ इतिश्रीमहाभारतेविराटपर्वणिकीचकवधपर्वणित्रयोविंशोऽध्यायः ॥ २३ ॥ ४ ॥ ॥ वैशंपायनउवाच ॥ तेदृष्ट्वानिहतान्सूतान्राज्ञेगत्वान्यवेदयन् ॥ गंधर्वैर्निहताराजन्सूतपुत्रामहाबलाः १ यथावज्रेणवैदीर्णंपर्वतस्यमहच्छिरः ॥ व्यतिकीर्णाःप्रदृश्यंतेतथासूतामहीतले २ सैरंध्रीचविमुक्ताऽसौपुनरायातितेगृहम् ॥ सर्वंसंशयितंराजन्नगरंतेभविष्यति ३ यथारूपाचसैरंध्रीगंधर्वाश्चमहाबलाः ॥ पुंसामिष्टश्चविषयोमैथुनायनसंशयः ४ यथासैरंध्रिदोषेणनतेराजन्निदंपुरम् ॥ विनाशमेतिवैक्षिप्रंतथानीतिर्विधीयाम् ५ तेषांतद्वचनंश्रुत्वाविराटोवाहिनीपतिः ॥ अब्रवीत्क्रियतामेषांसूतानांपरमक्रिया ६

२६ । २७ । २८ विमुच्यमोचयित्वा २९ । ३० अन्येनमार्गेण ३१ शिश्येशयितम् ३२ षट्शतंषडधिकंशतम् ३३ । ३४ । इतिविराटपर्वणिनैलकंठीये भारतभावदीपेत्रयोविंशोऽध्यायः ॥ २३ ॥ ततइति १ । २ । ३ । ४ । ५ । ६

७ । ८ । ९ नहित्वामिति हित्वांहातुंयोग्यां । कृत्यार्थेतवैकेकेन्यत्वनइतित्वन् जहातेश्चेतिहित्वं अक्कायामपिच्छांदसं । पित्वोभिक्षेतेत्यादिवत् । त्वां सैरंध्रीं हित्वात्यक्तुंयोग्या मप्यहंराजागच्छोतिवक्तुंनोत्सहे स्त्रियास्तुसुदेष्णायास्तवतांप्रत्येतद्वक्तुमदोषइतिराजवाक्यानुवादः । यस्मादेवंराजामांआज्ञापितवान् तस्मादेवंत्वांप्रतिप्रब्रवीम्यहमितिसुदेष्णा

एकस्मिन्नेवतेसर्वेसुसमिद्धेहुताशने ॥ दह्यंतांकीचकाःशीघ्रंरत्वैर्गंधेश्वसर्वशः ७ सुदेष्णामब्रवीद्राजामहिषींजातसाध्वसः ॥ सैरंध्रीमागतांब्रूयाममैववचनादि दम् ८ गच्छसैरंध्रिभद्रंतेयथाकामंवरानने ॥ बिभेतिराजासुश्रोणिगंधर्वेभ्यःपराभवात् ९ नहित्वामुत्सहेवक्तुंस्वयंगंधर्वरक्षिताम् ॥ स्त्रियास्त्वदोषस्तांवक्तुमत स्त्वांप्रब्रवीम्यहम् १० ॥ वैशंपायनउवाच ॥ अथमुक्ताभयात्कृष्णासूतपुत्रान्निरस्यच ॥ मोक्षिताभीमसेनेनजगामनगरंप्रति ११ त्रासितेवमृगीबालाशार्दू लेनमनस्विनी ॥ गात्राणिवाससीचैवप्रक्षाल्यसलिलेनसा १२ तांदृष्ट्वापुरुषाराजन्प्राद्रवंतदिशोदश ॥ गंधर्वाणांभयत्रस्ताःकेचिद्दृष्ट्वान्यमीलयन् १३ ततो महानसद्वारिभीमसेनमवस्थितम् ॥ ददर्शराजन्पांचालीयथामत्तंमहाद्विपम् १४ तंविस्मयंतीशनकैःसंज्ञाभिरिदमब्रवीत् ॥ गंधर्वराजायनमोयेनास्मिपरिमो चिता १५ ॥ भीमसेनउवाच ॥ येपुराविचरंतीहपुरुषावशवर्तिनः ॥ तस्यास्तेवचनंश्रुत्वाह्यनृणाविहरंत्वतः १६ ॥ वैशंपायनउवाच ॥ ततःसानर्तनागा रेधनंजयमपश्यत ॥ राज्ञःकन्याविराटस्यनर्तयानंमहाभुजम् १७ ततस्तानर्तनागाराद्विनिष्क्रम्यसहार्जुनाः ॥ कन्याददृशुरायांतींक्लिष्टांकृष्णामनागसम् १८ ॥ कन्याऊचुः ॥ दिष्ट्यासैरंध्रिमुक्तासिदिष्ट्याऽसिपुनरागता ॥ दिष्ट्याविनिहताःसूतायेत्वांक्लिश्यंत्यनागसम् १९ ॥ बृहन्नलोवाच ॥ कथंसैरंध्रिमुक्ताऽसि कथंपापाश्चतेहताः ॥ इच्छामिवैतवश्रोतुंसर्वमेवयथातथम् २० ॥ सैरंध्र्युवाच ॥ बृहन्नलेकिंनुतवसैरंध्याकार्यमद्यवै ॥ यात्वंवससिकल्याणिसदाकन्यापुरेसुखम् २१ नहिदुःखंसमाप्नोषिसैरंध्रीयदुपाश्नुते ॥ तेनमांदुखितामेवंपृच्छसेप्रहसन्निव २२ ॥ बृहन्नलोवाच ॥ बृहन्नलाऽपिकल्याणिदुःखमाप्नोत्यनुत्तमम् ॥ ति र्यग्योनिगताबालेनचैनामवबुद्ध्यसे २३ त्वयासहोषिताचास्मित्वंचसर्वैःसहोषिता ॥ क्लिश्यंत्यांत्वयिसुश्रोणिकोनुदुःखंनचिंतयेत् २४ नतुकेनचिदत्यंतंक स्यचिद्धृदयंक्वचित् ॥ वेदितुंशक्यतेनूनंतेनमांनावबुद्ध्यसे २५ ॥ वैशंपायनउवाच ॥ ततःसहैवकन्याभिर्द्रौपदीराजवेश्मतत् ॥ प्रविवेशसुदेष्णायाःसमीप मुपगामिनी २६ तामब्रवीद्राजपुत्रीविराटवचनादिदम् ॥ सैरंध्रिगम्यतांशीघ्रंयत्रकामयसेगतिम् २७

वचनं १० । ११ । १२ । १३ । १४ । १५ पुरुषायस्याःवशवर्तिनआज्ञाकारिणः । इहविराटपुरेपुरावर्षमात्रंविहरंतितेते तस्याःवचनंगंधर्वराजायनमइत्यादिरूपं श्रुत्वाऽतःपरंअनृणास्तदाज्ञासंपादनेन अज्ञातवाससमाप्त्यावा कृतकृत्याःसंतोविहरंतु १६ । १७ । १८ । १९ । २० । २१ प्रहसन्निवेतिपूर्वसंस्कारात्पुल्लिंगप्रयोगः प्रहसं तीवेत्यर्थः २२ तिर्यक्नीचंक्लीबत्वंतन्मयीयोनिःशरीरंतत्रगता २३ । २४ । २५ । २६ । २७

२८ । २९ । ३० ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपे चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ छ ॥ ॥ 'अत्याहितंमहाभीतिः कर्मजीवानपेक्षिच' इत्यमरः १ । २ । ३







राजाबिभेतितेभद्रेगंधर्वेभ्यःपराभवात् ॥ त्वंचापितरुणीसुभ्रुरूपेणाप्रतिमाभुवि ॥ पुंसामिष्टश्चविषयोगंधर्वाश्चातिकोपनाः २८ सैरंध्र्युवाच ॥ त्रयोदशाह मात्रंमेराजाक्षम्यतुभामिनी ॥ कृतकृत्याभविष्यंतिगंधर्वास्तेनसंशयः २९ ततोमामुपनेष्यंतिकरिष्यंतिचतेप्रियम् ॥ ध्रुवंचश्रेयसाराजायोक्ष्यतेसहबांधवैः ॥ ३० ॥ ॥ इतिश्रीमहाभारतेविराटपर्वणिकीचकवधपर्वणिकीचकदाहेचतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ समाप्तंचेदंकीचकवधपर्व ॥ छ ॥ अथगोहरणपर्व ॥



वैशंपायनउवाच ॥ कीचकस्यतुघातेनसानुजस्यविशांपते ॥ अत्याहितंचिंतयित्वाव्यस्मयंतपृथक्जनाः १ तस्मिन्पुरेजनपदेसंजल्पोभूच्चसंघशः ॥ शौर्याद्धि वल्लभोराज्ञोमहासत्वःसकीचकः २ आसीत्प्रहर्तासैन्यानांदारामर्शीचदुर्मतिः ॥ सहतःखलुपापात्मागंधर्वैर्दुष्टपूरुषः ३ इत्यजल्पन्महाराजपरानीकविनाशनम् ॥ देशेदेशेमनुष्याश्चकीचकंदुष्प्रधर्षणम् ४ अथवैधार्तराष्ट्रेणप्रयुक्तायेबहिश्चराः ॥ मृगयित्वाबहून्ग्रामान्राष्ट्राणिनगराणिच ५ संविधाययथादृष्टंयथादेशप्रदर्शनम् ॥ कृतकृत्यान्यवर्त्तंततेचरानगरंप्रति ६ तत्रदृष्ट्वातुराजानंकौरव्यंधृतराष्ट्रजम् ॥ द्रोणकर्णकृपैःसार्द्धंभीष्मेणचमहात्मना ७ संगतंभ्रातृभिश्चापित्रिगर्तैश्चमहा रथैः ॥ दुर्योधनंसभामध्येआसीनमिदमब्रुवन् ८ ॥ चराऊचुः ॥ कृतोऽस्माभिःपरोयत्नस्तेषामन्वेषणेसदा ॥ पांडवानांमनुष्येंद्रतस्मिन्महतिकानने ९ नि र्जनेमृगसंकीर्णेनानाद्रुमलताकुले ॥ लताप्रतानबहुलेनानागुल्मसमावृते १० नचविद्मोगतायेनपार्थाःसुदृढविक्रमाः ॥ मार्गमाणाःपदन्यासंतेषुतेषुतथातथा ११ गिरिकूटेषुतुंगेषुनानाजनपदेषुच ॥ जनाकीर्णेषुदेशेषुखर्वटेषुपुरेषुच १२ नरेंद्रबहुशोऽन्विष्टानैवविद्मश्चपांडवान् ॥ अत्यंतंवाविनष्टास्तेभद्रंतुभ्यंनर र्षभ १३ वर्त्मन्यन्वेष्यमाणैरथिनांरथिसत्तम ॥ नहिविद्मोगतिंतेषांवासंहिनरसत्तम १४ किंचित्कालंमनुष्येंद्रसूतानामनुगावयम् ॥ मृगयित्वायथान्यायंवे दितार्थाःस्मतत्त्वतः १५ प्राप्ताद्वारवतींसूताविनापार्थैःपरंतप ॥ नतत्रकृष्णाराजेंद्रपांडवाश्चमहाव्रताः १६ सर्वथाविप्रणष्टास्तेनमस्तेभरतर्षभ ॥ नहिवि द्मोगतिंतेषांवासंवापिमहात्मनाम् १७ पांडवानांप्रवृत्तिंचविद्मःकर्मापिवाकृतम् ॥ सनःशाधिमनुष्येंद्रअतऊर्ध्वंविशांपते १८ अन्वेषणेपांडवानांभूयःकिंकर वामहे ॥ इमांचनःप्रियांवीरवाचंभद्रवतींशृणु १९ येनत्रिगर्त्तानिहताबलेनमहतानृप ॥ सूतेनराज्ञोमत्स्यस्यकीचकेनबलीयसा २० सहतःपतितःशेतेगं धर्वैर्निशिभारत ॥ अदृश्यमानैर्दुष्टात्माभ्रातृभिःसहसोदरैः २१



४ । ५ कृतकृत्याः कीचकवधज्ञानेनात्रैवपांडवानांवासंस्वयमेवधार्तराष्ट्राःअनुमानतोज्ञास्यंतीत्याशयः ६ । ७ । ८ । ९ । १० येनमार्गेण ११ गिरिकूटेषुगिरिशिखरेषु १२ १३ । सूतानांपांडवीयानामिंद्रसेनादीनां १५ । १६ । १७ । १८ । १९ । २० । २१

२२ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपे पंचविंशोऽध्यायः ॥ २५ ॥ ७ ॥ ततइति १ । २ । ३ । ४ दुःखादुःखयितारः संरब्धाःकुपिताः ५ यथातेपुनर्वनं प्रविशेयुस्तथाबुभूषध्वं तान्प्राप्तुमिच्छतेत्यर्थः ६ तत्फलंचाह अत्यंतमित्यादिना ७ । ८ जनपदाकुलान् जनव्याप्तान् । 'भवेज्जनपदोजानपदोऽपिजनदेशयोः' इतिमेदिनी गो

प्रियमतदुपश्रुत्यशत्रूणांचरापराभवम् ॥ कृतकृत्यश्चकौरव्यविधत्स्वयदनंतरम् २२ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिचारप्रत्यागमनेपंचविंशोऽध्यायः ॥ २५ ॥ ॥ वैशंपायनउवाच ॥ ततोदुर्योधनोराजाज्ञात्वातेषांवचस्तदा ॥ चिरमंतर्मनाभूत्वाप्रत्युवाचसभासदः १ सुदुःखाखलुकार्याणांगतिर्विज्ञातुमंततः ॥ तस्मात्सर्वेनिरीक्षध्वंक्वनुतेपांडवागताः २ अल्पावशिष्टंकालस्यगतभूयिष्ठमंततः ॥ तेषामज्ञातचर्यायामस्मिन्वर्षेत्रयोदशे ३ अस्यवर्षस्यशेषंचेद्व्यतीयुरिहपांडवाः ॥ निवृत्तसमयास्तेहिसत्यव्रतपरायणाः ४ क्षरंतइवनागेंद्राःसर्वेह्याशीविषोपमाः ॥ दुःखाभवेयुःसंरब्धाःकौरवान्प्रतितेध्रुवम् ५ सर्वेकालस्यवेत्तारःकृच्छ्ररूपधराःस्थिताः ॥ प्रविशेयुर्जितक्रोधास्तावदेवपुनर्वनम् ६ तस्मात्क्षिप्रंबुभूषध्वंयथातेऽत्यंतमव्ययम् ॥ राज्यंनिर्द्वंद्वमव्यग्रंनिःसपत्नंचिरंभवेत् ७ अथाब्रवीत्ततःकर्णःक्षिप्रंगच्छंतुभारत ॥ अन्येधूर्तानरादक्षानिभृताःसाधुकारिणः ८ चरंतुदेशान्संवीताःस्फीतान्जनपदाकुलान् ॥ तत्रगोष्ठीषुरम्यासुसिद्धप्रव्रजितेषुच ९ परिचारेषुतीर्थेषुविविधेष्वाकरेषुच ॥ विज्ञातव्यामनुष्यैस्तैस्तर्कयासुविनीतया १० विविधैस्तत्परैःसम्यक्तज्ज्ञैर्निपुणसंवृतैः ॥ अन्वेष्टव्याःसुनिपुणैःपांडवाश्छन्नवासिनः ११ नदीकुंजेषुतीर्थेषुग्रामेषुनगरेषुच ॥ आश्रमेषुचरम्येषुपर्वतेषुगुहासुच १२ अथाग्रजानंतरजःपापभावानुरागवान् ॥ ज्येष्ठंदुःशासनस्तत्रभ्राताभ्रातरमब्रवीत् १३ येषुनःप्रत्ययोराजंश्चारेषुमनुजाधिप ॥ तेयांतुदत्तदेयाविभूयस्तान्परिमार्गितुम् १४ एतच्चकर्णोयत्प्राहसर्वमीहामहेतथा ॥ यथोद्दिष्टंचराःसर्वेमृगयंतुयतस्ततः १५ एतेचान्येचभूयांसोदेशाद्देशंयथाविधि ॥ नतुतेषांगतिर्वासःप्रवृत्तिश्चोपलभ्यते १६ अत्यंतंवानिगूढास्तेपारंचोर्मिमतोगताः ॥ व्यालैश्चापिमहारण्येभक्षिताःशूरमानिनः १७ अथवाविषमंप्राप्यविनष्टाःशाश्वतीःसमाः ॥ तस्मान्मानसमव्यग्रंकृत्वात्वंकुरुनंदन ॥ कुरुकार्यंमहोत्साहंमन्यसेयन्नराधिप १८ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिकर्णदुःशासनवाक्येषड्विंशोऽध्यायः ॥ २६ ॥ ॥ वैशंपायनउवाच ॥ अथाब्रवीन्महावीर्योद्रोणस्तत्त्वार्थदर्शिवान् ॥ नतादृशाविनश्यंतिनप्रयांतिपराभवम् १ शूराश्चकृतविद्याश्चबुद्धिमंतोजितेंद्रियाः ॥ धर्मज्ञाश्चकृतज्ञाश्चधर्मराजमनुव्रताः २ नीतिधर्मार्थतत्त्वज्ञंपितृवच्चसमाहितम् ॥ धर्मेस्थितंसत्यधृतिंज्येष्ठंज्येष्ठानुयायिनः ३

ष्ठीषुविद्वत्सभासु सिद्धानांप्रव्रजितंगमनंयेषुतेषुमुनीनामाश्रमेषु ९ परितआगत्यचरंत्येषुतेपरिचाराःराजपुराणि तेषु तर्कयाकांक्षया । 'तर्कःकांक्षावितर्कोहे' इतिमेदिनी १० । ११ । १२ अग्रजानंतरजःद्वितीयोभ्राता १३ । १४ । १५ । १६ ऊर्मिमतःसिंधोः १७ । १८ ॥ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपे षड्विंशोऽध्यायः ॥ २६ ॥ ॥ अथेति १ । २ । ३

४ विधेयानांकिंकराणां निभृतानांअत्यंतावहितानां ५ । ६ अकालिकंविलंबासहं ७ । ८ गृह्णीयादपिचक्षुषा प्रत्यक्षदृष्टोऽपिमोहयेदेवेत्यर्थः ९ । १० ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपे सप्तविंशोऽध्यायः ॥ २७ ॥ ॥ ततइति १ अभिसंदधत् तद्वाक्यानुगुणमेववदन् भारतींभरतवंशीयपांडवविषयां गिरंवाचं भारतान्कौरवान्उवाचेतिसंबंधः २ । ३ समंवदत् समंपक्षपातशून्यं वदत्वदन् नुमभावआर्षः ४ श्रुतंशास्त्रं नानाश्रुतिरनेकाआख्यायिका ५ । ६ महात्मानउदारचित्ताः सतांधुरंधर्मं ७ । ८ परैः

अनुव्रतामहात्मानंभ्रातरोभ्रातरंनृप ॥ अजातशत्रुंश्रीमंतंसर्वेभ्रातॄननुव्रतम् ४ तेषांतथाविधेयानांनिभृतानांमहात्मनाम् ॥ किमर्थंनीतिमान्पार्थःश्रेयोनैषांकरिष्यति ५ तस्माद्यत्नात्प्रतीक्षंतेकालस्योदयमागतम् ॥ नहितेनाशमृच्छेयुरितिपश्याम्यहंधिया ६ सांप्रतंचैवयत्कार्यंतच्चक्षिप्रमकालिकम् ॥ क्रियतांसाधुसंचिंत्यवासश्चैषांप्रचिंत्यताम् ७ यथावत्पांडुपुत्राणांसर्वार्थेषुधृतात्मनाम् ॥ दुर्ज्ञेयाःखलुशूरास्तेदुरापास्तपसावृताः ८ शुद्धात्मागुणवान्पार्थःसत्यवान्नीतिमान्शुचिः ॥ तेजोराशिरसंख्येयोगृह्णीयादपिचक्षुषा ९ विज्ञायक्रियतांतस्माद्भूयश्चमृगयामहे ॥ ब्राह्मणैश्चारकैःसिद्धैर्येचान्येतद्विदोजनाः १० ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिद्रोणवाक्येचारप्रत्याचारेसप्तविंशोऽध्यायः ॥ २७ ॥ ॥ वैशंपायनउवाच ॥ ततःशांतनवोभीष्मोभरतानांपितामहः ॥ श्रुतवान्देशकालज्ञस्तत्त्वज्ञःसर्वधर्मवित् १ आचार्यवाक्योपरमेतद्वाक्यमभिसंदधत् ॥ हितार्थंसमुवाचैनांभारतींभारतान्प्रति २ युधिष्ठिरेसमासक्तांधर्मज्ञेधर्मसंवृताम् ॥ असत्सुदुर्लभांनित्यंसतांचाभिमतांसदा ३ भीष्मःसमंवदत्तत्रगिरंसाधुभिरर्चिताम् ॥ यश्चैषब्राह्मणःप्राहद्रोणःसर्वार्थतत्त्ववित् ४ सर्वलक्षणसंपन्नाःसाधुव्रतसमन्विताः ॥ श्रुतव्रतोपपन्नाश्चनानाश्रुतिसमन्विताः ५ वृद्धानुशासनेयुक्ताःसत्यव्रतपरायणाः ॥ समयंसमयज्ञास्तेपालयंतःशुचिव्रताः ६ क्षत्रधर्मरतानित्यंकेशवानुगताःसदा ॥ प्रवीरपुरुषास्तेवैमहात्मानोमहाबलाः ॥ नावसीदितुमर्हंतिउद्वहंतःसतांधुरम् ७ धर्मतश्चैवगुप्तास्तेसुवीर्येणचपांडवाः ॥ ननाशमधिगच्छेयुरितिमेधीयतेमतिः ८ तत्रबुद्धिंप्रवक्ष्यामिपांडवान्प्रतिभारत ॥ नतुनीतिःसुनीतस्यशक्यतेऽन्वेषितुंपरैः ९ यत्तुशक्यमिहास्माभिस्तान्वैसंचिंत्यपांडवान् ॥ बुद्ध्याप्रयुक्तंनद्रोहात्प्रवक्ष्यामिनिबोधतत् १० नत्वियंमादृशैर्नीतिस्तस्यवाच्याकथंचन ॥ सात्वियंसाधुवक्तव्यानत्वनीतिःकथंचन ११ वृद्धानुशासनेताततिष्ठतासत्यशीलिना ॥ अवश्यंत्विहधीरेणसतांमध्येविवक्षता १२

अनीतिपरैःअन्वेषितुंअनुगंतुं ९ यत्तुप्रयुक्तंप्रयोगः शक्यंज्ञातुंयोग्यः तदेववक्ष्यामिन तुभवतांद्रोहात् १० नत्विति तस्यदुर्जनस्य त्वादृशस्येतिगूढोऽभिसंधिः । सातु तुशब्दोहेत्वर्थे साहि यतःनीतिरियंसाधुवाच्यासाधुष्वेववक्तव्याऽतोऽसावौत्वयिनैवैषावक्तव्येत्यर्थः । अनीतिस्तुकथंचनसाधुष्वसाधुषुवानैववक्तव्येत्यर्थः ११ तिष्ठतावक्तव्यमितिसंबंधः १२

तत्रवक्तव्येसति यथाइतरोजनः पांडवानांनिवासंलोकसाधारणंमन्यते तथाऽहंनमन्येइतियोजना १३ असाधारण्यमेवाहतत्रेति तत्रपुरादौ असांप्रतमकल्याणम् १४ वदान्यः
प्रियवादी । 'वदान्योदानशीलेचचारुवादिनिवाच्यवत्'इदितिमेदिनी निभृतःनियतेंद्रियः भाव्यःअवश्यंभावी । ओरावश्यकेइतिण्यत् १५ भव्योभाविता १६ असूयकःपरगुणे
षुदोषारोपकः ईर्षुःपरोत्कर्षासहिष्णुः अभिमानीआत्मसंभावितः मत्सरीपरद्रोहकर्त्ता तत्रयत्रयुधिष्ठिरइत्यनुकृष्यते १७ । १८ । १९ । २० दर्शनंधर्मत्रह्मस्वरूपावेक्षणं निष्प्र

यथार्हमिहवक्तव्यंसर्वथाधर्मलिप्सया ॥ तत्रनाहंतथामन्येयथायमितरोजनः १३ निवासंधर्मराजस्यवर्षेऽस्मिन्वैत्रयोदशे ॥ तत्रतातनतेषांहिराज्ञांभाव्यमसां
प्रतम् १४ पुरेजनपदेचापियत्रराजायुधिष्ठिरः ॥ दानशीलोवदान्यश्चनिभृतोर्ह्रीनिषेवकः ॥ जनोजनपदेभाव्योयत्रराजायुधिष्ठिरः १५ प्रियवादीसदादांतो
भव्यःसत्यपरोजनः ॥ हृष्टःपुष्टःशुचिर्दक्षोयत्रराजायुधिष्ठिरः १६ नासूयकोनचापीर्षुर्नाभिमानीनमत्सरी ॥ भविष्यतिजनस्तत्रस्वयंधर्ममनुव्रतः १७ ब्रह्म
घोषाश्चभूयांसःपूर्णाहुत्यस्तथैवच ॥ क्रतवश्चभविष्यंतिभूयांसोभूरिदक्षिणाः १८ सदाचतत्रपर्जन्यःसम्यग्वर्षीनसंशयः ॥ संपन्नसस्याचमहीनिरातंकाभवि
ष्यति १९ गुणवंतिचधान्यानिरसवंतिफलानिच ॥ गंधवंतिचमाल्यानिशुभशब्दाचभारती २० वायुश्चसुखसंस्पर्शोनिष्प्रतीपंचदर्शनम् ॥ नभयंत्वाविशे
त्तत्रयत्रराजायुधिष्ठिरः २१ गावश्चबहुलास्तत्रनकृशानचदुर्बलाः ॥ वयांसिदधिसर्पींषिरसवंतिहितानिच २२ गुणवंतिचपेयानिभोज्यानिरसवंतिच ॥ तत्रदे
शेभविष्यंतियत्रराजायुधिष्ठिरः २३ रसाःस्पर्शाश्चगंधाश्चशद्बाश्चापिगुणान्विताः ॥ दृश्यानिचप्रसन्नानियत्रराजायुधिष्ठिरः २४ धर्माश्चतत्रसर्वैस्तुसेविताश्च
द्विजातिभिः ॥ स्वैःस्वैर्गुणैश्चसंयुक्ताअस्मिन्वर्षेत्रयोदशे २५ देशेतस्मिन्भविष्यंतितातपांडवसंयुते ॥ संप्रीतिमान्जनस्तत्रसंतुष्टःशुचिरव्ययः २६ देवताति
थिपूजासुसर्वभावानुरागवान् ॥ इष्टदानोमहोत्साहःस्वस्वधर्मपरायणः २७ अशुभाद्धिशुभप्रेप्सुरिष्टयज्ञःशुभव्रतः ॥ भविष्यतिजनस्तत्रयत्रराजायुधिष्ठिरः
२८ त्यक्तवाक्यानृतस्तातशुभकल्याणमंगलः ॥ शुभार्थेप्सुःशुभमतिर्यत्रराजायुधिष्ठिरः २९ भविष्यतिजनस्तत्रनित्यंचेष्टप्रियव्रतः ॥ धर्मात्माशक्यतेज्ञातुं
नापितातद्विजातिभिः ३० किंपुनःप्राकृतैस्तातपार्थोविज्ञायतेक्वचित् ॥ यस्मिन्सत्यंधृतिर्दानंपराशांतिर्ध्रुवाक्षमा ३१ ह्रीःश्रीःकीर्तिःपरंतेजआनृशंस्यम
थार्जवम् ॥ तस्मात्तत्रनिवासंतुच्छन्नंयत्नेनधीमतः ॥ गतिंचपरमांतत्रनोत्सहेवक्तुमन्यथा ३२

९३

तीपंपाखंडमार्गवर्जितम् २१ । २२ । २३ दृश्यानिरूपाणि २४ । २५ । २६ सर्वभावेनसर्वात्मनाऽनुरागवान् २७ अशुभात्अशुभंत्यक्त्वा २८ । २९ इष्टंयागादि
प्रियंपरसुखदंचव्रतंपालनीयंयस्य एवंभूतस्यदुर्ज्ञेयत्वमप्याहधर्मात्मेति ३० । ३१ तस्मादिति धीमतःपांडवस्यवासंछन्नंतत्रविद्धीतिशेषः परमांगतिंगमनंचतत्रैवस्वकीयं
कुरु एतच्चाहमन्यथाविपरीतंवचोवक्तुंनोत्सहे वृद्धत्वात्पांडवेषुद्वेषस्याधर्मरूपत्वाच्चेतिभावः ३२

३१ ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपेअष्टाविंशोऽध्यायः ॥ २८ ॥ युक्तयुक्तिमत् प्राप्तंप्राप्तकालम् १ तत्त्वतश्चसहेतुकंयुक्त्याभासहीनम् २ तीर्थैश्चारैः ३ । ४ सत्रंकैतवंवेषांतररूपं छन्नेषुगुप्तेषु उदयंउद्गमनं प्रतिज्ञातेकालेऽतिक्रांतेसति सामीप्येसप्तमी । कालेऽल्पावशिष्टेसतीत्यर्थः ५ परराष्ट्रेषुमित्रराष्ट्रेषु स्वराष्ट्रेषुच स्वस्यबलंसैन्यंसाम र्थ्यंचयत्तज्ज्ञातव्यम् ६ । ७ नीति भक्तवेतनदानचारप्रवृत्त्यादिका तथाविधीयतांयथायेनप्रकारेण तैःसहसंदधामहेशरादिसंधानंकुर्महे यद्वा बलकोशयोरल्पत्वंस्वस्य परस्य बहुत्वं नीतिर्यथाप्रतिज्ञंसामरूपाविधीयतां यथातैःसहसंदधामहेसख्यंकुर्महेइति कालोदयेमृत्यूदयरूपेयुद्धेप्राप्तेसति । तेषांविधीयतइतिपाठे तेषांकालतःउदयेप्राप्तेसतियथास म्यग्विधीयतेजायतेतथानीतिर्विधीयताम् ८ नियतमचंचलंनियमेनबुद्ध्वस्व ९ बोधफलमाहउच्चेति उच्चादिभेदेनत्रिविधमपिप्रहृष्टंवाअप्रहृष्टंवाज्ञातव्यं । उच्चंसमंवास्वबलं

एवमेतत्तुसंचिंत्ययत्क्षतेमन्यसेहितम् ॥ तत्क्षिप्रंकुरुकौरव्ययद्येवंश्रद्दधासिमे ३१ ॥ इतिश्रीमहाभारते विराटपर्वणि गोहरणपर्वणिचारप्रत्याचारेभीष्मवाक्ये अष्टाविंशोऽध्यायः ॥ २८ ॥ वैशंपायन उवाच ॥ ततःशारद्वतोवाक्यमित्युवाचकृपस्तदा ॥ युक्तंप्राप्तंचवृद्धेनपांडवान्प्रतिभाषितम् १ धर्मार्थसहितंश्लक्ष्णं तत्त्वतश्चसहेतुकम् ॥ तत्रानुरूपंभीष्मेणममाप्यत्रगिरंशृणु २ तेषांचैवगतिस्तीर्थैर्वासश्चैषांप्रचिंत्यताम् ॥ नीतिर्विधीयतांचापिसांप्रतंयाहिताभवेत् ३ ना वज्ञेयोरिपुस्तातप्राकृतोऽपिबुभूषता ॥ किंपुनःपांडवास्तातसर्वास्त्रकुशलारणे ४ तस्मात्सत्रंप्रविष्टेषुपांडवेषुमहात्मसु ॥ गूढभावेषुच्छन्नेषुकालेचोदयमागते ५ स्वराष्ट्रेपरराष्ट्रेचज्ञातव्यंबलमात्मनः ॥ उदयःपांडवानांचप्राप्तेकालेनसंशयः ६ निवृत्तसमयाःपार्थामहात्मानोमहाबलाः ॥ महोत्साहाभविष्यंतिपांडवाह्यमि तौजसः ७ तस्माद्बलंचकोशश्चनीतिश्चापिविधीयताम् ॥ यथाकालोदयेप्राप्तेसम्यक्तैःसंदधामहे ८ तातबुद्ध्याऽपितत्सर्वंबुद्ध्यस्वबलमात्मनः ॥ नियतंसर्व मित्रेषुबलवत्स्वबलेषुच ९ उच्चावचंबलंज्ञात्वामध्यस्थंचापिभारत ॥ प्रहृष्टमप्रहृष्टंचसंदधामतथापरैः १० साम्नाभेदेनदानेनदंडेनबलिकर्मणा ॥ न्यायेनाक्रम्यचपरा न्बलाच्चानम्यदुर्बलान् ११ सांत्वयित्वातुमित्राणिबलंचाभाष्यतांसुखम् ॥ सुकोशबलसंवृद्धःसम्यक्सिद्धिमवाप्स्यसि १२ योत्स्यसेचापिबलिभिररिभिःप्रत्युप स्थितैः ॥ अन्यैस्त्वंपांडवैर्वापिहीनैःस्वबलवाहनैः १३ एवंसर्वंविनिश्चित्यव्यवसायंस्वधर्मतः ॥ यथाकालंमनुष्येंद्रचिरंसुखमवाप्स्यसि १४ ॥ इतिश्री० म० वि० गो० चारप्रत्याचारेकृपवाक्येएकोनत्रिंशोऽध्यायः ॥ २९ ॥ अप्रहृष्टंचेत्प्रहृष्टबलैःशत्रुभिःसहसंदधामसंधिंकरवाम । विपरीतंचेदपिसंदधामशरानितिशेषः । संधनीयमि तिपाठेऽपितदेवार्थद्वयंज्ञेयं । आतोधातोरित्यालोपः अनीयर्प्रत्ययेपरेभवति । संधानीयामितितुयुक्तःपाठः १० साम्येसामभेदौ अपरस्याधिक्येदानं स्वस्याधिक्येदंडो युद्धेनिपा तनंवा बलिकर्मवाकरादानाख्यं इतिबलज्ञानफलम् ११ बलंस्वसैन्यं सुखंयथास्यात्तथाआभाष्यतांप्रीतिवादेनभक्तवेतनमानदानेनसंमंत्रणीयमित्यर्थः सिद्धिंजयम् १२ अन्यैः शत्रुभिः पांडवैश्चापिसहयोत्स्यसे कीदृशैः स्वबलादिनाहीनैः १३ व्यवसायंस्वकर्तव्यम् १४ ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपेएकोनत्रिंशोऽध्यायः ॥ २९ ॥

अथेति १ वाक्यमुवाचेत्यत्रहेतुमाह असकृदिति निकृताःवंचितास्त्रिगर्ताइतिशेषः प्रभोहेजनमेजय २ बाधितःसुशर्मा बलवतांकौरवाणांविभौस्वामिनिभीष्मेसमीपेसतिकर्णं

॥ वैशंपायनउवाच ॥ अथराजात्रिगर्तानांसुशर्मारथयूथपः ॥ प्राप्तकालमिदंवाक्यमुवाचत्वरितोबली १ असकृन्निकृताःपूर्वंमत्स्यशाल्वेयकैःप्रभो ॥ सूतेनैव
चमत्स्यस्यकीचकेनपुनःपुनः २ बाधितोबंधुभिःसार्द्धंबलाद्बलवतांविभौ ॥ सकर्णमभ्युदीक्ष्याथदुर्योधनमभाषत३ असकृन्मत्स्यराज्ञामेराष्ट्रंबाधितमोजसा ॥
प्रणेताकीचकस्तस्यबलवानभवत्पुरा ४ क्रूरोऽमर्षीसुदुष्टात्माभुविप्रख्यातविक्रमः ॥ निहतःसतुगंधर्वैःपापकर्मानृशंसवान् ५ तस्मिन्विनिहतेराजाहतदर्पो
निराश्रयः ॥ भविष्यतिनिरुत्साहोविराटइतिमेमतिः ६ तत्रयात्राममतायदितेरोचतेऽनघ ॥ कौरवाणांचसर्वेषांकर्णस्यचमहात्मनः ७ एतत्प्राप्तमहंमन्ये
कार्यमात्ययिकंहिनः ॥ राष्ट्रंतस्याभियास्यामोबहुधान्यसमाकुलम् ८ आददामोऽस्यरत्नानिविविधानिवसूनिच ॥ ग्रामान्राष्ट्राणिवातस्यहरिष्यामोविभाग
शः ९ अथवागोसहस्राणिशुभानिचबहूनिच ॥ विविधानिहरिष्यामःप्रतिपीड्यपुरंबलात् १० कौरवैःसहसंगत्यत्रिगर्तैश्चविशांपते ॥ गास्तस्यापहरामोऽद्य
सर्वैश्चैवसुसंहताः ११ संविभागेनकृत्वातुनिबध्नीमोऽस्यपौरुषम् ॥ हत्वाचास्यचमूंकृत्स्नांवशमेवानयामहे १२ तंवशेन्यायतःकृत्वासुखंवत्स्यामहेवयम् ॥ भ
वतांबलवृद्धिश्चभविष्यतिनसंशयः १३ तच्छ्रुत्वावचनंतस्यकर्णोराजानमब्रवीत् ॥ सूक्तंसुशर्मणावाक्यंप्राप्तकालंहितंचनः १४ तस्मात्क्षिप्रंविनिर्यामोयोज
यित्वावरूथिनीम् ॥ विभज्यचाप्यनीकानियथावामन्यसेऽनघ १५ प्रज्ञावाकुरुवृद्धोऽयंसर्वेषांनःपितामहः ॥ आचार्यश्चयथाद्रोणःकृपःशारद्वतस्तथा ॥
मन्यंतेतेयथासर्वेतथायात्राविधीयताम् १६ संमंत्र्यचाशुगच्छामःसाधनार्थंमहीपतेः ॥ किंचनःपांडवैःकार्यंहीनार्थबलपौरुषैः १७ अत्यंतंवाप्रनष्टास्तेप्राप्ता
वापियमक्षयम् ॥ यामोराजन्निरुद्विग्नाविराटनगरंवयम् ॥ आदास्यामोहिगास्तस्यविविधानिवसूनिच १८ ॥ वैशंपायनउवाच ॥ ततोदुर्योधनोराजावा
क्यमादायतस्यतत् ॥ वैकर्तनस्यकर्णस्यक्षिप्रमाज्ञापयत्स्वयम् १९ शासनेनित्यसंयुक्तंदुःशासनमनंतरम् ॥ सहवृद्धैस्तुसंमंत्र्यक्षिप्रंयोजयवाहिनीम् २०
यथोद्देशंचगच्छामःसहितास्तत्रकौरवैः ॥ सुशर्माचयथोद्दिष्टंदेशंयातुमहारथः ॥ त्रिगर्तैःसहितोराजासमग्रबलवाहनः २१ प्रागेवहिसुसंवीतोमत्स्यस्यविषयं
प्रति ॥ जघन्यतोवयंतत्रयास्यामोदिवसांतरे ॥ विषयंमत्स्यराजस्यसुसमृद्धंसुसंहताः २२ तेयांतुसहितास्तत्रविराटनगरंप्रति ॥ क्षिप्रंगोपान्समासाद्यगृह्णं
तुविपुलंधनम् २३ गवांशतसहस्राणिश्रीमंतिगुणवंतिच ॥ वयमप्यनुगृह्णीमोद्विधाकृत्वावरूथिनीम् २४

चोदीक्ष्यदुर्योधनमभाषत ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ निबध्नीमःनिगृह्णीमः १२ । १३ । १४ विनिर्यामःनिर्गच्छामः १५ । १६ । १७ । १८
१९ । २० यथोद्देशंयथानिर्दिष्टांदक्षिणामुत्तरांवादिशं यथायोग्यंबलविभागंवाउद्दिश्येत्यर्थः २१ । २२ । २३ । २४

२५ गृद्धाःलुब्धाः २६ न्यगृह्णंतकालयामासुः २७ ॥ इति विराटपर्वणिनीलकंठीयेभारतभावदीपे त्रिंशोऽध्यायः ॥ ३० ॥ ॥ छद्मलिंगेनब्राह्मणादिकपटवेषेणप्रविष्टानां व्यतीतोऽतिक्रांतः समय संवत्सरः १ । २ संभावनां कीचकवत्अयमपिममजयकर्त्ताभविष्यतीत्येवंरूपां ३ । ४ । ५ । ६ । ७ । ८ मानेशुःनाशमदर्शनं दूरेइतियावत् मागच्छेयुः ९ तनुत्राणिकवचानि १० भानुमंतिदीप्यमानानि वज्रायसंअशनिलोहं यद्वा वज्रवदच्छेद्यमभेद्यंच यदयः भाषायां 'पोलाद'इतिसंज्ञितं तद्वज्रायसं तन्मयोगर्भोंतःकवचंतेन सहितं सवज्रायसगर्भं । पाठांतरे संनाहायसज्जीभावाय सगर्भसकंटकं । 'गर्भोभ्रूणेऽर्भकेकुक्षौसंधौपनसकंटके'इतिनानार्थः । 'वज्रंस्याद्धीरकेपवौ' इतिच ११ अभ्यहारयत्

॥ वैशंपायनउवाच ॥ तेस्मगत्वायथोद्दिष्टांदिशंवन्हेर्महीपते ॥ सन्नद्धारथिनःसर्वेसपदाताबलोत्कटाः २५ प्रतिवैरंचिकीर्षंतोगोषुगृद्धामहाबलाः ॥ आदातुंगाः सुशर्माऽथकृष्णपक्षस्यसप्तमीम् २६ अपरेदिवसेसर्वेराजन्संभूयकौरवाः ॥ अष्टम्यांतेन्यगृह्णंतगोकुलानिसहस्रशः २७ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिदक्षिणगोग्रहेसुशर्मादियानेत्रिंशोऽध्यायः ॥ ३० ॥ ॥ ४ ॥ वैशंपायनउवाच ॥ ततस्तेषांमहाराजतत्रैवामिततेजसाम् ॥ छद्मलिंगप्रविष्टानां पांडवानांमहात्मनाम् १ व्यतीतःसमयःसम्यग्वसतांवैपुरोत्तमे ॥ कुर्वतांतस्यकर्माणिविराटस्यमहीपतेः २ कीचकेतुहतेराजाविराटःपरवीरहा ॥ परांसंभावनां चक्रेकुंतीपुत्रेयुधिष्ठिरे ३ ततस्त्रयोदशस्यांतेतस्यवर्षस्यभारत ॥ सुशर्मणागृहीतंतद्गोधनंतरसाबहु ४ ततोजवेनमहतागोपःपुरमथाव्रजत् ॥ सदृष्ट्वामत्स्यराजं चरथात्प्रस्कंद्यकुंडली ५ शूरैःपरिवृतंयोधैःकुंडलांगदधारिभिः ॥ संवृतंमंत्रिभिःसार्द्धंपांडवैश्चमहात्मभिः ६ तंसभायांमहाराजमासीनंराष्ट्रवर्द्धनम् ॥ सोऽब्रवीदुपसंगम्यविराटंप्रणतस्तदा ७ अस्मान्युधिविनिर्जित्यपरिभूयसबांधवान् ॥ गवांशतसहस्राणित्रिगर्त्ताःकालयंतिते ८ तान्परीप्सस्वराजेंद्रमानेशुःपशवस्तव ॥ तच्छ्रुत्वानृपतिःसेनांमत्स्यानांसमयोजयत् ९ रथनागाश्वकलिलांपत्तिध्वजसमाकुलाम् ॥ राजानोराजपुत्राश्चतनुत्राण्यथभेजिरे १० भानुमंतिविचित्राणिशूरसेव्यानिभागशः ॥ सवज्रायसगर्भंतुकवचंतत्रकांचनम् ११ विराटस्यप्रियोभ्राताशतानीकोऽभ्यहारयत् ॥ सर्वपारसवंवर्मकल्याणपटलंदृढम् १२ शतानीकादवरजोमदिराक्षोऽभ्यहारयत् ॥ शतसूर्यंशतावर्तंशतबिंदुशताक्षिमत् १३ अभेद्यकल्पंमत्स्यानांराजाकवचमाहरत् ॥ उत्सेधेयस्यपद्मानिशतंसौगंधिकानिच १४ सुवर्णपृष्ठंसूर्याभंसूर्यदत्तोऽभ्यहारयत् ॥ दृढमायसगर्भंचश्वेतंवर्मशताक्षिमत् १५ विराटस्यसुतोज्येष्ठोवीरःशंखोऽभ्यहारयत् ॥ शतशश्च तनुत्राणियथास्वंतेमहारथाः १६

बबंध पारसवंपरान्सुनोतिपीडयति सुवतिक्षिपतिवापरसवं । ऋदोरप् स्वार्थेतद्धितः । पारसवंशस्त्रं सर्वपारसवंसर्वशस्त्रसहमित्यर्थः कल्याणपटलंसुवर्णपत्राच्छादितं 'कल्याणमक्षयेस्वर्णे' इतिविश्वः १२ आवर्त्ततेपुनःपुनर्म्लीयतिविलसतीतियोगात्चंद्रः पद्मंवा बिंदुःसूक्ष्मचक्रं अक्षिनेत्राकारंचक्रं १३ उत्सेधेउच्छ्राये संपूर्णेविस्तारे कह्लारजातीयानि शतंपद्मानिपंक्त्यानिविष्टानि एवंविशालमित्यर्थः १४ । १५ । १६

अभ्यनह्यंतेतिपाठेसंधिरार्षः सूपस्करेषुशोभनरथांगेषु १७ । १८ उच्छ्रिश्रिये उच्छ्रितोऽभूत् १९ । २० गोपालस्तंतिपालाख्यः दामग्रंथिर्हयश्वपालः २१ । २२ । २३
२४ । २५ । २६ । २७ । २८ । २९ । ३० प्रभिन्नकरटामुखाः । 'काकेभगंडौकरटौ' इत्यमरः ३१ । ३२ । ३३ । ३४ निरीक्षंतंनिरीक्षमाणं पुल्लिंगमार्षं ३५ ॥ इति

योत्स्यमानाअनह्यंतदेवरूपाःप्रहारिणः ॥ सूपस्करेषुशुभ्रेषुमहत्सुचमहारथाः १७ पृथक्कांचनसन्नाहान्रथेष्वश्वानयोजयन् ॥ सूर्यचंद्रप्रतीकाशेरथेदिव्येहि रण्मये १८ महानुभावोमत्स्यस्यध्वजउच्छिश्रियेतदा ॥ अथान्यान्विविधाकारान्ध्वजान्हेमपरिष्कृतान् १९ यथास्वंक्षत्रियाःशूरारथेषुसमयोजयन् ॥ अथ मत्स्योऽब्रवीद्राजाशतानीकंजघन्यजम् २० कंकबल्लवगोपालादामग्रंथिश्चवीर्यवान् ॥ युद्ध्येयुरितिमेबुद्धिर्वर्ततेनात्रसंशयः २१ एतेषामपिदीयंतांरथाध्वज पताकिनः ॥ कवचानिचचित्राणिदृढानिचमृदूनिच २२ प्रतिमुंचंतुगात्रेषुदीयंतामायुधानिच ॥ वीरांगरूपाःपुरुषानागराजकरोपमाः २३ नेमेजातुनयु ध्येरन्निति मेधीयतेमतिः ॥ एतच्छ्रुत्वातुनृपतेर्वाक्यंत्वरितमानसः ॥ शतानीकस्तुपार्थेभ्योरथान्राजन्समादिशत् २४ सहदेवायराज्ञेचभीमायनकुलायच ॥ तान्प्रहृष्टांस्ततःसूताराजभक्तिपुरस्कृताः २५ निर्दिष्टान्नरदेवेनरथान्शीघ्रमयोजयन् ॥ कवचानिविचित्राणिमृदूनिचदृढानिच २६ विराटःप्रादिशद्यानि तेषामक्लिष्टकर्मणाम् ॥ तान्यामुच्यशरीरेषुदंशितास्तेपरंतपाः २७ रथान्हयैःसुसंपन्नानास्थायचनरोत्तमाः ॥ निर्ययुर्मुदिताःपार्थाःशत्रुसंघावमर्दिनः २८ तरस्विनश्छन्नरूपाःसर्वेयुद्धविशारदाः ॥ रथान्हेमपरिच्छन्नानास्थायचमहारथाः २९ विराटमन्वयुःपार्थाःसहिताःकुरुपुंगवाः ॥ चत्वारोभ्रातरःशूराःपांड वाःसत्यविक्रमाः ३० भीमाश्चमत्तमातंगाःप्रभिन्नकरटामुखाः ॥ क्षरंतश्चैवनागेंद्राःसुदंताःषष्टिहायनाः ३१ स्वारूढायुद्धकुशलैःशिक्षिताहस्तिसादिभिः ॥ राजानमन्वयुःपश्चाच्चलंतइवपर्वताः ३२ विशारदानांमुख्यानांहृष्टानांचारुजीविनाम् ॥ अष्टौरथसहस्राणिदशनागशतानिच ३३ षष्टिश्चाश्वसहस्राणिमत्स्या नामभिनिर्ययुः ॥ तदनीकंविराटस्यशुशुभेभरतर्षभ ३४ संप्रयातंतदाराजन्निरीक्षंतंगवांपदम् ॥ तद्बलाग्र्यंविराटस्यसंप्रस्थितमशोभत ॥ दृढायुधजनाकीर्णं गजाश्वरथसंकुलम् ३५ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिदक्षिणगोग्रहेमत्स्यराजरणोद्योगेएकत्रिंशोऽध्यायः ॥ ३१ ॥ वैशंपायनउवाच ॥ नि र्यायनगराच्छूराव्यूढानीकाःप्रहारिणः ॥ त्रिगर्तानस्पृशन्मत्स्याःसूर्येपरिणतेसति १ तेत्रिगर्ताश्चमत्स्याश्चसंरब्धायुद्धदुर्मदाः ॥ अन्योन्यमभिगर्जंतोगोषु गृद्धामहाबलाः २ भीमाश्चमत्तमातंगास्तोमरांकुशनोदिताः ॥ ग्रामणीयैःसमारूढाःकुशलैर्हस्तिसादिभिः ३ तेषांसमागमोघोरस्तुमुलोलोमहर्षणः ॥ घ्नतां परस्परंराजन्यमराष्ट्रविवर्द्धनः ४

विराटपर्वणिनीलकंठीये भारतभावदीपे एकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ निर्यायनिर्गत्य अस्पृशन्
प्राप्तवंतः परिणते पंचधाविभक्तस्याह्नश्चतुर्थभागंप्राप्ते १ । २ ग्रामणीयैःराजकीयैः 'ग्रामणीर्नापितेपुंसित्रिष्वध्यक्षेऽधिपेऽपिच' इतिनानार्थः ३ समागमःसंग्रामः ४

अवलंबति अवरोहति ५ । ६ सैन्येनसेनोत्थेन ७ व्यतिषिक्तानि हस्ताद्धस्तांतरंगतानि ८ अस्यतांक्षिपताम् ९ । १० । ११ । १२ । १३ नागभोगनिकाशैःसर्पदेहोपमैः १४ । १५ । १६ कश्मलंमूर्छाआविशत् शूरानितिशेषः येषांगरुत्मतांपक्षिणांअंतरिक्षेगतिर्दर्शनंच तेऽपिशरैःप्रवेजिताःउद्वेगंप्रापिताःसंतःउपाविशन् ध्वजाग्रादौ बाणपटलेनतेषांगतिर्दर्शनंचन्यरुध्यत निरुद्धम् १७ । १८ त्रिगर्त्तानांसेनांप्रविष्टाविरथन्वपः १९ प्रविश्य चतामाच्छेतांमोहितवंतौ केशाकेशि केशेषुकेशेषुगृही

देवासुरसमोराजन्नासीत्सूर्येऽवलंबति ॥ पदातिरथनागेंद्रहयारोहबलौघवान् ५ अन्योन्यमभ्यापततांनिघ्नतांचेतरेतरम् ॥ उदतिष्ठद्रजोभौमंनप्राज्ञायत किंचन ६ पक्षिणश्चापतन्भूमौसैन्येनरजसाऽऽवृताः ॥ इषुभिर्व्यतिसर्पद्भिरादित्योऽतरधीयत ७ खद्योतैरिवसंयुक्तमंतरिक्षंव्यराजत ॥ रुक्मपृष्ठानिचापानिव्यतिषिक्तानिधन्विनाम् ८ पततांलोकवीराणांसव्यदक्षिणमस्यताम् ॥ रथारथैःसमाजग्मुःपादातैश्चपदातयः ९ सादिनःसादिभिश्चैवगजैश्चापिमहागजाः ॥ असिभिःपट्टिशैःप्रासैःशक्तिभिस्तोमरैरपि १० संरब्धाःसमरेराजन्निजघ्नुरितरेतरम् ॥ निघ्नंतःसमरेऽन्योन्यंशूराःपरिघबाहवः ११ नशेकुरभिसंरब्धाःशूरान्कर्तुंपराङ्मुखान् ॥ कृत्तोत्तरोष्ठंसुनसंकृत्तकेशमलंकृतम् १२ अदृश्यतशिरश्छिन्नंरजोध्वस्तंसकुंडलम् ॥ अदृश्यंस्तत्रगात्राणिशरैश्छिन्नानिभागशः १३ शालस्कंधनिकाशानिक्षत्रियाणांमहामृधे ॥ नागभोगनिकाशैश्चबाहुभिश्चंदनोक्षितैः १४ आस्तीर्णावसुधाभातिशिरोभिश्चसकुंडलैः ॥ रथिनांरथिभिश्चात्रसंप्रहारोऽभ्यवर्तत १५ सादिभिःसादिनांचापिपदातीनांपदातिभिः ॥ उपाशाम्यद्रजोभौमंरुधिरेणप्रसर्पता १६ कश्मलंचाविशद्घोरंनिर्मर्यादमवर्तत ॥ उपाविशन्गरुत्मंतःशरैर्गाढंप्रवेजिताः ॥ अंतरिक्षेगतिर्येषांदर्शनंचाप्यरुध्यत १७ तेघ्नंतःसमरेऽन्योन्यंशूराःपरिघबाहवः ॥ नशेकुरभिसंरब्धाःशूरान्कर्तुंपराङ्मुखान् १८ शतानीकःशतंहत्वाविशालाक्षश्चतुःशतम् ॥ प्रविष्टौमहतींसेनांत्रिगर्त्तानांमहारथौ १९ तौप्रविष्टौमहासेनांबलवंतौमनस्विनौ ॥ आच्छेतांबाहुसंरब्धौकेशाकेशिरथारथि २० लक्षयित्वात्रिगर्त्तानांतौप्रविष्टौरथव्रजम् ॥ अग्रतःसूर्यदत्तश्चमदिराक्षश्चपृष्ठतः २१ विराटस्तत्रसंग्रामेहत्वापंचशतान्रथान् ॥ हयानांचशतान्यष्टौहत्वापंचमहारथान् २२ चरन्सविविधान्मार्गान्रथेनरथसत्तमः ॥ त्रिगर्त्तानांसुशर्माणमार्च्छद्रुक्मरथंरणे २३ तौव्यवाहरतांतत्रमहात्मानौमहाबलौ ॥ अन्योन्यमभिगर्जंतौगोष्ठेषुवृषभाविव २४ ततोराजात्रिगर्त्तानांसुशर्मायुद्धदुर्मदः ॥ मत्स्यंसमीयाद्राजानंद्वैरथेननरर्षभः २५ ततोरथाभ्यांरथिनौव्यतीयतुरमर्षणौ ॥ शरान्व्यसृजतांशीघ्रंतोयधाराघनाइव २६

त्वा प्रवृत्तंयुद्धं केशाकेशि एवंरथारथि । पाठांतरे नखानखि नखैर्नखैश्चप्रहृत्येदंयुद्धंप्रवृत्तंनखानखि केशेषुगृहीत्वायोधान् रथेषुगृहीत्वारथांश्चप्रक्षिपतइतिभावः २० सूर्यदत्तःशतानीकः २१ । २२ । २३ तौ विराटसुशर्माणौ २४ । २५ । २६

२७ । २८ । २९ ततःसैन्यमितिश्लोकःप्राचीनपुस्तकेष्वन्यथापठ्यते । 'ततःसेनाःसमाहृत्यमत्स्यराजसुशर्मणौ । नजानीतांतदाऽन्योन्यंसैन्येनरजसावृतौ' इति तत्रसुशर्मणा विति ह्रस्वत्वमार्षं सेनाःसेनास्थान्शूरान्समाहृत्यअन्योन्यसंघट्टंकारयित्वा सैन्येनसेनोत्थेन ३३ ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपेद्वात्रिंशोऽध्यायः ॥ ३२ ॥

अन्योन्यंचापिसंरब्धौविचेरतुरमर्षणौ ॥ कृतास्त्रौनिशितैर्बाणैरसिशक्तिगदाभृतौ २७ ततोराजासुशर्माणंविव्याधदशभिःशरैः ॥ पंचभिःपंचभिश्चास्यविव्याधचतुरोहयान् २८ तथैवमत्स्यराजानंसुशर्मायुद्धदुर्मदः ॥ पंचाशद्भिःशितैर्बाणैर्विव्याधपरमास्त्रवित् २९ ततःसैन्यंमहाराजमत्स्यराजसुशर्मणोः ॥ नाभ्यजानत्तदाऽन्योन्यंसैन्येनरजसाऽऽवृतम् ३० ॥ इतिश्रीमहाभारतेविराटपर्वणिगोग्रहणपर्वणिदक्षिणगोग्रहेविराटसुशर्मयुद्धेद्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ छ ॥

॥ वैशंपायनउवाच ॥ तमसाऽभिप्लुतेलोकेरजसाचैवभारत ॥ अतिष्ठन्वैमुहूर्तंतुव्यूढानीकाःप्रहारिणः १ ततोंऽधकारंप्रणुदन्नुदतिष्ठतचंद्रमाः ॥ कुर्वाणोविमलांरात्रिंनंदयन्क्षत्रियान्युधि २ ततःप्रकाशमासाद्यपुनर्युद्धमवर्तत ॥ घोररूपंततस्तेस्मनवैक्षंतपरस्परम् ३ ततःसुशर्मात्रैगर्तःसहभ्रात्रायवीयसा ॥ अभ्यद्रवन्मत्स्यराजंरथव्रातेनसर्वशः ४ ततोरथाभ्यांप्रस्कंद्यभ्रातरौक्षत्रियर्षभौ ॥ गदापाणीसुसंरब्धौसमभ्यद्रवतांरथान् ५ तथैवतेषांतुबलानितानिक्रुद्धान्यथान्योन्यमभिद्रवंति ॥ गदासिखड्गैश्चपरश्वधैश्चप्रासैश्चतीक्ष्णाग्रसुपीतधारैः ६ बलंतुमत्स्यस्यबलेनराजासर्वंत्रिगर्ताधिपतिःसुशर्मा ॥ प्रमथ्यजित्वाचप्रसह्यमत्स्यंविराटमोजस्विनमभ्यधावत् ७ तौनिहत्यपृथक्धुर्यावुभौतौपार्ष्णिसारथी ॥ विरथंमत्स्यराजानंजीवग्राहमगृह्णताम् ८ तमुन्मथ्यसुशर्माऽथयुवतीमिवकामुकः ॥ स्यंदनंस्वंसमारोप्यप्रययौशीघ्रवाहनः ९ तस्मिन्गृहीतेविरथेविराटेबलवत्तरे ॥ प्राद्रवंतभयान्मत्स्यास्त्रिगर्तैरर्दिताभृशम् १० तेषुसंत्रस्यमानेषुकुंतीपुत्रोयुधिष्ठिरः ॥ प्रत्यभाषन्महाबाहुंभीमसेनमरिंदमम् ११ मत्स्यराजःपरामृष्टस्त्रिगर्तेनसुशर्मणा ॥ तंमोचयमहाबाहोनगच्छेद्द्विषतांवशम् १२ उषिताःस्मसुखंसर्वेसर्वकामैःसुपूजिताः ॥ भीमसेनत्वयाकार्यातस्यवासस्यनिष्कृतिः १३ ॥ भीमसेनउवाच ॥ अहमेनंपरित्रास्येशासनात्तवपार्थिव ॥ पश्यमेसुमहत्कर्मयुध्यतःसहशत्रुभिः १४ स्वबाहुबलमाश्रित्यातिष्ठत्वंभ्रातृभिःसह ॥ एकांतमाश्रितोराजन्पश्यमेऽद्यपराक्रमम् १५

तमसानैशेनांधकारेण । मुहूर्तं आचंद्रोदयकालं नतुघटीद्वयमात्रं । कृष्णपक्षस्यसप्तमीमिति सप्तम्यांगोग्रहणस्योक्तत्वात् १ । २ । ३ । ४ प्रस्कंद्यअवरुह्य ५ तीक्ष्णानिअग्राणि सुपीताःसुतरांपीताः शोषिताःकृशीकृता अनायासेनशीघ्रंपरशरीरप्रवेशक्षमाःधाराश्चयेषांते तीक्ष्णाग्रसुपीतधारास्तैः । तीक्ष्णायसपीतेतिपाठेऽपि पीतशब्दस्योक्तएवार्थः ६ बलंजित्वाचेतिसंबंधः ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५

अपारुज्यउत्पाटच १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ विराटंसमवीक्ष्यैनं हेसमहेसाधो इतिविराटं वीक्ष्यवाचाहशाचसंभाव्य एनंसुशर्माणंतिष्ठतिष्ठेति चावददितिसंबंधः । 'सर्वसाधुसमानेषुसमंस्यादभिधेयवत्'इतिमेदिनी २४ रथपुंगवःतिष्ठतिष्ठेतिभाषमाणः महत्कर्मान्योन्ययुद्धंपश्यतां कर्मन्यति हारेतङ् अयंमांमहत्कर्मकुर्वाणं

सुस्कंधोऽयंमहावृक्षोगदारूपइवस्थितः ॥ अहमेनमपारुज्यद्रावयिष्यामिशात्रवान् १६ ॥ वैशंपायनउवाच ॥ तंमत्तमिवमातंगंवीक्षमाणंवनस्पतिम् ॥ अब्रवीद्भ्रातरंवीरंधर्मराजोयुधिष्ठिरः १७ माभीमसाहसंकार्षीस्तिष्ठत्वेषवनस्पतिः ॥ मात्वंवृक्षेणकर्माणिकुर्वाणमतिमानुषम् १८ जनाःसमवबुध्येरन्भीमोऽयमितिभारत ॥ अन्यदेवायुधंकिंचित्प्रतिपद्यस्वमानुषम् १९ चापंवायदिवाशक्तिंनिस्त्रिंशंवापरश्वधम् ॥ यदेवमानुषंभीमभवेदन्यैरलक्षितम् २० तदेवायुधमादायमोक्षयाशुमहीपतिम् ॥ यमौचचक्ररक्षौतेभवितारौमहाबलौ २१ सहिताःसमरेतत्रमत्स्यराजंपरीप्सत ॥ वैशंपायनउवाच ॥ एवमुक्तस्तुवेगेनभीमसेनोमहाबलः २२ गृहीत्वातुधनुःश्रेष्ठंजवेनसुमहाजवः ॥ व्यमुंचच्छरवर्षाणिसतोयइवतोयदः २३ तंभीमोभीमकर्माणंसुशर्माणमथाद्रवत् ॥ विराटंसमवीक्ष्यैनंतिष्ठतिष्ठेतिचावदत् २४ सुशर्माचिंतयामासकालांतकयमोपमम् ॥ तिष्ठतिष्ठेतिभाषंतंपृष्ठतोरथपुंगवः ॥ पश्यतांसुमहत्कर्ममहद्युद्धमुपस्थितम् २५ परावृत्तोधनुर्गृह्यसुशर्माभ्रातृभिःसह ॥ निमेषांतरमात्रेणभीमसेनेनतेरथाः २६ रथानांचगजानांचवाजिनांचससादिनाम् ॥ सहस्रशतसंघाताःशूराणामुग्रधन्विनाम् २७ पातिताभीमसेनेनविराटस्यसमीपतः ॥ पत्तयोनिहतास्तेषांगदांगृह्य महात्मना २८ तद्दृष्ट्वातादृशंयुद्धंसुशर्मायुद्धदुर्मदः ॥ चिंतयामासमनसाकिंशेषंहिबलस्यमे ॥ अपरोदृश्यतेसैन्येपुरामग्नोमहाबले २९ आकर्णपूर्णेनतदाधनुषाप्रत्यदृश्यत ॥ सुशर्मासायकांस्तीक्ष्णान्क्षिपतेचपुनःपुनः ३० ततःसमस्तास्तेसर्वेतुरगानभ्यचोदयन् ॥ दिव्यमस्त्रंविकुर्वाणास्त्रिगर्तान्प्रत्यमर्षणाः ३१ तान्निवृत्तरथान्दृष्ट्वापांडवान्सामहाचमूः ॥ वैराटिःपरमक्रुद्धोयुयुधेपरमाद्भुतम् ३२ सहस्रमवधीत्तत्रकुंतीपुत्रोयुधिष्ठिरः ॥ भीमःसप्तसहस्राणियमलोकमदर्शयत् ३३ नकुलश्चापिसप्तैवशतानिप्राहिणोच्छरैः ॥ शतानित्रीणिशूराणांसहदेवःप्रतापवान् ३४ युधिष्ठिरसमादिष्टोनिजघ्नेपुरुषर्षभः ॥ ततोऽभ्यपतदत्युग्रःसुशर्माणमुदायुधः ३५ हत्वातांमहतींसेनांत्रिगर्तानांमहारथः ॥ ततोयुधिष्ठिरोराजात्वरमाणोमहारथः ३६ अभिपत्यसुशर्माणंशरैरभ्याहनद्भृशम् ॥ सुशर्माऽपिसुसंरब्धस्त्वरमाणोयुधिष्ठिरम् ३७ अविध्यन्नवभिर्बाणैश्चतुर्भिश्चतुरोहयान् ॥ ततोराजन्नाशुकारीकुंतीपुत्रोवृकोदरः ३८

पश्यतु अहंचैनंद्रक्ष्येइत्यर्थः २५ रथाःसंगताइतिशेषः २६ । २७ । २८ चिंतयामासेति सुशर्माबलस्य सैन्यस्य किंशेषंकुत्सितंवधंचिंतयामास । 'शेषःसंकर्षणेवधे'इतिमेदिनी तत्रहेतुः हियस्मात्मेममअपरोभ्रातामहाबलेसैन्येपुरामग्नोदृश्यते । भ्रातुःसंकटंदृष्ट्वा सैन्यनाशंचिंतयामासेत्यर्थः २९ धनुषाशोभमानइतिशेषः ३० तेसर्वेमत्स्याः ३१ । ३२ । ३३ । ३४ अत्युग्रोयुधिष्ठिरः वाक्यशेषात् ३५ । ३६ । ३७ । ३८

३९ । ४० । ४१ । ४२ त्रैगर्तंत्रिगर्ताधिपतिं ४३ । ४४ । ४५ । भीमसंकाशःभीमोपमः 'रामरावणयोर्युद्धंरामरावणयोरिव'इतिवदनुपमइत्यर्थः ४६। ४७ केशपक्षेकेशक
लापे । 'पाशःपक्षश्चहस्तश्चकलापार्थाःकचात्परे'इति । पक्षोमासार्धकेइत्युपक्रम्यकेशादेःपरतोवृंदइतिमेदिनी अत्रोक्तंनीतिशास्त्रे । 'वामपाणिकचोत्पीडा १ भूमौनिष्पेष

समासाद्यसुशर्माणमश्वानस्यन्यपोथयत् ॥ पृष्ठगोपांश्चतस्याथहत्वापरमसायकैः ३९ अथास्यसारथिंक्रुद्धोरथोपस्थादपातयत् ॥ चक्ररक्षश्चशूरोवैमदिरा
क्षोऽतिविश्रुतः ४० समायाद्विरथंदृष्ट्वात्रिगर्तंप्राहरत्तदा ॥ ततोविराटःप्रस्कंद्यरथादथसुशर्मणः ४१ गदांतस्यपरामृश्यतमेवाभ्यद्रवद्बली ॥ सचचारगदापा
णिर्वृद्धोऽपितरुणोयथा ४२ पलायमानंत्रैगर्तंदृष्ट्वाभीमोऽभ्यभाषत ॥ राजपुत्रनिवर्तस्वनतेयुक्तंपलायनम् ४३ अनेनवीर्येणकथंगास्त्वंप्रार्थयसेबलात् ॥ कथं
चानुचरांस्त्यक्त्वाशत्रुमध्येविषीदसि ४४ इत्युक्तःसतुपार्थेनसुशर्मारथयूथपः ॥ तिष्ठतिष्ठेतिभीमंससहसाऽभ्यद्रवद्बली ४५ भीमस्तुभीमसंकाशोरथात्प्र
स्कंद्यपांडवः ॥ प्राद्रवत्तूर्णमव्यग्रोजीवितेप्सुःसुशर्मणः ४६ तंभीमसेनोधावंतमभ्यधावतवीर्यवान् ॥ त्रिगर्तराजमादातुंसिंहःक्षुद्रमृगंयथा ४७ अभिद्रुत्यसुश
र्माणंकेशपक्षेपरामृशत् ॥ समुद्यम्यतुरोषात्तंनिष्पिपेषमहीतले ४८ पदामूर्ध्निमहाबाहुःप्राहरद्विलपिष्यतः ॥ तस्यजानुंददौभीमोजघ्नेचैनमरत्निना ॥ समोहम
गमद्राजाप्रहारवरपीडितः ४९ तस्मिन्गृहीतेविरथेत्रिगर्तानांमहारथे ॥ अभज्यतबलंसर्वंत्रैगर्तंतद्भयातुरम् ५० निवर्त्यगास्ततःसर्वाःपांडुपुत्रामहारथाः ॥
अवजित्यसुशर्माणंधनंचादायसर्वशः ५१ स्वबाहुबलसंपन्नाह्रीनिषेधायतव्रताः ॥ विराटस्यमहात्मानःपरिक्लेशविनाशनाः ५२ स्थिताःसमक्षंतेसर्वेत्वथभीमोऽ
भ्यभाषत ५३ नायंपापसमाचारोमत्तोजीवितुमर्हति ॥ किंतुशक्यंमयाकर्तुंयद्राजासततंघृणी ५४ गलेगृहीत्वाराजानमानीयविवशंवशम् ॥ ततएनंविचेष्टंतंब
द्ध्वापार्थोवृकोदरः ५५ रथमारोपयामासविसंज्ञंपांसुगुंठितम् ॥ अभ्येत्यरणमध्यस्थमभ्यगच्छद्युधिष्ठिरम् ५६ दर्शयामासभीमस्तुसुशर्माणंनराधिपम् ॥ प्रोवा
चपुरुषव्याघ्रोभीमसमाहवशोभिनम् ५७ तंराजाप्राहसदृष्ट्वामुच्यतांवैनराधमः ॥ एवमुक्तोऽब्रवीद्भीमःसुशर्माणंमहाबलम् ५८ ॥ भीमउवाच ॥ जीवितुंचे
च्छसेमूढहेतुंमेवदतःशृणु ॥ दासोऽस्मीतित्वयावाच्यंसंसत्सुचसभासुच ५९ एवंतेजीवितंदद्यामेषयुद्धजितोविधिः ॥ तमुवाचततोज्येष्ठोभ्रातासप्रणयंवचः ६०

णंबलात् २। मूर्ध्निपादप्रहरणं ३ जानुनोदरमर्दनं ४। मालूराकारयामुष्ट्या कपोलेदृढताडनं ५ । कफोणिपातोऽप्यसकृत् ६ सर्वतस्तलताडनं ७ । तालेनयुद्धेभ्रमणंमारणं ८
स्मृतमष्टधा । चतुर्भिःक्षत्रियंहन्यात्पंचभिःक्षत्रियाधमं । षड्भिर्वैश्यंसप्तभिस्तुशूद्रंसंकरमष्टभिः'इति एतेषांमध्येतंकेशग्रहादिभिःपंचभिर्मारयताऽस्यक्षत्रियाधमत्वंदर्शितं ४८
४९ । ५० । ५१ । ५२ । ५३ घृणीदयालुः ५४ विवशंअचित्तं वशंपराधीनं ५५ । ५६ । ५७ । ५८ । ५९ । ६०

६१ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ एवमिति १ । २ । ३ । ४ । ५ । ६ । ७ प्रतीताःहृष्टाः ८ । ९ । १० नःअस्मत्संबंधि

॥ युधिष्ठिरउवाच ॥ मुंचमुंचाधमाचारंप्रमाणंयदितेवयम् ॥ दासभावंगतोह्येषविराटस्यमहीपतेः ॥ अदासोगच्छमुक्तोऽसिमैवंकार्षीःकदाचन ६१ ॥ इतिश्री महाभारतेविराटपर्वणिगोग्रहणपर्वणिदक्षिणगोग्रहेसुशर्मनिग्रहेत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ वैशंपायनउवाच ॥ एवमुक्तेतुसव्रीडःसुशर्माऽऽसीदधोमुखः ॥ समुक्तोऽभ्येत्यराजानमभिवाद्यप्रतस्थितवान् १ विसृज्यतुसुशर्माणंपांडवास्तेहतद्विषः ॥ स्वबाहुबलसंपन्नाह्रीनिषेवायतव्रताः ॥ संग्राममशिरसोमध्येतांरात्रिं सुखिनोऽवसन् २ ततोविराटःकौंतेयानतिमानुषविक्रमान् ॥ अर्चयामासवित्तेनमानेनचमहारथान् ३ ॥ विराटउवाच ॥ यथैवममरत्नानियुष्माकंतानिवै तथा ॥ कार्यंकुरुतवैसर्वेयथाकामंयथासुखम् ४ ददाम्यलंकृताःकन्यावसूनिविविधानिच ॥ मनसश्चाप्यभिप्रेतंयुद्धेशत्रुनिबर्हणाः ५ युष्माकंविक्रमादद्यमु क्तोऽहंस्वस्तिमानिह ॥ तस्माद्भवंतोमत्स्यानामीश्वराःसर्वएवहि ६ ॥ वैशंपायनउवाच ॥ तथेतिवादिनंमत्स्यंकौरवेयाःपृथक्पृथक् ॥ ऊचुःप्रांजलयःसर्वेयु धिष्ठिरपुरोगमाः ७ प्रतिनंदामतेवाक्यंसर्वंचैवविशांपते ॥ एतेनैवप्रतीताःस्मयत्त्वंमुक्तोऽद्यशत्रुभिः ८ ततोऽब्रवीत्प्रीतमनामत्स्यराजोयुधिष्ठिरम् ॥ पुनरे वमहाबाहुर्विराटोराजसत्तमः ९ एहित्वामभिषेक्ष्यामिमत्स्यराजस्तुनोभवान् १० मनसश्चाप्यभिप्रेतंयथेष्टंभुविदुर्लभम् ॥ तत्तेहंसंप्रदास्यामिसर्वमर्हतिनोभ वान् ११ रत्नानिगाःसुवर्णंचमणिमुक्तमथापिच ॥ वैयाघ्रपद्यविप्रेंद्रसर्वथैवनमोस्तुते १२ त्वत्कृतेह्यद्यपश्यामिराज्यंसंतानमेवच ॥ यतश्चजातसंरंभोनचश त्रुवशंगतः १३ ततोयुधिष्ठिरोमत्स्यंपुनरेवाभ्यभाषत ॥ प्रतिनंदामितेवाक्यंमनोज्ञंमत्स्यभाषसे १४ आनृशंस्यपरोनित्यंसुसुखीसततंभव ॥ गच्छंतुदूता स्त्वरितंनगरंतवपार्थिव १५ सुहृदांप्रियमाख्यातुंघोषयंतुचतेजयम् ॥ ततस्तद्वचनान्मत्स्योदूतान्राजासमादिशत् १६ आचक्षध्वंपुरंगत्वासंग्रामविज यंमम ॥ कुमार्यःसमलंकृत्यपर्यागच्छंतुमेपुरात् १७ वादित्राणिचसर्वाणिगणिकाश्चस्वलंकृताः ॥ एतांचाज्ञांततःश्रुत्वाराज्ञामत्स्येननोदिताः ॥ तामाज्ञांशि रसाकृत्वाप्रस्थिताहृष्टमानसाः १८ तेगत्वातत्रतांरात्रिमथसूर्योदयंप्रति ॥ विराटस्यपुराभ्याशेदूताजयमघोषयन् १९ ॥ इतिश्रीमहाभारतेवि० प०गोहरण प० दक्षिणगोग्रहेविराटजयघोषेचतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ ॥ वैशंपायनउवाच ॥ यातेत्रिगर्तान्मत्स्येतुपशूंस्तान्वैपरीप्सति ॥ दुर्योधनःसहामात्यो विराटमुपयादथ १ भीष्मोद्रोणश्चकर्णश्चकृपश्चपरमास्त्रवित् ॥ द्रौणिश्चसौबलश्चैवतथादुःशासनःप्रभो २ विविंशतिर्विकर्णश्चचित्रसेनश्चवीर्यवान् ॥ दुर्मुखोदुः शलश्चैवयेचैवान्येमहारथाः ३

सर्वंभवान्ग्रहीतुमर्हति ११ । १२ यतोनिगृहीतःजातसंरंभोजातभयोऽपित्वद्बलान्नचशत्रुवशंगतोऽस्मि १३ । १४ । १५ । १६ १७।१८ । १९ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ परीप्सतिलिप्सति यतः अथ अतः विराटंविराटदेशंउपयात्उपायात् १ । २ ३

४ कालयंतिनयंति रथवंशेनरथसमूहेन ५ घोषस्यघोषस्थानांगवांगोपालानांच हन्यतांहन्यमानानामारावःशब्दोमहानभूत् ६ । ७ । ८ भूमिंजयमित्युत्तरस्यैवनामांतरं ९ । १० शून्यपालंराज्ञोऽसन्निधानेपालकं ११ । १२ । १३ । १४ यूथपोगंधहस्ती १५ पाशोपधानामिति पाशौमौर्वीप्रांतद्वयगतौ तावेवउपधानेवीणायांतंत्रीसंधानार्थं कीलविशेषौयस्यांसापाशोपधानातां । ज्यातंत्रीं मौर्व्येवतंत्रीकार्ष्णायसतंतवोयस्यांतां चापोधनुर्यष्टिः सैवअलाबुसहितोदंडोयस्यास्तां । महास्वनामित्युभयत्रतुल्यं । शरास्तंतो

एतेमत्स्यानुपागम्यविराटस्यमहीपतेः ॥ घोषान्विद्राव्यतरसागोधनंजह्रुरोजसा ४ षष्टिंगवांसहस्राणिकुरवःकालयंतिच ॥ महतारथवंशेनपरिवार्यसमंततः ५ गोपालानांतुघोषस्यहन्यतांतैर्महारथैः ॥ आरावःसुमहानासीत्संप्रहारेभयंकरे ६ गोपाध्यक्षोभयत्रस्तोरथमास्थायसत्वरः ॥ जगामनगरायैवपरिक्रोशं स्तदार्तवत् ७ सप्रविश्यपुरंराज्ञोनृपवेश्माभ्ययात्ततः ॥ अवतीर्यरथात्तूर्णमाख्यातुंप्रविवेशह ८ दृष्ट्वाभूमिंजयंनामपुत्रंमत्स्यस्यमानिनम् ॥ तस्मैतत्सर्वमाच ष्टराष्ट्रस्यपशुकर्षणम् ९ षष्टिंगवांसहस्राणिकुरवःकालयंतिते ॥ तद्विजेतुंसमुत्तिष्ठगोधनंराष्ट्रवर्धन १० राजपुत्रहितप्रेप्सुःक्षिप्रंनिर्याहिचस्वयम् ॥ त्वांहि मत्स्योमहीपालःशून्यपालमिहाकरोत् ११ त्वयापरिषदोमध्येश्लाघतेसनराधिपः ॥ पुत्रोममानुरूपश्चशूरश्चेतिकुलोद्वहः १२ इष्वस्त्रेनिपुणोयोधःसदावीरश्च मेसुतः ॥ तस्यतत्सत्यमेवास्तुमनुष्येंद्रस्यभाषितम् १३ आवर्तयकुरून्जित्वापशून्पशुमतांवर ॥ निर्दहैषामनीकानिभीमेनशरतेजसा १४ धनुश्च्युतैरु क्मपुंखैःशरैःसन्नतपर्वभिः ॥ द्विषतांभिंध्यनीकानिगजानामिवयूथपः १५ पाशोपधानांज्यातंत्रींचापदंडांमहास्वनाम् ॥ शरवर्णांधनुर्वीणांशत्रुमध्येप्रवादय १६ श्वेतारजतसंकाशारथेयुज्यंतुतेहयाः ॥ ध्वजंचसिंहंसौवर्णमुच्छ्रयंतुतवप्रभो १७ रुक्मपुंखाःप्रसन्नाग्रामुक्ताहस्तवतात्वया ॥ छादयंतुशराःसूर्यंराज्ञांमार्ग निरोधकाः १८ रणेजित्वाकुरून्सर्वान्वज्रपाणिरिवासुरान् ॥ यशोमहदवाप्यत्वंप्रविशेदंपुरंपुनः १९ त्वंहिराष्ट्रस्यपरमागतिर्मत्स्यपतेःसुतः ॥ यथाहिपांडुपु त्राणामर्जुनोजयतांवरः २० एवमेवगतिर्नूनंभवान्विषयवासिनाम् ॥ गतिमंतोवयंत्वद्यसर्वेविषयवासिनः २१ ॥ वैशंपायनउवाच ॥ स्त्रीमध्यउक्तस्तेनासौ तद्वाक्यमभयंकरम् ॥ अंतःपुरेश्लाघमानइदंवचनमब्रवीत् २२ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिउत्तरगोग्रहेगोपवाक्येपंचत्रिंशोऽध्यायः ॥३५॥ ॥ उत्तरउवाच ॥ अद्याहमनुगच्छेयंदृढधन्वागवांपदम् ॥ यदिमेसारथिःकश्चिद्भवेदश्वेषुकोविदः १ तंत्वहंनावगच्छामियोमेयंताभवेन्नरः ॥ पश्यध्वंसारथिंक्षिप्रं ममयुक्तंप्रयास्यतः २ अष्टाविंशतिरात्रंवामासंवानूनमंततः ॥ यत्तदासीन्महद्युद्धंतत्रमेसारथिर्हतः ३

निःसरंतस्तएववर्णाः शब्दवत्त्वसामान्यात् स्वरस्पर्शादयोयस्यां । धनुःशब्दोऽत्रसज्यचापवाची । तामेववीणांशत्रूणांमध्येप्रवादय १६ युज्यंतुयुज्यंतां सिंहंसिंहाकारं सौवर्णं १७ हस्तवताहढहस्तेन प्रशंसायांमतुप् १८ । १९ । २० । २१ । २२ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपे पंचत्रिंशोऽध्यायः ॥ ३५ ॥ १ । २ । ३

हययानविदं अश्वगतिज्ञम् ४।५।६।७।८।९।१०।११।१२।१३।१४।१५।३६ ।१७।१८।१९।२०।२१ । २२ । २३ नर्तनागृहं ण्यासश्रंथोयुजितिण्यंताद्युचिटाबंतं सत्रेण च्छद्मना २४ ॥ इति वि॰प॰नी॰भा॰भा॰षट्त्रिंशोध्यायः ॥ ३६ ॥ माल्यंमाला ।'माल्यंकुसुमतस्त्रजोः' इति मेदिनी । सुदक्षिणाव्रातृच्छंदानुवर्तिनो । 'दक्षिणादक्षिणो



सलभेयंयदात्वन्यंहययानविदंनरम् ॥ त्वरावानद्ययात्वाऽहंसमुच्छ्रितमहाध्वजम् ४ विगाह्यतत्परानीकंगजवाजिरथाकुलम् ॥ शस्त्रप्रतापनिर्वीर्यान्कुरूञ्जि त्वाऽऽनयेपशून् ५ दुर्योधनंशांतनवंकर्णंवैकर्तनंकृपम् ॥ द्रोणंचसहपुत्रेणमहेष्वासान्समागतान् ६ वित्रासयित्वासंग्रामेदानवानिववज्रभृत् ॥ अनेनैवमुहूर्तेन पुनःप्रत्यानयेपशून् ७ शून्यमासाद्यकुरवःप्रयांत्यादायगोधनम् ॥ किंतुशक्यंमयाकर्तुंयदहंतत्रनाभवम् ८ पश्येयुरद्यमेवीर्यंकुरवस्तेसमागताः ॥ किंनुपा र्थोऽर्जुनःसाक्षादयमस्मान्प्रबाधते ९ ॥ वैशंपायनउवाच ॥ श्रुत्वातदर्जुनोवाक्यंराज्ञःपुत्रस्यभाषतः ॥ अतीतसमयेकालेप्रियांभार्यामनिंदिताम् १० द्रुप दस्यसुतांतन्वींपांचालींपावकात्मजाम् ॥ सत्यार्जवगुणोपेतांभर्तुःप्रियहितेरताम् ११ उवाचरहसिप्रीतःकृष्णांसर्वार्थकोविदः ॥ उत्तरंब्रूहिकल्याणिक्षिप्रंमद्व चनादिदम् १२ अयंवैपांडवस्यासीत्सारथिःसंमतोदृढः ॥ महायुद्धेषुसंसिद्धःसतेयंताभविष्यति १३ ॥ वैशंपायनउवाच ॥ तस्यतद्वचनंस्त्रीषुभाषतश्चपु नःपुनः ॥ नसाऽमर्षतपांचालीबीभत्सोःपरिकीर्तनम् १४ अथैनमुपसंगम्यस्त्रीमध्यात्सातपस्विनी ॥ व्रीडमानेवशनकैरिदंवचनमब्रवीत् १५ योऽसौबृहद्वा रणाभोयुवासुप्रियदर्शनः ॥ बृहन्नलेतिविख्यातःपार्थस्यासीत्ससारथिः १६ धनुष्यनवरश्चासीत्तस्यशिष्योमहात्मनः ॥ दृष्टपूर्वोमयावीरचरंत्यापांडवान्प्र ति १७ यदातत्पावकोदावमदहत्खांडवंमहत् ॥ अर्जुनस्यतदाऽनेनसंगृहीताहयोत्तमाः १८ तेनसारथिनापार्थःसर्वभूतानिसर्वशः ॥ अजयत्खांडवप्रस्थेन हियंताऽस्तिताद्दशः १९ ॥ उत्तरउवाच ॥ सैरंध्रिजानासितथायुवानंनपुंसकोनैवभवेद्यथाऽसौ ॥ अहंनशक्नोमिबृहन्नलांशुभेवक्तुंस्वयंयच्छहयान्ममेतिवै ॥ २० ॥ द्रौपद्युवाच ॥ येयंकुमारीसुश्रोणीभगिनीतेयवीयसी ॥ अस्याःसावीरवचनंकरिष्यातिनसंशयः २१ यदिवैसारथिःसस्यात्कुरून्सर्वान्नसंशयः ॥ जि त्वागाश्चसमादायध्रुवमागमनंभवेत् २२ एवमुक्तःसस्सैरंध्याभगिनींप्रत्यभाषत ॥ गच्छत्वमनवद्यांगितामानयबृहन्नलाम् २३ साभ्रात्राप्रेषिताशीघ्रमगच्छन्नर्त नागृहम् ॥ यत्रास्तेसमहाबाहुश्छन्नःसत्रेणपांडवः २४ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिउत्तरगोग्रहेबृहन्नलासारथ्यकथनेषट्त्रिंशोऽध्याय ॥३६॥ ॥ वैशंपायनउवाच ॥ साप्राद्रवत्कांचनमाल्यधारिणीज्येष्ठेनभ्रात्राप्रहितायशस्विनी ॥ सुदक्षिणावेदिविलग्नमध्यासापद्मपत्राभनिभाशिखंडिनी १

द्भूतसरलच्छंदवर्तिषु' इतिमेदिनी । वेदिवत्विलग्नःकृशोमध्योयस्याःसा पद्मपत्राभिनवाशिखंडिनीतिप्राचीनपाठः । पद्मपत्राभनिभा पद्मपत्रेषुआभातीतिपद्मपत्राभालक्ष्मीः तद्वत् निभादीप्तिर्यस्याःसा । येतु पद्मपत्राभंमरकतंतन्निभांइयामामितिव्याचख्युस्तेषांकनकोज्ज्वलत्वचमितिवाक्यशेषेणविरोधःस्पष्टः । शिखंडिनी मयूरपिच्छालंकारवती १

अरालपक्ष्मावक्राक्षिपक्ष्मा शतन्हदा विद्युत् २ । ३ प्रमुखे अग्रे ४ । ५ किंकिमर्थमागमनम् ६ प्रणयं विनयं भावयंती दर्शयंती ७ । ८ । ९ । १० । ११ यावत्गावो दूरतरं न्हियंते ततः प्रागेव

तन्वीशुभांगीमणिचित्रमेखलामत्स्यस्यराज्ञोदुहिताश्रियावृता ॥ तन्नर्तनागारमरालपक्ष्माशतह्रदामेघमिवान्वपद्यत २ साहस्तिहस्तोपमसंहितोरूःस्वनिंदि ताचारुदतीसुमध्यमा ॥ आसाद्यतंवैवरमाल्यधारिणीपार्थंशुभानागवधूरिवद्विपम् ३ सारत्नभूतामनसःप्रियाऽर्चितासुताविराटस्ययथेंद्रलक्ष्मीः ॥ सुदर्शनी याप्रमुखेयशस्विनीप्रीत्याऽब्रवीदर्जुनमायतेक्षणा ४ सुसंहतोरुंकनकोज्वलत्वचंपार्थःकुमारींसतदाऽभ्यभाषत ॥ किमागमःकांचनमाल्यधारिणिमृगाक्षिकिंत्वं त्वरितेवभामिनि ॥ किंतेमुखंसुंदरिनप्रसन्नमाचक्ष्वतत्त्वंममशीघ्रमंगने ५ ॥ वैशंपायनउवाच ॥ सतांदृष्ट्वाविशालाक्षींराजपुत्रींसखींतथा ॥ प्रहसन्नब्रवीद्रा जन्किमागमनमित्युत ६ तमब्रवीद्राजपुत्रीसमुपेत्यनरर्षभम् ॥ प्रणयंभावयंतीसासखीमध्यइदंवचः ७ गावोराष्ट्रस्यकुरुभिःकाल्यंतेनोबृहन्नले ॥ ताविजेतुंम मभ्राताप्रयास्यतिधनुर्धरः ८ नाचिरंनिहतस्तस्यसंग्रामेरथसारथिः ॥ तेननास्तिसमःसूतोयोऽस्यसारथ्यमाचरेत् ९ तस्मैप्रयतमानायसारथ्यर्थंबृहन्नले ॥ आचक्षेहयज्ञानेसैरंध्रीकौशलंतव १० अर्जुनस्यकिलासीस्त्वंसारथिर्दयितःपुरा ॥ त्वयाऽजयत्सहायेनपृथिवींपांडवर्षभः ११ सासारथ्यंममभ्रातुःकुरुसाधु बृहन्नले ॥ पुरादूरतरंगावोह्रियंतेकुरुभिर्हिनः १२ अथैतद्वचनंमेऽद्यनियुक्तानकरिष्यसि ॥ प्रणयादुच्यमानात्वंपरित्यक्ष्यामिजीवितम् १३ एवमुक्तस्तुसुश्रो ण्यातयासख्यापरंतपः ॥ जगामराजपुत्रस्यसकाशममितौजसः १४ तमाव्रजंतंत्वरितंप्रभिन्नमिवकुंजरम् ॥ अन्वगच्छद्विशालाक्षीशिशुंगजवधूरिव १५ दू रादेवतुतांप्रेक्ष्यराजपुत्रोऽभ्यभाषत ॥ त्वयासारथिनापार्थःखांडवेऽग्निमतर्पयत् १६ पृथिवीमजयत्कृत्स्नांकुंतीपुत्रोधनंजयः ॥ सैरंध्रीत्वांसमाचष्टेसाहिजा नातिपांडवान् १७ संयच्छमामकानश्वांस्तथैवत्वंबृहन्नले ॥ कुरुभिर्योत्स्यमानस्यगोधनानिपरीप्सतः १८ अर्जुनस्यकिलासीस्त्वंसारथिर्दयितःपुरा ॥ त्वया ऽजयत्सहायेनपृथिवींपांडवर्षभः १९ एवमुक्ताप्रत्युवाचराजपुत्रंबृहन्नला ॥ काशक्तिर्ममसारथ्यंकर्तुंसंग्राममूर्धनि २० गीतंवायदिवानृत्यंवादित्रंवापृथग्विधम् ॥ तत्करिष्यामिभद्रंतेसारथ्यंतुकुतोमम २१ ॥ उत्तरउवाच ॥ बृहन्नलेगायनोवानर्तनोवापुनर्भव ॥ क्षिप्रंमेरथमास्थायनिगृह्णीष्वहयोत्तमान् २२ ॥ वैशंपाय नउवाच ॥ सतत्रनर्मसंयुक्तमकरोत्पांडवोबहु ॥ उत्तरायाःप्रमुखतःसर्वंजानन्नरिंदमः २३ ऊर्ध्वमुत्क्षिप्यकवचंशरीरेप्रत्यमुंचत ॥ कुमार्यस्तत्रतंदृष्ट्वाप्राहस न्पृथुलोचनाः २४ सतुदृष्ट्वाविमुह्यंतंस्वयमेवोत्तरस्ततः ॥ कवचेनमहार्हेणसमनह्यद्बृहन्नलाम् २५ सबिभ्रत्कवचंचाग्र्यंस्वयमप्यंशुमत्प्रभम् ॥ ध्वजंचसिंहमु च्छ्रित्यसारथ्येसमकल्पयत् २६ धनूंषिचमहार्हाणिबाणांश्चरुचिरान्बहून् ॥ आदायप्रययौवीरःसबृहन्नलसारथिः २७ अथोत्तराचकन्याश्चसख्यस्तामब्रुवं स्तदा ॥ बृहन्नलेआनयेथावासांसिरुचिराणिच २८ सारथ्यंकुरु १२ । १३ । १४ । १५ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८

पांचालिकार्थं । 'पांचालिकापुत्तिकास्याद्वस्त्रदंतादिभिःकृता'इत्यमरः २९ । ३० । ३१ । ३२ । ३३ । ३४ ॥ ॥ इतिविराटप॰ नील॰ भारतभा॰ सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ ७ ॥ ॥ सइति १ । २ । ३ । ४ । ५ अतिवेगेनआकाशे ६ । ७ । ८ हृष्टरोमारोमांचितः ९ नोत्सहेइत्यत्रहेतुमाहबह्विति १० । ११

पांचालिकार्थंचित्राणिसूक्ष्माणिचमृदूनिच ॥ विजित्यसंग्रामगतान्भीष्मद्रोणमुखान्कुरून् २९ एवंताब्रुवतीःकन्याःसहिताःपांडुनंदनः ॥ प्रत्युवाचहसन्पार्थोमेघदुंदुभिनिःस्वनः ३० ॥ बृहन्नलोवाच ॥ यद्युत्तरोऽयंसंग्रामेविजेष्यतिमहारथान् ॥ अथाहरिष्येवासांसिदिव्यानिरुचिराणिच ३१ ॥ वैशंपायनउवाच ॥ एवमुक्त्वातुबीभत्सुस्ततःप्राचोदयद्धयान् ॥ कुरूनभिमुखःशूरोनानाध्वजपताकिनः ३२ तमुत्तरंवीक्ष्यरथोत्तमेस्थितंबृहन्नलायाःसहितंमहाभुजम् ॥ स्त्रियश्चकन्याश्चद्विजाश्चसुव्रताःप्रदक्षिणंचक्रुरथोचुरंगनाः ३३ यदर्जुनस्यर्षभतुल्यगामिनःपुराऽभवत्खांडवदाहमंगलम् ॥ कुरून्समासाद्यरणेबृहन्नलेसहोत्तरेणाद्यतदस्तुमंगलम् ३४ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिउत्तरगोग्रहेउत्तरनिर्याणंनामसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ वैशंपायनउवाच ॥ सराजधान्यानिर्यायवैराटिरकुतोभयः ॥ प्रयाहीत्यब्रवीत्सूतंयत्रतेकुरवोगताः १ समवेतान्कुरून्सर्वान्जिगीषूनवजित्यवै ॥ गास्तेषांक्षिप्रमादायपुनरेष्याम्यहंपुरम् २ ततस्तांश्चोदयामाससदश्वान्पांडुनंदनः ॥ तेहयानरसिंहेननोदितावातरंहसः ॥ आलिखंतइवाकाशमूहुःकांचनमालिनः ३ नातिदूरमथोगत्वामत्स्यपुत्रधनंजयौ ॥ अवेक्षेतामामित्रघ्नौकुरूणांबलिनांबलम् ४ श्मशानमभितोगत्वाआससादकुरूनथ ॥ तांशमीमन्ववीक्षेतांव्यूढानीकांश्चसर्वशः ५ तदनीकंमहत्तेषांविबभौसागरोपमम् ॥ सर्पमाणमिवाकाशेवनंबहुलपादपम् ६ ददृशेपार्थिवोरेणुर्जनितस्तेनसर्पता ॥ दृष्टिप्रणाशोभूतानांदिवस्पृक्कुरुसत्तम ७ तदनीकंमहद्दृष्ट्वागजाश्वरथसंकुलम् ॥ कर्णदुर्योधनकृपैर्गुप्तंशांतनवेनच ८ द्रोणेनचसपुत्रेणमहेष्वासेनधीमता ॥ हृष्टरोमाभयोद्विग्नःपार्थंवैराटिरब्रवीत् ९ ॥ उत्तरउवाच ॥ नोत्सहेकुरुभिर्योद्धुंरोमहर्षंहिपश्यमे ॥ बहुप्रवीरमत्युग्रंदेवैरपिदुरासदम् १० प्रतियोद्धुंनशक्ष्यामिकुरुसैन्यमनंतकम् ॥ नाशंसेभारतींसेनांप्रवेष्टुंभीमकार्मुकाम् ११ रथनागाश्वकलिलांपत्तिध्वजसमाकुलाम् ॥ दृष्ट्वैवहिपरानाजौमनःप्रव्यथतीवमे १२ यत्रद्रोणश्चभीष्मश्चकृपःकर्णोविविंशतिः ॥ अश्वत्थामाविकर्णश्चसोमदत्तश्चबाल्हिकः १३ दुर्योधनस्तथावीरोराजाचरथिनांवरः ॥ द्युतिमंतोमहेष्वासाःसर्वेयुद्धविशारदाः १४ दृष्ट्वैवहिकुरूनेतान्व्यूढानीकान्प्रहारिणः ॥ हृषितानिचरोमाणिकश्मलंचागतंमम १५ ॥ वैशंपायनउवाच ॥ अविजातोविजातस्यमौर्ख्याद्धूर्तस्यपश्यतः ॥ परिदेवयतेमंदःसकाशेसव्यसाचिनः १६ त्रिगर्तान्मेपितायातःशून्येसंप्रणिधायमाम् ॥ सर्वांसेनामुपादायनमेसंतीहसैनिकाः १७ सोहमेकोबहून्बालःकृतास्त्रानकृतश्रमः ॥ प्रतियोद्धुंनशक्ष्यामिनिवर्तस्वबृहन्नले १८

कलिलांगहनाम् १२ । १३ । १४ कश्मलंमूर्च्छा १५ अविजातः जातंसामान्यंविगतंयस्मात्सविजातोऽसाधारणस्तदन्योऽविजातः साधारणःप्राकृतः । प्राचांतुसयकारः पाठः तदा वियातोधृष्टः । 'धृष्टेधृष्णुर्वियातश्च'इत्यमरः । अवियातोऽप्रगल्भः । धूर्तस्यछद्मवेषधारिणः १६ । १७ । १८

१९ । २० आमिषंमांसं तत्रयथागृध्राःपतंति तत्तुल्यानांगोलुब्धानां । पृथिव्यांनिमित्तभूतायां । एतेनाग्रेभाविसंग्रामेष्वपित्वांनेष्यामीत्युक्तम् २१ अभिनिर्यायाभिनिर्गत्य

॥ बृहन्नलोवाच ॥ भयेनदीनरूपोऽसिद्विषतांहर्षवर्द्धनः ॥ नचतावत्कृतंकर्मपरैःकंचिद्रणाजिरे १९ स्वयमेवचमामात्थवहमांकौरवान्प्रति ॥ सोऽहंत्वांतत्रने
ष्यामियत्रैतेबहुलाध्वजाः २० मध्यमामिषगृध्राणांकुरूणामाततायिनाम् ॥ नेष्यामित्वांमहाबाहोपृथिव्यामपियुध्यताम् २१ तथास्त्रीषुप्रतिश्रुत्यपौरुषंपुरु
षेषुच ॥ कत्थमानोभिनिर्यायकिमर्थंनयुयुत्ससे २२ नचेद्विजित्यगास्तास्त्वंगृहान्वैप्रतियास्यसि ॥ प्रहसिष्यंतिवीरास्त्वांनरानार्यश्चसंगताः २३ अहमप्य
त्रसैरंध्याख्यातासारथ्यकर्मणि ॥ नचशक्ष्याम्यनिर्जित्यगाःप्रयातुंपुरंप्रति २४ स्तोत्रेणचैवसैरंध्यास्तववाक्येनतेनच ॥ कथंनयुध्येयमहंकुरून्सर्वान्स्थि
रोभव २५ ॥ उत्तरउवाच ॥ काममहरंतुमत्स्यानांभूयांसःकुरवोधनम् ॥ प्रहसंतुचमांनार्योनरावाऽपिबृहन्नले २६ संग्रामेनचकार्यंमेगावोगच्छंतुचापिमे ॥ शू
न्यंमेनगरंचापिपितुश्चैवबिभेम्यहम् २७ ॥ वैशंपायनउवाच ॥ इत्युक्त्वाप्राद्रवद्भीतोरथात्प्रस्कंद्यकुंडली ॥ त्यक्त्वामानंचदर्पंचविसृज्यसशरंधनुः २८ ॥ बृ
हन्नलोवाच ॥ नैषशूरैःस्मृतोधर्मःक्षत्रियस्यपलायनम् ॥ श्रेयस्तुमरणंयुद्धेनभीतस्यपलायनम् २९ ॥ वैशंपायनउवाच ॥ एवमुक्त्वातुकौंतेयःसोऽवप्लुत्यरथो
त्तमात् ॥ तमन्वधावद्धावंतंराजपुत्रंधनंजयः ३० दीर्घांवेणींविधुन्वानःसाधुरक्तेचवाससी ॥ विधूयवेणींधावंतमजानंतोऽर्जुनंतदा ३१ सैनिकाःप्राहसन्केचि
त्तथारूपमवेक्ष्यतम् ॥ तंशीघ्रमभिधावंतंसंप्रेक्ष्यकुरवोऽब्रुवन् ३२ कएषवेषसंच्छन्नोभस्मन्येवहुताशनः ॥ किंचिदस्ययथापुंसःकिंचिदस्ययथास्त्रियः ३३
सारूप्यमर्जुनस्येवक्लीबरूपंबिभर्तिच ॥ तदेवैतच्छिरोग्रीवंतौबाहूपरिघोपमौ ॥ तद्वदेवास्यविक्रांतंनायमन्योधनंजयात् ३४ अमरेष्विवदेवेंद्रोमानुषेषुधनं
जयः ॥ एकःकोऽस्मानुपायायादन्योलोकेधनंजयात् ३५ एकःपुत्रोविराटस्यशून्येसन्निहितःपुरे ॥ सएषकिलनिर्यातोबालभावान्नपौरुषात् ३६ सत्रेणनूनं
छन्नंहिचरंतंपार्थमर्जुनम् ॥ उत्तरःसारथिंकृत्वानिर्यातोनगराद्बहिः ३७ सनोमन्यामहेदृष्ट्वाभीतएषपलायते ॥ तंनूनमेषधावंतंजिघृक्षतिधनंजयः ३८ ॥ वैशंपा
यनउवाच ॥ इतिस्मकुरवःसर्वेविमृशंतःपृथक्पृथक् ॥ नचव्यवसितुंकिंचिदुत्तरंशक्नुवंतिते ३९ छन्नंतथातंसत्रेणपांडवंप्रेक्ष्यभारत ॥ उत्तरंतुप्रधावंतमभिद्रुत्यध
नंजयः ॥ गत्वापदशतंतूर्णंकेशपक्षेपरामृशत् ४० सोऽर्जुनेनपरामृष्टःपर्यदेवयदार्त्तवत् ॥ बहुलंकृपणंचैवविराटस्यसुतस्तदा ४१ ॥ उत्तरउवाच ॥ शृणुया
स्त्वंहिकल्याणिबृहन्नलेसुमध्यमे ॥ निवर्त्तयरथंक्षिप्रंजीवन्भद्राणिपश्यति ४२ शातकुंभस्यशुद्धस्यशतंनिष्कान्ददामिते ॥ मणीनष्टौचवैदूर्यान्हेमबद्धा
न्महाप्रभान् ४३ हेमदंडप्रतिच्छन्नंरथंयुक्तंचसुव्रतैः ॥ मत्तांश्चदशमातंगान्मुंचमांत्वंबृहन्नले ४४ ॥ वैशंपायनउवाच ॥ एवमादीनिवाक्यानिविलपंतमचेत
सम् ॥ प्रहस्यपुरुषव्याघ्रोरथस्यांतिकमानयत् ४५

नयुयुत्ससेयोद्धुंनेच्छसि २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५

४६ । ४७ । ४८ । ४९ । ५० । ५१ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपे अष्टत्रिंशोऽध्यायः ॥ ३८ ॥ तामिति १ । २ । ३ । ४ । ५ । ६ । ७ वैशसंवैरं युद्धेकदनंवा ८ । ९ नदी जेति हेनदीजगांगेयहेभीष्म लंकेशस्यरावणस्य वनंतस्यारिर्नाशकोहनूमान् सःकेतुर्ध्वजोयस्यसः लंकेशवनारिकेतुः । नगोवृक्षस्तदाह्वयःवृक्षनामा । नामेतिवितर्के निश्चितंवाअर्जुनइत्यर्थः ।

अथैनमब्रवीत्पार्थोभयार्तंनष्टचेतसम् ॥ यदिनोत्सहसेयोद्धुंशत्रुभिःशत्रुकर्षण ॥ एहिमेत्वंहयान्यच्छयुध्यमानस्यशत्रुभिः ४६ प्रयाह्येतद्रथानीकंमद्बाहुबलरक्षितः ॥ अप्रधृष्यतमंघोरंगुप्तंवीरैर्महारथैः ४७ माभैस्त्वंराजपुत्राग्र्यक्षत्रियोऽसिपरंतप ॥ कथंपुरुषशार्दूलशत्रुमध्येविषीदसि ४८ अहंवैकुरुभिर्योत्स्येविजेष्यामिचतेपशून् ॥ प्रविश्यैतद्रथानीकमप्रधृष्यंदुरासदम् ४९ यंताभवनरश्रेष्ठयोत्स्येऽहंकुरुभिःसह ॥ एवंब्रुवाणोबीभत्सुर्वैराटिमपराजितः ॥ समाश्वास्यमुहूर्तंतमुत्तरंभरतर्षभ ५० ततएनंविचेष्टंतमकामंभयपीडितम् ॥ रथमारोपयामासपार्थःप्रहरतांवरः ५१ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिउत्तरगोग्रहेउत्तराश्वासनेअष्टत्रिंशोऽध्यायः ॥ ३८ ॥ वैशंपायनउवाच ॥ तंदृष्ट्वाक्लीबवेषेणरथस्थंनरपुंगवम् ॥ शमीमभिमुखंयांतंरथमारोप्यचोत्तरम् १ भीष्मद्रोणमुखास्तत्रकुरवोरथिसत्तमाः ॥ वित्रस्तमनसःसर्वेधनंजयकृताद्भयात् २ तानवेक्ष्यहतोत्साहानुत्पातानपिचाद्भुतान् ॥ गुरुःशस्त्रभृतांश्रेष्ठोभारद्वाजोऽभ्यभाषत ३ चंडाश्ववाताःसंवांतिरूक्षाःशर्करवर्षिणः ॥ भस्मवर्णप्रकाशेनतमसासंवृतंनभः ४ रूक्षवर्णाश्चजलदादृश्यंतेद्भुतदर्शनाः ॥ निःसरंतिचकोशेभ्यःशस्त्राणिविविधानिच ५ शिवाश्वविनदंत्येतादीप्तायांदिशिदारुणाः ॥ हयाश्चाश्रूणिमुंचंतिध्वजाःकंपंत्यकंपिताः ६ यादृशान्यत्ररूपाणिसंदृश्यंतेबहूनिच ॥ यत्ताभवंतास्तिष्ठंतुसाध्वसंसमुपस्थितम् ७ रक्षध्वमपिचात्मानंव्यूहध्वंवाहिनीमपि ॥ वैशसंचप्रतीक्षध्वंरक्षध्वंचापिगोधनम् ८ एषवीरोमहेष्वासःसर्वशस्त्रभृतांवरः ॥ आगतःक्लीबवेषेणपार्थोनास्त्यत्रसंशयः ९ नदीज लंकेशवनारिकेतुर्नगाह्वयो नाम नगारिसूनुः ॥ एषोंगनावेषधरः किरीटी जित्वाऽद्य यं नेष्यति चाद्य गा वः १० सएषपार्थोविक्रांतःसव्यसाचीपरंतपः ॥ नायुद्धेननिवर्ततसर्वैरपिसुरासुरैः ११ क्लेशितश्चवनेशूरोवासवेनापिशिक्षितः ॥ अमर्षवशमापन्नोवासवप्रतिमोयुधि ॥ नेहास्यप्रतियोद्धारमहंपश्यापिकौरवाः १२ महादेवोऽपिपार्थेनश्रूयतेयुधितोषितः ॥ किरातवेषप्रच्छन्नोगिरौहिमवतिप्रभुः १३ ॥ कर्णउवाच ॥ सदाभवान्फाल्गुनस्यगुणैरस्मान्विकत्थसे ॥ नचार्जुनःकलापूर्णोममदुर्योधनस्यच १४ ॥ दुर्योधनउवाच ॥ यद्येषपार्थोराधेयकृतंकार्यंभवेन्मम ॥ ज्ञाताःपुनश्चरिष्यंतिद्वादशाब्दान्विशांपते १५ अथैषकश्चिदेवान्यःक्लीबवेषेणमानवः ॥ शरैरेनंसुनिशितैःपातयिष्यामिभूतले १६ ॥ वैशंपायनउवाच ॥ तस्मिन्ब्रुवतितद्वाक्यंधार्तराष्ट्रेपरंतप ॥ भीष्मोद्रोणःकृपोद्रौणिःपौरुषंतदपूजयन् १७ ॥ इतिश्रीम० वि० प० गो० प० उत्तरगोग्रहेअर्जुनप्रशंसायामेकोनचत्वारिंशोऽध्यायः ॥३९॥

'शैलवृक्षौनगावगौ'इत्यमरः । नगारिरिंद्रस्तस्यसूनुः । एषःअंगनावेषधरः । किरीटीएतन्नामा यं जित्वा वःयुष्माकंगाःधेनूःनेष्यति तंदुर्योधनंअवपालय १० । ११ । १२ । १३ कलाषोडशोंऽशःपूर्णःकृत्स्नः १४ । १५ । १६ । १७ ॥ इतिविराटपर्वणि नीलकंठीये भारतभावदीपे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ ७ ॥

तामिति १ अवहर अवतारय २ बाहुविक्षेपंसोढुंनशक्ष्यंतीतिसंबंधः भूमिंजयहेउत्तर पलाशिनींबहुपत्रवतीं ३।४। ५ तृणराजस्तालस्तत्समं ६ महामात्रंअतिप्रमाणं ७ । ८ ॥ इतिविराटपर्वणि नीलकंठीयेभारतभावदीपे चत्वारिंशोऽध्यायः ॥ ४० ॥ ॥ ७ ॥ अस्मिन्निति १ आलब्धुंस्प्रष्टुं २ । ३ । ४ दायादंपुत्रं ५ । ६ । ७ अपहृत्यवृक्षादधआनीय ८ संनहनानि धनुर्षांबंधनानि ९

वैशंपायनउवाच ॥ तांशमीमुपसंगम्यपार्थोवैराटिमब्रवीत् ॥ सुकुमारंसमाज्ञायसंग्रामेनातिकोविदम् १ समादिष्टोमयाक्षिप्रंधनूंष्यवहरोत्तर ॥ नेमानिहित्वदी यानिसोढुंशक्ष्यंतिमेबलम् ॥ भारंचापिगुरुंवोढुंकुंजरंवाप्रमर्दितुम् २ ममवाबाहुविक्षेपंशत्रूनिहविजेष्यतः ॥ तस्माद्भूमिंजयारोहशमीमेतांपलाशिनीम् ३ अस्यांहिपांडुपुत्राणांधनूंषिनिहितान्युत ॥ युधिष्ठिरस्यभीमस्यबीभत्सोर्यमयोस्तथा ४ ध्वजाःशराश्चशूराणांदिव्यानिकवचानिच ॥ अत्रचैतन्महावीर्यंध नुःपार्थस्यगांडिवम् ५ एकंशतसहस्रेणसंमितंराष्ट्रवर्धनम् ॥ व्यायामसहमत्यर्थंतृणराजसमंमहत् ६ सर्वायुधमहामात्रंशत्रुसंबाधकारकम् ॥ सुवर्णविकृतंदि व्यंश्लक्ष्णमायतमव्रणम् ७ अलंभारंगुरुंवोढुंदारुणंचारुदर्शनम् ॥ तादृशान्येवसर्वाणिबलवंतिदृढानिच ॥ युधिष्ठिरस्यभीमस्यबीभत्सोर्यमयोस्तथा ८ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिउत्तरगोग्रहेअर्जुनास्त्रकथनेचत्वारिंशोऽध्यायः ॥ ४० ॥ ॥ उत्तरउवाच ॥ अस्मिन्वृक्षेकिलोद्बद्धंशरीरमि तिनःश्रुतम् ॥ तदहंराजपुत्रःसन्स्पृशेयंपाणिनाकथम् १ नैवंविधंमयायुक्तमालब्धुंक्षत्रयोनिना ॥ महताराजपुत्रेणमंत्रयज्ञविदासता २ स्पृष्टवंतंशरीरं मांशववाहमिवाशुचिम् ॥ कथंवाव्यवहार्यंवैकुर्वीथास्त्वंबृहन्नले ३ ॥ बृहन्नलोवाच ॥ व्यवहार्यश्चराजेंद्रशुचिश्चैवभविष्यसि ॥ धनूंष्येतानिमाभैस्त्वंशरीरंना त्रविद्यते ४ दायादंमत्स्यराजस्यकुलेजातंमनस्विनाम् ॥ त्वांकथंनिंदितंकर्मकारयेयंनृपात्मज ५ ॥ वैशंपायनउवाच ॥ एवमुक्तःसपार्थेनरथात्प्रस्कंद्यकुंड ली ॥ आरुरोहशमीवृक्षंवैराटिरवशस्तदा ६ तमन्वशासच्छत्रुघ्नोरथेतिष्ठन्धनंजयः ॥ अवरोपयवृक्षाग्राद्धनूंष्येतानिमाचिरम् ७ परिवेष्टनमेतेषांक्षिप्रंचैव व्यपानुद ॥ सोपहृत्यमहार्हाणिधनूंषिपृथुवक्षसाम् ॥ परिवेष्टनपत्राणिविमुच्यसमुपानयत् ८ तथासंनहनान्येषांपरिमुच्यसमंततः ॥ अपश्यद्गांडिवंतत्रच तुर्भिरपरैःसह ९ तेषांविमुच्यमानानांधनुषामर्कवर्चसाम् ॥ विनिश्चेरुःप्रभादिव्याग्रहाणामुदयेष्विव १० सतेषांरूपमालोक्यभोगिनामिवजृंभताम् ॥ हृष्टरोमा भयोद्विग्नःक्षणेनसमपद्यत ११ संस्पृश्यतानिचापानिभानुमंतिबृहंतिच ॥ वैराटिरर्जुनंराजन्निदंवचनमब्रवीत् १२ ॥ इ॰म॰ वि॰गो॰ उत्तरगोग्रहेअस्त्रारोप णेएकचत्वारिंशोऽध्यायः ॥ ४१ ॥ उत्तरउवाच ॥ बिंदवोजातरूपस्यशतंयस्मिन्निपातिताः ॥ सहस्रकोटिसौवर्णाःकस्यैतद्धनुरुत्तमम् १ वारणायत्रसौवर्णाः पृष्ठेभासंतिदंशिताः ॥ सुपार्श्वंसुग्रहंचैवकस्यैतद्धनुरुत्तमम् २

१० । ११ । १२ ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ७ ॥ कस्यजातरूपस्यजातकीर्तेः । 'रूपंस्वभावेसौंदर्येनालोकपशुशब्दयोः । ग्रंथावृत्तौनाटकादावाकारश्लोकयोरपि' इतिमेदिनी । बिंदवःसौवर्णाइतिसंबंधः । सहस्रेसहस्वत्यै बलवत्यैदीप्तिमत्यै वाकोटीप्रांतौ यस्यतत्सहस्रकोटि । 'सहोबलेज्योतिषिच' इतिमेदिनी । सहस्शब्दान्मत्वर्थीयोरप्रत्ययः १ दंशिताःभासमानाः सुग्रहं ग्रह्यतेऽस्मिन्निति ग्रहोमध्यं २

तपनीयस्यसुवर्णस्य इंद्रगोपकाःकीटविशेषाःरक्तपीतभास्वरवर्णाः ३ । ४ सौवर्णाःशलभाः सुवर्णःकृष्णागुरुवर्णद्रव्यं 'मीना' इतिसंज्ञितं तन्मयाः तेषुहिनीलवर्णेषुतपनीयाख्यस्वर्णभूषणानि शोभंते । 'सुवर्णश्चसुवर्णाचकृष्णागुरुमखांतरे' इतिविश्वः । सुवर्णमणयःस्वर्णबिंदवः शोभनवर्णमणिखचितत्वाद्वासुवर्णमणिचित्रत्वं ५ साहस्राःसहस्रशःसंख्याताः लोमवाहिनःपत्रवंतः लोमच्छेदिनइत्यन्येउपासंगेनिषंगे ६ विपाठाःस्थूलदंडाबाणविशेषाः । 'विपाठःस्थूलदंडःस्यात्'इतिकल्पद्रुः । गार्ध्रपत्राःगृध्रपत्रवाहिनः । शिलाशिताःशिलायांतीक्ष्णीकृताः । पीताःकर्मारेण तेजनजलंपायिताः । सर्वायसाःकेवलंलोहमयाः । काष्ठदंडरहिताइत्यर्थः ७ वराहकर्णाकारैःशल्यैः व्यामिश्रान्युक्तान् धारयते शरान्चित्ररूपानेवेतिभावः ८ चंद्रबिंबार्धवद्दर्शनंयेषांअर्धचंद्राकाराइत्यर्थः ९ पूर्वैरुपरिस्थैरर्धैःउपलक्षिताः सुवाससः सुपुंखाबाणाएवउत्तरैरग्रभागैर्हेमपुंखैः सुवर्णधाराचित्रितैः १० शिलीमेकी पृष्ठेचित्ररूपेणयस्यपरिचयार्थं शिलीमुखोभेक्यामुखमि

तपनीयस्यशुद्धस्यपृष्ठेयस्येंद्रगोपकाः ॥ पृष्ठेविभक्ताःशोभंतेकस्यैतद्धनुरुत्तमम् ३ सूर्यायत्रचसौवर्णास्त्रयोभासंतिदंशिताः ॥ तेजसाप्रज्वलंतोहिकस्यैतद्धनुरुत्तमम् ४ शलभायत्रसौवर्णास्तपनीयविभूषिताः ॥ सुवर्णमणिचित्रंचकस्यैतद्धनुरुत्तमम् ५ इमेचकस्यनाराचाःसहस्रालोमवाहिनः ॥ समंतात्कलधौताग्रा उपासंगेहिरण्मये ६ विपाठाःपृथवःकस्यगार्ध्रपत्राःशिलाशिताः ॥ हारिद्रवर्णाःसुमुखाःपीताःसर्वायसाःशराः ७ कस्यायमसितश्चापःपंचशार्दूललक्षणः ॥ वराहकर्णव्यामिश्रान्शरान्धारयतेदश ८ कस्येमेपृथवोदीर्घाश्चंद्रबिंबार्धदर्शनाः ॥ शतानिसप्ततिष्ठंतिनाराचारुधिराशनाः ९ कस्येमेशुकपत्राभैःपूर्वैरर्धैःसुवाससः॥उत्तरैरायसैःपीतैर्हेमपुंखैःशिलाशितैः १० गुरुभारसहोदिव्यःशात्रवाणांभयंकरः॥ कस्यायंसायकोदीर्घःशिलीपृष्ठःशिलीमुखः ११ वैयाघ्रकोशेनिहितोहेमचित्रत्सरुर्महान् ॥ सुफलश्चित्रकोशश्चकिंकिणीसायकोमहान् १२ कस्यहेमत्सरुर्दिव्यःखड्गःपरमनिर्मलः ॥ कस्यायंविमलःखड्गोगव्येकोशेसमर्पितः १३ हेमत्सरुरनाधृष्योनैषध्योभारसाधनः ॥ कस्यपांचनखेकोशेसायकोहेमविग्रहः १४ प्रमाणरूपसंपन्नःपीतआकाशसन्निभः ॥ कस्यहेममयेकोशेसुततेपावकप्रभे १५ निस्त्रिंशोऽयंगुरुःपीतःसायकःपरनिर्व्रणः ॥ कस्यायमसितःखड्गोहेमबिंदुभिरावृतः १६ आशीविषसमस्पर्शःपरकायप्रभेदनः ॥ गुरुभारसहोदिव्यःसपत्नानांभयप्रदः १७ निर्दिशस्वयथातत्त्वंमयापृष्टाबृहन्नले ॥ विस्मयोमेपरोजातोदृष्ट्वासर्वमिदंमहत् ॥ १८ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणि उत्तरवाक्यंनामद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ ॥ ५ ॥ ॥ बृहन्नलोवाच ॥ यन्मांपूर्वमिहापृच्छःशत्रुसेनापहारिणम् ॥ गांडीवमेतत्पार्थस्यलोकेषुविदितंधनुः १ सर्वायुधमहामात्रंशातकुंभपरिष्कृतम् ॥ एतत्तदर्जुनस्यासीद्गांडीवंपरमायुधम् २

वमुखंयस्य सायकःखड्गः । 'शरेखड्गेचसायकः'इत्यमर ११ वैयाघ्रकोशेव्याघ्रचर्मकोशे । 'त्सरुःखड्गादिमुष्टौस्यात्'इत्यमरः । सुफलःशोभनभल्लिकः । 'फलंशस्त्राग्रेव्युष्टिलाभयोः' इतिविश्वः । किंकिणीयुक्तः सायकः १२ गव्येगोचर्मजे १३ नैषध्योनिषधदेशजः पांचनखेअजचर्मजे । 'पंचनखोऽजेकूर्मे'इति विश्वः। हेमविग्रहःसुवर्णेनालंकृतदेहः १४ आकाशसन्निभःकृष्णभास्वरः १५ निस्त्रिंशःत्रिंशतोऽगुलिभ्योनिर्गतः त्रिंशदंगुलाधिकःसायकःखड्गः । परेषांशस्त्रेणनिर्गतोव्रणोयस्य परानभिभूतः । शिक्यइतिपाठे पुरुषद्वयेनोह्यमाना सांगीतिप्रसिद्धातद्योग्यः १६ । १७ । १८ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपेद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ अपहरतीत्यपहारीकालः सोऽस्त्यस्मिन्नित्यपहारिणं । पामादित्वान्मत्वर्थीयोनप्रत्ययः कालरूपीत्यर्थः १ २

धनुषांशतसहस्रेणलक्षेणसंमितं ३ । ४ । ५ त्रीणिवर्षाणिपंचशतंवर्षाणि प्रजापतिरधारयदितिसंबंधः । अत्रब्रह्मादीनांवर्षाणिदेवमानेनैवज्ञेयानि योह्यस्माकंसौरःसंवत्सरः सतेषामेकं दिनमितिशास्त्रप्रसिद्धं । पार्थःपंचचषष्टिंचेत्यत्रतुवर्षशद्बोवृष्टिपरः । तथाचसंवत्सरे वर्षद्वयंजायते । 'तथाहिएकेनवर्षेणतृप्तःशरदिव्रीह्याग्रयणंकरोति अपरेणतृप्तोवसंतेयवाग्रयणंकरोति' । तथाचाग्रयणंप्रकृत्य आश्वलायनःश्रुतिमुदाहरति । 'अपिहिदेवाआहुस्तृप्तोनूनं वर्षस्याग्रयणेनहियजते ' इति । तथान्यत्रापितदेवप्रकृत्यश्रुतं ' व्रीहिभिरिष्ट्वाव्रीहिभिरेवयजेताथ यवेभ्योयवैरिष्ट्वायवैरेवयजेतव्रीहिभ्यः' इति । एवंचैकस्मिन्संवत्सरे कर्कायनाद्येकंवर्षमपरंमकरायनादीतिद्वेवर्षे ततश्चसार्द्धद्वात्रिंशतासंवत्सरैःपंचषष्टिवर्षाणिभवंतीतियुक्तमुक्तं पार्थःपंचच षष्टिंचवर्षाणिएतद्धनुर्दधारेति । अन्येतुअतीतमनागतंचकालमेकीकृत्य पंचषष्टिसंवत्सरंधनुर्द्धारणंवर्णयंति । 'वर्षोऽस्त्रीभारतादौतुजंबूद्वीपाब्दवृष्टिषु'इतिमेदिनी । 'वृष्टिर्वर्षं'इत्यमरश्च । तत्र

यतच्छतसहस्रेणसंमितंराष्ट्रवर्द्धनम् ॥ येनदेवान्मनुष्यांश्चपार्थोविजयतेमृधे ३ चित्रमुच्चावचैर्वर्णैःश्लक्ष्णमायतमव्रणम् ॥ देवदानवगंधर्वैःपूजितंशाश्वतीः समाः ४ एतद्वर्षसहस्रंतुब्रह्मापूर्वमधारयत् ॥ ततोऽनंतरमेवाथप्रजापतिरधारयत ५ त्रीणिपंचशतंचैवशक्रोऽशीतिचपंचच ॥ सोमःपंचशतंराजातथैववरु णःशतम् ॥ पार्थःपंचचषष्टिंचवर्षाणिश्वेतवाहनः ६ महावीर्यंमहादिव्यमेतत्तद्धनुरुत्तमम् ॥ एतत्पार्थमनुप्राप्तंवरुणाच्चारुदर्शनम् ७ पूजितंसुरमर्त्येषुबिभ र्तिपरमंवपुः ॥ सुपार्श्वंभीमसेनस्यजातरूपग्रहंधनुः ॥ येनपार्थोऽजयत्कृत्स्नांदिशंप्राचींपरंतपः ८ इंद्रगोपकचित्रंचयदेतच्चारुदर्शनम् ॥ राज्ञोयुधिष्ठिरस्यै तद्वैराटेधनुरुत्तमम् ९ सूर्यायस्मिंस्तुसौवर्णाःप्रकाशंतेप्रकाशिनः ॥ तेजसाप्रज्वलंतोवैनकुलस्यैतदायुधम् १० शलभायत्रसौवर्णास्तपनीयविचित्रिताः ॥ एतन्माद्रीसुतस्यापिसहदेवस्यकार्मुकम् ११ येत्विमेक्षुरसंकाशाःसहस्रालोमवाहिनः ॥ एतेऽर्जुनस्यवैराटेशराःसर्पविषोपमाः १२ एतेज्वलंतःसंग्रामेतेजसा शीघ्रगामिनः ॥ भवंतिवीरस्याक्षय्याव्यूहतःसमरेरिपून् १३ येचेमेपृथवोदीर्घाश्चंद्रबिंबार्धदर्शनाः ॥ एतेभीमस्यनिशितारिपुक्षयकराःशराः १४ हारिद्रव र्णायेत्वेतेहेमपुंखाःशिलाशिताः ॥ नकुलस्यकलापोऽयंपंचशार्दूललक्षणः १५ येनासौव्यजयत्कृत्स्नांप्रतीचींदिशमाहवे ॥ कलापोह्येषतस्यासीन्माद्रीपुत्रस्य धीमतः १६ येत्विमेभास्कराकाराःसर्वपारसवाःशराः ॥ एतेचित्रक्रियोपेताःसहदेवस्यधीमतः १७ येत्विमेनिशिताःपीताःपृथवोदीर्घवाससः ॥ हेमपुंखास्त्रि पर्वाणोराज्ञएतेमहाशराः १८ यस्त्वयंसायकोदीर्घःशिलीपृष्ठःशिलीमुखः ॥ अर्जुनस्यैषसंग्रामेगुरुभारसहोदृढः १९ वैयाघ्रकोशःसुमहान्भीमसेनस्यसायकः ॥ गुरुभारसहोदिव्यःशात्रवाणांभयंकरः २० सुफलश्चित्रकोशश्चहेमत्सरुरनुत्तमः ॥ निस्त्रिंशःकौरवस्यैषधर्मराजस्यधीमतः २१

प्राचामतेऽधारयदितिभूतकालानुपपत्तिः । वक्तुःकदाचिदायुर्ज्ञानकल्पनेऽपि प्रतिपत्तुःपारोक्ष्येणार्जुनवयोविदोऽप्रतिपत्तिश्चेतिविचारणीयं । अस्माकंतुगांडीवलाभानंतरंगतेषु सार्द्धद्वात्रिंश द्वर्षेषु त्रयोदशवर्षाणिवनवासे । ब्राह्मणकार्यार्थमायुधागारंप्रविष्टस्यार्जुनस्य द्रौपदीधर्मराजयोःसहासनकालेऽनुप्रवेशनिमित्ते द्वादशवर्षाणि इतिपंचाविंशतिर्गतानि । अन्यान्यपिदिग्विजय राजसूयराज्यकरणादिकाले प्रागेवसार्द्धसप्तवर्षाणिगतानीतिसमुन्नेयं ६ । ७ । ८ । ९ । १० । ११ सहस्राःतेजस्विनोदृढाः सहस्रशःसंमितावा १२ व्यूहतःक्षिपतः १३ । १४ । १५ १६ सर्वपारसवाः सर्वंचतत्पारं परसमूहं सुवते हिंसंतितेसर्वपारसवाः सर्वशत्रुसमूहनाशकराः १७ । १८ । १९ । २० । २१

चित्रयोधने विचित्रयुद्धनिमित्तं निहितःपालितः २२ । २३ ॥ इतिश्रीमहाभारतेविराटपर्वणि नीलकंठीयेभारतभावदीपे त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ सुवर्णेति १ । २ पराकीर्यअपास्य ३ । ४ । ५ । ६ । ७ । ८ नररूपस्यममहाविष्णोर्नामानि संकटेस्मर्यमाणानि विजयावहानीत्यभिप्रेत्याह एकाग्रेति ९ । १० । ११ । १२ । १३ । १४ । १५ नक्षत्राभ्यांताराभ्यां

यस्तुपांचनखेकोशेनिहिताश्चित्रयोधने ॥ नकुलस्यैषानिस्त्रिंशोगुरुभारसहोदृढः २२ यस्त्वयंविपुलःखङ्गोगव्येकोशेसमर्पितः ॥ सहदेवस्यविद्धयेनंसर्वभारसहंदृढम् २३ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिउत्तरगोग्रहेआयुधवर्णनंनामत्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ छ ॥ ॥ उत्तरउवाच ॥ सुवर्णविकृतानीमान्यायुधानिमहात्मनः ॥ रुचिराणिप्रकाशंतेपार्थानामाशुकारिणाम् १ क्वनुस्विदर्जुनःपार्थःकौरव्योवायुधिष्ठिरः ॥ नकुलःसहदेवश्चभीमसेनश्चपांडवः २ सर्वएवमहात्मानःसर्वामित्रविनाशनाः ॥ राज्यमक्षैःपराकीर्यनश्रूयंतेकथंचन ३ द्रौपदीक्वचपांचालीस्त्रीरत्नमितिविश्रुता ॥ जितानक्षैस्तदाकृष्णातानेवान्वगमद्वनम् ४ ॥ अर्जुनउवाच ॥ अहमस्म्यर्जुनःपार्थःसभास्तारोयुधिष्ठिरः ॥ बल्लवोभीमसेनस्तुपितुस्तेरसपाचकः ५ अश्वबंधोऽथनकुलःसहदेवस्तुगोकुले ॥ सैरंध्रीद्रौपदींविद्धियत्कृतेकीचकाहताः ६ ॥ उत्तरउवाच ॥ दशपार्थस्यनामानियानिपूर्वंश्रुतानिमे ॥ प्रब्रूयास्तानियदिमेश्रद्दध्यांसर्वमेवते ७ अर्जुनउवाच ॥ हंततेऽहंसमाचक्षेदशनामानियानिमे ॥ वैराटेशृणुतानित्वंयानिपूर्वंश्रुतानिते ८ एकाग्रमानसोभूत्वाशृणुसर्वंसमाहितः ॥ अर्जुनःफाल्गुनोजिष्णुःकिरीटीश्वेतवाहनः ॥ बीभत्सुर्विजयःकृष्णःसव्यसाचीधनंजयः ९ ॥ उत्तरउवाच ॥ केनासिविजयोनामकेनासिश्वेतवाहनः ॥ किरीटीनामकेनासिसव्यसाचीकथंभवान् १० ॥ अर्जुनःफाल्गुनोजिष्णुःकृष्णोबीभत्सुरेवच ॥ धनंजयश्चकेनासिब्रूहितन्ममतत्त्वतः ११ श्रुतामेतस्यवीरस्यकेवलानामहेतवः ॥ तत्सर्वंयदिमेब्रूयाःश्रद्दध्यांसर्वमेवते १२ ॥ अर्जुनउवाच ॥ सर्वान्जनपदान्जित्वावित्तमादायकेवलम् ॥ मध्येधनस्यतिष्ठामितेनाहुर्मांधनंजयम् १३ अभिप्रयामिसंग्रामेयदहंयुद्धदुर्मदान् ॥ नाजित्वाविनिवर्तामितेनमांविजयंविदुः १४ श्वेताःकांचनसन्नाहारथेयुज्यंतिमेहयाः ॥ संग्रामेयुद्धयमानस्यतेनाहंश्वेतवाहनः १५ उत्तराभ्यांफल्गुनीभ्यांनक्षत्राभ्यामहंदिवा ॥ जातोहिमवतःपृष्ठेतेनमांफाल्गुनंविदुः १६ पुराशक्रेणमेदत्तंयुध्यतोदानवर्षभैः ॥ किरीटंमूर्ध्निसूर्याभंतेनाहुर्मांकिरीटिनम् १७ नकुर्यांकर्मबीभत्संयुध्यमानःकथंचन ॥ तेनदेवमनुष्येषुबीभत्सुरितिविश्रुतः १८ उभौमेदक्षिणौपाणीगांडीवस्यविकर्षणे ॥ तेनदेवमनुष्येषुसव्यसाचीतिमांविदुः १९ पृथिव्यांचतुरंतायांवर्णोमेदुर्लभःसमः ॥ करोमिकर्मशुक्लंचतस्मान्मामर्जुनंविदुः २० अहंदुरापोदुर्धर्षोदमनःपाकशासनिः ॥ तेनदेवमनुष्येषुजिष्णुर्नामास्मिविश्रुतः २१

तत्रस्थितेचंद्रेइत्यर्थः उत्तराभ्यांचपूर्वाभ्यामितिपाठे नक्षत्रसंधावित्यर्थः १६ । १७ बीभत्सुरितिभदिकल्याणेसुखेचेत्यस्यसन्निरूपं १८ विकर्षणेशक्तावितिशेषः सव्येनवामेनापिहस्तेनसचितुंज्याकर्षणादिक्रियायांसंबंद्धुंशीलमस्येतिसव्यसाचीत्यर्थः १९ अर्जुनइति ऋजगतिस्थानार्जनोपार्जनेष्वित्यतउनन्प्रत्ययेभवति वर्णोदीप्तिःसमऋजुः दीप्तिमत्त्वात्समत्वात्शुद्धकर्मकरत्वाच्चार्जुनइत्यर्थः २० जिष्णुर्जयशीलः २१

कृष्णावदातस्यकृष्णभास्वरवर्णस्य कर्षतिचित्तमिति मनोहरत्वाद्वाकृष्णइत्याह प्रियत्वादिति २२। २३ नागराजऐरावतस्तस्येवकरोपमा हस्तयोःसादृश्यंयस्य हस्तिहस्तोपमकरेत्यर्थः २४ कर्मदिग्विजयादि २५ ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपेचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ आस्थायेति १ नुदामिदूरीकरोमि २ भैरवंभयानकंमहत्कर्मकुर्वाणम् ३ उपासंगान्तूणीरान् ४ गृह्यगृहीत्वा शीघ्रेणवेगेन ततःशमीतोऽवातरत् । इतरेषामायुधानितत्रनिधायेतिशेषः ५ अवजेष्यामिहेलयाजेष्यामि ६ त्वंतुभयंत्यजेत्याह संकल्पेतित्रिभिः इदंमयागुप्तंरक्षितंरथोपस्थं रथोपरिभागस्तेतवनगरंनगरवद्रक्षकंभविष्यति त त्ररथांगेषुनगरांगसंपातिमाह संकल्पपक्षविक्षेपमिति संकल्पःसम्यक्कल्पनंचक्राक्षध्वजकूबरयुगादीनामंगानांदा

कृष्णइत्येवदशमंनामचक्रेपितामम ॥ कृष्णावदातस्यततःप्रियत्वाद्बालकस्यवै २२ ॥ वैशंपायनउवाच ॥ ततःसपार्थंवैराटिरभ्यवादयदंतिकात् ॥ अहंभूमिंजयोनामनाम्नाहमपिचोत्तरः २३ दिष्ट्यात्वांपार्थपश्यामिस्वागतंतेधनंजय ॥ लोहिताक्षमहाबाहोनागराजकरोपम २४ यदज्ञानादवोचंत्वंक्षंतुमर्हसितन्मम ॥ यतस्त्वयाकृतंपूर्वंचित्रंकर्मसुदुष्करम् ॥ अतोभयंव्यतीतंमेप्रीतिश्चपरमात्वयि २५ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिउत्तरगोग्रहेअर्जुनपरिचयेचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ॥ ७ ॥ ॥ उत्तरउवाच ॥ आस्थायरुचिरंवीररथंसारथिनामया ॥ कतमंयास्यसेऽनीकमुक्तोयास्याम्यहंत्वया १ ॥ अर्जुनउवाच ॥ प्रीतोऽस्मिपुरुषव्याघ्रनभयंविद्यतेतव ॥ सर्वान्नुदामितेशत्रून्रणेरणविशारद २ स्वस्थोभवमहाबाहोपश्यमांशत्रुभिःसह ॥ युध्यमानंविमर्देऽस्मिन्कुर्वाणंभैरवंमहत् ३ एतान्सर्वानुपासंगान्क्षिप्रंबध्नीहिमेरथे ॥ एकंचाहरनिस्त्रिंशंजातरूपपरिष्कृतम् ४ ॥ वैशंपायनउवाच ॥ अर्जुनस्यवचःश्रुत्वात्वरावानुत्तरस्तदा ॥ अर्जुनस्यायुधान्गृह्यशीघ्रेणावातरत्ततः ५ ॥ अर्जुनउवाच ॥ अहंवैकुरुभिर्योत्स्याम्यवजेष्यामितेपशून् ६ संकल्पपक्षविक्षेपंबाहुप्राकारतोरणम् ॥ त्रिदंडतूणसंबाधमनेकध्वजसंकुलम् ७ ज्याक्षेपणंक्रोधकृतंनेमीनिनददुंदुभिः ॥ नगरंतेमयागुप्तंरथोपस्थंभविष्यति ८ अधिष्ठितोमयासंख्येरथोगांडीवधन्वना ॥ अजेयःशत्रुसैन्यानांवैराटेव्येतुतेभयम् ९ ॥ उत्तरउवाच ॥ बिभेमिनाहमेतेषांजानामित्वांस्थिरंयुधि ॥ केशवेनापिसंग्रामेसाक्षादिंद्रेणवासमम् १० इदंतुचिंतयन्नेवंपरिमुह्यामिकेवलम् ॥ निश्चयंचापिदुर्मेधानगच्छामिकथंचन ११ एवंयुक्तांगरूपस्यलक्षणैःसूचितस्यच ॥ केनकर्मविपाकेनक्लीबत्वमिदमागतम् १२ मन्येत्वांक्लीबवेषेणचरंतंशूलपाणिनम् ॥ गंधर्वराजप्रतिमंदेवंवाऽपिशतक्रतुम् १३

र्ध्वंनसमर्थनं तदेवपक्षयोर्वीथीनांपार्श्वयोर्विक्षेपोविस्तारोयस्मिन् । बाहूएवस्वीयौबाहुतुल्यत्वाद्वांधवाएववाप्राकारः पुरपरिधिभित्तिस्तस्मिंस्तोरणंपुरद्वारंयस्मिन् रथिसारथ्योरापिरथांगत्वविवक्षयाएतदुक्तं । त्रिदंडः ईषातदुभयपार्श्वदारुणीचेतिमिलित्वात्रिदंडउच्यते सचतूणोनिषंगश्चताभ्यांसंबाधंसंकटंदुष्प्रवेशं । पक्षेत्रिदंडंसैन्यत्रयं रथिनांहस्तिसादिनांहयसादिनांचेतित्रीणिसैन्यानि तेषांतूणोपलक्षितानिआयुधानितैःसंबाधं । अनेकध्वजसंकुलंबहुध्वजव्याप्तं अनेकेनअनन्येनध्वजेनवानरेण संकुलंभयंकरं । 'एकेमुख्यान्यकेवलाः' इतिनानार्थः ७ ज्याघनुर्मौर्वीसैवक्षेपणानिगोलासनानि नालिकाख्यानियस्मिन् । क्रोधेनपरजिघांसाहेतुनाचित्तवृत्तिविशेषेणनिमित्तभूतेन कृतंपरिष्कृतंद्वयमपि ८ फलितमाह अधिष्ठितइति ९ केशवेनइंद्रेणवा समंसार्धं संग्रामेत्वांस्थिरंजानामि १० । ११ युक्तांगरूपस्य युक्तानिसमीचीनान्यंगानियुद्धांगानि शस्त्रास्त्रनैपुणादीनि रूपमाकृतिश्चयस्य लक्षणैःपंचरक्तत्वादिभिः १२ । १३

१४ परवान्नाथवान् उत्तीर्णमापद्भ्यइतिशेषः १९ । १६ । १७ शत्रुरथारुजानशत्रुरथभंजकान् मूलविभुजादित्वात्कः तीर्थतोगुरुतः १८ । १९ यातेगमने पदंपदंसर्वमपिपदं भूमौक्षिप्तं ततउद्गृहीतंवा नपश्यंतिवेगवत्त्वात् सुग्रीवमेघपुष्पशैब्यबलाहकाभगवतोऽश्वास्तत्साम्यमेषांवाहानामुक्तम् २० । २१ पार्ष्णिपुरःस्थितयोरश्वयोःपृष्ठभागं पाश्चात्यंयुगमितियावत् ।



॥ अर्जुनउवाच ॥ भ्रातुर्नियोगाज्ज्येष्ठस्यसंवत्सरमिदंव्रतम् ॥ चरामिव्रतचर्यंचसत्यमेतद्ब्रवीमिते १४ नास्मिक्लीबोमहाबाहोपरवान्धर्मसंयुतः ॥ समाप्तव्रतमुत्तीर्णंविद्धिमांत्वंनृपात्मज १५ ॥ उत्तरउवाच ॥ परमोऽनुग्रहोमेऽद्ययत्तर्कोनमेवृथा ॥ नहीदृशाःक्लीबरूपाभवंतिनरोत्तम १६ सहायवानस्मिरणेयुध्येयममरैरपि ॥ साध्वसंहिप्रनष्टंमेकिंकरोमिब्रवीहिमे १७ अहंतेसंग्रहीष्यामिहयानशत्रुरथारुजान् ॥ शिक्षितोह्यस्मिसारथ्येतीर्थतःपुरुषर्षभ १८ दारुकोवासुदेवस्ययथाशक्रस्यमातलिः ॥ तथामांविद्धिसारथ्येशिक्षितंनरपुंगव १९ यस्ययातेनपश्यंतिभूमौक्षिप्तंपदंपदम् ॥ दक्षिणांयोधुरंयुक्तःसुग्रीवसदृशोहयः २० योऽयंधुरंधुर्यवरोवामांवहतिशोभनः ॥ तंमन्येमेघपुष्पस्यजवेनसदृशंहयम् २१ योऽयंकांचनसंनाहःपार्ष्णिंवहतिशोभनः ॥ समंशैब्यस्यतंमन्येजवेनबलवत्तरम् २२ योऽयंवहतिमेपार्ष्णिंदक्षिणामभितःस्थितः ॥ बलाहकादपिमतःसजवेवीर्यवत्तरः २३ त्वामेवायंरथोवोढुंसंग्रामेऽर्हतिधन्विनम् ॥ त्वंचेमंरथमास्थाययोद्धुमर्होमतोमम २४ ॥ वैशंपायनउवाच ॥ ततोविमुच्यबाहुभ्यांवलयानिसवीर्यवान् ॥ चित्रेकांचनसन्नाहेप्रत्यमुंचत्तदातले २५ कृष्णान्भंगिमतःकेशान्श्वेतेनोद्ग्रथ्यवाससा ॥ अथासौप्राङ्मुखोभूत्वाशुचिःप्रयतमानसः ॥ अभिदध्यौमहाबाहुःसर्वास्त्राणिरथोत्तमे २६ ऊचुश्चपार्थंसर्वाणिप्रांजलीनिनृपात्मजम् ॥ इमेस्मपरमोदाराःकिंकराःपांडुनंदन २७ प्रणिपत्यततःपार्थःसमालभ्यचपाणिना ॥ सर्वाणिमानसानीहभवतेत्यभ्यभाषत २८ प्रतिगृह्यततोऽस्त्राणिप्रहृष्टवदनोऽभवत् ॥ अधिज्यंतरसाकृत्वागांडीवंव्याक्षिपद्धनुः २९ तस्यविक्षिप्यमाणस्यधनुषोऽभून्महाध्वनिः ॥ यथाशैलस्यमहतःशैलेनैवावजघ्नतः ३० सनिर्घातोऽभवद्भूमिर्दिक्षुवायुर्ववौभृशम् ॥ पपातमहतीचोल्कादिशोनप्रचकाशिरे ॥ भ्रांतध्वजंखंतदासीत्प्रकंपितमहाद्रुमम् ३१ तंशब्दंकुरवोऽजानन्विस्फोटमशनेरिव ॥ यदर्जुनोधनुःश्रेष्ठंबाहुभ्यामाक्षिपद्रथे ३२ ॥ उत्तरउवाच ॥ एकस्त्वंपांडवश्रेष्ठबहूनेतान्महारथान् ॥ कथंजेष्यसिसंग्रामेसर्वशस्त्रास्त्रपारगान् ३३ असहायोऽसिकौंतेयससहायाश्चकौरवाः ॥ अतएवमहाबाहोभीतस्तिष्ठामितेऽग्रतः ३४ उवाचपार्थोमाभैषीःप्रहस्यस्वनवत्तदा ३५

'पार्ष्णिःस्यादुन्मदास्त्रियां । स्त्रियांद्वयोःसैन्यपृष्ठे'इतिमेदिनी २२ । २३ । २४ पर्यमुंचत्तदाशुभेइतिपाठेतु कुंडलेइतिशेषः २५ भंगिमतःकौटिल्यवतः अभिदध्यौस्मृतवान् २६ । २७ मानसानिप्रयोजनकालेस्मृतिगोचराणि २८ प्रतिगृह्यअनुकूलानिकृत्वा व्याक्षिपत्टणत्कारितवान् २९ अवजघ्नतःअवहन्यमानस्य अभिनिघ्नतइतिपाठांतरम् ३० भूमित्भूविदारकः प्रचकाशिरे प्रकाशवत्योऽभूवन् भ्रांताइवश्चलिताध्वजायस्मिन् एतेनपरसैन्यवाहेषुशब्दजात्रासादुत्पथगामित्वंव्यज्यते प्रकंपितमहाद्रुममित्यनेनभूमिकंपोव्यज्यते ३१ । ३२ । ३३ । ३४ । ३५

३६ । ३७ । ३८ । ३९ । ४० । ४१ ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपे पंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ छ ॥ उत्तरमिति १ सिंहंसिंहाकारं २ दैवींमायामित्यद्भुतत्वंध्वजस्य दर्शितं । मायामयइवध्वजोऽद्भुतइत्यर्थः । विश्वकर्मणाब्रह्मणाभौमनेनवा । काचनंकांचनवर्णं । सिंहंहिंस्रंलांगूलं यस्यपुच्छविक्षेपणेनैवबहून्हस्त्यादीन्पोथयंतमित्यर्थः वानरलक्षणंवानरस्व

युध्यमानस्यमेवीरगंधर्वैःसुमहाबलैः ॥ सहायोघोषयात्रायांकस्तदाऽऽसीत्सखामम ३६ तथाप्रतिभयेतस्मिन्देवदानवसंकुले ॥ खांडवेयुध्यमानस्यकस्तदासीत्सखामम ३७ निवातकवचैःसार्धंपौलोमैश्चमहाबलैः ॥ युध्यतोदेवराजार्थेकःसहायस्तदाऽभवत् ३८ स्वयंवरेतुपांचाल्याराजभिःसहसंयुगे ॥ युध्यतोबहुभिस्तातकःसहायस्तदाऽभवत् ३९ उपजीव्यगुरुंद्रोणंशक्रंवैश्रवणंयमम् ॥ वरुणंपावकंचैवकृपंकृष्णंचमाधवम् ४० पिनाकपाणिनंचैवकथमेतान्नयोधये ॥ रथंवाहयमेशीघ्रंव्येतुतेमानसोज्वरः ४१ ॥ इतिश्रीमहाभारतेविरा० गोहरणप० उत्तरगोग्रहेउत्तरार्जुनयोर्वाक्यंनामपंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ ॥ छ ॥

वैशंपायनउवाच ॥ उत्तरंसारथिंकृत्वाशमींकृत्वाप्रदक्षिणम् ॥ आयुधंसर्वमादायप्रययौपांडवर्षभः १ ध्वजंसिंहंरथात्तस्मादपनीयमहारथः ॥ प्रणिधायशमीमूलेप्रायादुत्तरसारथिः २ दैवींमायांरथेयुक्त्वांविहितांविश्वकर्मणा ॥ कांचनंसिंहलांगूलंध्वजंवानरलक्षणम् ३ मनसाचिंतयामासप्रसादंपावकस्यच ॥ सचतच्चिंतितंज्ञात्वाध्वजेभूतान्यदेशयत् ४ सपताकंविचित्रांगंसोपासंगंमहाबलम् ॥ खात्पपातरथेतूर्णंदिव्यरूपंमनोरमम् ५ रथंतमागतंदृष्ट्वादक्षिणंप्राकरोत्तदा ॥ रथमास्थायबीभत्सुःकौंतेयःश्वेतवाहनः ६ बद्धगोधांगुलित्राणःप्रगृहीतशरासनः ॥ ततःप्रायादुदीचींचकपिप्रवरकेतनः ७ स्वनवंतंमहाशंखंबलवानरिमर्दनः ॥ प्राधमद्बलमास्थायद्विषतांलोमहर्षणम् ८ ततस्तेजवनाधुर्याजानुभ्यामगमन्महीम् ॥ उत्तरश्चापिसंत्रस्तोरथोपस्थउपाविशत् ९ संस्थाप्यचाश्वान्कौंतेयःसमुद्यम्यचरश्मिभिः ॥ उत्तरंचपरिष्वज्यसमाश्वासयदर्जुनः १० ॥ अर्जुनउवाच ॥ माभैस्त्वंराजपुत्राग्र्यक्षत्रियोऽसिपरंतप ॥ कथंपुरुषव्याघ्रशत्रुमध्येविषीदसि ११ श्रुतास्तेशंखशब्दाश्चभेरीशब्दाश्चपुष्कलाः ॥ कुंजराणांचनदतांव्यूढानीकेषुतिष्ठताम् १२ सत्वंकथमिहानेनशंखशब्देनभीषितः ॥ विवर्णरूपोवित्रस्तःपुरुषःप्राकृतोयथा १३ ॥ उत्तरउवाच ॥ श्रुतामेशंखशब्दाश्चभेरीशब्दाश्चपुष्कलाः ॥ कुंजराणांचनिनदतांव्यूढानीकेषुतिष्ठताम् १४ नैवंविधःशंखशब्दःपुराजातुमयाश्रुतः ॥ ध्वजस्यचापिरूपंमेदृष्टपूर्वंनहीदृशम् १५ धनुषश्चैवनिर्घोषःश्रुतपूर्वोनमेक्वचित् ॥ अस्यशंखस्यशब्देनधनुषोनिःस्वनेनच १६ अमानुषाणांशब्देनभूतानांध्वजवासिनाम् ॥ रथस्यचनिनादेनमनोमुह्यतिमेभृशम् १७ व्याकुलाश्चदिशःसर्वाहृदयंव्यथतीवमे ॥ ध्वजेनपिहिताःसर्वादिशोनप्रतिभांतिमे १८ गांडीवस्यचशब्देनकर्णौमेबधिरीकृतौ ॥ समुहूर्तंप्रयातंतुपार्थोवैराटिमब्रवीत् १९ ॥ अर्जुनउवाच ॥ एकांतंरथमास्थायपद्भ्यांत्वमपीडयन् ॥ दृढंचरश्मीन्संयच्छशंखंध्मास्याम्यहंपुनः २०

रूपं ३ प्रसादंप्रसादप्राप्तं सःपावकः । तच्चिंतितंअर्जुनचिंतितं । अदेशयत्अयोजयत् ४ । ५ । ६ । ७ । ८ तेजवनाःप्रसिद्धाः वेगवंतोऽग्निदत्तरथस्थाः ९ संस्थाप्ययथावत्कृत्वा १०। ११।१२ । १३।१४ । १५।१६।१७। १८।१९ एकांतंसुदृढं सप्तम्यंतपाठस्तुलेखकप्रमादः रथंसुदृढंअवलंब्येत्यर्थः २०

२१ । २२ । २३ । २४ । २५ । २६ । २७ अनाहतःअक्षतोधावति २८ । २९ ज्योतींषि सूर्यचक्षुर्वाङ्मनांसि ३० । ३१ । ३२ ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपे षट्चत्वारिं शोऽध्यायः ॥ ४६ ॥ ७ ॥ अथेति १ आचार्यैर्द्रोणंकृपंचप्रतिमयाऽयमर्थउक्तः । पाठांतरेऽयमाचार्योऽस्मिन्नर्थेविषये मयाकर्णेनचोक्तइतियोजना २।३।४।५ हीनेति नजातमधिकंवाऽज्ञातवासकालं ज्ञातुमर्हति ६ तत्रऊनपक्षेइष्टमेवासिद्धं अधिकपक्षेऽपिदोषमाह अर्थानामिति द्वैधेद्विप्रकारत्वेसंशयोभवति अर्थानांप्रयोजनानां अयंभावः । यदितेनिस्तीर्णप्रतिज्ञास्तर्हितेषां स्वां

॥ वैशंपायनउवाच ॥ ततःशंखमुपाध्मासीद्दारयन्निवपर्वतान् ॥ गुहागिरीणांचतदादिशःशैलांस्तथैवच ॥ उत्तरश्चापिसंलीनोरथोपस्थउपाविशत् २१ तस्य शंखस्यशब्देनरथनेमिस्वनेनच ॥ गांडीवस्यचघोषेणपृथिवीसमकंपत २२ तंसमाश्वासयामासपुनरेवधनंजयः २३ ॥ द्रोणउवाच ॥ यथारथस्यनिर्घोषो यथामेघउदीर्यते ॥ कंपतेचयथाभूमिर्नैषोऽन्यःसव्यसाचिनः २४ शस्त्राणिनप्रकाशंतेनप्रहृष्यंतिवाजिनः ॥ अग्नयश्चनभासंतेसमिद्धास्तन्नशोभनम् २५ प्रत्यादित्यंचनदंत्येतेमृगाघोरप्रवादिनः ॥ ध्वजेषुचनिलीयंतेवायसास्तन्नशोभनम् २६ शकुनाश्चापसव्यानोवेदयंतिमहद्भयम् २७ गोमायुरेषसेनायारुदन्मध्ये नधावति ॥ अनाहतश्चनिष्क्रांतोमहद्वेदयतेभयम् २८ भवतांरोमकूपाणिप्रहृष्टान्युपलक्षये ॥ ध्रुवंविनाशोयुद्धेनक्षत्रियाणांप्रदृश्यते २९ ज्योतींषिनप्रकाशंतेदारुणामृगपक्षिणः ॥ उत्पाताविविधाघोरादृश्यंतेक्षत्रनाशनाः ३० विशेषतइहास्माकंनिमित्तानिविनाशने ॥ उल्काभिश्चप्रदीप्ताभिर्बाध्यतेपृतनातव ॥ वाहनान्यप्रहृष्टानिरुदंतीवविशांपते ३१ उपासतेचसैन्यानिगृध्रास्तवसमंततः ॥ तप्स्यसेवाहिनींदृष्ट्वापार्थबाणप्रपीडिताम् ॥ पराभूताचवःसेनानकश्चियोद्धुमिच्छति ३२ विवर्णमुखभूयिष्ठाःसर्वेयोधाविचेतसः ॥ गाःसंप्रस्थाप्यतिष्ठामोव्यूढानीकाःप्रहारिणः ३३ ॥ इति०म०विरा०गो०उत्तरगोग्रहेऔत्पातिको नामषट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ वैशंपायनउवाच ॥ अथदुर्योधनोराजासमरेभीष्ममब्रवीत् ॥ द्रोणंचरथशार्दूलंकृपंचसुमहारथम् १ उक्तोऽयमर्थआचार्यैर्मयाकर्णेनचासकृत् ॥ पुनरेवप्रवक्ष्यामिनहितृप्यामितंब्रुवन् २ पराभूतैर्हिवस्तव्यंतैश्चद्वादशवत्सरान् ॥ वनेजनपदेज्ञातैरेषएवपणोहिनः ३ तेषांनतावन्निर्वृत्तंवर्ततेतुत्रयोदशम् ॥ अज्ञातवासोबीभत्सुरथास्माभिःसमागतः ४ अनिवृत्तेतुनिर्वासेयदिबीभत्सुरागतः ॥ पुनर्द्वादशवर्षाणिवनेवत्स्यंतिपांडवाः ५ लोभाद्वातेनजानीयुरस्मान्वामोहआविशत् ॥ हीनातिरिक्तमेतेषांभीष्मोवेदितुमर्हति ६ अर्थानांचपुनर्द्वैधेनित्यंभवतिसंशयः ॥ अन्यथाचिंतितोह्यर्थः पुनर्भवतिसोऽन्यथा ७ उत्तरंमार्गमाणानांमत्स्यानांचयुयुत्सताम् ॥ यदिबीभत्सुरायातस्तदाकस्यापराङ्मुखः ८ त्रिगर्तानांवयंहेतोर्मत्स्यान्योद्धुमिहागताः ॥ मत्स्यानांविप्रकारांस्तेबहूनस्मानकीर्त्तयन् ९

शलाभार्थमासुपगतानांमत्प्रसादतस्तत्प्राप्तिरप्राप्तिर्वेतिद्वैधेसंभवति संशयाक्रांतानामकस्माद्युद्धार्थमागमनंदोषएवेति । पूर्ववैरेणसत्यपिसंशयेऽस्मज्जिघांसयाआगतानांपराजयोऽपिसंभाव्यतइत्याहान्यथेति । अन्यायेनयुध्यतःपराजयेऽप्यधिकैवनष्टिरस्तीतिभावः ७ उत्तरंगोग्रहंमार्गमाणानामिच्छतामस्माकं अनादरेषष्ठी अस्माननादृत्येत्यर्थः । वालिसुग्रीवयोर्युद्धेप्राविशन् रामइवार्जुनोऽपिकुरुमत्स्यसंनिपाते प्रविशन्नपराधीस्यादित्यर्थः ८ ननुतर्हिमत्स्यत्रिगर्त्तविमर्दैकुरुभिरपिकिमर्थंगंतव्यमित्याशंक्याह त्रिगर्त्तानामित्यादिना तेतवसमक्षमितिशेषः ९

तेषांत्रिगर्त्तानामर्थे तत् मत्स्यैःसहयुद्धंप्रतिश्रुतं १० नकेवलंमित्रपक्षपातमात्रमस्माकमस्ति अपितुस्वार्थोऽप्यस्तीत्याह अष्टम्यामिति तथाचस्वार्थंयुद्धचतांनास्माकमपराधोस्ति । मत्स्यैगवां त्रिगर्त्तैर्हृतानांपदंस्मागंगतेसतिअस्माभिरिमागावोगृहीतव्याः ११ तेत्रिगर्त्ताःउपसंधायवंचयित्वामत्स्येनसंगतंस्नेहंकुर्युः सर्वथापक्षत्रयेऽपिअस्माभिरिदानींयोद्धव्यमेवेत्यर्थः १२ तान्त्रिगर्त्तान् अपाहायगोभिःसहउपेक्ष्य केवलंरात्रिंरात्रौस्वगृहमायातइदानींप्रातरस्मान्योद्धुमिहागतइतिसंबंधः १३ पक्षांतरमाह तेषामिति १४ फलितमाह सर्वैरिति सर्वैरस्माभिरेकीभूयये आगतास्तैः सहयोद्धव्यमेवेत्यर्थः १५ । १६ आत्माचित्तं प्रणिधीयतांसावधानंक्रियतां १७ लब्धस्यगोधनस्यनाशेअस्माभिःस्वपुरंनप्रवेष्टव्यमितिप्रतिजानीते आच्छिन्नइति । पदातयस्त्वस्मिन्युद्धेनंक्ष्यं स्येवाश्वास्तुकदाचिज्जीविष्यंत्यपीत्याह शरैरिति प्राचांव्याख्यावक्तुरपकर्षसूचिका । वस्तुतस्तु आच्छिन्नेऽपहृतेगोधनेनिमित्ते देवेनवासह संग्रामेउपस्थितेसतिअस्माकंभीष्मादीनांमध्ये ह

तेषांभयाभिभूतानांतदस्माभिःप्रतिश्रुतम् ॥ प्रथमंतैर्गृहीतव्यंमत्स्यानांगोधनंमहत् ॥ सप्तम्यामपराह्णेवैतथातैस्तुसमाहितम् १० अष्टम्यांपुनरस्माभिरा दित्यस्योदयंप्रति ॥ इमागावोग्रहीतव्यागतेमत्स्यैगवांपदम् ११ तेवागाश्चानयिष्यंतियदिवास्युःपराजिताः ॥ अस्मान्वाप्युपसंधायकुर्युर्मत्स्येनसंगतम् ॥ १२ अथवातानपाहायमत्स्योजनपदैःसह ॥ सर्वयासेनयासार्धंसंवृतोभीमरूपया ॥ आयातःकेवलंरात्रिमस्मान्योद्धुमिहागतः १३ तेषामेवमहावीर्यःकश्चिदे षपुरःसरः ॥ अस्मान्जेतुमिहायातोमत्स्योवाऽपिस्वयंभवेत् १४ यद्येषराजामत्स्यानांयदिवीभत्सुरागतः ॥ सर्वैर्योद्धव्यमस्माभिरितिनःसमयःकृतः १५ अथकस्मात्स्थितात्ह्येतेरथेषुरथसत्तमाः ॥ भीष्मोद्रोणःकृपश्चैवविकर्णोद्रौणिरेवच १६ संभ्रांतमनसःसर्वेकालेह्यस्मिन्महारथाः ॥ नान्यत्रयुद्धाच्छ्रेयोऽस्तित थाऽऽत्माप्रणिधीयताम् १७ आच्छिन्नेगोधनेऽस्माकमपिदेवेनवज्रिणा ॥ यमेनवाऽपिसंग्रामेकोहास्तिनपुरंव्रजेत् १८ शरैरेभिःप्रणुन्नानांभग्नानांगहनेवने ॥ कोहिजीवेत्पदातीनांभवेदश्वेषुसंशयः १९ दुर्योधनवचःश्रुत्वाराधेयस्त्वब्रवीद्वचः ॥ आचार्यंपृष्ठतःकृत्वातथानीतिर्विधीयताम् २० जानातिहिमतंतेषामत स्त्रासयतीहनः ॥ अर्जुनेचास्यसंप्रीतिमाधिकामुपलक्षये २१ तथाहिदृष्ट्वाबीभत्सुमुपायांतंप्रशंसति ॥ यथासेनानभज्येततथानीतिर्विधीयताम् २२ हेषितंह्युप शृण्वानेद्रोणेसर्वंविघट्टितम् ॥ अदेशिकामहारण्येग्रीष्मेशत्रुवशंगताः ॥ यथानविभ्रमेत्सेनातथानीतिर्विधीयताम् २३ इष्टाहिपांडवानित्यमाचार्यस्यविशेष तः ॥ आसयन्नपरार्थांश्चकथ्यतेस्मस्वयंतथा २४ अश्वानांहेषितंश्रुत्वाकःप्रशंसापरोभवेत् ॥ स्थानेवाऽपिव्रजंतोवासदाहेषंतिवाजिनः २५ सदाचवायवोवां तिनित्यंवर्षतिवासवः ॥ स्तनयित्नोश्चनिर्घोषःश्रूयतेबहुशस्तथा २६ इतिप्रसिद्धः कोऽस्तियोनपुरंव्रजेत् अपितुप्रत्येकंसर्वैएवस्वंपुरंगंतुंदेवानपिजेतुंगाश्चाच्छेत्तुंसमर्थाः स्मे

९७

त्यर्थः १८ शरैरिति एभिरितिस्वकीयशरप्रदर्शनं १९ आचार्यंरणाद्भीतंपृष्ठतःकृत्वा सेनामुखादपसार्य अस्मिन्भीतेसर्वेऽपिभीताःस्युरितिभावः २० तेषांपांडवानांमतंसमंतं अस्मत्तेजोवध करणंजानातीति २१ । २२ द्रोणेभीतेसतिसर्वंविघट्टितंविचलितंभवेत् सामर्थ्यमितिशेषः ग्रीष्मेघर्मकालेवसंतेइत्यर्थः । इतःषण्मासामंतरंयुद्धारंभस्यशरादिदृष्टत्वात् । अदेशिकाःस्वदेशात् च्युताः व्यूहभंगोमाभूदित्यर्थः २३ इष्टाहीति पांडवाःअपरार्थाः नास्तिपरार्थोयेषांतेऽपरार्थाःस्वार्थपराः आसयन्द्रोणंत्वत्समीपेस्थापितवंतः । परकीयोऽयमित्यर्थः । तत्रहेतुमाह स्वयंद्रो णेनतथाकथ्यते यथापांडवीयत्वंस्वस्यप्रकाशतेतथेत्यर्थः २४ एतदेवविवृणोतिअश्वानामित्यादिना २५ २६

पार्थस्यार्जुनस्यागमनेऽत्र किंकार्यं किमर्थंवासोऽनेनप्रशस्यते तत्रहेतुः अत्र पार्थश्रेयस्तिकामादभिलाषात् अस्मासुवाद्वेषात् जिघांसातःरोषात्तन्मूलादभिज्वलनात् २७ द्रोणमुपहसतिआचार्याइत्यादिना कारुणिकाइत्यनेनयुद्धधर्मानभिज्ञत्वमुक्तं अपापंअहिंसातद्दर्शिनः २८ । २९ आश्चर्यरूपाणिविनोदादीनि इज्यास्त्रेवज्ञायुधेकपालादौ तेषामुपसंधानेआसादनप्रोक्षणादौ परेषांइज्यास्त्रज्ञानांयाज्ञिकानांविवरज्ञानेछिद्रदर्शने ३० मनुष्यचरितेषुस्नानाचमनभोजनादिषु हस्त्यश्वरथचर्यासु हस्त्यादिनावाहनेनचर्यागमनं खरादीनांकर्मणिचिकित्सादौ ३१ प्रतोली

किमत्रकार्यंपार्थस्यकथंवासप्रशस्यते ॥ अन्यत्रकामाद्द्वेषाद्वारोषादस्मासुकेवलात् २७ आचार्यावैकारुणिकाःप्राज्ञाश्चापापदर्शिनः ॥ नैतेमहाभयेप्राप्तेसंप्रष्टव्याःकथंचन २८ प्रासादेषुविचित्रेषुगोष्ठीषूपवनेषुच ॥ कथाविचित्राःकुर्वाणाःपंडितास्तत्रशोभनाः २९ बहून्याश्चर्यरूपाणिकुर्वाणाजनसंसदि ॥ इज्यास्त्रेचोपसंधानेपंडितास्तत्रशोभनाः ३० परेषांविवरज्ञानेमनुष्यचरितेषुच ॥ हस्त्यश्वरथचर्यासुखरोष्ट्राजाविकर्मणि ३१ गोधनेषुप्रतोलीषुवरद्वारमुखेषुच ॥ अन्नसंस्कारदोषेषुपंडितास्तत्रशोभनाः ३२ पंडितान्पृष्ठतःकृत्वापरेषांगुणवादिनः ॥ विधीयतांतथानीतिर्यथावध्योभवेत्परः ३३ गावश्चसंप्रतिष्ठाप्यसेनांव्यूह्यसमंततः ॥ आरक्षाश्चविधीयंतांयत्रयोत्स्यामहेपरान् ३४ ॥ इतिश्रीमहाभारतेविराटपर्वणिगो० उत्तरगोग्रहेदुर्योधनवाक्येसप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ कर्णउवाच ॥ सर्वानायुष्मतोभीतान्संत्रस्तानिवलक्षये ॥ अयुद्धमनसश्चैवसर्वांश्चैवानवस्थितान् १ यद्येषराजामत्स्यानांयदिबीभत्सुरागतः ॥ अहमावारयिष्यामिवेलेवमकरालयम् २ ममचापप्रयुक्तानांशराणांनतपर्वणाम् ॥ नावृत्तिर्गच्छतांतेषांसर्पाणामिवसर्पताम् ३ रुक्मपुंखाःसुतीक्ष्णाग्रामुक्ताहस्तवतामया ॥ छादयंतुशराःपार्थंशलभाइवपादपम् ४ शराणांपुंखसक्तानांमौर्व्याभिहतयादृढम् ॥ श्रूयतांतलयोःशब्दोभेर्योराहतयोरिव ५ समाहितोहिबीभत्सुर्वर्षाण्यष्टौचपंचच ॥ जातस्नेहश्चयुद्धेऽस्मिन्मयिसंप्रहरिष्यति ६ पात्रीभूतश्चकौंतेयोब्राह्मणोगुणवानिव ॥ शरौघान्प्रतिगृह्णातुमयामुक्तान्सहस्रशः ७ एषचैवमहेष्वासस्त्रिषुलोकेषुविश्रुतः ॥ अहंचापिनरश्रेष्ठादर्जुनान्नावरःक्वचित् ८ इतश्चेतश्चनिर्मुक्तैःकांचनैर्गार्ध्रवाजितैः ॥ दृश्यतामद्यवैव्योमखद्योतैरिवसंवृतम् ९ अद्याहमृणमक्षय्यंपुरावाचाप्रतिश्रुतम् ॥ धार्त्तराष्ट्रायदास्यामिनिहत्यसमरेर्जुनम् १० अंतराच्छिद्यमानानांपुंखानांव्यतिशीर्यताम् ॥ शलभानामिवाकाशेप्रचारःसंप्रदृश्यताम् ११ इंद्राशनिसमस्पर्शंमहेंद्रसमतेजसम् ॥ अर्दयिष्याम्यहंपार्थमुल्काभिरिवकुंजरम् १२ रथादतिरथंशूरंसर्वशस्त्रभृतांवरम् ॥ विवशंपार्थमादास्येगरुत्मानिवपन्नगम् १३ तमग्निमिवदुर्धर्षमसिशक्तिशरेंधनम् ॥ पांडवाग्निमहंदीप्तंप्रदहंतमिवाहितम् १४

पुरगृहबाह्यावयवेषु प्रदीयमानबलिदानादावित्यर्थः संस्कारोवैश्वदेवादिना दोषःकेशकीटपातादिना ३२ । ३३ गाःवइतिच्छेदः गावश्चसंप्रतिष्ठंतामितिपाठांतरे गावइत्येकंपदं आरक्षाःरक्षकाः ३४ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपेसप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ सर्वानिति सर्वान्भीष्मादीन् अनवस्थितान् चंचलान् १ । २ अवृत्तिर्लक्ष्यच्युतिर्न ३ । ४ पुंखसक्तानांसक्तपुंखानां ५ । ६ । ७ । ८ गार्ध्रवाजितैःगृध्रपक्षैर्वाजोवेगःशब्दः पक्षोवा संजातोयेषांतैः 'वाजोनिःस्वनपक्षयोःवेगेपुमान्' इति मेदिनी ९ अक्षय्यमितरैःक्षपयितुमशक्यम् १० पुंखानांपुंखवतांशराणाम् ११ । १२ । १३ । १४

१५ । १६ नतपर्वभिःसमीकृतग्रंथिप्रदेशैः १७ । १८ । १९ विपन्नानांभ्रंशितानाम् २० । २१ । २२ धनंगोधनम् २३ ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपेअष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ अर्थानांगवादीनां प्रकृतिंप्राप्तकारणं अनुबंधंप्राप्तौवाफलं नहिद्यूतमर्थप्राप्तेर्मुख्यंकारणं नापिततश्चप्राप्ताना मर्थानांपरिणामेसुखकरत्वंचास्तीत्यभिसंधिः १ मायाइति येषां शकुन्यादीनांमायाःकपटानि बहवःबह्व्यःसंति तेषांदृष्ट्यायुद्धंपापिष्ठं नाशकरत्वात् । नहीदानीमर्जुनोद्यूतेनेवमायामात्रेणजेतुंशक्यइतिभावः । पाठांतरेनयाःनीतयः सामाद्यास्तेषांमध्येयुद्धं पापिष्ठम् २ देशेति इदानींग्रीष्मोनयुद्धकालः श्रांत्याजलाभावेनचसद्योवाहनानांनाशापत्तेः । नापिदेशोगिरिदुर्गाद्याश्रितोऽस्तीतिभावः । इदंयुद्धंफलंनलभतेफलंनलभयेत् । परस्यतु

अश्ववेगपुरोवातोरथौघस्तनयित्नुमान् ॥ शरधारोमहामेघःशमयिष्यामिपांडवम् १५ मत्कार्मुकविनिर्मुक्ताःपार्थमाशीविषोपमाः ॥ शराःसमभिसर्पंतुवल्मीकमिवपन्नगाः १६ सुतेजनैरुक्मपुंखैःसुधौतैर्नतपर्वभिः ॥ आचितंपश्यकौंतेयंकार्णिकारैरिवाचलम् १७ जामदग्न्यान्मयाह्यस्त्रंयत्प्राप्तमृषिसत्तमात् ॥ तदुपाश्रित्यवीर्यंचयुध्येयमपिवासवम् १८ ध्वजाग्रेवानरस्तिष्ठन्भल्लेननिहतोमया ॥ अद्यैवपततांभूमौविनदन्भैरवान्रवान् १९ शत्रोर्मयाविपन्नानांभूतानांध्वजवासिनाम् ॥ दिशःप्रतिष्ठमानानामस्तुशब्दोदिवंगमः २० अद्यदुर्योधनस्याहंशल्यंहृदिचिरास्थितम् ॥ समूलमुद्धरिष्यामिबीभत्सुंपातयन्रथात् २१ हताश्वंविरथंपार्थंपौरुषेपर्यवस्थितम् ॥ निःश्वसंतंयथानागमद्यपश्यंतुकौरवाः २२ कामंगच्छंतुकुरवोधनमादायकेवलम् ॥ रथेषुवापितिष्ठंतोयुद्धंपश्यंतुमामकम् २३ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणि उत्तरगोग्रहेकर्णविकत्थने अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥ ४९ ॥ ॥ कृपउवाच ॥ सदैवतवराधेययुद्धेक्रूतरामतिः ॥ नार्थानांप्रकृतिंवेत्सिनानुबंधमवेक्षसे १ मायाहिबहवःसंतिशास्त्रमाश्रित्यचिंतिताः ॥ तेषांयुद्धंतुपापिष्ठंवेदयंतिपुराविदः २ देशकालेनसंयुक्तंयुद्धंविजयदंभवेत् ॥ हीनकालंतदेवेहफलंनलभतेपुनः ॥ देशेकालेचविक्रांतंकल्याणायविधीयते ३ आनुकुल्येनकार्याणामंतरंसंविधीयते ॥ भारंहिरथकारस्यनव्यवस्यंतिपंडिताः ४ परिचिंत्यतुपार्थेनसंनिपातोननःक्षमः ॥ एकःकुरूनभ्यगच्छदेकश्चाग्निमतर्पयत् ५ एकश्चपंचवर्षाणिब्रह्मचर्यमधारयत् ॥ एकःसुभद्रामारोप्यद्वैरथेकृष्णमाह्वयत् ६ एकःकिरातरूपेणस्थितंरुद्रमयोधयत् ॥ अस्मिन्नेववनेपार्थोहृतांकृष्णामवाजयत् ७ एकश्चपंचवर्षाणि शक्रादस्त्राण्यशिक्षत ॥ एकःसोऽयमरिंजित्वाकुरूणामकरोद्यशः ८ एकोगंधर्वराजानंचित्रसेनमरिंदमः ॥ विजिग्येतरसासंख्येसेनांप्राप्यसुदुर्जयाम् ९ तथानिवातकवचाःकालखंजाश्चदानवाः ॥ दैवतैरप्यवध्यास्तेएकेनयुधिपातिताः १०

देशकालावनुकूलावेववर्तेतेइतिभावः । विक्रांतंपराक्रमः ३ देशादेरानुकूल्येनहेतुना कार्याणांयुद्धादीनामंतरंतादर्थ्यंफलवत्त्वमितियावत् संविधीयतेसम्यक्क्रियते 'अंतरमवकाशावधिपरिधानांतर्द्धिभेदतादर्थ्ये'इतिमेदिनी । मंत्राणामितिपाठे देशाद्यानुकूल्येनकार्यंविचार्यमित्यर्थः तत्राभाणकमाहभारमिति । यथारथकारेणदिव्योऽयंमयानिर्मितोरथः सुदृढांगोऽनेनत्वंदेवानपिसर्वथाजेष्यसीत्युक्ते तद्वचसिभारंदत्वादेशकालानुकूल्यमनपेक्ष्यैव पंडितानव्यवस्यंति योद्धुमितिशेषः एवंत्वद्वचसिभारंदत्वा देशाद्यानुकूल्यमनवेक्ष्य कथमस्माभिर्योद्धव्यं । तवतुवचनंरथकारवचनवदर्थशून्यमितिभावः । 'सर्वानायुष्मतोभीतान्संत्रस्तानिवलक्षय'इतियत्कर्णेनोक्तंतस्यैतदुत्तरम् ४ विचारफलमाह परिचिंत्येति ५ । ६ । ७ । ८ । ९ । १०

११ । १२ प्रदेशिन्यातर्जन्या १३ । १४ मध्येनमध्यतउत्सर्तुंउत्सर्पितुम १५ । १६ । १७ । १८ । १९ । २० । २१ यनूक्तं 'कामंगच्छंतुकुरवोधनमादायकेवलं ॥ रथेषुत्राऽपितिष्ठंतोयुद्धं पश्यंतुमामकम्' इतितत्राह षड्थाइति संहताःषडपिएकीभूयतेनैकेनयोद्धुंकथंचिच्छक्ष्यामोनत्वेकैकशइतिभावः २२ । २३ ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपेएकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ नचेति शूराःपरवित्तंजित्वापरसीमामुलंघ्यस्वनगरंप्रतिनीत्वाऽपिनश्लाघंते त्वंत्वेतेषामेकतममप्यकृत्वाकत्थसेऽतोनिर्लज्जोऽसीतिभावः १ । २ । ३ यदुक्तं 'नैतेमहाभयेप्रा

एकेनहित्वयाकर्णकिंनामेहकृतंपुरा ॥ एकैकेनयथातेषांभूमिपालावशेकृताः ११ इंद्रोऽपिहिनपार्थेनसंयुगेयोद्धुमर्हति ॥ यस्तेनाशंसतेयोद्धुंकर्तव्यंतस्यभेषजम् १२ आशीविषस्यक्रुद्धस्यपाणिमुद्यम्यदक्षिणम् ॥ अवमुच्यप्रदेशिन्यादंष्ट्रामादातुमिच्छसि १३ अथवाकुंजरंमत्तमेकएवचरन्वने ॥ अनंकुशंसमारुह्य नगरंगंतुमिच्छसि १४ समिद्धंपावकंचैवघृतमेदोवसाहुतम् ॥ घृताक्तश्चीरवासास्त्वंमध्येनोत्सर्तुमिच्छसि १५ आत्मानंकःसमुद्बध्यकंठेबध्वामहाशिलाम् ॥ समुद्रंतरतेदोर्भ्यांतत्रकिंनामपौरुषम् १६ अकृतास्त्रःकृतास्त्रंवैबलवंतंसुदुर्बलः ॥ तादृशंकर्णयःपार्थंयोद्धुमिच्छेत्सदुर्मतिः १७ अस्माभिर्ह्येषनिकृतोवर्षाणीह त्रयोदश ॥ सिंहःपाशविनिर्मुक्तोननःशेषंकरिष्यति १८ एकांतेपार्थमासीनंकूपेग्निमिवसंवृतम् ॥ अज्ञानादभ्यवस्कंद्यप्राप्ताःस्मोभयमुत्तमम् १९ सहयुध्यामहेपार्थमागतंयुद्धदुर्मदम् ॥ सैन्यास्तिष्ठंतुसन्नद्धाव्यूढानीकाःप्रहारिणः २० द्रोणोदुर्योधनोभीष्मोभवान्द्रौणिस्तथावयम् ॥ सर्वेयुध्यामहेपार्थंकर्णमासाहसंकृथाः २१ वयंव्यवसितंपार्थंवज्रपाणिमिवोद्यतम् ॥ षड्थाःप्रतियुध्येमतिष्ठेमयदिसंहताः २२ व्यूढानीकानिसैन्यानियत्ताःपरमधन्विनः ॥ युध्यामहेऽर्जुनंसंख्येदानवाइववासवम् २३ ॥ इतिश्रीविराटपर्वणिगोहरणपर्वणिउत्तरगोग्रहेकृपवाक्यंनामएकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ अश्वत्थामोवाच ॥ नचताव्जिताग्गावोनचसीमांतरंगताः ॥ नहास्तिनपुरंप्राप्तास्त्वंचकर्णविकत्थसे १ संग्रामांश्चबहूञ्जित्वालब्ध्वाचविपुलंधनम् ॥ विजित्यचपरांसेनांनाहुःकिंचनपौरुषम् २ दहत्यग्निरवाक्यस्तुतूष्णींभातिदिवाकरः ॥ तूष्णींधारयतेलोकान्वसुधासचराचरान् ३ चातुर्वर्ण्यस्यकर्माणिविहितानिस्वयंभुवा ॥ धनंयैरधिगंतव्यंयच्चकुर्वन्नदुष्यति ४ अधीत्यब्राह्मणोवेदान्याजयेतयजेतवा ॥ क्षत्रियोधनुराश्रित्ययजेच्चैवनयाजयेत् ५ वैश्योधिगम्यवित्तानिब्रह्मकर्माणिकारयेत् ॥ शूद्रःशुश्रूषणंकुर्यात्त्रिषुवर्णेषुनित्यशः ॥ वंदनायोगविधिभिर्वैतसींवृत्तिमास्थितः ६ वर्तमानायथाशास्त्रंप्राप्यचापिमहीमिमाम् ॥ सत्कुर्वंतिमहाभागागुरून्सुविगुणानपि ७ प्राप्यद्यूतेनकोराज्यंक्षत्रियस्तोष्टुमर्हति ॥ तथानृशंसरूपोऽयंधार्तराष्ट्रश्चनिर्घृणः ८

प्तेसंप्रष्टव्याः' इत्यादिना ब्राह्मणानांभोजनादावेवकौशलंनयुद्धेइति तत्रतवापिवैश्यत्वान्नयुद्धेसामर्थ्यमस्तीतिदर्शयिष्यन्वर्णानांकर्माणिविभजते चातुर्वर्ण्यस्येत्यादिना ४ । ५ त्रितान्यधिगम्यकृष्यादिनेतिशेषः ब्रह्मकर्माणिवेदोक्तकर्माण्याधानादीनिकारयेत् स्वार्थेणिच् ६ वर्तमानाइति न्यायेनपृथिवींजित्वाऽपिसंतोविगुणानपिगुरून्सत्कुर्वंति । त्वंत्वन्यायेनपांडवंजित्वासाधूनपिगुरून्निंदसीतिभावः ७ एतदेवाहप्राप्येति निर्घृणोनिर्लज्जः ८

निकृत्याशाठ्येन वंचनायोगैश्छद्मोपायैः वितंसो बंधनोपायस्तेनजीवतीतिवैतंसिकोव्याधः ९ । १० इंद्रप्रस्थंतत्स्थाःपांडवाः ११।१२ मूलमिति एषांपांडवानांमूलं महत्महच्छब्दवाच्यंब्रह्म श्रीकृष्णाख्यं वेदवाक्यंब्राह्मणाश्चयथोक्तमादिपर्वणि । 'मूलंकृष्णोब्रह्मचब्राह्मणाश्च'इति । तदेतद्वेदविरुद्धमनृतंद्यूतंकुर्वता धार्तराष्ट्रेणधर्मस्यमूलंकृत्तंछिन्नं इदानींचब्राह्मणानवजानतात्वया ऽपितदेव कृतं । अतोधर्मनाशाद्भवतांनाशोऽवश्यंभावीत्यर्थः । मूलंकीदृशं चंदनंयथाशांतंशीतलं नतुदाहकंक्रोधरूपं । तथाचदुर्योधनःकेवलंक्रोधमयइत्युक्तंप्राक् । 'दुर्योधनोमन्युमयोमहा द्रुमः'इति । सारार्थीकर्मकारयिथा इतिव्यवहितेनसंबंधः । सारार्थीधनार्थी । 'धनेचसारम्'इतिमेदिनी । पांडवान्कर्मकारानिवकृतवानसि यत्रकालेतत्रतदाविदुरःकिमब्रवीत् । क्षयमूलंद्यू तमिति तदिदानींस्मरेतिभावः । सूतेतिसंबोधयन्नक्षत्रियत्वादस्ययुद्धेष्वकौशलंव्यनक्ति । 'नन्वादित्योवैदेवंक्षत्रम्' इतिश्रुतेर्दिव्यात्क्षत्रात्कुंत्यांजातस्यास्यकथमक्षत्रत्वंयुद्धाकौशलंचेति विदुषाऽप्यश्वत्थाम्नावक्तुंयुक्तमितिचेच्छृणु सर्वेषांहिवर्णानांद्विविधंजन्म योनिजंसंस्कारजंच । तत्रयएवयोनिःसएवसंस्कर्ताचेत्सएकजोनप्रकृतितश्च्यवते । कर्णस्तुदैवक्षत्रजोऽप्यक्षत्रियेणसू तेनसंस्कृतइतिद्विजातत्वात् क्षत्रियत्वेनप्रहर्तुंकुशलोऽपि सूतत्वेनपरकीयप्रहारंसोढुमशक्तइतियुद्धात्पलायते इत्याशयेनैनंसूर्यपुत्रंजानन्नपिसूतेतिसंबोधयति । तथाचमंत्रवर्णः । 'सहस्व मन्योअभिमातिमस्मे रुजन्मृणन्प्रमृणन्प्रेहिशत्रून् ॥ उग्रंतेपाजोनन्वारुरुध्रे वशीवशंनयसएकजत्वम्'इतिअस्यार्थः । तापसोमन्युर्ऋषिःसंकल्पाधिष्ठात्रींदेवतांमन्युसंज्ञांप्रार्थयते त्वयामन्यो

तथाऽधिगम्यवित्तानिकोविकत्थेद्विचक्षणः ॥ निकृत्यावंचनायोगैश्चरन्वैतंसिकोयथा ९ कतमंद्वैरथंयुद्धंयत्राजैषीर्धनंजयम् ॥ नकुलंसहदेवंवाधनंयेषांत्वया हृतम् १० युधिष्ठिरोजितःकस्मिन्भीमश्चबलिनांवरः ॥ इंद्रप्रस्थंत्वयाकस्मिन्संग्रामेनिर्जितंपुरा ११ तथैवकतमद्युद्धंयस्मिन्कृष्णाजितात्वया ॥ एकवस्त्रा सभांनीतादुष्टकर्मन्रजस्वला १२ मूलमेषांमहत्कृत्तंसारार्थीचंदनंयथा ॥ कर्मकारयिथाःसूततत्रकिंविदुरोऽब्रवीत् १३ यथाशक्तिमनुष्याणांशममालक्षयामहे ॥ अन्येषामपिसत्वानामपिकीटपिपीलिकैः ॥ द्रौपद्याःसंपरिक्लेशंनक्षंतुंपांडवोऽर्हति १४ क्षयायधार्तराष्ट्राणांप्रादुर्भूतोधनंजयः ॥ त्वंपुनःपंडितोभूत्वावाचंवक्तु मिहेच्छसि १५ वैरांतकरणोजिष्णुर्नंनःशेषंकरिष्यति १६ नैषदेवान्नगंधर्वान्नासुरान्नचराक्षसान् ॥ भयादिहनयुध्येतकुंतीपुत्रोधनंजयः १७

इतिसूक्तेतृतीयेयमृक् यस्तेमन्यविधमध्यंदिनइतिमाध्यंदिनेसवनेइयेनयागेशत्रुमारणार्थेऽस्यसूक्तस्यविनियोगः हेमन्योअस्मैशरणागतायराज्यायवा एतद्रक्षणार्थमितियावत् । अभि मातिसर्वतःपीडांपित्रादिभिःसहविरोधंज्ञातिवधदोषंवासहस्वक्षमस्व । कथंतेषांरक्षणंस्यादतआह रुजन्रोगंप्राप्नुवन् मृणन्म्रियमाणोजराग्रस्तइत्यर्थः प्रमृणन्अत्यंतंआसन्नमृत्युर्वा शत्रून्प्रेहि प्रकर्षेणजेतुंगच्छ । अत्रशरीरगतंरोगादितदभिमानिनिचेतसिउपचर्यते ! नन्वशक्तेनरोगाद्याक्रांतेनमयाकथंशत्रवोजेतुंशक्याइत्याशंक्याह उग्रमिति उग्रंपरमर्दनक्षमंतेतवपाजस्तेजो ननु निश्चितंआरुरुध्रेआरोद्धुंशत्रून्समर्थमस्ति । दृष्टसंकल्पस्यहितेजःपरानवश्यंनाशयेदेवेत्यर्थः । एतदेवाह वशीसर्वमस्यवशेस्तीतिवशी संकल्पदार्ढ्यादेवह्यगस्त्यादिभिःसमुद्रपानादीन्यपि कृतानिअतएवसर्वंजगत्त्वमेववशंनयसे । वशित्वेहेतुः हेएकजएकस्माज्जात । नन्वेकमेवमनःसंकल्पस्योपादानमितिव्यर्थंविशेषणमितिचेन्न कुंडव्यावृत्त्यर्थत्वात् । सह्यन्येनजातोऽन्येनच आत्मीयबुद्ध्यासंस्कृतइतिनदृढसंकल्पोभवति नचपरांस्त्रातुंशक्नोतिद्विजत्वात् । तथाचलोकेआभाणकः यस्यद्वेवचनेसद्विपितृकइतिवक्तारोभवंति अतएकजेत्यर्थवद्वचनं । दत्तक्रीतादौतुशा स्त्रीयंएकस्यैवस्वत्वमस्तीतिनासौकुंडतुल्यइतिदिक् १३ ननुममसूतत्वाद्दोषवत्त्वंचेत् सुजाताअपितेकुतोनशाम्यंति कुतोवापरसाहाय्यार्थमस्मान्योद्धुमागता वालिवधेरामइवेत्याशंक्याह यथाशक्तीतिद्वाभ्यां पिपीलिकैरपिकृतंशमंलक्षयामहे इतियोज्यं । वालिरामयोर्विरोधाभावेऽपिरामेणवालीहतइतिसोऽपराधी । पांडवास्तुयुष्माभिरपकृताइतियुष्मान्जिघांसंतोनाप राध्यंतीतिभावः १४ । १५ । १६ नैवनयुध्येत अपितुयुद्ध्येतैवेत्यर्थः १७

एष्यतिगमिष्यति १८ । १९ देवेनदेवयोग्येनयुध्येत २० । २१ अहरःहृतवानासि आनैषीःआनीतवानसि । यथाउत्साहपूर्वकमेतत्कर्मत्वयाकृतंतथैवेदानीमपरावृत्तोयुध्यस्वेत्यर्थः २२ २३ नचेति चकारात्त्रेताऽपिनभवतीत्यध्याहार्यं । अयमर्थः क्रमेणएकद्वित्रिचतुरंकांकितैःप्रदेशैरंकचतुष्टयवान्पाशोभवति । तत्रएकांकःकलिः द्व्यंकोद्वापरः त्र्यंकस्त्रेता चतुरंकःकृतं । तत्र द्यूतेपंचस्वीयाःपंचपरकीयाश्चदीनारादयःस्थाप्यंते तदितःपाशप्रक्षेपेयद्येकांकउपर्यायातितर्हि स्वीयेष्वेकएवजितोभवति । यदिद्व्यौतदापरकीयंदीनारद्वयंस्वीयश्चैकोजितः यदित्र्यंकउप

यंयमेषोऽतिसंक्रुद्धःसंग्रामेनिपतिष्यति ॥ वृक्षंगरुत्मान्वेगेनविनिहत्यतमेष्यति १८ त्वत्तोविशिष्टंवीर्येणनुधष्यमरराट्समम् ॥ वासुदेवसमंयुद्धेतंपार्थंकोनपूजयेत् १९ देवंदेवेनयुध्येतमानुषेणचमानुषम् ॥ अस्त्रंह्यस्त्रेणयोहन्यात्कोऽर्जुनेनसमःपुमान् २० पुत्रादनंतरंशिष्यइतिधर्मविदोविदुः ॥ एतेनापिनिमित्तेन प्रियोद्रोणस्यपांडवः २१ यथात्वमकरोर्द्यूतमिंद्रप्रस्थंयथाऽहर ॥ यथाऽऽनैषीःसभांकृष्णांतथायुध्यस्वपांडवम् २२ अयंतेमातुलःप्राज्ञःक्षत्रधर्मस्यकोविदः ॥ दुर्द्यूतदेवीगांधारःशकुनिर्युध्यतामिह २३ नाक्षान्क्षिपतिगांडीवंनकृतंद्वापरंनच ॥ ज्वलतोनिशितान्बाणांस्तांस्तान्क्षिपतिगांडिवम् २४ नहिगांडीवनिर्मुक्तागार्ध्रपक्षाःसुतेजनाः ॥ नांतरेष्ववतिष्ठंतेगिरीणामपिदारणाः २५ अंतकःपवनोमृत्युस्तथाऽग्निर्वडवामुखः ॥ कुर्युरेतेक्वचिच्छेषंनतुक्रुद्धोधनंजयः २६ यथासभायांद्यूतंत्वंमातुलेनसहाकरोः ॥ तथायुध्यस्वसंग्रामेसौबलेनसुरक्षितः २७ युध्यंतांकामतोयोधानाहंयोत्स्येधनंजयम् ॥ मत्स्योह्यस्माभिरायोध्योयद्यागच्छेद्गवांपदम् २८ ॥ इतिश्रीम०भा० वि०गोहरणप० उ०द्रौणिवाक्यंनामपंचाशत्तमोऽध्यायः ॥ ५० ॥ भीष्मउवाच ॥ साधुपश्यतिवैद्रौणिःकृपःसाध्वनुपश्यति ॥ कर्णस्तुक्षत्रधर्मेणकेवलंयोद्धुमिच्छति १ आचार्योनाभिवक्तव्यःपुरुषेणविजानता ॥ देशकालौतुसंप्रेक्ष्ययोद्धव्यमितिमेमतिः २ यस्यसूर्यसमाःपंचसपत्नाःस्युःप्रहारिणः ॥ कथमभ्युदयेतेषांनप्रमुह्येतपंडितः ३ स्वार्थेसर्वेविमुह्यंतियेऽपिधर्मविदोजनाः ॥ तस्माद्राजन्ब्रवीम्येषवाक्यंतेयदिरोचते ४ कर्णोहियदवोचत्त्वांतेजःसंजननायतत् ॥ आचार्यपुत्रःक्षमतांमहत्कार्यमुपस्थितम् ५ नायंकालोविरोधस्यकौंतेयेसमुपस्थिते ॥ क्षंतव्यंभवतासर्वमाचार्येणकृपेणच ६ भवतांहिकृतास्त्रत्वंयथाऽऽदित्येप्रभातथा ॥ यथाचंद्रमसोलक्ष्मीःसर्वथानापकृष्यते ७ एवंभवत्सुब्राह्मण्यंब्रह्मास्त्रंचप्रतिष्ठितम् ॥ चत्वारएकतोवेदाःक्षात्रमेकत्रदृश्यते ८ नैतत्समस्तमुभयंकस्मिंश्चिदनुशुश्रुम ॥ अन्यत्रभारताचार्यात्सपुत्रादितिमेमतिः ९ वेदांताश्चपुराणानिइतिहासंपुरातनम् ॥ जामदग्न्यमृतेराजन्कोद्रोणादधिकोभवेत् १० ब्रह्मास्त्रंचैववेदाश्चनैतदन्यत्रदृश्यते ॥ आचार्यपुत्रःक्षमतांनायंकालोविभेदने ११ सर्वेसंहत्ययुध्यामःपाकशासनिमागतम् १२

रिपतेत्तदापरकीयंत्रयंस्वीयंचत्रयंजितं । चतुरंकस्योपरिपतनेसर्वेऽपिस्वीयाः परकीयाश्चजिताभवंति । तथाचकलिपातेजयोनास्ति द्वापरादिपातेउत्तरोत्तरवृद्धयाजयोऽस्ति । तेनगांडीवस्थाःशराःसर्वथानजयावहाइत्यर्थः २४ । २५ । २६ । २७ । २८ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपे पंचाशत्तमोऽध्यायः ॥ ५० ॥ ५१ ॥ साध्विति १ । २ यस्यदुर्योधनस्यपंचपांडवाः ३ । ४ यत्अवोचदाचार्यस्यनिंदारूपं तत्तस्यैवतेजःसंजननायैव नतुद्वेषात् ५ । ६ । ७ । ८ । ९ । १० । ११ । १२

बलस्यसैन्यस्यव्यसनानिविनाशकानि १३ नैवेति अस्माकमिदंन्याय्यंवचनंत्वयानैवनिंद्यं । रोषेणदुर्द्यूतादिदर्शनजेनपरीतस्तेनगुरुणाद्रोणेन । गुणाअर्जुनस्य १४ हितंबलत्वतासह निर्व
लैर्भवद्भिर्विचार्ययोद्धव्यमित्येवंरूपं १५ आचार्यइति रोषादेतद्वचनमाचार्येणोक्तं नतुभेदार्थमितिभावः । पाठांतरे अभिषह्यमाणेअभिमृष्यमाणे उपालभ्यमानेइतियावत् शेषकारितंशेषंक
र्तव्यंकारणीयंचतत्सर्वंनकृतंस्यात् । प्रस्तुतकार्यनाशोभवेदित्यर्थः १६ । १७ प्रथमंमुख्यंभेदोनकार्यःक्षंतव्यंचेतियदुक्तंतेनैवाहंवाक्येनप्रसन्नोऽस्मि १८ । १९ धनंचेति धनंलब्ध्वाअस्मा
नुपेक्ष्यगृहंगमिष्यति गोधनेअत्यंतंदूरतोऽन्यैर्नीते युध्यतामस्माकंअंतमेवायंकरिष्यतीतिभावः २० समायुंज्यात्संप्राप्नुयात् पराजय्यात्पराजयंप्राप्नुयात् २१ पुरस्ताद्वाक्यमुक्तं अज्ञातवा
सकालःपूर्णोनवेतिप्रथमंविचार्यमित्येवंरूपं २२ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपे एकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ७ ॥ कलाकाष्ठाश्चेति १ । २ अत्रचतुर्विंशत्यापक्षैश्चांद्रः

बलस्यव्यसनानीहयान्युक्तानिमनीषिभिः ॥ मुख्योभेदोहितेषांतुपापिष्ठोविदुषांमतः १३ ॥ अश्वत्थामोवाच ॥ नैवन्याय्यमिदंवाच्यमस्माकंपुरुषर्षभ ॥ किं
तुरोषपरीतेन गुरुणाभाषितागुणाः १४ शत्रोरपिगुणाग्राह्यादोषावाच्यागुरोरपि ॥ सर्वथासर्वयत्नेनपुत्रेशिष्येहितंवदेत् १५ ॥ दुर्योधनउवाच ॥ आचार्यए
षक्षमतांशांतिरत्रविधीयताम् ॥ अभिद्यमानेतुगुरौतद्वृत्तंरोषकारितम् १६ ॥ वैशंपायनउवाच ॥ ततोदुर्योधनोद्रोणंक्षमयामासभारत ॥ सहकर्णेनभीष्मेण
कृपेणचमहात्मना १७ ॥ द्रोणउवाच ॥ यदेतत्प्रथमंवाक्यंभीष्मःशांतनवोऽब्रवीत् ॥ तेनैवाहंप्रसन्नोवैनीतिरत्रविधीयताम् १८ यथादुर्योधनंपार्थोनोपसर्प
तिसंगरे ॥ साहसाद्यदिवामोहात्तथानीतिर्विधीयताम् १९ वनवासेह्यनिर्वृत्तेदर्शयेन्नधनंजयः ॥ धनंचालभमानोऽत्रनाद्यतत्क्षंतुमर्हति २० यथानायंसमायुं
ज्याद्धार्तराष्ट्रान्कथंचन ॥ नचसेनापराजय्यात्तथानीतिर्विधीयताम् २१ उक्तंदुर्योधनेनापिपुरस्ताद्वाक्यमीदृशम् ॥ तदनुस्मृत्यगांगेययथावद्वक्तुमर्हसि २२
इतिविराटपर्वणिगोहरणपर्वणिद्रोणवाक्येएकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ॥ भीष्मउवाच ॥ कलाकाष्ठाश्चयुज्यंतेमुहूर्ताश्चदिनानिच ॥ अर्धमासाश्चमा
साश्चनक्षत्राणिग्रहास्तथा १ ऋतवश्चापियुज्यंतेतथासंवत्सराअपि ॥ एवंकालविभागेनकालचक्रंप्रवर्तते २ तेषांकालातिरेकेणज्योतिषांचव्यतिक्रमात् ॥
पंचमेपंचमेवर्षेद्वौमासावुपजायतः ३ एषामभ्यधिकामासाःपंचचद्वादशक्षपाः ॥ त्रयोदशानांवर्षाणामितिमेवर्त्ततेमतिः ४

संवत्सरः चतुष्पंचाशदधिकशतत्रयदिनात्मकः । षष्ट्यधिकशतत्रयदिनात्मासावनः । सएव द्वादशवार्षिकादिप्रतिज्ञासु गवामयनादिसत्रादिषुचउपयुज्यते । त्रीणिशतानिपंचषष्टिश्चदिना
नि पंचदशघटिकाएकत्रिंशत्पलानित्रिंशदक्षराणि सौरस्यसंवत्सरस्यमानं । तत्रप्रायेणज्योतिर्विदःसौरसंवत्सरानुरोधेनैववर्षप्रवेशादिकंकुर्वंति । स्मार्तेवर्द्धापनादौतुचांद्रेणेति
विशेषेसत्यपि यदाएतयोरांतरालिकःसावनाब्दोगण्यते + तदासौरगताब्दवृद्धिस्तत्रगण्यते । एवंगणनायांक्रियमाणायां त्रयोदशस्वब्देषु पंचचांद्रामासाः द्वेदिनेसप्तत्रिंशन्नाड्यःपंचचत्वारिंश
त्पलानिपंचदशाक्षराणिचतथाचार्किंचिदधिकानिनवदिनान्यत्राधिपूर्तेरधिकानिजातानि । ज्योतिषांनक्षत्राणांव्यतिक्रमात् सूर्येणचंद्रेणचलंघनात् उपजायतःअधिकौभवतः३ अत्रतुअर्धमासाश्च
मासाश्चयुज्यंतइतिग्रहणात् त्रयोदशानांवर्षाणांचांद्रमासाः षट्पंचाशदधिकंशतंभवंतीति तएवग्रहीतव्याइतिज्ञेयं । तथाचविजयदशम्यां द्यूते पांडवपराजयः। लोकेतस्यैवप्रायेणद्यूतकालत्वात्

ग्रीष्मेचगोग्रहार्थंप्रवृत्ताइत्युक्तं तेनविजयदशम्यामागामिन्यांत्रयोदशाब्दपूरणंभविष्यतीतिदुर्योधनप्रत्याशा । पांडवास्तुचांद्राब्दमानेन त्रयोदशवत्सराननतिवाह्य कृतकृत्याअभूवन् तत्रविजयदशमीतःपूर्वंपंचमासाःद्वादशदिनानिप्रकटीभवितव्यं तत्रदर्शांतमासे चैत्रकृष्णसप्तम्यामाविर्भूताः प्रतिज्ञांनिस्तीर्यैवकानिचिदधिकान्यपिदिनानिअतिवाह्यआविर्भूताइत्यर्थः

सर्वंयथावच्चरितंयद्यदेभिःप्रतिश्रुतम् ॥ एवमेतद्ध्रुवंज्ञात्वाततोबीभत्सुरागतः ५ सर्वेचैवमहात्मानःसर्वेधर्मार्थकोविदाः ॥ येषांयुधिष्ठिरोराजाकस्माद्धर्मेऽपराध्नुयुः ६ अलुब्धाश्चैवकौंतेयाःकृतवंतश्चदुष्करम् ॥ नचापिकेवलंराज्यमिच्छेयुस्तेऽनुपायतः ७ तदैवतेहिविक्रांतुमीषुःकौरवनंदनाः ॥ धर्मपाशनिबद्धास्तु नचेलुःक्षत्रियव्रतात् ९ यच्चानृतइतिख्यायाद्यःसगच्छेत्पराभवम् ॥ वृणुयुर्मरणंपार्थानानृतत्वंकथंचन ९ प्राप्तकालेतुप्राप्तव्यंनोत्सृजेयुर्नरर्षभाः ॥ अपित्रभृतागुप्तंतथावीर्याहिपांडवाः १० प्रतियुध्येमसमरेसर्वशस्त्रभृतांवरम् ॥ तस्माद्यदत्रकल्याणंलोकेसद्भिरनुष्ठितम् ॥ तत्संविधीयतांशीघ्रंमावोह्यर्थोऽभ्यगात्परम् ११ नहिपश्यामिसंग्रामेकदाचिदपिकौरव ॥ एकांतसिद्धिंराजेंद्रसंप्राप्तश्चधनंजयः १२ संप्रवृत्तेतुसंग्रामेभावाभावौजयाजयौ ॥ अवश्यमेकंस्पृशतोदृष्टमेतदसंशयम् १३ तस्माद्युद्धोचितंकर्मकर्मवाधर्मसंहितम् ॥ क्रियतामाशुराजेंद्रसंप्राप्तश्चधनंजयः १४॥ दुर्योधनउवाच ॥ नाहंराज्यंप्रदास्यामिपांडवानांपितामह ॥ युद्धोपचारिकंयत्तुतच्छीघ्रंप्रविधीयताम् १५ ॥ भीष्मउवाच ॥ अत्रयामामिकाबुद्धिःश्रूयतांयदिरोचते ॥ सर्वथाहिमयाश्रेयोवक्तव्यंकुरुनंदन १६ क्षिप्रंबलचतुर्भागंगृह्यगच्छपुरंप्रति ॥ ततोऽपरश्चतुर्भागोगाःसमादायगच्छतु १७ वयंचार्धेनसैन्यस्यप्रतियोत्स्यामपांडवम् ॥ अहंद्रोणश्चकर्णश्चअश्वत्थामाकृपस्तथा ॥ प्रतियोत्स्यामबीभत्सुमागतंकृतनिश्चयम् १८ मत्स्यंवापुनरायातमागतंवाशतक्रतुम् ॥ अहमावारयिष्यामिवेलेवमकरालयम् १० ॥ वैशंपायनउवाच ॥ तद्वाक्यंरुरुचेतेषांभीष्मेणोक्तंमहात्मना ॥ तथाहिकृतवान्राजाकौरवाणामनंतरम् २० भीष्मःप्रस्थाप्यराजानंगोधनंतदनंतरम् ॥ सेनामुख्यान्व्यवस्थाप्यव्यूहितुंसंप्रचक्रमे २१ ॥ भीष्मउवाच ॥ आचार्यमध्येतिष्ठत्वमश्वत्थामाव्वसव्यतः ॥ कृपःशारद्वतोधीमान्पार्श्वंरक्षतुदक्षिणम् २२ अग्रतःसूतपुत्रस्तुकर्णस्तिष्ठतुदंशितः ॥ अहंसर्वस्यसैन्यस्यपश्चात्स्थास्यामिपालयन् २३ ॥ इतिविराटपर्वणिगोहरणपर्वणिभीष्मसैन्यव्यूहेद्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ ॥ वैशंपायनउवाच ॥ तथाव्यूढेष्वनीकेषुकौरवेयेषुभारत ॥ उपायादर्जुनस्तूर्णंरथघोषेणनादयन् १ ददृशुस्तेध्वजाग्रंवैशुश्रुवुश्चमहास्वनम् ॥ दोधूयमानस्यभृशंगांडीवस्यचनिःस्वनम् २ ततस्तुसर्वमालोक्यद्रोणोवचनमब्रवीत् ॥ महारथमनुप्राप्तंदृष्ट्वागांडीवधन्विनम् ३ ॥ द्रोणउवाच ॥ एतद्ध्वजाग्रंपार्थस्यदूरतःसंप्रकाशते ॥ एषघोषःसरथजोरोरवीतिचवानरः ४

४ । ५ । ६ । ७ । ८ यच्चयदिचपांडवमनृतोऽयमर्जुनइतिख्यायात्कथयेत्सपराभवंगच्छेत् ९ । १० । ११ । १२ । १३ धर्मसंहितंकर्म अयुद्धेनएतैःसहऐक्यंगत्वाराज्यप्रदानं १४ । १५ १६ । १७ । १८ । १९ अनंतरंअविलंबितं २० । २१ । २२ । २३ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपे द्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ ५३ ॥ तथेति १ । २ । ३ । ४

५ मे ममकर्णौसंस्पृश्यअतिक्रांतौ ६ । ७ । ८ चारुतलंहस्तावापश्चारुतलं तद्वान्चारुतली स्रुग्भिःजुहूप्रभृतिभिः ९ इषुपातेइषुपातप्रमितेदेशे असौदुर्योधनः १० । ११ महेष्वासाःमहनी

एषातिष्ठन्रथश्रेष्ठेरथेचराथिनांवरः ॥ उत्कर्षतिधनुःश्रेष्ठंगांडीवमशनिस्वनम् ५ इमौचबाणौसहितौपादयोर्मेव्यवस्थितौ ॥ अपरौचाप्यतिक्रांतौकर्णौसंस्पृश्य मेशरौ ६ निरुष्यहिवनेवासंकृत्वाकर्मातिमानुषम् ॥ अभिवादयतेपार्थःश्रोत्रेचपरिपृच्छति ७ चिरदृष्टोऽयमस्माभिःप्रज्ञावान्बांधवप्रियः ॥ अतीवज्वलितो लक्ष्म्यापांडुपुत्रोधनंजयः ८ रथीशरीचारुतलीनिषंगीशंखीपताकीकवचीकिरिटी ॥ खड्गीचधन्वीचविभातिपार्थःशिखीवृतःस्रुग्भिरिवाज्यसिक्तः ९ ॥ अर्जु नउवाच ॥ इषुपातेचसेनायाहयान्संयच्छसारथे ॥ यावत्समीक्षेसैन्येस्मिन्क्वासौकुरुकुलाधमः १० सर्वानेताननादृत्यदृष्ट्वातमतिमानिनम् ॥ तस्यमूर्ध्निप तिष्यापिततएतेपराजिताः ११ एषव्यवस्थितोद्रोणोद्रौणिश्चतदनंतरम् ॥ भीष्मःकृपश्चकर्णश्चमहेष्वासाःसमागताः १२ राजानंनात्रपश्यामिगाःसमादाय गच्छति ॥ दक्षिणंमार्गमास्थायशंकेजीवपरायणः १३ उत्सृजैतद्रथानीकंगच्छयत्रसुयोधनः ॥ तत्रैवयोत्स्येवैराटेनास्तियुद्धंनिरामिषम् ॥ तंजित्वाविनिव र्त्तिष्येगाःसमादायवैपुनः १४ ॥ वैशंपायनउवाच ॥ एवमुक्तःसवैराटिर्हयान्संयम्ययत्नतः ॥ नियम्यचततोरश्मीन्यत्रतेकुरुपुंगवाः ॥ अचोदयत्ततोवाहान्य त्रदुर्योधनोगतः १५ उत्सृज्यरथवंशंतुप्रयातेश्वेतवाहने ॥ अभिप्रायंविदित्वाचकृपोवचनमब्रवीत् १६ नैषोऽतरेणराजानंबीभत्सुःस्थातुमिच्छति ॥ तस्य पार्ष्णिंग्रहीष्यामोजवेनाभिप्रयास्यतः १७ नह्येनमतिसंक्रुद्धमेकोयुध्येतसंयुगे ॥ अन्योदेवात्सहस्राक्षात्कृष्णाद्वादेवकीसुतात् ॥ आचार्याच्चसपुत्राद्वाभारद्वा जान्महारथात् १८ किंनोगावःकरिष्यंतिधनंवाविपुलंतथा ॥ दुर्योधनःपार्थजलेपुरानौरिवमज्जति १९ तथैवगत्वाबीभत्सुर्नामविश्राव्यचात्मनः ॥ शलभैरि वतांसेनांशरैःशीघ्रमवाकिरत् २० कीर्यमाणाःशरौघैस्तुयोधास्तेपार्थचोदितैः ॥ नापश्यन्नावृतांभूमिंनांतरिक्षंचपत्रिभिः २१ तेषामापततांयुद्धेनापयाने ऽभवन्मतिः ॥ शीघ्रत्वमेवपार्थस्यपूजयंतिस्मचेतसा २२ ततःशंखंप्रदध्मौसद्विषतांलोमहर्षणम् ॥ विस्फार्यचधनुःश्रेष्ठंध्वजेभूतान्यचोदयत् २३ तस्यशं खस्यशब्देनरथनेमिस्वनेनच ॥ गांडीवस्यचघोषेणपृथिवीसमकंपत २४ अमानुषाणांभूतानांतेषांचध्वजवासिनाम् ॥ ऊर्ध्वंपुच्छान्विधुन्वानारेभमाणाः समंततः ॥ गावःप्रतिन्यवर्त्ततदिशमास्थायदक्षिणाम् २५ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिउ० गोनिवर्त्तनेत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥

वैशंपायनउवाच ॥ सशत्रुसेनांतरसाप्रणुद्यगास्ताविजित्याथधनुर्धराग्र्यः ॥ दुर्योधनायाभिमुखंप्रयातोभूयोरणंसोऽभिचिकीर्षमाणः १ गोषुप्रयातासुजवेनम त्स्यान्किरीटिनंकृतकार्यंचमत्वा ॥ दुर्योधनायाभिमुखंप्रयातंकुरुप्रवीराःसहसाऽभिपेतुः २

स्वधनुषः १२ । १३ । १४ । १५ रथवंशंरथसमूहं १६ । १७ । १८ । १९ । २० आवृतांभूमिंनापश्यन्नितिन अपितुशरैरावृतामेवापश्यन् २१ । २२ । २३ । २४ रेभमाणाःहंबारवंकुर्वा णाः ॥ २५ ॥ ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपेत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ ७ ॥ ॥ सइति १ । २

३ एतेनपथा कांचनमयारश्मयोरज्जवस्ताएवयोक्ताणिबंधनानियेषांतान् कुरुसिंहस्यदुर्योधनस्यवृंदंमुख्यं । द्वहिन्निद्वौअहमात्मकप्रत्ययेहस्यदः ४ । ५ सुवर्णकक्षैःस्वर्णमयौकक्षौपल्याण स्यपश्चाद्चलपल्लवौयेषांतैः । 'कक्षःस्यादंतरीयस्यपश्चाद्चलपल्लवे'इतिमेदिनी ६ अभीप्समानाःकर्णंजेतुमिच्छंतः ७ व्रातंसमूहम् ८ विपाठःस्थूलदंडोबाणः ९ विकृष्यविलिख्यछित्वे त्यर्थः अस्य तंप्रसिद्धंध्वजंचमथ्यउन्मथ्यापातयत् अपयात्अपायात् १० गणस्यबाधितारं तेजोहरं शत्रुंतपनामा ११ । २१ नगोवृक्षः नगाग्रात्पर्वताग्रात् । 'शैलवृक्षौनगावगौ'इत्यमरः

तेषामनीकानिबहूनिगाढंव्यूढानिदृष्ट्वाबहुलध्वजानि ॥ मत्स्यस्यपुत्रंद्विषतांनिहंतावैराटिमामंत्र्यततोऽभ्युवाच २ एतेनतूर्णंप्रतिपादयेमान्श्वेतान्हयान्कांचनरश्मियोक्त्रान् ॥ जवेनसर्वेणकुरुप्रयत्नमासादयेऽहंकुरुसिंहवृंदम् ४ गजोगजेनेवमयादुरात्मायोऽद्ययुद्धंसमाकांक्षतिसूतपुत्रः ॥ तमेवमांप्रापयराजपुत्रदुर्योधनापाश्रयजातदर्पं ५ सतैर्हयैर्वातजवैर्बृहद्भिःपुत्रोविराटस्यसुवर्णकक्षैः ॥ व्यध्वंसयत्तद्रथिनामनीकंततोऽवहत्पांडवमाजिमध्ये ६ तंचित्रसेनोविशिखैर्विपाठैःसंग्रामजिच्छत्रुसहोजयश्च ॥ प्रत्युद्ययुर्भारतमापतंतंमहारथाःकर्णमभीप्समानाः ७ ततःसतेषांपुरुषप्रवीरःशरासनार्चिःशरवेगतापः ॥ व्रातंरथानामदहत्समन्युर्वनंयथाग्निःकुरुपुंगवानाम् ८ तस्मिंस्तुयुद्धेतुमुलेप्रवृत्तेपार्थंविकर्णोऽतिरथंरथेन ॥ विपाठवर्षेणकुरुप्रवीरोभीमेनभीमानुजमाससाद ९ ततोविकर्णस्यधनुर्विकृष्यजांबूनदाग्र्योपचितंदृढज्यम् ॥ आपातयत्तंध्वजमस्यमथ्यच्छिन्नध्वजःसोऽप्यपयाज्जवेन १० तंशात्रवाणांगणबाधितारंकर्माणिकुर्वंतममानुषाणि ॥ शत्रुंतपःपार्थममृष्यमाणःसमार्दयच्छरवर्षेणपार्थं ११ सतेनराज्ञाऽतिरथेनविद्धोविगाहमानोध्वजिनींकुरूणां ॥ शत्रुंतपंपंचभिराशुविध्वाततोऽस्यसूतंदशभिर्जघान १२ ततःसविद्धोभरतर्षभेणबाणेनगात्रावरणातिगेन ॥ गतासुराजौनिपपातभूमौनगोनगाग्रादिववातरुग्णः १३ नरर्षभास्तेननरर्षभेणवीरारणेवीरतरेणभग्नाः ॥ चकंपिरेवातवशेनकालेप्रकंपितानीवमहावनानि १४हतास्तुपार्थेननरप्रवीरागतासवोऽर्व्यांसुषुपुःसुवेषाः ॥ वसुप्रदावासवतुल्यवीर्याःपराजितावासवजेनसंख्ये १५ सुवर्णकार्ष्णायसवर्मनद्धानागायथाहैवमताःप्रवृद्धाः ॥ तथासशत्रून्समरेविनिघ्नन्गांडीवधन्वापुरुषप्रवीरः १६ चचारसंख्येविदिशोदिशश्चदहन्निवाग्निर्वनमातपांते ॥ प्रकीर्णपर्णानियथावसंतेविशातयित्वापवनोंबुदांश्च १७ तथासपत्नान्विकिरन्किरीटीचचारसंख्येऽतिरथोरथेन ॥ शोणाश्ववाहस्यहयान्निहत्यवैकर्तनभ्रातुरदीनसत्वः ॥ एकेनसंग्राममजितःशरेणशिरोजहाराथकिरीटमाली १८ तस्मिन्हतेभ्रातरिसूतपुत्रोवैकर्तनोवीर्यमथाददानः ॥ प्रगृह्यदंताविवनागराजोमहर्षभंव्याघ्रइवाभ्यधावत् १९ सपांडवंद्वादशभिःपृषत्कैर्वैकर्तनःशीघ्रमथोजघान ॥ विव्याधगात्रेषुहयांश्चसर्वान्विराटपुत्रंचकरेनिजघ्ने २०

१३ । १४ । गतासवःउर्व्यामितिच्छेदः संधिरार्षः १५ १६ आतपांतेघर्मस्वरूपेनिदाघे । 'अंतःस्वरूपेनाशेना'इतिमेदिनी १७ शोणाश्वाःवाहेवाहकेरथेयस्यतस्य १८ आददानआददानुमिच्छन्प्रगृह्यआग्रहेण दंताविवपर्वतशिखरतुल्यौ अर्जुनोत्तरौप्रतिअभ्यधावत् । 'दंतःसानुनिकुंजयोः'इतिविश्वः । 'दंतोऽद्रिकटकेकुंजे'इतिमेदिनी १९ । २०

वेगंप्रगृह्यस्वीकृत्य २१ निशम्ययुद्धादुपरम्य दिदृक्षमाणास्तस्थुः २२ । २३ कर्णस्यांतर्धानानंतरमितरेऽपिशरैरंतर्हिताःकृताः २४ । २५ प्रक्ष्वेडितोमुक्तोज्यातलयोर्निःस्वनोयेनतंपूज
यतां । तलतालशब्दः तलेनचपेटयातालःकरास्फालनंतज्जःशब्दोऽभूत् । ' तलश्चपेटतालद्वौ । तालःकरास्फाले'इतिचमेदिनी २६ उद्धूतमुपरिकृतंलांगूलमेवमहतीपताकाध्वजांचलोयस्मिं

तमापतंतंसहसाकिरीटीवैकर्तनंवैतरसाऽभिपत्य ॥ प्रगृह्यवेगंन्यपतज्जवेननागंगरुत्मानिवचित्रपक्षः २१ तावुत्तमौसर्वधनुर्धराणांमहाबलौसर्वसपत्नसाहौ ॥
कर्णस्यपार्थस्यनिशम्ययुद्धंदिदृक्षमाणाःकुरवोऽभितस्थुः २२ सपांडवस्तूर्णमुदीर्णकोपःकृतागसंकर्णमुदीक्ष्यहर्षात् ॥ क्षणेनसाश्वंसरथंससारथिमंतर्दधेघोर
शरौघवृष्ट्या २३ ततःसुविद्धाःसरथाःसनागायोधाविनेदुर्भरतर्षभाणाम् ॥ अंतर्हिताभीष्ममुखाःसहाश्वाःकिरीटिनाकीर्णरथाःपृषत्कैः २४ सचापितानर्जुन
बाहुमुक्ताञ्छरान्शरौघैःप्रतिहत्यवीरः ॥ तस्थौमहात्मासधनुःसबाणःसविस्फुलिंगोऽग्निरिवाशुकर्णः २५ ततस्त्वभूद्वैतलतालशब्दःसशंखभेरीपणवप्रणादः ॥
प्रक्ष्वेडितज्यातलनिःस्वनंतंवैकर्तनंपूजयतांकुरूणाम् २६ उद्धूतलांगूलमहापताकध्वजोत्तमांसाकुलभीषणांतम् ॥ गांडीवनिर्ह्रादकृतप्रणादंकिरीटिनंप्रेक्ष्य
ननादकर्णः २७ सचापिवैकर्तनमर्दयित्वासाश्वंससूतंसरथंपृषत्कैः ॥ तमाववर्षप्रसभंकिरीटीपितामहंद्रोणकृपौचदृष्ट्वा २८ सचापिपार्थंबहुभिःपृषत्कैर्वैकर्तनोमे
घइवाभ्यवर्षत् ॥ तथैवकर्णंचकिरीटमालीसंछादयामासशितैःपृषत्कैः २९ तयोःसुतीक्ष्णान्सृजतोःशरौघान्महाशरौघास्त्रविवर्द्धनेरणे ॥ रथेविलग्नाविवचं
द्रसूर्यौघनांतरेणानुददर्शलोकः ३० अथाशुकारीचतुरोहयांश्चविव्याधकर्णोनिशितैःकिरीटिनः ॥ त्रिभिश्चयंतारममृष्यमाणोविव्याधतूर्णंत्रिभिरस्यकेतुम्
३१ ततोऽभिविद्धःसमरावमर्दीप्रबोधितःसिंहइवप्रसुप्तः ॥ गांडीवधन्वाऋषभःकुरूणामजिह्मगैःकर्णमियायजिष्णुः ३२ शरास्त्रवृष्ट्यानिहतोमहात्माप्रादुश्च
कारातिमनुष्यकर्म ॥ प्राच्छादयत्कर्णरथंपृषत्कैर्लोकानिमान्सूर्यइवांशुजालैः ३३ सहस्तिनेवाभिहतोगजेंद्रःप्रगृह्यभल्लान्निशितान्निषंगात् ॥ आकर्णपूर्णंचध
नुर्विकृष्यविव्याधगात्रेष्वथसूतपुत्रम् ३४ अथास्यबाहूरुशिरोललाटंग्रीवांवरांगानिपरावमर्दी ॥ शितैश्चबाणैर्युधिनिर्बिभेदगांडीवमुक्तैरशनिप्रकाशैः ३५
सपार्थमुक्तैरिषुभिःप्रणुन्नोगजोगजेनेवजितस्तरस्वी ॥ विहायसंग्रामशिरःप्रयातोवैकर्त्तनःपांडवबाणतप्तः ३६ ॥ इतिश्रीविराटपर्वणिगोहरणपर्वणिउत्तरगो
ग्रहेकर्णापयानेचतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ अपयातेतुराधेयेदुर्योधनपुरोगमाः ॥ अनीकेनयथास्वेनशनैराच्छं
तपांडवम् १ बहुधातस्यसैन्यस्यव्यूढस्यापततःशरैः ॥ अधारयतवेगंसवेलेवतुमहोदधेः २

स्तस्यध्वजस्यउत्तमौअंसौ उपरिस्थातिर्यक्फलकाग्रभागौ तत्रआकुलाव्यग्राः येभीषणाःभूतादयःतेअंतेसमीपेयस्यतं । गांडीवनिर्ह्रादेनसहकृतःप्रणादोयेनतं गांडीवनिर्ह्रादकृतप्रणादं
किरीटिनं । ध्वजोपरिस्थभूतनादैः संवर्द्धितनादमित्यर्थः २७ द्रोणकृपौचदृष्ट्वाववर्षेतिअनुकृष्यते २८ । २९ महद्भिःशरौघैरस्त्रौघैश्चविवर्द्धनंछेदनंयत्रतास्मिन्रणेविलग्नौसंनिहितौचंद्रसूर्यौ
घनमध्यादिवतौ बाणसंघमध्याल्लोकोऽनुददर्श ३० । ३१ । ३२।३३।३४ । ३५ । ३६ ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपेचतुष्पंचाशत्तमोऽध्यायः ॥ ५४ ॥ आच्छंतआगताः १ । २

प्रत्यायात्प्रातिकूल्येनाभिमुखोऽगादित्यर्थः ३ दिशोदशप्रच्छादितवान् ४ अनिविद्धंनितरामविद्धंअंतरंअवकाशः ५ उत्तरस्यहयानांशिक्षाशिल्पोपपन्नत्वादितिसंबंधः द्रुतंवेगंअपूजयन्
अरयइत्यपकृष्यते ६ । ७ शैलंप्रतिशैलसमीपे बलाभ्राणिबलवंतिअचंचलानिअभ्राणि सूर्यरश्मिव्याप्तानियथातथातान्यनीकानि शरव्याप्तान्यर्जुनसमीपेरेजुरित्यर्थः ८ शुभैःपुष्पैःफल
सूचकत्वात्तेषांशुभत्वम् ९ स्रजःपुष्पं हिरण्मयंस्वर्णचंपकजं शुष्यत्शरैःशीर्णंच तद्वच्छत्रादीनिच सदागतिःवायुःखेदधार बाणजालांतर्हितत्वात्तेषामधःपतनंनाभूदित्यर्थः १० रथांगदेशा
न्युगस्यैकदेशान्आदाय हयाःपरिपेतुरित्यन्वयः ११ गजान्कर्णादिप्रदेशेषुआहत्य विध्वाऽपातयत्पातयातिस्म १२ अग्रजानांसेनाग्रगामिनांगजानांगतचेतसांमृतानाम् १३ कालक्षयं

ततःप्रहस्यबीभत्सुःकौंतेयःश्वेतवाहनः ॥ दिव्यमस्त्रंप्रकुर्वाणःप्रत्यायाद्रथसत्तमः ३ यथारश्मिभिरादित्यःप्रच्छादयतिमेदिनीम् ॥ तथागांडीवनिर्मुक्तैःशरैः
पार्थोदिशोदश ४ नरथानांनचाश्वानांनगजानांनवर्मणाम् ॥ अनिविद्धंशितैर्बाणैरासीत्द्व्यंगुलमंतरम् ५ दिव्ययोगाच्चपार्थस्यहयानामुत्तरस्यच ॥ शिक्षा
शिल्पोपपन्नत्वादस्त्राणांचपरिक्रमात् ॥ वीर्यवत्त्वंद्रुतंचाग्र्यंदृष्ट्वाजिष्णोरपूजयन् ६ कालाग्निमिवबीभत्सुंनिर्दहंतमिवप्रजाः ॥ नारयःप्रेक्षितुंशेकुर्ज्वलंतमिवपा
वकम् ७ तानिग्रस्तान्यनीकानिरेजुरर्जुनमार्गणैः ॥ शैलंप्रतिबलाभ्राणिव्याप्तानीवार्करश्मिभिः ८ अशोकानांवनानीवच्छन्नानिबहुशःशुभैः ॥ रेजुःपार्थशरै
स्तत्रतदासैन्यानिभारत ९ स्रजोर्जुनशरैःशीर्णंशुष्यत्पुष्पंहिरण्मयम् ॥ छत्राणिचपताकाश्चखेदधारसदागतिः १० स्वबलत्रासनात्रस्ताःपरिपेतुर्दिशोदश ॥
रथांगदेशानादायपार्थच्छिन्नयुगाहयाः ११ कर्णकक्षविषाणेषुअंतरोष्ठेषुचैवह ॥ मर्मस्वंगेषुचाहत्यपातयत्समरेगजान् १२ कौरवाग्रगजानांतुशरीरैर्गतचेत
साम् ॥ क्षणेनसंवृताभूमिर्मेघैरिवनभस्तलम् १३ युगांतसमयेसर्वंयथास्थावरजंगमम् ॥ कालक्षयमशेषेणदहत्यग्रशिखःशिखी ॥ तद्वत्पार्थोमहाराजददाह
समरेरिपून् १४ ततःसर्वास्त्रतेजोभिर्धनुषोनिःस्वनेनच ॥ शब्देनामानुषाणांचभूतानांध्वजवासिनाम् ॥ भैरवंशब्दमत्यर्थंवानरस्यचकुर्वतः १५
दैवारिपाच्चबीभत्सुस्तस्मिन्दौर्योधनेबले ॥ भयमुत्पादयामासबलवानरिमर्दनः १६ रथशक्तिममित्राणांप्रागेवनिपतद्भुवि ॥ सोऽपयात्सहसापश्चात्सा
हसाच्चाभ्युपेयिवान् १७ शरव्रातैःसुतीक्ष्णाग्रैःसमादिष्टैःखगैरिव ॥ अर्जुनस्तुखमावव्रेलोहितप्राशनैःखगैः १८ अत्रमध्येयथार्कस्यरश्मयस्तिग्म
तेजसः ॥ दिशासुचतथाराजन्नसंख्याताःशरास्तदा १९

कालस्यऐश्वर्यंजगदित्यर्थः अग्रशिखःअग्रवत्तीक्ष्णाःशिखायस्य १४ । १५ दैवारिपात् देवारीनसुरान्पातीतिदेवारिपः समुद्रस्वत्नजातोदैवारिपःशंखस्तस्मात् घात्भैरवंशब्दंकुर्वतइत्य
नुकृष्यते १६ अमित्राणांवैरिणांरथशक्तिंशरीरसामर्थ्यं । 'रथःस्यंदनदेहयोः'इतिकोशः । प्रागेवसहसादर्शनमात्रादेव निपतत्न्यपातयत् । शक्तिरितिपाठेन्यपतत् अडभावादिरार्षः । सो
ऽर्जुनःअपयात् । पयगतौगत्यभावादित्यर्थः । साहसाच्चअशक्तवधरूपात्पश्चात्तान्युद्धार्थंउपेयिवान् १७ खगैःपक्षिभिरिव खगैर्बाणैः १८ अत्रमध्येअत्रंअमत्रं'अत्राण्यस्मैषड्भिःसंभरं
ति'इत्यादाविवात्रापिमध्यमवर्णलोपश्छांदसः । यदाहशौनकोबृहद्देवतायां । 'वर्णस्यवर्णयोर्लोपोबहूनांव्यंजनस्यवा ॥ अत्राणीतिकपिर्नाभादनोयामीत्यघासुच'इति अत्राण्यस्मैषड्भिः
अमत्राणीत्यपेक्षितेवर्णस्यलोपः । प्रियातष्टानिमेकपिः वृषाकपिरित्यपेक्षिते वृषाइत्येतयोर्वर्णयोर्लोपः । अयंनाभावदति नाभानेदिष्टइत्यपेक्षितवर्णत्रयलोपः । दनोत्रिशइंद्र

दनोदानमनसइत्यपेक्षितेबहूनांवर्णानांलोपः । 'दनोदानमनस'इतियास्कः । तत्त्वायामियाचामीत्यपेक्षिते । अघासुहन्यंतेगावः मघास्वित्यपेक्षितेव्यंजनलोपः । यथापात्रेप्रविष्टाःसूर्यरश्मयो ऽवकाशाभावात्संकुचंति तद्वद्गगनेऽर्जुनबाणानमांतीत्यर्थः १९ सकृदेवतत्क्षणमेवआनतमुन्नतं रथमर्जुनरथं परेरिपवःअभ्यसितुंपरिचेतुंशेकुः । तुशब्दोहेत्वर्थेऽतःसपुनःक्षणांतरेअल भ्यःपरैर्ज्ञातुमशक्यः तत्रहेतुमाहअश्वैरिति सःअश्वैःसह परान्रथात्अतिप्रपादयेत् इमंलोकमतिहापयित्वाऽमुंलोकंनयेत् । दृष्टमात्रोर्जुनःशरैःपरान्परलोकंप्रापयतीत्यर्थः २० नससज्जिरे नसक्ताः किंतुभित्त्वापरतएवगताः । एवंरथोऽपिद्विषांअनीकेष्वित्यर्थः । शराणांरथस्यचगतिर्नकुंठिताभवतीत्यर्थः २१ अनंतभोगःबहुफणःशेषइत्यर्थः २२ सर्वमेवातिगःसर्वाधिकः सर्व

सकृदेवानतंशेकूरथमभ्यसितुंपरे ॥ अलभ्यःपुनरश्वैस्तुरथात्सोऽतिप्रपादयेत् २० तेशराद्विट्शरीरेषुयथैवनससज्जिरे ॥ द्विडनीकेषुबीभत्सोर्नससज्जेरथस्त दा २१ सतद्विक्षोभयामासद्यरातिबलमंजसा ॥ अनंतभोगोभुजगःक्रीडन्निवमहार्णवे २२ अस्यतोनित्यमत्यर्थंसर्वमेवातिगस्तथा ॥ अश्रुतःश्रूयतेभूतैर्धनु र्घोषःकिरीटिनः २३ संततास्तत्रमातंगाबाणैरल्पांतरांतरे ॥ संवृतास्तेनदृश्यंतेमेघाइवगभस्तिभिः २४ दिशोऽनुभ्रमतःसर्वाःसव्यदक्षिणमस्यतः ॥ सत तंदृश्यतेयुद्धेसायकासनमंडलम् २५ पतंत्यरूपेषुयथाचक्षूंषिनकदाचन ॥ नालक्ष्येषुशराःपेतुस्तथागांडीवधन्वनः २६ मार्गोगजसहस्रस्ययुगपद्गच्छतोवने ॥ यथाभवेत्तथाजज्ञेरथमार्गःकिरीटिनः २७ नूनंपार्थजयैषित्वाच्छक्रःसर्वामरैःसह ॥ हंत्यस्मानित्यमन्यंतपार्थेनानिहताःपरे २८ घ्नंतमत्यर्थमहितान्विजयंतत्र मेनिरे ॥ कालमर्जुनरूपेणसंहरंतमिवप्रजाः २९ कुरुसेनाशरीराणिपार्थेनैवाहतान्यपि ॥ सेदुःपार्थहतानीवपार्थकर्मानुशासनात् ३० ओषधीनांशिरांसीवाद्वि षच्छीर्षाणिसोऽन्वयात् ॥ अवनेशुःकुरूणांहिवीर्याण्यर्जुनजाद्भयात् ३१ अर्जुनानिलभिन्नानिवनान्यर्जुनविद्विषाम् ॥ चक्रुर्लोहितधाराभिर्धरणींलो हितांतराम् ३२ लोहितेनसमायुक्तैःपांसुभिःपवनोद्धुतैः ॥ बभूवुर्लोहितास्तत्रभृशमादित्यरश्मयः ३३ सार्कंखंतत्क्षणेनासीत्संध्यायामिवलोहितम् ॥ अप्यस्तंप्राप्यसूर्योऽपिनिवर्तेतनपांडवः ३४ तान्सर्वान्समरेशूरःपौरुषेसमवस्थितान् ॥ दिव्यैरस्त्रैरचिंत्यात्मासर्वानार्च्छद्धनुर्धरान् ३५ सतुद्रोणं त्रिसप्तत्याक्षुरप्राणांसमार्पयत् ॥ दुःसहंदशभिर्बाणैर्द्रौणिमष्टाभिरेवच ३६ दुःशासनंद्वादशभिःकृपंशारद्वतंत्रिभिः ॥ भीष्मंशांतनवंषष्ट्याराजानंचश तेनह ॥ कर्णंचकर्णिनाकर्णेविव्याधपरवीरहा ३७

शब्दाभिमावीत्यर्थः २३ तत्ररणभूमौ अल्पांतरांतरेअल्पेअन्यांतरे पदेपदेसंतताइत्यर्थः । तेनकारणेन तेगभस्तिभिःसूर्यरश्मिभिःसंवृतामेघाइवदृश्यंते २४ सायकासनंधनुस्तस्य मंडलमतिवेगात्अलातचक्रसदृशमित्यर्थः २५ । २६ मार्गइति गजसहस्रेणवनमिवार्जुनरथेनपरसैन्यमुपमृद्यतइत्यर्थः २७ । २८ विजयमर्जुनंकालमिवमेनिरे २९ पार्थेनैवहतानिपार्थ हतानीव सेदुर्विशीर्णानिबभूवुरिति रामरावणयोर्युद्धंरामरावणयोरिवेतिवदभूतोपमेयमित्यर्थः । यतोऽत्रपार्थकर्मैवानुशासनमुपमार्थंकर्तव्यंनान्यकर्म अतःपार्थहतानीवसेदुरि त्यर्थः ३० ओषधीनांव्रीह्यादीनांशिरांसिकणिशानि अन्वयात्अनुक्रमात् अवनेशुःनष्टानि अर्जुनजात्अर्जुनकृतात्भयात्छेदरूपात् ३१ अर्जुनविद्विषांस्थाणुभूताना वनानिआलयानि शरीराणीतियवत् । 'वनंनपुंसकंनीरेनिवासालयकानने'इतिमेदिनी ३२ । ३३ । ३४ । ३५ । ३६ कर्णिनाबाणेन कर्णेकर्णदेशे ३७

३८ । ३९ । ४० अरिष्टंशुभं वैयाघ्रंव्याघ्रचर्मपरिवृतम् ४१ । ४२ । ४३ । ४४ अत्रैवसमयेएनंअव मानय अवरोह चअध्यारूढोमव युद्धायसज्जोभव । एनंअनुलक्षीकृत्येत्यर्थः । एतदेवद्वयंप्रकटयति यदिमेइति प्रथमंअप्रहारान्माननं पश्चात्प्रहारेणाधिरोहणंचेत्यर्थः ४५ । ४६ । ४७ व्यावहार्येणव्यवहारयोग्येनअश्रांतेनेत्यर्थः ४८ । ४९ । ५० । ५१

तस्मिन्विद्धेमहेष्वासेकर्णेसर्वास्त्रकोविदे ॥ हताश्वसूतेविरथेततोऽनीकमभज्यत ३८ तत्प्रभग्नंबलंदृष्ट्वापार्थमाजिस्थितंपुनः ॥ अभिप्रायंसमाज्ञायवैराटिरिदमब्रवीत् ३९ आस्थायरुचिरंजिष्णोरथंसारथिनामया ॥ कतमंयास्यसेऽनीकमुक्तोयास्याम्यहंत्वया ४० ॥ अर्जुनउवाच ॥ लोहिताश्वमरिष्टंयंवैयाघ्रमनुपश्यसि ॥ नीलांपताकामाश्रित्यरथेतिष्ठंतमुत्तर ४१ कृपस्यैतदनीकाग्र्यंप्रापयस्वैतदेवमाम् ॥ एतस्यदर्शयिष्यामिशीघ्रास्त्रंदृढधन्विनः ४२ ध्वजेकमंडलुर्यस्यशातकौंभमयःशुभः ॥ आचार्यएषहिद्रोणःसर्वशस्त्रभृतांवरः ४३ सदाममैषमान्यस्तुसर्वशस्त्रभृतामपि ॥ सुप्रसन्नंमहावीरंकुरुष्वैनंप्रदक्षिणम् ४४ अत्रैवावरोहैनमेषधर्मःसनातनः ॥ यदिमेप्रथमंद्रोणःशरीरेप्रहरिष्यति ॥ ततोऽस्यप्रहरिष्यामिनास्यकोपोभवेदिति ४५ अस्याविदूरेहिधनुर्ध्वजाग्रेयस्यदृश्यते ॥ आचार्यस्यैषपुत्रोवैअश्वत्थामामहारथः ४६ सदाममैषमान्यस्तुसर्वशस्त्रभृतामपि ॥ एतस्यत्वंरथंप्राप्यनिवर्तेथाःपुनःपुनः ४७ यएषतुरथानीकेसुवर्णकवचावृतः ॥ सेनाग्र्येणतृतीयेनव्यावहार्येणतिष्ठति ४८ यस्यनागोध्वजाग्रेऽसौहेमकेतनसंवृतः ॥ धृतराष्ट्रात्मजःश्रीमानेषराजासुयोधनः ४९ एतस्याभिमुखंवीररथंपररथारुजम् ॥ प्रापयस्वैषराजाहिप्रमाथीयुद्धदुर्मदः ५० एषद्रोणस्यशिष्याणांशीघ्रास्त्रेप्रथमोमतः ॥ एतस्यदर्शयिष्यामिशीघ्रास्त्रंविपुलंरणे ५१ नागकक्षातुरुचिराध्वजाग्रेयस्यतिष्ठति ॥ एषवैकर्तनःकर्णोविदितःपूर्वमेवते ५२ एतस्यरथमास्थायराधेयस्यदुरात्मनः ॥ यत्तोभवेथाःसंग्रामेस्पर्द्धतेहिसदामया ५३ यस्तुनीलानुसारेणपंचतारेणकेतुना ॥ हस्तावापीबृहद्धन्वारथेतिष्ठतिवीर्यवान् ५४ यस्यतारार्कचित्रोऽसौध्वजोरथवरेस्थितः ॥ यस्यैतत्पांडुरंछत्रंविमलंमूर्ध्नितिष्ठति ५५ महतोरथवंशस्यनानाध्वजपताकिनः ॥ बलाहकाग्रेसूर्योवायएषप्रमुखेस्थितः ५६ हैमंचंद्रार्कसंकाशंकवचंयस्यदृश्यते ॥ जातरूपशिरस्त्राणंमनस्तापयतीवमे ५७ एषशांतनवोभीष्मःसर्वेषांनःपितामहः ॥ राजश्रियाऽभिवृद्धश्चसुयोधनवशानुगः ५८ पश्चादेषप्रयातव्योनमेविघ्नकरोभवेत् ॥ एतेनयुध्यमानस्ययत्तःसंयच्छमेहयान् ५९ ततोऽभ्यवहदव्यग्रोवैराटिःसव्यसाचिनम् ॥ यत्रातिष्ठत्कृपोराजन्योत्स्यमानोधनंजयम् ६० ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिअर्जुनकृपसंग्रामेपंचपंचाशत्तमोऽध्यायः॥५५॥ वैशंपायनउवाच ॥ तान्यनीकान्यदृश्यंतकुरूणामग्रधन्विनाम् ॥ संसर्पंतेयथामेघाघर्मांतेमंदमारुताः १ अभ्याशेवाजिनस्तस्थुःसमारूढाःप्रहारिणः ॥ भीमरूपाश्चमातंगास्तोमरांकुशनोदिताः ॥ महामात्रैःसमारूढाविचित्रकवचोज्ज्वलाः २

नागकक्षाहस्त्यंकितपताकांचलः हस्तिशृंखलेत्यन्ये ५२ । ५३ नीलानुसारेणनीलपताकावता ताराःसुवर्णमंडलानि हस्तावापोहस्तात्राणंतद्वान् ५४ । ५५ सूर्योवासूर्यइव ५६ । ५७ । ५८ । ५९ । ६० ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपे पंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥ ॥ ७ ॥ ॥ तानीति घर्मांतेप्रावृट्काले १ । २

समारुह्यविमानमितिशेषः सुदर्शनंशत्रुसमागमंडपायात् । 'सुदर्शनोहरेश्चक्रेद्वीपेशत्रुसमागमे' इतिमेदिनी । सुदर्शनंयानमित्यन्ये ३ तदमंडलंसमूमिभागः ग्रहाणांमंडलमिववृत्तंशुशुभे ४ ५ शतसहस्राणांशतंलक्षशतंकोटिसंख्याःस्थूणाः एकाहिरण्मयीस्थूणाचयदधारयत् ६ । ७ त्रयस्त्रिंशत् । अष्टौवसव एकादशरुद्रा द्वादशादित्याः प्रजापतिश्चवषट्कारश्चेतिब्राह्मणं ८

ततःशक्रःसुरगणैःसमारुह्यसुदर्शनम् ॥ सहोपायात्तदाराजन्विश्वाश्विमरुतांगणैः ३ तद्देवयक्षगंधर्वमहोरगसमाकुलम् ॥ शुशुभेऽभ्रविनिर्मुक्तंग्रहाणामिवमंडलम् ४ अस्त्राणांचबलंतेषांमानुषेषुप्रयुंजताम् ॥ तच्चभीमंमहद्युद्धंकृपार्जुनसमागमे ॥ द्रष्टुमभ्यागतादेवाःस्वविमानैःपृथक्पृथक् ५ शतंशतसहस्राणांयत्रस्थूणा हिरण्मयी ॥ मणिरत्नमयीचान्याप्रासादंतदधारयत् ६ ततःकामगमंदिव्यंसर्वरत्नविभूषितम् ॥ विमानंदेवराजस्यशुशुभेखेचरंतदा ७ तत्रदेवास्त्रयस्त्रिंशातिष्ठंतिसहवासवाः ॥ गंधर्वाराक्षसाःसर्पाःपितरश्चमहर्षिभिः ८ तथाराजावसुमनाबलाक्षःसुप्रतर्दनः ॥ अष्टकश्चशिबिश्चैवययातिर्नहुषोगयः ९ मनुःपूरूरघुर्भानुःकृशाश्वःसगरोनलः ॥ विमानेदेवराजस्यसमदृश्यंतसुप्रभाः १० अग्नेरीशस्यसोमस्यवरुणस्यप्रजापतेः ॥ तथाधातुर्विधातुश्चकुबेरस्ययमस्यच ११ अलंबुषोग्रसेनानांगंधर्वस्यचतुंबुरोः ॥ यथामानंयथोद्देशंविमानानिचकाशिरे १२ सर्वदेवनिकायाश्चसिद्धाश्चपरमर्षयः ॥ अर्जुनस्यकुरूणांचद्रष्टुंयुद्धमुपागताः १३ दिव्यानांसर्वमाल्यानांगंधःपुण्योऽथसर्वशः ॥ प्रससारवसंताग्रेवनानामिवभारत १४ तत्ररत्नानिदेवानांसमदृश्यंततिष्ठताम् ॥ आतपत्राणिवासांसिस्रजश्चव्यजनानिच १५ उपाशाम्यद्रजोभौमंसर्वंव्याप्तंमरीचिभिः ॥ दिव्यगंधानुपादायवायुर्योधानसेवत १६ प्रभासितमिवाकाशंचित्ररूपमलंकृतम् ॥ संपतद्भिःस्थितैश्चापिनानारत्नावभासितैः १७ विमानैर्विविधैश्चित्रैरुपानीतैःसुरोत्तमैः ॥ वज्रभृच्छुशुभेतत्रविमानस्थैःसुरैर्वृतः १८ बिभ्रन्मालांमहातेजाःपद्मोत्पलसमायुताम् ॥ विप्रेक्ष्यमाणोबहुभिर्नातृप्यत्सुमहाहवम् १९ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिदेवागमनेषट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥७॥

वैशंपायनउवाच ॥ दृष्ट्वाव्यूढान्यनीकानिकुरूणांकुरुनंदनः ॥ तत्रवैराटिमामंत्र्यपार्थोवचनमब्रवीत् १ जांबूनदमयीवेदीध्वजेयस्यप्रदृश्यते ॥ तस्यदक्षिणतोयाहिकृपःशारद्वतोयतः २ ॥ वैशंपायनउवाच ॥ धनंजयवचःश्रुत्वावैराटिस्त्वरितस्ततः ॥ हयान्रजतसंकाशान्हेमभांडानचोदयत् ३ आनुपूर्व्यात्तुतत्सर्वमास्थायजवमुत्तमम् ॥ प्राहिणोच्चंद्रसंकाशान्कुपितानिवतान्हयान् ४ सगत्वाकुरुसेनायाःसमीपंहयकोविदः ॥ पुनरावर्त्तयामासतान्हयान्वातरंहसः ५ प्रदक्षिणमुपावृत्यमंडलंसव्यमेवच ॥ कुरून्संमोहयामासमत्स्योयानेनतत्त्ववित् ६ कृपस्यरथमास्थायवैराटिरकुतोभयः ॥ प्रदक्षिणमुपावृत्यतस्थौतस्याग्रतोबली ७ ततोऽर्जुनःशंखवरंदेवदत्तंमहारवम् ॥ प्रदध्मौबलमास्थायनामविश्राव्यचात्मनः ८ तस्यशब्दोमहानासीद्धम्यमानस्यजिष्णुना ॥ तथावीर्यवतासंख्येपर्वतस्येवदीर्यतः ९

९ । १० । ११ अलंबुषोग्रसेनानांतत्प्रभृतीनांगंधर्वाणां १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९

॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपे षट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥ ॥ ७ ॥ दृष्ट्वेति १ । २ हेमभांडान्स्वर्णालंकारान् ३ । ४ । ५ मत्स्यःउत्तरः ६ । ७ । ८ । ९

१० वज्रः अशनिः ११ । १२ महोदधिजंशंखं १३ । १४ रथौरथिनौ १५ । १६ । १७ । १८ । १९ । २० । २१ कनकपर्वाग्रैःकनकालिप्तफलकैः २२ । २३ । २४ स्थानंस्थैर्यं संज्ञामिति



पूजयांचक्रिरेशंखंकुरवःसहसैनिकाः ॥ अर्जुनेनतथाध्मातःशतधायन्नदीर्यते १० दिवमावृत्यशब्दस्तुनिवृत्तःशुश्रुवेपुनः ॥ सृष्टोमघवतावज्रःप्रपतन्निवपर्वते ११ एतस्मिन्नंतरेवीरोबलवीर्यसमन्वितः ॥ अर्जुनंप्रतिसंरब्धःकृपःपरमदुर्जयः ॥ अमृष्यमाणस्तंशब्दंकृपःशारद्वतस्तदा १२ अर्जुनंप्रतिसंरब्धोयुद्धार्थीसमहारथः ॥ महोदधिजमादायदध्मौवेगेनवीर्यवान् १३ सतुशब्देनलोकांस्त्रीनावृत्यरथिनांवरः ॥ धनुरादायसुमहज्ज्याशब्दमकरोत्तदा १४ तौरथौसूर्यसंकाशौयोत्स्यमानौमहाबलौ ॥ शारदाविवजीमूतौव्यरोचेतांव्यवस्थितौ १५ ततःशारद्वतस्तूर्णंपार्थंदशभिराशुगैः ॥ विव्याधपरवीरघ्नंनिशितैर्मर्मभेदिभिः १६ पार्थोऽपिविश्रुतंलोकेगांडीवंपरमायुधम् ॥ विकृष्यचिक्षेपबहून्नाराचान्मर्मभेदिनः १७ तानप्राप्तान्शितैर्बाणैर्नाराचान्रक्तभोजनान् ॥ कृपश्चिच्छेदपार्थस्यशतशोऽथसहस्रशः १८ ततःपार्थस्तुसंक्रुद्धश्चित्रान्मार्गान्प्रदर्शयन् ॥ दिशःसंछादयन्बाणैःप्रदिशश्चमहारथः ॥ एकच्छायमिवाकाशमकरोत्सर्वतःप्रभुः १९ प्राच्छादयदमेयात्मापार्थःशरशतैःकृपम् ॥ सशरैरर्दितःक्रुद्धःशितैरग्निशिखोपमैः २० तूर्णंदशसहस्रेणपार्थमप्रतिमौजसम् ॥ अर्दयित्वामहात्मानंननर्दसमरेकृपः २१ ततःकनकपर्वाग्रैर्वीरःसन्नतपर्वभिः ॥ त्वरन्गांडीवनिर्मुक्तैरर्जुनस्तस्यवाजिनः २२ चतुर्भिश्चतुरस्तीक्ष्णैरविध्यत्परमेषुभिः ॥ तेहयानिशितैर्बाणैर्ज्वलद्भिरिवपन्नगैः ॥ उत्पेतुःसहसासर्वेकृपःस्थानादथाच्यवत् २३ च्युतंतुगौतमंस्थानात्समीक्ष्यकुरुनंदनः ॥ नाविध्यत्परवीरघ्नोरक्षमाणोऽस्यगौरवम् २४ सतुलब्ध्वापुनःस्थानंगौतमःसव्यसाचिनम् ॥ विव्याधदशभिर्बाणैस्त्वरितःकंकपत्रिभि २५ ततःपार्थोधनुस्तस्यभल्लेननिशितेनह ॥ चिच्छेदैकेनभूयश्चहस्तावापमथाहरत् २६ अथास्यकवचंबाणैर्निशितैर्मर्मभेदिभिः ॥ व्यधमन्नचपार्थोऽस्यशरीरमवपीडयत् २७ तस्यनिर्मुच्यमानस्यकवचात्कायआबभौ ॥ समयेमुच्यमानस्यसर्पस्येवतनुर्यथा २८ छिन्नेधनुषिपार्थेनसोऽन्यदादायकार्मुकम् ॥ चकारगौतमःसज्यंतदद्भुतमिवाभवत् २९ सतदप्यस्यकौंतेयश्चिच्छेदनतपर्वणा ॥ एवमन्यानिचापानिबहूनिकृतहस्तवत् ॥ शारद्वतस्यचिच्छेदपांडवःपरवीरहा ३० सछिन्नधनुरादायरथशक्तिंप्रतापवान् ॥ प्राहिणोत्पांडुपुत्रायप्रदीप्तामशनीमिव ३१ तामर्जुनस्तदायांतींशक्तिंहेमविभूषिताम् ॥ वियद्गतांमहोल्काभांचिच्छेददशभिःशरैः ३२ साऽपतद्दशधाछिन्नाभूमौपार्थेनधीमता ३३ युगपच्चैवभल्लैस्तुततःसज्यधनुःकृपः ॥ तमाशुनिशितैःपार्थंबिभेददशभिःशरैः ३४ ततःपार्थोमहातेजाविशिखानग्नितेजसः ॥ चिक्षेपसमरेक्रुद्धस्त्रयोदशशिलाशितान् ॥ ३५ अथास्ययुगमेकेनचतुर्भिश्चतुरोहयान् ॥ षष्ठेनचशिरःकायाच्छरेणरथसारथेः ३६ त्रिभिस्त्रिवेणुंसमरेद्वाभ्यामक्षंमहारथः ॥ द्वादशेनतुभल्लेनचकर्तास्यध्वजंतदा ३७

यावत् २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७

३८ । ३९ नुन्नादूरीकृता प्रतिमार्गविपरीतमार्गं अगमत् परावृत्तेत्यर्थः ४० । ४१ असव्यं आवृत्य अप्रदक्षिणं कृत्वेत्यर्थः । यमकं शत्रूणां निरोधकं मंडलं कृत्वा यस्मिन्कृते शत्रुरपमानितो लज्जितास्तिष्ठति ४२ अपजग्मुर्नीतवंतः ४३ ॥ इति विराटपर्वणि नीलकंठीये भारतभावदीपे सप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ ७ ॥ कृपइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११

ततोवज्रनिकाशेनफाल्गुनःप्रहसन्निव ॥ त्रयोदशेनेंद्रसमःकृपंवक्षस्यविध्यत ३८ सच्छिन्नधन्वाविरथोहताश्वोहतसारथिः ॥ गदापाणिरवप्लुत्यतूर्णंचिक्षेपतांगदाम् ३९ साचमुक्तागदागुर्वीकृपेणसुपरिष्कृता ॥ अर्जुनेनशरैर्नुन्नाप्रतिमार्गमथागमत् ४० ततुयोधाःपरीप्संतःशारद्वतममर्षणम् ॥ सर्वतःसमरेपार्थंशरवर्षैरवाकिरन् ४१ ततोविराटस्यसुतोऽसव्यमावृत्यवाजिनः ॥ यमकंमंडलंकृत्वातान्योधान्प्रत्यवारयत् ४२ ततःकृपमुपादायविरथंतेनरर्षभाः ॥ अपजग्मुर्महावेगाःकुंतीपुत्राद्धनंजयात् ४३ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिउ० कृपापयानेसप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ ॥ वैशंपायनउवाच ॥ कृपेऽपनीतेद्रोणस्तुप्रगृह्यसशरंधनुः ॥ अभ्यद्रवदनाधृष्यःशोणाश्वःश्वेतवाहनम् १ सतुरुक्मरथंदृष्ट्वागुरुमायांतमंतिकात् ॥ अर्जुनोजयतांश्रेष्ठउत्तरंवाक्यमब्रवीत् २ ॥ अर्जुनउवाच ॥ यत्रैषाकांचनीवेदीध्वजेयस्यप्रकाशते ॥ उच्छ्रिताप्रवरेदंडेपताकाभिरलंकृता ॥ अत्रमांवहभद्रंतेद्रोणानीकायसारथे ३ अश्वाःशोणाःप्रकाशंतेबृहंतश्चारुवाहिनः ॥ स्निग्धविद्रुमसंकाशास्ताम्रास्याःप्रियदर्शनाः ॥ युक्तारथवरेयस्यसर्वशिक्षाविशारदाः ४ दीर्घबाहुर्महातेजाबलरूपसमन्वितः ॥ सर्वलोकेषुविक्रांतोभारद्वाजःप्रतापवान् ५ बुद्ध्यातुल्योह्युशनसाबृहस्पतिसमोनये ॥ वेदास्तथैवचत्वारोब्रह्मचर्यंतथैवच ६ ससंहाराणिसर्वाणिदिव्यान्यस्त्राणिमारिष ॥ धनुर्वेदश्चकात्स्न्येर्नयस्मिन्नित्यंप्रतिष्ठितः ७ क्षमादमश्चसत्यंचआनृशंस्यमथार्जवम् ॥ एतेचान्येचबहवोयस्मिन्नित्यंद्विजेगुणाः ८ तेनाहंयोद्धुमिच्छामिमहाभागेनसंयुगे ॥ तस्मात्त्वंप्रापयाचार्यंक्षिप्रमुत्तरवाहय ९ ॥ वैशंपायनउवाच ॥ अर्जुनेनैवमुक्तस्तुवैराटिर्हेमभूषणान् ॥ चोदयामासतानश्वान्भारद्वाजरथंप्रति १० तमापतंतंवेगेनपांडवंरथिनांवरम् ॥ द्रोणःप्रत्युद्ययौपार्थंमत्तोमत्तमिवद्विपम् ११ ततःप्राध्मापयच्छंखंभेरीशतनिनादिनम् ॥ प्रचुक्षुभेबलंसर्वमुद्धूतइवसागरः १२ अथशोणान्सदश्वांस्तान्हंसवर्णैर्मनोजवैः ॥ मिश्रितान्समरेदृष्ट्वाव्यस्मयंतरणेनराः १३ तौरथौवीरसंपन्नौदृष्ट्वासंग्राममूर्वनि ॥ आचार्यशिष्यावजितौकृतविद्यौमनस्विनौ १४ समाश्लिष्टौतदाऽन्योन्यंद्रोणपार्थौमहाबलौ ॥ दृष्ट्वाप्राकंपतमुहुर्भरतानांमहद्बलम् १५ हर्षयुक्तस्ततःपार्थःप्रहसन्निववीर्यवान् ॥ रथंरथेनद्रोणस्यसमासाद्यमहारथः १६ अभिवाद्यमहाबाहुःसामपूर्वमिदंवचः ॥ उवाचश्लक्ष्णयावाचाकौंतेयःपरवीरहा १७ उषिताःस्मोवनेवासंप्रतिकर्मचिकीर्षवः ॥ कोपंनार्हसिनःकर्तुंसदासमरदुर्जय १८ अहंतुप्रहृतेपूर्वंप्रहरिष्यामितेऽनघ ॥ इतिमेवर्ततेबुद्धिस्तद्भवान्कर्तुमर्हति १९

१२ प्रतिद्वंद्विनोर्द्रोणार्जुनयोर्वाजिनां मिश्रणेनातिसान्निध्याद्विस्मयोजातः १३ । १४ यदा तौ समाश्लिष्टौ परस्परं रथस्थावेवालिंगितवंतौ तदा भरतानां बलं प्राकंपत द्रोणोऽर्जुनेन सख्यं गतोऽस्मानेव प्रहरिष्यतीति शंकया १५ । १६ । १७ प्रतिकर्म शत्रूणामपकारं १८ । १९

कृतहस्तवत्सुशिक्षितहस्तयुक्तंयथास्यात्तथाचिच्छेद २० । २१ । २२ सममविशेषेण २३ विदुषौविद्वांसौ २४ । २५ । २६ । २७ । २८ शिलाधौतैर्दृषदितेजितैः २९ । ३० भारसाधनं

ततोऽस्मैप्राहिणोद्द्रोणःशरानधिकविंशतिम् ॥ अप्राप्तांश्चैवतान्पार्थश्चिच्छेदकृतहस्तवत् २० ततःशरसहस्रेणरथंपार्थस्यवीर्यवान् ॥ अवाकिरत्ततोद्रोणःशीघ्रमस्त्रंविदर्शयन् २१ हयांश्वरजतप्रख्यान्कंकपत्रैःशिलाशितैः ॥ अवाकिरदमेयात्मा पार्थसंकोपयन्निव २२ एवंप्रवृत्तेयुद्धेभारद्वाजकिरीटिनोः ॥ समंविमुंचतोःसंख्येविशिखान्दीप्ततेजसः २३ तावुभौख्यातकर्माणावुभौवायुसमौजवे ॥ उभौदिव्यास्त्रविदुषावुभावुत्तमतेजसौ ॥ क्षिपंतौशरजालानिमोहयामासतुर्नृपान् २४ व्यस्मयंततत्तोयोधायेतत्रासन्समागताः ॥ शरान्विसृजतोस्तूर्णंसाधुसाध्वित्यपूजयन् २५ द्रोणंहिसमरेकोऽन्योयोद्धुमर्हतिफाल्गुनात् ॥ रौद्रःक्षात्रियधर्मोऽयंगुरुणायदयुध्यत ॥ इत्यब्रुवन्जनास्तत्रसंग्रामशिरसिस्थिताः २६ वीरौतावभिसंरब्धौसंनिकृष्टौमहाभुजौ ॥ छादयेतांशरव्रातैरन्योन्यमपराजितौ २७ विस्फार्यसुमहच्चापंहेमपृष्ठंदुरासदम् ॥ भारद्वाजोऽथसंक्रुद्धःफाल्गुनंप्रत्यविध्यत २८ ससायकमयैर्जालैरर्जुनस्यरथंप्रति ॥ भानुमद्भिःशिलाधौतैर्भानोराच्छादयत्प्रभाम् २९ पार्थंचसुमहाबाहुर्महावेगैर्महारथः ॥ विव्याधनिशितैर्बाणैर्मेघोवृष्ट्येवपर्वतम् ३० तथैवदिव्यंगांडीवंधनुरादायपांडवः ॥ शत्रुघ्नंवेगवान्हृष्टोभारसाधनमुत्तमम् ३१ विससर्जशरांश्चित्रान्सुवर्णविकृतान्बहून् ॥ नाशयन्शरवर्षाणिभारद्वाजस्यवीर्यवान् ॥ तूर्णंचापविनिर्मुक्तैस्तदद्भुतमिवाभवत् ३२ सरथेनचरन्पार्थःप्रेक्षणीयोधनंजयः ॥ युगपद्दिक्षुसर्वासुसर्वतोऽस्त्राण्यदर्शयत् ३३ एकच्छायमिवाकाशंबाणैश्चक्रेसमंततः ॥ नादृश्यततदाद्रोणोनीहारेणेवसंवृतः ३४ तस्याभवत्तदारूपंसंवृतस्यशरोत्तमैः ॥ जाज्वल्यमानस्यतदापर्वतस्येवसर्वतः ३५ दृष्ट्वातुपार्थस्यरणेशरैःस्वरथमावृतम् ॥ सविस्फार्यधनुःश्रेष्ठंमेघस्तनितनिःस्वनम् ३६ अग्निचक्रोपमंघोरंव्यकर्षत्परमायुधम् ॥ व्यशातयच्छरांस्तांस्तुद्रोणःसमितिशोभनः ३७ महानभूत्ततःशब्दोवंशानामिवदह्यताम् ३८ जांबूनदमयैःपुंखैश्चित्रचापविनिर्गतैः ॥ प्राच्छादयदमेयात्मादिशःसूर्यस्यचप्रभाम् ३९ ततःकनकपुंखानांशराणांनतपर्वणाम् ॥ वियच्चराणांवियतिदृश्यंतेबहवोव्रजाः ४० द्रोणस्यपुंखसक्ताश्चप्रभवंतःशरासनात् ॥ एकोदीर्घइवादृश्यदाकाशेसंहतःशरः ४१ एवंतौस्वर्णविकृतान्विमुंचंतौमहाशरान् ॥ आकाशंसंवृतंवीरावुल्काभिरिवचक्रतुः ४२ शरास्तयोस्तुविबभुःकंकबर्हिणवाससः ॥ पंक्त्यःशरदिखस्थानांहंसानांचरतामिव ४३ युद्धंसमभवत्तत्रसुसंरब्धंमहात्मनोः ॥ द्रोणपांडवयोर्घोरंवृत्रवासवयोरिव ४४ तौगजाविवचासाद्यविषाणाग्रैःपरस्परम् ॥ शरैःपूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ४५ तौव्यवाहरतांयुद्धेसंरब्धौरणशोभिनौ ॥ उदीरयंतौसमरेदिव्यान्यस्त्राणिभागशः ४६ अथत्वाचार्यमुख्येनशरान्सृष्टान्शिलाशितान् ॥ न्यवारयच्छितैर्बाणैरर्जुनोजयतांवरः ४७ दर्शयन्वीक्षमाणानामस्त्रमुग्रपराक्रमः ॥ इषुभिस्तूर्णमाकाशंबहुभिश्चसमावृणोत् ४८

शत्रुमर्दनदक्षमं अच्छेद्यमित्यर्थः ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ विषाणाग्रैर्दंताग्रैः ४५ व्यवाहरतां व्यवहारंचर्मयुद्धंकृतवंतौ ४६ । ४७ । ४८

जिघांसताप्यर्जुनेनसह वात्सल्यात्स्वयमक्रीडत् नतुक्रूरोऽभूत् ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ ततक्षतुः क्षीणंचक्रतुः ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ आय

जिघांसंतंनरव्याघ्रमर्जुनंतिग्मतेजसम् ॥ आचार्यमुख्यःसमरेद्रोणःशस्त्रभृतांवरः ॥ अर्जुनेनसहाक्रीडच्छरैःसन्नतपर्वभिः ४९ दिव्यान्यस्त्राणिवर्षंतंतस्मिन्वैतुमु लेरणे ॥ अस्त्रैरस्त्राणिसंवार्यफाल्गुनंसमयोधयत् ५० तयोरासीत्संप्रहारःक्रुद्धयोर्नरसिंहयोः ॥ अमर्षिणोस्तदाऽन्योन्यंदेवदानवयोरिव ५१ ऐंद्रंवायव्यमाग्ने यमस्त्रमस्त्रेणपांडवः ॥ द्रोणेनमुक्तमात्रंतुग्रसतिस्मपुनःपुनः ५२ एवंशूरौमहेष्वासौविसृजंतौशितान्शरान् ॥ एकच्छायंचक्रतुस्तावाकाशंशरवृष्टिभिः ५३ त त्रार्जुनेनमुक्तानांपततांवैशरीरिषु ॥ पर्वतेष्विववज्राणांशराणांश्रूयतेस्वनः ५४ ततोनागारथाश्चैववाजिनश्चविशांपते ॥ शोणिताक्ताव्यदृश्यंतपुष्पिताइवकिंशु काः ५५ बाहुभिश्चसकेयूरैर्विचित्रैश्चमहारथैः ॥ सुवर्णचित्रैःकवचैर्ध्वजैश्चविनिपातितैः ५६ योधैश्चनिहतैस्तत्रपार्थबाणप्रपीडितैः ॥ बलमासीत्समुद्भ्रांतं द्रोणार्जुनसमागमे ५७ विधुन्वानौतुतौतत्रधनुषीभारसाधने ॥ आच्छादयेतामन्योन्यंततक्षतुरथेषुभिः ५८ तयोःसमभवद्युद्धंतुमुलंभरतर्षभ ॥ द्रोणकौंतेय योस्तत्रबलिवासवयोरिव ५९ अथपूर्णायतोत्सृष्टैःशरैःसन्नतपर्वभिः ॥ व्यदारयेतामन्योन्यंप्राणद्यूतेप्रवर्तते ६० अथांतरिक्षेनादोऽभूद्द्रोणंतत्रप्रशंसतां ॥ दुष्क रंकृतवान्द्रोणोयदर्जुनमयोधयत् ६१ प्रमाथिनंमहावीर्यंदृढमुष्टिंदुरासदम् ॥ जेतारंदेवदैत्यानांसर्वेषांचमहारथम् ६२ अविभ्रमंचशिक्षांचलाघवंदूरपातिताम् ॥ पार्थस्यसमरेदृष्ट्वाद्रोणस्याभूच्चविस्मयः ६३ अथगांडीवमुद्यम्यदिव्यंधनुरमर्षणः ॥ विचकर्षरणेपार्थोबाहुभ्यांभरतर्षभ ६४ तस्यबाणमयंवर्षंशलभानामिवा यतिम् ॥ दृष्ट्वातेविस्मिताःसर्वेसाधुसाध्वित्यपूजयन् ६५ नचबाणांतरेवायुरस्यशक्नोतिसर्पितुम् ॥ अनिशंसंदधानस्यशरानुत्सृजतस्तथा ६६ ददर्शनांतरं कश्चित्पार्थस्याददतोऽपिच ६७ तथाशीघ्रास्त्रयुद्धेतुवर्तमानेसुदारुणे ॥ शीघ्रंशीघ्रतरंपार्थःशरानन्यानुदीरयत् ६८ ततःशतसहस्राणिशराणांनतपर्वणाम् ॥ युगपत्प्रापतंस्तत्रद्रोणस्यरथमंतिकात् ६९ कीर्यमाणेतदाद्रोणेशरैर्गांडीवधन्वना ॥ हाहाकारोमहानासीत्सैन्यानांभरतर्षभ ७० पांडवस्यतुशीघ्रास्त्रंमघवा प्रत्यपूजयत् ॥ गंधर्वाप्सरसश्चैवयेचतत्रसमागताः ७१ ततोवृंदेनमहतारथानांरथयूथपः ॥ आचार्यपुत्रःसहसापांडवंपर्यवारयत् ७२ अश्वत्थामातुतत्कर्म हृदयेनमहात्मनः ॥ पूजयामासपार्थस्यकोपंचास्याकरोद्भृशम् ७३ समन्युवशमापन्नःपार्थमभ्यद्रवद्रणे ॥ किरञ्छरसहस्राणिपर्जन्यइववृष्टिमान् ७४ आवृ त्यतुमहाबाहुर्यतोद्रौणिस्ततोहयान् ॥ अंतरंप्रददौपार्थोद्रोणस्यव्यपसर्पितुम् ७५ सतुलब्ध्वांऽतरंतूर्णमपायाज्जवनैर्हयैः ॥ छिन्नवर्मध्वजःशूरोनिकृतःपर मेषुभिः ७६ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिद्रोणापयानेअष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ ७ ॥

तिंसंततिं ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ अंतरमवकाशं ७५ निकृतःप्रहृतः ७६ ॥ इतिविराटपर्वणिनैलकंठीये भारतभावदीपेअष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥

ततइति १ । २ । ३ । ४ नप्रजानंत अडभावआर्षः नचज्ञातवंतः ५ विवरंरंध्रं ६ । ७ अपकृष्यआकृष्य ८ । ९ अर्धचंद्रंअर्धचंद्राकारं ललाटंआवृत्यप्रमृज्य स्वेदेनज्यांप्रमृज्येत्यर्थः । तेन अश्वत्थाम्ना १० । ११ । १२ । १३ । १४ । १५ । १६ चक्षुर्दधेधृतवान् १७ । १८ । १९ । २० कामयन्कामयमानः २१ ॥ इतिविराटप ० नी ० भा ० भा ० एकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ कर्णेति तेत्वया १ । २ । ३ । ४ । ५

॥ वैशंपायनउवाच ॥ ततोद्रौणिर्महाराजप्रययावर्जुनंरणे ॥ तंपार्थःप्रतिजग्राहवायुवेगमिवोद्धतम् ॥ शरजालेनमहतावर्षमाणमिवांबुदम् १ तयोर्देवासुरसमः सन्निपातोमहानभूत् ॥ किरतोःशरजालानिवृत्रवासवयोरिव २ नस्मसूर्यस्तदाभाति नचवातिसमीरणः ॥ शरजालावृतेव्योम्निच्छायाभूतेसमंततः ३ महांश्चटचटाशब्दोयोधयोर्हन्यमानयोः ॥ दह्यतामिववेणूनामासीत्परपुरंजय ४ हयानस्यार्जुनःसर्वान्कृतवानल्पजीवितान् ॥ तेराजन्नप्रजानंतदिशंकांचनमोहिताः ५ ततोद्रौणिर्महावीर्यःपार्थस्यविचरिष्यतः ॥ विवरंसूक्ष्ममालोक्यज्यांचिच्छेदक्षुरेणह ॥ तदस्यापूजयन्देवाःकर्मदृष्ट्वाऽतिमानुषम् ६ द्रोणोभीष्मश्चकर्णश्चकृपश्चैवमहारथाः ॥ साधुसाध्विितिभाषंतोऽपूजयन्कर्मतस्यतत् ७ ततोद्रौणिर्धनुःश्रेष्ठमपकृष्यरथर्षभम् ॥ पुनरेवाहनत्पार्थंहृदयेकंकपात्रिभिः ८ ततःपार्थोमहाबाहुःप्रहस्यस्वनवत्तदा ॥ योजयामासनवयामौर्व्यागांडिवमोजसा ९ ततोऽर्धचंद्रमावृत्यतेनपार्थःसमागमत् ॥ वारणेनेवमत्तेनमत्तोवारणयूथपः १० ततःप्रववृतेयुद्धंपृथिव्यामेकवीरयोः ॥ रणमध्येद्वयोरेवंसुमहल्लोमहर्षणम् ११ तौवीरौददृशुःसर्वेकुरवोविस्मयान्विताः ॥ युध्यमानौमहावीर्यौयूथपाविवसंगतौ १२ तौसमाजघ्नतुर्वीरावन्योन्यंपुरुषर्षभौ ॥ शरैराशीविषाकारैर्ज्वलद्भिरिवपन्नगैः १३ अक्षय्यावपुधी दिव्यौपांडवस्यमहात्मनः ॥ तेनपार्थोरणेशूरस्तस्थौगिरिरिवाचलः १४ अश्वत्थाम्नःपुनर्बाणाःक्षिप्रमभ्यस्यतोरणे ॥ जग्मुःपरिक्षयंतूर्णमभूत्तेनाधिकोऽर्जुनः १५ ततःकर्णोमहाचापंविकृष्याभ्यधिकंतथा ॥ अवाक्षिपत्ततःशब्दोहाहाकारोमहानभूत् १६ ततश्चक्षुर्दधेपार्थोयत्रविस्फार्यतेधनुः ॥ ददर्शतत्रराधेयंतस्यकोपोऽव्यवर्धत १७ सरोषवशमापन्नःकर्णमेवाजिघांसया ॥ तमैक्षतविवृत्ताभ्यांनेत्राभ्यांकुरुपुंगवः १८ तथातुविमुखेपार्थेद्रोणपुत्रस्यसायकात् ॥ त्वरिताःपुरुषाराजन्नुपाजह्रुःसहस्रशः १९ उत्सृज्यचमहाबाहुर्द्रोणपुत्रंधनंजयः ॥ अभिदुद्रावसहसाकर्णमेवसपत्नजित् २० तमभिद्रुत्यकौंतेयःक्रोधसंरक्तलोचनः ॥ कामयन्द्वैरथंतेनयुद्धंवचनमब्रवीत् २१ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिउत्तरगोग्रहे अर्जुनाश्वत्थामयुद्धेएकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥ ७ ॥ ॥ अर्जुनउवाच ॥ कर्णयत्तेसभामध्येबहुवाचाविकत्थितम् ॥ नमेयुधिसमोऽस्तीतितादिदंसमुपस्थितम् १ सोऽद्यकर्णमयासार्धंव्यवहृत्यमहामृधे ॥ ज्ञास्यस्यबलमात्मानंनचान्यानवमन्यसे २ अवोचःपरुषावाचोधर्ममुत्सृज्यकेवलम् ॥ इदंतुदुष्करंमन्येयदिदंतेचिकीर्षितम् ३ यत्त्वयाकथितंपूर्वंमामनासाद्यकिंचन ॥ तदद्यकुरुराधेयकुरुमध्येमयासह ४ यत्सभायांसपांचालींक्लिश्यमानांदुरात्मभिः ॥ दृष्टवानसितस्याद्यफलमाप्नुहिकेवलम् ५

६ । ७ । ८ तेतववाक्यंकर्तृ कर्मअतिशेते । अल्पंकर्म वाक्यंतुबहुलमित्यर्थः ९ इतःपरंतवपराक्रमं गृह्णीमहेअंगीकुर्महे १० । ११ । १२ । १३ । १४ । १५ । १६ । १७

धर्मपाशनिबद्धेनयन्मयामर्षितंपुरा ॥ तस्यराधेयकोपस्यविजयंपश्यमेमृधे ६ वनेद्वादशवर्षाणियानिसोढानिदुर्मते ॥ तस्याद्यप्रतिकोपस्यफलंप्राप्नुहिसंप्रति ७ एहिकर्णमयासार्धंप्रतियुध्यस्वसंगरे ॥ प्रेक्षकाःकुरवःसर्वेभवंतुतवसैनिकाः ८ ॥ कर्णउवाच ॥ ब्रवीषिवाचायत्पार्थकर्मणातत्समाचर ॥ अतिशेतेहितेवाक्यंकर्मैतत्प्रथितंभुवि ९ यत्त्वयामर्षितंपूर्वंतदशक्तेनमार्षितम् ॥ इतोगृह्णीमहेपार्थतवदृष्ट्वापराक्रमम् १० धर्मपाशनिबद्धेनयत्त्वयामर्षितंपुरा ॥ तथैवबद्धमात्मानमबद्धमिवमन्यसे ११ यदितावद्वनेवासोयथोक्तश्चरितस्त्वया ॥ तत्त्वंधर्मार्थवित्क्लिष्टःसमयायोद्धुमिच्छसि १२ यदिशक्रःस्वयंपार्थयुध्यतेतवकारणात् ॥ तथाऽपिनव्यथाकाचिन्ममस्याद्विक्रमिष्यतः १३ अयंकौंतेयकामस्तेनाचिरात्समुपस्थितः ॥ योत्स्यसेहिमयासार्द्धमद्यद्रक्ष्यसिमेबलम् १४ ॥ अर्जुनउवाच ॥ इदानीमेवतावत्त्वमपयातोरणान्मम ॥ तेनजीवसिराधेयनिहतस्त्वनुजस्तव १५ भ्रातरंघातयित्वाकस्त्यक्त्वारणशिरश्चकः ॥ त्वदन्यःकःपुमान्सत्सुब्रूयादेवंव्यवस्थितः १६ ॥ वैशंपायनउवाच ॥ इतिकर्णंब्रुवन्नेवबीभत्सुरपराजितः ॥ अभ्ययाद्विसृजन्बाणान्कायावरणभेदिनः १७ प्रतिजग्राहतंकर्णःप्रीयमाणोमहारथः ॥ महताशरवर्षेणवर्षमाणमिवांबुदम् १८ उत्पेतुःशरजालानिघोररूपाणिसर्वशः ॥ अविध्यदश्वान्बाह्वोश्चहस्तावापंपृथक्पृथक् १९ सोऽमृष्यमाणःकर्णस्यनिषंगस्यावलंबनम् ॥ चिच्छेदनिशिताग्रेणशरेणनतपर्वणा २० उपासंगादुपादायकर्णोबाणानथापरान् ॥ विव्याधपांडवंहस्तेतस्यमुष्टिरशीर्यत २१ ततःपार्थोमहाबाहुःकर्णस्यधनुरच्छिनत् ॥ सशक्तिंप्राहिणोत्तस्मैतांपार्थोव्यधमच्छरैः २२ ततोऽनुपेतुर्बहवोराधेयस्यपदानुगाः ॥ तांश्चगांडीवनिर्मुक्तैःप्राहिणोद्यमसादनम् २३ ततोऽस्याश्वाञ्शरैस्तीक्ष्णैर्बीभत्सुर्भारसाधनैः ॥ आकर्णमुक्तैरभ्यघ्नंस्तेहताःप्रापतन्भुवि २४ अथापरेणबाणेनज्वलितेनमहौजसा ॥ विव्याधकर्णंकौंतेयस्तीक्ष्णेनोरसिवीर्यवान् २५ तस्यभित्वातनुत्राणंकायमभ्यगमच्छरः ॥ ततःसतमसाऽऽविष्टोनस्मकिंचित्प्रजज्ञिवान् २६ सगाढवेदनोहित्वारणंप्रायादुदङ्मुखः ॥ ततोऽर्जुनउदक्रोशदुत्तरश्चमहारथः २७ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिकर्णापयानेषष्टितमोऽध्यायः ॥ ६० ॥

॥ वैशंपायनउवाच ॥ ततोवैकर्तनंजित्वापार्थोवैराटिमब्रवीत् ॥ एतन्मांप्रापयानीकंयत्रतालोहिरण्मयः १ अत्रशांतनवोभीष्मोरथेऽस्माकंपितामहः ॥ कांक्षमाणोमयायुद्धंतिष्ठत्यमरदर्शनः २ अथसैन्यंमहद्दृष्ट्वारथनागहयाकुलम् ॥ अब्रवीदुत्तरःपार्थमपविद्धःशरैर्भृशम् ३ नाहंशक्ष्यामिवीरेहनियंतुंतेहयोत्तमान् ॥ विषीदंतिममप्राणामनोविह्वलतीवमे ४

१८ । १९ अवलंबनंसूत्रंचिच्छेद २० ततोनिषंगेमहातूणीरेपतितेसति उपासंगात्क्षुद्रतूणीरादस्वदेहबाह्यात् २१ । २२ । २३ । २४ । २५ । २६ । २७ ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपेषष्टितमोऽध्यायः ॥ ६० ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ तवइति १ । २ । ३ । ४

५ । ६ । ७ । ८ । ९ । १० नसंधानं नसंदधानं वर्णलोपश्चार्षः ११ । १२ । १३ । १४ । १५ । १६ । १७ निशामयपश्य शतन्हदांविद्युतम् १८ । १९ । २० । २१ शतंमार्गाइतिसर्वतो

अस्त्राणामिवदिव्यानांप्रभावःसंप्रयुज्यताम् ॥ त्वयाचकुरुभिश्चैवद्रवंतीवदिशोदश ५ गंधेनमूर्छितश्चाहंवसारुधिरमेदसाम् ॥ द्वैधीभूतंमनोमेऽद्यतवचैवप्रप श्यतः ६ अदृष्टपूर्वःशूराणांमयासंख्येसमागमः ॥ गदापातेनमहताशंखानांनिःस्वनेनच ७ सिंहनादैश्चशूराणांगजानांबृंहितैस्तथा ॥ गांडीवशब्देनभृशम शनिप्रतिमेनच ॥ श्रुतिःस्मृतिश्चमेवीरप्रनष्टामूढचेतसः ८ अलातचक्रप्रतिमंमंडलंसततंत्वया ॥ व्याक्षिप्यमाणंसमरेगांडीवंचप्रकर्षता ॥ दृष्टिःप्रचलिता वीरहृदयंदीर्यतीवमे ९ वपुश्चोग्रंतवरणेक्रुद्धस्येवपिनाकिनः ॥ व्यायच्छतस्तवभुजंदृष्ट्वाभीर्मेभवत्यपि १० नाददानंनसंधानंनमुंचंतंशरोत्तमान् ॥ त्वामहंसंप्र पश्यामिपश्यन्नपिनचेतनः ११अवसीदंतिमेप्राणाभूरियंचलतीवच॥ नचप्रतोदंरश्मींश्चसंयंतुंशक्तिरस्तिमे १२ ॥ अर्जुनउवाच ॥ माभैषीःस्तंभयात्मानंत्वयाऽ पिनरपुंगव ॥ अत्यद्भुतानिकर्माणिकृतानिरणमूर्धनि १३ राजपुत्रोऽसिभद्रंतेकुलेमत्स्यस्यविश्रुते ॥ जातस्त्वंशत्रुदमनेनावसीदितुमर्हसि १४ धृतिंकृत्वासु विपुलांराजपुत्ररथेमम ॥ युध्यमानस्यसमरेहयान्संयच्छशत्रुहन् १५ ॥ वैशंपायनउवाच ॥ एवमुक्त्वामहाबाहुर्वैराटिंनरसत्तमः ॥ अर्जुनोरथिनांश्रेष्ठउत्तरंवा क्यमब्रवीत् १६ सेनाग्रमाशुभीष्मस्यप्रापयस्वैतदेवमाम् ॥ आच्छेत्स्याम्यहमेतस्यधनुर्ज्यामपिचाहवे १७ अस्यंतंदिव्यमस्त्रंमांचित्रमद्यनिशामय ॥ शत ह्रदामिवायांतींस्तनयित्नोरिवांबरे १८ सुवर्णपृष्ठंगांडीवंद्रक्ष्यंतिकुरवोमम ॥ दक्षिणेनाथवामेनकतरेणास्विदस्यति १९ इतिमांसंगताःसर्वेतर्कयिष्यंतिशत्र वः ॥ शोणितोदांरथावर्त्तांनागनक्रांदुरत्ययाम् ॥ नदींप्रस्कंदयिष्यामिपरलोकप्रवाहिनीम् २० पाणिपादशिरःपृष्ठबाहुशाखानिरंतरम् ॥ वनंकुरूणांछेत्स्या मिशरैःसन्नतपर्वभिः २१ जयतःकौरवींसेनामेकस्यममधन्विनः ॥ शतंमार्गाभविष्यंतिपावकस्येवकानने २२ मयाचक्रमिवाविद्धंसैन्यंद्रक्ष्यसिकेवलम् ॥ इष्वस्त्रे शिक्षितंचित्रमहंदर्शयिताऽस्मिते २३ असंभ्रांतोरथेतिष्ठसमेषुविषमेषुच ॥ दिवमावृत्यातिष्ठंतंगिरिंभेत्स्यामिपत्रिभिः २४ अहमिंद्रस्यवचनात्संग्रामेऽभ्यहनं पुरा ॥ पौलोमान्कालखंजांश्चसहस्राणिशतानिच २५ अहमिंद्राद्दृढांमुष्टिंब्रह्मणःकृतहस्तताम् ॥ प्रगाढेतुमुलेचित्रमितिविद्धिप्रजापतेः २६ अहंपारे समुद्रस्यहिरण्यपुरवासिनाम् ॥ जित्वाषष्टिंसहस्राणिरथिनामुग्रधन्विनाम् २७ शीर्यमाणानिकूलानिप्रवृद्धेनेववारिणा ॥ मयाकुरूणांवृंदानिपात्यमाना निपश्यवै २८ ध्वजवृक्षंपत्तितृणंरथसिंहगणायुतम् ॥ वनमादीपयिष्यामिकुरूणामस्त्रतेजसा २९ तानहंरथनीडेभ्यःशरैःसन्नतपर्वभिः ॥ यतान्सर्वा नतिबलान्योत्स्यमानानवस्थितान् ॥ एकःसंकालयिष्यामिवज्रपाणिरिवासुरान् ३०

मार्गस्यानिरोधउक्तः सर्वतोवाममबाणागमिष्यंतीत्यर्थः २२ आविद्धंभ्राम्यमाणंशिक्षितंशिक्षाम् २३ । २४ । २५ प्रगाढेसंकटे चित्रंनानाविधं तुमुलंसंकटयुद्धं सर्वत्रवेद्मीतिशेषः २६ जित्वाजेतुंशक्तः २७ । २८ रथसिंहगणैःआसमंतात्युतम् २९ । ३०

३१ । ३२ व्यवागाहत आलोडितवान् ३३ । ३४ उपावृत्य संमुखीभूय विकृष्य छित्वा कलधौताग्रैः स्वर्णरंजितफलकैर्बाणैः ३५ । ३६ । ३७ । ३८ । ३९ एनं दुःशासनम् ४० । ४१ । ४२

रौद्रं रुद्राद हं ह्यस्त्रं वारुणं वरुणादपि ॥ अस्त्रमाग्नेयमग्नेश्च वायव्यं मातरिश्वनः ॥ वज्रादीनि तथाऽस्त्राणि शक्रादहमवाप्तवान् ३१ धार्तराष्ट्रवनं घोरं नरसिंहाभिरक्षितम् ॥ अहमुत्पाटयिष्यामि वैराटे व्येतु ते भयम् ३२ ॥ वैशंपायन उवाच ॥ एवमाश्वासितस्तेन वैराटिः सव्यसाचिना ॥ व्यवागाहद्रथानीकं भीमं भीष्माभिरक्षितम् ३३ तमायांतं महाबाहुं जिगीषंतं रणे कुरून् ॥ अभ्यवारयदव्यग्रः क्रूरकर्माऽऽपगासुतः ३४ तस्य जिष्णुरुपावृत्य ध्वजं मूलादपातयत् ॥ विकृष्य कलधौताग्रैः स विद्धः प्रापतद्भुवि ३५ तं चित्रमाल्याभरणाः कृतविद्या मनस्विनः ॥ आगच्छन्भीमधन्वानं चत्वारश्च महाबलाः ३६ दुःशासनो विकर्णश्च दुःसहोऽथ विविंशतिः ॥ आगत्य भीमधन्वानं बीभत्सुं पर्यवारयन् ३७ दुःशासनस्तु भल्लेन विद्ध्वा वैराटिमुत्तरम् ॥ द्वितीयेनार्जुनं वीरः प्रत्याविध्यत्स्तनांतरे ३८ तस्य जिष्णुरुपावृत्य पृथुधारेण कार्मुकम् ॥ चकर्त गार्ध्रपत्रेण जातरूपपरिष्कृतम् ३९ अथैनं पंचभिः पश्चात्प्रत्यविध्यत्स्तनांतरे ॥ सोऽपयातो रणं हित्वा पार्थबाणप्रपीडितः ४० तं विकर्णः शरैस्तीक्ष्णैर्गृध्रपत्रैरजिह्मगैः ॥ विव्याध परवीरघ्नमर्जुनं धृतराष्ट्रजः ४१ ततस्तमपि कौंतेयः शरेणानतपर्वणा ॥ ललाटेऽभ्यहनत्तूर्णं स विद्धः प्रापतद्रथात् ४२ ततः पार्थमभिद्रुत्य दुःसहः सविविंशतिः ॥ अवाकिरच्छरैस्तीक्ष्णैः परीप्सुर्भ्रातरं रणे ४३ तावुभौ गार्ध्रपत्राभ्यां निशिताभ्यां धनंजयः ॥ विद्ध्वा युगपदव्यग्रस्तयोर्वाहानसूदयत् ४४ तौ हताश्वौ विभिन्नांगौ धृतराष्ट्रात्मजावुभौ ॥ अभिपत्य रथैरन्यैरपनीतौ पदानुगैः ४५ सर्वा दिशश्चाभ्यपतद्बीभत्सुरपराजितः ॥ किरीटमाली कौंतेयो लब्धलक्षो महाबलः ४६ ॥ इति श्रीमहाभारते विराटपर्वणि गोहरणपर्वणि अर्जुनदुःशासनादियुद्धे एकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ ध ॥

॥ वैशंपायन उवाच ॥ अथ संगम्य सर्वे ते कौरवाणां महारथाः ॥ अर्जुनं सहिता यत्ताः प्रत्ययुध्यंत भारत १ स सायकमयैर्जालैः सर्वतस्तान्महारथान् ॥ प्राच्छादयदमेयात्मा नीहारेणेव पर्वतान् २ नदद्भिश्च महानागैर्हेषमाणैश्च वाजिभिः ॥ भेरीशंखनिनादैश्च स शब्दस्तुमुलोऽभवत् ३ नराश्वकायान्निर्भिद्य लौहानि कवचानि च ॥ पार्थस्य शरजालानि विनिष्पेतुः सहस्रशः ४ त्वरमाणः शरानस्यन्पांडवः प्रबभौ रणे ॥ मध्यंदिनगतोऽर्चिष्मान्शरदीव दिवाकरः ५ उपप्लवंते वित्रस्ता रथेभ्यो रथिनस्तथा ॥ सादिनश्चाश्वपृष्ठेभ्यो भूमौ चैव पदातयः ६ शरैः संछिद्यमानानां कवचानां महात्मनाम् ॥ ताम्रराजतलौहानां प्रादुरासीन्महास्वनः ७ छन्नमायोधनं सर्वं शरीरैर्गतचेतसाम् ॥ गजाश्वसादिनां तत्र शितबाणात्तजीवितैः ८ रथोपस्थाभिपतितैरास्तृता मानवैर्मही ॥ प्रनृत्यतीव संग्रामे चापहस्तो धनंजयः ९ श्रुत्वा गांडीवनिर्घोषं विस्फूर्जितमिवाशनेः ॥ त्रस्तानि सर्वसैन्यानि व्यपागच्छन्महाहवात् १०

४३ । ४४ । ४५ लब्धलक्षः अप्रच्युतलक्षः ४६ ॥ इति विराटपर्वणि नीलकंठीये भारतभावदीपे एकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ ध ॥ ॥ ध ॥ ॥ अथेति १ निहारेण धूमोष्मणा २ । ३ । ४ । ५ उपप्लवंति इतस्ततो धावंति ६ । ७ आयोधनं रणभूः गतचेतसां मूढानां आत्तजीवितैर्मृतैः शरीरैः ८ रथोपस्थेभ्योऽभितः पतितैः ९ । १०

धारीणिशिरांसि स्रजश्चपतितानिदृश्यंते ११ । १२ । १३ त्रीणिचदशचेति त्रिदशानिवर्षाणि अवरुद्धःपार्थस्तदानींस्वेच्छयाऽचरदित्यर्थः १४ । १५ । १६ । १७ नागाहस्तिनएवकूर्माः

कुंडलोष्णीषधारीणिजातरूपस्रजस्तथा ॥ पतितानिस्मदृश्यंतेशिरांसिरणमूर्धनि ११ विशिखोन्मथितैर्गात्रैर्बाहुभिश्चसकार्मुकैः ॥ सहस्ताभरणैश्चान्यैःप्रच्छन्नाभातिमेदिनी १२ शिरसांपात्यमानानामंतरानिशितैःशरैः ॥ अश्मवृष्टिरिवाकाशादभवद्भरतर्षभ १३ दर्शयित्वातथाऽऽत्मानंरौद्रंरुद्रपराक्रमः ॥ अवरुद्धोऽचरत्पार्थोवर्षाणित्रिदशानिच ॥ क्रोधाग्निमुत्सृजन्वीरोधार्त्तराष्ट्रेषुपांडवः १४ तस्यतद्दहतःसैन्यंदृष्ट्वाचैवपराक्रमम् ॥ सर्वेशांतिपरायोधाधार्त्तराष्ट्रस्यपश्यतः १५ वित्रासयित्वातत्सैन्यंद्रावयित्वामहारथान् ॥ अर्जुनोजयतांश्रेष्ठःपर्यवर्त्ततभारत १६ प्रावर्त्तयन्नदींघोरांशोणितोदांतरंगिणीम् ॥ अस्थिशैवालसंबाधांयुगांतेकालनिर्मिताम् १७ शरचापप्लवांघोरांकेशशैवलशाद्वलाम् ॥ तनुत्रोष्णीषसंबाधांनागकूर्ममहाद्विपाम् १८ मेदोवसासृक्प्रवहांमहाभयाविवर्धिनीम् ॥ रौद्ररूपांमहाभीमांश्वापदैरभिनादिताम् १९ तीक्ष्णशस्त्रमहाग्राहांक्रव्यादगणसेविताम् ॥ मुक्ताहारोर्मिकलिलांचित्रालंकारबुद्बुदाम् २० शरसंघमहावर्त्तांनागनक्रांदुरत्ययाम् ॥ महारथमहाद्वीपांशंखदुंदुभिनिःस्वनाम् ॥ चकारचतदापार्थोनदींदुस्तरशोणिताम् २१ आददानस्यहिशरान्संधायचविमुंचतः ॥ विकर्षतश्चगांडीवंनकश्चिद्ददृशेजनः २२ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिअर्जुनसंकुलयुद्धेद्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ वैशंपायनउवाच ॥ ततोदुर्योधनःकर्णोदुःशासनविविंशती ॥ द्रोणश्चसहपुत्रेणकृपश्चापिमहारथः १ पुनर्ययुश्चसंरब्धाधनंजयजिघांसवः ॥ विस्फारयंतश्चापानिबलवंतिदृढानिच २ तान्विकीर्णपताकेनरथेनादित्यवर्चसा ॥ प्रत्युद्ययौमहाराजसमंताद्वानरध्वजः ३ ततःकृपश्चकर्णश्चद्रोणश्चरथिनांवरः ॥ तंमहास्त्रैर्महावीर्यंपरिवार्यधनंजयम् ४ शरौघान्सम्यगस्यंतोजीमूताइववार्षिकाः ॥ ववर्षुःशरवर्षाणिपातयंतोधनंजयम् ५ इषुभिर्बहुभिस्तूर्णंसमरेलोमवाहिभिः ॥ अदूरात्पर्यवस्थाप्यपूरयामासुराहृताः ६ तथातैरवकीर्णस्यदिव्यैरस्त्रैःसमंततः ॥ नतस्यद्व्यंगुलमपिविवृतंसंप्रदृश्यते ७ ततःप्रहस्यबीभत्सुर्दिव्यमैंद्रंमहारथः ॥ अस्त्रमादित्यसंकाशंगांडीवेसमयोजयत् ८ शररश्मिरिवादित्यःप्रतस्थेसमरेबली ॥ किरीटमालीकौंतेयःसर्वान्प्राच्छादयत्कुरून् ९ यथाबलाहकेविद्युत्पावकोवाशिलोच्चये ॥ तथागांडीवमभवदिंद्रायुधमिवानतम् १० यथावर्षतिपर्जन्येविद्युद्विभ्राजतेदिवि ॥ द्योतयंतीदिशःसर्वाःपृथिवींचसमंततः ११ तथादशदिशःसर्वाःपतद्गांडीवमावृणोत् ॥ नागाश्वरथिनःसर्वेमुमुहुस्तत्रभारत १२ सर्वेशांतिपरायोधाःस्वचित्तानिनलेभिरे ॥ संग्रामेविमुखाःसर्वेयोधास्तेहतचेतसः १३

महाद्विपाजलगजाश्चयस्यांतां १८ । १९ । २० । २१ । २२ ॥ इति विराटपर्वणि नी० भा० द्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ १ ततइति २ विकीर्णाविस्तारितापताकाध्वजांचलोयस्यतेन ३ । ४ पातयंतःपीडयंतः ५ पर्यवस्थाप्यस्तब्धीकृत्य इषुभिःपूरयामासुःआवृतवंतः ६ । ७ । ८ । ९ । १० । ११ । १२ स्वचित्तानिअयमहमितिनज्ञातवंतः १३

१४ ॥ इतिविराटप० नी० भा० त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ छ ॥ ॥ ततइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ अग्निचक्रंअलातचक्रं

एवंसर्वाणिसैन्यानिभग्नानिभरतर्षभ ॥ व्यद्रवंतदिशःसर्वानिराशानिस्वजीविते १४ ॥ इतिश्रीमहाभारतेवि०प० गोहरणप०उत्त०अर्जुनसंकुलयुद्धेत्रिषष्टितमो
ऽध्यायः ॥ ६३ ॥ वैशंपायनउवाच ॥ ततःशांतनवोभीष्मोभारतानांपितामहः ॥ वध्यमानेषुयोधेषुधनंजयमुपाद्रवत् १ प्रगृह्यकार्मुकश्रेष्ठंजातरूपपरि
ष्कृतम् ॥ शरानादायतीक्ष्णाग्रान्मर्मभेदान्प्रमाथिनः २ पांडुरेणातपत्रेणध्रियमाणेनमूर्धनि ॥ शुशुभेसनरव्याघ्रोगिरिःसूर्योदयेयथा ३ प्रध्मायशंखंगांगे
योधार्त्तराष्ट्रान्प्रहर्षयन् ॥ प्रदक्षिणमुपावृत्यबीभत्सुंसमवारयत् ४ तमुदीक्ष्यसमायांतंकौंतेयःपरवीरहा ॥ प्रत्यगृह्णात्प्रहृष्टात्माधाराधरमिवाचलः ५ ततोभी
ष्मःशरानष्टौध्वजेपार्थस्यवीर्यवान् ॥ समार्पयन्महावेगान्श्वसमानानिवोरगान् ६ तेध्वजंपांडुपुत्रस्यसमासाद्यपतत्रिणः ॥ ज्वलंतंकपिमाजघ्नुर्ध्वजाग्रनिलयां
श्चतान् ७ ततोभल्लेनमहतापृथुधारेणपांडवः ॥ छत्रंचिच्छेदभीष्मस्यतूर्णंतदपतद्भुवि ८ ध्वजंचैवास्यकौंतेयःशरैरभ्यहनद्भृशम् ॥ शीघ्रकृद्रथवाहांश्चतथो
भौपार्ष्णिसारथी ९ अमृष्यमाणस्तद्भीष्मोजानन्नपिसपांडवम् ॥ दिव्येनास्त्रेणमहताधनंजयमवाकिरत् १० तथैवपांडवोभीष्मेदिव्यमस्त्रमुदीरयन् ॥ प्रत्य
गृह्णादमेयात्मामहामेघमिवाचलः ११ तयोस्तदभवद्युद्धंतुमुलंलोमहर्षणम् ॥ भीष्मेणसहपार्थेनबलिवासवयोरिव १२ प्रैक्षंतकुरवःसर्वेयोधाश्चसहसैनिकाः ॥
भल्लैर्भल्लाःसमागम्यभीष्मपांडवयोर्युधि ॥ अंतरिक्षेव्यराजंतखद्योताःप्रावृषीवहि १३ अग्निचक्रमिवाविद्धंसव्यदक्षिणमस्यतः ॥ गांडीवमभवद्राजन्पार्थस्य
सृजतःशरान् १४ ततःसंछादयामासभीष्मंशरशतैःशितैः ॥ पर्वतंवारिधाराभिश्छादयन्निवतोयदः १५ तांसवेलामिवोद्भूतांशरवृष्टिंसमुत्थिताम् ॥ व्यधम
त्सायकैर्भीष्मःपांडवंसमवारयत् १६ ततस्तानिनिकृत्तानिशरजालानिभागशः ॥ समरेचव्यशीर्यंतफाल्गुनस्यरथंप्रति १७ ततःकनकपुंखानांशरवृष्टिंसमु
त्थिताम् ॥ पांडवस्यरथात्तूर्णंशलभानामिवायतिम् ॥ व्यधमत्तांपुनस्तस्यभीष्मःशरशतैःशितैः १८ ततस्तेकुरवःसर्वेसाधुसाध्वितिचाब्रुवन् ॥ दुष्करंकृत
वान्भीष्मोयदर्जुनमयोधयत् १९ बलवांस्तरुणोदक्षःक्षिप्रकारीधनंजयः ॥ कोऽन्यःसमर्थःपार्थस्यवेगंधारयितुंरणे २० ऋतेशांतनवाद्भीष्मात्कृष्णाद्वादेवकी
सुतात् ॥ आचार्यप्रवराद्वाऽपिभारद्वाजान्महाबलात् २१ अस्त्रैरस्त्राणिसंवार्यक्रीडंतौभरतर्षभौ ॥ चक्षूंषिसर्वभूतानांमोहयंतौमहाबलौ २२ प्राजापत्यंतथैवैं
द्रमाग्नेयंरौद्रदारुणम् ॥ कौबेरंवारुणंचैवयाम्यंवायव्यमेवच ॥ प्रयुंजानौमहात्मानौसमरेतौविचेरतुः २३ विस्मितान्यथभूतानितौदृष्ट्वासंयुगेतदा ॥ साधु
पार्थमहाबाहोसाधुभीष्मेतिचाब्रुवन् २४ नायंयुक्तोमनुष्येषुयोऽयंसंदृश्यतेमहान् ॥ महास्त्राणांसंप्रयोगःसमरेभीष्मपार्थयोः २५ ॥ वैशंपायनउवाच ॥ एवं
सर्वास्त्रविदुषोरस्त्रयुद्धमवर्तत ॥ अस्त्रयुद्धेतुनिर्वृत्तेशरयुद्धमवर्तत २६ अथजिष्णुरुपावृत्यक्षुरधारेणकार्मुकम् ॥ चकर्तभीष्मस्यतदाजातरूपपरिष्कृतम् २७

आविद्धंभ्राम्यमाणम् १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ उपावृत्यसमीपमेत्य २७

२८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ अस्त्रंबाणानांक्षेपणंकर्म ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ कूबरंरथयुगंधरं ४८ अपोवाहअप

निमेषांतरमात्रेणभीष्मोऽन्यत्कार्मुकंरणे ॥ समादायमहाबाहुःसज्यंचक्रेमहारथः ॥ शरांश्चसुबहून्क्रुद्धोमुमोचाशुधनंजये २८ अर्जुनोऽपिशरांस्तीक्ष्णान्भी
ष्मायनिशितान्बहून् ॥ चिक्षेपसुमहातेजास्तथाभीष्मश्चपांडवे २९ तयोर्दिव्यास्त्रविदुषोरस्यतोर्निशितान्शरान् ॥ नविशेषस्तदाराजन्लक्ष्यतेस्ममहात्म
नोः ३० अथावृणोद्दशदिशःशरैरातिरथस्तदा ॥ किरीटमालीकौंतेयःशूरःशांतनवस्तथा ३१ अतीवपांडवोभीष्मंभीष्मश्चातीवपांडवम् ॥ बभूवतस्मिन्संग्रा
मेराजन्लोकेतदद्भुतम् ३२ पांडवेनहताःशूराभीष्मस्यरथरक्षिणः ॥ शेरतेस्मतदाराजन्कौंतेयस्याभितोरथम् ३३ ततोगांडीवनिर्मुक्तानिरमित्रंचिकीर्षवः ॥
आगच्छन्पुंखसंश्लिष्टाःश्वेतवाहनपत्रिणः ३४ निष्पतंतोरथात्तस्यधौताहैरण्यवाससः ॥ आकाशेसमदृश्यंतहंसानामिवपंक्तयः ३५ तस्यतद्दिव्यमस्त्रंहिवि
गाढंचित्रमस्यतः ॥ प्रेक्षंतेस्मांतरिक्षस्थाःसर्वेदेवाःसवासवाः ३६ तंदृष्ट्वापरमप्रीतोगंधर्वश्चित्रमद्भुतम् ॥ शशंसदेवराजायचित्रसेनःप्रतापवान् ३७ पश्येमा
न्पार्थनिर्मुक्तान्संसक्तानिवगच्छतः ॥ चित्ररूपमिदंजिष्णोर्दिव्यमस्त्रमुदीर्यतः ३८ नेदंमनुष्याःसंदध्युर्नहीदंतेषुविद्यते ॥ पौराणानांमहास्त्राणांविचित्रोऽयं
समागमः ३९ आददानस्यहिशरान्संधायचविमुंचतः ॥ विकर्षतश्चगांडीवंनांतरंसमदृश्यत ४० मध्यंदिनगतंसूर्यंप्रतपंतमिवांबरे ॥ नाशक्नुवंतसैन्यानिपां
डवंप्रतिवीक्षितुम् ४१ तथैवभीष्मंगांगेयंद्रष्टुंनोत्सहतेजनः ४२ उभौविश्रुतकर्माणावुभौतीव्रपराक्रमौ ॥ उभौसदृशकर्माणावुभौयुधिसुदुर्जयौ ४३ इत्युक्तोदे
वराजस्तुपार्थभीष्मसमागमम् ॥ पूजयामासदिव्येनपुष्पवर्षेणभारत ४४ ततःशांतनवोभीष्मोवामंपार्श्वमताडयत् ॥ पश्यतःप्रतिसंधायविध्यतःसव्यसा
चिनः ४५ ततःप्रहस्यबीभत्सुःपृथुधारेणकार्मुकम् ॥ चिच्छेदगार्ध्रपत्रेणभीष्मस्यादित्यतेजसः ४६ अथैनंदशभिर्बाणैःप्रत्यविध्यत्स्तनांतरे ॥ यतमानंपरा
क्रांतंकुंतीपुत्रोधनंजयः ४७ सपीडितोमहाबाहुर्गृहीत्वारथकूबरम् ॥ गांगेयोयुद्धदुर्धर्षस्तस्थौदीर्घमिवांतरम् ४८ तंविसंज्ञमपोवाहसंयंतारथवाजिनाम् ॥ उप
देशमनुस्मृत्यरक्षमाणोमहारथम् ४९ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिभीष्मापयानेचतुःषष्टितमोऽध्यायः ॥ ६४ ॥ ॥ ७ ॥ ॥ वैशंपा
यनउवाच ॥ भीष्मेतुसंग्रामशिरोविहायपलायमानेधृतराष्ट्रपुत्रः ॥ उत्सृज्यकेतुंविनदन्महात्माधनुर्विगृह्यार्जुनमाससाद १ सभीमधन्वानमुदग्रवीर्यंधनंजयं
शत्रुगणेचरंतम् ॥ आकर्णपूर्णायतचोदितेनविव्याधभल्लेनललाटमध्ये २ सतेनबाणेनसमर्पितेनजांबूनदाग्रेणसुसंहितेन ॥ रराजराजन्महनीयकर्मायथैकपर्वा
रुचिरैकशृंगः ३ अथास्यबाणेनविदारितस्यप्रादुर्बभूवासृगजस्रमुष्णम् ॥ सतस्यजांबूनदपुंखचित्रोभित्त्वाललाटंसुविराजतेस्म ४ दुर्योधनश्चापितमुग्रतेजाः
पार्थश्चदुर्योधनमेकवीरः ॥ अन्योन्यमाजौपुरुषप्रवीरौसमौसमाजग्मतुराजमीढौ ५

सारयामास ४९ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपेचतुःषष्टितमो
ऽध्यायः ॥ ६४ ॥ धृतराष्ट्रपुत्रोदुर्योधनः उत्सृज्यउन्मुच्य केतुंपताकां १ । २ । एकशृंगःपर्वतोयथाएकेनपर्ववतादीर्घवंशेन एकःपर्वायस्मिन्निति समासः मतुब्लोपआर्षः ३ असृक्रक्तं ४ । ५

६ । ७ महायसेनमहाफलकेन ८ । ९ । १० । ११ अपजग्मुःपलायनंकृतवंतः १२ । १३ अभिषंगात्पराभवात्द्रवंतंआलक्ष्य प्रास्फोटयत् आस्फोटंबाहुशब्दंकृतवान् १४ तूर्याणिजयवाद्यानि

ततःप्रभिन्नेनमहागजेनमहीधराभेनपुनर्विकर्णः ॥ रथैश्चतुर्भिर्गजपादरक्षैःकुंतीसुतंजिष्णुमथाभ्यधावत् ६ तमापतंतंत्वरितंगजेंद्रंधनंजयःकुंभविभागमध्ये ॥
आकर्णपूर्णेनमहायसेनबाणेनविव्याधमहाजवेन ७ पार्थेनसृष्टःसतुगार्ध्रपत्रआपुंखदेशात्प्रविवेशनागम् ॥ विदार्यशैलप्रवरंप्रकाशंयथाऽशनिःपर्वतमिंद्रसृष्टः ८
शरप्रतप्तःसतुनागराजःप्रवेपितांगोव्यथितांतरात्मा ॥ संसीदमानोनिपपातमह्यांवज्राहतंशृंगमिवाचलस्य ९ निपातितेदंतिवरेपृथिव्यांत्रासाद्विकर्णःसहसा
ऽवतीर्य ॥ तूर्णंपदान्यष्टशतानिगत्वाविविंशतेःस्यंदनमारुरोह १० निहत्यनागंतुशरेणतेनवज्रोपमेनाद्रिवरांबुदाभम् ॥ तथाविधेनैवशरेणपार्थोदुर्योधनंवक्षसि
निर्बिभेद ११ ततोगजेराजनिचैवभिन्नेभग्नेविकर्णेचसपादरक्षे ॥ गांडीवमुक्तैर्विशिखैःप्रणुन्नास्तेयोधमुख्याःसहसाऽपजग्मुः १२ दृष्ट्वैवपार्थेनहतंचनागंयोधां
श्चसर्वान्द्रवतोनिशम्य ॥ रथंसमावृत्त्यकुरुप्रवीरोरणात्प्रदुद्रावयतोनपार्थः १३ तंभीमरूपंत्वरितंद्रवंतंदुर्योधनंशत्रुसहोऽभिषंगात् ॥ प्रास्फोटयद्योद्धुमनाः
किरीटीबाणेनविद्धंरुधिरंवमंतं १४ ॥ अर्जुनउवाच ॥ विहायकीर्तिंविपुलंयशश्चयुद्धात्परावृत्त्यपलायसेकिम् ॥ नतेऽद्यतूर्याणिसमाहतानितथैवराज्यादवरो
पितस्य १५ युधिष्ठिरस्यास्मिनिदेशकारीपार्थस्तृतीयोयुधिसंस्थितोऽस्मि ॥ तदर्थमावृत्त्यमुखंप्रयच्छनरेंद्रवृत्तंस्मरधार्त्तराष्ट्र १६ मोघंतवेदंभुविनामधेयं
दुर्योधनेतीहकृतंपुरस्तात् ॥ नहीहदुर्योधनतातवास्तिपलायमानस्यरणंविहाय १७ नतेपुरस्तादथपृष्ठतोवापश्यामिदुर्योधनरक्षितारम् ॥ अपेहियुद्धात्पुरुष
प्रवीरप्राणान्प्रियान्पांडवतोऽद्यरक्ष १८ ॥ इतिश्रीम० विराटप० दुर्योधनापयानेपंचषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ वैशंपायनउवाच ॥ आहूयमानश्च
सतेनसंख्येमहात्मनावैधृतराष्ट्रपुत्रः ॥ निवर्तितस्तस्यगिरांकुशेनमहागजोमत्तइवांकुशेन १ सोऽमृष्यमाणोवचसाऽभिमृष्टोमहारथेनातिरथस्तरस्वी ॥ पर्याव
वर्तांथरथेनवीरोभोगीयथापादतलाभिमृष्टः २ तंप्रेक्ष्यकर्णःपरिवर्त्तमानंनिवर्त्यसंस्तभ्यचविद्धगात्रम् ॥ दुर्योधनस्योत्तरतोऽभ्यगच्छत्पार्थंनृवीरोयुधिहेममाली
३ भीष्मस्ततःशांतनवोविवृत्त्यहिरण्यकक्षस्त्वरयाऽभिषंगी ॥ दुर्योधनंपश्चिमतोऽभ्यरक्षत्पार्थान्महाबाहुरधिज्यधन्वा ४ द्रोणःकृपश्चैवविविंशतिश्चदुःशास
नश्चैवविवृत्त्यशीघ्रम् ॥ सर्वेपुरस्ताद्विततोरुचापादुर्योधनार्थंत्वरिताऽभ्युपेयुः ५ सतान्यनीकानिनिवर्त्तमानान्यालोक्यपूर्णौघनिभानिपार्थः ॥ हंसोयथामेघ
मिवापतंतंधनंजयःप्रत्यतपत्तरस्वी ६ तेसर्वतःसंपरिवार्यपार्थमस्त्राणिदिव्यानिसमाददानाः ॥ ववर्षुरभ्येत्यशरैःसमंतान्मेघायथाभूधरमंबुवर्गैः ७ ततोऽस्त्रमस्त्रे
णनिवार्यतेषांगांडीवधन्वाकुरुपुंगवानाम् ॥ संमोहनंशत्रुसहोऽन्यदस्त्रंप्रादुश्चकारैंद्रिरपारणीयम् ८

तथैवेत्यादिउत्तरान्वयि १९ तृतीयःपार्थःपृथासुतोऽर्जुनोऽस्मि वृत्तंद्यूतादिष्वधर्मं १६ । १७ । १८ ॥ इतिविराटप०नीलकंठीये० भारतभावदीपेपंचषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ आहूयेति १
पर्याववर्तपरावृत्तवान् २ नृवीरोदुर्योधनः ३ अभिषंगीशत्रुपराजयसमर्थः ४ त्वरिताःअभ्युपेयुःसंधिरार्षः ५ हंसःसूर्यःप्रत्यतपत्प्रतितापितवान् ६ । ७ । ८

विद्दृत्यव्याप्य ९ । १० शांतिपराःउपरतचित्ताः ११ । १२ । १३ अमूढसंज्ञैर्भीष्मादिभिःसव्यतःकृतैरुपलक्षितेनभवतायातव्यंगंतव्यं १४ । १५ । १६ । १७ । १८ । १९ अयमर्जुनोभवतो
विसंज्ञान्युष्मान्यथानमुच्येत नमोचनंस्यात्तथाप्रमथ्नीत उपमृद्यात्नतुमृदितवानितिभावः २० शांतिंनष्टचित्ततां नृशंसंकर्तुंसंमूढान्मारयितुं नअलंनयोग्यः तत्रहेतुः नपापेऽस्यमनोस्तियतो

ततोदिशश्चानुदिशोविद्दृत्यशरैःसुधारैर्निशितैःसुपत्रैः ॥ गांडीवघोषेणमनांसितेषांमहाबलःप्रव्यथयांचकार ९ ततःपुनर्भीमरवंप्रगृह्यदोर्भ्यांमहाशंखमुदार
घोषं ॥ व्यनादयत्सप्रदिशोदिशःखंभुवंचपार्थोद्विषतांनिहंता १० तेशंखनादेनकुरुप्रवीराःसंमोहिताःपार्थसमीरितेन ॥ उत्सृज्यचापानिदुरासदानिसर्वेतदा
शांतिपराबभूवुः ११ तथाविसंज्ञेषुचतेषुपार्थःस्मृत्वाचवाक्यानितथोत्तरायाः ॥ निर्याहिमध्यादितिमत्स्यपुत्रमुवाचयावत्कुरवोविसंज्ञाः १२ आचार्यशारद्व
तयोःसुशुक्लेकर्णस्यपीतंरुचिरंचवस्त्रं ॥ द्रौणेश्चराज्ञश्चतथैवनीलेवस्त्रेसमादत्स्वनरप्रवीर १३ भीष्मस्यसंज्ञांतुतथैवमन्येजानातिसोऽस्त्रप्रतिघातमेषः ॥ एतस्यवा
हान्कुरुसव्यतस्त्वमेवंहियातव्यममूढसंज्ञैः १४ रश्मीन्समुत्सृज्यततोमहात्मारथादवप्लुत्यविराटपुत्रः ॥ वस्त्राण्युपादायमहारथानांतूर्णंपुनःस्वंरथमारुरोह १५
ततोऽन्वशासच्चतुरःसदश्वान्पुत्रोविराटस्यहिरण्यकक्षान् ॥ तेतद्व्यतीयुर्ध्वजिनामनीकंश्वेतावहंतोऽर्जुनमाजिमध्यात् १६ तथाऽनुयांतंपुरुषप्रवीरंभीष्मःशरैर
भ्यहनत्तरस्वी ॥ सचापिभीष्मस्यहयान्निहत्याविव्याधपार्थोदशभिःपृषत्कैः १७ ततोऽर्जुनोभीष्ममपास्ययुद्धेविद्ध्वाऽस्ययंतारमरिष्टधन्वा ॥ तस्थौविमुक्तोरथवृं
दमध्यान्मेघंविदार्येवसहस्ररश्मिः १८लब्ध्वाहिसंज्ञांतुकुरुप्रवीराःपार्थंनिरीक्ष्याथसुरेंद्रकल्पम् ॥ रणेविमुक्तंस्थितमेकमाजौसधार्तराष्ट्रस्त्वरितंबभाषे १९ अयं
कथंवैभवतोविमुक्तस्तथाप्रमथ्नीतयथानमुच्येत् ॥ तमब्रवीच्छांतनवःप्रहस्यक्वतेगताबुद्धिरभूत्क्ववीर्यम् २० शांतिंपरांप्राप्ययदास्थितोऽभूरुत्सृज्यबाणांश्चधनुर्वि
चित्रम् ॥ नत्वेषबीभत्सुरलंनृशंसंकर्तुंनपापेऽस्यमनोविशिष्टम् २१ त्रैलोक्यहेतोर्नजहेत्स्वधर्मंसर्वेनतस्मान्निहतारणेऽस्मिन् ॥ क्षिप्रंकुरून्याहिकुरुप्रवीरविजि
त्यगाश्चप्रतियातुपार्थः ॥ मातेस्वकोऽर्थोनिपतेतमोहात्तत्संविधातव्यमरिष्टबंधम् २२ ॥ वैशंपायनउवाच ॥ दुर्योधनस्तस्यतुतन्निशम्यपितामहस्यात्महितं
वचोऽथ ॥ अतीतकामोयुधिसोऽत्यमर्षीराजाविनिःश्वस्यबभूवतूष्णीम् २३ तद्भीष्मवाक्यंहितमीक्ष्यसर्वेधनंजयाग्निंचविवर्धमानम् ॥ निवर्तनायैवमनोनिदध्युर्दु
र्योधनंतेपरिरक्षमाणाः २४ तान्प्रस्थितान्प्रीतमनाःसपार्थोधनंजयःप्रेक्ष्यकुरुप्रवीरान् ॥ अभाषमाणोऽनुनयंमुहूर्तंवचोऽब्रवीत्संपरिहृत्यभूयः २५ पितामहं
शांतनवंचवृद्धंद्रोणंगुरुंचप्रणिपत्यमूर्ध्ना ॥ द्रौणिंकृपंचैवकुरूंश्चमान्याञ्छरैर्विचित्रैरभिवाद्यचैव २६ दुर्योधनस्योत्तमरत्नचित्रंचिच्छेदपार्थोमुकुटंशरेण ॥ आमं
त्र्यवीरांश्चतथैवमान्यान्गांडीवघोषेणविनाद्यलोकान् २७सदेवदत्तंसहसाविनाद्यविदार्यवीरोद्विषतांमनांसि॥ध्वजेनसर्वानभिभूयशत्रून्सहेममालेनविराजमानः २८

विशिष्टंश्रेष्ठं २१ अरिष्टबंधंकल्याणानुबंधिकर्म २२ । २३ । २४ परिहृत्यपरिवृत्य २५ शरैरेवपाददेशेपातितैरभिवाद्य मान्यान्बाल्हीकसोमदत्तादीन् २६ मुकुटंचिच्छेदेतिदुर्योधनस्य
मरणमेवसूचितं २७ हेममालयासहितेनसहेममालेनध्वजेन २८

२९ ॥ ३० ॥ ॥ इति विराटप० नील० भा० षट्षष्टितमोध्यायः ॥ ६६ ॥ ॥ ७ ॥ ॥ वृषभेक्षणः श्रेष्ठदृष्टिः १ । २ । ३ । ४ । ५ । ६ । ७ आपवंतं पुंस्त्वमार्षम्

दृष्ट्वाप्रयातांस्तुकुरून्किरीटीहृष्टोऽब्रवीत्तत्रसमत्स्यपुत्रम् ॥ आवर्त्तयाश्वान्पशवोजितास्तेयाताःपरेयाहिपुरंप्रहृष्टः २९ देवास्तुदृष्ट्वामहदद्भुतंतद्युद्धंकुरूणां सहफाल्गुनेन ॥ जग्मुर्यथास्वंभवनंप्रतीताःपार्थस्यकर्माणिविचिंतयंतः ३० ॥ इतिश्रीमहाभारतेविराटप० गोहरणप० समस्तकौरवपलायनेषट्षष्टितमोऽध्यायः ॥ ६६ ॥ वैशंपायनउवाच ॥ ततोविजित्यसंग्रामेकुरून्सवृषभेक्षणः ॥ समानयामासतदाविराटस्यधनंमहत् १ गतेषुचप्रभग्नेषुधार्त्तराष्ट्रेषुसर्वतः ॥ वनान्निष्क्रम्यगहनाद्बहवःकुरुसैनिकाः २ भयात्संत्रस्तमनसःसमाजग्मुस्ततस्ततः ॥ मुक्तकेशास्त्वदृश्यंतस्थिताःप्रांजलयस्तदा ३ क्षुत्पिपासापरिश्रांताविदेशस्थाविचेतसः ॥ ऊचुःप्रणम्यसंभ्रांताःपार्थकिंकरवामते ४ ॥ अर्जुनउवाच ॥ स्वस्तिव्रजतवोभद्रंनभेतव्यंकथंचन ॥ नाहमार्तान्जिघांसामिभृशमाश्वासयामिवः ५ ॥ वैशंपायनउवाच ॥ तस्यतामभयांवाचंश्रुत्वायोधाःसमागताः ॥ आयुःकीर्तियशोदाभिस्तमाशीर्भिरनंदयन् ६ ततोऽर्जुनंनागमिवप्रभिन्नमुत्सृज्यशत्रून्विनिवर्तमानम् ॥ विराटराष्ट्राभिमुखंप्रयांतंनाशक्नुवंस्तंकुरवोऽभियातुम् ७ ततःसतन्मेघमिवापतंतंविद्राव्यपार्थःकुरुमेघसैन्यम् ॥ मत्स्यस्यपुत्रंद्विषतांनिहंतावचोऽब्रवीत्संपरिरभ्यभूयः ८ पितुःसकाशेतवतातसर्वेवसंतिपार्थाविदितंतवैव ॥ तान्माप्रशंसेर्नगरंप्रविश्यभीतःप्रणश्येद्धिसमत्स्यराजः ९ मयाजितासाध्वजिनीकुरूणांमयाचगावोविजिताद्विषद्भ्यः ॥ पितुःसकाशंनगरंप्रविश्यत्वमात्मनःकर्मकृतंब्रवीहि १० ॥ उत्तरउवाच ॥ यत्तेकृतंकर्मनपारणीयंतत्कर्मकर्तुंममनास्तिशक्तिः ॥ नत्वांप्रवक्ष्यामिपितुःसकाशेयावन्नमांवक्ष्यसिसव्यसाचिन् ११ ॥ वैशंपायनउवाच ॥ सशत्रुसेनामवजित्यजिष्णुराच्छिद्यसर्वंचधनंकुरुभ्यः ॥ श्मशानमागत्यपुनःशमींतामभ्येत्यतस्थौशरविक्षतांगः १२ ततःसवन्हिप्रतिमोमहाकपिःसहैवभूतैर्दिवमुत्पपात ॥ तथैवमायाविहिताबभूवध्वजंचसैंहंयुयुजेरथेपुनः १३ विधायतच्चायुधमाजिवर्धनंकुरूत्तमानामिषुधीःशरांस्तथा ॥ प्रायात्समत्स्योनगरंप्रहृष्टःकिरीटिनासारथिनामहात्मना १४ पार्थस्तुकृत्वापरमार्थकर्मनिहत्यशत्रून्द्विषतांनिहंता ॥ चकारवेणींचतथैवभूयोजग्राहरश्मीन्पुनरुत्तरस्य ॥ विवेशहृष्टोनगरंमहामनाबृहन्नलारूपमुपेत्यसारथिः १५ ॥ वैशंपायनउवाच ॥ ततोनिवृत्ताःकुरवःप्रभग्नावशमास्थिताः ॥ हस्तिनापुरमुद्दिश्यसर्वेदीनाययुस्तदा १६ पंथानमुपसंगम्यफाल्गुनोवाक्यमब्रवीत् १७ राजपुत्रप्रत्यवेक्षसमानीतानिसर्वशः ॥ गोकुलानिमहाबाहोवीरगोपालकैःसह १८ ततोऽपराह्णेयास्यामोविराटनगरंप्रति ॥ आश्वास्यपाययित्वाचपरिप्लाव्यचवाजिनः १९ गच्छंतुत्वरिताश्चेमेगोपालाःप्रेषितास्त्वया ॥ नगरेप्रियमाख्यातुंघोषयंतुचतेजयम् २०

८ । ९ । १० । ११ । १२ सैंहंध्वजंविराटीयं पूर्वंतत्रस्थापितं १३ विधाययथावत्स्थापयित्वा १४ । १५ वशंपरवशतां आस्थिताःप्राप्ताः १६ । १७ । १८ । १९ । २०

२१ विजये नतृप्तौ इतोऽप्यधिकंयुद्धंप्रार्थयानौ यद्वा विजयेनस्वीयेनतृप्तौ आनंदिनौ स्वस्यभांडंअलंकारादिकंयत्पूर्वमुत्सृष्टंतत्तथैवशरीरेरथेचआरोपयतांआरोपितवंतौ २२ धनंगोधनं प्रतीतो

॥ वैशंपायनउवाच ॥ अथोत्तरस्त्वरमाणःसदूतानाज्ञापयद्वचनात्फाल्गुनस्य ॥ आचक्षध्वंविजयं पार्थिवस्यभग्नाःपरेविजिताश्चापिगावः २१ इत्येवंतौभारतमत्स्यवीरौसंमंत्र्यसंगम्यततःशमीताम् ॥ अभ्येत्यभूयोविजयेनतृप्तावुत्सृष्टमारोपयतांस्वभांडम् २२ सशत्रुसेनामभिभूयसर्वामाच्छिद्यसर्वंचधनंकुरुभ्यः ॥ वैराटिरायान्नगरंप्रतीतोबृहन्नलासारथिनाप्रवीरः २३ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिउत्तरागमनेसप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ ७ ॥

॥ वैशंपायनउवाच ॥ धनंचापिविजित्याशुविराटोवाहिनीपतिः ॥ विवेशनगरंहृष्टश्चतुर्भिःपांडवैःसह १ जित्वात्रिगर्तान्संग्रामेगाश्चैवादायसर्वशः ॥ अशोभतमहाराजसहपार्थैःश्रियावृतः २ तमासनगतंवीरंसुहृदांहर्षवर्द्धनम् ॥ उपासांचक्रिरेसर्वेसहपार्थैःपरंतपाः ३ उपतस्थुःप्रकृतयःसमस्ताब्राह्मणैःसह ॥ सभाजितःससैन्यस्तुप्रतिनंद्याथमत्स्यराट् ४ विसर्जयामासतदाद्विजांश्चप्रकृतीस्तथा ॥ तथासराजामत्स्यानांविराटोवाहिनीपतिः ५ उत्तरंपरिपप्रच्छकयातइतिचाब्रवीत ॥ आचख्युस्तस्यतत्सर्वंस्त्रियःकन्याश्चवेश्मनि ६ अंतःपुरचराश्चैवकुरुभिर्गोधनंहृतम् ॥ विजेतुमभिसंरब्धएकएवातिसाहसात ॥ बृहन्नलासहायश्चनिर्गतःपृथिवींजयः ७ उपयातानतिरथान्भीष्मंशांतनवंकृपम् ॥ कर्णंदुर्योधनंद्रोणंद्रोणपुत्रंचषड्रथान् ८ ॥ वैशंपायनउवाच ॥ राजाविराटोऽथभृशाभितप्तःश्रुत्वासुतंत्वेकरथेनयातम् ॥ बृहन्नलासारथिमाजिवर्धनंप्रोवाचसर्वानथमंत्रिमुख्यान् ९ सर्वथाकुरवस्तेहियेचान्येवसुधाधिपाः ॥ त्रिगर्तान्निर्जितान्श्रुत्वानस्थास्यंतिकदाचन १० तस्माद्गच्छंतुमेयोधाबलेनमहतावृताः ॥ उत्तरस्यपरीप्सार्थंयेत्रिगर्तैरविक्षताः ११ हयांश्चनागांश्चरथांश्चशीघ्रंपदातिसंघांश्चततःप्रवीरान् ॥ प्रस्थापयामाससुतस्यहेतोर्विचित्रशस्त्राभरणोपपन्नान् १२ एवंसराजामत्स्यानांविराटोवाहिनीपतिः ॥ व्यादिदेशाथतांक्षिप्रंवाहिनींचतुरंगिणीम् १३ कुमारमाशुजानीतयदिजीवतिवानवा ॥ यस्ययंतागतःषंढोमन्येऽहंसनजीवति १४ ॥ वैशंपायनउवाच ॥ तमब्रवीद्धर्मराजोविहस्यविराटराजंतुभृशाभितप्तम् ॥ बृहन्नलासारथिश्चेन्नरेंद्रपरेनेनेष्यंतितवाद्यगास्ताः १५ सर्वान्महीपान्सहितान्कुरूंश्चतथैवदेवासुरसिद्धयक्षान् ॥ अतीवजेतुंसमरेसुतस्तेस्वनुष्ठितःसारथिनाहितेन १६ ॥ वैशंपायनउवाच ॥ अथोत्तरेणप्रहितादूतास्तेशीघ्रगामिनः ॥ विराटनगरंप्राप्यविजयंसमवेदयन् १७ राज्ञस्तत्सर्वमाचख्यौमंत्रीविजयमुत्तमम् ॥ पराजयंकुरूणांचाप्युपायांतंतथोत्तरम् १८ सर्वाविनिर्जितागावःकुरवश्चपराजिताः ॥ उत्तरःसहसूतेनकुशलीचपरंतपः १९ ॥ युधिष्ठिरउवाच ॥ दिष्ट्याविनिर्जितागावःकुरवश्चपलायिताः ॥ नाद्भुतंत्वेवमन्येऽहंयत्तेपुत्रोऽजयत्कुरून् २०

हृष्टः २३ ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपेसप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ ७ ॥ ॥ दक्षिणगोग्रहवृत्तांतमाहधनंचेति १ । २ । ३ सभाजितः पूजितः ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०

२१ आच्छादयित्वावस्त्रादिभिरभ्यर्च्य २२ । २३ । २४ शृंगाटकेषुचतुष्पथेषु । 'शृंगाटकंभवेद्वारिकंटकेचचतुष्पथे' इतिमेदिनी २५ शृंगारवेषाभरणानाट्यरसत्वेषाभरणा । 'शृंगारःसुरतेनाट्ये' इतिमेदिनी २६ स्वस्तिकंमंगलारार्त्तिकादिदधिदूर्वादिचपाणौयस्यतत्स्वस्तिकपाणिभूतंऋद्धिमत् वारिजाःशंखाः २७ नांदीवाद्याःमंगलवाद्यानि तूर्यवाद्याजयवाद्यानि २८ । २९

ध्रुवएवजयस्तस्ययस्ययंताबृहन्नला ॥ वैशंपायनउवाच ॥ ततोविराटोनृपतिःसंप्रहृष्टतनूरुहः २१ श्रुत्वासविजयंतस्यकुमारस्यामितौजसः ॥ आच्छादयित्वादूतांस्तान्मंत्रिणंसोऽभ्यचोदयत् २२ राजमार्गाःक्रियंतांमेपताकाभिरलंकृताः ॥ पुष्पोपहारैरर्च्यंतांदेवताश्चापिसर्वशः २३ कुमारायोधमुख्याश्चगणिकाश्चस्वलंकृताः ॥ वादित्राणिचसर्वाणिप्रत्युद्यांतुसुतंमम २४ घंटावान्मानवःशीघ्रंमत्तमारुह्यवारणम् ॥ शृंगाटकेषुसर्वेषुआख्यातुविजयंमम २५ उत्तराचकुमारीभिर्बह्वीभिःपरिवारिता ॥ शृंगारवेषा भरणाप्रत्युद्यातुसुतंमम २६ ॥ वैशंपायनउवाच ॥ श्रुत्वाचेदंवचनंपार्थिवस्यसर्वंपुरंस्वस्तिकपाणिभूतम् ॥ भेर्यश्चतूर्याणिचवारिजाश्चवेषैःपरार्द्ध्यैःप्रमदाःशुभाश्च २७ तथैवसूतैःसहमागधैश्चनांदीवाद्याःपणवास्तूर्यवाद्याः ॥ पुराद्विराटस्यमहाबलस्यप्रत्युद्ययुःपुत्रमनंतवीर्यम् २८ ॥ वैशंपायनउवाच ॥ प्रस्थाप्यसेनांकन्याश्चगणिकाश्चस्वलंकृताः ॥ मत्स्यराजोमहाप्राज्ञःप्रहृष्टइदमब्रवीत् २९ अक्षानाहरसैरंध्रिकंकद्यूतंप्रवर्त्तताम् ॥ तंतथावादिनंदृष्ट्वापांडवःप्रत्यभाषत ३० नदेवितव्यंहृष्टेनाकितवेनेतिनःश्रुतम् ॥ तंत्वामद्यमुदायुक्तंनाहंदेवितुमुत्सहे ॥ प्रियंतुतेचिकीर्षामिवर्त्ततांयदिमन्यसे ३१ ॥ विराटउवाच ॥ स्त्रियोगावोहिरण्यंचयच्चान्यद्वसुकिंचन ॥ नमेकिंचित्त्वयारक्ष्यंतेअंतरेणापिदेवितुम् ३२ ॥ कंकउवाच ॥ किंतेद्यूतेनराजेंद्रबहुदोषेणमानद ॥ देवनेबहवोदोषास्तस्मात्तत्परिवर्जयेत् ३३ श्रुतस्तेयदिवादृष्टःपांडवेयोयुधिष्ठिरः ॥ सराष्ट्रंसुमहत्स्फीतंभ्रातॄंश्चत्रिदशोपमान् ३४ राज्यंहारितवान्सर्वंतस्माद्द्यूतंनरोचये ॥ अथवामन्यसेराजन्दीव्यामयदिरोचते ३५ ॥ वैशंपायनउवाच ॥ प्रवर्त्तमानेद्यूतेतुमत्स्यःपांडवमब्रवीत् ॥ पश्यपुत्रेणमेयुद्धेतादृशाःकुरवोजिताः ३६ ततोऽब्रवीन्महात्मासएनंराजायुधिष्ठिरः ॥ बृहन्नलायस्ययंताकथंसनजयेद्युधि ३७ इत्युक्तःकुपितोराजामत्स्यःपांडवमब्रवीत् ॥ समंपुत्रेणमेषंढंब्रह्मबंधोप्रशंससि ३८ वाच्यावाच्यंनजानीषेनूनंमामवमन्यसे ॥ भीष्मद्रोणमुखान्सर्वान्कस्मान्नसविजेष्यति ३९ वयस्यत्वात्तुतेब्रह्मन्नपराधमिमंक्षमे ॥ नेदृशंतुपुनर्वाच्यंयदिजीवितुमिच्छसि ४० ॥ युधिष्ठिरउवाच ॥ यत्रद्रोणस्तथाभीष्मोद्रौणिर्वैकर्त्तनःकृपः ॥ दुर्योधनश्चराजेंद्रस्तथाऽन्येचमहारथाः ४१ मरुद्गणैःपरिवृतःसाक्षादपिमरुत्पतिः ॥ कोऽन्योबृहन्नलायास्तान्प्रतियुध्येतसंगतान् ४२ यस्यबाहुबलेतुल्योनभूतोनभविष्यति ॥ अतीवसमरंदृष्ट्वाहर्षोयस्योपजायते ४३ योऽजयत्संगतान्सर्वान्ससुरासुरमानवान् ॥ तादृशेनसहायेनकस्मात्सनविजेष्यते ४४ ॥ विराटउवाच ॥ बहुशःप्रतिषिद्धोऽसिनचवाचंनियच्छसि ॥ नियंताचेन्नविद्येतनकश्चिद्धर्ममाचरेत् ४५

३० हृष्टेनत्वयासह कितवेनमयानदेवितव्यं ३१ अंतरेणविनाऽपिद्यूतं ३२ । ३३ । ३४ । ३५ । ३६ । ३७ ब्रह्मबंधोब्राह्मणाधम ३८ । ३९ वयस्यत्वात्सख्यात् ४० । ४१ । ४२ । ४३ । ४४ नियच्छसिनिगृह्णासि ४५

नैवंवाच्यमिति ४६ नस्तःनासिकातः ४७ । ४८ नस्ततःनासिकानाडीतः तनोतिदेहंप्रथयतीतितच्छब्दोनाडीवचनः पुरीततिशेते इत्यादिप्रयोगदर्शनात् ४९ । ५० । ५१ । ५२ । ५३ कुरुराजोयुधिष्ठिरःकर्णंकर्णेउपाजपत्उपांशुउक्तवान् ५४ । ५५ । ५६ । ५७ अनेकाग्रंव्यग्रं ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ हेराजन्तेतवतत्कर्मनदूषयामि यत्अदूषकंपरापत्रादहीनं हन्यादन्यायितत्दूष्यमपिनदूषयामि यतःबलवंतंप्रभुं क्षिप्रंशीघ्रं दारुणंनृशंसं कर्मप्राप्नुयादेव । 'दृष्टोदृप्यतिदृप्तोधर्ममतिक्रामति'इतिस्मृतेः कलयंतमितिपाठेजानंतमपि ६५ । ६६

वैशंपायनउवाच ॥ ततःप्रकुपितोराजातमक्षेणाहनद्भृशम् ॥ मुखेयुधिष्ठिरंकोपान्नैवमित्येवभर्त्सयन् ४६ बलवत्प्रतिविद्धस्यनस्तःशोणितमावहत् ॥ तदप्राप्तंमहींपार्थःपाणिभ्यांप्रत्यगृह्णत ४७ अवैक्षतसधर्मात्माद्रौपदींपार्श्वतःस्थिताम् ॥ साज्ञात्वातमभिप्रायंभर्तुश्चित्तवशानुगा ४८ पात्रंगृहीत्वासौवर्णंजलपूर्णमनिंदिता ॥ तच्छोणितंप्रत्यगृह्णाद्यत्प्रसुस्रावनस्ततः ४९ अथोत्तरःशुभैर्गंधैर्माल्यैश्चविविधैस्तथा ॥ अवकीर्यमाणःसंहृष्टोनगरंस्वैरमागतः ५० सभाज्यमानःपौरैश्चस्त्रीभिर्जानपदैस्तथा ॥ आसाद्यभवनद्वारंपित्रेसंप्रत्यवेदयत् ५१ ततोद्वास्थःप्रविश्यैवविराटमिदमब्रवीत् ॥ बृहन्नलासहायश्चपुत्रोद्वार्युत्तरःस्थितः ५२ ततोहृष्टोमत्स्यराजःक्षत्तारमिदमब्रवीत् ॥ प्रवेश्यतामुभौतूर्णंदर्शनेप्सुरहंतयोः ५३ क्षत्तारंकुरुराजस्तुशनैःकर्णमुपाजपत् ॥ उत्तरःप्रविशत्वेकोनप्रवेश्याबृहन्नला ५४ एतस्यहिमहाबाहोव्रतमेतत्समाहितम् ॥ योममांगेव्रणंकुर्याच्छोणितंवाऽपिदर्शयेत् ॥ अन्यत्रसंग्रामगतान्नसजीवेत्कथंचन ५५ नमृष्याद्भृशसंक्रुद्धोमांदृष्ट्वातुसशोणितम् ॥ विराटमिहसामात्यंहन्यात्सबलवाहनम् ५६ ॥ वैशंपायनउवाच ॥ ततोराज्ञःसुतोज्येष्ठःप्राविशत्पृथिवींजयः ॥ सोऽभिवाद्यपितुःपादौकंकंचाप्युपतिष्ठत ५७ ततोरुधिरसंयुक्तमनेकाग्रमनागसम् ॥ भूमावासीनमेकांतेसैरंध्र्याप्रत्युपस्थितम् ५८ ततःपप्रच्छपितरंत्वरमाणइवोत्तरः ॥ केनायंताडितोराजन्केनपापमिदंकृतम् ५९॥विराटउवाच॥मयाऽयंताडितोजिह्मोनचाप्येतावदर्हति ॥प्रशस्यमानेयच्छूरेत्वयिषंढंप्रशंसति६०॥उत्तरउवाच॥ अकार्यंतेकृतंराजन्क्षिप्रमेवप्रसाद्यताम् ॥ मात्वांब्रह्मविषंघोरंसमूलमिहनिर्दहेत् ६१ ॥ वैशंपायनउवाच ॥ सपुत्रस्यवचःश्रुत्वाविराटोराष्ट्रवर्धनः ॥ क्षमयामासकौंतेयंभस्मच्छन्नमिवानलम् ६२ क्षमयंतंतुराजानंपांडवःप्रत्यभाषत ॥ चिरंक्षांतमिदंराजन्नमन्युर्विद्यतेमम ६३ यदिह्येतत्पतेद्भूमौरुधिरंममनस्ततः ॥ सराष्ट्रस्त्वंमहाराजविनश्येथानसंशयः ६४ नदूषयामितेराजन्यद्वैहन्याददूषकम् ॥ बलवंतंप्रभुंराजन्क्षिप्रंदारुणमाप्नुयात् ६५ ॥ वैशंपायनउवाच ॥ शोणितेतुव्यतिक्रांतेप्रविवेशबृहन्नला ॥ अभिवाद्यविराटंतुकंकंचाप्युपतिष्ठत ६६ क्षामयित्वातुकौरव्यंरणादुत्तरमागतम् ॥ प्रशशंसततोमत्स्यःशृण्वतःसव्यसाचिनः ॥ ६७ त्वयादायादवानस्मिकैकेयीनंदिवर्धन ॥ त्वयामेसदृशःपुत्रोनभूतोनभविष्यति ६८पदंपदसहस्रेणयश्चरन्नापराध्नुयात् ॥तेनकर्णेनतेतातकथमासीत्समागमः ६९

६७ दायादवान्पुत्रवान् ६८ पदमिति पदंबाणनिपातस्थानं पदसहस्रेणलक्ष्यसहस्रार्थं हेत्वर्थेतृतीया सहस्रलक्ष्याणिवेद्धुमित्यर्थः चरन्बाणैःप्रचरन्नेकमपिस्थानंनापराध्नुयात् नरिक्तंकुर्यात् । युगपल्लक्ष्यसहस्रमुद्दिश्यबाणैश्चरन्नेकमपिलक्ष्यंनजह्यादित्यर्थः । पदंपद मितिपाठे सर्वपदंनापराध्नुयात् सहस्रेणचरन्नित्यर्थात्पदसहस्रेणोद्देशे नेतिबोध्यं समागमःसंग्रामः ६९

७० । ७१ । ७२ हृतस्वाःहृतधनाःवणिजइवसीदंतिशूराइतिशेषः ७३ । ७४ अवगाढाःपराभूताः ७५ प्रकाल्यनिर्जित्य ७६ ॥ इतिविराटप०नी०भा० अष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ॥

मनुष्यलोकेसकलेयस्यतुल्योनविद्यते ॥ तेनभीष्मेणतेतातकथमासीत्समागमः ७० आचार्योवृष्णिवीराणांकौरवाणांचयोद्विजः ॥ सर्वक्षत्रस्यचाचार्यःसर्वशस्त्रभृतांवरः ॥ तेनद्रोणेनतेतातकथमासीत्समागमः ७१ आचार्यपुत्रोयःशूरःसर्वशस्त्रभृतामपि ॥ अश्वत्थामेतिविख्यातस्तेनासीत्संगरःकथम् ७२ रणेयंप्रेक्ष्यसीदंतिहृतस्वावणिजोयथा ॥ कृपेणतेनतेतातकथमासीत्समागमः ७३ पर्वतंयोऽभिविध्येतराजपुत्रोमहेषुभिः ॥ दुर्योधनेनतेतातकथमासीत्समागमः ७४ अवगाढाद्विषंतोमेसुखोवातोऽभिवातिमां ॥ यस्त्वंधनमथाजैषीःकुरुभिर्ग्रस्तमाहवे ७५ तेषांभयाभिपन्नानांसर्वेषांबलशालिनाम् ॥ नूनंप्रकाल्यतान्सर्वांस्त्वयायुधिनरर्षभ ॥ आच्छिन्नंगोधनंसर्वंशार्दूलेनामिषंयथा ७६ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिविराटोत्तरसंवादेऽष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ॥ उत्तरउवाच ॥ नमयानिर्जितागावोनमयानिर्जिताःपरे ॥ कृतंतत्सकलंतेनदेवपुत्रेणकेनचित् १ सहिभीतंद्रवंतंमांदेवपुत्रोन्यवर्तयत् ॥ सचातिष्ठद्रथोपस्थेवज्रसंहननोयुवा २ तेनतानिर्जितागावःकुरवश्चपराजिताः ॥ तस्यतत्कर्मवीरस्यनमयाताततत्कृतम् ३ सहिशारद्वतंद्रोणंद्रोणपुत्रंचषड्रथान् ॥ सूतपुत्रंचभीष्मंचचकारविमुखान्शरैः ४ दुर्योधनंविकर्णंचसनागमिवयूथपम् ॥ प्रभग्नमब्रवीद्भीतंराजपुत्रंमहाबलः ५ नहास्तिनपुरेत्राणंतवपश्यामिकिंचन ॥ व्यायामेनपरीप्सस्वजीवितंकौरवात्मज ॥ ६ नमोक्ष्यसेपलायंस्त्वंराजन्युद्धेमनःकुरु ॥ पृथिवींभोक्ष्यसेजित्वाहतोवास्वर्गमाप्स्यसि ७ सनिवृत्तोनरव्याघ्रोमुंचन्वज्रनिभान्शरान् ॥ सचिवैःसंवृतोराजारथेनागइवश्वसन् ८ तंदृष्ट्वारोमहर्षोऽभूदूरुकंपश्चमारिष ॥ सतत्रसिंहसंकाशमनीकंव्यधमच्छरैः ९ तत्प्रणुद्यरथानीकंसिंहसंहननोयुवा ॥ कुरूंस्तान्प्रहसन्राजन्संस्थितान्हृतवाससः १० एकेनतेनवीरेणषड्रथाःपरिनिर्जिताः ॥ शार्दूलेनेवमत्तेनयथावनचरामृगाः ११ ॥ विराटउवाच ॥ क्वसवीरोमहाबाहुर्देवपुत्रोमहायशाः ॥ योमेधनमथाजैषीत्कुरुभिर्ग्रस्तमाहवे १२ इच्छामितमहंद्रष्टुमर्चितुंचमहाबलम् ॥ येनमेत्वंचगावश्चरक्षितादेवसूनुना १३ ॥ उत्तरउवाच ॥ अंतर्धानंगतस्तत्रदेवपुत्रोमहाबलः ॥ सतुश्वोवापरश्वोवामन्येप्रादुर्भविष्यति १४ ॥ वैशंपायनउवाच ॥ एवमाख्यायमानंतुच्छन्नंसत्रेणपांडवम् ॥ वसंतंतत्रनाज्ञासीद्विराटोवाहिनीपतिः १५ ततःपार्थोऽभ्यनुज्ञातोविराटेनमहात्मना ॥ प्रददौतानिवासांसिविराटदुहितुःस्वयम् १६ उत्तरातुमहार्हाणिविविधानिनवानिच ॥ प्रतिगृह्याभवत्प्रीतातानिवासांसिभामिनी १७

नमयेति १ । २ । ३ । ४ । ५ व्यायामेननित्यंदेशांतरसंचारेण । एतेनसदेवपुत्रस्तेषामग्रेऽपिनाशंकरिष्यतीतिसूचितं ६ । ७ । ८ रोमहर्षोऽभून्ममेतिशेषः ९ । १० ११ । १२ । १३ । १४ सत्रेणव्याजेन १५ । १६ । १७

मंत्रयित्वेति युधिष्ठिरेयुधिष्ठिरविषये इतिकर्तव्यतांअग्रेकर्तुमिष्टां भद्रासनेराज्ञउपवेशनादिरूपांक्रियामुत्तरेणसहमंत्रयित्वा तथायथामंत्रं तत्तत्तांव्यदधादित्युभयोरन्वयः । हेराजन्जनमेजय १८ प्रहृष्टाअभूवन्नितिशेषः १९ ॥ इतिविराटपर्वणिनीलकंठीये भारतभावदीपेएकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ ततइति १ । २ धिष्ण्येषुआयतनेषु ३ । ४ । ५ । ६ अक्षातिवापःअ

मंत्रयित्वातुकौंतेयउत्तरेणमहात्मना ॥ इतिकर्तव्यतांसर्वांराजन्पार्थेयुधिष्ठिरे १८ ततस्तथातद्व्यदधाद्यथावत्पुरुषर्षभ ॥ सहपुत्रेणमत्स्यस्यप्रहृष्टाभरतर्षभाः १९ ॥ इतिश्रीमहाभारतेविराटपर्वणिगोहरणपर्वणिविराटोत्तरसंवादेएकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ समाप्तंगोहरणपर्व ॥ अथवैवाहिकपर्व ॥ वैशंपायनउवाच ॥ ततस्तृतीयेदिवसेभ्रातरःपंचपांडवाः ॥ स्नाताःशुक्लांबरधराःसमयेचरितव्रताः १ युधिष्ठिरंपुरस्कृत्यसर्वाभरणभूषिताः ॥ द्वारिमत्तायथानागाभ्राजमानामहारथाः २ विराटस्यसभांगत्वाभूमिपालासनेष्वथ ॥ निषेदुःपावकप्रख्याःसर्वेधिष्ण्येष्विवाग्नयः ३ तेषुतत्रोपविष्टेषुविराटःपृथिवीपतिः ॥ आजगामसभांकर्तुंराजकार्याणिसर्वशः ४ श्रीमतःपांडवान्दृष्ट्वाज्वलतःपावकानिव ॥ मुहूर्तमिवचध्यात्वासरोषःपृथिवीपतिः ५ अथमत्स्योऽब्रवीत्कंकंदेवरूपमिवस्थितम् ॥ मरुद्गणैरुपासीनंत्रिदशानामिवेश्वरम् ६ सकिलाक्षातिवापस्त्वंसभास्तारोमयाकृतः ॥ अथराजासनेकस्मादुपविष्टस्त्वलंकृतः ७ ॥ वैशंपायनउवाच ॥ परिहासेप्सयावाक्यंविराटस्यनिशम्यतत् ॥ स्मयमानोऽर्जुनोराजन्निदंवचनमब्रवीत् ८ ॥ अर्जुनउवाच ॥ इंद्रस्याप्यर्धासनंराजन्नयमारोढुमर्हति ॥ ब्रह्मण्यःश्रुतवांस्त्यागीयज्ञशीलोदृढव्रतः ९ एषविग्रहवान्धर्मएषवीर्यवतांवरः ॥ एषबुद्ध्याऽधिकोलोकेतपसांचपरायणम् १० एषोऽस्त्रंविविधंवेत्तित्रैलोक्येसचराचरे ॥ नचैवान्यःपुमान्वेत्तिनवेत्स्यतिकदाचन ११ नदेवानासुराःकेचिन्नमनुष्यानराक्षसाः ॥ गंधर्वयक्षप्रवराःसकिंनरमहोरगाः १२ दीर्घदर्शीमहातेजाःपौरजानपदप्रियः ॥ पांडवानामतिरथोयज्ञधर्मपरोवशी १३ महर्षिकल्पोराजर्षिःसर्वलोकेषुविश्रुतः ॥ बलवान्धृतिमान्दक्षःसत्यवादीजितेंद्रियः ॥ धनैश्चसंचयैश्चैवशक्रवैश्रवणोपमः १४ यथामनुर्महातेजाःलोकानांपरिरक्षिता ॥ एवमेषमहातेजाःप्रजानुग्रहकारकः १५ अयंकुरूणामृषभोधर्मराजोयुधिष्ठिरः ॥ अस्यकीर्तिःस्थितालोकेसूर्यस्येवोद्यतःप्रभा १६ संसरंतिदिशःसर्वायशसोऽस्यइवांशवः ॥ उदितस्येवसूर्यस्यतेजसोऽनुगभस्तयः १७ एनंदशसहस्राणिकुंजराणांतरस्विनाम् ॥ अन्वयुःपृष्ठतोराजन्यावदध्यावसत्कुरून् १८ त्रिंशदेवंसहस्राणिरथाःकांचनमालिनः ॥ सदश्वैरुपसंपन्नाःपृष्ठतोऽनुययुस्तदा १९ एनमष्टशताःसूताःसुमृष्टमणिकुंडलाः ॥ अब्रुवन्मागधैःसार्धंपुराशक्रमिवर्षयः २० एनंनित्यमुपासंतकुरवःकिंकरायथा ॥ सर्वेचराजन्राजानोधनेश्वरमिवामराः २१ एषसर्वान्महीपालान्करदान्समकारयत् ॥ वैश्यानिवमहाभागोविवशान्स्ववशानपि २२ अष्टाशीतिसहस्राणिस्नातकानांमहात्मनाम् ॥ उपजीवंतिराजानमेनंसुचरितव्रतम् २३

क्षान्अतिवपतीतितथा द्यूतकारी ७ परिहासेप्सयासनिंदोपालंभमपेक्ष्य यद्विराटस्यवाक्यंतन्निशम्य ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ अस्यइवेत्यत्रसंधिरविवक्षितः उपमेयद्वयस्योपमाद्वयसूचनंएकेनापिइवशब्देनभवति तथाऽप्यत्रस्पष्टार्थंपुनरिवग्रहणम् १७ । १८ । १९ अब्रुवन्अस्तुवन् २० । २१ । २२ । २३

२४ । २५ शीघ्रंतीव्रं २६ । २७ । २८ ॥ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपे सप्ततितमोऽध्यायः ॥ ७० ॥ ॥ ७१ ॥ ॥ यदिति १ । २ । ३

एषवृद्धाननाथांश्चपंगूनंधांश्चमानवान् ॥ पुत्रवत्पालयामासप्रजाधर्मेणवैविभुः २४ एषधर्मेदमेचैवक्रोधेचापिजितव्रतः ॥ महाप्रसादोब्रह्मण्यःसत्यवादीचपार्थिवः २५ शीघ्रंतापेनचैतस्यतप्यतेससुयोधनः ॥ सगणःसहकर्णेनसौबलेनापिवाविभुः २६ नशक्यंतेह्यस्यगुणाःप्रसंख्यातुंनरेश्वर ॥ एषधर्मपरोनित्यमानृशंस्यश्चपांडवः २७ एवंयुक्तोमहाराजःपांडवःपार्थिवर्षभः ॥ कथंनार्हतिराजार्हमासनंपृथिवीपते २८ ॥ इतिश्रीमहाभारतेविराटपर्वणिवैवाहिकपर्वणिपांडवप्रकाशेसप्ततितमोऽध्यायः ॥ ७० ॥ ॥ विराटउवाच ॥ यद्येषराजाकौरव्यःकुंतीपुत्रोयुधिष्ठिरः ॥ कतमोऽस्यार्जुनोभ्राताभीमश्चकतमोबली १ नकुलःसहदेवोवाद्रौपदीवायशस्विनी ॥ यदाद्यूतजिताःपार्थानप्राज्ञायंततेकचित् २ ॥ अर्जुनउवाच ॥ यएषबल्लवोब्रूतेसूदस्तवनराधिप ॥ एषभीमोमहाराजभीमवेगपराक्रमः ३ एषक्रोधवशान्हत्वापर्वतेगंधमादने ॥ सौगंधिकानिदिव्यानिकृष्णार्थेसमुपाहरत् ४ गंधर्वएषवैहंताकीचकानांदुरात्मनाम् ॥ व्याघ्रानृक्षान्वराहांश्चहतवांस्त्रीपुरेतव ५ यश्चासीदश्वबंधस्तेनकुलोऽयंपरंतपः ॥ गोसंख्यःसहदेवश्चमाद्रीपुत्रौमहारथौ ६ शृंगारवेषाभरणौरूपवंतौयशस्विनौ ॥ महारथसहस्राणांसमर्थौभरतर्षभौ ७ एषापद्मपलाशाक्षीसुमध्याचारुहासिनी ॥ सैरंध्रीद्रौपदीराजन्यस्यार्थेकीचकाहताः ८ अर्जुनोऽहंमहाराजव्यक्तंतेश्रोत्रमागतः ॥ भीमादवरजःपार्थोयमाभ्यांचापिपूर्वजः ९ उषिताःस्मोमहाराजसुखंतवनिवेशने ॥ अज्ञातवासमुषितागर्भवासइवप्रजाः १० ॥ वैशंपायनउवाच ॥ यदाऽर्जुनेनतेवीराःकथिताःपंचपांडवाः ॥ तदाऽर्जुनस्यवैराटिःकथयामासविक्रमम् ११ पुनरेवचतान्पार्थान्दर्शयामासचोत्तरः १२ ॥ उत्तरउवाच ॥ यएषजांबूनदशुद्धगौरतनुर्महान्सिंहइवप्रवृद्धः ॥ प्रचंडघोणःपृथुदीर्घनेत्रस्ताम्रायताक्षःकुरुराजएषः १३ अयंपुनर्मत्तगजेंद्रगामीप्रतप्तचामीकरशुद्धगौरः ॥ पृथ्वायतांसोगुरुदीर्घबाहुर्वृकोदरःपश्यतपश्यतैनम् १४ यस्त्वेवपार्श्वेऽस्यमहाधनुष्मान्श्यामोयुवावारणयूथपोपमः ॥ सिंहोन्नतांसोगजराजगामीपद्मायताक्षोऽर्जुनएषवीरः १५ राज्ञःसमीपेपुरुषोत्तमौतुयमाविमौविष्णुमहेंद्रकल्पौ ॥ मनुष्यलोकेसकलेसमोऽस्तिययोर्नरूपेनबलेनशीले १६ आभ्यांतुपार्श्वेकनकोत्तमांगीयैषाप्रभामूर्तिमतीवगौरी ॥ नीलोत्पलाभासुरदेवतेवकृष्णास्थितामूर्तिमतीवलक्ष्मीः १७ ॥ वैशंपायनउवाच ॥ एवंनिवेद्यतान्पार्थान्पांडवान्पंचभूपतेः ॥ ततोऽर्जुनस्यवैराटिःकथयामासविक्रमम् १८ ॥ उत्तरउवाच ॥ अयंसद्विषतांहंतामृगाणामिवकेसरी ॥ अचरद्रथवृंदेषुनिघ्नंस्तांस्तान्वरान्रथान् १९

४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । प्रचंडघोणःपृथुनासिकः घोणानासेत्यपि १३ । १४ । १५ । १६ । १७ । १८ । १९

२० । २१ अभिपन्नोऽपरार्धंकृतवान् २२ । २३ । २४ । २५ । २६ । २७ समेत्यपुत्रेणसहसमयंनिश्चयंचकार विससर्जददौ २८ । २९ । ३० । ३१ । ३२ । ३३ औपयिकःउचितः ३४ । ३५ ३६ ॥ इतिविराटपर्वणिनीलकंठीयेभारतभावदीपे एकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ किमर्थमिति १ । २ । ३ याशंकाभवेत् सास्थानेउचिता अयमहंतेतवदुहितांनिमंत्रयेस्नुषात्वे



अनेनविद्धोमातंगोमहानेकेषुणाहतः ॥ सुवर्णकक्षःसंग्रामेदंताभ्यामगमन्महीं २० अनेनविजितागावोजिताश्चकुरवोयुधि ॥ अस्यशंखप्रणादेनकर्णौमेबाधिरीकृतौ २१ ॥ वैशंपायनउवाच ॥ तस्यतद्वचनंश्रुत्वामत्स्यराजःप्रतापवान् ॥ उत्तरंप्रत्युवाचेदमभिपन्नोयुधिष्ठिरे २२ प्रसादनंपांडवस्यप्राप्तकालंहिरोचये ॥ उत्तरांचप्रयच्छामिपार्थाययदिमन्यसे २३ ॥ उत्तरउवाच ॥ आर्याःपूज्याश्चमान्याश्चप्राप्तकालंचमेमतम् ॥ पूज्यंतांपूजनार्हाश्चमहाभागाश्चपांडवाः २४ ॥ विराटउवाच ॥ अहंखल्वपिसंग्रामेशत्रूणांवशमागतः ॥ मोक्षितोभीमसेनेनगावश्चापिजितास्तथा २५ एतेषांबाहुवीर्येणअस्माकंविजयोमृधे ॥ एवंसर्वेसहामात्याःकुंतीपुत्रंयुधिष्ठिरम् ॥ प्रसादयामोभद्रंतेसानुजंपांडवर्षभम् २६ यदस्माभिरजानद्भिःकिंचिदुक्तोनराधिपः ॥ क्षंतुमर्हतितत्सर्वंधर्मात्माह्येषपांडवः २७ ॥ वैशंपायनउवाच ॥ ततोविराटःपरमाभितुष्टःसमेत्यराजासमयंचकार ॥ राज्यंचसर्वंविससर्जतस्मैसदंडकोशंसपुरंमहात्मा २८ पांडवांश्चततःसर्वान्मत्स्यराजःप्रतापवान् ॥ धनंजयंपुरस्कृत्यदिष्ट्यादिष्ट्येतिचाब्रवीत् २९ समुपाघ्रायमूर्द्धानंसंश्लिष्यचपुनःपुनः ॥ युधिष्ठिरंचभीमंचमाद्रीपुत्रौचपांडवौ ३० नातृप्यद्दर्शनेतेषांविराटोवाहिनीपतिः ॥ संप्रीयमाणोराजानंयुधिष्ठिरमथाब्रवीत् ३१ दिष्ट्याभवंतःसंप्राप्ताःसर्वेकुशलिनोवनात् ॥ दिष्ट्यासंपालितंकृच्छ्रमज्ञातंवैदुरात्मभिः ३२ इदंचराज्यंपार्थाययच्चान्यदपिकिंचन ॥ प्रतिगृह्णंतुतत्सर्वंपांडवाअविशंकया ३३ उत्तरांप्रतिगृह्णातुसव्यसाचीधनंजयः ॥ अयंह्यौपयिकोभर्तातस्याःपुरुषसत्तमः ३४ एवमुक्तोधर्मराजःपार्थमैक्षद्धनंजयम् ॥ ईक्षितश्चार्जुनोभ्रात्रामत्स्यंवचनमब्रवीत् ३५ प्रतिगृह्णाम्यहंराजन्स्नुषांदुहितरंतव ॥ युक्तश्चावांहिसंबंधोमत्स्यभारतयोरपि ३६ ॥ इतिश्रीमहाभारतेविराटपर्वणिवैवाहिकपर्वणिउत्तराविवाहप्रस्तावेएकसप्ततितमोऽध्यायः ॥७१॥ विराटउवाच ॥ किमर्थंपांडवश्रेष्ठभार्यांदुहितरंमम ॥ प्रतिग्रहीतुंनेमांत्वंमयादत्तामिहेच्छसि १ ॥ अर्जुनउवाच ॥ अंतःपुरेऽहमुषितःसदापश्यन्सुतांतव ॥ रहस्यंचप्रकाशंचविश्वस्तांपितृवन्मयि २ प्रियोबहुतमश्चासंनर्तकोगीतकोविदः ॥ आचार्यवच्चमांनित्यंमन्यतेदुहितातव ३ वयस्थयातयाराजन्सहसंवत्सरोषितः ॥ अतिशंकाभवेत्स्थानेतवलोकस्यवाविभो ४ तस्मान्निमंत्रयेऽयंतेदुहितांमनुजाधिप ॥ शुद्धोजितेंद्रियोदांतस्तस्याःशुद्धिःकृतामया ५ स्नुषायांदुहितुर्वापिपुत्रेचात्मनिवापुनः ॥ अत्रशंकांनपश्यामितेनशुद्धिर्भविष्यति ६ अभिशापादहंभीतोमिथ्यावादात्परंतप ॥ स्नुषार्थमुत्तरांराजन्प्रतिगृह्णामितेसुताम् ७

नयाचे । 'दुहितादुर्हितादूरेहिता'इतियास्केननिरुक्तत्वात् वर्णविकारेण दुहिताशब्दआकारांतोऽप्यस्ति ४ एवंचस्नुषात्वेनएनांवरयतोमेब्रह्मचर्यशुद्धिरपिभविष्यतीत्याह शुद्धइति ५ । ६ अभिशापात्भार्यार्थेप्रतिग्रहेऽनयोःप्रागेवसंबंधआसीदितिकल्पयतोलोकस्यदुर्वाक्यभयात् ७

८ । ९ । १० । ११ अन्वशासत् आज्ञापितवान् संयोगं विवाहसंबंधम् १२ प्रेषयामास आह्वानार्थं दूतानिति शेषः १३ उपप्लव्यं विराटनगरसमीपस्थनगरांतरम् १४ । १५

स्वस्रीयो वासुदेवस्य साक्षाद्देवशिशुर्यथा ॥ दयितश्चक्रहस्तस्य सर्वास्त्रेषु च कोविदः ८ अभिमन्युर्महाबाहुः पुत्रो मम विशांपते ॥ जामाता तव युक्तो वै भर्ता च दुहितुस्तव ९ ॥ विराट उवाच ॥ उपपन्नं कुरुश्रेष्ठे कुंतीपुत्रे धनंजये ॥ य एवं धर्मनित्यश्च जातज्ञानश्च पांडवः १० यत्कृत्यं मन्यसे पार्थ क्रियतां तदनंतरम् ॥ सर्वे कामाः स मृद्धा मे संबंधी यस्य मेऽर्जुनः ११ ॥ वैशंपायन उवाच ॥ एवं ब्रुवति राजेंद्रे कुंतीपुत्रो युधिष्ठिरः ॥ अन्वशासत्स संयोगं समये मत्स्यपार्थयोः १२ ततो मित्रेषु सर्वेषु वासुदेवं च भारत ॥ प्रेषयामास कौंतेयो विराटश्च महीपतिः १३ ततस्त्रयोदशे वर्षे निवृत्ते पंच पांडवाः ॥ उपप्लव्ये विराटस्य समपद्यंत सर्वशः १४ अभिमन्युं च बीभत्सुरानिनाय जनार्दनम् ॥ आनर्तेभ्योऽपि दाशार्हानानयामास पांडवः १५ काशिराजश्च शैब्यश्च प्रीयमाणौ युधिष्ठिरे ॥ अक्षौहिणीभ्यां सहितावागतौ पृथिवीपती १६ अक्षौहिण्या च सहितो यज्ञसेनो महाबलः ॥ द्रौपद्याश्च सुता वीराः शिखंडी चापराजितः १७ धृष्टद्युम्नश्च दुर्धर्षः सर्वशस्त्रभृतां वरः ॥ समस्ताक्षौहिणीपाला यज्वानो भूरिदक्षिणाः ॥ वेदावभृथसंपन्नाः सर्वे शूरास्तनुत्यजः १८ तानागतानभिप्रेक्ष्य मत्स्यो धर्मभृतां वरः ॥ पूजयामास विधिवत्सभृत्यबलवाहनान् १९ प्रीतोऽभवद्दुहितरं दत्वा तामभिमन्यवे ॥ ततः प्रत्युपयातेषु पार्थिवेषु ततस्ततः २० तत्रागमद्वासुदेवो वनमाली हलायुधः ॥ कृतवर्मा च हार्दिक्यो युयुधानश्च सात्यकिः २१ अनाधृष्टिस्तथाऽक्रूरः सांबो निशठ एव च ॥ अभिमन्युमुपादाय सह मात्रा परंतपाः २२ इंद्रसेनादयश्चैव रथैस्तैः सुसमाहितैः ॥ आययुः सहिताः सर्वे परिसंवत्सरोषिताः २३ दश नागसहस्राणि हयानां च दशायुतम् ॥ रथानामर्बुदं पूर्णं निखर्वं च पदातिनाम् २४ वृष्ण्यंधकाश्च बहवो भोजाश्च परमौजसः ॥ अन्वयुर्वृष्णिशार्दूलं वासुदेवं महाद्युतिम् २५ पारिबर्हं ददौ कृष्णः पांडवानां महात्मनाम् ॥ स्त्रियो रत्नानि वासांसि पृथक्पृथगनेकशः ॥ ततो विवाहो विधिवद्ववृधे मत्स्यपार्थयोः २६ ततः शंखाश्च भेर्यश्च गोमुखाडंबरास्तथा ॥ पार्थैः संयुज्यमानस्य नेदुर्मत्स्यस्य वेश्मनि २७ उच्चावचान्मृगाञ्जघ्नुर्मेध्यांश्च शतशः पशून् ॥ सुरामैरेयपानानि प्रभूतान्यभ्यहारयन् २८ गायनाख्यानशीलाश्च नटवैतालिकास्तथा ॥ स्तुवंतस्तानुपातिष्ठन्सूताश्च सह मागधैः २९ सुदेष्णां च पुरस्कृत्य मत्स्यानां च वरस्त्रियः ॥ आजग्मुश्चारुसर्वांग्यः सुमृष्टमणिकुंडलाः ३०

१६ । १७ वेदाध्ययनसंपन्ना इत्यपि पाठः १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ सुरा नानाद्रव्यसाररूपं मद्यं मैरेयं तु क्षारसरूपं मद्यम् २८ । २९ । ३०

अभ्यभवन्‌अभिभूताः ३१ । ३२ । ३३ । ३४ । ३५ । ३६ आत्मानमेवच प्रादादितिपूर्वेणान्वयः ३७ । ३८ । ३९ । ४० ॥ इतिश्रीमत्पदवाक्यप्रमाणमर्यादा धुरंधरचतुर्धरवंशावतंसगोविंदसूरिसूनोर्नीलकंठस्यकृतौ भारतभावदीपे विराटपर्वार्थप्रकाशे द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



वर्णोपपन्नास्तानार्योरूपवत्यःस्वलंकृताः ॥ सर्वाश्चाभ्यभवन्कृष्णारूपेणयशसाश्रिया ३१ परिवार्योत्तरांतास्तुराजपुत्रीमलंकृताम् ॥ सुतामिवमहेंद्रस्यपुरस्कृत्योपतस्थिरे ३२ तांप्रत्यगृह्णात्कौंतेयःसुतस्यार्थेधनंजयः ॥ सौभद्रस्यानवद्यांगींविराटतनयांतदा ३३ तत्रातिष्ठन्महाराजोरूपमिंद्रस्यधारयन् ॥ स्नुषांतांप्रतिजग्राहकुंतीपुत्रोयुधिष्ठिरः ३४ प्रतिगृह्यचतांपार्थःपुरस्कृत्यजनार्दनम् ॥ विवाहंकारयामाससौभद्रस्यमहात्मनः ३५ तस्मैसप्तसहस्राणिहयानांवातरंहसाम् ॥ द्वेचनागशतेमुख्येप्रादाद्बहुधनंतदा ३६ हुत्वासम्यक्समिद्धाग्निमर्चयित्वाद्विजन्मनः ॥ राज्यंबलंचकोशंचसर्वमात्मानमेवच ३७ कृतेविवाहेतुतदाधर्मपुत्रोयुधिष्ठिरः ॥ ब्राह्मणेभ्योददौवित्तंयदुपाहरदच्युतः ३८ गोसहस्राणिरत्नानिवस्त्राणिविविधानिच ॥ भूषणानिचमुख्यानियानानिशयनानिच ३९ भोजनानिचहृद्यानिपानानिविविधानिच ॥ तन्महोत्सवसंकाशंहृष्टपुष्टजनायुतम् ॥ नगरंमत्स्यराजस्यशुशुभेभरतर्षभ ४० ॥ इतिश्रीमन्महाभारतेशतसाहस्र्यांसंहितायांवैयासिक्यां विराटपर्वणिवैवाहिकपर्वणिउत्तराविवाहे द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ ॥ छ ॥ ॥ समाप्तंचेदंविराटपर्व ॥ अतः परमुद्योगपर्व ॥ तस्यायमाद्यःश्लोकः ॥ वैशंपायनउवाच ॥ कृत्वाविवाहंतुकुरुप्रवीरास्तदाभिमन्योर्मुदिताःस्वपक्षाः ॥ विश्रम्यरात्रावुषसिप्रतीताःसभांविराटस्यततोऽभिजग्मुः ॥ १ ॥ श्रुत्वावैराटकंपर्ववासांसिविविधानिच ॥ हिरण्यंधान्यंगावश्चदद्याद्वित्तानुसारतः ॥ १ ॥ प्रीतयेदेवतानांवैदद्याद्वैद्विजमुख्यके ॥ वाचकेतुसुसंतुष्टेतुष्टाःस्युःसर्वदेवताः ॥ २ ॥ ब्राह्मणान्भोजयेच्छक्त्यापायसैःसार्पिषासितैः ॥ एवंश्रुतेचवैराटेसम्यक्फलमवाप्नुयात् ॥ ३ ॥ ॥ छ ॥ अस्मिपर्वणिवृत्तांताः ॥ अज्ञातवासमंत्रः । धौम्यवाक्यं । आयुधन्यासः । विराटनगरेप्रवेशः । जीमूतवधः । कीचकवधः । दक्षिणगोग्रहः । उत्तरगोग्रहः । अभिमन्युविवाहश्च ॥

॥ अत्र विराटपर्वण्यध्यायानां श्लोकानां च व्यासोक्तसंख्याधिकसंख्या दृश्यते लिपिकरप्रमादात् कुत्रकुत्राधिक्यं जातं तन्निश्चयो न भवतीति ॥

॥ श्रीगणेशायनमः ॥ श्रीमद्गोपालमानम्यश्रीलक्ष्मणपदानुगः ॥ नीलकंठोभावदीपंकरोत्युद्योगपर्वणि ॥ १ ॥ गोपालनारायणलक्ष्मणार्यधीरेशगंगाधरनीलकंठाः ॥ चिंतामणिः सांबारी
वश्वपूज्यादिशंतुसर्वेगुरवोमतिंमे ॥२॥ भारतेसारमुद्योगमितिवृद्धानुशासनं ॥ अतोविस्तरतस्तत्रव्याख्यानमुपपद्यते ॥३॥ अभिमन्योःस्वपक्षाः यादवपांडवाद्याः तस्यैवविवाहंकृत्वा मुदिता
अभूवन्नितिशेषः। प्रतीताःप्रबुद्धाः १ मणयोमुक्ताप्रवालादयः तेषांप्रवेकोजालादिरूपःसमूहः तेनउत्तमरत्नैःहीरपद्मरागाद्यैश्चचित्रा। 'मणिःस्त्रीपुंसयोरश्मजातौमुक्तादिकेष्वपि' इतिमेदिनी २

॥ श्रीगणेशायनमः ॥ श्रीवेदव्यासायनमः ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींचैवततोजयमुदीरयेत् १ ॥ वैशंपायनउवाच ॥ कृत्वाविवाहंतुकुरुप्रवीरास्तदाऽभिमन्योर्मुदिताःस्वपक्षाः ॥ विश्रम्यरात्राबुषसिप्रतीताःसभांविराटस्यततोऽभिजग्मुः १ सभातुसामत्स्यपतेःसमृद्धामणिप्रवेकोत्तमरत्नचित्रा ॥ न्यस्तासनामाल्यवतीसुगंधातामभ्ययुस्तेनरराजवृद्धाः २ अथासनान्याविशतांपुरस्तादुभौविराटद्रुपदौनरेंद्रौ ॥ वृद्धौचमान्यौपृथिवीपतीनांपित्रासमंरामजनार्दनौच ३ पांचालराजस्यसमीपतस्तुशिनिप्रवीरःसहरौहिणेयः ॥ मत्स्यस्यराज्ञस्तुसुसन्निकृष्टौजनार्दनश्चैवयुधिष्ठिरश्च ४ सुताश्चसर्वेद्रुपदस्यराज्ञोभीमार्जुनौमाद्रवतीसुतौच ॥ प्रद्युम्नसांबौचयुधिप्रवीरौविराटपुत्रैश्चसहाभिमन्युः ५ सर्वेचशूराःपितृभिःसमानावीर्येणरूपेणबलेनचैव ॥ उपाविशन्द्रौपदेयाःकुमारासुवर्णचित्रेषुवरासनेषु ६ ततोपविष्टेषुमहारथेषुविराजमानाभरणांबरेषु ॥ रराजसाराजवतीसमृद्धाग्रहैरिवद्यौर्विमलैरुपेता ७ ततःकथास्तेसमवाययुक्ताःकृत्वाविचित्राःपुरुषप्रवीराः ॥ तस्थुर्मुहूर्तंपरिचिंतयंतःकृष्णंनृपास्तेसमुदीक्षमाणाः ८ कथांतमासाद्यचमाधवेनसंघाट्टिताःपांडवकार्यहेतोः ॥ तेराजसिंहाःसहिताह्यशृण्वन्वाक्यंमहार्थंसुमहोदयंच ९ ॥श्रीकृष्णउवाच॥ सर्वैर्भवद्भिर्विदितंयथाऽयंयुधिष्ठिरःसौबलेनाक्षवत्याम् ॥ जितोनिकृत्याऽपहृतंचराज्यंवनप्रवासेसमयःकृतश्च १० शक्तैर्विजेतुंतरसामहींचसत्येस्थितैःसत्त्वरथैर्यथावत् ॥ पांडोःसुतैस्तद्व्रतमुग्ररूपंवर्षाणिषट्सप्तचचीर्णमग्र्यैः ११ त्रयोदशश्चैवसुदुस्तरोऽयमज्ञायमानैर्भवतांसमीपे ॥ क्लेशानसह्यान्विविधान्सहद्भिर्महात्मभिश्चापिवनेनिविष्टम् १२ एतैःपरप्रेष्यनियोगयुक्तैरिच्छद्भिराप्तंस्वकुलेनराज्यम् ॥ एवंगतेधर्मसुतस्यराज्ञोदुर्योधनस्यापिचयद्धितंस्यात् १३ तच्चिंतयध्वंकुरुपुंगवानांधर्म्यंचयुक्तंचयशस्करंच ॥ अधर्मयुक्तंनचकामयेतराज्यंसुराणामपिधर्मराजः १४ धर्मार्थयुक्तंतुमहीपतित्वंग्रामेऽपिकस्मिंश्चिदयंबुभूषेत् ॥ पित्र्यंहिराज्यंविदितंनृपाणांयथाऽपकृष्टंधृतराष्ट्रपुत्रैः १५ मिथ्योपचारेणयथाह्यनेनकृच्छ्रंमहत्प्राप्तमसह्यरूपम् ॥ नचापिपार्थोविजितोरणेतैःस्वतेजसाधृतराष्ट्रस्यपुत्रैः १६ तथाऽपिराजासहितःसुहृद्भिरभीप्सतेऽनामयमेवतेषाम् ॥ यत्तुस्वयंपांडुसुतैर्विजित्यसमाहृतंभूमिपतीन्प्रपीड्य १७ तत्प्रार्थयंतेपुरुषप्रवीराःकुंतीसुतामाद्रवतीसुतौच ॥ बालास्त्विमेतैर्विविधैरुपायैःसंप्रार्थिताहंतुममित्रसंघैः १८

आविशतामुपविष्टौ। पित्रावसुदेवेन ३ रौहिणेयःबलरामः ४ । ५ । ६ । ७ । ८ संघट्टिताःसन्नद्धीकृताः महार्थंसारार्थं महोदयंश्रेष्ठफलम् ९ अक्षवत्यांद्यूतक्रीडायां निकृत्याछलेन समयः
पणः १० सत्त्वरथैः सत्त्वंधैर्यंतेजांसि त्वयत्वाय्वाकाशौ उभयत्रअकुंठितोरथोयेषांतैरितिमध्यमपदलोपेनसमासः सत्यंरथवदारोढुंयोग्यं येषांवा पाठांतरेसत्यैकप्रियैः ११ । १२ । १३
१४ बुभूषेत्प्राप्तुमिच्छेत् तङ्भावआर्षः १५ । १६ अनामयंकुशलं यत्तुधनादिकंस्वयमेवसमाहृतं नपित्रादिभिः १७ । १८

१९ पारयित्वेतिपाठेसमाप्य २० अतो राज्यार्धप्रदानात् । कार्यैराज्यलाभनिमित्तं तैर्धार्त्तराष्ट्रैःकृतंविप्रकारं अपकारं निशम्यज्ञात्वा तान्पांडवान् २१ यदिइमान्बाधेयुः तर्हिएतेऽपितान् कौरवान्हन्युः इमेपांडवाः २२ । २३ । २४ । २५ । २६ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेप्रथमोऽध्यायः ॥ १ ॥ ॥ १ अर्धराज्यस्यविसृज्य तस्यकृते अर्धस्यराज्यस्यार्थे २ राज्यंराज्यार्द्धं ३ । ४ । ५ बलंचतुरंगं निगमोनीतिशास्त्रं तेउभेप्रधानंयेषां श्रुतेनकालेनचवृद्धाः । वृत्ताइतिपाठे श्रुतंकालवृत्तं सर्वसंहारकत्वंयैस्ते ६ समागतेषुसभायामितिशेषः

राज्यंजिहीर्षद्भिरसद्भिरुग्रैःसर्वंचतद्वोविदितंयथावत् ॥ तेषांचलोभंप्रसमीक्ष्यवृद्धंधर्मज्ञतांचापियुधिष्ठिरस्य १९ संबंधितांचापिसमीक्ष्यतेषांमतिंकुरुध्वंसहिताःपृथक्च ॥ इमेचसत्येऽभिरताःसदैवतंपालयित्वासमयंयथावत् २० अतोऽन्यथातैरुपचर्यमाणाहन्युःसमेतान्धृतराष्ट्रपुत्रान् ॥ तैर्विप्रकारंचनिशम्यकार्येसुहृज्जनास्तान्परिवारयेयुः २१ युद्धेनबाधेयुरिमांस्तथैवंतैर्बाध्यमानायुधितांश्चहन्युः ॥ तथाऽपिनेमेऽल्पतयासमर्थास्तेषांजयायेतिभवेन्मतंवः २२ समेत्यसर्वेसहिताःसुहृद्भिस्तेषांविनाशाययतेयुरेव ॥ दुर्योधनस्यापिमतंयथावन्नज्ञायतेकिंनुकरिष्यतीति २३ अज्ञायमानेचमतेपरस्यकिंस्यात्समारभ्यतमंमतंवः ॥ तस्मादितोगच्छतुधर्मशीलःशुचिःकुलीनःपुरुषोऽप्रमत्तः २४ दूतःसमर्थःप्रशमायतेषांराज्यार्धदानाययुधिष्ठिरस्य ॥ निशम्यवाक्यंतुजनार्दनस्यधर्मार्थयुक्तंमधुरंसमंच २५ समाददेवाक्यमथाग्रजोऽस्यसंपूज्यवाक्यंतदतीवराजन् २६ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसेनोद्योगपर्वणिपुरोहितयानेप्रथमोऽध्यायः ॥ १ ॥



बलदेवउवाच ॥ श्रुतंभवद्भिर्गदपूर्वजस्यवाक्यंयथाधर्मवदर्थवच्च ॥ अजातशत्रोश्चहितंहितंचदुर्योधनस्यापितथैवराज्ञः १ अर्धंहिराज्यस्यविसृज्यवीराःकुंतीसुतास्तस्यकृतेयतंते ॥ प्रादायचार्धंधृतराष्ट्रपुत्रःसुखीसहास्माभिरतीवमोदेत् २ लब्ध्वाहिराज्यंपुरुषप्रवीराःसम्यक्प्रवृत्तेषुपरेषुचैव ॥ ध्रुवंप्रशांताःसुखमाविशेयुस्तेषांप्रशांतिश्चहितंप्रजानाम् ३ दुर्योधनस्यापिमतंचवेत्तुंवक्तुंचवाक्यानियुधिष्ठिरस्य ॥ प्रियंचमेस्याद्यदितत्रकश्चिद्व्रजेच्छमार्थंकुरुपांडवानाम् ४ सभीष्ममामंत्र्यकुरुप्रवीरंवैचित्रवीर्यंचमहानुभावम् ॥ द्रोणंसपुत्रंविदुरंकृपंचगांधारराजंचससूतपुत्रम् ५ सर्वेचयेऽन्येधृतराष्ट्रपुत्राबलप्रधानानिगमप्रधानाः ॥ स्थिताश्चधर्मेषुतथास्वकेषुलोकप्रवीराःश्रुतकालवृद्धाः ६ एतेषुसर्वेषुसमागतेषुपौरेषुवृद्धेषुचसंगतेषु ॥ ब्रवीतुवाक्यंप्रणिपातयुक्तंकुंतीसुतस्यार्थकरंयथास्यात् ७ सर्वास्ववस्थासुचतेनकोप्याग्रस्तोहिसोऽर्थोबलमाश्रितैस्तैः ॥ प्रियाभ्युपेतस्ययुधिष्ठिरस्यद्यूतेप्रसक्तस्यहृतंचराज्यम् ८ निवार्यमाणश्चकुरुप्रवीरःसर्वैःसुहृद्भिर्ह्ययमप्यतज्ज्ञः ॥ सदीव्यमानःप्रतिदीव्यचैनंगांधारराजस्यसुतंमताक्षं ९ हित्वाहिकर्णंचसुयोधनंचसमाह्वयद्देवितुमाजमीढः ॥ दुरोदरास्तत्रसहस्रशोऽन्येयुधिष्ठिरोयान्विषहेतजेतुम् १० उत्सृज्यतान्सौबलमेवचायंसमाह्वयत्तेनजितोऽक्षमवत्याम् ॥ सदीव्यमानःप्रतिदेवनेनअक्षेषुनित्यंतुपराङ्मुखेषु ११



७ वाक्यमेवाह सर्वास्विति सर्वथाऽपितेपांडवाःनकोप्याः भवद्भिरितिशेषः सोऽर्थोग्रस्तः वनवासादिप्रतिज्ञानिस्तीर्णेत्यर्थः बलंसत्यपालनेसामर्थ्यं पूर्वंकोपिताअपिअतःपरंनकोप्याइति भावः ८ अयंयुधिष्ठिरः अतज्ज्ञःद्यूतानभिज्ञः ९ । १० । ११

संरंभमाणः हठंकुर्वाणः संरब्धमानइतिपाठेसंवृद्धदर्पइत्यर्थः ११ । १३ युद्धेअनयःभविताभविष्यति इहसामोपायेसोऽर्थःअनयःन १४ । १५ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे बलदेववाक्येद्वितीयोऽध्यायः ॥ २ ॥ ॥ यादृशआत्माशुद्धःपापोवातादृशंशुद्धंपापंवाभाषते १ । २ फलाफलवती सुपोलुकआर्षःपूर्वसवर्णोवा ३ तेतववाक्यं तत्रापराधःशकुनेर्नकश्चिदिति पूर्वोक्तंकौरवपक्षपातयुक्तं ४ । ५ यथाश्रद्धंद्यूतेआसक्तिरहितामिव धर्मेजयःधर्मनिमित्तंजयःकुतः किंतु अधर्ममूलकएवतेषांजयइत्यर्थः ६ । ७ प्रणिपतेतशरणागतोभवेत् पणंकृत्वावनवासप्र

संरंभमाणोविजितःप्रसह्यतत्रापराधःशकुनेर्नकश्चित् ॥ तस्मात्प्रणम्यैववचोब्रवीतुवैचित्रवीर्यंबहुसामयुक्तम् १२ तथाहिशक्योधृतराष्ट्रपुत्रःस्वार्थेनियोक्तुंपुरुषेणतेन ॥ अयुद्धमाकांक्षतकौरवाणांसाम्नैवदुर्योधनमाह्वयध्वम् १३ साम्नाजितोऽर्थोऽर्थकरोभवेतयुद्धेऽनयोभवितानेहसोऽर्थः १४ ॥ वैशंपायनउवाच ॥ एवंब्रुवत्येवमधुप्रवीरेशिनिप्रवीरःसहसोत्पपात ॥ तच्चापिवाक्यंपरिनिंद्यतस्यसमाददेवाक्यमिदंसमन्युः १५ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसेनोद्योगपर्वणिबलदेववाक्येद्वितीयोऽध्यायः ॥ २ ॥ ॥ सात्यकिरुवाच ॥ यादृशःपुरुषस्यात्मातादृशंसंप्रभाषते ॥ यथारूपोऽन्तरात्मातेतथारूपंप्रभाषसे १ संतिवैपुरुषाःशूराःसंतिकापुरुषास्तथा ॥ उभावेतौदृढौपक्षौदृश्येतेपुरुषान्प्रति २ एकस्मिन्नेवजायेतेकुलेक्लीबमहाबलौ ॥ फलाफलवतीशाखेयथैकस्मिन्वनस्पतौ ३ नाभ्यसूयामितेवाक्यंब्रुवतोलांगलध्वज ॥ येतुशृण्वंतितेवाक्यंतानसूयामिमाधव ४ कथंहिधर्मराजस्यदोषमल्पमपिब्रुवन् ॥ लभतेपरिषन्मध्येव्याहर्तुमकुतोभयः ५ समाहूयमहात्मानंजितवंतोऽक्षकोविदाः ॥ अनक्षज्ञंयथाश्रद्धंतेषुधर्मजयःकुतः ॥ यदिकुंतीसुतंगेहेक्रीडंतंभ्रातृभिःसह ६ अभिगम्यजयेयुस्तेतत्तेषांधर्मतोभवेत् ॥ समाहूयतुराजानंक्षत्रधर्मरतंसदा ७ निकृत्याजितवंतस्तेकिंनुतेषांपरंशुभम् ॥ कथंप्रणिपतेच्चायमिहकृत्वापणंपरम् ८ वनवासाद्विमुक्तस्तुप्राप्तःपैतामहंपदम् ॥ यद्ययंपापवित्तानिकामयेतयुधिष्ठिरः ९ एवमप्ययमत्यंतंपरान्नार्हतियाचितुम् ॥ कथंचधर्मयुक्तास्तेनचराज्यंजिहीर्षवः १० निवृत्तवासान्कौंतेयान्यआहुर्विदिताइति ॥ अनुनीताहिभीष्मेणद्रोणेनविदुरेणच ११ नव्यवस्यंतिपांडूनांप्रदातुंपैतृकंवसु ॥ अहंतुतान्शितैर्बाणैरनुनीयरणेबलात् १२ पादयोःपातयिष्यामिकौंतेयस्यमहात्मनः ॥ अथतेनव्यवस्यंतिप्रणिपातायधीमतः १३ गमिष्यंतिसहामात्यायमस्यसदनंप्रति ॥ नहितेयुयुधानस्यसंरब्धस्ययुयुत्सतः १४ वेगंसमर्थाःसंसोढुंवज्रस्येवमहीधराः ॥ कोहिगांडीवधन्वानंकश्चचक्रायुधंयुधि ॥ मांचापिविषहेत्क्रुद्धंकश्चभीमंदुरासदम् १५ यमौचदृढधन्वानौयमकालोपमद्युती ॥ विराटद्रुपदौवीरौयमकालोपमद्युती १६ कोजिजीविषुरासादेद्धृष्टद्युम्नंचपार्षतम् ॥ पंचैतान्पांडवेयांस्तुद्रौपद्याःकीर्तिवर्धनान् १७

तिज्ञांनिस्तीर्य ८ पैतामहमितिन्यायलभ्यत्वंसूचितं ९ । १० विदिताअज्ञातचर्यायामितिशेषः अनुनीताःपरिमितःकालःएतैरतिवाहितइतिबोधिताः ११ । १२ । १३ । १४ । १५ यमःशरीरात्प्राणानामुद्धर्ता कालःआयुःपरिच्छेदकर्ता १६ पांडवेयान् पांडवीद्रौपदीतत्पुत्रान् । पुंयोगलक्षणङीषंतात्स्त्रीभ्योढगितिढक् १७

पांडूनांपांडुतुल्यानांपांडवानां १८ । १९ । २० तस्यपांडवस्य २१ । २२ । २३ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेतृतीयोऽध्यायः ॥ ३ ॥ ॥ मधुरेणसाम्ना १ कार्पण्यादुदद

समप्रमाणान्पांडूनांसमवीर्यानमदोत्कटान् ॥ सौभद्रंचमहेष्वासममरैरपिदुःसहम् १८ गदप्रद्युम्नसांबांश्चकालसूर्यानलोपमान् ॥ तेवयंधृतराष्ट्रस्यपुत्रंशकुनिनासह १९ कर्णंचैवनिहत्याजावभिषेक्ष्यामपांडवम् ॥ नाधर्मोविद्यतेकश्चिच्छत्रून्हत्वाऽऽततायिनः २० अधर्म्यमयशस्यंचशात्रवाणांप्रयाचनम् ॥ हृद्गतस्तस्ययःकामस्तंकुरुध्वमतंद्रिताः २१ निसृष्टंधृतराष्ट्रेणराज्यंप्राप्नोतुपांडवः ॥ अद्यपांडुसुतोराज्यंलभतांवायुधिष्ठिरः २२ निहतावारणेसर्वेस्वप्स्यंतिवसुधातले २३ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसेनोद्योगपर्वणिसात्यकिक्रोधवाक्येतृतीयोऽध्यायः ॥ ३ ॥ ॥ द्रुपदउवाच ॥ एवमेतन्महाबाहोभविष्यतिनसंशयः ॥ नहिदुर्योधनोराज्यंमधुरेणप्रदास्यति १ अनुवर्त्स्यतितंचापिधृतराष्ट्रःसुतप्रियः ॥ भीष्मद्रोणौचकार्पण्यान्मौर्ख्याद्राधेयसौबलौ २ बलदेवस्यत्ववाक्यंतुममज्ञानेनयुच्यते ॥ एतद्धिपुरुषेणाग्रेकार्यंसुनयमिच्छता ३ नतुवाच्योमृदुवचोधार्तराष्ट्रःकथंचन ॥ नहिमार्दवसाध्योऽसौपापबुद्धिर्मतोमम ४ गर्दभेमार्दवंकुर्याद्गोषुतीक्ष्णंसमाचरेत् ॥ मृदुदुर्योधनेवाक्यंयोब्रूयात्पापचेतसि ५ मृदुंवैमन्यतेपापोभाषमाणमशक्तिकम् ॥ जितमर्थंविजानीयादबुधोमार्दवेसति ६ एतच्चैवकरिष्यामोयत्नश्चक्रियतामिह ॥ प्रस्थापयाममित्रेभ्योबलान्युद्योजयंतुनः ७ शल्यस्यधृष्टकेतोश्चजयत्सेनस्यवाविभो ॥ केकयानांचसर्वेषांदूतागच्छंतुशीघ्रगाः ८ सचदुर्योधनोनूनंप्रेषयिष्यतिसर्वशः ॥ पूर्वाभिपन्नाःसंतश्चभजंतेपूर्वचोदनम् ९ तत्त्वरध्वंनरेंद्राणांपूर्वमेवप्रचोदने ॥ महद्धिकार्यंवोढव्यमितिमेवर्ततेमतिः १० शल्यस्यप्रेष्यतांशीघ्रंयेचतस्यानुगानृपाः ॥ भगदत्तायराज्ञेचपूर्वसागरवासिने ११ अमितौजसेतथोग्रायहार्दिक्यायांधकायच ॥ दीर्घप्रज्ञायशूरायरोचमानायवाविभो १२ आनीयतांबृहंतश्चसेनाबिंदुश्चपार्थिवः ॥ सेनजित्प्रतिविंध्यश्चचित्रवर्मासुवास्तुकः १३ बाह्लीकोमुंजकेशश्चचैद्याधिपतिरेवच ॥ सुपार्श्वश्चसुबाहुश्चपौरवश्चमहारथः १४ शकानांपह्लवानांचदरदानांचयेनृपाः ॥ सुरारिश्चनदीजश्चकर्णवेष्टश्चपार्थिवः १५ नीलश्चवीरधर्माचभूमिपालश्चवीर्यवान् ॥ दुर्जयोदंतवक्रश्चरुक्मीचजनमेजयः १६ आषाढोवायुवेगश्चपूर्वपालीचपार्थिवः ॥ भूरितेजादेवकश्चएकलव्यःसहात्मजैः १७ कारूषकाश्चराजानःक्षेमधूर्तिश्चवीर्यवान् ॥ कांबोजाऋषिकायेचपश्चिमानूपकाश्चये १८ जयत्सेनश्चकाश्यश्चतथापंचनदानृपाः ॥ क्राथपुत्रश्चदुर्द्धर्षःपार्वतीयाश्चयेनृपाः १९ जानकिश्चसुशर्माचमणिमान्योऽतिमत्स्यकः ॥ पांशुराष्ट्राधिपश्चैवधृष्टकेतुश्चवीर्यवान् २० तुंडश्चदंडधारश्चबृहत्सेनश्चवीर्यवान् ॥ अपराजितोनिषादश्चश्रेणिमान्वसुमानपि २१ बृहद्बलोमहौजाश्चबाहुःपरपुरंजयः ॥ समुद्रसेनोराजाचसहपुत्रेणवीर्यवान् २२ उद्भवःक्षेमकश्चैववाटधानश्चपार्थिवः ॥ श्रुतायुश्चदृढायुश्चशाल्वपुत्रश्चवीर्यवान् २३

नम्रभक्षणेनदैन्यात् २ ज्ञानेज्ञानवतांसमाजे नयुज्यते अयुक्तमित्यर्थः एतद्वक्ष्यमाणं ३ । ४ । ५ । ६ । ७ । ८ पूर्वाभिपन्नाःपूर्वंसाहाय्यार्थंवृताः पूर्वचोदनंपूर्वचोदनाप्रेरणायस्यतम् ९ । १० ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३

२४ । २५ । २६ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे चतुर्थोऽध्यायः ॥ ४ ॥ ७ ॥ उपपन्नंयुक्तं १ । २ संबंधकंतुल्यमिति पांडवेषुकुंतीद्वारा कुरुषुदुर्योधनकन्यायाःसांबेनाहरणात्

कुमारश्चकलिंगानामीश्वरोयुद्धदुर्मदः ॥ एतेषांप्रेष्यतांशीघ्रमेतद्धिममरोचते २४ अयंचब्राह्मणोविद्वान्ममराजन्पुरोहितः ॥ प्रेष्यतांधृतराष्ट्रायवाक्यमस्मै प्रदीयताम् २५ यथादुर्योधनोवाच्योयथाशांतनवोनृपः ॥ धृतराष्ट्रोयथावाच्योद्रोणश्चरथिनांवरः २६ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसेनोद्योगपर्वणिद्रुपदवाक्येचतुर्थोऽध्यायः ॥ ४ ॥ ॥ वासुदेवउवाच ॥ उपपन्नमिदंवाक्यंसोमकानांधुरंधुरे ॥ अर्थसिद्धिकरंराज्ञःपांडवस्यामितौजसः १ एतच्चपूर्वंकार्यंनःसुनीतमभिकांक्षताम् ॥ अन्यथाह्याचरन्कर्मपुरुषःस्यात्सुबालिशः २ किंतुसंबंधकंतुल्यमस्माकंकुरुपांडुषु ॥ यथेष्टंवर्तमानेषुपांडवेषुचतेषुच ३ तेविवाहार्थमानीतावयंसर्वेतथाभवान् ॥ कृतेविवाहेमुदितागमिष्यामोगृहान्प्रति ४ भवान्वृद्धतमोराज्ञांवयसाचश्रुतेनच ॥ शिष्यवत्तेवयंसर्वेभवामेहनसंशयः ५ भवंतंधृतराष्ट्रश्चसततंबहुमन्यते ॥ आचार्ययोःसखाचासिद्रोणस्यचकृपस्यच ६ सभवान्प्रेषयत्वद्यपांडवार्थकरंवचः ॥ सर्वेषांनिश्चितंतन्नःप्रेषयिष्यतियद्भवान् ७ यदितावच्छमंकुर्यान्न्यायेनकुरुपुंगवः ॥ नभवेत्कुरुपांडूनांसौभ्रात्रेणमहान्क्षयः ८ अथदर्पान्वितोमोहान्नकुर्याद्धृतराष्ट्रजः ॥ अन्येषांप्रेषयित्वाचपश्चादस्मान्समाह्वयेः ९ ततोदुर्योधनोमंदःसहामात्यःसबांधवः ॥ निष्ठामापत्स्यतेमूढःक्रुद्धेगांडीवधन्वनि १० ॥ वैशंपायनउवाच ॥ ततःसत्कृत्यवार्ष्णेयंविराटःपृथिवीपतिः ॥ गृहात्प्रस्थापयामाससगणंसहबांधवम् ११ द्वारकांतुगतेकृष्णेयुधिष्ठिरपुरोगमाः ॥ चक्रुःसांग्रामिकंसर्वंविराटश्चमहीपतिः १२ ततःसंप्रेषयामासविराटःसहबांधवैः ॥ सर्वेषांभूमिपालानांद्रुपदश्चमहीपतिः १३ वचनात्कुरुसिंहानांमत्स्यपांचालयोश्चते ॥ समाजग्मुर्महीपालाःसंप्रहृष्टामहाबलाः १४ तच्छ्रुत्वापांडुपुत्राणांसमागच्छन्महद्बलम् ॥ धृतराष्ट्रसुताश्चापिसमानिन्युर्महीपतीन् १५ समाकुलामहीराजन्कुरुपांडवकारणात् ॥ तदासमभवत्कृत्स्नासंप्रयाणेमहीक्षिताम् १६ संकुलाचतदाभूमिश्चतुरंगबलान्विता ॥ बलानितेषांवीराणामागच्छंतिततस्ततः १७ चालयंतीवगांदेवींसपर्वतवनामिमाम् ॥ ततःप्रज्ञावयोवृद्धंपांचाल्यःस्वपुरोहितम् ॥ कुरुभ्यःप्रेषयामासयुधिष्ठिरमतेस्थितः १८ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसेनोद्योगपर्वणिपुरोहितयानेपंचमोऽध्यायः ॥ ५ ॥ ॥ ६ ॥ द्रुपदउवाच ॥ भूतानांप्राणिनःश्रेष्ठाःप्राणिनांबुद्धिजीविनः ॥ बुद्धिमत्सुनराःश्रेष्ठानरेष्वपिद्विजातयः १ द्विजेषुवैद्याःश्रेयांसोवैद्येषुकृतबुद्धयः ॥ कृतबुद्धिषुकर्तारःकर्तृषुब्रह्मवादिनः २ सभवान्कृतबुद्धीनांप्रधानइतिमेमतिः ॥ कुलेनचविशिष्टोऽसिवयसाचश्रुतेनच ३ प्रज्ञयासदृशश्चासिशुक्रेणांगिरसेनच ॥ विदितंचापितेसर्वंयथावृत्तःसकौरवः ४

१ । २ । ३ । ४ । ५ । ६ वचःसंदेशवाक्यं ७ । ८ प्रेषयित्वादूतमितिशेषः ९ निष्ठांनाशं । 'निष्ठानिष्पत्तिनाशांतयाश्चानिर्वहणेषुच'इतिविश्वः १० । ११ । १२ । १३ । १४ । १५ । १६ १७ । १८ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे पंचमोऽध्यायः ॥ ५ ॥ ॥ ६ ॥ ॥ १ वैद्याःविद्यावंतः कृतबुद्धयःसिद्धांतज्ञाः २ । ३ । ४

२

५ । ६ । ७ । ८ । ९ । १० एतस्मिन्नंतरे शत्रुषुभिन्नानामेकीरणेऽव्यापृते च्छित्यर्थः ११ लंबमानेविलंबंकुर्वाणे १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ ॥ ॥ इतिउद्योगपर्व

पांडवश्चयथावृत्तःकुंतीपुत्रोयुधिष्ठिरः ॥ धृतराष्ट्रस्यविदितेवंचिताःपांडवाःपरैः ५ विदुरेणानुनीतोऽपिपुत्रमेवानुवर्त्तते ॥ शकुनिर्बुद्धिपूर्वंहिकुंतीपुत्रंसमाह्वयत् ६ अनक्षज्ञंमताक्षःसन्क्षत्रवृत्तोस्थितंशुचिम् ॥ तेतथावंचयित्वातुधर्मराजंयुधिष्ठिरम् ७ नकस्यांचिदवस्थायांराज्यंदास्यंतिवैस्वयम् ॥ भवांस्तुधर्मसंयुक्तंधृतराष्ट्रंब्रुवन्वचः ८ मनांसितस्ययोधानांध्रुवमावर्त्तयिष्यति ॥ विदुरश्चापितद्वाक्यंसाधयिष्यतितावकम् ९ भीष्मद्रोणकृपादीनांभेदंसंजनयिष्यति ॥ अमात्येषुचभिन्नेषुयोधेषुविमुखेषुच १० पुनरेकत्रकरणंतेषांकर्मभविष्यति ॥ एतस्मिन्नंतरेपार्थाःसुखमेकाग्रबुद्धयः ११ सेनाकर्मकरिष्यंतिद्रव्याणांचैवसंचयम् ॥ विद्यमानेषुचस्वेषुलंबमानेतथात्वयि १२ नतथातेकरिष्यंतिसेनाकर्मनसंशयः ॥ एतत्प्रयोजनंचात्रप्राधान्येनोपलभ्यते १३ संगत्याधृतराष्ट्रश्चकुर्याद्धर्म्यंवचस्तव ॥ सभवान्धर्मयुक्तश्चधर्म्यंतेषुसमाचरन् १४ कृपालुषुपरिक्लेशान्पांडवीयान्प्रकीर्त्तयन् ॥ वृद्धेषुकुलधर्मंचब्रुवन्पूर्वैरनुष्ठितम् १५ विभेत्स्यतिमनांस्येषामितिमेनात्रसंशयः ॥ नचतेभ्योभयंतेऽस्तिब्राह्मणोह्यसिवेदवित् १६ दूतकर्मणियुक्तश्चस्थविरश्चविशेषतः ॥ सभवान्पुष्ययोगेनमुहूर्तेनजयेनच ॥ कौरवेयान्प्रयात्वाशुकौंतेयस्यार्थसिद्धये १७ ॥ वैशंपायनउवाच ॥ तथाऽनुशिष्टःप्रययौद्रुपदेनमहात्मना ॥ पुरोधावृत्तसंपन्नोनगरंनागसाह्वयम् १८ शिष्यैःपरिवृतोविद्वान्नीतिशास्त्रार्थकोविदः ॥ पांडवानांहितार्थायकौरवान्प्रतिजग्मिवान् १९ ॥ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसेनोद्योगपर्वणिपुरोहितयानेषष्ठोऽध्यायः ॥ ६ ॥ ॥ वैशंपायनउवाच ॥ पुरोहितंतंप्रस्थाप्यनगरंनागसाह्वयम् ॥ दूतान्प्रस्थापयामासुःपार्थिवेभ्यस्ततस्ततः १ प्रस्थाप्यदूतानन्यत्रद्वारकांपुरुषर्षभः ॥ स्वयंजगामकौरव्यःकुंतीपुत्रोधनंजयः २ गतेद्वारवतींकृष्णेबलदेवेचमाधवे ॥ सहवृष्ण्यंधकैःसर्वैर्भोजैश्चशतशस्तदा ३ सर्वमागमयामासपांडवानांविचेष्टितम् ॥ धृतराष्ट्रात्मजोराजागूढैःप्रणिहितैश्चरैः ४ सश्रुत्वामाधवंयांतंसदश्वैरनिलोपमैः ॥ बलेननातिमहताद्वारकामभ्ययात्पुरीम् ५ तमेवदिवसंचापिकौंतेयःपांडुनंदनः ॥ आनर्त्तनगरींरम्यांजगामाशुधनंजयः ६ तौयात्वापुरुषव्याघ्रौद्वारकांकुरुनंदनौ ॥ सुप्तंददृशतुःकृष्णंशयानंचाभिजग्मतु ७ ततःशयानेगोविंदेप्रविवेशसुयोधनः ॥ उच्छीर्षतश्चकृष्णस्यनिषसादवरासने ८ ततःकिरीटीतस्यानुप्रविवेशमहामनाः ॥ पश्चाच्चैवसकृष्णस्यप्रह्वोऽतिष्ठत्कृतांजलिः ९ प्रतिबुद्धःसवार्ष्णेयोददर्शाग्रेकिरीटिनम् ॥ सतयोःस्वागतंकृत्वायथावत्प्रतिपूज्यतौ १० तदागमनजंहेतुंपप्रच्छमधुसूदनः ॥ ततोदुर्योधनःकृष्णमुवाचप्रहसन्निव ११ विग्रहेऽस्मिन्भवान्साह्यंममदातुमिहार्हति ॥ समंहिभवतःसख्यंममचैवार्जुनेऽपिच १२

णिनीलकंठीयेभारतभावदीपे षष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ १ । २ । ३ आगमयामास ज्ञातवान् ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२

१३ । १४ । १५ । १६ प्रवारणंईप्सितप्रदानं । 'काम्यदानंप्रवारणम्'इतिविश्वः । पूर्वमर्हः त्वत्तःकनिष्ठत्वादित्यर्थः १७ । १८ । १९ । २० । २१ । २२ । २३

तथासंबंधकंतुल्यमस्माकंत्वयिमाधव ॥ अहंचाभिगतःपूर्वंत्वामद्यमधुसूदन १३ पूर्वंचाभिगतंसंतोभजंतेपूर्वसारिणः ॥ त्वंचश्रेष्ठतमोलोकेसतामद्यजनार्दन १४ सततंसंमतश्चैवसद्वृत्तमनुपालय ॥ कृष्णउवाच ॥ भवानभिगतःपूर्वमत्रमेनास्तिसंशयः ॥ दृष्टस्तुप्रथमंराजन्मयापार्थोधनंजयः १५ तवपूर्वाभिगमनात्पूर्वंचाप्यस्यदर्शनात् ॥ साहाय्यमुभयोरेवकरिष्यामिसुयोधन १६ प्रवारणंतुबालानांपूर्वंकार्यमितिश्रुतिः ॥ तस्मात्प्रवारणंपूर्वमर्हःपार्थोधनंजयः १७ मत्संहननतुल्यानांगोपानामर्बुदंमहत् ॥ नारायणाइतिख्याताःसर्वेसंग्रामयोधिनः १८ तेवायुधिदुराधर्षाभवंत्वेकस्यसैनिकाः ॥ अयुध्यमानःसंग्रामेन्यस्तशस्त्रोऽहमेकतः १९ आभ्यामन्यतरंपार्थयत्तेहृद्यतरंमतम् ॥ तद्वृणीतांभवानग्रेप्रवार्यस्त्वंहिधर्मतः २० ॥ वैशंपायनउवाच ॥ एवमुक्तस्तुकृष्णेनकुंतीपुत्रोधनंजयः अयुध्यमानंसंग्रामेवरयामासकेशवम् २१ नारायणममित्रघ्नंकामाज्जातमजंनृषु ॥ सर्वक्षत्रस्यपुरतोदेवदानवयोरपि २२ दुर्योधनस्तुतत्सैन्यंसर्वमावरयत्तदा ॥ सहस्राणांसहस्रंतुयोधानांप्राप्यभारत २३ कृष्णंचापहृतंज्ञात्वासंप्रापपरमांमुदम् ॥ दुर्योधनस्तुतत्सैन्यंसर्वमादायपार्थिवः २४ ततोऽभ्ययाद्भीमबलोरौहिणेयंमहाबलम् ॥ सर्वंचागमनेहेतुंसतस्मैसंन्यवेदयत् ॥ प्रत्युवाचततःशौरिर्धार्तराष्ट्रमिदंवचः २५ ॥ बलदेवउवाच ॥ विदितंतेनरव्याघ्रसर्वंभवितुमर्हति ॥ यन्मयोक्तंविराटस्यपुरावैवाहिकेतदा २६ निगृह्योक्तोहृषीकेशस्त्वदर्थंकुरुनंदन ॥ मयासंबंधकंतुल्यमितिराजन्पुनःपुनः २७ नचतद्वाक्यमुक्तंवैकेशवंप्रत्यपद्यत ॥ नचाहमुत्सहेकृष्णंविनास्थातुमपिक्षणम् २८ नाहंसहायःपार्थस्यनापिदुर्योधनस्यवै ॥ इतिमेनिश्चिताबुद्धिर्वासुदेवमवेक्ष्यह २९ जातोऽसिभारतेवंशेसर्वपार्थिवपूजिते ॥ गच्छयुध्यस्वधर्मेणक्षात्रेणपुरुषर्षभ ३० ॥ वैशंपायनउवाच ॥ इत्येवमुक्तस्तुतदापरिष्वज्यहलायुधम् ॥ कृष्णंचापहृतंज्ञात्वायुद्धान्मेनेजितंजयम् ३१ सोऽभ्ययात्कृतवर्माणंधृतराष्ट्रसुतोनृपः ॥ कृतवर्माददौतस्यसेनामक्षौहिणींतदा ३२ सतेनसर्वसैन्येनभीमेनकुरुनंदनः ॥ वृतःप्रतिययौहृष्टःसुहृदःसंप्रहर्षयन् ३३ ततःपीतांबरधरोजगत्स्रष्टाजनार्दनः ॥ गतेदुर्योधनेकृष्णःकिरीटिनमथाब्रवीत् ३४ अयुध्यमानःकांबुद्धिमास्थायाहंवृतस्त्वया ॥ ॥ अर्जुनउवाच ॥ भवान्समर्थस्तान्सर्वान्निहंतुंनात्रसंशयः ॥ निहंतुमहमप्येकःसमर्थःपुरुषर्षभ ३५ भवांस्तुकीर्तिमाँल्लोकेतद्यशस्त्वांगमिष्यति ॥ यशसांचाहमप्यर्थीतस्मादसिमयावृतः ३६ सारथ्यंतुत्वयाकार्यमितिमेमानसंसदा ॥ चिररात्रेप्सितंकामंतद्भवान्कर्तुमर्हति ३७ ॥ वासुदेवउवाच ॥ उपपन्नमिदंपार्थयत्स्पर्द्धसिमयासह ॥ सारथ्यंतेकरिष्यामिकामःसंपद्यतांतव ३८

अपहृतंरिक्तंकृतम् २४ । २५ । २६ । २७ । २८ । २३ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८

३९ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेसप्तमोऽध्यायः ॥ ७ ॥ ॥ शल्यइति १ । २ । ३ । ४ । ५ येनयत्रदेशे तत्रययौ ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५



॥ वैशंपायनउवाच ॥ एवंप्रमुदितःपार्थःकृष्णेनसहितस्तदा ॥ वृतोदाशार्हप्रवरैःपुनरायाद्युधिष्ठिरम् ३९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसेनोद्योगपर्वणि कृष्णसारथ्यस्वीकारेसप्तमोऽध्यायः ॥ ७ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ शल्यःश्रुत्वातुदूतानांसैन्येनमहतावृतः ॥ अभ्ययात्पांडवान्राजन्सहपुत्रैर्महारथैः १ तस्यसेनानिवेशोऽभूदध्यर्द्धमिवयोजनम् ॥ तथाहिविपुलांसेनांबिभर्तिसनरर्षभः २ अक्षौहिणीपतीराजन्महावीर्यपराक्रमः ॥ विचित्रकवचाःशूराविचित्रध्वजकार्मुकाः ३ विचित्राभरणाःसर्वेविचित्ररथवाहनाः ॥ विचित्रस्रग्धराःसर्वेविचित्रांबरभूषणाः ४ स्वदेशवेषाभरणावीराःशतसहस्रशः ॥ तस्यसेनाप्रणेतारोबभूवुःक्षत्रियर्षभाः ५ व्यथयन्निवभूतानिकंपयन्निवमेदिनीम् ॥ शनैर्विश्रामयन्सेनांसययौयेनपांडवः ६ ततोदुर्योधनःश्रुत्वामहात्मानंमहारथम् ॥ उपायांतमभिद्रुत्यस्वयमानर्चभारत ७ कारयामासपूजार्थंतस्यदुर्योधनःसभाः ॥ रमणीयेषुदेशेषुरत्नचित्राःस्वलंकृताः ८ शिल्पिभिर्विविधैश्चैवक्रीडास्तत्रप्रयोजिताः ॥ तत्रमाल्यानिमांसानिभक्ष्यंपेयंचसत्कृतम् ९ कूपाश्चविविधाकारामनोहर्षविवर्धनाः ॥ वाप्यश्चविविधाकाराऔदकानिगृहाणिच १० सताःसभाःसमासाद्यपूज्यमानोयथाऽमरः ॥ दुर्योधनस्यसचिवैर्देशेदेशेसमंततः ११ आजगामसभामन्यांदेवावसथवर्चसम् ॥ सतत्रविषयैर्युक्तैःकल्याणैरतिमानुषैः १२ मेनेऽभ्यधिकमात्मानमवमेनेपुरंदरम् ॥ पप्रच्छसततःप्रेष्यान्प्रहृष्टःक्षत्रियर्षभः १३ युधिष्ठिरस्यपुरुषाःकेऽत्रचक्रुःसभाइमाः ॥ आनीयंतांसभाकाराःप्रदेयार्हाहिमेमताः १४ प्रसादमेषांदास्यामिकुंतीपुत्रोऽनुमन्यताम् ॥ दुर्योधनायतत्सर्वंकथयंतिस्मविस्मिताः १५ संप्रहृष्टोयदाशल्योदिदित्सुरपिजीवितम् ॥ गूढोदुर्योधनस्तत्रदर्शयामासमातुलम् १६ तंदृष्ट्वामद्रराजश्चज्ञात्वायत्नंचतस्यतम् ॥ परिष्वज्याब्रवीत्प्रीतइष्टोऽर्थोगृह्यतामिति १७ ॥ दुर्योधनउवाच ॥ सत्यवाग्भवकल्याणवरोवैममदीयताम् ॥ सर्वसेनाप्रणेतावैभवान्भवितुमर्हति १८ ॥ वैशंपायनउवाच ॥ कृतमित्यब्रवीच्छल्यःकिमन्यत्क्रियतामिति ॥ कृतमित्येवगांधारिःप्रत्युवाचपुनःपुनः १९ ॥ शल्यउवाच ॥ गच्छदुर्योधनपुरंस्वकमेवनरर्षभ ॥ अहंगमिष्येद्रष्टुंवैयुधिष्ठिरमरिंदमम् २० दृष्ट्वायुधिष्ठिरंराजन्क्षिप्रमेष्येनराधिप ॥ अवश्यंचापिद्रष्टव्यःपांडवःपुरुषर्षभः २१ ॥ दुर्योधनउवाच ॥ क्षिप्रमागम्यतांराजन्पांडवंवीक्ष्यपार्थिव ॥ त्वय्यधीनाःस्मराजेंद्रवरदानंस्मरस्वनः २२ ॥ शल्यउवाच ॥ क्षिप्रमेष्यामिभद्रंतेगच्छस्वस्वपुरंनृप ॥ परिष्वज्यतथाऽन्योन्यंशल्यदुर्योधनावुभौ २३ सतथाशल्यमामंत्र्यपुनरायात्स्वकंपुरम् ॥ शल्योजगामकौंतेयानाख्यातुंकर्मतस्यतत् २४ उपप्लव्यंसगत्वातुस्कंधावारंप्रविश्यच ॥ पांडवानथतान्सर्वान्शल्यस्तत्रददर्शह २५

दिदित्सुःददानेऽस्यरूपं १६ । १७ । १८ । १९ । २० । २१ । २२ गच्छस्वप्राप्नुहि स्वपुरंस्वराज्यं २३ । २४ उपप्लव्यंविराटनगरस्यप्रदेशविशेषं स्कंधावारंसेनानिवेशस्थानं २५

२६ । २७ कृष्णाविति भीमोऽपिकृष्णएवासीदितिगम्यते हृष्टाविति पाठःसुगमः २८ । २९ । ३० । ३१ । ३२ 'तंत्रंप्रधानेसिद्धांते'इत्यमरः ३३ । ३४ । ३५ वदान्यःमंजुलवाक् । 'वदान्यो

समेत्यचमहाबाहुःशल्यःपांडुसुतैस्तदा ॥ पाद्यमर्घ्यंचगांचैवप्रत्यगृह्णाद्यथाविधि २६ ततःकुशलपूर्वंहिमद्रराजोऽरिसूदनः ॥ प्रीत्यापरमयायुक्तःसमाश्लिष्य युधिष्ठिरम् २७ तथाभीमार्जुनौकृष्णौस्वस्रीयौचयमावुभौ ॥ आसनेचोपविष्टस्तुशल्यःपार्थमुवाचह २८ कुशलंराजशार्दूलकच्चित्तेकुरुनंदन ॥ अरण्यवासाद्दिष्ट्याऽसिविमुक्तोजयतांवर २९ सुदुष्करंकृतंराजन्निर्जनेवसतात्वया ॥ भ्रातृभिःसहराजेंद्रकृष्णयाचानयासह ३० अज्ञातवासंघोरंचवसतादुष्करंकृतम् ॥ दुःखमेवकुतःसौख्यंभ्रष्टराज्यस्यभारत ३१ दुःखस्यैतस्यमहतोधार्तराष्ट्रकृतस्यवै ॥ अवाप्स्यासिसुखंराजन्हत्वाशत्रून्परंतप ३२ विदितंतेमहाराजलोकतंत्रंनराधिप ॥ तस्माल्लोभकृतंकिंचित्तवतातनविद्यते ३३ राजर्षीणांपुराणानांमार्गमन्विच्छभारत ॥ दानेतपसिसत्येचभवतातयुधिष्ठिर ३४ क्षमादमश्चसत्यंचअहिंसाचयुधिष्ठिर ॥ अद्भुतश्चपुनर्लोकस्त्वयिराजन्प्रतिष्ठितः ३५ मृदुर्वदान्योब्रह्मण्योदाताधर्मपरायणः ॥ धर्मास्तेविदिताराजन्बहवोलोकसाक्षिकाः ३६ सर्वंजगदिदंतातविदितंतेपरंतप ॥ दिष्ट्याकृच्छ्रमिदंराजन्पारितंभरतर्षभ ३७ दिष्ट्यापश्यामिराजेंद्रधर्मात्मानंसहानुगम् ॥ निस्तीर्णंदुष्करंराजंस्त्वांधर्मनिचयंप्रभो ३८ ॥ वैशंपायनउवाच ॥ ततोऽस्याकथयद्राजादुर्योधनसमागमम् ॥ तच्चशुश्रूषितंसर्वंवरदानंचभारत ३९ ॥ युधिष्ठिरउवाच ॥ सुकृतंतेकृतंराजन्प्रहृष्टेनांतरात्मना ॥ दुर्योधनस्ययद्वीरत्वयावाचाप्रतिश्रुतम् ४० एकंत्विच्छामिभद्रंतेक्रियमाणंमहीपते ॥ राजन्नकर्तव्यमपिकर्तुमर्हसिसत्तम ४१ ममत्ववेक्षयावीरशृणुविज्ञापयामिते ॥ भवानिहमहाराजवासुदेवसमोयुधि ४२ कर्णार्जुनाभ्यांसंप्राप्तेद्वैरथेराजसत्तम ॥ कर्णस्यभवताकार्यंसारथ्यंनात्रसंशयः ४३ तत्रपाल्योऽर्जुनोराजन्यदिमत्प्रियमिच्छसि ॥ तेजोवधश्चतेकार्यःसौतेरस्मज्जयावहः ४४ अकर्तव्यमपिह्येतत्कर्तुमर्हसिमातुल ॥ शल्यउवाच ॥ शृणुपांडवभद्रंतेयद्ब्रवीषिमहात्मनः ॥ तेजोवधनिमित्तंमांसूतपुत्रस्यसंगमे ४५ अहंतस्यभविष्यामिसंग्रामेसारथिर्ध्रुवम् ॥ वासुदेवेनहिसमंनित्यंमांसहिमन्यते ४६ तस्याहंकुरुशार्दूलप्रतीपमहितंवचः ॥ ध्रुवंसंकथयिष्यामियोद्धुकामस्यसंयुगे ४७ यथासहृतदर्पश्चहृततेजाश्चपांडव ॥ भविष्यतिसुखंहंतुंसत्यमेतद्ब्रवीमिते ४८ एवमेतत्करिष्यामियथाताततत्वमात्थमाम् ॥ यच्चान्यदपिशक्ष्यामितत्करिष्यामितेप्रियम् ४९ यच्चदुःखंत्वयाप्राप्तंद्यूतेवैकृष्णयासह ॥ परुषाणिचवाक्यानिसूतपुत्रकृतानिवै ५० जटासुरात्परिक्लेशःकीचकाच्चमहाद्युते ॥ द्रौपद्याऽधिगतंसर्वंदमयंत्यायथाऽशुभम् ५१ सर्वंदुःखमिदंवीरसुखोदर्कंभविष्यति ॥ नात्रमन्युस्त्वयाकार्योविधिर्हिबलवत्तरः ५२

वल्गुवागपि'इत्यमरः ३६ पारितंनिस्तीर्णं ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५।४६ प्रतीपंप्रसंगप्रतिकूलं अहितंपरिणामविरुद्धं ४७ । ४८ । ४९ । ५० । ५१ मन्युर्दैन्यं ५२

९३ । ९४ ॥ इतिउद्योगप०नीलकंठीये भारतभा० अष्टमोऽध्यायः ॥ ८ ॥ ॥ ७ ॥ १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० हावाः शृंगारचेष्टाः

दुःखानिहिमहात्मानःप्रा‿वंतियुधिष्ठिर ॥ देवैरपिहिदुःखानिप्राप्तानिजगतीपते ९३ इंद्रेणश्रूयतेराजन्सभार्येणमहात्मना ॥ अनुभूतंमहद्दुःखंदेवराजेन भारत ९४ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसेनोद्योगपर्वणिशल्यवाक्येअष्टमोऽध्यायः ॥ ८ ॥ ॥ ७ ॥ युधिष्ठिरउवाच ॥ कथमिंद्रेणराजेंद्रसभार्येण महात्मना ॥ दुःखंप्राप्तंपरंघोरमेतदिच्छामिवेदितुम् १ ॥ शल्यउवाच ॥ श्रुणुराजन्पुरावृत्तमितिहासंपुरातनम् ॥ सभार्येणयथाप्राप्तंदुःखमिंद्रेणभारत २ त्वष्टाप्रजापतिर्ह्यासीद्देवश्रेष्ठोमहातपाः ॥ सपुत्रंवैत्रिशिरसमिंद्रद्रोहात्किलासृजत् ३ ऐंद्रंसप्रार्थयत्स्थानंविश्वरूपोमहाद्युतिः ॥ तैस्त्रिभिर्वदनैर्घोरैःसूर्येंदुज्वलनोपमैः ४ वेदानेकेनसोऽधीतेसुरामेकेनचापिबत् ॥ एकेनचदिशःसर्वाःपिबन्निवनिरीक्षते ५ सतपस्वीमृदुर्दांतोधर्मेतपसिचोद्यतः ॥ तपस्तस्यमहत्तीव्रंसुदुश्चरमरिंदम ६ तस्यदृष्ट्वातपोवीर्यंसत्यंचामिततेजसः ॥ विषादमगमच्छक्रइंद्रोऽयंमाभवेदिति ७ कथंसज्जेच्चभोगेषुनचतप्येन्महत्तपः ॥ विवर्धमानस्त्रिशिराःसर्वंहित्रिभुवनंग्रसेत् ८ इतिसंचिंत्यबहुधाबुद्धिमान्भरतर्षभ ॥ आज्ञापयत्सोऽप्सरसस्त्वष्टृपुत्रप्रलोभने ९ यथाससज्जेत्त्रिशिराःकामभोगेषुवैभृशम् ॥ क्षिप्रंकुरुतगच्छध्वंप्रलोभयतमाचिरम् १० शृंगारवेषाःसुश्रोण्योहारैर्युक्तामनोहरैः ॥ हावभावसमायुक्ताःसर्वाःसौंदर्यशोभिताः ११ प्रलोभयतभद्रंवःशमयध्वंभयंमम ॥ अस्वस्थंह्यात्मनाऽऽत्मानंलक्षयामिवरांगनाः ॥ भयंतन्मेमहाघोरंक्षिप्रंनाशयताबलाः १२ ॥ अप्सरसऊचुः ॥ ॥ तथायत्नंकरिष्यामःशक्रतस्यप्रलोभने ॥ यथानावाप्स्यसिभयंतस्माद्बलनिषूदन १३ निर्दहन्निवचक्षुर्भ्यांयोऽसावास्तेतपोनिधिः ॥ तंप्रलोभयितुंदेवगच्छामःसहितावयम् १४ यतिष्यामोवशेकर्तुंव्यपनेतुंचतेभयम् ॥ शल्यउवाच ॥ इंद्रेणतास्त्वनुज्ञाताजग्मुस्त्रिशिरसोंऽतिकम् ॥ तत्रताविविधैर्भावैर्लोभयंत्योवरांगनाः १५ नित्यंसंदर्शयामासुस्तथैवांगेषुसौष्ठवम् ॥ नाभ्यगच्छत्प्रहर्षंताःसपश्यन्सुमहातपाः १६ इंद्रियाणिवशेकृत्वापूर्वसागरसन्निभः ॥ तास्तुयत्नंपरंकृत्वापुनःशक्रमुपस्थिताः १७ कृतांजलिपुटाःसर्वादेवराजमथाब्रुवन् ॥ नसशक्यःसुदुर्धर्षोधैर्याच्चालयितुंप्रभो १८ यत्तेकार्यंमहाभागक्रियतांतदनंतरम् ॥ संपूज्याप्सरसःशक्रोविसृज्यचमहामतिः १९ चिंतयामासतस्यैववधोपायंयुधिष्ठिर ॥ सतूष्णींचिंतयन्वीरोदेवराजःप्रतापवान् २० विनिश्चितमतिर्धीमान्वधेत्रिशिरसोऽभवत् ॥ वज्रमस्याक्षिपाम्यद्यसक्षिप्रंनभविष्यति २१ शत्रुःप्रवृद्धोनोपेक्ष्योदुर्बलोऽपिबलीयसा ॥ शास्त्रबुद्ध्याविनिश्चित्यकृत्वाबुद्धिंवधेदृढाम् २२ अथवैश्वानरनिभंघोररूपंभयावहम् ॥ मुमोचवज्रंसंक्रुद्धःशक्रस्त्रिशिरसंप्रति २३ सपपातहतस्तेनवज्रेणदृढमाहतः ॥ पर्वतस्येवशिखरंप्रणुन्नंमेदिनीतले २४ तंतुवज्रहतंदृष्ट्वाशयानमचलोपमम् ॥ नशर्मलेभेदेवेंद्रोदीपितस्तस्यतेजसा २५ हतोऽपिदीप्ततेजाःसजीवन्निवहिदृश्यते ॥ घातितस्यशिरांस्याजौजीवंतीवाद्भुतानिवै २६

भावाःचित्तविकाराः हर्षादयस्तैर्युक्ताः ११ । १२ । १३ । १४ । १५ सौष्ठवंसौंदर्यं प्रहर्षंलब्धभोगोऽस्मीतितोषं १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६

वर्धकिःतक्षा २७ । २८ । २९ नभविष्यातिनंक्ष्यति ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४

ततोऽतिभीतगात्रस्तुशक्रआस्तेविचारयन् ॥ अथाजगामपरशुंस्कंधेनादायवर्धकिः २७ तदरण्यंमहाराजयत्रास्तेऽसौनिपातितः ॥ सभीतस्तत्रतक्षाणंघट
मानंशचीपतिः २८ अपश्यदब्रवीच्चैनंसत्वरंपाकशासनः ॥ क्षिप्रंछिंधिशिरांस्यस्यकुरुष्ववचनंमम २९ ॥ तक्षोवाच ॥ महास्कंधोभृशंह्येषपरशुर्नभविष्य
ति ॥ कर्तुंचाहंनशक्ष्यामिकर्मसद्भिर्विगर्हितम् ३० ॥ इंद्रउवाच ॥ माभैस्त्वंशीघ्रमेतद्वैकुरुष्ववचनंमम ॥ मत्प्रसादाद्धितेशस्त्रंवज्रकल्पंभविष्यति ३१ ॥ त
क्षोवाच ॥ कंभवंतमहंविद्यांघोरकर्माणमद्यवै ॥ एतदिच्छाम्यहंश्रोतुंतत्त्वेनकथयस्वमे ३२ ॥ इंद्रउवाच ॥ अहमिंद्रोदेवराजस्तक्षन्विदितमस्तुते ॥ कुरु
ष्वैतद्यथोक्तंमेतक्षन्माऽत्रविचारय ३३ ॥ तक्षोवाच ॥ क्रूरेणनापत्रपसेकथंशक्रेहकर्मणा ॥ ऋषिपुत्रमिमंहत्वाब्रह्महत्याभयंनते ३४ ॥ शक्रउवाच ॥ पश्चा
द्धर्मंचरिष्यामिपावनार्थंसुदुश्चरम् ॥ शत्रुरेषमहावीर्योवज्रेणनिहतोमया ३५ अद्यापिचाहमुद्विग्नस्तक्षन्नस्माद्बिभेमिवै ॥ क्षिप्रंछिंधिशिरांसित्वंकरिष्येऽनुग्रहं
तव ३६ शिरःपशोस्तेदास्यंतिभागंयज्ञेषुमानवाः ॥ एषतेऽनुग्रहस्तक्षन्क्षिप्रंकुरुममप्रियम् ३७ ॥ शल्यउवाच ॥ एतच्छ्रुत्वातुतक्षासमहेंद्रवचनात्तदा ॥
शिरांस्यथत्रिशिरसःकुठारेणाच्छिनत्तदा ३८ निकृत्तेषुततस्तेषुनिष्क्रामन्नंडजास्त्वथ ॥ कपिंजलास्तित्तिराश्चकलविंकाश्चसर्वशः ३९ येनवेदानधीतेस्मपि
बतेसोममेवच ॥ तस्माद्वक्राद्विनिश्चेरुःक्षिप्रंतस्यकपिंजलाः ४० येनसर्वादिशोराजन्पिबन्निवनिरीक्षते ॥ तस्माद्वक्राद्विनिश्चेरुस्तित्तिरास्तस्यपांडव ४१
यत्सुरापंतुतस्यासीद्वक्त्रंत्रिशिरसस्तदा ॥ कलविंकाःसमुत्पेतुःश्येनाश्चभरतर्षभ ४२ ततस्तेषुनिकृत्तेषुविज्वरोमघवानथ ॥ जगामात्रिदिवंहृष्टस्तक्षाऽपिस्व
गृहान्ययौ ४३ मेनेकृतार्थमात्मानंहत्वाशत्रुंसुरारिहा ॥ त्वष्टाप्रजापतिःश्रुत्वाशक्रेणाथहतंसुतम् ४४ क्रोधसंरक्तनयनइदंवचनमब्रवीत् ॥ त्वष्टोवाच ॥ तप्य
मानंतपोनित्यंक्षांतंदातंजितेंद्रियम् ॥ विनाऽपराधेनयतःपुत्रंहिंसितवान्मम ४५ तस्माच्छक्रविनाशायवृत्रमुत्पादयाम्यहम् ॥ लोकाःपश्यंतुमेवीर्यंतपसश्चबलं
महत् ४६ सचपश्यतुदेवेंद्रोदुरात्मापापचेतनः ॥ उपस्पृश्यततःक्रुद्धस्तपस्वीसुमहायशाः ४७ अग्नौहुत्वासमुत्पाद्यघोरंवृत्रमुवाचह ॥ इंद्रशत्रोविवर्धस्व
प्रभावात्तपसोमम ४८ सोऽवर्द्धतदिवंस्तब्ध्वासूर्यवैश्वानरोपमः ॥ किंकरोमीतिचोवाचकालसूर्यइवोदितः ४९ शक्रंजहीतिचाप्युक्तोजगामत्रिदिवंततः ॥
ततोयुद्धंसमभवद्वृत्रवासवयोर्महत् ५० संक्रुद्धयोर्महाघोरंप्रसक्तंकुरुसत्तम ॥ ततोजग्राहदेवेंद्रंवृत्रोवीरःशतक्रतुम् ५१ अपावृत्याक्षिपद्वक्त्रेशक्रंकोपसमन्वितः ॥
ग्रस्तेवृत्रेणशक्रेतुसंभ्रांतास्त्रिदिवेश्वराः ५२ असृजंस्तेमहासत्वाजृंभिकांवृत्रनाशिनीम् ॥ विजृंभमाणस्यततोवृत्रस्यास्यादपावृतात् ५३

४५ । ४६ उपस्पृश्यआचम्य ४७ । ४८ । ४९ । ५० । ५१ अपावृत्यमुखंसंप्रसार्य ५२ । ५३

५४ । ५५ । ५६ । ५७ । ५८ । ५९ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेनवमोऽध्यायः ॥ ९ ॥ ॥ ७ ॥ ॥ १ । २ । ३ क्षयंगृहं





स्वान्यंगान्यभिसंक्षिप्यनिष्क्रांतोबलनाशनः ॥ ततःप्रभृतिलोकस्यजृंभिकाप्राणसंश्रिता ५४ जहृषुश्चसुराःसर्वेशक्रंदृष्ट्वाविनिःसृतम् ॥ ततःप्रववृतेयुद्धंवृत्रवासवयोःपुनः ५५ संरब्धयोस्तदाघोरंसुचिरंभरतर्षभ ॥ यदाव्यवर्धतरणेवृत्रोबलसमन्वितः ५६ त्वष्टुस्तेजोबलाविद्धस्तदाशक्रोन्यवर्तत ॥ निवृत्तेचतदादेवाविषादमगमन्परम् ५७ समेत्यसहशक्रेणत्वष्टुस्तेजोवमोहिताः ॥ अमंत्रयंततेसर्वेमुनिभिःसहभारत ५८ किंकार्यमितिवैराजन्विचिंत्यभयमोहिताः ॥ जग्मुःसर्वेमहात्मानंमनोभिर्विष्णुमव्ययम् ॥ उपविष्टामंदराग्रेसर्वेवृत्रवधेप्सवः ५९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसेनोद्योगपर्वणिइंद्रविजयेनवमोऽध्यायः ॥ ९ ॥ इंद्रउवाच ॥ सर्वंव्याप्तमिदंदेवावृत्रेणजगदव्ययम् ॥ नह्यस्यसदृशंकिंचित्प्रतिघाताययद्भवेत् १ समर्थोह्यभवंपूर्वमसमर्थोऽस्मिसांप्रतम् ॥ कथंनुकार्यंभद्रंवोदुर्धर्षःसहिमेमतः २ तेजस्वीचमहात्माचयुद्धेचामितविक्रमः ॥ ग्रसेत्त्रिभुवनंसर्वंसदेवासुरमानुषम् ३ तस्माद्विनिश्चयमिमंशृणुध्वंत्रिदिवौकसः ॥ विष्णोःक्षयमुपागम्यसमेत्यचमहात्मना ४ तेनसंमंत्र्यवेत्स्यामोवधोपायंदुरात्मनः ॥ शल्यउवाच ॥ एवमुक्तेमघवतादेवाःसर्षिगणास्तदा ॥ शरण्यंशरणंदेवंजग्मुर्विष्णुंमहाबलम् ५ ऊचुश्चसर्वेदेवेशंविष्णुंवृत्रभयार्दिताः ॥ त्रयोलोकास्त्वयाक्रांतास्त्रिभिर्विक्रमणैःपुरा ६ अमृतंचाहृतंविष्णोदैत्याश्चनिहतारणे ॥ बलिंबध्वामहादैत्यंशक्रोदेवाधिपःकृतः ७ त्वंप्रभुःसर्वदेवानांत्वयासर्वमिदंततम् ॥ त्वंहिदेवोमहादेवसर्वलोकनमस्कृतः ८ गतिर्भवत्वंदेवानांसेंद्राणाममरोत्तम ॥ जगद्व्याप्तमिदंसर्वंवृत्रेणासुरसूदन ९ ॥ ॥ विष्णुरुवाच ॥ ॥ अवश्यंकरणीयंमेभवतांहितमुत्तमम् ॥ तस्मादुपायंवक्ष्यामियथाऽसौनभविष्यति १० गच्छध्वंसर्षिगंधर्वायत्रासौविश्वरूपधृक् ॥ सामतस्यप्रयुंजध्वंततएनंविजेष्यथ ११ भविष्यतिजयोदेवाःशक्रस्यममतेजसा ॥ अदृश्यश्चप्रवेक्ष्यामिवज्रेह्यस्यायुधोत्तमे १२ गच्छध्वमृषिभिःसार्द्धंगंधर्वैश्चसुरोत्तमाः ॥ वृत्रस्यसहशक्रेणसंधिंकुरुतमाचिरम् १३ ॥ ॥ शल्यउवाच ॥ ॥ एवमुक्तेतुदेवेनऋषयस्त्रिदशास्तथा ॥ ययुःसमेत्यसहिताःशक्रंकृत्वापुरःसरम् १४ समीपमेत्यचयदासर्वएवमहौजसः ॥ तंतेजसाप्रज्वलितंप्रतपंतंदिशोदश १५ ग्रसंतमिवलोकांस्त्रीन्सूर्याचंद्रमसौयथा ॥ ददृशुस्तेततोवृत्रंशक्रेणसहदेवताः १६ ऋषयोऽथततोऽभ्येत्यवृत्रमूचुःप्रियंवचः ॥ व्याप्तंजगदिदंसर्वंतेजसातवदुर्जय १७ नचशक्नोपिनिर्जेतुंवासवंबलिनांवर ॥ युध्यतोश्चापिवांकालोव्यतीतःसुमहानिह १८ पीड्यंतेचप्रजाःसर्वाःसदेवासुरमानुषाः ॥ सख्यंभवतुतेवृत्रशक्रेणसहनित्यदा १९ अवाप्स्यसिसुखंत्वंचशक्रलोकांश्चशाश्वतान् ॥ ऋषिवाक्यंनिशम्याथवृत्रःसतुमहाबलः २०

'निलयापचयौक्षयौ'इत्यमरः ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०

उवाचतानृषीन्सर्वान्प्रणम्यशिरसाऽसुरः ॥ सर्वेयूयंमहाभागागंधर्वाश्चैवसर्वशः २१ यद्ब्रूथतच्छ्रुतंसर्वंममापिशृणुतानघाः ॥ संधिःकथंवैभवितामम शक्रस्यचो
भयोः ॥ तेजसोर्हिद्वयोर्देवाःसख्यंवैभविताकथम् २२ ॥ ऋषयऊचुः ॥ सकृत्सतांसंगतंलिप्सितव्यंततःपरंभविताभव्यमेव ॥ नातिक्रामेत्सत्पुरुषेणसंगतंत
स्मात्सतांसंगतंलिप्सितव्यम् २३ दृढंसतांसंगतंचापिनित्यंब्रूयाच्चार्थंह्यर्थकृच्छ्रेषुधीरः ॥ महार्थवत्सत्पुरुषेणसंगतंतस्मात्संतंनजिघांसेतधीरः २४ इंद्रःस
तांसंमतश्चनिवासश्चमहात्मनाम् ॥ सत्यवादीह्यनिंद्यश्चधर्मवित्सूक्ष्मनिश्चयः २५ तेनतेसहशक्रेणसंधिर्भवतुनित्यदा ॥ एवंविश्वासमागच्छमातेभूद्बुद्धिरन्यथा
२६ ॥ शल्यउवाच ॥ महर्षिवचनंश्रुत्वातानुवाचमहाद्युतिः ॥ अवश्यंभगवंतोमेमाननीयास्तपस्विनः २७ ब्रवीमियदहंदेवास्तत्सर्वंक्रियतेयदि ॥ ततःसर्वं
करिष्यामियदूचुर्मांद्विजर्षभाः २८ नशुष्केणनचार्द्रेणनाश्मनानचदारुणा ॥ नशस्त्रेणनचास्त्रेणनदिवानतथानिशि २९ वध्योभवेयंविप्रेंद्राःशक्रस्यसहदैवतैः ॥
एवंमेरोचतेसंधिःशक्रेणसहनित्यदा ३० बाढमित्येवऋषयस्तमूचुर्भरतर्षभ ॥ एवंवृत्तेतुसंधानेवृत्रःप्रमुदितोऽभवत् ३१ युक्तःसदाऽभवच्चापिशक्रोहर्षसम
न्वितः ॥ वृत्रस्यवधसंयुक्तानुपायानन्वचिंतयत् ३२ छिद्रान्वेषीसमुद्विग्नःसदावसतिदेवराट् ॥ सकदाचित्समुद्रांतेसमपश्यन्महासुरम् ३३ संध्याकालउपा
वृत्तेमुहूर्तेचातिदारुणे ॥ ततःसंचिंत्यभगवान्वरदानंमहात्मनः ३४ संध्येयंवर्ततेरौद्रानरात्रिर्दिवसंनच ॥ वृत्रश्चावश्यवध्योऽयंममसर्वहरोरिपुः ३५ यदिवृत्रं
नहन्म्यद्यवंचयित्वामहासुरम् ॥ महाबलंमहाकायंनमेश्रेयोभाविष्याति ३६ एवंसंचिंतयन्नेवशक्रोविष्णुमनुस्मरन् ॥ अथफेनंतदाऽपश्यत्समुद्रेपर्वतोपमम् ॥
३७ नायंशुष्कोनचार्द्रोऽयंनचशस्त्रमिदंतथा ॥ एनंक्षेप्स्यामिवृत्रस्यक्षणादेवनशिष्याति ३८ सवज्रमथफेनंतंक्षिप्रंवृत्रेनिसृष्टवान् ॥ प्रविश्यफेनंतंविष्णुर
थवृत्रंव्यनाशयत् ३९ निहतेतुततोवृत्रेदिशोवितिमिराऽभवन् ॥ प्रववौचशिवोवायुःप्रजाश्चजहृषुस्तथा ४० ततोदेवाःसगंधर्वायक्षरक्षोमहोरगाः ॥ ऋषयश्च
महेंद्रंतमस्तुवन्विविधैःस्तवैः ४१ नमस्कृतःसर्वभूतैःसर्वभूतान्यसांत्वयत् ॥ हत्वाशत्रुंप्रहृष्टात्मावासवःसहदैवतैः ४२ विष्णुंत्रिभुवनश्रेष्ठंपूजयामासधर्मवित् ॥
ततोहतेमहावीर्येवृत्रेदेवभयंकरे ४३ अनृतेनाभिभूतोऽभूच्छक्रःपरमदुर्मनाः ॥ त्रैशीर्षयाऽभिभूतश्चसपूर्वंब्रह्महत्यया ४४ सोंऽतमाश्रित्यलोकानांनष्टसंज्ञोवि
चेतनः ॥ नप्राज्ञायतदेवेंद्रस्त्वभिभूतःसकल्मषैः ४५ प्रतिच्छन्नोऽवसच्चाप्सुचेष्टमानइवोरगः ॥ ततःप्रनष्टेदेवेंद्रेब्रह्महत्याभयार्दिते ४६ भूमिःप्रध्वस्तसंका
शानिर्वृक्षाशुष्ककानना ॥ विच्छिन्नस्रोतसोनद्यःसरांस्यनुदकानिच ४७ संक्षोभश्चापिसत्वानामनावृष्टिकृतोऽभवत् ॥ देवाश्चापिभृशंत्रस्तास्तथासर्वेमहर्षयः ४८

॥ ७ ॥ अ० ॥ ११ ॥

अराजकंजगत्सर्वमभिभूतमुपद्रवैः ॥ ततोभीताऽभवन्देवाःकोनोराजाभवेदिति ४९ दिविदेवर्षयश्चापिदेवराजविनाकृताः ॥ नस्मकश्चनदेवानांराज्यैवैकुरुते
मतिम् ५० ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसेनोद्योगपर्वणिवृत्रवधेइंद्रविजयोनामदशमोऽध्यायः ॥ १० ॥ शल्यउवाच ॥ ऋषयोऽथाब्रुवन्सर्वेदेवाश्चत्रि
दिवेश्वराः ॥ अयंवैनहुषःश्रीमान्देवराज्येऽभिषिच्यताम् १ तेजस्वीचयशस्वीचधार्मिकश्चैवनित्यदा ॥ तेगत्वात्वब्रुवन्सर्वेराजानोभवपार्थिव २ सतानुवाचनहु
षोदेवान्ऋषिगणांस्तथा ॥ पितृभिःसहितान्राजन्परीप्सन्हितमात्मनः ३ दुर्बलोऽहंनमेशक्तिर्भवतांपरिपालने ॥ बलवान्जायतेराजाबलंशक्रेहिनित्यदा ४
तमब्रुवन्पुनःसर्वेदेवाऋषिपुरोगमाः ॥ अस्माकंतपसायुक्तःपाहिराज्यंत्रिविष्टपे ५ परस्परभयंघोरमस्माकंहिनसंशयः ॥ अभिषिच्यस्वराजेंद्रभवराजात्रिवि
ष्टपे ६ देवदानवयक्षाणामृषीणांरक्षसांतथा ॥ पितृगंधर्वभूतानांचक्षुर्विषयवर्तिनाम् ७ तेजआदास्यसेपश्यन्बलवांश्चभविष्यसि ॥ धर्मंपुरस्कृत्यसदासर्वलो
काधिपोभव ८ ब्रह्मर्षींश्चापिदेवांश्चगोपायस्वत्रिविष्टपे ॥ अभिषिक्तःसराजेंद्रततोराजात्रिविष्टपे ९ धर्मंपुरस्कृत्यतदासर्वलोकाधिपोऽभवत् ॥ सुदु
र्लभंवरंलब्ध्वाप्राप्यराज्यंत्रिविष्टपे १० धर्मात्मासततंभूत्वाकामात्मासमपद्यत ॥ देवोद्यानेषुसर्वेषुनंदनोपवनेषुच ११ कैलासेहिमवत्पृष्ठेमंदरेश्वेत
पर्वते ॥ सह्येमहेंद्रेमलयेसमुद्रेषुसरित्सुच १२ अप्सरोभिःपरिवृतोदेवकन्यासमावृतः ॥ नहुषोदेवराजोऽथक्रीडन्बहुविधंतदा १३ शृण्वन्दिव्याबहु
विधाःकथाःश्रुतिमनोहराः ॥ वादित्राणिचसर्वाणिगीतंचमधुरस्वनम् १४ विश्वावसुर्नारदश्चगंधर्वाप्सरसांगणाः ॥ ऋतवःषट्चदेवेंद्रंमूर्तिमंतउपस्थिताः १५
मारुतःसुरभिर्वातिमनोज्ञःसुखशीतलः ॥ एवंचक्रीडतस्तस्यनहुषस्यदुरात्मनः १६ संप्राप्तादर्शनंदेवीशक्रस्यमहिषीप्रिया ॥ सतांसंदृश्यदुष्टात्माप्राहसर्वान्
सभासदः १७ इंद्रस्यमहिषीदेवीकस्मान्मांनोपतिष्ठति ॥ अहमिंद्रोऽस्मिदेवानांलोकानांचतथेश्वरः १८ आगच्छतुशचीमह्यंक्षिप्रमद्यनिवेशनम् ॥ तच्छ्रु
त्वादुर्मनादेवीबृहस्पतिमुवाचह १९ रक्षमांनहुषाद्ब्रह्मंस्त्वामस्मिशरणंगता ॥ सर्वलक्षणसंपन्नांब्रह्मंस्त्वंमांप्रभाषसे २० देवराजस्यदयितामत्यंतंसुखभागि
नीम् ॥ अवैधव्येनयुक्तांचाप्येकपत्नींपतिव्रताम् २१ उक्तवानसिमांपूर्वमृतांतांकुरुवैगिरम् ॥ नोक्तपूर्वंचभगवन्मृषातेकिंचिदीश्वर २२ तस्मादेतद्भवेत्स
त्यंत्वयोक्तंद्विजसत्तम ॥ बृहस्पतिरथोवाचशक्राणींभयमोहिताम् २३ यदुक्ताऽसिमयादेविसत्यंतद्भविताध्रुवम् ॥ द्रक्ष्यसेदेवराजानमिंद्रंशीघ्रमिहागतम् २४
नभेतव्यंचनहुषात्सत्यमेतद्ब्रवीमिते ॥ समानयिष्येशक्रेणनचिराद्भवतीमहम् २५

॥ ७ ॥

२६ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिनीलकंठीये भारतभावदीपेएकादशोऽध्यायः ॥ ११ ॥ ॥ १ । २ । ३ । ४ । ५ । ६ वैधर्म्याणित्वाष्ट्रवधादीनि उपधाःवृत्रसख्यादीनिछलानि ७

अथशुश्रावनहुषःशक्राणींशरणंगताम् ॥ बृहस्पतेरंगिरसश्चुक्रोधसनृपस्तदा २६ ॥ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसेनोद्योगपर्वणिइंद्राणीभयेएकादशोऽध्यायः ॥ ११ ॥ ध ॥ शल्यउवाच ॥ क्रुद्धंतुनहुषंदृष्ट्वादेवाऋषिपुरोगमाः ॥ अब्रुवन्देवराजानंनहुषंघोरदर्शनम् १ देवराजजहिक्रोधंत्वयिक्रुद्धेजगद्विभो ॥ त्रस्तंसासुरगंधर्वंसकिंनरमहोरगम् २ जहिक्रोधमिमंसाधोनकुप्यंतिभवद्विधाः ॥ परस्यपत्नीसादेवीप्रसीदस्वसुरेश्वर ३ निवर्तयमनःपापात्परदाराभिमर्शनात् ॥ देवराजोऽसिभद्रंतेप्रजाधर्मेणपालय ४ एवमुक्तोनजग्राहतद्वचःकाममोहितः ॥ अथदेवानुवाचेदमिंद्रंप्रतिसुराधिपः ५ अहल्याधर्षितापूर्वमृषिपत्नीयशस्विनी ॥ जीवतोभर्तुरिंद्रेणसवःकिंननिवारितः ६ बहूनिचनृशंसानिकृतानींद्रेणवैपुरा ॥ वैधर्म्याण्युपधाश्चैवसवःकिंननिवारितः ७ उपतिष्ठतुदेवीमामेतदस्याहितंपरम् ॥ युष्माकंचसदादेवाःशिवमेवंभविष्यति ८ ॥ देवाऊचुः ॥ इंद्राणीमानयिष्यामोयथेच्छसिदिवस्पते ॥ जहिक्रोधमिमंवीरप्रीतोभवसुरेश्वर ९ ॥ शल्यउवाच ॥ इत्युक्त्वातंतदादेवाऋषिभिःसहभारत ॥ जग्मुर्बृहस्पतिंवक्तुमिंद्राणींचाशुभंवचः १० जानीमःशरणंप्राप्तामिंद्राणींतववेश्मनि ॥ दत्ताभयांचविप्रेंद्रत्वयादेवर्षिसत्तम ११ तेत्वांदेवाःसगंधर्वाऋषयश्चमहाद्युते ॥ प्रसादयंतिचेंद्राणीनहुषायप्रदीयताम् १२ इंद्राद्विशिष्टोनहुषोदेवराजोमहाद्युतिः ॥ वृणोत्विमंवरारोहाभर्तृत्वेवरवर्णिनी १३ एवमुक्तेतुसादेवीबाष्पमुत्सृज्यसस्वनम् ॥ उवाचरुदतीदीनाबृहस्पतिमिदंवचः १४ नाहमिच्छामिनहुषंपतिंदेवर्षिसत्तम ॥ शरणागताऽस्मितेब्रह्मंस्त्रायस्वमहतोभयात् १५ ॥ बृहस्पतिरुवाच ॥ शरणागतंनत्यजेयमिंद्राणिममनिश्चयः ॥ धर्मज्ञांसत्यशीलांचनत्यजेयमनिंदिते १६ नाकार्यंकर्तुमिच्छामिब्राह्मणःसन्विशेषतः ॥ श्रुतधर्मासत्यशीलोजानन्धर्मानुशासनम् १७ नाहमेतत्करिष्यामिगच्छध्वंवैसुरोत्तमाः ॥ अस्मिंश्चार्थेपुरागीतंब्रह्मणाश्रूयतामिदम् १८ नतस्यबीजंरोहतिरोहकालेनतस्यवर्षंवर्षतिवर्षकाले ॥ भीतंप्रपन्नंप्रददातिशत्रवेनसत्रातारंलभतेत्राणमिच्छन् १९ मोघमन्नंविंदतिचाप्यचेताःस्वर्गाल्लोकाद्भ्रश्यतिनष्टचेष्टः ॥ भीतंप्रपन्नंप्रददातियोवैनतस्यहव्यंप्रतिगृह्णंतिदेवाः २० प्रमीयतेचास्यप्रजाह्यकालेसदाविवासंपितरोऽस्यकुर्वते ॥ भीतंप्रपन्नंप्रददातिशत्रवेसेंद्रादेवाःप्रहरंत्यस्यवज्रम् २१ एतदेवंविजानन्वैनदास्यामिशचीमिमाम् ॥ इंद्राणींविश्रुतांलोकेशक्रस्यमहिषींप्रियाम् २२ अस्याहितंभवेद्यच्चममचापिहितंभवेत् ॥ क्रियतांतत्सुरश्रेष्ठानहिदास्याम्यहंशचीम् २३ ॥ शल्यउवाच ॥ अथदेवाःसगंधर्वागुरुमाहुरिदंवचः ॥ कथंसुनीतंनुभवेन्मंत्रयस्वबृहस्पते २४

८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ प्रपन्नंशरणागतं १९ अचेताःदुर्बलचित्तः २० । २१ । २२ । २३ । २४

कालांतरंकालावधिं २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेद्वादशोऽध्यायः ॥ १२ ॥ ॥ ७ ॥ ॥ १ । २ । ३ । ४



॥ बृहस्पतिरुवाच ॥ नहुषंयाचतांदेवींकिंचित्कालांतरंशुभा ॥ इंद्राणीहितमेतद्धितथाऽस्माकंभविष्यति २५ बहुविघ्नःसुराःकालःकालःकालंनयिष्यति ॥ गर्वितोबलवांश्चापिनहुषोवरसंश्रयात् २६ ॥ शल्यउवाच ॥ ततस्तेनतथोक्तेतुप्रीतादेवास्तथाऽब्रुवन् ॥ ब्रह्मन्साध्विदमुक्तंतेहितंसर्वदिवौकसाम् २७ एवमेतद्विजश्रेष्ठदेवीचेयंप्रसाद्यताम् ॥ ततःसमस्ताइंद्राणींदेवाश्चाग्निपुरोगमाः २८ ऊचुर्वचनमव्यग्रालोकानांहितकाम्यया ॥ देवाऊचुः ॥ त्वयाजगदिदंसर्वंधृतंस्थावरजंगमम् ॥ एकपत्न्यसिसत्याचगच्छस्वनहुषंप्रति २९ क्षिप्रंत्वामभिकामश्चविनशिष्यतिपापकृत् ॥ नहुषोदेविशक्रश्चसुरैश्वर्यमवाप्स्यति ३० एवंविनिश्चयंकृत्वाइंद्राणीकार्यसिद्धये ॥ अभ्यगच्छतसव्रीडानहुषंघोरदर्शनम् ३१ दृष्ट्वातांनहुषश्चापिवयोरूपसमन्विताम् ॥ समहृष्यतदुष्टात्माकामोपहतचेतनः ३२ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसेनोद्योगपर्वणिइंद्राणीकालावधियाचनेद्वादशोऽध्यायः ॥ १२ ॥ ॥ शल्यउवाच ॥ अथतामब्रवीद्दृष्ट्वानहुषोदेवराट्तदा ॥ त्रयाणामपिलोकानामहमिंद्रःशुचिस्मिते १ भजस्वमांवरारोहेपतित्वेवरवर्णिनि ॥ एवमुक्तातुसादेवीनहुषेणपतिव्रता २ प्रावेपतभयोद्विग्नाप्रवातेकदलीयथा ॥ प्रणम्यसाहिब्रह्माणंशिरसातुकृतांजलिः ३ देवराजमथोवाचनहुषंघोरदर्शनम् ॥ कालमिच्छाम्यहंलब्धुंत्वत्तःकंचित्सुरेश्वर ४ नहिविज्ञायतेशक्रःकिंवाप्राप्तःक्वावागतः ॥ तत्त्वमेततुविज्ञाययदिनज्ञायतेप्रभो ५ ततोऽहंत्वामुपस्थास्येसत्यमेतद्ब्रवीमिते ॥ एवमुक्तःसइंद्राण्यानहुषःप्रीतिमानभूत् ६ नहुषउवाच ॥ एवंभवतुसुश्रोणियथामामिहभाषसे ॥ ज्ञात्वाचागमनंकार्यंसत्यमेतदनुस्मरेः ७ नहुषेणविसृष्टाचनिश्चक्रामततःशुभा ॥ बृहस्पतिनिकेतंचसाजगामयशस्विनी ८ तस्याःसंश्रुत्यचवचोदेवाश्चाग्निपुरोगमाः ॥ चिंतयामासुरेकाग्राःशक्रार्थंराजसत्तम ९ देवदेवेनसंगम्यविष्णुनाप्रभविष्णुना ॥ ऊचुश्चैनंसमुद्विग्नावाक्यंवाक्यविशारदाः १० ब्रह्मवध्याभिभूतोवैशक्रःसुरगणेश्वरः ॥ गतिश्चनस्त्वंदेवेशपूर्वजोजगतःप्रभुः ११ रक्षार्थंसर्वभूतानांविष्णुत्वमुपजग्मिवान् ॥ त्वद्वीर्यान्निहतेवृत्रेवासवोब्रह्महत्यया १२ वृतःसुरगणश्रेष्ठमोक्षंतस्यविनिर्दिश ॥ तेषांतद्वचनंश्रुत्वादेवानांविष्णुरब्रवीत् १३ मामेवयजतांशक्रःपावयिष्याभिवज्रिणम् ॥ पुण्येनहयमेधेनमामिष्ट्वापाकशासनः १४ पुनरेष्यतिदेवानामिंद्रत्वमकुतोभयः ॥ स्वकर्मभिश्चनहुषोनाशंयास्यतिदुर्मतिः १५ किंचित्कालमिदंदेवामर्षयध्वमतंद्रिताः ॥ श्रुत्वाविष्णोःशुभांसत्यांवाणींतामम‍ृतोपमाम् १६ ततःसर्वेसुरगणाःसोपाध्यायाःसहर्षिभिः ॥ यत्रशक्रोभयोद्विग्नस्तंदेशमुपचक्रमुः १७ तत्राश्वमेधःसुमहान्महेंद्रस्यमहात्मनः ॥ ववृतेपावनार्थंवैब्रह्महत्यापहोनृप १८

५ । ६ । ७ । ८ । ९ । १० । ११ विष्णुत्वंव्यापकत्वं अव्यापकेनजगद्रक्षायाअसंभवात् १२ । १३ । १४ । १५ । १६ । १७ । १८

१९।२० अकंपत्‌अकंपत तङ्भावआर्षः २१।२२ । २३। २४ २५ उपश्रुतिंसंदेहनिर्णायिकांदेवीं आकरोत्‌आकारितवती २६ यत्रेति अयंचार्थः ।' आनोऽऽयाह्युपश्रुत्युक्थेषुरणयाइह । दिवो
अमुष्यशासतोदिवंययदिवावसो'इतिमंत्रोक्तउपबृंहितः । मंत्रार्थस्तु हेउपश्रुति नःअस्मान्प्रतिआयाहि उक्थेषुकाम्येषुकर्मसु इहरणय इष्टंकामंगमयप्रापय । रणगतावित्यस्यरूपं अमुष्यबु

विभज्यब्रह्महत्यांतुवृक्षेषुचनदीषुच ॥ पर्वतेषुपृथिव्यांचस्त्रीषुचैवयुधिष्ठिर १९ संविभज्यचभूतेषुविमृज्यचसुरेश्वरः ॥ विज्वरोधूतपाप्माचवासवोऽभवदात्म
वान्‌ २० अकंपन्नहुषंस्थानाद्दृष्ट्वाबलनिषूदनः ॥ तेजोघ्नंसर्वभूतानांवरदानाच्चदुःसहम्‌ २१ ततःशचीपतिर्देवःपुनरेवव्यनश्यत ॥ अदृश्यःसर्वभूतानांका
लाकांक्षीचचारह २२ प्रनष्टेतुततःशक्रेशचीशोकसमन्विता ॥ हाशक्रेतितदादेवीविललापसुदुःखिता २३ यदिदत्तंयदिहुतंगुरवस्तोषितायदि ॥ एकभर्तृत्वमे
वास्तुसत्यंयद्यस्तिवामयि २४ पुण्यांचेमामहंदिव्यांप्रवृत्तामुत्तरायणे ॥ देवींरात्रिंनमस्यामिसिध्यतांमेमनोरथः २५ प्रयताचनिशांदेवीमुपातिष्ठतत्रसा ॥
पतिव्रतात्वात्सत्येनसोपश्रुतिमथाकरोत्‌ २६ यत्रास्तेदेवराजोऽसौतंदेशंदर्शयस्वमे ॥ इत्याहोपश्रुतिंदेवींसत्यंसत्येनदृश्यताम्‌ २७ ॥ इतिश्रीमहाभारतेउ
द्योगपर्वणिसेनोद्योगपर्वणिउपश्रुतियाचनेत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ ॥ शल्यउवाच ॥ अथैनांरूपिणींसाध्वीमुपातिष्ठदुपश्रुतिः ॥ तांवयो
रूपसंपन्नांदृष्ट्वादेवीमुपस्थिताम्‌ १ इंद्राणीसंप्रहृष्टात्मासंपूज्यैनामथाब्रवीत्‌ ॥ इच्छामित्वामहंज्ञातुंकात्वंब्रूहिवरानने २ ॥ उपश्रुतिरुवाच ॥ उपश्रुतिरहं
देवितवांतिकमुपागता ॥ दर्शनंचैवसंप्राप्तातवसत्येनभाविनि ३ पतिव्रताचयुक्ताचयमेननियमेनच ॥ दर्शयिष्यामितेशक्रंदेवंवृत्रनिषूदनम्‌ ४ क्षिप्रमन्वेहिभद्रं
तेद्रक्ष्यसेसुरसत्तमम्‌ ॥ ततस्तांप्रहितांदेवीमिंद्राणीसासमन्वगात्‌ ५ देवारण्यान्यतिक्रम्यपर्वतांश्चबहूंस्ततः ॥ हिमवंतमतिक्रम्यउत्तरंपार्श्वमागमत्‌ ६
समुद्रंचसमासाद्यबहुयोजनविस्तृतम्‌ ॥ आससादमहाद्वीपंनानाद्रुमलतावृतम्‌ ७ तत्रापश्यत्सरोदिव्यंनानाशकुनिभिर्वृतम्‌ ॥ शतयोजनविस्तीर्णंतावदेवाय
तंशुभम्‌ ८ तत्रदिव्यानिपद्मानिपंचवर्णानिभारत ॥ षट्पदैरुपगीतानिप्रफुल्लानिसहस्रशः ९ सरसस्तस्यमध्येतुपद्मिनीमहतीशुभा ॥ गौरेणोन्नतनाले
नपद्मेनमहतावृता १० पद्मस्यभित्वानालंचविवेशसहितातया ॥ बिसतंतुप्रविष्टंचतत्रापश्यच्छतक्रतुम्‌ ११ तंदृष्ट्वाचसुसूक्ष्मेणरूपेणावस्थितंप्रभुम्‌ ॥
सूक्ष्मरूपधरादेवीबभूवोपश्रुतिश्चसा १२ इंद्रंतुष्टावचेंद्राणीविश्रुतैःपूर्वकर्मभिः ॥ स्तूयमानस्ततोदेवःशचीमाहपुरंदरः १३ किमर्थमसिसंप्राप्ताविज्ञातश्चक
थंत्वहम्‌ ॥ ततःसाकथयामासनहुषस्यविचेष्टितम्‌ १४ इंद्रत्वंत्रिषुलोकेषुप्राप्यवीर्यसमन्वितः ॥ दर्पाविष्टश्चदुष्टात्मामामुवाचशतक्रतो १५ उपातिष्ठेतिसक्रूरः
कालंचकृतवान्मम ॥ यदिनत्रास्यसिविभोकरिष्यतिसमांवशे १६ एतेनचाहंसंप्राप्ताद्रुतंशक्रतवांतिकम्‌ ॥ जहिरौद्रंमहाबाहोनहुषंपापनिश्चयम्‌ १७

द्विस्थस्यदिवंशासतइंद्रस्य दिवंप्रकाशं ययगम ययच्छेत्यर्थः । ठ्ययगतावित्यस्यलोटिरूपं वलोपआर्षः । हेदिवावसोअह्नोधनंसूर्यस्तद्वत्‌ तमोग्रस्तमर्थंप्रकाशयितुंसमर्थ २७ ॥ इतिउद्यो
गपर्वणिनीलकंठीये भारतभावदीपेत्रयोदशोऽध्यायः ॥ १३ ॥ १।२।३।४ प्रहितांप्रस्थितां ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ १५ त्रास्यसिपालयिष्यसि तङ्भावआर्षः १६।१७

१८ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ७ ॥ ॥ १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११

प्रकाशयाऽत्मनाऽऽत्मानंदैत्यदानवसूदन ॥ तेज समाप्नुहिविभोदेवराज्यंप्रशाधिच १८ ॥ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसेनोद्योगपर्वणिइंद्राणींद्रस्तवे चतुर्दशोऽध्यायः ॥ १४ ॥ शल्यउवाच ॥ एवमुक्तःसभगवान्शच्यातांपुनरब्रवीत् ॥ विक्रमस्यनकालोऽयंनहुषोबलवत्तरः १ विवर्द्धितश्चऋषिभिर्हव्यकव्यैश्चभाविनि ॥ नीतिमत्रविधास्यामिदेवितांकर्तुमर्हसि २ गुह्यंचैतत्त्वयाकार्यंनाख्यातव्यंशुभेक्वचित् ॥ गत्वानहुषमेकांतेब्रवीहिचसुमध्यमे ३ ऋषियानेनदिव्येनमामुपैहिजगत्पते ॥ एवंतववशेप्रीताभविष्यामीतितंवद ४ इत्युक्तादेवराजेनपत्नीसाकमलेक्षणा ॥ एवमस्त्वित्यथोक्त्वातुजगामनहुषंप्रति ५ नहुषस्तांततोदृष्ट्वासास्मितोवाक्यमब्रवीत् ॥ स्वागतंतेवरारोहेकिंकरोमिशुचिस्मिते ६ भक्तंमांभजकल्याणिकिमिच्छसिमनस्विनि ॥ तवकल्याणियत्कार्यंतत्करिष्येसुमध्यमे ७ नचव्रीडात्वयाकार्यासुश्रोणिमयिविश्वसेः ॥ सत्येनवैशपेदेविकरिष्येवचनंतव ८ ॥ इंद्राण्युवाच ॥ योमेकृतस्त्वयाकालस्तमाकांक्षेजगत्पते ॥ ततस्त्वमेवभर्तामेभविष्यसिसुराधिप ९ कार्यंचहृदिमेयत्तद्देवराजावधारय ॥ वक्ष्यामियदिमेराजन्प्रियमेतत्करिष्यसि १० वाक्यंप्रणयसंयुक्तंततःस्यांवशगातव ॥ इंद्रस्यवाजिनोवाहाहास्तिनोऽथरथास्तथा ११ इच्छाम्यहमथापूर्वंवाहनंतेसुराधिप ॥ यन्नविष्णोर्नरुद्रस्यनासुराणांनरक्षसाम् १२ वहंतुत्वांमहाभागाऋषयःसंगताविभो ॥ सर्वेशिबिकयाराजन्नेतद्धिममरोचते १३ नासुरेषुनदेवेषुतुल्योभवितुमर्हसि ॥ सर्वेषांतेजआदत्सेस्वेनवीर्येणदर्शनात् १४ नतेप्रमुखतःस्थातुंकश्चिच्छक्तोतिवीर्यवान् ॥ शल्यउवाच ॥ एवमुक्तस्तुनहुषःप्राहृष्यततदाकिल ॥ उवाचवचनंचापिसुरेंद्रस्तामनिंदिताम् १५ ॥ नहुषउवाच ॥ अपूर्ववाहनमिदंत्वयोक्तंवरवर्णिनि ॥ दृढंमेरुचितंदेवित्वद्वशोऽस्मिवरानने १६ नह्यल्पवीर्योभवतियोवाहान्कुरुतेमुनीन् ॥ अहंतपस्वीबलवान्भूतभव्यभवत्प्रभुः १७ मयिक्रुद्धेजगन्नस्यान्मयिसर्वंप्रतिष्ठितम् ॥ देवदानवगंधर्वाःकिन्नरोरगराक्षसाः १८ नमेक्रुद्धस्यपर्याप्ताःसर्वेलोकाःशुचिस्मिते ॥ चक्षुषायंप्रपश्यामितस्यतेजोहराम्यहम् १९ तस्मात्तेवचनंदेविकरिष्यामिनसंशयः ॥ सप्तर्षयोमांवक्ष्यंतिसर्वेब्रह्मर्षयस्तथा २० पश्यमाहात्म्ययोगंमेऋद्धिंचवरवर्णिनि ॥ शल्यउवाच ॥ एवमुक्त्वातुतांदेवींविमृज्यचवराननाम् २१ विमानेयोजयित्वाचऋषीन्नियममास्थितान् ॥ अब्रह्मण्योबलोपेतोमत्तोमदबलेनच ॥ कामवृत्तःसदुष्टात्मावाहयामासतानृषीन् २२ नहुषेणविसृष्टाचबृहस्पतिमथाब्रवीत् ॥ समयोऽल्पावशेषोमेनहुषेणहयःकृतः २३ शक्रंमृगयशीघ्रंत्वंभक्तायाःकुरुमेदयाम् ॥ बाढमित्येवभगवान्बृहस्पतिरुवाचताम् २४ नभेतव्यंत्वयादेविनहुषाद्दुष्टचेतसः ॥ नह्येषस्थास्यतिचिरंगतएषनराधमः २५

१२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ मांवक्ष्यंति ममवहनंकरिष्यंति २० । २१ । २२ । २३ । २४ । २५

२६ । २७ अन्विष्यतांअनुगच्छतुभवान् इषगतावित्यस्यदिवादेरूपम् २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेपंचदशोऽध्यायः ॥ १५ ॥

अधर्मज्ञोमहर्षीणांवाहनाच्चततःशुभे ॥ इष्टिंचाहंकरिष्यामिविनाशायास्यदुर्मतेः २६ शक्रंचाधिगमिष्यामिमाभैस्त्वंभद्रमस्तुते ॥ ततःप्रज्वाल्यविधिवज्जुहावपरमंहविः २७ बृहस्पतिर्महातेजादेवराजोपलब्धये ॥ हुत्वाग्निंसोऽब्रवीद्राजञ्छक्रमन्विष्यतामिति २८ तस्माच्चभगवान्देवःस्वयमेवहुताशनः ॥ स्त्रीवेषमद्भुतंकृत्वातत्रैवांतरधीयत २९ सदिशःप्रदिशश्चैवपर्वतानिवनानिच ॥ पृथिवींचांतरिक्षंचविचिंत्याथमनोगतिः ३० निमेषांतरमात्रेणबृहस्पतिमुपागमत् ॥ अग्निरुवाच ॥ बृहस्पतेनपश्यामिदेवराजमिहक्वचित् ॥ आपःशेषाःसदाचापःप्रवेष्टुंनोत्सहाम्यहम् ३१ नमेतत्रगतिर्ब्रह्मन्किमन्यत्करवाणिते ॥ तमब्रवीद्देवगुरुरपोविशमहाद्युते ३२ ॥ अग्निरुवाच ॥ नापःप्रवेष्टुंशक्ष्यामिक्षयोमेऽत्रभविष्यति ॥ शरणंत्वांप्रपन्नोऽस्मिस्वास्तितेऽस्तुमहाद्युते ३३ अद्भ्योग्निर्ब्रह्मतःक्षत्रमश्मनोलोहमुत्थितम् ॥ तेषांसर्वत्रगंतेजःस्वासुयोनिषुशाम्यति ३४ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसेनोद्योगपर्वणिबृहस्पत्यग्निसंवादेपंचदशोऽध्यायः॥ १५॥

॥ बृहस्पतिरुवाच ॥ ॥ त्वमग्नेसर्वदेवानांमुखंत्वमसिहव्यवाट् ॥ त्वमंतःसर्वभूतानांगूढश्चरसिसाक्षिवत् १ त्वामाहुरेकंकवयस्त्वामाहुस्त्रिविधंपुनः ॥ त्वयात्यक्तंजगच्चेदंसद्योनश्येद्धुताशन २ कृत्वातुभ्यंनमोविप्राःस्वकर्मविजितांगतिम् ॥ गच्छंतिसहपत्नीभिःसुतैरपिचशाश्वतीम् ३ त्वमेवाग्नेहव्यवाहस्त्वमेवपरमंहविः ॥ यजंतिसत्रैस्त्वामेवयज्ञैश्चपरमाध्वरे ४ सृष्ट्वालोकांस्त्रीनिमान्हव्यवाहप्राप्तेकालेपचसिपुनःसमिद्धः ॥ त्वंसर्वस्यभुवनस्यप्रसूतिस्त्वमेवाग्नेभवसिपुनःप्रतिष्ठा ५ त्वामग्नेजलदानाहुर्विद्युतश्चमनीषिणः ॥ वहंतिसर्वभूतानित्वत्तोनिष्क्रम्यहेतयः ६ त्वय्यापोनिहिताःसर्वास्त्वयिसर्वमिदंजगत् ॥ नतेऽस्त्यविदितंकिंचित्त्रिषुलोकेषुपावक ७ स्वयोनिंभजतेसर्वोविशस्वापोऽविशंकितः ॥ अहंत्वांवर्धयिष्यामिब्राह्मैर्मंत्रैःसनातनैः ८ एवंस्तुतोहव्यवाट्सभगवान्कविरुत्तमः ॥ बृहस्पतिमथोवाचप्रीतिमान्वाक्यमुत्तमम् ९ दर्शयिष्यामितेशक्रंसत्यमेतद्ब्रवीमिते ॥ शल्यउवाच ॥ प्रविश्यापस्ततोवह्निःससमुद्राःसपल्वलाः ॥ आससादसरस्तच्चगूढोयत्रशतक्रतुः १० अथतत्रापिपद्मानिविचिन्वन्भरतर्षभ ॥ अपश्यत्सतुदेवेंद्रंबिसमध्यगतंतदा ११ आगत्यचततस्तूर्णंतमाचष्टबृहस्पतेः ॥ अणुमात्रेणवपुषापद्मतंत्वाश्रितंप्रभुम् १२ गत्वादेवर्षिगंधर्वैःसहितोऽथबृहस्पतिः ॥ पुराणैःकर्मभिर्देवंतुष्टावबलसूदनम् १३ महासुरोहतःशक्रनमुचिर्दारुणस्त्वया ॥ शंबरश्चबलश्चैवतथोभौघोरविक्रमौ १४ शतक्रतोविवर्धस्वसर्वाञ्छत्रून्निषूदय ॥ उत्तिष्ठशक्रसंपश्यदेवर्षींश्चसमागतान् १५ महेंद्रदानवान्हत्वालोकास्त्रातास्त्वयाविभो ॥ अपांफेनंसमासाद्यविष्णुतेजोतिबृंहितम् ॥ त्वयावृत्रोहतःपूर्वंदेवराजजगत्पते १६

१ एकंजाठरं । त्रिविधंगार्हपत्यदक्षिणाग्न्याहवनीयरूपेणत्वथैकेन २ तुभ्यंत्रिविधाय ३ । ४ प्रसूतिःउत्पत्तिस्थानं प्रतिष्ठालयस्थानम् ५ हेतयःज्वालाः ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६

त्वंसर्वभूतेषुशरण्यईड्यस्त्वयासमंविद्यतेनेहभूतम् ॥ त्वयाधार्यंतेसर्वभूतानिशक्रत्वंदेवानांमहिमानंचकर्थ १७ पाहिसर्वांश्चलोकांश्चमहेंद्रबलमाप्नुहि ॥ एवंसंस्तूयमानश्चसोऽवर्धतशनैःशनैः १८ स्वंचैववपुरास्थायबभूवसबलान्वितः ॥ अब्रवीच्चगुरुंदेवोबृहस्पतिमवस्थितम् १९ किंकार्यमवशिष्टंवोहतस्त्वाष्ट्रोमहासुरः ॥ वृत्रश्चसुमहाकायोयोवैलोकाननाशयत् २० ॥ बृहस्पतिरुवाच ॥ मानुषोनहुषोराजादेवर्षिगणतेजसा ॥ देवराज्यमनुप्राप्तःसर्वान्नोबाधतेभृशम् २१ ॥ इंद्रउवाच ॥ कथंचनहुषोराज्यंदेवानांप्रापदुर्लभम् ॥ तपसाकेनवायुक्तःकिंवीर्योवाबृहस्पते २२ ॥ बृहस्पतिरुवाच ॥ देवाभीताःशक्रमकामयंतत्वयात्यक्तंमहदैंद्रंपदंतत ॥ तदादेवाःपितरोऽथर्षयश्चगंधर्वमुख्याश्चसमेत्यसर्वे २३ गत्वाऽब्रुवन्नहुषंतत्रशक्रत्वंनोराजाभवभुवनस्यगोप्ता ॥ तानब्रवीन्नहुषोनास्मिशक्तआप्यायध्वंतपसातेजसामाम् २४ एवमुक्तैर्वर्द्धितश्चापिदेवैराजाऽभवन्नहुषोघोरवीर्यः ॥ त्रैलोक्येचप्राप्यराज्यंमहर्षीन्कृत्वावाहान्याति लोकान्दुरात्मा २५ तेजोहरंदृष्टिविषंसुघोरंमात्वंपश्येर्नहुषंवैकदाचित् ॥ देवाश्चसर्वेनहुषंभृशार्तानपश्यंतेगूढरूपाश्चरं तः २६ ॥ ॥ शल्यउवाच ॥ एवंवदत्यंगिरसांवरिष्ठेबृहस्पतौलोकपालःकुबेरः ॥ वैवस्वतश्चैवयमःपुराणोदेवश्चसोमोवरुणश्चाजगाम २७ तेवैसमागम्यमहेंद्रमूचुर्दिष्ट्याचत्वाष्ट्रोनिहतश्चैववृत्रः ॥ दिष्ट्याचत्वांकुशलिनमक्षतंचपश्यामोवैनिहतारिंचशक्र २८ सतान्यथावच्चहिलोकपालान्समेत्यवैप्रीतमनामहेंद्रः ॥ उवाचचैनान्प्रतिभाष्यशक्रःसंचोदयिष्यन्नहुषस्यांतरेण ॥ २९ राजादेवानांनहुषोघोररूपस्तत्रसाह्यंदीयतांमेभवद्भिः ॥ तेचाब्रुवन्नहुषोघोररूपोदृष्टीविषस्तस्यबिभीमईश ३० त्वंचेद्राजानंनहुषंपराजयेस्ततोवयंभागमर्हामशक्र ॥ इंद्रोऽब्रवीद्भवतुभवानपांपतिर्यमःकुबेरश्चमयाऽभिषेकम् ३१ संप्राप्नुवंत्वद्यसहैवदैवतैरिपुंजयामतंनहुषंघोरदृष्टिम् ॥ ततःशक्रंज्वलनोऽप्याहभागंप्रयच्छमह्यंतवसाह्यंकरिष्ये ॥ तमाहशक्रोभविताऽग्नेतवापिचैंद्राग्न्योवैभागएकोमहाक्रतौ ३२ ॥ शल्यउवाच ॥ एवंसंचिंत्यभगवान्महेंद्रःपाकशासनः ॥ कुबेरंसर्वयक्षाणांधनानांचप्रभुंतथा ३३ वैवस्वतंपितॄणांचवरुणंचाप्यपांतथा ॥ आधिपत्यंददौशक्रःसंचिंत्यवरदस्तथा ३४ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसेनोद्योगपर्वणिइंद्रवरुणादिसंवादेषोडशोऽध्यायः ॥ १६ ॥ ५ ॥ शल्यउवाच ॥ अथसंचिंतयानस्यदेवराजस्यधीमतः ॥ नहुषस्यवधोपायंलोकपालैःसदैवतैः १ तपस्वीतत्रभगवानगस्त्यःप्रत्यदृश्यत ॥ सोऽब्रवीदर्च्यदेवेंद्रंदिष्ट्यावैवर्धतेभवान् २ विश्वरूपविनाशेनवृत्रासुरवधेनच ॥ दिष्ट्याऽद्यनहुषोभ्रष्टोदेवराज्यात्पुरंदर ३ दिष्ट्याहतारिंपश्यामिभवंतंबलसूदन ॥ इंद्रउवाच ॥ स्वागतंतेमहर्षेऽस्तुप्रीतोऽहंदर्शनात्तव ॥ पाद्यमाचमनीयंचगामर्घ्यंचप्रतीच्छमे ४

॥ ३४ ॥ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेषोडशोऽध्यायः ॥१६ ॥ १ अर्च्यअभ्यर्च्य २ । ३ । ४

५ । ६ । ७ । ८ गवांप्रोक्षणे प्रोक्षणोपाकरणमारणादिसंस्कारे येमंत्राः ‘ देवांश्चयाभिर्यजतेददातिच गावःसोमस्यप्रथमस्यभक्षः’इत्यादयः याभिःपशुभूताभिर्गोभिः भक्षइति भक्षणांतया गउच्यते ९ नहुषस्तु । ‘ब्राह्मणाश्चैवगावश्चकुलमेकंद्विधाकृतं ॥ एकत्रमंत्रास्तिष्ठंतिहविरेकत्रतिष्ठति ’ इतिशास्त्रप्रामाण्याद्ब्राह्मणवद्गवामवध्यत्वंमन्वानोवेदमप्रमाणीचकार । वेदस्यब्राह्मणानां

शल्यउवाच ॥ पूजितंचोपविष्टंतमासनेमुनिसत्तमम् ॥ पर्यपृच्छतदेवेशःप्रहृष्टोब्राह्मणर्षभम् ५ एतदिच्छामिभगवन्कथ्यमानंद्विजोत्तम ॥ परिभ्रष्टःकथंस्वर्गान्नहुषःपापनिश्चयः ६ ॥ अगस्त्यउवाच ॥ शृणुशक्रप्रियंवाक्यंयथाराजादुरात्मवान् ॥ स्वर्गाद्भ्रष्टोदुराचारोनहुषोबलदर्पितः ७ श्रमार्ताश्चवहंतस्तंनहुषंपापकारिणं ॥ देवर्षयोमहाभागास्तथाब्रह्मर्षयोऽमलाः ८ पप्रच्छुर्नहुषंदेवसंशयंजयतांवर ॥ यइमेब्राह्मणाप्रोक्तामंत्रावैप्रोक्षणेगवाम् ९ एतेप्रमाणंभवतउताहोनेतिवासव ॥ नहुषोनेतितानाहतमसामूढचेतनः १० ॥ ऋषयऊचुः ॥ अधर्मेसंप्रवृत्तस्त्वंधर्मंनप्रतिपद्यसे ॥ प्रमाणमेतदस्माकंपूर्वंप्रोक्तंमहर्षिभिः ११ ॥ अगस्त्यउवाच ॥ ततोविवदमानःसमुनिभिःसहवासव ॥ अथमामस्पृशन्मूर्ध्निपादेनाधर्मपीडितः १२ तेनाभूद्धततेजाश्चनिःश्रीकश्चमहीपतिः ॥ ततस्तंतमसाऽऽविग्नमवोचंभृशपीडितम् १३ यस्मात्पूर्वैःकृतंराजन्ब्रह्मर्षिभिरनुष्ठितम् ॥ अदुष्टंदूषयसिमेयच्चमूर्ध्न्यस्पृशःपदा १४ यच्चापित्वमृषीन्मूढब्रह्मकल्पान्दुरासदान् १५ वाहान्कृत्वावाहयसितेनस्वर्गाद्धतप्रभः ॥ ध्वंसपापपरिभ्रष्टःक्षीणपुण्योमहीतले १६ दशवर्षसहस्राणिसर्परूपधरोमहान् ॥ विचरिष्यसिपूर्णेषुपुनःस्वर्गमवाप्स्यसि १७ एवंभ्रष्टोदुरात्मासदेवराज्यादरिंदम ॥ दिष्ट्यावर्धामहेशक्रहतोब्राह्मणकंटकः १८ त्रिविष्टपंप्रपद्यस्वपाहिलोकाञ्शचीपते ॥ जितेंद्रियोजितामित्रःस्तूयमानोमहर्षिभिः १९ ॥ शल्यउवाच ॥ ततोदेवाभृशंतुष्टामहर्षिगणसंवृताः ॥ पितरश्चैवयक्षाश्चभुजगाराक्षसास्तथा २० गंधर्वादेवकन्याश्चसर्वेचाप्सरसांगणाः ॥ सरांसिसरितःशैलाःसागराश्चविशांपते २१ उपागम्याब्रुवन्सर्वेदिष्ट्यावर्धसिशत्रुहन् ॥ हतश्चनहुषःपापोदिष्ट्याऽगस्त्येनधीमता ॥ दिष्ट्यापापसमाचारःकृतःसर्पोमहीतले २२ ॥ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसेनोद्योगपर्वणिइंद्रागस्त्यसंवादेनहुषभ्रंशेसप्तदशोऽध्यायः ॥ १७ ॥ ॥

॥ शल्यउवाच ॥ ततःशक्रःस्तूयमानोगंधर्वाप्सरसांगणैः ॥ ऐरावतंसमारुह्यद्विपेंद्रंलक्षणैर्युतम् १ पावकःसुमहातेजामहर्षिश्चबृहस्पतिः ॥ यमश्चवरुणश्चैवकुबेरश्चधनेश्वरः २ सर्वैर्देवैःपरिवृतःशक्रोवृत्रनिषूदनः ॥ गंधर्वैरप्सरोभिश्चयातस्त्रिभुवनंप्रभुः ३ ससमेत्यमहेंद्राण्यादेवराजःशतक्रतुः ॥ मुदापरमयायुक्तःपालयामासदेवराट् ४ ततःसभगवांस्तत्रअंगिराःसमदृश्यत ॥ अथर्ववेदमंत्रैश्चदेवेंद्रंसमपूजयत् ५ ततस्तुभगवानिंद्रःसंहृष्टःसमपद्यत ॥ वरंचप्रददौतस्मैअथर्वांगिरसेतदा ६

चावमानादधोगतिंप्राप्यतइत्याख्यायिकातात्पर्यं १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेनहुषभ्रंशेसप्तदशोऽध्यायः ॥ १७ ॥ ॥ ७ ॥ ॥ १ । २ । ३ । ४ । ५ । ६

अथर्वांगिरसोनामेति यतोऽगिरा अथर्ववेदमंत्रैरिंद्रंतुष्टाव ततोऽथर्वांगिरसोनामाऽभवत् अस्मिन्वेदेअथर्ववेदे अथर्ववेदस्यऋषिरित्यर्थः। उदाहरणंवाक्यमेतत् अथर्ववेदरूपं यस्यवाक्यंसऋ

अथर्वांगिरसोनामवेदेस्मिन्वैभविष्यति ॥ उदाहरणमेतद्धियज्ञभागंचलप्स्यसे ७ एवंसंपूज्यभगवानथर्वांगिरसंतदा ॥ व्यसर्जयन्महाराजदेवराजःशतक्रतुः ८ संपूज्यसर्वांस्त्रिदशानृषींश्चापितपोधनान् ॥ इंद्रःप्रमुदितोराजन्धर्मेणापालयत्प्रजाः ९ एवंदुःखमनुप्राप्तमिंद्रेणसहभार्यया ॥ अज्ञातवासश्चकृतःशत्रूणांवधकांक्षया १० नात्रमन्युस्त्वयाकार्योयाक्लिष्टोऽसिमहावने ॥ द्रौपद्यासहराजेंद्रभ्रातृभिश्चमहात्मभिः ११ एवंत्वमपिराजेंद्रराज्यंप्राप्स्यसिभारत ॥ वृत्रंहत्वायथाप्राप्तःशक्रःकौरवनंदन १२ दुराचारश्चनहुषोब्रह्मद्विट्पापचेतनः ॥ अगस्त्यशापाभिहतोविनष्टःशाश्वतीःसमाः १३ एवंतवदुरात्मानःशत्रवःशत्रुसूदन ॥ क्षिप्रंनाशंगमिष्यंतिकर्णदुर्योधनादयः १४ ततःसागरपर्यंतांभोक्ष्यसेमेदिनीमिमाम् ॥ भ्रातृभिःसहितोवीरद्रौपद्याचसहानया १५ उपाख्यानमिदंशक्रविजयंवेदसंमितम् ॥ राज्ञाव्यूढेष्वनीकेषुश्रोतव्यंजयमिच्छता १६ तस्मात्संश्रावयामित्वांविजयंजयतांवर ॥ संस्तूयमानावर्धंतेमहात्मानोयुधिष्ठिर १७ क्षत्रियाणामभावोऽयंयुधिष्ठिरमहात्मनाम् ॥ दुर्योधनापराधेनभीमार्जुनबलेनच १८ आख्यानमिंद्रविजयंयइदंनियतःपठेत् ॥ धूतपाप्माजितस्वर्गःपरत्रेहचमोदते १९ नचारिजंभयंतस्यनापुत्रोवाभवेन्नरः ॥ नापदंप्राप्नुयात्कांचिद्दीर्घमायुश्चविंदति ॥ सर्वत्रजयमाप्नोतिनकदाचित्पराजयम् २० ॥ वैशंपायनउवाच ॥ एवमाश्वासितोराजाशल्येनभरतर्षभ ॥ पूजयामासविधिवच्छल्यंधर्मभृतांवरः २१ श्रुत्वातुशल्यवचनंकुंतीपुत्रोयुधिष्ठिरः ॥ प्रत्युवाचमहाबाहुर्मद्रराजमिदंवचः २२ भवान्कर्णस्यसारथ्यंकरिष्यतिनसंशयः ॥ तत्रतेजोवधःकार्यःकर्णस्यार्जुनसंस्तवः २३ ॥ शल्यउवाच ॥ एवमेतत्करिष्यामियथामांसंप्रभाषसे ॥ यच्चान्यदपिशक्ष्यामितत्करिष्याम्यहंतव २४ ॥ वैशंपायनउवाच ॥ ततस्त्वामंत्र्यकौंतेयाञ्छल्योमद्राधिपस्तदा ॥ जगामसबलःश्रीमान्दुर्योधनमरिंदम ॥ २५ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसेनोद्योगपर्वणिशल्यगमनेऽष्टादशोऽध्यायः ॥ १८ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ युयुधानस्ततोवीरःसात्वतानांमहारथः ॥ महताचतुरंगेणबलेनागाद्युधिष्ठिरम् १ तस्ययोधामहावीर्यानानादेशसमागताः ॥ नानाप्रहरणावीराःशोभयांचक्रिरेबलम् २ परश्वधैर्भिंदिपालैःशूलतोमरमुद्गरैः ॥ परिघैर्यष्टिभिःपाशैःकरवालैश्चनिर्मलैः ३ खड्गकार्मुकनिर्व्यूहैःशरैश्चविविधैरपि ॥ तैलधौतैःप्रकाशद्भिःसदाऽशोभतवैबलम् ४ तस्यमेघप्रकाशस्यसौवर्णैःशोभितस्यच ॥ बभूवरूपंसैन्यस्यमेघस्येवसविद्युतः ५ अक्षौहिणीतुसासेनातदायौधिष्ठिरंबलम् ॥ प्रविश्यांतर्दधेराजन्सागरंकुनदीयथा ६ तथैवाक्षौहिणींगृह्यचेदीनामृषभोबली ॥ धृष्टकेतुरुपागच्छत्पांडवानमितौजसः ७ मागधश्चजयत्सेनोजारासंधिर्महाबलः ॥ अक्षौहिण्यैवसैन्यस्यधर्मराजमुपागमत् ८

षिरितिपरिभाषावचनात् ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ शत्रुतेजसोवधोयेनतादृशोऽर्जुनसंस्तवः २३ । २४ । २५ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे अष्टादशोऽध्यायः ॥ १८ ॥ ॥ ७ ॥ ॥ युयुधानःसात्यकिः १ । २ । ३ । ४ । ५ । ६ । ७ । ८

९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ वनमालाआपादलंबिनीमाला १८ । १९ । २० । २१ समाग्रायःसमूहः २२ । २३ आवंत्यौविंदा

तथैवपांड्योराजेंद्रसागरानूपवासिभिः ॥ वृतोबहुविधैर्योधैर्युधिष्ठिरमुपागमत् ९ तस्यसैन्यमतीवासीत्तस्मिन्बलसमागमे ॥ प्रेक्षणीयतरंराजन्सुवेषंबलवत्तदा १० द्रुपदस्याप्यभूत्सेनानानादेशसमागतैः ॥ शोभितापुरुषैःशूरैःपुत्रैश्चास्यमहारथैः ११ तथैवराजामत्स्यानांविराटोवाहिनीपतिः ॥ पार्वतीयैर्महीपालैःसहितःपांडवानियात् १२ इतश्चेतश्चपांडूनांसमाजग्मुर्महात्मनाम् ॥ अक्षौहिण्यस्तुसप्तैताविविधध्वजसंकुलाः १३ युयुत्समानाःकुरुभिःपांडवान्समहर्षयन् ॥ तथैवधार्तराष्ट्रस्यहर्षंसमभिवर्धयन् १४ भगदत्तोमहीपालःसेनामक्षौहिणींददौ ॥ तस्यचीनैःकिरातैश्चकांचनैरिवसंवृतम् १५ बभौबलमनाधृष्यंकर्णिकारवनंयथा ॥ तथाभूरिश्रवाःशूरःशल्यश्चकुरुनंदन १६ दुर्योधनमुपायातावक्षौहिण्यापृथक्पृथक् ॥ कृतवर्माचहार्दिक्योभोजांधकुकुरैःसह १७ अक्षौहिण्यैवसेनायादुर्योधनमुपागमत् ॥ तस्यतैःपुरुषव्याघ्रैर्वनमालाधरैर्बलम् १८ अशोभतयथामत्तैर्वनंप्रक्रीडितैर्गजैः ॥ जयद्रथमुखाश्चान्येसिंधुसौवीरवासिनः १९ आजग्मुःपृथिवीपालाःकंपयंतइवाचलान् ॥ तेषामक्षौहिणीसेनाबहुलाविबभौतदा २० विधूयमानोवातेनबहुरूपइवांबुदः ॥ सुदक्षिणश्चकांबोजोयवनैश्चशकैस्तथा २१ उपाजगामकौरव्यमक्षौहिण्याविशांपते ॥ तस्यसेनासमावायःशलभानामिवाबभौ २२ सचसंप्राप्यकौरव्यंतत्रैवांतर्दधेतदा ॥ तथामाहिष्मतीवासीनीलोनीलायुधैःसह २३ महीपालोमहावीर्यैर्दक्षिणापथवासिभिः ॥ आवंत्यौचमहीपालौमहाबलसुसंवृतौ २४ पृथगक्षौहिणीभ्यांतावभियातौसुयोधनम् ॥ केकयाश्चनरव्याघ्राःसोदर्याःपंचपार्थिवाः २५ संहर्षयंतःकौरव्यमक्षौहिण्यासमाद्रवन् ॥ ततस्ततस्तुसर्वेषांभूमिपानांमहात्मनाम् २६ तिस्रोऽन्याःसन्यवर्ततवाहिन्योभरतर्षभ ॥ एवमेकादशावृत्ताःसेनादुर्योधनस्यताः २७ युयुत्समानाःकौंतेयान्नानाध्वजसमाकुलाः ॥ नहास्तिनपुरेराजन्नवकाशोऽभवत्तदा २८ राज्ञांस्वबलमुख्यानांप्राधान्येनापिभारत ॥ ततःपंचनदंचैवकृत्स्नंचकुरुजांगलम् २९ तथारोहितकारण्यंमरुभूमिश्चकेवला ॥ अहिच्छत्रंकालकूटंगंगाकूलंचभारत ३० वारणंवाटधानंचयामुनश्चैवपर्वतः ॥ एषदेशःसुविस्तीर्णःप्रभूतधनधान्यवान् ३१ बभूवकौरवेयाणांबलेनातीवसंवृतः ॥ तत्रसैन्यंतथायुक्तंददर्शसपुरोहितः ३२ यःसपांचालराजेनप्रेषितःकौरवान्प्रति ३३ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसेनोद्योगपर्वणिपुरोहितसैन्यदर्शनेएकोनविंशोऽध्यायः ॥ १९ ॥

॥ समाप्तमिदंसेनोद्योगपर्व ॥ अथसंजययानपर्व ॥ ॥ वैशंपायनउवाच ॥ सचकौरव्यमासाद्यद्रुपदस्यपुरोहितः ॥ सत्कृतोधृतराष्ट्रेणभीष्मेणविदुरेणच १ सर्वंकौशल्यमुक्त्वाऽऽदौपृष्ट्वाचैवमनामयम् ॥ सर्वसेनाप्रणेतृणांमध्येवाक्यमुवाचह २ सर्वैर्भवद्भिर्विदितोराजधर्मःसनातनः ॥ वाक्योपादानहेतोस्तुवक्ष्याभिविदितेसति ३

नुविंदौ २४ । २५ । २६ । २७ । २८ । २९ अहिच्छत्रादयःप्रदेशविशेषाः ३० । ३१ । ३२ । ३३ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे एकोनविंशोऽध्यायः ॥ १९ ॥ ॥ ७ ॥ ॥ १ । २ वाक्येति भवद्भिःकिंचिद्वक्तव्यमतोहेतोरित्यर्थः ३

४ । ५ । ६ शेषवंतःआयुःशेषयुक्ताः ७ । ८ । ९ । १० योन्यंतरगतैरिवेति तैर्दत्तान्क्लेशान्जन्मांतरव्यवहितानिवनस्मरंतीत्यर्थः ११ । १२ । १३ । १४ । १५

धृतराष्ट्रश्चपांडुश्चसुतावेकस्यविश्रुतौ ॥ तयोःसमानंद्रविणंपैतृकंनात्रसंशयः ४ धृतराष्ट्रस्ययेपुत्राःप्राप्तंतैःपैतृकंवसु ॥ पांडुपुत्राःकथंनामनप्राप्ताःपैतृकंवसु ५ एवंगतेपांडवेयैर्विदितंवःपुरायथा ॥ नप्राप्तंपैतृकंद्रव्यंधृतराष्ट्रेणसंवृतम् ६ प्राणांतिकैरप्युपायैःप्रयतद्भिरनेकशः ॥ शेषवंतोनशाकितानेतुंवैयमसादनम् ७ पुनश्चवर्द्धितंराज्यंस्वबलेनमहात्मभिः ॥ छद्मनाऽपहृतंक्षुद्रैर्धार्तराष्ट्रैःससौबलैः ८ तदप्यनुमतंकर्मयथायुक्तमनेनवै ॥ वासिताश्चमहारण्येवर्षाणीहत्रयोदश ९ सभायांक्लेशितैर्वीरैःसहभार्यैस्तथाभृशम् ॥ अरण्येविविधाःक्लेशाःसंप्राप्तास्तैःसुदारुणाः १० तथाविराटनगरेयोन्यंतरगतैरिव ॥ प्राप्तःपरमसंक्लेशोयथापापैर्महात्मभिः ११ तेसर्वंपृष्ठतःकृत्वातत्सर्वंपूर्वकिल्बिषम् ॥ सामैवकुरुभिःसार्धमिच्छंतिकुरुपुंगवाः १२ तेषांचवृत्तमाज्ञायवृत्तंदुर्योधनस्यच ॥ अनुनेतुमिहार्हंतिधार्तराष्ट्रंसुहृज्जनाः १३ नहितेविग्रहंवीराःकुर्वंतिकुरुभिःसह ॥ अविनाशेनलोकस्यकांक्षंतेपांडवाःस्वकम् १४ यश्चापिधार्तराष्ट्रस्यहेतुःस्याद्विग्रहंप्रति ॥ सचहेतुर्नमंतव्योबलीयांसस्तथाहिते १५ अक्षौहिण्यश्चसप्तैवधर्मपुत्रस्यसंगताः ॥ युयुत्समानाःकुरुभिःप्रतीक्षंतेऽस्यशासनम् १६ अपरेपुरुषव्याघ्राःसहस्राक्षौहिणीसमाः ॥ सात्यकिर्भीमसेनश्चयमौचसुमहाबलौ १७ एकादशैताःपृतनाएकतश्चसमागताः ॥ एकतश्चमहाबाहुर्बहुरूपीधनंजयः १८ यथाकिरीटीसर्वाभ्यःसेनाभ्योव्यतिरिच्यते ॥ एवमेवमहाबाहुर्वासुदेवोमहाद्युतिः १९ बहुलत्वंचसेनानांविक्रमंचकिरीटिनः ॥ बुद्धिमत्त्वंचकृष्णस्यबुद्ध्वायुध्येतकोनरः २० तेभवंतोयथाधर्मंयथासमयमेवच ॥ प्रयच्छंतुप्रदातव्यंमावःकालोऽत्यगादयम् २१ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसंजययानपर्वणिपुरोहितयानेविंशोऽध्यायः ॥ २० ॥ ॥ वैशंपायनउवाच ॥ तस्यतद्वचनंश्रुत्वाप्रज्ञावृद्धोमहाद्युतिः ॥ संपूज्यैनंयथाकालंभीष्मोवचनमब्रवीत् १ दिष्ट्याकुशलिनःसर्वेसहदामोदरेणते ॥ दिष्ट्यासहायवंतश्चदिष्ट्याधर्मेचतेरताः २ दिष्ट्याचसंधिकामास्तेभ्रातरःकुरुनंदनाः ॥ दिष्ट्यानयुद्धमनसःपांडवाःसहबांधवैः ३ भवतासत्यमुक्तंतुसर्वमेतन्नसंशयः ॥ अतितीक्ष्णंतुतेवाक्यंब्राह्मण्यादितिमेमतिः ४ असंशयंक्लेशितास्तेवनेचेहचपांडवाः ॥ प्राप्ताश्चधर्मतःसर्वंपितुर्धनमसंशयम् ५ किरीटीबलवान्पार्थःकृतास्त्रश्चमहारथः ॥ कोहिपांडुसुतंयुद्धेविषहेतधनंजयम् ६ अपिवज्रधरःसाक्षात्किमुतान्येधनुर्भृतः ॥ त्रयाणामपिलोकानांसमर्थइतिमेमतिः ७ भीष्मेब्रुवतितद्वाक्यंधृष्टमाक्षिप्यमन्युना ॥ दुर्योधनंसमालोक्यकर्णोवचनमब्रवीत् ८ नतत्राविदितंब्रह्मन्लोकेभूतेनकेनचित् ॥ पुनरुक्तेनकिंतेनभाषितेनपुनःपुनः ९ दुर्योधनार्थेशकुनिर्द्यूतेनिर्जितवान्पुरा ॥ समयेनगतोऽरण्यंपांडुपुत्रोयुधिष्ठिरः १०

१६ । १७ । १८ । १९ । २० । २१ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेविंशोऽध्यायः ॥ २० ॥ ॥ १ । २ । ३ । ४ । ५ । ६ । ७ धृष्टंधर्षणायुक्तंयथास्यात्तथा आक्षिप्यतिरस्कृत्य ८ तत्रपांडवपक्षे ९ । १०

तंसमयंकालं तच्चसंकेतवाक्यंत्रयोदशवर्षेर्ज्ञातैःपुनर्वनेवस्तव्यमित्येवंरूपंवा । समयइत्युपक्रम्य 'संकेतेकालभाषयोः' इतिमेदिनी । आश्रित्यनिर्वाह्य पैतृकंराज्यांशंनेच्छति किंतुतदतिक्रमेणैवपैतृक मिच्छतीत्यर्थः ११ पादंचतुर्थांशमपिकिमुतार्धमित्यर्थः १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० ॥ २१ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपेपुरोहितयानेएकविंशो ऽध्यायः ॥ २१ ॥ प्राप्तानिति दिष्ट्याभाग्येन आनह्यसंनद्धोभूत्वा स्थानंस्थितिमुपस्थितःप्राप्तःइति सभाजयेथाःपूजयेथाः १ स्वस्तिमंतोदयमितिसर्वान्वदेः कृच्छ्रंनिरुध्यापितेषांशांतिरक्रोधो

सतंसमयमाश्रित्यराज्यंनेच्छतिपैतृकम् ॥ बलमाश्रित्यमत्स्यानांपांचालानांचमूर्खवत् ११ दुर्योधनोभयाद्विद्वन्नदद्यात्पादमंततः ॥ धर्मतस्तुमहींकृत्स्नांप्रद द्याच्छत्रवेऽपिच १२ यदिकांक्षंतितेराज्यंपितृपैतामहंपुनः ॥ यथाप्रतिज्ञंकालंतंचरंतुवनमाश्रिताः १३ ततोदुर्योधनस्यांकेवर्तंतामकुतोभयाः ॥ अधार्मि कींतुमाबुद्धिंमौर्ख्यात्कुर्वंतुकेवलात् १४ अथतेधर्ममुत्सृज्ययुद्धमिच्छंतिपांडवाः ॥ आसाद्येमान्कुरुश्रेष्ठान्स्मरिष्यंतिवचोमम १५ ॥ भीष्मउवाच ॥ किंनुरा धेयवाचातेकर्मतत्स्मर्तुमर्हसि ॥ एकएवयदापार्थःषड्रथाञ्जितवान्युधि १६ बहुशोजीयमानस्यकर्मदृष्टंतदैवते ॥ नचेदेवंकरिष्यामोयदयंब्राह्मणोऽब्रवीत् ॥ ध्रुवंयुधिहतास्तेनभक्षयिष्यामपांसुकान् १७ ॥ वैशंपायनउवाच ॥ धृतराष्ट्रस्ततोभीष्ममनुमान्यप्रसाद्यच ॥ अवभर्त्स्यचराधेयमिदंवचनमब्रवीत् १८ अ स्मद्धितंवाक्यमिदंभीष्मःशांतनवोऽब्रवीत् ॥ पांडवानांहितंचैवसर्वस्यजगतस्तथा १९ चिंतयित्वातुपार्थेभ्यःप्रेषयिष्यामिसंजयम् ॥ सभवान्प्रतियात्वद्य पांडवानेवमाचिरम् २० सतंसत्कृत्यकौरव्यःप्रेषयामासपांडवान् ॥ सभामध्येसमाहूयसंजयंवाक्यमब्रवीत् २१ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसंजययानपर्व णिपुरोहितयानेएकविंशोऽध्यायः ॥ २१ ॥ ॥ धृतराष्ट्रउवाच ॥ प्राप्तानाहुःसंजयपांडुपुत्रानुपप्लव्येतान्विजानीहिगत्वा ॥ अजातशत्रुंचसभाजयेथादि ष्ट्यानह्यस्थानमुपस्थितस्त्वम् १ सर्वान्वदेःसंजयस्वस्तिमंतःकृच्छ्रंवासमतदर्हान्निरुष्य ॥ तेषांशांतिर्विद्यतेऽस्मासुशीघ्रंमिथ्यापेतानामुपकारिणांसताम् २ नाहंकचित्संजयपांडवानांमिथ्यावृत्तिंकांचनजात्वपश्यम् ॥ सर्वांश्रियंह्यात्मवीर्येणलब्धांपर्याकार्षुःपांडवामह्यमेव ३ दोषंह्येषांनाध्यगच्छंपरीच्छन्नित्यंकंचिद्येन गर्हेयपार्थान् ॥ धर्मार्थाभ्यांकर्मकुर्वंतिनित्यंसुखप्रियेनानुरुध्यंतिकामात् ४ धर्मंशीतंक्षुत्पिपासेतथैवनिद्रांतंद्रींक्रोधहर्षौप्रमादम् ॥ धृत्याचैवप्रज्ञयाचाभिभूयध र्मार्थयोगान्प्रयतंतिपार्थाः ५ त्यजंतिमित्रेषुधनानिकालेनसंवासाज्जीर्यतितेषुमैत्री ॥ यथार्हमानार्थकराहिपार्थास्तेषांद्वेष्टानास्त्याजमीढस्यपक्षे ६ अन्यत्र पापाद्विषमान्मंदबुद्धेर्दुर्योधनात्क्षुद्रतराच्चकर्णात् ॥ तेषांहीमौहीनसुखप्रियाणांमहात्मनांसंजनयतोहितेजः ७ उत्थानवीर्यःसुखमेधमानोदुर्योधनःसुकृतंमन्य तेतत् ॥ तेषांभागंयच्चमन्येतबालःशक्यंहर्तुंजीवतांपांडवानाम् ८

ऽस्मासुविद्यते मिथ्यापेतानांनिष्कपटानां २ मह्यंपर्याकार्षुःमदर्थंपरितआनीतवंतः ३ धर्मार्थाभ्यां धर्मार्थंअर्थार्थंचसुखंप्रीतिः प्रियंपुत्रादितदनुरोधेनकामात्धर्मंनत्यजंतीत्यर्थः ४ तंद्रींजाग्रतए वमौढ्यं ५ यथार्हमानंअर्थंचकुर्वंतितेतथा ६ तेजःक्रोधं ७ उत्थानेआरंभकालेएववीर्यंनप्रसंगेयस्यसउत्थानवीर्यः यत्तेषांभागंहर्तुंशक्यंमन्यते तत्सुकृतंयुक्तमितिमन्यते मौढ्यादितिभावः ८

यस्यपदवींयांतियस्यानुगाइत्यर्थः तस्यतस्मैप्रदानंभागप्रदानम् ९ जिष्णुर्जयशीलः १० वरेण्यःभोगमोक्षकामैर्वरणीयः ११ नकेवलंमध्यदेशापेक्षयाउदीचीं किंतुउत्तरान्कुरून्हिमाचला दप्युदक्देशान् स्वर्गभूमिरूपान् १२ जातवेदसेउपाहरत् खांडवमितिविपरीणामेनानुषंगः १३ । १४ । १५ । १६ एतत्परिदृश्यमानंबलं भीष्मद्रोणादीनांसामर्थ्यंतदपिस त्यं तथाऽपितान्पांडवान्प्राप्यनास्तीतिमन्ये तुच्छमित्यर्थः १७ प्रबर्हःश्रेष्ठः संत्यक्तात्मात्यक्तदेहः १८ सहोषितोवर्षमात्रंचरितार्थः गोग्रहेरक्षितः मात्स्येयानांमत्स्यदेशजानाम् १९



यस्यार्जुनःपदवींकेशवश्चवृकोदरःसात्यकोऽजातशत्रोः ॥ माद्रीपुत्रौसृंजयाश्चापियांतिपुरायुद्धात्साधुतस्यप्रदानम् ९ सह्येवैकःपृथिवींसव्यसाचीगांडीवधन्वा प्रणुदेद्रथस्थः ॥ तथाजिष्णुःकेशवोऽप्यप्रधृष्योलोकत्रयस्याधिपतिर्महात्मा १० तिष्ठेतकस्तस्यमर्त्यःपुरस्ताद्यःसर्वलोकेषुवरेण्यएकः ॥ पर्जन्यघोषान्प्रव पतःशरौघान्पतंगसंघानिवशीघ्रवेगान् ११ दिशंह्युदीचीमपिचोत्तरान्कुरून्गांडीवधन्वैकरथोजिगाय ॥ धनंचैषामाहरत्सव्यसाचीसेनानुगान्द्रविडांश्चैवचक्रे १२ यश्चैवदेवान्खांडवेसव्यसाचीगांडीवधन्वाप्रजिगायसेंद्रान् ॥ उपाहरत्पांडवोजातवेदसेयशोमानंवर्धयन्पांडवानाम् १३ गदाभृतांनास्तिसमोऽत्रभीमाद्ध स्त्यारोहोनास्तिसमश्चतस्य ॥ रथेऽर्जुनादाहुरहीनमेनंबाह्वोर्बलेनायुतनागवीर्यम् १४ सुशिक्षितःकृतवैरस्तरस्वीदहेत्क्षुद्रांस्तरसाधार्तराष्ट्रान् ॥ सदात्यमर्षी नबलात्सशक्योयुद्धेजेतुंवासवेनापिसाक्षात् १५ सुचेतसौबलिनौशीघ्रहस्तौसुशिक्षितौभ्रातरौफाल्गुनेन ॥ श्येनौयथापक्षिपूगान्रुजंतौमाद्रीपुत्रौशेषयेतांनश त्रून् १६ एतद्बलंपूर्णमस्माकमेवंयत्सत्यंतान्प्राप्यनास्तीतिमन्ये ॥ तेषांमध्येवर्तमानस्तरस्वीधृष्टद्युम्नःपांडवानामिहैकः १७ सहामात्यःसोमकानांप्रबर्हःसंत्यक्ता त्मापांडवार्थेश्रुतोमे ॥ अजातशत्रुंप्रसहेतकोऽन्योयेषांसस्यादग्रणीर्वृष्णिसिंहः १८ सहोषितश्चरितार्थोवयस्थोमात्स्येयानामधिपोवैविराटः ॥ सवैसपुत्रःपांडवार्थे चशश्वद्युधिष्ठिरेभक्तइतिश्रुतंमे १९ अवरुद्धारथिनःकेकयेभ्योमहेष्वासाभ्रातरःपंचसंति ॥ केकयेभ्योराज्यमाकांक्षमाणायुद्धार्थिनश्चानुवसंतिपार्थान् २० सर्वांश्चवीरान्पृथिवीपतीनांसमागतान्पांडवार्थेनिविष्टान् ॥ शूरानहंभक्तिमतःशृणोमिप्रीत्यायुक्तान्संश्रितान्धर्मराजम् २१ गिर्याश्रयादुर्गनिवासिनश्चयोधाः पृथिव्यांकुलजातिशुद्धाः ॥ म्लेच्छाश्चनानायुधवीर्यवंतःसमागताःपांडवार्थेनिविष्टाः २२ पांड्यश्चराजासमितींद्रकल्पोयोधप्रवीरैर्बहुभिःसमेतः ॥ समागतः पांडवार्थेमहात्मालोकप्रवीरोऽप्रतिवीर्यतेजाः २३ अस्त्रंद्रोणादर्जुनाद्वासुदेवात्कृपाद्भीष्माद्येनवृतंशृणोमि ॥ यंतंकार्ष्णिप्रतिममाहुरेकंससात्यकिःपांडवार्थेनि विष्टः २४ उपाश्रिताश्चेदिकरूषकाश्चसर्वोद्योगैर्भूमिपालाःसमेताः ॥ येषांमध्येसूर्यमिवातपंतंश्रियावृतंचेदिपतिंज्वलंतम् २५ अस्तंभनीयंयुधिमन्यमानो ज्याकर्षतांश्रेष्ठतमंपृथिव्याम् ॥ सर्वोत्साहंक्षत्रियाणांनिहत्यप्रसह्यकृष्णस्तरसासंममर्द २६

केकयेभ्योदेशेभ्यः । अवरुद्धाःबहिर्निःसारिताः पंचभ्रातरःकेकयानां । यतःकेकयेभ्यःराज्यंप्राप्तुमिच्छंतः पूर्वंअस्मदीयाअपि संप्रतिपांडवान्अनुवसंतिअनुसरंति । तेनस्वपक्षहानिः परपक्षपुष्टिश्चदर्शिता २० । २१ । २२ समितिसंग्रामे । 'समि त्याजिसमिद्युधः' इतिकोशः । अप्रतिवीर्यतेजाः अतुल्यतेजाः २३ कार्ष्णिःप्रद्युम्नस्ततुल्यम् २४ चेदिपतिंशिशुपालं कृष्णोममर्देत्युत्तरेणान्वयः २५ ज्यांधनुर्गुणंकर्षतांधनुर्भृताम् २६

यस्यमानंवर्धयंतितंशिशुपालंअभिनदितिसंबंधः २७ चेदिपतिंविहायअन्येतंकृष्णं केप्राद्रवन्नकेपि किंतुसएवतेनस्पर्द्धांचकारेत्यर्थः २८ आशंसमानोजयमितिशेषः अशेतशयनंकृतवान्शिशुपालः २९ यत्यतःअवेदयंतज्ञापितवंतः चाराइतिशेषः ३० कृष्णौवासुदेवार्जुनौ ३१ संगरंचेन्नगच्छेत्तदाशर्मलभेत् नोचेत् अन्यथाइंद्रोविष्णुश्चअर्जुनवासुदेवौ निर्दहेतामित्यन्वयः ३२

यशोमानौवर्धयन्पांडवानांपुराऽभिनच्छिशुपालंसमीक्ष्य ॥ यस्यसर्वेवर्धयंतिस्ममानंकरूषराजप्रमुखानरेंद्राः २७ तमसह्यंकेशवंतत्रमत्वासुग्रीवयुक्तेनरथेन कृष्णम् ॥ केप्राद्रवंश्चेदिपतिंविहायसिंहंदृष्ट्वाक्षुद्रमृगाइवान्ये २८ यस्तंप्रतीपस्तरसाप्रत्युदीयादाशंसमानोद्वैरथेवासुदेवम् ॥ सोऽशेतकृष्णेनहतःपरासुर्वातेनेवोन्मथितःकर्णिकारः २९ पराक्रमंमेयदवेदयंततेषामर्थेसंजयकेशवस्य ॥ अनुस्मरंस्तस्यकर्माणिविष्णोर्गावल्गणेनाधिगच्छामिशांतिम् ३० नजातुतान्शत्रुरन्यःसहेतयेषांसस्यादग्रणीर्वृष्णिसिंहः ॥ प्रवेपतेमेहृदयंभयेनश्रुत्वाकृष्णावेकरथेसमेतौ ३१ नचेद्गच्छेत्संगरंमंदबुद्धिस्ताभ्यांलभेच्छर्मतदासुतोमे ॥ नोचेत्कुरून्संजयनिर्दहेतामिंद्राविष्णूदैत्यसेनांयथैव ३२ मतोहिमेशक्रसमोधनंजयःसनातनोवृष्णिवीरश्चविष्णुः ॥ धर्मारामोह्रीनिषेवस्तरस्वीकुंतीपुत्रःपांडवोऽजातशत्रुः ३३ दुर्योधनेननिकृतोमनस्वीनोचेत्क्रुद्धःप्रदहेद्धार्तराष्ट्रान् ॥ नाहंतथाह्यर्जुनाद्वासुदेवाद्भीमाद्वाऽहंयमयोर्वाबिभेमि ३४ यथाराज्ञःक्रोधदीप्तस्यसूतमन्योरहंभीततरःसदैव ॥ महातपाब्रह्मचर्येणयुक्तःसंकल्पोऽयंमानसस्तस्यसिद्धयेत् ३५ तस्यक्रोधंसंजयाहंसमीक्ष्यस्थानेजानन्भृशमस्म्यद्यभीतः ॥ सगच्छशीघ्रंप्रहितोरथेनपांचालराजस्यचमूनिवेशनम् ३६ अजातशत्रुंकुशलंस्मपृच्छेःपुनःपुनःप्रीतियुक्तंवदेस्त्वम् ॥ जनार्दनंचापिसमेत्यतातमहामात्रंवीर्यवतामुदारम् ३७ अनामयंमद्वचनेनपृच्छेर्धृतराष्ट्रःपांडवैःशांतिमीप्सुः ॥ नतस्यकिंचिद्वचनंनकुर्यात्कुंतीपुत्रोवासुदेवस्यसूत ३८ प्रियश्चैषामात्मसमश्चकृष्णोविद्वांश्चैषांकर्मणिनित्ययुक्तः ॥ समानीतान्पांडवान्सृंजयांश्चजनार्दनंयुयुधानंविराटम् ३९ अनामयंमद्वचनेनपृच्छेःसर्वांस्तथाद्रौपदेयांश्चपंच ॥ यद्यत्तत्रप्राप्तकालंपरेभ्यस्त्वंमन्येथाभारतानांहितंच ॥ तद्भाषेथाःसंजयराजमध्येनमूर्च्छयेद्यन्नचयुद्धहेतुः ४० ॥ इतिश्रीम० उद्योगपर्वणिसंजययानेधृतराष्ट्रसंदेशेद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ वैशंपायनउवाच ॥ राज्ञस्तुवचनंश्रुत्वाधृतराष्ट्रस्यसंजयः ॥ उपप्लव्यंययौद्रष्टुंपांडवानमितौजसः १ सतुराजानमासाद्यकुंतीपुत्रंयुधिष्ठिरम् ॥ अभिवाद्यततःपूर्वंसूतपुत्रोऽभ्यभाषत २ गावल्गणिःसंजयःसूतसूनुरजातशत्रुमवदत्प्रतीतः ॥ दिष्ट्याराजंस्त्वामरोगंप्रपश्येसहायवंतंचमहेंद्रकल्पम् ३ अनामयंपृच्छतित्वांऽबिकेयोवृद्धोराजाधृतराष्ट्रोमनीषी ॥ कच्चिद्भीमःकुशलीपांडवाग्र्योधनंजयस्तौचमाद्रीतनूजौ ४

शक्रपुत्रत्वात्शक्रसमः धर्मपुत्रत्वात्धर्मारामः ३३ निकृतोवंचितःमनस्वीजितमनाः ३४ मन्योःक्रोधात् ३५ स्थानेजानन्युक्तंपश्यन् ३६ महामात्रंमहाभागं ३७ शांतिमीप्सुरस्तीतिवदेत्यध्याहारः ३८ समानीतान्एकत्रस्थितान् ३९ नमूर्च्छयेत् वर्धयेत्क्रोधमितिशेषः ४० ॥ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिनीलकंठीये भारतभावदीपेद्वाविंशोऽध्यायः ॥ २२ ॥

१ । २ प्रतीतोहृष्टः ३ । ४

यत्र आप्तवर्गे त्वंस्वस्तिकामः कल्याणार्थी यांश्चइष्टान्कामान्भोग्यान्गजरथादीन्वांछसि तेसर्वेकुशलिनःकच्चिदित्यनुषंगः ५ । ६ । ७ वृत्तिरस्माशुस्नेहः ८ । ९ । १० कुरुभ्यःस्पृहयंतिकच्चि दित्यनुषंगः कुरूणांकल्याणंअयुद्धेनवांछंतिकच्चिदितिभावः ११ येषांराष्ट्रेनिवसतितेषांकुरूणांमध्ये धनुर्भृतःकच्चिन्मानंलभंते १२ । १३ महानसस्योमहानसेपरिचारिकाः वध्वःस्नुषाःअव्यली काःनिष्कपटाः १४ वृत्तिंजीविकांदातुमितिशेषः दायान्मद्दत्तान्ग्रामादीन् १५ अतिक्रमान्नोपेक्षत इत्युत्तरार्धान्नञोऽपकर्षेणयोज्यं १६ एतद्ब्राह्मणानांवृत्तेःपालनंज्योतिःपरलोकप्रकाशकं जी

कच्चित्कृष्णाद्रौपदीराजपुत्रीसत्यव्रतावीरपत्नीसपुत्रा ॥ मनस्विनीयत्रचवांछमित्वमिष्टान्कामान्भारतस्वस्तिकामः ५ ॥ युधिष्ठिरउवाच ॥ गावल्गणेसंज यस्वागतंतेप्रियामहेतेवयंदर्शनेन ॥ अनामयंप्रतिजानेतवाहंसहानुजैःकुशलीचास्मिविद्वन् ६ चिरादिदंकुशलंभारतस्यश्रुत्वाराज्ञःकुरुवृद्धस्यसूत ॥ मन्येसा क्षाद्दृष्टमहंनरेंद्रंदृष्ट्वैवत्वांसंजयप्रीतियोगात् ७ पितामहोनःस्थविरोमनस्वीमहाप्राज्ञःसर्वधर्मोपपन्नः ॥ सकौरव्यःकुशलीतातभीष्मोयथापूर्वंवृत्तिरस्त्यस्यकच्चि त् ८ कच्चिद्राजाधृतराष्ट्रःसपुत्रोवैचित्रवीर्यःकुशलीमहात्मा ॥ महाराजोबाह्लिकःप्रातिपेयःकच्चिद्विद्वान्कुशलीसूतपुत्र ९ ससोमदत्तःकुशलीतातकच्चिद्भूरिश्र वाःसत्यसंधःशलश्च ॥ द्रोणःसपुत्रश्चकृपश्चविप्रोमहेष्वासाःकच्चिदेतेऽप्यरोगाः १० सर्वेकुरुभ्यःस्पृहयंतिसंजयधनुर्धरायेपृथिव्यांप्रधानाः ॥ महाप्रज्ञाःसर्वशा स्त्रावदाताधनुर्भृतांमुख्यतमाःपृथिव्याम् ११ कच्चिन्मानंतातलभंतएतेधनुर्भृतःकच्चिदेतेऽप्यरोगाः ॥ येषांराष्ट्रेनिवसतिदर्शनीयोमहेष्वासःशीलवान्द्रोणपुत्रः १२ वैश्यापुत्रःकुशलीतातकच्चिन्महाप्राज्ञोराजपुत्रोयुयुत्सुः ॥ कर्णोऽमात्यःकुशलीतातकच्चित्सुयोधनोयस्यमंदोविधेयः १३ स्त्रियोवृद्धाभारतानांजनन्यो महानसस्योदासभार्याश्चसूत ॥ वध्वःपुत्राभागिनेयाभगिन्योदौहित्रावाकच्चिदप्यव्यलीकाः १४ कच्चिद्राजाब्राह्मणानांयथावत्प्रवर्ततेपूर्ववत्तातवृत्तिम् ॥ कच्चि द्दायान्मामकान्धार्तराष्ट्रोद्विजातीनांसंजयनोपहंति १५ कच्चिद्राजाधृतराष्ट्रःसपुत्रःउपेक्षतेब्राह्मणातिक्रमान्वै ॥ स्वर्गस्यकच्चिन्नतथावर्त्मभूतामुपेक्षतेतेषुसदै ववृत्तिम् १६ एतज्ज्योतिश्चोत्तमंजीवलोकेशुक्लंप्रजानांविहितंविधात्रा ॥ तेचेद्दोषंननियच्छंतिमंदाःकृत्स्नोनाशोभविताकौरवाणाम् १७ कच्चिद्राजाधृतराष्ट्रः सपुत्रोबुभूषतेवृत्तिममात्यवर्गे ॥ कच्चिन्नभेदेनजिजीविषंतिसुहृद्रूपादुर्हृदश्चैकमर्त्यात् १८ कच्चिन्नपापंकथयंतितातेपांडवानांकुरवःसर्वएव ॥ द्रोणःसपुत्र श्चकृपश्चवीरोनास्मासुपापानिवदंतिकच्चित् १९ कच्चिद्राज्येधृतराष्ट्रंसपुत्रंसमेत्याहुःकुरवःसर्वएव ॥ कच्चिद्दृष्ट्वादस्युसंघान्समेतान्स्मरंतिपार्थस्ययुधांप्रणे तुः २० मौर्वीभुजाग्रप्रहितान्स्मतातदोधूयमानेनधनुर्धरेण ॥ गांडीवनुन्नांस्तनयित्नुघोषानजिह्मगान्कच्चिदनुस्मरंति २१

वलोकेइहशुक्लंयशस्क रं दोषंलोभं ब्राह्मणवृत्त्युपघातेननियच्छंति १७ बुभूषतेप्रापयितुमिच्छति भेदेनजिजीविषंति शत्रुभिर्भेदिताःसंतस्तद्दत्तैर्धनैर्जीवितुमिच्छंति १८ । १९ पार्थस्यअर्जुनस्यकृत्यंस्मरंति युधांसं ग्रामाणांप्रणेतुर्निर्वाहकस्य आहुः शमंकुर्वितिशेषः । शमेतिपाठे शमशाम्य शांतिंगच्छेत्यर्थः २० मौर्व्याःभुजःकौटिल्यंतस्यअग्रमिवाग्रं शरसंधानदेशः ततःप्रहितान्प्रेषितान् २१

सुवाससः सुपुंखाः हस्तवापोहस्तक्षेपः । वचनभेदेऽपिसामानाधिकरण्यंशतंखियोऽस्यपरिग्रहइतिवत् । एकषष्टिर्बाणाअस्यएकेनयत्नेनप्रक्षेप्याइत्यर्थः २२ नड्वलेषुसतृणेषुस्थलेषु २३
दंतकूरे कूरंअन्नं दंताःक्रोधावेशात्कूरवच्चर्व्यंतेऽस्मिन्निति दंतकूरःसंग्रामःतस्मिन् अस्यन्नाक्षिपन् २४ । २५ जयःअर्जुनः २६ अहंअर्जुनस्यतदापृष्ठरक्षकःप्रेरकोऽभवमित्यर्थः भीमसेनश्च
माद्रीसुतयोःपृष्ठरक्षकोऽभूत् पंचभिरप्यस्माभिस्तेमोचिताइत्यर्थः २७ नकर्मणेति सर्वात्मनासर्वोपायैः दानभेददंडैश्चेत्धृतराष्ट्रस्यपुत्रंजेतुंनशक्नुमस्तर्हि एकेनसाधुनाकर्मणासामाख्येनो

नचापश्यंकंचिदहंपृथिव्यांयोधंसमंवाऽधिकमर्जुनेन ॥ यस्यैकषष्टिर्निशितास्तीक्ष्णधाराःसुवाससःसंमतोहस्तवापः २२ गदापाणिर्भीमसेनस्तरस्वीप्रवेपयञ्छत्रुसंघाननीके ॥ नागःप्रभिन्नइवनड्वलेषुचंक्रम्यतेकच्चिदेनंस्मरंति २३ माद्रीपुत्रःसहदेवःकलिंगान्समागतानजयद्दंतकूरे ॥ वामेनास्यन्दक्षिणेनैवयोवैमहाबलंकच्चिदेनंस्मरंति २४ पुराजेतुंनकुलःप्रेषितोऽयंशिबींस्त्रिगर्तान्संजयपश्यतस्ते ॥ दिशंप्रतीचींवशमानयन्मेमाद्रीसुतंकच्चिदेनंस्मरंति २५ पराभवोद्वैतवनेयआसीद्दुर्मंत्रितेघोषयात्रागतानाम् ॥ यत्रमंदाञ्छत्रुवशंप्रयातानमोचयद्भीमसेनोजयश्च २६ अहंपश्चादर्जुनमभ्यरक्षंमाद्रीपुत्रौभीमसेनोऽप्यरक्षत् ॥ गांडीवधन्वाशत्रुसंघानुदस्यस्वस्त्यागमत्कच्चिदेनंस्मरंति २७ नकर्मणासाधुनैकेननूनंसुखंशक्यंवैभवतीहसंजय ॥ सर्वात्मनापरिजेतुंवयंचेन्नशक्नुमोधृतराष्ट्रस्यपुत्रम् २८ ॥ इतिश्रीमहाभारतेउ०प०संज०युधिष्ठिरप्रश्नेत्रयोविंशोऽध्यायः ॥ २३ ॥

॥ संजयउवाच ॥ यथाऽऽत्थमेपांडवतत्तथैवकुरून्कुरुश्रेष्ठजनंचपृच्छसि ॥ अनामयास्तातमनस्विनस्तेकुरुश्रेष्ठान्पृच्छसिपार्थयांस्त्वम् १ संत्येववृद्धाःसाधवोधार्त्तराष्ट्रेसंत्येवपापाःपांडवतस्यविद्धि ॥ दद्याद्रिपुभ्योऽपिहिधार्त्तराष्ट्रःकुतोदायाँल्लोपयेद्ब्राह्मणानाम् २ यद्युष्माकंवर्त्ततेसौनधर्म्यमद्रुग्धेषुद्रुग्धवत्तन्नसाधु ॥ मित्रध्रुक्स्याद्धृतराष्ट्रःसपुत्रोयुष्मान्द्विषन्साधुवृत्तानसाधुः ३ नचानुजानातिभृशंचतप्यतेशोचत्यंतःस्थविरोऽजातशत्रो ॥ शृणोतिहिब्राह्मणानांसमेत्यमित्रद्रोहःपातकेभ्योगरीयान् ४ स्मरंतितुभ्यंनरदेवसंयुगेयुद्धेचजिष्णोश्चयुधांप्रणेतुः ॥ समुत्क्रुष्टेदुंदुभिशंखशब्देगदापाणिंभीमसेनंस्मरंति ५ माद्रीसुतौचापिरणाजिमध्येसर्वादिशःसंपतंतौस्मरंति ॥ सेनांवर्षंतौशरवर्षैरजस्रंमहारथौसमरेदुष्प्रकंपौ ६ नत्वेवमन्येपुरुषस्यराजन्ननागतंज्ञायतेयद्भविष्यम् ॥ त्वंचेत्तथासर्वधर्मोपपन्नःप्राप्तःक्लेशंपांडवकृच्छ्ररूपम् ॥ त्वमेवैतत्कृच्छ्रगतश्चभूयःसमीकुर्याःप्रज्ञयाऽजातशत्रो ७ नकामार्थंसंत्यजेयुर्हिधर्मंपांडोःसुताःसर्वएवेंद्रकल्पाः ॥ त्वमेवैतत्प्रज्ञयाऽजातशत्रोसमीकुर्यायेनशर्माप्नुयुस्ते ८ धार्त्तराष्ट्राःपांडवाःसृंजयाश्चयेचाप्यन्येसन्निविष्टानरेंद्राः ॥ यन्मांब्रवीद्धृतराष्ट्रोनिशायामजातशत्रोवचनंपितातेे ९

पायेनसुखंसुखेनजेतुंनैवशक्यंभवति
साम्नाऽसाध्येहिदानादयःप्रयुज्यंते तैरप्यसाध्यःकथंसाममात्रेणसाध्यःस्यात् । अतोदंडैकसाध्यःसइतिभावः । पाठांतरेपरिणेतुंस्वायत्तीकर्तुं २८ ॥ इति नी० त्रयोविंशोऽध्यायः ॥ २३ ॥
१ । २ यदिति अद्रुग्धेषुअनपकृतेषुधार्त्तराष्ट्रेषु यत्युष्माकं द्रुग्धवत्अपकृतस्येव सौनःसूनावान्हिंस्रः तद्धर्मादनपेतंसौनधर्म्यंक्रौर्यंवर्त्तते तन्नसाधु द्रुग्धैरपिभवद्भिस्तेषुप्रव्राजनकालेऽपिद्रोहो
नकृतइदानींतुसुतरांनकर्तव्यइत्याशयः । तेतुस्वकृतंभोक्ष्यंत्येवेत्याह मित्रध्रुगिति ३ नचानुजानाति संधिनानुमोदते तप्यतेचपुत्रनाशभयात् । गरीयानितिशृणोतिचेतिसंबंधः ४ कच्चिदस्मान्
स्मरंतीतिपृष्टंतत्राह स्मरंतीति तुभ्यंस्वां ५ रणोयोधध्वनिस्तद्विशिष्टायाआजिः संग्रामस्तन्मध्ये । 'रक्षणस्त्राणेरणःक्वणे' इत्यमरः ६ अनागतंअज्ञातं अदृष्टमित्यर्थः ७ । ८ । ९

१० ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ ७ ॥ १ । २ । ३ रथमयोजयत्इहआगंतुं । राज्ञोवचनं पांडवानांरोचतां ततश्चशमोऽस्तु ४ संस्थाने नाकारेण । मार्दवेनकृपया । आर्जवेनअकौटिल्येन । अनृशंसाःअनुग्राः । हीनिषेवाःलज्जापरायणाः ५ हीनंहिंस्रं सत्त्वंबुद्धिसत्त्वंसाधुत्वंवा भीमसेनाःभीषणसैन्याः ६ सर्वक्षयः अभावसंस्थः शून्येएवपारिसमाप्तःक्षयः तत्र तत्प्रथमार्थेत्रल् जयोऽपिबंधुनाशात्पराजयएव ७ ज्ञातीनांदुर्योधनादीनांकार्यं घोषयात्रायांगंधर्वेभ्योमोचनादिकं उपकृष्टंनिंदितं ८ निर्णीयनिश्चयंकृत्वा

सहामात्यःसहपुत्रश्चराजन्समेत्यतांवाचमिमांनिबोध १० ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसंजययानपर्वणि संजयवाक्येचतुर्विंशोऽध्यायः ॥ २४ ॥ ॥

॥ युधिष्ठिरउवाच ॥ समागताःपांडवाःसृंजयाश्चजनार्दनोयुयुधानोविराटः ॥ यत्तेवाक्यंधृतराष्ट्रानुशिष्टंगावल्गणेब्रूहितत्सूतपुत्र १ ॥ संजयउवाच ॥ अजातशत्रुंचवृकोदरंचधनंजयंमाद्रवतीसुतौच ॥ आमंत्रयेवासुदेवंचशौरिंयुयुधानंचेकितानंविराटम् २ पंचालानामधिपंचैववृद्धंधृष्टद्युम्नंपार्षतंयाज्ञसेनिम् ॥ सर्वेवाचंशृणुतेमांमदीयांवक्ष्यामियांभूतिमिच्छन्कुरूणाम् ३ शमंराजाधृतराष्ट्रोऽभिनंदन्नयोजयत्त्वरमाणोरथंमे ॥ सभ्रातृपुत्रस्वजनस्यराज्ञस्तद्रोचतांपांडवानांशमोऽस्तु ४ सर्वैर्धर्मैःसमुपेतास्तुपार्थाःसंस्थानेनमार्दवेनार्जवेन ॥ जाताःकुलेह्यनृशंसावदान्याह्रीनिषेवाःकर्मणांनिश्चयज्ञाः ५ नयुज्यतेकर्मयुष्मासुहीनंसत्त्वंहिवस्तादृशंभीमसेनाः ॥ उद्भासतेह्यंजनबिंदुवत्तच्छुभ्रेवस्त्रेयद्भवेत्किल्बिषंवः ६ सर्वक्षयोदृश्यतेयत्रकृत्स्नःपापोदयोनिरयोऽभावसंस्थः ॥ कस्तत्रकुर्याज्जातुकर्मप्रजानन्पराजयोयत्रसमोजयश्च ७ तेवैधन्यायैःकृतंज्ञातिकार्यंतेवैपुत्राःसुहृदोबांधवाश्च ॥ उपकृष्टंजीवितंसंत्यजेयुर्यतःकुरूणांनियतोवैभवःस्यात् ८ तेचेत्कुरूननुशिष्याथपार्थानिर्णीयसर्वान्द्विषतोनिगृह्य ॥ समंवस्तज्जीवितंमृत्युनास्याद्यज्जीवध्वंज्ञातिवधेनसाधु ९ कोह्येवयुष्मान्सहकेशवेनसचेकितानान्पार्षतबाहुगुप्तान् ॥ ससात्यकीन्विषहेतप्रजेतुंलब्ध्वाऽपिदेवान्सचिवान्सहेंद्रान् १० कोवाकुरून्द्रोणभीष्माभिगुप्तानश्वत्थाम्नाशल्यकृपादिभिश्च ॥ रणेविजेतुंविषहेतराजन्राधेयगुप्तान्सहभूमिपालैः ११ महद्बलंधार्तराष्ट्रस्यराज्ञःकोवैशक्तोहंतुमक्षीयमाणः ॥ सोऽहंजयेचैवपराजयेचनिःश्रेयसंनाधिगच्छामिकिंचित् १२ कथंहिनीचाइवदौष्कुलेयानिर्धर्मार्थंकर्मकुर्युश्चपार्थाः ॥ सोऽहंप्रसाद्यप्रणतोवासुदेवंपंचालानामधिपंचैववृद्धम् १३ कृतांजलिःशरणंवःप्रपद्येकथंस्वस्तिस्यात्कुरुसृंजयानाम् ॥ नह्येवमेवंवचनंवासुदेवोधनंजयोवाजातुकिंचिन्नकुर्यात् १४ प्राणान्दद्याद्याचमानःकुतोऽन्यदेतद्विद्वन्साधनार्थंब्रवीमि ॥ एतद्राज्ञोभीष्मपुरोगमस्यमतंयद्वःशांतिरिहोत्तमास्यात् १५ ॥ इतिश्रीम० उद्योगपर्वणि सं० संजयवाक्येपंचविंशोऽध्यायः ॥ २५ ॥ ॥ ७ ॥

निगृह्यहत्वेत्यर्थः ९ ननुयुद्धेजयपराजयावनित्यावित्याह कोहीतिद्वाभ्यां १० । ११ निःश्रेयसंनिश्चयं १२ निर्धर्मार्थंधर्मार्थयोर्विरुद्धंकर्मकथंकुर्युः । प्रणतोऽस्मीतिशेषः १३ एवमेवंवचनमितिद्विरुक्त्याविकल्पवाक्यंनकुर्यात् १४ प्राणानिति एतत्भवतांजयोऽपिपराजयएवेतिदीनवचनं । कोवाकुरून्जयेतेतितीक्ष्णवचनं कथंस्वस्तिस्यादित्युभयनाशवचनंचसाधनार्थं संधिकार्यस्यसिद्ध्यर्थंब्रवीमि नतुयुष्मान्भीषयामीत्यर्थः १५ ॥ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे पंचविंशोऽध्यायः ॥ २५ ॥ ॥ ७ ॥ ॥ ७ ॥

१ अकुर्वतश्चेत्संकल्पःसिद्धचेत्तर्हिकर्मनकुर्यात् असिद्धावपियुद्धादन्यत्र अन्यत् अन्नाभिप्रथमार्थे त्रल् लघीयोऽपिकर्म कुर्यान्नतुयुद्धम् २ अहीनंअनपगतम् ३ धर्मोदयंसुखं निदाघेगंगावगाहा
दिजं नत्वधर्मोदयंहिंसादिजं तत्त्वतोवस्तुतस्तुसर्वंकर्मदुःखमेव यतःकृच्छ्रोपायंक्लेशसाध्यं । तर्हिकुतःकर्मकुर्वतीत्याशंक्याह सुखमिति ४ कामाभिध्याविषयध्यानं ययेति सर्वात्मनाविषयाविस्मर
णेमहत्सुखमस्तीतिभावः । भोगान्निष्कामतानसंभवतीत्याह यथेति ५ उक्तमर्थंप्रकृतेयोजयतिसंपश्येति अस्माभिरित्यत्रधार्तराष्ट्रान्अंतर्भाव्याह पंचाधिकेनपुत्रशतेनसह धृतराष्ट्रस्यभो
गंमहांतंपश्य अथापिकृत्स्नंस्वस्यैवभवत्विति बुद्ध्याऽस्मान्राज्याद्दूरीकृत्य ततोभोगात्तृप्तिंनलभतइतिभावः ६ पितृव्यनिंदादोषाद्भीतःपुनराह नाश्रेयानिति यःपुण्यवत्तरः सविग्रहाणा
मीश्वरोभवति परैःसहविरोधंकृत्वास्वोत्कर्षंकरोति अन्यस्तुतेनैवनश्यति अतःसपुण्यवत्तरएव अस्मद्दोषात्तुवयंवनेदुःखमनुभवामोनतुपरापराधेनेतिभावः ७ प्रावारान्दिव्यवासांसिसंविवस्ते

॥ युधिष्ठिरउवाच ॥ कांनुवाचंसंजयमेशृणोषियुद्धैषिणींयेनयुद्धाद्बिभेषि ॥ अयुद्धंवैतातयुद्धाद्गरीयःकस्तल्लब्ध्वाजातुयुद्ध्येतसूत १ अकुर्वतश्चेत्पुरुषस्य
संजयसिद्ध्येत्संकल्पोमनसायंयमिच्छेत् ॥ नकर्मकुर्याद्विदितंममैतदन्यत्रयुद्धाद्बहुयल्लघीयः २ कुतोयुद्धंजातुनरोऽवगच्छेत्कोदेवशप्तोहिवृणीतयुद्धम् ॥ सु
खैषिणःकर्मकुर्वंतिपार्थाधर्मादहीनंयच्चलोकस्यपथ्यम् ३ धर्मोदयंसुखमाशंसमानाःकृच्छ्रोपायंतत्त्वतःकर्मदुःखम् ॥ सुखंप्रेप्सुर्विजिघांसुश्चदुःखंयइंद्रियाणांप्री
तिवशानुगामी ४ कामाभिध्यास्वशरीरंदुनोतिययाप्रमुक्तोनकरोतिदुःखम् ॥ यथेध्यमानस्यसमिद्धतेजसोभूयोबलंवर्धतेपावकस्य ५ कामार्थलाभेनतथैवभूयो
नतृप्यतेसर्पिषेवाग्निरिद्धः ॥ संपश्येमंभोगचयंमहांतंसहास्माभिर्धृतराष्ट्रस्यराज्ञः ६ नाश्रेयानीश्वरोविग्रहाणांनाश्रेयान्वैगीतशब्दंशृणोति ॥ नाश्रेयान्वैसेवते
माल्यगंधान्नचाप्यश्रेयाननुलेपनानि ७ नाश्रेयान्वैप्रावारान्संविवस्तेकथंत्वस्मान्संप्रणुदेत्कुरुभ्यः ॥ अत्रैवस्यादबुधस्यैवकामःप्रायःशरीरेहृदयंदुनोति ८
स्वयंराजाविषमस्थःपरेषुसामर्थ्यमन्विच्छतितन्नसाधु ॥ यथात्मनःपश्यतिवृत्तमेवतथापरेषामपिसोऽभ्युपैति ९ आसन्नमग्निंतुनिदाघकालेगंभीरकक्षेगहने
विसृज्य ॥ यथाविवृद्धंवायुवशेनशोचेत्क्षेमंमुमुक्षुःशिशिरव्यपाये १० प्राप्तैश्वर्योधृतराष्ट्रोऽद्यराजालालप्यतेसंजयकस्यहेतोः ॥ प्रगृह्यदुर्बुद्धिमनार्जवेरतंपु
त्रंमंदंमूढममंत्रिणंतु ११ अनाप्तवच्चाप्ततमस्यवाचःसुयोधनोविदुरस्यावमत्य ॥ सुतस्यराजाधृतराष्ट्रःप्रियैषीसंबुध्यमानोविशतेऽधर्ममेव १२ मेधाविनंह्यर्थ
कामंकुरूणांबहुश्रुतंवाग्मिनंशीलवंतम् ॥ सतंराजाधृतराष्ट्रःकुरुभ्योनसस्माराविदुरंपुत्रकाम्यात् १३

परिधत्ते अन्यथाअश्रेयांश्चेद्राजातर्हिअस्मान्कुरुभ्यःकथंसंप्रणुदेत्दूरीकुर्यात् । शत्रूणांराज्याद्भ्रंशनंहिपुण्यवतामेवकर्म नाश्रेयसामितिभावः । अत्रेति यद्यप्येवंतथाऽपि अंतर्दाहकरोऽ
यंकामः अबुधस्यदुर्योधनादेरेवउचितो नबुधस्यास्मदादेरित्यर्थः । शरीरेशरीरमध्येस्थितंहृदयंदुनोतिखेदयति ८ अबुधत्वमेवाह स्वयमिति विषमस्थःसंकटस्थःसन् परेषुकर्णादिषुआत्मनो
वृत्तंअशक्तत्वं तथापरेषांकर्णादीनामपिसदुर्योधनोभ्युपैति ९ गंभीरकक्षेबहुतृणेगहनेवने क्षेमंशोचेत्ममसुखंनास्तीतिशोकंकुर्यात् मुमुक्षुः तस्माद्दाहादात्मानंमोचयितुमिच्छुः शिशिरव्य
पायेवसंतेतत्रापि निदाघकालेदाहकालेमध्याह्ने १० लालप्यतेदीनवत्भाषते मंदंअभाग्यम् ११ विदुरस्यवाचोऽवमत्य सुतस्यप्रियैषी अधर्ममेवसंविशतेआश्रयते १२ कुरुभ्यः
कुरूणांहितार्थं नसस्मारनादृतवान् पुत्रकाम्यात्पुत्रलोभात् १३

असौराजासुतस्यप्रियैषी धर्मकामौप्राजहात्तत्यक्त्वानितिद्वयोःसंबंधः ईर्षोःपरोत्कर्षासहिष्णोःसंरंभिणःक्रोधिनः मन्युवशानुगस्यदैन्यभाजांकर्णादीनामनुगस्य दौर्हृदैपापैःभावितस्यपूजितस्य १४ अनेयस्यअशिक्षणीयस्य अश्रेयसःअभाग्यस्य प्रपश्यमानःपश्यन्नपि १५ प्रशंसांविदुरेणसम्यगुक्तमितिस्तुतिंधार्तराष्ट्राद्विदुरोनलेभे १६।१७।१८।१९ तस्मिन्लुब्धेशमःनउपलभ्यः यःमद्गतेममवनंप्रतिगमनेसतिसर्वस्वकमेवार्थंमन्यतेइतियोज्यम् २० पारणीयंजेतुंशक्यं युद्धानिगोग्रहादौआसन् द्वीपोद्वीपवत् युद्धप्रवाहेणउह्यमानस्याश्रयः २१ यथेति गंधर्वतोबंधन

मानग्रस्यासौमानकामस्यचेर्षोःसंरंभिणश्चार्थधर्मातिगस्य ॥ दुर्भाषिणोमन्युवशानुगस्यकामात्मनोदौर्हृदैर्भावितस्य १४ अनेयस्याश्रेयसोदीर्घमन्योर्मित्रद्रुहःसंजयपापबुद्धेः ॥ सुतस्यराजाधृतराष्ट्रःप्रियैषीप्रपश्यमानःप्राजहाद्धर्मकामौ १५ तदैवमेसंजयदीव्यतोऽभून्मतिःकुरूणामागतःस्यादभावः ॥ काव्यांवाचंविदुरोभाषमाणोनविंदतेयद्धार्तराष्ट्रात्प्रशंसाम् १६ क्षत्तुर्यदानान्ववर्ततबुद्धिंकृच्छ्रंकुरून्सूततदाऽभ्याजगाम ॥ यावत्प्रज्ञामन्ववर्ततत्तस्यतावत्तेषांराष्ट्रवृद्धिर्बभूव १७ तदर्थलुब्धस्यनिबोधमेऽद्ययेमंत्रिणोधार्तराष्ट्रस्यसूत ॥ दुःशासनःशकुनिःसूतपुत्रोगावल्गणेपश्यसंमोहमस्य १८ सोऽहंनपश्यामिपरीक्षमाणःकथंस्वस्तिस्यात्कुरुसृंजयानाम् ॥ आत्तैश्वर्योधृतराष्ट्रःपरेभ्यःप्रव्राजितेविदुरेदीर्घदृष्टौ १९ आशंसतेवैधृतराष्ट्रःसपुत्रोमहाराज्यमसपत्नंपृथिव्याम् ॥ तस्मिन्शमःकेवलंनोपलभ्यःसर्वस्वकंमद्गतेमन्यतेऽर्थम् २० यत्तत्कर्णोमन्यतेपारणीयंयुद्धेगृहीतायुधमर्जुनंवै ॥ आसंश्चयुद्धानिपुरामहांतिकथंकर्णोनाभवद्द्वीपएषाम् २१ कर्णश्चजानातिसुयोधनश्चद्रोणश्चजानातिपितामहश्च ॥ अन्येचयेकुरवस्तत्रसंतियथाऽर्जुनान्नास्त्यपरोधनुर्धरः २२ जानंत्येतत्कुरवःसर्वएवयेचाप्यन्येभूमिपालाःसमेताः ॥ दुर्योधनेराज्यमिहाभवद्यथाअरिंदमेफाल्गुनेऽविद्यमाने २३ तेनानुबंधंमन्यतेधार्तराष्ट्रःशक्यंहर्तुंपांडवानांममत्वम् ॥ किरीटिनातालमात्रायुधेनतद्वेदिनासंयुगंतत्रगत्वा २४ गांडीवविस्फारितशब्दमाजावशृण्वानाधार्तराष्ट्राध्रियंते ॥ क्रुद्धंनचेदीक्षतेभीमसेनंसुयोधनोमन्यतेसिद्धमर्थम् २५ इंद्रोऽप्येतन्नोत्सहेत्ताहर्तुमैश्वर्यंनोजीवतिभीमसेने ॥ धनंजयेनकुलेचैवसूततथावीरेसहदेवेसहिष्णौ २६ सचेदेतांप्रतिपद्येतबुद्धिंवृद्धोराजासहपुत्रेणसूत ॥ एवंरणेपांडवकोपदग्धानश्येयुःसंजयधार्तराष्ट्राः २७ जानासित्वंक्लेशमस्मासुवृत्तंत्वांपूजयन्संजयाहंक्षमेयम् ॥ यच्चास्माकंकौरवैर्भूतपूर्वंयानोवृत्तिर्धार्तराष्ट्रेतदाऽऽसीत् २८ अद्यापितत्तत्रतथैववर्ततांशांतिंगमिष्याभियथात्वमात्थ ॥ इंद्रप्रस्थेभवतुममैवराज्यंसुयोधनोयच्छतुभारताग्र्यः २९ ॥
॥ इतिश्रीमहाभारतेउद्योगपर्वणिसंजययानपर्वणियुधिष्ठिरवाक्येषड्विंशोऽध्यायः ॥ २६ ॥ ॥ ५ ॥

प्राप्तिंसूचयति २२ जानंतीति अविद्यमानेइतिच्छेदः २३ अनुबंधंबध्नातीतिबंधोराज्यादिः तमनुसृत्य वर्तमानंपांडवानांममत्वं धार्तराष्ट्रोहर्तुंशक्यंमन्यते किंकृत्वातेनकिरीटिनासहतत्रराज्येनिमित्तेसतिसंयुगंसंग्रामंगत्वाप्राप्य तालोहस्तचतुष्टयं तद्वेदिनाधनुर्विद्यावेदिना २४ ध्रियंतेजीवंति २५। २६ एतांबुद्धिंराज्यस्यअप्रदानेनाशोऽस्तीत्येवंरूपां २७ भूतपूर्वंभीमवंधनजतुगृहदाहादि २८ इंद्रप्रस्थेइत्युपराज्यंममभवतु भारताग्र्यइतिहस्तिनापुरंसुयोधनस्यभवत्विति सूचितं २९ ॥ इ० उद्योगप० नीलकंठीये भारतभावदीपे षड्विंशोऽध्यायः ॥ २६ ॥

महान्श्रात्रःश्रवणंयस्य महाकीर्तिरित्यर्थः । पाठांतरेतु महान्स्त्रावोगतिर्यस्यअतिचंचलमित्यर्थः । माव्यनीनशःक्रोधेनधार्त्तराष्ट्रान्मानाशय १ । २ । ३ प्रसजंतेस्पृशंति ४ गृध्नःस्पृहावान् ५ कर्मणांअर्थकामाद्यर्थानांमध्ये ६ परंस्थानंपरलोकंमन्यमानेनमानयता वर्षपूगंवर्षगणं तत्रत्यसुखेभ्यस्तदर्थत्वयाआत्माऽपिदत्तः ७ सुखप्रियेभोगान्पुत्रादींश्चसेवमानः योगाभ्यासेचित्तवृत्तिनिरोधमभ्यसितुं कर्मआसनप्राणायामादिकंनकरोति ८ ब्रह्मचर्येति ब्रह्मणिचर्याआत्मानुसंधानं तत्रअप्रसक्तःप्रकर्षेणअनासक्तः योगाद्व्यावृत्तः धर्मंचयज्ञादिरूपंहित्वा यःअधर्ममेवप्रकरोतिसंचिनोति ९ ननु । 'धर्मेणपापमपनुदति'इतिश्रुतेः कालांतरेअधर्मस्यनाशार्थंधर्ममप्यनुष्ठास्यामः किमुक्त्येत्याशंक्याह नकर्मणामिति कृतंकर्मभोगंविना आत्मज्ञानंविनावानश्यतीत्यर्थः । 'नाभुक्तंक्षीयतेकर्म । क्षीयंतेचास्यकर्माणितस्मिन्दृष्टेपरावरे' इत्यादिवाक्येभ्यः । उदाहृतश्रुतिस्तुप्रायश्चित्तादिनापापनाशोभवति सोऽपिअत्रैवव्यवहार्यत्वमापादायाति नतुपरलोकेऽपि

संजयउवाच ॥ धर्मानित्यापांडवतेविचेष्टालोकेश्रुतादृश्यतेचापिपार्थ ॥ महाश्रावंजीवितंचाप्यनित्यंसंपश्यत्वंपांडवमाव्यनीनशः १ नचेद्भागंकुरवोऽन्यत्रयुद्धात्प्रयच्छेरंस्तुभ्यमजातशत्रो ॥ भैक्षचर्यामंधकवृष्णिराज्येश्रेयोमन्येनतुयुद्धेनराज्यम् २ अल्पकालंजीवितंयन्मनुष्येमहास्त्रावंनित्यदुःखंचलंच ॥ भूयश्चतद्यशसोनानुरूपंतस्मात्पापंपांडवमाकृथास्त्वम् ३ कामामनुष्यंप्रसजंतएतेधर्मस्ययेविघ्नमूलंनरेंद्र ॥ पूर्वंनरस्तान्मतिमान्प्रणिघ्नन्लोकेप्रशंसांलभतेऽनवद्याम् ४ निबंधनीह्यर्थतृष्णेहपार्थतामिच्छतांबाध्यतेधर्मएव ॥ धर्मंतुयःप्रवृणीतेसबुद्धःकामेगृध्नोहीयतेऽर्थानुरोधात् ५ धर्मंकृत्वाकर्मणांतातमुख्यंमहाप्रतापःसवितेवभाति ॥ हीनोहिधर्मेणमहीमपीमांलब्ध्वानरःसीदतिपापबुद्धिः ६ वेदोऽधीतश्चरितंब्रह्मचर्यंयज्ञैरिष्टंब्राह्मणेभ्यश्चदत्तम् ॥ परंस्थानंमन्यमानेनभूयआत्मादत्तोवर्षपूगंसुखेभ्यः ७ सुखप्रियेसेवमानोऽतिवेलंयोगाभ्यासेयोनकरोतिकर्म ॥ वित्तक्षयेहीनसुखोऽतिवेलंदुःखंशेतेकामवेगप्रणुन्नः ८ एवंपुनर्ब्रह्मचर्याप्रसक्तोहित्वाधर्मंयःप्रकरोत्यधर्मम् ॥ अश्रद्दधत्परलोकायमूढोहित्वादेहंतप्यतेप्रेत्यमंदः ९ नकर्मणांविप्रणाशोऽस्त्यमुत्रपुण्यानांवाऽप्यथवापापकानाम् ॥ पूर्वंकर्तुर्गच्छतिपुण्यपापंपश्चात्त्वेनमनुयात्येवकर्ता १० न्यायोपेतंब्राह्मणेभ्योऽथदत्तंश्रद्धापूतंगंधरसोपपन्नम् ॥ अन्वाहार्येषूत्तमदक्षिणेषुतथारूपंकर्मविख्यायतेते ११ इहक्षेत्रेक्रियतेपार्थकार्यंनवैकिंचित्क्रियतेप्रेत्यकार्यम् ॥ कृतंत्वयापारलौक्यंचकर्मपुण्यंमहत्साद्भिरतिप्रशस्तम् १२ जहातिमृत्युंचजरांभयंचनक्षुत्पिपासेमनसोऽप्रियाणि ॥ नकर्तव्यंविद्यतेतत्रकिंचिदन्यत्रवैचेंद्रियप्रीणनाद्धि १३ एवंरूपंकर्मफलंनरेंद्रमाऽत्रावहंहृदयस्याप्रियेण ॥ सक्रोधजंपांडवहर्षजंचलोकावुभौमाप्रहासीश्चिराय १४

पापास्पर्शायप्रभवतीत्येवंपरा १० अन्वाहार्येष्वित्यनेनश्रौतामिष्ट्यादिकंलक्ष्यते तत्रहिअन्वाहार्योदक्षिणात्वेनदीयते ११ कार्यंधर्मः प्रेत्यमृत्वा १२ परलोकेकर्मनास्तीत्याह जहातीति १३ एवंरूपमिति हृदयस्यप्रियेणकामेन ईदृशंक्षयिष्णु इंद्रियप्रीतिमात्रहेतुकर्मफलं तत्अत्रअस्मिन्लोकेमाऽवहं नैववहेयं । अत्रकर्मकुर्वन्कामवशादमुत्रफलंनप्रार्थयेतेत्यर्थः । ततश्चकोलाभइत्यतआहसइति सःत्वंएवंनिष्कामकर्मकृत् क्रोधजंलोकंनरकं हर्षजंस्वर्गंचेत्युभौलोकौचिरायअपुनरावृत्तये माप्रहासीःमागच्छ । ओहाङ्गताविित्यस्यरूपंतङभावआर्षः । कर्मजंफलंत्यक्त्वा परेणवैराग्येणसंपन्नो मोक्षार्थंयोगाभ्यासमेवकुरुष्व किंराज्येनबंधुनाशलभ्येनेत्यर्थः १४

एवंज्ञानेनकर्मणांअंतंनाशंगत्वाप्राप्य । 'ज्ञानाग्निःसर्वकर्माणिभस्मसात्कुरुतेऽर्जुन'इतिभगवद्वचनात् बुद्धतत्त्वोऽपिकृतकृत्योऽपि सत्यादिकंमात्यज अश्वमेधादीनिकर्माण्यपिलोकसंग्रहार्थंकुरु परंतुपापस्यकर्मणोंतंसमीपंपुनर्मागाः । ज्ञानोत्तरकालंकृतमपिकर्मनज्ञानिनंस्पृशतीतिभावः । 'तद्यथापुष्करपलाशआपोनश्लिष्यंत एवमेवंविदिपापकंकर्मनश्लिष्यते'इतिश्रुतेः १५ तच्चेदिति भोपार्थाःभोपांडवाः तत्पापंकर्मगोत्रवधरूपं द्वेषरूपेणाचिरायप्रागेवचेत्करिष्यध्वं तर्हियद्वनेवर्षपूगान्दुःखंवासंनिवसध्वं तद्धर्मएवेतियत्तत्पदाध्याहारेणयोज्यं । राज्यार्थंसर्वलोकनाशमिच्छतांभवतांदुर्योधनेनयोवनवासःकारितःसधर्मएवेत्यर्थः १६ ननुतदानींसहायाभावादस्माभिर्वनवासोंऽगीकृतोनदुर्योधनाज्ञयेत्याशंक्याह अप्रव्रज्येति इमाइमानिराज्यादीनि । सुपांसुलुगितिसुपोडादेशः । पुरस्तात्प्रव्रजनकालेएवहित्वा धात्रोरूपं बलेनहृत्वा अप्रव्रज्यवनेप्रव्रजनमकृत्वैवआस्मभवेमवयं पांडवान्आत्मन्यंतर्भाव्य उत्तमपुरुषप्रयोगः यत्यतः

अंतंगत्वाकर्मणांमाप्रजह्याःसत्यंदमंचार्जवमानृशंस्यम् ॥ अश्वमेधंराजसूयंतथेज्याःपापस्यांतंकर्मणोमापुनर्गाः १५ तच्चेदेवंद्वेषरूपेणपार्थाःकरिष्यध्वंकर्मपापंचिराय ॥ निवसध्वंवर्षपूगान्वनेषुदुःखंवासंपांडवाधर्मएव १६ अप्रव्रज्येमास्महित्वापुरस्तादात्माधीनंयद्बलंह्येतदासीत् ॥ नित्यंचवश्याःसचिवास्तवेमेजनार्दनोयुयुधानश्चवीरः १७ मत्स्योराजारुक्मरथःसपुत्रःप्रहारिभिःसहपुत्रैर्विराटः ॥ राजानश्चयेविजिताःपुरस्तात्त्वामेवतेसंश्रयेयुःसमस्ताः १८ महासहायःप्रतपन्बलस्थःपुरस्कृतोवासुदेवार्जुनाभ्याम् ॥ वरान्हनिष्यन्द्विषतोरंगमध्येव्यनेष्यथाधार्तराष्ट्रस्यदर्पम् १९ बलंकस्माद्वर्धयित्वापरस्यनिजान्कस्मात्कर्शयित्वासहायान् ॥ निरुष्यकस्माद्वर्षपूगान्वनेषुयुयुत्ससेपांडवहीनकालम् २० अप्राज्ञोवापांडवयुद्ध्यमानोऽधर्मज्ञोवाभूतिमथोऽभ्युपैति ॥ प्रज्ञावान्वाबुद्ध्यमानोऽपिधर्मंसंरंभाद्वासोऽपिभूतेरपैति २१ नाधर्मेतेधीयतेपार्थबुद्धिर्नसंरंभात्कर्मचकर्थपापम् ॥ आत्थकिंतत्कारणंयस्यहेतोःप्रज्ञाविरुद्धंकर्मचिकीर्षसीदम् २२ अव्याधिजंकटुकंशीर्षरोगियशोमुषंपापफलोदयंवा ॥ सतांपेयंयन्नपिबंत्यसंतोमन्युंमहाराजपिबप्रशाम्य २३ पापानुबंधंकोनुतंकामयेतक्षमैवतेज्यायसीनोतभोगाः ॥ यत्रभीष्मःशांतनवोहतःस्याद्यत्रद्रोणःसहपुत्रोहतःस्यात् २४ कृपःशल्यःसौमदत्तिर्विकर्णोविविंशतिःकर्णदुर्योधनौच ॥ एतान्हत्वाकीदृशंतत्सुखंस्याद्यद्विंदेथास्तदनुब्रूहिपार्थ २५ लब्ध्वाऽपीमांपृथिवींसागरांतांजरामृत्यूनैवहित्वंप्रजह्याः ॥ प्रियाप्रियेसुखदुःखेचराजन्नेवंविद्वान्नैवयुद्धंकुरुत्वम् २६ अमात्यानांयदिकामस्यहेतोरेवंयुक्तंकर्मचिकीर्षसित्वम् ॥ अपक्रमेःस्वंप्रदायैवतेषांमागास्त्वंवैदेवयानात्पथोऽद्य २७॥ इतिश्रीमहाभारतेउद्योगपर्वणिसंजययानपर्वणिसंजयवाक्येसप्तविंशोऽध्यायः ॥ २७ ॥ ॥

पुरस्तादपिएतद्बलंआत्माधीनमेवासीत् १७ । १८ । १९ हीनकालंगतेकालेइत्यर्थः २० एवंपूर्वंयुद्धंकुर्वताइदानीमापितन्नकर्तव्यमित्युक्तं अथसर्वथाऽपियुद्धंनकर्तव्यं जयपराजययोरव्यवस्थितत्वादित्याह अप्राज्ञइति मूढोऽधर्मज्ञोवायुद्ध्यन्ऐश्वर्यंलभते प्राज्ञोधर्मज्ञःअयुद्ध्यन्दैवात्ऐश्वर्यात्भ्रश्यतीत्यर्थः २१ ग्रंथतात्पर्यमाह नेति संरंभात्कोपात् पूर्वमपिपापभयादेवत्वयानकृतं तर्हिइदानींप्रज्ञाविरुद्धंतत्किमर्थंचिकीर्षसीतिभावः २२ अव्याधिजंकटुकं पित्तादिकंविनाप्यरोचकं यशोमुषंयशोहरं पेयंगिलनीयं मन्युंक्रोधं प्रशाम्यशांतोभव २३ पापेऽनुबध्नातितंतथाविधं पापस्यमूलंतंमन्युं यत्रभोगेषुनिमित्तेषु एतेनभीष्मादीनांगुरूणामपिवधोराज्यार्थिनस्त्वत्तोभविष्यतीतिदर्शितं २४ । २५ । २६ देवयानात्पथोर्चिरादिमार्गादपुनरावृत्तिफलात् गोत्रद्रोहेणमागाइत्यर्थः २७ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे सप्तविंशोऽध्यायः ॥ २७ ॥

असंशयंयदिधर्मंचरेयं यदिवाअधर्मं तदुभयंज्ञात्वापरीक्ष्याधर्माचरणंउपलभ्य गर्हयेःनिंदस्व १ धर्माधर्मपरीक्षायांत्रैविध्यमाह यत्रेति यत्रपुरुषेदंभादिमति अधर्मः अभिचारार्थमंत्रजपादिः
धर्मइत्येवान्येजानंति। तथाप्रच्छन्नयोगिनिदत्तात्रेयादौ धर्मोरागद्वेषादिशून्यतारूपोयोगधर्मोऽपि उन्मत्तवदाचरणादधर्मरूपइवदृश्यते।यत्रवसिष्ठादौधर्मःधर्मरूपएव। यद्यपिचांडालादौअध
र्मोप्यधर्मरूपएवास्तितथाऽपि तस्यानुपादेयत्वान्नयमेवविचार्यं। पाठांतरेऽधर्मेतिच्छेदः एतच्चत्वयाऽपि विदुषामपिविचार्यमित्याशयः२ अत्रआद्ययोःप्रच्छन्नत्वात्चिरकालेनतत्त्वनिश्चयः अं
त्येतुप्रत्यक्षलिंगेऽपिआपत्कालवशाद्धर्माधर्मयोर्व्यत्यासोजायतइत्याह एवमिति एतदेवंरूपंलोकप्रत्यक्षंलिंगंब्राह्मणस्यस्वाध्यायप्रवचनादि । क्षत्रियस्यशौर्यादि । वैश्यस्यकृष्यादि । तत्तथैव
यथोक्तमेव।तथापिनित्यवृत्तीनित्यंवर्तेतेतौनित्यवृत्तीधर्माधर्मौतल्लिंगंभजेतां ।अयंभावः क्षत्रलिंगं ब्राह्मणवैश्ययोरापदिधर्मःअनापद्यधर्मः। तथाचैकस्यैवलिंगस्यवर्णांतरेअवस्थाभेदाद्धर्मत्वमध
र्मत्वंचनित्यमिति तत्रापिविशेषमाह आद्यमिति आद्यंब्राह्मणलिंगंयाजनादियस्यास्तिब्राह्मणस्यतस्यैवतत्प्रमाणंअव्यभिचारि । आपद्यपिक्षत्रियेणयाजनाध्यापनादिकंनकर्तव्यमित्यर्थः।
एवंविधंतंआपद्धर्मंशास्त्रान्निबोधबुद्ध्यस्व ३ ननुकथंतर्हिएकचक्रायांभिक्षाटनंब्राह्मणस्यैवासाधारणत्वेनविहितंभवद्भिःकृतमित्याशंक्याह लुप्तायामिति । प्रकृतिःजीविकाहेतुभूतंधनं तच्चक्षत्रि
यस्यभूमिशस्त्रादिकं। वैश्यस्यधनपश्वादिकं। तस्मिन्सर्वात्मनानष्टेसति येनकर्मसंध्योपासनादिकंनिष्पादयेत्तत्भिक्षाटनादिकमपिपरीप्सेत्कर्तुमिच्छेत् अन्यथाजीविकायाअभावात्कर्मलोपः

॥ युधिष्ठिरउवाच ॥ असंशयंसंजयसत्यमेतद्धर्मोवरःकर्मणांयत्त्वमात्थ ॥ ज्ञात्वातुमांसंजयगर्हयेस्त्वंयदिधर्मंयद्यधर्मंचरेयम् १ यत्राधर्मोधर्मरूपाणिधत्तेधर्मःकृ
त्स्नोदृश्यतेऽधर्मरूपः ॥ बिभ्रद्धर्मोधर्मरूपंतथाचविद्वांसस्तंसंप्रपश्यंतिबुद्ध्या २ एवंतथैवापदिलिंगमेतद्धर्माधर्मौनित्यवृत्तीभजेताम् ॥ आद्यंलिंगंयस्यत
स्यप्रमाणमापद्धर्मंसंजयतंनिबोध ३ लुप्तायांतुप्रकृतौयेनकर्मनिष्पादयेत्तत्परीप्सेद्विहीनः ॥ प्रकृतिस्थश्चापदिवर्तमानउभौगर्ह्यौभवतःसंजयैतौ ४ अविनाश
मिच्छतांब्राह्मणानांप्रायश्चित्तंविहितंयद्विधात्रा ॥ संपश्येथाःकर्मसुवर्तमानान्विकर्मस्थान्संजयगर्हयेस्त्वम् ५ मनीषिणांसत्त्वविच्छेदनायविधीयतेसत्सुवृत्तिः
सदैव ॥ अब्राह्मणाःसंतितुयेनवैद्याःसर्वोत्संगंसाधुमन्येततेभ्यः ६

प्राणनाशश्चस्यादतोऽत्यंतापदितावान्विप्रधर्मोऽपीतरैरनुष्ठेयएव। प्रकृतिस्थश्चेति आपदिआपद्धर्मंप्रकृतिस्थोऽपियद्यापद्धर्ममनुसरेत्सलोभाद्गर्ह्यः। आपत्स्थोऽपियदिप्राकृतंधर्ममनुसरेत्सजी
वनलोपात्कुटुंबहिंसयाचगर्ह्यइत्यर्थः ४ अविनाशमिति यत्यस्माद्धेतोःविधात्रा अविनाशोवृत्त्यंतरोपजीवनेनब्राह्मण्यस्यनाशोविनाशस्तदभावमिच्छतांब्राह्मणानांआपदुत्तीर्णानांप्रायश्चि
त्तंविहितं । तस्माद्धेतोरापदिअन्यस्यान्यधर्माश्रयणंप्रसक्तमेवेतिज्ञायते । अतएवएकचक्रायामस्माभिःकृतंभिक्षाटनंनानुचितमित्यर्थः । एवमनापदिकर्मसुवर्तमानान् आपदिचाविकर्मस्थान्सं
पश्येथाः सम्यगेवेदमितिपश्येथाः । अन्यथातुआपदिकर्मस्थान्आत्मपरहिंस्रान् अनापदिविकर्मस्थांश्चातिलुब्धान्विगर्हयेस्त्वं ५ किंचमनीषिणांमनसःनिग्रहंनाशंकर्तुमिच्छतां । ईषगतिहिं
सादर्शनेष्वित्यस्यरूपं। सत्त्वविच्छेदनाय सत्त्वस्यबुद्धिसत्त्वस्यचिदात्मनासहएकलोलीभूतस्याविच्छेदनाय मुंजेषीकान्यायेनपृथक्करणाय सत्सुसतांगृहेषुवृत्तिर्जीविकाशास्त्रेविधीयते।'विदानिमं
लोकममुंचपरित्यज्यात्मनाऽत्मानमन्विच्छेत्'इतिश्रुत्याऽत्मान्वेषणायसर्वसंन्यासपूर्वकंभिक्षाचर्यविधानात्नब्राह्मीवृत्तिःकस्यापिनिंद्यायेतुअब्राह्मणाअपिवैद्याःविद्यानिष्ठाःनभवंतितेषांभिक्षा
चर्यस्याविधानात् तेभ्यःतेषामर्थे सर्वोत्संगंसर्वेषामुत्संगंसमीपंस्वधर्मसंयोगं आपदनापदोरुचितंसाधुमन्येत । सर्वोच्छेदमितिपाठे तेभ्यस्तेषामर्थेभिक्षाद्यटनंसर्वधर्मोच्छेदायमन्येतेत्यर्थः ६

तदध्वानइति पित्रादयःयज्ञैषिणोयेतेसर्वेतदध्वानः सएवमयोक्तोऽध्वामार्गोयेषांतेतदध्वानोऽभूवन् हि प्रसिद्धं येचकर्मनकुर्युः संन्यासिनइत्यर्थः तेसर्वेतदध्वानः अहमपिआस्तिकोऽस्मीति ततोन्यंअध्वानंनमन्ये ७ एवंस्वस्यनीतिज्ञत्वप्रकाशनप्रसंगादापद्धर्मान्योगिधर्मांश्चोक्त्वा प्रकृतमनुसरतियत्किंचेति ८ धर्मेश्वरःधर्मफलस्यदाता ९ यदिसामविसृजन्स्यांतर्हिगर्ह्यःस्यां यदि वायुध्यमानःस्वधर्मंजह्यां तदागर्ह्यःस्यां । ममतुद्वयमपीष्टमेवेतिभावः १० । ११ कृष्णप्रणीताःकृष्णेनैवनीतिपथंनीताः १२ । १३ । १४ ॥ ॥ इति उद्योगपर्वणिनीलकंठीये भारतभावदीपेयुधिष्ठिरवाक्येअष्टाविंशोऽध्यायः ॥ २८ ॥ ॥ ७ ॥ ॥ १ शाम्यतेतिवचनादन्यत्तान्प्रतिनब्रूयां पांडवानांसमक्षंराज्ञोयुधिष्ठिराच्चएतदेवशृणोमि अहंचएतन्मन्येमा

तदध्वानःपितरोयेचपूर्वेपितामहायेचतेभ्यःपरेऽन्ये ॥ यज्ञैषिणोयेचहिकर्मकुर्युर्नान्यंततोनास्तिकोऽस्मीतिमन्ये ७ यत्किंचनेदंवित्तमस्यांपृथिव्यांयद्देवानांत्रिदशानांपरंयत् ॥ प्राजापत्यंत्रिदिवंब्रह्मलोकंनाधर्मतःसंजयकामयेयम् ८ धर्मेश्वरःकुशलोनीतिमांश्चाप्युपासिताब्राह्मणानांमनीषी ॥ नानाविधांश्चैवमहाबलांश्चराजन्यभोजाननुशास्तिकृष्णः ९ यदिह्यहंविसृजन्सामगर्ह्योनियुद्धचमानोयदिजह्यांस्वधर्मं ॥ महायशाःकेशवस्तद्ब्रवीतुवासुदेवस्तूभयोरर्थकामः १० शैनेयोऽयंचेदयश्चांधकाश्चवार्ष्णेयभोजाःकुकुराःसृंजयाश्च ॥ उपासीनावासुदेवस्यबुद्धिंनिगृह्यशत्रून्सुहृदोनंदयंति ११ वृष्ण्यंधकाह्युग्रसेनादयोवैकृष्णप्रणीताःसर्वएवेंद्रकल्पाः ॥ मनस्विनःसत्यपरायणाश्चमहाबलायादवाभोगवंतः १२ काश्योबभ्रुःश्रियमुत्तमांगतोलब्ध्वाकृष्णंभ्रातरमीशितारम् ॥ यस्मैकामान्वर्षतिवासुदेवोग्रीष्मात्ययेमेघइवप्रजाभ्यः १३ ईदृशोऽयंकेशवस्तातविद्वान्विद्धिह्येनंकर्मणांनिश्चयज्ञम् ॥ प्रियश्चनःसाधुतमश्चकृष्णोनातिक्रामेवचनंकेशवस्य १४ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसंजययानपर्वणियुधिष्ठिरवाक्येअष्टाविंशोऽध्यायः ॥ २८ ॥ ॥ ७ ॥ ॥ वासुदेवउवाच ॥ अविनाशंसंजयपांडवानामिच्छाम्यहंभूतिमेषांप्रियंच ॥ तथाराज्ञोधृतराष्ट्रस्यसूतसमाशंसेबहुपुत्रस्यवृद्धिं १ कामोहिमेसंजयानित्यमेवनान्यद्ब्रूयांतान्प्रतिशाम्यतेति ॥ राज्ञश्चहिप्रियमेतच्छृणोमिमन्येचैतत्पांडवानांसमक्षम् २ सुदुष्करस्तत्रशमोहिनूनंप्रदर्शितःसंजयपांडवेन ॥ यस्मिन्गृद्धोधृतराष्ट्रःसपुत्रःकस्मादेषांकलहोनावमूर्च्छेत् ३ नत्वंधर्मंविचरंसंजयेहमत्तश्चजानासियुधिष्ठिराच्च ॥ अथोकस्मात्संजयपांडवस्यउत्साहिनःपूरयतःस्वकर्म ४ यथाख्यातमावसतःकुटुंबेपुराकस्मात्साधुविलोपमात्थ ॥ अस्मिन्विधौवर्तमानेयथावदुच्चावचामतयोब्राह्मणानाम् ५ कर्मणाऽऽहुःसिद्धिमेकेपरत्र हित्वाकर्मविद्ययासिद्धिमेके ॥ नाभुंजानोभक्ष्यभोज्यस्यतृप्येद्विद्वानपीहविहितंब्राह्मणानाम् ६

नयामि २ तत्रराज्येनिमित्तेगृद्धःलिप्सावान् एवंसतिएषांकौरवाणांकस्माद्धेतोःकलहःनावमूर्च्छेत् ३ विचरंविचालितं पूरयतःपालयतः ४ यथाख्यातंप्रसिद्धिमनतिक्रम्यआवसतःअधितिष्ठतः साधुविलोपंधर्मलोपं युधिष्ठिरेकस्माद्धेतोः आत्थउक्तवान् त्वं । अस्मिन्विधौ शुचिरद्रोही कुटुंबेशुचौदेशे स्वाध्यायमधीयानोयावदायुष्यंवर्त्तयेदित्येवंरूपेवर्त्तमानेऽपि ब्राह्मणानां उच्चावचामतयो गार्हस्थ्यस्यअपरिग्रहेवा त्यागेवा नैष्ठिकब्रह्मचर्ये पारिव्राज्येवा भवंति ५ तत्रहेतुमाह कर्मणेति सिद्धिंमोक्षं एके कर्मणैवहिसंसिद्धिमास्थिताजनकादयइत्येकेआहुः । नकर्मणानप्रजयाधनेनत्यागेनैकेअमृतत्वमानशुरित्येकेआहुः यद्यपिएवंकुटुंबेऽत्रस्थितिः संन्यासश्च द्वयमपितुल्यवत् शास्त्रेणविहितं तथाऽपिकृत्स्न भावात्तु गृहिणोपसंहारन्यायेन आश्रमांतरसाध्यंज्ञानं गृहस्थेनसाधयितुंशक्यं नतुगृहस्थेन

साध्यंयज्ञादिकंआश्रमांतरेऽप्यस्तीतिकृत्स्नोधर्मोगार्हस्थ्येएवप्राप्यतइत्याशयेनाह नाभुंजानइति । यतोविद्वानपि अभुंजानोनतृप्यति यतश्चब्राह्मणानांसंन्यासिनामपिगृहस्थगृहेविहितं
भोजनादिकं ६ तेनकर्मणामनुकूलायाविद्यास्ताएवफलवत्यो नतुतत्प्रतिकूलाःइत्याह याइति । यथाहि 'सर्वाणिहवाइमानिभूतानिप्राणमेवाभिसंविशंति प्राणमभ्युज्जिहतेसैषादेवताप्र
स्तावमन्वायत्ता'इतिच्छांदोग्ये सर्वभूतसंवेशनोद्गमनलिंगेन जगत्कारणतयानिश्चितस्य प्राणाख्यपरमात्मनो विद्यायाःप्रस्तावकर्मसाधकत्वंदृष्टं तासांकर्मसाधकानांविद्यानांफलमस्ति नेत
रासांस्वतंत्राणां । अयंभावः गृहस्थःस्वात्मानमन्यांश्चपित्रादींस्तारयति यतींश्चपुष्णाति । यतिस्त्वात्मानमेवतारयतिनपित्रादीन् पोषणंचस्वस्यापिनकरोति भैक्षोपजीवित्वादतोगार्हस्थ्य

यावैविद्याःसाधयंतीहकर्मतासांफलंविद्यतेनेतरासाम् ॥ तत्रेहवैदृष्टफलंतुकर्मपीत्वोदकंशाम्यतितृष्णयाऽऽर्तः ७ सोऽयंविधिर्विहितःकर्मणैवसंवर्ततेसंजयतत्र
कर्म ॥ तत्रयोऽन्यत्कर्मणःसाधुमन्येन्मोघंतस्यालपितंदुर्बलस्य ८ कर्मणाऽमीभांतिदेवाःपरत्रकर्मणैवेहप्लवतेमातरिश्वा ॥ अहोरात्रेविदधत्कर्मणैवअतंद्रितो
नित्यमुदेतिसूर्यः ९ मासार्धमासानथनक्षत्रयोगानतंद्रितश्चंद्रमाश्चाभ्युपैति ॥ अतंद्रितोदहतेजातवेदाःसमिद्ध्यमानःकर्मकुर्वन्प्रजाभ्यः १० अतंद्रिताभा
रमिमंमहांतंबिभर्तिदेवीपृथिवीबलेन ॥ अतंद्रिताःशीघ्रमपोवहंतिसंतर्पयंत्यःसर्वभूतानिनद्यः ११ अतंद्रितोवर्षतिभूरितेजाःसन्नादयन्नंतरिक्षंदिशश्च ॥ अ
तंद्रितोब्रह्मचर्यंचचारश्रेष्ठत्वमिच्छन्बलभिद्देवतानाम् १२ हित्वासुखंमनसश्चप्रियाणितेनशक्रःकर्मणाश्रैष्ठ्यमाप ॥ सत्यंधर्मंपालयन्नप्रमत्तोदमंतितिक्षांसम
तांप्रियंच १३ एतानिसर्वाण्युपसेवमानःसदेवराज्यंमघवान्प्रापमुख्यम् ॥ बृहस्पतिर्ब्रह्मचर्यंचचारसमाहितःसंशितात्मायथावत् १४ हित्वासुखंप्रतिरुद्ध्येंद्रि
याणितेनदेवानामगमद्गौरवंसः ॥ तथानक्षत्राणिकर्मणाऽमुत्रभांतिरुद्रादित्यावसवोऽथापिविश्वे १५ यमोराजावैश्रवणःकुबेरोगंधर्वयक्षाप्सरसश्चसूत ॥ ब्रह्म
विद्यांब्रह्मचर्यंक्रियांचनिषेवमाणाऋषयोऽमुत्रभांति १६ जानन्निमंसर्वलोकस्यधर्मंविप्रेंद्राणांक्षत्रियाणांविशांच ॥ सकस्मात्त्वंजानतांज्ञानवान्सन्व्यायच्छसे
संजयकौरवार्थे १७ आम्नायेषुनित्यसंयोगमस्यतथाऽश्वमेधेराजसूयेचविद्धि ॥ संयुज्यतेधनुषावर्मणाचहस्त्यश्वाद्यैरथशस्त्रैश्चभूयः १८ तेचेदिमेकौरवाणामु
पायमवगच्छेयुरवधेनैवपार्थाः ॥ धर्मत्राणंपुण्यमेषांकृतंस्यादार्येवृत्तेभीमसेनंनिगृह्य १९ तेचेत्पित्र्येकर्मणिवर्तमानाआपद्येरन्दिष्टवशेनमृत्युम् ॥ यथाशक्त्या
पूरयंतःस्वकर्मतदप्येषांनिधनंस्यात्प्रशस्तम् २० उताहोत्वंमन्यसेशाम्यमेवराज्ञांयुद्धेवर्ततेधर्मतंत्रम् ॥ अयुद्धेवावर्ततेधर्मतंत्रंतथैवतेवाचमिमांशृणोमि २१

मेवश्रेष्ठमिति । किंचनैष्कर्म्यंदृष्टविरुद्धमपीत्याह तत्रेति तत्रकर्मतदभावतारतम्येविचारणीये कर्मइहैवदृष्टफलम् ७ सोऽयंज्ञानविधिःकर्मणैवसहविहितः तत्रचअनुष्ठीयमानेकर्मउद्वर्ततेउ
च्छिद्यते । कर्मसमवेतमेवज्ञानंसकलकर्मोच्छेदहेतुरित्यर्थः कर्मणोऽन्यत्संन्यासंमन्येत्मन्यते ८ कर्मसमुच्चितंज्ञानंस्तौति कर्मणाऽमीभांतीत्यादिना । ब्रह्मविद्यांब्रह्मचर्यंक्रियांचनिषेवमा
णाइत्युपसंहारात् ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ व्यायच्छसेनिग्रहंकरोषि १७ आम्नायेष्विति विद्याधर्मःशौर्यंचयुधिष्ठिरेपुष्कलमस्तीतिनायमन्येनशिक्षणीयोजेतुं
वाशक्यइत्यर्थः १८ कौरवाणांअवधेनउपायं राज्यप्राप्तावितिशेषः एषांएतैः भीमसेनंआर्येवृत्तेअहिंसायांनिगृह्य पुण्यमेवकृतंस्यात् १९ पित्र्येकर्मणिक्षात्रधर्मेयुद्धे पूरयंतःपालयंतः २०
शाम्यमेव शमःकार्यएवेतिमन्यसेतर्हि धर्मतंत्रंधर्मानुष्ठानं युद्धपक्षेऽस्ति उतअयुद्धपक्षे तयोर्मध्येयदेववक्ष्यसितथैवतेवाचंशृणोमिकरिष्यामीत्यर्थः २१

ननुक्षत्रधर्मलोपेऽपिगोत्रवधोनकर्त्तव्यइत्याशंक्याह चातुर्वर्ण्यस्येत्यादिना २२ प्रतीच्छेत्प्रतिगृह्णीयात् २३ । २४ सःक्षत्रियःअधीत्यप्राप्य यदिच्छयायस्यधर्मस्यइच्छयाबलेन ब्रह्मलोकंगच्छति । नोचेज्जनकादिवदिहैवकृतकृत्योभवतीत्यर्थः । भोगमोक्षकरःक्षात्रोधर्मोदुस्त्यजइतिभावः २५ नाधीयीतवेदाध्ययनंनकुर्यात् यज्ञःश्रौतःस्मार्त्तश्चप्रतिषिद्धः । ' तस्माच्छूद्रोयज्ञेऽनवक्लृप्तः' इतिश्रुतेः २६ एतानिति यथासर्वाश्रमपालकत्वाद्गृहस्थस्यश्रैष्ठ्यं तथासर्ववर्णपालकत्वात्धर्मेणराज्यकरणमपिश्रेष्ठतममित्यर्थः २७ तस्मात्राज्ञःश्रेयान्प्रशस्ततरः अभिज्ञातः ज्ञानतःधर्मतश्चयदिकश्चिदस्ति सतंयुधिष्ठिरं प्रजानां कर्मणिषष्ठी प्रजाःद्रष्टुंराज्यंप्राप्तुमित्यर्थः अनुशिष्यन्अनुशासितुमिच्छन् । एतन्मदुक्तंधर्मजातंयुधिष्ठिरेऽस्तीतिबुध्येत् । नचतस्मिन्नसाधुः युधिष्ठिरेऽसाधुरधर्मोनचास्तीत्यपिबुध्येत् । यद्वा एवंसत्यपितस्मिन्ननुशास्तरि राजासाधुर्नइतिनअपितुसाधुरेव । यदितेनइतोऽधिकंज्ञायतेउच्यतेच तर्हितस्याःपिवचनंक

चातुर्वर्ण्यस्यप्रथमंसंविभागमवेक्ष्यत्वंसंजयस्वंचकर्म ॥ निशम्याथोपांडवानांचकर्मप्रशंसवानिंदवायामतिस्ते २२ अधीयीतब्राह्मणोवैयजेतदद्यादीयात्तीर्थमुख्यानिचैव ॥ अध्यापयेद्याजयेच्चापियाज्यान्प्रातिग्रहान्वाविहितान्प्रतीच्छेत् २३ तथाराजन्योरक्षणंवैप्रजानांकृत्वाधर्मेणाप्रमत्तोऽथदत्वा ॥ यज्ञैरिष्ट्वासर्ववेदानधीत्यदारान्कृत्वापुण्यकृदावसेद्गृहान् २४ सधर्मात्माधर्ममधीत्यपुण्यंयदिच्छयाव्रजतिब्रह्मलोकम् ॥ वैश्योऽधीत्यकृषिगोरक्षपण्यैर्वित्तंचिन्वन्पालयन्नप्रमत्तः २५ प्रियंकुर्वन्ब्राह्मणक्षत्रियाणांधर्मशीलःपुण्यकृदावसेद्गृहान् ॥ परिचर्यावंदनंब्राह्मणानांनाधीयीतप्रतिषिद्धोऽस्ययज्ञः ॥ नित्योत्थितोभूतयेऽतंद्रितःस्यादेवंस्मृतःशूद्रधर्मःपुराणः २६ एतान्राजापालयन्नप्रमत्तोनियोजयन्सर्ववर्णान्स्वधर्मे ॥ अकामात्मासमवृत्तिःप्रजासुनाधार्मिकाननुरुद्ध्येतकामात् २७ श्रेयांस्तस्माद्यदिविद्येतकश्चिदभिज्ञातःसर्वधर्मोपपन्नः ॥ सतंद्रष्टुमनुशिष्यन्प्रजानांनचैतद्बुद्ध्येदितितस्मिन्नसाधुः २८ यदागृद्ध्येत्परभूतौनृशंसोविधिप्रकोपाद्बलमाददानः ॥ ततोराज्ञामभवद्युद्धमेतत्तत्रजातंवर्मशस्त्रंधनुश्च २९ इंद्रेणैतद्दस्युवधायकर्मउत्पादितंवर्मशस्त्रंधनुश्च ३० तत्रपुण्यंदस्युवधेनलभ्यतेसोऽयंदोषःकुरुभिस्तीव्ररूपः ॥ अधर्मज्ञैर्धर्ममबुध्यमानैःप्रादुर्भूतःसंजयसाधुतन्न ३१ तत्रराजाधृतराष्ट्रःसपुत्रोधर्म्यंहरेत्पांडवानामकस्मात् ॥ नावेक्षंतेराजधर्मंपुराणंतदन्वयाःकुरवःसर्वएव ३२ स्तेनोहरेद्यत्रधनंह्यदृष्टःप्रसह्यवायत्रहरेतदृष्टः ॥ उभौगर्ह्यौभवतःसंजयैतौकिंवैपृथक्त्वंधृतराष्ट्रस्यपुत्रे ३३

रिष्यत्येवेत्यर्थः । अनुशिष्यात्प्रजानांनचेद्गृध्येदितितस्मिन्नसाध्वितिपाठे श्रेयांश्चेत्द्रष्टुंधर्मंदर्शयितुंअनुशिष्यात्नचेत्प्रजानांप्रजाःराज्यंनगृध्येदितिहेतोस्तस्मिन्युधिष्ठिरेसाध्वेववर्त्तत्वइतिशेषः २८ धर्मतस्तु नृशंसत्वात्दुर्योधनोधार्मिकेणराज्ञावध्यएवेतिसूचयन्नाह यदेत्यादिनासार्द्धेन परभूतौपरैश्वर्ये नृशंसश्चोरकल्पोराजा विधिप्रकोपात्दैवप्रातिकूल्यात्गृद्ध्येत्ततोहेतोः राज्ञांपरस्परंयुद्धंसमभवत् । अनेनयुद्धाख्यस्यकर्मणउत्पत्तिरुक्ता २९ कर्मयुद्धं तत्रोत्पत्तिशिष्टंगुणत्रयमाह वर्मकवचं शस्त्रंखड्गादि धनुश्चेति । यतइंद्रेणदस्युवधायैतत्त्रयंउत्पादितमतएतैरेवधर्मो दस्युंदुर्योधनंयदिहन्यात् सएवधर्मइतिभावः ३० दुर्योधनेदस्युत्वंनिरूपयति तत्रेत्यादिना कुरुभिर्निमित्तभूतैरयंदोषःवंचनारूपःप्रादुर्भूतः पारदार्यदोषइवइंद्रात् ३१ धर्म्यंधर्मादागतंपित्र्यंराज्यं तदन्वयास्तदनुसारिणः ३२ पृथक्त्वंस्तेनादन्यत्वम् ३३

एतंछलेनराज्यापहारं निविष्टःवनवासादूर्ध्वंराज्यंग्राह्यमितिकौरवेषुन्यासरूपेणस्थितः तंभागं नःअस्माकं परेकस्मात्आददीरन्गृहीतवंतः ३४ पदेपदनीयेअवश्यग्राह्यभागेनिमित्ते ३५
३६ कामानुगेनरजसाउपरुद्धांगृहकर्मतोनिरुद्धां । पाठांतरेरजसाउपरुद्धंयथास्यात्तथाव्रजंतीं ३७ तंदुःशासनंयद्यवारयिष्यत् तदाममप्रियंअकरिष्यत् अस्यपुत्राणांचदुर्योधनादीनां
प्रियंकृतमभविष्यत् । दुःशासनस्यानिवारणान्मत्प्रियस्याकरणाच्चतत्पुत्राणांनाशोभविष्यतीतितत्त्वोक्तिः ३८ प्रातिलोम्यात्अक्रमेण श्वशुराणांमध्ये कृष्णांसभांनिनायेतिसंबंधः किंचि

सोऽयंलोभान्मन्यतेधर्ममेतंयमिच्छतिक्रोधवशानुगामी ॥ भागःपुनःपांडवानांनिविष्टस्तंनःकस्मादाददीरन्परेवै ३४ अस्मिन्पदेयुद्धचतांनोवधोऽपिश्लाघ्यः
पित्र्यंपरराज्याद्विशिष्टम् ॥ एतान्धर्मान्कौरवाणांपुराणानाचक्षीथाःसंजयराजमध्ये ३५ एतेमदान्मृत्युवशाभिपन्नाःसमानीताधार्तराष्ट्रेणमूढाः ॥ इदंपुनः
कर्मपापीयएवसभामध्येपश्यवृत्तंकुरूणाम् ३६ प्रियांभार्यांद्रौपदींपांडवानांयशस्विनींशीलवृत्तोपपन्नाम् ॥ यदुपैक्षंतकुरवोभीष्ममुख्याःकामानुगेनोपरुद्धां
व्रजंतीम् ३७ तंचेत्तदातेसकुमारवृद्धाअवारयिष्यन्कुरवःसमेताः ॥ ममप्रियंधृतराष्ट्रोऽकरिष्यत्पुत्राणांचकृतमस्याभविष्यत् ३८ दुःशासनःप्रातिलोम्या
न्निनायसभामध्येश्वशुराणांचकृष्णाम् ॥ सातत्रनीताकरुणंव्यपेक्ष्यनान्यंक्षत्तुर्नाथमवापकिंचित् ३९ कार्पण्यादेवसहितास्तत्रभूपानाशक्नुवन्प्रातिवक्तुंसभायाम् ॥
एकःक्षत्ताधर्म्यमर्थंब्रुवाणोधर्मबुद्ध्याप्रत्युवाचाल्पबुद्धिम् ४० अबुद्ध्वात्वंधर्ममेतंसभायामथेच्छसेपांडवस्योपदेष्टुम् ॥ कृष्णात्वेतत्कर्मचकारशुद्धंसुदुष्करंतत्र
सभांसमेत्य ४१ येनकृच्छ्रात्पांडवानुज्जहारतथाऽऽत्मानंनौरिवसागरौघात् ॥ यत्राब्रवीत्सूतपुत्रःसभायांकृष्णांस्थितांश्वशुराणांसमीपे ४२ नतेगतिर्विद्यते
याज्ञसेनिप्रपद्यदासीधार्तराष्ट्रस्यवेश्म ॥ पराजितास्तेपतयोनसंतिपतिंचान्यंभाविनित्वंवृणीष्व ४३ योबीभत्सोर्हृदयेप्रोतआसीदस्थिच्छिंदन्मर्मघाती
सुघोरः ॥ कर्णाच्छरोवाङ्मयस्तिग्मतेजाःप्रतिष्ठितोहृदयेफाल्गुनस्य ४४ कृष्णाजिनानिपरिधित्समानान्दुःशासनःकटुकान्यभ्यभाषत् ॥ एतेसर्वेषंढति
लाविनष्टाक्षयंगतानरकंदीर्घकालम् ४५ गांधारराजःशकुनिर्निकृत्यायदब्रवीद्द्यूतकालेसपार्थम् ॥ पराजितोनंदनःकिंतवास्तिकृष्णयात्वंदीव्यन्वैयाज्ञसेन्या
४६ जानासित्वंसंजयसर्वमेतद्द्यूतेवाक्यंगर्ह्यमेवंयथोक्तम् ॥ स्वयंत्वहंप्रार्थयेतत्रगंतुंसमाधातुंकार्यमेतद्विपन्नम् ४७ अहापयित्वायदिपांडवार्थंशमंकुरूणामपि
चेच्छकेयम् ॥ पुण्यंचमेस्याच्चरितंमहोदयंमुच्येरंश्चकुरवोमृत्युपाशात् ४८ अपिमेवाचंभाषमाणस्यकाव्यांधर्मारामामर्थवतीमहिंस्राम् ॥ अवेक्षेरन्धार्तराष्ट्राः
समक्षंमांचप्राप्तंकुरवःपूजयेयुः ४९ अतोऽन्यथारथिनाफाल्गुनेनभीमेनचैवाहवदंशितेनः ॥ परासिक्तान्धार्तराष्ट्रांश्चविद्धिप्रदह्यमानान्कर्मणास्वेनपापान् ५०

त्करुणंव्यपेक्ष्यदीनंयथास्यात्तथाकिंचिदालोच्येत्यर्थः क्षत्तुरन्यंनाथंरक्षितारंनअवाप ३९ कार्पण्यात्दैन्यात् ४० पांडवस्यधर्मउपदेष्टुंइच्छसे हेसंजयेतिशेषः ४१ । ४२ प्रपद्य
गच्छ ४३ । ४४ परिधित्समानान्परिधातुमिच्छतः ४५ नंदनआनंदयिताकनिष्ठभ्रावा ४६ विपन्नंनष्टं समाधातुंसमीकर्तुं ४७ शकेयंशक्तःस्यां ४८ काव्यांशौक्रीं नीतियुक्ता
मित्यर्थः ४९ परासिक्तान्निर्धूतान्संपदाहीनान् ५०

रौद्राः मर्मच्छिदः रूक्षाः निःस्नेहाः भाषते द्यूतावसानेऽभाषत ५१ । ५२ अहमीश्वरः ब्रह्मवेदः ब्राह्मणाश्च । धार्तराष्ट्रोच्छेदे एकोधृतराष्ट्रएवशोच्यो भवेत् पांडवोच्छेदेतुवयंत्रयोऽपिशोच्याभवि ष्यामइतिश्लोकद्वयस्यार्थः । बहूनामुच्छेदोनभविष्यतीतितात्पर्यम् ५३ । ५४ । ५५ लतेति पांडवाश्रयेणैवधार्तराष्ट्राणांजीवनंनान्यथेतिभावः ५६ । ५७ । ५८ ॥ ॥ इतिश्रीमहाभा

पराजितान्पांडवेयांस्तुवाचोरौद्रारूक्षाभाषतेधार्तराष्ट्रः ॥ गदाहस्तोभीमसेनोऽप्रमत्तोदुर्योधनंस्मारयिताहिकाले ५१ सुयोधनोमन्युमयोमहाद्रुमःस्कंधः कर्णःशकुनिस्तस्यशाखा ॥ दुःशासनःपुष्पफलेसमृद्धेमूलंराजाधृतराष्ट्रोऽमनीषी ५२ युधिष्ठिरोधर्ममयोमहाद्रुमःस्कंधोऽर्जुनोभीमसेनोऽस्यशाखा ॥ माद्रीपुत्रौपुष्पफलेसमृद्धेमूलंत्वहंब्रह्मचब्राह्मणाश्च ॥ वनंराजा धृतराष्ट्रःसपुत्रोव्याघ्रास्तेवैसंजयपांडुपुत्राः ५३ मावनंछिंधिसव्याघ्रंमाव्याघ्राऽनीनशन्वनात् ५४ निर्वनोवध्यतेव्याघ्रोनिर्व्याघ्रंछिद्यतेवनम् ॥ तस्माद्व्याघ्रोवनंरक्षेद्वनंव्याघ्रंचपालयेत् ५५ लताधर्मांधार्तराष्ट्राःशालाःसंजयपांडवाः ॥ नलतावर्धतेजातुमहाद्रुमवनाश्रिता ५६ स्थिताःशुश्रूषितुंपार्थाःस्थितायोद्धुमरिंदमाः ॥ यत्कृत्यंधृतराष्ट्रस्यतत्करोतुनराधिपः ५७ स्थिताःशमेमहात्मानःपांडवाधर्मचारिणः ॥ योधाःसमर्थास्तद्विद्वन्नाचक्षीथाययथातथम् ५८ ॥ इतिश्रीमहाभारते उद्योगपर्वणिसंजययानपर्वणि कृष्णवाक्येएकोनत्रिंशोऽध्यायः ॥ २९ ॥ ॥ छ ॥ संजयउवाच ॥ आमंत्रयेत्वांनरदेवदेवगच्छाम्यहंपांडवस्वस्तितेऽस्तु ॥ कच्चिन्नवाचावृजिनंहिकिंचिदुच्चारितंमेमनसोऽभिषंगात् १ जनार्दनंभीमसेनार्जुनौचमाद्रीसुतौसात्यकिंचेकितानम् ॥ आमंत्र्यगच्छामिशिवंसुखंवःसौम्येनमांपश्यतचक्षुषानृपाः २ ॥ युधिष्ठिरउवाच ॥ अनुज्ञातःसंजयस्वस्तिगच्छननःस्मरस्यप्रियंजातुविद्वन् ॥ विद्मश्चत्वांतेचवयंचसर्वेशुद्धात्मानंमध्यगतंसभास्थम् ३ आप्तोदूतःसंजयसुप्रियोऽसिकल्याणवाक्शीलवांस्तृप्तिमांश्च ॥ नमुह्येस्त्वंसंजयजातुमत्यानचक्रुद्ध्येरुच्यमानोदुरुक्तैः ४ नमर्मगांजातुवक्ताऽसिरूक्षांनोपश्रुतिंकटुकांनोतमुक्ताम् ॥ धर्मारामामर्थवतीमहिंस्रामेतांवाचंतवजानीमसूत ५ त्वमेवनःप्रियतमोऽसिदूतइहागच्छेद्विदुरोवाद्वितीयः ॥ अभिक्ष्णदृष्टोऽसिपुराहिनस्त्वंधनंजयस्यात्मसमःसखाऽसि ६ इतोगत्वासंजयक्षिप्रमेवउपातिष्ठेथाब्राह्मणान्येतदार्हाः ॥ विशुद्धवीर्यांश्चरणोपपन्नाःकुलेजाताःसर्वधर्मोपपन्नाः ७ स्वाध्यायिनोब्राह्मणाभिक्षवश्चतपस्विनोयेचनित्यावनेषु ॥ अभिवाद्यावैमद्वचनेनवृद्धास्तथेतरेषांकुशलंवदेथाः ८ पुरोहितंधृतराष्ट्रस्यराज्ञस्तथाचार्यानृत्विजोयेचतस्य ॥ तैश्चत्वंतातसहितैर्यथार्हंसंगच्छेथाःकुशलेनैवसूत ९ अश्रोत्रियायेचवसंतिवृद्धामनस्विनःशीलबलोपपन्नाः ॥ आशंसंतोऽस्माकमनुस्मरंतोयथाशक्तिधर्ममात्रांचरंतः १०

रते उद्योगप॰ नील॰ भारतभावदीपे एकोनत्रिंशोऽध्यायः ॥ २९ ॥ ॥ छ ॥ ॥ अभिषंगात् आवेशात् १ । २ । ३ । ४ उपश्रुतिंवार्तां रूक्षांमर्मभंगाचनोवक्ताऽसि कटुकांनीरसां मुक्तांअप्रकृतां कार्यहीनांवा ५ । ६ चरणंब्रह्मचर्येणाध्ययनम् ७ । ८ । ९ अश्रोत्रियाःअत्रैवर्णिकाःशूद्रादयः वृद्धत्वाच्चधर्ममात्रांधर्मलेशंचरंतः १०

श्लाघस्त्वस्तुहि पूर्वजघन्यंपश्चात्तेभ्यस्तेषांअनामयंपृच्छेः । व्यवहारेणवाणिज्यादिना पालयंतःस्थानाधिकारिणः ११ चतुष्पात् मंत्रउपचारःप्रयोगःसंहारश्चेतिचत्वारःपादाअस्येति अस्त्रं

श्लाघस्वमांकुशलिनंस्मतेभ्योह्यनामयंतातपृच्छेर्जघन्यम् ॥ येजीवंतिव्यवहारेणराष्ट्रेयेपालयंतोनिवसंतिराष्ट्रे ११ आचार्यइष्टोनयगोविधेयोवेदानभीप्सन्ब्रह्म
चर्यंचचार ॥ योऽस्त्रंचतुष्पात्पुनरेवचक्रेद्रोणःप्रसन्नोऽभिवाद्यस्त्वयाऽसौ १२ अधीतविद्यश्चरणोपपन्नोयोऽस्त्रंचतुष्पात्पुनरेवचक्रे ॥ गंधर्वपुत्रप्रतिमंतरस्वि
नंतमश्वत्थामानंकुशलंस्मपृच्छेः १३ शारद्वतस्यावसथंस्मगत्वामहारथस्यात्मविदांवरस्य ॥ त्वंमामभीक्ष्णंपरिकीर्तयन्वैकृपस्यपादौसंजयपाणिनास्पृशेः
१४ यस्मिन्नशौर्यमानृशंस्यंतपश्चप्रज्ञाशीलंश्रुतिसत्वेधृतिश्च ॥ पादौगृहीत्वाकुरुसत्तमस्यभीष्मस्यमांतत्रनिवेदयेथाः १५ प्रज्ञाचक्षुर्यःप्रणेताकुरूणांबहुश्रु
तोवृद्धसेवीमनीषी ॥ तस्मैराज्ञेस्थविरायाभिवाद्यआचक्षीथाःसंजयमामरोगम् १६ ज्येष्ठःपुत्रोधृतराष्ट्रस्यमंदोमूर्खःशठःसंजयपापशीलः ॥ प्रशास्तावैपृ
थिवींयेनसर्वांसुयोधनंकुशलंतातपृच्छेः १७ भ्राताकनीयानपितस्यमंदस्तथाशीलःसंजयसोऽपिशश्वत् ॥ महेष्वासःशूरतमःकुरूणांदुःशासनःकुशलंतात
वाच्यः १८ यस्यकामोवर्ततेनित्यमेवनान्यच्छमाद्भारतानामितिस्म ॥ सबाह्लिकानामृषभोमनीषीत्वयाऽभिवाद्यःसंजयसाधुशीलः १९ गुणैरनेकैःप्रवरैश्चयु
क्तोविज्ञानवान्नैवचनिष्ठुरोयः ॥ स्नेहादमर्षंसहतेसदैवससोमदत्तःपूजनीयोमतोमे २० अर्हत्तमःकुरुषुसौमदत्तिःसनोभ्रातासंजयमत्सखाच ॥ महेष्वासोरथि
नामुत्तमोऽर्हःसहामात्यःकुशलंतस्यपृच्छेः २१ येचैवान्येकुरुमुख्यायुवानःपुत्राःपौत्राभ्रातरश्चैवयेनः ॥ यंयमेषामन्यसेयेनयोग्यंतत्तत्प्रोच्यानामयंसूतवा
च्याः २२ येराजानःपांडवायोधनायसमानीताधार्तराष्ट्रेणकेचित् ॥ वशातयःशाल्वकाःकेकयाश्चतथांऽबष्ठायेत्रिगर्ताश्चमुख्याः २३ प्राच्योदीच्यादाक्षिणा
त्याश्चशूरास्तथाप्रतीच्याःपार्वतीयाश्चसर्वे ॥ अनृशंसाःशीलवृत्तोपपन्नास्तेषांसर्वेषांकुशलंसूतपृच्छेः २४ हस्त्यारोहारथिनःसादिनश्चपदातयश्चार्यसं
घामहांतः ॥ आख्यायमांकुशलिनंस्मनित्यमनामयंपरिपृच्छेःसमग्रान् २५ तथाराज्ञोह्यर्थयुक्तानमात्यान्दौवारिकान्येचसेनांनयंति ॥ आयव्ययंयेगणयं
तिनित्यमर्थांश्चयेमहतश्चिंतयंति २६ वृंदारकंकुरुमध्येष्वमूढंमहाप्रज्ञंसर्वधर्मोपपन्नम् ॥ नतस्ययुद्धंरोचतेवैकदाचिद्वैश्यापुत्रंकुशलंतातपृच्छेः २७ नि
कर्तनेदेवनेयोऽद्वितीयश्छन्नोपधःसाधुदेवीमताक्षः ॥ योदुर्जयोदेवरथेनसंख्येसचित्रसेनःकुशलंतातवाच्यः २८ गांधारराजःशकुनिःपार्वतीयोनिकर्तनेयो
ऽद्वितीयोऽक्षदेवी ॥ मानंकुर्वन्धार्तराष्ट्रस्यसूतमिथ्याबुद्धेःकुशलंतातपृच्छेः २९ यःपांडवानेकरथेनवीरःसमुत्सहत्यप्रधृष्यान्विजेतुम् ॥ योमुह्यतांमोहयिता
ऽद्वितीयोवैकर्तनःकुशलंतस्यपृच्छेः ३० सएवभक्तःसगुरुःसभर्तासवैपितासचमातासुहृच्च ॥ अगाधबुद्धिर्विदुरोदीर्घदर्शीसनोमंत्रीकुशलंतंस्मपृच्छेः ३१

१२ गंधर्वैतिसौंदर्यसंगीतंचतस्मिन्नुद्योतितं १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ पांडवायोधनाय पांडवैःसहयुद्धाय तथाऽन्यंत्याइत्यपिपाठः २३ । २४ । २५ । २६
वृंदारकंश्रेष्ठं २७ निकर्त्तनेऽर्थापहारेसाध्ये प्रथमांतपाठेऽर्थापहर्त्ता छन्नोपधोगुप्तच्छलः २८ । २९ मुह्यतांधार्त्तराष्ट्राणां ३० । ३१

३२ । ३३ नइतिधार्त्तराष्ट्रान्अंतर्भाव्योक्तं तेषांभार्याइत्यर्थः सुसंगुप्ताइतिकुशलप्रश्नप्रकारकथनं ३४ । ३५ । ३६ । ३७ लघुशीघ्रहारि वेशास्त्रियोवेश्याः ३८ । ३९ आनृशंस्यंदयामर्हतीत्यानृशंस्यः ४० । ४१ शत्रून्धार्त्तराष्ट्रान्निगृह्य वःयुष्मान्भरिष्येपोषयिष्ये इतिब्रूयाइतिशेषः ४२ संतीति मेमयाकृतानिवत्सरदेयानिनोवर्तयंतिनचालयंतित्वदी

वृद्धाःस्त्रियोयाश्चगुणोपपन्नाज्ञायंतेनःसंजयमातरस्ताः ॥ ताभिःसर्वाभिःसहिताभिःसमेत्यस्त्रीभिःसवृद्धाभिरभिवादंवदेथाः ३२ कच्चित्पुत्राजीवपुत्राःसुसम्यग्वर्ततेवोवृत्तिमनृशंसरूपाः ॥ इतिस्मोक्त्वासंजयब्रूहिपश्चादजातशत्रुःकुशलीसपुत्रः ३३ यानोभार्याःसंजयवेत्थतत्रतासांसर्वासांकुशलंतातपृच्छेः ॥ सुसंगुप्ताःसुरभयोऽनवद्याःकच्चिद्गृहानावसथाप्रमत्ताः ३४ कच्चिद्वृत्तिंश्वशुरेषुभद्राःकल्याणींवर्तध्वमनृशंसरूपाम् ॥ यथाचवःस्युःपतयोनुकूलास्तथावृत्तिमात्मनःस्थापयध्वम् ३५ यानःस्नुषाःसंजयवेत्थतत्रप्राप्ताःकुलेभ्यश्चगुणोपपन्नाः ॥ प्रजावत्योब्रूहिसमेत्यताश्चयुधिष्ठिरोवोऽभ्यवदत्प्रसन्नः ३६ कन्याःस्वजेथाःसदनेषुसंजयअनामयंमद्वचनेनपृष्ट्वा ॥ कल्याणावःसंतुपतयोऽनुकूलायूयंपतीनांभवताऽनुकूलाः ३७ अलंकृतावस्त्रवत्यःसुगंधाअबीभत्साःसुखिताभोगवत्यः ॥ लघुयासांदर्शनंवाक्चलघ्वीवेशास्त्रियःकुशलंतातपृच्छेः ३८ दास्यःस्युर्यायेचदासाःकुरूणांतदाश्रयाबहवःकुब्जखंजाः ॥ आख्यायमांकुशलिनंस्मतेभ्योऽप्यनामयंपरिपृच्छेर्जघन्यम् ३९ कच्चिद्वृत्तिंवर्ततेवैपुराणींकच्चिद्भोगान्धार्तराष्ट्रोददाति ॥ अंगहीनान्कृपणान्वामनान्वायानानृशंस्योधृतराष्ट्रोबिभर्ति ४० अंधांश्चसर्वान्स्थविरांस्तथैवहस्त्याजीवाबहवोयेऽत्रसंति ॥ आख्यायमांकुशलिनंस्मतेभ्योऽप्यनामयंपरिपृच्छेर्जघन्यम् ४१ माभैष्टदुःखेनकुजीवितेननूनंकृतंपरलोकेषुपापम् ॥ निगृह्यशत्रून्सुहृदोऽनुगृह्यवासोभिरन्नेनचवोभरिष्ये ४२ संत्येवमेब्राह्मणेभ्यःकृतानिभावीन्यथोनोबतवर्तयंति ॥ तान्पश्यामियुक्तरूपांस्तथैवतामेवसिद्धिंश्रावयेथानृपंतम् ४३ येचानाथादुर्बलाःसर्वकालमात्मन्येवप्रयतंतेऽथमूढाः ॥ तांश्चापित्वंकृपणान्सर्वथैवास्मद्वाक्यात्कुशलंतातपृच्छेः ४४ येचाप्यन्येसंश्रिताधार्तराष्ट्रान्नानादिग्भ्योऽभ्यागताःसूतपुत्र ॥ दृष्ट्वातांश्चैवार्हतश्चापिसर्वान्संपृच्छेथाःकुशलंचाव्ययंच ४५ एवंसर्वानागताभ्यागतांश्चराज्ञोदूतान्सर्वदिग्भ्योऽभ्युपेतान् ॥ पृष्ट्वासर्वान्कुशलंतांश्चसूतपश्चादहंकुशलीतेषुवाच्यः ४६ नहीदृशाःसंत्यपरेपृथिव्यांयेयोधकाधार्तराष्ट्रेणलब्धाः ॥ धर्मस्तुनित्योममधर्मएवमहाबलःशत्रुनिबर्हणाय ४७ इदंपुनर्वचनंधार्तराष्ट्रंसुयोधनंसंजयश्रावयेथाः ॥ यस्तेशरीरेहृदयंदुनोतिकामःकुरूनसपत्नोऽनुशिष्याम् ४८

याअधिकारिणः तान्यहंयथायथावत्पश्यामि तथैवतांसिद्धिंत्वदत्तंसम्यक्परिपालयामीतिदूतद्वारा मांश्रावयेथाइतितंनृपंदुर्योधनंब्रूहीतिशेषः । एतेनब्राह्मणवृत्तिषुपक्षपातोदुर्योधनेचकनिष्ठत्वादाज्ञाप्रतिपालनौचित्यंचदर्शितं ४३ आत्मन्येवप्रयतंते नतुकर्तुंशक्नुवंति ४४ । ४५ । ४६ नहीति धर्मबलेनैवजयोभविष्यति नसहायैरित्यर्थः नित्यःअविनाशिफलः ४७ । ४८

युक्तिःसंभावना एतस्यार्थस्यनविद्यते शक्रपुरींइंद्रप्रस्थं ४९ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेत्रिंशोऽध्यायः ॥ ३० ॥ संतंसाधुं असंतंदुष्टं धाताईश्वरः १ शुक्रंबीजभूतंप्राचीनं

नविद्यतेयुक्तिरेतस्यकाचिन्नैवंविधाःस्यामयथाप्रियंते ॥ ददस्ववाशक्रपुरींममैवयुद्धचस्ववाभारतमुख्यवीर ४९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसंजययानपर्वणियुधिष्ठिरसंदेशेत्रिंशोऽध्यायः ॥ ३० ॥ ४ ॥ युधिष्ठिरउवाच ॥ उतसंतमसंतंवाबालंवृद्धंचसंजय ॥ उताबलंबलीयांसंधाताप्रकुरुतेवशे १ उतबालायपांडित्यंपंडितायोतबालताम् ॥ ददातिसर्वमीशानःपुरस्ताच्छुक्रमुच्चरन् २ बलंजिज्ञासमानस्यआचक्षीथायथातथम् ॥ अथमंत्रंमंत्रयित्वायाथातथ्येनहृष्टवत् ३ गावल्गणेकुरून्गत्वाधृतराष्ट्रंमहाबलम् ॥ अभिवाद्योपसंगृह्यततःपृच्छेरनामयम् ४ ब्रूयाश्चैनंत्वमासीनंकुरुभिःपरिवारितम् ॥ तवैवराजन्वीर्येणसुखंजीवंतिपांडवाः ५ तवप्रसादाद्बालास्तेप्राप्ताराज्यमरिंदम ॥ राज्येतान्स्थापयित्वाऽग्रेनोपेक्षस्वविनश्यतः ६ सर्वमप्येतदेकस्यनालंसंजयकस्यचित् ॥ तातसंहत्यजीवामोद्विषतांमावशंगमः ७ तथाभीष्मंशांतनवंभारतानांपितामहम् ॥ शिरसाऽभिवदेथास्त्वंममनामप्रकीर्तयन् ८ अभिवाद्यचवक्तव्यस्ततोऽस्माकंपितामहः ॥ भवताशांतनोर्वंशोनिमग्नःपुनरुद्धृतः ९ सत्वंकुरुतथातातस्वमतेनपितामह ॥ तथाजीवंतितेपौत्राःप्रीतिमंतःपरस्परम् १० तथैवविदुरंब्रूयाःकुरूणांमंत्रधारिणम् ॥ अयुद्धंसौम्यभाषस्वहितकामोयुधिष्ठिरे ११ अथदुर्योधनंब्रूयाराजपुत्रममर्षणम् ॥ मध्येकुरूणामासीनमनुनीयपुनःपुनः १२ अपापांयदुपैक्षस्त्वंकृष्णामेतांसभागताम् ॥ तद्दुःखमतितिक्षाममावधीष्मकुरूनिति १३ एवंपूर्वापरान्क्लेशानतितिक्षंतपांडवाः ॥ बलीयांसोऽपिसंतोयत्तत्सर्वंकुरवोविदुः १४ यन्नःप्रव्राजयेःसौम्यअजिनैःप्रतिवासितान् ॥ तद्दुःखमतितिक्षाममावधीष्मकुरूनिति १५ यत्कुंतींसमतिक्रम्यकृष्णांकेशेष्वधर्षयत् ॥ दुःशासनस्तेऽनुमतेतच्चास्माभिरुपेक्षितम् १६ अथोचितंस्वकंभागंलभेमाहिपरंतप ॥ निवर्तयपरद्रव्याद्बुद्धिंगृद्धांनरर्षभ १७ शांतिरेवंभवेद्राजन्प्रीतिश्चैवपरस्परम् ॥ राज्यैकदेशमपिनःप्रयच्छशममिच्छताम् १८ अविस्थलंवृकस्थलंमाकंदींवारणावतम् ॥ अवसानंभवत्वत्रकिंचिदेकंचपंचमम् १९ भ्रातॄणांदेहिपंचानांपंचग्रामान्सुयोधन ॥ शांतिर्नोऽस्तुमहाप्राज्ञज्ञातिभिःसहसंजय २० भ्राताभ्रातरमन्वेतुपितापुत्रेणयुज्यताम् ॥ स्मयमानाःसमायांतुपांचालाःकुरुभिःसह २१ अक्षतान्कुरुपांचालान्पश्येयमितिकामये ॥ सर्वेसुमनसस्तातशाम्यामभरतर्षभ २२ अलमेवशमायास्मितथायुद्धायसंजय ॥ धर्मार्थयोरलंचाहंमृदवेदारुणायच २३ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसंजययानपर्वणियुधिष्ठिरसंदेशेएकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ वैशंपायनउवाच ॥ अनुज्ञातःपांडवेनप्रययौसंजयस्तदा ॥ शासनंधृतराष्ट्रस्यसर्वंकृत्वामहात्मनः १ संप्राप्यहास्तिनपुरंशीघ्रमेवप्रविश्यच ॥ अंतःपुरंसमास्थायद्वाःस्थंवचनमब्रवीत् २

कर्मउच्चरन्उद्दीपयन् २ । ३ । ४ । ५ । ६ सर्वंब्रह्मांडंसंहत्यएकीभूय ७ । ८ । ९ । १० । ११ । १२ अतितिक्षामक्षांतवंतोवयं तत्रहेतुःमावधीष्मेति १३ । १४ । १५ । १६ गृद्धांलुब्धां १७ । १८ अवसानंवसतिस्थानं १९ । २० । २१ । २२ । २३ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेएकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ ७ ॥ अनुज्ञातःगच्छेत्युक्तः १ । २

३ आत्ययिकंआवश्यकं ४ । ५ कल्पंदृढं अकल्पःदर्शनेअसमर्थः सक्तःनिरुद्धः ६ प्राज्ञाःशूराःआर्याःसाधवश्चतैर्गुप्तं ७ । ८ नृभिःपुत्रस्यपुत्रैः ९ अजातशत्रुंसुखेनअभिनंद्यत्वांप्रतिवदामि कच्चिदिति १० तेतवअग्रेयत्आत्मनः पूर्वरूपमार्षं राज्यधनादिकंअभूत्तत्बुभूषते प्राप्तुमिच्छति ।अग्रेमनोऽभूदितिपाठे अनुद्यूतात्प्राक्यस्त्वयादत्तंतद्बुभूषतेइतिज्ञेयं । निर्णिक्तौदोषमलहीनौ धर्मार्थौकरोतीतिसतथा मनस्वीउदारःदृष्टिमान्क्रांतदर्शी ११ परोमुख्यःआनृशंस्यंदया ततःपरोऽमुख्यः वित्तचयात्जातइतिशेषः वित्तसाध्यःयज्ञदानादिः किंचतस्यबुद्धिःअनपार्थे नअपार्थेनिष्प्रयोजने सप्रयोजनेसुखप्रिये संधिरार्षः नुनिश्चितं रुध्यतेअनुरुध्यते । अन्नादिजंदेहपुष्टिसुखंपुत्रादिप्रियंचसपरोपकारार्थमेवानुरुध्यते नकामकारेणेत्यर्थः । पार्थइतिपाठे तस्यबुद्धि

आचक्ष्वधृतराष्ट्रायद्वाःस्थमांसमुपागतम् ॥ सकाशात्पांडुपुत्राणांसंजयंमाचिरंकृथाः ३ जागर्तिचेदभिवदेस्त्वंहिद्वाःस्थप्रविशेयंविदितोभूमिपस्य ॥ निवेद्यमत्रात्ययिकंहिमेऽस्ति द्वाःस्थोऽथश्रुत्वानृपतिंजगाद ४ ॥ द्वाःस्थउवाच ॥ संजयोऽयंभूमिपतेनमस्तेदिदृक्षयाद्वारमुपागतस्ते ॥ प्राप्तोदूतःपांडवानांसकाशात्प्रशाधिराजन्किमयंकरोतु ५ धृतराष्ट्रउवाच ॥ आचक्ष्वमांकुशलिनंकल्पमस्मैप्रवेश्यतांस्वागतंसंजयाय ॥ नचाहमेतस्यभवाम्यकल्पःसमेकस्माद्द्वारितिष्ठेन्नसक्तः ६ ॥ वैशंपायनउवाच ॥ ततःप्रविश्यानुमतेनृपस्यमहद्वेश्मप्राज्ञशूरार्यगुप्तम् ॥ सिंहासनस्थंपार्थिवमाससादवैचित्रवीर्यंप्रांजलिःसूतपुत्रः ७ ॥संजयउवाच॥ संजयोऽहंभूमिपतेप्राप्तोऽस्मिगत्वानरदेवपांडवान् ॥ अभिवाद्यत्वांपांडुपुत्रोमनस्वीयुधिष्ठिरःकुशलंचान्पृच्छत् ८ सतेपुत्रान्पृच्छतिप्रीयमाणःकच्चित्पुत्रैःप्रीयसेनप्तृभिश्च ॥ तथासुहृद्भिःसचिवैश्चराजन्येचापित्वामुपजीवंतितैश्च ९ ॥धृतराष्ट्रउवाच॥ अभिनंद्यत्वांतातवदामिसंजयअजातशत्रुंचसुखेनपार्थम् ॥ कच्चित्सराजाकुशलीसपुत्रःसहामात्यःसानुजःकौरवाणाम् १० ॥ संजयउवाच ॥ सहामात्यःकुशलीपांडुपुत्रोबुभूषतेयच्चतेऽग्रेऽऽत्मनोऽभूत् ॥ निर्णिक्तधर्मार्थकरोमनस्वीबहुश्रुतोदृष्टिमान्शीलवांश्च ११ परोधर्मात्पांडवस्यानृशंस्यंधर्मःपरोवित्तचयान्मतोऽस्य ॥ सुखप्रियेधर्महीनेऽनपार्थेनुरुध्यतेभारततस्यबुद्धिः १२ परप्रयुक्तःपुरुषोविचेष्टतेसूत्रप्रोतादारुमयीवयोषा ॥ इमंदृष्ट्वानियमंपांडवस्यमन्येपरंकर्मदैवंमनुष्यात् १३ इमंचदृष्ट्वातवकर्मदोषंपापोदर्कंघोरमवर्णरूपम् ॥ यावत्परःकामयतेऽतिवेलंतावन्नरोऽयंलभतेप्रशंसाम् १४ अजातशत्रुस्तुविहायपापंजीर्णांत्वचंसर्पइवासमर्थाम् ॥ विरोचतेऽहार्यवृत्तेनवीरोयुधिष्ठिरस्त्वयिपापंविसृज्य १५ हंतात्मनःकर्मनिबोधराजन्धर्मार्थयुक्तादार्यवृत्तादपेतम् ॥ उपक्रोशंचेहगतोऽसिराजन्भूयश्चपापंप्रसजेदमुत्र १६

रित्युत्तरान्वयिइतीतिशेषः १२ परेणईश्वरेणप्रयुक्तः नियमंनिग्रहं मनुष्यात्मनुष्यकारात् दैवंऐश्वरंकर्म परंश्रेष्ठंमन्ये १३ अवर्णरूपंअवर्णनीयरूपंअवाच्यमित्यर्थः यावत्परःउत्कृष्टःशत्रुःकामयतेतिष्ठत्वयंकंचित्कालमितीच्छतितावदपरोनरःप्रशंसांलमते १४ जीर्णांत्वादेवदेहेस्थातुमसमर्था अहार्येणस्वाभाविकेनवृत्तेन । योहिस्वस्वरूपेतिष्ठतितस्यपापंशत्रुष्वेवगच्छति तथाचश्रुतिः। 'तस्यपुत्रादायमुपयंतिसुहृदःसाधुकृत्यां द्विषंतःपापकृत्याम्'इति १५ हंतआलोचने सानुग्रहसंबोधनेवा उपक्रोशंनिंदां अमुत्रपरलोके पापंदुःखंनरकमित्यर्थः १६

तैर्विनाएकाकिनासंशयितंदुर्लभमपिआशंससेप्राप्तुं अस्यतवमहान्पृथिव्यांअधर्मशब्दोऽकीर्तिर्भवेत् १७ एवंधर्मान्ईदृशधर्मयुक्तान्पुरुषान् १८ धर्माधर्मौसत्यानृतेग्रथितौ सत्यंविनाऽनृतंना
स्ति निरधिष्ठानकभ्रमासंभवात् । अनृतंदेहंविनाच सत्यंब्रह्मनप्रथते अतउभयंयोधत्ते केवलंबाह्यनिष्ठोनभवति सहिसएव दिष्टस्यवशात् भाग्यवशात् अस्यकुलेजातत्वादिगुणजातस्य
कर्मणिषष्ठी इदंगुणषट्कमुपैति प्राप्नोति । त्वंतुकुलेजातोऽपि केवलंअनृतोपजीवित्वात् गुणांतरहीनोऽसीतिभावः १९ अतएवसत्यामपिसंपदि त्वयामौढ्यात्नृशंसंकृतमित्याह कथमिति
मंत्रएवअग्र्यःश्रेष्ठोयेषांतेमंत्राग्र्याःभीष्मादयः तेषांधरोधर्ता तैरेवंउक्तरीत्याद्यूतंमाकुर्वित्युक्तः कथंनृशंसंकर्मपांडवप्रव्राजनंकुर्यान्नकथमपीत्यर्थः २० अमीकर्णादयः तेषां कुरुक्षयेकुरु
क्षयनिमित्तं अयंराज्यंनदेयमितिनिश्चयः नियमेनउदपादिउत्पन्नः २१ अकालिकं अकस्मादेवकुरवोनाभविष्यन् नष्टास्युश्चेत्तवपापेनकर्मणाप्रेरितोऽजातशत्रुः त्वयिपापंइच्छेत् ।
नन्वेवंतर्हितस्यगोत्रवधदोषःस्यादित्याशंक्याहत्वयीति स्वनाशहेतुं अधर्मंकुर्वतित्वयि चोरेइवपापंनिंदांचविसृज्य राजानिष्पापोऽनिंद्यश्चस्यादित्यर्थः २२ ईश्वराणांदेवानांविषयाद

सत्वमर्थंसंशयितंविनातैराशंससेपुत्रवशानुगोऽस्य ॥ अधर्मशब्दश्चमहान्पृथिव्यांनेदंकर्मत्वत्समंभारताग्र्य १७ हीनप्रज्ञोदौष्कुलेयोनृशंसोदीर्घवैरीक्षत्रविद्या
स्वधीरः ॥ एवंधर्मानापदःसंश्रयेयुर्हीनवीर्योयश्चभवेदशिष्टः १८ कुलेजातोबलवान्योयशस्वीबहुश्रुतःसुखजीवीयतात्मा ॥ धर्माधर्मौग्रथितौयोबिभर्तिसह्य
स्यदिष्टस्यवशादुपैति १९ कथंहिमंत्राग्र्यधरोमनीषीधर्मार्थयोरापदिसंप्रणेता ॥ एवमुक्तःसर्वमंत्रैरहीनोनरोनृशंसंकर्मकुर्यादमूढः २० तवह्यमीमंत्रविदःसमेत्य
समासतेकर्मसुनित्ययुक्ताः ॥ तेषामयंबलवान्निश्चयश्चकुरुक्षयेनियमेनोदपादि २१ अकालिकंकुरवोनाभविष्यन्पापेनचेत्पापमजातशत्रुः ॥ इच्छेज्जातुत्वयि
पापंविसृज्यनिंदाचेयंतवलोकेऽभविष्यत् २२ किमन्यत्रविषयादीश्वराणांयत्रपार्थःपरलोकंस्मद्रष्टुम् ॥ अत्यक्रामत्सतथासंमतःस्यान्नसंशयोनास्तिमनुष्य
कारः २३ एतान्गुणान्कर्मकृतानवेक्ष्यभावाभावौवर्तमानावनित्यौ ॥ बलिर्हिराजापारमविंदमानोनान्यत्कालात्कारणंतत्रमेने २४ चक्षुःश्रोत्रेनासिकात्वक्च
जिह्वाज्ञानस्यैतान्यायतनानिजंतोः ॥ तानिप्रीतान्येवतृष्णाक्षयांतेतान्यव्यथोदुःखहीनःप्रणुद्यात् २५ नत्वेवमन्येपुरुषस्यकर्मसंवर्ततेसुप्रयुक्तंयथावत् ॥ मातुः
पितुःकर्मणाऽभिप्रसूतःसंवर्धतेविधिवद्भोजनेन २६ प्रियाप्रियेसुखदुःखेचराजन्निंदाप्रशंसेचभजंतएव ॥ परस्त्वेनंगर्हयतेऽपराधेप्रशंसतेसाधुवृत्तंतमेव २७

न्यत्र किंसर्वंदेवाधीनमित्यर्थः यत्रयतः पार्थोऽर्जुनः परलोकंद्रष्टुंअत्यक्रमत् इमं लोकं सशरीरएवत्यक्तवान् सतादृशः नारदादिवदुभयलोकसंचारयोग्यत्वेन साधूनांसंमतोऽपि यदि
तथावनवासेनक्लेशसहःस्यात् तदामनुष्यकारोनास्तीत्यस्मिन्नर्थेसंशयोन २३ एतानिति एतान्शौर्यादीन्गुणान् कर्मकृतान्कर्मानुसारेण वृद्धिर्ह्रासयुक्तान्अवेक्ष्य अतएवभावाभावौ
ऐश्वर्यानैश्वर्येअनित्यौआगमापायिनौचअवेक्ष्य बलिराजापूर्वपूर्वंकर्मकारणपारं अंतंअविंदमानःसन् कालात् ईश्वरादन्यत्कारणं अभ्युदयादिहेतुरन्यत्किंचिन्नास्तीतिमेने २४ अतःसर्व
स्यदेवायत्तत्वात् तृष्णाक्षयेणैवइंद्रियप्रीतिःसंपादनीया नतुनानायत्नसाध्यतत्तद्विषयसमर्पणेनेत्याह चक्षुरिति । ननुस्वस्वविषयालाभे तेषांकथंप्रीतिःस्यादित्याशंक्य तानिनिरोध्यान्ये
वेत्याह तानीति अव्यथः लाभालाभादौवैषम्यहीनः प्रणुद्यात् स्वस्वगोचरेभ्योनिवर्तयेत् २५ एतद्दूषयति नत्विति एवंप्राप्तेसति अन्येआहुः तदेवाह पुरुषस्येति । संवर्ततेसम्यक्फल
वत्वर्तते तदेवाह मातुरिति कर्माभावेजन्मवृद्धीनस्यातामित्यर्थः । पाठांतरेतेनैवस्यातामित्यर्थः २६ । २७

किंचनोचेदिति इदंमयाउच्यमानंकर्मपांडवेभ्योराज्यांशप्रदानात्मकं तवनोचेत्संमतमितिशेषः तर्हितवापराधात्कृष्णवर्त्माग्निःकक्षंयथादहति एवंकृष्णवर्त्माकृष्णएवमार्गइवसुखप्रापकोय
स्यसकृष्णवर्त्माऽर्जुनः कुरूनदहेदित्यावृत्त्यायोज्यं २८ श्लाघनःआत्मानंकृतार्थंमन्वानः नागाःनगतवानसि २९ अनाप्तानांकर्णादीनां आप्तानांविदुरादीनांनिग्रहाद्दूरीकरणात् ३० अत्र
घूतस्तिरस्कृतःअतएवश्रांतःप्रपद्येप्राप्नुयां आवसथंगृहं परेहिगच्छ प्रपद्यस्वसेवस्व ३२ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेद्वात्रिंशोध्यायः ॥ ३२ ॥ ७ ॥ ॥ १ । २।३ । ४



सत्वांगर्हेभारतानांविरोधादंतोनूनंभविताऽयंप्रजानाम् ॥ नोचेदिदंतवकर्मापराधात्कुरून्दहेत्कृष्णवर्त्मेवकक्षम् २८ त्वमेवैकोजातुपुत्रस्यराजन्वशंगत्वासर्वे
लोकेनरेंद्र ॥ कामात्मनःश्लाघनोद्यूतकालेनागाःशमंपश्यविपाकमस्य २९ अनाप्तानांसंग्रहात्त्वंनरेंद्रतथाऽऽप्तानांनिग्रहाच्चैवराजन् ॥ भूमिंस्फीतांदुर्बलत्वा
दनंतामशक्तस्त्वंरक्षितुंकौरवेय ३० अनुज्ञातोरथवेगावधूतःश्रांतोऽभिपद्येशयनंनृसिंह ॥ प्रातःश्रोतारःकुरवःसभायामजातशत्रोर्वचनंसमेताः ३१ ॥ धृतरा
ष्ट्रउवाच ॥ अनुज्ञातोऽस्यावसथंपरेहिप्रपद्यस्वशयनंसूतपुत्र ॥ प्रातःश्रोतारःकुरवःसभायामजातशत्रोर्वचनंत्वयोक्तम् ३२ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसं
जययानप॰धृतराष्ट्रसंजयसंवादेद्वात्रिंशोऽध्यायः ॥ ३२ ॥ समाप्तंचेदंसंजययानपर्व ॥ अतःपरंप्रजागरपर्व ॥ ॥ वैशंपायनउवाच ॥ द्वाःस्थंप्राहमहाप्राज्ञोधृतराष्ट्रो
महीपतिः ॥ विदुरंद्रष्टुमिच्छामितमिहानयमाचिरम् १ प्रहितोधृतराष्ट्रेणदूतःक्षत्तारमब्रवीत् ॥ ईश्वरस्त्वांमहाराजोमहाप्राज्ञदिदृक्षति २ एवमुक्तस्तुविदुरःप्रा
प्यराजनिवेशनम् ॥ अब्रवीद्धृतराष्ट्रायद्वाःस्थंमांप्रतिवेदय ३ ॥ द्वाःस्थउवाच ॥ विदुरोऽयमनुप्राप्तोराजेंद्रतवशासनात् ॥ द्रष्टुमिच्छतितेपादौकिंकरोतुप्रशाधि
माम् ४ ॥ धृतराष्ट्रउवाच ॥ प्रवेशयमहाप्रज्ञंविदुरंदीर्घदर्शिनम् ॥ अहंहिविदुरस्यास्यनाकल्पोजातुदर्शने ५ ॥ द्वाःस्थउवाच ॥ प्रविशांतःपुरंक्षत्तर्महाराजस्यधी
मतः ॥ नहितेदर्शनेऽकल्पोजातुराजाऽब्रवीद्धिमाम् ६ ॥ वैशंपायनउवाच ॥ ततःप्रविश्यविदुरोधृतराष्ट्रनिवेशनम् ॥ अब्रवीत्प्रांजलिर्वाक्यंचिंतयानंनराधिपम् ७
विदुरोऽहंमहाप्राज्ञसंप्राप्तस्तवशासनात् ॥ यदिकिंचनकर्तव्यमयमस्मिप्रशाधिमाम् ८ ॥ धृतराष्ट्रउवाच ॥ संजयोविदुरप्राप्तोगर्हयित्वाचमांगतः ॥ अजात
शत्रोःश्वोवाक्यंसभामध्येसवक्ष्यति ९ तस्याद्यकुरुवीरस्यनविज्ञातंवचोमया ॥ तन्मेदहतिगात्राणितदकार्षीत्प्रजागरम् १० जाग्रतोदह्यमानस्यश्रेयोयदनुप
श्यसि ॥ तद्ब्रूहित्वंहिनस्तातधर्मार्थकुशलोह्यसि ११ यतःप्राप्तःसंजयःपांडवेभ्योनमेयथावन्मनसःप्रशांतिः ॥ सर्वेंद्रियाण्यप्रकृतिंगतानिकिंवक्ष्यतीत्येवमेऽद्य
प्रचिंता १२ ॥ विदुरउवाच ॥ अभियुक्तंबलवतादुर्बलंहीनसाधनम् ॥ हृतस्वंकामिनंचोरमाविशंतिप्रजागराः १३ कच्चिदेतैर्महादोषैर्नस्पृष्टोऽसिनराधिप ॥
कच्चिच्चपरवित्तेषुगृद्ध्यन्नपरितप्यसे १४ ॥ धृतराष्ट्रउवाच ॥ श्रोतुमिच्छामितेधर्म्यंपरंनैःश्रेयसंवचः ॥ अस्मिन्राजर्षिवंशेहित्वमेकःप्राज्ञसंमतः १५

अकल्पोनकिंतुकल्पः समर्थएव सर्वदाविदुरसंदर्शनंममअप्रत्याख्येयमित्यर्थः जातुकदाचित्अथवाकल्पः कल्पनासंशयइत्यर्थः ५ । ६ । ७ । ८ । ९ प्रजागरंनिद्रायाअभावं १० । ११
यतःयदाप्राप्तःसंजयस्तदारभ्येत्यर्थः प्रचिंताप्रकृष्टाचिंता १२ अभियुक्तमित्यर्द्धोपात्तएकः त्रयोऽन्येचप्रजागरावेशभाजनानि १३ गृद्ध्यन्लिप्सावान् १४ । १५

क्वचित्पुस्तकांतरेस्थितस्यमूलस्यटिप्पणं । प्रेष्यः प्रकर्षेणएषणीयः प्रार्थ्यइतियावत् । तेत्वयाप्रेषितोवनमितिशेषः १ विपरीतःराजलक्षणहीनः सर्वेषांद्वेष्यः भागधेयेराज्यांशे अर्चिषां नेत्ररश्मीनांप्रक्षयात्नसंमतस्त्वं धर्मात्माऽपिसन्नितिउपहासः । अथदाभागधेयेनराज्यभागित्वेनहेतुनाऽपिसंमतइत्यप्युपहासएव २ आनृशंस्यात्क्रूरत्वाभावात् । अनुक्रोशात्दयालुत्वात् तितिक्षतेयुधिष्ठिरइतिशेषः ३ एतेष्विति एतेषामधीनोभूत्वेत्यर्थः ४ एतेषुपांडित्यंनास्तीतिवक्तुंपंडितलक्षणान्याह आत्मज्ञानमित्यादिना । आत्मज्ञानंशास्त्रीयापेक्षं । समारंभःशक्त्यपेक्षः । तितिक्षावैराग्यापेक्षा । धर्मनित्यताश्रद्धापेक्षा । एतानिअयथाभूतानि मूढान्पुरुषार्थात्भ्रंशयंति नतुपंडितानित्यर्थः ५ अनास्तिकः परलोकाद्यस्तीतिजानन् श्रद्दधानः श्रद्धागुरुवेदवाक्यादिषुफलावश्यंभावनिश्चयस्तद्वान् १६ दर्पःपरावज्ञानं स्तंभःअसन्नतिः मान्यमानिता मान्यंमानार्हंआत्मानंमन्यतइतिमान्यमानीतस्यभावस्तत्ता १७

॥ विदुरउवाच ॥ राजालक्षणसंपन्नस्त्रैलोक्यस्याधिपोभवेत् ॥ प्रेष्यस्तेप्रेषितश्चैवधृतराष्ट्रयुधिष्ठिरः १ विपरीततरश्चत्वंभागधेयेनसंमतः ॥ अर्चिषांप्रक्षयाच्चैवधर्मात्माधर्मकोविदः २ आनृशंस्यादनुक्रोशाद्धर्मात्सत्यात्पराक्रमात ॥ गुरुत्वात्त्वयिसंप्रेक्ष्यबहूनक्लेशांस्तितिक्षते ३ दुर्योधनेसौबलेचकर्णेदुःशासनेतथा ॥ एतेष्वैश्वर्यमाधायकथंत्वंभूतिमिच्छसि ४ आत्मज्ञानंसमारंभस्तितिक्षाधर्मनित्यता ॥ यमर्थान्नापकर्षंतिसवैपंडितउच्यते ५ निषेवतेप्रशस्तानिनिंदितानिनसेवते ॥ अनास्तिकःश्रद्दधानएतत्पंडितलक्षणम् १६ क्रोधोहर्षश्चदर्पश्चह्रीस्तंभोमान्यमानिता ॥ यमर्थान्नापकर्षंतिसवैपंडितउच्यते १७ यस्यकृत्यंनजानंतिमंत्रंवामंत्रितंपरे ॥ कृतमेवास्यजानंतिसवैपंडितउच्यते १८ यस्यकृत्यंनविघ्नंतिशीतमुष्णंभयंरतिः ॥ समृद्धिरसमृद्धिर्वासवैपंडितउच्यते १९ यस्यसंसारिणीप्रज्ञाधर्मार्थावनुवर्तते ॥ कामादर्थंवृणीतेयःसवैपंडितउच्यते २० यथाशक्तिचिकीर्षंतियथाशक्तिचकुर्वते ॥ नाकिंचिदवमन्यंतेनराःपंडितबुद्धयः २१ क्षिप्रंविजानातिचिरंशृणोतिविज्ञायचार्थंभजतेनकामात ॥ नासंपृष्टोव्युपयुंक्तेपरार्थेतत्प्रज्ञानंप्रथमंपंडितस्य २२ नाप्राप्यमभिवांच्छंतिनष्टंनेच्छंतिशोचितुम् ॥ आपत्सुचनमुह्यंतिनराःपंडितबुद्धयः २३ निश्चित्ययःप्रक्रमतेनांतर्वसतिकर्मणः ॥ अवंध्यकालोवश्यात्मासवैपंडितउच्यते २४ आर्यकर्मणिरज्यंतेभूतिकर्माणिकुर्वते॥हितंचनाभ्यसूयंतिपंडिताभरतर्षभ२५नहृष्यत्यात्मसंमानेनावमानेनतप्यते ॥गांगोह्रदइवाक्षोभ्योयःसपंडितउच्यते२६तत्त्वज्ञःसर्वभूतानांयोगज्ञःसर्वकर्मणाम् ॥ उपायज्ञोमनुष्याणांनरःपंडितउच्यते २७ प्रवृत्तवाक्चित्रकथऊहवान्प्रतिभानवान्॥आशुग्रंथस्यवक्तायःसपंडितउच्यते२८

१८ । १९ संसारिणीस्वभावतोऽनवस्थिताऽपि कामात्ऐहिकसुखात् उभयलोकसुखावहंधर्ममर्थंवृणीतेसपंडितः । कामोधर्मार्थापेक्षयानिकृष्टइत्यर्थः । कामादिति यस्तुकामंत्यक्त्वाअर्थंवृणीतेसःअर्थार्थी मोक्षादेवसर्वअर्थंविंदति ज्ञानफलेमोक्षे कृत्स्नस्यार्थस्यांतर्भावात् सजनकादितुल्यः अतःपंडितउच्यते २० । २१ चिरंशृणोतिज्ञानदाढर्याय । असंपृष्टःयथावदपृष्टः । व्युपयुंक्तेवाग्व्ययंकरोति । परार्थेविषयेप्रज्ञानंचिन्हम् २२ । २३ निश्चित्यस्वयत्नसाध्यत्वं कर्मणः अंतर्मध्येनवसतिनोपरमते किंतुसमापयत्येव । अवंध्यकालः सर्वदासप्रयोजनमेवकर्माचरन् २४ आर्याःशिष्टाः तद्योग्यकर्माणि भूतिरैश्वर्यं तत्प्राप्त्यर्थंकर्माणि २५ । २६ तत्त्वंविनाशित्वं । भूतानांजातानामैश्वर्यादीनां । योगोरचनाप्रकारः उपायस्तदर्थसामग्री । मनुष्याणांमध्येसनरःपंडितः २७ प्रवृत्तवाक्अकुंठितवचनः । चित्रकथोलोककथाभिज्ञः । ऊहस्तर्कः । प्रतिभानंतत्कालस्फूर्तिः २८

प्रज्ञानुगंबुद्धिवश्यं श्रुतानुगाशास्त्रानुसारिणी २९ अकर्मणाहीनकर्मणाद्यूतादिनेत्यर्थः तादृशोदुर्योधनः ३० स्वमर्थमितितादृशःशकुनिः ३१ अकामान्त्वविभक्तिहीनान्कर्णादीन् । कामयानान्त्वविभक्तिमतःपांडवान् बलवंतंयुधिष्ठिरं ३२ दुष्टंजतुगृहदाहादि ३३ संसारयतिभृत्यादिद्वाराप्रवर्तयति ३४ । ३५ । ३६ । ३७ नैष्कर्म्यादयत्नतः ३८ शून्यंराजदारादीन्अज्ञातंयथास्यात्तथाउपास्ते कदर्यंअदातारं ३९ असमुन्नद्धःअनुद्धतः ४० । ४१ । ४२ । ४३ एकयेति बुद्धिर्बुद्धिमतेत्युपक्रमादेकयाबुद्ध्येतिव्याख्यायद्वयेऽपिसमानं द्वेनीतीकार्याकार्ये । अध्यात्मपक्षेनित्यानित्ये विनिश्चित्यसम्यगवधार्य त्रीन् नीतौ मित्रोदासीनशत्रून् । पक्षे कामक्रोधलोभान् । चतुर्भिःसामदानभेददंडैः मित्रंसाम्नैव दानभेदाभ्यामुदासीनं सर्वैःशत्रुं वशीकुरु । पक्षे शमदमोपरमश्रद्धाभिः । पंच पक्षद्वयेऽपिइंद्रियाणिजित्वा । षड्विदित्वासंधिविग्रहादीन्ज्ञात्वा । पक्षेअशनायांपिपासांशोकंमोहं जरांमृत्युंच । सप्तहित्वा 'स्त्रियोऽक्षामृगयापानं वाक्पारुष्यंचपंचमं । महच्चदंडपारुष्यमर्थदूषणमेवच'इतिसप्तहेयानि । पक्षे पंचेंद्रियाणिबुद्धिमनसीचत्यक्त्वासुखीभव । तथाचश्रुतिः । 'यदापंचावतिष्ठंतेज्ञानानिमनसासह बुद्धिश्चनविचेष्टेततामाहुःपरमांगतिम्' इति । पूर्वंइंद्रियाणांप्रत्याहारउक्तः इदानींतुप्रविलापनमितिभेदः ४४ । ४५ । ४६ सत्यंयथार्थभाषणं स्वर्गस्य । पक्षे सत्यंब्रह्म स्वर्गोमोक्षः । पारावारस्यसमुद्रस्य ४७ । ४८ । ४९ । ५०

श्रुतंप्रज्ञानुगंयस्यप्रज्ञाचैवश्रुतानुगा ॥ असंभिन्नार्यमर्यादःपंडिताख्यांलभेतसः २९ अश्रुतश्चसमुन्नद्धोदरिद्रश्चमहामनाः ॥ अर्थांश्चाकर्मणाप्रेप्सुर्मूढइत्युच्यतेबुधैः ३० स्वमर्थंयःपरित्यज्यपरार्थमनुतिष्ठति ॥ मिथ्याचरतिमित्रार्थेयश्चमूढःसउच्यते ३१ अकामान्कामयतियःकामयानान्परित्यजेत् ॥ बलवंतंचयोद्वेष्टितमाहुर्मूढचेतसम् ३२ अमित्रंकुरुतेमित्रंमित्रंद्वेष्टिहिनास्तिच ॥ कर्मचारभतेदुष्टंतमाहुर्मूढचेतसम् ३३ संसारयतिकृत्यानिसर्वत्रविचिकित्सते ॥ चिरंकरोतिक्षिप्रार्थेसमूढोभरतर्षभ ३४ श्राद्धंपितृभ्योनददातिदैवतानिनचार्चति ॥ सुहृन्मित्रंनलभतेतमाहुर्मूढचेतसम् ३५ अनाहूतःप्रविशतिअपृष्टोबहुभाषते ॥ अविश्वस्तेविश्वसितिमूढचेतानराधमः ३६ परंक्षिपतिदोषेणवर्तमानःस्वयंतथा ॥ यश्चक्रुध्यत्यनीशानःसचमूढतमोनरः ३७ आत्मनोबलमज्ञायधर्मार्थपरिवर्जितम् ॥ अलभ्यमिच्छन्नैष्कर्म्यान्मूढबुद्धिरिहोच्यते ३८ अशिष्यंशास्तियोराजन्यश्चशून्यमुपासते ॥ कदर्यंभजतेयश्चतमाहुर्मूढचेतसम् ३९ अर्थंमहांतमासाद्यविद्यामैश्वर्यमेववा ॥ विचरत्यसमुन्नद्धोयःसपंडितउच्यते ४० एकःसंपन्नमश्नातिवस्तेवासश्चशोभनम् ॥ योऽसंविभज्यभृत्येभ्यःकोनृशंसतरस्ततः ४१ एकःपापानिकुरुतेफलंभुंक्तेमहाजनः ॥ भोक्तारोविप्रमुच्यंतेकर्तादोषेणलिप्यते ४२ एकंहन्यान्नवाहन्यादिषुर्मुक्तोधनुष्मता ॥ बुद्धिर्बुद्धिमतोत्सृष्टाहन्याद्राष्ट्रंसराजकम् ४३ एकयाद्वेविनिश्चित्यत्रींश्चतुर्भिर्वशेकुरु ॥ पंचजित्वाविदित्वाषट्सप्तहित्वासुखीभव ४४ एकंविषरसोहंतिशस्त्रेणैकश्चवध्यते ॥ सराष्ट्रंसप्रजंहंतिराजानंमंत्रविप्लवः ४५ एकःस्वादुनभुंजीतएकश्चार्थान्नचिंतयेत् ॥ एकोनगच्छेदध्वानंनैकःसुप्तेषुजागृयात् ४६ एकमेवाद्वितीयंतद्यद्राजन्नावबुध्यसे ॥ सत्यंस्वर्गस्यसोपानंपारावारस्यनौरिव ४७ एकःक्षमावतांदोषोद्वितीयोनोपपद्यते ॥ यदेनंक्षमयायुक्तमशक्तंमन्यतेजनः ४८ सोऽस्यदोषोनमंतव्यःक्षमाहिपरमंबलम् ॥ क्षमागुणोह्यशक्तानांशक्तानांभूषणंक्षमा ४९ क्षमावशीकृतिर्लोकेक्षमयाकिंनसाध्यते ॥ शांतिखड्गःकरेयस्यकिंकरिष्यतिदुर्जनः ५०

५१ अहिंसेति पुत्राणांविग्रहेणकुलक्षयंमाकुर्वितिभावः ५२ द्वावित्यादिषु किंचित्प्रकृतोपयोग्युच्यते किंचित्प्रसंगाद्दृष्टांतार्थंचेतिज्ञेयम् ५३ असतःशकुन्यादींस्त्वमचयसीतिभावः
५४ पूजितेति पुत्रेणपूजितंकर्णंत्वमपिपूजयसीत्यर्थः ५५ अनीश्वरत्वंत्वत्पुत्रे ५६ निरारंभउदासीनस्त्वंपुत्रकलहनिवारणे ५७ प्रभुःपांडवः ५८ पात्रेषर्भे ५९ अप्रदातारंत्वत्पुत्रम् ६०
६१ उपायाइतिछेदः युद्धंकनीयान् भेददानेमध्यमः सामउत्तमः। अपायाइतिच्छेदे काम्ययोगःकनीयान् काम्यधर्मोमध्यमः इहलोकलोभोऽधमः । त्रयोन्यायाइतिपाठःस्पष्टार्थः ६२
यथावन्नियोजयेत् त्वयात्वधमःकर्णादयउत्तमेमंत्रकार्येनियुज्यंतइतिभावः ६३ त्वयिसतित्वत्पुत्रोऽधनोऽतस्त्वमेवपांडवानांराज्यंदातुंप्रभुरसीत्यर्थः ६४ हरणादयस्त्रयोऽपिदोषाः का

अतृणेपतितोवह्निःस्वयमेवोपशाम्यति ॥ अक्षमावान्परंदोषैरात्मानंचैवयोजयेत् ५१ एकोधर्मःपरंश्रेयःक्षमैकाशांतिरुत्तमा ॥ विद्यैकापरमातृप्तिरहिंसैकासु
खावहा ५२ द्वाविमौग्रसतेभूमिःसर्पोबिलशयानिव ॥ राजानंचाविरोद्धारंब्राह्मणंचाप्रवासिनम् ५३ द्वेकर्मणीनरःकुर्वन्नस्मिँल्लोकेविरोचते ॥ अब्रुवन्परुषंकिं
चिदसतोऽनर्चयंस्तथा ५४ द्वाविमौपुरुषव्याघ्रपरप्रत्ययकारिणौ ॥ स्त्रियःकामितकामिन्योलोकःपूजितपूजकः ५५ द्वाविमौकंटकौतीक्ष्णौशरीरपरिशोषि
णौ ॥ यश्चाधनःकामयतेयश्चकुप्यत्यनीश्वरः ५६ द्वावेवनविराजेतेविपरीतेनकर्मणा ॥ गृहस्थश्चनिरारंभःकार्यवांश्चैवभिक्षुकः ५७ द्वाविमौपुरुषौराजन्स्व
र्गस्योपरितिष्ठतः ॥ प्रभुश्चक्षमयायुक्तोदरिद्रश्चप्रदानवान् ५८ न्यायागतस्यद्रव्यस्यबोद्धव्यौद्वावतिक्रमौ ॥ अपात्रेप्रतिपत्तिश्चपात्रेचाप्रतिपादनम् ५९
द्वावंभसिनिवेष्टव्यौगलेबध्वादृढांशिलाम् ॥ धनवंतमदातारंदरिद्रंचातपस्विनम् ६० द्वाविमौपुरुषव्याघ्रसूर्यमंडलभेदिनौ ॥ परिव्राड्योगयुक्तश्चरणेचाभिमु
खोहतः ६१ त्रयोऽपायामनुष्याणांश्रूयंतेभरतर्षभ ॥ कनीयान्मध्यमःश्रेष्ठइतिवेदविदोविदुः ६२ त्रिविधाःपुरुषाराजन्नुत्तमाधममध्यमाः ॥ नियोजयेद्यथा
वत्तांस्त्रिविधेष्वेवकर्मसु ६३ त्रयएवाधनाराजन्भार्यादासस्तथासुतः ॥ यत्तेसमधिगच्छंतियस्यतेतस्यतद्धनम् ६४ हरणंचपरस्वानांपरदाराभिमर्शनम् ॥
सुहृदश्चपरित्यागस्त्रयोदोषाःक्षयावहाः ६५ त्रिविधंनरकस्येदंद्वारंनाशनमात्मनः ॥ कामःक्रोधस्तथालोभस्तस्मादेतत्त्रयंत्यजेत् ६६ वरप्रदानंराज्यंचपुत्रज
न्मचभारत ॥ शत्रोश्चमोक्षणंकृच्छ्रात्त्रीणिचैकंचतत्समम् ६७ भक्तंचभजमानंचतवास्मीतिचवादिनम् ॥ त्रीनेतांश्छरणंप्राप्तान्विषमेऽपिनसंत्यजेत् ६८
चत्वारिराज्ञातुमहाबलेनवर्ज्यान्याहुःपंडितस्तानिविद्यात् ॥ अल्पप्रज्ञैःसहमंत्रंनकुर्यान्नदीर्घसूत्रैरभसैश्चारणैश्च ६९ चत्वारितेतातगृहेवसंतुश्रियाभिजुष्टस्यगृ
हस्थधर्मे ॥ वृद्धोज्ञातिरवसन्नःकुलीनःसखादरिद्रोभगिनीचानपत्या ७० चत्वार्याहमहाराजसाद्यस्कानिबृहस्पतिः ॥पृच्छतेत्रिदशेंद्रायतानीमानिनिबोधमे ७१

मादित्रयसहितास्त्वय्येवसंतीत्यर्थः ६५। ६६ शत्रोर्युधिष्ठिरस्य कृच्छ्राद्द्रोणवधात् ६७ भक्तादयःपांडवाः शरणंगृहं विषमेऽपिसंकटेपि तवतुतन्नास्तीत्यर्थः ६८ दीर्घसूत्रैः क्षिप्रसाध्येकार्ये
चिरंकुर्वद्भिः । रभसैःहर्षतरलैः । अलसैरित्यपिपाठः । चारणैःस्तावकैः अरणैरितिच्छेदोवा रणविरोधिभिर्द्यूताद्यासक्तैरित्यर्थः । अशनैरितिपाठेबहुभोक्तृभिः ६९ वृद्धःकुलधर्मानुपदिशति ।
कुलीनःशिशून्आचारंग्राहयति । सखाहितंवदति । तादृशाभीष्मद्रोणविदुराः । भगिनीधनंरक्षति । तवगृहेसर्वेऽपिसंति परंतूपदेशंनगृण्हासीतिभावः ७० साद्यस्कानिसद्यःफलानि ७१

देवताः स्वर्गभाजः । स्वर्गपदार्थश्च 'यन्नदुःखेन संभिन्नंनचग्रस्तमनंतरम् ॥ अभिलाषोपनीतंचतत्सुखंस्वःपदास्पदम्'इत्येवंरूपः अतस्तेसत्यसंकल्पाः धीमतामगस्त्यादीनामनुभावंसमुद्रपानादिप्रभावं तेपिदेवतुल्याइत्यर्थः । विनयोऽपि गुरुप्रसादकरत्वेनसद्यःफलः । विनाशंविनाशहेतुकर्मापिचौर्यादिकं तच्चत्वय्येवास्ति । तत्तुसर्वंकर्मभानार्थमेवेतिमावः ७२ । ७३ अग्निवत् पित्रादयोऽपिपूज्याएवनास्कंदनीयाः तवपुत्रस्तुगुरुंयुधिष्ठिरंनपूजयतीतिभावः ७४ पितॄनग्निष्वात्तादीन् गोत्रप्रवर्तकानृषींश्च । मनुष्यान् पित्रादीन् 'ज्येष्ठोभ्रातापितुःसमः'इति पितृतुल्यस्त्वत्पुत्रस्ययुधिष्ठिरइतिभावः ७५ त्वात्वां । उपजीव्याःगुरवः । इहलोकेसाधितामित्रादयः । इहपरलोकेजन्मांतरेवास्वस्वंकार्यंकुर्वंतीत्यर्थः । मित्रेषुपांडवेषुमैत्रीमाचरेतिभावः । त्वंतुअंधत्वात् दुर्जनवचनप्रतारितः पांडवानांगुणान्नपश्यसीतिभावः ७६ दृतेश्चर्ममयाज्जलपात्रात् ७७ षडिति क्रोधोऽत्रतन्मूलकोद्वेषोग्राह्यः ७८ । ७९ पांडवानांअरक्षिताराजात्वं

देवतानांचसंकल्पमनुभावंचधीमताम् ॥ विनयंकृतविद्यानांविनाशंपापकर्मणाम् ७२ चत्वारिकर्माण्यभयंकराणिभयंप्रयच्छंत्ययथाकृतानि ॥ मानाग्निहोत्रमुतमानमौनंमानेनाधीतमुतमानयज्ञः ७३ पंचाग्नयोमनुष्येणपरिचर्याःप्रयत्नतः ॥ पितामाताऽग्निरात्माचगुरुश्चभरतर्षभ ७४ पंचैवपूजयन्लोकेयशःप्राप्नोतिकेवलम् ॥ देवान्पितॄन्मनुष्यांश्च भिक्षूनतिथिपंचमान् ७५ पंचत्वानुगमिष्यंतियत्रयत्रगमिष्यसि ॥ मित्राण्यमित्रामध्यस्थाउपजीव्योपजीविनः ७६ पंचेंद्रियस्यमर्त्यस्यछिद्रंचेदेकमिंद्रियम् ॥ ततोऽस्यस्रवतिप्रज्ञादृतेःपात्रादिवोदकम् ७७ षड्दोषाःपुरुषेणेहहातव्याभूतिमिच्छता ॥ निद्रातंद्रीभयंक्रोधआलस्यंदीर्घसूत्रता ७८ षडिमान्पुरुषोजह्याद्भिन्नांनावमिवार्णवे ॥ अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ७९ अरक्षितारंराजानंभार्यांचाप्रियवादिनीं ॥ ग्रामकामंचगोपालंवनकामंचनापितम् ८० षडेवतुगुणाःपुंसानहातव्याःकदाचन ॥ सत्यंदानमनालस्यमनसूयाक्षमाधृतिः ८१ अर्थागमोनित्यमरोगिताचप्रियाचभार्याप्रियवादिनीच ॥ वश्यश्चपुत्रोऽर्थकरीचविद्याषड्जीवलोकस्यसुखानिराजन् ८२ षण्णामात्मनिनित्यानामैश्वर्यंयोऽधिगच्छति ॥ नसपापैःकुतोऽनर्थैर्युज्यतेविजितेंद्रियः ८३ षडिमेषट्सुजीवंतिसप्तमोनोपलभ्यते ॥ चौराःप्रमत्तेजीवंतिव्याधितेषुचिकित्सकाः ८४ प्रमदाःकामयानेषुयजमानेषुयाजकाः ॥ राजाविवदमानेषुनित्यंमूर्खेषुपंडिताः ८५ षडिमानिविनश्यंतिमुहूर्तमनवेक्षणात् ॥ गावःसेवाकृषिर्भार्याविद्यावृषलसंगतिः ८६ षडेतेह्यवमन्यंतेनित्यंपूर्वोपकारिणम् ॥ आचार्यंशिक्षिताःशिष्याःकृतदाराश्चमातरम् ८७ नारींविगतकामास्तुकृतार्थाश्चप्रयोजकम् ॥ नावंनिस्तीर्णकांताराआतुराश्चचिकित्सकम् ८८ आरोग्यमानृण्यमविप्रवासःसद्भिर्मनुष्यैःसहसंप्रयोगः ॥ स्वप्रत्ययावृत्तिरभीतवासःषट्जीवलोकस्यसुखानिराजन् ८९

अन्येषामपित्याज्योभविष्यसीत्यर्थः ८० दुर्योधनत्यागार्थंतवधृतिर्धैर्यंनास्तीतिभावः ८१ । ८२ षण्णामिति आत्मनिचित्ते नित्यानांषण्णां । 'कामक्रोधौशोकमोहौमदमानौचषट्पदी'इत्युक्तानां । ऐश्वर्यंवशित्वं । त्वंतुराज्यकामः पापैरनर्थैश्चयुक्तोऽसीतिभावः ८३ । ८४ पंडिताः पांडवाः मूर्खेषुत्वत्पुत्रेषु राज्यंलप्स्यंत्येवेत्यर्थः ८५ वृषलःशूद्रःपुत्रस्नेहाक्रांतेनत्वया सद्विद्याऽनवेक्षणान्नाशिता अन्यथासत्यंनजह्याइतिभावः ८६ । ८७ आतुराआरोग्येसतीतिशेषः त्वंतुकृत्स्नराज्यलाभेनकृतकृत्यत्वात्पांडवानवमन्यसे ८८ स्वप्रत्ययास्वानुकूलावृत्तिर्जीविका तवसत्संगोनास्तीत्यर्थः ८९

ईर्षुरिति त्वयितुईर्षुत्वं। घृणादया तवतुवश्यःपुत्रोनास्तीतिभावः ९० । ९१ वाक्पारुष्यंदंडपारुष्यंचपांडवेषुत्वत्पुत्रैःकृतम् ९२ द्वेष्टिमनसाऽनिष्टंचिंतयति विरुध्यतेकर्मणा ९३ अष्टसु चरमंत्वत्पुत्रेमैत्रेयस्यावमानतोभविष्यतीतिजानामीतिभावः ९४ । ९५ । ९६ ९७ जनसंसदिसभायांद्रौपद्याआनयनेनपूजाऽपितवनष्टा ९८ । ९९ नवेति श्रोत्रादिपंचकं मनोबुद्ध्यहंकाराःस्थूलशरीरंचेतिनव द्वाराणीवद्वाराणिविषयग्रहणमार्गायस्मिंस्तत् । तिस्रःस्थूणाः स्तंभाइव विधारकायस्य तेच अविद्या कामः कर्मच । वेश्मगृहं देहद्वयात्मकं । पंच साक्षिवदुदासीनाः शब्दादयोग्राह्यायस्मिन् । पंचभूमिकमितिपाठे पंचभूमयः प्रचारस्थानानीतितएव । पांचभौतिकमित्यर्वाचीनःपाठउपेक्ष्यः । क्षेत्रज्ञेन चिदात्मनाअधिष्ठितमिदंक्षेत्रं

ईर्षुर्घृणीनसंतुष्टःक्रोधनोनित्यशंकितः ॥ परभाग्योपजीवीचषडेतेनित्यदुःखिताः ९० सप्तदोषाःसदाराज्ञाहातव्याव्यसनोदयाः ॥ प्रायशोयैर्विनश्यंतिकृतमूलाअपीश्वराः ९१ स्त्रियोऽक्षामृगयापानंवाक्पारुष्यंचपंचमम् ॥ महच्चदंडपारुष्यमर्थदूषणमेवच ९२ अष्टौपूर्वनिमित्तानिनरस्यविनशिष्यतः ॥ ब्राह्मणान्प्रथमंद्वेष्टिब्राह्मणैश्वविरुध्यते ९३ ब्राह्मणस्वानिचादत्तेब्राह्मणांश्चजिघांसति ॥ रमतेनिंदयाचैषांप्रशंसांनाभिनंदति ९४ नैनान्स्मरतिकृत्येषुयाचितश्चाभ्यसूयति ॥ एतान्दोषान्नरःप्राज्ञोबुध्येद्बुध्वाविसर्जयेत् ९५ अष्टाविमानिहर्षस्यनवनीतानिभारत ॥ वर्तमानानिदृश्यंतेतान्येवस्वसुखान्यपि ९६ समागमश्चसखिभिर्महांश्चैवधनागमः ॥ पुत्रेणचपरिष्वंगःसन्निपातश्चमैथुने ९७ समयेचप्रियालापःस्वयूथ्येषुसमुन्नतिः ॥ अभिप्रेतस्यलाभश्चपूजाचजनसंसदि ९८ अष्टौगुणाःपुरुषंदीपयंतिप्रज्ञाचकौल्यंचदमःश्रुतंच ॥ पराक्रमश्चाबहुभाषिताचदानंयथाशक्तिकृतज्ञताच ९९ नवद्वारमिदंवेश्मत्रिस्थूणंपंचसाक्षिकम् ॥ क्षेत्रज्ञाधिष्ठितंविद्वान्योवेदसपरःकविः १०० दशधर्मंनजानंतिधृतराष्ट्रनिबोधतान् ॥ मत्तःप्रमत्तउन्मत्तःश्रांतःक्रुद्धोबुभुक्षितः १ त्वरमाणश्चलुब्धश्चभीतःकामीचतेदश ॥ तस्मादेतेषुसर्वेषुनप्रसज्जेतपंडितः १०२ अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ पुत्रार्थमसुरेंद्रेणगीतंचैवसुधन्वना १०३ यःकाममन्यूप्रजहातिराजापात्रेप्रतिष्ठापयतेधनंच ॥ विशेषविच्छ्रुतवान्क्षिप्रकारीतंसर्वलोकःकुरुतेप्रमाणम् १०४ जानातिविश्वासयितुंमनुष्यान्विज्ञातदोषेषुदधातिदंडम् ॥ जानातिमात्रांचतथाक्षमांचतंतादृशंश्रीर्जुषतेसमग्रा ५ सुदुर्बलंनावजानातिकंचियुक्तोरिपुंसेवतेबुद्धिपूर्वम् ॥ नविग्रहंरोचयतेबलस्थैःकालेचयोविक्रमतेसधीरः ६ प्राप्यापदंनव्यथतेकदाचिदुद्योगमन्विच्छतिचाप्रमत्तः ॥ दुःखंचकालेसहतेमहात्माधुरंधरस्तस्यजिताःसपत्नाः ७ अनर्थकंविप्रवासंगृहेभ्यःपापैःसंधिंपरदाराभिमर्शम् ॥ दंभंस्तैन्यंपैशुनंमद्यपानंनसेवतेयश्चसुखीसदैव ८ नसंरंभेणारभतेत्रिवर्गमाकारितःशंसतितत्त्वमेव ॥ नमित्रार्थेरोचयतेविवादंनापूजितःकुप्यतिचाप्यमूढः १०९

तत्त्वेनयोविद्वान्वेद सपरः सर्वोत्कृष्टः कविर्ब्रह्मविदित्यर्थः १०० मत्तोमद्यादिना । प्रमत्तोविषयांतरासक्त्याऽनवहितः । उन्मत्तोधातुदोषात् । एतेषांमध्येत्वंलुब्धोसीतिभावः १०१ १०२ । १०३ काममन्यूकामक्रोधौ विशेषवित्तारतम्यज्ञः १०४ मात्रांअपराधानुसारेणदंडप्रमाणं ब्राह्मणादौअपराधस्यक्षमांचजानाति १०५ युक्तःछिद्रप्रेक्षणेऽवहितः १०६ धुरंधरः कार्यभारसहः १०७ । १०८ संरंभेणक्रोधेनत्रिवर्गंधर्मकामार्थान् आकारितःआहूतः । पाठांतरेमात्रार्थेअल्पार्थे १०९

प्रातिभाव्यंप्रतिकूलोभावश्चिंताभिप्रायः तस्यभावःप्रातिभाव्यं विरोधं । अत्याह अतिक्रम्यब्रवीति ११० । ११ । १२ । १३ समयान्भाषाभेदान् बुभूषतेऐश्वर्यंप्राप्तुमिच्छति परावरज्ञः उत्तमाधमविवेकवान् १४ दंभंपरवंचनेच्छयाधर्मानुष्ठानं मोहंअनात्मन्यात्मबुद्धिं मत्सरंद्वेषं पापकृत्यंपापक्रियांअभिचारादिरूपां पूगवैरंबहुभिःसहवैरं १५ । १६ । १७ । १८ । ११९



नयोऽभ्यसूयत्यनुकंपतेचनदुर्बलःप्रातिभाव्यंकरोति ॥ नात्याहकिंचित्क्षमतेविवादंसर्वत्रतादृग्लभतेप्रशंसाम् ११० योनोद्धतंकुरुतेजातुवेषंनपौरुषेणापिविकत्थतेऽन्यान् ॥ नमूर्च्छितःकटुकान्याहकिंचित्प्रियंसदातंकुरुतेजनोहि ११ नवैरमुद्दीपयतिप्रशांतंनदर्पमारोहतिनास्तमेति ॥ नदुर्गतोस्मीतिकरोत्यकार्यंतमार्यशीलंपरमाहुरार्याः १२ नस्वेसुखेवैकुरुतेप्रहर्षंनान्यस्यदुःखेभवतिप्रहृष्टः ॥ दत्वानपश्चात्कुरुतेनतापंसकथ्यतेसत्पुरुषार्यशीलः १३ देशाचारान्समयान्जातिधर्मान्बुभूषतेयःसपरावरज्ञः ॥ सयत्रतत्राभिगतःसदैवमहाजनस्याधिपत्यंकरोति १४ दंभंमोहंमत्सरंपापकृत्यंराजद्विष्टंपैशुनंपूगवैरम् ॥ मत्तोन्मत्तैर्दुर्जनैश्चापिवादंयःप्रज्ञावान्वर्जयेत्सप्रधानः १५ दानंमोहंदैवतंमंगलानिप्रायश्चित्तान्विविधाँल्लोकवादान् ॥ एतानियःकुरुतेनैत्यकानितस्योत्थानंदेवताराधयंति १६ समैर्विवाहंकुरुतेनहीनैःसमैःसख्यंव्यवहारंकथांच ॥ गुणैर्विशिष्टांश्चपुरोदधातिविपश्चितस्तस्यनयाःसुनीताः १७ मितंभुंक्तेसंविभज्याश्रितेभ्योमितंस्वपित्यमितंकर्मकृत्वा ॥ ददात्यमित्रेष्वपियाचितःसंस्तमात्मवंतंप्रजहत्यनर्थाः १८ चिकीर्षितंविप्रकृतंचयस्यनान्येजनाःकर्मजानंतिकिंचित् ॥ मंत्रेगुप्तेसम्यगनुष्ठितेचनाल्पोऽप्यस्यच्यवतेकश्चिदर्थः १९ यःसर्वभूतप्रशमेनिविष्टःसत्योमृदुर्मानकृच्छुद्धभावः ॥ अतीवसज्ज्ञायतेज्ञातिमध्येमहामणिर्जात्यइवप्रसन्नः १२० यआत्मनाऽपत्रपतेभृशंनरःससर्वलोकस्यगुरुर्भवत्युत ॥ अनंततेजाःसुमनाःसमाहितःस्वतेजसासूर्यइवावभासते २१ वनेजाताःशापदग्धस्यराज्ञःपांडोःपुत्राःपंचपंचेंद्रकल्पाः ॥ त्वयैवबालावर्धिताःशिक्षिताश्चतवादेशंपालयंत्यांबिकेय २२ प्रदायैषामुचितंतातराज्यंसुखीपुत्रैःसहितोमोदमानः ॥ नदेवानांनापिचमानुषाणांभविष्यसित्वंतर्कणीयोनरेंद्र १२३ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिप्रजागरपर्वणि विदुरनीतिवाक्ये त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

॥ धृतराष्ट्रउवाच ॥ जाग्रतोदह्यमानस्ययत्कार्यमनुपश्यसि ॥ तद्ब्रूहित्वंहिनस्तातधर्मार्थकुशलोह्यसि १ त्वंमांयथावद्विदुरप्रशाधिप्रज्ञापूर्वंसर्वमजातशत्रोः ॥ यन्मन्यसेपथ्यमदीनसत्वश्रेयस्करंब्रूहितद्वैकुरूणाम् २ पापाशंकीपापमेवानुपश्यन्पृच्छामित्वांव्याकुलेनात्मनाऽहम् ॥ कवेतन्मेब्रूहिसर्वंयथावन्मनीषितंसर्वमजातशत्रोः ३ ॥ विदुरउवाच ॥ शुभंवायदिवापापंद्वेष्यंवायदिवाप्रियम् ॥ अपृष्टस्तस्यतद्ब्रूयाद्यस्यनेच्छेत्पराभवम् ४

जात्यःअभिजातःउत्तमेआकरेजातः १२० आत्मनाअपत्रपते परैरज्ञातेऽपि स्वव्यलीकेस्वयमेवलज्जते २१ । २२ तर्कणीयःशंक्यः १२३ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपेत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ ५ ॥ दह्यमानस्यचिंताग्निनेतिशेषः धर्मार्थयोःकुशलः मोक्षेस्यवक्तुमनधिकाराद्धयोरेवग्रहः १ अजातशत्रोःपथ्यं कुरूणांचश्रेयस्करं २ पापाशंकीभाविदुःखादुद्विजन् पापंस्वकृतंपूर्वापराधंपश्यन् । कवेहेसर्वज्ञ ३ । ४

५ मिथ्योपेतानिकपट्यूतादीनि अनुपायैःअसदुपायैःप्रयुक्तानिदुःखफलानीत्यर्थः ६ । ७ अनुबंधान्प्रयोजनानि संप्रधार्यनिश्चित्य ८ विपाकःफलसिद्धावपिपरिपाकः उत्थानंउद्यमं वानवेति सिद्धिपक्षेकुर्वीतनान्यथेत्यर्थः ९ प्रमाणंनिश्चयद्वारं स्थानादीनिसर्वदाविचार्याणीत्यर्थः स्थानेदुर्गादौ दंडेसेनायाम् १० एतानिस्थानादिज्ञापकानि प्रमाणादिलेख्यादीनि ११ असांप्रतंअयुक्तं यथास्यात्तथानवर्तितव्यम् १२ भक्ष्येति मुखेमिष्टमंतेमृत्युदंकर्मनकर्तव्यमित्यर्थः अनुबंधंपश्चाद्बंधनं १३ आद्यंभक्षणीयं १४ । १५ । १६ । १७ अंगारकारकोहिमूलतउत्कृत्यकाष्ठंदहति अं

तस्माद्वक्ष्यामितेराजन्हितंयत्स्यात्कुरून्प्रति ॥ वचःश्रेयस्करंधर्म्यंब्रुवतस्तन्निबोधमे ५ मिथ्योपेतानिकर्माणिसिद्ध्येयुर्यानिभारत ॥ अनुपायप्रयुक्तानि मास्मतेषुमनःकृथाः ६ तथैवयोगविहितंयत्तुकर्मनसिद्ध्यति ॥ उपाययुक्तंमेधावीनतत्रग्लपयेन्मनः ७ अनुबंधानपेक्षेतसानुबंधेषुकर्मसु ॥ संप्रधार्यचकुर्वीत नवेगेनसमाचरेत् ८ अनुबंधंचसंप्रेक्ष्यविपाकंचैवकर्मणाम् ॥ उत्थानमात्मनश्चैवधीरःकुर्वीतवानवा ९ यःप्रमाणंनजानातिस्थानेवृद्धौतथाक्षये ॥ कोशेजनपदेदंडेनसराज्येऽवतिष्ठते १० यस्त्वेतानिप्रमाणानियथोक्तान्यनुपश्यति ॥ युक्तोधर्मार्थयोर्ज्ञानेसराज्यमधिगच्छति ११ नराज्यंप्राप्तमित्येववर्तितव्यमसांप्रतम् ॥ श्रियंह्यविनयोहंतिजरारूपमिवोत्तमम् १२ भक्ष्योत्तमप्रतिच्छन्नंमत्स्योबडिशमायसम् ॥ लोभाभिपातीग्रसतेनानुबंधमवेक्षते १३ यच्छक्यंग्रसितुंग्रस्यंग्रस्तंपरिणमेच्चयत् ॥ हितंचपरिणामेयत्तदाद्यंभूतिमिच्छता १४ वनस्पतेरपक्वानिफलानिप्रचिनोतियः ॥ सनाप्नोतिरसंतेभ्योबीजंचास्यविनश्यति १५ यस्तुपक्वमुपादत्तेकालेपरिणतंफलम् ॥ फलाद्रसंसलभतेबीजाच्चैवफलंपुनः १६ यथामधुसमादत्तेरक्षन्पुष्पाणिषट्पदः ॥ तद्वदर्थान्मनुष्येभ्यआदद्यादविहिंसया १७ पुष्पंपुष्पंविचिन्वीतमूलच्छेदंनकारयेत् ॥ मालाकारइवारामेनयथांगारकारकः १८ किंनुमेस्यादिदंकृत्वाकिंनुमेस्यादकुर्वतः ॥ इतिकर्माणिसंचिंत्यकुर्याद्वापुरुषोनवा १९ अनारभ्याभवंत्यर्थाःकेचिन्नित्यंतथागताः ॥ कृतःपुरुषकारोहिभवेद्येषुनिरर्थकः २० प्रसादोनिष्फलोयस्यक्रोधश्चापिनिरर्थकः ॥ नतंभर्तारमिच्छंतिषंढंपतिमिवस्त्रियः २१ कांश्चिदर्थान्नरःप्राज्ञोलघुमूलान्महाफलान् ॥ क्षिप्रमारभतेकर्तुंनविघ्नयतिताद्दशान् २२ ऋजुपश्यति यःसर्वंचक्षुषानुपिबन्निव ॥ आसीनमपितूष्णीकमनुरज्यंतितंप्रजाः २३ सुपुष्पितःस्यादफलःफलितःस्याद्दुरारुहः ॥ अपक्वःपक्वसंकाशोनतुशीर्येतकर्हिचित् २४ चक्षुषामनसावाचाकर्मणाचचतुर्विधम् ॥ प्रसादयतियोलोकंतंलोकोऽनुप्रसीदति २५ यस्मात्त्रस्यंतिभूतानिमृगव्याधान्मृगाइव ॥ सागरांतामपिमहींलब्ध्वासपरिहीयते २६ पितृपैतामहंराज्यंप्राप्तवान्स्वेनकर्मणा ॥ वायुरभ्रमिवासाद्यभ्रंशयत्यनयोस्थितः २७

३१०

गारइंगालः १८ । १९ अनारभ्याः प्रबलैःसहवैरादयः अगताःकदाचिदप्यप्राप्ताः २० । २१ लघुमूलान्अल्पोपायान् २२ चक्षुषाप्रीतिमयेन २३ सुपुष्पितः वाचाचक्षुषाचानुग्रहं दर्शयन्नपिअफलःस्यात् भृत्यंनधनेनवर्धयेत् । सफलोऽपिसन्दुरारुहः भृत्यवश्योनभवेत् । अपक्वइति अंतर्बलहीनोऽपि बलवत्तांबहिःप्रकाशयेदेवेत्यर्थः २४ कर्मणादानेन लोकंभृत्यवर्गम् २५ । २६ अनयेस्थितःअनीतिमान् २७

१ भावमिच्छन्कुरूनितिपाठः ।

२८ प्रतिसंवेष्टते संकुचति बहुफलं नप्रयच्छतीत्यर्थः २९ । ३० नजहातिश्रियम् ३१ । ३२ सुव्याहृतानिपांडित्यवचनानि सूक्तानिशोभनतयाउक्तानिमातृपितृगुर्वादीनि सुकृतानि तदुपदिष्टकर्माणि । शिलंकणिशाद्यर्जनं । 'उंच्छः कणशआदानं कणिशाद्यर्जनंशिलम्' इतियादवः । त्वमपिअस्मदादिवाक्यात्सारंगृण्हीष्वेतिभावः ३३ गंधेनेति पांडवबलंज्ञात्वाचारान्नियुंक्ष्वेतिभावः ३४ भूयांसमितिश्लोकत्रयतात्पर्यं पांडवान्प्रतित्वयानम्रीभवितव्यं तेनबलाधिष्ठात्रीदेवताइंद्रश्चत्वामनुग्रहीष्यतीति ३५ । ३६ । ३७ एतच्चमंत्रिभिःसहालोचनीयं सत्यंचसंरक्ष्य

धर्ममाचरतोराज्ञःसद्भिश्चरितमादितः ॥ वसुधावसुसंपूर्णावर्धतेभूतिवर्धनी २८ अथसंत्यजतोधर्ममधर्मंचानुतिष्ठतः ॥ प्रतिसंवेष्टतेभूमिरग्नौचर्माहितंयथा २९ यएवयत्नःक्रियतेपरराष्ट्रविमर्दने ॥ सएवयत्नःकर्तव्यःस्वराष्ट्रपरिपालने ३० धर्मेणराज्यंविंदेतधर्मेणपरिपालयेत् ॥ धर्ममूलांश्रियंप्राप्यनजहातिनहीयते ३१ अप्युन्मत्तात्प्रलपतोबालाच्चपरिजल्पतः ॥ सर्वतःसारमादद्यादश्मभ्यइवकांचनम् ३२ सुव्याहृतानिसूक्तानिसुकृतानिततस्ततः ॥ संचिन्वन्धीरआसीतशिलाहारीशिलंयथा ३३ गंधेनगावःपश्यंतिवेदैःपश्यंतिब्राह्मणाः ॥ चारैःपश्यंतिराजानश्चक्षुर्भ्यामितरेजनाः ३४ भूयांसंलभतेक्लेशंयागौर्भवतिदुर्दुहा ॥ अथयासुदुहाराजन्नैवतांवितुदंत्यपि ३५ यदतप्तंप्रणमतिनतत्संतापयंत्यपि ॥ यच्चस्वयंनतंदारुनतत्संनामयंत्यपि ३६ एतयोपमयाधीरःसन्नमेतबलीयसे ॥ इंद्रायसप्रणमतेनमतेयोबलीयसे ३७ पर्जन्यनाथाःपशवोराजानोमंत्रिबांधवाः ॥ पतयोबांधवाःस्त्रीणांब्राह्मणावेदबांधवाः ३८ सत्येनरक्ष्यतेधर्मोविद्यायोगेनरक्ष्यते ॥ मृजयारक्ष्यतेरूपंकुलंवृत्तेनरक्ष्यते ३९ मानेनरक्ष्यतेधान्यमश्वान्रक्ष्यत्यनुक्रमः ॥ अभीक्ष्णदर्शनंगाश्चस्त्रियोरक्ष्याःकुचेलतः ४० नकुलंवृत्तहीनस्यप्रमाणमितिमेमतिः ॥ अंतेष्वपिहिजातानांवृत्तमेवविशिष्यते ४१ यईर्षुःपरवित्तेषुरूपेवीर्येकुलान्वये ॥ सुखसौभाग्यसत्कारेतस्यव्याधिरनंतकः ४२ अकार्यकरणाद्भीतःकार्याणांचविवर्जनात् ॥ अकालेमंत्रभेदाच्चयेनमाद्येन्नतात्पिबेत् ४३ विद्यामदोधनमदस्तृतीयोऽभिजनोमदः ॥ मदाएतेऽवलिप्तानामेतएवसतांदमाः ४४ असंतोऽभ्यर्थिताःसद्भिःक्वचित्कार्येकदाचन ॥ तावन्नतस्यसुकृतंकिंचित्कार्यंकदाचन ॥ मन्यंतेसंतमात्मानमसंतमपिविश्रुतम् ४५ गतिरात्मवतांसंतःसंतएवसतांगतिः ॥ असतांचगतिःसंतोनत्वसंतःसतांगतिः ४६ जितासभावस्त्रवतामिष्टाशागोमताजिता ॥ अध्वाजितोयानवतासर्वंशीलवताजितम् ४७ शीलंप्रधानंपुरुषेतद्यस्येहप्रणश्यति ॥ नतस्यजीवितेनार्थोनधनेननबंधुभिः ४८

मित्याह पर्जन्येतित्रिभिः ३८ योगेनअभ्यासेन मृजयाउद्वर्तनेन ३९ अनुक्रमःव्यायामशिक्षादिः ४० प्रमाणंधर्मस्यकारणंनकुलमितिद्वयोर्वृत्तमाश्रय ईर्ष्यांत्यजेतिभावः ४१ । ४२ अकालेइष्टसिद्धेःप्राक्भीतःस्यात् येनमाद्येत्लोभादिना तन्नपिबेत्नाश्रयेत् ४३ अभिजनःसहायः तत्त्रयमयंदमश्चनास्तीत्यर्थः ४४ असंतइतिसार्द्धश्लोकोवाक्यं सद्भिरर्थिता असंतस्तत्कार्यमल्पमप्यकृत्वा असंतमितिख्यातमप्यात्मानंसंतंमन्यंतइतितदर्थः किंचिदुपितस्यकार्यंयावत्सुष्ठुनकृतंतावदेवमन्यंतइतियोजना ४५ गतिरिति पांडवाएवत्वामुपकरिष्यंति नतुत्वंतानितिभावः ४६ जितेति शीलंसंरक्ष्यं त्वयेतिद्वयोर्भावः ४७ । ४८

आढ्यानामितित्रयस्यशीलवतस्त्वेदारिद्र्यप्राप्तिरपिश्रेयइतिभावः ४९ संपन्नंमिष्टं ५० । ५१ शीलाभावेसत्सुअवमानीमहान्क्लेशइत्याह अवृत्तिरिति ५२ ऐश्वर्यमदःपापिष्ठोनिंदित
तमो येभ्यस्तेपानमदादयोमदाः ५३ इंद्रियार्थेषुशब्दादिषु ग्रहैःसूर्यादिभिःआक्रमोऽत्रतापनं ५४ पंचवर्गःश्रोत्रादिगणः त्वमैश्वर्यमत्तोऽजितेंद्रियश्चावश्यमापदंप्राप्स्यसीतित्रयस्यभावः
५५ । ५६ आत्मानंमनः अमात्यान्पुत्रादीन् द्वेष्यरूपेणशत्रुवत् । मनएवप्रथमंजेतव्यंततोऽमात्यादीन्विजिगीषते तत्तनमोघंननिष्फलंभवति ५७ त्वंत्वजितमनस्कतयापुत्रादिवशोनलक्ष्मी
योग्यइतित्रयाणांभावः ५८ एतदेवरथिरथादिरूपककल्पनयाआह रथइति ५९ व्यापादयितुंनाशयितुं अविधेयाःअवशाः ६० अर्थतोऽर्थहेतोः अनर्थतःअन्यायतः ६१ इंद्रियाणांवशइच्छा

आढ्यानांमांसपरमंमध्यानांगोरसोत्तरम् ॥ तैलोत्तरंदरिद्राणांभोजनंभरतर्षभ ४९ संपन्नतरमेवान्नंदरिद्राभुंजतेसदा ॥ क्षुत्स्वादुतांजनयतिसाचाढ्येषुसुदु
र्लभा ५० प्रायेणश्रीमतांलोकेभोक्तुंशक्तिर्नविद्यते ॥ जीर्यंत्यपिहिकाष्ठानिदरिद्राणांमहीपते ५१ अवृत्तिर्भयमंत्यानांमध्यानांमरणाद्भयम् ॥ उत्तमानांतुम
र्त्यानामवमानात्परंभयम् ५२ ऐश्वर्यमदपापिष्ठामदाःपानमदादयः ॥ ऐश्वर्यमदमत्तोहिनापतित्वाविबुध्यते ५३ इंद्रियैरिंद्रियार्थेषुवर्तमानैरनिग्रहैः ॥ तैरयंता
प्यतेलोकोनक्षत्राणिग्रहैरिव ५४ योजितःपंचवर्गेणसहजेनात्मकर्षिणा ॥ आपदस्तस्यवर्धंतेशुक्लपक्षइवोडुराट् ५५ अविजित्ययथाऽऽत्मानममात्यान्वाविजिगी
षते ॥ अमित्रान्वाऽजितामात्यःसोऽवशःपरिहीयते ५६ आत्मानमेवप्रथमंद्वेष्यरूपेणयोजयेत् ॥ ततोऽमात्यानमित्रांश्चनमोघंविजिगीषते ५७ वश्येंद्रियंजिता
त्मानंधृतदंडंविकारिषु ॥ परीक्ष्यकारिणंधीरमत्यंतंश्रीर्निषेवते ५८ रथःशरीरंपुरुषस्यराजन्नात्मानियंतेंद्रियाण्यस्यचाश्वाः ॥ तैरप्रमत्तःकुशलीसदश्वैर्दांतैः
सुखंयातिरथीवधीरः ५९ एतान्यनिगृहीतानिव्यापादयितुमप्यलम् ॥ अविधेयाइवादांताहयाःपथिकुसारथिम् ६० अनर्थमर्थतःपश्यन्नर्थंचैवाप्यनर्थतः ॥
इंद्रियैरजितैर्बालःसुदुःखंमन्यतेसुखम् ६१ धर्मार्थौयःपरित्यज्यस्यादिंद्रियवशानुगः ॥ श्रीप्राणधनदारेभ्यःक्षिप्रंसपरिहीयते ६२ अर्थानामीश्वरोयःस्यादिं
द्रियाणामनीश्वरः ॥ इंद्रियाणामनैश्वर्यादैश्वर्याद्भ्रश्यतेहिसः ६३ आत्मनाऽऽत्मानमन्विच्छेन्मनोबुद्धींद्रियैर्यतैः ॥ आत्माह्येवात्मनोबंधुरात्मैवरिपुरात्मनः
६४ बंधुरात्माऽऽत्मनस्तस्ययेनैवात्माऽऽत्मनाजितः ॥ सएवनियतोबंधुःसएवनियतोरिपुः ६५ क्षुद्राक्षेणेवजालेनझषावपिहितावुरू ॥ कामश्चराजन्क्रोधश्च
तौप्रज्ञानंविलुंपतः ६६ समवेक्ष्येहधर्मार्थौसंभारान्योऽधिगच्छति ॥ सवैसंभृतसंभारःसततंसुखमेधते ६७

तदनुसारीइंद्रियवशानुगः ६२ । ६३ कृत्स्नस्योपदेशस्यफलमाह आत्मनेत्यर्द्धेन आत्मनाबुद्ध्याआत्मानंप्रत्यक्चैतन्यरूपंअन्विच्छेत् तत्रोपायमाह मनसःसंकल्पात्मकस्यबुद्धेश्चतन्मूलभूता
याःइंद्रियाणांचनिग्रहेणेत्यर्थः । अत्रनतवसहायांतरापेक्षेत्याहात्मेति धीजयएवपुरुषार्थइत्यर्थः ६४ सएवधीरेवजीवस्यबंधुःरिपुश्च ६५ द्वावपिमोहजालपिहितौ झषौमीनौ उरूमहांतौ तत्र
द्वितीयोऽन्यस्यजातिस्वभावाच्छत्रुरपिजालच्छेदार्थंमित्रत्वमापन्नोबंधुरपिभवति एवंधीश्चिदात्मनःसंसारप्रदत्वाच्छत्रुरपिमोहच्छेदार्थंतस्यमित्रमपिभवतीतिभावः । क्षुद्राक्षेणसूक्ष्मछि
द्रेण । यद्वा उत्तरान्वय्येवायमर्धः कामक्रोधयोरावरकंप्रज्ञानं तौनाशयतः जालमिव महामीनावित्यर्थः ६६ समवेक्ष्य अनुरुध्य संभारान्जयसाधनानि ६७ .

आभ्यंतरान् श्रोत्रादीन् मनोमयान्मनसोविकारभूतान् तथाचश्रुतिः । 'मनसाह्येवपश्यतिमनसाशृणोति'इति ६८ राजानोरावणादयः राज्यविभ्रमैःऐश्वर्यविलासैः स्वकर्मभिःसीताहरणादिभिः ६९ । ७० पंचइंद्रियाणिपंचप्रयोजनानिशब्दश्रवणादीनियेषांतान् उत्पततःउत्पथेनगच्छतः । त्वंतुअजितचित्तत्वाद्दुःसंगाच्चापद्गस्तोऽसीतिभावः ७१ अनायासः अचांचल्यं ७२ तितिक्षाद्वंद्वसहनशीलता वाक्गुप्ताअसंबद्धप्रलापाद्रक्षिता अंत्येषुनीचेषु त्वत्पुत्रेष्वार्जवादिकंगुप्तवाक्त्वंचनास्तीतितेऽत्याः ७३ आक्रोशोरूक्षभाषणं परिवादोनिंदा तयोर्वक्तात्वत्पुत्रः हिंस्रश्चातोनासौजयभाक् ७४ । ७५ वाक्संयमोनियतंवचनं विचित्रंचमत्कारयुक्तम् ७६ । ७७ बीभत्संनिंदितं यतोनसंरोहति ७८ कर्णीकर्णाकृतिफलकोबाणः नालीकःनलिकयाप्रक्षेप्योबा

यःपंचाभ्यंतरान्शत्रूनविजित्यमनोमयान् ॥ जिगीषतिरिपूनन्यान्रिपवोऽभिभवंतितम् ६८ दृश्यंतेहिमहात्मानोबध्यमानाःस्वकर्मभिः ॥ इंद्रियाणामनीशत्वाद्राजानोराज्यविभ्रमैः ६९ असंत्यागात्पापकृतामपापांस्तुल्योदंडःस्पृशतेमिश्रभावात् ॥ शुष्केणार्द्रंदह्यतेमिश्रभावात्तस्मात्पापैःसहसंधिंनकुर्यात् ७० निजानुत्पततःशत्रून्पंचपंचप्रयोजनान् ॥ योमोहान्ननिगृह्णातितमापद्ग्रसतेनरम् ७१ अनसूयाऽऽर्जवंशौचंसंतोषःप्रियवादिता ॥ दमःसत्यमनायासोनभवंतिदुरात्मनाम् ७२ आत्मज्ञानमनायासस्तितिक्षाधर्मनित्यता ॥ वाक्चैवगुप्तादानंचनैतान्यंत्येषुभारत ७३ आक्रोशपरिवादाभ्यांविहिंसंत्यबुधाबुधान् ॥ वक्तापापमुपादत्तेक्षममाणोविमुच्यते ७४ हिंसाबलमसाधूनांराज्ञांदंडविधिर्बलम् ॥ शुश्रूषातुबलंस्त्रीणांक्षमागुणवतांबलम् ७५ वाक्संयमोहिनृपतेसुदुष्करतमोमतः ॥ अर्थवच्चविचित्रंचनशक्यंबहुभाषितुम् ७६ अभ्यावहतिकल्याणंविविधंवाक्सुभाषिता ॥ सैवदुर्भाषिताराजन्ननर्थायोपपद्यते ७७ रोहतेसायकैर्विद्धंवनंपरशुनाहतम् ॥ वाचादुरुक्तंबीभत्संनसंरोहतिवाक्क्षतम् ७८ कर्णिनालीकनाराचान्निर्हरंतिशरीरतः ॥ वाक्शल्यस्तुननिर्हर्तुंशक्योहृदिशयोहिसः ७९ वाक्सायकावदनान्निष्पतंतियैराहतःशोचतिरात्र्यहानि ॥ परस्यनामर्मसुतेपतंतितान्पंडितोनावसृजेत्परेभ्यः ८० यस्मैदेवाःप्रयच्छंतिपुरुषायपराभवम् ॥ बुद्धिंतस्यापकर्षंतिसोवाचीनानिपश्यति ८१ बुद्धौकलुषभूतायांविनाशेप्रत्युपस्थिते ॥ अनयोनयसंकाशोहृदयान्नापसर्पति ८२ सेयंबुद्धिःपरीतातेपुत्राणांभरतर्षभ ॥ पांडवानांविरोधेननचैनानवबुध्यसे ८३ राजालक्षणसंपन्नस्त्रैलोक्यस्यापियोभवेत् ॥ शिष्यस्तेशासितासोऽस्तुधृतराष्ट्रयुधिष्ठिरः ८४ अतीवसर्वान्पुत्रांस्तेभागधेयपुरस्कृतः ॥ तेजसाप्रज्ञयाचैवयुक्तोधर्मार्थतत्त्ववित् ८५ अनुक्रोशादानृशंस्याद्योऽसौधर्मभृतांवरः ॥ गौरवात्तवराजेंद्रबहून्क्लेशांस्तितिक्षति ८६ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिप्रजागरपर्वणिविदुरनीतिवाक्येचतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ ॥ छ ॥ ॥ धृतराष्ट्रउवाच ॥ ब्रूहिभूयोमहाबुद्धेधर्मार्थसहितंवचः ॥ शृण्वतोनास्तिमेतृप्तिर्विचित्राणीहभाषसे १

णःनिर्हरंतिनिःसारयंति ७९ नामर्मसुर्कितुमर्मस्वेव । सभायांद्रौपदींप्रतिदुर्वचनंवदतांत्वत्पुत्राणामपराधःक्षंतुमयोग्योऽस्तीतिभावः ८० अवाचीनानिनीचकर्माणि ८१ । ८२ । ८३ शिष्यस्तेत्वदाज्ञाकारी शासितापृथिव्याः ८४ भागधेयेराज्यांशे पुरस्कृतः । मूर्धाभिषिक्तस्यपांडोःपुत्रास्तेराज्यार्हाः । अतथाभूतस्यांधस्यतवपुत्रास्तेनराज्यार्हाइत्यर्थः ८५ अनुक्रोशात्दयालुत्वात् आनृशंस्यात् अक्रौर्यात् ८६ इति उद्योगपर्वणिनीलकंठीयेभारतभावदीपे विदुरवाक्ये चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ ॥ छ ॥ १

आर्जवंअवैषम्यं २ । ३ । ४ । ५ । ६ । ७ सुधन्वाब्राह्मणःपर्यंकंअधिरोहत्येव त्वंतुनीचोदैत्यःसन्किमर्थंतत्प्रत्याख्यानंकरोषीतिभावः ८ । ९ इहस्थानेउपस्थानेमामुपस्थातुं वांदैत्यब्राह्मणौ अहंपश्येयं १० । ११ । १२ समागच्छत्उभयोःसंमुखंअगच्छत् समागतंसंमुखंप्राप्तं १३ विरोचनेन सौवर्णेपीठेमयासहउपवेश्यतामितिप्रार्थितःसुधन्वाउवाच अन्वालभेस्पृशाम्येवहेप्राह्रा

विदुरउवाच ॥ सर्वतीर्थेषुवास्नानंसर्वभूतेषुचार्जवम् ॥ उभेत्वेतेसमेस्यातामार्जवंवाविशिष्यते २ आर्जवंप्रतिपद्यस्वपुत्रेषुसततंविभो ॥ इहकीर्तिंपरांप्राप्यप्रेत्यस्वर्गमवाप्स्यसि ३ यावत्कीर्तिर्मनुष्यस्यपुण्यालोकेप्रगीयते ॥ तावत्सपुरुषव्याघ्रस्वर्गलोकेमहीयते ४ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ विरोचनस्यसंवादंकेशिन्यर्थेसुधन्वना ५ स्वयंवरेस्थिताकन्याकेशिनीनामनामतः ॥ रूपेणाप्रतिमाराजन्विशिष्टपतिकाम्यया ६ विरोचनोऽथदैतेयस्तदातत्राजगाम ॥ प्राप्तुमिच्छंस्ततस्तत्रदैत्येंद्रंप्राहकेशिनी ७ ॥ केशिन्युवाच ॥ किंब्राह्मणाःस्विच्छ्रेयांसोदितिजाःस्विद्विरोचन ॥ अथकेनस्मपर्यंकंसुधन्वानाधिरोहति ८ ॥ विरोचनउवाच ॥ प्राजापत्यास्तुवैश्रेष्ठावयंकेशिनिसत्तमाः ॥ अस्माकंखल्विमेलोकाःकेदेवाःकेद्विजातयः ९ ॥ केशिन्युवाच ॥ इहैवावांप्रतीक्षावउपस्थानेविरोचन ॥ सुधन्वाप्रातरागंतापश्येयंवांसमागतौ १० ॥ विरोचनउवाच ॥ तथाभद्रेकरिष्यामियथात्वंभीरुभाषसे ॥ सुधन्वानंचमांचैवप्रातर्द्रष्टाऽसिसंगतौ ११ ॥ विदुरउवाच ॥ अतीतायांचशर्वर्यामुदितेसूर्यमंडले ॥ अथाजगामतंदेशंसुधन्वाराजसत्तम ॥ विरोचनोयत्रविभोकेशिन्यासहितःस्थितः १२ सुधन्वाचसमागच्छत्प्राह्लादिंकेशिनींतथा ॥ समागतंद्विजंदृष्ट्वाकेशिनीभरतर्षभ ॥ प्रत्युत्थायासनंतस्मैपाद्यमर्घ्यंददौपुनः १३ ॥ सुधन्वोवाच ॥ अन्वालभेहिरण्मयंप्राह्लादेतेवरासनम् ॥ एकत्वमुपसंपन्नोनत्वासेऽहंत्वयासह १४ विरोचनउवाच ॥ तवार्हतेतुफलकंकूर्चंवाऽप्यथवाबृसी ॥ सुधन्वन्नत्वमर्होऽसिमयासहसमासनम् १५ ॥ सुधन्वोवाच ॥ पितापुत्रौसहासीतांद्वौविप्रौक्षत्रियावपि ॥ वृद्धौवैश्यौचशूद्रौचनत्वन्याविवतरेतरम् १६ पिताहितेसमासीनमुपासीतैवमामधः ॥ बालःसुखैधितोगेहेनत्वंकिंचनबुध्यसे १७ ॥ विरोचनउवाच ॥ हिरण्यंचगवाश्वंचयद्वित्तमसुरेषुनः ॥ सुधन्वन्विपणेतेनप्रश्नंपृच्छावयेविदुः १८ ॥ सुधन्वोवाच ॥ हिरण्यंचगवाश्वंचतवैवास्तुविरोचन ॥ प्राणयोस्तुपणंकृत्वाप्रश्नंपृच्छावयेविदुः १९ ॥ विरोचनउवाच ॥ आवांकुत्रगमिष्यावःप्राणयोर्विपणेकृते ॥ नतुदेवेष्वहंस्थातानमनुष्येषुकर्हिचित् २० ॥ सुधन्वोवाच ॥ पितरंतेगमिष्यावःप्राणयोर्विपणेकृते ॥ पुत्रस्यापिसहेतोर्हिप्रह्लादोनानृतंवदेत् २१ ॥ विदुरउवाच ॥ एवंकृतपणौक्रुद्धौतत्राभिजग्मतुस्तदा ॥ विरोचनसुधन्वानौप्रह्लादोयत्रातिष्ठति २२ ॥ प्रह्लादउवाच ॥ इमौतौसंप्रदृश्येतेयाभ्यांनचरितंसह ॥ आशीविषाविवक्रुद्धावेकमार्गाविहागतौ २३ किंवैसहैवंचरथोनपुराचरथःसह ॥ विरोचनैतत्पृच्छामिकिंतेसख्यंसुधन्वना २४

देएकत्वंत्वयासहसाम्यंउपसंपन्नश्चेत्मन्येदहंगच्छेयमितिशेषः नतुत्वयासहएकासनेआसेउपविशामि १४ फलकंकाष्ठपीठं कूर्चंबृसीवर्तितदर्भमयंपीठंवा तवअर्हतेयोग्यंभवति १५ । १६ उपासीतसेवते अधःस्थित्वेतिशेषः १७ प्रश्नंआवयोःकःश्रेष्ठइतिप्रश्नं येविदुस्तान्पृच्छाव १८ । १९ । २० । २१ । २२ सहनचरितंवैरात् २३ । २४

२५ पीवरीपुष्टाकृता मधुपर्कार्थं उपकल्पिता २६ पथिष्विति प्रश्नानिर्णयेनैतत्प्राप्तमितिभावः २७ । २८ । २९ दुर्विवक्तादुष्टविवेककर्ता अन्याय्यवक्तेत्यर्थः किंवसेत् किंदुःखंप्राप्नुयात् ३० अधिविन्नाकृतसपत्नीकास्त्रीतांरात्रिंवसेत्तद्वद्दुःखंप्राप्नुयात् ३१ नगरेइति शरणमलभमानः क्षुधार्तः शत्रुभिर्वेष्टितश्चयत्दुःखंलभते सः अनृतसाक्ष्यवक्ताऽपिलभतेत्यर्थः ३२ पंचपूर्वजान् पश्वनृतेअजादिपश्वर्थमनृतेउक्तेसतिहंतिनाशयति परलोकात्च्यावयति एवमुत्तरत्र ३३ भूमितुल्याकेशिनीतदर्थं अनृतंभूम्यनृतं ३४ अंगिराः सुधन्वनःपिता त्वत्तस्त्वत्तः ३५। ३६ । ३७ पादप्रक्षालनंहरिद्रया

विरोचनउवाच ॥ नमेसुधन्वनासख्यंप्राणयोर्विपणावहे ॥ प्रह्लाद तत्त्वंपृच्छामिमाप्रश्नमनृतंवदेः २५ ॥ प्रह्लादउवाच ॥ उदकंमधुपर्कंवाऽप्यानयंतुसुधन्वने ॥ ब्रह्मन्नभ्यर्चनीयोऽसिश्वेतागौः पीवरीकृता २६ ॥ सुधन्वोवाच ॥ उदकंमधुपर्कंचपथिष्वेवार्पितंमम ॥ प्रह्लादत्वंतुमेतथ्यंप्रश्नंप्रब्रूहिपृच्छतः ॥ किंब्राह्मणाःस्विच्छ्रेयांसउताहोस्विद्विरोचनः २७ ॥ प्रह्लादउवाच ॥ पुत्रएकोममब्रह्मंस्त्वंचसाक्षादिहास्थितः ॥ तयोर्विवदतोःप्रश्नंकथमस्मद्विधोवदेत् २८ ॥ सुधन्वोवाच ॥ गांप्रदद्यास्त्वौरसाययद्वाऽन्यत्स्यात्प्रियंधनम् ॥ द्वयोर्विवदतोस्तथ्यंवाच्यंचमतिमंस्त्वया २९ ॥ प्रह्लादउवाच ॥ अथयोनैवप्रब्रूयात्सत्यंवायदिवाऽनृतम् ॥ एतत्सुधन्वन्पृच्छामिदुर्विवक्तास्मकिंवसेत् ३० ॥ सुधन्वोवाच ॥ यांरात्रिमधिविन्नास्त्रीयांचैवाक्षपराजितः ॥ यांचभाराभितप्तांगोदुर्विवक्तास्मतांवसेत् ३१ नगरेप्रतिरुद्धःसन्बहिर्द्वारेबुभुक्षितः ॥ अमित्रान्भूयसःपश्येद्यःसाक्ष्यमनृतंवदेत् ३२ पंचपश्वनृतेहंतिदशहंतिगवानृते ॥ शतमश्वानृतेहंतिसहस्रंपुरुषानृते ३३ हंतिजातानजातांश्चहिरण्यार्थेऽनृतंवदन् ॥ सर्वंभूम्यनृतेहंतिमास्मभूम्यनृतंवदेः ३४ ॥ प्रह्लादउवाच ॥ मत्तःश्रेयानंगिरावैसुधन्वात्वद्विरोचन ॥ माताऽस्यश्रेयसीमातुस्तस्मात्त्वंतेनवैजितः ३५ विरोचनसुधन्वाऽयंप्राणानामीश्वरस्तव ॥ सुधन्वन्पुनरिच्छामित्वयादत्तंविरोचनम् ३६ ॥ सुधन्वोवाच ॥ यद्धर्ममवृणीथास्त्वंनकामादनृतंवदीः ॥ पुनर्ददामितेपुत्रंतस्मात्प्रह्लाददुर्लभम् ३७ एषप्रह्लादपुत्रस्तेमयादत्तोविरोचनः ॥ पादप्रक्षालनंकुर्यात्कुमार्याःसन्निधौमम ३८ ॥ विदुरउवाच ॥ तस्माद्राजेंद्रभूम्यर्थेनानृतंवक्तुमर्हसि ॥ मागमःससुतामात्योनाशंपुत्रार्थमब्रुवन् ॥ नदेवादंडमादायरक्षंतिपशुपालवत् ॥ यंतुरक्षितुमिच्छंतिबुद्ध्यासंविभजंतितम् ४० यथायथाहिपुरुषःकल्याणेकुरुतेमनः ॥ तथातथाऽस्यसर्वार्थाःसिद्ध्यंतेनात्रसंशयः ४१ नैनंछंदांसिवृजिनात्तारयंतिमायाविनंमाययावर्तमानम् ॥ नीडंशकुंताइवजातपक्षाश्छंदांस्येनंप्रजहत्यंतकाले ४२ मद्यपानंकलहंपूगवैरंभार्यापत्योरंतरंज्ञातिभेदम् ॥ राजद्विष्टंस्त्रीपुंसयोर्विवादंवर्ज्यान्याहुर्यश्चपंथाःप्रदुष्टः ४३

पादधावनं कुमार्याःकेशिन्याःविवाहे दंपत्योःपरस्परंहरिद्रयापादधावनंकुर्वंतीतिप्रसिद्धं अस्यैवभार्याकेशिनीभवत्वित्यर्थः ३८ प्रकृतेआख्यायिकोपयोगमाह तस्मादिति अब्रुवन्सत्यमितिशेषः ३९ तवदैवंप्रतिकूलंअधीतंचानिष्फलमित्याह त्रयेण नदेवाइति ४० । ४१ छंदांसिवेदाः ४२ अंतरंवियोगं विवादंवैरप्रवर्तनं ज्ञातिभेदेकलहेचतत्प्रवृत्तिर्नयोग्येतिभावः ४३ 

सामुद्रिकंहस्तरेखादिपरीक्षकं । वणिजंचोरपूर्वं पूर्वंचोरःपश्चाद्वणिग्भूतस्तं कूटतुलावंतंवा । शलाकधूर्तं शलाकयापाशादिनावा शकुनादिकमुक्त्वायोऽन्यान्वंचयतितं। अरिंविपरीतसाक्ष्यभया
त् । मित्रंपरीक्षकाणामविश्वासात् । कुशीलवंकुत्सितंशीलंवातिअनुसरतीतितं नर्तकीदासं विटोन्मत्तादिकंवा । तत्रतुकूटद्यूतकारीशकुनिःकुशीलवएवप्रमाणं ४४ सत्कर्मद्वाराऽपितस्यसाधु
त्वंनभंतव्यमित्याह मानेति मानःलोकेषुउत्कर्षः तदर्थान्यग्निहोत्रादीनिभयदानीत्यर्थः मौनंध्यानं ४५ कुंडाशीभगभक्षः जीवतिभर्तरिजाराज्जातः कुंडस्तेननिमित्तेनाशितुंशीलः । सोमविक्रयी
प्रसिद्धः । पर्वकारःशरकृत्आयुधमात्रकर्तेत्यर्थः । सूचीसूचकोनक्षत्रादीनां परदोषाणांच ज्यौतिषिकःपिशुनोवा ४६ काकःकाकवत्क्षतोद्धर्तनेनदुःखितस्यापिदुःखप्रदः । नास्तिकःपरलोकादि
द्वेषी४७स्रुवप्रगहणःराजकीयवृत्तिबलेनसर्वेभ्योवणिग्भ्यःस्रुवेणधान्यादिकमादत्ते‘खोंचीग्राहक’इतिभाषायांप्रसिद्धः ग्रामपुरोहितइत्यन्ये । व्रात्यःअतीतोपनयनकालःपतितसावित्रीकोवा । की

सामुद्रिकंवणिजंचोरपूर्वंशलाकधूर्तंचचिकित्सकंच ॥ अरिंचमित्रंचकुशीलवंचनैतान्साक्ष्येत्वधिकुर्वीतसप्त ४४ मानाग्निहोत्रमुतमानमौनंमानेनाधीतमुतमान
यज्ञः ॥ एतानिचत्वार्यभयंकराणिभयंप्रयच्छंत्ययथाकृतानि ४५ अगारदाहीगरदः कुंडाशीसोमविक्रयी ॥ पर्वकारश्चसूचीचमित्रध्रुक्पारदारिकः ४६ भ्रूण
हागुरुतल्पीचयश्चस्यात्पानपोद्विजः ॥ अतितीक्ष्णश्चकाकश्चनास्तिकोवेदनिंदकः ४७ स्रुवप्रग्रहणोव्रात्यःकीनाशश्चात्मवानपि ॥ रक्षेत्युक्तश्चयोहिंस्यात्सर्वे
ब्रह्महभिःसमाः ४८ तृणोल्कयाज्ञायतेजातरूपंवृत्तेनभद्रोव्यवहारेणसाधुः ॥ शूरोभयेष्वर्थकृच्छ्रेषुधीरःकृच्छ्रेष्वापत्सुसुहृदश्चारयश्च ४९ जरारूपंहरतिहि
धैर्यमाशामृत्युःप्राणान्धर्मचर्यामसूया ॥ क्रोधःश्रियंशीलमनार्यसेवाह्रियंकामःसर्वमेवाभिमानः ५० श्रीर्मंगलात्प्रभवतिप्रागल्भ्यात्संप्रवर्धते ॥ दाक्ष्यात्तुकुरुते
मूलंसंयमात्प्रतितिष्ठति ५१ अष्टौगुणाःपुरुषंदीपयंतिप्रज्ञाचकौल्यंचदमःश्रुतंच ॥ पराक्रमश्चाबहुभाषिताचदानंयथाशक्तिकृतज्ञताच ५२ एतान्गुणांस्ता
तमहानुभावानेकोगुणःसंश्रयतेप्रसह्य ॥ राजायदासत्कुरुतेमनुष्यंसर्वान्गुणानेषगुणोविभाति ५३ अष्टौनृपेमानिमनुष्यलोकेस्वर्गस्यलोकस्यनिदर्शनानि ॥
चत्वार्येषामन्ववेतानिसद्भिश्चत्वारिचैषामनुयांतिसंतः ५४ यज्ञोदानमध्ययनंतपश्चचत्वार्येतान्यन्ववेतानिसद्भिः ॥ दमःसत्यमार्जवमानृशंस्यंचत्वार्येतान्यनु
यांतिसंतः ५५ इज्याध्ययनदानानितपःसत्यंक्षमाघृणा ॥ अलोभइतिमार्गोऽयंधर्मस्याष्टविधःस्मृत ५६ तत्रपूर्वचतुर्वर्गोदंभार्थमपिसेव्यते ॥ उत्तरश्चचतुर्व
र्गोनामहात्मसुतिष्ठति ५७ नसासभायत्रनसंतिवृद्धानतेवृद्धायेनवदंतिधर्मम् ॥ नासौधर्मोयत्रनसत्यमस्तिनतत्सत्यंयच्छलेनाभ्युपेतम् ५८ नाशःकर्षकः । आत्म

११

वान्समर्थोऽपियोरक्षेत्युक्तोहिंस्यात् । एतेष्वाद्यंद्वयंत्वत्पुत्रेषुदृष्टं ४८ तृणोल्कयातृणज्वालयाजातरूपंरूपवद्वस्तुज्ञायतेंऽधकारेसति । भद्रोवृषःधर्मइतियावत् । वृत्तेनशीलेनसोऽस्तिनास्तीति
ज्ञायते । व्यवहारेणअहिंसादिप्रधानेन । कृच्छ्रेषुदुर्भिक्षादिसंकटेषु । त्वत्पुत्रेषुधर्मःसाधुत्वंचनास्तीत्यर्थः ४९ जरेति त्वत्पुत्रेऽभिमानदोषोऽस्ति ५० श्रीरिति दाक्ष्यंशीघ्रकारित्वं त्वयिसं
यमाभावान्नश्रीःस्थास्यति ५१ अष्टाविति राज्ञापुरस्कृतंपुरुषं प्रज्ञादयोहठादनुसरंतीतिश्लोकद्वयार्थः ५२ एषगुणोराजसत्कारःविभातिभासयति कर्णादिषुसत्कृतेषुआगंतुकाएतेगुणाःसंतिनस्वा
भाविकाः अतस्तेनोपयोक्ष्यंतइतिभावः ५३ इमानिवक्ष्यमाणानि अन्ववेतानि नित्यसंबद्धानि अनुयांतियत्नेनभजंति ५४।५५।५६ तत्रेति असत्यपिदमादौदंभार्थयज्ञादिसंभवात् ५७। ५८

रूपंविनयमुद्रा श्रुतंअध्ययनं विद्यादेवताद्युपासनं चित्रभाष्यंयुक्तियुक्तंवचनं दशसंसर्गजा गुणाइतिपाठेतद्युक्तैःसहसंगेकृतेएतेजायंतेतेनसत्संगःकर्तव्यइतिभावः ५९ पापकीर्तिः कलंकित्वे न प्रसिद्धः ६० । ६१ । ६२ । ६३ दंदशूको मर्मच्छेत्ता निष्ठुरःअप्रियवाक् नचिरात्शीघ्रम् ६४ नकृच्छ्रं समस्तंपदंसुखवाची ६५ आगमयाति आनयाति ६६ वर्षाइत्यत्यंतसंयोगे द्वितीया ६७ । ६८ गतपारं प्राप्ततत्त्वम् ६९ परिपाकसुखंकर्म त्वत्पुत्रानकुर्वंति अन्यायेनचसुखंलिप्संति तत्तुविपरीतमेवेत्याह धनेनेति ७० आत्मवतांजितचित्तानांप्रच्छन्नपापोदुर्योधनः ७१ प्रभवःमाहात्म्यं । 'प्रभवोजन्ममूलेस्याज्जन्महेतौपराक्रमे'इतिमेदिनी । नाधिगंतव्यः नाधिगंतुंशक्योऽनंतत्वात् ७२ ज्ञातिषुअनार्जवीदुर्योधनः ७३ शूराःपांडवाः सर्वत्रसुवर्णभा

सत्यंरूपंश्रुतंविद्याकौल्यंशीलंबलंधनम् ॥ शौर्यंचचित्रभाष्यंचदशेमेस्वर्गयोनयः ५९ पापंकुर्वन्पापकीर्तिःपापमेवाश्नुतेफलम् ॥ पुण्यंकुर्वन्पुण्यकीर्तिःपुण्यमत्यंतमश्नुते ६० तस्मात्पापंनकुर्वीतपुरुषःशंसितव्रतः ॥ पापंप्रज्ञांनाशयतिक्रियमाणंपुनःपुनः ६१ नष्टप्रज्ञःपापमेवनित्यमारभतेनरः ॥ पुण्यंप्रज्ञांवर्धयतिक्रियमाणंपुनःपुनः ६२ वृद्धप्रज्ञःपुण्यमेवनित्यमारभतेनरः ॥ पुण्यंकुर्वन्पुण्यकीर्तिःपुण्यंस्थानंस्मगच्छति ॥ तस्मात्पुण्यंनिषेवेतपुरुषःसुसमाहितः ६३ असूयकोदंदशूकोनिष्ठुरोवैरकृच्छठः ॥ सकृच्छ्रंमहदाप्नोतिनचिरात्पापमाचरन् ६४ अनसूयुःकृतप्रज्ञःशोभनान्याचरन्सदा ॥ नकृच्छ्रंमहदाप्नोतिसर्वत्रचविरोचते ६५ प्रज्ञामेवागमयतियःप्राज्ञेभ्यःसपंडितः ॥ प्राज्ञोह्यवाप्यधर्मार्थौशक्नोतिसुखमेधितुम् ६६ दिवसेनैवतत्कुर्याद्येनरात्रौसुखंवसेत् ॥ अष्टमासेनतत्कुर्याद्येनवर्षाःसुखंवसेत् ६७ पूर्वेवयसितत्कुर्याद्येनवृद्धःसुखंवसेत् ॥ यावज्जीवेनतत्कुर्याद्येनप्रेत्यसुखंवसेत् ६८ जीर्णमन्नंप्रशंसंतिभार्यांचगतयौवनाम् ॥ शूरंविजितसंग्रामंगतपारंतपस्विनम् ६९ धनेनाधर्मलब्धेनयच्छिद्रमपिधीयते ॥ असंवृतंतद्भवतिततोऽन्यदवदीर्यते ७० गुरुरात्मवतांशास्ताशास्ताराजादुरात्मनाम् ॥ अथप्रच्छन्नपापानांशास्तावैवस्वतोयमः ७१ ऋषीणांचनदीनांचकुलानांचमहात्मनाम् ॥ प्रभवोनाधिगंतव्यःस्त्रीणांदुश्चरितस्यच ७२ द्विजातिपूजाभिरतोदाताज्ञातिषुचार्जवी ॥ क्षत्रियःशीलभाग्राजंश्चिरंपालयतेमहीम् ७३ सुवर्णपुष्पांपृथिवींचिन्वंतिपुरुषास्त्रयः ॥ शूरश्चकृतविद्यश्चयश्चजानातिसेवितुम् ७४ बुद्धिश्रेष्ठानिकर्माणिबाहुमध्यानिभारत ॥ तानिजंघाजघन्यानिभारप्रत्यवराणिच ७५ दुर्योधनेऽथशकुनौमूढेदुःशासनेतथा ॥ कर्णेचैश्वर्यमाधायकथंत्वंभूतिमिच्छसि ७६ सर्वैर्गुणैरुपेतास्तुपांडवाभरतर्षभ ॥ पितृवत्त्वयिवर्तंतेतेषुवर्तस्वपुत्रवत् ७७ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिप्रजागरपर्वणिविदुरहितवाक्येपंचत्रिंशोऽध्यायः ॥ ३५ ॥

॥ ७ ॥ विदुरउवाच ॥ अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ आत्रेयस्यचसंवादंसाध्यानांचेतिनःश्रुतम् १ चरंतंहंसरूपेणमहर्षिंसंशितव्रतम् ॥ साध्यादेवामहाप्राज्ञंपर्यपृच्छंतवैपुरा २

जइतिभावः ७४ बुद्धिरेवयेषांफलसिद्धौसाधनंतानिबुद्धिश्रेष्ठानिप्रशस्ततमानिकर्माणि । बाहुमध्यानि बाहुबलसाध्यानिमध्यानि । जंघेतिगोपनीयत्वंलक्ष्यते तेनकपटसाध्यानिजघन्यानिनीचानि । येषांसिद्धौस्वशिरसिभारःसंकटंपतति तानिनीचतराणि ७५ तत्रांत्यद्वयवंतोदुर्योधनादयइतिमत्वाप्राह दुर्योधनेइति ७६ । ७७ ॥ ॥ इति उद्योगपर्वणिनीलकंठीये भारतभावदीपे पंचत्रिंशोऽध्यायः ॥ ३५ ॥ ॥ ७ ॥ ॥ अत्रैवेति १ हंसरूपेणपरिव्राजकरूपेण २

अनुमातुंलिंगेनज्ञातुं काव्यांविद्वल्लक्षणाभिधायिनीम् मेमयासंश्रुतंगुरुभ्य इतिशेषः तदेवाह धृतिरिति धृतिः दुःखैरभिघातेऽपिअवैकल्यं । दमःसर्वेंद्रियजयः । सत्यधर्माः ब्रह्मप्रापकाध
र्माः धारणाध्यानसमाधयः तेषामनुवृत्तिरविच्छेदः । तैश्चग्रंथिंचिज्जडयोरात्मांतःकरणयोरेकलोलीभावंविनीय तयोःपृथक्करणेनशिथिलीकृत्य । प्रियाप्रियेसुखदुःखे । आत्मसमंआत्मसा
म्यंनयीतप्रापयेत् । प्रियाप्रियधर्मिणोंतःकरणस्यात्मन्यध्यस्तस्य स्वाधिष्ठानेप्रलयेसति तयोरपितत्रैवलयइत्यर्थः । यथारज्ज्वांरज्जुसर्पेलीनेसति भीषणत्वादयोऽपितत्रैवलीयंतेतद्वत् ४
नाक्रोशेत्नशपेत् यतस्तितिक्षतोमन्युःक्रोधएव आक्रोष्टारंदहाति ५ रुषतींरोषवतीं पाठांतरेउषतींदाहिकांवा ६ । ७ निर्ऋतिंअलक्ष्मींमृत्युंवा ८ बाणैःवाग्बाणैः दधातिपुष्णाति ९ स्वरु

॥ साध्याऊचुः ॥ साध्यादेवावयमेतेमहर्षेदृष्ट्वाभवंतंनशक्नुमोऽनुमातुम् ॥ श्रुतेनधीरोबुद्धिमांस्त्वंमतोनःकाव्यांवाचंवक्तुमर्हस्युदाराम् ३ ॥ हंसउवाच ॥
एतत्कार्यममराःसंश्रुतंमेधृतिःशमःसत्यधर्मानुवृत्तिः ॥ ग्रंथिंविनीयहृदयस्यसर्वंप्रियाप्रियेचात्मसमंनयीत ४ आक्रुश्यमानोनाक्रोशेन्मन्युरेवतितिक्षतः ॥ आक्रो
ष्टारंनिर्दहतिसुकृतंचास्यविंदति ५ नाक्रोशीस्यान्नावमानीपरस्यमित्रद्रोहीनोतनीचोपसेवी ॥ नचाभिमानीनचहीनवृत्तोरूक्षांवाचंरुषतींवर्जयीत ६ मर्माण्य
स्थीनिहृदयंतथासून्रूक्षावाचोनिर्दहंतीहपुंसाम् ॥ तस्माद्वाचमुषतींरूक्षरूपांधर्मारामोनित्यशोवर्जयीत ७ अरुंतुदंपुरुषंरूक्षवाचंवाक्कंटकैर्वितुदंतंमनुष्यान् ॥
विद्यादलक्ष्मीकतमंजनानांमुखेनिबद्धांनिर्ऋतिंवैवहंतम् ८ परश्चेदेनमभिविद्धचेतबाणैर्भृशंसुतीक्ष्णैरनलार्कदीप्तैः ॥ सविद्ध्यमानोऽप्यतिदह्यमानोविद्यात्कविः
सुकृतंमेदधाति ९ यदिसंतंसेवयतियद्यसंतंतपस्विनंयदिवास्तेनमेव ॥ वासोयथारंगवशंप्रयातितथासतेषांवशमभ्युपैति १० अतिवादंनप्रवदेन्नवादयेद्योऽ
नाहतःप्रतिहन्यान्नघातयेत् ॥ हंतुंचयोनेच्छतिपापकंवैतस्मैदेवाःस्पृहयंत्यागताय ११ अव्याहृतंव्याहृताच्छ्रेयआहुःसत्यंवदेद्व्याहृतंतद्द्वितीयम् ॥ प्रियंव
देद्व्याहृतंततृतीयंधर्म्यंवदेद्व्याहृतंतच्चतुर्थम् १२ यादृशैःसन्निविशतेयादृशांश्चोपसेवते ॥ यादृगिच्छेच्चभवितुंतादृग्भवतिपूरुषः १३ यतोयतोनिवर्ततेततस्त
तोविमुच्यते ॥ निवर्तनाद्धिसर्वतोनवेत्तिदुःखमण्वपि १४ नजीयतेचानुजिगीषतेऽन्यान्नवैरकृच्चाप्रतिघातकश्च ॥ निंदाप्रशंसासुसमस्वभावोनशोचतेहृष्य
तिनैवचायम् १५ भावमिच्छतिसर्वस्यनाभावेकुरुतेमनः ॥ सत्यवादीमृदुर्दांतोयःसउत्तमपूरुषः १६ नानर्थकंसांत्वयतिप्रतिज्ञायददातिच ॥ रंध्रंपरस्यजा
नातियःसमध्यमपूरुषः १७

त्रारूक्षवाचस्त्वमपितत्संगात्तादृशोभविष्यसीत्याह यदीति
रंगस्यनीलादेर्वशंनीलताम् १० अतिप्रोक्तोऽपिनवदेत् वादयेद्वा । अनाहतोनैवप्रतिहन्यात् आहतोऽपिपापकंहंतारंयादिहंतुंनेच्छेत् सदेवानामपिश्रेष्ठोभवतीत्यर्थः ११ अव्याहृतं
मौनं ततोपिश्रेयःसत्यवचनं सत्यमपिप्रियंचेत्ततोऽपिश्रेयः तदपिधर्मादनपेतंचेत्श्रेष्ठतममित्यर्थः १२ तस्मात्सत्संगएवत्वयाऽपिकर्तव्यइत्याशयेनाह यादृशैरिति १३ यतोयतइति
यथास्वप्नेबाह्याद्विषयान्निवृत्तस्तज्जेनदुःखेनमुच्यते । एवंजाग्रतिस्वाप्नविषयजेन सुषुप्तौसमाधौचसर्वतोनिवृत्तो दुःखलेशमपिनभजतेऽतोनिवृत्तिरेवत्वयाकार्येतिभावः १४ अ
स्यामवस्थायांपुरुषस्यनकिंचिद्दुःखादिकमस्तीत्याह नजीयतेचेति । नानुजिगीषतेइतिपाठे नापुरुषः १५ भावंकल्याणं अभावेअकल्याणे १६ अनर्थकं मिथ्यानसांत्वयति १७

उपहतोगदयाघोषयात्रायांगंधर्वैस्ताडितः । अभिशस्तःअभितःशस्त्रैर्विदीर्णः । मन्युवशात्क्रोधवशात् नावर्तते नकुर्वति यतःकृतघ्नःपांडवैस्तदामोचितोऽपितदुपकारंहंत्येव एताःकलाः चित्तस्यवृत्तयःअधमस्यैव १८ अधमलक्षणमाह नेति परेभ्यःगुरुभ्यः आत्मन्येवशंकितः विश्वासहीनः १९ । २० । २१ महाकुलेभ्यइतिस्पृहेरीप्सितइतिकर्मणिचतुर्थी २२ तपःकृच्छ्रचांद्रायणादि दमःइंद्रियजयः । ब्रह्मवित्तंब्राह्मणस्यधनं वेदाध्ययनंवेदाध्यापनंच । वितानाःयज्ञकर्माणि सम्यग्वृत्ताश्चये तानि । क्लीबत्वंविधेयापेक्षया । महाकुलानिविद्धि २३ नव्यथतेनचलति

दुःशासनस्तूपहतोऽभिशस्तोनावर्ततेमन्युवशात्कृतघ्नः ॥ नकस्यचिन्मित्रमथोदुरात्माकलाश्चैताअधमस्येहपुंसः १८ नश्रद्दधातिकल्याणंपरेभ्योऽप्यात्मशंकितः ॥ निराकरोतिमित्राणियोवैसोऽधमपूरुषः १९ उत्तमानेवसेवेतप्राप्तकालेतुमध्यमान् ॥ अधमांस्तुनसेवेतयइच्छेद्भूतिमात्मनः २० प्राप्नोतिवैवित्तमसद्बलेननित्योत्थानात्प्रज्ञयापौरुषेण ॥ नत्वेवसम्यग्लभतेप्रशंसांनवृत्तमाप्नोतिमहाकुलानाम् २१ ॥ धृतराष्ट्रउवाच ॥ महाकुलेभ्यःस्पृहयंतिदेवाधर्मार्थनित्याश्चबहुश्रुताश्च ॥ पृच्छामित्वांविदुरप्रश्नमेतंभवंतिवैकानिमहाकुलानि २२ ॥ विदुरउवाच ॥ तपोदमोब्रह्मवित्तंवितानाःपुण्याविवाहाःसततान्नदानम् ॥ येष्वेवैतेसप्तगुणावसंतिसम्यग्वृत्तास्तानिमहाकुलानि २३ येषांनवृत्तंव्यथतेनयोनिश्चित्तप्रसादेनचरंतिधर्मम् ॥ येकीर्तिमिच्छंतिकुलेविशिष्टांत्यक्तानृतास्तानिमहाकुलानि २४ अनिज्ययाकुविवाहैर्वेदस्योत्सादनेनच ॥ कुलान्यकुलतांयांतिधर्मस्यातिक्रमेणच २५ देवद्रव्यविनाशेनब्रह्मस्वहरणेनच ॥ कुलान्यकुलतांयांतिब्राह्मणातिक्रमेणच २६ ब्राह्मणानांपरिभवात्परिवादाच्चभारत ॥ कुलान्यकुलतांयांतिन्यासापहरणेनच २७ कुलानिसमुपेतानिगोभिःपुरुषतोऽर्थतः ॥ कुलसंख्यांनगच्छंतियानिहीनानिवृत्ततः २८ वृत्ततस्त्वविहीनानिकुलान्यल्पधनान्यपि ॥ कुलसंख्यांचगच्छंतिकर्षंतिचमहद्यशः २९ वृत्तंयत्नेनसंरक्षेद्वित्तमेतिचयातिच ॥ अक्षीणोवित्ततःक्षीणोवृत्ततस्तुहतोहतः ३० गोभिःपशुभिरश्वैश्चकृष्याचसुसमृद्धया ॥ कुलानिनप्ररोहंतियानिहीनानिवृत्ततः ३१ मानःकुलेवैरकृत्कश्चिदस्तुराजाऽमात्योमापरस्वापहारी ॥ मित्रद्रोहीनैकृतिकोऽनृतीवापूर्वाशीवापितृदेवातिथिभ्यः ३२ यश्चनोब्राह्मणान्हन्याद्यश्चनोब्राह्मणान्द्विषेत् ॥ ननःससमितिंगच्छेद्यश्चनोनिर्वपेत्कृषिम् ३३ तृणानिभूमिरुदकंवाक्चतुर्थीचसूनृता ॥ सतामेतानिगेहेषुनोच्छिद्यंतेकदाचन ३४ श्रद्धयापरयाराजन्नुपनीतानिसत्कृतिम् ॥ प्रवृत्तानिमहाप्राज्ञधर्मिणांपुण्यकर्मिणाम् ३५ सूक्ष्मोऽपिभारंनृपतेस्यंदनोवैशक्तोवोढुंनतथाऽन्येमहीजाः ॥ एवंयुक्ताभारसहाभवंतिमहाकुलीनानतथाऽन्येमनुष्याः३६

नयोनिः पित्रादयोऽपियेषांदोषेणनव्यथंते किंतुगुणैरेवतुष्यंति २४ । २५ । २६ परिभवात्ताडनात् परिवादात्निंदातः २७ गोभिर्वाग्भिर्विद्याभिरित्यर्थः पुरुषतःसत्पुरुषैः अर्थतःधनैश्च कुलानिकुलसंख्यां कुलेषुगणनांसमुपेतानिभवंति २८ वृत्ततःधर्मेणकर्षंतिआहरंति २९ । ३० गोभिर्विद्याभिः ३१ नैकृतिकः कपटी । वैरकृदादयः कुलघ्नाइत्यर्थः ३२ प्रसंगाद्वृत्तलक्षणमाह यश्चेति नइतिअस्मच्छब्दस्यादेशचतुष्टयंननःसइतिपाठे । नतस्येतिपाठेतुत्रयमेव निर्वपेत्कुर्यात् । पितृनितिपाठे नोनिषेधार्थः ३३ नोच्छिद्यंते किंत्वतिथीनुपगच्छंत्येव ३४ सत्कृतिंसत्कारंकर्तुंप्रवृत्तानितृणादीनि ३५ युक्ताःस्यंदनवदाविकलाः ३६

प्रकृतमाह नतदिति तवतुशंकाकुलस्य मध्यपिमित्रत्वबुद्धिर्नास्तीतिभावः । संगतानिसंबंधमात्राणि ३७ मूर्खस्यतुदुर्योधनादेः कुलशीलादिभिरसंबद्धोऽपिकर्णादिर्मित्रभावेनास्तीत्याशये
नाह यइति बंधुःसंबंधी मित्रंउपकारकृत ३८ पारिप्लवमतेः चलबुद्धेः ३९ समभिवर्ततेसम्यगभितएववर्ततेनतुस्पृशंति । समतिवर्ततइत्यपिपठंति ४० अभ्रंमेघः ४१ मित्राणांहितायेति
शेषः ४२ अनर्थयन्प्रार्थनाशून्यः लुब्धस्तुमित्राणांसारफल्गुत्वेनजानातीत्यतःसकार्यार्थीवणिक्तुल्योनतुमित्रम् ४३ संतापात्इष्टवियोगात्शोकात् ४४ अनवाप्यंनप्राप्यं शोकेनशोकमा
त्रेणइष्टमितिशेषः ४५ दुःखादेरागमापायित्वादपिनशोकादिकंकर्तव्यमित्याह पुनरिति ४६ सर्वंपुरुषमात्रं ४७ षड्मनसासह श्रोत्रादीनिपंचस्रवते स्वार्थाद्भ्रश्यति ततोविषयसेवनात

नतन्मित्रंयस्यकोपाद्बिभेतियद्वामित्रंशंकितेनोपचर्यम् ॥ यस्मिन्मित्रेपितरीवाश्वसीततद्वैमित्रंसंगतानीतराणि ३७ यःकश्चिदप्यसंबद्धोमित्रभावेनवर्तते ॥
सएवबंधुस्तन्मित्रंसागतिस्तत्परायणम् ३८ चलचित्तस्यवैपुंसोवृद्धाननुपसेवतः ॥ पारिप्लवमतेर्नित्यमध्रुवोमित्रसंग्रहः ३९ चलचित्तमनात्मानमिंद्रियाणां
वशानुगम् ॥ अर्थाःसमभिवर्तंतेहंसाःशुष्कंसरोयथा ४० अकस्मादेवकुप्यंतिप्रसीदंत्यनिमित्ततः ॥ शीलमेतदसाधूनामभ्रंपारिप्लवंयथा ४१ सत्कृताश्चकृतार्था
श्चमित्राणांनभवंतिये ॥ तान्मृतानपिक्रव्यादाःकृतघ्नान्नोपभुंजते ४२ अर्चयेदेवमित्राणिसतिवाऽसतिवाधने ॥ नानर्थयन्प्रजानातिमित्राणांसारफल्गुताम्
४३ संतापाद्भ्रश्यतेरूपंसंतापाद्भ्रश्यतेबलम् ॥ संतापाद्भ्रश्यतेज्ञानंसंतापाद्व्याधिमृच्छति ४४ अनवाप्यंचशोकेनशरीरंचोपतप्यते ॥ अमित्राश्चप्रहृष्यं
तिमास्मशोकेमनःकृथाः ४५ पुनर्नरोम्रियतेजायतेचपुनर्नरोहीयतेवर्द्धतेच ॥ पुनर्नरोयाचतियाच्यतेचपुनर्नरःशोचतिशोच्यतेच ४६ सुखंचदुःखंचभवा
भवौचलाभालाभौमरणंजीवितंच ॥ पर्यायशःसर्वमेतेस्पृशंतितस्माद्धीरोनचहृष्येन्नशोचेत् ४७ चलानिहीमानिषडिंद्रियाणितेषांयद्यद्वर्द्धतेयत्रयत्र ॥ तत
स्ततःस्रवतेबुद्धिरस्यच्छिद्रोदकुंभादिवनित्यमंभः ४८ ॥ धृतराष्ट्रउवाच ॥ तनुरुद्धःशिखीराजामिथ्योपचरितोमया ॥ मंदानांममपुत्राणांयुद्धेनांतंकरिष्यति
४९ नित्योद्विग्नमिदंसर्वंनित्योद्विग्नमिदंमनः ॥ यत्तत्पदमनुद्विग्नंतन्मेवदमहामते ५० ॥ विदुरउवाच ॥ नान्यत्रविद्यातपसोर्नान्यत्रेंद्रियनिग्रहात् ॥ नान्यत्र
लोभसंत्यागाच्छांतिंपश्यामितेऽनघ ५१ बुद्ध्याभयंप्रणुदातितपसाविंदतेमहत् ॥ गुरुशुश्रूषयाज्ञानंशांतिंयोगेनविंदति ५२ अनाश्रितादानपुण्यंवेदपुण्यम
नाश्रिताः ॥ रागद्वेषविनिर्मुक्ताविचरंतीहमोक्षिणः ५३ स्वधीतस्यसुयुद्धस्यसुकृतस्यचकर्मणः ॥ तपसश्चसुतप्तस्यतस्यांतेसुखमेधते ५४

४८ तनुःशरीरमभिव्यक्तिस्थानंकाष्ठं तत्ररुद्धोऽनभिव्यक्तःशिखीअग्निस्तथाऽयंराजाधर्मेणरुद्धः तनुनासूक्ष्मेणधर्मेणवारुद्धः ४९ उद्विग्नंभीतंचलितंच अनुद्विग्नमभयमचलंच पदंपदनीयं
प्राप्यंब्रह्म ५० तत्प्राप्तिसाधनान्येवाह नान्यत्रेति विद्याऽध्ययनजा तपःस्वधर्माचरणं त्वंतुलोभी तत्पदंप्राप्तुमनर्हइतिभावः । शांतिंकल्याणं ५१ बुद्ध्याआत्मज्ञानेन भयंसंसारंविंदतेमह
त्सद्गुरुशास्त्रादिकंलभते । ततोगुरुशुश्रूषयाज्ञानंग्रंथजं । योगेनसर्वचित्तवृत्तिनिरोधेनशांतिं ५२ शांतिप्राप्तौसर्वंतुच्छमित्याह अनाश्रिताइति दानजंपुण्यंतत्फलंस्वर्गादीत्यर्थः अ
नाश्रिताःनाश्रयंतेतुच्छत्वात्तस्य ५३ तस्यांतेस्वधीतादीनांकर्मणामंतेनाशे सुखंपरमानंदंविंदते । जगत्कारणदर्शनादेवसकलकर्मनाशेसति अकारणंशुद्धंप्राप्नोतीत्यर्थः । 'क्षीयंते
चास्यकर्माणितस्मिन्दृष्टेपरावरे' । परोहिरण्यगर्भोऽवरोनीचोयस्मात्कारणात्तस्मिन्दृष्टेसति ५४

तदन्यद्दुःखरूपमेवेत्याह स्वास्तीर्णानीति भिन्नाःभेददृष्टिमंतः। 'द्वितीयाद्वैभवति' इतिश्रुतेरद्वैततत्त्वात्प्रच्युताइत्यर्थः। पक्षेभिन्नाःज्ञातिभेदवंतः ५५ प्रशमंअक्रोधं ५६ योगःअलब्धलाभः क्षेमंलब्धपरिपालनं तदुभयंनकल्पतेनयुज्यते ५७ तदेवाह संपन्नमिति संपन्नंक्षीरादिसंपत्तिः ५८ तंतवःकुलतंतवः पांडवाःआप्यायिताःत्वयैवसंवर्द्धिताः पूर्वरूपमार्षं तनवःसूक्ष्माःबालाइत्यर्थः बहुलाःसमाःबहून्संवत्सरान्। बहुत्वातबंधूनामन्येषांचऋषीणांबहुत्वात् वनेआयासान्सहंतिअतःसतांउपमाभवंति पांडवाइवसंतइतिलोकेवदंति। अतःसत्तमाःपांडवास्त्वयानवंचनीयाइतिभावः ५९ अन्येतुज्ञातयांनपांडवतुल्याइत्याह धूमायंतेइति व्यपेतानिपृथग्भूतानि ६० ब्राह्मणादिसाहचर्यात्ज्ञातयोऽप्यत्रायुद्धार्थिनएवग्राह्याः तादृशांश्चपांडवान्राजिघांसंतःपतिष्यंत्येवेत्यर्थः ६१

स्वास्तीर्णानिशयनानिप्रपन्नानवैभिन्नाजातुनिद्रांलभंते ॥ नस्त्रीषुराजन्रतिमाप्नुवंतिनमागधैःस्तूयमानानसूतैः ५५ नवैभिन्नाजातुचरंतिधर्मंनवैसुखंप्राप्नुवंतीहभिन्नाः ॥ नवैभिन्नागौरवंप्राप्नुवंतिनवैभिन्नाःप्रशमंरोचयंति ५६ नवैतेषांस्वदतेपथ्यमुक्तंयोगक्षेमंकल्पतेनैवतेषाम् ॥ भिन्नानांवैमनुजेंद्रपरायणंनविद्यतेकिंचिदन्याद्विनाशात् ५७ संपन्नंगोषुसंभाव्यंसंभाव्यंब्राह्मणेतपः ॥ संभाव्यंचापलंस्त्रीषुसंभाव्यंज्ञातितोभयम् ५८ तंतवोऽप्यायितानित्यंतनवोबहुलाःसमाः ॥ बहून्बहुत्वादायासान्सहंतीत्युपमासताम् ५९ धूमायंतेव्यपेतानिज्वलंतिसहितानिच ॥ धृतराष्ट्रोल्मुकानीवज्ञातयोभरतर्षभ ६० ब्राह्मणेषुचयेशूराःस्त्रीषुज्ञातिषुगोषुच ॥ वृंतादिवफलंपक्वंधृतराष्ट्रपतंतिते ६१ महानप्येकजोवृक्षोबलवान्सुप्रतिष्ठितः ॥ प्रसह्यएववातेनसस्कंधोमर्दितुंक्षणात् ६२ अथयेसहितावृक्षाःसंघशःसुप्रतिष्ठिताः ॥ तेहिशीघ्रतमान्वातान्सहंतेन्योन्यसंश्रयात् ६३ एवंमनुष्यमप्येकंगुणैरपिसमन्वितम् ॥ शक्यंद्विषंतोमन्यंतेवायुर्द्रुममिवैकजम् ६४ अन्योन्यसमुपष्टंभादन्योन्यापाश्रयेणच ॥ ज्ञातयःसंप्रवर्द्धंतेसरसीवोत्पलान्युत ६५ अवध्याब्राह्मणागावोज्ञातयःशिशवःस्त्रियः ॥ येषांचान्नानिभुंजीतयेचस्युःशरणागताः ६६ नमनुष्येगुणःकश्चिद्राजन्सधनतामृते ॥ अनातुरत्वाद्भद्रंतेमृतकल्पाहिरोगिणः ६७ अव्याधिजंकटुकंशीर्षरोगिपापानुबंधंपरुषंतीक्ष्णमुष्णम् ॥ सतांपेयंयन्नपिबंत्यसंतोमन्युंमहाराजपिबप्रशाम्य ६८ रोगार्दितानफलान्याद्रियंतेनवैलभंतेविषयेषुतत्त्वम् ॥ दुःखोपेतारोगिणोनित्यमेवनबुध्यंतेधनभोगान्नसौख्यम् ६९ पुराह्युक्तंनाकरोस्त्वंवचोमेद्यूतेजितांद्रौपदींप्रेक्ष्यराजन् ॥ दुर्योधनंवारयेत्यक्षवत्यांकितवत्वंपंडितावर्जयंति ७० नतद्बलंयन्मृदुनाविरुध्यतेसूक्ष्मोधर्मस्तरसासेवितव्यः ॥ प्रध्वंसिनीक्रूरसमाहिताश्रीर्मृदुप्रौढागच्छतिपुत्रपौत्रान् ७१

एकजःएकाकी प्रसह्यःशक्यः ६२। ६३। ६४। ६५। ६६ सधनतांऋतेविनाअनातुरत्वात्ऋतेच भद्रंतेऽस्त्वितीत्याशीर्वचनमाप्तत्वसूचनार्थं ६७ धनवाननातुरश्चत्वंगुणीसन्शमंप्राप्नुहीत्याह अव्याधिजमितिकटुकंअरोचकं। परुषंरूक्षं। तीक्ष्णंछेदकं उष्णंदुःसहस्पर्शं। पेयंगिलनीयं। मन्युंदैन्यं। 'मन्युर्दैन्येक्रतौक्रुधि' इतिकोशात् प्रशाम्यशांतिक्षमांप्राप्नुहि ६८ संतापाद्व्याधिमृच्छतीत्युक्तमतस्तौद्वावपिनिंदति फलानिपुत्रपश्वादीनि। तत्त्वमिष्टानिष्टविवेकं पित्तोपहतरसनत्वात् एवंसर्वत्र भोगःहृद्यादिसंगः धनादिजंसुखंलब्धमपिनबुध्यंते। अतःसंतापंजागरादिद्वारारोगोत्पादकंत्यजेत्यर्थः ६९ कितवत्वंद्यूतप्रियत्वं ७० मृदुनासहिष्णुना धर्मःदायविभागः क्रूरेत्वत्पुत्रेसमाहिता मृदुनायुधिष्ठिरेणप्रौढासती ७१

मेढीभूतःस्वयंनिर्व्यापारोऽपि १रितःसंचरमाणानांबलीवर्दानामिवपुत्राणांयथेष्टप्रचारानिरोधकः ७३ अंतरंभेदं स्थापययुद्धान्निवर्त्तयस्व ७४ ॥ इतिश्रीउद्योगपर्वणिनीलकंठीयेभारतभावदी
पेषट्त्रिंशोऽध्यायः ॥ ३६ ॥ ७ ॥ सप्तदशेति १ दानूनांमेघानांसमूहोदानवंतास्मिन् । सुपांसुलुगितिसप्तम्यालुक्डादेशोवा । इंद्रस्यधनुःत्रषांसुदृश्यमानंअनाम्यं धूमज्योतिषोःसन्निपातरूप
त्वात्नामयितुमयोग्यं नमतःनामयतः मरीचिनःमरीचिमतःसूर्यचंद्रादेः । व्रीह्यादित्वान्मत्वर्थीयइनिः । पादान्रश्मीन् । आकाशहननादिकमकार्यंकुर्वतोऽतिमूढानित्यर्थः २ अ
शिष्यंशासनानर्हंदुर्योधनादिंयःशास्ति । तुष्येत् अल्पलाभेनेतिशेषः । द्विषंतंभजतेस्वकार्यार्थमितिशेषः । कार्यमेवाहभद्रमश्नुतइति शत्रुसेवयास्त्रीरक्षयाचयोभद्रमश्नुतेतौद्वौमूर्खावित्यर्थः ।
यःकत्थतेकिंचित्कृत्वाश्लाघतेसःषष्ठोमूर्खः ३ अभिजातःकुलीनः ४ श्वशुरःसन्योवध्वापुत्रभार्ययासह अवहासंपरिहासं तत्पित्रादिभिरिवमन्यते सएकादशः । वध्वास्नुषयाभूतयाअव

धार्तराष्ट्राःपांडवान्पालयंतुपांडोःसुतास्तवपुत्रांश्चपांतु ॥ एकारिमित्राःकुरवोह्येककार्याजीवंतुराजन्सुखिनःसमृद्धाः ७२ मेढीभूतःकौरवाणांत्वमद्यत्वय्याधी
नंकुरुकुलमाजमीढ ॥ पार्थान्बालान्वनवासप्रतप्तान्गोपायस्वस्वंयशस्तातरक्षन् ७३ संधत्स्वत्वंकौरवपांडुपुत्रैर्मातेंऽतरंरिपवःप्रार्थयंतु ॥ सत्येस्थितास्तेन
रदेवसर्वेदुर्योधनंस्थापयत्वंनरेंद्र ७४ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिप्रजागरपर्वणिविदुरहितवाक्येषट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥ विदुरउवाच ॥ सप्तद
शेमान्राजेंद्रमनुःस्वायंभुवोऽब्रवीत् ॥ वैचित्रवीर्यपुरुषानाकाशंमुष्टिभिर्घ्नतः १ दानवेंद्रस्यचधनुरनाम्यंनमतोऽब्रवीत् ॥ अथोमरीचिनःपादानग्राह्यान्गृह्णत
स्तथा २ यश्चाशिष्यंशास्तिवैयश्चतुष्येद्यश्चातिवेलंभजतेद्विषंतम् ॥ स्त्रियश्चयोरक्षतिभद्रमश्नुतेयश्चायाच्यंयाचतेकत्थतेवा ३ यश्चाभिजातःप्रकरोत्यका
र्यंयश्चाबलोबलिनानित्यवैरी ॥ अश्रद्दधानायचयोऽब्रवीतियश्चाकाम्यंकामयतेनरेंद्र ४ वध्वाऽवहासंश्वशुरोमन्यतेयोवध्वाऽवसन्नभयोमानकामः ॥ परक्षेत्रे
निर्वपतियश्चबीजंस्त्रियंचयःपरिवदतेऽतिवेलम् ५ यश्चापिलब्ध्वानस्मरामीतिवादीदत्वाचयःकत्थतियाच्यमानः ॥ यश्चासतःसत्त्वमुपानयीतएतान्नयंति
निरयंपाशहस्ताः ६ यस्मिन्यथावर्ततेयोमनुष्यस्तस्मिंस्तथावर्तितव्यंसधर्मः ॥ मायाचारोमाययावर्तितव्यःसाध्वाचारःसाधुनाप्रत्युपेयः ७ जरारूपंहर
तिहिधैर्यमाशामृत्युःप्राणान्धर्मचर्यामसूया ॥ कामोह्रियंवृत्तमनार्यसेवाक्रोधःश्रियंसर्वमेवाभिमानः ८ ॥ धृतराष्ट्रउवाच ॥ शतायुरुक्तःपुरुषःसर्ववेदेषुवैयदा ॥
नाप्नोत्यथचतत्सर्वमायुःकेनेहहेतुना ९ ॥ विदुरउवाच ॥ अतिमानोऽतिवादश्चतथाऽत्यागोनराधिप ॥ क्रोधश्चात्मविधित्साचमित्रद्रोहश्चतानिषट् १०

सन्नभयोनष्टभयः वधूपित्रादिभिरापादित्रातोऽपितत्रैवमानंकामयतेयःसद्वादशोःमूर्खः । अन्येतुवध्वासहरातिंकुर्वन्नापिअभयोमानकामश्चेतिव्याचख्युः तद्विगीतत्वादुपेक्ष्यं परक्षेत्रइत्यनेनसं
गृहीतंच ५ दत्वातीर्थेवाचादानंकृत्वा गृहेयाचकेनयाच्यमानःसन्कत्थते दानमकृत्वैवश्लाघते । असतोदुष्टस्यसत्त्वंसाधुत्वंअसतःमृषार्थस्यसत्त्वंसत्यत्वंवाउपानयीतसमर्थयतेससप्तदशोमूर्खः
६ यस्मिन्निति साधुषुपांडवेषुत्वयाऽपिसाधुनाभवितव्यंइत्याशयः ७ जरेति अभिमानंत्यजेतिभावः ८ अभिमानःसर्वहरइत्युक्तेऽभिमानवतांमत्पुत्राणांयदिस्वल्पमेवायुरस्तितर्हित्यक्तेऽप्य
भिमानेनजीविष्यंति यदिबहुतर्हिसत्यपितस्मिन्नमरिष्यंतीत्याशयेनाह शतायुरिति ९ अत्यागःउत्कृष्टोऽपराधश्चौर्यादिर्गरदानादिर्वा अत्याशयइतिपाठेबहुभोजित्वं । आत्मविधित्से
तिपोषणार्थस्यधात्रःसनिरूपं । आत्मपोषणेच्छा शिश्नोदरपरायणतेत्यर्थः १०

असयःखड्गाः भद्रमस्तुतेएतेषांषण्णांत्यागेनतवपुत्राःशतायुषोभवंत्वित्यर्थः ११ वृषलीशूद्रा द्विजस्त्रैवर्णिकः पानपःमद्यपः १२ आदेशकृत्ग्रामणीः प्रेषकःद्विजान्दास्येनियोजयन् समेत्य संसृज्य यदित्वत्पुत्राअतिमानादीन्नत्यजंतितर्हितेषांपांडवद्वात्तिहंतॄणांसंगस्त्वयानकार्यइतिभावः १३ गृहीतवाक्यःविद्यावान् । नयवित्नीतिज्ञः । वदान्योदाता । गृहीतवाग्योऽनपविद्धवा क्यइतिपाठे मितभाषी अनिरस्तगुरुवचनः १४ ।१५। १६ । १७। १८। १९ इदंद्यूतंनयुक्तमितित्वचनंमयाउक्तमितिसंबंधः २० । २१ भक्तस्यसेवांकुर्वतः २२ अपूर्वंपरकीयं स्निग्धाहिस्नेह

एतएवासयस्तीक्ष्णाःकृंतंत्यायूंषिदेहिनाम् ॥ एतानिमानवान्घ्नंतिनमृत्युर्भद्रमस्तुते ११ विश्वस्तस्यैतियोदारान्यश्चापिगुरुतल्पगः ॥ वृषलीपतिर्द्विजो यश्चपानपश्चैवभारत १२ आदेशकृद्वृत्तिहंताद्विजानांप्रेषकश्चयः ॥ शरणागतहाचैवसर्वेब्रह्महणःसमाः ॥ एतैःसमेत्यकर्तव्यंप्रायश्चित्तमितिश्रुतिः १३ गृहीत वाक्योनयविद्वदान्यःशेषान्नभोक्ताह्यविहिंसकश्च ॥ नानर्थकृत्याकुलितःकृतज्ञःसत्योमृदुःस्वर्गमुपैतिविद्वान् १४ सुलभाःपुरुषाराजन्सततंप्रियवादिनः ॥ अ प्रियस्यतुपथ्यस्यवक्ताश्रोताचदुर्लभः १५ योहिधर्मंसमाश्रित्यहित्वाभर्तुःप्रियाप्रिये ॥ अप्रियाण्याहपथ्यानितेनराजासहायवान् १६ त्यजेत्कुलार्थेपुरुषंग्राम स्यार्थेकुलंत्यजेत् ॥ ग्रामंजनपदस्यार्थेआत्मार्थेपृथिवींत्यजेत् १७ आपदर्थेधनंरक्षेद्दारान्रक्षेद्धनैरपि ॥ आत्मानंसततंरक्षेद्दारैरपिधनैरपि १८ द्यूतमेतत्पु राकल्पेदृष्टंवैरकरंनृणाम् ॥ तस्माद्द्यूतंनसेवेतहास्यार्थमपिबुद्धिमान् १९ उक्तंमयाद्यूतकालेऽपिराजन्नेदंयुक्तंवचनंप्रातिपेय ॥ तदौषधंपथ्यमिवातुरस्यनरो चतेतववैचित्रवीर्य २० काकैरिमांश्चित्रबर्हान्मयूरान्पराजयेथाःपांडवान्धार्तराष्ट्रैः ॥ हित्वासिंहान्क्रोष्टुकान्गूहमानःप्राप्तेकालेशोचितात्वंनरेंद्र २१ यस्तात नक्रुध्यतिसर्वकालंभृत्यस्यभक्तस्यहितेरतस्य ॥ तस्मिन्भृत्याभर्तरिविश्वसंतिनचैनमापत्सुपरित्यजंति २२ नभृत्यानांवृत्तिसंरोधनेनराज्यंधनंसंजिघृक्षेद पूर्वम् ॥ त्यजंतिह्येनंवंचितावैविरुद्धाःस्निग्धाह्यमात्याःपरिहीनभोगाः २३ कृत्यानिपूर्वंपरिसंख्यायसर्वाण्यायव्ययेचानुरूपांचवृत्तिम् ॥ संगृह्णीयादनुरूपा न्सहायान्सहायसाध्यानिहिदुष्कराणि २४ अभिप्रायंयोविदित्वातुभर्तुःसर्वाणिकार्याणिकरोत्यतंद्री ॥ वक्ताहितानामनुरक्तआर्यःशक्तिज्ञआत्मेवहिसोऽनुकंप्यः २५ वाक्यंतुयोनाद्रियतेऽनुशिष्टःप्रत्याहयश्चापिनियुज्यमानः ॥ प्रज्ञाभिमानीप्रतिकूलवादीत्याज्यःसताहक्त्वरयैवभृत्यः २६ अस्तब्धमक्लीबमदीर्घ सूत्रंसानुक्रोशंश्लक्ष्णमहार्यमन्यैः ॥ अरोगजातीयमुदारवाक्यंदूतंवदंत्यष्टगुणोपपन्नम् २७ नविश्वासाज्जातुपरस्यगेहेगच्छेन्नरश्चेतयानोविकाले ॥ नचत्वरे निशितिष्ठेन्निगूढोन राजकाम्यांयोषितंप्रार्थयीत २८

वंतोऽपि २३ कृत्यानिपरिसंख्याय साध्यासाध्यनिश्चयंकृत्वा तथावृत्तिंभृत्यजीविकांआयव्ययानुरूपांकृत्वेत्यर्थः दुष्कराणिपरराष्ट्रग्रहणादीनि २४ अनुकंप्योमादृशोवचनस्वीकारेणानुग्रा ह्यइतिप्रार्थयते २५ प्रत्याह प्रत्याख्यानंकरोति प्रतिकूलंआज्ञाविरुद्धंवदतीतिप्रतिकूलवादी २६ अस्तब्धंदर्पशून्यं । अक्लीबंसामर्थ्यवंतं । अदीर्घसूत्रंक्षिप्रकारिणं । सानुक्रोशंसदयं । श्लक्ष्णं मंजुलं । अहार्यंअभेद्यं । अरोगजातीयंरोगलेशशून्यं । उदारंयुक्तियुक्तं महार्थंचवाक्यंयस्यतं दूतंप्रेष्यं २७ विकालेसायंकाले परस्यअविश्वस्तस्यगेहेनगच्छेत् । प्रार्थयीतभोक्तुमितिशेषः २८

संसृष्टः बहुकर्तृकत्वेनमिश्रोमंत्रोयस्यत्वादृशस्यकर्णादिसहायवतोराज्ञो निन्हवंमंत्रस्यअपहारं नगच्छेत् मादृशःतंमंत्रंनदूषयेत् । तैःसर्वैःसहविरोधापत्तेरितिभावः । त्वयिबहूनांशास्येअहं नाश्वसिमीतिनब्रूयात् किंतुममकिंचित्कार्यमस्तीतितथाव्यपदेशंव्याजंकृत्वा तादृशान्मंत्रादपसरेदेवेत्यर्थः २९ घृणीलज्जावान् सहियथोक्तंदंडंअधमर्णेषुपातयितुंनशक्तः क्रूरोऽयमिति लोकापवादभयात् । उद्धृतभूतिः दूरीकृताधिकारः एतेव्यवहारेधनदानादौवर्जनीयाः द्रव्यनाशभयात् एतेभ्योनग्राह्यंच । अधमर्णोघृणीलज्जावांश्चेददतिनिर्बंधेनयाच्यमानःप्राणानेवज ह्यात् एवमन्यत्राप्यूह्यं । त्वमपिनाशभयात्पुत्रायराज्यंमादेहीतिभावः ३० । ३१ । ३२ स्वरोध्वनिः तस्यप्रशुद्धिःमंजुलता । वर्णाःकादयः तेषांप्रशुद्धिर्यथास्थानकरणं विस्पष्टमुच्चारणं । स्पर्शः मृदुता । सौकुमार्यंलावण्यम् ३३ मितभुक्तंमितभोजिनं आद्यूनो बहुभोजीतिक्षिपंतिविनिंदंति ३४ अनिष्टवेषं क्षपणकादिवेषधरम् ३५ कदर्यंअदातारं । आक्रोशकं गालयितारं ।

नानिन्हवंमंत्रगतस्यगच्छेत्संसृष्टमंत्रस्यकुसंगतस्य ॥ नचब्रूयान्नाश्वसिमित्वयीतिसकारणंव्यपदेशंतुकुर्यात् २९ घृणीराजापुंश्चलीराजभृत्यःपुत्रोभ्राताविधवा बालपुत्रा ॥ सेनाजीवीचोद्धृतभूतिरेवव्यवहारेषुवर्जनीयाःस्युरेते ३० अष्टौगुणाःपुरुषंदीपयंतिप्रज्ञाचकौल्यंचश्रुतंदमश्च ॥ पराक्रमश्चाबहुभाषिताचदा नंयथाशक्तिकृतज्ञताच ३१ एतान्गुणांस्तातमहानुभावानेकोगुणःसंश्रयतेप्रसह्य ॥ राजायदासत्कुरुतेमनुष्यंसर्वान्गुणानेषगुणोबिभर्ति ३२ गुणादशस्ना नशीलंभजंतेबलंरूपंस्वरवर्णप्रशुद्धिः ॥ स्पर्शश्चगंधश्चविशुद्धताचश्रीःसौकुमार्यंप्रवराश्चनार्यः ३३ गुणाश्चषण्मितभुक्तंभजंतेआरोग्यमायुश्चबलंसुखंच ॥ अनाविलंचास्यभवत्यपत्यंनचैनमाद्यूनइतिक्षिपंति ३४ अकर्मशीलंचमहाशनंचलोकद्विष्टंबहुमायंनृशंसम् ॥ अदेशकालज्ञमनिष्टवेषमेतान्गृहेनप्रतिवासयेत ३५ कदर्यमाक्रोशकमश्रुतंचवनौकसंधूर्तममान्यमानिनम् ॥ निष्ठूरिणंकृतवैरंकृतघ्नमेतान्भृशार्तोऽपिनजातुयाचेत् ३६ संक्लिष्टकर्माणमतिप्रमादंनित्यानृतं चादृढभक्तिकंच ॥ विसृष्टरागंपटुमानिनंचाप्येतान्नसेवेतनराधमान्षट् ३७ सहायबंधनाह्यर्थाःसहायाश्चार्थबंधनाः ॥ अन्योन्यबंधनावेतौविनान्योन्यंनसि द्ध्यतः ३८ उत्पाद्यपुत्राननृणांश्चकृत्वावृत्तिंचतेभ्योऽनुविधायकांचित् ॥ स्थानेकुमारीःप्रतिपाद्यसर्वाअरण्यसंस्थोऽथमुनिर्बुभूषेत् ३९ हितंयत्सर्वभूताना मात्मनश्चसुखावहम् ॥ तत्कुर्यादीश्वरेह्येतन्मूलंसर्वार्थसिद्धये ४० वृद्धिःप्रभावस्तेजश्चसत्वमुत्थानमेवच ॥ व्यवसायश्चयस्यस्यात्तस्यावृत्तिभयंकुतः ४१ पश्यदोषान्पांडवैर्विग्रहेत्वंयत्रव्यथेयुरपिदेवाःसशक्राः ॥ पुत्रैर्वैरंनित्यमुद्विग्नवासोयशःप्रणाशोद्विषतश्चहर्षः ४२

अश्रुतंमूर्खं । वनौकसंकैवर्तकं । धूर्तंकितवं । निष्ठूरिणं निर्दयं । हिंस्रंकृतवैरमन्येनस्वेनवा ३६ संक्लिष्टकर्माणं आततायिनं सचषड्विधः ' अग्निदोगरदश्चैवशस्त्रपाणिर्धनापहः ॥ क्षेत्रदारह रश्चैवषडेतेआततायिनः'इतिप्रसिद्धः । अतिप्रमादंसदाव्यग्रं । विसृष्टरागंत्यक्तस्नेहं । पटुमानिनंकुशलंमन्यम् ३७ एवंनिर्गुणानांस्वपुत्राणांपक्षपातेन सगुणान्पांडुपुत्रान्मात्यजेत्युक्तं । सं प्रतिसर्वेषामैकमत्येनाभ्युदयंप्रसाध्य स्वहितमेवकुर्वित्याह सहायेत्यादिना ३८ । ३९ ईश्वरेकालांतरीयफलप्रातिभूभूते एतदेवस्वपराहिताचरणं मूलंहेतुभूतं एतद्विनाईश्वरोऽपि फलंदातुंनसमर्थइत्यर्थः ४० ननुपरहितकरणेस्वाहितंकथंस्यादित्यतआह वृद्धिरिति वृद्धिःसहायमेलनेनधनादीनांप्रचयः । बुद्धिरितिपाठे मित्रसंग्रहधीः । प्रभावःशत्रूणांपराजयः । तेजः तद्धेतुभूतंशौर्यं । सत्वंधर्मज्ञानैश्वर्यरूपं । उत्थानंउद्यमः । व्यवसायःनिश्चयः । अवृत्तिर्जीविकायाअभावः ४१ । ४२

श्वेतोग्रहः धूमकेतुः ४३ । ४४ नीनशन्नाशंप्राप्नुयुः ४५ । ४६ परेषांपांडवानां पापचेतसोदुर्योधनाद्याः ४७ । ४८ आत्माचित्तं पापात् इदंभेस्यादिदंमेस्यादित्येवंरूपात्संकल्पात् । कल्याणेभूमानंदेब्रह्मणि । प्रकृतिस्त्रिगुणात्मिकामाया । विकृतिर्महदादिः । आत्मज्ञानात्सर्वज्ञानप्रसिद्धेः ४९ मोक्षानधिकारिणंप्रत्याह यइति ५० । ५१ । ५२ । ५३ अभिजातबलंकुलबलम्



भीष्मस्यकोपस्तवचैवेंद्रकल्पद्रोणस्यराज्ञश्चयुधिष्ठिरस्य ॥ उत्सादयेल्लोकमिमंप्रवृद्धःश्वेतोग्रहस्तिर्यगिवापतन्खे ४३ तवपुत्रशतंचैवकर्णःपंचचपांडवाः ॥ पृथिवीमनुशासेयुरखिलांसागरांबराम् ४४ धार्त्तराष्ट्रावनंराजन्व्याघ्राःपांडुसुतामताः ॥ मावनंछिंधिसव्याघ्रंमाव्याघ्रानीनशन्वनात् ४५ नस्याद्वनमृते व्याघ्रान्व्याघ्रानस्युर्ऋतेवनम् ॥ वनंहिरक्ष्यतेव्याघ्रैर्व्याघ्रान्रक्षतिकाननम् ४६ नतथेच्छंतिकल्याणान्परेषांवेदितुंगुणान् ॥ यथैषांज्ञातुमिच्छंतिनैर्गुण्यं पापचेतसः ४७ अर्थसिद्धिंपरामिच्छन्धर्ममेवादितश्चरेत् ॥ नहिधर्मादपैत्यर्थःस्वर्गलोकादिवामृतम् ४८ यस्यात्माविरतःपापात्कल्याणेचनिवेशितः ॥ तेनसर्वमिदंबुद्धंप्रकृतिर्विकृतिश्चया ४९ योधर्ममर्थंकामंचयथाकालंनिषेवते ॥ धर्मार्थकामसंयोगंसोऽमुत्रेहचविंदति ५० सन्नियच्छतियोवेगमुत्थितंक्रोधहर्षयोः ॥ सश्रियोभाजनंराजन्यश्चापत्सुनमुह्यति ५१ बलंपंचविधंनित्यंपुरुषाणांनिबोधमे ॥ यत्तुबाहुबलंनामकनिष्ठंबलमुच्यते ५२ अमात्यलाभोभद्रंतेद्वितीयंबलमुच्यते ॥ तृतीयंधनलाभंतुबलमाहुर्मनीषिणः ५३ यत्त्वस्यसहजंराजन्पितृपैतामहंबलम् ॥ अभिजातबलंनामतच्चतुर्थंबलंस्मृतम् ५४ येनत्वेतानिसर्वाणिसंगृहीतानिभारत ॥ यद्बलानांबलंश्रेष्ठंतत्प्रज्ञाबलमुच्यते ५५ महतेयोऽपकारायनरस्यप्रभवेन्नरः ॥ तेनवैरंसमासज्यदूरस्थोऽस्मीतिनाश्वसेत् ५६ स्त्रीषुराजसुसर्पेषुस्वाध्यायप्रभुशत्रुषु ॥ भोगेष्वायुषिविश्वासंकःप्राज्ञःकर्तुमर्हति ५७ प्रज्ञाशरेणाभिहतस्यजंतोश्चिकित्सकाःसंतिनचौषधानि ॥ नहोममंत्रानचमंगलानिनाथर्वणानाप्यगदाःसुसिद्धाः ५८ सर्पश्चाग्निश्चसिंहश्चकुलपुत्रश्चभारत ॥ नावज्ञेयामनुष्येणसर्वेह्येतेऽतितेजसः ५९ अग्निस्तेजोमहल्लोके गूढस्तिष्ठतिदारुषु ॥ नचोपयुंक्तेतद्दारुयावन्नोद्दीप्यतेपरैः ६० सएवखलुदारुभ्योयदानिर्मथ्यदीप्यते ॥ तद्दारुचवनंचान्यन्निर्दहत्याशुतेजसा ६१ एवमेवकुलेजाताःपावकोपमतेजसः ॥ क्षमावंतोनिराकाराःकाष्ठेऽग्निरिवशेरते ६२ लताधर्मात्वंसपुत्रःशालाःपांडुसुतामताः ॥ नलतावर्धतेजातुमहाद्रुममनाश्रिता ६३ वनंराजंस्तवपुत्रोंऽबिकेयसिंहान्वनेपांडवांस्तातविद्धि ॥ सिंहैर्विहीनंहिवनंविनश्येत्सिंहाविनश्येयुर्ऋतेवनेन ६४ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिप्रजागरपर्वणिविदुरवाक्येसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ ७ ॥ विदुरउवाच ॥ ऊर्ध्वंप्राणाह्युत्क्रामंतियूनःस्थविरआयति ॥ प्रत्युत्थानाभिवादाभ्यांपुनस्तान्प्रतिपद्यते १

५४ । ५५ । ५६ । ५७ औषधाद्याश्चिकित्सकाःनसंति तैरचिकित्स्यइत्यर्थः । आथर्वणावेदमंत्राअपि किंपुनर्भाषामंत्रादयः । सुसिद्धाःअमदाःपारदादयः ५८ कुलपुत्रोज्ञातिः ५९ । ६० । ६१ कुलेजाताःपांडवाः ६२ शालाःमहावृक्षाः पांडवान्आश्रित्यसपुत्रोवर्द्धस्वेत्यर्थः ६३ त्वत्पुत्रान्निहत्य पांडवा अपिस्नेहान्नश्येयुरेवेतिभावः ६४ ॥ ॥ इति श्रीउद्योगप० नीलकंठीयेभारतभावदीपे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ ७ ॥ ॥ उर्ध्वमिति आयतिआगच्छति १

निर्णिज्यप्रक्षाल्य आत्मसंस्थांस्वस्थितिं प्रतिवेद्यनिवेद्य २ यस्यकदर्यस्यभयात् राज्यादिषुधनिकत्वप्रथाभयात् । अदीयमानत्वादेवनप्रतिगृण्हाति तस्यजीवितंअनर्थंव्यर्थम् ३ शल्यकर्ताकांडकृत् । अवकीर्णीनष्टब्रह्मचर्यः । नोदकार्हउदकमात्रानर्होऽपि अतिथिःभृशंप्रियः प्रियवत्जामात्रादिवदर्चनीयएवेत्यर्थः ४ श्रुतिविक्रायकप्रसंगादन्यदप्यविक्रेयंयोविक्रीणातिसोऽपिमान्यएवेतिविवक्षयाऽविक्रेयाण्याह अविक्रेयमिति ५ दोषवानप्यतिथिःपूज्यः किमुतगुणवानितिवक्तुंतद्गुणानाह अरोषणइति । गतसंधिविग्रहः स्नेहवैररहितः उदासीनवत्रागद्वेषादिराहित्यात् ६ चोद्यःविधेयः सावधानइत्यर्थः । तापसोदरिद्रोऽप्यतिथिष्वप्रमत्तोभवेत्किंपुनर्भाग्यवानितिभावः ७ दीर्घौबाहू बुद्ध्यादूरस्थमप्यादातुंशक्तुतइत्यर्थः हिंसतिहिनस्तिअतिथिभक्तादूरस्थाअपि पांडवानहेलनीयाइतिभावः ८ अविश्वस्तेभीमेनविश्वासःकार्यः ९ अनीर्षुरित्यादिसार्द्धश्लोकत्रयस्य गुप्तदाराःपांडवाः तेषांस्त्रीश्रीतुल्याद्रौपदी सापित्वयारक्षणीयैवातस्तदतिक्रमात्तवभयमस्तीतितात्पर्यं १० । ११ । १२ प्रसंगात्प्रकृतेऽनुपयुक्तानपिधर्मानाह अद्भ्यइति एतेषांचयथालाभंप्रकृतोपयोगित्वमप्यूह्यं अद्भ्यइत्यादिना मैत्रेयादीनांब्राह्मणानामवज्ञा नकार्येतिसूचितं १३ । १४ । १५ सर्वतश्चक्षुश्चारैःपरमंत्रंजानन् १६ । १७ निःशलाकेतृणैरनावृते तत्रापिकश्चिल्लीनश्चेन्मंत्रभेदःसंभवेदितिभावः १८ अनात्मवान् चपलवाक् १९ पार्षदाः सभासदः कृतान्येवविदुः किमुतान्ये २०

पीठंदत्वासाधवेऽभ्यागतायआनीयापःपरिनिर्णिज्यपादौ ॥ सुखंपृष्ट्वाप्रतिवेद्यात्मसंस्थांततोदद्यादन्नमवेक्ष्यधीरः २ यस्योदकंमधुपर्कंचगांचनमंत्रवित्प्रतिगृह्णातिगेहे ॥ लोभाद्भयादथकार्पण्यतोवातस्यानर्थंजीवितमाहुरार्याः ३ चिकित्सकःशल्यकर्ताऽवकीर्णीस्तेनःक्रूरोमद्यपोभ्रूणहाच ॥ सेनाजीवीश्रुतिविक्रायकश्चभृशंप्रियोऽप्यतिथिर्नोदकार्हः ४ अविक्रेयंलवणंपक्वमन्नंदधिक्षीरंमधुतैलंघृतंच ॥ तिलामांसंफलमूलानिशाकंरक्तंवासःसर्वगंधागुडाश्च ५ अरोषणोयःसमलोष्टाश्मकांचनःप्रहीणशोकोगतसंधिविग्रहः ॥ निंदाप्रशंसोपरतःप्रियाप्रियेत्यजन्नुदासीनवदेषभिक्षुकः ६ नीवारमूलेंगुदशाकवृत्तिःसुसंयतात्माऽग्निकार्येषुचोद्यः ॥ वनेवसन्नतिथिष्वप्रमत्तोधुरंधरःपुण्यकृदेषतापसः ७ अपकृत्यबुद्धिमतोदूरस्थोऽस्मीतिनाश्वसेत् ॥ दीर्घौबुद्धिमतोबाहूयाभ्यांहिंसतिहिंसितः ८ नविश्वसेदविश्वस्तेविश्वस्तेनातिविश्वसेत् ॥ विश्वासाद्भयमुत्पन्नंमूलान्यपिनिकृंतति ९ अनीर्षुर्गुप्तदारश्चसंविभागीप्रियंवदः ॥ श्लक्ष्णोमधुरवाक्स्त्रीणांनचासांवशगोभवेत् १० पूजनीयामहाभागाःपुण्याश्चगृहदीप्तयः ॥ स्त्रियःश्रियोगृहस्योक्तास्तस्माद्रक्ष्याविशेषतः ११ पितुरंतःपुरंदद्यान्मातुर्दद्यान्महानसम् ॥ गोषुचात्मसमंदद्यात्स्वयमेवकृषिंव्रजेत् १२ भृत्यैर्वाणिज्यचारंचपुत्रैःसेवेतचाद्विजान् ॥ अद्भ्योऽग्निर्ब्रह्मतःक्षत्रमश्मनोलोहमुत्थितम् १३ तेषांसर्वत्रगंतेजःस्वासुयोनिषुशाम्यति ॥ नित्यंसंतःकुलेजाताःपावकोपमतेजसः १४ क्षमावंतोनिराकाराःकाष्ठेऽग्निरिवशेरते ॥ यस्यमंत्रंनजानंतिबाह्याश्चाभ्यंतराश्चये १५ सराजासर्वतश्चक्षुश्चिरमैश्वर्यमश्नुते ॥ करिष्यन्नप्रभाषेतकृतान्येवतुदर्शयेत् १६ धर्मकामार्थकार्याणितथामंत्रोनभिद्यते ॥ गिरिपृष्ठमुपारुह्यप्रासादंवारहोगतः १७ अरण्येनिःशलाकेवातत्रमंत्रोभिधीयते ॥ नासुहृत्परमंमंत्रंभारतार्हतिवेदितुम् १८ अपंडितोवाऽपिसुहृत्पंडितोवाऽप्यनात्मवान् ॥ नापरीक्ष्यमहीपालःकुर्यात्सचिवमात्मनः १९ अमात्येह्यर्थलिप्साचमंत्ररक्षणमेवच ॥ कृतानिसर्वकार्याणियस्यपारिषदाविदुः २०

२१ अप्रशस्तानिनिंद्यानि विपरिभ्रंशात्विपरीतत्वेनभ्रंशात् २२ । २३ षाड्गुण्यं षण्णांसंधिविग्रहयानासनद्वैधीभावसमाश्रयाणांसमूहः नश्रुतोयेनसः २४ षाड्गुण्याभिज्ञत्वेनविदितआत्मास्वरूपंयस्यतस्यस्थानंयथास्थितत्वावस्था अनवज्ञातंसत्कृतंशीलमस्य २५ नवेक्षिणइतिपाठे नवमिवादरेणईक्षितुंशीलमस्य आत्मनैवप्रत्ययोज्ञानंयस्य स्वयमेवज्ञातकोशस्य २६ नाममात्रेणैवराजाभवेत् भोगांस्तुभृत्यैःसमानानेवभुंजीत २७ । २८ । २९ । ३० । ३१ । ३२ लोकस्यपर्यायः इहलोकपरलोकवत्त्वं तेनतद्विषयवृत्तांतं कर्मफलधीनत्वस्वरूपं प्राज्ञोजाना

धर्मेचार्थेचकामेचसराजाराजसत्तमः ॥ गूढमंत्रस्यनृपतेस्तस्यासिद्धिरसंशयम् २१ अप्रशस्तानिकार्याणियोमोहादनुतिष्ठति ॥ सतेषांविपरिभ्रंशाद्भ्रश्यते जीवितादपि २२ कर्मणांतुप्रशस्तानामनुष्ठानंसुखावहम् ॥ तेषामेवाननुष्ठानंपश्चात्तापकरंमतम् २३ अनधीत्ययथावेदान्नविप्रःश्राद्धमर्हति ॥ एवमश्रुतषाड्गुण्योनमंत्रंश्रोतुमर्हति २४ स्थानवृद्धिक्षयज्ञस्यषाड्गुण्यविदितात्मनः ॥ अनवज्ञातशीलस्यस्वाधीनापृथिवीनृप २५ अमोघक्रोधहर्षस्यस्वयंकृत्वान्ववेक्षिणः ॥ आत्मप्रत्ययकोशस्यवसुदैववसुंधरा २६ नाममात्रेणतुष्येतच्छत्रेणचमहीपतिः ॥ भृत्येभ्योविसृजेदर्थान्नैकःसर्वहरोभवेत् २७ ब्राह्मणंब्राह्मणोवेदभर्तावेदस्त्रियंतथा ॥ अमात्यंनृपतिर्वेदराजाराजानमेवच २८ नशत्रुर्वशमापन्नोमोक्तव्योवध्यतांगतः ॥ न्यग्भूत्वापर्युपासीतवध्यंहन्याद्बलेसति ॥ अहताद्धिभयंतस्माज्जायतेनचिरादिव २९ दैवतेषुप्रयत्नेनराजसुब्राह्मणेषुच ॥ नियंतव्यःसदाक्रोधोवृद्धबालातुरेषुच ३० निरर्थंकलहंप्राज्ञोवर्जयेन्मूढसेवितम् ॥ कीर्तिंचलभतेलोकेनचानर्थेनयुज्यते ३१ प्रसादोनिष्फलोयस्यक्रोधश्चापिनिरर्थकः ॥ नतंभर्तारमिच्छंतिषंढंपतिमिवस्त्रियः ३२ नबुद्धिर्धनलाभायनजाड्यमसमृद्धये ॥ लोकपर्यायवृत्तांतंप्राज्ञोजानातिनेतरः ३३ विद्याशीलवयोवृद्धान्बुद्धिवृद्धांश्चभारत ॥ धनाभिजातवृद्धांश्चनित्यंमूढोऽवमन्यते ३४ अनार्यवृत्तमप्राज्ञमसूयकमधार्मिकम् ॥ अनर्थाःक्षिप्रमायांतिवाग्दुष्टंक्रोधनंतथा ३५ अविसंवादनंदानंसमयस्याव्यतिक्रमः ॥ आवर्तयंतिभूतानिसम्यक्प्रणिहिताचवाक् ३६ अविसंवादकोदक्षःकृतज्ञोमतिमानृजुः ॥ अपिसंक्षीणकोशोऽपिलभतेपरिवारणम् ३७ धृतिःशमोदमःशौचंकारुण्यंवागनिष्ठुरा ॥ मित्राणांचानभिद्रोहःसप्तैताःसमिधःश्रियः ३८ असंविभागीदुष्टात्माकृतघ्नोनिरपत्रपः ॥ तादृङ्नराधिपोलोकेवर्जनीयोनराधिप ३९ नचरात्रौसुखंशेतेससर्पइववेश्मनि ॥ यःकोपयतिनिर्दोषंसदोषोऽभ्यंतरंजनम् ४० येषुदुष्टेषुदोषःस्याद्योगक्षेमस्यभारत ॥ सदाप्रसादनंतेषांदेवतानामिवाचरेत् ४१ येऽर्थाःस्त्रीषुसमायुक्ताःप्रमत्तपतितेषुच ॥ येचानार्येसमासक्ताःसर्वेतेसंशयंगताः ४२ यत्रस्त्रीयत्रकितवोबालोयत्रानुशासिता ॥ मज्जंतितेऽवशाराजन्नद्यामश्मप्लवाइव ४३

ति । नतुबुद्ध्याधनं जाड्येनवादारिद्र्यंलभ्यते सर्वत्रव्यभिचारदर्शनादितिभावः ३३ अभिजातः कुलीनः ३४ । ३५ अविसंवादनंवंचनाशून्यं समयस्यस्वपरकृतमर्यादायाः आवर्त्तयंतिशत्रूनपिस्त्रीयान्कुर्वंति प्रणिहिताप्रयुक्ता ३६ परिवारणंपरिवारान्भृत्यमित्रादीन् ३७ समिधः उद्दीपिकाः ३८ असंविभागीपोष्येभ्योऽदत्वास्वयंभुंजानः ३९ । ४० दुष्टेषुदूषितेषुवेतनाद्यतिक्रमात् ४१ समासक्तानिहिताः संशयंगताःकदाचित्प्राप्याइत्यर्थः ४२ । ४३

येभृत्याः विशेषाआधिक्यानि ते षुहिप्रदर्श्यमानेषुपरस्परंस्वीयानामेवकलहप्रसंगान्मुख्यंप्रयोजनंनश्यतीतिभावः प्रसंगिनःप्रसंगःसंघर्षस्तत्कारिणः ४४ । ४५ । ४६ । ४७ ॥ इत्युद्योगपर्वणिनीलकंठीये भारतभावदीपेअष्टात्रिंशोऽध्यायः ॥ ३८ ॥ ॥ छ ॥ ॥ अनीश्वरोऽयमिति भवाभवेऐश्वर्यानैश्वर्ये दिष्टस्यदैवस्यवदैव नतुमांदूषयेतिभावः धृतःधृतिमान् १ बुद्धयवज्ञानंअवज्ञातबुद्धित्वं २ मंत्रबलेनमूलबलेनचाप्रियकृदप्रियोभवति सचदानाद्यभावेपुनरप्रियोभवति अहंतुनतथाऽतस्त्वयाप्राप्तकालेमदुक्तेऽनादरोनकर्तव्यइतिभावः ३ द्वेष्ये

प्रयोजनेषुयेसक्तानविशेषेषुभारत ॥ तानहंपंडितान्मन्येविशेषाहिप्रसंगिनः ४४ यंप्रशंसंतिकितवायंप्रशंसंतिचारणाः ॥ यंप्रशंसंतिबंधक्योनसजीवतिमानवः ४५ हित्वातान्परमेष्वासान्पांडवानमितौजसः ॥ आहितंभारतैश्वर्यंत्वयादुर्योधनेमहत् ४६ तंद्रक्ष्यसिपरिभ्रष्टंतस्मात्त्वमचिरादिव ॥ ऐश्वर्यमदसंमूढंबलिंलोकत्रयादिव ४७ ॥ इतिश्रीमहाभारतेउद्योमपर्वणिप्रजागरपर्वणिविदुरवाक्येअष्टत्रिंशोऽध्यायः ॥ ३८ ॥ धृतराष्ट्रउवाच ॥ अनीश्वरोऽयंपुरुषोभवाभवेसूत्रप्रोतादारुमयीवयोषा ॥ धात्रातुदिष्टस्यवशेकृतोऽयंतस्माद्वदत्वंश्रवणेधृतोऽहम् १ ॥ विदुरउवाच ॥ अप्राप्तकालंवचनंबृहस्पतिरपिब्रुवन् ॥ लभतेबुद्ध्यवज्ञानमवमानंचभारत २ प्रियोभवतिदानेनाप्रियवादेनचापरः ॥ मंत्रमूलबलेनान्योयःप्रियःप्रियएवसः ३ द्वेष्योनसाधुर्भवतिनमेधावीनपंडितः ॥ प्रियेशुभानिकार्याणिद्वेष्येपापानिचैवह ४ उक्तंमयाजातमात्रेऽपिराजन्दुर्योधनंत्यजपुत्रंत्वमेकम् ॥ तस्यत्यागात्पुत्रशतस्यवृद्धिरस्यात्यागात्पुत्रशतस्यनाशः ५ नवृद्धिर्बहुमंतव्यायावृद्धिःक्षयमावहेत् ॥ क्षयोऽपिबहुमंतव्योयःक्षयोवृद्धिमावहेत् ६ नसक्षयोमहाराजयःक्षयोवृद्धिमावहेत् ॥ क्षयःसत्विहमंतव्योयंलब्ध्वाबहुनाशयेत् ७ समृद्धागुणतःकेचिद्भवंतिधनतोऽपरे ॥ धनवृद्धान्गुणैर्हीनान्धृतराष्ट्रविवर्जय ८ ॥धृतराष्ट्रउवाच ॥ सर्वंत्वमायतीयुक्तंभाषसेप्राज्ञसंमतम् ॥ नचोत्सहेसुतंत्यक्तुंयतोधर्मस्ततोजयः ९ ॥ विदुरउवाच ॥ अतीवगुणसंपन्नोनजातुविनयान्वितः ॥ सुसूक्ष्ममपिभूतानामुपमर्दमुपेक्षते १० परापवादनिरताःपरदुःखोदयेषुच ॥ परस्परविरोधेचयतंतेसततोत्थिताः ११ सदोषंदर्शनंयेषांसंवासेसुमहद्भयम् ॥ अर्थादानेमहान्दोषःप्रदानेचमहद्भयम् १२ येवैभेदनशीलास्तुसकामानिस्त्रपाःशठाः ॥ येपापाइतिविख्याताःसंवासेपरिगर्हिताः १३ युक्ताश्चान्यैर्महादोषैर्येनरास्तान्विवर्जयेत् ॥ निवर्तमानेसौहार्देप्रीतिर्नीचेप्रणश्यति १४ याचैवफलनिर्वृत्तिःसौहृदेचैवयत्सुखम् ॥ यततेचापवादाययत्नमारभतेक्षये १५ अल्पेऽप्यपकृतेमोहान्नशांतिमधिगच्छति ॥ तादृशैःसंगतंनीचैर्नृशंसैरकृतात्मभिः १६ निशम्यनिपुणंबुद्ध्याविद्वान्दूराद्विवर्जयेत् ॥ योज्ञातिमनुगृह्णातिदरिद्रंदीनमातुरम् १७

१३

इति योयस्यद्वेष्यस्तस्मिन्नतद्दृष्ट्यासाधुत्वादिकंसदपिनास्ति प्रियेत्वसदपितद्दृष्ट्याऽस्तीतिभावः ४ । ५ । ६ । ७ । ८ आयतीयुक्तंउदर्केहितं ९ पुत्रंत्यक्तुमशक्तेनदुष्टाःशकुन्यादयोवाल्याज्याइत्याशयेनाह अतीवेति कुलविनाशोनोपेक्षणीयइतिभावः १० । ११ । १२ । १३ सौहार्देमैत्रहेतौनिवर्तमानेसति प्रीतिःफलनिर्वृत्तिःसुखंचप्रणश्यति सनीचोऽपवादाययतते क्षयेचयत्नमारभते शांतिंनचगच्छतीतिद्वयोःसंबंधः १४ । १५ संगतंसंबंधं १६ निशम्यविचार्य १७

१८ । १९ । २० । २१ । २२ शुभार्थिनाऐश्वर्यलिप्सुना २३ । २४ । २५ । २६ दिग्धहस्तंविषाक्तबाणहस्तं सश्रीमान् एनस्तस्यज्ञातेरवसादजंपापंविंदति मृगवधजंपापंव्याधइवेत्यर्थः २७ २८ खट्वांसमारूढश्चितागारंप्रविष्टः लोकेआगंतुंलज्जमानइत्यर्थः २९ नकश्चिदिति भार्गवात्शुक्रा दन्यत्रनीतिशास्त्रकर्त्तारंशुक्रंविहायअन्यःकश्चि दपिनअपनयतेइतिन अपितुसर्वोऽप्यपनयते अनीतिंकरोति अतःयत्अतीतंतत्अतीतमेव शेषस्यतत्कालोचितस्यअर्थस्यप्रतिपत्तिःविचारःकर्त्तव्यइत्यर्थः ३० तदेवाह दुर्योधनेनेति प्रत्यानेयंप्रतिकर्त्तव्यं ३१ प्रतीकारमेवाह तानिति प्रतिष्ठाप्यराज्यांशदानेनस्थिरीकृत्य ३२ धीराणांउपदेष्टृणांसुव्याहृतानिवचनानि अध्यवस्यातिनिश्चयंकरोति उत्तमफलंकर्मारभतइत्यर्थः ३३ सुकुशलैरप्युपयुक्तंउपदिष्टंतत्ज्ञानंअसम्यगेव य

सपुत्रपशुभिर्वृद्धिंश्रेयश्चानंत्यमश्नुते ॥ ज्ञातयोवर्द्धनीयास्तैर्यइच्छंत्यात्मनःशुभम् १८ कुलवृद्धिंचराजेंद्रतस्मात्साधुसमाचर ॥ श्रेयसायोक्ष्यतेराजन्कुर्वाणोज्ञातिसत्क्रियाम् १९ विगुणाह्यपिसंरक्ष्याज्ञातयोभरतर्षभ ॥ किंपुनर्गुणवंतस्तेत्वत्प्रसादाभिकांक्षिणः २० प्रसादंकुरुवीराणांपांडवानांविशांपते ॥ दीयंतांग्रामकाःकेचित्तेषांवृत्त्यर्थमीश्वर २१ एवंलोकेयशःप्राप्तंभविष्यतिनराधिप ॥ वृद्धेनहित्वयाकार्यंपुत्राणांतातशासनम् २२ मयाचापिहितंवाच्यंविद्धिमांत्वद्धितैषिणम् ॥ ज्ञातिभिर्विग्रहस्तातनकर्तव्यःशुभार्थिना ॥ सुखानिसहभोज्यानिज्ञातिभिर्भरतर्षभ २३ संभोजनंसंकथनंसंप्रीतिश्चपरस्परम् ॥ ज्ञातिभिःसहकार्याणिनविरोधःकदाचन २४ ज्ञातयस्तारयंतीहज्ञातयोमज्जयंतिच ॥ सुवृत्तास्तारयंतीहदुर्वृत्तामज्जयंतिच २५ सुवृत्तोभवराजेंद्रपांडवान्प्रतिमानद ॥ अधर्षणीयःशत्रुणांतैर्वृतस्त्वंभविष्यसि २६ श्रीमंतंज्ञातिमासाद्ययोज्ञातिरवसीदति ॥ दिग्धहस्तंमृगइवसएनस्तस्यविंदति २७ पश्चादपिनरश्रेष्ठतवतापोभविष्यति ॥ तान्वाहतान्सुतान्वाऽपिश्रुत्वातदनुचिंतय २८ येनखट्वांसमारूढःपरितप्येतकर्मणा ॥ आदावेवनतत्कुर्यादध्रुवेजीवितेसति २९ नकश्चिन्नापनयतेपुमानन्यत्रभार्गवात् ॥ शेषसंप्रतिपत्तिस्तुबुद्धिमत्स्वेवतिष्ठति ३० दुर्योधनेनयद्येतत्पापंतेषुपुराकृतम् ॥ त्वयातत्कुलवृद्धेनप्रत्यानेयंनरेश्वर ३१ तांस्त्वंपदेप्रतिष्ठाप्यलोकेविगतकल्मषः ॥ भविष्यसिनरश्रेष्ठपूजनीयोमनीषिणाम् ३२ सुव्याहृतानिधीराणांफलतःपरिचिंत्ययः ॥ अध्यवस्यतिकार्येषुचिरंयशसितिष्ठति ३३ असम्यगुपयुक्तंहिज्ञानंसुकुशलैरपि ॥ उपलभ्यंचाविदितंविदितंचाननुष्ठितम् ३४ पापोदयफलंविद्वान्योनारभतिवर्द्धते ३५ यस्तुपूर्वकृतंपापमविमृश्यानुवर्तते ३६ अगाधपंकेदुर्मेधाविषमेविनिपात्यते ॥ मंत्रभेदस्यषट्प्राज्ञोद्वाराणीमानिलक्षयेत् ३७ अर्थसंततिकामश्चरक्षेदेतानिनित्यशः ॥ मदंस्वप्नमविज्ञानमाकारंचात्मसंभवम् ३८ दुष्टामात्येषुविश्रंभंदूताच्चाकुशलादपि ॥ द्वाराण्येतानियोज्ञात्वासंवृणोतिसदानृप ३९

तःउपलभ्यंज्ञेयं तेनअविदितंनज्ञातं विदितंज्ञातंवातत्नानुष्ठितं । मदुक्तंत्वयिनिष्फलमेवेतिभावः ३४ यस्यइष्येनादेःफलंब्रह्मवधादिपापोदयंपापहेतुः तत्फलं फलहेतुभूतंकर्मयोनारभतेसवर्द्धते ३५ अविमृश्यअविचार्यपापमेवानुवर्त्ततेसततंकरोति ३६ पंकेनरके ३७ अर्थसंततिःअर्थानामविच्छेदेनवृद्धिःतत्कामः । मदंसुरापानजंचित्तवैक्लव्यं । स्वप्नंनिद्रां । अविज्ञानंपरकीयगुप्तचारादेरज्ञानं । आत्मसंभवंआकारंनेत्रवक्त्रविकारादिकं । तावत्तैवपरदूतामंत्र मुन्नयंति ३८ मंत्रभेदस्यद्वाराणिसंवृणोतिपिदधाति ३९

श्रुतंशास्त्रं ४०।४१ मत्यामननेन युक्तिभिरनुचिंतनेन । जात्येतिपाठेकुलीनत्वेन । बुद्ध्यास्वानुभवेनसंपाद्यकार्ययोग्यतांनिश्चित्य ४२ श्रुत्वापरतः दृष्ट्वास्वयं आकृत्याज्ञात्वा विज्ञायपुनःपुनर्विशेषेणज्ञात्वा प्राज्ञतां ४३ परिच्छदःभोग्यवस्तुसामग्री क्षेत्रेणजन्मस्थानेन कुग्रामवासिषुप्रायेणविवेकाभावात् परिचर्ययाआचारेण ४४।४५ वैद्यंविद्यावंतं ४६। ४७ चित्तंज्ञानमात्रंनिभृतंगूढाचारप्रवृत्तं मंत्रयंत्रादि प्रज्ञाविशेषतोऽर्थोन्नयनक्षमता ४८। ४९ रौद्राःकोपनाः साहसिकाःअविमृश्यकारिणस्तेषु ५०।५१ इंद्रियाणांउत्सर्गोविषयेषुप्रवृत्तिः अनुत्सर्गोविषयेभ्योनिवृ

त्रिवर्गाचरणेयुक्तःसशत्रूनाधितिष्ठति ॥ नवैश्रुतमविज्ञायवृद्धाननुपसेव्यवा ४० धर्मार्थौवेदितुंशक्यौबृहस्पतिसमैरपि ॥ नष्टंसमुद्रेपतितंनष्टंवाक्यमशृण्वति ॥ ४१ अनात्मनिश्रुतंनष्टंनष्टंहुतमनग्निकम् ॥ मत्यापरीक्ष्यमेधावीबुद्ध्यासंपाद्यचासकृत् ४२ श्रुत्वादृष्ट्वाऽथविज्ञायप्राज्ञैर्मैत्रींसमाचरेत् ॥ अकीर्तिंविनयोहंतिहंत्यनर्थंपराक्रमः ४३ हंतिनित्यंक्षमाक्रोधमाचारोहंत्यलक्षणम् ॥ परिच्छदेनक्षेत्रेणवेश्मनापरिचर्यया ४४ परीक्षेतकुलंराजन्भोजनाच्छादनेनच ॥ उपस्थितस्यकामस्यप्रतिवादोनविद्यते ४५ अपिनिर्मुक्तदेहस्यकामरक्तस्यकिंपुनः ॥ प्राज्ञोपसेविनंवैद्यंधार्मिकंप्रियदर्शनम् ४६ मित्रवंतंसुवाक्यंचसुहृदंपरिपालयेत् ॥ दुष्कुलीनःकुलीनोवामर्यादांयोनलंघयेत् ४७ धर्मापेक्षीमृदुर्ह्रीमान्सकुलीनशताद्वरः ॥ ययोश्चित्तेनवाचित्तंनिभृतंनिभृतेनवा ४८ समेतिप्रज्ञयाप्रज्ञातयोर्मैत्रीनजीर्यति ॥ दुर्बुद्धिमकृतप्रज्ञंछन्नंकूपंतृणैरिव ४९ विवर्जयीतमेधावीतस्मिन्मैत्रीप्रणश्यति ॥ अवलिप्तेषुमूर्खेषुरौद्रसाहसिकेषुच ५० तथैवापेतधर्मेषुनमैत्रीमाचरेद्बुधः ॥ कृतज्ञंधार्मिकंसत्यमक्षुद्रंदृढभक्तिकम् ५१ जितेंद्रियंस्थितंस्थित्यांमित्रमत्यागिचेष्यते ॥ इंद्रियाणामनुत्सर्गोमृत्युनाऽपिविशिष्यते ५२ अत्यर्थंपुनरुत्सर्गःसादयेद्दैवतानपि ॥ मार्दवंसर्वभूतानामनसूयाक्षमाधृतिः ५३ आयुष्याणिबुधाःप्राहुर्मित्राणांचाविमानना ॥ अपनीतंसुनीतेनयोऽर्थंप्रत्यानिनीषते ५४ मतिमास्थायसुदृढांतदकापुरुषव्रतम् ॥ आयत्यांप्रतिकारज्ञस्तदात्वेदृढनिश्चयः ५५ अतीतेकार्यशेषज्ञोनरोऽर्थैर्नप्रहीयते ॥ कर्मणामनसावाचायदभीक्ष्णंनिषेवते ५६ तदेवापहरत्येनंतस्मात्कल्याणमाचरेत् ॥ मंगलालंभनंयोगःश्रुतमुत्थानमार्जवम् ५७ भूतिमेतानिकुर्वंतिसतांचाभीक्ष्णदर्शनम् ॥ अनिर्वेदःश्रियोमूलंलाभस्यचशुभस्यच ५८ महान्भवत्यनिर्विण्णःसुखंचानंत्यमश्नुते ॥ नातःश्रीमत्तरंकिंचिदन्यत्पथ्यतमंमतम् ५९ प्रभविष्णोर्यथातातक्षमासर्वत्रसर्वदा ॥ क्षमेदशक्तःसर्वस्यशक्तिमान्धर्मकारणात् ॥ अर्थानर्थौसमौयस्यतस्यनित्यंक्षमाहिता ६० यत्सुखंसेवमानोऽपिधर्मार्थाभ्यांनहीयते ॥ कामंतदुपसेवेतनमूढव्रतमाचरेत् ६१ दुःखार्तेषुप्रमत्तेषुनास्तिकेष्वलसेषुच ॥ नश्रीर्वसत्यदांतेषुयेचोत्साहविवर्जिताः ६२

त्तिः सामृत्युतुल्यादुरनुष्ठेयेत्यर्थः ५२। ५३ आयुष्याणिआयुःकराणि अपनीतंअन्यायेननाशितं ५४ आयत्यांआगामिनिकालेदुःखस्यप्रतीकारज्ञः तदात्वेवर्तमानेदृढनिश्चयः भोगंविनाप्राप्तस्यदुःखस्यनाशोनास्तीतिज्ञात्वा तत्संबंधेऽपिनोत्तपति ५५।५६ मंगलानांदधिदूर्वागवादीनांआलंभनंस्पर्शः योगःसहायसंपत् उत्थानंउद्यमः ५७ अनिर्वेदःउद्योगात्अनुपरमः ५८। ५९ तस्यमध्यमस्य योनशक्तःनाप्यशक्तस्तस्येत्यर्थः सर्वेषांक्षमाश्रेयस्करीत्यर्थः ६० मूढव्रतंआहारादौअतिनिर्बंधं ६१ अदांतेषुलिप्साहीनेषु ६२

सव्यपत्रपंसलज्जं ६३ अत्यार्यंअत्यंतमकुटिलं ६४ । ६५ । ६६ और्ध्वदेहिकंपरलोकसाधनंयज्ञदानादि ६७ । ६८ संयमःइंद्रियाणांनिग्रहः भवस्यऐश्वर्यस्य ६९ । ७० ब्राह्मणकाम्या ब्राह्मणस्यइच्छातदाज्ञयेत्यर्थः ७१ संदध्यात्कुर्यात् । अन्योऽधर्मःकामात्इच्छयासाधुनाकर्मणा ७२ । ७३ स्त्रीधूर्तस्त्रियांधूर्तेचेत्येकवद्भावः ७४।७५।७६। ७७ वाक्शल्यंदुर्वचनं ७८ अनाम्ना



आर्जवेननरंयुक्तमार्जवात्सव्यपत्रपम् ॥ अशक्तंमन्यमानास्तुधर्षयंतिकुबुद्धयः ६३ अत्यार्यमतिदातारमतिशूरमतिव्रतम् ॥ प्रज्ञाभिमानिनंचैवश्रीर्भयान्नोप सर्पति ६४ नचातिगुणवत्स्वेषानात्यंतंनिर्गुणेषुच ॥ नैषागुणान्कामयतेनैर्गुण्यान्नानुरज्यते ॥ उन्मत्तागौरिवांधाश्रीःक्वचिदेवावतिष्ठते ६५ अग्निहोत्रफला वेदाःशीलवृत्तफलंश्रुतम् ॥ रतिपुत्रफलानारीदत्तभुक्तफलंधनम् ६६ अधर्मोपार्जितैरर्थैर्यःकरोत्यौर्ध्वदेहिकम् ॥ नसतस्यफलंप्रेत्यभुंक्तेऽर्थस्यदुरागमात् ६७ कांतारेवनदुर्गेषुकृच्छ्रास्वापत्सुसंभ्रमे ॥ उद्यतेषुचशस्त्रेषुनास्तिसत्ववतांभयम् ६८ उत्थानंसंयमोदाक्ष्यमप्रमादोधृतिःस्मृतिः ॥ समीक्ष्यचसमारंभोविद्धि मूलंभवस्यतु ६९ तपोबलंतापसानांब्रह्मब्रह्मविदांबलम् ॥ हिंसाबलमसाधूनांक्षमागुणवतांबलम् ७० अष्टौतान्यव्रतघ्नानिआपोमूलंफलंपयः ॥ हविर्ब्राह्मण काम्याचगुरोर्वचनमौषधम् ७१ नतत्परस्यसंदध्यात्प्रतिकूलंयदात्मनः ॥ संग्रहेणैषधर्मःस्यात्कामादन्यःप्रवर्तते ७२ अक्रोधेनजयेत्क्रोधमसाधुंसाधुनाजयेत्॥ जयेत्कदर्यंदानेनजयेत्सत्येनचानृतम् ७३ स्त्रीधूर्तकेऽलसेभीरौचंडेपुरुषमानिनि ॥ चौरेकृतघ्नेविश्वासोनकार्योनचनास्तिके ७४ अभिवादनशीलस्यनित्यं वृद्धोपसेविनः ॥ चत्वारिसंप्रवर्धंतेकीर्तिरायुर्यशोबलम् ७५ अतिक्लेशेनयेऽर्थाःस्युर्धर्मस्यातिक्रमेणवा ॥ अरेर्वाप्रणिपातेनमास्मतेषुमनःकृथाः ७६ अविद्यः पुरुषःशोच्यःशोच्यंमैथुनमप्रजम् ॥ निराहाराःप्रजाःशोच्याःशोच्यंराष्ट्रमराजकम् ७७ अध्वाजरादेहवतांपर्वतानांजलंजरा ॥ असंभोगोजरास्त्रीणांवाक्श ल्यंमनसोजरा ७८ अनाम्नायमलावेदाब्राह्मणस्याव्रतंमलम् ॥ मलंपृथिव्यावाह्लीकाःपुरुषस्यानृतंमलम् ७९ कौतूहलमलासाध्वीविप्रवासमलाःस्त्रियः ८० सुव र्णस्यमलंरूप्यंरूप्यस्यापिमलंत्रपु ॥ ज्ञेयंत्रपुमलंसीसंसीसस्यापिमलंमलम् ८१ नस्वप्नेनजयेन्निद्रांनकामेनजयेत्स्त्रियः ॥ नेंधनेनजयेदग्निंनपानेनसुरांजयेत् ८२ यस्यदानजितंमित्रंशत्रवोयुधिनिर्जिताः ॥ अन्नपानजितादाराःसफलंतस्यजीवितम् ८३ सहस्रिणोऽपिजीवंतिजीवंतिशतिनस्तथा ॥ धृतराष्ट्रविमुंचे च्छांनकथंचिन्नजीव्यते ८४ यत्पृथिव्यांव्रीहियवंहिरण्यंपशवःस्त्रियः ॥ नालमेकस्यतत्सर्वमितिपश्यन्नमुह्यति ८५ राजन्भूयोब्रवीमित्वांपुत्रेषुसममाचर ॥ समतायदितेराजन्स्वेषुपांडुसुतेषुवा ८६ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिप्रजागरपर्वणिविदुरवाक्येएकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ ॥

यः अनभ्यासएवमलंयेषां । बाल्हीकाः 'पंचानांसिंधुषष्ठानांनदीनांयत्रसंगमः । बाल्हीकानामतेदेशाः' ७९ विप्रवासःप्रवासः ८० । ८१ स्वप्नेनशयनेन ८२ । ८३ । ८४ । ८५ यदितेस्वेषुपुत्रेषुपांडवेषुचसमताऽस्ति तर्हिसर्वेषुसममेवाचर यथाभागंराज्यंतेभ्योदेहीत्यर्थः ८६ ॥ इति उद्योगपर्वणिनीलकंठीयेभारतभावदीपेएकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ ७ ॥

योऽभ्यर्चितइति असज्जमानःअभिमानशून्यः शक्तिंअहापयित्वाअनतिक्रम्ययथाशक्तीत्यर्थः संतंसाधुंउपैतिलभते यतःप्रसन्नाःसंतःसाधवःसुखायअलंसुखंदातुंपर्याप्ताः १ अनपाकृष्टःपरैरपकर्षंअप्रापितोऽपि २ समुत्कर्षःअनृतेनजयइत्यर्थः ३ एकपदंसर्वात्मना ४ स्तब्धताऔद्धत्यं । अभिमानः दर्पः तद्वत्त्वं । अत्यागित्वं लुब्धता । मदमोहौएकीकृत्यसप्त ५ । ६ । ७ । ८ आकर्षः विषादीनां ९ अजेनसहितःउक्षाअजोक्षा औदुंबरंताम्रमयंपात्रजातं । 'उदुंबरंस्मृतंताम्रे'इतिविश्वः । विषंलोहमितिसर्वज्ञः । स्वर्णनाभः शालग्रामः । दक्षिणावर्तःशंखइतिनारायणः १०

विदुरउवाच ॥ योऽभ्यर्चितःसद्भिरसज्जमानःकरोत्यर्थंशक्तिमहापयित्वा ॥ क्षिप्रंयशस्तंसमुपैतिसंतमलंप्रसन्नाहिसुखायसंतः १ महांतमप्यर्थमधर्मयुक्तंयःसंत्यजत्यनपाकृष्टएव ॥ सुखंसुदुःखान्यवमुच्यशेतेजीर्णांत्वचंसर्पइवावमुच्य २ अनृतेचसमुत्कर्षोराजगामिचपैशुनम् ॥ गुरोश्चालीकनिर्बंधःसमानिब्रह्महत्यया ३ असूयैकपदंमृत्युरतिवादःश्रियोवधः ॥ अशुश्रूषात्वराश्लाघाविद्यायाःशत्रवस्त्रयः ४ आलस्यंमदमोहौचचापलंगोष्ठिरेवच ॥ स्तब्धताचाभिमानित्वंतथाऽत्यागित्वमेवच ५ एतेवैसप्तदोषाःस्युःसदाविद्यार्थिनांमताः ॥ सुखार्थिनःकुतोविद्यानास्तिविद्यार्थिनःसुखम् ॥ सुखार्थीवात्यजेद्विद्यांविद्यार्थीवात्यजेत्सुखम् ६ नाग्निस्तृप्यतिकाष्ठानांनापगानांमहोदधिः ॥ नांतकःसर्वभूतानांनपुंसांवामलोचना ७ आशाधृतिंहंतिसमृद्धिमंतकःक्रोधःश्रियंहंतियशःकदर्यता ॥ अपालनंहंतिपशूंश्चराजन्नेकःक्रुद्धोब्राह्मणोहंतिराष्ट्रम् ८ अजाश्चकांस्यंरजतंचानित्यंमध्वाकर्षःशकुनिःश्रोत्रियश्च ॥ वृद्धोज्ञातिरवसन्नःकुलीनएतानितेसंतुगृहेसदैव ९ अजोक्षाचंदनंवीणाआदर्शोमधुसर्पिषी॥ विषमौदुंबरंशंखःस्वर्णनाभोऽथरोचना १० गृहेस्थापयितव्यानिधन्यानिमनुरब्रवीत् ॥ देवब्राह्मणपूजार्थमतिथीनांचभारत ११ इदंचत्वांसर्वपरंब्रवीमिपुण्यंपदंतातमहाविशिष्टम् ॥ नजातुकामान्नभयान्नलोभाद्धर्मंजह्याज्जीवितस्यापिहेतोः १२ नित्योधर्मःसुखदुःखेत्वनित्येजीवोनित्योहेतुरस्यत्वनित्यः ॥ त्यक्त्वाऽनित्यंप्रतितिष्ठस्वनित्येसंतुष्यत्वंतोषपरोहिलाभः १३ महाबलान्पश्यमहानुभावान्प्रशास्यभूमिंधनधान्यपूर्णाम् ॥ राज्यानिहित्वाविपुलांश्चभोगान्गतान्नरेंद्रान्वशमंतकस्य १४ मृतंपुत्रंदुःखपुष्टंमनुष्याउत्क्षिप्यराजन्स्वगृहान्निर्हरंति ॥ तंमुक्तकेशाःकरुणंरुदंतिचितामध्येकाष्ठमिवक्षिपंति १५ अन्योधनंप्रेतगतस्यभुंक्तेवयांसिचाग्निश्चशरीरधातून् ॥ द्वाभ्यामयंसहगच्छत्यमुत्रपुण्येनपापेनचवेष्ट्यमानः १६ उत्सृज्यविनिवर्तंतेज्ञातयःसुहृदःसुताः ॥ अपुष्पानफलान्वृक्षान्यथातातपतत्रिणः १७ अग्नौप्रास्तंतुपुरुषंकर्मान्वेतिस्वयंकृतम् ॥ तस्मात्तुपुरुषोयत्नाद्धर्मंसंचिनुयाच्छनैः १८ अस्माल्लोकादूर्ध्वममुष्यचाधोमहत्तमस्तिष्ठतिह्यंधकारम् ॥ तद्वैमहामोहनमिंद्रियाणांबुद्ध्यस्वमात्वांप्रलभेत राजन् १९

धन्यानिमंगलावहानि ११ सर्वपरंसर्वेभ्यः पुण्यहेतुभ्यःपरंउत्कृष्टं । महाविशिष्टं महेनउत्सवेनअविशिष्टंसमानंमांगलिकमित्यर्थः १२ अस्यजीवत्वस्यहेतुरविद्या । अनित्यं सुखदुःखे अविद्यांच । नित्येधर्मेनिरवद्ये आत्मनिचप्रतितिष्ठस्वनिष्ठांकुरु । संतुष्यसंतोषंप्राप्नुहि । तोषःपरउत्कृष्टःयस्मिन्लाभे १३ । १४ गृहात्तुनिर्हरंतिदूरीकुर्वंति १५ । १६ उत्सृज्यमृतस्यदेहंत्यक्त्वा १७ । १८ अस्माल्लोकादूर्ध्वंस्वर्गेअमुष्यअमुष्मात्स्वर्गात् । चात् अस्माच्चअधः पाताले । महत्तमःतमोगुणप्रधानैःपुरुषैःप्राप्यंस्थानं अंधकारंअप्रकाशंतत्अंधंतमः अंधतामिस्राख्यंनरकं बुद्ध्यस्व मात्वांरागांधंप्रलभेतस्पृशेत् १९

प्रतिपत्तुंज्ञातुं शक्ष्यसिचेदितिसंबंधः २० आत्माजीवोनदी पुण्यंधर्मएवतीर्थंयस्यां । सत्यंब्रह्म तस्मादुदयोयस्याः ।तस्यास्नातः निष्णातःप्रत्यग्रूपेमग्नइत्यर्थः । पूयतेशुद्ध्यति कः पुण्यकर्मा
पुण्यमपिकिं नित्यमलोभएव वैराग्यान्नपरंपुण्यमित्यर्थः २१ नदींसंसारनदीं जन्मदुर्गाणिसंतर मोक्षार्थंयतस्वेत्यर्थः २२ । २३ धृत्येति कामंअशनायांचधैर्येणजित्वा शिश्नोदरंदोषात्
रक्षेत् । सम्यग्दृष्ट्वावस्तूनामादानेन दृष्टपूतेस्थलेपदन्यासेनच पाणिपादंचक्षुषारक्षेत् । चक्षुःश्रोत्रेमनसैवपररूपादिभ्यः कुशब्देभ्यश्चव्यावर्त्तनेनरक्षेत् । मनोवाचंचकर्मणासंयमनेनरक्षेत्
२४ नित्योदकी नित्यंयथाकालंस्नानाचमनपरः २५ परिसंस्तीर्याग्नीन्परिस्तरणैः एतेनाग्निहोत्रमुपलक्षयतीतिनारायणः । परिसंस्तीर्यंवितत्य स्वेस्वेस्थानेआधायेत्यर्थः । ततोयज्ञैरिष्ट्वा

इदंवचःशक्ष्यसिचेद्यथावन्निशम्यसर्वंप्रतिपत्तुमेव ॥ यशःपरंप्राप्स्यसिजीवलोकेभयंनचामुत्रनचेहतेऽस्ति २० आत्मानदीभारतपुण्यतीर्थासत्योदयाधृतिकु
लादयोर्मिः ॥ तस्यांस्नातःपूयतेपुण्यकर्मापुण्योह्यात्मानित्यमलोभएव २१ कामक्रोधग्राहवतींपंचेंद्रियजलांनदीं ॥ नावंधृतिमयींकृत्वाजन्मदुर्गाणिसंतर २२
प्रज्ञावृद्धंधर्मवृद्धंस्वबंधुंविद्यावृद्धंवयसाचापिवृद्धम् ॥ कार्याकार्येपूजयित्वाप्रसाद्ययःसंपृच्छेन्नसमुह्येत्कदाचित् २३ धृत्याशिश्नोदरंरक्षेत्पाणिपादंचचक्षुषा ॥
चक्षुःश्रोत्रेचमनसामनोवाचंचकर्मणा २४ नित्योदकीनित्ययज्ञोपवीतीनित्यस्वाध्यायीपतितान्नवर्जी ॥ सत्यंब्रुवन्गुरवेकर्मकुर्वन्नब्राह्मणश्च्यवतेब्रह्मलोकात् २५
अधीत्यवेदान्परिसंस्तीर्यचाग्नीनिष्ट्वायज्ञैःपालयित्वाप्रजाश्च ॥ गोब्राह्मणार्थंशस्त्रपूतांतरात्माहतःसंग्रामेक्षत्रियःस्वर्गमेति २६ वैश्योऽधीत्यब्राह्मणान्क्षत्रियांश्चध
नैःकालेसंविभज्याश्रितांश्च ॥ त्रेतापूतंधूममाघ्रायपुण्यंप्रेत्यस्वर्गेदिव्यसुखानिभुंक्ते २७ ब्रह्मक्षत्रंवैश्यवर्णंचशूद्रःक्रमेणैतान्न्यायतःपूजयानः ॥ तुष्टेष्वेतेष्वव्य
थोदग्धपापस्त्यक्त्वादेहंस्वर्गसुखानिभुंक्ते २८ चातुर्वर्ण्यस्यैषधर्मस्तवोक्तोहेतुंचानुब्रुवतोमेनिबोध ॥ क्षात्राद्धर्माद्धीयतेपांडुपुत्रस्तंत्वंराजन्राजधर्मेनियुंक्ष्व
२९ ॥ धृतराष्ट्रउवाच ॥ एवमेतद्यथात्वंमामनुशाससिनित्यदा ॥ ममापिचमतिःसौम्यभवत्येवंयथाऽऽत्थमाम् ३० सातुबुद्धिःकृताऽप्येवंपांडवान्प्रतिमे
सदा ॥ दुर्योधनंसमासाद्यपुनर्विपरिवर्तते ३१ नादिष्टमभ्यतिक्रांतुंशक्यंभूतेनकेनचित् ॥ दिष्टमेवध्रुवंमन्येपौरुषंतुनिरर्थकम् ३२ ॥ इतिश्रीमहाभारतेउद्योग
पर्वणिप्रजागरपर्वणिविदुरवाक्येचत्वारिंशोऽध्यायः ॥ ४० ॥ ॥ ध ॥ ॥ समाप्तमिदंप्रजागरपर्व ॥ अथसनत्सुजातपर्व ॥ धृतराष्ट्रउवाच ॥
अनुक्तंयदितेकिंचिद्वाचाविदुरविद्यते ॥ तन्मेशुश्रूषतोब्रूहिविचित्राणिहिभाषसे १ ॥ विदुरउवाच ॥ धृतराष्ट्रकुमारोवैयःपुराणःसनातनः ॥ सनत्सुजातःप्रो
वाचमृत्युर्नास्तीतिभारत २ सतेगुह्यान्प्रकाशांश्चसर्वान्हृदयसंश्रयान् ॥ प्रवक्ष्यतिमहाराजसर्वबुद्धिमतांवरः ३

शस्त्रपूतःअंतरात्माचित्तंयस्य गोब्राह्मणार्थंमृतइत्यर्थः संग्रामेहतोवाक्षत्रियः २६ अधीत्यवेदंशास्त्रमितिशेषः त्रेताअग्नित्रयं तस्याःपूतंधूमंआघ्राय पुण्यंपावनं प्रेत्यमृत्वा २७ । २८ क्षात्राद्ध
र्मात्पृथिवीपालनरूपात् राज्यादितियावत् राजधर्मैराज्ये २९ मांअनुशाससिअनुशास्सि ३० । ३१ । ३२ ॥ इति उद्योगपर्वणिनीलकंठीयेभारतभावदीपेचत्वारिंशोऽध्यायः ॥ ४० ॥
एवंब्रह्मविद्याधिकारिविशेषणीभूतासाधनसंपत्तिःसम्यगुपपादिता तत्रकाचित्कचित्प्रसंगात् यतोयतोनिवर्त्ततइत्यादिनासंक्षेपेणब्रह्मविद्यासूचिता तांविस्तरेणश्रोतुकामोधृतराष्ट्रउवाच
अनुक्तमिति तेत्वया १ मृत्युःजन्ममरणप्रवाहात्मकःसंसारः २ तेतुभ्यं गुह्यान्गोप्यान् योगकलादीन् । प्रकाशान्शमादीन् । हृदयसंश्रयान्धर्मान्प्रवक्ष्यति ३

वर्णाश्रमक्रममुल्लंघ्यब्रह्मविद्यांनोपदिशेदित्याख्यायिकामुखेनाह किंत्वमित्यादिना सनातनापरनामासनत्सुजातः ४ । ५ । ६ । ७ । ८ विधिदृष्टेनशास्त्रादवगतेनकर्मणा मधुपर्कादिना ९ १० विद्याप्राप्तिफलमाह यंश्रुत्वेति ११ विषहेरन् बाधेरन् अमर्षःअसहिष्णुता उद्भवउत्कृष्टैश्वर्यं क्षयोदयौतयोर्हेतुभूतेपापपुण्येच १२ ॥ ॥ इति उद्योगपर्वणि नीलकंठीये भारतभावदीपे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ॥ ७ ॥ ॥ उद्योगपर्वणिसनत्सुजातीये भाष्यकारादिभिर्व्याख्यातान्संप्रतितनपुस्तकेषुचस्थितान्पाठान्श्लोकांश्च गुणोपसंहारन्यायेनैकीकृत्य व्याख्यायते । ततोराजेति । मनीषीशास्त्रसंस्कृतमनीषावान् रहितेएकांते परमांबुद्धिंपरविद्यां'अथपरायया तदक्षरमधिगम्यते'इतिश्रुतिप्रसिद्धांपप्रच्छ एतेनविषयोदर्शितः । प्रयोजनंदर्शयति महात्मावुभूषन्निति परंब्रह्मभवितुमिच्छन् 'ब्रह्मवेदब्रह्मैवभवति'इतिब्रह्मज्ञानस्यब्रह्मभावफलकत्वश्रवणात् विदुरेरितंवाक्यं 'सनत्सुजातः प्रोवाचमृत्युर्नास्तीति भारत'इतिमृत्युशब्दितस्य बंधस्याभावंश्रुत्वा प्रतिपूज्यासंगत्वात्कपटवतोऽपिममपापात्भयंनास्तीतिसंतोषंप्राप्य । तेनज्ञानस्यसर्वकर्मोन्मूलनहेतुत्वं दर्शितं यथोक्तं 'हत्वाऽपि सइमांल्लोकान्नहंतिननिबध्यते'इति १

॥ धृतराष्ट्रउवाच ॥ किंत्वंनवेदतद्भूयोयन्मेब्रूयात्सनातनः ॥ त्वमेवविदुरब्रूहिप्रज्ञाशेषोऽस्तिचेत्तव ४ ॥ विदुरउवाच ॥ शूद्रयोनावहंजातोनातोऽन्यद्वक्तुमुत्सहे ॥ कुमारस्यतुयाबुद्धिर्वेदतांशाश्वतीमहम् ५ ब्राह्मींहियोनिमापन्नःसुगुह्यमपियोवदेत् ॥ नतेनगर्ह्योदेवानांतस्मादेतद्ब्रवीमिते ६ ॥ धृतराष्ट्रउवाच ॥ ब्रवीहिविदुरत्वंमेपुराणंतंसनातनम् ॥ कथमेतेनदेहेनस्यादिहैवसमागमः ७ ॥ वैशंपायनउवाच ॥ चिंतयामासविदुरस्तमृषिंशंसितव्रतम् ॥ सचतच्चिंतितंज्ञात्वादर्शयामासभारत ८ सचैनंप्रतिजग्राहविधिदृष्टेनकर्मणा ॥ सुखोपविष्टंविश्रांतमथैनंविदुरोऽब्रवीत् ९ भगवन्संशयःकश्चिद्धृतराष्ट्रस्यमानसः ॥ योनशक्योमयावक्तुंत्वमस्मैवक्तुमर्हसि १० यंश्रुत्वाऽयंमनुष्येंद्रःसर्वदुःखातिगोभवेत् ॥ लाभालाभौप्रियद्वेष्यौयथैनंनजरांतकौ ११ विषहेरन्भयामर्षौक्षुत्पिपासेमदोद्भवौ ॥ अरतिश्चैवतंद्रीचकामक्रोधौक्षयोदयौ १२ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसनत्सुजातीयपर्वणिविदुरकृतसनत्सुजातप्रार्थनेएकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ ततोराजाधृतराष्ट्रोमनीषीसंपूज्यवाक्यंविदुरेरितंतत् ॥ सनत्सुजातंरहितेमहात्मापप्रच्छबुद्धिंपरमांबुभूषन् १ ॥ धृतराष्ट्रउवाच ॥ सनत्सुजातयदिदंशृणोमिनमृत्युरस्तीतितवप्रवादम् ॥ देवासुराह्याचरन्ब्रह्मचर्यममृत्यवेतत्कतरन्नुसत्यम् २ ॥ सनत्सुजातउवाच ॥ अपृच्छःकर्मणायच्चमृत्युर्नास्तीतिचापरम् ॥ शृणुमेब्रुवतोराजन्यथैतन्माविशंकिथाः ३

प्रश्नमेवाह सनत्सुजातेति । मृत्युरिति ध्रुवंजन्ममृतस्यचेतिसाहचर्याज्जन्ममरणप्रवाहरूपोबंधउच्यते सनास्तीतितवप्रकर्षेणवादंपूर्वोक्तंविदुरादीनांमुखात्शृणोमि । हेसनत्सुजात सनत् सर्वदा सुष्ठुजातंजन्मयस्य नित्यकुमारत्वेनजरामरणविवर्जितेत्यर्थः श्रुतिश्चैतदाह 'ननिरोधोनचोत्पत्तिर्नबद्धोनचसाधकः ॥ नमुमुक्षुर्नवैमुक्तइत्येषापरमार्थता'इति । नुतथा अमृत्यवेमृत्योरभावाय । एकशतंवर्षाणिमघवान्प्रजापतौब्रह्मचर्यमुवासेति बंधनिवृत्त्यर्थो यत्नश्चश्रूयते । नह्यसतोनित्यनिवृत्तस्यानिवृत्त्यर्थयत्नोयुज्यते । तदनयोः पक्षयोःकतरत्वमतंसत्यंतद्ब्रूहीतिशेषः २ यत् कर्मणाब्रह्मचर्येणमृत्युर्नास्तीति तेनसत्यस्यबंधस्यसाधनेननाशइतिअपृच्छः पृष्टवानसि । यच्चापरं मृत्युःस्वरूपतएवनास्तीतियपृच्छः । एतत्एतयोःपक्षयोःपरस्परविरुद्धत्वं माविशंकिथाः मामंस्थाः । अमृत्युःकर्मणाकेचिदितिपाठे कर्मसाध्यंअमृतत्वंउतज्ञानसाध्यमितिपक्षद्वयोपन्यासः तयोश्चक्रमसमुच्चयपक्षाश्रयेणविरोधभावंमन्वानोमाविशंकिथाइतिब्रवीतीत्यर्थः ३

अविरोधमेवाह उभेइति । एतस्यएकस्यैवपुंसोऽवस्थाभेदेनउभेअपिसत्येएव हेक्षत्रियविद्धि अविद्यावस्थायांबंधःसत्यःकर्मनाशश्च । विद्यावतांतुरज्जूरगवत्कालत्रयेऽपिनास्ति मोहाद्रा समानस्यतुज्ञानमात्रेणनिवृत्तिर्भवतीतिभावः । आद्यप्रवृत्तेइतिपाठे उभेअपिमतेअनादिनी नित्येइत्यर्थः । सिद्धांतमाह मोहादिति निर्मोहानांतुनास्त्येवमृत्युरित्यर्थः । मोहंविवृणोतिप्रमा दमिति आत्मतत्त्वानवेक्षणंप्रमादः मूलाज्ञानमितियावत् तदेवमृत्युः 'मृत्युर्वैतमः' इतिश्रुतेः । अप्रमादंअवहिततांसम्यगवेक्षणंज्ञानमितियावत् । 'ज्ञानंसम्यगवेक्षणम्' इतिस्मृतेः । अमृतत्वंअमृतत्वहेतुः ४ प्रमादात्अज्ञानात् असुराः असुषुरममाणाःकामक्रोधाद्यासुरवृत्तिभिराक्रांताः पराभवन्मृत्युवशाअभूवन् । तथाअप्रमादात्ज्ञानात् ब्रह्मभूताःपूर्वंब्रह्मैवसंतःअविद्ययाऽब्रह्मत्वमात्मनोमन्यमानाः विद्ययापुनर्ब्रह्मैवभवंति । 'ब्रह्मैवसन्ब्रह्माप्येति' इतिश्रुतेः । सुराश्चेतिपाठे सुराःशमदमादिमंतः ब्रह्मभूताःब्रह्मभावंगताइत्यर्थः॥ मृत्युरज्ञानं जंतून्आत्ति संसारसंकटेपातयति नतुव्याघ्रइवदृश्यते कार्यमेवास्यदृश्यतेनस्वरूपमित्यर्थः । हियतःअस्यरूपंनिरीक्ष्यमाणमपिनउपलभ्यते नहिरज्जूरगोपादानमज्ञानमुरगवद्द्रष्टुंशक्यमित्यर्थः ५ ननुयदिमृत्योःरूपंनोपलभ्यतेतर्हितत्सत्त्वेकिंप्रमाणमतआह यममिति । अतःअज्ञानाख्यान्मृत्योरन्यंयमसंज्ञंएकेमूढाःमृत्युमाहुः । 'अथ सत्यवतःकायात्पाशबद्धंवशंगतं ॥ अंगुष्ठमात्रंपुरुषंनिश्चकर्षयमोबलात्' इति । अस्यव्यतिरेकमुखेनआत्मनिकल्पितत्वमाह आत्मावसन्नमिति आत्मनिप्रतीच्येवाऽवसन्नंलीनं । बेनरज्जूरगादिवद्यमादिकमपिआत्मनिकल्पितमेवेत्यर्थः । आत्मावासमितिपाठेआत्माश्रयमित्यर्थः। यमप्रशमोपायमाहामृतामिति । ब्रह्मचर्यंब्रह्मणिचर्याआत्मानुसंधानं निरस्ताखिलकल्पनाजालंअमृतंमोक्षहेतुः योगिनांयमभयंनास्तीत्यर्थः । 'नतस्यरोगोनजरा

उभेसत्येक्षत्रियैतस्यविद्धिमोहान्मृत्युःसंमतोऽयंकवीनाम् ॥ प्रमादंवैमृत्युमहंब्रवीमितथाऽप्रमादममृतत्वंब्रवीमि ४ प्रमादाद्वैअसुराःपराभवन्नप्रमादाद्ब्रह्मभूताभवंति ॥ नैवमृत्युर्व्याघ्रइवात्तिजंतून्नह्यस्यरूपमुपलभ्यतेहि ५ यमंत्वेकेमृत्युमतोऽन्यमाहुरात्मावसन्नममृतंब्रह्मचर्यम् ॥ पितृलोकेराज्यमनुशास्ति देवःशिवःशिवानामशिवोऽशिवानाम् ६ अस्यादेशान्निःसरतेनराणांक्रोधःप्रमादोलोभरूपश्चमृत्युः ॥ अहंगतेनैवचरन्विमार्गान्नचात्मनोयोगमुपैतिकश्चित् ७

नमृत्युः' इति श्रुतेः । ननुकल्पितस्ययमस्यमृगजलादेरिवार्थक्रियाकारित्वंनयुक्तमतआह पितृलोकइति । यादृशोयक्षस्तादृशोबलिरितिन्यायेन आत्मनिकल्पितगरुडभावस्यविषनिवर्तकत्ववत् तत्राप्यर्थक्रियाकारित्वमस्तीतिभावः । अत्रयुक्तिमाह शिवइति शीतोष्णादिवदेकस्मिन्सत्यस्यविरुद्धधर्मद्वयस्यासंभवात् तस्मिन्नेवशिवत्वाशिवत्वेरज्ज्वांसर्पदंडादिवत्कल्पितेइत्यर्थः ६ अस्येति । अस्यय मस्यआदेशादाज्ञातः क्रोधादिरूपोमृत्युर्मरणहेतुर्निःसरतिउद्भवति अत्रयथाऽज्ञानाभिमानिनीदेवतायमः एवंक्रोधाद्यभिमानिन्योऽपिदेवताःयमस्यदासभूताः संतीत्यधिदैवमर्थः । अध्यात्मंतु अज्ञानादेवक्रोधादयउद्भवंति ततोम्रियतइत्यर्थः । ननुयद्यात्मावसन्नमज्ञानंतर्हितद्वत्आत्मनःपृथक्सिद्धमपृथक्सिद्धंवा । अंत्येमुक्तानामपिपुनर्बंधापत्तिः । आद्येसांख्यप्रकृतिवत्तन्नाशापत्तिरित्याशंक्यमृत्युंविशिनष्टि नराणांअहंगतेनैवविमार्गान्चरन्निति जीवानांयोऽहंकारस्तेनसहगंतगमनंअहंकारसाहित्यं तेनविमार्गान्अनात्मगान्मार्गान् चरन् विषयान्भुंजानइत्यर्थः मुक्तौअज्ञानाश्रयस्यअहमर्थस्यचिदाभासस्यनष्टत्वात् नशुद्धादात्मनःसकाशादज्ञानंपुनरुदेतिनापिपृथगवतिष्ठतइतिभावः । ननुसुषुप्तावहंकारलयेपिदृश्यतइत्यतआह नचेति । तदानीमपिसूक्ष्मस्याहमर्थस्यसत्त्वान्नकश्चित्ज्ञानंविनाआत्मयोगंउपैति स्वंरूपंप्राप्नोतीत्यर्थः । अतोऽहंकारनाशात्प्राक्आत्मनःक्रोधादिरूपस्यमृत्योरुदयोयुज्यतएवेत्यर्थः । आस्यादेषइतिपाठे आस्तेऽस्मिन्नित्यास्यमज्ञानस्याधिष्ठानंअहंकारस्तस्मान्निःसरतइतिपूर्ववत् ७

आत्मयोगाभावे दोषमाह तेइति । तेन राः मोहिताः क्रोधादिभिरितिशेषः तद्वशे क्रोधादिरूपस्य मृत्योर्वशेवर्तमानाः संतः इतोऽस्माल्लोकात्प्रेताः गताः संतः तत्रयमलोके पुनरित्यसकृद्गमन सूचनार्थं पतंति गच्छंतिनरकादावितिशेषः ततस्तान्तत्रगतान् अनुदेवा इंद्रियाणिछवंतेतत्रैवगच्छंति । 'तमुत्क्रामंतंप्राणोऽनूत्क्रामतिप्राणमनूत्क्रामंतंसर्वेप्राणा अनूत्क्रामंति' इतिश्रुतेः । मृत्प्रा णत्यागेइत्यनुशासनाच्च मृत्युरज्ञानंमरणसंज्ञामपिलभते । अयंभावः 'मृत्युरत्यंतविस्मृतिः' इतिस्मृतेरज्ञानंप्रत्यगानंदविस्मारकत्वेन यमश्चप्रत्यक्त्वेनगृहीतस्यदेहस्यचाविस्मारकत्वेनसा म्यात्द्वयमपिमृत्युशब्दितं । तथाचमुख्योमृत्युरज्ञानंगौणोयमइति ८ ननुप्राङ्मरणान्मृत्युभयंमृतस्यतुकृतकृत्यतैवास्त्वित्याशंक्याह कर्मोदयइति भोगप्रदस्यकर्मणउदयेसतिकर्मफलंप्र गेऽनुरागोयेषांतेतथाभूताः तत्रस्वर्गादौअनुयांति भोगवासनयापूर्वदेहंत्यक्त्वागच्छंति अतोमृत्युंनतरंति देहनाशमात्रेणनमुच्यंतइत्यर्थः तथाचश्रुतिः । 'येयंप्रेतेविचिकित्सामनुष्येऽस्तीत्ये केनायमस्तीतिचैके' इति मृतस्यास्तित्वनास्तित्वेउपक्षिप्य । 'योनिमन्येप्रपद्यंतेशरीरत्वायदेहिनः ॥ स्थाणुमन्येऽनुसंयंतियथाकर्मयथाश्रुतं' इति अस्तीत्येवोपलब्धव्यइति चास्तित्वंदेहांतरप्रा प्तिंचाह अत्रहेतुः सदर्थेति सत्ब्रह्मतत्प्राप्त्यर्थोयोगः सदर्थयोगः अमाद्यष्टांगोपेतः तस्यानवगमादलाभात्समंतात् ऊर्ध्वाधस्तिर्यग्योनिषुभोगयोगेनभोगलिप्सयादेहीदेहाभिमानीप्रवर्तते ९ भोगमेवाभिनंदति तद्वाहाति । यत् अस्यपुंसः मिथ्याभूतेषुअर्थेषुशब्दादिविषयेषु योगोरागस्तदर्थंगतिः प्रवृत्तिः नित्यास्वाभाविकी तदेवइंद्रियाणांमहामोहनं । अर्थानांमिथ्यात्वंसंकल्पकृतत्वात्

तेमोहितास्तद्वशेवर्तमानाइतःप्रेतास्तत्रपुनःपतंति ॥ ततस्तान्देवाअनुविप्लवंतेअतोमृत्युर्मरणाख्यामुपैति ८ कर्मोदयेकर्मफलानुरागास्तत्रानुतेयांतिन तरंतिमृत्युम् ॥ सदर्थयोगानवगमात्समंतात्प्रवर्ततेभोगयोगेनदेही ९ तद्वैमहामोहनमिंद्रियाणांमिथ्यार्थयोगस्यगतिर्हिनित्या ॥ मिथ्यार्थयोगाभिहतांतरा त्मास्मरन्नुपास्तेविषयान्समंतात् १० अभिध्यावैप्रथमंहंतिलोकान्कामक्रोधावनुगृह्याशुपश्चात् ॥ एतेबालान्मृत्यवेप्रापयंतिधीरास्तुधैर्येणतरंतिमृत्युम् ११ सोऽभिध्यायन्नुत्पतितान्निहन्यादनादरेणाप्रतिबुद्ध्यमानः ॥ नैनंमृत्युर्मृत्युरिवात्तिभूत्वाएवंविद्वान्योविनिहंतिकामान् १२ कामानुसारीपुरुषःकामाननुविनश्य ति ॥ कामान्व्युदस्यधुनुतेयात्किंचित्पुरुषोरजः १३ तमोऽप्रकाशोभूतानांनरकोऽयंप्रदृश्यते ॥ मुह्यंतइवधावंतिगच्छंतःश्वभ्रवत्सुखम् १४

यदाहाक्षपादः । दोषनिमित्तंरूपादयोविषयाः संकल्पकृताइति दोषोरागादिः मिथ्यार्थयोगेनविषयसंगेन अभिहतांतरात्माव्यथितचित्तः सन् विषयान्स्मरन्स्मरणपूर्वकंउपास्ते हेतौशतृप्र त्ययः । स्मरणमेवविषयोपासनाहेतुरतस्तेषांविस्मरणमेवकर्तव्यमित्यर्थः १० तत्स्मरणेदोषमाह अभिध्येति अभिध्याविषयस्मरणंप्रथमं । ततःकामास्तत्प्राप्त्यभिलाषः । केनचिन्नि मित्तेनतत्प्रतिहतौक्रोधः एतेअभिध्यादयः एवंक्रमेणबालान् अजितचित्तान् मृत्यवेमोहायप्रापयंति । येतुधीराः जितचित्ताः निष्कामास्तेमृत्युंतरंति । पाठांतरेधर्मयोगाभ्यासंचरंति ११ सइति । सःमृत्युतरणकामः योगीवा अभिध्यायन् आत्मानंचिंतयन् उत्पतितान्कामानेवनिहन्यात् । हननोपायमाह अनादरेणतुच्छत्वबुद्ध्या पथिपतिततृणवत् स्त्र्यादीन्प्राप्तानपिअप्र तिबुद्ध्यमानः अचिंतयन् । यएवंविद्वान्भूत्वाकामान्निहंति एनंपुरुषंमृत्युरज्ञानं मृत्युरिवयमइवनात्तिनग्रसते निष्कामस्यमृत्युभयंनास्तीत्यर्थः १२ सकामंनिंदतिकामानुसारीति विषयार्थी विषयमनुविनश्यति यथोक्तं । 'कुरंगमातंगपतंगभृंगमीनाहताःपंचभिरेवपंच' इति । फलितमाह कामानिति । विषयांस्त्यक्त्वा रजोदुःखरूपंयत्किंचित्सर्वंधुनुतेनाशयति १३ विपक्षेदोषमाह तमइति अयंकामः भूतानांतमःअज्ञानं तत्कार्यकरत्वात् यतः अप्रकाशो नास्तिप्रकाशोविषयविवेकोयस्मिन्सतथा अतएवनरकवद्दुःखदः । एतदेवाह मुह्यंतइति यथामुह्यंतोमदिरामत्ताः । गृह्यंतइतिपाठेग्रहगृहीताः । पथिगच्छंतः श्वभ्रवत्गर्तयुक्तंदेशंधावंति । तथाकामिनः संसारेवर्तमानाः सुखंसुखप्रदंभार्यादिंप्रतिधावंतीत्यर्थः १४

अमूढवृत्तेःकामेनानभिभूतचित्तस्यपुंसस्तु तृणमयव्याघ्रवत्वमृत्युर्यमः किंकुर्यान्नकिमपीत्यर्थः । यस्मादेवंतस्मात्अस्यकामस्यआयुःजीवनंमूलाज्ज्ञानंनिर्णुदन् अपनेष्यन् अन्यत्किंचित्काम्यमानं रूपादिकंअमन्यमानःअगणयन्नाधीयीतनस्मरेत् । तुच्छत्वबुद्ध्याविषयविस्मरणमेवकाममूलोच्छेदहेतुरित्यर्थः। यदाह वसिष्ठः । ‘भ्रमस्यजागतस्यास्यजातस्याकाशवर्णवत् ॥ अपुनस्मरणं मन्येसाधोविस्मरणंवरं ॥ तथाऽपितवनस्वास्थ्यंसर्वविस्मरणादृते’इतिच १५ यमंत्वेकेइत्यत्रआत्मावसन्नमितियमोप्यात्मनिकल्पितइत्युक्तंतद्व्याचष्टे सक्रोधलोभाविति यस्त्वच्छरीरेएषःअहं प्रत्ययविषयःअंतरात्मा बाह्यात्मानंशरीरमपेक्ष्य आंतरःचिदचिद्ग्रंथिरूपोजीवः समोहवान् अतस्मिंस्तद्बुद्धिर्मोहः अनात्मनिदेहादावात्मबुद्धिर्विपर्ययरूपंज्ञानंतद्वान् क्रोधलोभमृत्युरूपोभवति । शुकनलिकान्यायेनस्वयंबंधहीनोऽपिअज्ञानात्स्वात्मानंबद्धंमन्यते तेनकामादिवशोभवतीत्यर्थः । उपसंहरतिएवमिति जायमानंमोहादिविशेषः मोहविरोधिनिज्ञानेतिष्ठन्निष्ठावान् यमान्नबिभेति । तत्रदृष्टांतः विषयेगोचरेतस्यज्ञानस्यमृत्युर्बंधःविनश्यते । मृत्योर्यमस्य । मर्त्यःदेहः । अज्ञानकृतोबंधोज्ञानेनैवनश्यतिनकर्मणेतिप्रघट्टकार्थः १६ अत्रशंकतेयानितिसाधुइज्य यासोपासनेनअश्वमेधादिनाकर्मणा पुण्यतमान्इंद्रलोकाद्यपेक्षयापुण्यान्सनातनान् व्यवहारापेक्षयानित्यान्लोकान्सत्यलोकाख्यान् इहवेदेआहुःवेदविदः । तेषांलोकानांपरार्थंपरार्थत्वंमोक्ष प्रापकत्वंवेदाःकथयंति।एतत्कर्मणांक्रममुक्तिहेतुत्वंविद्वान्जानन् कर्मकथंनुनउपैतिनशरणीकरोति।कर्मभिरेवमोक्षसिद्धौकिंज्ञानेनेतिभावः१७समाधत्ते एवमिति अविद्वान्एवंत्वदुक्तक्रमेणतत्रमो

अमूढवृत्तेःपुरुषस्येहकुर्यात्किंवैमृत्युस्ताार्णइवास्यव्याघ्रः ॥ अमन्यमानःक्षत्रियकिंचिदन्यन्नाधीयीतनिर्णुदन्निवास्यचायुः १५ सक्रोधलोभौमोहवानंतरात्मा सवैमृत्युस्त्वच्छरीरेयएषः ॥ एवंमृत्युंजायमानंविदित्वाज्ञानेतिष्ठन्नबिभेतीहमृत्योः ॥ विनश्यतेविषयेतस्यमृत्युर्मृत्योर्यथाविषयंप्राप्यमर्त्यः १६ धृतराष्ट्रउवाच ॥ यानेवाहुरिज्ययासाधुलोकान्द्विजातीनांपुण्यतमान्सनातनान् ॥ तेषांपरार्थंकथयंतीहवेदाएतद्विद्वान्नोपैतिकथंनुकर्म १७ ॥ सनत्सुजातउवाच ॥ एवंह्यविद्वानुपयातितत्रतत्रार्थजातंचवदंतिवेदाः ॥ अनीहआयातिपरंपरात्माप्रयातिमार्गेणनिहत्यमार्गान् १८ ॥ धृतराष्ट्रउवाच ॥ कोसौनियुंक्तेतमजंपुराणंसचेदिदंसर्वमनुक्रमेण ॥ किंवाऽस्यकार्यमथवासुखंचतन्मेविद्वन्ब्रूहिसर्वंयथावत् १९

क्षपदेउपयाति । तथैवअर्थजातंभोगमोक्षाख्यंप्रयोजनसामान्यंवेदाःवदंति । तथाअनीहोनिष्कामःपरात्मापरंअनात्मानंदेहादिकंअविद्ययाआत्मत्वेनगृह्णन् जीवःपरंनिर्गुणात्मानंआयाति आभिमुख्येनप्राप्नोति । निष्कामस्तत्तदुपाध्याकारतांत्यक्त्वा निष्कलेनरूपेणावतिष्ठतइत्यर्थः । अन्यथातु सएवजीवःमार्गेणसुषुम्नानाड्या मार्गान्तत्तल्लोकप्रापकान्निहत्यानिरस्य ब्रह्मलोक द्वारापरंप्रयाति । ‘तयोर्ध्वमायन्नमृतत्वमेति’इतिश्रुतेः । तथाचबृहदारण्यके ।‘तद्यथापेशस्कारीपेशसोमात्रामुपादायान्यन्नवतरंकल्याणतरंरूपंकुरुते एवमेवेदंशरीरंनिहत्यविद्यांगमयित्वान्य न्नवतरंकल्याणतरंरूपंकुरुते पित्र्यंवागांधर्वंवादैवंवाप्राजापत्यंवाब्राह्मंवेतितु कामयमानोऽथाकामयमानोयोऽकामोनिष्कामआप्तकामःस्यान्नतस्यप्राणाउत्क्रामंत्यत्रैवसमवनीयंतइति कामय मानस्यअस्माद्देहादुत्क्रांतस्यदेहंमरणेनासद्रूपत्वंनयतःस्वर्णकारदृष्टांतेनपित्र्यगांधर्वादिरूपांतरकर्तृत्वमुक्त्वा निष्कामस्यपूर्णब्रह्मभावंगतस्यउत्क्रांतिर्निषिध्यते १८ ननुजीवःपरंप्राप्नोतिचेदन्य स्यान्यात्मताऽयोगात्परएवजीवत्वंप्राप्नोतीत्युक्तंभवति तच्चायुक्तं अनियोज्यब्रह्मात्मत्वात्परस्येत्याशंकते कोसाविति तंपरमात्मानं अजंजन्मादिहीनं पुराणंपुराऽपिनवमित्यनेनपरिणामि त्वंनिरस्तं तादृशंपरंकोऽसौनियुंक्ते यन्नियोगादयंदुःखादिभाग्भवति । नियोजकांतरसत्वेतस्याप्यन्यस्तस्याप्यन्यइतिपराऽनवस्थेतिभावः । ननुपरएवनियोजकांतरंविनाइदंसर्वंचेतनाचेतनं-

विश्वं । 'तत्सृष्ट्वातदेवानुप्राविशत्'इतिश्रुतेः क्रमेणभवतीतिशंकतेसचेदिति । एतद्दूषयतिकिंवेति अस्यपरस्यावाप्तकामतयानिष्कामस्यकिंवाकार्यंकर्त्तव्यमस्तिनकिमपीत्यर्थः । प्रयोजनमनुद्दि
श्यनमंदोऽपिप्रवर्त्ततइतिन्यायेन प्रयोजनंविनापरेप्रवृत्तिर्नसंभवतीत्यर्थः । ननुलोकवत्तुलीलाकैवल्यमितिन्यायेनलोकेनिष्प्रयोजनाऽपिचतुरंगादिक्रीडादृश्यते तद्वत्परस्यापिलीलैवजगत्सृ
ष्टिप्रवेशादिकमित्याशंक्याहाथवेति चतुरंगादिक्रीडाऽपिसुखार्थमेवक्रियते नचपरस्यसुखलिप्सास्ति नचस्वात्मानंस्वयमेवसंकटेपातयतःसुखंवाऽस्तीतिनपरस्यस्वतःसृष्टौप्रवृत्तिःसंभवति ना
पितेनसहजीवस्याभेदःसंभवति । जीवापरयोर्भेदेतुजीवादृष्टानुरोधेनराजवत्परोजीवभोगार्थंसृष्ट्याष्टौप्रवर्त्तते स्वकृतमर्यादापरिपालनार्थंचेतियुज्यतेऽतःनतयोरभेदःसंभवतीत्यर्थः १९ उत
रमाहदोषइति विभेदयोगेविशेषेणभेदोययोस्तौविभिन्नौतयोर्योगेअभेदेनऐक्येमहान्दोषः अन्यस्यान्यात्मत्वासंभवात् । अतोजीवपरयोस्तात्विकोभेदोनयुक्तइत्यर्थः । किंतर्हिअनादियोगे
न नअत्तुंशीलमस्येत्यनादिर्भोग्यवर्गःस्थूलसूक्ष्मदेहद्वयात्मकानिक्षेत्राणितैःसहयोगेनसंबंधेन पुंसःपरस्मात्सकाशात्नित्याःजीवाःघटाकाशजलचंद्रादिन्यायेनभवंति । तथातेनऔपाधि
केनभेदेनास्यआधिक्यंकिंचिदपिनअपैति नाहिजलचंद्रेकंपमानेमुख्यश्चंद्रःकंपते । नापिघटाकाशेचलति मुख्येआकाशेचलनंसंभाव्यते । तथाचश्रुतयः । 'एकएवतुभूतात्माभूतेभूतेप्रकाशते ॥
एकधाबहुधाचैवदृश्यतेजलचंद्रवत् । यथाह्ययंज्योतिरात्माविवस्वानपोभिन्नाबहुधैकोऽनुगच्छन् ॥ उपाधिनाक्रियतेभेदरूपोदेवःक्षेत्रेष्वेवमजोऽयमात्मा । घटसंवृतमाकाशंनीयमानेयथाघटे ॥
घटोनीयेतनाकाशंतद्वज्जीवोनभोपमः'इत्याद्या औपाधिकंजीवपरयोर्भेदंदर्शयंति । एकधेतिईश्वररूपेण बहुधेतिजीवरूपेणएकएवशुद्धः जलाशयतरंगचंद्रन्यायेनप्रकाशतइत्याद्यश्रुतेरर्थः ।

सनत्सुजातउवाच ॥ दोषोमहानत्रविभेदयोगेह्यनादियोगेनभवंतिनित्याः ॥ तथाऽस्यनाधिक्यमपैतिकिंचिदनादियोगेनभवंतिपुंसः २० यएतद्वाभगवान्स
नित्योविकारयोगेनकरोतिविश्वम् ॥ तथाचतच्छक्तिरितिस्ममन्यतेतथार्थयोगेचभवंतिवेदाः २१

एवंचजीवेशभेदप्रयुक्तःसर्वोऽपिव्यवहारःसेत्स्यति नचपरांतरकल्पनाऽवतरतीतिसिद्धं । कथंभूतेनअनादियोगाख्येनक्षेत्रसंबंधेन अनादियोगेनअनादिनाआदिशून्येनाज्ञानेनहेतुनायोगःसंबंधो
ऽस्यसोनादियोगस्तेनभवंति जन्मादिभाजइतिशेषः । पुंसःपुमांसः अज्ञानयोगोत्थःक्षेत्रयोगइत्यर्थः २० जीवेशयोर्भेदंनिरस्य प्रपंचस्यापिपरमेश्वरात्पृथक्सत्वंवारयति यएतद्वेति वाशब्दउप
मार्थे यइतिपुंस्त्वंविधेयापेक्षया एतत्परिदृश्यमानंजगत्यज्जगदिवभातिसनित्योऽविकारीभगवान्सर्वैश्वर्यसंपन्नःपरमात्मैव वाशब्दोमिथ्यात्वद्योतकः तथाहि । 'यत्रहिद्वैतमिवभवतितदितरइत
रंपश्यति'अहमद्यस्वप्नेगजमिवाद्राक्षमितिवेदेलोकेचमिथ्यार्थानुवादेइवशब्दःप्रयुज्यते । श्रुतिश्च'इदंसर्वंयदयमात्माब्रह्मैवेदंविश्वंसर्वंखल्विदंब्रह्म'इत्याद्या । प्रपंचस्यब्रह्मानन्यत्वमाह विकारो
ऽनृतंमायातद्योगेनविश्वंकरोतिस्वप्नेंद्रजालवन्नतुकनककुंडलवज्जगद्ब्रह्मणोःपरमार्थतोविकारविकारीभावोऽस्ति । ब्रह्मणोऽप्यनित्यत्वापत्तेरित्यर्थः । ननुनित्यंपरिणामिचप्रधानंस्वतंत्रमेवजडस्य
जगतोजडमेवकारणमस्तुसादृश्यात् नतुचेतनंवैलक्षण्यादित्याशंक्याह तथाचतच्छक्तिरिति तथाचतेनैवप्रकारेणस्वात्मानिस्वप्नवज्जगदवभासयंती तस्यपरमात्मनःशक्तिस्तदनन्याऽस्तीतिवे
दोऽपिमन्यतेस्म तथाचश्रूयते । 'देवात्मशक्तिंस्वगुणैर्निगूढाम्'इति ।'पराऽस्यशक्तिर्विविधैवश्रूयते'इतिच । ननुभोग्यत्वात्शक्तिःआत्मनःस्वं भोक्तृत्वादात्मातत्स्वामी । तथाचतयोर्भेदइत्याशं
क्याहतथार्थेति शक्तिर्हिनशक्तिमतःपृथग्दृष्टा वन्हेरिवदहनप्रकाशनशक्तिः । वेदाअपि'बहुस्यांप्रजायेयेतिसच्चत्यच्चाभवत्'इत्यादयः । चकाराल्लोकेशक्तिग्रहोऽपितादृशार्थयोगेशक्तिशक्तिम
तोरभेदेनसंबंधेप्रमाणंभवतीत्यर्थः २१

एवंजीवेशयोरभेदाज्जगतोमिथ्यात्वाज्जगज्जन्मादिनिमित्तभूतायाःप्रकृतेर्ब्रह्मानन्यत्वाच्चब्रह्माद्वैतंसिद्धं । तेनमृत्युर्नास्तीतिपक्षःस्थितः । येषांचमतेकर्मणामृत्युनाशस्तेषामपिक्रममुक्तिप्रणाड्या कर्मणांमोक्षहेतुत्वंचस्थितं । येकेचित्तुअस्मिन्मोक्षेनिमित्ते धर्मान् अग्निहोत्रादीनिकर्माणिनाचरंति किंतुमोक्षार्थंसंन्यासमेवकुर्वंति येकेचित्क्रममुक्त्यर्थंकर्माण्येवउपासनासहितानिकुर्वंति येषांतु तादृशोमहान्धर्मोनास्ति किंतुअल्पएवाग्निहोत्रादिर्नित्यानुष्ठानात्मकोऽस्ति तेषामपिसधर्मःपापेनरागादिदोषेणहन्यते उतधर्मएवपापंहंतीतिप्रश्नार्थः २२ उत्तरमाह उभयमिति तत्रमो क्षेउभयंसंन्यासःसोपासनंकर्मचउपयुज्यते । तथाधर्मस्यफलंस्वर्गःचित्तशुद्धिर्वा । इतरस्यअधर्मस्यपापस्य नित्यकर्मत्यागस्यवाफलंनरकः उपयुज्यतइति २३ इदमेवसंग्रहवाक्यंविवृणोति तस्मिन्स्थितावितिद्वाभ्यां उभयंसंन्यासःसोपासनंकर्मच तस्मिन्मोक्षेस्वस्वरूपेस्थितौस्थितिनिमित्तंनित्यंअविचलं वाशब्दएवार्थः । तयोर्विशेषमाह ज्ञानेनेति संन्यासपूर्वकेणज्ञानेनब्रह्मावि द्ययासिद्धंनित्यनिर्वृत्तंब्रह्मप्रतिहंति अनृतजडदुःखादिप्रातिकूल्येनसच्चिदानंदात्मकंगच्छतिप्राप्नोति । हंतेरत्रगत्यर्थत्वंज्ञेयं । तथासोपासनेनकर्मणा अन्यथासिद्धाद्विपरीतंसाध्यंपुण्यंप्रश स्तंदेवतादिभावंउपैति यतःदेहीदेहाभिमानीभवति तथागतंतेनप्रकारेणस्थितंसिद्धंनरदेहाभिमानजंपापमपिकदाचित्उपैति । देवभावंप्राप्तोऽपिकदाचिन्मुच्यतेऽन्यथाजयविजयादिवत्ततोभ्र श्यत्यपीतिज्ञानमेवश्रेष्ठमितिभावः २४ फलंधर्मस्यैवेतरस्यचेत्युत्तरार्द्धंविवृणोति गत्वेति उभयंपुण्यस्यपापस्यचफलंस्वर्गनरकाख्यं तच्चअस्थिरंक्षयिष्णु गत्वाप्राप्य पुनरस्मिन्लोके कर्मणा

॥ धृतराष्ट्रउवाच ॥ ॥ येस्मिन्धर्मान्नाचरंतीहकेचित्तथाधर्मान्केचिदिहाचरंति ॥ धर्मःपापेनप्रतिहन्यतेस्विदुताहोधर्मःप्रतिहंतिपापम् २२ ॥ ॥ सनत्सुजातउवाच ॥ ॥ उभयमेवतत्रोपयुज्यतेफलंधर्मस्यैवेतरस्यच २३ तस्मिन्स्थितौवाऽप्युभयंहिनित्यज्ञानेनविद्वान्प्रतिहंतिसिद्धम् ॥ तथाऽन्यथापुण्यमुपैतिदेहीतथागतंपापमुपैतिसिद्धम् २४ गत्वोभयंकर्मणायुज्यतेस्थिरंशुभस्यपापस्यसचापिकर्मणा ॥ धर्मेणपापंप्रणुदतीहविद्वान्धर्मोबलीयानितितस्य सिद्धिः २५ ॥ ॥ धृतराष्ट्रउवाच ॥ ॥ यानिहाहुःस्वस्यधर्मस्यलोकान्द्विजातीनांपुण्यकृतांसनातनान् ॥ तेषांक्रमान्कथयततोऽपिचान्यन्नैतद्विद्वन्वेत्तुमिच्छामिकर्म २६ ॥ ॥ सनत्सुजातउवाच ॥ ॥ येषांव्रतेऽथविस्पर्धाबलेबलवतामिव ॥ तेब्राह्मणाइतःप्रेत्यब्रह्मलोकप्रकाशकाः २७

पूर्वसंस्कारानुगुणेनतत्त्वद्योन्युचितेनयुज्यते योगंप्राप्नोति । कर्मकृत्वातत्फलंभुक्त्वापुनःकर्मैवकुरुतेतेनकर्मपाशान्नमुच्यतइत्यर्थः । यद्यप्येवंतथाऽपिसचापिकर्मयोगी कर्मणाधर्मेणधर्मरूपेण पापंप्रणुदतिदूरीकरोतिविद्वान् । मूढस्तु कर्मणःफलंस्वर्गपश्वादिकमेवेच्छतीतिभावः । अतोहेतोर्धर्मोबलीयानूनत्वधर्मः । इतिहेतोस्तस्यधर्मकुर्वतःसिद्धिः कालेनरागादिदोषनाशद्वारा मोक्षोऽप्यस्तीत्यर्थः । विद्धीतिपाठेसिद्धिमितिशेषः २५ काम्योधर्मःपापंचबंधहेतुर्नित्यधर्मजंपुण्यंमोक्षहेतुरितिमन्वानःपृच्छति यानिहाहुरिति । 'अपामसोमममृताअभूम । अक्षय्यह्वैचातुर्मास्ययाजिनःसुकृतंभवति । यस्यैतेऽष्टाचत्वारिंशत्संस्काराःसब्रह्मणःसायुज्यंसलोकतांगच्छति' इत्याद्याःश्रुतयःस्मृतयश्च पुण्यकृतांद्विजातीनांस्वधर्मस्यफलभूतान्सनातनान्नित्यान्लोकान्आहुः तेषांक्रमान् धर्मतारतम्येनउच्चनीचभावंकथय । ततोऽपिचान्यान्निरतिशयान्प्रत्यगानंदरूपान् बहुत्वंपूजायां मोक्षसुखंचकथय । एतत्स्वधर्मादन्यत्स्वाभाविक प्रवृत्तिविषयभूतंनिषिद्धंकाम्यंचकर्मवेदितुंनइच्छामि एतेनस्वस्यवैराग्यंदर्शितं प्रकृतेचतदुपयोगोस्तीतिज्ञेयम् २६ उत्तरमाह येषामिति व्रतेयमनियमादिरूपेविस्पर्द्धाअहमन्येभ्योऽधिकंयमादीन्साधयिष्यामि अहमन्येभ्यइतिसंघर्षः । विश्वामित्रादिवत्तपस्यभिनिवेशइतियावत् । बलवतांमल्लादीनामिवतेयोगिनःब्राह्मणाःसगुणब्रह्मविदइतोदेहात्प्रेत्यगत्वा ब्रह्मलोकेतेजस्विनः पूज्याभवंति । ततोमुक्तिंचब्रह्मणासहप्राप्नुवंति । तथाचस्मर्यते । ' ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे ॥ परस्यांतेकृतात्मानःप्रविशंतिपरंपदम्'इति २७

सर्वधर्मश्रेष्ठस्ययोगधर्मस्यफलमुक्त्वाइज्यादिधर्मस्यफलमाह । येषामिति । अहमेवयज्ञादीन्सर्वोत्कर्षेणानुतिष्ठेयमितियेषामाग्रहः तेषांतत्यज्ञादिकंज्ञानस्यसाधनंविविदिषोत्पादनद्वाराभवति त
थाचश्रुतिः । 'तमेतंवेदानुवचनेनब्राह्मणाविविदिषंति यज्ञेनदानेनतपसाऽनाशकेन'इति । त्रिविष्टपंदेवलोकंनतुसत्यलोकं । विविदिषाद्यर्थमपिकर्मानुतिष्ठतांआनुषंगिकंस्वर्गफलमपिभवती
त्यर्थः यदाहापस्तंबः । 'तद्यथाऽम्रेफलार्थेनिर्मितेछायागंधइत्यनूत्पद्येते एवंधर्मंचर्यमाणमर्थाअनूत्पद्यंते'इति २८ येतुअकरणेप्रत्यवायंमत्वाधर्मार्थमेवधर्ममनुतिष्ठंति नज्ञानार्थंनापिस्वर्गार्थं
तानाह तस्येति तस्यधर्मस्यसमाचारंसम्यगनुष्ठानं वेदविदोवैदिकत्वाभिमानिनोजनाःसम्यगित्याहुः । नतुततःकिंचिदैहिकमामुष्मिकंवाफलंकामयंते । एनंजनंएनान्जनान्भूयिष्ठंअत्यंतंनम
न्येतनमानयेत् किंचित्तुमानयेदेवेत्यर्थः । तमेवविशिनष्टि बाह्यंआत्मनिवर्णाश्रमवयोवस्थाभिमानित्वात्बहिर्मुखं वैदिकत्वान्निष्कामत्वाच्चआभ्यंतरं । यतःअकामहतस्यश्रोत्रियस्यकामोपमर्द
तारतम्येन हिरण्यगर्भादर्वाचीनानांमानुषादीनामानंदगणनायांउत्तरोत्तरशतगुणितायां सएकइंद्रस्यानंदःसएकःप्रजापतेरानंदःइतिप्रतिपर्यायं श्रोत्रियस्यचाकमहतस्य इतिआनंदोत्कर्षः
श्रूयते २९ एवंयोगिनामात्मविविदिषूणांनिष्कामवर्णाश्रमाभिमानिनांचधर्मःउत्तममध्यमाधमभावेनप्रोक्तः । संप्रतिअहिंसाप्रधानान्योगिधर्मानाह यत्रमन्येतेति यत्रगृहेऽन्नंपानंचब्राह्मणस्य
संन्यासिनःभूयिष्ठमस्तीतिमन्येत्जानीयात् ततगृहंप्राप्यजीवेत्प्राणयात्रांकुर्यात् । नक्षीणवृत्तिंगृहस्थंपीडयेदितिभावः । प्रावृषिवर्षाकालेतृणंचउलपःउच्छ्रिततरंतृणं । 'उलपोनस्त्रीगुल्मिन्यांना

येषांधर्मेचविस्पर्धातेषांतज्ज्ञानसाधनम् ॥ तेब्राह्मणाइतोमुक्ताःस्वर्गंयांतित्रिविष्टपम् २८ तस्यसम्यक्समाचारमाहुर्वेदविदोजनाः ॥ नैनंमन्येतभूयिष्ठंबाह्य
माभ्यंतरंजनम् २९ यत्रमन्येतभूयिष्ठंप्रावृषीवतृणोलपम् ॥ अन्नंपानंब्राह्मणस्यतज्जीवेन्नानुसंज्वरेत् ३० यत्राकथयमानस्यप्रयच्छत्यशिवंभयम् ॥ अति
रिक्तमिवाकुर्वन्सश्रेयान्नेतरोजनः ३१ योवाकथयमानस्यह्यात्मानंनानुसंज्वरेत् ॥ ब्रह्मस्वंनोपभुंजीततदन्नंसंमतंसताम् ३२ यथास्वंवांतमश्नातिश्वावैनित्यम
भूतये ॥ एवंतेवांतमश्नंतिस्ववीर्यस्योपसेवनात् ३३ नित्यमज्ञातचर्यामेइतिमन्येतब्राह्मणः ॥ ज्ञातीनांतुवसन्मध्येतंविदुर्ब्राह्मणंबुधाः ३४ कोह्यनंतरमात्मा
नंब्राह्मणोहंतुमर्हति ॥ निर्लिंगमचलंशुद्धंसर्वद्वैतविवर्जितम् ३५

तृणांतरे'इतिमेदिनी । तृणोदकमितिपाठांतरं नानुसंज्वरेत्क्षुद्बाधयाआत्मानंनपीडयेदित्यर्थः ३० यत्रदेशेअकथयमानस्यस्वमाहात्म्यंअप्रकाशयतः अशिवममंगलंभयंप्रयच्छति सप्तम्यंत
मिदं भयप्रदेऽपिदेशेस्थित्वासत्यपिसामर्थ्येतत्रत्यजनमध्येआत्मानंस्वविद्यादिनाअतिरिक्तमधिकमिवअकुर्वन् स्वोत्कर्षमप्रकाशयन् योजनोभवतिसश्रेयान्प्रशस्ततरः । परपीडामानंचत्य
जेदितिश्लोकद्वयार्थः ३१ ईदृशेनकस्यान्नंभोक्तव्यंतमाह यइति यःपुमान्आत्मानंकथयमानस्यप्रौढिंदर्शयतोनरस्योपरिनानुसंज्वरेत्परोत्कर्षंदृष्ट्वानसंतप्येत् । तथाब्रह्मस्वं'यतिश्चब्रह्मचारीच
पक्कान्नस्वामिनावुभौ'इतिस्मृतेर्यत्यादिभ्योऽदत्वा यद्भोजनंतद्ब्रह्मस्वभोजनंअकुर्वंश्चयोभवति तदन्नंतस्यान्नंसतांसंमतं । असूयारहितस्यश्रद्धापूर्वकंप्रयच्छतएवान्नंभोज्यमित्यर्थः ३२ श्वाशुन
कः तेसंन्यासिनःस्ववीर्यस्यस्वपांडित्यस्यउपजीवनात्पांडित्यादिकंप्रकाश्यभिक्षामिच्छन्तयतिर्वांताशीभवतीत्यर्थः ३३ यःब्राह्मणःब्रह्मवित्ज्ञातीनांमध्येवसन्नपि ज्ञातयो मेमम नित्यंअज्ञाता
चर्यायाभिस्ताअज्ञातचर्याःसंतुइतिमन्येत ज्ञातयोमेयोगगतिमाज्ञासिषुरितियस्यप्रच्छन्नतेजसोमतिः तंब्राह्मणंब्राह्मिष्ठंबुधाःतल्लक्षणज्ञाःविदुः ३४ ईदृशींचर्यांविनाअनंतरंउपाधिकृतव्यवधान
शून्यंआत्मानंप्रत्यंचंनिर्लिंगंअनुमानाद्यगम्यं अचलंव्यापकं शुद्धंअसंगं सर्वद्वैतविवर्जितंसजातीयविजातीयस्वगतभेदशून्यं हंतुंगंतुं हंतेर्गत्यर्थत्वमत्रज्ञेयं ज्ञातुमित्यर्थः कोऽर्हतिनकोऽपीत्यर्थः३५

तस्मादब्राह्मणस्यापिक्षत्रियादेरी दृक्कर्यावतः कर्मणिषष्ठी क्षत्रियमपि ब्रह्मस्वप्रकाशेनआवसतिअधिरूढंभवति येनसोप्यात्म नोब्रह्मभावंपश्यतीतिसार्धश्लोकोवाक्यं पाठांतरंतुसुगमं ३६ आत्माज्ञानेदोषमाह यइति अन्यथाआत्मत्वेनभासमानाद्देहादेर्विपरीतंसंतंअन्यथाकर्त्रादिरूपं शेषंस्पष्टं ३७ आत्मतत्त्वप्रतिपत्त्युपायमाह अश्रांतइति अश्रांतःश्रमहीनः यतःअनादाताआदानशून्यःनिष्परिग्रहइत्यर्थः अतएवसंमतःशिष्टानांनिरुपद्रवश्चस्वयंभवति तथाशिष्टोऽपिशिष्टवन्नस्यात्शिष्टत्वंनप्रकाशयेत् । पाठांतरेअशिष्टवत्यथेष्टाचरणकृन्नस्यात्किंतुशिष्टएव वैदिकमर्यादापरिपालनपरएवस्यात्। कविःक्रांतदर्शी ३८ मानुषेवित्तेचक्षुर्ग्राह्यधनदारादिरूपेविषयेअनाढ्याःदरिद्राः सर्वसंगत्यागिनइत्यर्थः। दैवेवित्तेश्रोत्रग्राह्येपारलौकिकेधर्मादौआढ्याः संपन्नाः तथाकर्तांईश्वरोपासनायां । सक्रतुंकुर्वीतेत्युपासनायामपिक्रतुशब्दप्रयोगदर्शनात् वैराग्यपूर्वककर्मोपासनानुष्ठानपरानिर्भयाभवंतीत्यर्थः तनुंस्वरूपं ३९ सर्वक्रतुभ्योब्रह्मज्ञानमेवश्रेष्ठमित्याह सर्वानिति स्विष्टंशोभनंइष्टंदिव्यरूपमन्नपानादिकं येयागेनप्रीताःसंतोयजमानायकुर्वंतितेस्विष्टकृतोदेवाः तान्सर्वान्योऽश्वमेधांतसकलक्रतुकर्तावेद साक्षात्कुर्यात्सोऽपिब्राणस्यब्रह्मविदःसमानोनभवति तत्रहेतुःतस्मिन्निति यतःतस्मिन्नास्विष्टेनिमित्तेस्वयंप्रयततेयत्नवान्भवति अयंभावः । स्विष्टंक्रियासाध्यत्वादनित्यफलं ब्रह्मतुस्वतःसिद्धमेवाभिव्यज्यतइतितज्ज्ञानफलभूतोमोक्षोऽपिस्वतःसिद्धत्वान्नित्यइति नस्विष्टंब्रह्मज्ञानसममिति ४० यमिति यंअप्रयतमानंनिरारंभंयादृशंमानयंतिदेवादयः सएवब्रह्मात्मवित्मानितोभवति यंतुयज्ञादिकर्तारमिति मानयंति सदेवानांपशुरमानितएव तथाचश्रुतिः । 'अथयोन्यांदेवतामुपास्तेऽन्योऽसावन्योऽहमस्मीतिनसवेदयथापशुरेवसदेवानाम्' इति । उपास्तेयज्ञादिनातर्पयति ततोहेतोःआत्मानमन्यैर्मान्यमानमपि मान्यंनमन्येत नापिअभिसंज्वरेत्अवमानेसतीतिशेषः नकारोभिन्नक्रमः ४१ लोकःस्वभावादेवमांमानयतिनतुमयिमानयोग्यताऽस्तीतिमत्वादर्पंनप्राप्नुयादित्याह लोकइति ४२ येनमानयंतितेऽपिपशुवन्निर्विवेकत्वादुपेक्ष्याएव नतुदंडनीयाइत्याह अधर्मेति ४३ नवाइति मानंक्लीबत्वमार्षं मुनेःकर्ममौनंयोगिचर्या मानार्थिनांपरलोकोदुःसंपादः परलोकार्थिनांमौनिनांचइहलोकोदुःसंपादइतिभावः ४४ श्रीरिति धनाभिजनैश्वर्यरूपालक्ष्मीःसुखस्वमानरूपस्यसंवासोऽधिष्ठानं तथाऽपिसापरिपंथिनीचोरतुल्यापरलोकस्यनाशिनी योगिनांतुसुतरामनिष्टकरीत्यर्थः । ब्राह्मीब्राह्मणस्ययोग्याश्रीःऋग्यजुःसामात्मिका । 'ऋचःसामानियजूꣳषिसाहिश्रीरमृतासताम्' इतिश्रुतेः । प्रज्ञाहीनेनऋगादीनांरहस्यंनप्राप्तुंशक्यमित्यर्थः ४५

तस्माद्द्विक्षत्रियस्यापिब्रह्मावसातिपश्यति ३६ योऽन्यथासंतमात्मानमन्यथाप्रतिपद्यते ॥ किंतेननकृतंपापंचोरेणात्मापहारिणा ३७ अश्रांतस्यादनादातासंमतोनिरुपद्रवः ॥ शिष्टोनाशिष्टवत्सस्याद्ब्राह्मणोब्रह्मवित्कविः ३८ अनाढ्यामानुषेवित्तेआढ्यादैवेतथाक्रतौ ॥ तेदुर्धर्षादुष्प्रकंप्यास्तान्विद्याद्ब्रह्मणस्तनुम् ३९ सर्वान्स्विष्टकृतोदेवान्विद्याद्यइहकश्चन ॥ नसमानोब्राह्मणस्यतस्मिन्प्रयततेस्वयम् ४० यमप्रयतमानंतुमानयंतिसमानितः ॥ नमान्यमानोमन्येतनमान्यमभिसंज्वरेत् ४१ लोकःस्वभावद्वृत्तिर्हिनिमेषोन्मेषवत्सदा ॥ विद्वांसोमानयंतीहइतिमन्येतमानितः ४२ अधर्मनिपुणामूढालोकेमायाविशारदाः ॥ नमान्यंमानयिष्यंतिमान्यानामवमानिनः ४३ नवैमानंचमौनंचसहितौवसतःसदा ॥ अयंहिलोकोमानस्यअसौमौनस्यतद्विदुः ४४ श्रीःसुखस्येहसंवासःसाचापिपरिपंथिनी ॥ ब्राह्मीसुदुर्लभाश्रीर्हिप्रज्ञाहीनेनक्षत्रिय ४५

तस्यब्राह्मसुखस्यद्वाराणिप्राप्तिसाधनानि दुराधराणिदुःसंरक्ष्याणि । सत्यंयथार्थभाषणं आर्जवंअवक्रता । ह्रीःलोकापवादभयं । दमइंद्रियनिग्रहः । शौचंमृज्जलाभ्यांबाह्यं आंतरंतुमनः शुद्धिः । विद्यावेदशास्त्राधिगमः । यथेति एतेषुसत्सु अनादिवासनयाआगतोऽपिमोहोयथावन्नप्रभवति । षण्मानमोहप्रतिबंधकानीतिपाठेस्पष्टोऽर्थः ४६ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ पूर्वाध्यायांते मौनंब्राह्मीश्रीःसत्यादिषट्कंच मोहात्मकस्यमृत्योःप्रतिरोधकानीत्युक्तं तान्येवप्रश्नपूर्वकंविवरीतुमध्यायांतरमारभते कस्यैष मौनइत्यादि न्यासपूर्वकंस्वीक्रियमाणोमुनेर्धर्मोमौनसंज्ञः कस्यप्रयोजनस्यार्थइत्येकःप्रश्नः । लोकप्रसिद्धेर्वाङ्नियमोवा । 'अमौनंचमौनंचनिर्विद्याथब्राह्मणः'इतिश्रौतप्रसिद्धेरमौनशब्दि तात्पांडित्यबाल्यापरपर्यायात् श्रवणमननाख्यात्तद्द्वयादन्यत्तत्समानियतंनिदिध्यासनंवामौनशब्दितं तयोर्मध्येऽत्रकतरन्मौनशब्दाभिधेयमितिद्वितीयः । तस्यचभावंस्वलक्षणंब्रूहीति तृतीयः । तेनमौनेनविद्वान् मौनंमनःप्राणेंद्रियक्रियाणांनिरवशेषेणोपरमं निर्विकल्पंपदमितियावत् तदुतअपियातीतिचतुर्थः । कथंवाकेनप्रकारेणमौनमाचरंतीतिपंचमःप्रश्नः १ पंचाना मपिप्रश्नानांतंत्रेणोत्तरमाहः यतइति । यस्माद्धेतोः एनंप्रत्यगात्मानंमनसासह वेदानअनुप्रविशंति । 'यतोवाचोनिवर्त्तंतेअप्राप्यमनसासह'इतिवाङ्मनसातीतत्वश्रुतेः । ततोहेतोः मौनामिति एतन्नामेत्यर्थः । एतेनवाङ्मनसातीतपदप्राप्तिर्मौनस्यप्रयोजनं तच्चवागादिबाह्येंद्रियनिग्रहरूपं मनोनिग्रहरूपं तेनचक्रमाद्बाह्याभ्यंतरप्रपंचयोरभानं तेनचाभानेनप्राप्यंवाङ्मनसातीतं

द्वाराणितस्येहवदंतिसंतोबहुप्रकाराणिदुराधराणि॥ सत्यार्जवेह्रीर्दमशौचविद्यायथानमोहप्रतिबोधनानि ४६॥ इतिश्रीमहाभारतेउद्योगपर्वणिसनत्सुजातपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ धृतराष्ट्रउवाच ॥ कस्यैषमौनःकतरन्नुमौनंप्रब्रूहिविद्वन्निहमौनभावम् ॥ मौनेनविद्वानुतयातिमौनंकथंमुनेमौनमिहाचरंति १ ॥ सनत्सुजातउवाच॥ यतोनवेदामनसासहैनमनुप्रविशंतिततोऽथमौनम् ॥ यत्रोत्थितोवेदशब्दस्तथाऽयंसतन्मयत्वेनविभातिराजन् २ ॥ धृतराष्ट्रउवाच ॥ ऋचोयजूंषियोवेदसामवेदंचवेदयः ॥ पापानिकुर्वन्पापेनालिप्यतेनोऽलिप्यते ३ ॥ सनत्सुजातउवाच ॥ नैनंसामान्यृचोवाऽपिनयजूंष्यविचक्षणम् ॥ त्रायंते कर्मणःपापान्नतेमिथ्याब्रवीम्यहम् ४ नच्छंदांसिवृजिनात्तारयंतिमायाविनंमाययावर्तमानम् ॥ नीडंशकुंताइवजातपक्षाश्छंदांस्येनंप्रजहत्यंतकाले ५

पदमितिप्रश्नचतुष्टयस्योत्तरमुक्तंभवति । पंचमप्रश्नस्योत्तरमाह यत्रोत्थितइति यत्रअधिष्ठाने भूमब्रह्मात्मनिवेदशब्दस्तथाअयमितिलौकिकशब्दश्चउत्थितः क्षेत्रेअंकुरइव समुद्रेतरंगइव चाविर्भूतः सभूतात्मातन्मयत्वेनशब्दमयत्वेन विभातिप्रकाशते हेराजन् । अयंभावः वेदशब्देनवेदस्यसारतरःप्रणवः 'भूरित्येवऋग्वेदादजायत भुवइतियजुर्वेदात्स्वरितिसामवेदात्ता निशुक्राण्यभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयोवर्णाअजायंताकारउकारोमकारइतितानेकधासमभरत्तदेतदोमिति' बह्वृचब्राह्मणात् । तस्यचप्रणवस्य'ओमित्येतदक्षरमिदंसर्वमिति' सार्वात्म्यश्रुते स्तन्मात्राणांचअकारोकारमकाराणां क्रमात्स्थूलसूक्ष्मकारणप्रपंचवाचकानां वाच्यवाचकयोरभेदात्पूर्वपूर्वस्यउत्तरोत्तरत्रप्रविलापनेगुरूक्तयुक्त्याक्रियमाणेस्थूलस्यजगतःसूक्ष्मे लवणोदकन्या येनप्रविलयोभवति । तथासूक्ष्मस्यकारणेकारणस्य तूरीयेऽर्धमात्रावाच्येऽमात्राख्ये 'शिवमद्वैतंचतुर्थंमन्यंते' इतिश्रुतेर्गलिताखिलद्वैतभानेवाङ्मनसातीतेप्रविलयोभवति अतःप्रण वाख्यशब्दमयत्वेनतद्द्वारावाङ्मनसातीतंवस्तुभातीतियुक्तमिति २ ननुयदिवेदशब्दमयत्वेनतद्द्वारावाङ्मनसातीतंपदंभातितज्ज्ञानान्न । 'यथैषीकातूलमग्नौप्रोतंप्रदूयेतैवंहास्यसर्वेपाप्मानः प्रदूयंते'इतिश्रुतेः सर्वपापनाशश्चभवति तर्हिमौनहीनस्यापिऋगाद्यभ्यासेन तदुभयंभविष्यतीत्याशंकतेऋचइति ३ अविचक्षणंवाङ्मनसनिग्रहासमर्थम् ४ छंदांसिवेदाः वृजिनात्पा पात् । ननु 'अथागमोयांयांदेवतांनिराहतस्यास्तस्यास्ताद्रूप्यमनुभवति'इति वचनात्'यंयंवाऽपिस्मरन्भावं'इतिस्मृतेश्च नित्याभ्यासादंतकालेयद्दैवत्यंमंत्रंस्मरति तद्देवताताद्रूप्य मस्यभविष्यतीति किंवाङ्मनसनिग्रहरूपेणमौनेनेत्याशंक्याह नीडमिति मौनाभावेंऽतकाले छंदांस्येवनस्फुरंतीत्यर्थः ५

धर्मस्वाभाविकं । 'शमोदमस्तपःशौचंक्षांतिरार्जवमेवच ॥ ज्ञानंविज्ञानमास्तिक्यंब्रह्मकर्मस्वभावजम्'इति गीतासूक्तं विनाप्रलापः । ' ऋग्यजुःसामभिःपूतोब्रह्मलोकेमहीयते । यावतीर्वैदेव
तास्ताः सर्वावेदविदिब्राह्मणेवसंति'इति ब्राह्मणानांमाहात्म्यप्रख्यापकोऽनर्थकोवाक्यसंदर्भःप्रवृत्तइतिशेषः सनातनोऽनादिः ६ उत्तरमाह तस्येति । 'अस्यमहतोभूतस्यनिःश्वसितमेतद्य
दृग्वेदोयजुर्वेदःसामवेद'इत्यादिश्रुतेर्यस्यप्रलापोऽयंवेदशास्त्रादिप्रपंचस्तस्यैवपरमात्मनः स्वयंअव्यक्तस्य नामरूपात्मनाऽव्याकृतस्यस्वरूपं इदंजगद्भाति । नामादिविशेषरूपैरितीत्थं
भावेतृतीया । नामरूपात्मकोयोविशेषस्तदात्मकस्वरूपस्येत्यर्थः तथाचश्रुतिः ! 'तद्धेदंतर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेवव्याक्रियतासौनामाऽयमिदंरूपः' इतीति हेमहानुभावानिर्दिश्य'द्वे
वावब्रह्मणोरूपेमूर्तंचैवामूर्तंच'इत्यादिना कृत्स्नंदृश्यमदृश्यंचविश्वंब्रह्मरूपत्वेननिर्दिश्य ब्रह्मैवेदमितिसम्यक्प्रवदंतीत्यध्यारोपप्रसंगे । अपवादप्रसंगेच तत्ब्रह्मविश्वस्मान्मूर्तामूर्तात् विरूपमे
ववैरूप्यंविलक्षणंउदाहरंतिवेदाएव'अथात आदेशोनेतिनेतिनह्येतस्मादन्यत्परमस्तीतिनेति'इत्यादयः । अत्रनेतिनेतीतिनञ्द्वयेन प्रकृतेमूर्तामूर्तेनिषिद्ध्य शून्यशेषत्वेप्रसक्तेएतस्मादात्मनो
ऽन्यत्परंकार्यंकारणंवाऽतिरिक्तंनास्तीतिहेतोर्नेतीत्युच्यते नतुशून्यमवशेष्यतइतिश्रुत्यैवब्रह्मणोविश्ववैरूप्यमुक्तं । ततश्चयत्प्रभवत्वेनवेदामान्यस्तंवेदोक्तमार्गाननुष्ठानेनावजानतो वेदाध्य
यनमपिनिष्फलंभवति । भगवदाज्ञाभंगदोषादितिभावः श्रूयतेच । नतस्यवाच्यपिभागोअस्तीति । देहाद्यात्मबुध्द्यापरमात्मानास्तीतिमत्वातंत्यजतः वेदोच्चारणमात्रसंभवेऽपिफलांशोनास्ती

॥ धृतराष्ट्रउवाच ॥ नचेद्वेदाविनाधर्मंत्रातुंशक्ताविचक्षण ॥ अथकस्मात्प्रलापोऽयंब्राह्मणानांसनातनः ६ ॥ सनत्सुजातउवाच ॥ तस्यैवनामादिविशेष
रूपैरिदंजगद्भातिमहानुभाव ॥ निर्दिश्यसम्यक्प्रवदंतिवेदास्तद्विश्ववैरूप्यमुदाहरंति ७ तदर्थमुक्तंतपएतदिज्याताभ्यामसौपुण्यमुपैतिविद्वान् ॥ पुण्येनपापं
विनिहत्यपश्चात्संजायतेज्ञानविदीपितात्मा ८ ज्ञानेनचात्मानमुपैतिविद्वानथान्यथावर्गफलानुकांक्षी ॥ अस्मिन्कृतंतत्परिगृह्यसर्वममुत्रभुंक्तेपुनरेतिमार्गम् ९
अस्मिँल्लोकेतपस्तप्तंफलमन्यत्रभुज्यते ॥ ब्राह्मणानामिमेलोकाधात्वेतपसितिष्ठताम् १०

तिश्रुत्यर्थः ७ तदर्थमिति यत्विश्वस्माद्विलक्षणंब्रह्मप्रोक्तं तदर्थंतत्प्राप्त्यर्थं
एतत्प्रसिद्धंतपःकृच्छ्रचांद्रायणादिध्यानधारणादिचउक्तं 'तपसाब्रह्मविजिज्ञासस्व'इतिश्रुत्याप्रोक्तं । तथाएषाइज्यायागादिरपितदर्थमेव तत्रक्रममाह ताभ्यामिति इज्यातपोभ्यांपुण्योत्प
त्तिःपुण्येनपापनाशः निष्पापस्तुज्ञानेनब्रह्माकारयाचेतोवृत्त्या विदीपितात्मा प्रकाशितात्मतत्त्वोभवति । एतेनइज्यातपसोः साक्षान्मोक्षहेतुत्वनिरसनेनज्ञानकर्मसमुच्चयपक्षोनिर्मूलोवेदितव्यः
८ किमात्मतत्त्वप्रकाशेनेत्यतआह ज्ञानेनचात्मानमुपैतीति आत्मलाभान्नपरंविद्यते । 'आत्मानंचेद्विजानीयादयमस्मीतिपूरुषः । किमिच्छन्कस्यकामायशरीरमनुसंज्वरेत्'इत्यादिशास्त्रा
दात्मप्राप्तिरेवपरमपुरुषार्थइतिभावः। विपक्षेदोषमाह अथेति अथेतिपक्षांतरे अन्यथाआत्मज्ञानाभावेनानात्मनिपुरुषार्थत्वबुद्ध्यावर्गफलानुकांक्षीभवति । वृक्तेआत्मानंस्वस्वविषयोपहारमुखे
नावृणोतीतिवर्गइंद्रियगणस्तस्यप्रियंफलंविषयसुखं तदाकांक्षीसन्अस्मिन्लोकेकृतंयत्पुण्यंपापंवा तत्सर्वंपरिगृह्य'तंविद्याकर्मणीसमन्वारभेतेपूर्वप्रज्ञाच'इतिश्रुतेः । तंउत्क्रामंतमितिश्रुतिपद
स्यार्थः अमुत्रस्वर्गेनरकेवा तत्फलंसुखंदुःखंवाभुंक्ते । ततःपुनरिमंमार्गंलोकंकर्मशेषेणउपैति । तस्मिन्यावत्संपातमुषित्वाऽथैतमेवाध्वानंपुनर्निवर्तते । 'तस्माल्लोकात्पुनरैत्यस्मैलोकायकर्मणे'
इत्यादिश्रुतिभ्यः । संपतत्यनेनेतिसंपातःकर्म ९ नन्वेवंतर्हिस्वाध्यायप्रवचनेएवेतिनाकोमौद्गल्यः तद्धितपस्तद्धितपःइत्यादरेणाध्ययनाध्यापनयोर्मुख्यतपस्त्वश्रवणादस्तितयोरपिमो
क्षहेतुत्वंतत्कथमुच्यते नच्छंदांसिवृजिनात्तारयंतीतिमत्वाविद्वदविद्वत्तपसोभेदमाह अस्मिन्निति अविदुषांतपसःफलंआमुष्मिकं विदुषांब्राह्मणानांतुइमेएवलोकाःफलदाः ज्ञानंदृष्टफलमि
त्यर्थः। कीदृशानांधात्वेतपसितिष्ठतां धात्वेधातव्ये। कृत्यार्थेतवैकेन्केन्यत्वनइतिधा त्वन् । अवश्यकर्तव्येइत्यर्थः । तच्चशमोदमस्तपःशौचमितिप्रागेवोक्तं । वृद्धेतपसीतिपाठेस्पष्टोऽर्थः १०

समृद्धंविदुषःअसमृद्धं अविदुषश्चएकमेवतपःकेवलंशुद्धंसत्कथंद्वैविध्यंप्राप्नोतीतिपृच्छतिकथमितीति ११ उत्तरमाह निष्कल्मषमिति कल्मषंकामःश्रद्धादिराहित्यंचतद्रहितंतपःकेवलंकैवल्यसाध नत्वात्केवलमित्युच्यते । तदेवश्रद्धाद्युपेतमपिसकामंचेत्समृद्धमित्युच्यते । यत्तुकेवलंदंभार्थमेवक्रियतेतदृद्धं तथाचश्रुतौ । 'यदेवविद्ययाकरोतिश्रद्धयोपनिषदातदेववीर्यवत्तरंभवति' इतितरप्प्र त्ययश्रुतेर्विद्याहीनस्यापितपसोवीर्यवत्त्वावगमादृद्धत्वंगम्यते १२ तपएवप्रशंसतितपइति इदंसर्वंभोग्यंतपोमूलंतपःप्राप्यं परं अमृतंमुक्तिं १३ ननुनिष्कल्मषंतपःश्रुतं तत्रकिंतत्किल्बिषं यद्रहितेन तपसासनातनंगुह्यंब्रह्मविद्यांजानीयामितिपृच्छतिकल्मषमिति १४ तदेवाह क्रोधादयइति क्रोधादिगणोद्वादशकः दशत्रित्रयोदशेत्यर्थः तावान्नृशंसवर्गश्चतपसःकल्मषं धर्मादिगणविरुद्ध त्वात् । तद्रहितधर्माद्युपेतंतुतपोनिष्कल्मषंमोक्षहेतुरित्यर्थः पितॄणांवंशकर्तॄणांमन्वादीनां । आततानाइत्यपिपाठः १५ क्रोधःइच्छाप्रतीघातोत्थआक्रोशताडनादिहेतुर्मनस्तापः १ कामः स्त्र्यभिलाषः २ लोभोधनव्ययभीरुत्वं ३ मोहः कृत्याकृत्यविवेकराहित्यं ४ विधित्सा सत्यप्युत्तरोत्तरलाभेपिपासाख्याअतृप्तिः। घेट्पानेइत्यस्यरूपं ५ अकृपानिर्दयत्वं ६ असूयापरगुणेषुदो

॥ धृतराष्ट्रउवाच ॥ कथंसमृद्धमसमृद्धंतपोभवतिकेवलम् ॥ सनत्सुजाततद्ब्रूहियथाविद्यामतद्वयम् ११ ॥ सनत्सुजातउवाच ॥ निष्कल्मषंतपस्त्वेतत्के वलंपरिचक्षते ॥ एतत्समृद्धमप्यृद्धंतपोभवतिकेवलम् १२ तपोमूलमिदंसर्वंयन्मांपृच्छसिक्षत्रिय ॥ तपसावेदविद्वांसःपरंत्वमृतमाप्नुयुः १३ ॥ धृतराष्ट्र उवाच ॥ कल्मषंतपसोब्रूहिश्रुतंनिष्कल्मषंतपः ॥ सनत्सुजातयेनेदंविद्यांगुह्यंसनातनम् १४ ॥ सनत्सुजातउवाच ॥ क्रोधादयोद्वादशयस्यदोषास्त थानृशंसानिदशत्रिराजन् ॥ धर्मादयोद्वादशैतेपितॄणांशास्त्रेगुणायेविदिताद्विजानाम् १५ क्रोधःकामौलोभमोहौविधित्साऽकृपाऽसूयेमानशोकौस्पृहाच ॥ ई र्ष्याजुगुप्साचमनुष्यदोषावर्ज्याःसदाद्वादशैतेनराणाम् ॥ १६ एकैकःपर्युपास्तेहमनुष्यान्मनुजर्षभ ॥ लिप्समानोंऽतरंतेषांमृगाणामिवलुब्धकः १७ विक त्थनःस्पृहयालुर्मनस्वीबिभ्रत्कोपंचपलोऽरक्षणश्च ॥ एतान्पापाःषण्नराःपापधर्मान्प्रकुर्वतेनोत्रसंतःसुदुर्गे १८ संभोगसंविद्विषमोऽतिमानीदत्तानुतापीकृ पणोबलीयान् ॥ वर्गप्रशंसीवनितासुद्वेष्टाएतेपरेसप्तनृशंसवर्गाः १९

षदर्शनं ७ मानआत्मनिपूज्यताबुद्धिः ८ शोकइष्टार्थनाशेसतिमनोवैक्लव्यं ९ स्पृहाभोग्यवर्गे ष्वादरः १० ईर्ष्यापरोत्कर्षासहिष्णुत्वं ११ जुगुप्सापरनिंदा बीभत्सतावा १२ मनुष्याणांयोगिनामयोगिनांचैतेदोषाःसर्वेषामपिवर्ज्याइत्यर्थः १६ एतेषांमध्येएकैकोऽपिमनुष्यंनाशयितुं समर्थः किंतुकतिपयसमुदायःसर्वसमुदायोवेत्याह एकैकइतिअंतरंछिद्रं १७ त्रयोदशनृशंसानिहिंस्राण्याहद्वाभ्यां विकत्थनइति । विकत्थनः परगुणाक्षेपेणस्वगुणोत्कर्षाभिधानशीलः १ स्पृहयालुःअतियत्नपूर्वकंपरस्त्र्यादिभोगेच्छावान् २ मनस्वी गर्वाधिक्यात्परावमाननशीलः ३ बिभ्रत्कोपं निमित्तंविनाऽपिसदाकोपपरः ४ चपलः मित्रभावादिष्वस्थिरः ५ अरक्षणः शक्तौसत्यांस्वीकृतस्त्र्यादेःपालनमकुर्वन् ६ एतान्षट्पापधर्मान् पापाःपापिनोनराःकुर्वते केतेयेसुदुर्गेमहासंकटे इहपरत्रवाउपस्थितेनोत्रसंतःत्रासंअकुर्वंतः एकमिदंपदंसुप्सुपेतिसमासः एते षडत्यंतंहिंस्राइत्यर्थः १८ संभोगःस्त्रीसंगादिस्तद्विषयासंवित्संमतिस्तदेवपुरुषार्थइतियाबुद्धिस्तयाविषमोदुर्व्यवस्थितः १ अतिमानीअत्यंतंदर्पवान् २ पाठांतरे संभोगसंवित्भोगेबुद्धिमान् द्विषंद्वेषमेधमानोवर्धयन् । दत्तानुतापीदानंकृत्वाऽपिलोभवशात्ममधनंनष्टमितिसंतापवान् ३ कृपणःप्राणांतेऽपिवित्तव्ययमसहमानः ४ बलीयान्अतिशयेनबलिमान् पूर्वराजेभ्योऽप्यधिकं प्रजानांसकाशात्बलिंगृह्णन्नित्यर्थः ५ वर्गप्रशंसी वर्गोवृजिनंपराभिभवस्तत्प्रशंसनशीलः ६ अन्येषांदुःखेनसुखीत्यर्थः । वनितासुपरिणीतासुद्वेष्टा ७ एतेसप्तनृशंसाः पूर्वेचषट् एवंत्रयोदश १९

गुणानाह धर्मइति धर्मोवर्णाश्रमनियतःसंध्योपासनादिः १ सत्यंहिंसावर्जंयथार्थभाषणं २ दमःजिह्वोपस्थादिनिग्रहः ३ तपःकृच्छ्रचांद्रायणादि ४ अमात्सर्यं मत्सरःपरगुणासहिष्णुत्वंतद भावः ५ ह्रीर्लज्जा ६ तितिक्षासत्यपिक्रोधनिमित्तेतदनुत्पादः ७ अनसूयापरगुणेषुदोषाविष्करणमसूयातदभावः ८ यज्ञोज्योतिष्टोमादिः ९ दानंबहिर्वेदिसंविभागः १० धृतिःअत्यंतापद्यपि व्रतादेरत्यागः ११ श्रुतंअर्थग्रहणसहितंवेदाध्ययनं १२ ब्राह्मणस्यब्रह्मप्राप्तुमिच्छोः २० यस्त्विति सर्वगुणाढ्योब्रह्मवित्सत्यकामादिगुणभाग्भवति । 'यस्तमात्मानमनुविद्यविजानातिसस र्वांश्चलोकानाप्नोतिसर्वांश्चकामान्'इतिश्रुतेः । एतेषांमध्येत्रिभिर्द्वाभ्यांएकतोवाआर्थितःअर्थःवित्तंसंजातमस्यसतथा स्वंदैवंवित्तं २१ दमःजितेंद्रियत्वं । त्यागःकर्मणामीश्वरेऽर्पणं । अप्रमाद स्तत्त्वानुसंधानं । अमृतंमुक्तिः । सत्यमुखानिसत्यप्रधानान्येवएतानिफलानिभवंतीत्यर्थः २२ अष्टादशदोषत्यागादष्टादशगुणत्वंदमस्याह दमइति कृतेकर्मणिवैदिकेप्रतिकूलंअश्रद्धाआल स्यादिच । अकृतेउपवासव्रतादौप्रतिकूलंक्षुधाजिह्वालौल्यादि इदंद्वयमेकोदोषः १ अनृताऽभ्यसूयेप्रसिद्धे ३ कामःस्त्र्यभिलाषः ४ अर्थोधनार्जनार्थेऽतिपत्नः ५ स्पृहाधनाद्यभिलाषः ६ २३ पैशून्यंपरदोषसूचकत्वं ११ परिपातःअतिदुःखित्वं १४ अरतिःसत्क्रियाऽनभिलाषः १९ । २४ अपस्मारःकर्तव्यविस्मरणं १६ अतिवादःपराक्रोशः १७ संभावनामहत्त्वबुद्धिः १८ । २५

धर्मश्चसत्यंचदमस्तपश्चअमात्सर्यंह्रीस्तितिक्षाऽनसूया ॥ यज्ञश्चदानंचधृतिःश्रुतंचव्रतानिवैद्वादशब्राह्मणस्य २० यस्त्वेतेभ्यःप्रभवेद्द्वादशभ्यःसर्वामपीमांपृ थिवींसशिष्यात् ॥ त्रिभिर्द्वाभ्यामेकतोवाऽर्थितोयस्तस्यस्वमस्तीतिसवेदितव्यः २१ दमस्त्यागोऽप्रमादश्चएतेष्वमृतमाहितम् ॥ तानिसत्यमुखान्याहुर्ब्रा ह्मणायेमनीषिणः २२ दमोऽष्टादशगुणःप्रतिकूलंकृताकृते ॥ अनृतंचाभ्यसूयाचकामार्थौचतथास्पृहा २३ क्रोधःशोकस्तथातृष्णालोभःपैशून्यमेवच ॥ मत्सरश्चविहिंसाचपरितापस्तथाऽरतिः २४ अपस्मारश्चातिवादस्तथासंभावनाऽऽत्मनि ॥ एतैर्विमुक्तोदोषैर्यःसदांतःसद्भिरुच्यते २५ मदोऽष्टादशदोषः स्यात्त्यागोभवतिषड्विधः ॥ विपर्ययाःस्मृताएतेमददोषाउदाहृताः २६ श्रेयांस्तुषड्विधस्त्यागस्तृतीयोदुष्करोभवेत् ॥ तेनदुःखंतरत्येवभिन्नंतस्मिन्जितंकृ ते २७ श्रेयांस्तुषड्विधस्त्यागःश्रियंप्राप्यनहृष्यति ॥ इष्टापूर्तेद्वितीयंस्यान्नित्यवैराग्ययोगतः २८ कामत्यागश्चराजेंद्रसतृतीयइतिस्मृतः ॥ अप्यवाच्यं वदंत्येतंसतृतीयोगुणःस्मृतः २९ त्यक्तैर्द्रव्यैर्यद्भवतिनोपयुक्तैश्चकामतः ॥ नचद्रव्यैस्तद्भवतिनोपयुक्तैश्चकामतः ३०

मदइति येषांविपर्ययादमगुणत्वेनउक्तास्तएवकृताकृतप्रतिकूलादयोऽष्टादश । तथावक्ष्यमाणस्यषड्विधत्यागस्यचविपर्ययाःषट् तेच लक्ष्मीप्राप्तौहर्षः १ अप्रियेजातेव्यथा २ स्वीयेषुयाच्ञा ३ पात्रेष्वप्रदानं ४ सत्यधिकारेइष्टापूर्तयोरकणं ५ कामस्यात्यागःप्रमादश्च ६ एतेचतुर्विंशतिर्मददोषाः २६ श्रेयान्प्रशस्ततरः तृतीयोवक्ष्यमाणःकामत्यागः तस्मिन्कामत्यागेकृतेसति भिन्नं भेदः भावेनिष्ठा द्वैतमितियावत् सएवदुःखं । 'द्वितीयाद्वैभयंभवति । यत्रान्यत्पश्यत्यन्यच्छृणोतितदल्पंअथयदल्पंतद्दुःखम्'इत्यादिश्रुतिभ्यः । कामत्यागादेवसर्वदुःखनिवृत्तिरूपोमोक्षःसिद्धः तथाचश्रुतिः । 'यदासर्वेप्रमुच्यंतेकामायेऽस्यहृदिस्थिताः । अथमर्त्योऽमृतोभवत्यत्रब्रह्मसमश्नुते'इति २७ त्यागमेवाह श्रेयानिति श्रियंलक्ष्मींविद्यांच नहृष्यतिनहृष्यति १ इष्टंयागहोमादि आपूर्तंतडागारामादि २ । २८ कामत्यागस्यपरांकाष्ठामाह अपीति अवाच्यंनिर्वृत्तिकत्वात् तथाचोदाहृतं । 'यदासर्वेप्रमुच्यंते'इति २९ त्यक्तैरिति द्रव्यैःस्त्र्यादिभिस्त्यक्तैरेवयत् निष्कामत्वं भवति तत्कामपूर्वकंउपभुक्तैर्नभवति यथोक्तं । 'नजातुकामःकामानामुपभोगेनशाम्यति'इति । निष्कामत्वंबहुभिर्लब्धैरपिद्रव्यैर्नभवति नाप्युपयुक्तैःकाम्यद्वाराव्ययीकृतैरित्यर्थः ३०

नदुःखंकुर्यादितिशेषः तेनचदुःखेननग्लपेत्ग्लानिंनप्राप्नुयात् गुणैःकीर्त्यादिभिः३१ अप्रियेकीर्तिवित्तनाशादिप्रभवेसमुत्पन्नेऽपि योऽव्यथांनगच्छतिसचतुर्थस्त्यागइत्यर्थः४ पंचमंत्यागमयाञ्चा
रूपमाह इष्टानिति ५। ३१ षष्ठमाह अर्हतइति अर्हतेयोग्याय६ षड्विधत्यागफलमाह अप्रमादीति सचअप्रमादश्च३३ सत्यं यथार्थवचनं१ ध्यानं मूर्तेरीश्वरस्यआत्मनोवाऽनुसंधानं २ समा
धानं संप्रज्ञातासंप्रज्ञातभेदेनद्विविधःसमाधिः३ चोद्यं तर्कः येनसमाधिफलेसार्वकाम्यादौदोषमुन्नयंति४ वैराग्यमुपरमः५ अस्तेयं परस्वापहरणाभावः६ ब्रह्मचर्यं स्त्रीसंगराहित्यं ७ असंग्रहो
निष्परिग्रहता ८।३४ उक्तमनुवदत्यप्रमादप्रतियोगिनंप्रमादंवक्तुं एवमिति ३५ पंचभ्यइंद्रियेभ्यःषष्ठान्मनसश्चस्वस्वविषयेरागद्वेषोत्थाःषट्प्रमादाः। अतीते नष्टपुत्रशोकादिजःसप्तमः।अनागते
पुत्रकामस्यतदभावेयःक्लेशःसोऽष्टमःप्रमादः । एतेभ्यःप्रमादेभ्योमुक्त्युपेतोमुक्तिंप्राप्तःसुखीभवेत् ३६ दमत्यागाप्रमादानुक्त्वातेषांसत्यमुखत्वंप्रागुक्तंविवृणोति सत्यात्मेति सत्येआत्माचित्तं
यस्यसतथा तान्दमत्यागाप्रमादान् ३७ दोषनिवृत्त्यैवतपःसिद्धिर्धात्राकृतेत्याह निवृत्तेनैवेति ३८ प्रश्नव्याख्यानमुपसंहरतिदोषैरिति ३९। ४० एवंविद्यासाधनान्यधिगम्यअध्ययन
गृहीताद्वेदादधिगतवेद्यानामनेकत्वंमन्वानःकिंतद्वेद्यंश्रेष्ठमितिपृच्छति आख्यानेति आख्यानंइतिहासपुराणादिपंचमंयेषुतैर्वेदैः'सर्वंखल्विदंब्रह्मब्रह्मैवेदंविश्वंपुरुषएवेदंसर्वम्'इत्यादिभिर्भूयि

नचकर्मस्वसिद्धेषुदुःखंतेनचनग्लपेत् ॥ सर्वैरेवगुणैर्युक्तोद्रव्यवानपियोभवेत् ३१ अप्रियेचसमुत्पन्नेऽव्यथांजातुनगच्छति ॥ इष्टान्पुत्रांश्चदारांश्चनयाचे
तकदाचन ३२ अर्हतेयाचमानायप्रदेयंतच्छुभंभवेत् ॥ अप्रमादीभवेदेतैःसचाप्यष्टगुणोभवेत् ३३ सत्यंध्यानंसमाधानंचोद्यंवैराग्यमेवच ॥ अस्तेयंब्रह्मचर्यं
चतथाऽसंग्रहमेवच ३४ एवंदोषामदस्योक्तास्तान्दोषान्परिवर्जयेत् ॥ तथात्यागोऽप्रमादश्चसचाप्यष्टगुणोमतः ३५ अष्टौदोषाःप्रमादस्यतान्दोषान्परिवर्ज
येत् ॥ इंद्रियेभ्यश्चपंचभ्योमनसश्चैवभारत ॥ अतीतानागतेभ्यश्चमुक्त्युपेतःसुखीभवेत् ३६ सत्यात्माभवराजेंद्रसत्येलोकाःप्रतिष्ठिताः ॥ तांस्तुसत्यमुखा
न्नाहुःसत्येह्यमृतमाहितम् ३७ निवृत्तेनैवदोषेणतपोव्रतमिहाचरेत् ॥ एतद्धातृकृतंवृत्तंसत्यमेवसतांव्रतम् ३८ दोषैरेतैर्वियुक्तस्तुगुणैरेतैःसमन्वितः ॥ एत
त्समृद्धमत्यर्थंतपोभवतिकेवलम् ३९ यन्मांपृच्छसिराजेंद्रसंक्षेपात्प्रब्रवीमिते ॥ एतत्पापहरंपुण्यंजन्ममृत्युजरापहम् ४० ॥ धृतराष्ट्रउवाच ॥ आख्यान
पंचमैर्वेदैर्भूयिष्ठंकथ्यतेजनः ॥ तथाचान्येचतुर्वेदास्त्रिवेदाश्चतथापरे ४१ द्विवेदाश्चैकवेदाश्चाप्यनृचश्चतथापरे ॥ तेषांतुकतरःसस्याद्यमहंवेदवैद्विजम् ४२

ष्ठंनामादिप्रपंचादधिकतमंभूमाख्यंपरंब्रह्म तदेवजनःस्थावरजंगमरूपंजगदितिकथ्यते। अन्येशाखिनःपुनश्चतुर्वेदाःचत्वारिवेदयंतितेतथा चत्वारःपुरुषाइति बाह्यःशरीरपुरुषश्छंदःपुरुषो
वेदपुरुषोमहापुरुषइति। छंदोगायत्र्यादिनियताक्षरपादं तच्चयजुःसाम्नोरप्युपलक्षणं। वेदःकर्मचोदनात्मकंब्राह्मणं। तथात्रिवेदाः त्रीनक्षरमक्षरमुत्तमंचेतिपुरुषंवेदयंतेत्रिवेदाः। क्षरंप्रधा
नंअमृताऽक्षरंहक्षरात्मानावीशतेदेवएकःइति । अमृतोजीवःकूटस्थःसोऽक्षरंसुलोपआर्षःईशतेईष्टे । 'क्षरःसर्वाणिभूतानिकूटस्थोऽक्षरउच्यते ॥ उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतः'इति
४१ तथाद्विवेदाःद्वेब्रह्मणीवेदितव्येशब्दब्रह्मपरंचयदितिवाच्यवाचकयोरभेदेनशब्दब्रह्मशब्देनात्रकृत्स्नोनामरूपात्मकःप्रपंचउच्यते । परंचतदतीतमितिद्वयमपिवेद्यत्वेनवदंति । एक
वेदाः 'एकधैवानुद्रष्टव्यंनेहनानाऽस्तिकिंचन'इत्यादयएकमेववेद्यंवेदयंति । अनृचश्च ऋच्यतेस्तूयतेइतिऋक्ईश्वरःसपृथक्त्वेननास्तियेषांतेऽनृचःब्रह्माद्वैतवादिनः । एकवेदानांव्युत्थानकाले
द्वैतमस्तिसमाधौतुबाधितंतद्भवति । अनृचांतुअवस्थाद्वयेऽपिद्वैताभावस्तुल्यइतिभेदः । एतेषांषण्णांमध्येसकतरःकतमःयमहंवेदजानीयां द्विजंब्राह्मणंब्रह्मविदामित्यर्थः । अत्रभूयिष्ठं
जनइतिप्रथमःसविशेषाद्वैतपक्षः । द्वितीयोनिरीश्वरपक्षः सांख्यानांमीमांसकानांच । त्रिवेदास्तुपातंजलाजीवेशजगतांभेदंवदंतः । द्विवेदास्त्वौडुलोमाःकार्यात्मनाभेदं कारणात्मना–

अभेदंचसत्यमेवेवर्दतः । यथाकटकमुकुटाद्यात्मनाभेदोऽपिसत्यः कनकात्मनाऽभेदोऽपिसत्यएवेति । एकवेदानामपिकिंचिद्बाधयोग्यंसत्त्वासत्त्वाभ्यामनिर्वचनीयंद्वैतमस्त्येव व्यावहारिकंप्रा तिभासिकात्सद्योबाध्यात्रज्जूरगादेर्विलक्षणंयावन्मोक्षमबाध्यं । अनृचांतुदृष्टिसृष्टिवादिनांयथारज्ज्वामुरगःस्त्रक्चकल्पिता एवमात्मनिजाग्रत्स्वप्नौसमसत्ताकौइतिभेदः । तत्राध्यारो पापवादाभ्यांनिष्प्रपंचंप्रपंच्यतेइतिन्यायेन आद्यंपक्षचतुष्टयंव्यवहारस्यपारमार्थिकत्वपरमध्यारोपदृष्ट्योपन्यस्तं । अंत्यःपक्षोऽपवाददृष्ट्याव्यवहारापलापेन । एकवेदपक्षस्तुव्यामिश्र दृष्ट्याऽनिर्वचनीयाख्यया । एवमेवदृष्टित्रयमाश्रित्यशास्त्रमपिप्रवृत्तंआत्मकृतेःपरिणामादिति । अध्यारोपकालेपरिणामदृष्टिःसूचिता ब्रह्मैवकनककुंडलन्यायेनजगदाकारेणपरिणतंतथा चश्रुतिः। 'तदात्मानंस्वयमकुरुतसत्यंचानृतंचसत्यमभवत्'। सत्यंव्यावहारिकंजाग्रद्रज्ज्वादि । अनृतंप्रातिभासिकंस्वप्नरज्जूरगादि । एतदुभयात्मकंसत्यंकालत्रयाबाध्यंब्रह्मैवप्राप्तमितिश्रुत्य र्थः । तथाआत्मनिचैवंविचित्राश्चहीतिस्वप्नकालेआत्मनिजाग्रत्कालेमायेंद्रजालमरीचिकोदकादयोहिप्रसिद्धतराःसृष्टयोभवंति विचित्राश्चताःनचताः नसंतीतिवक्तुंशक्यं अनुभूयमानत्वात् । नापिसंतीतिज्ञानेनसद्योबाधात्। एवंब्रह्मण्यपिविचित्राऽनिर्वचनीयासृष्टिरस्तीतिसूत्रार्थः तथाचास्यजगतोऽनिर्वचनीयत्वंश्रुतिराह। 'कोअद्धावेदकइहप्रवोचत्कुतआजाताकुतइयंविसृष्टिः'इति तंकोऽपिनवेदनकोपिप्रावोचदितिश्रुत्यर्थः । सेयंव्यामिश्रदृष्टिः । अपवाददृष्टिस्तुआहचतन्मात्रमितिसूचिता । 'सयथासैंधवखिल्यउदकेप्रास्तउदकमेवानुविलीयेत ॥ सयथासैंधवघनोऽनंतरो ऽबाह्यःकृत्स्नोरसघनएवंवाअरेऽयमात्माकृत्स्नःप्रज्ञानघनः'इतिश्रुत्याचदर्शिता यथाजलेप्रास्तःसैंधवखिल्यःस्वोपादानंउदकंलीनमनुस्वयमपिलीयते अन्यथाकरकालयेइवजलेपरिमाणा

सनत्सुजातउवाच ॥ एकस्यवेदस्याज्ञानाद्वेदास्तेबहवःकृताः ॥ सत्यस्यैकस्यराजेंद्रसत्येकश्चिदवस्थितः ४३ एवंवेदमविज्ञायप्राज्ञोऽहमितिमन्यते ॥ दान मध्ययनंयज्ञोलोभादेतत्प्रवर्तते ४४ सत्यात्प्रच्यवमानानांसंकल्पश्चतथाभवेत् ॥ ततोयज्ञःप्रतायेतसत्यस्यैवावधारणात् ४५

धिक्यंस्यात् । अतःसःअंतरंकारणंबाह्यंघनीभावःतदुभयवर्जितःकेवलरसतन्मात्रात्मनाजलेऽभिव्यक्तोदृश्यते । एवमयंप्रपंचःकार्यकारणोभयस्वरूपहीनः समाधौकेवलप्रज्ञानघनोऽभिव्य ज्यतेइतिश्रुत्यर्थः। अनेनदृष्टित्रयेणजनबोधार्थंशास्त्रंप्रवृत्तंयथोक्तंसंक्षेपशारीरके। 'आरोपदृष्टिरपवादकदृष्टिरेवंव्यामिश्रदृष्टिरितिदृष्टिविभागमेनं । संगृह्यसूत्रकृदयंपुरुषंमुमुक्षुंसम्यक्प्रबोधयि तुमुत्सहतेक्रमेण'इत्यादिना । 'श्रुतिवचांसिमुनिस्मरणानिचद्वयविशारदगीरपिसर्वशः ॥ त्रयमपेक्ष्यदृशांत्रितयंविनानहिघटामुपयांतिकदाचन'इत्यंतेन ४२ एवमनेकेषुपक्षेषूपस्थापितेषुसिद्धां तमाह एकस्येति ब्रह्मैवएकंवेद्यंतच्चसत्यं कालत्रयेऽप्यबाध्यं तस्यअज्ञानात्बहूनिवेद्यानि उपास्यानिअब्रह्मभूतानिकृतानिकल्पितानि वेदेसत्यप्रतिपत्त्यर्थं तेषामब्रह्मत्वंवेदएवाह। 'तदेवब्रह्मत्वं विद्धिनेदंयदिदमुपासते'इति । तस्मिंश्चसत्येब्रह्मणिकश्चिदेवअवस्थितःब्रह्मलाभोऽतिदुर्घटइत्यर्थः। श्रुतिरप्यज्ञानकार्यत्वंजगतआह। 'तुच्छेनाऽभ्वपिहितंयदासीत् तमसस्तन्महिनाऽजायतै कम्'इतितुच्छेनरज्जूरगादिवदध्यस्तेनमिथ्याभूतेनतमसा आभुसर्वव्यापकंब्रह्म अपिहितंआच्छादितंयत्आसीत्तत्एकमेवसत् तमसःअज्ञानस्य । तपसइतिपाठेआलोचनस्यसंकल्पमात्रस्यमहि नामाहात्म्येनअजायतप्रपंचाकारेणआविर्बभूव । यथारज्जुरज्ञानावृतासर्पाकारेणाविर्भवतितद्वदितिश्रुत्यर्थः ४३ एवमिति सत्यंप्रत्यगद्वयानंदंवेद्यंअज्ञात्वाबाह्यसुखलोभात्एतद्दानादिकंकर्तुंप्रवर्त तइत्यर्थः४४सत्यादिति तथाभवेत्परमानंदात्प्रच्युतस्यक्षुद्रानंदविषयोभिलाषोभवेत् ततश्चासौयज्ञोज्योतिष्टोमादिःप्रतायेतसंतन्यते सत्यस्यवेदवचनस्य'ज्योतिष्टोमेनस्वर्गकामोयजेत'इत्या देःअवधारणात्प्रामाण्यनिश्चयात् । संकल्पोवितथोभवेदितिपाठे सत्यज्ञस्यैवसत्यसंकल्पत्वंअन्यस्यतुसंकल्पोवंध्यइत्यर्थः । सनन्पाठेयज्ञोऽपिसत्यस्यानवधारणादापरोक्ष्येणअनिश्चयादेवप्र वर्तते । ज्ञातेतुसत्ये'एतद्बुध्वाबुद्धिमान्स्यात्कृतकृत्यश्चभारत'इतिकृत्यकरणत्वमेवसमर्थंते ४५

मनसेतियज्ञइत्यनुकृष्यते अन्य स्यएकस्ययज्ञोमनसादेवताध्यानादिरूपोभवति । वाचाब्रह्मयज्ञजपादिरूपोयज्ञोभवति । कर्मणाप्रसिद्धोज्योतिष्टोमादिः एतेषांपूर्वःपूर्वोज्यायान् संकल्पासिद्धः सत्यसंकल्पःसंकल्पानांकल्पनविषपदार्थानांब्रह्मलोकादीनामधिष्ठाताभवतिब्रह्मवित् तथाचश्रुतिः । 'आप्नोतिस्वाराज्यं ॥ आप्नोतिमनसस्पतिं ॥ वाक्पतिश्चक्षुष्पतिः ॥ श्रोत्रपतिर्विज्ञानपतिः'इतिस्वराजोभावः स्वाराज्यंब्रह्मैश्वर्यं ४६ तस्यसंकल्पस्यअनैभृत्येनअदार्ढ्येनआत्माज्ञानाद्वंध्यसंकल्पत्वेसतीत्यर्थः । दीक्षितव्रतंमुष्टीकरणवाग्यमनादिकंकुर्यात् । एतन्नामदीक्षितइति तद्दीक्षव्रतादेशेइत्यनेनधातुनानिष्ठाप्रत्ययांतेननिष्पन्नं । कर्मजःसंस्कारआगंतुकोविनाशीचेत्यर्थः । सतांतुसत्यमेवपरंब्रह्मैवश्रेष्ठंअकृतकत्वेनाविनाशित्वात् ४७ एतदेवस्पष्टयतिज्ञानमिति प्रत्यक्षंशोकमोहनिवृत्तिरूपंज्ञानफलंप्रत्यक्षमित्यर्थः । तपःकायिकंवाचिकंमानसिकंच तत्परोक्षंअमुष्मिकफलप्रदमित्यर्थः विद्यादित्यर्द्धेनपरोक्षज्ञानस्यव्यावृत्तिरिहउच्यते ४८ उक्तमेवोपसंहरतितस्मादिति जल्पितेनैवकेवलाध्ययनेनैव सत्यात्प्रत्यगद्वयानंदात् तथाचश्रुतिः । 'योवाएतदक्षरंगार्गिविदित्वाऽस्माल्लोकात्प्रैति सब्राह्मणः'इत्यपरोक्षज्ञानिनोब्राह्मणत्वमुक्त्वाऽर्थादितरस्याब्राह्मणत्वंदर्शयति ४९ नन्वेवमध्ययनयागादेर्वैयर्थ्यंस्यादित्याशंक्येष्टापत्तिमाह छंदांसीति एषउपनिषत्प्रसिद्धःअथर्वामहामुनिर्महर्षिसंघो यानिपुराजगौतान्येवच्छंदांसिउपनिषद्रूपाणि नामनिश्चितं । 'छादयंतिहवाएनंछंदांसिपापात्कर्मणः'इतिश्रुत्याछंदःशब्दनिर्वचनात् । 'प्लवाह्येतेअदृढायज्ञरूपाः' इतिअथर्वणोपनिषदियज्ञानांपापाद्रक्षितुमसामर्थ्यदर्शनात्

मनसाऽन्यस्यभवतिवाचाऽन्यस्याथकर्मणा ॥ संकल्पसिद्धःपुरुषःसंकल्पानधितिष्ठति ४६ अनैभृत्येनचैतस्यदीक्षितव्रतमाचरेत् ॥ नामैतद्धातुनिर्वृत्तंसत्यमेवसतांपरम् ४७ ज्ञानंवैनामप्रत्यक्षंपरोक्षंजायतेतपः ॥ विद्याद्बहुपठंतंतुद्विजंवैबहुपाठिनम् ४८ तस्मात्क्षत्रियमामंस्थाजल्पितेनैववैद्विजम् ॥ यएवसत्यान्नापैतिसज्ञेयोब्राह्मणस्त्वया ४९ छंदांसिनामक्षत्रियतान्यथर्वापुराजगौमहर्षिसंघएषः ॥ छंदोविदस्तेयउतनाधीतवेदानवेदवेद्यस्यविदुर्हितत्त्वम् ५० छंदांसिनामद्विपदांवरिष्ठस्वच्छंदयोगेनभवंतितत्र ॥ छंदोविदस्तेनचतानधीत्यगतानवेदस्यनवेद्यमार्याः ५१ नवेदानांवेदिताकश्चिदस्तिकश्चित्त्वेतान्बुद्ध्यतेवापिराजन् ॥ योवेदवेदान्नसवेदवेद्यंसत्येस्थितोयस्तुसवेदवेद्यम् ५२

ब्रह्मविद्यार्थानांछंदसांमुख्यंछंदस्त्वं कर्मार्थानांतुगौणमितिभावः । किंचउतअपियेऽपिअधीतवेदाः सोपनिषत्कंवेदंपाठतोऽर्थतश्चअधीतवंतस्तेऽपिनच्छंदोविदः यतः वेदवेद्यस्यऔपनिषदस्यपुरुषस्य तत्त्वंयाथात्म्यंनाविदुः नजानंति । 'अधेन्वाचरतिमाययैषवाचंशुश्रुवांअफलामपुष्पाम्'इति । पुष्पंहिफलंवाचःसत्यमितिश्रुतिश्चैतदाह सत्यंपरंब्रह्म ५० छंदांसिनामेति द्विपदांमनुष्याणांमध्येवरिष्ठ तत्रसत्येब्रह्मणिविषये छंदांसिवेदाः स्वच्छंदयोगेनस्वातंत्र्यसंबंधेनैवभवंति । कर्मकांडार्थज्ञानवत्ब्रह्मकांडार्थज्ञानं नमध्येऽनुष्ठानांतरमपेक्षते तथाहि । 'तद्धैतत्पश्यन्नृषिर्वामदेवःप्रतिपेदेऽहंमनुरभवंसूर्यश्च'इतिश्रुत्यादर्शनसार्वात्म्ययोर्मध्येतिष्ठन्गायतीत्यादौतिष्ठतिगायत्योर्मध्येइवकार्यांतरंवार्यते तेनचज्ञातेनसत्येन चकारएवकारार्थे तेनैवेत्यर्थः । छंदोविदोभवंतिनकर्ममात्रज्ञानेन । तान्छंदोज्ञान्अधीत्यप्राप्यआर्याःनेदस्यवेद्यंवेदनीयंब्रह्मनगताइतिनअपितुगताःप्राप्ताएवेत्यर्थः । एतेनतद्विज्ञानार्थंसगुरुमेवाभिगच्छेदित्यस्याःश्रुतेरर्थोदर्शितः ५१ तथापि ब्रह्मणोदुर्ज्ञेयत्वमाह नेति वेदानांरहस्यवेदिताज्ञाताकश्चिन्नास्ति । काश्चित्तुएतान्वेदान्रहस्यप्रतिपादकान्चित्तशुद्ध्यतिशयाद्बुध्यते । योऽव्युत्थितस्तत्त्वमसिवाक्यार्थानुसंधातावा वेदान्वेद ससविकल्पकः । निर्विकल्पकंवेद्यंसर्ववृत्तिलयेप्रकाशमानंब्रह्मनवेद किंतुसत्येसर्ववृत्तिबाधावधिभूतेप्रत्यक्चैतन्येस्थितएवानिर्विकल्पकंसुखंवेद ५२

इममेवार्थंभंग्यंतरेणाह नेति वेदानांवेद्यानामहंकारादीनामचेतनानांमध्येकश्चिद्वेदितानास्ति अतोहेतोः वेद्येनचेतसावेदंवेदबोध्यमात्मानंनविदुः । नापिवेद्यंअनात्मानमपिनाविदुः आत्माऽनात्माचनजडस्यविषयावित्यर्थः । ननुजडयाधीवृत्त्या आत्माज्ञायतएव 'दृश्यतेत्वग्र्ययाबुद्धया' इतिश्रुतेरित्याशंक्याह वेदंआत्मानंयोवेदसएववेद्यमानात्मानंसर्वंवेद आत्मप्रभवत्वात्सर्वस्य । यस्तुबहिर्मुखः वेद्यंअनात्मानंवेदससत्यंब्रह्मनवेद तथाचश्रुतीभवतः । 'आत्मनोवाअरेदर्शनेनश्रवणेनमत्याविज्ञानेनेदंसर्वंविदितं । परांचिखानिव्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यतिनांतरात्मन्' इति । व्यतृणत्हिंसितवान् ५३ किंचयश्चिदात्मासर्वेषांप्रत्यक्त्वेनप्रसिद्धः वेदान्वेदयंतितेवेदाःतान्प्रमाणानिवेद सएववेद्यंप्रमेयमपिवेद नतुतानिवेद्यंविदुः जडत्वात् । तंच 'प्राणस्यप्राणमुतचक्षुषश्चक्षुःश्रोत्रस्यश्रोत्रंमनसोयेमनोविदुः' इतिप्राणादीनांप्रवर्तकत्वेनप्रसिद्धं वेदाःप्रमाणानिवेदविदःप्रमातारश्चनविदुः । 'यतोवाचोनिवर्तंतेअप्राप्यमनसासह' इतितस्यवाङ्मनसातीतत्वश्रुतेः । यद्यप्येवंतथापिवेदंवेदितारमात्मानं वेदेनैवप्रमाणेनअहंब्रह्मास्मीत्यादिनाविदंतिजानंति । केतेयेब्राह्मणाः वेदाविदोवेदपाठतोऽर्थतोऽनुष्ठानतश्चविदंतितेवेदविदः । अध्ययनयज्ञादिनासंस्कृतचित्ताएववाक्यादात्मानंलक्षणयाजानंति नत्वन्येइत्यर्थः ५४ इदमेवदृष्टांतेनप्रतिपादयति धामांशेति धामतेजः तन्मयाःअंशायस्यसतेजोमयोऽर्थाच्चंद्रः तस्यभागःकलाप्रतिपद्गतातस्यसंवेदनेज्ञापने यथाचयथैव हिप्रसिद्धं महीरुहस्यशाखाउपादीयते । तथाहितथैव वेदाः परमात्मनःसंवेदनेऽर्थेपरमपुरुषार्थरूपेसत्येसर्वथाऽप्यबाध्ये वेदाः उपादीयंतइतिआमनंति ।

नवेदानांविदिताकश्चिदस्तिवेद्येनवेदंनाविदुर्नवेद्यम् ॥ योवेदवेदंमचवेदवेद्यंयोवेदवेद्यंनसवेदसत्यम् ५३ योवेदवेदान्सचवेदवेद्यंनतंविदुर्वेदाविदोनवेदाः ॥ तथापिवेदेनविदंतिवेदंयेब्राह्मणावेदविदोभवंति ५४ धामांशभागस्यतथाहिवेदायथाचशाखाहिमहीरुहस्य ॥ संवेदनेचैवयथाऽऽमनंतितास्मिन्हिसत्येपरमात्मनोऽर्थे ५५ अभिजानामिब्राह्मणंव्याख्यातारंविचक्षणम् ॥ यश्छिन्नविचिकित्सःसव्याचष्टेसर्वसंशयान् ५६ नास्यपर्येषणंगच्छेत्प्राचीनंनोतदक्षिणम् ॥ नार्वाचीनंकुतस्तिर्यङ्नादिशंतुकथंचन ५७ तस्यपर्येषणंगच्छेत्प्रत्यर्थिषुकथंचन ॥ अविचिन्वन्निमंवेदेतपःपश्यतितंप्रभुम् ५८ तूष्णींभूतउपासीतनचेष्टेन्मनसाऽपिच ॥ उपावर्तस्वतद्ब्रह्मअंतरात्मनिविश्रुतम् ५९ मौनान्नसमुनिर्भवतिनारण्यवसनान्मुनिः ॥ स्वलक्षणंतुयोवेदसमुनिःश्रेष्ठउच्यते ६०

तंत्वौपनिषदंपुरुषंपृच्छामीत्यौपनिषदत्वविशेषणात् वाचामगोचरत्वश्रुतेश्च सोऽयंदेवदत्तइत्यादिवाक्यवत् तत्त्वमस्यादिवाक्यमपिलक्षणयास्वार्थंप्रमापयत्येवेत्यर्थः ५५ एवंगुरूपसदनपूर्वकंवाक्यार्थप्रतिपत्त्युपायमुक्त्वा गुरुलक्षणान्याह अभीति ब्राह्मणंब्रह्मविदं लक्षणतोऽभिजानामि लक्षणमेवाह व्याख्यातारं उपक्रमोपसंहारैकरूप्यादिषड्विधतात्पर्यलिंगानुसारेणवाक्यार्थवर्णनकुशलं । विचक्षणंश्रुतार्थस्ययुक्तिभिरनुचिंतनेसमर्थं निदिध्यासनपरिपाकेनापरोक्षसाक्षात्कारबलात्यश्छिन्नविचिकित्सोनिःसंशयःसन् परस्यापिसर्वसंशयान्व्याचष्टेविवृणोति । अत्रस्वरूपव्याख्यैवपराक्रियेतिन्यायेनसंशयान्दूरीकरोतीत्यर्थः ५६ परीष्यतेऽस्मिन्नितिपर्येषणं अन्वेषणस्थानं प्राचीनंप्राग्दिक्स्थंनापिदक्षिणादिदिक्स्थंनापिअदिशंदिग्विहीनं अंतर्हृदयइत्यर्थः ५७ एतदेवाह तस्येति प्रत्यर्थिषुआत्मात्वेनप्रथमानेष्वनात्मसुपंचसुकोशेषुपर्येषणमन्वेषणंगच्छेत्कुर्यादित्यर्थः । कथंचनेत्यव्यक्तमालंबनंक्लेशसाध्यमितिसूचयति । 'अव्यक्ताहिगतिर्दुःखंदेहवद्भिरवाप्यते' इतिस्मृतेः । वेदेइमंआत्मानंअविचिन्वन् वेदांतन्यायानप्यचिंतयन्नित्यर्थः । तपःतपस्वी आलोचनवान् ध्यायी तंप्रभुंपश्यति । 'तंपश्यतिनिष्कलंध्यायमानः' इतिश्रुतेः ५८ तूष्णींभूतइत्यनेनवागादिबाह्येंद्रियव्यापारोपरमउक्तः । मनसाऽपिनचेष्टेत् नचेष्टेतेत्यनेन मानसव्यापारोपरमउक्तः । अंतरात्मनिहार्दाकाशेविश्रुतं वेदेप्रख्यातंतद्वाचामगोचरंब्रह्म उपावर्तस्वउपागच्छ ५९ मौनात्ध्यानमात्रान्नमुनिर्भवति नापिअरण्यवासात्संन्यासमात्रात् । किंतर्हि यः स्वलक्षणंस्वस्यप्रत्यगात्मनोलक्षणंजगज्जन्मादिहेतुत्वंसच्चिदानंदात्मकंचयोवेदजानातिसश्रेष्ठः । संन्यासिभ्योयोगिभ्यश्चज्ञानीश्रेष्ठइत्यर्थः ६०

सर्वार्थानांव्याकरणात्प्रकटीकरणात् सर्वज्ञत्वादयंज्ञानीवैयाकरणइत्युच्यते । तच्चव्याकरणंकेचिद्योगजधर्मप्रत्यासत्त्यावदंति तन्निराचष्टेमूलतइति आत्मज्ञानाद्धिसर्वविज्ञानंश्रूयते न प्रधानज्ञानात् अन्यतोवा । मूलतइतिल्यब्लोपेपंचमी । मूलंकारणंब्रह्मप्राप्येत्यर्थः । तत्रव्याकर्तापरमात्मैव । तन्नामरूपाभ्यामेवव्याक्रियत । नामरूपेव्याकरवाणिइतिश्रुतिभ्यामित्याह व्याकरोतीतिश्रौतव्युत्पत्तिप्रदर्शनमेतत् ६१ सार्वज्ञ्यमपिब्रह्मविदामनौपचारिकमित्याह प्रत्यक्षेति सत्येतिष्ठन् नतुद्वस्यंतरेदेहाद्याकारे । ब्राह्मणः ब्रह्मवित्तद्विद्वान्ब्रह्मत्रिद्वानितिब्राह्मणपदव्युत्पत्तिप्रदर्शनम् ६२ अध्यायार्थमुपसंहरति धर्मादिष्विति धर्मश्चसत्यंचदमस्तपश्चेत्यादिषुद्वादशसुस्थितः । तथा सत्यादिरूपेअष्टविधेअप्रमादेचस्थितः । एवंसाधनवान् देवेषुपूर्वोक्तेषु आरोपदृष्टिव्यामिश्रदृष्टयपवाददृष्टिरूपेषु आनुपूर्व्येणसोपानारोहणन्यायेन परमेपदेस्थितोऽहमेतत्स्वानुभवसिद्धं बुद्ध्यास्वतःस्नेहवत्त्या तेतुभ्यंब्रवीमि । सोपानक्रमस्तुनृसिंहतापनीयेश्रूयते । 'ओतानुज्ञात्रनुज्ञाऽविकल्पैरिति' । अस्यार्थः'ओतत्त्वंकारणव्याप्तिःकार्येयद्वन्मृदोघटे ॥ सर्वंब्रह्मेतितन्निष्ठाजानतेपरिणामतः ॥ १ ॥ कार्यस्यासमसत्त्वंयत्कारणेसमुदीरितं ॥ तदनुज्ञातृशब्दार्थोमरौवारिविवर्तनम् ॥ २ ॥ एतन्निष्ठास्तवोभूत्वाजगन्मिथ्येतिजानते ॥ अनुज्ञायांजगत्तुच्छंशशशृंगादिवन्मतम्' ॥ ३ ॥ एवंसोपानरीत्यैवभूमित्रितयलंघनात् ॥ अविकल्पंपरंयत्तदहंब्रह्मास्मिनिर्भयम्'इति ॥ ४ ॥ ६३ ॥ इति उद्योगपर्वणि नीलकंठीये भारतभावदीपे त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ ॥ ७ ॥ ॥ एवंआत्म

सर्वार्थानांव्याकरणाद्वैव्याकरणउच्यते ॥ तन्मूलतोव्याकरणंव्याकरोतीतितत्तथा ६१ प्रत्यक्षदर्शीलोकानांसर्वदर्शीभवेन्नरः ॥ सत्येवैब्राह्मणस्तिष्ठंस्तद्विद्वान्सर्वविद्भवेत् ६२ धर्मादिषुस्थितोऽप्येवंक्षत्रियब्रह्मपश्यति ॥ वेदानांचानुपूर्व्येणएतद्बुद्ध्याब्रवीमिते ६३ ॥ इतिश्रीमहाभारतेउद्योगपर्वणि सनत्सुजातपर्वणिसनत्सुजातवाक्येत्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ ॥ धृतराष्ट्रउवाच ॥ सनत्सुजातयामिमांपरांत्वंब्राह्मींवाचंवदसेविश्वरूपाम् ॥ परांहिकामेनसुदुर्लभांकथांप्रब्रूहिमेवाक्यमिदंकुमार १ ॥ सनत्सुजातउवाच ॥ नैतद्ब्रह्मत्वरमाणेनलभ्यंयन्मांपृच्छन्नतिहृष्यस्यतीव ॥ बुद्धौविलीनेमनसिप्रचिंत्याविद्याहिसाब्रह्मचर्येणलभ्या २ ॥धृतराष्ट्रउवाच ॥ अत्यंतविद्यामितियत्सनातनींब्रवीषित्वंब्रह्मचर्येणसिद्धाम् ॥ अनारभ्यांवसतीहकार्यकालेकथंब्राह्मण्यममृतत्वंलभेत ३

ज्ञानमार्गंश्रुत्वा तस्यांतरंगसाधनंयोगंश्रोतुंपृच्छति सनत्सुजातेति । परांउक्तादपिअत्युत्कृष्टां ब्राह्मींब्रह्मप्रापिकांवाचंउपनिषदं वदसेजानीषे । भासनोपसंभाषाज्ञानेतितङ् । विश्वंरूप्यतेप्रकाशतेऽस्यां । यांज्ञातवतोऽन्यत्ज्ञातव्यंनावशिष्यतइत्यर्थः । कामेनकाम्यमानेनविषयेण परांदूरीभूतां विषयवार्ताहीनामित्यर्थः । अतएवसुदुर्लभांकथांकथनीयांप्रब्रूहि । हेकुमारइदंमेममवाक्यंत्वांप्रतिप्रार्थनारूपंवचनं अवधेहीतिशेषः १ ब्रह्मविद्यायाःदुर्लभत्वंदर्शयन्सनत्सुजातउवाच नैतदिति हृष्यासिअहंब्रह्मविद्याधिकार्यस्मीतिदृप्यसि । पाठांतरेअभिषंगेण निर्बंधेन । विद्यालक्षणमाह बुद्धाविति सर्वेषामिंद्रियाणांनिरोधेनमनोमात्रमनुपरतंसंकल्पाद्यात्मकंतिष्ठति तस्मिन्नपि अहंब्रह्मास्मीतिनिश्चयस्वभावायांबुद्धौ विलीनेसति । प्रचिंत्याप्रगतंचिंत्यंयस्यांसा निरुद्धसर्ववृत्तिकाकाचिदवस्थाविद्येत्युच्यते । साचब्रह्मचर्येणगुरुकुलवासेनलभ्या २ अत्यंते अंतास्त्रिविधपरिच्छेदः तमतिक्रांतंअत्यंतंब्रह्म तद्विषयांविद्यां । सनातनींनित्यसिद्धां । प्रत्यगात्मनो नित्यापरोक्षत्वात् । यत्साक्षादपरोक्षाद्ब्रह्मेतिश्रुतेः । सिद्धांअभिव्यज्यमानां । तत्रहेतुः अनारभ्यांकर्मवदारंभायोग्यां । याचकार्यकालेइहआत्मन्येववसति नित्यसिद्धत्वात् । एवंसतिब्राह्मण्यं ब्राह्मणस्ययोग्यंअमृतत्वंकथंलभेत । नहिलब्धलाभार्थंयत्नोऽपेक्ष्यतइतिब्रह्मचर्याद्यनुष्ठानाक्षेपः ३

अत्रोत्तरमाह अव्यक्तेति बुद्ध्याख्योपाधिसंबंधजनितकालुष्यादविविक्ततयाऽव्यक्तमव्यक्तंब्रह्मतस्यविद्यां अयंभावः । यद्यपिब्रह्मनित्यापरोक्षंआत्मत्वात् तथापि अशनायाद्यतीतस्यत स्यविविक्तस्यपरोक्षत्वात्तदापरोक्ष्यायप्रयत्नोयुक्तइति ४ अंजसाआर्जवेन ५ आचार्येति योनिःस्थानं । 'योनिष्टइंद्रनिषदेअकारि । स्वैयोनीनिषदतंसरूपा ' इत्यादौदर्शनात् । गर्भंभू त्वातस्यनिष्कपटसेवयाअंतरंगत्वंप्राप्येत्यर्थः । शास्त्रकाराःशास्त्रकर्तृत्वंब्रह्मण्येवश्रुतं महतोभूतस्यनिःश्वसितमेतदृग्वेदइत्यादिना । गुरोरनुग्रहादिहैवब्रह्म भावंप्राप्नुवंतीत्यर्थः । परमंअपु नरावृत्तियोगंब्रह्मणासहऐक्यंयांति ६ अस्मिन्निति येजितकामाःब्राह्मींस्थितिंप्राप्तुंयेचद्वंद्वसहाः तेदेहादात्मानंनिर्हरंतिपृथक्कुर्वंति सत्त्वसंस्थाःसत्त्वगुणभाजः श्रुतिश्च । 'तंस्वाच्छरीरात्प्रवृहे न्मुंजादिवइषीकांधैर्येण'इति प्रवृहेत् पृथक्कुर्यात् ७ आचार्यःशास्ताउपदेष्टायस्यांसाजातिर्जन्म । यथाब्राह्मणस्यसावित्रीप्राप्त्यासावित्रंद्वितीयंजन्म एवंआचार्यात् परब्रह्मविद्याप्राप्त्याऽपितस्य जन्मांतरंभवति तच्चमोक्षहेतुत्वात्पुण्यत्वादिगुणसंयुक्तम् ८ आचार्यमाहात्म्यप्रख्यापकंमंत्रंपठति यःप्रावृणोतीति यःआचार्यःवर्णान्ब्राह्मणादीन् अवितथेनावितथमनृतमनात्माजडंतदन्ये

॥ सनत्सुजातउवाच ॥ अव्यक्तविद्यामभिधास्येपुराणींबुद्ध्याचतेषांब्रह्मचर्येणसिद्धाम् ॥ यांप्राप्यैनंमर्त्यलोकंत्यजंतियावैविद्यागुरुवृद्धेषुनित्या ४ ॥ धृत राष्ट्रउवाच ॥ ब्रह्मचर्येणयाविद्याशक्यावेदितुमंजसा ॥ तत्कथंब्रह्मचर्यंस्यादेतद्ब्रह्मन्ब्रवीहिमे ५ ॥ सनत्सुजातउवाच ॥ आचार्ययोनिमिहयेप्रविश्यभूत्वा गर्भंब्रह्मचर्यंचरंति ॥ इहैवतेशास्त्रकाराभवंतिप्रहायदेहंपरमंयांतियोगम् ६ अस्मिँल्लोकेवैजयंतीहकामान्ब्राह्मींस्थितिंह्यनुतितिक्षमाणाः ॥ तआत्मानंनिर्हरंती हदेहान्मुंजादिषीकामिवसत्त्वसंस्थाः ७ शरीरमेतौकुरुतःपितामाताचभारत ॥ आचार्यशास्तायाजातिःसापुण्यासाऽजराऽमरा ८ यःप्रावृणोत्यवितथेनव र्णानृतंकुर्वन्नमृतंसंप्रयच्छन् ॥ तंमन्येतपितरंमातरंचतस्मैनद्रुह्येत्कृतमस्यजानन् ९ गुरुंशिष्योनित्यमभिवादयीतस्वाध्यायमिच्छेच्छुचिरप्रमत्तः ॥ मानं नकुर्यान्नादधीतरोषमेषप्रथमोब्रह्मचर्यस्यपादः १० शिष्यवृत्तिक्रमेणैवविद्यामाप्नोतियःशुचिः ॥ ब्रह्मचर्यव्रतस्यास्यप्रथमःपादउच्यते ११ आचार्यस्यप्रि यंकुर्यात्प्राणैरपिधनैरपि ॥ कर्मणामनसावाचाद्वितीयःपादउच्यते १२ समागुरौयथावृत्तिर्गुरुपत्न्यांतथाऽऽचरेत् ॥ तत्पुत्रेचतथाकुर्वन्द्वितीयःपादउच्यते १३ आचार्येणात्मकृतंविजानन्ज्ञात्वाचार्थंभावितोस्मीत्यनेन ॥ यन्मन्यतेतंप्रतिहृष्टबुद्धिःसवैतृतीयोब्रह्मचर्यस्यपादः १४ नाचार्यस्यानपाकृत्यप्रवासं प्राज्ञःकुर्वीतनैतदहंकरोमि ॥ इतिवमन्येतनभाषयेतसवैचतुर्थोब्रह्मचर्यस्यपादः १५

नसत्येन चिदात्मना प्रकर्षेणआवृणोति सबाह्याभ्यंतरंवासयति । द्वैतोत्थभयनिवारणेनपालयतीत्यर्थः । ऋतंब्रह्मकुर्वन्वाचाआविष्कुर्वन् तस्यफलमाह अमृतंसंप्रयच्छन्निति अमृतंमोक्षं कृतं तत्कृतमुपकारं ९ शुचिःस्नानादिनाभावशुद्ध्याच अप्रमत्तःगुरुशुश्रूषायांसावधानः मानंनकुर्यात् तुच्छमपिकार्यंशिशूनांशौचादिकंतदापिकर्तव्यमेवेत्यर्थः अत्यंतंश्रमेऽपिरोषंनादधीतनाविद ध्यात् १० शिष्यवृत्तिःसायंप्रातर्भिक्षणेनजीवनंतेनैवक्रमेणनतुगुर्वन्नोपजीवनेनेत्यर्थः ११ द्वाभ्यांश्लोकाभ्यांब्रह्मचर्यस्यप्रथमंपादमुक्त्वा द्वाभ्यांद्वितीयंपादमाह आचार्यस्येति १२ । १३ प्राप्तविद्यो।विद्यासुखेनहृष्यन्आचार्ययत्अत्यंतंमानयति सब्रह्मचर्यस्यतृतीयःपादइत्याह आचार्येणेति आत्मकृतंस्वस्मैउपकृतं विद्यादानेनतस्यचअर्थंप्रयोजनंदुःखनिवृत्तिमानंदावाप्तिं चज्ञात्वाऽनुभूयअनेनाचार्येणभावितोवर्धितोऽस्मीतिजानन्यन्मन्यते १४ अनपाकृत्यविद्यायानिष्क्रयार्थंमृणमर्थदानेनअपरिहृत्य प्रवासंगुरुगृहादन्यत्राश्रमांतरेस्थितिंनकुर्वीत ।। एततगुरुवे अर्थप्रदानमहंकरोमीतिनैवमन्येतमनसा । नचभाषयेत स्वार्थेणिच् वदेतवाच १५

चतुष्पाद्ब्रह्मचर्येंणलभ्यांचतुष्पदींविद्यामाह कालेनेति कालेनबुद्धिपरिपाकेन । उत्साहयोगेनबुद्धिविभवेन । शास्त्रेणसहाध्यायिभिर्विचारेण । क्रमस्तुनविवक्षितः उक्तंच 'आचार्यात्पादमा दत्तेपादंशिष्यःस्वमेधया ॥ कालेनपादमादत्तेपादंसब्रह्मचारिभिः'इति १६ धर्मादयइति यस्यब्रह्मचर्यस्यरूपंस्वरूपभूताइत्यर्थः अन्यानिचांगानिआसनप्राणजयादीनि । बलंयोगेनित्योद्युक्तता । ब्रह्मार्थोवेदार्थः कर्मब्रह्मणीतयोर्योगेनअधिगमेनब्रह्मचर्यंफलतीत्यर्थः १७ एवमिति अहंकरोमीत्यभिमानंविनातत्प्रकाशकंवचनंचविनागुर्वर्थार्थंप्रवृत्तःसःआचार्यः वृत्तिजींविकांएतिप्राप्नोति वृत्तिर्वर्तनंशिष्यस्येतिशेषः १८ वसन्ब्रह्मचर्येइतिशेषः सर्वतःसर्वैःप्रकारैः वर्धतिवर्धते वर्षतिधनैरितिशेषः १९ । २० । २१ आकांक्ष्येति रसभेदःपारदगुटिकाविशेषश्चिंतामणिसंज्ञस्तंचिंतितवस्तुप्रदंअर्थयंते तेषांरसभेदार्थिनांयथाआकांक्ष्यस्यलिप्सितस्यार्थस्यसंयोगःप्राप्तिस्ततोयादृक्भावोभवति एवमेवएतेदेवादयःसमाज्ञायब्रह्मचर्यमुपेत्यतादृग्भावंसत्यसंकल्पत्वाच्चिंतितवस्तुप्रदत्वंगताः २२ यइति सर्वंचतुष्पाद्ब्रह्मचर्यं यआश्रयेत्शरीरंचपावयेत् । बाल्यंरागद्वेषादिराहित्यं वेदांतार्थानांयुक्तिपूर्वकमनुचिंतनेनतत्त्वनिश्चयंवा । अंतका

कालेनपादंलभतेतथार्थंततश्चपादंगुरुयोगतश्च ॥ उत्साहयोगेनचपादमृच्छेच्छास्त्रेणपादंचततोऽभियाति १६ धर्मादयोद्वादशयस्यरूपमन्यानिचांगानितथाबलंच ॥ आचार्ययोगेफलतीतिचाहुर्ब्रह्मार्थयोगेनचब्रह्मचर्यं १७ एवंप्रवृत्तोयदुपालभेतवैधनमाचार्यायतदनुप्रयच्छेत् ॥ सतांवृत्तिंबहुगुणामेवमेतिगुरोःपुत्रेभवतिचवृत्तिरेषा १८ एवंवसन्सर्वतोवर्धतीहबहून्पुत्रान्लभतेचप्रतिष्ठाम् ॥ वर्षतिचास्मैप्रदिशोदिशश्चवसंत्यस्मिन्ब्रह्मचर्येजनाश्च १९ एतेनब्रह्मचर्येणदेवादेवत्वमाप्नुवन् ॥ ऋषयश्चमहाभागाब्रह्मलोकंमनीषिणः २० गंधर्वाणामनेनैवरूपमप्सरसामभूत् ॥ एतेनब्रह्मचर्येणसूर्योऽप्यह्नायजायते २१ आकांक्ष्यार्थस्यसंयोगाद्रसभेदार्थिनामिव ॥ एवंह्येतेसमाज्ञायतादृग्भावंगताइमे २२ यआश्रयेत्पावयेच्चापिराजन्सर्वंशरीरंतपसातप्यमानः ॥ एतेनवैबाल्यमभ्येतिविद्वान्मृत्युंतथासजयत्यंतकाले २३ अंतवतःक्षत्रियतेजयंतिलोकान्जनाःकर्मणानिर्मलेन ॥ ब्रह्मैवविद्वांस्तेनचाभ्येतिसर्वंनान्यःपंथाअयनायविद्यते २४ ॥ धृतराष्ट्रउवाच ॥ आभातिशुक्लमिवलोहितमिवाथोकृष्णमथांजनंकाद्रवंवा ॥ सद्ब्रह्मणःपश्यतियोऽत्रविद्वान्कथंरूपंतदमृतमक्षरंपदम् २५ ॥ सनत्सुजातउवाच ॥ आभातिशुक्लमिवलोहितमिवाथोकृष्णमायसमर्कवर्णम् ॥ नपृथिव्यांतिष्ठतिनांतरिक्षेनैतत्समुद्रेसलिलंबिभर्ति २६

लेइत्यनेनयावज्जीवंउक्तप्रकारेबाल्येतिष्ठेदितिदर्शितं यथोक्तं । 'श क्नोतीहैवयःसोढुंप्राक्शरीरविमोक्षणात् । कामक्रोधोद्भवंवेगंसयुक्तःससुखीनरः'इति २३ अंतेति तेअविद्वांसः अंतवतःअनित्यांल्लोकान्कर्मणाजयंति । विद्वांस्तुब्रह्मैवसार्वात्म्यात्सर्वं तेनज्ञातेनब्रह्मणाअभ्येति अतस्तस्यकर्मप्राप्यंकिंचित्फलंनावतिष्ठतेइत्यर्थः । अतःज्ञानादन्यःपंथाःअयनायमोक्षायनविद्यते । ज्ञानादेवतुकैवल्यमित्यवधारणात् २४ नान्यःपंथाअयनायविद्यतइतिश्रुत्वा 'तूष्णींभूतउपासीतनचेष्टेन्मनसाऽपिच । उपावर्तस्वतद्ब्रह्मअंतरात्मनिविश्रुतं'इतिप्रागुक्तप्रकारेणआत्मानमनुसंदधानस्तमनवाप्यनानावर्णान्नाडीमार्गान् अंतर्हृदयेपश्यन्पृच्छतिआभातीति सद्ब्रह्मणोरूपंयोविद्वानत्रहृदयेपश्यतिसशुक्लादिरूपमिवअनवस्थितरूपंब्रह्मपश्यति । अतःकथंरूपंकीदृक्रूपंतदक्षरंव्यापकंअमृतमविनाशिपदंपदनीयंतद्ब्रूहीतिशेषः । काद्रवंकुत्सितःपरपीडकःद्रवोगतिर्यस्यसकाद्रवोधूमः तद्वर्णंकाद्रवं कद्रुपिंगलंतद्वर्णं । श्रूयंतेचब्रह्ममार्गेरूपाणि । 'तस्मिन्शुक्लमुतनीलमाहुःपिंगलंहरितंलोहितंच ॥ एषपंथाब्रह्मणाहानुवित्तस्तेनैतिब्रह्मवित्पुण्यकृत्तैजसश्च'इति २५ उत्तरमाह आभातीति ब्रह्ममार्गेयद्यपिशुक्लादिरूपाणिभांतितथाऽपितत्–

ब्रह्मणोरूपंतत्पृथिव्यादिषुनास्ति । 'अशब्दमस्पर्शमरूपमव्ययंतथाऽरसंनित्यमगंधवच्चयत्'इतितत्रशब्दादीनांनिषेधात् तेषांचशब्दादिमत्त्वात् । रूपांतराणितुब्रह्मप्राप्तिचिन्हानि नतु ब्रह्मरूपाणि तथाचश्रुतिः । 'नीहारधूमार्कानिलाऽनलानांखद्योतविद्युत्स्फटिकशशीनां ॥ एतानिरूपाणिपुरःसराणिब्रह्मण्यभिव्यक्तिकराणियोगे'इति । समुद्रेसंसारसागरेएनंपरमात्मानं सलिलंसलिलोपलक्षितः पंचभूतात्मकोदेहः नाबिभर्ति । जीवानामिवब्रह्मणउपाधिजंदुःखंनास्तीत्यर्थः यद्वा । सामुद्रेजलेएतद्रूपंनास्तीत्यर्थः २६ नतारकास्विति रूपादिराहित्यस्यैवप्र पंचः २७ नामरूपात्मकेप्रपंचेसतितद्रहितत्वंब्रह्मणोवक्तुंरूपप्रपंचादन्यत्वमुक्त्वानामप्रपंचादप्यन्यत्वमाह नैवर्क्षुतदित्यादिना तदित्यनेनअर्थात्ब्रह्मणोनामनिर्दिश्यते । विमलेषुवैश्वा नरसामादिषु । रथंतरबार्हद्रथेचपृष्ठ्यसामनी । महाव्रतेयज्ञविशेषेऽपिनैवतद्दृश्येत्पश्येत् । कर्मभिरपितद्दर्शनंनप्राप्यतेइत्यर्थः । 'नास्त्यकृतःकृतेन'इतिश्रुतेः । अकृतःमोक्षःकृतेनकर्मणाना स्तीतिश्रुत्यर्थः । यतः तत्ध्रुवंनित्यम् २८ अपारणीयंअनतिक्रमणीयंअहेयत्वात् । तमसःअज्ञानरूपादुपाधेःपरस्तात्पराचीनं । अंतकःकालः तत्ब्रह्मअप्येतिगच्छति । प्रलयांतेकालो ऽपितत्रलीयतइत्यर्थः । अणीयइतिदुर्लक्ष्यं । क्षुरधारयासममितिअत्यंतावहितेनग्राह्यं । महच्चपर्वतेभ्यइतिउपलक्षणंसर्वस्य सर्वस्मादपिमहदित्यर्थः २९ प्रतिष्ठाअधिष्ठानं । अमृतंनिर्वि कारं । विकारोहिविकारांतरमापद्यमानोऽमृतउच्यते । लोक्यंतइतिलोकादृश्यमात्रं । ब्रह्मबृहत् यशोरमणीयमपितदेव । 'तस्यनाममहद्यशः'इतिहिश्रुतेः । यस्मादुपादानात्कनकात्

नतारकासुनचविद्युदाश्रितंनचाभ्रेषुदृश्यतेरूपमस्य ॥ नचापिवायौनचदेवतासुनैतच्चंद्रेदृश्यतेनोतसूर्ये २७ नैवर्क्षुतन्नयजुःषुनाप्यथर्वसुनदृश्यतेवैवि मलेषुसामसु ॥ रथंतरेबार्हद्रथेवाऽपिराजन्महाव्रतेनैवदृश्येद्ध्रुवंतत् २८ अपारणीयंतमसःपरस्तात्तदंतकोऽप्येतिविनाशकाले ॥ अणीयोरूपंक्षुरधारयासमं महच्चरूपंतद्वैपर्वतेभ्यः २९ साप्रतिष्ठातदमृतंलोकास्तद्ब्रह्मतद्यशः ॥ भूतानिजज्ञिरेतस्मात्प्रलयंयांतितत्रहि ३० अनामयंतन्महदुद्यतंयशोवाचोविकारंक वयोवदंति ॥ यस्मिन्जगत्सर्वमिदंप्रतिष्ठितंयेतद्विदुरमृतास्तेभवंति ३१ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसनत्सुजातपर्वणिसनत्सुजातवाक्येचतुश्चत्वा रिंशोऽध्यायः ॥ ४४ ॥ ॥ ४ ॥ ॥ सनत्सुजातउवाच ॥ शोकःक्रोधश्चलोभश्चकामोमानःपरासुता ॥ ईर्ष्यामोहोविधित्साचकृपाऽसूयाजुगुप्सुता १

कुंडलादीनीवभूतानिजातानि । यतः तत्रैवप्रलयंमृदिघटइवयांति । एतेनब्रह्मणोजगत्कारणत्वमुक्तंतथाचश्रुतिः । 'यतोवाइमानिभूतानिजायंते । येनजातानिजीवंति । यत्प्रयंत्यभिसंवि शंतीति । तद्विजिज्ञासस्वतद्ब्रह्मेति' ३० अनामयंनिर्द्वंद्वं उद्यतंजगदाकारेणउद्गतं । महद्यशः परंव्यापकंआकाशादिभ्योऽपिमहदित्यर्थः । वाचइतिषष्ठीतृतीयार्थे कवयःविकारंवाचैवास्तीति वदंतिनस्वरूपेणास्तीत्यर्थः तथाचश्रुतिः । 'वाचारंभणंविकारोनामधेयम्'इति वागालंबनत्वंविकारस्याह । यस्मिन्निदंजगत्प्रतिष्ठितंरज्ज्वामुरगवल्लीनं तद्येविदुस्तेअमृताः मुक्ताभवंति ३१ ॥ इतिउद्योगप० नीलकंठीयेभारतभा० चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ॥ समाप्ताज्ञानप्रधानायोगोपसर्जनाब्रह्मविद्या । इदानींयोगप्रधानांज्ञानोपसर्जनांतांवक्तुमध्यायद्वयमारभ्यते । यत्रपूर्वंचित्तवृत्तिनिरोधेनत्वंपदार्थंज्ञात्वापश्चाद्वेदांतश्रवणादिनातस्यब्रह्मत्वंनिश्चीयतेसाआद्या । यत्रतुश्रवणादिनापूर्वंपारोक्ष्येणप्रतीचोब्रह्मभावंनिश्चित्य पश्चान्निदिध्यासनेनसःअपरोक्षी क्रियतेसाद्वितीया । क्रमद्वयेऽपिफलैक्यात्साधनजातमप्येकरूपमेवेतिदर्शयितुंप्रागुक्तानेवहेयान्दोषान् उपादेयान्गुणांश्चदर्शयति शोकःक्रोधश्चेत्यादिना तत्रक्रोधादयःप्राग्व्याख्याताएव त थाऽपिक्वचित्विशेषोदृश्यतेसएवव्याख्यायते । लोभःस्पृहा मोहःमज्ञायाअभावः । अत्रापिलोभइतिपाठेऽपिसएवार्थः । लुभविमोहनइतिधात्वर्थानुगमात् । परासुतानिद्रापरत्वं । कृपाऽत्रस्नेहः १

पापंपापफलंकर्म व्यवस्यतिआरभते मूढसंज्ञःमूढबुद्धिः २ उग्रःनिर्दयः परुषःरूक्षवाक् वदान्योबहुभाषी नसभाजयंतेपरंनमानयंति ३ बहुप्रशंसीआत्मस्तुतिपरः ४ महाव्रतामहाव्रतानि। सुपांसुलुगितिसुपोडादेशश्छांदसः ५ नास्यस्वंस्वीयंकिमपिनास्ति धर्मादिष्वेकैकस्मिन्नपिपक्षपातेसतितदर्थंसर्वंत्यजतीत्यर्थः ६ ब्रह्मैवमुख्यंप्राप्यंयेषांतेषाम् ७ परीवादःपरदोषकीर्तनं सत् यथार्थभूतं असत्आरोपितम् ८ अप्रकीर्तितइति दमविरोधिनएवप्रातिकूल्यादयोमददोषत्वेनसूचिताअपिशृंगग्राहिकयाप्रकर्षेणविधिमुखेननप्रोक्ताइत्यर्थः । लोकद्वेष्यंपारदार्यादि। प्रातिकूल्यंधर्मादौविघ्नाचरणं। अभ्यसूयागुणिषुदोषारोपः ९ कामःस्त्र्यभिलाषः। पारतंत्र्यंमद्यादिवशत्वं। पैशुनंराजद्वारादौपरदोषसूचनं। अर्थहानिः नटनर्तकवेश्यादिषु दंडेनवा वित्तनाशः। विवादोवैरम् १० मोदोहर्षःदर्पहेतुः। हृष्टोदृप्यतीत्यापस्तंबोक्तेः। अतिवादोनिर्मर्यादंवचनं । संज्ञानाशःकार्याकार्यविवेकराहित्यं । अभ्यसूयितानैरंतर्येणपरद्रोहशीलता । एतत्मदव

द्वादशैतेमहादोषामनुष्यप्राणनाशनाः ॥ एकैकमेतेराजेंद्रमनुष्यान्पर्युपासते ॥ यैराविष्टोनरःपापंमूढसंज्ञोव्यवस्यति २ स्पृहयालुरुग्रःपरुषोवावदान्यः क्रोधंबिभ्रन्मनसावैविकत्थी ॥ नृशंसधर्माःषडिमेजनावैप्राप्याप्यर्थंनोतसभाजयंते ३ संभोगसंविद्विषमोऽतिमानीदत्वाविकत्थीकृपणोदुर्बलश्च ॥ बहुप्रशंसीवनिताद्विट्सदैवसप्तैवोक्ताःपापशीलानृशंसाः ४ धर्मश्चसत्यंचतपोदमश्चअमात्सर्यंह्रीस्तितिक्षाऽनसूया ॥ दानंश्रुतंचैवधृतिःक्षमाचमहाव्रताद्वादशब्राह्मणस्य ५ योनैतेभ्यःप्रच्यवेद्द्वादशभ्यःसर्वामपीमांपृथिवींसशिष्यात् ॥ त्रिभिर्द्वाभ्यामेकतोवार्थितोयोनास्यस्वमस्तीतिचवेदितव्यम् ६ दमस्त्यागोऽथाप्रमादइत्येतेष्वमृतंस्थितम् ॥ एतानिब्रह्ममुख्यानांब्राह्मणानांमनीषिणाम् ७ सद्वाऽसद्वापरीवादोब्राह्मणस्यनशस्यते ॥ नरकप्रतिष्ठास्तेस्युर्यएवंकुर्वतेजनाः ८ मदोऽष्टादशदोषःसस्यात्पुरायोऽप्रकीर्तितः ॥ लोकद्वेष्यंप्रातिकूल्यमभ्यसूयामृषावचः ९ कामक्रोधौपारतंत्र्यंपरिवादोऽथपैशुनम् ॥ अर्थहानिर्विवादश्चमात्सर्यंप्राणपीडनम् १० ईर्ष्यामोदोऽतिवादश्चसंज्ञानाशोऽभ्यसूयिता ॥ तस्मात्प्राज्ञोनमाद्येतसदाह्येतद्विगर्हितम् ११ सौहृदेवैषड्गुणावेदितव्याःप्रियेहृष्यंत्यप्रियेचव्यथंते ॥ स्यादात्मनःसुचिरंयाचतेयोददात्ययाच्यमपिदेयंखलुस्यात् ॥ इष्टान्पुत्रान्विभवान्स्वांश्चदारानभ्यर्थितश्चार्हतिशुद्धभावः १२ त्यक्तद्रव्यःसंवसेन्नेहकामाद्भुंक्तेकर्मस्वाशिषंबाधतेच १३ द्रव्यवान्गुणवानेवंत्यागीभवतिसात्विकः ॥ पंचभूतानिपंचभ्योनिवर्तयतितादृशः १४

त्वंविगर्हितंनिंदितंसद्भिः। सदाहीत्यापत्कालेऽपिनाश्रयणीयमितिसूचितम् ११ सुहृदांप्रियेसतिहर्षः अप्रियेसतिव्यथेतिद्वौसौहृदगुणौ। तृतीयमाहस्यादिति। सुहितमितिपाठेसुतरांहितंइष्टंपुष्टिकरं । देयंदातारं । भव्यगेयेतिवत्कर्तरिकृत्यः । योदातारंअयाच्यमपिपुत्रादिकंमुख्यंकर्मभूतंयाचतेसअभ्यर्थितःप्रार्थितोदाता तस्मैइष्टादीन्अर्हतिदातुमितिशेषः सार्धश्लोकोवाक्यम् १२ चतुर्थमाह त्यक्तेति यस्मैसर्वस्वंदत्तंतस्यगृहेकामात् मयाऽयमुपकृतइतिबुद्धितःनसंवसेत् । तेनकदाचिदनादृतःसन्सौहार्दभंगंकुर्यादितिभावः । पंचममाह भुंक्तेकर्मेति स्वकर्मार्जितमेवधनंभुंक्ते नतुमित्राद्यार्जितं अन्यथाकालेनहेलनांप्राप्यसौहृदभंगोमाभूदिति । षष्ठमाह स्वाशिषंबाधतेचस्वस्यश्रेयोऽपिमित्रहितार्थंनाशयतीत्यर्थः । पाठांतरेस्वासितंस्वस्थानंराज्यादिकं आस्तेऽस्मिन्नितिव्युत्पत्त्याज्ञेयं । स्वाशिवमितिपाठेस्वस्यआसमंतात्शिवंश्रेयस्करमित्यर्थः १३ द्रव्यवान्गृहस्थः एवंउक्तरीत्यागुणवान् त्यागीदाता सात्विकःसत्वप्रधानश्चयोभवतितादृशःपुरुषःपंचभ्यःशब्दादिभ्यःपंचभूतानिश्रोत्राद्याकारेणपरिणतानिइंद्रियाणिनिवर्तयति १४

एतत्स्वविषयेभ्यइंद्रियाणांनिवर्तनंसमृद्धंपुष्कलमपिकेवलंतपएवऊर्ध्वंऊर्ध्वगतिप्रदंभवति नज्ञानवदिहैवकृतकृत्यतामापादयतीत्यर्थः । केषामित्यत आह सत्वादिति येसत्वात्धैर्यात्च्यवं तेतीव्रवैराग्याभावात्तेषांच संकल्पेनब्राह्मलौकिकान्दिव्यान्भोगान्भोक्ष्येइत्येवंरूपेणसमाहितंसंभृतंतपोभवतितेषामेवोर्ध्वगतिर्भवतीत्यर्थः १५ यतःसंकल्पात्यज्ञाःप्रवर्धंते तस्यैवसत्यस्य संकल्पस्यावधारणात् ।‘ संकल्पादेवास्यपितरःसमुत्तिष्ठंति’इतिश्रुतेर्योगीसत्यसंकल्पोभवति । अन्यस्यएकस्ययज्ञःमनसैवभवतिसत्यसंकल्पत्वात् । तथाह्युपाख्यायते त्रितोनाममुनिर्भ्रातृ कूपेपातितःसन्तत्रैवमनसाकृत्स्नंयज्ञंचकारेति । ‘त्रितःकूपेऽवहितोदेवान्हवतऊतये’इतिमंत्रवर्णाच्चैतद्गम्यते । अवहितोध्यायन् हवतेआह्वयति ऊतयेयज्ञसंतत्यै । अन्यस्यमध्यमस्यवाचै वब्रह्मयज्ञजपादिनायज्ञोभवति । अन्यस्यप्राकृतस्य कर्मणाआज्यपशुपुरोडाशीयादिप्रधानयाक्रियया १६ संकल्पेति सगुणब्रह्मवेदनात्सत्यसंकल्पंपुरुषंअसंकल्पश्चिदात्माऽधितिष्ठतिभृत्य मिवराजा । ननुअतएवचानन्याधिपतिरितिविदुषःसत्यसंकल्पत्वादेवअनन्याधिपतित्वंकथंसूत्रितं । ईश्वरांतराभिप्रायेणेतिगृहाण तथाचश्रुतिः ।‘ तस्यहनदेवाश्चनाभूत्याईशतआत्मा ह्येषांसभवति’इति । देवाश्चनदेवाअपिहप्रसिद्धं तस्यब्रह्मविदःअभूत्यैअनैश्वर्यायनईशतेनसमर्थाभवंतितत्रहेतुःआत्माहीति इतिश्रुत्यर्थः । किंचअन्यदपिमेमत्तःशृणु । तदेवाह ब्राह्मणस्यनि र्गुणब्रह्मविदःसंकल्पविशेषेणअसंकल्पोऽधितिष्ठति । सगुणोपासकापेक्षयानिर्गुणविदिसत्यसंकल्पत्वादिकमतिशयेनाविर्भवतीत्यर्थः १७ एतद्योगशास्त्रंअध्यापयेत् शिष्यान्ग्राहयेत् यतः

एतत्समृद्धमप्यूर्ध्वंतपोभवतिकेवलम् ॥ सत्वात्प्रच्यवमानानांसंकल्पेनसमाहितम् १५ यतोयज्ञाःप्रवर्धंतेसत्यस्यैवावरोधनात् ॥ मनसाऽन्यस्यभवतिवाचाऽन्यस्याथकर्मणा १६ संकल्पसिद्धंपुरुषमसंकल्पोऽधितिष्ठति ॥ ब्राह्मणस्यविशेषेणकिंचान्यदपिमेशृणु १७ अध्यापयेन्महदेतद्यशस्यंवाचोविकाराःकवयोवदंति ॥ अस्मिन्योगेसर्वमिदंप्रतिष्ठितंयेतद्विदुरमृतास्तेभवंति १८ नकर्मणासुकृतेनैवराजन्सत्यंजयेज्जुहुयाद्वायजेद्वा ॥ नैतेनबालोऽमृत्युमभ्येतिराजन्रतिंचासौनलभत्यंतकाले १९ तूष्णीमेकउपासीतचेष्टेतमनसाऽपिन ॥ तथासंस्तुतिनिंदाभ्यांप्रीतिरोषौविवर्जयेत् २० अत्रैवतिष्ठन्क्षत्रियब्रह्माविशतिपश्यति वेदेषुचानुपूर्व्येणएतद्विद्वन्ब्रवीमिते २१ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसनत्सुजातपर्वणिसनत्सुजातवाक्येपंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ ॥ ७ ॥ सनत्सुजातउवाच ॥ यत्तच्छुक्रंमहज्ज्योतिर्दीप्यमानंमहद्यशः ॥ तद्वैदेवाउपासतेतस्मात्सूर्योविराजते ॥ योगिनस्तंप्रपश्यंतिभगवंतंसनातनम् १

यशस्यंयशसेब्रह्मणेतत्प्राप्त्यैहितं । इतोऽन्यत्शास्त्रंवाचोविकाराएव एतच्चकवयोवदंति । योगेयोगिनितदधीनंसर्वमित्यर्थः येतत्तंयोगंविदुः शेषंस्पष्टं १८ कर्मणासत्यंब्रह्मनजयेत्नप्राप्नुयात् यत्जुहुयात्यत्यजेद्वाएतेनहोमयागात्मकेनकर्मणाबालःअविद्वान्अमृत्युंमोक्षंनजयतिनप्राप्नोति रतिंआनंदं लभतिलभते १९ तूष्णीमित्यर्धोव्याख्यातः । स्तुत्याप्रीतिं निंदयारोषंचवर्जये त् २० अत्रेति हेक्षत्रिय वेदेषुपूर्वोक्तदृष्टिभेदेषुआनुपूर्व्येणआरोपव्यामिश्रापवादक्रमेणातिष्ठन् अत्रैवब्रह्मपश्यति आविशतितादात्म्यंच महाकाशघटाकाशन्यायेनउपाधिविलयात्प्राप्नोति सस्मादृष्टार्थाऽनंतफलाचब्रह्मविद्याऽदृष्टार्थात्विनाशिफलात्कर्मणःश्रेयसीतिज्ञात्वाज्ञानार्थमेवयतेतेतितेतुभ्यंब्रवीमि २१ ॥ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपेपंचचत्वारिंशो ऽध्यायः ॥ ४५ ॥ ॥ ७ ॥ पूर्वाध्यायांतेमनसाऽपिनचेष्टेतेत्युक्तंतत्रमनसश्चेष्टाराहित्येसतिमहताब्रह्मचर्यादियत्नेनशून्यशेषतैवसाधिताभवतीत्याशंक्यशून्यवदेवनिर्धर्मकंशून्यभावस्यापिप्र काशकंसद्रूपंब्रह्मप्रत्यगभिन्नत्वेनज्ञेयमस्तीत्यस्मिन्नर्थेमंत्रानुदाहरतियोगिप्रत्यक्षंचपुनःपुनःप्रमाणत्वेनोपन्यस्यति यत्तच्छुक्रमित्यादिनाऽध्यायेन यच्छुक्रंबीजमिवबीजंविश्वोत्पत्त्यादिमूल कारणंसर्वचेष्टाप्रवर्तकंआनंदरूपं । महत्वृत्तिरूपोपाधिशून्यं । ज्योतिर्ज्ञप्तिमात्रं । दीप्यमानंसूर्यादिरूपेण । महद्यशोनामकं । तदेवदेवाइंद्रियाणिउपासतेअनुसरंति तस्मादेवमूलकार-

णात्सूर्योजगत्प्रसवधर्मामायोपाधिरीश्वरोविराजते तथाचश्रुतयः । 'आनंदाद्ध्येवखल्विमानिभूतानिजायंते ॥ आनंदेनजातानिजीवंति । आनंदंप्रयंत्यभिसंविशंतीति । कोह्येवान्या त्कःप्राण्यात् । यदेषआकाशआनंदोनस्यात् । येनसूर्यस्तपतितेजसेद्धः । नतस्येशेकश्चनतस्यनाममहद्यशः । नप्राणेननापानेनमर्त्योजीवतिकश्चन ॥ इतरेणतुजीवंतियस्मिन्नेतावुपाश्रि तौ । प्राणस्यप्राणमुतचक्षुषश्चक्षुः'इत्यादयः । तंपरमात्मानंयोगिनःचित्तवृत्तिनिरोधेनभगवंतंसर्वैश्वर्यवंतंसंप्रज्ञाते । असंप्रज्ञातेतुसनातनंअखंडैकरसंपश्यंतीति सर्वत्रज्ञेयं योगेनैवतंपरमा त्मानंपश्येन्नान्यथा यथाऽऽहदक्षः । 'स्वसंवेद्यंहितद्ब्रह्मकुमारीस्त्रीसुखंयथा । अयोगीनैवजानातिजात्यंधोहियथाघटं'इति १ अस्यैवमंत्रस्यविवरणार्थाउत्तरेमंत्राः शुक्रात् आनंदात्तंप्रा प्येत्यर्थः ब्रह्मजगतोबृंहकंपरमव्योमाख्यंअव्याकृतंत्राऽवस्तुसदपिचैतन्यप्रतिबिंबंप्राप्यप्रभवति जगज्जन्मादिकार्येसमर्थंभवति तेनैवचवर्द्धते । अतस्तच्छुक्रंज्योतिषांसूर्यादीनांमध्येऽतःस्थि त्वातपतिप्रकाशतेतथाचगीता । 'यदादित्यगतंतेजोजगद्भासयतेऽखिलं ॥ यच्चंद्रमसियच्चाग्नौतत्तेजोविद्धिमामकम्'इति । अतएवअन्येनाप्रकाशितंस्वयंज्योतिरित्यर्थः । तापनंसूर्यादीनामपि भयप्रदं।'भीषाऽस्माद्वातःपवतेभीषोदेतिसूर्यः॥ भीषाऽस्मादग्निश्चेंद्रश्चमृत्युर्धावतिपंचमः'इतिश्रुतेः २ अपइति सलिलस्यसलिलमिवसलिलंएकरसंब्रह्म'सलिलएकोद्रष्टाऽद्वैतोभवति'इतिश्रुतिप्र सिद्धं तस्यमध्येस्थिताभ्योऽद्भ्यःअनुपलक्षितेभ्यःपंचमहाभूतेभ्यःसकाशादुत्पन्नाःअपःपांचभौतिकंदेहंअंतरिक्षेहृदयाकाशेशिश्रियातेश्रयतः कौ उभौदेवौचिद्रूपत्वेनद्योतमानौजीवेश्वरौसुप्तिप्रल

शुक्राद्ब्रह्मप्रभवतिब्रह्मशुक्रेणवर्द्धते ॥ तच्छुक्रंज्योतिषांमध्येऽतप्तंतपतितापनम् ॥ योगिनस्तंप्रपश्यंतिभगवंतंसनातनम् २ अपोऽथअद्भ्यःसलिलस्यमध्ये उभौदेवौशिश्रियातेंऽतरिक्षे ॥ अतंद्रितःसवितुर्विवस्वानुभौबिभर्तिपृथिवींदिवंच ॥ योगिनस्तंप्रपश्यंतिभगवं० ३ उभौचदेवौपृथिवींदिवंचदिशःशुक्रोभुवनं बिभर्ति ॥ तस्माद्दिशःसरितश्चस्रवंतितस्मात्समुद्राविहितामहांताः ॥ योगिनस्तंप्रपश्यंतिभगवंतंसनातनम् ४ चक्रेरथस्यातिष्ठंतोऽध्रुवस्याव्ययकर्मणः ॥ केतुमंतंवहंत्यश्वास्तंदिव्यमजरंदिवि ॥ योगिनस्तंप्रपश्यंतिभगवंतंसनातनम् ५ नसादृश्येतिष्ठतिरूपमस्यनचक्षुषापश्यतिकश्चिदेनम् ॥ मनीषयाऽथो मनसाहृदाचयएनंविदुरमृतास्तेभवंति ॥ योगिनस्तंप्रपश्यंतिभगवंतंसनातनम् ६

ययोःक्रमेणतंद्रावंतौ ताभ्यामन्यःअतंद्रितःनिर्मायःसवितुःजगत्कारणस्य विवस्वान् वसआच्छादने वस्वान्आच्छादनवान् तद्विपरीतो विवस्वान् अपरिच्छिन्नसंविद्रूपःसंततमनुदितानस्तमितप्रकाशःसर्वाधिष्ठानभूतःउभौजीवेश्वरौपृथिवींदिवंचबिभर्ति । आ सध्रीचीःसविषूचीर्वसानावितिपाठेसःशुक्रसंज्ञःशुद्धआत्मा । कीदृशौउभौदेवौसध्रीचीःविषूचीश्च आवसानौ दिशःउपदिशश्चपटवद्वसानौ । दिगंतपर्यंतंविस्तीर्णावित्यर्थः । व्यवहिताश्चेति छांदसंक्रियोपसर्गयोर्व्यवधानं शेषंप्राग्वदेव ३ एतदेवाह उभावीति देवौजीवेश्वरौपृथिव्यादिकंभुवनंब्रह्मांडंशुक्रोबिभर्ति । तस्मात्सर्वोत्पत्तिमाह तस्मादिति महान्दुरधिगमोऽन्तोयेषांतेमहांताः समुद्राःकामाः कामंससुद्रमाविशेतिमंत्रलिंगात् ४ चक्रेइति रथस्यशरीरस्य । 'रथःस्यंदनदेहयोः'इतिविश्वः। अध्रुवस्यविनाशिनोऽपिअव्ययंअविनाशिकर्मयस्यतस्यअव्ययकर्मणः । चक्रेचक्र वच्चालकेप्राक्कर्मणिनिमित्तेसतितिष्ठंतःकर्माधीनाइत्यर्थः । अश्वाःइंद्रियाणि शरीररथंविषयदेशंप्रतिनयतः केतुमंतंप्रज्ञावंतंजीवं । किन्नानेऽस्मात्तुन् । तंपरमात्मानंप्रति वहंतिवहतिर्द्विकर्मा । वश्यैरिंद्रियाश्वैर्देहरथेयोजितैःजीवःपरमात्मतांनीयते । अन्यथाशरीरेनष्टेऽपितत्कृतंकर्मनक्षीयतेऽतःशरीरांतरेणसद्यएवबद्ध्यते । दिव्यंअलौकिकंअहंप्रत्ययविषयादन्यमशनायाद्यतीतमि त्यर्थः । अजरमितिसर्वविकारप्रतिषेधः दिविहार्दाकाशे ५ अस्यरूपंआकृतिःसादृश्येनतिष्ठति अनुपमस्वरूपमित्यर्थः । नचक्षुषेतिसर्वेंद्रियगोचरत्वंनिषिद्ध्यते । 'अशब्दमस्पर्शमरूपमव्ययं' इतिरूपादिहीनत्वश्रुतेः । मनीषयामनसोनिग्रहेण मनसासूक्ष्मेण 'मनसैवानुद्रष्टव्यम्'इतितस्यकरणत्वश्रुतेः । हृदाहृदुपलक्षितेदेशेनिगृहीतेनमनसा यएनंविदुःतेअमृताःमुक्ताभवंति ६

तदवेदनेसंसारानुच्छेदमाह द्वादशेति द्वादशसंख्याःपूगाःसमुदायायस्यांतांद्वादशपूगां तेच ।'चित्तादिपूगःस्मरणादिपूगःश्रोत्रादिपूगःश्रवणादिपूगः ॥ वागादिपूगोवचनादिपूगःशब्दादिपूगोवियदादिपूगः १ प्राणादिपूगःश्वसनादिपूगःसंस्कारपूगःसुकृतादिपूगः ॥ एतैर्महापूगवरैराविद्यानद्यामधश्चोपरिचैतिजीवः' तादृशींनित्यप्रवाहवतींसरितमविद्याख्यांपिबंतस्तत्कृतैरिष्टैःपुत्रपश्वादिभिर्लब्धैस्तृप्यंतः देवैश्चक्षुरादीनामनुग्राहकैःसूर्यादिभिस्तत्तद्विषयदर्शनद्वाराऽनेकसंस्कारसंततिंसंतन्वानैःरक्षितांदेवरक्षितां ।तेजीवाःतस्याअविद्यानद्याःमधु पुत्रपश्वादिकंमधुरं फलंईक्षंतःपश्यंतस्तल्लिप्सयाइहशुक्राख्येऽधिष्ठानेभासमानांघोरांमहाभयंकरांसंचरंति ऊर्ध्वाधोमार्गेषुपुनःपुनरावर्ततइत्यर्थः । इहयत्राधिष्ठानेसंचरंतितंपरमेश्वरंयोगिनःपश्यंति ७ ननुइहकृतस्यकर्मणःकृत्स्नस्यअमुत्रैवभोगात्कर्मशेषाभावेकुतःपुनरावृत्तिःकिंतुमुक्तिरेवभवतीत्याशंक्याह तदर्द्धेति तत्मधुकर्मफलं अर्धमासंअर्धमासश्चंद्रोयस्मिन्भोग्यत्वेनतत्अर्धमासंभवति तथाहि ।'तेषांसोमोराजाऽन्नंतंदेवाभक्षयंति'इतिश्रुत्याऽमुत्रगत्वादेवभावंप्राप्ताइष्टादिकारिणःसोमस्थममृतंपिबंतीतिदर्शितं । तथाचभ्रमरोजीवःइतस्ततोभ्रमणशीलःअमुत्रसोमरूपमर्धंकर्मफलंभुंक्तेशेषेणात्रावर्ततइत्यर्थः। संचिंत्येत्यनेनआमुष्मिकफलभोगानंतरंऐहिकफलभोगवासनाऽप्यस्तीतिसूचितं द्विविधंहिकर्मकिंचिदामुष्मिकफलं किंचिदैहिकफलं तत्रैकंभुक्त्वाइतरार्थमत्रावतरतीतिश्लिष्टं श्रुतिश्च । 'यावत्संपातमुषित्वाऽथैतमेवाध्वानंपुनर्निवर्तंतेतद्यइहरमणीयचरणाअभ्याशोहतेरमणीयांयोनिमापद्यंतेकपूयचरणाःकपूयांयोनिमापद्यंते'इत्याह संपातःकर्म चरणंकर्मशेषः अभ्याशोह शीघ्रमेवेतिश्रुतिपदानामर्थः । यएवंविधोजीवःसएवईशानःअंतर्यामीसर्वभूतेषुतिष्ठति । सएवचहविर्भूतंहविर्भिःसिद्धंयज्ञंचकल्पितवान् । वेदस्यवैदिकमार्गस्यचप्रवर्तकइत्यर्थः ।

द्वादश पूगांसरितंपिबंतोदेवरक्षिताम् ॥ मध्वीक्षंतश्चतेतस्याःसंचरंतीहघोराम् ॥ योगिनस्तंप्रपश्यंतिभगवंतंसनातनम् ७ तदर्धमासंपिबतिसंचित्यभ्रमरो मधु ॥ ईशानःसर्वभूतेषुहविर्भूतमकल्पयत् ॥ योगिनस्तंप्रपश्यंतिभगवंतंसनातनम् ८ हिरण्यपर्णमश्वत्थमभिपद्यह्यपक्षकाः ॥ तेतत्रपक्षिणोभूत्वाप्रपतंति यथादिशम् ॥ योगिनस्तंप्रपश्यंतिभगवंतंसनातनम् ९ पूर्णात्पूर्णान्युद्धरंतिपूर्णात्पूर्णानिचक्रिरे ॥ हरंतिपूर्णात्पूर्णानिपूर्णमेवावशिष्यते ॥ योगिनस्तंप्रपश्यंतिभगवंतंसनातनम् १०

एतेनत्वंपदार्थस्यतत्पदार्थाभेदउक्तः । योयज्ञंअकल्पयत्तंयोगिनःपश्यंति ८ ननुईश्वरस्यजीवभावेकिंकारणमतआह हिरण्येति हिरण्यानिहरणशीलानिआपातरमणीयत्वात्पर्णानीवपर्णानिअवयवाःस्त्रीपुत्रादयोयस्यतंहिरण्यपर्णं अश्वत्थंनश्वोऽपितिष्ठतीत्यश्वत्थोनश्वरः अविद्यावृक्षः तमभिपद्यप्राप्य अपक्षकाःनसंतिपक्षाःउत्क्रमणहेतवउपाधयःप्राणरूपायेषांतेचिदात्मानः तत्रअविद्यायांपक्षिणोभूत्वाप्राणाद्युपाधिप्राप्त्याउत्क्रमणयोग्याभूत्वा यथादिशंयथावासनंप्रपतंति तासुतासुयोनिष्वित्यर्थात् । बहुवचनंऔपाधिकरूपभेदापेक्षया श्रूयतेचप्राणोपाधिकमुत्क्रमणंचिदात्मनः । प्रश्नोपनिषदि । षोडशकलंपुरुषंप्रस्तुत्य'सईक्षांचक्रेकस्मिन्वहमुत्क्रांतेउत्क्रांतोभविष्यामिकस्मिन्वाप्रतिष्ठितेप्रतिष्ठास्यामीतिसप्राणमसृजतेति' ९ एवंईश्वरस्यापिजीवत्वेउपाधिसंबंधएवकारणमित्युक्तं तत्रकिंउपाधिभिःकृत्स्नंब्रह्मउपाधीयते उतब्राह्मणोऽशाएवोपधीयंते । आद्येजीवबहुत्वानुपपत्तिः । अंत्येब्रह्मणोनिष्कलत्वानुपपत्तिः । अंशस्यांशित्वायोगाज्जीवेशयोरभेदानुपपत्तिश्चेत्याशंक्याह पूर्णादिति पूर्णात्व्यापकात्चिदाकाशात्पूर्णानिचित्प्रतिबिंबभूतानिजीवरूपाणिउद्धरंति पृथक्कुर्वंति । प्राणादयउपाधिदर्पणाः । ननुउपाधीनांपृथक्सत्त्वेपूर्णस्यपूर्णत्वमेवव्याहन्येतेत्याशंक्याह पूर्णादिति पूर्णानिप्राणादीनिपूर्णाद्देवचक्रिरेकृतानि अयंभावः । घटाकाशन्यायेनोपाध्युपधेययोःपरस्परपरिच्छेदकत्वेऽन्यतरस्यापिपूर्णत्वंनयुज्यतेऽतउपाधिरप्यध्यस्तएव तथाचाधिष्ठानाध्यस्तयोर्विषमसत्ताकत्वान्नपरस्परपरिच्छेदकत्वं किंत्वितरेतरातिरोधायकत्वमेवास्तीतिस्वस्वप्रतीतिकालेद्वयोरपिपूर्णत्वं प्रतियोगिनस्तदानीमदर्शनात् । कल्पितउपाधिर्जीवेश्वरभेदेहेतुरित्यर्थः । यदातुपूर्णानिप्राणादीनिब्रह्मण्यध्यस्तानि ततःसकाशात्हरंति सम्यग्गवे-

क्षणेनदूरीकुर्वंति रज्जुनइवसर्पं तदाजीवेशभेदनिमित्तस्योपाधेरभावात्पूर्णंब्रह्मैवावशिष्यते । यथोक्तंविष्णुपुराणे । 'विभेदजनकेऽज्ञानेनाशमात्यंतिकंगते ॥ आत्मनोब्रह्मणाभेदमसंतंकःकरिष्यति'इति एवंचअंशांशित्वरूपेणजीवेशयोर्भेदानुपगमादनुपचरितस्तयोरभेदप्रतिपादकस्तत्त्वमस्यहंब्रह्मास्म्ययमात्माब्रह्मेत्यादिरागमइतिसिद्धं यत्पूर्णंशिष्यतेतंभगवंतंयोगिनःपश्यंति १० तस्मात्पूर्णात् वायुरितिपंचानामपिभूतानामुपलक्षणं । 'तस्माद्वाएतस्मादात्मनआकाशःसंभूतः आकाशाद्वायुः वायोरग्निःअग्नेरापःअद्भ्यःपृथिवी'इतिततएवसर्वभूतोद्भवश्रुतेः । प्रयतःनिगृहीतः एतेनतत्रैवलयंदर्शयतातदुपादानकत्वंभूतानामुक्तं । अग्निर्भोक्ता सोमोभोज्यं प्राणइतिदेहेंद्रियादिसंघातग्रहणम् ११ इदंसर्वंततएवआततंतस्माज्जातं तत्रआत्मत्वेनप्रसिद्धं तदतच्छब्दवाच्यं । 'तदितिवाएतस्यमहतोभूतस्यनामभवति'इतिश्रुतिप्रसिद्धेः । वक्तुंनशक्नुमः वाचामगोचरंतंयोगिनःपश्यंति १२ इदानींतद्दर्शनाभ्युपायंयोगंसंक्षेपेणाह अपानमिति गिरतिउपसंहरतिस्वात्मनियोगशास्त्रोक्तरीत्या । 'पार्ष्णिनागुदमापीड्यदंतैर्दंतानसंस्पृशन् ॥ हठासनोऽपानवायुमुन्नयेच्चशनैःशनैः ॥ तंप्राणेनैकतांनीत्वास्थिरंकृत्वाहृदंबरे ॥ चेतोमात्रेणतिष्ठेततत्त्वबुद्धौविलापयेत्' । चंद्रमाअत्रमनः आदित्योबुद्धिः परःपरमात्मा एवंचआदित्यंगिरतितंयोगिनःपश्यंति १३ ननुनित्यापरोक्षंब्रह्मयत्साक्षादपरोक्षादितिश्रुतेः अतःकिंयोगेनेत्याशंक्याह एकमिति हंसइवहंसःपरमात्माशरीरवृक्षमारूढोऽपितेनअसंबद्धः सचतुष्पात् । 'सोऽयमात्माचतुष्पात्'इतिश्रुतेः । चतुर्णांपादानांजाग्रत्स्वप्नसुषुप्ततुरीयाख्यानांमध्येएकंपादंतुरीयंनोत्क्षिपति

तस्माद्वैवायुरायातस्तस्मिंश्चप्रयतःसदा ॥ तस्मादग्निश्चसोमश्चतस्मिंश्चप्राणआततः ११ सर्वमेवततोविद्यात्तद्वक्तुंनशक्नुमः ॥ योगिनस्तंप्रपश्यंतिभगवंतंसनातनम् १२ अपानंगिरतिप्राणःप्राणंगिरतिचंद्रमाः ॥ आदित्योगिरतेचंद्रमादित्यंगिरतेपरः ॥ योगिनस्तंप्रपश्यंतिभगवंतंसनातनम् १३ एकंपादंनोत्क्षिपतिसलिलाद्धंसउच्चरन् ॥ तंचेत्सततमूर्ध्वायनमृत्युर्नामृतंभवेत् ॥ योगिनस्तंप्रपश्यंतिभगवंतंसनातनम् १४ अंगुष्ठमात्रःपुरुषोऽतरात्मालिंगस्ययोगेनसयातिनित्यम् ॥ तमीशमीड्यमनुकल्पमाद्यंपश्यंतिमूढानविराजमानम् ॥ योगिनस्तंप्रपश्यंतिभगवंतंसनातनम् १५ असाधनावाऽपिससाधनावासमानमेतद्दृश्यतेमानुषेषु ॥ समानमेतदमृतस्येतरस्यमुक्तास्तत्रमध्वउत्संसमापुः ॥ योगिनस्तंप्रपश्यंतिभगवंतंसनातनम् १६

नप्रकाशयति । कीदृशःसलिलात्निर्विशेषाद्अतिगंभीरात्उत्सरन्उपर्येवपादत्रयेणचरन् 'तंतुरीयंपादंशिवमद्वैतंचतुर्थंमन्यंते सआत्मासविज्ञेयः'इतिश्रुतिप्रसिद्धं । ऊर्ध्वायउपरितनायपादत्रयायविश्वतैजसप्राज्ञाख्याय तेषांचालनायेत्यर्थः । संततंव्याप्तं । तुरीयंत्रिषुसंततमित्युक्तेः । नहिचैतन्यानुबंधंविनाविश्वादयःस्वकार्येप्रभवंति तंचेत्पश्यतितदामृत्युरमृतंचअज्ञानकृतंद्वयंसतिज्ञानेकालत्रयेऽपिनास्तीत्यर्थः । यद्यपिनित्यापरोक्षंब्रह्मतथाऽपिउपाधिविशिष्टेनैवरूपेणपरोक्षं नतुततोनिष्कृष्टरूपेणातस्तदापरोक्ष्याययोगोऽपेक्षितइत्यर्थः । सततमृत्विजामितिपाठेऋत्विग्वत्पादत्रयक्रियानिमित्तमित्यर्थः १४ अंगुष्ठेति अंगुष्ठमात्रेहृदयेप्रतिष्ठितत्वादंगुष्ठमात्रः एतेनहृदयपुंडरीकंध्यानस्थलमुपदिष्टंभवति । पुरुषःपूर्णः अंतरात्माबाह्यात्मभ्योऽन्नमयादिभ्यःपंचभ्यआंतरः । लिंगस्यपंचप्राणमनोबुद्धिदशेंद्रियात्मकस्यलिंगशरीरस्यसंबंधेननित्यंसयातिइहलोकपरलोकौजाग्रत्स्वप्नौवागच्छति । तईशंयमयितारं । ईड्यंस्तुत्यं । अनुकल्पंउपाधिमनुसर्वकार्येषुसमर्थं । आद्यंमूलकारणं । विराजमानंप्रत्यक्चैतन्यरूपेणप्रकाशमानमपिमूढाःनपश्यंति । तंयोगिनःपश्यंति १५ नन्वंगुष्ठमात्रस्यहृदयेस्थितस्यहृदयतापेनतापप्राप्तिरपिस्यात्तथाचतापस्वभावस्यकुतोमुक्तिरित्याशंक्यतस्यकदाचिदपितापोनास्तीत्याह असाधनाइति मानुषेषुसंघाताभिमानिषुजीवेषुकेचिदसाधनाःशमादिहीनाः केचित्ससाधनास्तद्युक्ताभवंतु तत्स्थंएतद्ब्रह्म समानंनिर्विकारं । असंगोह्ययंपुरुषइत्यसंगत्वश्रुतेः । एवंमुक्तबद्धयोरपीत्याह समानमिति । कस्तर्हिमुक्तेषुविशेषइत्यतआह मुक्ताइति तत्रतेषुमध्येमुक्ताः मध्वःमधुनः

ब्रह्मरसस्यउत्सं उत्कर्षपरां काष्ठां समापुः संप्राप्ताः अयंभावः । अवस्थांतरगतस्य दुःखस्यावस्थांतरेऽदर्शनादुपाधिधर्मएव दुःखं भ्रांत्या उपहितेऽपिभाति स्फटिकेइव जपाकुसुमलौहित्यं । सर्वात्मना उपाधित्यागात्तुमुक्तानां नदुःखस्पर्शोऽस्तीतिते निरतिशयानंदभाजइति । यएवंसमानस्तं योगिनःपश्यंति १६ एवंब्रह्मप्राप्तौसर्वफलावाप्तिंकृतकृत्यतांचाह उभाविति उभौलोकौआत्मलोकं अनात्मलोकंच विद्ययाब्रह्माकारया अंतःकरणवृत्त्या अहमेवेदंसर्वोऽस्मीतिसार्वात्म्याकारया चवृत्त्याव्याप्यमकाइयज्ञात्वायाति प्रारब्धकर्मावष्टब्धदेहःसन्संचरतिविद्वान् यदैवंतदा अहुतमप्यग्निहोत्रं अस्यहुतमेवभवति । ज्ञानेसर्वाणिकर्मफलान्यंतर्भवंतीत्यर्थः । अतः ब्राह्मीवाकूतेतव अहंमहानस्मीतिवदतः लघुतांनीचत्वंमादधीतमाकरोतु । अहंदासोस्मीतिमाब्रूहीत्यर्थः । तंचेद्ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीतिब्रूयान्नापन्हुवीतेतिश्रुत्यैव ब्रह्मविदामतिवादित्वदोषोनास्तीतिप्रदर्शितं । प्रज्ञानमितिअस्यनामैवस्यात् 'प्रज्ञा नंब्रह्मेतिब्रह्मविद्ब्रह्मैवेति'चश्रुतिभ्यां । ब्रह्मणाविद्वद्रूपेणस्वमाहात्म्यंनगोपनीयमधिकारिष्वेव । प्राकृतेषुतुगोपनीयमेव । 'तथाचरेतवैयोगीसतांधर्ममदूषयन् ॥ जनायथाऽवमन्येरन्गच्छेयुर्नैवसंगतम्'इति । एतच्चप्रज्ञानमितिनाम धीराः ध्यानवंतएवलभंते । यस्यनामप्रज्ञानंतंयोगिनःपश्यंति १७ एवंरूपोवाङ्मनसातीतो जगज्जन्मादियोनिर्निर्विकारोयोगैकगम्योवज्ज्ञानान्महापूज्यत्वंलभ्यते कर्मलोपदोषश्चनास्ति सएवंरूपः परमात्मापावकंभोक्तारंजीवंगिरन्आत्मनिसंहरन् पुरुषंपूर्णंतंयोवेदतस्य अर्थःपुरुषार्थोमोक्षोनरिष्यतेनहिंस्यते । कर्मफलवज्ज्ञानफलंनानित्यमित्यर्थः । यस्यज्ञानादर्थनाशोना

उभौलोकौविद्ययाव्याप्ययातितदाहुतंचाहुतमग्निहोत्रम् ॥ मातेब्राह्मीलघुतामादधीतप्रज्ञानंस्यान्नामधीरालभंते ॥ योगिनस्तंप्रपश्यंति भगवंतंसनातनम् १७ एवंरूपोमहात्मासपावकंपुरुषोगिरन् ॥ योवैतंपुरुषंवेदतस्येहार्थोनरिष्यते ॥ योगिनस्तंप्रपश्यंतिभगवंतंसनातनम् १८ यःसहस्रंसहस्राणांपक्षान्संतत्यसंपतेत् ॥ मध्यमेमध्यआगच्छेदपिचेत्स्यान्मनोजवः ॥ योगिनस्तंप्रपश्यंतिभगवंतंसनातनम् १९ नदर्शनेतिष्ठति रूपमस्यपश्यंति चैनंसुविशुद्धसत्वाः ॥ हितोमनीषीमनसानतप्यतेयेप्रव्रजेयुरमृतास्तेभवंति ॥ योगिनस्तंप्रपश्यंतिभगवंतंसनातनम् २० गूहंतिसर्पाइवगह्वराणिस्वशिक्षयास्वेनवृत्तेनमर्त्याः ॥ तेषुप्रमुह्यंतिजनाविमूढायथाऽध्वानंमोहयंतेभयाय ॥ योगिनस्तंप्रपश्यंतिभगवंतंसनातनम् २१

स्तितंयोगिनःपश्यंति १८ नकेवलंमोक्षएवज्ञानतःस्यात् अपितु सर्वंदूरस्थमपिआत्मन्यंतर्भूतमेवास्तीत्याह यइति दशलक्षाणिअनंतान्वापक्षान्कृत्वायोदूरेगच्छेत्सोऽपिमध्येशरीरांतःमध्यमेमध्यस्थेहृदयस्थेपरमेश्वरेआगच्छेदेव । विप्रकृष्टमप्यर्थंहार्दाकाशेयोगिनःपश्यंतीत्यर्थः । एतच्चातीतानागतादेरप्युपलक्षणं । तथाचहार्दाकाशंप्रकृत्यश्रूयते । 'यच्चास्येहास्तियच्चनास्तिसर्वंतदत्रगत्वाविंदते'इति । यत्रदूरस्थोऽप्यस्तितंयोगिनःपश्यंति १९ एवंविदस्यात्मनोदर्शनार्थंयोगानुगुणानिसाधनांतराण्याह नेति चक्षुराद्यग्राह्यंएनंशुद्धचित्ताएवचित्तेनगृह्णंतीतिपूर्वार्धार्थः किंचयदाऽयंहितःजगन्मित्रंमनीषीमनोनिग्रहशीलश्चभवति तथा मनसाचपुत्रादीनांनाशेसत्यपिनतप्यतेतदैवचित्तशुद्धिर्जातेतिज्ञेयं । एवंज्ञात्वायेप्रव्रजेयुःविक्षेपहेतून्गृहादींस्त्यजेयुस्तेसंन्यासिनः अमृताभवंतीति । तंअमृतंयोगिनःपश्यंति २० संन्यासंकृत्वाऽपिवंचकानांसंगतिर्नकर्तव्येत्याह गूहंतीति मर्त्याःकौलिकाःस्वाशिक्षयास्वेषांगुरूणांशिक्षयास्वेनवृत्तेनवा बहिर्दृष्टीनांरमणीयेनचदंभरूपेणगह्वराणिपापानिमद्यमांसपरस्त्रीसेवनादीनिगूहंतिछादयंति । यथासर्पाःखलाःपरमुद्वेजयंतोऽपिबिलादौनिलीयआत्मानंगूहंतितद्वत् । तेषुबाह्यतोरमणीयेषुतेषांसमीपेविमूढाःजनाःमुह्यंति । एतदेवाह यथाऽध्वानंमार्गमनतिक्रम्य शिष्टानांलोकदृष्टमाचारमत्यजतः भयायनरकायप्रापयितुंतान्मोहयंते मद्यमांसाद्यशुचित्वोपदेशेनप्रतारयंति । अतःसम्यक्परीक्षितैःसहैवसंगतिर्येषांलाभायकर्तव्या तंयोगिनःपश्यंति २१

एवंसर्वेकर्मास्पर्शिनांयोगिनामपिदुःसंगत्यागमावश्यकतयोक्त्वाजीवन्मुक्तानांतेषामनुभवमनुवदति नाहमिति अहंसदाकालत्रयेऽपिअसन्कृतःअसतादेहेंद्रियादिनातादात्म्याध्यासेनतद्व
त्कृतःसुखदुःखजरामरणादिधर्मवान्कृतःअसत्कृतःनस्यांनभवेयंदेहादीनामसत्त्वादेवेत्यर्थः । अतएवदेहवियोगरूपोमृत्युरपिनास्ति नापिअमृत्युस्तद्विरोधीजन्मलाभः जन्ममरणप्रवाहरू
पस्यमृत्युसंज्ञितस्यबंधस्याभावात् । अमृतंमोक्षोऽपिममकुतःनकुतश्चिदित्यर्थः तत्रहेतुः । सत्यंघटादि अनृतंरज्जूरगादि तेउभेअपिसत्यसमानबंधे सत्यंअबाधितं समानंसर्वदासर्वदेशेषुचै
करूपंब्रह्मतदेवबंधोनिग्रहस्थानंययोस्तेतथा । सर्वंजगद्ब्रह्माधीनमित्यर्थः । सतःकार्यस्यअसतःकारणस्यचयोनिःउत्पत्तिप्रलयस्थानंअहंएकएवतंमांयोगिनःपश्यंति तथाचश्रुतिः । ‘नानि
रोधोनचोत्पत्तिर्नबद्धोनचसाधकः ॥ नमुमुक्षुर्नवैमुक्तइत्येषापरमार्थता’इतिसृष्ट्यादिकंसर्वंमय्येवकल्पितमित्याह २१ ‘समनसाधुनाकर्मणाभूयान्नोएवासाधुनाकनीयान्’इतिश्रुतिसिद्धंकर्मास्पर्शं
ब्रह्मविद्याफलमाह नसाधुनेति असाधनावाऽपिससाधनावेत्यत्रब्रह्मणःअसंगत्वमुक्तं इहतुब्रह्मविदःपापास्पर्शउच्यते एतद्ब्रह्मचिद्रूपंब्रह्मसाधुनाकर्मणासमानंउत्कृष्टंनभवति । उतअपिअसा
धुनाकर्मणाऽसमानंअपकृष्टंचनभवति । मानुषेषुदेहाभिमानिषुतुएतद्दृश्यतएवउच्चावचंकर्मफलंनतथाब्रह्मविदीत्यर्थः । अत्रहेतुःसमानामिति एतद्ब्रह्मचिद्रूपंब्रह्मअमृतस्यकैवल्यस्यसमानं
यथाकैवल्येसर्वबादिसंमतपुण्यपापयोरस्पर्शएवंब्रह्मविद्यपीत्यर्थः । अतएवंपूर्वोक्तप्रकारेणयुक्तोयोगवान् तन्मधुब्रह्म । बह्विति पाठेऽपिसएवार्थः निरवधिकस्यबहुत्वस्यतत्रैवपर्य

नाहंसदाऽसत्कृतःस्यांनमृत्युर्नचामृत्युरमृतंमेकुतःस्यात् ॥ सत्यानृतेसत्यसमानबंधेसतश्चयोनिरसतश्चैकएव ॥ योगिन० २२ नसाधुनानोतअसाधुनावा
ऽसमानमेतद्दृश्यतेमानुषेषु ॥ समानमेतदमृतस्यविद्यादेवंयुक्तोमधुतद्वैपरीप्सेत् ॥ योगिनस्तं० २३ नास्यातिवादाहृदयंतापयंतिनानधीतंनाहुतम
ग्निहोत्रम् ॥ मनोब्राह्मीलघुतामादधीतप्रज्ञांचास्मैनामधीरालभंते ॥ योगिनस्तं० २४ एवंयःसर्वभूतेषुआत्मानमनुपश्यति ॥ अन्यत्रान्यत्रयुक्तेषु
किंसशोचेत्ततःपरम् २५ यथोदपानेमहतिसर्वतःसंप्लुतोदके ॥ एवंसर्वेषुवेदेषुआत्मानमनुजानतः २६ अंगुष्ठमात्रःपुरुषोमहात्मानदृश्यतेसौहृदिसंनि
विष्टः ॥ अजश्चरोदिवारात्रमतंद्रितश्चसतंमत्वाकविरास्तेप्रसन्नः २७

वसानात् । परीप्सेत्सर्वप्रकारेणप्राप्तुमिच्छेत् । तमेवचयोगिनःपश्यंति २३ नास्येति अस्यआत्मविदःअतिवादाःनिंदावचनानिहृदयंनतापयंति । अथवामयानाधीतंमयानहुतमित्या
दिकमपिअस्यमनइतिपूर्वान्वयि । श्रूयतेच‘नैनंकृताकृतेतपतेइति । एतंहवावनतपतिकिमहंसाधुनाकरवंकिमहंपापमकरवम्’इतिच । ब्राह्मीब्रह्मसंबंधिनीयंविद्याअस्मैपुरुषायलघुशी
घ्रं तांप्रज्ञां यामधिकृत्यस्मरति । ‘प्रज्ञाप्रासादमारुह्यह्यशोच्यःशोचतोजनान् ॥ भूमिष्ठानिवशैलस्थःसर्वान्प्राज्ञोऽनुपश्यति’इतितांप्रज्ञामृतंभराख्याआदधीतसमर्पयेत् । आत्मवित्सर्ववि
द्भवतीत्यर्थः । तांकांयांप्रज्ञांधीराःध्यानवंतोनाममनिश्चितंलभंतेनान्ये । एतेनशोकमोहनिवृत्तिःसर्वज्ञत्वंचब्रह्मविद्याफलमुक्तंभवति । यंनतापयंतितंविद्वदभिन्नंपरमेश्वरंयोगिनःपश्यंति २४
एवमनेनप्रकारेणयःसर्वभूतेषुसद्रूपेणअनुस्यूतमात्मानंगुरूक्तिमनुपश्यति ध्यानेनसाक्षात्करोतिसःअन्यत्रदारादौअन्यत्रकर्मादौयुक्तेषुपुरुषांतरेषुसत्सुकिंशोचतिनैवशोचति किंतुतएवशोचंतीत्य
र्थः २५ उदकंपीयतेऽस्मिन्नित्युदपानेकासारादौतृषार्त्तस्ययावताजलेनस्नानपानादिसिद्धिस्तावत्तैवसर्वेषुवेदेषुआत्मज्ञस्यध्यायिनइष्टसिद्धिः । अतोग्रंथभारवहनंवृथैव किंतुतदंतर्गतंस्वोपयुक्तं
सारमात्रंगुरुवाक्याद्गृहीत्वायोगेनकृतकृत्योभवेदित्यर्थः २६ अंगुष्ठेति उपाधितोऽल्पपरिमाणोऽपिस्वतोमहात्माव्यापकःनदृश्यतेरूपादिहीनत्वात् । अजोजन्मादिशून्यः । दिवारात्रंचरती
तिचरःजगन्नियमनेनित्योद्युक्तइत्यर्थः । सःअधिकारी तंआत्मानंमत्वाज्ञात्वा कविःक्रांतदर्शी आस्तेकर्मभ्यउपरतोभवतिकृतकृत्यत्वात् । अतएवप्रसन्नःउपाधिकृतकालुष्यत्यागान्निर्मलः २७

अथेदानींब्रह्मविदात्मनोब्रह्मभावंवामदेववदपरोक्षीकुर्वन्स्वस्यसार्वात्म्यंस्तौति अहमेवेति नास्तिअतीतानागतं । अस्तिवर्तमानं । सर्वेषामंतरात्माचाहमेवास्मि २८ पितामहइति एव मात्मनिसर्वमारोप्यअपवदतिनमेयूयंनत्रोवयमिति । यद्यपिरज्ज्वामुरगआरोपितस्तथापितयोर्नकश्चित्संबंधोऽस्तिअधिष्ठानव्यतिरेकेणाध्यस्तस्यासत्त्वात् । एवंप्रत्यगात्मजगतोरप्यसंबंधोद्र ष्टव्यः २९ अहमेवमुमुक्षूणांज्ञेयइत्याह आत्मैवेति ममस्थानंअधिष्ठानंआत्मैव । 'स्वेमहिम्निप्रतिष्ठितः'इतिश्रुतेः । अतएवममजन्मजननहेतुरपिआत्मैव । अजत्वादेवअहंकार्येओतःप्रो तश्चतिर्यगूर्ध्वंचपटेतंतवइवानुस्यूतोऽस्मि । अजराअप्रच्युतस्वभावाप्रतिष्ठाअधिष्ठानत्वंयस्यसतथाअजश्चरइतिपादोव्याख्यातः । मांसर्वेषांभूतानामंतरात्मानंसर्वेश्वरंसर्वकर्तारंविज्ञायकविः प्रसन्नआस्ते ३० प्रकरणार्थमुपसंहरति अणोरप्यणुतरोदुर्लक्ष्यःनत्वणुतरपरिमाणवान् । अस्थूलमनण्वन्हस्वमदीर्घमितिब्रह्मणिचतुर्विधपरिमाणनिषेधात्एतेननिर्गुणंरूपमुक्तं । सुमनाः

अहमेवस्मृतोमातापितापुत्रोऽस्म्यहंपुनः ॥ आत्माऽहमपिसर्वस्ययच्चनास्तियदस्तिच २८ पितामहोऽस्मिस्थविरःपितापुत्रश्चभारत ॥ ममैवयूयमात्म स्थानमेयूयंनवोवयम् २९ आत्मैवस्थानंममजन्मचात्माओतप्रोतोऽहमजरप्रतिष्ठः ॥ अजश्चरोदिवारात्रमतंद्रितोऽहंमांविज्ञायकविरास्तेप्रसन्नः ३० अणो रणीयान्सुमनाःसर्वभूतेषुजाग्रति ॥ पितरंसर्वभूतेषुपुष्करेनिहितंविदुः ३१ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसनत्सुजातपर्वणिषट्चत्वारिंशोऽध्यायः ४६ ॥ समाप्तमिदंसनत्सुजातपर्व ॥ अथयानसंधिपर्व ॥ ॥ वैशंपायनउवाच ॥ एवंसनत्सुजातेनविदुरेणचधीमता ॥ सार्धंकथयतोराज्ञःसाव्यतीयायशर्वरी १ तस्यां रजन्यांव्युष्टायांराजानःसर्वएवते ॥ सभामाविविशुर्हृष्टाःसूतस्योपदिदृक्षया २ शुश्रूषमाणाःपार्थानांवाचोधर्मार्थसंहिताः ॥ धृतराष्ट्रमुखाःसर्वेययूराजसभां शुभाम् ३ सुधावदातांविस्तीर्णांकनकाजिरभूषिताम् ॥ चंद्रप्रभांसुरुचिरांसिक्तांचंदनवारिणा ४ रुचिरैरासनैःस्तीर्णांकांचनैर्दारवैरपि ॥ अश्मसारमयैर्दां तैःस्वास्तीर्णैःसोत्तरच्छदैः ५ भीष्मोद्रोणःकृपःशल्यःकृतवर्माजयद्रथः ॥ अश्वत्थामाविकर्णश्चसोमदत्तश्चबाह्लिकः ६ विदुरश्चमहाप्राज्ञोयुयुत्सुश्चमहारथः ॥ सर्वेचसहिताःशूराःपार्थिवाभरतर्षभ ७ धृतराष्ट्रंपुरस्कृत्यविविशुस्तांसभांशुभाम् ॥ दुःशासनश्चित्रसेनःशकुनिश्चापिसौबलः ८ दुर्मुखोदुःसहःकर्णउलूकोऽथविविंशतिः ॥ कुरुराजंपुरस्कृत्यदुर्योधनममर्षणम् ९ विविशुस्तांसभांराजन्सुराःशक्रसदोयथा ॥ आविशद्भिस्तदाराजन्शूरैःपरिघबाहुभिः १० शुशुभे साऽसभाराजन्सिंहैरिवगिरेर्गुहा ॥ तेप्रविश्यमहेष्वासाःसभांसर्वेमहौजसः ११ आसनानिविचित्राणिभेजिरेसूर्यवर्चसः ॥ आसनस्थेषुसर्वेषुतेषुराजसुभारत १२

शोभनंमनोदिव्यंचक्षुर्मायाख्यंअतीतादिसर्वप्रकाशकंयस्य । 'मनोऽस्यदैवंचक्षुः'इतिश्रुतेः । ससुमनाः एतेनसगुणंरूपमुक्तं । सर्वभूतेषुजाग्रतिअंतर्यामिरूपेणजागर्त्ति शपोऽलुगार्षःगुणाभा वश्च । पितरंअर्थाद्वियदादीनांजरायुजादीनांच । सर्वदेहेषुपुष्करेहृदयपुंडरीकेनिहितंस्थितंविदुर्ब्राह्मणाजानंति । एवंगुणविशिष्टंप्रत्यगात्मानंहृदयेविविंचितनेनसाक्षात्कृत्यकृतकृत्यो भवतीत्यर्थः ३१ ॥ इतिश्रीमत्पदवाक्यप्रमाणज्ञमर्यादाधुरंधरचतुर्धरवंशावतंसश्रीगोविंदसूरिसूनोःश्रीनीलकंठस्यकृतौउद्योगपर्वणिभारतभावदीपेषट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥ प्रासंगिकमध्यात्मंसमाप्यप्रस्तुतांकथामेवानुसंधत्ते एवंसनत्सुजातेनेत्यादिना कथयतःकथामितिशेषः १ सूतस्यसंजयस्य २ । ३ कनकमयेनअजिरेणअंगणेनभूषितां ४ अश्मसारमयैः रत्नखचितैः ५ । ६ । ७ । ८ । ९ । १० । ११ । १२

१३ उपेयायउपाजगाम प्रस्कंद्यउत्तीर्य १४ यथावयः वयसोऽनुरूपम् १५ । १६ । १७ ॥ इति उद्योगपर्वणि नीलकंठीये भारतभावदीपे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥ ७ ॥
पृच्छामीति १ । २ अन्वत्रस्तइत्यनुशब्दस्यअवोचदित्यनेनसंबंधः । व्यवहिताश्चेतिधातूपसर्गयोश्छांदसंव्यवहितत्वं । विदानःजानन् उपह्वरेसमीपे कुरूणांमध्येधार्तराष्ट्रंब्रूयाइत्यन्ववोचदितिसंबंधः ३ । ४ पांडवायोधनायपांडवैःसहयुद्धाय ५ । ६ । ७ कर्मपापंअनिर्विष्टंअनुपभुक्तं अश्विभ्यांअश्विपुत्राभ्याम् ८ अपध्यानात् अपकारचिंतनमात्रात्गांपृथ्वीम्

द्वाःस्थोनिवेदयामाससूतपुत्रमुपस्थितम् ॥ अयंसरथआयातियोऽयासीत्पांडवान्प्रति १३ दूतोनस्तूर्णमायातःसैंधवैःसाधुवाहिभिः ॥ उपेयायसतुक्षिप्रंरथात्प्रस्कंद्यकुंडली ॥ प्रविवेशसभांपूर्णांमहीपालैर्महात्मभिः १४ ॥ संजयउवाच ॥ प्राप्तोऽस्मिपांडवान्गत्वातंविजानीतकौरवाः ॥ यथावयःकुरून्सर्वान्प्रतिनंदंतिपांडवाः १५ अभिवादयंतिवृद्धांश्चवयस्यांश्चवयस्यवत् ॥ यूनश्चाभ्यवदन्पार्थाःप्रतिपूज्ययथावयः १६ यथाऽहंधृतराष्ट्रेणशिष्टःपूर्वमितोगतः ॥ अब्रुवंपांडवान्गत्वातन्निबोधतपार्थिवाः १७ ॥ ॥ इतिश्रीमहाभारतेउद्योगपर्वणियानसंधिपर्वणिसंजयप्रत्यागमनेसप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥
॥ धृतराष्ट्रउवाच ॥ पृच्छामित्वांसंजयराजमध्येकिमब्रवीद्वाक्यमदीनसत्वः ॥ धनंजयस्तातयुधांप्रणेतादुरात्मनांजीवितच्छिन्महात्मा १ ॥ संजयउवाच ॥ दुर्योधनोवाचमिमांशृणोतुयदब्रवीदर्जुनोयोत्स्यमानः ॥ युधिष्ठिरस्यानुमतेमहात्माधनंजयःशृण्वतःकेशवस्य २ अन्वत्रस्तोबाहुवीर्यंविदानउपह्वरेवासुदेवस्यधीरः ॥ अवोचन्मांयोत्स्यमानःकिरीटीमध्येब्रूयाधार्तराष्ट्रंकुरूणाम् ३ संशृण्वतस्तस्यदुर्भाषिणोवैदुरात्मनःसूतपुत्रस्यसूत ॥ योयोद्धुमाशंसतिमांसदैवमंदप्रज्ञःकालपक्कोऽतिमूढः ४ येवैराजनःपांडवायोधनायसमानीताःशृण्वतांचापितेषां ॥ यथासमग्रंवचनंमयोक्तंसहामात्यंश्रावयेथानृपंतत् ५ यथानूनंदेवराजस्यदेवाःशुश्रूषंतेवज्रहस्तस्यसर्वे ॥ तथाऽशृण्वन्पांडवाःसृंजयाश्चकिरीटिनावाचमुक्तांसमर्थां ६ इत्यब्रवीदर्जुनोयोत्स्यमानोगांडीवधन्वालोहितपद्मनेत्रः ॥ नचेद्राज्यंमुंचतिधार्तराष्ट्रोयुधिष्ठिरस्याजमीढस्यराज्ञः ७ अस्तिनूनंकर्मकृतंपुरस्तादनिर्विष्टंपापकंधार्तराष्ट्रैः ॥ येषांयुद्धंभीमसेनार्जुनाभ्यांतथाऽश्विभ्यांवासुदेवेनचैव ८ शैनेयेनध्रुवमात्तायुधेनधृष्टद्युम्नेनाथशिखंडिनाच ॥ युधिष्ठिरेणेंद्रकल्पेनचैवयोऽपध्यानान्निर्दहेद्गांदिवंच ९ तैश्चेद्योद्धुंमन्यतेधार्तराष्ट्रोनिर्वृत्तोऽर्थःसकलःपांडवानाम् ॥ मातत्कार्षीःपांडवस्यार्थहेतोरुपैहियुद्धंयदिमन्यसेत्वम् १० यांतांवनेदुःखशय्यामवात्सीत्प्रव्राजितःपांडवोधर्मचारी ॥ आप्नोतुतांदुःखतरामनर्थामंत्यांशय्यांधार्तराष्ट्रःपरासुः ११ ह्रियाज्ञानेनतपसादमेनशौर्येणाथोधर्मगुप्त्याधनेन ॥ अन्यायवृत्तिःकुरुपांडवेयानध्यातिष्ठद्धार्तराष्ट्रोदुरात्मा १२

९ निर्वृत्तःसिद्धः सकलइत्ययुद्धपक्षेऽर्धस्यैवार्धस्यलाभोभवेत्सचानभिमतइतिसूचितं । तत्राज्यार्धदानंमाकार्षीः पांडवस्यअर्थहेतोःहितार्थम् १० दुःखशय्यां दुःखवासं अंत्यांशय्यांयुद्धेमरणंप्राप्तःसन् ११ त्वंएतावत्कुर्वित्याह ह्रियेति यान्लोकान् अन्यायवृत्तिर्धार्तराष्ट्रोऽध्यतिष्ठत् तान् ह्रीप्रभृतिभिर्गुणैरुपलक्षितेपांडवेअनुरक्तान्कुरु । दुर्योधनेनदृष्टप्रजानामस्मदभिमुखीकरणंत्वत्कार्यं नतुतेनसहअस्माकंसंधानमितिभावः १२

मायया कपटेन उपधीयंते उपस्थाप्यंते ते मायोपधाः छलवादाः तान्न मायोपधः । आङोधातोरिति द्वितीयाबहुवचने परे आलोपः । प्रतिपन्नः प्राप्तः प्रणिपातादिभिरुपेतः सत्यं ब्रुवंश्च अतिवेलं क्लिश्यमानोऽपि तितिक्षमाण एवास्ते इति शेषः १३ क्रोधं अवसृष्टा उत्स्रक्ष्यति । उद्वृत्तं क्रोधाक्रांतं चेतो यस्य स उद्वृत्तचेताः । जन्मना अनुवृत्तचेता अपि सन् । अन्वतप्स्यत शोचिष्यति । आर्षो लकारव्यत्ययः १४ कृष्णवर्मा दाहेन कृष्णीकृतभूभाग इति प्राञ्चः । वस्तुतस्तु अग्निहोत्रे वस्त्रादिसत्तरूपोऽग्निः श्रूयते यदग्निमुद्धरतीत्यनुवाके । तत्र कृष्णवर्मेत्यन्वर्थसंज्ञातो धूमायन् रौद्रोऽग्निरुच्यते । ज्वलित इति किंचित्प्रदीप्तः । समिद्ध इति सर्वशो दीप्तः दग्धा धक्ष्यति १५ । १६ दंशितं सन्नद्धं स्वालक्षणं स्वीयानामपि अलक्षणं नास्ति लक्षणं सम्यगवलोकनं यस्य तं स्वालक्षणं । रणे आवेशवशात् स्वैरपि दुर्दर्शमित्यर्थः । यतः अंतकसन्निकाशं वचनस्य वचनम् १७ । १८ गाः वः इवेति च्छेदः वः युष्मान् गा इव १९ । २० शैक्येन शिक्यसदृशेन

मायोपधः प्रणिपातार्जवाभ्यां तपोदमाभ्यां धर्मगुप्त्या बलेन ॥ सत्यं ब्रुवन्प्रतिपन्नो नृपो नस्तितिक्षमाणः क्लिश्यमानोऽतिवेलम् १३ यदा ज्येष्ठः पांडवः संशितात्मा क्रोधं यत्तं वर्षपूगान्सुघोरम् ॥ अवस्रष्टा कुरुषूद्वृत्तचेतास्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् १४ कृष्णवर्त्मेव ज्वलितः समिद्धो यथा दहेत्कक्षमग्निर्निदाघे ॥ एवं दग्धा धार्तराष्ट्रस्य सेनां युधिष्ठिरः क्रोधदीप्तोऽन्ववेक्ष्य १५ यदा द्रष्टा भीमसेनं रथस्थं गदाहस्तं क्रोधविषं वमंतम् ॥ अमर्षणं पांडवं भीमवेगं तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् १६ सेनाग्रगं दंशितं भीमसेनं स्वालक्षणं वीरहणं परेषाम् ॥ घ्नंतं चमूमंतकसन्निकाशं तदा स्मर्ता वचनस्यातिमानी १७ यदा द्रष्टा भीमसेनेन नागान्निपातितान्गिरिकूटप्रकाशान् ॥ कुंभैरिवासृग्वमतो भिन्नकुंभांस्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् १८ महासिंहो गाव इव प्रविश्य गदापाणिर्धार्तराष्ट्रानुपेत्य ॥ यदा भीमो भीमरूपो निहंता तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् १९ महाभये वीतभयः कृतास्त्रः समागमे शत्रुबलावमर्दी ॥ सकृद्रथेनाप्रतिमान्रथौघान्पदातिसंघान्गदयाऽभिनिघ्नन् २० शैक्येन नागांस्तरसा विगृण्हन्यदा छेत्ता धार्तराष्ट्रस्य सैन्यम् ॥ छिंदन्वनं परशुनेव शूरस्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् २१ तृणप्रायं ज्वलनेनेव दग्धं ग्रामं यथा धार्तराष्ट्रान्समीक्ष्य ॥ पक्कं सस्यं वैद्युतेनेव दग्धं परासिक्तं विपुलं स्वं बलौघम् २२ हतप्रवीरं विमुखं भयार्तं पराङ्मुखं प्रायशोऽधृष्टयोधम् ॥ शस्त्रार्चिषा भीमसेनेन दग्धं तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् २३ उपासंगाना चरेद्दक्षिणेन वरांगानां नकुलश्चित्रयोधी ॥ यदा रथाग्र्यो रथिनः प्रचेता तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् २४ सुखोचितो दुःखशय्यां वनेषु दीर्घं कालं नकुलो यामशेत ॥ आशीविषः क्रुद्ध इवोद्वमन्विषं तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् २५ त्यक्तात्मानः पार्थिवायोधनाय समादिष्टा धर्मराजेन सूत ॥ रथैः शुभ्रैः सैन्यमभिद्रवंतो दृष्ट्वा पश्चात्तप्स्यते धार्तराष्ट्रः २६

पाशेन नागान् विगृण्हन् वैपरीत्येन गृण्हन् । गले पादे वा पाशं दत्त्वा मृतवत्सवत्कर्षन्नित्यर्थः । अन्ये तु विमृद्नन्निति पाठांतरं कल्पयित्वा शैक्येन खड्गेनेति व्याचख्युः २१ तृणप्रायं तृणगृहमयं ग्रामं परासिक्तं दूरे निरस्तम् २२ अधृष्टयोधं अप्रगल्भयोधं २३ उपेति वरांगानां शिरसां उपासंगान् उच्चयान् दक्षिणेन कुशलेन अनायासेनेति यावत् आचरेत् कुर्यात् रथिनः योधान् प्रचेता कूटीकरिष्यति । पाठांतरे उपासंगेन निषंगेण दक्षिणभागस्थेन शतात्परं आचरन् तत्रत्यैः शताधिकैः शरैर्युध्यन् वामहस्तेनापि शरप्रक्षेपस्य अभ्यस्तत्वात् । दुःखशय्यामशेतेत्युत्तरस्मादपकृष्यते अतएव दुःखाद्रथिनः प्रचेतेति पूर्ववत् २४ दुःखशय्यां अशेत इत्युत्तरं तां यदा स्मरिष्यतीति शेषः । अतएव दुःखात् रथिनः प्रचेतेति पूर्वस्मादनुकृष्यते २५ हे पार्थिव आयोधनाय युद्धाय समादिष्टाः सैन्यं तावकं द्रष्टा तानिति शेषः २६

शिशूनद्रौपदीपुत्रान्प्रतिविंध्यादीन् आद्रवंतःआद्रवतः २७ गतोद्वाहं अपगतोद्धृतगतिं अनुकूलगतिमित्यर्थः । अकूजनोनिःशब्दोऽक्षोयस्यतं सुवर्णस्यतारोदीर्घतंतुःतं । अतिवेगादलातचक्रव त्सुवर्णरेखातुल्यमित्यर्थः दांतैःविनीतैःअश्वैरित्यर्थात् २८ विवर्तमानंविविधैर्मंडलैर्वर्तमानंचरंतं २९ गांधारिंशकुनिंआच्छेन्नगच्छन् ३० आयतःआगच्छतः ३१ विगाहिताअभिभविष्यति ३२ । ३३ क्षेप्तारःक्षेप्स्यंति ३४ । ३५ । ३६ ममत्तरेभृशंमध्यातीतिममत् यङ्लुगंतात्क्विप्ततस्तरप् बलवत्तरे । ममदितिनिपातोबलवद्वाचकोवा संग्रामेइत्यर्थः । सहोत्तरइत्याधुनिकाः

शिशून्कृतास्त्रानशिशुप्रकाशान्यदाद्रष्टाकौरवःपंचशूरान् ॥ त्यक्त्वाप्राणान्कौरवानाद्रवंतस्तदायुद्धंधार्तराष्ट्रोऽन्वतप्स्यत् २७ यदागतोद्वाहमकूजनाक्षंसुव र्णतारंरथमाततायी ॥ दांतैर्युक्तंसहदेवोऽधिरूढःशिरांसिराज्ञांक्षेप्स्यतेमार्गणौघैः २८ महाभयेसंप्रवृत्तेरथस्थंविवर्तमानंसमरेकृतास्त्रम् ॥ सर्वादिशःसंपतंतं समीक्ष्यतदायुद्धंधार्तराष्ट्रोऽन्वतप्स्यत् २९ ह्रीनिषेवोनिपुणःसत्यवादीमहाबलःसर्वधर्मोपपन्नः ॥ गांधारिमार्छंस्तुमुलेक्षिप्रकारीक्षेप्ताजनान्सहदेवस्तरस्वी ॥ ३० यदाद्रष्टाद्रौपदेयान्महेषून्शूरान्कृतास्त्रान्रथयुद्धकोविदान् ॥ आशीविषान्घोरविषानिवायतस्तदायुद्धंधार्तराष्ट्रोऽन्वतप्स्यत् ३१ यदाऽभिमन्युःपर वीरघातीशरैःपरान्मेघइवाभिवर्षन् ॥ विगाहिताकृष्णसमःकृतास्त्रस्तदायुद्धंधार्तराष्ट्रोऽन्वतप्स्यत् ३२ यदाद्रष्टाबालमबालवीर्यंद्विषच्चमूंमृत्युमिवोत्पतंतम् ॥ सौभद्रमिंद्रप्रतिमंकृतास्त्रंतदायुद्धंधार्तराष्ट्रोऽन्वतप्स्यत् ३३ प्रभद्रकाःशीघ्रतरायुवानोविशारदाःसिंहसमानवीर्याः ॥ यदाक्षेप्तारोधार्तराष्ट्रान्ससैन्यांस्तदायुद्धं धार्तराष्ट्रोन्वतप्स्यत् ३४ वृद्धौविराटद्रुपदौमहारथौपृथक्चमूभ्यामभिवर्तमानौ ॥ यदाद्रष्टारौधार्तराष्ट्रान्ससैन्यांस्तदायुद्धंधार्तराष्ट्रोऽन्वतप्स्यत् ३५ यदाकृ तास्त्रोद्रुपदःप्रचिन्वन्शिरांसियूनांसमरेरथस्थः ॥ क्रुद्धःशरैश्छेत्स्यतिचापमुक्तैस्तदायुद्धंधार्तराष्ट्रोऽन्वतप्स्यत् ३६ यदाविराटःपरवीरघातीममत्तरेशत्रुच मूंप्रवेष्टा ॥ मत्स्यैःसार्धमनृशंसरूपैस्तदायुद्धंधार्तराष्ट्रोऽन्वतप्स्यत् ३७ ज्येष्ठंमात्स्यमनृशंसार्यरूपंविराटपुत्रंरथिनंपुरस्तात् ॥ यदाद्रष्टादंशितंपांडवार्थेत दायुद्धंधार्तराष्ट्रोऽन्वतप्स्यत् ३८ रणेहतेकौरवाणांप्रवीरेशिखंडिनासत्तमेशांतनूजे ॥ नजातुनःशत्रवोधारयेयुरसंशयंसत्यमेतद्ब्रवीमि ३९ यदाशिखंडीरथिनः प्रचिन्वन्भीष्मंरथेनाभियातावरूथी ॥ दिव्यैर्हयैरवमृद्नन्रथौघांस्तदायुद्धंधार्तराष्ट्रोऽन्वतप्स्यत् ४० यदाद्रष्टासृंजयानामनीकेधृष्टद्युम्नंप्रमुखेरोचमानम् ॥ अस्त्रंयस्मैगुह्यमुवाचधीमान्द्रोणस्तदातप्स्यतिधार्तराष्ट्रः ४१ यदाससेनापतिरप्रमेयःपरामृद्नन्निषुभिर्धार्तराष्ट्रान् ॥ द्रोणंरणेशत्रुसहोऽभियातातदायुद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ४२ ह्रीमान्मनीषीबलवान्मनस्वीसलक्ष्मीवान्सोमकानांप्रबर्हः ॥ नजातुतंशत्रवोऽन्येसहेरन्येषांसस्यादग्रणीर्वृष्णिसिंहः ४३ इदं चब्रूयामावृणीष्वेतिलोकेयुद्धेऽद्वितीयंसचिवंरथस्थम् ॥ शिनेर्नप्तारंप्रवृणीमसात्यकिंमहाबलंवीतभयंकृतास्त्रम् ४४

पठंति ३७ । ३८ शांतनूजेदेर्ध्यमार्षधारयेयुः जीवेयुः ३९ वरूथीरथगुप्तिमान् ४० । ४१ । ४२ । ४३ इदंचेतिसन्निहितंयुद्धमूलमुच्यते राज्यंचमावृणीष्वमामार्थयस्वइतिब्रूयाः दुर्योधनं प्रतीत्यर्थात् यतःवयंयुद्धेऽद्वितीयंसहायंसात्यकिंप्रवृणीमहृतवंतः । तस्मिन्नवृतेतुकदाचित्तवजयोऽपिसंभाव्येतेतिभावः ४४

४५ । ४६ अस्मात्ल्यब्लोपेपंचमी एनंप्राप्यसंचेष्टंतेइतस्ततोभ्रमंति ४७।४८ चित्रःविस्मयकृत् सूक्ष्मःदुर्लक्ष्यः श्लक्ष्णइतिपाठेरमणीयः । शूराणामुत्साहकरत्वात्सुकृतःसुशिक्षितः । अस्त्रयो गोऽस्त्रलाभः । वृष्णिसिंहस्यकृष्णस्ययथाविधंयादृक्प्रकारंयोगमाहुःतैःसर्वैर्गुणैःसात्यकिरुपेतः ४९ । ५० । ५१। ५२ । ५३ सुपुंखान्यदाद्रष्टेति द्वयोःसंबंधः ५४ आददानान्ग्रसमानान् ५५

महोरस्कोदीर्घबाहुःप्रमाथीयुद्धेऽद्वितीयःपरमास्त्रवेदी ॥ शिनेर्नप्तातालमात्रायुधोऽयंमहारथोवीतभयःकृतास्त्रः ४५ यदाशिनीनामधिपोमयोक्तःशरैःपरान्मेघ इवप्रवर्षन् ॥ प्रच्छादयिष्यत्यरिहायोधमुख्यांस्तदायुद्धंधार्तराष्ट्रोऽन्वतप्स्यत् ४६ यदाधृतिंकुरुतेयोत्स्यमानःसदीर्घबाहुर्दृढधन्वामहात्मा ॥ सिंहस्येवगंध माघ्रायगावःसंचेष्टंतेशत्रवोऽस्माद्रणाग्रे ४७ सदीर्घबाहुर्दृढधन्वामहात्माभिंद्याद्गिरीन्संहरेत्सर्वलोकान् ॥ अस्त्रेकृतीनिपुणःक्षिप्रहस्तोदिविस्थितःसूर्यइवाभिभा ति ४८ चित्रःसूक्ष्मःसुकृतोयादवस्य अस्त्रेयोगोवृष्णिसिंहस्यभूयान् ॥ यथाविधंयोगमाहुःप्रशस्तंसर्वैर्गुणैःसात्यकिस्तैरुपेतः ४९ हिरण्मयंश्वेतहयैश्चतुर्भिर्य दायुक्तंस्यंदनंमाधवस्य ॥ द्रष्टायुद्धेसात्यकेर्धार्तराष्ट्रस्तदातप्स्यत्यकृतात्मासमंदः ५० यदारथंहेममणिप्रकाशंश्वेताश्वयुक्तंवानरकेतुमुग्रम् ॥ दृष्ट्वाममाप्या स्थितंकेशवेनतदातप्स्यत्यकृतात्मासमंदः ५१ यदामौर्व्यास्तलनिष्पेषमुग्रंमहाशब्दंवज्रनिष्पेषतुल्यम् ॥ विधूयमानस्यमहारणेमयासगांडिवस्यश्रोष्यति मंदबुद्धिः ५२ तदामूढोधृतराष्ट्रस्यपुत्रस्तप्तायुद्धेदुर्मतिर्दुःसहायः ॥ दृष्ट्वासैन्यंबाणवर्षांधकारेप्रभज्यंतंगोकुलवद्रणाग्रे ५३ बलाहकादुच्चरतःसुभीमान्विद्युत्स्फु लिंगानिवघोररूपान् ॥ सहस्रघ्नान्द्विषतांसंगरेषुअस्थिच्छिदोमर्मभिदःसुपुंखान् ५४ यदाद्रष्टाज्यामुखाद्बाणसंघान्गांडीवमुक्तानापततःशिताग्रान् ॥ हया न्गजान्वर्मिणश्चाददानांस्तदायुद्धंधार्तराष्ट्रोऽन्वतप्स्यत् ५५ यदामंदःपरबाणान्विमुक्तान्ममेषुभिर्ह्रियमाणान्प्रतीपम् ॥ तिर्यग्विध्याच्छिद्यमानान्पृषत्कै स्तदायुद्धंधार्तराष्ट्रोन्वतप्स्यत् ५६ यदाविपाठामद्भुजविप्रमुक्ताद्विजाःफलानीवमहीरुहाग्रात् ॥ प्रचेतारउत्तमांगानियूनांतदायुद्धंधार्तराष्ट्रोऽन्वतप्स्यत् ५७ यदाद्रष्टापततःस्यंदनेभ्योमहागजेभ्योऽश्वगतान्सुयोधनान् ॥ शरैर्हतान्पातितांश्चैवरंगेतदायुद्धंधार्तराष्ट्रोऽन्वतप्स्यत् ५८ असंप्राप्तानस्त्रपथंपरस्य यदाद्रष्टानश्यतोधार्तराष्ट्रान् ॥ अकुर्वतःकर्मयुद्धेसमंतात्तदायुद्धंधार्तराष्ट्रोऽन्वतप्स्यत् ५९ पदातिसंघान्रथसंघान्समंताद्व्यात्ताननःकालइवाततेषुः ॥ प्रणोत्स्यामिज्वलितैर्बाणवर्षैःशत्रूंस्तदातप्स्यतिमंदबुद्धिः ६० सर्वादिशःसंपततारथेनरजोध्वस्तंगांडिवेनप्रकृत्तम् ॥ यदाद्रष्टास्वबलंसंप्रमूढंतदापश्चात्तप्स्यति मंदबुद्धिः ६१ कांदिग्भूतंछिन्नगात्रंविसंज्ञंदुर्योधनोद्रक्ष्यतिसर्वसैन्यम् ॥ हताश्ववीराग्र्यनरेंद्रनागंपिपासितंश्रांतपत्रंभयार्तम् ६२

तिर्यक् विद्ध्यविध्द्वा पृषत्कै श्छिद्यमानान्यदाद्रष्टेतिपूर्वेणान्वयः ५६ विपाठाःविस्तृतबाणाः प्रचेतारःराशीकरिष्यंति ५७ ।५८ अस्त्रपथंअसंप्राप्तान्अस्त्रंदृष्ट्वैव नश्यतइत्यर्थः युद्धेकर्मअकुर्वतःभयेनवैक्लव्यात् ५९ आतताः संतताःअविच्छिन्नधाराःइषवोयस्य प्रणोत्स्यामिदूरीकरिष्यामि ६० रजोध्वस्तंरजसाव्याकुलीभूयरथादिभ्यःपतितं प्रकृत्तंछिन्नं ६१ कांदिग्भूतंभयेनपलायितं श्रांतपत्रंश्रांतवाहनम् ६२

प्रजापतेःकर्मयथेति यथावाजपेयेप्रजापतिदैवत्याःसप्तदश पशवोविशस्यंते तद्वद्बहूनामिहापिविशसनंकृतं तेनबीभत्सत्वंलक्ष्यते । अर्थः स्वर्गोराज्यंच तदर्थंनिष्ठितंसंजातनिश्चयम् ६३ दे
वदत्तंअर्जुनस्यशंखम् ६४ दस्युसंघान् । न्यायतः प्रदेयस्यराज्यस्याप्रदानाद्दस्यवोधार्त्तराष्ट्राः । 'यथाकथाचपरप्रतिग्रहमभिमन्यतेस्तेनोभवति'इतिस्मृतेः । युगांतेशत्रूणांसंहारेजातेसति
अन्यद्युगंधर्मप्रधानंकालंप्रवर्त्तयन् । 'राजाकालस्यकारणम्'इतिस्मृतेः ६५ दर्पस्यअंतेनाशे ६६ उदकांतेसंध्यावंदनाचमनांते ६७ पुरस्तादिंद्रोरक्षत्वित्यपकृष्यते ६८ । ६९ । ७०

आर्तस्वरंहन्यमानंहतंचाविकीर्णकेशास्थिकपालसंघम् ॥ प्रजापतेःकर्मयथार्थनिष्ठितंतदाद्दृष्ट्वातप्स्यतिमंदबुद्धिः ६३ यदारथेगांडिवंवासुदेवंदिव्यंशंखंपांच
जन्यंहयांश्च ॥ तूणावक्षय्यौदेवदत्तंचमांचदृष्ट्वायुद्धेधार्तराष्ट्रोऽन्वतप्स्यत् ६४ उद्वर्तयन्दस्युसंघान्समेतान्प्रवर्तयन्युगमन्यद्युगांते ॥ यदाधक्ष्याम्याग्निवत्कौ
रवेयांस्तदातप्ताधृतराष्ट्रःसपुत्रः ६५ सभ्रातावैसहसैन्यःसभृत्योभ्रष्टैश्वर्यःक्रोधवशोऽल्पचेताः ॥ दर्पस्यांतेनिहतोवेपमानःपश्चान्मंदस्तप्स्यतिधार्तराष्ट्रः ६६
पूर्वाह्णेमांकृतजप्यंकदाचिद्विप्रःप्रोवाचोदकांतेमनोज्ञम् ॥ कर्तव्यंतेदुष्करंकर्मपार्थयोद्धव्यंतेशत्रुभिःसव्यसाचिन् ६७ इंद्रोवातेहरिवान्वज्रहस्तःपुरस्ताद्या
तुसमरेऽरीन्विनिघ्नन् ॥ सुग्रीवयुक्तेनरथेनवातेपश्चात्कृष्णोरक्षतुवासुदेवः ६८ वव्रेचाहंवज्रहस्तान्महेंद्रादास्मिन्युद्धेवासुदेवंसहायम् ॥ समेलब्धोदस्युवधा
यकृष्णोमन्येचैतद्विहितंदैवतैर्मे ६९ अयुद्ध्यमानोमनसाऽपियस्यजयंकृष्णःपुरुषस्याभिनंदेत् ॥ एवंसर्वान्सव्यतीयादमित्रान्सेंद्रान्देवान्मानुषेनास्तिचिं
ता ७० सबाहुभ्यांसागरमुत्तितीर्षेन्महोदधिंसलिलस्याप्रमेयम् ॥ तेजस्विनंकृष्णमत्यंतशूरंयुद्धेनयोवासुदेवंजिगीषेत् ७१ गिरिंयइच्छेत्तुतलेनभेत्तुंशिलोच्च
यंश्वेतमतिप्रमाणम् ॥ तस्यैवपाणिःसनखोविशीर्येन्नचापिकिंचित्सगिरेस्तुकुर्यात् ७२ अग्निंसमिद्धंशमयेद्भुजाभ्यांचंद्रंचसूर्यंचनिवारयेत ॥ हरेद्देवानामसृ
तंप्रसह्ययुद्धेनयोवासुदेवंजिगीषेत ७३ योरुक्मिणीमेकरथेनभोजानुत्साद्यराज्ञःसमरेप्रसह्य ॥ उवाहभार्यांयशसाज्वलंतींयस्यांजज्ञेरौक्मिणेयोमहात्मा ७४
अयंगांधारांस्तरसासंप्रमथ्यजित्वापुत्रान्नग्नजितःसमग्रान् ॥ बद्धंमुमोचविनदंतंप्रसह्यसुदर्शनंवैदेवतानांललामम् ७५ अयंकपाटेनजघानपांड्यंतथाकलिंगा
न्दंतकूरेममर्द ॥ अनेनजग्धावर्षपूगान्विनाथावाराणसीनगरीसंबभूव ७६ अयंस्मयुद्धेमन्यतेऽन्यैरजेयंतमेकलव्यंनामनिषादराजम् ॥ वेगेनैवशैलमभिहत्य
जंभःशेतेसकृष्णेनहतःपरासुः ७७ ततोग्रसेनस्यसुतंसुदुष्टंवृष्ण्यंधकानांमध्यगतंसभास्थम् ॥ अपातयद्बलदेवद्वितीयोहत्वाददौचोग्रसेनायराज्यम् ७८

सागरंसगरैर्वर्द्धितंसलिलस्यमहोदधिंजलसमुद्रं अप्रमेयंअनंतत्वात् ७१ तलेनचपेटिकया शिलोच्चयमितिकाठिन्यप्रदर्शनार्थंविशेषणं श्वेतंकैलासं बलवदाश्रितत्वमनेनसूचितम् ७२ । ७३
७४ सुदर्शनंनामराजानं नग्नजितःपुत्रैर्बद्धंमुमोच देवतानांललामंरत्नभूतं देवैरपिशिरसाधार्यमित्यर्थः ७५ कपाटेनवक्षस्तटाघातेन दंतकूरेसंग्रामे अन्येतु कपाटेनिजघानेतिपाठंप्रकल्प्यकपा
टेनगरे एवंदंतकूरेचेतिव्याचख्युः । अनाथासंबभूवेतियोज्यम् ७६ अयंकृष्णः तंयुद्धेमन्यते युद्धार्थंप्रार्थयते सर्वदैव सः इदानींतेनैवकृष्णेनहतः शेते । यथाजंभोदैत्यः शैलंवेगेनअभिहत्य
शैलाघातात्स्वयंकृतात् हतःशेतेतद्वत् ७७ ततोग्रसेनस्येतिसंधिरार्षः तथेतिवापाठः ७८

खस्थंखेचरं विभीषणंनिर्भयं शतघ्नींशक्तिंशाल्वेनक्षिप्तां दोर्भ्यांपाणिभ्यांकंदुकवत्प्रत्यगृण्हात् ७९ भौमोभूमिपुत्रः ८० शेकुर्जेतुमितिशेषः ८१ प्रकृतिंस्वभावं दस्युहननशीलतां प्रतिशुश्राव अंगीचकार सिद्धिषुकार्यसिद्धिषूपस्थितासु ऐश्वर्यवान्सामर्थ्यवान् ८२ निर्मोचनेनगरे क्षुरांतान्तीक्ष्णधारान् लोहमयानित्यर्थः ओघसंज्ञंरक्षः ८३ । ८४ । ८५ वराणिवरान् अददन्ददत्तवंतः क्रमःग्लानिः ८६ । ८७ तर्कयतेबद्धुंयतते ८८ प्रसह्यपर्यागतंहठात्प्राप्तंमन्यतेवांछति अस्मासुमित्रभेदंप्रार्थयतेइत्यर्थः । तेनचपांडवानांकृष्णेममत्वंअस्मदीयत्वं हर्त्तुंशक्यमितिमन्यते

अयंसौभंयोधयामासखस्थंविभीषणंमाययाशाल्वराजम् ॥ सौभद्वारिप्रत्यगृण्हाच्छतघ्नींदोर्भ्यांकएनंविषहेतमर्त्यः ७९ प्राग्ज्योतिषंनामबभूवदुर्गंपुरंघोरमसुराणामसह्यम् ॥ महाबलोनरकस्तत्रभौमोजहारादित्यामणिकुंडलेशुभे ८० नतंदेवाःसहशक्रेणशेकुःसमागतायुधिमृत्योरभीताः ॥ दृष्ट्वाचतंविक्रमंकेशवस्यबलंतथैवास्त्रमवारणीयम् ८१ जानंतोऽस्यप्रकृतिंकेशवस्यन्ययोजयन्दस्युवधायकृष्णम् ॥ सतत्कर्मप्रतिशुश्रावदुष्करमैश्वर्यवान्सिद्धिषुवासुदेवः ८२ निर्मोचनेषट्सहस्राणिहत्वासंच्छिद्यपाशान्सहसाक्षुरांतान् ॥ मुरंहत्वाविनिहत्यौघरक्षोनिर्मोचनंचापिजगामवीरः ८३ तत्रैवतेनास्यबभूवयुद्धंमहाबलेनातिबलस्यविष्णोः ॥ शेतेसकृष्णेनहतःपरासुर्वातेनेवमथितःकर्णिकारः ८४ आहृत्यकृष्णोमणिकुंडलेतेहत्वाचभौमंनरकंमुरंच ॥ श्रियावृतोयशसाचैवविद्वान्प्रत्याजगामाप्रतिमप्रभावः ८५ अस्मैवराण्यददंस्तत्रदेवादृष्ट्वाभीमंकर्मकृतंरणेतत् ॥ श्रमश्चतेयुद्ध्यमानस्यनस्यादाकाशेचाप्सुचतेक्रमःस्यात् ८६ शस्त्राणिगात्रेनचतेक्रमेरन्नित्येवकृष्णश्चततःकृतार्थः ॥ एवंरूपेवासुदेवेऽप्रमेयेमहाबलेगुणसंपत्सदैव ८७ तमसह्यंविष्णुमनंतवीर्यमाशंसतेधार्तराष्ट्रोविजेतुम् ॥ सदाह्येनंतर्कयतेदुरात्मातच्चाप्ययंसहतेऽस्मान्समीक्ष्य ८८ पर्यागतंममकृष्णस्यचैवयोमन्यतेकलहंसंप्रसह्य ॥ शक्यंहर्तुंपांडवानांममत्वंतद्वेदितासंयुगंतत्रगत्वा ८९ नमस्कृत्वाशांतनवायराज्ञेद्रोणायाथोसहपुत्रायचैव ॥ शारद्वतायाप्रतिद्वंद्विनेचयोत्स्याम्यहंराज्यमभीप्समानः ९० धर्मेणास्तंनिधनंतस्यमन्येयोयोत्स्यतेपांडवैःपापबुद्धिः ॥ मिथ्याग्लहेनिर्जितावैनृशंसैःसंवत्सरान्वैद्वादशराजपुत्राः ९१ वासःकृच्छ्रोविहितश्चाप्यरण्येदीर्घकालंचैकमज्ञातवर्षम् ॥ तेहिकस्माज्जीवतांपांडवानांनंदिष्यंतेधार्तराष्ट्राःपदस्थाः ९२ तेचेदस्मान्युद्ध्यमानान्जयेयुर्देवैर्महेंद्रप्रमुखैःसहायैः ॥ धर्मादधर्मश्चरितोगरीयांस्ततोध्रुवंनास्तिकृतंचसाधु ९३ नचेदिमंपुरुषंकर्मबद्धंनचेदस्मान्मन्यतेऽसौविशिष्टान् ॥ आशंसेऽहंवासुदेवद्वितीयोदुर्योधनंसानुबंधंनिहंतुम् ९४ नचेदिदंकर्मनरेंद्रवंध्यंनचेद्भवेत्सुकृतंनिष्फलंवा ॥ इदंचतच्चाभिसमीक्ष्यनूनंपराजयोधार्तराष्ट्रस्यसाधुः ९५ प्रत्यक्षंवःकुरवोयद्ब्रवीमियुध्यमानाधार्तराष्ट्रानसंति ॥ अन्यत्रयुद्धात्कुरवोयदिस्युर्नयुद्धेवैशेषइहास्तिकश्चित् ९६ हत्वात्वहंधार्तराष्ट्रान्सकर्णान्राज्यंकुरूणामवजेतासमग्रम् ॥ यद्वःकार्यंतत्कुरुध्वंयथास्वमिष्टान्दारानात्मभोगान्भजध्वम् ९७

तत्रतत्रकुरुक्षेत्रेसंयुगंगत्वाप्राप्य वेदिताज्ञास्याति ८९ । ९० । ९१ । ९२ साधुकृतंसत्कर्मनास्ति निष्फलत्वात् वृथैवधर्मइत्यर्थः ९३ नचेदिति यदिकर्मबद्धःपुरुषोनस्यात् यदिवावयंतेभ्यःश्रेष्ठाःनस्याम तर्हितस्यैवजयोभविष्यतीत्यर्थः ९४ इदंराज्यस्याप्रदानं इदानींतनं । तच्चराज्यात्वानिःसारणंतदानींतनं । अभिसमीक्ष्यआलोच्य पापवशात्पराजयएवतस्येत्यर्थः ९५।९६।९७

९८ दिव्या अनागतार्थज्ञापकाः मृगचक्राः चक्राणिसर्वतोभद्रादीनिशैवागमप्रसिद्धानि मृगयंतेकिंनक्षत्रंकेनग्रहेणविद्धमितिविचारयंति सदसत्फलकथनार्थंतेचक्रमृगाः पूर्वनिपातआर्षः मृगाणिमार्गितानिचक्राणियैस्तेइतिवा ९९ संशयंयुद्धेजयपराजयविषयेनपश्यति यतःअपरोक्षविद्यः दिव्यदृष्ट्याऽतीतानागतादिकंपश्यन् १०० पुराणीयोगप्रभाववती नव्यथतेनातिरस्कृता

अप्येवंनोब्राह्मणाःसंतिवृद्धाबहुश्रुताःशीलवंतःकुलीनाः॥ सांवत्सराज्योतिषिचाभियुक्तानक्षत्रयोगेषुचनिश्चयज्ञाः ९८ उच्चावचंदैवयुक्तंरहस्यंदिव्याःप्रश्नामृगचक्रामुहूर्ताः ॥ क्षयंमहांतंकुरुसृंजयानांनिवेदयंतेपांडवानांजयंच ९९ यथाहिनोमन्यतेऽजातशत्रुःसंसिद्धार्थोद्विषतांनिग्रहाय ॥ जनार्दनश्चाप्यपरोक्षविद्योनसंशयंपश्यतिवृष्णिसिंहः १०० अहंतथैवंखलुभाविरूपंपश्यामिबुद्ध्यास्वयमप्रमत्तः ॥ दृष्टिश्चमेनव्यथतेपुराणीसंयुध्यमानाधार्तराष्ट्रानसंति १ अनालब्धंजृंभतिगांडिवंधनुरनाहताकंपतिमेधनुर्ज्या ॥ बाणाश्चमेतूणमुखाद्विसृत्यमुहुर्मुहुर्गंतुमुशंतिचैव २ खड्गःकोशान्निःसरतिप्रसन्नोहित्वेवजीर्णामुरगस्त्वचंस्वाम् ॥ ध्वजेवाचोरौद्ररूपाभवंतिकदारथोयोक्ष्यतेतेकिरीटिन् ३ गोमायुसंघाश्चनदंतिरात्रौरक्षांस्यथोनिष्पतंत्यंतरिक्षात् ॥ मृगाःशृगालाःशितिकंठाश्चकाकागृध्राबकाश्चैवतरक्षवश्च ४ सुवर्णपत्राश्चपतंतिपश्चाद्दृष्ट्वारथंश्वेतहयप्रयुक्तम् ॥ अहंह्येकःपार्थिवान्सर्वयोधान्शरान्वर्षन्मृत्युलोकंनयेयम् ५ समाददानःपृथगस्त्रमार्गान्यथाग्निरिद्धोगहनंनिदाघे ॥ स्थूणाकर्णंपाशुपतंमहास्त्रंब्राह्मंचास्त्रंयच्चशक्रोऽप्यदान्मे ६ वधेधृतोवेगवतःप्रमुंचन्नाहंप्रजाःकिंचिदिहावशिष्ये ॥ शांतिंलप्स्येपरमोह्येषभावःस्थिरोममब्रूहिगावल्गणेतान् ७ येवैजय्याःसमरेसूतलब्ध्वादेवानपींद्रप्रमुखान्समेतान् ॥ तैर्मन्यतेकलहंसंप्रसह्यसधार्तराष्ट्रःपश्यतमोहमस्य ८ वृद्धोभीष्मःशांतनवःकृपश्चद्रोणःसपुत्रोविदुरश्चधीमान् ॥ एतेसर्वेयद्वदंतेतदस्तुआयुष्मंतःकुरवःसंतुसर्वे १०९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणियानसंधिपर्वणिअर्जुनवाक्यनिवेदनेऽष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥ वैशंपायनउवाच ॥ समवेतेषुसर्वेषुतेषुराजसुभारत ॥ दुर्योधनमिदंवाक्यंभीष्मःशांतनवोऽब्रवीत् १ बृहस्पतिश्चोशनाचब्रह्माणंपर्युपस्थितौ ॥ मरुतश्चसहेंद्रेणवसवश्चाग्निनासह २ आदित्याश्चैवसाध्याश्चयेचसप्तर्षयोदिवि ॥ विश्वावसुश्चगंधर्वःशुभाश्चाप्सरसांगणाः ३ नमस्कृत्योपजग्मुस्तेलोकवृद्धंपितामहम् ॥ परिवार्यचविश्वेशंपर्यासतदिवौकसः ४ तेषांमनश्चतेजश्चाप्याददानाविवौजसा ॥ पूर्वदेवौव्यतिक्रांतौनरनारायणावृषी ५ बृहस्पतिस्तुपप्रच्छब्रह्माणंकाविमाविति ॥ भवंतंनोपतिष्ठेतेतौनःशंसपितामह ६ ॥ ब्रह्मोवाच ॥ यावेतौपृथिवींद्यांचभासयंतौतपस्विनौ ॥ ज्वलंतौरोचमानौचव्याप्यातीतौमहाबलौ ७ नरनारायणावेतौलोकाल्लोकंसमास्थितौ ॥ ऊर्जितौस्वेनतपसामहासत्वपराक्रमौ ८ एतौहिकर्मणालोकंनंदयामासतुर्ध्रुवम् ॥ द्विधाभूतौमहाप्राज्ञौविद्धिब्रह्मन्परंतपौ ॥ असुराणांविनाशायदेवगंधर्वपूजितौ ९

१ । २ । ३ । ४ । ५ । ६ वधेधृतःवधार्थसज्जः वेगवतःबाणान् ७ विजयःकर्मयेषांतेवैजय्याः देवानपिलब्ध्वाविजयवंतएवेत्यर्थः ८ । १०९ ॥ ॥ इति उद्योगपर्वणिनीलकंठीये भारतभावदीपेअष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥ समवेतेष्विति १ । २ । ३ पर्यासतपरिवार्यतस्थुः ४ । ५ । ६ । ७ लोकात्मानुषात् लोकंब्राह्मम् ८ । ९

१० अयाचतइंद्रः ११ सह्यंसाहाय्यम् १२ । १३ । १४ भ्रांतेअस्थिरेऽपिरथे लक्ष्यात्नव्यपैतीत्याश्चर्यम् १५ आरुजत् पीडितवान् १६ । १७ भूयसोबहून् १८ । १९ सत्त्वंबुद्धिसत्त्वं एक एवदेवोयोगप्रभावाद्रूपद्वयेनवर्त्ततेइत्यर्थः २० अश्नुवातेव्याप्नुतः २१ कर्मयुद्धंकर्तव्यंतयोरितिशेषः आचष्टआख्यातवान्नारदएव । २२ । २३ । २४ । २५ । २६ । २७ । २८

॥ वैशंपायनउवाच ॥ जगामशक्रस्तच्छ्रुत्वायत्रतौतेपतुस्तपः ॥ सार्धंदेवगणैःसर्वैर्बृहस्पतिपुरोगमैः १० तदादेवासुरेयुद्धेभयेजातेदिवौकसाम् ॥ अयाचतमहात्मानौनरनारायणौवरम् ॥ ११ तावब्रूतांवृणीष्वेतितदाभरतसत्तम ॥ अथैतावब्रवीच्छक्रःसह्यंनःक्रियतामिति १२ ततस्तौशक्रमब्रूतांकरिष्यावोयदिच्छसि ॥ ताभ्यांचसहितःशक्रोविजिग्येदैत्यदानवान् १३ नरइंद्रस्यसंग्रामेहत्वाशत्रून्परंतपः ॥ पौलोमान्कालखंजांश्चसहस्राणिशतानिच १४ एषभ्रांतेरथेतिष्ठन्भल्लेनापाहरच्छिरः ॥ जंभस्यग्रसमानस्यतदाह्यर्जुनआहवे १५ एषपारेसमुद्रस्यहिरण्यपुरमारुजत् ॥ जित्वाषष्टिंसहस्राणिनिवातकवचान्रणे १६ एषदेवान्सहेंद्रेणजित्वापरपुरंजयः ॥ अतर्पयन्महाबाहुरर्जुनोजातवेदसम् १७ नारायणस्तथैवात्रभूयसोऽन्यान्जघानह ॥ एवमेतौमहावीर्यौतौपश्यतसमागतौ १८ वासुदेवार्जुनौवीरौसमवेतौमहारथौ ॥ नरनारायणौदेवौपूर्वदेवावितिश्रुतिः १९ अजेयौमानुषेलोकेसेंद्रैरपिसुरासुरैः ॥ एषनारायणःकृष्णःफाल्गुनश्चनरःस्मृतः ॥ नारायणोनरश्चैवसत्त्वमेकंद्विधाकृतम् २० एतौहिकर्मणालोकानश्नुवातेऽक्षयान्ध्रुवान् ॥ तत्रतत्रैवजायेतेयुद्धकालेपुनःपुनः २१ तस्मात्कर्मैवकर्तव्यमितिहोवाचनारदः ॥ एतद्धिसर्वमाचष्टवृष्णिचक्रस्यवेदवित् २२ शंखचक्रगदाहस्तंयदाद्रक्ष्यसिकेशवम् ॥ पर्याददानंचास्त्राणिभीमधन्वानमर्जुनम् २३ सनातनौमहात्मानौकृष्णावेकरथेस्थितौ ॥ दुर्योधनतदातातस्मर्तासिवचनंमम २४ नोचेदयमभावःस्यात्कुरूणांप्रत्युपस्थितः ॥ अर्थाच्चतातधर्माच्चतवबुद्धिरुपप्लुता २५ नचेद्ग्रहीष्यसेवाक्यंश्रोतासिसुबहून्हतान् ॥ तवैवहिमतंसर्वेकुरवःपर्युपासते २६ त्रयाणामेवचमतंतत्त्वमेकोऽनुमन्यसे ॥ रामेणचैवशप्तस्यकर्णस्यभरतर्षभ २७ दुर्जातेःसूतपुत्रस्यशकुनेःसौबलस्यच ॥ तथाक्षुद्रस्यपापस्यभ्रातुर्दुःशासनस्यच २८ ॥ कर्णउवाच ॥ नैवमायुष्मतावाच्यंयन्मामात्थपितामह ॥ क्षत्रधर्मेस्थितोह्यस्मिस्वधर्मादनपेयिवान् २९ किंचान्यन्मयिदुर्वृत्तंयेनमांपरिगर्हसे ॥ नहिमेवृजिनंकिंचिद्धार्तराष्ट्राविदुःक्वचित् ३० नाचरंवृजिनंकिंचिद्धार्तराष्ट्रस्यनित्यशः ॥ अहंहिपांडवान्सर्वान्हनिष्यामिरणेस्थितान् ३१ प्राग्विरुद्धैःशमंसद्भिःकथंवाक्रियतेपुनः ॥ राज्ञोहिधृतराष्ट्रस्यसर्वंकार्यंप्रियंमया ॥ तथादुर्योधनस्यापिसहिराज्येसमाहितः ३२ ॥ वैशंपायनउवाच ॥ कर्णस्यतुवचःश्रुत्वाभीष्मःशांतनवःपुनः ॥ धृतराष्ट्रंमहाराजसंभाष्येदंवचोब्रवीत् ३३ यदयंकत्थतेनित्यंहंताऽहंपांडवानिति ॥ नायंकलाऽपिसंपूर्णापांडवानांमहात्मनाम् ३४ अनयोयोऽयमागंतापुत्राणांतेदुरात्मनाम् ॥ तदस्यकर्मजानीहिसूतपुत्रस्यदुर्मतेः ३५ एतमाश्रित्यपुत्रस्तेमंदबुद्धिःसुयोधनः ॥ अवामन्यततान्वीरान्देवपुत्रानरिंदमान् ३६

२९ । ३० । ३१ सहिराज्येइति अस्यवचनंमयानकर्तव्यं किंतुराज्ञएवेतिभावः ३२ । ३३ कलाऽपिषोडशांशोऽपि । ३४ । ३५ । ३६

३७ । ३८ । ३९ न्हियतेयद्यदा वृषायते वृषवन्नर्दति ४० । ४१ । ४१ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ ॥ इतिश्रीमहाभारतेउद्योगप० नी० भारत० ऊनपंचाशत्तमोऽध्यायः ॥ ४९ ॥

किंचाप्येतेनतत्कर्मकृतपूर्वंसुदुष्करम् ॥ तैर्यथापांडवैःसर्वैरेकैकेनकृतंपुरा ३७ दृष्ट्वाविराटनगरेभ्रातरंनिहतंप्रियम् ॥ धनंजयेनविक्रम्यकिमनेनतदाकृतम् ३८ सहितान्हिकुरून्सर्वानभियातोधनंजयः ॥ प्रमथ्यचाच्छिनद्वासःकिमयंप्रोषितस्तदा ३९ गंधर्वैर्घोषयात्रायांह्रियतेयत्सुतस्तव ॥ कृतदासूतपुत्रोऽभूद्यइदानींवृषायते ४० ननुतत्रापिभीमेनपार्थेनचमहात्मना ॥ यमाभ्यामेवसंगम्यगंधर्वास्तेपराजिताः ४१ एतान्यस्यमृषोक्तानिबहूनिभरतर्षभ ॥ विकत्थनस्यभद्रंतेसदाधर्मार्थलोपिनः ४२ भीष्मस्यतुवचःश्रुत्वाभारद्वाजोमहामनाः ॥ धृतराष्ट्रमुवाचेदंराजमध्येऽभिपूजयन् ४३ यदाहभरतश्रेष्ठोभीष्मस्तत्क्रियतांनृप ॥ नकाममर्थलिप्सूनांवचनंकर्तुमर्हसि ४४ पुरायुद्धात्साधुमन्येपांडवैःसहसंगतम् ॥ यद्वाक्यमर्जुनेनोक्तंसंजयेननिवेदितम् ४५ सर्वंतदपिजानामिकरिष्यतिचपांडवः ॥ नह्यस्यत्रिषुलोकेषुसदृशोऽस्तिधनुर्धरः ४६ अनादृत्यतुतद्वाक्यमर्थवद्द्रोणभीष्मयोः ॥ ततःससंजयंराजापर्यपृच्छतपांडवान् ४७ तदैवकुरवःसर्वेनिराशाजीवितेऽभवन् ॥ भीष्मद्रोणौयदाराजानसम्यगनुभाषते ४८ ॥ इतिश्रीमहाभारतेउद्योगपर्वणियानसं०भीष्मद्रोणवाक्येऊनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ ॥ धृतराष्ट्रउवाच ॥ किमसौपांडवोराजाधर्मपुत्रोऽभ्यभाषत ॥ श्रुत्वेहबहुलाःसेनाःप्रीत्यर्थंनःसमागताः १ किमसौचेष्टतेसूतयोत्स्यमानोयुधिष्ठिरः ॥ केवाऽस्यभ्रातृपुत्राणांपश्यंत्याज्ञेप्सवोमुखम् २ केस्विदेनंवारयंतियुद्धाच्छाम्येतिवापुनः ॥ निकृत्याकोपितंमंदैर्धर्मज्ञंधर्मचारिणम् ३ ॥ संजयउवाच ॥ राज्ञोमुखमुदीक्षंतेपांचालाःपांडवैःसह ॥ युधिष्ठिरस्यभद्रंतेससर्वाननुशास्तिच ४ पृथग्भूताःपांडवानांपांचालानांरथव्रजाः ॥ आयांतमभिनंदंतिकुंतीपुत्रंयुधिष्ठिरम् ५ नभःसूर्यमिवोद्यंतंकौंतेयंदीप्ततेजसम् ॥ पांचलाःप्रतिनंदंतितेजोराशिमिवोदितम् ६ आगोपालाविपालाश्चनंदमानायुधिष्ठिरम् ॥ पांचालाःकेकयामत्स्याःप्रतिनंदंतिपांडवम् ७ ब्राह्मण्योराजपुत्र्यश्चविशांदुहितरश्चयाः ॥ क्रीडंत्योऽभिसमायांतिपार्थंसन्नद्धमीक्षितुम् ८ ॥ धृतराष्ट्रउवाच ॥ संजयाचक्ष्वयेनास्मान्पांडवाअभ्ययुंजत ॥ धृष्टद्युम्नस्यसैन्येनसोमकानांबलेनच ९ ॥ वैशंपायनउवाच ॥ गावल्गणिस्तुतत्पृष्टःसभायांकुरुसंसदि ॥ निःश्वस्यसुभृशंदीर्घंमुहुःसंचिंतयन्निव १० तत्रानिमित्ततोदैवात्सूतंकश्मलमाविशत् ॥ तदाचचक्षेविदुरःसभायांराजसंसदि ११ संजयोऽयंमहाराजमूर्छितःपतितोभुवि ॥ वाचंनसृजतेकांचिद्धीनप्रज्ञोऽल्पचेतनः १२ ॥ धृतराष्ट्रउवाच ॥ अपश्यत्संजयोनूनंकुंतीपुत्रान्महारथान् ॥ तैरस्यपुरुषव्याघ्रैर्भृशमुद्वेजितंमनः १३ ॥ वैशंपायनउवाच ॥ संजयश्चेतनांलब्ध्वाप्रत्याश्वस्येदमब्रवीत् ॥ धृतराष्ट्रंमहाराजसभायांकुरुसंसदि १४ ॥ संजयउवाच ॥ दृष्टवानस्मिराजेंद्रकुंतीपुत्रान्महारथान् ॥ मत्स्यराजगृहावासनिरोधेनावकर्शितान् १५

किमसाविति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ येनसहायेनअस्मानालक्ष्य अभ्ययुंजतसंनद्धाअभूवन् ९ कुरवःसंसीदंत्यस्यांसभायां १० । ११ । १२ १३ । १४ । १५

वस्ते वःयुष्मान्तेपांडवाः १६ । १७ । १८ । १९ । २० । २१ सिंधुराजोजयद्रथः २२ । २३ । २४ । २५ । २६ । २७ विजयेनअर्जुनेन २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५



शृणुयैर्हिमहाराजपांडवाअभ्ययुंजत ॥ धृष्टद्युम्नेनवीरेणयुद्धेवस्तेऽभ्ययुंजत १६ योनैवरोषान्नभयान्नलोभान्नार्थकारणात् ॥ नहेतुवादाद्धर्मात्मासत्यंजह्यात्कदाचन १७ यःप्रमाणंमहाराजधर्मेधर्मभृतांवरः ॥ अजातशत्रुणातेनपांडवाअभ्ययुंजत १८ यस्यबाहुबलेतुल्यःपृथिव्यांनास्तिकश्चन ॥ योवैसर्वान्महीपालान्वशेचक्रेधनुर्धरः ॥ यःकाशीनंगमगधान्कलिंगांश्चयुधाऽजयत् १९ तेनवोभीमसेनेनपांडवाअभ्ययुंजत ॥ यस्यवीर्येणसहसाचत्वारोभुविपांडवाः २० निःसृत्यजतुगेहाद्वैहिडिंबात्पुरुषादकात् ॥ यश्चैषामभवद्द्वीपःकुंतीपुत्रोवृकोदरः २१ याज्ञसेनीमथोयत्रासिंधुराजोऽपकृष्टवान् ॥ तत्रैषामभवद्द्वीपःकुंतीपुत्रोवृकोदरः २२ यश्चतान्संगतान्सर्वान्पांडवान्वारणावते ॥ दह्यतोमोचयामासतेनवस्तेऽभ्ययुंजत २३ कृष्णायांचरताप्रीतिंयेनक्रोधवशाहताः ॥ प्रविश्यविषमंघोरंपर्वतंगंधमादनम् २४ यस्यनागायुतैर्वीर्यंभुजयोःसारमर्पितम् ॥ तेनवोभीमसेनेनपांडवाअभ्ययुंजत २५ कृष्णद्वितीयोविक्रम्यतुष्ट्यर्थंजातवेदसः ॥ अजयद्यःपुरावीरोयुध्यमानंपुरंदरम् २६ यःससाक्षान्महादेवंगिरिशंशूलपाणिनम् ॥ तोषयामासयुद्धेनदेवदेवमुमापतिम् २७ यश्चसर्वान्वशेचक्रेलोकपालान्धनुर्धरः ॥ तेनवोविजयेनाजौपांडवाअभ्ययुंजत २८ यःप्रतीचींदिशंचक्रेवशेम्लेच्छगणायुताम् ॥ सतत्रनकुलोयोद्धाचित्रयोधीव्यवस्थितः २९ तेनवोदर्शनीयेनवीरेणातिधनुर्भृता ॥ माद्रीपुत्रेणकौरव्यपांडवाअभ्ययुंजत ३० यःकाशीनंगमगधान्कालिंगांश्चयुधाऽजयत् ॥ तेनवःसहदेवेनपांडवाअभ्ययुंजत ॥ ३१ यस्यवीर्येणसदृशाश्चत्वारोभुविमानवाः ॥ अश्वत्थामाधृष्टकेतूरुक्मीप्रद्युम्नएवच ३२ तेनवःसहदेवेनयुद्धंराजन्महात्ययम् ॥ यवीयसानृवीरेणमाद्रीनंदिकरेणच ३३ तपश्चचारयाघोरंकाशिकन्यापुरासती ॥ भीष्मस्यवधमिच्छंतीप्रेत्यापिभरतर्षभ ३४ पांचालस्यसुताजज्ञेदैवाच्चसपुनःपुमान् ॥ स्त्रीपुंसोःपुरुषव्याघ्रयःसवेदगुणागुणान् ३५ यःकलिंगान्समापेदेपांचाल्योयुद्धदुर्मदः ॥ शिखंडिनावःकुरवःकृतास्त्रेणाभ्ययुंजत ३६ यंयक्षःपुरुषंचक्रेभीष्मस्यनिधनेच्छया ॥ महेष्वासेनरौद्रेणपांडवाअभ्ययुंजत ३७ महेष्वासाराजपुत्राभ्रातरःपंचकेकयाः ॥ आमुक्तकवचाःशूरास्तैश्चवस्तेऽभ्ययुंजत ३८ योदीर्घबाहुःक्षिप्रास्त्रोधृतिमान्सत्यविक्रमः ॥ तेनवोवृष्णिवीरेणयुयुधानेनसंगरः ३९ यआसीच्छरणंकालेपांडवानांमहात्मनाम् ॥ रणेतेनविराटेनभवितावःसमागमः ४० यःसकाशिपतीराजावाराणस्यांमहारथः ॥ सतेषामभवद्योद्धातेनवस्तेऽभ्ययुंजत ४१ शिशुभिर्दुर्जयैःसंख्येद्रौपदेयैर्महात्माभिः ॥ आशीविषसमस्पर्शैःपांडवाअभ्युयंजत ४२ यःकृष्णसदृशोवीर्येयुधिष्ठिरसमोदमे ॥ तेनाभिमन्युनासंख्येपांडवाअभ्ययुंजत ४३ यश्चैवाप्रतिमोवीर्येधृष्टकेतुर्महायशाः ॥ दुःसहःसमरेकुद्धःशैशुपालिर्महारथः ४४

३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४

४५ । ४६ करकर्षेणकरकर्षसंज्ञेनभ्रात्रा ४७ । ४८ । ४९ । ५० ॥ इतिउ० नी० भा० भावदीपे पंचाशत्तमोऽध्यायः ॥ ५० ॥ ॥ ७ ॥ ॥ सर्वइति १

तेनवश्चेदिराजेनपांडवाअभ्ययुंजत ॥ अक्षौहिण्यापरिवृतःपांडवान्योऽभिसंश्रितः ४५ यःसंश्रयःपांडवानांदेवानामिववासवः ॥ तेनवोवासुदेवेनपांडवाअ भ्ययुंजत ४६ तथाचेदिपतेर्भ्राताशरभोभरतर्षभ ॥ करकर्षेणसहितस्ताभ्यांवस्तेऽभ्ययुंजत ४७ जारासंधिःसहदेवोजयत्सेनश्चतावुभौ ॥ युद्धेप्रतिरथेवी रौपांडवार्थेव्यवस्थितौ ४८ द्रुपदश्चमहातेजाबलेनमहतावृतः ॥ त्यक्तात्मापांडवार्थाययोत्स्यमानोव्यवस्थितः ४९ एतेचान्येचबहवःप्राच्योदीच्यामहीक्षि तः ॥ शतशोयानुपाश्रित्यधर्मराजोव्यवस्थितः ५० ॥ इतिश्रीमहाभारतेउद्योगपर्वणियानसंधिपर्वणिसंजयवाक्येपंचाशत्तमोऽध्यायः ॥ ५० ॥ ॥ ७ ॥

॥ धृतराष्ट्रउवाच ॥ सर्वएतेमहोत्साहायेत्वयापरिकीर्तिताः ॥ एकतस्त्वेवतेसर्वेसमेताभीमएकतः १ भीमसेनाद्धिमेभूयोभयंसंजायतेमहत् ॥ क्रुद्धादमर्षणा त्तातव्याघ्रादिवमहारुरोः २ जागर्मिरात्रयःसर्वादीर्घमुष्णंचनिःश्वसन् ॥ भीतोवृकोदरात्तातसिंहात्पशुरिवापरः ३ नहितस्यमहाबाहोःशक्रप्रतिमतेजसः ॥ सैन्येऽस्मिन्प्रतिपश्यामियएनंविषहेद्युधि ४ अमर्षणश्चकौंतेयोदृढवैरश्चपांडवः ॥ अनर्महासीसोन्मादस्तिर्यक्प्रेक्षीमहास्वनः ५ महावेगोमहोत्साहोमहाबा हुर्महाबलः ॥ मंदानांममपुत्राणांयुद्धेनांतंकरिष्यति ६ उरुग्राहगृहीतानांगदांबिभ्रद्वृकोदरः ॥ कुरूणामृषभोयुद्धेदंडपाणिरिवांतकः ७ अष्टास्रिमायसींघो रांगदांकांचनभूषणाम् ॥ मनसाऽहंप्रपश्यामिब्रह्मदंडमिवोद्यतम् ८ यथामृगाणांयूथेषुसिंहोजातबलश्चरेत् ॥ मामकेषुतथाभीमोबलेषुविचरिष्यति ९ सर्वे षांममपुत्राणांसएकःक्रूरविक्रमः ॥ बह्वाशीविप्रतीपश्चबाल्येऽपिरभसःसदा १० उद्वेपतेमेहृदयंयेमेदुर्योधनादयः ॥ बाल्येऽपितेनयुद्धयंतोवारणेनेवमर्दिताः ११ तस्यवीर्येणसंक्लिष्टानित्यमेवसुताामम ॥ सएवहेतुर्भेदस्यभीमोभीमपराक्रमः १२ ग्रसमानमनीकानिनरवारणवाजिनाम् ॥ पश्यामीवाग्रतोभीमंक्रोधमूर्च्छि तमाहवे १३ अस्त्रेद्रोणार्जुनसमंवायुवेगसमंजवे ॥ महेश्वरसमंक्रोधेकोहन्याद्भीममाहवे १४ संजयाचक्ष्वमेशूरंभीमसेनममर्षणम् ॥ अतिलाभंतुमन्येहंयत्तेनरिपुघा तिना १५ तदैवनहताःसर्वेपुत्राममनस्विना ॥ येनभीमबलायक्षाराक्षसाश्चपुराहताः १६ कथंतस्यरणेवेगंमानुषःप्रसहिष्यति ॥ नसजातुवशेतस्थौममबाल्येऽ पिसंजय १७ किंपुनर्ममदुष्पुत्रैःक्लिष्टःसंप्रतिपांडवः ॥ निष्ठुरोरोषणोऽत्यर्थंभज्येतापिनसंनमेत् ॥ तिर्यक्प्रेक्षीसंहतभ्रूःकथंशाम्येद्वृकोदरः १८ शूरस्तथाऽप्रतिबलो गौरस्तालइवोन्नतः ॥ प्रमाणतोभीमसेनःप्रादेशेनाधिकोऽर्जुनात् १९ जवेनवाजिनोऽत्येतिबलेनात्येतिकुंजरान् ॥ अव्यक्तजल्पीमध्वक्षोमध्यमःपांडवोबली २०

महारुरोः महामृगस्य २ । ३ । ४ अनर्महासी नर्मवृथोपहासः तदन्योहासः सत्यमेवकृत्वाशत्रूनुपहसतीत्यर्थः ५ । ६ उरुग्राहः महानिर्बंधस्तेनगृहीतानांवशीकृतानाम् ७ ८ । ९ रभसः वेगवान् १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ संहते क्रोधेनग्रथिते भ्रुवौयस्यसंहतभ्रूः १८ । १९ । २०

इतीति पुरापुराणांनिकटेऽतिदृढमितिवार्थः । 'पुरापुराणेऽतिदृढे'इतिमेदिनी । 'पुराभाविपुराणयोः । प्रबंधेनिकटेऽतीते'इतिविश्वलोचनः २१ । २२ । २३ निष्कर्णाअवक्रांतिर्यग्भाववही

इतिबाल्येश्रुतःपूर्वंमयाव्यासमुखात्पुरा ॥ रूपतोवीर्यतश्चैवयाथातथ्येनपांडवः २१ आयसेनसदंडेनरथान्नागान्नराह्वयान् ॥ हनिष्यतिरणेक्रुद्धोरौद्रःक्रूरपराक्रमः २२ अमर्षीनित्यसंरब्धोभीमःप्रहरतांवर ॥ मयाताताप्रतीपानिकुर्वन्पूर्वंविमानितः २३ निष्कर्णामायसींस्थूलांसुपार्श्वांकांचनींगदाम् ॥ शतघ्नींशतनिर्ह्रादांकथंशक्ष्यंतिमेसुताः २४ अपारमप्लवागाधंसमुद्रंशरवेगनम् ॥ भीमसेनमयंदुर्गंतातमंदास्तितीर्षवः २५ क्रोशतोमेनशृण्वंतिबालाःपंडितमानिनः ॥ विषमंनहिमन्यंतेप्रपातंमधुदर्शिनः २६ संयुगंयेगमिष्यंतिनररूपेणमृत्युना ॥ नियतंचोदिताधात्रासिंहेनेवमहामृगाः २७ शैक्यांतातचतुष्किष्कुंषडस्रिममितौजसम् ॥ प्रहितांदुःखसंस्पर्शांकथंशक्ष्यंतिमेसुताः २८ गदांभ्रामयतस्तस्यभिंदतोहस्तिमस्तकान् ॥ सृक्किणीलेलिहानस्यबाष्पमुत्सृजतोमुहुः २९ उद्दिश्यनागान्पततःकुर्वतोभैरवान्रवान् ॥ प्रतीपंपततोमत्तान्कुंजरान्प्रतिगर्जतः ३० विगाह्यरथमार्गेषुवरानुद्दिश्यनिघ्नतः ॥ अग्नेःप्रज्वलितस्येवअपिमुच्येतमेप्रजा ३१ वीथींकुर्वन्महाबाहुर्द्रावयन्ममवाहिनीम् ॥ नृत्यन्निवगदापाणिर्युगांतंदर्शयिष्यति ३२ प्रभिन्नइवमातंगःप्रभंजन्पुष्पितान्द्रुमान् ॥ प्रवेक्ष्यतिरणेसेनांपुत्राणांमेवृकोदरः ३३ कुर्वन्रथान्विपुरुषान्विसारथिहयध्वजान् ॥ आरुजन्पुरुषव्याघ्रोरथिनःसादिनस्तथा ३४ गंगावेगइवानूपांस्तीरजान्विविधान्द्रुमान् ॥ प्रभंक्ष्यतिरणेसेनांपुत्राणांममसंजय ३५ दिशोनूनंगमिष्यंतिभीमसेनभयार्दिताः ॥ ममपुत्राश्चभृत्याश्चराजानश्चैवसंजय ३६ येनराजामहावीर्यःप्रविश्यांतःपुरंपुरा ॥ वासुदेवसहायेनजरासंधोनिपातितः ३७ कृत्स्नेयंपृथिवीदेवीजरासंधेनधीमता ॥ मागधेंद्रेणबलिनावशेकृत्वाप्रतापिता ३८ भीष्मप्रतापात्कुरवोनयेनांधकवृष्णयः ॥ यन्नतस्यवशेजग्मुःकेवलंदैवमेवतत् ३९ सगत्वापांडुपुत्रेणतरसाबाहुशालिना ॥ अनायुधेनवीरेणनिहतःकिंततोऽधिकम् ४० दीर्घकालसमासक्तंविषमाशीविषोयथा ॥ समोक्ष्यतिरणेतेजःपुत्रेषुममसंजय ४१ महेंद्रइववज्रेणदानवान्देवसत्तमः ॥ भीमसेनोगदापाणिःसूदयिष्यतिमेसुतान् ४२ अविषह्यमनावार्यंतीव्रवेगपराक्रमम् ॥ पश्यामीवातितास्राक्षमापतंतंवृकोदरम् ४३ अगदस्याप्यधनुषोविरथस्यविवर्मणः ॥ बाहुभ्यांयुद्धचमानस्यकस्तिष्ठेदग्रतःपुमान् ४४ भीष्मोद्रोणश्चविप्रोऽयंकृपःशारद्वतस्तथा ॥ जानंत्येतेयथैवाहंवीर्यज्ञस्तस्यधीमतः ४५ आर्यव्रतंतुजानंतःसंगरांतंविधित्सवः ॥ सेनामुखेषुस्थास्यंतिमामकानांनरर्षभाः ४६ बलीयःसर्वतोदिष्टंपुरुषस्यविशेषतः ॥ पश्यन्नपिजयंतेषांनियच्छामियत्सुतान् ४७ तेपुराणंमहेष्वासामार्गमैंद्रंसमास्थिताः ॥ त्यक्ष्यंतितुमुलेप्राणान्रक्षंतःपार्थिवंयशः ४८

नांशतनिर्ह्रादांमहाशब्दवतीं २४ । २५ । २६ । २७ शैक्यांशिक्यस्थांअधःपतनेनभूमिविदारणशंकयाशिक्येस्थापितां २८ । २९ । ३० । ३१ वीथींरथमार्गं ३२ । ३३ । ३४ अनूपान्सजलदेशेस्थितान् ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ अगदस्यगदाहीनस्य ४४ । ४५ संगरेअंतंस्वस्यनाशंस्थास्यंतिभीष्मादयः ४६ । ४७ ऐंद्रंमार्गंस्वर्गमार्गं ४८

४९ अपचितिंनिष्कृतिं ५० । ५१ विक्रुष्टंउच्चैरुक्तं ५२ एतत्प्रभाविदुःखंअतिबलंज्ञानेनअनिवार्यं ५३ निर्मुक्ताःजीवन्मुक्ताः ५४ ।५५ क्षमंशक्यं उत्तरंउत्तरकार्यप्रतीकारः ५६।५७ पर्यायधर्मः विपरीतधर्मः प्रधिर्नेमिः अस्यकालवशस्य तृतीयार्थेषष्ठी ५८ । ५९ । ६० । ६१ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेएकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ७ ॥ यस्येति सधनंजयः

यथैषांमामकास्ताततथैषांपांडवाअपि ॥ पौत्राभीष्मस्यशिष्याश्चद्रोणस्यचकृपस्यच ४९ येत्वस्मदाश्रयंकिंचिद्दत्तमिष्टंचसंजय ॥ तस्यापचितिमार्यत्वात्कर्तारःस्थविरास्त्रयः ५० आददानस्यशस्त्रंहिक्षत्रधर्मंपरीप्सतः ॥ निधनंक्षत्रियस्याजौवरमेवाहुरुत्तमम् ५१ सवैशोचामिसर्वान्वैयेयुयुत्संतिपांडवैः ॥ विक्रुष्टंविदुरेणादौतदेतद्भयमागतम् ५२ नतुमन्येविघातायज्ञानंदुःखस्यसंजय ॥ भवत्यतिबलंह्येतज्ज्ञानस्याप्युपघातकम् ५३ ऋषयोह्यपिनिर्मुक्ताःपश्यंतोलोकसंग्रहान् ॥ सुखैर्भवंतिसुखिनस्तथादुःखेनदुःखिताः ५४ किंपुनर्मोहमासक्तस्तत्रतत्रसहस्रधा ॥ पुत्रेषुराज्यदारेषुपौत्रेष्वपिचबंधुषु ५५ संशयेतुमहत्यस्मिन्किंनुमेक्षममुत्तरम् ॥ विनाशंह्येवपश्यामिकुरूणामनुचिंतयन् ५६ द्यूतप्रमुखमाभातिकुरूणांव्यसनंमहत् ॥ मंदेनैश्वर्यकामेनलोभात्पापमिदंकृतम् ५७ मन्येपर्यायधर्मोऽयंकालस्यात्यंतगामिनः ॥ चक्रेप्रधिरिवासक्तोनास्यशक्यंपलायितुम् ५८ किंनुकुर्यांकथंकुर्यांक्वनुगच्छामिसंजय ॥ एतेनश्यंतिकुरवोमंदाःकालवशंगताः ५९ अवशोऽहंतदाताातपुत्राणांनिहतेशते ॥ श्रोष्यामिनिनदंस्त्रीणांकथंमांमरणंस्पृशेत् ६० यथानिदाघेज्वलनःसमिद्धोदहेत्कक्षंवायुनाचोद्यमानः ॥ गदाहस्तःपांडवोवैतथैवहंतामदीयान्सहितोऽर्जुनेन ६१ ॥ इतिश्रीमहाभारतेउद्योगपर्वणियानसंधिपर्वणिधृतराष्ट्रवाक्येएकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ॥

॥ धृतराष्ट्रउवाच ॥ यस्यवैनानृतावाचःकदाचिदनुशुश्रुम ॥ त्रैलोक्यमपितस्यस्याद्योद्धायस्यधनंजयः १ तस्यैववचनपश्यामियुधिगांडीवधन्वनः ॥ अनिशंचिंतयानोऽपियःप्रतीयाद्रथेनतम् २ अस्यतःकर्णिनालीकान्मार्गणान्हृदयच्छिदः ॥ प्रत्येतानसमःकश्चिद्युधिगांडीवधन्वनः ३ द्रोणकर्णौप्रतीयातांयदिर्वीरौनरर्षभौ ॥ कृतास्त्रौबलिनांश्रेष्ठौसमरेष्वपराजितौ ४ महान्स्यात्संशयोलोकेनत्वस्तिविजयोमम ॥ घृणीकर्णःप्रमादीचआचार्यःस्थविरोगुरुः ५ समर्थोबलवान्पार्थोदृढधन्वाजितक्लमः ॥ भवेत्सुतुमुलंयुद्धंसर्वशोऽप्यपराजयः ६ सर्वेह्यस्त्रविदःशूराःसर्वेप्राप्तामहद्यशः ॥ अपिसर्वामरैश्वर्यंत्यजेयुर्नपुनर्जयम् ७ वधेनूनंभवेच्छांतिस्तयोर्वाफाल्गुनस्यच ॥ नतुहंताऽर्जुनस्यास्तिजेताचास्यनविद्यते ८ मन्युस्तस्यकथंशाम्येन्मंदान्प्रतियउत्थितः ॥ अन्येऽप्यस्त्राणिजानंतिजीयंतेचजयंतिच ९ एकांतविजयस्त्वेवश्रूयतेफाल्गुनस्यह ॥ त्रयस्त्रिंशत्समाऽऽहूयखांडवेग्निमतर्पयत् १० जिगायचसुरान्सर्वान्नास्यविद्मःपराजयम् ॥ यस्ययंताहृषीकेशःशीलवृत्तसमोयुधि ११ ध्रुवस्तस्यजयस्तातयथेंद्रस्यजयस्तथा ॥ कृष्णावेकरथेयत्तावधिज्यंगांडिवंधनुः १२

यस्ययोद्धेतितच्छब्दाध्याहारेणपूर्णीयम् १ तस्यतंप्रतियोद्धारंनपश्यामि यस्तंप्रतीयादित्यध्याहृत्ययोज्यम् २ । ३ । ४ घृणीकृपावान् भीष्मादिषु प्रमादीअंतेविद्यांनस्मरिष्यतीतिभावः ५ अपराजयस्तेषामितिशेषः ६ । ७ तयोःकर्णद्रोणयोर्वधेअस्मदीयानांशांतिः फाल्गुनस्यवधेतुपरेषामित्यर्थः ८ । ९ त्रयस्त्रिंशत्समाःवर्षाणिअतीताइत्यर्थः संधिरार्षः १० । ११ । १२

१२ । १४ अस्ताः क्षिप्ताः १५ । १६ । १७ । १८ । १९ कुरूणांप्रकारान् छेदभेदपलायनादीनावसथेगृहे श्रोताऽस्मिश्रोष्यामि २० ॥ इतिउ० नी०भा०भा०द्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥
यथैवेति अभिसराःपुरोगाः १ । २ जगतःस्रष्टाकृष्णः ३ । ४ । ५ । ६ जालंअस्त्रं अंतरासैन्यमध्ये ७ । ८ युद्धयोजकैःयुद्धोद्योगिभिः ९ नैभृत्येनमंत्रगुप्त्या १० । ११ तंअभिमुखः

युगपत्त्रीणितेजांसिसमेतान्यनुशुश्रुम ॥ नैवास्तिनोधनुस्तादृक्नयोद्धानचसारथिः १३ तच्चमंदानजानंतिदुर्योधनवशानुगाः ॥ शेषयेद्दशनिर्दीप्तोविपतन्मूर्ध्निसंजय १४ नतुशेषंशरास्तातकुर्युरस्ताःकिरीटिना ॥ अपिचास्यत्त्रिवाभातिनिघ्नन्निवधनंजयः १५ उद्धरन्निवकायेभ्यःशिरांसिशरवृष्टिभिः ॥ अपिबाणमयंतेजःप्रदीप्तमिवसर्वतः १६ गांडीवोत्थंदहेताजौपुत्राणांममवाहिनीम् ॥ अपिसारथघोषेणभयार्तासव्यसाचिनः १७ वित्रस्ताबहुधासेनाभारतीप्रतिभातिमे ॥ यथाकक्षंमहानग्निःप्रदहेत्सर्वतश्चरन् ॥ महार्चिरनिलोद्धूतस्तद्वद्धक्ष्यतिमामकान् १८ यदोद्वमन्निशितान्बाणसंघांस्तानाततायीसमरेकिरीटी ॥ सृष्टोऽतकःसर्वहरोविधात्रायथाभवेत्तद्वदपारणीयः १९ यदाह्यभीक्ष्णंसुबहून्प्रकारान्श्रोताऽस्मितानावसथेकुरूणाम् ॥ तेषांसमंताच्चतथारणाग्रेक्षयःकिलायंभरतानुपैति २० ॥ इतिश्रीमहाभारतेउद्योगपर्वणियानसंधिपर्वणिधृतराष्ट्रवाक्येद्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ धृतराष्ट्रउवाच ॥ यथैवपांडवाःसर्वेपराक्रांताजिगीषवः ॥ तथैवाभिसरास्तेषांत्यक्तात्मानोजयेधृताः १ त्वमेवहिपराक्रांतानाचक्षीथाःपरान्मम ॥ पंचालान्केकयान्मत्स्यान्मागधान्वत्सभूमिपान् २ यश्चसेंद्रानिमांल्लोकानिच्छन्कुर्याद्वशेबली ॥ सस्रष्टाजगतःकृष्णःपांडवानांजयेधृतः ३ समस्तामर्जुनाद्विद्यांसात्यकिःक्षिप्रमाप्तवान् ॥ शैनेयःसमरेस्थाताबीजवत्प्रवपन्शरान् ४ धृष्टद्युम्नश्चपांचाल्यःक्रूरकर्मामहारथः ॥ मामकेषुरणंकर्ताबलेषुपरमास्त्रवित् ५ युधिष्ठिरस्यचक्रोधादर्जुनस्यचविक्रमात् ॥ यमाभ्यांभीमसेनाच्चभयंमेतातजायते ६ अमानुषंमनुष्येंद्रैर्जालंविततमंतरा ॥ नमेसैन्यास्तरिष्यंतिततःक्रोशामिसंजय ७ दर्शनीयोमनस्वीचलक्ष्मीवान्ब्रह्मवर्चसी ॥ मेधावीसुकृतप्रज्ञोधर्मात्मापांडुनंदनः ८ मित्रामात्यैःसुसंपन्नःसंपन्नोयुद्धयोजकैः ॥ भ्रातृभिःश्वशुरैर्वीरैरुपपन्नोमहारथैः ९ धृत्याचपुरुषव्याघ्रोनैभृत्येनचपांडवः ॥ अनृशंसोवदान्यश्चह्रीमान्सत्यपराक्रमः १० बहुश्रुतःकृतात्माचवृद्धसेवीजितेंद्रियः ॥ तंसर्वगुणसंपन्नंसमिद्धमिवपावकम् ११ तपंतमभिकोमंदःपतिष्यातिपतंगवत् ॥ पांडवाग्निमनावार्यंमुमूर्षुर्नष्टचेतनः १२ तनुरुद्धःशिखीराजामिथ्योपचरितोमया ॥ मंदानांममपुत्राणांयुद्धेनांतंकरिष्यति १३ तैरयुद्धंसाधुमन्येकुरवस्तन्निबोधत ॥ युद्धेविनाशःकृत्स्नस्यकुलस्यभविताध्रुवम् १४ एषामेपरमाबुद्धिर्ययाशाम्यतिमेमनः ॥ यदित्वयुद्धमिष्टंवोवयंशांत्यैयतामहे १५ नतुनःक्लिश्यमानानामुपेक्षेतयुधिष्ठिरः ॥ जुगुप्सतिह्यधर्मेणमामेवोद्दिश्यकारणम् १६ ॥ इतिश्रीमहाभारतेउद्योगपर्वणियानसंधिपर्वणिधृतराष्ट्रवाक्येत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥

पतिष्यति १२ तनुरुच्चइतिपाठेऽपितनुःराज्यापहारादल्पः स्वतस्तुउच्चएव शिखीदह्निरिववह्निः १३ । १४ । १५ क्लिश्यमानानांकर्मणिषष्ठी अस्मान्नउपेक्षेतमामेवअधर्मेणकलहस्य कारणं उद्दिश्यजुगुप्सतिनिंदति सकथंप्रार्थितःसन्कलहंकरिष्यतीतिभावः १६ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ ७ ॥ ॥ ७ ॥

एवामिति १ । २ एषकालः एषाकलनाबुद्धिस्तवनैवस्थास्याति ३ प्रणिहितात्मवान् सावधानचित्तः ४ स्मयसेतुष्यसे ५ । ६ । ७ । ८ । ९ । १० । ११ अस्यतांबाणान्नाक्षिपतांमध्ये १२ । १३

॥ संजयउवाच ॥ एवमेतन्महाराजयथावदसिभारत ॥ युद्धेविनाशःक्षत्रस्यगांडीवेनप्रदृश्यते १ इदंतुनाभिजानामितवधीरस्यनित्यशः ॥ यत्पुत्रवशमाग
च्छेस्तत्त्वज्ञःसव्यसाचिनः २ नैषकालोमहाराजतवशश्वत्कृतागसः ॥ त्वयाह्येवादितःपार्थानिकृताभरतर्षभ ३ पिताश्रेष्ठःसुहृद्यश्वसम्यक्प्रणिहितात्म
वान् ॥ आस्थेयंहिहितंतेननद्रोग्धागुरुरुच्यते ४ इदंजितमिदंलब्धमितिश्रुत्वापराजितान् ॥ द्यूतकालेमहाराजस्मयसेस्मकुमारवत् ५ पुरुषाण्युच्यमा
नांश्वपुरापार्थानुपेक्षसे ॥ कृत्स्नंराज्यंजयंतीतिप्रपातंनानुपश्यसि ६ पित्र्यंराज्यंमहाराजकुरवस्तेसजांगलाः ॥ अथवीरैर्जितामुर्वीमखिलांप्रत्यपद्यथाः ७
बाहुवीर्यार्जिताभूमिस्तवपार्थैर्निवेदिता ॥ मयेदंकृतमित्येवमन्यसेराजसत्तम ८ ग्रस्तान्गंधर्वराजेनमज्जतोह्यप्लवेंऽभसि ॥ आनिनायपुनःपार्थःपुत्रांस्तेरा
जसत्तम ९ कुमारवच्चस्मयसेद्यूतेविनिकृतेषुयत् ॥ पांडवेषुवनेराजन्प्रव्रजत्सुपुनःपुनः १० प्रवर्षतःशरव्रातानर्जुनस्यशितान्बहून् ॥ अप्यर्णवाविशुष्येयुः
किंपुनर्मांसयोनयः ११ अस्यतांफाल्गुनःश्रेष्ठोगांडीवंधनुषांवरम् ॥ केशवःसर्वभूतानामायुधानांसुदर्शनम् १२ वानरोरोचमानश्वकेतुःकेतुमतांवरः ॥ ए
वमेतानिसरथोबहून्श्वेतहयोरणे १३ क्षपयिष्यतिनोराजन्कालचक्रमिवोद्यतम् ॥ तस्याद्यवसुधाराजन्निखिलाभरतर्षभ १४ यस्यभीमार्जुनौयोधौसराजा
राजसत्तम ॥ तथाभीमहतप्रायांमज्जंतींतववाहिनीं १५ दुर्योधनमुखादृष्ट्वाक्षयंयास्यंतिकौरवाः ॥ नभीमार्जुनयोर्भीतालप्स्यंतेविजयंविभो १६ तवपुत्रा
महाराजराजानश्चानुसारिणः ॥ मत्स्यास्त्वामद्यनार्चंतिपंचालाश्वसकेकयाः १७ शाल्वेयाःशूरसेनाश्वसर्वेत्वामवजानते ॥ पार्थंह्येतेगताःसर्वेवीर्यज्ञास्तस्य
धीमतः १८ भक्त्याह्यस्यविरुद्ध्यंतेतवपुत्रैःसदैवते ॥ अनर्हानेवतुवधेधर्मयुक्तान्विकर्मणा १९ योऽक्लेशयत्पांडुपुत्रान्योविद्वेष्ट्यधुनाऽपिवै ॥ सर्वोपायै
र्नियंतव्यःसानुगःपापपूरुषः २० तवपुत्रोमहाराजनानुशोचितुमर्हसि ॥ द्यूतकालेमयाचोक्तंविदुरेणचधीमता २१ यदिदंतेविलपितंपांडवान्प्रतिभारत ॥
अनीशेनेवराजेंद्रसर्वमेतन्निरर्थकम् २२ ॥ इतिश्रीमहाभारतेउद्योगपर्वणियानसंधिपर्वणिसंजयवाक्येचतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥ ॥ ७ ॥ ॥
दुर्योधनउवाच ॥ नभेतव्यंमहाराजनशोच्याभवतावयम् ॥ समर्थाःस्मपरान्जेतुंबलिनःसमरेविभो १ वनेप्रव्राजितान्पार्थान्यदाऽऽयान्मधुसूदनः ॥ महता
बलचक्रेणपरराष्ट्रावमर्दिना २ केकयाधृष्टकेतुश्वधृष्टद्युम्नश्वपार्षतः ॥ राजानश्वान्वयुःपार्थान्बहवोऽन्येऽनुयायिनः ३ इंद्रप्रस्थस्यचादूरात्समाजग्मुर्महा
रथाः ॥ व्यगर्हयंश्वसंगम्यभवंतंकुरुभिःसह ४ तेयुधिष्ठिरमासीनमजिनैःप्रतिवासितम् ॥ कृष्णप्रधानाःसंहत्यपर्युपासंतभारत ५ प्रत्यादानंचराज्यस्य
कार्यमूचुर्नराधिपाः ॥ भवतःसानुबंधस्यसमुच्छेदंचिकीर्षवः ६

१४ भीमेनभीमसेनेनहतप्रायां १५ । १६ । १७ । १८ । १९ । २० । २१
२२ ॥ इतिउ० नी० भा० भा० चतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥ ॥ नभेतव्यमिति १ यदाऽऽयात् आगतस्तदाभीष्मद्रोणकृपाः मयाउक्ताइतिषष्ठेनान्वयः १ । २ । ३ । ४ । ५ । ६

७ । ८ ममस्तसंबंधिनः ९ । १० प्रणिपातोवासंध्यर्थः पलायनंवालज्जया ११ । १२ । १३ प्रणिपातेदोषोवंशक्षयकृतोनास्ति किंतुसंधिरेवभवति तथापिममयुद्धमेवरोचतइत्याशयेनाह पितरमिति १४ हेनरोत्तमधृतराष्ट्र तत्रपुत्रैःअस्माभिः १५ प्रतिकरिष्यंति प्रतियातयिष्यंति १६ ततइति पूर्ववृत्तांतकथनम् १७ नःअस्माभिःपरेचेत्यद्यपि अभिद्रुग्धाःद्रोहविषयंनीताःत

श्रुत्वाचैवंमयोक्तास्तुभीष्मद्रोणकृपास्तदा ॥ ज्ञातिक्षयभयाद्राजन्भीतेनभरतर्षभ ७ ततःस्थास्यंतिसमयेपांडवाइतिमेमतिः ॥ समुच्छेदंहिनःकृत्स्नंवासुदेवश्चिकीर्षति ८ ऋतेचविदुरात्सर्वेयूयंवध्यामतामम ॥ धृतराष्ट्रस्तुधर्मज्ञोनवध्यःकुरुसत्तमः ९ समुच्छेदंचकृत्स्नंनःकृत्वातातजनार्दनः ॥ एकराज्यंकुरूणांस्मचिकीर्षतियुधिष्ठिरे १० तत्रकिंप्राप्तकालंनःप्रणिपातःपलायनम् ॥ प्राणान्वासंपरित्यज्यप्रतियुद्ध्यामहेपरान् ११ प्रतियुद्धेतुनियतःस्यादस्माकंपराजयः ॥ युधिष्ठिरस्यसर्वेहिपार्थिवावशवर्तिनः १२ विरक्तराष्ट्राश्चवयंमित्राणिकुपितानिनः ॥ धिक्कृताःपार्थिवैःसर्वैःस्वजनेनचसर्वशः १३ प्रणिपातेनदोषोस्तिसंधिर्नःशाश्वतीःसमाः ॥ पितरंत्वेवशोचामिप्रज्ञानेत्रंजनाधिपम् १४ मत्कृतेदुःखमापन्नंक्लेशंप्राप्तमनंतकम् ॥ कृतंहितवपुत्रैश्चपरेषामवरोधनम् ॥ मत्प्रियार्थंपुरैवैतद्विदितंतेनरोत्तम १५ तेराज्ञोधृतराष्ट्रस्यसामात्यस्यमहारथाः ॥ वैरंप्रतिकरिष्यंतिकुलोच्छेदेनपांडवाः १६ ततोद्रोणोऽब्रवीद्भीष्मःकृपोद्रौणिश्चभारत ॥ मत्वामांमहतींचिंतामास्थितंव्यथितेंद्रियम् १७ अभिद्रुग्धाःपरेचेन्नोनभेतव्यंपरंतप ॥ असमर्थाःपरेजेतुमस्मान्युधिसमास्थितान् १८ एकैकशःसमर्थाःस्मोविजेतुंसर्वपार्थिवान् ॥ आगच्छंतुविनेष्यामोदर्पमेषांशितैःशरैः १९ पुरैकेनहिभीष्मेणविजिताःसर्वपार्थिवाः ॥ मृतेपितर्यतिक्रुद्धोरथेनैकेनभारत २० जघानसुबहूंस्तेषांसंरब्धःकुरुसत्तमः ॥ ततस्तेशरणंजग्मुर्देवव्रतमिमंभयात् २१ सभीष्मःसुसमर्थोऽयमस्माभिःसहितोरणे ॥ परान्विजेतुंतस्मात्तेव्येतुभीर्भरतर्षभ २२ इत्येषांनिश्चयोह्यासीत्तत्कालेऽमिततेजसाम् ॥ पुरापरेषांपृथिवीकृत्स्नाऽऽसीद्वशवर्तिनी २३ अस्मान्पुनरमीनाद्यसमर्थाजेतुमाहवे ॥ छिन्नपक्षाःपरेह्यद्यवीर्यहीनाश्चपांडवाः २४ अस्मत्संस्थाचपृथिवीवर्ततेभरतर्षभ ॥ एकार्थाःसुखदुःखेषुसमानीताश्चपार्थिवाः २५ अप्यग्निंप्रविशेयुस्तेसमुद्रंवापरंतप ॥ मदर्थंपार्थिवाःसर्वेतद्विद्धिकुरुसत्तम २६ उन्मत्तमिवचापित्वांप्रहसंतीहदुःखितम् ॥ विलपंतंबहुविधंभीतंपरविकत्थने २७ एषांह्येकैकशोराज्ञांसमर्थःपांडवान्प्रति ॥ आत्मानंमन्यतेसर्वोव्येतुतेभयमागतम् २८ जेतुंसमग्रांसेनांमेवासवोऽपिनशक्नुयात् ॥ हंतुमक्षय्यरूपेयंब्रह्मणोपिस्वयंभुवः २९ युधिष्ठिरःपुरंहित्वापंचग्रामान्सयाचति ॥ भीतोहिमामकात्सैन्यात्प्रभावाच्चैवमेविभो ३० समर्थंमन्यसेयच्चकुंतीपुत्रंवृकोदरम् ॥ तन्मिथ्यानहिमेकृत्स्नंप्रभावंवेत्सिभारत ३१ मत्समोहिगदायुद्धेपृथिव्यांनास्तिकश्चन ॥ नासीत्कश्चिदतिक्रांतोभवितानचकश्चन ३२ युक्तोदुःखोषितश्चाहंविद्यापारगतस्तथा ॥ तस्मान्नभीमान्नान्येभ्योभयंमेविद्यतेक्वचित् ३३

थाऽपिनभेतव्यम् १८ । १९ । २० । २१ । २२ । २३ १४ समानीताः मयेतिशेषः २५ । २६ परविकत्थनेपरेषांगुणाख्याने २७ । २८ ब्रह्मणोऽपिअक्षय्यरूपाहंतुमशक्या २९ । ३० । ३१ । ३२ युक्तोऽभियोगवान् दुःखोषितःगुरुकुले ३३

उपवासंशिष्यत्वेनपर्यचरम् ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ पार्थिवीपृथ्वासंबंधिनी पार्थिवानांराज्ञांवा ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१

दुर्योधनसमोनास्तिगदायामितिनिश्चयः ॥ संकर्षणस्यभद्रंतेयत्तदैनमुपावसम् ३४ युद्धेसंकर्षणसमोबलेनाभ्यधिकोभुवि ॥ गदाप्रहारंभीमोमेनजातुविषहे
द्युधि ३५ एकंप्रहारंयंदद्यांभीमायरुषितोनृप ॥ सएवैनंनयेद्धोरःक्षिप्रंवैवस्वतक्षयम् ३६ इच्छेयंचगदाहस्तंराजन्द्रष्टुंवृकोदरम् ॥ सुचिरंप्रार्थितोह्येषमम
नित्यंमनोरथः ३७ गदयानिहतोह्याजौमयापार्थोवृकोदरः ॥ विशीर्णगात्रःपृथिवींपरासुःप्रपतिष्यति ३८ गदाप्रहाराभिहतोहिमवानपिपर्वतः ॥ सकृन्मया
विदीर्येतगिरिःशतसहस्रधा ३९ सचाप्येतद्विजानातिवासुदेवार्जुनौतथा ॥ दुर्योधनसमोनास्तिगदायामिमितिनिश्चयः ४० तत्तेवृकोदरमयंभयंव्येतुमहाह
वे ॥ व्यपनेष्याम्यहंह्येनंमाराजन्विमनाभव ४१ तस्मिन्मयाहतेक्षिप्रमर्जुनंबहवोरथाः ॥ तुल्यरूपाविशिष्टाश्चक्षेप्स्यंतिभरतर्षभ ४२ भीष्मोद्रोणःकृपोद्रौ
णिःकर्णोभूरिश्रवास्तथा ॥ प्राग्ज्योतिषाधिपःशल्यःसिंधुराजोजयद्रथः ४३ एकैकएषांशक्तस्तुहंतुंभारतपांडवान् ॥ समेतास्तुक्षणेनैतान्नेष्यंतियमसादनम् ॥
समग्रापार्थिवीसेनापार्थमेकंधनंजयम् ४४ कस्मादशक्तानिर्जेतुमितिहेतुर्नविद्यते ॥ शरव्रातैस्तुभीष्मेणशतशोनिचितोऽवशः ४५ द्रोणद्रौणिकृपैश्चैवगंतापा
र्थोयमक्षयम् ॥ पितामहोऽपिगांगेयःशांतनोरधिभारत ४६ ब्रह्मर्षिसदृशोजज्ञेदेवैरपिसुदुःसहः ॥ नहंताविद्यतेचापिराजन्भीष्मस्यकश्चन ४७ पित्राह्युक्तः
प्रसन्नेननाकामस्त्वंमरिष्यसि ॥ ब्रह्मर्षेश्चभरद्वाजाद्द्रोणोद्रोण्यामजायत ४८ द्रोणाज्जज्ञेमहाराजद्रौणिश्चपरमास्त्रवित् ॥ कृपश्चाचार्यमुख्योऽयंमहर्षेर्गौतमा
दपि ४९ शरस्तंबोद्भवःश्रीमानवध्यइतिमेमतिः ॥ अयोनिजास्त्रयोह्येतेपितामाताचमातुलः ५० अश्वत्थाम्नोमहाराजसचशूरःस्थितोमम ॥ सर्वएतेमहाराज
देवकल्पामहारथाः ५१ शक्रस्यापिव्यथांकुर्युःसंयुगेभरतर्षभ ॥ नैतेषामर्जुनःशक्तएकैकंप्रतिवीक्षितुम् ५२ सहितास्तुनरव्याघ्राहनिष्यंतिधनंजयम् ॥ भी
ष्मद्रोणकृपाणांचतुल्यःकर्णोमतोमम ५३ अनुज्ञातश्चरामेणमत्समोसीतिभारत ॥ कुंडलेरुचिरेचास्तांकर्णस्यसहजेशुभे ५४ तेशच्यर्थंमहेंद्रेणयाचितःस
परंतपः ॥ अमोघयामहाराजशक्त्यापरमभीमया ५५ तस्यशक्त्योपगूढस्यकस्माज्जीवेद्धनंजयः ॥ विजयोमेध्रुवंराजन्फलंपाणाविवाहितम् ५६ अभि
व्यक्तःपरेषांचकृत्स्नोभुविपराजयः ॥ अन्हाह्येकेनभीष्मोऽयंप्रयुतंहंतिभारत ५७ तत्समाश्चमहेष्वासाद्रोणद्रौणिकृपाअपि ॥ संशप्तकानांवृंदानिक्षत्रियाणां
परंतप ५८ अर्जुनंवयमस्मान्वानिहन्यात्कपिकेतनः ॥ तंचालमितिमन्यंतेसव्यसाचिवधेधृताः ५९ पार्थिवाःसभवांस्तेभ्योह्यकस्माद्व्यथतेकथम् ॥ भीम
सेनेचनिहतेकोऽन्योयुध्येतभारत ६० परेषांतन्ममाचक्ष्वयदिवेत्थपरंतप ॥ पंचतेभ्रातरःसर्वेधृष्टद्युम्नोऽथसात्यकिः ६१ परेषांसप्तयेराजन्योधाःसारंबलंम
तम् ॥ अस्माकंतुविशिष्टायेभीष्मद्रोणकृपादयः ६२

५२ । ५३ । ५४ शक्त्याःमूल्यभूतया ते कुंडलेयाचितः ५५ तस्यपुरतइतिशेषः ५६ । ५७ । ५८ तंअर्जुनम् ५९ तेभ्यःपांडवेभ्यः ६० । ६१ । ६२

६३ । ६४ । ६५ त्रिगुणतरूर्यंशेनहीनं त्रिगुणात्र्यंशेनाधिका ६६ । ६७ । ६८ विवित्सुःविज्ञातुमिच्छुः प्राप्तकालानिकर्माणि ६९ ॥ इतिउद्योप० नीलकंठीयेभारतभावदीपे पंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥ अक्षौहिणीरिति १ । २ मंत्रंअस्त्रप्रयोजकं जिज्ञासमानः परीक्षितुमिच्छन् ३ । ४ तथाअवेमीतिच्छेदः ५।६ भौमनोविश्वकर्मा धाताप्रजापतिः ७ तेत्वष्टृशक्रधातारः

द्रौणिर्विकर्तनःकर्णःसोमदत्तोऽथबाह्लिकः ॥ प्राग्ज्योतिषाधिपःशल्यआवंत्यौचजयद्रथः ६३ दुःशासनोदुर्मुखश्चदुःसहश्चविशांपते ॥ श्रुतायुश्चित्रसेनश्चपुरुमित्रोविविंशतिः ६४ शलोभूरिश्रवाश्चैवविकर्णश्चतवात्मजः ॥ अक्षौहिण्योहिमेराजन्दशैकाचसमाहृताः ६५ न्यूनाःपरेषांसत्तैवकस्मान्मेस्यात्पराजयः ॥ बलंत्रिगुणतोहीनंयोध्यंप्राहबृहस्पतिः ॥ परेभ्यस्त्रिगुणाचेयंममराजन्ननीकिनी ६६ गुणहीनंपरेषांचबहुपश्यामिभारत ॥ गुणोदयंबहुगुणमात्मनश्चविशांपते ६७ एतत्सर्वंसमाज्ञायबलाग्र्यंममभारत ॥ न्यूनतांपांडवानांचनमोहंगंतुमर्हसि ६८ इत्युक्त्वासंजयंभूयःपर्यपृच्छतभारत ॥ विविस्सुःप्राप्तकालानिज्ञात्वापरपुरंजयः ६९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणियानसंधिपर्वणिदुर्योधनवाक्येपंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥ दुर्योधनउवाच ॥ अक्षौहिणीःसप्तलब्ध्वाराजभिःसहसंजय ॥ किंस्विदिच्छतिकौंतेयोयुद्धप्रेप्सुर्युधिष्ठिरः १ ॥ संजयउवाच ॥ अतीवमुदितोराजन्युद्धप्रेप्सुर्युधिष्ठिरः ॥ भीमसेनार्जुनौचोभौयमावपिनबिभ्यतः २ रथंतुदिव्यंकौंतेयःसर्वाविभ्राजयन्दिशः ॥ मंत्रंजिज्ञासमानःसन्बीभत्सुःसमयोजयत् ३ तमपश्यामसन्नद्धंमेघंविद्युद्युतंयथा ॥ समंतात्समभिध्यायहृष्यमाणोऽभ्यभाषत ४ पूर्वरूपमिदंपश्यवयंजेष्यामसंजय ॥ बीभत्सुर्मांयथोवाचतथाऽवैम्यहमप्युत ५ ॥ दुर्योधनउवाच ॥ प्रशंसस्यभिनंदंस्तान्पार्थानक्षपराजितान् ॥ अर्जुनस्यरथेब्रूहिकथमश्वाःकथंध्वजाः ६ ॥ संजयउवाच ॥ भौमनःसहशक्रेणबहुचित्रंविशांपते ॥ रूपाणिकल्पयामासत्वष्टाधातासदाविभो ७ ध्वजेहितास्मिन्रूपाणिचक्रुस्तेदेवमायया ॥ महाधनानिदिव्यानिमहांतिचलघूनिच ८ भीमसेनानुरोधायहनूमान्मारुतात्मजः ॥ आत्मप्रतिकृतिंतस्मिन्ध्वजआरोपयिष्यति ९ सर्वादिशोयोजनमात्रमंतरंसतिर्यगूर्ध्वंचरुरोधवैध्वजः ॥ नसंसज्जत्यसौतरुभिःसंवृतोऽपितथाहिमायाविहिताभौमनेन १० यथाऽऽकाशेशक्रधनुःप्रकाशतेनचैकवर्णंनचविद्मिकिंनुतत् ॥ तथाध्वजोविहितोभौमनेनबह्वाकारंदृश्यतेरूपमस्य ११ यथाग्निधूमोदिवमेतिरुद्ध्वावर्णान्बिभ्रत्तैजसांश्चित्ररूपान् ॥ तथाध्वजोविहितोभौमनेननचेद्भारोभवितानोतरोधः १२ श्वेतास्तस्मिन्वातवेगाःसदश्वादिव्यायुक्ताश्चित्ररथेनदत्ताः ॥ भुव्यंतरिक्षेदिविवानरंद्रयेषांगतिर्हीयतेनात्रसर्वा ॥ शतंयत्तत्पूर्यतेनित्यकालंहतंहतंदत्तवरंपुरस्तात् १३ तथाराज्ञोदंतवर्णाबृहंतोरथेयुक्ताभांतितद्वीर्यतुल्याः ॥ ऋक्षप्रख्याभीमसेनस्यवाहारथेवायोस्तुल्यवेगाबभूवुः १४ कल्माषांगास्तित्तिरिचित्रपृष्ठाभ्रात्रादत्ताःप्रीयताफाल्गुनेन ॥ भ्रातुर्वीरस्यस्वैस्तुरंगैर्विशिष्टामुदायुक्ताःसहदेवंवहंति १५

रूपाणिचक्रुः ८ । ९ रुरोधस्वतेजसेतिशेषः १० । ११ भारोरथे रोधःद्वारादौ द्वयमपिनभवेत् १२ यत्तत्अश्वानांशतंहतं पुनःपुनःकतिपयाश्वहननेऽपि दिव्यप्रभावात्शतंपूर्यते यतःपुरस्ताद्दत्तवरम् १३ तथाअमराः राज्ञोदंतवर्णाःश्वेताः रथेयुक्ताअश्वाःभांति ऋक्षप्रख्याः सप्तर्षितुल्यतेजसः । 'ऋक्षाइतिहस्मवैपुरासप्तऋषीनाचक्षते'इतिशतपथश्रुतेः।पाठांतरेऋश्योमृगभेदः १४।१५

माद्रीपुत्रंनकुलंत्वाजमीढमहेंद्रदत्ताहरयोवाजिमुख्याः ॥ समावायोर्बलवंतस्तरास्विनोवहंतिवीरंवृत्रशत्रुंयथेंद्रम् १६ तुल्याश्चैभिर्वयसाविक्रमेणमहाजवाश्चित्ररूपाःसदश्वाः ॥ सौभद्रादीन्द्रौपदेयान्कुमारान्वहंत्यश्वादेवदत्ताबृहंतः १७ ॥ इतिश्रीमहाभारते उद्योगपर्वणियानसंधिपर्वणिसंजयवाक्येषट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥ ७ ॥ धृतराष्ट्रउवाच ॥ कांस्तत्रसंजयापश्यःप्रीत्यर्थेनसमागतान् ॥ येयोत्स्यंतेपांडवार्थेपुत्रस्यममवाहिनीम् १ ॥ संजयउवाच ॥ मुख्यमंधकवृष्णीनामपश्यंकृष्णमागतम् ॥ चेकितानंचतत्रैवयुयुधानंचसात्यकिम् २ पृथगक्षौहिणीभ्यांतुपांडवानभिसंश्रितौ ॥ महारथौसमाख्यातावुभौपुरुषमानिनौ ३ अक्षौहिण्याऽथपांचाल्योदशभिस्तनयैर्वृतः ॥ सत्यजित्प्रमुखैर्वीरैर्धृष्टद्युम्नपुरोगमैः ४ द्रुपदोवर्धयन्मानंशिखंडिपरिपालितः ॥ उपायात्सर्वसैन्यानांप्रतिच्छाद्यतदावपुः ५ विराटःसहपुत्राभ्यांशंखेनैवोत्तरेणच ॥ सूर्यदत्तादिभिर्वीरैर्मदिराक्षपुरोगमैः ६ सहितःपृथिवीपालोभ्रातृभिस्तनयैस्तथा ॥ अक्षौहिण्यैवसैन्यानांवृतःपार्थंसमाश्रितः ७ जारासंधिर्मागधश्चधृष्टकेतुश्चचेदिराट् ॥ पृथक्पृथगनुप्राप्तौपृथगक्षौहिणीवृतौ ८ केकयाभ्रातरःपंचसर्वेलोहितकध्वजाः ॥ अक्षौहिणीपरिवृताःपांडवानभिसंश्रिताः ९ एतानेतावतस्तत्रतानपश्यंसमागतान् ॥ येपांडवार्थेयोत्स्यंतिधार्तराष्ट्रस्यवाहिनीम् १० योवेदमानुषंव्यूहंदैवंगांधर्वमासुरम् ॥ सतत्रसेनाप्रमुखेधृष्टद्युम्नोमहारथः ११ भीष्मःशांतनवोराजन्भागःकॢप्तःशिखंडिनः ॥ तंविराटोऽनुसंयातासार्धंमत्स्यैःप्रहारिभिः १२ ज्येष्ठस्यपांडुपुत्रस्यभागोमद्राधिपोबली ॥ तौतुतत्राब्रुवन्केचिद्विषमौनोमताविति १३ दुर्योधनःसहसुतःसार्धंभ्रातृशतेनच ॥ प्राच्याश्चदाक्षिणात्याश्चभीमसेनस्यभागतः १४ अर्जुनस्यतुभागेनकर्णोवैकर्तनोमतः ॥ अश्वत्थामाविकर्णश्चसैंधवश्चजयद्रथः १५ अशक्याश्चैवयेकेचित्पृथिव्यांशूरमानिनः ॥ सर्वांस्तानर्जुनःपार्थःकल्पयामासभागतः १६ महेष्वासाराजपुत्राभ्रातरःपंचकेकयाः ॥ केकयानेवभागेनकृत्वायोत्स्यंतिसंयुगे १७ तेषामेवकृतोभागोमालवाःशाल्वकास्तथा ॥ त्रिगर्तानांचवैमुख्यौयौतौसंशप्तकाविति १८ दुर्योधनसुताःसर्वेतथादुःशासनस्यच ॥ सौभद्रेणकृतोभागोराजाचैवबृहद्बलः १९ द्रौपदेयामहेष्वासाःसुवर्णविकृतध्वजाः ॥ धृष्टद्युम्नमुखाद्रोणमभियास्यंतिभारत २० चेकितानःसोमदत्तंद्वैरथेयोद्धुमिच्छति ॥ भोजंतुकृतवर्माणंयुयुधानोयुयुत्सति २१ सहदेवस्तुमाद्रेयःशूरःसंक्रंदनोयुधि ॥ स्वमंशंकल्पयामासश्यालंतेसुबलात्मजम् २२ उलूकंचैवकैतव्यंयेचसारस्वतागणाः ॥ नकुलःकल्पयामासभागंमाद्रवतीसुतः २३ येचान्येपार्थिवाराजन्प्रत्युद्यास्यंतिसंगरे ॥ समाह्वानेनतांश्चापिपांडुपुत्राअकल्पयन् २४

अकालिकंकालविलंबंविना २५ । २६ प्रोक्षिताःपशुवद्वधार्थंसंस्कृताःकालधर्मणायजमानेनवा २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६

एवमेषामनीकानिप्रविभक्तानिभागशः ॥ यत्तेकार्यंसपुत्रस्यक्रियतांतदकालिकम् २५ ॥ धृतराष्ट्रउवाच ॥ नसंतिसर्वेपुत्रामेमूढादुर्द्यूतदेविनः ॥ येषांयुद्धंब लवताभीमेनरणमूर्धनि २६ राजानःपार्थिवाःसर्वेप्रोक्षिताःकालधर्मणा ॥ गांडीवाग्निंप्रवेक्ष्यंतिपतंगाइवपावकम् २७ विद्रुतांवाहिनींमन्येकृतवैरैर्महात्मभिः ॥ तांरणेकेऽनुयास्यंतिप्रभग्नांपांडवैर्युधि २८ सर्वेह्यतिरथाःशूराःकीर्तिमंतःप्रतापिनः ॥ सूर्यपावकयोस्तुल्यास्तेजसासमितिंजयाः २९ येषांयुधिष्ठिरोनेतागो प्ताचमधुसूदनः ॥ योधौचपांडवौवीरौसव्यसाचिवृकोदरौ ३० नकुलःसहदेवश्चधृष्टद्युम्नश्चपार्षतः ॥ सात्यकिर्द्रुपदश्चैवधृष्टकेतुश्चसानुजः ३१ उत्तमौजाश्चपां चाल्योयुधामन्युश्चदुर्जयः ॥ शिखंडीक्षत्रदेवश्चतथावैराटिरुत्तरः ३२ काशयश्चेदयश्चैवमत्स्याःसर्वेचसृंजयाः ॥ विराटपुत्रोबभ्रुश्चपांचालाश्चप्रभद्रकाः ३३ ये षामिंद्रोऽप्यकामानांनहरेत्पृथिवीमिमाम् ॥ वीराणांरणधीराणांयेभिंद्युःपर्वतानपि ३४ तान्सर्वगुणसंपन्नानमनुष्यप्रतापिनः ॥ क्रोशतोममदुष्पुत्रोयोद्धुमिच्छ तिसंजय ३५ ॥ दुर्योधनउवाच ॥ उभौस्वएकजातीयौतथोभौभूमिगोचरौ ॥ अथकस्मात्पांडवानामेकतोमन्यसेजयम् ३६ पितामहंचद्रोणंचकृपंकर्णंचदु र्जयम् ॥ जयद्रथंसोमदत्तमश्वत्थामानमेवच ३७ सुतेजसोमहेष्वासानिंद्रोऽपिसहितोऽमरैः ॥ अशक्तःसमरेजेतुंकिंपुनस्तातपांडवाः ३८ सर्वेचपृथिवीपाला मदर्थेतातपांडवान् ॥ आर्याःशस्त्रभृतःशूराःसमर्थाःप्रतिबाधितुम् ३९ नमामकान्पांडवास्तेसमर्थाःप्रतिवीक्षितुम् ॥ पराक्रांतोह्यहंपांडून्सपुत्रान्योद्धुमाहवे ४० मत्प्रियंपार्थिवाःसर्वेयेचिकीर्षंतिभारत ॥ तेतानावारयिष्यंतिऐणेयानिवतंतुना ४१ महतारथवंशेनशरजालैश्चमामकैः ॥ अभिद्रुताभविष्यंतिपांचालाः पांडवैःसह ४२ ॥ धृतराष्ट्रउवाच ॥ उन्मत्तइवमेपुत्रोविलपत्येषसंजय ॥ नहिशक्तोरणेजेतुंधर्मराजंयुधिष्ठिरम् ४३ जानातिहियथाभीष्मःपांडवानांयशस्वि नाम् ॥ बलवत्तांसपुत्राणांधर्मज्ञानांमहात्मनाम् ४४ यतोनारोचयदयंविग्रहंतैर्महात्मभिः ॥ किंतुसंजयमेब्रूहिपुनस्तेषांविचेष्टितम् ४५ कस्तांस्तरस्विनो भूयःसंदीपयतिपांडवान् ॥ अर्चिष्मतोमहेष्वासान्हविषापावकानिव ४६ ॥ संजयउवाच ॥ धृष्टद्युम्नःसदैवैतान्संदीपयतिभारत ॥ युद्ध्यध्वमितिमाभैष्टयुद्धा द्भरतसत्तमाः ४७ येकेचित्पार्थिवास्तत्रधार्तराष्ट्रेणसंवृताः ॥ युद्धेसमागमिष्यंतितुमुलेशस्त्रसंकुले ४८ तान्सर्वानाहवेक्रुद्धान्सानुबंधान्समागतान् ॥ अहमेकःस मादास्येतिमिर्मत्स्यानिवोदकात् ४९ भीष्मंद्रोणंकृपंकर्णंद्रौणिंशल्यंसुयोधनम् ॥ एतांश्चापिनिरोत्स्यामिवेलेवमकरालयम् ५० तथाब्रुवंतंधर्मात्माप्राहरा जायुधिष्ठिरः ॥ तवधैर्यंचवीर्यंचपांचालाःपांडवैःसह ५१ सर्वेसमधिरूढाःस्मसंग्रामान्नःसमुद्धर ॥ जानामित्वांमहाबाहोक्षत्रधर्मेव्यवस्थितम् ५२

३७ । ३८ । ३९ । ४० ऐणेयान्हरिणशावान् तंतुनापाशेन ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२

५३ । ५४ । ५५ ५६ । ५७ शरद्वतःआयुष्मतः विरुद्धलक्षणयागतायुषइत्यर्थ ५८ । ५९ दद्धुंददत ६० । ६१ क्रुद्धंकुरुध्वं ६२ ॥ ॥ इतिउद्यो० प० नी० भा० भा० सप्तपंचाशत्तमोऽ
ध्यायः ॥ ५७ ॥ ॥ छ ॥ ॥ क्षत्रेति १ । २ । ३ । ४ जातएषतवाभावइत्यत्र शमएवमहच्छ्रेयइत्याधुनिकःपाठः । तराभ्यावइतिपाठे तराणामश्वादीनांवेगवतांवाहनाना

समर्थमेकंपर्याप्तंकौरवाणांविनिग्रहे ॥ पुरस्तादुपयातानांकौरवाणांयुयुत्सताम् ५३ भवतायद्विधातव्यंतन्नःश्रेयःपरंतप ॥ संग्रामादपयातानांभग्नानांशरणै
षिणाम् ५४ पौरुषंदर्शयन्शूरोयस्तिष्ठेदग्रतःपुमान् ॥ क्रीणीयात्तंसहस्रेणइतिनीतिमतांमतम् ५५ सत्वंशूरश्चवीरश्चविक्रांतश्चनरर्षभ ॥ भयार्तानांपरित्रा
तासंयुगेषुनसंशयः५६ एवंब्रुवतिकौंतेयेधर्मात्मनियुधिष्ठिरे ॥ धृष्टद्युम्नउवाचेदंमांवचोगतसाध्वसम् ॥ सर्वान्जनपदान्सूतयोधादुर्योधनस्ययें ५७ सबा
ह्लिकान्कुरून्ब्रूयाःप्रातिपेयान्शरद्वतः ॥ सूतपुत्रंतथाद्रोणंसहपुत्रंजयद्रथम् ५८ दुःशासनंविकर्णंचतथादुर्योधनंनृपम् ॥ भीष्मंचब्रूहिगत्वात्वमाशुगच्छ
चमाचिरम् ५९ युधिष्ठिरःसाधुनैवाभ्युपेयोमावोऽवधीदर्जुनोदेवगुप्तः ॥ राज्यंदद्ध्वंधर्मराजस्यतूर्णंयाचध्वंवैपांडवंलोकवीरम् ६० नैतादृशोहियोधोऽस्ति
पृथिव्यामिहकश्चन ॥ यथाविधःसव्यसाचीपांडवःसत्यविक्रमः ६१ देवैर्हिसंभृतोदिव्योरथोगांडीवधन्वनः ॥ नसजेयोमनुष्येणमास्मकृद्ध्वंमनोयुधि ६२
॥ इतिश्रीमहाभारतेउद्योगपर्वणियानसंधिपर्वणिसंजयवाक्येसप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ ॥ धृतराष्ट्रउवाच ॥ क्षत्रतेजाब्रह्मचारीकौमारादपिपां
डवः ॥ तेनसंयुगमेष्यंतिमंदाविलपतोमम १ दुर्योधननिवर्तस्वयुद्धाद्भरतसत्तम ॥ नहियुद्धंप्रशंसंतिसर्वावस्थमरिंदम २ अलमर्धंपृथिव्यास्तेसहामात्यस्य
जीवितुम् ॥ प्रयच्छपांडुपुत्राणांयथोचितमरिंदम ३ एतद्धिकुरवःसर्वेमन्यंतेधर्मसंहितम् ॥ यत्त्वंप्रशांतिंमन्येथाःपांडुपुत्रैर्महात्मभिः ४ अंगेमांसमवेक्षस्व
पुत्रस्वामेववाहिनीं ॥ जातएषतवाभावस्त्वंतुमोहान्नबुद्ध्यसे ५ नत्वहंयुद्धमिच्छामिनैतदिच्छतिबाह्लिकः ॥ नचभीष्मोनचद्रोणोनाश्वत्थामानसंजयः ६
नसोमदत्तोनशलोनकृपोयुद्धमिच्छति ॥ सत्यव्रतःपुरुमित्रोजयोभूरिश्रवास्तथा ७ येषुसंप्रतितिष्ठेयुःकुरवःपीडिताःपरैः ॥ तेयुद्धंनाभिनंदंतितत्तुभ्यंतात
रोचताम् ८ नत्वंकरोषिकामेनकर्णःकारयितातव ॥ दुःशासनश्चपापात्माशकुनिश्चापिसौबलः ९ ॥ दुर्योधनउवाच ॥ नाहंभवतिनद्रोणेनाश्वत्थाम्निनसं
जये ॥ नभीष्मेनचकांबोजेनकृपेनचबाह्लिके १० सत्यव्रतेपुरुमित्रेभूरिश्रवसिवापुनः ॥ अन्येषुवातावकेषुभारंकृत्वासमाह्वयम् ११ अहंचतातकर्णश्चरणयज्ञं
वितत्यवै ॥ युधिष्ठिरंपशुंकृत्वादीक्षितौभरतर्षभ १२ रथोवेदीस्रुवःखड्गोगदास्रुक्कवचंसदः ॥ चातुर्होत्रंचधुर्यामेशरादर्भाहविर्यशः १३ आत्मयज्ञेननृप
तेइष्ट्वावैवस्वतंरणे ॥ विजित्यचसमेष्यावोहतामित्रौश्रियावृतौ १४ अहंचतातकर्णश्चभ्रातादुःशासनश्चमे ॥ एतेवयंहरिष्यामःपांडवान्समरेत्रयः १५



मभ्यावः सर्वतःखादनंकंडूरोगाद्युपद्रवइतियावत् । अवरक्षणगतिकांतीत्यादेः खादनार्थात्घञ् । आस्रावइतिपाठे आस्रावःक्षतं यानेषूपद्रवःपराजयलक्षणमितिभावः ५ । ६ । ७ । ८ । ९
१० । ११ । १२ चातुर्होत्रंचतुर्णांहोतॄणांऋत्विजांकर्म १३ । १४ । १५

१६ । १७ । १८ । १९ रुरूणामिवेत्यत्र कुरूणां लाटभाषयाअजानामिति पाठोयुक्तः । पक्षेकुरूणांमध्येवरान्वरान् व्याघ्राइवेतियोजना २० भारतीसेनास्त्रीरूपकेननिर्दिष्टा २१ धनंज

अहंहिपांडवान्हत्वाप्रशास्तापृथिवीमिमाम् ॥ मांवाहत्वापांडुपुत्राभोक्तारःपृथिवीमिमाम् १६ त्यक्तंमेजीवितंराज्यंधनंसर्वंचपार्थिव ॥ नजातुपांडवैःसार्धंवसेय महमच्युत १७ यावद्धिसूच्यास्तीक्ष्णायाविध्येदग्रेणमारिष ॥ तावदप्यपरित्याज्यंभूमेर्नःपांडवान्प्रति १८ ॥ धृतराष्ट्रउवाच ॥ सर्वान्वस्तातशोचामित्य क्तोदुर्योधनोमया ॥ येमंदमनुयास्यध्वंयांतंवैवस्वतक्षयम् १९ रुरूणामिवयूथेषुव्याघ्राःप्रहरतांवराः ॥ वरान्वरान्हनिष्यंतिसमेतायुधिपांडवाः २० प्रती पमिवमेभातियुयुधानेनभारती ॥ व्यस्तासीमंतिनीग्रस्ताप्रमृष्टादीर्घबाहुना २१ संपूर्णंपूरयन्भूयोधनंपार्थस्यमाधवः ॥ शैनेयःसमरेस्थाताबीजवत्प्रवपन् शरान् २२ सेनामुखेप्रयुद्धानांभीमसेनोभविष्यति ॥ तंसर्वेसंश्रयिष्यंतिप्राकारमकुतोभयम् २३ यदाद्रक्ष्यसिभीमेनकुंजरान्विनिपातितान् ॥ विशीर्णदंता न्गिर्याभान्भिन्नकुंभान्सशोणितान् २४ तानभिप्रेक्ष्यसंग्रामेविशीर्णानिवपर्वतान् ॥ भीतोभीमस्यसंस्पर्शात्स्मर्ताऽसिवचनस्यमे २५ निर्दग्धंभीमसेनेनसैन्यंर थहयद्विपम् ॥ गतिमग्नेरिवप्रेक्ष्यस्मर्ताऽसिवचनस्यमे २६ महद्वोभयमागामिनचेच्छाम्यथपांडवैः ॥ गदयाभीमसेनेनहताःशममुपैष्यथ २७ महावनमिवाच्छि न्नंयदाद्रक्ष्यसिपातितम् ॥ बलंकुरूणांभीमेनतदास्मर्ताऽसिमेवचः २८ ॥ वैशंपायनउवाच ॥ एतावदुक्त्वाराजातुसर्वांस्तान्पृथिवीपतीन् ॥ अनुभाष्यम हाराजपुनःपप्रच्छसंजयम् २९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणियानसंधिप॰धृतराष्ट्रवाक्येऽष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ धृतराष्ट्रउवाच ॥ यदब्रूतांमहा त्मानौवासुदेवधनंजयौ ॥ तन्मेब्रूहिमहाप्राज्ञशुश्रूषेवचनंतव १ ॥ संजयउवाच ॥ शृणुराजन्यथादृष्टौमयाकृष्णधनंजयौ ॥ ऊचतुश्चापियद्वीरौतत्तेवक्ष्यामिभा रत २ पादांगुलीरभिप्रेक्षन्प्रयतोऽहंकृतांजलिः ॥ शुद्धांतंप्राविशंराजन्नाख्यातुंनरदेवयोः ३ नैवाभिमन्युर्नयमौतंदेशमभियांतिवै ॥ यत्रकृष्णौचकृष्णाचसत्यभा माचभामिनी ४ उभौमध्वासवक्षीबावुभौचंदनरूषितौ ॥ स्रग्विणौवरवस्त्रौतौदिव्याभरणभूषितौ ५ नैकरत्नविचित्रंतुकांचनंमहदासनम् ॥ विविधास्तरणाकी र्णंयत्रासातामरिंदमौ ६ अर्जुनोत्संगगौपादौकेशवस्योपलक्षये ॥ अर्जुनस्यचकृष्णायांसत्यायांचमहात्मनः ७ कांचनंपादपीठंतुपार्थोमेप्रादिशत्तदा ॥ तद हंपाणिनास्पृष्ट्वाततोभूमावुपाविशम् ८ ऊर्ध्वरेखातलौपादौपार्थस्यशुभलक्षणौ ॥ पादपीठादपहृतौतत्रापश्यमहंशुभौ ९ श्यामौबृहंतौतरुणौशालस्कंधावि वोद्गतौ ॥ एकासनगतौदृष्ट्वाभयंमांमहदाविशत् १० इंद्रविष्णुसमावेतौमंदात्मानावबुद्ध्यते ॥ संश्रयाद्द्रोणभीष्माभ्यांकर्णस्यचविकत्थनात् ११ निदेशस्था विमौयस्यमानसस्तस्यसेत्स्यते ॥ संकल्पोधर्मराजस्यनिश्चयोमेतदाऽभवत् १२

लम् २२ प्राकारमिवभीमंसंश्रयिष्यंति २३ । २४ । २५ । २६ । २७ । २८ । २९ ॥ इतिउद्योगप॰ नीलकंठीयेभारतभावदीपे अष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ ७ ॥ ॥

यदब्रूतामिति १ । २ । ३ । ४ । ५ आसातामुपविष्टौ ६ । ७ । ८ । ९ । १० द्रोणभीष्माभ्यांद्रोणभीष्मयोः ११ मानसः संकल्पः सेत्स्यते १२

१३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ ऋणमिति वस्त्रापहरणकालेगोविंदेतिचुक्रोश तद्वस्त्रप्रदानमात्रेणतस्याक्रोशस्यऋणंनपरिहृतं किंतु कौरवाणामुच्छेदंविनातत्
हृदयान्नापसर्पतीत्यर्थः २२ । २३ । २४ । २५ । २६ । २७ । २८ बलंशारीरं । वीर्यमानसोत्साहः । तेजः शौर्यं । शीघ्रताशीघ्रंकार्यावबोधः । लघुहस्ततावेगेनबाणप्रक्षेप्तृता २९ । ३०

सत्कृतश्चान्नपानाभ्यामासीनोलब्धसत्क्रियः ॥ अंजलिंमूर्ध्निसंधायतौसंदेशमचोदयम् १३ धनुर्गुणकिणांकेनपाणिनाशुभलक्षणम् ॥ पादमानमयन्पार्थःकेशवं
समचोदयत् १४ इंद्रकेतुरिवोत्थायसर्वाभरणभूषितः ॥ इंद्रवीर्योपमःकृष्णःसंविष्टोमाभ्यभाषत १५ वाचंसवदतांश्रेष्ठोह्लादिनींवचनक्षमाम् ॥ त्रासिनींधा
र्तराष्ट्राणांमृदुपूर्वांसुदारुणाम् १६ वाचंतांवचनार्हस्यशिक्षाक्षरसमन्विताम् ॥ अश्रौषमहमिष्टार्थांपश्चाद्धृदयहारिणीम् १७ ॥ वासुदेवउवाच ॥ संजयेदंव
चोब्रूयाद्धृतराष्ट्रंमनीषिणम् ॥ कुरुमुख्यस्यभीष्मस्यद्रोणस्यापिचशृण्वतः १८ आवयोर्वचनात्सूतज्येष्ठानप्यभिवादयन् ॥ यवीयसश्चकुशलंपश्चात्पृष्ट्वैव
मुत्तरम् १९ यजध्वंविविधैर्यज्ञैर्विप्रेभ्योदत्तदक्षिणाः ॥ पुत्रैर्दारैश्चमोदध्वंमहद्वोभयमागतम् २० अर्थांस्त्यजतपात्रेभ्यःसुतान्प्राप्नुतकामजान् ॥ प्रियंप्रियेभ्य
श्चरतराजाहित्वरतेजये २१ ऋणमेतत्प्रवृद्धंमेहृदयान्नापसर्पति ॥ यद्गोविंदेतिचुक्रोशकृष्णामांदूरवासिनम् २२ तेजोमयंदुराधर्षंगांडीवंयस्यकार्मुकम् ॥ म
द्द्वितीयेनतेनेहवैरंवःसव्यसाचिना २३ मद्द्वितीयंपुनःपार्थंकःप्रार्थयितुमिच्छति ॥ योनकालपरीतोवाऽप्यपिसाक्षात्पुरंदरः २४ बाहुभ्यामुद्वहेद्भूमिंदहेत्क्रुद्ध
इमाःप्रजाः ॥ पातयेत्त्रिदिवाद्देवान्योऽर्जुनंसमरेजयेत् २५ देवासुरमनुष्येषुयक्षगंधर्वभोगिषु ॥ नतंपश्याम्यहंयुद्धेपांडवंयोऽभ्ययाद्रणे २६ यत्तद्विराटनग
रेश्रूयतेमहदद्भुतम् ॥ एकस्यचबहूनांचपर्याप्तंतन्निदर्शनम् २७ एकेनपांडुपुत्रेणविराटनगरेयदा ॥ भग्नाःपलायतदिशःपर्याप्तंतन्निदर्शनम् २८ बलंवीर्यंच
तेजश्चशीघ्रतालघुहस्तता ॥ अविषादश्चधैर्यंचपार्थान्नान्यत्रविद्यते २९ इत्यब्रवीद्धृषीकेशःपार्थमुद्धर्षयन्गिरा ॥ गर्जन्समयवर्षीवगगनेपाकशासनः ३०
केशवस्यवचःश्रुत्वाकिरीटीश्वेतवाहनः ॥ अर्जुनस्तन्महद्वाक्यमब्रवीद्रोमहर्षणम् ३१ ॥ इतिश्रीमहाभारतेउद्योगपर्वणियानसंधिपर्वणिसंजयेनश्रीकृष्णवा
क्यकथनेएकोनषष्टितमोऽध्यायः॥५९॥वैशंपायनउवाच॥संजयस्यवचःश्रुत्वाप्रज्ञाचक्षुर्जनेश्वरः॥ततःसंख्यातुमारेभेतद्वचोगुणदोषतः१प्रसंख्यायचसौक्ष्म्येण
गुणदोषान्विचक्षणः॥यथावन्मतितत्त्वेनजयकामःसुतान्प्रति२बलाबलंविनिश्चित्ययाथातथ्येनबुद्धिमान्॥शक्तिंसंख्यातुमारेभेतदावैमनुजाधिपः३देवमानुषयोः
शक्त्यातेजसाचैवपांडवान् ॥ कुरून्शक्त्याऽल्पतरयादुर्योधनमथाब्रवीत् ४ दुर्योधनेयंचिंतामेशश्वन्नव्युपशाम्यति ॥ सत्यंह्येतदहंमन्येप्रत्यक्षंनानुमानतः ५
आत्मजेषुपरंस्नेहंसर्वभूतानिकुर्वते॥प्रियाणिचैषांकुर्वंतियथाशक्तिहितानिच ६ एवमेवोपकर्तॄणांप्रायशोलक्षयामहे ॥ इच्छंतिबहुलंसंतःप्रतिकर्तुंमहत्प्रियम् ७

३१ ॥ इतिउद्योगप० नीलकंठीयेभारतभावदीपे एकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ संजयस्येति १ । २ । ३ वचसएवगुणान् दोषांश्चनिश्चित्य स्वेषां
परेषांबलाबलंनिश्चित्याह देवेति पांडवेषुदैवंमानुषंचबलमस्ति अस्माकंतुकेवलंमानुषमेवास्तीत्यर्थः शक्त्यापरिच्छिद्येतिशेषः ४ । ५ । ६ । ७

देवंबलाधिक्यंपांडवेषुदर्शयतिअग्निरिति भीमेभयंकरे ८ जातिगृद्ध्याजन्मग्रहणाद्धेतोःयुधिष्ठिरादीनांपितरोधर्मादयोऽपितेषांसहायाःसंति ९ रिरक्षिषंतःरक्षितुमिच्छंतः संरंभंक्रोधं १० ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ ॥ २३ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपेषष्टितमोऽध्यायः ॥ ६० ॥ ॥ ७ ॥ पितुरिति १ । २

अग्निःसाचिव्यकर्तास्यात्खांडवेतत्कृतंस्मरन् ॥ अर्जुनस्यापिभीमेऽस्मिन्कुरुपांडुसमागमे ८ जातिगृद्ध्याभिपन्नाश्चपांडवानामनेकशः ॥ धर्मादयःसमेष्यंतिसमाहूतादिवौकसः ९ भीष्मद्रोणकृपादीनांभयादशनिसन्निभम् ॥ रिरक्षिषंतःसंरंभंगमिष्यंतीतिमेमतिः १० तेदेवैःसहिताःपार्थानशक्याःप्रतिवीक्षितुम् ॥ मानुषेणनरव्याघ्रावीर्यवंतोऽस्त्रपारगाः ११ दुरासदंयस्यदिव्यंगांडीवंधनुरुत्तमम् ॥ दारुणौचाक्षयौदिव्यौशरपूर्णौमहेषुधी १२ वानरश्चध्वजेदिव्योनिःसंगोधूमवद्गतिः ॥ रथश्चचतुरंतायांयस्यनास्तिसमःक्षितौ १३ महामेघनिभश्चापिनिर्घोषःश्रूयतेजनैः ॥ महाशनिसमःशब्दःशात्रवाणांभयंकरः १४ यंचातिमानुषंवीर्येकृत्स्नोलोकोव्यवस्यति ॥ देवानामपिजेतारंयंविदुःपार्थिवारणे १५ शतानिपंचचैवेषून्योगृह्णन्नैवदृश्यते ॥ निमेषांतरमात्रेणमुंचन्दूरंचपातयन् १६ यमाहभीष्मोद्रोणश्चकृपोद्रौणिस्तथैवच ॥ मद्रराजस्तथाशल्योमध्यस्थायेचमानवाः १७ युद्धायावस्थितंपार्थंपार्थिवैरतिमानुषैः ॥ अशक्यंरथशार्दूलंपराजेतुमरिंदमम् १८ क्षिपत्येकेनवेगेनपंचबाणशतानियः ॥ सदृशंबाहुवीर्येणकार्तवीर्यस्यपांडवम् १९ तमर्जुनंमहेष्वासंमहेंद्रोपेंद्रविक्रमम् ॥ निघ्नंतमिवपश्यामिविमर्देऽस्मिन्महहावे २० इत्येवंचिंतयन्कृत्स्नमहोरात्राणिभारत ॥ अनिद्रोनिःसुखश्चास्मिकुरूणांशमचिंतया २१ क्षयोदयोऽयंसुमहान्कुरूणांप्रत्युपस्थितः ॥ अस्यचेत्कलहस्यांतःशमादन्योनविद्यते २२ शमोमेरोचतेनित्यंपार्थैस्तातनविग्रहः ॥ कुरुभ्योहिसदामन्येपांडवान्शक्तिमत्तरान् २३ ॥ इतिश्रीमहाभारतेउद्योगपर्वणियानसंधिपर्वणिधृतराष्ट्रविवेचनेषष्टितमोऽध्यायः ॥ ६० ॥ ७ ॥ वैशंपायनउवाच ॥ पितुरेतद्वचःश्रुत्वाधार्तराष्ट्रोऽत्यमर्षणः ॥ आधायविपुलंक्रोधंपुनरेवेदमब्रवीत् १ अशक्यादेवसचिवाःपार्थाःस्युरितियद्भवान् ॥ मन्यतेतद्भयंव्येतुभवतोराजसत्तम २ अकामद्वेषसंयोगाल्लोभाद्द्रोहाच्चभारत ॥ उपेक्षयाचभावानांदेवादेवत्वमाप्नुवन् ३ इतिद्वैपायनोव्यासोनारदश्चमहातपाः ॥ जामदग्न्यश्चरामोनःकथामकथयत्पुरा ४ नैवमानुषवद्देवाःप्रवर्ततेकदाचन ॥ कामात्क्रोधात्तथालोभाद्द्वेषाच्चभरतर्षभ ५ यदाह्यग्निश्चवायुश्चधर्मइंद्रोऽश्विनावपि ॥ कामयोगात्प्रवर्तेरन्नपार्थादुःखमाप्नुयुः ६ तस्मान्नभवताचिंताकार्यैषास्यात्कथंचन ॥ दैवेष्वपेक्षकाह्येतेशश्वद्भावेषुभारत ७ अथचेत्कामसंयोगाद्द्वेषोलोभश्चलक्ष्यते ॥ देवेषुदैवप्रामाण्यान्नैषांतद्विक्रमिष्यति ८ मयाभिमंत्रितःशश्वज्जातवेदाःप्रशाम्यति ॥ दिधक्षुःसकलाँल्लोकान्परिक्षिप्यसमंततः ९ यद्वापरमकंतेजोयेनयुक्तादिवौकसः ॥ ममाप्यनुपमंभूयोदेवेभ्योविद्धिभारत १०

अकामेति कामद्वेषयोरसंयोगात् ३ । ४ । ५ । ६ । दैवेष्विति एतेदेवादयःदैवेषुभावेषुशमदमादिषुशश्वदपेक्षकाअपेक्षमाणाः नतुआसुरेषुभावेषुकामक्रोधादिषु तस्माद्देवाःपांडवानांसाहाय्यंनकरिष्यंतीतिभावः ७ अथेति दैवप्रामाण्यात्वेदप्रामाण्यात्कामादिमत्ताकृतमनिष्फलंभविष्यतीत्यर्थः ८ दैवंबलमप्यस्तीत्याह मयाऽभीति ९ । १०

११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ मद्विषःमच्छत्रून् १९ । २० अभिध्यामिचिंतयामि २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ इतीति इतिएवंदुर्योधनोक्तंधृतराष्ट्रः संजयंप्रतिउवत्क्षाप्राप्तकालंपूर्वंप्रस्तुतंअर्जुनमाहात्म्यमेवअपृच्छत् । इदंमत्पुत्रस्यबलंज्ञात्वापांडवबलंचत्वंब्रूहीत्यर्थः । युयुत्सोःवैश्यापुत्रस्यपांडवेष्वनुरक्तस्यकार्याणिज्ञात्वा । एतेषांसर्वेषांविना

विदीर्यमाणांवसुधांगिरीणांशिखराणिच ॥ लोकस्यपश्यतोराजन्स्थापयाम्यभिमंत्रणात् ११ चेतनाचेतनस्यास्यजंगमस्थावरस्यच ॥ विनाशायसमुत्पन्नं महंघोरंमहास्वनम् १२ अश्मवर्षंचवायुंचशमयामीहनित्यशः ॥ जगतःपश्यतोऽभीक्ष्णंभूतानामनुकंपया १३ स्तंभितास्वप्सुगच्छंतिमयारथपदातयः ॥ देवासुराणांभावानामहमेकःप्रवर्तिता १४ अक्षौहिणीभिर्यान्देशान्यामिकार्येणकेनचित् ॥ तत्राश्वामेप्रवर्ततेयत्रयत्राभिकामये १५ भयानकानिविषयेव्यालादीनिनसंतिमे ॥ मंत्रगुप्तानिभूतानिनहिंसंतिभयंकराः १६ निकामवर्षीपर्जन्योराजन्विषयवासिनाम् ॥ धर्मिष्ठाश्चप्रजाःसर्वाईतयश्चनसंतिमे १७ अश्विनावथवाय्वग्नीमरुद्भिःसहवृत्रहा ॥ धर्मश्चैवमयाद्विष्टान्नोत्सहंतेऽभिरक्षितुम् १८ यदिह्येतेसमर्थाःस्युर्मद्विषस्त्रातुमंजसा ॥ नस्मत्रयोदशसमाःपार्थादुःखमवाप्नुयुः १९ नैवदेवानगंधर्वानासुरानचराक्षसाः ॥ शक्तास्त्रातुंमयाद्विष्टंसत्यमेतद्ब्रवीमिते २० यदभिध्याम्यहंशश्वच्छुभंवायदिवाऽशुभम् ॥ नैतद्विपन्नपूर्वंमेमित्रेष्वरिषुचोभयोः २१ भविष्यतीदमितिवायद्ब्रवीमिपरंतप ॥ नान्यथाभूतपूर्वंचसत्यवागितिमांविदुः २२ लोकसाक्षिकमेतन्मेमाहात्म्यंदिक्षुविश्रुतम् ॥ आश्वासनार्थंभवतःप्रोक्तंनश्लाघयान्नृप २३ नह्यहंश्लाघनोराजन्भूतपूर्वःकदाचन ॥ असदाचरितंह्येतद्यदात्मानंप्रशंसति २४ पांडवांश्चैवमत्स्यांश्चपांचालान्केकयैःसह ॥ सात्यकिंवासुदेवंचश्रोताऽसिविजितान्मया २५ सरितःसागरंप्राप्ययथानश्यंतिसर्वशः ॥ तथैवतेविनंक्ष्यंतिमामासाद्यसहान्वयाः २६ पराबुद्धिःपरंतेजोवीर्यंचपरमंमम ॥ पराविद्यापरोयोगोममतेभ्योविशिष्यते २७ पितामहश्चद्रोणश्चकृपःशल्यःशलस्तथा ॥ अस्त्रेषुयत्प्रजानंतिसर्वंतन्मयिविद्यते २८ इत्युक्त्वासंजयंभूयःपर्यपृच्छतभारत ॥ ज्ञात्वायुयुत्सोःकार्याणिप्राप्तकालमरिंदमः २९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणियानसंधिपर्वणिदुर्योधनवाक्येएकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ ध ॥ वैशंपायनउवाच ॥ तथातुपृच्छंतमतीवपार्थंवैचित्रवीर्यंतमचिंतयित्वा ॥ उवाचकर्णोधृतराष्ट्रपुत्रंप्रहर्षयन्संसदिकौरवाणाम् १ मिथ्याप्रतिज्ञायमयायदस्त्रंरामात्कृतंब्रह्ममयंपुरस्तात् ॥ विज्ञायतेनास्मितदैवमुक्तःस्तेनांतकालेप्रतिभाऽस्यतीति २ महापराधेह्यपियन्नतेनमहर्षिणाऽहंगुरुणाचशप्तः ॥ शक्तःप्रदग्धुंह्यपितिग्मतेजाःससागरामप्यवनिंमहर्षिः ३ प्रसादितंह्यस्यमयामनोऽभूच्छुश्रूषयास्वेनचपौरुषेण ॥ तदस्तिशास्त्रंननसावशेषंतस्मात्समर्थोऽस्मिममैषभारः ४

शेनतस्यैवराज्यलाभरूपाणिकार्याणिभविष्यंतीतिज्ञात्वेत्यर्थः २९ ॥ इतिउद्योगप०नीलकंठीयेभारतभावदीपेएकषष्टितमोऽध्यायः ॥ ६१ ॥ तथेति पार्थंपृच्छंतंवैचित्रवीर्यंअचिंतयित्वेतिसंबंधः १ हेस्तेन अंतकालेप्रतिभाअस्त्रस्मृतिः अस्यातिक्षिपाति स्वांत्यक्ष्यतीत्यर्थः २ । ३ सावशेषंममआयुरस्तिअतोऽतकालस्यानुपस्थितत्वात्तदस्त्रंमेमास्तीतिअहंसमर्थोऽस्मिअर्जुनंजेतुमित्यर्थः ४

प्रपत्स्येप्रापयिष्ये ५ । ६ प्रधानेत्वयिहतेसातिसर्वेहताःस्युरतआत्मानंमोपायेत्युपहासः ७ आत्मामनोनियंतुंयुक्तः अर्जुनद्वेषादुपरमःकर्तव्यस्तस्यदुर्जयत्वंज्ञात्वेतिभावः ८ । ९ । १० । ११ १२ मांकृतविजयंसभायांद्रक्ष्यतिअयंभावः । यद्यहंयोत्स्येतर्हिएतस्यजीवनंभविष्यतितन्माभूदतोऽयंनिःसारोम्रियतामिति १३ । १४ सत्यप्रतिज्ञःपूर्वंआदावेवयोत्स्यइत्युक्त्वाइदानींमयिस

निमेषमात्रात्तमृषेःप्रसादमवाप्यपांचालकरूषमत्स्यान् ॥ निहत्यपार्थान्सहपुत्रपौत्रैर्लोकानहंशस्त्रजितान्प्रपत्स्ये ५ पितामहस्तिष्ठतुतेसमीपेद्रोणश्चसर्वेचनरेंद्रमुख्याः ॥ यथाप्रधानेनबलेनगत्वापार्थान्हनिष्यामिममैषभारः ६ एवंब्रुवंतंतमुवाचभीष्मःकिंकत्थसेकालपरीतबुद्धे ॥ नकर्णजानासियथाप्रधानेहतेहताःस्युर्धृतराष्ट्रपुत्राः ७ यत्खांडवंदाहयताकृतंहिकृष्णद्वितीयेनधनंजयेन ॥ श्रुत्वैवतत्कर्मनियंतुमात्मायुक्तस्त्वयावैसहबांधवेन ८ यांचापिशक्तिंत्रिदशाधिपस्तेददौमहात्माभगवान्महेंद्रः ॥ भस्मीकृतांतांसमरेविशीर्णांचक्राहतांद्रक्ष्यसिकेशवेन ९ यस्तेशरःसर्पमुखोविभातिसदाऽग्र्यमाल्यैर्महितःप्रयत्नात् ॥ सपांडुपुत्राभिहतःशरौघैःसहत्वयायास्यतिकर्णनाशम् १० बाणस्यभौमस्यचकर्णहंताकिरीटिनंरक्षतिवासुदेवः ॥ यस्त्वादृशानांचवरीयसांचहंतारिपूणांतुमुलेप्रगाढे ११ ॥ कर्णउवाच ॥ असंशयंवृष्णिपतिर्यथोक्तस्तथाचभूयांश्चततोमहात्मा ॥ अहंयदुक्तःपरुषंतुकिंचित्पितामहस्तस्यफलंशृणोतु १२ न्यस्यामिशस्त्राणिनजातुसंख्येपितामहोद्रक्ष्यतिमांसभायाम् ॥ त्वयिप्रशांतेतुममप्रभावंद्रक्ष्यंतिसर्वेभुविभूमिपालाः १३ ॥ वैशंपायनउवाच ॥ इत्येवमुक्त्वासमहाधनुष्मान्हित्वासभांस्वंभवनंजगाम ॥ भीष्मस्तुदुर्योधनमेवराजन्मध्येकुरूणांप्रहसन्नुवाच १४ सत्यप्रतिज्ञःकिलसूतपुत्रस्तथासभारंविषहेतकस्मात् ॥ व्यूहंप्रतिव्यूह्यशिरांसिभित्त्वालोकक्षयंपश्यतभीमसेनात् १५ आवंत्यकालिंगजयद्रथेषुचेदिध्वजेतिष्ठतिबाह्लिकेच ॥ अहंहनिष्यामिसदापरेषांसहस्रशश्चायुतशश्चयोधान् १६ यदैवरामेभगवत्यनिंद्येब्रह्मब्रुवाणःकृतवांस्तदस्त्रम् ॥ तदैवधर्मश्चतपश्चनष्टंवैकर्तनस्याधमपूरुषस्य १७ ॥ वैशंपायनउवाच ॥ तथोक्तवाक्येनृपतौद्रभीष्मेनिक्षिप्यशस्त्राणिगतेचकर्णे ॥ वैचित्रवीर्यस्यसुतोऽल्पबुद्धिर्दुर्योधनःशांतनवंबभाषे ॥ १८ ॥ इतिश्रीमहाभारतेउद्योगपर्वणियानसंधिपर्वणिकर्णभीष्मवाक्येद्विषष्टितमोऽध्यायः ॥ ६२ ॥

॥ दुर्योधनउवाच ॥ सदृशानांमनुष्येषुसर्वेषांतुल्यजन्मनाम् ॥ कथमेकांततस्तेषांपार्थानांमन्यसेजयम् १ वयंचतेपितुल्यावैवीर्येणचपराक्रमैः ॥ समेनवयसाचैवप्रातिभेनश्रुतेनच २ अस्त्रेणयोधयुग्याचशीघ्रत्वेकौशलेतथा ॥ सर्वेस्मसमजातीयाःसर्वेमानुषयोनयः ३ पितामहविजानीषेपार्थेषुविजयंकथम् ॥ नाहंभवतिनद्रोणेनकृपेनचबाह्लिके ४ अन्येषुचनरेंद्रषुपराक्रम्यसमारभे ॥ अहंवैकर्तनःकर्णोभ्रातादुःशासनश्चमे ५ पांडवान्समरेपंचहनिष्यामःशितैःशरैः ॥ ततोराजन्महायज्ञैर्विविधैर्भूरिदक्षिणैः ६

तिनयोत्स्यइतिवदतिमज्जीवनपर्यंतंत्वरक्षयमुपेक्षतेसकथंमित्रमितिभावः १५ । १६ ब्रह्मब्रुवाणःब्राह्मणोऽहमितिवदन् १७ । १८ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे द्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ सदृशानामिति १ प्रातिभेनसमयस्फूर्त्या २ योधयुग्याशूरसमृध्या युजेरौणादिकःकिः कुत्वमार्षं ३ । ४ । ५ । ६

तरित्रानौरक्षकाःकर्णधारादयः तद्रहितान्जलंयथापरिहरति आवर्तेषुपातयति । अनरित्रानितिपाठेअरित्रंकेनिपातनं नौचालनदंडस्तद्रहितानित्यर्थः तद्वद्मामकास्तान्रणेबाहुभ्यांपारिहरिष्यंति ७ । ८ अदांतोऽयंकुलक्षयंकरिष्यतीतिवक्ष्यन्दममेवप्रशंसन्विदुरउवाच इहेति किंतन्निःश्रेयसंकल्याणं ब्राह्मणस्यब्रह्मजिज्ञासोःदमएवसनातनोऽनादिर्मुख्योधर्मः ९ तस्यपुंसःदानंक्षमासिद्धिर्मोक्षश्चउपपद्यते कस्ययस्यदमःदानादीन्अनुवर्तते । दांतःसन्योदानादिकंकरोति सदानफलंक्षमांसिद्धिंचप्राप्नोतीत्यर्थः १० विंदतेलभतेदमेन महद्ब्रह्म ११।१२ समुदयःउदयहेतुः १३ तान्येवाह क्षमापरेभ्यस्ताडनादिप्राप्तावपिसंतापानुदयः । धृतिःकामादिभिरननुवशता । अहिंसावाङ्मनःशरीरैःपरस्यपीडायाअकरणं । समताशत्रुमित्रादौतुल्यत्वं । सत्यंयथार्थभाषणं । आर्जवमकौटिल्यं । इंद्रियाणांजयः धैर्यंअत्यंतापद्यपिमनसोऽवैक्लव्यं । मार्दवंप्रियवादिता । ह्रीरकार्यान्निवृत्तिः । अचापलंस्थैर्यंवाङ्मनःकायानां एतेदां

ब्राह्मणांस्तर्पयिष्यामिगोभिरश्वैर्धनेनच ॥ यदापरिकरिष्यंतिऐणेयानिवतंतुना ॥ अतरित्रानिवजलेबाहुभिर्मामकारणे ७ पश्यंतस्तेपरांस्तत्ररथनागसमाकुलान् ॥ तदादर्पंविमोक्ष्यंतिपांडवाःसचकेशवः ८ ॥ विदुरउवाच ॥ इहनिःश्रेयसंप्राहुर्वृद्धानिश्चितदर्शिनः ॥ ब्राह्मणस्यविशेषेणदमोधर्मःसनातनः ९ तस्यदानंक्षमासिद्धिर्यथावदुपपद्यते ॥ दमोदानंतपोज्ञानमधीतंचानुवर्तते १० दमस्तेजोवर्धयतिपवित्रंदमउत्तमम् ॥ विपाप्मावृद्धतेजास्तुपुरुषोविंदतेमहत् ११ क्रव्याद्भ्यइवभूतानामदांतेभ्यःसदाभयम् ॥ येषांचप्रतिषेधार्थंक्षत्रंसृष्टंस्वयंभुवा १२ आश्रमेषुचतुर्ष्वाहुर्दममेवोत्तमंव्रतम् ॥ तस्यलिंगंप्रवक्ष्यामियेषांसमुदयोदमः १३ क्षमाधृतिरहिंसाचसमतासत्यमार्जवम् ॥ इंद्रियाभिजयोधैर्यंमार्दवंह्रीरचापलम् १४ अकार्पण्यमसंरंभःसंतोषःश्रद्दधानता ॥ एतानियस्यराजेंद्रसदांतःपुरुषःस्मृतः १५ कामोलोभश्चदर्पश्चमन्युर्निद्राविकत्थनम् ॥ मानईर्ष्याचशोकश्चनैतद्दांतोनिषेवते ॥ अजिह्ममशठंशुद्धमेतद्दांतस्यलक्षणम् १६ अलोलुपस्तथाऽल्पेप्सुःकामानामविचिंतिता ॥ समुद्रकल्पःपुरुषःसदांतःपरिकीर्तितः १७ सुवृत्तःशीलसंपन्नःप्रसन्नात्माऽऽत्मविद्बुधः ॥ प्राप्येहलोकेसंमानंसुगतिंप्रेत्यगच्छति १८ अभयंयस्यभूतेभ्यःसर्वेषामभयंयतः ॥ सवैपरिणतप्रज्ञःप्रख्यातोमनुजोत्तमः १९ सर्वभूतहितोमैत्रस्तस्मान्नोद्विजतेजनः ॥ समुद्रइवगंभीरःप्रज्ञातृप्तःप्रशाम्यति २० कर्मणाऽऽचरितंपूर्वंसद्भिराचरितंचयत् ॥ तदेवास्थायमोदंतेदांताःशमपरायणाः २१ नैष्कर्म्यंवासमास्थायज्ञानतृप्तोजितेंद्रियः ॥ कालाकांक्षीचरँल्लोकेब्रह्मभूयायकल्पते २२ शकुनीनामिवाकाशेपदंनैवोपलभ्यते ॥ एवंप्रज्ञानतृप्तस्यमुनेर्वर्त्मनदृश्यते २३

तानांगुणाः १४ । १५ कामइति कामादिमत्वादयमदांतइत्यर्थः अजिह्ममकुटिलं अशठंसुशीलं शुद्धंमनसा १६ अलोलुपःआशाहीनः । कामानांरूपादीनांअविचिंतिताध्यानमकुर्वन् । समुद्रकल्पःगंभीराशयः १७ प्रसन्नात्माशुद्धचित्तः अतएवात्मवित्बुधःज्ञातज्ञेयः प्रेत्यमृत्वा १८ । १९ । २० कर्मणेति दैववृत्तैर्भोगैः सदाचारेणच येयुक्तास्तेदांतास्तएवचमोदंते २१ नैष्कर्म्यंवाङ्मनःशरीराणांसर्वात्मनाअप्रवृत्तिः निर्विकल्पकावस्था तत्रहेतुः ज्ञानतृप्तःश्रवणमननजेनापरोक्षज्ञानेनतृप्तः रागद्वेषशून्यः तत्रापिहेतुः जितेंद्रियःकालाकांक्षीसर्वत्रममताशून्यःब्रह्मभूयायब्रह्मभावायकल्पते योग्योभवति २२ ब्रह्मभूयफलमाह शकुनीनामिति । 'नतस्यप्राणाउत्क्रामंत्यत्रैवसमवनीयंतेब्रह्मैवसन्ब्रह्माप्येति' इतिश्रुतेर्ब्रह्मविदोऽनुपाख्यंरूपंगतस्यगगनवद्विश्वव्यापिनोगत्यभावात्स्वर्गिणामिवतस्यमार्गोनदृश्यते २३

केवलसंन्यासात्क्रममुक्तिस्थानामाह उत्सृज्येति मोक्षंमोक्षाश्रमं शाश्वताःपुनरावृत्तिशून्याः २४ ॥ ॥ इति उद्योगपर्वणिनीलकंठीये भारतभावदीपे त्रिषष्टितमोऽध्यायः॥ ६३ ॥ ॥ ७ ॥ दमस्यश्रैष्ठ्यंप्रतिपाद्यादांतयोःकलहंकुर्वतोर्द्वयोरपिनाशइतिप्रतिपादयन्नाख्यायिकामुखेनाह शकुनीनामिति पूर्वेषांमुखात् १। २ विहायसंय्योम ३। ४। ५। ६। ७। ८। ९ अमित्रे

उत्सृज्यैवगृहान्यस्तुमोक्षमेवाभिमन्यते ॥ लोकास्तेजोमयास्तस्यकल्पंतेशाश्वतादिवि २४ ॥ इतिश्रीमहाभारतेउद्योगप०यानसंधिपर्वणिविदुरवाक्येत्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ विदुरउवाच ॥ शकुनीनामिहार्थायपाशंभूमावयोजयत् ॥ कश्चिच्छाकुनिकस्तातपूर्वेषामितिशुश्रुम १ तस्मिंस्तौशकुनौबद्धौयुगपत्सहचारिणौ ॥ तावुपादायतंपाशंजग्मतुःखचरावुभौ २ तौविहायसमाक्रांतौदृष्ट्वाशाकुनिकस्तदा ॥ अन्वधावदनिर्विण्णोयेनयेनस्मगच्छतः ३ तथातमनुधावंतंमृगयुंशकुनार्थिनम् ॥ आश्रमस्थोमुनिःकश्चिद्ददर्शाथकृताह्निकः ४ तावंतरिक्षगौशीघ्रमनुयांतंमहीचरम् ॥ श्लोकेनानेनकौरव्यपप्रच्छसमुनिस्तदा ५ विचित्रमिदमाश्चर्यंमृगहन्प्रतिभातिमे ॥ प्लवमानौहिखचरौपदातिरनुधावसि ६ ॥ शाकुनिकउवाच ॥ पाशमेकमुभावेतौसहितौहरतौमम ॥ यत्रवैविवदिष्येतेतत्रमेवशमेष्यतः ७ ॥ विदुरउवाच ॥ तौविवादमनुप्राप्तौशकुनौमृत्युसंधितौ ॥ विगृह्यचसुदुर्बुद्धीपृथिव्यांसंनिपेततुः ८ तौयुद्ध्यमानौसंरब्धौमृत्युपाशवशानुगौ ॥ उपसृत्यापरिज्ञातोजग्राहमृगहातदा ९ एवंयेज्ञातयोऽर्थेषुमिथोगच्छंतिविग्रहम् ॥ तेऽमित्रवशमायांतिशकुनाविवविग्रहात् १० संभोजनंसंकथनंसंप्रश्नोऽथसमागमः ॥ एतानिज्ञातिकार्याणिनविरोधःकदाचन ११ येस्मकालेसुमनसःसर्वेवृद्धानुपासते ॥ सिंहगुप्तमिवारण्यमप्रधृष्याभवंतिते १२ येऽर्थंसंततमासाद्यदीनाइवसमासते ॥ श्रियंतेसंप्रयच्छंतिद्विषद्भ्योभरतर्षभ १३ धूमायंतेव्यपेतानिज्वलंतिसहितानिच ॥ धृतराष्ट्रोल्मुकानीवज्ञातयोभरतर्षभ १४ इदमन्यत्प्रवक्ष्यामियथादृष्टंगिरौमया ॥ श्रुत्वातदपिकौरव्ययथाश्रेयस्तथाकुरु १५ वयंकिरातैःसहितागच्छामोगिरिमुत्तरम् ॥ ब्राह्मणैर्देवकल्पैश्चविद्याजंभकवार्तिकैः १६ कुंजभूतंगिरिंसर्वमभितोगंधमादनम् ॥ दीप्यमानौषधिगणंसिद्धगंधर्वसेवितम् १७ तत्रापश्यामवैसर्वेमधुपीतकमाक्षिकम् ॥ मरुप्रपातेविषमेनिविष्टंकुंभसंमितम् १८ आशीविषैरक्ष्यमाणंकुबेरदयितंभृशम् ॥ यत्प्राप्यपुरुषोमर्त्योऽप्यमरत्वंनियच्छति १९ अचक्षुर्लभतेचक्षुर्वृद्धोभवतिवैयुवा ॥ इतितेकथयंतिस्मब्राह्मणाजंभसाधकाः २० ततःकिरातास्तदृष्ट्वाप्रार्थयंतोमहीपते ॥ विनेशुर्विषमेतस्मिन्ससर्पेगिरिगह्वरे २१ तथैवतवपुत्रोऽयंपृथिवीमेकइच्छति ॥ मधुपश्यतिसंमोहात्प्रपातंनानुपश्यति २२ दुर्योधनोयोद्धुमनाःसमरेसव्यसाचिना ॥ नचपश्यामितेजोऽस्यविक्रमंवातथाविधम् २३ एकेनरथमास्थायपृथिवीयेननिर्जिता ॥ भीष्मद्रोणप्रभृतयःसंत्रस्ताःसाधुयायिनः २४ विराटनगरेभग्नाःकिंतत्रतवदृश्यताम् ॥ प्रतीक्षमाणोयोवीरःक्षमतेवीक्षितंतव २५

तिच्छेदः१०। ११। १२। १३ १४। १५ विद्याजंभकवार्तिकाः विद्यामंत्रयंत्रादिरूपा जंभकऔषधिसाधनानितद्वार्ताप्रियाःविद्याजंभकवार्तिकाः १६ कुंजभूतंसर्वतोलताभिःपरिवृतम् १७ पीतकमाक्षिकंसुवर्णमाक्षिकंधातुविशेषः १८। १९। २०। २१। २२। २३। २४ तवदृश्यतांत्वयाद्रष्टव्यंबलमितिशेषः योवीरःकर्णादिः २५

युद्ध्यतोरन्यतरस्यनाशोऽपित्वन्नाशइतिभावः २७ ॥ इतिउद्योगप० नी० भारतभा० चतुःषष्टित मोऽध्यायः ॥ ६४ ॥ दुर्योधनेति उत्पथंअमार्गमेवमार्गमन्यसे १ । २ परांगतिंमरणंअसंप्रेत्य
अप्राप्यमरिष्यस्येवेत्यर्थः ३ । ४ । ५ नशातयेत्नच्छिद्यात् ६ । ७ प्रतिमानेनतुल्यत्वेन ८ । ९ । १० भीष्मंतितिक्षस्वतद्वाक्यंगृहाणेत्यर्थः ११ । १२ । १३ । १४ । १५ वृत्त्याराज्यार्धं

द्रुपदोमत्स्यराजश्चसंक्रुद्धश्चधनंजयः ॥ नशेषयेयुःसमरेवायुयुक्ताइवाग्नयः २६ अंकेकुरुष्वराजानंधृतराष्ट्रयुधिष्ठिरम् ॥ युध्यतोर्हिद्वयोर्युद्धेनैकांतेनभवे
ज्जयः २७ ॥ इतिश्रीमहाभारतेउद्योगपर्वणियानसंधिपर्वणिविदुरवाक्येचतुःषष्टितमोऽध्यायः ॥ ६४ ॥ ॥ ७ ॥ ॥ धृतराष्ट्रउवाच ॥ दुर्योधनविजा
नीहियत्त्वांवक्ष्यामिपुत्रक ॥ उत्पथंमन्यसेमार्गमनभिज्ञइवाध्वगः १ पंचानांपांडुपुत्राणांयत्तेजःप्रजिहीर्षसि ॥ पंचानामिवभूतानांमहतांलोकधारिणाम् २
युधिष्ठिरंहिकौंतेयंपरंधर्ममिहास्थितम् ॥ परांगतिमसंप्रेत्यनत्वंजेतुमिहार्हसि ३ भीमसेनंचकौंतेयंयस्यनास्तिसमोबले ॥ रणांतकंतर्जयसेमहावातमिवद्रुमः
४ सर्वशस्त्रभृतांश्रेष्ठंमेरुंशिखरिणामिव ॥ युधिगांडीवधन्वानंकोनुयुद्ध्येतबुद्धिमान् ५ धृष्टद्युम्नश्चपांचाल्यःकमिवाद्यनशातयेत् ॥ शत्रुमध्येशरान्मुंचन्देव
राडशनीमिव ६ सात्यकिश्चापिदुर्धर्षःसंमतोंऽधकवृष्णिषु ॥ ध्वंसयिष्यतितेसेनांपांडवेयहितेरतः ७ यःपुनःप्रतिमानेनत्रीन्लोकानतिरिच्यते ॥ तंकृष्णंपुं
डरीकाक्षंकोनुयुद्ध्येतबुद्धिमान् ८ एकतोह्यस्यदाराश्चज्ञातयश्चसबांधवाः ॥ आत्माचपृथिवीचेयमेकतश्चधनंजयः ९ वासुदेवोऽपिदुर्धर्षोयतात्मायत्रपां
डवः ॥ अविषह्यंपृथिव्याऽपितद्बलंयत्रकेशवः १० तिष्ठतातसतांवाक्येसुहृदामर्थवादिनाम् ॥ वृद्धंशांतनवंभीष्मंतितिक्षस्वपितामहम् ११ मांचब्रुवाणं
शुश्रूषकुरूणामर्थदर्शिनम् ॥ द्रोणंकृपंविकर्णंचमहाराजंचबाह्लिकम् १२ एतेह्यपियथैवाहंमंतुमर्हसितांस्तथा ॥ सर्वेधर्मविदोह्येतेतुल्यस्नेहाश्चभारत १३ यत्तद्विरा
टनगरेसहभ्रातृभिरग्रतः ॥ उत्सृज्यगाःसुसंत्रस्तंबलंतेसमशीर्यत १४ यच्चैवनगरेतस्मिन्श्रूयतेमहदद्भुतम् ॥ एकस्यचबहूनांचपर्याप्तंतन्निदर्शनम् १५ अर्जुन
स्तत्तथाऽकार्षीत्किंपुनःसर्वएवते ॥ सभ्रातॄनभिजानीहिवृत्त्याराज्यार्धंप्रतिपादय १६ ॥ इतिश्रीमहा० उद्योगप० यानसं० धृतराष्ट्रवाक्येपंचषष्टितमोऽध्यायः ॥ ६५ ॥
॥ वैशंपायनउवाच ॥ एवमुक्त्वामहाप्राज्ञोधृतराष्ट्रःसुयोधनम् ॥ पुनरेवमहाभागःसंजयंपर्यपृच्छत १ ब्रूहिसंजययच्छेषंवासुदेवादनंतरम् ॥ यदर्जुनउवाचत्वां
परंकौतूहलंहिमे २ ॥ संजयउवाच ॥ वासुदेववचःश्रुत्वाकुंतीपुत्रोधनंजयः ॥ उवाचकालेदुर्धर्षोवासुदेवस्यशृण्वतः ३ पितामहंशांतनवंधृतराष्ट्रंचसंजय ॥ द्रोणं
कृपंचकर्णंचमहाराजंचबाह्लिकम् ४ द्रौणिंचसोमदत्तंचशकुनिंचापिसौबलम् ॥ दुःशासनंशलंचैवपुरुमित्रंविविंशतिम् ५ विकर्णंचित्रसेनंचजयत्सेनंचपार्थिवम् ॥
विंदानुविंदावावंत्यौदुर्मुखंचापिकौरवम् ६ सैंधवंदुःसहंचैवभूरिश्रवसमेवच ॥ भगदत्तंचराजानंजलसंधंचपार्थिवम् ७ येचाप्यन्येपार्थिवास्तत्रयोद्धुंसमागताःकौर
वाणांप्रियार्थम् ॥ मुमूर्षवःपांडवाग्नौप्रदीप्तेसमानीताधार्तराष्ट्रेणहोतुम् ८ यथान्यायंकौशलंवंदनंचसमागतामद्वचनेनवाच्याः ॥ इदंब्रूयाःसंजयराजमध्येसुयोधनं
पापकृतांनिधानम् ९ दानेनप्रतिपादयसंभावय १६ ॥ ॥ इति० उ० नी० भा० भा० पंचषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ एवमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९

१० लोहितांतेआयतेचअक्षिणीयस्यसलोहितांतायताक्षः ११ । १२ शराणांमिथःसन्निपातजोग्निस्तस्यधूमोयस्मिन् यज्ञेइतिशेषः रथध्वनिरेवमंत्रस्थाने धनुःस्रुवेणअस्त्रबलेनप्रसराति शास्त्रबलेनेवयज्ञः १३ । १४ चतुर्भुजमितिसंजयस्यापियोगिदृश्यंभगवतश्चतुर्भुजंरूपंसदादृष्टिगोचरमासीदित्यनुमीयते १५ ॥ ॥ इति उद्योगपर्वणि नीलकंठीये भारतभावदीपे षट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ ७ ॥ ॥ दुर्योधनेइति १ । २ परेषांतटस्थानां ३ । ४ युद्ध्यमानानसंतिउदासीनाइत्यर्थः ५ असूयामयिदोषदृष्टिःपितरंव्यासम् ६ । ७ । ८ । ९

अमर्षणंदुर्मतिंराजपुत्रंपापात्मानंधार्तराष्ट्रंसुलुब्धम् ॥ सर्वंममैतद्वचनंसमग्रंसहामात्यंसंजयश्रावयेथाः १० एवंप्रतिष्ठाप्यधनंजयोमांततोऽर्थवद्धर्मवच्चापिवाक्यम् ॥ प्रोवाचेदंवासुदेवंसमीक्ष्यपार्थोधीमाल्लोँहितांतायताक्षः ११ यथाश्रुतंतेवदतोमहात्मनोमधुप्रवीरस्यवचःसमाहितम् ॥ तथैववाच्यंभवताहिमद्वचःसमागतेषुक्षितिपेषुसर्वशः १२ शराग्निधूमेरथनेमिनादितेधनुःस्रुवेणास्त्रबलप्रसारिणा ॥ यथानहोमःक्रियतेमहामृधेसमेत्यसर्वेप्रयतध्वमादृताः १३ नचेत्प्रयच्छध्वममित्रघातिनोयुधिष्ठिरस्यांशमभीप्सितंस्वकम् ॥ नयामिवःसाश्वपदातिकुंजरान्दिशंपितॄणामशिवांशितैःशरैः १४ ततोऽहमामंत्र्यतदाधनंजयंचतुर्भुजंचैवनमस्यसत्वरः ॥ जवेनसंप्राप्तइहामरद्युतेतवांतिकंप्रापयितुंवचोमहत् १५ ॥ इतिश्रीमहाभारतेउद्योगपर्वणि यानसंधिपर्वणिसंजयवाक्येषट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ वैशंपायनउवाच ॥ दुर्योधनेधार्त्तराष्ट्रेतद्वचोनाभिनंदति ॥ तूष्णींभूतेषुसर्वेषुसमुत्तस्थुर्नरर्षभाः १ उत्थितेषुमहाराजपृथिव्यांसर्वराजसु ॥ रहितेसंजयंराजापरिप्रष्टुंप्रचक्रमे २ आशंसमानोविजयंतेषांपुत्रवशानुगः ॥ आत्मनश्चपरेषांचपांडवानांचनिश्चयम् ३ ॥ धृतराष्ट्रउवाच ॥ गावल्गणेब्रूहिनःसारफल्गुस्वसेनायांयावदिहास्तिकिंचित् ॥ त्वंपाण्डवानांनिपुणंवेत्थसर्वंकिमेषांज्यायःकिमुतेषांकनीयः ४ त्वमेतयोःसारवित्सर्वदर्शीधर्मार्थयोर्निपुणोनिश्चयज्ञः ॥ समेपृष्टःसंजयब्रूहिसर्वंयुध्यमानाःकतरेऽस्मिन्नसंति ५ ॥ संजयउवाच ॥ नत्वांब्रूयांरहितेजातुकिंचिदसूयाहित्वांप्रविशेतराजन् ॥ आनयस्वपितरंमहाव्रतंगांधारींचमहिषीमाजमीढ ६ तौतेऽसूयांविनयेतांनरेंद्रधर्मज्ञौतौनिपुणौनिश्चयज्ञौ ॥ तयोस्तुत्वांसन्निधौतद्वदेयंकृत्स्नंमतंकेशवपार्थयोर्यत् ७ ॥ वैशंपायनउवाच ॥ इत्युक्तेनचगांधारीव्यासश्चात्राजगामह ॥ आनीतौविदुरेणेहसभांशीघ्रंप्रवेशितौ ८ ततस्तन्मतमाज्ञायसंजयस्यात्मजस्यच ॥ अभ्युपेत्यमहाप्राज्ञःकृष्णद्वैपायनोऽब्रवीत् ९ ॥ व्यासउवाच ॥ संपृच्छतेधृतराष्ट्रायसंजयआचक्ष्वसर्वंयावदेषोऽनुयुंक्ते ॥ सर्वंयावद्वेत्थतस्मिन्यथावद्याथातथ्यंवासुदेवेऽर्जुनेच १० ॥ इतिश्रीमहाभारतेउद्योगपर्वणि यानसंधिपर्वणिव्यासगांधार्यागमने सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ अर्जुनोवासुदेवश्चधन्विनौपरमार्चितौ ॥ कामादन्यत्रसंभूतौसर्वभावायसंमितौ १



अनुयुंक्तेपृच्छति १० ॥ ॥ इति उ० नी० भा० भा० सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ ७ ॥ ॥ अर्जुनइति कामादितिकामपूर्वकंकर्मोच्यते अकर्मजंतयोर्जन्मलोकानुग्रहार्थंसूर्यवदाविर्भावमात्रमित्यर्थः सर्वभावायब्रह्मभावाय संमितौतुल्यौ उभावपिसाक्षाद्ब्रह्मरूपावित्यर्थः १

व्यामांतरंप्रसारितयोर्हस्तयोर्यावान्विस्तारःपंचहस्तमितःतावत्अंतरंमध्यप्रमाणंयस्यतद्व्यामांतरं यथामुक्तंयथायथारूपंयावत्प्रमाणंचितितंतावत्प्रमाणंभूत्वायत्तमुक्तंभवतिमाययादुर्लक्ष्यरूपे
णेत्यर्थः २ सापह्नवंससंहारंअतएवपांडवानांसुसंमतं ३ । ४ मनसैवसंकल्पमात्रेणविशिष्टात्माश्रेष्ठरूपः वशीऐश्वर्यवान् ५।६।७।८।९ विचेष्टयतिचालयति यतोभूतात्मासर्वेषांभूतानामंतरात्मा
१० सत्रंमिष । 'सत्रमाच्छादनेयज्ञेसदादानेचकैतवे'इतिविश्वः संमोहयन्आत्मनोजगत्कर्तृत्वेऽपिअकर्तृत्वंदर्शयन् ११कालचक्रंसंवत्सरात्मकं जगच्चक्रंजगतोजन्मस्थितिलयप्रवाहं युगचक्रंकर्म
चक्रं कृतंयत्रधर्मश्चतुष्पात् । त्रेतायांत्रिपाद्धर्मएकपादधर्मः । द्वापरेऽर्धधर्मोऽर्धमधर्मः । कलौत्रिपात्पापंएकपाद्धर्मइति । तदिदंकर्मचक्रंपुनःपुनर्जन्ममरणयोर्हेतुभूतं पुनःकर्मपुनःसंसारःपुनःकर्मे
त्येवंरूपं आत्मयोगेनचैतन्यसंबंधेन नहिसंवत्सरादिकंकेवलजडाश्रयंभवितुमर्हति सर्वस्यचिदेकप्रकाश्यत्वात् १२ कालःआयुःपरिच्छेदकर्त्रीदेवता मृत्युर्देहप्राणयोर्वियोगकर्त्री ईशतेईष्टे १३

व्यामांतरंसमास्थाययथामुक्तंमनस्विनः ॥ चक्रंतद्वासुदेवस्यमाययावर्ततेविभो २ सापह्नवंकौरवेषुपांडवानांसुसंमतम् ॥ सारासारबलंज्ञातुंतेजःपुंजावभासि
तम् ३ नरकंशंबरंचैवकंसंचैद्यंचमाधवः ॥ जितवान्घोरसंकाशान्क्रीडन्निवमहाबलः ४ पृथिवींचांतरिक्षंचद्यांचैवपुरुषोत्तमः ॥ मनसैवविशिष्टात्मानयत्या
त्मवशंवशी ५ भूयोभूयोहियद्राजन्पृच्छसेपांडवान्प्रति ॥ सारासारबलंज्ञातुंतत्समासेनमेशृणु ६ एकतोवाजगत्कृत्स्नमेकतोवाजनार्दनः ॥ सारतोजगतःकृ
त्स्नादातिरिक्तोजनार्दनः ७ भस्मकुर्याज्जगदिदंमनसैवजनार्दनः ॥ नतुकृत्स्नंजगच्छक्तंभस्मकर्तुंजनार्दनम् ८ यतःसत्यंयतोधर्मोयतोह्रीरार्जवंयतः ॥ ततोभ
वतिगोविंदोयतःकृष्णस्ततोजयः ९ पृथिवींचांतरिक्षंचदिवंचपुरुषोत्तमः ॥ विचेष्टयतिभूतात्माक्रीडन्निवजनार्दनः १० सकृत्वापांडवान्सत्रंलोकंसंमोहयन्निव
अधर्मनिरतान्मूढान्दग्धुमिच्छतितेसुतान् ११ कालचक्रंजगच्चक्रंयुगचक्रंचकेशवः ॥ आत्मयोगेनभगवान्परिवर्तयतेऽनिशम् १२ कालस्यचहिमृत्योश्चजंग
मस्थावरस्यच ॥ ईशतेभगवानेकःसत्यमेतद्ब्रवीमिते १३ ईशन्नपिमहायोगीसर्वस्यजगतोहरिः ॥ कर्माण्यारभतेकर्तुंकीनाशइववर्धनः १४ तेनवंचयतेलोका
न्माययायोगेनकेशवः ॥ येतमेवप्रपद्यंतेनतेमुह्यंतिमानवाः १५ ॥ इतिश्रीमहाभारतेउद्योगपर्वणियानसंधिपर्वणिसंजयवाक्येऽष्टषष्टितमोऽध्यायः ॥ ६८ ॥
॥ धृतराष्ट्रउवाच ॥ कथंत्वंमाधवंवेत्थसर्वलोकमहेश्वरम् ॥ कथमेनंनवेदाहंतन्ममाचक्ष्वसंजय १ ॥ संजयउवाच ॥ शृणुराजन्नतेविद्याममविद्यानहीयते ॥
विद्याहीनस्तमोध्वस्तोनाभिजानातिकेशवम् २ विद्ययाताततजानामित्रियुगंमधुसूदनम् ॥ कर्तारमकृतंदेवंभूतानांप्रभवाप्ययम् ३

ईशन्नपिईशानोऽपिशपोऽलुक्परस्मैपदंचार्षं कीनाशःकर्षकः वर्धनःधान्यादिवृद्धिकृत् यद्वाकीनाशोयमःवर्धनःदेहादेश्छेत्ता १४ तेनरानमुह्यंति १५ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभाव
दीपेअष्टषष्टितमोऽध्यायः ॥ ६८ ॥ कथंकेनप्रकारेणकानिज्ञानसाधनानिकानिवाज्ञानप्रतिबंधकानीतिप्रश्नार्थः १ विद्यातत्त्वमस्यादिवाक्यजंज्ञानंतेनहीनोयःसतमोध्वस्तस्तमसास्वस्वरूपात्
निर्विषयानंदमात्रात्च्युतः २ विद्ययातमोविरोधिन्या त्रियुगंत्रीणिस्थूलसूक्ष्मकारणशरीराणियुज्यंतेरज्जूरगवत्संबध्यंतेयस्मिन्अधिष्ठानभूतेतंत्रियुगं अज्ञानकल्पितस्यावस्थात्रयस्यविद्यया
बाधेसतिनिरुपाधिप्रत्यगात्मरूपंज्ञायतइत्यर्थः कर्तारंविश्वस्यनिमित्तकारणं । अकृतंकर्मभिरसाध्यंनित्यसिद्धत्वात् । भूतानांवियदादीनांप्रभवंउत्पत्तिस्थानं । अप्ययोलयस्थानम् ३

भक्तिःआराध्यत्वेनज्ञानं तच्चकीदृशं किंभेदेन राजवत्तटस्थतयाभगवान्ध्येयउतप्रत्यगात्मत्वेनेतिभावः ४ मायांपुत्रकलत्राद्याकारेणपरिणतामविद्यांनसेवे । वृथाधर्मंभगवदर्पणंविनानचरामि । शुद्धभावंमनसःकामक्रोधादिराहित्येननैर्मल्यंगतःप्राप्तः भक्त्याध्यानेन । शास्त्रात्तत्त्वमसीत्यागमात् । जनार्दनंजगल्लयाधिष्ठानंज्ञानमात्रमव्यवहितंब्रह्म । नास्मिसंसारीब्रह्मैवास्मीतितत्त्वालोचनात्मकेनज्ञानेनैवप्राप्यते । नायंसर्पोरज्जुरेवेयमितिवत् । नतुकीटभृंगन्यायेनभावनादित्यर्थः ५ । ६ अर्जुनेविशुद्धेकामक्रोधादिमलशून्येसख्यंवदन्भगवानस्ति अद्यकामाद्याक्रांतदशायां नाहंगच्छेनप्राप्नुयां आसुरोभावोनमयात्यक्तुंशक्योऽतोनमेतत्प्राप्तिसंभावनाऽपीत्यर्थः ७ अवाक्अधोनरकामित्यर्थः श्रेयसांसाधूनांवचनातिगःउपदेशावमानी ८ ९ । १० । ११ ऐकाग्र्यंशुश्रूषमाणंसेवमानंत्वांमोक्ष्यतेमोचयिष्यति १२ सिताःबद्धाःपाशैःकामादिभिः १३ अंधोनेतायेषांतेअंधनेत्राः १४ एषःज्ञानमार्गःएकायनःएकस्यब्रह्म

धृतराष्ट्रउवाच ॥ गावल्गणेऽत्रकाभक्तिर्यातेनित्याजनार्दने ॥ ययात्वमभिजानासित्रियुगंमधुसूदनम् ४ ॥ संजयउवाच ॥ मायांनसेवेभद्रंतेनवृथाधर्ममाचरे ॥ शुद्धभावंगतोभक्त्याशास्त्राद्वेद्मिजनार्दनम् ५ ॥ धृतराष्ट्रउवाच ॥ दुर्योधनहृषीकेशंप्रपद्यस्वजनार्दनम् ॥ आप्तोनःसंजयस्तातशरणंगच्छकेशवम् ६ दुर्योधनउवाच ॥ भगवान्देवकीपुत्रोलोकांश्चेन्निहनिष्यति ॥ प्रवदन्नर्जुनेसख्यंनाहंगच्छेऽद्यकेशवम् ७ ॥ धृतराष्ट्रउवाच ॥ अवाग्गांधारिपुत्रस्तेगच्छत्येषसुदुर्मतिः ॥ ईर्षुर्दुरात्मामानीचश्रेयसांवचनातिगः ८ ॥ गांधार्युवाच ॥ ऐश्वर्यकामदुष्टात्मन्वृद्धानांशासनातिग ॥ ऐश्वर्यजीवितेहित्वापितरंमांचबालिश ९ वर्धयन्दुर्हृदांप्रीतिंमांचशोकेनवर्धयन् ॥ निहतोभीमसेनेनस्मर्ताऽसिवचनंपितुः १० ॥ व्यासउवाच ॥ प्रियोऽसिराजन्कृष्णस्यधृतराष्ट्रनिबोधमे ॥ यस्यतेसंजयोदूतोयस्त्वांश्रेयसियोक्ष्यते ११ जानात्येषहृषीकेशंपुराणंयच्चवैपरम् ॥ शुश्रूषमाणमैकाग्र्यंमोक्ष्यतेमहतोभयात् १२ वैचित्रवीर्यपुरुषाःक्रोधहर्षसमावृताः ॥ सिताबहुविधैःपाशैर्येनतुष्टाःस्वकैर्धनैः १३ यमस्यवशमायांतिकाममूढाःपुनःपुनः ॥ अंधनेत्रायथैवांधानीयमानाःस्वकर्मभिः १४ एषएकायनःपंथायेनयांतिमनीषिणः ॥ तंदृष्ट्वामृत्युमत्येतिमहांस्तत्रनसज्जति १५ ॥ धृतराष्ट्रउवाच ॥ अंगसंजयमेशंसपंथानमकुतोभयम् ॥ येनगत्वाहृषीकेशंप्राप्नुयांसिद्धिमुत्तमाम् १६ ॥ संजयउवाच ॥ नाकृतात्माकृतात्मानंजातुविद्याज्जनार्दनम् ॥ आत्मनस्तुक्रियोपायोनान्यत्रेंद्रियनिग्रहात् १७ इंद्रियाणामुदीर्णानांकामत्यागोऽप्रमादतः ॥ अप्रमादोऽविहिंसाचज्ञानयोनिरसंशयम् १८ इंद्रियाणांयमेयत्तोभवराजन्नतंद्रितः ॥ बुद्धिश्चतेमाच्यवतुनियच्छैनांयतस्ततः १९ एतज्ज्ञानंविदुर्विप्राध्रुवमिंद्रियधारणम् ॥ एतज्ज्ञानंचपंथाश्चयेनयांतिमनीषिणः २०

णःप्रापकःतंदृष्ट्वातंमार्गंज्ञात्वा मृत्युंसंसारंअत्येतिअतिक्रम्यगच्छति । अभ्येतीतिपाठेआत्मत्वेनमृत्युरप्येनंप्रविशतीत्यर्थः तथाचश्रुतिः । ‘ तस्यहनदेवाश्चनाभूत्याईशतआत्माह्येषांसभवति ’इति देवाश्चनदेवाअपितत्रसंसारेमहान्नसज्जातिसक्तोनभवति १५ सिद्धिंमोक्षं १६ अकृतात्माअजितमनाःकृतात्मानंनित्यसिद्धंप्रत्यगात्मानं । आत्मनःस्वस्यइंद्रियनिग्रहादन्यत्रइंद्रियनिग्रहंविनाक्रियायागादिरूपउपायःप्राप्त्युपायोनास्ति १७ इंद्रियाणांअप्रमादतःअवहितत्वयाकामत्यागः अप्रमादःअविहिंसेतिच्छेदः ज्ञानस्ययोनिःकारणं १८ माच्यवतुतत्त्वात्प्रच्युतामाभूत् यतस्ततःसर्वेभ्यआंतरेभ्योबाह्येभ्यश्चविषयेभ्योनियच्छनिगृह्णीष्व १९ इंद्रियाणांसमनस्कानांधारणंनिग्रहणम् २०

आगमाधिगमात् शास्त्रयुक्त्योर्लाभात् योगात् चित्तवृत्तिनिरोधात् वशी ईश्वरः तत्त्वे स्वयाथात्म्ये विषये प्रसीदति ज्ञानदानेन अनुगृह्णाति ११ ॥ इति उद्योगपर्वणि नीलकंठीये भारतभावदीपे ऊनसप्ततितमोऽध्यायः ॥ ६९ ॥ भूय इति नाम्नां कर्मणां च अर्थवित् भूत्वा १ यावदभिजाने तावद्वदामीति शेषः वस्तुतस्तु सः अप्रमेयो वाचामगोचरः २ वस्ते आच्छादयति मायया आवृणोतीति वा वस्यति तिस्तत्र अति भुवनमिति वा वसत्यस्मिन् भुवनमिति वा वासुः स चासौ देवो द्योतमानश्च वासुदेवः वसंति देवा अस्मिन्निति वा करणग्रामस्योद्भवप्रलयस्थानमित्यर्थः । बृहत्वाद्व्यापकत्वात् वेवेष्टि व्याप्नोति सर्वमिति विष्णुः ३ मौनात् ध्यानाच्च योगाच्चेति माधीवृत्तिः तां स्वस्य उपाधिभूतां मौनादिभिः धवयति दूरीकरोतीति माधवः मौनं मुनेः कर्म मननं शास्त्रतो युक्तितश्च तत्त्वालोचनं ध्यानं निश्चिते तत्त्वे चेतसः प्रणिधानं योगस्तस्यैव चेतसो निरोधः । मधुसूदनो मधोर्दैत्यस्य नाशकः श्रीकृष्णः सर्वाणि चतुर्विंशतिसंख्यानि तत्त्वानि तन्मयत्वात् तत्प्रधानत्वात् मधुहा मधूनि पृथिव्यादीनि हंति संहरति गच्छति वा एनमिति मधुहा । इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मध्विति श्रुत्या पृथिव्यादितत्त्वजातस्य मधुशब्देनैव निर्देशात् ४ कृषिः कर्षत्यात्मनि सर्वं संहरतीति कृषिः सर्वप्रपंचबाधावधिभूतं सत्तामात्रं भूवाचकः भवतीति भूः सत्ता तद्वाचकः कृषिरिति शब्दः णश्च निर्वृतिः सुखं विष्णुस्तद्भावयोगात् वर्थयोर्योगात् कृष्णः सन्मात्रानंदरूपो भवतीत्यर्थः ५ पुंडरीकं श्वेतपद्मं तत्सदृशं

अप्राप्यः केशवो राजन्निंद्रियैरजितैर्नृभिः ॥ आगमाधिगमाद्योगाद्वशी तत्त्वे प्रसीदति २१ ॥ इति श्रीमहाभारते उ० यानसं० संजयवाक्ये ऊनसप्ततितमोऽध्यायः ॥ ६९ ॥ ७ ॥ धृतराष्ट्र उवाच ॥ भूयो मे पुंडरीकाक्षं संजयाचक्ष्व पृच्छतः ॥ नामकर्मार्थवित्तात प्राप्नुयां पुरुषोत्तमम् १ ॥ संजय उवाच ॥ श्रुतं मे वासुदेवस्य नामनिर्वचनं शुभम् ॥ यावत्तत्राभिजानेऽहमप्रमेयो हि केशवः २ वसनात्सर्वभूतानां वसुत्वाद्देवयोनितः ॥ वासुदेवस्ततो वेद्यो बृहत्वाद्विष्णुरुच्यते ३ मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवम् ॥ सर्वतत्त्वमयत्वाच्च मधुहा मधुसूदनः ४ कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ॥ विष्णुस्तद्भावयोगाच्च कृष्णो भवति सात्वतः ५ पुंडरीकं परं धाम नित्यमक्षयमव्ययम् ॥ तद्भावात्पुंडरीकाक्षो दस्युत्रासाज्जनार्दनः ६ यतः सत्वान्न च्यवते यच्च सत्वान्न हीयते ॥ सत्वतः सात्वतस्तस्मादार्षभादृषभेक्षणः ७ न जायते जनित्राऽयमजस्तस्मादनीकजित् ॥ देवानां स्वप्रकाशत्वाद्दमाद्दामोदरो विभुः ८ हर्षात्सुखात्सुखैश्वर्याद्धृषीकेशत्वमश्नुते ॥ बाहुभ्यां रोदसी बिभ्रन्महाबाहुरिति स्मृतः ९ अधो न क्षीयते जातु यस्मात्तस्मादधोक्षजः ॥ नराणामयनाच्चापि ततो नारायणः स्मृतः १०

पुंडरीकमिव पुंडरीकं हृदयकमलं धाम वासस्थानं तत्र सन्नपि अक्षो न क्षीयते हन्यते वेति पुंडरीकाक्षः । तथा च श्रुतिः 'नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते' इति । हृत्पद्मदोषैर्जरानाशादिभिः परमात्मनोऽस्पृष्टत्वमाह । दस्युत्रासात् जनं दस्युजनं अर्दयति पीडयतीति जनार्दन इत्यर्थः ६ सत्वमबाधितत्वमस्यास्तीति सत्वतः । तप्पर्वमरुद्भ्यामिति स्मृतो मत्वर्थीयस्तप्प्रत्ययो बाहुलकात् सत्वशब्दादपि बोध्यः । अत्र सत्वेन अत्याज्यः सत्वं च यस्य अत्याज्यं स सत्वतः सत्वत एव सात्वतः । राक्षसवायसादिवत् स्वार्थे तद्धितः । आर्षवेदस्तेन भातीत्यार्षभ औपनिषदः पुरुषः उपनिषद्वेद्यत्वाद्योगात् ऋषभेक्षणः । तथा चायं योगः वृषं धर्मं भासयतीति वृषभो वेदस्तदेव ईक्षणं चक्षुरिव ज्ञापकं यस्य सः वृषभेक्षण इति ७ न जायत इत्यजः अनीकजित्सेनाजित् कृष्णः देवानां इंद्रियाणां मध्ये स्वप्रकाशत्वात् ऋगतावित्यस्मादुत्पूर्वात् अप् । उत् उत्कर्षेण ऋच्छति प्रकाशत इति उदरः दमोऽस्यास्तीति दामः दामश्चासावुदरश्चेति दामोदरः । दामादिति पाठे दम एव दामस्तस्मात् ८ हर्षादिति हृष्यत्यनेनेति हृषीकं हृष्टिसुखं सुखं स्वरूपानंदः ईशः ईशनवान् अतो हृषीकेशः ९ अधो न क्षीयते जातु इति विग्रहवाक्ये उत्तरपदावयवलोपेन अधोक्षजः सततोर्ध्वरूपः संसारधर्मेणास्पृष्ट इत्यर्थः १०

पूरयतीतिपुरुः सीदंत्यस्मिन्निति सः तस्मात्पुरुषः सचासाउत्तमश्चपुरुषोत्तमः असतः कारणस्य सतः कार्यस्यप्रभवाप्ययात् उत्पत्तिप्रलयस्थानत्वात् ११ सत्येधर्मे १२ सत्यात् धर्मात् तत्फलात् ब्रह्मलोकावधेरपि सत्यं अबाधितं अतः सत्योऽपिनामतः । विशेषेणस्तौति दिस्रवते गच्छतीतिविष्णुरित्यर्थः । एवंजयतीतिजिष्णुः १३ शाश्वतत्वात् शश्वद्भवत्वात् गवांइंद्रियाणांवेदनात् लाभात् प्रकाशाद्वागोविंदः अतत्त्वंमिथ्याभूतंजगत् तत्त्वंसत्यमित्रस्वीयसत्तास्फूर्तिप्रदानेनकरोतितिनहेतुनालोकान्मोहयति १४ धर्मेनित्यंसन्निधानात् धर्मेनित्यः आगंताआगमिष्यति आनृशंस्यार्थं कुरूणांक्षयोमाभूदितिकृपांकर्तुम् १५ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेसप्ततितमोऽध्यायः ॥ ७० ॥ ॥ ७ ॥ ॥ चक्षुष्मतांभाग्यायस्पृहया

पूरणात्सदनाच्चापिततोऽसौपुरुषोत्तमः ॥ असतश्चसतश्चैवसर्वस्यप्रभवाप्ययात् ११ सर्वस्यचसदाज्ञानात्सर्वमेतंप्रचक्षते ॥ सत्येप्रतिष्ठितःकृष्णःसत्यमत्रप्रतिष्ठितम् १२ सत्यात्सत्यंतुगोविंदस्तस्मात्सत्योऽपिनामतः ॥ विष्णुर्विक्रमणाद्देवोजयनाज्जिष्णुरुच्यते १३ शाश्वतत्वादनंतश्चगोविंदोवेदनाद्गवाम् ॥ अतत्त्वंकुरुतेतत्त्वंतेनमोहयतेप्रजाः १४ एवंविधोधर्मनित्योभगवान्मधुसूदनः ॥ आगंताहिमहाबाहुरानृशंस्यार्थमच्युतः १५ ॥ इतिश्रीमहाभारतेउद्योगपर्वणियानसंधिपर्वणिसंजयवाक्येसप्ततितमोऽध्यायः ॥ ७० ॥ ॥ ७ ॥ ॥ धृतराष्ट्रउवाच ॥ चक्षुष्मतांवैस्पृहयामिसंजयद्रक्ष्यंतियेवासुदेवंसमीपे ॥ विभ्राजमानंवपुषापरेणप्रकाशयंतंप्रदिशोदिशश्च १ ईरयंतंभारतींभारतानामभ्यर्चनीयांशंकरींसृंजयानाम् ॥ बुभूषद्भिर्ग्रहणीयामनिंद्यांपरासूनामग्रहणीयरूपाम् २ समुद्यंतंसात्वतमेकवीरंप्रणेतारमृषभंयादवानाम् ॥ निहंतारंक्षोभणंशात्रवाणांमुंचंतंचद्विषतांवैयशांसि ३ द्रष्टारोहिकुरवस्तंसमेतामहात्मानंशत्रुहणंवरेण्यम् ॥ ब्रुवंतंवाचमनृशंसरूपांवृष्णिश्रेष्ठंमोहयंतंमदीयान् ४ ऋषिंसनातनतमंविपश्चितंवाचःसमुद्रंकलशंयतीनाम् ॥ अरिष्टनेमिंगरुडंसुपर्णंहरिंप्रजानांभुवनस्यधाम ५ सहस्रशीर्षंपुरुषंपुराणमनादिमध्यांतमनंतकीर्तिम् ॥ शुक्रस्यधातारमजंचनित्यंपरंपरेषांशरणंप्रपद्ये ६ त्रैलोक्यनिर्माणकरंजनित्रंदेवासुराणामथनागरक्षसाम् ॥ नराधिपानांविदुषांप्रधानमिंद्रानुजंतंशरणंप्रपद्ये ७ ॥ इति० उ० यानसं० धृतराष्ट्रवाक्येएकसप्ततितमोऽध्यायः ॥ ७१ ॥ ७ ॥ ॥समाप्तंचयानसंधिपर्व ॥ अथभगवद्यानपर्व ॥ वैशंपायनउवाच ॥ संजयेप्रतियातेतुधर्मराजोयुधिष्ठिरः ॥ अभ्यभाषतदाशार्हमृषभंसर्वसात्वताम् १ अयंसकालःसंप्राप्तोमित्राणांमित्रवत्सल ॥ नचत्वदन्यंपश्यामियोनआपत्सुतारयेत् २ त्वांहिमाधवमाश्रित्यनिर्भयामोघदर्पितम् ॥ धार्तराष्ट्रंसहामात्यंस्वयंसमनुयुंक्ष्महे ३

मि धन्याश्चक्षुष्मंतइत्यर्थः चक्षुष्मतांज्ञानवतांवा परेणचिन्मात्रेणवपुषास्वरूपेण १ भारतानांपांडवानांभारतींवाचंईरयंतंअस्मत्सभायांकथयंतं शंकरींकल्याणकरीं बुभूषद्भिःऐश्वर्यमिच्छद्भिः परासूनांमृतानां २ उद्यंतंप्रकटीभवंतंदेहरूपेणेत्यर्थात् शाश्वतंनित्यम् ३ वरेण्यंवरणीयम् ४ ऋषिंमुख्यंनारायणं । विपश्चितंआत्मज्ञं । यतीनांसंन्यासिनांकलशमिवकलशंकरग्राह्यं । समुद्रंयोगमुद्रयोपेतं । अरिष्टःअहिंसितःनेमिःपादोयस्यसःअरिष्टनेमिरितिप्राञ्चः अरिष्टनेमिर्नामतः अहिंसितमर्यादः नेमिरिवनेमिर्मर्यादा । गरुडंजातितः । सुपर्णंशोभनपक्षं हरिंहर्त्तारम् ५ आदिःकारणं । शुक्रस्यकर्मजन्यस्यबीजभूतस्यपुण्यादेः धातारंप्रतिभूरूपं । परेषांविराडादीनांपरंश्रेष्ठम् ६ निर्माणंरचना जनित्रंजनयितारम् ७ ॥ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिनीलकंठीयेभारतभावदीपे एकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ संजयेइति १ । २ मोघंदर्पितंयस्य अनुयुंक्ष्महे प्रार्थयामहे ३

४ । ५ । ६ विवृतांतरःप्रकाशितभावः ७ । ८ । छद्मनाअज्ञानचर्यया ९ स्थातास्थास्यति नःअस्माकं तस्मिन्चतुर्दशेवर्षेस्वंराज्यंगृह्णीतेत्यस्मिन् नअहास्मनत्यक्तवंतोवयं १० । ११ । १२ मातरंसंविधातुंसम्यक्पोषयितुं ततःतत्रस्थामित्यर्थः मित्राणांकर्मणिषष्ठी मातुरितिपाठेअंततोऽन्येषांवणिक्प्रभृतीनांनागरिकाणांपरित्यागेऽपिमातरंमित्राणिचविदुरादीनिसंविधातुमितिप्राग्वत् १३ काशिभिःराजभिः नाथेननाथवता भवदनुग्रहावशक्तेनापीत्यर्थः १४ अवसीयतेसंस्थीयतेऽस्मिन्नित्यवसानंयावज्जीवनंवासस्थानं १५ नःअस्माकंक्तेभरताःभरतवंश्यामीष्मादयः

यथाहिसर्वास्वापत्सुपासिवृष्णीनरिंदम ॥ तथातेपांडवारक्ष्याःपाह्यस्मान्महतोभयात् ४ ॥ श्रीभगवानुवाच ॥ अयमस्मिमहाबाहोब्रूहियत्तेविवक्षितम् ॥ करिष्यामिहितत्सर्वंयत्त्वंवक्ष्यसिभारत ५ ॥ युधिष्ठिरउवाच ॥ श्रुतंतेधार्तराष्ट्रस्यसपुत्रस्यचिकीर्षितम् ॥ एतद्धिसकलंकृष्णसंजयोमांयदब्रवीत् ६ तन्मतंधृतराष्ट्रस्यसोऽस्यात्माविवृतांतरः ॥ यथोक्तंदूतआचष्टेवध्यःस्यादन्यथाब्रुवन् ७ अप्रदानेनराज्यस्यशांतिमस्मासुमार्गति ॥ लुब्धःपापेनमनसाचरन्नसममात्मनः ८ यत्तद्द्वादशवर्षाणिवनेषुघुषितावयम् ॥ छद्मनाशरदंचैकांधृतराष्ट्रस्यशासनात् ९ स्थातानःसमयेतास्मिन्धृतराष्ट्रइतिप्रभो ॥ नाहास्मसमयंकृष्णतद्धिनोब्राह्मणाविदुः १० वृद्धोराजाधृतराष्ट्रःस्वधर्मंनानुपश्यति ॥ वश्यत्वात्पुत्रगृद्धित्वान्मंदस्यान्वेतिशासनम् ११ सुयोधनमतेतिष्ठन्राजाऽस्मासुजनार्दन ॥ मिथ्याचरतिलुब्धःसन्चरान्हिप्रियमात्मनः १२ इतोदुःखतरंकिंनुयदहंमातरंततः ॥ संविधातुंनशक्नोमिमित्राणांवाजनार्दन १३ काशिभिश्चेदिपांचालैर्मत्स्यैश्चमधुसूदन ॥ भवताचैवनाथेनपंचग्रामावृतामया १४ अविस्थलंवृकस्थलंमाकंदीवारणावतम् ॥ अवसानंचगोविंदकिंचिदेवात्रपंचमम् १५ पंचनस्तातदीयंतांग्रामावानगराणिवा ॥ वसेमसहितायेषुमाचनोभरतानशन् १६ नचतानपिदुष्टात्माधार्तराष्ट्रोऽनुमन्यते ॥ स्वाम्यमात्मनिमत्वाऽसावतोदुःखतरंनुकिम् १७ कुलेजातस्यवृद्धस्यपरवित्तेषुगृद्धचतः ॥ लोभःप्रज्ञानमाहंतिप्रज्ञाहंतिहताह्रियम् १८ ह्रीर्हताबाधतेधर्मंधर्मोहंतिहतःश्रियम् ॥ श्रीर्हतापुरुषंहंतिपुरुषस्याधनंवधः १९ अधनाद्धिनिवर्तंतेज्ञातयःसुहृदोद्विजाः ॥ अपुष्पादफलाद्वृक्षाद्यथाकृष्णपतत्रिणः २० एतच्चमरणंतातयन्मत्तःपतितादिव ॥ ज्ञातयोविनिवर्तंतेप्रेतसत्वादिवासवः २१ नातःपापीयसींकांचिदवस्थांशंबरोऽब्रवीत् ॥ यत्रनैवाद्यनप्रातर्भोजनंप्रतिदृश्यते २२ धनमाहुःपरंधर्मंधनेसर्वंप्रतिष्ठितम् ॥ जीवंतिधनिनोलोकेमृतायेत्वधनानराः २३ येधनादपकर्षंतिनरंस्वबलमास्थिताः ॥ तेधर्ममर्थंकामंचप्रमथ्नंतिनरंचतम् २४ एतामवस्थांप्राप्यैकेमरणंवव्रिरेजनाः ॥ ग्रामायैकेवनायैकेनाशायैकेप्रवव्रजुः २५ उन्मादमेकेपुष्यंतियांत्यन्येद्विषतांवशम् ॥ दास्यमेकेचगच्छंतिपरेषामर्थहेतुना २६

मानशन् मानश्यंतु १६ तानपिभरतानपि १७ कुलेइतिद्वाभ्यागर्वजादोषसंततिरुक्ता १८ । १९ द्विजाःअर्थिनः २० प्रेतसत्वात्प्रगतबुद्धेर्मृतादित्यर्थः २१ । २२ धर्मंधर्मकारणंसर्वंयज्ञदानादि येअधनास्तेमृताएव २३ । २४ एतांनिर्धनताख्यां एकेनागरिकाः ग्रामायकुग्रामवासार्थं वनायास्मदादयः नाशायमरणाय २५ । २६

आपत्पदार्थमाह श्रियोविनाशइति ताद्धिश्रीर्हि २७ धर्म्यंदेहस्वभावात्प्राप्तं नतुदारिद्र्याद्यपराधजं मरणंतच्छाश्वतंअनिमित्तमित्यर्थः समंतात्सर्वत्रअपरिहार्यमितिशेषः नात्येतिनातिक्राम ति २८ । २९ तदासंपत्कालेआत्मापराधेनचित्तदोषेणरागादिना नात्मानंचेत्यस्यनचात्मानमित्यर्थः ३० अस्यव्यसनस्यनिबर्हणेनाशनिमित्तम् ३१ तत्तदासर्वदेत्यर्थः मन्युःक्रोधःसत द्वानेवेत्यर्थः मुह्यातिकार्याकार्येनजानाति ३२। ३३ एवंश्रियायुक्तानांनरकप्राप्तिमुक्त्वातेषामुद्धारोपायमाह तस्येति तस्यश्रीमतः अविद्ययानिद्राणस्यप्रज्ञाविवेकःसएवप्रबोधोजागरणंयतःप्रज्ञा

आपदेवास्यमरणात्पुरुषस्यगरीयसी ॥ श्रियोविनाशस्तद्धचस्यानिमित्तंधर्मकामयोः २७ यदस्यधर्म्यंमरणंशाश्वतंलोकवर्त्मतत् ॥ समंतात्सर्वभूतानांनतद त्येतिकश्चन २८ नतथाबाध्यतेकृष्णप्रकृत्यानिर्धनोजनः ॥ यथाभद्रांश्रियंप्राप्यतयाहीनःसुखैधितः २९ सतदाऽत्मापराधेनसंप्राप्तोव्यसनंमहत् ॥ सेंद्रान्ग र्हयतेदेवान्नात्मानंचकथंचन ३० नचास्यसर्वशास्त्राणिप्रभवंतिनिबर्हणे ॥ सोभिक्रुद्ध्यतिभृत्यानांसुहृदश्चाभ्यसूयति ३१ तत्तदामन्युरेवैतिसभूयःसंप्रमुह्य ति ॥ समोहवशमापन्नःक्रूरंकर्मनिषेवते ३२ पापकर्मतयाचैवसंकरंतेनपुष्यति ॥ संकरोनरकायैवसाकाष्ठापापकर्मणाम् ३३ नचेत्प्रबुद्ध्यतेकृष्णनरकायैव गच्छति ॥ तस्यप्रबोधःप्रज्ञैवप्रज्ञाचक्षुस्तरिष्यति ३४ प्रज्ञालाभेहिपुरुषःशास्त्राण्येवान्ववेक्षते ॥ शास्त्रनिष्ठःपुनर्धर्मंतस्यह्रीरंगमुत्तमम् ३५ ह्रीमान्हिपा पंप्रद्वेष्टितस्यश्रीरभिवर्धते ॥ श्रीमान्सयावद्भवतितावद्भवतिपूरुषः ३६ धर्मनित्यःप्रशांतात्माकार्ययोगवहःसदा ॥ नाधर्मेकुरुतेबुद्धिंनचपापेप्रवर्तते ३७ अ ह्रीकोवाविमूढोवानैवस्त्रीनपुनःपुमान् ॥ नास्याधिकारोधर्मेस्तियथाशूद्रस्तथैवसः ३८ ह्रीमानवतिदेवांश्चपितॄनात्मानमेवच ॥ तेनामृतत्वंव्रजतिसाकाष्ठा पुण्यकर्मणाम् ३९ तदिदंमयितेदृष्टंप्रत्यक्षंमधुसूदन ॥ यथाराज्यात्परिभ्रष्टोवसामिवसतीरिमाः ४० तेवयंनश्रियंहातुमलंन्यायेनकेनचित् ॥ अत्रनोयतमा नानांवधश्चेदपिसाधुतत् ४१ तत्रनःप्रथमःकल्पोयद्वयंतेचमाधव ॥ प्रशांताःशमभूताश्चश्रियंतामश्नुवीमहि ४२ तत्रैषापरमाकाष्ठारौद्रकर्मक्षयोदया ॥ यद्वयं कौरवान्हत्वातानिराष्ट्राण्यवाप्नुमः ४३ येपुनःस्युरसंबद्धाअनार्याःकृष्णशत्रवः ॥ तेषामप्यवधःकार्यःकिंपुनर्येस्युरीदृशाः ४४ ज्ञातयश्चैवभूयिष्ठाःसहायागु रवश्चनः ॥ तेषांवधोऽतिपापीयान्किंनुयुद्धेऽस्तिशोभनम् ४५ पापःक्षत्रियधर्मोऽयंवयंचक्षत्रबंधवः ॥ सनःस्वधर्मोऽधर्मोवावृत्तिरन्याविगर्हिता ४६ शूद्रःकरोतिशुश्रूषांवैश्यावैपण्यजीविकाः ॥ वयंवधेनजीवामःकपालंब्राह्मणैर्वृतम् ४७

चक्षुःपुमान्तरिष्यति अविद्यामितिशेषः ३४ तरणेक्रममाह प्रज्ञेति धर्मंकरोतीतिशेषः तस्यधर्मस्यन्हीरकार्यंकरणान्निवृत्तिहेतुश्चेतोवृत्तिविशेषः । न्हीहीनेनकृतोधर्मोऽप्यधर्मएवेतिभावः ३५ ३६ । ३७ अन्हीकःतिर्यक्स्थात्ररतुल्योनमनुष्यइत्यर्थः ३८ । ३९ इदंन्हीमत्त्वंतेत्वयामयिदृष्टम् ४० अत्रश्रीनिमित्तं नःअस्माकम् ४१ प्रथमःकल्पःमुख्यःपक्षः समभूताःनिर्वैरत्वंगताः ४२ रौ द्रकर्मरौद्रकर्मणां सुपांसुलुगितिसप्तम्याश्चलुक् क्षयोदयाक्षयपूर्वकउदयोयस्यांसा रौद्रकर्मणांपरमाकाष्ठेतिसंबंधः ४३ असंबद्धाःअबांधवाः अवधःवधविरुद्धंपालनं ईदृशाइति बांधवाआर्याश्श त्रवश्चयेतेषांमवधःकार्यइतिकिमाश्चर्यमित्यर्थः ४४ तदेवाह ज्ञातयइति भूयिष्ठाः अतिमहांतः ४५ । ४६ कपालंभिक्षापात्रम् ४७

यथायेनप्रकारेणआगतःकुलपरंपरयाप्राप्तस्तंपश्येतियोजना ४८ बलमिति नीतिमेवबलंकृत्वायुध्येयोत्स्ये जयपराजयौतुआत्मच्छंदेनस्वेच्छयानभवतः तथातद्वद्भूतानांजीवितंमरणंचस्वेच्छया नस्तः ४९ । ५० । ५१ पराजयभयाद्यपयानेपलायनेऽपिअपचयःक्षयश्चयौदृष्टौभवतएव अपचयोदीनता क्षयोमरणं तत्रहेतुःव्ययःद्रव्यादेर्नाशः ५२ । ५३ विजयोऽप्यजयःपराजयएवइष्टज ननाशादित्याह यस्येति ५४ दयितंपुत्रादि हेअंग बलहीनस्यजातिबलहीनस्य ५५ । ५६ यवीयान्कनिष्ठः अनुशयःपश्चात्तापः ५७ अनुबंधोदोषोत्पादःसचपापःकष्टप्रदःशेषःशत्रोः शेषस्तस्य ५८ । ५९ । ६० अनिर्वृत्तेनअस्वस्थेन ६१ । ६२ । ६३ अतइति यतःअंतरंछिद्रंनित्यंअपरिहार्यंअतोहेतोःअंततोऽन्यथास्वस्यशत्रोर्वानाशंविनाशांतिर्नास्ति ६४ अयं

क्षत्रियःक्षत्रियंहंतिमत्स्योमत्स्येनजीवति ॥ श्वाश्वानंहंतिदाशार्हपश्यधर्मोयथागतः ४८ युद्धेकृष्णकलिर्नित्यंप्राणाःसीदंतिसंयुगे ॥ बलंतुनीतिमाधाययु द्ध्येजयपराजयौ ४९ नात्मच्छंदेनभूतानांजीवितंमरणंतथा ॥ नाप्यकालेसुखंप्राप्यंदुःखंवापियदूत्तम ५० एकोह्यपिबहून्हंतिघ्नंत्येकंबहवोऽप्युत ॥ शूरं कापुरुषोहंतिअयशस्वीयशस्विनम् ५१ जयोनैवोभयोर्दृष्टोनोभयोश्चपराजयः ॥ तथैवापचयोदृष्टोव्यपयानेक्षयव्ययौ ५२ सर्वथावृजिनंयुद्धंकोघ्नन्नप्रतिह न्यते ॥ हतस्यचहृषीकेशसमौजयपराजयौ ५३ पराजयश्चमरणान्मन्येनैवविशिष्यते ॥ यस्यस्याद्विजयःकृष्णतस्याप्यपचयोध्रुवम् ५४ अंततोदयि तंघ्नंतिकेचिदप्यपरेजनाः ॥ तस्यांगबलहीनस्यपुत्रान्भ्रातॄनपश्यतः ५५ निर्वेदोजीवितेकृष्णसर्वतश्चोपजायते ॥ येह्येवधीराह्रीमंतआर्याःकरुणवेदिनः ५६ तएवयुद्धेहन्यंतेयवीयान्मुच्यतेजनः ॥ हत्वाऽप्यनुशयोनित्यंपरानपिजनार्दन ५७ अनुबंधश्चपापोत्रशेषश्चाप्यवशिष्यते ॥ शेषोहिबलमासाद्यनशेषम नुशेषयेत् ५८ सर्वोच्छेदेचयततेवैरस्यांतविधित्सया ॥ जयोवैरंप्रसृजतिदुःखमास्तेपराजितः ५९ सुखंप्रशांतःस्वपितिहित्वाजयपराजयौ ॥ जातवैरश्चपु रुषोदुःखंस्वपितिनित्यदा ६० अनिर्वृत्तेनमनसाससर्पइववेश्मनि ॥ उत्सादयतियःसर्वंयशसासविमुच्यते ६१ अकीर्तिंसर्वभूतेषुशाश्वतींसनियच्छति ॥ न हिवैराणिशाम्यंतिदीर्घकालधृतान्यपि ६२ आख्यातारश्चविद्यंतेपुमांश्चेद्विद्यतेकुले ॥ नचापिवैरंवैरेणकेशवव्युपशाम्यति ६३ हविषाग्निर्यथाकृष्णभूयए वाभिवर्धते ॥ अतोऽन्यथानास्तिशांतिर्नित्यमंतरमंततः ६४ अंतरंलिप्समानानामयंदोषोनिरंतरः ॥ पौरुषेयोहिबलवानाधिर्हृदयबाधनः ॥ तस्यत्यागे नवाशांतिर्मरणेनापिवाभवेत् ६५ अथवामूलघातेनद्विषतांमधुसूदन ॥ फलनिर्वृत्तिरिद्धास्यात्तन्नृशंसतरंभवेत् ६६ यातुत्यागेनशांतिःस्यात्तदृतेवधएव सः ॥ संशयाच्चसमुच्छेदाद्द्विषतामात्मनस्तथा ६७ नचत्यक्तुंतदिच्छामोनचेच्छामःकुलक्षयम् ॥ अत्रयाप्रणिपातेनशांतिःसैवगरीयसी ६८

दोषःनाशाख्यः अंततइत्येतद्व्याचष्टेपौरुषेयइतिसार्धेन ६५ द्विषतांमूलघातेनफलनिर्वृत्तिःनिष्कंटकराज्यप्राप्तिःइद्धाप्रदीप्तास्यात्तावताचनृशंसतरंनभवेन्नृशंसंतुभवेदेवेत्यर्थः अतःशमएवश्रे यानितिभावः ६६ त्यागेनराज्यस्येतिशेषः तदृतेराज्यंविनाद्विषतांसंशयात् 'किंशत्रवश्छिद्रेप्रहरिष्यंतिउतउपेक्षांकरिष्यंतीत्येवंरूपात् आत्मनःभ्रष्टश्रीकस्यसद्यःसमुच्छेदात्नाशसंभवात् अतोराज्यत्यागोनयुक्तइतिभावः ६७ सिद्धांतमाह नचेति ६८

सर्वथासामदानभेदैःराज्यार्थंयतमानानांयुद्धंप्रसिद्धं अत्रश्यंकर्त्तव्यमित्यर्थः नतुअपराक्रमःक्लीबत्वंयुक्तइतिशेषः ६९ दारुणंयुद्धंतच्छुनामिवनिंद्यमित्यर्थः ७० दृष्टांतंविवृणोतिलांगूलेति अत्रलां गूलेनध्वजउपमीयते क्ष्वेडाध्वनिकौटिल्यंपरस्परछिद्रान्वेषणंच प्रतिवाचःपरस्परनिंदास्वशंसाच विवर्त्तनंभूमौलुंठनं दंतदर्शनंमुखस्यव्यादानेन आरावःभषणं पक्षेसिंहनादः ७१ । ७२ सर्वथे

सर्वथायतमानानामयुद्धमभिकांक्षताम् ॥ सांत्वेप्रतिहतेयुद्धंप्रसिद्धंनापराक्रमः ६९ प्रतिघातेनसांत्वस्यदारुणंसंप्रवर्तते ॥ तच्छुनामिवसंपातेपंडितैरुपलक्षितम् ७० लांगूलचालनंक्ष्वेडाप्रतिवाचोविवर्तनम् ॥ दंतदर्शनमारावस्ततोयुद्धंप्रवर्तते ७१ तत्रयोबलवान्कृष्णजित्वासोत्तितदामिषम् ॥ एवमेवमनुष्येषु विशेषोनास्तिकश्चन ७२ सर्वथात्वेतदुचितंदुर्बलेषुबलीयसाम् ॥ अनादरोविरोधश्चप्रणिपातीहिदुर्बलः ७३ पितराजाचवृद्धश्चसर्वथामानमर्हति ॥ तस्मान्मान्यश्चपूज्यश्चधृतराष्ट्रोजनार्दन ७४ पुत्रस्नेहश्चबलवान्धृतराष्ट्रस्यमाधव ॥ सपुत्रवशमापन्नःप्रणिपातंप्रहास्यति ७५ तत्रकिंमन्यसेकृष्णप्राप्तकालमनंतरम् ॥ कथमर्थाच्चधर्माच्चनहीयेमहिमाधव ७६ ईदृशेऽत्यर्थकृच्छ्रेस्मिन्कमन्यंमधुसूदन ॥ उपसंप्रष्टुमर्हामित्वामृतेपुरुषोत्तम ७७ प्रियश्चप्रियकामश्चगतिज्ञःसर्वकर्मणाम् ॥ कोहिकृष्णास्तिनस्त्वादृक्सर्वनिश्चयवित्सुहृत् ७८ ॥ वैशंपायनउवाच ॥ एवमुक्तःप्रत्युवाचधर्मराजंजनार्दनः ॥ उभयोरेववामर्थेयास्यामिकुरुसंसदम् ७९ शमंतत्रलभेयंचेद्युष्मदर्थमहापयन् ॥ पुण्यंमेसुमहद्राजंश्चरितंस्यान्महाफलम् ८० मोचयेयंमृत्युपाशात्संरब्धान्कुरुसृंजयान् ॥ पांडवान्धार्तराष्ट्रांश्चसर्वांचपृथिवीमिमाम् ८१ ॥ युधिष्ठिरउवाच ॥ नममैतन्मतंकृष्णयत्त्वंयायाःकुरून्प्रति ॥ सुयोधनःसूक्तमपिनकरिष्यतितेवचः ८२ समेतंपार्थिवंक्षत्रंदुर्योधनवशानुगम् ॥ तेषांमध्यावतरणंतवकृष्णनरोचये ८३ नहिनःप्रीणयेद्द्रव्यंनदेवत्वंकुतःसुखम् ॥ नचसर्वामरैश्वर्यंतवद्रोहेणमाधव ८४ ॥ श्रीभगवानुवाच ॥ जानाम्येतांमहाराजधार्तराष्ट्रस्यपापताम् ॥ अवाच्यास्तुभविष्यामःसर्वलोकेमहीक्षिताम् ८५ नचापिममपर्याप्ताःसहिताःसर्वपार्थिवाः ॥ क्रुद्धस्यसंयुगेस्थातुंसिंहस्येवेतरेमृगाः ८६ अथचेत्तेप्रवर्तेरन्मयिकिंचिदसांप्रतम् ॥ निर्दहेयंकुरून्सर्वानितिमेधीयतेमतिः ८७ नजातुगमनंपार्थभवेत्तत्रनिरर्थकम् ॥ अर्थप्राप्तिःकदाचित्स्यादंततोवाप्यवाच्यता ८८ ॥ युधिष्ठिरउवाच ॥ यत्तुभ्यंरोचतेकृष्णस्वस्तिप्राप्नुहिकौरवान् ॥ कृतार्थंस्वस्तिमंतंत्वांद्रक्ष्यामिपुनरागतम् ८९ विष्वक्सेनकुरून्गत्वाभरतान्शमयन्प्रभो ॥ यथासर्वेसुमनसःसहस्यामसुचेतसः ९० भ्राताचासिसखाचासिबीभत्सोर्मम चप्रियः ॥ सौहृदेनाविशंक्योऽसिस्वस्तिप्राप्नुहिभूतये ९१ अस्मान्वेत्थपरान्वेत्थवेत्थार्थान्वेत्थभाषितुम् ॥ यद्यदस्मद्धितंकृष्णतत्तद्वाच्यःसुयोधनः ९२

ति अनादरेराज्यस्याप्राप्तिः युद्धेकुलक्षयः प्रणिपातेतुदौर्बल्यप्रसिद्धिः ७३ अंत्यःपक्षोपिनसेत्स्यतीत्याह पितेतिद्वाभ्यां ७४ प्रहास्यातिनस्वीकरिष्यति ७५ । ७६ । ७७ । ७८ । ७९ । ८० ८१ । ८२ । ८३।८४ । ८५ । ८६ । तेःवरसंबंधिनिमयिचेत्कुरुकृतंअसांप्रतंअयुक्तंवधबंधादिप्रवर्तेततदानिर्दहेयंकुरूनित्यन्वयः ८७ । ८८ । ८९ कुरून्गत्वातथावदेतिशेषः ९० । ९१ । ९२

यदीति अधर्मेणसांत्वंनोराज्यार्वाहार्णांपंचग्रामदानेन । अधर्मेणइतरत्द्यूतनवराज्यप्रत्यादानं । बृहदश्वादक्षहृदयस्यप्राप्तत्वात् । यद्यद्धर्मेणेतिसत्यंवेतिचपाठेत्वनृतस्यधर्मसंयुक्तत्वमर्हिं साप्राधान्येनबोध्यम् ९३ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेद्विसप्ततितमोऽध्यायः ॥ ७२ ॥ ॥ ७३ ॥ ॥ संजयस्येति १ । २ नैष्ठिकंकर्मयावज्जीवंब्रह्मचर्यं पारिव्राज्यंचवि हितमितिशेषः ३ कार्पण्यंग्रामपंचकंदेहीतिदीनवचनम् ४ वृत्तिःजीविकाकर्तुमितिशेषः ५ अतिगृद्धाःअत्यंतलुब्धाः ६ पर्यायउपायः यद्येन बलवत्तां स्वस्येतिशेषः ७ । ८ अनुक्रोशात्

यद्यधर्मेणसंयुक्तमुपपद्येद्धितंवचः ॥ तत्त्केशवभाषेथाःसांत्वंवायदिवेतरत् ९३ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणियुधिष्ठिरकृतकृष्णप्रेरणेद्वि सप्ततितमोऽध्यायः ॥ ७२ ॥ ॥ ७३ ॥ ॥ श्रीभगवानुवाच ॥ संजयस्यश्रुतंवाक्यंभवतश्चश्रुतंमया ॥ सर्वंजानाम्यभिप्रायंतेषांचभवतश्चयः १ तवध र्माश्रिताबुद्धिस्तेषांवैराश्रयामतिः ॥ यदयुद्धेनलभ्येतततेबहुमतंभवेत् २ नचैवंनैष्ठिकंकर्मक्षत्रियस्यविशांपते ॥ आहुराश्रमिणःसर्वेनभैक्षंक्षत्रियश्चरेत् ३ जयोवधोवासंग्रामेधात्रादिष्टःसनातनः ॥ स्वधर्मःक्षत्रियस्यैषकार्पण्यंनप्रशस्यते ४ नहिकार्पण्यमास्थायशक्यावृत्तिर्युधिष्ठिर ॥ विक्रमस्वमहाबाहोजहिशत्रू न्परंतप ५ अतिगृद्धाःकृतस्नेहादीर्घकालंसहोषिताः ॥ कृतमित्राःकृतबलाधार्तराष्ट्राःपरंतप ६ नपर्यायोऽस्तियत्साम्यंत्वयिकुर्युर्विशांपते ॥ बलवत्तांहिम न्यंतेभीष्मद्रोणकृपादिभिः ७ यावच्चमार्दवेनैतान्राजन्नुपचरिष्यसि ॥ तावदेतेहरिष्यंतितवराज्यमरिंदम ८ नानुक्रोशान्नकार्पण्यान्नचधर्मार्थकारणात् ॥ अ लंकर्तुंधार्तराष्ट्रास्तवकाममरिंदम ९ एतदेवनिमित्तंतेपांडवास्तुयथात्वयि ॥ नान्वतप्यंतकौपीनंतावत्कृत्वाऽपिदुष्करम् १० पितामहस्यद्रोणस्यविदुरस्य चधीमतः ॥ ब्राह्मणानांचसाधूनांराज्ञश्चनगरस्यच ११ पश्यतांकुरुमुख्यानांसर्वेषामेवतत्त्वतः ॥ दानशीलंमृदुंदांतंधर्मशीलमनुव्रतम् १२ यत्त्वामुपधिना राजन्द्यूतेवंचितवांस्तदा ॥ नचापत्रपतेतेनन्नृशंसःस्वेनकर्मणा १३ तथाशीलसमाचारेराजन्माप्रणयंकृथाः ॥ वध्यास्तेसर्वलोकस्यकिंपुनस्तवभारत १४ वाग्भिस्त्वप्रतिरूपाभिरतुदत्त्वांसहानुजम् ॥ श्लाघमानःप्रहृष्टःसन्भ्रातृभिःसहभाषते १५ एतावत्पांडवानांहिनास्तिकिंचिदिहस्वकम् ॥ नामधेयंचगोत्रंचत दप्येषांनशिष्यते १६ कालेनमहताचैषांभविष्यतिपराभवः ॥ प्रकृतिंतेभजिष्यंतिनष्टप्रकृतयोमयि १७ दुःशासनेनपापेनतदाद्यूतेप्रवर्तिते ॥ अनाथवत्त दादेवीद्रौपदीसुदुरात्मना १८ आकृष्यकेशेरुदतीसभायांराजसंसदि ॥ भीष्मद्रोणप्रमुखतोगौरितिव्याहृतामुहुः १९ भवतावारिताःसर्वेभ्रातरोभीमवि क्रमाः ॥ धर्मपाशनिबद्धाश्चनकिंचित्प्रतिपेदिरे २० एताश्चान्याश्चपरुषावाचःससमुदीरयन् ॥ श्लाघतेज्ञातिमध्येस्मत्वयिप्रव्रजितेवनम् २१



भवत्सुकृपातः कार्पण्यात्स्वस्यदैन्यात् अलंकर्तुंपूर्णंकर्तुंनसमर्थाः ९ निमित्तंअशमेकारणं हेपांडव त्वयिकौपीनंधारयतिसातितेकौरवाःनान्वतप्यंतपश्चात्तापंनकृतवंतः तावत्वनवासादि १० पितामहादीननादृत्यउपधिनाछलेनत्वांद्यूतेवंचितवानितिसार्धद्वयसंबंधः ११ । १२ । १३ । १४ अतुदत्पीडितवान् १५ । १६ प्रकृतिंपंचतां मयिमत्समीपे नष्टा प्रकृतिःशौर्यादिरूपःस्वभावोयेषाम् १७ । १८ गौरिवसर्वभोग्येत्युपहासेगौर्गौरिति १९ । २० । २१

२२ । २३ । २४ । २५ ईषत्कार्यःअनायाससाध्यः प्रस्कुंदेनचक्राकारयावेदिकया । 'कुंदश्चक्रभ्रमेमेघे' इतिविश्वः पारस्करादित्वात्सुट् । प्रस्कंदेनेतिपाठेमध्यमशिफयेतिप्राञ्चः २६ । २७ २८ द्विधाभावःअयंसाधुरसाधुर्वेतिसंशयः २९ प्रातिपौरुषिकान्सर्वपुरुषसाधारणान् ३० । ३१ । ३२ । ३३ । ३४ हतेनिंद्यतयानष्टप्राये ३५ यात्वागत्वा ३६ निशम्यआलोच्य ३७ । ३८

येतत्रासन्समानीतास्तेदृष्ट्वात्वामनागसम् ॥ अश्रुकंठारुदंतश्चसभायामासतेसदा २२ नचैनमभ्यनंदंस्तेराजानोब्राह्मणैःसह ॥ सर्वेदुर्योधनंतत्रनिंदंतिस्म सभासदः २३ कुलीनस्यचयानिंदावधोवाऽमित्रकर्शन ॥ महागुणोवधोराजन्नतुनिंदाकुजीविका २४ तदैवनिहतोराजन्दैवानिरपत्रपः ॥ निंदितश्चमहा राजपृथिव्यांसर्वराजभिः २५ ईषत्कार्योवधस्तस्ययस्यचारित्रमीदृशम् ॥ प्रस्कुंदेनप्रतिस्तब्धाछिन्नमूलइवद्रुमः २६ वध्यःसर्पइवानार्यःसर्वलोकस्यदुर्मतिः ॥ जह्येनंत्वममित्रघ्नमाराजन्विचिकित्सिथाः २७ सर्वथात्वक्षमंचैतद्रोचतेचममानघ ॥ यत्त्वंपितरिभीष्मेचप्रणिपातंसमाचरेः २८ अहंतुसर्वलोकस्यगत्वाछे त्स्यामिसंशयम् ॥ येषामास्तिद्विधाभावोराजन्दुर्योधनंप्रति २९ मध्येराज्ञामहंतत्रप्रातिपौरुषिकान्गुणान् ॥ तवसंकीर्तयिष्यामियेचतस्यव्यतिक्रमाः ३० ब्रुवतस्तत्रमेवाक्यंधर्मार्थसहितंहितम् ॥ निशम्यपार्थिवाःसर्वेनानाजनपदेश्वराः ३१ त्वयिसंप्रतिपत्स्यंतेधर्मात्मासत्यवागिति ॥ तस्मिंश्चाधिगमिष्यंति यथालोभादवर्तत ३२ गर्हयिष्यामिचैवैनंपौरजानपदेष्वपि ॥ वृद्धबालानुपादायचातुर्वर्ण्येसमागते ३३ शमंवैयाचमानस्त्वंनाधर्मंतत्रलप्स्यसे ॥ कुरून्वि गर्हयिष्यंतिधृतराष्ट्रंचपार्थिवाः ३४ तस्मिन्लोकपरित्यक्तेकिंकार्यमवशिष्यते ॥ हतेदुर्योधनेराजन्यदन्यत्क्रियतामिति ३५ यात्वाचाहंकुरून्सर्वान्युष्म दर्थमहापयन् ॥ यतिष्येप्रशमंकर्तुंलक्षयिष्येचचेष्टितम् ३६ कौरवाणांप्रवृत्तिंचगत्वायुद्धाधिकारिकाम् ॥ निशम्यविनिवर्तिष्येजयायतवभारत ३७ सर्वथा युद्धमेवाहमाशंसामिपरैःसह ॥ निमित्तानिहिसर्वाणितथाप्रादुर्भवंतिमे ३८ मृगाःशकुंताश्चवदंतिघोरंहस्त्यश्वमुख्येषुनिशामुखेषु ॥ घोराणिरूपाणितथैव चाग्निर्वर्णान्बहून्पुष्यतिघोररूपान् ३९ मनुष्यलोकक्षयकृत्सुघोरोनोचेदनुप्राप्तइहांतकःस्यात् ॥ शस्त्राणियंत्रंकवचाररथांश्चनागान्हयांश्चप्रतिपादयित्वा ४० योधाश्चसर्वेकृतनिश्चयास्तेभवंतुहस्त्यश्वरथेषुयत्ताः ॥ सांग्रामिकंतेयदुपार्जनीयंसर्वंसमग्रंकुरुतन्नरेंद्र ४१ दुर्योधनोनह्यलमद्यदातुंजीवंस्तवैतन्नृपतेकथंचित् ॥ यत्तेपुरस्तादभवत्समृद्धंद्यूतेहृतंपांडवमुख्यराज्यम् ४२ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिकृष्णवाक्येत्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ ॥ ॥ भीमउवाच ॥ यथायथैवशांतिःस्यात्कुरूणांमधुसूदन ॥ तथातथैवभाषेथामास्मयुद्धेनभीषयेः १ अमर्षीजातसंरंभःश्रेयोद्वेषीमहामनाः ॥ नोग्रंदुर्योध नोवाच्यःसाम्नैवैनंसमाचरेः २

३९ चेदिहांतकोऽनुप्राप्तोनोस्यात्तर्हिएतन्नस्यादितिशेषः यंत्रंगोलकोत्क्षेपणं कवचाकवचानिवर्माणि सुपांसुलुगितिसुपोडादेशः नांतपाठेपुंस्त्वमार्षं प्रतिपादयित्वासज्जीकृत्य ४० । ४१ । ४२ ॥ इतिउद्योगप० नीलकंठीयेभारतभावदीपे त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ यथेति शांतिबाधकंभयंतेषांमाकुर्वित्याह तथेति १ महामनाःस्तब्धः समाचरेः प्रागपिसमाहितवानसि २

३ निष्ठूरीनिष्ठुरवाक् क्षेप्तानिंदकः अनेयःशिक्षयितुमयोग्यः ४ । ५ अवाचीनोविपरीतः ६ । ७ । ८ । ९ । १० ज्ञातीन्सगोत्रान् सुह्रदःमित्राणि बांधवान्श्यालश्वशुरादीन् ११ पर्यायकालेध र्मातकाले १२ । १३ । १४ । १५ । १६ । १७ । १८ कामानुबंधबहुलंबाहुल्येनतस्यचित्तानुसारि १९ । २० अनयःकुलक्षयकृतोदोषः २१ । २२ प्रशंसतिशममेवेतिशेषः २३ ॥ इतिउद्योगप

प्रकृत्यापापसत्वश्चतुल्यचेतास्तुदस्युभिः ॥ ऐश्वर्यमदमत्तश्चकृतवैरश्चपांडवैः ३ अदीर्घदर्शीनिष्ठूरीक्षेप्ताक्रूरपराक्रमः ॥ दीर्घमन्युरनेयश्चपापात्मानिकृ तिप्रियः ४ म्रियेतापिनभज्येतनैवजह्यात्स्वकंमतम् ॥ तादृशेनशमःकृष्णमन्येपरमदुष्करः ५ सुहृदामप्यवाचीनस्त्यक्तधर्माप्रियान्रृतः ॥ प्रतिहंत्येवसुहृदां वाचश्चैवमनांसिच ६ समन्युवशमापन्नःस्वभावंदुष्टमास्थितः ॥ स्वभावात्पापमभ्येतितृणैश्छन्नइवोरगः ७ दुर्योधनोहियःसेनःसर्वथाविदितस्तव ॥ यच्छी लोयत्स्वभावश्चयद्बलोयत्पराक्रमः ८ पुराप्रसन्नाःकुरवःसहपुत्रास्तथावयम् ॥ इंद्रज्येष्ठाइवाभूममोदमानाःसबांधवाः ९ दुर्योधनस्यक्रोधेनभरतामधुसू दन ॥ धक्ष्यंतेशिशिरापायेवनानिवहुताशनैः १० अष्टादशेमेराजानःप्रख्यातामधुसूदन ॥ येसमुच्चिच्छिदुर्ज्ञातीन्सुहृदश्चसबांधवान् ११ असुराणांसमृ द्धानांज्वलतामिवतेजसा ॥ पर्यायकालेधर्मस्यप्राप्तेकलिरजायत १२ हैहयानांमुदावर्तोनीपानांजनमेजयः ॥ बहुलस्तालजंघानांकृमीणामुद्धतोवसुः १३ अजबिंदुःसुवीराणांसुराष्ट्राणांरुषर्द्धिकः ॥ अर्कजश्चबलीहानांचीनानांधौतमूलकः १४ हयग्रीवोविदेहानांवरयुश्चमहौजसाम् ॥ बाहुःसुंदरवंशानांदीप्ताक्षा णांपुरूरवाः १५ सहजश्चेदिमत्स्यानांप्रवीराणांवृषध्वजः ॥ धारणश्चंद्रवत्सानांमुकुटानांविगाहनः १६ शमश्चनंदिवेगानामित्येतेकुलपांसनाः ॥ युगांतेकृ ष्णसंभूता कुलेकुपुरुषाधमाः १७ अप्ययंनःकुरूणांस्याद्युगांतेकालसंभृतः ॥ दुर्योधनःकुलांगाराेजघन्यःपापपूरुषः १८ तस्मान्मृदुशनैर्ब्रूयाधर्मार्थसहितं हितम् ॥ कामानुबद्धंबहुलंनोग्रमुग्रपराक्रम १९ अपिदुर्योधनंकृष्णसर्वेवयमधश्चराः ॥ नीचैर्भूत्वाऽनुयास्यामोमास्मनोभरतानशन् २० अप्युदासीनवृत्तिः स्याद्यथानःकुरुभिःसह ॥ वासुदेवतथाकार्यंनकुरूननयःस्पृशेत् २१ वाच्यःपितामहोवृद्धोयेचकृष्णसभासदः ॥ भ्रातृणामस्तुसौभ्रात्रंधार्तराष्ट्रःप्रशाम्यताम् २२ अहमेतद्ब्रवीम्येवंराजाचैवप्रशंसति ॥ अर्जुनोनैवयुद्धार्थीभूयसीहिदयार्जुने २३ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिभीमवाक्येचतुःसप्त तितमोऽध्यायः ॥ ७४ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ एतच्छ्रुत्वामहाबाहुःकेशवःप्रहसन्निव ॥ अभूतपूर्वंभीमस्यमार्दवोपहितंवचः १ गिरेरिवल घुत्वंतच्छीतत्वमिवपावके ॥ मत्वारामानुजःशौरिःशार्ङ्गधन्वावृकोदरम् २ संतेजयंस्तदावाग्भिर्मातरिश्वेवपावकम् ॥ उवाचभीममासीनंकृपयाऽभिपरिप्लुतम् ३ ॥ श्रीभगवानुवाच ॥ त्वमन्यदाभीमसेनयुद्धमेवप्रशंससि ॥ वधाभिनंदिनःक्रूरान्धार्तराष्ट्रान्मिमर्दिषुः ४ नचस्वपिषिजागर्षिन्युब्जःशेषेपरंतप ॥ घोरा मशांतांरुषतींसदावाचंप्रभाषसे ५ निःश्वसन्नग्निवर्णेनसंतप्तःस्वेनमन्युना ॥ अप्रशांतमनाभीमसधूमइवपावकः ६

र्वणिनीलकंठीयेभारतभावदीपेचतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ ॥ छ ॥ ॥ एतदिति १ । २ । ३ । ४ रुषतींरोषवतीं ५ अग्निवत्अग्निनेव ६

७ आरुज्यभंक्त्वा ८ अस्मिन्वनेजनेनब्राह्मणसमूहेनक्षिपसिनयसिकालमितिशेषः ९ । १० । ११ शुक्रंतेजः निर्मुक्तोऽस्तंगतः ध्रुवंनिश्चलं पुनःपर्येतिमेरुंपुनःपुनःप्रदक्षिणीकरोति १२ नियमेनहं



एकांतेनिःश्वसन्नशेषभारार्तइवदुर्बलः ॥ अपित्वांकेचिदुन्मत्तंमन्यंतेतद्विदोजनाः ७ आरुज्यवृक्षान्निर्मूलान्गजःपरिरुजन्निव ॥ निघ्नन्पद्भिःक्षितिंभीमनिष्टन न्परिधावसि ८ नास्मिन्जनेनरमसेरहःक्षिपसिपांडव ॥ नान्यंनिशिदिवाचापिकदाचिदभिनंदसि ९ अकस्मात्स्मयमानश्चरहस्यास्सेरुदन्निव ॥ जान्वोर्मूर्धा नमाधायचिरमास्सेप्रमीलितः १० भ्रुकुटिंचपुनःकुर्वन्नोष्ठौचविदशन्निव ॥ अभीक्ष्णंदृश्यसेभीमसर्वंतन्मन्युकारितम् ११ यथापुरस्तात्सविताहृश्यतेशुक्रमु च्चरन् ॥ यथाचपश्चान्निर्मुक्तोध्रुवंपर्येतिरश्मिवान् १२ तथासत्यंब्रवीम्येतन्नास्तितस्यव्यतिक्रमः ॥ हंताऽहंगदयाऽभ्येत्यदुर्योधनममर्षणम् १३ इतिस्मम ध्येभ्रातॄणांसत्येनालभसेगदाम् ॥ तस्यतेप्रशमेबुद्धिर्धियतेऽद्यपरंतप १४ अहोयुद्धाभिकांक्षाणांयुद्धकालउपस्थिते ॥ चेतांसिविप्रतीपानियत्त्वांभीर्भीमविंदति १५ अहोपार्थनिमित्तानिविपरीतानिपश्यसि ॥ स्वप्नांतेजागरांतेचतस्मात्प्रशममिच्छसि १६ अहोनाशंससेकिंचित्पुंस्त्वंक्लीबइवात्मनि ॥ कश्मलेनाभिप न्नोऽसितेनतेविकृतंमनः १७ उद्वेपतेतेहृदयंमनस्तेप्रतिसीदति ॥ ऊरुस्तंभगृहीतोऽसितस्मात्प्रशमामिच्छसि १८ अनित्यंकिलमर्त्यस्यपार्थचित्तंचलाचलम् ॥ वातवेगप्रचलिताअष्ठीलाशाल्मलेरिव १९ तवैषाविकृताबुद्धिर्गवांवागिवमानुषी ॥ मनांसिपांडुपुत्राणांमज्जयत्यप्लवानिव २० इदंमेमहदाश्चर्यंपर्वतस्येवसर्प णम् ॥ यदीदृशंप्रभाषेथाभीमसेनासमंवचः २१ सदृष्ट्वात्स्वानिकर्माणिकुलेजन्मचभारत ॥ उत्तिष्ठस्वविषादंमाकृथावीरस्थिरोभव २२ नचैतदनुरूपंतेयत्तेग्ला निररिंदम ॥ यदोजसानलभतेक्षात्रियोनतदश्नुते २३ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिभीमोत्तेजकश्रीकृष्णवाक्येपंचसप्ततितमोऽध्यायः ॥ ॥ ७५ ॥ ॥ वैशंपायनउवाच ॥ तथोक्तोवासुदेवेननित्यमन्युरमर्षणः ॥ सदश्ववत्समाधावद्बभाषेतदनंतरम् १ ॥ भीमसेनउवाच ॥ अन्यथामांचिकी र्षंतमन्यथामन्यसेऽच्युत ॥ प्रणीतभावमत्यर्थंयुधिसत्यपराक्रमम् २ वेत्सिदाशार्हसत्त्वंमेदीर्घकालंसहोषितः ॥ उतवामांनजानासिप्लवन्हृदइवाप्लवे ३ तस्मा दनभिरूपाभिर्वाग्भिर्मांत्वंसमर्छसि ॥ कथंहिभीमसेनंमांजानन्कश्चनमाधव ४ ब्रूयादप्रतिरूपाणियथामांवक्तुमर्हसि ॥ तस्मादिदंप्रवक्ष्यामिवचनंवृष्णिनंदन ५ आत्मनःपौरुषंचैवबलंचनसमंपरैः ॥ सर्वथानार्यकर्मैतत्प्रशंसास्वयमात्मनः ६ अतिवादापविद्धस्तुवक्ष्यामिबलमात्मनः ॥ पश्येमेरोदसीकृष्णययोरासन्निमाः प्रजाः ७ अचलेचाप्रतिष्ठेचाप्यनंतेसर्वमातरौ ॥ यदिमेसहसाक्रुद्धेसमेयातांशिलेइव ८ अहमेतेनिगृह्णीयांबाहुभ्यांसचराचरे ॥ पश्यैतदंतरंबाह्वोर्महापरिघयोरिव ९

ताअस्मीतिशेषः १३ । १४ । १५ निमित्तानिमहिषारोहणवामनेत्रस्फुरणादीनि स्वप्नांतेस्वप्ने जागरांतेजागरे १६।१७। १८ अष्ठीलाफलांतर्ग्रंथिः साचशाल्मलेकेवलंतूलमयीभवति १९। २० २१ । २२ । २३ इतिउद्योगप०नी०भा०भावदीपेपंचसप्ततितमोऽध्यायः ॥ ७५ ॥ तथोक्तइति समाधावत् तीव्रवेगंयथास्यात्तथा १ । २ । ३ । ४ । ५ । ६ रोदसीद्यावाभूमी ७ । ८ । ९

१० । ११ । १२ । १३ संबाधेसंकीर्णे १४ वैशसेविशसनवति १५ । १६ । १७ । १८ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपेषट्सप्ततितमोऽध्यायः ॥ ७६ ॥ ७ ॥ भावमिति विवक्षया त्वयास्वंरूपंवक्तव्यमितीच्छया प्रागेवतस्यज्ञातत्वात् १ वेदवेद्मि २ । ३ । ४ कुतस्तर्हिमांनिंदितवानसीत्याशंक्याह जिज्ञासंतइति दैवमानुषयोर्धर्मस्यपर्यायमितिसंबंधः । दैवधर्मस्यभा विनःपुण्यपापफलस्यपर्यायंपर्यंतंदैवज्ञादेःसकाशाज्जिज्ञासंतोज्ञातुमिच्छंतोऽपिनाध्यवस्यंतिननिश्चिन्वंति । कदाचिद्दैवज्ञाद्युक्तावपिविसंवाददर्शनात् । तथामानुषधर्मस्यपुरुषकारस्य पर्यायंबलाबलनिर्णयंइतिपूर्ववत् । शूरस्यापिकदाचित्क्लीबत्वदृष्टेरितिभावः ५ सएवधर्मएवसंदिग्धंसंदिग्धफलं ६ परिदृष्टानिकर्तव्यत्वेननिश्चितानिकार्याणि ७ सुनीतंसम्यगनुष्ठितम्

यएतत्प्राप्यमुच्येतनतंपश्यामिपूरुषम् ॥ हिमवांश्चसमुद्रश्चवज्रीचाबलभित्स्वयम् १० मयाऽभिपन्नंत्रायेरन्बलमास्थायनत्रयः ॥ युद्धार्हान्क्षत्रियान्सर्वान्पां डवेष्वाततायिनः ११ अधःपादतलेनैतानधिष्ठास्यामिभूतले ॥ नहित्वंनाभिजानासिममविक्रममच्युत १२ यथामयाविनिर्जित्यराजानोवशगाःकृताः ॥ अथचेन्मांनजानासिसूर्यस्येवोद्यतःप्रभाम् १३ विगाढेयुधिसंबाधेवेत्स्यसेमांजनार्दन ॥ परुषैराक्षिपसिकिंव्रणंपूतिमिवोन्नयन् १४ यथामतिब्रवीम्येतद्विद्धि मामाधिकंततः ॥ द्रष्टाऽसियुधिसंबाधेप्रवृत्तेवैशसेऽहनि १५ मयाप्रणुन्नान्मातंगान्रथिनःसादिनस्तथा ॥ तथानरानभिक्रुद्धंनिघ्नंतंक्षत्रियर्षभान् १६ द्रष्टामां त्वंचलोकश्चविकर्षंतंवरान्वरान् ॥ नमेसीदंतिमज्जानोनममोद्वेपतेमनः १७ सर्वलोकादभिक्रुद्धान्नभयंविद्यतेमम ॥ किंतुसौहृदमेवैतत्कृपयामधुसूदन ॥ स र्वांस्तितिक्षेसंक्लेशान्मास्मनोभरतानशन् १८ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिभीमसेनवाक्येषट्सप्ततितमोऽध्यायः ॥ ७६ ॥ ॥

॥ श्रीभगवानुवाच ॥ भावंजिज्ञासमानोऽहंप्रणयादिदमब्रुवम् ॥ नचाक्षेपान्नपांडित्यान्नक्रोधान्नविवक्षया १ वेदाहंतवमाहात्म्यमुततेवेदयद्बलम् ॥ उततेवेदक र्माणिनत्वांपरिभवाम्यहम् २ यथाचात्मनिकल्याणंसंभावयसिपांडव ॥ सहस्रगुणमप्येतत्त्वयिसंभावयाम्यहम् ३ यादृशेचकुलेजन्मसर्वराजाभिपूजिते ॥ बंधुभिश्चसुहृद्भिश्चभीमत्वमसितादृशः ४ जिज्ञासंतोहिधर्मस्यसंदिग्धस्यवृकोदर ॥ पर्यायंनाध्यवस्यंतिदैवमानुषयोर्जनाः ५ सएवहेतुर्भूत्वाहिपुरुषस्यार्थसि द्धिषु ॥ विनाशेऽपिसएवास्यसंदिग्धंकर्मपौरुषम् ६ अन्यथापरिदृष्टानिकविभिर्दोषदर्शिभिः ॥ अन्यथापरिवर्तंतेवेगाइवनभस्वतः ७ सुमंत्रितंसुनीतंवन्या यतश्चोपपादितम् ॥ कृतंमानुष्यकंकर्मदैवेनापिविरुद्ध्यते ८ दैवमप्यकृतंकर्मपौरुषेणविहन्यते ॥ शीतमुष्णंतथावर्षंक्षुत्पिपासेचभारत ९ यदन्यद्दिष्टभाव स्यपुरुषस्यस्वयंकृतम् ॥ तस्मादनुपरोधश्चविद्यतेतत्रलक्षणम् १०

विरुध्यतेनिष्फलंक्रियते ८ अकृतंभोगायानारब्धंकर्मपुण्यादिकमागामिदुःखंदैवज्ञादिभिरुपदिष्टतयानिश्चितसद्भावंपौरुषेणविहन्यते । तेनकाम्यकर्मणामपिफलवत्त्वमस्त्येवेतिसिद्धं । यद्वाअ कृतंकालस्वभावजंकर्मअनुभूयमानंशीतोष्णादितत्पौरुषेणप्रावरणादिसंपादनेननिवार्यतइत्यर्थः ९ यदन्यदिति दिष्टःफलभोगायआज्ञप्तःभावःसत्तायस्यतत्दिष्टभावंप्रारब्धकर्मपंचम्यर्थेषष्ठी प्रारब्धादन्यदित्यर्थः । पुरुषस्यपुरुषेणसंचितंयत्स्वयंकृतंकर्मतस्मादनुपरोधोजन्मांतरेनिरोधोनास्ति । तत्रज्ञानेनप्रायश्चित्तेनवासंचितपापानांनाशेलक्षणंज्ञापकंश्रुतिस्मृतिजातंविद्यते । ‘क्षी यंतेचास्यकर्माणितस्मिन्दृष्टेपरावरे । धर्मेणपापमपनुदति । ज्ञानाग्निःसर्वकर्माणिभस्मसात्कुरुतेतथा’इति । भावःप्रारब्धंकर्म । यद्वा अकृतात्दैवात्शीतादेरन्यत्स्वयंकृतंदैवं देहांतःकृ-

रणसंतापहेतुः । तस्मादपिउपरोधोऽत्रैवनास्तियतस्तत्रापिलक्षणांचिकित्साविवेकहेतुःशास्त्रंप्रवर्तते । सर्वैरत्रापिपौरुषंकर्तव्यमितिभावः १० एतदेवाहलोकस्येति कर्मणोऽन्यत्रपुरुषंविना अन्यतएकस्माद्दैवादेववृत्तिर्जीविकानास्ति । एवंबुद्धिःईदृक्ज्ञानवान्सन्प्रवर्तेतपुरुषकारंकुर्यात् । तथासतिउभयान्वयेदैवपौरुषयोःसंबंधेफलंभवतिनान्यतरतइत्यर्थः ११ यइति यथा कर्षकःकर्मकृत्वादैवानुकूल्यात्फलंलब्ध्वाऽपिनहृष्यति अनाकस्मिकत्वात्फलस्य । दैवप्रातिकूल्यादलब्ध्वाऽपिनव्यथते अनुचितस्याकरणात् । तद्वदत्रापिज्ञेयमित्याशयः १२ तंप्र कृतेयोजयतितत्रेति अनुमात्राऽवधारणंनिश्चयइत्यर्थः 'मात्रंकार्त्स्न्येऽवधारणे' इतिकोशः लिंगव्यत्ययआर्षः १३ प्रहीणरश्मिः निष्प्रभः (भावःप्रारब्धंकर्म) अच्छेत्प्राप्नुयात् १४ । १५ १६ तेकुरवइतिसंबंधः १७ अस्मिन्निति रथोपमोभीमः अश्वोपमोऽर्जुनः १८ अहमिति युद्धकामोऽप्यहं अर्जुनप्रीत्यैसारथ्यंकरिष्यामीत्यर्थः १९ । २० ॥ इतिउद्योगपर्वणिनीलकंठीये

लोकस्यनान्यतोवृत्तिःपांडवान्यत्रकर्मणः ॥ एवंबुद्धिःप्रवर्तेतफलंस्यादुभयान्वये ११ यएवंकृतबुद्धिःसकर्मस्वेवप्रवर्तते ॥ नासिद्धौव्यथतेतस्यनसिद्धौहर्षम श्नुते १२ तत्रेयमनुमात्रामेभीमसेनविवक्षिता ॥ नैकांतासिद्धिर्वक्तव्याशत्रुभिःसहसंयुगे १३ नातिप्रहीणरश्मिःस्यात्तथाभावविपर्यये ॥ विषादमर्छेद्ग्ला निंवाऽप्येतमर्थंब्रवीमिते १४ श्वोभूतेधृतराष्ट्रस्यसमीपंप्राप्यपांडव ॥ यतिष्येप्रशमंकर्तुंयुष्मदर्थमहापयन् १५ शमंचेत्तेकरिष्यंतिततोऽनंतंयशोमम ॥ भव तांचकृतःकामस्तेषांचश्रेयउत्तमम् १६ तेचेदभिनिवेक्ष्यंतेनाभ्युपैष्यंतिमेवचः ॥ कुरवोयुद्धमेवात्रघोरंकर्मभविष्यति १७ अस्मिन्युद्धेभीमसेनत्वयिभारःस माहितः ॥ धूरर्जुनेनधार्यास्याद्वोढव्यइतरोजनः १८ अहंहियंताबीभत्सोर्भवितासंयुगेसति ॥ धनंजयस्यैषकामोनहियुद्धंनकामये १९ तस्मादाशंकमानो ऽहंवृकोदरमतिंतव ॥ गदतःक्लीबयावाचातेजस्तेसमदीदिपम् २० ॥ इतिश्रीमहाभा०उ०प०भगवद्यानप०कृष्णवाक्येसप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ ॥ ॥ अर्जुनउवाच ॥ उक्तंयुधिष्ठिरेणैवयावद्वाच्यंजनार्दन ॥ तववाक्यंतुमेश्रुत्वाप्रतिभातिपरंतप १ नैवप्रशममत्रत्वंमन्यसेसुकरंप्रभो ॥ लोभाद्वाधृतराष्ट्रस्यदै न्याद्वासमुपस्थितात् २ अफलंमन्यसेवापिपुरुषस्यपराक्रमम् ॥ नचांतरेणकर्माणिपौरुषेणबलोदयः ३ तदिदंभाषितंवाक्यंतथाचनतथैवतत् ॥ नचैत देवंद्रष्टव्यमसाध्यमपिकिंचन ४ किंचैतन्मन्यसेकृच्छ्रमस्माकमवसादकम् ॥ कुर्वंतितेषांकर्माणियेषांनास्तिफलोदयः ५

भारतभावदीपेसप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ ॥ छ ॥ उक्तमिति १ दैन्याद्वाअस्मदीयात् २ पराक्रमंसर्वेषांरक्षणेयत्नं कर्माणिजीवनबीजानिप्राक्तनानि तदभावात् दलद्वयाहि तार्थंकृतोऽपियत्नोनिष्फलइतिमत्वाशममेवेच्छसीत्यर्थः ३ मंत्रकारणमाहतदिदमिति नहियुद्धंनकामयेइतियत्त्वयाभाषितं तथाचनतथापिच चनशब्दोऽप्यर्थे यद्यपिममैतदानिष्टंतथापि त्वयायद्भाषितंतत्तथैवभविष्यतीत्यर्थः । परंतुशमोऽपितवनासाध्योस्तीत्याह नचइति ४ एतत्कृच्छ्रंयुद्धंसंकटंमन्यसेऽङ्गीकरोषि अस्माकंकुरुपांडवानांशमासंभवाद्युद्धमिच्छसीत्याह कुर्वं तीति येषांपुंसांफलोदयोनास्तितेषांकर्माणिक्रियमाणान्यपिसामादीनिकुर्वंतिकृण्वंतिहिंसंति कृहिंसायामित्यस्यस्वादिगणस्थस्यरूपं तनादित्वमस्यार्षं लेखकप्रमादजंवा । चतुर्थोपाय साध्येतुरिपौसांत्वमपक्रियेत्यभियुक्तोक्तेर्जीवनादृष्टाभावाद्दंडैकसाध्येषुकुरुषुसांत्वप्रयोगोदुष्करइत्यर्थः ५

एवंजानन्नपिसामैत्रचेन्मन्यसेतत्राह संपाद्येति यत्कर्मसम्यक्संपाद्यमानंभवेत्तत्सफलंस्यादितिसंबंधः । प्रभोइत्यनेनअसाध्यसाधनसामर्थ्यमस्यदर्शयति फलितमाह सइति ६ । ७ नि
रामयंकुशलं ८ कार्यतांऔचित्यंकार्यंकर्म ९ । १० शर्मेति कृष्णास्त्वस्यव्यवहारतोभेदान्मतभेदमुक्तातत्त्वमाह विचार्यमाणइति गुरुःउपदेष्टा । 'प्राणस्यप्राणमुतचक्षुषश्चक्षुरुतश्रोत्र
स्यश्रोत्रंमनसोयेमनोविदुस्तेनिचिक्युर्ब्रह्मपुराणमग्र्यं'इतिश्रुतेरस्मन्मनसोपिमनस्त्वमतस्तवयःकामःसएवास्मत्कामस्यप्रवर्त्तकइतिभावः । वस्तुतस्तुतवैवकामोयुक्तइत्याह नसइत्यादिना
११ धर्मिष्ठंयुद्धादिकं १२ हृताश्रीः १३ समाहूतोद्यूतार्थं १४ निर्गतःनिश्चयेनप्राप्तः कथंचकथमपि मुख्याफलवती मृदुनासाम्ना इतरेणयुद्धेन १५ । १६ । १७ नामनिश्चितंसपांडवे

संपाद्यमानंसम्यक्कस्यात्कर्मसफलंप्रभो ॥ सतथाकृष्णवर्तस्वयथाशर्मभवेत्परैः ६ पांडवानांकुरूणांचभवान्नःप्रथमःसुहृत् ॥ सुराणामसुराणांचयथावीरप्रजा
पतिः ७ कुरूणांपांडवानांचप्रतिपत्स्वनिरामयम् ॥ अस्मद्धितमनुष्ठानंमन्येतवनदुष्करम् ८ एवंचकार्यतामेतिकार्यंतवजनार्दन ॥ गमनादेवमेवत्वंकरिष्य
सिजनार्दन ९ चिकीर्षितमथान्यत्तेतस्मिन्वीरदुरात्मनि ॥ भविष्यतिचतत्सर्वंयथातवचिकीर्षितम् १० शर्मतैःसहवानोऽस्तुतववायच्चिकीर्षितम् ॥ विचार्य
माणोयःकामस्तवकृष्णसनोगुरुः ॥ नसनार्हतिदुष्टात्मावधंससुतबांधवः ११ येनधर्मसुतेदृष्टानसाश्रीरुपमर्षिता ॥ यच्चाप्यपश्यतोपायंधर्मिष्ठंमधुसूदन ॥
१२ उपायेननृशंसेनहृताद्यूतदेविना ॥ कथंहिपुरुषोजातःक्षत्रियेषुधनुर्धरः १३ समाहूतोनिवर्तेतप्राणत्यागेऽप्युपस्थिते ॥ अधर्मेणजितान्दृष्ट्वावनेप्रव्राजि
तांस्तथा १४ वध्यतांममवार्ष्णेयनिर्गतोऽसौसुयोधनः ॥ नचैतदद्भुतंकृष्णमित्रार्थेयच्चिकीर्षसि ॥ क्रियाकथंनुमुख्यास्यान्मृदुनावेतरेणवा १५ अथवामन्य
सेज्यायानवधस्तेषामनंतरम् ॥ तदेवक्रियतामाशुनविचार्यमतस्त्वया १६ जानासिहियथैतेनद्रौपदीपापबुद्धिना ॥ परिक्लिष्टासभामध्येतच्चतस्योपमर्षितम्
१७ सनामसम्यग्वर्तेतपांडवेष्वितिमाधव ॥ नमेसंजायतेबुद्धिर्बीजमुप्तमिवोषरे १८ तस्माद्यन्मन्यसेयुक्तंपांडवानांहितंचयत् ॥ तथाऽऽशुकुरुवार्ष्णेययन्नः
कार्यमनंतरम् १९ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिअर्जुनवाक्येऽष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ श्रीभगवानुवाच ॥ एवमेतन्महाबाहोयथात्व
दसिपांडव ॥ पांडवानांकुरूणांचप्रतिपत्स्येनिरामयम् १ सर्वंत्विदंममायत्तंबीभत्सोकर्मणोर्द्वयोः ॥ क्षेत्रंहिरसवच्छुद्धंकर्मणैवोपपादितम् २ ऋतेवर्षात्रकौंते
यजातुनिर्वर्तयेत्फलम् ॥ तत्रवैपौरुषंब्रूयुरासेकंयत्नकारितम् ३ तत्रचापिध्रुवंपश्येच्छोषणंदैवकारितम् ॥ तदिदंनिश्चितंबुद्ध्यापूर्वैरपिमहात्मभिः ४ दैवेच
मानुषेचैवसंयुक्तंलोककारणम् ॥ अहंहितत्करिष्यामिपरंपुरुषकारतः ५ दैवंतुनमयाशक्यंकर्मकर्तुंकथंचन ॥ सहिधर्मंचलोकंचत्यक्त्वाचरतिदुर्मतिः ६

षुसम्यग्वर्तेतेतिबुद्धिर्मेनसंजायतेनोत्पद्यते १८ । १९ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपेअष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ ॥ ७८ ॥ एवमिति १ द्वयोःकर्मणोः
शमयुद्धयोर्मध्येइदंअनामयंसर्वंकृत्स्नंममदूतस्यायत्तंअधीनं तथापिदैवानुकूल्यमत्रापेक्षितमित्याह क्षेत्रमिति कर्मणाकर्षणेनवाप्यादिजलदानेनचशुद्धंमूदोषहीनंरसवदार्द्रंचउपपादितंकृतंतत्
कदाचिद्वर्षंविनाऽपिफलप्रदंभवेत् २ अत्रकेवलंपौरुषस्यैवश्रैष्ठ्यंदृष्टमित्याह तत्रेति ३ एतदपिदैवाधीनमेवेत्याह तत्रचापीति शोषणंवाप्यादेः सर्वथावृष्ट्यभावेयथानफलनिष्पत्तिस्तद्वद्दै
वाभावेपीत्यर्थः ४ संयुक्तंआहितं लोककारणंलोकहितसाधनं ५ दैवंकर्म प्राक्तनंकर्म कर्तुंअन्यथाकर्तुं ६

७ पुरुषकाराच्छमोऽप्यत्रदुःसंपादइत्याह सहीति त्यागेनदानेन ८ सानुबंधःसपरिवारः नचेति एकोराज्यंत्यक्तुंनेच्छतिपरोदातुंनेच्छतीत्यर्थः ९ शासनंपंचग्रामान्देहीतितत्रनवक्तव्यः दैन्यद्योतकत्वादितिभावः अफलत्वाच्चनैवंसवाच्यइत्याह उक्तमिति प्रयोजनंशमम् १० । ११ । १२ । १३ । १४ । १५ अभिशंकसेमांशममनिच्छंतमिवमन्यसे १६ दिव्यंविधानंभूभारापहारार्थंस्वर्गाद्देवानामवतरणम् १७ आशंसेसंभावयामि १८ कथमिति भीष्मेणएतच्छमंयाच्यमानोऽपिसःहितंकथंनोक्तःअपितुउक्तउपदिष्टएवदुर्योधनस्तथापिनगृहीतवानितिभावः

नहिसंतप्यतेतेनतथारूपेणकर्मणा ॥ तथापिबुद्धिंपापिष्ठांवर्धयंत्यस्यमंत्रिणः ७ शकुनिःसूतपुत्रश्चभ्राताःदुःशासनस्तथा ॥ सहित्यागेनराज्यस्यनशमंसमुपैष्यति ८ अंतरेणवधंपार्थसानुबंधःसुयोधनः ॥ नचापिप्रणिपातेनत्यक्तुमिच्छतिधर्मराट् ॥ याच्यमानश्चराज्यंसनप्रदास्यतिदुर्मतिः ९ नतुमन्येसतद्वाच्योयद्युधिष्ठिरशासनम् ॥ उक्तंप्रयोजनंयत्तुधर्मराजेनभारत १० तथापापस्तुतत्सर्वंनकरिष्यतिकौरवः ॥ तस्मिंश्चाक्रियमाणेऽसौलोकेवध्योभविष्यति ११ ममचापिसवध्योहिजगतश्चापिभारत ॥ येनकौमारकेयूयंसर्वेविप्रकृताःसदा १२ विप्रलुप्तंचवोराज्यंनृशंसेनदुरात्मना ॥ नचोपशाम्यतेपापःश्रियंदृष्ट्वायुधिष्ठिरे १३ असकृच्चाप्यहंतेनत्वत्कृतेपार्थभेदितः ॥ नमयातद्गृहीतंचपापंतस्यचिकीर्षितम् १४ जानासिहिमहाबाहोत्वमप्यस्यपरंमतम् ॥ प्रियंचिकीर्षमाणंचधर्मराजस्यमामपि १५ संजानंस्तस्यचात्मानंममचैवपरंमतम् ॥ अजानन्निवमांकस्मादर्जुनाद्याभिशंकसे १६ यच्चापिपरमंदिव्यंतच्चाप्यनुगतंत्वया ॥ विधानंविहितंपार्थकथंशर्मभवेत्परैः १७ यत्तुवाचामयाशक्यंकर्मणावापिपांडव ॥ करिष्येतदहंपार्थनत्वाशंसेशमंपरैः १८ कथंगोहरणेह्युक्तोनैतच्छमंतथाहितम् ॥ याच्यमानोहिभीष्मेणसंवत्सरगतेध्वनि १९ तदैवतेपराभूतायदासंकल्पितास्त्वया ॥ लवशःक्षणशश्चापिनचतुष्टःसुयोधनः २० सर्वथातुमयाकार्यंधर्मराजस्यशासनम् ॥ विभाव्यंतस्यभूयश्चकर्मपापंदुरात्मनः २१ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिश्रीकृष्णवाक्येऊनाशीतितमोऽध्यायः ॥ ७९ ॥ ॥ छ ॥ ॥ नकुलउवाच ॥ उक्तंबहुविधंवाक्यंधर्मराजेनमाधव ॥ धर्मज्ञेनवदान्येनश्रुतंचैवहितत्त्वया १ मतमाज्ञायराज्ञश्चभीमसेनेनमाधव ॥ संशमोबाहुवीर्यंचख्यापितंमाधवात्मनः २ तथैवफाल्गुनेनापियदुक्तंतत्त्वयाश्रुतम् ॥ आत्मनश्चमतंवीरकथितंभवतासकृत् ३ सर्वमेतदतिक्रम्यश्रुत्वापरमतंभवान् ॥ यत्प्राप्तकालंमन्येथास्तत्कुर्याःपुरुषोत्तम ४ तस्मिंस्तस्मिन्निमित्तेहिमतंभवतिकेशव ॥ प्राप्तकालंमनुष्येणक्षमंकार्यमरिंदम ५

संवत्सरगतेगतसंवत्सरे १९ संकल्पिताः वध्यत्वेननिश्चिताः लवशःक्षणशः लवोंशः क्षणःस्वीकारः राज्यलेशस्यस्वीकारेऽपिनसंतुष्टइत्यर्थः क्रमेणषष्ठ्यर्थेसप्तम्यर्थेचशस्प्रत्ययः २० विभाव्यंविचारणीयम् २१ ॥ इतिउद्योगप० नीलकंठीयेभारतभावदीपे ऊनाशीतितमोऽध्यायः ॥ ७९ ॥ ॥ छ ॥ ॥ उक्तमिति १ राज्ञोमतंआज्ञाय संशमःसम्यक्शमः ख्यापितः हेमाधवमधुदेशज आत्मनःमतंआज्ञायबाहुवीर्यंख्यापितं हेमाधवलक्ष्मीपते २ । ३ । ४ तस्मिन्निति निमित्तभेदान्मतभेदोभवति कुलधुर्यस्ययुधिष्ठिरस्यमतं कुलोच्छेदोमाभूदिति केशाकर्षणक्लिष्टायाःद्रौपद्यामतंशत्रवोनिर्मूलंउन्मूलनीयाइति तत्रकालानुरूपंयत्क्षमंयोग्यंतत्त्वयाकार्यमित्यर्थः ५

अनित्यानाशवतीमतिर्येषांते ६ नकेवलंव्यक्तिभेदान्मतभेदः किंतुव्यक्त्यैक्येऽपिअवस्थाभेदान्मतभेदोभवतीत्याह अन्यथेत्यादिना अदृश्येष्विति अज्ञातवासकालेकथमनावृताश्चरिष्याम इत्येवमनोरथआसीत् दृश्येषुइदानींभव्येषुअस्मासु कदाराज्यंप्राप्स्यामइत्यस्तीतिभावः ७ प्रणयआदरः ८ नव्यथेतन्नकुप्येत् ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ अर्थं

अन्यथाचिंतितोह्यर्थःपुनर्भवतिसोऽन्यथा ॥ अनित्यमतयोलोकेनराःपुरुषसत्तम ६ अन्यथाबुद्धयोह्यासन्नस्मासुवनवासिषु ॥ अदृश्येष्वन्यथाकृष्णदृश्ये षुपुनरन्यथा ७ अस्माकमपिवार्ष्णेयवनेविचरतांतदा ॥ नतथाप्रणयोराज्येयथासंप्रतिवर्तते ८ निवृत्तवनवासान्नःश्रुत्वावीरसमागताः ॥ अक्षौहिण्योहिस प्तेमास्त्वत्प्रसादाज्जनार्दन ९ इमान्हिपुरुषव्याघ्रानचिंत्यबलपौरुषान् ॥ आत्तशस्त्रान्रणेदृष्ट्वानव्यथेदिहकःपुमान् १० सभवान्कुरुमध्येतंसांत्वपूर्वंभयोत रम् ॥ ब्रूयाद्वाक्यंयथामंदोनव्यथेतसुयोधनः ११ युधिष्ठिरंभीमसेनंबीभत्सुंचापराजितम् ॥ सहदेवंचमांचैवत्वांचरामंचकेशव १२ सात्यकिंचमहावीर्यंवि राटंचसहात्मजम् ॥ द्रुपदंचसहामात्यंधृष्टद्युम्नंचमाधव १३ काशिराजंचविक्रांतंधृष्टकेतुंचचेदिपम् ॥ मांसशोणितभृन्मर्त्यःप्रतियुध्येतकोयुधि १४ सभवान् गमनादेवसाधयिष्यत्यसंशयम् ॥ इष्टमर्थंमहाबाहोधर्मराजस्यकेवलम् १५ विदुरश्चैवभीष्मश्चद्रोणश्चसहबाह्लिकः ॥ श्रेयःसमर्थाविज्ञातुमुच्यमानास्त्वया ऽनघ १६ तेचैनमनुनेष्यंतिधृतराष्ट्रंजनाधिपम् ॥ तंचपापसमाचारंसहामात्यंसुयोधनम् १७ श्रोताचार्थस्यविदुरस्त्वंचवक्ताजनार्दन ॥ कमिवार्थंनिवर्तं तंस्थापयेतांनवर्त्मनि १८ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिनकुलवाक्येअशीतितमोऽध्यायः ॥ ८० ॥ सहदेवउवाच ॥ यदेतत्कथितंरा ज्ञाधर्मएषसनातनः ॥ यथाचयुद्धमेवस्यात्तथाकार्यमरिंदम १ यदिप्रशममिच्छेयुःकुरवःपांडवैःसह ॥ तथापियुद्धंदाशार्हयोजयेथाःसहैवतैः २ कथंनुदृष्ट्वा पांचालींतथाकृष्णसभागताम् ॥ अवधेनप्रशाम्येतममन्युःसुयोधने ३ यदिभीमार्जुनौकृष्णधर्मराजश्चधार्मिकः ॥ धर्ममुत्सृज्यतेनाहंयोद्धुमिच्छामिसंयु गे ४ ॥ सात्यकिरुवाच ॥ सत्यमाहमहाबाहोसहदेवोमहामतिः ॥ दुर्योधनवधेशांतिस्तस्यकोपस्यमेभवेत् ५ नजानासियथादृष्ट्वाचीराजिनधरान्वने ॥ त वापिमन्युरुद्भूतोदुःखितान्प्रेक्ष्यपांडवान् ६ तस्मान्माद्रीसुतःशूरोयदाहरणकर्कशः ॥ वचनंसर्वयोधानांतन्मतंपुरुषोत्तम ७ ॥ वैशंपायनउवाच ॥ एवं वदतिवाक्यंतुयुयुधानेमहामतौ ॥ सुभीमःसिंहनादोऽभूद्योधानांतत्रसर्वशः ८ सर्वेहिसर्वशोवीरास्तद्वचःप्रत्यपूजयन् ॥ साधुसाध्वितिशैनेयंहर्षयंतोयुयुत्स वः ९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणि सहदेवसात्यकिवाक्येएकाशीतितमोऽध्यायः ॥ ८१ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ ॥ राज्ञस्तुवचनंश्रुत्वाधर्मार्थसहितंहितम् ॥ कृष्णादाशार्हमासीनमब्रवीच्छोककर्शिता १

प्रयोजनं निवर्तंतंभ्रश्यंतम् १८ ॥ इतिउद्योगप० नीलकंठीयेभारतभावदीपे अशीतितमोऽध्यायः ॥ ८० ॥ यदेतदिति १ । २ । ३ यदियद्यपिभीमादयोधार्मिकाःस्युः तथापि अहंधर्ममुत्सृ ज्यतेनसहयोद्धुमिच्छामि ४ महाबाहोहेकृष्ण ५ । ६ । ७ । ८ । ९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणि नीलकंठीयेभारतभावदीपे एकाशीतितमोऽध्यायः ॥ ८१ ॥ राज्ञस्त्विति १

स्वसितायतमूर्धजा अतिकृष्णादीर्घाश्चकेशायस्याः २। ३। ४ मंत्रंशमप्रधानं ५। ६। ७। ८। ९। १० प्रतिसमासितुंप्रतिपक्षतयास्थातुं ११ कश्चनअर्थःशमोपायःशक्यःकर्तुमितिशेषः



सुताद्रुपदराजस्यस्वसितायतमूर्धजा ॥ संपूज्यसहदेवंचसात्यकिंचमहारथम् २ भीमसेनंचसंशांतंदृष्ट्वापरमदुर्मनाः ॥ अश्रुपूर्णेक्षणावाक्यमुवाचेदंमनस्विनी ३ विदितंतेमहाबाहोधर्मज्ञमधुसूदन ॥ यथानिकृतिमास्थायभ्रंशिताःपांडवाःसुखात् ४ धृतराष्ट्रस्यपुत्रेणसामात्येनजनार्दन ॥ यथाचसंजयोराज्ञामंत्रंरहसि श्रावितः ५ युधिष्ठिरस्यदाशार्हतच्चापिविदितंतव ॥ यथोक्तःसंजयश्चैवतच्चसर्वंश्रुतंत्वया ६ पंचनस्तातदीयंतांग्रामाइतिमहाद्युते ॥ अविस्थलंवृकस्थलंमाकंदींवारणावतम् ७ अवसानंमहाबाहोकंचिदेकंचपंचमम् ॥ इतिदुर्योधनोवाच्यःसुहृदश्चास्यकेशव ८ नचापिह्यकरोद्वाक्यंश्रुत्वाकृष्णसुयोधनः ॥ युधिष्ठिरस्यदाशार्हश्रीमतःसंधिमिच्छतः ९ अप्रदानेनराज्यस्ययदिकृष्णसुयोधनः ॥ संधिमिच्छेन्नकर्तव्यंतत्रगत्वाकथंचन १० शक्ष्यंतिहिमहाबाहोपांडवाःसृंजयैःसह ॥ धार्तराष्ट्रबलंघोरंक्रुद्धंप्रतिसमासितुम् ११ नहिसाम्नानदानेनशक्योऽर्थस्तेषुकश्चन ॥ तस्मात्तेषुनकर्तव्याकृपातेमधुसूदन १२ साम्नादानेनवाकृष्णयेनशाम्यंतिशत्रवः ॥ योक्तव्यस्तेषुदंडःस्याज्जीवितंपरिरक्षता १३ तस्मात्तेषुमहादंडःक्षेप्तव्यःक्षिप्रमच्युत ॥ त्वयाचैवमहाबाहोपांडवैःसहसृंजयैः १४ एतत्समर्थंपार्थानांतवचैवयशस्करम् ॥ क्रियमाणंभवेत्कृष्णक्षत्रस्यचसुखावहम् १५ क्षत्रियेणहिहंतव्यःक्षत्रियोलोभमास्थितः ॥ अक्षत्रियोवादाशार्हस्वधर्ममनुतिष्ठता १६ अन्यत्रब्राह्मणात्तातसर्वपापेष्ववस्थितात् ॥ गुरुर्हिसर्ववर्णानांब्राह्मणःप्रसृताग्रभुक् १७ यथाऽवध्येवध्यमानेभवेद्दोषोजनार्दन ॥ सवध्यस्यावधेदृष्टइतिधर्मविदोविदुः १८ यथात्वांनस्पृशेदेषदोषःकृष्णतथाकुरु ॥ पांडवैःसहदाशार्हैःसृंजयैश्चससैनिकैः १९ पुनरुक्तंचवक्ष्यामिविश्रंभेणजनार्दन ॥ कानुसीमंतिनीमादृक्पृथिव्यामस्तिकेशव २० सुताद्रुपदराजस्यवेदिमध्यात्समुत्थिता ॥ धृष्टद्युम्नस्यभगिनीतवकृष्णप्रियासखी २१ आजमिढकुलंप्राप्तास्नुषापांडोर्महात्मनः ॥ महिषीपांडुपुत्राणांपंचेंद्रसमवर्चसाम् २२ सुतामेपंचभिर्वीरैःपंचजातामहारथाः ॥ अभिमन्युर्यथाकृष्णतथातेतवधर्मतः २३ साऽहंकेशग्रहंप्राप्तापरिक्लिष्टासभांगता ॥ पश्यतांपांडुपुत्राणांत्वयिजीवतिकेशव २४ जीवत्सुपांडुपुत्रेषुपंचालेष्वथवृष्णिषु ॥ दासीभूताऽस्मिपापानांसभामध्येव्यवस्थिता २५ निरमर्षेष्वचेष्टेषुप्रेक्षमाणेषुपांडुषु ॥ पाहिमामितिगोविंदमनसाचिंतितोऽसिमे २६ यत्रमांभगवान्राजाश्वशुरोवाक्यमब्रवीत् ॥ वरंवृणीष्वपांचालिवरार्हाऽसिमतामम २७ अदासाःपांडवाःसंतुसरथाःसायुधाइति ॥ मयोक्तेयत्रनिर्मुक्तावनवासायकेशव २८ एवंविधानांदुःखानामभिज्ञोऽसिजनार्दन ॥ त्रायस्वपुंडरीकाक्षसभर्तृज्ञातिबांधवान् २९ नन्वहंकृष्णभीष्मस्यधृतराष्ट्रस्यचोभयोः ॥ स्नुषाभवामिधर्मेणसाहंदासीकृताबलात् ३०

१२। १३। १४ समर्थंयुक्तं १५। १६ प्रसृतंप्रदत्तंचतदग्र्यंचतस्यभोक्ताप्रसृताग्रभुक्पूज्यइत्यर्थः १७। १८। १९। २०। २१। २२। २३। २४। २५। २६। २७। २८। २९। ३०

३१ । ३२ मृदुसंहारंवेणीरूपेणसमाहृतमपिमृदुं वृजिनाग्रंकुटिलाग्रंकेशवत्सूक्ष्माग्रंत्रा । 'वृजिनःकुटिलेऽन्यवत्'इतिविश्वः सुदर्शनंरमणीयं ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ ४० हेभीमशत्रुभयंकरकृष्ण योऽयंभवान् ४१ । ४२ अत्युष्णंवह्नि ४३ । ४४ रोत्स्यंतिरोदिष्यंति ४५ । ४६ । ४७ । ४८ । ४९ ॥ इतिउद्योगपर्वणिनीलकंठीयेभार

धिक्पार्थस्यधनुष्मत्तांभीमसेनस्यधिग्बलम् ॥ यत्रदुर्योधनःकृष्णमुहूर्तमपिजीवति ३१ यदितेऽहमनुग्राह्यायदितेऽस्तिकृपामयि ॥ धार्तराष्ट्रेषुवैकोपःसर्वःकृष्णाविधीयताम् ३२ ॥ वैशंपायनउवाच ॥ इत्युक्त्वामृदुसंहारंवृजिनाग्रंसुदर्शनम् ॥ सुनीलमसितापांगीसर्वगंधाधिवासितम् ३३ सर्वलक्षणसंपन्नंमहाभुजगवर्चसम् ॥ केशपक्षंवरारोहागृह्यवामेनपाणिना ३४ पद्माक्षीपुंडरीकाक्षमुपेत्यगजगामिनी ॥ अश्रुपूर्णेक्षणाकृष्णाकृष्णंवचनमब्रवीत् ३५ अयंतेपुंडरीकाक्षदुःशासनकरोद्धृतः ॥ स्मर्तव्यःसर्वकार्येषुपरेषांसंधिमिच्छता ३६ यदिभीमार्जुनौकृष्णकृपणौसंधिकामुकौ ॥ पितामेयोत्स्यतेवृद्धःसहपुत्रैर्महारथैः ३७ पंचचैवमहावीर्याःपुत्रामेमधुसूदन ॥ अभिमन्युंपुरस्कृत्ययोत्स्यंतेकुरुभिःसह ३८ दुःशासनभुजंश्यामंसंछिन्नंपांसुगुंठितम् ॥ यद्यहंतुनपश्यामिकाशांतिर्हृदयस्यमे ३९ त्रयोदशहिवर्षाणिप्रतीक्षंत्यागतानिमे ॥ विधायहृदयेमन्युंप्रदीप्तमिवपावकम् ४० विदीर्यतेमेहृदयंभीमवाक्शल्यपीडितम् ॥ योऽयमद्यमहाबाहुर्धर्ममेवानुपश्यति ४१ इत्युक्त्वाबाष्परुद्धेनकंठेनायतलोचना ॥ रुरोदकृष्णासोत्कंपंसस्वरंबाष्पगद्गदम् ४२ स्तनौपीनायतश्रोणीसहितावभिवर्षति ॥ द्रवीभूतमिवात्युष्णंमुंचतीवारिनेत्रजम् ४३ तामुवाचमहाबाहुःकेशवःपरिसांत्वयन् ॥ अचिराद्द्रक्ष्यसेकृष्णेरुदतीर्भरतस्त्रियः ४४ एवंताभीरुरोत्स्यंतिनिहतज्ञातिबांधवाः ॥ हतमित्राहतबलायेषांक्रुद्धाऽसिभामिनी ४५ अहंचतत्करिष्यामिभीमार्जुनयमैःसह ॥ युधिष्ठिरनियोगेनदैवाच्चविधिनिर्मितात् ४६ धार्तराष्ट्राःकालपक्वानचेच्छृण्वंतिमेवचः ॥ शेष्यंतेनिहताभूमौश्वसृगालादनीकृताः ४७ चलेद्धिहिमवान्शैलोमेदिनीशतधाफलेत् ॥ द्यौःपतेच्चसनक्षत्रानमेमोघंवचोभवेत् ४८ सत्यंतेप्रतिजानामिकृष्णेबाष्पोनिगृह्यताम् ॥ हतामित्रान्श्रियायुक्तानचिराद्द्रक्ष्यसेपतीन् ४९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिद्रौपदीकृष्णसंवादेद्व्यशीतितमोऽध्यायः ॥ ८२ ॥ ७ ॥ अर्जुनउवाच ॥ कुरूणामद्यसर्वेषांभवान्सुहृदनुत्तमः ॥ संबंधीदयितोनित्यमुभयोःपक्षयोरपि १ पांडवैर्धार्तराष्ट्राणांप्रतिपाद्यमनामयम् ॥ समर्थःप्रशमंचैवकर्तुमर्हसिकेशव २ त्वमितःपुंडरीकाक्षसुयोधनममर्षणम् ॥ शांत्यर्थंभ्रातरंब्रूयायत्तद्वाच्यमामित्रहन् ३ त्वयाधर्मार्थयुक्तंचेदुक्तंशिवमनामयम् ॥ हितंनादास्यतेबालोदिष्टस्यवशमेष्यति ४ ॥ श्रीभगवानुवाच ॥ धर्म्यमस्मद्धितंचैवकुरूणांयदनामयम् ॥ एषयास्यामिराजानंधृतराष्ट्रमभीप्सया ५ ॥ वैशंपायनउवाच ॥ ततोव्यपेततमसिसूर्येविमलउद्गते ॥ मैत्रेमुहूर्तेसंप्राप्तेमृद्वर्चिषिदिवाकरे ६

तभावदीपे द्व्यशीतितमोऽध्याय ॥ ८२ ॥ ॥ ७ ॥ कुरूणामिति १ प्रतिपाद्यंसंपाद्यं अनामयंकुशलं २ । ३ । ४ यास्यामि तदेवकर्तुमितिशेषः अभीप्सयाप्राप्तुमिच्छया ५ विमलउद्गतेनिर्मलाकाशगेमैत्रेजन्मर्क्षाद्दष्टमतारायां दूतस्यहिस्वामिबलेनैवबलवत्त्वमित्यर्थः ६

कौमुदे कार्तिके रेवत्यां अर्जुनस्य फाल्गुनी जातस्य रेवती मैत्रतारा भवतीति प्रसिद्धं ७ । ८ । ९ । १० प्रतिज्ञाय अनुस्मृत्य ११ । १२ । १३ । १४ आकाशगः सूर्यः आकाश मिवचेतिपाठेजंगमाका

कौमुदेमासिरेवत्यांशरदंतेहिमागमे ॥ स्फीतसस्यसुखेकालेकल्पःसत्ववतांवरः ७ मंगल्याःपुण्यनिर्घोषावाचःशृण्वंश्चसूनृताः ॥ ब्राह्मणानांप्रतीतानामृषीणामिववासवः ८ कृत्वापौर्वाह्णिकंकृत्यंस्नातःशुचिरलंकृतः ॥ उपतस्थेविवस्वंतंपावकंचजनार्दनः ९ ऋषभंपृष्ठआलभ्यब्राह्मणानभिवाद्यच ॥ अग्निंप्रदक्षिणंकृत्वापश्यन्कल्याणमग्रतः १० तत्प्रतिज्ञायवचनंपांडवस्यजनार्दनः ॥ शिनेर्नप्तारमासीनमभ्यभाषतसात्यकिम् ११ रथआरोप्यतांशंखश्चक्रंचगदयासह ॥ उपासंगाश्चशक्त्यश्चसर्वप्रहरणानिच १२ दुर्योधनश्चदुष्टात्माकर्णश्चसहसौबलः ॥ नचशत्रुरवज्ञेयोदुर्बलोऽपिबलीयसा १३ ततस्तन्मतमाज्ञायकेशवस्यपुरःसराः ॥ प्रसस्रुर्योजयिष्यंतोरथंचक्रगदाभृतः १४ तंदीप्तमिवकालाग्निमाकाशगमिवाशुगम् ॥ सूर्यचंद्रप्रकाशाभ्यांचक्राभ्यांसमलंकृतम् १५ अर्धचंद्रैश्चचंद्रैश्चमत्स्यैःसमृगपक्षिभिः ॥ पुष्पैश्चविविधैश्चित्रंमणिरत्नैश्चसर्वशः १६ तरुणादित्यसंकाशंबृहंतंचारुदर्शनम् ॥ मणिहेमविचित्रांगंसुध्वजंसुपताकिनम् १७ सूपस्करमनाधृष्यंवैयाघ्रपरिवारणम् ॥ यशोघ्नंप्रत्यमित्राणांयदूनांनंदिवर्धनम् १८ वाजिभिःशैब्यसुग्रीवमेघपुष्पबलाहकैः ॥ स्नातैःसंपादयामासुःसंपन्नैःसर्वसंपदा १९ महिमानंतुकृष्णस्यभूयएवाभिवर्धयन् ॥ सुघोषःपतगेंद्रेणध्वजेनयुयुजेरथः २० तंमेरुशिखरप्रख्यंमेघदुंदुभिनिःस्वनम् ॥ आरुरोहरथंशौरिर्विमानमिवकामगम् २१ ततःसात्यकिमारोप्यप्रययौपुरुषोत्तमः ॥ पृथिवींचांतरिक्षंचरथघोषेणनादयन् २२ व्यपोढाभ्रस्ततःकालःक्षणेनसमपद्यत ॥ शिवश्चानुववौवायुःप्रशांतमभवद्रजः २३ प्रदक्षिणानुलोमाश्चमंगल्यामृगपक्षिणः ॥ प्रयाणेवासुदेवस्यबभूवुरनुयायिनः २४ मंगल्यार्थप्रदैःशब्दैरन्ववर्तंतसर्वशः ॥ सारसाःशतपत्राश्चहंसाश्चमधुसूदनम् २५ मंत्राहुतिमहाहोमैर्हूयमानश्चपावकः ॥ प्रदक्षिणमुखोभूत्वाविधूमःसमपद्यत २६ वसिष्ठोवामदेवश्चभूरिद्युम्नोगयःक्रथः शुक्रनारदवाल्मीकामरुतःकुशिकोभृगुः २७ देवब्रह्मर्षयश्चैवकृष्णंयदुसुखावहम् ॥ प्रदक्षिणमवर्तंतसहितावासवानुजम् २८ एवमेतैर्महाभागैर्महर्षिगणसाधुभिः ॥ पूजितःप्रययौकृष्णःकुरूणांसदनंप्रति २९ तंप्रयांतमनुप्रायात्कुंतीपुत्रोयुधिष्ठिरः ॥ भीमसेनार्जुनौचोभौमाद्रीपुत्रौचपांडवौ ३० चेकितानश्चविक्रांतोधृष्टकेतुश्चचेदिपः ॥ द्रुपदःकाशिराजश्चशिखंडीचमहारथः ३१ धृष्टद्युम्नःसपुत्रश्चविराटःकेकयैःसह ॥ संसाधनार्थंप्रययुःक्षत्रियाःक्षत्रियर्षभम् ३२ ततोऽनुव्रज्यगोविंदंधर्मराजोयुधिष्ठिरः॥राज्ञांसकाशेद्युतिमानुवाचेदंवचस्तदा ३३ योवैनकामान्नभयान्नलोभान्नार्थकारणात् ॥ अन्यायमनुवर्तेतस्थिरबुद्धिरलोलुपः ३४ धर्मज्ञोधृतिमान्प्राज्ञःसर्वभूतेषुकेशवः ॥ ईश्वरःसर्वभूतानांदेवदेवःसनातनः ३५ तंसर्वगुणसंपन्नंश्रीवत्सकृतलक्षणम् ॥ संपरिष्वज्यकौंतेयःसंदेष्टुमुपचक्रमे ३६

शतुल्यमित्यर्थः विशालत्वात्नक्षत्रोपमरत्नरचितत्वाच्च तदेवाह सूर्येति १५ । १६ । १७ सूपस्करंशोभनैरुपकरणैरुपेतं १८ संपादयामासुःसज्जीकृतवंतः १९ । २० । २१ । २२ । २३ २४ मंगल्यार्थप्रदैःविजयीभवेत्यादिमंगलावहैः २५ । २६ । २७ । २८ । २९ । ३० । ३१ । संसाधनार्थंकार्यनिष्पत्त्यर्थं ३२ । ३३ । ३४ । ३५ । ३६

३७ । ३८ । ३९ । ४० । ४१ ऊढात्विवाहात् यद्वा । 'ऊढस्तंद्रितबालयोः' इतिविश्वः बाल्यादित्यर्थः उभयत्रभावप्रधानोनिर्देशः ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५०

युधिष्ठिरउवाच ॥ यासाबाल्यात्प्रभृत्यस्मान्पर्यवर्धयताबला ॥ उपवासतपःशीलासदास्वस्त्ययनेरता ३७ देवतातिथिपूजासुगुरुशुश्रूषणेरता ॥ वत्सला प्रियपुत्राचप्रियाऽस्माकंजनार्दन ३८ सुयोधनभयाद्यानोऽत्रायतामित्रकर्शन ॥ महतोमृत्युसंबाधादुद्धरेन्नौरिवार्णवात् ३९ अस्मत्कृतेचसततंययादुःखानि माधव ॥ अनुभूतान्यदुःखार्हातांस्मपृच्छेरनामयम् ४० भृशमाश्वासयेश्चैनांपुत्रशोकपरिप्लुताम् ॥ अभिवाद्यस्वजेथास्त्वंपांडवान्परिकीर्तयन् ४१ ऊढा त्प्रभृतिदुःखानिश्वशुराणामरिंदम ॥ निकारानतदर्हाचपश्यंतीदुःखमश्नुते ४२ अपिजातुसकालःस्यात्कृष्णदुःखविपर्ययः ॥ यदहंमातरंक्लिष्टांसुखंदद्यामरिं दम ४३ प्रव्रजंतोऽनुधावंतींकृपणांपुत्रगृद्धिनीम् ॥ रुदतीमुपहायैनामगच्छामवयंवनम् ४४ ननूनंम्रियतेदुःखैःसाचेज्जीवतिकेशव ॥ तथापुत्राधिभिर्गाढमा र्ताह्यानर्तसत्कृत ४५ अभिवाद्याऽथसाकृष्णत्वयामद्वचनाद्विभो ॥ धृतराष्ट्रश्चकौरव्योराजानश्चवयोधिकाः ४६ भीष्मंद्रोणंकृपंचैवमहाराजंचबाह्लिकम् ॥ द्रौणिंचसोमदत्तंचसर्वांश्चभरतान्प्रति ४७ विदुरंचमहाप्राज्ञंकुरूणांमंत्रधारिणम् ॥ अगाधबुद्धिंमर्मज्ञंस्वजेथामधुसूदन ४८ इत्युक्त्वाकेशवंतत्रराजमध्येयुधि ष्ठिरः ॥ अनुज्ञातोनिववृतेकृष्णंकृत्वाप्रदक्षिणम् ४९ व्रजन्नेवतुबीभत्सुःसखायंपुरुषर्षभम् ॥ अब्रवीत्परवीरघ्नंदाशार्हमपराजितम् ५० यदस्माकंविभोवृत्तंपु रावैमंत्रनिश्चये ॥ अर्धराज्यस्यगोविंदविदितंसर्वराजसु ५१ तच्चेद्दद्यादसंगेनसत्कृत्याऽनवमन्यच ॥ प्रियंमेस्यान्महाबाहोमुच्येरन्महतोभयात् ५२ अतश्चे दन्यथाकर्ताधार्तराष्ट्रोऽनुपायवित् ॥ अंतंनूनंकरिष्यामिक्षत्रियाणांजनार्दन ५३ ॥ वैशंपायनउवाच ॥ एवमुक्तेपांडवेनसमहृष्यद्वृकोदरः ॥ मुहुर्मुहुःक्रोधव शात्प्रावेपतचपांडवः ५४ वेपमानश्चकौंतेयःप्राक्रोशन्महतोरवान् ॥ धनंजयवचःश्रुत्वाहर्षोत्सिक्तमनाभृशम् ५५ तस्यतंनिनदंश्रुत्वासंप्रावेपंतधान्विनः ॥ वाहनानिचसर्वाणिशकृन्मूत्रेप्रसुस्रुवुः ५६ इत्युक्त्वाकेशवंतत्रतथाचोक्त्वाविनिश्चयम् ॥ अनुज्ञातोनिववृतेपरिष्वज्यजनार्दनम् ५७ तेषुराजसुसर्वेषुनिवृत्तेषुज नार्दनः ॥ तूर्णमभ्यगमद्धृष्टःशैब्यसुग्रीववाहनः ५८ तेहयावासुदेवस्यदारुकेणप्रचोदिताः ॥ पंथानमाचेमुरिवग्रसमानाइवांबरम् ५९ अथापश्यन्महाबाहुर्ऋषी नध्वनिकेशवः ॥ ब्राह्मयाश्रियादीप्यमानान्स्थितानुभयतःपथि ६० सोऽवतीर्यरथात्तूर्णमभिवाद्यजनार्दनः ॥ यथावृत्तानृषीन्सर्वानभ्यभाषतपूजयन् ६१ क च्चिल्लोकेषुकुशलंकच्चिद्धर्मःस्वनुष्ठितः ॥ ब्राह्मणानांत्रयोवर्णाःकच्चित्तिष्ठंतिशासने ६२ तेभ्यःप्रयुज्यतांपूजांप्रोवाचमधुसूदनः ॥ भगवंतःक्कसंसिद्धाःकावीथी भवतामिह ६३ किंवाकार्यंभगवतामहंकिंकरवाणिवः ॥ केनार्थेनोपसंप्राप्ताभगवंतोमहीतलम् ६४ तमब्रवीज्जामदग्न्यउपेत्यमधुसूदनम् ॥ परिष्वज्यचगोविंदं सुरासुरपतेःसखा ६५

५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ वीथीमार्गः ६४ । ६५

६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपेत्र्यशीतितमोऽध्यायः ॥ ८३ ॥ ॥ ७ ॥ ॥ प्रयांतमिति १ । २ । ३ दैवानिशकुनानि औत्पा

देवर्षयःपुण्यकृतोब्राह्मणाश्चबहुश्रुताः ॥ राजर्षयश्चदाशार्हमानयंतस्तपस्विनः ॥ देवासुरस्यद्रष्टारःपुराणस्यमहामते ६६ समेतंपार्थिवंक्षत्रंदिदृक्षंतश्चसर्वतः ॥ सभासदश्चराजानस्त्वांचसत्यंजनार्दनम् ६७ एतन्महत्प्रेक्षणीयंद्रष्टुंगच्छामकेशव ॥ धर्मार्थसहितावाचःश्रोतुमिच्छाममाधव ६८ त्वयोच्यमानाःकुरुषुराजमध्येपरंतप ॥ भीष्मद्रोणादयश्चैवविदुरश्चमहामतिः ६९ त्वंचयादवशार्दूलसभायांवैसमेष्यथ ॥ तववाक्यानिदिव्यानितथातेषांचमाधव ७० श्रोतुमिच्छामगोविंदसत्यानिचहितानिच ॥ आपृष्टोऽसिमहाबाहोपुनर्द्रक्ष्यामहेवयम् ७१ याह्यविघ्नेनवैवीरद्रक्ष्यामस्त्वांसभागतम् ॥ आसीनमासनेदिव्येबलतेजःसमाहितम् ७२ ॥ इतिश्रीमहाभा० उ० प० भगवद्यानप० श्रीकृष्णप्रस्थानेत्र्यशीतितमोऽध्यायः ॥ ८३ ॥ ॥ वैशंपायनउवाच ॥ प्रयांतंदेवकीपुत्रंपरवीररुजोदश ॥ महारथामहाबाहुमन्वयुःशस्त्रपाणयः १ पदातीनांसहस्रंचसादिनांचपरंतप ॥ भोज्यंचविपुलंराजन्प्रेष्याश्चशतशोपरे २ ॥ जनमेजयउवाच ॥ कथंप्रयातोदाशार्होमहात्मामधुसूदनः ॥ कानिवाव्रजतस्तस्यनिमित्तानिमहौजसः ३ ॥ वैशंपायनउवाच ॥ तस्यप्रयाणेयान्यासन्निमित्तानिमहात्मनः ॥ तानिमेशृणुसर्वाणिदैवान्यौत्पातिकानिच ४ अनभ्रेऽशनिनिर्घोषःसविद्युत्समजायत ॥ अन्वगेवचपर्जन्यःप्रावर्षद्विघनेभृशम् ५ प्रत्यगूहुर्महानद्यःप्राङ्मुखाःसिंधुसत्तमाः ॥ विपरीतादिशःसर्वानप्राज्ञायतकिंचन ६ प्राज्वलन्नग्नयोराजन्पृथिवीसमकंपत ॥ उदपानाश्चकुंभाश्चप्रासिंचन्शतशोजलम् ७ तमःसंवृतमप्यासीत्सर्वंजगादिदंतथा ॥ नदिशोनादिशोराजन्प्रज्ञायंतेस्मरेणुना ८ प्रादुरासीन्महाञ्छब्दःखेशरीरंनदृश्यते ॥ सर्वेषुराजन्देशेषुतदद्भुतमिवाभवत् ९ प्रामथ्नाद्धास्तिनपुरंवातोदक्षिणपश्चिमः ॥ आरुजन्गणशोवृक्षान्परुषोऽशनिनिःस्वनः १० यत्रयत्रचवार्ष्णेयोवर्ततेपथिभारत ॥ तत्रतत्रसुखोवायुःसर्वंचासीत्प्रदक्षिणम् ११ ववर्षपुष्पवर्षंचकमलानिचभूरिशः ॥ समश्चपंथानिर्दुःखोव्यपेतकुशकंटकः १२ संस्तुतोब्राह्मणैर्गीर्भिस्तत्रतत्रसहस्रशः ॥ अर्च्यतेमधुपर्कैश्चवसुभिश्चवसुप्रदः १३ तंकिरंतिमहात्मानंवन्यैःपुष्पैःसुगंधिभिः ॥ स्त्रियःपथिसमागम्यसर्वभूतहितेरतम् १४ सशालिभवनंरम्यंसर्वसस्यसमाचितम् ॥ सुखंपरमधर्मिष्ठमभ्यगाद्भरतर्षभ १५ पश्यन्बहुपशून्ग्रामान्रम्यान्हृदयतोषणान् ॥ पुराणिचव्यतिक्रामन्राष्ट्राणिविविधानिच १६ नित्यंहृष्टाःसुमनसोभारतैरभिरक्षिताः ॥ नोद्विग्नाःपरचक्राणांव्यसनानामकोविदाः १७ उपप्लव्यादथागम्यजनाःपुरनिवासिनः ॥ पथ्यतिष्ठंतसहिताविष्वक्सेनदिदृक्षया १८ तेतुसर्वेसमायांतमग्निमिद्धमिवप्रभुम् ॥ अर्चयामासुरर्चार्हंदेशातिथिमुपस्थितम् १९ वृकस्थलंसमासाद्यकेशवःपरवीरहा ॥ प्रकीर्णरश्मावादित्येव्योम्निवैलोहितायति २०

तिकानिअशकुनानि ४ । ५ प्रत्यक्प्रतीपंऊहुःप्रवाहंकृतवत्यः ६ । ७ । ८ । खेशरीरंछायापुरुषशरीरं ९ दक्षिणपश्चिमःनिर्ऋतिदेशः १० औत्पातिकान्युक्त्वादैवान्याह यत्रयत्रेति ११ १२ । १३ । १४ भवंतिअस्मिन्निति भवनंक्षेत्रं १५ । १६ । १७ उपप्लव्यात्ग्रामात् १८ । १९ । २०

२१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेचतुरशीतितमोऽध्यायः ॥ ८४ ॥ तथादूतैरिति १ । २ । ३ । ४ । ५ । ६ । ७

अवतीर्यरथात्तूर्णंकृत्वाशौचंयथाविधि ॥ रथमोचनमादिश्यसंध्यामुपविवेशह २१ दारुकोपिहयान्मुक्त्वापरिचर्यचशास्त्रतः ॥ मुमोचसर्वयोक्त्रादिमुक्त्वाचैतान वासृजत् २२ अभ्यतीत्यतुतत्सर्वमुवाचमधुसूदनः ॥ युधिष्ठिरस्यकार्यार्थमिहवत्स्यामहेक्षपाम् २३ तस्यतन्मतमाज्ञायचक्रुरावसथंनराः ॥ क्षणेनचान्नपा नानिगुणवंतिसमार्जयन् २४ तस्मिन्ग्रामेप्रधानास्तुयआसन्ब्राह्मणान्नृप ॥ आर्याःकुलीनाह्रीमंतोब्राह्मींवृत्तिमनुष्ठिताः २५ तेऽभिगम्यमहात्मानंहृषीकेशम रिंदमम् ॥ पूजांचक्रुर्यथान्यायमाशीर्मंगलसंयुताम् २६ तेपूजयित्वादाशार्हंसर्वलोकेषुपूजितम् ॥ न्यवेदयंतवेश्मानिरत्नवंतिमहात्मने २७ तान्प्रभुःकृत मित्युक्त्वासत्कृत्यचयथार्हतः ॥ अभ्येत्यचैषांवेश्मानिपुनरायात्सहैवतैः २८ सुमृष्टंभोजयित्वाचब्राह्मणांस्तत्रकेशवः ॥ भुक्त्वाचसहतैःसर्वैरवसत्तांक्षपांसुखम् ॥ २९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिश्रीकृष्णप्रयाणेचतुरशीतितमोऽध्यायः ॥ ८४ ॥ ॥ वैशंपायनउवाच ॥ तथादूतैःसमाज्ञायप्रयांतंम धुसूदनम् ॥ धृतराष्ट्रोऽब्रवीद्भीष्ममर्चयित्वामहाभुजम् १ द्रोणंचसंजयंचैवविदुरंचमहामतिम् ॥ दुर्योधनंसहामात्यंहृष्टरोमाऽब्रवीदिदम् २ अद्भुतंमहदाश्च र्यंश्रूयतेकुरुनंदन ॥ स्त्रियोबालाश्चवृद्धाश्चकथयंतिगृहेगृहे ३ सत्कृत्याचक्षतेचान्येतथैवान्येसमागताः ॥ पृथग्वादाश्चवर्ततेचत्वरेषुसभासुच ४ उपायास्य तिदाशार्हःपांडवार्थेपराक्रमी ॥ सनोमान्यश्चपूज्यश्चसर्वथामधुसूदनः ५ तस्मिन्हियात्रालोकस्यभूतानामीश्वरोहिसः ॥ तस्मिन्धृतिश्चवीर्यंचप्रज्ञाचौजश्च माधवे ६ समान्यतांनरश्रेष्ठःसहिधर्मःसनातनः ॥ पूजितोहिसुखायस्यादसुखःस्यादपूजितः ७ सचेत्तुष्यतिदाशार्हउपचारैररिंदमः ॥ कृष्णात्सर्वानभिप्रा यान्प्राप्स्यामःसर्वराजसु ८ तस्यपूजार्थमद्यैवसंविधत्स्वपरंतप ॥ सभाःपथिविधीयंतांसर्वकामसमन्विताः ९ यथाप्रीतिर्महाबाहोत्वयिजायेततस्यवै ॥ तथा कुरुष्वगांधारेकथंवाभीष्ममन्यसे १० ततोभीष्मादयःसर्वेधृतराष्ट्रंजनाधिपम् ॥ ऊचुःपरममित्येवंपूजयंतोऽस्यतद्वचः ११ तेषामनुमतंज्ञात्वाराजादुर्योधनस्त दा ॥ सभावास्तूनिरम्याणिप्रदेष्टुमुपचक्रमे १२ ततोदेशेषुदेशेषुरमणीयेषुभागशः ॥ सर्वरत्नसमाकीर्णाःसभाश्चक्रुरनेकशः १३ आसनानिविचित्राणियुतानि विविधैर्गुणैः ॥ स्त्रियोगंधानलंकारान्सूक्ष्माणिवसनानिच १४ गुणवंत्यन्नपानानिभोज्यानिविविधानिच ॥ माल्यानिचसुगंधीनितानिराजाददौततः १५ विशेषतश्चवासार्थंसभांग्रामेवृकस्थले ॥ विदधेकौरवोराजाबहुरत्नांमनोरमाम् १६ एतद्विधायवैसर्वंदेवार्हमतिमानुषम् ॥ आचख्यौधृतराष्ट्रायराजादुर्योधन स्तदा १७ ताःसभाःकेशवःसर्वारत्नानिविविधानिच ॥ असमीक्ष्यैवदाशार्हउपायात्कुरुसद्मतत् १८ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिमार्गे सभानिर्माणेपंचाशीतितमोऽध्यायः ॥ ८५ ॥

अभिप्रायान्मनोरथान् ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे पंचाशीतितमोऽध्यायः ॥ ८५ ॥ ॥

उपप्लव्यादिति १ । २ प्रपितामहः पितामहस्यब्रह्मणोऽपिपिता ३ । ४ । ५ । ६ ईषालांगलदंडस्तत्सदृशदंतान् अष्टौअनुचराः यस्यगजस्य ७ । ८ । ९ । १० । ११ । १२ । १३ । १४

॥ धृतराष्ट्रउवाच ॥ उपप्लव्यादिहक्षत्तरुपायातोजनार्दनः ॥ वृकस्थलेनिवसतिसचप्रातरिहैष्यति १ आहुकानामधिपतिःपुरोगःसर्वसात्वताम् ॥ महामना महावीर्योमहासत्वोजनार्दनः २ स्फीतस्यवृष्णिराष्ट्रस्यभर्तागोप्ताचमाधवः ॥ त्रयाणामपिलोकानांभगवान्प्रपितामहः ३ वृष्ण्यंधकाःसुमनसोयस्यप्रज्ञामुपासते ॥ आदित्यावसवोरुद्रायथाबुद्धिंबृहस्पतेः ४ तस्मैपूजांप्रयोक्ष्यामिदाशार्हायमहात्मने ॥ प्रत्यक्षंतवधर्मज्ञतांमेकथयतःशृणु ५ एकवर्णैःसुकृष्णांगैर्बाह्लिजातैर्हयोत्तमैः ॥ चतुर्युक्तान्रथांस्तस्मैरौक्मान्दास्यामिषोडश ६ नित्यप्रभिन्नान्मातंगानीषादंतान्प्रहारिणः ॥ अष्टानुचरमेकैकमष्टौदास्यामिकौरव ७ दासीनामप्रजातानांशुभानांरुक्मवर्चसाम् ॥ शतमस्मैप्रदास्यामिदासानामपितावताम् ८ आविकंचसुखस्पर्शंपार्वतीयैरुपाहृतम् ॥ तदप्यस्मैप्रदास्यामिसहस्राणिदशाष्टच ९ अजिनानांसहस्राणिचीनदेशोद्भवानिच ॥ तान्यप्यस्मैप्रदास्यामियावदर्हतिकेशवः १० दिवारात्रौचभात्येषसुतेजाविमलोमणिः ॥ तमप्यस्मैप्रदास्यामितमर्हतिहिकेशवः ११ एकेनाभिपतत्यह्नायोजनानिचतुर्दश ॥ यानमश्वतरीयुक्तंदास्येतस्मैतदप्यहम् १२ यावंतिवाहनान्यस्ययावंतःपुरुषाश्चते ॥ ततोऽष्टगुणमप्यस्मैभोज्यंदास्याम्यहंसदा १३ ममपुत्राश्चपौत्राश्चसर्वेदुर्योधनादृते ॥ प्रत्युद्यास्यंतिदाशार्हंरथैर्मृष्टैःस्वलंकृताः १४ स्वलंकृताश्चकल्याण्यःपादैरेवसहस्रशः ॥ वारमुख्यामहाभागाःप्रत्युद्यास्यंतिकेशवम् १५ नगरादपियाःकाश्चिद्गमिष्यंतिजनार्दनम् ॥ द्रष्टुंकन्याश्चकल्याण्यस्ताश्चयास्यंत्यनावृताः १६ सस्त्रीपुरुषबालंचनगरंमधुसूदनम् ॥ उदीक्षतांमहात्मानंभानुमंतमिवप्रजाः १७ महाध्वजपताकाश्चक्रियंतांसर्वतोदिशः ॥ जलावसिक्तोविरजाःपंथास्तस्येतिचान्वशात् १८ दुःशासनस्यचगृहंदुर्योधनगृहाद्वरम् ॥ तदद्यक्रियतांक्षिप्रंसुसंमृष्टमलंकृतम् १९ एतद्धिरुचिराकारैःप्रासादैरुपशोभितम् ॥ शिवंचरमणीयंचसर्वर्तुसुमहाधनम् २० सर्वमस्मिन्गृहेरत्नंममदुर्योधनस्यच ॥ यद्यदर्हतिवार्ष्णेयस्तत्तद्देयमसंशयम् २१ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिधृतराष्ट्रवाक्येषडशीतितमोऽध्यायः ॥ ८६ ॥ ॥ ध ॥ ॥ विदुरउवाच ॥ राजन्बहुमतश्चासित्रैलोक्यस्यापिसत्तमः ॥ संभावितश्चलोकस्यसंमतश्चासिभारत १ यत्त्वमेवंगतेब्रूयाःपश्चिमेवयसिस्थितः ॥ शास्त्राद्वासुप्रतर्काद्वासुस्थिरःस्थविरोह्यसि २ लेखाश्मशिनिभाःसूर्येमहोर्मिरिवसागरे ॥ धर्मस्त्वयितथाराजन्निति व्यवसिताःप्रजाः ३ सदैवभावितोलोकोगुणौघैस्तवपार्थिव ॥ गुणानांरक्षणेनित्यंप्रयतस्वसबांधवः ४ आर्जवंप्रतिपद्यस्वमाबाल्याद्बहुनीनशः ॥ राजन्पुत्रांश्चपौत्रांश्चसुहृदश्चैवसुप्रियान् ५ यत्त्वमिच्छसिकृष्णायराजन्नतिथयेबहु ॥ एतदन्यच्चदाशार्हःपृथिवीमपिचार्हति ६ नतुत्वंधर्ममुद्दिश्यतस्यवाप्रियकारणात् ॥ एतदित्सासिकृष्णायसत्येनात्मानमालभे ७

१५ । १६ । १७ । १८ । १९ सर्वर्तुसर्वेऋतवोयुगपदस्मिन्संतीतितथा २० । २१ ॥ इ० उ० नी० भा० भा० षडशीतितमोऽध्यायः ॥ ८६ ॥ ॥ ॥ ध ॥ ॥ ॥ राजन्निति १ । २ । ३ भावितःहृष्टः ४ मानीनशः हेतुमण्णिच् मानाशंप्रापुहि ५ । ६ । ७

मायाइंद्रजालं छद्मवंचनं ८ । ९ विभेत्स्यसिशल्यवत्पृथक्करिष्यसि १० । ११ वेदवेद्मि १२ नैवेक्ष्यतिनैवांगीकरिष्यति २३ आतिथ्यंशमरूपं १४ उपाकुरुअर्पय १५ । १६ । १७ ॥ इ०उ०
नी० भा०भा० सप्ताशीतितमोऽध्यायः ॥ ८७ ॥ ॥ यदाहेति असंहार्यः हर्तुमशक्यः १ । २ देशइति यद्यपिकेशवोऽर्चामर्हत्येवतथाऽपिअर्चायांदेशःकालश्चायुक्तइत्यर्थः तदेवाह मंस्यतीति

मायैषासत्यमेवैतच्छद्मैतद्भूरिदक्षिण ॥ जानामित्वन्मतंराजन्गूढंबाह्येनकर्मणा ८ पंचपंचैवलिप्स्यंतिग्रामकान्पांडवानृप ॥ नचादित्ससितेभ्यस्तांस्तच्छमंनकरिष्यसि ९ अर्थेनतुमहाबाहुंवार्ष्णेयंत्वंजिहीर्षसि ॥ अनेनचाप्युपायेनपांडवेभ्योविभेत्स्यसि १० नचवित्तेनशक्योऽसौनोद्यमेननगर्हया ॥ अन्योधनंजयात्कर्तुमेतत्तत्त्वंब्रवीमिते ११ वेदकृष्णस्यमाहात्म्यंवेदास्यदृढभक्तिताम् ॥ अत्याज्यमस्यजानामिप्राणैस्तुल्यंधनंजयम् १२ अन्यत्कुंभादपांपूर्णादन्यत्पादावसेचनात् ॥ अन्यत्कुशलसंप्रश्नान्नैवेक्ष्यतिजनार्दनः १३ यत्त्वस्यप्रियमातिथ्यंमानार्हस्यमहात्मनः ॥ तदस्मैक्रियतांराजन्मानार्होऽसौजनार्दनः १४ आशंसमानःकल्याणंकुरूनभ्येतिकेशवः ॥ येनैवराजन्नर्थेनतदेवास्माउपाकुरु १५ शममिच्छतिदाशार्हस्तवदुर्योधनस्यच ॥ पांडवानांचराजेंद्रतदस्यवचनंकुरु १६ पितासिराजन्पुत्रास्तेवृद्धस्त्वंशिशवःपरे ॥ वर्तस्वपितृवत्तेषुवर्ततेतेहिपुत्रवत् १७ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिविदुरवाक्येसप्ताशीतितमोऽध्यायः ॥ ८७ ॥ ॥ दुर्योधनउवाच ॥ यदाहविदुरःकृष्णेसर्वंतत्सत्यमच्युते ॥ अनुरक्तोह्यसंहार्यःपार्थान्प्रतिजनार्दनः १ यत्तत्सत्कारसंयुक्तंदेयंवसुजनार्दने ॥ अनेकरूपंराजेंद्रनतद्देयंकदाचन २ देशःकालस्तथाऽयुक्तोनहिनार्हतिकेशवः ॥ मंस्यत्यधोक्षजोराजन्भयादर्चतिमामिति ३ अवमानश्चयत्रस्यात्क्षत्रियस्यविशांपते ॥ नतत्कुर्याद्बुधःकार्यमितिमेनिश्चितामतिः ४ सहिपूज्यतमोलोकेकृष्णःपृथुललोचनः ॥ त्रयाणामपिलोकानांविदितंममसर्वथा ५ नतुतस्मैप्रदेयंस्यात्तथाकार्यगतिःप्रभो ॥ विग्रहःसमुपारब्धोनहिशाम्यत्यविग्रहात् ६ ॥ वैशंपायनउवाच ॥ तस्यतद्वचनंश्रुत्वाभीष्मःकुरुपितामहः ॥ वैचित्रवीर्यंराजानमिदंवचनमब्रवीत् ७ सत्कृतोऽसत्कृतोवाऽपिनक्रुद्ध्येतजनार्दनः ॥ नालमेनमवज्ञातुंनावज्ञेयोहिकेशवः ८ यत्तुकार्यंमहाबाहोमनसाकार्यतांगतम् ॥ सर्वोपायैर्नतच्छक्यंकेनचित्कर्तुमन्यथा ९ सयद्ब्रूयान्महाबाहुस्तत्कार्यमविशंकया ॥ वासुदेवेनतीर्थेनक्षिप्रंसंशाम्यपांडवैः १० धर्म्यमर्थ्यंचधर्मात्माध्रुवंवक्ताजनार्दनः ॥ तस्मिन्वाच्याःप्रियावाचोभवताबांधवैःसह ११ ॥ दुर्योधनउवाच ॥ नपर्यायोऽस्तियद्राजन्श्रियंनिष्केवलामहम् ॥ तैःसहेमामुपाश्नीयांयावज्जीवंपितामह १२ इदंतुसुमहत्कार्यंशृणुमेयत्समर्थितम् ॥ परायणंपांडवानांनियच्छामिजनार्दनम् १३ तस्मिन्बद्धेभविष्यंतिवृष्णयःपृथिवीतथा ॥ पांडवाश्चविधेयामेसचप्रातरिहैष्यति १४ अत्रोपायान्यथासम्यङ्नबुद्ध्येतजनार्दनः ॥ नचापायोभवेत्कश्चित्तद्भवान्प्रब्रवीतुमे १५

३ । ४ । ५ कार्यगतिःकर्त्तव्यरीतिः अविग्रहात् आतिथ्यमात्रेण ६ । ७ नालंनपर्याप्तोऽसि ८ । ९ तीर्थेनअवतरणवर्त्मना संशाम्यशांतोभव १० । ११ पर्यायःप्रकारांतरं निष्केवलांकृत्स्नां पांडवान्यथादासवद्दासयेयंतथाप्रकारोनास्तीत्यर्थः १२ । १३ । १४ । १५ ।

१६ । १७ । १८ । १९ । २० । २१ । २२ । २३ ॥ इ०उ०प०नी०भा०भा०अष्टाशीतितमोऽध्यायः ॥ ८८ ॥ ॥ प्रातरिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२





॥ वैशंपायनउवाच ॥ तस्यतद्वचनंश्रुत्वाघोरंकृष्णाभिसंहितम् ॥ धृतराष्ट्रःसहामात्योव्यथितोविमनाऽभवत् १६ ततोदुर्योधनमिमंधृतराष्ट्रोऽब्रवीद्वचः ॥ मैवंवोचःप्रजापालनैषधर्मःसनातनः १७ दूतश्चहिहृषीकेशःसंबंधीचाप्रियश्चनः ॥ अपापःकौरवेयेषुसकथंबंधमर्हति १८ ॥ भीष्मउवाच ॥ परीतस्तवपुत्रोऽयंधृतराष्ट्रसुमंदधीः ॥ वृणोत्यनर्थंनैवार्थंयाच्यमानःसुहृज्जनैः १९ इममुत्पथिवर्तंतंपापंपापानुबंधिनम् ॥ वाक्यानिसुहृदांहित्वात्वमप्यस्यानुवर्तसे ॥ २० कृष्णमक्लिष्टकर्माणमासाद्यायंसुदुर्मतिः ॥ तवपुत्रःसहामात्यःक्षणेननभविष्यति २१ पापस्यास्यनृशंसस्यत्यक्तधर्मस्यदुर्मतेः ॥ नोत्सहेऽनर्थसंयुक्ताःश्रोतुंवाचःकथंचन २२ इत्युक्त्वाभरतश्रेष्ठोवृद्धःपरममन्युमान् ॥ उत्थायतस्मात्प्रातिष्ठद्भीष्मःसत्यपराक्रमः २३ ॥ ॥ इतिश्रीमहाभारतेउद्योगपर्वणि भगवद्यानपर्वणिदुर्योधनवाक्येअष्टाशीतितमोऽध्यायः ॥ ८८ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ प्रातरुत्थायकृष्णस्तुकृतवान्सर्वमाह्निकम् ॥ ब्राह्मणैरभ्यनुज्ञातःप्रययौनगरंप्रति १ तंप्रयांतंमहाबाहुमनुज्ञाप्यमहाबलम् ॥ पर्यवर्तंततेसर्वेवृकस्थलनिवासिनः २ धार्तराष्ट्रास्तमायांतंप्रत्युज्जग्मुःस्वलंकृताः ॥ दुर्योधनादृतेसर्वेभीष्मद्रोणकृपादयः ३ पौराश्चबहुलाराजन्हृषीकेशंदिदृक्षवः ॥ यानैर्बहुविधैरन्येपद्भिरेवतथापरे ४ सवैपथिसमागम्यभीष्मेणाक्लिष्टकर्मणा ॥ द्रोणेनधार्तराष्ट्रैश्चतैर्वृतोनगरंययौ ५ कृष्णसंमाननार्थंचनगरंसमलंकृतम् ॥ बभूवराजमार्गश्चबहुरत्नसमाचितः ६ नचकाश्चिद्गृहेराजंस्तदाऽसीद्भरतर्षभ ॥ नस्त्रीनवृद्धोनशिशुर्वासुदेवदिदृक्षया ७ राजमार्गेनरास्तास्मिन्संस्तुवंत्यवनिंगताः ॥ तस्मिन्कालेमहाराजहृषीकेशप्रवेशने ८ आवृतानिवरस्त्रीभिर्गृहाणिसुमहांत्यपि ॥ प्रचलंतीवभारेणदृश्यंतेस्ममहीतले ९ तथाचगतिमंतस्तेवासुदेवस्यवाजिनः ॥ प्रनष्टगतयोऽभूवन्राजमार्गेनरैर्वृते १० सगृहंधृतराष्ट्रस्यप्राविशच्छत्रुकर्शनः ॥ पांडुरंपुंडरीकाक्षःप्रासादैरुपशोभितम् ११ तिस्रःकक्ष्याव्यतिक्रम्यकेशवोराजवेश्मनः ॥ वैचित्रवीर्यंराजानमभ्यगच्छदरिंदमः १२ अभ्यागच्छतिदाशार्हेप्रज्ञाचक्षुर्नराधिपः ॥ सहैवद्रोणभीष्माभ्यामुदतिष्ठन्महायशाः १३ कृपश्चसोमदत्तश्चमहाराजश्चबाह्लिकः ॥ आसनेभ्योऽचलन्सर्वेपूजयंतोजनार्दनम् १४ ततोराजानमासाद्यधृतराष्ट्रंयशस्विनम् ॥ सभीष्मंपूजयामासवार्ष्णेयोवाग्भिरंजसा १५ तेषुधर्मानुपूर्वींतांप्रयुज्यमधुसूदनः ॥ यथावयःसमीयायराजभिःसहमाधवः १६ अथद्रोणंसबाह्लीकंसपुत्रंचयशस्विनम् ॥ कृपंचसोमदत्तंचसमीयायजनार्दनः १७ तत्रासीदूर्जितंमृष्टंकांचनंमहदासनम् ॥ शासनाद्धृतराष्ट्रस्यतत्रोपाविशदच्युतः १८ अथगांमधुपर्कंचाप्युदकंचजनार्दने ॥ उपजह्रुर्यथान्यायंधृतराष्ट्रपुरोहिताः १९ कृतातिथ्यस्तुगोविंदःसर्वान्परिहसन्कुरून् ॥ आस्तेसांबंधिकंकुर्वन्कुरुभिःपरिवारितः २०

१३ । १४ । १५ । १६ । १७ मृष्टंशोधितम् १८ । १९ परिहसन् नर्मकुर्वन् सांबंधिकंधनंजयादिसंबंधहेतुकंव्यवहारम् २०

पूजितः स्तुतः ११ । २२ । २३ । २४ । २५ । २६ विदुरः पांडवानां विचेष्टितं तस्यतं कृष्णं प्रति अपृच्छदित्यन्वयः सार्धश्लोकएकंवाक्यं अपृच्छादिति पूर्वस्मादनुकृष्यते प्रीयमाणस्येत्यादिषठ्यो

सोर्चितो धृतराष्ट्रेण पूजितश्च महायशाः ॥ राजानं समनुज्ञाप्य निरक्रामदरिंदमः २१ तैः समेत्य यथान्यायं कुरुभिः कुरुसंसदि ॥ विदुरावसथं रम्यमुपातिष्ठत माधवः २२ विदुरः सर्वकल्याणैरभिगम्य जनार्दनम् ॥ अर्चयामास दाशार्हं सर्वकामैरुपस्थितम् २३ यामे प्रीतिः पुष्कराक्ष त्वद्दर्शनसमुद्भवा ॥ साकिमाख्यायते तुभ्यमंतरात्माऽसि देहिना म् २४ कृतातिथ्यं तु गोविंदं विदुरः सर्वधर्मवित् ॥ कुशलं पांडुपुत्राणामपृच्छन्मधुसूदनम् २५ प्रीयमाणस्य सुहृदो विदुरो बुद्धिसत्तमः ॥ धर्मार्थनित्यस्य सतो गतरोषस्य धीमतः २६ तस्य सर्वं सविस्तारं पांडवानां विचेष्टितम् ॥ क्षत्तुराचष्ट दाशार्हः सर्वं प्रत्यक्षदर्शिवान् २७ ॥ इतिश्रीमहाभारते उद्योगपर्वणि भगवद्यानपर्वणि धृतराष्ट्रगृहप्रवेशपूर्वकं श्रीकृष्णस्य विदुरगृहप्रवेशे एकोननवतितमोऽध्यायः ॥ ८९ ॥ ॥ ७ ॥ वैशंपायन उवाच ॥ अथोपगम्य विदुरमपराह्णे जनार्दनः ॥ पितृष्वसारं स पृथामभ्यगच्छदरिंदमः १ सा दृष्ट्वा कृष्णमायांतं प्रसन्नादित्यवर्चसम् ॥ कंठे गृहीत्वा प्राक्रोशत्स्मरंती तनयान्पृथा २ तेषां सत्ववतां मध्ये गोविंदं सहचारिणम् ॥ चिरस्य दृष्ट्वा वार्ष्णेयं बाष्पमाहारयत्पृथा ३ साऽब्रवीत्कृष्णमासीनं कृतातिथ्यं युधांपतिम् ॥ बाष्पगद्गदपूर्णेन मुखेन परिशुष्यता ४ ये ते बाल्यात्प्रभृत्येव गुरुशुश्रूषणे रताः ॥ परस्परस्य सुहृदः संमताः समचेतसः ॥ निकृत्या भ्रंशिता राज्याज्जनार्हा निर्जनं गताः ५ विनीतक्रोधहर्षाश्च ब्रह्मण्याः सत्यवादिनः ॥ त्यक्त्वा प्रियसुखे पार्था रुदतीमपहाय माम् ६ अहार्षुश्च वनं यांतः समूलं हृदयं मम ॥ अतदर्हा महात्मानः कथं केशव पांडवाः ७ ऊषुर्महावने तात सिंहव्याघ्रगजाकुले ॥ बाला विहीनाः पित्रा ते मया सततलालिताः ८ अपश्यंतश्च पितरौ कथमूषुर्महावने ॥ शंखदुंदुभिनिर्घोषैर्मृदंगैर्वेणुनिःस्वनैः ९ पांडवाः समबोध्यंत बाल्यात्प्रभृति केशव ॥ ये स्म वारणशब्देन हयानां हेषितेन च १० रथनेमिनिनादैश्च व्यबोध्यंत तदा गृहे ॥ शंखभेरीनिनादेन वेणुवीणानुनादिना ११ पुण्याहघोषमिश्रेण पूज्यमाना द्विजातिभिः ॥ वस्त्रै रत्नैरलंकारैः पूजयंतो द्विजन्मनः १२ गीर्भिर्मंगलयुक्ताभिर्ब्राह्मणानां महात्मनाम् ॥ अर्चितैरर्चनार्हैश्च स्तुवद्भिरभिनंदिताः १३ प्रासादाग्रेष्वबोध्यंत रांकवाजिनशायिनः ॥ क्रूरं च निनदं श्रुत्वा श्वापदानां महावने १४ न स्मोपयांति निद्रां ते न तदर्हा जनार्दन ॥ भेरीमृदंगनिनदैः शंखवैणवनिःस्वनैः १५ स्त्रीणां गीतनिनादैश्च मधुरैर्मधुसूदन ॥ बंदिमागधसूतैश्च स्तुवद्भिर्बोधिताः कथम् १६ महावनेष्वबोध्यंत श्वापदानां रुतेन च ॥ ह्रीमान्सत्यधृतिर्दांतो भूतानामनुकंपिता १७ कामद्वेषौ वशे कृत्वा सतां वर्त्मानुवर्तते ॥ अंबरीषस्य मांधातुर्ययातेर्नहुषस्य च १८ भरतस्य दिलीपस्य शिबेरौशीनरस्य च ॥ राजर्षीणां पुराणानां धुरं धत्ते दुरुद्वहाम् १९ शीलवृत्तोपसंपन्नो धर्मज्ञः सत्यसंगरः ॥ राजा सर्वगुणोपेतस्त्रैलोक्यस्यापि यो भवेत् २०

द्वितीयार्थे । २७ ॥ इति उद्योगपर्वणि नीलकंठीये भारतभावदीपे एकोननवतितमोऽध्यायः ॥ ८९ ॥ ॥ ७ ॥ अयेति १ । २ । ३ । ४ । ५ प्रियं राज्यादि सुखं भोगोत्थ आल्हादः ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ धुरं भारं १९ । २०

प्रियोदर्शो दर्शनंयस्य दर्शादिश्राद्धकर्मवायस्य २१ सामर्षत्वादेवपांडवः पांडुरेवपांडवःस्वार्थेतद्धितः यद्वापांडवःपांडुपुत्रः । 'पांडुःकुंतीपर्तासित'इतित्रिश्वः२२ । २३ । २४ । २५ । २६ । २७

अजातशत्रुर्धर्मात्माशुद्धजांबूनदप्रभः ॥ श्रेष्ठःकुरुषुसर्वेषुधर्मतःश्रुतवृत्ततः ॥ प्रियदर्शोदीर्घभुजःकथंकृष्णयुधिष्ठिरः २१ यःसनागायुतप्राणोवातरंहामहाबलः ॥ सामर्षःपांडवोनित्यंप्रियोभ्रातुःप्रियंकरः २२ कीचकस्यतुसज्ञातेर्योहंतामधुसूदन ॥ शूरःक्रोधवशानांचहिडिंबस्यबकस्यच २३ पराक्रमेशक्रसमोमातरिश्वसमोबले ॥ महेश्वरसमःक्रोधेभीमःप्रहरतांवरः २४ क्रोधंबलममर्षंचयोनिधायपरंतपः ॥ जितात्मापांडवोऽमर्षीभ्रातुस्तिष्ठतिशासने २५ तेजोराशिंमहात्मानंवरिष्ठममितौजसम् ॥ भीमंप्रदर्शनेनापिभीमसेनंजनार्दन २६ तंममाचक्ष्ववार्ष्णेयकथमद्यवृकोदरः ॥ आस्तेपरिघबाहुःसमध्यमःपांडवोबली २७ अर्जुनेनार्जुनोयःसकृष्णबाहुसहस्रिणा ॥ द्विबाहुःस्पर्धतेनित्यमतीतेनापिकेशव २८ क्षिपत्येकेनवेगेनपंचबाणशतानियः ॥ इष्वस्त्रेसदृशोराज्ञःकार्तवीर्यस्यपांडवः ॥ २९ तेजसाऽऽदित्यसदृशोमहर्षिसदृशोदमे ॥ क्षमयापृथिवीतुल्योमहेंद्रसमविक्रमः ३० आधिराज्यंमहद्दीप्तंप्रथितंमधुसूदन ॥ आहृतंयेनवीर्येणकुरूणांसर्वराजसु ३१ यस्यबाहुबलंसर्वेपांडवाःपर्युपासते ॥ ससर्वरथिनांश्रेष्ठःपांडवःसत्यविक्रमः ३२ यंगत्वाऽभिमुखःसंख्येनजीवन्कश्चिदाव्रजेत् ॥ योजेतासर्वभूतानामजेयोजिष्णुरच्युत ३३ योपाश्रयःपांडवानांदेवानामिववासवः ॥ सतेभ्रातासखाचैवकथमद्यधनंजयः ३४ दयावान्सर्वभूतेषुह्रीनिषेवोमहास्त्रवित् ॥ मृदुश्चसुकुमारश्चधार्मिकश्चप्रियश्चमे ३५ सहदेवोमहेष्वासःशूरःसमितिशोभनः ॥ भ्रातॄणांकृष्णशुश्रूषुर्धर्मार्थकुशलोयुवा ३६ सदैवसहदेवस्यभ्रातरोमधुसूदन ॥ वृत्तंकल्याणवृत्तस्यपूजयंतिमहात्मनः ३७ ज्येष्ठोपचायिनंवीरंसहदेवंयुधांपतिम् ॥ शुश्रूषुंममवार्ष्णेयमाद्रीपुत्रंप्रचक्ष्वमे ३८ सुकुमारोयुवाशूरोदर्शनीयश्चपांडवः ॥ भ्रातॄणांचैवसर्वेषांप्रियःप्राणोबहिश्चरः ३९ चित्रयोधीचनकुलोमहेष्वासोमहाबलः ॥ कच्चित्सकुशलीकृष्णवत्सोममसुखैधितः ४० सुखोचितमदुःखार्हंसुकुमारंमहारथम् ॥ अपिजातुमहाबाहोपश्येयंनकुलंपुनः ४१ पक्ष्मसंपातजेकालेनकुलेनाविनाकृता ॥ नलभामिधृतिंवीरसाद्यजीवामिपश्यमाम् ४२ सर्वैःपुत्रैःप्रियतराद्रौपदीमेजनार्दन ॥ कुलीनारूपसंपन्नासर्वैःसमुदितागुणैः ४३ पुत्रलोकात्पतिलोकंवृण्वानासत्यवादिनी ॥ प्रियान्पुत्रान्परित्यज्यपांडवाननुरुध्यते ४४ महाभिजनसंपन्नासर्वकामैःसुपूजिता ॥ ईश्वरीसर्वकल्याणीद्रौपदीकथमच्युत ४५ पतिभिःपंचभिःशूरैरग्निकल्पैःप्रहारिभिः ॥ उपपन्नामहेष्वासैर्द्रौपदीदुःखभागिनी ४६ चतुर्दशमिदंवर्षंयन्नापश्यमरिंदम ॥ पुत्राधिभिःपरिद्यूनांद्रौपदींसत्यवादिनीम् ४७ ननूनंकर्मभिःपुण्यैरश्नुतेपुरुषःसुखम् ॥ द्रौपदीचेत्तथावृत्तानाश्नुतेसुखमव्ययम् ४८

२८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ ज्येष्ठोपचायिनंज्येष्ठानांभाववृद्धिकरं ३८ । ३९ । ४० । ४१ पक्ष्मणोःसंपातजेनिमेषमात्रेइत्यर्थः ४२ । ४३ पुत्रलोकात्पुत्रसन्निकर्षंत्यक्त्वा पतिलोकंपतिसंन्निधिंवृण्वाना ४४ । ४५ । ४६ । ४७ तथावृत्तापुण्यशीला ४८

४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ कच्चिदितिकाकासुखावहत्वंनास्तीतिव्यज्यते एषांमत्पुत्रभर्त्रादीनां ५६ नकुशलंमरणं ५७ । ५८ अवरोधःराज्याप्रदानरूपोद्वृत्तिनिरोधः ५९ यदिसुखंपुण्यक्षयरूपं अर्थाद्दुःखंपापक्षयरूपं तर्हिदुःखात्पापक्षयहेतोस्तत्सुखंनःअस्माकंस्यात्तथाचनवयंदुःखाद्भयंप्राप्नुमइत्यर्थः ६० अस्मात्भाविनःकुरुपांडवसंग्रामात् गोत्रकलहेविषमधियामेवावमर्दःसमबुद्धीनांतुसुखमेवेतिभावः ६१ सर्वेह त्वं एषांपांडवानां तथाविधंअविषमं ६२ वृत्तैर्वदान्यत्वेनख्यातैर्धनंयथाअक्लेशेनार्प्यतेतद्वत्तयेनाहमर्पिता । 'वृत्तोऽतीतेदृढेख्याते'इतिविश्वः

नप्रियोममकृष्णायाबीभत्सुर्नयुधिष्ठिरः ॥ भीमसेनोयमौवापियदपश्यंसभागताम् ४९ नमेदुःखतरंकिंचिद्भूतपूर्वंततोऽधिकम् ॥ स्त्रीधर्मिणींद्रौपदींयच्छ्वशुराणांसमीपगाम् ५० आनायितामनार्येणक्रोधलोभानुवर्तिना ॥ सर्वेप्रैक्षंतकुरवएकवस्त्रांसभागताम् ५१ तत्रैवधृतराष्ट्रश्चमहाराजश्चबाह्लिकः ॥ कृपश्चसोमदत्तश्चनिर्विण्णाकुरवस्तथा ५२ तस्यांसंसदिसर्वेषांक्षत्तारंपूजयाम्यहम् ॥ वृत्तेनहिभवत्यार्योनधनेननविद्यया ५३ तस्यकृष्णमहाबुद्धेर्गंभीरस्यमहात्मनः ॥ क्षत्तुःशीलमलंकारोलोकान्विष्टभ्यतिष्ठति ५४ ॥ वैशंपायनउवाच ॥ साशोकार्ताचहृष्टाचदृष्ट्वागोविंदमागतम् ॥ नानाविधानिदुःखानिसर्वाण्येवाकीर्तयत् ॥ ५५ पूर्वैराचरितंयत्तत्कुराजभिररिंदम ॥ अक्षद्यूतंमृगवधःकच्चिदेषांसुखावहम् ५६ तन्मांदहतियत्कृष्णासभायांकुरुसन्निधौ ॥ धार्तराष्ट्रैःपरिक्लिष्टायथानकुशलंतथा ५७ निर्वासनंचनगरात्प्रव्रज्याचपरंतप ॥ नानाविधानांदुःखानामभिज्ञाऽस्मिजनार्दन ५८ अज्ञातचर्याबालानामवरोधश्चमाधव ॥ नमेक्लेशतमंतत्स्यात्पुत्रैःसहपरंतप ५९ दुर्योधनेननिकृतावर्षमद्यचतुर्दश ॥ दुःखादपिसुखंनःस्याद्यदिपुण्यफलक्षयः ६० नमेविशेषोजात्वासीत्धार्तराष्ट्रेषुपांडवैः ॥ तेनसत्येनकृष्णत्वांहतामित्रंश्रियावृतम् ॥ अस्माद्विमुक्तंसंग्रामात्पश्येयंपांडवैःसह ६१ नैवशक्याःपराजेतुंसत्वंह्येषांतथाविधम् ॥ पितरंत्वेवगर्हेयंनात्मानंनसुयोधनम् ६२ येनाहंकुंतिभोजायधनंवृत्तैरिवार्पिता ॥ बालांमामार्यकस्तुभ्यंक्रीडंतींकंदुहस्तिकाम् ६३ अदात्तुकुंतिभोजायसखासख्येमहात्मने ॥ साऽहंपित्राचनिकृताश्वशुरैश्चपरंतप ॥ अत्यंतदुःखिताकृष्णकिंजीवितफलंमम ६४ यन्मांवागब्रवीन्नक्तंसूतकेसव्यसाचिनः ॥ पुत्रस्तेपृथिवींजेतायशश्चास्यदिवंस्पृशेत् ६५ हत्वाकुरून्महाजन्येराज्यंप्राप्यधनंजयः ॥ भ्रातृभिःसहकौंतेयस्त्रीन्मेधानाहरिष्यति ६६ नाहंतामभ्यसूयामिनमोधर्मायवेधसे ॥ कृष्णायमहतेनित्यंधर्मोधारयतिप्रजाः ६७ धर्मश्चेदस्तिवार्ष्णेययथावागभ्यभाषत ॥ त्वंचापितत्तथाकृष्णसर्वंसंपादयिष्यसि ६८ नमांमाधववैधव्यंनार्थनाशोनवैरता ॥ तथाशोकायदहतियथापुत्रैर्विनाभवः ६९ याऽहंगांडीवधन्वानंसर्वशस्त्रभृतांवरम् ॥ धनंजयंनपश्यामिकाशांतिर्हृदयस्यमे ॥ इतश्चतुर्दशंवर्षंयन्नापश्यंयुधिष्ठिरम् ७०

धूर्तैरिवेत्यपपाठः आर्यकःपितामहःतुभ्यंतव ६३ श्वशुरैर्भीष्मादिभिः धृतराष्ट्रोऽपिभर्तुर्ज्येष्ठत्वात्श्वशुरएव ६४ । ६५ महाजन्येमहायुद्धे मेधान्अश्वमेधान् ६६ अभ्यसूयामिनिंदामि वेधसेविश्वकर्त्रे महतेइति कृष्णस्येश्वरस्यनिंदार्थमुपहासः कर्मणएवप्राबल्यंधर्मपदस्यार्थदर्शनेनाह धर्मइति धारयतीतिधर्मइतिव्युत्पत्त्याधर्मएवकर्ताधारयिता ईश्वराराधनंतुवृथैवेतिभावः ६७ धर्मश्चेदिति धर्मेऽपिसंशयंदर्शयति सतोऽपीश्वरस्याकिंचित्करत्वमाह त्वंचेति ६८ । ६९ । ७०

७१ । ७२ । ७३ । ७४ अतिक्रमिष्यतिअयुद्धेनेत्यर्थः ७५ सुनृशंसंअत्यंतबीभत्सम् ७६ । ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७ । ८८ । ८९ । ९० । ९१।९२



धनंजयंचगोविंदयमौतंचवृकोदरम् ॥ जीवनाशंप्रनष्टानांश्राद्धंकुर्वंतिमानवाः ७१ अर्थतस्तेममम‍ृतास्तेषांचाहंजनार्दन ॥ ब्रूयामाधवराजानंधर्मात्मानंयुधिष्ठिरम् ७२ भूयांस्तेहीयतेधर्मोमापुत्रक वृथाकृथाः ॥ पराश्रयावासुदेवयाजीवतिधिगस्तुताम् ७३ वृत्तेःकार्पण्यलब्धायाअप्रतिष्ठैवज्यायसी ॥ अथोधनंजयंब्रूयानित्योद्युक्तंवृकोदरम् ७४ यदर्थंक्षत्रियासूतेतस्यकालोऽयमागतः ॥ अस्मिंश्चेदागतेकालेमिथ्याचातिक्रमिष्यति ७५ लोकसंभाविताःसंतःसुनृशंसंकरिष्यथ ॥ नृशंसेनचवोयुक्तांस्त्यजेयंशाश्वतीःसमाः ७६ कालेहिसमनुप्राप्तेत्यक्तव्यमपिजीवनम् ॥ माद्रीपुत्रौचवक्तव्यौक्षत्रधर्मरतौसदा ७७ विक्रमेणार्जितान्भोगान्वृणीतंजीवितादपि ॥ विक्रमाधिगताह्यर्थाःक्षत्रधर्मेणजीवतः ७८ मनोमनुष्यस्यसदाप्रीणंतिपुरुषोत्तम ॥ गत्वाब्रूहिमहाबाहोसर्वशस्त्रभृतांवरम् ७९ अर्जुनंपांडवंवीरंद्रौपद्याःपदवींचर ॥ विदितौहितवात्यंतंक्रुद्धौतौतुयथांतकौ ८० भीमार्जुनौनयेतांहिदेवानपिपरांगतिम् ॥ तयोश्चैतदवज्ञानंयत्साकृष्णासभांगता ८१ दुःशासनश्चकर्णश्चपरुषाण्यभ्यभाषताम् ॥ दुर्योधनोभीमसेनमभ्यगच्छन्मनस्विनम् ८२ पश्यतांकुरुमुख्यानांतस्यद्रक्ष्यतियत्फलम् ॥ नहिवैरंसमासाद्यप्रशाम्यतिवृकोदरः ८३ सुचिरादपिभीमस्यनहिवैरंप्रशाम्यति ॥ यावदंतंननयतिशात्रवाञ्छत्रुकर्शनः ८४ नदुःखंराज्यहरणंनचद्यूतेपराजयः ॥ प्रव्राजनंतुपुत्राणांनमेतद्दुःखकारणम् ८५ यत्तुसाबृहतीश्यामाएकवस्त्रासभांगता ॥ अशृणोत्परुषावाचःकिंनुदुःखतरंततः ८६ स्त्रीधर्मिणीवरारोहाक्षत्रधर्मरतासदा ॥ नाभ्यगच्छत्तदानाथंकृष्णानाथवतीसती ८७ यस्याममसपुत्रायास्त्वंनाथोमधुसूदन ॥ रामश्चबलिनांश्रेष्ठःप्रद्युम्नश्चमहारथः ८८ साऽहमेवंविधंदुःखंसहेयंपुरुषोत्तम ॥ भीमेजीवतिदुर्धर्षेविजयेचापलायिनि ८९ ॥ वैशंपायनउवाच ॥ ततआश्वासयामासपुत्राधिभिरभिप्लुताम् ॥ पितृष्वसारंशोचंतींशौरिःपार्थसखःपृथाम् ९० ॥ वासुदेवउवाच ॥ कानुसीमंतिनीत्वादृक्लोकेष्वस्तिपितृष्वसः ॥ शूरस्यराज्ञोदुहिताआजमीढकुलंगता ९१ महाकुलीनाभवतीह्रदाद्ध्रदमिवागता ॥ ईश्वरीसर्वकल्याणीभर्त्रापरमपूजिता ९२ वीरसूर्वीरपत्नीत्वंसर्वैःसमुदितागुणैः ॥ सुखदुःखेमहाप्राज्ञेत्वादृशीसोढुमर्हति ९३ निद्रातंद्रेक्रोधहर्षौक्षुत्पिपासेहिमातपौ ॥ एतानिपार्थानिर्जित्यनित्यंवीरसुखरताः ९४ त्यक्तग्राम्यसुखाःपार्थानित्यंवीरसुखप्रियाः ॥ नतुस्वल्पेनतुष्येयुर्महोत्साहामहाबलाः ९५ अंतंधीरानिषेवंतेमध्यंग्राम्यसुखप्रियाः ॥ उत्तमांश्चपरिक्लेशान्भोगांश्चातीवमानुषान् ९६ अंतेषुरेमिरेधीरानतेमध्येषुरेमिरे ॥ अंतप्राप्तिंसुखामाहुर्दुःखमंतरमेतयोः ९७

९३ । ९४ । ९५ अंतंराज्यंवा वनंवामध्यंअल्पैश्वर्यं अंतपदंव्याचष्टेउत्तमानिति उत्तमान् तीव्रवैराग्यजान्परिक्लेशान्शीतवादीन् ९६ अंतेषुअंतयोः परब्रह्मानंदेसुषुप्तौवा उभयत्रैवद्वैतादर्शनात्सुखमस्ति एतयोरंतरं जाग्रत्स्वप्नौ दुःखंदुःखरूपं स्वयमात्मा निर्दुःखएव जाग्रत्स्वप्नयोस्तूपाधिसंबंधात्तत्रभासमानंदुःखंआगमापायित्वात्तवपुत्राःसहंतेत्वंचसहस्वेतिभावः ९७

९८ । ९९ अबुद्धिजंअज्ञानजं तमोविपर्ययज्ञानं अनात्मनिदेहादावात्माभिमानरूपम् १०० । १ अनिकृत्याअच्छलेन २ त्वमेवेतिभगवतःसार्वात्म्यंसर्वाधिष्ठानत्वंप्रोक्तम् ३ । ४ । १०५
॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे नवतितमोऽध्यायः ॥ ९० ॥ ॥ ७ ॥ ॥ पृथामिति तामामंत्र्येतिपूर्वश्लोकेनप्रस्थानमात्रमुक्तापृथामामंत्र्येत्यत्रतुतदर्थानुवादपूर्वकं

अभिवादयंतिभवतींपांडवाःसहकृष्णया ॥ आत्मानंचकुशलिनंनिवेद्याहुरनामयम् ९८ अरोगान्सर्वसिद्धार्थान्क्षिप्रंद्रक्ष्यसिपांडवान् ॥ ईश्वरान्सर्वलोकस्य हतामित्रान्श्रियावृतान् ९९ एवमाश्वासिताकुंतीप्रत्युवाचजनार्दनम् ॥ पुत्राधिभिरभिध्वस्तानिगृह्याबुद्धिजंतमः १०० ॥ कुंत्युवाच ॥ यद्यत्तेषांमहाबाहोपथ्यंस्यान्मधुसूदन ॥ यथायथात्वंमन्येथाःकुर्याःकृष्णतथातथा १०१ अविलोपेनधर्मस्यअनिकृत्यापरंतप ॥ प्रभावज्ञाऽस्मितेकृष्णसत्यस्याभिजनस्य च १०२ व्यवस्थायांचमित्रेषुबुद्धिविक्रमयोस्तथा ॥ त्वमेवनःकुलेधर्मस्त्वंसत्यंत्वंतपोमहत् १०३ त्वंत्रातात्वंमहद्ब्रह्मत्वयिसर्वंप्रतिष्ठितम् ॥ यथैवात्थतथैवैतत्त्वयिसत्यंभविष्यति १०४ ॥ वैशंपायनउवाच ॥ तामामंत्र्यचगोविंदःकृत्वाचाभिप्रदक्षिणम् ॥ प्रातिष्ठतमहाबाहुर्दुर्योधनगृहान्प्रति १०५ ॥ इतिश्रीमहा० उ० प० भगवद्यानप० कृष्णकुंतीसंवादे नवतितमोऽध्यायः ॥ ९० ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ पृथामामंत्र्यगोविंदःकृत्वाचाभिप्रदक्षिणम् ॥ दुर्योधनगृहंशौरिरभ्यगच्छदरिंदमः १ लक्ष्म्यापरमयायुक्तंपुरंदरगृहोपमम् ॥ विचित्रैरासनैर्युक्तंप्रविवेशजनार्दनः २ तस्यकक्ष्याव्यतिक्रम्यतिस्रोद्वाःस्थैरवारितः ॥ ततोऽभ्रघनसंकाशंगिरिकूटमिवोच्छ्रितम् ३ श्रियाज्वलंतंप्रासादमारुरोहमहायशाः ॥ तत्रराजसहस्रैश्चकुरुभिश्चाभिसंवृतम् ४ धार्तराष्ट्रंमहाबाहुंददर्शासीनमासने ॥ दुःशासनंचकर्णंचशकुनिंचापिसौबलम् ५ दुर्योधनसमीपेतानासनस्थान्ददर्शसः ॥ अभ्यागच्छतिदाशार्हेधार्तराष्ट्रोमहायशाः ६ उदतिष्ठत्सहामात्यःपूजयन्मधुसूदनम् ॥ समेत्यधार्तराष्ट्रेणसहामात्येनकेशवः ७ राजभिस्तत्रवार्ष्णेयःसमागच्छद्यथावयः ॥ तत्रजांबूनदमयंपर्यंकंसुपरिष्कृतम् ८ विविधास्तरणास्तीर्णमभ्युपाविशदच्युतः ॥ तस्मिन्गांमधुपर्कंचाप्युदकंचजनार्दने ९ निवेदयामासतदागृहान्राज्यंचकौरवः ॥ तत्रगोविंदमासीनंप्रसन्नादित्यवर्चसम् १० उपासांचक्रिरेसर्वेकुरवोराजभिःसह ॥ ततोदुर्योधनोराजावार्ष्णेयंजयतांवरम् ११ न्यमंत्रयद्भोजनेनाभ्यनंदच्चकेशवः ॥ ततोदुर्योधनःकृष्णमब्रवीत्कुरुसंसदि १२ मृदुपूर्वंशठोदर्कंकर्णमाभाष्यकौरवः ॥ कस्मादन्नानिपानानिवासांसिशयनानिच १३ त्वदर्थमुपनीतानिनाग्रहीस्त्वंजनार्दन ॥ उभयोश्चददत्साह्यमुभयोश्चहितेरतः १४ संबंधीदयितश्चासिधृतराष्ट्रस्यमाधव ॥ त्वंहिगोविंदधर्मार्थौवेत्थतत्त्वेनसर्वशः ॥ तत्रकारणमिच्छामिश्रोतुंचक्रगदाधर १५ ॥ वैशंपायनउवाच ॥ सएवमुक्तोगोविंदःप्रत्युवाचमहामनाः ॥ उद्यन्मेघस्वनःकालेप्रगृह्यविपुलंभुजम् १६

दुर्योधनगृहमाप्तिरुच्यतइत्यपौनरुक्त्यम् १ । २ अभ्रघनःसजलोमेघः सहिसविद्युत् तत्सादृश्येनमहेंद्रनीलमणिमयत्वंसुवर्णमयत्वंचसूचितं । अन्येतु अभ्रघनःआकाशमात्रवर्तिघनः सहिशरत्संबंधाद्धवलइतिव्याचख्युः ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ शठोदर्कंशाठ्यपर्यवसानं आभाष्यसंबोधनेनोन्मुखीकृत्य १३ । १४ तत्रअन्नादेरग्रहणे १५ प्रगृह्यउद्यम्य १६

अलघूकृतंप्रयत्नशैथिल्यहीनकरणं । पाठांतरेअनंबूकृतंअनिष्ठीवनं अनन्यकृतमित्यपिपठंति । अग्रस्तंअलुप्ताक्षरं । अनिरस्तंस्थानभ्रंशरहितं । असंकुलंअसंकीर्णवर्णं १७ । १८ असांप्रतंप्रति पत्तुंअयुक्तंकर्तुं १९ ।२० । २१ वैरंद्वेषःविग्रहोयुद्धं २२ । २३ संरंभात्क्रोधात् हेतुवादात्कपटात् २४ । २५ द्वेष्टिभवान् २६ । २७ । २८ विरुरुत्सति विरोधंकर्तुमिच्छति २९ मोहात्अदुष्टे

अलघूकृतमग्रस्तमनिरस्तमलंकुलम् ॥ राजीवनेत्रोराजानंहेतुमद्वाक्यमुत्तमम् १७ कृतार्थाभुंजतेदूताःपूजांगृह्णंतिचैवह ॥ कृतार्थंमांसहामात्यंसमर्चिष्यसि भारत १८ एवमुक्तःप्रत्युवाचधार्तराष्ट्रोजनार्दनम् ॥ नयुक्तंभवताऽस्मासुप्रतिपत्तुमसांप्रतम् १९ कृतार्थंवाऽकृतार्थंचत्वांवयंमधुसूदन ॥ यतामहेपूजयितुं दाशार्हनचशक्नुमः २० नचतत्कारणंविद्मोयस्मिन्नोमधुसूदन ॥ पूजांकृतांप्रीयमाणैर्नामंस्थाःपुरुषोत्तम २१ वैरंनोनास्तिभवतागोविंदनचविग्रहः ॥ सभवान्प्रसमीक्ष्यैतन्नेदृशंवक्तुमर्हति २२ ॥ वैशंपायनउवाच ॥ एवमुक्तःप्रत्युवाचधार्तराष्ट्रंजनार्दनः ॥ अभिवीक्ष्यसहामात्यंदाशार्हःप्रहसन्निव २३ नाहंकामान्नसंरंभान्नद्वेषान्नार्थकारणात् ॥ नहेतुवादाल्लोभाद्वाधर्मंजह्यांकथंचन २४ संप्रीतिभोज्यान्यन्नानिआपद्भोज्यानिवापुनः ॥ नचसंप्रीयसेराजन्नचैवापद्गतावयम् २५ अकस्माद्द्विषसेराजन्जन्मप्रभृतिपांडवान् ॥ प्रियानुवर्तिनोभ्रातॄन्सर्वैःसमुदितान्गुणैः २६ अकस्माच्चैवपार्थानांद्वेषणंनोपपद्यते ॥ धर्मेस्थिताःपांडवेयाःकस्तान्किंवक्तुमर्हति २७ यस्तान्द्वेष्टिसमांद्वेष्टियस्ताननुसमामनु ॥ ऐकात्म्यंमांगतंविद्धिपांडवैर्धर्मचारिभिः २८ कामक्रोधानुवर्तीहियोमोहाद्विरुरुत्सति ॥ गुणवंतंचयोद्वेष्टितमाहुःपुरुषाधमम् २९ यःकल्याणगुणाञ्ज्ञातीन्मोहाल्लोभाद्दिदृक्षते ॥ सोऽजितात्माऽजितक्रोधोनचिरंतिष्ठतिश्रियम् ३० अथयोगुणसंपन्नान्हृदयस्याप्रियानपि ॥ प्रियेणकुरुतेवश्यांश्चिरंयशसितिष्ठति ३१ सर्वमेतदभोक्तव्यमन्नंदुष्टाभिसंहितम् ॥ क्षत्तुरेकस्यभोक्तव्यमितिमेधीयतेमतिः ३२ एवमुक्त्वामहाबाहुर्दुर्योधनममर्षणम् ॥ निश्चक्रामततःशुभ्राद्धार्तराष्ट्रनिवेशनात् ३३ निर्यायचमहाबाहुर्वासुदेवोमहामनाः ॥ निवेशायययौवेश्मविदुरस्यमहात्मनः ३४ तमभ्यगच्छद्द्रोणश्चकृपोभीष्मोऽथबाह्लिकः ॥ कुरवश्चमहाबाहुंविदुरस्यगृहेस्थितम् ३५ तेऽब्रुवन्माधवंवीरंकुरवोमधुसूदनम् ॥ निवेदयामोवार्ष्णेयसरत्नांस्तेगृहान्वयम् ३६ तानुवाचमहातेजाःकौरवान्मधुसूदनः ॥ सर्वेभवंतोगच्छंतुसर्वामेऽपचितिःकृता ३७ यातेषुकुरुषुक्षत्तादाशार्हमपराजितम् ॥ अभ्यर्चयामासतदासर्वकामैःप्रयत्नवान् ३८ ततःक्षत्ताऽन्नपानानिशुचीनिगुणवंतिच ॥ उपाहरदनेकानिकेशवायमहात्मने ३९ तैस्तर्पयित्वाप्रथमंब्राह्मणान्मधुसूदनः ॥ वेदविद्भ्योददौकृष्णःपरमंद्रविणान्यपि ४० ततोऽनुयायिभिःसार्धंमरुद्भिरिववासवः ॥ विदुरान्नानिबुभुजेशुचीनिगुणवंतिच ४१

॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिश्रीकृष्णदुर्योधनसंवादेएकनवतितमोऽध्यायः ॥ ९१ ॥ ॥ वैशंपायनउवाच ॥ तंभुक्तवंतमाश्वस्तंनिशायां विदुरोऽब्रवीत् ॥ नेदंसम्यग्व्यवसितंकेशवागमनंतव १

दुष्टबुद्धिर्मोहः लोभःपरकीयधनापहारेच्छा अजितक्रोधइतिछेदः ३०।३१ । ३२ शुभ्रात्नानारत्नमयत्वेनप्रदीप्तात् । 'शुभ्रंप्रदीप्तेधवलेऽभ्रकेच'इतिविश्वः ३३।३४।३५।३६ अपचितिःपूजा ३७ । ३८ । ३९ ४० । ४१ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे एकनवतितमोऽध्यायः ॥ ९१॥ ॥ तंभुक्तवंतमिति १

२ प्रग्रहंनिर्बंधंअत्यंताभिनिवेशमित्यर्थः अनेयःअप्रापणीयःश्रेयसांकर्मणिषष्ठी ३ सर्वशंकितासर्वत्रविश्वासहीनः ४ । ५ । ६ वृत्तिंजीविकां एतेयुद्धेनमह्यंराज्यंदास्यंतीत्याशयेत्यर्थः ७ । ८

अर्थधर्मातिगोमंदःसंरंभीचजनार्दन ॥ मानघ्नोमानकामश्चवृद्धानांशासनातिगः २ धर्मशास्त्रातिगोमूढोदुरात्माप्रग्रहंगतः ॥ अनेयःश्रेयसांमंदोधार्तराष्ट्रोजना
र्दन ३ कामात्माप्राज्ञमानीचमित्रध्रुक्सर्वशंकिता ॥ अकर्ताचाकृतज्ञश्चत्यक्तधर्माप्रियानृतः ४ मूढश्चाकृतबुद्धिश्चइंद्रियाणामनीश्वरः ॥ कामानुसारीकृत्ये
सर्वेष्वकृतनिश्चयः ५ एतैश्चान्यैश्चबहुभिर्दोषैरेवसमन्वितः ॥ त्वयोच्यमानःश्रेयोऽपिसंरंभान्नग्रहीष्यति ६ भीष्मेद्रोणेकृपेकर्णेद्रोणपुत्रेजयद्रथे ॥ भूयसीं
वृत्तिंनशमेकुरुतेमनः ७ निश्चितंधार्तराष्ट्राणांसकर्णानांजनार्दन ॥ भीष्मद्रोणमुखान्पार्थानशक्ताःप्रतिवीक्षितुम् ८ सेनासमुदयंकृत्वापार्थिवंमधुसूदन ॥ कृ
तार्थंमन्यतेबालआत्मानमविचक्षणः ९ एकःकर्णःपरान्जेतुंसमर्थइतिनिश्चितम् ॥ धार्तराष्ट्रस्यदुर्बुद्धेःसशमंनोपयास्यति १० संविच्चधार्तराष्ट्राणांसर्वेषामेवके
शव ॥ शमेप्रयतमानस्यतवसौभ्रात्रकांक्षिणः ११ नपांडवानामस्माभिःप्रतिदेयंयथोचितम् ॥ इतिव्यवसितास्तेषुवचनंस्यान्निरर्थकम् १२ यत्रसूक्तंदुरुक्तं
चसमंस्यान्मधुसूदन ॥ नतत्रप्रलपेत्प्राज्ञोबधिरेष्विवगायनः १३ अविजानत्सुमूढेषुनिर्मर्यादेषुमाधव ॥ नत्वंवाक्यंब्रुवन्युक्तश्चांडालेषुद्विजोयथा १४ सोऽयं
बलस्थोमूढश्चनकरिष्यतितेवचः ॥ तस्मिन्निरर्थकंवाक्यमुक्तंसंपत्स्यतेतव १५ तेषांसमुपविष्टानांसर्वेषांपापचेतसाम् ॥ तवमध्यावतरणंममकृष्णनरोचते
१६ दुर्बुद्धीनामशिष्टानांबहूनांदुष्टचेतसाम् ॥ प्रतीपंवचनंमध्येतवकृष्णनरोचते १७ अनुपासितवृद्धत्वाच्छ्रियोदर्पाच्चमोहितः ॥ वयोदर्पादमर्षाच्चनतेश्रेयो
ग्रहीष्यति १८ बलंबलवदप्यस्ययदिवक्ष्यसिमाधव ॥ त्वय्यस्यमहतीशंकानकरिष्यतितेवचः १९ नेदमद्ययुधाशक्यमिंद्रेणापिसहामरैः ॥ इतिव्यवसिताः
सर्वेधार्तराष्ट्राजनार्दन २० तेष्वेवमुपपन्नेषुकामक्रोधानुवर्तिषु ॥ समर्थमपितेवाक्यमसमर्थंभविष्यति २१ मध्येतिष्ठन्हस्त्यनीकस्यमंदोरथाश्वयुक्तस्यबलस्य
मूढः ॥ दुर्योधनोमन्यतेवीतभीतिःकृत्स्नामयेयंपृथिवीजितेति २२ आशंसतेवैधृतराष्ट्रस्यपुत्रोमहाराज्यमसपत्नंपृथिव्याम् ॥ तस्मिन्शमःकेवलोनोपलभ्यो
बद्धंसंतंमन्यतेलब्धमर्थम् २३ पर्यस्तेयंपृथिवीकालपक्कादुर्योधनार्थेपांडवान्योद्धुकामाः ॥ समागताःसर्वयोधाःपृथिव्यांराजानश्चक्षितिपालैःसमेताः २४ स
र्वेचैतेकृतवैराःपुरस्तात्त्वयाराजानोहृतसाराश्चकृष्ण ॥ तवोद्वेगात्संश्रिताधार्तराष्ट्रान्सुसंहताःसहकर्णेनवीराः २५ त्यक्तात्मानःसहदुर्योधनेनहृष्टायोद्धुंपांडवा
न्सर्वयोधाः ॥ तेषांमध्येप्रविशेथायादित्वंनतन्मतंममदाशार्हवीर २६ तेषांसमुपविष्टानांबहूनांदुष्टचेतसाम् ॥ कथंमध्यंप्रपद्येथाःशत्रूणांशत्रुकर्शन २७ सर्व
थात्वंमहाबाहोदेवैरपिदुरुत्सहः ॥ प्रभावंपौरुषंबुद्धिंजानामितवशत्रुहन् २८ यामेप्रीतिःपांडवेषुभूयःसात्वयिमाधव ॥ प्रेम्णाचबहुमानाच्चसौहृदाच्चब्रवीम्यहम् २९

पार्थिवंपृथ्वीसंबंधिनं ९ । १० । ११ प्रतिदेयंपराहृत्यदेयं व्यवसिताःनिश्चिताः १२ । १३ । १४ । १५ । १६ । १७ तेत्वत्तः १८ । १९ । २० । २१ । २२
बद्धंभवदीयत्वेनप्रतिबद्धमपिलब्धमेवमन्यते २३ । २४ । २५ । २६ । २७ । २८ । २९

३० ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे द्विनवतितमोऽध्यायः ॥ ९२ ॥ ॥ यथेति १ । २ । ३ । ४ पर्यस्तांअन्यथाभूतां ५ यतन्यतमानः ६ । ७ । ८ । ९ तन्नृशंसंअनर्था

यामेप्रीतिःपुष्कराक्षत्वद्दर्शनसमुद्भवा ॥ साकिमाख्यायतेतुभ्यमंतरात्माऽसिदेहिनाम् ३० ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिश्रीकृष्णविदुरसं वादेद्विनवतितमोऽध्यायः ॥ ९२ ॥ ७ ॥ श्रीभगवानुवाच ॥ यथाब्रूयान्महाप्राज्ञोयथाब्रूयाद्विचक्षणः ॥ यथावाच्यस्त्वद्विधेनभवतामद्विधःसुहृत् १ धर्मा र्थयुक्तंतथ्यंचयथात्वय्युपपद्यते ॥ तथावचनमुक्तोऽस्मित्वयैतत्पितृमातृवत् २ सत्यंप्राप्तंचयुक्तंवाऽप्येवमेवयथाऽऽत्थमाम् ॥ शृणुष्वागमनेहेतुंविदुरावहितोभव ३ दौरात्म्यंधार्तराष्ट्रस्यक्षत्रियाणांचवैरताम् ॥ सर्वमेतदहंजानन्क्षत्तःप्राप्तोऽद्यकौरवान् ४ पर्यस्तांपृथिवींसर्वांसाश्वांसरथकुंजराम् ॥ योमोचयेन्मृत्युपाशात्प्रा प्नुयाद्धर्ममुत्तमम् ५ धर्मकार्यंयतन्शक्त्यानोचेत्प्राप्नोतिमानवः ॥ प्राप्तोभवतितत्पुण्यमत्रमेनास्तिसंशयः ६ मनसाचिंतयन्पापंकर्मणानातिरोचयन् ॥ नप्रा प्नोतिफलंतस्येत्येवंधर्मविदोविदुः ७ सोऽहंयतिष्येप्रशमंक्षत्तःकर्तुममायया ॥ कुरूणांसृंजयानांचसंग्रामेविनाशिष्यताम् ८ सेयमापन्महाघोराकुरुष्वेवसमुत्थि ता ॥ कर्णदुर्योधनकृतासर्वेह्येतेतदन्वयाः ९ व्यसनेक्लिश्यमानंहियोमित्रंनाभिपद्यते ॥ अनर्थाययथाशक्तितन्नृशंसंविदुर्बुधाः १० आकेशग्रहणान्मित्रमकार्या त्संनिवर्तयन् ॥ अवाच्यःकस्यचिद्भवतिकृतयत्नोयथाबलम् ११ तत्समर्थंशुभंवाक्यंधर्मार्थसहितंहितम् ॥ धार्तराष्ट्रःसहामात्योग्रहीतुंविदुरार्हति १२ हितंहि धार्तराष्ट्राणांपाण्डवानांतथैवच ॥ पृथिव्यांक्षत्रियाणांचयतिष्येऽहममायया १३ हितेप्रयतमानंमांशंकेद्दुर्योधनोयदि ॥ हृदयस्यचमेप्रीतिरानृण्यंचभविष्यति १४ ज्ञातीनांहिमिथोभेदेयन्मित्रंनाभिपद्यते ॥ सर्वयत्नेनमाध्यस्थंनतन्मित्रंविदुर्बुधाः १५ नमांब्रूयुरधर्मिष्ठामूढाह्यसुहृदस्तथा ॥ शक्तोनावारयत्कृष्णःसंर ब्धान्कुरुपांडवान् १६ उभयोःसाधयन्नर्थमहमागतइत्युत ॥ तत्रयत्नमहंकृत्वागच्छेयंनृष्ववाच्यताम् १७ ममधर्मार्थयुक्तंहिश्रुत्वावाक्यमनामयम् ॥ नचेदादा स्यतेबालोदिष्टस्यवशमेष्यति १८ अहापयन्पांडवार्थंयथावच्छमंकुरूणांयदिचाचरेयम् ॥ पुण्यंचमेस्याच्चरितंमहात्मन्मुच्येरंश्चकुरवोमृत्युपाशात् १९ अपिवा चंभाषमाणस्यकाव्यांधर्मारामामर्थवतीमहिंस्राम् ॥ अवेक्षेरन्धार्तराष्ट्राःशमार्थंमांचप्राप्तंकुरवःपूजयेयुः २० नचापिममपर्याप्ताःसहिताःसर्वपार्थिवाः ॥ क्रुद्ध स्यप्रमुखेस्थातुंसिंहस्येवेतरेमृगाः २१ ॥ वैशंपायनउवाच ॥ इत्येवमुक्त्वावचनंवृष्णीनामृषभस्तदा ॥ शयनेसुखसंस्पर्शेशिश्येयदुसुखावहः २२ ॥ इतिश्री महाभारतेउद्योगपर्वणिभ० प० श्रीकृष्णवाक्येत्रिनवतितमोऽध्यायः ॥ ९३ ॥ ७ ॥ वैशंपायनउवाच ॥ तथाकथयतोरेवतयोर्बुद्धिमतोस्तदा ॥ शिवा नक्षत्रसंपन्नासाव्यतीयायशर्वरी १ धर्मार्थकामयुक्ताश्चविचित्रार्थपदाक्षराः ॥ शृण्वतोविविधावाचोविदुरस्यमहात्मनः २

यविदुरितिसंबंधः अनुनीयेत्यपिपाठः १० । ११ । १२ हितंकर्तुमितिशेषः १३ । १४ नाभिपद्यतेनोपकरोति १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे त्रिनवतितमोऽध्यायः ॥ ९३ ॥ ॥ ७ ॥ नक्षत्रसंपन्ना शरदिनिरभ्रत्वात् १ । २

३ । ४ । ५ उदकंस्नानाचमनादि अनुजप्यंसंध्योपासनादि तेउभेकृतेयेनसःकृतोदकानुजप्यः ६ तिष्ठंतंउपासीनम् ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८

कथाभिरनुरूपाभिःकृष्णस्यामिततेजसः ॥ अकामस्येवकृष्णस्यसाव्यतीयायशर्वरी ३ ततस्तुस्वरसंपन्नाबहवःसूतमागधाः ॥ शंखदुंदुभिनिर्घोषैःकेशवं प्रत्यबोधयन् ४ ततउत्थायदाशार्हऋषभःसर्वसात्वताम् ॥ सर्वमावश्यकंचक्रेप्रातःकार्यंजनार्दनः ५ कृतोदकानुजप्यःसहुताग्निःसमलंकृतः ॥ ततश्चादित्य मुद्यंतमुपातिष्ठतमाधवः ६ अथदुर्योधनःकृष्णंशकुनिश्चापिसौबलः ॥ सध्यांतिष्ठंतमभ्येत्यदाशार्हमपराजितम् ७ आचक्षेतांतुकृष्णस्यधृतराष्ट्रंसभागतम् ॥ कुरूंश्चभीष्मप्रमुखान्राज्ञःसर्वांश्चपार्थिवान् ८ त्वामर्थयंतेगोविंददिविशक्रमिवामराः ॥ तावभ्यनंदद्गोविंदःसाम्नापरमवल्गुना ९ ततोविमलआदित्येब्राह्मणे भ्योजनार्दनः ॥ ददौहिरण्यंवासांसिगाश्चाश्वांश्चपरंतपः १० विसृज्यबहुरत्नानिदाशार्हमपराजितम् ॥ तिष्ठंतमुपसंगम्यववंदेसारथिस्तदा ११ ततोरथेन शुभ्रेणमहताकिंकिणीकिना ॥ हयोत्तमयुजाशीघ्रमुपातिष्ठतदारुकः १२ तमुपस्थितमाज्ञायरथंदिव्यंमहामनाः ॥ महाभ्रघननिर्घोषंसर्वरत्नविभूषितम् १३ अग्निंप्रदक्षिणंकृत्वाब्राह्मणांश्चजनार्दनः ॥ कौस्तुभंमणिमामुच्यश्रियापरमयाज्वलन् १४ कुरुभिःसंवृतःकृष्णोवृष्णिभिश्चाभिरक्षितः ॥ आतिष्ठतरथंशौरिः सर्वयादवनंदनः १५ अन्वारुरोहदाशार्हंविदुरःसर्वधर्मवित् ॥ सर्वप्राणभृतांश्रेष्ठंसर्वबुद्धिमतांवरम् १६ ततोदुर्योधनःकृष्णंशकुनिश्चापिसौबलः ॥ द्वितीयेन रथेनैनमन्वयातांपरंतपम् १७ सात्यकिःकृतवर्माचवृष्णीनांचापरेरथाः ॥ पृष्ठतोऽनुययुःकृष्णंगजैरश्वैरथैरपि १८ तेषांहेमपरिष्कारैर्युक्ताःपरमवाजिभिः ॥ गच्छतांघोषिणश्चित्ररथाराजन्विरेजिरे १९ संमृष्टसंसिक्तरजःप्रतिपेदेमहापथम् ॥ राजर्षिचरितंकालेकृष्णोधीमाञ्छ्रियाज्वलन् २० ततःप्रयातेदाशार्हेप्रा वाद्यंतैकपुष्कराः ॥ शंखाश्चदध्मिरेतत्रवाद्यान्यन्यानियानिच २१ प्रवीराःसर्वलोकस्ययुवानःसिंहविक्रमाः ॥ परिवार्यरथंशौरेरगच्छंतपरंतपाः २२ ततो ऽन्येबहुसाहस्राविचित्राद्भुतवाससः ॥ असिप्रासायुधधराःकृष्णस्यासन्पुरःसराः २३ गजाःपंचशतास्तत्ररथाश्चासन्सहस्रशः ॥ प्रयांतमन्वयुर्वीरंदाशार्हम पराजितम् २४ पुरंकुरूणांसंवृत्तंद्रष्टुकामंजनार्दनम् ॥ सबालवृद्धंसस्त्रीकंरथ्यागतमरिंदम २५ वेदिकामाश्रिताभिश्चसमाक्रांतान्यनेकशः ॥ प्रचलंतीव भारेणयोषिद्भिर्भवनान्युत २६ सपूज्यमानःकुरुभिःसंशृण्वन्मधुराःकथाः ॥ यथार्हंप्रतिसत्कुर्वन्प्रेक्षमाणःशनैर्ययौ २७ ततःसभांसमासाद्यकेशवस्यानुया यिनः ॥ सशंखैर्वेणुनिर्घोषैर्दिशःसर्वाव्यनादयन् २८ ततःसासमितिःसर्वाराज्ञाममिततेजसाम् ॥ संप्राकंपतहर्षेणकृष्णागमनकांक्षया २९ ततोऽभ्याशग तेकृष्णेसमहृष्यन्नराधिपाः ॥ श्रुत्वातंरथनिर्घोषंपर्जन्यनिनदोपमम् ३० आसाद्यतुसभाद्वारमृषभःसर्वसात्वताम् ॥ अवतीर्यरथाच्छौरिःकैलासशिखरोप मात् ३१ नवमेघप्रतीकाशांज्वलंतीमिवतेजसा ॥ महेंद्रसदनप्रख्यांप्रविवेशसभांततः ३२

चित्राश्चतेरथाश्च १९ संमृष्टंदूरीकृतं संसिक्तंजलेनाप्लावितंचरजोयस्मात्तं अविभाक्तिकंपदम् २० एकपुष्कराःकाहलाः २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२

पाणौगृहीत्वा विदुरंसात्यकिंचमहायशाः ॥ ज्योतींष्यादित्यवद्राजन्कुरून्प्राच्छादयन्श्रिया ३३ अग्रतोवासुदेवस्यकर्णदुर्योधनावुभौ ॥ वृष्णयःकृतवर्मा चाप्यासन्कृष्णस्यपृष्ठतः ३४ धृतराष्ट्रंपुरस्कृत्यभीष्मद्रोणादयस्ततः ॥ आसनेभ्योऽचलन्सर्वेपूजयंतोजनार्दनम् ३५ अभ्यागच्छतिदाशार्हेप्रज्ञाचक्षुर्नरेश्वरः ॥ सहैवद्रोणभीष्माभ्यामुदतिष्ठन्महायशाः ३६ उत्तिष्ठतिमहाराजेधृतराष्ट्रेजनेश्वरे ॥ तानिराजसहस्राणिसमुत्तस्थुःसमंततः ३७ आसनंसर्वतोभद्रं जांबूनदपरिष्कृतम् ॥ कृष्णार्थेकल्पितंतत्रधृतराष्ट्रस्यशासनात् ३८ स्मयमानस्तुराजानंभीष्मद्रोणौचमाधवः ॥ अभ्यभाषतधर्मात्माराज्ञश्चान्यान्यथा वयः ३९ तत्रकेशवमानर्चुःसम्यगभ्यागतंसभाम् ॥ राजानःपार्थिवाःसर्वेकुरवश्चजनार्दनम् ४० तत्रतिष्ठन्सदाशार्होराजमध्येपरंतपः ॥ अपश्यदंतरिक्षस्थानृषीन्परपुरंजयः ॥ ततस्तानभिसंप्रेक्ष्यनारदप्रमुखानृषीन् ४१ अभ्यभाषतदाशार्होभीष्मंशांतनवंशनैः ॥ पार्थिवींसमितिंद्रष्टुमृषयोऽभ्यागतानृप ४२ निमंत्र्यंतामासनैश्चसत्कारेणचभूयसा ॥ नैतेष्वनुपविष्टेषुशक्यंकेनचिदासितुम् ४३ पूजाप्रयुज्यतामाशुमुनीनांभावितात्मनाम् ॥ ऋषीन्शांतनवो दृष्ट्वासभाद्वारमुपस्थितान् ४४ त्वरमाणस्ततोभृत्यानासनानीत्यचोदयत् ॥ आसनान्यथमृष्टानिमहांतिविपुलानिच ४५ मणिकांचनचित्राणिसमाजह्रुस्ततस्ततः ॥ तेषुतत्रोपविष्टेषुगृहीतार्घ्येषुभारत ४६ निषसादासनेकृष्णोराजानश्चयथासनम् ॥ दुःशासनःसात्यकयेददावासनमुत्तमम् ४७ विविंशतिर्ददौपीठंकांचनंकृतवर्मणे ॥ अविदूरेतुकृष्णस्यकर्णदुर्योधनावुभौ ४८ एकासनेमहात्मानौनिषीदतुरमर्षणौ ॥ गांधारराजःशकुनिर्गांधारैरभिरक्षितः ४९ निषसादासनेराजासहपुत्रोविशांपते ॥ विदुरोमणिपीठेतुशुक्लस्पर्ध्याजिनोत्तरे ५० संस्पृशन्नासनंशौरेर्महामतिरुपाविशत् ॥ चिरस्यदृष्ट्वादाशार्हंराजानःसर्वएवते ५१ अमृतस्येवनातृप्यन्प्रेक्षमाणाजनार्दनम् ॥ अतसीपुष्पसंकाशःपीतवासाजनार्दनः ५२ व्यभ्राजतसभामध्येहेम्नीवोपहितोमणिः ५३ ततस्तूष्णींसर्वमासीद्गोविंदगतमानसम् ॥ नतत्रकश्चित्किंचिद्धिव्याजहारपुमान्क्वचित् ५४ ॥ ॥ इति श्रीमहाभारते उद्योगपर्वणि भगवद्यानप० श्रीकृष्णसभाप्रवेशे चतुर्नवतितमोऽध्यायः ॥ ९४ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ तेष्वासीनेषुसर्वेषुतूष्णींभूतेषुराजसु ॥ वाक्यमभ्याददेकृष्णःसुदंष्ट्रोदुंदुभिस्वनः १ जीमूतइवघर्मांतेसर्वांसंश्रावयन्सभाम् ॥ धृतराष्ट्रमभिप्रेक्ष्यसमभाषतमाधवः २ ॥ श्रीभगवानुवाच ॥ कुरूणांपांडवानांचशमःस्यादितिभारत ॥ अप्रणाशेनवीराणामेतद्याचितुमागतः ३ राजन्नान्यत्प्रवक्तव्यंतवनैःश्रेयसंवचः ॥ विदितंह्येवतेसर्वंवेदितव्यमरिंदम ४ इदंह्यद्यकुलंश्रेष्ठंसर्वराजसुपार्थिव ॥ श्रुतवृत्तोपसंपन्नंसर्वैःसमुदितंगुणैः ५

भावदीपे चतुर्नवतितमोऽध्यायः ॥ ९४ ॥ ॥ तेष्विति १ । २ आगतोऽस्मीतिशेषः ३ । ४ । ५

कृपापरस्यसुखार्थयत्नः । अनुकंपा परदुःखदर्शनेत्रासः । कारुण्यं परदुःखप्रहाणार्थोयत्नः । आनृशंस्यं परदुःखाप्रदानं ६ असांप्रतंकृपादिभ्योविपरीतं परस्यदुःखार्थोयत्नः । परदुःखदर्शनेआह्ला
दः । परस्यसुखनाशार्थोयत्नः । परस्यदुःखसंपादनंकौटिल्यादिकंच तच्चायुक्तं ७ बाह्येषुद्यूतादिषु आभ्यंतरेषुजतुगृहादिषु ८ । ९ । १० कुरुष्वेवभवत्स्वेव नतुपांडवेषु ११ नादि

कृपाऽनुकंपाकारुण्यमानृशंस्यंचभारत ॥ तथार्जवंक्षमासत्यंकुरुष्वेताद्विशिष्यते ६ तस्मिन्नेवंविधेराजन्कुलेमहतितिष्ठति ॥ त्वन्निमित्तंविशेषेणनेहयुक्तमसां
प्रतम् ७ त्वंहिधारयिताश्रेष्ठःकुरूणांकुरुसत्तम ॥ मिथ्याप्रचरतांतातबाह्येष्वाभ्यंतरेषुच ८ तेपुत्रास्तवकौरव्यदुर्योधनपुरोगमाः ॥ धर्मार्थौपृष्ठतःकृत्वाप्रच
रंतिनृशंसवत् ९ अशिष्टागतमर्यादालोभेनहृतचेतसः ॥ स्वेषुबंधुषुमुख्येषुतद्वेत्थपुरुषर्षभ १० सेयमापन्महाघोराकुरुष्वेवसमुत्थिता ॥ उपेक्ष्यमाणाकौर
व्यपृथिवींघातयिष्यति ११ शक्याचेयंशमयितुंतंचेदिच्छसिभारत ॥ नदुष्करोह्यत्रशमोमतोमेभरतर्षभ १२ त्वय्यधीनःशमोराजन्मयिचैवविशांपते ॥ पुत्रा
न्स्थापयकौरव्यस्थापयिष्याम्यहंपरान् १३ आज्ञातवहिराजेंद्रकार्यापुत्रैःसहान्वयैः ॥ हितंबलवदप्येषांतिष्ठतांतववशासने १४ तवचैवहितंराजन्पांडवानाम
थोहितम् ॥ शमेप्रयतमानस्यममशासनकांक्षिणः १५ स्वयंनिष्फलमालक्ष्यसंविधत्स्वविशांपते ॥ सहायभूताभरतास्तवैवस्युर्जनेश्वर १६ धर्मार्थयोस्तिष्ठ
राजन्पांडवैरभिरक्षितः ॥ नहिशक्यास्तथाभूतायत्नादपिनराधिप १७ नहित्वांपांडवैर्जेतुंरक्ष्यमाणंमहात्मभिः ॥ इंद्रोपिदेवैःसहितःप्रसहेतकुतोनृपाः १८
यत्रभीष्मश्चद्रोणश्चकृपःकर्णोविविंशतिः ॥ अश्वत्थामाविकर्णश्चसोमदत्तोऽथबाह्लिकः १९ सैंधवश्चकलिंगश्चकांबोजश्चसुदक्षिणः ॥ युधिष्ठिरोभीमसेनःसव्यसा
चीयमौतथा २० सात्यकिश्चमहातेजायुयुत्सुश्चमहारथः ॥ कोनुतान्विपरीतात्मायुद्ध्येतभरतर्षभ २१ लोकस्येश्वरतांभूयःशत्रुभिश्चाप्यधृष्यताम् ॥ प्राप्स्य
सित्वममित्रघ्नसहितःकुरुपांडवैः २२ तस्यतेपृथिवीपालास्त्वत्समाःपृथिवीपते ॥ श्रेयांसश्चैवराजानःसंधास्यंतेपरंतप २३ सत्वंपुत्रैश्चपौत्रैश्चपितृभिर्भ्रातृभि
स्तथा ॥ सुहृद्भिःसर्वतोगुप्तःसुखंशक्ष्यसिजीवितुम् २४ एतानेवपुरोधायसत्कृत्यचयथापुरा ॥ अखिलांभोक्ष्यसेसर्वांपृथिवींपृथिवीपते २५ एतैर्हिसहितः
सर्वैःपांडवैःस्वैश्चभारत ॥ अन्यान्विजेष्यसेशत्रूनेषःस्वार्थस्तवाखिलः २६ तैरेवोपार्जितांभूमिंभोक्ष्यसेचपरंतप ॥ यदिसंपत्स्यसेपुत्रैःसहामात्यैर्नराधिप ॥
२७ संयुगेवैमहाराजदृश्यतेसुमहान्क्षयः ॥ क्षयेचोभयतोराजन्कंधर्ममनुपश्यसि २८ पांडवैर्निहतैःसंख्येपुत्रैर्वाऽपिमहाबलैः ॥ यद्विंदेथाःसुखंराजंस्तद्ब्रूहि
भरतर्षभ २९ शूराश्चाहिकृतास्त्राश्चसर्वेयुद्धाभिकांक्षिणः ॥ पांडवास्तावकाश्चैवतान्रक्षमहतोभयात् ३०

त्सासिकुलंनच्छेत्तुमिच्छसि त्वंचेदिच्छसीतिपाठेकुरून्स्थापयितुमिच्छसितर्हिशमोनदुष्करः १२ । १३ बलवत्अत्यंतंएषामेव अपिशब्दएवार्थे १४ शासनकांक्षिणःपुत्रान्शासितुमिच्छत
स्तव १५ निष्फलंवैरंसंविधत्स्वशमंकुरु १६ । १७ । १८ । १९ । २० । २१ । २२ पांडवैःसहसंधास्यंतेसंधिंकरिष्यंति २३ । २४ अखिलांनिष्कंटकां २५ । २६ । २७ । २८ । २९ । ३०

३१ । ३२ प्रकृतिंसत्त्वगुणं ३३ । ३४ । ३५ । ३६ हार्दंप्रीतिःआसीत्पूर्वंबाल्ये ३७ । ३८ । ३९ । ४० । ४१ स्थातास्थास्यति ४२ । ४३ । ४४ गुरोःगुरौ ४५ । ४६ परिषदंधर्मज्ञसभां पुत्राः



नपश्येमकुरून्सर्वान्पांडवांश्चैवसंयुगे ॥ क्षीणानुभयतःशूरान्रथिनोरथिभिर्हतान् ३१ समवेताःपृथिव्यांहिराजानोराजसत्तम ॥ अमर्षवशमापन्नानाशयेयुरिमाःप्रजाः ३२ त्राहिराजन्निमंलोकंननश्येयुरिमाःप्रजाः ॥ त्वयिप्रकृतिमापन्नेशेषःस्यात्कुरुनंदन ३३ शुक्लावदान्याह्रीमंतआर्याःपुण्याभिजातयः ॥ अन्योन्यसाचिवाराजंस्तान्पाहिमहतोभयात् ३४ शिवेनेमेभूमिपालाःसमागम्यपरस्परम् ॥ सहभुक्त्वाचपीत्वाचप्रतियांतुयथागृहम् ३५ सुवाससःस्रग्विणश्चसत्कृताभरतर्षभ ॥ अमर्षंचनिराकृत्यवैराणिचपरंतप ३६ हार्दंयत्पांडवेष्वासीत्प्राप्तेऽस्मिन्नायुषःक्षये ॥ तदेवतेभवत्वद्यसंधत्स्वभरतर्षभ ३७ बालाविहीनाःपित्रातेत्वयैवपरिवर्धिताः ॥ तान्पालययथान्यायंपुत्रांश्चभरतर्षभ ३८ भवतैवहिरक्ष्यास्तेव्यसनेषुविशेषतः ॥ मातेधर्मस्तथैवार्थोनश्येतभरतर्षभ ३९ आहुस्त्वांपांडवाराजन्नभिवाद्यप्रसाद्यच ॥ भवतःशासनाद्दुःखमनुभूतंसहानुगैः ४० द्वादशेमानिवर्षाणिवनेनिर्व्युषितानिनः ॥ त्रयोदशंतथाऽज्ञातैःसजनेपरिवत्सरम् ४१ स्थातानःसमयेतस्मिन्पितेतिकृतनिश्चयाः ॥ नाहास्मसमयंताततच्चनोब्राह्मणाविदुः ४२ तास्मिन्नःसमयेतिष्ठस्थितानांभरतर्षभ ॥ नित्यंसंक्लेशिताराजन्स्वराज्यांशंलभेमहि ४३ त्वंधर्ममर्थंसंजानन्सम्यङ्नस्त्रातुमर्हसि ॥ गुरुत्वंभवतिप्रेक्ष्यबहून्क्लेशांस्तितिक्ष्महे ४४ सभवान्मातृपितृवदस्मासुप्रतिपद्यताम् ॥ गुरोर्गरीयसीवृत्तिर्याचशिष्यस्यभारत ४५ वर्तामहेत्वयिचतांत्वंचवर्तस्वनस्तथा ॥ पित्रास्थापयितव्याहिवयमुत्पथमास्थिताः ४६ संस्थापयपथिष्वस्मांस्तिष्ठधर्मेसुवर्त्मनि ॥ आहुश्चेमांपरिषदंपुत्रास्तेभरतर्षभ ४७ धर्मज्ञेषुसभासत्सुनेहयुक्तमसांप्रतम् ॥ यत्रधर्मोह्यधर्मेणसत्यंयत्रानृतेनच ४८ हन्यतेप्रेक्षमाणानांहतास्तत्रसभासदः ॥ विद्धोधर्मोह्यधर्मेणसभांयत्रप्रपद्यते ४९ नचास्यशल्यंकृंतंतिविद्धास्तत्रसभासदः ॥ धर्मएतानारुजतियथानद्यनुकूलजान् ५० येधर्ममनुपश्यंतस्तूष्णींध्यायंतआसते ॥ तेसत्यमाहुर्धर्म्यंचन्याय्यंचभरतर्षभ ५१ शक्यंकिमन्यद्वक्तुंतेदानादन्यज्जनेश्वर ॥ ब्रुवंतुतेमहीपालाःसभायांयेसमासते ५२ धर्मार्थौसंप्रधार्यैवयदिसत्यंब्रवीम्यहम् ॥ प्रमुंचेमान्मृत्युपाशात्क्षत्रियान्पुरुषर्षभ ५३ प्रशाम्यभरतश्रेष्ठमामन्युवशमन्वगाः ॥ पित्र्यंतेभ्यःप्रदायांशंपांडवेभ्योयथोचितम् ५४ ततःसपुत्रःसिद्धार्थोभुंक्ष्वभोगान्परंतप ॥ अजातशत्रुंजानीषेस्थितंधर्मेसतांसदा ५५ सपुत्रेत्वयिवृत्तिंचवर्ततेयांनराधिप ॥ दाहितश्चनिरस्तश्चत्वामेवोपाश्रितःपुनः ५६ इंद्रप्रस्थंत्वयैवासौसपुत्रेणविवासितः ॥ सतत्रनिवसन्सर्वान्वशमानयिपार्थिवान् ५७ त्वन्मुखानकरोद्राजन्नचत्वामत्यवर्तत ॥ तस्यैवंवर्तमानस्यसौबलेनजिहीर्षता ५८ राष्ट्राणिधनधान्यंचप्रयुक्तःपरमोपधिः ॥ सतामवस्थांसंप्राप्यकृष्णांप्रेक्ष्यसभांगताम् ५९

पांडवाः ४७ । ४८ । ४९ आरुजतिहिनास्ति अनुकूलजान्कूलंकूलमनुसृत्यजातान्वृक्षादीन् ५० येपांडवाःतूष्णींमासतेकालंनिर्वाह्यमवद्वचोराज्यांशंलब्धुमिच्छंतितेसत्यंधर्म्यंन्याय्यंचाहुः ५१ ५२ । ५३ । ५४ । ५५ दाहितःजतुगृहे निरस्तोद्यूतेनराज्याद्दूरीकृतः ५६ । ५७ । ५८ परमोपधिःमहच्छद्म ५९

६० । ६१ । ६२ । ६३ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिनीलकंठीयेभारतभावदीपेपंचनवतितमोऽध्यायः ॥ ९५ ॥ तस्मिन्निति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० वेदप्रत्ययदर्शिनः

क्षत्रधर्मादमेयात्मानाकंपतयुधिष्ठिरः ॥ अहंतुतवतेषांचश्रेयइच्छामिभारत ६० धर्मादर्थात्सुखाच्चैवमाराजन्निनशःप्रजाः ॥ अनर्थमर्थमन्वानोऽप्यर्थंचानर्थ
मात्मनः ६१ लोभेऽतिप्र सृतान्पुत्रान्निगृह्णीष्वविशांपते ॥ स्थिताःशुश्रूषितुंपार्थाःस्थितायोद्धुमरिंदमाः ॥ यत्तेपथ्यतमंराजंस्तस्मिंस्तिष्ठपरंतप ६२
वैशंपायनउवाच ॥ तद्वाक्यंपार्थिवाःसर्वेहृदयैःसमपूजयन् ॥ नतत्रकश्चिद्वक्तुंहिवाचंप्राक्रामदग्रतः ६३ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिश्री
कृष्णवाक्येपंचनवतितमेऽध्यायः ॥ ९५ ॥ ॥ वैशंपायनउवाच ॥ तस्मिन्नभिहितेवाक्येकेशवेनमहात्मना ॥ स्तिमिताहृष्टरोमाणआसन्सर्वेसभासदः
१ कश्चिदुत्तरमेतेषांवक्तुंनोत्सहतेपुमान् ॥ इतिसर्वेमनोभिस्तेचिंतयंतिस्मपार्थिवाः २ तथातेषुचसर्वेषुतूष्णींभूतेषुराजसु ॥ जामदग्न्यइदंवाक्यमब्रवीत्कुरुसं
सदि ३ इमांमेसोपमांवाचंशृणुसत्यामशंकितः ॥ तांश्रुत्वाश्रेयआदत्स्वयदिसाध्वितिमन्यसे ४ राजादंभोद्भवोनामसार्वभौमःपुराऽभवत् ॥ अखिलांबुभुजेसर्वांपृ
थिवीमितिनःश्रुतम् ५ सस्मनित्यंनिशापायेप्रातरुत्थायवीर्यवान् ॥ ब्राह्मणान्क्षत्रियांश्चैवपृच्छन्नास्तेमहारथः ६ अस्तिकश्चिद्विशिष्टोवामद्विधोवाभवेद्युधि ॥
शूद्रोवैश्यःक्षत्रियोवाब्राह्मणोवाऽपिशस्त्रभृत् ७ इतिब्रुवन्नन्वचरत्सराजापृथिवीमिमाम् ॥ दर्पेणमहतामत्तःकंचिदन्यमचिंतयन् ८ तंचवैद्याअकृपणाब्राह्मणाः
सर्वतोऽभयाः ॥ प्रत्यषेधंतराजानंश्लाघमानंपुनःपुनः ९ निषिध्यमानोऽप्यसकृत्पृच्छत्येवसवैद्विजान् ॥ अतिमानंश्रियामत्तंतमूचुर्ब्राह्मणास्तदा १० तप
स्विनोमहात्मानोवेदप्रत्ययदर्शिनः ॥ उदीर्यमाणंराजानंक्रोधदीप्ताद्विजातयः ११ अनेकजयिनौसंख्येयौवैपुरुषसत्तमौ ॥ तयोस्त्वंनसमोराजन्भविता
ऽसिकदाचन १२ एवमुक्तःसराजातुपुनःपप्रच्छतान्द्विजान् ॥ क्वतौवीरौक्वजन्मानौकिंकर्माणौचकौचतौ १३ ॥ ब्राह्मणाऊचुः ॥ नरोनारायणश्चैवतापसावि
तिनःश्रुतम् ॥ आयातौमानुषेलोकेताभ्यांयुद्ध्यस्वपार्थिव १४ श्रूयेतेतौमहात्मानौनरनारायणावुभौ ॥ तपोघोरमनिर्देश्यंतप्यतेगंधमादने १५ सराजाम
हतींसेनांयोजयित्वाषडंगिनीम् ॥ अमृष्यमाणःसंप्रायाद्यत्रतावपराजितौ १६ सगत्वाविषमंघोरंपर्वतंगंधमादनम् ॥ मृगयाणोऽन्वगच्छत्तौतापसौवनमाश्रि
तौ १७ तौदृष्ट्वाक्षुत्पिपासाभ्यांकृशौधमनिसंततौ ॥ शीतवातातपैश्चैवकर्शितौपुरुषोत्तमौ १८ अभिगम्योपसंगृह्यपर्यपृच्छदनामयम् ॥ तमर्चित्वामूलफलै
रासनेनोदकेनच १९ न्यमंत्रयेतांराजानंकिंकार्यंक्रियतामिति ॥ ततस्तामानुपूर्वींसपुनरेवान्वकीर्तयत् २० बाहुभ्यांमेजिताभूमिर्निहताःसर्वशत्रवः ॥ भव
द्भ्यांयुद्धमाकांक्षन्नुपयातोऽस्मिपर्वतम् २१ आतिथ्यंदीयतामेतत्कांक्षितंमेचिरंप्रति ॥ नरनारायणावूचतुः ॥ अपेतक्रोधलोभोऽयमाश्रमोराजसत्तम २२

वेदजःप्रत्ययोब्रह्मात्मैक्यापरोक्ष्यंतदेवद्रष्टुंशीलंयेषांते ११ । १२ । १३ । १४ तप्यतेताभ्यामितिशेषः १५ षडंगिनीं रथनागाश्वपादातशकटोष्ट्रवतीं १६ । १७ । १८ । १९ । २० । २१ । २२

२३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ काकुदीकमित्यादयोऽष्टावस्त्रजातयः येनास्त्रेणाभिभूतारथगजादी नांककुद्येवशेरतेतत्काकुदीकंप्रस्वापनंनाम । येनशुकनलिकान्यायेनअभयेऽपिभयदर्शिनोहयरथादिपादेषुगाढंश्लिष्यंतितत्शुकंमोहनंनाम । येनस्वर्गनगरंपश्यतितन्नाकंउन्मादंननाम ।

नह्यस्मिन्नाश्रमेयुद्धंकुतःशस्त्रंकुतोऽनृजुः ॥ अन्यत्रयुद्धमाकांक्षबहवःक्षत्रियाःक्षितौ २३ ॥ रामउवाच ॥ उच्यमानस्तथाऽपिस्मभूयएवाभ्यभाषत ॥ पुनःपुनःक्षम्यमाणःसांत्व्यमानश्चभारत २४ दंभोद्भवोयुद्धमिच्छन्नाह्वयत्येवतापसौ ॥ ततोनरस्त्विषीकाणांमुष्टिमादायभारत २५ अब्रवीदेहियुद्धचस्वयुद्धकामुकक्षत्रिय ॥ सर्वशस्त्राणिचादत्स्वयोजयस्वचवाहिनीम् २६ अहंहितेविनेष्यामियुद्धश्रद्धामितःपरम् ॥ दंभोद्भवउवाच ॥ यद्येतदस्त्रमस्मासुयुक्तंतापसमन्यसे २७ एतेनापित्वयायोत्स्येयुद्धार्थीह्यहमागतः ॥ रामउवाच ॥ इत्युक्त्वाशरवर्षेणसर्वतःसमवाकिरत् २८ दंभोद्भवस्तापसंतंजिघांसुःसहसैनिकः ॥ तस्यतानस्यतोघोरानिषून्परतनुच्छिदः २९ कदर्थीकृत्यसमुनिरिषीकाभिःसमार्पयत् ॥ ततोऽस्मैप्रासृजद्घोरमैषीकमपराजितः ३० अस्त्रमप्रतिसंधेयंतदद्भुतमिवाभवत् ॥ तेषामक्षीणिकर्णांश्चनासिकाश्चैवमायया ३१ निमित्तवेधीसमुनिरिषीकाभिःसमार्पयत् ॥ सदृष्ट्वाश्वेतमाकाशमिषीकाभिःसमाचितम् ३२ पादयोर्न्यपतद्राजास्वस्तिमेस्त्वितिचाब्रवीत् ॥ तमब्रवीन्नरोराजन्शरण्यःशरणैषिणाम् ३३ ब्रह्मण्योभवधर्मात्मामाचस्मैवंपुनःकृथाः ॥ नैतादृक्पुरुषोराजन्क्षत्रधर्ममनुस्मरन् ३४ मनसानृपशार्दूलभवेत्परपुरंजयः ॥ माचदर्पसमाविष्टःक्षेप्सीःकांश्चित्कथंचन ३५ अल्पीयांसंविशिष्टंवाततेराजन्समाहितम् ॥ कृतप्रज्ञोवीतलोभोनिरहंकारआत्मवान् ३६ दांतःक्षांतोमृदुःसौम्यःप्रजाःपालयपार्थिव ॥ मास्मभूयःक्षिपेःकंचिदविदित्वाबलाबलम् ३७ अनुज्ञातःस्वस्तिगच्छमैवंभूयःसमाचरेः ॥ कुशलंब्राह्मणान्पृच्छेरावयोर्वचनाद्भृशम् ३८ ततोराजातयोःपादावभिवाद्यमहात्मनोः ॥ प्रत्याजगामस्वपुरंधर्मंचैवाचरद्भृशम् ३९ सुमहच्चापितत्कर्मयन्नरेणकृतंपुरा ॥ ततोगुणैःसुबहुभिःश्रेष्ठोनारायणोऽभवत् ४० तस्माद्यावद्धनुःश्रेष्ठेगांडीवेऽस्त्रंनयुज्यते ॥ तावत्त्वंमानमुत्सृज्यगच्छराजन्धनंजयम् ४१ काकुदीकंशुकंनाकमाक्षिसंतर्जनंतथा ॥ संतानंनर्तकंघोरमास्यमोदकमष्टमम् ४२ एतैर्विद्धाःसर्वएवमरणंयांतिमानवाः ॥ कामक्रोधौलोभमोहौमदमानौतथैवच ४३ मात्सर्याहंकृतीचैवक्रमादेतउदाहृताः ॥ उन्मत्ताश्चविचेष्टंतेनष्टसंज्ञाविचेतसः ४४ स्वपंतिचप्लवंतेचच्छर्दयंतिचमानवाः ॥ मूत्रयंतेचसततंरुदंतिचहसंतिच ४५ निर्माता सर्वलोकानामीश्वरःसर्वकर्मवित् ॥ यस्यनारायणोबंधुरर्जुनोदुःसहोयुधि ४६ कस्तमुत्सहतेजेतुंत्रिषुलोकेषुभारत ॥ वीरंकपिध्वजंजिष्णुंयस्यनास्तिसमोयुधि ४७ असंख्येयागुणाःपार्थेतद्विशिष्टोजनार्दनः ॥ त्वमेवभूयोजानासिकुंतीपुत्रंधनंजयम् ४८

येनक्षिप्तमात्रेणानुविद्धाखासात्वशकृन्मूत्रंस्रवंतितत् अक्षिसंतर्जनं त्रासनंनाम । संतानंअविच्छेदेनशस्त्राणांवृष्टिकरं ऐंद्रादिदिव्यं । नर्तकंनर्तनकरंपैशाचं । घोरंकदनकरंराक्षसं । आस्यमोदकं येन।भिहताःमुखेपाषाणंदत्वामरणार्थमेवप्रतिष्ठंतेतत्याम्यंनाम । अत्रैवउन्मत्ताश्चेतिश्लोकोकादोषायथायोग्यंसंबंधनीयाः ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८

४९ । ५० । ५१ । ५२ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे षण्णवतितमोऽध्यायः ॥ ९६ ॥ ॥ जामदग्न्येति १ अव्ययःअपचयशून्यः २ प्रभवत्यस्मादितिप्रभुर्जगतउपादानकारणंघटस्येवमृत्पिंडः ३ निमित्तमरणाइति नाशवंतइत्यर्थः पाठांतरेनिमित्तकारणानि चक्रचीवरकुलालादिस्थानीयानि ४ । ५ । ६ तरुणाइति भोगकालेयुद्धेनमरणंमाप्राप्नुवंतीत्यर्थः ७

नरनारायणौयौतौतावेवार्जुनकेशवौ ॥ विजानीहिमहाराजप्रवीरौपुरुषोत्तमौ ४९ यद्येतदेवंजानासिनचमामभिशंकसे ॥ आर्यांमतिंसमास्थायशाम्यभारत पांडवैः ५० अथचेन्मन्यसेश्रेयोनमेभेदोभवेदिति ॥ प्रशाम्यभरतश्रेष्ठमाचयुद्धेमनःकृथाः ५१ भवतांचकुरुश्रेष्ठकुलंबहुमतंभुवि ॥ तत्तथैवास्तुभद्रंतेस्वार्थमेवोपचिंतय ५२ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिदंभोद्भवोपाख्यानेषण्णवतितमोऽध्यायः ॥९६॥ ॥ वैशंपायनउवाच ॥ जामदग्न्यवचः श्रुत्वाकण्वोऽपिभगवानृषिः ॥ दुर्योधनमिदंवाक्यमब्रवीत्कुरुसंसदि १ ॥ कण्वउवाच ॥ अक्षयश्चाव्यय श्चैवब्रह्मालोकपितामहः ॥ तथैवभगवंतौतौनरनारायणावृषी २ आदित्यानांहिसर्वेषांविष्णुरेकःसनातनः ॥ अजय्यश्चाव्ययश्चैवशाश्वतःप्रभुरीश्वरः ३ निमित्तमरणाश्चान्येचंद्रसूर्यौमहीजलम् ॥ वायुरग्निस्तथाऽऽकाशंग्रहास्तारागणास्तथा ४ तेचक्षयांतेजगतोहित्वालोकत्रयंसदा ॥ क्षयंगच्छंतिवैसर्वेसृज्यंतेचपुनःपुनः ५ मुहूर्तमरणास्त्वन्येमानुषामृगपक्षिणः ॥ तैर्यग्योन्यश्चयेचान्येजीवलोकचरास्तथा ६ भूयिष्ठेनतुराजानःश्रियंभुक्त्वाऽऽयुषःक्षये ॥ तरुणाःप्रतिपद्यंतेभोक्तुंसुकृतदुष्कृते ७ सभवान्धर्मपुत्रेणशमंकर्तुमिहार्हति ॥ पांडवाःकुरवश्चैवपालयंतुवसुंधराम् ८ बलवानहमित्येवनमंतव्यंसुयोधन ॥ बलवंतोबलिभ्योहिदृश्यंतेपुरुषर्षभ ९ नबलंबलिनांमध्येबलंभवतिकौरव ॥ बलवंतोहितेसर्वेपांडवादेवविक्रमाः १० अत्राप्युदाहरंतीमामितिहासंपुरातनम् ॥ मातलेर्दातुकामस्यकन्यांमृगयतोवरम् ११ मतस्त्रिलोकराजस्यमातलिर्नामसारथिः ॥ तस्यैकैवकुलेकन्यारूपतोलोकविश्रुता १२ गुणकेशीतिविख्यातानाम्नासादेवरूपिणी ॥ श्रियाचवपुषाचैवस्त्रियोऽन्याःसाऽतिरिच्यते १३ तस्याःप्रदानसमयंमातलिःसहभार्यया ॥ ज्ञात्वाविममृशेराजंस्तत्परःपरिचिंतयन् १४ धिक्खल्वलघुशीलानामुच्छ्रितानांयशस्विनाम् ॥ नराणांमृदुसत्वानांकुलेकन्याप्ररोहणम् १५ मातुःकुलंपितृकुलंयत्रचैवप्रदीयते ॥ कुलत्रयंसंशयितंकुरुतेकन्यकासताम् १६ देवमानुषलोकौद्वौमानुषेणैवचक्षुषा ॥ अवगाह्यैवविचितौनचमेरोचतेवरः १७॥ कण्वउवाच ॥ नदेवान्नैवदितिजान्नगंधर्वान्नमानुषान् ॥ अरोचयद्वरकृतेतथैवबहुलानृषीन् १८ भार्ययाऽनुससंमंत्र्यसहरात्रौसुधर्मया ॥ मातलिर्नागलोकायचकारगमनेमतिम् १९ नमेदेवमनुष्येषुगुणकेश्याःसमोवरः ॥ रूपतोदृश्यतेकश्चिन्नागेषुभविताध्रुवम् २० इत्यामंत्र्यसुधर्मांसकृत्वाचाभिप्रदक्षिणम् ॥ कन्यांशिरस्युपाघ्रायप्रविवेशमहीतलम् २१ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिमातलिवरान्वेषणेसप्तनवतितमोऽध्यायः ॥९७॥

८ । ९ बलंसैन्यं बलिनांऔरसबलवतां बलंसामर्थ्यंनभवति १० मातलेरितिहासमितिसंबंधः ११ । १२ । १३ । १४ उच्छ्रितानांमहत्तयाख्यातानाम् १५ । १६ चक्षुषाज्ञानेनविचितौअन्वेषितौ १७ । १८ । १९ । २० । २१ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे सप्तनवतितमोऽध्यायः ॥ ९७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

मातलिरिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ यंतुःयंतारंमातलिंमति ९ । १० गोपतेःवारिपतेः । 'भूवाग्वारिषुगौर्मता' इतिविश्वः ११ । १२ द्वितीयांसोमपुत्रीं तथाआदित्याः पुत्रःसूर्यःश्रेष्ठःकृतःभर्ताकृतः १३ वारुण्यंवारुण्यासुरायाःइदंवारुण्यं सुराविद्यतेयेषांतेसुराः १४ । १५ विवर्ततेप्रक्षिप्तान्यपिपुनःपुनःप्रहर्तुर्हस्तमायांति १६ जात्यःजातीयाःपूर्वंदेवतानिपूर्वंदेवाः दैत्याः सर्वेतिपाठेनिर्मिताःनिश्चयेनप्रक्षिप्ताः १७ अग्निरिति हविष्मताऽग्निनाआविद्धंरुद्धं विष्णुचक्रजमप्यत्रभयंनास्तीत्यर्थः १८ गांडीखड्गाख्यःपशुविशेषः तस्यविकारोगांडीमयः तस्यहिपृ-

कण्वउवाच ॥ मातलिस्तुव्रजन्मार्गेनारदेनमहर्षिणा ॥ वरुणंगच्छताद्रष्टुंसमागच्छद्यदृच्छया १ नारदोऽथाब्रवीदेनंक्वभवान्गंतुमुद्यतः ॥ स्वेनवासूतकार्येण शासनाद्वाशतक्रतोः २ मातलिर्नारदेनैवंसंपृष्टःपथिगच्छता ॥ यथावत्सर्वमाचष्टस्वकार्यंनारदंप्रति ३ तमुवाचाथसमुनिर्गच्छावःसहिताविति ॥ सलिलेशादिदृक्षार्थमहमप्युद्यतोदिवः ४ अहंतेसर्वमाख्यास्येदर्शयन्वसुधातलम् ॥ दृष्ट्वातत्रवरंकंचिद्रोचयिष्यावमातले ५ अवगाह्यतुतौभूमिमुभौमातलिनारदौ ॥ ददृशातेमहात्मानौलोकपालमपांपतिम् ६ तत्रदेवर्षिसदृशींपूजांसप्रापनारदः ॥ महेंद्रसदृशींचैवमातलिःप्रत्यपद्यत ७ तावुभौप्रीतमनसौकार्यवंतौनिवेद्यह ॥ वरुणेनाभ्यनुज्ञातौनागलोकंविचेरतुः ८ नारदःसर्वभूतानामंतर्भूमिनिवासिनाम् ॥ जानंश्चकारव्याख्यानंयंतुःसर्वमशेषतः ९ ॥ नारदउवाच ॥ दृष्टस्तेवरुणःसूतपुत्रपौत्रसमावृतः ॥ पश्योदकपतेःस्थानंसर्वतोभद्रमृद्धिमत् १० एषपुत्रोमहाप्राज्ञोवरुणस्येहगोपतेः ॥ एषवैशीलवृत्तेनशौचेनचविशिष्यते ११ एषोऽस्यपुत्रोऽभिमतःपुष्करःपुष्करेक्षणः ॥ रूपवान्दर्शनीयश्चसोमपुत्र्यावृतःपतिः १२ ज्योत्स्नाकालीतियामाहुर्द्वितीयांरूपतःश्रियम् ॥ अदित्याश्चैवयःपुत्रोज्येष्ठःश्रेष्ठःकृतःस्मृतः १३ भवनंपश्यवारुण्यंयदेतत्सर्वकांचनम् ॥ यत्प्राप्यसुरतांप्राप्ताःसुराःसुरपतेःसखे १४ एतानिहृतराज्यानांदैतेयानांस्ममातले ॥ दीप्यमानानिदृश्यंतेसर्वप्रहरणान्युत १५ अक्षयाणिकिलैतानिविवर्तंतेस्ममातले ॥ अनुभावप्रयुक्तानिसुरैरवजितानिह १६ अत्रराक्षसजात्यश्चदैत्यजात्यश्चमातले ॥ दिव्यप्रहरणाश्चासन्पूर्वदैवतनिर्मिताः १७ अग्निरेषमहार्चिष्मान्जागर्तिवारुणेहृदे ॥ वैष्णवंचक्रमाविद्धंविधूमेनहविष्मता १८ एषगांडीमयश्चापोलोकसंहारसंभृतः ॥ रक्ष्यतेदैवतैर्नित्यंयतस्तद्गांडिवंधनुः १९ एषकृत्येसमुत्पन्नेतत्तद्धारयतेबलम् ॥ सहस्रशतसंख्येनप्राणेनसततंध्रुवः २० अशास्यानपिशास्त्येषरक्षोबंधुषुराजसु ॥ सृष्टःप्रथमतश्चंडोब्रह्मणाब्रह्मवादिना २१ एतच्छस्त्रंनरेंद्राणांमहच्चक्रेणभासितम् ॥ पुत्राःसलिलराजस्यधारयंतिमहोदयम् २२ एतत्सलिलराजस्यच्छत्रंछत्रगृहेस्थितम् ॥ सर्वतःसलिलंशीतंजीमूतइववर्षति २३

ष्ठवंशस्यधनुःकर्तुंशक्यं यतःगांडीमयत्वादेवतद्गांडीवंनामधनुरभूत् गांडीशब्दाद्विकारार्थोवप्रत्ययःकल्प्यतइतिभावः गांडीवज्रग्रंथिस्तन्मयइत्यन्ये १९ एषचापःकृत्येअभेद्यभेदने तत्तद्तावत्तावत्प्राणेनबलेन सर्वदालक्षचापतुल्यबलोऽप्ययंचापःकार्यकालेऽधिकबलोऽपिभवतीत्यनंतबलइत्यर्थः २० रक्षोबंधुषुरक्षस्तुल्येषु २१ एतच्छस्त्रंधनुः चक्रेणचक्रादपि एतच्छास्त्रंनरेंद्राणांमहच्छुक्रेणभाषितमितिपाठे नीतिशास्त्रं शुक्रेणकाव्येन छत्रेणेतिवापाठः २२ । २३

मूर्छितंअभिभूतंआवृतमितियावत् येनहेतुनाजनोऽस्यदर्शनंनार्छतिनप्राप्नोति २४ । २५ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे अष्टनवतितमोऽध्यायः ॥ ९८ ॥ ॥ ७ ॥ एतदिति १ अद्भिःसमंप्राप्ताःजलवेगेनानीताः २ व्यापारेणयत्नेनधृतःमर्यादायांस्थापितः अन्यथासद्यःकृत्स्नंसमुद्रंलोकांश्चदहेत् आत्मानंनिबद्धंदेवैरितिशेषः समबुध्यतअग्निरित्यर्थः धृतात्मेतिसंधिरार्षः ३ निहितंस्थापितंअतःसोमस्येति कंदुकाकारंभूगोलंप्रदक्षिणीकुर्वतःसूर्यस्यसोमस्यवाकेनचिद्भूगोलप्रदेशेनआवरणात्कदाचिददर्शनंभवति सैवतेषांरात्रिः । येतुगोलस्यशिरसिअधस्ताद्वातिष्ठंतिते सर्वदैवसूर्यादीन्पश्यंति तत्रजलमयंचंद्रमंडलंसूर्यरश्मिभिस्तैजसैःप्रकाश्यते तयोश्चयथायथाविप्रकर्षःतथातथाऽधिकंचंद्रोऽवभासते । यथायथासन्निकर्षःतथातथाऽधिकंसूर्यपुरोवर्तिभिरब्यादिभिर्देवताभिस्तिरोधीयतेऽस्मद्दृष्ट्या । एतदेवाभिलक्ष्य'प्रथमांपिबतेवह्निर्द्वितीयांपिबतेरविः'इत्यादिशास्त्रंप्रवृत्तं । पानंचेहसान्निध्यादाप्यायनमात्रं पातालनाभिस्थानांतुमेरुशिखरस्थानामिवसर्वं

एतच्छत्रात्परिभ्रष्टंसलिलंसोमनिर्मलम् ॥ तमसामूर्छितंभातियेननार्छतिदर्शनम् २४ बहून्यद्भुतरूपाणिद्रष्टव्यानीहमातले ॥ तवकार्यावरोधस्तुतस्माद्गच्छावमाचिरम् २५॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्या०मातलिवरान्वेषणेऽष्टनवतितमोऽध्यायः ॥९८॥ ॥ नारदउवाच ॥ एतत्तुनागलोकस्यनाभिस्थानेस्थितंपुरम् ॥ पातालमितिविख्यातंदैत्यदानवसेवितम् १ इदमद्भिःसमंप्राप्तायेकेचिज्जंगमाः ॥ प्रविशंतोमहानादंनदंतिभयपीडिताः २ अत्रासुरोऽग्निःसततंदीप्यतेवारिभोजनः ॥ व्यापारेणधृतात्मानंनिबद्धंसमबुध्यत ३ अत्रामृतंसुरैःपीत्वानिहितंनिहतारिभिः ॥ अतःसोमस्यहानिश्चवृद्धिश्चैवप्रदृश्यते ४ अत्रादित्योहयशिराःकालेपर्वणिपर्वणि ॥ उत्तिष्ठतिसुवर्णाख्यंवाग्भिरापूरयन्जगत् ५ यस्मादलंसमस्तास्ताःपतंतिजलमूर्तयः ॥ तस्मात्पातालमित्येवख्यायतेपुरमुत्तमम् ६ ऐरावणोऽस्मात्सलिलंगृहीत्वाजगतोहितः ॥ मेघेष्वामुंचतेशीतंयन्महेंद्रःप्रवर्षति ७ अत्रनानाविधाकारास्तिमयोनैकरूपिणः ॥ अप्सुसोमप्रभांपीत्वावसंतिजलचारिणः ८ अत्रसूर्यांशुभिर्भिन्नाःपातालतलमाश्रिताः ॥ मृताहिदिवसेसूतपुनर्जीवंतिवैनिशि ९ उदयन्नित्यशश्चात्रचंद्रमारश्मिबाहुभिः ॥ अमृतंस्पृश्यसंस्पर्शात्संजीवयतिदेहिनः १० अत्रतेधर्मनिरताबद्धाःकालेनपीडिताः ॥ दैतेयानिवसंतिस्मवासवेनहृतश्रियः ११ अत्रभूतपतिर्नामसर्वभूतमहेश्वरः ॥ भूतयेसर्वभूतानामचरत्तपउत्तमम् १२ अत्रगोव्रतिनोविप्राःस्वाध्यायाम्नायकर्शिताः ॥ त्यक्तप्राणाजितस्वर्गानिवसंतिमहर्षयः १३ यत्रतत्रशयोनित्यंयेनकेनचिदाशितः ॥ येनकेनचिदाच्छन्नःसगोव्रतइहोच्यते १४ ऐरावणोनागराजोवामनःकुमुदोंऽजनः ॥ प्रसूताःसुप्रतीकस्यवंशेवारणसत्तमाः १५ पश्ययद्यत्रतेकश्चिद्रोचतेगुणतोवरः ॥ वरयिष्यामितंगत्वायत्नमास्थायमातले १६

दासंपूर्णएवचंद्रोऽवभासते । तद्दृश्यप्रदेशेऽग्न्याद्यावरणाभावात् अतःस्थानात्चंद्रस्यन्हासवृद्धीप्रदृश्येतेइतिविरुद्धलक्षणयानदृश्येतेइत्यर्थः । नदृश्यतेइत्येवपाठोलेखकप्रमादाद्भ्रष्टोवा ४ आदित्योऽदितेःपुत्रोविष्णुर्हयग्रीवरूपीसुवर्णाख्यंजगत्वेदरूपीनामात्मकःप्रपंचः । 'नामधाऋग्वेदः'इत्यादिश्रुतेः तंवाग्भिरापूरयन्उत्तिष्ठतिवेदाध्यायिनांध्वनिंउपबृंहयितुमाविर्भवतीत्यर्थः ५ जलमूर्तयश्चंद्राद्याःपतंति चंद्रकांतवज्जलंस्रवंतिअतोऽयंपतज्जलइतिवक्तव्येपातालइत्यर्थः ६ । ७ । ८ प्रदेशांतरंगत्वाऽह अत्रसूर्यांशुभिरिति दिवसेऽस्मदीयरात्रौ निशिअस्मदीयदिवसे ९ । १० । ११ । १२ स्वाध्यायाम्नायोवेदपाठः १३ गोव्रतंव्याचष्टेयत्रेति १४ । १५ । १६

आप्रजानांनिसर्गात्प्रजोत्पत्तिमारभ्य १७ जातिंजन्म निसर्गंस्वभावं ततःपूर्वमुत्पन्नस्यकस्यचिदभावात् १८ । १९ । २० ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेऊनशततमोऽध्यायः ॥ ॥ ९९ ॥ ॥ हिरण्येति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० शैलानिशिलामयानि ११ । १२ । १३ आक्रीडान्क्रीडास्थानानि १४ । १५ । १६ । १७ । १८ आत्मानंअ

अंडमेतज्जलेन्यस्तंदीप्यमानमिवश्रिया ॥ आप्रजानांनिसर्गाद्वैनोद्भिद्यातिनसर्पति १७ नास्यजातिंनिसर्गंवाकथ्यमानंशृणोमिवै ॥ पितरंमातरंचापिनास्य जानातिकश्चन १८ अतःकिलमहानग्निरंतकालेसमुत्थितः ॥ धक्ष्यतेमातलेसर्वंत्रैलोक्यंसचराचरम् १९ मातलिस्त्वब्रवीच्छ्रुत्वानारदस्याथभाषितम् ॥ नमेऽत्ररोचतेकश्चिदन्यतोव्रजमाचिरम् २० ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानप० मातलिवरान्वेषणेऊनशततमोऽध्यायः ॥ ९९ ॥ ॥ नारद उवाच ॥ हिरण्यपुरमित्येतत्ख्यातंपुरवरंमहत् ॥ दैत्यानांदानवानांचमायाशतविचारिणाम् १ अनल्पेनप्रयत्नेननिर्मितंविश्वकर्मणा ॥ मयेनमनसासृष्टंपा तालतलमाश्रितम् २ अत्रमायासहस्राणिविकुर्वाणामहौजसः ॥ दानवानिवसंतिस्मशूरादत्तवराःपुरा ३ नैतेशक्रेणनान्येनयमेनवरुणेनवा ॥ शक्यंतेवशमा नेतुंतथैवधनदेनच ४ असुराःकालखंजाश्चतथाविष्णुपदोद्भवाः ॥ नैर्ऋतायातुधानाश्चब्रह्मपादोद्भवाश्चये ५ दंष्ट्रिणोभीमवेगाश्चवातवेगपराक्रमाः ॥ माया वीर्योपसंपन्नानिवसंत्यत्रमातले ६ निवातकवचानामदानवायुद्धदुर्मदाः ॥ जानासिचयथाशक्रोनैतान्शक्नोतिबाधितुम् ७ बहुशोमातलेत्वंचतवपुत्रश्चगोमु खः ॥ निर्भग्नोदेवराजश्चसहपुत्रःशचीपतिः ८ पश्यवेश्मानिरौक्माणिमातलेराजतानिच ॥ कर्मणाविधियुक्तेनयुक्तान्युपगतानिच ९ वैदूर्यमणिचित्राणि प्रवालरुचिराणिच ॥ अर्कस्फटिकशुभ्राणिवज्रसारोज्ज्वलानिच १० पार्थिवानीवचाभांतिपद्मरागमयानिच ॥ शैलानीवचदृश्यंतेदारवाणीवचाप्युत ११ सूर्य रूपाणिचाभांतिदीप्ताग्निसदृशानिच ॥ मणिजालविचित्राणिप्रांशूनिनिबिडानिच १२ नैतानिशक्यंनिर्देष्टुंरूपतोद्रव्यतस्तथा ॥ गुणतश्चैवसिद्धानिप्रमाणगु णवंतिच १३ आक्रीडान्पश्यदैत्यानांतथैवशयनान्युत ॥ रत्नवंतिमहार्हाणिभाजनान्यासनानिच १४ जलदाभांस्तथाशैलांस्तोयप्रस्रवणानिच ॥ कामपुष्प फलांश्चापिपादपान्कामचारिणः १५ मातलेकश्चिदत्रापिरुचिरस्तेवरोभवेत् ॥ अथवाऽन्यांदिशंभूमेर्गच्छावयदिमन्यसे १६ मातलिस्त्वब्रवीदेनंभाषमाणं तथाविधम् ॥ देवर्षेनैवमेकार्यंविप्रियंत्रिदिवौकसाम् १७ नित्यानुषक्तवैराहिभ्रातरोदेवदानवाः ॥ परपक्षेणसंबंधंरोचयिष्याम्यहंकथम् १८ अन्यत्रसाधु गच्छावद्रष्टुंनार्हामिदानवान् ॥ जानामितवचात्मानंहिंसात्मकमनंतथा १९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणि मातलिवरान्वेषणेशततमो ऽध्यायः ॥ १०० ॥ ॥ नारदउवाच ॥ अयंलोकःसुपर्णानांपक्षिणांपन्नगाशिनाम् ॥ विक्रमेगमनेभारेनैषामस्तिपरिश्रमः १

हिंसापरंजानामि हिंसात्मनांतथाहिंसात्मकमनं हिंसाप्रधानानांदैत्यानांकमनंअपेक्षणीयंचाहिंसोदर्कतयाजानामि अन्येतुहिंस्सात्मकमलंतथेतिपाठंप्रकल्प्य हिंस्सात्मकंदानेच्छाप्रचुरंअलं अत्यर्थंइतिव्याचक्षते १९ ॥ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेशततमोऽध्यायः ॥ १०० ॥ ॥ ॥ ७ ॥ ॥ ॥ अयमिति १

२ प्रसृत्याप्रकृष्टगत्या जवेनवृद्धिमंतीत्यर्थः ३ । ४ । ५ निर्घृणाःनिर्दयाः ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ ॥ इतिश्रीमहाभारतेउद्योगपर्वणि नीलकंठीये भारतभावदीपेएकाधिकशततमोऽध्यायः ॥ १०१ ॥ ॥ ७ ॥ ॥ इदंरसातलमिति १ । २ वदनात्मुखादुदतिष्ठत्तेनमुखजेनब्राह्मणेनतस्याएककुलत्वं यथोक्तं 'ब्राह्मणाश्चैवगावश्च

वैनतेयसुतैःसूतषड्भिस्ततमिदंकुलम् ॥ सुमुखेनसुनाम्नाचसुनेत्रेणसुवर्चसा २ सुरुचापक्षिराजेनसुबलेनचमातले ॥ वर्धितानिप्रसृत्यावैविनताकुलकर्तृभिः ३ पक्षिराजाभिजात्यानांसहस्राणिशतानिच ॥ कश्यपस्यततोवंशेजातैर्भूतिविवर्धनैः ४ सर्वेह्येतेश्रियायुक्ताःसर्वेश्रीवत्सलक्षणाः ॥ सर्वेश्रियमभीप्संतोधारयंतिबलान्युत ५ कर्मणाक्षत्रियाश्चैतेनिर्घृणाभोगिभोजिनः ॥ ज्ञातिसंक्षयकर्तृत्वाद्ब्राह्मण्यंनलभंतिवै ६ नामानिचैषांवक्ष्यामियथाप्राधान्यतःशृणु ॥ मातलेश्लाघ्यमेतद्धिकुलंविष्णुपरिग्रहम् ७ दैवतंविष्णुरेतेषांविष्णुरेवपरायणम् ॥ हृदिचैषांसदाविष्णुर्विष्णुरेवसदागतिः ८ सुवर्णचूडोनागाशीदारुणश्चंडतुंडकः ॥ अनिलश्चानलश्चैवविशालाक्षोऽथकुंडली ९ पंकजिद्वज्रविष्कंभोवैनतेयोऽथवामनः ॥ वातवेगोदिशाचक्षुर्निमेषोऽनिमिषस्तथा १० त्रिरावःसप्तरावश्चवाल्मीकिर्द्वीपकस्तथा ॥ दैत्यद्वीपःसरिद्द्वीपःसारसःपद्मकेतनः ११ सुमुखश्चित्रकेतुश्चचित्रबर्हस्तथाऽनघः ॥ मेघहृत्कुमुदोदक्षःसर्पांतःसोमभोजनः १२ गुरुभारःकपोतश्चसूर्यनेत्रश्चिरांतकः ॥ विष्णुधर्माकुमारश्चपरिबर्होहरिस्तथा १३ सुस्वरोमधुपर्कश्चहेमवर्णस्तथैवच ॥ मालयोमातरिश्वाचनिशाकरदिवाकरौ १४ एतेप्रदेशमात्रेणमयोक्तागरुडात्मजाः ॥ प्राधान्यतस्तेयशसाकीर्तिताःप्राणिनश्चये १५ यद्यत्ररुचिःकाचिदेहिगच्छावमातले ॥ तंनयिष्यामिदेशंत्वांवरंयत्रोपलप्स्यसे १६ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणि मातलिवरान्वेषणेएकाधिकशततमोऽध्यायः ॥ १०१ ॥ ॥नारदउवाच॥ इदंरसातलंनामसप्तमंपृथिवीतलम् ॥ यत्रास्तेसुरभिर्मातागवाममृतसंभवा १ क्षरंतीसततंक्षीरंपृथिवीसारसंभवम् ॥ षण्णांरसानांसारेणरसमेकमनुत्तमम् २ अमृतेनाभितृप्तस्यसारमुद्गिरतःपुरा ॥ पितामहस्यवदनादुदतिष्ठदनिंदिता ३ यस्याःक्षीरस्यधारायानिपतंत्यामहीतले ॥ ह्रदःकृतःक्षीरनिधिःपवित्रंपरमुच्यते ४ पुष्पितस्येवफेनेनपर्यंतमनुवेष्टितम् ॥ पिबंतोनिवसंत्यत्रफेनपामुनिसत्तमाः ५ फेनपानामतेख्याताःफेनाहाराश्चमातले ॥ उग्रेतपसिवर्तंतेयेषांबिभ्यतिदेवताः ६ अस्याश्चतस्रोधेन्वोऽन्यादिक्षुसर्वासुमातले ॥ निवसंतिदिशांपाल्योधारयंत्योदिशःस्मताः ७ पूर्वांदिशंधारयतेसुरूपानामसौरभी ॥ दक्षिणांहंसिकानामधारयत्यपरांदिशम् ८ पश्चिमावारुणीदिक्चधार्यतेवैसुभद्रया ॥ महानुभावयानित्यंमातलेविश्वरूपया ९ सर्वकामदुघानामधेनुर्धारयतेदिशम् ॥ उत्तरांमातलेधर्म्यांतथैलविलसंज्ञिताम् १० आसांतुपयसामिश्रंपयोनिर्मथ्यसागरे ॥ मंथानंमंदरंकृत्वादेवैरसुरसंहितैः ११ उद्धृतावारुणीलक्ष्मीरमृतंचापिमातले ॥ उच्चैःश्रवाश्चाश्वराजोमणिरत्नंचकौस्तुभम् १२

कुलमेकंद्विधाकृतम्'इति ३ । ४ फेनेनपुष्पितस्येवश्वेतस्यास्यपर्यंतंतीरप्रदेशंफेनेनैवानुवेष्टितंपिबंतःसादरमवलोकयंतएववसंति तेनैवफेनपाइत्युच्यंते ५ एतेभ्योऽन्येफेनाहाराश्चेत्यर्थः ६ । ७ । ८ । ९ इलविलस्येमांऐलविलसंज्ञिताम् १० असुरसंहितैः असुरसहितैः ११ । १२

३१

सुधेति सर्पपितृदेवानांतत्तद्योग्याहाररूपंपयःक्षरतीत्यर्थः सुधासर्पस्यभोजनं स्वधाभोजिनःपितरः अमृताशेषुदेवेषु १२ । १४ परिवासःनिवासः सुखःसुखकरः १५ ॥ इतिउद्योगपर्वणिनी

सुधाहारेषुचसुधांस्वधाभोजिषुचस्वधाम् ॥ अमृतंचामृताशेषुसुरभीक्षरतेपयः १३ अत्रगाथापुरागीतारसातलनिवासिभिः ॥ पौराणीश्रूयतेलोकेगीयतेया मनीषिभिः १४ ननागलोकेनस्वर्गेनविमानेत्रिविष्टपे ॥ परिवासःसुखस्तादृग्रसातलतलेयथा १५ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणि मातलिवरान्वेषणेद्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ नारदउवाच ॥ इयंभोगवतीनामपुरीवासुकिपालिता ॥ यादृशीदेवराजस्यपुरीवर्याऽमरावती १ एषशेषः स्थितोनागोयेनेयंधार्यतेसदा ॥ तपसालोकमुख्येनप्रभावमहितामही २ श्वेताचलनिभाकारोदिव्याभरणभूषितः ॥ सहस्रंधारयन्मूर्ध्नांज्वालाजिह्वोमहाबलः ३ इहनानाविधाकारानानाविधविभूषणाः ॥ सुरसायाःसुतानागानिवसंतिगतव्यथाः ४ मणिस्वस्तिकचक्रांकाःकमंडलुकलक्षणाः ॥ सहस्रसंख्याबलिनःस र्वेरौद्राःस्वभावतः ५ सहस्रशिरसःकेचित्केचित्पंचशताननाः ॥ शतशीर्षास्तथाकेचित्केचित्त्रिशिरसोऽपिच ६ द्विपंचशिरसःकेचित्केचित्सप्तमुखास्तथा ॥ महाभोगामहाकायाःपर्वताभोगभोगिनः ७ बहूनीहसहस्राणिप्रयुतान्यर्बुदानिच ॥ नागानामेकवंशानांयथाश्रेष्ठंतुमेशृणु ८ वासुकिस्तक्षकश्चैवकर्कोटकधनंजयौ ॥ कालीयोनहुषश्चैवकंबलाश्वतरावुभौ ९ बाह्यकुंडोमणिर्नागस्तथैवापूरणःखगः ॥ वामनश्चैलपत्रश्चकुकुरःकुकुणस्तथा १० आर्यकोनंदकश्चैवतथा कलशपोतकौ ॥ कैलासकःपिंजरकोनागश्चैरावतस्तथा ११ सुमनोमुखोदधिमुखःशंखोनंदोपनंदकौ ॥ आप्तःकोटरकश्चैवशिखीनिष्ठूरिकस्तथा १२ तित्तिरिर्हस्तिभद्रश्चकुमुदोमाल्यपिंडकः ॥ द्वौपद्मौपुंडरीकश्चपुष्पोमुद्गरपर्णकः १३ करवीरःपीठरकःसंवृत्तोवृत्तएवच ॥ पिंडारोबिल्वपत्रश्चमूषिकादःशिरीषकः १४ दिलीपःशंखशीर्षश्चज्योतिष्कोऽथापराजितः ॥ कौरव्योधृतराष्ट्रश्चकुहुरःकृशकस्तथा १५ विरजाधारणश्चैवसुबाहुर्मुखरोजयः ॥ बधिरांधौविशुंडिश्चविरसः सुरसस्तथा १६ एतेचान्येचबहवःकश्यपस्यात्मजाःस्मृताः ॥ मातलेपश्ययद्यत्रकश्चित्तेरोचतेवरः १७ ॥ कण्वउवाच ॥ मातलिस्त्वेकमव्यग्रःसततंसंनिरीक्ष्यवै ॥ पप्रच्छनारदंतत्रप्रीतिमानिवचाभवत् १८ ॥ मातलिरुवाच ॥ स्थितोयएषपुरतःकौरव्यस्यार्यकस्यतु ॥ द्युतिमान्दर्शनीयश्चकस्यैषकुलनंदनः १९ कःपिताजननीचास्यकतमस्यैषभोगिनः ॥ वंशस्यकस्यैषमहान्केतुभूतइवस्थितः २० प्रणिधानेनधैर्येणरूपेणवयसाचमे ॥ मनःप्रविष्टोदेवर्षेगुणकेश्याःपतिर्वरः २१ ॥ कण्वउवाच ॥ मातलिंप्रीतमनसंदृष्ट्वासुमुखदर्शनात् ॥ निवेदयामासतदामाहात्म्यंजन्मकर्मच २२ ॥ नारदउवाच ॥ ऐरावतकुलेजातःसुमुखोनामनागराट् ॥ आर्यकस्यमतःपौत्रोदौहित्रोवामनस्यच २३ एतस्यहिपितानागश्चिकुरोनाममातले ॥ नचिराद्वैनतेयेनपंचत्वमुपपादितः २४

लकंठीये भारतभावदीपे द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ इयमिति १ । २ । ३ । ४ कमंडलुकलक्षणाः पानपात्रसदृशचिह्नाः ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४

ततोऽब्रवीत्प्रीतमनामातलिर्नारदंवचः ॥ एषमेरुचितस्तातजामाताभुजगोत्तमः २५ क्रियतामत्रयत्नोवैप्रीतिमानस्म्यनेनवै ॥ अस्मैनागायवैदातुंप्रियांदुहि
तरंमुने २६ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणि मातलिवरान्वेषणेत्र्याधिकशततमोऽध्यायः ॥ १०३ ॥ नारदउवाच ॥ सूतोऽयंमातलिर्ना
मशक्रस्यदयितःसुहृत् ॥ शुचिःशीलगुणोपेतस्तेजस्वीवीर्यवान्बली १ शक्रस्यायंसखाचैवमंत्रीसारथिरेवच ॥ अल्पांतरप्रभावश्चवासवेनरणेरणे २ अयंह
रिसहस्रेणयुक्तंजैत्रंरथोत्तमम् ॥ देवासुरेषुयुद्धेषुमनसैवनियच्छति ३ अनेनविजितानश्वैर्दोर्भ्यांजयतिवासवः ॥ अनेनबलभित्पूर्वंप्रहृतेप्रहरत्युत ४ अस्य
कन्यावरारोहारूपेणासदृशीभुवि ॥ सत्यशीलगुणोपेतागुणकेशीतिविश्रुता ५ तस्यास्ययत्नाच्चरतस्त्रैलोक्यममरद्युते ॥ सुमुखोभवतःपौत्रोरोचतेदुहितुःपतिः
६ यदितेरोचतेसम्यग्भुजगोत्तममाचिरम् ॥ क्रियतामार्यकक्षिप्रंबुद्धिःकन्यापरिग्रहे ७ यथाविष्णुकुलेलक्ष्मीर्यथास्वाहाविभावसोः ॥ कुलेतवतथैवास्तुगुणके
शीसुमध्यमा ८ पौत्रस्याथभवांस्तस्माद्गुणकेशींप्रतीच्छतु ॥ सदृशींप्रतिरूपस्यवासवस्यशचीमिव ९ पितृहीनमपिह्येनंगुणतोवरयामहे ॥ बहुमानाच्चभवत
स्तथैवैरावतस्यच १० सुमुखस्यगुणैश्चैवशीलशौचदमादिभिः ॥ अभिगम्यस्वयंकन्यामयंदातुंसमुद्यतः ११ मातलिस्तस्यसंमानंकर्तुमर्होभवानपि ॥ कण्व
उवाच ॥ सतुदीनःप्रहृष्टश्चप्राहनारदमार्यकः १२ व्रियमाणेतथापौत्रेपुत्रेचनिधनंगते ॥ कथमिच्छामिदेवर्षेगुणकेशींस्नुषांप्रति १३ ॥ आर्यकउवाच ॥ न
मेनैतद्बहुमतंमहर्षेवचनंतव ॥ सखाशक्रस्यसंयुक्तःकस्यायंनेप्सितोभवेत् १४ कारणस्यतुदौर्बल्याच्चिंतयामिमहामुने ॥ अस्यदेहकरस्तातममपुत्रोमहाद्यु
ते १५ भक्षितोवैनतेयेनदुःखार्त्तास्तेनवैवयम् ॥ पुनरेवचतेनोक्तंवैनतेयेनगच्छता ॥ मासेनान्येनसुमुखंभक्षयिष्यइतिप्रभो १६ ध्रुवंतथातद्भविताजानी
मस्तस्यनिश्चयम् ॥ तेनहर्षःप्रनष्टोमेसुपर्णवचनेनवै १७ ॥ कण्वउवाच ॥ मातलिस्त्वब्रवीदेनंबुद्धिरत्रकृतामया ॥ जामातृभावेनवृतःसुमुखस्तवपुत्रजः
१८ सोऽयंमयाचसहितोनारदेनचपन्नगः ॥ त्रिलोकेशंसुरपतिंगत्वापश्यतुवासवम् १९ शेषेणैवास्यकार्येणप्रज्ञास्याम्यहमायुषः ॥ सुपर्णस्यविघातेचप्रयति
ष्यामिसत्तम २० सुमुखश्चमयासार्धंदेवेशमभिगच्छतु ॥ कार्यसंसाधनार्थायस्वस्तितेऽस्तुभुजंगम २१ ततस्तेसुमुखंगृह्यसर्वएवमहौजसः ॥ ददृशुःशक्रमा
सीनंदेवराजंमहाद्युतिम् २२ संगत्यातत्रभगवान्विष्णुरासीच्चतुर्भुजः ॥ ततस्तत्सर्वमाचख्यौनारदोमातलिंप्रति २३ ॥ वैशंपायनउवाच ॥ ततःपुरंदरंवि
ष्णुरुवाचभुवनेश्वरम् ॥ अमृतंदीयतामस्मैक्रियताममरैःसमः २४ मातलिर्नारदश्चैवसुमुखश्चैववासव ॥ लभंतांभवतःकामात्काममेतंयथेप्सितम् २५

२६ । २७ । २८ । २९ । ३० ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे चतुरधिकशततमोऽध्यायः ॥ १०४ ॥ ॥ ७ ॥ ॥ गरुडइति १ । २ । ३ । ४



पुरंदरोऽथसंचिंत्यवैनतेयपराक्रमम् ॥ विष्णुमेवाब्रवीदेनंभवानेवददात्विति २६ ॥ विष्णुरुवाच ॥ ईशस्त्वंसर्वलोकानांचराणामचराश्च्ये ॥ त्वयादत्तमदत्तंकः कर्तुमुत्सहतेविभो २७ प्रादाच्छक्रस्ततस्तस्मैपन्नागायायुरुत्तमम् ॥ नत्वेनममृतप्राशंचकारबलवृत्रहा २८ लब्ध्वावरंतुसुमुखःसुमुखःसंबभूवह ॥ कृतदारोयथाकामंजगामचगृहान्प्रति २९ नारदस्त्वार्यकश्चैवकृतकार्यौमुदायुतौ ॥ अभिजग्मतुरभ्यर्च्यदेवराजंमहाद्युतिं ३० ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानप० मातलिवरान्वेषणेचतुरधिकशततमोऽध्यायः ॥ १०४ ॥ ॥ कण्वउवाच ॥ गरुडस्तत्रशुश्रावयथावृत्तंमहाबलः ॥ आयुःप्रदानंशक्रेणकृतंनागस्यभारत १ पक्षवातेनमहतारुद्ध्वात्रिभुवनंखगः ॥ सुपर्णःपरमक्रुद्धोवासवंसमुपाद्रवत् २ ॥ गरुडउवाच ॥ भगवन्किमवज्ञानाद्वृत्तिःप्रतिहताभम ॥ कामकारवरंदत्वापुनश्चलितवानसि ३ निसर्गात्सर्वभूतानांसर्वभूतेश्वरेणमे ॥ आहारोविहितोधात्राकिमर्थंवार्यतेत्वया ४ वृतश्चैषमहानागःस्थापितःसमयश्चमे ॥ अनेनचमयादेवभर्तव्यःप्रसवोमहान् ५ एतस्मिंस्तुतथाभूतेनान्यंहिंसितुमुत्सहे ॥ क्रीडसेकामकारेणदेवराजयथेच्छकम् ६ सोऽहंप्राणान्विमोक्ष्यामितथापरिजनोमम ॥ येचभृत्याममगृहेप्रीतिमान्भववासव ७ एतच्चैवाहमर्हामिभूयश्चबलवृत्रहन् ॥ त्रैलोक्यस्येश्वरोयोऽहंपरभृत्यत्वमागतः ८ त्वयितिष्ठतिदेवेशनविष्णुःकारणंमम ॥ त्रैलोक्यराजराज्यंहित्वयिवासवशाश्वतम् ९ ममापिदक्षस्यसुताजननीकश्यपःपिता ॥ अहमप्युत्सहेलोकान्समंताद्वोढुमंजसा १० असह्यंसर्वभूतानांममापिविपुलंबलम् ॥ मयापिसुमहत्कर्मकृतंदैतेयविग्रहे ११ श्रुतश्रीःश्रुतसेनश्चविवस्वान्रोचनामुखः ॥ प्रसृतःकालकाक्षश्चमयापिदितिजाहताः १२ यत्तुध्वजस्थानगतोयत्नात्परिचराम्यहम् ॥ वहामिचैवानुजंतेतेनमामवमन्यसे १३ कोऽन्योभारसहोह्यस्तिकोऽन्योस्तिबलवत्तरः ॥ मयायोऽहंविशिष्टःसन्वहामीमंसबांधवम् १४ अवज्ञायतुयत्तेहंभोजनाद्व्यपरोपितः ॥ तेनमेगौरवंनष्टंत्वत्तश्चास्माच्चवासव १५ अदित्यांयइमेजाताबलविक्रमशालिनः ॥ त्वमेषांकिलसर्वेषांबलेनबलवत्तरः १६ सोऽहंपक्षैकदेशेनवहामित्वांगतक्लमः ॥ विमृशत्वंशनैस्तातकोन्वत्रबलवानिति १७ ॥ कण्वउवाच ॥ सतस्यवचनंश्रुत्वाखगस्योदर्कदारुणम् ॥ अक्षोभ्यंक्षोभयंस्तार्क्ष्यमुवाचरथचक्रभृत् १८ गरुत्मन्मन्यसेऽऽत्मानंबलवंतंसुदुर्बलम् ॥ अलमस्मत्समक्षंतेस्तोतुमात्मानमंडज १९ त्रैलोक्यमपिमेकृत्स्नमशक्तंदेहधारणे ॥ अहमेवात्मनाऽऽत्मानंवहामित्वांचधारये २० इमंतावन्ममैकंत्वंबाहुंसव्येतरंवह ॥ यद्येनंधारयस्येकंसफलंतेविकत्थितम् २१ ततःसभगवांस्तस्यस्कंधेबाहुंसमासजत् ॥ निपपातसभारार्तोविह्वलोनष्टचेतनः २२ यावान्हिभारःकृत्स्नायाःपृथिव्याःपर्वतैःसह ॥ एकस्यादेहशाखायास्तावद्भारममन्यत २३

५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३

२४।२५।२६।२७।२८।२९।३०।३१।३२।३३।३४।३५।३६।३७।३८।३९।४० ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेपंचाधिकशततमोऽध्यायः ॥ १०५ ॥ अनर्थेइति परार्थेपरस्वनिमित्तं
१।२ भगवान्पितामहोव्यासोनतुभीष्मः उत्तरेतस्यपृथगुपादानात्उक्तमित्यस्यावृत्तिदर्शनाच्च ३ । ४ सुहृत्प्रत्युपकारमनपेक्ष्यउपकर्तामादृशः तदीयवाक्यस्यश्रोतासुहृच्छ्रोता मूढोऽयंहितमप्यु

नखेनपीडयामासबलेनबलवत्तरः ॥ ततोहिजीवितंतस्यनव्यनीनशदच्युतः २४ व्यातास्यःस्रस्तकायश्चविचेताविह्वलःखगः ॥ मुमोचपत्राणितदागुरुभारप्र
पीडितः २५ सविष्णुंशिरसापक्षीप्रणम्यविनतासुतः ॥ विचेताविह्वलोदीनःकिंचिद्वचनमब्रवीत् २६ भगवन्लोकसारस्यसदृशेनवपुष्पता ॥ भुजेनस्वैरमु
क्तेननिष्पिष्टोस्मिमहीतले २७ क्षंतुमर्हसिमेदेवविह्वलस्याल्पचेतसः ॥ बलदाहविदग्धस्यपाक्षिणोध्वजवासिनः २८ नाहिज्ञातंबलंदेवमयातेपरमंविभो ॥ तेन
मन्याम्यहंवीर्यमात्मनोनसमंपरैः २९ ततश्चक्रेसभगवान्प्रसादंवैगरुत्मतः ॥ मैवंभूयइतिस्नेहात्तदाचैनमुवाचह ३० पादांगुष्ठेनाचिक्षेपसुमुखंगरुडोरासे ॥
ततःप्रभृतिराजेंद्रसहसर्पेणवर्तते ३१ एवंविष्णुबलाक्रांतोगर्वनाशमुपागतः ॥ गरुडोबलवान्राजन्वैनतेयोमहायशाः ३२ ॥ कण्वउवाच ॥ तथात्वमपिगांधा
रेयावत्पांडुसुतान्रणे ॥ नासादयसितान्वीरांस्तावज्जीवसिपुत्रक ३३ भीमःप्रहरतांश्रेष्ठोवायुपुत्रोमहाबलः ॥ धनंजयश्चेंद्रसुतोनहन्यातांतुकंरणे ३४ विष्णु
र्वायुश्चशक्रश्चधर्मस्तौचाश्विनावुभौ ॥ एतेदेवास्त्वयाकेनहेतुनावीक्षितुंक्षमाः ३५ तदलंतेविरोधेनशमंगच्छनृपात्मज ॥ वासुदेवेनतीर्थेनकुलंरक्षितुमर्हसि
३६ प्रत्यक्षदर्शीसर्वस्यनारदोऽयंमहातपाः ॥ माहात्म्यस्यतदाविष्णोःसोऽयंचक्रगदाधरः ३७ ॥ वैशंपायनउवाच ॥ दुर्योधनस्तुतच्छ्रुत्वानिःश्वसन्भ्रुकुटी
मुखः॥ राधेयमभिसंप्रेक्ष्यजहासस्वनवत्तदा ३८ कदर्थीकृत्यतद्वाक्यमृषेःकण्वस्यदुर्मतिः ॥ ऊरुंगजकराकारंताडयन्निदमब्रवीत् ३९ यथैवेश्वरसृष्टोऽस्मिय
द्भावियाचमेगतिः ॥ तथामहर्षेवर्तामिकिंप्रलापःकरिष्यति ४० ॥ इतिश्रीमहाभारते उद्योगपर्वणि भगवद्यानपर्वणि मातलिवरान्वेषणेपंचाधिकशततमो
ऽध्यायः ॥ १०५ ॥ जनमेजयउवाच ॥ अनर्थेजातनिर्बंधंपरार्थेलोभमोहितम् ॥ अनार्यकेष्वभिरतंमरणेकृतनिश्चयम् १ ज्ञातीनांदुःखकर्तारंबंधूनांशोकव
र्धनम् ॥ सुहृदांक्लेशदातारंद्विषतांहर्षवर्धनम् २ कथंनैनंविमार्गस्थंवारयंतीहबांधवाः ॥ सौहृदाद्वासुहृत्स्निग्धोभगवान्वापितामहः ३ वैशंपायनउवाच ॥
उक्तंभगवतावाक्यमुक्तंभीष्मेणयत्क्षमम् ॥ उक्तंबहुविधंचैवनारदेनापितच्छृणु ४ ॥ नारदउवाच ॥ दुर्लभोवैसुहृच्छ्रोतादुर्लभश्चहितःसुहृत् ॥ तिष्ठते
हिसुहृद्यत्रनबंधुस्तत्रतिष्ठते ५ ॥ श्रोतव्यमपिपश्यामिसुहृदांकुरुनंदन ॥ नकर्तव्यश्चनिर्बंधोनिर्बंधोहिसुदारुणः ६ अत्राप्युदाहरंतीमामितिहासंपुरात
नम् ॥ यथानिर्बंधतःप्राप्तोगालवेनपराजयः ७ विश्वामित्रंतपस्यंतंधर्मोजिज्ञासयापुरा ॥ अभ्यगच्छत्स्वयंभूत्वावसिष्ठोभगवानृषिः ८ सप्तर्षीणामन्यतमंवे
षमास्थायभारत ॥ बुभुक्षुःक्षुधितोराजन्नाश्रमंकौशिकस्यतु ९ त्वंनश्रोष्यतीतिभावः तिष्ठतेस्थिरोभवतियत्र महासंकटेतत्र बंधुःउपकारमपेक्ष्योपकर्ताकर्णादिःनतिष्ठतेनप्रकाशते।
प्रकाशनस्थेयाख्ययोश्चेत्युभयत्रतङ् । बंधुतोऽपिसुहृद्वचःश्रेयस्करमित्यर्थः ५ श्रोतव्यंश्रोतुंयुक्तं निर्बंधःसत्यपिबलवद्बाधकेतत्रैवाग्रहः सुदारुणोनाशकारी६।७वसिष्ठमूर्त्याधर्मोऽभ्यागच्छत् ८।९

नप्रत्यपालयत् अन्नसिद्धिपर्यंतंनप्रतीक्षितवान् १० तेनवसिष्ठेन उपागमत्वसिष्ठसमीपं ११।१२ मूर्ध्नाबाहुभ्यांचपरिगृह्य अभ्याशेसमीपेआश्रमस्य १३ गौरवात् गुरुत्वात्बहुमानात्लोकपूज्यत्वा त्हार्देनप्रीत्या १४ । १५ । १६ । १७ । १८ शुश्रूषयासेवया भक्त्याआराध्यत्वज्ञानेन १९ । २० गुरुकर्मणिब्रह्मचर्यव्रतसमाप्तौसत्यां २१ मानवमितिपाठेसिध्यतिसिद्धंकृतकृत्यंकरोतीत्यर्थः एतदेवाह दक्षिणानामिति अपवर्गेणफलप्राप्त्या२२क्रतुफलंदक्षिणाप्रदएवप्राप्नोति । 'हतोयज्ञस्त्वदक्षिणः'इतिस्मृतेरदक्षिणस्यक्रतोर्हतत्वेनाफलत्वात् शांतिःसर्वोपद्रवहारिणीउच्यतेवेदेन । दक्षि

विश्वामित्रोऽथसंभ्रांतःश्रपयामासवैचरुम् ॥ परमान्नस्ययत्नेननचतंप्रत्यपालयत् १० अन्नंतेनयदाभुक्त मन्यैर्दत्तंतपस्विभिः ॥ अथगृह्यान्नमत्युष्णंविश्वामित्रोऽप्युपागमत् ११ भुक्तंमेतिष्ठतावत्त्वमित्युक्त्वाभगवान्ययौ ॥ विश्वामित्रस्ततोराजन्स्थितएवमहाद्युतिः १२ भक्तंप्रगृह्यमूर्ध्नावैबाहुभ्यांसंशितव्रतः ॥ स्थितःस्थाणुरिवाभ्याशेनिश्चेष्टोमारुताशनः १३ तस्यशुश्रूषणेयत्नमकरोद्गालवोमुनिः ॥ गौरवाद्बहुमानाच्चहार्देनप्रियकाम्यया १४ अथवर्षशतेपूर्णेधर्मःपुनरुपागमत् ॥ वासिष्ठंवेषमास्थायकौशिकंभोजनेप्सया १५ सदृष्ट्वाशिरसाभक्तंध्रियमाणंमहर्षिणा ॥ तिष्ठतावायुभक्षेणविश्वामित्रेणधीमता १६ प्रतिगृह्यततोधर्मस्तथैवोष्णंतथानवम् ॥ भुक्त्वाप्रीतोऽस्मिविप्रर्षेतमुक्त्वासमुनिर्गतः १७ क्षत्रभावादपगतोब्राह्मणत्वमुपागतः ॥ धर्मस्यवचनात्प्रीतोविश्वामित्रस्तथाऽभवत् १८ विश्वामित्रस्तुशिष्यस्यगालवस्यतपस्विनः ॥ शुश्रूषयाचभक्त्याचप्रीतिमानित्युवाचह १९ अनुज्ञातोमयावत्सयथेष्टंगच्छगालव ॥ इत्युक्तःप्रत्युवाचेदंगालवोमुनिसत्तमम् २० प्रीतोमधुरयावाचाविश्वामित्रंमहाद्युतिम् ॥ दक्षिणाःकाःप्रयच्छामिभवतेगुरुकर्मणि २१ दक्षिणाभिरुपेतंहिकर्मसिद्ध्यतिमानद ॥ दक्षिणानांहिदातावैअपवर्गेणयुज्यते २२ स्वर्गेक्रतुफलंतद्धिदक्षिणाशांतिरुच्यते ॥ किमाहरामिगुर्वर्थंब्रवीतुभगवानिति २३ जानानस्तेनभगवान्जितःशुश्रूषणेनवै ॥ विश्वामित्रस्तमसकृद्गच्छगच्छेत्यचोदयत् २४ असकृद्गच्छगच्छेतिविश्वामित्रेणभाषितः ॥ किंददानीतिबहुशोगालवःप्रत्यभाषत २५ निर्बंधतस्तुबहुशोगालवस्यतपस्विनः ॥ किंचिदागतसंरंभोविश्वामित्रोऽब्रवीदिदम् २६ एकतःश्यामकर्णानांहयानांचंद्रवर्चसाम् ॥ अष्टौशतानिमेदेहिगच्छगालवमाचिरम् २७ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिगालवचरितेषडधिकशततमोऽध्यायः ॥ १०६ ॥ नारदउवाच ॥ एवमुक्तस्तदातेनविश्वामित्रेणधीमता ॥ नास्तेनशेतेनाहारंकुरुतेगालवस्तदा १ त्वगस्थिभूतोहरिणश्चिंताशोकपरायणः ॥ शोचमानोऽतिमात्रंसदह्यमानश्चमन्युना ॥ गालवोदुःखितोदुःखाद्विललापसुयोधन २ कुतःपुष्टानिमित्राणिकुतोऽर्थाःसंचयःकुतः ॥ हयानांचंद्रशुभ्राणांशतान्यष्टौकुतोमम ३

णांकर्मकुणुतेविजानन्निति २३ जानानःशुश्रूषणेनैवदक्षिणाकर्मसमाप्तिरिति । सजानंस्तेनेतिपाठेतेनगालवेनशुश्रूषणेनैवजितोवशीकृतोऽस्मीतिजानन्नित्यन्वयः २४ । २५ । २६ श्यामोहरितः एकतःबहिःप्रदेशेएवश्यामाःकर्णायेषांएकतःश्यामकर्णानां २७ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपेषडधिकशततमोऽध्यायः ॥ १०६ ॥ ॥ ७ ॥ एवमिति १ हरिणःपांडुरः मन्युनादैन्येन दह्यमानश्चिताग्निना २ । ३

४ परंपरावद्दूरादपिदूरं आत्मानंदेहं ९ अनीहयाअनुद्यमेन ६ ईप्सितंप्रणयंकृत्वाईप्सितंदास्यामीतिविश्वासमुत्पाद्य । 'प्रणयःप्रेम्णिविस्रंभे'इतिविश्वः ७ एतदेवाहप्रतिश्रुत्येति करिष्येतीति संधिरार्षः ८ अनृतस्यसत्यहीनस्यरूपंस्वरूपं जीवन्नेवसमृतइत्यर्थः ९।१० तंत्रणंकुटुंबधारणं पाठांतरेमंत्रणंइष्टैःसहविचारणं अविश्वसनीयत्वादित्यर्थः ११ तद्भाषितमितिसंबंधः १२ अनुत्तमं यत्नंअधमोपायं विषोद्बंधनादिरूपंकृत्वाप्राणान्मोक्ष्यामीत्यर्थः अर्थितायाच्या १३ अहंत्विति अत्राहमितिपदस्याद्विरावृत्तिर्वक्तुर्वैक्लव्याददोषः १४ भोगाःभोग्यवर्गोवियदादिःप्रतिष्ठंतेनिःसरंति बीजादिववृक्षाः १५ तस्यविष्णुदासत्वेनसखानतुपूर्वोपकारादिना १६ सुहृदां विश्वंविष्णुरितिबुद्ध्यासर्वलोकमित्राणां १७ वासवादवरजोविष्णुःउक्तः अहंगालवस्यसाहाय्यंकर्तुमिच्छामीतिप्रा

कुतोमेभोजनेश्रद्धासुखश्रद्धाकुतश्चमे ॥ श्रद्धामेजीवितस्यापिछिन्नाकिंजीवितेनमे ४ अहंपारेसमुद्रस्यपृथिव्यावापरंपरात् ॥ गत्वाऽऽत्मानंविमुंचामिकिंफलं जीवितेनमे ५ अधनस्याकृतार्थस्यत्यक्तस्यविविधैःफलैः ॥ ऋणंधारयमाणस्यकुतःसुखमनीहया ६ सुहृदांहिधनंभुक्त्वाकृत्वाप्रणयमीप्सितम् ॥ प्रतिकर्तुम शक्तस्यजीवितान्मरणंवरम् ७ प्रतिश्रुत्यकरिष्येतिकर्तव्यंतदकुर्वतः ॥ मिथ्यावचनदग्धस्यइष्टापूर्तंप्रणश्यति ८ नरूपमनृतस्यास्तिनानृतस्यास्तिसंत तिः ॥ नानृतस्याधिपत्यंचकुतएवगतिःशुभा ९ कुतःकृतघ्नस्ययशःकुतःस्थानंकुतःसुखम् ॥ अश्रद्धेयःकृतघ्नोहिकृतघ्नेनास्तिनिष्कृतिः १० नजीवत्यध नःपापःकुतःपापस्यतंत्रणम् ॥ पापोध्रुवमवाप्नोतिविनाशंनाशयन्कृतम् ११ सोऽहंपापःकृतघ्नश्चकृपणश्चानृतोऽपिच ॥ गुरोर्यःकृतकार्यःसंस्तत्करोमिनभा षितम् १२ सोऽहंप्राणान्विमोक्ष्यामिकृत्वायत्नमनुत्तमम् ॥ अर्थितानमयाकाचित्कृतपूर्वादिवौकसाम् १३ मानयंतिचमांसर्वेत्रिदशायज्ञसंस्तरे ॥ अहंतुविबु धश्रेष्ठंदेवंत्रिभुवनेश्वरम् ॥ विष्णुंगच्छाम्यहंकृष्णंगतिंगतिमतांवरम् १४ भोगायस्मात्प्रतिष्ठंतेव्याप्यसर्वान्सुरासुरान् ॥ प्रणतोद्रष्टुमिच्छामिकृष्णंयोगिनम व्ययम् १५ एवमुक्तेसखातस्यगरुडोविनतात्मजः ॥ दर्शयामासतंप्राहसंहृष्टःप्रियकाम्यया १६ सुहृद्भवान्ममभतःसुहृदांचमतःसुहृत् ॥ ईप्सितेनाभिलाषे णयोक्तव्योविभवेसति १७ विभवश्चास्तिमेविप्रवासवावरजोद्विज ॥ पूर्वमुक्तस्त्वदर्थंचकृतःकामश्चतेनमे १८ सभवानेतुगच्छावनयिष्येत्वांयथासुखम् ॥ देशंपारंपृथिव्यावागच्छगालवमाचिरम् १९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणि भगवद्यानपर्वणिगालवचरितेसप्ताधिकशततमोऽध्यायः ॥ १०७ ॥ ॥ ॥ सुपर्णउवाच ॥ अनुशिष्टोऽस्मिदेवेनगालवज्ञानयोनिना ॥ ब्रूहिकामंतुकांयामिद्रष्टुंप्रथमतोदिशम् १ पूर्वांवादक्षिणांवाऽहमथवापश्चिमांदिशम् ॥ उत्तरां वाद्विजश्रेष्ठकुतोगच्छामिगालव २ यस्यामुदयतेपूर्वंसर्वलोकप्रभावनः ॥ सवितायत्रसंध्यायांसाध्यानांवर्ततेतपः ३

र्थितः तेनविष्णुना १८ देशंपृथिव्यंतर्गतमेव पृथिव्याःपारःसमुद्रः १९ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपेसप्ताधिकशततमोऽध्यायः ॥ १०७ ॥ ॥ ७ ॥ अनुशिष्टआज्ञापितः ज्ञानयोनिनाधीप्रवर्तकेनविष्णुना पाठांतरेअज्ञातयोनिनासर्वादित्वात्अज्ञातःरूपादिहीनत्वाच्चताद्दशोऽपियोनिःजगदुदयप्रलयस्थानंतेन कामंयथेष्टं १ । २ साध्यानांदेवताविशेषाणां तपआलोचनं वर्ततेअनुवर्तते । साध्यादेवाइहध्यायंतःसत्यकामाबभूवुरित्यर्थः ३

मतिर्बुद्धिः यातापाप्ता प्रातःसंध्यायांसवितुःप्रसादात्प्रथमंयत्रधीप्राप्तिर्भवति । गायत्र्यांसवितुर्धीप्रवर्तकत्वदर्शनादित्यर्थः । चक्षुषीआज्यभागाख्येअग्नीषोमदैवत्ये धर्मस्ययज्ञस्ययंत्रवैयंत्रणार्थं यंत्र्यते स्तुमर्थेतवैप्रत्ययोवैदिकस्तकारलोपश्च ४तदेवाह कृतंसंस्कृतंहव्यं यतोहुतंययोर्मध्येहुतंसत् 'तदाज्यभागावंतरेणाहुतीःप्रतिपादयेत्'इतिश्रुतेर्यज्ञस्यरक्षणंभवति । अन्यत्रगतंत्वर्थाद्धर्मनाशकंभवतीतिभावः अध्वनःदेवयानस्यपितृयाणस्यवा ५ दाक्षायण्यःअदितिर्दितिर्दनुःकाष्ठाइत्यादयःप्रजाःलोकान् ६।७।८ पूर्वैपूर्वसंस्थानि सुखमीप्सतासुखार्थिना ९ ।१० यजूंषिदत्तानियाज्ञवल्क्यायेतिशेषः ११ स्वांयोनिंसोमाज्यपयआदिरूपंजलं १२ पूर्वंमित्रावरुणयोर्यज्ञकाले पौराणस्यपुराणस्य स्वार्थेतद्धितः निधनंनिमिशापात्स्थूलदेहवियोगः सूतिःकुंभात्तस्मिन्नेवयज्ञे १३ दश

यस्यांपूर्वंमतिर्याताययाव्याप्तमिदंजगत् ॥ चक्षुषीयत्रधर्मस्ययंत्रवैसुप्रतिष्ठिते ४ कृतंयतोहुतंहव्यंसर्पतेसर्वतोदिशम् ॥ यत्तद्द्वारंद्विजश्रेष्ठदिवसस्यतथाऽध्वनः ५ अत्रपूर्वंप्रसूतावैदाक्षायण्यःप्रजाःस्त्रियः ॥ यस्यांदिशिप्रवृद्धाश्चकश्यपस्यात्मसंभवाः ६ अतोमूलंसुराणांश्रीर्यत्रशक्रोऽभ्यषिच्यत ॥ सुरराज्येनविप्रर्षेदेवैश्चात्रतपश्चितम् ७ एतस्मात्कारणाद्ब्रह्मन्पूर्वेत्येषादिगुच्यते ॥ यस्मात्पूर्वतरेकालेपूर्वमेवावृतासुरैः ८ अतएवचसर्वेषांपूर्वामाशांप्रचक्षते ॥ पूर्वंसर्वाणिकार्याणिदैवानिसुखमीप्सता ९ अत्रवेदान्जगौपूर्वंभगवान्लोकभावनः ॥ अत्रैवोक्तासवित्राऽऽसीत्सावित्रीब्रह्मवादिषु १० अत्रदत्तानिसूर्येणयजूंषिद्विजसत्तम ॥ अत्रलब्धवरःसोमःसुरैःक्रतुषुपीयते ११ अत्रतृप्ताहुतवहाःस्वांयोनिमुपभुंजते ॥ अत्रपातालमाश्रित्यवरुणःश्रियमापच १२ अत्रपूर्ववसिष्ठस्यपौराणस्यद्विजर्षभ ॥ सूतिश्चैवप्रतिष्ठाचनिधनंचप्रकाशते १३ ओंकारस्यात्रजायंतेसृतयोदशतीर्दश ॥ पिबंतिमुनयोयत्रहविर्धूमंस्मधूमपाः १४ प्रोक्षितायत्रबहवोवराहाद्यामृगावने ॥ शक्रेणयज्ञभागार्थेदैवतेषुप्रकल्पिताः १५ अत्राहिताःकृतघ्नाश्चमानुषाश्चासुराश्चये ॥ उदयंस्तान्हिसर्वान्वैक्रोधाद्धंतिविभावसुः १६ एतद्द्वारंत्रिलोकस्यस्वर्गस्यचसुखस्यच ॥ एषपूर्वोदिशांभागोविशावोऽत्रयदीच्छसि १७ प्रियंकार्यंहिमेतस्ययस्यास्मिवचनेस्थितः ॥ ब्रूहिगालवयास्यामिशृणुचाप्यपरांदिशम् १८ ॥ ॥ इतिश्रीमहाभारतेउद्योगपर्वणि भगवद्यानपर्वणिगालवचरिते अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥ ॥ ॥

सुपर्णउवाच ॥ इयंविवस्वतापूर्वंश्रौतेनविधिनाकिल ॥ गुरवेदक्षिणादत्तादक्षिणेत्युच्यतेचदिक् १ अत्रलोकत्रयस्यास्यपितृपक्षःप्रतिष्ठितः ॥ अत्रोष्मपाणांदेवानांनिवासःश्रूयतेद्विज २ अत्रविश्वेसदादेवाःपितृभिःसार्धमासते ॥ इज्यमानाःस्मलोकेषुसंप्राप्तास्तुल्यभागताम् ३

शतीशब्दस्यपृषोदरादिशकारलोपेनदशतीशब्दःसहस्रवाची सृतयोमार्गाः 'ओंकारोवैसर्वावाक्'इतिश्रुतेर्वेदस्यशाखाप्रशाखादिभेदोऽत्रैवजातइत्यर्थः १४ । १५ येमानुषाःकृतघ्नाःयेवासुरास्तान्अत्रैवोदयन्हंति तेषामायुरल्पीकरोतीत्यर्थः १६ विशावःप्रविशावः १७ । १८ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिनीलकंठीयेभारतभावदीपेअष्टाधिकशततमोऽध्यायः ॥ १०८ ॥ ७ ॥ इयमिति श्रौवेणेतिपाठे स्रुवेणहूयतेऽस्मिन्निति स्रौवोविधिर्यज्ञः गुरवेकश्यपाय १ उष्मपाणांउष्णान्नभोजिनां । 'यावदुष्णंभवत्यन्नंपितरस्तावदश्नंति'इतिस्मृतेः २ विश्वेत्रयोदशमितोगणः ३

द्वितीयंदेवस्यधर्मस्यद्वारं पूर्वादिक्प्रथमं तदपेक्षयापित्र्यस्यधर्मस्यद्वारामिदंद्वितीयं । 'प्राक्संस्थानिदैवानिकर्माणिदक्षिणसंस्थानिपित्र्याणि'इतिस्मृतेः ४ । ५ कर्मपुण्यापुण्यरूपं निगद्यतेप्रका श्यतेचित्रगुप्तादिभिः अवसायिनांमृतानां कर्मनिग्रहानुग्रहरूपं ६ सर्वःमुमूर्षुमात्रः वृताछन्ना अनवबोधेनतमसा पुण्यवान्पापीवामरणकालेअत्यंतमूढत्वाद्दुःखेवसन्नेतांदिशंगच्छतीत्यर्थः । कृत्वा त्वनवरोधेनेतिपाठेअनवःप्राक्संचितेनकर्मणाउपस्थितोरोधोमोहस्तेन सर्वःकृत्वाकर्तापूरुषः । अतोमनिन्क्वनिब्वनिपश्चेतिसूत्रात्क्वनिबित्यनुवर्तमानेऽन्येभ्योऽपिदृश्यतइतिकृञःकर्तरिक्वनिप् ७ ८ चित्तंचबुद्धिश्चतयोर्हराः योगिनांतत्त्वानुसंधानंप्रपंचमिथ्यात्वनिश्चयंचहरंतीत्यर्थः ९ गाथाःवर्णमय्योमंत्राद्याः सामानितदाश्रयाणिगीतानिश्रुत्वाऽतीतंकालमजानन्भूलोकेआगत्य

एतद्द्वितीयंवेदस्यद्वारमाचक्षतेद्विज ॥ त्रुटिशोलवशश्चापिगण्यतेकालनिश्चयः ४ अत्रदेवर्षयोनित्यंपितृलोकर्षयस्तथा ॥ तथाराजर्षयःसर्वेनिवसंतिगतव्य थाः ५ अत्रधर्मश्चसत्यंचकर्मचात्रनिगद्यते ॥ गतिरेषाद्विजश्रेष्ठकर्मणामवसायिनाम् ६ एषादिक्साद्विजश्रेष्ठयांसर्वःप्रतिपद्यते ॥ वृतात्वनवबोधेनसुखंतेन नगम्यते ७ नैर्ऋतानांसहस्राणिबहून्यत्रद्विजर्षभ ॥ सृष्टानिप्रतिकूलानिद्रष्टव्यान्यकृतात्मभिः ८ अत्रमंदरकुंजेषुविप्रर्षिसदनेषुच ॥ गायंतिगाथागंधर्वाश्चि त्तबुद्धिहराद्विज ९ अत्रसामानिगाथाभिःश्रुत्वागीतानिरैवतः ॥ गतदारोगतामात्योगतराज्योवनंगतः १० अत्रसावर्णिनाचैवयवक्रीतात्मजेनच ॥ मर्यादास्था पिताब्रह्मन्यांसूर्योनातिवर्तते ११ अत्रराक्षसराजेनपौलस्त्येनमहात्मना ॥ रावणेनतपश्चीर्त्वासुरेभ्योऽमरतावृता १२ अत्रवृत्तेनवृत्रोऽपिशक्रशत्रुत्वमीयिवान् ॥ अत्रसर्वासवःप्राप्ताःपुनर्गच्छंतिपंचधा १३ अत्रदुष्कृतकर्माणोनराःपच्यंतिगालव ॥ अत्रवैतरणीनामनदीवितरणैर्वृता १४ अत्रगत्वासुखस्यांतंदुःखस्यां तंप्रपद्यते ॥ अत्रवृत्तोदिनकरःसुरसंक्षरतेपयः १५ काष्ठांचासाद्यवासिष्ठींहिममुत्सृजतेपुनः ॥ अत्राहंगालवपुराक्षुधार्त्तःपरिचिंतयन् १६ लब्धवान्युध्य मानौद्वौबृहंतौगजकच्छपौ ॥ अत्रचक्रधनुर्नामसूर्याज्जातोमहानृषिः १७ विदुर्यंकपिलंदेवंयेनार्त्ताःसगरात्मजाः ॥ अत्रसिद्धाःशिवानामब्राह्मणावेदपारगाः १८ अधीत्यसकलान्वेदाँल्लेभिरेमोक्षमक्षयम् ॥ अत्रभोगवतीनामपुरीवासुकिपालिता १९ तक्षकेणचनागेनतथैवैरावतेनच ॥ अत्रनिर्याणकालेऽपितमः संप्राप्यतेमहत् २० अभेद्यंभास्करेणापिस्वयंवाकृष्णवर्त्मना ॥ एषतस्यापितेमार्गःपरिचार्यस्यगालव ॥ ब्रूहिमेयादिगंतव्यंप्रतीचींशृणुचापराम् २१ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणि गालवचरिते नवाधिकशततमोऽध्यायः ॥ १०९ ॥ ॥ ७ ॥

दारान्नष्टान्ज्ञात्वावनंगतइतिपौराणीकथा १० सावर्णिनामनुना मर्यादासूर्यरथस्यवीथीनांवाहकानांदेवतानांचनियमः ११ । १२ सर्वासवःसर्वेषांप्राणाअत्रप्राप्ताःसंतःपुनःपंचधागच्छंतिदेहंप्राप्नुवं ति प्राणापानादिभेदेनेत्यर्थः १३ वितरणैःवैतरणीनदीसंज्ञकनरकगामिभिः १४ सुखस्यांतंनरकं दुःखस्यांतंस्वर्गसुखं आवृत्तःकर्कायनगतः । तदाहिप्रायेणार्द्रानक्षत्रंभवतितच्चवर्षाकालस्यादिभूतंप्र सिद्धं १५ वासिष्ठींकाष्ठांउदीचीं वसिष्ठोपलक्षितसप्तर्षिभिरधिष्ठितां । धानिष्ठीमितिपाठेऽतिशयेनधनवान्धनिष्ठःकुबेरस्तदीयां उत्सृजतेत्यजति १६ । १७ । १८ । १९ निर्याणकालेमरणकाले तमःआंध्यं २० तस्यतेतवपरिचार्यस्यसेव्यस्य २१ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिनीलकंठीयेभारतभावदीपे नवाधिकशततमोऽध्यायः ॥ १०९ ॥ ॥

गोपतेःसूर्यस्यप्रतिष्ठेतिसंबंधः १ एतदेवाह पश्चादहइति अह्नःपश्चाद्भागे गाःरश्मीन्विसर्जयतिअतएवपश्चिमा अंतिमेत्यर्थः २ । ३ । ४ पश्चात्कृताःविमुखीकृताः संयताःसन्नद्धाःसंतः ५ । ६ अर्धं आयुषोहर्तुंनिद्रयाव्ययीकर्तुमित्यर्थः ७ । ८ मंदरंसमुद्रेमग्नं एतेनहिमवन्मूलस्यसमुद्रजलस्यचाप्रमेयत्वमुक्तम् ९ कांचनमयानिअंबुरुहाणियत्र तस्यउदधेःसमुद्रतुल्यस्यसरसः १० । ११ सुवर्णशिरसोमुनेःहरिरोम्णः अपलितस्यनित्यतरुणस्येत्यर्थः १२ हरिमेधसोमुनेःकुमारी तिष्ठतिष्ठेतिसूर्यस्यशासनात् १३ अत्रवायुरिति वाय्वादयोऽत्रदुःखदंशीतोष्णस्पर्शंविमुंचंति सदासुखसंस्पर्शाएवेत्यर्थः १४ अतःप्रभृतीति मेरुंप्रदक्षिणीकुर्वन्सूर्यःसर्वदातिर्यग्गतिरेवसन् लोकदृष्ट्याउपर्यधश्चगच्छतीत्येवभाति । अतःपरंलोकदृष्टचभावात्तिर्यगेवावर्ततइत्यर्थः । आदित्यमंडलं

॥ सुपर्णउवाच ॥ इयंदिग्दयिताराज्ञोवरुणस्यतुगोपतेः ॥ सदासलिलराजस्यप्रतिष्ठाचादिरेवच १ अत्रपश्चादहःसूर्योविसर्जयतिगाःस्वयम् ॥ पश्चिमेत्यभिविख्याताद्दिगियंद्विजसत्तम २ यादसामत्रराज्येनसलिलस्यचगुप्तये ॥ कश्यपोभगवान्देवोवरुणंस्माभ्यषेचयत् ३ अत्रपीत्वासमस्तान्वैवरुणस्यरसांस्तुषट् ॥ जायतेतरुणःसोमःशुक्लस्यादौतमिस्रहा ४ अत्रपश्चात्कृतादैत्यावायुनासंयतास्तदा ॥ निःश्वसंतोमहावातैरर्दिताःसुषुपुर्द्विज ५ अत्रसूर्यंप्रणयिनंप्रतिगृह्णातिपर्वतः ॥ अस्तोनामयतःसंध्यापश्चिमाप्रतिसर्पति ६ अतोरात्रिश्चनिद्राचनिर्गतादिवसक्षये ॥ जायतेजीवलोकस्यहर्तुमर्धमिवायुषः ७ अत्रदेवींदितिंसुप्तामात्मप्रसवधारिणीम् ॥ विगर्भामकरोच्छक्रोयत्रजातोमरुद्गणः ८ अत्रमूलंहिमवतोमंदरंयातिशाश्वतम् ॥ अपिवर्षसहस्रेणनचास्यांतोऽधिगम्यते ९ अत्रकांचनशैलस्यकांचनांबुरुहस्यच ॥ उदधेस्तीरमासाद्यसुरभिःक्षरतेपयः १० अत्रमध्येसमुद्रस्यकबंधःप्रतिदृश्यते ॥ स्वर्भानोःसूर्यकल्पस्यसोमसूर्यौजिघांसतः ११ सुवर्णशिरसोऽप्यत्रहरिरोम्णःप्रगायतः ॥ अदृश्यस्याप्रमेयस्यश्रूयतेविपुलोध्वनिः १२ अत्रध्वजवतीनामकुमारीहरिमेधसः ॥ आकाशेतिष्ठतिष्ठेतितस्थौसूर्यस्यशासनात् १३ अत्रवायुस्तथावह्निरापःखंचापिगालव ॥ आह्निकंचैवनैशंचदुःखंस्पर्शंविमुंचति १४ अतःप्रभृतिसूर्यस्यातिर्यगावर्ततेगतिः ॥ अत्रज्योतींषिसर्वाणिविशंत्यादित्यमंडलम् १५ अष्टाविंशतिरात्रंचचंक्रम्यसहभानुना ॥ निष्पतंतिपुनःसूर्यात्सोमसंयोगयोगतः १६ अत्रनित्यंस्रवंतीनांप्रभवःसागरोदयः ॥ अत्रलोकत्रयस्यापास्तिष्ठंतिवरुणालये १७ अत्रपन्नगराजस्याप्यनंतस्यनिवेशनम् ॥ अनादिनिधनस्यात्रविष्णोःस्थानमनुत्तमम् १८ अत्रानलसखस्यापिपवनस्यनिवेशनम् ॥ महर्षेःकश्यपस्यात्रमारीचस्यनिवेशनम् १९ एषतेपश्चिमोमार्गोदिग्द्वारेणप्रकीर्तितः ॥ ब्रूहिगालवगच्छावोबुद्धिःकाद्विजसत्तम २० ॥ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणि गालवचरितेदशाधिकशततमोऽध्यायः ॥ ११० ॥ ॥ छ ॥ ॥ छ ॥

कर्तृ ज्योतींष्यस्यादीन्विशंति । 'आदित्योवाअस्तंयन्नग्निमनुप्रविशति' इतिश्रुतेः । नक्षत्रादीन्यपिअम्मयत्वादप्रकाशानिआदित्यप्रभयैवभासंतेरात्रौ दिवातुतयैवतिरोभवंतीतिप्रसिद्धिः १५ अष्टेति अष्टाविंशतितमेदिने एकैकंनक्षत्रंभानुनाचंद्रेणसहसंक्रम्य एकोनत्रिंश्यांरात्रौनिष्पततिबहिर्निर्गच्छति चंद्रादेवपुनस्तद्वत्सोमसंयोगसदृशेनयोगेनसंबंधेनसूर्येणसहापिसंक्रम्यकालेनिष्पतंतीत्यर्थः । एवंचंद्रवत्सर्वेषामपिनक्षत्राणांसर्वग्रहयोगस्तुल्यः १६ स्रवंतीनांनदीनां सागरस्यउदयःपूर्तिर्यैनताद्दशःप्रभवः १७ । १८ । १९ दिग्द्वारेणसंक्षेपप्रकारेण तेतव २० ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे दशाधिकशततमोऽध्यायः ॥ ११० ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

यस्मादिति उत्तरेणपथागतानांहिपापनाशःस्वर्गप्राप्तिश्चभवतीतियोगादुत्तराउत्कृष्टतराइयंदिगित्यर्थः१परिवापःस्थानं हिरण्यस्यनिधीनामित्यर्थः उत्तरंयन्निधिस्थानंततःस्वर्गमार्गःदिग्भ्यामुपल
क्षितोमध्यमोज्ञेयइतिभावः २ अविधेयात्माअजितचित्तः ३ । ४ प्रकृत्याउमया ५ नसःमायाविष्टोऽपिनदृश्योदर्शनार्हःकिमुतमायारहितःशुद्धचिन्मात्रः ६ सहस्रशिरसइत्यकारां
तःशब्दः माययाउपेतमितिशेषः वस्तुतोऽस्यप्रत्यगात्मत्वेनद्रष्टृदृश्यभावस्याभावादितिभावः सगुणब्रह्मभावप्राप्तिपूर्विकैवनिर्गुणप्राप्तिरितिप्रघट्टकार्थः यथोक्तं । 'सोपाधिर्निरुपाधिश्चद्वेधाब्रह्म
विदुच्यते ॥ सोपाधिकःस्यात्सर्वात्मानिरुपाख्योऽनुपाधिकः'इति । एतच्चसम्यग्व्युत्पादितमस्माभिर्वेदांतकतके ७ । ८ । ९ । १० । ११ । १२ शाद्वलंजंबालंदेवताभेदः कदलीवैजयंतीपताका

॥ सुपर्णउवाच ॥ यस्मादुत्तार्यतेपापाद्यस्मान्निःश्रेयसोऽश्नुते ॥ अस्मादुत्तारणबलादुत्तरेत्युच्यतोद्विज १ उत्तरस्याहिरण्यस्यपारिवापश्चगालव ॥ मार्गःपश्चिम
पूर्वाभ्यांदिग्भ्यांवैमध्यमःस्मृतः २ अस्यांदिशिवरिष्ठायामुत्तरायांद्विजर्षभ ॥ नासौम्योनाविधेयात्मानाधर्मोवसतेजनः ३ अत्रनारायणःकृष्णोजिष्णुश्चैवन
रोत्तमः ॥ बदर्यामाश्रमपदेतथाब्रह्माचशाश्वतः ४ अत्रवैहिमवत्पृष्ठेनित्यमास्तेमहेश्वरः ॥ प्रकृत्यापुरुषःसार्धंयुगांताग्निसमप्रभः ५ नसदृश्योमुनिगणैस्तथादे
वैःसवासवैः ॥ गंधर्वयक्षसिद्धैर्वानरनारायणादृते ६ अत्रविष्णुःसहस्राक्षःसहस्रचरणोऽव्ययः ॥ सहस्रशिरसःश्रीमानेकःपश्यतिमायया ७ अत्रराज्येनविप्रा
णांचंद्रमाश्चाभ्यषिच्यत ॥ अत्रगंगांमहादेवःपतंतींगगनाच्च्युताम् ८ प्रतिगृह्यददौलोकेमानुषेब्रह्मवित्तम ॥ अत्रदेव्यातपस्तप्तंमहेश्वरपरीप्सया ९ अत्रका
मश्चरोषश्चशैलश्चोमाचसंबभुः ॥ अत्रराक्षसयक्षाणांगंधर्वाणांचगालव १० आधिपत्येनकैलासेधनदोऽप्यभिषेचितः ॥ अत्रचैत्ररथंरम्यमत्रवैखानसाश्रमः ॥
११ अत्रमंदाकिनीचैवमंदरश्चद्विजर्षभ ॥ अत्रसौगंधिकवनंनैर्ऋतैरभिरक्ष्यते १२ शाद्वलंकदलीस्कंधमत्रसंतानकानगाः ॥ अत्रसंयमनित्यानांसिद्धानांस्वै
रचारिणाम् १३ विमानान्यनुरूपाणिकामभोग्यानिगालव ॥ अत्रतेऋषयःसप्तदेवीचारुंधतीतथा १४ अत्रतिष्ठतिवैस्वातिरत्रास्याउदयःस्मृतः ॥ अत्रय
ज्ञंसमासाद्यध्रुवंस्थातापितामहः १५ ज्योतींषिचंद्रसूर्यौचपरिवर्तंतिनित्यशः ॥ अत्रगंगामहाद्वारंरक्षंतिद्विजसत्तम १६ धामानाममहात्मानोमुनयःसत्यवा
दिनः ॥ नतेषांज्ञायतेमूर्तिर्नाकृतिर्नतपश्चितम् १७ परिवर्तःसहस्राणिकामभोज्यानिगालव ॥ यथायथाप्रविशतितस्मात्परतरंनरः १८ तथातथाद्विजश्रेष्ठ
प्रविलीयतिगालव ॥ नैतत्केनाचिदन्येनगतपूर्वंद्विजर्षभ १९ ऋतेनारायणंदेवंनरंवाजिष्णुमव्ययम् ॥ अत्रकैलासमित्युक्तंस्थानमैलविलस्यतत् २० अत्रवि
द्युत्प्रभानामजज्ञिरेऽप्सरसोदश ॥ अत्राविष्णुपदंनामक्रमताविष्णुनाकृतम् २१ त्रिलोकविक्रमेब्रह्मन्नुत्तरांदिशमाश्रितम् ॥ अत्रराज्ञामरुत्तेनयज्ञेनेष्टंद्विजोत्तम २२

तस्याःस्कंधवदुच्छ्रितं । 'अथकदलीपताकामृगभेदयोः'इतिमेदिनी । नगाःवृक्षाःकल्पद्रुमाः संयमोधारणाध्यानादिभिर्नित्योनत्याज्योयेषांतेषां १३ । १४ । १५ गंगामहाद्वारमित्यत्रगा
यंतिकाद्वारमितिपाठेगायंतिकाबिलविशेषः १६ मूर्तिःपिंडः आकृतिःसंस्थानविशेषः १७ परिवर्तोगतागतं सहस्राणिसत्रेऽन्नपरिवेषणपात्राणि कामभोज्यानिचनज्ञायंतेस्थूलदृष्टिभिरित्यर्थः
तस्मात्हिमस्थानात् १८ प्रविलीयतिहिमेननश्यति १९ ऐलविलस्यकुबेरस्य २० । २१ । २२

उशीरबीजेस्थाने २३ कनकाकरः जीमूतस्यउपसमीपेतस्थेप्रकाशंगतः । प्रकाशनस्थेयाख्ययोश्चेदितङ् २४ वत्रेब्राह्मणेभ्यः मन्नामकमेतदास्त्विति २५ उत्तराउत्कृष्टतरा २६ । २७ । २८ ॥ इतिउद्योगप० नी० भा० भा० एकादशाधिकशततमोऽध्यायः ॥ १११ ॥ ॥ ७ ॥ ॥ गरुत्मन्निति पूर्वेणपूर्वस्यांदिशि चक्षुषीअग्नीषोमौ १ । १ समागंतुंएकीभवितुं ३ । ४ सहस्रांशोर्वि

उशीरबीजेविप्रर्षेयत्रजांबूनदंसरः ॥ जीमूतस्यात्रविप्रर्षेरुपतस्थेमहात्मनः २३ साक्षाद्धिमवतःपुण्योविमलःकनकाकरः ॥ ब्राह्मणेषुचयत्कृत्स्नंस्वंतंकृत्वाधनं महत् २४ ववेधनंमहर्षिःसजैमूतंतद्धनंततः ॥ अत्रनित्यंदिशांपालाःसायंप्रातर्द्विजर्षभ २५ कस्यकार्यंकिमितिवैपरिक्रोशंतिगालव ॥ एवमेषाद्विजश्रेष्ठगुणै रन्यैर्दिगुत्तरा २६ उत्तरेतिपरिख्यातासर्वकर्मसुचोत्तरा ॥ एताविस्तरशस्तात तवसंकीर्तितादिशः २७ चतस्रःक्रमयोगेनकामाशांगंतुमिच्छसि ॥ उद्यतो ऽहंद्विजश्रेष्ठतवदर्शयितुंदिशः ॥ पृथिवींचाखिलांब्रह्मंस्तस्मादारोहमांद्विज २८ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिगालवचरिते एकादशाधिक शततमोऽध्यायः ॥ १११ ॥ ॥ ॥ ॥ गालवउवाच ॥ गरुत्मन्भुजगेंद्रारेसुपर्णविनतात्मज ॥ नयमांतार्क्ष्यपूर्वेणयत्रधर्मस्यचक्षुषी १ पूर्वमेतांदि शंगच्छयापूर्वंपरिकीर्तिता ॥ देवतानांहिसान्निध्यमत्रकीर्तितवानसि २ अत्रसत्यंचधर्मश्चत्वयासम्यक्प्रकीर्तितः ॥ इच्छेयंतुसमागंतुंसमस्तैर्दैवतैरहम् ॥ भूयश्चतान्सुरान्द्रष्टुमिच्छेयमरुणानुज ३ ॥ नारदउवाच ॥ तमाहविनतासूनुरारोहस्वेतिवैद्विजम् ॥ आरुरोहाथसमुनिर्गरुडंगालवस्तदा ४ ॥ गालव उवाच ॥ क्रममाणस्यतेरूपंदृश्यतेपन्नगाशन ॥ भास्करस्येवपूर्वाह्णेसहस्रांशोर्विवस्वतः ५ पक्षवातप्रणुन्नानांवृक्षाणामनुगामिनाम् ॥ प्रस्थितानामिवसमं पश्यामीहगतिंखग ६ ससागरवनामुर्वींसशैलवनकाननाम् ॥ आकर्षन्निवचाभासिपक्षवातेनखेचर ७ समीननागनक्रंचखमिवारोप्यतेजलम् ॥ वायुनाचैव महतापक्षवातेनचानिशम् ८ तुल्यरूपाननान्मत्स्यांस्तथातिमितिमिंगिलान् ॥ नागाश्वनरवक्त्रांश्चपश्याम्युन्मथितानिव ९ महार्णवस्यचरवैःश्रोत्रेमेब धिरेकृते ॥ नशृणोमिनपश्यामिनात्मनोवेद्मिकारणम् १० शनैःसतुभवान्यातुब्रह्मवध्यामनुस्मरन् ॥ नदृश्यतेरविस्तातनदिशोनचखंखग ११ तमएवतु पश्यामिशरीरंतेनलक्षये ॥ मणीवजात्यौपश्यामिचक्षुषीतेऽहमंडज १२ शरीरंतुनपश्यामितवचैवात्मनश्चह ॥ पदेपदेतुपश्यामिशरीरादग्निमुत्थितम् १३ समेनिर्वाप्यसहसाचक्षुषीशाम्यतेपुनः ॥ तन्नियच्छमहावेगंगमनेविनतात्मज १४ नमेप्रयोजनंकिंचिद्गमनेपन्नगाशन ॥ संनिवर्तमहाभागनवेगंविषहामिते १५ गुरवेसंश्रुतानीहशतान्यष्टौहिवाजिनाम् ॥ एकतःश्यामकर्णानांशुभ्राणांचंद्रवर्चसाम् १६ तेषांचैवापवर्गायमार्गंपश्यामिनांडज ॥ ततोऽयंजीवित त्यागेदृष्टोमार्गोमयाऽऽत्मनः १७

वस्वतइतिपक्षवातानुगामिनांगरुडप्रभयाऽवभासितानां वृक्षाणामंशुसाम्यंनिरावरणत्वंचाभिभेत्यविशेषणद्वयं एतच्चवाक्यशेषाद्व्यक्तंभविष्यति । वसआच्छादनेऽस्मात्क्विपिवःवस्त्रादितद्वान्वस्वान्तद्विपरीतोविवस्त्रानित्यर्थः ५ । ६ । ७ खमिवारो प्यतेखेःवस्थाप्यतइव ८ । ९ रवैःशब्दैः कारणंप्रयोजनमपिनवेद्मिनस्मरामि १० । ११ तेतवमणीवेति इवार्थेवशब्द १२ । १३ निर्वाप्यमंदीकृत्य १४ संनिवर्तनिवर्तस्व १५ । १६ । १७

१८ । १९ योऽस्त्मानंसंधिरार्षः कृत्रिमःस्वेच्छासंपाद्यः कालोमृत्युः २० । २१ निवर्त्तिष्याविवेत्यार्षस्तङोऽभावः २२ ॥ इतिउद्योगपर्वणिनैलकंठीये भारतभावदीपेद्वादशाधिकशततमो

नैवमेऽस्तिधनंकिंचिन्नधनेनान्वितःसुहृत् ॥ नचार्थेनापिमहताशक्यमेतद्व्यपोहितुम् १८ ॥ नारदउवाच ॥ एवंबहुचदीनंचब्रुवाणंगालवंतदा ॥ प्रत्युवाच व्रजन्नेवप्रहसन्विनतात्मजः १९ नातिप्रज्ञोऽसिविप्रर्षेयोऽऽत्मानंत्यक्तुमिच्छसि ॥ नचापिकृत्रिमःकालःकालोहिपरमेश्वरः २० किमहंपूर्वमेवेहभवतानाभिचोदितः ॥ उपायोऽत्रमहानास्तियेनैतदुपपद्यते २१ तदेषऋषभोनामपर्वतःसागरांतिके ॥ अत्रविश्रम्यभुक्त्वाचनिवर्तिष्यावगालव २२ ॥ इतिश्रीमहाभारते उद्योगपर्वणिभगवद्यानपर्वणि गालवचरितेद्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥ ॥ ७ ॥ ॥ नारदउवाच ॥ ऋषभस्यततःशृंगंनिपत्यद्विजपक्षिणौ ॥ शांडिलींब्राह्मणींतत्रददृशातेतपोन्विताम् १ अभिवाद्यसुपर्णस्तुगालवश्चाभिपूज्यताम् ॥ तयाचस्वागतेनोक्तौविष्टरेसन्निषीदतुः २ सिद्धमन्नंतयादत्तंबलिमंत्रोपबृंहितम् ॥ भुक्त्वातृप्तावुभौभूमौसुप्तौतावनुमोहितौ ३ मुहूर्तात्प्रतिबुद्धस्तुसुपर्णोगमनेप्सया ॥ अथभ्रष्टतनूजांगमात्मानंददृशेखगः ४ मांसपिंडोपमोऽभूत्समुखपादान्वितःखगः ॥ गालवस्तंतथादृष्ट्वाविमनाःपर्यपृच्छत ५ किमिदंभवताप्राप्तमिहागमनजंफलम् ॥ वासोऽयमिहकालंतुकियंतंनौभविष्यति ६ किंनुतेमनसाध्यातमशुभंधर्मदूषणम् ॥ नह्ययंभवतःस्वल्पोव्यभिचारोभविष्यति ७ सुपर्णोऽथाब्रवीद्विप्रंप्रध्यातंवैमयाद्विज ॥ इमांसिद्धामितोनेतुंतत्रयत्रप्रजापतिः ८ यत्रदेवोमहादेवोयत्रविष्णुःसनातनः ॥ यत्रधर्मश्चयज्ञश्चतत्रेयंनिवसेदिति ९ सोऽहंभगवतींयाचेप्रणतःप्रियकाम्यया ॥ मयैतन्नामप्रध्यातंमनसाशोचताकिल १० तदेवंबहुमानात्तेमयेहानीप्सितंकृतम् ॥ सुकृतंदुष्कृतंवात्वंमाहात्म्यात्क्षंतुमर्हसि ११ सातौतदाऽब्रवीत्तुष्टापतगेंद्रद्विजर्षभौ ॥ नभेतव्यंसुपर्णोऽसिसुपर्णत्यजसंभ्रमम् १२ निंदिताऽस्मित्वयावत्सनचनिंदांक्षमाम्यहम् ॥ लोकेभ्यःसपदिभ्रश्येद्योमांनिंदेतपापकृत् १३ हीनयाऽलक्षणैःसर्वैस्तथाऽनिंदितयामया ॥ आचारंप्रतिगृह्णंत्यासिद्धिःप्राप्तेयमुत्तमा १४ आचारःफलतेधर्ममाचारःफलतेधनम् ॥ आचाराच्छ्रियमाप्नोतिआचारोहंत्यलक्षणम् १५ तदायुष्मन्खगपतेयथेष्टंगम्यतामितः ॥ नचतेगर्हणीयाऽहंगर्हितव्याःस्त्रियःक्वचित् १६ भवितासियथापूर्वंबलवीर्यसमन्वितः ॥ बभूवतुस्ततस्तस्यपक्षौद्रविणवत्तरौ १७ अनुज्ञातस्तुशांडिल्यायथागतमुपागमत् ॥ नैवचासादयामासतथारूपांस्तुरंगमान् १८ विश्वामित्रोऽथतंदृष्ट्वागालवंचाध्वनिस्थितः ॥ उवाचवदतांश्रेष्ठोवैनतेयस्यसन्निधौ १९ यस्त्वयास्वयमेवार्थःप्रतिज्ञातोममद्विज ॥ तस्यकालोऽपवर्गस्ययथावामन्यतेभवान् २० प्रतीक्षिष्याम्यहंकालमेतावंतंतथापरम् ॥ यथासंसिद्ध्यतेविप्रसमार्गस्तुनिशम्यताम् २१ सुपर्णोऽथाब्रवीद्दीनंगालवंभृशदुःखितम् ॥ प्रत्यक्षंखल्विदानींमेविश्वामित्रोयदुक्तवान् २२

ऽध्यायः ॥ ११२ ॥ ॥ ७ ॥ ॥ ऋषभस्येति ॥ १ । २ । ३ भ्रष्टतनूजंछिन्नपक्षमंगंयस्यतंभ्रष्टतनूजांगं ४ । ५ । ६ व्यभिचारोधर्मातिक्रमः ७ । ८ । ९ शोचताकथमियमत्रवसतीति १० । ११ । १२ । १३ । १४ । १५ । १६ द्रविणवत्तरौबलवत्तरौ १७ । १८ । १९ अपवर्गस्यफलप्राप्तेः २० निशम्यतांविचार्यतां २१ । २२

आसितुंस्थातुं २३ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपेत्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥ ॥ हिरण्यपदप्रवृत्तिनिमित्तमाह निर्मितमिति भूम्यंतर्गतमेवपार्थिवेषुपांसुषुवह्नि नाधम्यमानेषुव्यक्तीभवतीतिवह्निनानिर्मितं वायुनावह्निमुद्दीपयताविशोधितं वायुनावर्धितमित्यपिपाठः सर्वंजगत्हिरण्मयंहिरण्यप्रधानं तेनभूमेःसारत्वात्शुद्धत्वात्सर्वजगन्मोहकत्वाच्चहिरण्य मित्युच्यतइत्यर्थः १ धत्तेपुष्णाति धारयतेजीवयति २ नित्यमिति प्रोष्ठपदाभ्यामितितृतीया मूलेनावाहयेद्देवीमितिवत्सप्तम्यर्थं । तेनतस्मिन्नक्षत्रद्वयेशुक्रेशुक्रवासरेतद्योगेसतिशुक्रोऽग्निःधनपतौ

तदागच्छाद्विजश्रेष्ठमंत्रयिष्यावगालव ॥ नादत्वागुरवेशक्यंकृत्स्नमर्थंत्वयाऽऽसितुम् २३ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिगालवचरितेत्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥ ॥ नारदउवाच ॥ अथाहगालवंदीनंसुपर्णःपततांवरः ॥ निर्मितंवह्निनाभूमौवायुनाशोधितंतथा ॥ यस्माद्धिरण्मयंसर्वंहिरण्यंतेनचोच्यते १ धत्तेधारयतेचेदमेतस्मात्कारणाद्धनम् ॥ तदेतत्त्रिषुलोकेषुधनंतिष्ठतिशाश्वतम् २ नित्यंप्रोष्ठपदाभ्यांचशुक्रेधनपतौतथा ॥ मनुष्येभ्यःसमादत्तेशुक्रश्चित्तार्जितंधनम् ३ अजैकपादहिर्बुध्न्यैरक्ष्यतेधनदेनच ॥ एवंनशक्यतेलब्धुमलब्धव्यंद्विजर्षभ ॥ ऋतेचधनमश्वानांनावाप्तिर्विद्यतेतव ४ सत्वंयाचात्रराजानंकंचिद्राजर्षिवंशजम् ॥ अपीड्यराजापौरान्हियोनौकुर्यात्कृतार्थिनौ ५ अस्तिसोमान्ववायेमेजातःकश्चिन्नृपःसखा ॥ अभिगच्छावहेतंवैतस्यास्तिविभवोभुवि ६ ययातिर्नामराजर्षिर्नाहुषःसत्यविक्रमः ॥ सदास्यतिमयाचोक्तोभवताचार्थितःस्वयम् ७ विभवश्चास्यसुमहानासीद्धनपतेरिव ॥ एवंगुरुधनंविद्वन्दानेनैवविशोधय ८ तथातौकथयंतौचचिंतयंतौचयत्क्षमम् ॥ प्रतिष्ठानेनरपतिंययातिंप्रत्युपस्थितौ ९ प्रतिगृह्यचसत्कारैरर्घ्यपाद्यादिकंवरम् ॥ पृष्टश्चागमनेहेतुमुवाचविनतासुतः १० अयंमेनाहुषसखागालवस्तपसोनिधिः ॥ विश्वामित्रस्यशिष्योऽभूद्वर्षाण्ययुतशोनृप ११ सोऽयंतेनाभ्यनुज्ञातउपकारेप्सयाद्विजः ॥ तमाहभगवान्कालेददानिगुरुदक्षिणाम् १२ असकृत्तेनचोक्तेनकिंचिदागतमन्युना ॥ अयमुक्तःप्रयच्छेतिजानताविभवंलघु १३ एकतःश्यामकर्णानांशुभ्राणांशुद्धजन्मनाम् ॥ अष्टौशतानिमेदेहिहयानांचंद्रवर्चसाम् १४ गुर्वर्थोदीयतामेषयदिगालवमन्यसे ॥ इत्येवमाहसक्रोधोविश्वामित्रस्तपोधनः १५ सोऽयंशोकेनमहतातप्यमानोद्विजर्षभः ॥ अशक्तःप्रतिकर्तुंतद्भवंतंशरणंगतः १६ प्रतिगृह्यनरव्याघ्रत्वत्तोभिक्षांगतव्यथः ॥ कृत्वाऽपवर्गंगुरवेचरिष्यतिमहत्तपः १७ तपसःसंविभागेनभवंतमपियोक्ष्यते ॥ स्वेनराजर्षितपसापूर्णंत्वांपूरयिष्यति १८ यावंतिरोमाणिहयेभवंतिहिनरेश्वर ॥ तावंतोवाजिनोलोकान्प्राप्नुवंतिमहीपते १९

कुबेरस्यवृद्धचर्थंमनुष्येभ्यःसंप्रदानेभ्यःधनंदत्तेददाति शुक्रश्चित्तार्जितमित्यनेनवह्निरेवस्स्वंतस्यप्रदर्श्यते । 'शुक्रःकाव्येऽनलेज्येष्ठे'इतिविश्वः । धनार्थीउक्तनक्षत्रवारयोगेवह्निंप्रार्थयेत् तद्वधनं यागादिद्वाराभूमौनिखननेनवासर्वंकुबेरंप्रत्येवगच्छतीतिभावः ,३ अजेति अजएकपात्पूर्वप्रोष्ठपदादेवता अहिर्बुध्न्यउत्तरप्रोष्ठपदादेवता धनदश्वतदध्यक्षस्तस्मादेतान्प्रार्थयताधनंलब्धुंशक्यं नान्यथेत्यर्थः ४ याचयाचस्व यःराजा नौआवा ५ । ६ । विशोधयपरिहर ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९

२० ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेचतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥ ॥ ७ ॥ ॥ एवमुक्तइति १ । २ । ३ । ४ । ५ । ६ । ७ हताशोऽतिथिरितिशेषः ८
९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेपंचदशाधिकशततमोऽध्यायः ॥ ११५ ॥ ॥ हर्यश्वइति

पात्रंप्रतिग्रहस्यायंदातुंपात्रंतथाभवान् ॥ शंखेक्षीरमिवासक्तंभवत्वेतत्तथोपमम् २० ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणि गालवचरितेचतुर्द
शाधिकशततमोऽध्यायः ॥ ११४ ॥ ॥ ७ ॥ ॥ नारदउवाच ॥ एवमुक्तःसुपर्णेनतथ्यंवचनमुत्तमम् ॥ विमृश्यावहितोराजानिश्चित्यचपुनःपुनः १
यष्टाक्रतुसहस्राणांदातादानपतिःप्रभुः ॥ ययातिःसर्वकाशीशइदंवचनमब्रवीत् २ दृष्ट्वाप्रियसखंतार्क्ष्यंगालवंचद्विजर्षभम् ॥ निदर्शनंचतपसोभिक्षांश्लाघ्यां
चकीर्तिताम् ३ अतीत्यचनृपानन्यानादित्यकुलसंभवान् ॥ मत्सकाशमनुप्राप्तावेतौबुद्धिमवेक्ष्यच ४ अद्यमेसफलंजन्मतारितंचाद्यमेकुलम् ॥ अद्यायंतारि
तोदेशोममतार्क्ष्यत्वयाऽनघ ५ वक्तुमिच्छामितुसखेयथाजानासिमांपुरा ॥ नतथावित्तवानस्मिक्षीणंवित्तंचमेसखे ६ नचशक्तोऽस्मितेकर्तुंमोघमागमनंख
ग ॥ नचाशामस्यविप्रर्षेर्वितथींकर्तुमुत्सहे ७ तत्तुदास्यामियत्कार्यमिदंसंपादयिष्यति ॥ अभिगम्यहताशोहिनिवृत्तोदहतेकुलम् ८ नातःपरंवैनतेयकिंचित्पा
पिष्ठमुच्यते ॥ यथाऽऽशानाशनाल्लोकेदेहिनास्तीतिवावचः ९ हताशोह्यकृतार्थःसन्हतःसंभावितोनरः ॥ हिनस्तितस्यपुत्रांश्चपौत्रांश्चाकुर्वतोहितम् १०
तस्माच्चतुर्णांवंशानांस्थापयित्रीसुतामम ॥ इयंसुरसुतप्रख्यासर्वधर्मोपचायिनी ११ सदादेवमनुष्याणामसुराणांचगालव ॥ कांक्षितारूपतोबालासुतामेप्र
तिगृह्यताम् १२ अस्याःशुल्कंप्रदास्यंतिनृपाराज्यमपिध्रुवम् ॥ किंपुनःश्यामकर्णानांहयानांद्वेचतुःशते १३ सभवान्प्रतिगृह्णातुममैतांमाधवींसुताम् ॥
अहंदौहित्रवान्स्यांवैवरएषममप्रभो १४ प्रतिगृह्यचतांकन्यांगालवःसहपक्षिणा ॥ पुनर्द्रक्ष्यावइत्युक्त्वाप्रतस्थेसहकन्यया १५ उपलब्धमिदंद्वारमश्वानामि
तिचांडजः ॥ उक्त्वागालवमापृच्छ्यजगामभवनंस्वकम् १६ गतेपतगराजेतुगालवःसहकन्यया ॥ चिंतयानःक्षमंदानेराज्ञांवैशुल्कतोऽगमत् १७ सोऽगच्छ
न्मनसेक्ष्वाकुंहर्यश्वंराजसत्तमम् ॥ अयोध्यायांमहावीर्यंचतुरंगबलान्वितम् १८ कोशधान्यबलोपेतंप्रियपौरंद्विजप्रियम् ॥ प्रजाभिकामंशाम्यंतंकुर्वाणंतप
उत्तमम् १९ तमुपागम्यविप्रःसहर्यश्वंगालवोऽब्रवीत् ॥ कन्येयंममराजेंद्रप्रसवैःकुलवर्धिनी २० इयंशुल्केनभार्यार्थंहर्यश्वप्रतिगृह्यताम् ॥ शुल्कंतेकीर्तयिष्या
मितच्छ्रुत्वासंप्रधार्यताम् २१ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिगालवचरितेपंचदशाधिकशततमोऽध्यायः ॥ ११५ ॥ नारदउवाच ॥ हर्यश्वस्त्व
ब्रवीद्राजाविचिंत्यबहुधाततः ॥ दीर्घमुष्णंचनिःश्वस्यप्रजाहेतोर्नृपोत्तमः १ उन्नतेषून्नताषट्सुसूक्ष्मासूक्ष्मेषुसप्तसु ॥ गंभीरात्रिषुगंभीरेष्वियंरक्ताचपंचसु २

१ षट्सुकरपृष्ठयोःपादपृष्ठयोःकुचयोश्च । स्तनयोर्नितंबयोश्चक्षुषोश्चेतिप्राञ्चः । 'वक्षःकुक्ष्यलककरकंधकरवकंपङुन्नतम्'इति काशीखंडोक्तिः । सप्तसुसूक्ष्मा त्वक्केशदशनेषुकरांगुलिषुपादांगुलिषु
तदुभयपर्वसुचसूक्ष्मा । त्रिषु स्वरसत्वनाभिषुगंभीरा । पंचसु पाणितलेनेत्रांतेताल्वनिजिह्वायांअधरोष्ठेचरक्ता २

बहुभिर्देवैरसुरैश्च अलोकयितुं योग्या बहुदेवासुरालोका गंधर्वाणां दर्शनं शास्त्रं गीतादिविद्या यस्यां सा तथा ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७

बहुदेवासुरालोकाबहुगंधर्वदर्शना ॥ बहुलक्षणसंपन्नाबहुप्रसवधारिणी ३ समर्थेयंजनयितुंचक्रवर्तिनमात्मजम् ॥ ब्रूहिशुल्कंद्विजश्रेष्ठसमीक्ष्यविभवंमम ४ ॥ गालवउवाच ॥ एकतःश्यामकर्णानांशतान्यष्टौप्रयच्छमे ॥ हयानांचंद्रशुभ्राणांदेशजानांवपुष्मताम् ५ ततस्तवभवित्रीयंपुत्राणांजननीशुभा ॥ अरणीवहुताशानांयोनिरायतलोचना ६ ॥ नारदउवाच ॥ एतच्छ्रुत्वावचोराजाहर्यश्वःकाममोहितः ॥ उवाचगालवंदीनोराजर्षिर्ऋषिसत्तमम् ७ द्वेमेशतेसंनिहितेहयानांयद्विधास्तव ॥ एष्टव्याःशतशस्त्वन्येचरंतिममवाजिनः ८ सोऽहमेकमपत्यंवैजनयिष्यामिगालव ॥ अस्यामेतंभवान्कामंसंपादयतुमेवरम् ९ एतच्छ्रुत्वातुसाकन्यागालवंवाक्यमब्रवीत् ॥ ममदत्तोवरःकश्चित्केनचिद्ब्रह्मवादिना १० प्रसूत्यंतेप्रसूत्यंतेकन्यैवत्वंभविष्यसि ॥ सत्वंददस्वमांराज्ञेप्रतिगृह्यहयोत्तमान् ११ नृपेभ्योहिचतुर्भ्यस्तेपूर्णान्यष्टौशतानिमे ॥ भविष्यंतितथापुत्राममचत्वारएवच १२ क्रियतामुपसंहारोगुर्वर्थंद्विजसत्तम ॥ एषातावन्ममप्रज्ञायथावामन्यसेद्विज १३ एवमुक्तस्तुसमुनिःकन्ययागालवस्तदा ॥ हर्यश्वंपृथिवीपालमिदंवचनमब्रवीत् १४ इयंकन्यानरश्रेष्ठहर्यश्वप्रतिगृह्यताम् ॥ चतुर्भागेनशुल्कस्यजनयस्वैकमात्मजम् १५ प्रतिगृह्यसतांकन्यांगालवंप्रतिनंद्यच ॥ समयेदेशकालेचलब्धवान्सुतमीप्सितम् १६ ततोवसुमनानामवसुभ्योवसुमत्तरः ॥ वसुप्रख्योनरपतिःसबभूववसुप्रदः १७ अथकालेपुनर्धीमान्गालवःप्रत्युपस्थितः ॥ उपसंगम्यचोवाचहर्यश्वंप्रीतमानसम् १८ जातोनृपसुतस्तेऽयंबालोभास्करसंनिभः ॥ कालोगंतुंनरश्रेष्ठभिक्षार्थमपरंनृपम् १९ हर्यश्वःसत्यवचनेस्थितःस्थित्वाचपौरुषे ॥ दुर्लभत्वाद्धयानांचप्रददौमाधवींपुनः २० माधवीचपुनर्दीप्तांपरित्यज्यनृपश्रियम् ॥ कुमारीकामतोभूत्वागालवंपृष्ठतोऽन्वयात् २१ त्वय्येवतावत्तिष्ठंतुहयाइत्युक्तवान्द्विजः ॥ प्रययौकन्ययासार्धंदिवोदासंप्रजेश्वरम् २२ ॥ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणि गालवचरितेषोडशाधिकशततमोऽध्यायः ॥ ११६ ॥ ॥ गालवउवाच ॥ ॥ महावीर्योमहीपालःकाशीनामीश्वरःप्रभुः ॥ दिवोदासइतिख्यातोभैमसेनिर्नराधिपः १ तत्रगच्छावहेभद्रेशनैरागच्छमाशुचः ॥ धार्मिकःसंयमेयुक्तःसत्येचैवजनेश्वरः २ ॥ ॥ नारदउवाच ॥ ॥ तमुपागम्यसमुनिर्न्यायतस्तेनसत्कृतः ॥ गालवःप्रसवस्यार्थेतंनृपंप्रत्यचोदयत् ३ ॥ ॥ दिवोदासउवाच ॥ ॥ श्रुतमेतन्मयापूर्वंकिमुक्त्वाविस्तरंद्विज ॥ कांक्षितोहिमयैषोऽर्थःश्रुत्वैवद्विजसत्तम ४ एतच्चमेबहुमतंयदुत्सृज्यनराधिपान् ॥ मामेवमुपयातोऽसिभावि चैतदसंशयम् ५ सएवविभवोऽस्माकमश्वानामपिगालव ॥ अहमप्येकमेवास्यांजनयिष्यामिपार्थिवम् ६

१८ । १९ । २० कामतइच्छयायोगबलेनकुमारीभूत्वा यौवनंपरित्यज्येत्यर्थः २१ । २२ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेषोडशाधिकशततमोऽध्यायः ॥ ११६ ॥ ॥ ७ ॥
महावीर्यइति १ । २ । ३ । ४ । ५ । ६

७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

तथेत्युक्त्वाद्विजश्रेष्ठःप्रादात्कन्यांमहीपतेः ॥ विधिपूर्वंचतांराजाकन्यांप्रतिगृहीतवान् ७ रेमेसतस्यांराजर्षिःप्रभावत्यांयथारविः ॥ स्वाहायांचयथावह्निर्यथा
शच्यांचवासवः ८ यथाचंद्रश्चरोहिण्यांयथाधूमोर्णयायमः ॥ वरुणश्चयथागौर्यांयथाचर्ध्यांधनेश्वरः ९ यथानारायणोलक्ष्म्यांजाह्नव्यांचयथोदधिः ॥ यथा
रुद्रश्चरुद्राण्यांयथावेद्यांपितामहः १० अदृश्यंत्यांचवासिष्ठोवसिष्ठश्चाक्षमालया ॥ च्यवनश्चसुकन्यायांपुलस्त्यःसंध्ययायथा ११ अगस्त्यश्चापिवैदर्भ्यांसा
वित्र्यांसत्यवान्यथा ॥ यथाभृगुःपुलोमायामदित्यांकश्यपोयथा १२ रेणुकायांयथार्चीकोहैमवत्यांचकौशिकः ॥ बृहस्पतिश्चतारायांशुक्रश्चशतपर्वणा १३
यथाभूम्यांभूमिपतिरुर्वश्यांचपुरूरवाः ॥ ऋचीकःसत्यवत्यांचसरस्वत्यांयथामनुः १४ शकुंतलायांदुष्यंतोधृत्यांधर्मश्चशाश्वतः ॥ दमयंत्यांनलश्चैवसत्यव
त्यांचनारदः १५ जरत्कारुर्जरत्कार्वांपुलस्त्यश्चप्रतीच्यया ॥ मेनकायांयथोर्णायुस्तुंबुरुश्चैवरंभया १६ वासुकिःशतशीर्षायांकुमार्यांचधनंजयः ॥ वैदेह्यांच
यथारामोरुक्मिण्यांचजनार्दनः १७ तथातुरममाणस्यांदिवोदासस्यभूपतेः ॥ माधवीजनयामासपुत्रमेकंप्रतर्दनम् १८ अथाजगामभगवान्दिवोदासंसगालवः ॥
समयेसमनुप्राप्तेवचनंचेदमब्रवीत् १९ निर्यातयतुमेकन्यांभवांस्तिष्ठंतुवाजिनः ॥ यावदन्यत्रगच्छामिशुल्कार्थंपृथिवीपते २० दिवोदासोऽथधर्मात्मासमयेगाल
वस्यताम् ॥ कन्यांनिर्यातयामासस्थितःसत्येमहीपतिः २१ ॥ इतिश्रीम० भा० उ० प० भगवद्यानप० गालवचरितेसप्तदशाधिकशततमोऽध्यायः॥ ११७॥
॥ नारदउवाच ॥ तथैवतांश्रियंत्यक्त्वाकन्याभूत्वायशस्विनी ॥ माधवीगालवंविप्रमभ्ययात्सत्यसंगरा १ गालवोविमृशन्नेवस्वकार्यगतमानसः ॥ जगामभोजन
गरंद्रष्टुमौशीनरंनृपम् २ तमुवाचाथगत्वासनृपतिंसत्यविक्रमम् ॥ इयंकन्यासुतौद्वौतेजनयिष्यतिपार्थिवौ ३ अस्यांभवानवाप्तार्थोभविताप्रेत्यचेहच ॥ सोमा
र्कप्रतिसंकाशौजनयित्वासुतौनृप ४ शुल्कंतुसर्वधर्मज्ञहयानांचंद्रवर्चसाम् ॥ एकतःश्यामकर्णानांदेयंमह्यंचतुःशतम् ५ गुर्वर्थोऽयंसमारंभोनहयैःकृत्यमस्ति
मे ॥ यदिशक्यंमहाराजाक्रियतामविचारितम् ६ अनपत्योऽसिराजर्षेपुत्रौजनयपार्थिव ॥ पितॄन्पुत्रप्लवेनत्वमात्मानंचैवतारय ७ नपुत्रफलभोक्ताहिराजर्षे
पात्यतेदिवः ॥ नयातिनरकंघोरंयथागच्छंत्यनात्मजाः ८ एतच्चान्यच्चविविधंश्रुत्वागालवभाषितम् ॥ उशीनरःप्रतिवचोददौतस्यनराधिपः ९ श्रुतवान
स्मितेवाक्यंयथावदसिगालव ॥ विधिस्तुबलवान्ब्रह्मन्प्रवणंहिमनोमम १० शतेद्वेतुममाश्वानामीदृशानांद्विजोत्तम ॥ इतरेषांसहस्राणिसुबहूनिचरंतिमे ११
अहमप्येकमेवास्यांजनयिष्यामिगालव॥ पुत्रंद्विजगतंमार्गंगमिष्यामिपरैरहम् १२ मूल्येनापिसमंकुर्यांतवाहंद्विजसत्तम॥ पौरजानपदार्थंतुममार्थोनात्मभोगतः १३

तथेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ प्रवणंपुत्रोत्पत्तौतत्परं १० । ११ । १२ । १३

१४ । १५ । १६ । १७ । १८ । १९ । २० । २१ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिनीलकंठीयेभारतभावदीपे अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥ ॥ ७ ॥ गालवमिति



कामतोहिधनंराजापारक्यंयंःप्रयच्छति ॥ नसधर्मेणधर्मात्मन्युज्यतेयशसानच १४ सोहंप्रतिग्रहीष्यामिददात्वेतांभवान्मम ॥ कुमारींदेवगर्भाभामेकपुत्रभवायमे १५ तथातुबहुधाकन्यामुक्तवंतंनराधिपम् ॥ उशीनरंद्विजश्रेष्ठोगालवःप्रत्यपूजयत् १६ उशीनरंप्रतिग्राह्यगालवःप्रययौवनम् ॥ रेमेसतांसमासाद्यकृतपुण्य इवश्रियम् १७ कंदरेषुचशैलानांनदीनांनिर्झरेषुच ॥ उद्यानेषुविचित्रेषुवनेषूपवनेषुच १८ हर्म्येषुरमणीयेषुप्रासादशिखरेषुच ॥ वातायनविमानेषुतथागर्भ गृहेषुच १९ ततोऽस्यसमयेजज्ञेपुत्रोबालरविप्रभः ॥ शिबिर्नाम्नाऽभिविख्यातोयःसपार्थिवसत्तमः २० उपस्थायसतंविप्रोगालवःप्रतिगृह्यच ॥ कन्यांप्रयात स्तांराजन्दृष्टवान्विनतात्मजम् २१ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिगालवचरितेअष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥ ॥

नारदउवाच ॥ गालवंवैनतेयोऽथप्रहसन्निदमब्रवीत् ॥ दिष्ट्याकृतार्थंपश्यामिभवंतमिहवैद्विज १ गालवस्तुवचःश्रुत्वावैनतेयेनभाषितम् ॥ चतुर्भागावशिष्टं तदाचख्यौकार्यमस्यहि २ सुपर्णस्त्वब्रवीदेनंगालवंवदतांवरः ॥ प्रयत्नस्तेनकर्तव्योनैषसंपत्स्यतेतव ३ पुराहिकान्यकुब्जेवैगाधेःसत्यवतींसुताम् ॥ भार्यार्थे वरयत्कन्यामृचीकस्तेनभाषितः ४ एकतःश्यामकर्णानांहयानांचंद्रवर्चसाम् ॥ भगवन्दीयतांमह्यंसहस्रमितिगालव ५ ऋचीकस्तुतथेत्युक्त्वावरुणस्यालयं गतः ॥ अश्वतीर्थेहयाँल्लब्ध्वादत्तवान्पार्थिवायवै ६ इष्ट्वातेपुंडरीकेणदत्ताराज्ञाद्विजातिषु ॥ तेभ्योद्वेद्वेशतेक्रीत्वाप्राप्तेतैःपार्थिवैस्तदा ७ अपराण्यपिचत्वा रिशतानिद्विजसत्तम ॥ नीयमानानिसंतारेहृतान्यासन्वितस्तया ८ एवंनशक्यमप्राप्यंप्राप्तुंगालवकर्हिचित् ॥ इमामश्वशताभ्यांवैद्वाभ्यांतस्मैनिवेदय ९ विश्वामित्रायधर्मात्मन्षड्भिरश्वशतैःसह ॥ ततोऽसिगतसंमोहःकृतकृत्योद्विजोत्तम १० गालवस्तंतथेत्युक्त्वासुपर्णसहितस्ततः ॥ आदायाश्वांश्चकन्यांचवि श्वामित्रमुपागमत् ११ अश्वानांकांक्षितार्थानांषडिमानिशतानिवै ॥ शतद्वयेनकन्येयंभवताप्रतिगृह्यताम् १२ अस्यांराजर्षिभिःपुत्राजातावैधार्मिकास्त्रयः चतुर्थंजनयत्वेकंभवानपिनरोत्तमम् १३ पूर्णान्येवंशतान्यष्टौतुरगाणांभवंतुते ॥ भवतोह्यनृणोभूत्वातपःकुर्यांयथासुखम् १४ विश्वामित्रस्तुतंदृष्ट्वागालवंसहप क्षिणा ॥ कन्यांचतांवरारोहामिदमित्यब्रवीद्वचः १५ किमियंपूर्वमेवेहनदत्ताममगालव ॥ पुत्राममैवचत्वारोभवेयुःकुलभावनाः १६ प्रतिगृह्णामितेकन्यामेकपुत्रफ लायवै ॥ अश्वाश्चाश्रममासाद्यचरंतुममसर्वशः १७ सतयारममाणोऽथविश्वामित्रोमहाद्युतिः ॥ आत्मजंजनयामासमाधवीपुत्रमष्टकम् १८ जातमात्रंसुतंतंच विश्वामित्रोमहामुनिः ॥ संयोज्यार्थैस्तथाधर्मैरश्वैस्तैःसमयोजयत् १९ अथाष्टकःपुरंप्रायात्तदासोमपुरप्रभम् ॥ निर्यात्यकन्यांशिष्यायकौशिकोऽपिवनंययौ २०

१ । २ । ३ । ४ । ५ । ६ । ७ संतारेमार्गे ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ निर्यात्यप्रत्यर्प्य शिष्यायगालवाय २०

२१ । २२ । २३ । २४ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपेएकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥ सतुराजाआश्रमपदमुपगम्यकर्तुकामःअभूदितिशेषः १ पर्यधावतांवरान्वेषणा

गालवोऽपिसुपर्णेनसहनिर्यात्यदक्षिणाम् ॥ मनसाऽतिप्रतीतेनकन्यामिदमुवाचह २१ जातोदानपतिःपुत्रस्त्वयाशूरस्तथापरः ॥ सत्यधर्मरतश्चान्योयज्वा चापितथापरः २२ तदागच्छवरारोहेतारितस्तेपितासुतैः ॥ चत्वारश्चैवराजानस्तथाचाहंसुमध्यमे २३ गालवस्त्वभ्यनुज्ञायसुपर्णंपन्नगाशनम् ॥ पितुर्निर्या त्यतांकन्यांप्रययौवनमेवह २४ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिगालवचरितेएकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥ नारदउवाच ॥ सतुराजापुनस्तस्याःकर्तुकामःस्वयंवरम् ॥ उपगम्याश्रमपदंगंगायमुनसंगमे १ गृहीतमाल्यदामांतांरथमारोप्यमाधवीम् ॥ पूरुर्यदुश्चभगिनीमाश्रमेपर्यधावतां २ नागयक्षमनुष्याणांगंधर्वमृगपक्षिणाम् ॥ शैलद्रुमवनौकानामासीत्तत्रसमागमः ३ नानापुरुषदेश्यानामीश्वरैश्चसमाकुलम् ॥ ऋषिभिर्ब्रह्मकल्पैश्चसमंतादा वृतंवनम् ४ निर्दिश्यमानेषुतुसावरेषुवरवर्णिनी ॥ वरानुत्क्रम्यसर्वांस्तान्वरंवृतवतीवनम् ५ अवतीर्यरथात्कन्यानमस्कृत्यचबंधुषु ॥ उपगम्यवनंपुण्यंतप स्तेपेययातिजा ६ उपवासैश्वविविधैर्दीक्षाभिर्नियमैस्तथा ॥ आत्मनोलघुतांकृत्वाबभूवमृगचारिणी ७ वैदूर्यांकुरकल्पानिमृदूनिहरितानिच ॥ चरंतीश्ल क्ष्णशष्पाणितिक्तानिमधुराणिच ८ स्रवंतीनांचपुण्यानांसुरसानिशुचीनिच ॥ पिबंतीवारिमुख्यानिशीतानिविमलानिच ९ वनेषुमृगराजेषुव्याघ्रविप्रोषिते षुच ॥ दावाग्निविप्रयुक्तेषुशून्येषुगहनेषुच १० चरंतीहरिणैःसार्धंमृगीववनचारिणी ॥ चचारविपुलंधर्मंब्रह्मचर्येणसंवृतम् ११ ययातिरपिपूर्वेषांराज्ञांवृतम नुष्ठितः ॥ बहुवर्षसहस्रायुर्युयुजेकालधर्मणा १२ पूरुर्यदुश्चद्वौवंशेवर्धमानौनरोत्तमौ ॥ ताभ्यांप्रतिष्ठितोलोकेपरलोकेचनाहुषः १३ महीयतेनरपतिर्यया तिःस्वर्गमास्थितः ॥ महर्षिकल्पोनृपतिःस्वर्गाग्र्यफलभुग्विभुः १४ बहुवर्षसहस्राख्येकालेबहुगुणेगते ॥ राजर्षिषुनिषण्णेषुमहीयःसुमहर्षिषु १५ अवमेने नरान्सर्वान्देवानृषिगणांस्तथा ॥ ययातिर्मूढविज्ञानोविस्मयाविष्टचेतनः १६ ततस्तंबुबुधेदेवःशक्रोबलनिषूदनः ॥ तेचराजर्षयःसर्वेधिग्धिगित्येवमब्रुवन् १७ विचारश्चसमुत्पन्नोनिरीक्ष्यनहुषात्मजम् ॥ कोन्वयंकस्यवाराज्ञःकथंवास्वर्गमागतः १८ कर्मणाकेनसिद्धोऽयंक्वाऽनेनतपश्चितम् ॥ कथंवाज्ञायतेस्वर्गे केनवाज्ञायतेऽप्युत १९ एवंविचारयंतस्तेराजानंस्वर्गवासिनः ॥ दृष्ट्वापप्रच्छुरन्योन्यंययातिंनृपतिंप्रति २० विमानपालाःशतशःस्वर्गद्वाराभिरक्षिणः ॥ पृष्टाआसनपालाश्चनजानीमेत्यथाब्रुवन् २१ सर्वेतेह्यावृतज्ञानानाभ्यजानंततंनृपम् ॥ समुहूर्तादथनृपोहतौजाश्चाभवत्तदा २२ ॥ इतिश्रीमहाभारतेउद्योग पर्वणि भगवद्यानपर्वणि गालवचरिते ययातिमोहे विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥ ॥

येत्यर्थः २ । ३ । ४ वनंवनवासं ५ । ६ । आत्मनःचित्तस्यलघुतांरागद्वेषादिमलराहित्येनसूक्ष्मार्थभेदनेशीघ्रतां ७ । ८ । ९ व्याघ्राणांविप्रोषितंपर्यटनंयेषु १० । ११ युयुजेयोगंप्राप्तवान् कालध र्मणामृत्युना १२ नाहुषःययातिः १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

अथेति १ । २ । ३ धर्मदूषणंपुण्यनाशकं ४ । ५ । ६ । ७ प्रज्ञायसेहीनतेजस्त्वेनअप्रकाशत्वात् ८।९ शिबिरौशीनरइत्येकः १०। ११ एकइवशब्दःपादपूरणार्थः गंगांनदीमिवधूममयींलेखामा

॥ नारदउवाच ॥ अथप्रचलितःस्थानादासनाच्चपरिच्युतः ॥ कंपितेनेवमनसाधर्षितःशोकवन्हिना १ म्लानस्रग्भ्रष्टविज्ञानःप्रभ्रष्टमुकुटांगदः ॥ विघूर्णन्स्र स्तसर्वांगःप्रभ्रष्टाभरणांबरः २ अदृश्यमानस्तान्पश्यन्नपश्यंश्चपुनःपुनः ॥ शून्यःशून्येनमनसाप्रपतिष्यन्महीतलम् ३ किंमयामनसाध्यातमशुभंधर्मदू षणम् ॥ येनाहंचलितःस्थानादितिराजाव्यचिंतयत् ४ तेतुतत्रैवराजानःसिद्धाश्चाप्सरसस्तथा ॥ अपश्यंतनिरालंबंतंययातिंपरिच्युतम् ५ अथैत्यपु रुषःकश्चित्क्षीणपुण्यनिपातकः ॥ ययातिमब्रवीद्राजन्देवराजस्यशासनात् ६ अतीवमदमत्तस्त्वंनकंचिन्नावमन्यसे ॥ मानेनभ्रष्टःस्वर्गस्तेनार्हस्त्वंपार्थिवा त्मज ७ नचप्रज्ञायसेगच्छपतस्वेतितमब्रवीत् ॥ पतेयंसत्स्वितिवचस्त्रिरुक्त्वानहुषात्मजः ८ पतिष्यंश्चिंतयामासगतिंगतिमतांवरः ॥ एतस्मिन्नेवकालेतु नैमिषेपार्थिवर्षभान् ९ चतुरोऽपश्यतनृपस्तेषांमध्येपपातह ॥ प्रतर्दनोवसुमनाःशिबिरौशीनरोऽष्टकः १० वाजपेयेनयज्ञेनतर्पयंतिसुरेश्वरम् ॥ तेषाम ध्वरजंधूमंस्वर्गद्वारमुपस्थितम् ११ ययातिरुपाजिघ्रन्वैनिपपातमहींप्रति ॥ भूमौस्वर्गेचसंबद्धांनदींधूममयीमिव ॥ गंगांगामिवगच्छंतीमालंब्यजगतीपतिः १२ श्रीमत्स्ववभृथाग्र्येषुचतुर्षुप्रतिबंधुषु ॥ मध्येनिपतितोराजालोकपालोपमेषुसः १३ चतुर्षुहुतकल्पेषुराजसिंहमहाग्निषु ॥ पपातमध्येराजर्षिर्ययातिः पुण्यसंक्षये १४ तमाहुःपार्थिवासर्वेदीप्यमानमिवश्रिया ॥ कोभवान्कस्यवाबंधुर्देशस्यनगरस्यवा १५ यक्षोवाऽप्यथवादेवोगंधर्वोराक्षसोऽपिवा ॥ नहिमानु षरूपोऽसिकोवाऽर्थःकांक्ष्यतेत्वया १६ ॥ ययातिरुवाच ॥ ययातिरस्मिराजर्षिःक्षीणपुण्यश्च्युतोदिवः ॥ पतेयंसत्स्वितिध्यायन्भवत्सुपतितस्ततः १७ ॥ राजानऊचुः ॥ सत्यमेतद्भवतुतेकांक्षितंपुरुषर्षभ ॥ सर्वेषांनःक्रतुफलंधर्मश्चप्रतिगृह्यताम् १८ ॥ ययातिरुवाच ॥ नाहंप्रतिग्रहधनोब्राह्मणःक्षत्रियोह्य हम् ॥ नचमेप्रवणाबुद्धिःपरपुण्यविनाशने १९ ॥ नारदउवाच ॥ एतस्मिन्नेवकालेतुमृगचर्याक्रमागताम् ॥ माधवींप्रेक्ष्यराजानस्तेऽभिवाद्येदमब्रुवन् २० किमागमनकृत्यंतेकिंकुर्मःशासनंतव ॥ आज्ञाप्याहिवयंसर्वेतवपुत्रास्तपोधने २१ तेषांतद्भाषितंश्रुत्वामाधवीपरयामुदा ॥ पितरंसमुपागच्छद्ययातिंसाववं दच २२ स्पृष्ट्वामूर्धनितान्पुत्रांस्तापसीवाक्यमब्रवीत् ॥ दौहित्रास्तवराजेंद्रममपुत्रानतेपराः २३ इमेत्वांतारयिष्यंतिदृष्टमेतत्पुरातने ॥ अहंतेदुहितारा जन्माधवीमृगचारिणी २४ मयाऽप्युपचितोधर्मस्ततोऽर्धंप्रतिगृह्यताम् ॥ यस्माद्राजन्नराःसर्वेअपत्यफलभागिनः २५ तस्मादिच्छंतिदौहित्रान्यथात्वंव सुधाधिप ॥ ततस्तेपार्थिवाःसर्वेशिरसाजननींतदा २६ अभिवाद्यनमस्कृत्यमातामहमथाब्रुवन् ॥ उच्चैरनुपमैःस्निग्धैःस्वरैरापूर्यमेदिनीम् २७

लंब्यनिपपातेतिसंबंधः १२ प्रतिबंधुषुदौहित्ररूपेषु १३ । १४ बंधुःपालयिता १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ पुरातनेअनादिकालप्रवृत्तेवेदे २४ । २५ । २६ । २७

अष्टभागेनअष्टमांशेन २८ ॥ इतिउ० नी० भा० एकविंशाधिकशततमोऽध्यायः ॥ १२१ ॥ ॥ प्रत्यभिज्ञातेति १ । २ । ३ । ४ आधानेअग्न्याधानोपलक्षितेश्रौतधर्मे ५ । ६ । ७ वैहार्येषु

मातामहंनृपतयस्तारयंतोदिवश्च्युतम् ॥ अथतस्मादुपगतोगालवोऽप्याहपार्थिवम् ॥ तपसोमेऽष्टभागेनस्वर्गमारोहतांभवान् २८ ॥ इतिश्रीमहाभारतेउ
द्योगपर्वणिभगवद्यानपर्वणि गालवचरितेययातिस्वर्गभ्रंशे एकविंशाधिकशततमोऽध्यायः ॥ १२१ ॥ ॥ नारदउवाच ॥ प्रत्यभिज्ञातमात्रोऽथसद्भिस्तै
र्नरपुंगवः ॥ समारुरोहनृपतिरस्पृशन्वसुधातलम् ॥ ययातिर्दिव्यसंस्थानोबभूवविगतज्वरः १ दिव्यमाल्यांबरधरोदिव्याभरणभूषितः ॥ दिव्यगंधगुणो
पेतोनपृथ्वीमस्पृशत्पदा २ ततोवसुमनाःपूर्वमुच्चैरुच्चारयन्वचः ॥ ख्यातोदानपतिर्लोकेव्याजहारनृपंतदा ३ प्राप्तवानस्मियल्लोकेसर्ववर्णेष्वगर्हया ॥ तद
प्यथचदास्यामितेनसंयुज्यतांभवान् ४ यत्फलंदानशीलस्यक्षमाशीलस्ययत्फलम् ॥ यच्चमेफलमाधानेतेनसंयुज्यतांभवान् ५ ततःप्रतर्दनोऽप्याहवाक्यं
क्षत्रियपुंगवः ॥ यथाधर्मरतिर्नित्यंनित्यंयुद्धपरायणः ६ प्राप्तवानस्मियल्लोकेक्षत्रवंशोद्भवंयशः ॥ वीरशब्दफलंचैवतेनसंयुज्यतांभवान् ७ शिबिरौशीनरो
धीमानुवाचमधुरांगिरम् ॥ यथाबालेषुनारीषुवैहार्येषुतथैवच ८ संगरेषुनिपातेषुतथातद्व्यसनेषुच ॥ अनृतंनोक्तपूर्वंमेतेनसत्येनखंव्रज ९ यथाप्राणांश्चरा
ज्यंचराजन्कामसुखानिच ॥ त्यजेयंनपुनःसत्यंतेनसत्येनखंव्रज १० यथासत्येनमेधर्मोयथासत्येनपावकः ॥ प्रीतःशतक्रतुश्चैवतेनसत्येनखंव्रज ११ अष्ट
कस्त्वथराजर्षिःकौशिकोमाधवीसुतः ॥ अनेकशतयज्वानंनाहुषंप्राप्यधर्मवित् १२ शतशःपुंडरीकामेगोसवाश्चरिताःप्रभो ॥ क्रतवोवाजपेयाश्चतेषांफलम
वाप्नुहि १३ नमेरत्नानिनधनंनतथाऽन्येपरिच्छदाः ॥ क्रतुष्वनुपयुक्तानितेनसत्येनखंव्रज १४ यथायथाहिजल्पंतिदौहित्रास्तंनराधिपम् ॥ तथातथावसु
मतीत्यक्त्वाराजादिवंययौ १५ एवंसर्वेसमस्तैस्तेराजानःसुकृतैस्तदा ॥ ययातिंस्वर्गतोभ्रष्टंतारयामासुरंजसा १६ दौहित्राःस्वेनधर्मेणयज्ञदानकृतेनवै ॥ चतु
र्षुराजवंशेषुसंभूताःकुलवर्धनाः ॥ मातामहंमहाप्राज्ञंदिवमारोपयंतते १७ ॥ राजानऊचुः ॥ राजधर्मगुणोपेताःसर्वधर्मगुणान्विताः ॥ दौहित्रास्तेवयंराजन्
दिवमारोहपार्थिव १८ ॥ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणि गालवचरिते ययातिस्वर्गारोहणे द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥
॥ नारदउवाच ॥ सद्भिरारोपितःस्वर्गंपार्थिवैर्भूरिदक्षिणैः ॥ अभ्यनुज्ञायदौहित्रान्ययातिर्दिवमास्थितः १ अभिवृष्टश्चवर्षेणनानापुष्पसुगंधिना ॥ परिष्व
क्तश्चपुण्येनवायुनापुण्यगंधिना २ अचलंस्थानमासाद्यदौहित्रफलनिर्जितम् ॥ कर्मभिःस्वैरुपचितोजज्वालपरयाश्रिया ३ उपगीतोपनृत्तश्चगंधर्वाप्सरसां
गणैः ॥ प्रीत्याप्रतिगृहीतश्चस्वर्गेदुंदुभिनिःस्वनैः ४ अभिष्टुतश्चविविधैर्देवराजर्षिचारणैः ॥ अर्चितश्चोत्तमार्घेणदैवतैरभिनंदितः ५ प्राप्तःस्वर्गफलंचैवतमु
वाचपितामहः ॥ निर्वृतंशांतमनसंवचोभिस्तर्पयन्निव ६ परिहासेनलालनीयेषुस्यालसंबंध्यादिषु ८ आपत्सुसंकटेषु व्यसनेषुद्यूतादिषु खंस्वर्गं ९ । १० । ११ । १२ । १३ । १४
१५ । १६ । १७ । १८ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥ ॥ ५ ॥ सद्भिरिति १ वर्षेणवृष्ट्या २ । ३ । ४ । ५ । ६

चतुष्पादःतपोयज्ञज्ञानदानवान् । अहिंसासत्यमस्तेयमानृण्यंचेतिवापादाः ७ सुकृतेनसम्यक्संपादितेनकर्मणा मयासमोऽन्योनास्तीतिवाक्प्रयोगेणतमसाक्रोधेन ८ नाभिजानंतिश्रेष्ठोयमिति नांगीकुर्वंति ततोहेतोःअज्ञातःअकीर्त्यातिरोभूतः ९ । १० । ११ । १२ । १३ । १४ । १५ शाठ्यंविश्वासघातः मायाअद्भुतार्थप्रदर्शनरंजनपूर्वकंपरवंचनम् १६ । १७ । १८ । १९ । २० । २१



चतुष्पादस्त्वयाधर्मश्चितोलोक्येनकर्मणा ॥ अक्षयस्तवलोकोऽयंकीर्तिश्चैवाक्षयादिवि ७ पुनस्त्वयैवराजर्षेसुकृतेनविघातितम् ॥ आवृतंतमसाचेतःसर्वेषां स्वर्गवासिनाम् ८ येनत्वांनाभिजानंतिततोऽज्ञातोऽसिपातितः ॥ प्रीत्यैवचासिदौहित्रैस्तारितस्त्वमिहागतः ९ स्थानंचप्रतिपन्नोऽसिकर्मणास्वेननिर्जितम् ॥ अचलंशाश्वतंपुण्यमुत्तमंध्रुवमव्ययम् १० ॥ ययातिरुवाच ॥ भगवन्संशयोमेऽस्तिकश्चितंछेत्तुमर्हसि ॥ नह्यन्यमहमर्हामिप्रष्टुंलोकपितामह ११ बहुवर्षसहस्रांतंप्रजापालनवर्धितम् ॥ अनेकक्रतुदानौघैरर्जितंमेमहत्फलम् १२ कथंतदल्पकालेनक्षीणंयेनास्मिपातितः ॥ भगवन्वेत्थलोकांश्चशाश्वतान्म मनिर्मितान् ॥ कथंनुममतत्सर्वंविप्रनष्टंमहाद्युते १३ ॥ पितामहउवाच ॥ बहुवर्षसहस्रांतंप्रजापालनवर्धितम् ॥ अनेकक्रतुदानौघैर्यत्त्वयोपार्जितंफलम् १४ तदनेनैवदोषेणक्षीणंयेनासिपातितः ॥ अभिमानेनराजेंद्रधिकृतःस्वर्गवासिभिः १५ नायंमानेनराजर्षेनबलेननहिंसया ॥ नशाठ्येननमायाभिर्लोकोभवतिशाश्वतः १६ नावमान्यास्त्वयाराजन्नवमोत्कृष्टमध्यमाः ॥ नहिमानप्रदग्धानांकश्चिदस्तिशमःक्वचित् १७ पतनारोहणमिदंकथयिष्यंतियेनराः ॥ विषमाण्यपितेप्राप्तास्तरिष्यंतिनसंशयः १८ ॥ नारदउवाच ॥ एषदोषोऽभिमानेनपुराप्राप्तोययातिना ॥ निर्बंधतःऽतिमात्रंचगालवेनमहीपते १९ श्रोतव्यंहितकामानांसुहृदांहितमिच्छताम् ॥ नकर्तव्योहिनिर्बंधोनिर्बंधोहिक्षयोदयः २० तस्मात्त्वमपिगांधारेमानंक्रोधंचवर्जय ॥ संधत्स्वपांडवैर्वीरसंरंभंत्यजपार्थिव २१ ददातियत्पार्थिवयत्करोतियद्वातपस्तप्यातियज्जुहोति ॥ नतस्यनाशोऽस्तिनचापकर्षोनान्यस्तदश्नातिसएवकर्ता २२ इदंमहाख्यानमनुत्तमंहितंबहुश्रुतानांगतरोषरागिणाम् ॥ समीक्ष्यलोकेबहुधाप्रधारितंत्रिवर्गदृष्टिःपृथिवीमुपाश्नुते २३ ॥ इतिश्रीम० उ० प० भ० प० गालवचरितेत्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥ धृतराष्ट्रउवाच ॥ भगवन्नेवमेवैतद्यथावदसिनारद ॥ इच्छामिचाहमप्येवंनत्वीशोभगवन्नहम् १ ॥ वैशंपायनउवाच ॥ एवमुक्त्वातंकृष्णमभ्यभाषतकौरवः ॥ स्वर्ग्यंलोक्यंचमामात्थधर्म्यंन्याय्यंचकेशव २ नत्वहंस्ववशस्तातक्रियमाणंनमेप्रियम् ॥ अंगदुर्योधनंकृष्णमंदंशास्त्रातिगंमम ३ अनुनेतुंमहाबाहोयतस्वपुरुषोत्तम ॥ नशृणोतिमहाबाहोवचनंसाधुभाषितम् ४ गांधार्याश्चहृषीकेशविदुरस्यचधीमतः ॥ अन्येषांचैवसुहृदांभीष्मादीनांहितैषिणाम् ५ सत्वंपापमतिंक्रूरंपापचित्तमचेतनम् ॥ अनुशाधिदुरात्मानंस्वयंदुर्योधनंनृपम् ६ सुहृत्कार्यंतुसुमहत्कृतंतेस्याज्जनार्दन ॥ ततोऽभ्यावृत्यवार्ष्णेयोदुर्योधनममर्षणम् ७ अब्रवीन्मधुरांवाचंसर्वधर्मार्थतत्त्ववित् ॥ दुर्योधननिबोधेदंमद्वाक्यंकुरुसत्तम ८

पापिष्ठत्वेनत्वत्कृतंपापंत्वयैवभोक्तव्यं नतुभ्रात्रादिभिरित्याशयेनाह ददातीति किंतुकर्त्रैवतदाप्नोति २२ बहुधानानाशास्त्रयुक्त्यादिभिः प्रधारितंनिश्चितम् २३ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेत्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥ ॥ ७ ॥ ॥ भगवन्निति १ । २ । ३ । ४ । ५ । ६ अभ्यावृत्यपुनःपुनः ७ । ८

९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ शास्त्रेशासने १९ । २० । २१ किंपाकंमहाकालफलम् २२ । २३ निःश्रेयसंकल्याणम् २४ अर्थकामस्यइष्टार्थिनः २५ । २६ । २७

शर्मार्थंतेविशेषेणसानुबंधस्यभारत ॥ महाप्रज्ञकुलेजातःसाध्वेतत्कर्तुमर्हसि ९ श्रुतवृत्तोपसंपन्नःसर्वैःसमुदितोगुणैः ॥ दौष्कुलेयादुरात्मानोनृशंसानिरपत्रपाः १० तएतदीदृशंकुर्युर्यथात्वंतातमन्यसे ॥ धर्मार्थयुक्तालोकेऽस्मिन्प्रवृत्तिर्लक्ष्यतेसताम् ११ असतांविपरीतातुलक्ष्यतेभरतर्षभ ॥ विपरीतात्वियंवृत्तिरसकृल्लक्ष्यतेत्वयि १२ अधर्मश्चानुबंधोऽत्रघोरःप्राणहरोमहान् ॥ अनिष्टश्चानिमित्तश्चनचशक्यश्चभारत १३ तमनर्थंपरिहरन्नात्मश्रेयःकरिष्यसि ॥ भ्रातॄणामथभृत्यानांमित्राणांचपरंतप १४ अधर्म्यादयशस्याच्चकर्मणस्त्वंप्रमोक्ष्यसे ॥ प्राज्ञैःशूरैर्महोत्साहैरात्मवद्भिर्बहुश्रुतैः १५ संधत्स्वपुरुषव्याघ्रपांडवैर्भरतर्षभ ॥ तद्धितंचप्रियंचैवधृतराष्ट्रस्यधीमतः १६ पितामहस्यद्रोणस्याविदुरस्यमहामतेः ॥ कृपस्यसोमदत्तस्यबाह्लीकस्यचधीमतः १७ अश्वत्थाम्नोविकर्णस्यसंजयस्यविविंशतेः ॥ ज्ञातीनांचैवभूयिष्ठंमित्राणांचपरंतप १८ शमेशर्मभवेत्तातसर्वस्यजगतस्तथा ॥ ह्रीमानसिकुलेजातःश्रुतवानानृशंसवान् ॥ तिष्ठतातपितुःशास्त्रेमातुश्चभरतर्षभ १९ एतच्छ्रेयोहिमन्यंतेपितायच्छास्तिभारत ॥ उत्तमापद्गतःसर्वःपितुःस्मरतिशासनम् २० रोचतेतेपितुस्तातपांडवैःसहसंगमः ॥ सामात्यस्यकुरुश्रेष्ठतत्तुभ्यंतातरोचताम् २१ श्रुत्वायःसुहृदांशास्त्रंमर्त्योनप्रतिपद्यते ॥ विपाकांतेदहत्येनंकिंपाकमिवभक्षितम् २२ यस्तुनिःश्रेयसंवाक्यंमोहान्नप्रतिपद्यते ॥ सदीर्घसूत्रोहीनार्थःपश्चात्तापेनयुज्यते २३ यस्तुनिःश्रेयसंश्रुत्वाप्राक्तदेवाभिपद्यते ॥ आत्मनोमतमुत्सृज्यसलोकेसुखमेधते २४ योऽर्थकामस्यवचनंप्रातिकूल्यान्नमृष्यते ॥ शृणोतिप्रतिकूलानिद्विषतांवशमेतिसः २५ सतांमतमतिक्रम्ययोऽसतांवर्ततेमते ॥ शोचंतेव्यसनेतस्यसुहृदोनचिरादिव २६ मुख्यानमात्यानुत्सृज्ययोनिहीनान्निषेवते ॥ सघोरामापदंप्राप्यनोत्तारमधिगच्छति २७ योऽसत्सेवीवृथाचारोनश्रोतासुहृदांसताम् ॥ परान्वृणीतेस्वान्द्वेष्टितंगौस्त्यजतिभारत २८ सत्वंविरुद्ध्यतैर्वीरैरन्येभ्यस्त्राणमिच्छसि ॥ अशिष्टेभ्योऽसमर्थेभ्योमूढेभ्योभरतर्षभ २९ कोहिशक्रसमान्ज्ञातीनातिक्रम्यमहारथान् ॥ अन्येभ्यस्त्राणमाशंसेत्त्वदन्योभुविमानवः ३० जन्मप्रभृतिकौंतेयानित्यंविनिकृतास्त्वया ॥ नचतेजातुकुप्यंतिधर्मात्मानोहिपांडवाः ३१ मिथ्योपचरितास्तातजन्मप्रभृतिबांधवाः ॥ त्वयिसम्यङ्महाबाहोप्रतिपन्नायशस्विनः ३२ त्वयाऽपिप्रतिपत्तव्यंतथैवभरतर्षभ ॥ स्वेषुबंधुषुमुख्येषुमामन्युवशमन्वगाः ३३ त्रिवर्गयुक्तःप्राज्ञानामारंभोभरतर्षभ ॥ धर्मार्थावनुरुद्ध्यंतेत्रिवर्गासंभवेनराः ३४ पृथक्चविनिविष्टानांधर्मंधीरोऽनुरुध्यते ॥ मध्यमोऽर्थंकलिंबालःकाममेवानुरुद्ध्यते ३५ इंद्रियैःप्राकृतोलोभाद्धर्मंविप्रजहातियः ॥ कामार्थावनुपायेनलिप्समानोविनश्यति ३६ कामार्थौलिप्समानस्तुधर्ममेवादितश्चरेत् ॥ नहिधर्मादपैत्यर्थःकामोवाऽपिकदाचन ३७

१८ । २९ । ३० । ३१ उपचरिताःप्रतारिताः ३२।३३। ३४ अर्थंकलिंकलहहेतुम् ३५ अनुपायेनहीनोपायेन ३६ । ३७

३८ । ३९ छिंद्यात्लोभादिनादूषयेत् ४० । ४१ । ४२ छिद्यते प्रमाणमार्गात्च्युतोभवतीत्यर्थः प्रमाणंलोकवेदप्रसिद्धं दुर्जनात्संगिनः पांडवैःसंगतंश्रेयः ४३ निर्मितांवशीकरणेनोत्पादितां ४४

उपायंधर्ममेवाहुस्त्रिवर्गस्यविशांपते ॥ लिप्समानोहितेनाशुकक्षेऽग्निरिववर्धते ३८ सत्वंतातानुपायेनलिप्ससेभरतर्षभ ॥ आधिराज्यंमहद्दीप्तंप्रथितंसर्वराजसु ३९ आत्मानंतक्षतिह्येषवनंपरशुनायथा ॥ यःसम्यग्वर्तमानेषुमिथ्याराजन्प्रवर्तते ॥ नतस्यहिमतिंछिंद्याद्यस्यनेच्छेत्पराभवम् ४० अविच्छिन्नमतेरस्यकल्याणेधीयतेमतिः ॥ आत्मवान्नावमन्येतत्रिषुलोकेषुभारत ४१ अप्यन्यंप्राकृतंकिंचित्किमुतान्पांडवर्षभान् ॥ अमर्षवशमापन्नोनकिंचिद्बुध्यतेजनः ४२ छिद्यतेह्याततंसर्वंप्रमाणंपश्यभारत ॥ श्रेयस्तेदुर्जनात्तातपांडवैःसहसंगतम् ४३ तैर्हिसंप्रीयमाणस्त्वंसर्वान्कामानवाप्स्यसि ॥ पांडवैर्निर्मितांभूमिंभुंजानोराजसत्तम ४४ पांडवान्पृष्ठतःकृत्वात्राणमाशंससेऽन्यतः ॥ दुःशासनेदुर्विषहेकर्णेचापिससौबले ४५ एतेष्वैश्वर्यमाधायभूतिमिच्छसिभारत ॥ नचैतेतवपर्याप्ताज्ञानेधर्मार्थयोस्तथा ४६ विक्रमेचाप्यपर्याप्ताःपांडवान्प्रतिभारत ॥ नहीमेसर्वराजानःपर्याप्ताःसहितास्त्वया ४७ क्रुद्धस्यभीमसेनस्यप्रेक्षितुंमुखमाहवे ॥ इदंसंनिहितंतातसमग्रंपार्थिवंबलम् ४८ अयंभीष्मस्तथाद्रोणःकर्णश्चायंतथाकृपः ॥ भूरिश्रवाःसौमदत्तिरश्वत्थामाजयद्रथः ४९ अशक्ताःसर्वएवैतेप्रतियोद्धुंधनंजयम् ॥ अजेयोह्यर्जुनःसंख्येसर्वैरपिसुरासुरैः ॥ मानुषैरपिगंधर्वैर्मायुद्धेचेतआधिथाः ५० दृश्यतांवापुमान्कश्चित्समग्रेपार्थिवेबले ॥ योऽर्जुनंसमरेप्राप्यस्वस्तिमानाव्रजेद्गृहान् ५१ किंतेजनक्षयेणेहकृतेनभरतर्षभ ॥ यस्मिन्जितेजितंतत्स्यात्पुमानेकःसदृश्यताम् ५२ यःसदेवान्सगंधर्वान्सयक्षासुरपन्नगान् ॥ अजयत्खांडवप्रस्थेकस्तंयुद्धेचेतमानवः ५३ तथाविराटनगरेश्रूयतेमहदद्भुतम् ॥ एकस्यचबहूनांचपर्याप्तंतन्निदर्शनम् ५४ युद्धेयेनमहादेवःसाक्षात्संतोषितःशिवः ॥ तमजेयमनाधृष्यंविजेतुंजिष्णुमच्युतम् ॥ आशंससीहसमरेवीरमर्जुनमूर्जितम् ५५ मद्द्वितीयंपुनःपार्थंकःप्रार्थयितुमर्हति ॥ युद्धेप्रतीपमायांतमपिसाक्षात्पुरंदरः ५६ बाहुभ्यामुद्धरेद्भूमिंदहेत्क्रुद्धइमाःप्रजाः ॥ पातयेत्त्रिदिवाद्देवान्योऽर्जुनंसमरेजयेत् ५७ पश्यपुत्रांस्तथाभ्रातॄन्ज्ञातीन्संबंधिनस्तथा ॥ त्वत्कृतेनविनश्येयुरिमेभरतसत्तमाः ५८ अस्तुशेषंकौरवाणांमापराभूदिदंकुलम् ॥ कुलघ्नइतिनोच्येथानष्टकीर्तिर्नराधिप ५९ त्वामेवस्थापयिष्यंतियौवराज्येमहारथाः ॥ महाराज्येऽपिपितरंधृतराष्ट्रंजनेश्वरम् ६० मातातश्रियमायांतीमवमंस्थाःसमुद्यताम् ॥ अर्धंप्रदायपार्थेभ्योमहतींश्रियमाप्नुहि ६१ पांडवैःसंशमंकृत्वाकृत्वाचसुहृदांवचः ॥ संप्रीयमाणोमित्रैश्चचिरंभद्राण्यवाप्स्यसि ६२ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणि भगवद्वाक्येचतुर्विंशाधिकशततमोऽध्यायः ॥ १२४ ॥ ॥ वैशंपायनउवाच ॥ ततःशांतनवोभीष्मोदुर्योधनममर्षणम् ॥ केशवस्यवचःश्रुत्वाप्रोवाचभरतर्षभ १

४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ यस्मिन्नर्जुनेजितेसतितेतवजितंजयःस्यात् ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेचतुर्विंशाधिकशततमोऽध्यायः ॥ १२४ ॥ ॥ ७ ॥ ततइति १

२ । ३ मानीनशःमानाशय ४ । ५ । ६ । ७ कुलघ्नोमाभूरितिशेषः ८ । ९ । १० । ११।१२ एतेकर्णादयः कृत्यायजयाय परेषांअस्मदादीनां १३ माऽजीघनःमाघातय यत्रतान्अजेयान्विद्धि

कृष्णेनवाक्यमुक्तोऽसिसुहृदांशममिच्छता ॥ अन्वपद्यस्वतत्तातमामन्युवशमन्वगाः २ अकृत्वावचनंतातकेशवस्यमहात्मनः ॥ श्रेयोनजातुनसुखंनकल्याण मवाप्स्यसि ३ धर्म्यमर्थ्यंमहाबाहुराहत्वांतातकेशवः ॥ तदर्थमभिपद्यस्वमाराजन्नीनशःप्रजाः ४ ज्वलितांत्वमिमांलक्ष्मींभारतींसर्वराजसु ॥ जीवतोधृतराष्ट्रस्यदौरात्म्याद्भ्रंशयिष्यसि ५ आत्मानंचसहामात्यंसपुत्रभ्रातृबांधवम् ॥ अहमित्यनयाबुद्ध्याजीविताद्भ्रंशयिष्यसि ६ अतिक्रामन्केशवस्यतथ्यंवचनमर्थवत् ॥ पितुश्चभारतश्रेष्ठविदुरस्यचधीमतः ७ माकुलघ्नःकुपुरुषोदुर्मतिःकापथंगमः ॥ मातरंपितरंचैवमामज्जीःशोकसागरे ८ अथद्रोणोऽब्रवीत्तत्रदुर्योधनमिदंवचः ॥ अमर्षवशमापन्नंनिःश्वसंतंपुनःपुनः ९ धर्मार्थयुक्तंवचनमाहत्वांतातकेशवः ॥ तथाभीष्मःशांतनवस्तज्जुषस्वनराधिप १० प्राज्ञौमेधाविनौदांतावर्थकामौबहुश्रुतौ ॥ आहतुस्त्वांहितंवाक्यंतज्जुषस्वनराधिप ११ अनुतिष्ठमहाप्राज्ञकृष्णभीष्मौयदूचतुः ॥ माधवंबुद्धिमोहेनमाऽवमंस्थाःपरंतप १२ येत्वांप्रोत्साहयंत्येतेनैतेकृत्यायकर्हिचित् ॥ वैरंपरेषांग्रीवायांप्रतिमोक्ष्यंतिसंयुगे १३ माऽजीघनःप्रजाःसर्वाःपुत्रान्भ्रातृंस्तथैवच ॥ वासुदेवार्जुनौयत्रविद्ध्यजेयानलंहितान् १४ एतच्चैवमतंसत्यंसुहृदोःकृष्णभीष्मयोः ॥ यदिनादास्यसेतातपश्चात्तप्स्यसिभारत १५ यथोक्तंजामदग्न्येनभूयानेषततोऽर्जुनः ॥ कृष्णोहिदेवकीपुत्रोदेवैरपिसुदुःसहः ॥ किंतेसुखप्रियेणेहप्रोक्तेनभरतर्षभ १६ एतत्तेसर्वमाख्यातंयथेच्छसितथाकुरु ॥ नहित्वामुत्सहेवक्तुंभूयोभरतसत्तम १७ ॥ वैशंपायनउवाच ॥ तस्मिन्वाक्यांतरेवाक्यंक्षत्ताऽपिविदुरोऽब्रवीत् ॥ दुर्योधनमभिप्रेक्ष्यधार्तराष्ट्रममर्षणम् १८ दुर्योधननशोचामित्वामहंभरतर्षभ ॥ इमौतुवृद्धौशोचामिगांधारींपितरंचते १९ यावनाथौचरिष्येतेत्वयानाथेनदुर्हृदा ॥ हतमित्रौहतामात्यौलूनपक्षाविवांडजौ २० भिक्षुकौविचरिष्येतेशोचंतौपृथिवीमिमाम् ॥ कुलघ्नमीदृशंपापंजनयित्वाकुपूरुषम् २१ अथदुर्योधनंराजाधृतराष्ट्रोऽभ्यभाषत ॥ आसीनंभ्रातृभिःसार्धंराजभिःपरिवारितम् २२ दुर्योधननिबोधेदंशौरिणोक्तंमहात्मना ॥ आदत्स्वशिवमत्यंतंयोगक्षेमवदव्ययम् २३ अनेनहिसहायेनकृष्णेनाक्लिष्टकर्मणा ॥ इष्टान्सर्वानभिप्रायान्प्राप्स्यामःसर्वराजसु २४ सुसंहतःकेशवेनतातगच्छयुधिष्ठिरम् ॥ चरस्वस्त्ययनंकृत्स्नंभरतानामनामयम् २५ वासुदेवेनतीर्थेनतातगच्छस्वसंशमम् ॥ कालप्राप्तमिदंमन्येमात्वंदुर्योधनातिगाः २६ शमंचेद्याचमानंत्वंप्रत्याख्यास्यसिकेशवम् ॥ त्वदर्थमभिजल्पंतंनतवास्त्यपराभवः २७ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिभीष्मादिवाक्येपंचविंशाधिकशततमोऽध्यायः ॥ १२५ ॥ ॥ ॥



१४ । १५ सुखंहितावहंप्रियंचन्यायोपेतत्वात्तेनसुखप्रियेणप्रोक्तेनवचनेनतवमूढस्यार्कि नकिमपीत्यर्थः १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ सुसंहतःसुष्ठुएकीभूतः २५ तीर्थेनउपायेन २६ अपराभवोजयः २७ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे पंचविंशाधिकशततमोऽध्यायः ॥ १२५ ॥ ॥ ७ ॥

धृतराष्ट्रवचइति १ मेधाग्नौसंग्रामाग्नौ मेधोयज्ञः 'यान्येवसंग्रामनामानितानियज्ञनामानि' इतियास्कः २ वैशसंतरं ३ । ४ । ५ । ६ । ७ । ८ । ९ उरस्सुनिपात्यंतइतिउत्तरेणसंबंधः १० । ११ । १२ १३ रत्नयुक्तौषधित्वद्वेष्टयतीतिरत्नौषधिरत्नांगुलीयकं । रत्नाबंधसमेतेनेतिपाठःस्वच्छः । 'आबंधोदृढबंधेस्यात्प्रेमालंकारयोरपि' इतिविश्वः रत्नालंकारेणरत्नैःप्रेम्णाचवासमेतेनेतिभावः रत्न

॥ वैशंपायनउवाच ॥ धृतराष्ट्रवचःश्रुत्वाभीष्मद्रोणौसमव्यथौ ॥ दुर्योधनमिदंवाक्यमूचतुःशासनातिगम् १ यावत्कृष्णावसन्नद्धौयावत्तिष्ठातिगांडिवम् ॥ यावद्धौम्योनमेधाग्नौजुहोतीहद्विषद्बलम् २ यावन्नप्रेक्षतेक्रुद्धःसेनांतवयुधिष्ठिरः ॥ ह्रीनिषेवोमहेष्वासस्तावच्छाम्यतुवैशसम् ३ यावन्नदृश्यतेपार्थःस्वेष्वनीकेव्यवस्थितः ॥ भीमसेनोमहेष्वासस्तावच्छाम्यतुवैशसम् ४ यावन्नचरतेमार्गान्पृतनामभिधर्षयन् ॥ भीमसेनोगदापाणिस्तावत्संशाम्यपांडवैः ५ यावन्नशातयत्याजौशिरांसिगजयोधिनाम् ॥ गदयावीरघातिन्याफलानीववनस्पतेः ६ कालेनपरिपक्वानितावच्छाम्यतुवैशसम् ॥ नकुलःसहदेवश्चधृष्टद्युम्नश्चपार्षतः ७ विराटश्चशिखंडीचशैशुपालिश्चदंशिताः ॥ यावन्नप्रविशंत्येतेनक्राइवमहार्णवम् ८ कृतास्त्राःक्षिप्रमस्यंतस्तावच्छाम्यतुवैशसम् ॥ यावन्नसुकुमारेषुशरीरेषुमहीक्षिताम ॥ गार्ध्रपत्राःपतंत्युग्रास्तावच्छाम्यतुवैशसम् ९ चंदनागुरुदिग्धेषुहारनिष्कधरेषुच ॥ नोरःसुयावद्योधानांमहेष्वासैर्महेषवः १० कृतास्त्रैःक्षिप्रमस्यद्भिर्दूरपातिभिरायसाः ॥ अभिलक्ष्यैर्निपात्यंतेतावच्छाम्यतुवैशसम् ११ अभिवादयमानंत्वांशिरसाराजकुंजरः ॥ पाणिभ्यांप्रतिगृह्णातुधर्मराजोयुधिष्ठिरः १२ ध्वजांकुशपताकांकंदक्षिणंतेसुदक्षिणः ॥ स्कंधेनिक्षिपतांबाहुंशांतयेभरतर्षभ १३ रत्नौषधिसमेतेनरत्नांगुलितलेनच ॥ उपविष्टस्यपृष्ठंतेपाणिनापरिमार्जतु १४ शालस्कंधोमहाबाहुस्त्वांस्वजानोवृकोदरः ॥ साम्नाऽभिवदतांचापिशांतयेभरतर्षभ १५ अर्जुनेनयमाभ्यांचत्रिभिस्तैरभिवादितः ॥ मूर्ध्नितान्समुपाघ्रायप्रेम्णाभिवदपार्थिव १६ दृष्ट्वात्वांपांडवैर्वीरैर्भ्रातृभिःसहसंगतम् ॥ यावदानंदजाश्रूणिप्रमुंचंतुनराधिपाः १७ घुष्यतांराजधानीषुसर्वसंपन्महीक्षिताम् ॥ पृथिवीभ्रातृभावेनभुज्यतांविज्वरोभव १८ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिभीष्मद्रोणवाक्येषड्विंशाधिकशततमोऽध्यायः ॥ १२६ ॥

॥ वैशंपायनउवाच ॥ श्रुत्वादुर्योधनोवाक्यमप्रियंकुरुसंसदि ॥ प्रत्युवाचमहाबाहुंवासुदेवंयशस्विनम् १ प्रसमीक्ष्यभवानेतद्वक्तुमर्हतिकेशव ॥ मामेवहिविशेषेणविभाष्यपरिगर्हसे २ भक्तिवादेनपार्थानामकस्मान्मधुसूदन ॥ भवान्गर्हयतेनित्यंकिंसमीक्ष्यबलाबलम् ३ भवान्क्षत्ताचराजावाऽप्याचार्योवापितामहः ॥ मामेवपरिगर्हंतेनान्यंकंचनपार्थिवम् ४ नचाहंलक्षयेकंचिद्व्यभिचारमिहात्मनः ॥ अथसर्वेभवंतोमांविद्विषंतिसराजकाः ५ नचाहंकंचिदत्यर्थमपराधमरिंदम ॥ विचिंतयन्प्रपश्यामिसुसूक्ष्ममपिकेशव ६ प्रियाभ्युपगतेद्यूतेपांडवामधुसूदन ॥ जिताःशकुनिनाराज्यंतत्रकिंममदुष्कृतम् ७

वदारत्नानिअंगुलितलानियस्यतेनरत्नांगुलितलेन १४ स्वजानःवक्षसिमिलितः । स्वंजपरिष्वंगे १५ । १६ । १७ सर्वसंपत्परस्परंप्रीतिः १८ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे षड्विंशाधिकशततमोऽध्यायः ॥ १२६ ॥ श्रुत्वेति १ प्रसमीक्ष्यविचार्य विभाष्यपरुषमुक्त्वा २ । ३ । ४ व्यभिचारंअन्याय्यं ५ । ६ प्रियाभ्युपगतेप्रीत्यास्वीकृते ७

८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ उद्यच्छेदेवउद्यमंकुर्यादेव अपर्वणिअप्रस्तावे । 'पर्वस्यादुत्सवेग्रंथौप्रस्तावेलक्षणांतरे' इतिविश्वः १९ मातंगःमुनिः २० । २१

यत्पुनर्द्रविणंकिंचित्तत्राजीयंतपांडवाः ॥ तेभ्यएवाभ्यनुज्ञातंतत्तदामधुसूदन ८ अपराधोनचास्माकंयत्तेह्यक्षैःपराजिताः ॥ अजेयाजयतांश्रेष्ठपार्थाःप्रव्राजितावनम् ९ केनवाऽप्यपवादेनविरुद्धंचत्यरिभिःसह ॥ अशक्ताःपांडवाःकृष्णप्रहृष्टाःप्रत्यमित्रवत् १० किमस्माभिःकृतंतेषांकस्मिन्वापुनरागसि ॥ धार्तराष्ट्रान्जिघांसंतिपांडवाःसृंजयैःसह ११ नचापिवयमुग्रेणकर्मणावचनेनवा ॥ प्रभ्रष्टाःप्रणमामेहभयादपिशतक्रतुम् १२ नचतंकृष्णपश्यामिक्षत्रधर्ममनुष्ठितम् ॥ उत्सहेतयुधाजेतुंयोनःशत्रुनिबर्हण १३ नहिभीष्मकृपद्रोणाःसकर्णामधुसूदन ॥ देवैरपियुधाजेतुंशक्याःकिमुतपांडवैः १४ स्वधर्ममनुपश्यंतोयदिमाधवसंयुगे ॥ अस्त्रेणनिधनंकालेप्राप्स्यामःस्वर्ग्यमेवतत् १५ मुख्यश्चैवैषनोधर्मःक्षत्रियाणांजनार्दन ॥ यच्छयीमहिसंग्रामेशरतल्पगतावयम् १६ तेवयंवीरशयनंप्राप्स्यामोयदिसंयुगे ॥ अप्रणम्यैवशत्रूणांननस्तप्स्यंतिमाधव १७ कश्चजातुकुलेजातःक्षत्रधर्मेणवर्तयन् ॥ भयाद्वृत्तिंसमीक्ष्यैवंप्रणमेदिहकर्हिचित् १८ उद्यच्छेदेवननमेदुद्यमोह्येवपौरुषम् ॥ अप्यपर्वणिभज्येतननमेदिहकर्हिचित् १९ इतिमातंगवचनंपरीप्स्यंतिहितेप्सवः ॥ धर्मायचैवप्रणमेद्ब्राह्मणेभ्यश्चमद्विधः २० अचिंतयन्कंचिदन्यंयावज्जीवंतथाऽचरेत् ॥ एषधर्मःक्षत्रियाणांमतमेतच्चमेसदा २१ राज्यांशश्चाभ्यनुज्ञातोयोमेपित्रापुराऽभवत् ॥ नसलभ्यःपुनर्जातुमयिजीवतिकेशव २२ यावच्चराजाध्रियतेधृतराष्ट्रोजनार्दन ॥ न्यस्तशस्त्रावयंतेवाऽप्युपजीवाममाधव ॥ अप्रदेयंपुरादत्तंराज्यंपरवतोमम २३ अज्ञानाद्वाभयाद्वापिमयिबालेजनार्दन ॥ नतदद्यपुनर्लभ्यंपांडवैर्वृष्णिनंदन २४ ध्रियमाणेमहाबाहौमयिसंप्रतिकेशव ॥ यावद्धितीक्ष्णयासूच्याविध्येदग्रेणकेशव ॥ तावदप्यपरित्याज्यंभूमेर्नःपांडवान्प्रति २५ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिदुर्योधनवाक्येसप्तविंशाधिकशततमोऽध्यायः ॥ १२७ ॥

॥ वैशंपायनउवाच ॥ ततःप्रशम्यदाशार्हःक्रोधपर्याकुलेक्षणः ॥ दुर्योधनमिदंवाक्यमब्रवीत्कुरुसंसदि १ लप्स्यसेवीरशयनंकाममेतदवाप्स्यसि ॥ स्थिरोभवसहामात्योविमर्दोभवितामहान् २ यच्चैवंमन्यसेमूढनमेकश्चिद्व्यतिक्रमः ॥ पांडवेष्वितितत्सर्वंनिबोधतनराधिपाः ३ श्रियासंतप्यमानेनपांडवानांमहात्मनाम् ॥ त्वयादुर्मंत्रितंद्यूतंसौबलेनचभारत ४ कथंचज्ञातयस्तातश्रेयांसःसाधुसंमताः ॥ अथान्याय्यमुपस्थातुंजिह्मेनाजिह्मचारिणः ५ अक्षद्यूतंमहाप्राज्ञसतांमतिविनाशनम् ॥ असतांतत्रजायंतेभेदाश्चव्यसनानिच ६ तदिदंव्यसनंघोरंत्वयाद्यूतमुखंकृतम् ॥ असमीक्ष्यसदाचारैःसार्धंपापानुबंधनैः ७ कश्चान्योभ्रातृभार्यांवैविप्रकर्तुंतथाऽर्हति ॥ आनीयचसभांव्यक्तंयथोक्ताद्रौपदीत्वया ८ कुलीनाशीलसंपन्नाप्राणेभ्योऽपिगरीयसी ॥ महिषीपांडुपुत्राणांतथाविनिकृतात्वया ९

२२ न्यस्तशस्त्राःत्यक्तक्षत्रियधर्माः उपजीवामभिक्षुकवत्सिद्धमन्नंभोक्ष्यामइत्यर्थः २३ । २४ । २५ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे सप्तविंशाधिकशततमोऽध्यायः ॥ १२७ ॥

ततइति प्रशम्यविचार्य १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९

१० । ११ । १२ । १३ । १४ । १५ । १६ । १७ विप्रतिपद्यसेविवादंकुरुषे मात्रादिभिःसह १८ । १९ । २० । २१ । २२ । २४ । २५ । २६ । २७



जानंतिकुरवःसर्वेयथोक्ताःकुरुसंसदि ॥ दुःशासनेनकौंतेयाःप्रव्रजंतःपरंतपाः १० सम्यग्वृत्तेष्वलुब्धेषुसततंधर्मचारिषु ॥ स्वेषुबंधुषुकःसाधुश्चरेदेवमसांप्रतम् ११ नृशंसानामनार्याणांपुरुषाणांचभाषणम् ॥ कर्णदुःशासनाभ्यांचत्वयाचबहुशःकृतम् १२ सहमात्राप्रदग्धुंतान्बालकान्वारणावते ॥ आस्थितःपरमंयत्नं नसमृद्धंचतत्तव १३ ऊषुश्चसुचिरंकालंप्रच्छन्नाःपांडवास्तदा ॥ मात्रासहैकचक्रायांब्राह्मणस्यनिवेशने १४ विषेणसर्पबंधैश्चयतिताःपांडवास्त्वया ॥ सर्वोपा यैर्विनाशायनसमृद्धंचतत्तव १५ एवंबुद्धिःपांडवेषुमिथ्यावृत्तिःसदाभवान् ॥ कथंतेनापराधोऽस्तिपांडवेषुमहात्मसु १६ यच्चैभ्योयाचमानेभ्यःपित्र्यमंशंनादि त्ससि ॥ तच्चपापप्रदाताऽसिभ्रष्टैश्वर्योनिपातितः १७ कृत्वाबहून्यकार्याणिपांडवेषुनृशंसवत् ॥ मिथ्यावृत्तिरनार्यःसन्नद्यविप्रतिपद्यसे १८ मातापितृभ्यांभी ष्मेणद्रोणेनविदुरेणच ॥ शाम्येतिमुहुरुक्तोऽसिनचशाम्यसिपार्थिव १९ शमेहिसुमहाँल्लाभस्तवपार्थस्यचोभयोः ॥ नचरोचयसेराजन्किमन्यद्बुद्धिलाघवात् २० नशर्मप्राप्स्यसेराजन्नुत्क्रम्यसुहृदांवचः ॥ अधर्म्यमयशस्यंचक्रियतेपार्थिवत्वया २१ ॥ वैशंपायनउवाच ॥ एवंब्रुवतिदाशार्हेदुर्योधनममर्षणम् ॥ दुः शासनइदंवाक्यमब्रवीत्कुरुसंसदि २२ नचेत्संधास्यसेराजन्स्वेनकामेनपांडवैः ॥ बध्वाकिलत्वांदास्यंतिकुंतीपुत्रायकौरवाः २३ वैकर्तनंत्वांचमांचत्रीनेतान्म नुजर्षभ ॥ पांडवेभ्यःप्रदास्यंतिभीष्मोद्रोणःपिताचते २४ भ्रातरेतद्वचःश्रुत्वाधार्तराष्ट्रःसुयोधनः ॥ क्रुद्धःप्रातिष्ठतोत्थायमहानागइवश्वसन् २५ विदुरंधृत राष्ट्रंचमहाराजंचबाह्लिकम् ॥ कृपंचसोमदत्तंचभीष्मंद्रोणंजनार्दनम् २६ सर्वानेताननादृत्यदुर्मतिर्निरपत्रपः ॥ अशिष्टवदमर्यादोमानीमान्यावमानिता २७ तंप्रस्थितमभिप्रेक्ष्यभ्रातरोमनुजर्षभम् ॥ अनुजग्मुःसहामात्याराजानश्चापिसर्वशः २८ सभायामुत्थितंक्रुद्धंप्रस्थितंभ्रातृभिःसह ॥ दुर्योधनमभिप्रेक्ष्यभीष्मः शांतनवोऽब्रवीत् २९ धर्मार्थावभिसंत्यज्यसंरंभंयोऽनुमन्यते ॥ हसंतिव्यसनेतस्यदुर्हृदोनचिरादिव ३० दुरात्माराजपुत्रोऽयंधार्तराष्ट्रोऽनुपायकृत् ॥ मिथ्या भिमानीराज्यस्यक्रोधलोभवशानुगः ३१ कालपक्कमिदंमन्येसर्वंक्षत्रंजनार्दन ॥ सर्वेह्यनुसृतामोहात्पार्थिवाःसहमंत्रिभिः ३२ भीष्मस्याथवचःश्रुत्वादाशार्हः पुष्करेक्षणः ॥ भीष्मद्रोणमुखान्सर्वानभ्यभाषतवीर्यवान् ३३ सर्वेषांकुरुवृद्धानांमहानयमतिक्रमः ॥ प्रसह्यमंदमैश्वर्येननियच्छतयन्नृपम् ३४ तत्रकार्यमहं मन्येकालप्राप्तमरिंदमाः ॥ क्रियमाणेभवेच्छ्रेयस्तत्सर्वंशृणुतानघाः ३५ प्रत्यक्षमेतद्भवतांयद्वक्ष्यामिहितंवचः ॥ भवतामानुकूल्येनयदिरोचेतभारताः ३६ भोज राजस्यवृद्धस्यदुराचारोह्यनात्मवान् ॥ जीवतःपितुरैश्वर्यंहृत्वामृत्युवशंगतः ३७ उग्रसेनसुतःकंसःपरित्यक्तःसबांधवैः ॥ ज्ञातीनांहितकामेनमयाशस्तोमहामृधे ३८



२८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८

३९ । ४० । ४१ । ४२ भविष्यंतिजेष्यंति ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० ॥ इतिउद्योगपर्वणिनैलकंठीये भारतभावदीपेअष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

आहुकःपुनरस्माभिर्ज्ञातिभिश्चापिसत्कृतः ॥ उग्रसेनःकृतोराजाभोजराजन्यवर्धनः ३९ कंसमेकंपरित्यज्यकुलार्थेसर्वयादवाः॥ संभूयसुखमेधंतेभारतांधकवृष्णयः ४० अपिचाप्यवदद्राजन्परमेष्ठीप्रजापतिः ॥ व्यूढेदेवासुरेयुद्धेऽभ्युद्यतेष्वायुधेषुच ४१ द्वैधीभूतेषुलोकेषुविनश्यत्सुचभरात ॥ अब्रवीत्सृष्टिमान्देवोभगवाँल्लोकभावनः ४२ पराभविष्यंत्यसुरादैतेयादानवैःसह ॥ आदित्यावसवोरुद्राभविष्यंतिदिवौकसः ४३ देवासुरमनुष्याश्चगंधर्वोरगराक्षसाः ॥ अस्मिन्युद्धेसुसंक्रुद्धाहनिष्यंतिपरस्परम् ४४ इतिमत्वाऽब्रवीद्धर्मंपरमेष्ठीप्रजापतिः ॥ वरुणायप्रयच्छैतान्बद्धादैतेयदानवान् ४५ एवमुक्तस्ततोधर्मोनियोगात्परमेष्ठिनः ॥ वरुणायददौसर्वान्बद्धादैतेयदानवान् ४६ तान्बद्धाधर्मपाशैश्चस्वैश्चपाशैर्जलेश्वरः ॥ वरुणःसागरेयत्तोनित्यंरक्षतिदानवान् ४७ तथादुर्योधनंकर्णंशकुनिंचापिसौबलम् ॥ बद्धादुःशासनंचापिपांडवेभ्यःप्रयच्छथ ४८ त्यजेत्कुलार्थेपुरुषंग्रामस्यार्थेकुलंत्यजेत् ॥ ग्रामंजनपदस्यार्थेआत्मार्थेपृथिवींत्यजेत् ४९ राजन्दुर्योधनंबद्धाततःसंशाम्यपांडवैः ॥ त्वत्कृतेनविनश्येयुःक्षत्रियाःक्षत्रियर्षभ ५० ॥ इतिश्रीम०उ० भ०कृष्णवाक्येअष्टाविंशत्यधिकशततमोऽध्यायः ॥ ॥ १२८ ॥ वैशंपायनउवाच ॥ कृष्णस्यतुवचःश्रुत्वाधृतराष्ट्रोजनेश्वरः ॥ विदुरंसर्वधर्मज्ञंत्वरमाणोऽभ्यभाषत १ गच्छतातमहाप्राज्ञांगांधारींदीर्घदर्शिनीम् ॥ आनयेहतयासार्धमनुनेष्यामिदुर्मतिम् २ यदिसाऽपिदुरात्मानंशमयेदुष्टचेतसम् ॥ अपिकृष्णस्यसुहृदस्तिष्ठेमवचनेवयम् ३ अपिलोभाभिभूतस्यपंथानमनुदर्शयेत् ॥ दुर्बुद्धेर्दुःसहायस्यशमार्थंब्रुवतीवचः ४ अपिनोव्यसनंघोरंदुर्योधनकृतंमहत् ॥ शमयेच्चिररात्राययोगक्षेमवदव्ययम् ५ राज्ञस्तुवचनंश्रुत्वाविदुरोदीर्घदर्शिनीम् ॥ आनयामासगांधारींधृतराष्ट्रस्यशासनात् ६ ॥ धृतराष्ट्रउवाच ॥ एषगांधारिपुत्रस्तेदुरात्माशासनातिगः ॥ ऐश्वर्यलोभादैश्वर्यंजीवितंचप्रहास्यति ७ अशिष्टवदमर्यादःपापैःसहदुरात्मवान् ॥ सभायानिर्गतोमूढोव्यतिक्रम्यसुहृद्वचः ८ ॥ वैशंपायनउवाच ॥ साभर्तुर्वचनंश्रुत्वाराजपुत्रीयशस्विनी ॥ अन्विच्छंतीमहच्छ्रेयोगांधारीवाक्यमब्रवीत् ९ ॥ गांधार्युवाच ॥ आनाययसुतंक्षिप्रंराज्यकामुकमातुरम् ॥ नहिराज्यमशिष्टेनशक्यंधर्मार्थलोपिना १० आप्तुमाप्तंतथापीदमविनीतेनसर्वथा ॥ त्वंह्येवात्रभृशंगर्ह्योधृतराष्ट्रसुतप्रियः ११ योजानन्पापतामस्यतत्प्रज्ञामनुवर्तसे ॥ सएषकाममन्युभ्यांप्रलब्धोलोभमास्थितः १२ अशक्योऽद्यत्वयाराजन्विनिवर्तयितुंबलात् ॥ राष्ट्रप्रदानेमूढस्यबालिशस्यदुरात्मनः १३ दुःसहायस्यलुब्धस्यधृतराष्ट्रोऽश्नुतेफलम् ॥ कथंहिस्वजनेभेदमुपेक्षेतमहीपतिः॥ भिन्नंहिस्वजनेनत्वांप्रहसिष्यंतिशत्रवः १४ याहिशक्यामहाराजसाम्नाभेदेनवापुनः ॥ निस्तर्तुमापदःस्वेषुदंडंकस्तत्रपातयेत् १५

कृष्णस्येति १ । २ । ३ । ४ चिररात्रायधोगक्षेमवत् बहुकालंअप्राप्तस्यसुखस्यप्राप्तिःप्राप्तस्यसंरक्षणंचनिर्वहेदित्यर्थः ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५

१६ । १७ । १८ आयत्यांपरिणामे १९ । २० अपचितिःपूजा २१ । २२ । दीर्घमंतरंचिरकालं २३ । २४ । २५ महद्राज्यं । 'महद्राज्यंविशालयोः'इतिविश्वः २६ अविधेयानिअवशीकृता

॥ वैशंपायनउवाच ॥ शासनाद्धृतराष्ट्रस्यदुर्योधनममर्षणम् ॥ मातुश्चवचनात्क्षत्तासभांप्रावेशयत्पुनः १६ समातुर्वचनाकांक्षीप्रविवेशपुनःसभाम् ॥ अभिताम्रेक्षणःक्रोधान्निःश्वसन्निवपन्नगः १७ तंप्रविष्टमभिप्रेक्ष्यपुत्रमुत्पथमास्थितम् ॥ विगर्हमाणागांधारीशमार्थंवाक्यमब्रवीत् १८ दुर्योधननिबोधेदंवचनंममपुत्रक ॥ हितंतेसानुबंधस्यतथाऽऽयत्यांसुखोदयम् १९ दुर्योधनयदाहत्वांपिताभरतसत्तम ॥ भीष्मोद्रोणःकृपःक्षत्तासुहृदांकुरुतद्वचः २० भीष्मस्यतुपितुश्चैवममचापचितिःकृता ॥ भवेद्द्रोणमुखानांचसुहृदांशाम्यतात्वया २१ नहिराज्यंमहाप्राज्ञस्वेनकामेनशक्यते ॥ अवाप्तुंरक्षितुंवापिभोक्तुंभरतसत्तम २२ नह्यवश्येंद्रियोराज्यमश्नीयादीर्घमंतरम् ॥ विजितात्मातुमेधावीसराज्यमभिपालयेत् २३ कामक्रोधौहिपुरुषमर्थेभ्योऽव्यपकर्षतः ॥ तौतुशत्रूविनिर्जित्यराजाविजयतेमहीं २४ लोकेश्वरप्रभुत्वंहिमहदेतद्दुरात्मभिः ॥ राज्यंनामेप्सितंस्थानंनशक्यमभिरक्षितुम् २५ इंद्रियाणिमहत्प्रेप्सुर्नियच्छेदर्थधर्मयोः ॥ इंद्रियैर्नियतैर्बुद्धिर्वर्धतेऽग्निरिवेंधनैः २६ अविधेयानिहीमानिव्यापादयितुमप्यलम् ॥ अविधेयाइवादांताहयाःपथिकुसारथिं २७ अविजित्ययआत्मानममात्यान्विजिगीषते ॥ अमित्रान्वाऽजितामात्यःसोऽवशःपरिहीयते २८ आत्मानमेवप्रथमंद्वेष्यरूपेणयोजयेत् ॥ ततोऽमात्यानमित्रांश्चनमोघंविजिगीषते २९ वश्येंद्रियंजितामात्यंधृतदंडंविकारिषु ॥ परीक्ष्यकारिणंधीरमत्यर्थंश्रीर्निषेवते ३० क्षुद्राक्षेणेवजालेनझषावपिहितावुभौ ॥ कामक्रोधौशरीरस्थौप्रज्ञानंतौविलुंपतः ३१ याभ्यांहिदेवाःस्वर्यातुःस्वर्गस्यपिदधुर्मुखम् ॥ बिभ्यतोऽनुपरागस्यकामक्रोधौस्मवर्धितौ ३२ कामंक्रोधंचलोभंचदंभंदर्पंचभूमिपः ॥ सम्यग्विजेतुंयोवेदसमहीमभिजायते ३३ सततंनिग्रहेयुक्तइंद्रियाणांभवेन्नृपः ॥ ईप्सन्नर्थंचधर्मंचद्विषतांचपराभवम् ३४ कामाभिभूतःक्रोधाद्वायोमिथ्याप्रतिपद्यते ॥ स्वेषुचान्येषुवातस्यनसहायाभवंत्युत ३५ एकीभूतैर्महाप्राज्ञैःशूरैरर्रिनिबर्हणैः ॥ पांडवैःपृथिवींतातभोक्ष्यसेसहितःसुखी ३६ यथाभीष्मःशांतनवोद्रोणश्चापिमहारथः ॥ आहतुस्ताततत्सत्यमजेयौकृष्णपांडवौ ३७ प्रपद्यस्वमहाबाहुंकृष्णमक्लिष्टकारिणम् ॥ प्रसन्नोहिसुखायस्यादुभयोरेवकेशवः ३८ सुहृदामर्थकामानांयोनतिष्ठतिशासने ॥ प्राज्ञानांकृतविज्ञानांसनरःशत्रुनंदनः ३९ नयुद्धेतातकल्याणंनधर्मार्थौकुतःसुखम् ॥ नचापिविजयोनित्यंमायुद्धेचेतआधिथाः ४० भीष्मेणहिमहाप्राज्ञपित्रातेबाह्लिकेनच ॥ दत्तोंऽशःपांडुपुत्राणांभेदाद्भीतैररिंदम ४१ तस्यचैतत्प्रदानस्यफलमद्यानुपश्यसि ॥ यद्भुंक्षेपृथिवींकृत्स्नांशूरैर्निहतकंटकाम् ४२ प्रयच्छपांडुपुत्राणांयथोचितमरिंदम ॥ यदीच्छसिसहामात्योभोक्तुमर्धंप्रदीयताम् ४३

नि व्यापादयितुंहंतुं २७ । २८ । २९ । ३० क्षुद्राक्षेणसूक्ष्मच्छिद्रेण ३१ अनुपरागस्यअनासक्तस्यापिकामक्रोधौस्वर्गनिरोधकावित्यर्थः ३२ अभिजायतेशास्तीत्यर्थः ३३ । ३४ यःकामेनअभिभूतः क्रोधाद्वाअभिभूतः मिथ्याकपटेनवाऽभिभूतः प्रतिपद्यतेईप्सितार्थादीन् तस्यसहायानभवंतीत्यर्थः ३५ । ३६ । ३७ । ३८ । ३९ । ४० अंशःभागः ४१ । ४२ । ४३

४४ । ४५ । ४६ निकारःअपकारः समाःवर्षाणि ४७ यःत्वंपार्थानांअर्थंअभीप्ససिसएषत्वंनशक्तःतदर्थापहारायेत्यर्थः नापिसूतपुत्रादयःशक्ताः ४८ । ४९ मागमत्मागच्छतु ५० । ५१ । ५२

अलमर्धंपृथिव्यास्तेसहामात्यस्यजीवितुम् ॥ सुहृदांवचनेतिष्ठन्यशःप्राप्स्यसिभारत ४४ श्रीमद्भिरात्मवद्भिस्तैर्बुद्धिमद्भिर्जितेंद्रियैः ॥ पांडवैर्विग्रहस्तातभ्रंशयेन्महतःसुखात् ४५ निगृह्यसुहृदांमन्युंशाधिराज्यंयथोचितम् ॥ स्वमंशंपांडुपुत्रेभ्यःप्रदायभरतर्षभ ४६ अलमंगनिकारोऽयंत्रयोदशसमाःकृतः ॥ शमयैनंमहाप्राज्ञकामक्रोधसमेधितम् ४७ नचैषशक्तःपार्थानांयस्त्वमर्थमभीप्ससि ॥ सूतपुत्रोदृढक्रोधोभ्रातादुःशासनश्चते ४८ भीष्मेद्रोणेकृपेकर्णेभीमसेनेधनंजये ॥ धृष्टद्युम्नेचसंक्रुद्धेनस्युःसर्वाःप्रजाध्रुवम् ४९ अमर्षवशमापन्नोमाकुरूंस्तातजीघनः ॥ एषाहिपृथिवीकृत्स्नामाऽगमत्त्वत्कृतेवधम् ५० यच्चत्वंमन्यसेमूढभीष्मद्रोणकृपादयः ॥ योत्स्यंतेसर्वशक्त्येतिनैतदद्योपपद्यते ५१ समंहिराज्यंप्रीतिश्चस्थानंहिविदितात्मनाम् ॥ पांडवेष्वथयुष्मासुधर्मस्त्वभ्यधिकस्ततः ५२ राजपिंडभयादेतेयदिहास्यंतिजीवितम् ॥ नहिशक्ष्यंतिराजानंयुधिष्ठिरमुदीक्षितुम् ५३ नलोभादर्थसंपत्तिर्नराणामिहदृश्यते ॥ तदलंतातलोभेनप्रशाम्यभरतर्षभ ५४ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिगांधारीवाक्येऊनत्रिंशाधिकशततमोऽध्यायः ॥ १२९ ॥ छ ॥ वैशंपायनउवाच ॥ ततुवाक्यमनादृत्यसोर्थवन्मातृभाषितम् ॥ पुनःप्रतस्थेसंरंभात्सकाशमकृतात्मनाम् १ ततःसभायानिर्गम्यमंत्रयामासकौरवः ॥ सौबलेनमताक्षेणराज्ञाशकुनिनासह २ दुर्योधनस्यकर्णस्यशकुनेःसौबलस्यच ॥ दुःशासनचतुर्थानामिदमासीद्विचेष्टितम् ३ पुराऽयमस्मान्गृह्णातिक्षिप्रकारीजनार्दनः ॥ सहितोधृतराष्ट्रेणराज्ञाशांतनवेनच ४ वयमेवहृषीकेशंनिगृह्णीमबलादिव ॥ प्रसह्यपुरुषव्याघ्रमिंद्रोवैरोचनिंयथा ५ श्रुत्वागृहीतंवार्ष्णेयंपांडवाहतचेतसः ॥ निरुत्साहाभविष्यंतिभग्नदंष्ट्राइवोरगाः ६ अयंह्येषांमहाबाहुःसर्वेषांशर्मवर्मच ॥ अस्मिन्गृहीतेवरदेऋषभेसर्वसात्वताम् ७ निरुद्यमाभविष्यंतिपांडवाःसोमकैःसह ॥ तस्माद्वयमिहैवैनंकेशवंक्षिप्रकारिणम् ८ क्रोशतोधृतराष्ट्रस्यबद्ध्वायोत्स्यामहेरिपून् ॥ तेषांपापमभिप्रायंपापानांदुष्टचेतसाम् ९ इंगितज्ञःकविःक्षिप्रमन्वबुद्ध्यतसात्यकिः ॥ तदर्थमभिनिष्क्रम्यहार्दिक्येनसहास्थितः १० अब्रवीत्कृतवर्माणंक्षिप्रंयोजयवाहिनीम् ॥ व्यूढानीकःसभाद्वारमुपातिष्ठस्वदंशितः ११ यावदाख्याम्यहंचैतत्कृष्णायाक्लिष्टकारिणे ॥ सप्रविश्यसभांवीरःसिंहोगिरिगुहामिव १२ आचष्टतमभिप्रायंकेशवायमहात्मने ॥ धृतराष्ट्रंततश्चैवविदुरंचान्वभाषत १३ तेषामेतमभिप्रायमाचचक्षेस्मयन्निव ॥ धर्मादर्थाच्चकामाच्चकर्मसाधुविगर्हितम् १४ मंदाःकर्तुमिहेच्छंतिनचावाप्यंकथंचन ॥ पुराविकुर्वतेमूढाःपापात्मानःसमागताः १५

५३ । ५४ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे ऊनत्रिंशाधिकशततमोऽध्यायः ॥ १२९ ॥ ॥ छ ॥ ॥ ततुवाक्यमिति १ । २ । ३ । ४ वैरोचनिंबलिं ५ । ६ । ७ केशवंबध्द्वारिपून्योत्स्यामहेइत्युत्तरश्लोकेनान्वयः ८ । ९ । १० । ११ । १२ । १३ कर्मदूतनिग्रहाख्यं १४ विकुर्वतेविकारंकलहाख्यंकुर्वते १५

१६ । १७ । १८ अशक्यंनचकर्तुंशक्यं १९ वासवानुजंविष्णुंत्रिविक्रममित्यर्थः २० नभविष्यंतिमरिष्यंति २१ । २२ । २३ । २४ । २५ पांडवार्थंपांडवधने लुभ्यंतःलोभंकुर्वंतः २६ । २७ इदं

धर्षिताःकाममन्युभ्यांक्रोधलोभवशानुगाः ॥ इमंहिपुंडरीकाक्षंजिघृक्षंत्यल्पचेतसः १६ पटेनाग्निंप्रज्वलितंयथाबालायथाजडाः ॥ सात्यकेस्तद्वचःश्रुत्वाविदुरोदीर्घदर्शिवान् १७ धृतराष्ट्रंमहाबाहुमब्रवीत्कुरुसंसदि ॥ राजन्परीतकालास्तेपुत्राःसर्वेपरंतप १८ अशक्यमयशस्यंचकर्तुंकर्मसमुद्यताः ॥ इमंहिपुंडरीकाक्षमभिभूयप्रसह्यच १९ निग्रहीतुंकिलेच्छंतिसहितावासवानुजम् ॥ इमंपुरुषशार्दूलमप्रधृष्यंदुरासदम् २० आसाद्यनभविष्यंतिपतंगाइवपावकम् ॥ अयमिच्छन्हितान्सर्वान्युद्ध्यमानान्जनार्दनः २१ सिंहोनागानिवक्रुद्धोगमयेद्यमसादनम् ॥ नत्वयंनिंदितंकर्मकुर्यात्पापंकथंचन २२ नचधर्मादपक्रामेदच्युतः पुरुषोत्तमः ॥ विदुरेणैवमुक्तेतुकेशवोवाक्यमब्रवीत् २३ धृतराष्ट्रमभिप्रेक्ष्यसुहृदांशृण्वतांमिथः ॥ राजन्नेतेयदिक्रुद्धामांनिगृह्णीयुरोजसा २४ एतेवामामहंवैनाननुजानीहिपार्थिव ॥ एतान्हिसर्वान्संरब्धान्नियंतुमहमुत्सहे २५ नत्वहंनिंदितंकर्मकुर्यांपापंकथंचन ॥ पांडवार्थेहिलुभ्यंतःस्वार्थान्हास्यंतितेसुताः २६ एतेचेदेवमिच्छंतिकृतकार्योयुधिष्ठिरः ॥ अद्यैवह्यहमेनांश्चयेचैनाननुभारत २७ निगृह्यराजन्पार्थेभ्योदद्यांकिंदुष्कृतंभवेत् ॥ इदंतुनप्रवर्तेयंनिंदितंकर्मभारत २८ सन्निधौतेमहाराजक्रोधजंपापबुद्धिजम् ॥ एषदुर्योधनोराजन्यथेच्छतितथाऽस्तुतत् २९ अहंतुसर्वांस्तनयाननुजानामितेनृप ॥ एतच्छ्रुत्वातुविदुरंधृतराष्ट्रोऽभ्यभाषत ॥ क्षिप्रमानयतंपापंराज्यलुब्धंसुयोधनम् ३० सहमित्रंसहामात्यंससोदर्यंसहानुगम् ॥ शक्नुयांयदिपंथानमवतारयितुंपुनः ३१ ततोदुर्योधनंक्षत्तापुनःप्रावेशयत्सभाम् ॥ अकामंभ्रातृभिःसार्धंराजभिःपरिवारितम् ३२ अथदुर्योधनंराजाधृतराष्ट्रोऽभ्यभाषत ॥ कर्णदुःशासनाभ्यांचराजभिश्चापिसंवृतम् ३३ नृशंसपापभूयिष्ठक्षुद्रकर्मसहायवान् ॥ पापैःसहायैःसंहत्यपापंकर्मचिकीर्षसि ३४ अशक्यमयशस्यंचसद्भिश्चापिविगर्हितम् ॥ यथात्वादृशकोमूढोव्यवस्येत्कुलपांसनः ३५ त्वमिमंपुंडरीकाक्षमप्रधृष्यंदुरासदम् ॥ पापैःसहायैःसंहत्यनिग्रहीतुंकिलेच्छसि ३६ योनशक्योबलात्कर्तुंदेवैरपिसवासवैः ॥ तंत्वंप्रार्थयसेमंदबालश्चंद्रमसंयथा ३७ देवैर्मनुष्यैर्गंधर्वैरसुरैरुरगैश्चयः ॥ नसोढुंसमरेशक्यस्तंनबुद्ध्यसिकेशवम् ३८ दुर्ग्राह्यःपाणिनावायुर्दुःस्पर्शःपाणिनाशशी ॥ दुर्धरापृथिवीमूर्ध्नादुर्ग्राह्यःकेशवोबलात् ३९ इत्युक्तेधृतराष्ट्रेणक्षत्ताऽपिविदुरोऽब्रवीत् ॥ दुर्योधनमभिप्रेक्ष्यधार्तराष्ट्रममर्षणम् ४० ॥ विदुरउवाच ॥ दुर्योधननिबोधेदंवचनंममसांप्रतम् ॥ सौभद्वारेवानरेंद्रोद्विविदोनामनामतः ॥ शिलावर्षेणमहताछादयामासकेशवम् ४१ ग्रहीतुकामोविक्रम्यसर्वयत्नेनमाधवम् ॥ ग्रहीतुंनाशकच्चैनंतंत्वंप्रार्थयसेबलात् ४२ प्राग्ज्योतिषगतंशौरिंनरकःसहदानवैः ॥ ग्रहीतुंनाशकत्तत्रतंत्वंप्रार्थयसेबलात् ४३

तुकर्मकर्तुंमितिशेषः २८ । २९ । ३० पंथानंअवतारयितुंसत्पथेनिवेशयितुं ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३

४४ निर्मोचनेनगरविशेषे ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥ ॥ ७ ॥

अनेकयुगवर्षायुर्निहत्यनरकंमृधे ॥ नीत्वाकन्यासहस्राणिउपयेमेयथाविधि ४४ निर्मोचनेषट्सहस्राःपाशैर्बद्धामहासुराः ॥ ग्रहीतुंनाशकंश्चैनंतंत्वंप्रार्थयसेबलात् ४५ अनेनहिहताबाल्येपूतनाशकुनीतथा ॥ गोवर्धनोधारितश्चगवार्थेभरतर्षभ ४६ अरिष्टोधेनुकश्चैवचाणूरश्चमहाबलः ॥ अश्वराजश्चनिहतःकंसश्चारिष्टमाचरन् ४७ जरासंधश्चवक्रश्चशिशुपालश्चवीर्यवान् ॥ बाणश्चनिहतःसंख्येराजानश्चनिषूदिताः ४८ वरुणोनिर्जितोराजापावकश्चामितौजसा ॥ पारिजातंचहरताजितःसाक्षाच्छचीपतिः ४९ एकार्णवेचस्वपतानिहतौमधुकैटभौ ॥ जन्मांतरमुपागम्यहयग्रीवस्तथाहतः ५० अयंकर्तानक्रियतेकारणंचापिपौरुषे ॥ यद्यदिच्छेदयंशौरिस्तत्तत्कुर्यादयत्नतः ५१ तंनबुध्यसिगोविंदंघोरविक्रममच्युतम् ॥ आशीविषमिवक्रुद्धंतेजोराशिमनिंदितम् ५२ प्रधर्षयन्महाबाहुंकृष्णमक्लिष्टकारिणम् ॥ पतंगोऽग्निमिवासाद्यसामात्योनभविष्यसि ५३ ॥ इतिश्रीमहाभारतेउ० भग० विदुरवाक्येत्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

वैशंपायनउवाच ॥ विदुरेणैवमुक्तस्तुकेशवःशत्रुपूगहा ॥ दुर्योधनंधार्तराष्ट्रमभ्यभाषतवीर्यवान् १ एकोहमितियन्मोहान्मन्यसेमांसुयोधन ॥ परिभूयसुदुर्बुद्धे ग्रहीतुंमांचिकीर्षसि २ इहैवपांडवाःसर्वेतथैवांधकवृष्णयः ॥ इहादित्याश्चरुद्राश्चवसवश्चमहर्षिभिः ३ एवमुक्त्वाजहासोच्चैःकेशवःपरवीरहा ॥ तस्यसंस्मयतःशौरेर्विद्युद्रूपामहात्मनः ४ अंगुष्ठमात्रास्त्रिदशामुमुचुःपावकार्चिषः ॥ अस्यब्रह्माललाटस्थोरुद्रोवक्षसिचाभवत् ५ लोकपालाभुजेष्वासन्नग्निरास्यादजायत ॥ आदित्याश्चैवसाध्याश्चवसवोऽथाश्विनावपि ६ मरुतश्चसहेंद्रेणविश्वेदेवास्तथैवच ॥ बभूवुश्चैकरूपाणियक्षगंधर्वरक्षसाम् ७ प्रादुरास्तांतथादोर्भ्यांसंकर्षणधनंजयौ ॥ दक्षिणेऽथार्जुनोधन्वीहलीरामश्चसव्यतः ८ भीमोयुधिष्ठिरश्चैवमाद्रीपुत्रौचपृष्ठतः ॥ अंधकावृष्णयश्चैवप्रद्युम्नप्रमुखास्ततः ९ अग्रेबभूवुःकृष्णस्यसमुद्यतमहायुधाः ॥ शंखचक्रगदाशक्तिशार्ङ्गलांगलनंदकाः १० अदृश्यंतोद्यतान्येवसर्वप्रहरणानिच ॥ नानाबाहुषुकृष्णस्यदीप्यमानानिसर्वशः ११ नेत्राभ्यांनस्ततश्चैवश्रोत्राभ्यांचसमंततः ॥ प्रादुरासन्महारौद्राःसधूमाःपावकार्चिषः १२ रोमकूपेषुचतथासूर्यस्येवमरीचयः ॥ तंदृष्ट्वाघोरमात्मानंकेशवस्यमहात्मनः १३ न्यमीलयंतनेत्राणिराजानस्त्रस्तचेतसः ॥ ऋतेद्रोणंचभीष्मंचविदुरंचमहामतिम् १४ संजयंचमहाभागमृषींश्चैवतपोधनान् ॥ प्रादात्तेषांसभगवान्दिव्यंचक्षुर्जनार्दनः १५ तद्दृष्ट्वामहदाश्चर्यंमाधवस्यसभातले ॥ देवदुंदुभयोनेदुःपुष्पवर्षंपपातच १६ ॥ धृतराष्ट्रउवाच ॥ त्वमेवपुंडरीकाक्षसर्वस्यजगतोहितः ॥ तस्मात्त्वंयादवश्रेष्ठप्रसादंकर्तुमर्हसि १७ भगवन्ममनेत्राणामंतर्धानंवृणेपुनः ॥ भवंतंद्रष्टुमिच्छामिनान्यंद्रष्टुमिहोत्सहे १८

विदुरेणेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ महामतिंधृतराष्ट्रं १४ । १५ । १६ । १७ । १८

अदृश्यमानेइतरैरितिशेषः १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ वरूथिनारथगुप्तिमता २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ मंदोदुर्योधनः ३७ । ३८

ततोऽब्रवीन्महाबाहुर्धृतराष्ट्रंजनार्दनः ॥ अदृश्यमानेनेत्रेद्वेभवेतांकुरुनंदन १९ तत्राद्भुतंमहाराजधृतराष्ट्रश्चचक्षुषी ॥ लब्धवान्वासुदेवाच्चविश्वरूपदिदृक्षया २० लब्धचक्षुषमासीनंधृतराष्ट्रंनराधिपाः ॥ विस्मिताऋषिभिःसार्धंतुष्टुवुर्मधुसूदनम् २१ चचालचमहीकृत्स्नासागरश्चापिचुक्षुभे ॥ विस्मयंपरमंजग्मुःपार्थिवाभरतर्षभ २२ ततःसपुरुषव्याघ्रःसंजहारवपुःस्वकम् ॥ तांदिव्यामद्भुतांचित्रामृद्धिमत्तामरिंदमः २३ ततःसात्यकिमादायपाणौहार्दिक्यमेवच ॥ ऋषिभिस्तैरनुज्ञातोनिर्ययौमधुसूदनः २४ ऋषयोऽन्तर्हिताजग्मुस्ततस्तेनारदादयः ॥ तस्मिन्कोलाहलेवृत्तेतदद्भुतमिवाभवत् २५ तंप्रस्थितमभिप्रेक्ष्यकौरवाःसहराजभिः ॥ अनुजग्मुर्नरव्याघ्रंदेवाइवशतक्रतुम् २६ अचिंतयन्नमेयात्मासर्वंतद्राजमंडलम् ॥ निश्चक्रामततःशौरिःसधूमइवपावकः २७ ततोरथेनशुभ्रेणमहताकिंकिणीकिना ॥ हेमजालविचित्रेणलघुनामेघनादिना २८ सूपस्करेणशुभ्रेणवैयाघ्रेणवरूथिना ॥ शैब्यसुग्रीवयुक्तेनप्रत्यदृश्यतदारुकः २९ तथैवरथमास्थायकृतवर्मामहारथः ॥ वृष्णीनांसंमतोवीरोहार्दिक्यःसमदृश्यत ३० उपस्थितरथंशौरिंप्रयास्यंतमरिंदमम् ॥ धृतराष्ट्रोमहाराजःपुनरेवाभ्यभाषत ३१ यावद्बलंमेपुत्रेषुपश्यतस्तेजनार्दन ॥ प्रत्यक्षंतेनतेकिंचित्परोक्षंशत्रुकर्शन ३२ कुरूणांशममिच्छंतंयतमानंचकेशव ॥ विदित्वेतामवस्थांमेनाभिशंकितुमर्हसि ३३ नमेपापोऽस्त्यभिप्रायःपांडवान्प्रतिकेशव ॥ ज्ञातमेवहितंवाक्यंयन्मयोक्तःसुयोनः ३४ जानंतिकुरवःसर्वेराजानश्चैवपार्थिवाः ॥ शमेप्रयतमानंमांसर्वयत्नेनमाधव ३५ ॥ वैशंपायनउवाच ॥ ततोऽब्रवीन्महाबाहुर्धृतराष्ट्रंजनार्दनः ॥ द्रोणंपितामहंभीष्मंक्षत्तारंबाह्लिकंकृपम् ३६ प्रत्यक्षमेतद्भवतांयद्वृत्तंकुरुसंसदि ॥ यथाचाशिष्टवन्मंदोरोषादद्यसमुत्थितः ३७ वदत्यनीशमात्मानंधृतराष्ट्रोमहीपतिः ॥ आपृच्छेभवतःसर्वान्गमिष्यामियुधिष्ठिरम् ३८ आमंत्र्यप्रस्थितंशौरिंरथस्थंपुरुषर्षभ ॥ अनुजग्मुर्महेष्वासाःप्रवीराभरतर्षभाः ३९ भीष्मोद्रोणःकृपःक्षत्ताधृतराष्ट्रोऽथबाह्लिकः ॥ अश्वत्थामाविकर्णश्चयुयुत्सुश्चमहारथः ४० ततोरथेनशुभ्रेणमहताकिंकिणीकिना ॥ कुरूणांपश्यतांद्रष्टुंस्वसारंसपितुर्ययौ ४१ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिविश्वरूपदर्शनेएकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥ ॥ ५ ॥ ॥ वैशंपायनउवाच ॥ प्रविश्याथगृहंतस्याश्चरणावभिवाद्यच ॥ आचख्यौतत्समासेनयद्वृत्तंकुरुसंसदि १ ॥ वासुदेवउवाच ॥ उक्तंबहुविधंवाक्यंग्रहणीयंसहेतुकम् ॥ ऋषिभिश्चैवचमयानचासौतद्गृहीतवान् २ कालपक्वमिदंसर्वंसुयोधनवशानुगम् ॥ आपृच्छेभवतींशीघ्रंप्रयास्येपांडवान्प्रति ३ किंवाच्याःपांडवेयास्तेभवत्यावचनान्मया ॥ तद्ब्रूहित्वंमहाप्रज्ञेशुश्रूषेवचनंतव ४

३९ । ४० किंकिणीकंक्षुद्रघंटिकाजालंतद्वता।किंकिणीकिना ४१ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥ ॥ प्रविश्येति १ । २ । ३ । ४

भूयान्नृपृथ्वीपालनजोधर्मः ५ श्रोत्रियस्यवेदाध्यायिनः । मंदकस्यअर्थज्ञानशून्यस्य । अनुवाकेनअत्यंतंवेदाक्षरावृत्त्या । हतानष्टा ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ दंडनीतिः स्वामिनाप्रयुक्तेतिसंबंधः धर्मेभ्यः धर्मार्थंनियच्छतिनिर्बंधंकरोतिदंडनीतिरेव १४ । १५ राजाधर्मंअधर्मंवाप्रवर्तयन्कृतत्रेतादियुगरूपस्यकालस्यकारणं । एवंचसर्वस्मिन्नपिकालेधर्मादितारत

॥ कुंत्युवाच ॥ ब्रूयाःकेशवराजानंधर्मात्मानंयुधिष्ठिरम् ॥ भूयांस्तेहीयतेधर्मोमापुत्रकृत्थाकृथाः ५ श्रोत्रियस्येवतेराजन्मंदकस्याविपश्चितः ॥ अनुवाकहता बुद्धिर्धर्ममेवैकमीक्षते ६ अंगावेक्षस्वधर्मंत्वंयथासृष्टःस्वयंभुवा ॥ बाहुभ्यांक्षत्रियाःसृष्टाबाहुवीर्योपजीविनः ७ क्रूरायकर्मणेनित्यंप्रजानांपरिपालने ॥ शृणु चात्रोपमामेकांयावृद्धेभ्यःश्रुतामया ८ मुचुकुंदस्यराजर्षेरददत्पृथिवीमिमाम् ॥ पुरावैश्रवणःप्रीतोनचासौतद्गृहीतवान् ९ बाहुवीर्यार्जितंराज्यमश्नीयामिति कामये ॥ ततोवैश्रवणःप्रीतोविस्मितःसमपद्यत १० मुचुकुंदस्ततोराजासोन्वशासद्वसुंधराम् ॥ बाहुवीर्यार्जितांसम्यक्क्षत्रधर्ममनुव्रतः ११ यंहिधर्मंचरंती हप्रजाराज्ञासुरक्षिताः ॥ चतुर्थंतस्यधर्मस्यराजाविंदतेभारत १२ राजाचरतिचेद्धर्मंदेवत्वायैवकल्पते ॥ सचेदधर्मंचरतिनरकायैवगच्छति १३ दंडनीतिश्च धर्मेभ्यश्चातुर्वर्ण्यंनियच्छति ॥ प्रयुक्तास्वामिनासम्यगधर्मेभ्यश्चयच्छति १४ दंडनीत्यांयदाराजासम्यक्कार्त्स्न्येनवर्तते ॥ तदाकृतयुगंनामकालःश्रेष्ठःप्र वर्तते १५ कालोवाकारणंराज्ञोराजावाकालकारणम् ॥ इतितेसंशयोमाभूद्राजाकालस्यकारणम् १६ राजाकृतयुगस्रष्टात्रेतायाद्वापरस्यच ॥ युगस्यचचतुर्थ स्यराजाभवतिकारणम् १७ कृतस्यकरणाद्राजास्वर्गमत्यंतमश्नुते ॥ त्रेतायाःकरणाद्राजास्वर्गंनात्यंतमश्नुते १८ प्रवर्तनाद्द्वापरस्ययथाभागमुपाश्नुते ॥ कलेःप्रवर्तनाद्राजापापमत्यंतमश्नुते १९ ततोवसतिदुष्कर्मानरकेशाश्वतीःसमाः ॥ राजदोषेणहिजगत्स्पृश्यतेजगतःसच २० राजधर्मानवेक्षस्वपितृपैता महांश्चितान् ॥ नैतद्राजर्षिवृत्तंहियत्रत्वंस्थातुमिच्छसि २१ नहिवैक्लव्यसंसृष्टआनृशंस्यव्यवस्थितः ॥ प्रजापालनसंभूतंफलंकिंचनलब्धवान् २२ नह्येता माशिषंपांडुर्नचाहंनपितामहः ॥ प्रयुक्तवंतःपूर्वंतेययाचरसिमेधया २३ यज्ञोदानंतपःशौर्यंप्रज्ञासंतानमेवच ॥ माहात्म्यंबलमोजश्चनित्यमाशंसितंमया २४ नित्यंस्वाहास्वधानित्यंददुर्मानुषदेवताः ॥ दीर्घमायुर्धनंपुत्रान्सम्यगाराधिताःशुभाः २५ पुत्रेष्वाशासतेनित्यंपितरोदैवतानिच ॥ दानमध्ययनंयज्ञःप्रजा नांपरिपालनम् २६ एतद्धर्ममधर्मंवाजन्मनैवाभ्यजायथाः ॥ तेतुवैद्याःकुलेजाताअवृत्त्यातातपीडिताः २७ यत्रदानपतिंशूरंक्षुधिताःपृथिवीचराः ॥ प्रा प्यतुष्टाःप्रतिष्ठंतेधर्मःकोऽभ्यधिकस्ततः २८ दानेनान्यंबलेनान्यंतथासूनृतयापरम् ॥ सर्वतःप्रतिगृह्णीयाद्राज्यंप्राप्येहधार्मिकः २९

म्याद्युगचतुष्टयमस्तीतिभावः १६ । १७ । १८ । १९ जगतःदोषेणसचराजास्पृश्यते २० । २१ फलंनलब्धवान्प्राप्तवान्असीतिशेषः २२ । २३ । २४ नित्यामिति मानुषाश्चदेवताश्च सम्यगाराधिताःसत्यः इहलोकेआयुरादीनिपरलोकसाधनानिस्वधादीनिसत्कर्माणिचदद्युः २५ । २६ एतत्मद्वाक्यंधर्मंधर्मयुक्तं अधर्मंवा जन्मनैवस्वभावतएवअभ्यजायथाःअभिजानीषे हेकृष्ण । तेतुपांडवास्तुवैद्याःविद्यावंतः २७ दानपतिंपालनाधिकारिणं देहूपालनेअस्यरूपं २८ । २९

३० । ३१ । ३२ । ३३ । ३४ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेद्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥ अत्रेति १ ततःमदुक्तात् श्रेयःप्रशस्ततरं भूयोऽधिकतरं मन्युमतीदैन्यवती विभावरीकुपिता । 'विभावरीरजन्यांचवक्रयोषिति' इतिविश्वः २।३ राजन्यामूर्धाभिषिक्ता । 'मूर्धाभिषिक्तोराजन्यः' इत्यमरः जगर्हेनिंदितवती ४ अनंदनकुपुत्रकुत्सार्थेऽव्ययम् ५ असंख्येयःअगणनीयःतुच्छत्वात् क्लीबंनिर्वीर्यंसाधनंबाह्वादिकंयस्यसतथा ६ माबीभरःमापालय प्रतिसहर भयमितिशेषः ७ माशेष्वनिरुद्योगोमाभूः ८ । ९ पराक्रमेःपराक्रमंकुरु १० विवदन्शत्रु

ब्राह्मणःप्रचरेद्भैक्षंक्षत्रियःपरिपालयेत् ॥ वैश्योधनार्जनंकुर्याच्छूद्रःपरिचरेच्चतान् ३० भैक्षंविप्रातिषिद्धंतेकृषिर्नैवोपपद्यते ॥ क्षत्रियोऽसिक्षताद्त्राताबाहुवीर्योपजीविता ३१ पित्र्यमंशंमहाबाहोनिमग्नंपुनरुद्धर ॥ साम्नाभेदेनदानेनदंडेनाथनयेनवा ३२ इतोदुःखतरंकिंनुयदहंहीनबांधवा ॥ परपिंडमुदीक्षेवैत्वांसूत्वामित्रनंदन ३३ युद्धयस्वराजधर्मेणमानिमज्जीःपितामहान् ॥ माऽगमःक्षीणपुण्यस्त्वंसानुजःपापिकांगतिम् ३४ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणि कुंतीवाक्येद्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥ ॥ ५ ॥ ॥ कुंत्युवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ विदुलायाश्चसंवादंपुत्रस्यचपरंतप १ ततःश्रेयश्चभूयश्चयथावद्वक्तुमर्हसि ॥ यशस्विनीमन्युमतीकुलेजाताविभावरी २ क्षत्रधर्मरतादांताविदुलादीर्घदर्शिनी ॥ विश्रुताराजसंसत्सुश्रुतवाक्याबहुश्रुता ३ विदुलानामराजन्याजगर्हेपुत्रमौरसम् ॥ निर्जितंसिंधुराजेनशयानंदीनचेतसम् ४ ॥ विदुलोवाच ॥ अनंदनमयाजातद्विषतांहर्षवर्धन ॥ नमयात्वंनपित्राचजातःक्वाभ्यागतोह्यसि ५ निर्मन्युश्चाप्यसंख्येयःपुरुषःक्लीबसाधनः ॥ यावज्जीवंनिराशोऽसिकल्याणायधुरंवह ६ माऽऽत्मानमवमन्यस्वमैनमल्पेनबीभरः ॥ मनःकृत्वासुकल्याणंमाभैस्त्वंप्रतिसंहर ७ उत्तिष्ठहेकापुरुषमाशेष्वैवंपराजितः ॥ अमित्रान्नंदयन्सर्वान्निर्मानोबंधुशोकदः ८ सुपूरावैकुनदिकासुपूरोमूषिकांजलिः ॥ सुसंतोषःकापुरुषःस्वल्पकेनैवतुष्यति ९ अप्यहेरारुजन्दंष्ट्रामाश्वेवनिधनंव्रज ॥ अपिवासंशयंप्राप्यजीवितेऽपिपराक्रमेः १० अप्यरेःश्येनवच्छिद्रंपश्येस्त्वंविपरिक्रमन् ॥ विवदन्वाऽथवातूष्णींव्योम्निवापरिशंकितः ११ त्वमेवंप्रेतवच्छेषेकस्माद्वज्रहतोयथा ॥ उत्तिष्ठहेकापुरुषमास्वाप्सीःशत्रुनिर्जितः १२ माऽस्तंगमस्त्वंकृपणोविश्रूयस्वस्वकर्मणा ॥ मामध्येमाजघन्येत्वंमाऽधोभूस्तिष्ठगर्जितः १३ अलातंतिंदुकस्येवमुहूर्तमपिहिज्वल ॥ मातुषाग्निरिवानर्चिर्धूमायस्वजिजीविषुः १४ मुहूर्तंज्वलितंश्रेयोनचधूमायितंचिरम् ॥ माहस्मकस्यचिद्गेहेजानिराज्ञःखरोमृदुः १५

जयार्थंअनेकान्पक्षानुद्भावयन्वातूष्णींभूतोरेश्छिद्रंपश्येः यथाव्योम्निअपरिशंकितः शत्रोराधिक्याद्भयमपश्यन्श्येनस्तद्वत् ११ । १२ विश्रूयस्वख्यातोभव मामध्यइति साममेदौजघन्यमध्यमौ । दानमधमोनीचउपायः । दंडस्तूत्तमः । तत्राद्यत्रयकर्तामाभूः किंतुगर्जितोदंडयितैवभवेत्यर्थः ऊर्जितइतिवापाठः १३ तिंदुकस्यअलातंयथादिक्षुस्फुलिंगान्विक्षिपतिज्वलतितद्वत्ज्वलदीप्यस्व । परंतुतुषाग्निवदनर्चिर्माधूमायस्व । काकरंखाजिजीविषुरितिपाठांतरे काकरंखाः काकरमध्यगारं माखाःमानाशय । खैतुस्थैर्येखदनहिंसयोरितिखायतेरिदंरूपं । काकरंखइतिपाठे काकवत्रंखतिपलायतेवाकाकरंखः । रखिगतावित्यस्यरूपम् १४ माजनिमाउत्पद्यतां खरःकर्कशः । खरीतिपाठेखरस्त्वबानितिसएवार्थः मृदुर्दयालुः १५

आजिंसंग्रामं मृत्वाऽभिसृत्य मानुष्यकंमनुष्यस्योचितं १६ प्राणानांप्राणाःबलंतत्साध्यानांकार्याणांआनंतर्यंअविच्छेदेनकार्यधारामारभतइत्यर्थः नधनायतेधनंआत्मनोनेच्छाति तृष्णांत्यजती
त्यर्थः १७ ध्रुवांगतिंमरणं अग्रतइत्युपहासः पृष्ठतःकृत्वेत्यर्थः १८ भोगमूलेराज्यंधनंवा १९ निमज्जताप्रपतिष्यताचशत्रुर्जंघायांग्राह्यः तेनैवसहनिमज्जेत्पतेद्वेत्यर्थः नाविषीदेत्निरुद्यमोनभवेत् २०
उद्यम्यउद्यमंकृत्वा धुरंभारमुत्कर्षेत् उद्यच्छेत् आजानेयाःजात्यश्वाःतेषांकृतंकर्मयुद्धेऽनवसादरूपंस्मरन् विद्धिप्राप्नुहि २१ त्वत्कृतेमग्नमितिसंबंधः २२ राशिवर्धनःसंख्यापूरकोनतुप्रयोजनांतरार्हः

न

कृत्वामानुष्यकंकर्ममृत्वाऽऽजिंयावदुत्तमम् ॥ धर्मस्यानृण्यमाप्नोतिनचात्मानंविगर्हते १६ अलब्ध्वायदिवालब्ध्वानानुशोचतिपंडितः ॥ आनंतर्यंचारभतेन
प्राणानांधनायते १७ उद्भावयस्ववीर्यंवातांवागच्छध्रुवांगतिम् ॥ धर्मंपुत्राग्रतःकृत्वाकिंनिमित्तंहिजीवसि १८ इष्टापूर्तंहितेक्लीबकीर्तिश्चसकलाहता ॥ वि
च्छिन्नंभोगमूलंतेकिंनिमित्तंहिजीवसि १९ शत्रुर्निमज्जताग्राह्योजंघायांप्रपतिष्यता ॥ विपरिच्छिन्नमूलोऽपिनविषीदेत्कथंचन २० उद्यम्यधुरमुत्कर्षेदाजाने
यकृतंस्मरन् ॥ कुरुसत्वंचमानंचविद्धिपौरुषमात्मनः २१ उद्भावयकुलंमग्नंत्वत्कृतेस्वयमेवहि ॥ यस्यवृत्तंनजल्पंतिमानवामहदद्भुतम् २२ राशिवर्धनमात्रंस
नैवस्त्रीनपुनःपुमान् ॥ दानेतपसिसत्येचयस्यनोच्चरितंयशः २३ विद्यायामर्थलाभेवामातुरुच्चारएवसः ॥ श्रुतेनतपसावाऽपिश्रियावाविक्रमेणवा २४ जनान्यो
ऽभिभवत्यन्यान्कर्मणाहिसवैपुमान् ॥ नत्वेवजाल्मींकापालींवृत्तिमेषितुमर्हसि २५ नृशंस्यामयशस्यांचदुःखांकापुरुषोचिताम् ॥ यमेनमभिनंदेयुरमित्राःपुरु
षंकृशम् २६ लोकस्यसमवज्ञातंनिहीनासनवाससम् ॥ अहोलाभकरंहीनमल्पजीवनमल्पकम् २७ नेदृशंबंधुमासाद्यबांधवःसुखमेधते ॥ अवृत्त्यैवविपत्स्या
मोवयंराष्ट्रात्प्रवासिताः २८ सर्वकामरसैर्हीनाःस्थानभ्रष्टाअकिंचनाः ॥ अवल्गुकारिणंसत्सुकुलवंशस्यनाशनम् २९ कलिंपुत्रप्रवादेनसंजयत्वामजीजनम् ॥
निरमर्षंनिरुत्साहंनिर्वीर्यमरिनंदनम् ३० मास्मसीमंतिनीकाचिज्जनयेत्पुत्रमीदृशम् ॥ माधूमायज्वलात्यंतमाक्रम्यजहिशात्रवान् ३१ ज्वलमूर्धन्यमित्राणां
मुहूर्तमपिवाक्षणम् ॥ एतावानेवपुरुषोयदमर्षीयदक्षमी ३२ क्षमावान्निरमर्षश्चनैवस्त्रीनपुनःपुमान् ॥ संतोषोवैश्रियंहंतितथाऽनुक्रोशएवच ३३ अनुत्थानभये
चोभेनिरीहोनाश्नुतेमहत् ॥ एभ्योनिकृतिपापेभ्यःप्रमुंचात्मानमात्मना ३४ आयसंहृदयंकृत्वामृगयस्वपुनःस्वकम् ॥ परंविषहतेयस्मात्तस्मात्पुरुषउच्यते
३५ तमाहुर्व्यर्थनामानंस्त्रीवद्यइहजीवति ॥ शूरस्योर्जितसत्त्वस्यसिंहविक्रांतचारिणः ३६

३७

२३ मातुःउच्चारोविष्ठा २४ कापालींवृत्तिंभिक्षाचर्यां २५ यंएनंअमित्राअभिनंदेयुःतंबंधुंबांधवःआसाद्यनसुखमेधतइतितृतीयश्लोकेनसंबंधः २६ अहोलाभकरंअल्पेऽपिलाभेअहोलाभोजात
इतिविस्मयंकुर्वाणं २७ अवृत्त्याजीवनोपायाभावेन विपत्स्यामःमरिष्यामः २८ अवल्गुअमंगलं अकर्मेतिवापाठः तत्कारिणंनिश्चेष्टं कुलंज्ञातयः वंशःसोमसूर्यादिमूलोत्पत्तिस्थानं २९ संजये
तितस्यनाम ३० । ३१ । ३२ अनुक्रोशोदया ३३ अनुत्थानंशत्रुंप्रत्यनवस्थानंभयंचतेउभेचश्रियंहतइतिपूर्वेणसंबंधः निरीहोनिश्चेष्टो नाश्नुते महत्पदमितिशेषः निकृतिपापेभ्यःपराभवदोषेभ्यः
३४ स्वकंधनादिकं परंविषहतेइतिपुरुषपदनिर्वचनंवर्णविकारादिनाज्ञेयं ३५ । ३६

दिष्टभावंमरणं प्रजासंततिः प्रियंपुत्रादि सुखंतत्परिष्वंगादिजोहर्षः ३७ । ३८ मामपश्यंत्यास्तेपृथिव्याकिमितिसंबंधः ३९ किमद्यकिंभोक्ष्यामीतियोचिंतयंतिनिर्धनास्तेषांकिमद्यकानां यद्वा । किमद्यत्वरयाश्वएवशत्रूनजेष्यामइतिविलंबशीलानां हन्यमानस्येतिपाठेअनुद्रुतस्य । अग्रहंतिर्गस्यर्थः । अनाहतानामितिपाठेशत्रैरक्षतानां । अनाद्दतानामितिपाठेअलसानां निर्मन्युकानामि त्यपिपाठः ४० । ४१ । ४२ । ४३ । ४४ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥ ७ ॥ अथेति १ । २ । ३ । ४ सहायोपचितिंसहायसंपत्तिं

दिष्टभावंगतस्यापिविषयेमोदतेप्रजा ॥ यआत्मनःप्रियसुखेहित्वामृगयतेश्रियम् ३७ अमात्यानामथोहर्षमादधात्यचिरेणसः ३८ ॥ पुत्रउवाच ॥ किंनुतेमा मपश्यंत्याःपृथिव्याअपिसर्वया ॥ किमाभरणकृत्यंतेकिंभोगैर्जीवितेनवा ३९ ॥ मातोवाच ॥ किमद्यकानांयेलोकाद्विषंतस्तानवाप्नुयुः ॥ येत्वाद्दतात्मनां लोकाःसुहृदस्तान्व्रजंतुनः ४० भृत्यैर्विहीयमानानांपरपिंडोपजीविनाम् ॥ कृपणानामसत्वानांमावृत्तिमनुवर्तिथाः ४१ अनुत्वांतातजीवंतुब्राह्मणाःसुहृदस्त था ॥ पर्जन्यमिवभूतानिदेवाइवशतक्रतुम् ४२ यमाजीवंतिपुरुषंसर्वभूतानिसंजय ॥ पक्वंद्रुममिवासाद्यतस्यजीवितमर्थवत् ४३ यस्यशूरस्यविक्रांतैरेधंतेबां धवाःसुखम् ॥ त्रिदशाइवशक्रस्यसाधुतस्येहजीवितम् ४४ स्वबाहुबलमाश्रित्ययोऽभ्युज्जीवतिमानवः ॥ सलोकेलभतेकीर्तिंपरत्रचशुभांगतिम् ४५ ॥ इति श्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणि विदुलापुत्रानुशासने त्रयस्त्रिंशाधिकशततमोऽध्यायः ॥ १३३ ॥ ॥ विदुलोवाच ॥ अथैतस्यामवस्थायां पौरुषंहातुमिच्छसि ॥ निहीनसेवितंमार्गंगमिष्यस्यचिरादिव १ योहितेजोयथाशक्तिनदर्शयतिविक्रमात् ॥ क्षत्रियोजीविताकांक्षीस्तेनइत्येवतंविदुः २ अर्थ वंत्युपपन्नानिवाक्यानिगुणवंतिच ॥ नैवसंप्राप्नुवंतित्वांमुमूर्षुमिवभेषजम् ३ संतिवैसिंधुराजस्यसंतुष्टानतथाजनाः ॥ दौर्बल्यादासतेमूढाव्यसनौघप्रतीक्षिणः ४ सहायोपचितिंकृत्वाव्यवसाय्यततस्ततः ॥ अनुदुष्येयुरपरेपश्यंतस्तवपौरुषम् ५ तैःकृत्वासहसंघातंगिरिदुर्गालयंचर ॥ कालेव्यसनमाकांक्षन्नैवायम जरामरः ६ संजयोनामतश्चत्वंनचपश्यामितत्त्वयि ॥ अन्वर्थनामाभवमेपुत्रमाव्यर्थनामकः ७ सम्यग्दृष्टिर्महाप्राज्ञोबालंत्वांब्राह्मणोऽब्रवीत् ॥ अयंप्राप्यमह त्कृच्छ्रंपुनर्वृद्धिंगमिष्यति ८ तस्यस्मरंतीवचनमाशंसेविजयंतव ॥ तस्मात्तातब्रवीमित्वांवक्ष्यामिचपुनःपुनः ९ यस्यह्यर्थाभिनिर्वृत्तौभवंत्याप्यायिताःपरे ॥ तस्यार्थसिद्धिर्नियतानयेष्वर्थानुसारिणः १० समृद्धिरसमृद्धिर्वापूर्वेषांममसंजय ॥ एवंविद्वान्युद्धमनाभवमाप्रत्युपाहरः ११

कृत्वापिअपरेस्वकीयास्तवपौरुषमपश्यंतोयत्ननैष्फल्यादनुदुष्येयुः शत्रुपक्षंश्रयेयुरित्यर्थः ५ स्वीयानांसंग्रहेउपायमाहतैरिति तैःस्वीयैः संघातंऐक्यं व्यसनंपरस्य अयंतवशत्रुः ६ । ७ मेमह्यं ब्राह्मणोऽब्रवीदितिसंबंधः ८ । ९ अर्थाभिनिर्वृत्तौप्रयोजननिष्पत्तौ परेतत्संबंधिनःतेनार्थेनआप्यायिताभवंति तस्यतद्भाग्यादेवार्थसिद्धिः नयेषुनीतिमार्गेषु १० पूर्वेषांममचयुद्धेसमृद्धिरसमृद्धिर्वा वश्यंभाविनीत्येवंविद्वान्युद्धमनाभव लाभालाभौरूमौकृत्वायुद्धपरएवेतिभावः । माप्रत्युपाहरः प्रत्युपहारंयुद्धोपसंहारंमाकार्षीरित्यर्थः ११

अयुध्यतोदरिद्रत्वंस्यात्तच्चानिष्टमित्याह नातइति ११ पर्यायमरणंदारिद्र्यं नामांतरेणमरणमेवेत्यर्थः १३ । १४ । १५ । १६ अस्मान्प्रजहतः अस्मत्त्यागंकुर्वतः १७ कृत्यंकर्तव्यंपराक्रमम् १८
१९ श्रोतारःपराज्ञायाः । पाठांतरेश्रेतारआश्रयितारः २० । २१ शक्याःजेतुमितिशेषः सह्याइतिपाठेसहनीयाः २२ निर्विण्णात्माविरक्तचित्तः यतोहतमनानष्टसंकल्पः विश्रुतिंख्यातिं २३
ग्रहंसोमपात्रं प्रग्रहमितिपाठेनियमनं नियंतृत्वमित्यर्थः । 'प्रग्रहश्चतुलासूत्रेबंद्यांनियमनेभुजे'इतिविश्वः २४ । २५ । २६ कापुरुषाःजनाः रणेआत्मानंदेहंत्यक्त्वारणेदक्षंशूरंसमृद्धिभिस्तर्प

नातःपापीयसींकांचिदवस्थांशंबरोऽब्रवीत् ॥ यत्रनैवाद्यनप्रातर्भोजनंप्रतिदृश्यते १२ पतिपुत्रवधादेतत्परमंदुःखमब्रवीत् ॥ दारिद्र्यमितियत्प्रोक्तंपर्यायम
रणंहितत् १३ अहंमहाकुलेजाताहृदाद्ध्रदमिवागता ॥ ईश्वरीसर्वकल्याणीभर्त्रापरमपूजिता १४ महार्हमाल्याभरणांसुमृष्टांबरवाससम् ॥ पुराहृष्टःसुहृद्वर्गो
मामपश्यत्सुहृद्गताम् १५ यदामांचैवभार्यांचद्रष्टाऽसिभृशदुर्बलाम् ॥ नतदाजीवितेनार्थोभवितातवसंजय १६ दासकर्मकरान्भृत्यानाचार्यर्त्विक्पुरोहि
तान् ॥ अवृत्त्याऽस्मान्प्रजहतोदृष्ट्वाकिंजीवितेनते १७ यदिकृत्यंनपश्यामितवाद्याहंयथापुरा ॥ श्लाघनीयंयशस्यंचकाशांतिर्हृदयस्यमे १८ नेतिचेद्ब्राह्मणं
ब्रूयांदीर्येतहृदयंमम ॥ नह्यहंनचमेभर्तानेतिब्राह्मणमुक्तवान् १९ वयमाश्रयणीयाःस्मनश्रोतारःपरस्यच ॥ साऽन्यमासाद्यजीवंतीपरित्यक्ष्यामिजीवितम् २०
अपारेभवनःपारमप्लवेभवनःप्लवः ॥ कुरुष्वस्थानमस्थानेमृतान्संजीवयस्वनः २१ सर्वेतेशत्रवःशक्यानचेज्जीवितुमर्हसि ॥ अथचेदीदृशींवृत्तिंक्लीबामभ्युपपद्य
से २२ निर्विण्णात्माहतमनामुंचैतांपापजीविकाम् ॥ एकशत्रुवधेनैवशूरोगच्छतिविश्रुतिम् २३ इंद्रोवृत्रवधेनैवमहेंद्रःसमपद्यत ॥ माहेंद्रंचग्रहंलेभेलोकानां
चेश्वरोऽभवत् २४ नामविश्राव्यवैसंख्येशत्रूनाहूयदंशितान् ॥ सेनाग्रंचापिविद्राव्यहत्वावापुरुषंवरम् २५ यदेवलभतेवीरःसुयुद्धेनमहद्यशः ॥ तदेवप्रव्यथंतेऽ
स्यशत्रवोविनमंतिच २६ त्यक्त्वाऽऽत्मानंरणेदक्षंशूरंकापुरुषाजनाः ॥ अवशास्तर्पयंतिस्मसर्वकामसमृद्धिभिः २७ राज्यंचाप्युग्रविभ्रंशंसंशयोजीवितस्यवा ॥
नलब्धस्यहिशत्रोर्वैशेषंकुर्वंतिसाधवः २८ स्वर्गद्वारोपमंराज्यमथवाऽप्यमृतोपमम् ॥ रुद्धमेकायनंमत्वापतोल्मुकइवारिषु २९ जहिशत्रून्रणेराजन्स्वधर्म
मनुपालय ॥ मात्वादृशंसुकृपणंशत्रूणांभयवर्धनम् ३० अस्मदीयैश्चशोचद्भिर्नदद्भिश्चपरैर्वृतम् ॥ अपित्वांनानुपश्येयंदीनादीनमिवास्थितम् ३१ हृष्यसौवी
रकन्याभिःश्लाघस्वार्थैर्यथापुरा ॥ माचसैंधवकन्यानामवसन्नोवशंगमः ३२ युवारूपेणसंपन्नोविद्ययाऽभिजनेनच ॥ यत्त्वादृशोविकुर्वीतयशस्वीलोकविश्रुतः ३३

यंतिस्मेतिसंबंधः २७ उग्रविभ्रंशंमहाप्रपातं जीवितस्यसंशयोमरणं लब्धस्यजितस्यशेषंपुनःस्वल्पेनविभवेनावस्थापनम् २८ रुद्धंग्रस्तंमत्वा एकायनंस्वर्गराज्ययोर्मध्येएकंमार्गं पतगच्छ
२९ मात्वेति शत्रूणांभयवर्धनंभयच्छेदनम् अनुग्रत्वात् सुकृपणंदीनं त्वात्वां मादृशंमाद्राक्षं दृशमितिमाङ्योगादडभावेइरितोवेत्यङ्पक्षेदृशिरप्रेक्षणेऽस्यलुङुत्तमैकवचनं । पाठांतरंतुमूढजन
कल्पितंनादरणीयम् ३० । ३१ हृष्यहर्षंप्राप्नुहि सौवीरकन्याभिःस्वदारैः माचेति सैंधवकन्यानांशत्रुदेशजकन्यानां ३२ विकुर्वीतअपसरणंकुर्वीत ३३

अधुर्यवत् अदांतवृषभवत् अनड्वानिवेत्यपिपाठः तत् विकारकरणम् ३४ । ३५ वेदवेद्मि परिशाश्वतं सर्वथैवैकरूपं अक्षीणमित्यर्थः ३६ पूर्वैःस्ववंशजैः परैरन्यवंशीयैः परतरैर्वृद्धैः अव्ययंअ पक्षयहीनंक्षत्रहृदयंप्रोक्तमितिपूर्वेणसंबंधः ३७ आजातःसम्यग्जातः कुलेजातइत्यर्थः यआजातः सभयात्कस्यचिन्ननमेत् वृत्तिसमीक्षोवृत्तिंसमीक्षमाणोवाननमेत् ३८ उद्यच्छेत्उद्यमंकुर्यात् अपर्वणिअकांडेवृथाऽपीत्यर्थः ३९ परीयात्पर्यटनंकुर्यात् ४० दुष्कृतःपापिष्ठान् ४१ ॥ ॥ इति श्रीमहाभारते उद्योगपर्वणिनीलकंठीये भारतभावदीपे चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥ ॥ छ ॥ ॥ कृष्णायसस्यलोहस्य संहत्यपिंडीकृत्य १ । २ एकजंअभ्रातृकं ३ । ४ सर्वावस्थागार्हस्थ्यादिरूपा सर्वारंभाइतिपाठांतरं तावेवधर्मार्थाविव

अधुर्यवच्चवोढव्येमन्येमरणमेवतत् ॥ यदित्वामनुपश्यामिपरस्याप्रियवादिनम् ३४ पृष्ठतोऽनुव्रजंतंवाकाशांतिर्हृदयस्यमे ॥ नास्मिन्जातुकुलेजातोगच्छे द्योऽन्यस्यपृष्ठतः ३५ नत्वंपरस्यानुचरस्तातजीवितुमर्हसि ॥ अहंहिक्षत्रहृदयंवेदयत्परिशाश्वतम् ३६ पूर्वैःपूर्वतरैःप्रोक्तंपरैःपरतरैरपि ॥ शाश्वतंचाव्य यंचैवप्रजापतिविनिर्मितम् ३७ योवैकश्चिदिहाजातःक्षत्रियःक्षत्रधर्मवित् ॥ भयाद्वृत्तिसमीक्षोवाननमेदिहकस्यचित् ३८ उद्यच्छेदेवननमेदुद्यमोह्येवपौरुषम् ॥ अप्यपर्वणिभज्येतननमेतेहकस्यचित् ३९ मातंगोमत्तइवचपरीयात्समहामनाः ॥ ब्राह्मणेभ्योनमेन्नित्यंधर्मायैवचसंजय ४० नियच्छन्नितरान्वर्णान्विनिघ्नन्सर्व दुष्कृतः ॥ ससहायोऽसहायोवायावज्जीवंतथाभवेत् ४१॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणि विदुलापुत्रानुशासनेचतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥ पुत्रउवाच ॥ कृष्णायसस्येवचतेसंहत्यहृदयंकृतम् ॥ ममभातस्त्वकरुणेवीरप्रज्ञेह्यमर्षणे १ अहोक्षत्रसमाचारोयत्रमामितरंयथा ॥ नियोजयसि युद्धायपरमातेवमांतथा २ ईदृशंवचनंब्रूयाद्भवतीपुत्रमेकजम् ॥ किंनुतेमामपश्यंत्याःपृथिव्याअपिसर्वया ३ किमाभरणकृत्येनकिंभोगैर्जीवितेनवा ॥ मयिवासं गहरतेप्रियपुत्रेविशेषतः ४ ॥ मातोवाच ॥ सर्वावस्थाहिविदुषांतातधर्मार्थकारणात् ॥ तावेवाभिसमीक्ष्याहंसंजयत्वामचूचुदम् ५ ससमीक्ष्यक्रमोपेतोमुख्यः कालोऽयमागतः ॥ अस्मिंश्चेदागतेकालेकार्यंनप्रतिपद्यसे ६ असंभावितरूपस्त्वमानृशंस्यंकरिष्यसि ॥ तंत्वामयशसास्पृष्टंनब्रूयांयदिसंजय ७ खरीवात्सल्य माहुस्तन्निःसामर्थ्यमहेतुकम् ॥ सद्भिर्विगर्हितंमार्गंत्यजमूर्खनिषेवितम् ८ अविद्यावैमहत्यास्तियामिमांसंश्रिताःप्रजाः ॥ तवस्याद्यदिसद्वृत्तंतेनमेत्वंप्रियोभवेः ९ धर्मार्थगुणयुक्तेननेतरेणकथंचन ॥ दैवमानुषयुक्तेनसद्भिराचरितेनच १० योह्येवमविनीतेनरमतेपुत्रनप्तृणा ॥ अनुत्थानवताचापिदुर्विनीतेनदुर्धिया ११

अचूचुदंप्रेरितवत्यस्मि ५ समीक्ष्यक्रमोपेतःद्रष्टुंयोग्येनपराक्रमेणयुक्तः अस्मिन्कालेचेत्कार्यंकर्तव्यंयुद्धंनप्रतिपद्यसे ६ आनृशंस्यंशत्रुषुस्वदेहेवादयांकरिष्यासितर्हित्वंअसंभावितरूपस्ति रस्कृतरूपोभविष्यसीतिसंबंधः ७ खरीति उभयलोकानुपयुक्तेपिपुत्रेवृथावात्सल्यंखरीकरोतितद्वदहमपिस्यामित्यर्थः ८ अविद्याअनात्मनिदेहेआत्मबुद्धिः सायदितवस्यात्तर्हिसत्स मीचीनंतवदेहनाशादात्मनाशंपश्यतोवृत्तंशीलं उपहासार्थमिदमुच्यते तेनदेहात्मभावेनममदेहादन्यमात्मानंपश्यंस्त्वंःप्रियोभवेः अयमप्युपहासः । देहात्मवादीदुर्वृत्तोममद्वेष्यश्चभविष्य सीत्यर्थः ९ धर्मार्थेति त्वयाभाव्यमितिशेषः १० । ११

१२ । १३ । १४ निकृतेनअपकृतेनापिशत्रून्प्रतिजिगीषयाप्रस्थातव्यमेवेतिशेषः १५ । १६ स्वल्पमैश्वर्यंअप्रियमनिष्टंइच्छतिमन्यतेप्राज्ञः यस्यतुअल्पमेवैश्वर्यंप्रियंतस्यध्रुवंनिश्चितंतदेवा
ल्पंप्रियत्वेनगृहीतंअप्रियमनर्थकरंस्यात् तेनराज्ञाऽल्पसंतुष्टेननभवितव्यमित्यर्थः १७ अभावंनाशं १८ कारुण्यमेवपश्यहितत्वेनेतिशेषः १९ अतोवचनात्मेममभूयसीनंदिःसमृद्धिःभवितेति
शेषः यतएवंकारुण्यंदेहेकृपांअनुपश्यसिहितत्वेन एवंसत्यपित्वमेवचोद्यंपूर्वपक्षंचोदयसिप्रेरयसिकारुण्यंकुर्वीत अथापिवज्रहृदयाऽहं तेतुभ्यंचोदयामि २० सैंधवान्हत्वाकृच्छ्रेणभावितंतेतव
विजयंयदापश्यामिद्रक्ष्यामि अथत्वांपूजयिष्यामीतियोजना २१ एतांअवस्थांदारुणामात्मनिआत्मनास्वयंविदित्वा मेममभावाश्चित्तंराज्यान्निवृत्तइत्युत्तरेणसंबंधः २२ । १३ । २४

रमतेयस्तुपुत्रेणमोघंतस्यप्रजाफलम् ॥ अकुर्वतोहिकर्माणिकुर्वतोनिंदितानिच १२ सुखंनैवेहनामुत्रलभंतेपुरुषाधमाः ॥ युद्धायक्षत्रियःसृष्टःसंजयेहजयायच
१३ जयन्वावध्यमानोवाप्राप्नोतींद्रसलोकताम् ॥ नशक्रभवनेपुण्येदिवितादृशतेसुखम् ॥ यदमित्रान्वशेकृत्वाक्षत्रियःसुखमेधते १४ मन्युनादह्यमानेनपुरुषे
णमनस्विना ॥ निकृतेनेहबहुशःशत्रून्प्रतिजिगीषया १५ आत्मानंवापरित्यज्यशत्रुंवाविनिपात्यच ॥ अतोन्येनप्रकारेणशांतिरस्यकुतोभवेत् १६ इहप्राज्ञो
हिपुरुषःस्वल्पमप्रियमिच्छति ॥ यस्यस्वल्पंप्रियंलोकेध्रुवंतस्याल्पमप्रियम् १७ प्रियाभावाच्चपुरुषोनैवप्राप्नोतिशोभनम् ॥ ध्रुवंचाभावमभ्येतिगत्वागंगेवसा
गरम् १८ ॥ पुत्रउवाच ॥ नेयंमतिस्त्वयावाच्यामातःपुत्रेविशेषतः ॥ कारुण्यमेवात्रपश्यभूत्वेहजडमूकवत् १९ ॥ मातोवाच ॥ अतोमेभूयसीनंदिर्यद्देवमनु
पश्यसि ॥ चोद्यंमांचोदयस्येतद्भृशंवैचोदयामिते २० अथत्वांपूजयिष्यामिहत्वावैसर्वसैंधवान् ॥ अहंपश्यामिविजयंकृच्छ्रभावितमेवते २१ ॥ पुत्रउवाच ॥
अकोशस्यासहायस्यकुतःसिद्धिर्जयोमम ॥ इत्यवस्थांविदित्वैतामात्मनात्मनिदारुणाम् २२ राज्याद्भावोनिवृत्तोमेत्रिदिवादिवदुष्कृतः ॥ ईदृशंभवतीकंचिदुपाय
मनुपश्यति २३ तन्मेपरिणतप्रज्ञेसम्यक्प्रब्रूहिपृच्छते ॥ करिष्यामिहितत्सर्वंयथावदनुशासनम् २४ ॥ मातोवाच ॥ पुत्रनात्माऽवमंतव्यःपूर्वाभिरसमृद्धि
भिः ॥ अभूत्वाहिभवंत्यर्थाभूत्वानश्यंतिचापरे ॥ अमर्षेणैवचाप्यर्थानारब्धव्याःसुबालिशैः २५ सर्वेषांकर्मणांतातफलेनित्यमनित्यता ॥ अनित्यमितिजानंतो
नभवंतिभवंतिच २६ अथयेनैवकुर्वंतिनैवजातुभवंतिते ॥ ऐकगुण्यमनीहायामभावःकर्मणांफलम् २७ अथद्वैगुण्यमीहायांफलंभवतिवानवा ॥ यस्यप्रागेववि
दितासर्वार्थानामनित्यता २८ नुदेद्वृद्धिसमृद्धीसप्रतिकूलेनृपात्मज ॥ उत्थातव्यंजागृतव्यंयोक्तव्यंभूतिकर्मसु २९ भविष्यतीत्येवमनःकृत्वासततमव्यथैः ॥
मंगलानिपुरस्कृत्यब्राह्मणांश्चेश्वरैःसह ३० प्राज्ञस्यनृपतेराशुवृद्धिर्भवतिपुत्रक ॥ अभिवर्ततिलक्ष्मीस्तंप्राचीमिवदिवाकरः ३१

अर्थाः धर्माद्याः बालिशैरमर्षेणैव
नारब्धव्याः पंडितैस्तुआदरेणआरब्धव्याएवेतिभावः २५ अनित्यमितिजानंतःपंडिताआरभमाणानभवंति कदाचिदैश्वर्यंनलभंते भवंतिचकदाचित्सिद्धार्थाः २६ अकुर्वाणान्निंदतिअथेति
अनीहायांचेष्टायाअभावेऐकगुण्यंएकगुणमेवफलं यत्कर्मणामीप्सिततमानामभावोऽप्राप्तिः२७ ईहायांतुद्वैगुण्यंगुणद्वयंयत्फलंभवतिवानवेति अभावनिश्चयापेक्षयापाक्षिकफलसद्भाववतीप्रवृत्तिरेवश्रे
ष्ठेत्यर्थः २८ वृद्धिःपीडा वृधुहिंसायामित्यस्यरूपं समृद्धिरैश्वर्यंतेउभेनुदेत् दूरीकुर्यात् आत्मनःपीडापरस्यैश्वर्यंचनुदेदित्यर्थः योक्तव्यंसज्जीभवितव्यम् २९ ईश्वरैर्देवैः ३० । ३१

उद्धर्षणानिप्रोत्साहकानि अनुदर्शितंरूपंलोकवृत्तांतोयस्मैतथा । ३२ । ३३ । ३४ तेषांक्रुद्धादीनांअग्रप्रदायीभक्तंवेतनंचसर्वेभ्यःप्रथमंदेयं नचेत्सद्यःकुपितास्तेत्यजेयुरित्यर्थः ३५ त्यक्त जीवितंयुद्धेजीवितनिराकांक्षंशत्रुर्जीविताकांक्षीउद्विजते ३६ तमिति तंशत्रुंपराक्रांतंपराक्रमवंतंविदित्वा अशक्त्यावशेस्वाज्ञायांयदिनकरोतितर्हिएनंनिर्वादैःपरिनिष्ठितैदूतैर्निर्वेदेत्परिनिष्ठांप्रापयेत् । साम्नादानेनवातंपर्यवस्थापयेदित्यर्थः । 'निर्वादःस्यात्परीवादेपरिनिष्ठितवादयोः'इति विश्वः । अंततःफलतःतत्शत्रोर्वशीकरणंभविष्यति ३७ तत्रोपायमाहनिर्वादादिति एवंपरिनिष्ठिततयाआस्पदंस्थानंप्राप्तंचेत्शत्रुणाऽनुपद्रुतस्यधनवृद्ध्यादिकंसर्वंसेत्स्यतीत्यर्थः ३८ स्खलितार्थंच्युतधनं नआश्वसंतेइतिच्छेदः विश्वासंनकुर्वंतीत्यर्थः ३९ संभाव्यमेवैतदित्युपहासः

निदर्शनान्युपायांश्चबहून्युद्धर्षणानिच ॥ अनुदर्शितरूपोऽसिपश्यामिकुरुपौरुषम् ३२ पुरुषार्थमभिप्रेतंसमाहर्तुमिहार्हसि ॥ क्रुद्धान्लुब्धान्परिक्षीणानवलिप्तान्विमानितान् ३३ स्पर्धिनश्चैवयेकेचित्तान्युक्तउपधारय ॥ एतेनत्वंप्रकारेणमहतोभेत्स्यसेगणान् ३४ महावेगइवोद्धूतोमातरिश्वाबलाहकान् ॥ तेषामग्रप्रदायीस्याःकल्पोत्थायीप्रियंवदः ॥ तेत्वांप्रियंकरिष्यंतिपुरोधास्यंतिचध्रुवम् ३५ यदैवशत्रुर्जानीयात्सपत्नंत्यक्तजीवितम् ॥ तदैवास्मादुद्विजतेसर्पाद्वेश्मगतादिव ३६ तंविदित्वापराक्रांतंवशेनकुरुतेयदि ॥ निर्वादैर्निर्वदेदेनमंततस्तद्भविष्यति ३७ निर्वादादास्पदंलब्ध्वाधनवृद्धिर्भविष्यति ॥ धनवंतंहिमित्राणिभजंतेचाश्रयंतिच ३८ स्खलितार्थंपुनस्तानिसंत्यजंतिचबांधवाः ॥ अप्यस्मिन्नाश्वसंतेचजुगुप्संतेचतादृशम् ३९ शत्रुंकृत्वायःसहायंविश्वासमुपगच्छति ॥ अतःसंभाव्यमेवैतद्यद्राज्यंप्राप्नुयादिति ४० ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिविदुलापुत्रानुशासने पंचत्रिंदशधिकशततमोऽध्यायः ॥ १३५ ॥ ॥ ७ ॥ ॥ मातोवाच ॥ नैवराज्ञादरःकार्योजातुकस्यांचिदापदि ॥ अथचेदपिदीर्णःस्यान्नैववर्तेतदीर्णवत् १ दीर्णंहिदृष्ट्वाराजानंसर्वमेवानुदीर्यते ॥ राष्ट्रंबलममात्याश्चपृथक्कुर्वंतितेमतीः २ शत्रूनेकेप्रपद्यंतेप्रजहत्यपरेपुनः ॥ अन्येतुप्रजिहीर्षंतियेपुरस्ताद्विमानिताः ३ यएवात्यंतसुहृदस्तएनंपर्युपासते ॥ अशक्तयःस्वस्तिकामाबद्धवत्साइलाइव ४ शोचंतमनुशोचंतिपतितानिवबांधवान् ॥ अपितेपूजिताःपूर्वमपितेसुहृदोमताः ५ येराष्ट्रमभिमन्यंतेराज्ञोव्यसनमीयुषः ॥ मादीदरस्त्वंसुहृदोमात्वांदीर्णंप्रहासिषुः ६ प्रभावंपौरुषंबुद्धिंजिज्ञासंत्यामयातव ॥ विदधत्यासमाश्वासमुक्तंतेजोविवृद्धये ७ यदेतत्संविजानासियदिसम्यग्ब्रवीम्यहम् ॥ कृत्वाऽसौम्यमिवात्मानंजयायोत्तिष्ठसंजय ८ अस्तिनःकोशनिचयोमहान्हिविदितस्तव ॥ तमहंवेदनान्यस्तमुपसंपादयामिते ९ संतिनैकशतमाभूयःसुहृदस्तवसंजय ॥ सुखदुःखसहावीरसंग्रामादनिवर्तिनः १०

असंभावितमेतत् यच्छत्रौविश्वासंकृत्वाऽपिराज्यंप्राप्नुयादिति ४० ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे पंचत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥ ॥ ७ ॥ दरोभयं जातु कदाचित् दीर्णोभीतः १ महीमितिपाठे महींस्थान्लोकान् २ अपरेस्त्रीयाःप्रजिहीर्षंतिप्रहर्तुंताडितुमिच्छंति ३ इलाःधेनवः इलाधेनुःसहवत्सानआगादितिमंत्रवर्णात् ४ तेतनापिसुहृदःसंति ५ येराष्ट्रंअस्मदीयमिदंअस्माभीरक्षणीयं राजाचव्यसनादुद्धर्तव्यइतिअभिमन्यंतेअभिमानवंतः मादीदरःमाविदारय ६ समाश्वासंधैर्यं ७ । ८ । । ९ । १०

११ स्वल्पचेतसोऽपितस्यतमोऽपागमदितिसंबंधः १२ उदकेमज्जंतीवभूः पित्र्यंराज्यं धूरितिपाठेऽपिसएवार्थः इयंमयाधार्या मग्नंराज्यंवाउद्धर्तव्यं प्रवणेप्रपातेवायुद्धाख्येवामर्तव्यं नतुएवमेव निर्व्यापारेणस्थेयं नेत्रीशिक्षयित्री १३ अपरापरंअपरमपरंउत्तरोत्तरमितियावत् प्रतिवदन्प्रतिकूलंवदन् आयसंहृदयंतवेतिपुत्रेनिःस्नेहासीत्यादि १४ बांधवात्बंधुतः उद्यच्छामिउद्यमं

तादृशाहिसहायावैपुरुषस्यबुभूषतः ॥ इष्टंजिहीर्षतःकिंचित्साचिवाःशत्रुकर्शन ११ यस्यास्त्वीदृशकंवाक्यंश्रुत्वाऽपिस्वल्पचेतसः ॥ तमस्त्वपागमत्तस्यसुचि त्रार्थपदाक्षरम् १२ ॥ पुत्रउवाच ॥ उदकेभूरियंधार्यामर्तव्यंप्रवणेमया ॥ यस्यमेभवतीनेत्रीभविष्यद्भूतिदर्शिनी १३ अहंहिवचनंत्वत्तःशुश्रूषुरपरापरम् ॥ किंचित्किंचित्प्रतिवदंस्तूष्णीमासंमुहुर्मुहुः १४ अतृप्यन्नमृतस्येवकृच्छ्राल्लब्धस्यबांधवात् ॥ उद्यच्छाम्येषशत्रूणांनियमार्थंजयायच १५ ॥ कुंत्युवाच ॥ स दश्वइवसंक्षिप्तःप्रणुन्नोवाक्यसायकैः ॥ तच्चकारतथासर्वंयथावदनुशासनम् १६ इदमुद्धर्षणंभीमंतेजोवर्धनमुत्तमम् ॥ राजानंश्रावयेन्मंत्रीसीदंतंशत्रुपीडितम् १७ जयोमानेतिहासोऽयंश्रोतव्योविजिगीषुणा ॥ महींविजयतेक्षिप्रंश्रुत्वाशत्रूंश्चमर्दति १८ इदंपुंसवनंचैववीराजननमेवच ॥ अभीक्ष्णंगर्भिणीश्रुत्वाध्रुवंवीरं प्रजायते १९ विद्याशूरंतपःशूरंदानशूरंतपस्विनम् ॥ ब्राह्मयाश्रियादीप्यमानंसाधुवादेचसंमतम् २० अर्चिष्मंतंबलोपेतंमहाभागंमहारथम् ॥ धृतिमं तमनाधृष्यंजेतारमपराजितम् २१ नियंतारमसाधूनांगोप्तारंधर्मचारिणाम् ॥ ईदृशंक्षत्रियासूतेवीरंसत्यपराक्रमम् २२ ॥ इतिश्रीमहाभारतेउद्योगपर्वणि भग० विदुलापुत्रानुशासनसमाप्तौषट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥ ॥ कुंत्युवाच ॥ अर्जुनंकेशवब्रूयास्त्वयिजातेस्मसूतके ॥ उपोपविष्टानारी भिराश्रमेपरिवारिता १ अथांतरिक्षेवागासीद्दिव्यरूपामनोरमा ॥ सहस्राक्षसमःकुंतिभविष्यत्येषतेसुतः २ एषजेष्यतिसंग्रामेकुरून्सर्वान्समागतान् ॥ भीमसे नद्वितीयश्चलोकमुद्वर्तयिष्यति ३ पुत्रस्तेपृथिवींजेतायशश्चास्यादिवंस्पृशेत् ॥ हत्वाकुरूंश्चसंग्रामेवासुदेवसहायवान् ४ पित्र्यमंशंप्रनष्टंचपुनरप्युद्धरिष्यति भ्रातृभिःसहितःश्रीमांस्त्रीन्मेधानाहरिष्यति ५ ससत्यसंधोबीभत्सुःसव्यसाचीयथाऽच्युत ॥ तथात्वमेवजानासिबलवंतंदुरासदम् ६ तथातदस्तुदाशार्हयथा वागभ्यभाषत ॥ धर्मश्चेदस्तिवार्ष्णेयतथासत्यंभविष्यति ७ त्वंचापितत्तथाकृष्णसर्वंसंपादयिष्यसि ॥ नाहंतदभ्यसूयामियथावागभ्यभाषत ८ नमोधर्मा यमहतेधर्मोधारयतिप्रजाः ॥ एतद्धनंजयोवाच्योनित्योद्युक्तोवृकोदरः ९ यदर्थंक्षत्रियासूतेतस्यकालोऽयमागतः ॥ नहिवैरंसमासाद्यसीदंतिपुरुषर्षभाः १० विदितातेसदाबुद्धिर्भीमस्यनसशाम्यति ॥ यावदंतंनकुरुतेशत्रूणांशत्रुकर्शन ११ सर्वधर्मविशेषज्ञांस्नुषांपांडोर्महात्मनः ॥ ब्रूयामाधवकल्याणीं कृष्णकृष्णांयशस्विनीम् १२

करोमि नियमार्थंनिग्रहार्थं बांधवानितिपाठेउद्यच्छामिधारयामि १५ । १६ । १७ । १८ पुंसवनंपुत्रप्रसवकरं वीराणांआजननं येनतद्वीराजननं प्रजायतेजनयति १९ । २० । २१ । २२ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ अर्जुनमिति १ । २ उद्वर्तयिष्यतिआकुलीकरिष्यति लोकंशत्रुजनम् ३ । ४ मेधान् अश्वमेधान् ५ । ६ । ७ । ८ । ९ । १० । ११ । १२

१२ । १४ । १५ धर्मोपचायिनां धर्मवर्धनशीलानां १६ । १७ । १८ । १९ पदवींचरमार्गमनुसर शत्रुस्त्रीणां वैधव्यप्रार्थयतस्त्वेत्यर्थः २० परांगतिंमरणं २१ । २२ । २३ । २४ । २५ । २६ । २७

युक्तमेतन्महाभागेकुलेजातेयशस्विनि ॥ यन्मेपुत्रेषुसर्वेषुयथावत्त्वमवर्तिथाः १३ माद्रीपुत्रौचवक्तव्यौक्षत्रधर्मरतावुभौ ॥ विक्रमेणार्जितान्भोगान्वृणीतंजीवितादपि १४ विक्रमाधिगताह्यर्थाःक्षत्रधर्मेणजीवतः ॥ मनोमनुष्यस्यसदाप्रीणंतिपुरुषोत्तम १५ यच्चवःप्रेक्षमाणानांसर्वधर्मोपचायिनाम् ॥ पांचालीपरुषाण्युक्ताकोनुतत्क्षंतुमर्हति १६ नराज्यहरणंदुःखंद्यूतेचापिपराजयः ॥ प्रव्राजनंसुतानांवानमेतद्दुःखकारणम् १७ यत्रसाबृहतीश्यामासभायांरुदतीतदा ॥ अश्रौषीत्परुषावाचस्तन्मेदुःखतरंमहत् १८ स्त्रीधर्मिणीवरारोहाक्षत्रधर्मरतासदा ॥ नाध्यगच्छत्तदानाथंकृष्णानाथवतीसती १९ तंवैब्रूहिमहाबाहोसर्वशस्त्रभृतांवरम् ॥ अर्जुनंपुरुषव्याघ्रंद्रौपद्याःपदवींचर २० विदितंहितवात्यंतंक्रुद्धाविवयमांतकौ ॥ भीमार्जुनौनयेतांहिदेवानपिपरांगतिम् २१ तयोश्चैतदवज्ञानंयत्साकृष्णासभांगता ॥ दुःशासनश्चयद्भीमंकटुकान्यभ्यभाषत २२ पश्यतांकुरुवीराणांतच्चसंस्मारयेःपुनः ॥ पांडवान्कुशलंपृच्छेःसपुत्रान्कृष्णयासह २३ मांचकुशलिनींब्रूयास्तेषुभूयोजनार्दन ॥ अरिष्टंगच्छपंथानंपुत्रान्मेप्रतिपालय २४ ॥ वैशंपायनउवाच ॥ अभिवाद्याथतांकृष्णःकृत्वाचापिप्रदक्षिणम् ॥ निश्चक्राममहाबाहुःसिंहखेलगतिस्ततः २५ ततोविसर्जयामासभीष्मादीन्कुरुपुंगवान् ॥ आरोप्याथरथेकर्णंप्रायात्सात्यकिनासह २६ ततःप्रयातेदाशार्हेकुरवःसंगतामिथः ॥ जजल्पुर्महदाश्चर्यंकेशवेपरमाद्भुतम् २७ प्रमूढापृथिवीसर्वामृत्युपाशवशीकृता ॥ दुर्योधनस्यबालिश्यान्नैतदस्तीतिचाब्रुवन् २८ ततोनिर्यायनगरात्प्रययौपुरुषोत्तमः ॥ मंत्रयामासचतदाकर्णेनसुचिरंसह २९ विसर्जयित्वाराधेयंसर्वयादवनंदनः ॥ ततोजवेनमहतातूर्णमश्वानचोदयत् ३० तेपिबंतइवाकाशंदारुकेणप्रचोदिताः ॥ हयाजग्मुर्महावेगामनोमारुतरंहसः ३१ तेव्यतीत्यमहाध्वानंक्षिप्रंश्येनाइवाशुगाः ॥ उच्चैर्जग्मुरुपप्लव्यंशार्ङ्गधन्वानमावहन् ३२ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणि कुंतीवाक्येसप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥ ॥ वैशंपायनउवाच ॥ कुंत्यास्तुवचनंश्रुत्वाभीष्मद्रोणौमहारथौ ॥ दुर्योधनमिदंवाक्यमूचतुःशासनातिगम् १ श्रुतंतेपुरुषव्याघ्रकुंत्याःकृष्णस्यसंनिधौ ॥ वाक्यमर्थवदत्युग्रमुक्तंधर्म्यमनुत्तमम् २ तत्करिष्यंतिकौंतेयावासुदेवस्यसंमतम् ॥ नहितेजातुशाम्येरन्नृतेराज्येनकौरव ३ क्लेशिताहित्वयापार्थाधर्मपाशसितास्तदा ॥ सभायांद्रौपदीचैवतैश्चतन्मर्षितंतव ४ कृतास्त्रंह्यर्जुनंप्राप्यभीमंचकृतनिश्चयम् ॥ गांडीवंचेषुधीचैवरथंचध्वजमेवच ५ नकुलंसहदेवंचबलवीर्यसमन्वितौ ॥ सहायंवासुदेवंचनक्षंस्यतियुधिष्ठिरः ६ प्रत्यक्षंतेमहाबाहोयथापार्थेनधीमता ॥ विराटनगरेपूर्वंसर्वेस्मयुधिनिर्जिताः ७ दानवाघोरकर्माणोनिवातकवचायुधि ॥ रौद्रमस्त्रंसमादायदग्धावानरकेतुना ८

नैतदस्तिराष्ट्रमितिशेषः २८ निर्यायनिर्गत्य २९ । ३० । ३१ उपप्लव्यंविराटनगरं ३२ ॥ इतिउ० नी० भा० सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥ कुंत्याइति १ । २ । ३ ।४।५।६।७।८

प्रशाम्यप्रशमंकुरु ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ आश्विनेयौ आश्विनोःपुत्रौनकुलसहदेवौ १७ । १८ । १९ वारणंप्रतिषेधम् २० । २१ । २२ । २३ दीप्तांदिशमिति दिग्दा

कर्णप्रभृतयश्चेमेत्वंचापिकवचीरथी ॥ मोक्षितोघोषयात्रायांपर्याप्तंतन्निदर्शनम् ॥ प्रशाम्यभरतश्रेष्ठभ्रातृभिःसहपांडवैः ९ रक्षेमांपृथिवींसर्वांमृत्योर्दंष्ट्रांतरंग
ताम् ॥ ज्येष्ठोभ्राताधर्मशीलोवत्सलःश्लक्ष्णवाक्छविः १० तंगच्छपुरुषव्याघ्रंव्यपनीयेहकिल्बिषम् ॥ दृष्टश्चत्वंपांडवेनव्यपनीतशरासनः ११ प्रशांतभ्रुकु
टिःश्रीमान्कुताशांतिःकुलस्यनः ॥ तमभ्येत्यसहामात्यःपरिष्वज्यनृपात्मजम् १२ अभिवादयराजानंयथापूर्वमरिंदम ॥ अभिवादयमानंत्वांपाणिभ्यांभीम
पूर्वजः १३ प्रतिगृह्णातुसौहार्दात्कुंतीपुत्रोयुधिष्ठिरः ॥ सिंहस्कंधोरुबाहुस्त्वांवृत्तायतमहाभुजः १४ परिष्वजतुबाहुभ्यांभीमःप्रहरतांवरः ॥ कंबुग्रीवोगुडाकेश
स्ततस्त्वांपुष्करेक्षणः १५ अभिवादयतांपार्थःकुंतीपुत्रोधनंजयः १६ आश्विनेयौनरव्याघ्रौरूपेणाप्रतिमौभुवि ॥ तौचत्वांगुरुवत्प्रेम्णापूजयाप्रत्युदीयताम्
१७ मुंचंत्वानंदजाश्रूणिदाशार्हप्रमुखानृपाः ॥ संगच्छभ्रातृभिःसार्धंमानंसंत्यज्यपार्थिव १८ प्रशाधिपृथिवींकृत्स्नांततस्त्वंभ्रातृभिःसह ॥ समालिंग्यचहर्षे
णनृपायांतुपरस्परम् १९ अलंयुद्धेनराजेंद्रसुहृदांशृणुवारणम् ॥ ध्रुवंविनाशोयुद्धेहिक्षत्रियाणांप्रदृश्यते २० ज्योतींषिप्रतिकूलानिदारुणामृगपक्षिणः ॥
उत्पाताविविधावीरदृश्यंतेक्षत्रनाशनाः २१ विशेषतइहास्माकंनिमित्तानिनिवेशने ॥ उल्काभिर्हिप्रदीप्ताभिर्बाध्यतेपृतनातव २२ वाहनान्यप्रहृष्टानिरुदं
तीवविशांपते ॥ गृध्रास्तेपर्युपासंतेसैन्यानिचसमंततः २३ नगरंनयथापूर्वंतथाराजनिवेशनम् ॥ शिवाश्चाशिवानिर्घोषादीप्तांसेवंतिवैदिशम् २४ कुरुत्रा
क्यंपितुर्मातुरस्माकंचहितैषिणाम् ॥ त्वय्यायत्तोमहाबाहोशमोव्यायामएवच २५ नचेत्करिष्यसिवचःसुहृदामरिकर्शन ॥ तप्स्यसेवाहिनींदृष्ट्वापार्थबाणप्र
पीडिताम् २६ भीमस्यचमहानादंनदतःशुष्मिणोरणे ॥ श्रुत्वास्मर्ताऽसिमेवाक्यंगांडीवस्यचनिःस्वनम् ॥ यद्येतदपसव्यंतेवचोममभविष्यति २७ ॥
॥ इतिश्रीमहाभारते उद्योगपर्वणिभगवद्यानपर्वणिभीष्मद्रोणवाक्ये अष्टात्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥ ॥ वैशंपायनउवाच ॥ एवमुक्तस्तुविम
नास्तिर्यग्दृष्टिरधोमुखः ॥ संहृत्यचभ्रुवोर्मध्यंनकिंचिद्व्याजहारह १ तंवैविमनसंदृष्ट्वासंप्रेक्ष्यान्योन्यमंतिकात् ॥ पुनरेवोत्तरंवाक्यमुक्तवंतौनरर्षभौ २
॥ भीष्मउवाच ॥ शुश्रूषुमनसूयंचब्रह्मण्यंसत्यवादिनम् ॥ प्रतियोत्स्यामहेपार्थमतोदुःखतरंनुकिम् ३ ॥ द्रोणउवाच ॥ अश्वत्थाम्नियथापुत्रेभूयोममधनं
जये ॥ बहुमानःपरोराजन्सन्नतिश्चकपिध्वजे ४ तंचपुत्रात्प्रियतमंप्रतियोत्स्येधनंजयम् ॥ क्षात्रंधर्ममनुष्ठायधिगस्तुक्षत्रजीविकाम् ५ यस्यलोकेसमोना
स्तिकश्चिदन्योधनुर्धरः ॥ मत्प्रसादात्सबीभत्सुःश्रेयानन्यैर्धनुर्धरैः ६ मित्रध्रुग्दुष्टभावश्चनास्तिकोऽथानृजुःशठः ॥ नसत्सुलभतेपूजांयज्ञेमूर्खइवागतः ७

हारव्यउत्पातउक्तः २४ । २५ । २६ शुष्मिणःबलिनः अपसव्यंविपरीतं यदि निर्घातसदृशमितिपाठे निर्घातसदृशंवज्रपाततुल्यं २७ ॥ ॥ इति उद्योगपर्वणिनीलकंठीये भारतभावदीपे
अष्टात्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥ ॥ ७ ॥ ॥ एवमिति १ । २ । ३ । ४ । ५ । ६ पूजांनलभते हेदुर्योधनत्वद्वत् ७

८ एतेपांडवास्त्वयामिथ्योपचरिताअपिअनुपश्चात्प्रियेवर्तमानाहिप्रसिद्धं तवतुदोषाःद्वेषादयःअहितत्वायवैरभावायकल्पंते ९।१० उष्णगेउष्णातिगमेवर्षाकाले ११ वासएवेतिपाठेवासगृहे पाठांतरेत्यक्त्वा ऽतोवस्त्रंपरकीयंस्वीयमितिमन्यसेइतियोज्यं १२ । १३ ऐलविलंकुबेरंआसाद्यरणेप्राप्य १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ ॥ इतिउद्योगपर्वणिनीलकंठीयेभार

वार्यमाणोऽपिपापेभ्यःपापात्मापापमिच्छति ॥ चोद्यमानोऽपिपापेनशुभात्माशुभमिच्छति ८ मिथ्योपचरिताह्येतेवर्तमानाह्यनुप्रिये ॥ अहितत्वायकल्पंते दोषाभरतसत्तम ९ त्वमुक्तःकुरुवृद्धेनमयाचविदुरेणच ॥ वासुदेवेनचतथाश्रेयोनैवाभिमन्यसे १० अस्तिमेबलमित्येवसहसात्वंतितीर्षसि ॥ सग्राहनक्रमकरंगंगावेगमिवोष्णगे ११ वाससैवयथाहित्वंप्रावृण्वानोऽभिमन्यसे ॥ स्रजंत्यक्तामिवप्राप्यलोभाद्यौधिष्ठिरींश्रियम् १२ द्रौपदीसहितंपार्थंसायुधैर्भ्रातृभिर्वृतम् ॥ वनस्थमपिराज्यस्थःपांडवंकोविजेष्यति १३ निदेशेयस्यराजानःसर्वेतिष्ठंतिकिंकराः ॥ तमैलविलमासाद्यधर्मराजोव्यराजत १४ कुबेरसदनंप्राप्यततोरत्नान्यवाप्यच ॥ स्फीतमाक्रम्यतेराष्ट्रंराज्यमिच्छंतिपांडवाः १५ दत्तंहुतमधीतंचब्राह्मणास्तर्पिताधनैः ॥ आवयोर्गतमायुश्चकृतकृत्यौचविद्धिनौ १६ त्वंतुहित्वासुखंराज्यंमित्राणिचधनानिच ॥ विग्रहंपांडवैःकृत्वामहद्व्यसनमाप्स्यसि १७ द्रौपदीयस्यचाशास्तेविजयंसत्यवादिनी ॥ तपोघोरव्रतादेवीकथंजेष्यसिपांडवम् १८ मंत्रीजनार्दनोयस्यभ्रातायस्यधनंजयः ॥ सर्वशस्त्रभृतांश्रेष्ठःकथंजेष्यसिपांडवम् १९ सहायाब्राह्मणायस्यधृतिमंतोजितेंद्रियाः ॥ तमुग्रतपसंवीरंकथंजेष्यसिपांडवम् २० पुनरुक्तंचवक्ष्यामियत्कार्यंभूतिमिच्छता ॥ सुहृदामज्जमानेषुसुहृत्सुव्यसनार्णवे २१ अलंयुद्धेनतैर्वीरैःशाम्यत्वंकुरुवृद्धये ॥ मागमःससुतामात्यःसबलश्चपराभवम् २२ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिभीष्मद्रोणवाक्येएकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९

धृतराष्ट्रउवाच ॥ राजपुत्रैःपरिवृतस्तथाभृत्यैश्चसंजय ॥ उपारोप्यरथेकर्णंनिर्यातोमधुसूदनः १ किमब्रवीद्रथेमेयात्माराधेयंपरवीरहा ॥ कानिसांत्वानिगोविंदःसूतपुत्रेप्रयुक्तवान् २ उद्यन्मेघस्वनःकालेकृष्णःकर्णमथाब्रवीत् ॥ मृदुवायदिवातीक्ष्णंतन्ममाचक्ष्वसंजय ३ ॥ संजयउवाच ॥ आनुपूर्व्येणवाक्यानितीक्ष्णानिचमृदूनिच ॥ प्रियाणिधर्मयुक्तानिसत्यानिचहितानिच ४ हृदयग्रहणीयानिराधेयंमधुसूदनः ॥ यान्यब्रवीदमेयात्मातानिमेशृणुभारत ५ ॥ वासुदेवउवाच ॥ उपासितास्तेराधेयब्राह्मणावेदपारगाः ॥ तत्त्वार्थंपरिपृष्टाश्चनियतेनानसूयया ६ त्वमेवकर्णजानासिवेदवादान्सनातनान् ॥ त्वमेवधर्मशास्त्रेषुसूक्ष्मेषुपरिनिष्ठितः ७ कानीनश्चसहोढश्चकन्यायांयश्चजायते ॥ वोढारंपितरंतस्यप्राहुःशास्त्रविदोजनाः ८ सोऽसिकर्णतथाजातःपांडोःपुत्रोऽसिधर्मतः ॥ निग्रहाद्धर्मशास्त्राणामेहिराजाभविष्यसि ९ पितृपक्षेचतेपार्थामातृपक्षेचवृष्णयः ॥ द्वौपक्षावभिजानीहित्वमेतौपुरुषर्षभ १० मयासार्द्धमितोयातमद्यत्वांतातपांडवाः ॥ अभिजानंतुकौंतेयंपूर्वजातंयुधिष्ठिरात् ११ पादौतवग्रहीष्यंतिभ्रातरःपंचपांडवाः ॥ द्रौपदेयास्तथापंचसौभद्रश्चापराजितः १२

तभावदीपेएकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥ राजपुत्रैरिति १ । २ । ३ । ४ । ५ । ६ । ७ कानीनोद्विविधः सहोढःविवाहादूर्ध्वंजातः विवाहात्प्राग्जातश्चतन्मातुर्वोढारंतस्यापितरंप्राहुः ८।९।१० ।११।१२

राजानोराजपुत्राश्चपांडवार्थेसमागताः ॥ पादौतवग्रहीष्यंतिसर्वेचांधकवृष्णयः १३ हिरण्मयांश्चतेकुंभान्राजतान्पार्थिवांस्तथा ॥ ओषध्यःसर्वबीजानिसर्वर
त्नानिवीरुधः १४ राजन्याराजकन्याश्चाप्यानयंत्वाभिषेचनम् ॥ षष्ठेत्वांचतथाकालेद्रौपद्युपगमिष्यति १५ अग्निंजुहोतुवैधौम्यःसंशितात्माद्विजोत्तमः ॥
अद्यत्वामभिषिंचंतुचातुर्वैद्याद्विजातयः १६ पुरोहितःपांडवानांब्रह्मकर्मण्यवस्थितः ॥ तथैवभ्रातरःपंचपांडवाःपुरुषर्षभाः १७ द्रौपदेयास्तथापंचपंचाला
श्चेदयस्तथा ॥ अहंचत्वाऽभिषेक्ष्यामिराजानंपृथिवीपतिम् १८ युवराजोऽस्तुतेराजाधर्मपुत्रोयुधिष्ठिरः ॥ गृहीत्वाव्यजनंश्वेतंधर्मात्मासंशितव्रतः १९ उ
पान्वारोहतुरथंकुंतीपुत्रोयुधिष्ठिरः ॥ छत्रंचतेमहाश्वेतंभीमसेनोमहाबलः २० अभिषिक्तस्यकौंतेयोधारयिष्यतिमूर्धनि ॥ किंकिणीशतनिर्घोषंवैयाघ्रपरिवा
रणम् २१ रथंश्वेतहयैर्युक्तमर्जुनोवाहयिष्यति ॥ अभिमन्युश्चतेनित्यंप्रत्यासन्नोभविष्यति २२ नकुलःसहदेवश्चद्रौपदेयाश्चपंचये ॥ पंचालाश्चानुयास्यं
तिशिखंडीचमहारथः २३ अहंचत्वाऽनुयास्यामिसर्वेचांधकवृष्णयः ॥ दाशार्हाःपरिवारास्तेदाशार्णाश्चविशांपते २४ भुंक्ष्वराज्यंमहाबाहोभ्रातृभिःसहपांडवैः ॥
जपैर्होमैश्चसंयुक्तोमंगलैश्चपृथग्विधैः २५ पुरोगमाश्चतेसंतुद्राविडाःसहकुंतलैः ॥ आंध्रास्तालचराश्चैवचूचुपावेणुपास्तथा २६ स्तुवंतुत्वांचबहुभिःस्तुतिभिः
सूतमागधाः ॥ विजयंवसुषेणस्यघोषयंतुचपांडवाः २७ सत्वंपरिवृतःपार्थैर्नक्षत्रैरिवचंद्रमाः ॥ प्रशाधिराज्यंकौंतेयकुंतींचप्रतिनंदय २८ मित्राणितेप्रहृष्यं
तुव्यथंतुरिपवस्तथा ॥ सौभ्रात्रंचैवतेऽद्यास्तुभ्रातृभिःसहपांडवैः २९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिश्रीकृष्णवाक्येचत्वारिंशदधिकशतत
मोऽध्यायः ॥ १४० ॥ छ ॥ कर्णउवाच ॥ असंशयंसौहृदान्मेप्रणयाच्चात्थकेशव ॥ सख्येनचैववार्ष्णेयश्रेयस्कामतयैवच १ सर्वंचैवाभिजानामिपांडोःपुत्रो
ऽस्मिधर्मतः ॥ निग्रहाद्धर्मशास्त्राणांयथात्वंकृष्णमन्यसे २ कन्यागर्भंसमाधत्तभास्करान्मांजनार्दन ॥ आदित्यवचनाच्चैवजातंमांसाव्यसर्जयत् ३ सोऽस्मिकृष्ण
तथाजातःपांडोःपुत्रोऽस्मिधर्मतः ॥ कुंत्यात्वहमपाकीर्णोयथानकुशलंतथा ४ सूतोहिमामधिरथोदृष्ट्वैवाभ्यानयद्गृहान् ॥ राधायाश्चैवमांप्रादात्सौहार्दान्मधु
सूदन ५ मत्स्नेहाच्चैवराधायाःसद्यःक्षीरमवातरत् ॥ सामेमूत्रंपुरीषंचप्रतिजग्राहमाधव ६ तस्याःपिंडव्यपनयंकुर्यादस्मद्विधःकथम् ॥ धर्मविद्धर्मशास्त्राणांश्र
वणेसततंरतः ७ तथामामभिजानातिसूतश्चाधिरथःसुतम् ॥ पितरंचाभिजानामितमहंसौहृदात्सदा ८ सहिमेजातकर्मादिकारयामासमाधव ॥ शास्त्रदृष्टेनवि
धिनापुत्रप्रीत्याजनार्दन ९ नामवैवसुषेणेतिकारयामासवैद्विजैः ॥ भार्याश्चोढाममप्राप्तेयौवनेतत्परिग्रहात् १०

११ । १२ । १३ आवाहाःकुलधर्माः आवापाइतिपाठेऽपिसएवार्थः १४ मांचमित्रमितिशेषः शस्त्रसमुद्यमःयुद्धोत्साहः १५ । १६ वधाद्ववधंप्राप्याथ्यपि बंधात्निर्बंधात्कुंतीसंबंधाद्वा भयात् पराजयभयात् १७ उभयोरपिअकीर्तिःउभाभ्यामप्यन्योन्यवधस्यप्रतिज्ञातत्वात् १८ ब्रूयास्त्वंपांडवान्प्रतीतिशेषः स्वद्वशित्वात्त्वमेववशीनियामकोयेषांतेषांभावस्तत्त्वंततः १९ मंत्रस्य कर्णःकुंतीसुतइत्येवंविधस्य आवयोर्गुप्तपरिभाषणस्यनियमंगोपनंयुधिष्ठिरेऽप्रकाशनमितियावत् २० अन्यथाबाधकमाह यदीति २१ इष्टापत्तिमाशंक्याह प्राप्येति अधर्मिष्ठस्यदुर्योधन

तासुपुत्राश्चपौत्राश्चममजाताजनार्दन ॥ तासुमेहृदयंकृष्णसंजातंकामबंधनम् ११ नपृथिव्यासकलयानसुवर्णस्यराशिभिः ॥ हर्षाद्भयाद्वागोविंदमिथ्याकर्तुंतदुत्सहे १२ धृतराष्ट्रकुलेकृष्णदुर्योधनसमाश्रयात् ॥ मयात्रयोदशसमाभुक्तंराज्यमकंटकम् १३ इष्टंचबहुभिर्यज्ञैःसहसूतैर्मयाऽसकृत् ॥ आवाहाश्चविवाहाश्चसहसूतैर्मयाकृताः १४ मांचकृष्णसमासाद्यकृतःशस्त्रसमुद्यमः ॥ दुर्योधनेनवार्ष्णेयविग्रहश्चापिपांडवैः १५ तस्माद्रणेद्वैरथेमांप्रत्युद्यातारमच्युत ॥ वृतवान्परमंकृष्णप्रतीपंसव्यसाचिनः १६ वधाद्बंधाद्भयाद्वाऽपिलोभाद्वापिजनार्दन ॥ अनृतंनोत्सहेकर्तुंधार्तराष्ट्रस्यधीमतः १७ यदिह्यद्यनगच्छेयंद्वैरथंसव्यसाचिना ॥ अकीर्तिःस्याद्धृषीकेशममपार्थस्यचोभयोः १८ असंशयंहितार्थायब्रूयास्त्वंमधुसूदन ॥ सर्वंचपांडवाःकुर्युस्त्वद्वशित्वान्नसंशयः १९ मंत्रस्यनियमंकुर्यास्त्वमत्रमधुसूदन ॥ एतदत्रहितंमन्येसर्वयादवनंदन २० यदिजानातिमांराजाधर्मात्मासंयतेंद्रियः ॥ कुंत्याःप्रथमजंपुत्रंनसराज्यंग्रहीष्यति २१ प्राप्यचापिमहद्राज्यंतदहंमधुसूदन ॥ स्फीतंदुर्योधनायैवसंप्रदद्यामरिंदम २२ सएवराजाधर्मात्माशाश्वतोऽस्तुयुधिष्ठिरः ॥ नेतायस्यहृषीकेशोयोद्धायस्यधनंजयः २३ पृथिवीतस्यराष्ट्रंचयस्यभीमोमहारथः ॥ नकुलःसहदेवश्चद्रौपदेयाश्चमाधव २४ धृष्टद्युम्नश्चपांचाल्यःसात्यकिश्चमहारथः ॥ उत्तमौजायुधामन्युःसत्यधर्माचसौमकिः २५ चैद्यश्चचेकितानश्चशिखंडीचापराजितः ॥ इंद्रगोपकवर्णाश्चकेकयाभ्रातरस्तथा ॥ इंद्रायुधसवर्णश्चकुंतिभोजोमहामनाः २६ मातुलोभीमसेनस्यश्येनजिच्चमहारथः ॥ शंखःपुत्रोविराटस्यनिधिस्त्वंचजनार्दन २७ महानयंकृष्णकृतःक्षत्रस्यसमुदानयः ॥ राज्यंप्राप्तमिदंदीप्तंप्रथितंसर्वराजसु २८ धार्तराष्ट्रस्यवार्ष्णेयशस्त्रयज्ञोभविष्यति ॥ अस्ययज्ञस्यवेत्तात्वंभविष्यसिजनार्दन २९ आध्वर्यवंचतेकृष्णक्रतावस्मिन्भविष्यति ॥ होताचैवात्रबीभत्सुःसन्नद्धःसकपिध्वजः ३० गांडीवंस्रुक्तथाचाऽज्यंवीर्यंपुंसांभविष्यति ॥ ऐंद्रंपाशुपतंब्राह्मंस्थूणाकर्णंचमाधव ॥ मंत्रास्तत्रभविष्यंतिप्रयुक्ताःसव्यसाचिना ३१

स्यराज्यंलोकनाशकरमितिभावः २२ । २३ । २४ । २५ इंद्रगोपकःवर्षासुप्रचलन्रक्तजंतुस्तद्वर्णास्ताम्राइत्यर्थः इंद्रायुधंइंद्रधनुः २६ निधिस्त्वंचजनार्दन निधिरिवाक्षयःकामपूरकः २७ समुदानयःसमुदायीकरणं २८ अस्ययज्ञस्यवेत्ताउपद्रष्टा २९ आध्वर्यवंयज्ञस्यनेतृत्वं लोकेहिउपद्रष्टाऽन्योऽध्वर्युरन्योदृश्यते अत्रतुत्वमेवईश्वररूपेणकर्ताब्रह्मरूपेणसाक्षीचेतिभावः ३० । ३१

अनुयातोऽनुगतःपितृसमइत्यर्थः गीतंस्तोत्रंप्रगतिमंत्रप्रसाध्यास्तुतिं उद्गातृकर्मेत्यर्थः ततसौभद्रःभविष्यतिअनुभविष्यतिकारिष्यतीत्यर्थः ३२ । ३३ कारयिष्यतिस्वार्थेणिच् करिष्यतीत्यर्थः ३४ नादएवसुब्रह्मण्योयुद्धयज्ञेभोक्तुःकालस्यावाहनकर्ता ३५ शामित्रंक्षत्रियपशूनांमारणं ३६ कल्माषदंडाश्वित्रध्वजाः ३७ कर्णिप्रभृतयोवत्सदंतांताःउपबृंहणाःअध्वर्योःसोमाहुतिप्रक्षेपकालेसहायाश्चमसाध्वर्यवइत्यर्थः । सोमकलशाःसोमरसग्रहणपात्राणि तोमराःतोमरच्छायाः पवित्राणिसोमोत्पवनसाधनानिबाणोत्क्षेपणसाम्यात्धनूंषि ३८ कपालानिशिरःपुरोडाशपाचकानि खर्परशकलानि । हविःसोमाज्यपयोरूपं ३९ इध्माःअग्निसमिंधनार्थाः समिधःशक्तयः परिधयःअग्नेःपरितःआहुतिरक्षणार्थंस्थापितानिकाष्ठानिगदाः ४० परिस्तोमाःसोमचमसादयः ४१ प्रतिप

अनुयातश्चपितरमधिकोवापराक्रमे ॥ गीतंस्तोत्रंससौभद्रःसम्यक्कृतत्रभविष्यति ३२ उद्गाताऽत्रपुनर्भीमःप्रस्तोतासुमहाबलः ॥ विनदन्सनरव्याघ्रोनागानीकांतकृद्रणे ३३ सचैवतत्रधर्मात्माशश्वद्राजायुधिष्ठिरः ॥ जपैर्होमैश्चसंयुक्तोब्रह्मत्वंकारयिष्यति ३४ शंखशब्दाःसमुरजाभेर्यश्चमधुसूदन ॥ उत्कृष्टसिंहनादश्चसुब्रह्मण्योभविष्यति ३५ नकुलःसहदेवश्चमाद्रीपुत्रौयशस्विनौ ॥ शामित्रंतौमहावीर्यौसम्यक्कृतत्रभविष्यतः ३६ कल्माषदंडागोविंदविमलारथपंक्तयः ॥ यूपाःसमुपकल्पंतामस्मिन्यज्ञेजनार्दन ३७ कर्णिनालीकनाराचावत्सदंतोपबृंहणाः ॥ तोमराःसोमकलशाःपवित्राणिधनूंषिच ३८ असयोऽत्रकपालानिपुरोडाशाःशिरांसिच ॥ हविस्तुरुधिरंकृष्णतस्मिन्यज्ञेभविष्यति ३९ इध्माःपरिधयश्चैवशक्तयोविमलागदाः ॥ सदस्याद्रोणशिष्याश्चकृपस्यचशरद्वतः ४० इषवोऽत्रपरिस्तोमामुक्तागांडीवधन्वना ॥ महारथप्रयुक्ताश्चद्रोणद्रौणिप्रचोदिताः ४१ प्रतिप्रस्थानिकंकर्मसात्यकिस्तुकरिष्यति ॥ दीक्षितोधार्तराष्ट्रोऽत्रपत्नीचास्यमहाचमूः ४२ घटोत्कचोऽत्रशामित्रंकरिष्यतिमहाबलः ॥ अतिरात्रेमहाबाहोविततेयज्ञकर्मणि ४३ दक्षिणात्वस्ययज्ञस्यधृष्टद्युम्नःप्रतापवान् ॥ वैतानिकेकर्ममुखेजातोयत्कृष्णपावकात् ४४ यदब्रुवमहंकृष्णकटुकानिस्मपांडवान् ॥ प्रियार्थंधार्तराष्ट्रस्यतेनतप्येह्यकर्मणा ४५ यदाद्रक्ष्यसिमांकृष्णनिहतंसव्यसाचिना ॥ पुनश्चितिस्तदाचास्ययज्ञस्याथभविष्यति ४६ दुःशासनस्यरुधिरंयदापास्यतिपांडवः ॥ आनर्दंनर्दतःसम्यक्तदासूत्यंभविष्यति ४७ यदाद्रोणंचभीष्मंचपांचाल्यौपातयिष्यतः ॥ तदायज्ञावसानंतद्भविष्यतिजनार्दन ४८ दुर्योधनंयदाहंताभीमसेनोमहाबलः ॥ तदासमाप्स्यतेयज्ञोधार्तराष्ट्रस्यमाधव ४९ स्नुषाश्चप्रस्नुषाश्चैवधृतराष्ट्रस्यसंगताः ॥ हतेश्वरानष्टपुत्राहतनाथाश्चकेशव ५० रुदंत्यःसहगांधार्याश्वगृध्रकुरराकुले ॥ सयज्ञेऽस्मिन्नवभृथोभविष्यतिजनार्दन ५१

३९

स्थाताऽध्वर्योस्तवद्वितीयः तस्यकर्मप्रतिप्रास्थानिकं ४२ अतिरात्रेक्रतौ श्लेषेणनिशीथेचघटोत्कचःरात्रिचरत्वात्शामित्रंकरिष्यति ४३ वैतानिकेवितानोऽग्नीनांविस्तरःतत्रविदितेवैतानिकेश्रौतयज्ञे कर्ममुखेकर्मप्रभवेद्वारेकर्मैवमुखंनिर्गमद्वारंयस्मिन्नतुयोनिःतस्मिन् ४४ पांडवेषुस्नेहंदर्शयतियदब्रुवमिति ४५ पुनश्चितिर्यज्ञानंतरंचयनारंभोयज्ञविशेषेषूक्तः ४६ आनर्दंमहानादंनर्दतःणमुलंतंपूर्वपदं सूत्यंसोमाभिषवः राजसूयसूर्येतिनिपातनात् उपपदयोगस्त्वनित्यःआर्षोवा तदभावेऽपिसुत्रःक्यप्दीर्घश्च सुत्यमित्यपिपठंति ४७ यज्ञावसानंयज्ञस्यमध्येमध्येविरम्यावस्थानं ४८ । ४९ प्रस्नुषाःस्नुषाणामपिस्नुषाः संगताएकीभूताः हतेश्वराःईश्वरोराजा नाथःपतिः ५० स्नुषादयोयद्रुदंत्योऽश्रुभिरार्द्रदेहाःसएवार्द्रीभावोऽवभृथइत्यर्थः ५१

इदंयुद्धंश्रेयएवेत्याह ।विद्येति वृथा अयुद्धेन ९२ । ९३ । ९४ । ९५ समागमेषुसंग्रामेषु यशोजयःपराक्रमेणमृत्युर्वातदेवक्षत्रियाणांधनं ९६ । ९७ ॥ ॥ इतिउद्योगपर्वणिनैलकंठीयेभारतभावदीपे एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥ ॥ कर्णस्येति १ राज्यलंभोपपादनंराज्यप्राप्त्युपायस्त्वांनलभेत् नस्पृशेत्तत्तंनस्वीयंमन्यसेइत्यर्थः २ । ३ भौमनेनविश्वकर्मणा दृश्यंतिपश्यंति । स्वार्थयगंतोऽयंकंड्वादेराकृतिगणत्वात् अत्रध्वजे ४ । ५ अग्निमारुतेआग्नेयंमारुतंच ६ नतदेति कृतेहिसर्वेंकृतकस्याएवेतिनत्रिवर्गंकश्चिदपेक्षते । त्रेतायांतुधर्मप्राधान्येनार्थकामा

विद्यावृद्धावयोवृद्धाःक्षत्रियाःक्षत्रियर्षभ ॥ वृथामृत्युंनकुर्वीरंस्त्वत्कृतेमधुसूदन ९२ शस्त्रेणनिधनंगच्छेत्समृद्धंक्षत्रमंडलम् ॥ कुरुक्षेत्रेपुण्यतमेत्रैलोक्यस्यापिकेशव ९३ तदत्रपुंडरीकाक्षविधत्स्वयदभीप्सितम् ॥ यथाकात्स्न्र्येनवार्ष्णेयक्षत्रंस्वर्गमवाप्नुयात् ९४ यावत्स्थास्यंतिगिरयःसरितश्चजनार्दन ॥ तावत्कीर्तिभवःशब्दःशाश्वतोऽयंभविष्यति ९५ ब्राह्मणाःकथयिष्यंतिमहाभारतमाहवम् ॥ समागमेषुवार्ष्णेयक्षत्रियाणांयशोधनम् ९६ समुपानयकौंतेयंयुद्धायममकेशव ॥ मंत्रसंवरणंकुर्वन्नित्यमेवपरंतप ९७ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिकर्णोपनिवादेएकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

संजयउवाच ॥ कर्णस्यवचनंश्रुत्वाकेशवःपरवीरहा ॥ उवाचप्रहसन्वाक्यंस्मितपूर्वमिदंयथा १ श्रीभगवानुवाच ॥ अपित्वांनलभेत्कर्णराज्यलंभोपपादनम् ॥ मयादत्तांहिपृथिवींनप्रशासितुमिच्छसि २ ध्रुवोजयःपांडवानामितीदंनसंशयःकश्चनविद्यतेऽत्र ॥ जयध्वजोदृश्यतेपांडवस्यसमुच्छ्रितोवानरराजउग्रः ३ दिव्यामायाविहिताभौमनेनसमुच्छ्रिताइंद्रकेतुप्रकाशा ॥ दिव्यानिभूतानिजयावहानिदृश्यंतिचैवात्रभयानकानि ४ नसज्जतेशैलवनस्पतिभ्यऊर्ध्वंतिर्यग्योजनमात्ररूपः ॥ श्रीमान्ध्वजःकर्णधनंजयस्यसमुच्छ्रितःपावकतुल्यरूपः ५ यदाद्रक्ष्यसिसंग्रामेश्वेताश्वंकृष्णसारथिम् ॥ ऐंद्रमस्त्रंविकुर्वाणमुभेचाप्यग्निमारुते ६ गांडीवस्यचनिर्घोषंविस्फूर्जितमिवाशनेः ॥ नतदाभवितात्रेतानकृतंद्वापरंनच ७ यदाद्रक्ष्यसिसंग्रामेकुंतीपुत्रंयुधिष्ठिरम् ॥ जपहोमसमायुक्तंस्वांरक्षंतंमहाचमूम् ८ आदित्यमिवदुर्धर्षंतपंतंशत्रुवाहिनीम् ॥ नतदाभवितात्रेतानकृतंद्वापरंनच ९ यदाद्रक्ष्यसिसंग्रामेभीमसेनंमहाबलम् ॥ दुःशासनस्यरुधिरंपीत्वानृत्यंतमाहवे १० प्रभिन्नमिवमातंगंप्रतिद्विरदघातिनम् ॥ नतदाभवितात्रेतानकृतंद्वापरंनच ११ यदाद्रक्ष्यसिसंग्रामेद्रोणंशांतनवंकृपम् ॥ सुयोधनंचराजानंसैंधवंचजयद्रथम् १२ युद्धायापततस्तूर्णंवारितान्सव्यसाचिना ॥ नतदाभवितात्रेतानकृतंद्वापरंनच १३ यदाद्रक्ष्यसिसंग्रामेमाद्रीपुत्रौमहाबलौ ॥ वाहिनींधार्तराष्ट्राणांक्षोभयंतौगजाविव १४ विगाढेशस्त्रसंपातेपरवीररथारुजौ ॥ नतदाभवितात्रेतानकृतंद्वापरंनच १५ ब्रूयाःकर्णइतोगत्वाद्रोणंशांतनवंकृपम् ॥ सौम्योऽयंवर्ततेमासःसुप्रापयवसेंधनः १६

वानुषंगिकत्वेनचापेक्षंते । द्वापरेतुअर्थकामौप्राधान्येनधर्मंचतदंगत्वेन । तत्रकृतंनभवितेतिमोक्षात्प्रभ्रंशउक्तः । नत्रेतेतिधर्माद्भ्रंशउक्तः । सचदुर्योधनादीनामस्त्येव । द्वापरंनभवितेतितेषामर्थकामावपिनभविष्यतोयुद्धेनमरणस्यावश्यंभावादित्यर्थः ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ रथारुजौरथभंजकौ १५ सौम्यःचंद्रिकयाअभिरामः १६

१७ संग्रामः संग्रामसाधनकलापः युज्यतांएकीभूयावतिष्ठतां संग्रामारंभस्तुदिनांतरेएवेतिवक्ष्यते १८ । १९ । २० ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे द्विचत्वारिंशदधिकशततमो ऽध्यायः ॥ १४२ ॥ केशवस्येति शुभंराज्यादिलाभं आहितःप्रवेशितःप्रलोभितइत्यर्थः १ । २ । ३ । ४ । ५ । ६ । ७ प्राजापत्यंरोहिणीनक्षत्रं प्रजानांपतिर्दुर्योधनस्तदीयंनामनक्षत्रं उत्तरा भाद्रपदाख्यमितिवा तेनपत्युःपीडयाप्राणिनामपिपीडेतियुक्तं । यद्वाएथ्वीकूर्मोदरस्थांरोहिणीं शनैश्वरःपीडयति तेनमहान्क्षयो राज्ञोनाशश्चेतिभावः ८ कृत्वाचेति ज्येष्ठांअप्राप्ययदिभौमो व

सर्वौषधिवनस्फीतःफलवानल्पमक्षिकः ॥ निष्पंकोरसवत्तोयोनात्युष्णशिशिरःसुखः १७ सप्तमाच्चापिदिवसादमावास्याभविष्यति ॥ संग्रामोयुज्यतांतस्यां तामाहुःशक्रदेवताम् १८ तथाराज्ञोवदेःसर्वान्येयुद्धायाभ्युपागताः ॥ यद्वोमनीषितंतद्वैसर्वंसंपादयाम्यहम् १९ राजानोराजपुत्राश्चदुर्योधनवशानुगाः ॥ प्राप्यशस्त्रेणनिधनंप्राप्स्यंतिगतिमुत्तमाम् २० ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणि कर्णोपनिवादेभगवद्वाक्ये द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥ संजयउवाच ॥ केशवस्यतुतद्वाक्यंकर्णःश्रुत्वाऽहितःशुभम् ॥ अब्रवीदभिसंपूज्यकृष्णंतंमधुसूदनम् १ जानन्मांकिंमहाबाहोसंमोहयितुमिच्छसि ॥ योऽयंपृथिव्याःकार्त्स्न्येनविनाशःसमुपस्थितः २ निमित्तंतत्रशकुनिरहंदुःशासनस्तथा ॥ दुर्योधनश्चनृपतिर्धृतराष्ट्रसुतोऽभवत् ३ असंशयमिदंकृष्णमहद्युद्धमुपस्थितम् ॥ पांडवानांकुरूणांचघोरंरुधिरकर्दमम् ४ राजानोराजपुत्राश्चदुर्योधनवशानुगाः ॥ रणेशस्त्राग्निनादग्धाःप्राप्स्यंतियमसादनम् ५ स्वप्नाहिबहवोघोरादृश्यंतेमधुसूदन ॥ निमित्तानिचघोराणितथोत्पाताःसुदारुणाः ६ पराजयंधार्तराष्ट्रेविजयंचयुधिष्ठिरे ॥ शंसंतइववार्ष्णेयविविधारोमहर्षणाः ७ प्राजापत्यंहिनक्षत्रंग्रहस्तीक्ष्णोमहाद्युतिः ॥ शनैश्चरःपीडयतिपीडयन्प्राणिनोऽधिकम् ८ कृत्वाचांगारकोवक्रंज्येष्ठायांमधुसूदन ॥ अनुराधांप्रार्थयतेमैत्रंसंगमयन्निव ९ नूनंमहद्भयंकृष्णकुरूणांसमुपस्थितम् ॥ विशेषेणहिवार्ष्णेयचित्रांपीडयतेग्रहः १० सोमस्यलक्ष्मव्यावृत्तंराहुरर्कमुपैतिच ॥ दिवश्चोल्काःपतंत्येताःसनिर्घाताःसकंपनाः ११ निष्टनंतिचमातंगामुंचंत्यश्रूणिवाजिनः ॥ पानीयंयवसंचापिनाभिनंदंतिमाधव १२ प्रादुर्भूतेषुचैतेषुभयमाहुरुपस्थितम् ॥ निमित्तेषुमहाबाहोदारुणंप्राणिनाशनम् १३ अल्पेभुक्तेपुरीषंचप्रभूतमिहदृश्यते ॥ वाजिनांवारणानांचमनुष्याणांचकेशव १४ धार्तराष्ट्रस्यसैन्येषुसर्वेषुमधुसूदन ॥ पराभवस्यतल्लिंगमितिप्राहुर्मनीषिणः १५ प्रहृष्टंवाहनंकृष्णपांडवानांप्रचक्षते ॥ प्रदक्षिणामृगाश्चैवतत्तेषांजयलक्षणम् १६ अपसव्यामृगाःसर्वेधार्तराष्ट्रस्यकेशव ॥ वाचश्चाप्यशरीरिण्यस्तत्पराभवलक्षणम् १७

क्रीभवेत्तर्हिज्येष्ठस्यराज्ञोयेमित्रभूतास्तेसर्वेनश्येयुरितिभावः । मैत्रंमित्रसमूहंसंगमयन्नाशयन् । वैवस्वतं संगमनंजनानामित्यादौ संपूर्वस्यगमेर्मारणार्थत्वदर्शनात् ९ चित्रां ग्रहोमहापाताख्यो ज्योतिःशास्त्रप्रसिद्धः तेनराकारस्यवेधाद्राजजातीयानांक्षयोभवितेतिभावः १० लक्ष्मव्यावृत्तंक्षीणत्वादमावास्यासान्निध्यात्क्षीणचंद्रोऽपिपापएव । तस्मिंश्चामावास्यायामर्केणयुक्ते उभयोः शत्रुः सदावक्रीराहुरर्कमुपैतिचेदयंकर्तरीयोगः सोमवंश्यानांसूर्यवंश्यानांचराज्ञांक्षयकरइत्यर्थः ११ । १२ । १३ । १४ । १५ । १६ १७

पुण्यशकुनाहंसादयएव पाठांतरेपुष्पशकुनाः कुक्कुटाः जीवंजीवकाःपक्षिविशेषाः येजीवजीवेत्येवशब्दंकुर्वंतितेषांसंघाश्चकोरादयः १८ पाठांतरेबलाःकाकाः १९ । २० उदपानाःकूपादयोजलाशयाः २१ । २२ गंधर्वनगरंसप्राकारंपरिघःपरिवेशः तत्राकाशेगंधर्वनगरोपर्येव २३ शिवाक्रोष्ट्री वाशतेशब्दंकरोति २४ एकपक्षाक्षिचरणाः पक्षिणो महाराष्ट्रभाषायां'पाकोळी'इतिप्रसिद्धाः

मयूराःपुण्यशकुनाहंससारसचातकाः ॥ जीवंजीवकसंघाश्चाप्यनुगच्छंतिपांडवान् १८ गृध्राःकंकाबकाःश्येनायातुधानास्तथावृकाः ॥ मक्षिकाणांचसंघाता अनुधावंतिकौरवान् १९ धार्तराष्ट्रस्यसैन्येषुभेरीणांनास्तिनिःस्वनः ॥ अनाहताःपांडवानांनदंतिपटहाःकिल २० उदपानाश्चनर्दंतियथागोवृषभास्तथा ॥ धार्तराष्ट्रस्यसैन्येषुतत्पराभवलक्षणम् २१ मांसशोणितवर्षंचवृष्टंदेवेनमाधव ॥ तथागंधर्वनगरंभानुमत्समुपस्थितम् २२ सप्राकारंसपरिखंसवप्रंचारुतोरणम् ॥ कृष्णश्चपरिघस्तत्रभानुमावृत्यतिष्ठति २३ उदयास्तमनेसंध्येवेदयंतीमहद्भयम् ॥ शिवाचवाशतेघोरंतत्पराभवलक्षणम् २४ एकपक्षाक्षिचरणाःपक्षिणो मधुसूदन ॥ उत्सृजंतिमहद्घोरंतत्पराभवलक्षणम् २५ कृष्णग्रीवाश्चशकुनारक्तपादाभयानकाः ॥ संध्यामभिमुखायांतितत्पराभवलक्षणम् २६ ब्राह्मणान्प्रथमंद्वेष्टिगुरूंश्चमधुसूदन ॥ भृत्यान्भक्तिमतश्चापितत्पराभवलक्षणम् २७ पूर्वादिग्लोहिताकाराशस्त्रवर्णाचदक्षिणा ॥ आमपात्रप्रतीकाशापश्चिमामधुसूदन ॥ उत्तराशंखवर्णाभादिशांवर्णाउदाहृताः २८ प्रदीप्ताश्चदिशःसर्वाधार्तराष्ट्रस्यमाधव ॥ महद्भयंवेदयंतितस्मिन्नुत्पातदर्शने २९ सहस्रपादंप्रासादंस्वप्नांतेस्मयुधिष्ठिरः ॥ अधिरोहन्मयादृष्टःसहभ्रातृभिरच्युत ३० श्वेतोष्णीषाश्चदृश्यंतेसर्वेवैशुक्लवाससः ॥ आसनानिचशुभ्राणिसर्वेषामुपलक्षये ३१ तवचापिमयाकृष्णस्वप्नांतेरुधिराविला ॥ अंत्रेणपृथिवीदृष्टापरिक्षिप्ताजनार्दन ३२ अस्थिसंचयमारूढश्चामितौजायुधिष्ठिरः ॥ सुवर्णपात्र्यांसंहृष्टोभुक्तवान्घृतपायसम् ३३ युधिष्ठिरोमयादृष्टोग्रसमानोवसुंधराम् ॥ त्वयादत्तामिमांव्यक्तंभोक्ष्यतेसवसुंधराम् ३४ उच्चंपर्वतमारूढोभीमकर्मावृकोदरः ॥ गदापाणिर्नरव्याघ्रोग्रसन्निवमहीमिमाम् ३५ क्षपयिष्यतिनःसर्वान्ससुव्यक्तंमहारणे ॥ विदितंमेहृषीकेशयतोधर्मस्ततोजयः ३६ पांडुरंगजमारूढोगांडीवीसधनंजयः ॥ त्वयासार्धंहृषीकेशश्रियापरमयाज्वलन् ३७ यूयंसर्वेवधिष्यध्वंतत्रमेनास्तिसंशयः ॥ पार्थिवान्समरेकृष्णदुर्योधनपुरोगमान् ३८ नकुलःसहदेवश्चसात्यकिश्चमहारथः ॥ शुक्लकेयूरकंठत्राःशुक्लमाल्यांबरावृताः ३९ अधिरूढानरव्याघ्रानरवाहनमुत्तमम् ॥ त्रयएतेमयादृष्टाःपांडुरच्छत्रवाससः ४० श्वेतोष्णीषाश्चदृश्यंते त्रयएतेजनार्दन ॥ धार्तराष्ट्रेषुसैन्येषुतान्विजानीहिकेशव ४१ अश्वत्थामाकृपश्चैवकृतवर्माचसात्वतः ॥ रक्तोष्णीषाश्चदृश्यंतेसर्वेमाधवपार्थिवाः ४२ उष्ट्रप्रयुक्तमारूढौभीष्मद्रोणौमहारथौ ॥ मयासार्धंमहाबाहोधार्तराष्ट्रेणवाविभो ४३

घोरंबीत्सं मलमूत्रादिकमित्यर्थः २५ । २६ ।२७ २८ । २९ सहस्रपादंसहस्रस्तंभं ३० । ३१ तवपृथिवीतिसंबंधःत्वच्छरीरमित्यर्थः ॥ परिक्षिप्तापरिवेष्टिता ३२ वसुंधरांग्रसमानोमृद्भक्षणंकुर्वन् ३३ । ३४ । ३५ । ३६ । ३७ । ३८ शुक्लानिमौक्तिकमयत्वात् केयूराणिबाहुभूषणानि कंठत्राणिकंठपूरकारूयानि शिरोदेशमारभ्यअंसपर्यंतंलंबमानानिकंठावरणानि येषांतेशुक्लकेयूरकंठत्राः ३९ । ४० । ४१ । ४२ । ४३

४४ । ४५ तवहृदयं कर्तृ ममवचोनोपैतिर्नांगीकरोति ४६ । ४७ । ४८ । ४९ पीडितंयथास्यात्तथागाढंपरिष्वज्येत्यर्थः ५० । ५१ । ५२ ॥ इतिकरणे कर्णोपनिवादः कर्णस्यभेदनम् ॥ ॥
॥ इति उद्योगपर्वणि नीलकंठीये भारतभावद्वीपे त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥ ॥ असिद्धानुनये विफलविनये १ क्रोशतइत्यनादरेषष्ठी २ । ३ उपप्लव्ये विराटनगरे
४ विधर्मेधर्महीने ५ । ६ अधर्मेणेति हियस्मात् येषांअधर्मेणकृतमपि वैकार्यविकारजनकंवैरं ईदृशं चतुर्दशेवर्षेस्वंराज्यंप्राप्स्यथेतिप्रतिज्ञायाअयथाकरणरूपं धर्मिष्ठं धर्मयुक्तमेवभवति ये

अगस्त्यशास्तांचदिशंप्रयाताःस्मजनार्दन ॥ अचिरेणैवकालेनप्राप्स्यामोयमसादनम् ४४ अहंचान्येचराजानोयच्चतत्क्षत्रमंडलम् ॥ गांडीवाग्निंप्रवेक्ष्याम इतिमेनास्तिसंशयः ४५ ॥ कृष्णउवाच ॥ उपस्थितविनाशेयंनूनमद्यवसुंधरा ॥ यथाहिमेवचःकर्णनोपैतिहृदयंतव ४६ सर्वेषांतातभूतानांविनाशेप्रत्युपस्थिते ॥ अनयोनयसंकाशोहृदयान्नापसर्पति ४७ ॥ कर्णउवाच ॥ अपित्वांकृष्णपश्यामजीवंतोऽस्मान्महारणात् ॥ समुत्तीर्णामहाबाहोवीरक्षत्रविनाशनात् ४८ अथवासंगमःकृष्णस्वर्गेनोभविताध्रुवम् ॥ तत्रेदानींसमेष्यामःपुनःसार्धंत्वयाऽनघ ४९ ॥ संजयउवाच ॥ इत्युक्त्वामाधवंकर्णःपरिष्वज्यचपीडितम् ॥ विसर्जितःकेशवेनरथोपस्थादवातरत् ५० ततःस्वरथमास्थायजांबूनदविभूषितम् ॥ सहास्माभिर्निववृतेराधेयोदीनमानसः ५१ ततःशीघ्रतरंप्रायात्केशवःसहसात्यकिः ॥ पुनरुच्चारयन्वाणीर्याहियाहीतिसारथिम् ५२ ॥ इतिश्रीमहाभारतेउद्योगपर्वणि भगवद्यानपर्वणिकर्णोपनिवादेकृष्णकर्णसंवादे त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ असिद्धानुनयेकृष्णेकुरुभ्यःपांडवान्गते ॥ अभिगम्यपृथांक्षत्ताशनैःशोचन्निवाब्रवीत् १ जानासिमेजीवपुत्रिभावंनित्यमविग्रहे ॥ क्रोशतोनचगृह्णीतेवचनंमेसुयोधनः २ उपपन्नोह्यसौराजाचेदिपांचालकेकयैः ॥ भीमार्जुनाभ्यांकृष्णेनयुयुधानयमैरपि ३ उपप्लव्येनिविष्टोऽपिधर्ममेवयुधिष्ठिरः ॥ कांक्षतेज्ञातिसौहार्दाद्बलवान्दुर्बलोयथा ४ राजातुधृतराष्ट्रोऽयंवयोवृद्धोनशाम्यति ॥ मत्तःपुत्रमदेनैवविधर्मेपथिवर्तते ५ जयद्रथस्यकर्णस्यतथादुःशासनस्यच ॥ सौबलस्यचदुर्बुद्धेर्मिथोभेदःप्रवर्त्स्यते ६ अधर्मेणहिधर्मिष्ठंकृतंवैकार्यमीदृशम् ॥ येषांतेषामयंधर्मःसानुबंधोभविष्यति ७ क्रियमाणेबलाद्धर्मेकुरुभिःकोनसंज्वरेत् ॥ असाम्नाकेशवेयातेसमुद्योक्ष्यंतिपांडवाः ८ ततःकुरूणामनयोभवितावीरनाशनः ॥ चिंतयन्नलभेनिद्रामहःसुचनिशासुच ९ श्रुत्वातुकुंतीतद्वाक्यमर्थकामेनभाषितम् ॥ सानिःश्वसंतीदुःखार्तामनसाविममर्शह १० धिगस्त्वर्थंयत्कृतेयंमहाञ्ज्ञातिवधःकृतः ॥ वर्त्स्यंतेसुहृदांचैवयुद्धेस्मिन्वैपराभवः ११ पांडवाश्चेदिपचालायादवाश्चसमागताः ॥ भारतैःसहयोत्स्यंति किंनुदुःखमतःपरम् १२

षामधर्मकृतमेववैरं धर्मवद्भातीत्यर्थः तेषांअयंविकृतोधर्मः सानुबंधः सफलो भविष्यति अधर्मफलंविनाशस्तेषांभविष्यत्येवेत्यर्थः ७ बलाद्धर्मे पाखंडिनांपारदार्यंउभयसंतोषकरमितिद्वयोरपि
धर्महेतुरितिबलात्कल्पनाशास्त्रबहिर्भूतातद्वदयमपीत्यर्थः ८ । ९ अर्थकामेनाहितकामेन १० कृतःनिश्चितत्वात्कृतइव ११ । १२

पश्येपश्यामि आर्षमात्मनेपदं अयुद्धेयुद्धाभावे १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ तंलब्ध्वामंत्रंप्राप्यआचरं तेनमंत्रेणदेवतावाहनारूपंकार्यंकृतवतीआसा दयंलब्धवती २४ पुत्रवत्परिरक्षितइत्यत्रकामंचपरित्रासितइतिपाठेस्वेच्छयात्यक्तइत्यर्थः २५ कार्यार्थंअवश्यकर्तव्यंप्रयोजनं २६ घृणिनःदयालोः सत्यसंगिनःसत्यरतस्य २७ । २८ उत्तरवा

पश्येदोषंध्रुवंयुद्धेतथाऽयुद्धेपराभवम् ॥ अधनस्यमृतंश्रेयोनहिज्ञातिक्षयोजयः १३ इतिमेचिंतयंत्यावैहृदिदुःखंप्रवर्तते ॥ पितामहःशांतनवआचार्यश्चयुधांप तिः १४ कर्णश्चधार्तराष्ट्रार्थंवर्धयंतिभयंमम ॥ नाचार्यःकामवान्शिष्यैर्द्रोणोयुद्धेघतजातुचित् १५ पांडवेषुकथंहार्दंकुर्यान्नचपितामहः ॥ अयंत्वेकोवृथादृष्टिर्धार्तरा ष्ट्रस्यदुर्मतेः १६ मोहानुवर्तीसततंपापाद्वेष्टिचपांडवान् ॥ महत्यनर्थेनिर्बंधीबलवांश्चविशेषतः १७ कर्णःसदापांडवानांतन्मेदहतिसंप्रति ॥ आशंसेत्वद्यकर्णस्य मनोऽहंपांडवान्प्रति १८ प्रसादयितुमासाद्यदर्शयंतीयथातथम् ॥ तोषितोभगवान्यत्रदुर्वासामेवरंददौ १९ आह्वानंमंत्रसंयुक्तंवसंत्याःपितृवेश्मनि ॥ साह मंतःपुरेराज्ञःकुंतीभोजपुरस्कृता २० चिंतयंतीबहुविधंहृदयेनविदूयता ॥ बलाबलंचमंत्राणांब्राह्मणस्यचवाग्बलम् २१ स्त्रीभावाद्बालभावाच्चचिंतयं तीपुनःपुनः ॥ धात्र्याविस्रब्धयागुप्तासखीजनवृतातदा २२ दोषंपरिहरंतीचपितुश्चारित्ररक्षिणी ॥ कथंनुसुकृतंमेस्यान्नापराधवतीकथम् २३ भवेयमि तिसंचिंत्यब्राह्मणंतंनमस्यच ॥ कौतूहलात्तुतंलब्ध्वाबालिश्यादाचरंतदा ॥ कन्यासतीदेवमर्कमासादयमहंततः २४ योऽसौकानीनगर्भोमेपुत्रवत्परिर क्षितः ॥ कस्मान्नकुर्याद्वचनंपथ्यंभ्रातृहितंतथा २५ इतिकुंतीविनिश्चित्यकार्यंनिश्चयमुत्तमम् ॥ कार्यार्थमभिनिश्चित्ययमौभागीरथींप्रति २६ आत्मज स्यततस्तस्यघृणिनःसत्यसंगिनः ॥ गंगातीरेपृथाऽश्रौषीद्वेदाध्ययननिःस्वनम् २७ प्राङ्मुखस्योर्ध्वबाहोःसापर्यतिष्ठतपृष्ठतः ॥ जप्यावसानंकार्यार्थंप्रती क्षंतीतपस्विनी २८ अतिष्ठत्सूर्यतापार्ताकर्णस्योत्तरवाससि ॥ कौरव्यपत्नीवार्ष्णेयीपद्ममालेवशुष्यती २९ आपृष्ठतापाज्जप्त्वासपरिवृत्त्ययतव्रतः ॥ दृष्ट्वाकुं तीमुपातिष्ठदभिवाद्यकृतांजलिः ३० यथान्यायंमहातेजामानीधर्मभृतांवरः ॥ उत्स्मयन्प्रणतःप्राहकुंतींवैकर्तनोवृषः ३१ ॥ इतिश्रीमहाभारतेउद्योगपर्व णिभगवद्यानपर्वणि कुंतीकर्णसमागमेचतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥ ॥ ५ ॥ ॥ कर्णउवाच ॥ राधेयोऽहमाधिरथिःकर्णस्त्वामभि वादये ॥ प्राप्ताकिमर्थंभवतीब्रूहिकिंकरवाणिते १ ॥ कुंत्युवाच ॥ कौंतेयस्त्वंनराधेयोनतवाधिरथःपिता ॥ नासिसूतकुलेजातःकर्णतद्विद्धिमेवचः २ कानीन स्त्वंमयाजातःपूर्वजःकुक्षिणाधृतः ॥ कुंतिराजस्यभवनेपार्थस्त्वमसिपुत्रक ३ प्रकाशकर्मातपनोयोऽयंदेवोविरोचनः ॥ अजीजनत्त्वांमय्येषकर्णशस्त्रभृतांवरम् ४ कुंडलीबद्धकवचोदेवगर्भःश्रियावृतः ॥ जातस्त्वमसिदुर्धर्षमयापुत्रपितुर्गृहे ५ सत्वंभ्रातॄनसंबुद्ध्यमोहाद्यदुपसेवसे ॥ धार्तराष्ट्रान्नतद्युक्तंत्वयिपुत्रविशेषतः ६

ससिउत्तरीयवस्त्रच्छायायां २९ आपृष्ठतापादपराह्णपर्यंतमित्यर्थः ३० उत्स्मयन्उद्गतविस्मयः ३१ ॥ ॥ इतिउद्योगपर्वणिनैलकंठीये भारतभावदीपे चतुश्चत्वारिंशदधिकशततमो ऽध्यायः ॥ १४४ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ राधेयइति १ । २ । ३ । ४ । ५ । ६

एकंपुत्रमेवस्नेहेनपश्यंतीएकदर्शिनी ७ । ८ संनमंतांप्रह्वाभवंतु ९ भवेतांवर्धेतां संहितात्मनोःमिलितचेतसोः १० । ११ । सूतपुत्रेतिशब्दोमाभूदितिशेषः १२ ॥ इतिउद्योगपर्वणिनीलकंठीये
भारतभावदीपे पंचचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥ ॥ छ ॥ ॥ ततइति ॥ १ । २ । ३ नश्रद्दधेकर्तव्यत्वेननमन्ये धर्मद्वारंधर्मापगमद्वारं तवनियोगकरणंत्वदाज्ञप्तार्था
नुष्ठानं ४ सुमहात्ययंसुमहान्अत्ययोजातिभ्रंशाख्योविनाशोयस्मात् अपाकीर्णस्त्यक्तः यशोमाहात्म्यख्यातिःकीर्तिःसद्भिस्तस्याःकीर्तनं ५ त्वत्कृतेत्वत्सुखार्थं कानीनोगर्भः प्रकटोमाभूदितिहे

एतद्धर्मफलंपुत्रनराणांधर्मनिश्चये ॥ यत्तुष्यंत्यस्यपितरोमाताचाप्येकदर्शिनी ७ अर्जुनेनार्जितांपूर्वंहृतांलोभादसाधुभिः ॥ आच्छिद्यधार्तराष्ट्रेभ्योभुंक्ष्वयौ
धिष्ठिरीश्रियम् ८ अद्यपश्यंतिकुरवःकर्णार्जुनसमागमम् ॥ सौभ्रात्रेणसमालक्ष्यसंनमंतामसाधवः ९ कर्णार्जुनौवैभवेतांयथारामजनार्दनौ ॥ असाध्यंकिंनु
लोकेस्याद्युवयोःसंहितात्मनोः १० कर्णशोभिष्यसेनूनंपंचभिर्भ्रातृभिर्वृतः ॥ देवैःपरिवृतोब्रह्मावेद्यामिवमहाध्वरे ११ उपपन्नोगुणैःसर्वैर्ज्येष्ठःश्रेष्ठेषुबंधुषु ॥
सूतपुत्रेतिमाशब्दःपार्थस्त्वमसिवीर्यवान् १२ ॥ इतिश्रीमहाभारतेउद्योगपर्वणि भगवद्यानपर्वणिकुंतीकर्णसमागमेपंचचत्वारिंशदधिकशततमोऽध्यायः ॥
॥ १४५ ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ ततःसूर्यान्निश्चरितांकर्णःशुश्रावभारतीं ॥ दुरत्ययांप्रणयिनींपितृवद्भास्करेरिताम् १ सत्यमाहपृथावाक्यं
कर्णमातृवचःकुरु ॥ श्रेयस्तेस्यान्नरव्याघ्रसर्वमाचरतस्तथा २ ॥ वैशंपायनउवाच ॥ एवमुक्तस्यमात्राचस्वयंपित्राचभानुना ॥ चचालनैवकर्णस्यमतिःस
त्यधृतेस्तदा ३ ॥ कर्णउवाच ॥ नचैतच्छ्रद्दधेवाक्यंक्षत्रियेभाषितंत्वया ॥ धर्मद्वारंममैतत्स्यान्नियोगकरणंतव ४ अकरोन्मयियत्पापंभवतीसुमहात्ययम् ॥
अपाकीर्णोऽस्मियन्मातस्तद्यशःकीर्तिनाशनम् ५ अहंचेत्क्षत्रियोजातोनप्राप्तःक्षत्रसत्क्रियाम् ॥ त्वत्कृतेकिंनुपापीयःशत्रुःकुर्यान्ममाहितम् ६ क्रियाकाले
त्वनुक्रोशमकृत्वात्वमिमंमम ॥ हीनसंस्कारसमयमद्यमांसमचूचुदः ७ नवैममहितंपूर्वंमातृवच्चेष्टितंत्वया ॥ सामांसंबोधयस्यद्यकेवलात्महितैषिणी ८ कृष्णे
नसहितात्कोवैनव्यथेतधनंजयात् ॥ कोऽद्यभीतंनमांविद्यात्पार्थानांसमितिंगतम् ९ अभ्राताविदितःपूर्वंयुद्धकालेप्रकाशितः ॥ पांडवान्यदिगच्छामिकिंमां
क्षत्रंवदिष्यति १० सर्वकामैःसंविभक्तःपूजितश्चयथासुखम् ॥ अहंवैधार्तराष्ट्राणांकुर्यांतदफलंकथम् ११ उपनह्यपरैर्वैरंयेमांनित्यमुपासते ॥ नमस्कुर्वंतिच
सदावसवोवासवंयथा १२ ममप्राणेनयेशत्रूञ्शक्ताःप्रतिसमासितुम् ॥ मन्यंतेतेकथंतेषामहंछिंद्यांमनोरथम् १३ मयाप्लवेनसंग्रामंतितीर्षंतिदुरत्ययम् ॥ अ
पारेपारकामायेत्यजेयंतानहंकथम् १४ अयंहिकालःसंप्राप्तोधार्तराष्ट्रोपजीविनाम् ॥ निर्वेष्टव्यंमयातत्रप्राणानपरिरक्षता १५ कृतार्थाःसुभृतायेहि
कृत्यकालेह्युपस्थिते ॥ अनवेक्ष्यकृतंपापाविकुर्वंत्यनवस्थिताः १६

४०

तोरहंक्षत्रसत्क्रियांचेन्नप्राप्तस्तर्हित्वदन्यःकःशत्रुः किंममाहितंपापीयइतिइतोऽपिपापतरंकुर्यान्नकोपीत्यर्थः ६ क्रियाकालेक्षत्रियोचितसंस्कारकाले अनुक्रोशंदयां समचूचुदःस्वकार्यार्थंप्रेरितव
त्यसि ७ । ८ । ९ । १० । ११ उपनह्यबद्ध्वा १२ प्रतिसमासितुंजेतुं १३ । १४ निर्वेष्टव्यंभुक्तस्यतदन्नादेरानृण्यंकर्तव्यं १५ । १६

१७ । १८ । १९ वध्यान्वधार्हान् विषह्यान्हंतुंशक्यानपीत्यर्थः २० । २१ । २२ । २३ । २४ । २५ । २६ साचसचतौ धर्माधर्मौनत्यजतोधर्माधर्मैकसंश्रयौ प्रार्थितावपिपित्राद्यैःकर्णदुर्योध नाविवेतिकृत्स्नाख्यायिकातात्पर्यम् २७ ॥ इ० उ० प० नी० भा० भा० षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥ ॥ आगम्येति पांडवानांपुरइतिशेषः १ । २ । ३ । ४ नागपुरंहा

राजकिल्बिषिणांतेषांभर्तृपिंडापहारिणाम् ॥ नैवायंनपरोलोकोविद्यतेपापकर्मणाम् १७ धृतराष्ट्रस्यपुत्राणामर्थेयोत्स्यामितेसुतैः ॥ बलंचशक्तिंचास्थायन वैत्वय्यनृतंवदे १८ आनृशंस्यमथोवृत्तंरक्षन्सत्पुरुषोचितम् ॥ अतोऽर्थकरमप्येतन्नकरोम्यद्यतेवचः १९ नचतेऽयंसमारंभोमयिमोघोभविष्यति ॥ वध्या न्विषह्यान्संग्रामेनहनिष्यामितेसुतान् २० युधिष्ठिरंचभीमंचयमौचैवार्जुनादृते ॥ अर्जुनेनसमंयुद्धमपियौधिष्ठिरेबले २१ अर्जुनंहिनिहत्याजौसंप्राप्तंस्यात्फ लंमया ॥ यशसाचापियुज्येयंनिहतःसव्यसाचिना २२ नतेजातुनशिष्यंतिपुत्राःपंचयशस्विनि ॥ निरर्जुनाःसकर्णावासार्जुनावाहतेमयि २३ इतिकर्णवचः श्रुत्वाकुंतीदुःखात्प्रवेपती ॥ उवाचपुत्रमाश्लिष्यकर्णंधैर्यादकंपनम् २४ एवंवैभाव्यमेतेनक्षयंयास्यंतिकौरवाः ॥ यथात्वंभाषसेकर्णदैवंतुबलवत्तरम् २५ त्वया चतुर्णांभ्रातॄणामभयंशत्रुकर्शन ॥ दत्तंतत्प्रतिजानीहिसंगरप्रतिमोचनम् २६ अनामयंस्वस्तिचेतिपृथाऽथोकर्णमब्रवीत् ॥ तांकर्णोऽथतथेत्युक्त्वाततस्तौजग्म तुःपृथक् २७ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणि कुंतीकर्णसमागमे षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥ ॥ ५ ॥ ॥ वैशंपाय नउवाच ॥ आगम्यहास्तिनपुरादुपप्लव्यमरिंदमः ॥ पांडवानांयथावृत्तंकेशवःसर्वमुक्तवान् १ संभाष्यसुचिरंकालंमंत्रयित्वापुनःपुनः ॥ स्वमेवभवनंशौरिर्वि श्रामार्थंजगामह २ विसृज्यसर्वान्नृपतीन्विराटप्रमुखांस्तदा ॥ पांडवाभ्रातरःपंचभानावस्तंगतेसति ३ संध्यामुपास्यध्यायंतस्तमेवगतमानसाः ॥ आना य्यकृष्णंदाशार्हंपुनर्मंत्रममंत्रयन् ४ ॥ युधिष्ठिरउवाच ॥ त्वयानागपुरंगत्वासभायांधृतराष्ट्रजः ॥ किमुक्तःपुंडरीकाक्षतन्नःशंसितुमर्हसि ५ ॥ वासुदेवउवाच॥ मयानागपुरंगत्वासभायांधृतराष्ट्रजः ॥ तथ्यंपथ्यंहितंचोक्तोनचगृह्णातिदुर्मतिः ६ ॥ युधिष्ठिरउवाच ॥ तस्मिन्नुत्पथमापन्नेकुरुवृद्धःपितामहः ॥ किमुक्तवा न्हृषीकेशदुर्योधनममर्षणम् ७ आचार्योवामहाभागभारद्वाजःकिमब्रवीत् ॥ पितावाधृतराष्ट्रस्तंगांधारीवाकिमब्रवीत् ८ पितायवीयानस्माकंक्षत्ताधर्मविदां वरः ॥ पुत्रशोकाभिसंतप्तःकिमाहधृतराष्ट्रजम् ९ किंचसर्वेनृपतयःसभायांयेसमासते ॥ उक्तवंतोयथातत्त्वंतद्ब्रूहित्वंजनार्दन १० उक्तवान्हिभवान्सर्वंवचनंकु रुमुख्ययोः ॥ धार्तराष्ट्रस्यतेषांहिवचनंकुरुसंसदि ११ कामलोभाभिभूतस्यमंदस्यप्राज्ञमानिनः ॥ अप्रियंहृदयेमह्यंतन्नतिष्ठतिकेशव १२ तेषांवाक्यानिगो विंदश्रोतुमिच्छाम्यहंविभो ॥ यथाचनाभिपद्येतकालस्ताततथाकुरु ॥ भवान्हिनोगतिःकृष्णभवान्नाथोभवान्गुरुः १३ ॥ वासुदेवउवाच ॥ शृणुराजन्यथा वाक्यमुक्तोराजासुयोधनः ॥ मध्येकुरूणांराजेंद्रसभायांतान्निबोधमे १४

स्तिनपुरम् ५ पथ्यंन्यायोपेतं हितंउभयत्रजयावहम् ६ । ७ । ८ । ९ । १० कुरुमु ख्ययोःभीष्मधृतराष्ट्रयोः तेषांराज्ञांचवचनं यच्चभवानुक्तवान्वचनंमह्यंमदर्थंतत्सर्वंधार्त्तराष्ट्रस्यत्द्धृदयेनतिष्ठतीतिद्वयोःसंबंधः ११ । १२ नाभिपद्येत नातिक्रामेत नोऽस्माकम् १३ । १४

१५ । १६ । १७ । १८ कालींसत्यवतीम् १९ प्रतीतःतुष्टः २० । २१ । २२ । २३ विप्रवासितः दूरेस्थापितः रामभयात्स्वयंपलायनेनप्रजाभिस्तदीयशिबिरस्यशून्यताकरणात् २४ । २५

मयाविश्राविते वाक्येजहासधृतराष्ट्रजः ॥ अथभीष्मःसुसंक्रुद्धइदंवचनमब्रवीत् १५ दुर्योधननिबोधेदंकुलार्थेयद्ब्रवीमिते ॥ तच्छ्रुत्वाराजशार्दूलस्वकुलस्यहितं कुरु १६ ममतातपिताराजन्शांतनुर्लोकविश्रुतः ॥ तस्याहमेकएवासंपुत्रःपुत्रवतांवरः १७ तस्यबुद्धिःसमुत्पन्नाद्वितीयःस्यात्कथंसुतः ॥ एकपुत्रमपुत्रंवैप्र वदंतिमनीषिणः १८ नचोच्छेदंकुलंयायाद्विस्तीर्येच्चकथंयशः ॥ सस्याहमीप्सितंबुद्ध्वाकालींमातरमावहम् १९ प्रतिज्ञांदुष्करांकृत्वापितुरर्थेकुलस्यच ॥ अराजाचोर्ध्वरेताश्चयथासुविदितंतव ॥ प्रतीतोनिवसाम्येषप्रतिज्ञामनुपालयन् २० तस्यांजज्ञेमहाबाहुःश्रीमान्कुरुकुलोद्वहः ॥ विचित्रवीर्योधर्मात्माकनीया न्ममपार्थिव २१ स्वर्यातेऽहंपितरितंस्वराज्येसन्न्यवेशयम् ॥ विचित्रवीर्यंराजानंभृत्योभूत्वाह्यधश्चरः २२ तस्याहंसदृशान्दारान्राजेंद्रसमुपाहरम् ॥ जित्वा पार्थिवसंघातमपितेबहुशःश्रुतम् २३ ततोरामेणसमरेद्वंद्वयुद्धमुपागमम् ॥ सहिरामभयादेभिर्नागरैर्विप्रवासितः २४ दारेष्वत्यासक्तश्चयक्ष्माणंसमपद्यत ॥ यदात्वराजकेराष्ट्रेनववर्षसुरेश्वरः ॥ तदाऽभ्यधावन्मामेवप्रजाःक्षुद्भयपीडिताः २५ ॥ प्रजाऊचुः ॥ उपक्षीणाःप्रजाःसर्वाराजाभवभवायनः ॥ ईतीःप्रणुदभ द्रंतेशांतनोःकुलवर्धन २६ पीड्यंतेतेप्रजाःसर्वाव्याधिभिर्भृशदारुणैः ॥ अल्पावशिष्टागांगेयताःपरित्रातुमर्हसि २७ व्याधीन्प्रणुदवीरत्वंप्रजाधर्मेणपालय ॥ त्वयिजीवतिमाराष्ट्रंविनाशमुपगच्छतु २८ ॥ भीष्मउवाच ॥ प्रजानांक्रोशतीनांवैनैवाक्षुभ्यतमेमनः ॥ प्रतिज्ञांरक्षमाणस्यसद्वृत्तंस्मरतस्तथा ॥ ततःपौ रामहाराजमाताकालीचमेशुभा २९ भृत्याःपुरोहिताचार्याब्राह्मणाश्चबहुश्रुताः ॥ मामूचुर्भृशसंतप्ताभवराजेतिसंततम् ३० प्रतीपरक्षितंराष्ट्रंत्वांप्राप्यविन शिष्यति ॥ सत्वमस्मद्धितार्थंवैराजाभवमहामते ३१ इत्युक्तःप्रांजलिर्भूत्वादुःखितोभृशमातुरः ॥ तेभ्योन्यवेदयंतत्रप्रतिज्ञांपितृगौरवात् ३२ ऊर्ध्वरेताह्यरा जाचकुलस्यार्थेपुनःपुनः ॥ विशेषतस्त्वदर्थंचधुरिमामांनियोजय ३३ ततोऽहंप्रांजलिर्भूत्वामातरंसंप्रसादयम् ॥ नांबशांतनुनाजातःकौरवंवंशमुद्वहन् ३४ प्रतिज्ञांवितथांकुर्यामितिराजन्पुनःपुनः ॥ विशेषतस्त्वदर्थंचप्रतिज्ञांकृतवानहम् ३५ अहंप्रेष्यश्चदासश्चतवाद्यसुतवत्सले ॥ एवंतामनुनीयाहंमातरंजनमेवच ३६ आयाचंभ्रातृदारेषुतदाव्यासंमहामुनिम् ॥ सहमात्रामहाराजप्रसाद्यतमृषिंतदा ३७ अपत्यार्थंमहाराजप्रसादंकृतवांश्चसः ॥ त्रीन्सपुत्रानजनयत्तदाभर तसत्तम ३८ अंधःकरणहीनत्वान्नवैराजापितातव ॥ राजातुपांडुरभवन्महात्मालोकविश्रुतः ३९ सराजातस्यतेपुत्राःपितुर्दायाद्यहारिणः ॥ मातातकलहंकार्षी राज्यस्यार्धंप्रदीयताम् ४० मयिजीवतिराज्यंकःसंप्रशासेत्पुमानिह ॥ मावमंस्थावचोमह्यंशममिच्छामिवःसदा ४१ नविशेषोऽस्तिमेपुत्रत्वयितेषुचपार्थिव ॥ मतमेतत्पितुस्तुभ्यंगांधार्याविदुरस्यच ४२

ईतीः अनावृष्ट्यादिरूपाः २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९।४०।४१।४२

४३ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपेसप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥ भीष्मेणोक्तइति १ । २ । ३ ज्येष्ठोंऽधत्वादनर्हः क्षत्ताविर्योनित्वादनर्हइतिसूचयन् यथाज्येष्ठा



श्रोतव्यंखलुवृद्धानांनाभिशंकीर्वचोमम ॥ नाशयिष्यसिमासर्वमात्मानंपृथिवींतथा ४३ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिभगवद्वाक्येसप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥ वासुदेवउवाच ॥ भीष्मेणोक्तेततोद्रोणोदुर्योधनमभाषत ॥ मध्येनृपाणांभद्रंतेवचनंवचनक्षमः १ प्रातीपःशांतनुस्तातकुलस्यार्थेयथास्थितः ॥ यथादेवव्रतोभीष्मःकुलस्यार्थेस्थितोऽभवत् २ तथापांडुर्नरपतिःसत्यसंधोजितेंद्रियः ॥ राजाकुरूणांधर्मात्मासुव्रतःसुसमाहितः ३ ज्येष्ठायराज्यमददद्धृतराष्ट्रायधीमते ॥ यवीयसेतथाक्षत्रेकुरूणांवंशवर्धनः ४ ततःसिंहासनेराजन्स्थापयित्वैनमच्युतम् ॥ वनंजगामकौरव्योभार्याभ्यांसहितोनृपः ५ नीचैःस्थित्वातुविदुरउपास्तेस्मविनीतवत् ॥ प्रेष्यवत्पुरुषव्याघ्रोवालव्यजनमुत्क्षिपन् ६ ततःसर्वाःप्रजास्तातधृतराष्ट्रंजनेश्वरम् ॥ अन्वपद्यंतविधिवद्यथापांडुंजनाधिपम् ७ विसृज्यधृतराष्ट्रायराज्यंसविदुरायच ॥ चचारपृथिवींपांडुःसर्वांपरपुरंजयः ८ कोशसंवननेदानेभृत्यानांचान्ववेक्षणे॥ भरणेचैवसर्वस्यविदुरःसत्यसंगरः ९ संधिविग्रहसंयुक्तोराज्ञांसंवाहनक्रियाः ॥ अवैक्षतमहातेजाभीष्मःपरपुरंजयः १० सिंहासनस्थोनृपतिर्धृतराष्ट्रोमहाबलः ॥ अन्वास्यमानःसततंविदुरेणमहात्मना ११ कथंतस्यकुलेजातःकुलभेदंव्यवस्यसि ॥ संभूयभ्रातृभिःसार्धंभुंक्ष्वभोगाञ्जनाधिप १२ ब्रवीम्यहंनकार्पण्यान्नार्थहेतोःकथंचन ॥ भीष्मेणदत्तमिच्छामिनत्वयाराजसत्तम १३ नाहंत्वत्तोऽभिकांक्षिष्येवृत्त्युपायंजनाधिप ॥ यतोभीष्मस्ततोद्रोणोयद्भीष्मस्त्वाहतत्कुरु १४ दीयतांपांडुपुत्रेभ्योराज्यार्धमरिकर्शन ॥ सममाचार्यकंताततवतेषांचमेसदा १५ अश्वत्थामायथामह्यंतथाश्वेतहयोमम ॥ बहुनाकिंप्रलापेनयतोधर्मस्ततोजयः १६ ॥ वासुदेवउवाच ॥ एवमुक्तेमहाराजद्रोणेनामिततेजसा ॥ व्याजहारततोवाक्यंविदुरःसत्यसंगरः ॥ पितुर्वदनमन्वीक्ष्यपरिवृत्त्यचधर्मवित् १७ विदुरउवाच ॥ देवव्रतनिबोधेदंवचनंममभाषतः ॥ प्रनष्टःकौरवोवंशस्त्वयाऽयंपुनरुद्धृतः १८ तन्मेविलपमानस्यवचनंसमुपेक्षसे ॥ कोऽयंदुर्योधनोनामकुलेस्मिन्कुलपांसनः १९ यस्यलोभाभिभूतस्यमतिंसमनुवर्तसे ॥ अनार्यस्याकृतज्ञस्यलोभेनहृतचेतसः २० अतिक्रामतियःशास्त्रंपितुर्धर्मार्थदर्शिनः ॥ एतेनश्यंतिकुरवोदुर्योधनकृतेनवै २१ यथातेनप्रणश्येयुर्महाराजतथाकुरु ॥ मांचैवधृतराष्ट्रंचपूर्वमेवमहामते २२ चित्रकारइवालेख्यंकृत्वास्थापितवानसि ॥ प्रजापतिःप्रजाःसृष्ट्वायथासंहरतेतथा २३ नोपेक्षस्वमहाबाहोपश्यमानःकुलक्षयम् ॥ अथतेऽद्यमतिर्नष्टाविनाशेप्रत्युपस्थिते २४

यादददत्तथाक्षत्रेविदुरायापिन्यासभूतमददादितिभावः ४ । ५ । ६ । ७ । ८ संवननमात्मीयताकरणं ९ संवाहनक्रियाः संवाहनंसंप्रापणंदानोपदानादिकंताएवक्रियाः १० । ११ १२ कार्पण्याद्युद्धभयात् १३ । १४ । १५ । १६ पितुर्भीष्मस्य १७ । १८ । १९ । २० शास्त्रंआज्ञां दुर्योधनकृतेन दुर्योधनकर्मणा २१ । २२ । २३ । २४

वनंगच्छेति तावतात्वयात्वदनुगामिनाद्रोणेनचत्यक्तोऽयंहीनपक्षोदुर्योधनःपांडवेभ्योभयंप्राप्स्यतीत्याशयः २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ ॥ इतिउ

वनंगच्छमयासार्धंधृतराष्ट्रेणचैवह ॥ बद्ध्वावानिकृतिप्रज्ञंधार्तराष्ट्रंसुदुर्मतिम् २५ शाधीदंराज्यमद्याशुपांडवैरभिरक्षितम् ॥ प्रसीदराजशार्दूलविनाशोदृश्यते
महान् २६ पांडवानांकुरूणांचराज्ञाममिततेजसाम् ॥ विररामैवमुक्त्वातुविदुरोदीनमानसः ॥ प्रध्यायमानःसतदानिःश्वसंश्चपुनःपुनः २७ ततोऽथराज्ञःसु
बलस्यपुत्रीधर्मार्थयुक्तंकुलनाशभीता ॥ दुर्योधनंपापमतिंनृशंसंराज्ञांसमक्षंसुतमाहकोपात् २८ येपार्थिवाराजसभांप्रविष्टाब्रह्मर्षयोयेचसभासदोऽन्ये ॥ शृण्वं
तुवक्ष्यामितवापराधंपापस्यसामात्यपरिच्छदस्य २९ राज्यंकुरूणामनुपूर्वभोज्यंक्रमागतोनःकुलधर्मएषः ॥ त्वंपापबुद्धेऽतिनृशंसकर्मन्राज्यंकुरूणामनया
द्विहंसि ३० राज्येस्थितोधृतराष्ट्रोमनीषीतस्यानुजोविदुरोदीर्घदर्शी ॥ एतावतिक्रम्यकथंनृपत्वंदुर्योधनप्रार्थयसेऽद्यमोहात् ३१ राजाचक्षत्ताचमहानुभावौ
भीष्मेस्थितेपरवंतौभवेताम् ॥ अयंतुधर्मज्ञतयामहात्मानकामयेद्योनृवरोनदीजः ३२ राज्यंतुपांडोरिदमप्रधृष्यंतस्याद्यपुत्राःप्रभवंतिनान्ये ॥ राज्यंतदेत
न्निखिलंपांडवानांपैतामहंपुत्रपौत्रानुगामि ३३ यद्वैब्रूतेकुरुमुख्योमहात्मादेवव्रतःसत्यसंधोमनीषी ॥ सर्वंतदस्माभिरहत्यकार्यंराज्यंस्वधर्मान्परिपालयाद्भिः ॥
३४ अनुज्ञयाचाथमहाव्रतस्यब्रूयान्नृपोऽयंविदुरस्तथैव ॥ कार्यंभवेत्तत्सुहृद्भिर्नियोज्यंधर्मंपुरस्कृत्यसुदीर्घकालम् ३५ न्यायागतंराज्यमिदंकुरूणांयुधिष्ठिरःशा
स्तुवैधर्मपुत्रः ॥ प्रचोदितोधृतराष्ट्रेणराज्ञापुरस्कृतःशांतनवेनचैव ३६ ॥ इतिश्रीम० उ० भग० कृष्णवाक्येअष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥
॥ वासुदेवउवाच ॥ एवमुक्तेतुगांधार्यां धृतराष्ट्रोजनेश्वरः ॥ दुर्योधनमुवाचेदंराजमध्येजनाधिप १ दुर्योधननिबोधेदंयत्त्वांवक्ष्यामिपुत्रक ॥ तथातत्कुरुभद्रं
तेयद्यस्तिपितृगौरवम् २ सोमःप्रजापतिःपूर्वंकुरूणांवंशवर्धनः ॥ सोमाद्बभूवषष्ठोऽयंययातिर्नहुषात्मजः ३ तस्यपुत्राबभूवुर्हिपंचराजर्षिसत्तमाः ॥ तेषांय
दुर्महातेजाज्येष्ठःसमभवत्प्रभुः ४ पूरुर्यवीयांश्चततोयोऽस्माकंवंशवर्धनः ॥ शर्मिष्ठयासंप्रसूतोदुहित्रावृषपर्वणः ५ यदुश्चभरतश्रेष्ठदेवयान्याःसुतोऽभवत् ॥
दौहित्रस्तातशुक्रस्यकाव्यस्यामिततेजसः ६ यादवानांकुलकरोबलवान्वीर्यसंमतः ॥ अवमेनेसतुक्षत्रंदर्पपूर्णःसुमंदधीः ७ नचातिष्ठत्पितुःशास्त्रेबलदर्पविमो
हितः ॥ अवमेनेचपितरंभ्रातृंश्चाप्यपराजितः ८ पृथिव्यांचतुरंतायांयदुरेवाभवद्बली ॥ वशेकृत्वासनृपतीन्न्यवसन्नागसाह्वये ९ तंपितापरमक्रुद्धोययातिर्नहु
षात्मजः ॥ शशापपुत्रंगांधारेराज्याच्चापिव्यरोपयत् १० येचैनमन्ववर्तंतभ्रातरोबलदर्पिताः ॥ शशापतानभिक्रुद्धोययातिस्तनयानथ ११ यवीयांसंततः
पूरुंपुत्रंस्ववशवर्तिनम् ॥ राज्येनिवेशयामासविधेयंनृपसत्तमः १२ एवंज्येष्ठोऽप्यथोत्सिक्तोनराज्यमभिजायते ॥ यवीयांसोऽपिजायंतेराज्यंवृद्धोपसेवया १३
तथैवसर्वधर्मज्ञःपितुर्ममपितामहः ॥ प्रतीपःपृथिवीपालस्त्रिषुलोकेषुविश्रुतः १४
द्योगपर्वणिनी०भा०अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १३८ ॥ छ ॥ एवमुक्तइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ अभिजायतेप्राप्नोति जायंतेलभंते १३ । १४

१५ । १६ त्वग्दोषीकुष्ठी १७ । १८ । १९ । २० वृद्धःप्रतीपः २१ । २२ आत्मजंदेवापिं २३ । २४ । २५ । २६ राज्यंत्यक्कामातुलकुलंसमाश्रितइतिसंबंधः २७ अकारयत्अकरोत् २८ । २९

तस्यपार्थिवसिंहस्यराज्यंधर्मेणशासतः ॥ त्रयःप्रजज्ञिरेपुत्रादेवकल्पायशस्विनः १५ देवापिरभवच्छ्रेष्ठोबाह्लीकस्तदनंतरम् ॥ तृतीयःशांतनुस्तातधृतिमान्मेपितामहः १६ देवापिस्तुमहातेजास्त्वग्दोषीराजसत्तमः ॥ धार्मिकःसत्यवादीचपितुःशुश्रूषणेरतः १७ पौरजानपदानांचसंमतःसाधुसत्कृतः ॥ सर्वेषांबालवृद्धानांदेवापिर्हृदयंगमः १८ वदान्यःसत्यसंधश्चसर्वभूतहितेरतः ॥ वर्तमानःपितुःशास्त्रेब्राह्मणानांतथैवच १९ बाह्लीकस्यप्रियोभ्राताशांतनोश्चमहात्मनः ॥ सौभ्रात्रंचपरंतेषांसहितानांमहात्मनाम् २० अथकालस्यपर्यायेवृद्धोनृपतिसत्तमः ॥ संभारानभिषेकार्थंकारयामासशास्त्रतः २१ कारयामाससर्वाणिमंगलार्थानिवैविभुः ॥ तंब्राह्मणाश्चवृद्धाश्चपौरजानपदैःसह २२ सर्वेनिवारयामासुर्देवापेरभिषेचनम् ॥ सतच्छ्रुत्वातुनृपतिरभिषेकनिवारणम् ॥ अश्रुकंठोऽभवद्राजापर्यशोचतचात्मजम् २३ एवंवदान्योधर्मज्ञःसत्यसंधश्चसोऽभवत् ॥ प्रियःप्रजानामपिसंस्त्वग्दोषेणप्रदूषितः २४ हीनांगंपृथिवीपालंनाभिनंदंतिदेवताः ॥ इतिकृत्वानृपश्रेष्ठंप्रत्यषेधन्द्विजर्षभाः २५ ततःप्रव्यथितांगोऽसौपुत्रशोकसमन्वितः ॥ निवारितंनृपंदृष्ट्वादेवापिःसंश्रितोवनम् ॥ बाह्लीकोमातुलकुलंत्यक्काराज्यंसमाश्रितः ॥ पितृभ्रातॄन्परित्यज्यप्राप्तवान्परमर्धिमत् २७ बाह्लीकेनत्वनुज्ञातःशांतनुर्लोकविश्रुतः ॥ पितर्युपरतेराजन्राजाराज्यमकारयत् २८ तथैवाहंमतिमतापरिचिंत्येहपांडुना ॥ ज्येष्ठःप्रभ्रंशितोराज्याद्धीनांगइतिभारत २९ पांडुस्तुराज्यंसंप्राप्तःकनीयानपिसन्नृपः ॥ विनाशेतस्यपुत्राणामिदंराज्यमरिंदम ३० मय्यभागिनिराज्यायकथंत्वंराज्यमिच्छसि ॥ अराजपुत्रोह्यस्वामीपरस्वंहर्तुमिच्छसि ३१ युधिष्ठिरोराजपुत्रोमहात्मान्यायागतंराज्यमिदंचतस्य ॥ सकौरवस्यास्यकुलस्यभर्ताप्रशासिताचैवमहानुभावः ३२ ससत्यसंधःसतथाऽप्रमत्तःशास्त्रेस्थितोबंधुजनस्यसाधुः ॥ प्रियःप्रजानांसुहृदानुकंपीजितेंद्रियःसाधुजनस्यभर्ता ३३ क्षमातितिक्षादमआर्जवंचसत्यव्रतत्वंश्रुतमप्रमादः ॥ भूतानुकंपाह्यनुशासनंचयुधिष्ठिरेराजगुणाःसमस्ताः ३४ अराजपुत्रस्त्वमनार्यवृत्तोलुब्धःसदाबंधुषुपापबुद्धिः ॥ क्रमागतंराज्यमिदंपरेषांहर्तुंकथंशक्ष्यसिदुर्विनीत ३५ प्रयच्छराज्यार्धमपेतमोहःसवाहनंत्वंसपरिच्छदंच ॥ ततोऽवशेषंतवजीवितस्यसहानुजस्यैवभवेन्नरेंद्र ३६ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणिधृतराष्ट्रवाक्यकथनेएकोनपंचाशदधिकशततमोऽध्यायः ॥१४९॥

॥ वासुदेवउवाच ॥ एवमुक्तेतुभीष्मेणद्रोणेनविदुरेणच ॥ गांधार्याधृतराष्ट्रेणनैवमंदोऽन्वबुध्यत १ अवधूयोत्थितोमंदःक्रोधसंरक्तलोचनः ॥ अन्वद्रवंततंपश्चाद्राजानस्त्यक्तजीविताः २

३० । ३१ । ३२ आसमंतात्अनुकंपीदयावान् ३३ । ३४ । ३५ । ३६ इतिश्रीउद्योगपर्वणिनीलकंठीयेभारतभावदीपेएकोनपंचाशदधिकशततमोऽध्यायः ॥ १४९ ॥ एवमुक्तइति १ । २

पुष्योऽद्येति पुष्यनक्षत्रंहिअश्विन्याःपौर्णमास्याउपरिअष्टम्यांभवति पूर्वमपि सप्तमाद्दिवसादूर्ध्वममावस्याभविष्यतिसंग्रामंयोजयेत्तस्यामित्युक्तत्वात् ३ । ४ । ५ । ६ । ७ साम्न्यंसाम्नोभावः
सामेतियावत् ८ पुनर्भेदश्चकर्णेनसहोपसंवादेन ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ पंचग्राममात्रस्वीकारेणकृत्स्नराज्यसमर्पणरूपंदानमपिप्रयुक्तम् १७ दंडएवोपायोनान्यइत्याह

आज्ञापयच्चराज्ञस्तान्पार्थिवान्नष्टचेतसः ॥ प्रयाध्वंवैकुरुक्षेत्रंपुष्योऽद्येतिपुनःपुनः ३ ततस्तेपृथिवीपालाःप्रययुःसहसैनिकाः ॥ भीष्मंसेनापतिंकृत्वासंहृष्टाः
कालचोदिताः ४ अक्षौहिण्योदशैकाचकौरवाणांसमागताः ॥ तासांप्रमुखतोभीष्मस्तालकेतुर्व्यरोचत ५ यदत्रयुक्तंप्राप्तंचतद्विधत्स्वविशांपते ॥ उक्तंभी
ष्मेणयद्वाक्यंद्रोणेनविदुरेणच ६ गांधार्याधृतराष्ट्रेणसमक्षंममभारत ॥ एतत्तेकथितंराजन्यद्वृत्तंकुरुसंसदि ७ साम्यमादौप्रयुक्तंमेराजन्सौभ्रात्रमिच्छता ॥
अभेदायास्यवंशस्यप्रजानांचविवृद्धये ८ पुनर्भेदश्चमेयुक्तोयदासामनगृह्यते ॥ कर्मानुकीर्तनंचैवदेवमानुषसंहितम् ९ यदानाद्रियतेवाक्यंसामपूर्वंसुयोधनः ॥
तदामयासमानीयभेदिताःसर्वपार्थिवाः १० अद्भुतानिचघोराणिदारुणानिचभारत ॥ अमानुषाणिकर्माणिदर्शितानिमयाविभो ११ निर्भर्त्सयित्वाराज्ञस्तांस्तृणी
कृत्यसुयोधनम् ॥ राधेयंभीषयित्वाचसौबलंचपुनःपुनः १२ द्यूततोधार्तराष्ट्राणांनिंदांकृत्वातथापुनः ॥ भेदयित्वानृपान्सर्वान्वाग्भिर्मंत्रेणचासकृत् १३ पुनः
सामाभिसंयुक्तंसंप्रदानमथाब्रुवम् ॥ अभेदात्कुरुवंशस्यकार्ययोगात्तथैवच १४ तेशूराधृतराष्ट्रस्यभीष्मस्यविदुरस्यच ॥ तिष्ठेयुःपांडवाःसर्वेहित्वामानमधश्चराः
१५ प्रयच्छंतुचतेराज्यमनीशास्तेभवंतुच ॥ यथाऽऽहराजागांगेयोविदुरश्चहितंतव १६ सर्वंभवतुतेराज्यंपंचग्रामान्विसर्जय ॥ अवश्यंभरणीयाहिपितुस्ते
राजसत्तम १७ एवमुक्तोऽपिदुष्टात्मानैवभागंव्यमुंचत ॥ दंडंचतुर्थंपश्यामितेषुपापेषुनान्यथा १८ निर्याताश्चविनाशायकुरुक्षेत्रंनराधिपाः ॥ एतत्तेकथितंरा
जन्यद्वृत्तंकुरुसंसदि १९ नतेराज्यंप्रयच्छंतिविनायुद्धेनपांडव ॥ विनाशहेतवःसर्वेप्रत्युपस्थितमृत्यवः २० ॥ इतिश्रीमहाभारतेउद्योगपर्वणिभगवद्यानपर्वणि
कृष्णवाक्येपंचाशदधिकशततमोऽध्यायः ॥ १५० ॥ समाप्तंचभगवद्यानपर्व ॥ ॥ अथसैन्यनिर्याणपर्व ॥ ॥ वैशंपायनउवाच ॥जनार्दनवचःश्रुत्वाधर्म
राजोयुधिष्ठिरः ॥ भ्रातॄनुवाचधर्मात्मासमक्षंकेशवस्यह १ श्रुतंभवद्भिर्यद्वृत्तंसभायांकुरुसंसदि ॥ केशवस्यापियद्वाक्यंतत्सर्वमवधारितम् २ तस्मात्सेनावि
भागंमेकुरुध्वंनरसत्तमाः ॥ अक्षौहिण्यश्चसप्तैताःसमेताविजयायवै ३ तासांयेपतयःसप्तविख्यातास्तान्निबोधत ॥ द्रुपदश्चविराटश्चधृष्टद्युम्नशिखंडिनौ ४
सात्यकिश्चेकितानश्चभीमसेनश्चवीर्यवान् ॥ एतेसेनाप्रणेतारोवीराःसर्वेतनुत्यजः ५ सर्वेवेदविदःशूराःसर्वेसुचरितव्रताः ॥ ह्रीमंतोनीतिमंतश्चसर्वेयुद्धविशारदाः
६ इष्वस्त्रकुशलाःसर्वेतथासर्वास्त्रयोधिनः ॥ सप्तानामपियोनेतासेनानांप्रविभागवित् ७ यःसहेतरणेभीष्मंशरार्चिःपावकोपमम् ॥ तंतावत्सहदेवात्रप्रब्रूहिकुरुनं
दन ॥ स्वमतंपुरुषव्याघ्रकोनःसेनापतिःक्षमः ८ ॥ सहदेवउवाच ॥ संयुक्तएकदुःखश्चवीर्यवांश्चमहीपतिः ॥ यंसमाश्रित्यधर्मज्ञंस्वमंशमनुयुंज्महे ९



दंडमिति १८ । १९ । २० ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेपंचाशदधिकशततमोऽध्यायः ॥ १५० ॥ जनार्दनेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ संयुक्तःसंबंधी ९

१० । ११ कुलेनवंशेन अभिजनेनस्वजनसमूहेन १२ । १३ । १४ । १५ । १६ अंगिरसोद्रोणस्य १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३०

मत्स्योविराटोबलवान्कृतास्त्रोयुद्धदुर्मदः ॥ प्रसहिष्यतिसंग्रामेभीष्मंतांश्चमहारथान् १० ॥ वैशंपायनउवाच ॥ तथोक्तेसहदेवेनवाक्येवाक्यविशारद ॥ नकुलोऽनंतरंतस्मादिदंवचनमाददे ११ वयसाशास्त्रतोधैर्यात्कुलेनाभिजनेनच ॥ ह्रीमान्बलान्वितःश्रीमान्सर्वशास्त्रविशारदः १२ वेदचास्त्रंभरद्वाजाद्दुर्धर्षःसत्यसंगरः ॥ योनित्यंस्पर्धतेद्रोणंभीष्मंचैवमहाबलम् १३ श्लाघ्यःपार्थिववंशस्यप्रमुखेवाहिनीपतिः ॥ पुत्रपौत्रैःपरिवृतःशतशाखइवद्रुमः १४ यस्ततापतपोघोरंसदारःपृथिवीपतिः ॥ रोषाद्द्रोणविनाशायवीरःसमितिशोभनः १५ पितेवास्मान्समाधत्तेयःसदापार्थिवर्षभः ॥ श्वशुरोद्रुपदोऽस्माकंसेनाग्रंसप्रकर्षतु १६ सद्रोणभीष्मावायातौसहेदितिमतिर्मम ॥ सहिदिव्यास्त्रविद्राजासखाचांगिरसोनृपः १७ माद्रीसुताभ्यामुक्तेतुस्वमतेकुरुनंदनः ॥ वासविर्वासवसमःसव्यसाच्यब्रवीद्वचः १८ योऽयंतपःप्रभावेनऋषिसंतोषणेनच ॥ दिव्यःपुरुषउत्पन्नोज्वालावर्णोमहाभुजः १९ धनुष्मान्कवचीखड्गीरथमारुह्यदंशितः ॥ दिव्यैर्हयवरैर्युक्तमग्निकुंडात्समुत्थितः २० गर्जन्निवमहामेघोरथघोषेणवीर्यवान् ॥ सिंहसंहननोवीरःसिंहतुल्यपराक्रमः २१ सिंहोरस्कःसिंहभुजःसिंहवक्षामहाबलः ॥ सिंहप्रगर्जनोवीरःसिंहस्कंधोमहाद्युतिः २२ सुभ्रूःसुदंष्ट्रःसुहनुःसुबाहुःसुमुखोऽकृशः ॥ सुजत्रुःसुविशालाक्षःसुपादःसुप्रतिष्ठितः २३ अभेद्यःसर्वशस्त्राणांप्रभिन्नइववारणः ॥ जज्ञेद्रोणविनाशायसत्यवादीजितेंद्रियः २४ धृष्टद्युम्नमहंमन्येसहेद्भीष्मस्यसायकान् ॥ वज्राशनिसमस्पर्शान्दीप्तास्यानुरगानिव २५ यमदूतसमान्वेगेनिपातेपावकोपमान् ॥ रामेणाजौविषहितान्वज्रनिष्पेषदारुणान् २६ पुरुषंतंनपश्यामियःसहेतमहाव्रतम् ॥ धृष्टद्युम्नमृतेराजन्नितिमेधीयतेमतिः २७ क्षिप्रहस्तश्चित्रयोधीमतःसेनापतिर्मम ॥ अभेद्यकवचःश्रीमान्मातंगइवयूथपः २८ ॥ भीमसेनउवाच ॥ वधार्थंयःसमुत्पन्नःशिखंडीद्रुपदात्मजः ॥ वदंतिसिद्धाराजेंद्रऋषयश्चसमागताः २९ यस्यसंग्राममध्येतुदिव्यमस्त्रंप्रकुर्वतः ॥ रूपंद्रक्ष्यंतिपुरुषारामस्येवमहात्मनः ३० नतंयुद्धेप्रपश्यामियोभिंद्यात्तुशिखंडिनम् ॥ शस्त्रेणसमरेराजन्सन्नद्धंस्यंदनेस्थितम् ३१ द्वैरथेसमरेनान्योभीष्मंहन्यान्महाव्रतम् ॥ शिखंडिनमृतेवीरंसमेसेनापतिर्मतः ३२ ॥ युधिष्ठिरउवाच ॥ सर्वस्यजगतस्तातसारासारंबलाबलम् ॥ सर्वंजानातिधर्मात्मामतमेषांचकेशवः ३३ यमाहकृष्णोदाशार्हःसोऽस्तुसेनापतिर्मम ॥ कृतास्त्रोऽप्यकृतास्त्रोवावृद्धोवायदिवायुवा ३४ एषनोविजयेमूलमेषताततविपर्यये ॥ अत्रप्राणाश्चराज्यंचभावाभावौसुखासुखे ३५ एषधाताविधाताचसिद्धिरत्रप्रतिष्ठिता ॥ यमाहकृष्णोदाशार्हःसोऽस्तुनोवाहिनीपतिः ३६ ब्रवीतुवदतांश्रेष्ठोनिशासमभिवर्तते ॥ ततःसेनापतिंकृत्वाकृष्णस्यवशवर्तिनः ३७ रात्रेःशेषेव्यतिक्रांतेप्रयास्यामोरणाजिरम् ॥ अधिवासितशस्त्राश्चकृतकौतुकमंगलाः ३८

३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ शस्त्राणामधिवासनंगंधाद्यैःपूजनं कौतुकंरक्षाबंधनं मंगलंस्वस्तिवाचनम् ३८

धनंजयमवेक्ष्येत्यनेनार्जुनाभिमतोधृष्टद्युम्नःसेनापतिरितिस्वाशयंप्रदर्श्येत्यर्थः ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ अस्माकंबलंकर्तृ धार्तराष्ट्रबलंकर्म ४८ । ४९ योगोयुद्धाय सज्जीभवनं । 'द्रव्योपायसन्नहनेष्वपियोगः'इतिविश्वः ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ शकटाअनांसि आपणोवणिग्वीथ्युपलक्षितंविक्रेयद्रव्यं वेशोवेश्याजनाश्रयःपटगृहाणि ।

॥ वैशंपायनउवाच ॥ तस्यतद्वचनंश्रुत्वाधर्मराजस्यधीमतः ॥ अब्रवीत्पुंडरीकाक्षोधनंजयमवेक्ष्यह ३९ ममाप्येतेमहाराजभवद्भिर्यउदाहृताः ॥ नेतारस्तवसेनायामताविक्रांतयोधिनः ४० सर्वएवसमर्थाहितवशत्रूंप्रबाधितुं ॥ इंद्रस्यापिभयंह्येतेजनयेयुर्महाहवे ४१ किंपुनर्धार्तराष्ट्राणांलुब्धानांपापचेतसाम् ॥ मयापिहिमहाबाहोत्वत्प्रियार्थंमहाहवे ४२ कृतोयत्नोमहांस्तत्रशमःस्यादितिभारत ॥ धर्मस्यगतमानृण्यंनस्मवाच्याविवक्षतां ४३ कृतार्थंमन्यतेबालआत्मानमविचक्षणः ॥ धार्तराष्ट्रोबलस्थंचपश्यत्यात्मानमातुरः ४४ युज्यतांवाहिनीसाधुवधसाध्याहिमेमताः ॥ नधार्तराष्ट्राःशक्ष्यंतिस्थातुंदृष्ट्वाधनंजयं ४५ भीमसेनंचसंक्रुद्धंयमौचापियमोपमौ ॥ युयुधानद्वितीयंचधृष्टद्युम्नममर्षणं ४६ अभिमन्युंद्रौपदेयान्विराटद्रुपदावपि ॥ अक्षौहिणीपतींश्चान्यान्नरेंद्रान्भीमविक्रमान् ४७ सारवद्बलमस्माकंदुष्प्रधर्षंदुरासदं ॥ धार्तराष्ट्रबलंसंख्येहनिष्यतिनसंशयः ४८ धृष्टद्युम्नमहंमन्येसेनापतिमरिंदम् ॥ वैशंपायनउवाच॥ एवमुक्तेतुकृष्णेनसंप्राहृष्यन्नरोत्तमाः ४९ तेषांप्रहृष्टमनसांनादःसमभवन्महान् ॥ योगइत्यथसैन्यानांत्वरतांसंप्रधावताम् ५० हयवारणशब्दाश्चनेमिघोषाश्चसर्वतः ॥ शंखदुंदुभिघोषाश्चतुमुलाःसर्वतोऽभवन् ५१ तदुग्रंसागरनिभंक्षुब्धंबलसमागमम् ॥ रथपत्तिगजोदग्रंमहोर्मिभिरिवाकुलम् ५२ धावतामाह्वयानानांतनुत्राणिचबध्नताम् ॥ प्रयास्यतांपांडवानांससैन्यानांसमंततः ५३ गंगेवपूर्णादुर्धर्षासमदृश्यतवाहिनी ॥ अग्रानीकेभीमसेनोमाद्रीपुत्रौचदंशितौ ५४ सौभद्रोद्रौपदेयाश्चधृष्टद्युम्नश्चपार्षतः ॥ प्रभद्रकाश्चपंचालाभीमसेनमुखाययुः ५५ ततःशब्दःसमभवत्समुद्रस्येवपर्वणि ॥ हृष्टानांसंप्रयातानांघोषोदिवमिवास्पृशत् ५६ प्रहृष्टादंशितायोधाःपरानीकविदारणाः ॥ तेषांमध्येययौराजाकुंतीपुत्रोयुधिष्ठिरः ५७ शकटापणवेशाश्चयानयुग्यंचसर्वशः ॥ कोशंयंत्रायुधंचैवयेचवैद्याश्चिकित्सकाः ५८ फल्गुयच्चबलंकिंचिद्यच्चापिकृशदुर्बलम् ॥ तत्संगृह्ययौराजायेचापिपरिचारकाः ५९ उपप्लव्यतुपांचालीद्रौपदीसत्यवादिनी॥ सहस्त्रीभिर्निववृतेदासीदाससमावृता ६० कृत्वामूलप्रतीकारंगुल्मैःस्थावरजंगमैः ॥ स्कंधावारेणमहताप्रययुःपांडुनंदनाः ६१ ददतोगांहिरण्यंचब्राह्मणैरभिसंवृताः ॥ स्तूयमानाययूराजन्रथैर्मणिविभूषितैः ६२ केकयाधृष्टकेतुश्चपुत्रःकाश्यस्यचाभिभूः ॥ श्रेणिमान्वसुदानश्चशिखंडीचापराजितः ६३ हृष्टास्तुष्टाःकवचिनःसशस्त्राःसमलंकृताः ॥ राजानमन्वयुःसर्वेपरिवार्ययुधिष्ठिरम् ६४ जघनार्धेविराटश्चयाज्ञसेनिश्चसौमकिः ॥ सुधर्माकुंतिभोजश्चधृष्टद्युम्नस्यचात्मजाः ६५

यानयुग्यंयानेषुयुग्यंयुग्ममर्हतीतिरथादि । शकटमुपस्करादिभारवहंयुग्यं । इदंतुकेवलं प्रयाणार्हंयुग्यं । युग्यंचपत्रेइतिनिपातनात् । कोशंधनचयं यंत्रायुधंगोलकप्रक्षेपणं नालइत्युच्यतेलोके चिकित्सकाःशस्त्रवैद्याः ५८।५९।६० मूलप्रतीकारं धनदाररक्षां गुल्मैःस्थावरैःप्राकाररूपैः जंगमैःपरितःस्थानेस्थानेशूरसंघैः स्कंधावारेणसैन्येन ६१ गांभूमिं धेनुंवा ६२।६३। ६४ जघनार्धेपश्चिमार्धे ६५

६६ । ६७ । ६८ । ६९ संहृष्यंतरोमांचितानि ७० । ७१ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपेएकपंचाशदधिकशततमोऽध्यायः ॥ १५१ ॥ ततइति १ । मधुरेमनोहरे २ । ४

रथायुतानिचत्वारिहयाःपंचगुणास्तथा॥पत्तिसैन्यंदशगुणंगजानामयुतानिषट्६६अनाधृष्टिश्चेकितानोधृष्टकेतुश्चसात्यकिः॥ परिवार्यययुःसर्वेवासुदेवधनंजयौ ६७ आसाद्यतुकुरुक्षेत्रंव्यूढानीकाःप्रहारिणः ॥ पांडवाःसमदृश्यंतनर्दंतोवृषभाइव ६८ तेऽवगाह्यकुरुक्षेत्रंशंखान्दध्मुररिंदमाः॥ तथैवदध्मतुःशंखंवासुदेवधनंजयौ ६९ पांचजन्यस्यनिर्घोषंविस्फूर्जितमिवाशनेः ॥ निशम्यसर्वसैन्यानि समहृष्यंतसर्वशः ७० शंखदुंदुभिसंहृष्टःसिंहनादस्तरास्विनाम् ॥ पृथिवींचांतरिक्षंचसागरांश्चान्वनादयत् ७१ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसैन्यनिर्याणपर्वणिकुरुक्षेत्रप्रवेशेएकपंचाशदधिकशततमोऽध्यायः ॥ १५१ ॥ ॥ ७ ॥

वैशंपायनउवाच ॥ ततोदेशेसमेस्निग्धेप्रभूतयवसेंधने ॥ निवेशयामासतदासेनांराजायुधिष्ठिरः १ परिहृत्यश्मशानानिदेवतायतनानिच ॥ आश्रमांश्चमहर्षीणांतीर्थान्यायतनानिच २ मधुरानूषरेदेशेशुचौपुण्येमहामतिः ॥ निवेशंकारयामासकुंतीपुत्रोयुधिष्ठिरः ३ ततश्चपुनरुत्थायसुखीविश्रांतवाहनः ॥ प्रययौपृथिवीपालैर्वृतःशतसहस्रशः ४ विद्राव्यशतशोगुल्मान्धार्तराष्ट्रस्यसैनिकान् ॥ पर्यक्रामत्समंताच्चपार्थेनसहकेशवः ५ शिबिरंमापयामासधृष्टद्युम्नश्चपार्षतः ॥ सात्यकिश्चरथोदारोयुयुधानश्चवीर्यवान् ६ आसाद्यसरितंपुण्यांकुरुक्षेत्रेहिरण्वतीम् ॥ सूपतीर्थांशुचिजलांशर्करापंकवर्जिताम् ७ खानयामासपरिखांकेशवस्तत्रभारत ॥ गुप्त्यर्थमपिचादिश्यबलंतत्रन्यवेशयत ८ विधिर्यःशिबिरस्यासीत्पांडवानांमहात्मनाम् ॥ तद्विधानिनरेंद्राणांकारयामासकेशवः ९ प्रभूततरकाष्ठानिदुराधर्षतराणिच ॥ भक्ष्यभोज्यान्नपानानिशतशोऽथसहस्रशः १० शिबिराणिमहार्हाणिराज्ञांतत्रपृथक्पृथक् ॥ विमानानीवराजेंद्रनिविष्टानिमहीतले ११ तत्रासञ्शिल्पिनःप्राज्ञाःशतशोदत्तवेतनाः ॥ सर्वोपकरणैर्युक्तावैद्याःशास्त्रविशारदाः १२ ज्याधनुर्वर्मशस्त्राणांतथैवमधुसर्पिषोः ॥ ससर्जरसपांसूनांराशयःपर्वतोपमाः १३ बहूदकंसुयवसंतुषांगारसमन्वितम् ॥ शिबिरेशिबिरेराजासंचकारयुधिष्ठिरः १४ महायंत्राणिनाराचास्तोमराणिपरश्वधाः॥ धनूंषिकवचादीनिऋष्टयस्तूणसंयुताः १५ गजाःकंटकसन्नाहालोहवर्मोत्तरच्छदाः ॥ दृश्यंतेतत्रगिर्याभाःसहस्रशतयोधिनः १६ निविष्टान्पांडवांस्तत्रज्ञात्वामित्राणिभारत ॥ अभिसस्रुर्यथादेशंसबलाःसहवाहनाः १७ चरितब्रह्मचर्यास्तेसोमपाभूरिदक्षिणाः ॥ जयायपांडुपुत्राणांसमाजग्मुर्महीक्षितः १८ ॥ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसैन्यनिर्याणपर्वणिशिबिरादिनिर्माणेद्विपंचाशदधिकशततमोऽध्यायः ॥ १५२ ॥ ॥ ७ ॥ ॥ ७ ॥

गुल्मान्सैनिकसंघान् ५ । ६ सूपतीर्थांशोभनोपकंठां ७ । ८ तद्विधानिशिबिराणि ९ । १० । ११ । १२ । १३ । १४ । १५ कंटकसन्नाहाः येषांस्पर्शमात्रादपिगजांतराणांकंटवेधोभवतितादृशाः सन्नाहाःकवचानि कंटकैःकवचैःसन्नहनंयेषामितिप्राञ्चः १६ अभिसस्रुरभ्याजग्मुः १७ । १८ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे द्विपंचाशदधिकशततमोऽध्यायः ॥ १५२ ॥ ७ ॥

युधिष्ठिरमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ आसन्नजलाःकोष्ठाःकक्ष्यायेषुतानितथा अच्छेद्यःशत्रुभिरनिर्वार्यआहार आहारणंवस्तूनांमार्गाश्चयेषु

जनमेजयउवाच ॥ युधिष्ठिरंसहानीकमुपायांतंयुयुत्सया ॥ सन्निविष्टंकुरुक्षेत्रेवासुदेवेनपालितम् १ विराटद्रुपदाभ्यांचसपुत्राभ्यांसमन्वितम् ॥ केकयैर्वृष्णिभिश्चैवपार्थिवैःशतशोवृतम् २ महेंद्रमिवचादित्यैरभिगुप्तंमहारथैः ॥ श्रुत्वादुर्योधनोराजाकिंकार्यंप्रत्यपद्यत ३ एतदिच्छाम्यहंश्रोतुंविस्तरेणमहामते ॥ संभ्रमेतुमुलेतस्मिन्यदासीत्कुरुजांगले ४ व्यथयेयुरिमेदेवान्सेंद्रानपिसमागमे ॥ पांडवावासुदेवश्चविराटद्रुपदौतथा ५ धृष्टद्युम्नश्चपांचाल्यःशिखंडीचमहारथः ॥ युधामन्युश्चविक्रांतोदेवैरपिदुरासदः ६ एतदिच्छाम्यहंश्रोतुंविस्तरेणतपोधन ॥ कुरूणांपांडवानांचयद्यदासीद्विचेष्टितम् ७ ॥ वैशंपायनउवाच ॥ प्रतियातेतुदाशार्हेराजादुर्योधनस्तदा ॥ कर्णंदुःशासनंचैवशकुनिंचाब्रवीदिदम् ८ अकृतेनैवकार्येणगतःपार्थानधोक्षजः ॥ सएनान्मन्युनाऽऽविष्टोध्रुवंधक्ष्यत्यसंशयं ९ इष्टोहिवासुदेवस्यपांडवैर्ममविग्रहः ॥ भीमसेनार्जुनौचैवदाशार्हस्यमतेस्थितौ १० अजातशत्रुरत्यर्थंभीमसेनवशानुगः ॥ निकृतश्चमयापूर्वंसहसर्वैःसहोदरैः ११ विराटद्रुपदौचैवकृतवैरौमयासह ॥ तौचसेनाप्रणेतारौवासुदेववशानुगौ १२ भविताविग्रहःसोऽयंतुमुलोलोमहर्षणः ॥ तस्मात्सांग्रामिकंसर्वंकारयध्वमतंद्रिताः १३ शिबिराणिकुरुक्षेत्रेक्रियंतांवसुधाधिपाः ॥ स्वपर्याप्तावकाशानिदुरादेयानिशत्रुभिः १४ आसन्नजलकोष्ठानिशतशोऽथसहस्रशः ॥ अच्छेद्याहारमार्गाणिबंधोच्छ्रयचितानिच १५ विविधायुधपूर्णानिपताकाध्वजवंतिच ॥ समाश्चतेषांपंथानःक्रियंतांनगराद्बहिः १६ प्रयाणंघुष्यतामद्यश्वोभूतइतिमाचिरम् ॥ तेतथेतिप्रतिज्ञायश्वोभूतेचक्रिरेतथा १७ हृष्टरूपामहात्मानोनिवासायमहीक्षिताम् ॥ ततस्तेपार्थिवाःसर्वेतच्छ्रुत्वाराजशासनम् १८ आसनेभ्योमहार्हेभ्यउदतिष्ठन्नमर्षिताः ॥ बाहून्परिघसंकाशान्संस्पृशंतःशनैःशनैः १९ कांचनांगददीप्तांश्चचंदनागुरुभूषितान् ॥ उष्णीषाणिनियच्छंतःपुंडरीकनिभैःकरैः ॥ अंतरीयोत्तरीयाणिभूषणानिचसर्वशः २० तेरथान्रथिनःश्रेष्ठाहयांश्चहयकोविदाः ॥ सज्जयंतिस्मनागांश्चनागशिक्षास्वनुष्ठिताः २१ अथवर्माणिचित्राणिकांचनानिबहूनिच ॥ विविधानिचशस्त्राणिचक्रुःसर्वाणिसर्वशः २२ पदातयश्चपुरुषाःशस्त्राणिविविधानिच ॥ उपाजन्हुःशरीरेषुहेमचित्राण्यनेकशः ॥ २३ तदुत्सवइवोदग्रंसंप्रहृष्टनरावृतम् ॥ नगरंधार्तराष्ट्रस्यभारतासीत्समाकुलम् २४ जनौघसलिलावर्तोरथनागाश्वमीनवान् ॥ शंखदुंदुभिनिर्घोषःकोशसंचयरत्नवान् २५ चित्राभरणवर्मोर्मिःशस्त्रनिर्मलफेनवान् ॥ प्रासादमालाद्रिवृतोरथ्यापणमहाह्रदः २६ योधचंद्रोदयोद्भूतःकुरुराजमहार्णवः ॥ व्यदृश्यतततदाराजंश्चंद्रोदयइवोदधिः २७ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसैन्यनिर्याणपर्वणिदुर्योधनसैन्यसज्जकरणेत्रिपंचाशदधिकशततमोऽध्यायः ॥ १५३ ॥ ॥

तानिअच्छेद्याहारमार्गाणि १५ । १६ । १७ । १८ । १९ अंतरीयंपरिधानीयं उत्तरीयंप्रावरणवस्त्रं २० । २१ । २२ उपाजन्हुःपरिधानंकृतवंतः २३ । २४ । २५ । २६ । २७ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे त्रिपंचाशदधिकशततमोऽध्यायः ॥ १५३ ॥

वासुदेवेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । युक्तंसम्यक् १३ नकल्याणंअकल्याणं पापंअकल्याणंचत्वदीयेष्वविद्यमानंसर्वंतस्मिन्दुर्योधनेप्रतिष्ठितं १४ परित्यागेनराज्यस्योपेक्षया १५ । १६ योगंयुद्धोद्योगम् १७ । १८ । १९ यदर्थंयन्निवृत्त्यर्थं अनर्थःकुलक्षयः प्रयत्नतोबलात् २० तस्मिन्निति तस्मिन्ननर्थेनिमित्तेसतियत्नस्तत्परिहारार्थउपायःसद्यः

वैशंपायनउवाच ॥ वासुदेवस्यतद्वाक्यमनुस्मृत्ययुधिष्ठिरः ॥ पुनःपप्रच्छवार्ष्णेयंकथंमंदोऽब्रवीदिदम् १ अस्मिन्नभ्यागतेकालेकिंचनःक्षममच्युत ॥ कथंचवर्तमानावैस्वधर्मान्नच्यवेमहि २ दुर्योधनस्यकर्णस्यशकुनेःसौबलस्यच ॥ वासुदेवमतज्ञोऽसिममसभ्रातृकस्यच ३ विदुरस्यापितद्वाक्यंश्रुतंभीष्मस्यचोभयोः कुंत्याश्चविपुलप्रज्ञप्रज्ञाकार्त्स्न्येनतेश्रुता ४ सर्वमेतदतिक्रम्यविचार्यचपुनःपुनः ॥ क्षमंयन्नोमहाबाहोतद्ब्रवीह्यविचारयन् ५ श्रुत्वैतद्धर्मराजस्यधर्मार्थसहितंवचः ॥ मेघदुंदुभिनिर्घोषःकृष्णोवाक्यमथाब्रवीत् ६ ॥ कृष्णउवाच ॥ उक्तवानस्मियद्वाक्यंधर्मार्थसहितंहितम् ॥ नतुतन्निकृतिप्रज्ञेकौरव्येप्रातितिष्ठति ७ नचभीष्मस्यदुर्मेधाःशृणोतिविदुरस्यवा ॥ ममवाभाषितंकिंचित्सर्वमेवातिवर्तते ८ नैषकामयतेधर्मंनैषकामयतेयशः ॥ जितंसमन्यतेसर्वंदुरात्माकर्णमाश्रितः ९ बंधमाज्ञापयामासममचापिसुयोधनः ॥ नचतंलब्धवान्कामंदुरात्मापापनिश्चयः १० नचभीष्मोनचद्रोणोयुक्तंतत्राहतुर्वचः ॥ सर्वेतमनुवर्तंतेऋतेविदुरमच्युत ११ शकुनिःसौबलश्चैवकर्णदुःशासनावपि ॥ त्वय्ययुक्तान्यभाषंतमूढामूढममर्षणम् १२ किंचतेनमयोक्तेनयान्यभाषतकौरवः ॥ संक्षेपेणदुरात्माऽसौनयुक्तंत्वयिवर्तते १३ पार्थिवेषुनसर्वेषुयइमेतवसैनिकाः ॥ यत्पापंयन्नकल्याणंसर्वंतस्मिन्प्रतिष्ठितम् १४ नचापिवयमत्यर्थंपरित्यागेनकर्हिचित् ॥ कौरवैःशममिच्छामस्तत्रयुद्धमनंतरम् १५ ॥ वैशंपायनउवाच ॥ तच्छ्रुत्वापार्थिवाःसर्वेवासुदेवस्यभाषितम् ॥ अब्रुवंतोमुखंराज्ञःसमुदैक्षंतभारत १६ युधिष्ठिरस्त्वभिप्रायमभिलक्ष्यमहीक्षिताम् ॥ योगमाज्ञापयामासभीमार्जुनयमैःसह १७ ततःकिलकिलाभूतमनीकंपांडवस्यह ॥ आज्ञापितेतदायोगेसमहृष्यंतसैनिकाः १८ अवध्यानांवधंपश्यन्धर्मराजोयुधिष्ठिरः ॥ निःश्वसन्भीमसेनंचविजयंचेदमब्रवीत् १९ यदर्थंवनवासश्चप्राप्तंदुःखंचयन्मया ९ सोऽयमस्मानुपैत्येवपरोऽनर्थःप्रयत्नतः २० तस्मिन्यत्नःकृतोऽस्माभिःसनोहीनःप्रयत्नतः ॥ अकृतेतुप्रयत्नेऽस्मानुपावृत्तःकलिर्महान् २१ कथंह्यवध्यैःसंग्रामःकार्यःसहभविष्यति ॥ कथंहत्वागुरून्वृद्धान्विजयोनोभविष्यति २२ तच्छ्रुत्वाधर्मराजस्यसव्यसाचीपरंतपः ॥ यदुक्तंवासुदेवेनश्रावयामासतद्वचः २३ उक्तवान्देवकीपुत्रःकुंत्याश्चविदुरस्यच ॥ वचनंतत्त्वयाराजन्निखिलेनावधारितम् २४ नचतौवक्ष्यतोऽधर्ममितिमेनैष्ठिकीमतिः ॥ नापियुक्तंचकौंतेयनिवर्तितुमयुध्यतः २५ तच्छ्रुत्वावासुदेवोऽपिसव्यसाचिवचस्तदा ॥ स्मयमानोऽब्रवीद्वाक्यंपार्थमेवमितिब्रुवन् २६

शत्रुवधरूपोभीमस्यद्यूतकालेधर्मतः सनोऽस्माकंअस्माभिःक्षमांकुर्वद्भिःप्रयत्नतोबलाद्धीनोऽव्यर्थःकृतः अकृतेतुअकृतेऽपिप्रयत्नेयुद्धार्थमुद्योगेतथापिअस्मान्कालिरुपावृत्तआगतः २१ । २२ । २३ । २४ तौकुंतीविदुरौ अधर्ममितिच्छेदः अयुध्यतस्तवनिवर्तितुमपिनयुक्तं २५ । २६

२७ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेचतुःपंचाशदधिकशततमोऽध्यायः ॥ १५४ ॥ ॥ ७ ॥ ॥ व्युष्टायांव्यतीतायाम् १ सारंपुरोगामि मध्यंमध्यमं फल्गुपार्श्वात्स्यम् २ सा नुकर्षाइत्यादीनि नानामणिविभूषिताइत्यंतानि चित्रानीकानांविशेषणानि अनुकर्षः युद्धविमर्देयस्यकस्याचिद्रथावयवस्यनष्टस्यप्रतिसमाधानार्थंयद्रथस्याधोदारुबद्धयतेतत् । 'अनुकर्षोरथाधःस्थदारुणि'इतिमेदिनी । तूणीरारथत्राह्योबाणकोशः महान्निषंगइतियावत् । वरूथोरथगुप्तिर्व्याघ्रादिचर्ममयी । तोमराःहस्तक्षेप्याःसशल्यदंडाः । उपासंगाःहयगजवाह्यास्तूणाः । निषंगःपत्तिवाह्यःसएव । शक्तिर्लोहदंडः । ऋष्टिर्गुरुतरःकाष्ठदंडः ३ शरासनतोमराः धनुःप्रक्षेप्यास्तोमराःस्थूलबाणाः । पाशाःसमीपागतस्यगलेप्रक्षेपार्थं । परिच्छदाआस्तरणादीनि । परिस्तरा इतिपाठेआस्तरणमेव ४ कचग्रहविक्षेपः कचेषुगृहीत्वायेनशत्रुर्विक्षिप्यतेतादृशः कलविंकग्रहतुल्यश्चिक्कणद्रव्यांजिताग्रोदंडविशेषः । करग्रहेतिपाठेअंकुशविशेषः । तैलादयःप्रतप्ताःशत्रूणामुपरिक्षिप्यंते । साशीविषघटाःससर्पाःकुंभाः । सर्जरसोरालद्रव्यमग्न्युद्दीपकम् ५ सघंटानिफलकानिशस्त्राग्राणियेषांतेसघंटफलकाः घंटासहितंचर्मेत्यन्ये । अयांसिखड्गपट्टिशच्छुरिकादीनि गुडजलं

ततस्तेधृतसंकल्पायुद्धायसहसैनिकाः ॥ पांडवेयामहाराजतांरात्रिंसुखमावसन् २७ ॥ इतिश्रीमहाभारतेउद्योगपर्वणि सैन्यनिर्याणपर्वणि युधिष्ठिरार्जुनसंवादेचतुःपंचाशदधिकशततमोऽध्यायः ॥ १५४ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ व्युष्टायांवैरजन्यांहिराजादुर्योधनस्ततः ॥ व्यभजत्तान्यनीकानि दशचैकंचभारत १ नरहस्तिरथाश्वानांसारंमध्यंचफल्गुच ॥ सर्वेष्वेतेष्वनीकेषुसंदिदेशनराधिपः २ सानुकर्षाःसतूणीराःसवरूथाःसतोमराः ॥ सोपासंगाःसशक्तीकाःसनिषंगाःसहर्ष्टयः ३ सध्वजाःसपताकाश्चसशरासनतोमराः ॥ रज्जुभिश्चविचित्राभिःसपाशाःसपरिच्छदाः ४ सकचग्रहविक्षेपाःसतैलगुडवालुकाः ॥ साशीविषघटाःसर्वेससर्जरसपांसवः ५ सघंटफलकाःसर्वेसायोगुडजलोपलाः ॥ सशालभिंदिपालाश्चसमधूच्छिष्टमुद्गराः ६ सकांडदंडकाःसर्वेससीरविषतोमराः ॥ सशूर्पपिटकाःसर्वेसदात्रांकुशतोमराः ७ सकीलकवचाःसर्वेवाशीवृक्षादनान्विताः ॥ व्याघ्रचर्मपरीवाराद्वीपिचर्मावृताश्चते ८ सहर्ष्टयःसशृंगाश्चसप्रासविविधायुधाः ॥ सकुठाराःसकुद्दालाःसतैलक्षौमसर्पिषः ९ रुक्मजालप्रतिच्छन्नानानामणिविभूषिताः ॥ चित्रानीकाःसुवपुषोज्वलिताइवपावकाः १०

तप्तं उपलायंत्रक्षेप्यागोलाः । शालतेकस्थतेशब्दंकरोतीतिशालः सचासौभिंदिपालोगोफलकः । सशूलेतिगौडपाठः । मधूच्छिष्टंमयनं तदपिद्रवीकृत्यगुडजलवत्प्रक्षेप्यं । मुद्गरःमुशलतुल्योदंडः ६ कांडंबाणफलकंतद्युक्तोदंडःकांडदंडः कंटकदंडइतियावत् दंडकंटकइतिपाठेसएवार्थः । सीरंलांगलं । विषंप्रसिद्धं तेनयुक्तास्तोमराविषतोमराः । शूर्पाणितप्तगुडादिप्रक्षेपार्थानि । पिटकास्तदाश्रयामंजूषाः अस्त्ररोधनार्थावा । दात्रंपरशुप्रभृति । अंकुशतोमराः बदरीकंटकतुल्यलोहकंटकोपेतास्तोमराः । येषामंतःप्रविष्टानांबहिर्निःसरणेअंत्राण्यपिबहिर्निःसरंति ७ कीलकवचवान्हिपरेणमुष्टियुद्धेजेतुमशक्यः । सकीलककचाइतिपाठेसदंतंकरपत्रं येनतक्षाकाष्ठंपाटयति । वाशीकाष्ठप्रच्छन्नंशस्त्रं । वास्येतिवासीतिवापाठेऽपिसएवार्थः वृक्षादनाःलोहकंटककीलादीन्युपकरणानि व्याघ्रचर्मणाद्वीपीचित्रव्याघ्रस्तच्चर्मणाचपरिवृतारथाएव ८ ऋष्टिः द्रविडेषुप्रसिद्धंहस्तक्षेप्यंवक्रंकाष्ठफलकं शृंगसाहचर्यात् शृंगंगदाघातेननष्टस्यरक्तस्यमोक्षणार्थं विण्मूत्रोत्सर्जनस्थानंवा । प्रासाःभल्लाः । तैलक्षौमानितैलाक्तवस्त्रविशेषायेषांभस्ममहारस्थलेदीयते । सर्पिश्चपुरातनंतदर्थमेव ९ चित्राश्चतेअनीकाश्चाचित्रानीकाःचित्राणिसैन्यानि । 'अनीकोऽस्त्रीरणेसैन्ये'इतिमेदिनी १०

विनिवेशितायेषुरथेष्वितिशेषः ११ बद्धानिअरिष्टानिअशुभहराणियंत्रौषधादीनियेषुतेबद्धारिष्टाः 'रिष्टंक्षेमाशुभाभावे'इतिमेदिनी । बद्धकक्षाःबद्धाःकक्षाः स्पर्धापदानितुरगादिशिरासिघंटा मालामौक्तिकगुच्छादीन्यतिशौर्यविद्योतीनिविरुदानियेषु । ' कक्षास्यादंतरीयस्यपश्चादंचलपल्लवे । स्पर्धापदेनादोर्मूले'इतिमेदिनी । बद्धानिआभरणानिक्षूद्रघंटिकादीनिनिर्यूहाःशिखराणिच येषु । 'निर्यूहःशिखरेद्वारे'इतिमेदिनी १२ । १३ चतुर्युजइत्येतद्याचष्टे धुर्ययोरिति धुर्ययोःधूःसन्निहितयोः पार्ष्णिसारथीचक्ररक्षौ १४ । १५ । १६ अंकुशधरौगजनियंतारौ । उत्तमधनुर्धरौ दूरस्थान्प्रहर्तुं । असिधरौसमीपस्थान् । शक्तिपिनाकधरौमध्यस्थान्पिनाकःत्रिशूलं । 'पिनाकोऽस्त्रीरुद्रचापेपांशुवर्षत्रिशूलयोः'इतिमेदिनी १७ । १८ सादिभिःअश्वारोहैः १९ संग्राहःबृहदु द्रंगः हेषणपूर्वकमग्रपादाभ्यामुत्स्थानमितियावत् तद्रहिताःअसंग्राहाः । 'संग्राहोबृहदुद्रंग'इतिविश्वः यतःसुसंपन्नाःसम्यक्शिक्षिताः भांडंअश्वाभरणंतेनपरिच्छदःपरिष्कारोयेषांते । 'भांडंभू

तथाकवचिनःशूराःशस्त्रेषुकृतनिश्चयाः ॥ कुलीनाहययोनिज्ञाःसारथ्येविनिवेशिताः ११ बद्धारिष्टाबद्धकक्षाबद्धध्वजपताकिनः ॥ बद्धाभरणनिर्यूहाबद्धचर्मासिपट्टिशाः १२ चतुर्युजोरथाःसर्वेसर्वेचोत्तमवाजिनः ॥ सप्रासऋष्टिकाःसर्वेसर्वेशतशरासनाः १३ धुर्ययोर्हययोरेकस्तथान्यौपार्ष्णिसारथी ॥ तौचापिरथिनांश्रेष्ठौरथीचहयवित्तथा १४ नगराणिवगुप्तानिदुराधर्षाणिशत्रुभिः ॥ आसन्रथसहस्राणिहेममालीनिसर्वशः १५ यथारथास्तथानागाबद्धकक्षाःस्वलंकृताः ॥ बभूवुःसप्तपुरुषारत्नवंतइवाद्रयः १६ द्वावंकुशधरौतत्रद्वावुत्तमधनुर्धरौ ॥ द्वौवरासिधरौराजन्नेकःशक्तिपिनाकधृक् १७ गजैर्मत्तैःसमाकीर्णंसवर्मायुधकोशकैः ॥ तद्बभूवबलंराजन्कौरव्यस्यमहात्मनः १८ आमुक्तकवचैर्युक्तैःसपताकैःस्वलंकृतैः ॥ सादिभिश्चोपपन्नास्तुतथाचायुतशोहयाः १९ असंग्राहाःसुसंपन्नाहेमभांडपरिच्छदाः ॥ अनेकशतसाहस्राःसर्वेसादिवशेस्थिताः २० नानारूपविकाराश्चनानाकवचशस्त्रिणः ॥ पदातिनोनरास्तत्रबभूवुर्हेममालिनः २१ रथस्यासन्दशगजागजस्यदशवाजिनः ॥ नरादशहयस्यासन्पादरक्षाःसमंततः २२ रथस्यनागाःपंचाशन्नागस्यासन्शतंहयाः ॥ हयस्यपुरुषाःसप्तभिन्नसंधानकारिणः २३ सेनापंचशतंनागारथास्तावंतएवच ॥ दशसेनाचपृतनापृतनादशवाहिनी २४ सेनाचवाहिनीचैवपृतनाध्वजिनीचमूः ॥ अक्षौहिणीतिपर्यायैर्निरुक्ताचवरूथिनी २५

षाश्वभूषयोः'इतिविश्वः २० रूपविकाराः रक्तकृष्णहयमुखत्वादयः २१ रथस्येति एकस्यरथस्ययथोक्तविभागेन दशगजाः शतंअश्वाः सहस्रंपदातयश्चपरिवारइत्यर्थः २२ पक्षांतरमाहरथस्येति एकस्यरथस्यपंचाशद्गजाः पंचसहस्रंअश्वाः पंचत्रिंशत्सहस्रंपदातयः परिवारइत्यर्थः २३ अत्ररथादीनांप्राधान्याप्राधान्याभिप्रायेणपरिवारात्ल्पत्वबहुत्वेज्ञेये । साधारणीतुसंख्याआदिपर्वण्युक्ता । 'एकोरथोगजस्त्वेकोनराःपंचपदातयः । त्रयश्चतुरगास्तज्ज्ञैःपत्तिरित्यभिधीयते'इत्यादिना । तामेवानुसरतिसेनेति तत्रगजानांरथानांचतुल्यसंख्योक्तिः पूर्वोक्तसंख्योपलक्षणार्था तेनपंचविंशतिशतानिमनुष्याः पंचदशशतंतुरगाइत्यपिज्ञेयं । पृतनायांतुपंचसहस्रंनागास्तावंतोरथाः पंचविंशतिसहस्रंनराः पंचदशसहस्रंअश्वाः । वाहिन्यांपंचाशत्सहस्रंनागास्तावंतोरथाः सार्धलक्षद्वयंनराः सार्द्धलक्षंअश्वाइतिज्ञेयं २४ एवमपिपूर्वोक्ताक्षौहिणीसंख्ययाविसंवादएवेत्याशंक्याह सेनेति सेनादयःशब्दाःपर्यायाः नतुसंख्येयानांसंख्याभेदमात्रेणनानार्थाः । एकस्मिन्नपिभीमसेनेदशनागसहस्रबलत्वस्मरणात् । एवंचबलस्यैवेयंएकादशसप्तेतिसंख्यानसंख्येयस्येतिभावः । पांडवानांहीनबलत्वेऽपिअसंख्येयंवासुदेवबलंतत्रसहायीभूतमितिजयोऽभूदितिद्रष्टव्यम् २५

२६ । २७ नराणामिति अयुतशइत्यनेननराणामंतोनास्तीतिदर्शितम् २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे पंचपंचाशदधिक

एवंव्यूढान्यनीकानिकौरवेयेणधीमता ॥ अक्षौहिण्योदशैकाचसंख्याताःसप्तचैवह २६ अक्षौहिण्यस्तुसप्तैवपांडवानामभूद्बलम् ॥ अक्षौहिण्योदशैकाचकौरवाणामभूद्बलम् २७ नराणांपंचपंचाशदेषापत्तिर्विधीयते ॥ सेनामुखंचतिस्रस्तागुल्मइत्यभिशब्दितम् २८ त्रयोगुल्मागणस्त्वासीद्गणास्त्वयुतशोऽभवन् ॥ दुर्योधनस्यसेनासुयोत्स्यमानाःप्रहारिणः २९ तत्रदुर्योधनोराजाशूरान्बुद्धिमतोनरान् ॥ प्रसमीक्ष्यमहाबाहुश्चक्रेसेनापतींस्तदा ३० पृथगक्षौहिणीनांचप्रणेतॄन्नरसत्तमान् ॥ विधिवत्पूर्वमानीयपार्थिवानभ्यभाषत ३१ कृपंद्रोणंचशल्यंचसैंधवंचजयद्रथम् ॥ सुदक्षिणंचकांबोजंकृतवर्माणमेवच ३२ द्रोणपुत्रंचकर्णंचभूरिश्रवसमेवच ॥ शकुनिंसौबलंचैवबाह्लीकंचमहाबलम् ३३ दिवसेदिवसेतेषांप्रतिवेलंचभारत ॥ चक्रेसविविधाःपूजाःप्रत्यक्षंचपुनःपुनः ३४ तथाविनियताःसर्वेयेचतेषांपदानुगाः ॥ बभूवुःसैनिकाराज्ञांप्रियंराज्ञश्चिकीर्षवः ३५ ॥ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसैन्यनिर्याणपर्वणि दुर्योधनसैन्यविभागे पंचपंचाशदधिकशततमोऽध्यायः ॥ १५५ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ ॥ ततःशांतनवंभीष्मंप्रांजलिर्धृतराष्ट्रजः ॥ सहसर्वैर्महीपालैरिदंवचनमब्रवीत् १ ऋतेसेनाप्रणेतारंपृतनासुमहत्यपि ॥ दीर्यतेयुद्धमासाद्यपिपीलिकपुटंयथा २ नहिजातुद्वयोर्बुद्धिःसमाभवतिकर्हिंचित् ॥ शौर्यंचबलनेतॄणांस्पर्धतेचपरस्परम् ३ श्रूयतेचमहाप्राज्ञहैहयानमितौजसः ॥ अभ्ययुर्ब्राह्मणाःसर्वेसमुच्छ्रितकुशध्वजाः ४ तानभ्ययुस्तदावैश्याःशूद्राश्चैवपितामह ॥ एकतस्तुत्रयोवर्णाएकतःक्षत्रियर्षभाः ५ ततोयुद्धेष्वभज्यंतत्रयोवर्णाःपुनःपुनः ॥ क्षत्रियाश्चजयंत्येवबहुलंचैकतोबलम् ६ ततस्तेक्षत्रियानेवपप्रच्छुर्द्विजसत्तमाः ॥ तेभ्यःशशंसुर्धर्मज्ञायाथातथ्यंपितामह ७ वयमेकस्यशृण्वानामहाबुद्धिमतोरणे ॥ भवंतस्तुपृथक्सर्वेस्वबुद्धिवशवर्तिनः ८ ततस्तेब्राह्मणाश्चक्रुरेकंसेनापतिंद्विजम् ॥ नयेषुकुशलंशूरमजयन्क्षत्रियांस्ततः ९ एवंयेकुशलंशूरंहितेप्सितमकल्मषम् ॥ सेनापतिंप्रकुर्वंतितेजयंतिरणेरिपून् १० भवानुशनसातुल्योहितैषीचसदामम ॥ असंहार्यःस्थितोधर्मेसनःसेनापतिर्भव ११ रश्मिवतामिवादित्योवीरुधामिवचंद्रमाः ॥ कुबेरइवयक्षाणांदेवानामिववासवः १२ पर्वतानांयथामेरुःसुपर्णःपक्षिणांयथा ॥ कुमारइवदेवानांवसूनामिवहव्यवाट् १३ भवताहिवयंगुप्ताःशक्रेणेवदिवौकसः ॥ अनाधृष्याभविष्यामस्त्रिदशानामपिध्रुवम् १४ प्रयातुनोभवानग्रेदेवानामिवपावकिः ॥ वयंत्वामनुयास्यामःसौरभेयाइवर्षभम् १५

शततमोऽध्यायः ॥ १५५ ॥ ॥ ७ ॥ ॥ ततइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० उशनसाशुक्रेण असंहार्यःपितुर्वरदानात् कालेनापिसंहर्तुमशक्यः ११ । १२ कुमारः कार्त्तिकेयः १३ । १४ पावकिः कार्त्तिकेयएव १५

१६ । १७ । १८ विवृतोविस्पष्टोभूत्वेत्यर्थः १९ । २० नमेमयाउत्सादनीयाःनाशयितुंशक्याः सदाप्रत्यहं २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८

॥ भीष्मउवाच ॥ एवमेतन्महाबाहोयथावदसिभारत ॥ यथैवहिभवंतोमेतथैवममपांडवाः १६ अपिचैवमयाश्रेयोवाच्यंतेषांनराधिप ॥ संयोद्धव्यंतवार्थायय थामेसमयःकृतः १७ नतुपश्याम्यिमियोद्धारमात्मनःसदृशंभुवि ॥ ऋतेतस्मान्नरव्याघ्रात्कुंतीपुत्राद्धनंजयात् १८ सहिवेदमहाबुद्धिर्दिव्यान्यस्त्राण्यनेकशः ॥ नतुमांविवृतोयुद्धेजातुयुध्येतपांडवः १९ अहंचैवक्षणेनैवनिर्मनुष्यमिदंजगत् ॥ कुर्यांशस्त्रबलेनैवससुरासुरराक्षसम् २० नत्वेवोत्सादनीयामेपांडोःपुत्राजना धिप ॥ तस्माद्योधान्हनिष्यामिप्रयोगेणायुतंसदा २१ एवमेषांकरिष्यामिनिधनंकुरुनंदन ॥ नचेत्तेमांहनिष्यंतिपूर्वमेवसमागमे २२ सेनापतिस्त्वहंराजन् समयेनापरेणते ॥ भविष्यामियथाकामंतन्मेश्रोतुमिहार्हसि २३ कर्णोवायुध्यतांपूर्वमहंवापृथिवीपते ॥ स्पर्धतेहिसदाऽत्यर्थंसूतपुत्रोमयारणे २४॥ कर्णउवाच ॥ नाहंजीवतिगांगेयेराजन्योत्स्येकथंचन ॥ हतेभीष्मेतुयोत्स्यामिसहगांडीवधन्वना २५ ॥ वैशंपायनउवाच ॥ ततःसेनापतिंचक्रेविधिवद्भूरिदक्षिणम् ॥ धृत राष्ट्रात्मजोभीष्मंसोऽभिषिक्तोव्यरोचत २६ ततोभेरीश्चशंखांश्चशतशोऽथसहस्रशः ॥ वादयामासुरव्यग्रावादकाराजशासनात् २७ सिंहनादाश्चविविधावाह नानांचनिःस्वनाः ॥ प्रादुरासन्ननभ्रेचवर्षंरुधिरकर्दमम् २८ निर्घाताःपृथिवीकंपागजबृंहितनिःस्वनाः ॥ आसंश्चसर्वयोधानांपातयंतोमनांस्युत २९ वाच श्चाप्यशरीरिण्योदिवश्चोल्काःप्रपेदिरे ॥ शिवाश्चभयवेदिन्योनेदुर्दीप्ततराभृशम् ३० सैनापत्येयदाराजागांगेयमभिषिक्तवान् ॥ तदैतान्युग्ररूपाणिबभूवुःश तशोनृप ३१ ततःसेनापतिंकृत्वाभीष्मंपरबलार्दनम् ॥ वाचयित्वाद्विजश्रेष्ठान्गोभिर्निष्कैश्चभूरिशः ३२ वर्धमानोजयाशीर्भिर्निर्ययौसैनिकैर्वृतः ॥ आपगेयंपु रस्कृत्यभ्रातृभिःसहितस्तदा ३३ स्कंधावारेणमहताकुरुक्षेत्रंजगामह ३४ परिक्रम्यकुरुक्षेत्रंकर्णेनसहकौरवः ॥ शिबिरंमापयामाससमेदेशेजनाधिप ३५ मधुरानूषरेदेशेप्रभूतयवसेंधने ॥ यथैवहास्तिनपुरंतद्वच्छिबिरमाबभौ ३६ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसैन्यनिर्याणपर्वणिभीष्मसैनापत्येषट्पंचाशदधिक शततमोऽध्यायः ॥ १५६ ॥

॥ ५ ॥

॥ जनमेजयउवाच ॥ आपगेयंमहात्मानंभीष्मंशस्त्रभृतांवरम् ॥ पितामहंभारतानांध्वजंसर्वमहीक्षिताम् १ बृहस्पतिसमंबुद्ध्याक्षमयापृथिवीसमम् ॥ समुद्रमिवगांभीर्येहिमवंतमिवस्थिरम् २ प्रजापतिमिवौदार्येतेजसाभास्करोपमम् ॥ महेंद्रमिवशत्रूणांध्वंसनंशरवृ ष्टिभिः ३ रणयज्ञेप्रतितेसुभीमेलोमहर्षणे ॥ दीक्षितंचिररात्रायश्रुत्वातत्रयुधिष्ठिरः ४

पातयंतःमूर्च्छितानिर्वृतः २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ ॥ इति उद्योगपर्वणिनीलकंठीये भारतभावदीपे षट्पंचाशदधिकशततमोऽध्यायः ॥ १५६ ॥ आपगेयमिति १ । २ । ३ । ४

५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ इद्धात्प्रदीप्तात् १४ । १५ महात्ययंअत्यंतंक्षयकरं १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ रौहिणेयोबलरामः

किमब्रवीन्महाबाहुःसर्वशस्त्रभृतांवरः ॥ भीमसेनार्जुनौवापिकृष्णोवाप्रत्यभाषत ५ ॥ वैशंपायनउवाच ॥ आपद्धर्मार्थकुशलोमहाबुद्धिर्युधिष्ठिरः ॥ सर्वान्भ्रातॄन्समानीयवासुदेवंचशाश्वतम् ६ उवाचवदतांश्रेष्ठःसांत्वपूर्वमिदंवचः ॥ पर्याक्रामतसैन्यानियत्तास्तिष्ठतदंशिताः ७ पितामहेनवोयुद्धंपूर्वमेवभविष्यति ॥ तस्मात्सप्तसुसेनासुप्रणेतॄन्ममपश्यत ८ ॥ कृष्णउवाच ॥ यथाऽर्हतिभवान्वक्तुमस्मिन्कालेह्युपस्थिते ॥ तथेदमर्थवद्वाक्यमुक्तंतेभरतर्षभ ९ रोचतेमेमहाबाहोक्रियतांयदनंतरम् ॥ नायकास्तवसेनायांक्रियंतामिहसप्तवै १० ॥ वैशंपायनउवाच ॥ ततोद्रुपदमानाय्यविराटंशिनिपुंगवम् ॥ धृष्टद्युम्नंचपांचाल्यंधृष्टकेतुंचपार्थिवं ११ शिखंडिनंचपांचाल्यंसहदेवंचमागधम् ॥ एतान्सप्तमहाभागान्वीरान्युद्धाभिकांक्षिणः १२ सेनाप्रणेतॄन्विधिवदभ्यषिंचद्युधिष्ठिरः ॥ सर्वसेनापतिंचात्रधृष्टद्युम्नंचकारह १३ द्रोणांतहेतोरुत्पन्नोयइद्धाज्जातवेदसः ॥ सर्वेषामेवतेषांतुसमस्तानांमहात्मनाम् १४ सेनापतिपतिंचक्रेगुडाकेशंधनंजयम् ॥ अर्जुनस्यापिनेताचसंयंताचैववाजिनाम् १५ संकर्षणानुजःश्रीमान्महाबुद्धिर्जनार्दनः ॥ तद्दृष्ट्वोपस्थितंयुद्धंसमासन्नंमहात्ययम् १६ प्राविशद्भवनंराजन्पांडवानांहलायुधः ॥ सहाक्रूरप्रभृतिभिर्गदसांबोद्धवादिभिः १७ रौक्मिणेयाहुकसुतैश्चारुदेष्णपुरोगमैः ॥ वृष्णिमुख्यैरधिगतैर्व्याघ्रैरिवबलोत्कटैः १८ अभिगुप्तोमहाबाहुर्मरुद्भिरिववासवः ॥ नीलकौशेयवसनःकैलासशिखरोपमः १९ सिंहखेलगतिःश्रीमान्मदरक्तांतलोचनः ॥ तंदृष्ट्वाधर्मराजश्चकेशवश्चमहाद्युतिः २० उदतिष्ठत्ततःपार्थोभीमकर्मावृकोदरः ॥ गांडीवधन्वायेचान्येराजानस्तत्रकेचन २१ पूजयांचक्रिरेतेवैसमायांतंहलायुधम् ॥ ततस्तंपांडवोराजाकरेपस्पर्शपाणिना २२ वासुदेवपुरोगास्तंसर्वएवाभ्यवादयन् ॥ विराटद्रुपदौवृद्धावभिवाद्यहलायुधः २३ युधिष्ठिरेणसहितउपाविशदरिंदमः ॥ ततस्तेषूपविष्टेषुपार्थिवेषुसमंततः ॥ वासुदेवमभिप्रेक्ष्यरौहिणेयोऽभ्यभाषत २४ भविताऽयंमहारौद्रोदारुणःपुरुषक्षयः ॥ दिष्टमेतद्ध्रुवंमन्येनशक्यमतिवर्तितुम् २५ तस्माद्युद्धात्समुत्तीर्णानपिवःससुहृज्जनान् ॥ अरोगानक्षतैर्देहैर्द्रष्टाऽस्मीतिमतिर्मम २६ समेतंपार्थिवंक्षत्रंकालपक्वमसंशयम् ॥ विमर्दश्चमहान्भावीमांसशोणितकर्दमः ॥ २७ उक्तोमयावासुदेवःपुनःपुनरुपह्वरे ॥ संबंधिषुसमांवृत्तिंवर्तस्वमधुसूदन २८ पांडवाहियथाऽस्माकंतथादुर्योधनोनृपः ॥ तस्यापिक्रियतांसाह्यंसपर्येतिपुनःपुनः २९ तच्चमेनाकरोद्वाक्यंत्वदर्थेमधुसूदनः ॥ निर्विष्टःसर्वभावेनधनंजयमवेक्ष्यह ३० ध्रुवोजयःपांडवानामितिमेनिश्चितामतिः ॥ तथाह्यभिनिवेशोऽयंवासुदेवस्यभारत ३१ नचाहमुत्सहेकृष्णमृतेलोकमुदीक्षितुम् ॥ ततोऽहमनुवर्तामिकेशवस्यचिकीर्षितम् ३२

२४ । २५ । २६ । २७ उपह्वरेएकांते २८ । २९ । ३० । ३१ । ३२

३३ । ३४ । ३५ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे सप्तपंचाशदधिकशततमोऽध्यायः ॥ १५७ ॥ ॥ एतस्मिन्निति साक्षात्पुत्रइति संबंधः १ आकूतीनां संकल्पानांसत्यसंक

उभौशिष्यौहिमेवीरौगदायुद्धविशारदौ ॥ तुल्यस्नेहोऽस्म्यतोभीमेतथादुर्योधनेनृपे ३३ तस्माद्यास्यामितीर्थानिसरस्वत्यानिषेवितुम् ॥ नहिशक्ष्यामिकौ
रव्यान्नश्यमानानुपेक्षितुम् ३४ एवमुक्त्वामाहाबाहुरनुज्ञातश्चपांडवैः ॥ तीर्थयात्रांययौरामोनिवर्त्यमधुसूदनम् ३५ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसै
न्यनिर्याणपर्वणि बलरामतीर्थयात्रागमनेसप्तपंचाशदधिकशततमोऽध्यायः ॥ १५७ ॥ ॥ ध ॥ ॥ वैशंपायनउवाच ॥ एतस्मिन्नेवकालेतुभीष्मकस्य
महात्मनः ॥ हिरण्यरोम्णोनृपतेःसाक्षादिंद्रसखस्यवै १ आकूतीनामधिपतिर्भोजस्यातियशस्विनः ॥ दाक्षिणात्यपतेःपुत्रोदिक्षुरुक्मीतिविश्रुतः २ यःकिंपु
रुषसिंहस्यगंधमादनवासिनः ॥ कृत्स्नंशिष्योधनुर्वेदंचतुष्पादमवाप्तवान् ३ योमाहेंद्रंधनुर्लेभेतुल्यंगांडीवतेजसा ॥ शार्ङ्गेणचमहाबाहुःसम्मितंदिव्यलक्षणम्
४ त्रीण्येवैतानिदिव्यानिधनूंषिदिविचारिणाम् ॥ वारुणंगांडिवंतत्रमाहेंद्रंविजयंधनुः ॥ शार्ङ्गंतुवैष्णवंप्राहुर्दिव्यंतेजोमयंधनुः ५ धारयामासतत्कृष्णःपर
सेनाभयावहम् ॥ गांडीवंपावकाल्लेभेखांडवेपाकशासनिः ६ द्रुमाद्रुक्मीमहातेजाविजयंप्रत्यपद्यत ॥ संछिद्यमौरवान्पाशान्निहत्यमुरुमोजसा ७ निर्जित्य
नरकंभौममाहृत्यमणिकुंडले ॥ षोडशस्त्रीसहस्राणिरत्नानिविविधानिच ८ प्रतिपेदेहृषीकेशःशार्ङ्गंचधनुरुत्तमम् ॥ रुक्मीतुविजयंलब्ध्वाधनुर्मेघनिभस्व
नम् ९ विभीषयन्निवजगत्पांडवानभ्यवर्तत ॥ नामृष्यतपुरायोऽसौस्वबाहुबलगर्वितः १० रुक्मिण्याहरणंवीरोवासुदेवेनधीमता ॥ कृत्वाप्रतिज्ञांनाहत्वानि
वर्तिष्येजनार्दनम् ११ ततोऽन्वधावद्वार्ष्णेयंसर्वशस्त्रभृतांवरः ॥ सेनयाचतुरंगिण्यामहत्यादूरपातया १२ विचित्रायुधवर्मिण्यागंगयेवप्रवृद्धया ॥ ससमासा
द्यवार्ष्णेयंयोगानामीश्वरंप्रभुम् १३ व्यंसितोव्रीडितोराजन्नाजगामसकुंडिनम् ॥ यत्रैवकृष्णेनरणेनिर्जितःपरवीरहा १४ तत्रभोजकटंनामकृतंनगरमुत्त
मम् ॥ सैन्येनमहतातेनप्रभूतगजवाजिना १५ पुरंतद्भुविविख्यातंनाम्नाभोजकटंनृप ॥ सभोजराजःसैन्येनमहतापरिवारितः १६ अक्षौहिण्यामहावीर्यःपां
डवान्क्षिप्रमागमत् ॥ ततःसकवचीधन्वीतलीखड्गीशरासनी १७ ध्वजेनादित्यवर्णेनप्रविवेशमहाचमूम् ॥ विदितःपांडवेयानांवासुदेवप्रियेप्सया १८ युधि
ष्ठिरस्तुतंराजाप्रत्युद्गम्याभ्यपूजयत् ॥ सपूजितःपांडुपुत्रैर्यथान्यायंसुसंस्तुतः १९ प्रतिगृह्यतुतान्सर्वान्विश्रांतःसहसैनिकः ॥ उवाचमध्येवीराणांकुंतीपु
त्रंधनंजयम् २० सहायोऽस्मिस्थितोयुद्धेयदिभीतोऽसिपांडव ॥ करिष्यामिरणेसाह्यमसह्यंतवशत्रुभिः २१ नहिमेविक्रमेतुल्यःपुमानस्तीहकश्चन ॥ हनि
ष्यामिरणेभागंयन्मेदास्यसिपांडव २२ अपिद्रोणकृपौवीरौभीष्मकर्णावथोपुनः ॥ अथवासर्वएवैतेतिष्ठंतुवसुधाधिपाः २३ निहत्यसमरेशत्रूंस्तवदास्याभि
मेदिनीं ॥ इत्युक्तोधर्मराजस्यकेशवस्यचसंन्निधौ २४ शृण्वतांपार्थिवेंद्राणामन्येषांचैवसर्वशः ॥ वासुदेवमभिप्रेक्ष्यधर्मराजंचपांडवम् २५

ल्पइत्यर्थः २ । ३ । ४ । ५ । ६ मौरवान्मुरसंबंधिनः । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ ।१७।१८।१९।२०।२१।२२।२३ । २४ । २५

२६ द्रोणं अयंममगुरुरितिव्यपदिशन्कथयन् २७ । २८ । २९ । ३० । ३१ उपजीव्य आराध्य रणेयुद्धनिमित्तं ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे अष्टपंचाशदधिकशततमोऽध्यायः ॥ १५८ ॥ ॥ ७ ॥ ॥ तथेति १ । २।३ क्षयस्यंवउदयोपेभ्यस्तान्क्षयोदयान् ४ निकृतिप्रज्ञंकपटविषयैवप्रज्ञानधर्मविषयायस्यतं

उवाचधीमान्कौंतेयःप्रहस्यसखिपूर्वकम् ॥ कौरवाणांकुलेजातःपांडोःपुत्रोविशेषतः २६ द्रोणंव्यपदिशन्शिष्योवासुदेवसहायवान् ॥ भीतोऽस्मीतिकथंब्रूयांदधानोगांडिवंधनुः २७ युध्यमानस्यमेवीरगंधर्वैःसुमहाबलैः ॥ सहायोघोषयात्रायांकस्तदासीत्सखामम २८ तथाप्रतिभयेतस्मिन्देवदानवसंकुले ॥ खांडवेयुध्यमानस्यकःसहायस्तदाभवत् २९ निवातकवचैर्युद्धेकालकेयैश्चदानवैः ॥ तत्रमेयुद्ध्यमानस्यकःसहायस्तदाभवत् ३० तथाविराटनगरेकुरुभिःसहसंगरे ॥ युध्यतोबहुभिस्तत्रकःसहायोऽभवन्मम ३१ उपजीव्यरणेरुद्रंशक्रंवैश्रवणंयमम् ॥ वरुणंपावकंचैवकृपंद्रोणंचमाधवम् ३२ धारयन्गांडिवंदिव्यंधनुस्तेजोमयंदृढम् ॥ अक्षय्यशरसंयुक्तोदिव्यास्त्रपरिबृंहितः ३३ कथमस्मद्विधोब्रूयाद्भीतोऽस्मीतियशोहरम् ॥ वचनंनरशार्दूलवज्रायुधमपिस्वयम् ३४ नास्मिभीतोमहाबाहोसहायार्थश्चनास्तिमे ॥ यथाकामंयथायोगंगच्छवाऽन्यत्रतिष्ठवा ३५ विनिवर्त्यततोरुक्मीसेनांसागरसंनिभाम् ॥ दुर्योधनमुपागच्छत्तथैवभरतर्षभ ॥ ३६ तथैवचाभिगम्यैनमुवाचवसुधाधिपः ॥ प्रत्याख्यातश्चतेनापिसतदाशूरमानिना ३७ द्वावेवतुमहाराजतस्माद्युद्धादपेयतुः ॥ रौहिणेयश्चवार्ष्णेयोरुक्मीचवसुधाधिपः ३८ गतेरामेतीर्थयात्रांभीष्मकस्यसुतेतथा ॥ उपाविशन्पांडवेयामंत्रायपुनरेवच ३९ समितिर्धर्मराजस्यसापार्थिवसमाकुला ॥ शुशुभेतारकैश्चित्राद्यौश्चंद्रेणेवभारत ४० ॥ इतिश्रीमहाभारतेउद्योगपर्वणिसैन्यनिर्याणपर्वणिरुक्मिप्रत्याख्यानेअष्टपंचाशदधिकशततमोऽध्यायः ॥ १५८ ॥ ७ ॥

॥ जनमेजयउवाच ॥ तथाव्यूढेष्वनीकेषुकुरुक्षेत्रेद्विजर्षभ ॥ किमकुर्वंश्चकुरवःकालेनाभिप्रचोदिताः १ ॥ वैशंपायनउवाच ॥ तथाव्यूढेष्वनीकेषुयत्तेषुभरतर्षभ ॥ धृतराष्ट्रोमहाराजसंजयंवाक्यमब्रवीत् २ एहिसंजयसर्वंमेआचक्ष्वानवशेषतः ॥ सेनानिवेशेयद्वृत्तंकुरुपांडवसेनयोः ३ दिष्टमेवपरंमन्येपौरुषंचाप्यनर्थकम् ॥ यदहंबुद्ध्यमानोऽपियुद्धदोषान्क्षयोदयान् ४ तथापिनिकृतिप्रज्ञंपुत्रंदुर्द्यूतदेविनम् ॥ नशक्नोमिनियंतुंवाकर्तुंवाहितमात्मनः ५ भवत्येवहिमेसूतबुद्धिर्दोषानुदर्शिनी ॥ दुर्योधनंसमासाद्यपुनःसापरिवर्तते ६ एवंगतेवैयद्भावितद्भविष्यतिसंजय ॥ क्षत्रधर्मःकिलरणेतनुत्यागोहिपूजितः ७ ॥ संजयउवाच ॥ त्वद्युक्तोयमनुप्रश्नोमहाराजयथेच्छसि ॥ नतुदुर्योधनेदोषमिममाधातुमर्हसि ८ शृणुष्वानवशेषेणवदतोममपार्थिव ॥ यआत्मनोदुश्चरितादशुभंप्राप्नुयान्नरः ॥ नसकालंनवादेवानेनसागंतुमर्हति ९ महाराजमनुष्येषुनिंद्यंयःसर्वमाचरेत् ॥ सवध्यःसर्वलोकस्यनिंदितानिसमाचरन् १०

५ । ६ । ७ । ८ एनसादोषेणदेवान्कालंवागंतुंउपालब्धुंनार्हति । दृष्टेसंभवत्यदृष्टकल्पनायाअन्याय्यत्वाद्दृष्टापराधाभावेदेवस्यकालस्यवाउपालंभःकर्तुमुचितोनतुतस्मिन्सतीत्यर्थः । नसकालंनवादेवंवक्तुमेतदिहार्हतीतिपाठेऽप्ययमेवार्थः ९ । १०

निकाराःतिरस्काराः । ११ । वैशसंवैरं समरेनिमित्ते १२ । १३ । १४ । १५ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपेऊनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥ ॥ ७ ॥ हिरण्वत्यामिति
१ गुल्मान्सैन्यान् २ आरक्षस्यरक्षणीयस्यद्रव्यादेःविधिंरक्षाविधानं । 'आरक्षंरक्षणीयेस्यात्'इतिविश्वः ३ । ४ । ५ । ६ । ७ कत्थनावाक्यंआत्मप्रशंसनं ८ । ९ संप्रतिज्ञा

निकारामनुजश्रेष्ठपांडवैस्त्वत्प्रतीक्षया ॥ अनुभूताःसहामात्यैर्निकृतैराधिदेवने ११ हयानांचगजानांचराज्ञांचामिततेजसाम् ॥ वैशसंसमरंवृत्तंयत्तन्मेशृणुसर्व
शः १२ स्थिरोभूत्वामहाप्राज्ञसर्वलोकक्षयोदयम् ॥ यथाभूतंमहायुद्धंश्रुत्वाचैकमनाभव १३ नह्येवकर्तापुरुषःकर्मणोःशुभपापयोः ॥ अस्वतंत्रोहिपुरुषःका
र्यतेदारुयंत्रवत् १४ केचिदीश्वरनिर्दिष्टाःकेचिदेवयदृच्छया ॥ पूर्वकर्मभिरप्यन्येत्रैधमेतत्प्रदृश्यते ॥ तस्मादनर्थमापन्नःस्थिरोभूत्वानिशामय १५ ॥ इति
श्रीमहाभारतेउद्योगपर्वणिसैन्यनिर्याणपर्वणिसंजयवाक्येऊनषष्टयधिकशततमोऽध्यायः ॥ १५९ ॥ ॥ ७ ॥ समाप्तंचसैन्यनिर्याणपर्व ॥ अथउलूकदूता
गमनपर्व ॥ संजयउवाच ॥ हिरण्वत्यांनिविष्टेषुपांडवेषुमहात्मसु ॥ न्यविशंतमहाराजकौरवेयायथाविधि १ तत्रदुर्योधनोराजानिवेश्यबलमोजसा ॥ संमान
यित्वानृपतीन्न्यस्यगुल्मांस्तथैवच २ आरक्षस्यविधिंकृत्वायोधानांतत्रभारत ॥ कर्णंदुःशासनंचैवशकुनिंचापिसौबलम् ३ आनाय्यनृपतिस्तत्रमंत्रयामासभा
रत ॥ तत्रदुर्योधनोराजाकर्णेनसहभारत ४ संभाषित्वाचकर्णेनभ्रात्रादुःशासनेनच ॥ सौबलेनचराजेंद्रमंत्रयित्वानरर्षभ ५ आहूयोपह्वरेराजन्नुलूकमिदमब्रवी
त् ॥ उलूकगच्छकैतव्यपांडवान्सहसोमकान् ६ गत्वाममवचोब्रूहिवासुदेवस्यशृण्वतः ॥ इदंतत्समनुप्राप्तंवर्षपूगाभिचिंतितम् ७ पांडवानांकुरूणांचयुद्धंलो
कभयंकरम् ॥ यदेतत्कत्थनावाक्यंसंजयोमहदब्रवीत् ८ वासुदेवसहायस्यगर्जतःसानुजस्यते ॥ मध्येकुरूणांकौंतेयतस्यकालोऽयमागतः ९ यथावःसंप्रतिज्ञातं
तत्सर्वंक्रियतामिति ॥ ज्येष्ठंतथैवकौंतेयंब्रूयास्त्वंवचनान्मम १० भ्रातृभिःसहितःसर्वैःसोमकैश्चसकेकयैः ॥ कथंवाधार्मिकोभूत्वात्वमधर्मेमनःकृथाः ११ यइच्छ
सिजगत्सर्वंनश्यमानंनृशंसवत् ॥ अभयंसर्वभूतेभ्योदातात्वमितिमेमतिः १२ श्रूयतेहिपुरागीतःश्लोकोऽयंभरतर्षभ ॥ प्रह्लादेनाथभद्रंतेहृतेराज्येतुदैवतैः १३
यस्यधर्मध्वजोनित्यंसुराध्वजइवोच्छ्रितः ॥ प्रच्छन्नानिचपापानिबैडालंनामतद्व्रतम् १४ अत्रतेवर्तयिष्यामिआख्यानमिदमुत्तमम् ॥ कथितंनारदेनेहपितुर्म
मनराधिप १५ मार्जारःकिलदुष्टात्मानिश्चेष्टःसर्वकर्मसु ॥ ऊर्ध्वबाहुःस्थितोराजन्गंगातीरेकदाचन १६ सवैकृत्वामनःशुद्धिंप्रत्ययार्थंशरीरिणाम् ॥ करोमि
धर्ममित्याहसर्वानेवशरीरिणः १७ तस्यकालेनमहताविश्रंभंजग्मुरंडजाः ॥ समेत्यचप्रशंसंतिमार्जारंतंविशांपते १८ पूज्यमानस्तुतैःसर्वैःपक्षिभिःपक्षिभोजनः ॥
आत्मकार्यंकृतंमेनेचर्यायाश्चकृतंफलम् १९ अथदीर्घस्यकालस्यतंदेशंमूषिकाययुः ॥ ददृशुस्तंचतेतत्रधार्मिकंव्रतचारिणम् २०

तंदुःशासनरुधिरपानादि १० भ्रातृभिःसहितःकथमधर्मेमनःकृथाइतिसंबंधः ११ दातादास्यसिपारिव्राज्यंकरीष्यसीत्यर्थः १२ । १३ भोसुराइतिदेवान्प्रह्लादःसंबोधयति यस्यव्रतस्य
धर्मध्वजोधर्मचिह्नंदर्भपवित्रपाणित्वादि उच्छ्रितःसर्वलोकविदितः १४ । १५ । १६ मनःशुद्धिंहिंसातोनिवृत्तिं १७ विश्रंभंविश्वासं १८ । १९ । २०

२१ बहवश्चतेमित्राणिचेतिबहुमित्राः । बहुमित्राइत्यपिपाठः । वृद्धाश्चबालाश्चतेषांसमाहारोवृद्धबालंतस्य २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४

कार्येणमहतायुक्तंदंभयुक्तेनभारत ॥ तेषांमतिरियंराजन्नासीत्तत्रविनिश्चये २१ बहुमित्रावयंसर्वेतेषांनोमातुलोह्ययम् ॥ रक्षांकरोतुसततंवृद्धबालस्यसर्वशः २२ उपगम्यतुतेसर्वेबिडालमिदमब्रुवन् ॥ भवत्प्रसादादिच्छामश्चर्तुंचैवयथासुखम् २३ भवान्नोगतिरव्यग्राभवान्नःपरमःसुहृत् ॥ तेवयंसहिताःसर्वेभवंतंशरणंगताः २४ भवान्धर्मपरोनित्यंभवान्धर्मेव्यवस्थितः ॥ सनोरक्षमहाप्रज्ञत्रिदशानिववज्रभृत् २५ एवमुक्तस्तुतैःसर्वैर्मूषिकैःसविशांपते ॥ प्रत्युवाचततःसर्वान्मूषिकान्मूषिकांतकृत् २६ द्वयोर्योगंनपश्यामितपसोरक्षणस्यच ॥ अवश्यंतुमयाकार्यंवचनंभवतांहितम् २७ युष्माभिरपिकर्तव्यंवचनंममनित्यशः ॥ तपसाऽस्मिपरिश्रांतोदृढंनियममास्थितः २८ नचापिगमनेशक्तिंकांचित्पश्यामिचिंतयन् ॥ सोऽस्मिनेयःसदाताता नदीकूलमितःपरम् २९ तथेतितंप्रतिज्ञायमूषिकाभरतर्षभ ॥ वृद्धबालमथोसर्वंमार्जारायन्यवेदयन् ३० ततःसपापोदुष्टात्मामूषिकानथभक्षयन् ॥ पीवरश्चसुवर्णश्चदृढबंधश्चजायते ३१ मूषिकाणांगणश्चात्रभृशंसंक्षीयतेऽथसः ॥ मार्जारोवर्धतेचापितेजोबलसमन्वितः ३२ ततस्तेमूषिकाःसर्वेसमेत्यान्योन्यमब्रुवन् ॥ मातुलोवर्धतेनित्यंवयंक्षीयामहेभृशम् ॥ ३३ ततःप्राज्ञतमःकश्चिड्डिंडिकोनाममूषिकः ॥ अब्रवीद्वचनंराजन्मूषिकाणांमहागणम् ३४ गच्छतांवोनदीतीरंसहितानांविशेषतः ॥ पृष्ठतोऽहंगमिष्यामिसहैवमातुलेनतु ३५ साधुसाध्वितितेसर्वेपूजयांचक्रिरेतदा ॥ चक्रुश्चैवयथान्यायंडिंडिकस्यवचोऽर्थवत् ३६ अविज्ञानाततःसोथडिंडिकंह्युपभुक्तवान् ॥ ततस्तेसहिताःसर्वेमंत्रयामासुरंजसा ३७ तत्रवृद्धतमःकश्चित्कोलिकोनाममूषिकः ॥ अब्रवीद्वचनंराजन्ज्ञातिमध्येयथातथम् ३८ नमातुलोधर्मकामश्छद्ममात्रंकृताशिखा ॥ नमूलफलभक्षस्यविष्ठाभवतिलोमशा ३९ अस्यगात्राणिवर्धंतेगणश्चपरिहीयते ॥ अद्यसप्ताष्टदिवसान्डिंडिकोऽपिनदृश्यते ४० एतच्छ्रुत्वावचःसर्वेमूषिकाविप्रदुद्रुवुः ॥ बिडालोऽपिसदुष्टात्माजगामैवयथागतम् ४१ तथात्वमपिदुष्टात्मन्बैडालंव्रतमास्थितः ॥ चरसिज्ञातिषुसदाबिडालोमूषिकेष्विव ॥ ४२ अन्यथाकिलतेवाक्यमन्यथाकर्मदृश्यते ॥ दंभनार्थायलोकस्यवेदाश्चोपशमश्चते ४३ त्यक्त्वाछद्मत्विदंराजन्क्षत्रधर्मंसमाश्रितः ॥ कुरुकार्याणिसर्वाणिधर्मिष्ठोऽसिनरर्षभ ४४ बाहुवीर्येणपृथिवींलब्ध्वाभरतसत्तम ॥ देहिदानंद्विजातिभ्यःपितृभ्यश्चयथोचितम् ४५ क्लिष्टायावर्षपूगांश्चमातुर्मातृहितेस्थितः ॥ प्रमार्जाश्रुरणेजित्वासंमानंपरमावह ४६ पंचग्रामावृतायत्नान्नास्माभिरपवर्जिताः ॥ युध्यामहेकथंसंख्येकोपयेमचपांडवान् ४७

३५ । ३६ । ३७ । ३८ शिखाशाखाअभित्रस्यापिमित्रभावरूपंपक्षांतरकृतास्वीकृता । 'शिखाशाखाबर्हिचुडेति शाखापक्षांतरेबाहौ'इतिचमेदिनी ३९ गणश्चमूषिकाणां ४० । ४१ । ४२ । ४३ इदंछद्मअजातशत्रुत्वरूपं धर्मिष्ठोऽसीत्युपहासः ४४ । ४५ प्रमार्जप्रमार्जय ४६ । ४७

४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ इंद्रजालंप्रसिद्धं मायाछलं कुहकाकृत्या प्रतिगर्जनाःविपरीतंकोपंवहंतिप्रापयंतिनतुभयंजनयंतीत्यर्थः । 'गर्जनंनिनदेकोपे' इतिमेदिनी ५५ । ५६ पर्यायतःपर्यायोभयप्रदर्शनादिरूपःप्रकारस्तेनसिद्धिःस्वस्यनतुभवति तथापरोऽपितेनबुद्धिमानुषींभयात्मिकांनप्राप्नोति ५७ यतोमनसैवईश्वरेणैवववयंवशेकर्तव्यानत्वादृशैर्विभीषिकयेतिभावः । पूर्वश्लोकेनत्वित्यत्रनन्वितिपाठेपर्यायतःक्रमतः भावस्तुसएव । 'पर्यायःप्रकारेवसरेक्रमे'इतिमेदिनी ५८ आचचक्षेआख्यातवान् ५९ । ६० । ६१ । ६२ सशृंगकाःशं

त्वत्कृतेदुष्टभावस्यसंत्यागोविदुरस्यच ॥ जातुषेचगृहेदाहंस्मरतंपुरुषोभव ४८ यच्चकृष्णमवोचस्त्वमायांतंकुरुसंसदि ॥ अयमस्मिस्थितोराजन्शमायसमरायच ४९ तस्यायमागतःकालःसमरस्यनराधिप ॥ एतदर्थंमयासर्वंकृतमेतद्युधिष्ठिर ५० किंनुयुद्धात्परंलाभंक्षत्रियोबहुमन्यते ॥ किंचत्वंक्षत्रियकुलेजातःसंप्रथितोभुवि ५१ द्रोणादस्त्राणिसंप्राप्यकृपाच्चभरतर्षभ ॥ तुल्ययोनौसमबलेवासुदेवंसमाश्रितः ५२ ब्रूयास्त्वंवासुदेवंचपांडवानांसमीपतः ॥ आत्मार्थंपांडवार्थंचयत्तोमांप्रतियोधय ५३ सभामध्येचयद्रूपंमाययाकृतवानसि ॥ तत्तथैवपुनःकृत्वासार्जुनोमामभिद्रव ५४ इंद्रजालंचमायांवैकुहकावापिभीषणा ॥ आत्तशस्त्रस्यसंग्रामेवहंतिप्रतिगर्जनाः ५५ वयमप्युत्सहेमद्यांखंचगच्छेममायया ॥ रसातलंविशामोऽपिऐंद्रंवापुरमेवतु ५६ दर्शयेमचरूपाणिस्वशरीरेबहून्यपि ॥ नतुपर्यायतःसिद्धिर्बुद्धिमाप्नोतिमानुषीम् ५७ मनसैवहिभूतानिधातैवकुरुतेवशे ॥ यद्ब्रवीषिचवार्ष्णेयधार्तराष्ट्रानहंरणे ५८ घातयित्वाप्रदास्यामिपार्थेभ्योराज्यमुत्तमम् ॥ आचचक्षेचमेसर्वंसंजयस्तवभाषितम् ५९ मद्द्वितीयेनपार्थेनवैरंवःसव्यसाचिना ॥ ससत्यसंगरोभूत्वापांडवार्थेपराक्रमी ६० युद्धचस्वाद्यरणेयत्तःपश्यामःपुरुषोभव ॥ यस्तुशत्रुमभिज्ञायशुद्धंपौरुषमास्थितः ६१ करोतिद्विषतांशोकंसजीवतिसुजीवितम् ॥ अकस्माच्चैवतेकृष्णख्यातंलोकेमहद्यशः ६२ अद्येदानींविजानीमःसंतिषंढाःसशृंगकाः ॥ मद्विधोनापिनृपतिस्त्वयियुक्तःकथंचन ६३ सन्नाहंसंयुगेकर्तुंकंसभृत्येविशेषतः ॥ तंचतूबरकंबालंबह्वाशिनमविद्यकम् ६४ उलूकमद्वचोब्रूहिअसकृद्भीमसेनकम् ॥ विराटनगरेपार्थयस्त्वंसूदोह्यभूःपुरा ६५ बल्लवोनामविख्यातस्तन्ममैवहिपौरुषम् ॥ प्रतिज्ञातंसभामध्येनतन्मिथ्यात्वयापुरा ६६ दुःशासनस्यरुधिरंपीयतांयदिशक्यते ॥ यद्ब्रवीषिचकौंतेयधार्तराष्ट्रानहंरणे ६७ निहनिष्यामितरसातस्यकालोऽयमागतः ॥ त्वंहिभोज्येपुरस्कार्योभक्ष्येपेयेचभारत ६८ क्वयुद्धंक्वचभोक्तव्यंयुध्यस्वपुरुषोभव ॥ शयिष्यसेहतोभूमौगदामालिंग्यभारत ६९

गंपुंस्त्वचिह्नंश्मश्रुलत्वलिंगवत्त्वादिकंतत्सहिताःषंढाःनिर्वीर्याःसंतियेषुतवशौर्यंप्रख्यातमितिभावः ६३ तूबरकंतूबरःप्रौढशृंगोऽनड्वान्तत्तुल्यं तूपरइतिपाठेऽपिसएवार्थः अश्मश्रुपुरुषमित्यन्ये । 'तूबरोऽश्मश्रुपुरुषेप्रौढशृंगानडुह्यपि'इतिमेदिनी तेषांभीमसेनोनिःश्मश्रुकइतिकल्पनाभवति । अश्वोऽजस्तूपरोगोमृगइतिप्राजापत्याइतिश्रुतौ अश्वादिसाहचर्यान्तूपरोऽपिपशुरेव अविद्यकंमूढं ६४ । ६५ । ६६ । ६७ । ६८ । ६९

७० । ७१ । ७२ नदृष्टेति भर्तारः राजानः ७३ अर्थपतिभीराजाभिः यतः कालात्ततआरभ्येत्यर्थः मूढायूयंमयिगुणवतिस्वामिनिनसंतुष्टास्थ मूढश्चयुधिष्ठिरोभवदादिषुनिर्गुणेष्वपितुष्यतीति भावः ७४ । ततस्माद्धेतोर्ममवधार्थंचप्रयुद्ध्यध्वमितिसंबंधः ७५ । ७६ पापंकर्मकुरुगुरुवधाख्यं स्वार्थमितिपाठेदुष्करपदादेत्रायमर्थोज्ञेयः ससुहृत्पार्थमितिपाठेतुक्रियाविशेषणमिदं सुहृद्भिः पार्थैश्चसहितंयथास्यात्तथायुद्ध्यस्वेत्यर्थः अयमेवमूलपाठइतिभाति ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ राज्यमाक्रम्यमादृशइतिशेषः ८५ अकर्मणाअयुद्धेन कत्थितेनस्वप्रशं

तद्वथाचसभामध्येवल्गितंतेवृकोदर ॥ उलूकनकुलंब्रूहिवचनान्ममभारत ७० युद्ध्यस्वाद्यस्थिरोभूत्वापश्यामस्तवपौरुषम् ॥ युधिष्ठिरानुरागंचद्वेषंच मयिभारत ॥ कृष्णायाश्चपरिक्लेशंस्मरेदानींयथातथम् ७१ ब्रूयास्त्वंसहदेवंचराजमध्येवचोमम ॥ युद्धेचेदानींरणेयत्तःक्लेशान्स्मरचपांडव ७२ विराटद्रुपदौचोभौब्रूयास्त्वंवचनान्मम ॥ नदृष्टपूर्वाभर्तारोभृत्यैरपिमहागुणैः ७३ तथार्थपतिभिर्भृत्यायतःसृष्टाःप्रजास्ततः ॥ अश्लाघ्योऽयंनरपतिर्युवयोरितिचागतम् ७४ तेयूयंसंहताभूत्वातद्वधार्थंममापिच ॥ आत्मार्थंपांडवार्थंचप्रयुद्ध्यध्वंमयासह ७५ धृष्टद्युम्नंचपांचाल्यंब्रूयास्त्वंवचनान्मम ॥ एषतेसमयःप्राप्तोलब्धव्यश्चत्वयाऽपिसः ७६ द्रोणमासाद्यसमरेज्ञास्यसेहितमुत्तमम् ॥ युद्ध्यस्वससुहृत्पापंकुरुकर्मसुदुष्करम् ७७ शिखंडिनमथोब्रूहिउलूकवचनान्मम ॥ स्त्रीतिमत्वामहाबाहुर्नहनिष्यातिकौरवः ७८ गांगेयोधन्विनांश्रेष्ठोयुद्धचेदानींसुनिर्भय ॥ कुरुकर्मरणेयत्तःपश्यामःपौरुषंतव ७९ एवमुक्त्वाततोराजाप्रहस्योलूकमब्रवीत् ॥ धनंजयंपुनर्ब्रूहिवासुदेवस्यशृण्वतः ८० अस्मान्वात्वंपराजित्यप्रशाधिपृथिवीमिमाम् ॥ अथवानिर्जितोऽस्माभीरणेवीरशयिष्यसि ८१ राष्ट्रान्निर्वासनक्लेशंवनवासंचपांडव ॥ कृष्णायाश्चपरिक्लेशंसंस्मरन्पुरुषोभव ८२ यदर्थंक्षत्रियासूतेसर्वंतदिदमागतम् ॥ बलंवीर्यंचशौर्यंचपरंचाप्यस्त्रलाघवम् ८३ पौरुषंदर्शयन्युद्धेकोपस्यकुरुनिष्कृतिम् ॥ परिक्लिष्टस्यदीनस्यदीर्घकालोषितस्यच ॥ हृदयंकस्यनस्फोटेदैश्वर्याद्भ्रंशितस्यच ८४ कुलेजातस्यशूरस्यपरवित्तेष्वगृध्यतः ॥ आस्थितंराज्यमाक्रम्यकोपंकस्यनदीपयेत् ८५ यत्तदुक्तंमहद्वाक्यंकर्मणातद्विभाव्यताम् ॥ अकर्मणाकत्थितेनसंतःकुपुरुषंविदुः ८६ अमित्राणांवशेस्थानंराज्यंचपुनरुद्धर ॥ द्वावर्थौयुद्धकामस्यतस्मात्तत्कुरुपौरुषम् ८७ पराजितोऽसिद्यूतेनकृष्णाचानायितासभाम् ॥ शक्योमर्षोमनुष्येणकर्तुंपुरुषमानिना ८८ द्वादशैवतुवर्षाणिवनेधिष्ण्याद्विवासितः ॥ संवत्सरंविराटस्यदास्यमास्थायचोषितः ८९ राष्ट्रान्निर्वासनक्लेशंवनवासंचपांडव ॥ कृष्णायाश्चपरिक्लेशंसंस्मरन्पुरुषोभव ९० अप्रियाणांचवचनंप्रब्रुवत्सुपुनःपुनः ॥ अमर्षंदर्शयस्वत्वममर्षोह्येवपौरुषम् ९१ क्रोधोबलंतथावीर्यंज्ञानयोगोऽस्त्रलाघवम् ॥ इहतेदृश्यतांपार्थयुद्ध्यस्वपुरुषोभव ९२

सामात्रेण ८६ स्थानंस्थितिंतत्स्थानराज्ययोरुद्धरणं पौरुषंपुरुषर्भकुरु ८७ । ८८ धिष्ण्णात्गृहात् ८९ । ९० अप्रियाणांशत्रूणांवक्तुंयोग्यंवचनं गौर्गौःनसंतिपतयोभद्रेषंढतिलाएतेइत्यादिकंप्रब्रुवत्सुदुःशासनादिषुअमर्षंकोपंदर्शय ९१ । ९२

लोहाभिसारः शस्त्राणां नीराजनादिकं तेषु मंत्रेण देवतावाहनादिकं च अकर्दममिति युद्धयोग्यत्वं भूमेरुक्तम् ९३ । ९४ । ९५ । ९६ वेदयोः श्रुतिधनुर्वेदयोः अंतगं पारगम् ९७ । ९८ युगं कालचक्रम् ९९ । १०० आभ्यां द्रोणभीष्माभ्याम् अभिध्यातो हंतव्यत्वेन निश्चितः दारुणेन भयानकेन अस्त्रादिना पदा भूमिमिति मर्त्य उक्तः १०१ दर्दुरो मंडूकः १०२ । १०३ नागबलस्य हास्तिसैन्यस्य १०४

लोहाभिसारो निर्वृत्तः कुरुक्षेत्रमकर्दमम् ॥ पुष्टास्ते ऽश्वा भृता योधाः श्वो युद्ध्यस्व सकेशवः ९३ असमागम्य भीष्मेण संयुगे किं विकत्थसे ॥ आरुरुक्षुर्यथा मंदः पर्वतं गंधमादनम् ९४ एवं कत्थसि कौंतेय अकत्थन्पुरुषो भव ॥ सूतपुत्रं सुदुर्धर्षं शल्यं च बलिनां वरम् ९५ द्रोणं च बलिनां श्रेष्ठं शचीपतिसमं युधि ॥ अजित्वा संयुगे पार्थ राज्यं कथमिहेच्छसि ९६ ब्राह्मे धनुषि चाचार्यं वेदयोरंतगं द्वयोः ॥ युधि धुर्यमविक्षोभ्यमनीकचरमच्युतम् ९७ द्रोणं महाद्युतिं पार्थ जेतुमिच्छसि तन्मृषा ॥ न हि शुश्रुम वातेन मेरुमुन्मथितं गिरिम् ९८ अनिलो वाऽवहेन्मेरुं द्यौर्वाऽपि निपतेन्महीम् ॥ युगं वा परिवर्तेत यद्येवं स्याद्यथाऽऽत्थ माम् ९९ को ह्यस्ति जीविताकांक्षी प्राप्येममरिमर्दनम् ॥ पार्थो वा इतरो वापि कोऽन्यः स्वस्ति गृहान्व्रजेत् १०० कथमाभ्यामभिध्यातः संस्पृष्टो दारुणेन वा ॥ रणे जीवन्प्रमुच्येत पदा भूमिमुपस्पृशन् १ किं दर्दुरः कूपशयो यथेमां न बुध्यसे राजचमूं समेताम् ॥ दुराधर्षां देवचमूप्रकाशां गुप्तां नरेंद्रैस्त्रिदशैरिव द्याम् २ प्राच्यैः प्रतीच्यैरथ दाक्षिणात्यैरुदीच्यकांबोजशकैः खशैश्च ॥ शाल्वैः समत्स्यैः कुरुमध्यदेश्यैर्म्लेच्छैः पुलिंदैर्द्रविडांध्रकांच्यैः १०३ नानाजनौघं युधि संप्रवृद्धं गांगं यथा वेगमपारणीयम् ॥ मां च स्थितं नागबलस्य मध्ये युयुत्ससे मंद किमल्पबुद्धे १०४ अक्षय्याविषुधी चैव अग्निदत्तं च ते रथम् ॥ जानीमो हि रणे पार्थ केतुं दिव्यं च भारत १०५ अकत्थमानो युद्ध्यस्व कत्थसेऽर्जुन किं बहु ॥ पर्यायात्सिद्धिरेतस्य नैतत्सिध्यति कत्थनात् १०६ यदीदं कत्थनाल्लोके सिध्येत्कर्म धनंजय ॥ सर्वे भवेयुः सिद्धार्थाः कत्थने को हि दुर्गतः १०७ जानामि ते वासुदेवं सहायं जानामि ते गांडिवं तालमात्रम् ॥ जानाम्यहं त्वादृशो नास्ति योद्धा जानानस्ते राज्यमेतद्धरामि १०८ न तु पर्यायधर्मेण सिद्धिं प्राप्नोति मानवः ॥ मनसैवानुकूलानि धातैव कुरुते वशे १०९ त्रयोदश समा भुक्तं राज्यं विलपतस्तव ॥ भूयश्चैव प्रशासिष्ये त्वां निहत्य सबांधवम् ११० क्व तदा गांडिवं तेऽभूद्यत्त्वं दासपणैर्जितः ॥ क्व तदा भीमसेनस्य बलमासीच्च फाल्गुन १११ सगदाद्भीमसेनाद्वा फाल्गुनाद्वा सगांडिवात् ॥ न वै मोक्षस्तदा वोऽभूद्विना कृष्णामनिंदिताम् ११२ सा वो दास्ये समापन्नान्मोचयामास पार्षती ॥ अमानुष्यं समापन्नान्दासकर्मण्यवस्थितान् ११३ अवोचं यत्षंढतिलानहं वस्तथ्यमेव तत् ॥ धृता हि वेणी पार्थेन विराटनगरे तदा ११४

१०५ पर्यायात् युद्धप्रकारात् १०६ । १०७ । १०८ पर्यायधर्मेण उपधर्मेण मायादिना । अन्ये तु राजपुत्रोऽयं राज्यार्ह इति क्रमप्राप्तधर्मेस्ते न न किंतु शौर्येणैव सिद्धिमाप्नोतीत्यर्थः मनसा संकल्पेन धातैव कुरुते न तु मनुष्यः १०९ । ११० हे दासवासव इति पाठे इंद्रपुत्र १११ । ११२ अमानुष्यं नीचमनुष्यत्वं अलवणा यवागूरिति वदल्पार्थोऽत्र नञ् ११३ । ११४

११५ वेणींकृत्वाषंढवेषःकन्यांनार्तितवानसीत्येतस्मात्परं श्रोण्यांत्रेण्यांचकक्ष्यांचसंयुगेयःपलायते इत्यर्धदृश्यते तस्यार्थः यःषंढवेषः अस्त्रीअपिस्त्रीवेषभृत् श्रोणिकक्षावेण्युपलक्षितेषुरत्नयवमर्ददंशन स्थानेषुसंयुगेस्मर युद्धेउपस्थितेसतिपलायते स्त्रीत्वस्मिन्संयुगेस्थिरीभवति अयंतुततोऽप्यधमइतिभावः । कक्षायामित्यपेक्षितेआकारलोपआर्षः ११६ । ११७ नमायेतिव्याख्यातएवश्लोकः ११८ । ११९ भीष्मेणमह संग्रामः गिरौशिरोभेदनादिवत्स्वनाशकरइत्यर्थः १२० उद्वेलोवृद्धिः १२१ । १२२ ओघःप्रवाहः पुरुमित्रोदुर्योधनभ्राता सएवगाधोगांभीर्यस्यपर्यंतोयस्मिन् ।

सूदकर्मणिचश्रांतंविराटस्यमहानसे ॥ भीमसेनेनकौंतेययत्तुतन्ममपौरुषम् ११५ एवमेवसदादंडंक्षत्रियाःक्षत्रियेदधुः ॥ वेणींकृत्वाषंढवेषःकन्यांनार्तितवानसि १६ नभयाद्वासुदेवस्यनचापितवफाल्गुन ॥ राज्यंप्रतिप्रदास्यामियुद्ध्यस्वसहकेशवः १७ नमायाहींद्रजालंवाकुहकावापिभीषणा ॥ आत्तशस्त्रस्यसंग्रामेव हंतिप्रतिगर्जनाः १८ वासुदेवसहस्रंवाफाल्गुनानांशतानिवा ॥ आसाद्यमाममोघेषुंद्रविष्यंतिदिशोदश १९ संयुगंगच्छभीष्मेणभिंधिवाशिरसागिरिम् ॥ त रस्ववामहागाधंबाहुभ्यांपुरुषोदधिम् १२० शारद्वतमहामीनंविंविशतिमहोरगम् ॥ बृहद्बलमहोद्वेलंसौमदत्तितिमिंगिलम् २१ भीष्मवेगमपर्यंतंद्रोणग्राहदुरा सदम् ॥ कर्णशल्यझषावर्तंकांबोजवडवामुखम् २२ दुःशासनौघंशलशल्यमत्स्यंसुषेणचित्रायुधनागनक्रम् ॥ जयद्रथाद्रिंपुरुमित्रगाधंदुर्मर्षणोदंशकुनिप्रपा तम् २३ शस्त्रौघमक्षय्यमभिप्रवृद्धंयदाऽवगाह्यश्रमनष्टचेताः ॥ भविष्यसित्वंहतसर्वबांधवस्तदामनस्तेपरितापमेष्यति २४ तदामनस्तेत्रिदिवादिवाशुचे र्निवार्तितापार्थमहीप्रशासनात् ॥ प्रशाम्यराज्यंहिसुदुर्लभंत्वयाबुभूषितःस्वर्गइवातपस्विना १२५ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिउलूकदूतागमनपर्वणि दुर्योधनवाक्येषष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥ संजयउवाच ॥ सेनानिवेशंसंप्राप्तःकैतव्यःपांडवस्यह ॥ समागतःपांडवेयैर्युधिष्ठिरमभाषत १ अभि ज्ञोदूतवाक्यानांयथोक्तंब्रुवतोमम ॥ दुर्योधनसमादेशंश्रुत्वानक्रोद्धुमर्हसि २ ॥ युधिष्ठिरउवाच ॥ उलूकनभयंतेऽस्तिब्रूहित्वंविगतज्वरः ॥ यन्मतंधार्तराष्ट्र स्यलुब्धस्यादीर्घदर्शिनः ३ ततोद्युतिमतांमध्येपांडवानांमहात्मनाम् ॥ सृंजयानांचमत्स्यानांकृष्णस्यचयशस्विनः ४ द्रुपदस्यसपुत्रस्यविराटस्यचसंनिधौ ॥ भूमिपानांचसर्वेषांमध्येवाक्यंजगादह ५ ॥ उलूकउवाच ॥ इदंत्वामब्रवीद्राजाधार्तराष्ट्रोमहामनाः ॥ शृण्वतांकुरुवीराणांतन्निबोधयुधिष्ठिर ६ पराजितोऽसिद्यूतेन कृष्णाचानायितासभाम् ॥ शक्योऽमर्षोमनुष्येणकर्तुंपुरुषमानिना ७ द्वादशैवतुवर्षाणिवनेधिष्ण्याद्विवासितः ॥ संवत्सरंविराटस्यदास्यमास्थायचोषितः ८ अ मर्षंराज्यहरणंवनवासंचपांडव ॥ द्रौपद्याश्चपरिक्लेशंसंस्मरन्पुरुषोभव ९ अशक्तेनचयच्छप्तंभीमसेनेनपांडव ॥ दुःशासनस्यरुधिरंपीयतांयदिशक्यते १०

गाढमितिपाठेतेनगाढंदुष्प्रवेशं दुर्मर्षणोदंदुर्मर्षणोदकं सोपिदुर्योधनभ्रातैव १२३ । १२४ निवर्तितानिवर्तिष्यति प्रशाम्यशांतोभव । प्रशास्येतिपाठे प्रशास्यंचतद्राज्यंचेतिसमासः बुभूषितः प्राप्तुमिष्टः अतपस्विनास्वर्गइवत्वयाराज्यंदुर्लभंलब्धुमशक्यम् १२५ ॥ ॥ इति उद्योगपर्वणि नीलकंठीये भारतभावदीपे षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥ ॥
॥ सेनेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ शप्तं शपथःकृतः १०

लोहाभिसारोनिर्वृत्तःकुरुक्षेत्रमकर्दमम् ॥ समःपंथाभृतास्तेऽश्वाःश्वोयुध्यस्वसकेशवः ११ आसमागम्यभीष्मेणसंयुगेकिंविकत्थसे ॥ आरुरुक्षुर्यथामंदःपर्वतं
गंधमादनम् १२ एवंकत्थसिकौंतेयअकत्थन्पुरुषोभव ॥ सूतपुत्रंसुदुर्धर्षंशल्यंचबलिनांवरम् १३ द्रोणंचबलिनांश्रेष्ठंशचीपातिसमंयुधि ॥ अजित्वासंयुगे
पार्थराज्यंकथमिहेच्छसि १४ ब्राह्मेधनुषिचाचार्यंवेदयोरंतगंद्वयोः ॥ युधिधुर्यमविक्षोभ्यमनीकचरमच्युतम् १५ द्रोणंमहाद्युतिंपार्थजेतुमिच्छसितन्मृषा ॥
नहिशुश्रुमवातेनमेरुमुन्माथितंगिरिम् १६ अनिलोवावहेन्मेरुंद्यौर्वापिनिपतेन्महीम् ॥ युगंवापरिवर्तेतयद्येवंस्याद्यथाऽऽत्थमाम् १७ कोह्यस्तिजीविताकां
क्षीप्राप्येममरिमर्दनम् ॥ गजोवाजीरथोवापिपुनःस्वस्तिगृहान्व्रजेत् १८ कथमाभ्यामभिध्यातःसंस्पृष्टोदारुणेनवा ॥ रणेजीवन्विमुच्येतपदाभूमिमुपस्पृशन्
१९ किंदर्दुरःकूपशयोयथेमांनबुध्यसेराजचमूंसमेताम् ॥ दुराधर्षांदेवचमूप्रकाशांगुप्तांनरेंद्रैस्त्रिदशैरिवद्याम् २० प्राच्यैःप्रतीच्यैरथदाक्षिणात्यैरुदीच्यकांबो
जशकैःखशैश्च ॥ शाल्वैःसमत्स्यैःकुरुमुख्यदेश्यैर्म्लेच्छैःपुलिंदैर्द्रविडांध्रकांच्यैः २१ नानाजनौघंयुधिसंप्रवृद्धंगांगंयथावेगमपारणीयम् ॥ मांचस्थितंनाग
बलस्यमध्येयुयुत्ससेमंदकिमल्पबुद्धे २२ इत्येवमुक्त्वाराजानंधर्मपुत्रंयुधिष्ठिरम् ॥ अभ्यावृत्त्यपुनर्जिष्णुमुलूकःप्रत्यभाषत २३ अकत्थमानोयुद्धचस्वकत्थसे
ऽर्जुनकिंबहु ॥ पर्यायात्सिद्धिरेतस्यनैतत्सिद्ध्यतिकत्थनात् २४ यदीदंकत्थनाल्लोकेसिद्ध्येत्कर्मधनंजय ॥ सर्वेभवेयुःसिद्धार्थाःकत्थनेकोहिदुर्गतः २५ जाना
मितेवासुदेवंसहायंजानामितेगांडिवंतालमात्रम् ॥ जानाम्येतत्त्वादृशोनास्तियोद्धाजानानस्तेराज्यमेतद्धरामि २६ नतुपर्यायधर्मेणराज्यंप्राप्नोतिमानुषः ॥
मनसैवानुकूलानिविधाताकुरुतेवशे २७ त्रयोदशसमाभुक्तंराज्यंविलपतस्तव ॥ भूयश्चैवप्रशासिष्येनिहत्यत्वांसबांधवम् २८ क्वतदागांडिवंतेऽभूद्यत्त्वंदास
पणैर्जितः ॥ क्वतदाभीमसेनस्यबलमासीच्चफाल्गुन २९ सगदाद्भीमसेनाद्वापार्थाद्वाऽपिसगांडिवात् ॥ नवैमोक्षस्तदावोऽभूद्विनाकृष्णामनिंदिताम् ३० सावो
दास्येसमापन्नान्मोक्षयामासपार्षती ॥ अमानुष्यंसमापन्नान्दासकर्मण्यवस्थितान् ३१ अवोचंयत्षंढतिलानहंवस्तथ्यमेवतत् ॥ धृताहिवेणीपार्थेनविराटनगरे
तदा ३२ सूदकर्मणिचश्रांतंविराटस्यमहानसे ॥ भीमसेनेनकौंतेययच्चतन्ममपौरुषम् ३३ एवमेतत्सदादंडंक्षत्रियाःक्षत्रियेदधुः ॥ वेणींकृत्वाषंढवेषःकन्यां
नर्तितवानसि ३४ नभयाद्वासुदेवस्यनचापितवफाल्गुन ॥ राज्यंप्रतिप्रदास्यामियुद्धचस्वसहकेशवः ३५ नमायाहींद्रजालंवाकुहकावापिभीषणा ॥ आत्त
शस्त्रस्यमेयुद्धेवहंतिप्रतिगर्जनाः ३६ वासुदेवसहस्रंवाफाल्गुनानांशतानिवा ॥ आसाद्यमाममोघेषुंद्रविष्यंतिदिशोदश ३७ संयुगंगच्छभीष्मेणभिंधिवाशिर
सागिरिम् ॥ तरेमंवामहागाधंबाहुभ्यांपुरुषोदधिम् ३८ शारद्वतमहामीनंविविंशतिमहोरगम् ॥ बृहद्बलमहोद्वेलंसौमदत्तितिमिंगिलम् ३९

व्याख्यातएवायमध्यायः ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८।२९।३०।३१।३२।३३।३४।३५।३६। ३७ । ३८ । ३९

४० । ४१ । ४२ । ४३ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिनीलकंठीयेभारतभावदीपे एकषष्ट्युत्तरशततमोऽध्यायः ॥ १६१ ॥ ॥ ७ ॥ उलूकस्त्विति १ । २ । ३ । ४ । ५ । ६ । ७

भीष्मवेगमपर्यंतंद्रोणग्राहदुरासदम् ॥ कर्णशल्यझषावर्तंकांबोजवडवामुखम् ४० दुःशासनौघंशलशल्यमत्स्यंसुषेणचित्रायुधनागनक्रम् ॥ जयद्रथाद्रिंपुरुमित्रगाधंदुर्मर्षणोदंशकुनिप्रपातम् ४१ शस्त्रौघमक्षय्यमतिप्रवृद्धंयदाऽवगाह्यश्रमनष्टचेताः ॥ भविष्यसित्वंहतसर्वबांधवस्तदामनस्तेपरितापमेष्यति ४२ तदामनस्तेत्रिदिवादिवाशुचेर्निवर्तितापार्थमहीप्रशासनात् ॥ प्रशाम्यराज्यंहिसुदुर्लभंत्वयाबुभुषितःस्वर्गइवातपस्विना ४३ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिउलुकदूतगमनपर्वणिउलुकवाक्येएकषष्ट्युत्तरशततमोऽध्यायः ॥ १६१ ॥ ॥ संजयउवाच ॥ उलूकस्त्वर्जुनंभूयोयथोक्तंवाक्यमब्रवीत् ॥ आशीविषमिवक्रुद्धंतुदन्वाक्यशलाकया १ तस्यतद्वचनंश्रुत्वारुषिताःपांडवाभृशम् ॥ प्रागेवभृशसंक्रुद्धाःकैतव्येनापिधर्षिताः २ आसनेषूदतिष्ठंतबाहूंश्चैवप्रचिक्षिपुः ॥ आशीविषाइवक्रुद्धावीक्षांचक्रुःपरस्परम् ३ अवाक्शिराभीमसेनःसमुदैक्षतकेशवम् ॥ नेत्राभ्यांलोहितांताभ्यामाशीविषइवश्वसन् ४ आर्तंवातात्मजंदृष्ट्वाक्रोधेनाभिहतंभृशम् ॥ उत्स्मयन्निवदाशार्हःकैतव्यंप्रत्यभाषत ५ प्रयाहिशीघ्रंकैतव्यब्रूयाश्चैवसुयोधनम् ॥ श्रुतंवाक्यंगृहीतोऽर्थोमतंयत्तेतथास्तुतत् ६ एमुक्त्वामहाबाहुःकेशवोराजसत्तम ॥ पुनरेवमहाप्राज्ञंयुधिष्ठिरमुदैक्षत ७ सृंजयानांचसर्वेषांकृष्णस्यचयशस्विनः ॥ द्रुपदस्यसपुत्रस्यविराटस्यचसंनिधौ ८ भूमिपानांचसर्वेषांमध्येवाक्यंजगादह ॥ उलूकोऽप्यर्जुनंभूयोयथोक्तंवाक्यमब्रवीत् ९ आशीविषमिवक्रुद्धंतुदन्वाक्यशलाकया ॥ कृष्णादींश्चैवतान्सर्वान्यथोक्तंवाक्यमब्रवीत् १० उलूकस्यतुतद्वाक्यंपापंदारुणमीरितम् ॥ श्रुत्वाविचुक्षुभेपार्थोललाटंचाप्यमार्जयत् ११ तदवस्थंतदादृष्ट्वापार्थंसासमितिर्नृप ॥ नामृष्यंतमहाराजपांडवानांमहारथाः १२ अधिक्षेपेणकृष्णस्यपार्थस्यचमहात्मनः ॥ श्रुत्वातेपुरुषव्याघ्राःक्रोधाज्जज्वलुरच्युत १३ धृष्टद्युम्नःशिखंडीचसात्यकिश्चमहारथः ॥ केकयाभ्रातरःपंचराक्षसश्चघटोत्कचः १४ द्रौपदेयाभिमन्युश्चधृष्टकेतुश्चपार्थिवः ॥ भीमसेनश्चविक्रांतोयमजौचमहारथौ १५ उत्पेतुरासनात्सर्वेक्रोधसंरक्तलोचनाः ॥ बाहून्प्रगृह्यरुचिरान्रक्तचंदनरूषितान् ॥ अंगदैःपारिहार्यैश्चकेयूरैश्चविभूषितान् १६ दंतान्दंतेषुनिष्पिष्यसृक्किणीपरिलेलिहन् ॥ तेषामाकारभावज्ञःकुंतीपुत्रोवृकोदरः १७ उदतिष्ठत्सवेगेनक्रोधेनप्रज्वलन्निव ॥ उद्वृत्यसहसानेत्रेदंतान्कटकटाय्यच १८ हस्तंहस्तेननिष्पिष्यउलूकंवाक्यमब्रवीत् ॥ अशक्तानामिवास्माकंप्रोत्साहननिमित्तकम् १९ श्रुतंतेवचनंमूर्खयत्त्वांदुर्योधनोऽब्रवीत् ॥ तन्मेकथयतोमंदशृणुवाक्यंदुरासदम् २०

८ । ९ । १० । ११ समितिःसभा १२ । १३ । १४ द्रौपदेयैःसहितोऽभिमन्युःद्रौपदेयाभिमन्युः १५ परिहार्यैःपरितोहारायेषांतेपरिहाराःमौक्तिकगुच्छाः मौक्तिकादिजालानिवातएव पारिहार्याणि स्वार्थेष्यञ् १६ । १७ । १९ । २०

२१। २२। २३। २४। २५। २६। २७ यश्चेति इहदुःशासनरुधिरपानकालेमामांअभियास्यति २८ आत्मानंआलभेशपामि। अंतरात्मानंईश्वरंवास्पृष्ट्वाऽऽह आलभेइति ईश्वरशपथंकरोमी

सर्वक्षत्रस्यमध्येतंयद्वक्ष्यसिसुयोधनम् ॥ शृण्वतःसूतपुत्रस्यपितुश्चत्वंदुरात्मनः २१ अस्माभिःप्रीतिकामैस्तुभ्रातुर्ज्येष्ठस्यनित्यशः ॥ मर्षितंतेदुराचारतत्त्वंन बहुमन्यसे २२ प्रेषितश्चहृषीकेशःशमाकांक्षीकुरून्प्रति ॥ कुलस्यहितकामेनधर्मराजेनधीमता २३ त्वंकालचोदितोनूनंगंतुकामोयमक्षयम् ॥ गच्छस्वाहव मस्माभिस्तच्चश्वोभविताध्रुवम् २४ मयाऽपिचप्रतिज्ञातोवधःसभ्रातृकस्यते ॥ सतथाभवितापापनात्रकार्याविचारणा २५ वेलामतिक्रमेत्सद्यःसागरोवरुणा लयः ॥ पर्वताश्चविशीर्येयुर्मयोक्तंनमृषाभवेत् २६ सहायस्तेयदियमःकुबेरोरुद्रएववा ॥ यथाप्रतिज्ञंदुर्बुद्धेप्रकरिष्यंतिपांडवाः ॥ दुःशासनस्यरुधिरंपाताचा स्मियथेप्सितम् २७ यश्चेहप्रतिसंरब्धःक्षत्रियोमाऽभियास्यति ॥ अपिभीष्मंपुरस्कृत्यतंनेष्यामियमक्षयम् २८ यच्चैतदुक्तंवचनंमयाक्षत्रस्यसंसदि ॥ यथै तद्भवितासत्यंतथैवात्मानमालभे २९ भीमसेनवचःश्रुत्वासहदेवोऽप्यमर्षणः ॥ क्रोधसंरक्तनयनस्ततोवाक्यमुवाचह ३० शौटीरशूरसदृशमनीकजनसंसदि ॥ शृणुपापवचोमह्यंयद्वाच्योहिपितात्वया ३१ नास्माकंभवितामेदःकदाचित्कुरुभिःसह ॥ धृतराष्ट्रस्यसंबंधोयदिनस्यात्त्वयासह ३२ त्वंतुलोकविनाशायधृतरा ष्ट्रकुलस्यच ॥ उत्पन्नोवैरपुरुषःस्वकुलघ्नश्चपापकृत् ३३ जन्मप्रभृतिचास्माकंपितातेपापपूरुषः ॥ अहितानिनृशंसानिनित्यशःकर्तुमिच्छति ३४ तस्यवै रानुषंगस्यगंताऽस्म्यंतंसुदुर्गमम् ॥ अहमादौनिहत्यत्वांशकुनेःसंप्रपश्यतः ३५ ततोऽस्मिशकुनिंहंतामिषतांसर्वधन्विनाम् ॥ भीमस्यवचनंश्रुत्वासहदेवस्य चोभयोः ३६ उवाचफाल्गुनोवाक्यंभीमसेनंस्मयन्निव ॥ भीमसेननतेसंतियेषांवैरंत्वयासह ३७ मंदागृहेषुसुखिनोमृत्युपाशवशंगताः ॥ उलूकश्चनतेवाच्यः परुषंपुरुषोत्तम ३८ दूताःकिमपराध्यंतेयथोक्तस्यानुभाषिणः ॥ एवमुक्त्वामहाबाहुर्भीमंभीमपराक्रमम् ३९ धृष्टद्युम्नमुखान्वीरान्सुहृदःसमभाषत ॥ श्रुतंव स्तस्यपापस्यधार्तराष्ट्रस्यभाषितम् ४० कुत्सनंवासुदेवस्यममचैवविशेषतः ॥ श्रुत्वाभवंतःसंरब्धाअस्माकंहितकाम्यया ४१ प्रभावाद्वासुदेवस्यभवतांचप्र यत्नतः ॥ समग्रंपार्थिवंक्षत्रंसर्वंनगणयाम्यहम् ४२ भवद्भिःसमनुज्ञातोवाक्यमस्ययदुत्तरम् ॥ उलूकेप्रापयिष्यामियद्वक्ष्यतिसुयोधनम् ४३ श्वोभूतेकत्थि तस्यास्यप्रतिवाक्यंचमूमुखे ॥ गांडीवेनाभिधास्यामिक्लीबाहिवचनोत्तराः ४४ ततस्तेपार्थिवाःसर्वेप्रशशंसुर्धनंजयम् ॥ तेनवाक्योपचारेणविस्मिताराजस त्तमाः ४५ अनुनीयचतान्सर्वान्यथामान्यंयथावयः ॥ धर्मराजंतदावाक्यंतत्प्राप्यंप्रत्यभाषत ४६

त्यर्थः २९।३० शौटीरःसगर्वः शूरोविक्रांतः शौट्ऋगर्वेशूरविक्रांताविति धातू अनीकजनःसैन्यवासीजनः हेपापमह्यंमम ३१ नास्माकमिति धृतराष्ट्रदोषादेववैरंजातंअन्यथातेनबाल्येएवत्वयित्यक्ते सतितन्नस्यादितिभावः ३२। ३३ तेतवपिताअस्माकंअहितानिकर्तुमिच्छतीतिसंबंधः ३४। ३५ भीमसेनस्येतिप्राचीनपाठेश्रुत्वेत्यध्याहारः ३६।३७। ३८ ३९। ४०। ४१। ४२। ४३। ४४। ४५।४६

४७ । ४८ । ४९ । ५० । ५१ पांडवेष्विति हेपाप पांडवेषुत्वयोक्तंबैडालव्रतरूपंजिह्मंप्रवर्तेतइति तुष्यतुदुर्जनन्यायेनांगीकरोति प्रवर्तसइतिपाठेतुस्पष्टो र्थः पूरयन्वाक्यंतदर्थानुष्ठानेनसमर्थयन्
५२ मान्याःभीष्मद्रोणादयः अमान्याःपुत्राःलक्ष्मणादयः बालवृद्धनाशंमाकार्षीरित्यर्थः ५३ । ५४ नपुंसकंनपुंसकत्वंतव ५५ परेषांकर्णादीनां ५६ । ५७ । ५८ जघन्यकालंचरमकालेऽपि

आत्मानमवमन्वानोनहिस्यात्पार्थिवोत्तमः ॥ तत्रोत्तरंप्रवक्ष्यामितवशुश्रूषणेरतः ४७ उलूकंभरतश्रेष्ठसामपूर्वमथोर्जितम् ॥ दुर्योधनस्यतद्वाक्यंनिशम्यभर
तर्षभः ४८ अतिलोहितनेत्राभ्यामाशीविषइवश्वसन् ॥ स्मयमानइवक्रोधात्सृक्किणीपरिसंलिहन् ४९ जनार्दनमभिप्रेक्ष्यभ्रातॄंश्चैवेदमब्रवीत् ॥ अभ्यभाषत
कैतव्यंप्रगृह्यविपुलंभुजम् ५० उलूकगच्छकैतव्यब्रूहितातसुयोधनम् ॥ कृतघ्नंवैरपुरुषंदुर्मतिंकुलपांसनम् ५१ पांडवेषुसदापापनित्यंजिह्मंप्रवर्तते ॥ स्व
वीर्याद्यःपराक्रम्यपापआह्वयतेपरान् ॥ अभीतःपूरयन्वाक्यमेषवैक्षत्रियःपुमान् ५२ सपापःक्षत्रियोभूत्वाअस्मानाहूयसंयुगे ॥ मान्यामान्यान्पुरस्कृत्ययु
द्धंमागाःकुलाधम ५३ आत्मवीर्यंसमाश्रित्यभृत्यवीर्यंचकौरव ॥ आह्वायस्वरणेपार्थान्सर्वथाक्षत्रियोभव ५४ परवीर्यंसमाश्रित्ययःसमाह्वयतेपरान् ॥ अश
क्तःस्वयमादातुमेतदेवनपुंसकम् ५५ सत्वंपरेषांवीर्येणआत्मानंबहुमन्यसे ॥ कथमेवमशक्तस्त्वमस्मान्समभिगर्जसि ५६ ॥ कृष्णउवाच ॥ मद्वचश्चापिभू
यस्तेवक्तव्यःससुयोधनः ॥ श्वइदानींप्रपद्येथाःपुरुषोभवदुर्मते ५७ मन्यसेयच्चमूढत्वंनयोत्स्यतिजनार्दनः ॥ सारथ्येनवृतःपार्थैरितित्वंनबिभेषिच ५८
जघन्यकालमप्येतन्नभवेत्सर्वपार्थिवान् ॥ निर्दहेयमहंक्रोधात्तृणानीवहुताशनः ५९ युधिष्ठिरनियोगात्तुफाल्गुनस्यमहात्मनः ॥ करिष्येयुध्यमानस्यसारथ्यंवि
जितात्मनः ६० यद्युत्पतसिलोकांस्त्रीन्यद्याविशसिभूतलम् ॥ तत्रतत्रार्जुनरथंप्रभातेद्रक्ष्यसेपुनः ६१ यच्चापिभीमसेनस्यमन्यसेमोघभाषितम् ॥ दुःशास
नस्यरुधिरंपीतमद्यावधारय ६२ नत्वांसमीक्षतेपार्थोनापिराजायुधिष्ठिरः ॥ नभीमसेनोनयमौप्रतिकूलप्रभाषिणम् ६३ ॥ इतिश्रीमहाभारतेउद्योगपर्वणि
उलूकदूताभिगमनपर्वणिकृष्णादिवाक्येद्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥ ॥ संजयउवाच ॥ दुर्योधनस्यतद्वाक्यंनिशम्यभरतर्षभ ॥ नेत्राभ्या
मतिताम्राभ्यांकैतव्यंसमुदैक्षत १ सकेशवमभिप्रेक्ष्यगुडाकेशोमहायशाः ॥ अभ्यभाषतकैतव्यंप्रगृह्यविपुलंभुजम् २ स्ववीर्यंयःसमाश्रित्यसमाह्वयतिवैपरान् ॥
अभीतोयुध्यतेशत्रून्सवैपुरुषउच्यते ३ परवीर्यंसमाश्रित्ययःसमाह्वयतेपरान् ॥ क्षत्रबंधुरशक्तत्वाल्लोकेसपुरुषाधमः ४ सत्वंपरेषांवीर्येणमन्यसेवीर्यमात्मनः॥
स्वयंकापुरुषोमूढपरांश्चक्षेप्तुमिच्छसि ५ यस्त्वंवृद्धंसर्वराज्ञांहितबुद्धिंजितेंद्रियम् ॥ मरणायमहाप्रज्ञंदीक्षयित्वाविकत्थसे ६ भावस्तेविदितोऽस्माभिर्दुर्बुद्धेकु
लपांसन ॥ नहनिष्यंतिगांगेयंपांडवाघृणयेतिहि ७

एतन्नभवेन्माभूत् एतदेवाहसर्वेत्यादिनाश्लोकशेषेण ५९ । ६० । ६१ । ६२ समीक्षतेगणयति ६३ ॥ इतिश्रीमहाभारते उद्योगपर्वणिनीलकंठीयेभा० द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥
दुर्योधनस्येति समुदैक्षतगुडाकेशइतिसंबंधः १ । २ पूरणात्पुरुषइतिपुरुषशब्दनिर्वचनं अन्यथात्वपुरुषएवेत्यर्थः ३ क्षत्रबंधुः क्षत्रजातिरेवनतुक्षत्रकर्मेत्यर्थः ४ । ५ वृद्धंबाह्लीकंभीष्मंच ६ । ७

मिषतांपश्यतां ८ कैतव्येति समेत्यएकीकृत्य निशाव्यपायेश्वोभूते ९ सत्यसंधोभीष्मः भीष्मवाक्यमेवाह अहंहंतेति हेकैतव्यअहंहंतेत्यादिमदीयंवाक्यंभरतान्पांडवान्प्रतिगत्वावदस्व किंकृत्वासुयोधनंसमेत्यमदीयंसंदेशंदुर्योधनायश्रावयित्वा पांडवान्प्रतिकथयेत्यर्थः तेनदुर्योधनसुखंपांडवानांभयंचोदेष्यतीतिभावः १० द्रोणमृतेपिद्रोणंविनाप्यसहायएवाहंलोकंहन्यांततोभीष्मवाक्यात्तेतवभावएवंभूतोजातइत्यर्थः ११ हंताहनिष्यामि कुरुवृद्धंभीष्मं १२ योयुक्तसेनोध्वजीरथीतंरक्षतेतियोजना द्वीपंमज्जतामाधारं १३ । १४ । १५ । १६ अभिमानःश्रेष्ठोऽस्मीतिबुद्धिः । दर्पःपराभिभवसमर्थोऽस्मीतिधीः । क्रोधोऽभिज्वलनं । पारुष्यंनिष्ठुरवाक्यत्वं । नैष्ठुर्यंनिःस्नेहता । अवलेपोन्येषामवज्ञा । आत्मसंभावनंअहमेवज्ञाताशूरश्चास्मीतिबुद्धिः १७

यस्यवीर्यंसमाश्रित्यधार्तराष्ट्रविकत्थसे ॥ हंताऽस्मिप्रथमंभीष्मंमिषतांसर्वधन्विनाम् ८ कैतव्यगत्वाभरतान्समेत्यसुयोधनंधार्तराष्ट्रंवदस्व ॥ तथेत्युवाचार्जुनःसव्यसाचीनिशाव्यपायेभविताविमर्दः ९ यद्वाऽब्रवीद्वाक्यमदीनसत्वोमध्येकुरूनहर्षयन्सत्यसंधः ॥ अहंहंतासृंजयानामनीकंशाल्वेयकांश्चेतिममैषभारः ॥ कैतव्यगत्वाभरतान्समेत्यसुयोधनंधार्तराष्ट्रंवदस्व १० हन्यामहंद्रोणमृतेऽपिलोकंनतेभयंविद्यतेपांडवेभ्यः ॥ ततोहितेलब्धतमंचराज्यमापद्गताःपांडवाश्चेतिभावः ११ सदर्पपूर्णोनसमीक्षसेत्वमनर्थमात्मन्यपिवर्तमानम् ॥ तस्मादहंतेप्रथमंसमूहेहंतासमक्षंकुरुवृद्धमेव १२ सूर्योदयेयुक्तसेनःप्रतीक्ष्यध्वजीरथीरक्षतसत्यसंधम् ॥ अहंहिवःपश्यतांद्वीपमेनंभीष्मंरथात्पातयिष्यामिबाणैः १३ श्वोभूतेकत्थनावाक्यंविज्ञास्यतिसुयोधनः ॥ आचितंशरजालेनमयाद्दष्ट्वापितामहम् १४ यदुक्तश्चसभामध्येपुरुषोह्रस्वदर्शनः ॥ क्रुद्धेनभीमसेनेनभ्रातादुःशासनस्तव १५ अधर्मज्ञोनित्यवैरीपापबुद्धिर्नृशंसवत् ॥ सत्यांप्रतिज्ञामचिराद्द्रक्ष्यसेतांसुयोधन १६ अभिमानस्यदर्पस्यक्रोधपारुष्ययोस्तथा ॥ नैष्ठुर्यस्यावलेपस्यआत्मसंभावनस्यच १७ नृशंसतायास्तैक्ष्ण्यस्यधर्मविद्वेषणस्यच ॥ अधर्मस्यातिवादस्यवृद्धातिक्रमणस्यच १८ दर्शनस्यचवक्रस्यकृत्स्नस्यापनयस्यच ॥ द्रक्ष्यसित्वंफलंतीव्रमचिरेणसुयोधन १९ वासुदेवद्वितीयेहिमयिक्रुद्धेनराधम ॥ आशातेजीवितेमूढराज्येवाकेनहेतुना २० शांतेभीष्मेतथाद्रोणेसूतपुत्रेचपातिते ॥ निराशोजीवितेराज्येपुत्रेषुचभविष्यसि २१ भ्रातॄणांनिधनंश्रुत्वापुत्राणांचसुयोधन ॥ भीमसेनेननिहतोदुष्कृतानिस्मरिष्यसि २२ नद्वितीयांप्रतिज्ञांहिप्रतिजानामिकैतव ॥ सत्यंब्रवीम्यहंह्येतत्सर्वंसत्यंभविष्यति २३ युधिष्ठिरोऽपिकैतव्यमुलूकमिदमब्रवीत् ॥ उलूकमद्वचोब्रूहिगत्वाताततसुयोधनम् २४ स्वेनवृत्तेनमेवृत्तंनाधिगंतुंत्वमर्हसि ॥ उभयोरंतरंवेदसूनृतानृतयोरपि २५ नचाहंकामयेपापमपिकीटपिपीलयोः ॥ किंपुनर्ज्ञातिषुवधंकामयेयंकथंचन २६ एतदर्थंमयातातपंचग्रामाहृताःपुरा ॥ कथंतवसुदुर्बुद्धेनप्रेक्ष्येव्यसनंमहत् २७ सत्वंकामपरीतात्मामूढभावाच्चकत्थसे ॥ तथैववासुदेवस्यनगृह्णासिहितंवचः २८

नृशंसतानिर्दयत्वं । तैक्ष्ण्यंतीक्ष्णताविषदानादिबीभत्सकर्मकारित्वं । धर्मविद्वेषणंकपटद्यूतादिना । अधर्मोयथाप्रतिज्ञातराज्याप्रदानं । अतिवादोधर्निष्टेष्वधर्भिष्टत्वारोपोबैडालव्रतिकोसीत्यादिवचनं । वृद्धातिक्रमणंविदुरादीनामवमाननं १८ दर्शनंकर्णादिषुजयनिश्चयः । चक्रंसेनायाआधिक्यं अपनयःअस्माकंदूरीकरणं एतेषांफलंद्रक्ष्यसि १९ । २० । २१ । २२ । २३ । २४ वेदवेद्मि २५ । २६ कथमिति हेसुदुर्बुद्धे तवव्यसनंमरणागमंकथमपिनप्रेक्ष्येइतिहेतोःपंचग्रामाहृताइतिसंबंधः २७ । २८

२९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ यत्त्वइमंक्लेशंश्रुत्वाहृष्टःसन्विकत्थसेतत्ततोहेतोःशोचिष्यसेइतिसंबंधः ४० अश्लाघ्योऽहंनरप तिर्युवयोरितिदुर्योधनवाक्यस्योत्तरंविराटद्रुपदावाहतुरित्याह विराटेति साधोःदासभावंनियच्छेवनितरांयच्छेवप्रार्थयावहे । इषुगमीतिच्छादेशेयमयतेर्विधिलिङिउत्तमस्यद्विवचनं । इति

किंचेदानींबहूक्तेनयुध्यस्वसहबांधवैः ॥ ममविप्रियकर्तारंकैतव्यब्रूहिकौरवम् २९ श्रुतंवाक्यंगृहीतोऽर्थोमतंयत्तेतथाऽस्तुतत् ॥ भीमसेनस्ततोवाक्यंभूयआ हनृपात्मजम् ३० उलूकमद्वचोब्रूहिदुर्मतिंपापपूरुषम् ॥ शठंनैकृतिकंपापंदुराचारंसुयोधनम् ३१ गृध्रोदरेवावस्तव्यंपुरेवानागसाह्वये ॥ प्रतिज्ञातंमयाय च्चसभामध्येनराधम ३२ कर्ताहंतद्वचःसत्यंसत्येनैवशपामिते ॥ दुःशासनस्यरुधिरंहत्वापास्याम्यहंमृधे ३३ सक्थिनीतवभंक्त्वैवहत्वाहितवसोदरान् ॥ सर्वे षांधार्तराष्ट्राणामहंमृत्युःसुयोधन ३४ सर्वेषांराजपुत्राणामभिमन्युरसंशयम् ॥ कर्मणातोषयिष्यामिभूयश्चैववचःशृणु ३५ हत्वासुयोधनत्वांवैसहितंसर्वसोदरैः ॥ आक्रमिष्येपदामूर्ध्निधर्मराजस्यपश्यतः ३६ नकुलस्तुततोवाक्यमिदमाहमहीपते ॥ उलूकब्रूहिकौरव्यंधार्तराष्ट्रंसुयोधनम् ३७ श्रुतंतेगदतोवाक्यंसर्वमेवय थातथम् ॥ तथाकर्ताऽस्मिकौरव्ययथात्वमनुशासिमाम् ३८ सहदेवोऽपिनृपतेइदमाहवचोऽर्थवत् ॥ सुयोधनमतिर्यातेवृथैषातेभविष्यति ३९ शोचिष्यसेमहारा जसपुत्रज्ञातिबांधवः ॥ इमंचक्लेशमस्माकंहृष्टोयत्त्वंविकत्थसे ४० विराटद्रुपदौवृद्धावुलूकमिदमूचतुः ॥ दासभावंनियच्छेवसाधोरितिमतिःसदा ॥ तौचदासाव दासौवापौरुषंयस्ययादृशम् ४१ शिखंडीतुततोवाक्यमुलूकमिदमब्रवीत् ॥ वक्तव्योभवताराजापापेष्वभिरतःसदा ४२ पश्यत्वंमांरणेराजन्कुर्वाणंकर्मदारुणं ॥ यस्यवीर्यंसमासाद्यमन्यसेविजयंयुधि ४३ तमहंपातयिष्यामिरथात्तवपितामहम् ॥ अहंभीष्मवधात्सृष्टोनूनंधात्रामहात्मना ४४ सोऽहंभीष्मंहनिष्यामिमिषतां सर्वधन्विनाम् ॥ धृष्टद्युम्नोऽपिकैतव्यमुलूकमिदमब्रवीत् ४५ सुयोधनोममवचोवक्तव्योनृपतेःसुतः ॥ अहंद्रोणंहनिष्यामिसगणंसहबांधवम् ४६ अवश्यं चमयाकार्यंपूर्वेषांचरितंमहत् ॥ कर्ताचाहंतथाकर्मयथानान्यःकरिष्यति ४७ तमब्रवीद्धर्मराजःकारुण्यार्थंवचोमहत् ॥ नाहंज्ञातिवधंराजन्कामयेयंकथंचन ४८ तवैवदोषाद्दुर्बुद्धेसर्वमेतत्त्वनावृतम् ॥ सगच्छमाचिरंतातउलूकयादिमन्यसे ४९ इहवातिष्ठभद्रंतेवयंहितवबांधवाः ॥ उलूकस्तुततोराजन्धर्मपुत्रंयुधिष्ठिरम् ५० आमंत्र्यप्रययौतत्रयत्रराजासुयोधनः ॥ उलूकस्ततआगम्यदुर्योधनममर्षणम् ५१ अर्जुनस्यसमादेशंयथोक्तंसर्वमब्रवीत् ॥ वासुदेवस्यभीमस्यधर्म राजस्यपौरुषम् ५२ नकुलस्यविराटस्यद्रुपदस्यचभारत ॥ सहदेवस्यचवचोधृष्टद्युम्नशिखंडिनोः ॥ केशवार्जुनयोर्वाक्यंयथोक्तंसर्वमब्रवीत् ५३ कैतव्यस्यतुत द्वाक्यंनिशम्यभरतर्षभः ॥ दुःशासनंचकर्णंचशकुनिंचापिभारत ५४ आज्ञापयतराज्ञश्चबलंमित्रबलंतथा ॥ यथाप्रागुदयात्सर्वेयुक्तास्तिष्ठंत्वनीकिनः ५५



आवयोर्मतिरस्तितौचआवांदासावदासौवेतियस्यतवयादृशंपौरुषंतत्तथैवश्वोद्रक्ष्यावइतिशेषः ४१ । ४२ । ४३ वधात्वधहेतोः ४४ । ४५ । ४६ पूर्वेषांचरितंद्रोणवधेनपितृवैरप्रति यातनं सर्वेषामितिपाठेऽपिसएवार्थः ४७ । अनावृतंविस्पष्टं ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५

१६ । ५७ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपेत्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥ ॥ ७ ॥ ॥ उलूकस्येति १ । २ । ३ । ४ रथिनःराजन्यान्धृष्टद्युम्नःसमुपादिशदि
तिसंबंधः त्वमनेनयुध्यस्वत्वमनेनेत्येवंतत्तद्देशव्यवस्थांचकोरेत्यर्थः ५ । ६ । ७ । ८ । ९ अंशंअकल्पयत्स्वकीयमितिशेषः १० । ११ । १२ ॥ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिनीलकंठीये

ततःकर्णसमादिष्टाद्दूताःसंत्वरितारथैः ॥ उष्ट्रवामीभिरप्यन्येसदश्वैश्चमहाजवैः ५६ तूर्णंपरिययुःसेनांकृत्स्नांकर्णस्यशासनात ॥ आज्ञापयंतोराज्ञश्चयोगःप्रा
गुदयादिति ५७ ॥ इतिश्रीम० उ० उलूकदूतागमनप० उलूकापयानेत्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥ ७ ॥ संजयउवाच ॥ उलूकस्यवचःश्रुत्वा
कुंतीपुत्रोयुधिष्ठिरः ॥ सेनांनिर्यापयामासधृष्टद्युम्नपुरोगमाम् १ पदातिनींनागवतींरथिनीमश्ववृंदिनीम् ॥ चतुर्विधबलांभीमामकंपांपृथिवीमिव २ भीमसे
नादिभिर्गुप्तांसार्जुनैश्चमहारथैः ॥ धृष्टद्युम्नवशांदुर्गांसागरस्तिमितोपमाम् ३ तस्यास्त्वग्रेमहेष्वासःपांचाल्योयुद्धदुर्मदः ॥ द्रोणप्रेप्सुरनीकानिधृष्टद्युम्नोऽप्यक
र्षत ४ यथाबलंयथोत्साहंरथिनःसमुपादिशत ॥ अर्जुनंसूतपुत्रायभीमंदुर्योधनायच ५ धृष्टकेतुंचशल्यायगौतमायोत्तमौजसम् ॥ अश्वत्थाम्नेचनकुलंशैब्यंच
कृतवर्मणे ६ सैंधवायचवार्ष्णेयंयुयुधानंसमादिशत ॥ शिखंडिनंचभीष्मायप्रमुखेसमकल्पयत ७ सहदेवंशकुनयेचेकितानंशलायचै ॥ द्रौपदेयांस्तथापंचात्रि
गर्तेभ्यःसमादिशत ८ वृषसेनायसौभद्रंशेषाणांचमहीक्षिताम् ॥ ससमर्थंहितंमेनेपार्थादभ्यधिकंरणे ९ एवंविभज्ययोधांस्तान्पृथक्चसहचैवह ॥ ज्वालावर्णो
महेष्वासोद्रोणमंशमकल्पयत १० धृष्टद्युम्नोमहेष्वासःसेनापतिपतिस्ततः ॥ विधिवद्व्यूह्यमेधावीयुद्धायधृतमानसः ११ यथोद्दिष्टानिसैन्यानिपांडवानामयो
जयत ॥ जयायपांडुपुत्राणांयत्तस्तस्थौरणाजिरे १२ ॥ इतिश्रीम० उलूकदूतागमनप० सेनापतिनियोगेचतुःषष्ट्यधिकशततमोऽध्याय ॥ १६४ ॥ ७ ॥
॥ समाप्तंचोलूकदूतागमनपर्व ॥ अथरथातिरथसंख्यानपर्व ॥ धृतराष्ट्रउवाच ॥ प्रतिज्ञातेफाल्गुनेनवधेभीष्मस्यसंयुगे ॥ किमकुर्वतमेमंदाःपुत्रादुर्योधनाद
यः १ हतमेवहिपश्यामिगांगेयंपितरंरणे ॥ वासुदेवसहायेनपार्थेनदृढधन्वना २ सचापरिमितप्रज्ञस्तच्छ्रुत्वापार्थभाषितम् ॥ किमुक्तवान्महेष्वासोभीष्मःप्रह
रतांवरः ३ सैनापत्यंचसंप्राप्यकौरवाणांधुरंधरः ॥ किमचेष्टतगांगेयोमहाबुद्धिपराक्रमः ४ ॥ वैशंपायनउवाच ॥ ततस्तत्संजयस्तस्मैसर्वमेवन्यवेदयत ॥
यथोक्तंकुरुवृद्धेनभीष्मेणामिततेजसा ५ ॥ संजयउवाच ॥ सैनापत्यमनुप्राप्यभीष्मःशांतनवोनृप ॥ दुर्योधनमुवाचेदंवचनंहर्षयन्निव ६ नमस्कृत्यकुमाराय
सेनान्येशक्तिपाणये ॥ अहंसेनापतिस्तेऽद्यभविष्यामिनसंशयः ७ सेनाकर्मण्यभिज्ञोऽस्मिव्यूहेषुविविधेषुच ॥ कर्मकारयितुंचैवभृतानप्यभृतांस्तथा ८ या
त्रायानेचयुद्धेचतथाप्रशमनेषुच ॥ भृशंवेदमहाराजयथावेदबृहस्पतिः ९ व्यूहानांचसमारंभान्दैवगांधर्वमानुषान् ॥ तैरहंमोहयिष्यामिपांडवान्व्येतुतेज्वरः १०

भारतभावदीपेचतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥ ॥ ७ ॥ ॥ प्रतिज्ञातेइति १ । २ । ३ । ४ । ५ । ६ । ७ भृतान्वेतनभक्षकान् अभृतान्मङ्वासमागतान् ८
यात्रार्थंयानेप्रयाणेयुद्धेप्रशमनेषुपरास्त्राणांप्रतीकारेषुविषयेषुवेदवेद्मि वेदवेत्ति ९ । १०

तत्त्वेनअकापट्येन ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ रथोदारःरथेष्वेवउदारोनतुमहारथस्तादृशाएवदुःशासनादयइतिभावः १९ । २० । २१ । २२ । २३

सोऽहंयोत्स्यामितत्त्वेनपालयंस्तववाहिनीम् ॥ यथावच्छास्त्रतोराजन्व्येतुतेमानसोज्वरः ११ ॥ दुर्योधनउवाच ॥ विद्यतेमेनगांगेयभयंदेवासुरेष्वपि ॥ समस्तेषुमहाबाहोसत्यमेतद्ब्रवीमिते १२ किंपुनस्त्वयिदुर्धर्षेसैनापत्येऽव्यवस्थिते ॥ द्रोणेचपुरुषव्याघ्रेस्थितेयुद्धाभिनंदिनि १३ भवद्भ्यांपुरुषाग्र्याभ्यांस्थिताभ्यांविजयोमम ॥ नदुर्लभंकुरुश्रेष्ठदेवराज्यमपिध्रुवम् १४ रथसंख्यांतुकात्स्न्येंनपरेषामात्मनस्तथा ॥ तथैवातिरथानांचवेत्तुमिच्छामिकौरव १५ पितामहोहिकुशलःपरेषामात्मनस्तथा ॥ श्रोतुमिच्छाम्यहंसर्वैःसहैभिर्वसुधाधिपैः १६ ॥ भीष्मउवाच ॥ गांधारेशृणुराजेंद्ररथसंख्यांस्वकेबले ॥ येरथाःपृथिवीपालतथैवातिरथाश्चये १७ बहूनीहसहस्राणिप्रयुतान्यर्बुदानिच ॥ रथानांतवसेनायांयथामुख्यंतुमेशृणु १८ भवानग्रेरथोदारःसहसर्वैःसहोदरैः ॥ दुःशासनप्रभृतिभिर्भ्रातृभिःशतसंमितैः १९ सर्वेकृतप्रहरणाश्छेदभेदविशारदः ॥ रथोपस्थेगजस्कंधेगदाप्रासासिचमणि २० संयंतारःप्रहर्तारःकृतास्त्राभारसाधनाः ॥ इष्वस्त्रेद्रोणशिष्याश्चकृपस्यचशरद्वतः २१ एतेहनिष्यंतिरणेपंचालान्युद्धदुर्मदान् ॥ कृतकिल्बिषाःपांडवेयैर्धार्तराष्ट्रामनास्विनः २२ तथाऽहंभरतश्रेष्ठसर्वसेनापतिस्तव ॥ शत्रून्विध्वंसयिष्यामिकदर्थीकृत्यपांडवान् २३ नत्वात्मनोगुणान्वक्तुमर्हामिविदितोऽस्मिते ॥ कृतवर्मात्वतिरथोभोजःशस्त्रभृतांवरः २४ अर्थसिद्धिंतवरणेकरिष्यतिनसंशयः ॥ शस्त्रविद्भिरनाधृष्योदूरपातीदृढायुधः २५ हनिष्यतिचमूंतेषांमहेंद्रोदानवानिव ॥ मद्रराजोमहेष्वासःशल्योमेऽतिरथोमतः २६ स्पर्धतेवासुदेवेननित्यंयोवैरणेरणे ॥ भागिनेयान्निजांस्त्यक्त्वाशल्यस्तेऽतिरथोमतः ॥ एषयोत्स्यतिसंग्रामेपांडवांश्चमहारथान् २७ सागरोर्मिसमैर्बाणैःप्लावयन्निवशात्रवान् ॥ भूरिश्रवाःकृतास्त्रश्चतवचापिहितःसुहृत् २८ सौमदत्तिर्महेष्वासोरथयूथपयूथपः ॥ बलक्षयममित्राणांसुमहांतंकरिष्यति २९ सिंधुराजोमहाराजमतोमेद्विगुणोरथः ॥ योत्स्यतेसमरेराजन्विक्रांतोरथसत्तमः ३० द्रौपदीहरणेराजन्परिक्लिष्टश्चपांडवैः ॥ संस्मरंस्तंपरिक्लेशंयोत्स्यतेपरवीरहा ३१ एतेनहितदाराजंस्तपआस्थायदारुणम् ॥ सुदुर्लभोवरोलब्धःपांडवान्योद्धुमाहवे ३२ सएषरथशार्दूलस्तद्वैरंसंस्मरन्रणे ॥ योत्स्यतेपांडवैस्तातप्राणांस्त्यक्त्वासुदुस्त्यजान् ३३ ॥ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिरथातिरथसंख्यानपर्वणि पंचषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥ ॥ ७ ॥ ॥

॥ भीष्मउवाच ॥ सुदक्षिणस्तुकांबोजोरथएकगुणोमतः ॥ तवार्थसिद्धिमाकांक्षन्योत्स्यतेसमरेपरैः १ एतस्यरथसिंहस्यतवार्थेराजसत्तम ॥ पराक्रमंयथेंद्रस्यद्रक्ष्यंतिकुरवोयुधि २ एतस्यरथवंशोहितिग्मवेगप्रहारिणः ॥ कांबोजानांमहाराजशलभानामिवायतिः ३

नत्वात्मनइतिस्वस्यासंख्येयत्वंसूचितं २४ । २५ । २६ । २७ । २८ रथयूथपामहारथाःतेषांयूथपोऽतिरथः २९ सिंधुराजोजयद्रथोद्विरथः ३० । ३१ । ३२ । ३३ ॥ ॥ इतिउ० प० नी० भा० भा० पंचषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥ ॥ सुदक्षिणइति १ । २ ३

रथवंशे नरथसंघेनसहितइतिशेषः । 'वंशः पुंसिकुलेवेणौपृष्ठावयववर्गयोः' इतिमेदिनी ४ । ५ । ६ । ७ । ८ । ९ समुद्धततरंगिणींउच्छ्रितपताकांसेनां उच्छ्रिततरंगवतींगंगांच १० सत्यरथोनाम

नीलोमाहिष्मतीवासीनीलवर्मारथस्तव ॥ रथवंशेनकदनंशत्रूणांवैकरिष्यति ४ कृतवैरःपुराचैवसहदेवेनमारिष ॥ योत्स्यतेसततंराजंस्तवार्थेकुरुनंदन ५ विंदानुविंदावावंत्यौसंमतौरथसत्तमौ ॥ कृतिनौसमरेतातदृढवीर्यपराक्रमौ ६ एतौतौपुरुषव्याघ्रौरिपुसैन्यंप्रधक्ष्यतः ॥ गदाप्रासासिनाराचैस्तोमरैश्चकरच्युतैः ७ युद्धाभिकामौसमरेक्रीडंताविवयूथपौ ॥ यूथमध्येमहाराजविचरंतौकृतांतवत् ८ त्रिगर्त्ताभ्रातरःपंचरथोदारामतामम ॥ कृतवैराश्चपार्थैस्तेविराटनगरेतदा ९ मकराइवराजेंद्रसमुद्धततरंगिणीम् ॥ गंगांविक्षोभयिष्यंतिपार्थानांयुधिवाहिनीम् १० तेरथाःपंचराजेंद्रयेषांसत्यरथोमुखम् ॥ एतेयोस्त्यंतिसंग्रामेसंस्मरंतःपुराकृतम् ११ व्यलीकंपांडवेयेनभीमसेनानुजेनह ॥ दिशोविजयताराजन्श्वेतवाहेनभारत १२ तेहनिष्यंतिपार्थानांतानासाद्यमहारथान् ॥ वरान्वरान्महेष्वासान्क्षत्रियाणांधुरंधरान् १३ लक्ष्मणस्तवपुत्रश्चतथादुःशासनस्यच ॥ उभौतौपुरुषव्याघ्रौसंग्रामेष्वपलायिनौ १४ तरुणौसुकुमारौचराजपुत्रौतरस्विनौ ॥ युद्धानांचविशेषज्ञौप्रणेतारौचसर्वशः १५ रथौतौकुरुशार्दूलमतौमेरथसत्तमौ ॥ क्षत्रधर्मरतौवीरौमहत्कर्मकरिष्यतः १६ दंडधारोमहाराजरथएकोनरर्षभ ॥ योत्स्यतेतवसंग्रामेस्वेनसैन्येनपालितः १७ बृहद्बलस्तथाराजाकौसल्योरथसत्तमः ॥ रथोममतस्तातमहावेगपराक्रमः १८ एषयोत्स्यतिसंग्रामेस्वान्बंधून्संप्रहर्षयन् ॥ उग्रायुधोमहेष्वासोधार्तराष्ट्रहितेरतः १९ कृपःशारद्वतोराजन्रथयूथपयूथपः ॥ प्रियान्प्राणान्परित्यज्यप्रधक्ष्यतिरिपूंस्तव २० गौतमस्यमहर्षेर्यआचार्यस्यशरद्वतः ॥ कार्तिकेयइवाजेयःशरस्तंबात्सुतोऽभवत् २१ एषसेनाःसुबहुलाविविधायुधकार्मुकाः ॥ आग्निवत्समरेतातचरिष्यतिविनिर्दहन् २२ ॥ इतिश्रीमहाभारतेउद्योगपर्वणि रथातिरथसंख्यानपर्वणि षट्षष्टचधिकशततमोऽध्यायः ॥ १६६ ॥ भीष्मउवाच ॥ शकुनिर्मातुलस्तेऽसौरथएकोनराधिप ॥ प्रयुज्यपांडवैर्वैरंयोत्स्यतेनात्रसंशयः १ एतस्यसेनादुर्धर्षासमरेप्रतियायिनः ॥ विकृतायुधभूयिष्ठावायुवेगसमाजवे २ द्रोणपुत्रोमहेष्वासःसर्वानेवातिधन्विनः ॥ समरेचित्रयोधीचदृढास्त्रश्चमहारथः ३ एतस्यहिमहाराजयथागांडीवधन्वनः ॥ शरासनविनिर्मुक्ताःसंसक्तायांतिसायकाः ४ नैषशक्योमयावीरःसंख्यातुंरथसत्तमः ॥ निर्दहेदपिलोकांस्त्रीनिच्छन्नेषमहारथः ५ क्रोधस्तेजश्चतपसासंभृतोऽश्रमवासिनाम् ॥ द्रोणेनानुगृहीतश्चदिव्यैरस्त्रैरुदारधीः ६ दोषस्त्वस्यमहानेकोयेनैवभरतर्षभ ॥ नमेरथोनातिरथोमतःपार्थिवसत्तम ७ जीवितंप्रियमत्यर्थमायुष्कामःसदाद्विजः ॥ नह्यस्यसदृशःकश्चिदुभयोःसेनयोरपि ८

पंचानांमुखंश्रेष्ठः ११ व्यलीकंअप्रियं १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ ॥ इतिश्रीउद्योगपर्वणिनीलकंठीये भारतभावदीपेषट्षष्टचधिकशततमोऽध्यायः ॥ १६६ ॥ शकुनिरिति १ विकृतानिनानाविधानिआयुधानितैर्भूयिष्ठा २ । ३ । ४ । ५ आश्रमवासिनामृषीणांक्रोधस्तेजश्चतयोःसमुदायरूपइत्यर्थः आश्रमेत्याकारस्यपूर्वरूपमार्षं ६ । ७ । ८

९ । १० पृष्ठंशेवं ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० सत्यश्रवाःसत्यकीर्त्तिः २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० उत्स्मयन्नुद्धृष्यन्

हन्यादेकरथेनैवदेवानामपिवाहिनीम् ॥ वपुष्मांस्तलघोषेणस्फोटयेदपिपर्वतान् ९ असंख्येयगुणोवीरःप्रहंतादारुणद्युतिः ॥ दंडपाणिरिवासह्यःकालवत्प्रच रिष्यति १० युगांताग्निसमःक्रोधात्सिंहग्रीवोमहाद्युतिः ॥ एषभारतयुद्धस्यपृष्ठंसंशमयिष्यति ११ पितात्वस्यमहातेजावृद्धोऽपियुवभिर्वरः ॥ रणेकर्ममहत्क र्ताअत्रमेनास्तिसंशयः १२ अस्त्रवेगानिलोद्भूतःसेनाकक्षेंधनोत्थितः ॥ पांडुपुत्रस्यसैन्यानिप्रधक्ष्यतिरणेधृतः १३ रथयूथपयूथानांयूथपोऽयंनरर्ष भः ॥ भारद्वाजात्मजःकर्ताकर्मतीव्रंहितंतव १४ सर्वमूर्धाभिषिक्तानामाचार्यःस्थविरोगुरुः ॥ गच्छेदंतंसृंजयानांप्रियस्त्वस्यधनंजयः १५ नैषजातुमहेष्वासः पार्थमाक्लिष्टकारिणम् ॥ हन्यादाचार्यकंदीप्तंसंस्मृत्यगुणनिर्जितम् १६ श्लाघतेऽयंसदावीरपार्थस्यगुणविस्तरैः ॥ पुत्रादभ्याधिकंचैनंभारद्वाजोऽनुपश्यति १७ हन्यादेकरथेनैवदेवगंधर्वमानुषान् ॥ एकीभूतानपिरणेदिव्यैरस्त्रैःप्रतापवान् १८ पौरवोराजशार्दूलस्तवराजन्महारथः ॥ मतोममरथोदारःपरवीररथा रुजः १९ स्वेनसैन्येनमहताप्रतपन्शत्रुवाहिनीम् ॥ प्रधक्ष्यतिसपंचालान्कक्षमग्निगतिर्यथा २० सत्यश्रवारथस्त्वेकोराजपुत्रोबृहद्बलः ॥ तवराजन्रिपुबले कालवत्प्रचरिष्यति २१ एतस्ययोधाराजेंद्रविचित्रकवचायुधाः ॥ विचरिष्यंतिसंग्रामेनिघ्नंतःशात्रवांस्तव २२ वृषसेनोरथस्तेऽग्र्यःकर्णपुत्रोमहारथः ॥ प्रधक्ष्यतिरिपूणांतेबलंतुबलिनांवरः २३ जलसंधोमहातेजाराजन्रथवरस्तव ॥ त्यक्ष्यतेसमरेप्राणान्माधवःपरवीरहा २४ एषयोत्स्यतिसंग्रामेगजस्कंधविशार दः ॥ रथेनवामहाबाहुःक्षपयन्शत्रुवाहिनीम् २५ रथएषमहाराजमतोमेराजसत्तम ॥ त्वदर्थेत्यक्ष्यतेप्राणान्सहसैन्योमहारणे २६ एषविक्रांतयोधीचचित्रयो धीचसंगरे ॥ वीतभीश्चापितेराजन्शत्रुभिःसहयोत्स्यते २७ बाह्लीकोऽतिरथश्चैवसमरेचानिवर्तनः ॥ ममराजन्मतोयुद्धेशूरोवैवस्वतोपमः २८ नह्येषसमरं प्राप्यनिवर्त्तेतकथंचन ॥ यथासततगोराजन्सहिहन्यात्परान्रणे २९ सेनापतिर्महाराजसत्यवांस्तेमहारथः ॥ रणेष्वद्भुतकर्माचरथीपररथारुजः ३० एत स्यसमरंदृष्ट्वानव्यथाऽस्तिकथंचन ॥ उत्स्मयन्नुत्पतत्येषपरान्रथपथेस्थितान् ३१ एषचारिषुविक्रांतःकर्मसत्पुरुषोचितम् ॥ कर्त्ताविमर्देसुमहत्त्वदर्थेपुरु षोत्तमः ३२ अलंबुषोराक्षसेंद्रःक्रूरकर्मामहारथः ॥ हनिष्यतिपरान्राजन्पूर्ववैरमनुस्मरन् ३३ एषराक्षससैन्यानांसर्वेषांरथसत्तमः ॥ मायावीदृढवैरश्चसमरे विचरिष्यति ३४ प्राग्ज्योतिषाधिपोवीरोभगदत्तःप्रतापवान् ॥ गजांकुशधरश्रेष्ठोरथेचैवविशारदः ३५ एतेनयुद्धमभवत्पुरागांडीवधन्वनः ॥ दिवसान्सु बहून्राजन्नुभयोर्जयगृद्धिनोः ३६ ततःसखायंगांधारेमानयन्पाकशासनम् ॥ अकरोत्संविदंतेनपांडवेनमहात्मना ३७

३१ । ३२ । ३३ । ३४ गजांकुशधरेषुगजयुद्धकुशलेषुश्रेष्ठः सप्तमीशौंडैरितिसमासः ३५ । ३६ संविदंमैत्रीम् ३७

३८ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥ ॥ ७ ॥ अचलइति १ । २ । ३ । ४ विचेतनःमूर्खः ५ घृणीनिंदकः ६ कानीनांसहजकवचादीनां ७ । ८ प्रमादीस्वीयंकल्पनावाक्यंविस्मरतिच ९ । १० । ११ । १२ भवान्कर्णोऽर्धरथोमह्यंममतइति गांगेयोवदेतन्नमृषेतिसर्वस्यजगतोमतइतिसंबंधः



एषयोत्स्यतिसंग्रामेगजस्कंधविशारदः ॥ ऐरावतगतोराजादेवानामिववासवः ३८ ॥ इतिश्रीम०भा०उ०प०रथातिरथसंख्यानप०सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥ ॥ ७ ॥ ॥ भीष्मउवाच ॥ अचलोवृषकश्चैवसहितौभ्रातरावुभौ ॥ रथौतवदुराधर्षौशत्रून्विध्वंसयिष्यतः १ बलवंतौनरव्याघ्रौदृढक्रोधौप्रहारिणौ ॥ गांधारमुख्यौतरुणौदर्शनीयौमहाबलौ २ सखातेदयितोनित्यंयएषरणकर्कशः ॥ उत्साहयतिराजंस्त्वांविग्रहेपांडवैःसह ३ परुषःकत्थनोनीचःकर्णोवैकर्तनस्तव ॥ मंत्रीनेताचबंधुश्चमानीचात्यंतमुच्छ्रितः ४ एषनैवरथःकर्णोनचाप्यतिरथोरणे ॥ वियुक्तःकवचेनैषसहजेनविचेतनः ५ कुंडलाभ्यांचदिव्याभ्यांवियुक्तःसततंघृणी ॥ अभिशापाच्चरामस्यब्राह्मणस्यचभाषणात् ६ करणानांवियोगाच्चतेनमेऽर्धरथोमतः ॥ नैषफाल्गुनमासाद्यपुनर्जीवन्विमोक्ष्यते ७ ततोऽब्रवीत्पुनर्द्रोणःसर्वशस्त्रभृतांवरः ॥ एवमेतद्यथाऽऽत्थत्वंनमिथ्यास्तिकदाचन ८ रणेरणेऽभिमानीचविमुखश्चापिदृश्यते ॥ घृणीकर्णःप्रमादीचतेनमेऽर्धरथोमतः ९ एतच्छ्रुत्वातुराधेयःक्रोधादुत्फाल्यलोचने ॥ उवाचभीष्मंराधेयस्तुदन्वाग्भिःप्रतोदवत् १० पितामहयथेष्टंमांवाक्शरैरुपकृंतसि ॥ अनागसंसदाद्वेषादेवमेवपदेपदे ११ मर्षयामिचतत्सर्वंदुर्योधनकृतेनवै ॥ त्वंतुमांमन्यसेमंदंयथाकापुरुषंतथा १२ भवानर्धरथोमह्यंमतोवैनात्रसंशयः ॥ सर्वस्यजगतश्चैवगांगेयोनमृषावदेत् १३ कुरूणामहितोनित्यंनचराजाऽवबुध्यते ॥ कोहिनामसमानेषुराजसूदारकर्मसु १४ तेजोवधमिमंकुर्याद्विभेदयिषुराहवे ॥ यथात्वंगुणविद्वेषादपरागंचिकीर्षसि १५ नहायनैर्नपलितैर्नवित्तैर्नचबंधुभिः ॥ महारथत्वंसंख्यातुंशक्यंक्षत्रस्यकौरव १६ बलज्येष्ठंस्मृतंक्षत्रंमंत्रज्येष्ठाद्विजातयः ॥ धनज्येष्ठाःस्मृतावैश्याःशूद्रास्तुवयसाधिकाः १७ यथेच्छकंस्वयंब्रूयारथानतिरथांस्तथा ॥ कामद्वेषसमायुक्तोमोहात्प्रकुरुतेभवान् १८ दुर्योधनमहाबाहोसाधुसम्यगवेक्ष्यताम् ॥ त्यज्यतांदुष्टभावोऽयंभीष्मःकिल्बिषकृत्तव १९ भिन्नाहिसेनानृपतेदुःसंधेयाभवत्युत ॥ मौलाहिपुरुषव्याघ्रकिमुनानासमुत्थिताः २० एषांद्वैधंसमुत्पन्नंयोधानांयुधिभारत ॥ तेजोवधोनःक्रियतेप्रत्यक्षेणविशेषतः २१ रथानांक्वचविज्ञानंक्वचभीष्मोऽल्पचेतनः ॥ अहमावारयिष्यामिपांडवानामनीकिनीं २२ आसाद्यमाममोघेषुंगमिष्यंतिदिशोदश ॥ पांडवाःसहपंचालाःशार्दूलंवृषभाइव २३

त्वद्वाक्यात्सर्वेऽपिमामवमंस्यंतइतिभावः १३ । १४ विभेदयिषुर्भेदंकर्तुमिच्छुः अपरागंद्वेषं १५ । १६ । १७ प्रकुरुतेप्रकारंभेदंकुरुते । 'प्रकारस्तुल्यभेदयोः'इतिविश्वः १८ । १९ मौलाःपारंपर्यागताः तेऽपिभिन्नाःसंतोदुःसंधेयाभवंति किमुनानापृथक्भूताःसंतएककार्यार्थंसमुत्थिताइति २० । २१ । २२ । २३

क्वचेति युद्धेवृद्धोमंत्रेषुमूर्खश्चअशक्तत्वान्नष्टबुद्धित्वाच्चायोग्यइतिभावः २४ । २५ येऽतिवृद्धास्तेपुनर्बालाएवमममतास्त्वादृशश्चायंभीष्मइत्यर्थः २६ । २७ त्वयिहंतारि कुतोभीष्मंयशोगमिष्यतीत्या
शंकयाहकृतइति २८ । २९ । ३० । ३१ नहिछिंद्यामित्यन्वयः भेदभयादेवाहंत्वद्वधंनकुर्यामित्यर्थः आशंकायांलकारः ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ रथा

क्वचयुद्धंविमर्दोवामंत्रेसुव्याहृतानिच ॥ क्वचभीष्मोगतवयामंदात्माकालचोदितः २४ एकाकीस्पर्धतेनित्यंसर्वेणजगतासह ॥ नचान्यंपुरुषंकंचिन्मन्यतेमो
घदर्शनः २५ श्रोतव्यंखलुवृद्धानामितिशास्त्रनिदर्शनम् ॥ नत्वेवह्यतिवृद्धानांपुनर्बालाहितेमताः २६ अहमेकोहनिष्यामिपांडवानामनीकिनीम् ॥ सुयुद्धे
राजशार्दूलयशोभीष्मंगमिष्यति २७ कृतःसेनापतिस्त्वेषत्वयाभीष्मोनराधिप ॥ सेनापतौयशोगंतानतुयोधान्कथंचन २८ नाहंजीवतिगांगेयेयोत्स्येराज
न्कथंचन ॥ हतेभीष्मेतुयोद्धास्मिसर्वैरेवमहारथैः २९ ॥ भीष्मउवाच ॥ समुद्यतोऽयंभारोमेसुमहान्सागरोपमः ॥ धार्तराष्ट्रस्यसंग्रामेवर्षपूगाभिचिंतितः ३०
तस्मिन्नभ्यागतेकालेप्रतप्तेलोमहर्षणे ॥ मिथोभेदोनमेकार्यस्तेनजीवसिसूतज ३१ नह्यहंत्वद्यविक्रम्यस्थविरोऽपिशिशोस्तव ॥ युद्धश्रद्धामहंछिंद्यांजीवित
स्यचसूतज ३२ जामदग्न्येनरामेणमहास्त्राणिविमुंचता ॥ नमेव्यथाकृताकाचित्त्वंतुमेकिंकरिष्यसि ३३ कामंनैतत्प्रशंसंतिसंतःस्वबलसंस्तवम् ॥ वक्ष्यामितुत्वां
संतप्तोनिहीनकुलपांसन ३४ समेतंपार्थिवंक्षत्रंकाशिराजस्वयंवरे ॥ निर्जित्यैकरथेनैवयाःकन्यास्तरसाहृताः ३५ ईदृशानांसहस्राणिविशिष्टानामथोपुनः ॥
मयैकेननिरस्तानिससैन्यानिरणाजिरे ३६ त्वांप्राप्यवैरपुरुषंकुरूणामनयोमहान् ॥ उपस्थितोविनाशायतत्स्वपुरुषोभव ३७ युध्यस्वसमरेपार्थेनविस्पर्ध
सेसह ॥ द्रक्ष्यामित्वांविनिर्मुक्तमस्माद्युद्धात्सुदुर्मते ३८ तमुवाचततोराजाधार्तराष्ट्रःप्रतापवान् ॥ मांसमीक्षस्वगांगेयकार्यंहिमहदुद्यतम् ३९ चिंत्यतामिदमे
कार्यमनिःश्रेयसंपरम् ॥ उभावपिभवंतौमेमहत्कर्मकरिष्यतः ४० भूयश्चश्रोतुमिच्छामिपरेषांरथसत्तमान् ॥ येचैवातिरथास्तत्रयेचैवरथयूथपाः ४१ बला
बलममित्राणांश्रोतुमिच्छामिकौरव ॥ प्रभातायांरजन्यांवैइदंयुद्धंभविष्यति ४२ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिरथातिरथसंख्यानपर्वणिभीष्मकर्णसंवादेअष्ट
षष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥ ॥ छ ॥ भीष्मउवाच ॥ एतेरथास्तवाख्यातास्तथैवातिरथान्नृप ॥ येचाप्यर्द्धरथाराजन्पांडवानामतःशृणु १ य
दिकौतूहलंतेऽद्यपांडवानांबलेनृप ॥ रथसंख्यांशृणुष्वत्वंसहैभिर्वसुधाधिपैः २ स्वयंराजारथोदारःपांडवःकुंतिनंदनः ॥ अग्निवत्समरेतातचरिष्यतिनसंशयः ३
भीमसेनस्तुराजेंद्ररथोऽष्टगुणसंमितः ॥ नतस्यास्तिसमोयुद्धेगदयासायकैरपि ४ नागायुतबलोमानीतेजसानसमानुषः ॥ माद्रीपुत्रौचरथिनौद्वावेवपुरुषर्ष
भौ ५ अश्विनाविवरूपेणतेजसाचसमन्वितौ ॥ एतेचमूमुखगताःस्मरंतःक्लेशमुत्तमम् ६

दिसंख्यातात्पर्यंतु भीष्मद्रोणौसमर्थावपिपांडवान्नहनिष्यतः कर्णोपिकुंतीवरदानात्भीमादीन्हंतुंशक्तोपिनहनिष्यति अर्जुनस्त्वनेनदुर्जेयएवेतिपांडवानामेवजयइति ४२ ॥ इतिउद्योगपर्वणिनी
लकंठीयेभारतभावदीपे अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥ ॥ छ ॥ एतेइति १ । २ । ३ । ४ । ५ । ६

७ । ८ । ९ । १० । ११ उद्यतांउद्गच्छतांक्षिपतामितियावत् उद्यंतुमितिपाठांतरं भोज्येकौटिल्येमर्मपीडनेइतियावत् भुजकौटिल्येऽस्यरूपं । पांसुविकर्षणेपांसुषुविकर्षणेभूमौमुष्टियुद्धे

रुद्रवत्प्रचरिष्यंतितत्रमेनास्तिसंशयः ॥ सर्वएवमहात्मानःशालस्तंभाइवोद्गताः ७ प्रादेशेनाधिकाःपुंभिरन्यैस्तेचप्रमाणतः ॥ सिंहसंहननाःसर्वेपांडुपुत्रामहाबलाः ८ चरितब्रह्मचर्याश्चसर्वेतातततपस्विनः ॥ ह्रीमंतःपुरुषव्याघ्राव्याघ्राइवबलोत्कटाः ९ जवेप्रहारेसंमर्देसर्वएवातिमानुषाः ॥ सर्वैर्जितामहीपालादिग्जयेभरतर्षभ १० नचैषांपुरुषाःकेचिदायुधानिगदाःशरान् ॥ विषहंतिसदाकर्तुमधिज्यान्यपिकौरव ११ उद्यंतांवागदागुर्वीःशरान्वाक्षेप्तुमाहवे ॥ जवेलक्ष्यस्यहरणेभोज्येपांसुविकर्षणे १२ बालैरपिभवंतस्तैःसर्वएवविशेषिताः ॥ एतत्सैन्यंसमासाद्यसर्वएवबलोत्कटाः १३ विध्वंसयिष्यंतिरणेमास्मतैःसहसंगमः ॥ एकैकशस्तेसंमर्देहन्युःसर्वान्महीक्षितः १४ प्रत्यक्षंतवराजेंद्रराजसूयेयथाऽभवत् ॥ द्रौपद्याश्चपरिक्लेशंद्यूतेचपरुषागिरः १५ तेस्मरंतश्चसंग्रामेचरिष्यंतिचरुद्रवत् ॥ लोहिताक्षोगुडाकेशोनारायणसहायवान् १६ उभयोःसेनयोर्वीरोरथोनास्तीतितादृशः ॥ नहिदेवेषुवापूर्वंमनुष्येषूरगेषुच १७ राक्षसेष्वथयक्षेषुनरेषुकुतएवतु ॥ भूतोऽथवाभविष्योवारथःकश्चिन्मयाश्रुतः १८ समायुक्तोमहाराजरथःपार्थस्यधीमतः ॥ वासुदेवश्चसंयंतायोद्धाचैवधनंजयः १९ गांडीवंचधनुर्दिव्यंतेचाश्वावातरंहसः ॥ अभेद्यंकवचंदिव्यमक्षय्यौचमहेषुधी २० अस्त्रग्रामश्चमाहेंद्रोरौद्रःकौबेरएवच ॥ याम्यश्चवारुणश्चैवगदाश्चोग्रप्रदर्शनाः २१ वज्रादीनिचमुख्यानिनानाप्रहरणानिच ॥ दानवानांसहस्राणिहिरण्यपुरवासिनाम् २२ हतान्येकरथेनाजौकस्तस्यसदृशोरथः ॥ एषहन्याद्धिसंरंभीबलवान्सत्यविक्रमः ॥ २३ तवसेनांमहाबाहुःस्वांचैवपरिपालयन् ॥ अहंचैनंप्रत्युदियामाचार्योवाधनंजयम् २४ नतृतीयोऽस्तिराजेंद्रसेनयोरुभयोरपि ॥ यएनंशरवर्षाणिवर्षंतमुदियाद्रथी ॥ २५ जीमूतइवघर्मांतेमहावातसमीरितः ॥ समायुक्तस्तुकौंतेयोवासुदेवसहायवान् ॥ तरुणश्चकृतीचैवजीर्णावावामुभावपि २६ वैशंपायनउवाच ॥ एतच्छ्रुत्वातुभीष्मस्यराज्ञांदध्वंसिरेतदा ॥ कांचनांगदिनःपीनाभुजाश्चंदनरूषिताः २७ मनोभिःसहसंवेगैःसंस्मृत्यचपुरातनम् ॥ सामर्थ्यंपांडवेयानांयथाप्रत्यक्षदर्शनात् २८ ॥ इतिश्रीमहाभारतेउ० रथातिरथसंख्यानप० पांडवरथातिरथसंख्यायामूनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥ भीष्मउवाच ॥ द्रौपदेयामहाराजसर्वेपंचमहारथाः ॥ वैराटिरुत्तरश्चैवरथोदारोमतोमम १ अभिमन्युर्महाबाहूरथयूथपयूथपः ॥ समःपार्थेनसमरेवासुदेवेनचारिहा २ लघ्वस्त्रश्चित्रयोधीचमनस्वीचदृढव्रतः ॥ संस्मरन्वैपरिक्लेशंस्वपितुर्विक्रमिष्यति ३ सात्यकिर्माधवःशूरोरथयूथपयूथपः ॥ एषवृष्णिप्रवीराणाममर्षीजितसाध्वसः ४ उत्तमौजास्तथाराजन्रथोदारोमतोमम ॥ युधामन्युश्चविक्रांतोरथोदारोमतोमम ५

इत्यर्थः १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ प्रत्युदियांयुद्धेसंमुखःस्यां २४ । २५ । २६ दध्वंसिरेविगलिताः २७ । २८ ॥ इतिश्रीउद्योगपर्वणिनीलकंठीये भारतभावदीपे ऊनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥ ॥ ७ ॥ द्रौपदेयाइति १ । २ । ३ । ४ । ५

६ । ७ । ८ वीरगतेवीरैरनुसृते ९ सितौबद्धौ १० । ११ एकायनगतौमरणैकशरणौ घट्टितारौघट्टनंसंघट्टंकरिष्यतः १२ । १३ त्यक्तात्मानौत्यक्तदेहौ १४ ॥ इतिउद्योगपर्वणिनीलकंठीये

एतेषांबहुसाहस्रारथानागाहयास्तथा ॥ योत्स्यंतेतेतनूं स्त्यक्त्वाकुंतीपुत्रप्रियेप्सया ६ पांडवैःसहराजेंद्रतवसेनासुभारत ॥ अग्निमारुतवद्राजन्नाह्वयंतःपरस्प
रम् ७ अजेयौसमरेवृद्धौविराटद्रुपदौतथा ॥ महारथौमहावीर्यौमतौमेपुरुषर्षभौ ८ वयोवृद्धावपिहितौक्षत्रधर्मपरायणौ ॥ यतिष्येतेपरंशक्त्यास्थितौवी
रगतेपथि ९ संबंधकेनराजेंद्रतौतुवीर्यबलान्वयात ॥ आर्यवृत्तौमहेष्वासौस्नेहवीर्यसितावुभौ १० कारणंप्राप्यतुनराःसर्वएवमहाभुजाः ॥ शूरावाकातरावाऽपि
भवंतिकुरुपुंगव ११ एकायनगतावेतौपार्थिवौदृढधन्विनौ ॥ प्राणांस्त्यक्त्वापरंशक्त्याघट्टितारौपरंतप १२ पृथगक्षौहिणिभ्यांतावुभौसंयतिदारुणौ ॥ संबं
धिभावंरक्षंतौमहत्कर्मकरिष्यतः १३ लोकवीरौमहेष्वासौत्यक्तात्मानौचभारत ॥ प्रत्ययंपरिरक्षंतौमहत्कर्मकरिष्यतः १४ ॥ इतिश्रीमहाभा०उ०रथातिरथसं
ख्यानपर्वणिसप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥ भीष्मउवाच ॥ पंचालराजस्यसुतोराजन्परपुरंजयः ॥ शिखंडीरथमुख्योमेमतःपार्थस्यभारत १ एष
योत्स्यतिसंग्रामेनाशयन्पूर्वसंस्थितम् ॥ परंयशोविप्रथयंस्तवसेनासुभारत २ एतस्यबहुलाःसेनाःपंचालाश्चप्रभद्रकाः ॥ तेनासौरथवंशेनमहत्कर्मकरिष्यति ३
धृष्टद्युम्नश्चसेनानीःसर्वसेनासुभारत ॥ मतोमेऽतिरथोराजन्द्रोणशिष्योमहारथः ४ एषयोत्स्यतिसंग्रामे सूदयन्वैपरान्रणे ॥ भगवानिवसंक्रुद्धःपिनाकीयुगसंक्षये
५ एतस्यतद्रथानीकंकथयंतिरणप्रियाः ॥ बहुत्वात्सागरप्रख्यंदेवानामिवसंयुगे ६ क्षत्रधर्मातुराजेंद्रमतोमेऽर्धरथोनृप ॥ धृष्टद्युम्नस्यतनयोबाल्यान्नातिकृतश्रमः
७ शिशुपालसुतोवीरश्चेदिराजोमहारथः ॥ धृष्टकेतुर्महेष्वासःसंबंधीपांडवस्यह ८ एषचेदिपतिःशूरःसहपुत्रेणभारत ॥ महारथानांसुकरंमहत्कर्मकरिष्यति ९
क्षत्रधर्मरतोमह्यंमतःपरपुरंजयः ॥ क्षत्रदेवस्तुराजेंद्रपांडवेषुरथोत्तमः १० जयंतश्चामितौजाश्चसत्यजिच्चमहारथः ॥ महारथामहात्मानःसर्वेपांचालसत्तमाः
११ योत्स्यंतेसमरेतातसंरब्धाइवकुंजराः ॥ अजोभोजश्चविक्रांतौपांडवार्थेमहारथौ १२ योत्स्येतेबलिनौशूरौपरंशक्त्याक्षयिष्यतः ॥ शीघ्रास्त्राश्चित्रयोद्धा
रःकृतिनोदृढविक्रमाः १३ केकयाःपंचराजेंद्रभ्रातरोदृढविक्रमाः ॥ सर्वेचैवरथोदाराःसर्वेलोहितकध्वजाः १४ काशिकःसुकुमारश्चनीलोयश्चापरोनृप ॥ सू
र्यदत्तश्चशंखश्चमदिराश्वश्चनामतः १५ सर्वएवरथोदाराःसर्वेचाहवलक्षणाः ॥ सर्वास्त्रविदुषःसर्वेमहात्मानोमतामम १६ वार्धक्षेमिर्महाराजमतोममहारथः ॥
चित्रायुधश्चनृपतिर्मतोमेरथसत्तमः १७ सहिसंग्रामशोभीचभक्तश्चापिकिरीटिनः ॥ चेकितानःसत्यधृतिःपांडवानांमहारथौ ॥ द्वाविमौपुरुषव्याघ्रौरथोदा
रौमतौमम १८ व्याघ्रदत्तश्चराजेंद्रचंद्रसेनश्चभारत ॥ मतौममरथोदारौपांडवानांनसंशयः १९

भारतभावदीपेसप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥ पंचालेति १ नाशयन्पूर्वसंस्थितंप्राचीनंस्त्रीत्वेनावस्थानंअदर्शयन्पौरुषंदर्शयन्नित्यर्थः यद्वापूर्वसंस्थितंपूर्वव्यूहसंस्थानंनाशयन् सैन्यानि
विद्रावयन्नित्यर्थः २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ क्षयिष्यतःसामर्थ्यंदर्शयिष्यतः । ऐश्वर्यार्थोऽयंक्षयतिः १३ । १४ । १५ विदुषःविद्वांसः १६ । १७ । १८ । १९

२० । २१ । २२ । २३ । २४ । २५ । २६ । २७ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेएकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥ ॥ ७ ॥ ॥ रोचमानइति १ भीमसेन

सेनाबिंदुश्चराजेंद्रक्रोधहंताचनामतः ॥ यःसमोवासुदेवेनभीमसेनेनवाविभो २० सयोत्स्यतिहिविक्रम्यसमरेतवसैनिकैः ॥ मांचद्रोणंकृपंचैवयथासंमन्यतेभवान् २१ तथासममरश्लाघीमंतव्योरथसत्तमः ॥ काश्यःपरमशीघ्रास्त्रःश्लाघनीयोनरोत्तमः २२ रथएकगुणोमह्यंज्ञेयःपरपुरंजयः ॥ अयंचयुधिविक्रांतोमंतव्योऽष्टगुणोरथः २३ सत्यजित्समरश्लाघीद्रुपदस्यात्मजोयुवा ॥ गतःसोऽतिरथत्वंहिधृष्टद्युम्नेनसंमितः २४ पांडवानांयशस्कामःपरंकर्मकरिष्यति ॥ अनुरक्तश्चशूरश्चरथोऽयमपरोमहान् २५ पांड्यराजोमहावीर्यःपांडवानांधुरंधरः ॥ दृढधन्वामहेष्वासःपांडवानांमहारथः २६ श्रेणिमान्कौरवश्रेष्ठवसुदानश्चपार्थिवः ॥ उभावेतावतिरथौमतौपरपुरंजयौ २७ ॥ इतिश्रीमहाभारतेउद्योगपर्वणि रथातिरथसंख्यानपर्वणि एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥ ॥

भीष्मउवाच ॥ रोचमानोमहाराजपांडवानांमहारथः ॥ योत्स्यतेऽमरवत्संख्येपरसैन्येषुभारत १ पुरुजित्कुंतिभोजश्चमहेष्वासोमहाबलः ॥ मातुलोभीमसेनस्यसचमेऽतिरथोमतः २ एषवीरोमहेष्वासःकृतीचनिपुणश्चह ॥ चित्रयोधीचशक्तश्चमतोमेरथपुंगवः ३ सयोत्स्यतिहिविक्रम्यमघवानिवदानवैः ॥ योधायेचास्यविख्याताःसर्वेयुद्धविशारदाः ४ भागिनेयकृतेवीरःसकरिष्यतिसंगरे ॥ सुमहत्कर्मपांडूनांस्थितःप्रियहितेरतः ५ भैमसेनिर्महाराजहैडिंबोराक्षसेश्वरः ॥ मतोमेबहुमायावीरथयूथपयूथपः ६ योत्स्यतेसमरेतातमायावीसमरप्रियः ॥ येचास्यराक्षसावीराःसचिवावशवर्तिनः ७ एतेचान्येचबहवोनानाजनपदेश्वराः ॥ समेताःपांडवस्यार्थेवासुदेवपुरोगमाः ८ एतेप्राधान्यतोराजन्पांडवस्यमहात्मनः ॥ रथाश्चातिरथाश्चैवयेचान्येऽर्धरथानृप ९ नेष्यंतिसमरेसेनांभीमांयौधिष्ठिरींनृप ॥ महेंद्रेणेववीरेणपाल्यमानांकिरीटिना १० तैरहंसमरेवीरमायाविद्भिर्जयैषिभिः ॥ योत्स्यामिजयमाकांक्षन्नथवानिधनंरणे ११ वासुदेवंचपार्थंचचक्रगांडीवधारिणौ ॥ संध्यागताविवार्केंदूसमेष्येतेरथोत्तमौ १२ येचैवतेरथोदाराःपांडुपुत्रस्यसैनिकाः ॥ सहसैन्यानहंतांश्चप्रतीयांरणमूर्धनि १३ एतेरथाश्चातिरथाश्चतुभ्यंयथाप्रधानंनृपकीर्तितामया ॥ तथाऽपरेयेऽर्धरथाश्चकेचित्तथैवतेषामपिकौरवेंद्र १४ अर्जुनंवासुदेवंचयेचान्येतत्रपार्थिवाः ॥ सर्वांस्तान्वारयिष्यामियावद्द्रक्ष्यामिभारत १५ पांचाल्यंतुमहाबाहोनाहंहन्यांशिखंडिनम् ॥ उद्यतेषुमथोदृष्ट्वाप्रतियुध्यंतमाहवे १६ लोकस्तंवेदयदहंपितुःप्रियचिकीर्षया ॥ प्राप्तंराज्यंपरित्यज्यब्रह्मचर्यव्रतेस्थितः १७ चित्रांगदंकौरवाणामाधिपत्येऽभ्यषेचयम् ॥ विचित्रवीर्यंचशिशुंयौवराज्येऽभ्यषेचयम् १८

स्येति क्रोधोहीनार्थभीमसेनसाम्यार्थंवाविशेषणम् २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ रथोत्तमौउत्तमोऽभिदत्तोरथोययोस्तौ । आहिताग्न्यादित्वादुत्तमपदस्यपरनिपातः । यद्वारथेरथयुद्धेउत्तमौउत्कृष्टतमौ १२ । १३ । १४ पाठांतरेप्रधक्ष्यामिशक्तिधारयामि १५ । १६ । १७ । १८

३ । ४ । ५ । ६ । ७ । ८ । ९ । १० भूतमुत्पन्नंभव्यमुत्पाद्यमानं अनयोर्बीजभूतयोर्नाशेबीजाभावाद्भविष्यस्यापिनाशोमैवकर्तव्यइत्यर्थः ११ । १२ । १३ । १४ । १५ । १६ वेदांताव

दुर्योधनःकिलापृच्छदापगेयंमहाव्रतम् ॥ केनकालेनपांडूनांहन्याःसैन्यमितिप्रभो ३ मासेनेतिचतेनोक्तोधार्तराष्ट्रःसुदुर्मतिः ॥ तावताचापिकालेनद्रोणो ऽपिप्रतिजज्ञिवान् ४ गौतमोद्विगुणंकालमुक्तवानितिनःश्रुतम् ॥ द्रौणिस्तुदशरात्रेणप्रतिजज्ञेमहास्त्रवित् ५ तथादिव्यास्त्रवित्कर्णःसंपृष्टःकुरुसंसदि ॥ पं चभिर्दिवसैर्हंतुंससैन्यंप्रतिजज्ञिवान् ६ तस्मादहमपीच्छामिश्रोतुमर्जुनतेवचः ॥ कालेनकियताशत्रून्क्षपयेरितिफाल्गुन ७ एवमुक्तोगुडाकेशःपार्थिवेनधनं जयः ॥ वासुदेवंसमीक्ष्येदंवचनंप्रत्यभाषत ८ सर्वएतेमहात्मानःकृतास्त्राश्चित्रयोधिनः ॥ असंशयंमहाराजहन्युरेवनसंशयः ९ अपैतुतेमनस्तापोयथास त्यंब्रवीम्यहम् ॥ हन्यामेकरथेनैववासुदेवसहायवान् १० सामरानपिलोकांस्त्रीन्सर्वान्स्थावरजंगमान् ॥ भूतंभव्यंभविष्यंचनिमेषादितिमेमतिः ११ यत्तद्घो रंपशुपतिःप्रादादस्त्रंमहन्मम ॥ कैरातेद्वंद्वयुद्धेतुतादिदंमायिवर्तते १२ यद्युगांतेपशुपतिःसर्वभूतानिसंहरन् ॥ प्रयुंक्तेपुरुषव्याघ्रतदिदंमयिवर्तते १३ तन्न जानातिगांगेयोनद्रोणोनचगौतमः ॥ नचद्रोणसुतोराजन्कुतएवतुसूतजः १४ नतुयुक्तंरणेहंतुंदिव्यैरस्त्रैःपृथग्जनम् ॥ आर्जवेनैवयुद्धेनविजेष्यामोवयंपरान् १५ तथेमेपुरुषव्याघ्राःसहायास्तवपार्थिव ॥ सर्वेदिव्यास्त्रविद्वांसःसर्वेयुद्धाभिकांक्षिणः १६ वेदांतावभृथस्नाताःसर्वएतेऽपराजिताः ॥ निहन्युःसमरेसेनां देवानामपिपांडव १७ शिखंडीयुयुधानश्चधृष्टद्युम्नश्चपार्षतः ॥ भीमसेनोयमौचोभौयुधामन्यूत्तमौजसौ १८ विराटद्रुपदौचोभौभीष्मद्रोणसमौयुधि ॥ शंखश्चैव महाबाहुर्हैडिंबश्चमहाबलः १९ पुत्रोऽस्यांजनपर्वातुमहाबलपराक्रमः ॥ शैनेयश्चमहाबाहुःसहायोरणकोविदः २० अभिमन्युश्चबलवान्द्रौपद्याःपंचचात्मजाः ॥ स्वयंचापिसमर्थोऽसित्रैलोक्योत्सादनेऽपिच २१ क्रोधाद्यंपुरुषंपश्येस्तथाशक्रसमद्युते ॥ सक्षिप्रंनभवेद्व्यक्तमितित्वांवेद्मिकौरव २२ ॥ इतिश्रीमहाभारते उद्योगपर्वणिअंबोपाख्यानपर्वणि अर्जुनवाक्येचतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥ ॥ वैशंपायनउवाच ॥ ततःप्रभातेविमलेधार्तराष्ट्रेणचोदिताः ॥ दुर्योधनेनराजानःप्रययुःपांडवान्प्रति १ आप्लाव्यशुचयःसर्वेस्रग्विणःशुक्लवाससः ॥ गृहीतशस्त्राध्वजिनःस्वस्तिवाच्यहुताग्नयः २ सर्वेब्रह्मविदःशूराःसर्वेसुच रितव्रताः ॥ सर्वेकामकृतश्चैवसर्वेचाहवलक्षणाः ३ आहवेषुपरांल्लोकान्जिगीषंतोमहाबलाः ॥ एकाग्रमनसःसर्वेश्रद्दधानाःपरस्परम् ४ विंदानुविंदावावंत्यौ केकयाबाह्लिकैःसह ॥ प्रययुःसर्वएवैतेभारद्वाजपुरोगमाः ५ अश्वत्थामाशांतनवःसैंधवोऽथजयद्रथः ॥ दाक्षिणात्याःप्रतीच्याश्चपार्वतीयाश्चयेनृपाः ६ गां धारराजःशकुनिःप्राच्योदीच्याश्चसर्वशः ॥ शकाःकिरातायवनाःशिबयोऽथवसातयः ७

भृथस्नाताः वेदग्रहणांतएवदारक्रिययासहैवयागंकृतवंतइत्यर्थः १७ । १८ । १९ । २० । २१ । २२ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेचतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

ततःप्रभातेइति १ आप्लाव्यस्नात्वा २ । ३ । ४ । ५ । ६ । ७

८ । ९ । १० । ११ । १२ । १३ । १४ उत्सृज्य उत्कर्षेणसृष्ट्वा पंचयोजनंवर्तुलंपरिधिंकृत्वेत्यर्थः सेनानिवेशाःसैनिकाः वणिक्शूराश्वादायः १५ । १६ । १७ । १८ । १९ ॥ इतिउद्योगपर्वणिनी



स्वैःस्वैरनीकैःसहिताःपरिवार्यमहारथम् ॥ एतेमहारथाःसर्वेद्वितीयेनिर्ययुर्बले ८ कृतवर्मासहानीकस्त्रिगर्तश्चमहारथः ॥ दुर्योधनश्चनृपतिर्भ्रातृभिःपरिवारितः ९ शलोभूरिश्रवाःशल्यःकौसल्योऽथबृहद्रथः ॥ एतेपश्चादनुगताधार्तराष्ट्रपुरोगमाः १० तेसमेत्ययथान्यायंधार्तराष्ट्रमहाबलाः ॥ कुरुक्षेत्रस्यपश्चार्धेव्यवतिष्ठंतदंशिताः ११ दुर्योधनस्तुशिबिरंकारयामासभारत ॥ यथैवहास्तिनपुरंद्वितीयंसमलंकृतम् १२ नविशेषंविजानंतिपुरस्यशिबिरस्यवा ॥ कुशलाअपिराजेंद्रनरानगरवासिनः १३ तादृशान्येवदुर्गाणिराज्ञामपिमहीपतिः ॥ कारयामासकौरव्यःशतशोऽथसहस्रशः १४ पंचयोजनमुत्सृज्यमंडलंतद्रणाजिरम् ॥ सेनानिवेशास्तेराजन्नाविशञ्छतसंघशः १५ तत्रतेपृथिवीपालायथोत्साहंयथाबलम् ॥ विविशुःशिबिराण्यत्रद्रव्यवंतिसहस्रशः १६ तेषांदुर्योधनोराजाससैन्यानांमहात्मनाम् ॥ व्यादिदेशसबाह्यानांभक्ष्यभोज्यमनुत्तमम् १७ सनागाश्वमनुष्याणांयेचशिल्पोपजीविनः ॥ येचान्येऽनुगतास्तत्रसूतमागधबंदिनः १८ वणिजोगणिकाश्चारायेचैवप्रेक्षकाजनाः ॥ सर्वांस्तान्कौरवोराजाविधिवत्प्रत्यवैक्षत १९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिअंबोपाख्यानपर्वणिकौरवसैन्यनिर्याणे पंचनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ तथैवराजाकौंतेयोधर्मपुत्रोयुधिष्ठिरः ॥ धृष्टद्युम्नमुखान्वीरांश्चोदयामासभारत १ चेदिकाशिकरूषाणांनेतारंदृढविक्रमम् ॥ सेनापतिममित्रघ्नंधृष्टकेतुमथादिशत् २ विराटंद्रुपदंचैवयुयुधानंशिखंडिनम् ॥ पांचाल्यौचमहेष्वासौयुधामन्यूत्तमौजसौ ३ तेशूराश्चित्रवर्माणस्तप्तकुंडलधारिणः ॥ आज्यावसिक्ताज्वलिताधिष्ण्येष्विवहुताशनाः ४ अशोभंतमहेष्वासाग्रहाःप्रज्वलिताइव ॥ अथसैन्यंयथायोगंपूजयित्वानरर्षभः ५ दिदेशतान्यनीकानिप्रयाणायमहीपतिः ॥ तेषांयुधिष्ठिरोराजाससैन्यानांमहात्मनाम् ६ व्यादिदेशसबाह्यानांभक्ष्यभोज्यमनुत्तमम् ॥ सगजाश्वमनुष्याणांयेचशिल्पोपजीविनः ७ अभिमन्युंबृहंतंचद्रौपदेयांश्चसर्वशः ॥ धृष्टद्युम्नमुखानेतान्प्राहिणोत्पांडुनंदनः ८ भीमंचयुयुधानंचपांडवंचधनंजयम् ॥ द्वितीयंप्रेषयामासबलस्कंधंयुधिष्ठिरः ९ भांडंसमारोपयतांचरतांसंप्रधावताम् ॥ हृष्टानांतत्रयोधानांशब्दोदिवमिवास्पृशत् १० स्वयमेवततःपश्चाद्विराटद्रुपदान्वितः ॥ अथापरैर्महीपालैःसहप्रायान्महीपतिः ११ भीमधन्वायनीसेनाधृष्टद्युम्नेनपालिता ॥ गंगेवपूर्णास्तिमितास्यंदमानाव्यदृश्यत १२ ततःपुनरनीकानिन्ययोजतबुद्धिमान् ॥ मोहयन्धृतराष्ट्रस्यपुत्राणांबुद्धिनिश्चयम् १३ द्रौपदेयान्महेष्वासानभिमन्युंचपांडवः ॥ नकुलंसहदेवंचसर्वांश्चैवप्रभद्रकान् १४

लकंठीयेभारतभावदीपे पंचनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥ ॥ ७ ॥ ॥ तथैवेति



१ । २ । ३ । ४ । ५ । ६ । ७ । ८ बलस्कंधंसैन्यसमुदायं ९ भांडंयुद्धोपकरणं १० । ११ भीमधन्वानःअयंतेप्रचरंत्यस्यामितिभीमधन्वायनी १२ । १३ । १४

१५ । १६ । १७ कृतप्रहरणाः कृतयुद्धाः १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ शकटाभांडवंतिअनांसि आपणोवणिक्समुदायः वेशोवेश्याजनः यानंयुद्धयोग्यंवाहनं युग्यंकेव

दशचाश्वसहस्राणिद्विसहस्राणिदंतिनाम् ॥ अयुतंचपदातीनांरथाःपंचशतंतथा १५ भीमसेनस्यदुर्धर्षंप्रथमंप्रादिशद्बलम् ॥ मध्यमेचविराटंचजयत्सेनंच पांडवः १६ महारथौचपांचाल्यौयुधामन्यूत्तमौजसौ ॥ वीर्यवंतौमहात्मानौगदाकार्मुकधारिणौ १७ अन्वयातांतदामध्येवासुदेवधनंजयौ ॥ बभूवुरतिसंरब्धाःकृतप्रहरणानराः १८ तेषांविंशतिसाहस्राहयाःशूरैरधिष्ठिताः ॥ पंचनागसहस्राणिरथवंशाश्चसर्वशः १९ पदातयश्चयेशूराःकार्मुकासिगदाधराः ॥ सहस्रशोऽन्वयुःपश्चादग्रतश्चसहस्रशः २० युधिष्ठिरोयत्रसैन्येस्वयमेवबलार्णवे ॥ तत्रतेपृथिवीपालाभूयिष्ठंपर्यवस्थिताः २१ तत्रनागसहस्राणिहयानामयुतानिच ॥ तथारथसहस्राणिपदातीनांचभारत २२ चेकितानःस्वसैन्येनमहतापार्थिवर्षभ ॥ धृष्टकेतुश्चचेदीनांप्रणेतापार्थिवोययौ २३ सात्यकिश्चमहेष्वासोवृष्णीनांप्रवरोरथः ॥ वृतःशतसहस्रेणरथानांप्रणुदन्बली २४ क्षत्रदेवब्रह्मदेवौरथस्थौपुरुषर्षभौ ॥ जघनंपालयंतौचपृष्ठतोऽनुप्रजग्मतुः २५ शकटापणवेशाश्चयानंयुग्यंचसर्वशः ॥ तत्रनागसहस्राणिहयानामयुतानिच ॥ फल्गुसर्वंकलत्रंचयत्किंचित्कृशदुर्बलम् २६ कोशसंचयवाहांश्चकोष्ठागारंतथैवच ॥ गजानीकेनसंगृह्यशनैःप्रायाद्युधिष्ठिरः २७ तमन्वयात्सत्यधृतिःसौचित्तिर्युद्धदुर्मदः ॥ श्रेणिमान्वसुदानश्चपुत्रःकाश्यस्यवाविभुः २८ रथाविंशतिसाहस्रायेतेषामनुयायिनः ॥ हयानांदशकोटचश्चमहतांकिंकिणीकिनाम् २९ गजाविंशतिसाहस्राईषादंताःप्रहारिणः ॥ कुलीनाभिन्नकरटामेघाइवविसर्पिणः ३० षष्टिर्नागसहस्राणिदशान्यानिचभारत ॥ युधिष्ठिरस्ययान्यासन्युधिसेनामहात्मनः ३१ क्षरंतइवजीमूताःप्रभिन्नकरटामुखाः ॥ राजानमन्वयुःपश्चाच्चलंतइवपर्वताः ३२ एवंतस्यबलंभीमंकुंतीपुत्रस्यधीमतः ॥ यदाश्रित्याथयुयुधेधार्तराष्ट्रंसुयोधनम् ३३ ततोऽन्येशतशःपश्चात्सहस्रायुतशोनराः ॥ नर्दंतःप्रययुस्तेषामनीकानिसहस्रशः ३४ तत्रभेरीसहस्राणिशंखानामयुतानिच ॥ न्यवादयंतसंहृष्टाःसहस्रायुतशोनराः ३५ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिअंबोपाख्यानपर्वणिपांडवसेनानिर्याणे षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥ ॥ समाप्तमुद्योगपर्व ॥ ॥ अस्यानंतरंभीष्मपर्वभविष्यति तस्यायमाद्यः श्लोकः ॥ जनमेजयउवाच ॥ कथंयुयुधिरेवीराःकुरुपांडवसोमकाः ॥ पार्थिवाःसुमहात्मानोनानादेशसमागताः ॥ १ ॥ ॥ छ ॥ ॥ ॥

लंवाहनं फल्गुबालादिकं कलत्रंस्त्र्यादिकं २६ कोशोधनं कोष्टोधान्यादिसामग्री संगृह्यएकीकृत्य २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ ॥ इतिश्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसगोविंदसूरिसूनोः श्रीनीलकंठस्यकृतौ भारतभावदीपे षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

श्रीगणेशायनमः ॥ ॥ प्रणम्यपरमात्मानंप्राचीनाचार्यवर्त्मना ॥ द्रोणपर्वणिसंक्षेपाद्भावदीपोवितन्यते ॥ १ ॥ पूर्वस्मिन्पर्वणिविश्वरूपप्रदर्शनंतद्विदांचार्चिरादिमार्गापेक्षाचभीष्मकृतका
लप्रतीक्षयादर्शिता । तत्रैव निष्कलंरूपं तमेवशरणंगच्छ । तमेवचाद्यंपुरुषंप्रपद्ये उत्तमःपुरुषस्त्वन्यइत्यादिनाउक्तं तदधिगमवतांचनास्तितन्मार्गापेक्षेतिद्रोणनिर्वाणनिदर्शनेनदर्शयिष्यन्
द्रोणपर्वसमारभते । तमप्रतिमसत्त्वौजइत्यादिना । तत्राख्यायिकायोधोत्साहार्थां महतामपिमृत्युरस्तीत्यादिनाजगदनित्यत्वप्रदर्शनार्थाच तत्रसत्त्वंधैर्यंमहत्यपिदुःखकारणेवैकल्यराहित्यं ओ
जोमानसंबलं बलंशरीरदार्ढ्यं वीर्यमुत्साहादिहेतुः पराक्रमःपराभिभवसामर्थ्यं १ । २ । ३ केतौचिन्हभूते एवंभूतोधनुर्धरोनभवतीत्यन्येषामभिज्ञापके ४ चिंताध्येयविषयेमनोवृत्तिप्रवाहः शोक

श्रीगणेशायनमः ॥ ॥ श्रीवेदव्यासायनमः ॥ ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींचैवततोजयमुदीरयेत् ॥ १ ॥ जनमेजयउवाच ॥
तमप्रतिमसत्त्वौजोबलवीर्यसमन्वितम् ॥ हतंदेवव्रतंश्रुत्वापांचाल्येनशिखंडिना १ धृतराष्ट्रस्ततोराजाशोकव्याकुललोचनः ॥ किमचेष्टतविप्रर्षेहतेपितरि
वीर्यवान् २ तस्यपुत्रोहिभगवान्भीष्मद्रोणमुखैरथैः ॥ पराजित्यमहेष्वासान्पांडवान्राज्यमिच्छति ३ तस्मिन्हतेतुभगवन्केतौसर्वधनुष्मताम् ॥ यदचेष्टत
कौरव्यस्तन्मेब्रूहितपोधन ४ ॥ वैशंपायनउवाच ॥ निहतंपितरंश्रुत्वाधृतराष्ट्रोजनाधिपः ॥ लेभेनशांतिंकौरव्यश्चिंताशोकपरायणः ५ तस्यचिंतयतो
दुःखमनिशंपार्थिवस्यतत् ॥ आजगामविशुद्धात्मापुनर्गावल्गणिस्तदा ६ शिबिरात्संजयंप्राप्तंनिशिनागाह्वयंपुरम् ॥ आंबिकेयोमहाराजधृतराष्ट्रोऽन्वपृच्छत
७ श्रुत्वाभीष्मस्यनिधनमप्रहृष्टमनाभृशम् ॥ पुत्राणांजयमाकांक्षन्विललापातुरोयथा ८ ॥ धृतराष्ट्रउवाच ॥ संशोच्यतुमहात्मानंभीष्मंभीमपराक्रमम् ॥
किमकार्षुःपरंतातकुरवःकालचोदिताः ९ तस्मिन्विनिहतेशूरेदुराधर्षेमहात्मनि ॥ किंनुस्वित्कुरवोऽकार्षुर्निमग्नाःशोकसागरे १० तदुदीर्णंमहत्सैन्यंत्रैलोक्य
स्यापिसंजय ॥ भयमुत्पादयेत्तीव्रंपांडवानांमहात्मनाम् ११ कोहिदौर्योधनेसैन्येपुमानासीन्महारथः ॥ यंप्राप्यसमरेवीरानत्रस्यंतिमहाभये १२ देवव्रतेतु
निहतेकुरूणामृषभेतदा ॥ किमकार्षुर्नृपतयस्तन्ममाचक्ष्वसंजय १३ ॥ संजयउवाच ॥ शृणुराजन्नेकमनावचनंब्रुवतोमम ॥ यत्तेपुत्रास्तदाऽकार्षुर्हतेदेवव्र
तेमृधे १४ निहतेतुतदाभीष्मेराजन्सत्यपराक्रमे ॥ तावकाःपांडवेयाश्चप्राध्यायंतपृथक्पृथक् १५ विस्मिताश्चप्रहृष्टाश्चक्षत्रधर्मंनिशम्यते ॥ स्वधर्मंनिंदमा
नास्तेप्रणिपत्यमहात्मने १६ शयनंकल्पयामासुर्भीष्मायामितकर्मणे ॥ सोपधानंनरव्याघ्रशरैःसन्नतपर्वभिः १७ विधायरक्षांभीष्मायसमाभाष्यपरस्परम् ॥
अनुमान्यचगांगेयंकृत्वाचापिप्रदक्षिणम् १८ क्रोधसंरक्तनयनाःसमवेत्यपरस्परम् ॥ पुनर्युद्धायनिर्जग्मुःक्षत्रियाःकालचोदिताः १९ ततस्तूर्यनिनादैश्चभेरी
णांनिनदेनच ॥ तावकानामनीकानिपरेषांचविनिर्ययुः २० व्यावृत्तेऽर्यम्णिराजेंद्रपतितेजान्हवीसुते ॥ अमर्षवशमापन्नाःकालोपहतचेतसः २१

१

इष्टस्यपुनःपुनर्मनसिनिवेशनम् ५ दुःखंदुःखहेतुम् ६ शिबिरात्तद्वतःकुरुक्षेत्रात् । पृच्छेर्द्विकर्मकत्वात्पुत्राणांजयंअन्वपृच्छतेतिसंबंधः ७ । ८ । ९ । १० । ११ । १२ । १३ । १४
प्राध्यायंतपृथक्पृथक् एकेपराजयंप्राप्ताःस्मइति अन्येजयंप्राप्स्यंतइतिचध्यानंकृतवंतः १५ विस्मितागुरुवधेऽपिदोषाभावात् । प्रहृष्टामहाफलत्वाद्युद्धमरणस्य १६ । १७ । १८ । १९
२० अर्यम्णिसूर्ये व्यावृत्तेअपराण्हावलंबिनि २१

२२ मोहाज्जयाशारूपात् शांतनवस्यवधादितिपरेषांबलवत्वात् मृत्युसाद्भूतामृत्युवशाः मृत्युनाहूताइत्यपिपाठः २३ । २४ द्यौरिवनिःश्रीका खमिवशून्या २५ त्रिपन्नसस्येवनिःसारा असंस्कृता वाग्यथाकर्तव्येअसमर्था आसुरीवसेनाव्याकुला इवशब्दोवाक्यालंकारे २६ विधवेवनिरलंकारा शुष्कतोयेवनिरुपयोगा वृकैरिवनिरुद्धाआसन्नमरणापृषतीचित्रमृगी २७ । २८ विष्वग्वाताअनेक

अनादृत्यवचःपथ्यंगांगेयस्यमहात्मनः ॥ निर्ययुर्भरतश्रेष्ठाःशस्त्राण्यादायसत्वराः २२ मोहात्तवसपुत्रस्यवधाच्छांतनवस्यच ॥ कौरव्यामृत्युसाद्भूताःसहिताःसर्वराजभिः २३ अजावयइवागोपावनेश्वापदसंकुले ॥ भृशमुद्विग्नमनसोहीनादेवव्रतेनते २४ पतितेभरतश्रेष्ठेबभूवकुरुवाहिनी ॥ द्यौरिवापेतनक्षत्राहीनंखमिववायुना २५ विपन्नसस्येवमहीवाक्चैवासंस्कृतातथा ॥ आसुरीवयथासेनानिगृहीतेनृपेबलौ २६ विधवेववरारोहाशुष्कतोयेवनिम्नगा ॥ वृकैरिववनेरुद्धापृषतीहतयूथपा २७ शरभाहतसिंहेवमहतीगिरिकंदरा ॥ भारतीभरतश्रेष्ठेपतितेजाह्नवीसुते २८ विष्वग्वाताहतारुग्णानौरिवासीन्महार्णवे ॥ बलिभिःपांडवैर्वीरैर्लब्धलक्षैर्भृशार्दिता २९ सातदाऽऽसीद्भृशंसेनाव्याकुलाश्वरथद्विपा ॥ विपन्नभूयिष्ठनराकृपणाध्वस्तमानसा ३० तस्यांत्रस्तानृपतयःसैनिकाश्चपृथग्विधाः ॥ पातालइवमज्जंतोहीनादेवव्रतेनते ३१ कर्णंहिकुरवोऽस्मार्षुःसहिदेवव्रतोपमः ॥ सर्वशस्त्रभृतांश्रेष्ठंरोचमानमिवातिथिम् ३२ बंधुमापद्गतस्येवतमेवोपागमन्मनः ॥ चुक्रुशुःकर्णकर्णेतितत्रभारतपार्थिवाः ३३ राधेयंहितमस्माकंसूतपुत्रंतनुत्यजम् ॥ सहिनायुध्यततदादशाहानिमहायशाः ३४ सामात्यबंधुःकर्णोवैतमानयतमाचिरम् ॥ भीष्मेणहिमहाबाहुःसर्वक्षत्रस्यपश्यतः ३५ रथेषुगण्यमानेषुबलविक्रमशालिषु ॥ संख्यातोऽर्धरथःकर्णोद्विगुणःसन्नरर्षभः ३६ रथातिरथसंख्यायांयोऽग्रणीःशूरसंमतः ॥ सासुरानपिदेवेशान्रणेयोयोद्धुमुत्सहेत् ३७ सतुतेनैवकोपेनराजन्गांगेयमुक्तवान् ॥ त्वयिजीवतिकौरव्यनाहंयोत्स्येकदाचन ३८ त्वयातुपांडवेयेषुनिहतेषुमहामृधे ॥ दुर्योधनमनुज्ञाप्यवनंयास्यामिकौरव ३९ पांडवैर्वाहतेभीष्मेत्वयिस्वर्गमुपेयुषि ॥ हंताऽस्म्येकरथेनैवकृत्स्नान्यान्मन्यसेरथान् ४० एवमुक्त्वामहाबाहुर्दशाहानिमहायशाः ॥ नायुध्यतततःकर्णःपुत्रस्यतवसंमते ४१ भीष्मःसमरविक्रांतःपांडवेयस्यभारत ॥ जघानसमरेयोधानसंख्येयपराक्रमः ४२ तस्मिंस्तुनिहतेशूरेसत्यसंधेमहौजसि ॥ त्वत्सुताःकर्णमस्मार्षुस्तर्तुकामाइवप्लवम् ४३ तावकास्तवपुत्राश्चसहिताःसर्वराजभिः ॥ हाकर्णइतिचाक्रंदन्कालोऽयमितिचाब्रुवन् ४४ एवंतेस्महिराधेयंसूतपुत्रंतनुत्यजम् ॥ चुक्रुशुःसहितायोधास्तत्रतत्रमहाबलाः ४५ जामदग्न्याभ्यनुज्ञातमस्त्रेदुर्वारपौरुषम् ॥ अगमन्नोमनःकर्णंबंधुमात्ययिकेष्विव ४६ सहिशक्तोरणेराजंस्त्रातुमस्मान्महाभयात् ॥ त्रिदशानिवगोविंदःसततंसुमहाभयात् ४७ ॥ वैशंपायनउवाच ॥ तथातुसंजयंकर्णंकीर्तयंतंपुनःपुनः ॥ आशीविषवदुच्छ्वस्यधृतराष्ट्रोऽब्रवीदिदम् ४८

दिग्वाता २९ । ३० तस्यांसेनायां ३१ रोचमानं विख्यातपोभ्यामितिशेषः ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ आक्रंदन्नाहूतवंतः कालोयंत्वत्पराक्रमस्येतिशेषः ४४ । ४५ जामदग्न्येनअभ्यनुज्ञातंशिक्षितं नःअस्मत्संबंधिनाम् ४६ । ४७ । ४८

तनुत्यजंदेहव्ययेनाप्यस्मद्धितैषिणं अपश्यतयूयमितिशेषः ४९ ततअस्मदीयानांचिंतितं ५० भीष्मेविनिहतेसतितत्सदायदपाकृतंन्यूनंतत्पूरयांचक्रेअपीत्यन्वयः ५१ खंडंरिक्तं ५२ कृतवान्नवेति शेषः ५३ ॥ इतिद्रोणपर्वणिटीकायांप्रथमोऽध्यायः ॥ १ ॥ हतमिति विदित्वाचारमुखात् उपयायादित्यपकृष्यते १ श्रुत्वायोधमुखात् अच्युतंअस्खलितव्रतादिं २।३ चंद्रमसिलक्ष्मेवयस्मिन्धृ

धृतराष्ट्रउवाच ॥ यत्तद्वैकर्त्तनंकर्णमगमद्द्रोमनस्तदा ॥ अप्यपश्यतराधेयंसूतपुत्रंतनुत्यजम् ४९ अपितन्नमृषाऽकार्षीत्कच्चित्सत्यपराक्रमः ॥ संभ्रांतानांतदार्त्तानांत्रस्तानांत्राणमिच्छताम् ५० अपितत्पूरयांचक्रेधनुर्धरवरोयुधि ॥ यत्तद्विनिहतेभीष्मेकौरवाणामपाकृतम् ५१ तत्खंडंपूरयन्कर्णःपरेषामादधद्भयम् ॥ सहिवैपुरुषव्याघ्रोलोकेसंजयकथ्यते ५२ आर्त्तानांबांधवानांचक्रंदतांचविशेषतः ॥ परित्यज्यरणेप्राणांस्तत्त्राणार्थंचशर्मच ॥ कृतवान्ममपुत्राणांजयाशांसफलामपि ५३ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिद्रोणाभिषेकपर्वणिधृतराष्ट्रप्रश्नेप्रथमोऽध्यायः ॥ १ ॥

॥ संजयउवाच ॥ हतंभीष्ममथाधिरथिर्विदित्वाभिन्नांनावमिवात्यगाधेकुरूणाम् ॥ सोदर्यवद्व्यसनात्सूतपुत्रःसंतारयिष्यंस्तवपुत्रस्यसेनाम् १ श्रुत्वातुकर्णःपुरुषेंद्रमच्युतंनिपातितंशांतनवंमहारथम् ॥ अथोपयायात्सहसाऽरिकर्षणोधनुर्धराणांप्रवरस्तदानृप २ हतेतुभीष्मेरथसत्तमेपरैर्निमज्जतींनावमिवार्णवेकुरून् ॥ पितेवपुत्रांस्त्वरितोऽभ्ययाततःसंतारयिष्यंस्तवपुत्रस्यसेनाम् ३ ॥ कर्णउवाच ॥ यस्मिन्धृतिर्बुद्धिपराक्रमौजःसत्यंस्मृतिर्वीरगुणाश्चसर्वे ॥ अस्त्राणिदिव्यान्यथसंनतिर्ह्रीःप्रियाचवागनसूयाचभीष्मे ४ सदाकृतज्ञेद्विजशत्रुघातकेसनातनंचंद्रमसिवलक्ष्म ॥ सचेत्प्रशांतःपरवीरहंतामन्येहतानेवचसर्ववीरान् ५ नेहध्रुवंकिंचनजातुविद्यतेलोकेह्यस्मिन्कर्मणोऽनित्ययोगात् ॥ सूर्योदयेकोहिविमुक्तसंशयोभावंकुर्वीतार्यमहाव्रतेहते ६ वसुप्रभावेवसुवीर्यसंभवेगतेवसूनेववसुंधराधिपे ॥ वसूनिपुत्रांश्चवसुंधरांतथाकुरूंश्चशोचध्वमिमांचवाहिनीम् ७ ॥ संजयउवाच ॥ महाप्रभावेवरदेनिपातितेलोकेश्वरेशास्तरिचामितौजसि ॥ पराजितेषुभरतेषुदुर्मनाःकर्णोभृशंन्यश्वसदश्रुवर्तयन् ८ इदंचराधेयवचोनिशम्यसुताश्चराजंस्तवसैनिकाश्चह ॥ परस्परंचुक्रुशुरार्तिजंमुहुस्तदाऽश्रुनेत्रैर्मुमुचुश्चशब्दवत् ९ प्रवर्तमानेतुपुनर्महाहवेविगाह्यमानासुचमूषुपार्थिवैः ॥ अथाब्रवीद्धर्षकरंतदावचोरथर्षभान्सर्वमहारथर्षभः १० जगत्यनित्येसततंप्रधावतिप्रचिंतयन्नस्थिरमद्यलक्षये ॥ भवत्सुतिष्ठत्स्विहपातितोमृधेगिरिप्रकाशःकुरुपुंगवःकथम् ११ निपातितेशांतनवेमहारथेदिवाकरेभूतलमास्थितेयथा ॥ नपार्थिवाःसोढुमलंधनंजयंगिरिप्रवोढारमिवानिलंद्रुमाः १२ हतप्रधानंत्विदमार्त्तरूपंपरैर्हतोत्साहमनाथमद्यवै ॥ मयाकुरूणांपरिपाल्यमाहवेबलंयथातेनमहात्मनातथा १३ समाहितंचात्मनिभारमीदृशंजगत्तथाऽनित्यमिदंचलक्षये ॥ निपातितंचाहवशौंडमाहवेकथंनुकुर्यामहमीदृशेभयम् १४

त्यादिकंसनातनंसार्वकालिकमितिद्वयोरन्वयः ४ । ५ महाव्रतेदृढब्रह्मचर्येहतेसतिश्वःसूर्योदयोभविष्यतीतिकस्यनिश्चयःस्यात् मृत्युजयिनोऽपिमृत्युश्चेत्काऽस्माकंजीविताशेत्यर्थः ६ वसुवीर्यसंभवेवसूनामिववीर्यंयस्यशांतनोस्तस्मात्संभवोजन्मयस्य ७ । ८ इदंयस्मिन्धृतिरित्यादिपूर्वोक्तमत्रधेयंवचनं ९ । १० प्रधावतिमृत्यवेऽस्थिरंनकिमपीतिलक्षये ११ । १२ । १३ । १४

प्रवेशयन्प्रापयन् प्रवेरया निति पाठेऽपि स एवार्थः विभाव्य प्रकाश्य वर्तिता स्थाता १५ धृतिमाति सत्यसत्त्ववान् नित्ययोगेमतुप् १६ तद्बलं अभ्युपेयिवान्कापुरुषो न निवर्तते तत्र दृष्टांतः मृत्युमुखादिति लुप्तोपमेयं असुभृत्प्राणी १७ नाहंकापुरुष इत्याह तप इति १८ एवं मनस्यनुकूले सति एषां शत्रूणां गत्वैव गमनानंतरं तान्शत्रून् १९ सत्पुरुषाणां योग्यमार्यं कर्म श्रेष्ठकार्यं २० संप्राकुष्टे येन केना

अहंतु तान्कुरुवृषभानजिह्मगैः प्रवेशयन्यमसदनंचरन्रणे ॥ यशः परंजगति विभाव्य वर्तिता परैर्हतो भुवि शयिताथ वा पुनः १५ युधिष्ठिरो धृतिमातिसत्यसत्त्ववान् वृकोदरो गजशततुल्यविक्रमः ॥ तथार्जुनस्त्रिदशवरात्मजो युवा न तद्बलं सुजयमिहामरैरपि १६ यमौ रणे यत्र यमोपमौ बले स सात्यकिर्यत्र च देवकीसुतः ॥ न तद्बलं कापुरुषोऽभ्युपेयिवान्निवर्तते मृत्युमुखान्न चासुभृत् १७ तपोऽभ्युदीर्णं तपसैव बाध्यते बलं बलेनैव तथा मनस्विभिः ॥ मनश्च मे शत्रुनिवारणे ध्रुवं स्वरक्षणे चाचलवद्व्यवस्थितम् १८ एवं चैषां बाधमानः प्रभावं गत्वैवाहं ताञ्जयाम्यद्य सूत ॥ मित्रद्रोहो मर्षणीयो न मेऽयं भग्ने सैन्ये यः समेयात्स मित्रम् १९ कर्तास्म्येतत्सत्पुरुषार्यकर्म त्यक्त्वा प्राणाननुयास्यामि भीष्मम् ॥ सर्वान्संख्ये शत्रुसंघान्हनिष्ये हतस्तैर्वा वीरलोकं प्रपत्स्ये २० संप्राकुष्टे रुदितस्त्रीकुमारे पराहते पौरुषे धार्तराष्ट्रे ॥ मया कृत्यमिति जानामि सूत तस्माद्राज्ञस्त्वद्य शत्रून्विजेष्ये २१ कुरून्रक्षन्पांडुपुत्राञ्जिघांसंस्त्यक्त्वा प्राणान्घोररूपे रणेऽस्मिन् ॥ सर्वान्संख्ये शत्रुसंघान्निहत्य दास्याम्यहं धार्तराष्ट्राय राज्यम् २२ निबध्यतां मे कवचं विचित्रं हैमं शुभ्रं मणिरत्नावभासि ॥ शिरस्त्राणं चार्कसमानभासं धनुः शरांश्चाग्निविषाहिकल्पान् २३ उपासंगान्षोडश योजयंतु धनूंषि दिव्यानि तथाहरंतु ॥ असींश्च शक्तीश्च गदाश्च गुर्वीः शंखं च जांबूनदचित्रनालम् २४ इमां रौक्मीं नागकक्ष्यां विचित्रां ध्वजं चित्रं दिव्यमिंदीवरांकम् ॥ श्लक्ष्णैर्वस्त्रैर्विप्रमृज्यानयंतु चित्रां मालां चारुबद्धां सलाजाम् २५ अश्वानग्र्यान्पांडुराभ्रप्रकाशान्पुष्टान्स्नातान्मंत्रपूताभिरद्भिः ॥ तप्तैर्भांडैः कांचनैरभ्युपेताञ्शीघ्राञ्शीघ्रं सूतपुत्रानयस्व २६ रथं चाग्र्यं हेममालावनद्धं रत्नैश्चित्रं सूर्यचंद्रप्रकाशैः ॥ द्रव्यैर्युक्तं संप्रहारोपपन्नैर्वाहैर्युक्तं तूर्णमावर्तयस्व २७ चित्राणि चापानि च वेगवंति ज्याश्चोत्तमाः संनहनोपपन्नाः ॥ तूणांश्च पूर्णान्महतः शराणामासाद्य गात्रावरणानि चैव २८ प्रायात्रिकं चानयताशु सर्वं दध्ना पूर्णं वीरकांस्यं च हैमम् ॥ आनीय मालामवबध्य चांगे प्रवादयंत्वाशु जयाय भेरीः २९ प्रयाहि सूताशु यतः किरीटी वृकोदरो धर्मसुतो यमौ च ॥ तान्वा हनिष्यामि समेत्य संख्ये भीष्माय गच्छामि हतो द्विषद्भिः ३० यस्मिन्राजा सत्यधृतिर्युधिष्ठिरः समास्थितो भीमसेनार्जुनौ च ॥ वासुदेवः सात्यकिः सृंजयाश्च मन्ये बलं तदजय्यं महीपैः ३१ तं चेन्मृत्युः सर्वहरोऽभिरक्षेत्सदाऽप्रमत्तः समरे किरीटिनम् ॥ तथापि हंतास्मि समेत्य संख्ये यास्यामि वा भीष्मपथा यमाय ३२ नत्वेवाहं न गमिष्यामि तेषां मध्ये शूराणां तत्र चाहं ब्रवीमि ॥ मित्रद्रुहो दुर्बलभक्तयो ये पापात्मानो न ममैते सहायाः ३३

विरक्षरक्षेत्युक्ते सति मया कृत्यं कार्यं युद्धमिति शेषः २१।२२ शुभ्रमुद्दीप्तं २३ उपासंगान्शरपूर्णांस्तूणान् २४ नागकक्ष्यां शृंखलां जैत्रं जयख्यापकं इंदीवरांकं कमलचिन्हं २५ तप्तैरारोपितवर्णैः भांडैरलंकारैः २६ संप्रहारोपपन्नैर्युद्धोचितैः आवर्तयस्व आनय २७ गात्रावरणानि कवचानि २८ प्रायात्रिकं प्रयात्रा युद्धार्थप्रयाणं तदर्हं २९ भीष्माय कर्मणि चतुर्थी ३०। ३१ यमाय यमं द्रष्टुं ३२।३३

३४ । ३५ । ३६ । ३७ ॥ इतिद्रोणपर्वणिटीकायांद्वितीयोऽध्यायः ॥ २ ॥ ॥ ७ ॥ ॥ ४ ॥ शरतल्पेइति १ । २ । ३ । ४ । ५ ककुदंश्रेष्ठं ६ । ७

संजयउवाच ॥ समृद्धिमंतंरथमुत्तमंदृढंसकूबरंहेमपरिष्कृतंशुभम् ॥ पताकिनंवातजवैर्हयोत्तमैर्युक्तंसमास्थाययर्यौजयाय ३४ संपूज्यमानःकुरुभिर्महात्मारथ र्षभोदेवगणैर्यथेंद्रः ॥ ययौतदायोधनमुग्रधन्वायत्रावसानंभरतर्षभस्य ३५ वरूथिनामहतासध्वजेनसुवर्णमुक्तामणिरत्नमालिना ॥ सदश्वयुक्तेनरथेनकर्णोमे घस्वनेनार्कइवामितौजाः ३६ हुताशनाभःसहुताशनप्रभेशुभःशुभेवैस्वरथेधनुर्धरः ॥ स्थितोरराजाधिरथिर्महारथःस्वयंविमानेसुरराडिवास्थितः ३७ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिद्रोणाभिषेकपर्वणिकर्णनिर्याणेद्वितीयोऽध्यायः ॥ २ ॥ ४ ॥ संजयउवाच ॥ शरतल्पेमहात्मानंशयानममितौजसम् ॥ महा वातसमूहेनसमुद्रमिवशोषितम् १ दृष्ट्वापितामहंभीष्मंसर्वक्षत्रांतकंगुरुम् ॥ दिव्यैरस्त्रैर्महेष्वासंपातितंसव्यसाचिना २ जयाशातवपुत्राणांसंभग्नाशर्मवर्म च ॥ अपाराणामिवद्वीपमगाधेगाधमिच्छताम् ३ स्रोतसायामुनेनेवशरौघेणपरिप्लुतम् ॥ महेंद्रेणेवमैनाकमसह्यंभुविपातितम् ४ नभश्च्युतमिवादित्यंपतितंधरणो तले ॥ शतक्रतुमिवाचिंत्यंपुरावृत्रेणनिर्जितम् ५ मोहनंसर्वसैन्यस्ययुधिभीष्मस्यपातनम् ॥ ककुदंसर्वसैन्यानांलक्ष्मसर्वधनुष्मताम् ६ धनंजयशरैर्व्याप्तं पितरंतेमहाव्रतम् ॥ तंवीरशयनेवीरंशयानंपुरुषर्षभम् ७ भीष्ममाधिरथिर्दृष्ट्वाभरतानांमहाद्युतिः ॥ अवतीर्यरथादार्तोबाष्पव्याकुलिताक्षरम् ८ अभिवा द्यांजलिंबध्वावंदमानोऽभ्यभाषत ॥ कर्णोऽहमस्मिभद्रंतेवदमामभिभारत ९ पुण्ययाक्षेम्ययावाचाचक्षुषाचावलोकय ॥ ननूनंसुकृतस्येहफलंकश्चित्समश्नुते १० यत्रधर्मपरोवृद्धःशेतेभुविभवानिह ॥ कोशसंचयनेमंत्रेव्यूहेप्रहरणेषुच ११ नाहमन्यंप्रपश्यामिकुरूणांकुरुपुंगव ॥ बुद्ध्याविशुद्धयायुक्तोयःकुरूंस्तारये द्भयात् १२ योधांस्तुबहुधाहत्वापितृलोकंगमिष्यति ॥ अद्यप्रभृतिसंक्रुद्धाव्याघ्राइवमृगक्षयम् १३ पांडवाभरतश्रेष्ठकरिष्यंतिकुरुक्षयम् ॥ अद्यगांडीवघोष स्यवीर्यज्ञाःसव्यसाचिनः १४ कुरवःसंत्रसिष्यंतिवज्रपाणेरिवासुराः ॥ अद्यगांडीवमुक्तानामशनीनामिवस्वनः १५ त्रासयिष्यतिबाणानांकुरूनन्यांश्चपार्थि वान् ॥ समिद्धोऽग्निर्यथावीरमहाज्वालोद्रुमान्दहेत् १६ धार्तराष्ट्रान्प्रधक्ष्यंतितथाबाणाःकिरीटिनः ॥ येनयेनप्रसरतोवाय्वग्नीसहितौवने १७ तेनतेनप्रदहतो भूरिगुल्मतृणद्रुमान् ॥ यादृशोग्निःसमुद्भूतस्तादृक्पार्थोनसंशयः १८ यथावायुर्नरव्याघ्रतथाकृष्णोनसंशयः ॥ नदतःपांचजन्यस्यरसतोगांडिवस्यच १९ श्रुत्वासर्वाणिसैन्यानित्रासंयास्यंतिभारत ॥ कपिध्वजस्योत्पततोरथस्यामित्रकर्षिणः २० शब्दंसोढुंनशक्ष्यंतित्वामृतेवीरपार्थिवाः ॥ कोह्यर्जुनंयोधयितुंत्व दन्यःपार्थिवोर्हति २१ यस्यदिव्यानिकर्माणिप्रवदंतिमनीषिणः ॥ अमानुषैश्चसंग्रामस्त्र्यंबकेणमहात्मना २२ तस्माच्चैववरंप्राप्तोदुष्प्रापमकृतात्मभिः ॥ को ऽन्यःशक्तोरणेजेतुंपूर्वंयोनजितस्त्वया २३ जितोयेनरणेरामोभवतावीर्यशालिना ॥ क्षत्रियांतकरोघोरोदेवदानवदर्पहा २४

८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ रसतःशब्दंकुर्वतः १९ । २० । २१ अमानुषैर्निवातकवचादिभिः २२ । २३ । २४

२५ ॥ इतिद्रोणपर्वणिटीकायांतृतीयोऽध्यायः ॥ ३ ॥ ॥ ४ ॥ ॥ तस्येति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८

तमद्याहंपांडवंयुद्धशौंडमसृष्यमाणोभवताचानुशिष्टः ॥ आशीविषंदृष्टिहरंसुघोरंशूरंशक्ष्याम्यस्त्रबलान्निहंतुम् २५ ॥ इतिश्रीमहाभारतेद्रोणप० द्रोणाभिषेकप र्वणिकर्णवाक्येतृतीयोऽध्यायः ॥ ३ ॥ ॥ संजयउवाच ॥ तस्यलालप्यमानस्यकुरुवृद्धःपितामहः ॥ देशकालोचितंवाक्यमब्रवीत्प्रीतमानसः १ समुद्रइवसिं धूनांज्योतिषामिवभास्करः ॥ सत्यस्यचयथासंतोबीजानामिवचोर्वरा २ पर्जन्यइवभूतानांप्रतिष्ठासुहृदांभव ॥ बांधवास्त्वानुजीवंतुसहस्राक्षमिवामराः ३ मानहाभवशत्रूणांमित्राणांनंदिवर्धनः ॥ कौरवाणांभवगतिर्यथाविष्णुर्दिवौकसाम् ४ स्वबाहुबलवीर्येणधार्तराष्ट्रजयैषिणा ॥ कर्णराजपुरंगत्वाकांबोजानिर्जिता स्त्वया ५ गिरिव्रजगताश्चापिनग्नजित्प्रमुखानृपाः ॥ अंबष्ठाश्चविदेहाश्चगांधाराश्चजितास्त्वया ६ हिमवद्दुर्गनिलयाःकिरातारणकर्कशाः ॥ दुर्योधनस्यवश गास्त्वयाकर्णपुराकृताः ७ उत्कलामेकलाःपौंड्राःकलिंगांध्राश्चसंयुगे ॥ निषादाश्चत्रिगर्त्ताश्चबाल्हीकाश्चजितास्त्वया ८ तत्रतत्रचसंग्रामेदुर्योधनहितैषिणा ॥ बहवश्चजिताःकर्णत्वयावीरामहौजसा ९ यथादुर्योधनस्तातसज्ञातिकुलबांधवः ॥ तथात्वमपिसर्वेषांकौरवाणांगतिर्भव १० शिवेनाभिवदामित्वांगच्छयुद्धय स्वशत्रुभिः ॥ अनुशाधिकुरून्संख्येधत्स्वदुर्योधनेजयम् ११ भवान्पौत्रसमोऽस्माकंयथादुर्योधनस्तथा ॥ तवापिधर्मतःसर्वेयथातस्यवयंतथा १२ यौनात्सं बंधकाल्लोकेविशिष्टंसंगतंसताम् ॥ सद्भिःसहनरश्रेष्ठप्रवदंतिमनीषिणः १३ ससत्यसंगतोभूत्वाममेदमितिनिश्चितः ॥ कुरूणांपालयबलंयथादुर्योधनस्तथा १४ निशम्यवचनंतस्यचरणावभिवाद्यच ॥ ययौवैकर्तनःकर्णःसमीपंसर्वधन्विनाम् १५ सोऽभिवीक्ष्यनरौघाणांस्थानमप्रतिमंमहत् ॥ व्यूढप्रहरणोरस्कंसै न्यंतत्समबृंहयत् १६ हृषिताःकुरवःसर्वेदुर्योधनपुरोगमाः ॥ उपागतंमहाबाहुंसर्वानीकपुरःसरम् १७ कर्णंदृष्ट्वामहात्मानंयुद्धायसमुपस्थितम् ॥ क्ष्वेडिता स्फोटितरवैःसिंहनादरवैरपि ॥ धनुःशब्दैश्चविविधैःकुरवःसमपूजयन् १८ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिद्रोणाभिषेकपर्वणि कर्णाश्वासेचतुर्थोऽध्यायः ॥४॥ संजयउवाच ॥ रथस्थंपुरुषव्याघ्रंदृष्ट्वाकर्णमवस्थितम् ॥ हृष्टोदुर्योधनोराजन्निदंवचनमब्रवीत् १ सनाथमिवमन्येऽहंभवतापालितंबलम् ॥ अत्रकिंनुसमर्थं यद्धितंतत्संप्रधार्यताम् २ ॥ कर्णउवाच ॥ ब्रूहिनःपुरुषव्याघ्रत्वंहिप्राज्ञतमोनृप ॥ यथाचार्थपतिःकृत्यंपश्यतेनतथेतरः ३ तेस्मसर्वेतववचःश्रोतुकामान रेश्वर ॥ नान्याय्यंहिभवान्वाक्यंब्रूयादितिमतिर्मम ४ ॥ दुर्योधनउवाच ॥ भीष्मःसेनाप्रणेतासीद्वयसाविक्रमेणच ॥ श्रुतेनचोपसंपन्नःसर्वैर्योधगणैस्तथा ५ तेनातियशसाकर्णघ्नताशत्रुगणान्मम ॥ सुयुद्धेनदशाहानिपालिताःस्मोमहात्मना ६ तस्मिन्नसुकरंकर्मकृतवत्यास्थितेदिवम् ॥ कंनुसेनाप्रणेतारंमन्यसेतदनं तरम् ७ नविनानायकंसेनामुहूर्तमपितिष्ठति ॥ आहवेष्वाहवश्रेष्ठनेतृहीनेवनौर्जले ८

॥ इतिद्रोणपर्वणिटीकायांचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ५ ॥ ॥ रथस्थमिति १ । २ अर्थपतिःप्रधानस्वामी ३ । ४ । ५ । ६ । ७ नेताकर्णधारः ८

९ अदेशिकोऽग्रेसररहितः १० । ११ । १२ । १३ संहननंशरीरम् १४ । १५ । १६ । १७ शुक्रांगिरसदर्शनाच्छुक्रबृहस्पतितुल्यात् १८ । १९ । २० । २१ ॥ इतिद्रोणपर्वणिटीकायांपंचमो

यथाह्यकर्णधारानौरथश्चासारथिर्यथा ॥ द्रवेद्यथेष्टंतद्वत्स्याहतेसेनापतिंबलम् ९ अदेशिकोयथासार्थःसर्वःकृच्छ्रंसमृच्छति ॥ अनायकातथासेनासर्वान्दोषा न्समर्छति १० सभवान्वीक्ष्यसर्वेषुमामकेषुमहात्मसु ॥ पश्यसेनापतिंयुक्तमनुशांतनवादिह ११ यंहिसेनाप्रणेतारंभवान्वक्ष्यतिसंयुगे ॥ तंवयंसहिताःसर्वेक रिष्यामोनसंशयः १२ ॥ कर्णउवाच ॥ सर्वएवमहात्मानइमेपुरुषसत्तमाः ॥ सेनापतित्वमर्हंतिनात्रकार्याविचारणा १३ कुलसंहननज्ञानैर्बलविक्रमबुद्धिभिः ॥ युक्ताःश्रुतज्ञाधीमंतआहवेष्वनिवर्तिनः १४ युगपन्नतुतेशक्याःकर्तुंसर्वेपुरःसराः ॥ एकएवतुकर्तव्योयस्मिन्वैशेषिकागुणाः १५ अन्योऽन्यस्पर्धिनांह्येषांय द्येकंयंकरिष्यसि ॥ शेषाविमनसोव्यक्तंनयोत्स्यंतिहितास्तव १६ अयंचसर्वयोधानामाचार्यःस्थविरोगुरुः ॥ युक्तःसेनापतिःकर्तुंद्रोणःशस्त्रभृतांवरः १७ कोहितिष्ठतिदुर्धर्षेद्रोणेशस्त्रभृतांवरे ॥ सेनापतिःस्यादन्योऽस्माच्छुक्रांगिरसदर्शनात् १८ नचसोऽप्यस्तितेयोधःसर्वराजसुभारत ॥ द्रोणंयःसमरेयांतमनुया स्यतिसंयुगे १९ एषसेनाप्रणेतॄणामेषशस्त्रभृतामपि ॥ एषबुद्धिमतांचैवश्रेष्ठोराजन्गुरुस्तव २० एवंदुर्योधनाचार्यमाशुसेनापतिंकुरु ॥ जिगीषंतोसुरा न्संख्येकार्तिकेयमिवामराः २१ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिद्रोणाभिषेकपर्वणि कर्णवाक्ये पंचमोऽध्यायः ॥ ५ ॥ संजयउवाच ॥ कर्णस्यवचनंश्रुत्वारा जादुर्योधनस्तदा ॥ सेनामध्यगतंद्रोणमिदंवचनमब्रवीत् १ ॥ दुर्योधनउवाच ॥ वर्णश्रैष्ठ्यात्कुलोत्पत्त्याश्रुतेनवयसाधिया ॥ वीर्याद्दाक्ष्यादधृष्यत्वादर्थज्ञा नान्नयाज्जयात् २ तपसाचकृतज्ञत्वाद्वृद्धःसर्वगुणैरपि ॥ युक्तोभवत्समोगोप्ताराज्ञामन्योनविद्यते ३ सभवान्पातुनःसर्वान्देवानिवशतक्रतुः ॥ भवन्नेत्राःपरान् जेतुमिच्छामोद्विजसत्तम ४ रुद्राणामिवकापालीवसूनामिवपावकः ॥ कुबेरइवयक्षाणांमरुतामिववासवः ५ वसिष्ठइवविप्राणांतेजसामिवभास्करः ॥ पितॄणा मिवधर्मेद्रोयादसामिवचांबुराट् ६ नक्षत्राणामिवशशीदितिजानामिवोशनाः ॥ श्रेष्ठःसेनाप्रणेतॄणांसनःसेनापतिर्भव ७ अक्षौहिण्योदशैकाचवशगाःसंतुतेऽनघ ॥ ताभिःशत्रून्प्रतिव्यूह्यजहींद्रोदानवानिव ८ प्रयातुनोभवानग्रेदेवानामिवपावकिः ॥ अनुयास्यामहेत्वाऽऽजौसौरभेयाइवर्षभम् ९ उग्रधन्वामहेष्वासोदिव्यं विस्फारयन्धनुः ॥ अग्रेभवंत्वांतुदृष्ट्वानार्जुनःप्रहरिष्यति १० ध्रुवंयुधिष्ठिरंसंख्येसानुबंधंसबांधवम् ॥ जेष्यामिपुरुषव्याघ्रभवान्सेनापतिर्यदि ११ संजयउवाच ॥ एवमुक्तेततोद्रोणंजयेत्यूचुर्नराधिपाः ॥ सिंहनादेनमहताहर्षयंतस्तवात्मजम् १२ सैनिकाश्चमुदायुक्तावर्धयंतिद्विजोत्तमम् ॥ दुर्योधनंपुरस्कृ त्यप्रार्थयंतोमहद्यशः ॥ दुर्योधनंततोराजन्द्रोणोवचनमब्रवीत् १३ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिद्रोणाभिषेकपर्वणि द्रोणप्रोत्साहने षष्ठोऽध्यायः ॥ ६ ॥ द्रोणउवाच ॥ वेदंषडंगंवेदाहमर्थविद्यांचमानवीम् ॥ त्रैयंबकमथेष्वस्त्रंशस्त्राणिविविधानिच १

ऽध्यायः ॥ ५ ॥ कर्णस्येति १ । २ । ३ भवान्नेत्रंनेतायेषांतं ४ । ५ धर्मेद्रोयमः अंबुराड्वरुणः ६ । ७ । ८ । पावकिःस्कंदः ९ । १० । ११ । १२ । १३ ॥ इतिद्रोणपर्वणिटीकायांषष्ठोऽध्यायः ॥ ६ ॥ वेदमिति १

२ । ३ । ४ । ५ । ६ । ७ । ८ सुभगानर्त्तितैः सौभाग्यवतीनृत्यैः ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१

प्रेचाप्युक्तामयिगुणाभवद्भिर्जयकांक्षिभिः ॥ चिकीर्षुस्तानहंसर्वान्योधयिष्यामिपांडवान् २ पार्थंतंतुरणेराजन्नहनिष्येकथंचन ॥ सहिसृष्टोवधार्थायममैवपुरुष
र्षभः ३ योधयिष्यामिसैन्यानिनाशयन्सर्वसोमकान् ॥ नचमांपांडवायुद्धेयोधयिष्यंतिहर्षिताः ४ ॥ संजयउवाच ॥ सएवमभ्यनुज्ञातश्चक्रेसेनापतिंततः ॥
द्रोणंतवसुतोराजन्विधिदृष्टेनकर्मणा ५ अथाभिषिषिचुर्द्रोणंदुर्योधनमुखान्नृपाः ॥ सैनापत्येयथास्कंदंपुराशक्रमुखाःसुराः ६ ततोवादित्रघोषेणशंखानांचमहा
स्वनैः ॥ प्रादुरासीत्कृतेद्रोणेहर्षःसेनापतौतदा ७ ततःपुण्याहघोषेणस्वस्तिवादस्वनेनच ॥ संस्तवैर्गीतशब्दैश्चसूतमागधबंदिनाम् ८ जयशब्दैर्द्विजाग्र्या
णांसुभगानर्त्तितैस्तथा ॥ सत्कृत्यविधिनाद्रोणंमेनिरेपांडवाञ्जितान् ९ ॥ संजयउवाच ॥ सैनापत्यंतुसंप्राप्यभारद्वाजोमहारथः ॥ युयुत्सुर्व्यूह्यसैन्यानि
प्रायात्तवसुतैःसह १० सैंधवश्चकलिंगश्चविकर्णश्चतवात्मजः ॥ दक्षिणंपार्श्वमास्थायसमातिष्ठंतदंशिताः ११ प्रपक्षःशकुनिस्तेषांप्रवरैर्हयसादिभिः ॥ ययौगां
धारकैःसार्धंविमलप्रासयोधिभिः १२ कृपश्चकृतवर्माचचित्रसेनोविविंशतिः ॥ दुःशासनमुखायत्ताःसव्यंपक्षमपालयन् १३ तेषांप्रपक्षाःकांबोजाःसुदक्षिणपु
रःसराः ॥ ययुरश्वैर्महावेगैःशकाश्चयवनैःसह १४ मद्रास्त्रिगर्ताःसांबष्ठाःप्रतीच्योदीच्यमालवाः ॥ शिबयःशूरसेनाश्चशूद्राश्चमलदैःसह १५ सौवीराःकितवाः
प्राच्यादाक्षिणात्याश्चसर्वशः ॥ तवात्मजंपुरस्कृत्यसूतपुत्रस्यपृष्ठतः १६ हर्षयंतःस्वसैन्यानिययुस्तवसुतैःसह ॥ प्रवरःसर्वयोधानांबलेषुबलमादधत् १७
ययौवैकर्त्तनःकर्णःप्रमुखेसर्वधन्विनाम् ॥ तस्यदीप्तोमहाकायःस्वान्यनीकानिहर्षयन् १८ हस्तिकक्ष्योमहाकेतुर्बभौसूर्यसमद्युतिः ॥ नभीष्मव्यसनंकश्चिद्दृष्ट्वा
कर्णममन्यत १९ विशोकाश्चाभवन्सर्वेराजानःकुरुभिःसह ॥ हृष्टाश्चबहवोयोधास्तत्राजल्पंतवेगतः २० नहिकर्णंरणेदृष्ट्वायुधिस्थास्यंतिपांडवाः ॥ कर्णोहि
समरेशक्तोजेतुंदेवान्सवासवान् २१ किमुपांडुसुतान्युद्धेहीनवीर्यपराक्रमान् ॥ भीष्मेणतुरणेपार्थाःपालिताबाहुशालिना २२ तांस्तुकर्णःशरैस्तीक्ष्णैर्नाशयिष्य
तिसंयुगे ॥ एवंब्रुवंतस्तेऽन्योन्यंहृष्टरूपाविशांपते २३ राधेयंपूजयंतश्चप्रशंसंतश्चनिर्ययुः ॥ अस्माकंशकटव्यूहोद्रोणेनविहितोऽभवत् २४ परेषां
क्रौंचएवासीद्व्यूहोराजन्महात्मनाम् ॥ प्रीयमाणेनविहितोधर्मराजेनभारत २५ व्यूहप्रमुखतस्तेषांतस्थतुःपुरुषर्षभौ ॥ वानरध्वजमुच्छ्रित्यविष्वक्से
नधनंजयौ २६ ककुदंसर्वसैन्यानांधामसर्वधनुष्मताम् ॥ आदित्यपथगःकेतुःपार्थस्यामिततेजसः २७ दीपयामासतत्सैन्यंकौरव्यस्यमहात्मनः ॥
यथाप्रज्वलितःसूर्योयुगांतेवैवसुंधराम् २८

२२ । २३ । २४ । २५ । २६ आदित्यपथगः आकाशगः २७ । २९

२९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ ह्लादनंयोद्धुरानंद

दीप्यन्नदृश्येतहितथाकेतुःसर्वत्रधीमतः ॥ योधानामर्जुनःश्रेष्ठोगांडीवंधनुषांवरम् २९ वासुदेवश्चभूतानांचक्राणांचसुदर्शनम् ॥ चत्वार्येतानितेजांसिवहन्
श्वेतहयोरथः ३० परेषामग्रतस्तस्थौकालचक्रमिवोद्यतम् ॥ एवंतौसुमहात्मानौबलसेनाग्रगावुभौ ३१ तावकानांमुखेकर्णःपरेषांचधनंजयः ॥ ततोजया
भिसंरब्धौपरस्परवधैषिणौ ३२ अवेक्षेतांतदान्योन्यंसमरेकर्णपांडवौ ॥ ततःप्रयातेसहसाभारद्वाजेमहारथे ३३ आर्त्तनादेनघोरेणवसुधासमकंपत ॥ ततस्तु
मुलमाकाशमावृणोत्सदिवाकरम् ३४ वातोद्भूतंरजस्तीव्रंकौशेयनिकरोपमम् ॥ ववर्षद्यौरनभ्रापिमांसास्थिरुधिराण्युत ३५ गृध्राःश्येनाबकाःकंकावायसाश्च
सहस्रशः ॥ उपर्युपरिसेनांतेतदापर्यपतन्नृप ३६ गोमायवश्चप्राक्रोशन्भयदान्दारुणान्रवान् ॥ अकार्षुरपसव्यंचबहुशःपृतनांतव ३७ चिखादिषंतोमांसा
निपिपासंतश्चशोणितम् ॥ अपतद्दीप्यमानाचसनिर्घातासकंपना ३८ उल्काज्वलंतीसंग्रामेपुच्छेनावृत्यसर्वशः ॥ परिवेषोमहांश्चापिसविद्युत्स्तनयित्नुमान्
३९ भास्करस्याभवद्राजन्प्रयातेवाहिनीपतौ ॥ एतेचान्येचबहवःप्रादुरासन्सुदारुणाः ४० उत्पातायुधिवीराणांजीवितक्षयकारिणः ॥ ततःप्रववृतेयुद्धंपरस्पर
वधैषिणां ४१ कुरुपांडवसैन्यानांशब्देनापुरयज्जगत् ॥ तेत्वन्योन्यंसुसंरब्धाःपांडवाःकौरवैःसह ४२ अभ्यघ्नन्निशितैःशस्त्रैर्जययृद्धाःप्रहारिणः ॥ सपांडवानांमहतीम
हेष्वासोमहाद्युतिः ४३ वेगेनाभ्यद्रवत्सेनांकिरन्शरशतैःशितैः ॥ द्रोणमभ्युद्यतंदृष्ट्वापांडवाःसहसृंजयैः ४४ प्रत्यगृह्णंस्तदाराजञ्छरवर्षैःपृथक्पृथक् ॥
विक्षोभ्यमाणाद्रोणेनभिद्यमानामहाचमूः ४५ व्यशीर्यतसपांचालावातेनेवबलाहकाः ॥ बहूनीहविकुर्वाणोदिव्यान्यस्त्राणिसंयुगे ४६ अपीडयत्क्षणेनैवद्रोणः
पांडवसृंजयान् ॥ तेवध्यमानाद्रोणेनवासवेनेवदानवाः ४७ पंचालाःसमकंपंतधृष्टद्युम्नपुरोगमाः ॥ ततोदिव्यास्त्रविच्छूरोयज्ञसेनिर्महारथः ४८ अभिनच्छरव
र्षेणद्रोणानीकमनेकधा ॥ द्रोणस्यशरवर्षाणिशरवर्षेणपार्षतः ४९ सन्निवार्यततःसर्वान्कुरूनप्यवधीद्बली ॥ संयम्यतुततोद्रोणःसमवस्थाप्यचाहवे ५०
स्वमनीकंमहेष्वासःपार्षतंसमुपाद्रवत् ॥ सबाणवर्षंसुमहदसृजत्पार्षतंप्रति ५१ मघवान्समभिक्रुद्धःसहसादानवानिव ॥ तेकंप्यमानाद्रोणेनबाणैःपांडवसृंजयाः
५२ पुनःपुनरभज्यंतसिंहेनेवेतरेमृगाः ॥ तथापर्यचरद्द्रोणःपांडवानांबलेबली ॥ अलातचक्रवद्राजंस्तदद्भुतमिवाभवत् ५३ खचरनगरकल्पंकल्पितंशा
स्त्रदृष्टंचाचलदनिलपताकंह्लादनंवल्गिताश्वम् ॥ स्फटिकविमलकेतुंत्रासनंशात्रवाणांरथवरमधिरूढःसंजहारारिसेनाम् ५४ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिद्रो
णाभिषेकपर्वणिद्रोणपराक्रमेसप्तमोऽध्यायः ॥ ७ ॥ ॥ संजयउवाच ॥ तथाद्रोणमभिघ्नंतंसाश्वसूतरथद्विपान् ॥ व्यथिताःपांडवादृष्ट्वानचैनंपर्यवारयन् १
ततोयुधिष्ठिरोराजाधृष्टद्युम्नधनंजयौ ॥ अब्रवीत्सर्वतोयत्तैःकुंभयोनिर्निवार्यताम् २ तत्रैनमर्जुनश्चैवपार्षतश्चसहानुगः ॥ प्रत्यगृह्णंस्ततःसर्वेसमापेतुर्महारथाः ३

जननम् ५४ ॥ इतिद्रोणपर्वणिटीकायांसप्तमोऽध्यायः ॥ ७ ॥ ॥ ७ ॥ ॥ तथेति १ । २ । ३

४ । ५ । ६ । ७ । ८ । ९ । १० । ११ भीमःशब्दइतिसंबंधः १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४

केकयाभीमसेनश्चसौभद्रोऽथघटोत्कचः ॥ युधिष्ठिरोयमौमत्स्याद्रुपदस्यात्मजास्तथा ४ द्रौपदेयाश्चसंहृष्टाधृष्टकेतुःससात्यकिः ॥ चेकितानश्चसंक्रुद्धोयुयुत्सु
श्चमहारथः ५ येचान्येपार्थिवाराजन्पांडवस्यानुयायिनः ॥ कुलवीर्यानुरूपाणिचक्रुःकर्माण्यनेकशः ६ संरक्ष्यमाणांतांदृष्ट्वापांडवैर्वाहिनींरणे ॥ व्यावृत्यच
क्षुषीकोपाद्भारद्वाजोऽन्ववैक्षत ७ सतीव्रंकोपमास्थायरथेसमरदुर्जयः ॥ व्यधमत्पांडवानीकमभ्राणिवसदागतिः ८ रथानश्वान्नरान्नागानभिधावन्नितस्ततः ॥
चचारोन्मत्तवद्द्रोणोवृद्धोऽपितरुणोयथा ९ तस्यशोणितदिग्धांगाःशोणास्तेवातरंहसः ॥ आजानेयाहयाराजन्नविश्रांताध्रुवंययुः १० तमंतकमिवक्रुद्धमाप
तंतंयतव्रतम् ॥ दृष्ट्वासंप्राद्रवन्योधाःपांडवस्यततस्ततः ११ तेषांप्राद्रवतांभीमःपुनरावर्ततामपि ॥ पश्यतांतिष्ठतांचासीच्छब्दःपरमदारुणः १२ शूरा
णांहर्षजननोभीरूणांभयवर्धनः ॥ द्यावापृथिव्योर्विवरंपूरयामाससर्वतः १३ ततःपुनरपिद्रोणोनामविश्रावयन्युधि ॥ अकरोद्रौद्रमात्मानंकिरञ्छरशतैःप
रान् १४ सतथातेष्वनीकेषुपांडुपुत्रस्यमारिष ॥ कालवद्व्यचरद्द्रोणोयुवेवस्थविरोबली १५ उत्कृत्यचशिरांस्युग्रान्बाहूनपिसुभूषणान् ॥ कृत्वाशून्यान्रथो
पस्थानुदक्रोशन्महारथान् १६ तस्यहर्षप्रणादेनबाणवेगेनवाविभो ॥ प्राकंपंतरणेयोधागावःशीतार्दिताइव १७ द्रोणस्यरथघोषेणमौर्वीनिष्पेषणेनच ॥
धनुःशब्देनचाकाशेशब्दःसमभवन्महान् १८ अथास्यधनुषोबाणानिश्चरंतःसहस्रशः ॥ व्याप्यसर्वादिशःपेतुर्नागाश्वरथपत्तिषु १९ तंकार्मुकमहावेगमस्त्रज्व
लितपावकम् ॥ द्रोणमासादयांचक्रुःपंचालाःपांडवैःसह २० तान्सकुंजरपत्त्यश्वान्प्राहिणोद्यमसादनम् ॥ चक्रेऽचिरेणचद्रोणोमहींशोणितकर्दमाम् २१ त
न्वतापरमास्त्राणिशरान्सततमस्यता ॥ द्रोणेनविहितंदिक्षुशरजालमदृश्यत २२ पदातिषुरथाश्वेषुवारणेषुचसर्वशः ॥ तस्यविद्युदिवाभ्रेषुचरन्केतुरदृश्यत
२३ सकेकयानांप्रवरांश्चपंचपंचालराजंचशरैःप्रमथ्य ॥ युधिष्ठिरानीकमदीनसत्वोद्रोणोभ्ययात्कार्मुकबाणपाणिः २४ तंभीमसेनश्चधनंजयश्चशिनेश्चनप्ताद्रुप
दात्मजश्च ॥ शैब्यात्मजःकाशिपतिःशिबिश्चदृष्ट्वानदंतोव्यकिरञ्छरौघैः २५ तेषामथद्रोणधनुर्विमुक्ताःपतत्रिणःकांचनचित्रपुंखाः ॥ भित्वाशरीराणिगजा
श्वयूनांजग्मुर्महींशोणितदिग्धवाजाः २६ सायोधसंघैश्चरथैश्चभूमिःशरैर्विभिन्नैर्गजवाजिभिश्च ॥ प्रच्छाद्यमानापतितैर्बभूवसमावृताद्यौरिवकालमेघैः २७
शैनेयभीमार्जुनवाहिनीशंसौभद्रपांचालसकाशिराजम् ॥ अन्यांश्चवीरान्समरेममर्दद्रोणःसुतानांतवभूतिकामः २८ एतानिचान्यानिचकौरवेंद्रकर्माणिकृत्वा
समरेमहात्मा ॥ प्रताप्यलोकानिवकालसूर्योद्रोणोगतःस्वर्गमितोहिराजन् २९ एवंरुक्मरथःशूरोहत्वाशतसहस्रशः ॥ पांडवानांरणेयोधान्पार्षतेनानिपाति
तः ३० अक्षौहिणीमभ्यधिकांशूराणामनिवर्तिनाम् ॥ निहत्यपश्चाद्धृतिमानगच्छत्परमांगतिम् ३१ पांडवैःसहपंचालैरशिवैःक्रूरकर्मभिः ॥ हतोरुक्मरथोराज
न्कृत्वाकर्मसुदुष्करम् ३२

२५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२

३३ । ३४ । ३५ । ३६ । ३७ ॥ इतिद्रोणपर्वणिटीकायामष्टमोऽध्यायः ॥ ८ ॥ ॥ ७ ॥ किंकुर्वाणमिति १ अस्यतःशरानितिशेषः २ । ३ । ४ । ५ । ६ इष्वस्त्रधराचार्यंधनुर्धराचार्यं

ततोनिनादोभूतानामाकाशेसमजायत ॥ सैन्यानांचततोराजन्नाचार्येनिहतेयुधि ३३ द्यांधरांखंदिशोवाऽपिप्रदिशश्चानुनादयन् ॥ अहोधिगितिभूतानांश
ब्दःसमभवद्भृशम् ३४ देवताःपितरश्चैवपूर्वेयेचास्यबांधवाः ॥ ददृशुर्निहतंतत्रभारद्वाजंमहारथम् ३५ पांडवास्तुजयंलब्ध्वासिंहनादान्प्रचक्रिरे ॥ सिंहना
देनमहतासमकंपतमेदिनी ३६ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिद्रोणाभिषेकपर्वणिद्रोणवधश्रवणे अष्टमोऽध्यायः ॥ ८ ॥ धृतराष्ट्रउवाच ॥ किंकुर्वाणंरणेद्रोणं
जघ्नुःपांडवसृंजयाः ॥ तथानिपुणमस्त्रेषुसर्वशस्त्रभृतामपि १ रथभंगोबभूवास्यधनुर्वाशीर्यतास्यतः ॥ प्रमत्तोवाऽभवद्द्रोणस्ततोमृत्युमुपेयिवान् २ कथंनुपार्ष
तस्तातशत्रुभिर्दुष्प्रधर्षणम् ॥ किरंतमिषुसंघातान्रुक्मपुंखाननेकशः ३ क्षिप्रहस्तंद्विजश्रेष्ठंकृतिनंचित्रयोधिनम् ॥ दूरेषुपातिनंदांतमस्त्रयुद्धेषुपारगम् ४
पांचालपुत्रोन्यवधीद्दिव्यास्त्रधरमच्युतम् ॥ कुर्वाणंदारुणंकर्मरणेयत्तंमहारथम् ५ व्यक्तंहिदैवंबलवत्पौरुषादितिमेमतिः ॥ यद्द्रोणोनिहतःशूरःपार्षतेनमहा
त्मना ६ अस्त्रंचतुर्विधंवीरेयस्मिन्नासीत्प्रतिष्ठितम् ॥ तमिष्वस्त्रधराचार्यंद्रोणंशंससिमेहतम् ७ श्रुत्वाहतंरुक्मरथंवैयाघ्रपरिवारितम् ॥ जातरूपपरिष्कारं
नाद्यशोकमुपाददे ८ ननूनंपरदुःखेनम्रियतेकोऽपिसंजय ॥ यत्रद्रोणमहंश्रुत्वाहतंजीवामिमंदधीः ९ दैवमेवपरंमन्येनन्वनर्थंहिपौरुषम् ॥ अश्मसारमयंनूनं
हृदयंसुदृढंमम १० यच्छ्रुत्वानिहतंद्रोणंशतधानविदीर्यते ॥ ब्राह्मेदैवेतथेष्वस्त्रेयमुपासन्गुणार्थिनः ११ ब्राह्मणाराजपुत्राश्चसकथंमृत्युनाहृतः ॥ शोषणंसा
गरस्येवमेरोरिवविसर्पणम् १२ पतनंभास्करस्येवनमृष्येद्रोणपातनम् ॥ दुष्टानांप्रतिषेद्धाऽसीद्धार्मिकाणांचरक्षिता १३ योऽहासीत्कृपणस्यार्थेप्राणानपिप
रंतपः ॥ मंदानांममपुत्राणांजयाशायस्यविक्रमे १४ बृहस्पत्युशनस्तुल्योबुद्ध्यासनिहतःकथम् ॥ तेचशोणाबृहंतोऽश्वाश्छन्नाजालैर्हिरण्मयैः १५ रथेवात
जवायुक्ताःसर्वशस्त्रातिगारणे ॥ बलिनोह्रेषिणोदांताःसैंधवाःसाधुवाहिनः १६ दृढाःसंग्राममध्येषुकच्चिदासन्नविह्वलाः ॥ करिणांबृंहतांयुद्धेशंखदुंदुभिनिःस्वनैः
१७ ज्याक्षेपशरवर्षाणांशस्त्राणांचसहिष्णवः ॥ आशंसंतःपराञ्जेतुंजितश्वासाजितव्यथाः १८ हयाःपराजिताःशीघ्राभारद्वाजरथोद्वहाः ॥ तेस्मरुक्मरथेयुक्ता
नरवीरसमाहताः १९ कथंनाभ्यतरंस्तातपांडवानामनीकिनीं ॥ जातरूपपरिष्कारमास्थायरथमुत्तमम् २० भारद्वाजःकिमकरोद्युधिसत्यपराक्रमः ॥ विद्यां
यस्योपजीवंतिसर्वलोकधनुर्धराः २१ ससत्यसंधोबलवान्द्रोणःकिमकरोद्युधि ॥ दिविशक्रमिवश्रेष्ठंमहामात्रंधनुर्भृताम् २२ केनुतंरौद्रकर्माणंयुद्धेप्रत्युद्ययुर
थाः ॥ ननुरुक्मरथंदृष्ट्वाप्राद्रवंतिस्मपांडवाः २३ दिव्यमस्त्रंविकुर्वाणंरणेतस्मिन्महाबलम् ॥ उताहोसर्वसैन्येनधर्मराजःसहानुजः २४ पांचाल्यप्रग्रहोद्रोणं
सर्वतःसमवारयत् ॥ नूनमावारयत्पार्थोरथिनोऽन्यानजिह्मगैः २५

७ । ८ । ९ अश्मसारोलोहं १०
विसर्पणंक्षेपणं ११ । १२ । १३ । १४ । १५ बलिनस्तेजस्विनः १६ । १७ । १८ । १९ । २० । २१ महामात्रंप्रधानं २२ । २३ । २४ पांचाल्यप्रग्रहःपांचाल्यःप्रग्रहोबंधनरज्जुर्यस्य २५

शुष्मिणस्तेजस्विनः २६ अपसदोऽधमः २७ । २८ आख्यानंपुराणभारतादि २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९।४० । ४१ । ४२ । ४३ । ४४ । ४५ ॥ इति

ततोद्रोणंसमारोहत्पार्षतःपापकर्मकृत ॥ नह्यहंपरिपश्यामिवधेकंचनशुष्मिणः २६ धृष्टद्युम्नाद्दतेरौद्रात्पाल्यमानात्किरीटिना ॥ तैर्वृतःसर्वतःशूरःपांचाल्यापसदस्ततः २७ केकयैश्चेदिकारूषैर्मत्स्यैरन्यैश्चभूमिपैः ॥ व्याकुलीकृतमाचार्यंपिपीलैरुरगंयथा २८ कर्मण्यसुकरेसक्तंजघानेतिमतिर्मम ॥ योधीत्यचतुरोवेदान्सांगानाख्यानपंचमान् २९ ब्राह्मणानांप्रतिष्ठाऽऽसीत्स्रोतसामिवसागरः ॥ क्षत्रंचब्रह्मचैवेहयोभ्यतिष्ठत्परंतपः ३० सकथंब्राह्मणोवृद्धःशस्त्रेणवधमाप्तवान् ॥ अमर्षिणामर्षितवान्क्लिश्यमानान्सदामया ३१ अनर्हमाणान्कौंतेयान्कर्मणस्तस्यतत्फलम् ॥ यस्यकर्मानुजीवंतिलोकेसर्वधनुर्भृतः ३२ ससत्यसंधःसुकृतीश्रीकामैर्निहतःकथम् ॥ दिविशक्रइवश्रेष्ठोमहासत्वोमहाबलः ३३ सकथंनिहतःपार्थैःक्षुद्रमत्स्यैर्यथातिमिः ॥ क्षिप्रहस्तश्चबलवान्दृढधन्वाऽरिमर्दनः ॥ ३४ नयस्यविजयाकांक्षीविषयंप्राप्यजीवति ॥ यंद्वौनजहतःशब्दौजीवमानंकदाचन ३५ ब्राह्मश्चवेदकामानांज्याघोषश्चधनुष्मताम् ॥ अदीनंपुरुषव्याघ्रंह्रीमंतमपराजितम् ३६ नाहंमृष्येहतंद्रोणंसिंहद्विरदविक्रमम् ॥ कथंसंजयदुर्धर्षमनाधृष्ययशोबलम् ३७ पश्यतांपुरुषेंद्राणांसमरेपार्षतोऽवधीत ॥ केपुरस्तादयुध्यंतरक्षंतोद्रोणमंतिकात ३८ केनुपश्चादवर्त्तंतगच्छतोदुर्गमांगतिम् ॥ केऽरक्षन्दक्षिणंचक्रंसव्यंकेचमहात्मनः ३९ पुरस्तात्केचवीरस्ययुध्यमानस्यसंयुगे ॥ केचतस्मिंस्तनूंस्त्यक्त्वाप्रतीपंमृत्युमाव्रजन् ४० द्रोणस्यसमरेवीराःकेऽकुर्वंतपरांधृतिम् ॥ कच्चिन्नैनंभयान्मंदाःक्षत्रियाव्यजहन्रणे ४१ रक्षितारस्ततःशून्येकच्चित्तैर्नहतःपरैः ॥ नसपृष्ठमरेस्त्रासाद्रणेशौर्यात्प्रदर्शयेत् ४२ परामप्यापदंप्राप्यसकथंनिहतःपरैः ॥ एतदार्येणकर्त्तव्यंकृच्छ्रास्वापत्सुसंजय ४३ पराक्रमेद्यथाशक्त्यातच्चतस्मिन्प्रतिष्ठितम् ॥ मुह्यतेमेमनस्तातकथातावन्निवार्यताम् ४४ भूयस्तुलब्धसंज्ञस्त्वांपरिपृच्छामिसंजय ४५ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिद्रोणाभिषेकपर्वणिधृतराष्ट्रशोकेनवमोऽध्यायः ॥ ९ ॥ वैशंपायनउवाच ॥ एतत्पृष्ट्वासूतपुत्रंहृच्छोकेनार्दितोभृशम् ॥ जयेनिराशःपुत्राणांधृतराष्ट्रोऽपतत्क्षितौ १ तंविसंज्ञंनिपतितंसिषिचुःपरिचारिकाः ॥ जलेनात्यर्थशीतेनवीजंत्यःपुण्यगंधिना २ पतितंचैनमालोक्यसमंताद्भरतस्त्रियः ॥ परिवव्रुर्महाराजमस्पृशंश्चैवपाणिभिः ३ उत्थाप्यचैनंशनकैराजानंपृथिवीतलात ॥ आसनंप्रापयामासुर्बाष्पकंठ्योवराननाः ४ आसनंप्राप्यराजातुमूर्छयाऽभिपरिप्लुतः ॥ निश्चेष्टोऽतिष्ठततदावीज्यमानःसमंततः ५ सलब्ध्वाशनकैःसंज्ञांवेपमानोमहीपतिः ॥ पुनर्गावल्गणिंसूतंपर्यपृच्छद्यथातथम् ६ ॥ धृतराष्ट्रउवाच ॥ यःसउद्यन्निवादित्योज्योतिषाप्रणुदंस्तमः ॥ अजातशत्रुमायांतंकस्तंद्रोणादवारयत् ७ प्रभिन्नमिवमातंगंयथाक्रुद्धंतरस्विनम् ॥ प्रसन्नवदनंदृष्ट्वाप्रतिद्विरदगामिनं ८ वासितासंगमेयद्वदजय्यंप्रतियूथपैः ॥ निजघानरणेवीरान्वीरःपुरुषसत्तमः ९ योह्येकोहिमहावीर्योनिर्दहेद्घोरचक्षुषा ॥ कृत्स्नंदुर्योधनबलंधृतिमान्सत्यसंगरः १०

द्रोणपर्वणिटीकायांनवमोध्यायः ॥ ९ ॥   एतदिति १ । २ । ३ । ४ । ५ । ६ सःप्रसिद्धः तमजातशत्रुंआयांतंदृष्ट्वाद्रोणात्कःअवारयदित्यन्वयः सार्धश्लोकद्वयमेकंवाक्यं ७ । ८ । ९ । १०

१३ । १४ यदाअयात् यदाचदुर्योधनपुरोगमान्गार्ध्रपत्रैरभ्यर्षिचत्तदावोमनःकीदृशमभूदितिषष्ठेनान्वयः १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

चक्षुर्हणंजयेसक्तमिष्वासधरमच्युतम् ॥ दांतंबहुमतंलोकेकेशूराःपर्यवारयन् ११ केदुष्प्रधर्षंराजानमिष्वासधरमच्युतम् ॥ समासेदुर्नरव्याघ्रंकौंतेयंतत्रमाम
काः १२ तरसैवाभिपद्याथयेवैद्रोणमुपाद्रवत् ॥ यःकरोतिमहत्कर्मशत्रूणांवैमहाबलः १३ महाकायोमहोत्साहोनागायुतसमोबले ॥ तंभीमसेनमायांतंकेशूराः
पर्यवारयन् १४ यदायाज्जलदप्रख्योरथःपरमवीर्यवान् ॥ पर्जन्यइवबीभत्सुस्तुमुलामशनींसृजन् १५ विसृजञ्छरजालानिवर्षाणिमघवानिव ॥ अवस्फूर्जन्दि
शःसर्वास्तलनेमिस्वनेनच १६ चापविद्युत्प्रभोघोरोरथगुल्मबलाहकः ॥ सनेमिघोषस्तनितःशरशब्दातिबंधुरः १७ रोषनिर्जितजीमूतोमनोभिप्रायशीघ्रगः ॥
मर्मातिगोबाणधरस्तुमुलःशोणितोदकैः १८ संप्लावयन्दिशःसर्वामानवैरास्तरन्महीम् ॥ भीमनिःस्वनितोरौद्रोदुर्योधनपुरोगमान् १९ युद्धेऽभ्यर्षिचाद्विजयो
गार्ध्रपत्रैःशिलाशितैः ॥ गांडीवंधारयन्धीमान्कीदृशंवोमनस्तदा २० इषुसंबाधमाकाशंकुर्वन्कपिवरध्वजः ॥ यदाऽयात्कथमासीत्तुतदापार्थंसमीक्षताम् २१
कच्चिद्गांडीवशब्देननप्रणश्यतिवैबलम् ॥ यद्वःसभैरवंकुर्वन्नर्जुनोभृशमन्वयात् २२ कच्चिन्नापानुदत्प्राणानिषुभिर्वोधनंजयः ॥ वातोवेगादिवाविध्यन्मेघान्शर
गणैर्नृपान् २३ कोहिगांडीवधन्वानंरणेसोढुंनरोऽर्हति ॥ यमुपश्रुत्यसेनाग्रेजनःसर्वोविदीर्यते २४ यत्सेनाःसमकंपंतयद्वीरानस्पृशद्भयम् ॥ केतत्रनाजहुर्द्रोणं
केक्षुद्राःप्राद्रवन्भयात् २५ केवातत्रतनूस्त्यक्त्वाप्रतीपंमृत्युमाव्रजन् ॥ अमानुषाणांजेतारंयुद्धेष्वपिधनंजयम् २६ नचवेगंसिताश्वस्यविसहिष्यंतिमामकाः ॥
गांडीवस्यचनिर्घोषंप्रावृड्जलदनिःस्वनम् २७ विष्वक्सेनोयस्ययंतायस्ययोद्धाधनंजयः ॥ अशक्यःसरथोजेतुंमन्येदेवासुरैरपि २८ सुकुमारोयुवाशूरोदर्शनी
यश्चपांडवः ॥ मेधावीनिपुणोधीमान्युधिसत्यपराक्रमः २९ आरावंविपुलंकुर्वन्व्यथयन्सर्वसैनिकान् ॥ यदाऽयान्नकुलोद्रोणंकेशूराःपर्यवारयन् ३० आशीवि
षइवक्रुद्धःसहदेवोयदाऽभ्ययात् ॥ कदनंकरिष्यन्शत्रूणांतेजसादुर्जयोयुधि ३१ आर्यव्रतममोघेषुंह्रीमंतमपराजितम् ॥ सहदेवंतमायांतंकेशूराःपर्यवारयन्
३२ यस्तुसौवीरराजस्यप्रमथ्यमहतींचमूम् ॥ आदत्तमहिषींभोजांकाम्यांसर्वांगशोभनाम् ३३ सत्यंधृतिश्चशौर्यंचब्रह्मचर्यंचकेवलम् ॥ सर्वाणियुयुधाने
ऽस्मिन्नित्यानिपुरुषर्षभे ३४ बलिनंसत्यकर्माणमदीनमपराजितम् ॥ वासुदेवसमंयुद्धेवासुदेवादनंतरम् ३५ धनंजयोपदेशेनश्रेष्ठमिष्वस्त्रकर्मणि ॥ पार्थेनस
ममस्त्रेषुकस्तंद्रोणादवारयत् ३६ वृष्णीनांप्रवरंवीरंशूरंसर्वधनुष्मताम् ॥ रामेणसममस्त्रेषुयशसाविक्रमेणच ३७ सत्यंधृतिर्मतिःशौर्यंब्राह्मंचास्त्रमनुत्तमम् ॥
सात्वतेतानिसर्वाणित्रैलोक्यमिवकेशवे ३८ तमेवंगुणसंपन्नं दुर्वारमपिदैवतैः ॥ समासाद्यमहेष्वासंकेशूराःपर्यवारयन् ३९ पंचालेषूत्तमंवीरमुत्तमाभिजनप्रियम्॥
नित्यमुत्तमकर्माणमुत्तमौजसमाहवे ४० युक्तंधनंजयहितेममानर्थार्थमुत्थितम् ॥ यमवैश्रवणादित्यमहेंद्रवरुणोपमम् ४१ महारथंसमाख्यातंद्रोणायोद्यतमाहवे॥
त्यजंतंतुमुलेप्राणान्केशूराःसमवारयन् ४२ २८ । २९ । ३० । ३१ । ३२ । ३३ युयुधानेसात्यकौ ३४ । ३५ । ३६ । ३७ सात्वतेसात्यकौ ३८ । ३९ । ४० । ४१ । ४२

४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ स्थास्नुचारिषुस्थावरजंगमा



एकोऽपमृत्यचेदिभ्यःपांडवान्यःसमाश्रितः ॥ धृष्टकेतुंसमायांतंद्रोणंकस्तंन्यवारयत ४३ योऽवधीत्केतुमान्वीरोराजपुत्रंदुरासदम् ॥ अपरांतगिरिद्वारेद्रोणा त्कस्तंन्यवारयत ४४ स्त्रीपुंसयोर्नरव्याघ्रोयःसवेदगुणागुणान् ॥ शिखंडिनंयाज्ञसेनिमम्लानमनसंयुधि ४५ देवव्रतस्यसमरेहेतुंमृत्योर्महात्मनः ॥ द्रोणाया भिमुखंयांतंकेशूराःपर्यवारयन् ४६ यस्मिन्नभ्यधिकावीरेगुणाःसर्वेधनंजयात् ॥ यस्मिन्नस्त्राणिसत्यंचब्रह्मचर्यंचसर्वदा ४७ वासुदेवसमंवीर्येधनंजयसमंबले ॥ तेजसाऽऽदित्यसदृशंबृहस्पतिसमंमतौ ४८ अभिमन्युंमहात्मानंव्यात्ताननमिवांतकम् ॥ द्रोणायाभिमुखंयांतंकेशूराःसमवारयन् ४९ तरुणस्तरुणप्रज्ञःसौभ द्रःपरवीरहा ॥ यदाऽभ्यधावद्वैद्रोणंतदासीद्वोमनःकथम् ५० द्रौपदेयानरव्याघ्राःसमुद्रमिवसिंधवः ॥ यद्द्रोणमाद्रवन्संख्येकेशूरास्तान्न्यवारयन् ५१ एते द्वादशवर्षाणिक्रीडामुत्सृज्यबालकाः ॥ अस्त्रार्थमवसन्भीष्मेबिभ्रतोव्रतमुत्तमम् ५२ क्षत्रंजयःक्षत्रदेवःक्षत्रवर्माचमानदः ॥ धृष्टद्युम्नात्मजावीराःकेतान्द्रोणाद वारयन् ५३ शताद्विशिष्टंयंयुद्धेसममन्यंतवृष्णयः ॥ चेकितानंमहेष्वासंकस्तंद्रोणादवारयत ५४ वार्धक्षेमिःकलिंगानांयःकन्यामाहरद्युधि ॥ अनाधृष्टिर दीनात्माकस्तंद्रोणादवारयत ५५ भ्रातरःपंचकैकेयाधार्मिकाःसत्यविक्रमाः ॥ इंद्रगोपकसंकाशारक्तवर्मायुधध्वजाः ५६ मातृष्वसुःसुतावीराःपांडवानांज यार्थिनः ॥ तान्द्रोणंहंतुमायातान्केवीराःपर्यवारयन् ५७ यंयोधयंतोराजानोनाजयन्वारणावते ॥ षण्मासानपिसंरब्धाजिघांसंतोयुधांपतिं ५८ धनुष्मतां वरंशूरंसत्यसंधंमहाबलम् ॥ द्रोणात्कस्तंनरव्याघ्रंयुयुत्सुंपर्यवारयत ५९ यःपुत्रंकाशिराजस्यवाराणस्यांमहारथम् ॥ समरेस्त्रीषुगृध्यंतंभल्लेनापाहरद्रथात ६० धृष्टद्युम्नंमहेष्वासंपार्थानांमंत्रधारिणम् ॥ युक्तंदुर्योधनानर्थेसृष्टंद्रोणवधायच ६१ निर्दहंतंरणेयोधान्दारयंतंचसर्वतः ॥ द्रोणाभिमुखमायांतंकेशूराःपर्य वारयन् ६२ उत्संगइवसंवृद्धंद्रुपदस्यास्त्रवित्तमम् ॥ शैखंडिनंशस्त्रगुप्तंकेचद्रोणादवारयन् ६३ यइमांपृथिवींकृत्स्नांचर्मवत्समवेष्टयत ॥ महतारथघोषेणमु ख्यारिघ्नोमहारथः ६४ दशाश्वमेधानाजह्रेस्वन्नपानाप्तदक्षिणान् ॥ निरर्गलान्सर्वमेधान्पुत्रवत्पालयन्प्रजाः ६५ गंगास्रोतसियावत्यःसिकताअप्यशेषतः ॥ तावतीर्गाददौवीरउशीनरसुतोऽध्वरे ६६ नपूर्वेनापरेचक्रुरिदंकेचनमानवाः ॥ इतीदंचुक्रुशुर्देवाःकृतेकर्मणिदुष्करे ६७ पश्यामस्त्रिषुलोकेषुनतंसंस्थास्नुचा रिषु ॥ जातंचापिजनिष्यंतंद्वितीयंचापिसांप्रतम् ६८ अन्यमौशीनराच्छैब्याद्धुरोवोढारमित्युत ॥ गतिंयस्यनयास्यंतिमानुषालोकवासिनः ६९ तस्यन प्तारमायांतंशैब्यंकःसमवारयत ॥ द्रोणायाभिमुखंयत्तंव्यात्ताननमिवांतकम् ७० विराटस्यरथानीकंमत्स्यस्यामित्रघातिनः ॥ प्रेप्संतंसमरेद्रोणंकेवीराः पर्यवारयन् ७१

त्सकेषु समित्यस्यव्यवहितेनपश्यामइत्यनेनसंबंधः ६८ । ६९ । ७० । ७१

७२ । ७३ । ७४ ! ७५ । ७६ । ७७ ॥ इतिद्रोणपर्वणिटीकायांदशमोऽध्यायः ॥ १० ॥ ॥ शृण्विति १ । २ हयराजंकेशिनम् ३ । ४ । ५ विक्रमेणैवअस्त्रंविना ६ । ७ । ८ । ९ । १०

सद्योवृकोदराज्जातोमहाबलपराक्रमः ॥ मायावीराक्षसोवीरोयस्मान्ममहद्भयम् ७२ पार्थानांजयकामंतंपुत्राणांममकंटकम् ॥ घटोत्कचंमहात्मानंकस्तंद्रोणादवारयत् ७३ एतेचान्येचबहवोयेषामर्थायसंजय ॥ त्यक्तारःसंयुगेप्राणान्किंतेषामजितंयुधि ७४ येषांचपुरुषव्याघ्रःशार्ङ्गधन्वाव्यपाश्रयः ॥ हितार्थीचापिपार्थानांकथंतेषांपराजयः ७५ लोकानांगुरुरत्यर्थंलोकनाथःसनातनः ॥ नारायणोरणेनाथोदिव्योदिव्यात्मकःप्रभुः ७६ यस्यदिव्यानिकर्माणिप्रवदंतिमनीषिणः ॥ तान्यहंकीर्तयिष्यामिभक्त्यास्थैर्यार्थमात्मनः ७७ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिद्रोणाभिषेकपर्वणिधृतराष्ट्रवाक्येदशमोऽध्यायः ॥ १० ॥

॥ धृतराष्ट्रउवाच ॥ शृणुदिव्यानिकर्माणिवासुदेवस्यसंजय ॥ कृतवान्यानिगोविंदोयथानान्यःपुमान्क्वचित् १ संवर्धतागोपकुलेबालेनैवमहात्मना ॥ विख्यापितंबलंबाह्वोस्त्रिषुलोकेषुसंजय २ उच्चैःश्रवस्तुल्यबलंवायुवेगसमंजवे ॥ जघानहयराजंतंयमुनावनवासिनम् ३ दानवंघोरकर्माणंगवांमृत्युमिवोत्थितम् ॥ वृषरूपधरंबाल्येभुजाभ्यांनिजघानह ४ प्रलंबंनरकंजंभंपीठंचापिमहासुरम् ॥ मुरुंचांतकसंकाशमवधीत्पुष्करेक्षणः ५ तथाकंसोमहातेजाजरासंधेनपालितः ॥ विक्रमेणैवकृष्णेनसगणःपातितोरणे ६ सुनामारणविक्रांतःसमग्राक्षौहिणीपतिः ॥ भोजराजस्यमध्यस्थोभ्राताकंसस्यवीर्यवान् ७ बलदेवद्वितीयेनकृष्णेनामित्रघातिना ॥ तरस्वीसमरेदग्धःससैन्यःशूरसेनराट् ८ दुर्वासानामविप्रर्षिस्तथापरमकोपनः ॥ आराधितःसदारेणसचास्मैप्रददौवरान् ९ तथागांधारराजस्यसुतांवीरःस्वयंवरे ॥ निर्जित्यपृथिवीपालानावहत्पुष्करेक्षणः १० अमृष्यमाणाराजानोयस्यजात्याहयाइव ॥ रथेवैवाहिकेयुक्ताःप्रतोदेनकृतव्रणाः ११ जरासंधंमहाबाहुमुपायेनजनार्दनः ॥ परेणघातयामाससमग्राक्षौहिणीपतिम् १२ चेदिराजंचविक्रांतंराजसेनापतिंबली ॥ अर्घेविवदमानंचजघानपशुवत्तदा १३ सौभंदैत्यपुरंखस्थंशाल्वगुप्तंदुरासदम् ॥ समुद्रकुक्षौविक्रम्यपातयामासमाधवः १४ अंगान्वंगान्कलिंगांश्चमागधान्काशिकोसलान् ॥ वात्स्यगार्ग्यकरूषांश्चपौंड्रांश्चाप्यजयद्रणे १५ आवंत्यान्दाक्षिणात्यांश्चपार्वतीयान्दशेरकान् ॥ काश्मीरकानौरसिकान्पिशाचांश्चसमुद्गलान् १६ कांबोजान्वाटधानांश्चचोलान्पांड्यांश्चसंजय ॥ त्रिगर्तान्मालवांश्चैवदरदांश्चसुदुर्जयान् १७ नानादिग्भ्यश्चसंप्राप्तान्खशांश्चैवशकांस्तथा ॥ जितवान्पुंडरीकाक्षोयवनंचसहानुगम् १८ प्रविश्यमकरावासंयादोगणनिषेवितम् ॥ जिगायवरुणंसंख्येसलिलांतर्गतंपुरा १९ युधिपंचजनंहत्वादैत्यंपातालवासिनम् ॥ पांचजन्यंहृषीकेशोदिव्यंशंखमवाप्तवान् २० खांडवेपार्थसहितस्तोषयित्वाहुताशनम् ॥ आग्नेयमस्त्रंदुर्धर्षंचक्रंलेभेमहाबलः २१ वैनतेयंसमारुह्यत्रासयित्वाऽमरावतीम् ॥ महेंद्रभवनाद्वीरःपारिजातमुपानयत् २२ तच्चमर्षितवाञ्शक्रोजानंस्तस्यपराक्रमम् ॥ राज्ञांचाप्यजितंकंचित्कृष्णेनेहनशुश्रुम २३ यच्चतन्महदाश्चर्यंसभायांममसंजय ॥ कृतवान्पुंडरीकाक्षःकस्तदन्यइहार्हति २४

११ परेणभीमेन १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४

२५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ ॥ इतिद्रोण



यद्भक्त्याप्रसन्नोऽहमद्राक्षंकृष्णमीश्वरम् ॥ तन्मेसुविदितंसर्वंप्रत्यक्षमिवचागमम् २५ नांतोविक्रमयुक्तस्यबुद्ध्यायुक्तस्यवापुनः ॥ कर्मणांशक्यतेगंतुंहृषी
केशस्यसंजय २६ तथागदश्चसांबश्चप्रद्युम्नोऽथविदूरथः ॥ अगावहोऽनिरुद्धश्चचारुदेष्णःससारणः २७ उल्मुकोनिशठश्चैवझिल्लीबभ्रुश्चवीर्यवान् ॥ पृथुश्चविपृ
थुश्चैवशमीकोऽथारिमेजयः २८ एतेऽन्येबलवंतश्चवृष्णिवीराःप्रहारिणः ॥ कथंचित्पांडवानीकंश्रयेयुःसमरेस्थिताः २९ आहूतावृष्णिवीरेणकेशवेनमहात्म
ना ॥ ततःसंशयितंसर्वंभवेदितिमतिर्मम ३० नागायुतबलोवीरःकैलासशिखरोपमः ॥ वनमालीहलीरामस्तत्रयत्रजनार्दनः ३१ यमाहुःसर्वपितरंवासुदेवंद्विजा
तयः ॥ अपिवाह्येषपांडूनांयोत्स्यतेऽर्थायसंजय ३२ सयदातातसंनह्येत्पांडवार्थायसंजय ॥ नतदाप्रतिसंयोद्धाभवितातत्रकश्चन ३३ यदिस्मकुरवःसर्वेजये
युर्नामपांडवान् ॥ वार्ष्णेयोऽर्थायतेषांवैगृह्णीयाच्छस्त्रमुत्तमम् ३४ ततःसर्वान्नरव्याघ्रोहत्वानरपतीन्रणे ॥ कौरवांश्चमहाबाहुःकुंत्यैदद्यात्समेदिनीम् ३५ यस्य
यंताहृषीकेशोयोद्धायस्यधनंजयः ॥ रथस्यतस्यकःसंख्येप्रत्यनीकोभवेद्रथः ३६ नकेनचिदुपायेनकुरूणांदृश्यतेजयः ॥ तस्मान्मेसर्वमाचक्ष्वयथायुद्धमवर्त्त
त ३७ अर्जुनःकेशवस्यात्माकृष्णोऽप्यात्माकिरीटिनः ॥ अर्जुनेविजयोनित्यंकृष्णेकीर्त्तिश्चशाश्वती ३८ सर्वेष्वपिचलोकेषुबीभत्सुरपराजितः ॥ प्राधान्येनैव
भूयिष्ठममेयाःकेशवेगुणाः ३९ मोहाद्दुर्योधनःकृष्णंयोनवेत्तीहकेशवम् ॥ मोहितोदैवयोगेनमृत्युपाशपुरस्कृतः ४० नवेदकृष्णंदाशार्हमर्जुनंचैवपांडवम् ॥ पू
र्वदेवौमहात्मानौनरनारायणावुभौ ४१ एकात्मानौद्विधाभूतौदृश्येतेमानवैर्भुवि ॥ मनसाऽपिहिदुर्धर्षौसेनामेतांयशस्विनौ ४२ नाशयेतामिहेच्छंतौमानुषत्वान्न
नेच्छतः ॥ युगस्येवविपर्यासोलोकानामिवमोहनम् ४३ भीष्मस्यचवधस्तातद्रोणस्यचमहात्मनः ॥ नह्येवब्रह्मचर्येणनवेदाध्ययनेनच ४४ नक्रियाभिर्न
चास्त्रेणमृत्योःकश्चिन्निवार्यते ॥ लोकसंभावितौवीरौकृतास्त्रौयुद्धदुर्मदौ ४५ भीष्मद्रोणौहतौश्रुत्वाकिंनुजीवामिसंजय ॥ यांतांश्रियमसूयामःपुरादृष्ट्वायुधिष्ठिरे
४६ अद्यतामनुजानीमोभीष्मद्रोणवधेनह ॥ मत्कृतेचाप्यनुप्राप्तःकुरूणामेषसंक्षयः ४७ पक्वानांहिवधेसूतवज्रायंतेतृणान्युत ॥ अनंतमिदमैश्वर्यंलोकेप्राप्तो
युधिष्ठिरः ४८ यस्यकोपान्महात्मानौभीष्मद्रोणौनिपातितौ ॥ प्राप्तःप्रकृतितोधर्मोनधर्मोमामकान्प्रति ४९ क्रूरःसर्वविनाशायकालोऽसौनातिवर्त्तते ॥ अ
न्यथाचिंतिताह्यर्थानरैस्तातमनस्विभिः ५० अन्यथैवप्रपद्यंतेदैवादितिमतिर्मम ॥ तस्मादपरिहार्येऽर्थेसंप्राप्तेकृच्छ्रउत्तमे ॥ अपारणीयेदुश्चिंत्येयथाभूतंप्र
चक्ष्वमे ५१ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिद्रोणाभिषेकपर्वणि धृतराष्ट्रविलापेएकादशोऽध्यायः ॥ ११ ॥ ॥ संजयउवाच ॥ हंततेकथयिष्यामिसर्वं
प्रत्यक्षदर्शिवान् ॥ यथासन्यपतद्द्रोणःसूदितःपांडुसृंजयैः १ सेनापतित्वंसंप्राप्यभारद्वाजोमहारथः ॥ मध्येसर्वस्यसैन्यस्यपुत्रंतेवाक्यमब्रवीत् २

पर्वणिटीकायांएकादशोऽध्यायः ॥ ११ ॥ ॥ ७ ॥ ॥ हंतेति १ । २

३ । ४ । ५ । ६ । ७ । ८ एतां त्वधरूपां क्रियां मत्तो नाशंससि न संभावयसि ९ । १० । ११ सुजातं शोभनं जन्म १२ । १३ । १४ । १५ । १६ । १७ व्यक्तं नियतं १८ । १९ । २० आमर्षयामि उत्सहे २१

यत्कौरवाणामृषभादापगेयादनंतरम् ॥ सैनापत्येन यद्राजन्मामद्य कृतवानसि ३ सदृशं कर्मणस्तस्य फलं प्राप्नुहि भारत ॥ करोमि कामं कं तेऽद्य प्रवृणीष्व यमिच्छसि ४ ततो दुर्योधनो राजा कर्णदुःशासनादिभिः ॥ संमंत्र्योवाच दुर्धर्षमाचार्यं जयतां वरम् ५ ददासि चेद्वरं मह्यं जीवग्राहं युधिष्ठिरम् ॥ गृहीत्वा रथिनां श्रेष्ठं मत्समीपमिहानय ६ ततः कुरूणामाचार्यः श्रुत्वा पुत्रस्य ते वचः ॥ सेनां प्रहर्षयन्सर्वामिदं वचनमब्रवीत् ७ धन्यः कुंतीसुतो राजन्न वधं तस्य कांक्षसे ॥ नाशंससि क्रियामेतां मत्तो दुर्योधन ध्रुवं ९ आहोस्विद्धर्मराजस्य द्वेष्टा तस्य न विद्यते ॥ यदीच्छसि त्वं जीवंतं कुलं रक्षसि चात्मनः १० अथवा भरतश्रेष्ठ निर्जित्य युधि पांडवान् ॥ राज्यं संप्रति दत्वा च सौभ्रात्रं कर्तुमिच्छसि ११ धन्यः कुंतीसुतो राजा सुजातं चास्य धीमतः ॥ अजातशत्रुता सत्या तस्य यत्स्निह्यते भवान् १२ द्रोणेन चैवमुक्तस्य तव पुत्रस्य भारत ॥ सहसा निःसृतो भावो योऽस्य नित्यं हृदि स्थितः १३ नाकारो गूहितुं शक्यो बृहस्पतिसमैरपि ॥ तस्मात्तव सुतो राजन्प्रहृष्टो वाक्यमब्रवीत् १४ वधे कुंतिसुतस्याजौ नाचार्य विजयो मम ॥ हते युधिष्ठिरे पार्था हन्युः सर्वान्हि नो ध्रुवम् १५ न च शक्या रणे सर्वे निहंतुममरैरपि ॥ य एव तेषां शेषः स्यात्स एवास्मान्न शेषयेत् १६ सत्यप्रतिज्ञे त्वानीते पुनर्द्यूतेन निर्जिते ॥ पुनर्यास्यंत्यरण्याय पांडवास्तमनुव्रताः १७ सोऽयं मम जयो व्यक्तं दीर्घकालं भविष्यति ॥ अतो न वधमिच्छामि धर्मराजस्य कर्हिचित् १८ तस्य जिह्ममभिप्रायं ज्ञात्वा द्रोणोऽर्थतत्त्ववित् ॥ तं वरं सांतरं तस्मै ददौ संचिंत्य बुद्धिमान् १९ ॥ द्रोण उवाच ॥ न चेद्युधिष्ठिरं वीरः पालयत्यर्जुनो युधि ॥ मन्यस्व पांडवश्रेष्ठमानीतं वशमात्मनः २० नहि शक्यो रणे पार्थः सेंद्रैर्देवासुरैरपि ॥ प्रत्युद्यातुमतस्तात नैतदामर्षयाम्यहं २१ असंशयं स मे शिष्यो मत्पूर्वश्चास्त्रकर्मणि ॥ तरुणः सुकृतैर्युक्त एकायनगतश्च ह २२ अस्त्राणींद्राच्च रुद्राच्च भूयः स समवाप्तवान् ॥ अमर्षितश्च ते राजंस्ततो नामर्षयाम्यहं २३ स चापक्रम्यतां युद्धाद्येनोपायेन शक्यते ॥ अपनीते ततः पार्थे धर्मराजो जितस्त्वया २४ ग्रहणे हि जयस्तस्य न वधे पुरुषर्षभ ॥ एतेन चाप्युपायेन ग्रहणं समुपैष्यसि २५ अहं गृहीत्वा राजानं सत्यधर्मपरायणम् ॥ आनयिष्यामि ते राजन्वशमद्य न संशयः २६ यदि स्थास्यति संग्रामे मुहूर्तमपि मेऽग्रतः ॥ अपनीते नरव्याघ्रे कुंतीपुत्रे धनंजये २७ फाल्गुनस्य समीपे तु नहि शक्यो युधिष्ठिरः ॥ ग्रहीतुं समरे राजन्सेंद्रैरपि सुरासुरैः २८ ॥ संजय उवाच ॥ सांतरं तु प्रतिज्ञाते राज्ञो द्रोणेन निग्रहे ॥ गृहीतं तममन्यंत तव पुत्राः सुबालिशाः २९ पांडवेयेषु साक्षेपं द्रोणं जानाति ते सुतः ॥ ततः प्रतिज्ञास्थैर्यार्थं स मंत्रो बहुलीकृतः ३० ततो दुर्योधनेनापि ग्रहणं पांडवस्य तत् ॥ सैन्यस्थानेषु सर्वेषु सुघोषितमरिंदम ३१ ॥ इति श्रीमहाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि द्रोणप्रतिज्ञायां द्वादशोऽध्यायः ॥ १२ ॥ ॥ ७ ॥ ॥ ७ ॥

मत्पूर्वः अहं पूर्वो गुरुर्यस्य एकायनगतः जय
मरणान्यतरनिश्चयवान् २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ बहुलीकृतः प्रतिज्ञां न त्यजेदिति बहुषु प्रकाशितः ३० । ३१ ॥ इति द्रोणपर्वणि टीकायां द्वादशोऽध्यायः ॥ १२ ॥

सांतरेइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ संप्रसुप्तेकृतपत्रसंकोचे २२ वरूथिनारथेन २३ । २४ । २५

॥ संजयउवाच ॥ सांतरेतुप्रतिज्ञातेराज्ञोद्रोणेननिग्रहे ॥ ततस्तेसैनिकाःश्रुत्वातंयुधिष्ठिरनिग्रहम् १ सिंहनादरवांश्चक्रुर्बाहुशब्दांश्चकृत्स्नशः ॥ तच्चसर्वंयथा न्यायंधर्मराजेनभारत २ आप्तैराशुपरिज्ञातंभारद्वाजचिकीर्षितम् ॥ ततःसर्वान्समानाय्यभ्रातॄनन्यांश्चसर्वशः ३ अब्रवीद्धर्मराजस्तुधनंजयमिदंवचः ॥ श्रुतंतेपुरुषव्याघ्रद्रोणस्याद्यचिकीर्षितम् ४ यथातन्नभवेत्सत्यंतथानीतिर्विधीयताम् ॥ सांतरंहिप्रतिज्ञातंद्रोणेनामित्रकर्षिणा ५ तच्चांतरंमहेष्वासत्वयितेनसमाहितम् ॥ सत्वमद्यमहाबाहोयुध्यस्वमदनंतरम् ६ यथादुर्योधनःकामंनेमंद्रोणादवाप्नुयात् ॥ अर्जुनउवाच ॥ यथामेनवधःकार्यआचार्यस्यकदाचन ७ तथातवपरित्यागोनमेराजंश्चिकीर्षितः ॥ अप्येवंपांडवप्राणानुत्सृजेयमहंयुधि ८ प्रतीपोनाहमाचार्येभवेयंवैकथंचन ॥ त्वांनिगृह्याहवेराज्यंधार्तराष्ट्रोऽयमिच्छति ९ नसतंजीवलोकेऽस्मिन्कामंप्राप्येत्कथंचन ॥ प्रपतेत्द्यौःसनक्षत्रापृथिवीशकलीभवेत् १० नत्वांद्रोणोनिगृह्णीयाज्जीवमानेमयिध्रुवम् ॥ यदितस्यरणेसाह्यंकुरुतेवज्रभृत्स्वयम् ११ विष्णुर्वासहितोदेवैर्नत्वांप्राप्स्यत्यसौमृधे ॥ मयिजीवतिराजेंद्रनभयंकर्तुमर्हसि १२ द्रोणादस्त्रभृतांश्रेष्ठात्सर्वशस्त्रभृतामपि ॥ अन्यच्चब्रूयांराजेंद्रप्रतिज्ञांममनिश्चलाम् १३ नस्मराम्यनृतंतावन्नस्मरामिपराजयम् ॥ नस्मरामिप्रतिश्रुत्यकिंचिदप्यनृतंकृतम् १४ ॥ संजयउवाच ॥ ततःशंखाश्चभेर्यश्चमृदंगाश्चानकैःसह ॥ प्रावाद्यंतमहाराजपांडवानांनिवेशने १५ सिंहनादश्चसंजज्ञेपांडवानांमहात्मनाम् ॥ धनुर्ज्यातलशब्दश्चगगनस्पृक्सुभैरवः १६ श्रुत्वाशंखस्यनिर्घोषंपांडवस्यमहौजसः ॥ त्वदीयेष्वप्यनीकेषुवादित्राण्यभिजघ्निरे १७ ततोव्यूढान्यनीकानितवतेषांचभारत ॥ शनैरुपेयुरन्योन्यंयोध्यमानानिसंयुगे १८ ततःप्रववृतेयुद्धंतुमुलंलोमहर्षणम् ॥ पांडवानांकुरूणांचद्रोणपांचाल्ययोरपि १९ यतमानाःप्रयत्नेनद्रोणानीकविशातने ॥ नशेकुःसृंजयायुद्धेतद्धिद्रोणेनपालितम् २० तथैवतवपुत्रस्यरथोदाराःप्रहारिणः ॥ नशेकुःपांडवींसेनांपाल्यमानांकिरीटिना २१ आस्तांतेस्तिमितेसेनेरक्षमाणेपरस्परम् ॥ संप्रसुप्तेयथानक्तंवनराज्यौसुपुष्पिते २२ ततोरुक्मरथोराजन्नर्केणेवविराजता ॥ वरूथिनाविनिष्पत्यव्यचरत्पृतनामुखे २३ तमुद्यतंरथेनैकमाशुकारिणमाहवे ॥ अनेकमिवसंत्रासान्मेनिरेपांडुसृंजयाः २४ तेनमुक्ताःशराघोराविचेरुःसर्वतोदिशम् ॥ त्रासयंतोमहाराजपांडवेयस्यवाहिनीम् २५ मध्यंदिनमनुप्राप्तोगभस्तिशतसंवृतः ॥ यथादृश्येतघर्मांशुस्तथाद्रोणोऽप्यदृश्यत २६ नचैनंपांडवेयानांकश्चिच्छक्नोतिभारत ॥ वीक्षितुंसमरेक्रुद्धंमहेंद्रमिवदानवाः २७ मोहयित्वाततःसैन्यंभारद्वाजःप्रतापवान् ॥ धृष्टद्युम्नबलंतूर्णंव्यधमन्निशितैःशरैः २८ सदिशःसर्वतोरुद्ध्वासंवृत्यखमजिह्मगैः ॥ पार्षतोयत्रतत्रैवममृद्नात्पांडुवाहिनीम् २९ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिद्रोणाभिषेकपर्वणिअर्जुनकृतयुधिष्ठिराश्वासनेत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ७ ॥

२६ । २७ । २८ । २९ ॥ इतिद्रोणपर्वणिटीकायांत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ७ ॥

वतइति १ । २ । ३ । ४ शुचिसंक्षयेग्रीष्मांते ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ प्राणिनएववाजिनःपक्षिणः १६ । १७ । १८

॥ संजयउवाच ॥ ततःसपांडवानीकेजनयन्सुमहद्भयम् ॥ व्यचरत्पृतनांद्रोणोदहन्कक्षमिवानलः १ निर्दहंतमनीकानिसाक्षादग्निमिवोत्थितम् ॥ दृष्ट्वारुक्म
रथंक्रुद्धंसमकंपंतसृंजयाः २ सततंकृष्यतःसंख्येधनुषोऽस्याशुकारिणः ॥ ज्याघोषःशुश्रुवेत्यर्थंविस्फूर्जितमिवाशनेः ३ रथिनःसादिनश्चैवनागानश्वान्पदा
तिनः ॥ रौद्राहस्तवतामुक्ताःसंमृद्नंतिस्मसायकाः ४ नानद्यमानःपर्जन्यःप्रवृद्धःशुचिसंक्षये ॥ अश्मवर्षमिवावर्षत्परेषामावहद्भयम् ५ विचरन्सतदाराजन्से
नांसंक्षोभयन्प्रभुः ॥ वर्धयामाससंत्रासंशात्रवाणाममानुषम् ६ तस्यविद्युदिवाभ्रेषुचापंहेमपरिष्कृतम् ॥ भ्रमद्रथांबुदेचास्मिन्दृश्यतेस्मपुनःपुनः ७ सवीरः
सत्यवान्प्राज्ञोधर्मनित्यःसदापुनः ॥ युगांतकालवद्घोरांरौद्रांप्रावर्तयन्नदीम् ८ अमर्षवेगप्रभवांक्रव्यादगणसंकुलाम् ॥ बलौघैःसर्वतःपूर्णांध्वजवृक्षापहारिणीम् ९
शोणितोदांरथावर्तांहस्त्यश्वकृतरोधसम् ॥ कवचोडुपसंयुक्तांमांसपंकसमाकुलाम् १० मेदोमज्जास्थिसिकतामुष्णीषचयफेनिलाम् ॥ संग्रामजलदापूर्णांप्रास
मत्स्यसमाकुलाम् ११ नरनागाश्वकलिलांशरवेगौघवाहिनीम् ॥ शरीरदारुसंघट्टांरथकच्छपसंकुलाम् १२ उत्तमांगैःपंकजिनींनिस्त्रिंशझषसंकुलाम् ॥ रथना
गह्रदोपेतांनानाभरणभूषिताम् १३ महारथशतावर्तांभूमिरेणूर्मिमालिनीं ॥ महावीर्यवतांसंख्येसुतरांभीरुदुस्तराम् १४ शरीरशतसंबाधांगृध्रकंकनिषेवि
ताम् ॥ महारथसहस्राणिनयंतींयमसादनम् १५ शूलव्यालसमाकीर्णांप्राणिवाजिनिषेविताम् ॥ छिन्नक्षत्रमहाहंसांमुकुटांडजसेविताम् १६ चक्रकूर्मांगदान
क्रांशरक्षुद्रझषाकुलाम् ॥ बकगृध्रसृगालानांघोरसंघैर्निषेविताम् १७ निहतान्प्राणिनःसंख्येद्रोणेनबलिनारणे ॥ वहंतींपितृलोकायशतशोराजसत्तम १८
शरीरशतसंबाधांकेशशैवलशाद्वलाम् ॥ नदींप्रावर्तयद्राजन्भीरूणांभयवर्धिनीं १९ तर्जयंतमनीकानितानितानिमहारथम् ॥ सर्वतोऽभ्यद्रवन्द्रोणंयुधिष्ठि
रपुरोगमाः २० तानभिद्रवतःशूरांस्तावकादृढविक्रमाः ॥ सर्वतःप्रत्यगृह्णंततदभूल्लोमहर्षणम् २१ शतमायस्तुशकुनिःसहदेवंसमाद्रवत् ॥ सनियंतृध्वजरथं
विव्याधनिशितैःशरैः २२ तस्यमाद्रीसुतःकेतुंधनुःसूतंहयानपि ॥ नातिक्रुद्धःशरैश्छित्वाषष्ट्याविव्याधसौबलम् २३ सौबलस्तुगदांगृह्यप्रचस्कंदरथोत्त
मात् ॥ सतस्यगदयाराजन्रथात्सूतमपातयत् २४ ततस्तौविरथौराजन्गदाहस्तौमहाबलौ ॥ चिक्रीडतूरणेशूरौसशृंगाविवपर्वतौ २५ द्रोणःपांचालराजा
नंविद्ध्वादशभिराशुगैः ॥ बहुभिस्तेनचाभ्यस्तस्तंविव्याधततोऽधिकैः २६ विविंशतिंभीमसेनोविंशत्यानिशितैःशरैः ॥ विद्ध्वानाकंपयद्वीरस्तदद्भुतमिवाभ
वत् २७ विविंशतिस्तुसहसाव्यश्वकेतुशरासनम् ॥ भीमंचक्रेमहाराजततःसैन्यान्यपूजयन् २८ सतन्नममृषेवीरःशत्रोर्विक्रममाहवे ॥ ततोऽस्यगदयादांता
न्हयान्सर्वानपातयत् २९ हताश्वात्सरथाद्राजन्गृह्यचर्ममहाबलः ॥ अभ्ययाद्भीमसेनंतुमत्तोमत्तमिवद्विपम् ३०

१९ । २० । २१ । २२ । २३ । २४ । २५ अभ्यस्तोविद्धः २६ । २७ । २८ । २९ । ३०

३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ उद्ववर्हेउचकर्ष शरावरंचमे

शल्यस्तुनकुलंवीरःस्वस्रीयंप्रियमात्मनः ॥ विव्याधप्रहसन्बाणैर्लालयन्कोपयन्निव ३१ तस्याश्वानातपत्रंचध्वजंसूतमथोधनुः ॥ निपात्यनकुलःसंख्येशंखंद ध्मौप्रतापवान् ३२ धृष्टकेतुःकृपेणास्ताञ्छित्वाबहुविधाञ्छरान् ॥ कृपंविव्याधसप्तत्यालक्ष्मचास्याहरत्त्रिभिः ३३ तंकृपःशरवर्षेणमहतासमवारयत् ॥ वि व्याधचरणेविप्रोधृष्टकेतुममर्षणम् ३४ सात्यकिःकृतवर्माणंनाराचेनस्तनांतरे ॥ विद्धाविव्याधसप्तत्यापुनरन्यैःस्मयन्निव ३५ तंभोजःसप्तसप्तत्याविद्धा ऽऽशुनिशितैःशरैः ॥ नाकंपयतशैनेयंशीघ्रोवायुरिवाचलम् ३६ सेनापतिःसुशर्माणंभृशंमर्मस्वताडयत् ॥ सचापितंतोमरेणजत्रुदेशेऽभ्यताडयत् ३७ वैकर्त नंतुसमरेविराटःप्रत्यवारयत् ॥ सहमत्स्यैर्महावीर्यैस्तदद्भुतमिवाभवत् ३८ तत्पौरुषमभूत्तत्रसूतपुत्रस्यदारुणम् ॥ यत्सैन्यंवारयामासशरैःसन्नतपर्वभिः ३९ द्रुपदस्तुस्वयंराजाभगदत्तेनसंगतः ॥ तयोर्युद्धंमहाराजचित्ररूपमिवाभवत् ४० भगदत्तस्तुराजानंद्रुपदंनतपर्वभिः ॥ सनियंतृध्वजरथंविव्याधपुरुषर्षभः ४१ द्रुपदस्तुततःक्रुद्धोभगदत्तंमहारथम् ॥ आजघानोरसिक्षिप्रंशरेणानतपर्वणा ४२ युद्धंयोधवरौलोकेसौमदत्तिशिखंडिनौ ॥ भूतानांत्रासजननंचक्रातेऽस्त्र विशारदौ ४३ भूरिश्रवारणेराजन्याज्ञसेनिंमहारथम् ॥ महतासायकौघेनच्छादयामासवीर्यवान् ४४ शिखंडीतुततःक्रुद्धःसौमदत्तिंविशांपते ॥ नवत्यासायका नांतुकंपयामासभारत ४५ राक्षसौरौद्रकर्माणौहैडिंबालंबुषावुभौ ॥ चक्रातेऽत्यद्भुतंयुद्धंपरस्परजयैषिणौ ४६ मायाशतसृजौदृप्तौमायाभिरितरेतरम् ॥ अंत र्हितौचेरतुस्तौभृशंविस्मयकारिणौ ४७ चेकितानोनुविंदेनयुयुधेचातिभैरवम् ॥ यथादेवासुरेयुद्धेबलशक्रौमहाबलौ ४८ लक्ष्मणःक्षत्रदेवेनविमर्दमकरो द्भृशम् ॥ यथाविष्णुःपुराराजन्हिरण्याक्षेणसंयुगे ४९ ततःप्रचलिताश्वेनविधिवत्कल्पितेनच ॥ रथेनाभ्यपतद्राजन्सौभद्रंपौरवोनदन् ५० ततोऽभ्ययात्स त्वरितोयुद्धाकांक्षीमहाबलः ॥ तेनचक्रेमहद्युद्धमभिमन्युररिंदमः ५१ पौरवस्त्वथसौभद्रंशरव्रातैरवाकिरत् ॥ तस्यार्जुनिर्ध्वजंछत्रंधनुश्चोर्व्यामपातयत् ५२ सौभद्रःपौरवंत्वन्यैर्विद्ध्वासप्तभिराशुगैः ॥ पंचभिस्तस्यविव्याधहयान्सूतंचसायकैः ५३ ततःप्रहर्षयन्सेनांसिंहवद्विनदन्मुहुः ॥ समादत्तार्जुनिस्तूर्णंपौ रवांतकरंशरम् ५४ तंतुसंधितमाज्ञायसायकंघोरदर्शनम् ॥ द्वाभ्यांशराभ्यांहार्दिक्यश्चिच्छेदसशरंधनुः ५५ तदुत्सृज्यधनुश्छिन्नंसौभद्रःपरवीरहा ॥ उद्व वर्हासितंखड्गमाददानःशरावरम् ५६ सतेनानेकतारेणचर्मणाकृतहस्तवत् ॥ भ्रांतासिनाचरन्मार्गान्दर्शयन्वीर्यमात्मनः ५७ भ्रामितंपुनरुद्भ्रांतमाधूतंपुनरु त्थितम् ॥ चर्मनिस्त्रिंशयोराजन्निर्विशेषमदृश्यत ५८ सपौरवरथस्येषामाप्लुत्यसहसानदन् ॥ पौरवंरथमास्थायकेशपक्षेपरामृशत् ५९ जघानास्यपदासूतम सिनापातयद्ध्वजम् ॥ विक्षोभ्यांभोनिधिंतार्क्ष्यस्तंनागमिवचाक्षिपत् ६० तमागलितकेशांतंददृशुःसर्वपार्थिवाः ॥ उक्षाणमिवसिंहेनपात्यमानमचेतसम् ६१ तमार्जुनिवशंप्राप्तंकृष्यमाणमनाथवत् ॥ पौरवंपातितंदृष्ट्वानामृष्यतजयद्रथः ६२

५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२

६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ पराभवंप्रेक्ष्येतिशेषः ८७ ॥ इति

सबर्हिबर्हावततंकिंकिणीशतजालवत् ॥ चर्मचादायखड्गंचनदन्पर्यपतद्रथात् ६३ ततःसैंधवमालोक्यकार्ष्णिरुत्सृज्यपौरवम् ॥ उत्पपातरथात्तूर्णंश्येनवन्निपपात च ६४ प्रासपट्टिशनिस्त्रिंशाञ्छत्रुभिःसंप्रचोदितान् ॥ चिच्छेदचासिनाकार्ष्णिश्चर्मणासंरुरोधच ६५ सदर्शयित्वासैन्यानांस्वबाहुबलमात्मनः ॥ तमुद्यम्यमहा खड्गंचर्मचाथपुनर्बली ६६ वृद्धक्षत्रस्यदायादंपितुरत्यंतवैरिणम् ॥ ससाराभिमुखःशूरःशार्दूलइवकुंजरम् ६७ तौपरस्परमासाद्यखड्गदंतनखायुधौ ॥ हृष्टव त्संप्रजह्राते व्याघ्रकेसरिणाविव ६८ संपातेष्वभिघातेषुनिपातेष्वसिचर्मणोः ॥ नतयोरंतरंकश्चिद्ददर्शनरसिंहयोः ६९ अवक्षेपोऽसिनिह्रादःशस्त्रांतरनिदर्शनं ॥ बाह्यांतरनिपातश्चनिर्विशेषमदृश्यत ७० बाह्यमाभ्यंतरंचैवचरंतौमार्गमुत्तमम् ॥ ददृशातेमहात्मानौसपक्षाविवपर्वतौ ७१ ततोविक्षिपतःखड्गंसौभद्रस्ययश स्विनः ॥ शरावरणपक्षांतेप्रजहारजयद्रथः ७२ रुक्मपत्रांतरेसक्तस्तस्मिंश्चर्मणिभास्वरे ॥ सिंधुराजबलोद्धूतःसोऽभज्यतमहानसिः ७३ भग्नमाज्ञायनिस्त्रिंशमव प्लुत्यपदानिषट् ॥ अदृश्यतनिमेषेणस्वरथंपुनरास्थितः ७४ तंकार्ष्णिंसमरान्मुक्तमास्थितंरथमुत्तमम् ॥ सहिताःसर्वराजानःपरिवव्रुःसमंततः ७५ ततश्चर्मच खड्गंचसमुत्क्षिप्यमहाबलः ॥ ननादार्जुनदायादःप्रेक्षमाणोजयद्रथम् ७६ सिंधुराजंपरित्यज्यसौभद्रःपरवीरहा ॥ तापयामासतत्सैन्यंभुवनंभास्करोयथा ७७ तस्यसर्वायसींशक्तिंशल्यःकनकभूषणाम् ॥ चिक्षेपसमरेघोरांदीप्तामग्निशिखामिव ७८ तामवप्लुत्यजग्राहविकोशंचाकरोदसिम् ॥ वैनतेयोयथाकार्ष्णिःपतंतमु रगोत्तमम् ७९ तस्यलाघवमाज्ञायसत्वंचामिततेजसः ॥ सहिताःसर्वराजानःसिंहनादमथानदन् ८० ततस्तामेवशल्यस्यसौभद्रःपरवीरहा ॥ मुमोचभुजवीर्ये णवैदूर्यविकृतांशिताम् ८१ सातस्यरथमासाद्यनिर्मुक्तभुजगोपमा ॥ जघानसूतंशल्यस्यरथाच्चैनमपातयत् ८२ ततोविराटद्रुपदौधृष्टकेतुर्युधिष्ठिरः ॥ सात्य किःकेकयाभीमोधृष्टद्युम्नशिखंडिनौ ८३ यमौचद्रौपदेयाश्चसाधुसाध्वितिचुक्रुशुः ॥ बाणशब्दाश्चविविधाःसिंहनादाश्चपुष्कलाः ८४ प्रादुरासन्हर्षयंतःसौभद्रम पलायिनम् ॥ तन्नामृष्यंतपुत्रास्तेशत्रोर्विजयलक्षणम् ८५ अथैनंसहसासर्वेसमंतान्निशितैःशरैः ॥ अभ्याकिरन्महाराजजलदाइवपर्वतम् ८६ तेषांचप्रिय मन्विच्छन्सूतस्यचपराभवम् ॥ आर्तायनिरमित्रघ्नःक्रुद्धःसौभद्रमभ्ययात् ८७ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिद्रोणाभिषेकपर्वणिअभिमन्युपराक्रमेचतुर्दशो ऽध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ धृतराष्ट्रउवाच ॥ बहूनिसुविचित्राणिद्वंद्वयुद्धानिसंजय ॥ त्वयोक्तानिनिशम्याहंस्पृहयामिसचक्षुषाम् १ आश्चर्य भूतंलोकेषुकथयिष्यंतिमानवाः ॥ कुरूणांपांडवानांचयुद्धंदेवासुरोपमम् २ नहिमेतृप्तिरस्तीहशृण्वतोयुद्धमुत्तमम् ॥ तस्मादार्तायनेर्युद्धंसौभद्रस्यचशं समे ३ ॥ संजयउवाच ॥ सादितंप्रेक्ष्ययंतारंशल्यःसर्वायसींगदाम् ॥ समुत्क्षिप्यनदन्क्रुद्धःप्रचस्कंदरथोत्तमात् ४

द्रोणपर्वणिटीकायांचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ बहूनीति ॥ १ । २ । ३ । ४

तंदीप्तमिवकालाग्निंदंडहस्तमिवांतकं ॥ जवेनाभ्यपतद्भीमःप्रगृह्यमहतींगदाम् ५ सौभद्रोऽप्यशनिप्रख्यांप्रगृह्यमहतींगदाम् ॥ एह्येहीत्यब्रवीच्छल्यंयत्नाद्भीमेनवारितः ६ वारयित्वातुसौभद्रंभीमसेनःप्रतापवान् ॥ शल्यमासाद्यसमरेतस्थौगिरिरिवाचलः ७ तथैवमद्रराजोऽपिभीमंदृष्ट्वामहाबलं ॥ ससाराभिमुखस्तूर्णंशार्दूलइवकुंजरम् ८ ततस्तूर्यनिनादाश्चशंखानांचसहस्रशः ॥ सिंहनादाश्चसंजज्ञुर्भेरीणांचमहास्वनाः ९ पश्यतांशतशोह्यासीदन्योऽन्यमभिधावताम् ॥ पाण्डवानांकुरूणांचसाधुसाध्वितिनिःस्वनाः १० नहिमद्राधिपादन्यःसर्वराजसुभारत ॥ सोढुमुत्सहतेवेगंभीमसेनस्यसंयुगे ११ तथामद्राधिपस्यापिगदावेगंमहात्मनः ॥ सोढुमुत्सहतेलोकेयुधिकोन्योवृकोदरात् १२ पट्टैर्जांबूनदैर्बद्धाबभूवजनहर्षणी ॥ प्रजज्वालतदाविद्धाभीमेनमहतीगदा १३ तथैवचरतोमार्गान्मंडलानिचसर्वशः ॥ महाविद्युत्प्रतीकाशाशल्यस्यशुशुभेगदा १४ तौवृषाविवनर्दंतौमंडलानिविचेरतुः ॥ आवर्तितगदाशृंगावुभौशल्यवृकोदरौ १५ मंडलावर्तमार्गेषुगदाविहरणेषुच ॥ निर्विशेषमभूद्युद्धंतयोःपुरुषसिंहयोः १६ ताडिताभीमसेनेनशल्यस्यमहतीगदा ॥ साग्निज्वालामहारौद्रातदातूर्णमशीर्यत १७ तथैवभीमसेनस्यद्विषताऽभिहतागदा ॥ वर्षाप्रदोषेखद्योतैर्वृतोवृक्षइवाबभौ १८ गदाक्षिप्तातुसमरेमद्रराजेनभारत ॥ व्योमदीपयमानासाससृजेपावकंमुहुः १९ तथैवभीमसेनेनद्विषतेप्रेषितागदा ॥ तापयामासतत्सैन्यंमहोल्कापततीयथा २० तेगदेगदिनांश्रेष्ठेसमासाद्यपरस्परम् ॥ श्वसंत्यौनागकन्येवससृजातेविभावसुम् २१ नखैरिवमहाव्याघ्रौदंतैरिवमहागजौ ॥ तौविचेरतुरासाद्यगदाग्र्याभ्यांपरस्परम् २२ ततोगदाग्र्याभिहतौक्षणेनरुधिरोक्षितौ ॥ ददृशातेमहात्मानौकिंशुकाविवपुष्पितौ २३ शुश्रुवेदिक्षुसर्वासुतयोःपुरुषसिंहयोः ॥ गदाभिघातसंह्रादःशक्राशनिरवोपमः २४ गदयामद्रराजेनसव्यदक्षिणमाहतः ॥ नाकंपततदाभीमोभिद्यमानइवाचलः २५ तथाभीमगदावेगैस्ताड्यमानोमहाबलः ॥ धैर्यान्मद्राधिपस्तस्थौवज्रैर्गिरिरिवाहतः २६ आपेततुर्महावेगौसमुच्छ्रितगदावुभौ ॥ पुनरंतरमार्गस्थौमंडलानिविचेरतुः २७ अथाप्लुत्यपदान्यष्टौसन्निपत्यगजाविव ॥ सहसालोहदंडाभ्यामन्योऽन्यमभिजघ्नतुः २८ तौपरस्परवेगाच्चगदाभ्यांचभृशाहतौ ॥ युगपत्पेततुर्वीरौक्षिताविंद्रध्वजाविव २९ ततोविह्वलमानंतंनिःश्वसंतंपुनःपुनः ॥ शल्यमभ्यपतत्तूर्णंकृतवर्मामहारथः ३० दृष्ट्वाचैनंमहाराजगदयाऽभिनिपीडितम् ॥ विचेष्टंतंयथानागंमूर्च्छयाऽभिपरिप्लुतम् ३१ ततःस्वरथमारोप्यमद्राणामधिपंरणे ॥ अपोवाहरणात्तूर्णंकृतवर्मामहारथः ३२ क्षीबवद्विह्वलोवीरोनिमेषात्पुनरुत्थितः ॥ भीमोऽपिसुमहाबाहुर्गदापाणिरदृश्यत ३३ ततोमद्राधिपंदृष्ट्वातवपुत्राःपराङ्मुखम् ॥ सनागपत्त्यश्वरथाःसमकंपंतमारिष ३४ तेपांडवैरर्द्यमानास्तावकाजितकाशिभिः ॥ भीतादिशोऽन्वपद्यंतवातनुन्नाघनाइव ३५

क्षीबवन्मत्तवत् ३३ । ३४ । ३५

३६। ३७ ॥ इतिद्रोणपर्वणिटीकायांपंचदशोऽध्यायः ॥ १५ ॥ ॥ तदिति । अस्त्रमायया अस्त्रकौशलेन १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ कथंयुयुधिरेइत्यस्योत्तरं

निर्जित्यधार्तराष्ट्रांस्तुपांडवेयामहारथाः ॥ व्यरोचंतरणेराजन्दीप्यमानाइवाग्नयः ३६ सिंहनादान्भृशंचक्रुःशंखान्दध्मुश्चहर्षिताः ॥ भेरीश्चवादयामासुर्मृदंगां श्चानकैःसह ३७ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिद्रोणाभिषेकपर्वणिशल्यापयानेपंचदशोऽध्यायः १५ ॥ ४ ॥ ॥ संजयउवाच ॥ तद्बलंसुमहद्दीर्णंत्वदीयं प्रेक्ष्यवीर्यवान् ॥ दधारैकोरणेराजन्वृषसेनोऽस्त्रमायया ॥ १ शरादशदिशोमुक्तावृषसेनेनसंयुगे ॥ विचेरुस्तेविनिर्भिद्यनरवाजिरथद्विपान् २ तस्यदीप्तामहा बाणाविनिश्चेरुःसहस्रशः ॥ भानोरिवमहाराजघर्मकालेमरीचयः ३ तेनार्दितामहाराजरथिनःसादिनस्तथा ॥ निपेतुरुर्व्यांसहसावातभग्नाइवद्रुमाः ४ हयौघां श्चरथौघांश्चगजौघांश्चमहारथः ॥ अपातयद्रणेराजञ्शतशोऽथसहस्रशः ५ दृष्ट्वातमेकंसमरेविचरंतमभीतवत् ॥ सहिताःसर्वराजानःपरिवव्रुःसमंततः ६ नाकु लिस्तुशतानीकोवृषसेनंसमभ्ययात् ॥ विव्याधचैनंदशभिर्नाराचैर्मर्मभेदिभिः ७ तस्यकर्णात्मजश्चापंछित्वाकेतुमपातयत् ॥ तंभ्रातरंपरीप्संतोद्रौपदेयाःसम भ्ययुः ८ कर्णात्मजंशरव्रातैरदृश्यंचक्रुरंजसा ॥ तान्नदंतोऽभ्यधावंतद्रोणपुत्रमुखारथाः ९ छादयंतोमहाराजद्रौपदेयान्महारथान् ॥ शरैर्नानाविधैस्तूर्णंपर्व तानजलदाइव १० तान्पांडवाःप्रत्यगृह्णंस्त्वरिताःपुत्रगृद्धिनः ॥ पंचालाःकेकयामत्स्यामृंजयाश्चोद्यतायुधाः ११ तद्युद्धमभवद्घोरंसुमहल्लोमहर्षणम् ॥ त्वदी यैःपांडुपुत्राणांदेवानामिवदानवैः १२ एवंयुयुधिरेवीराःसंरब्धाःकुरुपांडवाः ॥ परस्परमुदीक्षंतःपरस्परकृतागसः १३ तेषांददृशिरेकोपाद्वपूंष्यमिततेजसां ॥ युयुत्सूनामिवाकाशेपतत्रिवरभोगिनाम् १४ भीमकर्णकृपद्रोणद्रौणिपार्षतसात्यकैः ॥ बभासेसरणोद्देशःकालसूर्यइवोदितः १५ तदासीत्तुमुलंयुद्धंनिघ्नतामितरे तरम् ॥ महाबलानांबलिभिर्दानवानांयथासुरैः १६ ततोयुधिष्ठिरानीकमुद्धूतार्णवनिःस्वनम् ॥ त्वदीयमवधीत्सैन्यंसंप्रद्रुतमहारथम् १७ तत्प्रभग्नंबलंदृष्ट्वाश त्रुभिर्भृशमर्दितम् ॥ अलंद्रुतेनवःशूराइतिद्रोणोऽभ्यभाषत १८ ततःशोणहयःक्रुद्धश्चतुर्दंतइवद्विपः ॥ प्रविश्यपांडवानीकंयुधिष्ठिरमुपाद्रवत् १९ तमा विध्यच्छितैर्बाणैःकंकपत्रैर्युधिष्ठिरः ॥ तस्यद्रोणोधनुश्छित्वातंद्रुतंसमुपाद्रवत् २० चक्ररक्षःकुमारस्तुपंचालानांयशस्करः ॥ दधारद्रोणमायांतंवेलेवसरितां पतिम् २१ द्रोणंनिवारितंदृष्ट्वाकुमारेणद्विजर्षभम् ॥ सिंहनादरवोह्यासीत्साधुसाध्वितिभाषितम् २२ कुमारस्तुततोद्रोणंसायकेनमहाहवे ॥ विव्याधोर सिसंक्रुद्धःसिंहवच्चानदन्मुहुः २३ संवार्यचरणेद्रोणंकुमारस्तुमहाबलः ॥ शरैरनेकसाहस्रैःकृतहस्तोजितश्रमः २४ तंशूरमार्यव्रतिनंमंत्रास्त्रेषुकृतश्रमम् ॥ चक्ररक्षंपरामृद्नात्कुमारंद्विजपुंगवः २५ समध्यंप्राप्यसैन्यानांसर्वाःप्रविचरन्दिशः ॥ तवसैन्यस्यगोप्ताऽऽसीद्भारद्वाजोद्विजर्षभः २६ शिखंडिनंद्वादशभि र्विंशत्याचोत्तमौजसम् ॥ नकुलंपंचभिर्विद्ध्वासहदेवंचसप्तभिः २७

एवंयुयुधिरेइति १३पतत्रिवरभोगिनामिव पतत्रिवरोगरुडः भोगिनःसर्पाः १४ । १५ । १६ । १७ द्रुतेनपलायितेन १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

युधिष्ठिरंद्वादशभिर्द्रौपदेयांस्त्रिभिस्त्रिभिः ॥ सात्यकिंपंचभिर्विद्धामत्स्यंचदशभिःशरैः २८ व्यक्षोभयद्रणेयोधान्यथामुख्यमभिद्रवन् ॥ अभ्यवर्त्ततसंप्रेप्सुः कुंतीपुत्रंयुधिष्ठिरम् २९ युगंधरस्ततोराजन्भारद्वाजंमहारथम् ॥ वारयामाससंक्रुद्धंवातोद्धतमिवार्णवम् ३० युधिष्ठिरंसविद्ध्वातुशरैःसन्नतपर्वभिः ॥ युगंधरं तुभल्लेनरथनीडादपातयत् ३१ ततोविराटद्रुपदौकैकेयाःसात्यकिःशिबिः ॥ व्याघ्रदत्तश्चपांचाल्यःसिंहसेनश्चवीर्यवान् ३२ एतेचान्येचबहवःपरीप्संतोयुधिष्ठिरम् ॥ आवव्रुस्तस्यपंथानंकिरंतःसायकान्बहून् ३३ व्याघ्रदत्तस्तुपांचाल्योद्रोणंविव्याधमार्गणैः ॥ पंचाशताशितैराजंस्ततउच्चुकुशुर्जनाः ३४ त्वरितंसिंहसेनस्तुद्रोणंविद्धामहारथम् ॥ प्राहसत्सहसाहृष्टस्त्रासयन्वैमहारथान् ३५ ततोविस्फार्यनयनेधनुर्ज्यामवमृज्यच ॥ तलशब्दंमहत्कृत्वाद्रोणस्तंसमुपाद्रवत् ३६ ततस्तुसिंहसेनस्यशिरःकायात्सकुंडलम् ॥ व्याघ्रदत्तस्यचाक्रम्यभल्लाभ्यामाहरद्बली ३७ तान्प्रमृज्यशरव्रातैःपांडवानांमहारथान् ॥ युधिष्ठिररथाभ्याशेतस्थौमृत्युरिवांतकः ३८ ततोऽभवन्महाशब्दोराजन्यौधिष्ठिरेबले ॥ हतोराजेतियोधानांसमीपस्थेयतव्रते ३९ अब्रुवन्सैनिकास्तत्रदृष्ट्वाद्रोणस्यविक्रमम् ॥ अद्यराजाधार्त्तराष्ट्रःकृतार्थोवैभविष्यति ४० अस्मिन्मुहूर्त्तेद्रोणस्तुपांडवंगृह्यहर्षितः ॥ आगमिष्यतिनोनूनंधार्त्तराष्ट्रस्यसंयुगे ४१ एवंसंजल्पतां तेषांतावकानांमहारथः ॥ आयाज्जवेनकौंतेयोरथघोषेणनादयन् ४२ शोणितोदांरथावर्त्तांकृत्वाविशसनेनदीम् ॥ शूरास्थिचयसंकीर्णांप्रेतकूलापहारिणीम् ४३ तांशरौघमहाफेनांप्रासमत्स्यसमाकुलाम् ॥ नदीमुत्तीर्यवेगेनकुरून्विद्राव्यपांडवः ४४ ततःकिरीटीसहसाद्रोणानीकमुपाद्रवत् ॥ छादयन्निषुजालेनमहता मोहयन्निव ४५ शीघ्रमभ्यस्यतोबाणान्संदधानस्यचानिशम् ॥ नांतरंददृशेकश्चित्कौंतेयस्ययशस्विनः ४६ नदिशोनांतरिक्षंचनद्यौनैवचमेदिनी ॥ अदृश्यंतमहाराजबाणभूताइवाभवन् ४७ नादृश्यततदाराजंस्तत्रकिंचनसंयुगे ॥ बाणांधकारेमहतिकृतेगांडीवधन्वना ४८ सूर्येचास्तमनुप्राप्तेतमसाचाभिसंवृते ॥ नाज्ञायततदाशत्रुर्नसुहृन्नचकश्चन ४९ ततोऽवहारंचक्रुस्तेद्रोणदुर्योधनादयः ॥ तान्विदित्वापुनस्त्रस्तानयुद्धमनसःपरान् ५० स्वान्यनीकानिबीभत्सुःशनकैरवहारयत् ॥ ततोभितुष्टुवुःपार्थंप्रहृष्टाःपांडुसृंजयाः ५१ पंचालाश्चमनोज्ञाभिर्वाग्भिःसूर्यमिवर्षयः ॥ एवंस्वशिबिरंप्रायाज्जित्वाशत्रून्धनंजयः ५२ पृष्ठतःसर्वसैन्यानांमुदितोवैसकेशवः ५३ मसारगल्वर्कसुवर्णरूपैर्वज्रप्रवालस्फटिकैश्चमुख्यैः ॥ चित्रेरथेपांडुसुतोबभासेनक्षत्रचित्रेवियतीवचंद्रः ५४ ॥ इतिश्री महाभारतेद्रोणपर्वणिद्रोणाभिषेकपर्वणि प्रथमदिवसावहारेषोडशोऽध्यायः ॥ १६ ॥ ॥ समाप्तंचद्रोणाभिषेकपर्व ॥ ॥ ध ॥ ॥ अथसंशप्तकवधपर्व ॥ ॥ संजयउवाच ॥ तेसेनेशिबिरंगत्वान्यविशेतांविशांपते ॥ यथाभागंयथान्यायंयथागुल्मंचसर्वशः १

मसारइंद्रनीलः गल्वर्कःपद्मरागः ५४ ॥ इतिद्रोणपर्वणिटीकायांषोडशोऽध्यायः ॥ १६ ॥ ॥ ध ॥ ॥ तेसेनेइति १

२ । ३ । ४ योगेनउपायेन ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ लोक्याःपुण्यलोकार्हाः २४ ब्रह्मचर्यंवदव्रताचरणं

कृत्वावऽहारंसैन्यानांद्रोणःपरमदुर्मनाः ॥ दुर्योधनमभिप्रेक्ष्यसव्रीडमिदमब्रवीत् २ उक्तमेतन्मयापूर्वंनतिष्ठतिधनंजये ॥ शक्योग्रहीतुंसंग्रामेदेवैरपियुधिष्ठिरः ३ इतितद्वःप्रयततांकृतंपार्थेनसंयुगे ॥ माविशंकीर्वचोमह्यमजेयौकृष्णपांडवौ ४ अपनीतेतुयोगेनकेनाचिच्छ्वेतवाहने ॥ ततएष्यातितेराजन्वशमेषयुधिष्ठिरः ५ कश्चिदाहूयतंसंख्येदेशमन्यंप्रकर्षतु ॥ तमजित्वानकौंतेयोनिवर्तेतकथंचन ६ एतस्मिन्नंतरेशून्येधर्मराजमहंनृप ॥ ग्रहीष्यामिचमूंभित्वाधृष्टद्युम्नस्यपश्यतः ७ अर्जुनेनविहीनस्तुयदिनोत्सृजतेरणम् ॥ मामुपायांतमालोक्यगृहीतंविद्धिपांडवम् ८ एवंतेऽहंमहाराजधर्मपुत्रंयुधिष्ठिरम् ॥ समानेष्यामिसगणंत्रशमद्यनसंशयः ९ यदितिष्ठतिसंग्रामेमुहूर्तमपिपांडवः ॥ अथापयातिसंग्रामादिजयात्तद्विशिष्यते १० ॥ संजयउवाच ॥ द्रोणस्यतद्वचःश्रुत्वात्रिगर्ताधिपतिस्तदा ॥ भ्रातृभिःसहितोराजन्निदंवचनमब्रवीत् ११ वयंविनिकृताराजन्सदागांडीवधन्वना ॥ अनागःस्वपिचागस्तत्कृतमस्मासुतेनवै १२ तेवयंस्मरमाणास्तान्विनिकारान्पृथग्विधान् ॥ क्रोधाग्निनादह्यमानानशेमाहिसदानिशि १३ सनोदिष्ट्याऽस्त्रसंपन्नश्चक्षुर्विषयमागतः ॥ कर्तारःस्मवयंकर्मयच्चिकीर्षामहृद्गतम् १४ भवतश्चप्रियंयत्स्यादस्माकंचयशस्करम् ॥ वयमेनंहनिष्यामोनिकृष्यायोधनाद्बहिः १५ अद्यास्त्वनर्जुनाभूमिरत्रिगर्ताऽथवापुनः ॥ सत्यंतेप्रतिजानीमोनैतन्मिथ्याभविष्यति १६ एवंसत्यरथश्चोक्त्वासत्यवर्माचभारत ॥ सत्यव्रतश्चसत्येषुःसत्यकर्मातथैवच १७ सहिताभ्रातरःपंचरथानामयुतेनच ॥ न्यवर्तंतमहाराजकृत्वाशपथमाहवे १८ मालवास्तुंडिकेराश्वरथानामयुतैस्त्रिभिः ॥ सुशर्माचनरव्याघ्रस्त्रिगर्तःप्रस्थलाधिपः १९ मावेल्लकैर्ललित्थैश्चसहितोमद्रकैरपि ॥ रथानामयुतेनैवसोगमद्भ्रातृभिःसह २० नानाजनपदेभ्यश्चरथानामयुतंपुनः ॥ समुत्थितंविशिष्टानांशपथार्थमुपागमत् २१ ततोज्वलनमानर्च्यहुत्वासर्वेपृथक्पृथक् ॥ जगृहुःकुशचीराणिचित्राणिकवचानिच २२ तेचबद्धतनुत्राणाघृताक्ताःकुशचीरिणः ॥ मौर्वीमेखलिनोवीराःसहस्रशतदक्षिणाः २३ यज्वानःपुत्रिणोलोक्याःकृतकृत्यास्तनुत्यजः ॥ योक्ष्यमाणास्तदात्मानंयशसाविजयेनच २४ ब्रह्मचर्यश्रुतिमुखैःक्रतुभिश्चाप्तदक्षिणैः ॥ प्राप्यान्लोकान्सुयुद्धेनक्षिप्रमेवयियासवः २५ ब्राह्मणांस्तर्पयित्वाचनिष्कान्दत्वापृथक्पृथक् ॥ गाश्ववासांसिचपुनःसमाभाष्यपरस्परम् २६ प्रज्वाल्यकृष्णवर्त्मानमुपागम्यरणव्रतम् ॥ तस्मिन्नग्नौतदाचक्रुःप्रतिज्ञांदृढनिश्चयाः २७ शृण्वतांसर्वभूतानामुच्चैर्वाचोबभाषिरे ॥ सर्वेधनंजयवधेप्रतिज्ञांचापिचक्रिरे २८ येवैलोकाश्चाव्रतिनांयेचैवब्रह्मघातिनाम् ॥ मद्यपस्यचयेलोकागुरुदाररतस्यच २९ ब्रह्मस्वहारिणश्चैवराजपिंडापहारिणः ॥ शरणागतंचत्यजतोयाचमानंतथाघ्नतः ३० अगारदाहिनांचैवयेचगांनिघ्नतामपि ॥ अपकारिणांचयेलोकायेचब्रह्मद्विषामपि ३१

श्रुतिर्वेदाध्ययनं तेएवमुखंप्रधानंयेषुतैःकर्मभिरितिशेषः २५ । २६ । २७ । २८ । २९ । ३० । ३१

आत्मापहारिणांस्वजातिगोपकानां ३२ श्रुतंप्रतिज्ञातं ३३ । ३४ । ३५ । ३६ । ३७ अपदांतरमव्यवहितं ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९

स्वभार्यामृतुकालेषुमोहाद्वैनाभिगच्छताम् ॥ श्राद्धमैथुनिकानांचयेचाप्यात्मापहारिणाम् ३२ न्यासापहारिणांयेचश्रुतंनाशयतांचये ॥ क्लीबेनयुध्यमाना नांयेचनीचानुसारिणाम् ३३ नास्तिकानांचयेलोकायेऽग्निमातृपितृत्यजाम् ॥ तानाप्नुयामहेलोकान्येचपापकृतामपि ३४ यद्यहत्वावयंयुद्धेनिवर्तेममधनंज यम् ॥ तेन चाभ्यर्दितास्त्रासाद्भवेमहिपराङ्मुखाः ३५ यदित्वसुकरंलोकेकर्मकुर्यामसंयुगे ॥ इष्टाँल्लोकान्प्राप्नुयामोवयमद्यनसंशयः ३६ एवमुक्त्वातदाराजं स्तेऽभ्यवर्तंतसंयुगे ॥ आह्वयंतोऽर्जुनंवीराःपितृजुष्टांदिशंप्रति ३७ आहूतस्तैर्नरव्याघ्रैःपार्थःपरपुरंजयः ॥ धर्मराजमिदंवाक्यमपदांतरमब्रवीत् ३८ आ हूतोननिवर्तेयमितिमेव्रतमाहितम् ॥ संशप्तकाश्चमांराजन्नाह्वयंतिमहामृधे ३९ एषचभ्रातृभिःसार्धंसुशर्माऽऽह्वयतेरणे ॥ वधायसगणस्यास्यमामनुज्ञातुमर्ह सि ४० नैतच्छक्नोमिसंसोढुमाह्वानंपुरुषर्षभ ॥ सत्यंतेप्रतिजानामिहतान्विद्धिपरान्युधि ४१ ॥ युधिष्ठिरउवाच ॥ श्रुतंतेतत्त्वतस्तातयद्द्रोणस्यचिकी र्षितम् ॥ यथातदनृतंतस्यभवेत्तत्त्वंसमाचर ४२ द्रोणोहिबलवाञ्शूरःकृतास्त्रश्चाजितश्रमः ॥ प्रतिज्ञातंचतेनैतद्ग्रहणंमेमहारथ ४३ ॥ अर्जुनउवाच ॥ अ यंवैसत्यजिद्राजन्नद्यत्वांरक्षितायुधि ॥ ध्रियमाणेचपांचाल्येनाचार्यःकाममाप्स्यति ४४ हतेतुपुरुषव्याघ्रेरणेसत्यजितिप्रभो ॥ सर्वैरपिसमेतैर्वानस्थातव्यं कथंचन ४५ ॥ संजयउवाच ॥ अनुज्ञातस्ततोराज्ञापरिष्वक्तश्चफाल्गुनः ॥ प्रेम्णादृष्टश्चबहुधाह्याशिषश्चास्ययोजिताः ४६ विहायैनंततःपार्थस्त्रिगर्ता न्प्रत्ययाद्बली ॥ क्षुधितःक्षुद्विघातार्थंसिंहोमृगगणानिव ४७ ततोदौर्योधनंसैन्यंमुदापरमयायुतम् ॥ ऋतेऽर्जुनंभृशंक्रुद्धंधर्मराजस्यनिग्रहे ४८ ततोऽन्यो न्येनतेसैन्येसमाजग्मतुरोजसा ॥ गंगासरय्वौवेगेनप्रावृषीवोल्बणोदके ४९ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिसंशप्तकवधपर्वणि धनंजययानेसप्तदशोऽध्यायः ॥ ॥ १७ ॥ ॥ छ ॥ ॥ संजयउवाच ॥ ततःसंशप्तकाराजन्समेदेशेव्यवस्थिताः ॥ व्यूह्यानीकंरथैरेवचंद्राकारंमुदायुताः १ तेकिरीटिनमायांतंदृष्ट्वाहर्षे णमारिष ॥ उदक्रोशन्नरव्याघ्राःशब्देनमहतातदा २ सशब्दःप्रदिशःसर्वादिशःखंचसमावृणोत् ॥ आवृतत्वाच्चलोकस्यनासीत्तत्रप्रतिस्वनः ३ सोतीवसंप्रहृ ष्टांस्तानुपलभ्यधनंजयः ॥ किंचिदभ्युत्स्मयन्कृष्णमिदंवचनमब्रवीत् ४ पश्यैतान्देवकीमातर्मुमूर्षूनद्यसंयुगे ॥ भ्रातॄंस्त्रैगर्तकानेवंरोदितव्येप्रहर्षितान् ५ अथवाहर्षकालोऽयंत्रैगर्तानामसंशयम् ॥ कुनरैर्दुरवापान्हिलोकान्प्राप्स्यंत्यनुत्तमान् ६ एवमुक्त्वामहाबाहुर्हृषीकेशंततोऽर्जुनः ॥ आससादरणेव्यूढांत्रिगर्ता नामनीकिनीम् ७ सदेवदत्तमादायशंखंहेमपरिष्कृतम् ॥ दध्मौवेगेनमहताघोषेणापूरयन्दिशः ८ तेनशब्देनवित्रस्तासंशप्तकवरूथिनी ॥ विचेष्टावस्थितासं स्थ्येह्यश्मसारमयीयथा ९ वाहास्तेषांविवृत्ताक्षाःस्तब्धकर्णशिरोधराः ॥ विष्टब्धचरणामूत्रंरुधिरंचप्रसुस्रुवुः १० उपलभ्यततःसंज्ञामवस्थाप्यचवाहिनीम् ॥ युगपत्पांडुपुत्रायचिक्षिपुःकंकपत्रिणः ११

॥ इतिद्रोणपर्वणिटीकायांसप्तदशोऽध्यायः ॥ १७ ॥

ततइति ॥ १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११

१२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ ॥ इतिद्रोणपर्वणिटीकायामष्टादशो

तान्यर्जुनःसहस्राणिदशपंचभिराशुगैः ॥ अनागतान्येवशरैश्चिच्छेदाशुपराक्रमी १२ ततोऽर्जुनंशितैर्बाणैर्दशभिर्दशभिःपुनः ॥ प्राविध्यंततत:पार्थस्तानविध्य
त्रिभिस्त्रिभिः १३ एकैकस्तुततःपार्थंराजन्विव्याधपंचभिः ॥ सचतान्प्रतिविव्याधद्वाभ्यांद्वाभ्यांपराक्रमी १४ भूयएवतुसंक्रुद्धास्त्वर्जुनंसहकेशवम् ॥ आपूर
यन्शरैस्तीक्ष्णैस्तडागमिववृष्टिभिः १५ ततःशरसहस्राणिप्रापतन्नर्जुनंप्रति ॥ भ्रमराणामिवव्राताःफुल्लंद्रुमगणंवने १६ ततःसुबाहुस्त्रिंशद्भिरद्रिसारमयैःशरैः ॥
अविध्यदिषुभिर्गाढंकिरीटेसव्यसाचिनम् १७ तैःकिरीटीकिरीटस्थैर्हेमपुंखैरजिह्मगैः ॥ शातकुंभमयापीडोबभौसूर्यइवोत्थितः १८ हस्तावापंसुबाहोस्तुभल्लेन
युधिपांडवः ॥ चिच्छेदतंचैवपुनःशरवर्षैरवाकिरत् १९ ततःसुशर्मादशभिःसुरथस्तुकिरीटिनम् ॥ सुधर्मासुधनुश्चैवसुबाहुश्चसमार्पयत् २० तांस्तुसर्वान्पृथ
ग्बाणैर्वानरप्रवरध्वजः ॥ प्रत्यविध्यद्ध्वजांश्चैषांभल्लैश्चिच्छेदसायकान् २१ सुधन्वनोधनुश्छित्वाहयांश्चास्यावधीच्छरैः ॥ अथास्यसशिरस्त्राणंशिरःकायादपा
तयत् २२ तस्मिन्निपतितेवीरेत्रस्तास्तस्यपदानुगाः ॥ व्यद्रवंतभयाद्भीतायत्रदौर्योधनंबलम् २३ ततोजघानसंक्रुद्धोवासविस्तांमहाचमूम् ॥ शरजालैरवि
च्छिन्नैस्तमःसूर्यइवांशुभिः २४ ततोभग्नेबलेतस्मिन्विप्रलीनेसमंततः ॥ सव्यसाचिनिसंक्रुद्धेत्रैगर्तान्भयमाविशत् २५ तेवध्यमानाःपार्थेनशरैःसन्नतपर्वभिः ॥
अमुह्यंस्तत्रतत्रैवत्रस्तामृगगणाइव २६ ततस्त्रिगर्तराट्क्रुद्धस्तानुवाचमहारथान् ॥ अलंद्रुतेनवःशूरानभयंकर्तुमर्हथ २७ शप्त्वाऽथशपथान्वोरान्सर्वसैन्यस्य
पश्यतः ॥ गत्वादौर्योधनंसैन्यंकिंवैवक्ष्यथमुख्यशः २८ नावहास्याःकथंलोकेकर्मणाऽनेनसंयुगे ॥ भवेमसहिताःसर्वेनिवर्तध्वंयथाबलम् २९ एवमुक्तास्तुतेरा
जन्नुदक्रोशन्मुहुर्मुहुः ॥ शंखांश्चदध्मिरेवीराहर्षयंतःपरस्परम् ३० ततस्तेसंन्यवर्तंतसंशप्तकगणाःपुनः ॥ नारायणाश्चगोपालामृत्युंकृत्वाऽनिवर्तनम् ३१ ॥
इतिश्रीमहाभारतेद्रोणपर्वणिसंशप्तकवधपर्वणि सुधन्ववधेअष्टादशोऽध्यायः ॥ १८ ॥ संजयउवाच ॥ दृष्ट्वातुसंनिवृत्तांस्तान्संशप्तकगणान्पुनः ॥ वासुदेवंमहा
त्मानमर्जुनःसमभाषत १ चोदयाश्वान्हृषीकेशसंशप्तकगणान्प्रति ॥ नैतेहास्यंतिसंग्रामंजीवंतइतिमेमतिः २ पश्यमेऽस्त्रबलंघोरंबाह्वोरिष्वसनस्यच ॥ अ
द्यैतान्पातयिष्यामिक्रुद्धोरुद्रःपशूनिव ३ ततःकृष्णःस्मितंकृत्वाप्रतिनंद्यशिवेनतम् ॥ प्रावेशयतदुर्धर्षोयत्रयत्रैच्छदर्जुनः ४ सरथोभ्राजतेऽत्यर्थमुह्यमानोर
णेतदा ॥ उह्यमानमिवाकाशेविमानंपांडुरैर्हयैः ५ मंडलानिततश्चक्रेगतप्रत्यागतानिच ॥ यथाशक्ररथोराजन्युद्धेदेवासुरेपुरा ६ अथनारायणाःक्रुद्धाःविवि
धायुधपाणयः ॥ छादयंतःशरव्रातैःपरिवव्रुर्धनंजयम् ७ अदृश्यंचमुहूर्तेनचक्रुस्तेभरतर्षभ ॥ कृष्णेनसहितंयुद्धेकुंतीपुत्रंधनंजयम् ८ क्रुद्धस्तुफाल्गुनःसं
ख्येद्विगुणीकृतविक्रमः ॥ गांडीवंधनुरामृज्यतूर्णंजग्राहसंयुगे ९ बध्वाचभ्रुकुटिंवक्त्रेक्रोधस्यप्रतिलक्षणम् ॥ देवदत्तंमहाशंखंपूरयामासपांडवः १० अथास्त्र
मरिसंघघ्नंत्वाष्ट्रमभ्यस्यदर्जुनः ॥ ततोरूपसहस्राणिप्रादुरासन्पृथक्पृथक् ११                ऽध्यायः ॥ १८ ॥ दृष्ट्वेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११

११ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २७ । २८ । २९ सोत्तरायुधिनःउपरिगतैर्योधैःसहिताः ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६



आत्मनःप्रतिरूपैस्तैर्नानारूपैर्विमोहिताः ॥ अन्योऽन्येनार्जुनंमत्वास्वमात्मानंचजघ्निरे १२ अयमर्जुनोऽयंगोविंदइमौपांडवयादवौ ॥ इतिब्रुवाणाःसंमूढा जघ्नुरन्योन्यमाहवे १३ मोहिताःपरमास्त्रेणक्षयंजग्मुःपरस्परम् ॥ अशोभंतरणेयोधाःपुष्पिताइवकिंशुकाः १४ ततःशरसहस्राणितैर्विमुक्तानिभस्मसात् ॥ कृत्वा तदस्त्रंतान्वीराननयद्यमसादनम् १५ अथप्रहस्यबीभत्सुर्ललित्थान्मालवानपि ॥ मावेल्लकांस्त्रिगर्तांश्चयौधेयांश्चार्दयच्छरैः १६ तेहन्यमानावीरेणक्षत्रियाःका लचोदिताः ॥ व्यसृजञ्छरजालानिपार्थेनानाविधानिच १६ नध्वजोनार्जुनस्तत्रनरथोनचकेशवः ॥ प्रत्यदृश्यतघोरेणशरवर्षेणसंवृतः १८ ततस्तेलब्धलक्ष त्वादन्योऽन्यमभिचुक्रुशुः ॥ हतौकृष्णावितिप्रीत्यावासांस्यादुधुवुस्तदा १९ भेरीमृदंगशंखांश्चदध्मुर्वीराःसहस्रशः ॥ सिंहनादरवांश्चोग्रांश्चक्रिरेतत्रमारिष २० ततःप्रसिष्विदेकृष्णःखिन्नश्चार्जुनमब्रवीत् ॥ क्वासिपार्थनपश्येत्वांकच्चिज्जीवसिशत्रुहन् २१ तस्यतद्भाषितंश्रुत्वात्वरमाणोधनंजयः ॥ वायव्यास्त्रेणतैरस्तां शरवृष्टिमपाहरत् २२ ततःसंशप्तकव्रातान्साश्वद्वीपरथायुधान् ॥ उवाहभगवान्वायुःशुष्कपर्णचयानिव २३ उह्यमानास्तुतेराजन्बह्वशोभंतवायुना ॥ प्रडी नाःपक्षिणःकालेवृक्षेभ्यइवमारिष २४ तांस्तथाव्याकुलीकृत्यत्वरमाणोधनंजयः ॥ जघाननिशितैर्बाणैःसहस्राणिशतानिच २५ शिरांसिभल्लैरहरद्बाहूनपिच सायुधान् ॥ हस्तिहस्तोपमांश्चोरून्शरैरुर्व्यामपातयत् २६ पृष्ठच्छिन्नान्विचरणान्बाहुपार्श्वेक्षणाकुलान् ॥ नानांगावयवैर्हीनांश्चकारारीन्धनंजयः २७ गंधर्व नगराकारान्विधिवत्कल्पितान्रथान् ॥ शरैर्विशकलीकुर्वंश्चक्रेव्यश्वरथद्विपान् २८ मुंडतालवनानीवतत्रतत्रचकाशिरे ॥ छिन्नारथध्वजव्राताःकेचितत्रक्वचित्क्व चित् २९ सोत्तरायुधिनोनागाःसपताकांकुशध्वजाः ॥ पेतुःशक्राशनिहताद्रुमवंतइवाचलाः ३० चामरापीडकवचाःस्रस्तांत्रनयनास्तथा ॥ सारोहास्तुरगाः पेतुःपार्थबाणहताःक्षितौ ३१ विप्रविद्धासिनखराश्छिन्नवर्मर्ष्टिशक्तयः ॥ पत्तयश्छिन्नवर्माणःकृपणाःशेरतेहताः ३२ तैर्हतैर्हन्यमानैश्चपतद्भिःपतितैरपि ॥ भ्रमद्भिर्निष्टनद्भिश्चक्रूरमायोधनंबभौ ३३ रजश्चसुमहज्जातंशांतंरुधिरवृष्टिभिः ॥ महीचाप्यभवद्दुर्गाकबंधशतसंकुला ३४ तद्बभौरौद्रबीभत्संबीभत्सोर्यानमा हवे ॥ आक्रीडमिवरुद्रस्यघ्नतःकालात्ययेपशून् ३५ तेवध्यमानाःपार्थेनव्याकुलाश्वरथद्विपाः ॥ तमेवाभिमुखाःक्षीणाःशक्रस्यातिथितांगताः ३६ साभूमिर्भ रतश्रेष्ठनिहतैस्तैर्महारथैः ॥ आस्तीर्णासंबभौसर्वाप्रेतीभूतैःसमंततः ३७ एतस्मिन्नंतरेचैवप्रमत्तेसव्यसाचिनि ॥ व्यूढानीकस्ततोद्रोणोयुधिष्ठिरमुपाद्रवत् ३८ तंप्रत्यगृह्णंस्त्वरिताव्यूढानीकाःप्रहारिणः ॥ युधिष्ठिरंपरीप्संतस्तदासीत्तुमुलंमहत् ३९ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिसंशप्तकवधपर्वणिअर्जुनसंशप्तक युद्धेऊनविंशोऽध्यायः ॥ १९ ॥ ॥ ७ ॥

३७ । ३८ ३९ ॥ इतिद्रोणपर्वणिटीकायांऊनविंशोऽध्यायः ॥ १९ ॥ ॥ ७ ॥ ॥ ७ ॥

पीरणाम्येति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ उष्णगेघर्मात्यये १६ । १७ पौर्णमास्यांकृत्तिकायोगयुक्तेनइंदुना शारदपूर्णचंद्रेणेत्यर्थः

॥ संजयउवाच ॥ परिणाम्यनिशांतांतुभारद्वाजोमहारथः ॥ उक्त्वासुबहुराजेंद्रवचनंवैसुयोधनम् १ विधाययोगंपार्थेनसंशप्तकगणैःसह ॥ निष्क्रांतेचतदापार्थे संशप्तकवधंप्रति २ व्यूढानीकस्ततोद्रोणःपांडवानांमहाचमूम् ॥ अभ्ययाद्भरतश्रेष्ठधर्मराजजिघृक्षया ३ व्यूढंदृष्ट्वासुपर्णंतुभारद्वाजकृतंतदा ॥ व्यूहेनमंडलार्धेनप्रत्यव्यूहद्युधिष्ठिरः ॥ मुखंत्वासीत्सुपर्णस्यभारद्वाजोमहारथः ४ शिरोदुर्योधनोराजासोदर्यैःसानुगैर्वृतः ॥ चक्षुषीकृतवर्मासीद्गौतमश्चास्यतांवरः ५ भूतशर्माक्षेमशर्माकरकाशश्ववीर्यवान् ॥ कलिंगाःसिंहलाःप्राच्याःशूराभीरादशेरकाः ६ शकायवनकांबोजास्तथाहंसपथाश्चये ॥ ग्रीवायांशूरसेनाश्चदरदामद्रकेकयाः ७ गजाश्वरथपत्त्योघास्तस्थुःपरमदंशिताः ॥ भूरिश्रवास्तथाशल्यःसोमदत्तश्चबाल्हिकः ८ अक्षौहिण्यावृतावीरादक्षिणंपार्श्वमास्थिताः ॥ विंदानुविंदावावंत्यौकांबोजश्चसुदक्षिणः ९ वामंपार्श्वंसमाश्रित्यद्रोणपुत्राग्रतःस्थिताः ॥ पृष्ठेकलिंगाःसांबष्ठामागधाःपौंड्रमद्रकाः १० गांधाराःशकुनाःप्राच्याःपार्वतीयावसातयः ॥ पुच्छेवैकर्तनःकर्णःसपुत्रज्ञातिबांधवः ११ महत्यासेनयातस्थौनानाजनपदोत्थया ॥ जयद्रथोभीमरथःसंपातिर्ऋषभोजयः १२ भूमिंजयोवृषक्राथोनैषधश्चमहाबलः ॥ वृताबलेनमहताब्रह्मलोकपरिष्कृताः १३ व्यूहस्योरसितेराजन्स्थितायुद्धविशारदाः ॥ द्रोणेनविहितोव्यूहःपदात्यश्वरथद्विपैः १४ वातोद्धूतार्णवाकारःप्रवृत्तइवलक्ष्यते ॥ तस्यपक्षप्रपक्षेभ्योनिष्पतंतियुयुत्सवः १५ सविद्युत्स्तनितामेघाःसर्वादिग्भ्यइवोष्णगे ॥ तस्यप्राग्जोतिषोमध्येविधिवत्कल्पितंगजम् १६ आस्थितःशुशुभेराजन्नंशुमानुदयेयथा ॥ माल्यदामवताराजन्श्वेतच्छत्रेणधार्यता १७ कृत्तिकायोगयुक्तेनपौर्णमास्यामिवेंदुना ॥ नीलांजनचयप्रख्योमदांधोद्विरदोबभौ १८ अतिवृष्टोमहामेघैर्यथास्यात्पर्वतोमहान् ॥ नानानृपतिभिर्वीरैर्विविधायुधभूषणैः १९ समन्वितःपार्वतीयैःशक्रोदेवगणैरिव ॥ ततोयुधिष्ठिरःप्रेक्ष्यव्यूहंतमतिमानुषम् २० अजय्यमरिभिःसंख्येपार्षतंवाक्यमब्रवीत् ॥ ब्राह्मणस्यवशंनाहमियामद्ययथाप्रभो ॥ पारावतसवर्णाश्वतथानीतिर्विधीयताम् २१ ॥ धृष्टद्युम्नउवाच ॥ द्रोणस्ययतमानस्यवशंनैष्यसिसुव्रत ॥ अहमावारयिष्यामिद्रोणमद्यसहानुगम् २२ मयिजीवतिकौरव्यनोद्वेगंकर्तुमर्हसि ॥ नहिशक्तोरणेद्रोणोविजेतुंमांकथंचन २३ ॥ संजयउवाच ॥ एवमुक्त्वाकिरन्बाणान्द्रुपदस्यसुतोबली ॥ पारावतसवर्णाश्वःस्वयंद्रोणमुपाद्रवत् २४ अनिष्टदर्शनंदृष्ट्वाधृष्टद्युम्नमवस्थितम् ॥ क्षणेनैवाभवद्द्रोणोनातिहृष्टमनाइव २५ तंतुसंप्रेक्ष्यपुत्रस्तेदुर्मुखःशत्रुकर्षणः ॥ प्रियंचिकीर्षुर्द्रोणस्यधृष्टद्युम्नमवारयत् २६ ससंप्रहारस्तुमुलःसुघोरःसमपद्यत ॥ पार्षतस्यचशूरस्यदुर्मुखस्यचभारत २७ पार्षतःशरजालेनक्षिप्रंप्रच्छाद्यदुर्मुखम् ॥ भारद्वाजंशरौघेणमहतासमवारयत् २८

१८ । १९२० । २१ । २२ । २३ । २४ अनिष्टदर्शनंस्वमृत्युहेतुत्वात् २५ । २६ । २७ । २८

भृशायस्तोऽतिप्रयत्नवान् २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ एकचराःद्विपांतरदर्शनासहाः ४७ । ४८ । ४९

द्रोणमावारितंदृष्ट्वाभृशायस्तस्तवात्मजः ॥ नानालिंगैःशरव्रातैःपार्षतंसममोहयत् २९ तयोर्विषक्तयोःसंख्येपांचाल्यकुरुमुख्ययोः ॥ द्रोणोयौधिष्ठिरंसैन्यं बहुधाव्यधमच्छरैः ३० अनिलेनयथाऽभ्राणिविच्छिन्नानिसमंततः ॥ तथापार्थस्यसैन्यानिविच्छिन्नानिक्वचित्क्वचित् ३१ मुहूर्तमिवतद्युद्धमासीन्मधुरदर्शनम् ॥ ततउन्मत्तवद्राजन्निर्मर्यादमवर्तत ३२ नैवस्वेनपरेराजन्नाज्ञायंतपरस्परम् ॥ अनुमानेनसंज्ञाभिर्युद्धंतत्समवर्तत ३३ चूडामणिषुनिष्केषुभूषणेष्वपिवर्मसु ॥ तेषामादित्यवर्णाभारश्मयःप्रचकाशिरे ३४ तत्प्रकीर्णपताकानांरथवारणवाजिनाम् ॥ बलाकाशबलाभ्राभंददृशेरूपमाहवे ३५ नरानेवनराजघ्नुरुदग्राश्चहयाहयान् ॥ रथांश्चरथिनोजघ्नुर्वारणावरवारणान् ३६ समुच्छ्रितपताकानांगजानांपरमाद्विपैः ॥ क्षणेनतुमुलोघोरःसंग्रामःसमपद्यत ३७ तेषांसंसक्तगात्राणांकर्षतामितरेतरम् ॥ दंतसंघातसंघर्षात्सधूमोऽग्निरजायत ३८ विप्रकीर्णपताकास्तेविषाणजनिताग्नयः ॥ बभूवुःखंसमासाद्यसविद्युतइवांबुदाः ३९ विक्षिपद्भिर्नदद्भिश्चनिपतद्भिश्चवारणैः ॥ संबभूवमहीकीर्णामेघैर्द्यौरिवशारदी ४० तेषामाहन्यमानानांबाणतोमरऋष्टिभिः ॥ वारणानांरवोजज्ञेमेघानामिवसंप्लवे ४१ तोमराभिहताःकेचिद्बाणैश्चपरमद्विपाः ॥ वित्रेसुःसर्वनागानांशब्दमेवापरेऽव्रजन् ४२ विषाणाभिहताश्चापिकेचित्तत्रगजागजैः ॥ चक्रुरार्तस्वनंघोरमुत्पातजलदाइव ४३ प्रतीपाःक्रियमाणाश्चवारणावरवारणैः ॥ उन्मथ्यपुनराजग्मुःप्रेरिताःपरमांकुशैः ४४ महामात्रैर्महामात्रास्ताडिताःशरतोमरैः ॥ गजेभ्यःपृथिवींजग्मुर्मुक्तप्रहरणांकुशाः ४५ निर्मनुष्याश्चमातंगाविनदंतस्ततस्ततः ॥ छिन्नाभ्राणीवसंपेतुःसंप्रविश्यपरस्परम् ४६ हतान्परिवहंतश्चपतितान्पतितायुधान् ॥ दिशोजग्मुर्महानागाःकेचिदेकचराइव ४७ ताडितास्ताड्यमानाश्चतोमरर्ष्टिपरश्वधैः ॥ पेतुरार्तस्वनंकृत्वातदाविशसनेगजाः ४८ तेषांशैलोपमैःकायैर्निपतद्भिःसमंततः ॥ आहतासहसाभूमिश्चकंपेचननादच ४९ सादितैःसगजारोहैःसपताकैःसमंततः ॥ मातंगैःशुशुभेभूमिर्विकीर्णैरिवपर्वतैः ५० गजस्थाश्चमहामात्रानिर्भिन्नहृदयारणे ॥ रथिभिःपातिताभल्लैर्विकीर्णांकुशतोमराः ५१ क्रौंचवद्विनदंतोऽन्येनाराचाभिहतागजाः ॥ परान्स्वांश्चापिमृद्नंतःपरिपेतुर्दिशोदश ५२ गजाश्वरथयोधानांशरीरौघसमावृता ॥ बभूवपृथिवीराजन्मांसशोणितकर्दमा ५३ प्रमथ्यचविषाणाग्रैःसमुत्क्षिप्ताश्चवारणैः ॥ सचक्राश्चविचक्राश्चरथैरेवमहारथाः ५४ रथाश्चरथिभिर्हीनानिर्मनुष्याश्चवाजिनः ॥ हतारोहाश्चमातंगादिशोजग्मुर्भयातुराः ५५ जघानात्रपितापुत्रंपुत्रश्चपितरंतथा ॥ इत्यासीत्तुमुलंयुद्धंनप्राज्ञायतकिंचन ५६ आगुल्फेभ्योऽवसीदंतेनरालोहितकर्दमैः ॥ दीप्यमानैःपरिक्षिप्तादावैरिवमहाद्रुमाः ५७ शोणितैःसिच्यमानानिवस्त्राणिकवचानिच ॥ छत्राणिचपताकाश्चसर्वंरक्तमदृश्यत ५८ हयौघाश्चरथौघाश्चनरौघाश्चनिपातिताः ॥ संक्षुण्णाःपुनरावृत्त्यबहुधारथनेमिभिः ५९ सगजौघमहावेगःपरासुनरशैवलः ॥ रथौघतुमुलावर्तःप्रबभौसैन्यसागरः ६०

५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६०

६१ अचित्ततांमोहं आहतलक्षणोध्वस्तचिन्हः ६२ । ६३ ॥ इतिद्रोणपर्वणिटीकायांविंशोऽध्यायः ॥ २० ॥ ॥ ७ ॥ ततइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०

तंवाहनमहानौभिर्योधाजयधनैषिणः ॥ अवगाह्याथमज्जंतोनैवमोहंप्रचक्रिरे ६१ शरवर्षाभिवृष्टेषुयोधेष्वंचितलक्ष्मसु ॥ नतेष्वाचित्ततांलेभेकश्चिदाहतलक्षणः ६२ वर्त्तमानेतथायुद्धेघोररूपेभयंकरे ॥ मोहयित्वापरान्द्रोणोयुधिष्ठिरमुपाद्रवत ६३ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिसंशप्तकवधपर्वणि संकुलयुद्धेविंशोऽध्यायः ॥ २० ॥ संजयउवाच ॥ ततोयुधिष्ठिरोद्रोणंदृष्ट्वांतिकमुपागतम् ॥ महताशरवर्षेणप्रत्यगृह्णादभीतवत् १ ततोहलहलाशब्दआसीद्यौधिष्ठिरेबले ॥ जिघृक्षतिमहासिंहेगजानामिवयूथपम् २ दृष्ट्वाद्रोणंततःशूरःसत्यजित्सत्यविक्रमः ॥ युधिष्ठिरमभिप्रेप्सुराचार्यंसमुपाद्रवत् ३ ततआचार्यपांचाल्यौयुयुधातेमहाबलौ ॥ विक्षोभयंतौतत्सैन्यमिंद्रवैरोचनाविव ४ ततोद्रोणंमहेष्वासःसत्यजित्सत्यविक्रमः ॥ अविध्यन्निशिताग्रेणपरमास्त्रंविदर्शयन् ५ तथास्यसारथेःपंचशरान्सर्पविषोपमान् ॥ अमुंचदंतकप्रख्यान्संमुमोहास्यसारथिः ६ अथास्यसहसाऽविध्यद्धयान्दशभिराशुगैः ॥ दशभिर्दशभिःक्रुद्धउभौचपार्ष्णिसारथी ७ मंडलंतुसमावृत्त्यविचरन्पृतनामुखे ॥ ध्वजंचिच्छेदचक्रुद्धोद्रोणस्यामित्रकर्षणः ८ द्रोणस्तुतत्समालोक्यचरितंतस्यसंयुगे ॥ मनसाचिंतयामासप्राप्तकालमरिंदमः ९ ततःसत्यजितंतीक्ष्णैर्दशभिर्मर्मभेदिभिः ॥ अविध्यच्छीघ्रमाचार्यश्छित्वाऽस्यसशरंधनुः १० सशीघ्रतरमादायधनुरन्यत्प्रतापवान् ॥ द्रोणमभ्यहनद्राजंस्त्रिंशताकंकपत्रिभिः ११ दृष्ट्वासत्यजिताद्रोणंग्रस्यमानमिवाहवे ॥ वृकःशरशतैस्तीक्ष्णैःपांचाल्योद्रोणमार्दयत् १२ संछाद्यमानंसमरेद्रोणंदृष्ट्वामहारथम् ॥ चुक्रुशुःपांडवाराजन्वस्त्राणिदुधुवुश्चह १३ वृकस्तुपरमक्रुद्धोद्रोणंषष्ट्यास्तनांतरे ॥ विव्याधबलवान्राजंस्तदद्भुतमिवाभवत् १४ द्रोणस्तुशरवर्षेणच्छाद्यमानोमहारथः ॥ वेगंचक्रेमहावेगःक्रोधादुद्वृत्यचक्षुषी १५ ततःसत्यजितश्चापंछित्वाद्रोणोवृकस्यच ॥ षड्भिःससूतंसहयंशरैर्द्रोणोऽवधीद्वृकम् १६ अथान्यद्धनुरादायसत्यजिद्वेगवत्तरम् ॥ साश्वंससूतंविशिखैर्द्रोणंविव्याधसध्वजम् १७ सतन्नममृषेद्रोणःपांचाल्येनार्दितोमृधे ॥ ततस्तस्यविनाशायसत्वरंव्यसृजच्छरान् १८ हयान्ध्वजंधनुर्मुष्टिमुभौचपार्ष्णिसारथी ॥ अवाकिरत्ततोद्रोणःशरवर्षैःसहस्रशः १९ तथासंछिद्यमानेषुकार्मुकेषुपुनःपुनः ॥ पांचाल्यःपरमास्त्रज्ञःशोणाश्वंसमयोधयत् २० ससत्यजितमालोक्यतथोदीर्णंमहाहवे ॥ अर्धचंद्रेणचिच्छेदशिरस्तस्यमहात्मनः २१ तस्मिन्हतेमहामात्रेपंचालानांमहारथे ॥ अपायाज्जवनैरश्वैर्द्रोणात्त्रस्तोयुधिष्ठिरः २२ पंचालाःकेकयामत्स्याश्चेदिकारूषकोसलाः ॥ युधिष्ठिरमभीप्संतोदृष्ट्वाद्रोणमुपाद्रवन् २३ ततोयुधिष्ठिरंप्रेप्सुराचार्यःशत्रुपूगहा ॥ व्यधमत्तान्यनीकानितूलराशिमिवानलः २४ निर्दहंतमनीकानितानितानिपुनःपुनः ॥ द्रोणंमत्स्यादवरजःशतानिकोऽभ्यवर्तत २५ सूर्यरश्मिप्रतीकाशैःकर्मारपरिमार्जितैः ॥ षड्भिःससूतंसहयंद्रोणंविध्वाऽनदद्भृशम् २६

११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६

क्रूरायकर्मणेयुक्तश्चिकीर्षुःकर्मदुष्करम् ॥ अवाकिरच्छरशतैर्भारद्वाजंमहारथम् २७ तस्यनानदतोद्रोणःशिरःकायात्सकुंडलम् ॥ क्षुरेणापाहरत्तूर्णंततोमत्स्याःप्रदुद्रुवुः २८ मत्स्यान्जित्वाऽजयच्चेदीन्करूषान्केकयानपि ॥ पंचालान्सृंजयान्पांडून्भारद्वाजःपुनःपुनः २९ तंदहंतमनीकानिक्रुद्धमग्निंयथावनम् ॥ दृष्ट्वारुक्मरथंवीरंसमकंपंतसृंजयाः ३० उत्तमंह्याददानस्यधनुरस्याशुकारिणः ॥ ज्याघोषोनिघ्नतोऽमित्रान्दिक्षुसर्वासुशुश्रुवे ३१ नागानश्वान्पदातींश्चरथिनोगजसादिनः ॥ रौद्राहस्तवतामुक्ताःप्रमथ्नंतिस्मसायकाः ३२ नानद्यमानःपर्जन्योमिश्रवाताहिमात्यये ॥ अश्मवर्षमिवावर्षत्परेषांभयमादधत् ३३ सर्वादिशःसमचरत्सैन्यंविक्षोभयन्निव ॥ बलीशूरोमहेष्वासोमित्राणामभयंकरः ३४ तस्यविद्युदिवाभ्रेषुचापंहेमपरिष्कृतम् ॥ दिक्षुसर्वासुपश्यामोद्रोणस्यामिततेजसः ३५ शोभमानांध्वजेचास्यवेदीमद्राक्ष्मभारत ॥ हिमवच्छिखराकारांचरतःसंयुगेभृशम् ३६ द्रोणस्तुपांडवानीकेचकारकदनंमहत् ॥ यथादैत्यगणेविष्णुःसुरासुरनमस्कृतः ३७ सशूरःसत्यवाक्प्राज्ञोबलवान्सत्यविक्रमः ॥ महानुभावःकल्पांतेरौद्रांभीरुविभीषणाम् ३८ कवचोर्मिध्वजावर्तांमर्त्यकूलापहारिणीम् ॥ गजवाजिमहाग्राहामसिमीनांदुरासदाम् ३९ वीरास्थिशर्करांरौद्रांभेरीमुरजकच्छपाम् ॥ चर्मवर्मप्लवांघोरांकेशशैवलशाद्वलाम् ४० शरौघिणींधनुःस्रोतांबाहुपन्नगसंकुलाम् ॥ रणभूमिवहांतीव्रांकुरुसृंजयवाहिनीम् ४१ मनुष्यशीर्षपाषाणांशक्तिमीनांगदोडुपाम् ॥ उष्णीषफेनवसनांविकीर्णांत्रसरीसृपाम् ४२ वीरापहारिणीमुग्रांमांसशोणितकर्दमाम् ॥ हस्तिग्राहांकेतुवृक्षांक्षत्रियाणांनिमज्जनीम् ४३ क्रूरांशरीरसंघट्टांसादिनक्रांदुरत्ययाम् ॥ द्रोणःप्रावर्तयत्तत्रनदीमंतकगामिनीम् ४४ क्रव्यादगणसंजुष्टांश्वशृगालगणायुताम् ॥ निषेवितांमहारौद्रैःपिशिताशैःसमंततः ४५ तंदहंतमनीकानिरथोदारंकृतांतवत् ॥ सर्वतोऽभ्यद्रवन्द्रोणंकुंतीपुत्रपुरोगमाः ४६ तेद्रोणंसहिताःशूराःसर्वतःप्रत्यवारयन् ॥ गभस्तिभिरिवादित्यंतपंतंभुवनंयथा ४७ तंतुशूरंमहेष्वासंतावकाऽभ्युद्यतायुधाः ॥ राजानोराजपुत्राश्चसमंतात्पर्यवारयन् ४८ शिखंडीतुततोद्रोणंपंचभिर्नतपर्वभिः ॥ क्षत्रवर्माचविंशत्यावसुदानश्चपंचभिः ४९ उत्तमौजास्त्रिभिर्बाणैःक्षत्रदेवश्चसप्तभिः ॥ सात्यकिश्चशतेनाजौयुधामन्युस्तथाऽष्टभिः ५० युधिष्ठिरोद्वादशभिर्द्रोणंविव्याधसायकैः ॥ धृष्टद्युम्नश्चदशभिश्चेकितानस्त्रिभिःशरैः ५१ ततोद्रोणःसत्यसंधःप्रभिन्नइवकुंजरः ॥ अभ्यतीत्यरथानीकंदृढसेनमपातयत् ५२ ततोराजानमासाद्यप्रहरंतमभीतवत् ॥ अविध्यन्नवभिःक्षेमंसहतःप्रापतद्रथात् ५३ समध्यंप्राप्यसैन्यानांसर्वाःप्रविचरन्दिशः ॥ त्राताह्यभवदन्येषांनत्रातव्यःकथंचन ५४ शिखंडिनंद्वादशभिर्विंशत्याचोत्तमौजसम् ॥ वसुदानंचभल्लेनप्रैषयद्यमसादनम् ५५ अशीत्याक्षत्रवर्माणंषड्विंशत्यासुदक्षिणम् ॥ क्षत्रदेवंतुभल्लेनरथनीडादपातयत् ५६ युधामन्युंचतुःषष्ट्यात्रिंशताचैवसात्यकिम् ॥ विद्धारुक्मरथस्तूर्णंयुधिष्ठिरमुपाद्रवत् ५७

उभयत्रविध्द्वेतिशेषः. ५५ । ५६ । ५७

पांचाल्योनाम्ना ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ ॥ इतिद्रोणपर्वणि टीकायांएकविंशोऽध्यायः ॥ २१ ॥ ॥ ७ ॥ ॥ भारद्वाजेति १ । २ । ३ । ४

ततोयुधिष्ठिरःक्षिप्रंगुरुतोराजसत्तमः ॥ अपायाज्जवनैरश्वैःपांचाल्योद्रोणमभ्ययात् ५८ तंद्रोणःसधनुष्कंतुसाश्वयंतारमाक्षिणोत् ॥ सहतःप्रापतद्भूमौरथा ज्ज्योतिरिवांबरात् ५९ तस्मिन्हतेराजपुत्रेपंचालानांयशस्करे ॥ हतद्रोणंहतद्रोणमित्यासीन्निःस्वनोमहान् ६० तांस्तथाभृशसंरब्धान्पंचालान्मत्स्यकेक यान् ॥ सृंजयान्पांडवांश्चैवद्रोणोव्यक्षोभयद्बली ६१ सात्यकिंचेकितानंचधृष्टद्युम्नशिखंडिनौ ॥ वार्धक्षेमिंचैत्रसेनिंसेनाबिंदुंसुवर्चसम् ६२ एतांश्चान्यांश्चसु बहून्नानाजनपदेश्वरान् ॥ सर्वान्द्रोणोऽजयद्युद्धेकुरुभिःपरिवारितः ६३ तावकाश्चमहाराजजयंलब्ध्वामहाहवे ॥ पांडवेयान्रणेजघ्नुर्द्रवमाणान्समंततः ६४ ते दानवाइवेंद्रेणवध्यमानामहात्मना ॥ पंचालाःकेकयामत्स्याःसमकंपंतभारत ६५ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिसंशप्तकवधपर्वणि द्रोणयुद्धेएकविंशोऽध्यायः ॥ २१ ॥ ॥ ७ ॥ ॥ धृतराष्ट्रउवाच ॥ भारद्वाजेनभग्नेषुपांडवेषुमहामृधे ॥ पंचालेषुचसर्वेषुकश्चिदन्योऽभ्यवर्तत १ आर्यांयुद्धेमतिंकृत्वाक्षत्रियाणांय शस्करीं ॥ असेवितांकापुरुषैःसेवितांपुरुषर्षभैः २ सहिवीरोन्नतःशूरोयोभग्नेषुनिवर्तते ॥ अहोनाऽऽसीत्पुमान्कश्चिद्दृष्ट्वाद्रोणंव्यवस्थितम् ३ जृंभमाणमिव व्याघ्रंप्रभिन्नमिवकुंजरम् ॥ त्यजंतमाहवेप्राणान्सन्नद्धंचित्रयोधिनम् ४ महेष्वासंनरव्याघ्रंद्विषतांभयवर्धनम् ॥ कृतज्ञंसत्यनिरतंदुर्योधनहितैषिणम् ५ भार द्वाजंतथानीकेदृष्ट्वाशूरमवस्थितम् ॥ केशूराःसंन्यवर्ततंतन्ममाचक्ष्वसंजय ६ ॥ संजयउवाच ॥ तान्दृष्ट्वाचलितान्संख्येप्रणुन्नान्द्रोणसायकैः ॥ पंचालान्पांड वान्मत्स्यान्सृंजयांश्चेदिकेकयान् ७ द्रोणचापविमुक्तेनशरौघेणाशुहारिणा ॥ सिंधोरिवमहौघेनह्रियमाणान्यथाप्लवान् ८ कौरवाःसिंहनादेननानावाद्यस्वनेन च ॥ रथद्विपनरांश्चैवसर्वतःसमवारयन् ९ तान्पश्यन्सैन्यमध्यस्थोराजास्वजनसंवृतः ॥ दुर्योधनोऽब्रवीत्कर्णंप्रहृष्टःप्रहसन्निव १० ॥ दुर्योधनउवाच ॥ प श्यराधेयपंचालान्प्रणुन्नान्द्रोणसायकैः ॥ सिंहेनेवमृगान्वन्यांस्त्रासितान्दृढधन्वना ११ नैतेजातुपुनर्युद्धमीहेयुरितिमेमतिः ॥ यथातुभग्नाद्रोणेनवातेनेवमहाद्रु माः १२ अर्द्यमानाःशरैरेतेरुक्मपुंखैर्महात्मना ॥ पथानैकेनगच्छंतिघूर्णमानास्ततस्ततः १३ सन्निरुद्धाश्चकौरव्यैर्द्रोणेनचमहात्मना ॥ एतेऽन्येमंडलीभू ताःपावकेनेवकुंजराः १४ भ्रमरैरिवचाविष्टाद्रोणस्यनिशितैःशरैः ॥ अन्योन्यंसमलीयंतपलायनपरायणाः १५ एषभीमोमहाक्रोधीहीनःपांडवसृंजयैः ॥ म दीयैरावृतोयोधैःकर्णनंदयतीवमाम् १६ व्यक्तंद्रोणमयंलोकमद्यपश्यतिदुर्मतिः ॥ निराशोजीवितान्नूनमद्यराज्याच्चपांडवः १७ ॥ कर्णउवाच ॥ नैषजातुम हाबाहुर्जीवन्नाहवमुत्सृजेत् ॥ नचेमान्पुरुषव्याघ्रसिंहनादान्सहिष्यति १८ नचापिपांडवायुद्धेभज्येरन्नितिमेमतिः ॥ शूराश्चबलवंतश्चकृतास्त्रायुद्धदुर्मदाः १९

५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९

२० । २१।२२।२३।२४।२५।२६।२७ कोकोवृकः २८ । २९ । ३० ॥ इतिद्रोणपर्वणिटीकायां द्वाविंशोऽध्यायः ॥ २२ ॥ ॥ सर्वेषामिति ॥ रथचिन्हानिरथशब्दोहयोपलक्षणं रथान्हयान् चिन्हानिध्वजांश्चेत्यर्थः १ व्यायच्छंतंनिवर्तमानं २'सितनीलारुणोवर्णः सारंगसदृशश्वसः'३ 'पारावतकपोताभः सितनीलसमन्वयात्' ४ शोणःकोकनदच्छविः ५ मल्लिकाक्षानिर्मलेक्षणान् ६

विषाग्निद्यूतसंक्लेशान्वनवासंचपांडवाः ॥ स्मरमाणानहास्यंतिसंग्राममितिमेमतिः २० निवृत्तोहिमहाबाहुरमितौजावृकोदरः ॥ वरान्वरान्हिकौंतेयोरथोदारान्हनिष्यति २१ असिनाधनुषाशक्त्याहयैर्नागैर्नरैरथैः ॥ आयसेनचदंडेनव्रातान्व्रातान्हनिष्यति २२ तमेनमनुवर्ततेसात्यकिप्रमुखारथाः ॥ पंचालाःकेकयामत्स्याःपांडवाश्चविशेषतः २३ शूराश्चबलवंतश्चविक्रांताश्चमहारथाः ॥ विनिघ्नंतश्चभीमेनसंरब्धेनाभिचोदिताः २४ तेद्रोणमभिवर्ततेसर्वतःकुरुपुंगवाः ॥ वृकोदरंपरीप्संतःसूर्यमभ्रगणाइव २५ एकायनगताह्येतेपीडयेयुर्यतव्रतम् ॥ अरक्ष्यमाणंशलभायथादीपंमुमूर्षवः २६ असंशयंकृतास्त्राश्चपर्याप्ताश्चापिवारणे ॥ अतिभारमहंमन्येभारद्वाजेसमाहितम् २७ शीघ्रमनुगमिष्यामोयत्रद्रोणोव्यवस्थितः ॥ कोकाइवमहानागंमावैहन्युर्यतव्रतम् २८ ॥ संजयउवाच ॥ राधेयस्यवचःश्रुत्वाराजादुर्योधनस्ततः ॥ भ्रातृभिःसहितोराजन्प्रायाद्द्रोणरथंप्रति २९ तत्रारावोमहानासीदेकंद्रोणंजिघांसताम् ॥ पांडवानांनिवृत्तानांनानावर्णैर्हयोत्तमैः ३० ॥ इतिश्रीमहाभारतेद्रोणपर्वणि संशप्तकवधपर्वणिद्रोणयुद्धेद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ ७ ॥ ॥ धृतराष्ट्रउवाच ॥ सर्वेषामेवमेब्रूहि रथचिह्नानिसंजय ॥ येद्रोणमभ्यवर्ततक्रुद्धाभीमपुरोगमाः १ ॥ संजयउवाच ॥ ऋक्षवर्णैर्हयैर्दृष्ट्वाव्यायच्छंतंवृकोदरम् ॥ रजताश्वस्ततःशूरःशैनेयःसंन्यवर्तत २ सारंगाश्वोयुधामन्युःस्वयंप्रत्वरयन्हयान् ॥ पर्यवर्ततदुर्धर्षःक्रुद्धोद्रोणरथंप्रति ३ पारावतसवर्णैस्तुहेमभांडैर्महाजवैः ॥ पांचालराजस्यसुतोधृष्टद्युम्नोन्यवर्तत ४ पितरंतुपरिप्रेप्सुःक्षत्रधर्मायतव्रतः ॥ सिद्धिंचास्यपरांकांक्षन्शोणाश्वःसंन्यवर्तत ५ पद्मपत्रनिभांश्चाश्वान्मल्लिकाक्षानलंकृतान् ॥ शैखंडिःक्षत्रदेवस्तुस्वयंप्रत्वरयन्ययौ ६ दर्शनीयास्तुकांबोजाःशुकपत्रपरिच्छदाः ॥ वहंतोनकुलंशीघ्रंतावकानभिदुद्रुवुः ७ कृष्णास्तुमेघसंकाशाअवहन्नुत्तमौजसम् ॥ दुर्धर्षायाभिसंधायक्रुद्धंयुद्धायभारत ८ तथातित्तिरिकल्माषाहयावातसमाजवे ॥ अवहंस्तुमुलेयुद्धेसहदेवमुदायुधम् ९ दंतवर्णास्तुराजानंकालवालायुधिष्ठिरम् ॥ भीमवेगानरव्याघ्रमवहन्वातरंहसः १० हेमोत्तमप्रतिच्छन्नैर्हयैर्वातसमैर्जवे ॥ अभ्यवर्ततसैन्यानिसर्वाण्येवयुधिष्ठिरम् ११ राज्ञस्त्वनंतरोराजापांचाल्योद्रुपदोऽभवत् ॥ जातरूपमयच्छत्रःसर्वैस्तैरभिरक्षितः १२ ललामैर्हरिभिर्युक्तःसर्वशब्दक्षमैर्युधि ॥ राज्ञांमध्येमहेष्वासःशांतभीरभ्यवर्तत १३ तंविराटोऽन्वयाच्छीघ्रंसहसर्वैर्महारथैः ॥ केकयाश्चशिखंडीचधृष्टकेतुस्तथैवच १४ स्वैःस्वैःसैन्यैःपरिवृतामत्स्यराजानमन्वयुः ॥ तंतुपाटलिपुष्पाणांसमवर्णाहयोत्तमाः १५

'महाललाटजघनस्कंधवक्षोजवाहयाः ॥ दीर्घग्रीवायताह्रस्वमुष्काःकांबोजकाःस्मृताः' शुकपत्रपरिच्छदाःशुकपत्राभरोमाणः ७ ।८।९ दंतवर्णाःगजदंतगौराः १० । ११ । १२ 'श्वेतंललाटमध्यस्थंताराख्यंहयस्ययत् । ललामंचापितत्प्राहुर्ललामोऽश्वस्तदन्वितः ॥ सकेसराणिरोमाणिसुवर्णाभानियस्यतु ॥ हरिःसवर्णतोऽश्वस्तुपीतकौशेयसन्निभः' १३ । १४ पाटलिपुष्पाणांसमवर्णाःश्वेतरक्ताः १५

१६ विराटराजस्यपुत्रंउत्तरम् १७ । १८ आमपात्रनिकाशाः मलिनश्वेताः १९ । २० । २१ सारंगशबलाः सारंगाएवअंतरेबिंदुचित्राः २२ । २३ पलालधूमसंकाशाःविशदनीलाः । 'दीर्घग्रीवामुखालंबमेहनाःपृथुलोचनाः ॥ महांतस्तनुरोमाणोबलिनःसैंधवाहयाः' । पद्मवर्णाः । 'सितरक्तसमायोगात्पद्मवर्णःप्रकीर्त्यते ॥ कांबोजसमसंस्थानाबाल्हिजाताश्ववाजिनः ॥ विशेषःपुनरेतेषां दीर्घपृष्ठांगतोच्यते' २४ कौशेयसदृशाःसितपीताः २५ क्षमावंतोविनीताः । 'सितलोमकेसराढ्याःकृष्णत्वग्गुह्यलोचनोष्ठखुराः । येस्युर्मुनिभिर्वाहानिर्दिष्टाःक्रौंचवर्णास्ते' २६ प्रेष्यकराःइच्छा

वहमानाव्यराजंतमत्स्यस्यामित्रघातिनः ॥ हरिद्रासमवर्णास्तुजवनाहेममालिनः १६ पुत्रंविराटराजस्यसत्वरंसमुदावहन् ॥ इंद्रगोपकवर्णैश्चभ्रातरःपंचकेकयाः १७ जातरूपसमाभासाःसर्वेलोहितकध्वजाः ॥ तेहेममालिनःशूराःसर्वेयुद्धविशारदाः १८ वर्षंतइवजीमूताःप्रत्यदृश्यंतदंशिताः ॥ आमपात्रनिकाशास्तु पांचाल्यममितौजसम् १९ दत्तास्तुंबुरुणादिव्याःशिखंडिनमुदावहन् ॥ तथाद्वादशसाहस्राःपंचालानांमहारथाः २० तेषांतुषट्सहस्राणियेशिखंडिनमन्वयुः ॥ पुत्रंतुशिशुपालस्यनरसिंहस्यमारिष २१ आक्रीडंतोवहंतिस्मसारंगशबलाहयाः ॥ धृष्टकेतुस्तुचेदीनामृषभोऽतिबलोदितः २२ कांबोजैःशबलैरश्वैरभ्यवर्तत दुर्जयः ॥ बृहत्क्षत्रंतुकैकेयंसुकुमारंहयोत्तमाः २३ पलालधूमसंकाशाःसैंधवाःशीघ्रमावहन् ॥ मल्लिकाक्षाःपद्मवर्णाबाल्हिजाताःस्वलंकृताः २४ शूरंशिखंडिनः पुत्रमृक्षदेवमुदावहन् ॥ रुक्मभांडप्रतिच्छन्नाःकौशेयसदृशाहयाः २५ क्षमावंतोवहन्संख्येसेनाबिंदुमरिंदमम् ॥ युवानमवहन्युद्धेक्रौंचवर्णाहयोत्तमाः २६ काश्यस्याभिभुवःपुत्रंसुकुमारंमहारथम् ॥ श्वेतास्तुप्रतिविंध्यंतंकृष्णग्रीवामनोजवाः ॥ यंतुःप्रेष्यकराराजन्राजपुत्रमुदावहन् २७ सुतसोमंतुयःसौम्यंपार्थःपुत्रमजीजनत् ॥ माषपुष्पसवर्णास्तमवहन्वाजिनोरणे २८ सहस्रसोमप्रतिमोबभूवपुरेकुरूणामुदयेंदुनाम्नि ॥ तस्मिन्जातःसोमसंक्रंदमध्येयस्मात्तस्मात्सुतसोमोऽभवत्सः २९ नाकुलिंतुशतानीकंशालपुष्पनिभाहयाः ॥ आदित्यतरुणप्रख्याःश्लाघनीयमुदावहन् ३० कांचनापिहितैर्योक्त्रैर्मयूरग्रीवसन्निभाः ॥ द्रौपदेयंनरव्याघ्रंश्रुतकर्माणमाहवे ३१ श्रुतकीर्तिंश्रुतनिधिंद्रौपदेयंहयोत्तमाः ॥ ऊहुःपार्थसमंयुद्धेचाषपत्रनिभाहयाः ३२ यमाहुरध्यर्धगुणंकृष्णात्पार्थाच्चसंयुगे ॥ अभिमन्युंपिशंगास्तंकुमारमवहन्रणे ३३ एकस्तुधार्तराष्ट्रेभ्यःपांडवान्यःसमाश्रितः ॥ तंबृहंतोमहाकायायुयुत्सुमवहन्रणे ३४ पलालकांडवर्णास्तुवार्धक्षेमिंतरस्विनम् ॥ ऊहुःसुतुमुलेयुद्धेहयाःकृष्णाःस्वलंकृताः ३५ कुमारंशितिपादास्तुरुक्मचित्रैरुरच्छदैः ॥ सौचित्तिमवहन्युद्धेयंतुःप्रेष्यकराहयाः ३६ रुक्मपीठावकीर्णास्तुकौशेयसदृशाहयाः ॥ सुवर्णमालिनःक्षांताःश्रेणिमंतमुदावहन् ३७ रुक्ममालाधराःशूराहेमपृष्ठाःस्वलंकृताः ॥ काशिराजंनरश्रेष्ठंश्लाघनीयमुदावहन् ३८

नुविधायिनः २७ माषपुष्पसवर्णाआपांडुपीताः २८ सहस्रसोमप्रतिमः सोमसहस्रसमःसौम्यतमइत्यर्थः । तस्मिन्उदयेंदुनाम्निउदयेंदुपर्यायेपुरेशक्रप्रस्थएव सोमसंक्रंदः सोमाभिषवणंतस्यमध्ये तमधिकृत्यतत्फेनेनेत्यर्थस्तस्माद्धेतोः २९ शालपुष्पनिभाःरक्तपीताः ३० योक्त्रैराबंधैः मयूरग्रीवोमरकतविशेषः ३१ । ३२ पिशंगाःकपिलाः ३३ । ३४ पलालकांडोनिष्फलव्रीहिदंडस्तद्वर्णाइतिपूर्वेणान्वयः ३५ । ३६ रुक्मपीठेनरुक्मवर्णेनपीठेनपृष्ठेनावकीर्णाव्याप्ताः ३७ हेमपृष्ठाःश्वेताएव ३८

अरुणाअव्यक्तरागाः ३९ धृष्टद्युम्नस्यपुनर्वचनंद्रोणहंतृत्वदृढीकरणार्थम् ४० । ४१ । ४२ । ४३ । ४४ बभ्रुकौशेयवर्णाः पिंगगौराः ४५ इंद्रायुधसवर्णैस्त्रिवर्णैः ४६ अंतरिक्षसवर्णानीलाः ४७ कर्बुराःश्वित्राः ४८ । ४९ शशलोहितवर्णाः सितारुणाः ५० । ५१ माषवर्णाः मलिनश्यामाः ५२ भद्रकाःशोभनशिरसः शरकांडनिभाःसितगौराः ५३ रासभारुणवर्णाअरुणमलिनाः

अस्त्राणांचधनुर्वेदेब्राह्मेवेदेचपारगम् ॥ तंसत्यधृतिमायांतमरुणाःसमुदावहन् ३९ यःसपांचालसेनानीर्द्रोणमंशमकल्पयत् ॥ पारावतसवर्णास्तंधृष्टद्युम्नमुदावहन् ४० तमन्वयात्सत्यधृतिःसौचित्तिर्युद्धदुर्मदः ॥ श्रेणिमान्वसुदानश्चपुत्रःकाश्यस्यचाभिभूः ४१ युक्तैःपरमकांबोजैर्जवनैर्हेममालिभिः ॥ भीषयंतोद्विषत्सैन्यंयमवैश्रवणोपमाः ४२ प्रभद्रकास्तुकांबोजाःषट्सहस्राण्युदायुधाः ॥ नानावर्णैर्हयैःश्रेष्ठैर्हेमवर्णरथध्वजाः ४३ शरव्रातैर्विधुन्वंतःशत्रून्विततकार्मुकाः ॥ समानमृत्यवोभूत्वाधृष्टद्युम्नंसमन्वयुः ४४ बभ्रुकौशेयवर्णास्तुसुवर्णवरमालिनः ॥ ऊहुरम्लानमनसश्चेकितानंहयोत्तमाः ४५ इंद्रायुधसवर्णस्तुकुंतिभोजोहयोत्तमैः ॥ आयात्सदश्वैःपुरुजिन्मातुलःसव्यसाचिनः ४६ अंतरिक्षसवर्णास्तुतारकाचित्रिताइव ॥ राजानंरोचमानंतेहयाःसंख्येसमावहन् ४७ कर्बुराःशितिपादास्तुस्वर्णजालपरिच्छदाः ॥ जारासंधिंहयाःश्रेष्ठाःसहदेवमुदावहन् ४८ येतुपुष्करनालस्यसमवर्णाहयोत्तमाः ॥ जवेश्येनसमाश्चित्राःसुदामानमुदावहन् ४९ शशलोहितवर्णास्तुपांडुरोद्गतराजयः ॥ पांचाल्यंगोपतेःपुत्रंसिंहसेनमुदावहन् ५० पंचालानांनरव्याघ्रोयःख्यातोजनमेजयः ॥ तस्यसर्षपपुष्पाणांतुल्यवर्णाहयोत्तमाः ५१ माषवर्णाश्चजवनाबृहंतोहेममालिनः ॥ दधिपृष्ठाश्चित्रमुखाःपांचाल्यमवहन्द्रुतम् ५२ शूराश्चभद्रकाश्चैवशरकांडनिभाहयाः ॥ पद्मकिंजल्कवर्णाभादंडधारमुदावहन् ५३ रासभारुणवर्णाभाःपृष्ठतोमूषिकप्रभाः ॥ वल्गंतइवसंयत्ताव्याघ्रदत्तमुदावहन् ५४ हरयःकालकाश्चित्राश्चित्रमाल्यविभूषिताः ॥ सुधन्वानंनरव्याघ्रंपांचाल्यंसमुदावहन् ५५ इंद्राशनिसमस्पर्शाइंद्रगोपकसन्निभाः ॥ कायेचित्रांतराश्चित्राश्चित्रायुधमुदावहन् ५६ बिभ्रतोहेममालास्तुचक्रवाकोदराहयाः ॥ कोसलाधिपतेःपुत्रंसुक्षत्रंवाजिनोऽवहन् ५७ शबलास्तुबृहंतोश्वादांताजांबूनदस्रजः ॥ युद्धेसत्यधृतिंक्षेमिमवहन्प्रांशवःशुभाः ५८ एकवर्णेनसर्वेणध्वजेनकवचेनच ॥ अश्वैश्चधनुषाचैवशुक्लैःशुक्लोन्यवर्तत ५९ समुद्रसेनपुत्रंतुसामुद्रारुद्रतेजसम् ॥ अश्वाःशशांकसदृशाश्चंद्रसेनमुदावहन् ६० नीलोत्पलसवर्णास्तुतपनीयविभूषिताः ॥ शैब्यंचित्ररथंसंख्येचित्रमाल्यावहन्हयाः ६१ कलायपुष्पवर्णास्तुश्वेतलोहितराजयः ॥ रथसेनंहयश्रेष्ठाःसमूहुर्युद्धदुर्मदम् ६२ यंतुसर्वमनुष्येभ्यःप्राहुःशूरतरंनृपम् ॥ तंपटच्चरहंतारंशुकवर्णावहन्हयाः ६३ चित्रायुधंचित्रमाल्यंचित्रवर्मायुधध्वजम् ॥ ऊहुःकिंशुकपुष्पाणांसमवर्णाहयोत्तमाः ६४ एकवर्णेनसर्वेणध्वजेनकवचेनच ॥ धनुषारथवाहैश्चनीलैर्नीलोऽभ्यवर्तत ६५ नानारूपैरत्नचित्रैर्वरूथरथकार्मुकैः ॥ वाजिध्वजपताकाभिश्चित्रैश्चित्रोऽभ्यवर्तत ६६

मूषिकप्रभामलिनश्वेताः ५४ कालकाःकृष्णमस्तकाः ५५ चित्रांतराविचित्रावकाशाः चित्राअद्भुतदर्शनाः ५६ चक्रवाकोदराईषच्छ्वेताः ५७ । ५८ । ५९ । ६० । ६१ कलायपुष्पवर्णाः मिश्रश्यामाः ६२ पटच्चराणामसुरविशेषाणांहंतारंसमुद्राधिपम् ६३ । ६४ । ६५ । ६६

६७ योधायुद्धक्षमाः भद्रकाराः शोभनक्रियाः शरदंडःशरप्रकांडइवअनुदंडिःपृष्ठवंशोयेषां सितगौरपृष्ठाइत्यर्थः ६८ कपाटेनगरविशेषे ६९ । ७० । ७१ । ७२ । ७३ आटरूषकवर्णाभाः आ

येतुपुष्करवर्णस्यतुल्यवर्णाहयोत्तमाः ॥ तेरोचमानस्यसुतंहेमवर्णमुदावहन् ६७ योधाश्चभद्रकाराश्चशरदंडानुदंडयः ॥ श्वेतांडाःकुक्कुटांडाभादंडकेतुंहयात्र हन् ६८ केशवेनहतेसंख्येपितर्यथनराधिपे ॥ भिन्नेकपाटेपांड्यानांविद्रुतेषुचबंधुषु ६९ भीष्मादवाप्यचास्त्राणिद्रोणाद्रामात्कृपात्तथा ॥ अस्त्रैःसमत्वंसंप्राप्यरु क्मिकर्णार्जुनाच्युतैः ७० इयेषद्वारकांहंतुंकृत्स्नांजितुंचमेदिनीम् ॥ निवारितस्ततःप्राज्ञैःसुहृद्भिर्हितकाम्यया ७१ वैरानुबंधमुत्सृज्यस्वराज्यमनुशास्तियः ॥ ससागरध्वजःपांड्यश्चंद्ररश्मिनिभैर्हयैः ७२ वैदूर्यजालसंछन्नैर्वीर्यद्रविणमाश्रितः ॥ दिव्यंविस्फारयंश्चापंद्रोणमभ्यद्रवद्बली ७३ आटरूषकवर्णाभाहयाःपां ड्यानुयायिनाम् ॥ अवहन्रथमुख्यानामयुतानिचतुर्दश ७४ नानावर्णेनरूपेणनानाकातिमुखाहयाः ॥ रथचक्रध्वजंवीरंघटोत्कचमुदावहन् ७५ भरतानां समेतानामुत्सृज्यैकोमतानियः ॥ ततोयुधिष्ठिरंभक्त्यात्यक्त्वासर्वमभीप्सितम् ७६ लोहिताक्षंमहाबाहुंबृहंतंतमरट्टजाः ॥ महासत्वामहाकायाःसौवर्णस्यंदने स्थितम् ७७ सुवर्णवर्णाधर्मज्ञमनीकस्थंयुधिष्ठिरम् ॥ राजश्रेष्ठंहयश्रेष्ठाःसर्वतःपृष्ठतोऽन्वयुः ७८ वर्णैरुच्चावचैरन्यैःसदश्वानांप्रभद्रकाः ॥ संन्यवर्ततयुद्धाय बहवोदेवरूपिणः ७९ तेयत्ताभीमसेनेनसहिताःकांचनध्वजाः ॥ प्रत्यदृश्यंतराजेंद्रसेंद्राइवदिवौकसः ८० अत्यरोचततान्सर्वान्धृष्टद्युम्नःसमागतान् ॥ सर्वा ण्यतिचसैन्यानिभारद्वाजोऽभ्यरोचत ८१ अतीवशुशुभेतस्यध्वजःकृष्णाजिनोत्तरः ॥ कमंडलुर्महाराजजातरूपमयःशुभः ८२ ध्वजंतुभीमसेनस्यवैदूर्यमणि लोचनम् ॥ भ्राजमानंमहासिंहंराजंतंदृष्टवानहम् ८३ ध्वजंतुकुरुराजस्यपांडवस्यमहौजसः ॥ दृष्टवानस्मिसौवर्णंसोमंग्रहगणान्वितम् ८४ मृदंगौचात्रविपु लौदिव्यौनंदोपनंदकौ ॥ यंत्रेणाहन्यमानौचसुस्वनौहर्षवर्धनौ ८५ शरभंपृष्ठसौवर्णंनकुलस्यमहाध्वजम् ॥ अपश्यामरथेऽस्युग्रंभीषयाणमवस्थितम् ८६ हंस स्तुराजतःश्रीमान्ध्वजेघंटापताकवान् ॥ सहदेवस्यदुर्धर्षोद्विषतांशोकवर्धनः ८७ पंचानांद्रौपदेयानांप्रतिमाध्वजभूषणम् ॥ धर्ममारुतशक्राणामश्विनोश्चमहा त्मनोः ८८ अभिमन्योःकुमारस्यशार्ङ्गपक्षीहिरण्मयः ॥ रथेध्वजवरोराजंस्तप्तचामीकरोज्ज्वलः ८९ घटोत्कचस्यराजेंद्रध्वजेगृध्रोऽभ्यरोचत ॥ अश्वाश्चका मगास्तस्यरावणस्यपुरायथा ९० माहेंद्रंचधनुर्दिव्यंधर्मराजेयुधिष्ठिरे ॥ वायव्यंभीमसेनस्यधनुर्दिव्यमभून्नृप ९१ त्रैलोक्यरक्षणार्थायब्रह्मणासृष्टमायुधम् ॥ तद्दिव्यमजरंचैवफाल्गुनार्थायवैधनुः ९२ वैष्णवंनकुलायाथसहदेवायचाश्विजम् ॥ घटोत्कचायपौलस्त्यंधनुर्दिव्यंभयानकम् ९३ रौद्रमाग्नेयकौबेरंयाम्यंगि रिशमेवच ॥ पंचानांद्रौपदेयानांधनूरत्नानिभारत ९४ रौद्रंधनुर्वरंश्रेष्ठंलेभेयद्रौहिणीसुतः ॥ तत्तुष्टःप्रददौरामःसौभद्रायमहात्मने ९५ एतेचान्येचबहवो ध्वजाहेमविभूषिताः ॥ तत्रादृश्यंतशूराणांद्विषतांशोकवर्धनाः ९६

टरूषकस्यवासकस्यकुसुमंतद्वर्णसदृशवर्णाः ७४ । ७५ योबृहंतः ७६ हयाअवहन्निइतिपूर्वं स्मादनुकृष्यते ७७ सुवर्णवर्णाइतिपूर्वोत्तरान्वयि ७८ । ७९ । ८० । ८१ । ८२ । ८३ नंदोपनंदकौनाम्ना ८४ । ८५ । ८६ । ८७ । ८८ । ८९ । ९० । ९१ । ९२ । ९३ । ९४ । ९५ । ९६

१७ । १८ ॥ इतिद्रोणपर्वणिटीकायांत्रयोविंशोऽध्यायः ॥ २३ ॥ व्यथयेयुरिति १ संप्रयुक्तःसंबद्धः भवतिउत्पद्यते तस्मिन्नादिष्टएव २ अत्रोदाहरणमाह दीर्घमिति ३ ममपुत्रस्ययदभवद्राज्यं

तदभूद्ध्वजसंबाधमकापुरुषसेवितम् ॥ द्रोणानीकंमहाराजपटेचित्रमिवार्पितम् ९७ शुश्रुवुर्नामगोत्राणिवीराणांसंयुगेतदा ॥ द्रोणमाद्रवतांराजन्स्वयंवरइवाहवे ९८ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिसंशप्तकवधपर्वणि हयध्वजादिकथनेत्रयोविंशोऽध्यायः ॥ २३ ॥ धृतराष्ट्रउवाच ॥ व्यथयेयुरिमेसेनांदेवानामपिसंजय ॥ आहवेयेन्यवर्तंतवृकोदरमुखान्नृपाः १ संप्रयुक्तःकिलैवायंदिष्टैर्भवतिपूरुषः ॥ तस्मिन्नेवचसर्वार्थाःप्रदृश्यंतेपृथग्विधाः २ दीर्घविप्रोषितःकालमरण्येजटिलोऽजिनी ॥ अज्ञातश्चैवलोकस्यविजहारयुधिष्ठिरः ३ सएवमहतींसेनांसमावर्तयदाहवे ॥ किमन्यद्दैवसंयोगान्ममपुत्रस्यचाभवत् ४ युक्तएवहिभाग्येनध्रुवमुत्पद्यतेनरः ॥ सतथाऽऽकृष्यतेतेननयथास्वयमिच्छति ५ द्यूतव्यसनमासाद्यक्लेशितोहियुधिष्ठिरः ॥ सपुनर्भागधेयेनसहायानुपलब्धवान् ६ अर्धमेकेकयालब्धाःकाशिकाःकोसलाश्चये ॥ चेदयश्चापरेवंगामामेवसमुपाश्रिताः ७ पृथिवीभूयसीतातममपार्थस्यनोतथा ॥ इतिमामब्रवीत्सूतमंदोदुर्योधनःपुरा ८ तस्यसेनासमूहस्यमध्येद्रोणःसुरक्षितः ॥ निहतःपार्षतेनाजौकिमन्यद्भागधेयतः ९ मध्येराज्ञांमहाबाहुंसदायुद्धाभिनंदिनम् ॥ सर्वास्त्रपारगंद्रोणंकथंमृत्युरुपेयिवान् १० समनुप्राप्तकृच्छ्रोऽहंमोहंपरममागतः ॥ भीष्मद्रोणौहतौश्रुत्वानाहंजीवितुमुत्सहे ११ यन्मांक्षत्ताऽब्रवीत्तातप्रपश्यन्पुत्रगृद्धिनम् ॥ दुर्योधनेनतत्सर्वंप्राप्तंसूतमयासह १२ नृशंसंतुपरंनुस्यात्त्यक्त्वादुर्योधनंयदि ॥ पुत्रशेषंचिकीर्षेयंकृत्स्नंनमरणंव्रजेत् १३ योहिधर्मंपरित्यज्यभवत्यर्थपरोनरः ॥ सोऽस्माच्चहीयतेलोकात्क्षुद्रभावंचगच्छति १४ अद्यचाप्यस्यराष्ट्रस्यहतोत्साहस्यसंजय ॥ अवशेषंनपश्यामिककुदेमृदितेसति १५ कथंस्यादवशेषोहिधुर्ययोरभ्यतीतयोः ॥ यौनित्यमुपजीवामःक्षमिणौपुरुषर्षभौ १६ व्यक्तमेवचमेशंसयथायुद्धमवर्तत ॥ केऽयुध्यन्केव्यपाकुर्वन्केक्षुद्राःप्राद्रवन्भयात् १७ धनंजयंचमेशंसयद्यच्चक्रेरथर्षभः ॥ तस्माद्भयंनोभूयिष्ठंभ्रातृव्याच्चवृकोदरात् १८ यथाऽऽसीच्चनिवृत्तेषुपांडवेयेषुसंजय ॥ ममसैन्यावशेषस्यसन्निपातःसुदारुणः १९ कथंचवोमनस्तातनिवृत्तेष्वभवत्तदा ॥ मामकानांचयेशूराःकेकांस्तत्रन्यवारयन् २० ॥ इतिश्री० द्रोणप० संशप्तकव० धृतराष्ट्रवाक्येचतुर्विंशोऽध्यायः ॥ २४ ॥

॥ संजयउवाच ॥ महद्भैरवमासीन्नःसन्निवृत्तेषुपांडुषु ॥ दृष्ट्वाद्रोणंछाद्यमानंतैर्भास्करमिवांबुदैः १ तैश्चोद्धूतंरजस्तीव्रमवचक्रेचमूंतव ॥ ततोहतममंस्यामद्रोणंदृष्टिपथेहते २ तांस्तुशूरान्महेष्वासान्क्रूरंकर्मचिकीर्षतः ॥ दृष्ट्वादुर्योधनस्तूर्णंस्वसैन्यंसमचूचुदत् ३ यथाशक्तियथोत्साहंयथासत्वंनराधिपाः ॥ वारयध्वंयथायोगंपांडवानामनीकिनीम् ४

अर्थोत्तदपिदैवसंयोगादित्यनुषंगः ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ दुर्योधनंत्यक्त्वायदिपुत्रशेषंचिकीर्षेयंतत्परंकेवलंनृशंसंस्यात्कृत्स्नंमरणंतुनभवेदित्यन्वयः १३ । १४ । १५ १६ । १७ भ्रातृव्यादमित्रात् १८ । १९ । २० ॥ इतिद्रोणपर्वणिटीकायांचतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ छ ॥ ॥ महदिति । भीरोर्भावोभैरवंभयमितियावत् १ । २ । ३ । ४

५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० उत्पिंजलकमत्यंताकुलं २१ भूतकर्मासभापतिरितिद्विनामा २२ । २३ । २४ । २५ भीमरथो

ततोदुर्मर्षणोभीममभ्यगच्छत्सुतस्तव ॥ आराद्दृष्ट्वाकिरन्बाणैर्जिघृक्षुस्तस्यजीवितम् ५ तंबाणैरवतस्तारक्रुद्धोमृत्युरिवाहवे ॥ तंचभीमोऽतुदद्बाणैस्तदासी
त्तुमुलंमहत् ६ तईश्वरसमादिष्टाःप्राज्ञाःशूराःप्रहारिणः ॥ राज्यंमृत्युभयंत्यक्त्वाप्रत्यतिष्ठन्परान्युधि ७ कृतवर्माशिनेःपौत्रंद्रोणंप्रेप्सुंविशांपते ॥ पर्यवारय
दायांतंशूरंसमरशोभिनम् ७ तंशैनेयःशरव्रातैःक्रुद्धःक्रुद्धमवारयत् ॥ कृतवर्माचशैनेयंमत्तोमत्तमिवद्विपम् ९ सैंधवंक्षत्रवर्माणमायांतंनिशितैःशरैः ॥ उग्रध
न्वामहेष्वासंयत्तोद्रोणादवारयत् १० क्षत्रवर्मासिंधुपतेश्छित्वाकेतनकार्मुके ॥ नाराचैर्दशभिःक्रुद्धःसर्वमर्मस्वताडयत् ११ अथान्यद्धनुरादायसैंधवःकृतहस्त
वत् ॥ विव्याधक्षत्रवर्माणंरणेसर्वायसैःशरैः १२ युयुत्सुंपांडवार्थाययतमानंमहारथम् ॥ सुबाहुर्भारतंशूरंयत्तोद्रोणादवारयत् १३ सुबाहोःसुधनुर्बाणावस्य
तःपरिघोपमौ ॥ युयुत्सुःशितपीताभ्यांक्षुराभ्यामाच्छिनद्भुजौ १४ राजानंपांडवश्रेष्ठंधर्मात्मानंयुधिष्ठिरम् ॥ वेलेवसागरंक्षुब्धंमद्रराट्समवारयत् १५ तंध
र्मराजोबहुभिर्मर्मभिद्भिरवाकिरत् ॥ मद्रेशस्तंचतुःषष्ट्याशरैर्विद्ध्वाऽनदद्भृशम् १६ तस्यनानदतःकेतुमुच्चकर्तचकार्मुकम् ॥ क्षुराभ्यांपांडवोज्येष्ठस्ततउच्
क्रुशुर्जनाः १७ तथैवराजाबाल्हीकोराजानंद्रुपदंशरैः ॥ आद्रवंतंसहानीकःसहानीकंन्यवारयत् १८ तद्युद्धमभवद्घोरंवृद्धयोःसहसेनयोः ॥ यथामहायूथपयो
र्द्विपयोःसंप्रभिन्नयोः १९ विंदानुविंदावावंत्यौविराटंमत्स्यमार्च्छताम् ॥ सहसैन्यौसहानीकंयथेंद्राग्नीपुराबलिं २० तदुत्पिंजलकंयुद्धमासीद्देवासुरोपमम् ॥
मत्स्यानांकेकयैःसार्धमभीताश्वरथद्विपम् २१ नाकुलिंतुशतानीकंभूतकर्मासभापतिः ॥ अस्यंतमिषुजालानियांतंद्रोणादवारयत् २२ ततोनकुलदायादस्त्रि
भिर्भल्लैःसुसंशितैः ॥ चक्रेविबाहुशिरसंभूतकर्माणमाहवे २२ सुतसोमंतुविक्रांतमायांतंतंशरौघिणम् ॥ द्रोणायाभिमुखंवीरंविविंशतिरवारयत् २४ सुतसोम
स्तुसंक्रुद्धःस्वपितृव्यमजिह्मगैः ॥ विविंशतिंशरैर्भित्वानाभ्यवर्ततदंशितः २५ अथभीमरथःशाल्वमाशुगैरायसैःशितैः ॥ षड्भिःसाश्वनियंतारमनयद्यमसा
दनम् २६ श्रुतकर्माणमायांतंमयूरसदृशैर्हयैः ॥ चैत्रसेनिर्महाराजतवपुत्रंन्यवारयत् २७ तौपौत्रौतवदुर्धर्षौपरस्परवधैषिणौ ॥ पितॄणामर्थसिद्ध्यर्थंचक्रतु
र्युद्धमुत्तमम् २८ तिष्ठंतमग्रेतंदृष्ट्वाप्रतिविंध्यंमहाहवे ॥ द्रौणिर्मानंपितुःकुर्वन्मार्गणैःसमवारयत् २९ तंक्रुद्धंप्रतिविव्याधप्रतिविंध्यःशितैःशरैः ॥ सिंहलांगू
ललक्ष्माणंपितुरर्थेव्यवस्थितम् ३० प्रवपन्निवबीजानिबीजकालेनरर्षभः ॥ द्रौणायर्निद्रौपदेयाःशरवर्षैरवाकिरन् ३१ आर्जुनिंश्रुतकीर्तिंतुद्रौपदेयंमहारथम् ॥
द्रोणायाभिमुखंयांतंदौःशासनिरवारयत् ३२ तस्यकृष्णसमःकार्ष्णिस्त्रिभिर्भल्लैःसुसंशितैः ॥ धनुर्ध्वजंचसूतंचच्छित्वाद्रोणांतिकंययौ ३३ यस्तुशूरतमोराज
न्नुभयोःसेनयोर्मतः ॥ तंपटच्चरहंतारंलक्ष्मणःसमवारयत् ३४ सलक्ष्मणस्येष्वसनंछित्वालक्ष्मचभारत ॥ लक्ष्मणेशरजालानिविमृजन्बह्वशोभत ३५

राजभ्राता २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५

॥२०॥

म.भा.टी. ३६ । ३७ । ३८ । ३९ । ४०। ४१।४२। ४३।४४ ।४५।४६।४७। ४८।४९ शलाकया शंकुना ५०।५१।५२।५३।५४।५५।५६।५७ अयोघनालगुडाः कडंगरैर्दंडैः ५८ । ५९ आतुदन्व्यथयन् प्ररुज

विकर्णस्तुमहाप्राज्ञोयाज्ञसेनिंशिखंडिनम् ॥ पर्यवारयदायांतंयुवानंसमरेयुवा ३६ ततस्तमिषुजालेनयाज्ञसेनिःसमावृणोत् ॥ विधूयतद्बाणजालंबभौतत्रसु तोबली ३७ अंगदोऽभिमुखंवीरमुत्तमौजसमाहवे ॥ द्रोणायाभिमुखंयांतंशरौघेणन्यवारयत् ३८ ससंप्रहारस्तुमुलस्तयोःपुरुषसिंहयोः ॥ सैनिकानांचसर्वेषां तयोश्चप्रीतिवर्धनः ३९ दुर्मुखस्तुमहेष्वासोवीरंपुरुजितंबली ॥ द्रोणायाभिमुखंयांतंवत्सदंतैरवारयत् ४० सदुर्मुखंभ्रुवोर्मध्येनाराचेनाभ्यताडयत् ॥ तस्यत द्विबभौवक्त्रंसनालमिवपंकजं ४१ कर्णस्तुकेकयान्भ्रातॄन्पंचलोहितकध्वजान् ॥ द्रोणायाभिमुखंयातान्शरवर्षैरवारयत् ४२ तेचैनंभृशसंतप्ताःशरवर्षैरवा किरन् ॥ सचतांश्छादयामासशरजालैःपुनःपुनः ४३ नैवकर्णोनतेपंचदद्दशुर्बाणसंवृताः ॥ साश्वसूतध्वजरथाःपरस्परशराचिताः ४४ पुत्रास्तेदुर्जयश्चैवज यश्चविजयश्चह ॥ नीलकाश्यजयत्सेनांस्त्रयस्त्रीन्प्रत्यवारयन् ४५ तद्युद्धमभवद्घोरमीक्षितृप्रीतिवर्धनम् ॥ सिंहव्याघ्रतरक्षूणांयथर्क्षमहिषर्षभैः ४६ क्षेमधूर्ति बृहंतौतुभ्रातरौसात्वतंयुधि ॥ द्रोणायाभिमुखंयांतंशरैस्तीक्ष्णैस्ततक्षतुः ४७ तयोस्तस्यचतद्युद्धमत्यद्भुतमिवाभवत् ॥ सिंहस्यद्विपमुख्याभ्यांप्रभिन्नाभ्यां यथावने ४८ राजानंतुतथांबष्ठमेकंयुद्धाभिनंदिनम् ॥ चेदिराजःशरानस्यन्क्रुद्धोद्रोणादवारयत् ४९ ततोंऽबष्ठोऽस्थिभेदिन्यानिरभिद्यच्छलाकया ॥ सत्य क्त्वासशरंचापंरथाद्भूमिमुपागमत् ५० वार्धक्षेमिंतुवार्ष्णेयंक्रृपःशारद्वतःशरैः ॥ अक्षुद्रःक्षुद्रकैर्बाणैःक्रुद्धरूपमवारयत् ५१ युध्यंतौकृपवार्ष्णेयौयेऽपश्यंश्चित्र योधिनौ ॥ तेयुद्धासक्तमनसोनान्यांबुबुधिरेक्रियाम् ५२ सौमदत्तिस्तुराजानंमणिमंतमतंद्रितम् ॥ पर्यवारयदायांतंयशोद्रोणस्यवर्धयन् ५३ ससौमदत्तेस्त्व रितश्चित्रेष्वसनकेतने ॥ पुनःपताकांसूतंचच्छत्रंचापातयद्रथात् ५४ अथाप्लुत्यरथात्तूर्णंयूपकेतुरमित्रहा ॥ साश्वसूतध्वजरथंतंचकर्तवरासिना ५५ रथं चस्वंसमास्थायधनुरादायचापरम् ॥ स्वयंयच्छन्हयान्राजन्व्यधमत्पांडवींचमूम् ५६ पांड्यमिंद्रमिवायांतमसुरान्प्रतिदुर्जयम् ॥ समर्थःसायकौघेनवृषसे नोन्यवारयत् ५७ गदापरिघनिस्त्रिंशपट्टिशायोघनोपलैः ॥ कडंगरैर्भुशुंडीभिःप्रासैस्तोमरसायकैः ५८ मुसलैर्मुद्गरैश्चक्रैर्भिंदिपालपरश्वधैः ॥ पांसुवाताग्नि सलिलैर्भस्मलोष्ठतृणद्रुमैः ५९ आतुदन्प्ररुजन्भंजन्निघ्नन्विद्रावयन्क्षिपन् ॥ सेनांविभीषयन्नायाद्द्रोणप्रेप्सुर्घटोत्कचः ६० तंतुनानाप्रहरणैर्नानायुद्धविशेषणैः ॥ राक्षसंराक्षसःक्रुद्धःसमाजघ्नेह्यलंबुषः ६१ तयोस्तदभवद्युद्धंरक्षोग्रामणिमुख्ययोः ॥ तादृग्यादृक्पुरावृत्तंशंबरामरराजयोः ६२ एवंद्वंद्वशतान्यासन्रथवारण वाजिनाम् ॥ पदातीनांचभद्रंतेतवतेषांचसंकुले ६३ नैतादृशोदृष्टपूर्वःसंग्रामोनैवचश्रुतः ॥ द्रोणस्याभावभावेतुप्रसक्तानांयथाऽभवत् ६४ इदंघोरमिदंचित्र मिदंरौद्रमितिप्रभो ॥ तत्रयुद्धान्यदृश्यंतप्रततानिबहूनिच ६५ ॥ इतिश्रीमहाभारतेद्रोणपर्वणि संशप्तकवधपर्वणिद्वंद्वयुद्धेपंचविंशोऽध्यायः ॥ २५ ॥ ॥

न्विध्यन् भंजन्आमर्दयन् निघ्नन्मारयन् विद्रावयन्पलाययन् क्षिपन्प्रेरयन् ६०।६१।६२।६३ अभावभावेमारणेरक्षणेच ६४। ६५ ॥ इतिद्रोणपर्वणिटीकायांपंचविंशोऽध्यायः ॥ २५ ॥

॥२०॥

तेष्विति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ आवर्जितःपतनप्रवणोनागोयस्य १७ । १८ । १९

॥ धृतराष्ट्रउवाच ॥ तेष्वेवंसन्निवृत्तेषुप्रत्युद्यातेषुभागशः ॥ कथंयुयुधिरेपार्थामामकाश्चतरस्विनः १ किमर्जुनश्चाप्यकरोत्संशप्तकबलंप्रति ॥ संशप्तकावापार्थस्यकिमकुर्वतसंजय २ ॥ संजयउवाच ॥ तथातेषुनिवृत्तेषुप्रत्युद्यातेषुभागशः ॥ स्वयमभ्यद्रवद्भीमंनागानीकेनतेसुतः ३ सनागइवनागेनगोवृषेणेवगोवृषः ॥ समाहूतःस्वयंराज्ञानागानीकमुपाद्रवत् ४ सयुद्धकुशलःपार्थोबाहुवीर्येणचान्वितः ॥ अभिनत्कुंजरानीकमचिरेणैवमारिष ५ तेगजागिरिसंकाशाःक्षरंतःसर्वतोमदम् ॥ भीमसेनस्यनाराचैर्विमुखाविमदीकृताः ६ विधमेदभ्रजालानियथावायुःसमुद्धतः ॥ व्यधमत्तान्यनीकानितथैवपवनात्मजः ७ सतेषुविसृजन्बाणान्भीमोनागेष्वशोभत ॥ भुवनेष्विवसर्वेषुगभस्तीनुदितोरविः ८ तेभीमबाणाभिहताःसंस्यूताविबभुर्गजाः ॥ गभस्तिभिरिवार्कस्यव्योम्निनानाबलाहकाः ९ तथागजानांकदनंकुर्वाणमनिलात्मजम् ॥ क्रुद्धोदुर्योधनोऽभ्येत्यप्रत्यविध्यच्छितैःशरैः १० ततःक्षणेनक्षितिपंक्षतजप्रतिमेक्षणः ॥ क्षयंनिनीषुर्निशितैर्भीमोविव्याधपत्रिभिः ११ सशराचितसर्वांगःक्रुद्धोविव्याधपांडवम् ॥ नाराचैरर्करश्म्याभैर्भीमसेनंस्मयन्निव १२ तस्यनागंमणिमयंरत्नचित्रध्वजेस्थितम् ॥ भल्लाभ्यांकार्मुकंचैवक्षिप्रंचिच्छेदपांडवः १३ दुर्योधनंपीड्यमानंदृष्ट्वाभीमेनमारिष ॥ चुक्षोभयिषुरभ्यागादंगोमातंगमास्थितः १४ तमापतंतंनागेंद्रमंबुदप्रतिमस्वनम् ॥ कुंभांतरेभीमसेनोनाराचैरार्दयद्भृशम् १५ तस्यकायंविनिर्भिद्यन्यमज्जद्धरणीतले ॥ ततःपपातद्विरदोवज्राहतइवाचलः १६ तस्यावर्जितनागस्यम्लेच्छस्याधःपतिष्यतः ॥ शिरश्चिच्छेदभल्लेनक्षिप्रकारीवृकोदरः १७ तस्मिन्निपतितेवीरेसंप्राद्रवतसाचमूः ॥ संभ्रांताश्वद्विपरथापदातीनवमृद्नती १८ तेष्वनीकेषुभग्नेषुविद्रवत्सुसमंततः ॥ प्राग्ज्योतिषस्ततोभीमंकुंजरेणसमाद्रवत् १९ येननागेनमघवानजयद्दैत्यदानवान् ॥ तदन्वयेननागेगभीमसेनमुपाद्रवत् २० सनागप्रवरोभीमंसहसासमुपाद्रवत् ॥ चरणाभ्यामथोद्वाभ्यांसंहतेनकरेणच २१ व्यावृत्तनयनःक्रुद्धःप्रमथन्निवपांडवम् ॥ वृकोदररथंसाश्वमविशेषमचूर्णयत् २२ पद्भ्यांभीमोऽप्यथोधावंस्तस्यगात्रेष्वलीयत ॥ जानन्नंजलिकावेधंनापाक्रामतपांडवः २३ गात्राभ्यंतरगोभूत्वाकरेणाताडयन्मुहुः ॥ लालयामासतंनागंवधाकांक्षिणमव्ययम् २४ कुलालचक्रवन्नागस्तदातूर्णमथाभ्रमत् ॥ नागायुतबलःश्रीमान्कालयानोवृकोदरम् २५ भीमोऽपिनिष्क्रम्यततःसुप्रतीकाग्रतोऽभवत् ॥ भीमंकरेणावनम्यजानुभ्यामभ्यताडयत् २६ ग्रीवायांवेष्टयित्वैनंसगजोहंतुमैहत ॥ करवेष्टंभीमसेनोभ्रमंदत्त्वाव्यमोचयत् २७ पुनर्गात्राणिनागस्यप्रविवेशवृकोदरः ॥ यावत्प्रतिगजायातंस्वबलेप्रत्यवैक्षत २८ भीमोऽपिनागगात्रेभ्योविनिःसृत्यापयाज्जवात् ॥ ततःसर्वस्यसैन्यस्यनादःसमभवन्महान् २९ अहोधिग्निहतोभीमःकुंजरेणेतिमारिष ॥ तेननागेनसंत्रस्तापांडवानामनीकिनी ३० सहसाऽभ्यद्रवद्राजन्यत्रतस्थौवृकोदरः ॥ ततोयुधिष्ठिरोराजाहतंमत्वावृकोदरम् ३१

२० । संहतेनसंकुचितेन २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१

३२ । ३३ । ३४ । ३५ तिर्यग्यातेनपार्श्वतोगामिना ३६ । ३७ । ३८ व्यवच्छिद्यविध्द्वा ३९ । ४० । ४१ पर्यवर्तत्भ्रांतवान् ४१ । ४३ समुत्थाप्यस्थिरीकृत्य ४४ । ४५ । ४६ । ४७ । ४८

भगदत्तंसपांचाल्यःसर्वतःसमवारयत् ॥ तंरथंरथिनांश्रेष्ठाःपरिवार्यपरंतपाः ३२ अवाकिरञ्छरैस्तीक्ष्णैःशतशोऽथसहस्रशः ॥ सविघातंपृषत्कानामंकुशेनस माहरन् ३३ गजेनपांडुपंचालान्व्यधमत्पर्वतेश्वरः ॥ तदद्भुतमपश्यामभगदत्तस्यसंयुगे ३४ तथावृद्धस्यचरितंकुंजरेणविशांपते ॥ ततोराजादशार्णानांप्रा ग्ज्योतिषमुपाद्रवत् ३५ तिर्यग्यातेननागेनसमदेनाशुगामिना ॥ तयोर्युद्धंसमभवन्नागयोर्भीमरूपयोः ३६ सपक्षयोःपर्वतयोर्यथासद्रुमयोःपुरा ॥ प्राग्ज्यो तिषपतेर्नागःसन्निवृत्त्यापसृत्यच ३७ पार्श्वेदशार्णाधिपतेर्भित्वानागमपातयत् ॥ तोमरैःसूर्यरश्म्याभैर्भगदत्तोऽथसप्तभिः ३८ जघानाद्विरदस्थंतंशत्रुंप्रचलिता सनं ॥ व्यवच्छिद्यतुराजानंभगदत्तंयुधिष्ठिरः ३९ रथानीकेनमहतासर्वतःपर्यवारयत् ॥ सकुंजरस्थोरथिभिःशुशुभेसर्वतोवृतः ४० पर्वतेवनमध्यस्थोज्वलन्नि वहुताशनः ॥ मंडलंसर्वतःश्लिष्टंरथिनामुग्रधन्विनाम् ४१ किरतांशरवर्षाणिसनागःपर्यवर्तत ॥ ततःप्राग्ज्योतिषोराजापरिगृह्यमहागजम् ४२ प्रेषयामा ससहसायुयुधानरथंप्रति ॥ शिनेःपौत्रस्यतुरथंपरिगृह्यमहाद्विपः ४३ अभिचिक्षेपवेगेनयुयुधानस्त्वपाक्रमत् ॥ बृहतःसैंधवानश्वान्समुत्थाप्याथसारथिः ४४ तस्थौसात्यकिमासाद्यसंप्लुतस्तंरथंप्रति ॥ सतुलब्ध्वांतरंनागस्त्वरितोरथमंडलात् ४५ निश्चक्रामततःसर्वान्परिचिक्षेपपार्थिवान् ॥ तेत्वाशुगतिनातेनत्रा स्यमानानरर्षभाः ४६ तमेकंद्विरदंसंख्येमेनिरेशतशोद्विपान् ॥ तेगजस्थेनकाल्यंतेभगदत्तेनपांडवाः ४७ ऐरावतस्थेनयथादेवराजेनदानवाः ॥ तेषांप्रद्रवतां भीमःपंचालानामितस्ततः ४८ गजवाजिकृतःशब्दःसुमहान्समजायत ॥ भगदत्तेनसमरेकाल्यमानेषुपांडुषु ४९ प्राग्ज्योतिषमभिक्रुद्धःपुनर्भीमःसमभ्ययात् ॥ तस्याभिद्रवतोवाहान्हस्तमुक्तेनवारिणा ५० सिक्त्वाव्यत्रासयन्नागस्तेपार्थमहरंस्ततः ॥ ततस्तमभ्ययात्तूर्णंरुचिपर्वाकृतीसुतः ५१ समग्रञ्छरवर्षेणरथस्थो ऽतकसन्निभः ॥ ततःसरुचिपर्वाणंशरेणानतपर्वणा ५२ सुपर्वापर्वतपतिर्निन्येवैवस्वतक्षयम् ॥ तस्मिन्निपतितेवीरेसौभद्रोद्रौपदीसुतः ५३ चेकितानोधृष्ट केतुर्युयुत्सुश्चार्दयन्द्विपम् ॥ तएनंशरधाराभिर्धाराभिरिवतोयदाः ५४ सिषिचुर्भैरवान्नादान्विनदंतोजिघांसवः ॥ ततःपाष्णर्यंकुशांगुष्ठैःकृतिनाचोदितोद्विपः ५५ प्रसारितकरःप्रायात्स्तब्धकर्णेक्षणोद्रुतम् ॥ सोऽधिष्ठायपदावाहान्युयुत्सोःसूतमारुजत् ५६ युयुत्सुस्तुरथाद्राजन्नपाक्रामत्त्वरान्वितः ॥ ततःपांडवयो धास्तेनागराजंशरैर्द्रुतम् ५७ सिषिचुर्भैरवान्नादान्विनदंतोजिघांसवः ॥ पुत्रस्तुतवसंभ्रांतःसौभद्रस्याप्लुतोरथम् ५८ सकुंजरस्थोविसृजन्निषूनरिषुपार्थिवः ॥ बभौरश्मीनिवादित्योभुवनेषुसमुत्सृजन् ५९ तमार्जुनिर्द्वादशभिर्युयुत्सुर्दशभिःशरैः ॥ त्रिभिस्त्रिभिर्द्रौपदेयाधृष्टकेतुश्चविव्यधुः ६० सोऽतियत्नार्पितैर्बाणैरा चितोद्विरदोबभौ ॥ संस्यूतइवसूर्यस्यरश्मिभिर्जलदोमहान् ६१

४९ । ५० । ५१ । ५२ सुपर्वाशोभनांगसंधिः ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१

६२ । ६३ । ६४ । ६५ वियदाकाशं द्यांस्वर्गं ६६ । ६७ । ६८ ॥ इतिद्रोणपर्वणिटीकायांषड्विंशोऽध्यायः ॥ २६ ॥ ॥ ७ ॥ यदिति १ विकुर्वाणोविविधाःक्रियाःकुर्वाणे २ । ३ । ४

नियंतुःशिल्पयत्नाभ्यांप्रेरितोऽरिशरार्दितः ॥ परिचिक्षेपतान्नागःसरिपून्सव्यदक्षिणम् ६२ गोपालइववदंडेनयथापशुगणान्वने ॥ आवेष्टयततांसेनांभगदत्त
स्तथामुहुः ६३ क्षिप्रंश्येनाभिपन्नानांवायसानामिवस्वनः ॥ बभूवपांडवेयानांभृशंविद्रवतांस्वनः ६४ सनागराजःप्रवरांकुशाहतःपुरासपक्षोऽद्रिवरोयथान्-
प ॥ भयंतदारिपुषुसमादधद्भृशंवणिग्जनानांक्षुभितोयथार्णवः ६५ ततोध्वनिर्द्विरदरथाश्वपार्थिवैर्भयाद्द्रवद्भिर्जनितोऽतिभैरवः ॥ क्षितिंवियद्द्यांविदिशोदिश
स्तथासमावृणोत्पार्थिवसंयुगेततः ६६ सतेननागप्रवरेणपार्थिवोभृशंजगाहेद्विषतामनीकिनीम् ॥ पुरासुगुप्तांविबुधैरिवाहवेविरोचनोदेववरूथिनीमिव ६७
भृशंववौज्वलनसखोवियद्रजःसमावृणोन्मुहुरपिचैवसैनिकान् ॥ तमेकनागंगणशोयथागजान्समंततोद्रुतमथमेनिरेजनाः ६८ इतिश्रीमहाभारतेद्रोणपर्वणिसंश
प्तकवधपर्वणि भगदत्तयुद्धेषड्विंशोऽध्यायः ॥ २६ ॥ ॥ संजयउवाच ॥ यन्मांपार्थस्यसंग्रामेकर्माणिपरिपृच्छसि ॥ तच्छृणुष्वमहाबाहोपार्थोयदकरोद्रणे १
रजोदृष्ट्वासमुद्भूतंश्रुत्वाचगजनिःस्वनम् ॥ भगदत्तेविकुर्वाणेकौंतेयःकृष्णमब्रवीत् २ यथाप्राग्जोतिषोराजागजेनमधुसूदन ॥ त्वरमाणोविनिष्क्रांतोध्रुवंतस्यैष
निःस्वनः ३ इंद्रादनवरःसंख्येगजयानविशारदः ॥ प्रथमोगजयोधानांपृथिव्यामितिमेमतिः ४ सचापिद्विरदश्रेष्ठःसदाऽप्रतिगजोयुधि ॥ सर्वशस्त्रातिगःसं
ख्येकृतकर्माजितक्लमः ५ सहःशस्त्रनिपातानामग्निस्पर्शस्यचानघ ॥ सपांडवबलंसर्वमद्यैकोनाशयिष्यति ६ नचावाभ्यामृतेऽन्योऽस्तिशक्तस्तंप्रतिबाधितुम् ॥
त्वरमाणस्ततोयाहियतःप्राग्जोतिषाधिपः ७ दृप्तंसंख्येद्विपबलाद्वयसाचापिविस्मितम् ॥ अथैनंप्रेषयिष्यामिबलहंतुःप्रियातिथिम् ८ वचनादथकृष्णस्तुप्र
ययौसव्यसाचिनः ॥ दीर्यतेभगदत्तेनयत्रपांडववाहिनी ९ तंप्रयांतंततःपश्चादाह्वयंतोमहारथाः ॥ संशप्तकाःसमारोहन्सहस्राणिचतुर्दश १० दशैवतुसहस्रा
णित्रिगर्तानांमहारथाः ॥ चत्वारिचसहस्राणिवासुदेवस्यचानुगाः ११ दीर्यमाणांचमूंदृष्ट्वाभगदत्तेनमारिष ॥ आहूयमानस्यचतैरभवद्धृदयंद्विधा १२ किंनुश्रे
यस्करंकर्मभवेदद्येतिचिंतयन् ॥ इहवाविनिवर्तेयंगच्छेयंवायुधिष्ठिरम् १३ तस्यबुद्ध्याविचार्यैवमर्जुनस्यकुरूद्वह ॥ अभवद्भूयसीबुद्धिःसंशप्तकवधेस्थिरा १४
ससन्निवृत्तःसहसाकपिप्रवरकेतनः ॥ एकोरथसहस्राणिनिहंतुंवासवीरणे १५ साहिदुर्योधनस्यासीन्मतिःकर्णस्यचोभयोः ॥ अर्जुनस्यवधोपायेतेनद्वैधमकल्प
यत् १६ सतुदोलायमानोऽभूद्द्वैधीभावेनपांडवः ॥ वधेनतुनराग्र्याणामकरोत्तांमृषातदा १७ ततःशतसहस्राणिशराणांनतपर्वणाम् ॥ असृजन्नर्जुनेराजन्सं
शप्तकमहारथाः १८ नैवकुंतीसुतःपार्थोनैवकृष्णोजनार्दनः ॥ नहयानरथोराजन्दृश्यंतेस्मशरैश्चिताः १९ तदामोहमनुप्राप्तःसिष्विदेहिजनार्दनः ॥ ततः
स्तान्प्रायशःपार्थोब्रह्मास्त्रेणनिजघ्निवान् २०

अप्रतिगजइतिच्छेदः ५ सहःसोढापचाद्यच् ६ । ७ विस्मितंरूढाहंकारं ८ । ९ समारोहन्संवृतवंतः १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०

२१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ ॥ इतिद्रोणपर्वणिटीकायांसप्तविंशोऽध्यायः ॥ २७ ॥ यियासतइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०

शतशःपाणयश्छिन्नाःसेषुज्यातलकार्मुकाः ॥ केतवोवाजिनःसूताराथिनश्चापतन्क्षितौ २१ द्रुमाचलाग्रांबुधरैःसमकायाःसुकल्पिताः ॥ हतारोहाःक्षितौपेतुर्द्विपाःपार्थशराहताः २२ विप्रविद्धकुथानागाश्छिन्नभांडाःपरासवः ॥ सारोहास्तुरणेपेतुर्मथितामार्गणैर्भृशम् २३ सर्ष्टिप्रासासिनखराःसमुद्गरपरश्वधाः ॥ विचिछिन्नाबाहवःपेतुर्नृणांभल्लैःकिरीटिना २४ बालादित्यांबुजेंदूनांतुल्यरूपाणिमारिष ॥ संछिन्नान्यर्जुनशरैःशिरांस्युर्व्यांप्रपेदिरे २५ जज्वालालंकृतासेनापत्रिभिःप्राणिभोजनैः ॥ नानारूपैस्तदाऽमित्रान्क्रुद्धेनिघ्नतिफाल्गुने २६ क्षोभयंतंतदासेनांद्विरदंनलिनीमिव ॥ धनंजयंभूतगणाःसाधुसाध्वित्यपूजयन् २७ दृष्ट्वा तत्कर्मपार्थस्यवासवस्येवमाधवः ॥ विस्मयंपरमंगत्वाप्रांजलिस्तमुवाचह २८ कर्मैतत्पार्थशक्रेणयमेनधनदेनच ॥ दुष्करंसमरेयत्तेकृतमद्येतिमेमतिः २९ युगपच्चैवसंग्रामेशतशोऽथसहस्रशः ॥ पतिताएवमेदृष्टाःसंशप्तकमहारथाः ३० संशप्तकांस्ततोहत्वाभूयिष्ठायेव्यवस्थिताः ॥ भगदत्ताययाहीतिकृष्णंपार्थोऽभ्यनोदयत् ३१ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिसंशप्तकवधपर्वणि संशप्तकवधेसप्तविंशोऽध्यायः ॥ २७ ॥ ॥ संजयउवाच ॥ यियासतस्ततःकृष्णःपार्थस्याश्वान्मनोजवान् ॥ संप्रेषीद्धेमसंच्छन्नान्द्रोणानीकायसत्वरन् १ तंप्रयांतंकुरुश्रेष्ठंस्वान्भ्रातॄन्द्रोणतापितान् ॥ सुशर्माभ्रातृभिःसार्धंयुद्धार्थीपृष्ठतोऽन्वयात् २ ततःश्वेतहयःकृष्णमब्रवीदजितंजयः ॥ एषमांभ्रातृभिःसार्धंसुशर्माऽऽह्वयतेऽच्युत ३ दीर्यतेचोत्तरेणैवतत्सैन्यंमधुसूदन ॥ द्वैधीभूतंमनोमेऽद्यकृतंसंशप्तकैरिदम् ४ किंनुसंशप्तकान्हन्मिस्वान्रक्षाम्यहितार्दितान् ॥ इतिमेत्वंमतंवेत्सितत्रकिंसुकृतंभवेत् ५ एवमुक्तस्तुदाशार्हःस्यंदनंप्रत्यवर्त्तयत् ॥ येनत्रिगर्त्ताधिपतिःपांडवंसमुपाह्वयत् ६ ततोऽर्जुनःसुशर्माणंविद्ध्वासप्तभिराशुगैः ॥ ध्वजंधनुश्चास्यतथाक्षुराभ्यांसमकृंतत ७ त्रिगर्त्ताधिपतेश्चापिभ्रातरंषड्भिराशुगैः ॥ साश्वंससूतंपरितःपार्थःप्रैषीद्यमक्षयम् ८ ततोभुजगसंकाशांसुशर्माशक्तिमायसीम् ॥ चिक्षेपार्जुनमादिश्यवासुदेवायतोमरम् ९ शक्तिंत्रिभिःशरैश्छित्वातोमरंत्रिभिरर्जुनः ॥ सुशर्माणंशरव्रातैर्मोहयित्वान्यवर्त्तयत् १० तंवासवमिवायांतंभूरिवर्षंशरौघिणम् ॥ राजंस्तावकसैन्यानांनोग्रंकश्चिदवारयत् ११ ततोधनंजयोबाणैःसर्वानेवमहारथान् ॥ आयाद्विनिघ्नन्कौरव्यान्दहन्कक्षमिवानलः १२ तस्यवेगमसह्यंतंकुंतीपुत्रस्यधीमतः ॥ नाशक्नुवंस्तेसंसोढुंस्पर्शमग्नेरिवप्रजाः १३ संवेष्टयन्ननीकानिशरवर्षेणपांडवः ॥ सुपर्णपातवद्राजन्नायात्प्राग्ज्योतिषंप्रति १४ यत्तदाऽनामयज्जिष्णुर्भरतानामपापिनां ॥ धनुःक्षेमकरंसंख्येद्विषतामश्रुवर्धनं १५ तदेवतवपुत्रस्यराजन्दुर्द्यूतदेविनः ॥ कृतेक्षत्रविनाशायधनुरायच्छदर्जुनः १६ तथाविक्षोभ्यमाणासापार्थेनतववाहिनी ॥ व्यशीर्यतमहाराजनौरिवासाद्यपर्वतं १७

भूरिवर्षमितिवासवविशेषणं ११ । १२ । १३ । १४ । १५ आयच्छद्गृहीतवान् यदेवार्जुनस्यधनुर्भरतानांक्षेमकरमासीत्तदेवत्वत्पुत्रनिमित्तंक्षत्रक्षयकरमभवदितिवाक्यार्थः १६ । १७

१८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० ॥ इतिद्रोणपर्वणिटीकायामष्टाविंशोऽध्यायः ॥ २८ ॥ ॥ छ ॥ ॥ तथाक्रुद्धइति १

ततोदशसहस्राणिन्यवर्त्तंतधनुष्मताम् ॥ मतिंकृत्वारणेक्रूरांवीराजयपराजये १८ व्यपेतहृदयत्रासाआववुस्तंमहारथाः ॥ आर्च्छत्पार्थोगुरुंभारंसर्वभारसहो
युधि १९ यथानलवनंक्रुद्धःप्राभिन्नःषष्टिहायनः ॥ मृद्नीयात्तद्वदायस्तःपार्थोऽमृद्नाच्चमूंतव २० तस्मिन्प्रमथितेसैन्येभगदत्तोनराधिपः ॥ तेननागेनसहसा
धनंजयमुपाद्रवत् २१ तंरथेननरव्याघ्रःप्रत्यगृह्णाद्धनंजयः ॥ ससन्निपातस्तुमुलोबभूवरथनागयोः २२ कल्पिताभ्यांयथाशास्त्रंरथेनचगजेनच ॥ संग्रामे
चेरतुर्वीरौभगदत्तधनंजयौ २३ ततोजीमूतसंकाशान्नागादिंद्रइवप्रभुः ॥ अभ्यवर्षच्छरौघेणभगदत्तोधनंजयम् २४ सचापिशरवर्षैतंशरवर्षेणवासविः ॥ अ
प्राप्तमेवचिच्छेदभगदत्तस्यवीर्यवान् २५ ततःप्राग्ज्योतिषोराजाशरवर्षंनिवार्यतत् ॥ शरैर्जघ्नेमहाबाहुंपार्थंकृष्णंचमारिष २६ ततस्तुशरजालेनमहताऽभ्य
वकीर्यतौ ॥ चोदयामासतंनागंवधायाच्युतपार्थयोः २७ तमापतंतंद्विरदंदृष्ट्वाक्रुद्धमिवांतकम् ॥ चक्रेऽपसव्यंत्वरितःस्यंदनेनजनार्दनः २८ संप्राप्तमपिनेये
षपरावृत्तंमहाद्विपम् ॥ सारोहंमृत्युसात्कर्तुंस्मरन्धर्मंधनंजयः २९ सतुनागोद्विपरथान्हयांश्चामृद्यमारिष ॥ प्राहिणोन्मृत्युलोकायततःक्रुद्धोधनंजयः ३०
॥ इतिश्रीमहाभारतेद्रोणपर्वणिसंशप्तकवधपर्वणि भगदत्तयुद्धेअष्टाविंशोऽध्यायः ॥ २८ ॥ ॥ छ ॥ ॥ धृतराष्ट्रउवाच ॥ तथाक्रुद्धःकिमकरोद्भगदत्तस्य
पांडवः ॥ प्राग्ज्योतिषोवापार्थस्यतन्मेशंसयथातथम् १ ॥ संजयउवाच ॥ प्राग्ज्योतिषेणसंसक्तावुभौदाशार्हपांडवौ ॥ मृत्युदंष्ट्रांतिकंप्राप्तौसर्वभूतानिमेनिरे
२ तथातुशरवर्षाणिपातयत्यनिशंप्रभो ॥ गजस्कंधान्महाराजकृष्णयोःस्यंदनस्थयोः ३ अथकार्ष्णायसैर्बाणैःपूर्णकार्मुकनिःसृतैः ॥ अविध्यद्देवकीपुत्रंहेमपुं
खैःशिलाशितैः ४ अग्निस्पर्शसमाकीर्णाभगदत्तेनचोदिताः ॥ निर्भिद्यदेवकीपुत्रंक्षितिंजग्मुःसुवाससः ५ तस्यपार्थोधनुश्छित्वापरिवारंनिहत्यच ॥ लालय
न्निवराजानंभगदत्तमयोधयत् ६ सोऽर्करश्मिनिभांस्तीक्ष्णांस्तोमरान्वैचतुर्दश ॥ अप्रेषयत्सव्यसाचीद्विधैकैकमथाच्छिनत् ७ ततोनागस्यतद्वर्मव्यधमत्पा
कशासनिः ॥ शरजालेनमहतातद्व्यशीर्यतभूतले ८ शीर्णवर्मासतुगजःशरैःसुभृशमर्दितः ॥ बभौधारानिपाताक्तोव्यभ्रःपर्वतराडिव ९ ततःप्राग्ज्योतिषःशक्तिं
हेमदंडामयस्मयीं ॥ व्यसृजद्वासुदेवायद्विधातामर्जुनोऽच्छिनत् १० ततश्छत्रंध्वजंचैवच्छित्वाराज्ञोऽर्जुनःशरैः ॥ विव्याधदशभिस्तूर्णमुत्स्मयन्पर्वतेश्वरं ११
सोतिविद्धोऽर्जुनशरैःसुपुंखैःकंकपत्रिभिः ॥ भगदत्तस्ततःक्रुद्धःपांडवस्यजनाधिपः १२ व्यसृजत्तोमरान्मूर्ध्निश्वेताश्वस्योन्ननादच ॥ तैरर्जुनस्यसमरेकिरीटंप
रिवर्त्तितम् १३ परीवृत्तंकिरीटंतद्यमयन्नेवपांडवः ॥ सुदृष्टःक्रियतांलोकइतिराजानमब्रवीत् १४ एवमुक्तस्तुसंक्रुद्धःशरवर्षेणपांडवम् ॥ अभ्यवर्षत्सगोविंदंधनु
रादायभास्वरम् १५ तस्यपार्थोधनुश्छित्वातूणीरान्सन्निकृत्त्यच ॥ त्वरमाणोद्विसप्तत्यासर्वमर्मस्वताडयत् १६

२ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६

१७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ एकामूर्तिर्बदरिकाश्रमेनारायणरूपा अपरापरमात्मरूपा २७ अपराक्षेत्रज्ञरूपा अपराजलशायिनी २८ । २९ । ३० । ३१

विद्धस्ततोऽतिव्यथितोवैष्णवास्त्रमुदीरयन् ॥ अभिमंत्र्यांकुशंक्रुद्धोव्यसृजत्पांडवोरसि १७ विसृष्टंभगदत्तेनतदस्त्रंसर्वघातिवै ॥ उरसाप्रतिजग्राहपार्थंसंछाद्यकेशवः १८ वैजयंत्यभवन्मालातदस्त्रंकेशवोरसि ॥ पद्मकोशविचित्राढ्यासर्वर्तुकुसुमोत्कटा १९ ज्वलनार्केंदुवर्णाभापावकोज्ज्वलपल्लवा ॥ तयापद्मपलाशिन्यावातकंपितपत्रया २० शुशुभेऽभ्यधिकंशौरिरतसीपुष्पसन्निभः ॥ ततोऽर्जुनःक्लांतमनाःकेशवंप्रत्यभाषत २१ अयुध्यमानस्तुरगान्संयंतास्मीतिचानघ ॥ इत्युक्त्वापुंडरीकाक्षप्रतिज्ञांस्वांनरक्षसि २२ यद्यहंव्यसनीवास्यामशक्तोवानिवारणे ॥ ततस्त्वयैवंकार्यंस्यान्नतत्कार्यंमयिस्थिते २३ सबाणःसधनुश्चाहंससुरासुरमानुषान् ॥ शक्तोलोकानिमान्जेतुंतच्चापिविदितंतव २४ ततोऽर्जुनंवासुदेवःप्रत्युवाचार्थवद्वचः ॥ शृणुगुह्यमिदंपार्थपुरावृत्तंयथाऽनघ २५ चतुर्मूर्तिरहंशश्वल्लोकत्राणार्थमुद्यतः ॥ आत्मानंप्रविभज्येहलोकानांहितमादधे २६ एकामूर्तिस्तपश्चर्यांकुरुतेमेभुविस्थिता ॥ अपरापश्यतिजगत्कुर्वाणंसाध्वसाधुनी २७ अपराकुरुतेकर्ममानुषंलोकमाश्रिता ॥ शेतेचतुर्थीत्वपरानिद्रांवर्षसहस्रिकीं २८ याऽसौवर्षसहस्रांतेमूर्तिरुत्तिष्ठतेमम ॥ वरार्हेभ्योवरान्श्रेष्ठांस्तस्मिन्कालेददातिसा २९ तंतुकालमनुप्राप्तंविदित्वापृथिवीतदा ॥ आयाचतवरंयन्मांनरकार्थायतच्छृणु ३० देवानांदानवानांचअवध्यस्तनयोऽस्तुमे ॥ उपेतोवैष्णवास्त्रेणतन्मेत्वंदातुमर्हसि ३१ एवंवरमहंश्रुत्वाजगत्यास्तनयेतदा ॥ अमोघमस्त्रंप्रायच्छंवैष्णवंपरमंपुरा ३२ अवोचंचैतदस्त्रंवैह्यमोघंभवतुक्षमे ॥ नरकस्याभिरक्षार्थंनैनंकश्चिद्वधिष्यति ३३ अनेनास्त्रेणतेगुप्तःसुतःपरबलार्दनः ॥ भविष्यतिदुराधर्षःसर्वलोकेषुसर्वदा ३४ तथेत्युक्त्वागतादेवीकृतकामामनस्विनी ॥ सचाप्यासीद्दुराधर्षोनरकःशत्रुतापनः ३५ तस्मात्प्राग्ज्योतिषंप्राप्तंतदस्त्रंपार्थमामकम् ॥ नास्यावध्योऽस्तिलोकेषुसेंद्ररुद्रेषुमारिष ३६ तन्मयात्वत्कृतेचैतदन्यथाव्यपनामितम् ॥ विमुक्तंपरमास्त्रेणजहिपार्थमहासुरम् ३७ वैरिणंजहिदुर्धर्षंभगदत्तंसुरद्विषम् ॥ यथाहंजघ्निवान्पूर्वंहितार्थंनरकंतथा ३८ एवमुक्तस्तदापार्थःकेशवेनमहात्मना ॥ भगदत्तंशितैर्बाणैःसहसासमवाकिरत् ३९ ततःपार्थोमहाबाहुरसंभ्रांतोमहामनाः ॥ कुंभयोरंतरेनागंनाराचेनसमार्पयत् ४० ससमासाद्यतंनागंबाणोवज्रइवाचलम् ॥ अभ्यगात्सहपुंखेनवल्मीकमिवपन्नगः ४१ सकरीभगदत्तेनप्रेर्यमाणोमुहुर्मुहुः ॥ नकरोतिवचस्तस्यदरिद्रस्येवयोषिता ४२ सतुविष्टभ्यगात्राणिदंताभ्यामवनिंययौ ॥ नदन्नार्तस्वनंप्राणानुत्ससर्जमहाद्विपः ४३ ततोगांडीवधन्वानमभ्यभाषतकेशवः ॥ अयंमहत्तरःपार्थपलितेनसमावृतः ४४ वलीसंछन्ननयनःशूरःपरमदुर्जयः ॥ अक्ष्णोरुन्मीलनार्थायबद्धपट्टोह्यसौनृपः ४५ देववाक्यात्प्रचिच्छेदशरेणभृशमर्जुनः ॥ छिन्नमात्रेंशुकेतस्मिन्रुद्धनेत्रोबभूवसः ४६

३२ । ३३ । ३४ । ३५ । ३६ व्यपनामितंस्वार्थेणिच् व्यपनीतमित्यर्थः ३७ । ३८ । ३९ । ४० । ४१ योषितामागुरिमतेटाप् ४२ । ४३ । ४४ । ४५ । ४६

४७ । ४८ । ४९ । ५० । ५१ ॥ इतिद्रोणपर्वणिटीकायांएकोनत्रिंशोऽध्यायः ॥ २९ ॥ प्रियमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ वर्षशब्दोऽयमृतुवचनः निदाघर्तुसंबंधिनावित्यर्थः

तमोमयंजगन्मेनेभगदत्तःप्रतापवान् ॥ ततश्चंद्रार्धबिंबेनबाणेननतपर्वणा ४७ बिभेदहृदयंराज्ञोभगदत्तस्यपांडवः ॥ सभिन्नहृदयोराजाभगदत्तःकिरीटिना ॥ ४८ शरासनंशरांश्चैवगतासुःप्रमुमोचह ॥ शिरसस्तस्यविभ्रष्टंपपातचवरांशुकम् ॥ नालताडनविभ्रष्टंपलाशंनलिनादिव ४९ सहेममालीतपनीयभांडात्पपा तनागाद्गिरिसन्निकाशात् ॥ सुपुष्पितोमारुतवेगरुग्णोमहीधराग्रादिवकर्णिकारः ५० निहत्यतंनरपतिमिंद्रविक्रमंसखायमिंद्रस्यतदैंद्रिराहवे ॥ ततोऽपरांस्त वजयकांक्षिणोनरान्बभंजवायुर्बलवान्द्रुमानिव ५१ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिसंशप्तकवधपर्वणिभगदत्तवधेएकोनत्रिंशोऽध्यायः ॥ २९ ॥ संजयउवाच॥ प्रियमिंद्रस्यसततंसखायममितौजसम् ॥ हत्वाप्राग्ज्योतिषंपार्थःप्रदक्षिणमवर्तत १ ततोगांधारराजस्यसुतौपरपुरंजयौ ॥ अर्देतामर्जुनंसंख्येभ्रातरौवृषका चलौ २ तौसमेत्यार्जुनंवीरौपुरःपश्चाच्चधन्विनौ ॥ अविध्येतांमहावेगैर्निशितैराशुगैर्भृशम् ३ वृषकस्यहयान्सूतंधनुश्छत्रंरथंध्वजम् ॥ तिलशोव्यधमत्पार्थः सौबलस्यशितैःशरैः ४ ततोऽर्जुनःशरव्रातैर्नानाप्रहरणैरपि ॥ गांधारानाकुलांश्चक्रेसौबलप्रमुखान्पुनः ५ ततःपंचशतान्वीरान्गांधारानुद्यतायुधान् ॥ प्राहि णोन्मृत्युलोकायक्रुद्धोबाणैर्धनंजयः ६ हताश्वात्तुरथात्तूर्णमवतीर्यमहाभुजः ॥ आरुरोहरथंभ्रातुरन्यच्चधनुराददे ७ तावेकरथमारूढौभ्रातरौवृषकाचलौ ॥ शर वर्षेणबीभत्सुमविध्येतांमुहुर्मुहुः ८ स्यालौतवमहात्मानौराजानौवृषकाचलौ ॥ भृशंविजघ्नतुःपार्थमिंद्रंवृत्रबलाविव ९ लब्धलक्षौतुगांधारावहतांपांडवंपुनः ॥ निदाघवार्षिकौमासौलोकंघर्मांशुभिर्यथा १० तौरथस्थौनरव्याघ्रौराजानौवृषकाचलौ ॥ संश्लिष्टांगौस्थितौराजन्जघानैकेषुणाऽर्जुनः ११ तौरथात्सिंहसंका शौलोहिताक्षौमहाभुजौ ॥ राजन्संपेततुर्वीरौसोदर्यावेकलक्षणौ १२ तयोर्भूमिंगतौदेहौरथाद्बंधुजनप्रियौ ॥ यशोदशदिशःपुण्यंगमयित्वाव्यवस्थितौ १३ दृष्ट्वाविनिहतौसंख्येमातुलावपलायिनौ ॥ भृशंमुमुचुरश्रूणिपुत्रास्तवविशांपते १४ निहतौभ्रातरौदृष्ट्वामायाशतविशारदः ॥ कृष्णौसंमोहयन्मायांविदधेशकु निस्ततः १५ लगुडायोगुडाश्मानःशतघ्न्यश्चसशक्तयः ॥ गदापरिघनिस्त्रिंशशूलमुद्गरपट्टिशाः १६ सकंपनर्ष्टिनखरामुसलालिपरश्वधाः ॥ क्षुराःक्षुरप्रणा लीकावत्सदंतास्थिसंधयः १७ चक्राणिविशिखाःप्रासाविविधान्यायुधानिच ॥ प्रपेतुःशतशोदिग्भ्यःप्रदिग्भ्यश्चार्जुनंप्रति १८ खरोष्ट्रमहिषाःसिंहाव्याघ्राःसृ मरचित्रकाः ॥ ऋक्षाःशालावृकागृध्राःकपयश्चसरीसृपाः १९ विविधानिचरक्षांसिक्षुधितान्यर्जुनंप्रति ॥ संक्रुद्धान्यभ्यधावंतविविधानिवयांसिच २० ततोदि व्यास्त्रविच्छूरःकुंतीपुत्रोधनंजयः ॥ विसृजन्निषुजालानिसहसातान्यताडयत् २१ तेहन्यमानाःशूरेणप्रवरैःसायकैर्दृढैः ॥ विरुवंतोमहारावान्विनेशुःसर्वतोहताः २२

घर्मांशुभिस्तीक्ष्णकिरणैः १० । ११ । १२ । १३ । १४ । १५ । १६ कंपनायष्टयः । क्षुराःक्षुराकृतिफलकाः । क्षुरप्रास्तूग्रमध्यफलकाः । नालीकानलिकयाक्षेप्याः । वत्सदंतागोपोतकदंता कारफलकाः । अस्थिसंधयोऽस्थिमयफलकाः १७ विशिखाः फणिभ्राकारफलकाः १८ सृमरागवयाः चित्रकोव्याघ्रभेदः शालावृकाःश्वानः १९ । २० । २१ । २२

२३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० एनमर्जुनं ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० शराभिसृष्टैर्बाणाभिहतैः आयोधशिरोरणांगनं ४१ । ४२ ॥ इति

ततस्तमःप्रादुरभूदर्जुनस्यरथंप्रति ॥ तस्माच्चतमसोवाचःक्रूराःपार्थमभर्त्सयन् २३ तत्तमोभैरवंघोरंभयकर्तृमहाहवे ॥ उत्तमास्त्रेणमहताज्योतिषेणार्जुनोऽवधीत् २४ हतेतस्मिन्जलौघास्तुप्रादुरासन्भयानकाः ॥ अंभसस्तस्यनाशार्थमादित्यास्त्रमथार्जुनः २५ प्रायुंक्तांभस्ततस्तेनप्रायशोऽस्त्रेणशोषितम् ॥ एवंबहुविधामायाःसौबलस्यकृताःकृताः २६ जघानास्त्रबलेनाशुप्रहसन्नर्जुनस्तदा ॥ तदाहतासुमायासुत्रस्तोऽर्जुनशराहतः २७ अपायाज्जवनैरश्वैःशकुनिःप्राकृतोयथा ॥ ततोऽर्जुनोऽस्त्रविच्छैघ्र्यंदर्शयन्नात्मनोऽरिषु २८ अभ्यवर्षच्छरौघेणकौरवाणामनीकिनीम् ॥ साहन्यमानापार्थेनतवपुत्रस्यवाहिनी २९ द्वैधीभूतामहाराजगंगेवासाद्यपर्वतम् ॥ द्रोणमेवान्वपद्यंतकेचित्तत्रनरर्षभाः ३० केचिद्दुर्योधनंराजन्नर्द्यमानाःकिरीटिना ॥ नापश्यामततस्त्वेनंसैन्येवैरजसावृते ३१ गांडीवस्यचनिर्घोषःश्रुतोदक्षिणतोमया ॥ शंखदुंदुभिनिर्घोषंवादित्राणांचनिःस्वनम् ३२ गांडीवस्यतुनिर्घोषोव्यतिक्रम्यास्पृशद्दिवम् ॥ ततःपुनर्दक्षिणतःसंग्रामश्चित्रयोधिनाम् ३३ सुयुद्धंचार्जुनस्यासीदहंतुद्रोणमन्वियाम् ॥ यौधिष्ठिराण्यनीकानिप्रहरंतिततस्ततः ३४ नानाविधान्यनीकानिपुत्राणांतवभारत ॥ अर्जुनोव्यधमत्कालेदिवीवाभ्राणिमारुतः ३५ तंवासवमिवायांतंभूरिवर्षंशरौघिणम् ॥ महेष्वासानरव्याघ्रानोग्रंकेचिदवारयन् ३६ तेहन्यमानाःपार्थेनत्वदीयाव्यथिताभृशम् ॥ स्वानेवबहवोजघ्नुर्विद्रवंतस्ततस्ततः ३७ तेऽर्जुनेनशरामुक्ताःकंकपत्रास्तनुच्छिदः ॥ शलभाइवसंपेतुःसंवृण्वानादिशोदश ३८ तुरगंरथिनंनागंपदातिमपिमारिष ॥ विनिर्भिद्यक्षितिंजग्मुर्वल्मीकमिवपन्नगाः ३९ नचद्वितीयंव्यसृजत्कुंजराश्वनरेषुसः ॥ पृथगेकशरारुग्णानिपेतुस्तेगतासवः ४० हतैर्मनुष्यैर्द्विरदैश्वसर्वतःशराभिसृष्टैश्वहयैर्निपातितैः ॥ तदाश्वगोमायुबलाभिनादितंविचित्रमायोधशिरोबभूवतत् ४१ पितासुतंत्यजतिसुहृत्तथैवपुत्रःपितरंशरातुरः ॥ स्वरक्षणेकृतमतयस्तदाजनास्त्यजंतिवाहानपिपार्थपीडिताः ४२ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिसंशप्तकवधपर्वणिशकुनिपलायनेत्रिंशोऽध्यायः ॥ ३० ॥ ॥ ७ ॥ ॥ धृतराष्ट्रउवाच ॥ तेष्वनीकेषुभग्नेषुपांडुपुत्रेणसंजय ॥ चलितानांद्रुतानांचकथमासीन्मनोहिवः १ अनीकानांप्रभग्नानामवस्थानमपश्यताम् ॥ दुष्करंप्रतिसंधानंतन्ममाचक्ष्वसंजय २ ॥ संजयउवाच ॥ तथाऽपितवपुत्रस्यप्रियकामाविशांपते ॥ यशःप्रवीरालोकेषुरक्षंतोद्रोणमन्वयुः ३ समुद्यतेषुचास्त्रेषुसंप्राप्तेचयुधिष्ठिरे ॥ अकुर्वन्नार्यकर्माणिभैरवेसत्यभीतवत् ४ अंतरंभीमसेनस्यप्रापतन्नमितौजसः ॥ सात्यकेश्चैववीरस्यधृष्टद्युम्नस्यवाविभो ५ द्रोणंद्रोणमितिक्रूराःपंचालाःसमचोदयन् ॥ माद्रोणमितिपुत्रास्तेकुरून्सर्वानचोदयन् ६ द्रोणंद्रोणमितिह्येकेमाद्रोणमितिचापरे ॥ कुरूणांपांडवानांचद्रोणद्यूतमवर्तत ७

द्रोणपर्वणिटीकायांत्रिंशोऽध्यायः ॥ ३० ॥ ॥ ७ ॥ तेष्विति १ । २ । ३ । ४ अंतरंछिद्रं प्रापतन्सृतवतः ५ । ६ । ७

८ समासदन्प्रतिगतवंतः ९ । १० न्यवर्तंतभयेभ्योनिवृत्ताः ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९

यंयंप्रमथतेद्रोणःपंचालानांरथव्रजम् ॥ तत्र तत्रतुपांचाल्योधृष्टद्युम्नोऽभ्यवर्तत ८ तथाभागविपर्यासैःसंग्रामेभैरवेसति ॥ वीराःसमासदन्वीरान्कुर्वंतोभैरवंरवं ९ अकंपनीयाःशत्रूणांबभूवुस्तत्रपांडवाः ॥ अकंपयन्ननीकानिस्मरंतःक्लेशमात्मनः १० तेत्वमर्षवशंप्राप्ताह्रीमंतःसत्वचोदिताः ॥ त्यक्त्वाप्राणान्न्यवर्तंतघ्नंतो द्रोणंमहाहवे ११ अयसामिवसंपातःशिलानामिवचाभवत् ॥ दीव्यतांतुमुलेयुद्धेप्राणैरमिततेजसाम् १२ नतुस्मरंतिसंग्राममपिवृद्धास्तथाविधम् ॥ दृष्टपूर्वं महाराजश्रुतपूर्वमथापिवा १३ प्राकंपतेवपृथिवीतस्मिन्वीरावसादने ॥ निवर्तताबलौघेनमहताभारपीडिता १४ घूर्णतोऽपिबलौघस्यदिवंस्तब्ध्वेवनिःस्वनः ॥ अजातशत्रोस्तत्सैन्यमाविवेशसुभैरवः १५ समासाद्यतुपांडूनामनीकानिसहस्रशः ॥ द्रोणेनचरतासंख्येप्रभग्नानिशितैःशरैः १६ तेषुप्रमथ्यमानेषुद्रोणेनाद्भुतकर्मणा ॥ पर्यवारयदासाद्यद्रोणंसेनापतिःस्वयम् १७ तदद्भुतमभूद्युद्धंद्रोणपांचालयोस्तथा ॥ नैवतस्योपमाकाचिदितिमेनिश्चितामतिः १८ ततोनीलोऽनलप्रख्योददाहकुरुवाहिनीम् ॥ शरस्फुलिंगश्चापार्चिर्दहन्कक्षमिवानलः १९ तंदहंतमनीकानिद्रोणपुत्रःप्रतापवान् ॥ पूर्वाभिभाषीसुश्लक्ष्णंस्मयमानोऽभ्यभाषत २० नीलकिंबहुभिर्दग्धैस्तवयोधैःशरार्चिषा ॥ मयैकेनहियुद्ध्यस्वक्रुद्धःप्रहरचाशुमाम् २१ तंपद्मनिकराकारंपद्मपत्रनिभेक्षणम् ॥ व्याकोशपद्माभमुखोनीलोविव्याधसायकैः २२ तेनापिविद्धःसहसाद्रौणिर्भल्लैःशितैस्त्रिभिः ॥ धनुर्ध्वजंचच्छत्रंचद्विषतःसन्यकृंतत २३ सप्लुतःस्यंदनात्तस्मान्नीलश्चर्मवरासिभृत् ॥ द्रौणायनेःशिरःकायाद्धर्तुमैच्छत्पतत्रिवत् २४ तस्योन्नतांसंसुनसंशिरःकायात्सकुंडलम् ॥ भल्लेनापाहरद्द्रौणिःस्मयमानइवानघ २५ संपूर्णचंद्राभमुखःपद्मपत्रनिभेक्षणः ॥ प्रांशुरुत्पलपत्राभोनिहतोन्यपतद्भुवि २६ ततःप्रविव्यथेसेनापांडवीभृशमाकुला ॥ आचार्यपुत्रेणहतेनीलेज्वलिततेजसि २७ अचिंतयंश्चतेसर्वेपांडवानांमहारथाः ॥ कथंनोवासविस्त्रायाच्छत्रुभ्यइतिमारिष २८ दक्षिणेनतुसेनायाःकुरुतेकदनंबली ॥ संशप्तकावशेषस्यनारायणबलस्य च २९ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिसंशप्तकवधपर्वणिनीलवधेएकत्रिंशोऽध्यायः ॥ ३१ ॥ ७ ॥ संजयउवाच ॥ प्रतिघातंतुसैन्यस्यनामृष्यतवृकोदरः ॥ सोऽभ्याहनद्गुरुंषष्ट्याकर्णंचदशभिःशरैः १ तस्यद्रोणःशितैर्बाणैस्तीक्ष्णधारैरजिह्मगैः ॥ जीवितांतमभिप्रेप्सुर्मर्मण्याशुजघानह २ आनंतर्यमभिप्रेप्सुःषड्विंशत्यासमार्पयत् ॥ कर्णोद्वादशभिर्बाणैरश्वत्थामाचसप्तभिः ३ षड्भिर्दुर्योधनोराजाततएनमथाकिरत् ॥ भीमसेनोऽपितान्सर्वान्प्रत्यविध्यन्महाबलः ४ द्रोणंपंचाशतेषूणांकर्णंचदशभिःशरैः ॥ दुर्योधनंद्वादशभिर्द्रौणिमष्टाभिराशुगैः ५ आरावंतुमुलंकुर्वन्नभ्यवर्ततताव्रणे ॥ तस्मिन्संत्यजतिप्राणान्मृत्युसाधारणीकृते ६ अजातशत्रुस्तान्योधान्भीमंत्रातेत्यचोदयत् ॥ तेययुर्भीमसेनस्यसमीपममितौजसः ७

॥ इतिद्रोणपर्वणिटीकायामेकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ ७ ॥ ॥ प्रतिघातमिति १ । २ । ३ । ४ । ५ मृत्युसाधारणीकृतेमरणतुल्यावस्थांगमिते ६ । ७

८ । ९ । १० । ११ कटुकस्यपरुषस्योदयोयत्र १२ । १३ । १४ । १५ अवनिंगत्वाअभिहत्य विषाणालग्नसंश्रयैःदंतलग्नैकदेशैः १६ । १७ गृध्रपक्षाधिवासांसिगृध्रपक्षास्तरणानि १८ । १९

युयुधानप्रभृतयोमाद्रीपुत्रौचपांडवौ ॥ तेसमेत्यसुसंरब्धाःसहिताःपुरुषर्षभाः ८ महेष्वासवरैर्गुप्ताद्द्रोणानीकंबिभित्सवः ॥ समापेतुर्महावीर्याभीमप्रभृतयोरथाः ९ तान्प्रत्यगृह्णादव्यग्रोद्रोणोऽपिरथिनांवरः ॥ महारथानतिबलान्वीरान्समरयोधिनः १० बाह्यंमृत्युभयंकृत्वातावकान्पांडवाययुः ॥ सादिनःसादिनोऽभ्यघ्नंस्तथैवरथिनोरथान् ११ आसीच्छक्त्यसिसंपातोयुद्धमासीत्परश्वधैः ॥ प्रकृष्टमसियुद्धंचबभूवकटुकोदयम् १२ कुंजराणांचसंपातेयुद्धमासीत्सुदारुणम् ॥ अपतत्कुंजरादन्योहयादन्यस्त्ववाक्शिराः १३ नरोबाणविनिर्भिन्नोरथादन्यश्चमारिष ॥ तत्रान्यस्यचसंमर्देपतितस्यविवर्मणः १४ शिरःप्रध्वंसयामासवक्षस्याक्रम्यकुंजरः ॥ अपरांश्चापरेमृद्नन्वारणाःपतितान्नरान् १५ विषाणैश्चावनिंगत्वाव्यभिंदन्रथिनोबहून् ॥ नरांत्रैःकेचिदपरेविषाणालग्नसंश्रयैः १६ बभ्रमुःसमरेनागामृद्नंतःशतशोनरान् ॥ कार्ष्णायसतनुत्राणान्नराश्वरथकुंजरान् १७ पतितान्पोथयांचक्रुर्द्विपाःस्थूलनलानिव ॥ गृध्रपत्राधिवासांसिशयनानिनराधिपाः १८ ह्रीमंतःकालसंपर्कात्सुदुःखान्यनुशेरते ॥ हंतिस्मात्रपितापुत्रंरथेनाभ्येत्यसंयुगे १९ पुत्रश्चपितरंमोहान्निर्मर्यादमवर्तत ॥ रथोभग्नोध्वजश्छिन्नश्छत्रमुर्व्यांनिपातितम् २० युगार्द्धंछिन्नमादायप्रदुद्रावतथाहयः ॥ सासिर्बाहुर्निपतितःशिरश्छिन्नंसकुंडलम् २१ गजेनाक्षिप्यबलिनारथःसंचूर्णितःक्षितौ ॥ रथिनाताडितोनागोनाराचेनापतत्क्षितौ २२ सारोहश्चापतद्वाजीगजेनाभ्याहतोभृशम् ॥ निर्मर्यादंमहद्युद्धमवर्ततसुदारुणम् २३ हाताततहापुत्रसखेक्वासितिष्ठकधावसि ॥ प्रहराहरजह्येनंस्मितक्ष्वेडितगर्जितैः २४ इत्येवमुच्चरंतिस्मश्रूयंतेविविधागिरः ॥ नरस्याश्वस्यनागस्यसमसज्जतशोणितम् २५ उपाशाम्यद्रजोभौमंभीरून्कश्मलमाविशत् ॥ चक्रेणचक्रमासाद्यवीरोवीरस्यसंयुगे २६ अतीतेषुपथेकालेजहारगदयाशिरः ॥ आसीत्केशपरामर्शोमुष्टियुद्धंचदारुणम् २७ नखैर्दंतैश्चशूराणामद्वीपेद्वीपमिच्छताम् ॥ तत्राच्छिद्यतशूरस्यसखड्गोबाहुरुद्यतः २८ सधनुश्चापरस्यापिसशरःसांकुशस्तथा ॥ आक्रोशदन्यमन्योऽत्रतथाऽन्योविमुखोऽद्रवत् २९ अन्यःप्राप्तस्यचान्यस्यशिरःकायादपाहरत् ॥ सशब्दमद्रवच्चान्यःशब्दादन्योऽत्रसद्भृशम् ३० स्वानन्योऽथपरानन्योजघाननिशितैःशरैः ॥ गिरिशृंगोपमश्चात्रनाराचेननिपातितः ३१ मातंगोन्यपतद्भूमौनदीरोधइवोष्णगे ॥ तथैवरथिनंनागःक्षरन्गिरिरिवारुजन् ३२ अभ्यतिष्ठत्पदाभूमौसहाश्वंसहसारथिम् ॥ शूरान्प्रहरतोदृष्ट्वाकृतास्त्रान्रुधिरोक्षितान् ३३ बहूनप्याविशन्मोहोभीरून्हृदयदुर्बलान् ॥ सर्वमाविग्नमभवन्नप्राज्ञायतकिंचन ३४ सैन्येनरजसाध्वस्तंनिर्मर्यादमवर्तत ॥ ततःसेनापतिःशीघ्रमयंकालइतिब्रुवन् ३५ नित्याभित्वरितानेवत्वरयामासपांडवान् ॥ कुर्वंतःशासनंतस्यपांडवाबाहुशालिनः ३६

२० । २१ । २२ । २३ । २४ समसज्जतघनतामगमत् २५ । २६ अतीतःइषुपथःशरावकाशोयत्र २७ अद्वीपेनिराश्रयेद्वीपमाश्रयं २८ आक्रोशत् आहूतवान् २९ । ३० । ३१ क्षरन्मदमितिशेषः रथिनंतथैवसहाश्वंसहसारथिंअर्थाद्रथंचपदाआरुजन्भूमौअभ्यतिष्ठदित्यन्वयः ३२ । ३३ । ३४ । ३५ । ३६

विमीताअभीताः ३७ दुर्धर्षस्यद्रोणस्य ३८ आर्यधर्मेणसंरब्धाःसोद्यमाः ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३

सरोहंसाइवापेतुर्घ्नंतोद्रोणरथंप्रति ॥ गृह्णीताद्रवतान्योन्यंविभीताविनिकृंतत ३७ इत्यासीत्तुमुलःशब्दोदुर्धर्षस्यरथंप्रति ॥ ततोद्रोणःकृपःकर्णोद्रौणीराजाज
यद्रथः ३८ विंदानुविंदावावंत्यौशल्यश्चैतान्यवारयन् ॥ तेत्वार्यधर्मसंरब्धादुर्निवारादुरासदाः ३९ शरार्त्तानजहुर्द्रोणंपंचालाःपांडवैःसह ॥ ततोद्रोणोऽति
संक्रुद्धोविसृजन्शतशःशरान् ४० चेदिपंचालपांडूनामकरोत्कदनंमहत् ॥ तस्यज्यातलनिर्घोषःशुश्रुवेदिक्षुमारिष ४१ वज्रसंह्रादसंकाशस्त्रासयन्मानवा
न्बहून् ॥ एतस्मिन्नंतरेजिष्णुर्जित्वासंशप्तकान्बहून् ४२ अभ्यायात्तत्रयत्रासौद्रोणःपांडून्प्रमर्दति ॥ तान्शरौघान्महावर्त्तान्शोणितोदान्महाह्रदान् ४३ तीर्णः
संशप्तकान्हत्वाप्रत्यदृश्यतफाल्गुनः ॥ तस्यकीर्तिमतोलक्ष्मसूर्यप्रतिमतेजसः ४४ दीप्यमानमपश्यामतेजसावानरध्वजम् ॥ संशप्तकसमुद्रंतमुच्छोष्यास्त्र
गभस्तिभिः ४५ सपांडवयुगांतार्कःकुरूनप्यभ्यतीतपत् ॥ प्रददाहकुरून्सर्वानर्जुनःशस्त्रतेजसा ४६ युगांतेसर्वभूतानिधूमकेतुरिवोत्थितः ॥ तेनबाणसह
स्रौघैर्गजाश्वरथयोधिनः ४७ ताड्यमानाःक्षितिंजग्मुर्मुक्तकेशाःशरार्दिताः ॥ केचिदार्त्तस्वनंचक्रुर्विनेशुरपरेप्रभुनः ४८ पार्थबाणहताःकेचिन्निपेतुर्विगतासवः ॥
तेषामुत्पतितान्कांश्चित्पातितांश्चपराङ्मुखान् ४९ नजघानार्जुनोयोधान्योधव्रतमनुस्मरन् ॥ तेविकीर्णरथाश्चित्राःप्रायशश्चपराङ्मुखाः ५० कुरवःकर्णक
र्णेतिहाहेतिचविचुक्रुशुः ॥ तमाधिरथिराक्रंदंविज्ञायशरणैषिणाम् ५१ माभैष्टेतिप्रतिश्रुत्यययावभिमुखोऽर्जुनम् ॥ सभारतरथश्रेष्ठःसर्वभारतहर्षणः ५२ प्रा
दुश्चक्रेतदाऽऽग्नेयमस्त्रमस्त्रविदांवरः ॥ तस्यदीप्तशरौघस्यदीप्तचापधरस्यच ५३ शरौघान्शरजालेनविदुधावधनंजयः ॥ तथैवाधिरथिस्तस्यबाणान्ज्वालि
ततेजसः ५४ अस्त्रमस्त्रेणसंवार्यप्राणदद्विसृजन्शरान् ॥ धृष्टद्युम्नश्चभीमश्चसात्यकिश्चमहारथः ५५ विव्यधुःकर्णमासाद्यत्रिभिस्त्रिभिरजिह्मगैः ॥ अर्जुनास्त्रं
तुराधेयःसंवार्यशरवृष्टिभिः ५६ तेषांत्रयाणांचापानिचिच्छेदविशिखैस्त्रिभिः ॥ तेनिकृत्तायुधाःशूरानिर्विषाभुजगाइव ५७ रथशक्तीःसमुत्क्षिप्यभृशंसिंहा
इवानदन् ॥ ताभुजाग्रैर्महावेगानिसृष्टाभुजगोपमाः ५८ दीप्यमानामहाशक्त्योजग्मुराधिरथिंप्रति ॥ तानिकृत्यशरव्रातैस्त्रिभिस्त्रिभिरजिह्मगैः ५९ ननादब
लवान्कर्णःपार्थायविसृजन्शरान् ॥ अर्जुनश्चापिराधेयंविद्ध्वासप्तभिराशुगैः ६० कर्णादवरजंबाणैर्जघाननिशितैःशरैः ॥ ततःशत्रुंजयंहत्वापार्थःषड्भिरजिह्मगैः
६१ जहारसद्योभल्लेनविपाटस्याशिरोरथात् ॥ पश्यतांधार्त्तराष्ट्राणामेकेनैवकिरीटिना ६२ प्रमुखेसूतपुत्रस्यसोदर्यानिहतास्त्रयः ॥ ततोभीमःसमुत्पत्यस्वर
थाद्वैनतेयवत् ६३ वरासिनाकर्णपक्षान्जघानदशपंचच ॥ पुनस्तुरथमास्थायधनुरादायचापरम् ६४ विव्याधदशभिःकर्णंसूतमश्वांश्चपंचभिः ॥ धृष्टद्युम्नो
ऽप्यसिवरंचर्मचादायभास्वरम् ६५ जघानचंद्रवर्माणंबृहत्क्षत्रंचनैषधम् ॥ ततःस्वरथमास्थायपांचाल्योऽन्यच्चकार्मुकम् ६६

विदुधावखंडितवान् ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६

६७ । ६८ । ६९ । ७० । ७१ । ७२ प्राणांस्त्यक्त्वायुद्धवतामितिशेषः ७३ । ७४ अभीतनामभिमुखागतानांभयहीनानांवा ७५ । ७६ । ७७ बहुकरणैरनेकप्रक्रियैः रथमुखानांरथमुख्यानांने

आदायकर्णंविव्याधत्रिसप्तत्यानदन्रणे ॥ शैनेयोऽप्यन्यदादायधनुरिंदुसमद्युतिः ६७ सूतपुत्रंचतुःषष्ट्याविद्ध्वासिंहइवानदन् ॥ भल्लाभ्यांसाधुमुक्ताभ्यांछित्वाकर्णस्यकार्मुकम् ६८ पुनःकर्णंत्रिभिर्बाणैर्बाह्वोरुरसिचार्पयत् ॥ ततोदुर्योधनोद्रोणोराजाचैवजयद्रथः ६९ निमज्जमानंराधेयमुज्जह्रुःसात्यकार्णवात् ॥ पत्त्यश्वरथमातंगास्त्वदीयाःशतशोऽपरे ७० कर्णमेवाभ्यधावंतत्रास्यमानाःप्रहारिणः ॥ धृष्टद्युम्नश्चभीमश्चसौभद्रोऽर्जुनएवच ७१ नकुलःसहदेवश्चसात्यकिंजुगुपूरणे ॥ एवमेषमहारौद्रःक्षयार्थंसर्वधन्विनाम् ७२ तावकानांपरेषांचत्यक्त्वाप्राणानभूद्रणः ॥ पदातिरथनागाश्वागजाश्वरथपत्तिभिः ७३ रथिनोनागपत्त्यश्वैरथपत्तीरथद्विपैः ॥ अश्वैरश्वागजैर्नागारथिनोरथिभिःसह ७४ संयुक्तासमदृश्यंतपत्तयश्चापिपत्तिभिः ॥ एवंसुकलिलंयुद्धमासीत्क्रव्यादहर्षणम् ॥ महद्भिस्तैरभीतानांयमराष्ट्रविवर्धनम् ७५ ततोहतानररथवाजिकुंजरैरनेकशोद्विपरथपत्तिवाजिनः ॥ गजैर्गजारथिभिरुदायुधारथाहयैर्हयाःपत्तिगणैश्चपत्तयः ७६ रथैर्द्विपाद्विरदवरैर्महाहयाहयैर्नरावररथिभिश्चवाजिनः ॥ निरस्तजिह्वादशनेक्षणाःक्षितौक्षयंगताःप्रमथितवर्मभूषणाः ७७ तथापरैर्बहुकरणैर्वरायुधैर्हतागताःप्रतिभयदर्शनाःक्षितिम् ॥ विपोथिताहयगजपादताडिताभृशाकुलारथमुखनेमिभिःक्षताः ७८ प्रमोदनेश्वापदपक्षिरक्षसांजनक्षयेवर्ततितत्रदारुणे ॥ महाबलास्तेकुपिताःपरस्परंनिषूदयंतःप्रविचेरुरोजसा ७९ ततोबलेभृशलुलितेपरस्परंनिरीक्षमाणेरुधिरौघसंप्लुते ॥ दिवाकरेऽस्तंगिरिमास्थितेशनैरुभेप्रयातेशिबिरायभारत ८० ॥ इतिश्रीमहाभारतेद्रोणपर्वणिसंशप्तकवधपर्वणि द्वितीयदिवसावहारेद्वात्रिंशोऽध्यायः ॥ ३२ ॥ समाप्तंचसंशप्तकवधपर्व ॥ अथाभिमन्युवधपर्व ॥

॥ संजयउवाच ॥ पूर्वमस्मासुभग्नेषुफाल्गुनेनामितौजसा ॥ द्रोणेचमोघसंकल्पेरक्षितेचयुधिष्ठिरे १ सर्वेविध्वस्तकवचास्तावकायुधिनिर्जिताः ॥ रजस्वलाभृशोद्विग्नावीक्षमाणादिशोदश २ अवहारंततःकृत्वाभारद्वाजस्यसंमते ॥ लब्धलक्षैःशरैर्भिन्नाभृशावहसितारणे ३ श्लाघमानेषुभूतेषुफाल्गुनस्यामितान्गुणान् ॥ केशवस्यचसौहार्देकीर्त्यमानेऽर्जुनंप्रति ४ अभिशस्ताइवाभूवन्ध्यानमूकत्वमास्थिताः ॥ ततःप्रभातसमयेद्रोणंदुर्योधनोऽब्रवीत् ५ प्रणयादभिमानाच्चद्विषद्वृद्ध्याचदुर्मनाः ॥ शृण्वतांसर्वयोधानांसंरब्धोवाक्यकोविदः ६ नूनंवयंवध्यपक्षेभवतोद्विजसत्तम ॥ तथाहिनाग्रहीःप्राप्तंसमीपेऽद्ययुधिष्ठिरम् ७ इच्छतस्तेनमुच्येतचक्षुःप्राप्तोरणेरिपुः ॥ जिघृक्षतोरक्ष्यमाणःसामरैरपिपांडवैः ८ वरंदत्वाममप्रीतःपश्चाद्विकृतवानसि ॥ आशाभंगंनकुर्वंतिभक्तस्यार्याःकथंचन ९ ततोऽप्रीतस्तथोक्तःसन्भारद्वाजोऽब्रवीन्नृपं ॥ नार्हसेमांतथाज्ञातुंघटमानंतवप्रिये १० ससुरासुरगंधर्वाःसयक्षोरगराक्षसाः ॥ नालंलोकारणेजेतुंपाल्यमानंकिरीटिना ११

मिभिश्चक्रांतैः ७८ । ७९ । ८० ॥ इतिद्रोणपर्वणिटीकायांद्वात्रिंशोऽध्यायः ॥ ३२ ॥ पूर्वमिति १ रजस्वलाधूलिव्याप्ता २ । ३ । ४ । ५ । ६ । ७।८ विकृतवानन्यथाकृतवान् ९ । १० । ११

१२ । १३ । १४ कलाभिःसहितंसकलं इतोऽस्मत्तः ततोऽन्यतः १५ । १६ । १७ । १८ । १९ षट्सुद्रोणद्रौणिकृपकर्णभोजशल्येषु २० । २१ । २२ धर्मकर्तृभिर्मन्वादिभिः २३ । २४ । २५

विश्वसृग्यत्रगोविंदःपृतनानीस्तथाऽर्जुनः ॥ तत्रकस्यबलंकामेदन्यत्रत्र्यंबकात्प्रभोः १२ सत्यंतातब्रवीम्यद्यनैतज्ज्ञात्वन्यथाभवेत् ॥ अद्यैकंप्रवरंकंचित्पात यिष्येमहारथम् १३ तंचव्यूहंविधास्यामियोऽभेद्यस्त्रिदशैरपि ॥ योगेनकेनचिद्राजन्नर्जुनस्त्वपनीयताम् १४ नह्यज्ञातमसाध्यंवातस्यसंख्येऽतिकिंचन ॥ तेनह्युपात्तंसकलंसर्वज्ञानमितस्ततः १५ द्रोणेनव्याहृतेत्वेवंसंशप्तकगणाःपुनः ॥ आह्वयन्नर्जुनंसंख्येदक्षिणामभितोदिशम् १६ ततोऽर्जुनस्याथपरैःसार्धंसम भवद्रणः ॥ तादृशोयादृशोनान्यःश्रुतोदृष्टोऽपिवाक्वचित् १७ तत्रद्रोणेनविहितोव्यूहोराजन्व्यरोचत ॥ चरन्मध्यंदिनेसूर्यःप्रतपन्निवदुर्दृशः १८ तंचाभिम न्युर्वचनात्पितुर्ज्येष्ठस्यभारत ॥ बिभेददुर्भिदंसंख्येचक्रव्यूहमनेकधा १९ सकृत्वादुष्करंकर्महत्वावीरान्सहस्रशः ॥ षट्सुवीरेषुसंसक्तोदौःशासनिवशंगतः २० सौभद्रःपृथिवीपालजहौप्राणान्परंतपः ॥ वयंपरमसंहृष्टाःपांडवाःशोककर्शिताः ॥ सौभद्रेनिहतेराजन्नवहारमकुर्महि २१ ॥ धृतराष्ट्रउवाच ॥ पुत्रंपुरुषसिं हस्यसंजयाप्राप्तयौवनम् ॥ रणेविनिहतंश्रुत्वाभृशंमेदीर्यतेमनः २२ दारुणःक्षत्रधर्मोऽयंविहितोधर्मकर्तृभिः ॥ यत्रराज्येप्सवःशूराबालेशस्त्रमपातयन् २३ बालमत्यंतसुखिनंविचरंतमभीतवत् ॥ कृतास्त्राबहवोजघ्नुर्ब्रूहिगावल्गणेकथम् २४ बिभित्सतारथानीकंसौभद्रेणामितौजसा ॥ विक्रीडितंयथासंख्येतन्ममाच क्ष्वसंजय २५ ॥ संजयउवाच ॥ यन्मांपृच्छसिराजेंद्रसौभद्रस्यनिपातनम् ॥ तत्तेकार्त्स्न्येनवक्ष्यामिशृणुराजन्समाहितः २६ विक्रीडितंकुमारेणयथानीकंबिभि त्सता ॥ आरुग्णाश्चयथावीरादुःसाध्याश्चापिविप्लवे २७ दावाग्न्यभिपरीतानांभूरिगुल्मतृणद्रुमे ॥ वनौकसामिवारण्येत्वदीयानामभूद्भयम् २८ ॥ इतिश्रीम हाभारतेद्रोणपर्वणिअभिमन्युवधसंक्षेपकथनेत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ संजयउवाच ॥ समरेऽत्युग्रकर्माणःकर्मभिर्व्यंजितश्रमाः ॥ सकृष्णाःपां डवाःपंचदेवैरपिदुरासदाः १ सत्वकर्मान्वयैर्बुद्ध्याकीर्त्याचयशसाश्रिया ॥ नैवभूतोनभवितानैवतुल्यगुणःपुमान् २ सत्यधर्मरतोदांतोविप्रपूजादिभिर्गुणैः ॥ सदैवत्रिदिवंप्राप्तोराजाकिलयुधिष्ठिरः ३ युगांतेचांतकोराजन्जामदग्न्यश्चवीर्यवान् ॥ रथस्थोभीमसेनश्चकथ्यंतेसदृशास्त्रयः ४ प्रतिज्ञाकर्मदक्षस्यरणेगांडीवध न्वनः ॥ उपमांनाधिगच्छामिपार्थस्यसदृशींक्षितौ ५ गुरुवात्सल्यमत्यंतंनैभृत्यंविनयोदमः ॥ नकुलेऽप्रातिरूप्यंचशौर्यंचनियतानिषट् ६ श्रुतगांभीर्यमाधुर्य सत्यरूपपराक्रमैः ॥ सदृशोदेवयोर्वीरःसहदेवःकिलाश्विनोः ७ येचकृष्णेगुणाःस्फीताःपांडवेषुचयेगुणाः ॥ अभिमन्यौकिलैकस्थादृश्यंतेगुणसंचयाः ८ युधि ष्ठिरस्यवीर्येणकृष्णस्यचरितेनच ॥ कर्मभिर्भीमसेनस्यसदृशोभीमकर्मणः ९ धनंजयस्यरूपेणविक्रमेणश्रुतेनच ॥ विनयात्सहदेवस्यसदृशोनकुलस्यच १०

२६ । २७ । २८ ॥ इतिद्रोणपर्वणिटीकायांत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ ७ ॥ ॥ समरइति १ कीर्तिःसाधुतयाऽन्यैःकथनं यशःपरचित्तचमत्कृतोगुणौघः २ । ३ । ४ । ५ नैभृत्यंकृतकर्तव्याप्रकाशनं अप्रातिरूप्यंसौंदर्यम् ६ । ७ । ८ । ९ । १०

११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० प्रमुखेऽग्रे सैन्यस्यनायकोद्रोणः अवास्थितेतिच्छंदोऽनुरोधाद्विसर्गलोपः २१ । २२ । २३ । २४ । २५ ॥ इतिद्रोणपर्व



धृतराष्ट्रउवाच ॥ अभिमन्युमहंसूतसौभद्रमपराजितं ॥ श्रोतुमिच्छामिकात्स्न्र्येनकथमायोधनेहतः ११ संजयउवाच ॥ स्थिरोभवमहाराजशोकंधारयदुर्धरं ॥ महांतंबंधुनाशंतेकथयिष्यामितच्छृणु १२ चक्रव्युहोमहाराजआचार्येणाभिकल्पितः ॥ तत्रशक्रोपमाःसर्वेराजानोविनिवेशिताः १३ आरास्थानेषुविन्यस्ताः कुमाराःसूर्यवर्चसः ॥ संघातोराजपुत्राणांसर्वेषामभवत्तदा १४ कृताभिसमयाःसर्वेसुवर्णविकृतध्वजाः ॥ रक्तांबरधराःसर्वेसर्वेरक्तविभूषणाः १५ सर्वेरक्तपताकाश्वसर्वेवैहेममालिनः ॥ चंदनागुरुदिग्धांगाःस्रग्विणःसूक्ष्मवाससः १६ सहिताःपर्यधावंतकार्ष्णिप्रतियुयुत्सवः ॥ तेषांदशसहस्राणिबभूवुर्दृढधन्विनाम् १७ पौत्रंतवपुरस्कृत्यलक्ष्मणंप्रियदर्शनं ॥ अन्योन्यसमदुःखास्तेअन्योन्यसमसाहसाः १८ अन्योन्यस्पर्धमानाश्वअन्योन्यस्यहितेरताः ॥ दुर्योधनस्तुराजेंद्रसैन्यमध्येऽव्यवस्थितः १९ कर्णदुःशासनकृपैर्वृतोराजामहारथैः ॥ देवराजोपमःश्रीमान्श्वेतच्छत्राभिसंवृतः २० चामरव्यजनाक्षेपैरुदयन्निवभास्करः ॥ प्रमुखेतस्यसैन्यस्यद्रोणोऽवस्थितनायकः २१ सिंधुराजस्तथाऽतिष्ठच्छ्रीमान्मेरुरिवाचलः ॥ सिंधुराजस्यपार्श्वस्थाअश्वत्थामपुरोगमाः २२ सुतास्तवमहाराजत्रिंशत्त्रिदशसन्निभाः ॥ गांधारराजःकितवःशल्योभूरिश्रवास्तथा २३ पार्श्वतःसिंधुराजस्यव्यराजंतमहारथाः ॥ ततःप्रववृतेयुद्धंतुमुलंलोमहर्षणं २४ तावकानांपरेषांचमृत्युंकृत्वानिवर्तनम् २५ ॥ इतिश्रीमहाभारतेद्रोणपर्वणि अभिमन्युवधपर्वणिचक्रव्यूहनिर्माणेचतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ ॥ संजयउवाच ॥ तदनीकमनाधृष्यंभारद्वाजेनरक्षितम् ॥ पार्थाःसमभ्यवर्तंतभीमसेनपुरोगमाः १ सात्यकिश्चेकितानश्वधृष्टद्युम्नश्चपार्षतः ॥ कुंतिभोजश्वविक्रांतोद्रुपदश्चमहारथः २ आर्जुनिःक्षत्रधर्माचबृहत्क्षत्रश्ववीर्यवान् ॥ चेदिपोधृष्टकेतुश्चमाद्रीपुत्रौघटोत्कचः ३ युधामन्युश्वविक्रांतःशिखंडीचापराजितः ॥ उत्तमौजाश्वदुर्धर्षोविराटश्चमहारथः ४ द्रौपदेयाश्चसंरब्धाःशैशुपालिश्ववीर्यवान् ॥ केकयाश्चमहावीर्याःसृंजयाश्चसहस्रशः ५ एतेचान्येचसगणाःकृतास्त्रायुद्धदुर्मदाः ॥ समभ्यधावन्सहसाभारद्वाजंयुयुत्सवः ६ समीपेवर्तमानांस्तान्भारद्वाजोऽतिवीर्यवान् ॥ असंभ्रांतःशरौघेणमहतासमवारयत् ७ महौघःसलिलस्येवगिरिमासाद्यदुर्भिदम् ॥ द्रोणंतेनाभ्यवर्तंतवेलामिवजलाशयाः ८ पीड्यमानाःशरैराजन्द्रोणचापविनिःसृतैः ॥ नशेकुःप्रमुखेस्थातुंभारद्वाजस्यपांडवाः ९ तदद्भुतमपश्यामद्रोणस्यभुजयोर्बलम् ॥ यदेनंनाभ्यवर्तंतपंचालाःसृंजयैःसह १० तमायांतमभिक्रुद्धंद्रोणंदृष्ट्वायुधिष्ठिरः ॥ बहुधाचिंतयामासद्रोणस्यप्रतिवारणम् ११ अशक्यंतुतमन्येनद्रोणंमत्वायुधिष्ठिरः ॥ अविषह्यंगुरुंभारंसौभद्रेसमवासृजत् १२ वासुदेवादनवरंफाल्गुनाच्चामितौजसम् ॥ अब्रवीत्परवीरघ्नमभिमन्युमिदंवचः १३

णिटीकायांचतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ ॥ ७ ॥ ॥ ७ ॥ तदनीकमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३

१४ । १५ मातुलानांसात्यकिप्रभृतीनां १६ । १७ । १८ योगउपायोयुक्तिर्वा १९ । २० प्रणिधायप्रविश्य २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२

एत्यनोनार्जुनोगर्हेद्यथातातथाकुरु ॥ चक्रव्यूहस्यनवयंविद्मोभेदंकथंचन १४ त्वंवाऽर्जुनोवाकृष्णोवाभिंद्यात्प्रद्युम्नएववा ॥ चक्रव्यूहंमहाबाहोपंचमोनोपप द्यते १५ अभिमन्योवरंतातयाचतांदातुमर्हसि ॥ पितृणांमातुलानांचसैन्यानांचैवसर्वशः १६ धनंजयोहिनस्तातगर्हयेदेत्यसंयुगात ॥ क्षिप्रमस्त्रंसमादाय द्रोणानीकंविशातय १७ ॥ अभिमन्युरुवाच ॥ द्रोणस्यदृढमत्युग्रमनीकप्रवरंयुधि ॥ पितृणांजयमाकांक्षन्नवगाहेऽविलंबितम् १८ उपदिष्टोहिमेपित्रायोगो ऽनीकविशातने ॥ नोत्सहेहिविनिर्गंतुमहंकस्यांचिदापदि १९ ॥ युधिष्ठिरउवाच ॥ भिंध्यनीकंयुधांश्रेष्ठद्वारंसंजनयस्वनः ॥ वयंत्वाऽनुगमिष्यामोयेनत्वंतात यास्यसि २० धनंजयसमंयुद्धेत्वांवयंतातसंयुगे ॥ प्रणिधायानुयास्यामोरक्षंतःसर्वतोमुखाः २१ ॥ भीमउवाच ॥ अहंत्वाऽनुगमिष्यामिधृष्टद्युम्नोऽथसात्यकिः ॥ पंचालाःकेकयामत्स्यास्तथासर्वेप्रभद्रकाः २२ सकृद्भिन्नंत्वयाव्यूहंतत्रतत्रपुनःपुनः ॥ वयंप्रध्वंसयिष्यामोनिघ्नमानावरान्वरान् २३ ॥ अभिमन्युरुवाच ॥ अहमेतत्प्रवेक्ष्यामिद्रोणानीकंदुरासदम् ॥ पतंगइवसंक्रुद्धोज्वलितंजातवेदसम् २४ तत्कर्माद्यकरिष्यामिहितंयद्वंशयोर्द्वयोः ॥ मातुलस्यचयत्प्रीतिंकरिष्य तिपितुश्चमे २५ शिशुनैकेनसंग्रामेकाल्यमानानिसंघशः ॥ द्रक्ष्यंतिसर्वभूतानिद्विषत्सैन्यानिवैमया २६ नाहंपार्थेनजातःस्यांनचजातःसुभद्रया ॥ यदिमेसंयु गेकश्चिज्जीवितोनाद्यमुच्यते २७ यदिचैकरथेनाहंसमग्रंक्षत्रमंडलम् ॥ नकरोम्यष्टधायुद्धेनभवाम्यर्जुनात्मजः २८ ॥ युधिष्ठिरउवाच ॥ एवंतेभाषमाणस्य बलंसौद्रवर्धताम् ॥ यत्समुत्सहसेभेत्तुंद्रोणानीकंदुरासदम् २९ रक्षितंपुरुषव्याघ्रैर्महेष्वासैर्महाबलैः ॥ साध्यरुद्रमरुत्तुल्यैर्वस्वग्न्यादित्यविक्रमैः ३० ॥ संजय उवाच ॥ तस्यतद्वचनंश्रुत्वासयंतारमचोदयत् ३१ सुमित्राश्वान्रणेक्षिप्रंद्रोणानीकायचोदय ३२ ॥ इतिश्रीमहाभारतेद्रोणपर्वण्यभिमन्युवधपर्वण्यभिम न्युप्रतिज्ञायांपंचत्रिंशोऽध्यायः ॥ ३५ ॥ ॥ संजयउवाच ॥ सौभद्रस्तद्वचःश्रुत्वाधर्मराजस्यधीमतः ॥ अचोदयतयंतारंद्रोणानीकायभारत १ तेनसं चोद्यमानस्तुयाहियाहीतिसारथिः ॥ प्रत्युवाचततोराजन्नभिमन्युमिदंवचः २ अतिभारोऽयमायुष्मन्नाहितस्त्वयिपांडवैः ॥ संप्रधार्यक्षणंबुद्ध्याततस्त्वंयोद्धु मर्हसि ३ आचार्योहिकृतीद्रोणःपरमास्त्रेकृतश्रमः ॥ अत्यंतसुखसंवृद्धस्त्वंचायुद्धविशारदः ४ ततोऽभिमन्युःप्रहसन्सारथिंवाक्यमब्रवीत् ॥ सारथेकोन्वयंद्रो णःसमग्रंक्षत्रमेववा ५ ऐरावतगतंशक्रंसहामरगणैरहम् ॥ अथवारुद्रमीशानंसर्वभूतगणार्चितम् ॥ योधयेयंरणमुखेनमेक्षत्रेऽद्यविस्मयः ६ नममैतद्द्विषत्सैन्यं कलामर्हतिषोडशीम् ॥ अपिविश्वजितंविष्णुंमातुलंप्राप्यसूतज ७ पितरंचार्जुनंयुद्धेनभीर्मामुपयास्यति ॥ अभिमन्युश्चतांवाचंकदर्थीकृत्यसारथेः ८

॥ इतिश्रीमहाभारतेद्रोणपर्वणिटीकायांपंचत्रिंशोऽध्यायः ॥ ३५ ॥ ॥ ७ ॥ सौभद्रइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८

९ । १० । ११।१२ विंशतिरितिव्यूहपर्यायः तदुक्तं 'विंशत्यंगतथाव्यूहोविंशतिर्व्यपदिश्यते' इति विंशतेःपदेरक्षणे 'पदंव्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु' इत्यमरः १३ । १४ । १५ । १६ क्ष्वेडितं ध्वनिविशेषः उत्क्रुष्टमाह्वानं गर्जितंहन्यंतांहन्यंतामिति वचः १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ कचग्रहाःअंकुशाः २५ । २६ । २७ । २८ । २९ । ३० । ३१ उपस्थोरथक्रोडः ३२ । ३३ । ३४ । ३५ । ३६ । ३७

याहीत्येवाब्रवीदेनंद्रोणानीकायमाचिरम् ॥ ततःसंनोदयामासहयानाशुत्रिहायनान् ९ नातिहृष्टमनाःसूतोहेमभांडपरिच्छदान् ॥ तेप्रेषिताःसुमित्रेणद्रोणानीकायवाजिनः १० द्रोणमभ्यद्रवन्राजन्महावेगपराक्रमम् ॥ तमुदीक्ष्यतथायांतंसर्वेद्रोणपुरोगमाः ॥ अभ्यवर्तंतकौरव्याःपांडवाश्चतमन्वयुः ११ सकर्णिकारप्रवरोच्छ्रितध्वजःसुवर्णवर्मार्जुनिरर्जुनाद्वरः ॥ युयुत्सयाद्रोणमुखान्महारथान्समासदत्सिंहशिशुर्यथाद्विपान् १२ तेविंशतिपदेयत्ताःसंप्रहारंप्रचक्रिरे ॥ आसीद्गांगइवावर्तोमुहूर्तमुदधाविव १३ शूराणांयुध्यमानानांनिघ्नतामितरेतरम् ॥ संग्रामस्तुमुलोराजन्प्रावर्ततसुदारुणः १४ प्रवर्तमानेसंग्रामेतस्मिन्नतिभयंकरे ॥ द्रोणस्यमिषतोव्यूहंभित्वाप्राविशदार्जुनिः १५ तंप्रविष्टंविनिघ्नंतंशत्रुसंघान्महाबलम् ॥ हस्त्यश्वरथपत्त्यौघाःपरिवव्रुरुदायुधाः १६ नानावादित्रनिनदैःक्ष्वेडितोत्क्रुष्टगर्जितैः ॥ हुंकारैःसिंहनादैश्चातिष्ठतिष्ठेतिनिःस्वनैः १७ घोरैर्हलहलाशब्दैर्मागास्तिष्ठेहिमामिति ॥ असावहममित्रेतिप्रवदंतोमुहुर्मुहुः १८ बृंहितैःसिंजितैर्हासैःकरनेमिस्वनैरपि ॥ सन्नादयंतोवसुधामभिदुद्रुवुरार्जुनिम् १९ तेषामापततांवीरःशीघ्रयोधीमहाबलः ॥ क्षिप्रास्त्रोन्यवधीद्राजन्मर्मज्ञोमर्मभेदिभिः २० तेहन्यमानाविवशानानालिंगैःशितैःशरैः ॥ अभिपेतुःसुबहुशःशलभाइवपावकम् २१ ततस्तेषांशरीरैश्चशरीरावयवैश्चसः ॥ संतस्तारक्षितिंक्षिप्रंकुशैर्वेदिमिवाध्वरे २२ बद्धगोधांगुलित्राणान्सशरासनसायकान् ॥ सासिचर्मांकुशाभीषून्सतोमरपरश्वधान् २३ सगदायोगुडप्रासान्सर्ष्टितोमरपट्टिशान् ॥ सभिंदिपालपरिघान्सशक्तिवरकंपनान् २४ सप्रतोदमहाशंखान्सकुंतान्सकचग्रहान् ॥ समुद्गरक्षेपणीयान्सपाशपरिघोपलान् २५ सकेयूरांगदान्बाहून्हृद्यगंधानुलेपनान् ॥ संचिच्छेदार्जुनिस्तूर्णंत्वदीयानांसहस्रशः २६ तैःस्फुरद्भिर्महाराजशुशुभेभूःसुलोहितैः ॥ पंचास्यैःपन्नगैश्छिन्नैर्गरुडेनेवमारिष २७ सुनासाननकेशांतैरव्रणैश्चारुकुंडलैः ॥ संदष्टौष्ठपुटैःक्रोधात्क्षरद्भिःशोणितंबहु २८ सचारुमुकुटोष्णीषैर्मणिरत्नविभूषितैः ॥ विनालनलिनाकारैर्दिवाकरशशिप्रभैः २९ हितप्रियंवदैःकालेबहुभिःपुण्यगंधिभिः ॥ द्विषच्छिरोभिःपृथिवींसवैतस्तारफाल्गुनिः ३० गंधर्वनगराकारान्विधिवत्कल्पितान्रथान् ॥ ईषामुखान्द्वित्रिवेणून्न्यस्तदंडकबंधरान् ३१ विजंघाकूबरांस्तत्रविनेमिदशनानपि ॥ विचक्रोपस्करोपस्थान्भग्नोपकरणानपि ३२ प्रपातितोपस्तरणान्हतयोधान्सहस्रशः ॥ शरैर्विशकलीकुर्वन्दिक्षुसर्वास्वदृश्यत ३३ पुनर्द्विपान्द्विपारोहान्वैजयंत्यंकुशध्वजान् ॥ तूणान्वर्माण्यथोकक्ष्याग्रैवेयांश्चसकंबलान् ३४ घंटाःशुंडाविषाणाग्रान्छत्रमालाःपदानुगान् ॥ शरैर्निशितधाराग्रैःशात्रवाणामशातयत् ३५ वनायुजान्पार्वतीयान्कांबोजानथबाल्हिकान् ॥ स्थिरवालधिकर्णाक्षान्जवनान्साधुवाहिनः ३६ आरूढान्शिक्षितैर्योधैःशक्त्यृष्टिप्रासयोधिभिः ॥ विध्वस्तचामरमुखान्विप्रविद्धप्रकीर्णकान् ३७

यक्रत्कालखंडम् ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ ॥ इतिद्रोणपर्वणिटीकायांषट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥ ७ ॥ ॥ तामिति १ । २ । ३ त्रास्यमानाःपालयिष्यंतः

निरस्तजिह्वानयनान्निष्कीर्णांत्रयकृद्धनान् ॥ हतारोहांश्छिन्नघंटान्क्रव्यादगणमोदकान् ३८ निकृत्तचर्मकवचाञ्शकृन्मूत्रासृगाप्लुतान् ॥ निपातयन्नश्ववरां स्तावकान्सव्यरोचत ३९ एकोविष्णुरिवाचिंत्यंकृत्वाकर्मसुदुष्करम् ॥ तथानिर्मथितंतेनत्र्यंगंतवबलंमहत् ४० यथासुरबलंघोरंत्र्यंबकेनमहौजसा ॥ कृत्वा कर्मरणेऽसह्यंपरैरार्जुनिराहवे ४१ अभिनच्चपदात्योघांस्त्वदीयानेवसर्वशः ॥ एवमेकेनतांसेनांसौभद्रेणशितैःशरैः ४२ भृशंविप्रहतांदृष्ट्वास्कंदेनेवासुरींचमूम् ॥ त्वदीयास्तवपुत्राश्चवीक्षमाणादिशोदश ४३ संशुष्कास्याश्चलन्नेत्राःप्रस्विन्नारोमहर्षिणः ॥ पलायनकृतोत्साहानिरुत्साहाद्विषज्जये ४४ गोत्रनामभिरन्योन्यं क्रंदंतोजीवितैषिणः ॥ हतान्पुत्रान्पितॄन्भ्रातॄन्बंधून्संबंधिनस्तथा ४५ प्रातिष्ठंतसमुत्सृज्यत्वरयंतोहयद्विपान् ४६ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिम न्युवधपर्वणि अभिमन्युपराक्रमेषट्त्रिंशोऽध्यायः ॥ ३६ ॥ संजयउवाच ॥ तांप्रभग्नांचमूंदृष्ट्वासौभद्रेणामितौजसा ॥ दुर्योधनोभृशंक्रुद्धःस्वयंसौभद्रमभ्ययात् १ ततोराजानमावृत्तंसौभद्रंप्रतिसंयुगे ॥ दृष्ट्वाद्रोणोब्रवीद्योधान्परीप्सध्वंनराधिपम् २ पुराऽभिमन्युर्लक्षंनःपश्यतांहंतिवीर्यवान् ॥ तमाद्रवतमाभैष्टक्षिप्रंर क्षतकौरवम् ३ ततःकृतज्ञाबलिनःसुहृदोजितकाशिनः ॥ त्रास्यमानाभयाद्वीरंपरिवव्रुस्तवात्मजम् ४ द्रोणोद्रौणिःकृपःकर्णःकृतवर्माचसौबलः ॥ बृहद्बलो मद्रराजोभूरिर्भूरिश्रवाःशलः ५ पौरवोवृषसेनश्चविसृजंतःशितान्शरान् ॥ सौभद्रंशरवर्षेणमहतासमवाकिरन् ६ संमोहयित्वातमथदुर्योधनममोचयन् ॥ आ स्याद्ग्रासमिवाक्षिप्तंममृषेनार्जुनात्मजः ७ तान्शरौघेणमहतासाश्वसूतान्महारथान् ॥ विमुखीकृत्यसौभद्रःसिंहनादमथानदत् ८ तस्यनादंततःश्रुत्वासिंहस्ये वामिषैषिणः ॥ नामृष्यंतसुसंरब्धाःपुनर्द्रोणमुखारथाः ९ तएनंकोष्ठकीकृत्यरथवंशेनमारिष ॥ व्यसृजन्निषुजालानिनानालिंगानिसंघशः १० तान्यंतरिक्षे चिच्छेदपौत्रस्तेनिशितैःशरैः ॥ तांश्चैवप्रतिविव्याधतदद्भुतमिवाभवत् ११ ततस्तेकोपितास्तेनशरैराशीविषोपमैः ॥ परिवव्रुर्जिघांसंतःसौभद्रमपराजितम् १२ समुद्रमिवपर्यस्तंत्वदीयंतंबलार्णवम् ॥ दधारैकोऽर्जुनिर्बाणैर्वेलेवभरतर्षभ १३ शूराणांयुध्यमानानांनिघ्नतामितरेतरम् ॥ अभिमन्योःपरेषांचनासीत्कश्चि त्पराङ्मुखः १४ तस्मिंस्तुघोरेसंग्रामेवर्तमानेभयंकरे ॥ दुःसहोनवभिर्बाणैरभिमन्युमविध्यत १५ दुःशासनोद्वादशभिःकृपःशारद्वतस्त्रिभिः ॥ द्रोणस्तुसप्त दशभिःशरैराशीविषोपमैः १६ विविंशतिस्तुसप्तत्याकृतवर्माचसप्तभिः ॥ बृहद्बलस्तथाऽष्टाभिरश्वत्थामाचसप्तभिः १७ भूरिश्रवास्त्रिभिर्बाणैर्मद्रेशःषड्भिराशु गैः ॥ द्वाभ्यांशराभ्यांशकुनिस्त्रिभिर्दुर्योधनोनृपः १८ सतुतान्प्रतिविव्याधत्रिभिस्त्रिभिरजिह्मगैः ॥ नृत्यन्निवमहाराजचापहस्तःप्रतापवान् १९ ततोऽभि मन्युःसंक्रुद्धस्त्रास्यमानस्तवात्मजैः ॥ विदर्शयन्वैसुमहच्छिक्षौरसकृतंबलम् २०

४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ पर्यस्तंउत्क्रांतमर्यादम् १३ । १४ । १५ । १६ । १७ । १८ । १९ शिक्षौरसकृतंअभ्यासकृतंनिसर्गभवंच २०

२१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ ॥ इतिद्रोणपर्वणिटीकायांसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ ७ ॥

गरुडानिलरंहोभिर्यंतुर्वाक्यकरैर्हयैः॥ दांतिरश्मकदायादस्त्वरमाणोह्यवारयत् २१ विव्याधदशभिर्बाणैस्तिष्ठतिष्ठेतिचाब्रवीत् ॥तस्याभिमन्युर्दशभिर्हयान्सूतंध्वजंशरैः २२ बाहूधनुःशिरश्चोर्व्यांस्मयमानोऽभ्यपातयत् ॥ ततस्तस्मिन्हतेवीरेसौभद्रेणाश्मकेश्वरे २३ संचचालबलंसर्वंपलायनपरायणं ॥ ततःकर्णःकृपोद्रोणोद्रौणिर्गांधारराट्शलः २४ शल्योभूरिश्रवाःक्राथःसोमदत्तोविविंशतिः ॥ वृषसेनःसुषेणश्चकुंडभेदीप्रतर्दनः २५ वृंदारकोललित्थश्चप्रबाहुर्दीर्घलोचनः ॥ दुर्योधनश्चसंक्रुद्धःशरवर्षैरवाकिरन् २६ सोऽतिविद्धोमहेष्वासैरभिमन्युरजिह्मगैः ॥ शरमादत्तकर्णायवर्मकायावभेदिनम् २७ तस्यभित्त्वातनुत्राणंदेहंनिर्भिद्यचाशुगः ॥ प्राविशद्धरणींवेगाद्वल्मीकमिवपन्नगः २८ सतेनातिप्रहारेणव्यथितोविह्वलन्निव ॥ संचचालरणेकर्णःक्षितिकंपेयथाऽचलः २९ तथान्यैर्निशितैर्बाणैःसुषेणंदीर्घलोचनम् ॥ कुंडभेदिंचसंक्रुद्धस्त्रिभिस्त्रीनवधीद्बली ३० कर्णस्तंपंचविंशत्यानाराचानांसमार्पयत् ॥ अश्वत्थामाचविंशत्याकृतवर्माचसप्तभिः ३१ सशराचितसर्वांगःक्रुद्धःशक्रात्मजात्मजः ॥ विचरन्ददृशेसैन्येपाशहस्तइवांतकः ३२ शल्यंचशरवर्षेणसमीपस्थमवाकिरत् ॥ उदक्रोशन्महाबाहुस्तवसैन्यानिभीषयन् ३३ ततःसविद्धोऽस्त्रविदामर्मभिद्भिरजिह्मगैः ॥ शल्योराजन्रथोपस्थेनिषसादमुमोहच ३४ तंहिदृष्ट्वातथाविद्धंसौभद्रेणयशस्विना ॥ संप्राद्रवच्चमूःसर्वाभारद्वाजस्यपश्यतः ३५ संप्रेक्ष्यतंमहाबाहुंरुक्मपुंखैःसमावृतम् ॥ त्वदीयाःप्रपलायंतेमृगाःसिंहार्दिताइव ३६ सतुरणयशसाऽभिपूज्यमानःपितृसुरचारणसिद्धयक्षसंघैः ॥ अवनितलगतैश्चभूतसंघैरतिविबभौहुतभुग्यथाज्यसिक्तः ३७ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणिअभिमन्युपराक्रमेसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ धृतराष्ट्रउवाच ॥ तथाप्रमथमानंतंमहेष्वासानजिह्मगैः ॥ आर्जुनिंमामकाःसंख्येकेत्वेनंसमवारयन् १ ॥ संजयउवाच ॥ ॥ शृणुराजन्कुमारस्यरणेविक्रीडितंमहत् ॥ बिभित्सतोरथानीकंभारद्वाजेनरक्षितम् २ मद्रेशंसादितंदृष्ट्वासौभद्रेणाशुगैरणे ॥ शल्यादवरजःक्रुद्धःकिरन्बाणान्समभ्ययात् ३ सविद्ध्वादशभिर्बाणैःसाश्वयंतारमार्जुनिम् ॥ उदक्रोशन्महाशब्दंतिष्ठतिष्ठेतिचाब्रवीत् ४ तस्यार्जुनिःशिरोग्रीवंपाणिपादंधनुर्हयान् ॥ छत्रंध्वजंनियंतारंत्रिवेणुंतल्पमेवच ५ चक्रंयुगंचतूणीरंह्यनुकर्षंचसायकैः ॥ पताकांचक्रगोप्तारौसर्वोपकरणानिच ६ लघुहस्तःप्रचिच्छेददद्दशेतंनकश्चन ॥ सपपातक्षितौक्षीणःप्रविद्धाभरणांबरः ७ वायुनेवमहाशैलःसंभग्नोऽमिततेजसा ॥ अनुगास्तस्यवित्रस्ताःप्राद्रवन्सर्वतोदिशः ८ आर्जुनेःकर्मतद्दृष्ट्वासंप्रणेदुःसमंततः ॥ नादेनसर्वभूतानिसाधुसाध्वितिभारत ९ शल्यभ्रातर्यथारुग्णेबहुशस्तस्यसैनिकाः ॥ कुलाधिवासनामानिश्रावयंतोऽर्जुनात्मजम् १०

तथेति १ । २ । ३ । ४ तल्पंरथगतशय्यां ५ । ६ । ७ । ८ । ९ अधिवासोनिवासः १०

अभ्यधावंतसंक्रुद्धाविविधायुधपाणयः ॥ रथैरश्वैर्गजैश्चान्येपद्भिश्चान्येबलोत्कटाः ११ बाणशब्देनमहतारथनेमिस्वनेनच ॥ हुंकारैःक्ष्वेडितोत्क्रुष्टैःसिंहनादैः
सगर्जितैः १२ ज्यातलत्रस्वनैरन्येगर्जंतोऽर्जुननंदनम् ॥ ब्रुवंतश्चननोजीवन्मोक्ष्यसेजीवितादिति १३ तांस्तथाब्रुवतोदृष्ट्वासौभद्रःप्रहसन्निव ॥ योयोऽस्मै
प्राहरत्पूर्वंतंतंविव्याधपत्रिभिः १४ संदर्शयिष्यन्नस्त्राणिविचित्राणिलघूनिच ॥ आर्जुनिःसमरेशूरोमृदुपूर्वमयुध्यत १५ वासुदेवादुपात्तंयदस्त्रंयच्चधनंजयात् ॥
अदर्शयततत्कार्ष्णिःकृष्णाभ्यामविशेषवत् १६ दूरमस्यगुरुंभारंसाध्वसंचपुनःपुनः ॥ संदधद्विसृजंश्चेषून्निर्विशेषमदृश्यत १७ चापमंडलमेवास्यविस्फुरद्दिक्ष्व
दृश्यत ॥ सुदीप्तस्यशरत्कालेसवितुर्मंडलंयथा १८ ज्याशब्दःशुश्रुवेतस्यतलशब्दश्चदारुणः ॥ महाशनिमुचःकालेपयोदस्येवनिःस्वनः १९ ह्रीमानमर्षीसौ
भद्रोमानकृत्प्रियदर्शनः ॥ संमिमानयिषुर्वीरानिष्वस्त्रैश्चाप्ययुध्यत २० मृदुर्भूत्वामहाराजदारुणःसमपद्यत ॥ वर्षाभ्यतीतोभगवान्शरदीवदिवाकरः २१ श
रान्विचित्रान्सुबहून्रुक्मपुंखाञ्शिलाशितान् ॥ मुमोचशतशःक्रुद्धोगभस्तीनिवभास्करः २२ क्षुरप्रैर्वत्सदंतैश्चविपाठैश्चमहायशाः ॥ नाराचैरर्द्धचंद्राभैर्भ
ल्लैरंजलिकैरपि २३ अवाकिरद्रथानीकंभारद्वाजस्यपश्यतः ॥ ततस्तत्सैन्यमभवद्विमुखंशरपीडितम् २४ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणि
अभिमन्युपराक्रमेअष्टत्रिंशोऽध्यायः ॥ ३८ ॥ ॥ धृतराष्ट्रउवाच ॥ द्वैधीभवतिमेचित्तंभियातुष्ट्याचसंजय ॥ ममपुत्रस्ययत्सैन्यंसौभद्रःसमवारयत् १ विस्त
रेणैवमेशंससर्वंगावल्गणेपुनः ॥ विक्रीडितंकुमारस्यस्कंदस्येवासुरैःसह २ ॥ संजयउवाच ॥ हंततेसंप्रवक्ष्यामिविमर्दमतिदारुणम् ॥ एकस्यचबहूनांचयथासीत्तु
मुलोरणः ३ अभिमन्युःकृतोत्साहःकृतोत्साहानरिंदमान् ॥ रथस्थोरथिनःसर्वांस्तावकानभ्यवर्षयत् ४ द्रोणंकर्णंकृपंशल्यंद्रौणिंभोजंबृहद्बलम् ॥ दुर्योधनंसौ
मदत्तिंशकुनिंचमहाबलम् ५ नानानृपान्नृपसुतान्सैन्यानिविविधानिच ॥ अलातचक्रवत्सर्वांश्चरन्बाणैःसमार्पयत् ६ निघ्नन्नमित्रान्सौभद्रःपरमास्त्रैःप्रताप
वान् ॥ अदर्शयततेजस्वीदिक्षुसर्वासुभारत ७ तद्दृष्ट्वाचरितंतस्यसौभद्रस्यामितौजसः ॥ समकंपंतसैन्यानित्वदीयानिसहस्रशः ८ अथाब्रवीन्महाप्राज्ञोभार
द्वाजःप्रतापवान् ॥ हर्षेणोत्फुल्लनयनःकृपमाभाष्यसत्वरम् ९ घटयन्निवमर्माणिपुत्रस्यतवभारत ॥ अभिमन्युंरणेदृष्ट्वातदारणविशारदं १० एषगच्छतिसौभद्रः
पार्थानांप्रथितोयुवा ॥ नंदयन्सुहृदःसर्वान्राजानंचयुधिष्ठिरम् ११ नकुलंसहदेवंचभीमसेनंचपांडवम् ॥ बंधून्संबंधिनश्चान्यान्मध्यस्थान्सुहृदस्तथा १२
नास्ययुद्धेसमंमन्येकंचिदन्यंधनुर्धरम् ॥ इच्छन्हन्यादिमांसेनांकिमर्थमपिनेच्छति १३ द्रोणस्यप्रीतिसंयुक्तंश्रुत्वावाक्यंतवात्मजः ॥ आर्जुनिंप्रातिसंक्रुद्धोद्रो
णंदृष्ट्वास्मयन्निव १४ अथदुर्योधनःकर्णमब्रवीद्बाल्हिकंनृपः ॥ दुःशासनंमद्रराजंतांस्तथाऽन्यान्महारथान् १५

१६ अंगेत्यसूयायां १७ धर्मिणामितिसोल्लुंठं १८ आत्मसंभावितोऽहमेवेतिसंभावनामारूढः १९ । २० । २१ । २२ । २३ २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ ॥ इतिद्रोण

सर्वमूर्धाभिषिक्तानामाचार्योब्रह्मवित्तमः ॥ अर्जुनस्यसुतंमूढंनायंहंतुमिहेच्छति १६ नह्यस्यसमरेयुद्धेदंतकोऽप्याततायिनः ॥ किमंगपुनरेवान्योमर्त्यः सत्यंब्रवीमिवः १७ अर्जुनस्यसुतंत्वेषशिष्यत्वादभिरक्षति ॥ शिष्याःपुत्राश्चदयितास्तदपत्यंचधर्मिणाम् १८ संरक्ष्यमाणोद्रोणेनमन्यतेवीर्यमात्मनः ॥ आत्मसंभावितोमूढस्तंप्रमथ्नीतमाचिरम् १९ एवमुक्तास्तुतेराज्ञासात्वतीपुत्रमभ्ययुः ॥ संरब्धास्तेजिघांसंतोभारद्वाजस्यपश्यतः २० दुःशासनस्तुतच्छ्रुत्वा दुर्योधनवचस्तदा ॥ अब्रवीत्कुरुशार्दूलदुर्योधनमिदंवचः २१ अहमेनंहनिष्यामिमहाराजब्रवीमिते ॥ मिषतांपांडुपुत्राणांपंचालानांचपश्यताम् २२ ग्रसिष्याम्यद्यसौभद्रंयथाराहुर्दिवाकरम् ॥ उत्क्रुश्यचाब्रवीद्वाक्यंकुरुराजमिदंपुनः २३ श्रुत्वाकृष्णौमयाग्रस्तंसौभद्रमतिमानिनौ ॥ गमिष्यतःप्रेतलोकंजीवलोकान्नसंशयः २४ तौचश्रुत्वामृतौव्यक्तंपांडोःक्षेत्रोद्भवाःसुताः ॥ एकाह्नाससुहृद्वर्गाःक्लैब्याद्धास्यंतिजीवितम् २५ तस्मादस्मिन्हतेशत्रौहताःसर्वेऽहितास्तव ॥ शिवेनमांध्याहिराजन्नेषहन्मिरिपूंस्तव २६ एवमुक्त्वाऽनदद्राजन्पुत्रोदुःशासनस्तव ॥ सौभद्रमभ्ययात्क्रुद्धःशरवर्षैरवाकिरन् २७ तमतिक्रुद्धमायांतंतवपुत्रमरिंदमः ॥ अभिमन्युःशरैस्तीक्ष्णैःषड्विंशत्यासमार्पयत् २८ दुःशासनस्तुसंक्रुद्धःप्रभिन्नइवकुंजरः ॥ अयोधयतसौभद्रमभिमन्युश्चतंरणे २९ तौमंडलानि चित्राणिरथाभ्यांसव्यदक्षिणम् ॥ चरमाणावयुद्धेतांरथशिक्षाविशारदौ ३० अथपणवमृदंगदुंदुभीनांक्रकचमहानकभेरिझर्झराणाम् ॥ निनदमतिभृशंनराःप्रचक्रुर्लवणजलोद्भवसिंहनादमिश्रम् ३१ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिदुःशासनयुद्धे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ ४ ॥ ॥ संजयउवाच ॥

शरविक्षतगात्रस्तुप्रत्यमित्रमवस्थितम् ॥ अभिमन्युःस्मयन्धीमान्दुःशासनमथाब्रवीत् १ दिष्ट्यापश्यामिसंग्रामेमानिनंशूरमागतम् ॥ निष्ठुरंत्यक्तधर्माणमाक्रोशनपरायणम् २ यत्सभायांत्वयाराज्ञोधृतराष्ट्रस्यशृण्वतः ॥ कोपितःपरुषैर्वाक्यैर्धर्मराजोयुधिष्ठिरः ३ जयोन्मत्तेनभीमश्चबह्वबद्धंप्रभाषितः ॥ अक्षकूटंसमाश्रित्यसौबलस्यात्मनोबलम् ४ तत्त्वयेदमनुप्राप्ततस्यकोपान्महात्मनः ॥ परवित्तापहारस्यक्रोधस्याप्रशमस्यच ५ लोभस्यज्ञाननाशस्यद्रोहस्यात्याहितस्यच ॥ पितॄणांममराज्यस्यहरणस्योग्रधन्विनाम् ६ तत्त्वयेदमनुप्राप्तंप्रकोपाद्वैमहात्मनाम् ॥ सतस्योग्रमधर्मस्यफलंप्राप्नुहिदुर्मते ७ शासितास्म्यद्यतेबाणैःसर्वसैन्यस्यपश्यतः ॥ अद्याहमनृणस्तस्यकोपस्यभवितारणे ८ अमर्षितायाःकृष्णायाःकांक्षितस्यचमेपितुः ॥ अद्यकौरव्यभीमस्यभवितास्म्यनृणोयुधि ९ नहिमेमोक्ष्यसेजीवन्यदिनोत्सृजसेरणम् ॥ एवमुक्त्वामहाबाहुर्बाणंदुःशासनांतकम् १० संदधेपरवीरघ्नःकालाग्न्यनिलवर्चसम् ॥ तस्योरस्तूर्णमासाद्यजत्रुदेशेविभिद्यतम् ११ जगामसहपुंखेनवल्मीकमिवपन्नगः ॥ अथैनंपंचविंशत्यापुनरेवसमार्पयत् १२

पर्वणिटीकायां एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ ४ ॥ ॥ शरेति १ । २ । ३ । ४ । ५ अत्याहितस्यजीवानपेक्षकर्मणः साहसस्येतियावत् ६ । ७ । ८ । ९ । १० । ११ । १२

१३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० ३१ । ३२ । ३३ । ३४

शैररग्निसमस्पर्शैराकर्णसमचोदितैः ॥ सगाढविद्धोऽव्यथितोरथोपस्थउपाविशत् १३ दुःशासनोमहाराजकश्मलंचाविशन्महत् ॥ सारथिस्त्वरमाणस्तुदुःशास
नमचेतनम् १४ रणमध्यादपोवाहसौभद्रशरपीडितम् ॥ पांडवाद्रौपदेयाश्चविराटश्चसमीक्ष्यतम् १५ पंचालाःकेकयाश्चैवसिंहनादमथानदन् ॥ वादित्राणि
चसर्वाणिनानालिंगानिसर्वशः १६ प्रावादयंतसंहृष्टाःपांडूनांतत्रसैनिकाः ॥ अपश्यन्स्मयमानाश्चसौभद्रस्यविचेष्टितम् १७ अत्यंतवैरिणंदृप्तंदृष्ट्वाशत्रुंपरा
जितम् ॥ धर्ममारुतशक्राणामश्विनोःप्रतिमास्तथा १८ धारयंतोध्वजाग्रेषुद्रौपदेयामहारथाः ॥ सात्यकिश्चेकितानश्चधृष्टद्युम्नशिखंडिनौ १९ केकयाधृष्टके
तुश्चमत्स्याःपंचालसृंजयाः ॥ पांडवाश्चमुदायुक्तायुधिष्ठिरपुरोगमाः २० अभ्यद्रवंतत्वरिताद्रोणानीकंबिभित्सवः ॥ ततोऽभवन्महायुद्धंत्वदीयानांपरैःसह ॥
२१ जयमाकांक्षमाणानांशूराणामनिवर्तिनाम् ॥ तथातुवर्तमानेवैसंग्रामेऽतिभयंकरे २२ दुर्योधनोमहाराजराधेयमिदमब्रवीत् ॥ पश्यदुःशासनंवीरमभिमन्युवशं
गतम् २३ प्रतपंतमिवादित्यंनिघ्नंतंशात्रवान्रणे ॥ अथचैतेसुसंरब्धाःसिंहाइवबलोत्कटाः २४ सौभद्रमुद्यतास्त्रातुमभ्यधावंतपांडवाः ॥ ततःकर्णःशरैस्ती
क्ष्णैरभिमन्युंदुरासदम् २५ अभ्यवर्षतसंक्रुद्धःपुत्रस्यहितकृत्तव ॥ तस्यचानुचरांस्तीक्ष्णैर्विव्याधपरमेषुभिः २६ अवज्ञापूर्वकंशूरःसौभद्रस्यरणाजिरे ॥ अभि
मन्युस्तुराधेयंत्रिसप्तत्याशिलीमुखैः २७ अविध्यत्त्वरितोराजन्द्रोणंप्रेप्सुर्महामनाः ॥ तंतथानाशकत्कश्चिद्द्रोणाद्वारयितुंरथी २८ आरुजंतंरथव्रातान्वज्रह
स्तात्मजात्मजम् ॥ ततःकर्णोजयप्रेप्सुर्मानीसर्वधनुष्मताम् २९ सौभद्रंशतशोऽविध्यदुत्तमास्त्राणिदर्शयन् ॥ सोऽस्त्रैरस्त्रविदांश्रेष्ठोरामशिष्यःप्रतापवान् ३०
समरेशत्रुदुर्धर्षमभिमन्युमपीडयत् ॥ सतथापीड्यमानस्तुराधेयेनास्त्रवृष्टिभिः ३१ समरेऽमरसंकाशःसौभद्रोनव्यशीर्यत ॥ ततःशिलाशितैस्तीक्ष्णैर्भल्लैरानतप
र्वभिः ३२ छित्त्वाधनूंषिशूराणामार्जुनिःकर्णमार्दयत् ॥ धनुर्मंडलनिर्मुक्तैःशरैराशीविषोपमैः ३३ सच्छत्रध्वजयंतारंसाश्वमाशुस्मयन्निव ॥ कर्णोऽपिचास्याचि
क्षेपबाणान्सन्नतपर्वणः ३४ असंभ्रांतश्चतान्सर्वानगृह्णात्फाल्गुनात्मजः ॥ ततोमुहूर्तात्कर्णस्यबाणेनैकेनवीर्यवान् ३५ सध्वजंकार्मुकंवीराश्छित्वाभूमावपात
यत् ॥ ततःकृच्छ्रगतंकर्णंदृष्ट्वाकर्णादनंतरः ३६ सौभद्रमभ्ययात्तूर्णंदृढमुद्यम्यकार्मुकम् ॥ ततउच्चुक्रुशुःपार्थास्तेषांचानुचराजनाः ॥ वादित्राणिचसंजघ्नुःसौ
भद्रंचापितुष्टुवुः ३७ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणिकर्णदुःशासनपराक्रमेचत्वारिंशोऽध्यायः ॥ ४० ॥ संजयउवाच ॥ सोऽतिगर्जन्धनु
ष्पाणिर्ज्यांविकर्षन्पुनःपुनः ॥ तयोर्महात्मनोस्तूर्णंरथांतरमवापतत् १ सोऽविध्यद्दशभिर्बाणैरभिमन्युंदुरासदम् ॥ सच्छत्रध्वजयंतारंसाश्वमाशुस्मयन्निव २
पितृपैतामहंकर्मकुर्वाणमतिमानुषम् ॥ दृष्ट्वाऽर्दितंशरैःकार्ष्णिंत्वदीयाहर्षिताऽभवन् ३ तस्याभिमन्युरायम्यस्मयन्नेकेनपत्रिणा ॥ शिरःप्रच्यावयामासतद्र
थात्प्रापतद्भुवि ४

३५ । ३६ । ३७ । इतिद्रोणपर्वणिटीकायांचत्वारिंशोऽध्यायः ॥ ४० ॥ ॥ ७ ॥ सइति १ । २ । ३ । ४

५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ २० । २१ । २२ । २३ । २४ । २५ । २६ ॥ इतिद्रोणपर्वणिटीकायांएकचत्वारिंशोऽध्यायः ॥ ४१ ॥



कर्णिकारमिवाधूतंवातेनापतितंनगात् ॥ भ्रातरंनिहतंदृष्ट्वाराजन्कर्णोव्यथांययौ ५ विमुखीकृत्यकर्णंतुसौभद्रःकंकपत्रिभिः ॥ अन्यानपिमहेष्वासांस्तूर्णमेवाभिदुद्रुवे ६ ततस्तद्वितंसैन्यंहस्त्यश्वरथपत्तिमत् ॥ क्रुद्धोऽभिमन्युरभिनत्तिग्मतेजामहारथः ७ कर्णस्तुबहुभिर्बाणैरर्द्यमानोऽभिमन्युना ॥ अपायाज्जवनैरश्वैस्ततोऽनीकमभज्यत ८ शलभैरिवचाकाशेधाराभिरिवचावृते ॥ अभिमन्योःशरैराजन्नप्राज्ञायतकिंचन ९ तावकानांतुयोधानांवध्यतांनिशितैःशरैः ॥ अन्यत्रसैंधवाद्राजन्नस्मकश्चिदतिष्ठत १० सौभद्रस्तुततःशंखंप्रध्माप्यपुरुषर्षभः ॥ शीघ्रमभ्यपतत्सेनांभारतींभरतर्षभ ११ सकक्षेग्निरिवोत्सृष्टोनिर्दहंस्तरसारिपून् ॥ मध्येभारतसैन्यानामार्जुनिःपर्यवर्तत १२ रथनागाश्वमनुजानर्दयन्निशितैःशरैः ॥ संप्रविश्याकरोद्भूमिंकबंधगणसंकुलाम् १३ सौभद्रचापप्रभवैर्निकृत्ताःपरमेषुभिः ॥ स्वानेवाभिमुखान्घ्नंतःप्राद्रवन्जीवितार्थिनः १४ तेघोरारौद्रकर्माणोविपाठाबहवःशिताः ॥ निघ्नंतोरथनागाश्वान्जग्मुराशुवसुंधराम् १५ सायुधाःसांगुलित्राणाःसगदाःसांगदारणे ॥ दृश्यंतेबाहवश्छिन्नाहेमाभरणभूषिताः १६ शराश्चापानिखड्गाश्चशरीराणिशिरांसिच ॥ सकुंडलानिस्रग्वीणिभूमावासन्सहस्रशः १७ सोपस्करैरधिष्ठानैरीषादंडैश्चबंधुरैः ॥ अक्षैर्विमथितैश्चक्रैर्बहुधापतितैर्युगैः १८ शक्तिचापासिभिश्चैवपतितैश्चमहाध्वजैः ॥ चर्मचापशरैश्चैवव्यवकीर्णैःसमंततः १९ निहतैःक्षत्रियैरश्वैर्वारणैश्चविशांपते ॥ अगम्यरूपापृथिवीक्षणेनासीत्सुदारुणा २० वध्यतांराजपुत्राणांक्रंदतामितरेतरम् ॥ प्रादुरासीन्महाशब्दोभीरूणांभयवर्धनः २१ सशब्दोभरतश्रेष्ठदिशःसर्वाव्यनादयत् ॥ सौभद्रश्चाद्रवत्सेनांघ्नन्वराश्वरथद्विपान् २२ कक्षमग्निरिवोत्सृष्टोनिर्दहंस्तरसारिपून् ॥ मध्येभारतसैन्यानामार्जुनिःप्रत्यदृश्यत २३ विचरंतंदिशःसर्वाःप्रदिशश्चापिभारत ॥ तंतदानानुपश्यामःसैन्येचरजसाऽऽवृते २४ आददानंगजाश्वानांनृणांचायूंषिभारत ॥ क्षणेनभूयःपश्यामःसूर्यंमध्यंदिनेयथा २५ अभिमन्युंमहाराजप्रतपंतंद्विषद्गणान् ॥ सत्रासवसमःसंख्येवासवस्यात्मजात्मजः ॥ अभिमन्युर्महाराजसैन्यमध्येव्यरोचत २६ ॥ इतिश्रीमहाभारतेद्रोणपर्व० अभिमन्युवधपर्वणिअभिमन्युपराक्रमेएकचत्वारिंशोऽध्यायः ॥ ४१ ॥

धृतराष्ट्रउवाच ॥ बालमत्यंतसुखिनंस्वबाहुबलदर्पितम् ॥ युद्धेषुकुशलंवीरंकुलपुत्रंतनुत्यजम् १ गाहमानमनीकानिसदश्वैस्त्रिहायनैः ॥ अपियौधिष्ठिरात्सैन्यात्कश्चिदन्वपतद्बली २ ॥ संजयउवाच ॥ युधिष्ठिरोभीमसेनःशिखंडीसात्यकिर्यमौ ॥ धृष्टद्युम्नोविराटश्चद्रुपदश्चसकेकयः ३ धृष्टकेतुश्चसंरब्धोमत्स्याश्चाभ्यपतन्रणे ॥ तेनैवतुपथायांतःपितरोमातुलैःसह ४ अभ्यद्रवन्परीप्संतोव्यूढानीकाःप्रहारिणः ॥ तान्दृष्ट्वाद्रवतःशूरांस्त्वदीयाविमुखाऽभवन् ५ ततस्तद्विमुखंदृष्ट्वातवसूनोर्महद्बलम् ॥ जामातातवतेजस्वीसंस्तंभयिषुराद्रवत् ६

बालमिति १ । २ । ३ । ४ । ५ । ६

७ प्रवणान्निम्नप्रदेशंप्राप्य ८ । ९ बलंसामर्थ्यं शौर्यमुत्साहः वीर्यंप्रभावम् १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १८ । १९ । २० । २१ । २२ ॥ इतिद्रोणपर्वणिटीकायां

सैंधवस्यमहाराजपुत्रोराजाजयद्रथः ॥ सपुत्रगृद्धिनःपार्थान्सहसैन्यानवारयत् ७ उग्रधन्वामहेष्वासोदिव्यमस्त्रमुदीरयन् ॥ वार्धक्षत्रिरुपासेधत्प्रवणादिवकुंज
रः ८ ॥ धृतराष्ट्रउवाच ॥ अतिभारमहंमन्येसैंधवेसंजयाहितम् ॥ यदेकःपांडवान्क्रुद्धान्पुत्रप्रेप्सूनवारयत् ९ अत्यद्भुतमहंमन्येबलंशौर्यंचसैंधवे ॥ तस्यप्र
ब्रूहिमेवीर्यंकर्मचाग्र्यंमहात्मनः १० किंदत्तंहुतमिष्टंवाकिंसुतप्तमथोततः ॥ सिंधुराजोहियेनैकःपांडवान्समवारयत् ११ ॥ संजयउवाच ॥ द्रौपदीहरणेयत्तद्भी
मसेनेननिर्जितः ॥ मानात्सतप्तवान्राजावरार्थीसुमहत्तपः १२ इंद्रियाणींद्रियार्थेभ्यःप्रियेभ्यःसन्निवर्त्यसः ॥ क्षुत्पिपासातपसहःकृशोधमनिसंततः १३ देव
माराधयच्छर्वंगृणन्ब्रह्मसनातनम् ॥ भक्तानुकंपीभगवांस्तस्यचक्रेततोदयाम् १४ स्वप्नांतेऽप्यथचैवाहहरःसिंधुपतेःसुतम् ॥ वरंवृणीष्वप्रीतोऽस्मिजयद्रथ
किमिच्छसि १५ एवमुक्तस्तुशर्वेणसिंधुराजोजयद्रथः ॥ उवाचप्रणतोरुद्रंप्रांजलिर्नियतात्मवान् १६ पांडवेयानहंसंख्येभीमवीर्यपराक्रमान् ॥ वारयेयंरथेनै
कःसमस्तानितिभारत १७ एवमुक्तस्तुदेवेशोजयद्रथमथाब्रवीत् ॥ ददामितेवरंसौम्यविनापार्थंधनंजयम् १८ वारयिष्यसिसंग्रामेचतुरःपांडुनंदनान् ॥ एव
मस्त्वितिदेवेशमुक्त्वाऽबुध्यतपार्थिवः १९ सतेनवरदानेनदिव्येनास्त्रबलेनच ॥ एकःसंवारयामासपांडवानामनीकिनीम् २० तस्यज्यातलघोषेणक्षात्रियान्भय
माविशत् ॥ परांस्तुतवसैन्यस्यहर्षःपरमकोऽभवत् २१ दृष्ट्वातुक्षत्रियाभारंसैंधवेसर्वमाहितम् ॥ उत्क्रुश्याभ्यद्रवन्राजन्येनयौधिष्ठिरंबलम् २२ ॥ इतिश्री
महाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणि जयद्रथयुद्धेद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ ॥ संजयउवाच ॥ यन्मांपृच्छसिराजेंद्रसिंधुराजस्यविक्रमम् ॥
शृणुतत्सर्वमाख्यास्येयथापांडूनयोधयत् १ तमूहुर्वाजिनोवश्याःसैंधवाःसाधुवाहिनः ॥ विकुर्वाणाबृहंतोश्वाःश्वसनोपमरंहसः २ गंधर्वनगराकारंविधिवत्कल्पि
तंरथम् ॥ तस्याभ्यशोभयत्केतुर्वाराहोराजतोमहान् ३ श्वेतच्छत्रपताकाभिश्चामरव्यजनेनच ॥ सबभौराजलिंगैस्तैस्तारापतिरिवांबरे ४ मुक्तावज्रमणिस्व
र्णैर्भूषितंतमयस्मयम् ॥ वरूथंविबभौतस्यज्योतिर्भिःखमिवावृतम् ५ सविस्फार्यमहच्चापंकिरन्निषुगणान्बहून् ॥ तत्खंडंपूरयामासयद्व्यदारयदार्जुनिः ६
ससात्यकिंत्रिभिर्बाणैरष्टभिश्चवृकोदरम् ॥ धृष्टद्युम्नंतथाषष्ट्याविराटंदशभिःशरैः ७ द्रुपदंपंचभिस्तीक्ष्णैःसप्तभिश्चशिखंडिनम् ॥ केकयान्पंचविंशत्याद्रौपदे
यांस्त्रिभिस्त्रिभिः ८ युधिष्ठिरंतुसप्तत्याततःशेषानपानुदत् ॥ इषुजालेनमहतातदद्भुतमिवाभवत् ९ अथास्यशितपीतेनभल्लेनादिश्यकार्मुकम् ॥ चिच्छेदप्र
हसन्राजाधर्मपुत्रःप्रतापवान् १० अक्ष्णोर्निमेषमात्रेणसोऽन्यदादायकार्मुकम् ॥ विव्याधदशभिःपार्थंतांश्चैवान्यांस्त्रिभिस्त्रिभिः ११ ततस्यलाघवंज्ञात्वाभी
मोभल्लैस्त्रिभिस्त्रिभिः ॥ धनुर्ध्वजंचच्छत्रंचक्षितौक्षिप्रमपातयत् १२

द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ ॥ ७ ॥ ॥ यदिति १ । २ । ३ । ४ वरूथंरथवेष्टनम् ५ । ६ । ७ । ८ । ९ आदिश्यएषच्छिन्नमित्युद्दिश्य १० । ११ । १२

१३ । १४ । १५ । १६ । १७ । १८ । १९ ॥ इतिद्रोणपर्वणिटीकायांत्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ ॥ ७ ॥ ॥ सैंधवेनेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८

सोऽन्यदादायबलवान्सज्जंकृत्वाचकार्मुकं ॥ भीमस्यापातयत्केतुंधनुरश्वांश्चमारिष १३ सहताश्वादवप्लुत्यच्छिन्नधन्वारथोत्तमात् ॥ सात्यकेराप्लुतोयानंगिर्यग्रमिवकेसरी १४ ततस्त्वदीयाःसंहृष्टाःसाधुसाध्वितिवादिनः ॥ सिंधुराजस्यतत्कर्मप्रेक्ष्याश्रद्धेयमद्भुतम् १५ संक्रुद्धान्पांडवानेकोयद्दधारास्त्रतेजसा ॥ ततस्यकर्मभूतानिसर्वाण्येवाभ्यपूजयन् १६ सौभद्रेणहतैःपूर्वंसोत्तरायोधिभिर्द्विपैः ॥ पांडूनांदर्शितःपंथाःसैंधवेननिवारितः १७ यतमानास्तुतेवीरामत्स्यपंचालकेकयाः ॥ पाण्डवाश्चान्वपद्यंतप्रतिशेकुर्नसैंधवम् १८ योयोहियततेभेत्तुंद्रोणानीकंतवाहितः ॥ तंतमेववरंप्राप्यसैंधवःप्रत्यवारयत् १९ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणिजयद्रथयुद्धेत्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ ॥ संजयउवाच ॥ सैंधवेननिरुद्धेषुजयगृद्धिषुपांडुषु ॥ सुघोरमभवद्युद्धंत्वदीयानांपरैःसह १ प्रविश्याथार्जुनिःसेनांसत्यसंधोदुरासदः ॥ व्यक्षोभयततेजस्वीमकरःसागरंयथा २ तंतथाशरवर्षेणक्षोभयंतमरिंदमम् ॥ यथाप्रधानाःसौभद्रमभ्ययूरथसत्तमाः ३ तेषांतस्यचसंमर्दोदारुणःसमपद्यत ॥ सृजतांशरवर्षाणिप्रसक्तममितौजसाम् ४ रथव्रजेनसंरुद्धस्तैरमित्रैस्तथार्जुनिः ॥ वृषसेनस्ययंतारंहत्वाचिच्छेदकार्मुकम् ५ तस्यविव्याधबलवान्शरैरश्वानजिह्मगैः ॥ वातायमानैरथतैरश्वैरपहृतोरणात् ६ तेनांतरेणाभिमन्योर्यंताऽपासारयद्रथम् ॥ रथव्रजास्ततोहृष्टाःसाधुसाध्वितिचुक्रुशुः ७ तंसिंहमिवसंक्रुद्धंप्रमथ्नंतंशरैररीन् ॥ आरादायांतमभ्येत्यवसातीयोऽभ्ययाद्द्रुतम् ८ सोऽभिमन्युंशरैःषष्ट्याचरुक्मपुंखैरवाकिरत् ॥ अब्रवीच्चनमेजीवन्जीवतोयुधिमोक्ष्यसे ९ तमयस्मयवर्माणमिषुणादूरपातिना ॥ विव्याधहृदिसौभद्रःसपपातव्यसुःक्षितौ १० वसातीयंहतंदृष्ट्वाक्रुद्धाःक्षत्रियपुंगवाः ॥ परिवव्रुस्तदाराजंस्तवपौत्रंजिघांसवः ११ विस्फारयंतश्चापानिनानारूपाण्यनेकशः ॥ तद्युद्धमभवद्रौद्रंसौभद्रस्यारिभिःसह १२ तेषांशरान्सेष्वसनान्शरीराणिशिरांसिच ॥ सकुंडलानिस्रग्वीणिक्रुद्धश्चिच्छेदफाल्गुनिः १३ सखड्गाःसांगुलित्राणाःसपट्टिशपरश्वधाः ॥ अपश्यंतभुजाश्छिन्नाहेमाभरणभूषिताः १४ स्रग्भिराभरणैर्वस्त्रैःपातितैश्चमहाभुजैः ॥ वर्मभिश्चर्मभिर्हारैर्मुकुटैश्छत्रचामरैः १५ उपस्करैरधिष्ठानैरीषादंडकबंधुरैः ॥ अक्षैर्विमथितैश्चक्रैर्भग्नैश्चबहुधायुगैः १६ अनुकर्षैःपताकाभिस्तथासारथिवाजिभिः ॥ रथैश्चभग्नैर्नागैश्चहतैःकीर्णाऽभवन्मही १७ निहतैःक्षत्रियैःशूरैर्नानाजनपदेश्वरैः ॥ जयगृद्धैर्वृताभूमिर्दारुणासमपद्यत १८ दिशोविचरतस्तस्यसर्वाश्चप्रदिशस्तथा ॥ रणेऽभिमन्योःक्रुद्धस्यरूपमंतरधीयत १९ कांचनंयद्यदस्यासीद्वर्मचाभरणानिच ॥ धनुषश्चशराणांचतदपश्यामकेवलम् २० तंतदानाशकत्कश्चिच्चक्षुर्भ्यामभिवीक्षितुम् ॥ आददानंशरैर्योधान्मध्येसूर्यमिवस्थितम् २१ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणि अभिमन्युपराक्रमेचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ॥ ७ ॥

९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ ॥ इतिद्रोणपर्वणिटीकायां चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ॥ ७ ॥

आददानइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० आयच्छत्प्रयुक्तवान् रथमायांदुर्लक्ष्यांरथशिक्षां २१ । २२

॥ संजयउवाच ॥ आददानस्तुशूराणामायूंष्यभवदार्जुनिः ॥ अंतकःसर्वभूतानांप्राणान्कालइवागते १ सशक्रइवविक्रांतःशक्रसूनोःसुतोबली ॥ अभिमन्युस्त दानीकंलोडयन्समदृश्यत २ प्रविश्यैवतुराजेंद्रक्षत्रियेंद्रांतकोपमः ॥ सत्यश्रवसमादत्तव्याघ्रोमृगमिवोल्बणः ३ सत्यश्रवसिचाक्षिप्तेत्वरमाणामहारथाः ॥ प्रगृ ह्यविपुलंशस्त्रमभिमन्युमुपाद्रवन् ४ अहंपूर्वमहंपूर्वमितिक्षत्रियपुंगवाः ॥ स्पर्धमानाःसमाजग्मुर्जिघांसंतोऽर्जुनात्मजम् ५ क्षत्रियाणामनीकानिप्रद्रुतान्यभि धावताम् ॥ जग्राहतिमिरासाद्यक्षुद्रमत्स्यानिवार्णवे ६ येकेचनगतास्तस्यसमीपमपलायिनः ॥ नतेप्रतिन्यवर्तंतसमुद्रादिवसिंधवः ७ महाग्राहगृहीतेववात वेगभयार्दिता ॥ समकंपतसासेनाविभ्रष्टानौरिवार्णवे ८ अथरुक्मरथोनाममद्रेश्वरसुतोबली ॥ त्रस्तामाश्वासयन्सेनामत्रस्तोवाक्यमब्रवीत् ९ अलंत्रासेन वःशूरानैषकश्चिन्मयिस्थिते ॥ अहमेनंग्रहीष्यामिजीवग्राहंनसंशयः १० एवमुक्त्वातुसौभद्रमभिदुद्राववीर्यवान् ॥ सुकल्पितेनोह्यमानःस्यंदनेनविराजता ११ सोऽभिमन्युंत्रिभिर्बाणैर्विद्ध्वावक्षस्यथानदत् ॥ त्रिभिश्चदक्षिणेबाहौसव्येचनिशितैस्त्रिभिः १२ सतस्येष्वसनंछित्वाफाल्गुनिःसव्यदक्षिणौ ॥ भुजौशिरश्चस्व क्षिभ्रुक्षितौक्षिप्रमपातयत् १३ दृष्ट्वारुक्मरथंरुग्णंपुत्रंशल्यस्यमानिनम् ॥ जीवग्राहंजिघृक्षंतंसौभद्रेणयशस्विना १४ संग्रामदुर्मदाराजन्राजपुत्राःप्रहारिणः ॥ वयस्याःशल्यपुत्रस्यसुवर्णविकृतध्वजाः १५ तालमात्राणिचापानिविकर्षंतोमहाबलाः ॥ आर्जुनिंशरवर्षेणसमंतात्पर्यवारयन् १६ शूरैःशिक्षाबलोपेतैस्तरुणै रत्यमर्षणैः ॥ दृष्ट्वैकंसमरेशूरंसौभद्रमपराजितम् १७ छाद्यमानंशरव्रातैर्हृष्टोदुर्योधनोऽभवत् ॥ वैवस्वतस्यभवनंगतंह्येनममन्यत १८ सुवर्णपुंखैरिषुभिर्नाना लिंगैःसुतेजनैः ॥ अदृश्यमार्जुनिंचक्रुर्निमेषात्तेनृपात्मजाः १९ससूताश्वध्वजंतस्यस्यंदनंतंचमारिष ॥ आचितंसमपश्यामश्वाविधंशललैरिव २० सगाढ विद्धःक्रुद्धश्चतोत्त्रैर्गजइवार्दितः ॥ गांधर्वमस्त्रमायच्छद्रथमायांचभारत २१ अर्जुनेनतपस्तप्त्वागंधर्वेभ्योयदाहृतम् ॥ तुंबुरुप्रमुखेभ्योवैतेनामोहयताहितान् २२ एकधाशतधाराजन्दृश्यतेस्मसहस्रधा ॥ अलातचक्रवत्संख्येक्षिप्रमस्त्राणिदर्शयन् २३ रथचर्यास्त्रमायाभिर्मोहयित्वापरंतपः ॥ बिभेदशतधाराजन्शरीरा णिमहीक्षिताम् २४ प्राणाःप्राणभृतांसंख्येप्रेषितानिशितैःशरैः ॥ राजन्प्रापुरमुंलोकंशरीराण्यवनिंययुः २५ धनूंष्यश्वान्नियंतॄंश्चध्वजान्बाहूंश्चसांगदान् ॥ शिरांसिचशितैर्बाणैस्तेषांचिच्छेदफाल्गुनिः २६ चूतारामोयथाभग्नःपंचवर्षःफलोपगः ॥ राजपुत्रशतंतद्वत्सौभद्रेणनिपातितम् २७ क्रुद्धाशीविषसंकाशा न्सुकुमारान्सुखोचितान् ॥ एकेननिहतान्दृष्ट्वाभीतोदुर्योधनोऽभवत् २८ रथिनःकुंजरानश्वान्पदातींश्चापिमज्जतः ॥ दृष्ट्वादुर्योधनःक्षिप्रमुपायात्तममर्षितः २९ तयोःक्षणमिवापूर्णःसंग्रामःसमपद्यत ॥ अथाभवत्तेविमुखःपुत्रःशरशताहतः ३० ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणिदुर्योधनपराजयेपंचचत्वा रिंशोऽध्यायः ॥ ४५ ॥

२३ । २४ । २५ । २६ फलोपगःफलोन्मुखः २७ । २८ । २९ । ३० ॥ इतिद्रोणपर्वणिटीकायांपंचचत्वारिंशोऽध्यायः ॥ ४५ ॥

यथेति १ । २ प्रतिपत्तिंप्रतिविधानं ३ । ४ । ५ । ६ । ७ । ८ । ९ विष्वग्वातोऽशेषदिग्वातः १० । ११ । १२ । १३ । १४ । १५ । १६ केशांतंकेशैर्मनोहरं 'अंतःप्रांतेऽतिकेमध्येस्वरूपे

॥ धृतराष्ट्रउवाच ॥ यथावदसिमेसूतएकस्यबहुभिःसह ॥ संग्रामंतुमुलंघोरंजयंचैवमहात्मनः १ अश्रद्धेयमिवाश्चर्यंसौभद्रस्याथविक्रमम् ॥ किंतुनात्यद्भुतंते षांयेषांधर्मोव्यपाश्रयः २ दुर्योधनेचविमुखेराजपुत्रशतेहते ॥ सौभद्रेप्रतिपत्तिंकांप्रत्यपद्यंतमामकाः ३ ॥ संजयउवाच ॥ संशुष्कास्याश्चलन्नेत्राःप्रस्विन्ना लोमहर्षणाः ॥ पलायनकृतोत्साहानिरुत्साहाद्विषज्जये ४ हतान्भ्रातॄन्पितॄन्पुत्रान्सुहृत्संबंधिबांधवान् ॥ उत्सृज्योत्सृज्यसंजग्मुस्त्वरयंतोहयद्विपान् ५ तान्प्रभग्नांस्तथादृष्ट्वाद्रोणोद्रौणिर्बृहद्बलः ॥ कृपोदुर्योधनःकर्णःकृतवर्माऽथसौबलः ६ अभ्यधावन्सुसंक्रुद्धाःसौभद्रमपराजितम् ॥ तेतुपौत्रेणतेराजन्प्रायशो विमुखीकृताः ७ एकस्तुसुखसंवृद्धोबाल्याद्दर्पाच्चनिर्भयः ॥ इष्वस्त्रविन्महातेजालक्ष्मणोऽर्जुनिमभ्ययात् ८ तमन्वगेवास्यपितापुत्रगृद्धीन्यवर्तत ॥ अनुदु र्योधनंचान्येन्यवर्तंतमहारथाः ९ तंतेऽभिषिषिचुर्बाणैर्मेघागिरिमिवांबुभिः ॥ सतुतान्प्रममाथैकोविष्वग्वातोयथाऽम्बुदान् १० पौत्रंतवचदुर्धर्षंलक्ष्मणंप्रियद र्शनम् ॥ पितुःसमीपेतिष्ठंतंशूरमुद्यतकार्मुकम् ११ अत्यंतसुखसंवृद्धंधनेश्वरसुतोपमम् ॥ आससादरणेकार्ष्णिर्मत्तोमत्तमिवद्विपम् १२ लक्ष्मणेनतुसंगम्य सौभद्रःपरवीरहा ॥ शरैःसुनिशितैस्तीक्ष्णैर्बाह्वोरुरसिचार्पयत् १३ संक्रुद्धोवैमहाराजदंडाहतइवोरगः ॥ पौत्रस्तवमहाराजतवपौत्रमभाषत १४ सुदृष्टःक्रि यतांलोकोह्यमुंलोकंगमिष्यसि ॥ पश्यतांबांधवानांत्वांनयामियमसादनम् १५ एवमुक्त्वाततोभल्लंसौभद्रःपरवीरहा ॥ उद्बबर्हमहाबाहुर्निर्मुक्तोरगसन्निभम् १६ सतस्यभुजनिर्मुक्तोलक्ष्मणस्यसुदर्शनम् ॥ सुनसंसुभ्रुकेशांतंशिरोऽहार्षीत्सकुंडलम् १७ लक्ष्मणंनिहतंदृष्ट्वाहाहेत्युच्चुक्रुशुर्जनाः ॥ ततोदुर्योधनःक्रुद्धःप्रियेपु त्रेनिपातिते १८ हतैनमितिचुक्रोशक्षत्रियान्क्षत्रियर्षभः ॥ ततोद्रोणःकृपःकर्णोद्रोणपुत्रोबृहद्बलः १९ कृतवर्माचहार्दिक्यःषड्रथाःपर्यवारयन् ॥ तांस्तुवि द्धाशितैर्बाणैर्विमुखीकृत्यचार्जुनिः २० वेगेनाभ्यपतत्क्रुद्धःसैंधवस्यमहद्बलम् ॥ आवव्रुस्तस्यपंथानंगजानीकेनदंशिताः २१ कलिंगाश्चनिषादाश्चक्राथपु त्रश्चवीर्यवान् ॥ तत्प्रसक्तमिवात्यर्थंयुद्धमासीद्विशांपते २२ ततस्तत्कुंजरानीकंव्यधमद्धृष्टमार्जुनिः ॥ यथावायुर्नित्यगतिर्जलदान्शतशोंऽबरे २३ ततःक्रा थःशरव्रातैरार्जुनिंसमवाकिरत् ॥ अथेतरेसन्निवृत्ताःपुनर्द्रोणमुखारथाः २४ परमास्त्राणिधुन्वानाःसौभद्रमभिदुद्रुवुः ॥ तान्निवार्यार्जुनिर्बाणैःक्राथपुत्रमथार्द यत् २५ शरौघेणाप्रमेयेणत्वरमाणोजिघांसया ॥ सधनुर्बाणकेयूरौबाहूसमुकुटंशिरः २६ सच्छत्रध्वजयंतारंरथंचाश्वान्यपातयत् ॥ कुलशीलश्रुतिबलैःकी र्त्याचास्त्रबलेनच ॥ युक्तेतस्मिन्हतेवीराःप्रायशोविमुखाऽभवन् २७ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणिलक्ष्मणवधे षट्चत्वारिंशोऽध्यायः ॥ ॥ ४६ ॥ ॥ ७ ॥ ॥ धृतराष्ट्रउवाच ॥ तथाप्रविष्टंतरुणंसौभद्रमपराजितम् ॥ कुलानुरूपंकुर्वाणंसंग्रामेष्वपराजितम् १

चमनोहरे' इत्यभिधानात् १७ । १८ । १९ । २० । २१ । २२ धृष्टंप्रगल्भम् २३ । २४ । २५ । २६ । २७ ॥ इतिद्रोणपर्वणिटीकायांषट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥ तथेति १

२ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ ॥ इतिद्रोणपर्वणिटीकायां सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

आजानेयैःसुबलिभिर्यांतमश्वैस्त्रिहायनैः ॥ प्लवमानमिवाकाशेकेशूराःसमवारयन् २ ॥ संजयउवाच ॥ अभिमन्युःप्रविश्यैतांस्तावकान्निशितैःशरैः ॥ अक रोत्पार्थिवान्सर्वान्विमुखान्पांडुनंदनः ३ तंतुद्रोणःकृपःकर्णोद्रौणिश्चसबृहद्बलः ॥ कृतवर्माचहार्दिक्यःषड्रथाःपर्यवारयन् ४ दृष्ट्वातुसैंधवेभारमतिमात्रंसमाहि तम् ॥ सैन्यंतवमहाराजयुधिष्ठिरमुपाद्रवत् ५ सौभद्रमितरेवीरमभ्यवर्षन्शरांबुभिः ॥ तालमात्राणिचापानिविकर्षंतोमहाबलाः ६ तांस्तुसर्वान्महेष्वासा न्सर्वविद्यासुनिष्ठितान् ॥ व्यष्टंभयद्रणेबाणैःसौभद्रःपरवीरहा ७ द्रोणंपंचाशताऽविध्यद्विंशत्याचबृहद्बलम् ॥ अशीत्याकृतवर्माणंकृपंषष्ट्याशिलीमुखैः ८ रु क्मपुंखैर्महावेगैराकर्णसमचोदितैः ॥ अविध्यद्दशभिर्बाणैरश्वत्थामानमार्जुनिः ९ सकर्णंकर्णिनाकर्णेपीतेनचशितेनच ॥ फाल्गुनिर्द्विषतांमध्येविव्याधपरमे षुणा १० पातयित्वाकृपस्याश्वांस्तथोभौपार्ष्णिसारथी ॥ अथैनंदशभिर्बाणैःप्रत्यविध्यत्स्तनांतरे ११ ततोवृंदारकंवीरंकुरूणांकीर्तिवर्द्धनम् ॥ पुत्राणांतव वीराणांपश्यतामवधीद्बली १२ तंद्रौणिःपंचविंशत्याक्षुद्रकाणांसमार्पयत् ॥ वरंवरममित्राणामारुजंतमभीतवत् १३ सतुबाणैःशितैस्तूर्णंप्रत्यविध्यतमारिष ॥ पश्यतांधार्तराष्ट्राणामश्वत्थामानमार्जुनिः १४ षष्ट्याशराणांतंद्रौणिस्तिग्मधारैःसुतेजनैः ॥ उग्रैर्नाकंपयद्विद्ध्वामैनाकमिवपर्वतम् १५ सतुद्रौणिंत्रिसप्त त्याहेमपुंखैरजिह्मगैः ॥ प्रत्यविध्यन्महातेजाबलवानपकारिणम् १६ तस्मिन्द्रोणोबाणशतंपुत्रगृद्धीन्यपातयत् ॥ अश्वत्थामातथाऽष्टौचपरीप्सन्पितरंरणे १७ कर्णोद्वाविंशतिंभल्लान्कृतवर्माचविंशतिं ॥ बृहद्बलस्तुपंचाशत्कृपःशारद्वतोदश १८ तांस्तुप्रत्यवधीत्सर्वान्दशभिर्दशभिःशरैः ॥ तैरर्द्यमानःसौभद्रःसर्व तोनिशितैःशरैः १९ तंकोसलानामधिपःकर्णिनाऽताडयद्धृदि ॥ सतस्याश्वान्ध्वजंचापंसूतंचापातयत्क्षितौ २० अथकोसलराजस्तुविरथःखड्गवर्मधृत् ॥ इ येषफाल्गुनेःकायाच्छिरोहर्तुंसकुंडलम् २१ सकोसलानामधिपंराजपुत्रंबृहद्बलम् ॥ हृदिविव्याधबाणेनसभिन्नहृदयोऽपतत् २२ बभंजचसहस्राणिदशराज्ञांमहा त्मनाम् ॥ सृजतामशिवावाचःखड्गकार्मुकधारिणाम् २३ तथाबृहद्बलंहत्वासौभद्रोव्यचरद्रणे ॥ व्यष्टंभयन्महेष्वासोयोधांस्तवशरांबुभिः २४ ॥ इतिश्रीम हाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणिबृहद्बलवधे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥ छ ॥ ॥ संजयउवाच ॥ सकर्णंकर्णिनाकर्णेपुनर्विव्याधफाल्गु निः ॥ शरैःपंचाशताचैनमविध्यत्कोपयन्भृशम् १ प्रतिविव्याधराधेयस्तावद्भिरथतंपुनः ॥ शरैराचितसर्वांगोबह्वशोभतभारत २ कर्णंचाप्यकरोत्क्रुद्धोरु धिरोत्पीडवाहिनम् ॥ कर्णोपिविबभौशूरःशरैश्छिन्नोऽसृगाप्लुतः ३ तावुभौशरचित्रांगौरुधिरेणसमुक्षितौ ॥ बभूवतुर्महात्मानौपुष्पिताविवकिंशुकौ ४ अथक र्णस्यसचिवान्षट्शूरांश्चित्रयोधिनः ॥ साश्वसूतध्वजरथान्सौभद्रोनिजघानह ५

सकर्णमिति १ । २ । ३ । ४ । ५

तथेतरान्महेष्वासान्दशभिर्दशभिः शरैः ॥ प्रत्यविध्यदसंभ्रांतस्तदद्भुतमिवाभवत् ६ मागधस्यतथापुत्रंहत्वाषड्भिराजिह्मगैः ॥ साश्वंससूतंतरुणमश्वकेतुमपात
यत् ७ मार्तिकावतकंभोजंततःकुंजरकेतनम् ॥ क्षुरप्रेणसमुन्मथ्यननादविसृजन्शरान् ८ तस्यदौःशासनिर्विद्ध्वाचतुर्भिश्चतुरोहयान् ॥ सूतमेकेनविव्याधद
शभिश्चार्जुनात्मजम् ९ ततोदौःशासनिंकार्ष्णिर्विद्ध्वासप्तभिराशुगैः ॥ संरंभाद्रक्तनयनोवाक्यमुच्चैरथाब्रवीत् १० पितातवाहवंत्यक्त्वागतःकापुरुषोयथा ॥
दिष्ट्यात्वमपिजानीषेयोद्धुंनत्वद्यमोक्ष्यसे ११ एतावदुक्त्वावचनंकर्मारपरिमार्जितम् ॥ नाराचंविससर्जास्मैतंद्रौणिस्त्रिभिराच्छिनत् १२ तस्यार्जुनिर्ध्वजंछि
त्त्वाशल्यंत्रिभिरताडयत् ॥ तंशल्योनवभिर्बाणैर्गार्ध्रपत्रैरताडयत् १३ हृद्यसंभ्रांतवद्राजंस्तदद्भुतमिवाभवत् ॥ तस्यार्जुनिर्ध्वजंछित्त्वाहत्वोभौपार्ष्णिसारथी
१४ तंविव्याधायसैःषड्भिःसोपाक्रामद्रथांतरम् ॥ शत्रुंजयंचंद्रकेतुंमेघवेगंसुवर्चसम् १५ सूर्यभासंचपंचैतान्हत्वाविव्याधसौबलम् ॥ तंसौबलस्त्रिभिर्विद्ध्वादु
र्योधनमथाब्रवीत् १६ सर्वएनंविमथ्नीमःपुरैकैकंहिनस्तिनः ॥ अथाब्रवीत्पुनर्द्रोणंकर्णोवैकर्तनोरणे १७ पुरासर्वान्प्रमथ्नातिब्रूह्यस्यनवधमाशुनः ॥ ततोद्रोणोमहे
ष्वासःसर्वांस्तान्प्रत्यभाषत १८ अस्तिवाऽस्यांतरंकिंचित्कुमारस्याथपश्यत ॥ अण्वप्यस्यांतरंह्यद्यचरतःसर्वतोदिशम् १९ शीघ्रतांनरसिंहस्यपांडवेय
स्यपश्यत ॥ धनुर्मंडलमेवास्यरथमार्गेषुदृश्यते २० संदधानस्यविशिखान्शीघ्रंचैवविमुंचतः ॥ आरुजन्नपिमेप्राणान्मोहयन्नपिसायकैः २१ प्रहर्षयतिमांभू
यःसौभद्रःपरवीरहा ॥ अतिमांनंदयत्येषसौभद्रोविचरन्रणे २२ अंतरंयस्यसंरब्धानपश्यंतिमहारथाः ॥ अस्यतोलघुहस्तस्यदिशःसर्वामहेषुभिः २३ नावि
शेषंप्रपश्यामिरणेगांडीवधन्वनः ॥ अथकर्णःपुनर्द्रोणमाहार्जुनिशराहतः २४ स्थातव्यमितितिष्ठामिपीड्यमानोऽभिमन्युना ॥ तेजस्विनःकुमारस्यशराःपर
मदारुणाः २५ क्षिण्वंतिहृदयंमेऽद्यघोराःपावकतेजसः ॥ तमाचार्योऽब्रवीत्कर्णंशनकैःप्रहसन्निव २६ अभेद्यमस्यकवचंयुवाचाशुपराक्रमः ॥ उपदिष्टामयाचा
स्यपितुःकवचधारणा २७ तामेषनिखिलांवेत्तिध्रुवंपरपुरंजयः ॥ शक्यंत्वस्यधनुश्छेत्तुंज्यांचबाणैःसमाहितैः २८ अभीषूंश्चहयांश्चैवतथोभौपार्ष्णिसारथी ॥
एतत्कुरुमहेष्वासराधेययदिशक्यसे २९ अथैनंविमुखीकृत्यपश्चात्प्रहरणंकुरु ॥ सधनुष्कोनशक्योऽयमपिजेतुंसुरासुरैः ३० विरथंविधनुष्कंचकुरुष्वैनंयदी
च्छसि ॥ तदाचार्यवचःश्रुत्वाकर्णोवैकर्तनस्त्वरन् ३१ अस्यतोलघुहस्तस्यपृषत्कैर्धनुराच्छिनत् ॥ अश्वानस्यावधीद्भोजोगौतमःपार्ष्णिसारथी ३२ शेषा
स्तुच्छिन्नधन्वानंशरवर्षैरवाकिरन् ॥ त्वरमाणास्त्वराकालेविरथंषण्महारथाः ३३ शरवर्षैरकरुणाबालमेकमवाकिरन् ॥ सच्छिन्नधन्वाविरथःस्वधर्ममनुपालयन्
३४ खड्गचर्मधरःश्रीमानुत्पपातविहायसा ॥ मार्गैःसकौशिकाद्यैश्चलाघवेनबलेनच ३५

३६ । ३७ । ३८ । ३९ । ४० । ४१ ॥ इतिद्रोणपर्वणिटीकायांअष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥ ७ ॥ ॥ विष्णोरिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८

आर्जुनिर्व्यचरद्व्योम्निभृशंवैपक्षिराडिव ॥ मय्येवनिपतत्येषसासिरित्यूर्ध्वदृष्टयः ३६ विव्यधुस्तंमहेष्वासंसमरेछिद्रदर्शिनः ॥ तस्यद्रोणोऽच्छिनन्मुष्टौखड्गं मणिमयत्सरुम् ३७ क्षुरप्रेणमहातेजास्त्वरमाणःसपत्नजित् ॥ राधेयोनिशितैर्बाणैर्व्यधमच्चर्मचोत्तमम् ३८ व्यसिचर्मेषुपूर्णांगःसोंतरिक्षात्पुनःक्षितिम् ॥ आस्थितश्चक्रमुद्यम्यद्रोणंक्रुद्धोऽभ्यधावत ३९ सचक्ररेणूज्ज्वलशोभितांगोबभावतीवोज्ज्वलचक्रपाणिः ॥ रणेऽभिमन्युःक्षणमाससरौद्रःसवासुदेवानुकृतिंप्रकुर्वन् ४० स्रुतरुधिरकृतैकरागवक्त्रोभ्रुकुटिपुटाकुलितोतिसिंहनादः ॥ प्रभुरमितबलोरणेऽभिमन्युर्नृपवरमध्यगतोभृशंव्यराजत् ४१ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणिअभिमन्युविरथकरणेअष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ७ ॥ संजयउवाच ॥ विष्णोःस्वसुर्नंदकरःसविष्ण्वायुधभूषणः ॥ रराजातिरथःसंख्येजनार्दनइवापरः १ मारुतोद्धूतकेशांतमुद्यतारिवरायुधम् ॥ वपुःसमीक्ष्यपृथ्वीशादुःसमीक्ष्यंसुरैरपि २ तच्चक्रंभृशमुद्विग्नाःसंचिच्छिदुरनेकधा ॥ महारथस्ततःकार्ष्णिःसजग्राहमहागदाम् ३ विधनुःस्यंदनासिस्तैर्विचक्रश्चारिभिःकृतः ॥ अभिमन्युर्गदापाणिरश्वत्थामानमार्दयत् ४ सगदामुद्यतांदृष्ट्वाज्वलंतीमशनीमिव ॥ अपाक्रामद्रथोपस्थाद्विक्रमांस्त्रीन्नरर्षभः ५ तस्याश्वान्गदयाहत्वातथोभौपार्ष्णिसारथी ॥ शराचितांगःसौभद्रःश्वाविद्वत्समदृश्यत ६ ततःसुबलदायादंकालिकेयमपोथयत् ॥ जघानचास्यानुचरान्गांधारान्सप्तसप्ततिम् ७ पुनश्चैववसातीयान्जघानरथिनोदश ॥ केकयानांरथान्सप्तहत्वाचदशकुंजरान् ८ दौःशासनीरथंसाश्वंगदयासमपोथयत् ॥ ततोदौःशासनिःक्रुद्धोगदामुद्यम्यमारिष ९ अभिदुद्रावसौभद्रंतिष्ठतिष्ठेतिचाब्रवीत् ॥ तावुद्यतगदौवीरावन्योन्यवधकांक्षिणौ १० भ्रातृव्यौसंप्रजह्रातेपुरेवत्र्यंबकांधकौ ॥ तावन्योन्यंगदाग्राभ्यामाहत्यपतितौक्षितौ ११ इंद्रध्वजाविवोत्सृष्टौरणमध्येपरंतपौ ॥ दौःशासनिरथोत्थायकुरूणांकीर्तिवर्धनः १२ उत्तिष्ठमानंसौभद्रंगदयामूर्ध्न्यताडयत् ॥ गदावेगेनमहताव्यायामेनचमोहितः १३ विचेतान्यपतद्भूमौसौभद्रःपरवीरहा ॥ एवंविनिहतोराजन्नेकोबहुभिराहवे १४ क्षोभयित्वाचमूंसर्वांनलिनीमिवकुंजरः ॥ अशोभतहतोवीरोव्याधैर्वनगजोयथा १५ तंतथापतितंशूरंतावकाःपर्यवारयन् ॥ दावंदग्ध्वायथाशांतंपावकंशिशिरात्यये १६ विमृद्यनगशृंगाणिसन्निवृत्तमिवानिलम् ॥ अस्तंगतमिवादित्यंतप्त्वाभारतवाहिनीम् १७ उपप्लुतंयथासोमंसंशुष्कमिवसागरम् ॥ पूर्णचंद्राभवदनंकाकपक्षवृताक्षिकम् १८ तंभूमौपातितंदृष्ट्वातावकास्तेमहारथाः ॥ मुदापरमयायुक्ताश्चुक्रुशुःसिंहवन्मुहुः १९ आसीत्परमकोहर्षस्तावकानांविशांपते ॥ इतरेषांतुवीराणांनेत्रेभ्यःप्रापतज्जलम् २० अंतरिक्षेचभूतानिप्राक्रोशंतविशांपते ॥ दृष्ट्वानिपातितंवीरंच्युतंचंद्रमिवांबरात् २१ द्रोणकर्णमुखैःषड्भिर्धार्तराष्ट्रैर्महारथैः ॥ एकोऽयंनिहतःशेतेनैषधर्मोमतोहिनः २२

९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ उपप्लुतंराहुग्रस्तं १८ । १९ । २० । २१ । २२

 २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ ॥ इतिश्रीमहाभारतेद्रोणपर्वणि टीकायांएकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ 



तस्मिन्विनिहतेवीरेबह्वशोभतमेदिनी ॥ द्यौर्यथापूर्णचंद्रेणनक्षत्रगणमालिनी २३ रुक्मपुंखैश्चसंपूर्णारुधिरौघपरिप्लुता ॥ उत्तमांगैश्चशूराणांभ्राजमानैःसकुंडलैः २४ विचित्रैश्चपरिस्तोमैःपताकाभिश्चसंवृता ॥ चामरैश्चकुथाभिश्चप्रविद्धैश्चांबरोत्तमैः २५ तथाश्वनरनागानामलंकारैश्चसुप्रभैः ॥ खड्गैःसुनिशितैःपीतैर्निर्मुक्तैर्भुजगैरिव २६ चापैश्चविविधैश्छिन्नैःशक्त्यृष्टिप्रासकंपनैः ॥ विविधैश्चायुधैश्चान्यैःसंवृताभूरशोभत २७ वाजिभिश्चापिनिर्जीवैःश्वसद्भिःशोणितोक्षितैः ॥ सारोहैर्विषमाभूमिःसौभद्रेणनिपातितैः २८ सांकुशैःसमहामात्रैःसवर्मायुधकेतुभिः ॥ पर्वतैरिवविध्वस्तैर्विशिखैर्मथितैर्गजैः २९ पृथिव्यामनुकीर्णैश्चव्यश्वसारथियोधिभिः ॥ ह्रदैरिवप्रक्षुभितैर्हतनागैरथोत्तमैः ३० पदातिसंघैश्चहतैर्विविधायुधभूषणैः ॥ भीरूणांत्रासजननीघोररूपाऽभवन्मही ३१ तंदृष्ट्वापतितंभूमौचंद्रार्कसदृशद्युतिम् ॥ तावकानांपराप्रीतिःपांडूनांचाभवद्व्यथा ३२ अभिमन्यौहतेराजन्शिशुकेऽप्राप्तयौवने ॥ संप्राद्रवच्चमूःसर्वाधर्मराजस्यपश्यतः ३३ दीर्यमाणंबलंदृष्ट्वासौभद्रेविनिपातिते ॥ अजातशत्रुस्तान्वीरानिदंवचनमब्रवीत् ३४ स्वर्गमेषगतःशूरोयोहतोनपराङ्मुखः ॥ संस्तंभयतमाभैष्टविजेष्यामोरणेरिपून् ३६ इत्येवंसमहातेजादुःखितेभ्योमहाद्युतिः ॥ धर्मराजोयुधांश्रेष्ठोब्रुवन्दुःखमपानुदत् ३६ युद्धेह्याशीविषाकारान्राजपुत्रान्रणेरिपून् ॥ पूर्वंनिहत्यसंग्रामेपश्चादार्जुनिरभ्ययात् ३७ हत्वादशसहस्राणिकौसल्यंचमहारथम् ॥ कृष्णार्जुनसमःकार्ष्णिःशक्रलोकंगतोध्रुवम् ३८ रथाश्वनरमातंगान्विनिहत्यसहस्रशः ॥ अवितृप्तःससंग्रामादशोच्यःपुण्यकर्मकृत् ॥ गतःपुण्यकृतांलोकान्शाश्वतान्पुण्यनिर्जितान् ३९ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणि अभिमन्युवधेएकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ ॥ संजयउवाच ॥ वयंतुप्रवरंहत्वातेषांतैःशरपीडिताः ॥ निवेशायाभ्युपायामःसायाह्नेरुधिरोक्षिताः १ निरीक्षमाणास्तुवयंपरेचायोधनंशनैः ॥ अपयातामहाराजग्लानिंप्राप्ताविचेतसः २ ततोनिशायादिवसस्यचाशिवःशिवारुतैःसंधिरवर्तताद्भुतः ॥ कुशेशयापीडनिभेदिवाकरेविलंबमानेऽस्तमुपेत्यपर्वतम् ३ वरासिशक्त्यृष्टिवरूथचर्मणांविभूषणानांचसमाक्षिपन्प्रभाः ॥ दिवंचभूमिंचसमानयन्निवप्रियांतनुंभानुरुपैतिपावकम् ४ महाभ्रकूटाचलशृंगसन्निभैर्गजैरनेकैरिववज्रपातितैः ॥ सवैजयंत्यंकुशवर्मयंतृभिर्निपातितैर्नष्टगतिश्चिताक्षितिः ५ हतेश्वरैश्चूर्णितपत्त्युपस्करैर्हताश्वसूतैर्विपताककेतुभिः ॥ महारथैर्भूःशुशुभेविचूर्णितैःपुरैरिवामित्रहतैर्नराधिप ६ रथाश्ववृंदैःसहसादिभिर्हतैःप्रविद्धभांडाभरणैःपृथग्विधैः ॥ निरस्तजिह्वादशनांत्रलोचनैर्धराबभौघोरविरूपदर्शना ७ प्रविद्धवर्माभरणांबरायुधाविपन्नहस्त्यश्वरथानुगानराः ॥ महार्हशय्यास्तरणोचितास्तदाक्षितावनाथाइवशेरतेहताः ८



वयंत्विति १ । २ । ३ समाक्षिपन्संहरन् समानयन्नेकतांनयन् ४ । ५ पत्तयःपादरक्षाः उपस्कराउपकरणानि ६ । ७ । ८

९ । १० । ११ । १२ । १३ । १४ । १५ ॥ इतिद्रोणपर्वणिटीकायांपंचाशत्तमोऽध्यायः ॥ ५० ॥ हतेइति १ । २ । ३ असंबाधंअप्रतीघातम् ४ । ५ । ६ । ७ । ८ असमंजसमयुक्तरूपम् ९

अतीवहृष्टाःश्वशृगालवायसाबकाःसुपर्णाश्चवृकास्तरक्षवः ॥ वयांस्यसृक्पान्यथरक्षसांगणाःपिशाचसंघाश्चसुदारुणारणे ९ त्वचोविनिर्भिद्यपिबन्वसामसृक्तथैवमज्जाःपिशितानिचाश्नुवन् ॥ वपांविलुंपंतिहसंतिगांतिच प्रकर्षमाणाःकुणपान्यनेकशः १० शरीरसंघातवहाह्यसृग्जलारथोडुपाकुंजरशैलसंकटा ॥ मनुष्यशीर्षोपलमांसकर्दमाप्रविद्धनानाविधशस्त्रमालिनी ११ भयावहावैतरणीवदुस्तराप्रवर्तितायोधवरैस्तदानदी ॥ उवाहमध्येनरणाजिरेभृशंभयावहाजीवमृतप्रवाहिनी १२ पिबंतिचाश्नंतिचयत्रदुर्दृशाःपिशाचसंघास्तुनदंतिभैरवाः ॥ सुनंदिताःप्राणभृतांक्षयंकराःसमानभक्षाःश्वसृगालपक्षिणः १३ तथातदायोधनमुग्रदर्शनंनिशामुखेपितृपतिराष्ट्रवर्धनम् ॥ निरीक्षमाणाःशनकैर्जहुर्नराःसमुत्थिताऩृत्तकबंधसंकुलम् १४ अपेतविध्वस्तमहार्हभूषणंनिपातितंशक्रसमंमहाबलम् ॥ रणेऽभिमन्युंददृशुस्तदाजनाव्यपोढहव्यंसदसीवपावकम् १५ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणि तृतीयदिवसावहारेसमरभूमिवर्णनेपंचाशत्तमोऽध्यायः ॥ ५० ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ हतेतस्मिन्महावीर्येसौभद्रेरथयूथपे ॥ विमुक्तरथसन्नाहाःसर्वेनिक्षिप्तकार्मुकाः १ उपोपविष्टाराजानंपरिवार्ययुधिष्ठिरम् ॥ तदेवयुद्धंध्यायंतःसौभद्रगतमानसाः २ ततोयुधिष्ठिरोराजाविललापसुदुःखितः ॥ अभिमन्यौहतेवीरेभ्रातुःपुत्रेमहारथे ३ द्रोणानीकमसंबाधंममप्रियचिकीर्षया ॥ भित्त्वाव्यूहंप्रविष्टोऽसौगोमध्यमिवकेसरी ४ यस्यशूरामहेष्वासाःप्रत्यनीकगतारणे ॥ प्रभग्नाविनिवर्तंतेकृतास्त्रायुद्धदुर्मदाः ५ अत्यंतशत्रुरस्माकंयेनदुःशासनःशरैः ॥ क्षिप्रंह्यभिमुखःसंख्येविसंज्ञोविमुखीकृतः ६ सतीर्त्वादुस्तरंवीरोद्रोणानीकमहार्णवम् ॥ प्राप्यदौःशासनिंकार्ष्णिःप्राप्तोवैवस्वतक्षयम् ७ कथंद्रक्ष्यामिकौंतेयंसौभद्रेनिहतेऽर्जुनम् ॥ सुभद्रांवामहाभागांप्रियंपुत्रमपश्यतीम् ८ किंस्विद्वयमपेतार्थमश्लिष्टमसमंजसम् ॥ तावुभौप्रतिवक्ष्यामोहृषीकेशधनंजयौ ९ अहमेवसुभद्रायाःकेशवार्जुनयोरपि ॥ प्रियकामोजयाकांक्षीकृतवानिदमप्रियम् १० नलुब्धोबुध्यतेदोषाँल्लोभान्मोहात्प्रवर्तते ॥ मधुलिप्सुर्हिनापश्यंप्रपातमहमीदृशम् ११ योहिभोज्येपुरस्कार्योयानेषुशयनेषुच ॥ भूषणेषुचसोऽस्माभिर्बालोयुधिपुरस्कृतः १२ कथंहिबालस्तरुणोयुद्धानामविशारदः ॥ सदश्वइवसंबाधेविषमेक्षेममर्हति १३ नोचेद्धिवयमप्येनंमहीमनुशयीमहि ॥ बीभत्सोःकोपदीप्तस्यदग्धाःकृपणचक्षुषा १४ अलुब्धोमतिमान्ह्रीमान्क्षमावान्रूपवान्बली ॥ वपुष्मान्मानकृद्वीरःप्रियःसत्यपराक्रमः १५ यस्यश्लाघंतिविबुधाःकर्माण्यूर्जितकर्मणः ॥ निवातकवचान्जघ्नेकालकेयांश्चवीर्यवान् १६ महेंद्रशत्रवोयेनहिरण्यपुरवासिनः ॥ अक्ष्णोर्निमेषमात्रेणपौलोमाःसगणाहताः १७

१० । ११ । १२ संबाधेगहने १३ एनंअभिमन्युंअनुचेन्नमहींशयीमहितदाक्रोधप्रदीप्तस्यबीभत्सोःकृपणेनावसन्नेनचक्षुषादग्धाभवेमहीत्यन्वयः १४ । १५ वपुष्मांस्तेजस्वी १६ । १७

१८ । १९ । २० । २१ ॥ इतिद्रोणपर्वणिटीकायांएकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ अथैनंविलपंतंतमित्यादेःशीघ्रयोद्धुमशक्यमिदमिदंतस्यग्रंथस्यतात्पर्यं 'ह्यस्तनोऽद्यतनोवापिकामरोगादिरूपधृत् ॥ स्वदोषःपुरुषंहंतिनशस्त्ररिपुमृत्यवः' इति १ । २ । ३ । ४ द्वारंसंजनयस्वेतिमयाउक्तइतिसंबंधः निवारिताःतमनुप्रविशंतइतिशेषः ५ । ६ । ७ । ८ । ९ । १० विधिःस्वकर्म सएवमृत्युः

परेभ्योऽप्यभयार्थिभ्योयोददात्यभयंविभुः ॥ तस्यास्माभिर्नशकितस्त्रातुमप्यात्मजोबली १८ भयंतुसुमहत्प्राप्तंधार्तराष्ट्रान्महाबलान् ॥ पार्थःपुत्रवधात्क्रुद्धः कौरवान्शोषयिष्यति १९ क्षुद्रःक्षुद्रसहायश्चस्वपक्षक्षयकारकः ॥ व्यक्तंदुर्योधनोदृष्ट्वाशोचन्हास्यतिजीवितम् २० नमेजयःप्रीतिकरोनराज्यंनचामरत्वंनसुरैःसलोकता ॥ इमंसमीक्ष्याप्रतिवीर्यपौरुषंनिपातितंदेववरात्मजात्मजम् २१ ॥ इतिश्रीमहाभारतेद्रोणपर्वणि अभिमन्युवधपर्वणियुधिष्ठिरप्रलापेएकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ संजयउवाच ॥ अथैनंविलपंतंतंकुंतीपुत्रंयुधिष्ठिरम् ॥ कृष्णद्वैपायनस्तत्रआजगाममहानृषिः १ अर्चयित्वायथान्यायमुपविष्टंयुधिष्ठिरः ॥ अब्रवीच्छोकसंतप्तोभ्रातुःपुत्रवधेनच २ अधर्मयुक्तैर्बहुभिःपरिवार्यमहारथैः ॥ युध्यमानोमहेष्वासैःसौभद्रोनिहतोरणे ३ बालश्चबालबुद्धिश्चसौभद्रःपरवीरहा ॥ अनुपायेनसंग्रामेयुध्यमानोविशेषतः ४ मयाप्रोक्तःससंग्रामेद्वारंसंजनयस्वनः ॥ प्रविष्टेऽभ्यंतरेतस्मिन्सैंधवेननिवारिताः ५ ननुनामसमंयुद्धमेष्टव्यंयुद्धजीविभिः ॥ इदंचैवासमंयुद्धमीदृशंयत्कृतंपरैः ६ तेनास्मिभृशसंतप्तःशोकबाष्पसमाकुलः ॥ शमंनैवाधिगच्छामिचिंतयानःपुनःपुनः ७ ॥ संजयउवाच ॥ तंतथाविलपंतंवैशोकव्याकुलमानसम् ॥ उवाचभगवान्व्यासोयुधिष्ठिरमिदंवचः ८ ॥ व्यासउवाच ॥ युधिष्ठिरमहाप्राज्ञसर्वशास्त्रविशारद ॥ व्यसनेषुनमुह्यंतित्वादृशाभरतर्षभ ९ स्वर्गमेषगतःशूरःशत्रून्हत्वाबहून्रणे ॥ अबालसदृशंकर्मकृत्वावैपुरुषोत्तमः १० अनतिक्रमणीयोवैविधिरेषयुधिष्ठिर ॥ देवदानवगंधर्वान्मृत्युर्हरतिभारत ११ ॥ युधिष्ठिरउवाच ॥ इमेवैपृथिवीपालाःशेरतेपृथिवीतले ॥ निहताःपृतनामध्येमृतसंज्ञामहाबलाः १२ नागायुतबलाश्चान्येवायुवेगबलास्तथा ॥ तएतेनिहताःसंख्येतुल्यरूपानरैर्नराः १३ नैषांपश्यामिहंतारंप्राणिनांसंयुगेक्वचित् ॥ विक्रमेणोपसंपन्नास्तपोबलसमन्विताः १४ जेतव्यमितिचान्योन्यंयेषांनित्यंहृदिस्थितम् ॥ अथचेमेहताःप्राज्ञाःशेरतेविगतायुषः १५ मृताइतिचशब्दोऽयंवर्ततेचततोऽर्थवत् ॥ इमेमृतामहीपालाःप्रायशोभीमविक्रमाः १६ निश्चेष्टानिरभीमानाःशूराःशत्रुवशंगताः ॥ राजपुत्राश्चसंरब्धावैश्वानरमुखंगताः १७ अत्रमेसंशयःप्राप्तःकुतःसंज्ञामृताइति ॥ कस्यमृत्युःकुतोमृत्युःकथंसंहरतेप्रजाः १८ हरत्यमरसंकाशतन्मेब्रूहिपितामह ॥ संजयउवाच ॥ तंतथापरिपृच्छंतंकुंतीपुत्रंयुधिष्ठिरम् ॥ आश्वासनमिदंवाक्यमुवाचभगवानृषिः १९ ॥ व्यासउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ अकंपनस्यकथितंनारदेनपुरानृप २० सचापिराजाराजेंद्रपुत्रव्यसनमुत्तमम् ॥ अप्रसह्यतमंलोकेप्राप्तवानितिमेमतिः २१

११ । १२ । १३ । १४ अथेति विगतायुषइतिशब्देनदेहवियोगेपुरुषस्यपारतंत्र्यंप्रतीयते १५ मृताइतिशब्देनधात्वर्थानुगमात् प्राणत्यागेपुरुषस्यास्वातंत्र्यंप्रतीयते ततःपुरुषंकिमन्योमारयति उतस्वयमेवस्वात्मानंमारयतीतिप्रश्नार्थः १६ । १७ कस्यमृत्युःकइतिशेषः अंतिमपक्षेकुतोहेतोःपुमान्स्वयंस्वस्यमृत्युर्भवतीत्यर्थः १८ । १९ । २० । २१

२२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ खेभ्यःश्रोत्रादिच्छिद्रेभ्यः ४० । ४१ । ४२ । ४३ । ४४ । ४५

तदहंसंप्रवक्ष्यामिमृत्योःप्रभवमुत्तमम् ॥ ततस्त्वंमोक्ष्यसेदुःखात्स्नेहबंधनसंश्रयात् २२ समस्तपापराशिघ्नंशृणुकीर्तयतोमम ॥ धन्यमाख्यानमायुष्यंशोकघ्नं पुष्टिवर्धनम् २३ पवित्रमरिसंघघ्नंमंगलानांचमंगलम् ॥ यथैववेदाध्ययनमुपाख्यानमिदंतथा २४ श्रवणीयंमहाराजप्रातर्नित्यंनृपोत्तमैः ॥ पुत्रानायुष्मतोरा ज्यमीहमानैःश्रियंतथा २५ पुराकृतयुगेतातआसीद्राजाह्यकंपनः ॥ सशत्रुवशमापन्नोमध्येसंग्राममूर्धनि २६ तस्यपुत्रोहरिर्नामनारायणसमोबले ॥ श्रीमान् कृतास्त्रोमेधावीयुधिशक्रोपमोबली २७ सशत्रुभिःपरिवृतोबहुधारणमूर्धनि ॥ व्यस्यन्बाणसहस्राणियोधेषुचगजेषुच २८ सकर्मदुष्करंकृत्वासंग्रामेशत्रुतापनः ॥ शत्रुभिर्निहतःसंख्येपृतनायांयुधिष्ठिर २९ सराजाप्रेतकृत्यानितस्यकृत्वाशुचान्वितः ॥ शोचन्नहनिरात्रौचनालभत्सुखमात्मनः ३० तस्यशोकंविदित्वातु पुत्रव्यसनसंभवम् ॥ आजगामाथदेवर्षिर्नारदोऽस्यसमीपतः ३१ सतुराजामहाभागोदृष्ट्वादेवर्षिसत्तमम् ॥ पूजयित्वायथान्यायंकथामकथयत्तदा ३२ तस्य सर्वंसमाचष्टयथावृत्तंनरेश्वरः ॥ शत्रुभिर्विजयंसंख्येपुत्रस्यचवधंतथा ३३ ममपुत्रोमहावीर्यइंद्रविष्णुसमद्युतिः ॥ शत्रुभिर्बहुभिःसंख्येपराक्रम्यहतोबली ३४ कएषमृत्युर्भगवन्किंवीर्यबलपौरुषः ॥ एतदिच्छामितत्त्वेनश्रोतुंमतिमतांवर ३५ तस्यतद्वचनंश्रुत्वानारदोवरदःप्रभुः ॥ आख्यानमिदमाचष्टपुत्रशोकाप हंमहत् ३६ ॥ नारदउवाच ॥ शृणुराजन्महाबाहोआख्यानंबहुविस्तरम् ॥ यथावृत्तंश्रुतंचैवमयाऽपिवसुधाधिप ३७ प्रजाःसृष्ट्वातदाब्रह्माआदिसर्गेपिता महः ॥ असंहृतंमहातेजादृष्ट्वाजगदिदंप्रभुः ३८ तस्यचिंतासमुत्पन्नासंहारंप्रतिपार्थिव ॥ चिंतयन्नह्यसौवेदसंहारंवसुधाधिप ३९ तस्यरोषान्महाराजखेभ्यो ऽग्निरुदतिष्ठत ॥ तेनसर्वादिशोव्याप्ताःसांतर्देशादिधक्षता ४० ततोदिवंभुवंचैवज्वालामालासमाकुलम् ॥ चराचरंजगत्सर्वंददाहभगवान्प्रभुः ४१ ततोहतानि भूतानिचराणिस्थावराणिच ॥ महताक्रोधवेगेनत्रासयन्निववीर्यवान् ४२ ततोरुद्रोजटीस्थाणुर्निशाचरपतिर्हरः ॥ जगामशरणंदेवंब्रह्माणंपरमेष्ठिनम् ४३ तस्मिन्नापतितेस्थाणौप्रजानांहितकाम्यया ॥ अब्रवीत्परमोदेवोज्वलन्निवमहामुनिः ४४ किंकुर्मकामंकामार्हकामाज्जातोऽसिपुत्रक ॥ करिष्यामिप्रियंसर्वंब्रू हिस्थाणोयदिच्छसि ४५ ॥ इतिश्रीमहाभारतेद्रोणपर्वणि अभिमन्युवधपर्वणि द्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ ॥ छ ॥ ॥ स्थाणुरुवाच ॥ प्रजा सर्गनिमित्तंहिकृतोयत्नस्त्वयाविभो ॥ त्वयासृष्टाश्चवृद्धाश्चभूतग्रामाःपृथग्विधाः १ तास्तवेहपुनःक्रोधात्प्रजादह्यंतिसर्वशः ॥ तादृष्ट्वाममकारुण्यंप्रसीदभगव न्प्रभो २ ॥ ब्रह्मोवाच ॥ संहर्तुंनचमेकामएतदेवंभवेदिति ॥ पृथिव्याहितकामंतुततोमांमन्युराविशत् ३

॥ इतिद्रोणपर्वणिटीकायांद्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ ॥ छ ॥ ॥ प्रजेति १ कारुण्यंजातमितिशेषः २ । ३

४ अप्रमेयस्यानंतस्यजगतइतिशेषः अहिंस्यस्येतिवार्थः ५ संहारार्थंमारुषः रोषंमाकार्षीः किंतुप्रसीदस्व ६ तवेतिअनागतादिप्रकारत्रययुक्तंसर्वंदेवजगदस्तुनस्त्वस्यानिरन्वयोच्छेदःकार्यइत्याशयः ७ । ८ । ९ तवरोषोनस्यादितिममहद्यंवरोस्त्वितियोजना १० । ११ उत्सन्नजननाःप्रक्षीणसंतानाः १२ आदीति मांलोकसंतानेनियोज्यकथंलोकान्नाशयसीत्यर्थः १३ ।१४ । १५ प्रवृत्तंकर्म

इयंहिमांसहादेवीभारार्त्तासमचूचुदत् ॥ संहारार्थंमहादेवभारेणाभिहतासती ४ ततोऽहंनाधिगच्छामितथाबहुविधंतदा ॥ संहारमप्रमेयस्यततोमांमन्युराविशत् ५ ॥ रुद्रउवाच ॥ संहारार्थंप्रसीदस्वमारुषोवसुधाधिप ॥ माप्रजाःस्थावराश्चैवजंगमाश्चव्यनीनशः ६ तवप्रसादाद्भगवन्निदंवर्त्तेत्रिधाजगत् ॥ अनागतमतीतंचयच्चसंप्रतिवर्त्तते ७ भगवन्क्रोधसंदीप्तःक्रोधादग्निमवासृजत् ॥ सदहत्यश्मकूटानिद्रुमांश्चसरितस्तथा ८ पल्वलानिचसर्वाणिसर्वेचैवतृणोलपाः ॥ स्थावरंजंगमंचैवनिःशेषंकुरुतेजगत् ९ तदेतद्भस्मसाद्भूतंजगत्स्थावरजंगमम् ॥ प्रसीदभगवन्सत्वंरोषोनस्याद्वरोमम १० सर्वेहिसृष्टानश्यंतितवदेवकथंचन ॥ तस्मान्निवर्त्ततांतेजस्त्वय्येवेदंप्रलीयताम् ११ तत्पश्यदेवसुभृशंप्रजानांहितकाम्यया ॥ यथेमेप्राणिनःसर्वेनिवर्त्तेरंस्तथाकुरु १२ अभावंनेहगच्छेयुरुत्सन्नजननाःप्रजाः ॥ आदिदेवनियुक्तोऽस्मित्वयालोकेषुलोककृत् १३ माविनश्येज्जगन्नाथजगत्स्थावरजंगमम् ॥ प्रसादाभिमुखंदेवंतस्मादेवंब्रवीम्यहम् ॥ १४ ॥ ॥ नारदउवाच ॥ श्रुत्वाहिवचनंदेवःप्रजानांहितकारणे ॥ तेजःसंधारयामासपुनरेवांतरात्मनि १५ ततोऽग्निमुपसंहृत्यभगवाँल्लोकसत्कृतः ॥ प्रवृत्तंचनिवृत्तंचकथयामासवैप्रभुः १६ उपसंहरतस्तस्यतमग्निंरोषजंतथा ॥ प्रादुर्बभूवविश्वेभ्योगोभ्योनारीमहात्मनः १७ कृष्णरक्तातथापिंगारक्तजिह्वास्यलोचना ॥ कुंडलाभ्यांचराजेंद्रतप्ताभ्यांतप्तभूषणा १८ सानिःसृत्यतथाखेभ्योदक्षिणांदिशमाश्रिता ॥ स्मयमानाचसाऽवेक्ष्यदेवौविश्वेश्वरावुभौ १९ तामाहूयतदादेवोलोकादिनिधनेश्वरः ॥ मृत्योइतिमहीपालजहिचेमाःप्रजाइति २० त्वंहिसंहारबुद्ध्याऽथप्रादुर्भूतारुषोमम ॥ तस्मात्संहरसर्वास्त्वंप्रजाःसजडपंडिताः २१ ममत्वंहिनियोगेनततःश्रेयोह्यवाप्स्यसि ॥ एवमुक्तातुसातेनमृत्युःकमललोचना २२ दध्यौचात्यर्थमबलाप्ररुरोदचसुस्वरम् ॥ पाणिभ्यांप्रतिजग्राहतान्यश्रूणिपितामहः ॥ सर्वभूतहितार्थायतांचाप्यनुनयत्तदा २३ ॥ इतिश्रीमहाभारतेद्रोणपर्वणि अभिमन्युवधपर्वणि मृत्युकथनेत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ ॥ नारदउवाच ॥ विनीयदुःखमबलाआत्मन्येवप्रजापतिम् ॥ उवाचप्रांजलिर्भूत्वालतेवावर्जितापुनः १ ॥ मृत्युरुवाच ॥ त्वयासृष्टाकथंनारीईदृशीवदतांवर ॥ क्रूरंकर्माहितंकुर्यांतदेवकिमुजानती २ बिभेम्यहमधर्माद्धिप्रसीदभगवन्प्रभो ॥ प्रियान्पुत्रान्वयस्यांश्चभ्रातृन्मातृःपितृन्पतीन् ३ अपध्यास्यंतिमेदेवमृतेष्वेभ्योबिभेम्यहम् ॥ कृपणानांहिरुदतांयेपतंत्यश्रुबिंदवः ४

सृष्टिहेतुंनिवृत्तंकर्ममोक्षहेतुंकथयामास १६ गोभ्यइंद्रियच्छिद्रेभ्यः १७ । १८ देवौब्रह्मरुद्रौ १९ देवोब्रह्मा मरणंमृत्प्राणवियोगस्तमन्यस्येच्छतीतिमृत्युरित्यर्थः इतिआहेतिशेषः २० रुषोरोषात् २१ । २२ । २३ ॥ इतिद्रोणपर्वणिटीकायां त्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ विनीयेति लतेवेतिरवदेकशरण्यत्वेदृष्टांतः १ । २ । ३ प्रियादीनमृतानितिशेषः तत्संबंधिनःअपध्यास्यंति परानिष्टचिंतनमपध्यानं मृतेषुमयामारितेषुलोकेषुसत्सु भेमाय ४

यमःशास्ता मृत्युःप्राणवियोगकर्त्रीदेवता ५ उदग्रनखेनअंजलिनाविनयोपेता शरणागतास्मीत्यर्थः ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ अपमन्युनागउाऽदर्पेणेत्यर्थः १४ । १५

तेभ्योऽहंभगवन्भीताशरणंत्वाऽहमागता ॥ यमस्यभवनंदेवगच्छेयंनसुरोत्तम ५ कायेनविनयोपेतामूर्ध्नोदग्रनखेनच ॥ एतदिच्छाम्यहंकामंत्वत्तोलोकपितामह ६ इच्छेयंत्वत्प्रसादाद्धितपस्तप्तुंप्रजेश्वर ॥ प्रदिशेमंवरंदेवत्वंमह्यंभगवन्प्रभो ७ त्वयाह्युक्तागमिष्यामिधेनुकाश्रममुत्तमम् ॥ तत्रतप्स्येतपस्तीव्रंतवैवाराधनेरता ८ नहिशक्ष्यामिदेवेशप्राणान्प्राणभृतांप्रियान् ॥ हर्तुंविलपमानानामधर्मादभिरक्षमाम् ९ ॥ ब्रह्मोवाच ॥ मृत्योसंकल्पिताऽसित्वंप्रजासंहारहेतुना ॥ गच्छसंहरसर्वास्त्वंप्रजामातेविचारणा १० भवितात्वेतदेवंहिनैतज्जात्वन्यथाभवेत् ॥ भवत्वनिंदितालोकेकुरुष्ववचनंमम ११ ॥ नारदउवाच ॥ एवमुक्ताऽभवत्प्रीताप्रांजलिर्भगवन्मुखी ॥ संहारेनाकरोद्बुद्धिंप्रजानांहितकाम्यया १२ तूष्णीमासीत्तदादेवःप्रजानामीश्वरेश्वरः ॥ प्रसादंचागमत्क्षिप्रमात्मनैवप्रजापतिः १३ स्मयमानश्चदेवेशोलोकान्सर्वानवेक्ष्यच ॥ लोकास्त्वासन्यथापूर्वंदृष्टास्तेनापमन्युना १४ निवृत्तरोषेतस्मिंस्तुभगवत्यपराजिते ॥ साकन्याऽपिजगामाथसमीपातस्यधीमतः १५ अपसृत्याप्रतिश्रुत्यप्रजासंहरणंतदा ॥ त्वरमाणाचराजेंद्रमृत्युर्धेनुकमभ्यगात् १६ सातत्रपरमंतीव्रंचचारव्रतमुत्तमम् ॥ सातदाह्येकपादेनतस्थौपद्मानिषोडश १७ पंचचाब्दानिकारुण्यात्प्रजानांतुहितैषिणी ॥ इंद्रियाणींद्रियार्थेभ्यःप्रियेभ्यःसन्निवर्त्यसा १८ ततस्त्वेकेनपादेनपुनरन्यानिसप्तवै ॥ तस्थौपद्मानिषट्चैवसप्तचैकंचपार्थिव १९ ततःपद्मायुतंतातमृगैःसहचचारसा ॥ पुनर्गत्वाततोनंदांपुण्यांशीतामलोदकाम् २० अप्सुवर्षसहस्राणिसप्तचैकंचसाऽनयत् ॥ धारयित्वातुनियमंनंदायांवीतकल्मषा २१ सापूर्वंकौशिकींपुण्यांजगामनियमैधिता ॥ तत्रवायुजलाहाराचचारनियमंपुनः २२ पंचगंगासुसापुण्याकन्यावेतसकेषुच ॥ तपोविशेषैर्बहुभिःकर्षयद्देहमात्मनः २३ ततोगत्वातुसागंगांमहामेरुंचकेवलम् ॥ तस्थौचाश्मेवनिश्चेष्टाप्राणायामपरायणा २४ पुनर्हिमवतोमूर्ध्नियत्रदेवाःपुराऽयजन् ॥ तत्रांगुष्ठेनसातस्थौनिखर्वंपरमाशुभा २५ पुष्करेष्वथगोकर्णेनैमिषेमलयेतथा ॥ अपाकर्षत्स्वकंदेहंनियमैर्मानसप्रियैः २६ अनन्यदेवतानित्यंदृढभक्तापितामहे ॥ तस्थौपितामहंचैवतोषयामासधर्मतः २७ ततस्तामब्रवीत्प्रीतोलोकानांप्रभवोऽव्ययः ॥ सौम्येनमनसाराजन्प्रीतःप्रीतमनास्तदा २८ मृत्योकिमिदमत्यंतंतपांसिचरसीतिह ॥ ततोऽब्रवीत्पुनर्मृत्युर्भगवंतंपितामहम् २९ नाहंहन्यांप्रजादेवस्वस्थाश्चाक्रोशतीस्तथा ॥ एतदिच्छामिसर्वेशत्वत्तोवरमहंप्रभो ३० अधर्मभयभीताऽस्मिततोहंतपआस्थिता ॥ भीतायास्तुमहाभागप्रयच्छाभयमव्यय ३१ आर्ताचानागसीनारीयाचामिभवमेगतिः ॥ तामब्रवीत्ततोदेवोभूतभव्यभविष्यवित् ३२

अप्रतिश्रुत्यानंगीकृत्य १५ पद्मंशतंकोट्योवर्षाणितानिषोडशपंचच १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२

३३ । ३४ । ३५ । ३६ । ३७ । ३८ अन्योन्यपरुषावागितिशेषः ३९ । ४० । ४१ । ४२ । ४३ । ४४ प्रायणांते आयुष्यकर्मणोऽवसाने ४५ सर्वेइति देवाइंद्रियाणिप्राणिभिःजीवैःसहगत्वातत्रै वपरलोकेवृत्तात्वृत्तवंतः पुनर्भूत्वासान्निवृत्ताभवंति मर्त्यभावार्थाश्व देवाइंद्रादयःमर्त्यवदेवगत्वावृत्ताभवंति नतुनिवृत्ताभवंतिमर्त्यभावाय कर्मदेवाएवनिवर्तंते नत्वाजानदेवास्तेषांक्रममुक्तियोग्यत्वा

अधर्मोनास्तितेमृत्योसंहरंत्याइमाःप्रजाः ॥ मयाचोक्तंमृषाभद्रेभवितानकथंचन ३३ तस्मात्संहरकल्याणिप्रजाःसर्वाश्चतुर्विधाः ॥ धर्मःसनातनश्चत्वांसर्वथा पावयिष्यति ३४ लोकपालोयमश्चैवसहायाव्याधयश्चते ॥ अहंचविबुधाश्चैवपुनर्दास्यामतेवरम् ३५ यथात्वमेनसामुक्ताविरजाःख्यातिमेष्यसि ॥ सैवमुक्तामहाराजकृतांजलिरिदंविभुम् ३६ पुनरेवाब्रवीद्वाक्यंप्रसाद्यशिरसातदा ॥ यद्येवमेतत्कर्तव्यंमयानस्याद्विनाप्रभो ३७ तवाज्ञामूर्ध्निमेन्यस्तायतेवक्ष्यामितच्छृणु ॥ लोभःक्रोधोभ्यसूयेर्ष्याद्रोहोमोहश्चदेहिनाम् ३८ अह्रीश्चान्योन्यपरुषादेहंभिंद्युःपृथग्विधाः ॥ ब्रह्मोवाच ॥ तथाभविष्यतेमृत्योसाधुसंहरमोःप्रजाः ॥ अधर्मस्तेनभवितानापध्यास्याम्यहंशुभे ३९ यान्यश्रुबिंदूनिकरेममासंस्तेव्याधयःप्राणिनामात्मजाताः ॥ तेमारयिष्यंतिनरान्गतासून्नाधर्मस्तेभवितामास्मभैषीः ४० नाधर्मस्तेभवितापाणिनांवैत्वंवैधर्मस्त्वंहिधर्मस्यचेशा ॥ धर्म्याभूत्वाधर्मनित्याधरित्रीतस्मात्प्राणान्सर्वथेमान्नियच्छ ४१ सर्वेषांवैप्राणिनांकामरोषौसंत्यज्यत्वंसंहरस्वेहजीवान् ॥ एवंधर्मस्त्वांभविष्यत्यनंतोमिथ्यावृत्तान्मारयिष्यत्यधर्मः ४२ तेनात्मानंपावयस्वात्मनात्वंपापेऽऽत्मानंमज्जयिष्यंत्यसत्यात् ॥ तस्मात्काभंरोषमप्यागतंत्वंसंत्यज्यांतःसंहरस्वेतिजीवान् ४३ ॥ नारदउवाच ॥ सावैभीतामृत्युसंज्ञोपदेशाच्छापाद्भीताबाढमित्यब्रवीत्तम् ॥ साचप्राणंप्राणिनामंतकालेकामक्रोधौत्यज्यहरत्यसक्ता ४४ मृत्युस्त्वेषांव्याधयस्तत्प्रसूताव्याधीरोगोरुज्यतेयेनजंतुः ॥ सर्वेषांचप्राणिनांप्रायणांतेतस्माच्छोकंमाकृथानिष्फलंत्वम् ४५ सर्वेदेवाःप्राणिभिःप्रायणांतेगत्वावृत्ताःसन्निवृत्तास्तथैव ॥ एवंसर्वेप्राणिनस्तत्रगत्वावृत्तादेवामर्त्यवद्राजसिंह ४६ वायुर्भीमोभीमनादोमहौजाभेत्तादेहान्प्राणिनांसर्वगोऽसौ ॥ नोवावृत्तिंनैववृत्तिंकदाचित्प्राप्नोत्युग्रोऽनंततेजोविशिष्टः ४७ सर्वेदेवामर्त्यसंज्ञाविशिष्टास्तस्मात्पुत्रंमाशुचोराजसिंह ॥ स्वर्गंप्राप्तोमोदतेतेतनूजोनित्यंरम्यान्वीरलोकानवाप्य ४८ त्यक्त्वादुःखंसंगतःपुण्यकृद्भिरेषामृत्युर्देवदिष्टाप्रजानाम् ॥ प्राप्तेकालेसंहरंतीयथावत्स्वयंकृताप्राणहराप्रजानाम् ४९ आत्मानंवैप्राणिनोघ्नंतिसर्वेनैतान्मृत्युर्दंडपाणिर्हिनस्ति ॥ तस्मान्मृतान्नानुशोचंतिधीरामृत्युंज्ञात्वानिश्चयंब्रह्मसृष्टम् ॥ इत्थंमृष्टिंदेवकॢप्तांविदित्वापुत्रान्नष्टाच्छोकमाशुत्यजस्व ५०

दितिभावः ४६ प्राणवायोरेवगत्यागतीतदुपहितेप्राणिनिउपचर्येते नतुप्राणेभ्योनिष्क्रष्टस्यतस्यतेस्तइत्याह वायुरिति प्राणिनश्चेतनस्यदेहानेवभिनत्तिनतुतंयतोऽसौसर्वगः अतएवावृत्त्यादिरहितश्चेतिभावः ४७ सर्वेदेवाइति मर्त्यस्त्वंमरणधर्मत्वं ब्रह्मादीनामपिस्वाभाविकमस्त्यतोऽनर्थकःशोकइत्यर्थः ४८ स्वयमेवस्वस्यमृत्युः अथापिजनानांप्राणहरामृत्युर्जनादन्येतिकल्पनाकृताअनभिज्ञैरितिशेषः ४९ एतदेवाह आत्मानमिति नष्टात्जातमितिशेषः ५०

५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ ॥ इतिद्रोणपर्वणिटीकायांचतुष्पंचाशत्तमोऽध्यायः ॥ ५४ ॥ श्रुत्वेति १ ननुमृत्योःस्वाभाविकत्वेऽपिगुणवत्पुरुषवियोगोदुःखयत्येवेत्याशंक्य 'दुःखेदुःखाधिकान्पश्येत्तेनशोकोऽपनीयते' इत्युक्तेःशोकापनोदार्थंअतीतान्गुणवत्तरान्पृच्छतिगुरवइति सतिशोभनेस्थानेसत्यलोकादौपुण्यकर्माणोगुरवोवसंतीतिशेषः अवादिनःमौनिनः २ गुणवत्तरत्वबुभुत्सयातेषांकर्माणिपृच्छतिभूयइति ३ । ४ । ५ । ६ । ७ तत्सलिंगाभिस्तस्यानुरूपाभिः अभितःपार्श्वतः ८ । ९ । १० । ११ । १२ । १३ हृदयेनेति मदवज्ञानान्मानुषीवरणा

द्वैपायनउवाच ॥ एतच्छ्रुत्वार्थवद्वाक्यंनारदेनप्रकाशितम् ॥ उवाचाकंपनोराजासखायंनारदंतथा ५१ व्यपेतशोकःप्रीतोस्मिभगवन्नृषिसत्तम ॥ श्रुत्वेतिहासंत्वत्तस्तुकृतार्थोस्म्यभिवादये ५२ तथोक्तोनारदस्तेनराज्ञाऋषिवरोत्तमः ॥ जगामनंदनंशीघ्रंदेवर्षिरमितात्मवान् ५३ पुण्यंयशस्यंस्वर्ग्यंचधन्यमायुष्यमेवच ॥ अस्येतिहासस्यसदाश्रवणंश्रावणंतथा ५४ एतदर्थपदंश्रुत्वातदाराजायुधिष्ठिरः ॥ क्षत्रधर्मंचविज्ञायशूराणांचपरांगतिम् ५५ संप्राप्तोऽसौमहावीर्यःस्वर्गलोकंमहारथः ॥ अभिमन्युःपरान्हत्वाप्रमुखेसर्वधन्विनाम् ५६ युध्यमानोमहेष्वासोहतःसोऽभिमुखोरणे ॥ असिनागदयाशक्त्याधनुषाचमहारथः ॥ ५७ विरजाःसोमसूनुःसपुनस्तत्रप्रलीयते ॥ तस्मात्परांधृतिंकृत्वाभ्रातृभिःसहपांडव ॥ अप्रमत्तःसुसन्नद्धःशीघ्रंयोद्धुमुपाक्रम ५८ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणिमृत्युप्रजापतिसंवादेचतुष्पंचाशत्तमोऽध्यायः ॥ ५४ ॥ ७ ॥ संजयउवाच ॥ श्रुत्वामृत्युसमुत्पत्तिंकर्माण्यनुपमानिच ॥ धर्मराजःपुनर्वाक्यंप्रसाद्यैनमथाब्रवीत् १ ॥ युधिष्ठिरउवाच ॥ गुरवःपुण्यकर्माणःशक्रप्रतिमविक्रमाः ॥ स्थानेराजर्षयोब्रह्मन्ननघाःसत्यवादिनः २ भूयएवतुमांतथ्यैर्वचोभिरभिबृंहय ॥ राजर्षीणांपुराणानांसमाश्वासयकर्मभिः ३ कियंत्योदक्षिणादत्ताःकैश्वदत्तामहात्मभिः ॥ राजर्षिभिःपुण्यकृद्भिस्तद्भवान्प्रब्रवीतुमे ४ व्यासउवाच ॥ शैब्यस्यनृपतेःपुत्रःसृंजयोनामनामतः ॥ सखायौतस्यचैवोभौऋषीपर्वतनारदौ ५ तौकदाचिद्गृहंतस्यप्रविष्टौतद्दिदृक्षया ॥ विधिवच्चार्चितौतेनप्रीतौतत्रोषतुःसुखम् ६ तंकदाचित्सुखासीनंताभ्यांसहशुचिस्मिता ॥ दुहिताऽभ्यागमत्कन्यासृंजयंवरवर्णिनी ७ तयाऽभिवादितःकन्यामभ्यनंदद्यथाविधि ॥ तत्सलिंगाभिराशीर्भिरिष्टाभिरभितःस्थिताम् ८ तांनिरीक्ष्याब्रवीद्वाक्यंपर्वतःप्रहसन्निव ॥ कस्येयंचंचलापांगीसर्वलक्षणसंमता ९ उताहोभाःस्विदर्कस्यज्वलनस्यशिखात्वियम् ॥ श्रीर्ह्रीःकीर्तिर्धृतिःपुष्टिःसिद्धिश्चंद्रमसःप्रभा १० एवंब्रुवाणंदेवर्षिंनृपतिःसृंजयोऽब्रवीत ॥ ममेयंभगवन्कन्यामत्तोवरमभीप्सति ११ नारदस्त्वब्रवीदेनंदेहिमह्यमिमांनृप ॥ भार्यार्थंसुमहच्छ्रेयःप्राप्तुंचेदिच्छसेनृप १२ ददानीत्येयसंहृष्टःसृंजयःप्राहनारदम् ॥ पर्वतस्तुसुसंक्रुद्धोनारदंवाक्यमब्रवीत् १३ हृदयेनमयापूर्वंवृतांवैवृतवानसि ॥ यस्माद्वृतात्वयाविप्रमागाःस्वर्गंयथेप्सया १४ एवमुक्तोनारदस्तंप्रत्युवाचोत्तरंवचः ॥ मनोवाग्बुद्धिसंभाषादत्ताचोदकपूर्वकम् १५

च्चस्वर्गतिस्त्वेप्रतिबद्धेत्यर्थः १४ मनोवागिति वरलक्षणं वरणंवरः कन्यापरिग्रहस्तस्यलक्षणंसाधकंप्रथितंसप्तविधंप्रसिद्धं । तत्रवरस्यमनोवचोभ्यांदातुर्बुद्ध्याउभयोःसंभाषयालौकिकंवरवध्वोःसंधानं । उदकपूर्वकंदानेनपाणिग्रहणेनचमंत्रवद्वैदिकंसंधानंभवति । एषाषड्विधाऽपिमुख्यानिष्ठानभवति किंतुसप्तमैवनिश्चितानिष्ठा । 'पाणिग्रहणमंत्राणांनिष्ठास्यात्सप्तमेपदे' इतिवचनात् सप्तमोद्देशेनभार्यात्वंमत्तविनततःप्रामितिभावः १५

१६।१७।१८।१९।२० द्विजैरुक्तोनारदस्तथेत्युक्त्वासृंजयमब्रवीदित्यन्वयः २१ यस्यमूत्रादिकंकांचनंतंपुत्रंवृणेइतिसंबंधः २२ क्लेदःश्लेष्मादिः २३ सुवर्णष्ठीविरित्यनेनगंडूषादिकमपिकांचनंभवतीति

पाणिग्रहणमंत्राश्चप्रथितंवरलक्षणम् ॥ नत्वेषांनिश्चितानिष्ठानिष्ठासप्तपदीस्मृता १६ अनुत्पन्नेचकार्यार्थेमांत्वंव्याहृतवानसि ॥ तस्मात्त्वमपिनस्वर्गंगमिष्यसिमयाविना १७ अन्योन्यमेवंशप्त्वावैतस्थतुस्तत्रतौतदा ॥ अथसोऽपिनृपोविप्रान्पानाच्छादनभोजनैः १८ पुत्रकामःपरंशक्त्यायत्नाच्चोपाचरच्छुचिः ॥ तस्यप्रसन्नाविप्रेंद्राःकदाचित्पुत्रमीप्सवः १९ तपःस्वाध्यायनिरतावेदवेदांगपारगाः ॥ सहितानारदंप्राहुर्देह्यस्मैपुत्रमीप्सितम् २० तथेत्युक्त्वाद्विजैरुक्तःसृंजयंनारदोऽब्रवीत् ॥ तुभ्यंप्रसन्नाराजर्षेपुत्रमीप्संतिब्राह्मणाः २१ वरंवृणीष्वभद्रंतेयादृशंपुत्रमीप्सितम् ॥ तथोक्तःप्रांजलीराजापुत्रंववेगुणान्वितम् २२ यशस्विनंकीर्तिमंतंतेजस्विनमरिंदमम् ॥ यस्यमूत्रंपुरीषंचक्लेदःस्वेदश्चकांचनम् २३ सुवर्णष्ठीविरित्येवंतस्यनामाभवत्कृतम् ॥ तस्मिन्वरप्रदानेनवर्धयत्यमितंधनम् २४ कारयामासनृपतिःसौवर्णंसर्वमीप्सितम् ॥ गृहप्राकारदुर्गाणिब्राह्मणावसथान्यपि २५ शय्यासनानियानानिस्थालीपिठरभाजनम् ॥ तस्यराज्ञोऽपियद्वेश्मबाह्याश्चोपस्कराश्चये २६ सर्वंतत्कांचनमयंकालेनपरिवर्धितम् ॥ अथदस्युगणाःश्रुत्वादृष्ट्वाचैनंतथाविधम् २७ संभूयतस्यनृपतेःसमारब्धाश्चिकीर्षितुम् ॥ केचित्तत्राब्रुवन्राज्ञःपुत्रंगृह्णीमवैस्वयम् २८ सोऽस्याकरःकांचनस्यतस्ययत्नंचरामहे ॥ ततस्तेदस्यवोलुब्धाःप्रविश्यनृपतेर्गृहम् २९ राजपुत्रंतथाऽऽजह्रुःसुवर्णष्ठीविनंबलात् ॥ गृहीत्वैनमनुपायज्ञानीत्वाऽऽरण्यमचेतसः ३० हत्वाविशस्यचापश्यन्नलुब्धावसुनकिंचन ॥ तस्यप्राणैर्विमुक्तस्यनष्टंतद्वरदंवसु ३१ दस्यवश्चतदाऽन्योन्यंजघ्नुर्मूर्खाविचेतसः ॥ हत्वापरस्परंनष्टाःकुमारंचाद्भुतंभुवि ३२ असंभाव्यंगताघोरंनरकंदुष्टकारिणः ॥ तंदृष्ट्वानिहतंपुत्रंवरदत्तंमहातपाः ३३ विललापसुदुःखार्तोबहुधाकरुणंनृपः ॥ विलपंतंनिशम्याथपुत्रशोकहतंनृपम् ३४ प्रत्यदृश्यतदेवर्षिर्नारदस्तस्यसन्निधौ ॥ उवाचचैनंदुःखार्तंविलपंतमचेतसम् ३५ सृंजयंनारदोऽभ्येत्यतन्निबोधयुधिष्ठिर ॥ कामानामवितृप्तस्त्वंसृंजयेहमरिष्यसि ३६ यस्यचैतेवयंगेहेउषिताब्रह्मवादिनः ॥ आविक्षितंमरुत्तंचमृतंसृंजयशुश्रुम ३७ संवर्तोयाजयामासस्पर्धयावैबृहस्पतेः ॥ यस्मैराजर्षयेप्रादाद्धनंसभगवान्प्रभुः ३८ हैमंहिमवतःपादंययिक्षोविविधैःसवैः ॥ यस्यसेंद्रामरगणाबृहस्पतिपुरोगमाः ३९ देवाविश्वसृजःसर्वेयजनांतेसमासते ॥ यज्ञवाटस्यसौवर्णाःसर्वेचासन्परिच्छदाः ४० यस्यसर्वंतदाह्यन्नंमनोभिप्रायगंशुचि ॥ कामतोबुभुजुर्विप्राःसर्वेचान्नार्थिनोद्विजाः ४१ पयोदधिघृतंक्षौद्रंभक्ष्यंभोज्यंचशोभनम् ॥ यस्ययज्ञेषुसर्वेषुवासांस्याभरणानिच ४२ ईप्सितान्युपतिष्ठंतेप्रहृष्टान्वेदपारगान् ॥ मरुतःपरिवेष्टारोमरुत्तस्याभवन्गृहे ४३ आविक्षितस्यराजर्षेर्विश्वेदेवाःसभासदः ॥ यस्यवीर्यवतोराज्ञःसुवृष्टयासस्यसंपदः ४४

सूचितं २४ । २५ । २६ । २७ चिकीर्षितुमपकारंकर्तुं कूसिंसायामित्यस्यरूपं २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ सवैःयज्ञैः ३९ । ४० । ४१ । ४२ । ४३ । ४४

४५ । ४६ । ४७ । ४८ चतुर्भद्रतरः धर्मज्ञानवैराग्यैश्वर्याणिचत्वारिभद्राणि धर्मार्थकामबलानीत्यन्ये । 'वित्तंदानसमेतंज्ञानमगर्वंक्षमान्वितंशौर्यं । भोगःसंगविहीनोदुर्लभमेतच्चतुर्भद्रम्' इतिवा
त्वयात्वत्तः ४९ तुभ्यंतव मरुत्तात्त्वंनिर्गुणस्त्वत्तोऽपिनिर्गुणस्त्वत्पुत्रइतिनतदर्थंशोकोयुक्तइतिभावः अयज्वानमदाक्षिण्यंपुत्रमभिलक्ष्यमानुतप्यथाः हेश्वैत्यश्वित्यपुत्रइतिव्याहरन्नारदःसृंजयं

हविर्भिस्तर्पितायेनसम्यक्कॢप्तैर्दिवौकसः ॥ ऋषीणांचपितॄणांचदेवानांसुखजीविनाम् ४५ ब्रह्मचर्यश्रुतिमुखैःसर्वैर्दानैश्चसर्वदा ॥ शयनासनपानानिस्वर्णरा
शीश्चदुस्त्यजाः ४६ तत्सर्वममितंवित्तंदत्तंविप्रेभ्यइच्छया ॥ सोऽनुध्यातस्तुशक्रेणप्रजाःकृत्वानिरामयाः ४७ श्रद्दधानोजितान्लोकान्गतःपुण्यदुहोऽक्षयान् ॥
सप्रजःसनृपामात्यःसदारापत्यबांधवः ४८ यौवनेनसहस्राब्दंमरुत्तोराज्यमन्वशात् ॥ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ४९ पुत्रात्पुण्यतरस्तुभ्यंमापुत्रमनु
तप्यथाः ॥ अयज्वानमदाक्षिण्यमभिश्वैत्येतिव्याहरन् ५० ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणि षोडशराजकीयेपंचपंचाशत्तमोऽध्यायः॥५५॥
॥ नारदउवाच ॥ सुहोत्रंनामराजानंमृतंसृंजयशुश्रुम ॥ एकवीरमशक्यंतममरैरभिवीक्षितुम् १ यःप्राप्यराज्यंधर्मेणऋत्विग्ब्रह्मपुरोहितान् ॥ अपृच्छदात्म
नःश्रेयःपृष्ट्वातेषांमतेस्थितः २ प्रजानांपालनंधर्मोदानमिज्याद्विषज्जयः ॥ एतत्सुहोत्रोविज्ञायधर्मेणैच्छद्धनागमम् ३ धर्मेणाराधयन्देवान्बाणैःशत्रूनजयं
स्तथा ॥ सर्वाण्यपिचभूतानिस्वगुणैरप्यरंजयत् ४ योभुक्त्वेमांवसुमतींम्लेंच्छाटविकवर्जिताम् ॥ यस्मैववर्षपर्जन्योहिरण्यंपरिवत्सरान् ५ हैरण्यास्तत्रवाहि
न्यःस्वैरिण्योव्यवहन्पुरा ॥ ग्राहान्कर्कटकांश्चैवमत्स्यांश्चविविधान्बहून् ६ कामान्वर्षतिपर्जन्योरूपाणिविविधानिच ॥ सौवर्णान्यप्रमेयाणिवाप्यश्चक्रोशसं
मिताः ७ सहस्रंवामनान्कुब्जान्नक्रान्मकरकच्छपान् ॥ सौवर्णान्विहितान्दृष्ट्वाततोऽस्मयतवैतदा ८ तत्सुवर्णमपर्यंतंराजर्षिःकुरुजांगले ॥ ईजानोविततेयज्ञे
ब्राह्मणेभ्योह्यमन्यत ९ सोऽश्वमेधसहस्रेणराजसूयशतेनच ॥ पुण्यैःक्षत्रिययज्ञैश्चप्रभूतवरदक्षिणैः १० काम्यनैमित्तिकाजस्रैरिष्टांगतिमवाप्तवान् ॥ सचेन्म
मारसृंजयचतुर्भद्रतरस्त्वया ११ पुत्रात्पुण्यतरस्तुभ्यंमापुत्रमनुतप्यथाः ॥ अयज्वानमदाक्षिण्यमभिश्वैत्येतिव्याहरन् १२ ॥ इतिश्रीमहाभारतेद्रोणपर्वणि
अभिमन्युवधपर्वणि षोडशराजकीयेषट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥ नारदउवाच ॥ राजानंपौरवंवीरंमृतंसृंजयशुश्रुम ॥ सहस्रंयःसहस्राणांश्वेतानश्वानवा
सृजत् १ तस्याश्वमेधेराजर्षेर्देशाद्देशात्समीयुषाम् ॥ शिक्षाक्षरविधिज्ञानांनासीत्संख्याविपश्चिताम् २ वेदविद्याव्रतस्नातावदान्याःप्रियदर्शनाः ॥ सुभिक्षा
च्छादनगृहाःसुशय्यासनभोजनाः ३ नटनर्तकगंधर्वैःपूर्णकैर्वर्धमानकैः ॥ नित्योद्योगैश्चक्रीडद्भिस्तत्रस्मपरिहर्षिताः ४ यज्ञेयज्ञेयथाकालंदक्षिणाःसोऽत्यका
लयत् ॥ द्विपादशसहस्राख्याःप्रमदाःकांचनप्रभाः ५



प्रतीतिव्यासवाक्यम् ५० ॥ इतिद्रोणपर्वणिटीकायांपंच
पंचाशत्तमोऽध्यायः ॥ ५५ ॥ ॥ ७ ॥ ॥ सुहोत्रमिति १ । २ । ३ । ४ । ५ हैरण्याहिरण्मयाग्राहादयोऽपि वाहिन्योनद्यः स्वैरिण्यःसर्वजनोपभोग्याः ६ । ७ । ८ । ९ । १० । ११
१२ ॥ इतिद्रोणपर्वणिटीकायांषट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥ ॥ ७ ॥ ॥ राजानमिति १ । २ । ३ पूर्णकैः स्वर्णचूडैः डांकुलवाइतिदाक्षिणात्यप्रसिद्धैः वर्धमानकैरारार्तिकहस्तैः ४ । ५

१ धूर्युंजारथाः ७ । ८ । ९ । १० । ११ । १२ इतिद्रोणपर्वणिटीकायांसप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ ॥ ७ ॥ शिबिमिति पर्यवेष्टयत्स्वाधीनामकरोत् १ । २ । ३ । ४ । ५ । ६ । ७

सध्वजाःसपताकाश्चरथाहेममयास्तथा ॥ यःसहस्रंसहस्राणिकन्याहेमविभूषिताः ६ धूर्युंजाश्वगजारूढाःसगृहक्षेत्रगोशताः ॥ शतंशतसहस्राणिस्वर्णमालीमहात्मनाम् ७ गवांसहस्रानुचरान्दक्षिणामत्यकालयत् ॥ हेमशृंग्योरौप्यखुराःसवत्साःकांस्यदोहनाः ८ दासीदासखरोष्ट्रांश्चप्रादादाजाविकंबहु ॥ रत्नानांविविधानांचविविधांश्चान्नपर्वतान् ९ तस्मिन्संविततेयज्ञेदक्षिणामत्यकालयत् ॥ तत्रास्यगाथागायंतियेपुराणविदोजनाः १० अंगस्ययजमानस्यस्वधर्माधिगताःशुभाः ॥ गुणोत्तरास्तुक्रतवस्तस्यासन्सार्वकामिकाः ११ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरस्तुभ्यंमापुत्रमनुतप्यथाः ॥ अयज्वानमदाक्षिण्यमभिश्वैत्येतिव्याहरन् १२ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणिषोडशराजकीयेसप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ ७ ॥ नारदउवाच ॥ शिबिमौशीनरंचापिमृतंसृंजयशुश्रुम ॥ यइमांपृथिवींसर्वांचर्मवत्पर्यवेष्टयत् १ साद्रिद्वीपार्णववनांरथघोषेणनादयन् ॥ सशिबिर्वैरिपून्नित्यंमुख्यान्निघ्नन्सपत्नजित् २ तेनयज्ञैर्बहुविधैरिष्टंपर्याप्तदक्षिणैः ॥ सराजावीर्यवान्धीमानवाप्यवसुपुष्कलम् ३ सर्वमूर्धाभिषिक्तानांसंमतःसोऽभवद्युधि ॥ अयजच्चाश्वमेधैर्योविजित्यपृथिवीमिमाम् ४ निरर्गलैर्बहुफलैर्निष्ककोटिसहस्रदः ॥ हस्त्यश्वपशुभिर्धान्यैर्मृगैर्गोजाविभिस्तथा ५ विविधांपृथिवींपुण्यांशिबिर्ब्राह्मणसात्करोत् ॥ यावत्योवर्षतोधारायावत्योदिवितारकाः ६ यावत्यःसिकतागांग्योयावन्मेरोर्महोपलाः ॥ उदन्वतिचयावंतिरत्नानिप्राणिनोऽपिच ॥ तावतीरददद्गावैशिबिरौशीनरोऽध्वरे ७ नोयंतारंधुरस्तस्यकंचिदन्यंप्रजापतिः ॥ भूतंभव्यंभवंतंवानाध्यगच्छन्नरोत्तमम् ८ तस्यासन्विविधायज्ञाःसर्वकामैःसमन्विताः ९ हेमयूपासनगृहाहेमप्राकारतोरणाः ॥ शुचिस्वाद्वन्नपानंचब्राह्मणाप्रयुतायुताः १० नानाभक्ष्यैःप्रियकथाःपयोदधिमहाह्रदाः ॥ तस्यासन्यज्ञवाटेषुनद्यःशुभ्रान्नपर्वताः ११ पिबतस्नातखादध्वमितियद्रोचतेजनाः ॥ यस्मैप्रादाद्वरंरुद्रस्तुष्टःपुण्येनकर्मणा १२ अक्षयंददतोवित्तंश्रद्धाकीर्तिस्तथाक्रियाः ॥ यथोक्तमेवभूतानांप्रियत्वंस्वर्गमुत्तमम् १३ एतान्लब्ध्वावरानिष्टान्शिबिःकालेदिवंगतः ॥ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया १४ पुत्रात्पुण्यतरस्तुभ्यंमापुत्रमनुतप्यथाः ॥ अयज्वानमदाक्षिण्यमभिश्वैत्येतिव्याहरन् १५ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणि षोडशराजकीयेअष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ ७ ॥ ॥ नारदउवाच ॥ रामंदाशरथिंचैवमृतंसृंजयशुश्रुम ॥ यंप्रजाअन्वमोदंतपितापुत्रानिवौरसान् १

त्रैकालिकेषुराजसुतदन्यंराजानं तस्यशिबेर्धुरःकार्यभारस्ययंतारंवोढारं प्रजापतिःस्रष्टास्वसृष्टौनाध्यगच्छत् ८ । ९ । १० । ११ । १२ ददतोराज्ञोवित्तादिकमक्षयमस्त्वितिरुद्रोवरंददावितिसंबंधः १३ । १४ । १५ ॥ इतिद्रोणपर्वणिटीकायामष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ ७ ॥ ॥ राममिति प्रजानांपुत्रवत्प्रियोऽभूदित्यर्थः १

२ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ पृथिव्यांमानुषाणांप्रत्यक्षादेवादयोविचरंतिपुण्यातिशयात् १२ प्राणोबलं प्राणादयश्चतदन्यथाप्राणाद्यन्यथाभावेननाहीयंत अतिश्वासानिःश्वासादयोरोगानाभवन्नित्यर्थः १३ । १४ । १५ निष्पूर्तंतटाकारामादि हुतमिष्टं १६ । १७ । १८ । १९ । २० । २१ । २२ राममभिरामम् २३ । २४ । २५ ॥ इतिद्रोणपर्वणिटीकायामेकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥ ७ ॥

असंख्येयागुणायस्मिन्नासन्नमिततेजसि ॥ यश्चतुर्दशवर्षाणिनिदेशात्पितुरच्युतः २ वनेवानितयासार्धमवसल्लक्ष्मणाग्रजः ॥ जघानचजनस्थानेराक्षसान्मनुजर्षभः ३ तपस्विनांरक्षणार्थंसहस्राणिचतुर्दश ॥ तत्रैववसतस्तस्यरावणोनामराक्षसः ४ जहारभार्यांवैदेहींसंमोह्यैनंसहानुजम् ॥ तमागस्कारिणंरामःपौलस्त्यमजितंपरैः ५ जघानसमरेक्रुद्धःपुरेवत्र्यंबकोंऽधकम् ॥ सुरासुरैरवध्यंतंदेवब्राह्मणकंटकम् ६ जघानसमहाबाहुःपौलस्त्यंसगणंरणे ॥ सप्रजानुग्रहंकृत्वात्रिदशैरभिपूजितः ७ व्याप्यकृत्स्नंजगत्कीर्त्यासुरर्षिगणसेवितः ॥ सप्राप्यविविधंराज्यंसर्वभूतानुकंपकः ८ आजहारमहायज्ञंप्रजाधर्मेणपालयन् ॥ निरर्गलंसजारूथ्यमश्वमेधंचतंविभुः ९ आजहारसुरेशस्यहविषामुदमाहरत् ॥ अन्यैश्चविविधैर्यज्ञैरीजेबहुगुणैर्नृपः १० क्षुत्पिपासेऽजयद्रामःसर्वरोगांश्चदेहिनाम् ॥ सततंगुणसंपन्नोदीप्यमानःस्वतेजसा ११ अतिसर्वाणिभूतानिरामोदाशरथिर्बभौ ॥ ऋषीणांदेवतानांचमानुषाणांचसर्वशः ॥ पृथिव्यांसहवासोऽभूद्रामेराज्यंप्रशासति १२ नाहीयततदाप्राणःप्राणिनांनतदन्यथा ॥ प्राणोऽपानःसमानश्चरामेराज्यंप्रशासति १३ पर्यदीप्यंततेजांसितदाऽनर्थाश्चनाभवन् १४ दीर्घायुषःप्रजाःसर्वायुवानम्रियतेतदा ॥ वेदैश्चतुर्भिःसुप्रीताःप्राप्नुवंतिदिवौकसः १५ हव्यंकव्यंचविविधंनिष्पूर्तंहुतमेवच ॥ अदंशमशकादेशानष्टव्यालसरीसृपाः १६ नाप्सुप्राणभृतांमृत्युर्नाकालेज्वलनोऽदहत् ॥ अधर्मरुचयोलुब्धामूर्खावानाभवंस्तदा १७ शिष्टेष्टप्राज्ञकर्माणःसर्वेवर्णास्तदाऽभवन् ॥ स्वधांपूजांचरक्षोभिर्जनस्थानेप्रणाशिताम् १८ प्रादान्निहत्यरक्षांसिपितृदेवेभ्यईश्वरः ॥ सहस्रपुत्राःपुरुषादशवर्षशतायुषः १९ नचज्येष्ठाःकनिष्ठेभ्यस्तदाश्राद्धान्यकारयन् ॥ श्यामोयुवालोहिताक्षोमत्तमातंगविक्रमः २० आजानुबाहुःसुभुजःसिंहस्कंधोमहाबलः ॥ दशवर्षसहस्राणिदशवर्षशतानिच २१ सर्वभूतमनःकांतोरामोराज्यमकारयत् ॥ रामोरामोरामइतिप्रजानामभवत्कथा २२ रामाद्रामंजगदभूद्रामेराज्यंप्रशासति ॥ चतुर्विधाःप्रजारामःस्वर्गंनीत्वादिवंगतः २३ आत्मानंसंप्रतिष्ठाप्यराजवंशमिहाष्टधा ॥ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया २४ पुत्रात्पुण्यतरस्तुभ्यंमापुत्रमनुतप्यथाः ॥ अयज्वानमदाक्षिण्यमभिश्वैत्येतिव्याहरन् २५ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणिषोडशराजकीयेएकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥ नारदउवाच ॥ भगीरथंचराजानंमृतंसृंजयशुश्रुम ॥ येनभागीरथीगंगाचयनैःकांचनैश्चिता १ यःसहस्रंसहस्राणांकन्याहेमविभूषिताः ॥ राज्ञश्चराजपुत्रांश्चब्राह्मणेभ्योह्यमन्यत २

भगीरथमिति चयनैःकांचनैश्चितास्वर्णेष्टकमयैःकृत्वर्थस्थंडिलैर्व्याप्ता चयनैरिष्टकासोपानैर्वाकूलद्वयेउद्गमात्संगमपर्यंतंनिचितेतिवार्थः १ राज्ञश्चराजपुत्रांश्चातिक्रम्येतिशेषः ब्राह्मणेभ्यःअमन्यतदत्तवान् २

३ । ४ येनहेतुना उपह्वरेसमीपेभूयसींर्दक्षिणांददत्तराजाआस्ते तेनहेतुनागंगाजनौघभारेणआक्रांतावेत्रयष्टिवत्तीरप्रदेशेनतिंप्राप्तासतीअतिव्यथिताऽतस्तस्यांकेनिषसादह दक्षिणाभारेणतीरप्र देशेऽवनतेप्रवाहांबुराज्ञोंकपर्यंतमागतमित्यर्थः ५ तथातेनप्रकारेणगंगाउरुंभारमश्नुतइतिवा राज्ञऊरुमश्नुतेइतिवायोगात् उर्वशीअभवत् । द्वितीयपक्षेपृषोदरादित्वादादेर्ह्रस्वत्वं । पुत्रत्वंनरका त्राणकर्तृत्वं ६ । ७।८।९ वशीयोगीयोगप्रभावात् योयत्रदेशेयत्इच्छेत्सतत्रप्राप्नुयादित्यर्थः १० । ११ येनेति पादपामरीचिपाऋषयोयेनकारणेनयदर्थंयातौउदितौ मखौकर्मयज्ञयोगयज्ञौमुखे प्राप्तिद्वारभूतौययोस्तौमखमुखौ सूर्यतदंतर्यामिणौ अवस्थातुमुपस्थातुमिच्छंति तेनैवप्रयोजनेनतंभगीरथंअवस्थातुमिच्छंति तत्रहेतुद्वयं गत्वाराजमितीश्वरमितिच गच्छतीतिगत्वात्रिजगतीत

सर्वारथगताःकन्याःरथाःसर्वेचतुर्युजः ॥ रथेरथेशतंनागाःसर्वेवैहेममालिनः ३ सहस्रमश्वाश्चैकैकंगजानांपृष्ठतोऽन्वयुः ॥ अश्वेअश्वेशतंगावोगवांपश्चादजाविकम् ४ तेनाक्रांताजनौघेनदक्षिणाभूयसीर्ददत् ॥ उपह्वरेऽतिव्यथितातस्यांकेनिषसादह ५ तथाभागीरथीगंगाउर्वशीचाभवत्पुरा ॥ दुहितृत्वंगताराज्ञःपुत्रत्वमगम त्तदा ६ तांतुगाथांजगुःप्रीतागंधर्वाःसूर्यवर्चसः ॥ पितृदेवमनुष्याणांशृण्वतांवल्गुवादिनः ७ भगीरथंयजमानमैक्ष्वाकुंभूरिदक्षिणम् ॥ गंगासमुद्रगादेवीवव्रे पितरमीश्वरम् ८ तरयसेंद्रैःसुरगणैर्देवैर्यज्ञःस्वलंकृतः ॥ सम्यक्परिगृहीतश्चशांतविघ्नोनिरामयः ९ योयइच्छेतविप्रोवैयत्रयत्रात्मनःप्रियम् ॥ भगीरथस्त दाप्रीतस्तत्रतत्राददद्वशी १० नादेयंब्राह्मणस्यासीद्यस्ययत्स्यात्प्रियंधनम् ॥ सोऽपिविप्रप्रसादेनब्रह्मलोकंगतोनृपः ११ येनयातौमखमुखौदिशाशाविहपा दपाः ॥ तेनावस्थातुमिच्छंतितंगत्वाराजमीश्वरम् १२ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरस्तुभ्यंमापुत्रमनुतप्यथाः १३ अयज्वानमदा क्षिण्यमभिश्वैत्येतिव्याहरन् १४ ॥ इतिमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणिषोडशराजकीयेषष्टितमोऽध्यायः ॥ ६० ॥ ॥ नारदउवाच ॥ दिलीपंचे दैलविलंमृतंसृंजयशुश्रुम ॥ यस्ययज्ञशतेष्वासन्प्रयुतायुतशोद्विजाः ॥ तंत्रज्ञानार्थसंपन्नायज्वानःपुत्रपौत्रिणः १ यइमांवसुसंपूर्णांवसुधांवसुधाधिपः ॥ ईजा नोवितितेयज्ञेब्राह्मणेभ्योह्यमन्यत २ दिलीपस्यतुयज्ञेषुकृतःपंथाहिरण्मयः ॥ तंधर्मइवकुर्वाणाःसेंद्रादेवाःसमागमन् ३ सहस्रंयत्रमातंगागच्छंतिपर्वतोपमाः ॥ सौवर्णंचाभवत्सर्वंसदःपरमभास्वरम् ४ रसानांचाभवन्कुल्याभक्ष्याणांचापिपर्वताः ॥ सहस्रव्यामानृपतेयूपाश्चासन्हिरण्मयाः ५ चषालंप्रचषालंचयस्य यूपेहिण्मये ॥ नृत्यंतेऽप्सरसस्तस्यषट्सहस्राणिसप्तधा ६ यत्रवीणांवादयतिप्रीत्याविश्वावसुःस्वयम् ॥ सर्वभूतान्यमन्यंतराजानंसत्यशीलिनम् ७ रागखां डवभोज्यैश्चमत्ताःपतिषुशेरते ॥ तदेतदद्भुतंमन्येअन्यैर्नसदृशंनृपैः ८ यदप्सुयुध्यमानस्यचक्रेनपरिपेततुः ॥ राजानंदृढधन्वानंदिलीपंसत्यवादिनम् ९

स्यांराजतइतिगत्वाराजःसूर्योनृपश्चईश्वरःइशनशीलस्तदंतर्यामीनृपश्च । अयंभावः यत्सूर्यदर्शनेनफलंपापनाशादितदस्यदर्शनेनभवति यच्चसूर्यांतर्यामिणःउपासनेनफलंसत्यसंकल्पत्वादि तदस्योपासनेनभवतीतिमरीचिपादीनामयमेवद्रष्टव्यउपास्यश्चजातइति १२ । १३ । १४ ॥ इतिद्रोणपर्वणिटीकायांषष्टितमोऽध्यायः ॥ ६० ॥ ॥ ७ ॥ दिलीपमिति तंत्रेक्रिया सार्द्धश्लोकः १ । २ पंथाहिरण्मयः हिरण्मय्यःस्रुचोभवंतीतिविधिमार्गस्ततआरभ्यप्रवृत्तइत्यर्थः धर्मेनिमित्तेपुण्योत्पत्त्यर्थमिवदेवास्तमलंकुर्वतीत्यर्थः ३ । ४ । ५ । ६ । ७ राग खांडवंगुडोदनं पर्पटिकेतिवैदर्भाः ८ अप्सुनपरिपेततुःनममज्जतुः ९

खट्वांगइति ऐलविलस्यदिलीपस्यैवनामांतरं १० । ११ । १२ ॥ इतिद्रोणपर्वणिटीकायांएकषष्टितमोऽध्यायः ॥ ६१ ॥ ७ ॥ ॥ मांधातेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ द्वादशसमो द्वादशवार्षिकः शयइतिपाठेद्वादशहस्तःव्यजीजयद्विजितवान् ९ । १० । ११ । १२ रोहितान्लोहितभूप्रदेशान्पद्मरागखनिमतोवामत्स्यान्देशविशेषान् हैरण्यान्स्वर्णाकरयुक्तान्नजनोत्सेधा

येपश्यन्भूरिदाक्षिण्यंतेऽपिस्वर्गंजितोनराः ॥ पंचशब्दानजीर्यंतिखट्वांगस्यनिवेशने १० स्वाध्यायघोषोज्याघोषःपिबताश्नीतखादत ॥ सचेन्ममारसृंजय चतुर्भद्रतरस्त्वया ११ पुत्रात्पुण्यतरस्तुभ्यंमापुत्रमनुतप्यथाः ॥ अयज्वानमदाक्षिण्यमभिश्वैत्येतिव्याहरन् १२ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्यु वधपर्वणिषोडशराजकीयेएकषष्टितमोऽध्यायः ॥ ६१ ॥ नारदउवाच ॥ मांधाताचेद्यौवनाश्वोमृतःसृंजयशुश्रुम ॥ देवासुरमनुष्याणांत्रैलोक्यविजयीनृपः १ यंदेवावश्विनौगर्भात्पितुःपूर्वंचकर्षतुः ॥ मृगयांविचरन्राजातृषितःक्लांतवाहनः २ धूमंदृष्ट्वाऽगमत्सत्रंपृषदाज्यमवापसः ॥ तंदृष्ट्वायुवनाश्वस्यजठरेसूनुतां गतम् ३ गर्भाद्धिजह्रतुर्देवावश्विनौभिषजांवरौ ॥ तंदृष्ट्वापितुरुत्संगेशयानंदेववर्चसम् ४ अन्योन्यमब्रुवन्देवाःकमयंधास्यतीतिवै ॥ मामेवायंधयत्वग्रेइतिह स्माहवासवः ५ ततोंगुलिभ्योहींद्रस्यप्रादुरासीत्पयोऽमृतम् ॥ मांधास्यतीतिकारुण्याद्यदिंद्रोह्यन्वकंपयत् ६ तस्मात्तुमांधातेत्येवंनामतस्याद्भुतंकृतम् ॥ ततस्तुधारांपयसोघृतस्यचमहात्मनः ७ तस्यास्येयौवनाश्वस्यपाणिरिंद्रस्यचास्रवत् ॥ अपिबत्पाणिमिंद्रस्यसचाप्यह्नाभ्यवर्धत ८ सोऽभवद्द्वादशसमोद्वाद शाहेनवीर्यवान् ॥ इमांचपृथिवींकृत्स्नामेकाह्नासव्यजीजयत् ९ धर्मात्माधृतिमान्वीरःसत्यसंधोजितेंद्रियः ॥ जनमेजयंसुधन्वानंगयंपूरुंबृहद्रथम् १० असितं चनृगंचैवमांधातामनुजोऽजयत् ॥ उदेतिचयतःसूर्योयत्रचप्रतितिष्ठति ११ तत्सर्वंयौवनाश्वस्यमांधातुःक्षेत्रमुच्यते ॥ सोऽश्वमेधशतैरिष्ट्वाराजसूयशतेनच १२ अददद्रोहितान्मत्स्यान्ब्राह्मणेभ्योविशांपते ॥ हैरण्यान्योजनोत्सेधानायतान्शतयोजनम् १३ बहुप्रकारान्सुस्वादून्भक्ष्यभोज्यान्नपर्वतान् ॥ अतिरि क्तंब्राह्मणेभ्योभुंजानोहीयतेजनः १४ भक्ष्यान्नपाननिचयाःशुशुभुस्त्वन्नपर्वताः ॥ घृतह्रदाःसूपपंकादधिफेनागुडोदकाः १५ रुरुधुःपर्वतान्नद्योमधुक्षीरवहाः शुभाः ॥ देवासुरानरायक्षागंधर्वोरगपक्षिणः १६ विप्रास्तत्रागताश्चासन्वेदवेदांगपारगाः ॥ ब्राह्मणाऋषयश्चापिनासंस्तत्राविपश्चितः १७ समुद्रांतांवसुम तींवसुपूर्णांतुसर्वतः ॥ सतांब्राह्मणसात्कृत्वाजगामास्तंतदानृपः १८ गतःपुण्यकृतांलोकान्व्याप्यस्वयशसादिशः ॥ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया १९ पुत्रात्पुण्यतरस्तुभ्यंमापुत्रमनुतप्यथाः ॥ अयज्वानमदाक्षिण्यमभिश्वैत्येतिव्याहरन् २० ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणिषोडशराजकी येद्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ नारदउवाच ॥ ययातिंनाहुषंचैवमृतंसृंजयशुश्रुम ॥ राजसूयशतैरिष्ट्वासोऽश्वमेधशतेनच १ पुंडरीकसहस्रेणवाजपेय शतैस्तथा ॥ अतिरात्रसहस्रेणचातुर्मास्यैश्चकामतः ॥ अग्निष्टोमैश्चविविधैःसत्रैश्चप्राज्यदक्षिणैः २

न्नजनेषुउत्सेधउच्छ्रायोयेषांतान्मत्स्यदेशोत्पन्नेहिनद्यावद्यापिपरंपरयापूर्वापरौसमुद्रौगच्छतइतितेषामुच्छ्रितत्वंप्रसिद्धं १३ अतिरिक्तमवशिष्टंभुंजानोजनएवहीयतेनत्वन्नमित्यर्थः १४ । १५ १६ । १७ । १८ । १९ । २० ॥ इतिद्रोणपर्वणिटीकायांद्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ ७ ॥ ययातिमिति १ प्राज्यदक्षिणैःबहुदक्षिणैः २

अब्राह्मणानांब्राह्मणद्वेषिणांम्लेच्छानामितियावत् परिसंख्यायअपहृत्य ३ । ४ चतुर्भ्यःऋत्विग्भ्यः प्राचीदिग्घोतुर्दक्षिणाध्वर्योरित्यादिश्रुतेः ५ । ६ । ७ । ८ । ९ । १० । ११ ॥ इतिद्रोण



अब्राह्मणानांयद्वित्तंपृथिव्यामस्तिकिंचन ॥ तत्सर्वंपरिसंख्यायततोब्राह्मणसात्करोत् ३ सरस्वतीपुण्यतमानदीनांतथासमुद्राःसरितःसाद्रयश्च ॥ ईजानाय पुण्यतमायराज्ञोघृतंपयोदुदुहुर्नाहुषाय ४ व्यूढेदेवासुरेयुद्धेकृत्वादेवसहायताम् ॥ चतुर्धाव्यभजत्सर्वांचतुर्भ्यःपृथिवीमिमाम् ५ यज्ञैर्नानाविधैरिष्ट्वाप्रजामु त्पाद्यचोत्तमाम् ॥ देवयान्यांचौशनस्यांशर्मिष्ठायांचधर्मतः ६ देवारण्येषुसर्वेषुविजहारामरोपमः ॥ आत्मनःकामचारेणद्वितीयइववासवः ७ यदानाभ्यगम च्छांतिंकामानांसर्ववेदवित् ॥ ततोगाथामिमांगीत्वासदारःप्राविशद्वनम् ८ यत्पृथिव्यांव्रीहियवंहिरण्यंपशवःस्त्रियः ॥ नालमेकस्यतत्सर्वमितिमत्वाशमंव्रजेत् ९ एवंकामान्परित्यज्ययया तिर्धृतिमेत्यच ॥ पूरुंराज्येप्रतिष्ठाप्यप्रयातोवनमीश्वरः १० सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरस्तुभ्यंमापुत्र मनुतप्यथाः ॥ अयज्वानमदाक्षिण्यमभिश्वैत्येतिव्याहरन् ११ ॥ इतिश्रीमहाभारतेद्रोणपर्वणि अभिमन्युवधपर्वणिषोडशराजकीयेत्रिषष्टितमोऽध्यायः ॥ ॥ ६३ ॥ ॥ ध ॥ ॥ नारदउवाच ॥ नाभागमंबरीषंचमृतंसृंजयशुश्रुम ॥ यःसहस्रंसहस्राणांराज्ञांचैकस्त्वयोधयत् १ जिगीषमाणाःसंग्रामेसमंताद्वैरि णोऽभ्ययुः ॥ अस्त्रयुद्धविदोघोराःसृजंतश्चाशिवागिरः २ बललाघवशिक्षाभिस्तेषांसोऽस्त्रबलेनच ॥ छत्रायुधध्वजरथांश्छित्वाप्रासान्गतव्यथः ३ तएनंमु क्तसन्नाहाःप्रार्थयन्जीवितैषिणः ॥ शरण्यमीयुःशरणंतवास्मइतिवादिनः ४ सतुतान्वशगान्कृत्वाजित्वाचेमांवसुंधराम् ॥ ईजेयज्ञशतैरिष्टैर्यथाशास्त्रंतथाऽनघ ५ बुभुजुःसर्वसंपन्नमन्नमन्येजनाःसदा ॥ तस्मिन्यज्ञेतुविप्रेंद्राःसंतृप्ताःपरमार्चिताः ६ मोदकान्पूरिकापूपान्स्वादुपूर्णाश्चशष्कुलीः ॥ करंभान्पृथुमृद्वीकाअ न्नानिसुकृतानिच ७ सूपान्मैरेयकापूपान्रागखांडवपानकान् ॥ मृष्टान्नानिसुयुक्तानिमृदूनिसुरभीणिच ८ घृतंमधुपयस्तोयंदधीनिरसवंतिच ॥ फलंमूलंचसु स्वादुद्विजास्तत्रोपभुंजते ९ मादनीयानिपापानिविदित्वाचात्मनःसुखम् ॥ अपिबंतयथाकामंपानपागीतवादितैः १० तत्रस्मगाथागायंतिक्षीबाहृष्टाःपठंतिच॥ नाभागस्तुतिसंयुक्तानन्नृतुश्चसहस्रशः ११ तेषुयज्ञेष्वंबरीषोदक्षिणामत्यकालयत् ॥ राज्ञांशतसहस्राणिदशप्रयुतयाजिनाम् १२ हिरण्यकवचान्सर्वान्श्वेतच्छ त्रप्रकीर्णकान् ॥ हिरण्यस्यंदनारूढान्सानुयात्रपरिच्छदान् १३ ईजानोविततेयज्ञेदक्षिणामत्यकालयत् ॥ मूर्धाभिषिक्तांश्चनृपान्राजपुत्रशतानिच १४ सदं डकोशनिचयान्ब्राह्मणेभ्योह्यमन्यत ॥ नैवंपूर्वेजनाश्चक्रुर्नकरिष्यंतिचापरे १५ यदंबरीषोनृपतिःकरोत्यमितदक्षिणः ॥ इत्येवमनुमोदंतेप्रीतायस्यमहर्षयः १६

पर्वणिटीकायां त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ ७ ॥ नाभागमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ मादनीयानिमदकराणिसुरादीनि पापानिपापहेतूनीतिज्ञात्वापिसुख लिप्सवःपिबंतीत्यर्थः १०। ११ अत्यकालयद्दातुंनिष्कासितवान् जिताराजानएवसोपस्करदक्षिणात्वेनदत्ताः तेषांराज्यानितेराजानश्चब्राह्मणसात्कृताइत्यर्थः १२ । १३ । १४ । १५ । १६

१७ ॥ इतिद्रोणपर्वणिटीकायां चतुःषष्टितमोऽध्यायः ॥ ६४ ॥ ॥ ७ ॥ ॥ शशबिंदुमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ त्रयोदशात्रनिचयाःशिष्टाः १० । ११ । १२

सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरस्तुभ्यंमापुत्रमनुतप्यथाः ॥ अयज्वानमदाक्षिण्यमभिश्वैत्येतिव्याहरन् १७ ॥ इतिश्रीमहाभारतेद्रोण
पर्वणिअभिमन्युवधपर्वणिषोडशराजकीये चतुःषष्टितमोऽध्यायः ॥ ६४ ॥ ॥ नारदउवाच ॥ शशबिंदुंचराजानंमृतंसृंजयशुश्रुम ॥ ईजेसविविधैर्यज्ञैःश्रीमा
न्सत्यपराक्रमः १ तस्यभार्यासहस्राणांशतमासीन्महात्मनः ॥ एकैकस्यांचभार्यायांसहस्रंतनयाभवन् २ तेकुमाराःपराक्रांताःसर्वेनियुतयाजिनः ॥ राजानः
क्रतुभिर्मुख्यैरीजानावेदपारगाः ३ हिरण्यकवचाःसर्वेसर्वेचोत्तमधन्विनः ॥ सर्वेऽश्वमेधैरीजानाःकुमाराःशाशबिंदवाः ४ तानश्वमेधेराजेंद्रोब्राह्मणेभ्योऽददत्पि
ता ॥ शतंशतंरथगजाएकैकंपृष्ठतोऽन्वयुः ५ राजपुत्रंतदाकन्यास्तपनीयस्वलंकृताः ॥ कन्यांकन्यांशतंनागानागेनागेशतंरथाः ६ रथेरथेशतंचाश्वाबलि
नोहेममालिनः ॥ अश्वेअश्वेगोसहस्रंगवांपंचाशदाविकाः ७ एतद्धनमपर्याप्तमश्वमेधेमहामखे ॥ शशबिंदुर्महाभागोब्राह्मणेभ्योह्यमन्यत ८ वार्क्षाश्चयूपाया
वंतअश्वमेधेमहामखे ॥ तेतथैवपुनश्चान्येतावंतःकांचनाभवन् ९ भक्ष्यान्नपाननिचयाःपर्वताःक्रोशमुच्छ्रिताः ॥ तस्याश्वमेधेनिर्वृत्तेराज्ञःशिष्टास्त्रयोदश १०
तुष्टपुष्टजनाकीर्णांशांतविघ्नामनामयाम् ॥ शशबिंदुरिमांभूमिंचिरंभुक्त्वादिवंगतः ११ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरस्तुभ्यंमापुत्रमनु
तप्यथाः ॥ अयज्वानमदाक्षिण्यमभिश्वैत्येतिव्याहरन् १२ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणिषोडशराजकीये पंचषष्टितमोऽध्यायः ॥
॥ ६५ ॥ ॥ नारदउवाच ॥ गयंचामूर्तरयसंमृतंसृंजयशुश्रुम ॥ योवैवर्षशतंराजाहुतशिष्टाशनोऽभवत् १ तस्मैह्यग्निर्वरंप्रादात्ततोवव्रेवरंगयः ॥ तपसाब्र
ह्मचर्येणव्रतेननियमैश्च २ गुरूणांचप्रसादेनवेदानिच्छामिवेदितुम् ॥ स्वधर्मेणाविहिंस्यान्यान्धनमिच्छामिचाक्षयम् ३ विप्रेषुददतश्चैवश्रद्धाभवतुनित्यशः ॥
अनन्यासुसवर्णासुपुत्रजन्मचमेभवेत् ४ अन्नंमेददतःश्रद्धाधर्मेमेरमतांमनः ॥ अविघ्नंचास्तुमेनित्यंधर्मकार्येषुपावक ५ तथाभविष्यतीत्युक्त्वातत्रैवांतरधीय
त ॥ गयोह्यवाप्यतत्सर्वंधर्मेणारीनजीजयत् ६ सदर्शपौर्णमासीभ्यांकालेष्वाग्रयणेनच ॥ चातुर्मास्यैश्चविविधैर्यज्ञैश्चावाप्तदक्षिणैः ७ अयजच्छ्रद्धयाराजापरिसं
वत्सरान्शतम् ॥ गवांशतसहस्राणिशतमश्वशतानिच ८ शतंनिष्कसहस्राणिगवांचाप्ययुतानिषट् ॥ उत्थायोत्थायसंप्रादात्परिसंवत्सरान्शतम् ९ नक्षत्रेषुचसर्वे
षुददन्नक्षत्रदक्षिणाः ॥ ईजेचविविधैर्यज्ञैर्यथासोमोऽंगिरायथा १० सौवर्णांपृथिवींकृत्वायइमांमणिशर्कराम् ॥ विप्रेभ्यःप्राददद्राजासोऽश्वमेधेमहामखे ११ जांबू
नदमयायूपाःसर्वेरत्नपरिच्छदाः ॥ गयस्यासन्समृद्धास्तुसर्वभूतमनोहराः १२ सर्वकामसमृद्धंचप्रादादन्नंगयस्तदा ॥ ब्राह्मणेभ्यःप्रहृष्टेभ्यःसर्वभूतेभ्यएवच १३

॥ इतिद्रोणपर्वणिटीकायांपंचषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ ७ ॥ ॥ गयमितिस्पष्टार्थः १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ नक्षत्रविहितादक्षिणाः १० । ११ । १२ । १३

१४ । १५ । १६ । १७ । १८ । १९ । २० । २१ ॥ इतिद्रोणपर्वणिटीकायांषट्षष्टितमोऽध्यायः ॥ ६६ ॥ सांकृतिमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ पारिभाषिकंनिष्कमाह



ससमुद्रवनद्वीपनदीनदवनेषुच ॥ नगरेषुचराष्ट्रेषुदिविव्योम्निचयेऽवसन् १४ भूतग्रामाश्चविविधाःसंतृप्तायज्ञसंपदा ॥ गयस्यसदृशोयज्ञोनास्त्यन्यइतितेऽब्रुवन् १५ षट्त्रिंशद्योजनायामात्रिंशद्योजनमायता ॥ पश्चात्पुरश्चतुर्विंशद्वेदीह्यासीद्धिरण्मयी १६ गयस्ययजमानस्यमुक्तावज्रमणिस्तृता ॥ प्रादात्सब्राह्मणेभ्योथवासांस्याभरणानिच १७ यथोक्तादक्षिणाश्चान्याविप्रेभ्योभूरिदक्षिणः ॥ यत्रभोजनशिष्टस्यपर्वताःपंचविंशतिः १८ कुल्याःकुशलवाहिन्योरसानामभवंस्तदा ॥ वस्त्राभरणगंधानांराशयश्चपृथग्विधाः १९ यस्यप्रभावाच्चगयस्त्रिषुलोकेषुविश्रुतः ॥ वटश्चाक्षय्यकरणःपुण्यंब्रह्मरसश्चतत् २० सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरस्तुभ्यंमापुत्रमनुतप्यथाः ॥ अयज्वानमदाक्षिण्यमभिश्वैत्येतिव्याहरन् २१ ॥ इतिश्रीम० द्रोण० आभिमन्युवधपर्वणि षोडशराजकीयेषट्षष्टितमोऽध्यायः ॥ ६६ ॥ छ ॥ नारदउवाच ॥ सांकृतिंरंतिदेवंचमृतंसृंजयशुश्रुम ॥ यस्यद्विशतसहस्राआसन्सूदामहात्मनः १ गृहानभ्यागतान्विप्रानातिथीन्परिवेषकाः ॥ पक्वापक्वंदिवारात्रंवरान्नममृतोपमम् २ न्यायेनाधिगतंवित्तंब्राह्मणेभ्योह्यमन्यत ॥ वेदानधीत्यधर्मेणयश्चक्रेद्विषतोवशे ३ उपस्थिताश्चपशवःस्वयंयंशंसितव्रतम् ॥ बहवःस्वर्गमिच्छंतोविधिवत्सत्रयाजिनम् ४ नदीमहानसाद्यस्यप्रवृत्ताचर्मराशितः ॥ तस्माच्चर्मण्वतीपूर्वमग्निहोत्रेऽभवत्पुरा ५ ब्राह्मणेभ्योऽददन्निष्कान्सौवर्णान्सप्रभावतः ॥ तुभ्यंनिष्कंतुभ्यंनिष्कमितिहस्मप्रभाषते ६ तुभ्यंतुभ्यमितिप्रादान्निष्कान्निष्कान्सहस्रशः ॥ ततःपुनःसमाश्वास्यनिष्कानेवप्रयच्छति ७ अल्पंदत्तंमयाद्येतिनिष्ककोटिंसहस्रशः ॥ एकाह्नादास्यतिपुनःकोऽन्यस्तत्संप्रदास्यति ८ द्विजपाणिवियोगेनदुःखंमेशाश्वतंमहत् ॥ भविष्यतिनसंदेहएवंराजाददद्वसु ९ सहस्रशश्चसौवर्णान्वृषभान्गोशतानुगान् ॥ साष्टंशतंसुवर्णानांनिष्कमाहुर्धनंतथा १० अध्यर्धमासमददद्ब्राह्मणेभ्यःशतंसमाः ॥ अग्निहोत्रोपकरणंयज्ञोपकरणंचयत् ११ ऋषिभ्यःकरकान्कुंभान्स्थालीःपिठरमेवच ॥ शयनासनयानानिप्रासादांश्चगृहाणिच १२ वृक्षांश्चविविधान्दद्यादन्नानिचधनानिच ॥ सर्वंसौवर्णमेवासीद्रंतिदेवस्यधीमतः १३ तत्रास्यगाथागायंतियेपुराणविदोजनाः ॥ रंतिदेवस्यतांदृष्ट्वासमृद्धिमतिमानुषीम् १४ नैतादृशंदृष्टपूर्वंकुबेरसदनेष्वपि ॥ धनंचपूर्यमाणंनःकिंपुनर्मनुजेष्विति १५ व्यक्तंवस्वोकसारेयमित्यूचुस्तत्रविस्मिताः ॥ सांकृतेरंतिदेवस्ययांरात्रिमतिथिर्वसेत् १६ आलभ्यंततदागावःसहस्राण्येकविंशतिः ॥ तत्रस्मसूदाःक्रोशंतिसुमृष्टमणिकुंडलाः १७ सूपंभूयिष्ठमश्नीध्वंनाद्यमांसंयथापुरा ॥ रंतिदेवस्ययत्किंचित्सौवर्णमभवत्तदा १८ तत्सर्वंविततेयज्ञेब्राह्मणेभ्योह्यमन्यत ॥ प्रत्यक्षंतस्यहव्यानिप्रतिगृह्णंतिदेवताः १९

सहस्रशइति १० अध्यर्धमासंपक्षेपक्षेइत्यर्थः शतंसमाइतिवाक्यशेषात् ११ । १२ । १३ । १४ । १५ वस्वोकसारा सलोपआर्षः कनकमयानिओकांसिसारोयस्याःसातथा १६ । १७ । १८ । १९

२० । २१ ॥ इतिद्रोणपर्वणिटीकायांसप्तषष्टितमोऽध्यायः ॥ ६७ ॥ दौष्यंतिमिति १ । २ क्रूरानिति यथामनःशिलामयाःशिलाःजतुराशिभिर्लाक्षापुंजैर्युक्तास्तत्सदृशान्रक्तबिंदुयुक्तान् रक्तपीतवर्णान् व्याघ्रविशेषान् वशेऽकरोदित्यर्थः ३ । ४ । ५ कृच्छ्रप्राणंसंकटगतंयथास्यात्तथाबध्द्वा ६ माविजीजहिमाहिंसीः ७ । ८ । ९ । १० । ११ व्यामोहस्तचतुष्टयं परिणाहेनदैर्घ्येण

कव्यानिपितरःकालेसर्वकामान्द्विजोत्तमाः ॥ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया २० पुत्रात्पुण्यतरस्तुभ्यंमापुत्रमनुतप्यथाः ॥ अयज्वानमदाक्षिण्यमभि श्वैत्येतिव्याहरन् २१ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणि षोडशराजकीयेसप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ नारदउवाच ॥ दौष्यंतिंभ रतंचापिमृतंसृंजयशुश्रुम ॥ कर्माण्यसुकराण्यन्यैःकृतवान्यःशिशुर्वने १ हिमावदातान्यःसिंहान्नखदंष्ट्रायुधान्बली ॥ निर्वीर्यांस्तरसाकृत्वाविचकर्षबबंधच २ क्रूरांश्चोग्रतरान्व्याघ्रान्दमित्वाचाकरोद्वशे ॥ मनःशिलाइवशिलाःसंयुक्ताजतुराशिभिः ३ व्यालादींश्चातिबलवान्सुप्रतीकान्गजानपि ॥ दंष्ट्रासुगृह्यविमुखान् शुष्कास्यानकरोद्वशे ४ महिषानप्यतिबलोबलिनोविचकर्षह ॥ सिंहानांचसुदृप्तानांशतान्याकर्षयद्बलात् ५ बलिनःसृमरान्खड्गान्नानासत्वानिचाप्युत ॥ कृच्छ्रप्राणंवनेबद्धादमयित्वाप्यवासृजत् ६ तंसर्वदमनेत्याहुर्द्विजास्तेनास्यकर्मणा ॥ तंप्रत्यषेधज्जननीमासत्वानिविजीजहि ७ सोऽश्वमेधशतेनेष्ट्वायमुनामनु वीर्यवान् ॥ त्रिशताश्वान्सरस्वत्यांगंगामनुचतुःशतान् ८ सोऽश्वमेधसहस्रेणराजसूयशतेनच ॥ पुनरीजेमहायज्ञैःसमाप्तवरदाक्षिणैः ९ अग्निष्टोमातिरात्रा भ्यामिष्ट्वाविश्वजिताअपि ॥ वाजपेयसहस्राणांसहस्रैश्चसुसंवृतैः १० इष्ट्वाशाकुंतलोराजातर्पयित्वाद्विजान्धनैः ॥ सहस्रंयत्रपद्मानांकण्वायभरतोददौ ११ जां बूनदस्यशुद्धस्यकनकस्यमहायशाः ॥ यस्ययूपःशतव्यामःपरिणाहेनकांचनः १२ समागम्यद्विजैःसार्धंसेंद्रैर्देवैःसमुच्छ्रितः ॥ अलंकृतान्राजमानान्सर्वरत्नै र्मनोहरैः १३ हैरण्यानश्वान्द्विरदान्रथानुष्ट्रानजाविकम् ॥ दासीदासंधनंधान्यंगाःसवत्साःपयस्विनीः १४ ग्रामान्गृहांश्चक्षेत्राणिविविधांश्चपरिच्छदान् ॥ कोटीशतायुतांश्चैवब्राह्मणेभ्योह्यमन्यत १५ चक्रवर्तीह्यदीनात्माजितारिर्ह्यजितःपरैः ॥ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया १३ पुत्रात्पुण्यतरस्तुभ्यंमापु त्रमनुतप्यथाः ॥ अयज्वानमदाक्षिण्यमभिश्वेत्येतिव्याहरन् १७ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणि षोडशराजकीयेअष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ७ ॥ नारदउवाच ॥ पृथुंवैन्यंचराजानंमृतंसृंजयशुश्रुम ॥ यमभ्यषिंचन्साम्राज्येराजसूयेमहर्षयः १ यत्नतःप्रथितेत्यूचुःसर्वानभिभवन्पृथुः ॥ क्षतान्नस्त्रास्यतेसर्वानित्येवंक्षत्रियोऽभवत् २ पृथुंवैन्यंप्रजादृष्ट्वारक्ताःस्मेतियदब्रुवन् ॥ ततोराजेतिनामास्यअनुरागादजायत ३ अकृष्टपच्यापृथिवीआसी द्वैन्यस्यकामधुक् ॥ सर्वाःकामदुघागावःपुटकेपुटकेमधु ४ आसन्हिरण्मयादर्भाःसुखस्पर्शाःसुखावहाः ॥ तेषांचीराणिसंवीताःप्रजास्तेष्वेवशेरते ५ फलान्य मृतकल्पानिस्वादूनिचमधूनिच ॥ तेषामासीत्तदाऽऽहारोनिराहाराश्चनाभवन् ६

१२ । १३ । १४ । १५ । १६ । १७ ॥ इतिद्रोणपर्वणिटीकायामष्टष ष्टितमोऽध्यायः ॥ ६८ ॥ पृथुमिति १ प्रथितापृथ्वीअनेनेतिपृथुरित्यर्थः २ । ३ । ४ तेषांदर्भाणामेवचीराणिवल्कलानियैःप्रजाःसंवीताःस्तान्येवपरिधानीयानिशयनानिचेत्यर्थः ५ । ६

७ । ६ ध्वजभंगस्तोरणादिना ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ दोग्धेतिचाद्वत्सोऽपिदेवएवप्रियंदुग्धं पात्रमप्यर्थान्मनएवेतिकल्प्यं ग्रंथांतराद्वावत्सपा

अरोगाःसर्वसिद्धार्थामनुष्याह्यकुतोभयाः ॥ न्यवसंतयथाकामंवृक्षेषुचगुहासुच ७ प्रविभागोनराष्ट्राणांपुराणांचाभवत्तदा ॥ यथासुखंयथाकामंतथैतामुदिताः प्रजाः ८ तस्यसंस्तंभिताह्यापःसमुद्रमभियास्यतः ॥ पर्वताश्चददुर्मार्गंध्वजभंगश्चनाभवत् ९ तंवनस्पतयःशैलादेवासुरनरोरगाः ॥ सप्तर्षयःपुण्यजनागंधर्वाप्सरसोऽपिच १० पितरश्चसुखासीनमभिगम्येदमब्रुवन् ॥ सम्राडसिक्षत्रियोऽसिराजागोप्तापिताऽसिनः ११ देह्यस्मभ्यंमहाराजप्रभुःसन्नीप्सितान्वरान् ॥ यैर्वयंशाश्वतीस्तृप्तीर्वर्तयिष्यामहेसुखम् १२ तथेत्युक्त्वापृथुर्वैन्योगृहीत्वाऽजगवंधनुः ॥ शरांश्चाप्रतिमान्घोरांश्चिंतयित्वाऽब्रवीन्महीम् १३ एह्येहिवसुधेक्षिप्रंम्रैभ्यःकांक्षितंपयः ॥ ततोदास्यामिभद्रंतेअन्नंयस्ययथेप्सितम् १४ ॥ वसुधोवाच ॥ दुहितृत्वेनमांवीरसंकल्पयितुमर्हसि ॥ तथेत्युक्त्वापृथुःसर्वंविधानमकरोद्वशी १५ ततोभूतनिकायास्तांवसुधांदुदुहुस्तदा ॥ तांवनस्पतयःपूर्वंसमुत्तस्थुर्दुधुक्षवः १६ साऽतिष्ठद्वत्सलावत्संदोग्धृपात्राणिचेच्छती ॥ वत्सोऽभूत्पुष्पितःशालःप्लक्षोदोग्धाऽभवत्तदा १७ छिन्नप्ररोहणंदुग्धंपात्रमौदुंबरंशुभम् ॥ उदयःपर्वतोवत्सोमेरुर्दोग्धामहागिरिः १८ रत्नान्योषधयोदुग्धंपात्रमश्ममयंतथा ॥ दोग्धाचासीत्तदादेवोदुग्धमूर्जस्करंप्रियम् १९ असुरादुदुहुर्मायामामपात्रेतुतेतदा ॥ दोग्धाद्विमूर्धातत्रासीद्वत्सश्चासीद्विरोचनः २० कृषिंचसस्यंचनरादुदुहुःपृथिवीतले ॥ स्वायंभुवोमनुर्वत्सस्तेषांदोग्धाऽभवत्पृथुः २१ अलाबुपात्रेचतथाविषंदुग्धावसुंधरा ॥ धृतराष्ट्रोऽभवद्दोग्धातेषांवत्सस्तुतक्षकः २२ सप्तर्षिभिर्ब्रह्मदुग्धातथाचाक्लिष्टकर्मभिः ॥ दोग्धाबृहस्पतिःपात्रंछंदोवत्सश्चसोमराट् २३ अंतर्धानंचामपात्रेदुग्धापुण्यजनैर्विराट् ॥ दोग्धावैश्रवणस्तेषांवत्सश्चासीद्वृषध्वजः २४ पुण्यगंधान्पद्मपात्रेगंधर्वाप्सरसोऽदुहन् ॥ वत्सश्चित्ररथस्तेषांदोग्धाविश्वरुचिःप्रभुः २५ स्वधांरजतपात्रेषुदुदुहुःपितरश्चताम् ॥ वत्सोवैवस्वतस्तेषांयमोदोग्धांतकस्तदा २६ एवंनिकायैस्तैर्दुग्धापयोऽभीष्टंहिसाविराट् ॥ यैर्वर्तयंतितेह्यद्यपात्रैर्वत्सैश्चनित्यशः २७ यज्ञैश्चविविधैरिष्ट्वापृथुर्वैन्यःप्रतापवान् ॥ संतर्पयित्वाभूतानिसर्वैःकामैर्मनःप्रियैः २८ हैरण्यानकरोद्राजायेकेचित्पार्थिवाभुवि ॥ तान्ब्राह्मणेभ्यःप्रायच्छदश्वमेधेमहामखे २९ षष्टिनागसहस्राणिषष्टिनागशतानिच ॥ सौवर्णानकरोद्राजाब्राह्मणेभ्यश्चतान्ददौ ३० इमांचपृथिवींसर्वांमणिरत्नविभूषिताम् ॥ सौवर्णीमकरोद्राजाब्राह्मणेभ्यश्चतान्ददौ ३१ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरस्तुभ्यंमापुत्रमनुतप्यथाः ३२ अयज्वानमदाक्षिण्यमभिश्वैत्येतिव्याहरन् ३३ इतिश्रीम०द्रो०अभिमन्युवधपर्वणिषोडशराजकीयेएकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ नारदउवाच ॥ रामोमहातपाःशूरोवीरलोकनमस्कृतः ॥ जामदग्न्योऽप्यतियशाअवितृप्तोमरिष्यति १

त्रेज्ञेये एवमन्यत्रापि १९ । २० । २१ । २२ । २३ विराट्पृथिवी २४ । २५ । २६ । २७ । २८ पार्थिवाःपृथ्वीसंबंधिपदार्थाः २९ । ३० । ३१ । ३२ । ३३ ॥ इतिद्रोणपर्वणिटीकायामेकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ ॥ ७ ॥ येमृतास्तेऽतीता येवर्तमानास्तेऽपिमरिष्यंत्येवेत्याह रामइति १

योरामःइमांपृथ्वींसुखामनुपद्रवांकुर्वन् आद्यमादियुगविहितंधर्ममनुपर्यैतिस्म अनुप्रवर्तितवानित्यर्थः २ क्षत्रियैःकार्तवीर्यपुत्रैः अब्रुवन्नविकत्थयन् ३ मृत्योर्मृत्युमवधीकृत्य ४ तस्मिंस्तन्मध्येएवदं

यःस्माऽऽद्यमनुपर्यैतिभूमिंकुर्वन्निमांसुखाम् ॥ नचासीद्विक्रियायस्यप्राप्यश्रियमनुत्तमाम् २ यःक्षत्रियैःपरामृष्टेवत्सेपितरिचाब्रुवन् ॥ ततोऽवधीत्कार्त्तवीर्य
मजितंसमरेपरैः ३ क्षत्रियाणांचतुःषष्टिमयुतानिसहस्रशः ॥ तदामृत्योःसमेतानिएकेनधनुषाऽजयत् ४ ब्रह्मद्विषांचाथतस्मिन्सहस्राणिचतुर्दश ॥ पुनरन्या
न्निजग्राहदंतकूरंजघानह ५ सहस्रंमुसलेनाहन्सहस्रमसिनावधीत् ॥ उद्बंधनात्सहस्रंचसहस्रमुदकेधृतम् ६ दंतान्भंक्त्वासहस्रस्यकर्णान्नासान्यकृंतत ॥
ततःसप्तसहस्राणांकटुधूपमपाययत् ७ शिष्टान्बद्ध्वाचहत्वावैतेषांमूर्ध्निविभिद्यच ॥ गुणावतीमुत्तरेणखांडवाद्दक्षिणेनच ॥ गिर्यंतेशतसाहस्राहैहयाःसमरेहताः
८ सरथाश्वगजावीरानिहतास्तत्रशेरते ॥ पितुर्वधामर्षितेनजादग्न्येनधीमता ९ निजघ्नेदशसाहास्रान्रामःपरशुनातदा ॥ नह्यमृष्यतताघाचोयास्तैर्भृशमुदी
रिताः १० भृगोरामाभिधावेतियदाऽऽक्रंदन्द्विजोत्तमाः ॥ ततःकाश्मीरदरदान्कुंतिक्षुद्रकमालवान् ११ अंगवंगकलिंगांश्चविदेहांस्ताम्रलिप्तकान् ॥ रक्षोवा
हान्वीतिहोत्रांस्त्रिगर्त्तान्मार्तिकावतान् १२ शिबीनन्यांश्चराजन्यान्देशान्देशान्सहस्रशः ॥ निजघानशितैर्बाणैर्जामदग्न्यःप्रतापवान् १३ कोटीशतसहस्राणि
क्षत्रियाणांसहस्रशः ॥ इंद्रगोपकवर्णस्यबंधुजीवनिभस्यच १४ रुधिरस्यपरीवाहैःपूरयित्वासरांसिच ॥ सर्वानष्टादशद्वीपान्वशमानीयभार्गवः १५ ईजेक्रतु
शतैःपुण्यैःसमाप्तवरदक्षिणैः ॥ वेदीमष्टनलोत्सेधांसौवर्णांविधिनिर्मिताम् १६ सर्वरत्नशतैःपूर्णांपताकाशतमालिनीम् ॥ ग्राम्यारण्यैःपशुगणैःसंपूर्णांचमही
मिमाम् १७ रामस्यजामदग्न्यस्यप्रतिजग्राहकश्यपः ॥ ततःशतसहस्राणिद्विपेंद्रान्हेमभूषणान् १८ निर्दस्युंपृथिवींकृत्वाशिष्टेष्टजनसंकुलाम् ॥ कश्यपाय
ददौरामोहयमेधमहामखे १९ त्रिःसप्तकृत्वःपृथिवींकृत्वानिःक्षत्रियांप्रभुः ॥ इष्ट्वाक्रतुशतैर्वीरोब्राह्मणेभ्योह्यमन्यत २० सप्तद्वीपांवसुमतींमारीचोऽगृह्णताद्विजः ॥
रामंप्रोवाचनिर्गच्छवसुधातोममाज्ञया २१ सकश्यपस्यवचनात्प्रोत्सार्यसरितांपतिम् ॥ इषुपातेयुधांश्रेष्ठःकुर्वन्ब्राह्मणशासनम् २२ अध्यावसद्गिरिश्रेष्ठंमहें
द्रंपर्वतोत्तमम् ॥ एवंगुणशतैर्युक्तोभृगूणांकीर्तिवर्धनः २३ जामदग्न्योह्यतियशामरिष्यतिमहाद्युतिः ॥ त्वयाचतुर्भद्रतरःपुण्यात्पुण्यतरस्तव २४ अयज्वा
नमदाक्षिण्यंमापुत्रमनुतप्यथाः ॥ एतेचतुर्भद्रतरास्त्वयाभद्रशताधिकाः ॥ मृतानरवरश्रेष्ठमरिष्यंतिचसृंजय २५ ॥ इतिश्रीम०द्रो०अभिमन्युवधपर्वणिषोड
शराजकीयेसप्ततितमोऽध्यायः ॥ ७० ॥ व्यासउवाच ॥ पुण्यमाख्यानमायुष्यंश्रुत्वाषोडशराजिकम् ॥ अव्याहरन्नरपतिस्तूष्णीमासीत्ससृंजयः १ तमब्रवी
त्तथाऽऽसीनंनारदोभगवानृषिः ॥ श्रुतंकीर्तयतोमह्यंगृहीतंतेमहाद्युते २ आहोस्विदंततोनष्टंश्राद्धंशूद्रीपताविव ॥ सएवमुक्तःप्रत्याहप्रांजलिःसृंजयस्तदा ३

तकूरंतद्देशाधिपतिं ५ उद्बंधनाद्वृक्षशाखावलंबनात् ६ । ७ । ८ । ९ तैराश्रमवासिभिः १० । ११ । १२ । १३ । १४ । १५ अष्टनलेरयत्रनलशब्दश्चतुर्हस्तवचनः १६ । १७ । १८ । १९ । २०
२१ । २२ । २३ । २४ । २५ ॥ इतिद्रोणपर्वणिटीकायांसप्ततितमोऽध्यायः ॥ ७० ॥ ॥ ७१ ॥ पुण्यमाख्यानमिति १ । २ । ३

विस्मयेनपुण्याख्यानश्रवणजनितचित्तविस्तारेण ४ । ५ । ६ प्रतीतःप्रीतः ७ । ८ । ९ । १० सान्नाहिकःयुद्धोद्यतः ११ । १२ । १३ । १४ अप्राप्यमीहितमीप्सितंकिंचिदपिनशक्यंनसुलभं १५ । १६ अंतान्मरणात् भागवतःसंपत्प्राप्तःद्विजोचितांद्विजैरभिमतां १७ । १८ अघंदुःखं १९ अभिमानंमानातिशयं चिंतयन्नभिलषन्नशोकंनकुर्वतीतिशेषः नशोकःशोकउच्यते किंत्वात्मैव

एतच्छ्रुत्वामहाबाहोधन्यमाख्यानमुत्तमम् ॥ राजर्षीणांपुराणानांयज्वनांदक्षिणावताम् ४ विस्मयेनहृतेशोकेतमसीवार्कतेजसा ॥ विपाप्मास्म्यव्यथोपेतो ब्रूहिकिंकरवाण्यहम् ५ ॥ नारदउवाच ॥ दिष्ट्याऽपहृतशोकस्त्वंवृणीष्वेहयदिच्छसि ॥ तत्तत्प्रपत्स्यसेसर्वंनमृषावादिनोवयम् ६ ॥ सृंजयउवाच ॥ एते नैवप्रतीतोऽहंप्रसन्नोयद्भवान्मम ॥ प्रसन्नोयस्यभगवान्नतस्यास्तीहदुर्लभम् ७ ॥ नारदउवाच ॥ मृतंददानितेपुत्रंदस्युभिर्निहतंवृथा ॥ उद्धृत्यनरकात्कष्टात्पशुवत्प्रोक्षितंयथा ८ ॥ व्यासउवाच ॥ प्रादुरासीत्ततःपुत्रःसृंजयस्याद्भुतप्रभः ॥ प्रसन्नेनर्षिणादत्तःकुबेरतनयोपमः ९ ततःसंगम्यपुत्रेणप्रीतिमानभवन्नृपः ॥ ईजेचक्रतुभिःपुण्यैःसमाप्तवरदक्षिणैः १० अकृतार्थश्चभीतश्चनचसान्नाहिकोहतः ॥ अयज्वात्वनपत्यश्चततोऽसौजीवितःपुनः ११ शूरोवीरःकृतार्थश्चप्रताप्यारीन्सहस्रशः ॥ अभिमन्युर्गतोवीरःपृतनाभिमुखोहतः १२ ब्रह्मचर्येणयान्कांश्चित्प्रज्ञयाचश्रुतेनच ॥ इष्टैश्चक्रतुभिर्यांतितांस्तेपुत्रोक्षयान्गतः १३ विद्वांसःकर्मभिःपुण्यैःस्वर्गमीहंतिनित्यशः ॥ नतुस्वर्गादयंलोकःकाम्यतेस्वर्गवासिभिः १४ तस्मात्स्वर्गगतंपुत्रमर्जुनस्यहतंरणे ॥ नचेहानयितुंशक्यंकिंचिदप्राप्यमीहितम् १५ यांयोगिनोध्यानविविक्तदर्शनाःप्रयांतियांचोत्तमयज्विनोजनाः ॥ तपोभिरिद्धैरनुयांतियांतथातामक्षयांतेतनयोगतोगतिम् १६ अंतात्पुनर्भावगतोविराजतेराजेववीरोह्यमृतात्मरश्मिभिः ॥ तामैंदवीमात्मतनुंद्विजोचितांगतोऽभिमन्युर्नसशोकमर्हति १७ एवंज्ञात्वास्थिरोभूत्वाजह्यरीन्धैर्यमाप्नुहि ॥ जीवंतएवनःशोच्यानतुस्वर्गगतानघ १८ शोचतोहिमहाराजअघमेवाभिवर्धते ॥ तस्माच्छोकंपरित्यज्यश्रेयसेप्रयतेद्बुधः १९ प्रहर्षमभिमानंच सुखप्राप्तिंचचिंतयन् ॥ एतद्बुद्ध्वाबुधाःशोकंनशोकःशोकउच्यते २० एवंविद्वन्समुत्तिष्ठप्रयतोभवमाशुचः ॥ श्रुतस्तेसंभवोमृत्योस्तपांस्यनुपमानिच २१ सर्वभूतसमत्वंचचंचलाश्वविभूतयः ॥ सृंजयस्यतुतंपुत्रंमृतंसंजीवितंपुनः २२ एवंविद्वन्महाराजमाशुचःसाधयाम्यहम् ॥ एतावदुक्त्वाभगवांस्तत्रैवांतरधीयत २३ वागीशानेभगवतिव्यासेव्यभ्रनभःप्रभे ॥ गतेमतिमतांश्रेष्ठेसमाश्वास्ययुधिष्ठिरम् २४ पूर्वेषांपार्थिवेंद्राणांमहेंद्रप्रतिमौजसाम् ॥ न्यायाधिगतवित्तानांतांश्रुत्वायज्ञसंपदम् २५ संपूज्यमनसाविद्वान्विशोकोऽभूद्युधिष्ठिरः ॥ पुनश्चाचिंतयद्दीनःकिंस्विद्वक्ष्येधनंजयम् २६ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिअभिमन्युवधपर्वणिषोडशराजकीयेएकसप्ततितमोऽध्यायः ॥ ७१ ॥

॥ समाप्तमभिमन्युवधपर्व ॥ अथप्रतिज्ञापर्व ॥

॥ संजयउवाच ॥ तस्मिन्नहनिनिर्वृत्तेघोरेप्राणभृत्तांक्षये ॥ आदित्येऽस्तंगतेश्रीमान्संध्याकालउपस्थिते १ व्यपयातेषुवासायसर्वेषुभरतर्षभ ॥ हत्वासंशप्तकव्रातान्दिव्यैरस्त्रैःकपिध्वजः २

शोकइत्यर्थः । २० । २१ सृंजयस्यपुत्रमुद्दिश्यचंचलाविभूतयश्चश्रुताइतिशेषानुषंगः । २२ । २३ । २४ । २५ । २६ ॥ इतिद्रोणपर्वणिटीकायामेकसप्ततितमोऽध्यायः ॥ ७१ ॥ तस्मिन्निति १ । २

३ । ४ श्लिष्टमनुबद्धं ५ । ६ । ७ । ८ । ९ । १० आडंबरैस्तूर्यरवैः ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२

प्रायात्स्वशिबिरंजिष्णुर्जैत्रमास्थायतंरथम् ॥ गच्छन्नेवचगोविंदंसाश्रुकंठोऽभ्यभाषत ३ किंनुमेहृदयंत्रस्तंवाक्सज्जातिकेशव ॥ स्यंदंतिचाप्यनिष्टानिगात्रंसी
दतिचाप्युत ४ अनिष्टंचैवमेश्लिष्टंहृदयान्नापसर्पति ॥ भुवियेदिक्षुचात्युग्राउत्पातास्त्रासयंतिमाम् ५ बहुप्रकाराहृश्यंतेसर्वएवाघशंसिनः ॥ अपिस्वास्तिभ
वेद्राज्ञःसामात्यस्यगुरोर्मम ६ ॥ वासुदेवउवाच ॥ व्यक्तंशिवंतवभ्रातुःसामात्यस्यभविष्यति ॥ माशुचःकिंचिदेवान्यत्तत्रानिष्टंभविष्यति ७ संजयउवाच ॥
ततःसंध्यामुपास्यैववीरौवीरावसादने ॥ कथयंतौरणेवृत्तंप्रयातौरथमास्थितौ ८ ततःस्वशिबिरंप्राप्तौहतानंदंहतत्विषम् ॥ वासुदेवोऽर्जुनश्चैवकृत्वाकर्मसुदु
ष्करम् ९ ध्वस्ताकारंसमालक्ष्यशिबिरंपरवीरहा ॥ बीभत्सुरब्रवीत्कृष्णमस्वस्थहृदयस्ततः १० नदंतिनाद्यतूर्याणिमंगल्यानिजनार्दन ॥ मिश्रादुंदुभिनि
र्घोषैःशंखाश्चाडंबरैःसह ११ वीणानैवाद्यवाद्यंतेशम्यातालस्वनैःसह ॥ मंगल्यानिचगीतानिनगायंतिपठंतिच १२ स्तुतियुक्तानिरम्याणिममानीकेषुबंदि
नः ॥ योधाश्चापिहिमांदृष्ट्वानिवर्तंतेह्यधोमुखाः १३ कर्माणिचयथापूर्वंकृत्वानाभिवदंतिमाम् ॥ अपिस्वस्तिभवेदद्यभ्रातृभ्योममसाधव १४ नहिशुद्ध्यतिमे
भावोदृष्ट्वास्वजनमाकुलम् ॥ अपिपांचालराजस्यविराटस्यचमानद १५ सर्वेषांचैवयोधानांसामग्र्यंस्यान्ममाच्युत ॥ नचमामद्यसौभद्रःप्रहृष्टोभ्रातृभिःसह ॥
रणादायांतमुचितंप्रत्युद्यातिहसन्निव १६ ॥ संजयउवाच ॥ एवंसंकथयंतौतौप्रविष्टौशिबिरंस्वकम् ॥ ददृशातेभृशास्वस्थान्पांडवान्नष्टचेतसः १७ दृष्ट्वाभ्रा
तॄंश्चपुत्रांश्चविमनावानरध्वजः ॥ अपश्यंश्चैवसौभद्रमिदंवचनमब्रवीत् १८ मुखवर्णोऽप्रसन्नोवःसर्वेषामेवलक्ष्यते ॥ नचाभिमन्युंपश्यामिनचमांप्रतिनंदथ
१९ मयाश्रुतश्चद्रोणेनचक्रव्यूहोविनिर्मितः ॥ नचवस्तस्यभेत्तास्तिविनासौभद्रमर्भकम् २० नचोपदिष्टस्तस्यासीन्मयाऽनीकाद्विनिर्गमः ॥ कच्चिन्नबा
लोयुष्माभिःपरानीकंप्रवेशितः २१ भित्त्वानीकंमहेष्वासःपरेषांबहुशोयुधि ॥ कच्चिन्ननिहतःसंख्येसौभद्रःपरवीरहा २२ लोहिताक्षंमहाबाहुंजातंसिंहमिवाद्रिषु ॥
उपेंद्रसदृशंब्रूतकथमायोधनेहतः २३ सुकुमारंमहेष्वासंवासवस्यात्मजात्मजम् ॥ सदाममप्रियंब्रूतकथमायोधनेहतः २४ सुभद्रायाःप्रियंपुत्रंद्रौपद्याःकेशवस्य
च ॥ अंबायाश्चप्रियंनित्यंकोऽवधीत्कालमोहितः २५ सदृशोवृष्णिवीरस्यकेशवस्यमहात्मनः ॥ विक्रमश्रुतमाहात्म्यैःकथमायोधनेहतः २६ वार्ष्णेयीदयितं



शूरंमयासततलालितम् ॥ यदिपुत्रंनपश्यामियास्यामियमसादनम् २७ मृदुकुंचितकेशांतंबालंबालमृगेक्षणम् ॥ मत्तद्विरदविक्रांतंसिंहपोतमिवोद्गतम् २८
स्मिताभिभाषिणंदांतंगुरुवाक्यकरंसदा ॥ बाल्येप्यतुलकर्माणंप्रियवाक्यममत्सरम् २९ महोत्साहंमहाबाहुंदीर्घराजीवलोचनम् ॥ भक्तानुकंपिनंदांतंनचनी
चानुसारिणम् ३० कृतज्ञंज्ञानसंपन्नंकृतास्त्रमनिवर्तिनम् ॥ युद्धाभिनंदिनंनित्यंद्विषतांभयवर्धनम् ३१ २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१

३२। ३३। ३४। ३५। ३६। ३७। ३८। ३९। ४०। ४१। ४२। ४३ यथेतिवत्सममर्यं ४४। ४५। ४६। ४७। ४८। ४९ यदिमेपितास्यात्तदामेत्राणंस्यादित्यन्वयः

स्वेषांप्रियहितेयुक्तंपितॄणांजयगृद्धिनम् ॥ नचपूर्वंप्रहर्त्तारंसंग्रामेनष्टसंभ्रमम् ३२ यदिपुत्रंनपश्यामियास्यामियमसादनम् ॥ रथेषुगण्यमानेषुगणितंतं महारथम् ३३ मयाऽध्यर्धगुणंसंख्येतरुणंबाहुशालिनम् ॥ प्रद्युम्नस्यप्रियंनित्यंकेशवस्यममैवच ३४ यदिपुत्रंनपश्यामियास्यामियमसादनम् ॥ सुनसंसुल लाटांतंस्वक्षिभ्रूदशनच्छदम् ३५ अपश्यतस्तद्वदनंकाशांतिर्हृदयस्यमे ॥ तंत्रीस्वनसुखंरम्यंपुंस्कोकिलसमध्वनिम् ३६ अशृण्वतःस्वनंतस्यकाशांति र्हृदयस्यमे ॥ रूपंचाप्रतिमंतस्यत्रिदशैश्चापिदुर्लभम् ३७ अपश्यतोहिवीरस्यकाशांतिर्हृदयस्यमे ॥ अभिवादनदक्षंतंपितॄणांवचनेरतम् ३८ नाद्याहंय दिपश्यामिकाशांतिर्हृदयस्यमे ॥ सुकुमारःसदावीरोमहार्हशयनोचितः ३९ भूमावनाथवच्छेतेनूनंनाथवतांवरः ॥ शयानंसमुपासंतियंपुरापरमास्त्रियः ४० तमद्यविप्रविद्धांगमुपासंत्याशिवाःशिवाः ॥ यःपुराबोध्यतेसुप्तःसूतमागधबंदिभिः ४१ बोधयंत्यद्यतंनूनंश्वापदाविकृतैःस्वनैः ॥ छत्रच्छायासमुचितंतस्यत द्वदनंशुभम् ४२ नूनमद्यरजोध्वस्तंरणरेणुःकरिष्यति ॥ हापुत्रकाऽवितृप्तस्यसततंपुत्रदर्शने ४३ भाग्यहीनस्यकालेनयथामेनीयसेबलात् ॥ साचसंयमनी नूनंसदासुकृतिनांगतिः ४४ स्वभाभिर्मोहितारम्यात्वयात्यर्थंविराजते ॥ नूनंवैवस्वतश्चत्वांवरुणश्चप्रियातिथिम् ४५ शतक्रतुर्धनेशश्चप्राप्तमर्चंत्यभीरुकम् ॥ एवंविलप्यबहुधाभिन्नपोतोवणिग्यथा ४६ दुःखेनमहताऽऽविष्टोयुधिष्ठिरमपृच्छत ॥ कच्चित्सकदनंकृत्वापरेषांकुरुनंदन ४७ स्वर्गतोऽभिमुखःसंख्येयुध्यमा नोनरर्षभैः ॥ सनूनंबहुभिर्यत्तैर्युध्यमानोनरर्षभैः ४८ असहायःसहायार्थीमामनुध्यातवान्ध्रुवम् ॥ पीड्यमानःशरैस्तीक्ष्णैःकर्णद्रोणकृपादिभिः ४९ नानालिंगैः सुधौताग्रैर्ममपुत्रोऽल्पचेतनः ॥ इहमेस्यात्परित्राणंपितेतिसपुनःपुनः ५० इत्येवंविलपन्मन्येनृशंसैर्भुविपातितः ॥ अथवामत्प्रसूतःसस्वस्त्रीयोमाधवस्यच ५१ सुभद्रायांचसंभूतोनचैवंवक्तुमर्हति ॥ वज्रसारमयंनूनंहृदयंसुदृढंमम ५२ अपश्यतोदीर्घबाहुंरक्ताक्षंयन्नदीर्यते ॥ कथंबालेमहेष्वासेनृशंसामर्मभेदिनः ५३ स्वस्त्रीयेवासुदेवस्यममपुत्रेऽक्षिपन्शरान् ॥ योमांनित्यमदीनात्माप्रत्युद्गम्याभिनंदति ५४ उपायांतंरिपून्हत्वासोऽद्यमांकिंनपश्यति ॥ नूनंसपातितः शेतेधरण्यांरुधिरोक्षितः ५५ शोभयन्मेदिनींगात्रैरादित्यइवपातितः ॥ सुभद्रामनुशोचामियापुत्रमपलायिनम् ५६ रणेविनिहतंश्रुत्वाशोकार्तावैविनंक्ष्यति ॥ सुभद्रावक्ष्यतेकिंमामाभिमन्युमपश्यती ५७ द्रौपदीचैवदुःखार्तेतेचवक्ष्यामिकिंन्वहम् ॥ वज्रसारमयंनूनंहृदयंयन्नयास्यति ५८ सहस्रधावधूंदृष्ट्वारुदतींशोकक र्शिताम् ॥ दृप्तानांधार्तराष्ट्राणांसिंहनादोमयाश्रुतः ५९ युयुत्सुश्चापिकृष्णेनश्रुतोवीरानुपालभन् ॥ अशक्तुवंतोबीभत्सुंबालंहत्वामहारथाः ६०

५०। ५१। ५२। ५३। ५४। ५५। ५६। ५७। ५८। ५९। ६०

६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७ । ८८

किंमोदध्वमधर्मांज्ञाःपांडवंदृश्यतांबलम् ॥ किंतयोर्विप्रियंकृत्वाकेशवार्जुनयोर्मृधे ६१ सिंहवन्नदथप्रीताःशोककालउपस्थिते ॥ आगमिष्यतिवःक्षिप्रंफलंपा
पस्यकर्मणः ६२ अधर्मोहिकृतस्तीव्रःकथंस्यादफलश्चिरम् ॥ इतितान्परिभाषन्वैवैश्यापुत्रोमहामतिः ६३ अपायाच्छस्त्रमुत्सृज्यकोपदुःखसमन्वितः ॥
किमर्थमेतन्नाख्यातंत्वयाकृष्णरणेमम ६४ अधाक्षंतानहंकूरांस्तदासर्वान्महारथान् ॥ संजयउवाच ॥ पुत्रशोकार्दितंपार्थंध्यायंतंसाश्रुलोचनम् ६५ निगृह्य
वासुदेवस्तंपुत्राधिभिरभिप्लुतम् ॥ मैवमित्यब्रवीत्कृष्णस्तीव्रशोकसमन्वितम् ६६ सर्वेषामेषवैपंथाशूराणामनिवर्तिनाम् ॥ क्षत्रियाणांविशेषेणयेषांयुद्धेनजी
विका ६७ एषावैयुध्यमानानांशूराणामनिवर्तिनाम् ॥ विहितासर्वशास्त्रज्ञैर्गतिर्मतिमतांवर ६८ ध्रुवंहियुद्धेमरणंशूराणामनिवर्तिनाम् ॥ गतःपुण्यकृतां
लोकानभिमन्युर्नसंशयः ६९ एतच्चसर्ववीराणांकांक्षितंभरतर्षभ ॥ संग्रामेऽभिमुखोमृत्युंप्राप्नुयादितिमानद ७० सचवीरान्रणेहत्वाराजपुत्रान्महाबलान् ॥
वीरैराकांक्षितंमृत्युंसंप्राप्तोऽभिमुखंरणे ७१ माशुचःपुरुषव्याघ्रपूर्वैरेषसनातनः ॥ धर्मकृद्भिःकृतोधर्मःक्षत्रियाणांरणेक्षयः ७२ इमेतेभ्रातरःसर्वेदीनाभरतस
त्तम ॥ त्वयिशोकसमाविष्टेनृपाश्चसुहृदस्तव ७३ एतांश्चवचसासाम्नासमाश्वासयमानद ॥ विदितंवेदितव्यंतेनशोकंकर्तुमर्हसि ७४ एवमाश्वासितःपार्थःकृ
ष्णेनाद्भुतकर्मणा ॥ ततोऽब्रवीत्तदाभ्रातॄन्सर्वान्पार्थःसगद्गदान् ७५ सदीर्घबाहुःपृथ्वंसोदीर्घराजीवलोचनः ॥ अभिमन्युर्यथावृत्तःश्रोतुमिच्छाम्यहंतथा ७६
सनागस्यंदनहयान्द्रक्ष्यध्वंनिहतान्मया ॥ संग्रामेसानुबंधांस्तान्ममपुत्रस्यवैरिणः ७७ कथंचवःकृतास्त्राणांसर्वेषांशस्त्रपाणिनाम् ॥ सौभद्रोनिधनंगच्छेद्वज्रि
णापिसमागतः ७८ यद्येवमहमज्ञास्यमशक्तान्रक्षणेमम ॥ पुत्रस्यपांडुपंचालान्मयागुप्तोभवेत्ततः ७९ कथंचवोरथस्थानांशरवर्षाणिमुंचताम् ॥ नीतोऽभि
मन्युर्निधनंकदर्थीकृत्यवःपरैः ८० अहोवःपौरुषंनास्तिनचवोऽस्तिपराक्रमः ॥ यत्राभिमन्युःसमरेपश्यतांवोऽनिपातितः ८१ आत्मानमेवगर्हेयंयदहंवैसुदुर्ब
लान् ॥ युष्मानाज्ञायनिर्यातोभीरूनकृतनिश्चयान् ८२ आहोस्विद्भूषणार्थायवर्मशस्त्रायुधानिवः ॥ वाचस्तुवक्तुंसंसत्सुममपुत्रमरक्षताम् ८३ एवमुक्त्वाततो
वाक्यंतिष्ठंश्चापवरासिमान् ॥ नस्माशक्यतबीभत्सुःकेनचित्प्रसमीक्षितुम् ८४ तमंतकमिवक्रुद्धंनिःश्वसंतंमुहुर्मुहुः ॥ पुत्रशोकाभिसंतप्तमश्रुपूर्णमुखंतदा ८५
नभाषितुंशक्नुवंतिद्रष्टुंवासुहृदोऽर्जुनम् ॥ अन्यत्रवासुदेवाद्वाज्येष्ठाद्वापांडुनंदनात् ८६ सर्वास्ववस्थासुहितावर्जुनस्यमनोनुगौ ॥ बहुमानात्प्रियत्वाच्चता
वेनंवक्तुमर्हतः ८७ ततस्तंपुत्रशोकेनभृशंपीडितमानसम् ॥ राजीवलोचनंक्रुद्धंराजावचनमब्रवीत् ८८ ॥ इतिश्रीमहाभारतेद्रोणपर्वणि प्रतिज्ञापर्वणिअ
र्जुनकोपेद्विसप्ततितमोऽध्यायः ॥ ७२ ॥ ॥ ४ ॥ ॥ इतिद्रोणपर्वणिटीकायांद्विसप्ततितमोऽध्यायः ॥ ७२ ॥ ॥ ७ ॥ ॥ ७ ॥

त्वयीति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ कौसल्योबृहद्बलः १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१

युधिष्ठिरउवाच ॥ त्वयियातेमहाबाहोसंशप्तकबलंप्रति ॥ प्रयत्नमकरोत्तीव्रमाचार्योग्रहणेमम १ व्यूढानीकावयंद्रोणंवारयामःस्मसर्वशः ॥ प्रतिव्यूह्यरथानीकंयतमानंतथारणे २ सवार्यमाणोरथिभिर्मयिचापिसुरक्षिते ॥ अस्मानभिजगामाशुपीडयन्निशितैःशरैः ३ तेपीडयमानाद्रोणेनद्रोणानीकंनशक्नुमः ॥ प्रतिवीक्षितुमप्याजौभेत्तुंतत्कुतएवतु ४ वयंत्वप्रतिमंवीर्येसर्वेसौभद्रमात्मजम् ॥ उक्तवंतःस्मतंतातभिंध्यनीकमितिप्रभो ५ सतथानोदितोऽस्माभिःसदश्वइववीर्यवान् ॥ असह्यमपितंभारंवोढुमेवोपचक्रमे ६ सतवास्त्रोपदेशेनवीर्येणचसमन्वितः ॥ प्राविशत्तद्बलंबालःसुपर्णइवसागरम् ७ तेनुयातावयंवीरंसात्वतीपुत्रमाहवे ॥ प्रवेष्टुकामास्तेनैवयेनसप्राविशच्चमूम् ८ ततःसैंधवकोराजाक्षुद्रस्तातजयद्रथः ॥ वरदानेनरुद्रस्यसर्वान्नःसमवारयत् ९ ततोद्रोणःकृपःकर्णोद्रौणिःकौसल्यएवच ॥ कृतवर्माचसौभद्रंषड्रथाःपर्यवारयन् १० परिवार्यतुतैःसर्वैर्युधिबालोमहारथैः ॥ यतमानःपरंशक्त्याबहुभिर्विरथीकृतः ११ ततोदौःशासनिःक्षिप्रंतथातैर्विरथीकृतम् ॥ संशयंपरमंप्राप्यादिष्टांतेनाभ्ययोजयत् १२ सतुहत्वासहस्राणिनराश्वरथदंतिनाम् ॥ अष्टौरथसहस्राणिनवदंतिशतानिच १३ राजपुत्रसहस्रेद्वेवीरांश्चालक्षितान्बहून् ॥ बृहद्बलंचराजानंस्वर्गेणाजौप्रयोज्यह १४ ततःपरमधर्मात्मादिष्टांतमुपजग्मिवान् ॥ एतावदेवनिर्वृत्तमस्माकंशोकवर्धनम् १५ सचैवंपुरुषव्याघ्रःस्वर्गलोकमवाप्तवान् ॥ ततोऽर्जुनोवचःश्रुत्वाधर्मराजेनभाषितम् १६ हापुत्रइतिनिःश्वस्यव्यथितोन्यपतद्भुवि ॥ विषण्णवदनाःसर्वेपरिवार्यधनंजयम् १७ नेत्रैरनिमिषैर्दीनाःप्रत्यवेक्षन्परस्परम् ॥ प्रतिलभ्यततःसंज्ञांवासविःक्रोधमूर्च्छितः १८ कंपमानोज्वरेणेवनिःश्वसंश्चमुहुर्मुहुः ॥ पाणिंपाणौविनिष्पिष्यश्वसमानोऽश्रुनेत्रवान् १९ उन्मत्तइवविप्रेक्षन्निदंवचनमब्रवीत् ॥ अर्जुनउवाच ॥ सत्यंवःप्रतिजानामिश्वोऽस्मिहंताजयद्रथम् ॥ नचेद्वधभयाद्भीतोधार्तराष्ट्रान्प्रहास्यति २० नचास्मान्शरणंगच्छेत्कृष्णंवापुरुषोत्तमम् ॥ भवंतंवामहाराजश्वोऽस्मिहंताजयद्रथम् २१ धार्तराष्ट्रप्रियकरंमयिविस्मृतसौहृदम् ॥ पापंबालवधेहेतुंश्वोऽस्मिहंताजयद्रथम् २२ रक्षमाणाश्चतंसंख्येयेमांयोत्स्यंतिकेचन ॥ अपिद्रोणकृपौराजन्छादयिष्यामितान्शरैः २३ यद्येतदेवंसंग्रामेनकुर्यांपुरुषर्षभाः ॥ मास्मपुण्यकृतांल्लोकान्प्राप्नुयांशूरसंमतान् २४ येलोकामातृहंतॄणांयेचापिपितृघातिनाम् ॥ गुरुदारगतानांयेपिशुनानांचयेसदा २५ साधूनसूयतांयेचयेचापिपरिवादिनाम् ॥ येचनिक्षेपहर्तॄणांयेचविश्वासघातिनाम् २६ भुक्तपूर्वांस्त्रियंयेचनिंदतामघशंसिनाम् ॥ ब्रह्मघ्नानांचयेलोकायेचगोघातिनामपि २७ पायसंवायवान्नंवाशाकंकृसरमेववा ॥ संयावापूपमांसानियेचलोकावृथाऽश्नताम् २८

२२ । २३ । २४ । २५ । २६ भुक्तपूर्वामन्योपभुक्तां निंदतांस्वीकुर्वताम् २७ । २८

२९ । ३० । ३१ । ३२ आत्मापहारिणांआत्मानमन्यथाप्रकाशयतां मिथ्याभिशंसिनांअसद्दोषोक्त्यापरान्दूषयतां संदिश्यमानानांनियुज्यमानानां ३३ । ३४ । ३५ वृषलीशूद्रा कन्याभावेर

तानद्मायाधिगच्छेयंनचेद्धन्यांजयद्रथम् ॥ वेदाध्यायिनमत्यर्थंसंशितंवाद्विजोत्तमम् २९ अवमन्यमानोयात्ययातिवृद्धान्साधून्गुरूंस्तथा ॥ स्पृशतोब्राह्मणं गांचपादेनाग्निंचयाभवेत् ३० याप्सुश्लेष्मपुरीषंचमूत्रंवामुंचतांगतिः ॥ तांगच्छेयंगतिंकष्टांनचेद्धन्यांजयद्रथम् ३१ नग्नस्यस्नायमानस्ययाचवंध्यातिथे गतिः ॥ उत्कोचिनांमृषोक्तीनांवंचकानांचयागतिः ३२ आत्मापहारिणांयाचयाचमिथ्याभिशंसिनाम् ॥ भृत्यैःसंदिश्यमानानांपुत्रदाराश्रितैस्तथा ३३ अ संविभज्यक्षुद्राणांयागतिर्मिष्टमश्नताम् ॥ तांगच्छेयंगतिंघोरांनचेद्धन्यांजयद्रथम् ३४ संश्रितंवापियस्त्यक्त्वासाधुंतद्वचनेरतम् ॥ नबिभर्तिनृशंसात्मानिं दतेचोपकारिणम् ३५ अर्हतेप्रातिवेश्यायश्राद्धंयोनददातिच ॥ अनर्हेभ्यश्चयोदद्याद्वृषलीपतयेतथा ३६ मद्यपोभिन्नमर्यादःकृतघ्नोभर्तृनिंदकः ॥ तेषांग तिमियांक्षिप्रंनचेद्धन्यांजयद्रथम् ३७ भुंजानानांतुसव्येनउत्संगेचापिखादताम् ॥ पालाशमासनंचैवतिंदुकैर्दंतधावनम् ३८ येचावर्जयतांलोकाःस्वपतां चतथोषासि ॥ शीतभीताश्चयेविप्रारणभीताश्चक्षत्रियाः ३९ एककूपोदकग्रामेवेदध्वनिविवर्जिते ॥ षण्मासंतत्रवसतांतथाशास्त्रंविनिंदताम् ४० दिवामैथु निनांचापिदिवसेषुचशेरते ॥ अगारदाहिनांचैवगरदानांचयेमताः ४१ अग्न्यातिथ्यविहीनाश्चगोपानेषुचविघ्नदाः ॥ रजस्वलांसेवयंतःकन्यांशुल्केनदायि नः ४२ याचवैबहुयाजिनांब्राह्मणानांश्ववृत्तिनाम् ॥ आस्यमैथुनिकानांचयेदिवामैथुनेरताः ४३ ब्राह्मणस्यप्रतिश्रुत्ययोवैलोभाद्ददातिन ॥ तेषांगतिंगमि ष्यामिश्वोनहन्यांजयद्रथम् ४४ धर्मादपेतायेचान्येमयानात्रानुकीर्तिताः ॥ येचानुकीर्तितास्तेषांगतिंक्षिप्रमवाप्नुयाम् ४५ यदिव्युष्टामिमांरात्रिंश्वोनहन्यां जयद्रथम् ॥ इमांचाप्यपरांभूयःप्रतिज्ञांमेनिबोधत ४६ यद्यस्मिन्नहतेपापेसूर्योऽस्तमुपयास्यति ॥ इहैवसंप्रवेष्टाहंज्वलितंजातवेदसम् ४७ असुरसुरम नुष्याःपक्षिणोवोरगावापितृरजनिचरावाब्रह्मदेवर्षयोवा ॥ चरमचरमपीदंयत्परंचापितस्मात्तदपिममरिपुंतंरक्षितुंनैवशक्ताः ४८ यदिविशतिरसातलंतदग्र्यं वियदपिदेवपुरंदितेःपुरंवा ॥ तदपिशरशतैरहंप्रभातेभृशमभिमन्युरिपोःशिरोऽभिहर्ता ४९ एवमुक्त्वाविचिक्षेपगांडीवंसव्यदक्षिणम् ॥ तस्यशब्दमतिक्रम्य धनुःशब्दोस्पृशद्दिवम् ५० अर्जुनेनप्रतिज्ञातेपांचजन्यंजनार्दनः ॥ प्रदध्मौतत्रसंक्रुद्धोदेवदत्तंचफाल्गुनः ५१ सपांजचन्योऽच्युतवक्त्रवायुनाभृशंसुपूर्णो दरनिःसृतध्वनिः ॥ जगत्सपातालवियद्दिगीश्वरंप्रकंपयामासयुगात्ययेयथा ५२ ततोवादित्रघोषाश्चप्रादुरासन्सहस्रशः ॥ सिंहनादश्चपांडूनांप्रतिज्ञातेमहा त्मना ५३ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिप्रतिज्ञापर्वणि अर्जुनप्रतिज्ञायांत्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ ॥ छ ॥

जस्वलावा ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ तदपिवेपीत्यर्थः ४८ दितेरिति कार्यकारणोपचाराद्दैत्यानामित्यर्थः ४९ शब्दंशब्दांतरम् ५० । ५१ । ५२ । ५३ ॥ इतिद्रोणपर्वणिटीकायांत्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ ॥ छ ॥

श्रुत्वेति १ । २ । ३ । ४ किलेत्यरुचौ ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ अक्षौहिण्यइतिप्रत्यक्षौहिणींशे

॥ संजयउवाच ॥ श्रुत्वातुतंमहाशब्दंपांडूनांजयगृद्धिनाम् ॥ चारैःप्रवेदितेतत्रसमुत्थायजयद्रथः १ शोकसंमूढहृदयोदुःखेनाभिपरिप्लुतः ॥ मज्जमा
नइवागाधेविपुलेशोकसागरे २ जगामसमितिंराज्ञांसैंधवोविमृशन्बहु ॥ सतेषांनरदेवानांसकाशेपर्यदेवयत ३ अभिमन्योःपितुर्भीतःसव्रीडोवाक्यमब्रवीत् ॥
योऽसौपांडोःकिलक्षेत्रेजातःशक्रेणकामिना ४ सनिनीषतिदुर्बुद्धिर्मांकिलैकंयमक्षयम् ॥ तत्स्वस्तिवोऽस्तुयास्यामिस्वगृहंजीवितेप्सया ५ अथवास्त्रप्र
तिबलास्त्रातमांक्षत्रियर्षभाः ॥ पार्थेनप्रार्थितंवीरास्तेसंदत्तममाभयम् ६ द्रोणदुर्योधनकृपाःकर्णमद्रेशबाल्हिकाः ॥ दुःशासनादयःशक्तास्त्रातुंमामंतका
र्दितम् ७ किमंगपुनरेकेनफाल्गुनेनजिघांसता ॥ नत्रायेयुर्भवंतोमांसमस्ताःपतयःक्षितेः ८ प्रहर्षंपांडवेयानांश्रुत्वाममहद्भयम् ॥ सीदंतिममगात्रा
णिमुमूर्षोरिवपार्थिवाः ९ वधोनूनंप्रतिज्ञातोममगांडीवधन्वना ॥ तथाहिहृष्टाःक्रोशंतिशोककालेऽपिपांडवाः १० तन्नदेवानगंधर्वानासुरोरगराक्षसाः ॥
उत्सहंतेऽन्यथाकर्तुंकुतएवनराधिपाः ११ तस्मान्मामनुजानीतभद्रंवोऽस्तुनरर्षभाः ॥ अदर्शनंगमिष्यामिनमांद्रक्ष्यंतिपांडवाः १२ एवंविलपमानंतं
भयाद्व्याकुलचेतसम् ॥ आत्मकार्यगरीयस्त्वाद्राजादुर्योधनोऽब्रवीत् १३ नभेतव्यंनरव्याघ्रकोहित्वांपुरुषर्षभ ॥ मध्येक्षत्रियवीराणांतिष्ठंतंप्रार्थयेद्युधि
१४ अहंवैकर्तनःकर्णश्चित्रसेनोविविंशतिः ॥ भूरिश्रवाःशलःशल्योवृषसेनोदुरासदः १५ पुरुमित्रोजयोभोजःकांबोजश्चसुदक्षिणः ॥ सत्यव्रतोमहाबाहुर्वि
कर्णोदुर्मुखश्चह १६ दुःशासनःसुबाहुश्चकालिंगश्चाप्युदायुधः ॥ विंदानुविंदावावंत्यौद्रोणोद्रौणिश्चसौबलः १७ एतेचान्येचबहवोनानाजनपदेश्वराः ॥
ससैन्यास्त्वाऽभियास्यंतिव्येतुतेमानसोज्वरः १८ त्वंचापिरथिनांश्रेष्ठःस्वयंशूरोऽमितद्युते ॥ सकथंपांडवेयेभ्योभयंपश्यसिसैंधव १९ अक्षौहिण्योदशैकाचम
दीयास्तवरक्षणे ॥ यत्तायोत्स्यंतिमाभैस्त्वंसैंधवव्येतुतेभयम् २० ॥ संजयउवाच ॥ एवमाश्वासितोराजन्पुत्रेणतवसैंधवः ॥ दुर्योधनेनसहितोद्रोणंरात्रावुपा
गमत् २१ उपसंग्रहणंकृत्वाद्रोणायसविशांपते ॥ उपोपविश्यप्रणतःपर्यपृच्छदिदंतदा २२ निमित्तेदूरपातित्वेलघुत्वेदृढवेधने ॥ ममब्रवीतुभगवान्विशेषंफा
ल्गुनस्यच २३ विद्याविशेषमिच्छामिज्ञातुमाचार्यतत्त्वतः ॥ अर्जुनस्यात्मनश्चैवयाथातथ्यंप्रचक्ष्वमे २४ ॥ द्रोणउवाच ॥ सममाचार्यकंताततवचैवार्जुन
स्यच ॥ योगाद्दुःखोषितत्वाच्चतस्मात्त्वत्तोऽधिकोऽर्जुनः २५ नतुतेयुधिसंत्रासःकार्यःपार्थात्कथंचन ॥ अहंहिरक्षितातातभयात्त्वांनात्रसंशयः २६ नहिमद्बा
हुगुप्तस्यप्रभवंत्यमराअपि ॥ व्यूहयिष्यामितंव्यूहंयंपार्थोनतरिष्यति २७ तस्माद्युद्ध्यस्वमाभैस्त्वंस्वधर्ममनुपालय ॥ पितृपैतामहंमार्गमनुयाहिमहारथ २८

षमादायोक्तम् २० । २१ उपसंग्रहणंपादाभिवंदनं २२ निमित्तेलक्ष्यभेदने २३ । २४ योगादभ्यासात् २५ । २६ । २७ । २८

२९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ ॥ इतिद्रोणपर्वणिटीकायांचतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ ॥ ७ ॥ ॥ प्रतिज्ञातइति १ अशब्दोनिषेधेअज्ञात्वेत्यर्थः २

अधीत्यविधिवद्वेदानग्रयःसुहुतास्त्वया ॥ इष्टंचबहुभिर्यज्ञैर्नतेमृत्युर्भयंकरः २९ दुर्लभंमानुषैर्मंदैर्महाभाग्यमवाप्यतु ॥ भुजवीर्यार्जिताँल्लोकान्दिव्यान्प्राप्स्य स्यनुत्तमान् ३० कुरवःपांडवाश्चैववृष्णयोऽन्येचमानवाः ॥ अहंचसहपुत्रेणअध्रुवाइतिचिंत्यताम् ३१ पर्यायेणवयंसर्वेकालेनबलिनाहताः ॥ परलोकंगमिष्या मःस्वैःस्वैःकर्मभिरन्विताः ३२ तपस्तप्त्वातुयाँल्लोकान्प्राप्नुवंतितपस्विनः ॥ क्षत्रधर्माश्रितावीराःक्षत्रियाःप्राप्नुवंतितान् ३३ एवमाश्वासितोराजाभारद्वाजेन सैंधवः ॥ अपानुदद्भयंपार्थाद्युद्धायचमनोदधे ३४ ततःप्रहर्षःसैन्यानांतवाप्यासीद्विशांपते ॥ वादित्राणांध्वनिश्चोग्रःसिंहनादरवैःसह ३५ ॥ इतिश्रीमहाभा रतेद्रोणपर्वणिप्रतिज्ञापर्वणिजयद्रथाश्वासेचतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ ७ ॥ ॥ संजयउवाच ॥ प्रतिज्ञातेतुपार्थेनसिंधुराजवधेतदा ॥ वासुदेवोमहा बाहुर्धनंजयमभाषत १ भ्रातॄणांमतमज्ञायत्वयावाचाप्रतिश्रुतम् ॥ सैंधवंचास्मिहंतेतितत्साहसमिदंकृतम् २ असंमंत्र्यमयासार्धमतिभारोऽयमुद्यतः ॥ कथंतुसर्व लोकस्यनावहास्यामभवेमहि ३ धार्तराष्ट्रस्यशिबिरेमयाप्रणिहिताश्चराः ॥ तइमेशीघ्रमागम्यप्रवृत्तिंवेदयंतिनः ४ त्वयावैसंप्रतिज्ञातेसिंधुराजवधेप्रभो ॥ सिंहना दःसवादित्रःसुमहानिहतैःश्रुतः ५ तेनशब्देनवित्रस्ताधार्तराष्ट्राःससैंधवाः ॥ नाकस्मात्सिंहनादोऽयमितिमत्वाव्यवस्थिताः ६ सुमाहानशब्दसंपातःकौरवाणां महाभुज ॥ आसीन्नागाश्वपत्तीनांरथघोषश्चभैरवः ७ अभिमन्योर्वधंश्रुत्वाध्रुवमार्तोधनंजयः ॥ रात्रौनिर्यास्यतिक्रोधादितिमत्वाव्यवस्थिताः ८ तैर्यतद्भि रियंसत्याश्रुतासत्यव्रतस्तव ॥ प्रतिज्ञासिंधुराजस्यवधेराजीवलोचन ९ ततोविमनसःसर्वेत्रस्ताःक्षुद्रमृगाइव ॥ आसन्सुयोधनामात्याःसचराजाजयद्रथः १० अथोत्थायसहामात्यैर्दीनःशिबिरमात्मनः ॥ आयात्सौवीरसिंधूनामीश्वरोभृशदुःखितः ११ समंत्रकालेसंमंत्र्यसर्वानैःश्रेयसींक्रियाम् ॥ सुयोधनमिदंवाक्य मब्रवीद्राजसंसदि १२ मामसौपुत्रहंतेतिश्वोऽभियाताधनंजयः ॥ प्रतिज्ञातोहिसेनायामध्येतेनवधोमम १३ तांनदेवानगंधर्वानासुरोरगराक्षसाः ॥ उत्सहंते ऽन्यथाकर्तुंप्रतिज्ञांसव्यसाचिनः १४ तेमांरक्षतसंग्रामेमावोमूर्ध्निधनंजयः ॥ पदंकृत्वाऽऽप्नुयाल्लक्ष्यंतस्मादत्रविधीयताम् १५ अथरक्षानमेसंख्येक्रियतेकुरु नंदन ॥ अनुजानीहिमांराजन्गमिष्यामिगृहान्प्रति १६ एवमुक्तस्त्ववाक्शीर्षोविमनाःससुयोधनः ॥ श्रुत्वातंसमयंतस्यध्यानमेवान्वपद्यत १७ तमार्तमभि संप्रेक्ष्यराजाकिलससैंधवः ॥ मृदुचात्महितंचैवसापेक्षमिदमुक्तवान् १८ नेहपश्यामिभवतांतथावीर्यंधनुर्धरम् ॥ योऽर्जुनस्यास्त्रमस्त्रेणप्रतिहन्यान्महाहवे १९ वासुदेवसहायस्यगांडीवंधुन्वतोधनुः ॥ कोऽर्जुनस्याग्रतस्तिष्ठेत्साक्षादपिशतक्रतुः २०



३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ विधीयतांरक्षेतिपरतःसंबध्यते १५ । १६ । १७ । १८ । १९ । २०

२१ । २२ । २३ । २४ संविधानंप्रतिविधानम् २५। २६ पद्मव्यूहः पश्चार्धेपश्चाद्भागेयस्य सूचीसूचीमुखोव्यूहः २७ ।२८। २९ । ३० ॥ इतिद्रोणपर्वणिटीकायांपंचसप्ततितमोऽध्यायः ॥ ७५ ॥



महेश्वरोऽपिपार्थेनश्रूयतेयोधितःपुरा ॥ पदातिनामहावीर्योगिरौहिमवतिप्रभुः २१ दानवानांसहस्राणिहिरण्यपुरवासिनाम् ॥ जघानैकरथेनैवदेवराजप्रचोदितः २२ समायुक्तोहिकौंतेयोवासुदेवेनधीमता ॥ सामरानपिलोकांस्त्रीन्हन्यादितिमतिर्मम २३ सोऽहमिच्छाम्यनुज्ञातुंरक्षितुंवामहात्मना ॥ द्रोणेनसहपुत्रेणवीरेणयदिमन्यसे २४ सराज्ञास्वयमाचार्योभृशमत्रार्थितोऽर्जुन ॥ संविधानंचविहितंरथाश्चाकिलसज्जिताः २५ कर्णोभूरिश्रवाद्रौणिर्वृषसेनश्चदुर्जयः ॥ कृपश्चमद्रराजश्चषडेतेऽस्यपुरोगमाः २६ शकटःपद्मकश्चार्धोव्यूहोद्रोणेननिर्मितः ॥ पद्मकर्णिकमध्यस्थःसूचीपार्श्वेजयद्रथः २७ स्थास्यतेरक्षितोवीरैःसिंधुराट्ससुदुर्मदः ॥ धनुष्यस्त्रेचवीर्येचप्राणेचैवतथौरसे २८ अविषह्यतमाह्येतेनिश्चिताःपार्थषड्रथाः ॥ एतानजित्वाषड्रथान्नैवप्राप्योजयद्रथः २९ तेषामेकैकशोवीर्यंषण्णांत्वमनुचिंतय ॥ सहिताहिनरव्याघ्रनशक्याजेतुमंजसा ३० भूयस्तुमंत्रयिष्यामिनीतिमात्महितायवै ॥ मंत्रज्ञैःसाचिवैःसार्धंसुहृद्भिःकार्यसिद्धये ३१ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिप्रतिज्ञापर्वणि कृष्णवाक्येपंचसप्ततितमोऽध्यायः ॥ ७५ ॥ अर्जुनउवाच ॥ षड्रथान्धार्तराष्ट्रस्यमन्यसेयान्बलाधिकान् ॥ तेषांवीर्यंममार्धेननतुल्यामितिमेमतिः १ अस्त्रमस्त्रेणसर्वेषामेतेषांमधुसूदन ॥ मयाद्रक्ष्यसिनिर्भिन्नंजयद्रथवधैषिणा २ द्रोणस्यमिषतश्चाहंसगणस्यविलप्यतः ॥ मूर्धानंसिंधुराजस्यपातयिष्यामिभूतले ३ यदिसाध्याश्चरुद्राश्चवसवश्चसहाश्विनः ॥ मरुतश्चसहेंद्रेणविश्वेदेवाःसहेश्वराः ४ पितरःसहगंधर्वाःसुपर्णाःसागरादयः ॥ द्यौर्वियत्पृथिवीचेयंदिशश्चसदिगीश्वराः ५ ग्राम्यारण्यानिभूतानिस्थावराणिचराणिच ॥ त्रातारःसिंधुराजस्यभवंतिमधुसूदन ६ तथापिबाणैर्निहतंश्वोद्रष्टाऽसिरणेमया ॥ सत्येनचशपेकृष्णतथैवायुधमालभे ७ यस्यगोप्तामहेष्वासस्तस्यपापस्यदुर्मतेः ॥ तमेवप्रथमंद्रोणमभियास्यामिकेशव ८ तस्मिन्द्यूतमिदंबद्धंमन्यतेससुयोधनः ॥ तस्मात्तस्यैवसेनाग्रंभित्त्वायास्यामिसैंधवम् ९ द्रष्टाऽसिश्वोमहेष्वासान्नाराचैस्तिग्मतेजितैः ॥ शृंगाणीवगिरेर्वज्रैर्दार्यमाणान्मयायुधि १० नरनागाश्वदेहेभ्योविस्रविष्यतिशोणितम् ॥ पतद्भ्यःपतितेभ्यश्चविभिन्नेभ्यःशितैःशरैः ११ गांडीवप्रेषिताबाणामनोऽनिलसमाजवे ॥ नृनागाश्वान्विदेहासून्कर्तारश्चसहस्रशः १२ यमात्कुबेराद्वरुणादिंद्राद्रुद्राच्चयन्मया ॥ उपात्तमस्त्रंघोरंतद्द्रष्टारोऽत्रनरायुधि १३ ब्राह्मेणास्त्रेणचास्त्राणिहन्यमानानिसंयुगे ॥ मयाद्रष्टासिसर्वेषांसैंधवस्याभिरक्षिणाम् १४ शरवेगसमुत्कृत्तैराज्ञांकेशवमूर्धभिः ॥ आस्तीर्यमाणांपृथिवींद्रष्टाऽसिश्वोमयायुधि १५ क्रव्यादांस्तर्पयिष्यामिद्रावयिष्यामिशात्रवान् ॥ सुहृदोनंदयिष्यामिप्रमथिष्यामिसैंधवम् १६ बह्वागस्कृत्कुसंबंधीपापदेशसमुद्भवः ॥ मयासैंधवकोराजाहतःस्वान्शोचयिष्यति १७



षड्रथानिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ तस्मिन्द्रोणे द्यूतंयुद्धद्यूतं बद्धमिवबद्धमेकांतजयेनस्थिरीकृतम् ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७

१८ । १९ । २० । २१ । २२ । २३ नजीयेयंनकेनापिजितोऽस्मि २४ । २५ । २६ । २७ ॥ इतिद्रोणपर्वणिटीकायां षट्सप्ततितमोऽध्यायः ॥ ७६ ॥ ॥ ७ ॥ ॥ तामिति १

सर्वक्षीरान्नभोक्तारंपापाचाररंरणाजिरे ॥ मयासराजकंबाणैर्भिन्नंद्रक्ष्यसिसैंधवम् १८ तथाप्रभातेकर्तास्मियथाकृष्णसुयोधनः ॥ नान्यंधनुर्धरंलोकेमंस्यतेमत्स
मंयुधि १९ गांडीवंचधनुर्दिव्यंयोद्धाचाहंनरर्षभ ॥ त्वंचयंताहृषीकेशकिंनुस्यादजितंमया २० तवप्रसादाद्भगवन्किन्नावाप्तंरणेमम ॥ अविषह्यंहृषीकेश
किंजानन्मांविगर्हसे २१ यथालक्ष्मस्थिरंचंद्रेसमुद्रेचयथाजलम् ॥ एवमेतांप्रतिज्ञांमेसत्यांविद्धिजनार्दन २२ माऽवमंस्थाममास्त्राणिमाऽवमंस्थाधनुर्दृढम् ॥
माऽवमंस्थाबलंबाह्वोर्माऽवमंस्थाधनंजयम् २३ तथाऽभियामिसंग्रामंनजीयेयंजयामिच ॥ तेनसत्येनसंग्रामेहतंविद्धिजयद्रथम् २४ ध्रुवंवैब्राह्मणेसत्यंध्रुवासा
धुषुसन्नतिः ॥ श्रीर्ध्रुवाऽपिचयज्ञेषुध्रुवोनारायणेजयः २५ ॥ संजयउवाच ॥ एवमुक्त्वाहृषीकेशंस्वयमात्मानमात्मना ॥ संदिदेशार्जुनोनर्दन्वासविःकेशवंप्रभुम्
२६ यथाप्रभातांरजनींकल्पितःस्याद्रथोमम ॥ तथाकार्यंत्वयाकृष्णकार्यंहिमहदुद्यतम् २७ ॥ इतिश्रीमहाभारतेद्रोणपर्वणि प्रतिज्ञापर्वणिअर्जुनवाक्येषट्
सप्ततितमोऽध्यायः ॥ ७६ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ तांनिशांदुःखशोकार्तौनिःश्वसंताविवोरगौ ॥ निद्रांनैवोपलेभातेवासुदेवधनंजयौ १ नरना
रायणौक्रुद्धौज्ञात्वादेवाःसवासवाः ॥ व्यथिताश्चिंतयामासुःकिंस्विदेतद्भविष्यति २ ववुश्चदारुणावातारूक्षाघोराभिशंसिनः ॥ सकबंधस्तथाऽऽदित्येपरिघः
समदृश्यत ३ शुष्काशन्यश्चनिष्पेतुःसनिर्घाताःसविद्युतः ॥ चचालचापिपृथिवीसशैलवनकानना ४ चुक्षुभुश्चमहाराजसागरामकरालयाः ॥ प्रतिस्रोतःप्र
वृत्ताश्चतथागंतुंसमुद्रगाः ५ रथाश्वनरनागानांप्रवृत्तमधरोत्तरम् ॥ क्रव्यादानांप्रमोदार्थंयमराष्ट्रविवृद्धये ६ वाहनानिशकृन्मूत्रेमुमुचूरुरुदुश्चह ॥ तान्दृष्ट्वादा
रुणान्सर्वानुत्पातान्लोमहर्षणान् ७ सर्वेतेव्यथिताःसैन्यास्त्वदीयाभरतर्षभ ॥ श्रुत्वामहाबलस्योग्रांप्रतिज्ञांसव्यसाचिनः ८ अथकृष्णंमहाबाहुरब्रवीत्पाकशा
सनिः ॥ आश्वासयसुभद्रांत्वंभगिनींस्नुषयासह ९ स्नुषांचास्यावयस्याश्चविशोकाःकुरुमाधव ॥ साम्नासत्येनयुक्तेनवचसाऽऽश्वासयप्रभो १० ततोऽर्जुन
गृहंगत्वावासुदेवःसुदुर्मनाः ॥ भगिनींपुत्रशोकार्तामाश्वासयतदुःखिताम् ११ ॥ वासुदेवउवाच ॥ माशोकंकुरुवार्ष्णेयिकुमारंप्रतिसस्नुषा ॥ सर्वेषांप्राणिनां
भीरुनिष्ठैषाकालनिर्मिता १२ कुलेजातस्यधीरस्यक्षत्रियस्यविशेषतः ॥ सदृशंमरणंह्येतत्तवपुत्रस्यमाशुचः १३ दिष्ट्यामहारथोधीरःपितुस्तुल्यपराक्रमः ॥
क्षात्रेणविधिनाप्राप्तोवीराभिलषितांगतिं १४ जित्वासुबहुशःशत्रून्प्रेषयित्वाचमृत्यवे ॥ गतःपुण्यकृतांलोकान्सर्वकामदुहोऽक्षयान् १५ तपसाब्रह्मचर्येणश्रुते
नप्रज्ञयाऽपिच ॥ संतोयांगतिमिच्छंतितांप्राप्तस्तवपुत्रकः १६ वीरसूर्वीरपत्नीत्वंवीरजावीरबांधवा ॥ माशुचस्तनयंभद्रेगतःसपरमांगतिम् १७

२ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७

प्राप्स्यतेचाप्यसौपापःसैंधवोबालघातकः ॥ अस्यावलेपस्यफलंससुहृद्गणबांधवः १८ व्युष्टायांतुवरारोहेरजन्यांपापकर्मकृत् ॥ नहिमोक्ष्यतिपार्थात्सप्रविष्टोऽप्यमरावतीम् १९ श्वःशिरःश्रोष्यसेतस्यसैंधवस्यरणेहृतम् ॥ समंतपंचकाद्बाह्यंविशोकाभवमारुदः २० क्षत्रधर्मंपुरस्कृत्यगतःशूरःसतांगतिम् ॥ यांगतिंप्राप्नुयामेहयेचान्येशस्त्रजीविनः २१ व्यूढोरस्कोमहाबाहुरनिवर्तीरथप्रणुत् ॥ गतस्तववरारोहेपुत्रःस्वर्गंज्वरंजहि २२ अनुयातश्चपितरंमातृपक्षंचवीर्यवान् ॥ सहस्रशोरिपून्हत्वाहतःशूरोमहारथः २३ आश्वासयस्नुषांराज्ञिमाशुचःक्षत्रियेभृशम् ॥ श्वःप्रियंसुमहच्छ्रुत्वाविशोकाभवनंदिने २४ यत्पार्थेनप्रतिज्ञातंतत्तथानतदन्यथा ॥ चिकीर्षितंहितेभर्तुर्नभवेज्जातुनिष्फलम् २५ यदिचमनुजपन्नगाःपिशाचारजनिचराःपतगाःसुरासुराश्च ॥ रणगतमभियांतिसिंधुराजंनसभवितासहतैरपिप्रभाते २६ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिप्रतिज्ञापर्वणिसुभद्राश्वासनेसप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ ७ ॥ संजयउवाच ॥ एतच्छ्रुत्वावचस्तस्यकेशवस्यमहात्मनः ॥ सुभद्रापुत्रशोकार्ताविललापसुदुःखिता १ हापुत्रममभंदायाःकथमेत्यासिसंयुगम् ॥ निधनंप्राप्तवांस्तातपितुस्तुल्यपराक्रमः २ कथमिंदीवरश्यामंसुदंष्ट्रंचारुलोचनम् ॥ मुखंतेदृश्यतेवत्सगुंठितंरणरेणुना ३ नूनंशूरंनिपतितंत्वांपश्यंत्यनिवर्तिनम् ॥ सुशिरोग्रीवबाह्वंसंव्यूढोरस्कंनतोदरम् ४ चारूपचितसर्वांगंस्वक्षंशस्त्रक्षताचितम् ॥ भूतानित्वांनिरीक्षंतेनूनंचंद्रमिवोदितम् ५ शयनीयंपुरायस्यस्पर्ध्यास्तरणसंवृतम् ॥ भूमावद्यकथंशेषेविप्रविद्धःसुखोचितः ६ योन्वास्यतपुरावीरोवरस्त्रीभिर्महाभुजः ॥ कथमन्वास्यतेसोऽद्यशिवाभिःपतितोमृधे ७ योऽस्तूयतपुराहृष्टैःसूतमागधबंदिभिः ॥ सोऽद्यक्रव्याद्गणैर्घोरैर्विनदद्भिरुपास्यते ८ पांडवेषुचनाथेषुवृष्णिवीरेषुवाविभो ॥ पंचालेषुचवीरेषुहतःकेनास्यनाथवत् ९ अतृप्तदर्शनापुत्रदर्शनस्यतवानघ ॥ मंदभाग्यागमिष्यामिव्यक्तमद्ययमक्षयम् १० विशालाक्षंसुकेशांतंचारुवाक्यंसुगंधिच ॥ तवपुत्रकदाभूयोमुखंद्रक्ष्यामिनिर्व्रणम् ११ धिग्बलंभीमसेनस्यधिक्पार्थस्यधनुष्मताम् ॥ धिग्वीर्यंवृष्णिवीराणांपंचालानांचधिग्बलम् १२ धिक्केकयांस्तथाचेदीन्मत्स्यांश्चैवाथसृंजयान् ॥ येत्वांरणगतंवीरंनशेकुरभिरक्षितुम् १३ अद्यपश्यामिपृथिवींशून्यामिवहतत्विषम् ॥ अभिमन्युमपश्यंतीशोकव्याकुललोचना १४ स्वस्रीयंवासुदेवस्यपुत्रंगांडीवधन्वनः ॥ कथंत्वाऽतिरथंवीरंद्रक्ष्याम्यद्यनिपातितम् १५ एह्येहितृषितोवत्सस्तनौपूर्णौपिबाशुमे ॥ अंकमारुह्यमंदायाह्यतृप्तायाश्चदर्शने १६ हावीरदृष्टोनष्टश्चधनंस्वप्नइवासिमे ॥ अहोह्यनित्यंमानुष्यंजलबुद्बुदचंचलम् १७ इमांतेतरुणींभार्यांतवाधिभिरभिप्लुताम् ॥ कथंसंधारयिष्यामिविवत्सामिवधेनुकाम् १८

एतदिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८

१९ । २० । २१ । २२ । २३ नैवेशिकंसोपकरणंगृहं नैवेशिकायेतिपाठेगृहाश्रमोन्मुखायविद्याव्रतस्नाताय अभिमतंविवाहोपयुक्तं २४ न्यस्तदंडानांनिरस्ताभिमानानां 'दंडोऽस्त्रीलगुडेऽपिमानः'

अहोह्यकालेप्रस्थानंकृतवानसिपुत्रक ॥ विहायफलकालेमांसुगृद्धांतवदर्शने १९ नूनंगतिःकृतांतस्यप्राज्ञैरपिसुदुर्विदा ॥ यत्रत्वंकेशवेनाथेसंग्रामेऽनाथवद्धतः २० यज्वनांदानशीलानांब्राह्मणानांकृतात्मनाम् ॥ चरितब्रह्मचर्याणांपुण्यतीर्थावगाहिनाम् २१ कृतज्ञानांवदान्यानांगुरुशुश्रूषिणामपि ॥ सहस्रदक्षिणानांचयागतिस्तामवाप्नुहि २२ यागतिर्युद्ध्यमानानांशूराणामनिवर्तिनाम् ॥ हत्वारीन्निहतानांचसंग्रामेतांगतिंव्रज २३ गोसहस्रप्रदातॄणांक्रतुदानांचयागतिः ॥ नैवेशिकंचाभिमतंददतांयागतिःशुभा २४ ब्राह्मणेभ्यःशरण्येभ्योनिधिंनिदधतांचया ॥ याचापिन्यस्तदंडानांतांगतिंव्रजपुत्रक २५ ब्रह्मचर्येणयांयांतिमुनयःसंशितव्रताः ॥ एकपत्न्यश्चयांयांतितांगतिंव्रजपुत्रक २६ राज्ञांसुचरितैर्याचगतिर्भवतिशाश्वती ॥ चतुराश्रमिणांपुण्यैःपावितानांसुरक्षितैः ॥ २७ दीनानुकंपिनांयाचसततंसंविभागिनाम् ॥ पैशुन्याच्चनिवृत्तानांतांगतिंव्रजपुत्रक २८ व्रतिनांधर्मशीलानांगुरुशुश्रूषिणामपि ॥ अमोघातिथिनांयाचतांगतिंव्रजपुत्रक २९ कृच्छ्रेषुयाधारयतामात्मानंव्यसनेषुच ॥ गतिःशोकाग्निदग्धानांतांगतिंव्रजपुत्रक ३० मातापित्रोश्चशुश्रूषांकल्पयंतीहयेसदा ॥ स्वदारनिरतानांचयागतिस्तामवाप्नुहि ३१ ऋतुकालेस्वकांभार्यांगच्छतांयामनीषिणाम् ॥ परस्त्रीभ्योनिवृत्तानांतांगतिंव्रजपुत्रक ३२ साम्नायेसर्वभूतानिपश्यंतिगतमत्सराः ॥ नारुंतुदानांक्षमिणांयागतिस्तामवाप्नुहि ३३ मधुमांसनिवृत्तानांमदाद्दंभात्तथाऽनृतात् ॥ परोपतापत्यक्तानांतांगतिंव्रजपुत्रक ३४ ह्रीमंतःसर्वशास्त्रज्ञाज्ञानतृप्ताजितेंद्रियाः ॥ यांगतिंसाधवोयांतितांगतिंव्रजपुत्रक ३५ एवंविलपतींदीनांसुभद्रांशोककर्शिताम् ॥ अन्वपद्यतपांचालीवैराटिसहितातदा ३६ ताःप्रकामंरुदित्वाचविलप्यचसुदुःखिताः ॥ उन्मत्तवत्तदाराजन्विसंज्ञान्यपतन्क्षितौ ३७ सोपचारस्तुकृष्णश्चदुःखितांभृशदुःखितः ॥ सिक्त्वांऽभसासमाश्वास्यतत्तदुक्त्वाहितंवचः ३८ विसंज्ञकल्पांरुदतींमर्मविद्धांप्रवेपतीम् ॥ भगिनींपुंडरीकाक्षइदंवचनमब्रवीत् ३९ सुभद्रेमाशुचःपुत्रंपांचाल्याश्वासयोत्तराम् ॥ गतोऽभिमन्युःप्रथितांगतिंक्षत्रियपुंगवः ४० येचान्येऽपिकुलेसंतिपुरुषानोवरानने ॥ सर्वेतेतांगतिंयांतुह्यभिमन्योर्यशस्विनः ४१ कुर्यामतद्वयंकर्मक्रियासुसुहृदश्चनः ॥ कृतवान्यादृगद्यैकस्तवपुत्रोमहारथः ४२ एवमाश्वास्यभगिनींद्रौपदीमपिचोत्तराम् ॥ पार्थस्यैवमहाबाहुःपार्श्वमागादरिंदमः ४३ ततोऽभ्यनुज्ञायनृपान्कृष्णोबंधूंस्तथार्जुनम् ॥ विवेशांतःपुरेराजंस्तेचजग्मुर्यथालयम् ४४ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिप्रतिज्ञापर्वणिसुभद्राप्रविलापेअष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ ७ ॥ संजयउवाच ॥ ततोऽर्जुनस्यभवनंप्रविश्याप्रतिमंविभुः ॥ स्पृष्ट्वांभःपुंडरीकाक्षःस्थंडिलेशुभलक्षणे १

इत्युपक्रम्य 'दमेयमेऽभिमानेच' इतिमेदिनी २५ एकपत्न्यःपतिव्रताः २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४

॥ इतिद्रोणपर्वणिटीकायामष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ ॥ ७ ॥ ॥ ७ ॥ तवइति १

लाजैरक्षतैः २ । ३ । ४ तस्मैत्र्यंबकाय १ । ६ । ७ पार्थायतादर्थ्येचतुर्थी तेजःप्रतापः ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४

संतस्तारशुभांशय्यांदर्भैर्वैदूर्यसन्निभैः ॥ ततोमाल्येनविधिवल्लाजैर्गंधैःसुमंगलैः २ अलंचकारतांशय्यांपरिवार्यायुधोत्तमैः ॥ ततःस्पष्टोदकेपार्थेविनीताःपरिचारकाः ३ दर्शयंतोऽतिकेचक्रुर्नैशंत्रैयंबकंबलिम् ॥ ततःप्रीतमनाःपार्थोगंधमाल्यैश्चमाधवम् ४ अलंकृत्योपहारंतंनैशंतस्मैन्यवेदयत् ॥ स्मयमानस्तुगोविंदःफाल्गुनंप्रत्यभाषत ५ सुप्यतांपार्थभद्रंतेकल्याणायव्रजाम्यहम् ॥ स्थापयित्वाततोद्वास्थान्गोप्तृंश्चात्तायुधान्नरान् ६ दारुकानुगतःश्रीमान्विवेशशिबिरंस्वकम् ॥ शिश्येचशयनेशुभ्रेबहुकृत्यंविचिंतयन् ७ पार्थायसर्वंभगवान्शोकदुःखापहंविधिम् ॥ व्यदधात्पुंडरीकाक्षस्तेजोद्युतिविवर्धनम् ८ योगमास्थाययुक्तात्मासर्वेषामीश्वरेश्वरः ॥ श्रेयस्कामःपृथुयशाविष्णुर्जिष्णुप्रियंकरः ९ नपांडवानांशिबिरेकश्चित्सुष्वापतांनिशाम् ॥ प्रजागरःसर्वजनंह्याविवेशविशांपते १० पुत्रशोकाभितप्तेनप्रतिज्ञातोमहात्मना ॥ सहसासिंधुराजस्यवधोगांडीवधन्वना ११ तत्कथंनुमहाबाहुर्वासविःपरवीरहा ॥ प्रतिज्ञांसफलांकुर्यादितितेसमचिंतयन् १२ कष्टंहीदंव्यवसितंपांडवेनमहात्मना ॥ सचराजामहावीर्यःपारयत्वर्जुनःसतां १३ पुत्रशोकाभितप्तेनप्रतिज्ञामहतीकृता ॥ भ्रातरश्चापिविक्रांताबहुलानिबलानिच १४ धृतराष्ट्रस्यपुत्रेणसर्वंतस्मैनिवेदितम् ॥ सहत्वासैंधवंसंख्येपुनरेतुधनंजयः १५ जित्वारिपुगणांश्चैवपारयत्वर्जुनोव्रतम् ॥ श्वोऽहत्वासिंधुराजंवैधूमकेतुंप्रवक्ष्यति १६ नह्यसावनृतंकर्तुमलंपार्थोधनंजयः ॥ धर्मपुत्रःकथंराजाभविष्यतिमृतेऽर्जुने १७ तस्मिन्हिविजयःकृत्स्नःपांडवेनसमाहितः ॥ यदिनोऽस्तिकृतंकिंचिद्यदिदत्तंहुतंयदि १८ फलेनतस्यसर्वस्यसव्यसाचीजयत्वरीन् ॥ एवंकथयतांतेषांजयमाशंसतांप्रभो १९ कृच्छ्रेणमहताराजन्रजनीव्यत्यवर्तत ॥ तस्यांरजन्यांमध्येतुप्रतिबुद्धोजनार्दनः २० स्मृत्वाप्रतिज्ञांपार्थस्यदारुकंप्रत्यभाषत ॥ अर्जुनेनप्रतिज्ञातमार्तेनहतबंधुना २१ जयद्रथंवधिष्यामिश्वोभूतइतिदारुक ॥ तत्तुदुर्योधनःश्रुत्वामंत्रिभिर्मंत्रयिष्यति २२ यथाजयद्रथंपार्थोनहन्यादितिसंयुगे ॥ अक्षौहिण्योहिताःसर्वारक्षिष्यंतिजयद्रथम् २३ द्रोणश्चसहपुत्रेणसर्वास्त्रविधिपारगः ॥ एकोवीरःसहस्राक्षोदैत्यदानवदर्पहा २४ सोऽपितंनोत्सहेताजौहंतुंद्रोणेनरक्षितं ॥ सोऽहंश्वस्तत्करिष्यामियथाकुंतीसुतोर्जुनः २५ अप्राप्तेऽस्तंदिनकरेहनिष्यतिजयद्रथं ॥ नहिदारानमित्राणिज्ञातयोनचबांधवाः २६ कश्चिदन्यःप्रियतरःकुंतीपुत्रान्ममार्जुनात् ॥ अनर्जुनमिमंलोकंमुहूर्तमपिदारुक २७ उदीक्षितुंनशक्तोऽहंभवितानचतत्तथा ॥ अहंविजित्यतान्सर्वान्सहसासहयद्विपान् २८ अर्जुनार्थेहनिष्यामिसकर्णान्ससुयोधनान् ॥ श्वोनिरीक्षंतुमेवीर्यंत्रयोलोकामहाहवे २९ धनंजयार्थेसमरेपराक्रांतस्यदारुक ॥ श्वोनरेंद्रसहस्राणिराजपुत्रशतानिच ३० साश्वद्विपरथान्याजौविद्रविष्यामिदारुक ॥ श्वस्तांचक्रप्रमथितांद्रक्ष्यसेनृपवाहिनीम् ३१

२५ । २६ । २७ सहसाबलेन २८ । २९ । ३० । ३१

३२ अनुअनुगतः ३३ । ३४ । ३५ । ३६ । ३७ । ३८ आर्षभेणऋषभस्वरप्रकारेण ४० । ४१ । ४२ । ४३ । ४४ । ३९ ॥ इतिद्रोणपर्वणिटीकायामेकोनाशीतितमोऽध्यायः ॥ ७९ ॥ ॥ कुंतीपुत्र

मयाक्रुद्धेनसमरेपांडवार्थेनिपातितां ॥ श्वःसदेवाःसगंधर्वाःपिशाचोरगराक्षसाः ३२ ज्ञास्यंतिलोकाःसर्वेमांसुहृदंसव्यसाचिनः ॥ यस्तंद्वेष्टिसमांद्वेष्टियस्तंचा
नुसमामनु ३३ इतिसंकल्प्यतांबुद्ध्याशरीरार्धममार्जुनः ॥ यथात्वंमेप्रभातायामस्यांनिशिरथोत्तमम् ३४ कल्पयित्वायथाशास्त्रमादायव्रजसंयतः ॥ गदांकौ
मोदकींदिव्यांशक्तिंचक्रंधनुःशरान् ३५ आरोप्यवैरथेसूतसर्वोपकरणानिच ॥ स्थानंचकल्पयित्वाऽथरथोपस्थेध्वजस्यमे ३६ वैनतेयस्यवीरस्यसमरेरथशोभि
नः ॥ छत्रंजांबूनदैर्जालैरर्कज्वलनसप्रभैः ३७ विश्वकर्मकृतैर्दिव्यैरश्वानपिविभूषितान् ॥ बलाहकंमेघपुष्पंशैब्यंसुग्रीवमेवच ३८ युक्त्वान्वाजिवरान्यत्तःकवची
तिष्ठदारुक ॥ पांचजन्यस्यनिर्घोषमार्षभेणैवपूरितम् ३९ श्रुत्वाचभैरवंनादमुपेयास्त्वंजवेनमाम् ॥ एकाह्नाऽहममर्षंचसर्वदुःखानिचैवह ४० भ्रातुःपैतृष्वसे
यस्यव्यपनेष्यामिदारुक ॥ सर्वोपायैर्यतिष्यामियथाबीभत्सुराहवे ४१ पश्यतांधार्तराष्ट्राणांहनिष्यतिजयद्रथम् ॥ यस्ययस्यचबीभत्सुर्वधेयत्नंकरिष्यति ॥
आशंसेसारथेतत्रभवितास्यध्रुवोजयः ४२ ॥ दारुकउवाच ॥ जयएवध्रुवस्तस्यकुतएवपराजयः ॥ यस्यत्वंपुरुषव्याघ्रसारथ्यमुपजग्मिवान् ४३ एवंचैत
त्करिष्यामियथामामनुशाससि ॥ सुप्रभातामिमांरात्रिंजयायविजयस्यहि ४४ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिप्रतिज्ञापर्वणिकृष्णदारुकसंभाषणेएकोनाशीति
तमोऽध्यायः ॥ ७९ ॥ ॥ ध ॥ ॥ संजयउवाच ॥ कुंतिपुत्रस्तुतंमंत्रंस्मरन्नेवधनंजयः ॥ प्रतिज्ञामात्मनोरक्षन्मुमोहाचिंत्यविक्रमः १ तंतुशोकेनसंतप्तं
स्वप्नेकपिवरध्वजम् ॥ आससादमहातेजाध्यायंतंगरुडध्वजः २ प्रत्युत्थानंचकृष्णस्यसर्वावस्थोधनंजयः ॥ नलोपयतिधर्मात्माभक्त्याप्रेम्णाचसर्वदा ३ प्रत्यु
त्थायचगोविंदंसतस्माआसनंददौ ॥ नचासनेस्वयंबुद्धिंबीभत्सुर्व्यदधात्तदा ४ ततःकृष्णोमहातेजाजानन्पार्थस्यनिश्चयम् ॥ कुंतीपुत्रमिदंवाक्यमासीनःस्थि
तमब्रवीत् ५ माविषादेमनःपार्थकृथाःकालोहिदुर्जयः ॥ कालःसर्वाणिभूतानिनियच्छतिपरेविधौ ६ किमर्थंचविषादस्तेतद्ब्रूहिद्विपदांवर ॥ नशोच्यंविदुषांश्रे
ष्ठशोकःकार्यविनाशनः ७ यत्तुकार्यंभवेत्कार्यंकर्मणातत्समाचार ॥ हीनचेष्टस्ययःशोकःसहिशत्रुर्धनंजय ८ शोचन्नंदयतेशत्रून्कर्शयत्यपिबांधवान् ॥ क्षीयतेच
नरस्तस्मान्नत्वंशोचितुमर्हसि ९ इत्युक्तोवासुदेवेनबीभत्सुरपराजितः ॥ आबभाषेतदाविद्वानिदंवचनमर्थवत् १० मयाप्रतिज्ञामहतीजयद्रथवधेकृता ॥ श्वो
ऽस्मिहंतादुरात्मानंपुत्रघ्नमितिकेशव ११ मत्प्रतिज्ञाविघातार्थंधार्तराष्ट्रैःकिलाच्युत ॥ पृष्ठतःसैंधवःकार्यःसर्वैर्गुप्तोमहारथैः १२ दशचैकाचताःकृष्णअक्षौहि
ण्यःसुदुर्जयाः ॥ हतावशेषास्तत्रेमाहंतमाधवसंख्यया १३ ताभिःपरिवृतःसंख्येसर्वैश्चैवमहारथैः ॥ कथंशक्येतसंद्रष्टुंदुरात्माकृष्णसैंधवः १४

स्त्विति १ । २ । ३ । ४ । ५ परेअवश्यंभाविनि विधौविधाने नियच्छतिप्रवर्तयाति ६ नशोच्यंशोकोनाचरणीयः ७ कार्यंकृत्यं कार्यंकरणीयंभवेदित्यन्वयः ८ । ९ । १० । ११ । १२ । १३ । १४

१८

१९ दुःखोपायस्यदुःखद्वारस्यप्रतिज्ञायाःविकांक्षाविसंवादःपरिवर्त्ततेप्रतिभाति १६ । १७ । १८ । १९ । २० । २१ । २२ प्रणिहितःसमाहितमनाः २३ । २४ । २५ । २६ । २७ । २८



प्रतिज्ञापारणंचापिनभविष्यतिकेशव ॥ प्रतिज्ञायांचहीनायांकथंजीवतिमद्विधः १५ दुःखोपायस्यमेवीर विकांक्षापरिवर्त्तते ॥ द्रुतंचयातिसवितातततएतद्ब्रवीम्यहम् १६ शोकस्थानंतुतच्छ्रुत्वापार्थस्यद्विजकेतनः ॥ संस्पृश्यांभस्ततःकृष्णःप्राङ्मुखःसमवस्थितः १७ इदंवाक्यंमहातेजाबभाषेपुष्करेक्षणः ॥ हितार्थंपांडुपुत्रस्यसैंधवस्यवधेकृती १८ पार्थपाशुपतंनामपरमास्त्रंसनातनम् ॥ येनसर्वान्मृधेदैत्यानजघ्नेदेवोमहेश्वरः १९ यदितद्विदितंतेऽद्यश्वोहंतासिजयद्रथम् ॥ अथाज्ञातंप्रपद्यस्वमनसावृषभध्वजम् २० तंदेवंमनसाध्यात्वाजोषमास्वधनंजय ॥ ततस्तस्यप्रसादात्त्वंभक्तःप्राप्स्यसितन्महत् २१ ततःकृष्णवचःश्रुत्वासंस्पृश्यांभोधनंजयः ॥ भूमावासीनएकाग्रोजगाममनसाभवम् २२ ततःप्रणिहितोब्राह्मेमुहूर्तेशुभलक्षणे ॥ आत्मानमर्जुनोऽपश्यद्गगनेसहकेशवम् २३ पुण्यंहिमवतःपादंमणिमंतंचपर्वतम् ॥ ज्योतिर्भिश्चसमाकीर्णंसिद्धचारणसेवितम् २४ वायुवेगगतिःपार्थःखंभेजेसहकेशवः ॥ केशवेनगृहीतःसदक्षिणेविभुनाभुजे २५ प्रेक्षमाणोबहून्भावानजगामाद्भुतदर्शनान् ॥ उदीच्यांदिशिधर्मात्मासोऽपश्यच्छ्वेतपर्वतम् २६ कुबेरस्यविहारेचनलिनींपद्मभूषिताम् ॥ सरिच्छ्रेष्ठांचतांगंगांवीक्षमाणोबहूदकाम् २७ सदापुष्पफलैर्वृक्षैरुपेतांस्फटिकोपलाम् ॥ सिंहव्याघ्रसमाकीर्णांनानामृगसमाकुलाम् २८ पुण्याश्रमवतींरम्यांमनोज्ञांडजसेविताम् ॥ मंदरस्यप्रदेशांश्चकिन्नरोद्गीतनादितान् २९ हेमरूप्यमयैःशृंगैर्नानौषधिविदीपितान् ॥ तथामंदारवृक्षैश्चपुष्पितैरुपशोभितान् ३० स्निग्धांजनचयाकारंसंप्राप्तःकालपर्वतम् ॥ ब्रह्मतुंगंनदीश्चान्यास्तथाजनपदानपि ३१ सतुंगंशतशृंगंचशर्यातिवनमेवच ॥ पुण्यमश्वशिरःस्थानंस्थानमाथर्वणस्यच ३२ वृषदंशंचशैलेंद्रंमहामंदरमेवच ॥ अप्सरोभिःसमाकीर्णंकिन्नरैश्चोपशोभितम् ३३ तस्मिन्शैलेव्रजन्पार्थःसकृष्णःसमवैक्षत ॥ शुभैःप्रस्रवणैर्जुष्टांहेमधातुविभूषिताम् ३४ चंद्ररश्मिप्रकाशांगींपृथिवींपुरमालिनीम् ॥ समुद्रांश्चाद्भुताकारानपश्यद्बहुलाकरान् ३५ वियद्द्यांपृथिवींचैवतथाविष्णुपदंव्रजन् ॥ विस्मितःसहकृष्णेनक्षिप्तोबाणइवाभ्यगात् ३६ ग्रहनक्षत्रसोमानांसूर्याग्न्योश्चसमत्विषम् ॥ अपश्यततदापार्थोज्वलंतमिवपर्वतम् ३७ समासाद्यतुतंशैलंशैलाग्रेसमवस्थितम् ॥ तपोनित्यंमहात्मानमपश्यद्वृषभध्वजम् ३८ सहस्रमिवसूर्याणांदीप्यमानंस्वतेजसा ॥ शूलिनंजटिलंगौरंवल्कलाजिनवाससम् ३९ नयनानांसहस्रैश्चविचित्रांगंमहौजसम् ॥ पार्वत्यासहितंदेवंभूतसंघैश्चभास्वरैः ४० गीतवादित्रसन्नादैर्हास्यलास्यसमन्वितम् ॥ वल्गितास्फोटितोत्क्रुष्टैःपुण्यैर्गंधैश्चसेवितम् ४१ स्तूयमानंस्तवैर्दिव्यैर्ऋषिभिर्ब्रह्मवादिभिः ॥ गोप्तारंसर्वभूतानामिष्वासधरमच्युतम् ४२

२९ । ३० । ३१ आथर्वणस्यमुनेः ३२ ३३ । ३४ । ३५ तथाचव्रजन्विष्णुपदमाकाशमभ्यगादित्यन्वयः ३६ । ३७ । ३८ । ३९ । ४० लास्यंनृत्यं वल्गितमितस्ततःप्रचारः आस्फोटितंभुजाडंबरः उत्क्रुष्टमुच्चैःस्वनितम् ४१ । ४२

४३ लोकानामादिमुपादानं विश्वंजगत्कर्मप्राप्यंयस्य ईशानमप्रतिहतेच्छं अव्ययमविकारं मनसःपरमंप्रवृत्तिनिवृत्तिकारणंयोनिमुत्पत्तिस्थानंच ज्योतिषांतेजसांनिधिमाधिष्ठानं ४४ परांमूलभूतां प्रकृतिंप्रधानं साधनंसिद्धेर्निधानं ४५ योगानांयोगदर्शिनांपरंधामपरमाश्रयंदृष्टंसाक्षाद्भूतंब्रह्मतत्त्वंतद्विदांनिधिरहस्यं ४६ कालइवकोपोयस्यशक्रस्य गुणाऐश्वर्यादयः सूर्यस्यगुणाःप्रतापादयः तेषामुदयोयस्मात् ४७ कारणात्मानंकारणैकस्वभावं ४८। ४९। ५०। ५१। ५२। ५३। ५४ भवःसर्वप्रभुत्वात् शर्वःसंहरणात् ५५ शांतिःशमप्रधानत्वात् ५६ हविष्योहविष्ययोग्य

वासुदेवस्तुतंदृष्ट्वाजगामशिरसाक्षितिम् ॥ पार्थेनसहधर्मात्मागृणन्ब्रह्मसनातनम् ४३ लोकादिंविश्वकर्माणमजमीशानमव्ययम् ॥ मनसःपरमंयोनिंखंवायुं ज्योतिषांनिधिम् ४४ स्रष्टारंवारिधाराणांभुवश्चप्रकृतिंपराम् ॥ देवदानवयक्षाणांमानवानांचसाधनम् ४५ योगानांचपरंधामदृष्टंब्रह्मविदांनिधिम् ॥ चराचरस्यस्रष्टारंप्रतिहर्तारमेवच ४६ कालकोपंमहात्मानंशक्रसूर्यगुणोदयम् ॥ ववंदेतंतदाकृष्णोवाङ्मनोबुद्धिकर्मभिः ४७ यंप्रपद्यंतिविद्वांसःसूक्ष्माध्यात्मपदैषिणः ॥ तमजंकारणात्मानंजग्मतुःशरणंभवम् ४८ अर्जुनश्चापितंदेवंभूयोभूयोऽप्यवंदत ॥ ज्ञात्वातंसर्वभूतादिंभूतभव्यभवोद्भवम् ४९ ततस्तावागतौदृष्ट्वानरनारायणावुभौ ॥ सुप्रसन्नमनाःशर्वःप्रोवाचप्रहसन्निव ५० स्वागतंवोनरश्रेष्ठावुत्तिष्ठेतांगतक्लमौ ॥ किंचवामीप्सितंवीरौमनसःक्षिप्रमुच्यताम् ५१ येनकार्येणसंप्राप्तौयुवांतत्साधयामिकिम् ॥ व्रियतामात्मनःश्रेयस्तत्सर्वंप्रददामिवाम् ५२ ततस्तद्वचनंश्रुत्वाप्रत्युत्थायकृतांजली ॥ वासुदेवार्जुनौशर्वंतुष्टुवातेमहामती ५३ भक्त्यास्तवेनदिव्येनमहात्मानावनिंदितौ ५४ ॥ कृष्णार्जुनावूचतुः ॥ नमोभवायशर्वायरुद्रायवरदायच ॥ पशूनांपतये नित्यमुग्रायचकपर्दिने ५५ महादेवायभीमायत्र्यंबकायचशांतये ॥ ईशानायमखघ्नायनमोऽस्त्वंधकघातिने ५६ कुमारगुरवेतुभ्यंनीलग्रीवायवेधसे ॥ पिनाकिनेहविष्यायसत्यायविभवेसदा ५७ विलोहितायधूम्रायव्याधायानपराजिते ॥ नित्यंनीलशिखंडायशूलिनेदिव्यचक्षुषे ५८ होत्रेपोत्रेत्रिनेत्रायव्याधायवसुरेतसे ॥ अचिंत्यायांबिकाभर्त्रेसर्वदेवस्तुतायच ५९ वृषध्वजायमुंडायजटिनेब्रह्मचारिणे ॥ तप्यमानायसलिलेब्रह्मण्यायाजितायच ६० विश्वात्मनेविश्वसृजेविश्वमावृत्त्यतिष्ठते ॥ नमोनमस्तेसेव्यायभूतानांप्रभवेसदा ६१ ब्रह्मवक्त्रायसर्वायशंकरायाशिवायच ॥ नमोऽस्तुवाचस्पतयेप्रजानांपतयेनमः ६२ नमोविश्वस्यपतयेमहतांपतयेनमः ॥ नमःसहस्रशिरसेसहस्रभुजमृत्यवे ६३ सहस्रनेत्रपादायनमोऽसंख्येयकर्मणे ॥ नमोहिरण्यवर्णायहिरण्यकवचायच ॥ भक्तानुकंपिनेनित्यंसिध्यतांनोवरःप्रभो ६४

त्वात् सत्यायसदैकस्वभावात् विभुर्व्यापकत्वात् ५७ व्याधायमृगहननात् द्विरुक्तिर्द्विस्तथाकारणात् अनान्प्राणिनःपराजयतीतिअनपराजित्सर्वभूतोत्तमत्वात् नीलशिखंडीनीलकेशत्वात् ५८ होतादीक्षितोभावेनहवनशीलत्वात् वसुरेताअग्नौरेतःक्षेपणात् ५९ मुंडोदीक्षितत्वात् ब्रह्मचारीरितोविधारणात् ६० भूतानांप्राणिनांप्रमथादीनां ६१ ब्रह्मवक्त्रोवेदपूर्णमुखत्वात् सर्वःसर्वस्वरूपत्वात् शिवोमोक्षहेतुत्वात् वाचस्पतिर्वाङ्मयप्रवर्तनात् ६२ सहस्रभुजायमृत्यवेचमन्यवेइतिपाठः ६३। ६४

६५ ॥ इतिद्रोणपर्वणिटीकायामशीतितमोऽध्यायः ॥ ८० ॥ ततइति १ आत्मनासुकृतंसूपकल्पितं २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ द्वंद्वंयुगलं १४ । १५ नीललो



॥ संजयउवाच ॥ एवंस्तुत्वामहादेवंवासुदेवःसहार्जुनः ॥ प्रसादयामासभवंतदाह्यस्त्रोपलब्धये ६९ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिप्रतिज्ञापर्वणिअर्जुनस्वप्नेअशीतितमोऽध्यायः ॥ ८० ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ ततःपार्थःप्रसन्नात्माप्रांजलिर्वृषभध्वजम् ॥ ददर्शोत्फुल्लनयनःसमस्तंतेजसांनिधिम् १ तंचोपहारंसुकृतंनैशंनैत्यकमात्मना ॥ ददर्शत्र्यंबकाभ्याशेवासुदेवनिवेदितम् २ ततोऽभिपूज्यमनसाकृष्णंशर्वंचपांडवः ॥ इच्छाम्यहंदिव्यमस्त्रमित्यभाषतशंकरं ३ ततःपार्थस्यविज्ञायवरार्थेवचनंतदा ॥ वासुदेवार्जुनौदेवःस्मयमानोऽभ्यभाषत ४ स्वागतंवांनरश्रेष्ठौविज्ञातंमनसेप्सितम् ॥ येनकामेनसंप्राप्तौभवद्भ्यांतंददाम्यहम् ५ सरोमृतमयंदिव्यमभ्याशेशत्रुसूदनौ ॥ तत्रमेतद्धनुर्दिव्यंशरश्चनिहितःपुरा ६ येनदेवारयःसर्वेमयायुधिनिपातिताः ॥ ततआनीयतांकृष्णौसशरंधनुरुत्तमम् ७ तथेत्युक्त्वातुतौवीरौसर्वपारिषदैःसह ॥ प्रस्थितौतत्सरोदिव्यंदिव्यैश्वर्यशतैर्युतम् ८ निर्दिष्टंयद्वृषांकेणपुण्यंसर्वार्थसाधकम् ॥ तौजग्मतुरसंभ्रांतौनरनारायणावृषी ९ ततस्तौतत्सरोगत्वासूर्यमंडलसन्निभम् ॥ नागमंतर्जलेघोरंददृशातेऽर्जुनाच्युतौ १० द्वितीयंचापरंनागंसहस्रशिरसंवरम् ॥ वमंतंविपुलाज्वालाददृशातेऽग्निवर्चसम् ११ ततःकृष्णश्चपार्थश्चसंस्पृश्यांभःकृतांजली ॥ तौनागावुपतस्थातेनमस्यंतौवृषध्वजम् १२ गृणंतौवेदविद्वांसौतद्ब्रह्मशतरुद्रियम् ॥ अप्रमेयंप्रणमतोगत्वासर्वात्मनाभवम् १३ ततस्तौरुद्रमाहात्म्याद्धित्वारूपंमहोरगौ ॥ धनुर्बाणश्चशत्रुघ्नंतद्द्वंद्वंसमपद्यत १४ तौतज्जगृहतुःप्रीतौधनुर्बाणंचसुप्रभम् ॥ आजह्रतुर्महात्मानौददतुश्चमहात्मने १५ ततःपार्श्वाद्वृषांकस्यब्रह्मचारीन्यवर्तत ॥ पिंगाक्षस्तपसःक्षेत्रंबलवान्नीललोहितः १६ सतद्गृह्यधनुःश्रेष्ठंतस्थौस्थानंसमाहितः ॥ विचकर्षाथविधिवत्सशरंधनुरुत्तमम् १७ तस्यमौर्वींचमुष्टिंचस्थानंचालक्ष्यपांडवः ॥ श्रुत्वामंत्रंभवप्रोक्तंजग्राहाचिंत्यविक्रमः १८ ससरस्येवतंबाणंमुमोचातिबलःप्रभुः ॥ चकारचपुनर्वीरस्तस्मिन्सरसितद्धनुः १९ ततःप्रीतंभवंज्ञात्वास्मृतिमानर्जुनस्तदा ॥ वरमारण्यकेदत्तंदर्शनंशंकरस्यच २० मनसाचिंतयामासतन्मेसंपद्यतामिति ॥ तस्यतन्मतमाज्ञायप्रीतःप्रादाद्वरंभवः २१ तच्चपाशुपतंघोरंप्रतिज्ञायाश्चपारणम् ॥ ततःपाशुपतंदिव्यमवाप्यपुनरीश्वरात् २२ संहृष्टरोमादुर्धर्षःकृतंकार्यममन्यत ॥ ववंदतुश्चसंहृष्टौशिरोभ्यांतंमहेश्वरम् २३ अनुज्ञातौक्षणेतास्मिन्भवेनार्जुनकेशवौ ॥ प्राप्तौस्वशिबिरंवीरौमुदापरमयायुतौ २४ तथाभवेनानुमतौमहासुरनिघातिना ॥ इंद्राविष्णूयथाप्रीतौजंभस्यवधकांक्षिणौ २५ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिप्रतिज्ञापर्वणिअर्जुनस्यपुनःपाशुपतास्त्रप्राप्तौएकाशीतितमोऽध्यायः ॥ ८१ ॥ ॥ ७ ॥

हितःभगवतोऽपरातनुः १६ स्थानंस्थापनकं १७ जग्राहमनसिकृतवान् १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ ॥ इतिद्रोणपर्वणिटीकायामेकाशीतितमोऽध्यायः ॥ ८१ ॥

तयोरिति १ मधुपर्किकाःमांगल्योपस्थापकाः पाणिस्वनिकाहस्तेनतालस्वनंकुर्वते मधुपर्किकाःमधुपर्कसमयेपठंतइतिदेवबोधः २ रक्तकंठिनोरंजकस्वराः३ झर्झराझिल्लिकाः भेर्योबृहड्ढक्काःपणवामु
रजाः आनकाःपटहाः गोमुखाःझागडाः आडंबराश्चक्षुद्रपटहाः दुंदुभ्योढक्काः ४ । ५। ६। ७ ।८ भद्रासनेचतुःसमासने ९ कषायेणसर्वौषध्यादिकल्केन १० । ११ अक्लिष्टमनुपहतंवसनंयस्य १२

संजयउवाच ॥ तयोःसंवदतोरेवंकृष्णदारुकयोस्तथा ॥ साऽत्यगाद्रजनीराजन्नथराजाऽन्वबुध्यत १ पठंतिपाणिस्वनिकामागधामधुपर्किकाः ॥ वैतालिका
श्चसूताश्चतुष्टुवुःपुरुषर्षभम् २ नर्तकाश्चाप्यनृत्यंतजगुर्गीतानिगायकाः ॥ कुरुवंशस्तवार्थानिमधुरंरक्तकंठिनः ३ मृदंगाझर्झराभेर्यःपणवानकगोमुखाः ॥ आ
डंबराश्चशंखाश्चदुंदुभ्यश्चमहास्वनाः ४ एवमेतानिसर्वाणितथान्यान्यपिभारत ॥ वादयंतिसुसंहृष्टाःकुशलाःसाधुशिक्षिताः ५ समेघसमनिर्घोषोमहान्शब्दो
ऽस्पृशद्दिवम् ॥ पार्थिवप्रवरंसुप्तंयुधिष्ठिरमबोधयत् ६ प्रतिबुद्धःसुखंसुप्तोमहार्हेशयनोत्तमे ॥ उत्थायावश्यकार्यार्थंययौस्नानगृहंनृपः ७ ततःशुक्लांबराःस्ना
तास्तरुणाःशतमष्टच ॥ स्नापकाःकांचनैःकुंभैःपूर्णैःसमुपतस्थिरे ८ भद्रासनेसूपविष्टःपरिधायांबरंलघु ॥ सस्नौचंदनसंयुक्तैःपानीयैरभिमंत्रितैः ९ उत्सादि
तःकषायेणबलवद्भिःसुशिक्षितैः ॥ आप्लुतःसाधिवासेनजलेनससुगंधिना १० राजहंसनिभंप्राप्यउष्णीषंशिथिलार्पितम् ॥ जलक्षयनिमित्तंवैवेष्टयामासमूर्ध
नि ११ हरिणाचंदनेनांगमुपलिप्यमहाभुजः ॥ स्रग्वीचाक्लिष्टवसनःप्राङ्मुखःप्रांजलिःस्थितः १२ जजापजप्यंकौंतेयःसतांमार्गमनुष्ठितः ॥ तत्राग्निशरणं
दीप्तंप्रविवेशविनीतवत् १३ समिद्भिःसपवित्राभिरग्निमाहुतिभिस्तथा ॥ मंत्रपूताभिरर्चित्वानिश्चक्रामगृहात्ततः १४ द्वितीयांपुरुषव्याघ्रःकक्ष्यांनिर्गम्यपा
र्थिवः ॥ ततोवेदविदोवृद्धानपश्यद्ब्राह्मणर्षभान् १५ दांतान्वेदव्रतस्नातान्स्नातानवभृथेषुच ॥ सहस्रानुचरान्सौरान्सहस्रंचाष्टचापरान् १६ अक्षतैःसुमनो
भिश्चवाचयित्वामहाभुजः ॥ तान्द्विजान्मधुसर्पिर्भ्यांफलैःश्रेष्ठैःसुमंगलैः १७ प्रादात्कांचनमेकैकंनिष्कंविप्रायपांडवः ॥ अलंकृतंचाश्वशतंवासांसीष्टाश्चदक्षि
णाः १८ तथागाःकपिलादोग्ध्रीःसवत्साःपांडुनंदनः ॥ हेमशृंगीरौप्यखुरादत्त्वातेभ्यःप्रदक्षिणम् १९ स्वस्तिकान्वर्धमानांश्चनंद्यावर्तांश्चकांचनान् ॥ माल्यं
चजलकुंभांश्चज्वलितंचहुताशनम् २० पूर्णान्यक्षतपात्राणिरुचकंरोचनास्तथा ॥ स्वलंकृताःशुभाःकन्यादधिसर्पिर्मधूदकम् २१ मंगल्यान्पक्षिणश्चैवयच्चा
न्यदपिपूजितम् ॥ दृष्ट्वास्पृष्ट्वाचकौंतेयोबाह्यांकक्ष्यांततोऽगमत् २२ ततस्तस्यांमहाबाहोस्तिष्ठतःपरिचारकाः ॥ सौवर्णंसर्वतोभद्रंमुक्तावैदूर्यमंडि
तम् २३ परार्ध्यास्तरणास्तीर्णंसोत्तरच्छदमृद्धिमत् ॥ विश्वकर्मकृतंदिव्यमुपजह्रुर्वरासनम् २४ तत्रतस्योपविष्टस्यभूषणानिमहात्मनः ॥ उपा
जह्रुर्महार्हाणिप्रेष्याःशुभ्राणिसर्वशः २५ मुक्ताभरणवेषस्यकौंतेयस्यमहात्मनः ॥ रूपमासीन्महाराजद्विषतांशोकवर्धनम् २६ चामरैश्चंद्ररश्म्याभैर्हैमदं
डैःसुशोभनैः ॥ दोधूयमानैःशुशुभेविद्युद्भिरिवतोयदः २७

दीप्तंज्वलदग्निं १३ । १४ । १५ सौरान्सूर्योपासकान् १६ । १७ । १८ प्रदक्षिणंकृत्वेतिशेषः
१९ स्वस्तिकानालिंगनानि वर्धमानान्शरावान् नंद्यावर्त्तान्संपुटितान्यर्घपात्राणि २० रुचकंमातुलुंगकं २१ । २२ । २३ विश्वकर्मकृतंविश्वकर्मप्रणीतेनविधिनानिर्मितं २४ । २५ । २६ । २७

वंद्यमानःस्तूयमानः स्तुत्यर्थंस्यवदेरूपं २८ । २९ । ३० शुद्धांतंकक्ष्याभ्यंतरं ३१ । ३२ स्वागतेनाप्रतिबद्धागमनेन ३३ । ३४ । ३५ ॥ इतिद्रोणपर्वणिटीकायां द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

संस्तूयमानःसूतैश्चवंद्यमानश्चबंदिभिः ॥ उपगीयमानोगंधर्वैरास्तेसकुरुनंदनः २८ ततोमुहूर्तादासीत्तुस्यंदनानांस्वनोमहान् ॥ नेमिघोषश्चरथिनांखुरघोषश्चवाजिनाम् २९ ह्रादेनगजघंटानांशंखानांनिनदेनच ॥ नराणांपदशब्दैश्चकंपतीवस्ममेदिनी ३० ततःशुद्धांतमासाद्यजानुभ्यांभूतलेस्थितः ॥ शिरसावंदनीयंतमभिवाद्यजनेश्वरम् ३१ कुंडलीबद्धनिस्त्रिंशःसन्नद्धकवचोयुवा ॥ अभिप्रणम्याशिरसाद्वाःस्थोधर्मात्मजायवै ३२ न्यवेदयद्धृषीकेशमुपयांतंमहात्मने ॥ सोऽब्रवीत्पुरुषव्याघ्रःस्वागतेनैवमाधवम् ३३ अर्घ्यंचैवासनंचास्मैदीयतांपरमार्चितम् ॥ ततःप्रवेश्यवार्ष्णेयमुपवेश्यवरासने ३४ पूजयामासविधिवद्धर्मराजोयुधिष्ठिरः ३५ ॥ इतिश्रीमहाभारते द्रोणपर्वणिप्रतिज्ञापर्वणि युधिष्ठिरसज्जतायांद्व्यशीतितमोऽध्यायः ॥ ८२ ॥ ॥ छ ॥ ॥ संजयउवाच ॥

ततोयुधिष्ठिरोराजाप्रतिनंद्यजनार्दनम् ॥ उवाचपरमप्रीतःकौंतेयोदेवकीसुतम् १ सुखेनरजनीव्युष्टाकच्चित्तेमधुसूदन ॥ कच्चिज्ज्ञानानिसर्वाणिप्रसन्नानितवाच्युत २ वासुदेवोऽपितद्युक्तंपर्यपृच्छद्युधिष्ठिरम् ॥ ततश्चप्रकृतीःक्षत्तान्यवेदयदुपस्थिताः ३ अनुज्ञातश्चराज्ञासप्रावेशयततंजनम् ॥ विराटंभीमसेनंचधृष्टद्युम्नंचसात्यकिम् ४ चेदिपंधृष्टकेतुंचद्रुपदंचमहारथम् ॥ शिखंडिनंयमौचैवचेकितानंसकेकयम् ५ युयुत्सुंचैवकौरव्यंपांचाल्यंचोत्तमौजसम् ॥ युधामन्युंसुबाहुंचद्रौपदेयांश्चसर्वशः ६ एतेचान्येचबहवःक्षत्रियाःक्षत्रियर्षभम् ॥ उपतस्थुर्महात्मानंविविशुश्चासनेशुभे ७ एकस्मिन्नासनेवीरावुपविष्टौमहाबलौ ॥ कृष्णश्चयुयुधानश्चमहात्मानौमहाद्युती ८ ततोयुधिष्ठिरस्तेषांशृण्वतांमधुसूदनम् ॥ अब्रवीत्पुंडरीकाक्षमाभाष्यमधुरंवचः ९ एकंत्वांवयमाश्रित्यसहस्राक्षमिवामराः ॥ प्रार्थयामोजयंयुद्धेशाश्वतानिसुखानिच १० त्वंहिराज्यविनाशंचद्विषद्भिश्चनिराक्रियाम् ॥ क्लेशांश्चविविधान्कृष्णसर्वांस्तानपिवेदनः ११ त्वयिसर्वेशसर्वेषामस्माकंभक्तवत्सल ॥ सुखमायत्तमत्यर्थंयात्राचमधुसूदन १२ सतथाकुरुवार्ष्णेययथात्वयिमनोमम ॥ अर्जुनस्ययथासत्याप्रतिज्ञास्याच्चिकीर्षिता १३ सभवांस्तारयत्वस्माद्दुःखामर्षमहार्णवात् ॥ पारंतितीर्षतामद्यप्लवोनोभवमाधव १४ नहितत्कुरुतेसंख्येरथीरिपुवधोद्यतः ॥ यथावैकुरुतेकृष्णसारथिर्यत्नमास्थितः १५ यथैवसर्वास्वापत्सुपासिवृष्णीन्जनार्दन ॥ तथैवास्मान्महाबाहोवृजिनात्त्रातुमर्हसि १६ त्वमगाधेऽप्लवेमग्नान्पांडवान्कुरुसागरे ॥ समुद्धरप्लवोभूत्वाशंखचक्रगदाधर १७ नमस्तेदेवदेवेशसनातनविशातन ॥ विष्णोजिष्णोहरेकृष्णवैकुंठपुरुषोत्तम १८ नारदस्त्वांसमाचख्यौपुराणमृषिसत्तमम् ॥ वरदंशार्ङ्गिणंश्रेष्ठंतत्सत्यंकुरुमाधव १९ इत्युक्तःपुंडरीकाक्षोधर्मराजेनसंसदि ॥ तोयमेघस्वनोवाग्मीप्रत्युवाचयुधिष्ठिरम् २०

ततइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० निराक्रियामपसारणं ११ यात्रास्थितिः १२ । १३ । १४ । १५ वृजिनाद्व्यसनात् १६ । १७ सनातनअनादिनिधन विशातनसंहर्तः कृष्णसंसारकर्षक पुरुषोत्तमपरमात्मन् १८ । १९ । २०

२१ युद्धशौंडः युद्धप्रवीणः २२ । २३ । २४ । २५ । २६ । २७ । २८ ॥ इतिद्रोणपर्वणिटीकायांत्र्यशीतितमोऽध्यायः ॥ ८३ ॥ ॥ ७ ॥ ॥ तथेति ॥ १ । २ । ३ । ४ । ५ । ६ । ७ । ८

॥ वासुदेवउवाच ॥ सामरेष्वपिलोकेषुसर्वेषुनतथाविधः ॥ शरासनधरःकश्चिद्यथापार्थोधनंजयः २१ वीर्यवानस्त्रसंपन्नःपराक्रांतोमहाबलः ॥ युद्धशौंडःस दामर्षीतेजसापरमोनृणाम् २२ सयुवावृषभस्कंधोदीर्घबाहुर्महाबलः ॥ सिंहर्षभगतिःश्रीमान्द्विषतस्तेहनिष्यति २३ अहंचतत्करिष्यामियथाकुंतीसुतोऽ र्जुनः ॥ धार्तराष्ट्रस्यसैन्यानिधक्ष्यत्यग्निरिवेंधनम् २४ अद्यतंपापकर्माणंक्षुद्रंसौभद्रघातिनम् ॥ अपुनर्दर्शनंमार्गमिषुभिःक्षेप्स्यतेर्जुनः २५ तस्याद्यगृ ध्राःश्येनाश्चचंडगोमायवस्तथा ॥ भक्षयिष्यंतिमांसानियेचान्येपुरुषादकाः २६ यद्यस्यदेवागोप्तारःसेंद्राःसर्वेतथाप्यसौ ॥ राजधानींयमस्याद्यहतःप्राप्स्य तिसंकुले २७ निहत्यसैंधवंजिष्णुरद्यत्वामुपयास्यति ॥ विशोकोविज्वरोराजन्भवभूतिपुरस्कृतः २८ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिप्रतिज्ञापर्वणिश्रीकृ ष्णवाक्ये त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ ॥ संजयउवाच ॥ तथातुवदतोस्तेषांप्रादुरासीद्धनंजयः ॥ दिदृक्षुर्भरतश्रेष्ठंराजानंससुहृद्गणम् १ तंनिविष्टंशु भांकक्ष्यामभिवंद्याग्रतःस्थितम् ॥ तमुत्थायार्जुनंप्रेम्णासस्वजेपांडवर्षभः २ मूर्ध्निचैनमुपाघ्रायपरिष्वज्यचबाहुना ॥ आशिषःपरमाःप्रोच्यस्मयमानोऽभ्य भाषत ३ व्यक्तमर्जुनसंग्रामेध्रुवस्तेविजयोमहान् ॥ यादृग्रूपाचतेच्छायाप्रसन्नश्चजनार्दनः ४ तमब्रवीत्ततोजिष्णुर्महदाश्चर्यमुत्तमम् ॥ दृष्टवानस्मिभद्रंतेकेश वस्यप्रसादजम् ५ ततस्तत्कथयामासयथादृष्टंधनंजयः ॥ आश्वासनार्थंसुहृदांत्र्यंबकेणसमागमम् ६ ततःशिरोभिरवनिंस्पृष्ट्वासर्वेचविस्मिताः ॥ नमस्कृ त्यवृषांकायसाधुसाध्वित्यथाऽब्रुवन् ७ अनुज्ञातास्ततःसर्वेसुहृदोधर्मसूनुना ॥ त्वरमाणाःसुसन्नद्धाहृष्टायुद्धायनिर्ययुः ८ अभिवाद्यतुराजानंयुयुधानाच्यु तार्जुनाः ॥ हृष्टाविनिर्ययुस्तेवैयुधिष्ठिरनिवेशनात् ९ रथेनैकेनदुर्धर्षौयुयुधानजनार्दनौ ॥ जग्मतुःसहितौवीरावर्जुनस्यनिवेशनम् ॥ तत्रगत्वाहृषीकेशः कल्पयामाससूतवत् १० रथंरथवरस्याजौवानरर्षभलक्षणम् ॥ समेघसमनिर्घोषस्तप्तकांचनसप्रभः ११ बभौरथवरःकॢप्तःशिशुर्दिवसकृद्यथा ॥ ततःपुरुष शार्दूलःसज्जंसज्जपुरःसरः १२ कृताह्निकायपार्थायन्यवेदयततंरथम् ॥ तंतुलोकवरःपुंसांकिरीटीहेमवर्मभृत् १३ चापबाणधरोवाहंप्रदक्षिणमवर्तत ॥ तपो विद्यावयोवृद्धैःक्रियावद्भिर्जितेंद्रियैः १४ स्तूयमानोजयाशीर्भिरारुरोहमहारथम् ॥ जैत्रैःसांग्रामिकैर्मंत्रैःपूर्वमेवरथोत्तमम् १५ अभिमंत्रितमर्चिष्मानुदयंभा स्करोयथा ॥ सरथेरथिनांश्रेष्ठःकांचनेकांचनावृतः १६ विबभौविमलोऽर्चिष्मान्मेराविवदिवाकरः ॥ अन्वारुरुहतुःपार्थंयुयुधानजनार्दनौ १७ शर्यातेर्यज्ञ मायांतंयथेंद्रंदेवमश्विनौ ॥ अथजग्राहगोविंदोरश्मीन्रश्मिविदांवरः १८ मातलिर्वासवस्येववृत्रंहंतुंप्रयास्यतः ॥ सताभ्यांसहितःपार्थोरथप्रवरमास्थितः १९

९ । १० । ११ शिशुर्दिवसकृद्बालःसूर्यः सज्जपुरःसरःसामग्रीतमग्रः १२ । १३ । १४ । १५ । १६ । मेरावुदयाद्रौमनोनुकूलार्थेषुसुखसंवेदनंभवति १७ । १८ । १९

२० । २१ । २२ प्रयतोमंदः २३ । २४ । २५ प्रदक्षिणंछंदोनुवर्तिनं २६ । २७ । २८ । २९ । ३० । ३१ । ३२ अपेक्षाअनुरोधः ३३ । ३४ । ३५ ॥ इतिद्रोणपर्वणिटीकायांचतुरशी



सहितोबुधशुक्राभ्यांतमोनिघ्नन्यथाशशी ॥ सैंधवस्यवधंप्रेप्सुःप्रयातःशत्रुपूगहा २० सहांबुपतिमित्राभ्यांयथेंद्रस्तारकामये ॥ ततोवादित्रनिर्घोषैर्मांगल्यैश्चस्तवैःशुभैः २१ प्रयांतमर्जुनंवीरंमागधाश्चैवतुष्टुवुः ॥ सजयाशीःसपुण्याहःसूतमागधानिःस्वनः २२ युक्तोवादित्रघोषेणतेषांरतिकरोऽभवत् ॥ तमनुप्रयतोवायुःपुण्यगंधवहःशुभः २३ ववौसंहर्षयन्पार्थंद्विषतश्चापिशोषयन् ॥ ततस्तस्मिन्क्षणेराजन्विविधानिशुभानिच २४ प्रादुरासन्निमित्तानिविजयायबहूनिच ॥ पांडवानांत्वदीयानांविपरीतानिमारिष २५ दृष्ट्वाऽर्जुनोनिमित्तानिविजयायप्रदक्षिणम् ॥ युयुधानंमहेष्वासमिदंवचनमब्रवीत् २६ युयुधानाद्ययुद्धेमेदृश्यतेविजयोध्रुवः ॥ यथाहीमानिलिंगानिदृश्यंतेशिनिपुंगव २७ सोऽहंतत्रगमिष्यामियत्रसैंधवकोनृपः ॥ यियासुर्यमलोकायममवीर्यंप्रतीक्षते २८ यथापरमकंकृत्यंसैंधवस्यवधोमम ॥ तथैवसुमहत्कृत्यंधर्मराजस्यरक्षणम् २९ सत्वमद्यमहाबाहोराजानंपरिपालय ॥ यथैवहिमयागुप्तस्त्वयागुप्तोभवेत्तथा ३० नपश्यामिचतंलोकेयस्त्वांयुद्धेपराजयेत् ॥ वासुदेवसमंयुद्धेस्वयमप्यमरेश्वरः ३१ त्वयिचाहंपराश्वस्तःप्रद्युम्नेवामहारथे ॥ शक्नुयांसैंधवंहंतुमनपेक्षोनरर्षभ ३२ मय्यपेक्षानकर्तव्याकथंचिदपिसात्वत ॥ राजन्येवपरागुप्तिःकार्यासर्वात्मनात्वया ३३ नहियत्रमहाबाहुर्वासुदेवोव्यवस्थितः ॥ किंचिद्व्यापद्यतेतत्रयत्राहमपिचध्रुवम् ३४ एवमुक्तस्तुपार्थेनसात्यकिःपरवीरहा ॥ तथेत्युक्त्वाऽगमत्तत्रयत्रराजायुधिष्ठिरः ३५ ॥ इतिश्रीमहाभारतेद्रोणप० प्रतिज्ञाप० अर्जुनवाक्येचतुरशीतितमोऽध्यायः ॥ ८४ ॥ समाप्तंप्रतिज्ञापर्व ॥ अथजयद्रथवधपर्व ॥ ॥ धृतराष्ट्रउवाच ॥ श्वोभूतेकिमकार्षुस्तेदुःखशोकसमन्विताः ॥ अभिमन्यौहतेतत्रकेवाऽयुद्ध्यंतमामकाः १ जानंतस्तस्यकर्माणिकुरवःसव्यसाचिनः ॥ कथंतत्किल्बिषंकृत्वानिर्भयाब्रूहिमामकाः २ पुत्रशोकाभिसंतप्तंक्रुद्धंमृत्युमिवांतकम् ॥ आयांतंपुरुषव्याघ्रंकथंददृशुराहवे ३ कपिराजध्वजंसंख्येविधुन्वानंमहद्धनुः ॥ दृष्ट्वापुत्रपरिद्यूनंकिमकुर्वतमामकाः ४ किंनुसंजयसंग्रामेवृत्तंदुर्योधनंप्रति ॥ परिदेवोमहानद्यश्रुतोमेनाभिनंदनम् ५ बभूवुर्येमनोग्राह्याःशब्दाःश्रुतिसुखावहाः ॥ नश्रूयंतेऽद्यसर्वेतेसैंधवस्यनिवेशने ६ स्तुवतांनाद्यश्रूयंतेपुत्राणांशिबिरेमम ॥ सूतमागधसंघानांनर्तकानांचसर्वशः ७ शब्देननादिताऽभीक्ष्णमभवद्यत्रमेश्रुतिः ॥ दीनानामद्यतंशब्दंनशृणोमिसमीरितम् ८ निवेशनेसत्यधृतेःसोमदत्तस्यसंजय ॥ आसीनोऽहंपुरातातशब्दमश्रौषमुत्तमम् ९ तदद्यपुण्यहीनोऽहमार्तस्वरनिनादितम् ॥ निवेशनंगतोत्साहंपुत्राणांममलक्षये १० विविंशतेर्दुर्मुखस्यचित्रसेनविकर्णयोः ॥ अन्येषांचसुतानांमेनतथाश्रूयतेध्वनिः ११ ब्राह्मणाःक्षत्रियावैश्यायंशिष्याःपर्युपासते ॥ द्रोणपुत्रंमहेष्वासंपुत्राणांमेपरायणम् १२

तितमोऽध्यायः ॥ ८४ ॥ ॥ ७ ॥ श्वोभूतेइति १ । २ । ३ पुत्रपरिद्यूनंपुत्रवधदुःखितं ४ । ५ । ६ । ७ यत्रेतितृतीयार्थेसप्तमी ८ । ९ । १० । ११ । १२

स्वपक्षस्थापनहीनःप्रतिपक्षेप्रतिक्षेपोवितंडा आलापोभाषणं संलापोमिथोभाषणं १३ । १४ ।१५ । १६। १७ गणानांसंघानां १८ । १९ । २० । २१ । २२ तीर्थेननिदानेनउपायेनवा कालप्राप्तं

वितंडालापसंलापैर्हुतवादित्रवादितैः ॥ गीतैश्चविविधैरिष्टैरमतेयोदिवानिशम् १३ उपास्यमानोबहुभिःकुरुपांडवसात्वतैः ॥ सूततस्यगृहेशब्दोनाद्यद्रौणेर्यथापुरा १४ द्रोणपुत्रंमहेष्वासंगायनानर्त्तकाश्चये ॥ अत्यर्थमुपतिष्ठंतितेषांनश्रूयतेध्वनिः १५ विंदानुविंदयोःसायंशिबिरेयोमहाध्वनिः १६ श्रूयतेसोऽद्यनतथाकेकयानांचवेश्मसु ॥ नित्यंप्रमुदितानांचतालगीतस्वनोमहान् १७ नृत्यतांश्रूयतेतातगणानांसोऽद्यनस्वनः ॥ सप्ततंतून्वितन्वानायाजकायमुपासते १८ सौमदत्तिंश्रुतनिधिंतेषांनश्रूयतेध्वनिः ॥ ज्याघोषोब्रह्मघोषश्चतोमरासिरथध्वनिः १९ द्रोणस्यासीदविरतोगृहेतंनशृणोम्यहम् ॥ नानादेशसमुत्थानांगीतानांयोऽभवत्स्वनः २० वादित्रनादितानांचसोऽद्यनश्रूयतेमहान् ॥ यदाप्रभृत्युपप्लव्याच्छांतिमिच्छन्जनार्दनः २१ आगतःसर्वभूतानामनुकंपार्थमच्युतः ॥ ततोऽहमब्रुवंसूतमंदंदुर्योधनंतदा २२ वासुदेवेनतीर्थेनपुत्रसंशाम्यपांडवैः ॥ कालप्राप्तमहंमन्येमात्वंदुर्योधनातिगाः २३ शमंचेद्याचमानंत्वंप्रत्याख्यास्यसिकेशवम् ॥ हितार्थमभिजल्पंतंनतवास्तिरणेजयः २४ प्रत्याचष्टसदाशार्हमृषभंसर्वधन्विनाम् ॥ अनुनेयानिजल्पंतमनयान्नान्वपद्यत २५ ततोदुःशासनस्यैवकर्णस्यचमतंद्वयोः ॥ अन्ववर्ततमांहित्वाकृष्टःकालेनदुर्मतिः २६ नह्यहंद्यूतमिच्छामिविदुरोनप्रशंसति ॥ सैंधवोनेच्छतिद्यूतंभीष्मोनद्यूतमिच्छति २७ शल्योभूरिश्रवाश्चैवपुरुमित्रोजयस्तथा ॥ अश्वत्थामाकृपोद्रोणोद्यूतंनेच्छंतिसंजय २८ एतेषांमतमादाययदिवर्त्तेतपुत्रकः ॥ सज्ञातिमित्रःससुहृच्चिरंजीवेदनामयः २९ श्लक्ष्णामधुरसंभाषाज्ञातिबंधुप्रियंवदाः ॥ कुलीनाःसंमताःप्राज्ञाःसुखंप्राप्स्यंतिपांडवाः ३० धर्मापेक्षीनरोनित्यंसर्वत्रलभतेसुखम् ॥ प्रेत्यभावेचकल्याणंप्रसादंप्रतिपद्यते ३१ अर्हास्तेपृथिवींभोक्तुंसमर्थाःसाधनेऽपिच ॥ तेषामपिसमुद्रांतापितृपैतामहीमही ३२ वियुज्यमानाःस्थास्यंतिपांडवाधर्मवर्त्मनि ॥ संतिमेज्ञातयस्तातयेषांश्रोष्यंतिपांडवाः ३३ शल्यस्यसोमदत्तस्यभीष्मस्यचमहात्मनः ॥ द्रोणस्याथविकर्णस्यबाल्हीकस्यकृपस्यच ३४ अन्येषांचैववृद्धानांभरतानांमहात्मनाम् ॥ त्वदर्थंब्रुवतांतातकरिष्यंतिवचोहिते ३५ कंवात्वंमन्यसेतेषांयस्तान्ब्रूयादतोऽन्यथा ॥ कृष्णोनधर्मंसंजह्यात्सर्वेतेहितदन्वयाः ३६ मयापिचोक्तास्तेवीरावचनंधर्मसंहितम् ॥ नान्यथाप्रकरिष्यंतिधर्मात्मानोहिपांडवाः ३७ इत्यहंविलपन्सूतबहुशःपुत्रमुक्तवान् ॥ नचमेश्रुतवान्मूढोमन्येकालस्यपर्ययम् ३८ वृकोदरार्जुनौयत्रवृष्णिवीरश्चसात्यकिः ॥ उत्तमौजाश्चपांचाल्योयुधामन्युश्चदुर्जयः ३९ धृष्टद्युम्नश्चदुर्धर्षःशिखंडीचापराजितः ॥ अश्मकाःकेकयाश्चैवक्षत्रधर्माचसौमकिः ४० चैद्यश्चचेकितानश्चपुत्रःकाश्यस्यचाभिभूः ॥ द्रौपदेयाविराटश्चद्रुपदश्चमहारथः ४१

समयोचितं २३ । २४ अनुनेयानिअनुकूलानि २५ । २६ । २७ । २८ । २९ श्लक्ष्णाऋजवः ३० । ३१ साधनेस्वीकरणे ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१

४२ । ४३ । ४४ । ४५ दीर्घदर्शनादनागतानुसंधानात् ४६ । ४७ । ४८ । ४९ यद्यदाउपायातयूयमितिशेषः ५० महदत्यर्थम् ५१ तेषांमध्ये ५२ । ५३ रागोमात्सर्यं 'रागस्तुमात्सर्येलोहि

यमौचपुरुषव्याघ्रौमंत्रीचमधुसूदनः ॥ कएतान्जातुयुध्येतलोकेऽस्मिन्वैजिजीविषुः ४२ दिव्यमस्त्रंविकुर्वाणान्प्रसहेद्वापरान्मम ॥ अन्योदुर्योधनात्कर्णाच्छ कुनेश्चापिसौबलात् ४३ दुःशासनचतुर्थानांनान्यंपश्यामिपंचमम् ॥ येषामभीषुहस्तःस्याद्विष्वक्सेनोरथेस्थितः ४४ सन्नद्धश्चार्जुनोयोद्धातेषांनास्तिपरा जयः ॥ तेषामथविलापानांनायंदुर्योधनःस्मरेत् ४५ हतौहिपुरुषव्याघ्रौभीष्मद्रोणौत्वमात्थवै ॥ तेषांविदुरवाक्यानांमुक्तानांदीर्घदर्शनात् ४६ दृष्ट्वेमांफलनि र्वृत्तिंमन्येशोचंतिपुत्रकाः ॥ सेनांदृष्ट्वाऽभिभूतांमेशैनेयेनार्जुनेनच ४७ शून्यान्दृष्ट्वारथोपस्थान्मन्येशोचंतिपुत्रकाः ॥ हिमात्ययेयथाकक्षंशुष्कंवातेरितोम हान् ४८ अग्निर्दहेत्तथासेनांमामिकांसधनंजयः ॥ आचक्ष्वममतत्सर्वंकुशलोह्यसिसंजय ४९ यदुपायातसायाह्नेकृत्वापार्थस्यकिल्बिषम् ॥ अभिमन्यौहते तातकथमासीन्मनोहिवः ५० नजातुतस्यकर्माणियुधिगांडीवधन्वनः ॥ अपकृत्यमहत्तातसोढुंशक्ष्यंतिमामकाः ५१ किंनुदुर्योधनःकृत्यंकर्णःकृत्यंकिमब्रवीत् ॥ दुःशासनःसौबलश्चतेषामेवंगतेष्वपि ५२ सर्वेषांसमवेतानांपुत्राणांममसंजय ॥ यद्वृत्तंतातसंग्राममेमंदस्यापनयैर्भृशम् ५३ लोभानुगस्यदुर्बुद्धेःक्रोधेनविकृता त्मनः ॥ राज्यकामस्यमूढस्यरागोपहतचेतसः ॥ दुर्नीतंवासुनीतंवातन्ममाचक्ष्वसंजय ५४ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथपर्वणि धृतराष्ट्रवाक्ये पंचाशीतितमोऽध्यायः ॥ ८५ ॥ ॥ संजयउवाच ॥ हंततेसंप्रवक्ष्यामिसर्वंप्रत्यक्षदर्शिवान् ॥ शुश्रूषस्वस्थिरोभूत्वातवह्यपनयोमहान् १ गतोदकेसेतुबंधो यादृक्तादृगयंतव ॥ विलापोनिष्फलोराजन्माशुचोभरतर्षभ २ अनतिक्रमणीयोऽयंकृतांतस्याद्भुतोविधिः ॥ माशुचोभरतश्रेष्ठदिष्टमेतत्पुरातनम् ३ यदि त्वंहिपुराद्यूतात्कुंतीपुत्रंयुधिष्ठिरम् ॥ निवर्तयेथाःपुत्रांश्चनत्वांव्यसनमाव्रजेत् ४ युद्धकालेपुनःप्राप्तेतदैवभवतायदि ॥ निवर्तिताःस्युःसंरब्धानत्वांव्यसनमा व्रजेत् ५ दुर्योधनंचाविधेयंबध्नीतेतिपुरायदि ॥ कुरूनचोदयिष्यस्त्वंनत्वांव्यसनमाव्रजेत् ६ नतेबुद्धिव्यभीचारमुपलप्स्यंतिपांडवाः ॥ पंचालावृष्णयःस र्वेयेचान्येऽपिनराधिपाः ७ सकृत्वापितृकर्मत्वंपुत्रंसंस्थाप्यसत्पथे ॥ वर्तेथायदिधर्मेणनत्वांव्यसनमाव्रजेत् ८ त्वंतुप्राज्ञतमोलोकेहित्वाधर्मंसनातनम् ॥ दुर्योधन स्यकर्णस्यशकुनेश्चान्वगामतम् ९ तत्तेविलपितंसर्वंमयाराजन्निशामितम् ॥ अर्थेनिविशमानस्यविषमिश्रंयथामधु १० नामन्यततदाकृष्णोराजानंपांडवंपुरा ॥ नभीष्मंनैवचद्रोणंयथात्वांमन्यतेऽच्युतः ११ अजानात्सयदातुत्वांराजधर्मादधश्च्युतम् ॥ तदाप्रभृतिकृष्णस्त्वांनतथाबहुमन्यते १२ परुषाण्युच्यमानांश्च यथापार्थानुपेक्षसे ॥ तस्यानुबंधःप्राप्तस्त्वांपुत्राणांराज्यकामुक १३ पितृपैतामहंराज्यमपवृत्तंतदाऽनघ ॥ अथपार्थैर्जितांकृत्स्नांपृथिवींप्रत्यपद्यथाः १४

तादिषु'इतिमेदिनी ५४ ॥ इतिद्रोणपर्वणिटीकायांपंचाशीतितमोऽध्यायः ॥ ८५ ॥ ॥ ७ ॥ ॥ हंतेति १ । २ । ३ । ४ । ५ । ६ तेतवबुद्धेर्व्यभिचारंवैषम्यमुपलप्स्यंत्यनुभाविष्यंति ७ । ८ । ९ । १० मन्यतेबहुमन्यते ११ । १२ । १३ अपवृत्तंसांशयिकंयद्येवंनकरिष्यतितर्हि १४

१५ । १६ । १७ । १८ । १९ । २० । २१ अंतरज्ञैरवत्तरवेदिभिः २२ । २३ इतिद्रोणपर्वणिटीकायांषडशीतितमोऽध्यायः ॥ ८६ ॥ ॥ छ ॥ ॥ तस्यामिति १ । २ । ३ पीतान्पायितो

पांडुनानिर्जितंराज्यंकौरवाणांयशस्तथा ॥ ततश्चाप्यधिकंभूयःपांडवैर्धर्मचारिभिः १५ तेषांतत्तादृशंकर्मत्वामासाद्यसुनिष्फलम् ॥ यत्पित्र्याद्भ्रंशिताराज्या
त्त्वयेहामिषगृद्धिना १६ यत्पुनर्युद्धकालेत्वंपुत्रान्गर्हयसेनृप ॥ बहुधाव्याहरन्दोषान्नतदद्योपपद्यते १७ नहिरक्षंतिराजानोयुद्ध्यंतोजीवितंरणे ॥ चमूंवि
गाह्यपार्थानांयुध्यंतेक्षत्रियर्षभाः १८ यांतुकृष्णार्जुनौसेनांयांसात्यकिवृकोदरौ ॥ रक्षेरन्कोनुतांयुद्ध्येच्चमूमन्यत्रकौरवैः १९ येषांयोद्धागुडाकेशोयेषांमंत्रीज
नार्दनः ॥ येषांचसात्यकिर्योद्धायेषांयोद्धावृकोदरः २० कोहितान्विषहेद्योद्धुंमर्त्यधर्माधनुर्धरः ॥ अन्यत्रकौरवेयेभ्योयेवातेषांपदानुगाः २१ यावत्तुशक्यतेकर्तु
मंतरज्ञैर्जनाधिपैः ॥ क्षत्रधर्मरतैःशूरस्तावत्कुर्वंतिकौरवाः २२ यथातुपुरुषव्याघ्रैर्युद्धंपरमसंकटम् ॥ कुरूणांपांडवैःसार्धंतत्सर्वंशृणुतत्त्वतः २३ ॥ इतिश्रीम
हाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिसंजयवाक्येषडशीतितमोऽध्यायः ॥ ८६ ॥ ॥ छ ॥ ॥ संजयउवाच ॥ तस्यांनिशायांव्युष्टायांद्रोणःशस्त्रभृतां
वरः ॥ स्वान्यनीकानिसर्वाणिप्राक्रामद्व्यूहितुंततः १ शूराणांगर्जतांराजन्संक्रुद्धानाममर्षिणाम् ॥ श्रूयंतेस्मगिरश्चित्राःपरस्परवधैषिणाम् २ विस्फार्यचधनूं
ष्यन्येज्याःपरेपरिमृज्यच ॥ विनिःश्वसंतःप्राक्रोशन्क्वेदानींसधनंजयः ३ विकोशान्सुत्सरून्न्येकृतधारान्समाहितान् ॥ पीतानाकाशसंकाशानसीन्केचिच्चाचि
क्षिपुः ४ चरंतस्त्वसिमार्गांश्चधनुर्मार्गांश्चशिक्षया ॥ संग्राममनसःशूरादृश्यंतेस्मसहस्रशः ५ सघंटाश्चंदनादिग्धाःस्वर्णवज्रविभूषिताः ॥ समुत्क्षिप्यगदाश्चा
न्येपर्यपृच्छंतपांडवम् ६ अन्येबलमदोन्मत्ताःपरिघैर्बाहुशालिनः ॥ चक्रुःसंबाधमाकाशमुच्छ्रितेंद्रध्वजोपमैः ७ नानाप्रहरणैश्चान्येविचित्रस्रगलंकृताः ॥ सं
ग्राममनसःशूरास्तत्रतत्रव्यवस्थिताः ८ क्वार्जुनःक्वसगोविंदःक्वचमानीवृकोदरः ॥ क्वचतेसुहृदस्तेषामाह्वयंतेरणेतदा ९ ततःशंखमुपाध्मायत्वरयन्वाजिनः
स्वयम् ॥ इतस्ततस्तान्रचयन्द्रोणश्चरतिवेगितः १० तेष्वनीकेषुसर्वेषुस्थितेष्वाहवनंदिषु ॥ भारद्वाजोमहाराजजयद्रथमथाब्रवीत् ११ त्वंचैवसौमदत्तिश्च
कर्णश्चैवमहारथः ॥ अश्वत्थामाचशल्यश्चवृषसेनःकृपस्तथा १२ शतंचाश्वसहस्राणांरथानामयुतानिषट् ॥ द्विरदानांप्रभिन्नानांसहस्राणिचतुर्दश १३ पदा
तीनांसहस्राणिदंशितान्येकविंशतिः ॥ गव्यूतिषुत्रिमात्रासुमामनासाद्यतिष्ठत १४ तत्रस्थंत्वांनसंसोढुंशक्तादेवाःसवासवाः ॥ किंपुनःपांडवाःसर्वेसमाश्वसि
हिसैंधव १५ एवमुक्तःसमाश्वस्तःसिंधुराजोजयद्रथः ॥ संप्रायात्सहगांधारैर्वृतस्तैश्चमहारथैः १६ वर्मिभिःसादिभिर्यत्तैःप्रासपाणिभिरास्थितैः ॥ चामरा
पीडिनःसर्वेजांबूनदविभूषिताः १७ जयद्रथस्यराजेंद्रहयाःसाधुप्रवाहिनः ॥ तेचैकसप्तसाहस्रास्त्रिसाहस्राश्चसैंधवाः १८

दकान् ४ । ५ । ६ । ७ । ८ क्वचेतिचकारहइत्यर्थे इत्याह्वयंतइत्यन्वयः ९ । १० । ११ । १२ । १३ त्रिमात्रासुत्रिसंख्यासुतिसृष्वित्यर्थः १४ । १५ । १६ । १७ । १८

१९ । २० । २१ पश्चार्धेपश्चाद्भागेपंचगव्यूतिःचक्रशकटःचक्रगर्भःशकटः २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ अद्भुतानुरूपमाश्चर्यरूपमेतत्समययोग्यंच

मत्तानांसुविरूढानांहस्त्यारोहैर्विशारदैः ॥ नागानांभीमरूपाणांवर्मिणांरौद्रकर्मिणाम् १९ अध्यर्धेनसहस्रेणपुत्रोदुर्मर्षणस्तव ॥ अग्रतःसर्वसैन्यानांयुध्यमानो व्यवस्थितः २० ततोदुःशासनश्चैवविकर्णश्चतवात्मजौ ॥ सिंधुराजार्थसिद्ध्यर्थमग्रानीकेव्यवस्थितौ २१ दीर्घोद्वादशगव्यूतिःपश्चार्धेपंचविस्तृतः ॥ व्यूहस्तुचक्रशकटोभारद्वाजेननिर्मितः २२ नानानृपतिभिर्वीरैस्तत्रतत्रव्यवस्थितैः ॥ रथाश्वगजपत्त्योघैर्द्रोणेनविहितःस्वयम् २३ पश्चार्धेतस्यपद्मस्तुगर्भव्यूहःसुदुर्भिदः ॥ सूचीपद्मस्यगर्भस्थोगूढोव्यूहःकृतःपुनः २४ एवमेतंमहाव्यूहंव्यूह्यद्रोणोव्यवस्थितः ॥ सूचीमुखेमहेष्वासःकृतवर्माव्यवस्थितः २५ अनंतरंचकांबोजोजलसंधश्चमारिष ॥ दुर्योधनश्चकर्णश्चतदनंतरमेवच २६ ततःशतसहस्राणियोधानामनिवर्तिनाम् ॥ व्यवस्थितानिसर्वाणिशकटेमुखरक्षिणाम् २७ तेषांचपृष्ठतोराजाबलेनमहतावृतः ॥ जयद्रथस्ततोराजासूचीपार्श्वेव्यवस्थितः २८ शकटस्यतुराजेंद्रभारद्वाजोमुखेस्थितः ॥ अनुतस्याभवद्भोजोजुगोपैनंततःस्वयम् २९ श्वेतवर्मांबरोष्णीषोव्यूढोरस्कोमहाभुजः ॥ धनुर्विस्फारयन्द्रोणस्तस्थौक्रुद्धइवांतकः ३० पताकिनंशोणहयंवेदिकृष्णाजिनध्वजम् ॥ द्रोणस्यरथमालोक्यप्रहृष्टाःकुरवोऽभवन् ३१ सिद्धचारणसंघानांविस्मयःसुमहानभूत् ॥ द्रोणेनविहितंदृष्ट्वाव्यूहंक्षुब्धार्णवोपमम् ३२ सशैलसागरवनांनानाजनपदाकुलाम् ॥ ग्रसेद्व्यूहःक्षितिंसर्वामितिभूतानिमेनिरे ३३ बहुरथमनुजाश्वपत्तिनागंप्रतिभयनिःस्वनमद्भुतानुरूपम् ॥ अहितहृदयभेदनंमहद्वैशकटमवेक्ष्यकृतंननंदराजा ३४ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिकौरवव्यूहनिर्माणेसप्ताशीतितमोऽध्यायः ॥ ८७ ॥ ॥ छ ॥ ॥ संजयउवाच ॥ ततोव्यूढेष्वनीकेषुसमुत्क्रुष्टेषुमारिष ॥ ताड्यमानासुभेरीषुमृदंगेषुनदत्सुच १ अनीकानांचसंह्रादेवादित्राणांचनिःस्वने ॥ प्रध्मापितेषुशंखेषुसन्नादेलोमहर्षणे २ अभिहारयत्सुशनकैर्भरतेषुयुयुत्सुषु ॥ रौद्रेमुहूर्तेसंप्राप्तेसव्यसाचीव्यदृश्यत ३ बलानांवायसानांचपुरस्तात्सव्यसाचिनः ॥ बहुलानिसहस्राणिप्राक्रीडंस्तत्रभारत ४ मृगाश्चघोरसंनादाःशिवाश्चाशिवदर्शनाः ॥ दक्षिणेनप्रयातानामस्माकंप्राणदंस्तथा ५ सनिर्घाताज्वलंत्यश्चपेतुरुल्कासहस्रशः ॥ चचालचमहीकृत्स्नाभयेघोरेसमुत्थिते ६ विष्वग्वाताःसनिर्घातारूक्षाःशर्करकर्षिणः ॥ ववुरायातिकौंतेयेसंग्रामेसमुपस्थिते ७ नाकुलिश्चशतानीकोधृष्टद्युम्नश्चपार्षतः ॥ पांडवानामनीकानिप्राज्ञौतौव्यूहतुस्तदा ८ ततोरथसहस्रेणद्विरदानांशतेनच ॥ त्रिभिरश्वसहस्रैश्चपदातीनांशतैःशतैः ९ अध्यर्धमात्रेधनुषांसहस्रेतनयस्तव ॥ अग्रतःसर्वसैन्यानांस्थित्वादुर्मर्षणोऽब्रवीत् १०

३४ ॥ इतिद्रोणपर्वणिटीकायांसप्ताशीतितमोऽध्यायः ॥ ८७ ॥ ततइति १। २ अभिहारयत्सुसन्नह्यमानेषुअभियुज्यमानेष्वा प्रहरारिस्वतिकेचित् ३ ।४। ५ ।६।७।८ शतैःशतैर्दशसहस्रैः ९।१०

११ । १२ । १३ । १४ । १५ । १६ जयोनाम्ना १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ समाधुतैःसंचालितैः २८

अद्यगांडीवधन्वानंतपंतंयुद्धदुर्मदम् ॥ अहमावारयिष्यामिवेलेवमकरालयम् ११ अद्यपश्यंतुसंग्रामेधनंजयममर्षणम् ॥ विषक्तंमयिदुर्धर्षमश्मकूटमिवाश्मनि १२ तिष्ठध्वंरथिनोयूयंसंग्राममभिकांक्षिणः ॥ युध्यामिसंहतानेतान्यशोमानंचवर्धयन् १३ एवंब्रुवन्महाराजमहात्मासमहामतिः ॥ महेष्वासैर्वृतोराजन्महेष्वासोव्यवस्थितः १४ ततोऽतकइवक्रुद्धःसवज्रइववासवः ॥ दंडपाणिरिवासह्योमृत्युःकालेनचोदितः १५ शूलपाणिरिवाक्षोभ्योवरुणःपाशवानिव ॥ युगांताग्निरिवार्चिष्मान्प्रधक्ष्यन्वैपुनःप्रजाः १६ क्रोधामर्षबलोद्भूतोनिवातकवचांतकः ॥ जयोजेतास्थितःसत्येपारयिष्यन्महाव्रतम् १७ आमुक्तकवचःखड्गीजांबूनदकिरीटभृत् ॥ शुभ्रमाल्यांबरधरःस्वंगदश्चारुकुंडलः १८ रथप्रवरमास्थायनरोनारायणानुगः ॥ विधुन्वन्गांडिवंसंख्येबभौसूर्यइवोदितः १९ सोऽग्रानीकस्यमहतइषुपातेधनंजयः ॥ व्यवस्थाप्यरथंराजन्शंखंदध्मौप्रतापवान् २० अथकृष्णोऽप्यसंभ्रांतःपार्थेनसहमारिष ॥ प्राध्मापयत्पांचजन्यंशंखप्रवरमोजसा २१ तयोःशंखप्रणादेनतवसैन्येविशांपते ॥ आसन्संहृष्टरोमाणःकंपितागतचेतसः २२ यथात्रस्यंतिभूतानिसर्वाण्यशनिनिःस्वनात् ॥ तथाशंखप्रणादेनवित्रेसुस्तवसैनिकाः २३ प्रसुस्रुवुःशकृन्मूत्रंवाहनानिचसर्वशः ॥ एवंसवाहनंसर्वमाविग्नमभवद्बलम् २४ सीदंतिस्मनराराजन्शंखशब्देनमारिष ॥ विसंज्ञाश्चाभवन्केचित्केचिद्राजन्वितत्रसुः २५ ततःकपिर्महानादंसहभूतैर्ध्वजालयैः ॥ अकरोद्व्यादितास्यश्चभीषयंस्तवसैनिकान् २६ ततःशंखाश्चभेर्यश्चमृदंगाश्चानकैःसह ॥ पुनरेवाभ्यहन्यंततवसैन्यप्रहर्षणाः २७ नानावादित्रसंह्रादैःक्ष्वेडितास्फोटिताकुलैः ॥ सिंहनादैःसमुत्कुष्टैःसमाधूतैर्महारथैः २८ तस्मिंस्तुतुमुलेशब्देभीरूणांभयवर्धने ॥ अतीवहृष्टोदाशार्हमब्रवीत्पाकशासनिः २९ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिअर्जुनरणप्रवेशेऽष्टाशीतितमोऽध्यायः ॥ ८८ ॥ अर्जुनउवाच ॥ चोदयाश्वान्हृषीकेशयत्रदुर्मर्षणःस्थितः ॥ एतद्भित्वागजानीकंप्रवेक्ष्याम्यरिवाहिनीम् १ ॥ संजयउवाच ॥ एवमुक्तोमहाबाहुःकेशवःसव्यसाचिना ॥ अचोदयद्धयांस्तत्रयत्रदुर्मर्षणःस्थितः २ ससंप्रहारस्तुमुलःसंप्रवृत्तःसुदारुणः ॥ एकस्यचबहूनांचरथनागनरक्षयः ३ ततःसायकवर्षेणपर्जन्यइववृष्टिमान् ॥ परानवाकिरत्पार्थःपर्वतानिवनीरदः ४ तेचापिरथिनःसर्वेत्वरिताःकृतहस्तवत् ॥ अवाकिरन्बाणजालैस्तत्रकृष्णधनंजयौ ५ ततःक्रुद्धोमहाबाहुर्वार्यमाणःपरैर्युधि ॥ शिरांसिरथिनांपार्थःकायेभ्योऽपाहरच्छरैः ६ उद्भ्रांतनयनैर्वक्त्रैःसंदष्टौष्ठपुटैःशुभैः ॥ सकुंडलशिरस्त्राणैर्वसुधासमकीर्यत ७ पुंडरीकवनानीवविध्वस्तानिसमंततः ॥ विनिकीर्णानियोधानांवदनानिचकाशिरे ८ (तपनीयतनुत्राणाःसंसिक्तारुधिरेणच ॥ संसक्ताइवदृश्यंतेमेघसंघाःसविद्युतः) ९

२९ ॥ इतिद्रोणपर्वणिटीकायामष्टाशीतितमोऽध्यायः ॥ ८८ ॥ ॥ ७ ॥ ॥ चोदयाश्वानिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९

शिरसांपततांराजन्शब्दोऽभूद्वसुधातले ॥ कालेनपरिपक्वानांतालानांपततामिव १० ततःकबंधंकिंचित्तुधनुरालंब्यातिष्ठति ॥ किंचित्खड्गंविनिष्कृष्यभुजे नोद्यम्यतिष्ठति ११ पतितानिनजानंतिशिरांसिपुरुषर्षभाः ॥ अमृष्यमाणाःसंग्रामेकौंतेयंजयगृद्धिनः १२ हयानामुत्तमांगैश्चहस्तिहस्तैश्चमेदिनी ॥ बाहुभिश्चशिरोभिश्चवीराणांसमकीर्यत १३ अयंपार्थःकुतःपार्थएषपार्थइतिप्रभो ॥ तवसैन्येषुयोधानांपार्थभूतमिवाभवत् १४ अन्योऽन्यमपिचाजघ्नुरात्मानमपि चापरे ॥ पार्थभूतममन्यंतजगत्कालेनमोहिताः १५ निष्टनंतःसरुधिराविसंज्ञागाढवेदनाः ॥ शयानाबहवोवीराःकीर्तयंतःस्वबांधवान् १६ सभिंदिपालाःस प्रासाःसशक्त्यृष्टिपरश्वधाः ॥ सनिर्व्यूहाःसनिस्त्रिंशाःसशरासनतोमराः १७ सबाणवर्माभरणाःसगदाःसांगदारणे ॥ महाभुजगसंकाशाबाहवःपरिघोपमाः १८ उद्वेष्टंतिविचेष्टंतिसंचेष्टंतिचसर्वशः ॥ वेगंकुर्वंतिसंरब्धानिकृत्ताःपरमेषुभिः १९ योयःस्मसमरेपार्थंप्रतिसंचरतेनरः ॥ तस्यतस्यांतकोबाणःशरीरमुपसर्पति २० नृत्यतोरथमार्गेषुधनुर्व्यायच्छतस्तथा ॥ नकश्चित्तत्रपार्थस्यददर्शांतरमण्वपि २१ यत्तस्यघटमानस्यक्षिप्रंविक्षिपतःशरान् ॥ लाघवात्पांडुपुत्रस्यव्यस्मयंतपरेजनाः २२ हस्तिनंहस्तियंतारमश्वमाश्विकमेवच ॥ अभिनत्फाल्गुनोबाणैरथिनंचससारथिम् २३ आवर्तमानमावृत्तंयुध्यमानंचपांडवः ॥ प्रमुखे तिष्ठमानंचनकिंचिन्ननिहंतिसः २४ यथोदयन्वैगगनेसूर्योहंतिमहत्तमः ॥ तथाऽर्जुनोगजानीकमवधीत्कंकपत्रिभिः २५ हस्तिभिःपतितैर्भिन्नैस्तवसैन्यमदृश्यत ॥ अंतकालेयथाभूमिर्व्यवकीर्णामहीधरैः २६ यथामध्यंदिनेसूर्योदुष्प्रेक्ष्यःप्राणिभिःसदा ॥ तथाधनंजयःक्रुद्धोदुष्प्रेक्ष्योयुधिशत्रुभिः २७ तत्तथातवपुत्रस्यसैन्यंयुधिपरंतप ॥ प्रभग्नंद्रुतमाविग्नमतीवशरपीडितम् २८ मारुतेनेवमहतामेघानीकंव्यदीर्यत ॥ प्रकाल्यमानंतत्सैन्यंनाशकत्प्रतिवीक्षितुम् २९ प्रतोदैश्चापकोटीभिर्हुंकारैःसाधुवाहितैः ॥ कशापार्ष्ण्यभिघातैश्चवाग्भिरुग्राभिरेवच ३० चोदयंतोहयांस्तूर्णंपलायंतेस्मपावकाः ॥ सादिनोरथिनश्चैवपतयश्चार्जुनार्दिताः ३१ पार्ष्ण्यंगुष्ठांकुशैर्नागंचोदयंतस्तथापरे ॥ शरैःसंमोहिताश्चान्येतमेवाभिमुखाययुः ३२ तवयोधाहतोत्साहाविभ्रांतमनसस्तदा ३३ ॥ इति श्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि अर्जुनयुद्धेएकोननवतितमोऽध्यायः ॥ ८९ ॥ ॥ ॥ ७ ॥ ॥ ॥ धृतराष्ट्रउवाच ॥ तस्मिन्प्रभग्नेसैन्याग्रेवध्यमानेकिरीटिना ॥ केतुतत्ररणेवीराःप्रत्युदीयुर्धनंजयम् १ आहोस्विच्छकटव्यूहंप्रविष्टामोघनिश्चयाः ॥ द्रोणमाश्रित्यातिष्ठंतप्राकारमकुतोभयम् २ ॥ ॥ संजयउवाच ॥ तथार्जुनेनसंभग्नेतस्मिंस्तवबलेऽनघ ॥ हतवीरेहतोत्साहेपलायनकृतक्षणे ३

१० । ११ । १२ । १३ । १४ । १५ । १६ निर्व्यूहोयूपिकाआयुधविशेषः १७ । १८ । १९ प्रतिसंचरतेप्रत्युद्गच्छति २० । २१ यत्तस्यावहितस्य २२ । २३ । २४ । २५ । २६ । २७ द्रुतंविद्रुतं आविग्नंभीतं २८ । २९ । ३० साधुवाहितैःसुष्ठुव्यापारितैः ३१ । ३२ । ३३ ॥ इतिद्रोणपर्वणिटीकायामेकोननवतितमोऽध्यायः ॥ ८९ ॥ तस्मिन्निति १ । २ पलायनेकृतःक्षणोऽवसरोयेन ३

४ । ५ । ६ । ७ । ८ प्रतिभयोभयंकरः दारुणःक्रूरः ९ । १० । ११ । १२ काष्ठातीतोऽतिक्रांतदिग्द्विमः १३ । १४ । १५ । १६ । १७ । १८ दंतवेष्टेषुदंतमूलेषु कटेषुकटिषु १९ । २० निवे

पाकशासनिनाऽभीक्ष्णंवध्यमानेशरोत्तमैः ॥ नतत्रकश्चित्संग्रामेशशाकार्जुनमीक्षितुम् ४ ततस्तवसुतोराजन्दृष्ट्वासैन्यंतथागतम् ॥ दुःशासनोभृशंक्रुद्धोयु
द्धायार्जुनमभ्यगात् ५ सकांचनविचित्रेणकवचेनसमावृतः ॥ जांबूनदशिरस्त्राणःशूरस्तीव्रपराक्रमः ६ नागानीकेनमहताग्रसन्निवमहीमिमाम् ॥ दुःशासनो
महाराजसव्यसाचिनमावृणोत् ७ ह्रादेनगजघंटानांशंखानांनिनदेनच ॥ ज्याक्षेपनिनदैश्चैवविरावेणचदंतिनाम् ८ भूर्दिशश्चांतरिक्षंचशब्देनासीत्समावृ
तम् ॥ समुहूर्तंप्रतिभयोदारुणःसमपद्यत ९ तान्दृष्ट्वापततस्तूर्णमंकुशैरभिचोदितान् ॥ व्यालंबहस्तान्संरब्धान्सपक्षानिवपर्वतान् १० सिंहनादेनमहता
नरसिंहोधनंजयः ॥ गजानीकममित्राणामभितोव्यधमच्छरैः ११ महोर्मिणमिवोद्धूतंश्वसनेनमहार्णवम् ॥ किरीटीतद्गजानीकंप्राविशन्मकरोयथा १२ काष्ठा
तीतइवादित्यःप्रतपन्सयुगक्षये ॥ ददृशेदिक्षुसर्वासुपार्थःपरपुरंजयः १३ खुरशब्देनचाश्वानांनेमिघोषेणतेनच ॥ तेनचोत्कुष्टशब्देनज्यानिनादेनतेनच १४
नानावादित्रशब्देनपांचजन्यस्वनेनच ॥ देवदत्तस्यघोषेणगांडीवनिनदेनच १५ मंदवेगानरानागाबभूवुस्तेविचेतसः ॥ शरैराशीविषस्पर्शैर्निर्भिन्नाःसव्य
साचिना १६ तेगजाविशिखैस्तीक्ष्णैर्युधिगांडीवचोदितैः ॥ अनेकशतसाहस्रैःसर्वांगेषुसमर्पिताः १७ आरावंपरमंकृत्वावध्यमानाःकिरीटिना ॥ निपेतुरनि
शंभूमौछिन्नपक्षाइवाद्रयः १८ अपरेदंतवेष्टेषुकुंभेषुचकटेषुच ॥ शरैःसमर्पितानागाःक्रौंचवद्व्यनदन्मुहुः १९ गजस्कंधगतानांचपुरुषाणांकिरीटिना ॥ छि
द्यंतेचोत्तमांगानिभल्लैःसन्नतपर्वभिः २० सकुंडलानांपततांशिरसांधरणीतले ॥ पद्मानामिवसंघातैःपार्थश्चक्रेनिवेदनम् २१ यंत्रबद्धाविकवचाव्रणार्ताहधि
रोक्षिताः ॥ भ्रमत्सुयुधिनागेषुमनुष्याविललंबिरे २२ केचिदेकेनबाणेनसुयुक्तेनसुपत्रिणा ॥ द्वौत्रयश्चविनिर्भिन्नानिपेतुर्धरणीतले २३ अतिविद्धाश्चनारा
चैर्वमंतोरुधिरंमुखैः ॥ सारोहान्यपतन्भूमौद्रुमवंतइवाचलाः २४ मौर्वींध्वजंधनुश्चैवयुगमीषांतथैवच ॥ रथिनांकुट्टयामासभल्लैःसन्नतपर्वभिः २५ नसंदधन्न
चाकर्षन्नविमुंचन्नचोद्वहन् ॥ मंडलेनैवधनुषानृत्यन्पार्थःस्मदृश्यते २६ अतिविद्धाश्चनाराचैर्वमंतोरुधिरंमुखैः ॥ मुहूर्तान्न्यपतन्नन्येवारणावसुधातले २७
उत्थितान्यगणेयानिकबंधानिसमंततः ॥ अदृश्यंतमहाराजतस्मिन्परमसंकुले २८ सचापाःसांगुलित्राणाःसखड्गाःसांगदारणे ॥ अदृश्यंतभुजाश्छिन्नाहेमा
भरणभूषिताः २९ सूपस्करैरधिष्ठानैरीषादंडकबंधुरैः ॥ चक्रैर्विमथितैरक्षैर्भग्नैश्चबहुधायुगैः ३० चर्मचापधरैश्चैवव्यवकीर्णैस्ततस्ततः ॥ स्रग्भिराभरणैर्व
स्त्रैःपतितैश्चमहाध्वजैः ३१ निहतैर्वारणैरश्वैःक्षत्रियैश्चनिपातितैः ॥ अदृश्यतमहीतत्रदारुणप्रतिदर्शना ३२

दनमुपाहारं २१ यंत्रबद्धायंत्रैरालिखिताः २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२

२३ । २४ ॥ इतिद्रोणपर्वणिटीकायांनवतितमोऽध्यायः ॥ ९० ॥ ॥ ७ ॥ दुःशासनेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६





एवंदुःशासनबलंवध्यमानंकिरीटिना ॥ संप्राद्रवन्महाराजव्यथितंसहनायकम् २३ ततोदुःशासनस्त्रस्तःसहानीकःशरार्दितः ॥ द्रोणंत्रातारमाकांक्षन्शकटव्यूहमभ्यगात् २४ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिदुःशासनसैन्यपराभवेनवतितमोऽध्यायः ॥ ९० ॥ संजयउवाच ॥ दुःशासनबलंहत्वासव्यसाचीमहारथः ॥ सिंधुराजंपरीप्सन्वैद्रोणानीकमुपाद्रवत् १ सतुद्रोणंसमासाद्यव्यूहस्यप्रमुखेस्थितम् ॥ कृतांजलिरिदंवाक्यंकृष्णस्यानुमतेऽब्रवीत् २ शिवेनध्याहिमांब्रह्मन्स्वस्तिचैववदस्वमे ॥ भवत्प्रसादादिच्छामिप्रवेष्टुंदुर्भिदांचमूम् ३ भवान्पितृसमोमह्यंधर्मराजसमोऽपिच ॥ तथाकृष्णसमश्चैवसत्यमेतद्ब्रवीमिते ४ अश्वत्थामायथातातरक्षणीयस्त्वयाऽनघ ॥ तथाऽहमपितेरक्ष्यःसदैवद्विजसत्तम ५ तवप्रसादादिच्छेयंसिंधुराजानमाहवे ॥ निहंतुंद्विपदांश्रेष्ठप्रतिज्ञांरक्षमेप्रभो ६ ॥ संजयउवाच ॥ एवमुक्तस्तदाऽऽचार्यःप्रत्युवाचस्मयन्निव ॥ मामजित्वानबीभत्सोशक्योजेतुंजयद्रथः ७ एतावदुक्त्वातंद्रोणःशरव्रातैरवाकिरत् ॥ सरथाश्वध्वजंतीक्ष्णैःप्रहसन्वैससारथिम् ८ ततोऽर्जुनःशरव्रातान्द्रोणस्यावार्यसायकैः ॥ द्रोणमभ्यद्रवद्बाणैर्घोररूपैर्महत्तरैः ९ विव्याधचरणेद्रोणमनुमान्यविशांपते ॥ क्षत्रधर्मंसमास्थायनवभिःसायकैःपुनः १० तस्येषूनिषुभिश्छित्वाद्रोणोविव्याधतावुभौ ॥ विषाग्निज्वलितप्रख्यैरिषुभिःकृष्णपांडवौ ११ इयेषपांडवस्तस्यबाणैश्छेत्तुंशरासनम् ॥ तस्यचिंतयतस्त्वेवंफाल्गुनस्यमहात्मनः १२ द्रोणःशरैरसंभ्रांतोज्यांचिच्छेदाशुवीर्यवान् ॥ विव्याधचहयानस्यध्वजंसारथिमेवच १३ अर्जुनंचशरैर्वीरःस्मयमानोऽभ्यवाकिरत् ॥ एतस्मिन्नंतरेपार्थःसज्यंकृत्वामहद्धनुः १४ विशेषयिष्यन्नाचार्यंसर्वास्त्रविदुषांवरः ॥ मुमोचषट्शतान्बाणान्गृहीत्वैकमिवद्रुतम् १५ पुनःसप्तशतानन्यान्सहस्रंचानिवर्तिनः ॥ चिक्षेपायुतशश्चान्यांस्तेघ्नन्द्रोणस्यतांचमूम् १६ तैःसम्यगस्तैर्बलिनाकृतिनाचित्रयोधिना ॥ मनुष्यवाजिमातंगाविद्धाःपेतुर्गतासवः १७ विसूताश्वध्वजाःपेतुःसंछिन्नायुधजीविताः ॥ रथिनोरथमुख्येभ्यःसहसाशरपीडिताः १८ चूर्णिताक्षिप्तदग्धानांवज्रानिलहुताशनैः ॥ तुल्यरूपागजाःपेतुर्गिर्यग्रांबुदवेश्मनाम् १९ पेतुरश्वसहस्राणिप्रहतान्यर्जुनेषुभिः ॥ हंसाहिमवतःपृष्ठेवारिविप्रहताइव २० रथाश्वद्विपपत्त्योघाःसलिलौघाइवाद्भुताः ॥ युगांतादित्यरश्म्याभैःपांडवास्त्रशरैर्हताः २१ तंपांडवादित्यशरांशुजालंकुरुप्रवीरान्युधिनिष्टपंतम् ॥ सद्रोणमेघःशरवृष्टिवेगैःप्राच्छादयन्मेघइवार्करश्मीन् २२ अथात्यर्थंविसृष्टेनद्विषतामसुभोजिना ॥ आजघ्नेवक्षसिद्रोणोनाराचेनधनंजयम् २३ सविह्वलितसर्वांगःक्षितिकंपेयथाऽचलः ॥ धैर्यमालंब्यबीभत्सुर्द्रोणंविव्याधपत्रिभिः २४



१७ । १८ गिर्यग्रांबुदवेश्मनांवज्रानिलहुताशनैश्चूर्णिताक्षिप्तदग्धानामितियथासंख्येनान्वयः १९ । २० । २१ । २२ । २३ । २४

२५ । २६ । २७ । २८ कार्यवत्तांकृत्यबाहुल्यं २९ : ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ ॥ इतिद्रोणपर्वणिटीकायामेकनवतितमो

द्रोणस्तुपंचभिर्बाणैर्वासुदेवमताडयत् ॥ अर्जुनंचत्रिसप्तत्याध्वजंचास्यत्रिभिःशरैः २५ विशेषयिष्यन्शिष्यंचद्रोणोराजन्पराक्रमी ॥ अदृश्यमर्जुनंचक्रेनिमे
षाच्छरवृष्टिभिः २६ प्रसक्तान्पततोद्राक्ष्मभारद्वाजस्यसायकान् ॥ मंडलीकृतमेवास्यधनुश्चादृश्यताद्भुतम् २७ तेऽभ्ययुःसमरेराजन्वासुदेवधनंजयौ ॥
द्रोणसृष्टाःसुबहवःकंकपत्रपरिच्छदाः २८ तद्दृष्ट्वाताहृशंयुद्धंद्रोणपांडवयोस्तदा ॥ वासुदेवोमहाबुद्धिःकार्यवत्तामचिंतयत् २९ ततोऽब्रवीद्वासुदेवोधनंजय
मिदंवचः ॥ पार्थपार्थमहाबाहोननःकालात्ययोभवेत् ३० द्रोणमुत्सृज्यगच्छामःकृत्यमेतन्महत्तरम् ॥ पार्थश्चाप्यब्रवीत्कृष्णंयथेष्टमितिकेशव ३१ ततःप्रद
क्षिणंकृत्वाद्रोणंप्रायान्महाभुजम् ॥ परिवृत्तश्चबीभत्सुरगच्छद्विसृजन्शरान् ३२ ततोऽब्रवीत्स्वयंद्रोणःक्वेदंपांडवगम्यते ॥ ननुनामरणेशत्रुमजित्वानानिवर्त्त
से ३३ ॥ अर्जुनउवाच ॥ गुरुर्भवान्नमेशत्रुःशिष्यःपुत्रसमोऽस्मिते ॥ नचास्तिसपुमाँल्लोकेयस्त्वांयुधिपराजयेत् ३४ ॥ संजयउवाच ॥ एवंब्रुवाणोबीभत्सु
र्जयद्रथवधोत्सुकः ॥ त्वरायुक्तोमहाबाहुस्त्वत्सैन्यंसमुपाद्रवत् ३५ तंचक्ररक्षौपांचाल्यौयुधामन्यूत्तमौजसौ ॥ अन्वयातांमहात्मानौविशंतंतावकंबलम् २६
ततोजयोमहाराजकृतवर्माचसात्वतः ॥ कांबोजश्चश्रुतायुश्चधनंजयमवारयन् ३७ तेषांदशसहस्राणिरथानामनुयायिनाम् ॥ अभीषाहाःशूरसेनाःशिबयो
ऽथवसातयः ३८ मावेल्लकाललित्थाश्चकेकयामद्रकास्तथा ॥ नारायणाश्चगोपालाःकांबोजानांचयेगणाः ३९ कर्णेनविजिताःपूर्वंसंग्रामेशूरसंमताः ॥ भारद्वा
जंपुरस्कृत्यहृष्टात्मानोऽर्जुनंप्रति ४० पुत्रशोकाभिसंतप्तंक्रुद्धंमृत्युमिवांतकम् ॥ त्यजंतंतुमुलेप्राणान्सन्नद्धंचित्रयोधिनम् ४१ गाहमानमनीकानिमातंगमिव
यूथपम् ॥ महेष्वासंपराक्रांतंनरव्याघ्रमवारयन् ४२ ततःप्रववृतेयुद्धंतुमुलंलोमहर्षणम् ॥ अन्योन्यंवैप्रार्थयतांयोधानामर्जुनस्यच ४३ जयद्रथवधप्रेप्सुमायां
तंपुरुषर्षभम् ॥ न्यवारयंतसहिताःक्रियाव्याधिमिवोत्थितम् ४४ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिद्रोणातिक्रमेएकनवतितमोऽध्यायः ॥९१॥
॥ संजयउवाच ॥ सन्निरुद्धस्तुतैःपार्थोमहाबलपराक्रमः ॥ द्रुतंसमनुयातश्चद्रोणेनरथिनांवरः १ किरन्निषुगणांस्तीक्ष्णान्सरश्मीनिवभास्करः ॥ तापयामा
सतत्सैन्यंदेहंव्याधिगणोयथा २ अश्वोविद्धोरथश्छिन्नःसारोहःपातितोगजः ॥ छत्राणिचापविद्धानिरथाश्चक्रैर्विनाकृताः ३ विद्रुतानिचसैन्यानिशरार्त्तानिस
मंततः ॥ इत्यासीत्तुमुलंयुद्धंनप्राज्ञायतकिंचन ४ तेषांसंयच्छतांसंख्येपरस्परमजिह्मगैः ॥ अर्जुनोध्वजिनींराजन्नभीक्ष्णंसमकंपयत् ५ सत्यांचिकीर्षमाण
स्तुप्रतिज्ञांसत्यसंगरः ॥ अभ्यद्रवद्रथश्रेष्ठंशोणाश्वंश्वेतवाहनः ६ तंद्रोणःपंचविंशत्यामर्मभिद्भिरजिह्मगैः ॥ अंतेवासिनमाचार्योमहेष्वासंसमार्पयत् ७

ऽध्यायः ॥ ९१ ॥ ॥ ७ ॥ सन्निरुद्धइति १ । २ । ३ । ४ तेषांसंयच्छतांविधारयतां ५ । ६ । ७

तंतूर्णमिवबीभत्सुःसर्वशस्त्रभृतांवरः ॥ अभ्यधावदिषूनस्यन्निषुवेगविघातकान् ८ तस्याशुक्षिप्तान्भल्लान्हिभल्लैःसन्नतपर्वभिः ॥ प्रत्यविध्यदमेयात्माब्रह्मास्त्रं समुदीरयन् ९ तदद्भुतमपश्यामद्रोणस्याचार्यकंयुधि ॥ यतमानोयुवानैनंप्रत्यविध्यद्यदर्जुनः १० क्षरन्निवमहामेघोवारिधाराःसहस्रशः ॥ द्रोणमेघःपार्थशैलं ववर्षशरवृष्टिभिः ११ अर्जुनःशरवर्षंतद्ब्रह्मास्त्रेणैवमारिष ॥ प्रतिजग्राहतेजस्वीबाणैर्बाणान्निशातयन् १२ द्रोणस्तुपंचविंशत्याश्वेतवाहनमार्दयत् ॥ वासुदेवं चसप्तत्याबाह्वोरुरसिचाशुगैः १३ पार्थस्तुप्रहसन्धीमानाचार्यंसशरौघिणम् ॥ विसृजंतंशितान्बाणानवारयततंयुधि १४ अथतौवध्यमानौतुद्रोणेनरथसत्तमौ ॥ आवर्जयेतांदुर्धर्षंयुगांताग्निमिवोत्थितम् १५ वर्जयन्निशितान्बाणान्द्रोणचापविनिःसृतान् ॥ किरीटमालीकौंतेयोभोजानीकंव्यशातयत् १६ सोंऽतराकृतव र्माणंकांबोजंचसुदक्षिणम् ॥ अभ्ययाद्वर्जयन्द्रोणंमैनाकमिवपर्वतम् १७ ततोभोजोनरव्याघ्रोदुर्धर्षंकुरुसत्तमम् ॥ अविध्यत्तूर्णमव्यग्रोदशभिःकंकपत्रिभिः १८ तमर्जुनःशतेनाजौराजन्विव्याधपत्रिणाम् ॥ पुनश्चान्यैस्त्रिभिर्बाणैर्मोहयन्निवसात्वतम् १९ भोजस्तुप्रहसन्पार्थंवासुदेवंचमाधवम् ॥ एकैकंपंचविंशत्यासाय कानांसमार्पयत् २० तस्यार्जुनोधनुश्छित्वाविव्याधैनंत्रिसप्तभिः ॥ शरैरग्निशिखाकारैःक्रुद्धाशीविषसन्निभैः २१ अथान्यद्धनुरादायकृतवर्मामहारथः ॥ पंच भिःसायकैस्तूर्णंविव्याधोरसिभारत २२ पुनश्चनिशितैर्बाणैःपार्थंविव्याधपंचभिः ॥ तंपार्थोनवभिर्बाणैराजघानस्तनांतरे २३ दृष्ट्वाविषक्तंकौंतेयंकृतवर्मरथं प्रती ॥ चिंतयामासवार्ष्णेयोननःकालात्ययोभवेत् २४ ततःकृष्णोऽब्रवीत्पार्थंकृतवर्मणिमादयाम् ॥ कुरुसंबंधकंहित्वाप्रमथ्यैनंविशातय २५ ततःसकृतवर्मा णंमोहयित्वाऽर्जुनःशरैः ॥ अभ्यगाज्जवनैरश्वैःकांबोजानामनीकिनीम् २६ अमर्षितस्तुहार्दिक्यःप्रविष्टेश्वेतवाहने ॥ विधुन्वन्सशरंचापंपांचाल्याभ्यांसमाग तः २७ चक्ररक्षौतुपांचाल्यावर्जुनस्यपदानुगौ ॥ पर्यवारयदायांतौकृतवर्मारथेषुभिः २८ ताववध्यत्ततोभोजःकृतवर्माशितैःशरैः ॥ त्रिभिरेवयुधामन्युंचतु र्भिश्चोत्तमौजसम् २९ तावप्येनंविविधतुर्दशभिर्दशभिःशरैः ॥ त्रिभिरेवयुधामन्युरुत्तमौजास्त्रिभिस्तथा ३० संचिच्छिदतुरप्यस्यध्वजंकार्मुकमेवच ॥ अथा न्यद्धनुरादायहार्दिक्यःक्रोधमूर्छितः ३१ कृत्वाविधनुषौवीरौशरवर्षैरवाकिरत् ॥ तावन्येधनुषीसज्येकृत्वाभोजंविजघ्नतुः ३२ तेनांतरेणबीभत्सुर्विवेशामित्रवा हिनीम् ॥ नलेभातेतुतौद्वारंवारितौकृतवर्मणा ३३ धार्तराष्ट्रेष्वनीकेषुयतमानौनरर्षभौ ॥ अनीकान्यर्दयन्युद्धेत्वरितःश्वेतवाहनः ३४ नावधीत्कृतवर्माणंप्रा प्तमप्यरिसूदनः ॥ तंदृष्ट्वातुतथायांतंशूरोराजाश्रुतायुधः ३५ अभ्यद्रवत्सुसंक्रुद्धोविधुन्वानोमहद्धनुः ॥ सपार्थंत्रिभिरानर्छत्सप्तत्याचजनार्दनम् ३६ क्षुरप्रेण सुतीक्ष्णेनपार्थकेतुमताडयत् ॥ ततोऽर्जुनोनवत्यातुशराणांनतपर्वणाम् ३७ अदूरस्थाविभिर्बाणैः २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७

आजघानभृशंक्रुद्धस्तोत्रैरिवमहाद्विपम् ॥ सतंनममृषेराजन्पांडवेयस्यविक्रमम् ३८ अथैनंसप्तसप्तत्यानाराचानांसमार्पयत् ॥ तस्यार्जुनोधनुश्छित्वाशरावापं
निकृत्यच ३९ आजघानोरसिक्रुद्धःसप्तभिर्नतपर्वभिः ॥ अथान्यद्धनुरादायसराजाक्रोधमूर्छितः ४० वासविंनवभिर्बाणैर्बाह्वोरुरसिचार्पयत् ॥ ततोऽर्जुनःस्म
यन्नेवश्रुतायुधमरिंदमः ४१ शरैरनेकसाहस्रैःपीडयामासभारत ॥ अश्वांश्चास्यावधीत्तूर्णंसारथिंचमहारथः ४२ विव्याधचैनंसप्तत्यानाराचानांमहाबलः ॥ हता
श्वंरथमुत्सृज्यसतुराजाश्रुतायुधः ४३ अभ्यद्रवद्रणेपार्थंगदामुद्यम्यवीर्यवान् ॥ वरुणस्यात्मजोवीरःसतुराजाश्रुतायुधः ४४ पर्णाशाजननीयस्यशीततोयाम
हानदी ॥ तस्यमाताऽब्रवीद्राजन्वरुणंपुत्रकारणात् ४५ अवध्योऽयंभवेल्लोकेशत्रूणांतनयोमम ॥ वरुणस्त्वब्रवीत्प्रीतोददाम्यस्मैवरंहितम् ४६ दिव्यमस्त्रंसु
तस्तेऽयंयेनावध्योभविष्यति ॥ नास्तिचाप्यमरत्वंवैमनुष्यस्यकथंचन ४७ सर्वेणावश्यमर्तव्यंजातेनसरितांवरे ॥ दुर्धर्षस्त्वेषशत्रूणांरणेषुभवितासदा ४८
अस्त्रस्यास्यप्रभावाद्वैव्येतुतेमानसोज्वरः ॥ इत्युक्त्वावारुणःप्रादाद्गदांमंत्रपुरस्कृताम् ४९ यामासाद्यदुराधर्षःसर्वलोकेश्रुतायुधः ॥ उवाचचैनंभगवान्पुनरेव
जलेश्वरः ५० अयुध्यतिनमोक्तव्यासात्वय्येवपतेदिति ॥ हन्यादेषाप्रतीपंहिप्रयोक्तारमपिप्रभो ५१ नचाकरोत्सतद्वाक्यंप्राप्तेकालेश्रुतायुधः ॥ सतयावी
रघातिन्याजनार्दनमताडयत् ५२ प्रतिजग्राहतांकृष्णःपीनेनांसेनवीर्यवान् ॥ नाकंपयतशौरिंसाविंध्यंगिरिमिवानिलः ५३ प्रत्युद्यांतीतमेवैषाकृत्येवदुरधि
ष्ठिता ॥ जघानचास्थितंवीरंश्रुतायुधममर्षणम् ५४ हत्वाश्रुतायुधंवीरंधरणीमन्वपद्यत ॥ गदांनिवर्तितांदृष्ट्वानिहतंचश्रुतायुधम् ५५ हाहाकारोमहांस्तत्र
सैन्यानांसमजायत ॥ स्वेनास्त्रेणहतंदृष्ट्वाश्रुतायुधमरिंदमम् ५६ अयुध्यमानायततःकेशवायनराधिप ॥ क्षिप्ताश्रुतायुधेनाथतस्मात्तमवधीद्गदा ५७ यथो
क्तंवरुणेनाजौतथासनिधनंगतः ॥ व्यसुश्चाप्यपतद्भूमौप्रेक्षतांसर्वधन्विनाम् ५८ पतमानस्तुसबभौपर्णाशायाःप्रियःसुतः ॥ सभग्नइववातेनबहुशाखोवनस्प
तिः ५९ ततःसर्वाणिसैन्यानिसेनामुख्याश्चसर्वशः ॥ प्राद्रवंतहतंदृष्ट्वाश्रुतायुधमरिंदमम् ६० ततःकांबोजराजस्यपुत्रःशूरःसुदक्षिणः ॥ अभ्ययाज्जवनैरश्वैः
फाल्गुनंशत्रुसूदनम् ६१ तस्यपार्थःशरान्सप्तप्रेषयामासभारत ॥ तेतंशूरंविनिर्भिद्यप्राविशन्धरणीतलम् ६२ सोऽतिविद्धःशरैस्तीक्ष्णैर्गांडीवप्रेषितैर्मृधे ॥
अर्जुनंप्रतिविव्याधदशभिःकंकपत्रिभिः ६३ वासुदेवंत्रिभिर्विद्ध्वापुनःपार्थंचपंचभिः ॥ तस्यपार्थोधनुश्छित्वाकेतुंचिच्छेदमारिष ६४ भल्लाभ्यांभृशतीक्ष्णा
भ्यांतंचविव्याधपांडवः ॥ सतुपार्थंत्रिभिर्विद्ध्वासिंहनादमथानदत् ६५ सर्वपारसवींचैवशक्तिंशूरःसुदक्षिणः ॥ सघंटांप्राहिणोद्घोरांक्रुद्धोगांडीवधन्वने ६६ सा
ज्वलंतीमहोल्केवतमासाद्यमहारथम् ॥ सविस्फुलिंगानिर्भिद्यनिपपातमहीतले ६७

॥६२॥ अ० ॥९३॥

शक्त्यात्वभिहतोगाढंमूर्छयाऽभिपरिप्लुतः ॥ समाश्वास्यमहातेजाःसृक्किणीपरिलेलिहन् ६८ तंचतुर्दशभिःपार्थोनाराचैःकंकपत्रिभिः ॥ साश्वध्वजधनुःसूतंविव्या धाचिंत्यविक्रमः ६९ रथंचान्यैःसुबहुभिश्चक्रेविशकलंशरैः ॥ सुदक्षिणंतंकांबोजंमोघसंकल्पविक्रमम् ७० बिभेदहृदिबाणेनपृथुधारेणपांडवः ॥ सभिन्नवर्मास्र स्तांगःप्रभ्रष्टमुकुटांगदः ७१ पपाताभिमुखःशूरोयंत्रमुक्तइवध्वजः ॥ गिरेःशिखरजःश्रीमान्सुशाखःसुप्रतिष्ठितः ७२ निर्भग्नइववातेनकर्णिकारोहिमात्यये ॥ शे तेस्मनिहतोभूमौकांबोजास्तरणोचितः ७३ महार्हाभरणोपेतःसानुमानिवपर्वतः ॥ सुदर्शनीयस्ताम्राक्षःकर्णिनाससुदक्षिणः ७४ पुत्रःकांबोजराजस्यपार्थेन विनिपातितः ॥ धारयन्नग्निसंकाशांशिरसाकांचनींस्रजम् ७५ अशोभतमहाबाहुर्व्यसुर्भूमौनिपातितः ॥ ततःसर्वाणिसैन्यानिव्यद्रवंतसुतस्यते ॥ हतंश्रुता युधंदृष्ट्वाकांबोजंचसुदक्षिणम् ७६ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि श्रुतायुधसुदक्षिणवधेद्विनवतितमोऽध्यायः ॥ ९२ ॥ ॥ संजयउवाच ॥ हतेसुदक्षिणेराजन्वीरेचैवश्रुतायुधे ॥ जवेनाभ्यद्रवन्पार्थंकुपिताःसैनिकास्तव १ अभीषाहाःशूरसेनाःशिबयोऽथवसातयः ॥ अभ्यवर्षंस्ततोराजन्शरवर्षैर्ध नंजयम् २ तेषांषष्टिशतान्न्यान्प्रामथ्नात्पांडवःशरैः ॥ तेस्मभीताःपलायंतव्याघ्रात्क्षुद्रमृगाइव ३ तेनिवृत्ताःपुनःपार्थंसर्वतःपर्यवारयन् ॥ रणेसपत्नान्नि घ्नंतंजिगीषंतंपरान्युधि ४ तेषामापततांतूर्णंगांडीवप्रेषितैःशरैः ॥ शिरांसिपातयामासबाहूंश्चापिधनंजयः ५ शिरोभिःपातितैस्तत्रभूमिरासीन्निरंतरा ॥ अ भ्रच्छायेवचैवासीद्ध्वांक्षगृध्रबलैर्युधि ६ तेषुतूत्साद्यमानेषुक्रोधामर्षसमन्वितौ ॥ श्रुतायुश्चाच्युतायुश्चधनंजयमयुध्यताम् ७ बलिनौस्पर्धिनौवीरौकुलजौबाहु शालिनौ ॥ तावेनंशरवर्षाणिसव्यदक्षिणमस्यताम् ८ त्वरायुक्तौमहाराजप्रार्थयानौमहद्यशः ॥ अर्जुनस्यवधप्रेप्सूपुत्रार्थेतवधन्विनौ ९ तावर्जुनंसहस्रेणपत्रि णांनतपर्वणाम् ॥ पूरयामासतुःक्रुद्धौतटाकंजलदौयथा १० श्रुतायुश्चततःक्रुद्धस्तोमरेणधनंजयम् ॥ आजघानरथश्रेष्ठःपीतेनानिशितेनच ११ सोऽतिविद्धो बलवताशत्रुणाशत्रुकर्शनः ॥ जगामपरमंमोहंमोहयन्केशवंरणे १२ एतस्मिन्नेवकालेतुसोऽच्युतायुर्महारथः ॥ शूलेनभृशतीक्ष्णेनताडयामासपांडवम् १३ क्ष तेक्षारंसहिदद्दौपांडवस्यमहात्मनः ॥ पार्थोऽपिभृशसंविद्धोध्वजयष्टिंसमाश्रितः १४ ततःसर्वस्यसैन्यस्यतावकस्यविशांपते ॥ सिंहनादोमहानासीद्धतंमत्वा धनंजयम् १५ कृष्णश्चभृशसंतप्तोदृष्ट्वापार्थंविचेतनम् ॥ आश्वासयत्सुहृद्याभिर्वाग्भिस्तत्रधनंजयम् १६ ततस्तौरथिनांश्रेष्ठौलब्धलक्षौधनंजयम् ॥ वासु देवंचवार्ष्णेयंशरवर्षैःसमंततः १७ सचक्रकूबररथंसाश्वध्वजपताकिनम् ॥ अदृश्यंचक्रतुर्युद्धेतदद्भुतमिवाभवत् १८ प्रत्याश्वस्तस्तुबीभत्सुःशनकैरिवभा रत ॥ प्रेतराजपुरंप्राप्यपुनःप्रत्यागतोयथा १९

॥६२॥

६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९

२० । २१ विचेरुरित्यत्रताभ्यांमुक्ताश्चसायकानितिप्रथमांततयाऽनुपठ्यते २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८

संछन्नंशरजालेनरथंदृष्ट्वासकेशवम् ॥ शत्रूंचाभिमुखौदृष्ट्वादीप्यमानाविवानलौ २० प्रादुश्चक्रेततःपार्थःशाक्रमस्त्रंमहारथः ॥ तस्मादासन्सहस्राणिशराणांनत पर्वणाम् २१ तेजघ्नुस्तौमहेष्वासौताभ्यांमुक्तांश्चसायकान् ॥ विचेरुराकाशगताःपार्थबाणविदारिताः २२ प्रतिहत्यशरांस्तूर्णंशरवेगेनपांडवः ॥ प्रतस्थेत त्रतत्रैवयोधयन्वैमहारथान् २३ तौचफाल्गुनबाणौघैर्विबाहुशिरसौकृतौ ॥ वसुधामन्वपद्येतांवातनुन्नाविवद्रुमौ २४ श्रुतायुषश्चनिधनंवधश्चैवाच्युतायुषः ॥ लोकविस्मापनमभूत्समुद्रस्येवशोषणम् २५ तयोःपदानुगान्हत्वापुनःपंचाशतंरथान् ॥ प्रत्यगाद्भारतींसेनांनिघ्नन्पार्थोवरान्वरान् २६ श्रुतायुषंचनिहतंप्रे क्ष्यचैवाच्युतायुषम् ॥ नियतायुश्चसंक्रुद्धोदीर्घायुश्चैवभारत २७ पुत्रौतयोर्नरश्रेष्ठौकौंतेयंप्रतिजग्मतुः ॥ किरंतौविविधान्बाणान्पितृव्यसनकर्शितौ २८ तावर्जुनोमुहूर्तेनशरैःसन्नतपर्वभिः ॥ प्रैषयत्परमक्रुद्धोयमस्यसदनंप्रति २९ लोडयंतमनीकानिद्विपंपद्मसरोयथा ॥ नाशक्नुवन्वारयितुंपार्थंक्षत्रियपुंगवाः ३० अंगास्तुगजवारेणपांडवंपर्यवारयन् ॥ क्रुद्धाःसहस्रशोराजन्शिक्षिताहास्तिसादिनः ३१ दुर्योधनसमादिष्टाःकुंजरैःपर्वतोपमैः ॥ प्राच्याश्चदाक्षिणात्याश्चकलिं गप्रमुखानृपाः ३२ तेषामापततांशीघ्रंगांडीवप्रेषितैःशरैः ॥ निचकर्तशिरांस्युग्रोबाहूनपिसुभूषणान् ३३ तैःशिरोभिर्महीकीर्णाबाहुभिश्चसहांगदैः ॥ बभौ कनकपाषाणाभुजगैरिवसंवृता ३४ बाहवोविशिखैश्छिन्नाःशिरांस्युन्मथितानिच ॥ पतमानान्यदृश्यंतद्रुमेभ्यइवपक्षिणः ३५ शरैःसहस्रशोविद्धाद्विपाःप्रसृत शोणिताः ॥ अदृश्यंताद्रयःकालेगैरिकांबुस्रवाइव ३६ निहताःशेरतेस्मान्येबीभत्सोर्निशितैःशरैः ॥ गजपृष्ठगताम्लेच्छानानाविकृतदर्शनाः ३७ नानावेष धराराजन्नानाशस्त्रौघसंवृताः ॥ रुधिरेणानुलिप्तांगाभांतिचित्रैःशरैर्हताः ३८ शोणितंनिर्वमंतिस्मद्विपाःपार्थशराहताः ॥ सहस्रशश्छिन्नगात्राःसारोहाःसप दानुगाः ३९ चुक्रुशुश्चनिपेतुश्चबभ्रमुश्चापरेदिशः ॥ भृशंत्रस्ताश्चबहवःस्वानेवममृदुर्गजाः ४० सांतरायुधिनश्चैवद्विपास्तीक्ष्णविषोपमाः ॥ विदंत्यसुर मायांयेसुघोराघोरचक्षुषः ४१ यवनाःपारदाश्चैवशकाश्चसहबाल्हिकैः ॥ काकवर्णादुराचाराःस्त्रीलोलाःकलहप्रियाः ४२ द्राविडास्तत्रयुध्यंतेमत्तमातं गविक्रमाः ॥ गोयोनिप्रभवाम्लेच्छाःकालकल्पाःप्रहारिणः ४३ दार्वातिसारादरदाःपुंड्राश्चैवसहस्रशः ॥ तेनशक्याःस्मसंख्यातुंव्राताःशतसहस्रशः ४४ अभ्यवर्षंततेसर्वेपांडवंनिशितैःशरैः ॥ अवाकिरंश्चतेम्लेच्छानानायुद्धविशारदाः ४५ तेषामपिससर्जाशुशरवृष्टिंधनंजयः ॥ सृष्टिस्तथाविधाह्यासीच्छलभाना मिवायतिः ४६ अभ्रच्छायामिवशरैःसैन्येकृत्वाधनंजयः ॥ मुंडार्धमुंडान्जटिलानशुचीन्जटिलाननान् ४७

३९ । ४० । ४१ । ४२ गोयोनिप्रभवान्नंदिन्यांजाताः ४३ । ४४ । ४५ सृष्टिःसंसृष्टिः ४६ जटिलाननान् जटिलानि रूढश्मश्रूण्याननानियेषां ४७

म्लेच्छानशातयत्सर्वान्समेतानस्त्रतेजसा ॥ शरैश्चशतशोविद्धास्तेसंघागिरिचारिणः ॥ प्राद्रवंतरणेभीतागिरिगह्वरवासिनः ४८ गजाश्वसादिम्लेच्छानांपाति
तानांशितैःशरैः ॥ बकाःकंकावृकाभूमावपिबन्रुधिरंमुदा ॥ पत्त्यश्वरथनागैश्चप्रच्छन्नकृतसंक्रमाम् ४९ शरवर्षप्लवांघोरांकेशशैवलशाद्वलाम् ॥ आवर्तयन्नदींसु
ग्रांशोणितौघतरंगिणीम् ५० छिन्नांगुलीक्षुद्रमत्स्यांयुगांतेकालसन्निभाम् ॥ प्राकरोद्गजसंबाधांनदीमुत्तरशोणिताम् ५१ देहेभ्योराजपुत्राणांनागाश्वरथसा
दिनाम् ॥ यथास्थलंचनिम्नंचनस्याद्वर्षतिवासवे ५२ तथाऽऽसीत्पृथिवीसर्वाशोणितेनपरिप्लुता ॥ षट्सहस्रान्हयान्वीरान्पुनर्दशशतान्वरान् ५३ प्राहिणो
न्मृत्युलोकायक्षत्रियान्क्षत्रियर्षभः ॥ शरैःसहस्रशोविद्धाविधिवत्कल्पिताःद्विपाः ५४ शेरतेभूमिमासाद्यशैलावज्रहताइव ॥ सवाजिरथमातंगान्निघ्नन्व्यचरद
र्जुनः ५५ प्रभिन्नइवमातंगोमृद्नन्नलवनंयथा ॥ भूरिद्रुमलतागुल्मंशुष्केंधनतृणोलपम् ५६ निर्दहेदनलोऽरण्यंयथावायुसमीरितः ॥ सैनारण्यंतवतथाकृष्णा
निलसमीरितः ५७ शरार्चिरदहत्क्रुद्धःपांडवाग्निर्धनंजयः ॥ शून्यान्कुर्वन्रथोपस्थान्मानवैःसंस्तरन्महीम् ५८ प्रानृत्यदिवसंबाधेचापहस्तोधनंजयः ॥ वज्रक
ल्पैःशरैर्भूमिंकुर्वन्नुत्तरशोणिताम् ५९ प्राविशद्भारतींसेनांसंक्रुद्धोवैधनंजयः ॥ तंश्रुतायुस्तथांबष्ठोव्रजमानंन्यवारयत् ६० तस्यार्जुनःशरैस्तीक्ष्णैःकंकपत्रप
रिच्छदैः ॥ न्यपातयद्धयान्शीघ्रंयतमानस्यमारिष ६१ धनुश्चास्यापरैश्छित्वाशरैःपार्थोविचक्रमे ॥ अंबष्ठस्तुगदांगृह्यक्रोधपर्याकुलेक्षणः ६२ आससाद
रणेपार्थंकेशवंचमहारथम् ॥ ततःसंप्रहरन्वीरोगदामुद्यम्यभारत ॥ ६३ रथमावार्यगदयाकेशवंसमताडयत् ॥ गदयाताडितंदृष्ट्वाकेशवंपरवीरहा ६४ अर्जुनोऽथ
भृशंक्रुद्धःसोऽम्बष्ठंप्रतिभारत ॥ ततःशरैर्हेमपुंखैःसगदंरथिनांवरम् ६५ छादयामाससमरेमेघःसूर्यमिवोदितम् ॥ अथापरैःशरैश्चापिगदांतस्यमहात्मनः ६६
अचूर्णयत्तदापार्थस्तदद्भुतमिवाभवत् ॥ अथतांपतितांदृष्ट्वागृह्यान्यांचमहागदाम् ६७ अर्जुनंवासुदेवंचपुनःपुनरताडयत् ॥ तस्यार्जुनःक्षुरप्राभ्यांसगदावु
द्यतौभुजौ ६८ चिच्छेदेंद्रध्वजाकारौशिरश्चान्येनपत्रिणा ॥ सपपातहतोराजन्वसुधामनुनादयत् ६९ इंद्रध्वजइवोत्सृष्टोयंत्रनिर्मुक्तबंधनः ॥ रथानीकावगा
ढश्चवारणाश्वशतैर्वृतः ॥ अदृश्यततदापार्थोघनैःसूर्यइवावृतः ७० ॥ इतिश्रीमहा० द्रो० जयद्रथ० अंबष्ठवधेत्रिनवतितमोऽध्यायः ॥ ९३ ॥ संजयउवाच ॥
ततःप्रविष्टेकौंतेयेसिंधुराजजिघांसया ॥ द्रोणानीकंविनिर्भिद्यभोजानीकंचदुस्तरम् १ कांबोजस्यचदायादेहतेराजन्सुदक्षिणे ॥ श्रुतायुधेचविक्रांतेनिहतेस
व्यसाचिना २ विप्रद्रुतेष्वनीकेषुविध्वस्तेषुसमंततः ॥ प्रभग्नंस्वबलंदृष्ट्वापुत्रस्तेद्रोणमभ्ययात् ३ त्वरन्नेकरथेनैवसमेत्यद्रोणमब्रवीत् ॥ गतःसपुरुष
व्याघ्रःप्रमथ्यैतांमहाचमूम् ४

५ । ६ । ७ । ८ । ९ आतुरममविह्वितं १० । ११ नावबुध्यसेनहदरासि १२ नेच्छसिनानुरुध्यसे १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ चोयद्यर्थे यदिधनंजये

अथबुद्ध्यासमीक्षस्वकिंनुकार्यमनंतरम् ॥ अर्जुनस्यविघातायदारुणेऽस्मिन्जनक्षये ५ यथासपुरुषव्याघ्रोनहन्येतजयद्रथः ॥ तथाविधत्स्वभद्रंतेत्वंहिनः परमागतिः ६ असौधनंजयाग्निर्हिकोपमारुतचोदितः ॥ सेनाकक्षंदहतिमेवह्निःकक्षमिवोत्थितः ७ अतिक्रांतेहिकौंतेयेभित्त्वासैन्यंपरंतप ॥ जयद्रथस्यगोप्तारःसंशयंपरमंगताः ८ स्थिराबुद्धिर्नरेंद्राणामासीद्ब्रह्मविदांवर ॥ नातिक्रमिष्यतिद्रोणंजातुजीवन्धनंजयः ९ योऽसौपार्थोऽत्यतिक्रांतोमिषतस्तेमहाद्युते ॥ सर्वंह्यद्यातुरंमन्येनेदमस्तिबलंमम १० जानामित्वांमहाभागपांडवानांहितेरतम् ॥ तथामुह्यामिचब्रह्मन्कार्यवत्तांविचिंतयन् ११ यथाशक्तिचतेब्रह्मन्वर्तयेवृत्तिमुत्तमाम् ॥ प्रीणामिचयथाशक्तितच्चत्वंनावबुध्यसे १२ अस्मान्नत्वंसदाभक्तानिच्छस्यमितविक्रम ॥ पांडवान्सततंप्रीणास्यस्माकंविप्रियेरतान् १३ अस्मानेवोपजीवंस्त्वमस्माकंविप्रियेरतः ॥ नह्यहंत्वांविजानामिमधुदिग्धमिवक्षुरम् १४ नादास्यच्चेद्वरंमह्यंभवान्पांडवनिग्रहे ॥ नावारयिष्यंगच्छंतमहंसिंधुपतिंगृहान् १५ मयात्वाशंसमानेनत्वत्तस्त्राणमबुद्धिना ॥ आश्वासितःसिंधुपतिर्मोहाद्दत्तश्चमृत्यवे १६ यमदंष्ट्रांतरंप्राप्तोमुच्येतापिहिमानवः ॥ नार्जुनस्यवशंप्राप्तोमुच्येताजौजयद्रथः १७ सतथाकुरुशोणाश्वयथामुच्येतसैंधवः ॥ ममचार्तप्रलापानांमाक्रुधःपाहिसैंधवम् १८ ॥ द्रोणउवाच ॥ नाभ्यसूयामितेवाक्यमश्वत्थाम्नाऽसिमेसमः ॥ सत्यंतुतेप्रवक्ष्यामितज्जुषस्वविशांपते १९ सारथिःप्रवरःकृष्णःशीघ्राश्चास्यहयोत्तमाः ॥ अल्पंचविवरंकृत्वातूर्णंयातिधनंजयः २० किंनपश्यसिबाणौघान्क्रोशमात्रेकिरीटिनः ॥ पश्चाद्रथस्यपतितान्क्षिप्तान्शीघ्रंहिगच्छतः २१ नचाहंशीघ्रयानेऽद्यसमर्थोवयसान्वितः ॥ सेनामुखेचपार्थानामेतद्बलमुपस्थितम् २२ युधिष्ठिरश्चमेग्राह्योमिषतांसर्वधन्विनाम् ॥ एवंमयाप्रतिज्ञातंक्षत्रमध्येमहाभुज २३ धनंजयेनचोत्सृष्टोवर्ततेप्रमुखेनृप ॥ तस्माद्व्यूहमुखंहित्वानाहंयोत्स्यामिफाल्गुनम् २४ तुल्याभिजनकर्माणंशत्रुमेकंसहायवान् ॥ गत्वायोधयमाभैस्त्वंत्वंह्यस्यजगतःपतिः २५ राजाशूरःकृतीदक्षोनेतुंपरपुरंजयः ॥ वीरःस्वयंप्रयाह्यत्रयत्रपार्थोधनंजयः २६ ॥ दुर्योधनउवाच ॥ कथंत्वामप्यतिक्रांतःसर्वशस्त्रभृतांवरम् ॥ धनंजयोमयाशक्यआचार्यप्रतिबाधितुम् २७ अपिशक्योरणेजेतुंवज्रहस्तःपुरंदरः ॥ नार्जुनःसमरेशक्योजेतुंपरपुरंजयः २८ येनभोजश्चहार्दिक्योभवांश्चत्रिदशोपमः ॥ अस्त्रप्रतापेनजितौश्रुतायुश्चनिबर्हितः २९ सुदक्षिणश्चनिहतःसचराजाश्रुतायुधः ॥ श्रुतायुश्चाच्युतायुश्चम्लेच्छाश्चायुतशोहताः ३० तंकथंपांडवंयुद्धेदहंतमिवपावकम् ॥ प्रतियोत्स्यामिदुर्धर्षंतमहंशस्त्रकोविदम् ३१ क्षमंचमन्यसेयुद्धंममतेनाद्यसंयुगे ॥ परवानस्मिभवतिप्रेष्यवद्रक्षमेयशः ३२

नोत्सृष्टःप्रमुखेवर्ततेतर्हियुधिष्ठिरोमेग्राह्यइत्यन्वयः २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२

३३ । ३४ तेत्वां ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ चत्वारऐरावतवामनांजनसार्वभौमाः ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ अनुज्ञांवरं ५४



॥ द्रोणउवाच ॥ सत्यंवदसिकौरव्यदुराधर्षोधनंजयः ॥ अहंतुतत्वरिष्यामियथैनंप्रसहिष्यसि ३३ अद्भुतंचाद्यपश्यंतुलोकेसर्वधनुर्धराः ॥ विषक्तंत्वयिकौंतेयंवासुदेवस्यपश्यतः ३४ एषतेकवचंराजंस्तथाबध्नामिकांचनम् ॥ यथानबाणानास्त्राणिप्रहरिष्यंतितेरणे ३५ यदित्वांसासुरसुराःसयक्षोरगराक्षसाः ॥ योधयंतित्रयोलोकाःसनरानास्तितेभयम् ३६ नकृष्णोनचकौंतेयोनचान्यःशस्त्रभृद्रणे ॥ शरानर्पयितुंकाश्चित्कवचेतवशक्ष्यति ३७ सत्वंकवचमास्थायक्रुद्धमद्यरणेऽर्जुनम् ॥ त्वरमाणःस्वयंयाहिनत्वाऽसौविसहिष्यति ३८ ॥ संजयउवाच ॥ एवमुक्त्वात्वरन्द्रोणःस्पृष्ट्वांभोवर्मभास्वरम् ॥ आबबंधाद्भुततमंजपन्मंत्रंयथाविधि ३९ रणेतस्मिन्सुमहतिविजयस्यसुतस्यते ॥ विसिस्मापयिषुर्लोकान्विद्ययाब्रह्मवित्तमः ४० ॥ द्रोणउवाच ॥ करोतुस्वस्तितेब्रह्मब्रह्माचापिद्विजातयः ॥ सरीसृपाश्चयेश्रेष्ठास्तेभ्यस्तेस्वस्तिभारत ४१ ययातिर्नाहुषश्चैवधुंधुमारोभगीरथः ॥ तुभ्यंराजर्षयःसर्वेस्वस्तिकुर्वंतुतेसदा ४२ स्वस्तितेऽस्त्वेकपादेभ्योबहुपादेभ्यएवच ॥ स्वस्त्यस्त्वपादकेभ्यश्चनित्यंतवमहारणे ४३ स्वाहास्वधाशचीचैवस्वस्तिकुर्वंतुतेसदा ॥ लक्ष्मीररुंधतीचैवकुरुतांस्वस्तितेऽनघ ४४ असितोदेवलश्चैवविश्वामित्रस्तथांगिराः ॥ वसिष्ठःकश्यपश्चैवस्वस्तिकुर्वंतुतेनृप ४५ धाताविधातालोकेशोदिशश्चसदिगीश्वराः ॥ स्वस्तितेऽद्यप्रयच्छंतुकार्तिकेयश्चषण्मुखः ४६ विवस्वान्भगवान्स्वस्तिकरोतुतवसर्वशः ॥ दिग्गजाश्चैवचत्वारःक्षितिश्चगगनंग्रहाः ४७ अधस्ताद्धरणींयोऽसौसदाधारयतेनृप ॥ शेषश्चपन्नगश्रेष्ठःस्वस्तितुभ्यंप्रयच्छतु ४८ गांधारेयुधिविक्रम्यनिर्जिताःसुरसत्तमाः ॥ पुरावृत्रेणदैत्येनभिन्नदेहाःसहस्रशः ४९ हततेजोबलाःसर्वेतदासेंद्रादिवौकसः ॥ ब्रह्माणंशरणंजग्मुर्वृत्राद्भीतामहासुरात् ५० ॥ देवाऊचुः ॥ प्रमर्दितानांवृत्रेणदेवानांदेवसत्तम ॥ गतिर्भवसुरश्रेष्ठत्राहिनोमहतोभयात् ५१ अथपार्श्वेस्थितंविष्णुंशक्रादींश्चसुरोत्तमान् ॥ प्राहतथ्यमिदंवाक्यंविषण्णान्सुरसत्तमान् ५२ रक्ष्यामेसततंदेवाःसहेंद्राःसद्विजातयः ॥ त्वष्टुःसुदुर्धरंतेजोयेनवृत्रोविनिर्मितः ५३ त्वष्ट्रापुरातपस्तप्त्वावर्षायुतशतंतदा ॥ वृत्रोविनिर्मितोदेवाःप्राप्यानुज्ञांमहेश्वरात् ५४ सतस्यैवप्रसादाद्वोहन्यादेवरिपुर्बली ॥ नागत्वाशंकरस्थानंभगवान्दृश्यतेहरः ५५ दृष्ट्वाजेष्यथवृत्रंतंक्षिप्रंगच्छतमंदरम् ॥ यत्राऽऽस्तेतपसांयोनिर्दक्षयज्ञविनाशनः ५६ पिनाकीसर्वभूतेशोभगनेत्रनिपातनः ॥ तेगत्वासहितादेवाब्रह्मणासहमंदरम् ५७ अपश्यंस्तेजसांराशिंसूर्यकोटिसमप्रभम् ॥ सोऽब्रवीत्स्वागतंदेवाब्रूतकिंकरवाण्यहम् ५८ अमोघंदर्शनंमह्यंकामप्राप्तिरतोऽस्तुवः ॥ एवमुक्तास्तुतेसर्वेप्रत्यूचुस्तंदिवौकसः ५९ तेजोहृतंनोवृत्रेणगतिर्भवदिवौकसाम् ॥ मूर्तीरीक्षस्वनोदेवप्रहारैर्जर्जरीकृताः ॥ शरणंत्वांप्रपन्नाःस्मगतिर्भवमहेश्वर ६०

हन्याद्धंतुमर्हति ५५ । ५६ । ५७ । ५८ । ५९ । ६०

११ । ६२ मानसेनमनसोच्चारणीयेन ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ ब्रह्मसूत्रेण ब्रह्मणासूचितेनोपदेशेन ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ ॥ इतिद्रोणपर्वणिटीकायांच

शर्वउवाच ॥ विदितंवोयथादेवाःकृत्येयंसुमहाबला ॥ त्वष्टुस्तेजोभवाघोरादुर्निवार्याऽकृतात्मभिः ६१ अवश्यंतुमयाकार्यंसाह्यंसर्वदिवौकसाम् ॥ ममेदंगात्रजं
शक्रकवचंगृह्यभास्वरम् ६२ बधानानेनमंत्रेणमानसेनसुरेश्वर ॥ वधायासुरमुख्यस्यवृत्रस्यसुरघातिनः ६३ ॥ द्रोणउवाच ॥ इत्युक्त्वावरदःप्रादाद्वर्मतन्मंत्र
मेवच ॥ सतेनवर्मणागुप्तःप्रायाद्वृत्रचमूंप्रति ६४ नानाविधैश्चशस्त्रौघैःपात्यमानैर्महारणे ॥ नसंधिःशक्यतेभेत्तुंवर्मबंधस्यतस्यतु ६५ ततोजघानसमरेवृत्रंदे
वपतिःस्वयम् ॥ तंचमंत्रमयंबंधंवर्मचांगिरसेददौ ६६ अंगिराःप्राहपुत्रस्यमंत्रज्ञस्यबृहस्पतेः ॥ बृहस्पतिरथोवाचअग्निवेश्यायधीमते ६७ अग्निवेश्योमम
प्रादात्तेनबध्नामिवर्मते ॥ तवाद्यदेहरक्षार्थंमंत्रेणनृपसत्तम ६८ ॥ संजयउवाच ॥ एवमुक्त्वाततोद्रोणस्तवपुत्रंमहाद्युतिम् ॥ पुनरेववचःप्राहशनैराचार्यपुंगवः
६९ ब्रह्मसूत्रेणबध्नामिकवचंतवभारत ॥ हिरण्यगर्भेणयथाबद्धंविष्णोःपुरारणे ७० यथाचब्रह्मणाबद्धंसंग्रामेतारकामये ॥ शक्रस्यकवचंदिव्यंतथाबध्नाम्यहं
तव ७१ बद्ध्वातुकवचंतस्यमंत्रेणविधिपूर्वकम् ॥ प्रेषयामासराजानंयुद्धायमहतेद्विजः ७२ ससन्नद्धोमहाबाहुराचार्येणमहात्मना ॥ रथानांचसहस्रेणत्रिगर्ता
नांप्रहारिणाम् ७३ तथादंतिसहस्रेणमत्तानांवीर्यशालिनाम् ॥ अश्वानांनियुतेनैवतथाऽन्यैश्चमहारथैः ७४ वृतःप्रायान्महाबाहुरर्जुनस्यरथंप्रति ॥ नाना
वादित्रघोषेणयथावैरोचनिस्तथा ७५ ततःशब्दोमहानासीत्सैन्यानांतवभारत ॥ अगाधंप्रस्थितंदृष्ट्वासमुद्रमिवकौरवम् ७६ ॥ इतिश्रीमहाभारतेद्रोणपर्व
णिजयद्रथवधपर्वणिदुर्योधनकवचबंधनेचतुर्नवतितमोऽध्यायः ॥ ९४ ॥ ७ ॥ संजयउवाच ॥ प्रविष्टयोर्महाराजपार्थवार्ष्णेययोरणे ॥ दुर्योधनेप्रयातेचपृ
ष्ठतःपुरुषर्षभे १ जवेनाभ्यद्रवद्द्रोणंमहतानिःस्वनेनच ॥ पांडवाःसोमकैःसार्धंततोयुद्धमवर्तत २ तद्युद्धमभवत्तीव्रंतुमुलंलोमहर्षणम् ॥ कुरूणांपांडवानांचव्यू
हस्यपुरतोऽद्भुतम् ३ राजन्कदाचिन्नास्माभिर्दृष्टंतादृङ्नचश्रुतम् ॥ यादृङ्मध्यगतेसूर्येयुद्धमासीद्विशांपते ४ धृष्टद्युम्नमुखाःपार्थाव्यूढानीकाःप्रहारिणः ॥
द्रोणस्यसैन्यंतेसर्वेशरवर्षैरवाकिरन् ५ वयंद्रोणंपुरस्कृत्यसर्वशस्त्रभृतांवरम् ॥ पार्षतप्रमुखान्पार्थानभ्यवर्षामसायकैः ६ महामेघाविवोदीर्णौमिश्रवातौहिमा
त्यये ॥ सेनाग्रेप्रचकाशेतेरुचिरेरथभूषिते ७ समेत्यतुमहासेनेचक्रतुर्वेगमुत्तमम् ॥ जाह्नवीयमुनेनद्यौप्रावृषीवोल्बणोदके ८ नानाशस्त्रपुरोवातोद्विपाश्वरथ
संवृतः ॥ गदाविद्युन्महारौद्रःसंग्राममजलदोमहान् ९ भारद्वाजानिलोद्धूतःशरधारासहस्रवान् ॥ अभ्यवर्षन्महासैन्यःपांडुसेनाग्निमुद्धतम् १० समुद्रमिवघर्मांते
विशन्घोरोमहानिलः ॥ व्यक्षोभयदनीकानिपांडवानांद्विजोत्तमः ११

२२

तुर्नवतितमोऽध्यायः ॥ ९४ ॥ ॥ ७ ॥ प्रविष्टयोरिति १ । २ । ३ । ४ । ५ । ६ हिमात्ययेशिशिरे सेनाग्रेप्रधानेसेने ७ । ८ । ९ । १० । ११

१२ । १३ । १४ । १५ । १६ । १७ प्लावयामासविद्रावितवान् १८ अपाकर्षतव्यावर्तितवान् १९ । २० । २१ संघट्टयतिसंमेलयति २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३०

तेऽपिसर्वप्रयत्नेनद्रोणमेवसमाद्रवन् ॥ विभिन्संतोमहासेतुंवार्योघाःप्रबलाइव १२ वारयामासतान्द्रोणोजलौघमचलोयथा ॥ पांडवान्समरेक्रुद्धान्पंचालांश्चसकेकयान् १३ अथापरेचराजानःपरिवृत्यसमंततः ॥ महाबलारणेशूराःपंचालानन्ववारयन् १४ ततोरणेनरव्याघ्रःपार्षतःपांडवैःसह ॥ संजघानासकृद्द्रोणंविभित्सुररिवाहिनीम् १५ यथैवशरवर्षाणिद्रोणोवर्षतिपार्षते ॥ तथैवशरवर्षाणिधृष्टद्युम्नोऽप्यवर्षत १६ सनिस्त्रिंशपुरोवातःशक्तिप्रासर्ष्टिसंवृतः ॥ ज्याविद्युच्चापसंह्रादोधृष्टद्युम्नबलाहकः १७ शरधाराश्मवर्षाणिव्यसृजत्सर्वतोदिशम् ॥ निघ्नन्रथवराश्वौघान्प्लावयामासवाहिनीम् १८ यंयमार्च्छच्छरैर्द्रोणःपांडवानांरथव्रजम् ॥ ततस्ततःशरैर्द्रोणमपाकर्षतपार्षतः १९ तथातुयतमानस्यद्रोणस्ययुधिभारत ॥ धृष्टद्युम्नंसमासाद्यत्रिधासैन्यमभिद्यत २० भोजमेकेऽभ्यवर्तंतजलसंधंतथाऽपरे ॥ पांडवैर्हन्यमानाश्चद्रोणमेवापरेययुः २१ संघट्टयतिसैन्यानिद्रोणस्तुरथिनांवरः ॥ व्यधमच्चापितान्यस्यधृष्टद्युम्नोमहारथः २२ धार्तराष्ट्रास्तथाभूतावध्यंतेपांडुसृंजयैः ॥ अगोपाःपशवोऽरण्येबहुभिःश्वापदैरिव २३ कालःस्मग्रसतेयोधान्धृष्टद्युम्नेनमोहितान् ॥ संग्रामेतुमुलेतस्मिन्नितिसंमेनिरेजनाः २४ कुनृपस्ययथाराष्ट्रंदुर्भिक्षव्याधितस्करैः ॥ द्राव्यतेतद्वदापन्नापांडवैस्तववाहिनी. २५ अर्करश्मिविमिश्रेषुशस्त्रेषुकवचेषुच ॥ चक्षूंषिप्रत्यहन्यंतसैन्येनरजसातथा २६ त्रिधाभूतेषुसैन्येषुवध्यमानेषुपांडवैः ॥ अमर्षितस्ततोद्रोणःपंचालान्व्यधमच्छरैः २७ मृद्नतस्तान्यनीकानिनिघ्नतश्चापिसायकैः ॥ बभूवरूपंद्रोणस्यकालाग्नेरिवदीप्यतः २८ रथंनागंहयंचापिपत्तिनश्चविशांपते ॥ एकैकेनेषुणासंख्येनिर्बिभेदमहारथः २९ पांडवानांतुसैन्येषुनास्तिकश्चित्सभारत ॥ दधारयोरणेबाणान्द्रोणचापच्युतान्प्रभो ३० तत्पच्यमानमर्केणद्रोणसायकतापितम् ॥ बभ्रामपार्षतंसैन्यंतत्रतत्रैवभारत ३१ तथैवपार्षतेनापिकाल्यमानंबलंतव ॥ अभवत्सर्वतोदीप्तंशुष्कंवनमिवाग्निना ३२ बाध्यमानेषुसैन्येषुद्रोणपार्षतसायकैः ॥ त्यक्त्वाप्राणान्परंशक्त्यायुध्यंतेसर्वतोमुखाः ३३ तावकानांपरेषांचयुध्यतांभरतर्षभ ॥ नासीत्कश्चिन्महाराजयोऽत्याक्षीत्संयुगंभयात् ३४ भीमसेनंतुकौंतेयंसोदर्याःपर्यवारयन् ॥ विविंशतिश्चित्रसेनोविकर्णश्चमहारथः ३५ विंदानुविंदावावंत्यौक्षेमधूर्तिश्चवीर्यवान् ॥ त्रयाणांतवपुत्राणांत्रयएवानुयायिनः ३६ बाल्हीकराजस्तेजस्वीकुलपुत्रोमहारथः ॥ सहसेनःसहामात्योद्रौपदेयानवारयत् ३७ शैब्योगोवासनोराजायोधैर्दशशतावरैः ॥ काश्यस्याभिभुवःपुत्रंपराक्रांतमवारयत् ३८ अजातशत्रुंकौंतेयंज्वलंतमिवपावकम् ॥ मद्राणामीश्वरःशल्योराजाराजानमावृणोत् ३९ दुःशासनस्त्वत्रस्थाप्यस्तमनीकममर्षणः ॥ सात्यकिंप्रययौक्रुद्धःशूरोरथवरंयुधि ४० स्वकेनाहमनीकेनसन्नद्धःकवचावृतः ॥ चतुःशतैर्महेष्वासैश्चेकितानमवारयम् ४१

३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ काश्यस्यकाशिराजस्य ३८ । ३९ । ४० । ४१

४२ । ४३ । ४४ आवंत्योऽन्यः ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ ॥ इतिद्रोणपर्वणि टीकायांपंचनवतितमोऽध्यायः ॥ ९५ ॥ ॥ ९६ ॥ राजन्निति १ । २ । ३ । ४

शकुनिस्तुसहानीकोमाद्रीपुत्रमवारयत् ॥ गांधारकैःसप्तशतैश्चापशक्त्यसिपाणिभिः ४२ विंदानुविंदावावंत्यौविराटंमत्स्यमार्च्छताम् ॥ प्राणांस्त्यक्त्वामहेष्वासौ मित्रार्थेऽभ्युद्यतायुधौ ४३ शिखंडिनंयाज्ञसेनिंरुंधानमपराजितम् ॥ बाल्हीकःप्रतिसंयत्त पराक्रांतमवारयत् ४४ धृष्टद्युम्नंतुपांचाल्यंक्रूरैःसार्धंप्रभद्रकैः ॥ आवंत्यःसहसौवीरैःक्रुद्धरूपमवारयत् ४५ घटोत्कचंतथाशूरंराक्षसंक्रूरकर्मिणम् ॥ अलायुधोऽद्रवत्तूर्णंक्रुद्धमायांतमाहवे ४६ अलंबुषंराक्षसेंद्रंकुंतिभोजोमहारथः ॥ सैन्येनमहतायुक्त क्रुद्धरूपमवारयत् ४७ सैंधवःपृष्ठतस्त्वासीत्सर्वसैन्यस्यभारत ॥ रक्षितःपरमेष्वासैःकृपप्रभृतिभीरथैः ४८ तस्याऽऽस्तांचक्ररक्षौद्वौसैंधवस्यबृहत्तमौ ॥ द्रौणिर्दक्षिणतोराजन्सूतपुत्रश्चवामतः ४९ पृष्ठगोपास्तुतस्यासन्सौमदत्तिपुरोगमाः ॥ कृपश्चवृषसेनश्चशलःशल्यश्चदुर्जयः ५० नीतिमंतोमहेष्वासाःसर्वेयुद्धविशारदाः ॥ सैंधवस्यविधायैवंरक्षांयुयुधिरेततः ५१ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिसंकुलयुद्धेपंचनवतितमोऽध्यायः ॥ ९५ ॥ ॥ संजयउवाच ॥ राजन्संग्राममाश्चर्यंशृणुकीर्तयतोमम ॥ कुरूणांपांडवानांचयथायुद्धमवर्तत १ भारद्वाजंसमासाद्यव्यूहस्यप्रमुखेस्थितम् ॥ अयोधयन्रणेपार्थाद्रोणानीकंबिभित्सवः २ रक्षमाणःस्वकंव्यूहंद्रोणोऽपिसहसैनिकैः ॥ अयोधयद्रणेपार्थान्प्रार्थयानोमहद्यशः ३ विंदानुविंदावावंत्यौविराटंदशभिःशरैः ॥ आजघ्नतुःसुसंक्रुद्धौतवपुत्रहितैषिणौ ४ विराटश्चमहाराजतावुभौसमरेस्थितौ ॥ पराक्रांतौपराक्रम्ययोधयामाससानुगौ ५ तेषांयुद्धंसमभवद्दारुणंशोणितोदकम् ॥ सिंहस्यद्विपमुख्याभ्यांप्रभिन्नाभ्यांयथावने ६ बाल्हीकंरभसंयुद्धेयाज्ञसेनिर्महाबलः ॥ आजघ्नेविशिखैस्तीक्ष्णैर्घोरैर्मर्मास्थिभेदिभिः ७ बाल्हीकोयाज्ञसेनिंतुहेमपुंखैःशिलाशितैः ॥ आजघानभृशंक्रुद्धोनवभिर्नतपर्वभिः ८ तद्युद्धमभवद्घोरंशरशक्तिसमाकुलम् ॥ भीरूणांत्रासजननंशूराणांहर्षवर्धनम् ९ ताभ्यांतत्रशरैर्मुक्तैरंतरिक्षंदिशस्तथा ॥ अभवत्संवृतंसर्वंनप्राज्ञायतकिंचन १० शैब्योगोवासनोयुद्धेकाश्यपुत्रंमहारथम् ॥ससैन्योयोधयामासगजःप्रतिगजंयथा ११ बाल्हीकराजःसंक्रुद्धोद्रौपदेयान्महारथान् ॥ मनःपंचेंद्रियाणीवशुशुभेयोधयन्रणे १२ अयोधयंस्तेसुभृशंतंशरौघैःसमंततः ॥ इंद्रियार्थायथादेहंशश्वद्देहवतांवर १३ वार्ष्णेयंसात्यकिंयुद्धेपुत्रोदुःशासनस्तव ॥ आजघ्नेसायकैस्तीक्ष्णैर्नवभिर्नतपर्वभिः १४ सोऽतिविद्धोबलवतामहेष्वासेनधन्विना ॥ ईषन्मूर्छांजगामाशुसात्यकिःसत्यविक्रमः १५ समाश्वस्तस्तुवार्ष्णेयस्तवपुत्रंमहारथम् ॥ विव्याधदशभिस्तूर्णंसायकैःकंकपत्रिभिः १६ तावन्योन्यंदृढंविद्धावन्योन्यशरपीडितौ ॥ रेजतुःसमरेराजन्पुष्पिताविवकिंशुकौ १७ अलंबुषस्तुसंक्रुद्धःकुंतिभोजशरार्दितः ॥ अशोभतभृशंलक्ष्म्यापुष्पाढ्यइवकिंशुकः १८

५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८

१९ । २० । २१ । २२ हुताशनःप्रावर्त्ततेत्यनुषज्यते २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ ॥ इतिद्रोणपर्वणिटीकायांषण्णवतितमोऽध्यायः ॥ ९६ ॥ तयेति १ । २।३। ४

कुंतिभोजंततोरक्षोविद्ध्वाबहुभिरायसैः ॥ अनदद्भैरवंनादंवाहिन्याःप्रमुखेतव १९ ततस्तौसमरेशूरौयोधयंतौपरस्परम् ॥ ददृशुःसर्वसैन्यानिशक्रजंभौयथा पुरा २० शकुनिरभसंयुद्धेकृतवैरंचभारत ॥ माद्रीपुत्रौचसंरब्धौशरैश्चार्दयतांभृशम् २१ तुमुलःसमहान्राजन्प्रावर्त्ततजनक्षयः ॥ त्वयासंजनितोऽत्यर्थंकर्णे नचविवर्धितः २२ रक्षितस्तवपुत्रैश्चक्रोधमूलोहुताशनः ॥ यइमांपृथिवींराजन्दग्धुंसर्वांसमुद्यतः २३ शकुनिःपांडुपुत्राभ्यांकृतःसविमुखःशरैः ॥ नस्मजाना तिकर्तव्यंयुद्धेकिंचित्पराक्रमम् २४ विमुखंचैनमालोक्यमाद्रीपुत्रौमहारथौ ॥ ववर्षतुःपुनर्बाणैर्यथामेघौमहागिरिम् २५ सवध्यमानोबहुभिःशरैःसन्नतपर्वभिः ॥ संप्रायाज्जवनैरश्वैर्द्रोणानीकायसौबलः २६ घटोत्कचस्तथाशूरंराक्षसंतमलायुधम् ॥ अभ्ययाद्रभसंयुद्धेवेगमास्थायमध्यमम् २७ तयोर्युद्धंमहाराजचित्ररू पमिवाभवत् ॥ यादृशंहिपुरावृत्तंरामरावणयोर्मृधे २८ ततोयुधिष्ठिरोराजामद्रराजानमाहवे ॥ विद्ध्वापंचाशताबाणैःपुनर्विव्याधसप्तभिः २९ ततःप्रववृतेयु द्धंतयोरत्यद्भुतंनृप ॥ यथापूर्वंमहद्युद्धंशंबरामरराजयोः ३० विविंशतिश्चित्रसेनोविकर्णश्चतवात्मजः ॥ अयोधयन्भीमसेनंमहत्यासेनयावृताः ३१ ॥ इति श्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिद्वंद्वयुद्धेषण्णवतितमोऽध्यायः ॥ ९६ ॥ ॥ संजयउवाच ॥ तथातस्मिन्प्रवृत्तेतुसंग्रामेलोमहर्षणे ॥ कौरवेयां स्त्रिधाभूतान्पांडवाःसमुपाद्रवन् १ जलसंधंमहाबाहुंभीमसेनोऽभ्यवर्तत ॥ युधिष्ठिरःसहानीकःकृतवर्माणमाहवे २ किरन्स्तुशरवर्षाणिरोचमानइवांशुमान् ॥ धृष्टद्युम्नोमहाराजद्रोणमभ्यद्रवद्रणे ३ ततःप्रववृतेयुद्धंत्वरतांसर्वधन्विनाम् ॥ कुरूणांपांडवानांचसंक्रुद्धानांपरस्परम् ४ संक्षयेतुतथाभूतेवर्तमानेमहाभये ॥ द्वंद्वीभूतेषुसैन्येषुयुध्यमानेष्वभीतवत् ५ द्रोणःपांचालपुत्रेणबलीबलवतासह ॥ यदक्षिपत्पृषत्कौघांस्तदद्भुतमिवाभवत् ६ पुंडरीकवनानीवविध्वस्तानिसमं ततः ॥ चक्रातेद्रोणपांचाल्यौनृणांशीर्षाण्यनेकशः ७ विनिकीर्णानिवीराणामनीकेषुसमंततः ॥ वस्त्राभरणशस्त्राणिध्वजवर्मायुधानिच ८ तपनीयतनुत्राणाः संसिक्तारुधिरेणच ॥ संसक्ताइवदृश्यंतेमेघसंघाःसविद्युतः ९ कुंजराश्वनरानन्येपातयंतिस्मपत्रिभिः ॥ तालमात्राणिचापानिविकर्षंतोमहारथाः १० असि चर्माणिचापानिशिरांसिकवचानिच ॥ विप्रकीर्यंतशूराणांसंप्रहारेमहात्मनाम् ११ उत्थितान्यगणेयानिकबंधानिसमंततः ॥ अदृश्यंतमहाराजतस्मिन्परमसं कुले १२ गृध्राःकंकाबकाःश्येनावायसाजंबुकास्तथा ॥ बहुशःपिशिताशाश्चतत्रादृश्यंतमारिष १३ भक्षयंतश्चमांसानिपिबंतश्चापिशोणितम् ॥ विलुंपंतश्च केशांश्चमज्जाश्चबहुधानृप १४ आकर्षंतःशरीराणिशरीरावयवांस्तथा ॥ नराश्वगजसंघानांशिरांसिचततस्ततः १५ कृतास्त्रारणदीक्षाभिर्दीक्षितारणशा लिनः ॥ रणेजयंप्रार्थयानाभृशंयुयुधिरेतदा १६ ५ । ६ । ७ । ८ । ९ कुंजराश्वनरानितिकाकाक्षिवदुभयत्रयथाविभक्तिसंबध्यते १० । ११ । १२ । १३ । १४ । १५ । १६

१७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ युगसन्नहनेषुयुगबंधेषु २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ अत्राक्षिपत् अपनीतवंतः ३६ ॥ इतिद्रोणपर्वणि

असिमार्गान्बहुविधान्विचेरुःसैनिकारणे ॥ ऋष्टिभिःशक्तिभिःप्रासैःशूलतोमरपट्टिशैः १७ गदाभिःपरिघैश्चान्यैरायुधैश्चभुजैरपि ॥ अन्योन्यंजघ्निरेक्रुद्धायु
द्धरंगगतानराः १८ रथिनोरथिभिःसार्धमश्वारोहाश्वसादिभिः ॥ मातंगावरमातंगैःपदाताश्चपदातिभिः १९ क्षीबाइवान्येचोन्मत्तारंगेष्विवचवारणाः ॥ उत्क्रु
शुरथान्योन्यंजघ्नुरन्योन्यमेवच २० वर्तमानेतथायुद्धेनिर्मर्यादेविशांपते ॥ धृष्टद्युम्नोहयानश्वैर्द्रोणस्यव्यत्यमिश्रयत् २१ तेहयाःसाध्वशोभंतमिश्रितावातरं
हसः ॥ पारावतसवर्णाश्वरक्तशोणाश्वसंयुगे २२ पारावतसवर्णास्तेरक्तशोणविमिश्रिताः ॥ हयाःशुशुभिरेराजन्मेघाइवसविद्युतः २३ धृष्टद्युम्नस्तुसंप्रेक्ष्यद्रो
णमभ्याशमागतम् ॥. असिचर्मादददेवीरोधनुरुत्सृज्यभारत २४ चिकीर्षुर्दुष्करंकर्मपार्षतःपरवीरहा ॥ ईषयासमतिक्रम्यद्रोणस्यरथमाविशत् २५ अतिष्ठद्युग
मध्येसयुगसन्नहनेषुच ॥ जघानार्धेषुचाश्वानांतत्सैन्यान्यभ्यपूजयन् २६ खड्गेनचरतस्तस्यशोणाश्वानाधितिष्ठितः ॥ नददर्शांतरंद्रोणस्तदद्भुतमिवाभवत् २७
यथाश्येनस्यपतनंवनेष्वामिषगृद्धिनः ॥ तथैवासीदभीसारस्तस्यद्रोणंजिघांसतः २८ ततःशरशतेनास्यशतचंद्रंसमाक्षिपत् ॥ द्रोणोद्रुपदपुत्रस्यखड्गंचदश
भिःशरैः २९ हयांश्चैवचतुःषष्ट्याशराणांजघ्निवान्बली ॥ ध्वजंछत्रंचभल्लाभ्यांतथातौपार्ष्णिसारथी ३० अथास्मैत्वरितोबाणमपरंजीवितांतकम् ॥ आकर्ण
पूर्णंचिक्षेपवज्रंवज्रधरोयथा ३१ तंचतुर्दशभिस्तीक्ष्णैर्बाणैश्चिच्छेदसात्यकिः ॥ ग्रस्तमाचार्यमुख्येनधृष्टद्युम्नंव्यमोचयत् ३२ सिंहेनेवमृगंग्रस्तंनरसिंहेनमा
रिष ॥ द्रोणेनमोचयामासपांचाल्यंशिनिपुंगवः ३३ सात्यकिंप्रेक्ष्यगोप्तारंपांचाल्यंचमहाहवे ॥ शराणांत्वरितोद्रोणःषड्विंशत्यासमार्पयत् ३४ ततोद्रोणंशिनेः
पौत्रोग्रसंतमपिसृंजयान् ॥ प्रत्यविध्यच्छितैर्बाणैःषड्विंशत्यास्तनांतरे ३५ ततःसर्वेरथास्तूर्णंपांचाल्याजयगृद्धिनः ॥ सात्वताभिसृतेद्रोणेधृष्टद्युम्नमवाक्षिपन्
३६ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि द्रोणधृष्टद्युम्नयुद्धेसप्तनवतितमोऽध्यायः ॥ ९७ ॥ धृतराष्ट्रउवाच ॥ बाणेतस्मिन्निकृत्तेतुधृष्टद्युम्नेचमो
क्षिते ॥ तेनवृष्णिप्रवीरेणयुयुधानेनसंजय १ अमर्षितोमहेष्वासःसर्वशस्त्रभृतांवरः ॥ नरव्याघ्रःशिनेःपौत्रेद्रोणःकिमकरोद्युधि २ ॥ संजयउवाच ॥ संप्रद्रुतः
क्रोधविषोव्यादितास्यशरासनः ॥ तीक्ष्णधारेषुदशनःसितनाराचदंष्ट्रवान् ३ संरंभामर्षताम्राक्षोमहोरगइवश्वसन् ॥ नरवीरःप्रमुदितःशोणैरश्वैर्महाजवैः ४ उ
त्पतद्भिरिवाकाशेक्रामद्भिरिवपर्वतम् ॥ रुक्मपुंखाञ्शरानस्यन्युयुधानमुपाद्रवत् ५ शरपातमहावर्षंरथघोषबलाहकम् ॥ कार्मुकाकर्षविक्षेपंनाराचबहुविद्युतम्
६ शक्तिखड्गाशनिधरंक्रोधवेगसमुत्थितम् ॥ द्रोणमेघमनावार्यंहयमारुतचोदितम् ७ दृष्ट्वैवाभिपतंतंतंशूरःपरपुरंजयः ॥ उवाचसूतंशैनेयःप्रहसन्युद्धदुर्मदः ८

टीकायांसप्तनवतितमोऽध्यायः ॥ ९७ ॥ ॥ ९७ ॥ ॥ बाणेइति १ । २ । ३ । ४ । ५ कार्मुकाकर्षएवविक्षेपआतारप्रसाधनंयस्य ६ । ७ । ८

९ । १० । ११ । १२ । १३ । १४ । १५ । १६ अंतरमत्रच्छेदः १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ रथवाहिन्योरथसेनाः २८ वैजयंतीत्रिलक्षणाभिः प

एनंवैब्राह्मणंशूरंस्वकर्मण्यनवस्थितम् ॥ आश्रयंधार्तराष्ट्रस्यराज्ञोदुःखभयापहम् ९ शीघ्रंप्रजवितैरश्वैःप्रत्युद्याहिप्रहृष्टवत् ॥ आचार्यंराजपुत्राणांसततंशूरमानिनम् १० ततोरजतसंकाशामाधवस्यहयोत्तमाः ॥ द्रोणस्याभिमुखाःशीघ्रमगच्छन्वातरंहसः ११ ततस्तौद्रोणशैनेयौयुयुधातेपरंतपौ ॥ शरैरनेकसाहस्रैस्ताडयंतौपरस्परम् १२ इषुजालावृतंव्योमचक्रतुःपुरुषर्षभौ ॥ पूरयामासतुर्वीरावुभौदशदिशःशरैः १३ मेघाविवातपापायेधाराभिरितरेतरम् ॥ नस्मसूर्यस्तदाभातिनववौचसमीरणः १४ इषुजालावृतंघोरमंधकारंसमंततः ॥ अनाधृष्यमिवान्येषांशूराणामभवत्तदा १५ अंधकारीकृतेलोकेद्रोणशैनेययोःशरैः ॥ तयोःशीघ्रास्त्रविदुषोर्द्रोणसात्वतयोस्तदा १६ नांतरंशरवृष्टीनांददृशेनरसिंहयोः ॥ इषूणांसन्निपातेनशब्दोधाराभिघातजः १७ शुश्रुवेशक्रमुक्तानामशनीनामिवस्वनः ॥ नाराचैर्व्यतिविद्धानांशराणांरूपमाबभौ १८ आशीविषविदष्टानांसर्पाणामिवभारत ॥ तयोर्ज्यातलनिर्घोषःशुश्रुवेयुद्धशौंडयोः १९ अजस्रंशैलशृंगाणांवज्रेणाहन्यतामिव ॥ उभयोस्तौरथौराजंस्तेचाश्वास्तौचसारथी २० रुक्मपुंखैःशरैश्छिन्नाश्चित्ररूपाबभुस्तदा ॥ निर्मलानामजिह्मानांनाराचानांविशांपते २१ निर्मुक्ताशीविषाभानांसंपातोऽभूत्सुदारुणः ॥ उभयोःपतितेछत्रेतथैवपतितौध्वजौ २२ उभौरुधिरसिक्तांगावुभौचविजयैषिणौ ॥ स्रवद्भिःशोणितंगात्रैःप्रस्रुताविववारणौ २३ अन्योन्यमभ्यविध्येतांजीवितांतकरैःशरैः ॥ गर्जितोत्क्रुष्टसन्नादाःशंखदुंदुभिनिःस्वनाः २४ उपारमन्महाराजव्याजहारनकश्चन ॥ तूष्णींभूतान्यनीकानियोधायुद्धादुपारमन् २५ ददर्शद्वैरथंताभ्यांजातकौतूहलोजनः ॥ रथिनोहस्तियंतारोहयारोहाःपदातयः २६ अवैक्षंताचलैर्नेत्रैःपरिवार्यनरर्षभौ ॥ हस्त्यनीकान्यतिष्ठंततथाऽनीकानिवाजिनाम् २७ तथैवरथवाहिन्यःप्रतिव्यूह्यव्यवस्थिताः ॥ मुक्ताविद्रुमचित्रैश्चमणिकांचनभूषितैः २८ ध्वजैराभरणैश्चित्रैःकवचैश्चहिरण्मयैः ॥ वैजयंतीपताकाभिःपरिस्तोमांगकंबलैः २९ विमलैर्निशितैःशस्त्रैर्हयानांचप्रकीर्णकैः ॥ जातरूपमयीभिश्चराजतीभिश्चमूर्धसु ३० गजानांकुंभमालाभिर्दंतवेष्टैश्चभारत ॥ सबलाकाःसखद्योताःसैरावतशतह्रदाः ३१ अदृश्यंतोष्णपर्यायेमेघानामिववागुराः ॥ अपश्यन्नस्मदीयाश्चतेचयौधिष्ठिराःस्थिताः ३२ तद्युद्धंयुयुधानस्यद्रोणस्यचमहात्मनः ॥ विमानाग्रगतादेवाब्रह्मसोमपुरोगमाः ३३ सिद्धचारणसंघाश्चविद्याधरमहोरगाः ॥ गतप्रत्यागताक्षेपैश्चित्रैरस्त्रविघातिभिः ३४ विविधैर्विस्मयंजग्मुस्तयोःपुरुषसिंहयोः ॥ हस्तलाघवमस्त्रेषुदर्शयंतौमहाबलौ ३५ अन्योन्यमभिविध्येतांशरैस्तौद्रोणसात्यकी ॥ ततोद्रोणस्यदाशार्हःशरांश्चिच्छेदसंयुगे ३६ पत्रिभिःसुदृढैराशुधनुश्चैवमहाद्युतेः ॥ निमेषांतरमात्रेणभारद्वाजोऽपरंधनुः ३७

ताकाभिः परिस्तोमैर्वर्णकंबलैःअंगकंबलैः सूक्ष्मकंबलैः २९ । ३० ऐरावतमिंद्रधनुः 'ऐरावतोऽभ्रमातंगैः' इत्युपक्रम्य 'नपुंसकंमहेंद्रस्यऋजुदीर्घशरासने' इतिमेदिनी ३१ उष्णस्यपर्यायेअपगमेवागुराःजालानि समूहाइतियावत् ३२ । ३३ प्रत्यागतंनिवर्तनं आक्षेपःप्रहरणम् ३४ । ३५ । ३६ । ३७

३८ । ३९ । ४० । ४१ । ४२ । ४३ आलक्षयामासुर्लक्षितमंतः ४४ विदुर्नैत्यनुषज्यते ४५ । ४६ । ४७ योगेनयुक्त्या ४८ । ४९ । ५० । ५१ । ५२ नयावदभ्यपद्येतांयावदेवनपराभूते व्याव

सज्यंचकारतदापिचिच्छेदास्यचसात्यकिः ॥ ततस्त्वरन्पुनर्द्रोणोधनुर्हस्तोव्यतिष्ठत ३८ सज्यंसज्यंधनुश्चास्यचिच्छेदनिशितैःशरैः ॥ एवमेकशतंछिन्नंध नुषांदृढधन्विना ॥ ३९ नचांतरंतयोर्दृष्टंसंधानेछेदनेपिच ॥ ततोऽस्यसंयुगेद्रोणोदृष्ट्वाकर्मातिमानुषम् ४० युयुधानस्यराजेंद्रमनसैतदचिंतयत् ॥ एतद स्त्रबलंरामेकार्तवीर्येधनंजये ४१ भीष्मेचपुरुषव्याघ्रेयदिदंसात्वतांवरे ॥ तंचास्यमनसाद्रोणःपूजयामासविक्रमम् ४२ लाघवंवासवस्येवसंप्रेक्ष्यद्विजसत्तमः ॥ तुतोषास्त्रविदांश्रेष्ठस्तथादेवाःसवासवाः ४३ नतामालक्षयामासुर्लघुतांशीघ्रचारिणः ॥ देवाश्चयुयुधानस्यगंधर्वाश्चविशांपते ४४ सिद्धचारणसंघाश्चविदुर्द्रो णस्यकर्मतत् ॥ ततोन्यद्धनुरादायद्रोणःक्षत्रियमर्दनः ४५ अस्त्रैरस्त्रविदांश्रेष्ठोयोधयामासभारत ॥ तस्यास्त्राण्यस्त्रमायाभिःप्रतिहत्यससात्यकिः ४६ जघान निशितैर्बाणैस्तदद्भुतमिवाभवत् ॥ तस्यातिमानुषंकर्मदृष्ट्वाऽन्यैरसमंरणे ४७ युक्तंयोगेनयोगज्ञास्तावकाःसमपूजयन् ॥ यदस्त्रमस्यतिद्रोणस्तदेवास्यतिसा त्यकिः ४८ तमाचार्योऽथसंभ्रांतोऽयोधयच्छत्रुतापनः ॥ ततःक्रुद्धोमहाराजधनुर्वेदस्यपारगः ४९ वधाययुयुधानस्यदिव्यमस्त्रमुदैरयत् ॥ तदाग्नेयंमहाघो रंरिपुघ्नमुपलक्ष्यसः ५० दिव्यमस्त्रंमहेष्वासोवारुणंसमुदैरयत् ॥ हाहाकारोमहानासीदृष्ट्वादिव्यास्त्रधारिणौ ५१ नविचेरुस्तदाऽऽकाशेभूतान्याकाशगान्य पि ॥ अस्त्रेतेवारुणाग्नेयेताभ्यांबाणसमाहिते ५२ नयावदभ्यपद्येतांव्यावर्त्तदथभास्करः ॥ ततोयुधिष्ठिरोराजाभीमसेनश्चपांडवः ५३ नकुलःसहदेवश्चपर्यर क्षंतसात्यकिं ॥ धृष्टद्युम्नमुखैःसार्धंविराटश्चसकेकयः ५४ मत्स्याःशाल्वेयसेनाश्चद्रोणमाजग्मुरंजसा ॥ दुःशासनंपुरस्कृत्यराजपुत्राःसहस्रशः ५५ द्रोणमभ्युप पद्यंतसपत्नैःपरिवारितम् ॥ ततोयुद्धमभूद्राजंस्तेषांतवचधन्विनाम् ५६ रजसासंवृतेलोकेशरजालसमावृते ॥ सर्वमाविग्नमभवन्नप्राज्ञायतकिंचन ॥ सैन्येन रजसाध्वस्तेनिर्मर्यादमवर्त्तत ५७ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिद्रोणसात्यकियुद्धेअष्टनवतितमोऽध्यायः ॥ ९८ ॥ ॥ ॥ छ ॥ ॥ संजयउवाच ॥ विवर्तमानेत्वादित्येतत्रास्तशिखरंप्रति ॥ रजसाकीर्यमाणेचमंदीभूतेदिवाकरे १ तिष्ठतांयुद्धमानानांपुनरावर्त्ततामपि ॥ भज्यतांजयतां चैवजगामतदहःशनैः २ तथातेषुविषक्तेषुसैन्येषुजयगृद्धिषु ॥ अर्जुनोवासुदेवश्चसैंधवायैवजग्मतुः ३ रथमार्गप्रमाणंतुकौंतेयोनिशितैःशरैः ॥ चकारतत्रपं थानंययौयेनजनार्दनः ४ यत्रयत्ररथोयातिपांडवस्यमहात्मनः ॥ तत्रतत्रैवदीर्यंतेसेनास्तवविशांपते ५ रथशिक्षांतुदाशार्होदर्शयामासवीर्यवान् ॥ उत्तमाधम मध्यानिमंडलानिविदर्शयन् ६ तेतुनामांकिताःपीताःकालज्वलनसन्निभाः ॥ स्नायुनद्धाःसुपर्वाणःपृथवोदीर्घगामिनः ७

२३

तंत्रमध्याहतःपरावृत्तोऽभूत् ५३ । ५४ । ५५ । ५६ । ५७ ॥ इतिद्रोणपर्वणिटीकायामष्टनवतितमोऽध्यायः ॥ ९८ ॥ विवर्तमानेइति १ । २ । ३ । ४ । ५ । ६ स्नायुनद्धाःसूक्ष्मचर्माग्रग्रथिताः ७

८ क्रोशंक्रोशमुद्दिश्य ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ सूतौसारथी पार्ष्णीपृष्ठरक्षौ २४ । २५ । २६ । २७ । २८ अद्रिचयी



वेणवाश्चायसाश्चोग्राग्रसंतोविविधानरान् ॥ रुधिरंपतगैःसार्धंप्राणिनांपपुरास्त्रे ८ रथस्थितोऽग्रतःक्रोशंयानस्यत्यर्जुनःशरान् ॥ रथेक्रोशमतिक्रांतेतस्यतेघ्नंति शात्रवान् ९ तार्क्ष्यमारुतरंहोभिर्वाजिभिःसाधुवाजिभिः ॥ तदाऽगच्छद्धृषीकेशःकृत्स्नंविस्मापयन्जगत् १० नतथागच्छतिरथस्तपनस्यविशांपते ॥ नेंद्रस्य नतुरुद्रस्यनापिवैश्रवणस्यच ११ नान्यस्यसमरेराजन्गतपूर्वस्तथारथः ॥ यथाययावर्जुनस्यमनोभिप्रायशीघ्रगः १२ प्रविश्यतुरणेराजन्केशवःपरवीरहा ॥ सेनामध्येहयांस्तूर्णंचोदयामासभारत १३ ततस्तस्यरथौघस्यमध्यंप्राप्यहयोत्तमः ॥ कृच्छ्रेणरथमूहुस्तंक्षुत्पिपासासमन्विताः १४ क्षताश्चबहुभिःशस्त्रैर्युद्ध शौंडैरनेकशः ॥ मंडलानिविचित्राणिविचेरुस्तेमुहुर्मुहुः १५ हतानांवाजिनागानांरथानांचनरैःसह ॥ उपरिष्टादतिक्रांताःशैलाभानांसहस्रशः १६ एतस्मिन्नं तरेवीरावावंत्यौभ्रातरौनृप ॥ सहसेनौसमार्छेतांपांडवंक्लांतवाहनम् १७ तावर्जुनंचतुःषष्ट्यासप्तत्याचजनार्दनम् ॥ शराणांचशतैरश्वानविध्येतांमुदान्वितौ १८ तावर्जुनोमहाराजनवभिर्नतपर्वभिः ॥ आजघानरणेक्रुद्धोमर्मज्ञोमर्मभेदिभिः १९ ततस्तौतुशरौघेणबीभत्सुंसहकेशवम् ॥ आच्छादयेतांसंरब्धौसिंहनादंच चक्रतुः २० तयोस्तुधनुषीचित्रेभल्लाभ्यांश्वेतवाहनः ॥ चिच्छेदसमरेतूर्णंध्वजौचकनकोज्ज्वलौ २१ अथान्येधनुषीराजन्प्रगृह्यसमरेतदा ॥ पांडवंभृशसंक्रु द्धावर्दयामासतुःशरैः २२ तयोस्तुभृशसंक्रुद्धःशराभ्यांपांडुनंदनः ॥ धनुषीचिच्छिदेतूर्णंभूयएवधनंजयः २३ तथान्यैर्विशिखैस्तूर्णंरुक्मपुंखैःशिलाशितैः ॥ जघानाश्वांस्तथासूतौपार्ष्णीचसपदानुगौ २४ ज्येष्ठस्यचशिरःकायात्क्षुरप्रेणन्यकृंतत ॥ सपपातहतःपृथ्व्यांवातरुग्णइवद्रुमः २५ विंदंतुनिहतंदृष्ट्वाह्यनु विंदःप्रतापवान् ॥ हताश्वंरथमुत्सृज्यगदांगृह्यमहाबलः २६ अभ्यवर्ततसंग्रामेभ्रातुर्वधमनुस्मरन् ॥ गदयारथिनांश्रेष्ठोनृत्यन्निवमहारथः २७ अनुविंदस्तुगद याललाटेमधुसूदनम् ॥ स्पृष्ट्वानाकंपयत्क्रुद्धोमैनाकमिवपर्वतम् २८ तस्यार्जुनःशरैःषड्भिर्ग्रीवांपादौभुजौशिरः ॥ निचकर्तससंछिन्नःपपाताद्रिचयोयथा २९ ततस्तौनिहतौदृष्ट्वातयोराजन्पदानुगाः ॥ अभ्यद्रवंतसंक्रुद्धाःकिरंतःशतशःशरान् ३० तानर्जुनःशरैस्तूर्णंनिहत्यभरतर्षभ ॥ व्यरोचतयथावह्निर्दा वंदग्ध्वाहिमात्यये ३१ तयोःसेनामतिक्राम्यकृच्छ्रादिवधनंजयः ॥ विबभौजलदंहित्वादिवाकरइवोदितः ३२ तंदृष्ट्वाकुरवस्त्रस्ताःप्रहृष्टाश्चाभवन्पुनः ॥ अ भ्यवर्ततपार्थंचसमंताद्भरतर्षभ ३३ श्रांतंचैनंसमालक्ष्यज्ञात्वादूरेचसैंधवम् ॥ सिंहनादेनमहतासर्वतःपर्यवारयन् ३४ तांस्तुदृष्ट्वासुसंरब्धानुत्स्मयन्पुरुष र्षभः ॥ शनकैरिवदाशार्हमर्जुनोवाक्यमब्रवीत् ३५ शरार्दिताश्चग्लानाश्चहयादूरेचसैंधवः ॥ किमिहानंतरंकार्यंज्यायिष्ठंतवरोचते ३६ ब्रूहिकृष्णयथातत्त्वं त्वंहिप्राज्ञतमःसदा ॥ भवन्नेत्रारणेशत्रून्विजेष्यंतीहपांडवाः ३७

गिरिशृंगं २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७

३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ प्रगाढानांतिघनगाढानाम् ४८ । ४९ । ५० शराएवोर्मयोवेगायस्य । 'ऊर्मिःस्त्रीपुंसयोर्वीच्यांप्रकाशेवेगभंगयोः'इतिमेदिनी ५१

ममत्वनंतरंकृत्यंयद्वैतत्त्वंनिबोधमे ॥ हयान्विमुच्यहिसुखंविशल्यान्कुरुमाधव ३८ एवमुक्तस्तुपार्थेनकेशवःप्रत्युवाचतम् ॥ ममाप्येतन्मतंपार्थयदिदंतेप्रभाषितम् ३९ ॥ अर्जुनउवाच ॥ अहमावारयिष्यामिसर्वसैन्यानिकेशव ॥ त्वमप्यत्रयथान्यायंकुरुकार्यमनंतरम् ४० ॥ संजयउवाच ॥ सोऽवतीर्यरथोपस्थादसंभ्रांतोधनंजयः ॥ गांडीवंधनुरादायतस्थौगिरिरिवाचलः ४१ तमभ्यधावन्क्रोशंतःक्षत्रियाजयकांक्षिणः ॥ इदंछिद्रमितिज्ञात्वाधरणीस्थंधनंजयम् ४२ तमेकंरथवंशेनमहतापर्यवारयन् ॥ विकर्षंतश्चचापानिविसृजंतश्चसायकान् ४३ शस्त्राणिचविचित्राणिक्रुद्धास्तत्रव्यदर्शयन् ॥ छादयंतःशरैःपार्थंमेघाइवदिवाकरम् ४४ अभ्यद्रवंतवेगेनक्षत्रियाःक्षत्रियर्षभम् ॥ नरसिंहंरथोदाराःसिंहंमत्ताइवद्विपाः ४५ तत्रपार्थस्यभुजयोर्महद्बलमदृश्यत ॥ यत्क्रुद्धोबहुलाःसेनाःसर्वतःसमवारयत् ४६ अस्त्रैरस्त्राणिसंवार्यद्विषतांसर्वतोविभुः ॥ इषुभिर्बहुभिस्तूर्णंसर्वानेवसमावृणोत् ४७ तत्रांतरिक्षेबाणानांप्रगाढानांविशांपते ॥ संघर्षेणमहार्चिष्मान्पावकःसमजायत ४८ तत्रतत्रमहेष्वासैःश्वसद्भिःशोणितोक्षितैः ॥ हयैर्नागैश्चसंभिन्नैर्नदद्भिश्चारिकर्षणैः ४९ संरब्धैश्चारिभिर्वीरैःप्रार्थयद्भिर्जयंमृधे ॥ एकस्थैर्बहुभिःक्रुद्धैरूष्मेवसमजायत ५० शरोर्मिणंध्वजावर्तंनागनक्रंदुरत्ययम् ॥ पदातिमत्स्यकलिलंशंखदुंदुभिनिःस्वनम् ५१ असंख्येयमपारंचरथोर्मिणमतीवच ॥ उष्णीषकमठंछत्रपताकाफेनमालिनम् ५२ रणसागरमक्षोभ्यंमातंगांगशिलाचितम् ॥ वेलाभूतस्तदापार्थःपत्रिभिःसमवारयत् ॥ ५३ ॥ धृतराष्ट्रउवाच ॥ अर्जुनेधरणींप्राप्तेहयहस्तेचकेशवे ॥ एतदंतरमासाद्यकथंपार्थोनघातितः ५४ ॥ संजयउवाच ॥ सद्यःपार्थिवपार्थेननिरुद्धाःसर्वपार्थिवाः ॥ रथस्थाधरणीस्थेनवाक्यमच्छांदसंयथा ५५ सपार्थःपार्थिवान्सर्वान्भूमिस्थोऽपिरथस्थितान् ॥ एकोनिवारयामासलोभःसर्वगुणानिव ५६ ततोजनार्दनःसंख्येप्रियंपुरुषसत्तमम् ॥ असंभ्रांतोमहाबाहुरर्जुनंवाक्यमब्रवीत् ५७ उदपानमिहाश्वानांनालमस्तिरणेऽर्जुन ॥ परीप्संतेजलंचेमेपेयंनत्ववगाहनं ५८ इदमस्तीत्यसंभ्रांतोब्रुवन्नस्त्रेणमेदिनीम् ॥ अभिहत्यार्जुनश्चक्रेवाजिपानंसरःशुभम् ५९ हंसकारंडवाकीर्णंचक्रवाकोपशोभितम् ॥ सुविस्तीर्णंप्रसन्नांभःप्रफुल्लवरपंकजम् ६० कूर्ममत्स्यगणाकीर्णमगाधमृषिसेवितम् ॥ आगच्छन्नारदमुनिर्दर्शनार्थंकृतंक्षणात् ६१ शरवंशंशरस्थूणंशराच्छादनमद्भुतम् ॥ शरवेश्माकरोत्पार्थस्त्वष्टेवाद्भुतकर्मकृत् ६२ ततःप्रहस्यगोविंदःसाधुसाध्वित्यथाब्रवीत् ॥ शरवेश्मनिपार्थेनकृतेतस्मिन्महात्मना ६३ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिविंदानुविंदवधेअर्जुनसरोनिर्माणेचएकोनशततमोऽध्यायः ॥ ९९ ॥ ॥ ७ ॥

रथाएवोर्मयोभंगायत्र ५२ वेलाभूतोमर्यादारूपः ५३ । ५४ । ५५ । ५६ । ५७ अलंपर्याप्तं ५८ अभिहत्यखात्वावाजिपानंअश्वपानीयं ५९ हंसकारंडवाकीर्णमित्यादियोग्यतयावर्णनं ६० ६१ वंशःशालाधारकाष्ठं स्थूणामध्यस्तंभः ६२ । ६३ ॥ इतिद्रोणपर्वणिटीकायामेकोनशततमोऽध्यायः ॥ ९९ ॥ ॥ ७ ॥

सलिलेइति १ । २ । ३ । ४ पुरुषानतिपुरुषेभ्योऽतिशयः असंभ्रमवदुपसर्गात्पूर्वमाषोंऽट् ५ । ६ । ७ । ८ । ९ । १० विंदधतुर्दर्शितवंतौ ११ । १२ उपावर्तयत्परिलोडितवान् १३ श्रमंमनः

संजयउवाच ॥ सलिलेजनितेतस्मिन्कौंतेयेनमहात्मना ॥ निस्तारितेद्विषत्सैन्येकृतेचशरवेश्मनि १ वासुदेवोरथात्तूर्णमवतीर्यमहाद्युतिः ॥ मोचयामासतुरगान्वितुन्नान्कंकपत्रिभिः २ अदृष्टपूर्वंतदृष्ट्वासाधुवादोमहानभूत ॥ सिद्धचारणसंघानांसैनिकानांचसर्वशः ३ पदातिनंतुकौंतेयंयुध्यमानंमहारथाः ॥ नाशक्नुवन्वारयितुंतदद्भुतमिवाभवत् ४ आपतत्सुरथौघेषुप्रभूतगजवाजिषु ॥ नासंभ्रमत्तदापार्थस्तदस्यपुरुषानति ५ व्यसृजंतशरौघांस्तेपांडवंप्रतिपार्थिवाः ॥ नचाव्यथतधर्मात्मावासविःपरवीरहा ६ शतानिशरजालानिगदाप्रासांश्चवीर्यवान् ॥ आगतानग्रसत्पार्थःसरितःसागरोयथा ७ अस्त्रवेगेनमहतापार्थोबाहुबलेनच ॥ सर्वेषांपार्थिवेंद्राणामग्रसत्ताञ्शरोत्तमान् ८ तत्तुपार्थस्यविक्रांतंवासुदेवस्यचोभयोः ॥ अपूजयन्महाराजकौरवामहदद्भुतम् ९ किमद्भुततमंलोकेभवितास्प्यथवाह्यभूत् ॥ यदश्वान्पार्थगोविंदौमोचयामासतूरणे १० भयंविपुलमस्मासुतावधत्तांनरोत्तमौ ॥ तेजोविदधतुश्चोग्रंविस्रब्धौरणमूर्धनि ११ अथस्मयन्हृषीकेशःस्त्रीमध्यइवभारत ॥ अर्जुनेनकृतेसंख्येशरगर्भगृहेतथा १२ उपावर्तयदव्यग्रस्तानश्वान्पुष्करेक्षणः ॥ मिषतांसर्वसैन्यानांत्वदीयानांविशांपते ॥ १३ तेषांश्रमंचग्लानिंचवमथुंवेपथुंव्रणान् ॥ सर्वंव्यपानुदत्कृष्णःकुशलोह्यश्वकर्मणि १४ शल्यानुद्धृत्यपाणिभ्यांपरिमृज्यचतान्हयान् ॥ उपावर्त्ययथान्यायंपाययामासवारिसः १५ सताँल्लब्धोदकान्स्नातानजग्धान्नान्विगतक्लमान् ॥ योजयामाससंहृष्टःपुनरेवरथोत्तमे १६ सतंरथवरंशौरिःसर्वशस्त्रभृतांवरः ॥ समास्थायमहातेजाःसार्जुनःप्रययौद्रुतम् १७ रथंरथवरस्याजौयुक्तंलब्धोदकैर्हयैः ॥ दृष्ट्वाकुरुबलश्रेष्ठाःपुनर्विमनसोऽभवन् १८ विनिःश्वसंतस्तेराजन्भग्नदंष्ट्राइवोरगाः ॥ धिगहोधिग्गतःपार्थःकृष्णश्चेत्यब्रुवन्पृथक् १९ तत्सैन्यंसर्वतोदृष्ट्वालोमहर्षणमद्भुतम् ॥ त्वरध्वमितिचाक्रंदन्नैतदस्तीतिचाब्रुवन् २० सर्वक्षत्रस्यमिषतोरथेनैकेनदंशितौ ॥ बालःक्रीडनकेनेवकदर्थीकृत्यनोबलम् २१ क्रोशतांयतमानानामसंसक्तौपरंतपौ ॥ दर्शयित्वाऽऽत्मनोवीर्यंप्रयातौसर्वराजसु २२ तौप्रयातौपुनर्दृष्ट्वातदान्येसैनिकाब्रुवन् ॥ त्वरध्वंकुरवःसर्वेवधेकृष्णकिरीटिनोः २३ रथयुक्तोहिदाशार्होमिषतांसर्वधन्विनाम् ॥ जयद्रथाययात्येषकदर्थीकृत्यनोरणे २४ तत्रकेचिन्मिथोराजन्समभाषंतभूमिपाः ॥ अदृष्टपूर्वंसंग्रामेतदृष्ट्वामहदद्भुतम् २५ सर्वसैन्यानिराजाचधृतराष्ट्रोत्ययंगतः ॥ दुर्योधनापराधेनक्षत्रंकृत्स्नाचमेदिनी २६ विलयंसमनुप्राप्तातच्चराजानबुध्यते ॥ इत्येवंक्षत्रियास्तत्रब्रुवंत्यन्येचभारत २७ सिंधुराजस्ययत्कृत्यंगतस्ययमसादनम् ॥ तत्करोतुवृथादृष्टिर्धार्तराष्ट्रोऽनुपायवित् २८ ततःशीघ्रतरंप्रायात्पांडवःसैंधवंप्रति ॥ विवर्तमानेतिग्मांशौहृष्टैःपीतोदकैर्हयैः २९

कायखेदं ग्लानिंबलापचयं वमथुंफेनोद्गमं १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९

३० । ३१ । ३२ प्राबहन् अत्यक्रामन् ३३ । ३४ धिष्ठितं किंचिदव्रस्थितं ३५ । ३६ । ३७ ॥ इतिद्रोणपर्वणिटीकायांशततमोऽध्यायः ॥ १०० ॥ ॥ छ ॥ ॥ स्त्रंसंतइवेति १ । २

तंप्रयांतंमहाबाहुंसर्वशस्त्रभृतांवरम् ॥ नाशकुन्वारयितुंयोधाःक्रुद्धमिवांतकम् ३० विद्राव्यतुततःसैन्यंपांडवःशत्रुतापनः ॥ यथामृगगणान्सिंहःसैंधवार्थे व्यलोडयत् ३१ गाहमानस्त्वनीकानितूर्णमश्वानचोदयत् ॥ बलाकाभंतुदाशार्हःपांचजन्यंव्यनादयत् ३२ कौंतेयेनाग्रतःसृष्टान्यपतन्पृष्ठतःशराः ॥ तूर्णा त्तूर्णतरंह्यश्वाःप्रावहन्वातरंहसः ३३ ततोनृपतयःक्रुद्धाःपरिवव्रुर्धनंजयम् ॥ क्षत्रियाबहवश्चान्येजयद्रथवधैषिणम् ३४ सैन्येषुविप्रयातेषुधिष्ठितंपुरुषर्षभम् दुर्योधनोऽन्वयात्पार्थंत्वरमाणोमहाहवे ३५ वातोद्धूतपताकंतंरथंजलदनिःस्वनम् ॥ घोरंकपिध्वजंदृष्ट्वाविषण्णारथिनोऽभवन् ३६ दिवाकरेऽथरजसासर्वतःसं वृतेभृशम् ॥ शरार्ताश्चरणेयोधाःशेकुःकृष्णौनवीक्षितुम् ३७ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि सैन्यविस्मयेशततमोऽध्यायः ॥ १०० ॥

॥ संजयउवाच ॥ स्त्रंसंतइवमज्जानस्तावकानांभयान्नृप ॥ तौदृष्ट्वासमतिक्रांतौवासुदेवधनंजयौ १ सर्वेतुप्रतिसंरब्धाह्रीमंतःसत्वचोदिताः ॥ स्थिरीभूतामहा त्मानःप्रत्यगच्छन्धनंजयम् २ येगताःपांडवंयुद्धेरोषामर्षसमन्विताः ॥ तेऽद्यापिननिवर्तंतेसिंधवःसागरादिव ३ असंतस्तुन्यवर्तंतवेदेभ्यइवनास्तिकाः ॥ नरकंभजमानास्तेप्रत्यपद्यंतकिल्बिषम् ४ तावतीत्यरथानीकंविमुक्तौपुरुषर्षभौ ॥ ददृशातेयथाराहोरास्यान्मुक्तौप्रभाकरौ ५ मत्स्याविवमहाजालंवि दार्यविगतक्लमौ ॥ तथाकृष्णावदृश्येतांसेनाजालंविदार्यतत् ६ विमुक्तौशस्त्रसंबाधाद्द्रोणानीकात्सुदुर्भिदात् ॥ अदृश्येतांमहात्मानौकालसूर्याविवोदितौ ७ अस्त्रसंबाधनिर्मुक्तौविमुक्तौशस्त्रसंकटात् ॥ अदृश्येतांमहात्मानौशत्रुसंबाधकारिणौ ८ विमुक्तौज्वलनस्पर्शान्मकरास्याज्झषाविव ॥ अक्षोभयेतांसेनांतौसमु द्रंमकराविव ९ तावकास्तवपुत्राश्चद्रोणानीकस्थयोस्तयोः ॥ नैतौतरिष्यतोद्रोणमितिचक्रुस्तदामतिम् १० तौतुदृष्ट्वाव्यतिक्रांतौद्रोणानीकंमहाद्युती ॥ नाशशंसुर्महाराजसिंधुराजस्यजीवितम् ११ आशाबलवतीराजन्सिंधुराजस्यजीविते ॥ द्रोणहार्दिक्ययोःकृष्णौनमोक्ष्येतेइतिप्रभो १२ तामाशांविफलीकृ त्यसंतीर्णौतौपरंतपौ ॥ द्रोणानीकंमहाराजभोजानीकंचदुस्तरम् १३ अथदृष्ट्वाव्यतिक्रांतौज्वलिताविवपावकौ ॥ निराशाःसिंधुराजस्यजीवितंनशशंसिरे १४ मिथश्चसमभाषेतामभीतौभयवर्धनौ ॥ जयद्रथवधेवाचस्तास्ताःकृष्णधनंजयौ १५ असौमध्येकृतःषड्भिर्धार्तराष्ट्रैर्महारथैः ॥ चक्षुर्विषयसंप्राप्तोनमेमो क्ष्यतिसैंधवः १६ यद्यस्यसमरेगोप्ताशक्रोदेवगणैःसह ॥ तथाऽप्येनंनिहंस्यावइतिकृष्णावभाषताम् १७ इतिकृष्णौमहाबाहूमिथःकथयतांतदा ॥ सिंधुराजम वेक्षंतौत्वत्पुत्राबहुचुक्रुशुः १८ अतीत्यमरुधन्वानंप्रयांतौतृषितौगजौ ॥ पीत्वावारिसमाश्वस्तौतथैवास्तामरिंदमौ १९

अमर्षश्चिरानुबद्धःकोपः ३ । ४ प्रभाकरौचंद्रादित्यौ ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ मरुधन्वानंमरुस्थलम् १९

२० । २१ । २२ । २३ । २४ । २५ द्रोणएवग्राहोयस्मिन् ह्रदइवह्रदस्तस्मात्द्रोणानीकादित्यर्थः २६ द्रोणास्त्राण्येवमेघः २७ सिंधुःषष्ठीयासांताश्च शतद्रुविपाशेरावतीचंद्रभागावितस्ताः

व्याघ्रसिंहगजाकीर्णानतिक्रम्यचपर्वतान् ॥ वणिजाविवदृश्येतांहीनमृत्यूजरातिगौ २० तथाहिमुखवर्णोऽयमनयोरितिमेनिरे ॥ तावकावीक्ष्यमुक्तौतौविक्रोशं तिस्मसर्वशः २१ द्रोणादाशीविषाकाराज्ज्वलितादिवपावकात् ॥ अन्येभ्यःपार्थिवेभ्यश्चभास्वंताविवभास्करौ २२ विमुक्तौसागरप्रख्याद्द्रोणानीकादरिंदमौ ॥ अदृश्येतांमुदायुक्तौसमुत्तीर्यार्णवंयथा २३ अस्त्रौघान्महतोमुक्तौद्रोणहार्दिक्यरक्षितात् ॥ रोचमानावदृश्येतामिंद्राग्न्योःसदृशौरणे २४ उद्भिन्नरुधिरौकृष्णौ भारद्वाजस्यसायकैः ॥ शितैश्चितौव्यरोचेतांकर्णिकारैरिवाचलौ २५ द्रोणग्राहह्रदान्मुक्तौशक्त्याशीविषसंकटात् ॥ अयःशराग्रमकरात्क्षत्रियप्रवरांभसः २६ ज्याघोषतलनिर्ह्रादाद्गदानिस्त्रिंशविद्युतः ॥ द्रोणास्त्रमेघान्निर्मुक्तौसूर्येंद्रूतिमिरादिव २७ बाहुभ्यामिवसंतीर्णौसिंधुषष्ठाःसमुद्रगाः ॥ तेषांतेसरितःपूर्णामहाग्रहसमाकुलाः २८ इतिकृष्णौमहेष्वासौप्रशस्तौलोकविश्रुतौ ॥ सर्वभूतान्यमन्यंतद्रोणास्त्रबलवारणात् २९ जयद्रथंसमीपस्थमवेक्षंतौजिघांसया ॥ रुरुंनेपानेलिप्संतौव्याघ्राविवव्यतिष्ठताम् ३० यथाहिमुखवर्णोऽयमनयोरितिमेनिरे ॥ तवयोधामहाराजहतमेवजयद्रथम् ३१ लोहिताक्षौमहाबाहूसंयुक्तौकृष्णपांडवौ ॥ सिंधुराजमभिप्रेक्ष्यहृष्टौव्यनदतांमुहुः ३२ शौरेरभीषुहस्तस्यपार्थस्यचधनुष्मतः ॥ तयोरासीत्प्रभाराजन्सूर्यपावकयोरिव ३३ हर्षएवतयोरासीद्द्रोणानीकप्रमुक्तयोः ॥ समीपेसैंधवंदृष्ट्वाश्येनयोरामिषंयथा ३४ तौतुसैंधवमालोक्यवर्तमानमिवांतिके ॥ सहसापेततुःक्रुद्धौक्षिप्रंश्येनाविवामिषम् ३५ तौदृष्ट्वातुव्यतिक्रांतौहृषीकेशधनंजयौ ॥ सिंधुराजस्यरक्षार्थंपराक्रांतःसुतस्तव ३६ द्रोणेनाबद्धकवचोराजादुर्योधनस्ततः ॥ ययावेकरथेनाजौहयसंस्कारवित्प्रभो ३७ कृष्णपार्थौमहेष्वासौव्यातिक्रम्याथतेसुतः ॥ अग्रतःपुंडरीकाक्षंप्रतीयायनराधिप ३८ ततःसर्वेषुसैन्येषुवादित्राणिप्रहृष्टवत् ॥ प्रावाद्यंतव्यतिक्रांतेतवपुत्रेधनंजयम् ३९ सिंहनादरवाश्चासन्शंखशब्दविमिश्रिताः ॥ दृष्ट्वादुर्योधनंतत्रकृष्णयोःप्रमुखेस्थितम् ४० येचतेसिंधुराजस्यगोप्तारःपावकोपमाः ॥ तेप्राहृष्यंतसमरेदृष्ट्वापुत्रंतवप्रभो ४१ दृष्ट्वादुर्योधनंकृष्णोव्यतिक्रांतंसहानुगम् ॥ अब्रवीदर्जुनंराजन्प्राप्तकालमिदंवचः ४२ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिदुर्योधनागमेएकाधिकशततमोऽध्यायः ॥१०१॥ वासुदेवउवाच ॥ दुर्योधनमतिक्रांतमेतंपश्यधनंजय ॥ अत्यद्भुतमिमंमन्येनास्त्यस्यसदृशोरथः १ दूरपातीमहेष्वासःकृतास्त्रोयुद्धदुर्मदः ॥ दृढास्त्रश्चित्रयोधीचधार्तराष्ट्रोमहाबलः २ अत्यंतसुखसंवृद्धोमानितश्चमहारथः ॥ कृतीचसततंपार्थनित्यंद्वेष्टिचबांधवान् ३ तेनयुद्धमहंमन्येप्राप्तकालंतवानघ ॥ अत्रवोद्यूतमायत्तंविजयायेतरायवा ४ अत्रक्रोधविषंपार्थविमुंचचिरसंभृतम् ॥ एषमूलमनर्थानांपांडवानांमहारथः ५

एताहिनित्यातदुस्तराः समुद्रगाइतिसरितांविशेषणंमहानदीत्वद्योतनार्थं २८ प्रशस्तौप्रकृष्टतमौ द्रोणास्त्रबलवारणविषयादतिशयनात् २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ अग्रतःप्रमुखे ३८ । ३९ । ४० । ४१ । ४२ ॥ इतिद्रोणपर्वणिटीकायामेकाधिकशततमोऽध्यायः ॥ १०१ ॥ ॥ ७ ॥ ॥ दुर्योधनमिति नास्तीत्यर्जुनोत्तेजनम् १ । २ । ३ । ४ । ५

आक्षेपंशरगोचरं ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ कार्यस्त्वजयद्रथवत्स्वलस्य १५ । १६ । १७ । १८ कृत्यरूपमत्यर्थंतकरणीयं १९ । २० पदंप्रतिपदं २१ । २२ । २३ । २४

सोऽयंप्राप्तस्तवाक्षेपंपश्यसाफल्यमात्मनः ॥ कथंहिराजाराज्यार्थीत्वयागच्छेतसंयुगम् ६ दिष्ट्यात्विदानींसंप्राप्तएषतेबाणगोचरम् ॥ यथाऽयंजीवितंजह्या
त्तथाकुरुधनंजय ७ ऐश्वर्यमदसंमूढोनैषदुःखमुपेयिवान् ॥ नचतेसंयुगेवीर्यंजानातिपुरुषर्षभ ८ त्वांहिलोकास्त्रयःपार्थससुरासुरमानुषाः ॥ नोत्सहंतेरणेजेतुं
किमुतैकःसुयोधनः ९ सदिष्ट्यासमनुप्राप्तस्तवपार्थरथांतिकम् ॥ जह्येनंत्वंमहाबाहोयथावृत्रंपुरंदरः १० एषह्यनर्थेसततंपराक्रांतस्तवानघ ॥ निकृत्याधर्म
राजंचद्यूतेवंचितवानयम् ११ बहूनिसुनृशंसानिकृतान्येतेनमानद ॥ युष्मासुपापमतिनाअपापेष्वेवनित्यदा १२ तमनार्यंसदाक्रुद्धंपुरुषंकामरूपिणम् ॥ आ
र्यांयुद्धेमतिंकृत्वाजहिपार्थाविचारयन् १३ निकृत्याराज्यहरणंवनवासंचपांडव ॥ परिक्लेशंचकृष्णायाहृदिकृत्वापराक्रमम् १४ दिष्ट्यैषतवबाणानांगोचरेपरि
वर्त्तते ॥ प्रतिघातायकार्यस्यदिष्ट्याचयततेऽग्रतः १५ दिष्ट्याजानातिसंग्रामेयोद्धव्यंहित्वयासह ॥ दिष्ट्याचसफलाःपार्थसर्वेकामाह्यकामिताः १६ तस्मा
ज्जहिरणेपार्थधार्त्तराष्ट्रंकुलाधमम् ॥ यथेंद्रेणहतःपूर्वंजंभोदेवासुरेमृधे १७ अस्मिन्हतेत्वयासैन्यमनाथंभिद्यतामिदम् ॥ वैरस्यास्यास्त्ववभृथोमूलंछिंधिदुरात्म
नाम् १८ ॥ संजयउवाच ॥ तंतथेत्यब्रवीत्पार्थःकृत्यरूपामिदंमम ॥ सर्वमन्यदनादृत्यगच्छयत्रसुयोधनः १९ येनैतद्दीर्घकालंनोभुक्तंराज्यमकंटकम् ॥ अ
प्यस्ययुधिविक्रम्यच्छिद्यांमूर्धानमाहवे २० अपितस्यह्यनर्हायाःपरिक्लेशस्यमाधव ॥ कृष्णायाःशक्नुयांगंतुंपदंकेशप्रधर्षणे २१ इत्येवंवादिनौकृष्णौहृष्टौश्वेता
न्हयोत्तमान् ॥ प्रेषयामासतुःसंख्येप्रेप्संतौतंनराधिपम् २२ तयोःसमीपंसंप्राप्यपुत्रस्तेभरतर्षभ ॥ नचकारभयंप्राप्तेभयेमहतिमारिष २३ तदस्यक्षत्रिया
स्तत्रसर्वएवाभ्यपूजयन् ॥ यदर्जुनहृषीकेशौप्रत्युद्यातौन्यवारयत् २४ ततःसर्वस्यसैन्यस्यतावकस्यविशांपते ॥ महानादोह्यभूत्तत्रदृष्ट्वाराजानमाहवे २५ त
स्मिन्जनसमुन्नादेप्रवृत्तेभैरवेसति ॥ कदर्थीकृत्यतेपुत्रःप्रत्यमित्रमवारयत् २६ आवारितस्तुकौंतेयस्तवपुत्रेणधन्विना ॥ संरंभमगमद्भूयःसचतस्मिन्परंतपः २७
तौदृष्ट्वाप्रतिसंरब्धौदुर्योधनधनंजयौ ॥ अभ्यवैक्षंतराजानोभीमरूपाःसमंततः २८ दृष्ट्वातुपार्थंसंरब्धंवासुदेवंचमारिष ॥ प्रहसन्नेवपुत्रस्तेयोद्धुकामःसमाह्व
यत् २९ ततःप्रहृष्टोदाशार्हःपांडवश्चधनंजयः ॥ व्यक्रोशेतांमहानादंदध्मतुश्चांबुजोत्तमौ ३० तौहृष्टरूपौसंप्रेक्ष्यकौरवेयास्तुसर्वशः ॥ निराशाःसमपद्यंतपु
त्रस्यतवजीविते ३१ शोकमापुःपरेचैवकुरवःसर्वएवते ॥ अमन्यंतचपुत्रंतेवैश्वानरमुखेहुतम् ३२ तथातुदृष्ट्वायोधास्तेप्रहृष्टौकृष्णपांडवौ ॥ हतोराजाहतो
राजेत्यूचिरेचभयार्दिताः ३३ जनस्यसन्निनादंतुश्रुत्वादुर्योधनोऽब्रवीत् ॥ व्येतुवोभीरहंकृष्णौप्रेषयिष्याम्मिमृत्यवे ३४ इत्युक्त्वासैनिकान्सर्वान्जयापेक्षीनरा
धिपः ॥ पार्थमाभाष्यसंरंभादिदंवचनमब्रवीत् ३५

२५ । २६ । २७ । २८ । २९ ३० । ३१ । ३२ । ३३ । ३४ । ३५

३६ । ३७ स्वामितत्कारोवीरप्रधानोऽयमितियदन्यैःसत्कारणंतेनयुक्तानियोग्यतांगतानि ३८ ॥ इतिद्रोणपर्वणिटीकायांद्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ ॥ ४ ॥ एवमिति १ पत्त्रीदशम

पार्थस्याच्छिक्षितंतेऽस्त्रंदिव्यंपार्थिवमेवच ॥ तद्दर्शयमायिक्षिप्रंयादिजातोऽसिपांडुना ३६ यद्वलंतववीर्यंचकेशवस्यतथैवच ॥ तत्कुरुष्वमायिक्षिप्रंपश्यामस्त वपौरुषम् ३७ अस्मत्परोक्षंकर्माणिकृतानिप्रवदंतिते ॥ स्वामिसत्कारयुक्तानियानितानीहदर्शय ३८ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिदुर्यो धनवचनेद्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ ॥ ४ ॥ ॥ संजयउवाच ॥ एवमुक्त्वार्जुनंराजात्रिभिर्मर्मातिगैःशरैः ॥ अभ्याविध्यन्महावेगैश्चतुर्भिश्चतुरो हयान् १ वासुदेवंचदशभिःप्रत्यविध्यत्स्तनांतरे ॥ प्रतोदंचास्यभल्लेनाच्छित्त्वाभूमावपातयत् २ तंचतुर्दशभिःपार्थश्चित्रपुंखैःशिलाशितैः ॥ अविध्यत्तूर्णमव्य ग्रस्तेचाभ्रश्यंतवर्मणि ३ तेषांनैष्फल्यमालोक्यपुनर्नवचपंचच ॥ प्राहिणोन्निशितान्बाणांस्तेचाभ्रश्यंतवर्मणः ४ अष्टाविंशांस्तुतान्बाणानस्तान्विप्रेक्ष्यनिष्फ लान् ॥ अब्रवीत्परवीरघ्नःकृष्णोऽर्जुनमिदंवचः ५ अदृष्टपूर्वंपश्यामिशिलानामिवसर्पणम् ॥ त्वयासंप्रेषिताःपार्थनार्थंकुर्वंतिपत्रिणः ६ कच्चिद्गांडीवजःप्राण स्तथैवभरतर्षभ ॥ मुष्टिश्चतेयथापूर्वंभुजयोश्चबलंतव ७ नवाकच्चिदयंकालःप्राप्तःस्यादद्यपश्चिमः ॥ तवचैवास्यशत्रोश्चतन्ममाचक्ष्वपृच्छतः ८ विस्मयो मेमहान्पार्थतवदृष्ट्वाशरानिमान् ॥ व्यर्थान्निपतितान्संख्येदुर्योधनरथंप्रति ९ वज्राशनिसमाघोराःपरकायावभेदिनः ॥ शराःकुर्वंतितेनार्थंपार्थकाऽद्यविडं बना १० ॥ अर्जुनउवाच ॥ द्रोणेनैषामतिःकृष्णधार्तराष्ट्रेनिवेशिता ॥ अभेद्याहिममास्त्राणामेषाकवचधारणा ११ अस्मिन्नंतर्हितंकृष्णत्रैलोक्यमपिवर्मणि ॥ एकोद्रोणोहिवेदैतदहंतस्माच्चसत्तमात् १२ नशक्यमेतत्कवचंबाणैर्भेत्तुंकथंचन ॥ अपिवज्रेणगोविंदस्वयंमघवतायुधि १३ जानंस्त्वमपिवैकृष्णमांविमोहयसे कथम् ॥ यद्वृत्तंत्रिषुलोकेषुयच्चकेशववर्तते १४ तथाभविष्यच्चैवतत्सर्वंविदितंतव ॥ नत्विदंवेदवैकश्चिद्यथात्वंमधुसूदन १५ एषदुर्योधनःकृष्णद्रोणेनावि हितामिमाम् ॥ तिष्ठत्यभीतवत्संख्येबिभ्रत्कवचधारणाम् १६ यत्त्वत्रविहितंकार्यंनैषतद्वेत्तिमाधव ॥ स्त्रीवदेषबिभर्त्येतांयुक्तांकवचधारणाम् १७ पश्यबाह्वो श्चमेवीर्यंधनुषश्चजनार्दन ॥ पराजयिष्येकौरव्यंकवचेनापिरक्षितम् १८ इदमंगिरसेप्रादाद्देवेशोवर्मभास्वरम् ॥ तस्माद्बृहस्पतिःप्रापततःप्रापपुरंदरः १९ पुनर्ददौसुरपतिर्मह्यंवर्मससंग्रहम् ॥ दैवंयद्यस्यवर्मैतद्ब्रह्मणावास्वयंकृतम् २० नैनंगोप्स्यतिदुर्बुद्धिमद्यबाणहतंमया ॥ संजयउवाच ॥ एवमुक्त्वाऽर्जुनोबाणान भिमंत्र्यव्यकर्षयत् २१ मानवास्त्रेणमानार्हस्तीक्ष्णावरणभेदिना ॥ विकृष्यमाणांस्तेनैवधनुर्मध्यगतांञ्छरान् २२ तानस्यास्त्रेणविच्छेदद्रौणिःसर्वास्त्रघाति ना ॥ तान्निकृत्तान्निषून्दृष्ट्वादूरतोब्रह्मवादिना २३ न्यवेदयत्केशवायविस्मितःश्वेतवाहनः ॥ नैतदस्त्रंमयाशक्यंद्विःप्रयोक्तुंजनार्दन २४

मार्वं १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ युक्तामन्यप्रयुक्तां १७ । १८ । १९ ससंग्रहंसोपदेशं दैवंदेवैःकृतं २० । २१ । २२ । २३ । २४

२५ । २६ । २७ । २८ निर्देहान्निकृत्तावयवान् २९ । ३० । ३१ नखमांसांतरेइषुभिराविद्धचदितिपूर्वेणान्वयः संधिरार्षः ३२ । ३३ । ३४ । ३५ । ३६ क्रोशमात्रेऽधवतोऽर्थात् ३७ ।३८।३९

अस्त्रंमामेवहन्याद्धिहन्याच्चापिबलंमम ॥ ततोदुर्योधनःकृष्णौनवभिर्नवभिःशरैः २५ अविध्यतरणेराजन्शरैराशीविषोपमैः ॥ भूयएवाभ्यवर्षच्चसमरेकृष्णपांडवौ २६ शरवर्षेणमहताततोहृष्यंततावकाः ॥ चक्रुर्वादित्रनिनदान्सिंहनादरवांस्तथा २७ ततःक्रुद्धोरणेपार्थःसृक्किणीपरिसंलिहन् ॥ नापश्यच्चततोस्यांगंयन्न स्याद्वर्मरक्षितम् २८ ततोऽस्यनिशितैर्बाणैःसुमुक्तैरंतकोपमैः ॥ हयांश्चकारनिर्देहानुभौचपार्ष्णिसारथी २९ धनुरस्याच्छिनत्तूर्णंहस्तावापंचवीर्यवान् ॥ रथंचशकलीकर्तुंसव्यसाचीप्रचक्रमे ३० दुर्योधनंचबाणाभ्यांतीक्ष्णाभ्यांविरथीकृतम् ॥ आविद्धचद्धस्ततलयोरुभयोरर्जुनस्तदा ३१ प्रयत्नज्ञोहिकौंतेयोनख मांसांतरेषुभिः ॥ सवेदनाभिराविग्नःपलायनपरायणः ३२ तंकृच्छ्रामापदंप्राप्तंदृष्ट्वापरमधन्विनः ॥ समापेतुःपरीप्संतोधनंजयशरार्दितम् ३३ तंरथैर्बहुसाह स्रैःकल्पितैःकुंजरैर्हयैः ॥ पदात्योघैश्चसंरब्धैःपरिवव्रुर्धनंजयम् ३४ अथनार्जुनगोविंदौनरथोवाऽप्यदृश्यत ॥ अस्त्रवर्षेणमहताजनौघैश्चापिसंवृतौ ३५ ततो ऽर्जुनोऽस्त्रवीर्येणनिजघ्नतांवरूथिनीम् ॥ तत्रव्यंगीकृताःपेतुःशतशोऽथरथद्विपाः ३६ तेहताहन्यमानाश्चन्यगृह्णंस्तंरथोत्तमम् ॥ सरथस्तंभितस्तस्थौक्रोश मात्रंसमंततः ३७ ततोऽर्जुनंवृष्णिवीरस्त्वरितोवाक्यमब्रवीत् ॥ धनुर्विस्फारयात्यर्थमहंध्मास्यामिचांबुजम् ३८ ततोविस्फार्यबलवद्गांडीवंजघ्निवान्रिपून् ॥ महताशरवर्षेणतलशब्देनचार्जुनः ३९ पांचजन्यंचबलवान्दध्मौतारेणकेशवः ॥ रजसाध्वस्तपक्ष्मांतःप्रस्विन्नवदनोभृशम् ४० तस्यशंखस्यनादेनधनुषो निःस्वनेनच ॥ निःसत्वाश्चससत्वाश्चक्षितौपेतुस्तदाजनाः ४१ तैर्विमुक्तोरथोरेजेवाय्वीरितइवांबुदः ॥ जयद्रथस्यगोप्तारस्ततःक्षुब्धाःसहानुगाः ४२ ते दृष्ट्वासहसापार्थंगोप्तारःसैंधवस्यतु ॥ चक्रुर्नादान्महेष्वासाःकंपयंतोवसुंधराम् ४३ बाणशब्दरवांश्चोग्रान्विमिश्रान्शंखनिःस्वनैः ॥ प्रादुश्चक्रुर्महात्मानःसिंह नादरवानपि ४४ तंश्रुत्वानिनदंघोरंतावकानांसमुत्थितम् ॥ प्रदध्मतुःशंखवरौवासुदेवधनंजयौ ४५ तेनशब्देनमहतापूरितेयंवसुंधरा ॥ सशैलासार्णवद्वीपा सपातालाविशांपते ४६ सशब्दोभरतश्रेष्ठव्याप्यसर्वादिशोदश ॥ प्रतिसस्वानतत्रैवकुरुपांडवयोर्बले ४७ तावकारथिनस्तत्रदृष्ट्वाकृष्णधनंजयौ ॥ संभ्रमंपरमं प्राप्तास्त्वरमाणामहारथाः ४८ अथकृष्णौमहाभागौतावकावीक्ष्यदंशितौ ॥ अभ्यद्रवंतसंक्रुद्धास्तदद्भुतमिवाभवत् ४९ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजय द्रथवधपर्वणिदुर्योधनपराजयेत्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ छ ॥ संजयउवाच ॥ तावकाहिसमीक्ष्यैवंवृष्ण्यंधककुरूत्तमौ ॥ प्रागत्वरन्जिघांसंतस्तथै वाविजयःपरान् १ सुवर्णचित्रैर्वैयाघ्रैःस्वनवद्भिर्महारथैः ॥ दीपयंतोदिशःसर्वाज्वलद्भिरिवपावकैः २

४० । ४१ । ४२ । ४३ । ४४ ।४५ । ४६ । ४७ । ४८ । ४९ ॥ इतिद्रोणपर्वणिटीकायांत्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ तावकाइति । प्रागग्रएवसमीक्ष्येत्यन्वयः १ वैयाघ्रैर्व्याघ्रचर्मचित्रैः २

३ । ४ । ५।६ कौलूतकाः कुलूतदेशजाः पार्वतीयसमानलक्षणाः ७ आजानेयैरिति । 'गुडगंधाः कायेयेसुश्लक्ष्णाः कांतितोजितक्रोधाः ॥ सारयुतजितेंद्रियाः क्षुत्तृडाहितं चापिमोदुःखं ॥ जानंत्याजानेयानिर्दिष्टा वाजिनोधीरैः ॥ वाहास्तुपार्वतीयाबलान्विताः स्निग्धकेशाश्च ॥ वृत्तखुराद्दृढपादामहाजवास्तेऽतिविख्याताः'। नदीजैर्नदीतीरजैः । 'अश्वाः सकर्णिकाराः कंचननदींतीरजाः समुद्दिष्टाः ॥

रुक्मपुंखैश्चदुष्प्रेक्ष्यैःकार्मुकैःपृथिवीपते ॥ कूजद्भिरतुलान्नादान्कोपितैस्तुरगैरिव ३ भूरिश्रवाःशलःकर्णोवृषसेनोजयद्रथः ॥ कृपश्चमद्रराजश्चद्रौणिश्चरथिनांवरः ४ तेपिबंतइवाकाशमश्वैरष्टौमहारथाः ॥ व्यराजयन्दशदिशोवैयाघ्रैर्हेमचंद्रकैः ५ तेदंशिताःसुसंरब्धारथैर्मेघौघनिःस्वनैः ॥ समावृण्वन्दशदिशःपार्थस्यनिशितैःशरैः ६ कौलूतकाहयाश्चित्रावहंतस्तान्महारथान् ॥ व्यशोभंततदाशीघ्रादीपयंतोदिशोदश ७ आजानेयैर्महावेगैर्नानादेशसमुत्थितैः ॥ पार्वतीयैर्नदीजैश्चसैंधवैश्चहयोत्तमैः ८ कुरुयोधवराराजंस्तवपुत्रंपरीप्सवः ॥ धनंजयरथंशीघ्रंसर्वतःसमुपाद्रवन् ९ तेप्रगृह्यमहाशंखान्दध्मुःपुरुषसत्तमाः ॥ पूरयंतोदिवंराजन्पृथिवींचससागराम् १० तथैवदध्मतुःशंखौवासुदेवधनंजयौ ॥ प्रवरौसर्वदेवानांसर्वशंखवरौभुवि ११ देवदत्तंचकौंतेयःपांचजन्यंचकेशवः ॥ शब्दस्तुदेवदत्तस्यधनंजयसमीरितः १२ पृथिवींचांतरिक्षंचादिशश्चैवसमावृणोत् ॥ तथैवपांचजन्योऽपिवासुदेवसमीरितः १३ सर्वशब्दानतिक्रम्यपूरयामासरोदसी ॥ तस्मिंस्तथावर्तमानेदारुणेनादसंकुले १४ भीरूणांत्रासजननेशूराणांहर्षवर्धने ॥ प्रवादितासुभेरीषुझर्झरेष्वानकेषुच १५ मृदंगेष्वपिराजेंद्रवाद्यमानेष्वनेकशः ॥ महारथाःसमाहूतादुर्योधनहितैषिणः १६ अमृष्यमाणास्तंशब्दंक्रुद्धाःपरमधन्विनः ॥ नानादेश्यामहीपालाःस्वसैन्यपरिरक्षिणः १७ अमर्षितामहाशंखान्दध्मुर्वीरामहारथाः ॥ कृतेप्रतिकरिष्यंतःकेशवस्यार्जुनस्यच १८ बभूवतवतत्सैन्यंशंखशब्दसमीरितम् ॥ उद्विग्नरथनागाश्वमस्वस्थमिवचाविभो १९ तत्प्रविद्धमिवाकाशंशूरैःशंखविनादितम् ॥ बभूवभृशमुद्विग्नंनिर्घातैरिवनादितम् २० सशब्दःसुमहान्राजन्दिशःसर्वाव्यनादयत् ॥ त्रासयामासतत्सैन्यंयुगांतइवसंभृतः २१ ततोदुर्योधनोऽष्टौचराजानस्तेमहारथाः ॥ जयद्रथस्यरक्षार्थंपांडवंपर्यवारयन् २२ ततोद्रौणिस्त्रिसप्तत्यावासुदेवमताडयत् ॥ अर्जुनंचत्रिभिर्भल्लैर्ध्वजमश्वांश्चपंचभिः २३ तमर्जुनःपृषत्कानांशतैःषड्भिरताडयत् ॥ अत्यर्थमिवसंक्रुद्धःप्रतिविद्धेजनार्दने २४ कर्णंचदशभिर्विद्ध्वावृषसेनंत्रिभिस्तथा ॥ शल्यस्यसशरंचापंमुष्टौचिच्छेदवीर्यवान् २५ गृहीत्वाधनुरन्यत्तुशल्योविव्याधपांडवम् ॥ भूरिश्रवास्त्रिभिर्बाणैर्हेमपुंखैःशिलाशितैः २६ कर्णोद्वात्रिंशताचैववृषसेनश्चसप्तभिः ॥ जयद्रथस्त्रिसप्तत्याकृपश्चदशभिःशरैः २७ मद्रराजश्चदशभिर्विव्यधुःफाल्गुनंरणे ॥ ततःशराणांषष्ट्याचतुद्रौणिःपार्थमवाकिरत् २८ वासुदेवंचविंशत्यापुनःपार्थंचपंचभिः ॥ प्रहसंस्तुनरव्याघ्रःश्वेताश्वःकृष्णसारथिः २९ प्रत्यविध्यत्सतान्सर्वान्दर्शयन्पाणिलाघवम् ॥ कर्णंद्वादशभिर्विद्ध्वावृषसेनंत्रिभिःशरैः ३०

पूर्वार्धेपूद्ग्राः पश्चार्धेचानताः किंचित्' ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ प्रविद्धमाक्षिप्तं २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३०

३१ । ३२ । ३३ । ३४ । ३५ ॥ इतिद्रोणपर्वणिटीकायांचतुरधिकशततमोऽध्यायः ॥ १०४ ॥ ध्वजानिति १ रूपमाकारः २ । ३ । ४ । ५ । ६ । ७ । ८ । ९।१० ध्वजाग्रंध्वजमुख्यं कांचनं

शल्यस्यसशरंचापंमुष्टिदेशेऽभ्यकृंतत ॥ सौमदत्तिंत्रिभिर्विद्ध्वाशल्यंचदशभिःशरैः ३१ शितैरग्निशिखाकारैर्द्रौणिंविव्याधचाष्टभिः ॥ गौतमंपंचविंशत्यासैंधवं चशतेनह ३२ पुनर्द्रौणिंचसप्तत्याशराणांसोऽभ्यताडयत् ॥ भूरिश्रवास्तुसंक्रुद्धःप्रतोदंचिच्छिदेहरेः ३३ अर्जुनंचत्रिसप्तत्याबाणानामाजघानह ॥ ततःशरश तैस्तीक्ष्णैस्तानरीन्श्वेतवाहनः ३४ प्रत्यषेधद्द्रुतंक्रुद्धोमहावातोघनानिव ३५ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि संकुलयुद्धेचतुरधिकशततमो ऽध्यायः ॥ १०४ ॥ ध्व ॥ धृतराष्ट्रउवाच ॥ ध्वजान्बहुविधाकारान्भ्राजमानानतिश्रिया ॥ पार्थानांमामकानांचतन्ममाचक्ष्वसंजय १ ॥ संजयउवाच ॥ ध्वजान्बहुविधाकारान्शृणुतेषांमहात्मनाम् ॥ रूपतोवर्णतश्चैवनामतश्चनिबोधमे २ तेषांतुरथमुख्यानांरथेषुविविधाध्वजाः ॥ प्रत्यदृश्यंतराजेंद्रज्वलिताइव पावकाः ३ कांचनाःकांचनापीडाःकांचनस्रगलंकृताः ॥ कांचनानीवशृंगाणिकांचनस्यमहागिरेः ४ अनेकवर्णाविविधाध्वजाःपरमशोभनाः ॥ तेध्वजाःसं वृतास्तेषांपताकाभिःसमंततः ५ नानावर्णविरागाभिःशुशुभुःसर्वतोवृताः ॥ पताकाश्चततस्तास्तुश्वसनेनसमीरिताः ६ नृत्यमानाव्यदृश्यंतरंगमध्येविला सिकाः ॥ इंद्रायुधसवर्णाभाःपताकाभरतर्षभ ७ दोधूयमानारथिनांशोभयंतिमहारथान् ॥ सिंहलांगूलमुग्रास्यंध्वजंवानरलक्षणम् ८ धनंजयस्यसंग्रामेप्रत्यदृ श्यतभैरवम् ॥ सवानरवरोराजन्पताकाभिरलंकृतः ९ त्रासयामासतत्सैन्यंध्वजोगांडीवधन्वनः ॥ तथैवसिंहलांगूलंद्रोणपुत्रस्यभारत १० ध्वजाग्रंसमप श्यामबालसूर्यसमप्रभम् ॥ कांचनंपवनोद्धूतंशक्रध्वजसमप्रभम् ११ नंदनंकौरवेंद्राणांद्रौणेर्लक्ष्मसमुच्छ्रितम् ॥ हस्तिकक्ष्यापुनर्हैमीबभूवाधिरथेर्ध्वजः १२ आह वेखंमहाराजददृशेपूरयन्निव ॥ पताकाकांचनीस्रग्वीध्वजेकर्णस्यसंयुगे १३ नृत्यतीवरथोपस्थेश्वसनेनसमीरिता ॥ आचार्यस्यतुपांडूनांब्राह्मणस्यतपस्विनः १४ गोवृषोगौतमस्यासीत्कृपस्यसुपरिष्कृतः ॥ सतेनभ्राजतेराजन्गोवृषेणमहारथः १५ त्रिपुरघ्नरथोयद्वद्गोवृषेणविराजता ॥ मयूरोवृषसेनस्यकांचनो मणिरत्नवान् १६ व्याहरिष्यन्निवातिष्ठत्सेनाग्रमुपशोभयन् ॥ तेनतस्यरथोभातिमयूरेणमहात्मनः १७ यथास्कंदस्यराजेंद्रमयूरेणविराजता ॥ मद्रराजस्य शल्यस्यध्वजाग्रेऽग्निशिखामिव १८ सौवर्णीप्रतिपश्यामसीतामप्रतिमांशुभाम् ॥ सासीताभ्राजतेतस्यरथमास्थायमारिष १९ सर्वबीजाविरूढेवयथासीता श्रियावृता ॥ वराहःसिंधुराजस्यराजतोऽभिविराजते २० ध्वजाग्रेऽलोहितार्काभोहेमजालपरिष्कृतः ॥ शुशुभेकेतुनातेनराजतेनजयद्रथः २१ यथादे वासुरेयुद्धेपुरापूषास्मशोभते ॥ सौमदत्तेःपुनर्यूपोयज्ञशीलस्यधीमतः २२

कांचनमयम् ११ । १२ स्रग्वीस्रग्विणी १३ । १४ । १५ । १६ व्याहरिष्यन्वदिष्यन् १७ । १८ । १९ । २० अलोहितार्काभोऽनुपरक्तस्फटिकवर्णः 'अर्कोर्कपर्णेस्फटिके' इतिमेदिनी २१ । २२

ध्वजःसूर्यइवाभातिसोमश्चात्रप्रदृश्यते ॥ सयूपःकांचनोराजन्सौमदत्तेर्विराजते २३ राजसूयेमखश्रेष्ठेयथायूपःसमुच्छ्रितः ॥ शलस्यतुमहाराजराजतोद्विरदो महान् २४ केतुःकांचनचित्राङ्गैर्मयूरैरुपशोभितः ॥ सकेतुःशोभयामाससैन्यंतेभरतर्षभ २५ यथाश्वेतोमहानागोदेवराजचमूंयथा ॥ नागोमणिमयोराज्ञोध्व जःकनकसंवृतः २६ किंकिणीशतसंह्रादोभ्राजंश्चित्रोरथोत्तमे ॥ व्यभ्राजतभृशंराजन्पुत्रस्तवविशांपते २७ ध्वजेनमहतासंख्येकुरूणामृषभस्तदा ॥ नवैतेत ववाहिन्यामुच्छ्रिताःपरमध्वजाः २८ व्यदीपयंस्तेपृतनांयुगांतादित्यसन्निभाः ॥ दशमस्त्वर्जुनस्यासीदेकएवमहाकपिः २९ अदीप्यतार्जुनोयेनहिमवानिव वन्हिना ॥ ततश्चित्राणिशुभ्राणिसुमहांतिमहारथाः ३० कार्मुकाण्याददुस्तूर्णमर्जुनार्थेपरंतपाः ॥ तथैवधनुरायच्छत्पार्थःशत्रुविनाशनः ३१ गांडीवंदिव्यकर्मा तद्राजन्दुर्मंत्रितेतव ॥ तवापराधाद्राजानोनिहताबहुशोयुधि ३२ नानादिग्भ्यःसमाहूताःसहयाःसरथद्विपाः ॥ तेषामासीद्व्यतिक्षेपोगर्जतामितरेतरम् ३३ दुर्योधनमुखानांचपांडूनामृषभस्यच ॥ तत्राद्भुतंपरंचक्रेकौंतेयःकृष्णसारथिः ३४ यदेकोबहुभिःसार्धंसमागच्छदभीतवत् ॥ अशोभतमहाबाहुर्गांडीवंविक्षि पन्धनुः ३५ जिगीषुस्तान्नरव्याघ्रोजिघांसुश्चजयद्रथम् ॥ तत्रार्जुनोनरव्याघ्रःशरैर्मुक्तैःसहस्रशः ३६ अदृश्यांस्तावकान्योधान्प्रचक्रेशत्रुतापनः ॥ ततस्ते ऽपिनरव्याघ्राःपार्थंसर्वेमहारथाः ३७ अदृश्यंसमरेचक्रुःसायकौघैःसमंततः ॥ संवृतेनरसिंहैस्तुकुरूणामृषभेऽर्जुने ॥ महानासीत्समुद्धूतस्तस्यसैन्यस्यनिः स्वनः ३८ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि ध्वजवर्णनेपंचाधिकशततमोऽध्यायः ॥ १०५ ॥ ७ ॥ ॥ धृतराष्ट्रउवाच ॥ अर्जुनेसैंधवंप्राप्ते भारद्वाजेनसंवृताः ॥ पंचालाःकुरुभिःसार्धंकिमकुर्वतसंजय १ ॥ संजयउवाच ॥ अपराह्णेमहाराजसंग्रामेलोमहर्षणे ॥ पंचालानांकुरूणांचद्रोणद्यूतमवर्तत २ पंचालाहिजिघांसंतोद्रोणंसंहृष्टचेतसः ॥ अभ्यमुंचंतगर्जंतःशरवर्षाणिमारिष ३ ततस्तुतुमुलस्तेषांसंग्रामोऽवर्तताद्भुतः ॥ पंचालानांकुरूणांचघोरोदे वासुरोपमः ४ सर्वेद्रोणरथंप्राप्यपंचालाःपांडवैःसह ॥ तदनीकंबिभित्संतोमहास्त्राणिव्यदर्शयन् ५ द्रोणस्यरथपर्यंतंरथिनोरथमास्थिताः ॥ कंपयंतोऽभ्य वर्तंतवेगमास्थायमध्यमम् ६ तमभ्ययाद्बृहत्क्षत्रःकेकयानांमहारथः ॥ प्रवपन्निशितान्बाणान्महेंद्राशनिसन्निभान् ७ तंतुप्रत्युद्ययौशीघ्रंक्षेमधूर्तिर्महायशाः ॥ विमुंचन्निशितान्बाणाञ्छतशोऽथसहस्रशः ८ धृष्टकेतुश्चचेदीनामृषभोऽतिबलोदितः ॥ त्वरितोऽभ्यद्रवद्द्रोणंमहेंद्रइवशंबरम् ९ तमापतंतंसहसाव्यादि तास्यमिवांतकम् ॥ वीरधन्वामहेष्वासस्त्वरमाणःसमभ्ययात् १० युधिष्ठिरंमहाराजंजिगीषुंसमवस्थितम् ॥ सहानीकंततोद्रोणोन्यवारयतवीर्यवान् ११



॥ इतिद्रोणपर्वणिटीकायांपंचाधिकशततमोऽध्यायः ॥ १०५ ॥ ॥ ७ ॥ ॥ अर्जुनेइति १ । २ । ३ । ४ । ५ कंपयंतोभुवमितिशेषः ६ । ७ । ८ । ९ । १० । ११

नकुलंकुशलंयुद्धेपराक्रांतंपराक्रमी ॥ अभ्यगच्छत्समायांतंविकर्णस्तेसुतःप्रभो १२ सहदेवंतथायांतंदुर्मुखःशत्रुकर्षणः ॥ शरैरनेकसाहस्रैःसमवाकिरदाशुगैः १३
सात्यकिंतुनरव्याघ्रंव्याघ्रदत्तस्त्ववारयत् ॥ शरैःसुनिशितैस्तीक्ष्णैःकंपयन्वैमुहुर्मुहुः १४ द्रौपदेयान्नरव्याघ्रान्मुंचतःसायकोत्तमान् ॥ संरब्धान्रथिनःश्रेष्ठा
न्सौमदत्तिरवारयत् १५ भीमसेनंतदाक्रुद्धंभीमरूपोभयानकः ॥ प्रत्यवारयदायांतमार्ष्यशृंगिर्महारथः १६ तयोःसमभवद्युद्धंनरराक्षसयोर्मृधे ॥ यादृगेवपुरा
वृत्तंरामरावणयोर्नृप १७ ततोयुधिष्ठिरोद्रोणंनवत्यानतपर्वणाम् ॥ आजघ्नेभरतश्रेष्ठःसर्वमर्मसुभारत १८ तंद्रोणःपंचविंशत्यानिजघानस्तनांतरे ॥ रोषि
तोभरतश्रेष्ठकौंतेयेनयशस्विना १९ भूयएवतुविंशत्यासायकानांसमाचिनोत् ॥ साश्वसूतध्वजंद्रोणःपश्यतांसर्वधन्विनाम् २० तान्शरान्द्रोणमुक्तांस्तुशर
वर्षेणपांडवः ॥ अवारयतधर्मात्मादर्शयन्पाणिलाघवम् २१ ततोद्रोणोभृशंक्रुद्धोधर्मराजस्यसंयुगे ॥ चिच्छेदसमरेधन्वीधनुस्तस्यमहात्मनः २२ अथैनं
छिन्नधन्वानंत्वरमाणोमहारथः ॥ शरैरनेकसाहस्रैःपूरयामाससर्वतः २३ अदृश्यंवीक्ष्यराजानंभारद्वाजस्यसायकैः ॥ सर्वभूतान्यमन्यंतहतमेवयुधिष्ठिरम् २४
केचिच्चैनममन्यंतत्तथैवाविमुखीकृतम् ॥ हतोराजेतिराजेंद्रब्राह्मणेनमहात्मना २५ सकृच्छ्रंपरमंप्राप्तोधर्मराजोयुधिष्ठिरः ॥ त्यक्त्वातत्कार्मुकंछिन्नंभारद्वाजेनसं
युगे २६ आददेऽन्यद्धनुर्दिव्यंभास्वरंवेगवत्तरम् ॥ ततस्तान्सायकांस्तत्रद्रोणमुक्तान्सहस्रशः २७ चिच्छेदसमरेवीरस्तदद्भुतमिवाभवत् ॥ छित्त्वातुतान्श
रान्राजन्क्रोधसंरक्तलोचनः २८ शक्तिंजग्राहसमरेगिरीणामपिदारिणीं ॥ स्वर्णदंडांमहाघोरामष्टघंटांभयावहाम् २९ समुत्क्षिप्यचतांहृष्टोननादबलवद्बली ॥
नादेनसर्वभूतानित्रासयन्निवभारत ३० शक्तिंसमुद्यतांदृष्ट्वाधर्मराजेनसंयुगे ॥ स्वस्तिद्रोणायसहसासर्वभूतान्यथाब्रुवन् ३१ साराजभुजनिर्मुक्तानिर्मुक्तोरगस
न्निभा ॥ प्रज्वालयंतीगगनंदिशःसप्रदिशस्तथा ३२ द्रोणांतिकमनुप्राप्तादीप्तास्यापन्नगीयथा ॥ तामापतंतींसहसादृष्ट्वाद्रोणोविशांपते ३३ प्रादुश्चक्रेततो
ब्राह्ममस्त्रमस्त्रविदांवरः ॥ तदस्त्रंभस्मसात्कृत्वातांशक्तिंघोरदर्शनाम् ३४ जगामस्यंदनंतूर्णंपांडवस्ययशस्विनः ॥ ततोयुधिष्ठिरोराजाद्रोणास्त्रंतत्समुद्यतम्
३५ अशामयन्महाप्राज्ञोब्रह्मास्त्रेणैवमारिष ॥ विद्ध्वातंचरणेद्रोणंपंचभिर्नतपर्वभिः ३६ क्षुरप्रेणसुतीक्ष्णेनचिच्छेदास्यमहद्धनुः ॥ तदपास्यधनुश्छिन्नंद्रोणः
क्षत्रियमर्दनः ३७ गदांचिक्षेपसहसाधर्मपुत्रायमारिष ॥ तामापतंतींसहसागदांदृष्ट्वायुधिष्ठिरः ३८ गदामेवाग्रहीत्क्रुद्धश्चिक्षेपचपरंतप ॥ तेगदेसहसामुक्ते
समासाद्यपरस्परम् ३९ संघर्षात्पावकंमुक्त्वासमेयातांमहीतले ॥ ततोद्रोणोभृशंक्रुद्धोधर्मराजस्यमारिष ४० चतुर्भिर्निशितैस्तीक्ष्णैर्हयान्जघ्नेशरोत्तमैः ॥
चिच्छेदैकेनभल्लेनधनुश्चेंद्रध्वजोपमम् ४१

४२ । ४३ । ४४ । ४५ । ४६ । ४७ ॥ इतिद्रोणपर्वणिटीकायांषडधिकशततमोऽध्यायः ॥ १०६ ॥ ॥ बृहत्क्षत्रमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२।१३ । १४



केतुमेकेनचिच्छेदपांडवंचार्दयत्रिभिः ॥ हताश्वात्तुरथात्तूर्णमवप्लुत्ययुधिष्ठिरः ४२ तस्थावूर्ध्वभुजोराजाव्यायुधोभरतर्षभ ॥ विरथंतंसमालोक्यव्यायुधंचावि शेषतः ४३ द्रोणोव्यमोहयच्छत्रून्सर्वसैन्यानिवाविभो ॥ मुंचन्निषुगणांस्तीक्ष्णाँल्लघुहस्तोदृढव्रतः ४४ अभिदुद्रावराजानंसिंहोमृगमिवोल्बणः ॥ तमभिद्रु तमालोक्यद्रोणेनामित्रघातिना ४५ हाहेतिसहसाशब्दःपांडूनांसमजायत ॥ हतोराजाहतोराजाभारद्वाजेनमारिष ४६ इत्यासीत्सुमहान्शब्दःपांडुसैन्यस्यभा रत ॥ ततस्त्वरितमारुह्यसहदेवरथंनृपः ॥ अपायाज्जवनैरश्वैःकुंतीपुत्रोयुधिष्ठिरः ४७ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणियुधिष्ठिरापयानेष डधिकशततमोऽध्यायः ॥ १०६ ॥ ॥ छ ॥ ॥ संजयउवाच ॥ बृहत्क्षत्रमथायांतंकैकेयंदृढविक्रमम् ॥ क्षेमधूर्तिर्महाराजविव्याधोरसिमार्गणैः १ बृह त्क्षत्रस्तुतंराजानवत्यानतपर्वणाम् ॥ आजघ्नेत्वरितोराजन्द्रोणानीकबिभित्सया २ क्षेमधूर्तिस्तुसंक्रुद्धःकैकेयस्यमहात्मनः ॥ धनुश्चिच्छेदभल्लेनपीतेननिशि तेनह ३ अथैनंछिन्नधन्वानंशरेणानतपर्वणा ॥ विव्याधसमरेतूर्णंप्रवरंसर्वधन्विनम् ४ अथान्यद्धनुरादायबृहत्क्षत्रोहसन्निव ॥ व्यश्वसूतरथंचक्रेक्षेमधूर्तिंमहा रथम् ५ ततोऽपरेणभल्लेनपीतेननिशितेनच ॥ जहारनृपतेःकायाच्छिरोज्वालितकुंडलम् ६ तच्छिन्नंसहसातस्यशिरःकुंचितमूर्धजम् ॥ सकिरीटंमहींप्राप्य बभौज्योतिरिवांबरात् ७ तंनिहत्यरणेहृष्टोबृहत्क्षत्रोमहारथः ॥ सहसाऽभ्यपतत्सैन्यंतावकंपार्थकारणात् ८ धृष्टकेतुंतथाऽऽयांतंद्रोणहेतोःपराक्रमी ॥ वीरधन्वा महेष्वासोवारयामासभारत ९ तौपरस्परमासाद्यशरदंष्ट्रौतरस्विनौ ॥ शरैरनेकसाहस्रैरन्योन्यमभिजघ्नतुः १० तावुभौनरशार्दूलौयुयुधातेपरस्परम् ॥ महा वनेतीव्रमदौवारणाविवयूथपौ ११ गिरिगह्वरमासाद्यशार्दूलाविवरोषितौ ॥ युयुधातेमहावीर्यौपरस्परजिघांसया १२ तद्युद्धमासीत्तुमुलंप्रेक्षणीयंविशांपते ॥ सिद्धचारणसंघानांविस्मयाद्भुतदर्शनम् १३ वीरधन्वाततःक्रुद्धोधृष्टकेतोःशरासनम् ॥ द्विधाचिच्छेदभल्लेनप्रहसन्निवभारत १४ तदुत्सृज्यधनुश्छिन्नंचेदिरा जोमहारथः ॥ शक्तिंजग्राहविपुलांहेमदंडामयस्मयीम् १५ तांतुशक्तिंमहावीर्यांदोर्भ्यामायम्यभारत ॥ चिक्षेपसहसायत्तोवीरधन्वरथंप्रति १६ तयातुवीरघाति न्याशक्त्यात्वभिहतोभृशम् ॥ निर्भिन्नहृदयस्तूर्णंनिपपातरथान्महीम् १७ तस्मिन्विनिहतेवीरेत्रैगर्तानांमहारथे ॥ बलंतेऽभज्यतविभोपांडवेयैःसमंततः १८ सहदेवेततःषष्टिंसायकान्दुर्मुखोऽक्षिपत् ॥ ननादचमहानादंतर्जयन्पांडवंरणे १९ माद्रेयस्तुततःक्रुद्धोदुर्मुखंचशितैःशरैः ॥ भ्राताभ्रातरमायांतंविव्याधप्रहस न्निव २० तंरणेरभसंदृष्ट्वासहदेवंमहाबलम् ॥ दुर्मुखोनवभिर्बाणैस्ताडयामासभारत २१ दुर्मुखस्यतुभल्लेनछित्त्वाकेतुंमहाबलः ॥ जघानचतुरोवाहांश्चतु र्भिर्निशितैःशरैः २२ अथापरेणभल्लेनपीतेननिशितेनह ॥ चिच्छेदसारथेःकायाच्छिरोज्वालितकुंडलम् २३ १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३

२४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ ॥ इतिद्रोणपर्वणिटीकायांसप्ताधिकशततमोऽध्यायः ॥ १० ॥ 

क्षुरप्रेणचतीक्ष्णेनकौरव्यस्यमहद्धनुः ॥ सहदेवोरणेछित्वातंचविव्याधपंचभिः २४ हताश्वंतुरथंत्यक्त्वादुर्मुखोविमनास्तदा ॥ आरुरोहरथंराजन्निरमित्रस्य भारत २५ सहदेवस्ततःक्रुद्धोनिरमित्रंमहाहवे ॥ जघानपृतनामध्येभल्लेनपरवीरहा २६ सपपातरथोपस्थान्निरमित्रोजनेश्वरः ॥ त्रिगर्तराजस्यसुतोव्यथ यंस्तववाहिनीम् २७ तंतुहत्वामहाबाहुःसहदेवोव्यरोचत ॥ यथादाशरथीरामःखरंहत्वामहाबलम् २८ हाहाकारोमहानासीत्त्रिगर्तानांजनेश्वर ॥ राजपुत्रंह तंदृष्ट्वानिरमित्रंमहारथम् २९ नकुलस्तेसुतंराजन्विकर्णंपृथुलोचनम् ॥ मुहूर्ताज्जितवान्लोकेतदद्भुतमिवाभवत् ३० सात्यकिंव्याघ्रदत्तस्तुशरैःसन्नतपर्वभिः ॥ चक्रेऽदृश्यंसाश्वसूतंसध्वजंपृतनांतरे ३१ तान्निवार्यशरान्शूरःशैनेयःकृतहस्तवत् ॥ साश्वसूतध्वजंबाणैर्व्याघ्रदत्तमपातयत् ३२ कुमारेनिहतेतस्मिन्मागध स्यसुतेप्रभो ॥ मागधाःसर्वतोयत्तायुयुधानमुपाद्रवन् ३३ विसृजंतःशरांश्चैवतोमरांश्चसहस्रशः ॥ भिंदिपालांस्तथाप्रासान्मुद्गरान्मुसलानपि ३४ अयोधयन् रणेशूराःसात्वतंयुद्धदुर्मदम् ॥ तांस्तुसर्वान्सबलवान्सात्यकिर्युद्धदुर्मदः ३५ नातिकृच्छ्राद्धसन्नेवविजिग्येपुरुषर्षभः ॥ मागधान्द्रवतोदृष्ट्वाहतशेषान्समंततः ३६ बलंतेऽभज्यतविभोयुयुधानशरार्दितम् ॥ नाशयित्वारणेसैन्यंत्वदीयंमाधवोत्तमः ३७ विधुन्वानोधनुःश्रेष्ठंव्यभ्राजतमहायशाः ॥ भज्यमानंबलंराजन्सा त्वतेनमहात्मना ३८ नाभ्यवर्ततयुद्धायत्रासितंदीर्घबाहुना ॥ ततोद्रोणोभृशंक्रुद्धःसहसोद्वृत्यचक्षुषी ॥ सात्यकिंसत्यकर्माणंस्वयमेवाभिदुद्रुवे ३९ ॥ इतिश्री महाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिसंकुलयुद्धेसप्ताधिकशततमोऽध्यायः ॥ १०७ ॥ संजयउवाच ॥ द्रौपदेयान्महेष्वासान्सौमदत्तिर्महायशाः ॥ एकैकंपं चभिर्विद्ध्वापुनर्विव्याधसप्तभिः १ तेपीडिताभृशंतेनरौद्रेणसहसाविभो ॥ प्रमूढानैवविविदुर्मृधेकृत्यंस्मकिंचन २ नाकुलिश्चशतानीकःसौमदत्तिंनरर्षभम् ॥ द्वाभ्यांविद्ध्वाऽनदद्धृष्टःशराभ्यांशत्रुकर्शनः ३ तथेतरेरणेयत्तास्त्रिभिस्त्रिभिरजिह्मगैः ॥ विव्यधुःसमरेतूर्णंसौमदत्तिममर्षणम् ४ सतान्प्रतिमहाराजचिक्षेपपंच सायकान् ॥ एकैकंहृदिचाजघ्नेएकैकेनमहायशाः ५ ततस्तेभ्रातरःपंचशरैर्विद्धामहात्मना ॥ परिवार्यरणेवीरंविव्यधुःसायकैर्भृशम् ६ आर्जुनिस्तुहयांस्तस्य चतुर्भिर्निशितैःशरैः ॥ प्रेषयामाससंक्रुद्धोयमस्यसदनंप्रति ७ भैमसेनिर्धनुश्छित्वासौमदत्तेर्महात्मनः ॥ ननादबलवन्नादंविव्याधचशितैःशरैः ८ यौधिष्ठि रिर्ध्वजंतस्यछित्वाभूमावपातयत् ॥ नाकुलिश्चाथयंतारंरथनीडादपाहरत् ९ साहदेविस्तुतंज्ञात्वाभ्रातृभिर्विमुखीकृतम् ॥ क्षुरप्रेणशिरोराजन्निचकर्तमहात्म नः १० तच्छिरोन्यपतद्भूमौतपनीयविभूषितम् ॥ भ्राजयंतंरणोद्देशंबालसूर्यसमप्रभम् ११

द्रौपदेयानिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११

१२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ बृंहत्बृंहन् १८ । २९ । ३० ऋष्टीःऋष्टयः

सौमदत्तेःशिरोदृष्ट्वानिहतंतन्महात्मनः ॥ वित्रस्तास्तावकाराजन्प्रदुद्रुवुरनेकधा १२ अलंबुषस्तुसमरेभीमसेनंमहाबलम् ॥ योधयामाससंक्रुद्धोलक्ष्मणंरावणिर्यथा १३ संप्रयुद्धौरणेदृष्ट्वातावुभौनरराक्षसौ ॥ विस्मयःसर्वभूतानांप्रहर्षःसमजायत १४ आर्ष्यशृंगिंततोभीमोनवभिर्निशितैःशरैः ॥ विव्याधप्रहसन्राजन्राक्षसेंद्रममर्षणम् १५ तद्रक्षःसमरेविद्धंकृत्वानादंभयावहम् ॥ अभ्यद्रवत्ततोभीमंयेचतस्यपदानुगाः १६ सभीमंपंचभिर्विद्ध्वाशरैःसन्नतपर्वभिः ॥ भैमान्परिजघानाशुरथांस्त्रिंशतमाहवे १७ पुनश्चतुःशतान्हत्वाभीमंविव्याधपत्रिणा ॥ सोऽतिविद्धस्तथाभीमोराक्षसेनमहाबलः १८ निपपातरथोपस्थेमूर्छयाऽभिपरिप्लुतः ॥ प्रतिलभ्यततःसंज्ञांमारुतिःक्रोधमूर्छितः १९ विकृष्यकार्मुकंघोरंभारसाधनमुत्तमम् ॥ अलंबुषंशरैस्तीक्ष्णैरर्दयामाससर्वतः २० सविद्धोबहुभिर्बाणैर्नीलांजनचयोपमः ॥ शुशुभेसर्वतोराजन्प्रफुल्लइवकिंशुकः २१ सवध्यमानःसमरेभीमचापच्युतैःशरैः ॥ स्मरन्भ्रातृवधंचैवपांडवेनमहात्मना २२ घोरंरूपमथोकृत्वाभीमसेनमभाषत ॥ तिष्ठेदानींरणेपार्थपश्यमेऽद्यपराक्रमम् २३ बकोनामसुदुर्बुद्धेराक्षसप्रवरोबली ॥ परोक्षंममतद्वृत्तंयद्भ्रातामेहतस्त्वया २४ एवमुक्त्वाततोभीममंतर्धानंगतस्तदा ॥ महताशरवर्षेणभृशंतंसमवाकिरत् २५ भीमस्तुसमरेराजन्नदृश्येराक्षसेतदा ॥ आकाशंपूरयामासशरैःसन्नतपर्वभिः २६ सवध्यमानोभीमेननिमेषाद्रथमास्थितः ॥ जगामधरणींचैवक्षुद्रःखंसहसाऽगमत् २७ उच्चावचानिरूपाणिचकारसुबहूनिच ॥ अणुर्बृहत्पुनःस्थूलोनादान्मुंचन्निवांबुदः २८ उच्चावचास्तथावाचोव्याजहारसमंततः ॥ निपेतुर्गगनाच्चैवशरधाराःसहस्रशः २९ शक्तयःकणपाःप्रासाःशूलपट्टिशतोमराः ॥ शतघ्न्यःपरिघाश्चैवभिंदिपालाःपरश्वधाः ३० शिलाःखड्गागुडाश्चैवऋष्टीर्वज्राणिचैवह ॥ साराक्षसविसृष्टातुशस्त्रवृष्टिःसुदारुणा ३१ जघानपांडुपुत्रस्यसैनिकान्रणमूर्धनि ॥ तेनपांडवसैन्यानांसूदितायुधिवारणाः ३२ हयाश्चबहवोराजन्पत्तयश्चतथापुनः ॥ रथेभ्योरथिनःपेतुस्तस्यनुन्नाःस्मसायकैः ३३ शोणितोदांरथावर्तांहस्तिग्राहसमाकुलाम् ॥ छत्रहंसांकर्दमिनींबाहुपन्नगसंकुलाम् ३४ नदींप्रावर्तयामासरक्षोगणसमाकुलाम् ॥ वहंतींबहुधाराजंश्चेदिपंचालसृंजयान् ३५ तंतथासमरेराजन्विचरंतमभीतवत् ॥ पांडवाभृशसंविग्नाःप्रापश्यंस्तस्यविक्रमम् ३६ तावकानांतुसैन्यानांप्रहर्षःसमजायत ॥ वादित्रनिनदश्चोग्रःसुमहान्रोमहर्षणः ३७ तंश्रुत्वानिनदंघोरंतवसैन्यस्यपांडवः ॥ नामृष्यतयथानागस्तलशब्दंसमीरितम् ३८ ततःक्रोधाभिताम्राक्षोनिर्दहन्निवपावकः ॥ संदधेत्वाष्ट्रमस्त्रंसस्वयंत्वष्टेवमारुतिः ३९ ततःशरसहस्राणिप्रादुरासन्समंततः ॥ तैःशरैस्तवसैन्यस्यविद्रवःसुमहानभूत् ४० तदस्त्रंप्रेरितंतेनभीमसेनेनसंयुगे ॥ राक्षसस्यमहामायांहत्वाराक्षसमार्दयत् ४१

३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१

सबध्यमानोबहुधाभीमसेनेनराक्षसः ॥ संत्यज्यसमरेभीमंद्रोणानीकमुपाद्रवत् ४२ तस्मिंस्तुनिर्जितेराजन्राक्षसेंद्रेमहात्मना ॥ अनादयन्सिंहनादैःपांडवाः सर्वतोदिशम् ४३ अपूजयन्मारुतिंचसंहृष्टास्तेमहाबलम् ॥ प्रह्लादंसमरेजित्वायथाशक्रंमरुद्गणाः ४४ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि अलंबुषपराजयेअष्टाधिकशततमोऽध्यायः ॥ १०८ ॥ संजयउवाच ॥ अलंबुषंतथायुद्धेविचरंतमभीतवत् ॥ हैडिंबिःप्रययौतूर्णंविव्याधनिशितैःशरैः १ तयोः प्रतिभयंयुद्धमासीद्राक्षससिंहयोः ॥ कुर्वतोर्विविधामायाःशक्रशंबरयोरिव २ अलंबुषोभृशंक्रुद्धोघटोत्कचमताडयत् ॥ तयोर्युद्धंसमभवद्रक्षोग्रामणिमुख्ययोः ३ यादृगेवपुरावृत्तंरामरावणयोःप्रभो ॥ घटोत्कचस्तुविंशत्यानाराचानांस्तनांतरे ४ अलंबुषमथोविद्ध्वासिंहवद्व्यनदन्मुहुः ॥ तथैवालंबुषोराजन्हैडिंबिंयुद्धदुर्मदम् ५ विद्ध्वाविद्ध्वानदद्धृष्टःपूरयन्खंसमंततः ॥ तथातौभृशसंक्रुद्धौराक्षसेंद्रौमहाबलौ ६ निर्विशेषमयुध्येतांमायाभिरितरेतरम् ॥ मायाशतसृजौनित्यंमोहयंतौपरस्परम् ७ मायायुद्धेषुकुशलौमायायुद्धमयुध्यताम् ॥ यांयांघटोत्कचोयुद्धेमायांदर्शयतेनृप ८ तांतामलंबुषोराजन्माययैवनिजघ्निवान् ॥ तंतथायुध्यमानंतुमायायुद्धविशारदम् ९ अलंबुषंराक्षसेंद्रंदृष्ट्वाक्रुध्यंतपांडवाः ॥ तएनंभृशसंविग्नाःसर्वतःप्रवरारथैः १० अभ्यद्रवंतसंक्रुद्धाभीमसेनादयोनृप ॥ तएनंकोष्ठकीकृत्यरथवंशेनमारिष ११ सर्वतोव्यकिरन्बाणैरुल्काभिरिवकुंजरम् ॥ सतेषामस्त्रवेगंतंप्रतिहत्यास्त्रमायया १२ तस्माद्रथव्रजान्मुक्तोवनदाहादिवद्विपः ॥ सविस्फार्यधनुर्घोरमिंद्राशनिसमस्वनम् १३ मारुतिंपंचविंशत्याभैमसेनिंचपंचभिः ॥ युधिष्ठिरंत्रिभिर्विद्ध्वासहदेवंचसप्तभिः १४ नकुलंचत्रिसप्तत्याद्रौपदेयांश्चमारिष ॥ पंचभिःपंचभिर्विद्ध्वाघोरंनादंननादह १५ तंभीमसेनोनवभिःसहदेवस्तुपंचभिः ॥ युधिष्ठिरःशतेनैवराक्षसंप्रत्यविध्यत १६ नकुलस्तुचतुःषष्ट्याद्रौपदेयास्त्रिभिस्त्रिभिः ॥ हैडिंबोराक्षसंविद्ध्वायुद्धेपंचाशताशरैः १७ पुनर्विव्याधसप्तत्याननादचमहाबलः ॥ तस्यनादेनमहताकंपितेयंवसुंधरा १८ सपर्वतवनाराजन्सपादपजलाशया ॥ सोऽतिविद्धोमहेष्वासैःसर्वतस्तैर्महारथैः १९ प्रतिविव्याधतान्सर्वान्पंचभिःपंचभिःशरैः ॥ तंक्रुद्धंराक्षसंयुद्धेप्रतिक्रुद्धस्तुराक्षसः २० हैडिंबोभरतश्रेष्ठशरैर्विव्याधसप्तभिः ॥ सोऽतिविद्धोबलवताराक्षसेंद्रोमहाबलः २१ व्यसृजत्सायकांस्तूर्णंरुक्मपुंखाञ्शिलाशितान् ॥ तेशरानतपर्वाणोविविशूराक्षसंतदा २२ रुषिताःपन्नगायद्वद्गिरिशृंगंमहाबलाः ॥ ततस्तेपांडवाराजन्समंतान्निशितान्शरान् २३ प्रेषयामासुरुद्विग्नाहैडिंबश्चघटोत्कचः ॥ सविध्यमानःसमरेपांडवैर्जितकाशिभिः २४ मर्त्यधर्ममनुप्राप्तःकर्तव्यंनान्वपद्यत ॥ ततःसमरशौंडोवैभैमसेनिर्महाबलः २५

२६ आक्षिपत्गृहीतवान् २७ आविध्यभ्रामयित्वा २८ । २९ विस्फारिता निष्ठुरभूता अस्थिसंघातानि यस्य ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ भुवनं स्वर्लोकम् ३७ ॥ इतिद्रोणपर्वणि

समीक्ष्यतदवस्थंतंवधायास्यमनोदधे ॥ वेगंचक्रेमहांतंचराक्षसेंद्ररथंप्रति २६ दग्धाद्रिकूटशृंगाभंभिन्नांजनचयोपमम् ॥ रथाद्रथमभिद्रुत्यक्रुद्धोहैडिंबिराक्षिपत् २७ उद्ववर्हरथाच्चापिपन्नगंगरुडोयथा ॥ समुत्क्षिप्यचबाहुभ्यामाविध्यचपुनःपुनः २८ निष्पिपेषाक्षितौक्षिप्रंपूर्णकुंभमिवाश्मनि ॥ बललाघवसंपन्नःसंपन्नोविक्रमेणच २९ भैमसेनीरणेक्रुद्धःसर्वसैन्यान्यभीषयत् ॥ सविस्फारितसर्वांगश्चूर्णितास्थिर्विभीषणः ३० घटोत्कचेनवीरेणहतःशालकटंकटः ॥ ततःसुमनसःपार्थाहतेतस्मिन्निशाचरे ३१ चुक्रुशुःसिंहनादांश्चवासांस्यादुधुवुश्चह ॥ तावकाश्चहतंदृष्ट्वाराक्षसेंद्रंमहाबलम् ३२ अलंबुषंतथाशूराविशीर्णमिवपर्वतम् ॥ हाहाकारमकार्षुश्चसैन्यानिभरतर्षभ ३३ जनाश्चतद्ददृशिरेरक्षःकौतूहलान्विताः ॥ यदृच्छयानिपतितंभूमावंगारकंयथा ३४ घटोत्कचस्तुतद्धत्वारक्षोबलवतांवरम् ॥ मुमोचबलवन्नादंबलंहत्वेववासवः ३५ सपूज्यमानःपितृभिःसबांधवैर्घटोत्कचःकर्मणिदुष्करेकृते ॥ रिपुंनिहत्याभिननंदवैतदाह्यलंबुषंपक्वमलंबुषंयथा ३६ ततोनिनादःसुमहान्समुत्थितःसशंखनानाविधबाणघोषवान् ॥ निशम्यतंप्रत्यनदंस्तुपांडवास्ततोध्वनिर्भुवनपथास्पृशद्भृशम् ३७

॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि अलंबुषवधेनवाधिकशततमोऽध्यायः ॥ १०९ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ धृतराष्ट्रउवाच ॥

भारद्वाजंकथंयुद्धेयुयुधानोन्यवारयत् ॥ संजयाचक्ष्वतत्त्वेनपरंकौतूहलंहिमे १ ॥ संजयउवाच ॥ शृणुराजन्महाप्राज्ञसंग्राममंलोमहर्षणम् ॥ द्रोणस्यपांडवैःसार्धंयुयुधानपुरोगमैः २ वध्यमानंबलंदृष्ट्वायुयुधानेनमारिष ॥ अभ्यद्रवत्स्वयंद्रोणःसात्यकिंसत्यविक्रमम् ३ तमापतंतंसहसाभारद्वाजंमहारथम् ॥ सात्यकिःपंचविंशत्याक्षुद्रकाणांसमार्पयत् ४ द्रोणोऽपियुधिविक्रांतोयुयुधानंसमाहितः ॥ अविध्यत्पंचभिस्तूर्णंहेमपुंखैःशरैःशितैः ५ तेवर्मभित्त्वासुदृढंद्विषत्पिशितभोजनाः ॥ अभ्ययुर्धरणींराजन्श्वसंतइवपन्नगाः ६ दीर्घबाहुरभिक्रुद्धस्तोत्रार्दितइवद्विपः ॥ द्रोणंपंचाशताऽविध्यन्नाराचैरग्निसंनिभैः ७ भारद्वाजोरणेविद्धोयुयुधानेनसत्वरम् ॥ सात्यकिंबहुभिर्बाणैर्यतमानमविध्यत ८ ततःक्रुद्धोमहेष्वासोभूयएवमहाबलः ॥ सात्वतंपीडयामासशरेणानतपर्वणा ९ सवध्यमानःसमरेभारद्वाजेनसात्यकिः ॥ नान्वपद्यतकर्तव्यंकिंचिदेवविशांपते १० विषण्णवदनश्चापियुयुधानोऽभवन्नृप ॥ भारद्वाजंरणेदृष्ट्वाविसृजंतंशितान्शरान् ११ तंतुसंप्रेक्ष्यतेपुत्राःसैनिकाश्चविशांपते ॥ प्रहृष्टमनसोभूत्वासिंहवद्व्यनदन्मुहुः १२ तंश्रुत्वानिनदंघोरंपीड्यमानंचमाधवम् ॥ युधिष्ठिरोऽब्रवीद्राजासर्वसैन्यानिभारत १३ एषवृष्णिवरोवीरःसात्यकिःसत्यविक्रमः ॥ ग्रस्यतेयुधिवीरेणभानुमानिवराहुणा १४ अभिद्रवतगच्छध्वंसात्यकिर्यत्रयुध्यते ॥ धृष्टद्युम्नंचपांचाल्यमिदमाहजनाधिपः १५

टीकायांनवाधिकशततमोऽध्यायः ॥ १० ॥ ॥ ७ ॥ ॥ भारद्वाजमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५

१६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ तस्मिन्नवसरे २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४०

अभिद्रवद्रुतंद्रोणंकिंमुतिष्ठसिपार्षत ॥ नपश्यसिभयंद्रोणाद्घोरंनःसमुपस्थितम् १६ असौद्रोणोमहेष्वासोयुयुधानेनसंयुगे ॥ क्रीडतेसूत्रबद्धेनपक्षिणाबाल कोयथा १७ तत्रैवसर्वेगच्छंतुभीमसेनपुरोगमाः ॥ त्वयैवसहिताःसर्वेयुयुधानरथंप्रति १८ पृष्ठतोऽनुगामिष्यामित्वामहंसहसैनिकः ॥ सात्यकिंमोक्षयस्वाद्ययम दंष्ट्रांतरंगतम् १९ एवमुक्त्वाततोराजासर्वसैन्येनभारत ॥ अभ्यद्रवद्रणेद्रोणंयुयुधानस्यकारणात् २० तत्रारावोमहानासीद्द्रोणमेकंयुयुत्सताम् ॥ पांडवा नांचभद्रंतेसृंजयानांचसर्वशः २१ तेसमेत्यनरव्याघ्राभारद्वाजंमहारथम् ॥ अभ्यवर्षन्शरैस्तीक्ष्णैःकंकबर्हिणवाजितैः २२ स्मयन्नेवतुतान्वीरान्द्रोणःप्रत्यग्रही त्स्वयम ॥ अतिथीनागतान्यद्वत्सलिलेनासनेनच २३ तर्पितास्तेशरैस्तस्यभारद्वाजस्यधन्विनः ॥ आतिथेयगृहंप्राप्यनृपतेअतिथयोयथा २४ भारद्वाजं चतेसर्वेनशेकुःप्रतिवीक्षितुम् ॥ मध्यंदिनमनुप्राप्तंसहस्रांशुमिवप्रभो २५ तांस्तुसर्वान्महेष्वासान्द्रोणःशस्त्रभृतांवरः ॥ अतापयच्छरव्रातैर्गभस्तिभिरिवांशु मान् २६ वध्यमानामहाराजपांडवाःसृंजयास्तथा ॥ त्रातारंनाध्यगच्छंतपंकमग्नाइवद्विपाः २७ द्रोणस्यचव्यदृश्यंतविसर्पंतोमहाशराः ॥ गभस्तयइवार्कस्य प्रतपंतःसमंततः २८ तस्मिन्द्रोणेननिहताःपंचालाःपंचविंशतिः ॥ महारथाःसमाख्याताधृष्टद्युम्नस्यसंमताः २९ पांडूनांसर्वसैन्येषुपंचालानांतथैवच ॥ द्रो णंस्मददृशुःशूरंविनिघ्नंतंवरान्वरान् ३० केकयानांशतंहत्वाविद्राव्यचसमंततः ॥ द्रोणस्तस्थौमहाराजव्यादितास्यइवांतकः ३१ पंचालान्सृंजयान्मत्स्यान्के कयांश्चनराधिप ॥ द्रोणोऽजयन्महाबाहुःशतशोऽथसहस्रशः ३२ तेषांसमभवच्छब्दोविद्धानांद्रोणसायकैः ॥ वनौकसामिवारण्येव्याप्तानांधूमकेतुना ३३ त त्रदेवाःसगंधर्वाःपितरश्चाब्रुवन्नृप ॥ एतेद्रवंतिपंचालाःपांडवाश्चससैनिकाः ३४ तंतथासमरेद्रोणंनिघ्नंतंसोमकान्रणे ॥ नचाप्यभिययुःकेचिदपरेनैववि व्यधुः ३५ वर्तमानेतथारौद्रेतस्मिन्वीरवरक्षये ॥ अशृणोत्सहसापार्थःपांचजन्यस्यनिःस्वनम् ३६ पूरितोवासुदेवेनशंखराट्स्वनतेभृशम् ॥ युध्यमानेषुवी रेषुसैंधवस्याभिरक्षिषु ३७ नदत्सुधार्तराष्ट्रेषुविजयस्यरथंप्रति ॥ गांडीवस्यचनिर्घोषेविप्रणष्टेसमंततः ३८ कश्मलाभिहतोराजाचिंतयामासपांडवः ॥ ननूनं स्वस्तिपार्थाययथानदतिशंखराट् ३९ कौरवाश्चयथाहृष्टाविनदंतिमुहुर्मुहुः ॥ एवंसचिंतयित्वातुव्याकुलेनांतरात्मना ४० अजातशत्रुःकौंतेयःसात्वतंप्रत्य भाषत ॥ बाष्पगद्गदयावाचामुह्यमानोमुहुर्मुहुः ॥ कृत्यस्यानंतरापेक्षीशैनेयंशिनिपुंगवम् ४१ ॥ युधिष्ठिरउवाच ॥ यःसधर्मःपुरादृष्टःसद्भिःशैनेयशाश्वतः ॥ सांपरायेसुहृत्कृत्येतस्यकालोऽयमागतः ४२ सर्वेष्वपिचयोधेषुचिंतयन्शिनिपुंगव ॥ त्वत्तःसुहृत्तमंकंचिन्नाभिजानामिसात्यके ४३

कृत्यस्यजयद्रथवधस्यानंतरापेक्षीअविघ्नाकांक्षी ४१ यःसधर्मोमैत्रीलक्षणः सांपरायेआपत्काले ४२ । ४३

४४ । ४५ । ४६ वयस्यस्य शिष्यस्य सहायार्थं सहायप्रयोजनम् ४७ सत्यव्रतो दृढनिश्चयः ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६०

योहिप्रीतमनानित्यंयश्चानित्यमनुव्रतः ॥ सकार्येसांपरायेतुनियोज्यइतिमेमतिः ४४ यथाचकेशवोनित्यंपांडवानांपरायणम् ॥ तथात्वमपिवार्ष्णेयकृष्णतुल्य पराक्रमः ४५ सोऽहंभारंसमाधास्येत्वयितंवोढुमर्हसि ॥ अभिप्रायंचमेनित्यंनवृथाकर्तुमर्हसि ४६ सत्वंभ्रातुर्वयस्यस्यगुरोरपिचसंयुगे ॥ कुरुकृच्छ्रेसहायार्थमर्जु नस्यनरर्षभ ४७ त्वंहिसत्यव्रतःशूरोमित्राणामभयंकरः ॥ लोकेविख्यायसेवीरकर्मभिःसत्यवागिति ४८ योहिशैनेयमित्रार्थेयुध्यमानस्त्यजेत्तनुम् ॥ पृथिवीं चद्विजातिभ्योयोदद्यात्ससमोभवेत् ४९ श्रुताश्चबहवोऽस्माभीराजानोयेदिवंगताः ॥ दत्त्वेमांपृथिवींकृत्स्नांब्राह्मणेभ्योयथाविधि ५० एवंत्वामपिधर्मात्मन्प्रया चेऽहंकृतांजलिः ॥ पृथिवीदानतुल्यंस्यादधिकंवाफलंविभो ५१ एकएवसदाकृष्णोमित्राणामभयंकरः ॥ रणेसंत्यजतिप्राणान्द्वितीयस्त्वंचसात्यके ५२ वि क्रांतस्यचवीरस्ययुद्धेप्रार्थयतोयशः ॥ शूरएवसहायःस्यान्नेतरःप्राकृतोजनः ५३ ईदृशेतुपरामर्देवर्तमानस्यमाधव ॥ त्वदन्योहिरणेगोप्ताविजयस्यनविद्यते ५४ श्लाघन्नेवहिकर्माणिशतशस्तवपांडवः ॥ममसंजनयन्हर्षंपुनःपुनरकीर्तयत् ५५ लघुहस्तश्चित्रयोधीतथाऽलघुपराक्रमः ॥ प्राज्ञःसर्वास्त्रविच्छूरोमुह्यतेन चसंयुगे ५६महास्कंधोमहोरस्कोमहाबाहुर्महाहनुः ॥ महाबलोमहावीर्यःसमहात्मामहारथः ५७ शिष्योममसखाचैवप्रियोऽस्याहंप्रियश्चमे ॥ युयुधानःसहायो मेप्रमथिष्यतिकौरवान् ५८ अस्मदर्थंचराजेंद्रसंनह्येद्यदिकेशवः ॥ रामोवाऽप्यनिरुद्धोवाप्रद्युम्नोवामहारथः ५९ गदोवासारणोवाऽपिसांबोवासहवृष्णिभिः ॥ सहायार्थंमहाराजसंग्रामोत्तममूर्धनि ६० तथाप्यहंनरव्याघ्रंशैनेयंसत्यविक्रमम् ॥ साहाय्येविनियोक्ष्यामिनास्तिमेऽन्योहितत्समः ६१ इतिद्वैतवनेतातमामुवा चधनंजयः ॥ परोक्षेत्वद्गुणांस्तथ्यान्कथयन्नार्यसंसदि ६२ तस्यत्वमेवंसंकल्पंनवृथाकर्तुमर्हसि ॥ धनंजयस्यवार्ष्णेयममभीमस्यचोभयोः ६३ यच्चापितीर्था निचरन्नगच्छंद्वारकांप्रति ॥ तत्राहमपितेभक्तिमर्जुनंप्रतिदृष्टवान् ६४ नतत्सौहृदमन्येषुमयाशैनेयलक्षितम् ॥ यथात्वमस्मान्भजसेवर्तमानानुपप्लवे ६५ सोऽभिजात्याचभक्त्याचसख्यस्याचार्यकस्यच ॥ सौहृदस्यचवीर्यस्यकुलीनत्वस्यमाधव ६६ सत्यस्यचमहाबाहोअनुकंपार्थमेवच ॥ अनुरूपंमहेष्वासकर्म त्वंकर्तुमर्हसि ६७ सुयोधनोहिसहसागतोद्रोणेनदंशितः ॥ पूर्वमेवानुयातास्तेकौरवाणांमहारथाः ६८ सुमहान्निनदश्चैवश्रूयतेविजयंप्रति ॥ सशैनेय जवेनाशुगंतुमर्हसिमानद ६९ भीमसेनोवयंचैवसंयत्ताःसहसैनिकाः ॥ द्रोणमावारयिष्यामोयदित्वांप्रतियास्यति ७० पश्यशैनेयसैन्यानिद्रवमाणा निसंयुगे ॥ महांतंचरणेशब्दंदीर्यमाणांचभारतीम् ७१

६१ । ६२ । ६३ । ६४ उपप्लवेविमर्दे ६५ सख्यादेरनुरूपमित्यनेनान्वयः ६६ सत्यस्यांगीकारस्यअनुकंपार्थमर्जुनानुपालननिमित्तं ६७ । ६८ । ६९ । ७० । ७१

७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ महार्थंमहांतमर्थं लघुसंयुक्तमविलंबसंपन्नं ८७ । ८८ । ८९ । ९० । ९१ । ९२ । ९३

महामारुतवेगेनसमुद्रमिवपर्वसु ॥ धार्त्तराष्ट्रबलंतातविक्षिप्तंसव्यसाचिना ७२ रथैर्विपरिधावद्भिर्मनुष्यैश्चहयैश्चह ॥ सैन्यंरजःसमुद्भूतमेतत्संपरिवर्त्तते ७३
संवृतःसिंधुसौवीरैर्नखरप्रासयोधिभिः ॥ अत्यंतोपचितैःशूरैःफाल्गुनःपरवीरहा ७४ नैतद्बलमसंवार्यंशक्योजेतुंजयद्रथः ॥ एतेहिसैंधवस्यार्थेसर्वेसंत्यक्तजी
विताः ७५ शरशक्तिध्वजवरंहयनागसमाकुलम् ॥ पश्यैतद्धार्त्तराष्ट्राणामनीकंसुदुरासदम् ७६ शृणुदुंदुभिनिर्घोषंशंखशब्दांश्चपुष्कलान् ॥ सिंहनादरवांश्चैव
रथनेमिस्वनांस्तथा ७७ नागानांशृणुशब्दंचपत्तीनांचसहस्रशः ॥ सादिनांद्रवतांचैवशृणुकंपयतांमहीम् ७८ पुरस्तात्सैंधवानीकंद्रोणानीकंचपृष्ठतः ॥
बहुत्वाद्धिनरव्याघ्रदेवेंद्रमपिपीडयेत् ७९ अपर्यंतेबलेमग्नोजह्यादपिचजीवितम् ॥ तस्मिंश्चनिहतेयुद्धेकथंजीवेतमादृशः ८० सर्वथाऽहमनुप्राप्तःसुकृच्छ्रंत्व
यिजीवति ॥ श्यामोयुवागुडाकेशोदर्शनीयश्चपांडवः ८१ लघ्वस्त्रश्चित्रयोधीचप्रविष्टस्तातभारतीम् ॥ सूर्योदयेमहाबाहुर्दिवसश्चातिवर्तते ८२ तन्नजाना
मिवार्ष्णेययदिजीवतिवानवा ॥ कुरूणांचापितत्सैन्यंसागरप्रतिमंमहत् ८३ एकएवचबीभत्सुःप्रविष्टस्तातभारतीम् ॥ अविषह्यांमहाबाहुःसुरैरपिमहाहवे
८४ नहिमेवर्त्ततेबुद्धिरद्ययुद्धेकथंचन ॥ द्रोणोऽपिरभसोयुद्धेममपीडयतेबलम् ८५ प्रत्यक्षंतेमहाबाहोयथाऽसौचरतिद्विजः ॥ युगपच्चसमेतानांकार्याणांत्वं
विचक्षणः ८६ महार्थंलघुसंयुक्तंकर्तुमर्हसिमानद ॥ तस्यमेसर्वकार्येषुकार्यमेतन्मतंमहत् ८७ अर्जुनस्यपरित्राणंकर्तव्यमितिसंयुगे ॥ नाहंशोचामिदाशार्हं
गोप्तारंजगतःपतिम् ८८ सहिशक्तोरणेतातत्रीन्लोकानपिसंगतान् ॥ विजेतुंपुरुषव्याघ्रःसत्यमेतद्ब्रवीमिते ८९ किंपुनर्धार्त्तराष्ट्रस्यबलमेतत्सुदुर्बलम् ॥
अर्जुनस्त्वेषवार्ष्णेयपीडितोबहुभिर्युधि ९० प्रजह्यात्समरेप्राणांस्तस्माद्विंदामिकश्मलम् ॥ तस्यत्वंपदवींगच्छगच्छेयुस्त्वादृशायथा ९१ तादृशस्येदृशेका
लेमादृशेनाभिनोदितः ॥ रणेवृष्णिप्रवीराणांद्वावेवातिरथौस्मृतौ ९२ प्रद्युम्नश्चमहाबाहुस्त्वंचसात्वतविश्रुतः ॥ अस्त्रेनारायणसमःसंकर्षणसमोबले ९३ वीर
तायांनरव्याघ्रधनंजयसमोह्यसि ॥ भीष्मद्रोणावतिक्रम्यसर्वयुद्धविशारदम् ९४ त्वामेवपुरुषव्याघ्रंलोकेसंतःप्रचक्षते ॥ नाशक्यंविद्यतेलोकेसात्यकेरितिमा
धव ९५ तत्त्वांयदभिवक्ष्यामितत्कुरुष्वमहाबल ॥ संभावनाहिलोकस्यममपार्थस्यचोभयोः ९६ नान्यथातांमहाबाहोसंप्रकर्तुमिहार्हसि ॥ परित्यज्यप्रिया
न्प्राणान्रणेचरविभीतवत् ९७ नहिशैनेयदाशार्हारणेरक्षंतिजीवितम् ॥ अयुद्धमनवस्थानंसंग्रामेचपलायनम् ९८ भीरूणामसतांमार्गोनैषदाशार्हसेवितः ॥
तवार्जुनोगुरुस्तातधर्मात्माशिनिपुंगव ९९ वासुदेवोगुरुश्चापितवपार्थस्यधीमतः ॥ कारणद्वयमेतद्धिजानंस्त्वामहमब्रुवम् १००

वीरतायामुत्साहकारणत्वे ९४ । ९५ संभावनाऽस्तित्वाह्वानंकुलशीलश्रुतादिषु ९६ विभीतवदभीतः ९७ अनवस्थानमस्थैर्यं ९८ । ९९ । १००

१०१ । १०२ । १०३ ॥ इतिद्रोणपर्वणिटीकायांदशाधिकशततमोऽध्यायः ॥ ११० ॥ प्रीतियुक्तमिति १ । २ । ३ संमतमनुरक्तं ४ । ५ । ६ । ७ । ८ । ९ अभिपरीतोऽयंत्रितः १० । ११

माऽवमंस्थावचोमह्यंगुरुस्तवगुरोर्ह्यहम् ॥ वासुदेवमतंचैवममचैवार्जुनस्यच १०१ सत्यमेतन्मयोक्तंतेयाहियत्रधनंजयः ॥ एतद्वचनमाज्ञायममसत्यपराक्रम १०२ प्रविशैतद्बलंतातधार्तराष्ट्रस्यदुर्मतेः ॥ प्रविश्यचयथान्यायंसंगम्यचमहारथैः ॥ यथार्हमात्मनःकर्मरणेसात्वतदर्शय १०३ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणियुधिष्ठिरवाक्येदशाधिकशततमोऽध्यायः ॥ ११० ॥ छ ॥ संजयउवाच ॥ प्रीतियुक्तंचहृद्यंचमधुराक्षरमेवच ॥ कालयुक्तंचाचित्रंचन्याय्यंयच्चापिभाषितुम् १ धर्मराजस्यतद्वाक्यंनिशम्यशिनिपुंगवः ॥ सात्यकिर्भरतश्रेष्ठप्रत्युवाचयुधिष्ठिरम् २ श्रुतंतेगदतोवाक्यंसर्वमेतन्मयाऽच्युत ॥ न्याययुक्तंचाचित्रंचफाल्गुनार्थेयशस्करम् ३ एवंविधेतथाकालेमादृशंप्रेक्ष्यसंमतम् ॥ वक्तुमर्हसिराजेंद्रयथापार्थंतथैवमाम् ४ नमेधनंजयस्यार्थेप्राणारक्ष्याःकथंचन ॥ त्वत्प्रयुक्तःपुनरहंकिंनकुर्यांमहाहवे ५ लोकत्रयंयोधयेयंसदेवासुरमानुषम् ॥ त्वत्प्रयुक्तोनरेंद्रेहकिमुतैतत्सुदुर्बलम् ६ सुयोधनबलंत्वद्ययोधयिष्येसमंततः ॥ विजेष्येचरणेराजन्सत्यमेतद्ब्रवीमिते ७ कुशल्यहंकुशलिनंसमासाद्यधनंजयम् ॥ हतेजयद्रथेराजन्पुनरेष्यामितेंतिकम् ८ अवश्यंतुमयासर्वंविज्ञाप्यस्त्वंनराधिप ॥ वासुदेवस्ययद्वाक्यंफाल्गुनस्यचधीमतः ९ दृढंत्वभिपरीतोहमर्जुनेनपुनःपुनः ॥ मध्येसर्वस्यसैन्यस्यवासुदेवस्यशृण्वतः १० अद्यमाधवराजानमप्रमत्तोऽनुपालय ॥ आर्यांयुद्धेमतिंकृत्वायावद्धन्मिजयद्रथम् ११ त्वयिचाहंमहाबाहोप्रद्युम्नेवामहारथे ॥ नृपंनिक्षिप्यगच्छेयंनिरपेक्षोजयद्रथम् १२ जानीषेहिरणेद्रोणंकुरुषुश्रेष्ठसंमतम् ॥ प्रतिज्ञातंहितेनेदंपश्यमानेनवैप्रभो १३ ग्रहणेधर्मराजस्यभारद्वाजोऽपिगृध्यति ॥ शक्तश्चापिरणेद्रोणोनिग्रहीतुंयुधिष्ठिरम् १४ एवंत्वयिसमाधायधर्मराजंनरोत्तमम् ॥ अहमद्यगमिष्यामिसैंधवस्यवधायहि १५ जयद्रथंचहत्वाहंद्रुतमेष्यामिमाधव ॥ धर्मराजंचेद्द्रोणोनिगृह्णीयाद्रणेबलात् १६ निगृहीतेनरश्रेष्ठेभारद्वाजेनमाधव ॥ सैंधवस्यवधोनस्यान्ममाप्रीतिस्तथाभवेत् १७ एवंगतेनरश्रेष्ठेपांडवेसत्यवादिनि ॥ अस्माकंगमनंव्यक्तंवनंप्रतिभवेत्पुनः १८ सोऽयंममजयोव्यक्तंव्यर्थएवभविष्यति ॥ यदिद्रोणोरणेक्रुद्धोनिगृह्णीयाद्युधिष्ठिरम् १९ सत्वमद्यमहाबाहोप्रियार्थंममाधव ॥ जयार्थंचयशोर्थंचरक्षराजानमाहवे २० सभवान्मयिनिक्षेपोनिक्षिप्तःसव्यसाचिना ॥ भारद्वाजाद्भयंनित्यंमन्यमानेनवैप्रभो २१ तस्यापिचमहाबाहोनित्यंपश्यामिसंयुगे ॥ नान्यंहिप्रतियोद्धारंरौक्मिणेयादृतेप्रभो २२ मांचापिमन्यतेयुद्धेभारद्वाजस्यधीमतः ॥ सोहंसंभावनांचैतामाचार्यवचनंचतत् २३ पृष्ठतोनोत्सहेकर्तुंत्वांवात्यक्तुंमहीपते ॥ आचार्योलघुहस्तत्वादभेद्यकवचावृतः २४

१२ । १३ । १४ एवमीदृश्यामपिकार्यगतौ समाधायनिक्षिप्य १५ । १६ । १७ एवंगतेग्रहणंप्राप्ते १८ व्यक्तंकदाचित् १९ । २० । २१ तस्यनिक्षेपणस्यफलंसाध्यंहियस्मात् २२ । २३ । २४

२१ । २६ यावद्गच्छामिगमिष्यामि अर्जुनसंभ्रमम् अर्जुनविपदम् २७ । २८ । २९ । ३० । ३१ । ३२ दैवमानुषतां योगमभिज्ञानम् ३३ । ३४ । ३५ । ३६ । ३७ क्वचित्कस्मिंश्चित् अनिक्षि

उपलभ्यरणेक्रीडेद्यथाशकुनिनाशिशुः ॥ यदिकार्ष्णिर्धनुष्पाणिरिहस्यान्मकरध्वजः २५ तस्मैत्वांविसृजेयंवैसत्वांरक्षेद्यथाऽर्जुनः ॥ कुरुत्वमात्मनोगुप्तिंकस्ते गोप्तागतेमयि २६ यःप्रतीयाद्रणेद्रोणंयावद्गच्छामिपांडवम् ॥ माचतेभयमद्यास्तुराजन्नर्जुनसंभ्रमम् २७ नसजातुमहाबाहुर्भारमुद्यम्यसीदति ॥ येचसौ वीरकायोधास्तथसैंधवपौरवाः २८ उदीच्यादाक्षिणात्याश्चयेचान्येऽपिमहारथाः ॥ येचकर्णमुखाराजन्रथोदाराःप्रकीर्तिताः २९ एतेऽर्जुनस्यक्रुद्धस्यक लांनार्हंतिषोडशीम् ॥ उद्युक्तापृथिवीसर्वाससुरासुरमानुषा ३० सराक्षसगणाराजन्सकिन्नरमहोरगा ॥ जंगमाःस्थावराःसर्वेनालंपार्थस्यसंयुगे ३१ एवंज्ञा त्वामहाराजव्येतुतेभीर्धनंजये ॥ यत्रवीरौमहेष्वासौकृष्णौसत्यपराक्रमौ ३२ नतत्रकर्मणोव्यापत्कथंचिदपिविद्यते ॥ दैवंकृतास्त्रतांयोगममर्षमपिचाहवे ३३ कृतज्ञतांदयांचैवभ्रातुस्त्वमनुचिंतय ॥ मयिचाप्यपयातेवैगच्छमानेऽर्जुनंप्रति ३४ द्रोणेचित्रास्त्रतांसंख्येराजंस्त्वमनुचिंतय ॥ आचार्योहिभृशंराजन्निग्रहे तवगृध्यति ३५ प्रतिज्ञामात्मनोरक्षन्सत्यांकर्तुंचभारत ॥ कुरुष्वाद्यात्मनोगुप्तिंकस्तेगोप्तागतेमयि ३६ यस्याहंप्रत्ययात्पार्थगच्छेयंफाल्गुनंप्रति ॥ नह्य हंत्वांमहाराजअनिक्षिप्यमहाहवे ३७ क्वचिद्यास्यामिकौरव्यसत्यमेतद्ब्रवीमिते ॥ एतद्विचार्यबहुशोबुद्ध्याबुद्धिमतांवर ३८ दृष्ट्वाश्रेयःपरंबुद्ध्याततोराजन्प्र शाधिमाम् ३९ ॥ युधिष्ठिरउवाच ॥ एवमेतन्महाबाहोयथावदसिमाधव ॥ नतुमेशुद्ध्यतेभावःश्वेताश्वंप्रतिमारिष ४० करिष्येपरमंयत्नमात्मनोरक्षणेह्य हम् ॥ गच्छत्वंसमनुज्ञातोयत्रयातोधनंजयः ४१ आत्मसंरक्षणंसंख्येगमनंचार्जुनंप्रति ॥ विचार्यैतत्स्वयंबुद्ध्यागमनंतत्ररोचये ४२ सत्वमातिष्ठयानायय त्रयातोधनंजयः ॥ ममापिरक्षणंभीमःकरिष्यतिमहाबलः ४३ पार्षतश्चससोदर्यःपार्थिवाश्चमहाबलाः ॥ द्रौपदेयाश्चमांतातरक्षिष्यंतिनसंशयः ४४ केक याभ्रातरःपंचराक्षसश्चघटोत्कचः ॥ विराटोद्रुपदश्चैवशिखंडीचमहारथः ४५ धृष्टकेतुश्चबलवान्कुंतिभोजश्चमातुलः ॥ नकुलःसहदेवश्चपंचालाःसृंजयास्तथा ४६ एतेसमाहितास्तातरक्षिष्यंतिनसंशयः ॥ नद्रोणःसहसैन्येनकृतवर्माचसंयुगे ४७ समासादयितुंशक्तोनचमांधर्षयिष्यति ॥ धृष्टद्युम्नश्चसमरेद्रोणंक्रुद्धं परंतपः ४८ वारयिष्यतिविक्रम्यवेलेवमकरालयम् ॥ यत्रस्थास्यतिसंग्रामेपार्षतःपरवीरहा ४९ द्रोणोनसैन्यंबलवत्क्रामेतत्रकथंचन ॥ एषद्रोणविनाशाय समुत्पन्नोहुताशनात् ५० कवचीसशरीखड्गीधन्वीचवरभूषणः ॥ विश्रब्धंगच्छशैनेयमाकार्षीर्मयिसंभ्रमम् ॥ धृष्टद्युम्नोरणेक्रुद्धंद्रोणमावारयिष्यति ५१ ॥

॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि युधिष्ठिरसात्यकिवाक्येएकादशाधिकशततमोऽध्यायः ॥ १११ ॥ ॥ छ ॥

प्येत्यन्वयः ३८ दृष्ट्वानिश्चित्य ३९ । ४० । ४१ । ४२ आतिष्ठप्रक्रमस्व ४३ । ४४ । ४५ मातुलःपुरुजित् ४६ । ४७ । ४८ । ४९ । ५० मयिमामधिकृत्य संभ्रममुद्वेगं ५१ ॥ इतिद्रोणपर्व णिटीकायामेकादशाधिकशततमोऽध्यायः ॥ १११ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

धर्मराजस्येति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ आसैंधववधात्सैंधववधात्प्रागेव १३ । । १४ हलादितोमरांतमर्णो आयुधमंतम् १५ साहस्रंसहस्रप्रतिमम् १६

॥ संजयउवाच ॥ धर्मराजस्यतद्वाक्यंनिशम्यशिनिपुंगवः ॥ सपार्थाद्भयमाशंसन्परित्यागान्महीपतेः १ अपवादंह्यात्मनश्चलोकात्पश्यन्विशेषतः ॥ तेमां भीतमितिब्रूयुरयांतंफाल्गुनंप्रति २ निश्चित्यबहुधैवंससात्यकिर्युद्धदुर्मदः ॥ धर्मराजमिदंवाक्यमब्रवीत्पुरुषर्षभः ३ कृतांचेन्मन्यसेरक्षांस्वस्तितेऽस्तुविशांपते ॥ अनुयास्यामिबीभत्सुंकरिष्येवचनंतव ४ नहिमेपांडवात्कश्चित्त्रिषुलोकेषुविद्यते ॥ योमेप्रियतरोराजन्सत्यमेतद्ब्रवीमिते ५ तस्याहंपदवींयास्येसंदेशात्तवमानद ॥ त्वत्कृतेनचमेकिंचिदकर्तव्यंकथंचन ६ यथाहिमेगुरोर्वाक्यंविशिष्टंद्विपदांवर ॥ तथातवापिवचनंविशिष्टतरमेवमे ७ प्रियेहितववर्तेतेभ्रातरौ कृष्णपांडवौ ॥ तयोःप्रियेस्थितंचैवविद्धिमांराजपुंगव ८ तवाज्ञांशिरसागृह्यपांडवार्थमहंप्रभो ॥ भित्त्वेदंदुर्भिदंसैन्यंप्रयास्येनरपुंगव ९ द्रोणानीकंविशाम्येषक्रुद्धोझषइवार्णवम् ॥ तत्रयास्यामियत्रासौराजन्राजाजयद्रथः १० यत्रसेनांसमाश्रित्यभीतस्तिष्ठतिपांडवात् ॥ गुप्तोरथवरश्रेष्ठैर्द्रौणिकर्णकृपादिभिः ११ इतस्त्रियोजनंमन्येतमध्वानंविशांपते ॥ यत्रतिष्ठतिपार्थोऽसौजयद्रथवधोद्यतः १२ त्रियोजनगतस्यापितस्ययास्याम्यहंपदम् ॥ आसैंधववधाद्राजन्सुदृढेनांतरात्मना १३ अनादिष्टस्तुगुरुणाकोऽनुयुध्येतमानवः ॥ आदिष्टस्तुयथाराजन्कोनयुध्येतमादृशः १४ अभिजानामितंदेशंयत्रयास्याम्यहंप्रभो ॥ हलशक्तिगदाप्रासचर्मखड्गर्ष्टितोमरम् १५ इष्वस्त्रवरसंबाधंक्षोभयिष्येबलार्णवम् ॥ यदेतत्कुंजरानीकंसाहस्रमनुपश्यसि १६ कुलमांजनकंनामयत्रैतेवीर्यशालिनः ॥ आस्थिताबहुभिर्म्लेच्छैर्युद्धशौंडैःप्रहारिभिः १७ नागामेघनिभाराजन्क्षरंतइवतोयदाः ॥ नैतेजातुनिवर्तेरन्प्रेषिताहस्तिसादिभिः १८ अन्यत्रहिवधादेषांनास्तिराजन्पराजयः ॥ अथयान्रथिनोराजन्सहस्रमनुपश्यसि १९ एतेरुक्मरथानामराजपुत्रामहारथाः ॥ रथेष्वस्त्रेषुनिपुणानागेषुचविशांपते २० धनुर्वेदगताःपारंमुष्टियुद्धेचकोविदाः ॥ गदायुद्धविशेषज्ञानियुद्धकुशलास्तथा २१ खड्गप्रहरणेयुक्ताःसंपातेचासिचर्मणोः ॥ शूराश्चकृतविद्याश्चस्पर्धंतेचपरस्परम् २२ नित्यंहिसमरेराजन्विजिगीषंतिमानवान् ॥ कर्णेनविहिताराजन्दुःशासनमनुव्रताः २३ एतांस्तुवासुदेवोऽपिरथोदारान्प्रशंसति ॥ सततंप्रियकामाश्चकर्णस्यैतेवशेस्थिताः २४ तस्यैववचनाद्राजन्निवृत्ताःश्वेतवाहनात् ॥ तेनक्लांतानचश्रांतादृढावरणकार्मुकाः २५ मदर्थेधिष्ठितान्नूनंधार्तराष्ट्रस्यशासनात् ॥ एतान्प्रमथ्यसंग्रामेप्रियार्थंतवकौरव २६ प्रयास्यामिततःपश्चात्पदवींसव्यसाचिनः ॥ यांस्त्वेतानपरान्राजन्नागान्सप्तशतानिमान् २७ प्रेक्षसेवर्मसंछन्नान्किरातैःसमधिष्ठितान् ॥ किरातराजोयान्प्रादाद्द्विरदान्सव्यसाचिनः २८ स्वलंकृतांस्तदाप्रेष्यानिच्छन्जीवितमात्मनः ॥ आसन्नेतेपुराराजंस्तवकर्मकरादृढम् २९

एतेनागाः १७ । १८ । १९ । २० । २१ संपातेविहरणे २२ । २३ । २४ । २५ । २६ । २७ । २८ तदादिग्विजये २९

३० । ३१ । ३२ अंजनस्य अरुणोपवाह्यस्य 'स्निग्धनीलांबुदप्रख्याबलिनो विपुलैः करैः ॥ सुविभक्तमहाशीर्षाः करिणोंऽजनवंशजाः' ३३ । ३५ उत्तरात्पर्वतात् हिमाचलादागतैरर्थात् ३५ । ३६

त्वामेवाद्ययुयुत्संतेपश्यकालस्यपर्ययम् ॥ एषामेतेमहामात्राःकिरतायुद्धदुर्मदाः ३० हस्तिशिक्षाविदश्चैवसर्वेचैवाग्नियोनयः ॥ एतेविनिर्जिताःसंख्येसंग्रामे सव्यसाचिना ३१ मदर्थमद्यसंयत्तादुर्योधनवशानुगाः ॥ एतान्हत्वाशरैराजन्किरातान्युद्धदुर्मदान् ३२ सैंधवस्यवधेयत्तमनुयास्यामिपांडवम् ॥ येत्वेतेसुमहा नागाअंजनस्यकुलोद्भवाः ३३ कर्कशाश्चविनीताश्चप्रभिन्नकरटामुखाः ॥ जांबूनदमयैःसर्वैर्वर्मभिःसुविभूषिताः ३४ लब्धलक्षारणेराजन्नैरावणसमायुधि ॥ उत रात्पर्वतादेतेतीक्ष्णैर्दस्युभिरास्थिताः ३५ कर्कशैःप्रवरैर्योधैःकार्ष्णायसतनुच्छदैः ॥ संतिगोयोनयश्चात्रसंतिवानरयोनयः ३६ अनेकयोनयश्चान्येतथामानु षयोनयः ॥ अनीकंसमवेतानांधूम्रवर्णमुदीर्यते ३७ म्लेच्छानांपापकर्तॄणांहिमदुर्गनिवासिनाम् ॥ एतद्दुर्योधनोलब्ध्वासमग्रंराजमंडलम् ३८ कृपंचसौमदत्तिं चद्रोणंचरथिनांवरम् ॥ सिंधुराजंतथाकर्णमवमन्यतपांडवान् ३९ कृतार्थमथचात्मानंमन्यतेकालचोदितः ॥ तेतुसर्वेऽद्यसंप्राप्ताममनाराचगोचरम् ४० नवि मोक्ष्यंतिकौंतेययद्यपिस्युर्मनोजवाः ॥ तेनसंभाविताानित्यंपरवीर्योपजीविना ४१ विनाशमुपयास्यंतिमच्छरौघनिपीडिताः ॥ येत्वेतेरथिनोराजन्दृश्यंतेकां चनध्वजाः ४२ एतेदुर्वारणानामकांबोजायदितेश्रुताः ॥ शूराश्चकृतविद्याश्चधनुर्वेदेचनिष्ठिताः ४३ संहताश्चभृशंह्येतेअन्योन्यस्यहितैषिणः ॥ अक्षौहिण्य श्चसंरब्धाधार्तराष्ट्रस्यभारत ४४ यत्तामदर्थेतिष्ठंतिकुरुवीराभिरक्षिताः ॥ अप्रमत्तामहाराजमामेवप्रत्युपस्थिताः ४५ तानहंप्रमथिष्यामितृणानिवहुता शनः ॥ तस्मात्सर्वानुपासंगान्सर्वोपकरणानिच ४६ रथेकुर्वंतुमेराजन्यथावद्रथकल्पकाः ॥ अस्मिंस्तुकिलसंमर्देग्राह्यंविविधमायुधम् ४७ यथोपादिष्टमा चार्यैःकार्यःपंचगुणोरथः ॥ कांबोजैर्हिसमेष्यामितीक्ष्णैराशीविषोपमैः ४८ नानाशस्त्रसमावापैर्विविधायुधयोधिभिः ॥ किरातैश्चसमेष्यामिविषकल्पैःप्रहारि भिः ४९ लालितैःसततंराज्ञादुर्योधनहितैषिभिः ॥ शकैश्चापिसमेष्यामिशक्रतुल्यपराक्रमैः ५० अग्निकल्पैर्दुराधर्षैःप्रदीप्तैरिवपावकैः ॥ तथान्यैर्विविधैर्योधैः कालकल्पैर्दुरासदैः ५१ समेष्यामिरणेराजन्बहुभिर्युद्धदुर्मदैः ॥ तस्माद्वैवाजिनोमुख्याविश्रुताःशुभलक्षणाः ५२ उपावृत्ताश्चपीताश्चपुनर्युज्यंतुमेरथे ॥ संज यउवाच ॥ तस्यसर्वानुपासंगान्सर्वोपकरणानिच ५३ रथेचास्थापयद्राजाशस्त्राणिविविधानिच ॥ ततस्तान्सर्वतोयुक्तान्सदश्वांश्चतुरोजनाः ५४ रसवत्पाययामासुःपानंमदसमीरणम् ॥ पीतोपवृत्तान्स्नातांश्चजग्धान्नान्समलंकृतान् ५५ विनीतशल्यांस्तुरगांश्चतुरोहेममालिनः ॥ तान्युक्तान्रुक्मवर्णाभान्विनीता ञ्शीघ्रगामिनः ५६ संहृष्टमनसोव्यग्रान्विधिवत्कल्पितान्रथे ॥ महाध्वजेनसिंहेनहेमकेसरमालिना ५७ ३७।३८।३९।४० तेनदुर्योधनेनसंभाविताःसंवर्धिताः ४१।४२ ४३।४४।४५ तानुद्दिष्टान् ४६।४७ पंचगुणःपंचगुणसामग्रीकः ४८ नानाशस्त्राणांसमावापःसमूहोयेषु ४९।५०।५१।५२ पीताःपायितपेयाः५३ । ५४ ५५ । ५६ महाध्वजेनेतिविशेषणेतृतीया ५७

केतकैः कुंदघटितशलाकाभिः ५८ । ५९ । ६० स्वर्णनिष्कान्दीनारान् ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ आयत्यामुत्तरकाले तदात्वेतत्क्षणे ७३ । ७४ । ७५





संवृतेकेतकैर्हैमैर्मणिविद्रुमचित्रितैः ॥ पांडुराभ्रप्रकाशाभिःपताकाभिरलंकृते ५८ हेमदंडोच्छ्रितच्छत्रेबहुशस्त्रपरिच्छदे ॥ योजयामासविधिवद्धेमभांडविभूषितान् ५९ दारुकस्यानुजोभ्रातासूतस्तस्यप्रियःसखा ॥ न्यवेदयद्रथंयुक्तंवासवस्येवमातलिः ६० ततःस्नातःशुचिर्भूत्वाकृतकौतुकमंगलः ॥ स्नातकानांसहस्रस्यस्वर्णनिष्कानथोददौ ६१ आशीर्वादैःपरिष्वक्तःसात्यकिःश्रीमतांवरः ॥ ततःसमधुपर्कार्हःपीत्वाकैलातकंमधु ६२ लोहिताक्षोबभौतत्रमदविह्वललोचनः ॥ आलभ्यवीरकांस्यंचहर्षेणमहताऽन्वितः ६३ द्विगुणीकृततेजाहिप्रज्वलन्निवपावकः ॥ उत्संगेधनुरादायसशरंरथिनांवरः ६४ कृतस्वस्त्ययनोविप्रैःकवचीसमलंकृतः ॥ लाजैर्गंधैस्तथामाल्यैःकन्याभिश्चाभिनंदितः ६५ युधिष्ठिरस्यचरणावभिवाद्यकृतांजलिः ॥ तेनमूर्द्धन्युपाघ्रातआरुरोहमहारथम् ६६ ततस्तेवाजिनोहृष्टाःसुपुष्टावातरंहसः ॥ अजेय्याजैत्रमूहुस्तंविकुर्वाणाःस्मसैंधवाः ६७ तथैवभीमसेनोऽपिधर्मराजेनपूजितः ॥ प्रायात्सात्यकिनासार्धमभिवाद्ययुधिष्ठिरम् ६८ तौदृष्ट्वाप्रविविक्षंतौतवसेनामरिंदमौ ॥ संयत्तास्तावकाःसर्वेतस्थुर्द्रोणपुरोगमाः ६९ सन्नद्धमनुगच्छंतंदृष्ट्वाभीमंससात्यकिः ॥ अभिनंद्याब्रवीद्वीरस्तदाहर्षकरंवचः ७० त्वंभीमरक्षराजानमेतत्कार्यतमंहिते ॥ अहंभित्त्वाप्रवेक्ष्यामिकालपक्कमिदंबलम् ७१ आयत्यांचतदात्वेचश्रेयोराज्ञोऽभिरक्षणम् ॥ जानीषेममवीर्यंत्वंतवचाहमरिंदम ७२ तस्माद्भीमनिवर्तस्वममचेदिच्छसिप्रियम् ॥ तथोक्तःसात्यकिंप्राहव्रजत्वंकार्यसिद्धये ७३ अहंराज्ञःकरिष्यामिरक्षांपुरुषसत्तम ॥ एवमुक्तःप्रत्युवाचभीमसेनंसमाधवः ७४ गच्छगच्छध्रुवंपार्थध्रुवोहिविजयोमम ॥ यन्मेगुणानुरक्तश्चत्वमद्यवशमास्थितः ७५ निमित्तानिचधन्यानियथाभीमवदंतिमाम् ॥ निहतेसैंधवेपापेपांडवेनमहात्मना ७६ परिष्वजिष्येराजानंधर्मात्मानंयुधिष्ठिरम् ७७ एतावदुक्त्वाभीमंतुविसृज्यचमहायशाः ॥ संप्रैक्षत्तावकंसैन्यंव्याघ्रोमृगगणानिव ७८ तंदृष्ट्वाप्रविविक्षंतंसैन्यंतवजनाधिप ॥ भूयएवाभवन्मूढंसुभृशंचाप्यकंपत ७९ ततःप्रयातःसहसातवसैन्यंससात्यकिः ॥ दिदृक्षुरर्जुनंराजन्धर्मराजस्यशासनात् ८० ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिसात्यकिप्रवेशेद्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

संजयउवाच ॥ प्रयातेतवसैन्यंतुयुयुधानेयुयुत्सया ॥ धर्मराजोमहाराजस्वेनानीकेनसंवृतः १ प्रायाद्द्रोणरथंप्रेप्सुर्युयुधानस्यपृष्ठतः ॥ ततःपांचालराजस्यपुत्रःसमरदुर्मदः २ प्राक्रोशत्पांडवानीकेवसुदानश्चपार्थिवः ॥ आगच्छतप्रहरतद्रुतंविपरिधावत ३ यथासुखेनगच्छेतसात्यकिर्युद्धदुर्मदः ॥ महारथाहिबहवोयतिष्यंत्यस्यनिर्जये ४ इतिब्रुवंतोवेगेननिपेतुस्तेमहारथाः ॥ वयंप्रतिजिगीषंतस्तत्रतान्समभिद्रुताः ५

७६ । ७७ । ७८ । ७९ । ८० ॥ इतिद्रोणपर्वणिटीकायांद्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥ ॥ ७ ॥ ॥ प्रयातेइति १ । २ । ३ । ४ । ५

६ । ७ । ८ । ९ ईशोरुद्रः २० । ११ । १२ । १३ । १४ । १५ ऋषभस्येवाक्षीणियेषां १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८

ततःशब्दोमहानासीद्युयुधानरथंप्रति ॥ आकीर्यमाणाधावंतीतवपुत्रस्यवाहिनी ६ सात्वतेनमहाराजशतधाऽभिव्यशीर्यत ॥ तस्यांविदीर्यमाणायांशिनेःपु
त्रोमहारथः ७ सप्तवीरान्महेष्वासानग्रानीकेष्वपोथयत् ॥ अथान्यानपिराजेंद्रनानाजनपदेश्वरान् ८ शरैरनलसंकाशैर्निन्येवीरान्यमक्षयम् ॥ शतमेकेनवि
व्याधशतेनैकंचपत्रिणाम् ९ द्विपारोहान्द्विपांश्चैवहयारोहान्हयांस्तथा ॥ रथिनःसाश्वसूतांश्चजघानेशःपशूनिव १० तंतथाद्भुतकर्माणंशरसंपातवर्षिणम् ॥
नकेचनाभ्यधावन्वैसात्यकिंतवसैनिकाः ११ तेभीताम्रृद्यमानाश्चप्रमृष्टादीर्घबाहुना ॥ आयोधनंजहुर्वीरादृष्ट्वातमतिमानिनम् १२ तमेकंबहुधापश्यन्मोहि
तास्तस्यतेजसा ॥ रथैर्विमथितैश्चैवभग्ननीडैश्चमारिष १३ चक्रैर्विमथितैश्छत्रैर्ध्वजैश्चविनिपातितैः ॥ अनुकर्षैःपताकाभिःशिरस्त्राणैःसकांचनैः १४ बाहु
भिश्चंदनादिग्धैःसांगदैश्चविशांपते ॥ हस्तिहस्तोपमैश्चापिभुजंगाभोगसन्निभैः १५ ऊरुभिःपृथिवीच्छन्नामनुजानांनराधिप ॥ शशांकसन्निभैश्चैववदनैश्चारु
कुंडलैः १६ पतितैर्ऋषभाक्षाणांसाबभावतिमेदिनी ॥ गजैश्चबहुधाछिन्नैःशयानैःपर्वतोपमैः १७ रराजातिभृशंभूमिर्विकीर्णैरिवपर्वतैः ॥ तपनीयमयैर्योक्त्रैर्मु
क्ताजालविभूषितैः १८ उरश्छदैर्विचित्रैश्चव्यशोभंततुरंगमाः ॥ मतसत्वामहींप्राप्यप्रमृष्टादीर्घबाहुना १९ नानाविधानिसैन्यानितवहत्वातुसात्वतः ॥ प्रवि
ष्टस्तावकंसैन्यंद्रावयित्वाचमूंभृशम् २० ततस्तेनैवमार्गेणयेनयातोधनंजयः ॥ इयेषसात्यकिर्गंतुंततोद्रोणेनवारितः २१ भारद्वाजंसमासाद्ययुयुधानश्चसा
त्यकिः ॥ नन्यवर्ततसंक्रुद्धोवेलामिवजलाशयः २२ निवार्यतुरणेद्रोणोयुयुधानंमहारथम् ॥ विव्याधनिशितैर्बाणैःपंचभिर्मर्मभेदिभिः २३ सात्यकिस्तुरणेद्रोणंरा
जन्विव्याधसप्तभिः ॥ हेमपुंखैःशिलाधौतैःकंकबर्हिणवाजितैः २४ तंषड्भिःसायकैर्द्रोणःसाश्वयंतारमार्दयत् ॥ सतंनममृषेद्रोणंयुयुधानोमहारथः २५ सिंहना
दंततःकृत्वाद्रोणंविव्याधसात्यकिः ॥ दशभिःसायकैश्चान्यैःषड्भिरष्टाभिरेवच २६ युयुधानःपुनर्द्रोणंविव्याधदशभिःशरैः ॥ एकेनसारथिंचास्यचतुर्भिश्चतु
रोहयान् २७ ध्वजमेकेनबाणेनविव्याधयुधिमारिष ॥ तंद्रोणःसाश्वयंतारंसरथध्वजमाशुगैः २८ त्वरन्प्राच्छादयद्बाणैःशलभानामिवव्रजैः ॥ तथैवयुयुधानो
ऽपिद्रोणंबहुभिराशुगैः २९ आच्छादयदसंभ्रांतस्ततोद्रोणउवाचह ॥ तवाचार्योरणंहित्वागतःकापुरुषोयथा ३० युध्यमानंचमांहित्वाप्रदक्षिणमवर्तत ॥
त्वंहिमेयुध्यतोनाद्यजीवन्यास्यसिमाधव ३१ यदिमांत्वंरणेहित्वानयास्याचार्यवद्द्रुतम् ॥ सात्यकिरुवाच ॥ धनंजयस्यपदवींधर्मराजस्यशासनात् ३२
गच्छामिस्वस्तितेब्रह्मन्नमेकालात्ययोभवेत् ॥ आचार्यानुगतोमार्गःशिष्यैरन्वास्यतेसदा ३३ तस्मादेवव्रजाम्याशुयथामेसगुरुर्गतः ॥ संजयउवाच ॥
एतावदुक्त्वाशैनेयआचार्यंपरिवर्जयन् ३४

२९ । ३० त्वंहित्वमपि ३१ । ३२ । ३३ । ३४

 ३५ । ३६ । ३७ भिन्नानिपृथग्भूतानि ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७



प्रयातःसहसाराजन्सारथिंचेदमब्रवीत् ॥ द्रोणःकरिष्यतेयत्नंसर्वथाममवारणे ३५ यत्तोयाहिरणेसूतशृणुचेदंवचःपरम् ॥ एतदालोक्यतेसैन्यमावंत्यानांमहा
प्रभम् ३६ अस्यानंतरतस्त्वेतद्दाक्षिणात्यंमहद्बलम् ॥ तदनंतरमेतच्चबाल्हिकानांमहद्बलम् ३७ बाल्हिकाभ्याशतोयुक्तंकर्णस्यचमहद्बलम् ॥ अन्योन्ये
नहिसैन्यानिभिन्नान्येतानिसारथे ३८ अन्योन्यंसमुपाश्रित्यनत्यक्ष्यंतिरणाजिरम् ॥ एतदंतरमासाद्यचोदयाश्वान्प्रहृष्टवत् ३९ मध्यमंजवमास्थायवहमाम
त्रसारथे ॥ बाल्हिकायत्रदृश्यंतेनानाप्रहरणोद्यताः ४० दाक्षिणात्याश्चबहवःसूतपुत्रपुरोगमाः ॥ हस्त्यश्वरथसंबाधंयच्चानीकंविलोक्यते ४१ नानादेशस
मुत्थैश्चपदातिभिरधिष्ठितम् ॥ एतावमुक्त्वायंतारंब्राह्मणंपरिवर्जयन् ४२ मध्यतोयाहियत्राग्रंकर्णस्यचमहद्बलम् ॥ तंद्रोणोऽनुययौक्रुद्धोविकिरन्विशिखान्ब
हून् ४३ युयुधानंमहाभागंगच्छंतमनिवर्तिनम् ॥ कर्णस्यसैन्यंसुमहदभिहत्याशितैःशरैः ४४ प्राविशद्भारतींसेनामपर्यंतांससात्यकिः ॥ प्रविष्टेयुयुधानेतुसै
निकेषुद्रुतेषुच ४५ अमर्षीकृतवर्मातुसात्यकिंपर्यवारयत् ॥ तमापतंतंविशिखैःषड्भिराहत्यसात्यकिः ४६ चतुर्भिश्चतुरोऽस्याश्वानाजघानाशुवीर्यवान् ॥
ततःपुनःषोडशभिर्नतपर्वभिराशुगैः ४७ सात्यकिःकृतवर्माणंप्रत्याविध्यत्स्तनांतरे ॥ सताड्यमानोविशिखैर्बहुभिस्तिग्मतेजनैः ४८ सात्वतेनमहाराजकृतव
र्मानचक्षमे ॥ सवत्सदंतंसंधायजिह्मगानिलसन्निभम् ४९ आकृष्यराजन्नाकर्णाद्विव्याधोरसिसात्यकिम् ॥ सतस्यदेहावरणंभित्त्वादेहंचसायकः ५० सपुंखप
त्रःपृथिवींविवेशरुधिरोक्षितः ॥ अथास्यबहुभिर्बाणैराच्छिनत्परमास्त्रवित् ५१ समार्गणगणंराजन्कृतवर्माशरासनम् ॥ विव्याधचरणेराजन्सात्यकिंसत्यविक्रमं
५२ दशभिर्विशिखैस्तीक्ष्णैरभिक्रुद्धःस्तनांतरे ॥ ततःप्रशीर्णेधनुषिशक्त्याशक्तिमतांवरः ५३ जघानदक्षिणंबाहुंसात्यकिःकृतवर्मणः ॥ ततोऽन्यत्सुदृढंचापं
पूर्णमायम्यसात्यकिः ५४ व्यसृजद्विशिखांस्तूर्णंशतशोऽथसहस्रशः ॥ सरथंकृतवर्माणंसमंतात्पर्यवारयत् ५५ छादयित्वारणेराजन्हार्दिक्यंसतुसात्यकिः ॥
अथास्यभल्लेनशिरःसारथेःसमकृंतत ५६ सपपातहतःसूतोहार्दिक्यस्यमहारथात् ॥ ततस्तेयंतृरहिताःप्राद्रवंस्तुरगाभृशम् ५७ अथभोजस्तुसंभ्रांतोनिगृ
ह्यतुरगान्स्वयम् ॥ तस्थौवीरोधनुष्पाणिस्तत्सैन्यान्यभ्यपूजयन् ५८ समुहूर्तमिवाश्वस्यसदश्वान्समनोदयत् ॥ व्यपेतभीरमित्राणामावहत्सुमहद्भयम् ५९
सात्यकिश्चाभ्यगात्तस्मात्सतुभीममुपाद्रवत् ॥ युयुधानोऽपिराजेंद्रभोजानीकाद्विनिःसृतः ६० प्रययौत्वरितस्तूर्णंकांबोजानांमहाचमूम् ॥ सतत्रबहुभिःशूरैः
सन्निरुद्धोमहारथैः ६१ नचचालतदाराजन्सात्यकिःसत्यविक्रमः ॥ संधायचचमूंद्रोणोभोजेभारंनिवेश्यच ६२ अभ्यधावद्रणेयत्तोयुयुधानंयुयुत्सया ॥
तथातमनुधावंतंयुयुधानस्यपृष्ठतः ६३

५८ । ५९ । ६० । ६१ संधायथयास्थानमानीय ६२ । ६३

६४ । ६५ । ६६ आर्यवत्कुलीनवत् कुलीनत्वादितियावत् ६७ ॥ इतिद्रोणपर्वणिटीकायांत्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥ एवमिति बहुगुणंबहवोगुणाःशौर्यादयःसंध्यादयोवाय स्मिन् बलंप्रबलं १ नःअभिकाममनुरक्तं प्रौढंप्रवृद्धं अत्यद्भुताकारमनुपमसंस्थानं पुरस्तात्प्रागेवदृष्टः परीक्षोत्तीर्णोविक्रमोयस्य २ लघुनोमनोज्ञस्यवृत्तस्यायतमायामःप्रायःप्रचुरंयत्र सारगात्रं निबिडावयवं सारगात्रमसारशून्यमितिवा ३।४ आरोहेअधिरोहणे पर्यवस्कंदेअवरोहणे सरणेप्रसरणे सांतरप्लुतेछलनांत।रितायांगतौ यानेप्रयाणे व्यपयानेऽपसरणे५ वेतनेनदिनमासवर्षदेयेनध

न्यवारयंतसंहृष्टाःपांडुसैन्येबृहत्तमाः ॥ समासाद्यतुहार्दिक्यंरथानांप्रवरंरथम् ६४ पंचालाविगतोत्साहाभीमसेनपुरोगमाः ॥ विक्रम्यवारिताराजन्वीरेणकृत वर्मणा ६५ यतमानांश्चतान्सर्वानीषद्विगतचेतसः ॥ अभितस्तानशरौघेणक्लांतवाहानकारयत् ६६ निगृहीतास्तुभोजेनभोजानीकेप्सवोरणे ॥ अति ष्ठन्नार्यवद्वीराःप्रार्थयंतोमहद्यशः ६७ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि सात्यकिप्रवेशेत्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥ ॥ ध ॥

॥ धृतराष्ट्रउवाच ॥ एवंबहुगुणंसैन्यमेवंप्रविचितंबलम् ॥ व्यूढमेवंयथान्यायमेवंबहुचसंजय १ नित्यंपूजितमस्माभिरभिकामंचनःसदा ॥ प्रौढमत्यद्भुता कारंपुरस्ताद्दृष्टविक्रमम् २ नातिवृद्धमबालंचनाकृशंनातिपीवरम् ॥ लघुवृत्तायतप्रायंसारगात्रमनामयम् ३ आत्तसन्नाहसंछन्नंबहुशस्त्रपरिच्छदम् ॥ शस्त्र ग्रहणविद्यासुबह्वीषुपरिनिष्ठितम् ४ आरोहेपर्यवस्कंदेसरणेसांतरप्लुते ॥ सम्यक्प्रहरणेयानेव्यपयानेचकोविदम् ५ नागेष्वश्वेषुबहुशोरथेषुचपरीक्षितम् ॥ परीक्ष्यचयथान्यायंवेतनेनोपपादितम् ६ नगोष्ठ्यानोपकारेणनसंबंधानिमित्ततः ॥ नानाहूतंनाप्यभृतंममसैन्यंबभूवह ७ कुलीनार्यजनोपेतंतुष्टपु ष्टमनुद्धतम् ॥ कृतमानोपचारंचयशस्विचमनस्विच ८ सचिवैश्चापरैर्मुख्यैर्बहुभिःपुण्यकर्मभिः ॥ लोकपालोपमैस्तातपालितंनरसत्तमैः ९ बहुभिः पार्थिवैर्गुप्तमस्मत्प्रियाचिकीर्षुभिः ॥ अस्मानधिसृतैःकामात्सबलैःसपदानुगैः १० महोदधिमिवापूर्णमापगाभिःसमंततः ॥ अपक्षैःपक्षिसंकाशैरथैरश्वै श्चसंवृतम् ११ प्रभिन्नकरटैश्चैवद्विरदैरावृतंमहत् ॥ यदहन्यतमेसैन्यंकिमन्यद्भागधेयतः १२ योधाक्षय्यजलंभीमंवाहनोर्मितरंगिणम् ॥ क्षेपण्यसि गदाशक्तिशरप्रासझषाकुलम् १३ ध्वजभूषणसंबाधरत्नोपलसुसंचितम् ॥ वाहनैरभिधावद्भिर्वायुवेगविकंपितम् १४ द्रोणगंभीरपातालंकृतवर्ममहाह्र दम् ॥ जलसंधमहाग्राहंकर्णचंद्रोदयोद्धतम् १५ गतेसैन्यार्णवंभित्त्वातरसापांडवर्षभे ॥ संजयैकरथेनैवयुयुधानेचमामकम् १६ तत्रशेषंनपश्यामि प्रविष्टेसव्यसाचिनि ॥ सात्वतेचरथोदारेममसैन्यस्यसंजय १७ तौतत्रसमतिक्रांतौदृष्ट्वातीवतरस्विनौ ॥ सिंधुराजंतुसंप्रेक्ष्यगांडीवस्येषुगोचरे १८ किंनुवाकुरवःकृत्यंविदधुःकालचोदिताः ॥ दारुणैकायनेऽकालेकथंवाप्रतिपेदिरे १९

नेन ६ गोष्ठ्यासंलापमात्रेण उपकारेणप्राकृतेन उपपादितमुक्तासस्थापितमित्यनुषंगः अनाहूतंयदृच्छोपगतं ७।८।९।१०।११।१२ वाहनान्येवोर्मितरंगपरंपराविद्यतेयत्र क्षेपण्योयंत्राणि १३ रत्नै रुपलैश्चसुसंचितंसुष्ठुसंछादितं वाहनाभिधावनान्येववायुवेगतयारूपितानि १४ । १५ । १६ ममसैन्यस्यशेषमित्यन्वयः १७ । १७ दारुणैकायने अतिभीषणेऽन्यगतिके अकालेअतीतसमये १९

२० । २१ । २२ लभ्यते सैन्येनार्थात् २३ । २४ । २५ । २६ । २७ । २८ । २९ प्रतिधारणी ३० । ३१ । ३२ । ३३ । ३४ व्यग्रानेकाग्रान् अव्यग्रान् पलायनैकमनस इतिवा

ग्रस्तान्हिकौरवान्मन्येमृत्युनाततासंगतान् ॥ विक्रमोऽपिरणेतेषांनतथादृश्यतेहिवै २० अक्षतौसंयुगेतत्रप्रविष्टौकृष्णपांडवौ ॥ नचवारयिताकश्चित्तयोर
स्तीहसंजय २१ भृताश्चबहवोयोधाःपरीक्ष्यैवमहारथाः ॥ वेतनेनयथायोगंप्रियवादेनचापरे २२ असत्कारभृतस्तातममसैन्येनविद्यते ॥ कर्मणाह्यनुरूपेण
लभ्यतेभक्तवेतनम् २३ नचायोधोऽभवत्कश्चिन्ममसैन्येतुसंजय ॥ अल्पदानभृतस्तातथाचाभृतकोनरः २४ पूजितोहियथाशक्त्यादानमानासनैर्मया ॥
तथापुत्रैश्चमेतातज्ञातिभिश्चसबांधवैः २५ तेचप्राप्यैवसंग्रामेनिर्जिताःसव्यसाचिना ॥ शैनेयेनपराम्पृष्टाःकिमन्यद्भागधेयतः २६ रक्ष्यतेयश्चसंग्रामेयेचसं
जयरक्षिणः ॥ एकःसाधारणःपंथारक्ष्यस्यसहरक्षिभिः २७ अर्जुनंसमरेदृष्ट्वासैंधवस्याग्रतःस्थितम् ॥ पुत्रोममभृशंमूढःकिंकार्यंप्रत्यपद्यत २८ सात्यकिं
चरणेदृष्ट्वाप्रविशंतमभीतवत् ॥ किंनुदुर्योधनःकृत्यंप्राप्तकालममन्यत २९ सर्वशस्त्रातिगौसेनांप्रविष्टौरथिसत्तमौ ॥ दृष्ट्वाकांवैधृतिंयुद्धेप्रत्यपद्यंतमामकाः ३०
दृष्ट्वाकृष्णंतुदाशार्हमर्जुनार्थेव्यवस्थितम् ॥ शिनीनामृषभंचैवमन्येशोचंतिपुत्रकाः ३१ दृष्ट्वासेनांव्यतिक्रांतांसात्वतेनार्जुनेनच ॥ पलायमानांश्चकुरून्मन्ये
शोचंतिपुत्रकाः ३२ विद्रुतान्रथिनोदृष्ट्वानिरुत्साहान्द्विषज्जये ॥ पलायनकृतोत्साहान्मन्येशोचंतिपुत्रकाः ३३ शून्यान्कृतान्रथोपस्थान्सात्वतेनार्जुनेनच ॥
हतांश्चयोधान्संदृश्यमन्येशोचंतिपुत्रकाः ३४ व्यश्वनागरथान्दृष्ट्वातत्रवीरान्सहस्रशः ॥ धावमानान्रणेव्यग्रान्मन्येशोचंतिपुत्रकाः ३५ महानागान्विद्र
वतोदृष्ट्वार्जुनशराहतान् ॥ पतितान्पततश्चान्यान्मन्येशोचंतिपुत्रकाः ३६ विहीनांश्चकृतानश्वान्विरथांश्चकृतान्नरान् ॥ तत्रसात्यकिपार्थाभ्यांमन्येशोचं
तिपुत्रकाः ३७ हयौघान्निहतान्दृष्ट्वाद्रवमाणांस्ततस्ततः ॥ रणेमाधवपार्थाभ्यांमन्येशोचंतिपुत्रकाः ३८ पत्तिसंघान्रणेदृष्ट्वाधावमानांश्चशसर्वशः ॥ नि
राशाविजयेसर्वेमन्येशोचंतिपुत्रकाः ३९ द्रोणस्यसमतिक्रांतावनीकमपराजितौ ॥ क्षणेनदृष्ट्वातौवीरौमन्येशोचंतिपुत्रकाः ४० संमूढोऽस्मिभृशंतातश्रुत्वा
कृष्णधनंजयौ ॥ प्रविष्टौमामकंसैन्यंसात्वतेनसहाच्युतौ ४१ तस्मिन्प्रविष्टेपृतनांशिनीनांप्रवरेरथे ॥ भोजानीकंव्यतिक्रांतेकिमकुर्वतकौरवाः ४२ तथाद्रो
णेनसमरेनिगृहीतेषुपांडुषु ॥ कथंयुद्धमभूत्तत्रतन्ममाचक्ष्वसंजय ४३ द्रोणोहिबलवान्श्रेष्ठःकृतास्त्रोयुद्धदुर्मदः ॥ पंचालास्तंमहेष्वासंप्रत्यविध्यन्कथंरणे ४४
बद्धवैरास्ततोद्रोणेधनंजयजयैषिणः ॥ भारद्वाजसुतस्तेषुदृढवैरोमहारथः ४५ अर्जुनश्चापियच्चक्रेसिंधुराजवधंप्रति ॥ तन्मेसर्वंसमाचक्ष्वकुशलोह्यसिसंजय
४६ ॥ संजयउवाच ॥ आत्मापराधात्संभूतंव्यसनंभरतर्षभ ॥ प्राप्यप्राकृतवद्वीरनत्वंशोचितुमर्हसि ४७

३५ । ३६ । ३७ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७

४८ । ४९ । ५० निर्गुणतागुणवैषम्यं द्वैधीभावमनिश्चयम् ५१ । ५२ । ५३ सुमहान्विपुलइतिपर्यायाभ्यांमहत्त्वोद्रेकः ५४ । ५५ निर्णयंनियतस्वभावं ५६ । ५७ । ५८ । ५९ । ६० । ६१

पुरायदुच्यसेप्राज्ञैःसुहृद्भिर्विदुरादिभिः ॥ माहार्षीःपांडवान्राजन्निितितन्नत्वयाश्रुतम् ४८ सुहृदांहितकामानांवाक्यंयोनशृणोतिह ॥ समहद्व्यसनंप्राप्यशोचतेवैयथाभवान् ४९ याचितोसिपुराराजन्दाशार्हेणशमंप्रति ॥ नचतंलब्धवान्कामंत्वत्तःकृष्णोमहायशाः ५० तवनिर्गुणतांज्ञात्वापक्षपातंसुतेषुच ॥ द्वैधीभावंतथाधर्मेपांडवेषुचमत्सरम् ५१ तवजिह्ममभिप्रायंविदित्वापांडवान्प्रति ॥ आर्तप्रलापांश्चबहून्मनुजाधिपसत्तम ५२ सर्वलोकस्यतत्त्वज्ञःसर्वलोकेश्वरःप्रभुः ॥ वासुदेवस्ततोयुद्धंकुरूणामकरोन्महत् ५३ आत्मापराधात्सुमहान्प्राप्तस्तेविपुलःक्षयः ॥ नैनंदुर्योधनेदोषंकर्तुमर्हसिमानद ५४ नहितेसुकृतंकिंचिदादौमध्येचभारत ॥ दृश्यतेपृष्ठतश्चैवत्वन्मूलोहिपराजयः ५५ तस्मादवस्थितोभूत्वाज्ञात्वालोकस्यनिर्णयम् ॥ शृणुयुद्धंयथावृत्तंघोरंदेवासुरोपमम् ५६ प्रविष्टेतवसैन्यंतुशैनेयेसत्यविक्रमे ॥ भीमसेनमुखाःपार्थाःप्रतीयुर्वाहिनींतव ५७ आगच्छतस्तान्सहसाक्रुद्धरूपान्सहानुगान् ॥ दधारैकोरणेपांडून्कृतवर्मामहारथः ५८ यथोद्वृत्तंवारयतेवेलावैसलिलार्णवम् ॥ पांडुसैन्यंतथासंख्येहार्दिक्यःसमवारयत् ५९ तत्राद्भुतमपश्यामहार्दिक्यस्यपराक्रमम् ॥ यदेनंसहिताःपार्थानातिचक्रमुराहवे ६० ततोभीमस्त्रिभिर्विद्ध्वाकृतवर्माणमाशुगैः ॥ शंखंदध्मौमहाबाहुर्हर्षयन्सर्वपांडवान् ६१ सहदेवस्तुविंशत्याधर्मराजश्चपंचभिः ॥ शतेननकुलश्चापिहार्दिक्यंसमविध्यत ६२ द्रौपदेयास्त्रिसप्तत्यासप्तभिश्चघटोत्कचः ॥ धृष्टद्युम्नस्त्रिभिश्चापिकृतवर्माणमार्दयत् ६३ विराटोद्रुपदश्चैवयाज्ञसेनिश्चपंचभिः ॥ शिखंडीचैवहार्दिक्यंविद्ध्वापंचभिराशुगैः ६४ पुनर्विव्याधविंशत्यासायकानांहसन्निव ॥ कृतवर्माततोराजन्सर्वतस्तान्महारथान् ६५ एकैकंपंचभिर्विद्ध्वाभीमंविव्याधसप्तभिः ॥ धनुर्ध्वजंचास्यतदारथाद्भूमावपातयत् ६६ अथैनंछिन्नधन्वानंत्वरमाणोमहारथः ॥ आजघानोरसिक्रुद्धःसप्तत्यानिशितैःशरैः ६७ सगाढविद्धोबलवान्हार्दिक्यस्यशरोत्तमैः ॥ चचालरथमध्यस्थःक्षितिकंपेयथाचलः ६८ भीमसेनंतथादृष्ट्वाधर्मराजपुरोगमाः ॥ विसृजंतःशरान्राजन्कृतवर्माणमार्दयन् ६९ तंतथाकोष्ठकीकृत्यरथवंशेनमारिष ॥ विव्यधुःसायकैर्हृष्टारक्षार्थंमारुतेर्मृधे ७० प्रतिलभ्यततःसंज्ञांभीमसेनोमहाबलः ॥ शक्तिंजग्राहसमरेहेमदंडामयस्मयीम् ७१ चिक्षेपचरथात्तूर्णंकृतवर्मरथंप्रति ॥ साभीमभुजनिर्मुक्तानिर्मुक्तोरगसन्निभा ७२ कृतवर्माणमभितःप्रजज्वालसुदारुणा ॥ तामापतंतींसहसायुगांताग्निसमप्रभाम् ७३ द्वाभ्यांशराभ्यांहार्दिक्योनिजघानद्विधातदा ॥ साछिन्नापतिताभूमौशक्तिःकनकभूषणा ७४ द्योतयंतीदिशोराजन्महोल्केवनभश्च्युता ॥ शक्तिंविनिहतांदृष्ट्वाभीमश्चक्रोधवैभृशम् ७५

६२ । ६३ । ६४ सर्वतःसर्वान् ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ द्विधास्थानद्वये ७५

७६ । ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७ कूर्मनखैः कूर्मनखाकृतिफलकैः ८८ । ८९ । ९० । ९१ । ९२ । ९३ । ९४ । ९५ । ९६ । ९७ । ९८ । ९९ । १००

ततोऽन्यद्धनुरादायवेगवत्सुमहास्वनम् ॥ भीमसेनोरणेक्रुद्धोहार्दिक्यंसमवारयत् ७६ अथैनंपंचभिर्बाणैराजघानस्तनांतरे ॥ भीमोभीमबलोराजंस्तवदुर्मंत्रिते नच ७७ भोजस्तुक्षतसर्वांगोभीमसेनेनमारिष ॥ रक्ताशोकइवोत्फुल्लोव्यभ्राजतरणाजिरे ७८ ततःक्रुद्धास्त्रिभिर्बाणैर्भीमसेनंहसन्निव ॥ अभिहत्यदृढंयुद्धे तान्सर्वान्प्रत्यविध्यत ७९ त्रिभिस्त्रिभिर्महेष्वासोयतमानान्महारथान् ॥ तेऽपितंप्रत्यविध्यंतसप्तभिःसप्तभिःशरैः ८० शिखंडिनस्ततःक्रुद्धःक्षुरप्रेणमहारथः ॥ धनुश्चिच्छेदसमरेप्रहसन्निवसात्वतः ८१ शिखंडीतुततःक्रुद्धश्छिन्नेधनुषिसत्वरः ॥ असिंजग्राहसमरेशतचंद्रंचभास्वरम् ८२ भ्रामयित्वामहच्चर्मचामीकरविभूषितम् ॥ तमसिंप्रेषयामासकृतवर्मरथंप्रति ८३ सतस्यसशरंचापंछित्वाराजन्महानसिः ॥ अभ्यगाद्धरणींराजंश्च्युतंज्योतिरिवांबरात् ८४ एतस्मिन्नेवकालेतुत्वरमाणंमहारथाः ॥ विव्यधुःसायकैर्गाढंकृतवर्माणमाहवे ८५ अथान्यद्धनुरादायत्यक्त्वातच्चमहद्धनुः ॥ विशीर्णंभरतश्रेष्ठहार्दिक्यःपरवीरहा ८६ विव्याधपांडवान्युद्धेत्रिभिस्त्रिभिरजिह्मगैः ॥ शिखंडिनंचविव्याधत्रिभिःपंचभिरेवच ८७ धनुरन्यत्समादायशिखंडीतुमहायशाः ॥ अवारयत्कूर्मनखैराशुगैर्हृदिकात्मजम् ८८ ततःक्रुद्धोरणेराजन्हृदिकस्यात्मसंभवः ॥ अभिदुद्राववेगेनयाज्ञसेनिंमहारथम् ८९ भीष्मस्यसमरेराजन्मृत्योर्हेतुंमहात्मनः ॥ विदर्शयन्बलंशूरःशार्दूलइवकुंजरम् ९० तौदिशागजसंकाशौज्वलिताविवपावकौ ॥ समापेततुरन्योन्यंशरसंघैररिंदमौ ९१ विधुन्वानौधनुःश्रेष्ठेसंदधानौचसायकान् ॥ विसृजंतौचशतशोगभस्तीनिवभास्करौ ९२ तापयंतौशरैस्तीक्ष्णैरन्योन्यंतौमहारथौ ॥ युगांतप्रतिमौवीरौरेजतुर्भास्कराविव ९३ कृतवर्माचसमरेयाज्ञसेनिंमहारथम् ॥ विद्ध्वेषुभिस्त्रिसप्तत्यापुनर्विव्याधसप्तभिः ९४ सगाढविद्धोव्यथितोरथोपस्थउपाविशत् ॥ विसृज्यसशरंचापंमूर्च्छयाभिपरिप्लुतः ९५ तंविषण्णंरणेदृष्ट्वातावकाःपुरुषर्षभ ॥ हार्दिक्यंपूजयामासुर्वासांस्यादुधुवुश्चह ९६ शिखंडिनंतथाज्ञात्वाहार्दिक्यशरपीडितम् ॥ अपोवाहरणाद्यंतात्वरमाणोमहारथम् ९७ सादितंतुरथोपस्थेदृष्ट्वापार्थाःशिखंडिनम् ॥ परिवव्रूरथैस्तूर्णंकृतवर्माणमाहवे ९८ तत्राद्भुतंपरंचक्रेकृतवर्मामहारथः ॥ यदेकःसमरेपार्थान्वारयामाससानुगान् ९९ पार्थान्जित्वाऽजयच्चेदीन्पंचालान्सृंजयानपि ॥ केकयांश्चमहावीर्यान्कृतवर्मामहारथः १०० तेवध्यमानाःसमरेहार्दिक्येनस्मपांडवाः ॥ इतश्चेतश्चधावंतोनैवचक्रुर्धृतिंरणे १ जित्वापांडुसुतान्युद्धेभीमसेनपुरोगमान् ॥ हार्दिक्यःसमरेऽतिष्ठद्विधूमइवपावकः २ तेद्राव्यमाणाःसमरेहार्दिक्येनमहारथाः ॥ विमुखाःसमपद्यंतशरवृष्टिभिरार्दिताः १०३ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिसात्यकिप्रवेशेकृतवर्मपराक्रमेचतुर्दशाधिकशततमोऽध्यायः ॥११४॥

१०१ । १०२ । १०३ ॥ इतिद्रोणपर्वणिटीकायांचतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥ ॥ ७ ॥

शृणुष्वेति हार्दिक्येनतावकैरन्यैश्चद्राव्यमाणेइत्युत्तरश्लोकेनसहान्वयः १ । २ । ३ ! ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०

संजयउवाच ॥ शृणुष्वैकमनाराजन्यन्मांत्वंपरिपृच्छसि ॥ द्राव्यमाणेबलेतस्मिन्हार्दिक्येनमहात्मना १ लज्जयाऽवनतेचापिप्रहृष्टैश्चापितावकैः ॥ द्वीपो यआसीत्पांडूनामगाधेगाधमिच्छताम् २ श्रुत्वासानिनदंभीमंतावकानांमहाहवे ॥ शैनेयस्त्वरितोराजन्कृतवर्माणमभ्ययात् ३ उवाचसारथिंतत्रक्रोधामर्षस मन्वितः ॥ हार्दिक्याभिमुखंसूतकुरुमेरथमुत्तमम् ४ कुरुतेकदनंपश्यपांडुसैन्येह्यमर्षितः ॥ एनंजित्वापुनःसूतयास्यामिविजयंप्रति ५ एवमुक्तेतुवचनेसूत स्तस्यमहामते ॥ निमेषांतरमात्रेणकृतवर्माणमभ्ययात् ६ कृतवर्मातुहार्दिक्यःशैनेयंनिशितैःशरैः ॥ अवाकिरत्सुसंक्रुद्धस्ततोऽक्रुद्ध्यत्ससात्यकिः ७ अथाशु निशितंभल्लंशैनेयःकृतवर्मणः ॥ प्रेषयामाससमरेशरांश्चचतुरोऽपरान् ८ तेतस्यजघ्निरेवाहान्भल्लेनास्याच्छिनद्धनुः ॥ पृष्ठरक्षंतथासूतमविध्यन्निशितैःशरैः ९ ततस्तंविरथंकृत्वासात्यकिःसत्यविक्रमः ॥ सेनामस्यार्दयामासशरैःसन्नतपर्वभिः १० अभज्यताथपृतनाशैनेयशरपीडिता ॥ ततःप्रायात्सत्वरितःसात्य किःसत्यविक्रमः ११ शृणुराजन्यदकरोत्तवसैन्येषुवीर्यवान् ॥ अतीत्यसमहाराजद्रोणानीकमहार्णवम् १२ पराजित्यतुसंहृष्टःकृतवर्माणमाहवे ॥ यंतारमब्रवी च्छूरःशनैर्याहीत्यसंभ्रमम् १३ दृष्ट्वातुतवतत्सैन्यंरथाश्वद्विपसंकुलम् ॥ पदातिजनसंपूर्णमब्रवीत्सारथिंपुनः १४ यदेतन्मेघसंकाशंद्रोणानीकस्यसव्यतः ॥ सुमहत्कुंजरानीकंयस्यरुक्मरथोमुखम् १५ एतेहिबहवःसूतदुर्निवाराश्चसंयुगे ॥ दुर्योधनसमादिष्टामदर्थेत्यक्तजीविताः १६ राजपुत्रामहेष्वासाःसर्वेविक्रांत योधिनः ॥ त्रिगर्त्तानांरथोदाराःसुवर्णविकृतध्वजाः १७ मामेवाभिमुखावीरायोत्स्यमानाव्यवस्थिताः ॥ अत्रमांप्रापयक्षिप्रमश्वांश्चोदयसारथे १८ त्रिगर्तैः सहयोत्स्यामिभारद्वाजस्यपश्यतः ॥ ततःप्रायाच्छनैःसूतःसात्वतस्यमतेस्थितः १९ रथेनादित्यवर्णेनभास्वरेणपताकिना ॥ तमूहुःसारथेर्वश्यावल्गमाना हयोत्तमाः २० वायुवेगसमाःसंख्येकुंदेंदुरजतप्रभाः ॥ आपतंतंरणेतंतुशंखवर्णैर्हयोत्तमैः २१ परिवव्रुस्ततःशूरागजानीकेनसर्वतः ॥ किरंतोविविधांस्तीक्ष्णा न्सायकान्लघुवेधिनः २२ सात्वतोनिशितैर्बाणैर्गजानीकमयोधयत् ॥ पर्वतानिववर्षेणतपांतेजलदोमहान् २३ वज्राशनिसमस्पर्शैर्वध्यमानाःशरैर्गजाः ॥ प्रा द्रवन्रणमुत्सृज्यशिनिवीरसमीरितैः २४ शीर्णदंताविरुधिराभिन्नमस्तकपिंडिकाः ॥ विशीर्णकर्णास्यकराविनियंतृपताकिनः २५ संभिन्नमर्मघंटाश्चविनिकृत्त महाध्वजाः ॥ हतारोहादिशोराजन्भेजिरेभ्रष्टकंबलाः २६ रुवंतोविविधान्नादान्जलदोपमनिःस्वनाः ॥ नाराचैर्वत्सदंतैश्चभल्लैरंजलिकैस्तथा २७ क्षुरप्रैरर्ध चंद्रैश्चसात्वतेनविदारिताः ॥ क्षरंतोऽसृक्तथामूत्रंपुरीषंचप्रदुद्रुवुः २८ बभ्रमुश्चस्खलुश्चान्येपेतुर्मम्लुस्तथाऽपरे ॥ एवंतत्कुंजरानीकंयुयुधानेनपीडितम् २९ शरैरग्न्यर्कसंकाशैःप्रदुद्रावसमंततः ॥ तस्मिन्हतेगजानीकेजलसंधोमहाबलः ३०

२१ । २२ । २३ । २४ पिंडिकागंडः २५ । २६ । २७ । २८ । २९ । ३०

म.भा.टी० ३१ । ३२ कंठसूत्रंहारं ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ ततोग्रहणानंतरं आविध्यभ्रामयित्वा ४७ । ४८ । ४९ । ५० । ५१ वसुंधराध

यत्तःसंप्रापयन्नागंरजताश्वरथंप्रति ॥ रुक्मवर्मधरःशूरस्तपनीयांगदःशुचिः ३१ कुंडलीमुकुटीखड्गीरक्तचंदनरूषितः ॥ शिरसाधारयन्दीप्तांतपनीयमयीं स्रजम् ३२ उरसाधारयन्निष्कंकंठसूत्रंचभास्वरम् ॥ चापंचरुक्मविकृतंविधुन्वन्गजमूर्धनि ३३ अशोभतमहाराजसविद्युदिवतोयदः ॥ तमापतंतंसहसामागधस्यगजोत्तमम् ३४ सात्यकिर्वारयामासवेलेवमकरालयम् ॥ नागंनिवारितंदृष्ट्वाशैनेयस्यशरोत्तमैः ३५ अक्रुद्ध्यतरणेराजन्जलसंधोमहाबलः ॥ ततःक्रुद्धो महाराजमार्गणैर्भारसाधनैः ३६ अविध्यतशिनेःपौत्रंजलसंधोमहोरसि ॥ ततोऽपरेणभल्लेनपीतेननिशितेनच ३७ अस्यतोवृष्णिवीरस्यनिचकर्तशरासनम् ॥ सात्यकिंछिन्नधन्वानंप्रहसन्निवभारत ३८ अविध्यन्मागधोवीरःपंचभिर्निशितैःशरैः ॥ सविद्धोबहुभिर्बाणैर्जलसंधेनवीर्यवान् ३९ नाकंपतमहाबाहुस्तदद्भुतमिवाभवत् ॥ अचिंतयन्वैसशरान्नात्यर्थंसंभ्रमाद्बली ४० धनुरन्यत्समादायतिष्ठतिष्ठेत्युवाचह ॥ एतावदुक्त्वाशैनेयोजलसंधंमहोरसि ४१ विव्याधषष्ट्यासुभृशंशराणांप्रहसन्निव ॥ क्षुरप्रेणसुतीक्ष्णेनमुष्टिदेशेमहद्धनुः ४२ जलसंधस्यचिच्छेदविव्याधचत्रिभिःशरैः ॥ जलसंधस्तुतत्त्यक्त्वासशरंवैशरासनम् ४३ तोमरंव्यसृजत्तूर्णंसात्यकिंप्रतिमारिष ॥ सनिर्भिद्यभुजंसव्यंमाधवस्यमहारणे ४४ अभ्यगाद्धरणींघोरःश्वसन्निवमहोरगः ॥ निर्भिन्नेतुभुजेसव्येसात्यकिःसत्यविक्रमः ४५ त्रिंशद्भिर्विशिखैस्तीक्ष्णैर्जलसंधमताडयत् ॥ प्रगृह्यतुततःखड्गंजलसंधोमहाबलः ४६ आर्षभंचर्मचमहच्छतचंद्रकसंकुलम् ॥ आविध्यचततःखड्गंसात्वतायोत्ससर्जह ४७ शैनेयस्यधनुश्छित्वासखड्गोन्यपतन्महीम् ॥ अलातचक्रवच्चैवव्यरोचतमहीगतः ४८ अथान्यद्धनुरादायसर्वकायावदारणम् ॥ शालस्कंधप्रतीकाशमिंद्राशनिसमस्वनम् ४९ विस्फार्यविव्यधेक्रुद्धोजलसंधंशरेणह ॥ ततःसाभरणौबाहूक्षुराभ्यांमाधवोत्तमः ५० सात्यकिर्जलसंधस्यचिच्छेदप्रहसन्निव ॥ तौबाहूपरिघप्रख्यौपेततुर्गजसत्तमात् ५१ वसुंधराधराद्भ्रष्टौपंचशीर्षाविवोरगौ ॥ ततःसुदंष्ट्रंसुमहच्चारुकुंडलमंडितम् ५२ क्षुरेणास्यतृतीयेनशिरश्चिच्छेदसात्यकिः ॥ तत्पातितशिरोबाहुकबंधंभीमदर्शनम् ५३ द्विरदंजलसंधस्यरुधिरेणाभ्यषिंचत ॥ जलसंधंनिहत्याजौत्वरमाणस्तुसात्वतः ५४ विमानंपातयामासगजस्कंधाद्विशांपते ॥ रुधिरेणावसिक्तांगोजलसंधस्यकुंजरः ५५ विलंबमानमवहत्संश्लिष्टंपरमासनम् ॥ शरार्दितःसात्वतेनमर्दमानःस्ववाहिनीम् ५६ घोरमार्तस्वरंकृत्वाविदुद्रावमहागजः ॥ हाहाकारोमहानासीत्तवसैन्यस्यमारिष ५७ जलसंधंहतंदृष्ट्वावृष्णीनामृषभेणतु ॥ विमुखाश्चाभ्यधावंततवयोधाःसमंततः ५८ पलायनकृतोत्साहानिरुत्साहाद्विषज्जये ॥ एतस्मिन्नंतरेराजन्द्रोणःशस्त्रभृतांवरः ५९

रात्पर्वतात् ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९

६० । ६१ ॥ इतिद्रोणपर्वणिटीकायांपंचदशाधिकशततमोऽध्यायः ॥ ११५ ॥ ॥ ७ ॥ ॥ तेकिरंतइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ चंदनोरक्तचंदनः १२

अभ्ययाज्जवनैरश्वैर्युयुधानंमहारथम् ॥ तमुदीर्णंतथादृष्ट्वाशैनेयंनरपुंगवाः ६० द्रोणेनैवसहक्रुद्धाःसात्यकिंसमुपाद्रवन् ॥ ततःप्रववृतेयुद्धंकुरूणांसात्वतस्य च ॥ द्रोणस्यचरणेराजन्घोरंदेवासुरोपमम् ६१ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि सात्यकिप्रवेशेजलसंधवधोनामपंचदशाधिकशततमो ऽध्यायः ॥ ११५ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ तेकिरंतःशरव्रातान्सर्वेयत्ताःप्रहारिणः ॥ त्वरमाणामहाराजयुयुधानमयोधयन् १ तंद्रोणःसप्तसप्तत्या जघाननिशितैःशरैः ॥ दुर्मर्षणोद्वादशभिर्दुःसहोदशभिःशरैः २ विकर्णश्चापिनिशितैस्त्रिंशद्भिःकंकपत्रिभिः ॥ विव्याधसव्येपार्श्वेतुस्तनाभ्यामंतरेतथा ३ दुर्मुखोदशभिर्बाणैस्तथादुःशासनोऽष्टभिः ॥ चित्रसेनश्चशैनेयंद्वाभ्यांविव्याधमारिष ४ दुर्योधनश्चमहताशरवर्षेणमाधवम् ॥ अपीडयद्रणेराजन्शूराश्चान्येमहारथाः ५ सर्वतःप्रतिविद्धस्तुतवपुत्रैर्महारथैः ॥ तान्प्रत्यविध्यद्वार्ष्णेयःपृथक्पृथगजिह्मगैः ६ भारद्वाजंत्रिभिर्बाणैर्दुःसहंनवभिःशरैः ॥ विकर्णंपंचविंशत्या चित्रसेनंचसप्तभिः ७ दुर्मर्षणंद्वादशभिरष्टाभिश्चविविंशतिम् ॥ सत्यव्रतंचनवभिर्विजयंदशभिःशरैः ८ ततोरुक्मांगदंचापंविधुन्वानोमहारथः ॥ अभ्ययात्सात्यकिस्तूर्णंपुत्रंतवमहारथम् ९ राजानंसर्वलोकस्यसर्वलोकमहारथम् ॥ शरैरभ्याहनद्गाढंततोयुद्धमभूत्तयोः १० विमुंचंतौशरांस्तीक्ष्णान्संदधानौचसायकान् ॥ अदृश्यंसमरेऽन्योन्यंचक्रतुस्तौमहारथौ ११ सात्यकिःकुरुराजेननिर्विद्धोबह्वशोभत ॥ अस्रवद्रुधिरंभूरिस्वरसंचंदनोयथा १२ सात्वतेनचबाणौघैर्निर्विद्धस्तनयस्तव ॥ शातकुंभमयापीडोबभौयूपइवोच्छ्रितः १३ माधवस्तुरणेराजन्कुरुराजस्यधन्विनः ॥ धनुश्चिच्छेदसमरेक्षुरप्रेणहसन्निव १४ अथैनंछिन्नधन्वानंशरैर्बहुभिराचिनोत् ॥ निर्भिन्नश्चशरैस्तेनद्विषताक्षिप्रकारिणा १५ नामृष्यतरणेराजाशत्रोर्विजयलक्षणम् ॥ अथान्यद्धनुरादायहेमपृष्ठंदुरासदम् १६ विव्याधसात्यकिंतूर्णंसायकानांशतेनह ॥ सोऽतिविद्धोबलवतातवपुत्रेणधन्विना १७ अमर्षवशमापन्नस्तवपुत्रमपीडयत् ॥ पीडितंनृपतिंदृष्ट्वातवपुत्रामहारथाः १८ सात्यकिंशरवर्षेणच्छादयामासुरोजसा ॥ सच्छाद्यमानोबहुभिस्तवपुत्रैर्महारथैः १९ एकैकंपंचभिर्विद्ध्वापुनर्विव्याधसप्तभिः ॥ दुर्योधनंचत्वरितोविव्याधाष्टभिराशुगैः २० प्रहसंश्चास्यचिच्छेदकार्मुकंरिपुभीषणम् ॥ नागंमणिमयंचैवशरैर्ध्वजमपातयत् २१ हत्वातुचतुरोवाहांश्चतुर्भिर्निशितैःशरैः ॥ सारथिंपातयामासक्षुरप्रेणमहायशाः २२ एतस्मिन्नंतरेचैवकुरुराजंमहारथम् ॥ अवाकिरच्छरैर्हृष्टोबहुभिर्मर्मभेदिभिः २३ सवध्यमानःसमरेशैनेयस्यशरोत्तमैः ॥ प्राद्रवत्सहसाराजन्पुत्रोदुर्योधनस्तव २४ आप्लुतश्चततोयानंचित्रसेनस्यधन्विनः ॥ हाहाभूतंजगच्चासीद्दृष्ट्वाराजानमाहवे २५ ग्रस्यमानंसात्यकिनाखेसोममिवराहुणा ॥ तंतुशब्दमथश्रुत्वाकृतवर्मामहारथः २६ १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६

२७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ 'दंष्ट्राश्चतस्त्रोयस्यस्युर्दशनेभ्यः समुच्छ्रिताः ॥ सिंहदंष्ट्रःसगदितश्चतुर्दंष्ट्रश्चसूरिभिः' ४१ । ४३





अभ्ययात्सहसातत्रयत्रास्तेमाधवःप्रभुः ॥ विधुन्वानोधनुःश्रेष्ठंचोदयंश्चैववाजिनः २७ भर्त्सयन्सारथिंचाग्रेयाहियाहीतिसत्वरम् ॥ तमापतंतंसंप्रेक्ष्यव्यादितास्यमिवांतकम् २८ युयुधानोमहाराजयंतारमिदमब्रवीत् ॥ कृतवर्मारथेनैषद्रुतमापततेशरी २९ प्रत्युद्याहिरथेनैनंप्रवरंसर्वधन्विनाम् ॥ ततःप्रजविताश्वेनविधिवत्कल्पितेनच ३० आससादरणेभोजंप्रतिमानंधनुष्मताम् ॥ ततःपरमसंक्रुद्धौज्वलिताविवपावकौ ३१ समेयातांनरव्याघ्रौव्याघ्राविवतरस्विनौ ॥ कृतवर्मातुशैनेयंषड्विंशत्यासमार्पयत् ३२ निशितैःसायकैस्तीक्ष्णैर्यंतारंचास्यपंचभिः ॥ चतुरश्चतुरोवाहांश्चतुर्भिःपरमेषुभिः ३३ अविध्यत्साधुदांतान्वैसैंधवान्सात्वतस्यहि ॥ रुक्मध्वजोरुक्मपृष्ठंमहद्विस्फार्यकार्मुकम् ३४ रुक्मांगदीरुक्मवर्मारुक्मपुंखैरवारयत् ॥ ततोऽशीतिंशिनेःपौत्रःसायकान्कृतवर्मणे ३५ प्राहिणोत्त्वरयायुक्तोद्रष्टुकामोधनंजयम् ॥ सोऽतिविद्धोबलवताशत्रुणाशत्रुतापनः ३६ समकंपतदुर्धर्षःक्षितिकंपेयथाऽचलः ॥ त्रिषष्ट्याचतुरोऽस्याश्वान्सप्तभिःसारथिंतथा ३७ विव्याधनिशितैस्तूर्णंसात्यकिःसत्यविक्रमः ॥ सुवर्णपुंखंविशिखंसमाधायचसात्यकिः ३८ व्यसृजत्तंमहाज्वालंसंक्रुद्धमिवपन्नगम् ॥ सोऽविध्यत्कृतवर्माणंयमदंडोपमःशरः ३९ जांबूनदविचित्रंचवर्मनिर्भिद्यभानुमत् ॥ अभ्यगाद्धरणीमुग्रोरुधिरेणसमुक्षितः ४० संजातरुधिरश्चाजौसात्वतेषुभिरर्दितः ॥ सशरंधनुरुत्सृज्यन्यपतत्स्यंदनोत्तमात् ४१ ससिंहदंष्ट्रोजानुभ्यांपतितोऽमितविक्रमः ॥ शरार्दितःसात्यकिनारथोपस्थेनरर्षभः ४२ सहस्रबाहुसदृशमक्षोभ्यमिवसागरम् ॥ निवार्यकृतवर्माणंसात्यकिःप्रययौततः ४३ खड्गशक्तिधनुःकीर्णांगजाश्वरथसंकुलाम् ॥ प्रवर्तितोग्ररुधिरांशतशःक्षत्रियर्षभैः ४४ प्रेक्षतांसर्वसैन्यानांमध्येनशिनिपुंगवः ॥ अभ्यगाद्वाहिनींहित्वावृत्रहेवासुरींचमूम् ४५ समाश्वस्यचहार्दिक्योगृह्यचान्यन्महद्धनुः ॥ तस्थौसतत्रबलवान्वारयन्युधिपांडवान् ४६ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि सात्यकिप्रवेशेदुर्योधनकृतवर्मपराजयेषोडशाधिकशततमोऽध्यायः ॥ ११६ ॥ ॥



॥ संजयउवाच ॥ काल्यमानेषुसैन्येषुशैनेयेनततस्ततः ॥ भारद्वाजःशरव्रातैर्महद्भिःसमवाकिरत् १ संसंप्रहारस्तुमुलोद्रोणसात्वतयोरभूत् ॥ पश्यतांसर्वसैन्यानांबलिवासवयोरिव २ ततोद्रोणःशिनेःपौत्रंचित्रैःसर्वायसैःशरैः ॥ त्रिभिराशीविषाकारैर्ललाटेसमविध्यत ३ तैर्ललाटार्पितैर्बाणैर्युयुधानस्त्वजिह्मगैः ॥ व्यरोचतमहाराजत्रिशृंगइवपर्वतः ४ ततोऽस्यबाणानपरानिंद्राशनिसमस्वनान् ॥ भारद्वाजोऽतरप्रेक्षीप्रेषयामाससंयुगे ५ तान्द्रोणचापनिर्मुक्तान्दाशार्हःपततःशरान् ॥ द्वाभ्यांद्वाभ्यांसुपुंखाभ्यांचिच्छेदपरमास्त्रवित् ६ तामस्यलघुतांद्रोणःसमवेक्ष्यविशांपते ॥ प्रहस्यसहसाऽविध्यद्विंशताशिनिपुंगवम् ७



४४ । ४५ । ४६ ॥ इतिद्रोणपर्वणिटीकायांषोडशाधिकशततमोऽध्यायः ॥ ११६ ॥ ॥ ७ ॥ ॥ काल्यमानेष्विति १ । २ । ३ । ४ । ५ । ६ । ७

७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ ।२०।२१।२२ रथशक्त्याकेतकपत्राकारमुखयाशक्त्या २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१

पुनःपंचाशतेषूणांशितेनचसमार्पयत ॥ लघुतांयुयुधानस्यलाघवेनाविशेषयन् ८ समुत्पतंतिवल्मीकाद्यथाक्रुद्धामहोरगाः ॥ तथाद्रोणरथाद्राजन्नापतंतितनु
च्छिदः ९ तथैवयुयुधानेनसृष्टाःशतसहस्रशः ॥ अवाकिरन्द्रोणरथंशरारुधिरभोजनाः १० लाघवाद्द्विजमुख्यस्यसात्वतस्यचमारिष ॥ विशेषंनाध्यगच्छा
मसमावास्तांनरर्षभौ ११ सात्यकिस्तुततोद्रोणंनवभिर्नतपर्वभिः ॥ आजघानभृशंक्रुद्धोध्वजंचनिशितैःशरैः १२ सारथिंचशतेनैवभारद्वाजस्यपश्यतः॥ ला
घवंयुयुधानस्यदृष्ट्वाद्रोणोमहारथः १३ सप्तत्यासारथिंविद्ध्वातुरंगांश्चत्रिभिस्त्रिभिः ॥ ध्वजमेकेनचिच्छेदमाधवस्यरथेस्थितम् १४ अथापरेणभल्लेनहेमपुंखे
नपत्रिणा ॥ धनुश्चिच्छेदसमरेमाधवस्यमहात्मनः १५ सात्यकिस्तुततःक्रुद्धोधनुस्त्यक्त्वामहारथः ॥ गदांजग्राहमहतींभारद्वाजायचाक्षिपत् १६ तामापतंतींस
हसापट्टबद्धामयस्मयीम् ॥ न्यवारयच्छरैर्द्रोणोबहुभिर्बहुरूपिभिः १७ अथान्यद्धनुरादायसात्यकिःसत्यविक्रमः ॥ विव्याधबहुभिर्वीरंभारद्वाजंशिलाशितैः १८
सविद्ध्वासमरेद्रोणंसिंहनादममुंचत ॥ तंवैनममृषेद्रोणःसर्वशस्त्रभृतांवरः १९ ततःशक्तिंगृहीत्वातुरुक्मदंडामयस्मयीम् ॥ तरसाप्रेषयामासमाधवस्यरथंप्र
ति २० अनासाद्यतुशैनेयंसाशक्तिःकालसन्निभा ॥ भित्त्वारथंजगामोग्राधरणींदारुणस्वना २१ ततोद्रोणंशिनेःपौत्रोराजन्विव्याधपत्रिणा ॥ दक्षिणंभुजमा
साद्यपीडयन्भरतर्षभ २२ द्रोणोऽपिसमरेराजन्माधवस्यमहद्धनुः ॥ अर्धचंद्रेणचिच्छेदरथशक्त्याचसारथिम् २३ मुमोहसारथिस्तस्यरथशक्त्यासमाहतः ॥
सरथोपस्थमासाद्यमुहूर्तंसंन्यषीदत २४ चकारसात्यकीराजन्सूतकर्मातिमानुषम् ॥ अयोधयच्चयद्द्रोणंरश्मीन्जग्राहचस्वयम् २५ ततःशरशतेनैवयुयुधानो
महारथः ॥ अविध्यद्ब्राह्मणंसंख्येहृष्टरूपोविशांपते २६ तस्यद्रोणःशरान्पंचप्रेषयामासभारत ॥ तेघोराःकवचंभित्त्वापपुःशोणितमाहवे २७ निर्विद्धस्तुशरै
र्घोरैरक्रुद्ध्यत्सात्यकिर्भृशम् ॥ सायकान्व्यसृजच्चापिवीरोरुक्मरथंप्रति २८ ततोद्रोणस्ययंतारंनिपात्यैकेषुणाभुवि ॥ अश्वान्व्यद्रावयद्बाणैर्हतसूतांस्ततस्त
तः २९ सरथःप्रद्रुतःसंख्येमंडलानिसहस्रशः ॥ चकारराजतोराजन्भ्राजमानइवांशुमान् ३० अभिद्रवतगृह्णीतहयान्द्रोणस्यधावत ॥ इतिस्मचुक्रुशुःसर्वेरा
जपुत्राःसराजकाः ३१ तेसात्यकिमपास्याशुराजन्युधिमहारथाः ॥ यतोद्रोणस्ततःसर्वेसहसासमुपाद्रवन् ३२ तान्दृष्ट्वाप्रद्रुतान्संख्येसात्वतेनशरार्दितान् ॥
प्रभग्नंपुनरेवासीत्तवसैन्यंसमाकुलम् ३३ व्यूहस्यैवपुनर्द्वारंगत्वाद्रोणोव्यवस्थितः ॥ वातायमानैस्तैरश्वैर्नीतोवृष्णिशरार्दितैः ३४ पांडुपांचालसंभिन्नंव्यूह
मालोक्यवीर्यवान् ॥ शैनेयेनाकरोद्यत्नंव्यूहमेवाभ्यरक्षत ३५ निवार्यपांडुपंचालान्द्रोणाग्निःप्रदहन्निव ॥ तस्थौक्रोधेध्मसंदीप्तःकालसूर्यइवोद्यतः ३६ ॥
इतिश्रीमहाभारतेद्रोणपर्वणिजय०व०पर्व०सात्यकिप्रवेशेसात्यकिपराक्रमेसप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥ ॥ ७ ॥ ॥ ७ ॥

३२ । ३३ । ३४ । ३५ । ३६ । ॥ इतिद्रोणपर्वणिटीकायांसप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

द्रोणमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ अग्र्यंप्रधानंकर्म १८ ॥ इतिद्रोणपर्वणिटीकायामष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥



॥ संजयउवाच ॥ द्रोणंसजित्वापुरुषप्रवीरस्तथैवहार्दिक्यमुखांस्त्वदीयान् ॥ प्रहस्यसूतंवचनंबभाषेशिनिप्रवीरःकुरुपुंगवाग्र्य १ निमित्तमात्रंवयमत्रसूतद ग्धारयःकेशवफाल्गुनाभ्याम् ॥ हतान्निहन्मेहनरर्षभेणवयंसुरेशात्मसमुद्भवेन २ तमेवमुक्त्वाशिनिपुंगवस्तदामहामृधेसोऽग्र्यधनुर्धरोऽरिहा ॥ किरन्समंता त्सहसाशरान्बलीसमापतत्श्येनइवामिषंयथा ३ तंयांतमश्वैःशशिशंखवर्णैर्विगाह्यसैन्यंपुरुषप्रवीरम् ॥ नाशक्नुवन्वारयितुंसमंतादादित्यरश्मिप्रतिमंरथा ग्र्यम् ४ असह्यविक्रांतमदीनसत्वंसर्वेगणाभारतयेत्वदीयाः ॥ सहस्रनेत्रप्रतिमप्रभावंदिवीवसूर्यंजलदव्यपाये ५ अमर्षपूर्णस्त्वतिचित्रयोधीशरासनीकांचन वर्मधारी ॥ सुदर्शनःसात्यकिमापतंतंन्यवारयद्राजवरःप्रसह्य ६ तयोरभूद्भारतसंप्रहारःसुदारुणस्तंसमतिप्रशंसन् ॥ योधास्त्वदीयाश्चहिसोमकाश्चवृत्रेंद्रयो र्युद्धमिवामरौघाः ७ शरैःसुतीक्ष्णैःशतशोऽभ्यविध्यत्सुदर्शनःसात्वतमुख्यमाजौ ॥ अनागतानेवतुतान्पृषत्कांश्चिच्छेदराजन्शिनिपुंगवोऽपि ८ तथैवशक्र प्रतिमोऽपिसात्यकिःसुदर्शनेयान्क्षिपतिस्मसायकान् ॥ द्विधात्रिधातानकरोत्सुदर्शनःशरोत्तमैःस्यंदनवर्यमास्थितः ९ तान्वीक्ष्यबाणान्निहतांस्तदानींसुदर्श नःसात्यकिबाणवेगैः ॥ क्रोधाद्दिधक्षन्निवतिग्मतेजाःशरानमुंचत्तपनीयचित्रान् १० पुनःसबाणैस्त्रिभिरग्निकल्पैराकर्णपूर्णैर्निशितैःसुपुंखैः ॥ विव्याधदेहावर णंविभिद्यतेसात्यकेराविविशुःशरीरम् ११ तथैवतस्यावनिपालपुत्रःसंधायबाणैरपरैर्ज्वलद्भिः ॥ आजघ्निवांस्तान्रजतप्रकाशांश्चतुर्भिरश्वांश्चतुरःप्रसह्य १२ तथातुतेनाभिहतस्तरस्वीनप्ताशिनेरिंद्रसमानवीर्यः ॥ सुदर्शनस्येषुगणैःसुतीक्ष्णैर्हयान्निहत्याशुननादनादम् १३ अथास्यसूतस्यशिरोनिकृत्यभल्लेनशक्राश निसन्निभेन ॥ सुदर्शनस्यापिशिनिप्रवीरःक्षुरेणकालानलसंनिभेन १४ सकुंडलंपूर्णशशिप्रकाशंभ्राजिष्णुवक्रंविचकर्तदेहात् ॥ यथापुरावज्रधरःप्रसह्यबलस्य संख्येतिबलस्यराजन् १५ निहत्यतंपार्थिवपुत्रपौत्रंरणेयदूनामृषभस्तरस्वी ॥ मुदासमेतःपरयामहात्माररराजराजन्सुरराजकल्पः १६ ततोययावर्जुनएवयेन निवार्यसैन्यंतवमार्गणौघैः ॥ सदश्वयुक्तेनरथेनराजन्लोकंविसिस्मापयिषुर्नृवीरः १७ ततस्यविस्मापयनीयमग्र्यमपूजयन्योधवराःसमेताः ॥ प्रवर्तमानानिषुगो चरेरीन्ददाहबाणैर्हुतभुग्यथैव १८ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिसुदर्शनवधेअष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥ ॥ ७ ॥

॥ संजयउवाच ॥ ततःससात्यकिर्धीमान्महात्मावृष्णिपुंगवः ॥ सुदर्शनंनिहत्याजौयंतारंपुनरब्रवीत् १ रथाश्वनागकलिलंशरशक्त्यूर्मिमालिनम् ॥ खड्गमत्स्यं गदाग्राहंशूरायुधमहास्वनम् २ प्राणापहारिणंरौद्रंवादित्रोत्कुष्टनादितम् ॥ योधानामसुखस्पर्शंदुर्धर्षमजयैषिणाम् ३ तीर्णाःस्मदुस्तरंतातद्रोणानी कमहार्णवम् ॥ जलसंधबलेनाजौपुरुषादैरिवावृतम् ४



ततइति १ । २ । ३ । ४

५ । ६ । ७ । ८ । ९ । १० । ११ । १२ विश्रंभयन्नाश्वासयन् १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ पारयिष्यामिसमापयिष्यामि २७

अतोऽन्यत्पृतनाशेषंमन्येकुनदिकामिव ॥ तर्तव्यामल्पसलिलांचोदयाश्वानसंभ्रमम् ९ हस्तप्राप्तमहंमन्येसांप्रतंसव्यसाचिनम् ॥ निर्जित्यदुर्धरंद्रोणंसपदा
नुगमाहवे ६ हार्दिक्यंयोधवर्यंचमन्येप्राप्तंधनंजयम् ॥ नहिमेजायतेत्रासोदृष्ट्वासैन्यान्यनेकशः ७ वह्नेरिवप्रदीप्तस्यवनेशुष्कतृणोलपे ॥ पश्यपांडवमुख्येन
यातांभूमिंकिरीटिना ८ पत्त्यश्वरथनागौघैःपतितैर्विषमीकृताम् ॥ द्रवतेतद्यथासैन्यंतेनभग्नंमहात्मना ९ रथैर्विपरिधावद्भिर्गजैरश्वैश्चसारथे ॥ कौशेयारुण
संकाशमेतदुद्धूयतेरजः १० अभ्याशस्थमहंमन्येश्वेताश्वंकृष्णसारथिम् ॥ सएषश्रूयतेशब्दोगांडीवस्यामितौजसः ११ यादृशानिनिमित्तानिममप्रादुर्भवंतिवै ॥
अनस्तंगतआदित्येहंतासैंधवमर्जुनः १२ शनैर्विश्रंभयन्नश्वान्याहियत्रारिवाहिनी ॥ यत्रैतेसतलत्राणाःसुयोधनपुरोगमाः १३ दंशिताःक्रूरकर्माणःकांबोजायु
द्धदुर्मदाः ॥ शरबाणासनधरायवनाश्वप्रहारिणः १४ शकाःकिरातादरदाबर्बरास्ताम्रलिप्तकाः ॥ अन्येचबहवोम्लेच्छाविविधायुधपाणयः १५ यत्रैतेसतल
त्राणाःसुयोधनपुरोगमाः ॥ मामेवाभिमुखाःसर्वेतिष्ठंतिसमरार्थिनः १६ एतान्सरथनागाश्वान्निहत्याजौसपत्तिनः ॥ इदंदुर्गंमहाघोरंतीर्णमेवोपधारय १७
सूतउवाच ॥ नसंभ्रमोमेवार्ष्णेयविद्यतेसत्यविक्रम ॥ यद्यपिस्यात्तवक्रुद्धोजामदग्न्योऽग्रतःस्थितः १८ द्रोणोवारथिनांश्रेष्ठःकृपोमद्रेश्वरोऽपिवा ॥ तथाऽपि
संभ्रमोनस्यात्त्वामाश्रित्यमहाभुज १९ त्वयासुबहवोयुद्धेनिर्जिताःशत्रुसूदन ॥ दंशिताःक्रूरकर्माणःकांबोजायुद्धदुर्मदाः २० शरबाणासनधरायवनाश्वप्रहा
रिणः ॥ शकाःकिरातादरदाबर्बरास्ताम्रलिप्तकाः २१ अन्येचबहवोम्लेच्छाविविधायुधपाणयः ॥ नचमेसंभ्रमःकश्चिद्भूतपूर्वःकथंचन २२ किमुतैतत्समासा
द्यधीरसंयुगगोष्पदम् ॥ आयुष्मन्कतरेणत्वांप्रापयामिधनंजयम् २३ केषांक्रुद्धोऽसिवार्ष्णेयकेषांमृत्युरुपस्थितः ॥ केषांसंयमनीमद्यगंतुमुत्सहतेमनः २४
केत्वांयुधिपराक्रांतंकालांतकयमोपमम् ॥ दृष्ट्वाविक्रमसंपन्नंविद्रविष्यंतिसंयुगे २५ केषांवैवस्वतोराजास्मरतेद्यमहाभुज ॥ सात्यकिरुवाच ॥ मुंडानेतान्ह
निष्यामिदानवानिववासवः २६ प्रतिज्ञांपारयिष्यामिकांबोजानेवमांवह ॥ अद्यैषांकदनंकृत्वाप्रियंयास्यामिपांडवम् २७ अद्यद्रक्ष्यंतिमेवीर्यंकौरवाःससुयो
धनाः ॥ मुंडानीकेहतेसूतसर्वसैन्येषुचासकृत् २८ अद्यकौरवसैन्यस्यदीर्यमाणस्यसंयुगे ॥ श्रुत्वाविरावंबहुधासंतप्स्यतिसुयोधनः २९ अद्यपांडवमुख्यस्य
श्वेताश्वस्यमहात्मनः ॥ आचार्यस्यकृतंमार्गंदर्शयिष्यामिसंयुगे ३० अद्यमद्बाणनिहतान्योधमुख्यान्सहस्रशः ॥ दृष्ट्वादुर्योधनोराजापश्चातापंगमिष्यति ॥
३१ अद्यमेक्षिप्रहस्तस्यक्षिपतःसायकोत्तमान् ॥ अलातचक्रप्रतिमंधनुर्द्रक्ष्यंतिकौरवाः ३२

२८ । २९ श्वेताश्वस्यसकाशेकृतमभ्यस्तंमार्गमस्त्रशिक्षामाचार्यस्यद्रोणस्यदर्शयिष्यामीत्यन्वयः अथवाआचार्यस्यविद्योपदेष्टुःश्वेताश्वस्यदर्शयिष्यामीतिसामान्यकर्मकं ३० । ३१ । ३२

३३ द्विरर्जुनंद्वावर्जुनौयत्रनैरुक्तोवर्णागमः ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ शैक्यायसानिशोणितायोमयानि ४२ । ४३ सुपूर्णायतमुक्तैराकर्णज्योत्सृष्टैः अव्यवच्छिन्नपिंडितै



मत्सायकचितांगानांरुधिरंस्रवतांमुहुः ॥ सैनिकानांवधंदृष्ट्वासंतप्स्यातिसुयोधनः ३३ अद्यमेकुद्धरूपस्यनिघ्नतश्चवरान्वरान् ॥ द्विरर्जुनमिमंलोकंमंस्यते ऽद्यसुयोधनः ३४ अद्यराजसहस्राणिनिहतानिमयारणे ॥ दृष्ट्वादुर्योधनोराजासंतप्स्यतिमहामृधे ३५ अद्यस्नेहंचभक्तिंचपांडवेषुमहात्मसु ॥ हत्वाराजसह स्राणिदर्शयिष्यामिराजसु ३६ बलंवीर्यंकृतज्ञत्वंममज्ञास्यंतिकौरवाः ॥ संजयउवाच ॥ एवमुक्तस्तदासूतःशिक्षितान्साधुवाहिनः ३७ शशांकसन्निकाशान्वै वाजिनोऽव्यनुदद्भृशम् ॥ तेऽपिबंतइवाकाशंयुयुधानंहयोत्तमाः ३८ प्रापयन्यवनान्शीघ्रंमनःपवनरंहसः ॥ सात्यकिंतेसमासाद्यपृतनास्वानिवर्तिनम् ३९ बहवोलघुहस्ताश्चशरवर्षैरवाकिरन् ॥ तेषामिषूनथास्त्राणिवेगवान्नतपर्वभिः ४० अच्छिनत्सात्यकीराजन्नैनंतेप्राप्नुवन्शराः ॥ रुक्मपुंखैःसुनिशितैर्गार्ध्रपत्रैराजि ह्मगैः ४१ उच्चकर्तशिरांस्युग्रोयवनानांभुजानपि ॥ शैक्यायसानिवर्माणिकांस्यानिचसमंततः ४२ भित्वादेहांस्तथातेषांशराजग्मुर्महीतलम् ॥ तेहन्यमा नावीरेणम्लेच्छाःसात्यकिनारणे ४३ शतशोऽभ्यपतंस्तत्रव्यसवोवसुधातले ॥ सुपूर्णायतमुक्तैस्तानव्यवच्छिन्नपिंडितैः ४४ पंचषट्सप्तचाष्टौचबिभेदयवना न्शरैः ॥ कांबोजानांसहस्रैश्चशकानांचविशांपते ४५ शबराणांकिरातानांबर्बराणांतथैवच ॥ अगम्यरूपांपृथिवींमांसशोणितकर्दमां ४६ कृतवांस्तत्रशैने यःक्षपयंस्तावकंबलम् ॥ दस्यूनांसशिरस्त्राणैःशिरोभिर्लूनमूर्धजैः ४७ दीर्घकूर्चैर्महीकीर्णाविबर्हैरंडजैरिव ॥ रुधिरोक्षितसर्वांगैस्तैस्तदायोधनंबभौ ४८ कबंधैःसंवृतंसर्वंताम्राभैःखमिवावृतम् ॥ वज्राशनिसमस्पर्शैःसुपर्वभिरजिह्मगैः ४९ तेसात्वतेननिहताःसमावव्रुर्वसुंधराम् ॥ अल्पावशिष्टाःसंभग्नाःकृच्छ्रप्राणा विचेतसः ५० जिताःसंख्येमहाराजयुयुधानेनदंशिताः ॥ पार्ष्णिभिश्चकशाभिश्चताडयंतस्तुरंगमान् ५१ जवमुत्तममास्थायसर्वतःप्राद्रवन्भयात् ॥ कांबो जसैन्यंविद्राव्यदुर्जयंयुधिभारत ५२ यवनानांचतत्सैन्यंशकानांचमहद्बलम् ॥ ततःसपुरुषव्याघ्रःसात्यकिःसत्यविक्रमः ५३ प्रविष्टस्तावकान्जित्वासूतंया हीत्यचोदयत् ॥ तत्तस्यसमरेकर्मदृष्ट्वाऽन्यैरकृतंपुरा ५४ चारणाःसहगंधर्वाःपूजयांचक्रिरेभृशम् ॥ तंयांतंपृष्ठगोप्तारमर्जुनस्यविशांपते ॥ चारणाःप्रेक्ष्यसंहृ ष्टास्त्वदीयाश्चाभ्यपूजयन् ५५ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिसात्यकिप्रवेशेयवनपराजयेएकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

॥ संजयउवाच ॥ जित्वायवनकांबोजानयुयुधानस्ततोऽर्जुनम् ॥ जगामतवसैन्यस्यमध्येनरथिनांवरः १ चारुदंष्ट्रोनरव्याघ्रोविचित्रकवचध्वजः ॥ मृगंव्या घ्रइवाजिघ्रंस्तवसैन्यमभीषयत् २ सरथेनचरन्मार्गान्धनुरभ्रामयद्भृशम् ॥ रुक्मपृष्ठंमहावेगंरुक्मचंद्रकसंकुलम् ३

रनवच्छिन्नसंहतैः ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ ॥ इतिद्रोणपर्वणिटीकायामेकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥ जित्वेति १ । २ । ३

४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६

रुक्मांगदशिरस्त्राणोरुक्मवर्मसमावृतः ॥ रुक्मध्वजधनुःशूरोमेरुशृंगमिवाबभौ ४ सधनुर्मंडलःसंख्येतेजोभास्कररश्मिवान् ॥ शरदीवोदितःसूर्योनृसूर्योवि
रराजह ५ वृषभस्कंधविक्रांतोवृषभाक्षोनरर्षभः ॥ तावकानांबभौमध्येगवांमध्येयथावृषः ६ मत्तद्विरदसंकाशंमत्तद्विरदगामिनम् ॥ प्रभिन्नमिवमातंगंयूथम
ध्येव्यवस्थितम् ७ व्याघ्राइवजिघांसंतस्त्वदीयाःसमुपाद्रवन् ॥ द्रोणानीकमतिक्रांतंभोजानीकंचदुस्तरम् ८ जलसंधार्णवंतीर्त्वाकांबोजानांचवाहिनीम् ॥
हार्दिक्यमकरान्मुक्तंतीर्णंवैसैन्यसागरम् ९ परिवव्रुःसुसंक्रुद्धास्त्वदीयाःसात्यकिंरथाः ॥ दुर्योधनश्चित्रसेनोदुःशासनविविंशतो १० शकुनिर्दुःसहश्चैवयुवादुर्ध
र्षणःक्रथः ॥ अन्येचबहवःशूराःशस्त्रवंतोदुरासदाः ११ पृष्ठतःसात्यकिंयांतमन्वधावन्नमर्षिणः ॥ अथशब्दोमहानासीत्तवसैन्यस्यमारिष १२ मारुतोद्धूतवे
गस्यसागरस्येवपर्वणि ॥ तानभिद्रवतःसर्वान्समीक्ष्यशिनिपुंगवः १३ शनैर्याहीतियंतारमब्रवीत्प्रहसन्निव ॥ इदमेतत्समुद्भूतंधार्तराष्ट्रस्ययद्बलम् १४
मामेवाभिमुखंतूर्णंगजाश्वरथपत्तिमत् ॥ नादयन्वैदिशःसर्वारथघोषेणसारथे १५ पृथिवींचांतरिक्षंचकंपयन्सागरानपि ॥ एतद्बलार्णवंसूतवारयिष्ये
महारणे १६ पौर्णमास्यामिवोद्धूतंवेलेवमकारलयम् ॥ पश्यमेसूतविक्रांतमिंद्रस्येवमहामृधे १७ एषसैन्यानिशत्रूणांविधमामिशितैःशरैः ॥ निहता
नाहवेपश्यपदात्यश्वरथद्विपान् १८ मच्छरैरग्निसंकाशैर्विद्धदेहान्सहस्रशः ॥ इत्येवंब्रुवतस्तस्यसात्यकेरमितौजसः १९ समीपेसैनिकास्तेतुशीघ्रमीयु
र्युयुत्सवः ॥ जह्याद्रवस्वतिष्ठेतिपश्यपश्येतिवादिनः २० तानेवंब्रुवतोवीरान्सात्यकिर्निशितैःशरैः ॥ जघानत्रिशतानश्वान्कुंजरांश्चचतुःशतान् २१ स
संप्रहारस्तुमुलस्तस्यतेषांचधन्विनाम् ॥ देवासुररणप्रख्यःप्रावर्ततजनक्षयः २२ मेघजालनिभंसैन्यंतवपुत्रस्यमारिष ॥ प्रत्यगृह्णाच्छिनेःपौत्रःशरैराशीवि
षोपमैः २३ प्रच्छाद्यमानःसमरेशरजालैःसवीर्यवान् ॥ असंभ्रमन्महाराजतावकानवधीद्बहून् २४ आश्चर्यंतत्रराजेंद्रसुमहद्दृष्टवानहम् ॥ नमोघःसायकःक
श्चित्सात्यकेरभवत्प्रभो २५ रथनागाश्वकलिलःपदात्यूर्मिसमाकुलः ॥ शैनेयवेलामासाद्यास्थितःसैन्यमहार्णवः २६ संभ्रांतनरनागाश्वमावर्ततमुहुर्मुहुः ॥ त
त्सैन्यमिषुभिस्तेनवध्यमानंसमंततः २७ बभ्रामतत्रतत्रैवगावःशीतार्दिताइव ॥ पदातिनंरथंनागंसादिनंतुरगंतथा २८ अविद्धंतत्रनाऽद्राक्षंयुयुधानस्यसा
यकैः ॥ नतादृक्कदनंराजन्कृतवांस्तत्रफाल्गुनः २९ यादृक्क्षयमनीकानामकरोत्सात्यकिर्नृप ॥ अत्यर्जुनंशिनेःपौत्रोयुध्यतेपुरुषर्षभः ३० वीतभीर्लाघवो
पेतःकृतित्वंसंप्रदर्शयन् ॥ ततोदुर्योधनोराजासात्वतस्यत्रिभिःशरैः ३१ विव्याधसूतंनिशितैश्चतुर्भिश्चतुरोहयान् ॥ सात्यकिंचत्रिभिर्विद्ध्वापुनरष्टाभिरेवच
३२ दुःशासनःषोडशभिर्विव्याधशिनिपुंगवम् ॥ शकुनिःपंचविंशत्याचित्रसेनश्चपंचभिः ३३

२७ । २८ । २९ । ३० । ३१ । ३२ । ३३

 ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ ॥ इतिद्रोणपर्वणिटीकायांविंशत्यधिकशततमोऽध्यायः ॥ १२० ॥ ॥ संप्रमृद्येति १ । २ । ३ 



दुःसहःपंचदशभिर्विव्याधोरसिसात्यकिम् ॥ उत्स्मयन्वृष्णिशार्दूलस्तथाबाणैःसमाहतः ३४ तानविध्यन्महाराजसर्वानेवत्रिभिस्त्रिभिः ॥ गाढविद्धानरीन्कृत्वा मार्गणैःसोऽतितेजनैः ३५ शैनेयःश्येनवत्संख्येव्यचरल्लघुविक्रमः ॥ सौबलस्यधनुश्छित्वाहस्तावापंनिकृत्यच ३६ दुर्योधनंत्रिभिर्बाणैरभ्यविध्यत्स्तनांतरे ॥ चित्रसेनंशतेनैवदशभिर्दुःसहंतथा ३७ दुःशासनंतुविंशत्याविव्याधशिनिपुंगवः ॥ अथान्यद्धनुरादायस्यालस्तवविशांपते ३८ अष्टाभिःसात्यकिंविद्ध्वापुन र्विव्याधपंचभिः ॥ दुःशासनश्चदशभिर्दुःसहश्चत्रिभिःशरैः ३९ दुर्मुखश्चद्वादशभीराजन्विव्याधसात्यकिम् ॥ दुर्योधनस्त्रिसप्तत्याविद्ध्वाभारतमाधवम् ४० ततोऽस्यनिशितैर्बाणैस्त्रिभिर्विव्याधसारथिम् ॥ तान्सर्वान्सहितान्शूरान्यतमानान्महारथान् ४१ पंचभिःपंचभिर्बाणैःपुनर्विव्याधसात्यकिः ॥ ततःसरथि नांश्रेष्ठस्तवपुत्रस्यसारथिम् ४२ आजघानाशुभल्लेनसहतोन्यपतद्भुवि ॥ पतितेसारथौतस्मिंस्तवपुत्ररथःप्रभो ४३ वातायमानैस्तैरश्वैरपानीयतसंगरात् ॥ ततस्तवसुताराजन्सैनिकाश्चविशांपते ४४ राज्ञोरथमभिप्रेक्ष्यविद्रुताःशतशोऽभवन् ॥ विद्रुतंतत्रतत्सैन्यंदृष्ट्वाभारतसात्यकिः ४५ अवाकिरच्छरैस्तीक्ष्णैरु क्मपुंखैःशिलाशितैः ॥ विद्राव्यसर्वसैन्यानितावकानिसहस्रशः ४६ प्रययौसात्यकीराजन्श्वेताश्वस्यरथंप्रति ॥ तंशरानाददानंचरक्षमाणंचसारथिम् ॥ आ त्मानंपालयानंचतावकाःसमपूजयन् ४७ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिसात्यकिप्रवेशेदुर्योधनपलायनेविंशत्यधिकशततमोऽध्यायः॥१२०॥

॥ धृतराष्ट्रउवाच ॥ संप्रमृद्यमहत्सैन्यंयांतंशैनेयमर्जुनम् ॥ निर्ह्रीकाममतेपुत्राःकिमकुर्वतसंजय १ कथंवैषांतदायुद्धेधृतिरासीन्मुमूर्षताम् ॥ शैनेयचरि तंदृष्ट्वायादृशंसव्यसाचिनः २ किंनुवक्ष्यंतितेक्षात्रंसैन्यमध्येपराजिताः ॥ कथंनुसात्यकिर्युद्धेव्यतिक्रांतोमहायशाः ३ कथंचममपुत्राणांजीवतांतत्रसंजय ॥ शैनेयोऽभिययौयुद्धेतन्ममाचक्ष्वसंजय ४ अत्यद्भुतमिदंतातत्वत्सकाशाच्छृणोम्यहम् ॥ एकस्यबहुभिःसार्धंशत्रुभिस्तैर्महारथैः ५ विपरीतमहंमन्येमंदभाग्यं सुतंप्रति ॥ यत्रावध्यंतसमरेसात्वतेनमहारथाः ६ एकस्यहिनपर्याप्तंयत्सैन्यंतस्यसंजय ॥ क्रुद्धस्ययुयुधानस्यसर्वेतिष्ठंतुपांडवाः ७ निर्जित्यसमरेद्रोणंकृति नंचित्रयोधिनम् ॥ यथापशुगणान्सिंहस्तद्वद्धंतासुतान्मम ८ कृतवर्मादिभिःशूरैर्यत्तैर्बहुभिराहवे ॥ युयुधानोनशकितोहंतुंयत्पुरुषर्षभः ९ नैतदीदृशकंयुद्धं कृतवांस्तत्रफाल्गुनः ॥ यादृशंकृतवान्युद्धंशिनेर्नप्तामहायशाः १० ॥ संजयउवाच ॥ तवदुर्मंत्रितेराजन्दुर्योधनकृतेनच ॥ शृणुष्वावहितोभूत्वायत्तेवक्ष्या मिभारत ११ तेपुनःसंन्यवर्तंतकृत्वासंशप्तकामिथः ॥ परांयुद्धेमतिंक्रूरांतवपुत्रस्यशासनात् १२

४ । ५ । ६ । ७ । ८ । ९ । १० दुर्योधनस्यकृतेनकर्मणा ११ मतिंकृत्वेत्यन्वयः १२

१३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ वामनस्ययमोपवाह्यस्य । 'चंद्राःकांतशिरोग्रीवानीचस्कंधामनस्विनः । व्यूढोरस्काःसुनिश्चितावामनान्वयजागजाः' ।
सुप्रतीकस्यईशोपवाह्यस्य । 'सुविभक्तमहाशीर्षाजीमूतसदृशप्रभाः ॥ प्रभूतहस्ताबलिनःसुप्रतीककुलोद्भवाः' ॥ महापद्मस्यकुमुदस्यकुले । 'चंडाःसमायतत्वक्काःसुबद्धाबलिनोऽपिच॥ महापद्मान्वय

त्रीणिसादिसहस्राणिदुर्योधनपुरोगमाः ॥ शककांबोजबाह्लीकायवनाःपारदास्तथा १३ कुलिंदास्तंगणांबष्ठाःपैशाचाश्चसबर्बराः ॥ पार्वतीयाश्चराजेंद्रक्रुद्धाःपा
षाणपाणयः १४ अभ्यद्रवंतशैनेयंशलभाःपावकंयथा ॥ युक्ताश्चपार्वतीयानांरथाःपाषाणयोधिनाम् १५ शूराःपंचाशताराजन्शैनेयंसमुपाद्रवन् ॥ ततोरथस
हस्रेणमहारथशतेनच १६ द्विरदानांसहस्रेणद्विसाहस्रैश्चवाजिभिः ॥ शरवर्षाणिमुंचंतोविविधानिमहारथाः १७ अभ्यद्रवंतशैनेयमसंख्येयाश्चपत्तयः ॥ तां
श्चसंचोदयन्सर्वान्घ्नतैनमितिभारत १८ दुःशासनोमहाराजसात्यकिंपर्यवारयत् ॥ तत्राद्भुतमपश्यामशैनेयचरितंमहत् १९ यदेकोबहुभिःसार्धमसंभ्रांतमयु
ध्यत ॥ अवधीच्चरथानीकंद्विरदानांचतद्बलम् २० सादिनश्चैवतान्सर्वान्दस्यूनपिचसर्वशः ॥ तत्रचक्रैर्विमथितैर्भग्नैश्चपरमायुधैः २१ अक्षैश्चबहुधाभग्नैरी
षादंडकबंधुरैः ॥ कुंजरैर्मथितैश्चापिध्वजैश्चविनिपातितैः २२ वर्मभिश्चतथाऽनीकैर्व्यवकीर्णावसुंधरा ॥ स्रग्भिराभरणैर्वस्त्रैरनुकर्षैश्चमारिष २३ संछन्नावसु
धातत्रद्यौर्ग्रहैरिवभारत ॥ गिरिरूपधराश्चापिपतिताःकुंजरोत्तमाः २४ अंजनस्यकुलेजातावामनस्यचभारत ॥ सुप्रतीककुलेजातामहापद्मकुलेतथा २५ ऐ
रावतकुलेचैवतथाऽन्येषुकुलेषुच ॥ जातादंतिवराराजन्शेरतेबहवोहताः २६ वनायुजान्पार्वतीयान्कांबोजान्बाल्हिकानपि ॥ तथाहयवरान्राजन्निजघ्ने त
त्रसात्यकिः २७ नानादेशसमुत्थांश्चनानाजातींश्चदंतिनः ॥ निजघ्नेतत्रशैनेयःशतशोऽथसहस्रशः २८ तेषुप्रकाल्यमानेषुदस्यून्दुःशासनोऽब्रवीत् ॥ निवर्त
ध्वमधर्मज्ञायुध्यध्वंकिंसृतेनवः २९ तांश्चातिभग्नान्संप्रेक्ष्यपुत्रोदुःशासनस्तव ॥ पाषाणयोधिनःशूरान्पार्वतीयानचोदयत् ३० अश्मयुद्धेषुकुशलानैतज्जाना
तिसात्यकिः ॥ अश्मयुद्धमजानंतंहतैनंयुद्धकामुकम् ३१ तथैवकुरवःसर्वेनाश्मयुद्धविशारदाः ॥ अभिद्रवतमाभैष्टनवःप्राप्स्यतिसात्यकिः ३२ तेपार्वतीया
राजानःसर्वेपाषाणयोधिनः ॥ अभ्यद्रवंतशैनेयंराजानमिवमंत्रिणः ३३ ततोगजशिरःप्रख्यैरुपलैःशैलवासिनः ॥ उद्यतैर्युयुधानस्यपुरतस्तस्थुराहवे ३४
क्षेपणीयैस्तथाऽप्यन्येसात्वतस्यवधैषिणः ॥ चोदितास्तवपुत्रेणसर्वतोरुरुधुर्दिशः ३५ तेषामापततामेवशिलायुद्धंचिकीर्षताम् ॥ सात्यकिःप्रतिसंधायानि
शितान्प्राहिणोच्छरान् ३६ तामश्मवृष्टिंतुमुलांपार्वतीयैःसमीरिताम् ॥ चिच्छेदोरगसंकाशैर्नाराचैःशिनिपुंगवः ३७ तैरश्मचूर्णैर्दीप्यद्भिःखद्योतानामिवव्रजैः ॥
प्रायःसैन्यान्यहन्यंतहाहाभूतानिमारिष ३८ भवागजयुद्धप्रियागजाः' २५ 'श्वेतवालनखाःशूराःश्वेतत्वक्कामहाबलाः ॥ उदग्रावर्ष्मवंतश्चगजाऐरावतोद्भवाः' ॥ अन्येषुकुलेषुपुंडरीकपु
ष्पदंतसार्वभौमादिषु । 'स्थिराःस्थूलशिरोदंतानिःशंकाबलिनोऽपिच ॥ शुक्लवर्णनखाःशूराःपुंडरीकोद्भवागजाः ॥ श्यामत्वग्दशनाश्चंडालंबोष्ठाश्चारुदर्शनाः ॥ पीनायताननकराःपुष्पदंतोद्भवा
गजाः ॥ मंडलाकृतयःशूराःसुवर्माणःसुदर्शनाः ॥ पीनायतास्याःपीताभाःसार्वभौमकुलोद्भवाः' २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ क्षेपणीयैःशस्त्रैः ३५ । ३६ । ३७ । ३८

३९ । ४० । ४१ व्यात्तमुखाम्लेच्छविशेषाः ४२ । ४३ अद्रीणांप्रस्तराणां ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८

ततःपंचशतंशूराःसमुद्यतमहाशिलाः ॥ निकृत्तबाहवोराजन्निपेतुर्धरणीतले ३९ पुनर्दशशताश्चान्येशतसाहस्रिणस्तथा ॥ सोपलैर्बाहुभिश्छिन्नैःपेतुरप्राप्यसात्यकिं ४० पाषाणयोधिनःशूरान्यतमानानवस्थितान् ॥ न्यवधीद्बहुसाहस्रांस्तदद्भुतमिवाभवत् ४१ ततःपुनर्व्यात्तमुखास्तेऽश्मवृष्टीःसमंततः ॥ अयोहस्ताःशूलहस्तादरदास्तंगणाःखसाः ४२ लंपाकाश्चकुलिंदाश्चचिक्षिपुस्तांश्चसात्यकिः ॥ नाराचैःप्रतिचिक्षेपच्छेदप्रतिपत्तिविशारदः ४३ अद्रीणांभिद्यमानानामंतरिक्षेशितैःशरैः ॥ शब्देनप्राद्रवन्संख्येरथाश्वगजपत्तयः ४४ अश्मचूर्णैरवाकीर्णामनुष्यगजवाजिनः ॥ नाशक्नुवन्नवस्थातुंभ्रमरैरिवदंशिताः ४५ हताशिष्टाःसरुधिराभिन्नमस्तकपिंडिकाः ॥ कुंजरावर्जयामासुर्युयुधानरथंतदा ४६ ततःशब्दःसमभवत्तवसैन्यस्यमारिष ॥ माधवेनार्द्यमानस्यसागरस्येवपर्वणि ४७ तंशब्दंतुमुलंश्रुत्वाद्रोणोयंतारमब्रवीत् ॥ एषसूतरणेक्रुद्धःसात्वतानांमहारथः ४८ दारयन्बहुधासैन्यंरणेचरतिकालवत् ॥ यत्रैषशब्दस्तुमुलस्तत्रसूतरथंनय ४९ पाषाणयोधिभिर्नूनंयुयुधानःसमागतः ॥ तथाहिरथिनःसर्वेह्रियंतेविद्रुतैर्हयैः ५० विशस्त्रकवचारुग्णास्तत्रतत्रपतंतिच ॥ नशक्नुवंतियंतारःसंयंतुंतुमुलेहयान् ५१ इत्येतद्वचनंश्रुत्वाभारद्वाजस्यसारथिः ॥ प्रत्युवाचततोद्रोणंसर्वशस्त्रभृतांवरम् ५२ सैन्यंद्रवतिचायुष्मन्कौरवेयंसमंततः ॥ पश्ययोधान्रणेभग्रान्धावतोवैततस्ततः ५३ इमेचसंहताःशूराःपंचालाःपांडवैःसह ॥ त्वामेवहिजिघांसंतआद्रवंतिसमंततः ५४ अत्रकार्यंसमाधत्स्वप्राप्तकालमरिंदम ॥ स्थानेवागमनेवापिदूरंयातश्चसात्यकिः ५५ तथैवंवदतस्तस्यभारद्वाजस्यसारथेः ॥ प्रत्यदृश्यतशैनेयोनिघ्नन्बहुविधान्रथान् ५६ तेवध्यमानाःसमरेयुयुधानेनतावकाः ॥ युयुधानरथंत्यक्त्वाद्रोणानीकायदुद्रुवुः ५७ यैस्तुदुःशासनःसार्धंरथैःपूर्वंन्यवर्तत ॥ तेभीतास्त्वभ्यधावंतसर्वेद्रोणरथंप्रति ५८ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिसात्यकिप्रवेशेएकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥ ध ॥ ॥ संजयउवाच ॥ दुःशासनरथंदृष्ट्वासमीपेपर्यवस्थितम् ॥ भारद्वाजस्ततोवाक्यंदुःशासनमथाब्रवीत् १ दुःशासनरथाःसर्वेकस्माच्चैतेप्रविद्रुताः ॥ कच्चित्क्षेमंतुनृपतेःकच्चिज्जीवतिसैंधवः २ राजपुत्रोभवानत्रराजभ्राता महारथः ॥ किमर्थंद्रवतेयुद्धेयौवराज्यमवाप्यहि ३ दासीजितासिद्यूतेत्वंयथाकामचरीभव ॥ वाससांवाहिकाराज्ञोभ्रातुर्ज्येष्ठस्यमेभव ४ नसंतिपतयःसर्वेतेऽद्यषंढतिलैःसमाः ॥ दुःशासनैवंकस्मात्त्वंपूर्वमुक्त्वापलायसे ५ स्वयंवैरंमहत्कृत्वापंचालैःपांडवैःसह ॥ एकंसात्यकिमासाद्यकथंभीतोऽसिसंयुगे ६ नजानीषेपुरात्वंतुगृह्णन्नक्षान्दुरोदर ॥ शराह्येतेभविष्यंतिदारुणाशीविषोपमाः ७

॥ इतिद्रोणपर्वणिटीकायामेकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥ ॥ ध ॥ दुःशासनरथमिति १ । २ । ३ । ४ । ५ । ६ । ७

८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९

अप्रियाणांहिवचसांपांडवस्यविशेषतः ॥ द्रौपद्याश्चपरिक्लेशस्त्वन्मूलोऽह्यभवत्पुरा ८ क्वतेमानश्चदर्पश्चक्वतेवीर्यंक्वगर्जितम् ॥ आशीविषसमान्पार्थान्कोपयि
त्वाक्वयास्यसि ९ शोच्येयंभारतीसेनाराज्यंचैवसुयोधनः ॥ यस्यत्वंकर्कशोभ्राताप्पलायनपरायणः १० ननुनामत्वयावीरदीर्यमाणाभयार्दिता ॥ स्वबाहुबल
मास्थायरक्षितव्याह्यनीकिनी ११ सत्वमद्यरणंहित्वाभीतोहर्षयसेपरान् ॥ विद्रुतेत्वयिसैन्यस्यनायकेशत्रुसूदन १२ कोऽन्यःस्थास्यतिसंग्रामेभीतोभीतेव्य
पाश्रये ॥ एकेनसात्वतेनाद्ययुध्यमानस्यतेनवै १३ पलायनेतवमतिःसंग्रामाद्धिप्रवर्तते ॥ यदागांडीवधन्वानंभीमसेनंचकौरव १४ यमौवायुधिद्रष्टाऽसित
दात्वंकिंकरिष्यसि ॥ युधिफाल्गुनबाणानांसूर्याग्निसमवर्चसाम् १५ नतुल्याःसात्यकिशरायेषांभीतःपलायसे ॥ त्वरितोवीरगच्छत्वंगांधार्युदरमाविश १६
पृथिव्यांधावमानस्यनान्यत्पश्यामिजीवनम् ॥ यदितावत्कृताबुद्धिःपलायनपरायणा १७ पृथिवीधर्मराजायशमेनैवप्रदीयताम् ॥ यावत्फाल्गुननाराचा
निर्मुक्तोरगसन्निभाः १८ नाविशंतिशरीरंतेतावत्संशाम्यपांडवैः ॥ यावत्तेपृथिवींपार्थाहत्वाभ्रातृशतंरणे १९ नाक्षिपंतिमहात्मानस्तावत्संशाम्यपांडवैः ॥
यावन्नक्रुद्ध्यतेराजाधर्मपुत्रोयुधिष्ठिरः २० कृष्णश्चसमरश्लाघीतावत्संशाम्यपांडवैः ॥ यावद्भीमोमहाबाहुर्विगाह्यमहतींचमूम् २१ सोदरांस्तेनगृह्णातिताव
त्संशाम्यपांडवैः ॥ पूर्वमुक्तश्चतेभ्राताभीष्मेणासौसुयोधनः २२ अजेयाःपांडवाःसंख्येसौम्यसंशाम्यतैःसह ॥ नचतत्कृतवान्मंदस्तवभ्रातासुयोधनः २३ स
युद्धेधृतिमास्थाययत्तोयुध्यस्वपांडवैः ॥ तवापिशोणितंभीमःपास्यतीतिमयाश्रुतम् २४ तच्चाप्यवितथंतस्यतत्तथैवभविष्यति ॥ किंभीमस्यनजानासिवि
क्रमंत्वंसुबालिश २५ यत्त्वयावैरमारब्धंसंयुगेप्रपलायिना ॥ गच्छतूर्णंरथेनैवयत्रतिष्ठतिसात्यकिः २६ त्वयाहीनंबलंह्येतद्विद्रविष्यतिभारत ॥ आत्मार्थंयो
धयरणेसात्यकिंसत्यविक्रमम् २७ एवमुक्तस्तवसुतोनाब्रवीत्किंचिदप्यसौ ॥ श्रुतंचाश्रुतवत्कृत्वाप्रायाद्येनससात्यकिः २८ सैन्येनमहतायुक्तोम्लेच्छानामनि
वर्तिनाम् ॥ आसाद्यचरणेयत्तोयुयुधानमयोधयत् २९ द्रोणोऽपिरथिनांश्रेष्ठःपंचालान्पांडवांस्तथा ॥ अभ्यद्रवतसंक्रुद्धोजवमास्थायमध्यमम् ३० प्रवि
श्यचरणेद्रोणःपांडवानांवरूथिनीम् ॥ द्रावयामासयोधान्वैशतशोऽथसहस्रशः ३१ ततोद्रोणोमहाराजनामविश्राव्यसंयुगे ॥ पांडुपांचालमत्स्यानांप्रचक्रे
कदनंमहत् ३२ तंजयंतमनीकानिभारद्वाजंततस्ततः ॥ पांचालपुत्रोद्युतिमान्वीरकेतुःसमभ्ययात् ३३ सद्रोणंपंचभिर्विद्ध्वाशरैःसन्नतपर्वभिः ॥ ध्वजमेकेन
विव्याधसारथिंचास्यसप्तभिः ३४ तत्राद्भुतंमहाराजदृष्टवानस्मिसंयुगे ॥ यद्द्रोणोरभसंयुद्धेपांचाल्यंनाभ्यवर्तत ३५ सन्निरुद्धंरणेद्रोणंपंचालावीक्ष्यमारिष ॥
आवव्रुःसर्वतोराजन्धर्मपुत्रजयैषिणः ३६

३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६

तेशरैरग्निसंकाशैस्तोमरैश्चमहाघनैः ॥ शस्त्रैश्चविविधैराजन्द्रोणमेकमवाकिरन् ३७ निहत्यतान्बाणगणैर्द्रोणोराजन्समंततः ॥ महाजलधरान्व्योम्निमातरि
श्वेवचाबभौ ३८ ततःशरंमहाघोरंसूर्यपावकसन्निभम् ॥ संदधेपरवीरघ्नोवीरकेतोरथंप्रति ३९ सभित्त्वातुशरोराजन्पांचालकुलनंदनम् ॥ अभ्यगाद्धरणीं
तूर्णंलोहितार्द्रोज्वलन्निव ४० ततोपतद्रथात्तूर्णंपांचालकुलनंदनः ॥ पर्वताग्रादिवमहांश्चंपकोवायुपीडितः ४१ तस्मिन्हतेमहेष्वासेराजपुत्रेमहाबले ॥
पंचालास्त्वरिताद्रोणंसमंतात्पर्यवारयन् ४२ चित्रकेतुःसुधन्वाचचित्रवर्माचभारत ॥ तथाचित्ररथश्चैवभ्रातुर्व्यसनकर्शिताः ४३ अभ्यद्रवंतसहिताभारद्वा
जंयुयुत्सवः ॥ मुंचंतःशरवर्षाणितपांतेजलदाइव ४४ सवध्यमानोबहुधाराजपुत्रैर्महारथैः ॥ क्रोधमाहारयत्तेषामभावायद्विजर्षभः ४५ ततःशरमयंजालंद्रो
णस्तेषामवासृजत् ॥ तेहन्यमानाद्रोणस्यशरैराकर्णचोदितैः ४६ कर्तव्यंनाभ्यजानन्वैकुमाराराजसत्तम ॥ तान्विमूढान्रणेद्रोणःप्रहसन्निवभारत ४७
व्यश्वसूतरथांश्चक्रेकुमारान्कुपितोरणे ॥ अथापरैःसुनिशितैर्भल्लैस्तेषांमहायशाः ४८ पुष्पाणीवविचिन्वान्हिसोत्तमांगान्यपातयत् ॥ तेरथेभ्योहताःपेतुःक्षि
तौराजन्सुवर्चसः ४९ देवासुरेपुरायुद्धेयथादैतेयदानवाः ॥ तान्निहत्यरणेराजन्भारद्वाजःप्रतापवान् ५० कार्मुकंभ्रामयामासहेमपृष्ठंदुरासदम् ॥ पंचालान्निहतान्
दृष्ट्वादेवकल्पान्महारथान् ५१ धृष्टद्युम्नोभृशोद्विग्नोनेत्राभ्यांपातयन्जलम् ॥ अभ्यवर्ततसंग्रामेक्रुद्धोद्रोणरथंप्रति ५२ ततोहाहेतिसहसानादःसमभवन्नृप ॥
पांचाल्येनरणेदृष्ट्वाद्रोणमावारितंशरैः ५३ सच्छाद्यमानोबहुधापार्षतेनमहात्मना ॥ नविव्यथेततोद्रोणःस्मयन्नेवान्वयुध्यत ५४ ततोद्रोणंमहाराजपांचाल्यः
क्रोधमूर्छितः ॥ आजघानोरसिक्रुद्धोनवत्यानतपर्वणाम् ५५ सगाढविद्धोबलिनाभारद्वाजोमहायशाः ॥ निषसादरथोपस्थेकश्मलंचजगामह ५६ तंवैतथा
गतंदृष्ट्वाधृष्टद्युम्नःपराक्रमी ॥ चापमुत्सृज्यशीघ्रंतुअसिंजग्राहवीर्यवान् ५७ अवप्लुत्यरथाच्चापित्वरितःसमहारथः ॥ आरुरोहरथंतूर्णंभारद्वाजस्यमारिष ५८
हर्तुमिच्छन्शिरःकायात्क्रोधसंरक्तलोचनः ॥ प्रत्याश्वस्तस्ततोद्रोणोधनुर्गृह्यमहारवम् ५९ आसन्नमागतंदृष्ट्वाधृष्टद्युम्नंजिघांसया ॥ शरैर्वैतस्तिकैराजन्वि
व्याधासन्नवेधिभिः ६० योधयामाससमरेधृष्टद्युम्नंमहारथम् ॥ तेहिवैतस्तिकानामशराआसन्नयोधिनः ६१ द्रोणस्यविहिताराजन्यैर्धृष्टद्युम्नमाक्षिणोत् ॥
सवध्यमानोबहुभिःसायकैस्तैर्महाबलः ६२ अवप्लुत्यरथात्तूर्णंभग्नवेगःपराक्रमी ॥ आरुह्यस्वरथंवीरःप्रगृह्यचमहद्धनुः ६३ विव्याधसमरेद्रोणंधृष्टद्युम्नोमहा
रथः ॥ द्रोणश्चापिमहाराजशरैर्विव्याधपार्षतम् ६४ तदद्भुतमभूद्युद्धंद्रोणपांचालयोस्तदा ॥ त्रैलोक्यकांक्षिणोरासीच्छक्रप्रह्लादयोरिव ६५ मंडलानिवि
चित्राणियमकानीतराणिच ॥ चरंतौयुद्धमार्गज्ञौततक्षतुरथेषुभिः ६६

मोहयंतौमनांस्याजौयोधानांद्रोणपार्षतौ ॥ सृजंतौशरवर्षाणिवर्षास्विवबलाहकौ ६७ छादयंतौमहात्मानौशरैर्व्योमदिशोमहीम् ॥ तदद्भुतंतयोर्युद्धंभूतसं
घाह्यपूजयन् ६८ क्षत्रियाश्चमहाराजयेचान्येतवसैनिकाः ॥ अवश्यंसमरेद्रोणोधृष्टद्युम्नेनसंगतः ६९ वशमेष्यतिनोराजन्पंचालाइतिचुक्रुशुः ॥ द्रोणस्तुत्व
रितोयुद्धेधृष्टद्युम्नस्यसारथेः ७० शिरःप्रच्यावयामासफलंपक्वंतरोरिव ॥ ततस्तुप्रद्रुतावाहाराजंस्तस्यमहात्मनः ७१ तेषुप्रद्रवमाणेषुपंचालान्सृंजयांस्तथा ॥
अयोधयद्रणेद्रोणस्तत्रतत्रपराक्रमी ७२ विजित्यपांडुपंचालान्भारद्वाजःप्रतापवान् ॥ स्वंव्यूहंपुनरास्थायस्थितोऽभवदरिंदमः ॥ नचैनंपांडवायुद्धेजेतुमु
त्सेहिरेप्रभो ७३ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि सात्यकिप्रवेशेद्रोणपराक्रमेद्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥ ॥ ७ ॥ ॥
संजयउवाच ॥ ततोदुःशासनोराजन्शैनेयंसमुपाद्रवत् ॥ किरन्शरसहस्राणिपर्जन्यइववृष्टिमान् १ सविद्ध्वासात्यकिंषष्ट्यातथाषोडशभिःशरैः ॥ नाकंपय
त्स्थितंयुद्धेमैनाकमिवपर्वतम् २ तंतुदुःशासनःशूरःसायकैरावृणोद्भृशम् ॥ रथव्रातेनमहतानानादेशोद्भवेनच ३ सर्वतोभरतश्रेष्ठविसृजन्सायकान्बहून् ॥
पर्जन्यइवघोषेणनादयन्वैदिशोदश ४ तमापतंतमालोक्यसात्यकिःकौरवंरणे ॥ अभिद्रुत्यमहाबाहुश्छादयामाससायकैः ५ तेछाद्यमानाबाणौघैर्दुःशासनपु
रोगमाः ॥ प्राद्रवन्समरेभीतास्तवसैन्यस्यपश्यतः ६ तेषुद्रवत्सुराजेंद्रपुत्रोदुःशासनस्तव ॥ तस्थौव्यपेतभीराजन्सात्यकिंचार्दयच्छरैः ७ चतुर्भिर्वाजि
नस्तस्यसारथिंचत्रिभिःशरैः ॥ सात्यकिंचशतेनाजौविद्ध्वानादंमुमोचसः ८ ततःक्रुद्धोमहाराजमाधवस्तस्यसंयुगे ॥ रथंसूतंध्वजंतंचचक्रेऽदृश्यमजिह्मगैः
९ सतुदुःशासनंशूरंसायकैरावृणोद्भृशम् ॥ सशंकसमनुप्राप्तमूर्णनाभिरिवोर्णया १० त्वरन्समावृणोद्बाणैर्दुःशासनममित्रजित् ॥ दृष्ट्वादुःशासनंराजातथाशर
शताचितम् ११ त्रिगर्तांश्चोदयामासयुयुधानरथंप्रति ॥ तेऽगच्छन्युयुधानस्यसमीपंक्रूरकर्मणः १२ त्रिगर्तानांत्रिसाहस्रारथायुद्धविशारदाः ॥ तेतुतंरथ
वंशेनमहतापर्यवारयन् १३ स्थिरांकृत्वामतिंयुद्धेभूत्वासंशप्तकामिथः ॥ तेषांप्रपततांयुद्धेशरवर्षाणिमुंचताम् १४ योधान्पंचशतान्मुख्यानग्र्यानीकेव्यपो
थयत् ॥ तेऽपतन्निहतास्तूर्णंशिनिप्रवरसायकैः १५ महामारुतवेगेनभग्नाइववनगाद्रुमाः ॥ नागैश्चबहुधाच्छिन्नैर्ध्वजैश्चैवविशांपते १६ हयैश्चकनकापीडैःप
तितैस्तत्रमेदिनी ॥ शैनेयशरसंकृत्तैःशोणितौघपरिप्लुतैः १७ अशोभतमहाराजकिंशुकैरिवपुष्पितैः ॥ तेवध्यमानाःसमरेयुयुधानेनतावकाः १८ त्रातारंना
ध्यगच्छंतपंकमग्नाइवद्विपाः ॥ ततस्तेपर्यवर्तंतसर्वेद्रोणरथंप्रति १९ भयात्पतगराजस्यगर्तानीवमहोरगाः ॥ हत्वापंचशतान्योधाञ्छरैराशीविषोपमैः २०

प्रायात्सशनकैर्वीरोधनंजयरथंप्रति ॥ तंप्रयांतंनरश्रेष्ठंपुत्रोदुःशासनस्तव २१ विव्याधनवभिस्तूर्णंशरैःसन्नतपर्वभिः ॥ सतुतंप्रतिविव्याधपंचभिर्निशितैः शरैः २२ रुक्मपुंखैर्महेष्वासोगार्ध्रपत्रैरजिह्मगैः ॥ सात्यकिंतुमहाराजप्रहसन्निवभारत २३ दुःशासनस्त्रिभिर्विद्ध्वापुनर्विव्याधपंचभिः ॥ शैनेयस्तवपुत्रंतुह त्वापंचभिराशुगैः २४ धनुश्चास्यरणेछित्वाविस्मयन्नर्जुनंययौ ॥ ततोदुःशासनःक्रुद्धोवृष्णिवीरायगच्छते २५ सर्वपारसवींशक्तिंविससर्जजिघांसया ॥ तांतु शक्तिंतदाघोरांतवपुत्रस्यसात्यकिः २६ चिच्छेदशतधाराजन्निशितैःकंकपत्रिभिः ॥ अथान्यद्धनुरादायपुत्रस्तवजनेश्वर २७ सात्यकिंचशरैर्विद्ध्वासिंहना दंननर्दह ॥ सात्यकिस्तुरणेक्रुद्धोमोहयित्वासुतंतव २८ शरैरग्निशिखाकारैराजघानस्तनांतरे ॥ त्रिभिरेवमहाभागःशरैःसन्नतपर्वभिः २९ सर्वायसैस्तीक्ष्णव क्त्रैःपुनर्विव्याधचाष्टभिः ॥ दुःशासनस्तुविंशत्यासात्यकिंप्रत्यविध्यत ३० सात्वतोऽपिमहाराजतंविव्याधस्तनांतरे ॥ त्रिभिरेवमहाभागःशरैःसन्नतपर्वभिः ३१ ततोऽस्यवाहान्निशितैःशरैर्जघ्नेमहारथः ॥ सारथिंचसुसंक्रुद्धःशरैःसन्नतपर्वभिः ३२ धनुरेकेनभल्लेनहस्तावापंचपंचभिः ॥ ध्वजंचरथशक्तिंचभल्लाभ्यांपरमा स्त्रवित् ३३ चिच्छेदविशिखैस्तीक्ष्णैस्तथोभौपार्ष्णिसारथी ॥ सछिन्नधन्वाविरथोहताश्वोहतसारथिः ३४ त्रिगर्तसेनापतिनास्वरथेनापवाहितः ॥ तमभि द्रुत्यशैनेयोमुहूर्तमिवभारत ३५ नजघानमहाबाहुर्भीमसेनवचःस्मरन् ॥ भीमसेनेनतुवधःसुतानांतवभारत ३६ प्रतिज्ञातःसभामध्येसर्वेषामेवसंयुगे ॥ ततो दुःशासनंजित्वासात्यकिःसंयुगेप्रभो ॥ जगामत्वरितोराजन्येनयातोधनंजयः ३७ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि सात्यकिप्रवेशेदुःशासन पराजयेत्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥ धृतराष्ट्रउवाच ॥ किंतस्यांममसेनायांनासन्केचिन्महारथाः ॥ येतथासात्यकिंयांतंनैवाघ्नन्नाप्यवार यन् १ एकोहिसमरेकर्मकृतवान्सत्यविक्रमः ॥ शक्रतुल्यबलोयुद्धेमहेंद्रोदानवेष्विव २ अथवाशून्यमासीत्तद्येनयातःससात्यकिः ॥ हतभूयिष्ठमथवायेनयातः ससात्यकिः ३ यत्कृतंवृष्णिवीरेणकर्मशंससिमेरणे ॥ नैतदुत्सहतेकर्तुंकर्मशक्रोऽपिसंजय ४ अश्रद्धेयमचिंत्यंचकर्मतस्यमहात्मनः ॥ वृष्ण्यंधकप्रवीरस्यश्रुत्वा मेव्यथितंमनः ५ नसंतितस्मात्पुत्रामेयथासंजयभाषसे ॥ एकोबहूनसैन्याःसेनाःप्रामृद्नात्सत्यविक्रमः ६ कथंचयुध्यमानानामपक्रांतोमहात्मनाम् ॥ एकोबहू नांशैनेयस्तन्ममाचक्ष्वसंजय ७ ॥ संजयउवाच ॥ राजन्सेनासमुद्योगोरथनागाश्वपत्तिमान् ॥ तुमुलस्तवसैन्यानांयुगांतसदृशोऽभवत् ८ आह्नतेपुनर्मुहेषुतव सैन्यस्यमानद ॥ नाभूल्लोकेसमःकश्चित्समूहइतिमेमतिः ९ तत्रदेवास्त्वभाषंतचारणाश्वसमागताः ॥ एतदंताःसमूहावैभविष्यंतिमहीतले १०

११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ लक्ष्म्येतिविशेषणेतृतीया २८ । २९ । ३० । ३१ । ३२

नचवैतादृशोव्यूहआसीत्कश्चिद्विशांपते ॥ यादृग्जयद्रथवधेद्रोणेनविहितोऽभवत् ११ चंडवातविभिन्नानांसमुद्राणामिवस्वनः ॥ रणेऽभवद्बलौघानामन्योन्य
मभिधावताम् १२ पार्थिवानांसमेतानांबहून्यासन्नरोत्तम ॥ त्वद्बलेपांडवानांचसहस्राणिशतानिच १३ संरब्धानांप्रवीराणांसमरेदृढकर्मणाम् ॥ तत्रासीत्सुम
हाशब्दस्तुमुलोलोमहर्षणः १४ अथाक्रंदद्भीमसेनोधृष्टद्युम्नश्चमारिष ॥ नकुलःसहदेवश्चधर्मराजश्चपांडवः १५ आगच्छतप्रहरतद्रुतंविपरिधावत ॥ प्रविष्टा
वरिसेनांहिवीरौमाधवपांडवौ १६ यथासुखेनगच्छेतांजयद्रथवधंप्रति ॥ तथाप्रकुरुतक्षिप्रमितिसैन्यान्यचोदयन् १७ तयोरभावेकुरवःकृतार्थाःस्युर्वयंजि
ताः ॥ तेयूयंसहिताभूत्वातूर्णमेवबलार्णवम् १८ क्षोभयध्वंमहावेगाःपवनःसागरंयथा ॥ भीमसेनेनतेराजन्पांचाल्येनचनोदिताः १९ आजघ्नुःकौरवान्संख्ये
त्यक्त्वाऽसूनात्मनःप्रियान् ॥ इच्छंतोनिधनंयुद्धेशस्त्रैरुत्तमतेजसः २० स्वर्गेप्सवोमित्रकार्येनाभ्यनंदंतजीवितम् ॥ तथैवतावकाराजन्प्रार्थयंतोमहद्यशः २१
आर्यांयुद्धेमतिंकृत्वायुद्धायैवावतस्थिरे ॥ तस्मिन्सुतुमुलेयुद्धेवर्तमानेभयावहे २२ जित्वासर्वाणिसैन्यानिप्रायात्सात्यकिरर्जुनम् ॥ कवचानांप्रभास्तत्रसूर्यर
श्मिविराजिताः २३ दृष्टीःसंख्येसैनिकानांप्रतिजघ्नुःसमंततः ॥ तथाप्रयतमानानांपांडवानांमहात्मनाम् २४ दुर्योधनोमहाराजव्यगाहतमहद्बलम् ॥ सस
न्निपातस्तुमुलस्तेषांतस्यचभारत २५ अभवत्सर्वभूतानामभावकरणोमहान् ॥ धृतराष्ट्रउवाच ॥ तथायातेषुसैन्येषुतथाकृच्छ्रगतःस्वयम् २६ कच्चिद्दुर्योध
नःसूतनाकार्षीत्पृष्ठतोरणम् ॥ एकस्यचबहूनांचसन्निपातोमहाहवे २७ विशेषतोनरपतेर्विषमःप्रतिभातिमे ॥ सोऽत्यंतसुखसंवृद्धोलक्ष्म्यालोकस्यचेश्वरः २८
एकोबहून्समासाद्यकच्चिन्नासीत्पराङ्मुखः ॥ संजयउवाच ॥ राजन्संग्राममाश्चर्यंतवपुत्रस्यभारत २९ एकस्यबहुभिःसार्धंशृणुष्वगदतोमम ॥ दुर्योधनेनसम
रेपृतनापांडवीरणे ३० नलिनीद्विरदेनेवसमंतात्प्रतिलोडिता ॥ ततस्तांप्रहितांसेनांदृष्ट्वापुत्रेणतेनृप ३१ भीमसेनपुरोगास्तंपंचालाःसमुपाद्रवन् ॥ सभीमसे
नंदशभिःशरैर्विव्याधपांडवम् ३२ त्रिभिस्त्रिभिर्यमौवीरौधर्मराजंचसप्तभिः ॥ विराटद्रुपदौषड्भिःशतेनचाशिखंडिनम् ३३ धृष्टद्युम्नंचविंशत्याद्रौपदेयांस्त्रिभिस्त्रि
भिः ॥ शतशश्चापरान्योधान्सद्विपांश्चरथान्रणे ३४ शरैरवचकर्तोग्रैःक्रुद्धोऽतकइवप्रजाः ॥ नसंदधन्विमुंचन्वामंडलीकृतकार्मुकः ३५ अदृश्यतरिपून्निघ्नञ्छि
क्षयाऽस्त्रबलेनच ॥ तस्यतान्निघ्नतःशत्रून्हेमपृष्ठंमहद्धनुः ३६ अजस्रंमंडलीभूतंददृशुःसमरेजनाः ॥ ततोयुधिष्ठिरोराजाभल्लाभ्यामच्छिनद्धनुः ३७ तवपु
त्रस्यकौरव्ययतमानस्यसंयुगे ॥ विव्याधचैनंदशभिःसम्यगस्तैःशरोत्तमैः ३८ वर्मचाशुसमासाद्यतेभित्त्वाक्षितिमाविशन् ॥ ततःप्रमुदिताःपार्थाःपरिवव्रुर्यु
धिष्ठिरम् ३९ यथावृत्रवधेदेवाःपुराशक्रंमहर्षयः ॥ ततोऽन्यद्धनुरादायतवपुत्रःप्रतापवान् ४०

३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४०

४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ ॥ इतिद्रोणपर्वणिटीकायांचतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥ ॥ ७ ॥ ॥ अपराह्णइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०



तिष्ठतिष्ठेतिराजानंब्रुवन्पांडवमभ्ययात् ॥ तमायांतमभिप्रेक्ष्यतवपुत्रंमहामृधे ४१ प्रत्युद्ययुःसमुदिताःपंचालाजयगृद्धिनः ॥ तान्द्रोणःप्रतिजग्राहपरीप्सन्युधिष्ठिरम् ४२ चंडवातोद्धुतान्मेघान्गिरिरंबुमुचोयथा ॥ तत्रराजन्महानासीत्संग्रामोलोमहर्षणः ४३ पांडवानांमहाबाहोतावकानांचसंयुगे ॥ रुद्रस्याक्रीडसदृशःसंहारःसर्वदेहिनाम् ४४ ततःशब्दोमहानासीत्पुनर्येनधनंजयः ॥ अतीवसर्वशब्देभ्योलोमहर्षकरःप्रभो ४५ अर्जुनस्यमहाबाहोतावकानांचधन्विनाम् ॥ मध्येभारतसैन्यस्यमाधवस्यमहारणे ४६ द्रोणस्यापिपरैःसार्धंव्यूहद्वारेमहारणे ॥ एवमेषक्षयोवृत्तःपृथिव्यांपृथिवीपते ॥ क्रुद्धेऽर्जुनेतथाद्रोणेसात्वतेचमहारथे ४७ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि सात्यकिप्रवेशेसंकुलयुद्धे चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥ ॥ ७ ॥

॥ संजयउवाच ॥ अपराह्णेमहाराजसंग्रामःसुमहानभूत् ॥ पर्जन्यसमनिर्घोषःपुनर्द्रोणस्यसोमकैः १ शोणाश्वंरथमास्थायनरवीरःसमाहितः ॥ समरेऽभ्यद्रवत्पांडून्जवमास्थायमध्यमम् २ तवप्रियहितेयुक्तोमहेष्वासोमहाबलः ॥ चित्रपुंखैःशितैर्बाणैःकलशोत्तमसंभवः ३ वरान्वरान्हियोधानांविचिन्वन्निवभारत ॥ आक्रीडतरणेराजन्भारद्वाजःप्रतापवान् ४ तमभ्यायाद्बृहत्क्षत्रःकेकयानांमहारथः ॥ भ्रातृणांनृपपंचानांश्रेष्ठःसमरकर्कशः ५ विमुंचन्विशिखांस्तीक्ष्णानाचार्यंभृशमार्दयत् ॥ महामेघोयथावर्षंविमुंचन्गंधमादने ६ तस्यद्रोणोमहाराजस्वर्णपुंखाञ्शिलाशितान् ॥ प्रेषयामाससंक्रुद्धःसायकान्दशपंचच ७ तांस्तुद्रोणाविनिर्मुक्तान्क्रुद्धाशीविषसन्निभान् ॥ एकैकंपंचभिर्बाणैर्युधिचिच्छेदहृष्टवत् ८ तदस्यलाघवंदृष्ट्वाप्रहस्यद्विजपुंगवः ॥ प्रेषयामासविशिखानष्टौसन्नतपर्वणः ९ तान्दृष्ट्वाऽपततस्तूर्णंद्रोणचापच्युताञ्शरान् ॥ अवारयच्छरैरेवतावद्भिर्निशितैर्मृधे १० ततोऽभवन्महाराजतवसैन्यस्यविस्मयः ॥ बृहत्क्षत्रेणतत्कर्मकृतंदृष्ट्वासुदुष्करम् ११ ततोद्रोणोमहाराजबृहत्क्षत्रंविशेषयन् ॥ प्रादुश्चक्रेरणेदिव्यंब्राह्ममस्त्रंसुदुर्जयम् १२ कैकेयोऽस्त्रंसमालोक्यमुक्तंद्रोणेनसंयुगे ॥ ब्रह्मास्त्रेणैवराजेंद्रब्राह्ममस्त्रमशातयत् १३ ततोऽस्त्रेनिहतेब्राह्मेबृहत्क्षत्रस्तुभारत ॥ विव्याधब्राह्मणंषष्ट्यास्वर्णपुंखैःशिलाशितैः १४ तंद्रोणोद्विपदांश्रेष्ठोनाराचेनसमार्पयत् ॥ सतस्यकवचंभित्वाप्राविशद्धरणीतलम् १५ कृष्णसर्पोयथामुक्तोवल्मीकंनृपसत्तम ॥ तथात्यगान्महींबाणोभित्वाकैकेयमाहवे १६ सोऽतिविद्धोमहाराजकैकेयोद्रोणसायकैः ॥ क्रोधेनमहताऽऽविष्टोव्यावृत्यनयनेशुभे १७ द्रोणंविव्याधसप्तत्यास्वर्णपुंखैःशिलाशितैः ॥ सारथिंचास्यबाणेनभृशंमर्मस्वताडयत् १८ द्रोणस्तुबहुभिर्विद्धोबृहत्क्षत्रेणमारिष ॥ असृजद्विशिखांस्तीक्ष्णान्कैकेयस्यरथंप्रति १९ व्याकुलीकृत्यतंद्रोणोबृहत्क्षत्रंमहारथम् ॥ अश्वांश्चतुर्भिर्न्यवधीच्चतुरोऽस्यपतत्रिभिः २०

११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०

२१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६

सूतंचैकेनबाणेनरथनीडादपातयत् ॥ द्वाभ्यांध्वजंचच्छत्रंचछित्वाभूमावपातयत् २१ ततःसाधुविसृष्टेननाराचेनद्विजर्षभः ॥ हृद्यविध्यद्बृहत्क्षत्रंसच्छिन्नह
दयोऽपतत् २२ बृहत्क्षत्रेहतेराजन्केकयानांमहारथे ॥ शैशुपालिरभिक्रुद्धोयंतारमिदमब्रवीत् २३ सारथेयाहियत्रैषद्रोणस्तिष्ठतिदंशितः ॥ विनिघ्नन्केकयान्स
र्वान्पंचालानांचवाहिनीम् २४ तस्यतद्वचनंश्रुत्वासारथीरथिनांवरम् ॥ द्रोणायप्रापयामासकांबोजैर्जवनैर्हयैः २५ धृष्टकेतुश्चचेदीनामृषभोऽतिबलोदितः ॥
वधायाभ्यद्रवद्द्रोणंपतंगइवपावकम् २६ सोऽविध्यततदाद्रोणंषष्ट्यासाश्वरथध्वजम् ॥ पुनश्चान्यैःशरैस्तीक्ष्णैःसुप्तंव्याघ्रंतुदन्निव २७ तस्यद्रोणोधनुर्मध्येक्षु
रप्रेणशितेनच ॥ चकर्तगार्ध्रपत्रेणयतमानस्यशुष्मिणः २८ अथान्यद्धनुरादायशैशुपालिर्महारथः ॥ विव्याधसायकैर्द्रोणंकंकबर्हिणवाजितैः २९ तस्यद्रोणो
हयान्हत्वाचतुर्भिश्चतुरःशरैः ॥ सारथेश्चशिरःकायाच्चकर्तप्रहसन्निव ३० अथैनंपंचविंशत्यासायकानांसमार्पयत् ॥ अवप्लुत्यरथाच्चैद्योगदामादायसत्वरः ३१
भारद्वाजायचिक्षेपरुषितामिवपन्नगीम् ॥ तामापतंतीमालोक्यकालरात्रिमिवोद्यताम् ३२ अश्मसारमयींगुर्वींतपनीयविभूषिताम् ॥ शरैरनेकसाहस्रैर्भार
द्वाजोऽच्छिनच्छितैः ३३ साछिन्नाबहुभिर्बाणैर्भारद्वाजेनमारिष ॥ गदापपातकौरव्यनादयंतीधरातलम् ३४ गदांविनिहतांदृष्ट्वाधृष्टकेतुरमर्षणः ॥ तोमरं
व्यसृजद्वीरःशक्तिंचकनकोज्ज्वलाम् ३५ तोमरंपंचभिर्भित्त्वाशक्तिंचिच्छेदपंचभिः ॥ तौजग्मतुर्महींछिन्नौसर्पाविवगरुत्मता ३६ ततोऽस्यविशिखंतीक्ष्णंव
धायवधकांक्षिणः ॥ प्रेषयामाससमरेभारद्वाजःप्रतापवान् ३७ सतस्यकवचंभित्त्वाहृदयंचामितौजसः ॥ अभ्यगाद्धरणींबाणोहंसःपद्मवनंयथा ३८ पतंगंहिग्र
सेच्चाषोयथाक्षुद्रंबुभुक्षितः ॥ तथाद्रोणोऽग्रसच्छूरोधृष्टकेतुंमहाहवे ३९ निहतेचेदिराजेतुतत्खंडंपित्र्यमाविशत् ॥ अमर्षवशमापन्नःपुत्रोऽस्यपरमास्त्रवित् ॥
४० तमपिप्रहसन्द्रोणःशरैर्निन्येयमक्षयम् ॥ महाव्याघ्रोमहारण्येमृगशावंयथाबली ४१ तेषुप्रक्षीयमाणेषुपांडवेयेषुभारत ॥ जरासंधसुतोवीरःस्वयंद्रोणमुपा
द्रवत् ४२ सतुद्रोणंमहाबाहुःशरधाराभिराहवे ॥ अदृश्यमकारोत्तूर्णंजलदोभास्करंयथा ४३ तस्यतल्लाघवंदृष्ट्वाद्रोणःक्षत्रियमर्दनः ॥ व्यसृजत्सायकांस्तूर्णं
शतशोऽथसहस्रशः ४४ छादयित्वारणेद्रोणोरथस्थंरथिनांवरम् ॥ जारासंधिंजघानाशुमिषतांसर्वधन्विनाम् ४५ योयःस्मनीयतेतत्रतंद्रोणोह्यंतकोपमः ॥
आदत्तसर्वभूतानिप्राप्तेकालेयथांऽतकः ४६ ततोद्रोणोमहाराजनामविश्राव्यसंयुगे ॥ शरैरनेकसाहस्रैःपांडवेयान्समावृणोत् ४७ तेतुनामांकिताबाणाद्रोणेना
स्ताःशिलाशिताः ॥ नरान्नागान्हयांश्चैवनिजघ्नुःशतशोमृधे ४८ तेवध्यमानाद्रोणेनशक्रेणेवमहासुराः ॥ समकंपंतपंचालागावःशीतार्दिताइव ४९ ततोनि
ष्टानकोघोरःपांडवानामजायत ॥ द्रोणेनवध्यमानेषुसैन्येषुभरतर्षभ ५०

४७ । ४८ । ४९ निष्टानकःकष्टस्वनः ५०

५१ ऊरुग्राहः ऊरुस्तंभः ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ आकर्णमुपागतं पलितं केशादेः

प्रताप्यमानाःसूर्येणहन्यमानाश्चसायकैः ॥ अन्वपद्यंतपंचालास्तदासंत्रस्तचेतसः ५१ मोहिताबाणजालेनभारद्वाजेनसंयुगे ॥ ऊरुग्राहगृहीतानांपंचालानांमहारथाः ५२ चेदयश्चमहाराजसृंजयाःकाशिकोसलाः ॥ अभ्यद्रवंतसंहृष्टाभारद्वाजंयुयुत्सया ५३ ब्रुवंतश्चरणेऽन्योन्यंचेदिपंचालसृंजयाः ॥ हतद्रोणंहतद्रोणमितितेद्रोणमभ्ययुः ५४ यतंतःपुरुषव्याघ्राःसर्वशक्त्यामहाद्युतिम् ॥ निनीषवोरणेद्रोणंयमस्यसदनंप्रति ५५ यतमानांस्तुतान्वीरान्भारद्वाजःशिलीमुखैः ॥ यमायप्रेषयामासचेदिमुख्यान्विशेषतः ५६ तेषुप्रक्षीयमाणेषुचेदिमुख्येषुसर्वशः ॥ पंचालाःसमकंपंतद्रोणसायकपीडिताः ५७ प्राक्रोशन्भीमसेनंतेधृष्टद्युम्नंचभारत ॥ दृष्ट्वाद्रोणस्यकर्माणितथारूपाणिमारिष ५८ ब्राह्मणेनतपोनूनंचरितंदुश्चरंमहत् ॥ तथाहियुधिसंक्रुद्धोदहतिक्षत्रियर्षभान् ५९ धर्मोयुद्धंक्षत्रियस्यब्राह्मणस्यपरंतपः ॥ तपस्वीकृतविद्यश्चप्रेक्षितेनापिनिर्दहेत् ६० द्रोणाग्निमस्त्रसंस्पर्शंप्रविष्टाःक्षत्रियर्षभाः ॥ बहवोदुस्तरंघोरंयत्रादह्यंतभारत ६१ यथाबलंयथोत्साहंयथासत्वंमहाद्युतिः ॥ मोहयन्सर्वभूतानिद्रोणोहंतिबलानिनः ६२ तेषांतद्वचनंश्रुत्वाक्षत्रधर्माव्यवस्थितः ॥ अर्धचंद्रेणचिच्छेदक्षत्रधर्मामहाबलः ६३ क्रोधसंविग्नमनसोद्रोणस्यसशरंधनुः ॥ ससंरब्धतरोभूत्वाद्रोणःक्षत्रियमर्दनः ६४ अन्यत्कार्मुकमादायभास्वरंवेगवत्तरम् ॥ तत्राधायशरंतीक्ष्णंपरानीकविशातनम् ६५ आकर्णपूर्णमाचार्योबलवानभ्यवासृजत् ॥ सहत्वाक्षत्रधर्माणंजगाममधरणीतलम् ६६ सभिन्नहृदयोवाहाद्न्यपतन्मेदिनीतले ॥ ततःसैन्यान्यकंपंतधृष्टद्युम्नसुतेहते ६७ अथद्रोणंसमारोहच्चेकितानोमहाबलः ॥ सद्रोणंदशभिर्विद्ध्वाप्रत्यविद्ध्यत्स्तनांतरे ६८ चतुर्भिःसारथिंचास्यचतुर्भिश्चतुरोहयान् ॥ तमाचार्यस्त्रिभिर्बाणैर्बाह्वोरुरसिचार्दयत् ६९ ध्वजंसप्तभिरुन्मथ्ययंतारमवधीत्त्रिभिः ॥ तस्यसूतेहतेतेऽश्वारथमादायविद्रुताः ७० समरेशरसंवीताभारद्वाजेनमारिष ॥ चेकितानरथंदृष्ट्वाहताश्वंहतसारथिम् ७१ तान्समेतान्रणेशूरांश्चेदिपंचालसृंजयान् ॥ समंताद्द्रावयन्द्रोणोबह्वशोभतमारिष ७२ आकर्णपलितश्यामोवयसाऽशीतिपंचकः ॥ रणेऽपर्यचरद्द्रोणोवृद्धःषोडशवर्षवत् ७३ अथद्रोणंमहाराजविचरंतमभीतवत् ॥ वज्रहस्तममन्यंतशत्रवःशत्रुसूदनम् ७४ ततोऽब्रवीन्महाबाहुर्द्रुपदोबुद्धिमान्नृप ॥ लुब्धोऽयंक्षत्रियान्हंतिव्याघ्रःक्षुद्रमृगानिव ७५ कृच्छ्रान्दुर्योधनोलोकान्पापःप्राप्स्यतिदुर्मतिः ॥ यस्यलोभाद्विनिहताःसमरेक्षत्रियर्षभाः ७६ शतशःशेरतेभूमौनिकृत्तागोवृषाइव ॥ रुधिरेणपरीतांगाःश्वशृगालादनीकृताः ७७

शौक्ल्यंयस्य वयसाकालपिंडसंयोगेनअशीतिपंचकःचतुःशताब्दः अशीतिकापरइतिपाठेअतिवृद्धतमः ७३ । ७४ । ७५ । ७६ । ७७

७८ ॥ इतिद्रोणपर्वणिटीकायांपंचविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥ व्यूहेष्विति १ । २ । ३ । ४ वानरर्षभलक्षणंवानरप्रधानंध्वजं वरवानरकेतनमितिपाठोवा ५ । ६ । ७ । ८ । ९

एवमुक्त्वामहाराजद्रुपदोऽक्षौहिणीपतिः ॥ पुरस्कृत्यरणेपार्थान्द्रोणमभ्यद्रवद्द्रुतम् ७८ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि द्रोणपराक्रमेपंचविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥ ॥ ४ ॥ ॥ संजयउवाच ॥ व्यूहेष्वालोड्यमानेषुपांडवानांततस्ततः ॥ सुदूरमन्वयुःपार्थाःपंचालाःसहसोमकैः १ वर्तमानेतथारौद्रेसंग्रामेलोमहर्षणे ॥ संक्षयेजगतस्तीव्रेयुगांतइवभारत २ द्रोणेयुधिपराक्रांतेनर्दमानेमुहुर्मुहुः ॥ पंचालेषुचक्षीणेषुवध्यमानेषुपांडुषु ३ नापश्यच्छरणंकिंचिद्धर्मराजोयुधिष्ठिरः ॥ चिंतयामासराजेंद्रकथमेतद्भविष्यति ४ ततोवीक्ष्यदिशःसर्वाःसव्यसाचिदिदृक्षया ॥ युधिष्ठिरोददर्शाथनैवपार्थंनमाधवम् ५ सोऽपश्यन्नरशार्दूलंवानरर्षभलक्षणम् ॥ गांडीवस्यचनिर्घोषमशृण्वन्व्यथितेंद्रियः ६ अपश्यन्सात्यकिंचापिवृष्णीनांप्रवरंरथम् ॥ चिंतयाऽभिपरीतांगोधर्मराजोयुधिष्ठिरः ७ नाध्यगच्छत्तदाशांतिंतावपश्यन्नरोत्तमौ ॥ लोकोपक्रोशभीरुत्वाद्धर्मराजोमहामनाः ८ अचिंतयन्महाबाहुःशैनेयस्यरथंप्रति ॥ पदवींप्रेषितश्चैवफाल्गुनस्यमयारणे ९ शैनेयःसात्यकिःसत्योमित्राणामभयंकरः ॥ तदिदंह्येकमेवासीद्द्विधाजातंममाद्यवै १० सात्यकिश्चहिविज्ञेयःपांडवश्चधनंजयः ॥ सात्यकिंप्रेषयित्वातुपांडवस्यपदानुगम् ११ सात्वतस्यापिकंयुद्धेप्रेषयिष्येपदानुगम् ॥ करिष्यामिप्रयत्नेनभ्रातुरन्वेषणंयदि १२ युयुधानमनन्विष्यलोकोमांगर्हयिष्यति ॥ भ्रातुरन्वेषणंकृत्वाधर्मपुत्रोयुधिष्ठिरः १३ परित्यजतिवार्ष्णेयंसात्यकिंसत्यविक्रमम् ॥ लोकापवादभीरुत्वात्सोऽहंपार्थंवृकोदरम् १४ पदवींप्रेषयिष्यामिमाधवस्यमहात्मनः ॥ यथैवचममप्रीतिरर्जुनेशत्रुसूदने १५ तथैववृष्णिवीरेऽपिसात्वतेयुद्धदुर्मदे ॥ अतिभारेनियुक्तश्चमयाशैनेयनंदनः १६ सतुमित्रोपरोधेनगौरवाच्चमहाबलः ॥ प्रविष्टोभारतींसेनांमकरःसागरंयथा १७ असौहिश्रूयतेशब्दःशूराणामनिवर्तिनाम् ॥ मिथःसंयुध्यमानानांवृष्णिवीरेणधीमता १८ प्राप्तकालंसुबलवन्निश्चितंबहुधाहिमे ॥ तत्रैवपांडवेयस्यभीमसेनस्यधन्विनः १९ गमनंरोचतेमह्यंयत्रयातौमहारथौ ॥ नचाप्यसह्यंभीमस्यविद्यतेभुविकिंचन २० शक्तोह्येषरणेयत्तःपृथिव्यांसर्वधन्विनाम् ॥ स्वबाहुबलमास्थायप्रतिव्यूहितुमंजसा २१ यस्यबाहुबलंसर्वेसमाश्रित्यमहात्मनः ॥ वनवासान्निवृत्ताःस्मनचयुद्धेषुनिर्जिताः २२ इतोगतेभीमसेनेसात्वतंप्रतिपांडवे ॥ सनाथौभवितारौहियुधिसात्वतफाल्गुनौ २३ कामंत्वशोचनीयौतौरणेसात्वतफाल्गुनौ ॥ रक्षितौवासुदेवेनस्वयंशस्त्रविशारदौ २४ अवश्यंतुमयाकार्यमात्मनःशोकनाशनं ॥ तस्माद्भीमंनियोक्ष्यामिसात्वतस्यपदानुगं २५ ततःप्रतिकृतंमन्येविधानंसात्यकिंप्रति ॥ एवंनिश्चित्यमनसाधर्मपुत्रोयुधिष्ठिरः २६ यंतारमब्रवीद्राजाभीमंप्रतिनयस्वमाम् ॥ धर्मराजवचःश्रुत्वासारथिर्हयकोविदः २७

सत्योदृढप्रतिज्ञः १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ सात्यकिंप्रतिप्रतिविधानंकृतमित्यन्वयः २६ । २७

२८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ चकोरनेत्रोरक्तांतायतनयनः ताम्रास्योरक्तगौरमुखः ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८

रथंहेमपरिष्कारंभीमांतिकमुपानयत् ॥ भीमसेनमनुज्ञाप्यप्राप्तकालमचिंतयत् २८ कश्मलंप्राविशद्राजाबहुतत्रसमादिशत् ॥ सकश्मलसमाविष्टोभीममाहूयपार्थिवः २९ अब्रवीद्वचनंराजन्कुंतीपुत्रोयुधिष्ठिरः ॥ यःसदेवान्सगंधर्वान्दैत्यांश्चैकरथोऽजयत् ३० तस्यलक्ष्मनपश्यामिभीमसेनानुजस्यते ॥ ततोऽब्रवीद्धर्मराजंभीमसेनस्तथागतम् ३१ नैवाद्राक्षंनचाश्रौषंतवकश्मलमीदृशम् ॥ पुराऽतिदुःखदीर्णानांभवान्नगतिरभूद्धिनः ३२ उत्तिष्ठोत्तिष्ठराजेंद्रशाधिकिंकरवाणिते ॥ नह्यसाध्यमकार्यंवाविद्यतेममंमानद ३३ आज्ञापयकुरुश्रेष्ठमाचशोकेमनःकृथाः ॥ तमब्रवीदश्रुपूर्णःकृष्णसर्पइवश्वसन् ३४ भीमसेनमिदंवाक्यंप्रम्लानवदनोनृपः ॥ यथाशंखस्यनिर्घोषःपांचजन्यस्यश्रूयते ३५ पूरितोवासुदेवेनसंरब्धेनयशस्विना ॥ नूनमद्यहतःशेतेतवभ्राताधनंजयः ३६ तस्मिन्विनिहतेनूनंयुध्यतेऽसौजनार्दनः ॥ यस्यसत्ववतोवीर्यंह्युपजीवंतिपांडवाः ३७ यंभयेष्वभिगच्छंतिसहस्राक्षमिवामराः ॥ सशूरःसैंधवप्रेप्सुरन्वयाद्भारतीचमूम् ३८ तस्यवैगमनंविद्मोभीमनावर्तनंपुनः ॥ श्यामोयुवागुडाकेशोदर्शनीयोमहारथः ३९ व्यूढोरस्कोमहाबाहुर्मत्तद्विरदविक्रमः ॥ चकोरनेत्रस्ताम्रास्योद्विषतांभयवर्धनः ४० तदिदंममभद्रंतेशोकस्थानमरिंदम ॥ अर्जुनार्थंमहाबाहोसात्वतस्यचकारणात् ४१ वर्धतेहविषेवाग्निरिध्यमानःपुनःपुनः ॥ तस्यलक्ष्मनपश्यामितेनविंदामिकश्मलम् ४२ तंविद्धिपुरुषव्याघ्रंसात्वतंचमहारथम् ॥ सतंमहारथंपश्चादनुयातस्तवानुजम् ४३ तमपश्यन्महाबाहुमहंविंदामिकश्मलम् ॥ पार्थेतस्मिन्हतेचैवयुध्यतेनूनमग्रणीः ४४ सहायोनास्यवैकश्चित्तेनविंदामिकश्मलम् ॥ तस्मिन्कृष्णोहतेनूनंयुध्यतेयुद्धकोविदः ४५ नहिमेशुध्यतेभावस्तयोरेवपरंतप ॥ सतत्रगच्छकौंतेययत्रयातोधनंजयः ४६ सात्यकिश्चमहावीर्यःकर्तव्यंयदिमन्यसे ॥ वचनंममधर्मज्ञभ्राताज्येष्ठोभवामिते ४७ नतेऽर्जुनस्तथाज्ञेयोज्ञातव्यःसात्यकिर्यथा ॥ चिकीर्षुर्मत्प्रियंपार्थसयातःसव्यसाचिनः ४८ पदवींदुर्गमांघोरामगम्यामकृतात्मभिः ॥ दृष्ट्वाकुशलिनौकृष्णौसात्वतंचैवसात्यकिम् ॥ संविदंचैवकुर्यास्त्वंसिंहनादेनपांडव ४९ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि युधिष्ठिरचिंतायांषड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥ भीमसेनउवाच ॥ ब्रह्मेशानेंद्रवरुणानवहद्यःपुरारथः ॥ तमास्थायगतौकृष्णौनतयोर्विद्यतेभयम् १ आज्ञांतुशिरसाबिभ्रदेषगच्छामिमाशुचः ॥ समेत्यतान्नरव्याघ्रांस्तवदास्यामिसंविदम् २ ॥ संजयउवाच ॥ एतावदुक्त्वाप्रययौपरिदाययुधिष्ठिरम् ॥ धृष्टद्युम्नायबलवान्सुहृद्भ्यश्चपुनःपुनः ३ धृष्टद्युम्नंचेदमाहभीमसेनोमहाबलः ॥ विदितंतेमहाबाहोयथाद्रोणोमहारथः ४ ग्रहणेधर्मराजस्यसर्वोपायेनवर्तते ॥ नचमेगमनेकृत्यंतादृक्पार्षतविद्यते ५

४९ ॥ इतिद्रोणपर्वणिटीकायांषड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥ ॥ ७ ॥ ॥ ब्रह्मेति १ संविदंज्ञापनम् २ । ३ । ४ । ५

आत्ययिकमतिशयितं हिशब्दोऽभिमुखीकरणे एवमनंतरोक्तम् ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ 'अनलोगोहिरण्यंचदूर्वागोरोचनामृतम् ॥ अक्षतंदधिचेत्यष्टौमंगलानिप्रचक्षते' १४

यादृशंरक्षणेराज्ञःकार्यमात्ययिकंहिनः ॥ एवमुक्तोऽस्मिपार्थेनप्रतिवक्तुंनचोत्सहे ६ प्रयास्येतत्रयत्रासौमुमूर्षुःसैंधवःस्थितः ॥ धर्मराजस्यवचनेस्थातव्यमविशंकया ७ यास्यामिपदवींभ्रातुःसात्वतस्यचधीमतः ॥ सोऽद्ययत्तोरणेपार्थंपरिरक्षयुधिष्ठिरम् ८ एतद्धिसर्वकार्याणांपरमंकृत्यमाहवे ॥ तमब्रवीन्महाराजधृष्टद्युम्नोवृकोदरम् ९ ईप्सितंतेकरिष्यामिगच्छपार्थाविचारयन् ॥ नाहत्वासमरेद्रोणोधृष्टद्युम्नंकथंचन १० निग्रहंधर्मराजस्यप्रकरिष्यतिसंयुगे ॥ ततोनिक्षिप्यराजानंधृष्टद्युम्नेचपांडवम् ११ अभिवाद्यगुरुंज्येष्ठंप्रययौयेनफाल्गुनः ॥ परिष्वक्तश्चकौंतेयोधर्मराजेनभारत १२ आघ्रातश्चतथामूर्ध्निश्रावितश्चाशिषःशुभाः ॥ कृत्वाप्रदक्षिणान्विप्रानर्चितांस्तुष्टमानसान् १३ आलभ्यमंगलान्यष्टौपीत्वाकैरातकंमधु ॥ द्विगुणद्रविणोवीरोमदरक्तांतलोचन १४ विप्रैःकृतस्वस्त्ययनोविजयोत्पादसूचितः ॥ पश्यन्नेवात्मनोबुद्धिंविजयानंदकारिणीम् १५ अनुलोमानिलैश्चाशुप्रदर्शितजयोदयः ॥ भीमसेनोमहाबाहुःकवचीशुभकुंडली १६ सांगदीसतलत्राणःसरथीरथिनांवरः ॥ तस्यकार्ष्णायसंवर्महेमाचित्रंमहर्धिमत् १७ विबभौसर्वतःश्लिष्टंसविद्युदिवतोयदः ॥ पीतरक्तासितसितैर्वासोभिश्चसुवेष्टितः १८ कंठत्राणेनचबभौसेंद्रायुधइवांबुदः ॥ प्रयातेभीमसेनेतुतवसैन्यंयुयुत्सया १९ पांचजन्यरवोघारःपुनरासीद्विशांपते ॥ तंश्रुत्वानिनदंघोरंत्रैलोक्यत्रासनंमहत् २० पुनर्भीममहाबाहुंधर्मपुत्रोऽभ्यभाषत ॥ एषवृष्णिप्रवीरेणध्मातःसलिलजोभृशम् २१ पृथिवींचांतरिक्षंचविनादयतिशंखराट् ॥ नूनंव्यसनमापन्नेसुमहत्सव्यसाचिनि २२ कुरुभिर्युध्यतेसार्धंसर्वैश्चक्रगदाधरः ॥ आहकुंतीनूनमार्यापापमद्यनिदर्शनम् २३ द्रौपदीचसुभद्राचपश्यंत्यौसहबंधुभिः ॥ सभीमत्वरयायुक्तोयाहियत्रधनंजयः २४ मुह्यंतीवहिमेसर्वाधनंजयदिदृक्षया ॥ दिशश्चप्रदिशःपार्थसात्वतस्यचकारणात् २५ गच्छगच्छेतिगुरुणासोऽनुज्ञातोवृकोदरः ॥ ततःपांडुसुतोराजन्भीमसेनःप्रतापवान् २६ बद्धगोधांगुलित्राणःप्रगृहीतशरासनः ॥ ज्येष्ठेनप्रहितोभ्रात्राभ्राताभ्रातुःप्रियंकरः २७ आहत्यदुंदुभिंभीमःशंखंप्रध्माप्यचासकृत् ॥ विनद्यसिंहनादेनज्यांविकर्षन्पुनःपुनः २८ तेनशब्देनवीराणांपातयित्वामनांस्युत ॥ दर्शयन्घोरमात्मानममित्रान्सहसाऽभ्ययात् २९ तमूहुर्जवनादांताविरुवंतोहयोत्तमाः ॥ विशोकेनाभिसंपन्नामनोमारुतरंहसः ३० आरुजन्विरुजन्पार्थोज्यांविकर्षंश्चपाणिना ॥ संप्रकर्षन्विकर्षंश्चसेनाग्रंसमलोडयत् ३१ तंप्रयांतंमहाबाहुंपंचालाःसहसोमकाः ॥ पृष्ठतोऽनुययुःशूरामघवंतमिवामराः ३२

विजयोत्पादसूचितः सूचितविजयोत्पादः १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ आर्यामान्यामातेतियावत् निदर्शनंनिमित्तं २३ । २४ मुह्यंतिमोहेनाव्रियंते २५ । २६ । २७ २८ । २९ । ३० आरुजन्कृंतन् विरुजन्विध्यन् विकर्षन्अत्यर्थंकर्षन् संप्रकर्षन्सम्यक्प्रकर्षेणविलिखन् विकर्षन्विक्षिपन् ३१ । ३२

तंसमेत्यमहाराजतावकाःपर्यवारयन् ॥ दुःशलश्चित्रसेनश्चकुंडभेदीविविंशतिः ३३ दुर्मुखोदुःसहश्चैवविकर्णश्चशलस्तथा ॥ विंदानुविंदौसुमुखौदीर्घबाहुःसु
दर्शनः ३४ वृंदारकःसुहस्तश्चसुषेणोदीर्घलोचनः ॥ अभयोरौद्रकर्माचसुवर्मादुर्विमोचनः ३५ शोभंतोरथिनांश्रेष्ठाःसहसैन्यपदानुगाः ॥ संयत्ताःसमरेवीरा
भीमसेनमुपाद्रवन् ३६ तैःसमंताद्वृतःशूरैःसमरेषुमहारथः ॥ तान्समीक्ष्यतुकौंतेयोभीमसेनःपराक्रमी ॥ अभ्यवर्ततवेगेनसिंहःक्षुद्रमृगानिव ३७ तेमहास्त्रा
णिदिव्यानितत्रवीराअदर्शयन् ॥ छादयंतःशरैर्भीमंमेघाःसूर्यमिवोदितम् ३८ सतानतीत्यवेगेनद्रोणानीकमुपाद्रवत् ॥ अग्रतश्चगजानीकंशरवर्षैरवाकिरत् ३९
सोचिरेणैवकालेनतद्गजानीकमाशुगैः ॥ दिशःसर्वाःसमभ्यस्यव्यधमत्पवनात्मजः ४० त्रासिताःशरभस्येवगर्जितेनवनेमृगाः ॥ प्राद्रवन्द्विरदाःसर्वेनदंतोभैरवान्
रवान् ४१ पुनश्चातीववेगेनद्रोणानीकमुपाद्रवत् ॥ तमवारयदाचार्योवेलोद्वृत्तमिवार्णवम् ४२ ललाटेताडयच्चैनंनाराचेनस्मयन्निव ॥ ऊर्ध्वरश्मिरिवादि
त्योविबभौतेनपांडवः ४३ समन्यमानस्त्वाचार्योममायंफाल्गुनोयथा ॥ भीमःकरिष्यतेपूजामित्युवाचवृकोदरम् ४४ भीमसेननतेशक्याप्रवेष्टुमरिवाहिनी ॥
मामनिर्जित्यसमरेशत्रुमध्यमहाबल ४५ यदितेसोऽनुजःकृष्णःप्रविष्टोऽनुमतेमम ॥ अनीकंनतुशक्यंमेप्रवेष्टुमिहवैत्वया ४६ अथभीमस्तुतच्छ्रुत्वागुरोर्वाक्यम
पेतभीः ॥ क्रुद्धःप्रोवाचवैद्रोणंरक्तताम्रेक्षणस्त्वरन् ४७ तवार्जुनोनानुमतेब्रह्मबंधोरणाजिरम् ॥ प्रविष्टःसहिदुर्धर्षःशक्रस्यापिविशेद्बलम् ४८ तेनवैपरमांपू
जांकुर्वतामानितोह्यसि ॥ नार्जुनोऽहंघृणीद्रोणभीमसेनोऽस्मितेरिपुः ४९ पितानस्त्वंगुरुर्बंधुस्तथापुत्रास्तुतेवयम् ॥ इतिमन्यामहेसर्वेभवंतंप्रणताःस्थि
ताः ५० अद्यतद्विपरीतंतेवदतोऽस्मासुदृश्यते ॥ यदित्वंशत्रुमात्मानंमन्यसेतत्तथाऽस्त्विह ५१ एषतेसदृशंशत्रोःकर्मभीमःकरोम्यहम् ॥ अथोद्भ्राम्यगदां
भीमःकालदंडमिवांतकः ५२ द्रोणायव्यसृजद्राजन्सरथादवपुप्लुवे ॥ साश्वसूतध्वजंयानंद्रोणस्यापोथयत्तदा ५३ प्रामृद्नाच्चबहून्योधान्वायुर्वृक्षानिवौजसा ॥
तंपुनःपरिवव्रुस्तेतवपुत्रारथोत्तमम् ५४ अन्यंतुरथमास्थायद्रोणःप्रहरतांवरः ॥ व्यूहद्वारंसमासाद्ययुद्धायसमुपस्थितः ५५ ततःक्रुद्धोमहाराजभीमसेनःप
राक्रमी ॥ अग्रतःस्यंदनानीकंशरवर्षैरवाकिरत् ५६ तेवध्यमानाःसमरेतवपुत्रामहारथाः ॥ भीमंभीमबलायुद्धेयोधयंतिजयैषिणः ५७ ततोदुःशासनःक्रुद्धो
रथशक्तिंसमाक्षिपत् ॥ सर्वपारसवींतीक्ष्णांजिघांसुःपांडुनंदनम् ५८ आपतंतींमहाशक्तिंतवपुत्रप्रणोदिताम् ॥ द्विधाचिच्छेदतांभीमस्तदद्भुतमिवाभवत्
५९ अथान्यैर्विशिखैस्तीक्ष्णैःसंक्रुद्धःकुंडभेदिनम् ॥ सुषेणंदीर्घनेत्रंचत्रिभिस्त्रीनवधीद्बली ६० ततोवृंदारकंवीरंकुरूणांकीर्तिवर्धनम् ॥ पुत्राणांतववीराणां
युध्यतामवधीत्पुनः ६१ अभयंरौद्रकर्माणंदुर्विमोचनमेवच ॥ त्रिभिस्त्रीनवधीद्भीमःपुनरेवसुतांस्तव ६२

६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ ॥इतिद्रोणपर्वणिटीकायांसप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥ ७ ॥ समुत्तीर्णमिति १ बलमायया बला

वध्यमानामहाराजपुत्रास्तवबलीयसा ॥ भीमंप्रहरतांश्रेष्ठंसमंतात्पर्यवारयन् ६३ तेशरैर्भीमकर्माणंववर्षुःपांडवंयुधि ॥ मेघाइवातपापायेधाराभिर्धरणीधरम् ६४ सतद्बाणमयंवर्षमश्मवर्षमिवाचलः ॥ प्रतीच्छन्पांडुदायादोनप्राव्यथतशत्रुहा ६५ विंदानुविंदौसहितौसुवर्माणंचतेसुतम् ॥ प्रहसन्नेवकौंतेयःशरैर्निन्ये यमक्षयम् ६६ ततःसुदर्शनंवीरंपुत्रंतेभरतर्षभ ॥ विव्याधसमरेतूर्णंसपपातममारच ६७ सोऽचिरेणैवकालेनतद्रथानीकमाशुगैः ॥ दिशःसर्वाःसमालोक्यव्य धमत्पांडुनंदनः ६८ ततोवैरथघोषेणगर्जितेनमृगाइव ॥ भज्यमानाश्चसमरेतवपुत्राविशांपते ६९ प्राद्रवन्सहसासर्वेभीमसेनभयार्दिताः ॥ अनुयायाच्चकौं तेयःपुत्राणांतेमहद्बलम् ७० विव्याधसमरेराजन्कौरवेयान्समंततः ॥ वध्यमानामहाराजभीमसेनेनतावकाः ७१ त्यक्त्वाभीमंरणाज्जग्मुश्चोदयंतोहयोत्तमान् ॥ तांस्तुनिर्जित्यसमरेभीमसेनोमहाबल ७२ सिंहनादरवंचक्रेबाहुशब्दंचपांडवः ॥ तलशब्दंचसुमहत्कृत्वाभीमोमहाबलः ७३ भीषयित्वारथानीकंहत्वायोधान्व रान्वरान् ॥ व्यतीत्यरथिनश्चापिद्रोणानीकमुपाद्रवत् ७४ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिभीमसेनप्रवेशेभीमपराक्रमेसप्तविंशत्याधिकशत तमोऽध्यायः ॥ १२७ ॥ ॥ ७ ॥ संजयउवाच ॥ समुत्तीर्णंरथानीकंपांडवंविहसन्रणे ॥ विवारयिषुराचार्यःशरवर्षैरवाकिरत् १ पिबन्निवशरौघांस्तान्द्रोण चापपरिच्युतान् ॥ सोऽभ्यद्रवतसोदर्यान्मोहयन्बलमायया २ तंमृधेवेगमास्थायनृपाःपरमधन्विनः ॥ चोदितास्तवपुत्रैश्चसर्वतःपर्यवारयन् ३ सतैस्तुसंवृ तोभीमःप्रहसन्निवभारत ॥ उद्यच्छन्सगदांतेभ्यःसुघोरांसिंहवन्नदन् ४ अवामृजच्चवेगेनशत्रुपक्षविनाशिनीम् ॥ इंद्राशनिरिवेंद्रेणप्रविद्धासंहतात्मना ॥ प्रा मथ्नात्सामहाराजसैनिकांस्तवसंयुगे ५ घोषेणमहताराजन्पूरयंतीवमेदिनीम् ॥ ज्वलंतीतेजसाभीमात्रासयामासतेसुतान् ६ तांपतंतींमहावेगांदृष्ट्वातेजोभि संवृताम् ॥ प्राद्रवंस्तावकाःसर्वेनदंतोभैरवान्रवान् ७ तंचशब्दमसह्यंवैतस्याःसंलक्ष्यमारिष ॥ प्रापतन्मनुजास्तत्ररथेभ्योरथिनस्तदा ८ तेहन्यमानाभी मेनगदाहस्तेनतावकाः ॥ प्राद्रवंतरणेभीताव्याघ्रघ्राताम्मृगाइव ९ सतान्विद्राव्यकौंतेयःसंख्येऽमित्रान्दुरासदान् ॥ सुपर्णइववेगेनपक्षिराडत्यगाच्चमूम् १० तथातुविप्रकुर्वाणंरथयूथपयूथपम् ॥ भारद्वाजोमहाराजभीमसेनंसमभ्ययात् ११ भीमंतुसमरेद्रोणोवारयित्वाशरोर्मिभिः ॥ अकरोत्सहसानादंपांडूनांभयमा दधत् १२ तद्युद्धमासीत्सुमहद्घोरंदेवासुरोपमम् ॥ द्रोणस्यचमहाराजभीमस्यचमहात्मनः १३ यदातुविशिखैस्तीक्ष्णैर्द्रोणचापविनिःसृतैः ॥ वध्यंतेसमरे वीराःशतशोऽथसहस्रशः १४ ततोरथादवप्लुत्यवेगमास्थायपांडवः ॥ निमील्यनयनेराजन्पदातिर्द्रोणमभ्ययात् १५

विष्करणेन २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५

॥९६॥

अंसेशिरोभीमसेनःकरौकृत्वोरसिस्थिरौ ॥ वेगमास्थायबलवान्मनोनिलगरुत्मताम् १६ यथाहिगोवृषोवर्षंप्रतिगृह्णातिलीलया ॥ तथाभीमोनरव्याघ्रःशरवर्षं समग्रहीत् १७ सवध्यमानःसमरेरथंद्रोणस्यमारिष ॥ ईषायांपाणिनागृह्यप्रचिक्षेपमहाबलः १८ द्रोणस्तुसत्वरोराजन्क्षिप्तोभीमेनसंयुगे ॥ रथमन्यंसमारुह्य व्यूहद्वारंययौपुनः १९ तमायांतंतथादृष्ट्वाभग्नोत्साहंगुरुंतदा ॥ गत्वावेगात्पुनर्भीमोधुरंगृह्यरथस्यतु २० तमप्यतिरथंभीमश्चिक्षेपभृशरोषितः ॥ एवमष्टौ रथाःक्षिप्ताभीमसेनेनलीलया २१ व्यदृश्यतनिमेषेणपुनःस्वरथमास्थितः ॥ दृश्यतेतावकैर्योधैर्विस्मयोत्फुल्ललोचनैः २२ तस्मिन्क्षणेतस्ययंतातूर्णमश्वान चोदयत् ॥ भीमसेनस्यकौरव्यतदद्भुतमिवाभवत् २३ ततःस्वरथमास्थायभीमसेनोमहाबलः ॥ अभ्यद्रवतवेगेनतवपुत्रस्यवाहिनीम् २४ समृद्गन्क्षत्रियाना जौवातोवृक्षानिवोद्धतः ॥ आगच्छद्दारयन्सेनांसिंधुवेगोनगानिव २५ भोजानीकंसमासाद्यहार्दिक्येनाभिरक्षितम् ॥ प्रमथ्यतरसावीरस्तदप्यतिबलोऽभ्य यात् २६ संत्रासयन्ननीकानितलशब्देनपांडवः ॥ अजयत्सर्वसैन्यानिशार्दूलइवगोवृषान् २७ भोजानीकमतिक्रम्यदरदानांचवाहिनीम् ॥ तथाम्लेच्छगणा नन्यान्बहून्युद्धविशारदान् २८ सात्यकिंचैवसंप्रेक्ष्ययुध्यमानंमहारथम् ॥ रथेनयत्तःकौंतेयोवेगेनप्रययौतदा २९ भीमसेनोमहाराजद्रष्टुकामोधनंजयम् ॥ अतीत्यसमरेयोधांस्तावकान्पांडुनंदनः ३० सोऽपश्यदर्जुनंतत्रयुध्यमानंमहारथम् ॥ सैंधवस्यवधार्थंहिपराक्रांतंपराक्रमी ३१ तंदृष्ट्वापुरुषव्याघ्रश्चुक्रोशमह तोरवान् ॥ प्रावृट्कालेमहाराजनर्दन्निवबलाहकः ३२ तंतस्यनिनदंघोरंपार्थःशुश्रावनर्दतः ॥ वासुदेवश्चकौरव्यभीमसेनस्यसंयुगे ३३ तौश्रुत्वायुगपद्वीरौ निनदंतस्यशुष्मिणः ॥ पुनःपुनःप्राणदतांदिदृक्षंतौवृकोदरम् ३४ ततःपार्थोमहानादंमुंचन्वैमाधवश्चह ॥ अभ्ययातांमहाराजनर्दंतौगोवृषाविव ३५ भीम सेनरवंश्रुत्वाफाल्गुनस्यचधन्विनः ॥ अप्रीयतमहाराजधर्मपुत्रोयुधिष्ठिरः ३६ विशोकश्चाभवद्राजाश्रुत्वातांनिनदंतयोः ॥ धनंजयस्यसमरेजयमाशास्तवा न्विभुः ३७ तथातुनर्दमानेवैभीमसेनेमदोत्कटे ॥ स्मितंकृत्वामहाबाहुर्धर्मपुत्रोयुधिष्ठिरः ३८ हृद्गतंमनसाप्राहध्यात्वाधर्मभृतांवरः ॥ दत्ताभीमत्वयासंवित्कृ तंगुरुवचस्तथा ३९ नहितेषांजयोयुद्धेयेषांद्विष्टाऽसिपांडव ॥ दिष्ट्याजीवतिसंग्रामेसव्यसाचीधनंजयः ४० दिष्ट्याचकुशलीवीरःसात्यकिःसत्यविक्रमः ॥ दिष्ट्याशृणोमिगर्जंतौवासुदेवधनंजयौ ४१ येनशक्रंरणेजित्वातर्पितोहव्यवाहनः ॥ सहंताद्विषतांसंख्येदिष्ट्याजीवतिफाल्गुनः ४२ यस्यबाहुबलंसर्वेवयमा श्रित्यजीविताः ॥ सहंतारिपुसैन्यानांदिष्ट्याजीवतिफाल्गुनः ४३ निवातकवचायेनदेवैरपिसुदुर्जयाः ॥ निर्जिताधनुषैकेनदिष्ट्यापार्थःसजीवति ४४ कौरवान्स हितान्सर्वान्गोग्रहार्थेसमागतान् ॥ योऽजयन्मत्स्यनगरेदिष्ट्यापार्थःसजीवति ४५ कालकेयसहस्राणिचतुर्दशमहारणे ॥ योऽवधीद्भुजवीर्येणदिष्ट्यापार्थःसजीवति ४६

४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ ॥ इतिद्रोणपर्वणिटीकायामष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥ ॥ छ ॥ ॥ निनदंतमिति १ । २ युयुत्स

गंधर्वराजंबलिनंदुर्योधनकृतेचवै ॥ जितवान्योऽस्त्रवीर्येणदिष्ट्याचापार्थःसजीवति ४७ किरीटमालीबलवाञ्छ्वेताश्वःकृष्णसारथिः ॥ ममप्रियश्चसततंदिष्ट्याचापा
र्थःसजीवति ४८ पुत्रशोकाभिसंतप्तश्चिकीर्षन्कर्मदुष्करम् ॥ जयद्रथवधान्वेषीप्रतिज्ञांकृतवान्हियः ४९ कच्चित्ससैंधवंसंख्येहानिष्यतिधनंजयः ॥ कच्चित्तीर्ण
प्रतिज्ञंहिवासुदेवेनरक्षितम् ५० अनस्तामितआदित्येसमेष्याम्यहमर्जुनम् ॥ कच्चित्सैंधवकोराजादुर्योधनहितेरतः ५१ नंदयिष्यत्यमित्रान्हिफाल्गुनेननिपा
तितः ॥ कच्चिद्दुर्योधनोराजाफाल्गुनेननिपातितम् ५२ दृष्ट्वासैंधवकंसंख्येशममस्मासुधास्यति ॥ दृष्ट्वाविनिहतान्भ्रातॄन्भीमसेनेनसंयुगे ॥ कच्चिद्दुर्योधनोमं
दःशममस्मासुधास्यति ५३ दृष्ट्वाचान्यान्महायोधान्पातितान्धरणीतले ॥ कच्चिद्दुर्योधनोमंदःपश्चात्तापंगमिष्यति ५४ कच्चिद्भीष्मेणनोवैरंशममेकेनयास्यति ॥
शेषस्यरक्षणार्थंचसंधास्यतिसुयोधनः ५५ एवंबहुविधंतस्यराज्ञश्चिंतयतस्तदा ॥ कृपयाऽभिपरीतस्यघोरंयुद्धमवर्तत ५६ ॥ इतिश्रीमहाभारतेद्रोणपर्वणि
जयद्रथवधपर्वणि भीमसेनप्रवेशेयुधिष्ठिरहर्षेऽष्टाविंशत्याधिकशततमोऽध्यायः ॥ १२८ ॥ धृतराष्ट्रउवाच ॥ निनदंतंतथातंतुभीमसेनंमहाबलम् ॥ मेघस्त
नितनिर्घोषंकेवीराःपर्यवारयन् १ नहिपश्याम्यहंतंवैत्रिषुलोकेषुकंचन ॥ क्रुद्धस्यभीमसेनस्ययास्तिष्ठदग्रतोरणे २ गदांयुयुत्समानस्यकालस्येवेहसंजय ॥ नहिप
श्याम्यहंयुद्धेयस्तिष्ठदग्रतःपुमान् ३ रथंरथेनयोहन्यात्कुंजरंकुंजरेणच ॥ कस्तस्यसमरेस्थातासाक्षादपिपुरंदरः ४ क्रुद्धस्यभीमसेनस्यममपुत्रान्जिघांसतः ॥
दुर्योधनहितेयुक्ताःसमतिष्ठंतकेऽग्रतः ५ भीमसेनदवाग्नेस्तुममपुत्रांस्तृणोपमान् ॥ प्रधक्षतोरणमुखेकेऽतिष्ठन्नग्रतोनराः ६ काल्यमानांस्तुपुत्रान्मेदृष्ट्वाभीमेन
संयुगे ॥ कालेनेवप्रजाःसर्वाःकेभीमंपर्यवारयन् ७ नमेऽर्जुनाद्भयंतादृक्कृष्णान्नापिचसात्वतात् ॥ हुतभुग्जन्मनोनैवयादृग्भीमाद्भयंमम ८ भीमवह्नेःप्रदीप्तस्य
ममपुत्रान्दिधक्षतः ॥ केशूराःपर्यवर्तंतन्ममाचक्ष्वसंजय ९ ॥ संजयउवाच ॥ तथातुनर्दमानंतंभीमसेनंमहाबलम् ॥ तुमुलेनैवशब्देनकर्णोऽप्यभ्यद्रवद्ब
ली १० व्याक्षिपन्सुमहच्चापमतिमात्रममर्षणः ॥ कर्णःसुयुद्धमाकांक्षन्दर्शयिष्यन्बलंमृधे ११ रुरोधमार्गंभीमस्यवातस्येवमहीरुहः ॥ भीमोऽपिदृष्ट्वासावेगं
पुरोवैकर्तनंस्थितम् १२ चुकोपबलवद्वीरश्चिक्षेपास्यशिलाशितान् ॥ तान्प्रत्यगृह्णात्कर्णोऽपिप्रतीपंप्रापयच्छरान् १३ ततस्तुसर्वयोधानांयततांप्रेक्षतां
तदा ॥ प्रावेपन्निवगात्राणिकर्णभीमसमागमे १४ रथिनांसादिनांचैवतयोःश्रुत्वातलस्वनम् ॥ भीमसेनस्यनिनदंश्रुत्वाघोरंरणाजिरे १५ खंचभूमिंचसंरुद्धां
मेनिरेक्षत्रियर्षभाः ॥ पुनर्घोरेणनादेनपांडवस्यमहात्मनः १६ समरेसर्वयोधानांधनूंष्यभ्यपतन्क्षितौ ॥ शस्त्राणिन्यपतन्दोर्भ्यःकेषांचिच्चासवोऽद्रवन् १७

मानस्यव्यापारयतः ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ सावेगंसत्वरम् १२ । १३ । १४ । १५ संरुद्धामेकतामापन्नाम् १६ । १७

वित्रस्तानिचसर्वाणिशकृन्मूत्रंप्रसुस्रुवुः ॥ वाहनानिचसर्वाणिबभूवुर्विमनांसिच १८ प्रादुरासन्निमित्तानिघोराणिसुबहून्युत ॥ गृध्रकंकबलैश्चासीदंतरिक्षंस
मावृतम् १९ तस्मिन्सुतुमुलेराजन्कर्णभीमसमागमे ॥ ततःकर्णस्तुविंशत्याशराणांभीममार्दयत् २० विव्याधचास्यत्वरितःसूतंपंचभिराशुगैः ॥ प्रहस्यभी
मसेनोऽपिकर्णंप्रत्याद्रवद्रणे २१ सायकानांचतुःषष्ट्याक्षिप्रकारीमहायशाः ॥ तस्यकर्णोमहेष्वासःसायकांश्चतुरोऽक्षिपत् २२ असंप्राप्तांश्चतान्भीमःसाय
कैर्नतपर्वभिः ॥ चिच्छेदबहुधाराजन्दर्शयन्पाणिलाघवम् २३ तंकर्णश्छादयामासशरव्रातैरनेकशः ॥ संछाद्यमानःकर्णेनबहुधापांडुनंदनः २४ चिच्छेदचा
पंकर्णस्यमुष्टिदेशेमहारथः ॥ विव्याधचैनंबहुभिःसायकैर्नतपर्वभिः २५ अथान्यद्धनुरादायसज्यंकृत्वाचसूतजः ॥ विव्याधसमरेभीमंभीमकर्मामहारथः २६ त
स्यभीमोभृशंक्रुद्धस्त्रीन्शरान्नतपर्वणः ॥ निचखानोरसिक्रुद्धःसूतपुत्रस्यवेगतः २७ तैःकर्णोऽराजतशरैरुरोमध्यगतैस्तदा ॥ महीधरइवोदग्रस्त्रिशृंगोभरतर्षभ
२८ सुस्रावचास्यरुधिरंविद्धस्यपरमेषुभिः ॥ धातुप्रस्यंदिनःशैलाद्यथागैरिकधातवः २९ किंचिद्विचलितःकर्णःसुप्रहाराभिपीडितः ॥ आकर्णपूर्णमाकृष्य
भीमंविव्याधसायकैः ३० चिक्षेपचपुनर्बाणान्शतशोऽथसहस्रशः ॥ सशरैरर्दितस्तेनकर्णेनदृढधन्विना ॥ धनुर्ज्यामच्छिनत्तूर्णंभीमस्तस्यक्षुरेणह ३१ सार
थिंचास्यभल्लेनरथनीडादपातयत् ॥ वाहांश्चचतुरस्तस्यव्यसूंश्चक्रेमहारथः ३२ हताश्वात्तुरथात्कर्णःसमाप्लुत्यविशांपते ॥ स्यंदनंवृषसेनस्यतूर्णमापुप्लुवे
भयात् ३३ निर्जित्यतुरणेकर्णंभीमसेनःप्रतापवान् ॥ ननादबलवन्नादंपर्जन्यनिनदोपमम् ३४ तस्यतंनिनदंश्रुत्वाप्रहृष्टोऽभूद्युधिष्ठिरः ॥ कर्णंपराजितंमत्वा
भीमसेनेनसंयुगे ३५ समंताच्छंखनिनदंपांडुसेनाऽकरोत्तदा ॥ शत्रुसेनाध्वनिंश्रुत्वातावकाह्यनदन्भृशम् ३६ सशंखबाणनिनदैर्हर्षाद्राजास्ववाहिनीम् ॥ चक्रे
युधिष्ठिरःसंख्येहर्षनादैश्चसंकुलाम् ३७ गांडीवंव्याक्षिपत्पार्थःकृष्णोऽप्यब्जमवादयत् ॥ तमंतर्धायनिनदंभीमस्यनदतोध्वनिः ॥ अश्रूयतततदाराजन्सर्वसैन्ये
षुदारुणः ३८ ततोव्यायच्छतामस्त्रैःपृथक्पृथगजिह्मगैः ॥ मृदुपूर्वंतुराधेयोदृढपूर्वंतुपांडवः ३९ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि भीमप्रवे
शेकर्णपराजयेएकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥ संजयउवाच ॥ तस्मिन्विलुलितेसैन्येसैंधवायार्जुनेगते ॥ सात्वतेभीमसेनेचपुत्रस्तेद्रोणमभ्य
यात् १ त्वरन्नेकरथेनैवबहुकृत्यंविचिंतयन् ॥ सरथस्तवपुत्रस्यत्वरयापरयायुतः २ तूर्णमभ्यद्रवद्द्रोणंमनोमारुतवेगवान् ॥ उवाचचैनंपुत्रस्तेसंरंभाद्रक्तलो
चनः ३ ससंभ्रममिदंवाक्यमब्रवीत्कुरुनंदनः ॥ अर्जुनोभीमसेनश्चसात्यकिश्चापराजितः ४ विजित्यसर्वसैन्यानिसुमहांतिमहारथाः ॥ संप्राप्ताःसिंधुरा
जस्यसमीपमनिवारिताः ५

६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ तान्प्रसिद्धानयानक्षान् अक्षान्मन्यमानः प्राग्ग्लहतेस्मइत्यन्वयः १८ । यत्रसमायां तेऽस्मी १९ दुरोदरंद्यूतकारिणम् २०

व्यायच्छंतिचतत्रापिसर्वएवापराजिताः ॥ यदितावद्रणेपार्थोव्यतिक्रांतोमहारथः ६ कथंसात्यकिभीमाभ्यांव्यतिक्रांतोऽसिमानद ॥ आश्चर्यभूतंलोकेऽस्मि
न्समुद्रस्येवशोषणम् ७ निर्जयस्तवविप्राग्र्यसात्वतेनार्जुनेनच ॥ तथैवभीमसेनेनलोकःसंवदतेभृशम् ८ कथंद्रोणोजितःसंख्येधनुर्वेदस्यपारगः ॥ इत्येवंब्रुवते
योधाअश्रद्धेयमिदंतव ९ नाशएवतुमेनूनंमंदभाग्यस्यसंयुगे ॥ यत्रत्वांपुरुषव्याघ्रंव्यतिक्रांतास्त्रयोरथाः १० एवंगतेतुकृत्येऽस्मिन्ब्रूहियत्तेविवक्षितम् ॥ य
द्गतंगतमेवेदंशेषंचिंतयमानद ११ यत्कृत्यंसिंधुराजस्यप्राप्तकालमनंतरम् ॥ तत्संविधीयतांक्षिप्रंसाधुसंचिंत्यनोद्विज १२ ॥ द्रोणउवाच ॥ चिंत्यंबहुविधं
तातयत्कृत्यंतच्छृणुष्वमे ॥ त्रयोहिसमतिक्रांताःपांडवानांमहारथाः १३ यावत्तेषांभयंपश्चात्तावदेषांपुरःसरम् ॥ तद्गरीयस्तरंमन्येयत्रकृष्णधनंजयौ १४ सा
पुरस्ताच्चपश्चाच्चगृहीताभारतीचमूः ॥ तत्रकृत्यमहंमन्येसैंधवस्याभिरक्षणम् १५ सनोरक्ष्यतमस्तातक्रुद्धाद्भीतोधनंजयात् ॥ गतौचसैंधवंभीमौयुयुधानवृ
कोदरौ १६ संप्राप्तंतदिदंद्यूतंयत्तच्छकुनिबुद्धिजम् ॥ नसभायांजयोवृत्तोनापितत्रपराजयः १७ इहनोग्लहमानानामद्यतावज्जयाजयौ ॥ यान्स्मतान्ग्लहतेघो
राञ्छकुनिःकुरुसंसदि १८ अक्षान्समन्यमानःप्राक्शरास्तेहिदुरासदाः ॥ यत्रतेबहवस्तातकौरव्याव्यवस्थिताः १९ सेनांदुरोदरंविद्धिशरानक्षान्विशांपते ॥
ग्लहंचसैंधवंराजंस्तत्रद्यूतस्यनिश्चयः २० सैंधवेतुमहद्द्यूतंसमासक्तंपरैःसह ॥ अत्रसर्वेमहाराजत्यक्त्वाजीवितमात्मनः २१ सैंधवस्यरणेरक्षांविधिवत्कर्तुमर्हथ ॥
तत्रनोग्लहमानानांध्रुवौजयपराजयौ २२ यत्रतेपरमेष्वासायत्तारक्षंतिसैंधवम् ॥ तत्रगच्छस्वयंशीघ्रंतांश्चरक्षस्वरक्षिणः २३ इहैवत्वहमासिष्येप्रेषयिष्यामि
चापरान् ॥ निरोत्स्यामिचपंचालान्सहितान्पांडुसृंजयैः २४ ततोदुर्योधनोऽगच्छत्तूर्णमाचार्यशासनात् ॥ उद्यम्यात्मानमुग्रायकर्मणेसपदानुगः २५ चक्ररक्षौ
तुपांचाल्यौयुधामन्यूत्तमौजसौ ॥ बाह्येनसेनामभ्येत्यजग्मतुःसव्यसाचिनम् २६ यौतुपूर्वंमहाराजवारितौकृतवर्मणा ॥ प्रविष्टेत्वर्जुनेराजंस्तवसैन्यंयुयुत्स
या २७ पार्श्वेभित्त्वाचमूंवीरौप्रविष्टौतववाहिनीम् ॥ पार्श्वेनसैन्यमायांतौकुरुराजोददर्शह २८ ताभ्यांदुर्योधनःसार्धमकरोत्संख्यमुत्तमम् ॥ त्वरितस्त्वरमा
णाभ्यांभ्रातृभ्यांभारतोबली २९ तावेनमभ्यद्रवतामुभावुद्यतकार्मुकौ ॥ महारथसमाख्यातौक्षत्रियप्रवरौयुधि ३० तमविध्यद्युधामन्युस्त्रिंशताकंकपत्रिभिः ॥
विंशत्यासारथिंचास्यचतुर्भिश्चतुरोहयान् ३१ दुर्योधनोयुधामन्योर्ध्वजमेकेषुणाऽच्छिनत् ॥ एकेनकार्मुकंचास्यचकर्ततनयस्तव ३२ सारथिंचास्यभल्लेनरथ
नीडादपाहरत् ॥ ततोऽविध्यच्छरैस्तीक्ष्णैश्चतुर्भिश्चतुरोहयान् ३३ युधामन्युश्चसंक्रुद्धःशरांस्त्रिंशतमाहवे ॥ व्यसृजत्तवपुत्रस्यत्वरमाणःस्तनांतरे ३४

२१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४

३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ ॥ इतिद्रोणपर्वणिटीकायांत्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥ ७ ॥ वर्तमानइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९

तथोत्तमौजाःसंक्रुद्धःशरैर्हेमविभूषितैः ॥ अविध्यत्सारथिंचास्यप्राहिणोद्यमसादनम् ३५ दुर्योधनोऽपिराजेंद्रपांचाल्यस्यौत्तमौजसः ॥ जघानचतुरोस्याश्वानुभौतौपार्ष्णिसारथी ३६ उत्तमौजाहताश्वस्तुहतसूतश्चसंयुगे ॥ आरुरोहरथंभ्रातुर्युधामन्योरभित्वरन् ३७ सरथंप्राप्यतंभ्रातुर्दुर्योधनहयान्शरैः ॥ बहुभिस्ताडयामासतेहताःप्रापतन्भुवि ३८ हयेषुपतितेष्वस्यचिच्छेदपरमेषुणा ॥ युधामन्युर्धनुःशीघ्रंशरावापंचसंयुगे ३९ हताश्वसूतात्सरथादवतीर्यनराधिपः ॥ गदामादायतेपुत्रःपांचाल्यावभ्यधावत ४० तमापतंतंसंप्रेक्ष्यक्रुद्धंकुरुपतिंतदा ॥ अवप्लुतौरथोपस्थाद्युधामन्यूत्तमौजसौ ४१ ततःसहेमचित्रंतंगदयास्यंदनंगदी ॥ संक्रुद्धःपोथयामाससाश्वसूतध्वजंनृप ४२ भंक्त्वारथंसपुत्रस्तेहताश्वोहतसारथिः ॥ मद्रराजरथंतूर्णमारुरोहपरंतपः ४३ पंचालानांततोमुख्यौराजपुत्रौमहारथौ ॥ रथावन्यौसमारुह्यबीभत्सुमभिजग्मतुः ४४ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिदुर्योधनयुद्धेत्रिंशदधिकशततमोऽध्यायः ॥ ॥ १३० ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ वर्तमानेमहाराजसंग्रामेलोमहर्षणे ॥ व्याकुलेषुचसर्वेषुपीड्यमानेषुसर्वशः १ राधेयोभीममानर्च्छद्युद्धायभरतर्षभ ॥ यथानागोवनेनागंमत्तोमत्तमभिद्रवन् २ ॥ धृतराष्ट्रउवाच ॥ यौतौकर्णश्चभीमश्चसंप्रयुद्धौमहाबलौ ॥ अर्जुनस्यरथोपांतेकीदृशःसोऽभवद्रणः ३ पूर्वंहिनिर्जितःकर्णोभीमसेनेनसंयुगे ॥ कथंभूयःसराधेयोभीममागान्महारथः ४ भीमोवासूततनयंप्रत्युद्यातःकथंरणे ॥ महारथंसमाख्यातंपृथिव्यांप्रवरंरथम् ५ भीष्मद्रोणावतिक्रम्यधर्मराजोयुधिष्ठिरः ॥ नान्यतोभयमादत्तविनाकर्णान्महारथात् ६ भयाद्यस्यमहाबाहोनशेतेबहुलाःसमाः ॥ चिंतयन्नित्यशोवीर्यंराधेयस्यमहात्मनः ॥ तंकथंसूतपुत्रंतुभीमोऽयोधयताहवे ७ ब्रह्मण्यंवीर्यसंपन्नंसमरेष्वनिवर्तिनम् ॥ कथंकर्णंयुधांश्रेष्ठंयोधयामासपांडवः ८ यौतौसमीयतुर्वीरौवैकर्तनवृकोदरौ ॥ कथंतावत्रयुध्येतांमहाबलपराक्रमौ ९ भ्रातृत्वंदर्शितंपूर्वंघृणीचापिससूतजः ॥ कथंभीमेनयुयुधेकुंत्यावाक्यमनुस्मरन् १० भीमोवासूतपुत्रेणस्मरन्वैरंपुराकृतम् ॥ अयुध्यतकथंशूरःकर्णेनसहसंयुगे ११ आशास्तेचसदासूतपुत्रोदुर्योधनोमम ॥ कर्णोजेष्यतिसंग्रामेसमस्तान्पांडवानिति १२ जयाशायत्रपुत्रस्यममंदस्यसंयुगे ॥ सकथंभीमकर्माणंभीमसेनमयोधयत् १३ यंसमासाद्यपुत्रैर्मेकृतंवैरंमहारथैः ॥ तंसूततनयंतातकथंभीमोह्ययोधयत् १४ अनेकान्विप्रकारांश्चसूतपुत्रसमुद्भवान् ॥ स्मरमाणःकथंभीमोयुयुधेसूतसूनुना १५ योऽजयत्पृथिवींसर्वांरथेनैकेनवीर्यवान् ॥ तंसूततनयंयुद्धेकथंभीमोह्ययोधयत् १६ योजातःकुंडलाभ्यांचकवचेनसहैवच ॥ तंसूतपुत्रंसमरेभीमःकथमयोधयत् १७

पूर्वंयुद्धयोगेदर्शितमुद्राविर्तंभ्रातृत्वंकुंत्यावाक्यंचचतुर्णामवध्यत्वलक्षणंचानुस्मरन्नित्यन्वयः १० । ११ । १२ । १३ । १४ । १५ । १६ । १७

१८ । १९ । २० । २१ । २२ अभितःसंमुखे २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३०।३१।३२।३३।३४।३५।३६। ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८

यथातयोर्युद्धमभूद्यश्चासीद्विजयीतयोः ॥ तन्ममाचक्ष्वतत्त्वेनकुशलोह्यसिसंजय १८ ॥ संजयउवाच ॥ भीमसेनस्तुराधेयमुत्सृज्यरथिनांवरम् ॥ इयेषगं
तुंयत्रास्तांवीरौकृष्णधनंजयौ १९ तंप्रयांतमभिद्रुत्यराधेयःकंकपत्रिभिः ॥ अभ्यवर्षन्महाराजमेघोवृष्ट्येवपर्वतम् २० फुल्लतापंकजेनेववक्रेणविहसन्बली ॥
आजुहावरणेयांतंभीममाधिरथिस्तदा २१ ॥ कर्णउवाच ॥ भीमाहितैस्तवरणःस्वप्नेऽपिनविभावितः ॥ तद्दर्शयसिकस्मान्मेपृष्ठंपार्थदिदृक्षया २२ कुंत्याः
पुत्रस्यसदृशंनेदंपांडवनंदन ॥ तेनमामभितःस्थित्वाशरवर्षैरवाकिर २३ भीमसेनस्तदाह्वानंकर्णान्नामर्षयद्युधि ॥ अर्धमंडलमावृत्यसूतपुत्रमयोधयत् २४
अवक्रगामिभिर्बाणैरभ्यवर्षन्महायशाः ॥ दंशितंद्वैरथेयत्तंसर्वशस्त्रविशारदम् २५ विधित्सुःकलहस्यांतंजिघांसुःकर्णमक्षिणोत् ॥ हत्वातस्यानुगांस्तंचहंतुका
मोमहाबलः २६ तस्मैव्यसृजदुग्राणिविविधानिपरंतपः ॥ अमर्षात्पांडवःक्रुद्धःशरवर्षाणिमारिष २७ तस्यतानीषुवर्षाणिमत्तद्विरदगामिनः ॥ सूतपुत्रोऽस्त्र
मायाभिरग्रसत्परमास्त्रवित् २८ सयथावन्महाबाहुर्विद्ययावैसुपूजितः ॥ आचार्यवन्महेष्वासःकर्णःपर्यचरद्बली २९ युध्यमानंतुसंरंभाद्भीमसेनंहसन्निव ॥
अभ्यपद्यतकौंतेयंकर्णोराजन्वृकोदरम् ३० तन्नामृष्यतकौंतेयःकर्णस्यस्मितमाहवे ॥ युध्यमानेषुवीरेषुपश्यत्सुचसमंततः ३१ तंभीमसेनःसंप्राप्तंवत्सदंतैः
स्तनांतरे ॥ विव्याधबलवान्क्रुद्धस्तोत्रैरिवमहाद्विपम् ३२ पुनश्चसूतपुत्रंतुस्वर्णपुंखैःशिलाशितैः ॥ सुमुक्तैश्चित्रवर्माणंनिर्बिभेदत्रिसप्तभिः ३३ कर्णोजांबू
नदैर्जालैःसंछन्नान्वातरंहसः ॥ हयान्विव्याधभीमस्यपंचभिःपंचभिःशरैः ३४ ततोबाणमयंजालंभीमसेनरथंप्रति ॥ कर्णेनविहितंराजन्निमेषार्धाददृश्यत ३५
सरथःसध्वजस्तत्रससूतःपांडवस्तदा ॥ प्राच्छाद्यतमहाराजकर्णचापच्युतैःशरैः ३६ तस्यकर्णश्चतुःषष्ट्याव्यधमत्कवचंदृढम् ॥ क्रुद्धश्चाप्यहनत्पार्थंनारा
चैर्मर्मभेदिभिः ३७ ततोऽचिंत्यमहाबाहुःकर्णकार्मुकनिःसृतान् ॥ समाश्लिष्यदसंभ्रांतःसूतपुत्रंवृकोदरः ३८ सकर्णचापप्रभवान्निषूनाशीविषोपमान् ॥ बिभ्र
द्भीमोमहाराजनजगामव्यथांरणे ३९ ततोद्वात्रिंशताभल्लैर्निशितैस्तिग्मतेजनैः ॥ विव्याधसमरेकर्णंभीमसेनःप्रतापवान् ४० अयत्नेनैवतंकर्णःशरैर्भृशमवाकि
रत् ॥ भीमसेनंमहाबाहुंसैंधवस्यवधैषिणम् ४१ मृदुपूर्वंतुराधेयोभीममाजावयोधयत् ॥ क्रोधपूर्वंतथाभीमःपूर्ववैरमनुस्मरन् ४२ तंभीमसेनोनामृष्यदवमान
ममर्षणः ॥ सतस्मैव्यसृजत्तूर्णंशरवर्षममित्रहा ४३ तेशराःप्रेषितास्तेनभीमसेनेनसंयुगे ॥ निपेतुःसर्वतोवीरेकूजंतइवपक्षिणः ४४ हेमपुंखाःप्रसन्नाग्राभीम
सेनधनुश्च्युताः ॥ प्राच्छादयंस्तेराधेयंशलभाइवपावकम् ४५ कर्णस्तुरथिनांश्रेष्ठश्छाद्यमानःसमंततः ॥ राजन्व्यसृजदुग्राणिशरवर्षाणिभारत ४६ तस्य
तानशनिप्रख्यानिषून्समरशोभिनः ॥ चिच्छेदबहुभिर्भल्लैरसंप्राप्तान्वृकोदरः ४७ पुनश्चशरवर्षेणच्छादयामासभारत ॥ कर्णोवैकर्तनोयुद्धेभीमसेनमरिंदमः ४८

तत्रभारतभीमंतुदृष्ट्वंतःस्मसायकैः ॥ समाचिततनुंसंख्येश्वाविधंशललैरिव ४९ हेमपुंखाञ्छिलाधौतान्कर्णचापच्युताञ्छरान् ॥ दधारसमरेवीरःस्वरश्मीनि
वरश्मिमान् ५० रुधिरोक्षितसर्वांगोभीमसेनोव्यराजत ॥ सम्पृद्धकुसुमापीडोवसंतेऽशोकवृक्षवत् ५१ तत्तुभीमोमहाबाहोःकर्णस्यचरितंरणे ॥ नामृष्यतमहा
बाहुःक्रोधादुद्वृत्तलोचनः ५२ सकर्णंपंचविंशत्यानाराचानांसमार्पयत् ॥ महीधरमिवश्वेतंगूढपादैर्विषोल्बणैः ५३ पुनरेवचविव्याधषड्भिरष्टाभिरेवच ॥ मर्म
स्वमरविक्रांतःसूतपुत्रंतनुत्यजम् ५४ पुनरन्येनबाणेनभीमसेनःप्रतापवान् ॥ चिच्छेदकार्मुकंतूर्णंकर्णस्यप्रहसन्निव ५५ जघानचतुरश्चाश्वान्सूतंचत्वरितः
शरैः ॥ नाराचैरर्करश्म्याभैःकर्णंविव्याधचोरसि ५६ तेजग्मुर्धरणीमाशुकर्णंनिर्भिद्यपत्रिणः ॥ यथाजलधरंभित्त्वादिवाकरमरीचयः ५७ सवैक्लव्यंमहत्प्राप्य
च्छिन्नधन्वाशराहतः ॥ तथापुरुषमानीसप्रत्यपायाद्रथांतरम् ५८ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिकर्णपराजयेएकत्रिंदशाधिकशततमो
ऽध्यायः ॥ १३१ ॥ धृतराष्ट्रउवाच ॥ स्वयंशिष्योमहेशस्यभृगूत्तमधनुर्धरः ॥ शिष्यत्वंप्राप्तवान्कर्णस्तस्यतुल्योऽस्त्रविद्यया १ तद्विशिष्टोऽपिवाकर्णःशि
ष्यःशिष्यगुणैर्युतः ॥ कुंतीपुत्रेणभीमेननिर्जितःसतुलीलया २ यस्मिन्जयाशामहतीपुत्राणांममसंजय ॥ तंभीमाद्विमुखंदृष्ट्वाकिन्नुदुर्योधनोऽब्रवीत् ३ कथंच
युयुधेभीमोवीर्यश्लाघीमहाबलः ॥ कर्णोवासमरेतातकिमकार्षीदतःपरम् ॥ भीमसेनंरणेदृष्ट्वाज्वलंतमिवपावकम् ४ ॥ संजयउवाच ॥ रथमन्यंसमास्थायवि
धिवत्कल्पितंपुनः ॥ अभ्ययात्पांडवंकर्णोवातोद्धूतइवार्णवः ५ क्रुद्धमाधिरथिंदृष्ट्वापुत्रास्तवविशांपते ॥ भीमसेनममन्यंतवैश्वानरमुखेहुतम् ६ चापशब्दंत
तःकृत्वातलशब्दंचभैरवम् ॥ अभ्यद्रवतराधेयोभीमसेनरथंप्रति ७ पुनरेवतयोराजन्घोरआसीत्समागमः ॥ वैकर्तनस्यशूरस्यभीमस्यचमहात्मनः ८ संर
ब्धौहिमहाबाहूपरस्परवधैषिणौ ॥ अन्योन्यमीक्षांचक्रातेदहंताविवलोचनैः ९ क्रोधरक्तेक्षणौतीव्रौनिःश्वसंताविवोरगौ ॥ शूरावन्योन्यमासाद्यततक्षतुररिं
दमौ १० व्याघ्राविवसुसंरब्धौश्येनाविवचशीघ्रगौ ॥ शरभाविवसंक्रुद्धौयुयुधातेपरस्परम् ११ ततोभीमःस्मरन्क्लेशानक्षद्यूतेवनेऽपिच ॥ विराटनगरेचैवदुः
खंप्राप्तमरिंदमः १२ राष्ट्राणांस्फीतरत्नानांहरणंचतवात्मजैः ॥ सततंचपरिक्लेशान्सपुत्रेणत्वयाकृतान् १३ दग्धुमैच्छच्चयःकुंतींसपुत्रांत्वमनागसम् ॥ कृष्णा
याश्चपरिक्लेशंसभामध्येदुरात्मभिः १४ केशपक्षग्रहंचैवदुःशासनकृतंतथा ॥ परुषाणिचवाक्यानिकर्णेनोक्तानिभारत १५ पतिमन्यंपरीप्सस्वनसंतिपतय
स्तव ॥ पतितानरकेपार्थाःसर्वेषंढतिलोपमाः १६ समक्षंतवकौरव्ययदूचुःकौरवास्तदा ॥ दासीभावेनकृष्णांचभोक्तुकामाःसुतास्तव १७ यच्चापितान्प्रव्रज
तःकृष्णाजिननिवासिनः ॥ परुषाण्युक्तवान्कर्णःसभायांसन्निधौतव १८

३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८

१९।२०।२१।२२।२३।२४।२५।२६।२७।२८।२९ कर्कैःश्वेतैरश्वैः ३० । ३१ । ३२ । ३३ समाजंरंगं एकस्यैवकस्यचिन्नाभ्यस्य ३४ । ३५।३६।३७।३८।३९।४०।४१।४२ । ४३ ॥ इतिद्रोणपर्वणिटी

तृणीकृत्ययथापार्थांस्तवपुत्रोववल्गह ॥ विषमस्थान्समस्थोहिसंरब्धोगतचेतनः १९ बाल्यात्प्रभृतिचारिघ्नःस्वानिदुःखानिचिंतयन् ॥ निरविद्यतधर्मात्मा
जीवितेनवृकोदरः २० ततोविस्फार्यसुमहद्धेमपृष्ठंदुरासदम् ॥ चापंभरतशार्दूलस्त्यक्तात्माकर्णमभ्ययात् २१ ससायकमयैर्जालैर्भीमःकर्णरथंप्रति ॥ भानुम
द्भिःशिलाधौतैर्भानोःप्राच्छादयत्प्रभाम् २२ ततःप्रहस्याधिरथिस्तूर्णमस्यशिलाशितैः ॥ व्यधमद्भीमसेनस्यशरजालानिपत्रिभिः २३ महारथोमहाबाहुर्महाबा
णैर्महाबलः ॥ विव्यधाधिरथिर्भीमंनवभिर्निशितैस्तदा २४ सतोत्रैरिवमातंगोवार्यमाणःपतत्रिभिः ॥ अभ्यधावदसंभ्रांतःसूतपुत्रंवृकोदरः २५ तमापतंतंवेगे
नरर्षभंपांडवर्षभम् ॥ कर्णःप्रत्युद्ययौयुद्धेमत्तोमत्तमिवद्विपम् २६ ततःप्रध्माप्यजलजंभेरीशतसमस्वनम् ॥ अक्षुभ्यतबलंहर्षादुद्धूतइवसागरः २७ तदुद्धूतं
बलंदृष्ट्वानागाश्वरथपत्तिमत् ॥ भीमःकर्णंसमासाद्यच्छादयामाससायकैः २८ अश्वानृक्षसवर्णांश्चहंसवर्णैर्हयोत्तमैः ॥ व्यामिश्रयद्रणेकर्णःपांडवंछादयञ्छरैः
२९ ऋक्षवर्णान्हयान्कर्कैर्मिश्रान्मारुतरंहसः ॥ निरीक्ष्यतवपुत्राणांहाहाकृतमभूद्बलम् ३० तेहयाबह्वशोभंतमिश्रितावातरंहसः ॥ सितासितामहाराजयथा
व्योम्निबलाहकाः ३१ संरब्धौक्रोधताम्राक्षौप्रेक्ष्यकर्णवृकोदरौ ॥ संत्रस्ताःसमकंपंतत्वदीयानांमहारथाः ३२ यमराष्ट्रोपमंघोरमासीदायोधनंतयोः ॥ दुर्दर्शंभ
रतश्रेष्ठप्रेतराजपुरंयथा ३३ समाजमिवतच्चित्रंप्रेक्षमाणामहारथाः ॥ नालक्षयन्जयंव्यक्तमेकस्यैवमहारणे ३४ तयोःप्रैक्षंतसंमर्दंसन्निकृष्टमहास्त्रयोः ॥ तव
दुर्मंत्रितेराजन्सपुत्रस्यविशांपते ३५ छादयंतौहिशत्रुघ्नावन्योन्यंसायकैःशितैः ॥ शरजालावृतंव्योमचक्रातेऽद्भुतविक्रमौ ३६ तावन्योन्यंजिघांसंतौशरैस्ती
क्ष्णैर्महारथौ ॥ प्रेक्षणीयतरावास्तांवृष्टिमंताविवांबुदौ ३७ सुवर्णविकृतान्बाणान्विमुंचंतावरिंदमौ ॥ भास्वरंव्योमचक्रातेमहोल्काभिरिवप्रभो ३८ ताभ्यां
मुक्ताःशराराजन्गार्ध्रपत्राश्चकाशिरे ॥ श्रेण्यःशरदिमत्तानांसारसानामिवांबरे ३९ संसक्तंसूतपुत्रेणदृष्ट्वाभीममरिंदमम् ॥ अतिभारममन्येतांभीमेकृष्णधनंजयौ
४० तत्राधिरथिभीमाभ्यांशरैर्मुक्तैर्दृढंहताः ॥ इषुपातमतिक्रम्यपेतुरश्वनरद्विपाः ४१ पतद्भिःपतितैश्चान्यैर्गतासुभिरनेकशः ॥ कृतोराजन्महाराजपुत्राणां
तेजनक्षयः ४२ मनुष्याश्वगजानांचशरीरैर्गतजीवितैः ॥ क्षणेनभूमिःसंजज्ञेसंवृताभरतर्षभ ४३ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि भीमकर्ण
युद्धेद्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥ धृतराष्ट्रउवाच ॥ अत्यद्भुतमहंमन्येभीमसेनस्यविक्रमम् ॥ यत्कर्णंयोधयामाससमरेलघुविक्रमम् १ त्रिदशानपि
वायुक्तान्सर्वशस्त्रधरान्युधि ॥ वारयेद्योरणेकर्णःसयक्षासुरमानुषान् २ सकथंपांडवंयुद्धेभ्राजमानमिवश्रिया ॥ नातरत्संयुगेपार्थंतन्ममाचक्ष्वसंजय ३ कथंचयु
द्धंसंभूतंतयोःप्राणदुरोदरे ॥ अत्रमन्येसमायत्तोजयोवाऽजयएवच ४ कायांद्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥ अत्यद्भुतमिति १ । २ । ३ प्राणदुरोदरेप्राणद्यूते ४

कर्णंप्राप्यरणेसूतममपुत्रःसुयोधनः ॥ जेतुमुत्सहतेपार्थान्सगोविंदान्ससात्वतान् ५ श्रुत्वातुनिर्जितंकर्णमसकृद्भीमकर्मणा ॥ भीमसेनेनसमरेमोहआविशतीव
माम् ६ विनष्टान्कौरवान्मन्येममपुत्रस्यदुर्नयैः ॥ नहिकर्णोमहेष्वासान्पार्थान्जेष्यतिसंजय ७ कृतवान्यानियुद्धानिकर्णःपांडुसुतैःसह ॥ सर्वत्रपांडवाःकर्ण
मजयंतरणाजिरे ८ अजेयाःपांडवास्तातदेवैरपिसवासवैः ॥ नचतद्बुध्यतेमंदःपुत्रोदुर्योधनोमम ९ धनंधनेश्वरस्येवहृत्वापार्थस्यमेसुतः ॥ मधुप्रेप्सुरिवा
बुद्धिःप्रपातंनावबुध्यते १० निकृत्यानिकृतिप्रज्ञोराज्यंहृत्वामहात्मनाम् ॥ जितमित्येवमन्वानःपांडवानवमन्यते ११ पुत्रस्नेहाभिभूतेनमयाचाप्यकृतात्म
ना ॥ धर्मेस्थितामहात्मानोनिकृताःपांडुनंदनाः १२ शमकामःससोदर्योदीर्घप्रेक्षीयुधिष्ठिरः ॥ अशक्तइतिमत्वातुममपुत्रैर्निराकृतः १३ तानिदुःखान्यनेका
निविप्रकारांश्वसर्वशः ॥ हृदिकृत्वामहाबाहुर्भीमोऽयुध्यतसूतजम् १४ तस्मान्मेसंजयब्रूहिकर्णभीमौयथारणे ॥ अयुध्येतांयुधिश्रेष्ठौपरस्परवधैषिणौ १५ ॥
संजयउवाच ॥ शृणुराजन्यथावृत्तंसंग्रामंकर्णभीमयोः ॥ परस्परवधप्रेप्स्वोर्वनकुंजरयोरिव १६ राजन्वैकर्तनोभीमंक्रुद्धःक्रुद्धमरिंदमम् ॥ पराक्रांतंपराक्रम्य
विव्याधत्रिंशताशरैः १७ महावेगैःप्रसन्नाग्रैःशातकुंभपरिष्कृतैः ॥ अहनद्भरतश्रेष्ठभीमंवैकर्तनःशरैः १८ तस्यास्यतोधनुर्भीमश्वकर्तनिशितैस्त्रिभिः ॥ रथ
नीडाच्चयंतारंभल्लेनापातयत्क्षितौ १९ सकांक्षन्भीमसेनस्यवधंवैकर्तनोभृशम् ॥ शक्तिंकनकवैदूर्यचित्रदंडांपरामृशत् २० प्रगृह्यचमहाशक्तिंकालशक्तिमि
वापराम् ॥ समुत्क्षिप्यचराधेयःसंधायचमहाबलः २१ चिक्षेपभीमसेनायजीवितांतकरीमिव ॥ शक्तिंविसृज्यराधेयःपुरंदरइवाशनिम् २२ ननादसुमहानादं
बलवान्सूतनंदनः ॥ तंचनादंततःश्रुत्वापुत्रास्तेहर्षिताऽभवन् २३ तांकर्णभुजनिर्मुक्तामर्कवैश्वानरप्रभाम् ॥ शक्तिंवियतिचिच्छेदभीमःसप्तभिराशुगैः २४
छित्वाशक्तिंततोभीमोनिर्मुक्तोरगसंन्निभाम् ॥ मार्गमाणइवप्राणान्सूतपुत्रस्यमारिष २५ प्राहिणोत्कृतसंरंभःशरान्बर्हिणवाससः ॥ स्वर्णपुंखान्शिलाधौतान्
यमदंडोपमान्मृधे २६ कर्णोऽप्यन्यद्धनुर्गृह्यहेमपृष्ठंदुरासदं ॥ विकृष्यतन्महच्चापंव्यसृजत्सायकांस्तदा २७ तान्पांडुपुत्रश्चिच्छेदनवभिर्नतपर्वभिः ॥ वसुषेणेन
निर्मुक्तान्नवराजन्महाशरान् २८ छित्वाभीमोमहाराजनादंसिंहइवानदत् ॥ तौवृषाविवनर्दंतौबलिनौवासितांतरे २९ शार्दूलाविवचान्योन्यमामिषार्थेऽभ्यगर्ज
तां॥अन्योन्यंप्रजिहीर्षंतावन्योन्यस्यांतरैषिणौ ३०अन्योन्यमभिवीक्षंतौगोष्ठेष्विवमहर्षभौ ॥ महागजाविवासाद्याविषाणाग्रैःपरस्परं ३१ शरैःपूर्णायतोत्सृष्टैरन्यो
न्यमभिजघ्नतुः ॥ निर्दहंतौमहाराजशस्त्रवृष्ट्याचपरस्परं ३२ अन्योन्यमभिवीक्षंतौकोपाद्विवृतलोचनौ ॥ प्रहसंतौतथान्योन्यंभर्त्सयंतौमुहुर्मुहुः ३३ शंखशब्दं
चकुर्वाणौयुयुधातेपरस्परं॥तस्यभीमःपुनश्चापंमुष्टौचिच्छेदमारिष३४शंखवर्णांश्वतानश्वान्बाणैर्निन्येयमक्षयम्॥सारथिंचतथाऽप्यस्यरथनीडादपातयत् ३५

५।६।७।८।९।१०।११।१२।१३।१४।१५।१६।१७।१८।१९।२०।२१।२२।२३।२४।२५।२६।२७।२८।२९।३०।३१।३२।३३।३४।३५

ततोवैकर्तनःकर्णश्चिंतांप्रापदुरत्ययाम् ॥ सच्छाद्यमानःसमरेहताश्वोहतसारथिः ३६ मोहितःशरजालेनकर्तव्यंनाभ्यपद्यत ॥ तथाकृच्छ्रगतंदृष्ट्वाकर्णंदुर्योध नोनृपः ३७ वेपमानइवक्रोधाद्व्यादिदेशाथदुर्जयम् ॥ गच्छदुर्जयराधेयंपुराग्रसतिपांडवः ३८ जहितूबरकंक्षिप्रंकर्णस्यबलमादधत् ॥ एवमुक्तस्तथेत्युक्त्वा तवपुत्रंतवात्मजः ३९ अभ्यद्रवद्भीमसेनंव्यासक्तंविकिरञ्छरैः ॥ सभीमंनवभिर्बाणैरश्वानष्टभिरार्पयत् ४० षड्भिःसूतंत्रिभिःकेतुंपुनस्तंचापिसप्तभिः ॥ भी मसेनोऽपिसंक्रुद्धःसाश्वयंतारमाशुगैः ४१ दुर्जयंभिन्नमर्माणमनयद्यमसादनम् ॥ स्वलंकृतंक्षितौक्षुण्णंचेष्टमानंयथोरगम् ४२ रुदन्नार्तस्तवसुतंकर्णश्चक्रेप्रद क्षिणम् ॥ सतुतंविरथंकृत्वास्मयन्नत्यंतवैरिणम् ४३ समाचिनोद्बाणगणैःशतघ्नीभिश्चशंकुभिः ॥ तथाऽप्यतिरथःकर्णोभिद्यमानोऽस्यसायकैः ४४ नजहौस मरेभीमंक्रुद्धरूपंपरंतपः ४५ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिकर्णभीमयुद्धेत्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥ ॥ ७ ॥ ॥

॥ संजयउवाच ॥ सर्वथाविरथःकर्णःपुनर्भीमेनानिर्जितः ॥ रथमन्यंसमास्थायपुनर्विव्याधपांडवम् १ महागजाविवासाद्यविषाणाग्रैःपरस्परम् ॥ शरैःपूर्णा यतोत्सृष्टैरन्योन्यमभिजघ्नतुः २ अथकर्णःशरव्रातैर्भीमसेनंसमार्पयत् ॥ ननादचमहानादंपुनर्विव्याधचोरसि ३ तंभीमोदशभिर्बाणैःप्रत्यविध्यदजिह्मगैः ॥ पु नर्विव्याधसप्तत्याशराणांनतपर्वणाम् ४ कर्णंतुनवभिर्भीमोभित्त्वाराजंस्तनांतरे ॥ ध्वजमेकेनविव्याधसायकेनशितेनह ५ सायकानांततःपार्थस्त्रिषष्ट्याप्रत्यवि ध्यत ॥ तोत्रैरिवमहानागंकशाभिरिववाजिनम् ६ सोऽतिविद्धोमहाराजपांडवेनयशस्विना ॥ सृक्किणीलेलिहन्वीरःक्रोधरक्तांतलोचनः ७ ततःशरंमहाराजसर्व कायावदारणम् ॥ प्राहिणोद्भीमसेनायबलायेंद्रइवाशनिम् ८ सनिर्भिद्यरणेपार्थंसूतपुत्रधनुश्च्युतः ॥ अगच्छद्दारयन्भूमिंचित्रपुंखःशिलीमुखः ९ ततोभी मोमहाबाहुःक्रोधसंरक्तलोचनः ॥ वज्रकल्पांचतुष्किष्कुंगुर्वीरुक्मांगदांगदाम् १० प्राहिणोत्सूतपुत्रायषडस्रामविचारयन् ॥ तयाजघानाधिरथेःसदश्वान्सा धुवाहिनः ११ गदयाभारतःक्रुद्धोवज्रेणेंद्रइवासुरान् ॥ ततोभीमोमहाबाहुःक्षुराभ्यांभरतर्षभ १२ ध्वजमाधिरथेश्छित्त्वासूतमभ्यहनच्छरैः ॥ हताश्वसूतमु त्सृज्यसरथंपतितध्वजम् १३ विस्फारयन्धनुःकर्णस्तस्थौभारतदुर्मनाः ॥ तत्राद्भुतमपश्यामराधेयस्यपराक्रमम् १४ विरथोरथिनांश्रेष्ठोवारयामासयद्रिपुम् ॥ विरथंतंनरश्रेष्ठंदृष्ट्वाऽधिरथिमाहवे १५ दुर्योधनस्ततोराजन्नभ्यभाषतदुर्मुखम् ॥ एषदुर्मुखराधेयोभीमेनविरथीकृतः १६ तंरथेननरश्रेष्ठंसंपादयमहारथम् ॥ ततोदुर्योधनवचःश्रुत्वाभारतदुर्मुखः १७ त्वरमाणोऽभ्ययात्कर्णंभीमंचावारयच्छरैः ॥ दुर्मुखंप्रेक्ष्यसंग्रामेसूतपुत्रपदानुगम् १८

१९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ सुपुंखानांपत्राणांवेगोयेषां ३३ । ३४ । ३५ ॥ इतिद्रोणपर्वणिटीकायांचतुस्त्रिंशदधिकशततमो

वायुपुत्रःप्रहृष्टोऽभूत्सृक्किणीपरिसंलिहन् ॥ ततःकर्णंमहाराजवारयित्वाशिलीमुखैः १९ दुर्मुखायरथंतूर्णंप्रेषयामासपांडवः ॥ तस्मिन्क्षणेमहाराजनवभिर्नत पर्वभिः २० सुमुखैर्दुर्मुखंभीमःशरैर्निन्येयमक्षयम् ॥ ततस्तमेवाधिरथिःस्यंदनंदुर्मुखेहते २१ आस्थितःप्रबभौराजन्दीप्यमानइवांशुमान् ॥ शयानंभिन्नम र्माणंदुर्मुखंशोणितोक्षितम् २२ दृष्ट्वाकर्णोऽश्रुपूर्णाक्षोमुहूर्तंनाभ्यवर्तत ॥ तंगतासुमतिक्रम्यकृत्वाकर्णःप्रदक्षिणम् २३ दीर्घमुष्णंश्वसन्वीरोनकिंचित्प्रत्यपद्य त ॥ तस्मिंस्तुविवरेराजन्नाराचान्गार्ध्रवाससः २४ प्राहिणोत्सूतपुत्रायभीमसेनश्चतुर्दश ॥ तेतस्यकवचंभित्त्वास्वर्णचित्रंमहौजसः २५ हेमपुंखामहाराजव्य शोभंतादिशोदश ॥ अपिबन्सूतपुत्रस्यशोणितंरक्तभोजनाः २६ क्रुद्धाइवमनुष्येंद्रभुजंगाःकालचोदिताः ॥ प्रसर्पमाणामेदिन्यांतेव्यरोचंतमार्गणाः २७ अ र्धप्रविष्टाःसंरब्धाबिलानीवमहोरगाः ॥ तंप्रत्यविध्यद्राधेयोजांबूनदविभूषितैः २८ चतुर्दशभिरत्युग्रैर्नाराचैरविचारयन् ॥ तेभीमसेनस्यभुजंसव्यंनिर्भिद्यप त्रिणः २९ प्राविशन्मेदिनींभीमाःक्रौंचंपत्ररथाइव ॥ तेव्यरोचंतनाराचाःप्रविशंतोवसुंधराम् ३० गच्छंत्यस्तंदिनकरेदीप्यमानाइवांशवः ॥ सनिर्भिन्नोरणे भीमोनाराचैर्मर्मभेदिभिः ३१ सुस्रावरुधिरंभूरिपर्वतःसलिलंयथा ॥ सभीमस्त्रिभिरायत्तःसूतपुत्रंपतत्रिभिः ३२ सुपर्णवेगैर्विव्याधसारथिंचास्यसप्तभिः ॥ सविह्वलोमहाराजकर्णोभीमशराहतः ३३ प्राद्रवज्जवनैरश्वैरणंहित्वामहाभयात् ॥ भीमसेनस्तुविस्फार्यचापंहेमपरिष्कृतम् ३४ आहवेऽतिरथोऽतिष्ठज्ज्वलन्निव हुताशनः ३५ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिकर्णापयानेचतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥ ॥ धृतराष्ट्रउवाच ॥ दैवमेवपरं मन्येधिक्पौरुषमनर्थकम् ॥ यत्राधिरथिरायत्तोनातरत्पांडवंरणे १ कर्णःपार्थान्सगोविंदान्जेतुमुत्सहतेरणे ॥ नचकर्णसमंयोधंलोकेपश्यामिकंचन २ इति दुर्योधनस्याहमश्रौषंजल्पतोमुहुः ॥ कर्णोहिबलवाञ्छूरोदृढधन्वाजितक्लमः ३ इतिमामब्रवीत्सूतमंदोदुर्योधनःपुरा ॥ वसुषेणसहायंमांनालंदेवाऽपिसंयुगे ४ किंतुपांडुसुताराजन्गतसत्त्वाविचेतसः ॥ तत्रतंनिर्जितंदृष्ट्वाभुजंगमिवनिर्विषम् ५ युद्धात्कर्णमपक्रांतंकिंस्विद्दुर्योधनोऽब्रवीत् ॥ अहोदुर्मुखमेवैकंयुद्धानाम विशारदम् ६ प्रावेशयद्धुतवहंपतंगमिवमोहितः ॥ अश्वत्थामामद्रराजःकृपःकर्णश्चसंगताः ७ नशक्ताःप्रमुखेस्थातुंनूनंभीमस्यसंजय ॥ तेऽपिचास्यमहाघो रंबलंनागायुतोपमम् ८ जानंतोव्यवसायंचक्रूरंमारुततेजसः ॥ किमर्थंक्रूरकर्माणंयमकालांतकोपमम् ९ बलसंरंभवीर्यज्ञाःकोपयिष्यंतिसंयुगे ॥ कर्णस्त्वेको महाबाहुःस्वबाहुबलदर्पितम् १० भीमसेनमनादृत्यरणेऽयुध्यतसूतजः ॥ योऽजयत्समरेकर्णंपुरंदरइवासुरम् ११

ऽध्यायः ॥ १३४ ॥ ॥ ७ ॥ दैवमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ यमःसंयमनव्यापारः कालःकलनव्यापारः अंतकोमारणव्यापारस्तदुपमम् ९ । १० । ११

१२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३

नसपांडुसुतोजेतुंशक्यःकेनचिदाहवे ॥ द्रोणंयःसंप्रमथ्यैकःप्रविष्टोममवाहिनीम् १२ भीमोधनंजयान्वेषीकस्तमाच्छेंज्जिजीविषुः ॥ कोहिसंजयभीमस्यस्थातु
मुत्सहतेऽग्रतः १३ उद्यताशनिहस्तस्यमहेंद्रस्येवदानवः ॥ प्रेतराजपुरंप्राप्यनिवर्तेतापिमानवः १४ नभीमसेनंसंप्राप्यनिवर्तेतकदाचन ॥ पतंगाइववह्निं
तेप्राविशन्नल्पचेतसः १५ येभीमसेनंसंकुद्धमन्वधावन्विमोहिताः ॥ यत्तत्सभायांभीमेनममपुत्रवधाश्रयम् १६ उक्तंसंरंभिणोग्रेणकुरूणांशृण्वतांतदा ॥ तन्नू
नमभिसंचिंत्यदृष्ट्वाकर्णंचनिर्जितम् १७ दुःशासनःसहभ्रात्राभयाद्भीमादुपारमत् ॥ यश्चसंजयदुर्बुद्धिरब्रवीत्समितौमुहुः १८ कर्णोदुःशासनोऽहंचजेष्यामोयुधि
पांडवान् ॥ सनूनंविरथंदृष्ट्वाकर्णंभीमेनानिर्जितम् १९ प्रत्याख्यानाच्चकृष्णस्यभृशंतप्यतिपुत्रकः ॥ दृष्ट्वाभ्रातॄन्हतान्संख्येभीमसेनेनदंशितान् २० आत्मापराधेसुमहन्नूनंतप्यतिपुत्रकः ॥ कोहिजीवितमन्विच्छन्प्रतीपंपांडवंव्रजेत् २१ भीमंभीमायुधंकुद्धंसाक्षात्कालमिवस्थितम् ॥ वडवामुखमध्यस्थोमुच्येतापि
हिमानवः २२ नभीममुखसंप्राप्तोमुच्येदितिमतिर्मम ॥ नपार्थोनचपंचालानचकेशवसात्यकी २३ जानंतेयुधिसंरब्धाजीवितंपरिरक्षितुम् ॥ अहोममसुता
नांहिविपन्नंसूतजीवितम् २४ ॥ संजयउवाच ॥ यस्त्वंशोचसिकौरव्यवर्तमानेमहाभये ॥ त्वमस्यजगतोमूलंविनाशस्यनसंशयः २५ स्वयंवैरंमहत्कृत्वापुत्राणां
वचनेस्थितः ॥ उच्यमानोनगृह्णीषेमर्त्यःपथ्यमिवौषधम् २६ स्वयंपीत्वामहाराजकालकूटंसुदुर्जरम् ॥ तस्येदानींफलंकृत्स्नमवाप्नुहिनरोत्तम २७ यत्तुकुत्स
यसेयोधान्युध्यमानान्महाबलान् ॥ तत्रतेवर्तयिष्यामियथायुद्धमवर्तत २८ दृष्ट्वाकर्णंतुपुत्रास्तेभीमसेनपराजितम् ॥ नामृष्यंतमहेष्वासाःसोदर्याःपंचभारत
२९ दुर्मर्षणोदुःसहश्चदुर्मदोदुर्धरोजयः ॥ पांडवंचित्रसन्नाहास्तंप्रतीपमुपाद्रवन् ३० तेसमंतान्महाबाहुंपरिवार्यवृकोदरम् ॥ दिशःशरैःसमावृण्वन्शलभानामि
वव्रजैः ३१ आगच्छतस्तान्सहसाकुमारान्देवरूपिणः ॥ प्रतिजग्राहसमरेभीमसेनोहसन्निव ३२ तवदृष्ट्वातुतनयान्भीमसेनपुरोगमान् ॥ अभ्यवर्ततराधेयोभी
मसेनंमहाबलम् ३३ विसृजन्विशिखांस्तीक्ष्णान्स्वर्णपुंखाञ्छिलाशितान् ॥ तंतुभीमोऽभ्ययात्तूर्णंवार्यमाणःसुतैस्तव ३४ कुरवस्तुततःकर्णंपरिवार्यसमं
ततः ॥ अवाकिरन्भीमसेनंशरैःसन्नतपर्वभिः ३५ तान्बाणैःपंचविंशत्यासाश्वान्राजन्नरर्षभान् ॥ ससूतान्भीमधनुषोभीमोनिन्येयमक्षयम् ३६ प्रा
पतन्स्यंदनेभ्यस्तेसार्धंसूतैर्गतासवः ॥ चित्रपुष्पधराभग्नावातेनेवमहाद्रुमाः ३७ तत्राद्भुतमपश्यामभीमसेनस्यविक्रमम् ॥ संवार्याधिरथिंबाणैर्यज्ज
घानतवात्मजान् ३८ सवार्यमाणोभीमेनशितैर्बाणैःसमंततः ॥ सूतपुत्रोमहाराजभीमसेनमवैक्षत ३९

३४ । ३५ । ३६ । ३७ । ३८ । ३९

४० ॥ इतिद्रोणपर्वणिटीकायांपंचत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥ ७ ॥ तवेति १ । २ । ३ । ४ । ५ । ६ । ७ प्रतिकृतेप्रतिकर्मणिकृतेसतीत्यन्वयः ८ । ९ अवारोहदवातरत् १०

तंभीमसेनःसंरंभात्क्रोधसंरक्तलोचनः ॥ विस्फार्यसुमहच्चापंमुहुःकर्णमवैक्षत ४० ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिभीमसेनपराक्रमेपंचत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥ ७ ॥ संजयउवाच ॥ तवात्मजांस्तुपतितान्दृष्ट्वाकर्णःप्रतापवान् ॥ क्रोधेनमहताऽऽविष्टोनिर्विण्णोऽभूत्सजीवितात् १ आगस्कृतमिवात्मानंमेनेचाधिरथिस्तदा ॥ यत्प्रत्यक्षंतवसुताभीमेननिहतारणे २ भीमसेनस्ततःक्रुद्धःकर्णस्यनिशितान्शरान् ॥ निचखानससंभ्रांतःपूर्वंवैरमनुस्मरन् ३ सभीमंपंचभिर्विद्ध्वाराधेयःप्रहसन्निव ॥ पुनर्विव्याधसप्तत्यास्वर्णपुंखैःशिलाशितैः ४ अविचिंत्याथतान्बाणान्कर्णेनास्तान्वृकोदरः ॥ रणेविव्याधराधेयंशतेनानतपर्वणाम् ५ पुनश्चविशिखैस्तीक्ष्णैर्विद्ध्वामर्मसुपंचभिः ॥ धनुश्चिच्छेदभल्लेनसूतपुत्रस्यमारिष ६ अथान्यद्धनुरादायकर्णोभारतदुर्मनाः ॥ इषुभिश्छादयामासभीमसेनंपरंतपः ७ तस्यभीमोहयान्हत्वाविनिहत्यचसारथिम् ॥ प्रजहासमहाहासंकृतेप्रतिकृतेपुनः ८ इषुभिःकार्मुकंचास्यचकर्तपुरुषर्षभः ॥ तत्पपातमहाराजस्वर्णपृष्ठंमहास्वनम् ९ अवारोहद्रथात्तस्मादथकर्णोमहारथः ॥ गदांगृहीत्वासमरेभीमायप्राहिणोद्रुषा १० तामापतंतीमालक्ष्यभीमसेनोमहागदाम् ॥ शरैरवारयद्राजन्सर्वसैन्यस्यपश्यतः ११ ततोबाणसहस्राणिप्रेषयामासपांडवः ॥ सूतपुत्रवधाकांक्षीत्वरमाणःपराक्रमी १२ तानिषूनिषुभिःकर्णोवारयित्वामहामृधे ॥ कवचंभीमसेनस्यपाटयामाससायकैः १३ अथैनंपंचविंशत्यानाराचानांसमार्पयत् ॥ पश्यतांसर्वसैन्यानांतदद्भुतमिवाभवत् १४ ततोभीमोमहाबाहुर्नवभिर्नतपर्वभिः ॥ प्रेषयामाससंक्रुद्धःसूतपुत्रस्यमारिष १५ तेतस्यकवचंभित्त्वातथाबाहुंचदक्षिणम् ॥ अभ्ययुर्धरणींतीक्ष्णावल्मीकमिवपन्नगाः १६ सच्छाद्यमानोबाणौघैर्भीमसेनधनुश्च्युतैः ॥ पुनरेवाभवत्कर्णोभीमसेनात्पराङ्मुखः १७ तंपराङ्मुखमालोक्यपदातिंसूतनंदनम् ॥ कौंतेयशरसंछन्नंराजादुर्योधनोऽब्रवीत् १८ ॥ त्वरध्वंसर्वतोयत्ताराधेयस्यरथंप्रति ॥ ततस्तवसुताराजन्श्रुत्वाभ्रातुर्वचोद्रुतम् १९ अभ्ययुःपांडवंयुद्धेविसृजंतःशिलीमुखान् ॥ चित्रोपचित्रश्चित्राक्षश्चारुचित्रःशरासनः २० चित्रायुधश्चित्रवर्मासमरेचित्रयोधिनः ॥ तानापततएवाशुभीमसेनोमहारथः २१ एकैकेनशरेणाजौपातयामासतेसुतान् ॥ तेहतान्यपतन्भूमौवातरुग्णाइवद्रुमाः २२ दृष्ट्वाविनिहतान्पुत्रांस्तवराजन्महारथान् ॥ अश्रुपूर्णमुखःकर्णःक्षत्तुःसस्मारतद्वचः २३ रथंचान्यंसमास्थायविधिवत्कल्पितंपुनः ॥ अभ्ययात्पांडवंयुद्धेत्वरमाणःपराक्रमी २४ तावन्योन्यंशरैर्भित्त्वास्वर्णपुंखैःशिलाशितैः ॥ व्यभ्राजेतांयथामेघौसंस्यूतौसूर्यरश्मिभिः २५ षट्त्रिंशद्भिस्ततोभल्लैर्निशितैस्तिग्मतेजनैः ॥ व्यधमत्कवचंक्रुद्धःसूतपुत्रस्यपांडवः २६ सूतपुत्रोऽपिकौंतेयंशरैःसन्नतपर्वभिः ॥ पंचाशतामहाबाहुर्विव्याधभरतर्षभम् २७

११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ चित्रोपचित्रःचित्रश्चासावुपचित्रश्चेचित्रोपचित्रः २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

२८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ ॥ इतिद्रोणपर्वणिटीकायांषट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥ ॥ ७ ॥ ॥ भीमसेनस्येति १

रक्तचंदनदिग्धांगौशरैःकृतमहाव्रणौ ॥ शोणिताक्तौव्यराजेतांचंद्रसूर्याविवोदितौ२८ तौशोणितोक्षितैर्गात्रैःशरैश्छिन्नतनुच्छदौ ॥ कर्णभीमौव्यराजेतांनिर्मुक्ताविवपन्नगौ २९ व्याघ्राविवनरव्याघ्रौदंष्ट्राभिरितरेतरम् ॥ शरधारासृजौवीरौमेघाविववर्षतुः ३० वारणाविवचान्योन्यंविषाणाभ्यामरिंदमौ ॥ निर्भिंदंतौस्वगात्राणिसायकैश्चारुरेजतुः ३१ नादयंतौप्रहर्षंतौविक्रीडंतौपरस्परपरम् ॥ मंडलानिविकुर्वाणौरथाभ्यांरथिषूत्तमौ ३२ वृषाविवाथनर्दंतौबलिनौवाशितांतरे ॥ सिंहाविवपराक्रांतौनरसिंहौमहाबलौ ३३ परस्परंवीक्षमाणौक्रोधसंरक्तलोचनौ ॥ युयुधातेमहावीर्यौशक्रवैरोचनीयथा ३४ ततोभीमोमहाबाहुर्बाहुभ्यांविक्षिपन्धनुः ॥ व्यराजतरणेराजन्सविद्युदिवतोयदः ३५ सनेमिघोषस्तनितश्चापविद्युच्छरांबुभिः ॥ भीमसेनमहामेघःकर्णपर्वतमावृणोत ३६ ततःशरसहस्रेणसम्यगस्तेनभारत ॥ पांडवोव्यकिरत्कर्णंभीमोभीमपराक्रमः ३७ तत्रापश्यंस्तवसुताभीमसेनस्यविक्रमम् ॥ सुपुंखैःकंकवासोभिर्यत्कर्णंछादयन्शरैः ३८ सनंदयन्रणेपार्थंकेशवंचयशस्विनम् ॥ सात्यकिंचक्ररक्षौचभीमःकर्णमयोधयत ३९ विक्रमंभुजयोर्वीर्यंधैर्यंचविदितात्मनः ॥ पुत्रास्तवमहाराजदृष्ट्वाविमनसोऽभवन् ४० ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि भीमयुद्धेषट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥ संजयउवाच ॥ भीमसेनस्यराधेयःश्रुत्वाज्यातलनिःस्वनम् ॥ नामृष्यतयथामत्तोगजःप्रतिगजस्वनम् १ सोऽपक्रम्यमुहूर्तंतुभीमसेनस्यगोचरात ॥ पुत्रांस्तवददर्शाथभीमसेनेनपातितान् २ तानवेक्ष्यनरश्रेष्ठविमनादुःखितस्तदा ॥ निःश्वसन्दीर्घमुष्णंचपुनःपांडवमभ्ययात ३ सताम्रनयनःक्रोधाच्छ्वसन्निवमहोरगः ॥ बभौकर्णःशरानस्यन्रश्मीनिवदिवाकरः ४ किरणैरिवसूर्यस्यमहीध्रोभरतर्षभ ॥ कर्णचापच्युतैर्बाणैःप्राच्छाद्यतवृकोदरः ५ तेकर्णचापप्रभवाःशराबर्हिणवाससः ॥ विविशुःसर्वतःपार्थंवासायेवांडजाद्रुमम् ६ कर्णचापच्युताबाणाःसंपतंतस्ततस्ततः ॥ रुक्मपुंखाव्यराजंतहंसाःश्रेणीकृताइव ७ चापध्वजोपस्करेभ्यश्छत्रादीषामुखाद्युगात ॥ प्रभवंतोव्यदृश्यंतराजन्नाधिरथेःशराः ८ खंपूरयन्महावेगात्खगमानगृध्रवाससः ॥ सुवर्णविकृतांश्चित्रान्मुमोचाधिरथिःशरान् ९ तमंतकमिवायस्तमापतंतंवृकोदरम् ॥ त्यक्त्वाप्राणानतिक्रम्याविव्याधनिशितैःशरैः १० तस्यवेगमसह्यंसदृष्ट्वाकर्णस्यपांडवः ॥ महतश्चशरौघांस्तान्व्यवारयतवीर्यवान् ११ ततोविधम्याधिरथेःशरजालानिपांडवः ॥ विव्याधकर्णंविंशत्यापुनरन्यैःशिलाशितैः १२ यथैवहिसकर्णेनपार्थःप्रच्छादितःशरैः ॥ तथैवसरणेकर्णंछादयामासपांडवः १३ दृष्ट्वातुभीमसेनस्यविक्रमंयुधिभारत ॥ अभ्यनंदंस्त्वदीयाश्चसंप्रहृष्टाश्चचारणाः १४ भूरिश्रवाःकृपोद्रौणिर्मद्रराजोजयद्रथः ॥ उत्तमौजायुधामन्युःसात्यकिःकेशवार्जुनौ १५

१ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५

कुरुपांडवप्रवरादशराजन्महारथाः ॥ साधुसाध्विति वेगेन सिंहनादमथानदन् १६ तस्मिन्समुत्थिते शब्दे तुमुले लोमहर्षणे ॥ अभ्यभाषत पुत्रस्ते राजन्दुर्योधनस्त्वरन् १७ राज्ञः सराजपुत्रांश्च सोदर्यांश्च विशेषतः ॥ कर्णं गच्छत भद्रं वः परीप्संतो वृकोदरात् १८ पुरा निघ्नंति राधेयं भीमचापच्युताः शराः ॥ तेयतध्वं महेष्वासाः सूतपुत्रस्य रक्षणे १९ दुर्योधनसमादिष्टाः सोदर्याः सप्त भारत ॥ भीमसेनमभिद्रुत्य संरब्धाः पर्यवारयन् २० ते समासाद्य कौंतेयमावृण्वञ्शरवृष्टिभिः ॥ पर्वतं वारिधाराभिः प्रावृषीव बलाहकाः २१ तेऽपीडयन्भीमसेनं क्रुद्धाः सप्त महारथाः ॥ प्रजासंहरणे राजन्सोमं सप्त ग्रहा इव २२ ततो वेगेन कौंतेयः पीडयित्वा शरासनम् ॥ मुष्टिना पांडवो राजन्दृढेन सुपरिष्कृतम् २३ मनुष्यसमतां ज्ञात्वा सप्त संधाय सायकान् ॥ तेभ्यो व्यसृजदायस्तः सूर्यरश्मिनिभान्प्रभुः २४ निरस्यन्निव देहेभ्यस्तनयानामसूंस्तव ॥ भीमसेनो महाराज पूर्ववैरमनुस्मरन् २५ ते क्षिप्ता भीमसेनेन शरा भारत भारतान् ॥ विदार्य खं समुत्पेतुः स्वर्णपुंखाः शिलाशिताः २६ तेषां विदार्य चेतांसि शरा हेमविभूषिताः ॥ व्यराजंत महाराज सुपर्णा इव खेचराः २७ शोणितादिग्धवाजाग्राः सप्त हेमपरिष्कृताः ॥ पुत्राणां तव राजेंद्र पीत्वा शोणितमुद्गताः २८ ते शरैर्भिन्नमर्माणो रथेभ्यः प्रापतन्क्षितौ ॥ गिरिसानुरुहा भग्ना द्विपेनेव महाद्रुमाः २९ शत्रुंजयः शत्रुसहश्चित्रश्चित्रायुधो दृढः ॥ चित्रसेनो विकर्णश्च सप्तैते विनिपातिताः ३० पुत्राणां तव सर्वेषां निहतानां वृकोदरः ॥ शोचत्यतिभृशं दुःखाद्विकर्णं पांडवः प्रियम् ३१ प्रतिज्ञेयं मयावृत्ता निहंतव्यास्तु संयुगे ॥ विकर्ण तेनासि हतः प्रतिज्ञा रक्षिता मया ३२ त्वमागाः समरं वीरक्षात्रं धर्ममनुस्मरन् ॥ ततो विनिहतः संख्ये युद्धधर्मो हि निष्ठुरः ३३ विशेषतो हि नृपतेस्तथास्माकं हिते रतः ॥ न्यायतोऽन्यायतो वाऽपि हतः शेते महाद्युतिः ३४ अगाधबुद्धिर्गांगेयः क्षितौ सुरगुरोः समः ॥ त्याजितः समरे प्राणांस्तस्माद्युद्धं हि निष्ठुरम् ३५ ॥ संजय उवाच ॥ तान्निहत्य महाबाहू राधेयस्यैव पश्यतः ॥ सिंहनादरवं घोरमसृजत्पांडुनंदनः ३६ स रवस्तस्य शूरस्य धर्मराजस्य भारत ॥ आचख्याविव तद्युद्धं विजयं चात्मनो महत् ३७ तं श्रुत्वा तु महानादं भीमसेनस्य धन्विनः ॥ बभूव परमा प्रीतिर्धर्मराजस्य धीमतः ३८ ततो हृष्टमना राजन्वादित्राणां महास्वनैः ॥ सिंहनादरवं भ्रातुः प्रतिजग्राह पांडवः ३९ हर्षेण महता युक्तः कृतसंज्ञो वृकोदरे ॥ अभ्ययात्समरे द्रोणं सर्वशस्त्रभृतां वरः ४० एकत्रिंशन्महाराज पुत्रांस्तव निपातितान् ॥ हतान्दुर्योधनो दृष्ट्वा क्षत्तुः सस्मार तद्वचः ४१ तदिदं समनुप्राप्तं क्षत्तुर्निःश्रेयसं वचः ॥ इति संचिंत्य ते पुत्रो नोत्तरं प्रत्यपद्यत ४२ यद्द्यूतकाले दुर्बुद्धिरब्रवीत्तनयस्तव ॥ सभामानाय्य पांचालीं कर्णेन सहितोऽल्पधीः ४३ यच्च कर्णोऽब्रवीत्कृष्णां सभायां परुषं वचः ॥ प्रमुखे पांडुपुत्राणां तव चैव विशांपते ४४



३९ कृतसंज्ञो गृहीतसंकेतः ४० । ४१ निःश्रेयसं निश्चितं श्रेयःसाधनम् ४२ । ४३ । ४४

४९ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ ॥ इतिद्रोणपर्वणिटीकायांसप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥ ॥ ७ ॥ ॥ महानिति १ । २ । ३ । ४ । ५ । ६

शृण्वतस्तवराजेंद्रकौरवाणांचसर्वशः ॥ विनष्टाःपांडवाःकृष्णेशाश्वतंनरकंगताः ४५ पतिमन्यंवृणीष्वेतितस्येदंफलमागतम् ॥ यच्चषंढतिलादीनिपरुषाणि
तवात्मजैः ॥ श्राविताःस्तेमहात्मानःपांडवाःकोपयिष्णुभिः ४६ तंभीमसेनःक्रोधाग्निंत्रयोदशसमाःस्थितम् ॥ उद्गिरंस्तवपुत्राणामंतंगच्छातिपांडवः ४७ वि
लपंश्चबहुक्षत्ताशमंनालभतत्वयि ॥ सपुत्रोभरतश्रेष्ठतस्यभुंक्ष्वफलोदयम् ४८ त्वयावृद्धेनधीरेणकार्यतत्त्वार्थदर्शिना ॥ नकृतंसुहृदांवाक्यंदैवमत्रपरायणम् ४९
तन्माशुचोनरव्याघ्रतवैवापनयोमहान् ॥ विनाशहेतुःपुत्राणांभवानेवमतोमम ५० हतोविकर्णोराजेंद्रचित्रसेनश्चवीर्यवान् ॥ प्रवराश्चात्मजानांतेसुताश्चान्ये
महारथाः ५१ यानन्यान्ददृशेभीमश्चक्षुर्विषयमागतान् ॥ पुत्रांस्तवमहाराजत्वरयातान्जघानह ५२ त्वत्कृतेह्यहमद्राक्षंदह्यमानांवरूथिनीम् ॥ सहस्रशःशरै
र्मुक्तैःपांडवेनवृषेणच ५३ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिभीमयुद्धेसप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥ ॥ धृतराष्ट्रउवाच ॥
महानपनयःसूतममैवात्रविशेषतः ॥ सइदानीमनुप्राप्तोमन्येसंजयशोचतः १ यद्गतंतद्गतमितिममासीन्मनसिस्थितम् ॥ इदानीमत्रकिंकार्यंप्रकरिष्या
मिसंजय २ यथाह्येषक्षयोवृत्तोममापनयसंभवः ॥ वीराणांतन्ममाचक्ष्वस्थिरीभूतोऽस्मिसंजय ३ ॥ संजयउवाच ॥ कर्णभीमौमहाराजपराक्रांतौमहाबलौ ॥
बाणवर्षाण्यसृजतांवृष्टिमंताविवांबुदौ ४ भीमनामांकिताबाणाःस्वर्णपुंखाःशिलाशिताः ॥ विविशुःकर्णमासाद्यच्छिदंतइवजीवितम् ५ तथैवकर्णनिर्मुक्ताःश
राबर्हिणवाससः ॥ छादयांचक्रिरेवीरंशतशोऽथसहस्रशः ६ तयोःशरैर्महाराजसंपतद्भिःसमंततः ॥ बभूवतत्रसैन्यानांसंक्षोभःसागरोत्तरः ७ भीमचापच्युतैर्बा
णैस्तवसैन्यमरिंदम ॥ अवध्यतचमूमध्येघोरैराशीविषोपमैः ८ वारणैःपतितैराजन्वाजिभिश्चनरैःसह ॥ अदृश्यतमहीकीर्णावातभग्नैरिवद्रुमैः ९ तेवध्यमानाः
समरेभीमचापच्युतैःशरैः ॥ प्राद्रवंस्तावकायोधाःकिमेतदितिचाब्रुवन् १० ततोव्युदस्तंतत्सैन्यंसिंधुसौवीरकौरवम् ॥ प्रोत्सारितंमहावेगैःकर्णपांडवयोःश
रैः ११ तेशूराहतभूयिष्ठाहताश्वरथवारणाः ॥ उत्सृज्यभीमकर्णौचसर्वतोव्यद्रवन्दिशः १२ नूनंपार्थार्थमेवास्मान्मोहयंतिदिवौकसः ॥ यत्कर्णभीमप्रभवैर्वध्य
तेनोबलंशरैः १३ एवंब्रुवाणायोधास्तेतावकाभयपीडिताः ॥ शरपातंसमुत्सृज्यस्थितायुद्धादिदृक्षवः १४ ततःप्रावर्ततनदीघोररूपारणाजिरे ॥ शूराणांहर्ष
जननीभीरूणांभयवर्धिनी १५ वारणाश्वमनुष्याणांरुधिरौघसमुद्भवा ॥ संवृतागतसत्वैश्चमनुष्यगजवाजिभिः १६ सानुकर्षपताकैश्चद्विपाश्वरथभूषणैः ॥स्यं
दनैरपविद्धैश्चभग्नचक्राक्षकूबरैः १७ जातरूपपरिष्कारैर्धनुर्भिःसुमहास्वनैः ॥ सुवर्णपुंखैरिषुभिर्नाराचैश्चसहस्रशः १८

सागरोत्तरः महत्तरः ७ । ८ । ९ । १० शरैर्व्युदस्तमाक्षिप्तं प्रोत्सारितंदूरमपसारितम् ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८

१९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ ॥ इतिद्रोणपर्वणिटीकायामष्टात्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥ ॥ ७ ॥ ॥ ततइति १ । २ । ३ । ४ । ५ । ६



कर्णपांडवनिर्मुक्तैर्निर्मुक्तैरिवपन्नगैः ॥ प्रासतोमरसंघातैःखड्गैश्चसपरश्वधैः १९ सुवर्णविकृतैश्चापिगदामुसलपट्टिशैः ॥ ध्वजैश्चविविधाकारैःशक्तिभिःपरिघैरपि २० शतघ्नीभिश्चचित्राभिर्बभौभारतमेदिनी ॥ कनकांगदहारैश्चकुंडलैर्मुकुटैस्तथा २१ वलयैरपविद्धैश्चतत्रैवांगुलिवेष्टकैः ॥ चूडामणिभिरुष्णीषैःस्वर्णसूत्रैश्चमारिष २२ तनुत्रैःसतलत्रैश्चहारैर्निष्कैश्चभारत ॥ वस्त्रैश्छत्रैश्चविध्वस्तैश्चामरव्यजनैरपि २३ गजाश्वमनुजैर्भिन्नैःशोणिताक्तैश्चपत्रिभिः ॥ तैस्तैश्चविविधैर्भिन्नैस्तत्रतत्रवसुंधरा २४ पतितैरपविद्धैश्चविबभौद्यौरिवग्रहैः ॥ अचिंत्यमद्भुतंचैवतयोःकर्मातिमानुषम् २५ दृष्ट्वाचारणसिद्धानांविस्मयःसमजायत ॥ अग्नेर्वायुसहायस्यगतिःकक्षइवाहवे २६ असीद्भीमसहायस्यरौद्रमाधिरथेर्गतम् ॥ निपातितध्वजरथंहतवाजिनरद्विपम् २७ गजाभ्यांसंप्रयुक्ताभ्यामासीन्नलवनंयथा ॥ मेघजालनिभंसैन्यमासीत्तवनराधिप २८ विमर्दःकर्णभीमाभ्यामासीच्चपरमोरणे २९ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिभीमकर्णयुद्धेअष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ ततःकर्णोमहाराजभीमंविद्ध्वात्रिभिःशरैः ॥ मुमोचशरवर्षाणिविचित्राणिबहूनिच १ वध्यमानोमहाबाहुःसूतपुत्रेणपांडवः ॥ नविव्यथेभीमसेनोभिद्यमानइवाचलः २ सकर्णंकर्णिनाकर्णेपीतेननिशितेनच ॥ विव्याधसुभृशंसंख्येतैलधौतेनमारिष ३ सकुंडलंमहच्चारुकर्णस्यापातयद्भुवि ॥ तपनीयंमहाराजदीप्तंज्योतिरिवांबरात् ४ अथापरेणभल्लेनसूतपुत्रंस्तनांतरे ॥ आजघानभृशंक्रुद्धोहसन्निववृकोदरः ५ पुनरस्यत्वरन्भीमोनाराचान्दशभारत ॥ रणेप्रैषीन्महाबाहुर्निर्मुक्ताशीविषोपमान् ६ तेललाटंविनिर्भिद्यसूतपुत्रस्यभारत ॥ विविशुश्चोदितास्तेनवल्मीकमिवपन्नगाः ७ ललाटस्थैस्ततोबाणैःसूतपुत्रोऽव्यरोचत ॥ नीलोत्पलमयींमालांधारयन्वैयथापुरा ८ सोऽतिविद्धोभृशंकर्णःपांडवेनतरस्विना ॥ रथकूबरमालंब्यन्यमीलयतलोचने ९ समुहूर्तात्पुनःसंज्ञांलेभेकर्णःपरंतपः ॥ रुधिरोक्षितसर्वांगःक्रोधमाहारयत्परम् १० ततःक्रुद्धोरणेकर्णःपीडितोदृढधन्वना ॥ वेगंचक्रेमहावेगोभीमसेनरथंप्रति ११ तस्मैकर्णःशतंराजन्निषूणांगार्ध्रवाससाम् ॥ अमर्षीबलवान्क्रुद्धःप्रेषयामासभारत १२ ततःप्रासृजदुग्राणिशरवर्षाणिपांडवः ॥ समरेतमनादृत्यतस्यवीर्यमचिंतयन् १३ कर्णस्ततोमहाराजपांडवंनवभिःशरैः ॥ आजघानोरसिक्रुद्धःक्रुद्धरूपंपरंतप १४ तावुभौनरशार्दूलौशार्दूलाविवदंष्ट्रिणौ ॥ जीमूताविवचान्योन्यंप्रववर्षतुराहवे १५ तलशब्दरवैश्चैवत्रासयेतांपरस्परम् ॥ शरजालैश्चविविधैस्त्रासयामासतुर्मृधे १६ अन्योन्यंसमरेक्रुद्धौकृतप्रतिकृतैषिणौ ॥ ततोभीमोमहाबाहुःसूतपुत्रस्यभारत १७ क्षुरप्रेणधनुश्छित्वाननादपरवीरहा ॥ तदपास्यधनुश्छिन्नंसूतपुत्रोमहारथः १८



७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८

१९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५

अन्यत्कार्मुकमादत्तभारघ्नंवेगवत्तरम् ॥ तदप्यथनिमेषार्धाच्चिच्छेदास्यवृकोदरः १९ तृतीयंचचतुर्थंचपंचमंषष्ठमेवहि ॥ सप्तमंचाष्टमंचैवनवमंदशमंतथा २०
एकादशंद्वादशंचत्रयोदशमथापिच ॥ चतुर्दशंपंचदशंषोडशंचवृकोदरः २१ तथासप्तदशंवेगादष्टादशमथापिवा ॥ बहूनिभीमश्चिच्छेदकर्णस्यैवंधनूंषिहि ॥
२२ निमेषार्धात्ततःकर्णोधनुर्हस्तोऽभ्यतिष्ठत ॥ दृष्ट्वासकुरुसौवीरसिंधुवीरबलक्षयम् २३ सवर्मध्वजशस्त्रैश्चपतितैःसंवृतांमहीम् ॥ हस्त्यश्वरथदेहांश्चगतासून्प्रे
क्ष्यसर्वशः २४ सूतपुत्रस्यसंरंभाद्दीप्तंवपुरजायत ॥ सविस्फार्यमहच्चापंकार्तस्वरविभूषितम् २५ भीमंप्रैक्षतराधेयोघोरंघोरेणचक्षुषा ॥ ततःक्रुद्धःशरानस्य
न्सूतपुत्रोऽभ्यरोचत २६ मध्यंदिनगतोऽर्चिष्मान्शरदीवदिवाकरः ॥ मरीचिविकचस्येवराजन्भानुमतोवपुः २७ आसीदाधिरथेर्घोरंवपुःशरशताचितम् ॥
कराभ्यामाददानस्यसंदधानस्यचाशुगान् २८ कर्षतोमुंचतोबाणान्नांतरंददृशेरणे ॥ अग्निचक्रोपमंघोरंमंडलीकृतमायुधम् २९ कर्णस्यासीन्महीपालसव्यद
क्षिणमस्यतः ॥ स्वर्णपुंखाःसुनिशिताःकर्णचापच्युताःशराः ३० प्राच्छादयन्महाराजदिशःसूर्यस्यचप्रभाः ॥ ततःकनकपुंखानांशराणांनतपर्वणाम् ३१ धनु
श्च्युतानांवियतिददृशेबहुधाव्रजः ॥ बाणासनादाधिरथेःप्रभवंतिस्मसायकाः ३२ श्रेणीकृताव्यरोचंतराजन्क्रौंचाइवांबरे ॥ गार्ध्रपत्रान्शिलाधौतान्कार्तस्वर
विभूषितान् ३३ महावेगान्प्रदीप्ताग्रान्मुमोचाधिरथिःशरान् ॥ तेतुचापबलोद्भूताःशातकुंभविभूषिताः ३४ अजस्रमपतन्बाणाभीमसेनरथंप्रति ॥ तेऽभ्योम्नि
रुक्मविकृताव्यकाशंतसहस्रशः ३५ शलभानामिवव्राताःशराःकर्णसमीरिताः ॥ चापादाधिरथेर्बाणाःप्रपतंतश्चकाशिरे ३६ एकोदीर्घइवात्यर्थमाकाशेसंस्थि
तःशरः ॥ पर्वतंवारिधाराभिश्छादयन्निवतोयदः ३७ कर्णःप्राच्छादयत्क्रुद्धोभीमंसायकवृष्टिभिः ॥ तत्रभारतभीमस्यबलंवीर्यंपराक्रमम् ॥ व्यवसायंचपुत्रा
स्तेददृशुःसहसैनिकाः ३८ तांसमुद्रमिवोद्भूतांशरवृष्टिंसमुत्थिताम् ॥ अचिंतयित्वाभीमस्तुक्रुद्धःकर्णमुपाद्रवत् ३९ रुक्मपृष्ठंमहच्चापंभीमस्यासीद्विशांपते ॥
आकर्षान्मंडलीभूतंशक्रचापमिवापरम् ४० तस्माच्छराःप्रादुरासन्पूरयंतइवांबरम् ४१ सुवर्णपुंखैर्भीमेनसायकैर्नतपर्वभिः ॥ गगनेरचितामालाकांचनीव
व्यरोचत ४२ ततोव्योम्निविषक्तानिशरजालानिभागशः ॥ आहतानिव्यशीर्यंतभीमसेनस्यपत्रिभिः ४३ कर्णस्यशरजालौघैर्भीमसेनस्यचोभयोः ॥ अग्नि
स्फुलिंगसंस्पर्शैरंजोगतिभिराहवे ४४ तैस्तैःकनकपुंखानांद्यौरासीत्संवृताव्रजैः ॥ नस्मसूर्यस्तदाभातिनस्मवातिसमीरणः ४५ शरजालावृतेव्योम्निनप्राज्ञा
यतकिंचन ॥ सभीमंछादयन्बाणैःसूतपुत्रःपृथग्विधैः ४६ उपारोहदनादृत्यतस्यवीर्यंमहात्मनः ॥ तयोर्विसृजतोस्तत्रशरजालानिमारिष ४७ वायुभूतान्य
दृश्यंतसंसक्तानीतरेतरम् ॥ अन्योन्यशरसंस्पर्शात्तयोर्मनुजसिंहयोः ४८

४६ उपारोहत्सन्निकर्षमगात् ४७ वायुभूतानिवातोद्भूतान्यतिवेगवंतिवा ४८

आकाशेभरतश्रेष्ठपावकःसमजायत ॥ तथाकर्णःशिताम्बाणान्कर्मारपरिमार्जितान् ४९ सुवर्णविकृतान्क्रुद्धःप्राहिणोद्वधकांक्षया ॥ तानंतरिक्षेविशिखैस्त्रिधैकै
कमशातयत् ५० विशेषयन्सूतपुत्रंभीमस्तिष्ठेतिचाब्रवीत् ॥ पुनश्चासृजदुग्राणिशरवर्षाणिपांडवः ५१ अमर्षीबलवान्क्रुद्धोदिधक्षन्निवपावकः ॥ ततश्चटच
टाशब्दोगोधाघातादभूत्तयोः ५२ तलशब्दश्चसुमहान्सिंहनादश्चभैरवः ॥ रथनेमिनिनादश्चज्याशब्दश्चैवदारुणः ५३ योधाव्युपारमन्युद्धाद्दिदृक्षंतःपरा
क्रमम् ॥ कर्णपांडवयोराजन्परस्परवधैषिणोः ५४ देवर्षिसिद्धगंधर्वाःसाधुसाध्वित्यपूजयन् ॥ मुमुचुःपुष्पवर्षंचविद्याधरगणास्तथा ५५ ततोभीमोमहाबाहुः
संरंभीदृढविक्रमः ॥ अस्त्रैरस्त्राणिसंवार्यशरैर्विव्याधसूतजम् ५६ कर्णोऽपिभीमसेनस्यनिवार्येषून्महाबलः ॥ प्राहिणोन्नवनाराचानाशीविषसमान्रणे ५७ ताव
द्भिरथतान्भीमोव्योम्निचिच्छेदपत्रिभिः ॥ नाराचान्सूतपुत्रस्यतिष्ठतिष्ठेतिचाब्रवीत् ५८ ततोभीमोमहाबाहुःशरंक्रुद्धांतकोपमम् ॥ मुमोचाधिरथेर्वीरोयमदं
डमिवापरम् ५९ तमापतंतंचिच्छेदराधेयःप्रहसन्निव ॥ त्रिभिःशरैःशरंराजन्पांडवस्यप्रतापवान् ६० पुनश्चासृजदुग्राणिशरवर्षाणिपांडवः ॥ तस्यतान्या
ददेकर्णःसर्वाण्यस्त्राण्यभीतवत् ६१ युध्यमानस्यभीमस्यसूतपुत्रोऽस्त्रमायया ॥ तस्येषुधीधनुर्ज्यांचबाणैःसन्नतपर्वभिः ६२ रश्मीन्योक्त्राणिचाश्वानांक्रुद्धः
कर्णोऽच्छिनन्मृधे ॥ तस्याश्वांश्चपुनर्हत्वासूतंविव्याधपंचभिः ६३ सोऽपसृत्यद्रुतंसूतोयुधामन्योरथंययौ ॥ विहसन्निवभीमस्यक्रुद्धःकालानलद्युतिः ६४ ध्व
जंचिच्छेदराधेयःपताकांचव्यपातयत् ॥ सविधन्वामहाबाहूरथशक्तिंपरामृशत् ६५ तांव्यवासृजदाविध्यक्रुद्धःकर्णरथंप्रति ॥ तामाधिरथिरायस्तःशक्तिंकांच
नभूषणाम् ६६ आपतंतींमहोल्काभांचिच्छेददशभिःशरैः ॥ साऽपतत्दशधाछिन्नाकर्णस्यनिशितैःशरैः ६७ अस्यतःसूतपुत्रस्यमित्रार्थेचित्रयोधिनः ॥
सचर्मादत्तकौंतेयोजातरूपपरिष्कृतम् ६८ खड्गंचान्यतरप्रेप्सुर्मृत्योरग्रेजयस्यवा ॥ तदस्यतरसाक्रुद्धोव्यधमच्चर्मसुप्रभम् ६९ शरैर्बहुभिरत्युग्रैःप्रहसन्निव
भारत ॥ सविचर्मामहाराजविरथःक्रोधमूर्च्छितः ७० असिंप्रासृजदाविध्यत्वरन्कर्णरथंप्रति ॥ सधनुःसूतपुत्रस्यसज्यंछित्वामहानसिः ७१ पपातभुविराजें
द्रक्रुद्धःसर्पइवांबरात् ॥ ततःप्रहस्याधिरथिरन्यदादायकार्मुकम् ७२ शत्रुघ्नंसमरेक्रुद्धोदृढज्यंवेगवत्तरम् ॥ व्यायच्छत्सशरान्कर्णःकुंतीपुत्रजिघांसया ७३
सहस्रशोमहाराजरुक्मपुंखान्सुतेजनान् ॥ सवध्यमानोबलवान्कर्णचापच्युतैःशरैः ७४ वैहायसंप्राक्रमद्वैकर्णस्यव्यथयन्मनः ॥ सतस्यचरितंदृष्ट्वासंग्रामेविज
यैषिणः ७५ लयमास्थायराधेयोभीमसेनमवंचयत् ॥ तंचदृष्ट्वारथोपस्थेनिलीनंव्यथितेंद्रियम् ७६ ध्वजमस्यसमासाद्यतस्थौभीमोमहीतले ॥ तदस्यकुरवः
सर्वेचारणाश्चाभ्यपूजयन् ७७ यदियेषरथात्कर्णंहर्तुंताक्ष्यइवोरगम् ॥ सच्छिन्नधन्वाविरथःस्वधर्ममनुपालयन् ७८ वैहायसमाकाशं ७५ लयमंगसंकोचं ७६ । ७७ । ७८

७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७ तद्रथादिसाधनम् ८८ वज्रगर्भमंत्रविहितांगुष्ठम् ८९ समर्थः समीचीनार्थोधर्मोपेक्षीतियावत् ९० । ९१ । ९२ । ९३ । ९४ तूबरकः

स्वरथंपृष्ठतःकृत्वायुद्धायैवव्यवस्थितः ॥ तद्विहत्यास्यराधेयस्ततएनंसमभ्ययात् ७९ संरंभात्पांडवंसंख्येयुद्धायसमुपस्थितम् ॥ तौसमेतौमहाराजस्पर्धमानौमहाबलौ ८० जीमूताविवघर्मांतेगर्जमानौनरर्षभौ ॥ तयोरासीत्संप्रहारःक्रुद्धयोर्नरसिंहयोः ८१ अमृष्यमाणयोःसंख्येदेवदानवयोरिव ॥ क्षीणशस्त्रस्तुकौंतेयःकर्णेनसमभिद्रुतः ८२ दृष्ट्वाऽर्जुनहतान्नागान्पतितान्पर्वतोपमान् ॥ रथमार्गविघातार्थंव्यायुधःप्रविवेशह ८३ हस्तिनांव्रजमासाद्यरथदुर्गंप्रविश्यच ॥ पांडवोजीविताकांक्षीराधेयंनाभ्यहारयत् ८४ व्यवस्थानमथाकांक्षन्धनंजयशरैर्हतम् ॥ उद्यम्यकुंजरंपार्थस्तस्थौपरपुरंजयः ८५ महौषधिसमायुक्तंहनूमानिवपर्वतम् ॥ तमस्यविशिखैःकर्णोव्यधमत्कुंजरंपुनः ८६ हस्त्यंगान्यथकर्णायप्राहिणोत्पांडुनंदनः ॥ चक्राण्यश्वांस्तथाचान्ययद्यत्पश्यतिभूतले ८७ तत्तदादायचिक्षेपक्रुद्धःकर्णायपांडवः ॥ तदस्यसर्वंचिच्छेदक्षिप्तंक्षिप्तंशितैःशरैः ८८ भीमोऽपिमुष्टिमुद्यम्यवज्रगर्भांसुदारुणम् ॥ हंतुमैच्छत्सूतपुत्रंसंस्मरन्नर्जुनंक्षणात् ८९ शक्तोऽपिनावधीत्कर्णंसमर्थःपांडुनंदनः ॥ रक्षमाणःप्रतिज्ञांतांयाकृतासव्यसाचिना ९० तमेवंव्याकुलंभीमंभूयोभूयःशितैःशरैः ॥ मूर्च्छयाऽभिपरीतांगमकरोत्सूतनंदनः ९१ व्यायुधंनावधीच्चैनंकर्णःकुंत्यावचःस्मरन् ॥ धनुषोग्रेणतंकर्णःसोऽभिद्रुत्यपरामृशत् ९२ धनुषास्पृष्टमात्रेणक्रुद्धःसर्पइवश्वसन् ॥ आच्छिद्यसधनुस्तस्यकर्णंमूर्धन्यताडयत् ९३ ताडितोभीमसेनेनक्रोधादारक्तलोचनः ॥ विहसन्निवराधेयोवाक्यमेतदुवाचह ९४ पुनःपुनस्तूबरकमूढऔदरिकेतिच ॥ अकृतास्त्रकमायोत्सीर्बालसंग्रामकातर ९५ यत्रभोज्यंबहुविधंभक्ष्यंपेयंचपांडव ॥ तत्रत्वंदुर्मतेयोग्योनयुद्धेषुकदाचन ९६ मूलपुष्पफलाहारोव्रतेषुनियमेषुच ॥ उचितस्त्वंवनेभीमनत्वंयुद्धविशारदः ९७ क्वयुद्धंक्वमुनित्वंचवनंगच्छवृकोदर ॥ नत्वंयुद्धोचितस्तातवनवासरतिर्भवान् ९८ सूदान्भृत्यजनान्दासांस्त्वंगृहेत्वरयन्भृशम् ॥ योग्यस्ताडयितुंक्रोधाद्भोजनार्थंवृकोदर ९९ मुनिर्भूत्वाऽथवाभीमफलान्यादत्स्वदुर्मते ॥ वनायव्रजकौंतेयनत्वंयुद्धविशारदः १०० फलमूलाशनेशक्तस्त्वंतथाऽतिथिपूजने ॥ नत्वांशस्त्रसमुद्योगेयोग्यंमन्येवृकोदर १ कौमारेयानिवृत्तानिविप्रियाणिविशांपते ॥ तानिसर्वाणिचाप्येवरूक्षाण्यश्रावयद्भृशम् २ अथैनंतत्रसंलीनमस्पृशद्धनुषापुनः ॥ प्रहसंश्चपुनर्वाक्यंभीममाहवृषस्तदा ३ योद्धव्यंमारिषान्यत्रनयोद्धव्यंचमादृशैः ॥ मादृशैर्युध्यमानानामेतच्चान्यच्चविद्यते ४ गच्छवायत्रतौकृष्णौतौत्वांरक्षिष्यतोरणे ॥ गृहंवागच्छकौंतेयकिंतेयुद्धेनबालक ५ कर्णस्यवचनंश्रुत्वाभीमसेनोऽतिदारुणम् ॥ उवाचकर्णंप्रहसन्सर्वेषांशृण्वतांवचः ६

पुंश्चिन्हरहितः षंढइतियावत् । 'तूबरोऽश्मश्रुपुरुषे' इत्युपक्रम्य 'पुरुषव्यंजनत्यक्ते' इतिमेदिनी औदरिकोबह्वाशी ९५ । ९६ व्रतेषुनियमेषुआगंतुकेषु ९७ । ९८ । ९९ । १०० । १ । २ संलीनंसंकुचितांगम् ३ । ४ । ५ । ६

७ । ८ । ९ व्यकत्थयत् भर्त्सितवान् ११० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । १२५ ॥ इतिद्रोणपर्वणिटीकायामेकोनचत्वारिंशद



जितस्त्वमसकृदुष्टकत्थसेकिंवृथाऽऽत्मना ॥ जयाजयौमहेंद्रस्यलोकेदृष्टौपुरातनैः ७ मल्लयुद्धंमयासार्धंकुरुदुष्कुलसंभव ॥ महाबलोमहाभोगीकीचकोनिहतो यथा ८ तथात्वांघातयिष्यामिपश्यत्सुसर्वराजसु ॥ भीमस्यमतमाज्ञायकर्णोबुद्धिमतांवरः ९ विररामरणात्तस्मात्पश्यतांसर्वधन्विनाम् ॥ एवंतंविरथंकृत्वा कर्णोराजन्व्यकत्थयत् ११० प्रमुखेवृष्णिसिंहस्यपार्थस्यचमहात्मनः ॥ ततोराजन्शिलाधौतान्शरान्शाखामृगध्वजः ११ प्राहिणोत्सूतपुत्रायकेशवेनप्र चोदितः ॥ ततःपार्थभुजोत्सृष्टाःशराःकनकभूषणाः १२ गांडीवप्रभवाःकर्णंहंसाःक्रौंचमिवाविशन् ॥ सभुजंगैरिवाविष्टैर्गांडीवप्रेषितैःशरैः १३ भीमसेनादपा सेधत्सूतपुत्रंधनंजयः ॥ सच्छिन्नधन्वाभीमेनधनंजयशराहतः १४ कर्णोभीमादपायासीद्रथेनमहताद्रुतम् ॥ भीमोऽपिसात्यकेर्वाहंसमारुह्यनरर्षभः १५ अ न्वयाद्भ्रातरंसंख्येपांडवंसव्यसाचिनम् ॥ ततःकर्णंसमुद्दिश्यत्वरमाणोधनंजयः १६ नाराचंक्रोधताम्राक्षःप्रैषीन्मृत्युमिवांतकः ॥ सगरुत्मानिवाकाशेप्रार्थयन् भुजगोत्तमम् १७ नाराचोऽभ्यपतत्कर्णंतूर्णंगांडीवचोदितः ॥ तमंतरिक्षेनाराचंद्रौणिश्चिच्छेदपत्रिणा १८ धनंजयभयात्कर्णमुज्जिहीर्षन्महारथः ॥ ततो द्रौणिंचतुःषष्ट्याविव्याधकुपितोऽर्जुनः १९ शिलीमुखैर्महाराजमागास्तिष्ठेतिचाब्रवीत् ॥ सतुमत्तगजाकीर्णमनीकंरथसंकुलम् १२० तूर्णमभ्याविशद्द्रौणिर्ध नंजयशरार्दितः ॥ ततःसुवर्णपृष्ठानांचापानांकूजतांरणे २१ शब्दंगांडीवघोषेणकौंतेयोऽभ्यभवद्बली ॥ धनंजयस्तथायांतंपृष्ठतोद्रौणिमभ्यगात् २२ ना तिदीर्घमिवाध्वानंशरैःसंत्रासयन्बलम् ॥ विदार्यदेहान्नाराचैर्नरवारणवाजिनाम् २३ कंकबर्हिणवासोभिर्बलंव्यधमदर्जुनः ॥ तद्बलंभरतश्रेष्ठसवाजिद्विपमान वम् २४ पाकशासनिरायत्तःपार्थःसानेजघानह १२५ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि भीमकर्णयुद्धेएकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥ ध ॥ धृतराष्ट्रउवाच ॥ अहन्यहनिमेदीप्तंयशःपततिसंजय ॥ हतामेबहवोयोधामन्येकालस्यपर्ययम् १ धनंजयःसुसंक्रुद्धःप्रविष्टोमामकंबलम् ॥ रक्षितंद्रौणिकर्णाभ्यामप्रवेश्यंसुरैरपि २ ताभ्यामूर्जितवीर्याभ्यामाप्यायितपराक्रमः ॥ सहितःकृष्णभीमाभ्यांशिनीनामृषभेणच ३ तदाप्रभृतिमांशोकोदह त्यग्निरिवाशयम् ॥ ग्रस्तानिवप्रपश्यामिभूमिपालान्ससैंधवान् ४ अप्रियंसुमहत्कृत्वासिंधुराजःकिरीटिनः ॥ चक्षुर्विषयमापन्नःकथंजीवितमाप्नुयात् ५ अनु मानाच्चपश्यामिनास्तिसंजयसैंधवः ॥ युद्धंतुतद्यथावृत्तंतन्ममाचक्ष्वतत्त्वतः ६ यच्चविक्षोभ्यमहतींसेनामालोड्यचासकृत् ॥ एकःप्रविष्टःसंक्रुद्धोनलिनीमि वकुंजरः ७ तस्यमेवृष्णिवीरस्यब्रूहियुद्धंयथातथम् ॥ धनंजयार्थेयत्तस्यकुशलोह्यसिसंजय ८ ॥ संजयउवाच ॥ तथातुवैकर्तनपीडितंतंभीमंप्रयांतंपुरुषप्र वीरम् ॥ समीक्ष्यराजन्नरवीरमध्येशिनिप्रवीरोऽनुययौरथेन ९

धिकशततमोऽध्यायः ॥ १३९ ॥ ध ॥ अहन्यहनीति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९

१० । ११ । १२ प्रेक्षंतःप्रेक्षकाःबभूवेतितथावचनमनुषज्यते १३ प्रसह्यअनादृत्य १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । ॥ इतिद्रोणपर्वणिटीकायांच

नदन्यथावज्रधरस्तपांतेज्वलन्यथाजलदांतेचसूर्यः ॥ निघ्नन्नमित्रान्धनुषादृढेनसकंपयंस्तवपुत्रस्यसेनाम् १० तंयांतमश्वैरजतप्रकाशैरायोधनेवीरतरंनदं
तम् ॥ नाशक्नुवन्वारयितुंत्वदीयाःसर्वेरथाभारतमाधवाग्र्यम् ११ अमर्षपूर्णस्त्वनिवृत्तयोधीशरासनीकांचनवर्मधारी ॥ अलंबुषःसात्यकिंमाधवाग्र्यमवारय
द्राजवरोऽभिपत्य १२ तयोरभूद्भारतसंप्रहारोयथाविधोनैवबभूवकश्चित् ॥ प्रेक्षंतएवाहवशोभिनौतौयोधास्त्वदीयाश्चपरेचसर्वे १३ आविध्यदेनंदशभिःपृषत्कै
रलंबुषोराजवरःप्रसह्य ॥ अनागतानेवतुतान्पृषत्कांश्चिच्छेदबाणैःशिनिपुंगवोऽपि १४ पुनःसबाणैस्त्रिभिरग्निकल्पैराकर्णपूर्णैर्निशितैःसपुंखैः ॥ विव्याधदेहाव
रणंविदार्यतेसात्यकेराविविशुःशरीरम् १५ तैःकायमस्याग्न्यनिलप्रभावैर्विदार्यबाणैर्निशितैर्ज्वलद्भिः ॥ आजाघ्निवांस्तान्रजतप्रकाशानश्वांश्चतुर्भिश्चतुरःप्रस
ह्य १६ तथातुतेनाभिहतस्तरस्वीनप्ताशिनेश्चक्रधरप्रभावः ॥ अलंबुषस्योत्तमवेगवद्भिरश्वांश्चतुर्भिर्निजघानबाणैः १७ अथास्यसूतस्यशिरोनिकृत्यभल्लेनका
लानलसन्निभेन ॥ सकुंडलंपूर्णशशिप्रकाशंभ्राजिष्णुवक्त्रंनिचकर्तदेहात् १८ निहत्यतंपार्थिवपुत्रपौत्रंसंख्येयदूनामृषभःप्रमाथी ॥ ततोऽन्वयादर्जुनमेववीरः
सैन्यानिराजंस्तवसंनिवार्य १९ अन्वागतंवृष्णिवीरंसमीक्ष्यतथाऽरिमध्येपरिवर्तमानम् ॥ घ्नंतंकुरूणामिषुभिर्बलानिपुनःपुनर्वायुमिवाभ्रपूगान् २० ततोऽव
हन्सैंधवाःसाधुदांतागोक्षीरकुंदेंदुहिमप्रकाशाः ॥ सुवर्णजालावततासदश्वायतोयतःकामयतेनृसिंहः २१ अथात्मजास्तेसहिताऽभिपेतुरन्येचयोधास्त्वरिता
स्त्वदीयाः ॥ कृत्वामुखंभारतयोधमुख्यंदुःशासनंत्वत्सुतमाजमीढ २२ तेसर्वतःसंपरिवार्यसंख्येशैनेयमाजघ्नुरनीकसाहाः ॥ सचापितान्प्रवरःसात्वतानांन्यवा
रयद्बाणजालेनवीरः २३ निवार्यतांस्तूर्णममित्रघातीनप्ताशिनेःपत्रिभिरग्निकल्पैः ॥ दुःशासनस्याभिजघानवाहानुद्यम्यबाणासनमाजमीढ २४ ततोऽर्जुनोहर्ष
मवापसंख्येकृष्णश्चदृष्ट्वापुरुषप्रवीरम् २५ ॥ इतिश्रीमहाभारतेद्रोणपर्वणि जयद्र०वधप० अलंबुषवधेचत्वारिंदशदधिकशततमोऽध्यायः ॥ १४० ॥ ॥
॥ संजयउवाच ॥ तमुद्यतंमहाबाहुंदुःशासनरथंप्रति ॥ त्वरितंत्वरणीयेषुधनंजयजयैषिणम् १ त्रिगर्तानांमहेष्वासाःसुवर्णविकृतध्वजाः ॥ सेनासमुद्रमा
विष्टमनंतंपर्यवारयन् २ अथैनंरथवंशेनसर्वतःसन्निवार्यते ॥ अवाकिरञ्छरव्रातैःक्रुद्धाःपरमधान्विनः ३ अजयद्राजपुत्रांस्तान्भ्राजमानान्महारणे ॥ एकःपं
चाशतंशत्रून्सात्यकिःसत्यविक्रमः ४ संप्राप्यभारतीमध्यंतलघोषसमाकुलम् ॥ असिशक्तिगदापूर्णमप्लवंसलिलंयथा ५ तत्राद्भुतमपश्यामशैनेयचरितंरणे ॥
प्रतीच्यांदिशितंदृष्ट्वाप्राच्यांपश्यामिलाघवात् ६



त्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥ ॥ छ ॥ ॥ तमिति त्वरणीयेषुकृत्येषु १ । २ । ३ । ४ । ५ । ६

७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८

उदीचींदक्षिणांप्राचींप्रतीचींविदिशस्तथा ॥ नृत्यन्निवाचरच्छूरोयथारथशतंतथा ७ तद्दृष्ट्वाचरितंतस्यसिंहविक्रांतगामिनः ॥ त्रिगर्ताःसंन्यवर्तंतसंतप्ताः स्वजनंप्रति ८ तमन्येशूरसेनानांशूराःसंख्येन्यवारयन् ॥ नियच्छंतःशरव्रातैर्मत्तंद्विपमिवांकुशैः ९ तैर्व्यवाहरदार्यात्मामुहूर्तादेवसात्यकिः ॥ ततःकलिंगैर्युयुधेसोऽचिंत्यबलविक्रमः १० तांचसेनामतिक्रम्यकलिंगानांदुरत्ययाम् ॥ अथपार्थंमहाबाहुर्धनंजयमुपासदत् ११ तरन्निवजलेश्रांतोयथास्थलमुपेयिवान् ॥ तंदृष्ट्वापुरुषव्याघ्रंयुयुधानःसमाश्वसत् १२ तमायांतमभिप्रेक्ष्यकेशवःपार्थमब्रवीत् ॥ असावायातिशैनेयस्तवपार्थपदानुगः १३ एषशिष्यःसखाचैवतवसत्यपराक्रमः ॥ सर्वान्योधांस्तृणीकृत्यविजिग्येपुरुषर्षभः १४ एषकौरवयोधानांकृत्वाघोरमुपद्रवम् ॥ तवप्राणैःप्रियतमःकिरीटिन्नेतिसात्यकिः १५ एषद्रोणंतथाभोजंकृतवर्माणमेवच ॥ कदर्थीकृत्यविशिखैःफाल्गुनाभ्येतिसात्यकिः १६ धर्मराजप्रियान्वेषीहत्वायोधान्वरान्वरान् ॥ शूरश्चैवकृतास्त्रश्चफाल्गुनाभ्येतिसात्यकिः १७ कृत्वासुदुष्करंकर्मसैन्यमध्येमहाबलः ॥ तवदर्शनमन्विच्छन्पांडवाभ्येतिसात्यकिः १८ बहूनेकरथेनाजौयोधयित्वामहारथान् ॥ आचार्यप्रमुखान्पार्थप्रयात्येषससात्यकिः १९ स्वबाहुबलमाश्रित्यविदार्यचवरूथिनीम् ॥ प्रेषितोधर्मराजेनपार्थैषोऽभ्येतिसात्यकिः २० यस्यनास्तिसमोयोधःकौरवेषुकथंचन ॥ सोऽयमायातिकौंतेयसात्यकिर्युद्धदुर्मदः २१ कुरुसैन्याद्विमुक्तोवैसिंहोमध्याद्गवामिव ॥ निहत्यबहुलाःसेनाःपार्थैषोऽभ्येतिसात्यकिः २२ एषराजसहस्राणांवक्त्रैःपंकजसन्निभैः ॥ आस्तीर्यवसुधांपार्थक्षिप्रमायातिसात्यकिः २३ एषदुर्योधनंजित्वाभ्रातृभिःसहितंरणे ॥ निहत्यजलसंधंचक्षिप्रमायातिसात्यकिः २४ रुधिरौघवतींकृत्वानदींशोणितकर्दमाम् ॥ तृणवद्व्यस्यकौरव्यानेषह्यायातिसात्यकिः २५ ततःप्रहृष्टःकौंतेयःकेशवंवाक्यमब्रवीत् ॥ नमेप्रियंमहाबाहोयन्माम्भ्येतिसात्यकिः २६ नहिजानामिवृत्तांतंधर्मराजस्यकेशव ॥ सात्वतेनविहीनःसयदिजीवतिवानवा २७ एतेनहिमहाबाहोरक्षितव्यःसपार्थिवः ॥ तमेषकथमुत्सृज्यममकृष्णपदानुगः २८ राजाद्रोणायचोत्सृष्टःसैंधवश्चानिपातितः ॥ प्रत्युद्यातिचशैनेयमेषभूरिश्रवारणे २९ सोऽयंगुरुतरोभारःसैंधवार्थेसमाहितः ॥ ज्ञातव्यश्चहिमेराजारक्षितव्यश्चसात्यकिः ३० जयद्रथश्चहंतव्योलंबतेचदिवाकरः ॥ श्रांतश्चैषमहाबाहुरल्पप्राणश्चसांप्रतम् ३१ परिश्रांताहयाश्चास्यहयंताचमाधव ॥ नचभूरिश्रवाःश्रांतःससहायश्चकेशव ३२ अपीदानींभवेदस्यक्षेममस्मिन्समागमे ॥ कच्चिन्नसागरंतीर्त्वासात्यकिःसत्यविक्रमः ३३ गोष्पदंप्राप्यसीदेतमहौजाःशिनिपुंगवः ॥ अपिकौरवमुख्येनकृतास्त्रेणमहात्मना ३४ समेत्यभूरिश्रवसास्वस्तिमान्सात्यकिर्भवेत् ॥ व्यतिक्रममिमंमन्ये धर्मराजस्यकेशव ३५ आचार्याद्भयमुत्सृज्ययःप्रैषयतसात्यकिम् ॥ ग्रहणंधर्मराजस्यखगःश्येनइवामिषम् ३६

२९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६

२७ ॥ इतिद्रोणपर्वणिटीकायामेकचत्वारिंदशधिकशततमोऽध्यायः ॥ १४१ ॥ ॥ ७ ॥ तमिति १ उतात्यर्थे १ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५

नित्यमाशंसतेद्रोणःकच्चित्स्यात्कुशलीनृपः २७ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिसात्यक्यर्जुनदर्शनेएकचत्वारिंशदधिकशततमोऽध्यायः॥ १४१॥
संजयउवाच ॥ तमापतंतंसंप्रेक्ष्यसात्वतंयुद्धदुर्मदम् ॥ क्रोधाद्भूरिश्रवाराजन्सहसासमुपाद्रवत १ तमब्रवीन्महाराजकौरव्यःशिनिपुंगवम् ॥ अद्यप्राप्तोऽसि
दिष्ट्यामेचक्षुर्विषयमित्युत २ चिराभिलषितंकाममहंप्राप्स्यामिसंयुगे॥ नहिमेमोक्ष्यसेजीवन्यदिनोत्सृजसेरणम् ३ अद्यत्वांसमरेहत्वानित्यंशूराभिमानिनम् ॥
नंदयिष्यामिदाशार्हकुरुराजंसुयोधनम् ४ अद्यमद्बाणनिर्दग्धंपतितंधरणीतले ॥ द्रक्ष्यतस्त्वांरणेवीरौसहितौकेशवार्जुनौ ५ अद्यधर्मसुतोराजाश्रुत्वात्वांनि
हतंमया ॥ सव्रीडोभवितासद्योयेनासीहप्रवेशितः ६ अद्यमेविक्रमंपार्थोविज्ञास्यतिधनंजयः ॥ त्वयिभूमौविनिहतेशयानेरुधिरोक्षिते ७ चिराभिलषितोह्ये
षत्वयासहसमागमः ॥ पुरादेवासुरेयुद्धेशक्रस्यबलिनायथा ८ अद्ययुद्धंमहाघोरंतवदास्यामिसात्वत ॥ ततोज्ञास्यसितत्त्वेनमद्वीर्यबलपौरुषम् ९ अद्यसंय
मनींयातामयात्वंनिहतोरणे ॥ यथारामानुजेनाजौरावणिर्लक्ष्मणेनह १० अद्यकृष्णश्चपार्थश्चधर्मराजश्चमाधव ॥ हतेत्वयिनिरुत्साहारणंत्यक्ष्यंत्यसंशयम्
११ अद्यतेऽपचितिंकृत्वाशितैर्माधवसायकैः ॥ तत्स्त्रियोनंदयिष्यामियेत्वयानिहतारणे १२ मच्चक्षुर्विषयंप्राप्तोनत्वंमाधवमोक्ष्यसे ॥ सिंहस्यविषयंप्राप्तोयथा
क्षुद्रमृगस्तथा १३ युयुधानस्तुतंराजन्प्रत्युवाचहसन्निव ॥ कौरवेयनसंत्रासोविद्यतेममसंयुगे १४ नाहंभीषयितुंशक्योवाङ्मात्रेणतुकेवलम् ॥ समांनिहन्या
त्संग्रामेयोमांकुर्यान्निरायुधम् १५ समास्तुशाश्वतीर्हन्याद्योमांहन्याद्धिसंयुगे ॥ किंवृथोक्तेनबहुनाकर्मणातत्समाचर १६ शारदस्येवमेघस्यगर्जितंनिष्फलं
हिते ॥ श्रुत्वात्वद्गर्जितंवीरहास्यंहिममजायते १७ चिरकालेप्सितंलोकेयुद्धमद्यास्तुकौरव ॥ त्वरतेमेमतिस्ताततवयुद्धाभिकांक्षिणी १८ नाहत्वाऽहंनिवर्ति
ष्येत्वामद्यपुरुषाधम ॥ अन्योन्यंतौतथावाग्भिस्तक्षंतौनरपुंगवौ १९ जिघांसूपरमक्रुद्धावभिजघ्नतुराहवे ॥ समेतौतौमहेष्वासौशुष्मिणौस्पर्धिनौरणे २०
द्विरदाविवसंक्रुद्धौवासितार्थेमदोत्कटौ ॥ भूरिश्रवाःसात्यकिश्चववर्षतुररिंदमौ २१ शरवर्षाणिघोराणिमेघाविवपरस्परम् ॥ सौमदत्तिस्तुशैनेयंप्रच्छाद्येषुभिरा
शुगैः २२ जिघांसुर्भरतश्रेष्ठविव्याधनिशितैःशरैः ॥ दशभिःसात्यकिंविद्ध्वासौमदत्तिरथापरान् २३ मुमोचनिशितान्बाणान्जिघांसुःशिनिपुंगवम् ॥ तान
स्यविशिखांस्तीक्ष्णानंतरिक्षेविशांपते २४ अप्राप्तानस्त्रमायाभिरग्रसत्सात्यकिःप्रभो ॥ तौपृथक्शस्त्रवर्षाभ्यामवर्षेतांपरस्परम् २५ उत्तमाभिजनौवीरौकुरु
वृष्णियशस्करौ ॥ तौनखैरिवशार्दूलौदंतैरिवमहाद्विपौ २६ रथशक्तिभिरन्योन्यंविशिखैश्चाप्यकृंततताम् ॥ निर्भिंदंतौहिगात्राणिविक्षरंतौचशोणितम् २७

शाश्वतीःसमाःसर्वकालं तुरवधारणेनित्यमेवअसौहन्यात् जयएवतस्येत्यर्थः १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

२८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ भुजाघातो भुजस्फोटः निग्रहो हस्तधारणं प्रग्रहो गलहस्तकः ४२ । ४३ भुजयोश्चावबंधैर्बाहुपाशवेष्टनैः अवघा तनैस्ताडनैः ४४ पादशब्दः प्रत्येकं संबध्यते पादावकर्षैश्चरणावकर्षणैः । पादसंधानैश्चरणच्छंदितकैः । तोमरैरतिस्फोटनैः । अंकुशैरवलुंचनैः । पादोदरविबंधैः पादाभ्यामुदर

व्यष्टंभयेतामन्योन्यं प्राणद्यूताभिदेविनौ ॥ एवमुत्तमकर्माणौ कुरुवृष्णियशस्करौ २८ परस्परमयुध्येतां वारणाविव यूथपौ ॥ तावदीर्घेण कालेन ब्रह्मलोकपुरस्कृतौ २९ यियासंतौ परं स्थानमन्योन्यं संजगर्जतुः ॥ सात्यकिः सौमदत्तिश्च शरवृष्ट्या परस्परम् ३० हृष्टवद्धार्तराष्ट्राणां पश्यतामभ्यवर्षताम् ॥ संप्रेक्षंत जनास्तौ तु युध्यमानौ युधांपती ३१ यूथपौ वासिताहेतोः प्रयुद्धाविव कुंजरौ ॥ अन्योन्यस्य हयान्हत्वा धनुषी विनिकृत्य च ३२ विरथावसियुद्धाय समेयातां महारणे आर्षभे चर्मणी चित्रे प्रगृह्य विपुले शुभे ३३ विकोशौ चाप्यसी कृत्वा समरे तौ विचेरतुः ॥ चरंतौ विविधान्मार्गान्मंडलानि च भागशः ३४ मुहुराजघ्नतुः क्रुद्धावन्योन्यमरिमर्दनौ ॥ सखड्गौ चित्रवर्माणौ सनिष्कांगदभूषणौ ३५ भ्रांतमुद्भ्रांतमाविद्धमाप्लुतं विप्लुतं सृतम् ॥ संपातं समुदीर्णं च दर्शयंतौ यशस्विनौ ३६ असिभ्यां संप्रजह्वाते परस्परमरिंदमौ ॥ उभौ छिद्रैषिणौ वीरावुभौ चित्रं ववल्गतुः ३७ दर्शयंतावुभौ शिक्षां लाघवं सौष्ठवं तथा ॥ रणे रणकृतां श्रेष्ठावन्योन्यं पर्यकर्षताम् ३८ मुहूर्तमिव राजेंद्र समाहत्य परस्परम् ॥ पश्यतां सर्वसैन्यानां वीरावाश्वसतां पुनः ३९ असिभ्यां चर्मणी चित्रे शतचंद्रे नराधिप ॥ निकृत्य पुरुषव्याघ्रौ बाहुयुद्धं प्रचक्रतुः ४० व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ ॥ बाहुभिः समसज्जेतामायसैः परिघैरिव ४१ तयोरासन्भुजाघातनिग्रहप्रग्रहास्तथा ॥ शिक्षाबलसमुद्भूताः सर्वयोधप्रहर्षणाः ४२ तयोर्नृवरयो राजन्समरे युध्यमानयोः ॥ भीमोऽभवन्महाशब्दो वज्रपर्वतयोरिव ४३ द्विपाविव विषाणाग्रैः शृंगैरिव महर्षभौ ॥ भुजयोक्त्रावबंधैश्च शिरोभ्यां चावघातनैः ४४ पादावकर्षसंधानैस्तोमरांकुशलासनैः ॥ पादोदरविबंधैश्च भूमावुद्भ्रमणैस्तथा ४५ गतप्रत्यागताक्षेपैः पातनोत्थानसंप्लुतैः ॥ युयुधाते महात्मानौ कुरुसात्वतपुंगवौ ४६ द्वात्रिंशत्करणानि स्युर्यानि युद्धानि भारत ॥ तान्यदर्शयतां तत्र युध्यमानौ महाबलौ ४७ क्षीणायुधे सात्वते युध्यमाने ततोऽब्रवीदर्जुनं वासुदेवः ॥ पश्यस्वैनं विरथं युध्यमानं रणे वरं सर्वधनुर्धराणाम् ४८ प्रविष्टो भारतीं भित्त्वा तव पांडव पृष्ठतः ॥ योधितश्च महावीर्यैः सर्वैर्भारत भारतैः ४९ परिश्रांतं युधां श्रेष्ठं संप्राप्तो भूरिदक्षिणः ॥ युद्धाकांक्षी समायांतं नैतत्सममिवार्जुन ५० ततो भूरिश्रवाः क्रुद्धः सात्यकिं युद्धदुर्मदः ॥ उद्यम्याभ्याहनद्राजन्मत्तो मत्तमिव द्विपम् ५१ रथस्थयोर्द्वयोर्युद्धे क्रुद्धयोर्योधमुख्ययोः ॥ केशवार्जुनयो राजन्समरे प्रेक्षमाणयोः ५२ अथ कृष्णो महाबाहुरर्जुनं प्रत्यभाषत ॥ पश्य वृष्ण्यंधकव्याघ्रं सौमदत्तिवशं गतम् ५३ परिश्रांतं गतं भूमौ कृत्वा कर्म सुदुष्करम् ॥ तवांतेवासिनं वीरं पालयार्जुन सात्यकिम् ५४ न वशं यज्ञशीलस्य गच्छेदेष वरोऽर्जुन ॥ त्वत्कृते पुरुषव्याघ्र तदाशु क्रियतां विभो ५५

क्रोडीकरणैः । उद्भ्रमणैः परिवर्तनैः ४५ गतैर्गमनैः । प्रत्यागतैरावर्तनैः । आक्षेपैरास्फालनैः । पातनैर्भूमिप्रापणैः । उत्थानैरुत्पतनैः । संप्लुतैर्विस्फारानुबंधैः ४६ । ४७ । ४८ । ४९ सममनुरूपं ५० अभ्यहनदास्फालितवान् ५१ । ५२ । ५३ । ५४ । ५५

५६ । ५७ । ५८ । ५९ । ६० । ६१ कुलालएवकौलालः ६२ । ६३ । ६४ । ६५ । ६६ । ६७ नहन्याद्धंतुंनशक्नोति द्वितीयइवशब्दएवार्थे कर्षत्येवेत्यन्वयः ६८ । ६९ । ७० । ७१ । ७२

अथाब्रवीद्धृष्टमनावासुदेवंधनंजयः ॥ पश्यवृष्णिप्रवीरेणक्रीडंतंकुरुपुंगवम् ५६ महाद्विपेनेववनेमत्तेनहरियूथपम् ॥ संजयउवाच ॥ इत्येवंभाषमाणेतुपांड
वेवैधनंजये ५७ हाहाकारोमहानासीत्सैन्यानांभरतर्षभ ॥ तदुद्यम्यमहाबाहुःसात्यकिंन्यहनद्भुवि ५८ ससिंहइवमातंगंविकर्षन्भूरिदक्षिणः ॥ व्यरोचतकुरु
श्रेष्ठ सात्वतप्रवरंयुधि ५९ अथकोशाद्विनिष्कृष्यखड्गंभूरिश्रवारणे ॥ मूर्द्धजेषुनिजग्राहपदाचोरस्यताडयत् ६० ततोऽस्यच्छेत्तुमारब्धःशिरःकायात्सकुंड
लम् ॥ तावत्क्षणात्सात्वतोऽपिशिरःसंभ्रमयंस्त्वरन् ६१ यथाचक्रंतुकौलालोदंडविद्धंतुभारत ॥ सहैवभूरिश्रवसोबाहुनाकेशधारिणा ६२ तंतथापरिकृष्यंतं
दृष्ट्वासात्वतमाहवे ॥ वासुदेवस्ततोराजन्भूयोऽर्जुनमभाषत ६३ पश्यवृष्ण्यंधकव्याघ्रंसौमदत्तिवशंगतम् ॥ तवशिष्यंमहाबाहोधनुष्यनवरंत्वया ६४ असत्योवि
क्रमःपार्थयत्रभूरिश्रवारणे ॥ विशेषयतिवार्ष्णेयंसात्यकिंसत्यविक्रमम् ६५ एवमुक्तोमहाबाहुर्वासुदेवेनपांडवः ॥ मनसापूजयामासभूरिश्रवसमाहवे ६६ विक
र्षन्सात्वतश्रेष्ठंक्रीडमानइवाहवे ॥ संहर्षयतिमांभूयःकुरूणांकीर्तिवर्धनः ६७ प्रवरंवृष्णिवीराणांयन्नहन्याद्धिसात्यकिम् ॥ महाद्विपमिवारण्येमृगेंद्रइवकर्षति
६८ एवंतुमनसाराजन्पार्थःसंपूज्यकौरवम् ॥ वासुदेवंमहाबाहुरर्जुनःप्रत्यभाषत ६९ सैंधवेसक्तदृष्टित्वान्नैनंपश्यामिमाधवम् ॥ एतत्त्वसुकरंकर्मयादवार्थेक
रोम्यहम् ७० इत्युक्त्वावचनंकुर्वन्वासुदेवस्यपांडवः ॥ ततःक्षुरप्रंनिशितंगांडीवेसमयोजयत् ७१ पार्थबाहुविसृष्टःसमहोल्केवनभश्च्युता ॥ सखड्गंयज्ञशी
लस्यसांगदंबाहुमच्छिनत् ७२ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि भूरिश्रवोबाहुच्छेदेद्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥ छ ॥
संजयउवाच ॥ सबाहुर्न्यपतद्भूमौसखड्गःसशुभांगदः ॥ आदधज्जीवलोकस्यदुःखमद्भुतमुत्तमः १ प्रहरिष्यन्हृतोबाहुरदृश्येनाकिरीटिना ॥ वेगेनन्यपतद्भू
मौपंचास्यइवपन्नगः २ समोघंकृतमात्मानंदृष्ट्वापार्थेनकौरवः ॥ उत्सृज्यसात्यकिंक्रोधाद्गर्हयामासपांडवम् ३ ॥ भूरिश्रवाउवाच ॥ नृशंसंबतकौंतेयकर्मेदंकृ
तवानसि ॥ अपश्यतोविषक्तस्ययन्मेबाहुमचिच्छिदः ४ किंनुवक्ष्यसिराजानंधर्मपुत्रंयुधिष्ठिरम् ॥ किंकुर्वाणोमयासंख्येहतोभूरिश्रवारणे ५ इदमिंद्रेणते
साक्षादुपदिष्टंमहात्मना ॥ अस्त्रंरुद्रेणवापार्थद्रोणेनाथकृपेणवा ६ ननुनामास्त्रधर्मज्ञस्त्वंलोकेऽभ्याधिकःपरैः ॥ सोऽयुध्यमानस्यकथंरणेप्रहृतवानसि ७
नप्रमत्तायभीतायविरथायप्रयाचते ॥ व्यसनेवर्तमानायप्रहरंतिमनस्विनः ८ इदंतुनीचाचरितमसत्पुरुषसेवितम् ॥ कथमाचरितंपार्थपापकर्मसुदुष्क
रम् ९ आर्येणसुकरंत्वाहुरार्यकर्मधनंजय ॥ अनार्यकर्मत्वार्येणसुदुष्करतमंभुवि १०

॥ इतिद्रोणपर्वणिटीकायांद्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥ ॥ छ ॥ ॥ छ ॥ ॥ सइति १ । २ । ३ विषक्तस्यान्यासक्तस्य ४ । ५ । ६ । ७ । ८ । ९ । १०

येषुयेषुसत्स्वसत्सुवा यत्रयत्रशुभेऽशुभेवाकर्मणि ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१

येषुयेषुनरव्याघ्रयत्रयत्रचवर्तते ॥ आशुतच्छीलतामेतितदिदंत्वयिदृश्यते ११ कथंहिराजवंश्यस्त्वंकौरवेयोविशेषतः ॥ क्षत्रधर्मादपक्रांतःसुवृत्तश्चरितव्रतः १२ इदंतुयदतिक्षुद्रंवार्ष्णेयार्थेकृतंत्वया ॥ वासुदेवमतंनूनंनैतत्त्वय्युपपद्यते १३ कोहिनामप्रमत्तायपरेणसहयुद्ध्यते ॥ ईदृशंव्यसनंदद्याद्योनकृष्णसखोभवेत् १४ व्रात्याःसंक्लिष्टकर्माणःप्रकृत्यैवचगर्हिताः ॥ वृष्ण्यंधकाःकथंपार्थप्रमाणंभवताकृताः १५ एवमुक्तोरणेपार्थोभूरिश्रवसमब्रवीत् ॥ अर्जुनउवाच ॥ व्यक्तंहिजीर्यमाणोऽपिबुद्धिंजरयतेनरः १६ अनर्थकमिदंसर्वंयत्त्वयाव्याहृतंप्रभो ॥ जानन्नेवहृषीकेशंगर्हसेमांचपांडवम् १७ संग्रामाणांहिधर्मज्ञःसर्वशास्त्रार्थपारगः ॥ नचाधर्ममहंकुर्यांजानंश्चैवहिमुह्यसे १८ युद्ध्यंतिक्षत्रियाःशत्रून्स्वैःस्वैःपरिवृतानराः ॥ भ्रातृभिःपितृभिःपुत्रैस्तथासंबंधिबांधवैः १९ वयस्यैरथमित्रैश्चतेचबाहुंसमाश्रिताः ॥ सकथंसात्यकिंशिष्यंसुखसंबंधिमेवच २० अस्मदर्थेचयुद्ध्यंतंत्यक्त्वाप्राणान्सुदुस्त्यजान् ॥ ममबाहुंरणेराजन्दक्षिणंयुद्धदुर्मदम् २१ नचात्मारक्षितव्योवैराजन्रणगतेनाहि ॥ योयस्ययुज्यतेऽर्थेषुसवैरक्ष्योनराधिप २२ तैरक्ष्यमाणैःसन्नृपोरक्षितव्योमहामृधे ॥ यद्यहंसात्यकिंपश्येवध्यमानंमहारणे २३ ततस्तस्यवियोगेनपापंमेऽनर्थतोभवेत् ॥ रक्षितश्चमयायस्मात्तस्मात्कुध्यसिकिंमयि २४ यत्त्वमेगर्हसेराजन्नन्येनसहसंगतम् ॥ अहंत्वयाविनिकृतस्तत्रमेबुद्धिविभ्रमः २५ कवचंधुन्वतस्तुभ्यंरथंचारोहतःस्वयम् ॥ धनुर्ज्यांकर्षतश्चैवयुद्ध्यतःसहशत्रुभिः २६ एवंरथगजाकीर्णेहयपत्तिसमाकुले ॥ सिंहनादोद्धतरवेगंभीरेसैन्यसागरे २७ स्वैःपरैश्चसमेतेभ्यःसात्वतेनचसंगमे ॥ एकस्यैकेनहिकथंसंग्रामःसंभविष्यति २८ बहुभिःसहसंगम्यनिर्जित्यचमहारथान् ॥ श्रांतश्चश्रांतवाहश्चविमनाःशस्त्रपीडितः २९ ईदृशंसात्यकिंसंख्येनिर्जित्यचमहारथम् ॥ अधिकत्वंविजानीषेस्ववीर्यवशमागतम् ३० यदिच्छसिशिरश्चास्यअसिनाहंतुमाहवे ॥ तथाकृच्छ्रगतंचैवसात्यकिंकःक्षमिष्यति ३१ त्वंवैविगर्हयात्मानमात्मानंयोनरक्षसि ॥ कथंकरिष्यसेवीरयोवात्वांसंश्रयेज्जनः ३२ ॥ संजयउवाच ॥ एवमुक्तोमहाबाहुर्यूपकेतुर्महायशाः ॥ युयुधानंसमुत्सृज्यरणेप्रायमुपाविशत् ३३ शरानास्तीर्यसव्येनपाणिनापुण्यलक्षणः ॥ यियासुर्ब्रह्मलोकायप्राणान्प्राणेष्वथाजुहोत् ३४ सूर्येचक्षुःसमाधायप्रसन्नंसलिलेमनः ॥ ध्यायन्महोपनिषदंयोगयुक्तोऽभवन्मुनिः ३५ ततःससर्वसेनायांजनःकृष्णधनंजयौ ॥ गर्हयामासतंचापिशशंसपुरुषर्षभम् ३६ निंद्यमानौतथाकृष्णौनोचतुःकिंचिदप्रियम् ॥ ततःप्रशस्यमानश्चनाहृष्यद्यूपकेतनः ३७ तांस्तथावादिनोराजन्पुत्रांस्तवधनंजयः ॥ अमृष्यमाणोमनसातेषांतस्यचभाषितम् ३८

३३ प्रायमामरणानशनं उपाविशदमारब्धवान् ३४ प्राणानसून्प्राणेष्वायुषु अजुहोदाहितवान् ३४ प्रसन्नमकल्मषम् ३५ । ३६ ३७ । ३८

३९ । ४० । ४१ । ४२ । ४३ दक्षिणंकृत्तमात्मनःपाणिंअस्यार्जुनस्यसमीपे प्राहिणोत्प्रहितवान् ४४ । ४५ । ४६ । ४७ सकृद्विभाताःसहप्रकाशाः गरुडस्योत्तमांगेन पृष्ठेनयानंयस्य ४८

असंकुद्धमनावाचःस्मारयन्निवभारत ॥ उवाचपांडुतनयःसाक्षेपमिवफाल्गुनः ३९ ममसर्वेऽपिराजानोजानंत्येवमहाव्रतम् ॥ नशक्योमामकोहंतुंयोमेस्याद्बा
णगोचरे ४० यूपकेतोनिरीक्ष्यैतन्नमामर्हसिगर्हितुम् ॥ नहिधर्ममविज्ञाययुक्तंगर्हयितुंपरम् ४१ आत्तशस्त्रस्यहिरणेवृष्णिवीरंजिघांसतः ॥ यदहंबाहुमच्छैत्सं
नसधर्मोविगर्हितः ४२ न्यस्तशस्त्रस्यबालस्यविरथस्यविवर्मणः ॥ अभिमन्योर्वधंतातधार्मिकःकोनपूजयेत् ४३ एवमुक्तःसपार्थेनशिरसाभूमिमस्पृशत ॥ पा
णिनाचैवसव्येनप्राहिणोदस्यदक्षिणम् ४४ एतत्पार्थस्यतुवचस्ततःश्रुत्वामहाद्युतिः ॥ यूपकेतुर्महाराजतूष्णीमासीदवाङ्मुखः ४५ ॥ अर्जुनउवाच ॥ या
प्रीतिर्धर्मराजेमेभीमेचबलिनांवरे ॥ नकुलेसहदेवेचसामेत्वयिशलाग्रज ४६ मयात्वंसमनुज्ञातःकृष्णेनचमहात्मना ॥ गच्छपुण्यकृतांलोकाञ्छिबिरौशीनरोय
था ४७ ॥ वासुदेवउवाच ॥ येलोकाममविमलाःसकृद्विभाताब्रह्माद्यैःसुरवृषभैरपीष्यमाणाः ॥ तान्क्षिप्रंव्रजसततताग्निहोत्रयाजिन्मत्तुल्योभवगरुडोत्तमांगया
नः ४८ ॥ संजयउवाच ॥ उत्थितःसतुशैनेयोविमुक्तःसौमदत्तिना ॥ खड्गमादायचिच्छित्सुःशिरस्तस्यमहात्मनः ४९ निहतंपांडुपुत्रेणप्रसक्तंभूरिदक्षिणम् ॥
इयेषसात्यकिर्हंतुंशलाग्रजमकल्मषम् ५० निकृत्तभुजमासीनंछिन्नहस्तमिवद्विपम् ॥ क्रोशतांसर्वसैन्यानांनिंद्यमानःसुदुर्मनाः ५१ वार्यमाणःसकृष्णेनपार्थेनच
महात्मना ॥ भीमेनचक्ररक्षाभ्यामश्वत्थाम्नाकृपेणच ५२ कर्णेनवृषसेनेनसैंधवेनतथैवच ॥ विक्रोशतांचसैन्यानामवधीत्तंधृतव्रतम् ५३ प्रायोपविष्टायरणेपा
र्थेनाच्छिन्नबाहवे ॥ सात्यकिःकौरवेयायखड्गेनापाहरच्छिरः ५४ नाभ्यनंदंतसैन्यानिसात्यकिंतेनकर्मणा ॥ अर्जुनेनहतंपूर्वंयज्जघानकुरूद्वहम् ५५ सहस्राक्ष
समंचैवसिद्धचारणमानवाः ॥ भूरिश्रवसमालोक्ययुद्धेप्रायगतंहतम् ५६ अपूजयंततंदेवाविस्मितास्तेऽस्यकर्मभिः ॥ पक्षवादांश्चसुबहून्प्रावदंस्तवसैनि
काः ५७ नवाष्र्णेयस्यापराधोभवितव्यंहितत्तथा ॥ तस्मान्मन्युर्नवःकार्यःक्रोधोदुःखतरोनृणाम् ५८ हंतव्यश्चैववीरेणनात्रकार्याविचारणा ॥ विहितोह्यस्य
धात्रैवमृत्युःसात्यकिराहवे ५९ ॥ सात्यकिरुवाच ॥ नहंतव्योनहंतव्यइतियन्मांप्रभाषत ॥ धर्मवादैरधर्मिष्ठाधर्मकंचुकमास्थिताः ६० यदाबालःसुभद्रायाः
सुतःशस्त्रविनाकृतः ॥ युष्माभिर्निहतोयुद्धेतदाधर्मःक्वगतः ६१ मयात्वेतत्प्रतिज्ञातंक्षेपेकस्मिंश्चिदेवहि ॥ योमांनिष्पिष्यसंग्रामेजीवन्हन्यात्पदारुषा ६२
समेवध्योभवेच्छत्रुर्यद्यपिस्यान्मुनिव्रतः ॥ चेष्टमानंप्रतीघातेसभुजंमांसचक्षुषः ६३ मान्यध्वंमृतइत्येवमेतद्वोबुद्धिलाघवम् ॥ युक्तोह्यस्यप्रतीघातःकृतोमे
कुरुपुंगवाः ६४ यत्तुपार्थेनमांदृष्ट्वाप्रतिज्ञामभिरक्षता ॥ सखड्गोऽस्यहृतोबाहुरेतेनैवास्मिवंचितः ६५

४९ प्रसक्तमन्यासक्तं ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ क्षेपेनिंदयां जीवन्नितिद्वितीयार्थेप्रथमा ६२ । ६३ । ६४ । ६५

इवेत्येवार्थे दैवमेवचेष्टयतीत्यन्वयः ६६ । ६७ । ६८ । ६९ । ७० वरदस्यार्थितार्थप्रदातुः हविर्धानमंतरेणहविर्गृहस्यमध्ये ७१ । ७२ ॥ इतिद्रोणपर्वणिटीकायांत्रिचत्वारिंशदधिकशततमो

भवितव्यंहियद्भावित्दैवंचेष्टयतीवच ॥ सोऽयंहतोविमर्देऽस्मिन्किमत्राधर्मचेष्टितम् ६६ आपिचायंपुरागीतःश्लोकोवाल्मीकिनाभुवि ॥ नहंतव्याःस्त्रियइतियद्ब्रवीषिप्लवंगम ६७ सर्वकालंमनुष्येणव्यवसायवतासदा ॥ पीडाकरममित्राणांयत्स्यात्कर्तव्यमेवतत् ६८ ॥ संजयउवाच ॥ एवमुक्तेमहाराजसर्वेकौरवपुंगवाः ॥ नस्मकिंचिदभाषंतमनसासमपूजयन् ६९ मंत्राभिपूतस्यमहाध्वरेषुयशस्विनोभूरिसहस्रदस्यच ॥ मुनेरिवारण्यगतस्यतस्यनतत्रकश्चिद्वधमभ्यनंदत् ७० सुनीलकेशंवरदस्यतस्यशूरस्यपारावतलोहिताक्षम् ॥ अश्वस्यमेध्यस्याशिरोनिकृत्तंन्यस्तंहविर्धानमिवांतरेण ७१ सतेजसाशस्त्रकृतेनपूतोमहाहवेदेहवरंविसृज्य ॥ आक्रामदूर्ध्वंवरदोवरार्होव्यावृत्यधर्मेणपरेणरोदसी ७२ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिभूरिश्रवोवधेत्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥ ॥ ७ ॥ ॥ धृतराष्ट्रउवाच ॥ अजितोद्रोणराधेयविकर्णकृतवर्मभिः ॥ तीर्णःसैन्यार्णवंवीरःप्रतिश्रुत्ययुधिष्ठिरे १ सकथंकौरवेयेणसमरेष्वनिवारितः ॥ निगृह्यभूरिश्रवसाबलाद्भुविनिपातितः २ ॥ संजयउवाच ॥ शृणुराजन्निहोत्पत्तिंशैनेयस्ययथापुरा ॥ यथाचभूरिश्रवसोयत्रतेसंशयोनृप ३ अत्रेःपुत्रोऽभवत्सोमःसोमस्यतुबुधःस्मृतः ॥ बुधस्यैकोमहेंद्राभःपुत्रआसीत्पुरूरवाः ४ पुरूरवसआयुस्तुआयुषोनहुषःसुतः ॥ नहुषस्ययय्यातिस्तुराजादेवर्षिसंमतः ५ ययातेर्देवयान्यांतुयदुर्ज्येष्ठोऽभवत्सुतः ॥ यदोरभूदन्ववायेदेवमीढइतिस्मृतः ६ यादवस्तस्यतुसुतःशूरस्त्रैलोक्यसंमतः ॥ शूरस्यशौरिर्नृवरोवसुदेवोमहायशाः ७ धनुष्यनवरःशूरःकार्तवीर्यसमोयुधि ॥ तद्वीर्यश्चापितत्रैवकुलेशिनिरभून्नृप ८ एतस्मिन्नेवकालेतुदेवकस्यमहात्मनः ॥ दुहितुःस्वयंवरेराजन्सर्वक्षत्रसमागमे ९ तत्रवैदेवकींदेवीवसुदेवार्थमाशुवै ॥ निर्जित्यपार्थिवान्सर्वान्रथमारोपयच्छिनिः १० तांदृष्ट्वादेवकींशूरोरथस्थांपुरुषर्षभः ॥ नामृष्यतमहातेजाःसोमदत्तःशिनेर्नृप ११ तयोर्युद्धमभूद्राजन्दिनार्धंचित्रमद्भुतम् ॥ बाहुयुद्धंसुबलिनोःप्रसक्तंपुरुषर्षभः १२ शिनिनासोमदत्तस्तुप्रसह्यभुविपातितः ॥ असिमुद्यम्यकेशेषुप्रगृह्यचपदाहतः १३ मध्येराजसहस्राणांप्रेक्षकाणांसमंततः ॥ कृपयाचपुनस्तेनसजीवेतिविसर्जितः १४ तदवस्थःकृतस्तेनसोमदत्तोऽथमारिष ॥ प्रासादयन्महादेवममर्षवशमास्थितः १५ तस्यतुष्टोमहादेवोवराणांवरदःप्रभुः ॥ वरेणच्छंदयामाससतुवव्रेवरंनृपः १६ पुत्रमिच्छामिभगवन्योनिपात्यशिनेःसुतम् ॥ मध्येराजसहस्राणांपदाहन्याच्चसंयुगे १७ तस्यतद्वचनंश्रुत्वासोमदत्तस्यपार्थिव ॥ एवमस्त्वितितत्रोक्त्वासदेवोऽतरधीयत १८ सतेनवरदानेनलब्धवान्भूरिदक्षिणं ॥ अपातयच्चसमरेसौमदत्तिःशिनेःसुतं १९ पश्यतांसर्वसैन्यानांपदाचैनमताडयत् ॥ एतत्तेकथितंराजन्यन्मांत्वंपरिपृच्छसि २०

ध्यायः ॥ १४३ ॥ ॥ ७ ॥ अजितइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०

२१ परपरिग्रहाः पराधीनाः २२ । २३ । २४ । २५ । २६ । २७ चक्रंप्रतापः २८ । २९ ॥ इतिद्रोणपर्वणिटीकायांचतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥ ७ ॥ तदवस्थइति १ । २
हेपुंडरीकाक्षसजयद्रथस्त्रिषुधर्मेषुवर्ततेइतिश्रूयते केपुनस्तेत्रयोधर्माः अत्रोच्यते । यदियुध्यमानोहन्यतेतदातूर्णंस्वर्गप्राप्तिरेवतस्यधर्मः । अथपलायमानोहन्यतेतदानरकप्राप्तिरेवतस्यधर्मः ।

न हिशक्योरणेजेतुंसात्वतोमनुजर्षभैः ॥ लब्धलक्ष्याश्चसंग्रामेबहुशाश्चित्रयोधिनः २१ देवदानवगंधर्वान्विजेतारोह्यविस्मिताः ॥ स्ववीर्यविजयेयुक्तानैतेपरप
रिग्रहाः २२ नतुल्यंवृष्णिभिरिहदृश्यतेकिंचनप्रभो ॥ भूतंभव्यंभविष्यच्चबलेनभरतर्षभ २३ नज्ञातिमवमन्यंतेवृद्धानांशासनेरताः ॥ नदेवासुरगंधर्वानयक्षो
रगराक्षसाः २४ जेतारोवृष्णिवीराणांकिंपुनर्मानवारणे ॥ ब्रह्मद्रव्येगुरुद्रव्येज्ञातिस्वेचाप्यहिंसकाः २५ एतेषांरक्षितारश्चयेस्युःकस्यांचिदापदि ॥ अर्थवं
तोनचोत्सिक्ताब्रह्मण्याःसत्यवादिनः २६ समर्थान्नावमन्यंतेदीनानभ्युद्धरंतिच ॥ नित्यंदेवपरादांतास्त्रातारश्चाविकत्थनाः २७ तेनवृष्णिप्रवीराणांचक्रंनप्र
तिहन्यते ॥ अपिमेरुंवहेत्कश्चित्तरेद्वामकरालयम् २८ नतुवृष्णिप्रवीराणांसमेत्यांतंव्रजेन्नृप ॥ एतत्तेसर्वमाख्यातंयत्रतेसंशयःप्रभो ॥ कुरुराजनरश्रेष्ठतवव्य
पनयोमहान् २९ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिसात्यकिप्रशंसायांचतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥ धृतराष्ट्रउवाच ॥
तदवस्थेहतेतस्मिन्भूरिश्रवसिकौरवे ॥ यथाभूयोऽभवद्युद्धंतन्ममाचक्ष्वसंजय १ ॥ संजयउवाच ॥ भूरिश्रवसिसंक्रांतेपरलोकायभारत ॥ वासुदेवंमहाबाहुर
र्जुनःसमचूचुदत् २ चोदयाश्वान्भृशंकृष्णयतोराजाजयद्रथः ॥ श्रूयतेपुंडरीकाक्षत्रिषुधर्मेषुवर्तते ३ प्रतिज्ञांसफलांचापिकर्तुमर्हसिमेऽनघ ॥ अस्तमेतिम
हाबाहोत्वरमाणोदिवाकरः ४ एतद्धिपुरुषव्याघ्रमहदभ्युद्यतंमया ॥ कार्यंसंरक्ष्यतेचैषकुरुसेनामहारथैः ५ यथानाभ्येतिसूर्योऽस्तंयथासत्यंभवेद्वचः ॥ चोद
याश्वांस्तथाकृष्णयथाहन्यांजयद्रथम् ६ ततःकृष्णोमहाबाहूरजतप्रतिमान्हयान् ॥ हयज्ञश्चोदयामासजयद्रथवधंप्रति ७ तंप्रायांतममोघेषुमुत्पतद्भिरिवा
शुगैः ॥ त्वरमाणामहाराजसेनामुख्याःसमाद्रवन् ८ दुर्योधनश्चकर्णश्चवृषसेनोऽथमद्रराट् ॥ अश्वत्थामाकृपश्चैवस्वयमेवचसैंधवः ९ समासाद्यचबीभत्सुःसैंध
वंसमुपस्थितम् ॥ नेत्राभ्यांक्रोधदीप्ताभ्यांसंप्रेक्षन्निर्दहन्निव १० ततोदुर्योधनोराजाराधेयंत्वरितोऽब्रवीत् ॥ अर्जुनंप्रेक्ष्यसंयातंजयद्रथवधंप्रति ११ अयंसवै
कर्तनयुद्धकालोविदर्शयस्वात्मबलंमहात्मन् ॥ यथानवध्येतरणेऽर्जुनेनजयद्रथःकर्णतथाकुरुष्व १२ अल्पावशेषोदिवसोनृवीरविघातयस्वाद्यरिपुंशरौघैः ॥
दिनक्षयंप्राप्यनरप्रवीरध्रुवोहिनःकर्णजयोभविष्यति १३ सैंधवेरक्ष्यमाणेतुसूर्यस्यास्तमनंप्रति ॥ मिथ्याप्रतिज्ञःकौंतेयःप्रवेक्ष्यतिहुताशनम् १४ अनर्जुना
यांचभुविमुहूर्तमपिमानद ॥ जीवितुंनोत्सहेरन्वैभ्रातरोऽस्यसहानुगाः १५ विनष्टैःपांडवेयैश्चसशैलवनकाननाम् ॥ वसुंधरामिमांकर्णभोक्ष्यामोहतकंटकाम् १६

अथमद्धयात्स्वदेशंगच्छातितदायशःशरीरनाशएवतस्यधर्मः । यावदसौयुद्धाभिमुखःप्रथमधर्मेतिष्ठतितावदेवहंतुमुचितःअतःशीघ्रमश्वांश्चोदयेति ३ । ४ । ५ । ६ हयज्ञःहयहृदयज्ञः आशुगै
र्मारुतैः ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६

उपहतोमोहितः विपरीतोऽन्यथाभूतप्रकृतिः १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ दृढलक्ष्येणदृढप्रहारेण २५ । २६ । २७ । २८ । २९ प्रतिष्ठितोऽधीनः ३०



दैवेनोपहतःपार्थोविपरीतश्चमानद ॥ कार्याकार्यमजानानःप्रतिज्ञांकृतवान्रणे १७ नूनमात्मविनाशायपांडवेनकिरीटिना ॥ प्रतिज्ञेयंकृताकर्णजयद्रथवधंप्र
ति १८ कथंजीवतिदुर्धर्षेत्वयिराधेयफाल्गुनः ॥ अनस्तंगतआदित्येहन्यात्सैंधवकंनृपम् १९ रक्षितंमद्रराजेनकृपेणचमहात्मना ॥ जयद्रथंरणमुखेकथंह
न्याद्धनंजयः २० द्रौणिनारक्ष्यमाणंचमयादुःशासनेनच ॥ कथंप्राप्स्यतिबीभत्सुःसैंधवंकालचोदितः २१ युध्यंतेबहवःशूरालंबतेचादिवाकरः ॥ शंकेजयद्र
थंपार्थोनैवप्राप्स्यतिमानद २२ सत्वंकर्णमयासार्धंशूरैश्चान्यैर्महारथैः ॥ द्रौणिनात्वंहिसहितोमद्रेशेनकृपेणच २३ युध्यस्वयत्नमास्थायपरंपार्थेनसंयुगे ॥ एव
मुक्तस्तुराधेयस्तवपुत्रेणमारिष २४ दुर्योधनमिदंवाक्यंप्रत्युवाचकुरूत्तमम् ॥ दृढलक्ष्येणवीरेणभीमसेनेनधन्विना २५ भृशंभिन्नतनुःसंख्येशरजालैरनेकशः ॥
स्थातव्यमितितिष्ठामिरणेसंप्रतिमानद २६ नांगमिंगतिकिंचिन्मेसंतप्तस्यमहेषुभिः ॥ योत्स्यामितुयथाशक्त्यात्वदर्थंजीवितंमम २७ यथापांडवमुख्योऽसौ
नहनिष्यतिसैंधवम् ॥ नहिमेयुध्यमानस्यसायकानस्यतःशितान् २८ सैंधवंप्राप्स्यतेवीरःसव्यसाचीधनंजयः ॥ यत्तुभक्तिमताकार्यंसततंहितकांक्षिणा २९
तत्करिष्यामिकौरव्यजयोदैवेप्रतिष्ठितः ॥ सैंधवार्थेपरंयत्नंकरिष्याम्यद्यसंयुगे ३० त्वत्प्रियार्थंमहाराजजयोदैवेप्रतिष्ठितः ॥ अद्ययोत्स्येऽर्जुनमहंपौरुषंस्वंव्य
पाश्रितः ३१ त्वदर्थेपुरुषव्याघ्रजयोदैवेप्रतिष्ठितः ॥ अद्ययुद्धंकुरुश्रेष्ठममपार्थस्यचोभयोः ३२ पश्यंतुसर्वसैन्यानिदारुणंलोमहर्षणम् ॥ कर्णकौरवयोरेवंरणे
संभाषमाणयोः ३३ अर्जुनोनिशितैर्बाणैर्जघानतववाहिनीम् ॥ चिच्छेदनिशितैर्बाणैःशूराणामनिवर्तिनाम् ३४ भुजान्परिघसंकाशान्हस्तिहस्तोपमान्रणे ॥
शिरांसिचमहाबाहुश्चिच्छेदनिशितैःशरैः ३५ हस्तिहस्तान्हयग्रीवारथाक्षांश्चसमंततः ॥ शोणिताक्तान्हयारोहान्गृहीतप्रासतोमरान् ३६ क्षुरैश्चिच्छेदबी
भत्सुर्द्विधैकैकंत्रिधैवच ॥ हयान्वारणमुख्यांश्चप्रापतंतसमंततः ३७ ध्वजाश्छत्राणिचापानिचामराणिशिरांसिच ॥ कक्षमग्निरिवोद्भूतःप्रदहंस्तववाहिनीम् ३८
अचिरेणमहींपार्थश्चकाररुधिरोत्तराम् ॥ हतभूयिष्ठयोधंतत्कृत्वातवबलंबली ३९ आससाददुराधर्षःसैंधवंसत्यविक्रमः ॥ बीभत्सुर्भीमसेनेनसात्वतेनचरक्षितः
४० प्रबभौभरतश्रेष्ठज्वलन्निवहुताशनः ॥ तंतथाऽवस्थितंदृष्ट्वात्वदीयावीर्यसंपदा ४१ नामृष्यंतमहेष्वासाःपांडवंपुरुषर्षभाः ॥ दुर्योधनश्चकर्णश्चवृषसेनो
ऽथमद्रराट् ४२ अश्वत्थामाकृपश्चैवस्वयमेवचसैंधवः ॥ सन्नद्धाःसैंधवस्यार्थेसमावृण्वन्किरीटिनम् ४३ नृत्यंतंरथमार्गेषुधनुर्ज्यातलनिःस्वनैः ॥ संग्रामको
विदंपार्थंसर्वेयुद्धविशारदाः ४४ अभीताःपर्यवर्तंतव्यादितास्यमिवांतकम् ॥ सैंधवंपृष्ठतःकृत्वाजिघांसंतोऽच्युतार्जुनौ ४५ सूर्यास्तमनमिच्छंतोलोहिताय
तिभास्करे ॥ तेभुजैर्भोगिभोगाभैर्धनूंष्यानम्यसायकान् ४६

३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६

मुमुचुःसूर्यरश्म्याभाञ्छतशःफाल्गुनंप्रति ॥ ततस्तानस्यमानांश्चकिरीटीयुद्धदुर्मदः ४७ द्विधात्रिधाऽष्टधैकैकंछित्वाविव्याधतान्रथान् ॥ सिंहलांगूलकेतु
स्तुदर्शयन्वीर्यमात्मनः ४८ शारद्वतीसुतोराजन्नर्जुनंप्रत्यवारयत् ॥ सविद्ध्वादशभिःपार्थंवासुदेवंचसप्तभिः ४९ अतिष्ठद्रथमार्गेषुसैंधवंप्रतिपालयन् ॥ अथै
नंकौरवश्रेष्ठाःसर्वएवमहारथाः ५० महतारथवंशेनसर्वतःप्रत्यवारयन् ॥ विस्फारयंतश्चापानिविसृजंतश्चसायकान् ५१ सैंधवंपर्यरक्षंतशासनात्तनयस्यते ॥
ततःपार्थस्यशूरस्यबाह्वोर्बलमदृश्यत ५२ इषूणामक्षयत्वंचधनुषोगांडिवस्यच ॥ अस्त्रैरस्त्राणिसंवार्यद्रौणेःशारद्वतस्यच ५३ एकैकंदशभिर्बाणैःसर्वानेवस
मार्पयत् ॥ तंद्रौणिःपंचविंशत्यावृषसेनश्चसप्तभिः ५४ दुर्योधनस्तुविंशत्याकर्णशल्यौत्रिभिस्त्रिभिः ॥ तएनमभिगर्जंतोविध्यंतश्चपुनःपुनः ५५ विधुन्वंतश्च
चापानिसर्वतःप्रत्यवारयन् ॥ श्लिष्टंचसर्वतश्चक्रूरथमंडलमाशुते ५६ सूर्यास्तमनमिच्छंतस्त्वरमाणामहारथाः ॥ तएनमभिनर्दंतोविधुन्वानाधनूंषिच ५७
सिषिचुर्मार्गणैस्तीक्ष्णैर्गिरिंमेघाइवांबुभिः ॥ तेमहास्त्राणिदिव्यानितत्रराजन्व्यदर्शयन् ५८ धनंजयस्यगात्रेतुशूराःपरिघबाहवः ॥ हतभूयिष्ठयोधंतत्कृत्वात
वबलंबली ५९ आससाददुराधर्षःसैंधवंसत्यविक्रमः ॥ तंकर्णःसंयुगेराजन्प्रत्यवारयदाशुगैः ६० मिषतोभीमसेनस्यसात्वतस्यचभारत ॥ तंपार्थोदशभिर्बा
णैःप्रत्यविध्यद्रणाजिरे ६१ सूतपुत्रंमहाबाहुःसर्वसैन्यस्यपश्यतः ॥ सात्वतश्चात्रिभिर्बाणैःकर्णंविव्याधमारिष ६२ भीमसेनस्त्रिभिश्चैवपुनःपार्थश्चसप्तभिः ॥
तान्कर्णःप्रतिविव्याधषष्ट्याषष्ट्यामहारथः ६३ तद्युद्धमभवद्राजन्कर्णस्यबहुभिःसह ॥ तत्राद्भुतमपश्यामसूतपुत्रस्यमारिष ६४ यदेकःसमरेक्रुद्धस्त्रीन्रथा
न्पर्यवारयत ॥ फाल्गुनस्तुमहाबाहुःकर्णंवैकर्तनंरणे ६५ सायकानांशतेनैवसर्वमर्मस्वताडयत ॥ रुधिरोक्षितसर्वांगःसूतपुत्रःप्रतापवान् ६६ शरैःपंचाशता
वीरःफाल्गुनंप्रत्यविध्यत ॥ तस्यतल्लाघवंदृष्ट्वानामृष्यतरणेऽर्जुनः ६७ ततःपार्थोधनुश्छित्वाविव्याधैनंस्तनांतरे ॥ सायकैर्नवभिर्वीरस्त्वरमाणोधनंजयः
६८ अथान्यद्धनुरादायसूतपुत्रःप्रतापवान् ॥ सायकैरष्टसाहस्रैश्छादयामासपांडवम् ६९ तांबाणवृष्टिमतुलांकर्णचापसमुत्थिताम् ॥ व्यधमत्सायकैःपार्थः
शलभानिवमारुतः ७० छादयामासचतदासायकैरर्जुनोरणे ॥ पश्यतांसर्वयोधानांदर्शयन्पाणिलाघवम् ७१ वधार्थंचास्यसमरेसायकंसूर्यवर्चसम् ॥ चिक्षे
पत्वरयायुक्तस्त्वराकालेधनंजयः ७२ तमापतंतंवेगेनद्रौणिश्चिच्छेदसायकम् ॥ अर्धचंद्रेणतीक्ष्णेनसच्छिन्नःप्रापतद्भुवि ७३ कर्णोऽपिद्विषतांहंताछादया
मासफाल्गुनम् ॥ सायकैर्बहुसाहस्रैःकृतप्रतिकृतेप्सया ७४ तौवृषाविवनर्दंतौनरसिंहौमहारथौ ॥ सायकैस्तुप्रतिच्छन्नंचक्रतुःखमजिह्मगैः ७५ अदृश्यौचश
रौघैस्तौनिघ्नंतावितरेतरम् ॥ कर्णपार्थोऽस्मितिष्ठत्वंकर्णोऽहंतिष्ठफाल्गुन ७६

इत्येवंतर्जयंतौतौवाक्शल्यैस्तुदतांतदा ॥ युध्यतांसमरेवीरौचित्रंलघुचसुष्ठुच ७७ प्रेक्षणीयौचाभवतांसर्वयोधसमागमे ॥ प्रशस्यमानौसमरेसिद्धचारणपन्नगैः ७८ अयुध्येतांमहाराजपरस्परवधैषिणौ ॥ ततोदुर्योधनोराजंस्तावकानभ्यभाषत ७९ यत्नाद्रक्षतराधेयंनाहत्वासमरेऽर्जुनम् ॥ निवर्तिष्यतिराधेयइतिमामुक्तवान्नृपः ८० एतस्मिन्नंतरेराजन्दृष्ट्वाकर्णस्यविक्रमम् ॥ आकर्णमुक्तैरिषुभिःकर्णस्यचतुरोहयान् ८१ अनयत्प्रेतलोकायचतुर्भिःश्वेतवाहनः ॥ सारथिंचास्यभल्लेनरथनीडादपातयत् ८२ छादयामाससशरैस्तवपुत्रस्यपश्यतः ॥ संछाद्यमानःसमरेहताश्वोहतसारथिः ८३ मोहितःशरजालेनकर्तव्यंनाभ्यपद्यत ॥ तंतथाविरथंदृष्ट्वारथमारोप्यतंतदा ८४ अश्वत्थामामहाराजभूयोऽर्जुनमयोधयत् ॥ मद्रराजश्चकौंतेयमविध्यत्त्रिंशताशरैः ८५ शारद्वतस्तुविंशत्यावासुदेवंसमार्पयत् ॥ धनंजयंद्वादशभिराजघानशिलीमुखैः ८६ चतुर्भिःसिंधुराजश्चवृषसेनश्चसप्तभिः ॥ पृथक्पृथङ्महाराजविव्यधुःकृष्णपांडवौ ८७ तथैवतान्प्रत्यविध्यत्कुंतीपुत्रोधनंजयः ॥ द्रोणपुत्रंचतुःषष्ट्यामद्रराजंशतेनच ८८ सैंधवंदशभिर्बाणैर्वृषसेनंत्रिभिःशरैः ॥ शारद्वतंचविंशत्याविद्ध्वापार्थोननादह ८९ तेप्रतिज्ञाप्रतीघातमिच्छंतःसव्यसाचिनः ॥ सहितास्तावकास्तूर्णमभिपेतुर्धनंजयम् ९० अथार्जुनःसर्वतोवारुणास्त्रंप्रादुश्चक्रेत्रासयन्धार्तराष्ट्रान् ॥ तंप्रत्युदीयुःकुरवःपांडुपुत्रंरथैर्महार्हैःशरवर्षाण्यवर्षन् ९१ ततस्तुतस्मिंस्तुमुलेसमुत्थितेसुदारुणेभारतमोहनीये ॥ नोऽमुह्यत्प्राप्यसराजपुत्रःकिरीटमालीव्यसृजच्छरौघान् ९२ राज्यप्रेप्सुःसव्यसाचीकुरूणांस्मरन्क्लेशान्द्वादशवर्षवृत्तान् ॥ गांडीवमुक्तैरिषुभिर्महात्मासर्वादिशोव्यावृणोदप्रमेयः ९३ प्रदीप्तोल्कमभवच्चांतरिक्षंमृतेषुदेहेष्वपतन्वयांसि ॥ यत्पिंगलज्येनकिरीटमालीक्रुद्धोरिपूनाजगवेनहंति ९४ ततःकिरीटीमहतामहायशाःशरासनेनास्यशराननीकजित् ॥ हयप्रवेकोत्तमनागधूर्णितान्कुरुप्रवीरानिषुभिर्व्यपातयत् ९५ गदाश्चगुर्वीःपरिघानयस्मयानसींश्चशक्तीश्चरणेनराधिपाः ॥ महांतिशस्त्राणिचभीमदर्शनाःप्रगृह्यपार्थंसहसाऽभिदुद्रुवुः ९६ ततोयुगांताभ्रसमस्वनंमहन्महेंद्रचापप्रतिमंचगांडिवम् ॥ चकर्षदोर्भ्यांविहसन्भृशंययौदहंस्त्वदीयान्यमराष्ट्रवर्धनः ९७ सतानुदीर्णान्सरथान्सवारणान्पदातिसंघांश्चमहाधनुर्धरः ॥ विपन्नसर्वायुधजीवितान्रणेचकारवीरोयमराष्ट्रवर्धनान् ९८ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि संकुलयुद्धेपंचचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥ ॥ ॥ ७ ॥ ॥ ॥ संजयउवाच ॥ श्रुत्वानिनादंधनुषश्चतस्यविस्पष्टमुत्कुष्टमिवांतकस्य ॥ शक्राशनिस्फोटसमंसुघोरंविकृष्यमाणस्यधनंजयेन १ त्रासोद्विग्नंतथोद्भ्रांतंत्वदीयंतद्बलंनृप ॥ युगांतवातसंक्षुब्धंचलद्वीचितरंगितम् २



९५ । ९६ । ९७ । ९८ ॥ ॥ इतिद्रोणपर्वणिटीकायांपंचचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥ ॥ ७ ॥ ॥ श्रुत्वेति १ । २

३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५

प्रलीनमीनमकरंसागरांभइवाभवत् ॥ सरणेव्यचरत्पार्थःप्रेक्षमाणोधनंजयः ३ युगपद्दिक्षुसर्वासुसर्वाण्यस्त्राणिदर्शयन् ॥ आददानंमहाराजसंदधानंचपांडवम् ४
उत्कर्षतंसृजंतंचनस्मपश्यामलाघवात् ॥ ततःक्रुद्धोमहाबाहुरैंद्रमस्त्रंदुरासदम् ५ प्रादुश्चक्रेमहाराजत्रासयन्सर्वभारतान् ॥ ततःशराःप्रादुरासन्दिव्यास्त्रप्रतिमं
त्रिताः ६ प्रदीप्ताश्चाग्निखिमुखाःशतशोऽथसहस्रशः ॥ आकर्णपूर्णनिर्मुक्तैरभ्यर्कांशुनिभैःशरैः ७ नभोऽभवत्तदुष्प्रेक्ष्यमुल्काभिरिवसंवृतम् ॥ ततःशस्त्रांधका
रंतत्कौरवैःसमुदीरितम् ८ अशक्यंमनसाऽप्यन्यैःपांडवःसंभ्रमान्निव ॥ नाशयामासविक्रम्यशरैर्दिव्यास्त्रमंत्रितैः ९ नैशंतमोंशुभिःक्षिप्रंदिनादाविवभास्करः ॥
ततस्तुतावकंसैन्यंदीप्तैःशरगभस्तिभिः १० आक्षिपत्पल्वलांबूनिनिदाघार्कइवप्रभुः ॥ ततोदिव्यास्त्रविदुषाप्रहिताःसायकांशवः ११ समाप्लवन्द्विषत्सैन्यं
लोकंभानोरिवांशवः ॥ अथापरेसमुत्सृष्टाविशिखास्तिग्मतेजसः १२ हृदयान्याशुवीराणांविविशुःप्रियबंधुवत् ॥ यएनमीयुःसमरेत्वद्योधाःशूरमानिनः १३ श
लभाइववतेदीप्तमग्निंप्राप्ययुःक्षयम् ॥ एवंसमृद्नन्शत्रूणांजीवितानियशांसिच १४ पार्थश्चचारसंग्रामेमृत्युर्विग्रहवानिव ॥ सकिरीटानिवक्त्राणिसांगदान्विपुलान्
भुजान् १५ सकुंडलयुगान्कर्णान्केषांचिदहरच्छरैः ॥ सतोमरान्गजस्थानांसप्रासान्हयसादिनाम् १६ सचर्मणःपदातीनांरथिनांचसधन्वनः ॥ सप्रतोदान्नियं
तॄणांबाहूंश्चिच्छेदपांडवः १७ प्रदीप्तोग्रशरार्चिष्मान्बभौतत्रधनंजयः ॥ सविस्फुलिंगाग्रशिखोज्वलन्निवहुताशनः १८ तंदेवराजप्रतिमंसर्वशस्त्रभृतांवरम् ॥
युगपद्दिक्षुसर्वासुरथस्थंपुरुषर्षभम् १९ निक्षिपंतंमहास्त्राणिप्रेक्षणीयंधनंजयम् ॥ नृत्यंतंरथमार्गेषुधनुर्ज्यातलनादिनम् २० निरीक्षितुंनशेकुस्तेयत्नवंतोऽपि
पार्थिवाः ॥ मध्यंदिनगतंसूर्यंप्रतपंतमिवांबरे २१ दीप्तोग्रसंभृतशरःकिरीटीविरराजह ॥ वर्षास्विवोदीर्णजलःसेंद्रधन्वांबुदोमहान् २२ महास्त्रसंप्लवेतस्मिन्राजि
ष्णुनासंप्रवर्तिते ॥ सुदुस्तरेमहाघोरेममज्जुर्योधपुंगवाः २३ उत्कृत्तवदनैर्देहैःशरीरैःकृत्तबाहुभिः ॥ भुजैश्चपाणिनिर्मुक्तैःपाणिभिर्व्यंगुलीकृतैः २४ कृत्ताग्रह
स्तैःकरिभिःकृत्तदंतैर्मदोत्कटैः ॥ हयैश्चविधुरग्रीवैरथैश्चशकलीकृतैः २५ निकृत्तांत्रैःकृत्तपादैस्तथाऽन्यैःकृत्तसंधिभिः ॥ निश्चेष्टैर्विस्फुरद्भिश्चशतशोऽथसहस्र
शः २६ मृत्योराघातललितंतत्पार्थायोधनंमहत् ॥ अपश्याममहीपालभीरूणांभयवर्धनम् २७ आक्रीडमिवरुद्रस्यपुराऽभ्यर्दयतःपशून् ॥ गजानांक्षुर
निर्मुक्तैःकरैःसभुजगेवभूः २८ क्वचिद्बभौस्रग्विणीववक्त्रपद्मैःसमाचिता ॥ विचित्रोष्णीषमुकुटैःकेयूरांगदकुंडलैः २९ स्वर्णचित्रतनुत्रैश्चभांडैश्चगजवाजिनाम् ॥
किरीटशतसंकीर्णातत्रतत्रसमाचिता ३० विरराजभृशंचित्रामहीनववधूरिव ॥ मज्जामेदःकर्दमिनींशोणितौघतरंगिणीम् ३१ मर्मास्थिभिरगाधांचकेशशै
वलशाद्वलाम् ॥ शिरोबाहूपलतटांरुग्णक्रोडास्थिसंकटाम् ३२

२६ । २७ । २८ । २९ । ३० । ३१ ३२

चित्रध्वजपताकाढ्यांछत्रचापोर्मिमालिनीम् ॥ विगतासुमहाकायांगजदेहाभिसंकुलाम् ३३ रथोडुपशताकीर्णांहयसंघातरोधसम् ॥ रथचक्रयुगेषाक्षकूबरैरति
दुर्गमाम् ३४ प्रासासिशक्तिपरशुविशिखाहिदुरासदाम् ॥ बलकंकमहानक्रांगोमायुमकरोत्कटाम् ३५ गृध्रोदग्रमहाग्राहांशिवाविरुतभैरवाम् ॥ नृत्यत्प्रेतपिशा
चाद्यैर्भूताकीर्णांसहस्रशः ३६ गतासुयोधानिश्चेष्टशरीरशतवाहिनीम् ॥ महाप्रतिभयांरौद्रांघोरांवैतरणीमिव ३७ नदींप्रवर्तयामाससभीरूणांभयवर्धिनीम् ॥
तंदृष्ट्वातस्यविक्रांतमंतकस्येवरूपिणः ३८ अभूतपूर्वंकुरुषुभयमागाद्रणाजिरे ॥ ततआदायवीराणामस्त्रैरस्त्राणिपांडवः ३९ आत्मानंरौद्रमाचष्टरौद्रकर्मण्य
धिष्ठितः ॥ ततोरथवरान्राजन्नत्यतिक्रामदर्जुनः ४० मध्यंदिनगतंसूर्यंप्रतपंतमिवांबरे ॥ नशेकुःसर्वभूतानिपांडवंप्रतिवीक्षितुम् ४१ प्रसृतांस्तस्यगांडी
वाच्छरव्रातान्महात्मनः ॥ संग्रामेसंप्रपश्यामोहंसपंक्तिमिवांबरे ४२ विनिवार्यसवीराणामस्त्रैरस्त्राणिसर्वतः ॥ दर्शयन्रौद्रमात्मानमुग्रेकर्मणिधिष्ठितः ४३ सता
न्रथवरान्राजन्नत्याक्रामत्तदाऽर्जुनः ॥ मोहयन्निवनाराचैर्जयद्रथवधेप्सया ॥ विसृजन्दिक्षुसर्वासुशरानसितसारथिः ४४ सरथोऽचरत्तूर्णंप्रेक्षणीयोधनंजयः ॥
भ्रमंतइवशूरस्यशरव्राताम[ह]ात्मनः ४५ अदृश्यंतांतरिक्षस्थाःशतशोऽथसहस्रशः ॥ आददानंमहेष्वासंसंदधानंचसायकम् ४६ विसृजंतंचकौंतेयंनानुपश्या
मवैतदा ॥ तथासर्वादिशोराजन्सर्वांश्चरथिनोरणे ४७ कदंबीकृत्यकौंतेयोजयद्रथमुपाद्रवत् ॥ विव्याधचचतुःषष्ट्याशराणांनतपर्वणाम् ४८ सैंधवाभिमुखंयां
तंयोधाःसंप्रेक्ष्यपांडवम् ॥ न्यवर्तंतरणाद्वीरानिराशास्तस्यजीविते ४९ योयोऽभ्यधावदाक्रंदेतावकःपांडवंरणे ॥ तस्यतस्यांतगाबाणाःशरीरेन्यपतन्प्रभो
५० कबंधसंकुलंचक्रेतवसैन्यंमहारथः ॥ अर्जुनोजयतांश्रेष्ठःशरैरग्न्यंशुसंनिभैः ५१ एवंतत्तवराजेंद्रचतुरंगबलंतदा ॥ व्याकुलीकृत्यकौंतेयोजयद्रथमुपाद्र
वत् ५२ द्रौणिंपंचाशताऽविध्यद्वृषसेनंत्रिभिःशरैः ॥ कृपायमाणःकौंतेयःकृपंनवभिरार्दयत् ५३ शल्यंषोडशभिर्बाणैःकर्णंद्वात्रिंशताशरैः ॥ सैंधवंतुचतुःष
ष्ट्याविद्ध्वासिंहइवानदत् ५४ सैंधवस्तुतथाविद्धःशरैर्गांडीवधन्वना ॥ नचक्षमेसुसंक्रुद्धस्तोत्रार्दितइवद्विपः ५५ सवराहध्वजस्तूर्णंगार्ध्रपत्रानजिह्मगान् ॥
क्रुद्धाशीविषसंकाशान्कर्मारपरिमार्जितान् ५६ आकर्णपूर्णान्चिक्षेपफाल्गुनस्यरथंप्रति ॥ त्रिभिस्तुविद्ध्वागोविंदंनाराचैःषड्भिरर्जुनम् ५७ अष्टभिर्वाजिनोऽवि
ध्यद्ध्वजंचैकेनपत्रिणा ॥ सविक्षिप्यार्जुनस्तूर्णंसैंधवप्रहितान्शरान् ५८ युगपत्तस्यचिच्छेदशराभ्यांसैंधवस्यह ॥ सारथेश्चशिरःकायाद्ध्वजंचसमलंकृतम् ५९
सच्छिन्नयष्टिःसुमहान्धनंजयशराहतः ॥ वराहःसिंधुराजस्यपपाताग्निशिखोपमः ६० एतस्मिन्नेवकालेतुद्रुतंगच्छतिभास्करे ॥ अब्रवीत्पांडवंराजंस्त्वरमा
णोजनार्दनः ६१ एषमध्येकृतःषड्भिःपार्थवीरैर्महारथैः ॥ जीवितेप्सुर्महाबाहोभीतस्तिष्ठतिसैंधवः ६२

६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३

एतानानिर्जित्यरणेषड्रथान्पुरुषर्षभ ॥ नशक्यःसैंधवोहंतुंयतोनिर्व्याजमर्जुन ६३ योगमत्रविधास्यामिसूर्यस्यावरणंप्रति ॥ अस्तंगतइतिव्यक्तंद्रक्ष्यत्येकःस
सिंधुराट् ६४ हर्षेणजीविताकांक्षीविनाशार्थंतवप्रभो ॥ नगोप्स्यतिदुराचारःसआत्मानंकथंचन ६५ तत्रच्छिद्रेप्रहर्तव्यंत्वयाऽस्यकुरुसत्तम ॥ व्यपेक्षानैव
कर्तव्यागतोऽस्तमितिभास्करः ६६ एवमस्त्वितिबीभत्सुःकेशवंप्रत्यभाषत ॥ ततोऽसृजत्तमःकृष्णःसूर्यस्यावरणंप्रति ६७ योगीयोगेनसंयुक्तोयोगिनामी
श्वरोहरिः ॥ सृष्टेतमसिकृष्णेनगतोऽस्तमितिभास्करः ६८ त्वदीयाजहृषुर्योधाःपार्थनाशान्नराधिप ॥ तेप्रहृष्टारणेराजन्नापश्यन्सैनिकारविम् ६९ उन्नाम्य
वक्राणितदासचराजाजयद्रथः ॥ वीक्षमाणेततस्तस्मिन्सिंधुराजेदिवाकरम् ७० पुनरेवाब्रवीत्कृष्णोधनंजयमिदंवचः ॥ पश्यसिंधुपतिंवीरंप्रेक्षमाणंदिवा
करम् ७१ भयंहिविप्रमुच्यैतत्त्वत्तोभरतसत्तम ॥ अयंकालोमहाबाहोवधायास्यदुरात्मनः ७२ छिंधिमूर्धानमस्याशुकुरुसाफल्यमात्मनः ॥ इत्येवंकेशवेनोक्तः
पांडुपुत्रःप्रतापवान् ७३ न्यवधीत्तावकंसैन्यंशरैरर्काग्निसन्निभैः ॥ कृपंविव्याधविंशत्याकर्णंपंचाशताशरैः ७४ शल्यंदुर्योधनंचैवषड्भिःषड्भिरताडयत् ॥ वृषसे
नंतथाष्टाभिःषष्ट्यासैंधवमेवच ७५ तथैवचमहाबाहुस्त्वदीयान्पांडुनंदनः ॥ गाढंविद्धाशरैराजन्जयद्रथमुपाद्रवत् ७६ तंसमीपस्थितंदृष्ट्वालेलिहानमिवा
नलम् ॥ जयद्रथस्यगोप्तारःसंशयंपरमंगताः ७७ ततःसर्वेमहाराजतवयोधाजयैषिणः ॥ सिषिचुःशरधाराभिःपाकशासनिमाहवे ७८ संछाद्यमानःकौंतेयःश
रजालैरनेकशः ॥ अक्रुध्यत्समहाबाहुरजितःकुरुनंदनः ७९ ततःशरमयंजालंतुमुलंपाकशासनिः ॥ व्यसृजत्पुरुषव्याघ्रस्तवसैन्यजिघांसया ८० तेहन्यमाना
वीरेणयोधाराजन्रणेतव ॥ प्रजहुःसैंधवंभीताद्वौसमंनाप्यधावताम् ८१ तत्राद्भुतमपश्यामकुंतीपुत्रस्यविक्रमम् ॥ तादृङ्नभावीभूतोवायच्चकारमहायशाः
८२ द्विपान्द्विपगतांश्चैवहयान्हयगतानपि ॥ तथासरथिनश्चैवन्यहनद्रुद्रःपशूनिव ८३ नतत्रसमरेकश्चिन्मयादृष्टोनराधिप ॥ गजोवाजीनरोवाऽपियोनपा
र्थशराहतः ८४ रजसातमसाचैवयोधाःसंछन्नचक्षुषः ॥ कश्मलंप्राविशन्घोरंनान्वजानन्परस्परम् ८५ तेशरैर्भिन्नमर्माणःसैनिकाःपार्थचोदितैः ॥ बभ्रमुश्च
स्खलुःपेतुःसेदुर्मम्लुश्चभारत ८६ तस्मिन्महाभीषणकेप्रजानामिवसंक्षये ॥ रणेमहतिदुष्पारेवर्तमानेसुदारुणे ८७ शोणितस्यप्रसेकेनशीघ्रत्वादनिलस्यच ॥
अशाम्यत्तद्रजोभौममसृक्सिक्तेधरातले ८८ आनाभिनिरमज्जंश्चरथचक्राणिशोणिते ॥ मत्तावेगवताराजंस्तावकानांरणांगणे ८९ हस्तिनश्चहतारोहादारितां
गाःसहस्रशः ॥ स्वान्यनीकानिमृद्नंतआर्तनादाःप्रदुद्रुवुः ९० हयाश्चपतितारोहाःपत्तयश्चनराधिप ॥ प्रदुद्रुवुर्भयाद्राजन्धनंजयशराहताः ९१

८४ । ८५ । ८६ । ८७ । ८८ । ८९ । ९० । ९१

मुक्तकेशाविकवचाःक्षरंतःक्षतजंक्षतैः ॥ प्रापलायंतसंत्रस्तास्त्यक्त्वारणशिरोजनाः ९२ ऊरुग्राहगृहीताश्वकेचित्तत्राभवन्भुवि ॥ हतानांचापरेमध्येद्विरदानां
निलिल्यिरे ९३ एवंतवबलंराजन्द्रावयित्वाधनंजयः ॥ न्यवधीत्सायकैर्घोरैःसिंधुराजस्यरक्षिणः ९४ द्रौणिंकृपंकर्णशल्यौवृषसेनंसुयोधनम् ॥ छादयामास
तीव्रेणशरजालेनपांडवः ९५ नगृह्णन्नक्षिपन्राजन्मुंचन्नापिचसंदधत् ॥ अदृश्यतार्जुनःसंख्येशीघ्रास्त्रत्वात्कथंचन ९६ धनुर्मंडलमेवास्यदृश्यतेस्मास्यतःसदा ॥
सायकाश्चव्यदृश्यंतनिश्चरंतःसमंततः ९७ कर्णस्यतुधनुश्छित्वावृषसेनस्यचैवह ॥ शल्यस्यसूतंभल्लेनरथनीडादपातयत् ९८ गाढविद्धावुभौकृत्वाशरैःस्व
स्रीयमातुलौ ॥ अर्जुनोजयतांश्रेष्ठोद्रौणिशारद्वतौरणे ९९ एवंतान्व्याकुलीकृत्यत्वदीयानांमहारथान् ॥ उज्जहारशरंघोरंपांडवोऽनलसन्निभम् १०० इंद्राश
निसमप्रख्यंदिव्यमस्त्राभिमंत्रितम् ॥ सर्वभारसहंशश्वद्गंधमाल्यार्चितंमहत् १०१ वज्रेणास्त्रेणसंयोज्यविधिवत्कुरुनंदनः ॥ समादधन्महाबाहुर्गांडीवेक्षिप्रमर्जु
नः २ तस्मिन्संधीयमानेतुशरेज्वलनतेजसि ॥ अंतरिक्षेमहानादोभूतानामभवन्नृप ३ अब्रवीच्चपुनस्तत्रत्वरमाणोजनार्दनः ॥ धनंजयशिरश्छिंधिसैंधवस्य
दुरात्मनः ४ अस्तंमहीधरश्रेष्ठंयियासतिदिवाकरः ॥ शृणुष्वैतच्चवाक्यंमेजयद्रथवधंप्रति ५ वृद्धक्षत्रःसैंधवस्यपिताजगतिविश्रुतः ॥ सकालेनेहमहतासैंधवं
प्राप्तवान्सुतम् ६ जयद्रथममित्रघ्नंवागुवाचाशरीरिणी ॥ नृपमंतर्हितावाणीमेघदुंदुभिनिःस्वना ७ तवात्मजोमनुष्येंद्रकुलशीलदमादिभिः ॥ गुणैर्भविष्याति
विभोसदृशोवंशयोर्द्वयोः ८ क्षत्रियप्रवरोलोकेनित्यंशूराभिसत्कृतः ॥ किंत्वस्ययुध्यमानस्यसंग्रामेक्षत्रियर्षभः ९ शिरश्छेत्स्यतिसंक्रुद्धःशत्रुश्चालक्षितोभुवि ॥
एतच्छ्रुत्वासिंधुराजोध्यात्वाचिरमरिंदमः ११० ज्ञातीन्सर्वानुवाचेदंपुत्रस्नेहाभिचोदितः ॥ संग्रामेयुध्यमानस्यवहतोमहतींधुरम् ११ धरण्यांममपुत्रस्यपा
तयिष्यतियःशिरः ॥ तस्यापिशतधामूर्धाफलिष्यतिनसंशयः १२ एवमुक्त्वाततोराज्येस्थापयित्वाजयद्रथम् ॥ वृद्धक्षत्रोवनंयातस्तपश्चोग्रंसमास्थितः १३
सोऽयंतप्यतितेजस्वीतपोघोरंदुरासदम् ॥ समंतपंचकादस्माद्बहिर्वानरकेतन १४ तस्माज्जयद्रथस्यत्वंशिरश्छित्वामहामृधे ॥ दिव्येनास्त्रेणरिपुहन्घोरेणाद्भुत
कर्मणा १५ सकुंडलंसिंधुपतेःप्रभंजनसुतानुज ॥ उत्संगेपातयस्वास्यवृद्धक्षत्रस्यभारत १६ अथत्वमस्यमूर्धानंपातयिष्यासिभूतले ॥ तवापिशतधामूर्धा
फलिष्यतिनसंशयः १७ यथाचेदंनजानीयात्सराजातपसिस्थितः ॥ तथाकुरुकुरुश्रेष्ठादिव्यमस्त्रमुपाश्रितः १८ नह्यसाध्यमकार्यंवाविद्यतेतववाकिंचन ॥ सम
स्तेष्वपिलोकेषुत्रिषुवासवनंदन १९ एतच्छ्रुत्वातुवचनंसृक्किणीपरिसंलिहन् ॥ इंद्राशनिसमस्पर्शंदिव्यमंत्राभिमंत्रितम् १२० सर्वभारसहंशश्वद्गंधमाल्या
र्चितंशरम् ॥ विससर्जार्जुनस्तूर्णंसैंधवस्यवधेधृतम् १२१

१२२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । १४४ ॥ इतिद्रोणपर्वणिटीकायांषट्चत्वारिं

सतुगांडीवनिर्मुक्तःशरःश्येनइवाशुगः ॥ छित्त्वाशिरःसिंधुपतेरुत्पपातविहायसम् १२२ तच्छिरःसिंधुराजस्यशरैरूर्ध्वमवाहयत ॥ दुर्हृदामप्रहर्षायसुहृदांहर्ष
णायच २३ शरैःकदंबकीकृत्यकालेतास्मिंश्चपांडवः ॥ योधयामासतांश्चैवपांडवःषण्महारथान् २४ ततःसुमहदाश्चर्यंतत्रापश्यामभारत ॥ समंतपंचकाद्बाह्यं
शिरोयद्व्यहरत्ततः २५ एतस्मिन्नेवकालेतुवृद्धक्षत्रोमहीपतिः ॥ संध्यामुपास्तेतेजस्वीसंबंधीतवमारिष २६ उपासीनस्यतस्याथकृष्णकेशंसकुंडलम् ॥ सिं
धुराजस्यमूर्धानमुत्संगेसमपातयत २७ तस्योत्संगेनिपतितंशिरस्तच्चारुकुंडलम् ॥ वृद्धक्षत्रस्यनृपतेरलक्षितमरिंदम २८ कृतजप्यस्यतस्याथवृद्धक्षत्रस्य
भारत ॥ प्रोत्तिष्ठतस्तत्सहसाशिरोऽगच्छद्धरातलम् २९ ततस्तस्यनरेंद्रस्यपुत्रमूर्धनिभूतले ॥ गतेतस्यापिशतधामूर्धाऽगच्छदरिंदम १३० ततःसर्वा
णिसैन्यानिविस्मयंजग्मुरुत्तमम् ॥ वासुदेवंचबीभत्सुंप्रशशंसुर्महारथम् ३१ ततोविनिहतेराजन्सिंधुराजेकिरीटिना ॥ तमस्तद्वासुदेवेनसंहृतंभरतर्षभ ३२
पश्चाज्ज्ञातंमहीपालतवपुत्रैःसहानुगैः ॥ वासुदेवप्रयुक्तेयंमायेतिनृपसत्तम ३३ एवंसनिहतोराजन्पार्थेनामिततेजसा ॥ अक्षौहिणीरष्टहत्वाजामातातवसैंधवः
३४ हतंजयद्रथंदृष्ट्वातवपुत्रानराधिप ॥ दुःखादश्रूणिमुमुचुर्निराशाश्चाभवन्जये ३५ ततोजयद्रथेराजन्हतेपार्थेनकेशवः ॥ दध्मौशंखंमहाबाहुरर्जुनश्चपरंतपः
३६ भीमश्चवृष्णिसिंहश्चयुधामन्युश्चभारत ॥ उत्तमौजाश्चविक्रांतःशंखान्दध्मुःपृथक्पृथक् ३७ श्रुत्वामहांतंतंशब्दंधर्मराजोयुधिष्ठिरः ॥ सैंधवंनिहतंमेने
फाल्गुनेनमहात्मना ३८ ततोवादित्रघोषेणस्वान्योधान्पर्यहर्षयत ॥ अभ्यवर्ततसंग्रामेभारद्वाजंयुयुत्सया ३९ ततःप्रववृतेराजन्नस्तंगच्छतिभास्करे ॥ द्रो
णस्यसोमकैःसार्धंसंग्रामोलोमहर्षणः १४० तेतुसर्वेप्रयत्नेनभारद्वाजंजिघांसवः ॥ सैंधवेनिहतेराजन्नयुध्यंतमहारथाः ४१ पांडवास्तुजयंलब्ध्वासैंधवंविनिहत्य
च ॥ अयोधयंस्तुतेद्रोणंजयोन्मत्तास्ततस्ततः ४२ अर्जुनोऽपिततोयोधांस्तावकान्रथसत्तमान् ॥ अयोधयन्महाबाहुर्हत्वासैंधवकंनृपम् ४३ सदेवशत्रूनिवदेवरा
जःकिरीटमालीव्यधमत्समंतात् ॥ यथातमांस्यभ्युदितस्तमोघ्नःपूर्वप्रतिज्ञांसमवाप्यवीरः १४४ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि जयद्रथव
धेषट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥ ॥ ७ ॥ ॥ धृतराष्ट्रउवाच ॥ तस्मिन्विनिहतेवीरेसैंधवेसव्यसाचिना ॥ मामकायदकुर्वंततन्ममा
चक्ष्वसंजय १ ॥ संजयउवाच ॥ सैंधवंनिहतंदृष्ट्वारणेपार्थेनभारत ॥ अमर्षवशमापन्नःकृपःशारद्वतस्ततः २ महताशरवर्षेणपांडवंसमवाकिरत् ॥ द्रौणि
श्चाभ्यद्रवद्राजन्रथमास्थायफाल्गुनम् ३ तावेतौरथिनांश्रेष्ठौरथाभ्यांरथसत्तमौ ॥ उभावुभयतस्तीक्ष्णैर्विशिखैरभ्यवर्षताम् ४

शदधिकशततमोऽध्यायः ॥ १४६ ॥ ॥ ७ ॥ तस्मिन्विनिहतेवीरइत्यादेराजन्कर्मस्थितेनरे इत्यंतस्यग्रंथस्य पुरुषेणयत्नःकार्यःफलंतुदैवाधीनमितितात्पर्यार्थः १ । २ । ३ । ४

५ अजिघांसुर्हंतुमनिच्छन् आचार्यकंगुरोःसंमानम् ६ तमेवाह अस्त्रैरिति मंदवेगान्अस्यनाकृष्टचापत्वादल्पवेगान् ७ तेचापितेबाणास्तथापि ८ अवासीददवसन्नः ९ भर्तारंसारथेरेव १०

सतथाशरवर्षाभ्यांसुमहद्भ्यांमहाभुजः ॥ पीड्यमानःपरामार्तिमगमद्रथिनांवरः ५ सोऽजिघांसुर्गुरुंसंख्येगुरोस्तनयमेवच ॥ चकाराचार्यकंतत्रकुंतीपुत्रोधनं जयः ६ अस्त्रैरस्त्राणिसंवार्यद्रौणेःशारद्वतस्यच ॥ मंदवेगानिषूंस्ताभ्यामाजिघांसुरवासृजत् ७ तेचापिभृशमभ्यघ्नन्विशिखाःपार्थचोदिताः ॥ बहुत्वात्तुपरा मार्तिंशराणांतावगच्छताम् ८ अथशारद्वतोराजन्कौंतेयशरपीडितः ॥ अवासीदद्रथोपस्थेमूर्छामभिजगामह ९ विह्वलंतमभिज्ञायभर्तारंशरपीडितम् ॥ हतोऽयमितिचज्ञात्वासारथिस्तमपावहत् १० तस्मिन्भग्नेमहाराजकृपेशारद्वतेयुधि ॥ अश्वत्थामाऽप्यपायासीत्पांडवेयाद्रथांतरम् ११ दृष्ट्वाशारद्वतंपार्थो मूर्छितंशरपीडितम् ॥ रथएवमहेष्वासःसकृपंपर्यदेवयत् १२ अश्रुपूर्णमुखोदीनोवचनंचेदमब्रवीत् ॥ पश्यन्निदंमहाप्राज्ञःक्षत्ताराजानमुक्तवान् १३ कुलांत करणेपापेजातमात्रेसुयोधने ॥ नीयतांपरलोकायसाध्वयंकुलपांसनः १४ अस्माद्धिकुरुमुख्यानांमहदुत्पत्स्यतेभयम् ॥ तदिदंसमनुप्राप्तंवचनंसत्यवादिनः १५ तत्कृतेह्यद्यपश्यामिशरतल्पगतंगुरुम् ॥ धिगस्तुक्षात्रमाचारंधिगस्तुबलपौरुषम् १६ कोहिब्राह्मणमाचार्यमभिद्रुह्येतमादृशः ॥ ऋषिपुत्रोममाचार्यो द्रोणस्यपरमःसखा १७ एषशेतेरथोपस्थेकृपोमद्बाणपीडितः ॥ अकामयानेनमयाविशिखैरर्दितोभृशम् १८ अवसीदन्रथोपस्थेप्राणान्पीडयतीवमे ॥ पुत्रशो काभितप्तेनशरैरभ्यर्दितेनच १९ अभ्यस्तोबहुभिर्बाणैर्दशधर्मगतेनवै ॥ शोचयत्येषनियतंभूयःपुत्रवधाद्धिमाम् २० कृपणंस्वरथेसन्नंपश्यकृष्णयथागतम् ॥ उपाकृत्यतुवैविद्यामाचार्येभ्योनरर्षभाः २१ प्रयच्छंतीहयेकामान्देवत्वमुपयांतिते ॥ येचाविद्यामुपादायगुरुभ्यःपुरुषाधमाः २२ घ्नंतितानेवदुर्वृत्तास्तेवैनि रयगामिनः ॥ तदिदंनरकायाद्यकृतंकर्ममयाध्रुवम् २३ आचार्यंशरवर्षेणरथेसादयताकृपम् ॥ यत्तत्पूर्वमुपाकुर्वन्नस्त्रंमामब्रवीत्कृपः २४ नकथंचनकौरव्यप्र हर्तव्यंगुराविति ॥ तदिदंवचनंसाधोराचार्यस्यमहात्मनः २५ नानुष्ठितंतमेवाजौविशिखैरभिवर्षता ॥ नमस्तस्मैसुपूज्यायगौतमायापलायिने २६ धिग स्तुममवार्ष्णेययदस्मैप्रहराम्यहम् ॥ तथाविलपमानेतुसव्यसाचिनितंप्रति २७ सैंधवंनिहतंदृष्ट्वाराधेयःसमुपाद्रवत् ॥ तमापतंतंराधेयमर्जुनस्यरथंप्रति २८ पांचाल्यौसात्यकिश्चैवसहसासमुपाद्रवन् ॥ उपायांतंतुराधेयंदृष्ट्वापार्थोमहारथः २९ प्रहसन्देवकीपुत्रमिदंवचनमब्रवीत् ॥ एषप्रयात्याधिरथिःसात्यकेःस्यंद नंप्रति ३० नमृष्यतिहतंनूनंभूरिश्रवसमाहवे ॥ यत्रयात्येषतत्रत्वंचोदयाश्वान्जनार्दन ३१ नसौमदत्तिपदवींगमयेत्सात्यकिंवृषः ॥ एवमुक्तोमहाबाहुःकेशवः सव्यसाचिना ३२ प्रत्युवाचमहातेजाःकालयुक्तमिदंवचः ॥ अलमेषमहाबाहुःकर्णायैकोऽपिपांडव ३३

११ । १२ इदंकुलक्षयगुरुद्रोहादिकम् १३ । १४ । १५ शरतल्पगतंशरपंजरगतम् १६ । १७ । १८ । १९ अभ्यस्तोऽसकृन्निहतः दशधर्मगतेनदुरवस्थागतेन शोचयतिशोकंकारयाति एषद्रोणः भूयोऽधिकंपुत्रवधात् २० यथागतंयंप्रकारंप्राप्तं उपाकृत्यअधीत्य २१ । २२ । २३ उपाकुर्वन्आध्यापयन् २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ वृषः कर्णः ३२ । ३३

३४ वासवीशक्तिरितिशेषः ३५ यथाप्रयातितथाप्रयात्वितियोज्यं ज्ञास्यामिज्ञापयिष्यामि यत्रकाले ३६।३७।३८ वर्तयिष्यामि कथयिष्यामि ३९ पूर्वंपूर्वेद्युः ४०। ४१ कल्यंप्रातः ४२।४३।४४

किंपुनर्द्रौपदेयाभ्यांसहितःसात्वतर्षभः ॥ नचतावत्क्षमःपार्थतवकर्णेनसंगरः ३४ प्रज्वलंतीमहोल्केवतिष्ठत्यस्यहिवासवी ॥ त्वदर्थंपूज्यमानैषारक्ष्यतेपरवी रहन् ३५ अतःकर्णःप्रयात्वत्रसात्वतस्ययथातथा ॥ अहंज्ञास्यामिकौंतेयकालमस्यदुरात्मनः ॥ यत्रैनंविशिखैस्तीक्ष्णैःपातयिष्यसिभूतले ३६ ॥ धृतरा ष्ट्रउवाच ॥ योऽसौकर्णेनवीरस्यवार्ष्णेयस्यसमागमः ॥ हतेतुभूरिश्रवसिसैंधवेचनिपातिते ३७ सात्यकिश्चापिविरथःकंसमारूढवान्रथम् ॥ चक्ररक्षौचपांचाल्यौ तन्ममाचक्ष्वसंजय ३८ ॥ संजयउवाच ॥ हंततेवर्तयिष्यामियथावृत्तंमहारणे ॥ शुश्रूषस्वस्थिरोभूत्वादुराचरितमात्मनः ३९ पूर्वमेवहिकृष्णस्यमनोगतमि दंप्रभो ॥ विजेतव्योयथावीरःसात्यकिःसौमदत्तिना ४० अतीतानागतेराजन्सहिवेत्तिजनार्दनः ॥ ततःसूतंसमाहूयदारुकंसंदिदेशह ४१ रथोमेयुज्यतांक ल्यमितिराजन्महाबलः ॥ नहिदेवानगंधर्वानयक्षोरगराक्षसाः ४२ मानवावाऽपिजेतारःकृष्णयोःसंतिकेचन ॥ पितामहपुरोगाश्चदेवाःसिद्धाश्चतंविदुः ४३ तयोः प्रभावमतुलंशृणुयुद्धंतुतत्तथा ॥ सात्यकिंविरथंदृष्ट्वाकर्णंचाभ्युद्यतंरणे ४४ दध्मौशंखंमहानादमार्षभेणाथमाधवः ॥ दारुकोऽवेत्यसंदेशंश्रुत्वाशंखस्यचस्वनम् ४५ रथमन्वानयत्तस्मैसुपर्णोच्छ्रितकेतनम् ॥ सकेशवस्यानुमतेरथंदारुकसंयुतम् ४६ आरुरोहशिनेःपौत्रोज्वलनादित्यसन्निभम् ॥ कामगैःशैब्यसुग्रीवमे घपुष्पबलाहकैः ४७ हयोदग्रैर्महावेगैर्हेमभांडविभूषितैः ॥ युक्तंसमारुह्यचतंविमानप्रतिमंरथम् ४८ अभ्यद्रवतराधेयंप्रवपन्सायकान्बहून् ॥ चक्ररक्षावपित दायुधामन्यूत्तमौजसौ ४९ धनंजयरथंहित्वाराधेयंप्रत्युदीयतुः ॥ राधेयोपिमहाराजशरवर्षंसमुत्सृजन् ५० अभ्यद्रवत्सुसंक्रुद्धोरणेशैनेयमच्युतम् ॥ नैवदैवंनगां धर्वंनासुरंनचराक्षसम् ५१ तादृशंभुविनोयुद्धंदिविवाश्रुतमित्युत ॥ उपारमतत्सैन्यंसरथाश्वनरद्विपम् ५२ तयोर्दृष्ट्वामहाराजकर्मसंमूढचेतसः ॥ सर्वेंच समपश्यंततद्युद्धमतिमानुषम् ५३ तयोर्नृवरयोराजन्सारथ्यंदारुकस्यच ॥ गतप्रत्यागतावृत्तैर्मंडलैःसन्निवर्तनैः ५४ सारथेस्तुरथस्थस्यकाश्यपेयस्य विस्मिताः ॥ नभस्तलगताश्चैवदेवगंधर्वदानवाः ५५ अतीवावहितादृष्टुंकर्णशैनेययोरणम् ॥ मित्रार्थेतौपराक्रांतौशुष्मिणौस्पर्धिनौरणे ५६ कर्ण श्चामरसंकाशोयुयुधानश्चसात्यकिः ॥ अन्योन्यंतौमहाराजशरवर्षैरवर्षताम् ५७ प्रममाथशिनेःपौत्रंकर्णःसायकवृष्टिभिः ॥ अमृष्यमाणोनिधनंकौरव्यजलसं धयोः ५८ कर्णःशोकसमाविष्टोमहोरगइवश्वसन् ॥ सशैनेयंरणेक्रुद्धःप्रदहन्निवचक्षुषा ५९ अभ्यधावतवेगेनपुनःपुनररिंदम ॥ तंतुसक्रोधमालोक्यसात्यकिः प्रत्ययुद्धचत ६० महताशरवर्षेणगजंप्रतिगजोयथा ॥ तौसमेतौनरव्याघ्रौव्याघ्राविवतरस्विनौ ६१



आर्षभेणस्वार्थेतद्धितःऋषभस्वरेण ऋषभपुरोद्भवेनेतिमाश्चः ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ काश्यपेयस्यदारुकस्य ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१

अन्योन्यंसंततक्षातेरणेऽनुपमविक्रमौ ॥ ततःकर्णःशिनेःपौत्रंसर्वपारसवैःशरैः ६२ बिभेदसर्वगात्रेषुपुनःपुनरारिंदम ॥ सारथिंचास्यभल्लेनरथनीडादपातयत् ६३ अश्वांश्चचतुरःश्वेतान्निजघानशितैःशरैः ॥ छित्त्वाध्वजंरथंचैवशतधापुरुषर्षभ ६४ चकारविरथंकर्णस्तवपुत्रस्यपश्यतः ॥ ततोविमनसोराजंस्तावका स्तेमहारथाः ६५ वृषसेनःकर्णसुतःशल्योमद्राधिपस्तथा ॥ द्रोणपुत्रश्चशैनेयंसर्वतःपर्यवारयन् ६६ ततःपर्याकुलंसर्वंनप्राज्ञायतकिंचन ॥ तथासात्यकिना वीरेविरथेसूतजेकृते ६७ हाहाकारस्ततोराजन्सर्वसैन्येष्वभून्महान् ॥ कर्णोऽपिविरथोराजन्सात्वतेनकृतःशरैः ६८ दुर्योधनरथंतूर्णमारुरोहविनिःश्वसन् ॥ मा नयंस्तवपुत्रस्यबाल्यात्प्रभृतिसौहृदम् ६९ कृतांराज्यप्रदानेनप्रतिज्ञांपरिपालयन् ॥ तथातुविरथंकर्णंपुत्रांश्चतवपार्थिव ७० दुःशासनमुखान्वीरान्नावधीत्सा त्यकिर्वशी ॥ रक्षन्प्रतिज्ञांभीमेनपार्थेनचपुराकृताम् ७१ विरथान्विह्वलांश्चक्रेनतुप्राणैर्व्ययोजयत् ॥ भीमसेनेनतुवधःपुत्राणांतेप्रतिश्रुतः ७२ अनुद्यूतेच पार्थेनवधःकर्णस्यसंश्रुतः ॥ वधेत्वकुर्वन्यत्नंतेतस्यकर्णमुखास्तदा ७३ नाशक्नुवंस्ततोहंतुंसात्यकिंप्रवरारथाः ॥ द्रौणिश्चकृतवर्माचतथैवान्येमहारथाः ७४ निर्जिताधनुषैकेनशतशःक्षत्रियर्षभाः ॥ कांक्षतापरलोकंचधर्मराजस्यचप्रियम् ७५ कृष्णयोःसदृशोवीर्येसात्यकिःशत्रुतापनः ॥ जितवान्सर्वसैन्यानितावका निहसन्निव ७६ कृष्णोवापिभवेल्लोकेपार्थोवापिधनुर्धरः ॥ शैनेयोवानरव्याघ्रचतुर्थस्तुनविद्यते ७७ ॥ धृतराष्ट्रउवाच ॥ अजय्यंवासुदेवस्यरथमास्थाय सात्यकिः ॥ विरथंकृतवान्कर्णंवासुदेवसमोयुधि ७८ दारुकेणसमायुक्तःस्वबाहुबलदर्पितः ॥ कच्चिदन्यंसमारूढःसात्यकिःशत्रुतापनः ७९ एतदिच्छाम्यहं श्रोतुंकुशलोह्यसिभाषितुम् ॥ असह्यंतमहंमन्येतन्ममाचक्ष्वसंजय ८० ॥ संजयउवाच ॥ शृणुराजन्यथावृत्तंरथमन्यंमहामतिः ॥ दारुकस्यानुजस्तूर्णंकल्प नाविधिकल्पितम् ८१ आयसैःकांचनैश्चापिपट्टैःसन्नद्धकूबरम् ॥ तारासहस्रखचितंसिंहध्वजपताकिनम् ८२ अश्वैर्वातजवैर्युक्तंहेमभांडपरिच्छदैः ॥ सैंध वैरिंदुसंकाशैःसर्वशब्दातिगैर्दृढैः ८३ चित्रकांचनसन्नाहैर्वाजिमुख्यैर्विशांपते ॥ घंटाजालाकुलरवंशक्तितोमरविद्युतम् ८४ युक्तंसांग्रामिकैर्द्रव्यैर्बहुशस्त्रपरि च्छदैः ॥ रथंसंपादयामासमेघगंभीरनिःस्वनम् ८५ तंसमारुह्यशैनेयस्तवसैन्यमुपाद्रवत् ॥ दारुकोऽपियथाकामंप्रययौकेशवांतिकम् ८६ कर्णस्यापिरथंरा जन्शंखगोक्षीरपांडुरैः ॥ चित्रकांचनसन्नाहैःसदश्वैर्वेगवत्तरैः ८७ हेमकक्ष्याध्वजोपेतंक्लृप्तयंत्रपताकिनम् ॥ अग्र्यंरथंसुयंतारंबहुशस्त्रपरिच्छदम् ८८ उपाज ह्रुस्तमास्थायकर्णोऽप्यभ्यद्रवद्रिपून् ॥ एतत्तेसर्वमाख्यातंयन्मांत्वंपरिपृच्छसि ८९ भूयश्चापिनिबोधेमंतवापनयजंक्षयम् ॥ एकत्रिंशत्तवसुताभीम सेनेनपातिताः ९० दुर्मुखंप्रमुखेकृत्वाससततंचित्रयोधिनम् ॥ शतशोनिहताःशूराःसात्वतेनार्जुनेनच ९१

९२ ॥ इतिद्रोणपर्वणिटीकायांसप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥ ॥ छ ॥ तथेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३

भीष्मंप्रमुखतःकृत्वाभगदत्तंचभारत ॥ एवमेषक्षयोवृत्तोराजन्दुर्मंत्रितेतव ९२ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिकर्णसात्यकियुद्धेसप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥ ॥ धृतराष्ट्रउवाच ॥ तथागतेषुशूरेषुतेषांममचसंजय ॥ किंवैभीमस्तदाऽकार्षीतन्ममाचक्ष्वसंजय १ ॥ संजयउवाच ॥ विरथोभीमसेनोवैकर्णवाक्शल्यपीडितः ॥ अमर्षवशमापन्नःफाल्गुनंवाक्यमब्रवीत् २ पुनःपुनस्तूबरकमूढऔदरिकेतिच ॥ अकृतास्त्रकमायोत्सीर्बालसंग्रामकातर ३ इतिमामब्रवीत्कर्णःपश्यतस्तेधनंजय ॥ एवंवक्ताचमेवध्यस्तेनचोक्तोऽस्मिभारत ४ एतद्व्रतंमहाबाहोत्वयासहकृतंमया ॥ तथैतन्ममकौंतेययथातवनसंशयः ५ तद्वधायनरश्रेष्ठस्मरैतद्वचनंमम ॥ यथाभवतितत्सत्यंतथाकुरुधनंजय ६ तच्छ्रुत्वावचनंतस्यभीमस्यामितविक्रमः ॥ ततोऽर्जुनोऽब्रवीत्कर्णंकिंचिदभ्येत्यसंयुगे ७ कर्णकर्णवृथादृष्टेसूतपुत्रात्मसंस्तुत ॥ अधर्मबुद्धेशृणुमेयत्त्वांवक्ष्यामिसांप्रतम् ८ द्विविधंकर्मशूराणांयुद्धेजयपराजयौ ॥ तौचाप्यनित्यौराधेयवासवस्यापियुध्यतः ९ मुमूर्षुर्युयुधानेनविरथोविकलेंद्रियः ॥ मद्वध्यस्त्वमितिज्ञात्वाजित्वाजीवन्विसर्जितः १० यदृच्छयारणेभीमंयुध्यमानंमहाबलम् ॥ कथंचिद्विरथंकृत्वायत्त्वंरूक्षमभाषथाः ११ अधर्मस्त्वेषसुमहाननार्यचरितंचतत् ॥ नारिंजित्वाऽतिकत्थंतेनचजल्पंतिदुर्वचः १२ नचकंचननिंदंतिसंतःशूरानरर्षभाः ॥ त्वंतुप्राकृतविज्ञानस्तत्तद्वदसिसूतज १३ बह्वबद्धमकर्ण्यंचचापलादपरीक्षितम् ॥ युध्यमानंपराक्रांतंशूरमार्यव्रतेरतम् १४ यदवोचोऽप्रियंभीमंनैतत्सत्यंवचस्तव ॥ पश्यतांसर्वसैन्यानांकेशवस्यममैवच १५ विरथोभीमसेनेनकृतोऽसिबहुशोरणे ॥ नचत्वांपरुषंकिंचिदुक्तवान्पांडुनंदनः १६ यस्मात्तुबहुरूक्षंचश्रावितस्तेवृकोदरः ॥ परोक्षंयच्चसौभद्रोयुष्माभिर्निहतोमम १७ तस्मादस्यावलेपस्यसद्यःफलमवाप्नुहि ॥ त्वयातस्यधनुश्छिन्नमात्मनाशायदुर्मते १८ तस्माद्वध्योऽसिमेमूढसभृत्यसुतबांधवः ॥ कुरुत्वंसर्वकृत्यानिमहत्तेभयमागतम् १९ हंताऽस्मिवृषसेनंतेप्रेक्षमाणस्यसंयुगे ॥ येचान्येऽप्युपयास्यंतिबुद्धिमोहेनमांनृपाः २० तांश्चसर्वान्हनिष्यामिसत्येनायुधमालभे ॥ त्वांचमूढाकृतप्रज्ञमतिमानिनमाहवे २१ दृष्ट्वादुर्योधनोमंदोभृशंतप्स्यतिपातितम् ॥ अर्जुनेनप्रतिज्ञातेवधेकर्णसुतस्यतु २२ महान्सुतुमुलःशब्दोबभूवरथिनांतदा ॥ तस्मिन्नाकुलसंग्रामेवर्तमानेमहाभये २३ मंदरश्मिःसहस्रांशुरस्तंगिरिमुपाद्रवत् ॥ ततोराजन्हृषीकेशःसंग्रामशिरसिस्थितम् २४ तीर्णप्रतिज्ञंबीभत्सुंपरिष्वज्यैनमब्रवीत् ॥ दिष्ट्यासंपादिताजिष्णोप्रतिज्ञामहतीत्वया २५ दिष्ट्याविनिहतःपापोवृद्धक्षत्रःसहात्मजः ॥ धार्तराष्ट्रबलंप्राप्यदेवसेनाऽपिभारत २६

१४ । १५ । १६ । १७ । १८ । १९ वृषसेनंतेतवपुत्रमितिशेषः बुद्धिमोहेनबुद्धिविभ्रमेण २० । २१ । २२ । २३ । २४ । २५ । २६

सीदेतसमरेजिष्णोनात्रकार्याविचारणा ॥ नतंपश्यामिलोकेषुचिंतयन्पुरुषंक्वचित् २७ त्वहतेपुरुषव्याघ्रयएतद्योधयेद्बलम् ॥ महाप्रभावाबहवस्त्वयातुल्याधिकाऽपिवा २८ समेताःपृथिवीपालाधार्तराष्ट्रस्यकारणात् ॥ तेत्वांप्राप्यरणेक्रुद्धानाभ्यवर्ततदंशिताः २९ तववीर्यंबलंचैवरुद्रशक्रांतकोपमम् ॥ नेदृशंशक्यात्कश्चिद्रणेकर्तुंपराक्रमम् ३० यादृशंकृतवानद्यत्वमेकःशत्रुतापनः ॥ एवमेवहतेकर्णेसानुबंधेदुरात्मनि ३१ वर्धयिष्यामिभूयस्त्वांविजितारिंहतद्विषम् ॥ तमर्जुनःप्रत्युवाचप्रसादात्तवमाधव ३२ प्रतिज्ञेयंमयातीर्णाविबुधैरपिदुस्तरा ॥ अनाश्चर्योजयस्तेषांयेषांनाथोऽसिकेशव ३३ त्वत्प्रसादान्महींकृत्स्नांसंप्राप्स्यतियुधिष्ठिरः ॥ तवप्रभावोवार्ष्णेयतवैवविजयःप्रभो ३४ वर्धनीयास्तववयंसदैवमधुसूदन ॥ एवमुक्तस्ततःकृष्णःशनकैर्वाहयन्हयान् ॥ दर्शयामासपार्थायक्रूरमायोधनंमहत् ३५ ॥ श्रीकृष्णउवाच ॥ प्रार्थयंतोजयंयुद्धेप्रथितंचमहद्यशः ॥ पृथिव्यांशेरतेशूराःपार्थिवास्त्वच्छरैर्हताः ३६ विकीर्णशस्त्राभरणाविपन्नाश्वरथद्विपाः ॥ संछिन्नभिन्नमर्माणोवैक्लव्यंपरमंगताः ३७ ससत्वागतसत्वाश्चप्रभयापरयायुताः ॥ सजीवाइवलक्ष्यंतेगतसत्वानराधिपाः ३८ तेषांशरैःस्वर्णपुंखैःशस्त्रैश्चविविधैःशितैः ॥ वाहनैरायुधैश्चैवसंपूर्णांपश्यमेदिनीम् ३९ वर्मभिश्चर्मभिर्हारैःशिरोभिश्चसकुंडलैः ॥ उष्णीषैर्मुकुटैःस्रग्भिश्चूडामणिभिरंबरैः ४० कंठसूत्रैरंगदैश्चनिष्कैरपिचसप्रभैः ॥ अन्यैश्चाभरणैश्चित्रैर्भातिभारतमेदिनी ४१ अनुकर्षैरुपासंगैःपताकाभिर्ध्वजैस्तथा ॥ उपस्करैरधिष्ठानैरीषादंडकबंधुरैः ४२ चक्रैःप्रमथितैश्चित्रैरक्षैश्चबहुधारणे ॥ युगैर्योक्त्रैःकलापैश्चधनुर्भिःसायकैस्तथा ४३ परिस्तोमैःकुथाभिश्चपरिघैरंकुशैस्तथा ॥ शक्तिभिर्भिंदिपालैश्चतूणैःशूलैःपरश्वधैः ४४ प्रासैश्चतोमरैश्चैवकुंतैर्यष्टिभिरेवच ॥ शतघ्नीभिर्भुशुंडीभिःखड्गैःपरशुभिस्तथा ४५ मुसलैर्मुद्गरैश्चैवगदाभिःकुणपैस्तथा ॥ सुवर्णविकृताभिश्चकशाभिर्भरतर्षभ ४६ घंटाभिश्चगजेंद्राणांभांडैश्चविविधैरपि ॥ स्रग्भिश्चनानाभरणैर्वस्त्रैश्चैवमहाधनैः ४७ अपविद्धैर्बभौभूमिर्ग्रहैर्द्यौरिवशारदी ॥ पृथिव्यांपृथिवीहेतोःपृथिवीपतयोहताः ४८ पृथिवीमुपगुह्यांगैःसुप्ताःकांतामिवप्रियाम् ॥ इमांश्चगिरिकूटाभान्नागानैरावतोपमान् ४९ क्षरतःशोणितंभूरिशस्त्रच्छेददरीमुखैः ॥ दरीमुखैरिवगिरीन्गैरिकांबुपरिस्रवान् ५० तांश्चबाणहतान्वीरपश्यनिष्टनतःक्षितौ ॥ हयांश्चपतितान्पश्यस्वर्णभांडविभूषितान् ५१ गंधर्वनगराकारान्रथांश्चनिहतेश्वरान् ॥ छिन्नध्वजपताकाक्षान्विचक्रान्हतसारथीन् ५२ निकृत्तकूबरयुगान्भग्नेषान्बंधुरान्प्रभो ॥ पश्यपार्थहयान्भूमौविमानोपमदर्शनान् ५३ पत्तींश्चनिहतान्वीरशतशोऽथसहस्रशः ॥ धनुर्भृतश्चर्मभृतःशयानान्रुधिरोक्षितान् ५४ महीमालिंग्यसर्वांगैःपांसुध्वस्तशिरोरुहान् ॥ पश्ययोधान्महाबाहोत्वच्छरैर्भिन्नविग्रहान् ५५

५६ । ५७ । ५८ । ५९ ॥ इतिद्रोणपर्वणिटीकायामष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥ ततइति १ । २ । ३ । ४ । ५ । ६ । ७ गुप्तेनार्जुनेनेतिशेषः ८ । ९ । १० । ११ । १२
१३ । १४ । १५ । १६ एकार्णवमिति त्वत्प्रसादात्त्वदीक्षात्वशात्प्राप्तमभिव्यक्तनामरूपत्वमितिशेषः १७ । १८ । १९ । २० यत्परंमायातोऽपीतिशेषः अतएवपुराणंनित्यसिद्धं । पुरुषंसर्वा

निपातितद्विपरथवाजिसंकुलमसृग्वसापिशितसमृद्धकर्दमम् ॥ निशाचरश्ववृकपिशाचमोदनंमहीतलंनरवरपश्यदुर्दृशम् ५६ इदंमहत्त्वय्युपपद्यतेप्रभोरणाजिरेकर्मयशोभिवर्धनम् ॥ शतक्रतौचापिचदेवसत्तमेमहाहवेजघ्नुषिदैत्यदानवान् ५७ ॥ संजयउवाच ॥ एवंसंदर्शयन्कृष्णोरणभूमिंकिरीटिने ॥ स्वैःसमेतःसमुदितैःपांचजन्यंव्यनादयत् ५८ सदर्शयन्नेवकिरीटिनेऽरिहाजनार्दनस्तामरिभूमिमंजसा ॥ अजातशत्रुंसमुपेत्यपांडवंनिवेदयामासहतंजयद्रथम् ५९ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वण्यष्टचत्वारिंदशाधिकशततमोऽध्यायः ॥ १४८ ॥ छ ॥ संजयउवाच ॥ ततोराजानमभ्येत्यधर्मपुत्रंयुधिष्ठिरम् ॥ ववंदेसम्प्रहृष्टात्माहतेपार्थेनसैंधवे १ दिष्ट्यावर्धसिराजेंद्रहतशत्रुर्नरोत्तम ॥ दिष्ट्यानिस्तीर्णवांश्चैवप्रतिज्ञामनुजस्तव २ सत्वेवमुक्तःकृष्णेनहृष्टःपरपुरंजयः ॥ ततोयुधिष्ठिरोराजारथादाप्लुत्यभारत ३ पर्यष्वजत्तदाकृष्णावानंदाश्रुपरिप्लुतः ॥ प्रमृज्यवदनंशुभ्रंपुंडरीकसमप्रभम् ४ अब्रवीद्वासुदेवंचपांडवंचधनंजयम् ॥ प्रियमेतदुपश्रुत्यत्वत्तःपुष्करलोचन ५ नांतंगच्छामिहर्षस्यतितीर्षुरुदधेरिव ॥ अत्यद्भुतमिदंकृष्णकृतंपार्थेनधीमता ६ दिष्ट्यापश्यामिसंग्रामेतीर्णभारौमहारथौ ॥ दिष्ट्याविनिहतःपापःसैंधवःपुरुषाधमः ७ कृष्णदिष्ट्याममप्रीतिर्महतीप्रतिपादिता ॥ त्वयागुप्तेनगोविंदघ्नतापापंजयद्रथम् ७ किंतुनात्यद्भुतंतेषांयेषांनस्त्वंसमाश्रयः ॥ नतेषांदुष्कृतंकिंचित्त्रिषुलोकेषुविद्यते ९ सर्वलोकगुरुर्येषांत्वंनाथोमधुसूदन ॥ त्वत्प्रसादाद्धिगोविंदवयंजेष्यामहेरिपून् १० स्थितःसर्वात्मनानित्यंप्रियेषुचहितेषुच ॥ त्वांचैवास्माभिराश्रित्यकृतःशस्त्रसमुद्यमः ११ सुरैरिवासुरवधेशक्रंशक्रानुजाहवे ॥ असंभाव्यमिदंकर्मदेवैरपिजनार्दन १२ त्वद्बुद्धिबलवीर्येणकृतवानेषफाल्गुनः ॥ बाल्यात्प्रभृतितेकृष्णकर्माणिश्रुतवानहम् १३ अमानुषाणिदिव्यानिमहांतिचबहूनिच ॥ तदैवाज्ञासिषंशत्रून्हतान्प्राप्तांचमेदिनीम् १४ त्वत्प्रसादसमुत्थेनविक्रमेणारिसूदन ॥ सुरेशत्वंगतःशक्रोहत्वादैत्यान्सहस्रशः १५ त्वत्प्रसादाद्धृषीकेशजगत्स्थावरजंगमम् ॥ स्ववर्त्मनिस्थितंवीरजपहोमेषुवर्तते १६ एकार्णवमिदंपूर्वंसर्वमासीत्तमोमयम् ॥ त्वत्प्रसादान्महाबाहोजगत्प्राप्तंनरोत्तम १७ स्रष्टारंसर्वलोकानांपरमात्मानमव्ययम् ॥ येपश्यंतिहृषीकेशनतेमुह्यंतिकर्हिचित् १८ पुराणंपरमंदेवंदेवदेवंसनातनम् ॥ येप्रपन्नाःसुरगुरुंनतेमुह्यंतिकर्हिचित् १९ अनादिनिधनंदेवंलोककर्तारमव्ययम् ॥ येभक्तास्त्वांहृषीकेशदुर्गाण्यतितरंतिते २० परंपुराणंपुरुषंपराणांपरमंचयत् ॥ प्रपद्यतस्तत्परमंपराभूतिर्विधीयते २१ गायंतिचतुरोवेदायश्चवेदेषुगीयते ॥ तंप्रपद्यमहात्मानंभूतिमश्नाम्यनुत्तमाम् २२

सुपूर्षुशयानं । पराणांहिरण्यगर्भादीनामपिपरमं मायाबुद्धिस्ततोऽपिपरं बुद्धेरविषयमित्यर्थः । तत्परमंसर्वोत्कृष्टमात्मानं प्रपद्यतःप्रसन्नस्यपराभूतिर्महदैश्वर्यं 'एषाऽस्यपरमासंपत्' इतिश्रुतिप्रसिद्धं प्रत्यक्षतोविधीयतेस्वसंवेद्यंभवति २१ चतुरश्चत्वारः २२

परा उत्कृष्टा मा संपत् ब्रह्मलोकांतभोग्यमित्यर्थः तत्परं सर्वोत्कृष्टमास्मासचासावीशश्चेतिसमासः सकलभोग्यरूपोऽप्यच्युतस्वभावइत्यर्थः परेशोमायाशबलःसचासावीशश्चेतिशाबल्यंप्राप्तोऽप्यविकृतः एवंतिर्यक्नरत्वरूपजीवत्वंप्राप्तोऽप्यविकृतइतितिर्यगीशनरेश्वरपदयोरर्थः एतदेवाभ्यासेनद्रढयति सर्वेवियदादिजडमीश्वराभोक्तारोजीवाईश्वरेशोजीवानांनियंतातेषामीशोजगज्जीवेश्वराणामपिसत्तास्फूर्तिप्रदः । अतएवपुरुषोत्तमःविराडादिभ्यःशुद्धचिन्मात्रस्तुरीयइत्यर्थः २३ कंत्वमेवंविधंपुरुषोत्तमंनमस्करोषीत्याशंक्याह त्वमिति हेईशेश रुद्राद्याराध्य ईश्वरा

परमेशपरेशेशतिर्यगीशनरेश्वर ॥ सर्वेश्वरेश्वरेशेशनमस्तेपुरुषोत्तम २३ त्वमीशेशेश्वरेशानप्रभोवर्धस्वमाधव ॥ प्रभवाप्ययसर्वस्यसर्वात्मन्पृथुलोचन २४ धनंजयसखायश्चधनंजयहितश्चयः ॥ धनंजयस्यगोप्तातंप्रपद्यसुखमेधते २५ मार्कंडेयःपुराणर्षिश्चरितज्ञस्तवानघ ॥ माहात्म्यमनुभावंचपुराकीर्तितवान्मुनिः २६ असितोदेवलश्चैवनारदश्चमहातपाः ॥ पितामहश्चभेव्यासस्त्वामाहुर्विधिमुत्तमम् ॥ त्वंतेजस्त्वंपरंब्रह्मत्वंसत्यंत्वंमहत्तपः २७ त्वंश्रेयस्त्वंयशश्चाग्र्यंकारणंजगतस्तथा ॥ त्वयासृष्टमिदंसर्वंजगत्स्थावरजंगमम् २८ प्रलयेसमनुप्राप्तेत्वांवैनिविशतेपुनः ॥ अनादिनिधनंदेवंविश्वस्येशंजगत्पते २९ धातारमजमव्यक्तमाहुर्वेदविदोजनाः ॥ भूतात्मानंमहात्मानमनंतंविश्वतोमुखम् ३० अपिदेवानजानंतिगुह्यमाद्यंजगत्पतिम् ॥ नारायणंपरंदेवंपरमात्मानमीश्वरम् ३१ ज्ञानयोनिंहरिंविष्णुंमुमुक्षूणांपरायणम् ॥ परंपुराणंपुरुषंपुराणानांपरंचयत् ३२ एवमादिगुणानांतेकर्मणांदिविचेहच ॥ अतीतभूतभव्यानांसंख्याताऽत्रनविद्यते ३३ सर्वतोरक्षणीयाःस्मशक्रेणेवदिवौकसः ॥ यस्त्वंसर्वगुणोपेतःसुहृत्त्वउपपादितः ३४ इत्येवंधर्मराजेनहरिरुक्तोमहायशाः ॥ अनुरूपमिदंवाक्यंप्रत्युवाचजनार्दनः ३५ भवतातपसोग्रेणधर्मेणपरमेणच ॥ साधुत्वादार्जवाच्चैवहतःपापोजयद्रथः ३६ अयंचपुरुषव्याघ्रत्वदनुध्यानसंवृतः ॥ हत्वायोधसहस्राणिन्यहन्नजिष्णुर्जयद्रथम् ३७ कृतित्वेबाहुवीर्येचतथैवासंभ्रमेऽपिच ॥ शीघ्रतामोघबुद्धित्वेनास्तिपार्थसमःक्वचित् ३८ तदयंभरतश्रेष्ठभ्रातातेऽद्ययदर्जुनः ॥ सैन्यक्षयंरणेकृत्वासिंधुराजशिरोऽहरत् ३९ ततोधर्मसुतोजिष्णुंपरिष्वज्यविशांपते ॥ प्रमृज्यवदनंतस्यपर्याश्वासयतप्रभुः ४० अतीवसुमहत्कर्मकृतवानसिफाल्गुन ॥ असह्यंचाविषह्यंचदेवैरपिसवासवैः ४१ दिष्ट्यानिस्तीर्णभारोऽसिहतारिश्चासिशत्रुहन् ॥ दिष्ट्यासत्याप्रतिज्ञेयंकृताहत्वाजयद्रथम् ४२ एवमुक्त्वागुडाकेशंधर्मराजोमहायशाः ॥ पस्पर्शपुण्यगंधेनपृष्ठेहस्तेनपार्थिवः ४३ एवमुक्तौमहात्मानावुभौकेशवपांडवौ ॥ तावब्रूतांतदाकृष्णौराजानंपृथिवीपतिम् ४४ तवकोपाग्निनादग्धःपापोराजाजयद्रथः ॥ उत्तीर्णंचापिसुमहद्धार्तराष्ट्रबलंरणे ४५ हन्यंतेनिहताश्चैवविनंक्ष्यंतिचभारत ॥ तवक्रोधहताह्येतेकौरवाःशत्रुसूदन ४६ त्वांहिचक्षुर्हणंवीरंकोपयित्वासुयोधनः ॥ समित्रबंधुःसमरेप्राणांस्त्यक्ष्यतिदुर्मतिः ४७

राजानस्तेषामपीशानोधर्मः 'तदेतत्क्षत्रस्यक्षत्रंयद्धर्मः'इतिश्रुतेस्तस्यापिप्रभो'धर्मस्यप्रभुरच्युतः'इतिस्मृतेः सर्वस्यस्वातिरिक्तस्यप्रभवाप्ययउत्पत्तिप्रलयाधिष्ठानभूत अतएवसर्वात्मन् २४ सखावयस्यः हितःप्रियकृत् गोप्तादुःखनिवारकः २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ उत्तीर्णंलंघितम् ४५ । ४६ चक्षुर्हणंक्रोधदृष्टिमात्रेणहंतारम् ४७

४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ ॥ इतिद्रोणपर्वणिटीकायामेकोनपंचाशदधिकशततमोऽध्यायः ॥ १४९ ॥ ॥ ७ ॥

तवक्रोधहतःपूर्वंदेवैरपिसुदुर्जयः ॥ शरतल्पगतःशेतेभीष्मःकुरुपितामहः ४८ दुर्लभोविजयस्तेषांसंग्रामेरिपुघातिनाम् ॥ यातामृत्युवशंतेवैयेषांक्रुद्धोऽसिपांडव ४९ राज्यंप्राणाःश्रियःपुत्राःसौख्यानिविविधानिच ॥ अचिरात्तस्यनश्यंतियेषांक्रुद्धोऽसिमानद ५० विनष्टान्कौरवान्मन्येसपुत्रपशुबांधवान् ॥ राजधर्मपरेनित्यंत्वयिक्रुद्धेपरंतप ५१ ततोभीमोमहाबाहुःसात्यकिश्चमहारथः ॥ अभिवाद्यगुरुंज्येष्ठंमार्गणैःक्षतविक्षतौ ५२ क्षितावास्तांमहेष्वासौपांचाल्यपरिवारितौ ॥ तौदृष्ट्वामुदितोवीरौप्रांजलीचाग्रतःस्थितौ ५३ अभ्यनंदतकौंतेयस्तावुभौभीमसात्यकी ॥ दिष्ट्यापश्यामिवांशूरौविमुक्तौसैन्यसागरात् ५४ द्रोणग्राहदुराधर्षाद्धार्दिक्यमकरालयात् ॥ दिष्ट्याविनिर्जिताःसंख्येपृथिव्यांसर्वपार्थिवाः ५५ युवांविजयिनौचापिदिष्ट्यापश्यामिसंयुगे ॥ दिष्ट्याद्रोणोजितःसंख्येहार्दिक्यश्चमहाबलः ५६ दिष्ट्याविकर्णिभिःकर्णोरणेनीतःपराभवम् ॥ विमुखश्चकृतःशल्योयुवाभ्यांपुरुषर्षभौ ५७ दिष्ट्यायुवांकुशलिनौसंग्रामात्पुनरागतौ ॥ पश्यामिरथिनांश्रेष्ठावुभौयुद्धविशारदौ ५८ ममवाक्यकरौवीरौममगौरवयंत्रितौ ॥ सैन्यार्णवंसमुत्तीर्णौदिष्ट्यापश्यामिवामहम् ५९ समरश्लाघिनौवीरौसमरेष्वपराजितौ ॥ ममवाक्यसमौचैवदिष्ट्यापश्यामिवामहम् ६० इत्युक्त्वापांडवोराजन्युयुधानवृकोदरौ ॥ सस्वजेपुरुषव्याघ्रौहर्षाद्बाष्पंमुमोचह ६१ ततःप्रमुदितंसर्वंबलमासीद्विशांपते ॥ पांडवानांरणेहृष्टंयुद्धायतुमनोदधे ६२ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणियुधिष्ठिरहर्षेएकोनपंचाशदधिकशततमोऽध्यायः १४९ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥सैंधवेनिहतेराजन्पुत्रस्तवसुयोधनः ॥ अश्रुपूर्णमुखोदीनोनिरुत्साहोद्विषज्जये १ दुर्मनानिःश्वसन्दुष्टोभग्नदंष्ट्रइवोरगः ॥ आगस्कृत्सर्वलोकस्यपुत्रस्तेऽर्तिपरामगात् २ दृष्ट्वातत्कदनंघोरंस्वबलस्यकृतंमहत् ॥ जिष्णुनाभीमसेनेनसात्वतेनचसंयुगे ३ सविवर्णःकृशोदीनोबाष्पविप्लुतलोचनः ॥ अमन्यतार्जुनसमोनयोद्धाभुविविद्यते ४ नद्रोणोनचराधेयोनाश्वत्थामाकृपोनच ॥ क्रुद्धस्यसमरेस्थातुंपर्याप्ताइतिमारिष ५ निर्जित्यहिरणेपार्थःसर्वान्ममहारथान् ॥ अवधीत्सैंधवंसंख्येनचकश्चिदवारयत् ६ सर्वथाहतमेवेदंकौरवाणांमहद्बलम् ॥ नह्यस्यविद्यतेत्रातासाक्षादपिपुरंदरः ७ यमुपाश्रित्यसंग्रामेकृतःशस्त्रसमुद्यमः ॥ सकर्णोनिर्जितःसंख्येहतश्चैवजयद्रथः ८ यस्यवीर्यंसमाश्रित्यशमंयाचंतमच्युतम् ॥ तृणवत्तमहंमन्येसकर्णोनिर्जितोयुधि ९ एवंक्लांतमनाराजन्नुपायाद्द्रोणमीक्षितुम् ॥ आगस्कृत्सर्वलोकस्यपुत्रस्तेभरतर्षभ १० ततस्तत्सर्वमाचख्यौकुरूणांवैशसंमहत् ॥ परान्विजयतश्चापिधार्तराष्ट्रान्निमज्जतः ११ ॥ दुर्योधनउवाच ॥ पश्यमूर्धाभिषिक्तानामाचार्यकदनंमहत् ॥ कृत्वाप्रमुखतःशूरंभीष्मंममपितामहम् १२ तंनिहत्यप्रलुब्धोऽयंशिखंडीपूर्णमानसः ॥ पांचाल्यैःसहितःसर्वैःसेनाग्रमभिवर्तते १३

सैंधवेइति १ आर्तिमितिच्छेदः २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ प्रलुब्धःप्रकृष्टोलुब्धकस्तद्वद्धंचकत्वात् १३

१४ । १५ । १६ । १७ । १८ धर्मापचायिनोधर्मक्षेपकस्य १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ आचार्यःपांडु

अपरश्चापिदुर्धर्षःशिष्यस्तेसव्यसाचिना ॥ अक्षौहिणीःसप्तहत्वाहतोराजाजयद्रथः १४ अस्मद्विजयकामानांसुहृदामुपकारिणाम् ॥ गंताऽस्मिकथमानृण्यंग तानांयमसादनम् १५ येमदर्थंपरीप्संतेवसुधांवसुधाधिपाः ॥ तेहित्वावसुधैश्वर्यंवसुधामधिशेरते १६ सोऽहंकापुरुषःकृत्वामित्राणांक्षयमीदृशम् ॥ अश्वमेधस हस्रेणपावितुंनसमुत्सहे १७ ममलुब्धस्यपापस्यतथाधर्मापचायिनः ॥ व्यायामेनजिगीषंतःप्राप्तावैवस्वतक्षयम् १८ कथंपतितवृत्तस्यपृथिवीसुहृदांद्रुहः ॥ विवरंनाशकद्दातुंममपार्थिवसंसदि १९ योऽहंरुधिरसिक्तांगंराज्ञांमध्येपितामहम् ॥ शयानंनाशकंत्रातुंभीष्ममायोधनेहतम् २० तंमामनार्यपुरुषंमित्रद्रुहम धार्मिकम् ॥ किंवक्ष्यतिहिदुर्धर्षःसमेत्यपरलोकजित् २१ जलसंधंमहेष्वासंपश्यसात्यकिनाहतम् ॥ मदर्थमुद्यतंशूरंप्राणांस्त्यक्त्वामहारथम् २२ कांबोजंनि हतंदृष्ट्वातथाऽलंबुषमेवच ॥ अन्यान्बहूंश्चसुहृदोजीवितार्थोऽद्यकोमम २३ व्यायच्छंतोहताःशूरामदर्थेयेऽपराङ्मुखाः ॥ यतमानाःपरंशक्त्याविजेतुमहिता न्मम २४ तेषांगत्वाऽहमानृण्यमद्यशक्त्यापरंतप ॥ तर्पयिष्यामितानेवजलेनयमुनामनु २५ सत्यंतेप्रतिजानामिसर्वशस्त्रभृतांवर ॥ इष्टापूर्तेनचशपेवीर्ये णचसुतैरपि २६ निहत्यतान्रणेसर्वान्पंचालान्पांडवैःसह ॥ शांतिंलब्धास्मितेषांवारणेगंतासलोकताम् २७ सोऽहंतत्रगमिष्यामियत्रतेपुरुषर्षभाः ॥ हता मदर्थेसंग्रामेयुद्ध्यमानाःकिरीटिना २८ नहीदानींसहायामेपरीप्संत्यनुपस्कृताः ॥ श्रेयोहिपांडून्मन्यंतेनतथास्मान्महाभुज २९ स्वयंहिमृत्युर्विहितःसत्यसंधे नसंयुगे ॥ भवानुपेक्षांकुरुतेशिष्यत्वादर्जुनस्यहि ३० अतोविनिहताःसर्वेयेऽस्मज्जयचिकीर्षवः ॥ कर्णमेवतुपश्यामिसंप्रत्यस्मज्जयैषिणम् ३१ योहिमित्रम विज्ञाययाथातथ्येनमंदधीः ॥ मित्रार्थेयोजयत्येनंतस्यसोऽर्थोऽवसीदति ३२ तादृग्रूपंकृतमिदंममकार्यंसुहृत्तमैः ॥ मोहाल्लुब्धस्यपापस्यजिह्मस्यधनमीहतः ३३ हतोजयद्रथश्चैवसोमदत्तिश्चवीर्यवान् ॥ अभीषाहाःशूरसेनाःशिबयोऽथवसातयः ३४ सोऽहमद्यगमिष्यामियत्रतेपुरुषर्षभाः ॥ हतामदर्थेसंग्रामेयुद्ध्यमा नाःकिरीटिना ३५ नहिमेजीवितेनार्थस्तानृतेपुरुषर्षभान् ॥ आचार्यःपांडुपुत्राणामनुजानातुनोभवान् ३६ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्व णिदुर्योधनानुतापेपंचाशदधिकशततमोऽध्यायः ॥ १५० ॥ धृतराष्ट्रउवाच ॥ सिंधुराजेहतेतातसमरेसव्यसाचिना ॥ तथैवभूरिश्रवसिकिमासीद्वोमनस्तदा १ दुर्योधनेनचद्रोणस्तथोक्तःकुरुसंसदि ॥ किमुक्तवान्परंतस्मैतन्ममाचक्ष्वसंजय २ ॥ संजयउवाच ॥ निष्टानकोमहानासीत्सैन्यानांतवभारत ॥ सैंधवंनि हतंदृष्ट्वाभूरिश्रवसमेवच ३ मंत्रितंतवपुत्रस्यतेसर्वमवमेनिरे ॥ येनमंत्रेणनिहताःशतशःक्षत्रियर्षभाः ४

पुत्राणामित्युपालंभः ३६ ॥ इतिद्रोणपर्वणिटीकायांपंचाशदधिकशततमोऽध्यायः ॥ १५० ॥ ॥ ७ ॥ ॥ सिंधुराजइति १ । २ निष्टानकःसव्यथःशब्दः ३ । ४

५ । ६ । ७ इयंसेनानास्तीत्यस्यनष्टेत्यर्थः ८ । ९ ग्लहतेपातयति १० । ११ । १२ । १३ । १४ । १५ नोचेदिति । परलोकेऽधिकःपापिनांक्लेशइहत्वल्पेनैवभोगेननिस्तारइतिभावः १६

द्रोणस्तुतद्वचःश्रुत्वापुत्रस्यतवदुर्मनाः ॥ मुहूर्तमिवतद्ध्यात्वाभृशमार्तोऽभ्यभाषत ५ ॥ द्रोणउवाच ॥ दुर्योधनकिमेवंमांवाक्शरैरपिकृंतसि ॥ अजय्यंसततं
संख्येब्रुवाणंसव्यसाचिनम् ६ एतेनैवार्जुनंज्ञातुमलंकौरवसंयुगे ॥ यच्छिखंडयवधीद्भीष्मंपाल्यमानःकिरीटिना ७ अवध्यंनिहतंदृष्ट्वासंयुगेदेवदानवैः ॥ तदै
वाज्ञासिषमहंनेयमस्तीतिभारती ८ यंपुंसांत्रिषुलोकेषुसर्वशूरममंस्महि ॥ तस्मिन्निपतितेशूरेकिंशेषंपर्युपास्महे ९ यान्स्मतान्ग्लहतेतातशकुनिःकुरुसंसदि ॥
अक्षान्नतेऽक्षानिशिताबाणास्तेशत्रुतापनाः १० तएतेघ्नंतिनस्तातविशिखाःपार्थचोदिताः ॥ तांस्तदाऽऽख्यायमानस्त्वंविदुरेणनबुद्धवान् ११ यास्ताविं
जयतश्चापिविदुरस्यमहात्मनः ॥ धीरस्यवाचोनाश्रौषीःक्षेमायवदतःशिवाः १२ तदिदंवर्ततेघोरमागतंवैशसंमहत् ॥ तस्यावमानाद्वाक्यस्यदुर्योधनकृतेतव
१३ योऽवमन्यवचःपथ्यंसुहृदामाप्तकारिणाम् ॥ स्वमतंकुरुतेमूढःसशोच्योनचिरादिव १४ यच्चनःप्रेक्षमाणानांकृष्णामानाय्यतत्सभाम् ॥ अनर्हतींकुलेजातां
सर्वधर्मानुचारिणीम् १५ तस्याधर्मस्यगांधारेफलंप्राप्तमिदंमहत् ॥ नोचेत्पापंपरेलोकेत्वमर्च्छेथास्ततोऽधिकम् १६ यच्चतान्पांडवान्द्यूतेविषमेणविजित्यह ॥
प्राव्राजयस्तदाऽरण्येरौरवाजिनवाससः १७ पुत्राणामिवचैतेषांधर्ममाचरतांसदा ॥ द्रुह्येत्कोनुनरोलोकेमदन्योब्राह्मणब्रुवः १८ पांडवानामयंकोपस्त्वयाशकु
निनासह ॥ आहृतोधृतराष्ट्रस्यसंमतेकुरुसंसदि १९ दुःशासनेनसंयुक्तःकर्णेनपरिवर्धितः ॥ क्षत्तुर्वाक्यमनादृत्यत्वयाऽभ्यस्तःपुनःपुनः २० यत्ताःसर्वेपरा
भूताःपर्यवारयत्तार्जुनम् ॥ सिंधुराजानमाश्रित्यसवोमध्येकथंहतः २१ कथंत्वयिचकर्णेचकृपेशल्येचजीवति ॥ अश्वत्थाम्निचकौरव्यनिधनंसैंधवोऽगमत् २२
युध्यंतःसर्वराजानस्तेजस्तिग्ममुपासते ॥ सिंधुराजंपरित्रातुंसवोमध्येकथंहतः २३ मय्येवहिविशेषेणतथादुर्योधनत्वयि ॥ आशंसतपरित्राणमर्जुनात्समही
पतिः २४ ततस्तस्मिन्परित्राणमलब्धवतिफाल्गुनात् ॥ नकिंचिदनुपश्यामिजीवितस्थानमात्मनः २५ मज्जंतमिवचात्मानंधृष्टद्युम्नस्यकिल्बिषे ॥ पश्या
म्यहत्वापंचालान्सहतेनशिखंडिना २६ तन्मांकिमभितप्यंतंवाक्शरैरेवकृंतसि ॥ अशक्तःसिंधुराजस्यभूत्वात्राणायभारत २७ सौवर्णसत्यसंधस्यध्वजमक्लि
ष्टकर्मणः ॥ अपश्यन्युधिभीष्मस्यकथमाशंससेजयम् २८ मध्येमहारथानांचयत्राहन्यतसैंधवः ॥ हतोभूरिश्रवाश्चैवकिंशेषंतत्रमन्यसे २९ कृपएवचदुर्धर्षो
यदिजीवतिपार्थिव ॥ योनागात्सिंधुराजस्यवर्त्मतंपूजयाम्यहम् ३० यत्रापश्यंहतंभीष्मंपश्यतस्तेऽनुजस्यवै ॥ दुःशासनस्यकौरव्यकुर्वाणंकर्मदुष्करम् ॥
३१ अवध्यकल्पंसंग्रामेदेवैरपिसवासवैः ॥ नतेवसुंधरास्तीतितदाऽहंचिंतयेनृप ३२

१७ । १८ । १९ अभ्यस्तआवर्तितः २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२

३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ ॥ इतिद्रोणपर्वणिटीकायांएकपंचाशदधिकशततमोऽध्यायः ॥ १५१ ॥ ॥ ७ ॥ ॥ ततइति १ । २ । ३ । ४ । ५ । ६

इमानिपांडवानांचसृंजयानांचभारत ॥ अनीकान्याद्रवंतेमांसहितान्यद्यभारत ३३ नाहत्वासर्वपंचालान्कवचस्यविमोक्षणम् ॥ कर्ताऽस्मिसमरेकर्मधार्तराष्ट्र हितंतव ३४ राजन्ब्रूयाःसुतंमेत्वमश्वत्थामानमाहवे ॥ नसोमकाःप्रमोक्तव्याजीवितंपरिरक्षता ३५ यच्चपित्रानुशिष्टोऽसितद्वचःपरिपालय ॥ आनृशंस्ये दमेसत्येचार्जवेचस्थिराभव ३६ धर्मार्थकामकुशलोधर्मार्थावप्यपीडयन् ॥ धर्मप्रधानकार्याणिकुर्याश्चेतिपुनःपुनः ३७ चक्षुर्मनोभ्यांसंतोष्याविप्राःपूज्याश्च शक्तितः ॥ नचैषांविप्रियंकार्यंतेहिवन्हिशिखोपमाः ३८ एषत्वहमनीकानिप्रविशाम्यरिसूदन ॥ रणायमहतेराजंस्त्वयावाक्शरपीडितः ३९ त्वंचदुर्योधनब लंयदिशक्तोऽसिपालय ॥ रात्रावपिचयोत्स्यंतेसंरब्धाःकुरुसृंजयाः ४० एवमुक्त्वाततःप्रायाद्द्रोणःपांडवसृंजयान् ॥ मुष्णन्क्षत्रियतेजांसिनक्षत्राणामिवांशुमान् ४१ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिजयद्रथवधपर्वणिद्रोणवाक्येएकपंचाशदधिकशततमोऽध्यायः ॥ १५१ ॥ ७ ॥ संजयउवाच ॥ ततोदुर्योधनोराजाद्रो णेनैवंप्रचोदितः ॥ अमर्षवशमापन्नोयुद्धायैवमनोदधे १ अब्रवीच्चतदाकर्णंपुत्रोदुर्योधनस्तव ॥ पश्यकृष्णसहायेनपांडवेनकिरीटिना २ आचार्यविहितंव्यूहं भित्त्वादेवैःसुदुर्भिदम् ॥ तवव्यायच्छमानस्यद्रोणस्यचमहात्मनः ३ मिषतांयोधमुख्यानांसैंधवोविनिपातितः ॥ पश्यराधेयपृथ्वीशाःपृथिव्यांप्रवरायुधि ४ पार्थेनैकेननिहताःसिंहेनेवेतरेमृगाः ॥ ममव्यायच्छमानस्यद्रोणस्यचमहात्मनः ५ अल्पावशेषंसैन्यंमेकृतंशक्रात्मजेनह ॥ कथंनियच्छमानस्यद्रोणस्य युधिफाल्गुनः ६ भिंद्यात्सुदुर्भिदंव्यूहंयतमानोऽपिसंयुगे ॥ प्रतिज्ञायागतःपारंहत्वासैंधवमर्जुनः ७ पश्यराधेयपृथ्वीशान्पृथिव्यांपातितान्बहून् ॥ पार्थेन निहतान्संख्येमहेंद्रोपमविक्रमान् ८ अनिच्छतःकथंवीरद्रोणस्ययुधिपांडवः ॥ भिंद्यात्सुदुर्भिदंव्यूहंयतमानस्यशुष्मिणः ९ दयितःफाल्गुनोनित्यमाचार्य स्यमहात्मनः ॥ ततोऽस्यदत्तवान्द्वारमयुद्धेनैवशत्रुहन् १० अभयंसिंधुराजायदत्वाद्रोणःपरंतपः ॥ प्रादात्किरीटिनेद्वारंपश्यनिर्गुणतांमयि ११ यद्यदास्य दनुज्ञांवैपूर्वमेवगृहान्प्रति ॥ प्रस्थातुंसिंधुराजस्यनाभविष्यज्जनक्षयः १२ जयद्रथोजीवितार्थीगच्छमानोगृहान्प्रति ॥ मयाऽनार्येणसंरुद्धोद्रोणात्प्राप्याभयं सखे १३ अद्यमेभ्रातरःक्षीणाश्चित्रसेनादयोरणे ॥ भीमसेनंसमासाद्यपश्यतांनोदुरात्मनाम् १४ ॥ कर्णउवाच ॥ आचार्यंमाविगर्हस्वशक्त्याऽसौयुद्ध्यते द्विजः ॥ यथाबलंयथोत्साहंत्यक्त्वाजीवितमात्मनः १५ यद्येनंसमतिक्रम्यप्रविष्टःश्वेतवाहनः ॥ नात्रसूक्ष्मोऽपिदोषःस्यादाचार्यस्यकथंचन १६ कृतीदक्षोयु वाशूरःकृतास्त्रोलघुविक्रमः ॥ दिव्यास्त्रयुक्तमास्थायरथंवानरलक्षणम् १७ कृष्णेनचगृहीताश्वमभेद्यकवचावृतः ॥ गांडीवमजरंदिव्यंधनुरादायवीर्यवान् १८

७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८

१९ । २० । २१ । २२ अन्यथाभावःपराजयोदैवादिष्टःनतुद्रोणापराधजइतिभावः २३ । २४ । २५ दैवोपसृष्टोदुर्दैवग्रस्तः २६ । २७ । २८ । २९ दैवमविगणय्ययत्नमेवातिष्ठेत्याह युध्य
स्वेति सुदृढोद्यमाद्दैवमपिमार्गेणानुकूलेनयास्यतीत्यर्थः ३० तेषांजयहेतुःसुकृतंतवत्वपराजयहेतुर्दुष्कृतंनास्तीत्याह नतेषामिति ३१ दैवमिति अनन्यकर्मदैवमपिस्वकृतमेवनत्वन्यदस्ति । ह्रस्व

प्रवर्षन्निशितान्बाणान्बाहुद्रविणदर्पितः ॥ यदर्जुनोऽभ्ययाद्द्रोणमुपपन्नंहितस्यतत् १९ आचार्यःस्थविरोराजन्शीघ्रयानेतथाऽक्षमः ॥ बाहुव्यायामचेष्टाया
मशक्तस्तुनराधिप २० तेनैवमभ्यतिक्रांतःश्वेताश्वःकृष्णसारथिः ॥ तस्यदोषंनपश्यामिद्रोणस्यानेनहेतुना २१ अजय्यान्पांडवान्मन्येद्रोणेनास्त्रविदामृधे ॥
तथाह्येनमतिक्रम्यप्रविष्टःश्वेतवाहनः २२ दैवादिष्टोऽन्यथाभावोनमन्येविद्यतेक्वचित् ॥ यतोनोयुध्यमानानांपरंशक्त्यासुयोधन २३ सैंधवोनिहतोयुद्धेदैव
मत्रपरंस्मृतम् ॥ परंयत्नंकुर्वतांचत्वयासार्धंरणाजिरे २४ हत्वाऽस्माकंपौरुषंवैदैवंपश्चात्करोतिनः ॥ सततंचेष्टमानानांनिकृत्याविक्रमेणच २५ दैवोपसृष्टःपुरु
षोयत्कर्मकुरुतेक्वचित् ॥ कृतंकृतंहितत्कर्मदैवेनविनिपात्यते २६ यत्कर्तव्यंमनुष्येणव्यवसायवतासदा ॥ तत्कार्यमविशंकेनसिद्धिर्दैवेप्रतिष्ठिता २७ निकृ
त्यावंचिताःपार्थाविषयोगैश्चभारत ॥ दग्धाजतुगृहेचापिद्यूतेनचपराजिताः २८ राजनीतिंव्यपाश्रित्यप्रहिताश्चैववकाननम् ॥ यत्नेनचकृतंतत्तद्दैवेनविनिपा
तितम् २९ युध्यस्वयत्नमास्थायदैवंकृत्वानिरर्थकम् ॥ यततस्तवतेषांचदैवंमार्गेणयास्यति ३० नतेषांमतिपूर्वंहिसुकृतंदृश्यतेक्वचित् ॥ दुष्कृतंतववावीर
बुद्ध्याहीनंकुरूद्वह ३१ दैवंप्रमाणंसर्वस्यसुकृतस्येतरस्यवा ॥ अनन्यकर्मदैवंहिजागर्तिस्वपतामपि ३२ बहूनितवसैन्यानियोधाश्चबहवस्तव ॥ नतथापां
डुपुत्राणामेवंयुद्धमवर्तत ३३ तैरल्पैर्बहवोयूयंक्षयंनीताःप्रहारिणः ॥ शंकेदैवस्यतत्कर्मपौरुषंयेननाशितम् ३४ ॥ संजयउवाच ॥ एवंसंभाषमाणानांबहुतत्त
ज्जनाधिप ॥ पांडवानामनीकानिसमदृश्यंतसंयुगे ३५ ततःप्रववृतेयुद्धंव्यतिषक्तरथद्विपम् ॥ तावकानांपरैःसार्धंराजन्दुर्मंत्रितेतव ३६ ॥ इतिश्री
महाभारतेद्रोणपर्वणिजयद्रथवधपर्वणि पुनर्युद्धारंभेद्विपंचाशदधिकशततमोऽध्यायः ॥ १५२ ॥ ॥ समाप्तंचजयद्रथवधपर्व ॥ ॥ छ ॥
॥ अथघटोत्कचवधपर्व ॥ संजयउवाच ॥ तदुदीर्णगजानीकंबलंतवजनाधिप ॥ पांडुसेनामतिक्रम्ययोधयामाससर्वतः १ पंचालाःकुरवश्चैवयोधयंतः
परस्परम् ॥ यमराष्ट्रायमहतेपरलोकायदीक्षिताः २ शूराःशूरैःसमागम्यशरतोमरशक्तिभिः ॥ विव्यधुःसमरेऽन्योन्यंनिन्युश्चैवयमक्षयम् ३ रथिनांरथिभिः
सार्धंरुधिरस्रावदारुणम् ॥ प्रावर्ततमहद्युद्धंनिघ्नतामितरेतरम् ४ वारणाश्चमहाराजसमासाद्यपरस्परम् ॥ विषाणैर्दारयामासुःसुसंक्रुद्धामदोत्कटाः ५ हयारो
हान्हयारोहाःप्रासशक्तिपरश्वधैः ॥ बिभिदुस्तुमुलेयुद्धेप्रार्थयंतोमहद्यशः ६

नोदोषोऽद्यतनेनगुणविशेषेणनिराकर्तुंशक्यः ।
एवंदैवमतियत्नेनबाधितुंशक्यमित्यर्थः ३२ । ३३ देवानामिंद्रियाणामध्यक्षभूतंविज्ञानं दैवंधीबलमित्यर्थः पौरुषंशारीरंबलम् ३४ । ३५ । ३६ ॥ इतिद्रोणपर्वणिटीकायांद्विपंचाशद
धिकशततमोऽध्यायः ॥ १५२ ॥ ॥ छ ॥ तदुदीर्यमित्यारभ्यरात्रियुद्धंजयद्रथवधात्क्रोधहर्षवित्रशाःकौरवपांडवाइवान्येपिनिर्मर्यादंप्रवर्तंतेइतिप्रदर्शनार्थम् १ । २ । ३ । ४ । ५ । ६

७ गोत्रंपित्रादिनामशैनेयसात्यकेइत्यादि कुलंपांड्यपांचाल्येत्यादि ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ भ्रातरंदुर्योधनम् १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४

पत्तयश्चमहाबाहोशतशःशस्त्रपाणयः ॥ अन्योन्यमार्दयन्राजन्नित्यंयत्ताःपराक्रमे ७ गोत्राणांनामधेयानांकुलानांचैवमारिष ॥ श्रवणाद्धिविजानीमःपंचालान्कुरुभिःसह ८ तेऽन्योन्यंसमरेयोधाःशरशक्तिपरश्वधैः ॥ प्रेषयन्परलोकायाविचरंतोह्यभीतवत् ९ शरादशदिशोराजंस्तेषांमुक्ताःसहस्रशः ॥ नभ्राजंतेयथातत्त्वंभास्करेस्तंगतेऽपिच १० तथाप्रयुध्यमानेषुपांडवेयेषुभारत ॥ दुर्योधनोमहाराजव्यवागाहततद्बलम् ११ सैंधवस्यवधेनैवभृशंदुःखसमन्वितः ॥ मर्तव्यमितिसंचिंत्यप्राविशच्चद्विषद्बलम् १२ नादयन्रथघोषेणकंपयन्निवमेदिनीम् ॥ अभ्यवर्ततपुत्रस्तेपांडवानामनीकिनीम् १३ ससन्निपातस्तुमुलस्तस्यतेषांचभारत ॥ अभवत्सर्वसैन्यानामभावकरणोमहान् १४ यथामध्यंदिनेसूर्यंप्रतपंतंगभस्तिभिः ॥ तथातवसुतंमध्येप्रतपंतंशरार्चिभिः १५ नशेकुर्भ्रातरंयुद्धेपांडवाःसमुदीक्षितुम् ॥ पलायनकृतोत्साहानिरुत्साहाद्विषज्जये १६ पर्यधावंतपंचालावध्यमानामहात्मना ॥ रुक्मपुंखैःप्रसन्नाग्रैस्तवपुत्रेणधन्विना १७ अर्द्यमानाःशरैस्तूर्णंन्यपतन्पांडुसैनिकाः ॥ नतादृशंरणेकर्मकृतवंतस्तुतावकाः १८ यादृशंकृतवान्राजापुत्रस्तवविशांपते ॥ पुत्रेणतवसासेनापांडवीमथितारणे १९ नलिनीद्विरदेनेवसमंतात्फुल्लपंकजा ॥ क्षीणतोयाऽनिलार्काभ्यांहतत्विडिवपद्मिनी २० बभूवपांडवीसेनातवपुत्रस्यतेजसा ॥ पांडुसेनांहतांदृष्ट्वातवपुत्रेणभारत २१ भीमसेनपुरोगास्तुपंचालाःसमुपाद्रवन् ॥ सभीमसेनंदशभिर्माद्रीपुत्रौत्रिभिस्त्रिभिः २२ विराटद्रुपदौषड्भिःशतेनचशिखंडिनम् ॥ धृष्टद्युम्नंचसप्तत्याधर्मपुत्रंचसप्तभिः २३ केकयांश्चैवचेदींश्चबहुभिर्निशितैःशरैः ॥ सात्वतंपंचभिर्विद्ध्वाद्रौपदेयांस्त्रिभिस्त्रिभिः २४ घटोत्कचंचसमरेविद्ध्वासिंहइवानदत् ॥ शतशश्चापरान्योधान्सद्विपांश्चमहारणे २५ शरैरवचकर्तोग्रैःक्रुद्धोऽतकइवप्रजाः ॥ सातेनपांडवीसेनावध्यमानाशिलीमुखैः २६ तवपुत्रेणसंग्रामेविदुद्रावनराधिप ॥ तंतपंतमिवादित्यंकुरुराजंमहाहवे २७ नाशकन्वीक्षितुंराजन्पांडुपुत्रस्यसैनिकाः ॥ ततोयुधिष्ठिरोराजाकुपितोराजसत्तम २८ अभ्यधावत्कुरुपतिंतवपुत्रंजिघांसया ॥ तावुभौयुधिकौरव्यौसमीयतुररिंदमौ २९ स्वार्थहेतोःपराक्रांतौदुर्योधनयुधिष्ठिरौ ॥ ततोदुर्योधनःक्रुद्धःशरैःसन्नतपर्वभिः ३० विव्याधदशभिस्तूर्णंध्वजंचिच्छेदचेषुणा ॥ इंद्रसेनंत्रिभिश्चैवललाटेजघ्निवान्नृप ३१ सारथिंदयितंराज्ञःपांडवस्यमहात्मनः ॥ धनुश्चपुनरन्येनचकर्तास्यमहारथः ३२ चतुर्भिश्चतुरश्चैवबाणैर्विव्याधवाजिनः ॥ ततोयुधिष्ठिरःक्रुद्धोनिमेषादिवकार्मुकम् ३३ अन्यदादायवेगेनकौरवंप्रत्यवारयत् ॥ तस्यतान्निघ्नतःशत्रून्रुक्मपृष्ठंमहद्धनुः ३४ भल्लाभ्यांपांडवोज्येष्ठस्त्रिधाचिच्छेदमारिष ॥ विव्याधचैनंदशभिःसम्यगस्तैःशितैःशरैः ३५ मर्मभित्त्वातुतेसर्वेसंलग्नाःक्षितिमाविशन् ॥ ततःपरिवृतायोधाःपरिवव्रुर्युधिष्ठिरम् ३६ वृत्रहत्येयथादेवाःपरिवव्रुःपुरंदरम् ॥ ततोयुधिष्ठिरोराजातवपुत्रस्यमारिष ॥ शरंचसूर्यरश्म्याभमत्युग्रमनिवारणम् ३७

२५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ सम्यगस्तैर्दृढंप्रक्षिप्तैः ३५ । ३६ वृत्रहत्यैइतिवृत्रवधस्तुत्यै ३७

३८ । ३९ बाणशब्दरवः बाणशब्दसहितो रवः प्राणिशब्दः ४० । ४१ । ४२ रश्मिमुचः सूर्यः इगुपधलक्षणकप्रत्ययांतः शब्दः । बहुवचनमेवैतत्प्रलयसूचकमितिवा ४३ भूरिवर्धनो बहुच्छेदनः ४४

हाहतोऽसीतिराजानमुक्त्वाऽमुंचद्युधिष्ठिरः ॥ सतेनाकर्णमुक्तेनविद्धोबाणेनकौरवः ३८ निषसादरथोपस्थेभृशंसंमूढचेतनः ॥ ततःपांचाल्यसेनानांभृशमासीद्रवोमहान् ३९ हतोराजेतिराजेंद्रमुदितानांसमंततः ॥ बाणशब्दरवश्चोग्रःशुश्रुवेतत्रमारिष ४० अथद्रोणोद्रुतंतत्रप्रत्यदृश्यतसंयुगे ॥ हृष्टोदुर्योधनश्चापिदृढमादायकार्मुकम् ४१ तिष्ठतिष्ठेतिराजानंब्रुवन्पांडवमभ्ययात् ॥ प्रत्युद्ययुस्तंत्वरिताःपंचालाजयगृद्धिनः ४२ तान्द्रोणःप्रतिजग्राहपरीप्सन्कुरुसत्तमम् ॥ चंडवातोद्धुतान्मेघान्निघ्नन्रश्मिमुचोयथा ४३ ततोराजन्महानासीत्संग्रामोभूरिवर्धनः ॥ तावकानांपरेषांचसमेतानांयुयुत्सया ४४ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिघटोत्कचवधपर्वणिरात्रियुद्धेदुर्योधनपराभवेत्रिपंचाशदधिकशततमोऽध्यायः ॥ १५३ ॥ ॥ ७ ॥ ॥ धृतराष्ट्रउवाच ॥ यत्तदाप्राविशत्पांडूनाचार्यःकुपितोबली ॥ उक्त्वादुर्योधनंमंदंममशास्त्रातिगंसुतम् १ प्रविश्यविचरंतंचरथेशूरमवस्थितम् ॥ कथंद्रोणंमहेष्वासंपांडवाःपर्यवारयन् २ केरक्षन्दक्षिणंचक्रमाचार्यस्यमहाहवे ॥ केचोत्तरमरक्षंतनिघ्नतःशात्रवान्बहून् ३ केचास्यपृष्ठतोऽन्वासन्वीरावीरस्ययोधिनः ॥ केपुरस्तादवर्तंतरथिनस्तस्यशत्रवः ४ मन्येतानस्पृशच्छीतमतिवेलमनार्तवम् ॥ मन्येतेसमवेपंतगावोवैशिशिरेयथा ५ यत्प्राविशन्महेष्वासःपंचालानपराजितः ॥ नृत्यन्सरथमार्गेषुसर्वशस्त्रभृतांवरः ६ निर्दहन्सर्वसैन्यानिपंचालानांरथर्षभः ॥ धूमकेतुरिवक्रुद्धःकथंमृत्युमुपेयिवान् ७ ॥ संजयउवाच ॥ सायाह्नेसैंधवंहत्वाराज्ञापार्थःसमेत्यच ॥ सात्यकिश्चमहेष्वासोद्रोणमेवाभ्यधावताम् ८ तथायुधिष्ठिरस्तूर्णंभीमसेनश्चपांडवः ॥ पृथक्चमूभ्यांसंयत्तौद्रोणमेवाभ्यधावताम् ९ तत्रैवनकुलोधीमान्सहदेवश्चदुर्जयः ॥ धृष्टद्युम्नःसहानीकोविराटश्चसकेकयः १० मत्स्याःशाल्वाःससेनाश्चद्रोणमेवययुर्युधि ॥ द्रुपदश्चतथाराजापंचालैरभिरक्षितः ११ धृष्टद्युम्नपिताराजन्द्रोणमेवाभ्यवर्तत ॥ द्रौपदेयामहेष्वासाराक्षसश्चघटोत्कचः १२ ससैन्यास्तेन्यवर्तंतद्रोणमेवमहाद्युतिम् ॥ प्रभद्रकाश्चपंचालाःषट्सहस्राःप्रहारिणः १३ द्रोणमेवाभ्यवर्तंतपुरस्कृत्यशिखंडिनम् ॥ तथेतरेनरव्याघ्राःपांडवानांमहारथाः १४ सहिताःसंन्यवर्तंतद्रोणमेवद्विजर्षभम् ॥ तेषुशूरेषुयुद्धायगतेषुभरतर्षभ १५ बभूवरजनीघोराभीरूणांभयवर्धिनी ॥ योधानामशिवारौद्राराजन्नंतकगामिनी १६ कुंजराश्वमनुष्याणांप्राणांतकरणीतदा ॥ तस्यांरजन्यांघोरायांनदंत्यःसर्वतःशिवाः १७ न्यवेदयन्भयंघोरंसज्वालकवलैर्मुखैः ॥ उलूकाश्चाप्यदृश्यंतशंसंतोविपुलंभयम् १८ विशेषतःकौरवाणांध्वजिन्यामतिदारुणाः ॥ ततःसैन्येषुराजेंद्रशब्दःसमभवन्महान् १९ भेरीशब्देनमहतामृदंगानांस्वनेनच ॥ गजानांबृंहितैश्चापितुरंगाणांचहेषितैः २० ॥ इतिद्रोणपर्वणिटीकायांत्रिपंचाशदधिकशततमोऽध्यायः ॥ १५३ ॥ यत्तदेति । शास्त्रातिगं शास्त्रमाज्ञा १ । २ । ३ । ४ । ५ । ६ धूमकेतुरग्निः ७ । ८ । ९ । १० । ११।१२।१३।१४ संन्यवर्तंतसंमुखंनितरामवर्तंत १५।१६।१७।१८।१९।२०

२१ । २२ । २३ । २४ । २५ । २६ । २६ । २७ तमोऽभ्यगान्नाशमितिशेषः २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ ॥ इतिद्रोणपर्वणि



खुरशब्दनिपातैश्चतुमुलःसर्वतोऽभवत् ॥ ततःसमभवद्युद्धंसंध्यायामतिदारुणम् २१ द्रोणस्यचमहाराजसृंजयानांचसर्वशः ॥ तमसाचावृतेलोकेनप्राज्ञायतकिंचन २२ सैन्येनरजसाचैवसमंतादुत्थितेनह ॥ नरस्याश्वस्यनागस्यसमसज्जतशोणितम् २३ नापश्यामरजोभौमंकश्मलेनाभिसंवृताः ॥ रात्रौवंशवनस्येवदह्यमानस्यपर्वते २४ घोरश्चटचटाशब्दःशस्त्राणांपततामभूत् ॥ मृदंगानकनिर्ह्रादैर्झर्झरैःपटहैस्तथा २५ फेत्कारैर्हेषितैःशब्दैःसर्वमेवाकुलंबभौ ॥ नैवस्वेनपरेराजन्प्राज्ञायंततमोवृते २६ उन्मत्तमिवतत्सर्वंबभूवरजनीमुखे ॥ भौमंरजोऽथराजेंद्रशोणितेनप्रणाशितम् २७ शातकौंभैश्चकवचैर्भूषणैश्चतमोऽभ्यगात् ॥ ततःसाभारतीसेनामणिहेमविभूषिता २८ द्यौरिवासीत्सनक्षत्रारजन्यांभरतर्षभ ॥ गोमायुबलसंघुष्टाशक्तिध्वजसमाकुला २९ दारुणाभिरुताघोराक्ष्वेडितोत्कुष्टनादिता ॥ तत्राभवन्महाशब्दस्तुमुलोलोमहर्षणः ३० समावृण्वन्दिशःसर्वामहेंद्राशनिनिःस्वनः ॥ सानिशीथेमहाराजसेनाऽदृश्यतभारती ३१ अंगदैःकुंडलैर्निष्कैःशस्त्रैश्चैवावभासिता ॥ तत्रनागारथाश्चैवजांबूनदविभूषिताः ३२ निशायांप्रत्यदृश्यंतमेघाइवसविद्युतः ॥ ऋष्टिशक्तिगदाबाणमुसलप्रासपट्टिशाः ३३ संपतंतोव्यदृश्यंतभ्राजमानाइवाग्नयः ॥ दुर्योधनपुरोवातांरथनागबलाहकाम् ३४ वादित्रघोषस्तनितांचापविद्युद्ध्वजैर्वृताम् ॥ द्रोणपांडवपर्जन्यांखड्गशक्तिगदाशनिम् ३५ शरधारास्त्रपवनांभृशंशीतोष्णसंकुलाम् ॥ घोरांविस्मापनीमुग्रांजीवितच्छिदमप्लवाम् ३६ तांप्राविशन्नतिभयांसेनांयुद्धचिकीर्षवः ॥ तस्मिन्रात्रिमुखेघोरेमहाशब्दनिनादिते ३७ भीरूणांत्रासजननेशूराणांहर्षवर्धने ॥ रात्रियुद्धेमहाघोरेवर्तमानेसुदारुणे ३८ द्रोणमभ्यद्रवन्क्रुद्धाःसहिताःपांडुसृंजयाः ॥ येयेप्रमुखतोराजन्न्यवर्ततमहारथाः ३९ तान्सर्वान्विमुखांश्चक्रेकांश्चिन्निन्येयमक्षयम् ॥ तानिनागसहस्राणिरथानामयुतानिच ४० पदातिहयसंघानांप्रयुतान्यर्बुदानिच ॥ द्रोणेनैकेननाराचैर्निर्भिन्नानिनिशामुखे ४१ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिघटोत्कचवधपर्वणिरात्रियुद्धेचतुःपंचाशदधिकशततमोऽध्यायः ॥ १५४ ॥ ७ ॥ धृतराष्ट्रउवाच ॥ तस्मिन्प्रविष्टेदुर्धर्षेसृंजयानमितौजसि ॥ अमृष्यमाणेसंरब्धेकावोऽभूद्वैमतिस्तदा १ दुर्योधनंतथापुत्रमुक्त्वाशास्त्रातिगंमम ॥ यत्प्राविशदमेयात्माकिंपार्थःप्रत्यपद्यत २ निहतेसैंधवेवीरेभूरिश्रवसिचैवह ॥ यदाभ्यगान्महातेजाःपंचालानपराजितः ३ किममन्यतदुर्धर्षेप्रविष्टेशत्रुतापने ॥ दुर्योधनस्तुकिंकृत्यंप्राप्तकालममन्यत ४ केचतंवरदंवीरमन्वयुर्द्विजसत्तमम् ॥ केचास्यपृष्ठतोऽगच्छन्वीराःशूरस्ययुध्यतः ५ केपुरस्तादवर्ततनिघ्नंतःशात्रवान्रणे ॥ मन्येहंपांडवान्सर्वान्भारद्वाजशरार्दितान् ६ शिशिरेकंपमानान्वैकृशागावइवप्रभो ॥ प्रविश्यसमहेष्वासःपंचालानरिमर्दनः ॥ कथंनुपुरुषव्याघ्रःपंचत्वमुपजग्मिवान् ७

टीकायांचतुःपंचाशदधिकशततमोऽध्यायः ॥ १५४ ॥ ७ ॥ तस्मिन्निति १ । २ । ३ । ४ । ५ । ६ गावःगाः ७

८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९

सर्वेषुयोधेषुचसंगतेषुरात्रौसमेतेषुमहारथेषु ॥ संलोड्यमानेषुपृथग्बलेषुकेवस्तदानींमतिमंतआसन् ८ हतांश्चैवविषक्तांश्चपराभूतांश्चशंससि ॥ रथिनोविरथां
श्चैवकृतान्युद्धेषुमामकान् ९ तेषांसंलोड्यमानानांपांडवैर्हतचेतसाम् ॥ अंधेतमसिमग्नानामभवत्कामतिस्तदा १० प्रहृष्टांश्चाप्युदग्रांश्चसंतुष्टांश्चैवपांडवान् ॥
शंससीहाप्रहृष्टांश्चविभ्रष्टांश्चैवमामकान् ११ कथमेषांतदातत्रपार्थानामपलायिनाम् ॥ प्रकाशमभवद्रात्रौकथंकुरुषुसंजय १२ ॥ संजयउवाच ॥ रात्रियुद्धेत
दाराजन्वर्तमानेसुदारुणे ॥ द्रोणमभ्यद्रवन्सर्वेपांडवाःसहसोमकैः १३ ततोद्रोणःकेकयांश्चधृष्टद्युम्नस्यचात्मजान् ॥ संप्रैषयत्प्रेतलोकंसर्वानिषुभिराशुगैः १४
तस्यप्रमुखतोराजन्येऽवर्तंतमहारथाः ॥ तान्सर्वान्प्रेषयामासपितृलोकंसभारत १५ प्रमथ्नंतंतदावीरान्भारद्वाजंमहारथम् ॥ अभ्यवर्ततसंक्रुद्धःशिबीराजाप्रता
पवान् १६ तमापतंतंसंप्रेक्ष्यपांडवानांमहारथम् ॥ विव्याधदशभिर्बाणैःसर्वपारसवैःशितैः १७ तंशिबिःप्रतिविव्याधत्रिंशतानिशितैःशरैः ॥ सारथिंचास्यभ
ल्लेनस्मयमानोन्यपातयत् १८ तस्यद्रोणोहयान्हत्वासारथिंचमहात्मनः ॥ अथास्यसाशिरस्त्राणंशिरःकायादपाहरत् १९ ततोऽस्यसारथिंक्षिप्रमन्यंदुर्योधनो
ऽदिशत् ॥ सतेनसंगृहीताश्वःपुनरभ्यद्रवद्रिपून् २० कलिंगानामनीकेनकालिंगस्यसुतोरणे ॥ पूर्वंपितृवधात्क्रुद्धोभीमसेनमुपाद्रवत् २१ सभीमंपंचभिर्विद्ध्वा
पुनर्विव्याधसप्तभिः ॥ विशोकंत्रिभिराजघ्ने ध्वजमेकेनपत्रिणा २२ कलिंगानांतुतंशूरंक्रुद्धंक्रुद्धोवृकोदरः ॥ रथाद्रथमभिद्रुत्यमुष्टिनाभिजघानह २३ तस्यमु
ष्टिहतस्याजौपांडवेनबलीयसा ॥ सर्वाण्यस्थीनिसहसाप्रापतन्वैपृथक्पृथक् २४ तंकर्णोभ्रातरश्चास्यनामृष्यंतपरंतप ॥ तेभीमसेनंनाराचैर्जघ्नुराशीविषो
पमैः २५ ततःशत्रुरथंत्यक्त्वाभीमोध्रुवरथंगतः ॥ ध्रुवंचास्यंतमनिशंमुष्टिनासमपोथयत् २६ सतथापांडुपुत्रेणबलिनाऽभिहतोऽपतत् ॥ तंनिहत्यमहाराजभी
मसेनोमहाबलः २७ जयरातरथंप्राप्यमुहुःसिंहइवानदत् ॥ जयरातमथाक्षिप्यनदन्सव्येनपाणिना २८ तलेननाशयामासकर्णस्यैवाग्रतःस्थितः ॥ कर्णस्तु
पांडवेशक्तिंकांचनींसमवासृजत् २९ ततस्तामेवजग्राहप्रहसन्पांडुनंदनः ॥ कर्णायैवचदुर्धर्षंश्चिक्षेपाजौवृकोदरः ३० तामापतंतींचिच्छेदशकुनिस्तैलपायि
ना ॥ एतत्कृत्वामहत्कर्मरणेऽद्भुतपराक्रमः ३१ पुनःस्वरथमास्थायदुद्रावतववाहिनीम् ॥ तमायांतंजिघांसंतंभीमंक्रुद्धमिवांतकम् ३२ न्यवारयन्महाबाहुंतवपु
त्राविशांपते ॥ महताशरवर्षेणच्छादयंतोमहारथाः ३३ दुर्मदस्तुततोभीमःप्रहसन्निवसंयुगे ॥ सारथिंचहयांश्चैवशरैर्निन्येयमक्षयम् ३४ दुर्मदस्तुततोयानं
दुष्कर्णस्यावचक्रमे ॥ तावेकरथमारूढौभ्रातरौपरतापनौ ३५ संग्राममशिरसोमध्येभीमंद्वावप्यधावताम् ॥ यथांबुपतिमित्रौहितारकंदैत्यसत्तमम् ३६ ततस्तु
दुर्मदश्चैवदुष्कर्णश्चतवात्मजौ ॥ रथमेकंसमारुह्यभीमंबाणैरविध्यताम् ३७

३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७

३८ । ३९ । ४० । ४१ । ४२ कमलविबुद्धलोचनोविलसत्पद्मनेत्रः ४३ । ४४ गुरुणाद्रोणेन ४५ तिमिराण्येवघनास्तैः ४६ ॥इतिद्रोणपर्वणिटीकायांपंचपंचाशदधिकशततमोऽध्यायः ॥ १५५ ॥

ततःकर्णस्यमिषतोद्रोणेर्दुर्योधनस्यच ॥ कृपस्यसोमदत्तस्यबाल्हीकस्यचपांडवः ३८ दुर्मदस्यचवीरस्यदुष्कर्णस्यचतंरथम् ॥ पादप्रहारेणधरांप्रावेशयदरिं दमः ३९ ततःसुतौतेबलिनौशूरौदुष्कर्णदुर्मदौ ॥ मुष्टिनाऽऽहत्यसंक्रुद्धोममर्दचननर्दच ४० ततोहाहाकृतेसैन्येदृष्ट्वाभीमंनृपाब्रुवन् ॥ रुद्रोऽयंभीमरूपेणधार्त राष्ट्रेषुयुध्यति ४१ एवमुक्त्वापलायंतेसर्वेभारतपार्थिवाः ॥ विसंज्ञावाहयन्वाहान्नचद्वौसहधावतः ४२ ततोबलेभृशलुलितेनिशामुखेसुपूजितोनृपवृषभैर्वृको दरः ॥ महाबलःकमलविबुद्धलोचनोयुधिष्ठिरंनृपतिमपूजयद्बली ४३ ततोयमौद्रुपदविराटकेकयायुधिष्ठिरश्चापिपरांमुदंययुः ॥ वृकोदरंभृशमनुपूजयंश्चतेय थांऽधकेप्रतिनिहतेहरंसुराः ४४ ततःसुतास्तेवरुणात्मजोपमारुषान्विताःसहगुरुणामहात्मना ॥ वृकोदरंसरथपदातिकुंजरायुयुत्सवोभृशमभिपर्यवारयन् ४५ ततोऽभवत्तिमिरघनैरिवावृतेमहाभयेभयदमतीवदारुणम् ॥ निशामुखेवृकबलगृध्रमोदनंमहात्मनांनृपवरयुद्धमद्भुतम् ४६ ॥ ॥ इतिश्रीमहाभा रतेद्रोणपर्वणिघटोत्कचवधपर्वणिरात्रियुद्धेभीमपराक्रमेपंचपंचाशदधिकशततमोऽध्यायः ॥ १५५ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ प्रायोपविष्टेतुहते पुत्रेसात्यकिनातदा ॥ सोमदत्तोभृशंक्रुद्धःसात्यकिंवाक्यमब्रवीत् १ क्षत्रधर्मःपुरादृष्टोयस्तुदेवैर्महात्मभिः ॥ तंत्वंसात्वतसंत्यज्यदस्युधर्मेकथंरतः २ पराङ्मु खायदीनायन्यस्तशस्त्रायसात्यके ॥ क्षत्रधर्मरतःप्राज्ञःकथंनुप्रहरेद्रणे ३ द्वावेवकिलवृष्णीनांतत्रख्यातौमहारथौ ॥ प्रद्युम्नश्चमहाबाहुस्त्वंचैवयुधिसात्वत ४ कथंप्रायोपविष्टायपार्थेनच्छिन्नबाहवे ॥ नृशंसंपतनीयंचतादृशंकृतवानसि ५ कर्मणस्तस्यदुर्वृत्तफलंप्राप्नुहिसंयुगे ॥ अद्यछेत्स्यामितेमूढशिरोविक्रम्यपत्रि णा ६ शपेसात्वतपुत्राभ्यामिष्टेनसुकृतेनच ॥ अनतीतामिमांरात्रिंयदित्वांवीरमानिनम् ७ अरक्ष्यमाणंपार्थेनजिष्णुनाससुतानुजम् ॥ नहन्यान्नरकेघोरे पतेयंवृष्णिपांसन ८ एवमुक्त्वासुसंक्रुद्धःसोमदत्तोमहाबलः ॥ दध्मौशंखंचतारेणसिंहनादंननादच ९ ततःकमलपत्राक्षःसिंहदंष्ट्रोदुरासदः ॥ सात्यकिर्भृशसं क्रुद्धःसोमदत्तमथाब्रवीत् १० कौरवेयनमेत्रासःकथंचिदपिविद्यते ॥ त्वयासार्धमथान्यैश्चयुध्यतोहृदिकश्चन ११ यदिसर्वेणसैन्येनगुप्तोमांयोधयिष्यसि ॥ त थापिनव्यथाकाचित्त्वयिस्यान्ममकौरव १२ युद्धसारेणवाक्येनअसतांसंमतेनच ॥ नाहंभीषयितुंशक्यःक्षत्रवृत्तेस्थितस्त्वया १३ यदितेऽस्तियुयुत्साऽद्यम यासहनराधिप ॥ निर्दयोनिशितैर्बाणैःप्रहरप्रहरामिते १४ हतोभूरिश्रवावीरस्तवपुत्रोमहारथः ॥ शलश्चैवमहाराजभ्रातृव्यसनकर्षितः १५ त्वांचाप्यद्य वधिष्यामिसहपुत्रंसबांधवम् ॥ तिष्ठेदानींरणेयत्तःकौरवोऽसिमहारथः १६

प्रायइति १ । २ । ३ । ४ पतनीयंपातहेतुःपापम् ५ । ६ । ७ । ८ तारेणोच्चस्वरेण ९ । १० । ११ । १२ । १३ । १४ । १५ । १६

दानंस्वद्रव्यस्यपरस्वत्वापादनं । दमोमनसोयथेष्टंविनियोगयोग्यता । शौचंसंकरवर्जनं । अहिंसासर्वभूतानामनभिद्रोहः । ह्नीरकर्तव्यान्निवर्तकोधर्मः । क्षमाऽपकारिण्यकोपः १७ । १८ कृष्ण

यस्मिन्दानंदमःशौचमहिंसाह्रीर्धृतिःक्षमा ॥ अनपायानिसर्वाणिनित्यंराज्ञियुधिष्ठिरे १७ मृदंगकेतोस्तस्यत्वंतेजसानेहतःपुरा ॥ सकर्णसौबलःसंख्येविना शमुपयास्यसि १८ शपेऽहंकृष्णचरणैरिष्टापूर्तेनचैवह ॥ यदित्वांससुतंपापंनहन्यांयुधिरोषितः १९ अपयास्यसिचेत्त्युक्त्वारणंमुक्तोभविष्यसि ॥ एवमाभा ष्यचान्योन्यंक्रोधसंरक्तलोचनौ २० प्रवृत्तौशरसंपातंकर्तुंपुरुषसत्तमौ ॥ ततोरथसहस्रेणनागानामयुतेनच २१ दुर्योधनःसोमदत्तंपरिवार्यसमंततः ॥ शकु निश्चसुसंक्रुद्धःसर्वशस्त्रभृतांवर २२ पुत्रपौत्रैःपरिवृतोभ्रातृभिश्चेंद्रविक्रमैः ॥ स्यालस्तवमहाबाहुर्वज्रसंहननोयुवा २३ साग्रंशतसहस्रंतुहयानांतस्यधीमतः ॥ सोमदत्तंमहेष्वासंसमंतात्पर्यरक्षत २४ रक्ष्यमाणश्चबलिभिश्छादयामाससात्यकिम् ॥ तंछाद्यमानंविशिखैर्दृष्ट्वासन्नतपर्वभिः २५ धृष्टद्युम्नोऽभ्ययात्क्रुद्धःप्रगृह्य महतींचमूम् ॥ चंडवाताभिसृष्टानामुदधीनामिवस्वनः २६ आसीद्राजन्बलौघानामन्योन्यमभिनिघ्नताम् ॥ विव्याधसोमदत्तस्तुसात्वतंनवभिःशरैः २७ सात्य किर्नवभिश्चैनमवधीत्कुरुपुंगवम् ॥ सोऽतिविद्धोबलवतासमरेदृढधन्विना २८ रथोपस्थंसमासाद्यमुमोहगतचेतनः ॥ तंविमूढंसमालक्ष्यसारथिस्त्वरयायुतः २९ अपोवाहरणाद्वीरंसोमदत्तंमहारथम् ॥ तंविसंज्ञंसमालक्ष्ययुयुधानशरार्दितम् ३० अभ्यद्रवत्ततोद्रोणोयदुवीरजिघांसया ॥ तमायांतमभिप्रेक्ष्ययुधिष्ठिरपुरो गमाः ३१ परिवव्रुर्महात्मानंपरीप्संतोयदूत्तमम् ॥ ततःप्रववृतेयुद्धंद्रोणस्यसहपांडवैः ३२ बलेरिवसुरैःपूर्वंत्रैलोक्यजयकांक्षया ॥ ततःसायकजालेनपांडवा नीकमावृणोत् ३३ भारद्वाजोमहातेजाविव्याधचयुधिष्ठिरम् ॥ सात्यकिंदशभिर्बाणैर्विंशत्यापार्षतंशरैः ३४ भीमसेनंचनवभिर्नकुलंपंचभिस्तथा ॥ सहदेवं तथाऽष्टाभिःशतेनचशिखंडिनम् ३५ द्रौपदेयान्महाबाहुःपंचभिःपंचभिःशरैः ॥ विराटंमत्स्यमष्टाभिर्द्रुपदंदशभिःशरैः ३६ युधामन्युंत्रिभिःषड्भिरुत्तमौजस माहवे ॥ अन्यांश्चसैनिकान्विद्ध्वायुधिष्ठिरमुपाद्रवत् ३७ तेवध्यमानाद्रोणेनपांडुपुत्रस्यसैनिकाः ॥ प्राद्रवन्वैभयाद्राजन्सार्तनादादिशोदश ३८ काल्यमा नंतुतत्सैन्यंदृष्ट्वाद्रोणेनफाल्गुनः ॥ किंचिदागतसंरंभोगुरुंपार्थोऽभ्ययाद्द्रुतम् ३९ दृष्ट्वाद्रोणस्तुबीभत्सुमभिधावंतमाहवे ॥ संन्यवर्ततततस्सैन्यंपुनर्यौधिष्ठिरं बलम् ४० ततोयुद्धमभूद्भूयोभारद्वाजस्यपांडवैः ॥ द्रोणस्तवसुतैराजन्सर्वतःपरिवारितः ४१ व्यधमत्पांडुसैन्यानितूलराशीमिवानलः ॥ तंज्वलंतमिवादित्यं दीप्तानलसमद्युतिम् ४२ राजन्ननिशमत्यंतंदृष्ट्वाद्रोणंशरार्चिषम् ॥ मंडलीकृतधन्वानंतपंतमिवभास्करम् ४३ दहंतमहितान्सैन्येनैनंकश्चिदवारयत् ॥ योयोहिप्रमुखेतस्यतस्थौद्रोणस्यपूरुषः ४४ तस्यतस्यशिरश्छित्वाययुर्द्रोणशराःक्षितिम् ॥ एवंसापांडवीसेनावध्यमानामहात्मना ४५

चरणैःकृष्णयोश्चरणैः १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७।३८।३९। ४० । ४१ । ४२ । ४३ । ४४ । ४५

४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ काष्णार्यसंतीक्ष्णलोहमयम ५७ । ५८ नहयैर्नापिवारणैर्गजैः किंतुपिशाचैः ५९ । ६०

प्रदुद्रावपुनर्भीतापश्यतःसव्यसाचिनः ॥ संप्रभग्नंबलंदृष्ट्वाद्रोणेननिशिभारत ४६ गोविंदमब्रवीज्जिष्णुर्गच्छद्रोणरथंप्रति ॥ ततोरजतगोक्षीरकुंदेंदुसदृशप्र भान् ४७ चोदयामासदाशार्होहयान्द्रोणरथंप्रति ॥ भीमसेनोऽपितंदृष्ट्वायांतंद्रोणायफाल्गुनम् ४८ स्वसारथिमुवाचेदंद्रोणानीकायमांवह ॥ सोऽपितस्यव चःश्रुत्वाविशोकोवाहयद्धयान् ४९ पृष्ठतःसत्यसंधस्यजिष्णोर्भरतसत्तम ॥ तौदृष्ट्वाभ्रातरौयत्तौद्रोणानीकमभिद्रुतौ ५० पंचालाःसृंजयामत्स्याश्चेदिकारूष कोसलाः ॥ अन्वगच्छन्महाराजकेकयाश्चमहारथाः ५१ ततोराजन्नभूद्धोरःसंग्रामोलोमहर्षणः ॥ बीभत्सुर्दक्षिणंपार्श्वमुत्तरंचवृकोदरः ५२ महद्भ्यांरथवृंदा भ्यांबलंजगृहतुस्तव ॥ तौदृष्ट्वापुरुषव्याघ्रौभीमसेनधनंजयौ ५३ धृष्टद्युम्नोऽभ्ययाद्राजन्सात्यकिश्चमहाबलः ॥ चंडवाताभिपन्नानामुदधीनामिवस्वनः ५४ आसीद्राजन्बलौघानांतदाऽन्योन्यमभिघ्नताम् ॥ सौमदत्तिवधात्क्रुद्धोदृष्ट्वासात्यकिमाहवे ५५ द्रौणिरभ्यद्रवद्राजन्वधायकृतनिश्चयः ॥ तमापतंतंसंप्रेक्ष्य शैनेयस्यरथंप्रति ५६ भैमसेनिःसुसंक्रुद्धःप्रत्यमित्रमवारयत् ॥ काष्णार्यसंमहाघोरमृक्षचर्मपरिच्छदम् ५७ महांतंरथमास्थायात्रिंशन्नल्वांतरांतरम् ॥ विक्षि प्तयंत्रसन्नाहंमहामेघौघनिःस्वनम् ५८ युक्तंगजनिभैर्वाहैर्नहयैर्नापिवारणैः ॥ विक्षिप्तपक्षचरणविवृताक्षेणकूजता ५९ ध्वजेनोच्छ्रितदंडेनगृध्रराजेनराजितम् ॥ लोहितार्द्रपताकंतुअंत्रमालाविभूषितम् ६० अष्टचक्रसमायुक्तमास्थायविपुलंरथम् ॥ शूलमुद्गरधारिण्याशैलपादपहस्तया ६१ रक्षसांघोररूपाणामक्षौहि ण्यासमावृतः ॥ तमुद्यतमहाचापंनिशम्यव्यथितानृपाः ६२ युगांतकालसमयेदंडहस्तमिवांतकम् ॥ ततस्तंगिरिशृंगाभंभीमरूपंभयावहम् ६३ दंष्ट्राकरा लोग्रमुखंशंकुकर्णंमहाहनुम् ॥ ऊर्ध्वकेशंविरूपाक्षंदीप्तास्यंनिम्नितोदरम् ६४ महाश्वभ्रगलद्वारंकिरीटच्छन्नमूर्धजम् ॥ त्रासनंसर्वभूतानांव्यात्ताननमिवांत कम् ६५ वीक्ष्यदीप्तमिवायांतंरिपुविक्षोभकारिणम् ॥ तमुद्यतमहाचापंराक्षसेंद्रंघटोत्कचम् ६६ भयार्दिताप्रचुक्षोभपुत्रस्यतववाहिनी ॥ वायुनाक्षोभिता वर्तागंगेवोर्ध्वतरंगिणी ६७ घटोत्कचप्रयुक्तेनसिंहनादेनभीषिताः ॥ प्रसुस्रुवुर्गजामूत्रंविव्यथुश्चनराभृशम् ६८ ततोऽश्मवृष्टिरत्यर्थमासीत्तत्रसमंततः ॥ संध्याकालाधिकबलैःप्रयुक्ताराक्षसैःक्षितौ ६९ आयसानिचचक्राणिभुशुंडचःप्रासतोमराः ॥ पतंत्यविरताःशूलाःशतघ्न्यःपट्टिशास्तथा ७० तदुग्रम तिरौद्रंचदृष्ट्वायुद्धंनराधिपाः ॥ तनयास्तवकर्णश्चव्यथिताःप्राद्रवन्दिशः ७१ तत्रैकोऽस्त्रबलश्लाघीद्रौणिर्मानीनविव्यथे ॥ व्यधमच्चशरैर्मायांघटोत्कच विनिर्मिताम् ७२ विहतायांतुमायायाममर्षीसघटोत्कचः ॥ विससर्जशरान्घोरांस्तेऽश्वत्थामानमाविशन् ७३ भुजंगाइववेगेनवल्मीकंक्रोधमूर्छिताः ॥ तेशरारुधिराक्तांगाभित्त्वाशारद्वतीसुतम् ७४

६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४

विविशुर्धरणींशीघ्रारुक्मपुंखाःशिलाशिताः ॥ अश्वत्थामातुसंक्रुद्धोलघुहस्तःप्रतापवान् ७५ घटोत्कचमभिक्रुद्धंबिभेददशभिःशरैः ॥ घटोत्कचोऽतिविद्धस्तु
द्रोणपुत्रेणमर्मसु ७६ चक्रंशतसहस्रारमगृह्णाद्व्यथितोभृशम् ॥ क्षुरांतंबालसूर्याभंमणिवज्रविभूषितम् ७७ अश्वत्थाम्निसचिक्षेपभैमसेनिर्जिघांसया ॥ वेगेन
महतागच्छाद्विक्षिप्तंद्रौणिनाशरैः ७८ अभाग्यस्येवसंकल्पस्तन्मोघमपतद्भुवि ॥ घटोत्कचस्ततस्तूर्णंदृष्ट्वाचक्रंनिपातितम् ७९ द्रौणिंप्राच्छादयद्बाणैःस्व
र्भानुरिवभास्करम् ॥ घटोत्कचसुतःश्रीमान्भिन्नांजनचयोपमः ८० रुरोधद्रौणिमायांतंप्रभंजनमिवाद्रिराट् ॥ पौत्रेणभीमसेनस्यशरैरंजनपर्वणा ८१ बभौ
मेघेनधाराभिर्गिरिर्मेरुरिवावृतः ॥ अश्वत्थामात्वसंभ्रांतोरुद्रोपेंद्रेंद्रविक्रमः ८२ ध्वजमेकेनबाणेनाचिच्छेदांजनपर्वणः ॥ द्वाभ्यांतुरथयंतारौत्रिभिश्चास्यत्रिवे
णुकम् ८३ धनुरेकेनचिच्छेदचतुर्भिश्चतुरोहयान् ॥ विरथस्योद्यतंहस्ताद्धेमबिंदुभिराचितम् ८४ विशिखेनसुतीक्ष्णेनखड्गमस्यद्विधाऽकरोत् ॥ गदाहेमां
गदांराजंस्तूर्णंहैडिंबिसूनुना ८५ भ्राम्योत्क्षिप्ताशरैःसाऽपिद्रौणिनाऽभ्याहताऽपतत् ॥ ततोऽतरिक्षमुत्प्लुत्यकालमेघइवोन्नदन् ८६ ववर्षांजनपर्वासद्रुमवर्षंन
भस्तलात् ॥ ततोमायाधरंद्रौणिर्घटोत्कचसुतंदिवि ८७ मार्गणैरभिविव्याधघनंसूर्यइवांशुभिः ॥ सोऽवतीर्यपुरस्तस्थौरथेहेमविभूषिते ८८ महीगतइवात्यु
ग्रःश्रीमानंजनपर्वतः ॥ तमयस्मयवर्माणंद्रौणिर्भीमात्मजात्मजम् ८९ जघानांजनपर्वाणंमहेश्वरइवांधकम् ॥ अथदृष्ट्वाहतंपुत्रमश्वत्थाम्नामहाबलम् ९० द्रौ
णेःसकाशमभ्येत्यरोषात्प्रज्वलितांगदः ॥ प्राहवाक्यमसंभ्रांतोवीरंशारद्वतीसुतम् ९१ दहंतंपांडवानीकंवनमग्निमिवोच्छ्रितम् ॥ घटोत्कचउवाच ॥ तिष्ठति
ष्ठनमेजीवन्द्रोणपुत्रगमिष्यसि ९२ त्वामद्यनिहनिष्यामिक्रौंचमग्निसुतोयथा ॥ अश्वत्थामोवाच ॥ गच्छवत्ससहान्यैस्त्वंयुध्यस्वामरविक्रम ९३ नहिपुत्रेणहै
डिंबेपितान्याय्यःप्रबाधितुम् ॥ कामंखलुनरोषोमेहैडिंबेविद्यतेत्वयि ९४ किंतुरोषान्वितोजंतुर्हन्यादात्मानमप्युत ॥ संजयउवाच ॥ श्रुत्वैतत्क्रोधताम्राक्षः
पुत्रशोकसमन्वितः ९५ अश्वत्थामानमायस्तोभैमसैनिरभाषत ॥ किमहंकातरोद्रौणेपृथग्जनइवाहवे ९६ यन्मांभीषयसेवाग्भिरसदेतद्वचस्तव ॥ भीमात्ख
लुसमुत्पन्नःकुरूणांविपुलेकुले ९७ पांडवानामहंपुत्रःसमरेष्वनिवर्तिनाम् ॥ रक्षसामधिराजोऽहंदशग्रीवसमोबले ९८ तिष्ठतिष्ठनमेजीवन्द्रोणपुत्रगमिष्यसि ॥
युद्धश्रद्धामहंतेऽद्यविनेष्यामिरणाजिरे ९९ इत्युक्त्वाक्रोधताम्राक्षोराक्षसःसुमहाबलः ॥ द्रौणिमभ्यद्रवत्क्रुद्धोगजेंद्रमिवकेसरी १०० रथाक्षमात्रैरिषुभिरभ्यव
र्षद्घटोत्कचः ॥ रथिनामृषभंद्रौणिंधाराभिरिवतोयदः १ शरवृष्टिंशरैर्द्रौणिरप्राप्तांतांव्यशातयत् ॥ ततोऽतरिक्षेबाणानांसंग्रामोऽन्यइवाभवत् १०२

अथास्त्रसंमर्दकृतैर्विस्फुलिंगैस्तदाबभौ ॥ विभावरीमुखेव्योमखद्योतैरिवाचित्रितम् १०३ निशाम्यनिहतांमायांद्रौणिनारणमानिना॥घटोत्कचस्ततोमायांसस
र्जांतर्हितःपुनः ४ सोऽभवद्गिरिरत्युच्चःशिखरैस्तरुसंकटैः ॥ शूलप्रासासिमुसलजलप्रस्रवणोमहान् ५ तमंजनगिरिप्रख्यंद्रौणिर्दृष्ट्वामहीधरम् ॥ प्रपतद्भिश्चब
हुभिःशस्त्रसंघैर्नविव्यथे ६ ततोहसन्निवद्रौणिर्वज्रमस्त्रमुदैरयत् ॥ सतेनास्त्रेणशैलेंद्रःक्षिप्तःक्षिप्रंव्यनश्यत ७ ततःसतोयदोभूत्वानीलःसेंद्रायुधोदिवि ॥ अ
श्मवृष्टिभिरत्युग्रोद्रौणिमाच्छादयद्रणे ८ अथसंधायवायव्यमस्त्रमस्त्रविदांवरः ॥ व्यधमद्द्रोणतनयोनीलमेघंसमुत्थितम् ९ समार्गणगणैर्द्रौणिर्दिशःप्रच्छाद्य
सर्वशः ॥ शतंरथसहस्राणांजघानाद्विपदांवरः ११० सदृष्ट्वापुनरायांतंरथेनायतकार्मुकम् ॥ घटोत्कचमसंभ्रांतंराक्षसैर्बहुभिर्वृतम् ११ सिंहशार्दूलसदृशैर्मत्तद्वि
रदविक्रमैः ॥ गजस्थैश्चरथस्थैश्चवाजिपृष्ठगतैरपि १२ विकृतास्थिशिरोग्रीवैर्हैडिंबानुचरैःसह ॥ पौलस्त्यैर्यातुधानैश्चतामसैश्चेंद्रविक्रमैः १३ नानाशस्त्रधरै
र्वीरैर्नानाकवचभूषणैः ॥ महाबलैर्भीमरवैःसंरंभोद्वृत्तलोचनैः १४ उपस्थितैस्ततोयुद्धेराक्षसैर्युद्धदुर्मदैः ॥ विषण्णमभिसंप्रेक्ष्यपुत्रंतेद्रौणिरब्रवीत् १५ तिष्ठदुर्यो
धनाद्यत्वंनकार्यःसंभ्रमस्त्वया ॥ सहैभिर्भ्रातृभिर्वीरैःपार्थिवैश्चेंद्रविक्रमैः १६ निहनिष्याम्यमित्रांस्तेनतवास्तिपराजयः ॥ सत्यंतेप्रतिजानामिपर्याश्वासयवा
हिनीम् १७ ॥ दुर्योधनउवाच ॥ नत्वेतदद्भुतंमन्येयत्तेमहदिदंमनः ॥ अस्मासुचपराभक्तिस्तवगौतमिनंदन १८ ॥ संजयउवाच ॥ अश्वत्थामानमुक्त्वैवं
ततःसौबलमब्रवीत् ॥ वृतंरथसहस्रेणहयानांरणशोभिनाम् १९ षष्ट्याचारथसहस्रैश्चप्रयाहित्वंधनंजयम् ॥ कर्णश्चवृषसेनश्चकृपोनीलस्तथैवच १२० उदी
च्याःकृतवर्माचपुरुमित्रःसुतापनः ॥ दुःशासनोनिकुंभश्चकुंडभेदीपराक्रमः २१ पुरंजयोदृढरथःपताकीहेमकंपनः ॥ शल्यारुणींद्रसेनाश्चसंजयोविजयोजयः
२२ कमलाक्षःपरक्राथीजयवर्मासुदर्शनः ॥ एतेत्वामनुयास्यंतिपत्तीनामयुतानिषट् २३ जहिभीमंयमौचोभौधर्मराजंचमातुल ॥ असुरानिवदेवेंद्रोजयाशामे
त्वयिस्थिता २४ दारितान्द्रौणिनाबाणैर्भृशंविक्षतविग्रहान् ॥ जहिमातुलकौंतेयानसुरानिवपावकिः २५ एवमुक्तोययौशीघ्रंपुत्रेणतवसौबलः ॥ पिप्रीषुस्तेसु
तान्राजन्दिधक्षुश्चैवपांडवान् २६ अथप्रववृतेयुद्धंद्रौणिराक्षसयोर्मृधे ॥ विभावर्यांसुतुमुलंशक्रप्रह्लादयोरिव २७ ततोघटोत्कचोबाणैर्दशभिर्गौतमीसुतम् ॥
जघानोरसिसंक्रुद्धोविषाग्निप्रतिमैर्दृढैः २८ सतैरभ्याहतोगाढंशरैर्भीमसुतेरितैः ॥ चचालरथमध्यस्थोवातोद्धूतइवद्रुमः २९ भूयश्चांजलिकेनाथमार्गणेनमहा
प्रभम् ॥ द्रौणिहस्तस्थितंचापंचिच्छेदाशुघटोत्कचः १३० ततोऽन्यद्द्रौणिरादायधनुर्भारसहंमहत् ॥ ववर्षविशिखांस्तीक्ष्णान्वारिधाराइवांबुदः ३१ ततःशा
रद्वतीपुत्रःप्रेषयामाससभारत ॥ सुवर्णपुंखाञ्छत्रुघ्नान्खचरान्खचरंप्रति ३२ तद्बाणैरर्दितंयूथंरक्षसांपीनवक्षसाम् ॥ सिंहैरिवबभौमत्तंगजानामाकुलंकुलम् १३३

विधम्यराक्षसान्बाणैःसाश्वसूतरथान्द्विपान् ॥ददाहभगवान्वह्निर्भूतानीवयुगक्षये १३४ सदग्ध्वाऽक्षौहिणींबाणैर्नैर्ऋतींरुरुचेनृप ॥ पुरेवत्रिपुरंदग्ध्वादिविदेवोमहे
श्वरः ३५ युगांतेसर्वभूतानिदग्ध्वेववसुरुल्बणः ॥ रराजजयतांश्रेष्ठोद्रोणपुत्रस्तवाहितान् ३६ ततोघटोत्कचःक्रुद्धोरक्षसांभीमकर्मणाम् ॥ द्रौणिंहतेतिमह
तींचोदयामासतांचमूम् ३७ घटोत्कचस्यतामाज्ञांप्रतिगृह्याथराक्षसाः ॥ दंष्ट्रोज्ज्वलामहावक्राघोररूपाभयानकाः ३८ व्यात्ताननाघोराजिह्वाःक्रोधताम्रेक्षणा
भृशम् ॥ सिंहनादेनमहतानादयंतोवसुंधराम् ३९ हंतुमभ्यद्रवन्द्रौणिंनानाप्रहरणायुधाः ॥ शक्तीःशतघ्नीःपरिघानशनीःशूलपट्टिशान् १४० खड्गान्गदा
भिंदिपालान्मुसलानिपरश्वधान् ॥ प्रासानसींस्तोमरांश्चकणपान्कंपनाञ्छितान् ४१ स्थूलान्भुशुंडयश्मगदास्थूणान्कार्ष्णायसांस्तथा ॥ मुद्गरांश्चमहाघो
रान्समरेशत्रुदारणान् ४२ द्रौणिमूर्धन्यसंत्रस्ताराक्षसाभीमविक्रमाः ॥ चिक्षिपुःक्रोधताम्राक्षाःशतशोऽथसहस्रशः ४३ तच्छस्त्रवर्षंसुमहद्द्रोणपुत्रस्यमूर्धनि ॥
पतमानंसमीक्ष्याथयोधास्तेव्यथिताऽभवन् ४४ द्रोणपुत्रस्तुविक्रांतस्तद्वर्षंघोरमुच्छ्रितम् ॥ शरैर्विध्वंसयामासवज्रकल्पैःशिलाशितैः ४५ ततोऽन्यैर्विशिखै
स्तूर्णंस्वर्णपुंखैर्महामनाः ॥ निजघ्नेराक्षसान्द्रौणिर्दिव्यास्त्रप्रतिमंत्रितैः ४६ तद्बाणैरर्दितंयूथंरक्षसांपीनवक्षसाम् ॥ सिंहैरिवबभौमत्तंगजानामाकुलंकुलम् ॥
४७ तेराक्षसाःसुसंक्रुद्धाद्रोणपुत्रेणताडिताः ॥ क्रुद्धाःस्मप्राद्रवन्द्रौणिंजिघांसंतोमहाबलाः ४८ तत्राद्भुतमिमंद्रौणिर्दर्शयामासविक्रमम् ॥ अशक्यंकर्तुमन्येन
सर्वभूतेषुभारत ४९ यदेकोराक्षसींसेनांक्षणाद्द्रौणिर्महास्त्रवित् ॥ ददाहज्वलितैर्बाणैराक्षसेंद्रस्यपश्यतः १५० सहत्वाराक्षसानीकंरराजद्रौणिराहवे ॥ युगांते
सर्वभूतानिसंवर्तकइवानलः ५१ तंदहंतमनीकानिशरैराशीविषोपमैः ॥ तेषुराजसहस्रेषुपांडवेयेषुभारत ५२ नैनंनिरीक्षितुंकश्चिदशक्नोद्द्रौणिमाहवे ॥ ऋते
घटोत्कचाद्वीराद्राक्षसेंद्रान्महाबलात् ५३ सपुनर्भरतश्रेष्ठक्रोधादुद्भ्रांतलोचनः ॥ तलंतलेनसंहत्यसंदश्यदशनच्छदम् ५४ स्वंसूतमब्रवीत्क्रुद्धोद्रोणपुत्राय
मांवह ॥ सययौघोररूपेणसुपताकेनभास्वता ५५ द्वैरथंद्रोणपुत्रेणपुनरप्यरिसूदनः ॥ सविनद्यमहानादंसिंहवद्भीमविक्रमः ५६ चिक्षेपाविध्यसंग्रामेद्रोणपुत्रा
यराक्षसः ॥ अष्टघंटांमहाघोरामशनिंदेवनिर्मिताम् ५७ तामवप्लुत्यजग्राहद्रौणिर्न्यस्यरथेधनुः ॥ चिक्षेपचैनांतस्यैवस्यंदनात्सोऽवपुप्लुवे ५८ साश्वसूतध्व
जंयानंभस्मकृत्वामहाप्रभा ॥ विवेशवसुधांभित्त्वासाऽशनिर्भृशदारुणा ५९ द्रौणेस्तत्कर्मदृष्ट्वातुसर्वभूतान्यपूजयन् ॥ यदवप्लुत्यजग्राहघोरांशंकरनिर्मिताम्
१६० धृष्टद्युम्नरथंगत्वाभैमसेनिस्ततोनृप ॥ धनुर्घोरंसमादायमहदिंद्रायुधोपमम् ॥ मुमोचनिशितान्बाणान्पुनर्द्रौणेर्महोरसि ६१ धृष्टद्युम्नस्त्वसंभ्रांतोमुमोचा
शीविषोपमान् ॥ सुवर्णपुंखान्विशिखान्द्रोणपुत्रस्यवक्षसि ६२ ततोमुमोचनाराचान्द्रौणिस्तांश्चसहस्रशः ॥ तावप्यग्निशिखप्रख्यैर्जघ्नतुस्तस्यमार्गणान् १६३

१६४। ६५। ६६। ६७। ६८। ६९। ७०। ७१। ७२। ७३। ७४। ७५। ७६। ७७। ७८। ७९। ८०। ८१। ८२। ८३। ८४। ८५। ८६। ८७। ८८। ८९। १९० ॥ इतिद्रोण



अतितीव्रंमहद्युद्धंतयोःपुरुषसिंहयो ॥ योधानांप्रीतिजननंद्रौणेश्चभरतर्षभ १६४ ततोरथसहस्रेणद्विरदानांशतैस्त्रिभिः ॥ षड्भिर्वाजिसहस्रैश्चभीमस्तंदेशमाग
मत् ६५ ततोभीमात्मजंरक्षोधृष्टद्युम्नंचसानुगम् ॥ अयोधयतधर्मात्माद्रौणिरक्लिष्टविक्रमः ६६ तत्राद्भुततमंद्रौणिर्दर्शयामासविक्रमम् ॥ अशक्यंकर्तुमन्ये
नसर्वभूतेषुभारत ६७ निमेषांतरमात्रेणसाश्वसूतरथद्विपाम् ॥ अक्षौहिणींराक्षसानांशितैर्बाणैरशातयत् ६८ मिषतोभीमसेनस्यहैडिंबेःपार्षतस्यच ॥ यम
योर्धर्मपुत्रस्यविजयस्याच्युतस्यच ६९ प्रगाढमंजोगतिभिर्नाराचैरभिताडिताः ॥ निपेतुर्द्विरदाभूमौसशृंगाइवपर्वताः १७० निकृत्तैर्हस्तिहस्तैश्चविचल
द्भिरितस्ततः ॥ रराजवसुधाकीर्णाविसर्पद्भिरिवोरगैः ७१ क्षिप्तैःकांचनदंडैश्चनृपच्छत्रैःक्षितिर्बभौ ॥ द्यौरिवोदितचंद्रार्काग्रहाकीर्णायुगक्षये ७२ प्रवृद्धध्व
जमंडूकांभेरीविस्तीर्णकच्छपाम् ॥ छत्रहंसावलीजुष्टांफेनचामरमालिनीम् ७३ कंकगृध्रमहाग्राहांनैकायुधझषाकुलाम् ॥ विस्तीर्णगजपाषाणांहताश्वमकरा
कुलाम् ७४ रथक्षिप्तमहावप्रांपताकारुचिरद्रुमाम् ॥ शरमीनांमहारौद्रांप्रासशक्त्यृष्टिडुंडुभाम् ७५ मज्जामांसमहापंकांकबंधावर्जितोडुपाम् ॥ केशशैवलक
ल्माषांभीरूणांकश्मलावहाम् ७६ नागेंद्रहययोधानांशरीरव्ययसंभवाम् ॥ शोणितौघमहाघोरांद्रौणिःप्रावर्तयन्नदीम् ७७ योधार्तरवनिर्घोषांक्षतजोर्मिसमाकु
लाम् ॥ श्वापदातिमहाघोरांयमराष्ट्रमहोदधिम् ७८ निहत्यराक्षसान्बाणैर्द्रौणिर्हैडिंबिमार्दयत् ॥ पुनरप्यतिसंक्रुद्धःसवृकोदरपार्षतान् ७९ सनाराचगणैःपा
र्थान्द्रौणिर्विद्ध्वामहाबलः ॥ जघानसुरथंनामद्रुपदस्यसुतंविभुः १८० पुनःशत्रुंजयंनामद्रुपदस्यात्मजंरणे ॥ बलानीकंजयानीकंजयाश्वंचाभिजघ्निवान् ८१
श्रुताह्वयंचराजानंद्रौणिर्निन्येयमक्षयम् ॥ त्रिभिश्चान्यैःशरैस्तीक्ष्णैःसुपुंखैर्हेममालिनम् ८२ जघानसपृषध्रंचचंद्रसेनंचमारिष ॥ कुंतिभोजसुतांश्चासौद
शभिर्दशजघ्निवान् ८३ अश्वत्थामासुसंक्रुद्धःसंधायोग्रमजिह्मगम् ॥ मुमोचाकर्णपूर्णेनधनुषाशरमुत्तमम् ८४ यमदंडोपमंघोरमुद्दिश्याशुघटोत्कचम् ॥ सभि
त्त्वाहृदयंतस्यराक्षसस्यमहाशरः ८५ विवेशवसुधांशीघ्रंसपुंखःपृथिवीपते ॥ तंहतंपतितंज्ञात्वाधृष्टद्युम्नोमहारथः ८६ द्रौणेःसकाशाद्राजेंद्रव्यपनिन्येरथोत्त
मम् ॥ ततःपराङ्मुखनृपंसैन्यंयौधिष्ठिरंनृप ८७ पराजित्यरणेवीरोद्रोणपुत्रोननादह ॥ पूजितःसर्वभूतेषुतवपुत्रैश्चभारत ८८ अथशरशतभिन्नकृत्तदेहैर्हतप
तितैःक्षणदाचरैःसमंतात् ॥ निधनमुपगतैर्महीकृताऽभूद्गिरिशिखरैरिवदुर्गमाऽतिरौद्रा ८९ तंसिद्धगंधर्वपिशाचसंघानागाःसुपर्णाःपितरोवयांसि ॥ रक्षोगणा
भूतगणाश्चद्रौणिमपूजयन्नप्सरसःसुराश्च १९० ॥ इतिश्रीमहाभारतेद्रोणपर्वणिघटोत्कचवधपर्वणिरात्रियुद्धेषट्पंचाशदधिकशततमोऽध्यायः ॥ १५६ ॥



संजयउवाच ॥ द्रुपदस्यात्मजान्दृष्ट्वाकुंतिभोजसुतांस्तथा ॥ द्रोणपुत्रेणनिहतान्राक्षसांश्चसहस्रशः १ पर्वणिटीकायांषट्पंचाशदधिकशततमोऽध्यायः ॥१५६ ॥ द्रुपदस्येति १

२ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३

युधिष्ठिरोभीमसेनोधृष्टद्युम्नश्चपार्षतः ॥ युयुधानश्चसंयत्तायुद्धायैवमनोदधुः २ सोमदत्तःपुनःक्रुद्धोदृष्ट्वासात्यकिमाहवे ॥ महताशरवर्षेणच्छादयामासभारत
३ ततःसमभवद्युद्धमतीवभयवर्धनम् ॥ त्वदीयानांपरेषांचघोरंविजयकांक्षिणाम् ४ तंदृष्ट्वासमुपायांतंरुक्मपुंखैःशिलाशितैः ॥ दशभिःसात्वतस्यार्थेभीमोवि
व्याधसायकैः ५ सोमदत्तोऽपितंवीरंशतेनप्रत्यविध्यत ॥ सात्वतस्त्वभिसंक्रुद्धःपुत्राधिभिरभिद्रुतम् ६ वृद्धंवृद्धगुणैर्युक्तंययातिमिवनाहुषम् ॥ विव्याधदश
भिस्तीक्ष्णैःशरैर्वज्रनिपातनैः ७ शक्त्याचैनंविनिर्भिद्यपुनर्विव्याधसप्तभिः ॥ ततस्तुसात्यकेरर्थेभीमसेनोनवंदृढम् ८ मुमोचपरिघंघोरंसोमदत्तस्यमूर्धनि ॥
सात्वतोऽप्यग्निसंकाशंमुमोचशरमुत्तमम् ९ सोमदत्तोरसिक्रुद्धःसुपत्रंनिशितंयुधि ॥ युगपत्पेततुर्वीरघोरौपरिघमार्गणौ १० शरीरेसोमदत्तस्यसपपातमहार
थः ॥ व्यामोहितेतुतनयेबाह्लीकस्तमुपाद्रवत् ११ विसृजच्छरवर्षाणिकालवर्षीवतोयदः ॥ भीमोऽथसात्वतस्यार्थेबाह्लीकंनवभिःशरैः १२ प्रपीडयन्महात्मा
नंविव्याधरणमूर्धनि ॥ प्रातिपेयस्तुसंक्रुद्धःशक्तिंभीमस्यवक्षसि १३ निचखानमहाबाहुःपुरंदरइवाशनिम् ॥ सतथाऽभिहतोभीमश्चकंपेचमुमोहच १४ प्राप्य
चेतश्चबलवान्गदामस्मैससर्जह ॥ सापांडवेनप्रहिताबाह्लीकस्यशिरोऽहरत् १५ सपपातहतःपृथ्व्यांवज्राहतइवाद्रिराट् ॥ तस्मिन्विनिहतेवीरेबाह्लीकेपुरुष
र्षभ १६ पुत्रास्तेऽभ्यर्दयन्भीमंदशदाशरथेःसमाः ॥ नागदत्तोदृढरथोमहाबाहुरयोभुजः १७ दृढःसुहस्तोविरजाःप्रमाथ्युग्रोऽनुयाय्यपि ॥ तान्दृष्ट्वाचुकुवे
भीमोजग्राहेभारसाधनान् १८ एकमेकंसमुद्दिश्यपातयामासमर्मसु ॥ तेविद्धाव्यसवःपेतुःस्यंदनेभ्योहतौजसः १९ चंडवातप्रभग्नास्तुपर्वताग्रान्महीरुहाः ॥ ना
राचैर्दशभिर्भीमस्तान्निहत्यतवात्मजान् २० कर्णस्यदयितंपुत्रंवृषसेनमवाकिरत् ॥ ततोवृकरथोनामभ्राताकर्णस्यविश्रुतः २१ जघानभीमंनाराचैस्तमप्यभ्य
द्रवद्बली ॥ ततःसप्तरथान्वीरःस्यालानांतवभारत २२ निहत्यभीमोनाराचैःशतचंद्रमपोथयत् ॥ अमर्षयंतोनिहतंशतचंद्रंमहारथम् २३ शकुनेर्भ्रातरोवी
रागवाक्षःशरभोविभुः ॥ सुभगोभानुदत्तश्चशूराःपंचमहारथाः २४ अभिद्रुत्यशरैस्तीक्ष्णैर्भीमसेनमताडयन् ॥ सताड्यमानोनाराचैर्वृष्टिवेगैरिवाचलः २५
जघानपंचभिर्बाणैःपंचैवातिरथान्बली ॥ तान्दृष्ट्वानिहतान्वीरान्विचेलुर्नृपसत्तमाः २६ ततोयुधिष्ठिरःक्रुद्धस्तवानीकमशातयत् ॥ मिषतःकुंभयोनेस्तुपु
त्राणांतवचानघ २७ अंबष्ठान्मालवाञ्छूरांस्त्रिगर्तान्सशिबीनपि ॥ प्राहिणोन्मृत्युलोकायक्रुद्धोयुद्धेयुधिष्ठिरः २८ अभीषाहाञ्छूरसेनान्बाह्लीकान्सवसाति
कान् ॥ निकृत्यपृथिवींराजाचक्रेशोणितकर्दमाम् २९ यौधेयान्मालवान्राजन्मद्रकाणांगणान्युधि ॥ प्राहिणोन्मृत्युलोकायशूरान्बाणैर्युधिष्ठिरः ३०

२४ । २५ । २६ । २७ । २८ । २९ । ३०

३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ पतिःकुरूणांयुधिष्ठिरः ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ ॥ इतिद्रोणपर्वणिटीकायांसप्तपंचाशद

हताहरतगृह्णीतविध्यतव्यवकंतत ॥ इत्यासीत्तुमुलःशब्दोयुधिष्ठिररथंप्रति ३१ सैन्यानिद्रावयंतंतंद्रोणोदृष्ट्वायुधिष्ठिरम् ॥ चोदितस्तवपुत्रेणसायकैरभ्य
वाकिरत ३२ द्रोणस्तुपरमक्रुद्धोवायव्यास्त्रेणपार्थिवम् ॥ विव्याधसोऽपितद्दिव्यमस्त्रमस्त्रेणजघ्निवान् ३३ तस्मिन्विनिहतेचास्त्रेभारद्वाजोयुधिष्ठिरे ॥ वारुणं
याम्यमाग्नेयंत्वाष्ट्रंसावित्रमेवच ३४ चिक्षेपपरमक्रुद्धोजिघांसुःपांडुनंदनम् ॥ क्षिप्तानिक्षिप्यमाणानितानिचास्त्राणिधर्मजः ३५ जघानास्त्रैर्महाबाहुःकुंभयोनेरवि
त्रसन् ॥ सत्यांचिकीर्षमाणस्तुप्रतिज्ञांकुंभसंभवः ३६ प्रादुश्चक्रेऽस्त्रमैंद्रंवैप्राजापत्यंचभारत ॥ जिघांसुर्धर्मतनयंतवपुत्रहितेरतः ३७ पतिःकुरूणांगजसिंहगामी
विशालवक्षाःपृथुलोहिताक्षः ॥ प्रादुश्चकारास्त्रमहीनतेजामाहेंद्रमन्यत्सजघानतेन ३८ विहन्यमानेष्वस्त्रेषुद्रोणःक्रोधसमन्वितः ॥ युधिष्ठिरवधंप्रेप्सुर्ब्राह्ममस्त्रमुदै
रयत् ३९ ततोनाज्ञासिषंकिंचिद्घोरेणतमसावृते ॥ सर्वभूतानिचपरंत्रासंजग्मुर्महीपते ४० ब्रह्मास्त्रमुद्यतंदृष्ट्वाकुंतीपुत्रोयुधिष्ठिरः ॥ ब्रह्मास्त्रेणैवराजेंद्रतदस्त्रं
प्रत्यवारयत् ४१ ततःसैनिकमुख्यास्तेप्रशशंसुर्नरर्षभौ ॥ द्रोणपार्थौमहेष्वासौसर्वयुद्धविशारदौ ४२ ततःप्रमुच्यकौंतेयंद्रोणोद्रुपदवाहिनीम् ॥ व्यधमत्क्रोध
ताम्राक्षोवायव्यास्त्रेणभारत ४३ तेहन्यमानाद्रोणेनपंचालाःप्राद्रवन्भयात् ॥ पश्यतोभीमसेनस्यपार्थस्यचमहात्मनः ४४ ततःकिरीटीभीमश्चसहसासन्यव
र्तताम् ॥ महद्भ्यांरथवंशाभ्यांपरिगृह्यबलंतदा ४५ बीभत्सुर्दक्षिणंपार्श्वमुत्तरंचवृकोदरः ॥ भारद्वाजंशरौघाभ्यांमहद्भ्यामभ्यवर्षताम् ४६ केकयाःसृंजयाश्चै
वपंचालाश्चमहौजसः ॥ अन्वगच्छन्महाराजमत्स्याश्चसहसात्वतैः ४७ ततःसाभारतीसेनावध्यमानाकिरीटिना ॥ तमसानिद्रयाचैवपुनरेवव्यदीर्यत ४८
द्रोणेनवार्यमाणास्तेस्वयंतवसुतेनच ॥ नाशक्यंतमहाराजयोधावारयितुंतदा ४९ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिघटोत्कचवधपर्वणि रात्रियुद्धेद्रोणयुधि
ष्ठिरयुद्धेसप्तपंचाशदधिकशततमोऽध्ययः ॥ १५७ ॥ संजयउवाच ॥ उदीर्यमाणंतद्दृष्ट्वापांडवानांमहद्बलम् ॥ अविषह्यंचमन्वानःकर्णंदुर्योधनोऽब्रवीत् १
अयंसकालःसंप्राप्तोमित्राणांमित्रवत्सल ॥ त्रायस्वसमरेकर्णसर्वान्योधान्महारथान् २ पंचालैर्मत्स्यकैकेयैःपांडवैश्चमहारथैः ॥ वृतान्समंतात्संक्रुद्धैर्निःश्वसद्भि
रिवोरगैः ३ एतेनदंतिसंहृष्टाःपांडवाजितकाशिनः ॥ शक्रोपमाश्चबहवःपंचालानांरथव्रजाः ४ ॥ कर्णउवाच ॥ परित्रातुमिहप्राप्तोयदिपार्थंपुरंदरः ॥ तम
प्याशुपराजित्यततोहंताऽस्मिपांडवम् ५ सत्यंतेप्रतिजानामिसमाश्वासिहिभारत ॥ हंताऽस्मिपांडुतनयान्पंचालांश्चसमागतान् ६ जयंतेप्रतिदास्यामिवास
वस्येवपावकिः ॥ प्रियंतवमयाकार्यमितिजीवामिपार्थिव ७ सर्वेषामेवपार्थानांफाल्गुनोबलवत्तरः ॥ तस्याममोघांविमोक्ष्यामिशक्तिंशक्रविनिर्मिताम् ८

धिकशततमोऽध्यायः ॥ १५७ ॥ ॥ ७ ॥ ॥ उदीर्यमाणंतद्दृष्ट्वेति तथापरुषितंदृष्ट्वेतिच स्पष्टार्थावध्यायौ १ । २ । ३ । ४ । ५ । ६ । ७ । ८

९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३०

तस्मिन्हतेमहेष्वासेभ्रातरस्तस्यमानद ॥ तववश्यामविष्यंतिवनंयास्यंतिवापुनः ९ मयिजीवतिकौरव्यविषादंमाकृथाःक्वचित् ॥ अहंजेष्यामिसमरेसहिता
न्सर्वपांडवान् १० पंचालान्केकयांश्चैववृष्णींश्चापिसमागतान् ॥ बाणौघैःशकलीकृत्यतवदास्यामिमेदिनीम् ११ ॥ संजयउवाच ॥ एवंब्रुवाणंकर्णंतुकृपःशा
रद्वतोऽब्रवीत् ॥ स्मयन्निवमहाबाहुःसूतपुत्रमिदंवचः १२ शोभनंशोभनंकर्णसनाथःकुरुपुंगवः ॥ त्वयानाथेनराधेयवचसायदिसिध्यति १३ बहुशःकत्थसेक
र्णकौरवस्यसमीपतः ॥ नतुतेविक्रमःकश्चिद्दृश्यतेफलमेववा १४ समागमःपांडुसुतैर्दृष्टस्तेबहुशोयुधि ॥ सर्वत्रनिर्जितश्चासिपांडवैःसूतनंदन १५ ह्रियमाणेत
दाकर्णगंधर्वैर्धृतराष्ट्रजे ॥ तदाऽयुध्यंतसैन्यानित्वमेकोऽग्रेऽपलायिथाः १६ विराटनगरेचापिसमेताःसर्वकौरवाः ॥ पार्थेनानिर्जितायुद्धेत्वंचकर्णसहानुजः १७
एकस्याप्यसमर्थस्त्वंफाल्गुनस्यरणाजिरे ॥ कथमुत्सहसेजेतुंसकृष्णान्सर्वपांडवान् १८ अब्रुवन्कर्णयुध्यस्वकत्थसेबहुसूतज ॥ अनुक्त्वाविक्रमेद्यस्तुतद्वैसत्पुरुष
व्रतम् १९ गर्जित्वासूतपुत्रत्वंशारदाभ्रमिवाफलम् ॥ निष्फलोदृश्यसेकर्णतच्चराजानबुध्यते २० तावद्गर्जस्वराधेययावत्पार्थंनपश्यसि ॥ आरात्पार्थंहितेदृ
ष्ट्वादुर्लभंगर्जितंपुनः २१ त्वमनासाद्यतान्बाणान्फाल्गुनस्यविगर्जसि ॥ पार्थसायकविद्धस्यदुर्लभंगर्जितंतव २२ बाहुभिःक्षत्रियाःशूरावाग्भिःशूराद्विजात
यः ॥ धनुषाफाल्गुनःशूरःकर्णःशूरोमनोरथैः २३ तोषितोयेनरुद्रोऽपिकःपार्थंप्रतिघातयेत् ॥ एवंसंरुषितस्तेनतदाशारद्वतेनह २४ कर्णःप्रहरतांश्रेष्ठःकृपं
वाक्यमथाब्रवीत् ॥ शूरागर्जंतिसततंप्रावृषीवबलाहकाः २५ फलंचाशुप्रयच्छंतिबीजमुप्तमृताविव ॥ दोषमत्रनपश्यामिशूराणांरणमूर्धनि २६ तत्तद्विकत्थ
मानानांभारंचोद्वहतांमृधे ॥ यंभारंपुरुषोवोढुंमनसाहिव्यवस्यति २७ दैवमस्यध्रुवंतत्रसाहाय्यायोपपद्यते ॥ व्यवसायद्वितीयोहंमनसाभारमुद्वहन् २८ ह
त्वापांडुसुतानाजौसकृष्णान्सहसात्वतान् ॥ गर्जामियद्यहंविप्रतवकिंतत्रनश्यति २९ वृथाशूरानगर्जंतिशारदाइवतोयदाः ॥ सामर्थ्यमात्मनोज्ञात्वाततोगर्जंतिपं
डिताः ३० सोऽहमद्यरणेयत्तौसहितौकृष्णपांडवौ ॥ उत्सहेमनसाजेतुंततोगर्जामिगौतम ३१ पश्यत्वंगर्जितस्यास्यफलंमेविप्रसानुगान् ॥ हत्वापांडुसुताना
जौसहकृष्णान्ससात्वतान् ३२ दुर्योधनायदास्यामिपृथिवींहतकंटकाम् ॥ कृपउवाच ॥ मनोरथप्रलापामेनग्राह्यास्तवसूतज ३३ सदाऽक्षिपसिवैकृष्णौधर्म
राजंचपांडवम् ॥ ध्रुवस्तत्रजयःकर्णयत्रयुद्धविशारदौ ३४ देवगंधर्वयक्षाणांमनुष्योरगरक्षसाम् ॥ दंशितानामपिरणेअजेयौकृष्णपांडवौ ३५ ब्रह्मण्यःसत्य
वाग्दांतोगुरुदैवतपूजकः ॥ नित्यंधर्मरतश्चैवकृतास्त्रश्चविशेषतः ३६ धृतिमांश्चकृतज्ञश्चधर्मपुत्रोयुधिष्ठिरः ॥ भ्रातरश्चास्यबलिनःसर्वास्त्रेषुकृतश्रमाः ३७

३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७

३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९

गुरुवृत्तिरताःप्राज्ञाधर्मनित्यायशस्विनः ॥ संबंधिनश्चेंद्रवीर्याःस्वनुरक्ताःप्रहारिणः ३८ धृष्टद्युम्नःशिखंडीचदौर्मुखिर्जनमेजयः ॥ चंद्रसेनोरुद्रसेनोकीर्तिधर्मा ध्रुवोऽधरः ३९ वसुचंद्रोदामचंद्रःसिंहचंद्रःसुतेजनः ॥ द्रुपदस्यतथापुत्राद्रुपदश्चमहास्त्रवित् ४० येषामर्थायसंयत्तोमत्स्यराजःसहानुजः ॥ शतानीकःसूर्यद त्तःश्रुतानीकःश्रुतध्वजः ४१ बलानीकोजयानीकोजयाश्वोरथवाहनः ॥ चंद्रोदयःसमरथोविराटभ्रातरःशुभः ४२ यमौचद्रौपदेयाश्चराक्षसश्चघटोत्कचः ॥ येषामर्थाययुध्यंतेनतेषांविद्यतेक्षयः ४३ एतेचान्येचबहवोगणाःपांडुसुतस्यवै ॥ कामंखलुजगत्सर्वंसदेवासुरमानुषम् ४४ सयक्षराक्षसगणंसभूतभुजगद्विपम् ॥ निःशेषमस्त्रवीर्येणकुर्वातेभीमफाल्गुनौ ४५ युधिष्ठिरश्चपृथिवींनिर्दहेद्घोरचक्षुषा ॥ अप्रमेयबलःशौरिर्येषामर्थेचदंशितः ४६ कथंतान्संयुगेकर्णजेतुमुत्सहसे परान् ॥ महानपनयस्त्वेषनित्यंहितवसूतज ४७ यस्त्वमुत्सहसेयोद्धुंसमरेशौरिणासह ॥ संजयउवाच ॥ एवमुक्तस्तुराधेयःप्रहसन्भरतर्षभ ४८ अब्रवीच्चतदा कर्णोगुरुंशारद्वतंकृपम् ॥ सत्यमुक्तंत्वयाब्रह्मन्पांडवान्प्रतियद्वचः ४९ एतेचान्येचबहवोगुणाःपांडुसुतेषुवै ॥ अजय्याश्चरणेपार्थादेवैरपिसवासवैः ५० सदैत्ययक्षगंधर्वैःपिशाचोरगराक्षसैः ॥ तथापिपार्थान्जेष्यामिशक्त्यावासवदत्तया ५१ ममह्यमोघादत्तेयंशक्तिःशक्रेणवैद्विज ॥ एतयानिहनिष्यामिसव्यसाचिनमाहवे ५२ हतेतुपांडवेकृष्णेभ्रातरश्चास्यसोदराः ॥ अनर्जुनानशक्ष्यंतिमहींभोक्तुंकथंचन ५३ तेषुनष्टेषुसर्वेषुपृथिवीयंससागरा ॥ अयत्नात्कौरवेंद्रस्यवशे स्थास्यतिगौतम ५४ सुनीतैरिहसर्वार्थाःसिध्यंतेनात्रसंशयः ॥ एतमर्थमहंज्ञात्वाततोगर्जामिगौतम ५५ त्वंतुविप्रश्चवृद्धश्चअशक्तश्चापिसंयुगे ॥ कृतस्नेहश्च पार्थेषुमोहान्मामवमन्यसे ५६ यद्येवंवक्ष्यसेभूयोममाप्रियमिहद्विज ॥ ततस्तेखड्गमुद्यम्यजिह्वांछेत्स्यामिदुर्मते ५७ यच्चापिपांडवान्विप्रस्तोतुमिच्छसिसंयुगे ॥ भीषयन्सर्वसैन्यानिकौरवेयाणिदुर्मते ५८ अत्रापिशृणुमेवाक्यंयथावद्ब्रुवतोद्विज ॥ दुर्योधनश्चद्रोणश्चशकुनिर्दुर्मुखोजयः ५९ दुःशासनोवृषसेनोमद्रराजस्त्वमेवच ॥ सोमदत्तश्चभूरिश्चतथाद्रौणिर्विविंशतिः ६० तिष्ठेयुर्दंशितायत्रसर्वेयुद्धविशारदाः ॥ जयेदेतान्नरःकोनुशक्रतुल्यबलोऽप्यरिः ६१ शूराश्चहि कृतास्त्राश्चबलिनःस्वर्गलिप्सवः ॥ धर्मज्ञायुद्धकुशलाहन्युर्युद्धेसुरानपि ६२ एतेस्थास्यंतिसंग्रामेपांडवानांवधार्थिनः ॥ जयमाकांक्षमाणाहिकौरवेयस्यदंशिताः ६३ दैवायत्तमहंमन्येजयंसुबलिनामपि ॥ यत्रभीष्मोमहाबाहुःशेतेशरशताचितः ६४ विकर्णश्चित्रसेनश्चबाह्लीकोऽथजयद्रथः ॥ भूरिश्रवाजयश्चैवजलसंधःसुदक्षिणः ६५ शलश्चरथिनांश्रेष्ठोभगदत्तश्चवीर्यवान् ॥ एतेचान्येचराजानोदेवैरपिसुदुर्जयाः ६६ निहताःसमरेशूराःपांडवैर्बलवत्तराः ॥ किमन्यद्दैवसंयोगान्मन्यसेपुरुषाधम ६७

६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७

६८ । ६९ । ७० ॥ इतिद्रोणपर्वणिटीकायांमष्टपंचाशदधिकशततमोऽध्यायः ॥ १५८ ॥ ॥ ७ ॥ ॥ तथेति १ । २ । ३ कंचिद्धनुर्धरंनगणयन्नित्यन्वयः ४ । ५ । ६ । ७ । ८

यांश्चतांस्तौषिसततंदुर्योधनरिपून्द्विज ॥ तेषामपिहताःशूराःशतशोऽथसहस्रशः ६८ क्षीयंतेसर्वसैन्यानिकुरूणांपांडवैःसह ॥ प्रभावंनात्रपश्यामिपांडवा
नांकथंचन ६९ यस्तान्बलवतोनित्यंमन्यसेत्वंद्विजाधम ॥ यतिष्येऽहंयथाशक्तियोद्धुंतैःसहसंयुगे ॥ दुर्योधनहितार्थायजयोदैवेप्रतिष्ठितः ७० ॥ इतिश्रीमहा
भारतेद्रोणपर्वणिघटोत्कचवधपर्वणिरात्रियुद्धेकृपकर्णवाक्येअष्टपंचाशदधिकशततमोऽध्यायः ॥ १५८ ॥ ७ ॥ संजयउवाच ॥ तथापरुषितंदृष्ट्वासूतपुत्रे
णमातुलम् ॥ खड्गमुद्यम्यवेगेनद्रौणिरभ्यपतद्द्रुतम् १ ततःपरमसंक्रुद्धःसिंहोमत्तमिवद्विपम् ॥ प्रेक्षतःकुरुराजस्यद्रौणिःकर्णसमभ्ययात् २ ॥ अश्वत्थामोवाच ॥
यदर्जुनगुणांस्तथ्यान्कीर्तयानंनराधम ॥ शूरंद्वेषात्सुदुर्बुद्धेत्वंभर्त्सयसिमातुलम् ३ विकत्थमानःशौर्येणसर्वलोकधनुर्धरम् ॥ दर्पोत्सेधगृहीतोऽद्यनकंचिद्गणय
न्मृधे ४ क्वतेवीर्यंक्वचास्त्राणियंत्वांनिर्जित्यसंयुगे ॥ गांडीवधन्वाहतवान्प्रेक्षतस्तेजयद्रथम् ५ येनसाक्षान्महादेवोयोधितःसमरेपुरा ॥ तमिच्छसिवृथाजेतुं
सूताधममनोरथैः ६ यंहिकृष्णेनसहितंसर्वशस्त्रभृतांवरम् ॥ जेतुंनशक्ताःसहिताःसेंद्राअपिसुरासुराः ७ लोकैकवीरमजितमर्जुनंसूतसंयुगे ॥ किंपुनस्त्वंसुदुर्बु
द्धेसहैभिर्वसुधाधिपैः ८ कर्णपश्यसुदुर्बुद्धेतिष्ठेदानींनराधम ॥ एषतेऽद्यशिरःकायादुद्धरामिसुदुर्मते ९ ॥ संजयउवाच ॥ तमुद्यतंतुवेगेनराजादुर्योधनःस्व
यम् ॥ न्यवारयन्महातेजाःकृपश्चद्विपदांवरः १० ॥ कर्णउवाच ॥ शूरोऽयंसमरश्लाघीदुर्मतिश्चद्विजाधमः ॥ आसादयतुमद्वीर्यंमुंचेमंकुरुसत्तम ११
॥ अश्वत्थामोवाच ॥ तवैतत्क्षम्यतेऽस्माभिःसूतात्मजसुदुर्मते ॥ दर्पमुत्सिक्तमेतत्तेफाल्गुनोनाशयिष्यति १२ ॥ दुर्योधनउवाच ॥ अश्वत्थामन्प्रसीदस्वक्षंतु
मर्हसिमानद ॥ कोपःखलुनकर्तव्यःसूतपुत्रेकथंचन १३ त्वयिकर्णेकृपेद्रोणेमद्रराजेऽथसौबले ॥ महत्कार्यंसमासक्तंप्रसीदद्विजसत्तम १४ एतेह्यभिमुखाःसर्वेरा
धेयेनयुयुत्सवः ॥ आयांतिपांडवास्तत्राह्वयंतःसमंततः १५ ॥ संजयउवाच ॥ प्रसाद्यमानस्तुततोराज्ञाद्रौणिर्महामनाः ॥ प्रससादमहाराजक्रोधवेगसम
न्वितः १६ ततःकृपोऽप्युवाचेदमाचार्यःसुमहामनाः ॥ सौम्यस्वभावाद्राजेंद्रक्षिप्रमागतमार्दवः १७ ॥ कृपउवाच ॥ तवैतत्क्षम्यतेस्माभिःसूतात्मजसुदु
र्मते ॥ दर्पमुत्सिक्तमेतत्तेफाल्गुनोनाशयिष्यति १८ ॥ संजयउवाच ॥ ततस्तेपांडवाराजन्पंचालाश्चयशस्विनः ॥ आजग्मुःसहिताःकर्णंतर्जयंतःसमंततः
१९ कर्णोऽपिरथिनांश्रेष्ठश्चापमुद्यम्यवीर्यवान् ॥ कौरवाग्र्यैःपरिवृतःशक्रोदेवगणैरिव २० पर्यतिष्ठततेजस्वीस्वबाहुबलमाश्रितः ॥ ततःप्रववृतेयुद्धंकर्णस्य
सहपांडवैः २१ भीषणंसुमहाराजसिंहनादविराजितम् ॥ ततस्तेपांडवाराजन्पंचालाश्चयशस्विनः २२ दृष्ट्वाकर्णंमहाबाहुमुच्चैःशब्दमथानदन् ॥ अयंकर्णः
कुतःकर्णस्तिष्ठकर्णमहारणे २३ ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३

युध्यस्वसहितोऽस्माभिर्दुरात्मन्पुरुषाधम ॥ अन्येतुदृष्ट्वाराधेयंक्रोधरक्तेक्षणाऽब्रुवन् २४ हन्यतामयमुत्सिक्तःसूतपुत्रोऽल्पचेतनः ॥ सर्वैःपार्थिवशार्दूलैर्नानेना
र्थोऽस्तिजीविता २५ अत्यंतवैरीपार्थानांसततंपापपूरुषः ॥ एषमूलमनर्थानांदुर्योधनमतेस्थितः २६ घ्नतैनमितिजल्पंतःक्षत्रियाःसमुपाद्रवन् ॥ महताश
रवर्षेणच्छादयंतोमहारथाः २७ वधार्थंसूतपुत्रस्यपांडवेयेनचोदिताः ॥ तांस्तुसर्वांस्तथादृष्ट्वाधावमानान्महारथान् २८ नविव्यथेसूतपुत्रोनचत्रासमग
च्छत ॥ दृष्ट्वासंहारकल्पंतमुद्धूतंसैन्यसागरम् २९ पिप्रीषुस्तवपुत्राणांसंग्रामेष्वपराजितः ॥ सायकौघेनबलवान्क्षिप्रकारीमहाबलः ३० वारयामासतत्सै
न्यंसमंताद्भरतर्षभ ॥ ततस्तुशरवर्षेणपार्थिवास्तमवारयन् ३१ धनूंषितेविधुन्वानाःशतशोऽथसहस्रशः ॥ अयोधयंतराधेयंशक्रंदैत्यगणाइव ३२ शरवर्षंतुत
त्कर्णःपार्थिवैःसमुदीरितम् ॥ शरवर्षेणमहतासमंताद्व्यकिरत्प्रभो ३३ तद्युद्धमभवत्तेषांकृतप्रतिकृतैषिणाम् ॥ यथादेवासुरेयुद्धेशक्रस्यसहदानवैः ३४ तत्राद्भुत
मपश्यामसूतपुत्रस्यलाघवम् ॥ यदेनंसर्वतोयत्तानाप्नुवंतिपरेयुधि ३५ निवार्यचशरौघांस्तान्पार्थिवानांमहारथः ॥ युगेष्वीषासुच्छत्रेषुध्वजेषुचहयेषुच
३६ आत्मनामांकितान्घोरान्राधेयःप्राहिणोच्छरान् ॥ ततस्तेव्याकुलीभूताराजानःकर्णपीडिताः ३७ बभ्रमुस्तत्रतत्रैवगावःशीतार्दिताइव ॥ हयानांवध्य
मानानांगजानांरथिनांतथा ३८ तत्रतत्राभ्यवेक्षामसंघान्कर्णेनताडितान् ॥ शिरोभिःपतितैराजन्बाहुभिश्चसमंततः ३९ आस्तीर्णावसुधासर्वाशूराणामनि
वर्तिनाम् ॥ हतैश्चहन्यमानैश्चनिष्टनद्भिश्चसर्वशः ॥ बभूवायोधनंरौद्रंवैवस्वतपुरोपमम् ॥ ततोदुर्योधनोराजादृष्ट्वाकर्णस्यविक्रमम् ४१ अश्वत्थामानमासा
द्यवाक्यमेतदुवाचह ॥ युध्यतेऽसौरणेकर्णोदंशितःसर्वपार्थिवैः ४२ पश्यैतांद्रवतींसेनांकर्णसायकपीडिताम् ॥ कार्तिकेयेनाविध्वस्तामासुरींपृतनामिव ४३
दृष्ट्वैतांनिर्जितांसेनांरणेकर्णेनधीमता ॥ अभियात्येषबीभत्सुःसूतपुत्रजिघांसया ४४ तद्यथाप्रेक्षमाणानांसूतपुत्रंमहारथम् ॥ नहन्यात्पांडवःसंख्येतथानीति
र्विधीयताम् ४५ ततोद्रौणिःकृपःशल्योहार्दिक्यश्चमहारथः ॥ प्रत्युद्ययुस्तदापार्थंसूतपुत्रपरीप्सया ४६ आयांतंवीक्ष्यकौंतेयंशक्रंदैत्यचमूमिव ॥ बीभत्सु
रपिराजेंद्रपंचालैरभिसंवृतः ४७ प्रत्युद्ययौतदाकर्णंयथावृत्रंशतक्रतुः ॥ धृतराष्ट्रउवाच ॥ संरब्धंफाल्गुनंदृष्ट्वाकालांतकयमोपमम् ४८ कर्णोवैकर्तनःसूत
प्रत्यपद्यत्किमुत्तरम् ॥ योह्यस्पर्धतपार्थेननित्यमेवमहारथः ४९ आशंसतेचबीभत्सुंयुद्धेजेतुंसुदारुणम् ॥ सतुतंसहसाप्राप्तंनित्यमत्यंतवैरिणम् ५० कर्णोवैक
र्तनःसूतकिमुत्तरमपद्यत ॥ संजयउवाच ॥ आयांतंपाडवंदृष्ट्वागजंप्रतिगजोयथा ५१ असंभ्रांतोरणेकर्णःप्रत्युदीयाद्धनंजयम् ॥ तमापतंतंवेगेनवैकर्तनमजि
ह्मगैः ५२ छादयामासपार्थोऽथकर्णस्तुविजयंशरैः ॥ सकर्णंशरजालेनच्छादयामासपांडवः ५३

ततःकर्णःसुसंरब्धःशरैस्त्रिभिरविध्यत ॥ तस्यतल्लाघवंपार्थोनामृष्यतमहाबलः ५४ तस्मैबाणाञ्शिलाधौतान्प्रसन्नाग्रानजिह्मगान् ॥ प्राहिणोत्सूतपुत्रायत्रि
शतंशत्रुतापनः ५५ विव्याधचैनंसंरब्धोबाणेनैकेनवीर्यवान् ॥ सव्येभुजाग्रेबलवान्नाराचेनहसन्निव ५६ तस्यविद्धस्यबाणेनकराच्चापंपपातह ॥ पुनरादाय
तच्चापंनिमेषार्धान्महाबलः ५७ छादयामासबाणौघैःफाल्गुनंकृतहस्तवत् ॥ शरवृष्टिंतुतांमुक्तांसूतपुत्रेणभारत ५८ व्यधमच्छरवर्षेणस्मयन्निवधनंजयः ॥
तौपरस्परमासाद्यशरवर्षेणपार्थिव ५९ छादयेतांमहेष्वासौकृतप्रतिकृतैषिणौ ॥ तदद्भुतंमहद्युद्धंकर्णपांडवयोर्मृधे ६० क्रुद्धयोर्वाशिताहेतोर्वन्ययोर्गजयोरिव ॥
ततःपार्थोमहेष्वासोदृष्ट्वाकर्णस्यविक्रमम् ६१ मुष्टिदेशेधनुस्तस्याचिच्छेदत्वरयान्वितः ॥ अश्वांश्चचतुरोभल्लैरनयद्यमसादनम् ६२ सारथेश्चशिरःकायादहर
च्छत्रुतापनः ॥ अथैनंछिन्नधन्वानंहताश्वंहतसारथिम् ६३ विव्याधसायकैःपार्थश्चतुर्भिःपांडुनंदनः ॥ हताश्वात्तुरथात्तूर्णमवप्लुत्यनरर्षभः ६४ आरुरोहरथं
तूर्णंकृपस्यशरपीडितः ॥ सनुन्नोऽर्जुनबाणौघैराचितःशल्यकोयथा ६५ जीवितार्थमभिप्रेप्सुःकृपस्यरथमारुहत् ॥ राधेयंनिर्जितंदृष्ट्वातावकाभरतर्षभ ६६ धनं
जयशरैर्नुन्नाःप्राद्रवंतदिशोदश ॥ द्रवतस्तान्समालोक्यराजादुर्योधनोनृप ६७ निवर्तयामासतदावाक्यमेतदुवाचह ॥ अलंद्रुतेनवःशूरास्तिष्ठध्वंक्षत्रियर्षभाः
६८ एषपार्थवधायाहंस्वयंगच्छामिसंयुगे ॥ अहंपार्थान्हनिष्यामिसपंचालान्ससोमकान् ६९ अद्यमेयुध्यमानस्यसहगांडीवधन्वना ॥ द्रक्ष्यंतिविक्रमंपार्थाः
कालस्येवयुगक्षये ७० अद्यमद्बाणजालानिविमुक्तानिसहस्रशः ॥ द्रक्ष्यंतिसमरेयोधाःशलभानामिवायतीः ७१ अद्यबाणमयंवर्षंसृजतोममधन्विनः ॥ जी
मूतस्येवघर्मांतेद्रक्ष्यंतियुधिसैनिकाः ७२ जेष्याम्यद्यरणेपार्थंसायकैर्नतपर्वभिः ॥ तिष्ठध्वंसमरेशूराभयंत्यजतफाल्गुनात् ७३ नहिमद्वीर्यमासाद्यफाल्गुनः
प्रसहिष्यति ॥ यथावेलांसमासाद्यसागरोमकरालयः ७४ इत्युक्त्वाप्रययौराजासैन्येनमहतावृतः ॥ फाल्गुनंप्रतिदुर्धर्षःक्रोधात्संरक्तलोचनः ७५ तंप्रयांतंम
हाबाहुंदृष्ट्वाशारद्वतस्तदा ॥ अश्वत्थामानमासाद्यवाक्यमेतदुवाचह ७६ एषराजामहाबाहुरमर्षीक्रोधमूर्च्छितः ॥ पतंगवृत्तिमास्थायफाल्गुनंयोद्धुमिच्छति
७७ यावन्नःपश्यमानानांप्राणान्पार्थेनसंगतः ॥ नजह्यात्पुरुषव्याघ्रस्तावद्वारयकौरवम् ७८ यावत्फाल्गुनबाणानांगोचरंनाद्यगच्छति ॥ कौरवःपार्थिवो
वीरस्तावद्वारयसंयुगे ७९ यावत्पार्थशरैर्घोरैर्निर्मुक्तोरगसन्निभैः ॥ नभस्मीक्रियतेराजातावद्युद्धान्निवार्यताम् ८० अयुक्तमिवपश्यामितिष्ठत्स्वस्मासु
मानद ॥ स्वयंयुद्धाययद्राजापार्थंयात्यसहायवान् ८१ दुर्लभंजीवितंमन्येकौरव्यस्यकिरीटिना ॥ युद्ध्यमानस्यपार्थेनशार्दूलेनेवहस्तिनः ८२ मातुलेनैवमुक्त
स्तुद्रौणिःशस्त्रभृतांवरः ॥ दुर्योधनमिदंवाक्यंत्वरितःसमभाषत ८३ मयिजीवतिगांधारेनयुद्धंगंतुमर्हसि ॥ मामनादृत्यकौरव्यतवनित्यंहितैषिणम् ८४

८५ । ८६ । ८७ । ८८ । ८९ । ९० । ९१ । ९२ । ९३ । ९४ । ९५ । ९६ । ९६ । ९७ । ९८ । ९९ । १०० ॥ इतिद्रोणपर्वणिटीकायामेकोनषष्टचधिकशततमोऽध्यायः ॥ १५९ ॥ ७ ॥

नहितेसंभ्रमःकार्यःपार्थस्यविजयंप्रति ॥ अहमावारयिष्यामिपार्थंतिष्ठसुयोधन ८५ ॥ दुर्योधनउवाच ॥ आचार्यःपांडुपुत्रान्वैपुत्रवत्परिरक्षति ॥ त्वमप्युपेक्षांकुरुषेतेषुनित्यंद्विजोत्तम ८६ ममवामंदभाग्यत्वान्मंदस्तेविक्रमोयुधि ॥ धर्मराजप्रियार्थंवाद्रौपद्यावानविद्मतत् ८७ धिगस्तुममलुब्धस्ययत्कृतेसर्वबांधवाः ॥ सुखार्हाःपरमंदुःखंप्राप्नुवंत्यपराजिताः ८८ कोहिशस्त्रविदांमुख्योमहेश्वरसमोयुधि ॥ शत्रुंनक्षपयेच्छक्तोयोनस्याद्गौतमीसुतः ८९ अश्वत्थामन्प्रसीदस्वनाशयैतान्ममाहितान् ॥ तवास्त्रगोचरेशक्ताःस्थातुंदेवानदानवाः ९० पंचालान्सोमकांश्चैवजहिद्रौणेसहानुगान् ॥ वयंशेषान्हनिष्यामस्त्वयैवपरिरक्षिताः ९१ एतेहिसोमकाविप्रपंचालाश्चयशस्विनः ॥ ममसैन्येषुसंक्रुद्धाविचरंतिदवाग्निवत् ९२ तान्वारयमहाबाहोकेकयांश्चनरोत्तम ॥ पुराकुर्वंतिनिःशेषंरक्ष्यमाणाःकिरीटिना ९३ अश्वत्थामंस्त्वरायुक्तोयाहिशीघ्रमरिंदम ॥ आदौवायदिवापश्चात्तवेदंकर्ममारिष ९४ त्वमुत्पन्नोमहाबाहोपंचालानांवधंप्रति ॥ करिष्यसिजगत्सर्वमपंचालंकिलोद्यतः ९५ एवंसिद्धाऽब्रुवन्वाचोभविष्यतिचतत्तथा ॥ तस्मात्त्वंपुरुषव्याघ्रपंचालानजहिसानुगान् ९६ नतेऽस्त्रगोचरेशक्ताःस्थातुंदेवाःसवासवाः ॥ किमुपार्थाःसपंचालाःसत्यमेतद्ब्रवीमिते ९७ नत्वांसमर्थाःसंग्रामेपांडवाःसहसोमकैः ॥ बलाद्योधयितुंवीरसत्यमेतद्ब्रवीमिते ९८ गच्छगच्छमहाबाहोननःकालात्ययोभवेत् ॥ इयंहिद्रवतेसेनापार्थसायकपीडिता ९९ शक्तोह्यसिमहाबाहोदिव्येनस्वेनतेजसा ॥ निग्रहेपांडुपुत्राणांपंचालानांचमानद १०० ॥ इतिश्रीमहाभारतेद्रोणपर्वणिघटोत्कचवधपर्वणि रात्रियुद्धेदुर्योधनवाक्येएकोनषष्टचाधिकशततमोऽध्यायः ॥ १५९ ॥ ॥ ॥ ७ ॥

संजयउवाच ॥ दुर्योधनेनैवमुक्तोद्रौणिराहवदुर्मदः ॥ चकारारिवधेयत्नमिंद्रोदैत्यवधेयथा ॥ प्रत्युवाचमहाबाहुस्तवपुत्रमिदंवचः १ सत्यमेतन्महाबाहोयथात्थदसिकौरव ॥ प्रियाहिपांडवानित्यंममचापिपितुश्चमे २ तथैवावांप्रियौतेषांनतुयुद्धेकुरूद्वह ॥ शक्तितस्तातयुध्यामस्त्यक्त्वाप्राणानभीतवत् ३ अहंकर्णश्चशल्यश्चकृपोहार्दिक्यएवच ॥ निमेषात्पांडवींसेनांक्षपयेमनृपोत्तम ४ तेचापिकौरवींसेनांनिमेषार्धात्कुरूद्वह ॥ क्षपयेयुर्महाबाहोनस्यामयदिसंयुगे ५ युध्यतांपांडवाञ्छक्त्यातेषांचास्मान्युयुत्सताम् ॥ तेजस्तेजःसमासाद्यप्रशमंयातिभारत ६ अशक्यातरसाजेतुंपांडवानामनीकिनी ॥ जीवत्सुपांडुपुत्रेषुतद्धिसत्यंब्रवीमिते ७ आत्मार्थंयुध्यमानास्तेसमर्थाःपांडुनंदनाः ॥ किमर्थंतवसैन्यानिनहनिष्यंतिभारत ८ त्वंतुलुब्धतमोराजन्निकृतिज्ञश्चकौरव ॥ सर्वाभिशंकीमानीचततोऽस्मानभिशंकसे ९ मन्येत्वंकुत्सितोराजन्पापात्मापापपूरुषः ॥ अन्यानपिसनःक्षुद्रशंकसेपापभावितः १०

दुर्योधनेनेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ त्वंत्विति निकृतिर्वंचनंतज्ज्ञत्वादस्मानप्यात्मवत्पश्यसीत्यर्थः ९ । १०

११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२

अहंतुयत्नमास्थायत्वदर्थेत्यक्तजीवितः ॥ एषगच्छाभिसंग्रामंत्वत्कृतेकुरुनंदन ११ योत्स्येहंशत्रुभिःसार्धंजेष्यामिचवरान्वरान् ॥ पंचालैःसहयोत्स्यामिसोम
कैःकेकयैस्तथा १२ पांडवेयैश्चसंग्रामेत्वत्प्रियार्थमरिंदम ॥ अद्यमद्बाणनिर्दग्धाःपंचालाःसोमकास्तथा १३ सिंहेनेवार्दितागावोविद्रविष्यंतिसर्वशः ॥ अद्यध
र्मसुतोराजादृष्ट्वाममपराक्रमम् १४ अश्वत्थाममयंलोकंमंस्यतेसहसोमकैः ॥ आगमिष्यतिनिर्वेदंधर्मपुत्रोयुधिष्ठिरः १५ दृष्ट्वाविनिहतान्संख्येपंचालान्सोमकैः
सह ॥ येमांयुद्धेऽभियोत्स्यंतितान्हनिष्यामिभारत १६ नहितेवीरमोक्ष्यंतेमद्बाहंतरमागताः ॥ एवमुक्त्वामहाबाहुःपुत्रंदुर्योधनंतव १७ अभ्यवर्ततयुद्धायत्रा
सयन्सर्वधन्विनः ॥ चिकीर्षुस्तवपुत्राणांप्रियंप्राणभृतांवरः १८ ततोऽब्रवीत्सकैकेयान्पंचालान्गौतमीसुतः ॥ प्रहरध्वमितःसर्वेममगात्रेमहारथाः १९ स्थि
रीभूताश्चयुद्धध्वंदर्शयंतोऽस्त्रलाघवम् ॥ एवमुक्तास्तुतेसर्वेशस्त्रवृष्टीरपातयन् २० द्रौणिंप्रतिमहाराजजलंजलधराइव ॥ तान्निहत्यशरान्द्रौणिर्दशवीरान
पोथयत् २१ प्रमुखेपांडुपुत्राणांधृष्टद्युम्नस्यचप्रभो ॥ तेहन्यमानाःसमरेपंचालाःसोमकास्तथा २२ परित्यज्यरणेद्रौणिंव्यद्रवंतदिशोदश ॥ तान्दृष्ट्वाद्रवतः
शूरान्पंचालान्सहसोमकान् २३ धृष्टद्युम्नोमहाराजद्रौणिमभ्यद्रवद्रणे ॥ ततःकांचनचित्राणांसजलांबुदनादिनाम् २४ वृतःशतेनशूराणांरथानामनिवर्तिनाम् ॥
पुत्रःपंचालराजस्यधृष्टद्युम्नोमहारथः २५ द्रौणिमित्यब्रवीद्वाक्यंदृष्ट्वायोधान्निपातितान् ॥ आचार्यपुत्रदुर्बुद्धेकिमन्यैर्निहतैस्तव २६ समागच्छमयासार्धंय
दिशूरोऽसिसंयुगे ॥ अहंत्वांनिहनिष्यामितिष्ठेदानींममाग्रतः २७ ततस्तमाचार्यसुतंधृष्टद्युम्नःप्रतापवान् ॥ मर्मभिद्भिःशरैस्तीक्ष्णैर्जघानभरतर्षभ २८ तेतु
पंक्तीकृताद्रौणिंशराविविशुराशुगाः ॥ रुक्मपुंखाःप्रसन्नाग्राःसर्वकायावदारणाः २९ मध्वर्थिनइवोद्दामाभ्रमराःपुष्पितंद्रुमम् ॥ सोतिविद्धोभृशंक्रुद्धःपदाऽऽक्रां
तइवोरगः ३० मानीद्रौणिरसंभ्रांतोबाणपाणिरभाषत ॥ धृष्टद्युम्नस्थिरोभूत्वामुहूर्तंप्रतिपालय ३१ यावत्त्वांनिशितैर्बाणैःप्रेषयामियमक्षयम् ॥ द्रौणिरेवमथा
भाष्यपार्षतंपरवीरहा ३२ छादयामासबाणौघैःसमंताल्लघुहस्तवत् ॥ सबाध्यमानःसमरेद्रौणिनायुद्धदुर्मदः ३३ द्रौणिंपांचालतनयोवाग्भिरातर्जयत्तदा ॥
नजानीषेप्रतिज्ञांमेविप्रोत्पत्तिंतथैवच ३४ द्रोणंहत्वाकिलमयाहंतव्यस्त्वंसुदुर्मते ॥ ततस्त्वाहंनहन्म्यद्यद्रोणेजीवतिसंयुगे ३५ इमांतुरजनींप्राप्तामप्रभातां
सुदुर्मते ॥ निहत्यापितरंतेऽद्यततस्त्वामपिसंयुगे ३६ नेष्यामिप्रेतलोकायह्येतन्मेमनसिस्थितम् ॥ यस्तेपार्थेषुविद्वेषोयाभक्तिःकौरवेषुच ३७ तांदर्शयस्थि
रोभूत्वानमेजीवन्विमोक्ष्यसे ॥ योहिब्राह्मण्यमुत्सृज्यक्षत्रधर्मरतोद्विजः ३८ सवध्यःसर्वलोकस्ययथात्वंपुरुषाधमः ॥ इत्युक्तःपरुषंवाक्यंपार्षतेनद्विजोत्तमः ३९
क्रोधमाहारयत्तीव्रंतिष्ठतिष्ठेतिचाब्रवीत् ॥ निर्दहन्निवचक्षुर्भ्यांपार्षतंसोऽभ्यवैक्षत ४०

३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४०

४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० ॥ इतिद्रोणपर्वणिटीकायांषष्ट्यधिकशततमोऽध्यायः ॥ १६०



छादसामासचशरैर्निःश्वसन्पन्नगोयथा ॥ सच्छाद्यमानःसमरेद्रौणिनाराजसत्तम ४१ सर्वपांचालसेनाभिःसंवृतोरथसत्तमः ॥ नाकंपतमहाबाहुःस्ववीर्यं समुपाश्रितः ४२ सायकांश्चैवविविधानश्वत्थाम्निमुमोचह ॥ तौपुनःसंन्यवर्तेतांप्राणद्यूतपणेरणे ४३ निपीडयंतौबाणौघैःपरस्परममर्षिणौ ॥ उत्सृजंतौ महेष्वासौशरवृष्टीःसमंततः ४४ द्रौणिपार्षतयोर्युद्धंघोररूपंभयानकम् ॥ दृष्ट्वासंपूजयामासुःसिद्धचारणवातिकाः ४५ शरौघैःपूरयंतौतावाकाशंच दिशस्तथा ॥ अलक्ष्यौसमयुध्येतांमहत्कृत्वाशरैस्तमः ४६ नृत्यमानाविवरणेमंडलीकृतकार्मुकौ ॥ परस्परवधेयत्तौसर्वभूतभयंकरौ ४७ आयुध्येतांमहा बाहूचित्रंलघुचसुष्टुच ॥ संपूज्यमानौसमरेयोधमुख्यैःसहस्रशः ४८ तौप्रयुद्धौरणेदृष्ट्वावनेवन्यौगजाविव ॥ उभयोःसेनयोर्हर्षस्तुमुलःसमपद्यत ४९ सिं हनादरवाश्चासन्दध्मुःशंखांश्चसैनिकाः ॥ वादित्राण्यभ्यवाद्यंतशतशोऽथसहस्रशः ५० तस्मिंस्तुतुमुलेयुद्धेभीरूणांभयवर्धने ॥ मुहूर्तमपितद्युद्धंसमरूपंतदा ऽभवत् ५१ ततोद्रौणिर्महाराजपार्षतस्यमहात्मनः ॥ ध्वजंधनुस्तथाछत्रमुभौचपार्ष्णिसारथी ५२ सूतमश्वांश्चचतुरोनिहत्याभ्यद्रवद्रणे ॥ पंचालांश्चैव तान्सर्वान्बाणैःसन्नतपर्वभिः ५३ व्यद्रावयदमेयात्माशतशोऽथसहस्रशः ॥ ततस्तुविव्यथेसेनापांडवीभरतर्षभ ५४ दृष्ट्वाद्रौणेर्महत्कर्मवासवस्येवसंयुगे ॥ शतेनचशतंहत्वापंचालानांमहारथः ५५ त्रिभिश्चनिशितैर्बाणैर्हत्वात्रीन्वैमहारथान् ॥ द्रौणिर्द्रुपदपुत्रस्यफाल्गुनस्यचपश्यतः ५६ नाशयामासपंचालान्भू यिष्ठंयेव्यवस्थिताः ॥ तेवध्यमानाःपंचालाःसमरेसहसृंजयैः ५७ अगच्छन्द्रौणिमुत्सृज्यविप्रकीर्णरथध्वजाः ॥ सजित्वासमरेशत्रून्द्रोणपुत्रोमहारथः ५८ न नादसुमहानादंतपांतेजलदोयथा ॥ सनिहत्यबहूञ्छूरानश्वत्थामाव्यरोचत ॥ युगांतेसर्वभूतानिभस्मकृत्वेवपावकः ५९ संपूज्यमानोयुधिकौरवेयैर्निर्जित्यसं ख्येऽरिगणान्सहस्रशः ॥ व्यरोचतद्रोणसुतःप्रतापवान्यथासुरेंद्रोऽरिगणान्निहत्यवै ६० ॥ इतिश्रीमहाभारतेद्रोणपर्वणिघटोत्कचवधपर्वणिरात्रियुद्धेअश्वत्था मपराक्रमेषष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥ ध ॥ संजयउवाच ॥ ततोयुधिष्ठिरश्चैवभीमसेनश्चपांडवः ॥ द्रोणपुत्रंमहाराजसमंतात्पर्यवारयन् १ ततोदुर्योधनोराजाभारद्वाजेनसंवृतः ॥ अभ्ययात्पांडवान्संख्येततोयुद्धमवर्तत २ घोररूपंमहाराजभीरूणांभयवर्धनम् ॥ अंबष्ठान्मालवान्वंगाञ्छिबींस्त्रैगर्त कानपि ३ प्राहिणोन्मृत्युलोकायगणान्क्रुद्धोवृकोदरः ॥ अभीषाहाञ्छूरसेनान्क्षत्रियान्युद्धदुर्मदान् ४ निकृत्यपृथिवींचक्रेभीमःशोणितकर्दमाम् ॥ यौधेया नद्रिजान्राजन्मद्रकान्मालवानपि ५ प्राहिणोन्मृत्युलोकायकिरीटीनिशितैःशरैः ॥ प्रगाढमंजोगतिभिर्नाराचैरभिताडिताः ६ निपेतुर्द्विरदाभूमौद्विशृंगा इवपर्वताः ॥ निकृत्तैर्हस्तिहस्तैश्चचेष्टमानैरितस्ततः ७

ववइति १ । २ । ३ । ४ । ५ । ६ । ७

८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ ॥ इतिद्रोणपर्वणिटीकायामेकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥ ७ ॥ सोमदत्तमित्यध्यायःस्पष्टार्थः १ । २

रराजवसुधाकीर्णाविसर्पद्भिरिवोरगैः ॥ क्षितैःकनकचित्रैश्चनृपच्छत्रैःक्षितिर्बभौ ८ द्यौरिवादित्यचंद्राद्यैर्ग्रहैःकीर्णायुगक्षये ॥ हतप्रहरताभीताविध्यतऽथवल्कं तत ९ इत्यासीत्तुमुलःशब्दःशोणाश्वस्यरथंप्रति ॥ द्रोणस्तुपरमक्रुद्धोवायव्यास्त्रेणसंयुगे १० व्यधमत्तान्महावायुर्मेघानिवदुरत्ययः ॥ तेहन्यमानाद्रोणेनपं चालाःप्राद्रवन्भयात् ११ पश्यतोभीमसेनस्यपार्थस्यचमहात्मनः ॥ ततःकिरीटीभीमश्चसहसासंन्यवर्तताम् १२ महतारथवंशेनपरिगृह्यबलंमहत् ॥ बी भत्सुर्दक्षिणंपार्श्वमुत्तरंतुवृकोदरः १३ भारद्वाजंशरौघाभ्यांमहद्भ्यामभ्यवर्षताम् ॥ तौतथासृंजयाश्चैवपंचालाश्चमहौजसः १४ अन्वगच्छन्महाराजमत्स्यै श्चसहसोमकैः ॥ तथैवतवपुत्रस्यरथोदाराःप्रहारिणः १५ महत्यासेनयाराजन्जग्मुर्द्रोणरथंप्रति ॥ ततःसाभारतीसेनाहन्यमानाकिरीटिना १६ तमसानि द्रयाचैवपुनरेवव्यदीर्यत ॥ द्रोणेनवार्यमाणास्तेस्वयंतवसुतेनच १७ नाशक्यंतमहाराजयोधावारयितुंतदा ॥ सापांडुपुत्रस्यशरैर्दीर्यमाणामहाचमूः १८ तमसासंवृतेलोकेव्यद्रवत्सर्वतोमुखी ॥ उत्सृज्यशतशोवाहांस्तत्रकेचिन्नराधिपाः ॥ प्राद्रवंतमहाराजभयाविष्टाःसमंततः १९ ॥ ॥ इतिश्रीमहाभारतेद्रो णपर्वणि घटोत्कचवधपर्वणि रात्रियुद्धेसंकुलयुद्धे एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ सोमदत्तंतुसंप्रेक्ष्यविधुन्वानं महद्धनुः ॥ सात्यकिःप्राहयंतारंसोमदत्तायमांवह १ नह्यहत्वारणेशत्रुंसोमदत्तंमहाबलम् ॥ निवर्तिष्येरणात्सूतसत्यमेतद्वचोमम २ ततःसंप्रैषयद्यंतासैंधवां स्तान्मनोजवान् ॥ तुरंगमाञ्छंखवर्णान्सर्वशब्दातिगान्रणे ३ तेऽवहन्युयुधानंतुमनोमारुतरंहसः ॥ यथेंद्रंहरयोराजन्पुरादैत्यवधोद्यतम् ४ तमापतंतंसंप्रे क्ष्यसात्वतंरभसंरणे ॥ सोमदत्तोमहाबाहुरसंभ्रांतोन्यवर्तत ५ विमुंचञ्छरवर्षाणिपर्जन्यइववृष्टिमान् ॥ छादयामासशैनेयंजलदोभास्करंयथा ६ असंभ्रांतश्च समरेसात्यकिःकुरुपुंगवम् ॥ छादयामासबाणौघैःसमंताद्भरतर्षभ ७ सोमदत्तस्तुतंषष्ट्याविव्याधोरसिमाधवम् ॥ सात्यकिश्चापितंराजन्नविध्यत्सायकैःशितैः ८ तावन्योन्यंशरैःकृत्तौव्यराजेतांनरर्षभौ ॥ सुपुष्पौपुष्पसमयेपुष्पितावि(व)किंशुकौ ९ रुधिरोक्षितसर्वांगौकुरुवृष्णियशस्करौ ॥ परस्परमवेक्षेतांदहंतावि वलोचनैः १० रथमंडलमार्गेषुचरंतावरिमर्दनौ ॥ घोररूपौहितावास्तांवृष्टिमंताविवांबुदौ ११ शरसंभिन्नगात्रौतुसर्वतःशकलीकृतौ ॥ श्वाविधाविवराजेंद्र दृश्येतांशरविक्षतौ १२ सुवर्णपुंखैरिषुभिराचितौतौव्यराजताम् ॥ खद्योतैरावृतौराजन्प्रावृषीववनस्पती १३ संप्रदीपितसर्वांगौसायकैस्तैर्महारथौ ॥ अदृ श्येतांरणेक्रुद्धावुल्काभिरिवकुंजरौ १४ ततोयुधिमहाराजसोमदत्तोमहारथः ॥ अर्धचंद्रेणचिच्छेदमाधवस्यमहद्धनुः १५ अथैनंपंचविंशत्यासायकानांसमार्प यत् ॥ त्वरमाणस्त्वराकालेपुनश्चदशभिःशरैः १६

३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६

१७ बाल्हीकस्यसोमदत्तस्य १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२

अथान्यद्धनुरादायसात्यकिर्वेगवत्तरम् ॥ पंचभिःसायकैस्तूर्णंसोमदत्तमविध्यत १७ ततोऽपरेणभल्लेनध्वजंचिच्छेदकांचनम् ॥ बाल्हीकस्यरणेराजन्सा त्यकिःप्रहसन्निव १८ सोमदत्तस्त्वसंभ्रांतोदृष्ट्वाकेतुंनिपातितम् ॥ शैनेयंपंचविंशत्यासायकानांसमाचिनोत् १९ सात्वतोऽपिरणेक्रुद्धःसोमदत्तस्यधन्विनः ॥ ध नुश्चिच्छेदभल्लेनक्षुरप्रेणशितेनह २० अथैनंरुक्मपुंखानांशतेननतपर्वणाम् ॥ आचिनोद्बहुधाराजन्भग्नदंष्ट्रमिवद्विपम् २१ अथान्यद्धनुरादायसोमदत्तोमहा रथः ॥ सात्यकिंछादयामासशरवृष्ट्यामहाबलः २२ सोमदत्तंतुसंक्रुद्धोरणेविव्याधसात्यकिः ॥ सात्यकिंशरजालेनसोमदत्तोऽप्यपीडयत् २३ दशभिःसात्वत स्यार्थेभीमोऽहन्बाल्हिकात्मजम् ॥ सोमदत्तोऽप्यसंभ्रांतोभीममार्च्छच्छितैःशरैः २४ ततस्तुसात्वतस्यार्थेभीमसेनोनवंदृढम् ॥ मुमोचपरिघंघोरंसोमदत्तस्य वक्षसि २५ तमापतंतंवेगेनपरिघंघोरदर्शनम् ॥ द्विधाचिच्छेदसमरेप्रहसन्निवकौरवः २६ सपपातद्विधाच्छिन्नआयसःपरिघोमहान् ॥ महीधरस्येवमहाच्छि खरंवज्रदारितम् २७ ततस्तुसात्यकीराजन्सोमदत्तस्यसंयुगे ॥ धनुश्चिच्छेदभल्लेनहस्तावापंचपंचभिः २८ ततश्चतुर्भिश्चशरैस्तूर्णंतांस्तुरगोत्तमान् ॥ समीपंप्रेषयामासप्रेतराजस्यभारत २९ सारथेश्चशिरःकायाद्भल्लेननतपर्वणा ॥ जहारनरशार्दूलःप्रहसञ्छिनिपुंगवः ३० ततःशरंमहाघोरंज्वलंतमि वपावकम् ॥ मुमोचसात्वतोराजन्स्वर्णपुंखंशिलाशितम् ३१ सविमुक्तोबलवताशैनेयेनशरोत्तमः ॥ घोरस्तस्योरसिविभोनिपपाताशुभारत ३२ सोऽतिविद्धोमहाराजसात्वतेनमहारथः ॥ सोमदत्तोमहाबाहुर्निपपातममारच ३३ तंदृष्ट्वानिहतंतत्रसोमदत्तंमहारथाः ॥ महताशरवर्षेणयुयुधानमुपाद्र वन् ३४ छाद्यमानंशरैर्दृष्ट्वायुयुधानंयुधिष्ठिरः ॥ पांडवाश्चमहाराजसहसर्वैःप्रभद्रकैः ॥ महत्यासेनयासार्धंद्रोणानीकमुपाद्रवन् ३५ ततोयुधिष्ठिरःक्रुद्धस्ता वकानांमहाबलम् ॥ शरैर्विद्रावयामासभारद्वाजस्यपश्यतः ३६ सैन्यानिद्रावयंतंतुद्रोणोदृष्ट्वायुधिष्ठिरम् ॥ अभिदुद्राववेगेनक्रोधसंरक्तलोचनः ३७ ततःसुनि शितैर्बाणैःपार्थंविव्याधसप्तभिः ॥ युधिष्ठिरोऽपिसंक्रुद्धःप्रतिविव्याधपंचभिः ३८ सोतिविद्धोमहाबाहुःसृक्किणीपरिसंलिहन् ॥ युधिष्ठिरस्यचिच्छेदध्वजंकार्मुक मेवच ३९ साच्छिन्नधन्वात्वरितस्त्वराकालेनृपोत्तमः ॥ अन्यदादत्तवेगेनकार्मुकंसमरेदृढम् ४० ततःशरसहस्रेणद्रोणंविव्याधपार्थिवः ॥ साश्वसूतध्वजरथं तदद्भुतमिवाभवत् ४१ ततोमुहूर्तंव्यथितःशरपातप्रपीडितः ॥ निषसादरथोपस्थेद्रोणोभरतसत्तम ४२ प्रतिलभ्यततःसंज्ञांमुहूर्ताद्द्विजसत्तमः ॥ क्रोधेनमह ताऽऽविष्टोवायव्यास्त्रमवासृजत् ४३ असंभ्रांतस्ततःपार्थोधनुराकृष्यवीर्यवान् ॥ ततस्तदस्त्रमस्त्रेणस्तंभयामासभारत ४४ चिच्छेदचधनुर्दीर्घंब्राह्मणस्यचपां डवः ॥ ततोऽन्यद्धनुरादायद्रोणःक्षत्रियमर्दनः ४५ तदप्यस्यशितैर्भल्लैश्चिच्छेदकुरुपुंगवः ॥ ततोऽब्रवीद्वासुदेवःकुंतीपुत्रंयुधिष्ठिरम् ४६ ४३ । ४४ । ४५ । ४६

४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ ॥ इतिद्रोणपर्वणिटीकायांद्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥ ७ ॥ वर्तमानइति १ । २ । ३ । ४ । ५ । ६ अंधेआंध्यहेतौ

युधिष्ठिरमहाबाहोयत्त्वांवक्ष्यामितच्छृणु ॥ उपारमस्वयुद्धेत्वंद्रोणाद्भरतसत्तम ४७ यततेहिसदाद्रोणोग्रहणेतवसंयुगे ॥ नानुरूपमहंमन्येयुद्धमस्यत्वयासह ४८ योऽस्यसृष्टोविनाशायसएवैनंहनिष्यति ॥ परिवर्ज्यगुरुंयाहियत्रराजासुयोधनः ४९ राजाराज्ञाहियोद्धव्योनाराज्ञायुद्धमिष्यते ॥ तत्रत्वंगच्छकौंतेय हस्त्यश्वरथसंवृतः ५० यावन्मात्रेणचमयासहायेनधनंजयः ॥ भीमश्चरथशार्दूलोयुध्यतेकौरवैःसह ५१ वासुदेववचःश्रुत्वाधर्मराजोयुधिष्ठिरः ॥ मुहूर्तंचिंतयित्वातुततोदारुणमाहवम् ५२ प्रायाद्द्रुतममित्रघ्नोयत्रभीमोव्यवस्थितः ॥ विनिघ्नंस्तावकान्योधान्व्यादितास्यइवांतकः ५३ रथघोषेणमहतानादयन्वसुधातलम् ॥ पर्जन्यइवघर्मांतेनादयन्वैदिशोदश ५४ भीमस्यानिघ्नतःशत्रून्पार्ष्णिंजग्राहपांडवः ॥ द्रोणोऽपिपांडुपंचालान्व्यधमद्रजनीमुखे ५५ ॥ इति श्रीमहाभारतेद्रोणपर्वणिघटोत्कचवधपर्वणि रात्रियुद्धेद्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥ ७ ॥ संजयउवाच ॥ वर्तमानेतथायुद्धेघोररूपेभयावहे ॥ तमसासंवृतेलोकेरजसाचमहीपते १ नापश्यंतरणेयोधाःपरस्परमवस्थिताः ॥ अनुमानेनसंज्ञाभिर्युद्धंतद्ववृधेमहत् २ नरनागाश्वमथनंपरमंलोमहर्षणम् ॥ द्रोणकर्णकृपावीराभीमपार्षतसात्यकाः ३ अन्योन्यंक्षोभयामासुःसैन्यानिनृपसत्तम ॥ वध्यमानानिसैन्यानिसमंतात्तैर्महारथैः ४ तमसासंवृतेचैवसमंताद्विप्रदुद्रुवुः ॥ तेसर्वतोविद्रवंतोयोधाविध्वस्तचेतनाः ५ अहन्यंतमहाराजधावमानाश्चसंयुगे ॥ महारथसहस्राणिजघ्नुरन्योन्यमाहवे ६ अंधेतमसिमूढानिपुत्रस्यतवमंत्रिते ॥ ततःसर्वाणिसैन्यानिसेनागोपाश्चभारत ॥ व्यमुह्यंतरणेतत्रतमसासंवृतेसति ७ ॥ धृतराष्ट्रउवाच ॥ तेषांसंलोड्यमानानांपांडवैर्निहतौजसाम् ॥ अंधेतमसिमग्नानामासीत्किंवोमनस्तदा ८ कथंप्रकाशस्तेषांवाममसैन्यस्यवापुनः ॥ बभूवलोकेतमसातथासंजयसंवृते ९ ॥ संजयउवाच ॥ ततःसर्वाणिसैन्यानिहतशिष्टानियानिवै ॥ सेनागोप्तॄनथादिश्यपुनर्व्यूहमकल्पयत् १० द्रोणःपुरस्ताज्जघनेतुशल्यस्तथाद्रौणिःकृतवर्मासौबलश्च ॥ स्वयंतुसर्वाणिबलानिराजन्राजाभ्ययाद्गोपयन्वैनिशायाम् ११ उवाचसर्वांश्चपदातिसंघान्दुर्योधनःपार्थिवसांत्वपूर्वम् ॥ उत्सृज्यसर्वेपरमायुधानिगृह्णीतहस्तैर्ज्वलितान्प्रदीपान् १२ तेचोदिताःपार्थिवसत्तमेनततःप्रहृष्टाजगृहुःप्रदीपान् ॥ देवर्षिगंधर्वसुरर्षिसंघाविद्याधराश्चाप्सरसांगणाश्च १३ नागाःसयक्षोरगकिंनराश्चहृष्टादिविस्थाजगृहुःप्रदीपान् ॥ दिग्देवतेभ्यश्चसमापतंतोऽदृश्यंतदीपाःससुगंधितैलाः १४ विशेषतोनारदपर्वताभ्यांसंबोध्यमानाःकुरुपांडवार्थम् ॥ साभूयएवध्वजिनीविभक्ताव्यरोचताग्निप्रभयानिशायाम् १५

७ वोयुष्मत्संबंधिनांमनः किंकिंविधंकातरंहृष्टंवेत्यर्थः ८ । ९ ततइति द्रोणइत्यपकृष्यते तेषांसैन्यानांव्यूहमित्यध्याहृत्यान्वयः १० । ११ । १२ देवर्षीति भुविपदातिभिर्दीपेषुगृहीतेषुदिविस्थादेवाअपिदीपान्जगृहुर्युद्धोत्सवप्रेक्षकाः १३ दिग्दैवतेभ्यइत्यंतरिक्षस्थानामपिदेवानामागमनमुक्तम् १४ । १५

१६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३८ ॥ इतिद्रो॰ टी॰ त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

महाधनैराभरणैश्चदिव्यैःशस्त्रैश्चदीप्तैरपिसंपतद्भिः ॥ रथेरथेपंचविदीपकास्तुप्रदीपकास्तत्रगजेत्रयश्च १६ प्रत्यश्वमेकश्चमहाप्रदीपःकृतास्तुतैःपांडवैःकौरवेयैः ॥ क्षणेनसर्वेविहिताःप्रदीपाव्यादीपयंतोध्वजिनींतवाशु १७ सर्वास्तुसेनाव्यतिसेव्यमानाःपदातिभिःपावकतैलहस्तैः ॥ प्रकाश्यमानाददृशुर्निशायांयथांतरिक्षेजलदास्तडिद्भिः १८ प्रकाशितायांतुततोध्वजिन्यांद्रोणोऽग्निकल्पःप्रतपन्समंतात् ॥ रराजराजेंद्रसुवर्णवर्मामध्यंगतःसूर्यइवांशुमाली १९ जांबूनदेष्वाभरणेषुचैवनिष्केषुशुद्धेषुशरासनेषु ॥ पीतेषुशस्त्रेषुचपावकस्यप्रतिप्रभास्तत्रतदाबभूवुः २० गदाश्चशैक्याःपरिघाश्चशुभ्रारथेषुशक्त्यश्चविवर्तमानाः ॥ प्रतिप्रभारश्मिभिराजमीढपुनःपुनःसंजनयंतिदीपान् २१ छत्राणिवालव्यजनानिखड्गादीप्तामहोल्काश्चतथैवराजन् ॥ व्याघूर्णमानाश्चसुवर्णमालाव्यायच्छतांतत्रतदाविरेजुः २२ शस्त्रप्रभाभिश्चविराजमानंदीपप्रभाभिश्चतदाबलंतत् ॥ प्रकाशितंचाभरणप्रभाभिर्भृशंप्रकाशंनृपतेबभूव २३ पीतानिशस्त्राण्यसृगुक्षितानिवीरावधूतानितनुच्छदानि ॥ दीप्तांप्रभांप्राजनयंततत्रतपात्ययेविद्युदिवांतरिक्षे २४ प्रकंपितानामभिघातवेगैरभिघ्नतांचापततांजवेन ॥ वक्त्राण्यकाशंततदानराणांवाय्वीरितानीवमहांबुजानि २५ महावनेदारुमयेप्रदीप्तेयथाप्रभाभास्करस्यापिनश्येत् ॥ तथातदाऽऽसीद्ध्वजिनीप्रदीप्तामहाभयाभारतभीमरूपा २६ तत्संप्रदीप्तंबलमस्मदीयंनिशम्यपार्थास्त्वरितास्तथैव ॥ सर्वेषुसैन्येषुपदातिसंघानचोदयंस्तेऽपिचक्रुःप्रदीपान् २७ गजेगजेसप्तकृताःप्रदीपारथेरथेचैवदशप्रदीपाः ॥ द्वावश्वपृष्ठेपरिपार्श्वतोऽन्येध्वजेषुचान्येजघनेषुचान्ये २८ सेनासुसर्वासुचपार्श्वतोऽन्येपश्चात्पुरस्ताच्चसमंततश्च ॥ मध्येतथाऽन्येज्वलिताग्निहस्ताव्यदीपयन्पांडुसुतस्यसेनाम् २९ मध्येतथाऽन्येज्वलिताग्निहस्ताःसेनाद्वयेऽपिस्मनराविचेरुः ॥ सर्वेषुसैन्येषुपदातिसंघाविमिश्रिताहास्तिरथाश्ववृंदैः ३० व्यदीपयंस्तेध्वजिनींप्रदीप्तास्तथाबलंपांडवेयाभिगुप्तम् ॥ तेनप्रदीप्तेनतथाप्रदीप्तंबलंतवासीद्बलवद्बलेन ३१ भाःकुर्वताभानुमताशतेनदिवाकरेणाग्निरिवाभिगुप्तः ॥ तयोःप्रभाःपृथिवीमंतरिक्षंसर्वाव्यतिक्रम्यदिशश्चवृद्धाः ३२ तेनप्रकाशेनभृशंप्रकाशंबभूवतेषांतवचैवसैन्यम् ॥ तेनप्रकाशेनदिवंगतेनसंबोधितादेवगणाश्चराजन् ३३ गंधर्वयक्षासुरसिद्धसंघाःसमागमन्नप्सरसश्चसर्वाः ॥ तद्देवगंधर्वसमाकुलंचयक्षासुरेंद्राप्सरसांगणैश्च ३४ हतैश्चशूरैर्दिवमारुहद्भिरायोधनंदिव्यकल्पंबभूव ॥ रथाश्वनागाकुलदीपदीप्तंसंरब्धयोधंहतविद्रुताश्वम् ३५ महद्बलंव्यूढरथाश्वनागंसुरासुरव्यूहसमंबभूव ॥ तच्छक्तिसंघाकुलचंडवातंमहारथाभ्रंगजवाजिघोषम् ३६ शस्त्रौघवर्षंरुधिरांबुधारंनिशिप्रवृत्तंरथदुर्दिनंतत् ॥ तस्मिन्महाग्निप्रतिमोमहात्मासंतापयन्पांडवान्विप्रमुख्यः ३७ गभस्तिभिर्मध्यगतोयथाऽर्कोवर्षात्ययेतद्वदभून्नरेंद्र ३८ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिघटोत्कचवधपर्वणिरात्रियुद्धेदीपोद्योतनेत्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

॥ संजयउवाच ॥ प्रकाशितेतदालोकेरजसातमसावृते ॥ समाजग्मुरथोवीराःपरस्परवधैषिणः १ तेसमेत्यरणेराजन्शस्त्रप्रासासिधारिणः ॥ परस्परमुदैक्षं
तपरस्परकृतागसः २ प्रदीपानांसहस्रैश्चदीप्यमानैःसमंततः ॥ रत्नाचितैःस्वर्णदंडैर्गंधतैलावसिंचितैः ३ देवगंधर्वदीपाद्यैःप्रभाभिरधिकोज्ज्वलैः ॥ विर
राजतदाभूमिर्ग्रहैर्द्यौरिवभारत ४ उल्काशतैःप्रज्वलितैरणभूमिर्व्यराजत ॥ दह्यमानेवलोकानामभावेचवसुंधरा ५ व्यदीप्यंतदिशःसर्वाःप्रदीपैस्तैःसमं
ततः ॥ वर्षाप्रदोषेखद्योतैर्वृतावृक्षाइवाबभुः ६ असज्जंततवीरावीरेष्वेवपृथक्पृथक् ॥ नागानागैःसमाजग्मुस्तुरगाहयसादिभिः ७ रथारथवरैरेवसमाज
ग्मुर्मुदायुताः ॥ तस्मिन्रात्रिमुखेघोरेतवपुत्रस्यशासनात् ८ चतुरंगस्यसैन्यस्यसंपातश्चमहानभूत् ॥ ततोऽर्जुनोमहाराजकौरवाणामनीकिनीं ९ व्यध
मत्त्वरयायुक्तःक्षपयन्सर्वपार्थिवान् ॥ धृतराष्ट्रउवाच ॥ तस्मिन्प्रविष्टेसंरब्धेममपुत्रस्यवाहिनीम् १० अमृष्यमाणेदुर्धर्षेकथमासीन्मनोहिवः ॥ किमकुर्वत
सैन्यानिप्रविष्टेपरपीडने ११ दुर्योधनश्चकिंकृत्यंप्राप्तकालममन्यत ॥ केचैनंसमरेवीरंप्रत्युद्ययुररिंदमाः १२ द्रोणंचकेव्यरक्षंतप्रविष्टेश्वेतवाहने ॥ केऽरक्षन्द
क्षिणंचक्रंकेचद्रोणस्यसव्यतः १३ केपृष्ठतश्चाप्यभवन्वीरावीरान्विनिघ्नतः ॥ केपुरस्तादगच्छंतनिघ्नंतःशात्रवान्रणे १४ यत्प्राविशन्महेष्वासःपंचालानप
राजितः ॥ नृत्यन्निवनरव्याघ्रोरथमार्गेषुवीर्यवान् १५ योददाहशरैर्द्रोणःपंचालानांरथव्रजान् ॥ धूमकेतुरिवक्रुद्धःकथंमृत्युमुपेयिवान् १६ अव्यग्रानेवहिप
रान्कथयस्यपराजितान् ॥ हृष्टानुदीर्णान्संग्रामेनतथासूतमामकान् १७ हतांश्चैवविदीर्णांश्चविप्रकीर्णांश्चशंससि ॥ रथिनोविरथांश्चैवकृतान्युद्धेषुमामकान्
१८ ॥ संजयउवाच ॥ द्रोणस्यमतमाज्ञाययोद्धुकामस्यतांनिशाम् ॥ दुर्योधनोमहाराजवश्यान्भ्रातॄनुवाचह १९ कर्णंचवृषसेनंचमद्रराजंचकौरव ॥ दुर्धर्षंदी
र्घबाहुंचयेचतेषांपदानुगाः २० द्रोणंयत्ताःपराक्रांताःसर्वेरक्षंतुपृष्ठतः ॥ हार्दिक्योदक्षिणंचक्रंशल्यश्चैवोत्तरंतथा २१ त्रिगर्तानांचयेशूराहतशिष्टामहारथाः ॥
तांश्चैवपुरतःसर्वान्पुत्रस्तेसमचोदयत् २२ आचार्योहिसुसंयत्तोभृशंयत्ताश्चपांडवाः ॥ तंरक्षतसुसंयत्तानिघ्नंतंशात्रवान्रणे २३ द्रोणोहिबलवान्युद्धेक्षिप्रह
स्तःप्रतापवान् ॥ निर्जयेत्त्रिदशान्युद्धेकिमुपार्थान्ससोमकान् २४ तेयूयंसहिताःसर्वेभृशंयत्तामहारथाः ॥ द्रोणंरक्षतपांचालाद्धृष्टद्युम्नान्महारथात् २५ पांड
वीयेषुसैन्येषुनतंपश्यामकंचन ॥ योयोधयेद्रणेद्रोणंधृष्टद्युम्नादृतेनृपः २६ तस्मात्सर्वात्मनामन्येभारद्वाजस्यरक्षणम् ॥ सुगुप्तःपांडवान्हन्यात्सृंजयांश्चससो
मकान् २७ सृंजयेष्वथसर्वेषुनिहतेषुचमूमुखे ॥ धृष्टद्युम्नंरणेद्रौणिर्हनिष्यतिनसंशयः २८ तथाऽर्जुनंचराधेयोहनिष्यतिमहारथः ॥ भीमसेनमहंचा
पियुद्धेजेष्यामिदीक्षितः २९

३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ ॥ इतिद्रोणपर्वणिटीकायांचतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥ ॥ ७ ॥ ॥ वर्तमानेइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९

शेषांश्चपांडवान्योधाःप्रसभंहीनतेजसः ॥ सोऽयंममजयोव्यक्तोदीर्घकालंभविष्यति ३० तस्माद्रक्षतसंग्रामेद्रोणमेवमहारथम् ॥ इत्युक्त्वाभरतश्रेष्ठपुत्रोदुर्योधनस्तव ३१ व्यादिदेशतथासैन्यंतस्मिंस्तमसिदारुणे ॥ ततःप्रववृतेयुद्धंरात्रौभरतसत्तम ३२ उभयोःसेनयोर्घोरंपरस्परजिगीषया ॥ अर्जुनःकौरवंसैन्यमर्जुनंचापिकौरवाः ३३ नानाशस्त्रसमावापैरन्योन्यंसमपीडयन् ॥ द्रौणिःपंचालराजंचभारद्वाजश्चसृंजयान् ३४ छादयांचक्रिरेसंख्येशरैःसन्नतपर्वभिः ॥ पांडुपांचालसैन्यानांकौरवाणांचभारत ३५ आसीन्निष्टानकोघोरोनिघ्नतामितरेतरम् ॥ नैवास्माभिस्तथापूर्वैर्दृष्टपूर्वंतथाविधम् ३६ श्रुतंवायादृशंयुद्धमासीद्रौद्रंभयानकम् ३७ इतिश्रीमहाभारतेद्रोणपर्वणिघटोत्कचवधपर्वणिरात्रियुद्धेसंकुलयुद्धेचतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥ ॥ ७ ॥ संजयउवाच॥ वर्तमानेतदारौद्रेरात्रियुद्धेविशांपते ॥ सर्वभूतक्षयकरेधर्मपुत्रोयुधिष्ठिरः १ अब्रवीत्पांडवांश्चैवपंचालांश्चैवसोमकान् ॥ अभिद्रवतसंयातद्रोणमेवजिघांसया २ राज्ञस्तेवचनाद्राजन्पंचालाःसृंजयास्तथा ॥ द्रोणमेवाभ्यवर्तंतनदंतोभैरवान्रवान् ३ तंतुतेप्रतिगर्जंतःप्रत्युद्याताःस्वमर्षिताः ॥ यथाशक्तियथोत्साहंयथासत्वंचसंयुगे ४ कृतवर्मातुहार्दिक्योयुधिष्ठिरमुपाद्रवत् ॥ द्रोणंप्रतिसमायांतंमत्तोमत्तमिवद्विपम् ५ शैनेयंशरवर्षाणिविकिरंतंसमंततः ॥ अभ्ययात्कौरवोराजन्भूरिःसंग्राममूर्धनि ६ सहदेवमथायांतंद्रोणप्रेप्सुंमहारथम् ॥ कर्णोवैकर्तनोराजन्वारयामासपांडवम् ७ भीमसेनमथायांतंव्यादितास्यमिवांतकम् ॥ स्वयंदुर्योधनोराजाप्रतीपंमृत्युमाव्रजत् ८ नकुलंचयुधांश्रेष्ठंसर्वयुद्धविशारदम् ॥ शकुनिःसौबलोराजन्वारयामाससत्वरः ९ शिखंडिनमथायांतंरथेनरथिनांवरम् ॥ कृपःशारद्वतोराजन्वारयामाससंयुगे १० प्रतिविंध्यमथायांतंमयूरसदृशैर्हयैः ॥ दुःशासनोमहाराजयत्तोयत्तमवारयत् ११ भैमसेनिमथायांतंमायाशतविशारदम् ॥ अश्वत्थामामहाराजराक्षसंप्रत्यषेधयत् १२ द्रुपदंवृषसेनस्तुससैन्यंसपदानुगम् ॥ वारयामाससमरेद्रोणप्रेप्सुंमहारथम् १३ विराटंद्रुतमायांतंद्रोणस्यनिधनंप्रति ॥ मद्रराजःसुसंक्रुद्धोवारयामासभारत १४ शतानीकमथायांतंनाकुलिंरभसंरणे ॥ चित्रसेनोरुरोधाशुशरैर्द्रोणपरीप्सया १५ अर्जुनंचयुधांश्रेष्ठंप्राद्रवंतंमहारथम् ॥ अलंबुषोमहाराजराक्षसेंद्रोन्यवारयत् १६ तथाद्रोणंमहेष्वासंनिघ्नंतंशात्रवान्रणे ॥ धृष्टद्युम्नोऽथपांचाल्योहृष्टरूपमवारयत् १७ तथाऽन्यान्पाण्डुपुत्राणांसमायातान्महारथान् ॥ तावकारथिनोराजन्वारयामासुरोजसा १८ गजारोहागजैस्तूर्णंसन्निपत्यमहामृधे ॥ योधयंतश्चमृद्नंतःशतशोऽथसहस्रशः १९ निशीथेतुरगाराजन्द्रावयंतःपरस्परम् ॥ समदृश्यंतवेगेनपक्षवंतोयथाद्रयः २० सादिनःसादिभिःसार्धंप्रासशक्त्यृष्टिपाणयः ॥ समागच्छन्महाराजविनदंतःपृथक्पृथक् २१

१० । ११ भैमसेनिंघटोत्कचं ११ १२ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१

२२ । २३ । २४ । २५ । २६ माधवःकृतवर्मा २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ ॥ इतिद्रोणपर्वणिटीकायांपंचषष्टय

नरास्तुबहस्तत्रसमाजग्मुःपरस्परम् ॥ गदाभिर्मुसलैश्चैवनानाशस्त्रैश्चसंयुगे २२ कृतवर्मातुहार्दिक्योधर्मपुत्रंयुधिष्ठिरम् ॥ वारयामाससंक्रुद्धोवेलेवोद्वृत्त
मर्णवम् २३ युधिष्ठिरस्तुहार्दिक्यंविद्ध्वापंचभिराशुगैः ॥ पुनर्विव्याधविंशत्यातिष्ठतिष्ठेतिचाब्रवीत् २४ कृतवर्मातुसंक्रुद्धोधर्मपुत्रस्यमारिष ॥ धनुश्चिच्छे
दभल्लेनतंचविव्याधसप्तभिः २५ अथान्यद्धनुरादायधर्मपुत्रोमहारथः ॥ हार्दिक्यंदशभिर्बाणैर्बाह्वोरुरसिचार्पयत् २६ माधवस्तुरणेविद्धोधर्मपुत्रेणमारिष ॥
प्राकंपतचरोषेणसप्तभिश्चार्दयच्छरैः २७ तस्यपार्थोधनुश्छित्वाहस्तावापंनिकृत्यच ॥ प्राहिणोन्निशितान्बाणान्पंचराजञ्छिलाशितान् २८ तेतस्यकवचं
भित्त्वाहेमचित्रंमहाधनम् ॥ प्राविशन्धरणींभित्त्वावल्मीकमिवपन्नगाः २९ अक्ष्णोर्निमेषमात्रेणसोऽन्यदादायकार्मुकम् ॥ विव्याधपांडवंषष्ट्यासूतंचनवभिः
शरैः ३० तस्यशक्तिममेयात्मापांडवोभुजगोत्तमाम् ॥ चिक्षेपभरतश्रेष्ठरथेन्यस्यमहद्धनुः ३१ साहेमचित्रामहतीपांडवेनप्रवेरिता ॥ निर्भिद्यदक्षिणंबाहुंप्रा
विशद्धरणीतलम् ३२ एतस्मिन्नेवकालेतुगृह्यपार्थःपुनर्धनुः ॥ हार्दिक्यंछादयामासशरैःसन्नतपर्वभिः ३३ ततस्तुसमरेशूरोवृष्णीनांप्रवरोरथी ॥ व्यश्वसूत
रथंचक्रेनिमेषार्धाद्युधिष्ठिरम् ३४ ततस्तुपांडवोज्येष्ठःखड्गंचर्मसमाददे ॥ तदस्यनिशितैर्बाणैर्व्यधमन्माधवोरणे ३५ तोमरंतुततोगृह्यस्वर्णदंडंदुरासदम् ॥
अप्रैषीत्समरेतूर्णंहार्दिक्यस्ययुधिष्ठिरः ३६ तमापतंतंसहसाधर्मराजभुजच्युतम् ॥ द्विधाचिच्छेदहार्दिक्यःकृतहस्तःस्मयन्निव ३७ ततःशरशतेनाजौधर्म
पुत्रमवाकिरत् ॥ कवचंचास्यसंक्रुद्धःशरैस्तीक्ष्णैरदारयत् ३८ हार्दिक्यशरसंछन्नंकवचंतन्महाधनम् ॥ व्यशीर्यतरणेराजंस्ताराजालमिवांबरात् ३९ सच्छिन्न
धन्वाविरथःशीर्णवर्माशरार्दितः ॥ अपायासीद्रणात्तूर्णंधर्मपुत्रोयुधिष्ठिरः ४० कृतवर्मातुनिर्जित्यधर्मात्मानंयुधिष्ठिरम् ॥ पुनर्द्रोणस्यजुगुपेचक्रमेवमहात्मनः
४१ ॥ इतिश्रीम० द्रोणप० घटोत्कचवधपर्वणिरात्रियुद्धेयुधिष्ठिरापयानंनामपंचषष्ट्यधिकशततमोऽध्यायः ॥१६५॥ संजयउवाच ॥ भूरिस्तुसमरेराजञ्शै
नेयंरथिनांवरम् ॥ आपतंतमपासेधत्प्रयाणादिवकुंजरम् १ अथैनंसात्यकिःक्रुद्धःपंचभिर्निशितैःशरैः ॥ विव्याधहृदयेतस्यप्रास्रवत्तस्यशोणितम् २ तथैव
कौरवोयुद्धेशैनेयंयुद्धदुर्मदम् ॥ दशभिर्निशितैस्तीक्ष्णैरविध्यतभुजांतरे ३ तावन्योन्यंमहाराजततक्षातेशरैर्भृशम् ॥ क्रोधसंरक्तनयनौक्रोधाद्विस्फार्यकार्मुके
४ तयोरासीन्महाराजशस्त्रवृष्टिःसुदारुणा ॥ क्रुद्धयोःसायकमुचोर्यमांतकनिकाशयोः ५ तावन्योन्यंशरैराजन्संछाद्यसमवस्थितौ ॥ मुहूर्तंचैवतद्युद्धंसमरूपमि
वाभवत् ६ ततःक्रुद्धोमहाराजशैनेयःप्रहसन्निव ॥ धनुश्चिच्छेदसमरेकौरव्यस्यमहात्मनः ७

धिकशततमोऽध्यायः ॥ १४९ ॥ ॥ ७ ॥ ॥ भूरिरिति प्रयाणाद्यानस्थानात् प्रवणादितिपाठेप्रवणंप्रकृष्टंबलंजलं १ तस्यसात्यकेः तस्यतस्माद्धृदयात् २ । ३ । ४ । ५ । ६ । ७

८ । ९ । १० । ११ लोहितांगः कुजः यदृच्छयादैवेनेत्यभूतोपमा १२ । १३ । १४ । १५ महिषमसुरं १६ । १७ । १८ । १९ । २० । २१ श्वाविच्छल्यकः शललतः शललीभिः २१

अथैनंछिन्नधन्वानंनवभिर्निशितैःशरैः ॥ विव्याधहृदयेतूर्णंतिष्ठतिष्ठेतिचाब्रवीत् ८ सोऽतिविद्धोबलवताशत्रुणाशत्रुतापनः ॥ धनुरन्यत्समादायसात्वतंप्रत्यविध्यत ९ सविद्धासात्वतंबाणैस्त्रिभिरेवविशांपते ॥ धनुश्चिच्छेदभल्लेनसुतीक्ष्णेनहसन्निव १० छिन्नधन्वामहाराजसात्यकिःक्रोधमूर्च्छितः ॥ प्रजहारमहावेगांशक्तिंतस्यमहोरसि ११ सतुशक्त्याविभिन्नांगोनिपपातरथोत्तमात् ॥ लोहितांगइवाकाशाद्दीप्तरश्मिर्यदृच्छया १२ तंतुदृष्ट्वाहतंशूरमश्वत्थामामहारथः ॥ अभ्यधावतवेगेनशैनेयंप्रतिसंयुगे १३ तिष्ठतिष्ठेतिचाभाष्यशैनेयंसनराधिप ॥ अभ्यवर्षच्छरौघेणमेरुंवृष्ट्याथांऽबुदः १४ तमापतंतंसंरब्धंशैनेयस्यरथंप्रति ॥ घटोत्कचोऽब्रवीद्राजन्नादंमुक्त्वामहारथः १५ तिष्ठतिष्ठनमेजीवन्द्रोणपुत्रगमिष्यसि ॥ एषत्वांनिहनिष्यामिमहिषंषण्मुखोयथा १६ युद्धश्रद्धामहंतेऽद्यविनेष्यामिरणाजिरे ॥ इत्युक्त्वाक्रोधताम्राक्षोराक्षसःपरवीरहा १७ द्रौणिमभ्यद्रवत्क्रुद्धोगजेंद्रमिवकेसरी ॥ रथाक्षमात्रैरिषुभिरभ्यवर्षद्घटोत्कचः १८ रथिनामृषभंद्रौणिंधाराभिरिवतोयदः ॥ शरवृष्टिंतुतांप्राप्तांशरैराशीविषोपमैः १९ शातयामाससमरेतरसाद्रौणिरुत्स्मयन् ॥ ततःशरशतैस्तीक्ष्णैर्मर्मभेदिभिराशुगैः २० समाचिनोद्राक्षसेंद्रंघटोत्कचमरिंदमम् ॥ सशरैराचितस्तेनराक्षसोरणमूर्धनि २१ व्यकाशतमहाराजश्वाविच्छललतोयथा ॥ ततःक्रोधसमाविष्टोभैमसेनिःप्रतापवान् २२ शरैरवचकर्तोग्रैर्द्रौणिंवज्राशनिप्रभैः ॥ क्षुरप्रैरर्धचंद्रैश्चनाराचैःसशिलीमुखैः २३ वराहकर्णैर्नालीकैस्तीक्ष्णैश्चाभ्यवीवृषत् ॥ तांशस्त्रवृष्टिमतुलांवज्राशनिसमस्वनाम् २४ पतंतीमुपरिक्रुद्धाद्द्रौणिरव्यथितेंद्रियः ॥ सुदुःसहांशरैर्घोरैर्दिव्यास्त्रप्रतिमंत्रितैः २५ व्यधमत्सुमहातेजामहाभ्राणिवमारुतः ॥ ततोंऽतरिक्षेबाणानांसंग्रामोऽन्यइवाभवत् २६ घोररूपोमहाराजयोधानांहर्षवर्धनः ॥ ततोऽस्त्रसंघर्षकृतैर्विस्फुलिंगैःसमंततः २७ बभौनिशामुखेव्योमखद्योतैरिवसंवृतम् ॥ समार्गणगणैर्द्रौणिर्दिशःप्रच्छाद्यसर्वतः २८ प्रियार्थंतवपुत्राणांराक्षसंसमवाकिरत् ॥ ततःप्रववृतेयुद्धंद्रौणिराक्षसयोर्मृधे २९ विगाढेरजनीमध्येशक्रप्रह्लादयोरिव ॥ ततोघटोत्कचोबाणैर्दशभिर्द्रौणिमाहवे ३० जघानोरसिसंक्रुद्धःकालज्वलनसन्निभैः ॥ सतैरभ्यायतैर्विद्धोराक्षसेनमहाबलः ३१ चचालसमरेद्रौणिर्वातनुन्नइवद्रुमः ॥ समोहमनुसंप्राप्तोध्वजयष्टिंसमाश्रितः ३२ ततोहाहाकृतंसैन्यंतवसर्वंजनाधिप ॥ हतंस्ममेनिरेसर्वेतावकास्तंविशांपते ३३ तंतुदृष्ट्वातथावस्थमश्वत्थामानमाहवे ॥ पंचालाःसृंजयाश्चैवसिंहनादंप्रचक्रिरे ३४ प्रतिलभ्यततःसंज्ञामश्वत्थामामहाबलः ॥ धनुःप्रपीड्यवामेनकरेणामित्रकर्शनः ३५ मुमोचाकर्णपूर्णेनधनुषाशरमुत्तमम् ॥ यमदंडोपमंघोरमुद्दिश्याशुघटोत्कचम् ३६

२३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६

३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ प्रणश्यनिलीनोभूत्वा ५८ । ५९ । ६० । ६१ । ६२

सभित्त्वाहृदयंतस्यराक्षसस्यशरोत्तमः ॥ विवेशवसुधामुग्रःसपुंखःपृथिवीपते ३७ सोऽतिविद्धोमहाराजरथोपस्थउपाविशत् ॥ राक्षसेंद्रःसुबलवान्द्रौणिना
रणशालिना ३८ दृष्ट्वाविमूढंहैडिंबंसारथिस्तुरणाजिरात् ॥ द्रौणेःसकाशात्संभ्रांतस्त्वपनिन्येत्वरान्वितः ३९ तथातुसमरेविद्धाराक्षसेंद्रंघटोत्कचम् ॥ ननाद
सुमहानादंद्रोणपुत्रोमहारथः ४० पूजितस्तवपुत्रैश्चसर्वयोधैश्चभारत ॥ वपुषाऽतिप्रजज्वालमध्याह्नइवभास्करः ४१ भीमसेनंतुयुध्यंतंभारद्वाजरथंप्रति ॥
स्वयंदुर्योधनोराजाप्रत्यविध्यच्छितैःशरैः ४२ तंभीमसेनोदशभिःशरैर्विव्याधमारिष ॥ दुर्योधनोऽपिविंशत्याशराणांप्रत्यविध्यत ४३ तौसायकैरवच्छिन्नावै
दृश्येतांरणाजिरे ॥ मेघजालसमाच्छन्नौनभसीवेंदुभास्करौ ४४ अथदुर्योधनोराजाभीमंविव्याधपत्रिभिः ॥ पंचभिर्भरतश्रेष्ठतिष्ठतिष्ठेतिचाब्रवीत् ४५ त
स्यभीमोधनुश्छित्त्वाध्वजंचदशभिःशरैः ॥ विव्याधकौरवश्रेष्ठंनवत्यानतपर्वणाम् ४६ ततोदुर्योधनःक्रुद्धोधनुरन्यन्महत्तरम् ॥ गृहीत्वाभरतश्रेष्ठोभीमसेनं
शितैःशरैः ॥ अपीडयद्रणमुखेपश्यतांसर्वधन्विनाम् ४७ तान्निहत्यशरान्भीमोदुर्योधनधनुश्च्युतान् ॥ कौरवंपंचविंशत्याक्षुद्रकाणांसमार्पयत् ४८ दुर्योध
नस्तुसंक्रुद्धोभीमसेनस्यमारिष ॥ क्षुरप्रेणधनुश्छित्त्वादशभिःप्रत्यविध्यत ४९ अथान्यद्धनुरादायभीमसेनोमहाबलः ॥ विव्याधनृपतिंतूर्णंसप्तभिर्निशितैः
शरैः ५० तदप्यस्यधनुःक्षिप्रंचिच्छेदलघुहस्तवत् ॥ द्वितीयंचतृतीयंचचतुर्थंपंचमंतथा ५१ आत्तमात्तंमहाराजभीमस्यधनुराच्छिनत् ॥ तवपुत्रोमहारा
जजितकाशीमदोत्कटः ५२ सतथाभिद्यमानेषुकार्मुकेषुपुनःपुनः ॥ शक्तिंचिक्षेपसमरेसर्वपारसवींशुभाम् ५३ मृत्योरिवस्वसारंहिदीप्तांवह्निशिखामिव ॥ सी
मंतमिवकुर्वंतींनभसोऽग्निसमप्रभाम् ५४ अप्राप्तामेवतांशक्तिंत्रिधाचिच्छेदकौरवः ॥ पश्यतःसर्वलोकस्यभीमस्यचमहात्मनः ५५ ततोभीमोमहाराजगदां
गुर्वींमहाप्रभाम् ॥ चिक्षेपाविध्यवेगेनदुर्योधनरथंप्रति ५६ ततःसासहसावाहांस्तवपुत्रस्यसंयुगे ॥ सारथिंचगदागुर्वीममर्दास्यरथंपुनः ५७ पुत्रस्तुतवरा
जेंद्रभीमाद्भीतःप्रणश्यच ॥ आरुरोहरथंचान्यंनंदकस्यमहात्मनः ५८ ततोभीमोहतंमत्वातवपुत्रंमहारथम् ॥ सिंहनादंमहच्चक्रेतर्जयन्निशिकौरवान् ५९ ता
वकाःसैनिकाश्चापिमेनिरेनिहतंनृपम् ॥ ततोऽतिचुक्रुशुःसर्वेतेहाहेतिसमंततः ६० तेषांतुनिनदंश्रुत्वात्रस्तानांसर्वयोधिनाम् ॥ भीमसेनस्यनादंचश्रुत्वारा
जन्महात्मनः ६१ ततोयुधिष्ठिरोराजाहतंमत्वासुयोधनम् ॥ अभ्यवर्ततवेगेनयत्रपार्थोवृकोदरः ६२ पंचालाःकेकयामत्स्याःसृंजयाश्चविशांपते ॥ सर्वोद्योगे
नाभिजग्मुर्द्रोणमेवयुयुत्सया ६३ तत्रासीत्सुमहद्युद्धंद्रोणस्याथपरैःसह ॥ घोरेतमसिमग्नानांनिघ्नतामितरेतरम् ६४ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिघटो
त्कचवधपर्वणिरात्रियुद्धेदुर्योधनापयानेषट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥ ६१ । ६४ ॥ इतिद्रोणपर्वणिटीकायांषट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

सहदेवमथायांतमितिशतानीकमितिचाध्यायौस्पष्टार्थौ १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३

संजयउवाच ॥ सहदेवमथायांतंद्रोणप्रेप्सुंविशांपते ॥ कर्णोवैतकर्तनोयुद्धेवारयामासभारत १ सहदेवस्तुराधेयंविद्धानवभिराशुगैः ॥ पुनर्विव्याधदशभिर्विशिखैर्नतपर्वभिः २ तंकर्णःप्रतिविव्याधशतेननतपर्वणाम् ॥ सज्यंचास्यधनुःशीघ्रंचिच्छेदलघुहस्तवत् ३ ततोऽन्यद्धनुरादायमाद्रीपुत्रःप्रतापवान् ॥ कर्णंविव्याधविंशत्यातदद्भुतमिवाभवत् ४ तस्यकर्णोहयान्हत्वाशरैःसन्नतपर्वभिः ॥ सारथिंचास्यभल्लेनद्रुतंनिन्येयमक्षयम् ५ विरथःसहदेवस्तुखड्गंचर्मसमाददे ॥ तदप्यस्यशरैःकर्णोव्यधमत्प्रहसन्निव ६ अथगुर्वींमहाघोरांहेमचित्रांमहागदाम् ॥ प्रेषयामाससंक्रुद्धोवैकर्तनरथंप्रति ७ तामापतंतींसहसासहदेवप्रचोदिताम् ॥ व्यष्टंभयच्छरैःकर्णोभूमौचैनामपातयत् ८ गदांविनिहतांदृष्ट्वासहदेवस्त्वरान्वितः ॥ शक्तिंचिक्षेपकर्णायतामप्यस्याच्छिनच्छरैः ९ ससंभ्रमंततस्तूर्णमवप्लुत्यरथोत्तमात् ॥ सहदेवोमहाराजदृष्ट्वाकर्णंव्यवस्थितम् १० रथचक्रंप्रगृह्याजौमुमोचाधिरथंप्रति ॥ तदापतद्वैसहसाकालचक्रमिवोद्यतम् ११ शरैरनेकसाहस्रैराच्छिनत्सूतनंदनः ॥ तस्मिंस्तुनिहतेचक्रेसूतजेनमहात्मना १२ ईषादंडकयोक्त्रांश्चयुगानिविविधानिच ॥ हस्त्यंगानितथाऽश्वांश्चमृतांश्चपुरुषान्बहून् १३ चिक्षेपकर्णमुद्दिश्यकर्णस्तान्व्यधमच्छरैः ॥ सनिरायुधमात्मानंज्ञात्वामाद्रवतीसुतः १४ वार्यमाणस्तुविशिखैःसहदेवोरणंजहौ ॥ तमभिद्रुत्यराधेयोमुहूर्ताद्भरतर्षभ १५ अब्रवीत्प्रहसन्वाक्यंसहदेवंविशांपते ॥ मायुध्यस्वरणेऽधीरविशिष्टैरथिभिःसह १६सदृशैर्युध्यमाद्रेयवचोमेमाविशंकिथाः ॥ अथैनंधनुषोऽग्रेणतुदन्भूयोऽब्रवीद्वचः १७ एषोऽर्जुनोरणेतूर्णंयुध्यतेकुरुभिःसह ॥ तत्रगच्छस्वमाद्रेयगृहंवायदिमन्यसे १८ एवमुक्त्वातुतंकर्णोरथेनरथिनांवरः ॥ प्रायात्पांचालपांडूनांसैन्यानिप्रदहन्निव १९ वधंप्राप्तंतुमाद्रेयंनावधीत्समरेऽरिहा ॥ कुंत्याःस्मृत्वावचोराजन्सत्यसंधोमहायशाः २० सहदेवस्ततोराजन्विमनाःशरपीडितः ॥ कर्णवाक्शरतप्तश्चजीवितान्निरविद्यत २१ आरुरोहरथंचापिपांचाल्यस्यमहात्मनः ॥ जनमेजयस्यसमरेत्वरायुक्तोमहारथः २२ विराटंसहसेनंतुद्रोणार्थेद्रुतमागतम् ॥ मद्रराजःशरौघेणच्छादयामासधन्विनम् २३ तयोःसमभवद्युद्धंसमरेदृढधन्विनोः ॥ यादृशंह्यभवद्राजन्जंभवासवयोःपुरा २४ मद्रराजोमहाराजविराटंवाहिनीपतीम् ॥ आजघ्नेत्वरितस्तूर्णंशतेननतपर्वणाम् २५ प्रतिविव्याधतंराजन्नवभिर्निशितैःशरैः ॥ पुनश्चैनंत्रिसप्तत्याभूयश्चैवशतेनतु २६ तस्यमद्राधिपोहत्वाचतुरोरथवाजिनः ॥ सूतंध्वजंचसमरेशराभ्यांसंन्यपातयत् २७ हताश्वात्तुरथात्तूर्णमवप्लुत्यमहारथः ॥ तस्थौविस्फारयंश्चापंविमुंचंश्चाशिताञ्छरान् २८ शतानीकस्ततोदृष्ट्वाभ्रातरंहतवाहनम् ॥ रथेनाभ्यपतत्तूर्णंसर्वलोकस्यपश्यतः २९ शतानीकमथायांतंमद्रराजोमहामृधे ॥ विशिखैर्बहुभिर्विद्ध्वाततोनिन्येयमक्षयम् ३०

२४ । २५ । २६ । २७ । २८ । २९ । ३०

३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० ॥ ॥ इतिद्रोणपर्वणिटीकायांसप्तषष्ट्यधिकश

तस्मिंस्तुनिहतेवीरेविराटोरथसत्तमः ॥ आरुरोहरथंतूर्णंतमेवध्वजमालिनम् ३१ ततोविस्फार्यनयनेक्रोधाद्द्विगुणविक्रमः ॥ मद्रराजरथंतूर्णंछादयामासपत्रिभिः ३२ ततोमद्राधिपःक्रुद्धःशरेणानतपर्वणा ॥ आजघानोरसिदृढंविराटंवाहिनीपतिम् ३३ सोतिविद्धोमहाराजरथोपस्थउपाविशत् ॥ कश्मलंचाविशत्तीव्रंविराटोभरतर्षभ ३४ सारथिस्तमपोवाहसमरेशरविक्षतम् ॥ ततःसामहतीसेनाप्राद्रवन्निशिभारत ३५ वध्यमानाशरशतैःशल्येनाहवशोभिना ॥ तांदृष्ट्वाविद्रुतांसेनांवासुदेवधनंजयौ ३६ प्रयातौतत्रराजेंद्रयत्रशल्योव्यवस्थितः ॥ तौतुप्रत्युद्ययौराजन्राक्षसेंद्रोह्यलंबुषः ३७ अष्टचक्रसमायुक्तमास्थायप्रवरंरथम् ॥ तुरंगममुखैर्युक्तंपिशाचैर्घोरदर्शनैः ३८ लोहितार्द्रपताकंतंरक्तमाल्यविभूषितम् ॥ कार्ष्णायसमयंघोरमृक्षचर्मसमावृतम् ३९ रौद्रेणचित्रपक्षेणविवृताक्षेणकूजता ॥ ध्वजेनोच्छ्रितदंडेनगृध्रराजेनराजता ४० सबभौराक्षसोराजन्भिन्नांजनचयोपमः ॥ रुरोधार्जुनमायांतंप्रभंजनमिवाद्रिराट् ४१ किरन्बाणगणान्राजन्शतशोऽर्जुनमूर्धनि ॥ अतितीव्रंमहद्युद्धंनरराक्षसयोस्तदा ४२ द्रष्टॄणांप्रीतिजननंसर्वेषांतत्रभारत ॥ गृध्रकाकबलोलूककंकगोमायुहर्षणम् ४३ तमर्जुनःशतेनैवपत्रिणांसमताडयत् ॥ नवभिश्चशितैर्बाणैर्ध्वजंचिच्छेदभारत ४४ सारथिंचत्रिभिर्बाणैस्त्रिभिरेवत्रिवेणुकम् ॥ धनुरेकेनचिच्छेदचतुर्भिश्चतुरोहयान् ४५ पुनःसज्यंकृतंचापंतदप्यस्याद्द्विधाऽच्छिनत् ॥ विरथस्योद्यतंखड्गंशरेणास्यद्विधाऽकरोत् ४६ अथैनंनिशितैर्बाणैश्चतुर्भिर्भरतर्षभ ॥ पार्थोऽविध्यद्राक्षसेंद्रंसविद्धःप्राद्रवद्भयात् ४७ तंविजित्यार्जुनस्तूर्णंद्रोणांतिकमुपाययौ ॥ किरन्शरगणान्राजन्नरवारणवाजिषु ४८ वध्यमानामहाराजपांडवेनयशस्विना ॥ सैनिकान्यपतन्नुर्व्यांवातनुन्नाइवद्रुमाः ४९ तेषुतूत्साद्यमानेषुफाल्गुनेनमहात्मना ॥ संप्राद्रवद्बलंसर्वंपुत्राणांतेविशांपते ५० ॥ इतिश्रीमहाभारतेद्रोणपर्वणिघटोत्कचवधपर्वणिरात्रियुद्धेअलंबुषपराभवेसप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥ संजयउवाच ॥ शतानीकंशरैस्तूर्णंनिर्दहंतंचमूंतव ॥ चित्रसेनस्तवसुतोवारयामासभारत १ नाकुलिश्चित्रसेनंतुविद्ध्वापंचभिराशुगैः ॥ सतुतंप्रतिविव्याधदशभिर्निशितैःशरैः २ चित्रसेनोमहाराजशतानीकंपुनर्युधि ॥ नवभिर्निशितैर्बाणैराजघानस्तनांतरे ३ नाकुलिस्तस्यविशिखैर्वर्मसन्नतपर्वभिः ॥ गात्रात्संच्यावयामासतदद्भुतमिवाभवत् ४ सोऽपेतवर्मापुत्रस्तेविरराजभृशंनृप उत्सृज्यकालेराजेंद्रनिर्मोकमिवपन्नगः ५ ततोऽस्यनिशितैर्बाणैर्ध्वजंचिच्छेदनाकुलिः ॥ धनुश्चैवमहाराजयतमानस्यसंयुगे ६ सच्छिन्नधन्वासमरेविवर्माचमहारथः ॥ धनुरन्यन्महाराजजग्राहारिविदारणम् ७ ततस्तूर्णंचित्रसेनोनाकुलिंनवभिःशरैः ॥ विव्याधसमरेक्रुद्धोभरतानांमहारथः ८ शतानीकोऽथसंक्रुद्धश्चित्रसेनस्यमारिष ॥ जघानचतुरोवाहान्सारथिंचनरोत्तमः ९ ततमोऽध्यायः ॥ १६७ ॥ ॥ ७ ॥ ॥ शतानीकमिति । १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९

अवप्लुत्यरथात्तस्माच्चित्रसेनोमहारथः ॥ नाकुलिंपंचविंशत्याशराणामार्दयद्बली १० तस्यतत्कुर्वतःकर्मनकुलस्यसुतोरणे ॥ अर्धचंद्रेणचिच्छेदचापंरत्नविभू
षितम् ११ सच्छिन्नधन्वाविरथोहताश्वोहतसारथिः ॥ आरुरोहरथंतूर्णंहार्दिक्यस्यमहात्मनः १२ द्रुपदंतुसहानीकंद्रोणप्रेप्सुंमहारथम् ॥ वृषसेनोऽभ्ययात्
तूर्णंकिरन्शरशतैस्तदा १३ यज्ञसेनस्तुसमरेकर्णपुत्रंमहारथम् ॥ षष्ट्याशराणांविव्याधबाह्वोरुरसिचानघ १४ वृषसेनस्तुसंक्रुद्धोयज्ञसेनंरथेस्थितम् ॥ ब
हुभिःसायकैस्तीक्ष्णैराजघानस्तनांतरे १५ तावुभौशरनुन्नांगौशरकंटकितौरणे ॥ व्यभ्राजेतांमहाराजश्वाविधौशललैरिव १६ रुक्मपुंखैःप्रसन्नाग्रैःशरैश्छि
न्नतनुच्छदौ ॥ रुधिरौघपरिक्लिन्नौव्यभ्राजेतांमहामृधे १७ तपनीयनिभौचित्रौकल्पवृक्षाविवाद्भुतौ ॥ किंशुकाविवचोत्फुल्लौव्यकाशेतांरणाजिरे १८ वृषसे
नस्ततोराजन्द्रुपदंनवभिःशरैः ॥ विद्धाविव्याधसप्तत्यापुनरन्यैस्त्रिभिस्त्रिभिः १९ ततःशरसहस्राणिविमुंचन्विबभौतदा ॥ कर्णपुत्रोमहाराजवर्षमाणइवांबुदः
२० द्रुपदस्तुततःक्रुद्धोवृषसेनस्यकार्मुकम् ॥ द्विधाचिच्छेदभल्लेनपीतेननिशितेनच २१ सोऽन्यत्कार्मुकमादायरुक्मबद्धंनवंदृढम् ॥ तूणादाकृष्यविमलंभ
ल्लंपीतशितंदृढम् २२ कार्मुकेयोजयित्वातंद्रुपदंसन्निरीक्ष्यच ॥ आकर्णपूर्णंमुमुचेत्रासयन्सर्वसोमकान् २३ हृदयंतस्याभित्त्वाचजगामवसुधातलम् ॥ कश्मलंप्रा
विशद्राजावृषसेनशराहतः २४ सारथिस्तमपोवाहस्मरन्सारथिचेष्टितम् ॥ तस्मिन्प्रभग्नेराजेंद्रपंचालानांमहारथे २५ ततस्तुद्रुपदानीकंशरैश्छिन्नतनुच्छ
दम् ॥ संप्राद्रवत्तदाराजन्निशीथेभैरवेसति २६ प्रदीपैःपरित्यक्तैर्ज्वलद्भिस्तैःसमंततः ॥ व्यराजतमहीराजन्वीताभ्राद्यौरिवग्रहैः २७ तथांऽगदैर्निपातितैर्व्य
राजतवसुंधरा ॥ प्रावृट्कालेमहाराजविद्युद्भिरिवतोयदः २८ ततःकर्णसुतात्रस्ताःसोमकाविप्रदुद्रुवुः ॥ यथेंद्रभयवित्रस्तादानवास्तारकामये २९ तेनार्द्य
मानाःसमरेद्रवमाणाश्चसोमकाः ॥ व्यराजंतमहाराजप्रदीपैरवभासिताः ३० तांस्तुनिर्जित्यसमरेकर्णपुत्रोऽप्यरोचत ॥ मध्यंदिनमनुप्राप्तोघर्मांशुरिवभारत
३१ तेषुराजसहस्रेषुतावकेषुपरेषुच ॥ एकएवज्वलंस्तस्थौवृषसेनःप्रतापवान् ३२ सविजित्यरणेशूरान्सोमकानांमहारथान् ॥ जगामत्वरितस्तत्रयत्रराजायु
धिष्ठिरः ३३ प्रतिविंध्यमथक्रुद्धंप्रदहंतंरणेरिपून् ॥ दुःशासनस्तवसुतःप्रत्यगच्छन्महारथः ३४ तयोःसमागमोराजंश्चित्ररूपोबभूवह ॥ व्यपेतजलदेव्योम्नि
बुधभास्करयोरिव ३५ प्रतिविंध्यंतुसमरेकुर्वाणंकर्मदुष्करम् ॥ दुःशासनस्त्रिभिर्बाणैर्ललाटेसमविध्यत ३६ सोऽतिविद्धोबलवतातवपुत्रेणधन्विना ॥ विररा
जमहाबाहुःसशृंगइवपर्वतः ३७ दुःशासनंतुसमरेप्रतिविंध्योमहारथः ॥ नवभिःसायकैर्विद्धापुनर्विव्याधसप्तभिः ३८ तत्रभारतपुत्रस्तेकृतवान्कर्मदुष्करम् ॥
प्रतिविंध्यहयानुग्रैःपातयामाससायकैः ३९

४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ ॥ इतिद्रोणपर्वणिटीकायामष्टषष्टयधिकशततमोऽध्यायः । १६८ । ।७। । नकुलमिति । १ । २ । ३ । ४ । ५ । । ६ ७ । ८ । ९

सारथिंचास्यभल्लेनध्वजंचसमपातयत् ॥ रथंचतिलशोराजन्व्यधमत्तस्यधन्विनः ४० पताकाश्वसतूणीरारश्मीन्योक्त्राणिचप्रभो ॥ चिच्छेदतिलशःक्रुद्धः शरैःसन्नतपर्वभिः ४१ विरथःसतुधर्मात्माधनुष्पाणिरवस्थितः ॥ अयोधयत्तवसुतंकिरन्शरशतान्बहून् ४२ क्षुरप्रेणधनुस्तस्यचिच्छेदतनयस्तव ॥ अथैनं दशभिर्बाणैश्छिन्नधन्वानमार्दयत् ४३ तंदृष्ट्वाविरथंतत्रभ्रातरोऽस्यमहारथाः ॥ अन्ववर्तंतवेगेनमहत्यासेनयासह ४४ आप्लुतःसततोयानंसुतसोमस्यभास्वरम् ॥ धनुर्गृह्यमहाराजविव्याधतनयंतव ४५ ततस्तुतावकाःसर्वेपरिवार्यसुतंतव ॥ अभ्यवर्ततसंग्रामेमहत्यासेनयावृताः ४६ ततःप्रववृतेयुद्धंतवतेषांच भारत ॥ निशीथेदारुणेकालेयमराष्ट्रविवर्धनम् ४७ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिघटो॰रात्रियुद्धेशतानीकादियुद्धेअष्टषष्टयधिकशततमोऽध्यायः ॥ १६८ ॥ संजयउवाच ॥ नकुलंरभसंयुद्धेनिघ्नंतंवाहिनींतव ॥ अभ्ययात्सौबलःक्रुद्धस्तिष्ठतिष्ठेतिचाब्रवीत् १ कृतवैरौतुतौवीरावन्योन्यवधकांक्षिणौ ॥ शरैःपूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः २ यथैवनकुलोराजन्शरवर्षाण्यमुंचत ॥ तथैवसौबलश्चापिशिक्षांसंदर्शयन्युधि ३ तावुभौसमरेशूरौशरकंटकिनौतदा ॥ व्यराजेतां महाराजश्वाविधौशलल्लैरिव ४ रुक्मपुंखैरजिह्माग्रैःशरैश्छिन्नतनुच्छदौ ॥ रुधिरौघपरिक्लिन्नौव्यभ्राजेतांमहामृधे ५ तपनीयनिभौचित्रौकल्पवृक्षाविवद्रुमौ ॥ किंशुकाविवचोत्फुल्लौप्रकाशेतेरणाजिरे ६ तावुभौसमरेशूरौशरकंटकिनौतदा ॥ व्यराजेतांमहाराजकंटकैरिवशाल्मली ७ सुजिह्मंप्रेक्षमाणौचराजन्विवृत्तलोचनौ ॥ क्रोधसंरक्तनयनौनिर्दहंतौपरस्परम् ८ स्यालस्तुतवसंक्रुद्धोमाद्रीपुत्रंहसन्निव ॥ कर्णिनैकेनविव्याधहृदयेनिशितेनह ९ नकुलस्तुभृशंविद्धःस्यालेन तवधन्विना ॥ निषसादरथोपस्थेकश्मलंचाविशन्महत् १० अत्यंतवैरिणंदृप्तंदृष्ट्वाशत्रुंतथागतम् ॥ ननादशकुनीराजंस्तपांतेजलदोयथा ११ प्रतिलभ्यत तःसंज्ञांनकुलःपांडुनंदनः ॥ अभ्ययात्सौबलंभूयोव्यात्ताननइवांतकः १२ संक्रुद्धःशकुनिंषष्ट्याविव्याधभरतर्षभ ॥ पुनश्चैनंशतेनैवनाराचानांस्तनांतरे ॥ १३ अथास्यसशरंचापंमुष्टिदेशेऽच्छिनत्तदा ॥ ध्वजंचत्वरितंछित्त्वारथाद्भूमावपातयत् १४ विशिखेनचतीक्ष्णेनपीतेननिशितेनच ॥ ऊरूनिर्भिद्यचैकेननकुलःपांडुनंदनः १५ श्येनंसपक्षंव्याधेनपातयामासतंतदा ॥ सोऽतिविद्धोमहाराजरथोपस्थउपाविशत् १६ ध्वजयष्टिंपरिक्लिश्यकामुकःकामिनींयथा ॥ तं विसंज्ञंनिपतितंदृष्ट्वास्यालंतवानघ १७ अपोवाहरथेनाशुसारथिर्ध्वजिनीमुखात् ॥ ततःसंचुक्रुशुःपार्थायेचतेषांपदानुगाः १८ निर्जित्यचरणेशत्रुंनकुलःशत्रुतापनः ॥ अब्रवीत्सारथिंक्रुद्धोद्रोणानीकायमांवह १९

१० । ११ । १२ । १३ । १४ ऊरूइति मंडलंचरतः शकुनेर्द्वावूरूएकेनैवबाणेनबिभेद १५ यथाव्याधःश्येनंपक्षाभ्यांसहितंवामदक्षिणगामिनंपातयेदेवमितिलुप्तोपमा व्याधेनबाणेन विध्यत्यनेनेतिव्याधोबाणः । १६ परिक्लिश्यक्लेशेनध्वजयष्टिंश्रितइतिशेषः १७ । १८ । १९

२० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ रथिनइति प्रद्रुतारथिनोत्रेगवत्तरंरथमारुह्यतत्पातिमगृह्णन् शलभानिववाय

तस्यतद्वचनंश्रुत्वामाद्रीपुत्रस्यसारथिः ॥ प्रायात्तेनतदाराजन्यत्रद्रोणोव्यवस्थितः २० शिखंडिनंतुसमरेद्रोणप्रेप्सुंविशांपते ॥ कृपःशारद्वतोयत्तःप्रत्यग
च्छत्सवेगितः २१ गौतमंद्रुतमायांतंद्रोणानीकमरिंदमम् ॥ विंव्याधनवभिर्भल्लैःशिखंडीप्रहसन्निव २२ तमाचार्योमहाराजविद्ध्वापंचभिराशुगैः ॥ पुनर्विव्या
धविंशत्यापुत्राणांप्रियकृत्तव २३ महद्युद्धंतयोरासीद्धोररूपंभयानकम् ॥ यथादेवासुरेयुद्धेशंबरामरराजयोः २४ शरजालावृतंव्योमचक्रतुस्तौमहारथौ ॥
मेघाविवतपापायेवीरौसमरदुर्मदौ २५ प्रकृत्याघोररूपंतदासीद्धोरतरंपुनः ॥ रात्रिश्चभरतश्रेष्ठयोधानांयुद्धशालिनाम् २६ कालरात्रिनिभाह्यासीद्धोररूपाभ
यानका ॥ शिखंडीतुमहाराजगौतमस्यमहद्धनुः २७ अर्धचंद्रेणचिच्छेदसज्यंसविशिखंतदा ॥ तस्यक्रुद्धःकृपोराजन्शक्तिंचिक्षेपदारुणाम् २८ स्वर्णदंडामकुं
ठाग्रांकर्मारपरिमार्जिताम् ॥ तामापतंतींचिच्छेदशिखंडीबहुभिःशरैः २९ साऽपतन्मेदिनींदीप्ताभासयंतीमहाप्रभा ॥ अथान्यद्धनुरादायगौतमोरथिनांवरः ॥
३० प्राच्छादयच्छितैर्बाणैर्महाराजशिखंडिनम् ॥ सच्छाद्यमानःसमरेगौतमेनयशस्विना ३१ न्यषीदतरथोपस्थेशिखंडीरथिनांवरः ॥ सीदंतंचैनमालोक्य
कृपःशारद्वतोयुधि ३२ आजघ्नेबहुभिर्बाणैर्जिघांसन्निवभारत ॥ विमुखंतुरणेदृष्ट्वायाज्ञसेनिंमहारथम् ३३ पंचालाःसोमकाश्चैवपरिवव्रुःसमंततः ॥ तथैवतव
पुत्राश्चपरिवव्रुर्द्विजोत्तमम् ३४ महत्यासेनयासार्धंततोयुद्धमवर्तत ॥ रथानांचरणेराजन्नन्योन्यमभिधावताम् ३५ बभूवतुमुलःशब्दोमेघानांगर्जतामिव ॥
द्रवतांसादिनांचैवगजानांचविशांपते ३६ अन्योन्यमभितोराजन्क्रूरमायोधनंबभौ ॥ पत्तीनांद्रवतांचैवपादशब्देनमेदिनी ३७ अकंपतमहाराजभयत्रस्तेव
चांगना ॥ रथिनोरथमारुह्यप्रद्रुतावेगवत्तरम् ३८ अगृह्णन्बहवोराजन्शलभान्वायसाइव ॥ तथागजान्प्रभिन्नांश्चसंप्रभिन्नामहागजाः ३९ तस्मिन्नेवपदेयत्ता
निगृह्णंतिस्मभारत ॥ सादीसादिनमासाद्यपत्तयश्चपदातिनम् ४० समासाद्यरणेऽन्योन्यंसंरब्धानातिचक्रमुः ॥ धावतांद्रवतांचैवपुनरावर्ततामपि ४१
बभूवतत्रसैन्यानांशब्दःसुविपुलोनिशि ॥ दीप्यमानाःप्रदीपाश्चरथवारणवाजिषु ४२ अदृश्यंतमहाराजमहोल्काइवखाच्च्युताः ॥ सानिशाभरतश्रेष्ठप्रदीपैरव
भासिता ४३ दिवसप्रतिमाराजन्बभूवरणमूर्धनि ॥ आदित्येनयथाव्याप्तंतमोलोकेप्रणश्यति ४४ तथानष्टंतमोघोरंदीपैर्दीप्तैरितस्ततः ॥ दिवंचपृथिवींचैव
दिशश्चप्रदिशस्तथा ४५ रजसातमसाव्याप्ताद्योतिताःप्रभयापुनः ॥ अस्त्राणांकवचानांचमणीनांचमहात्मनाम् ४६ अंतर्दधुःप्रभाःसर्वादीपैस्तैरवभा
सिताः ॥ तस्मिन्कोलाहलेयुद्धेवर्तमानेनिशामुखे ४७ नकिंचिद्विदुरात्मानमयमस्मीतिभारत ॥ अवधीत्समरेपुत्रंपिताभरतसत्तम ४८

साइतिउत्तरेणसहयोज्यं रथंरथान् रथिनोरथपत्तीनितिवा ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८

४९ । ५० ॥ इतिद्रोणपर्वणिटीकायामूनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥ ॥ ७ ॥ ॥ तस्मिन्निति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९

पुत्रश्चपितरंमोहात्सखायंचसखातथा ॥ स्वस्त्रीयंमातुलश्चापिस्वस्त्रीयश्चापिमातुलम् ४९ स्वेस्वान्परेपरांश्चापिनिजघ्नुरितरेतरम् ॥ निर्मर्यादमभूद्युद्धंरात्रौभी रुभयानकम् ५० ॥ इतिश्रीमहाभारतेद्रोणपर्वणिघटोत्कचवधपर्वणिरात्रियुद्धेसंकुलयुद्धेऊनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥ संजयउवाच ॥ तस्मि न्सुतुमुलेयुद्धेवर्तमानेभयावहे ॥ धृष्टद्युम्नोमहाराजद्रोणमेवाभ्यवर्तत १ संदधानोधनुःश्रेष्ठंज्यांविकर्षन्पुनःपुनः ॥ अभ्यद्रवतद्रोणस्यरथंरुक्मविभूषितम् २ धृष्टद्युम्नमथायांतंद्रोणस्यांतचिकीर्षया ॥ परिवव्रुर्महाराजपंचालाःपांडवैःसह ३ तथापरिवृतंदृष्ट्वाद्रोणमाचार्यसत्तमम् ॥ पुत्रास्तेसर्वतोयत्तारररक्षुर्द्रोणमाहवे ४ बलार्णवौततस्तौतुसमेयातांनिशामुखे ॥ वातोद्धूतौक्षुब्धसत्त्वौभैरवौसागराविव ५ ततोद्रोणंमहाराजपांचाल्यःपंचभिःशरैः ॥ विव्याधहृदयेतूर्णंसिंहनादं ननादच ६ तंद्रोणःपंचविंशत्याविद्ध्वाभारतसंयुगे ॥ चिच्छेदान्येनभल्लेनधनुरस्यमहास्वनम् ७ धृष्टद्युम्नस्तुनिर्विद्धोद्रोणेनभरतर्षभ ॥ उत्ससर्जधनुस्तूर्णं संदश्यदशनच्छदम् ८ ततःक्रुद्धोमहाराजधृष्टद्युम्नःप्रतापवान् ॥ आददेऽन्यद्धनुःश्रेष्ठंद्रोणस्यांतचिकीर्षया ९ विकृष्यचधनुश्चित्रमाकर्णात्परवीरहा ॥ द्रो णस्यांतकरंघोरंव्यसृजत्सायकंततः १० सविसृष्टोबलवताशरोघोरोमहामृधे ॥ भासयामासतत्सैन्यंदिवाकरइवोदितः ११ तंतुदृष्ट्वाशरंघोरंदेवगंधर्वमानवाः ॥ स्वस्त्यस्तुसमरेराजन्द्रोणायेत्यब्रुवन्वचः १२ तंतुसायकमायांतमाचार्यस्यरथंप्रति ॥ कर्णोद्वादशधाराजंश्चिच्छेदकृतहस्तवत् १३ सच्छिन्नोबहुधाराज न्सूतपुत्रेणधन्विना ॥ निपपातशरस्तूर्णंनिर्विषोभुजगोयथा १४ धृष्टद्युम्नंततःकर्णोविव्याधदशभिःशरैः ॥ पंचभिर्द्रोणपुत्रस्तुस्वयंद्रोणस्तुसप्तभिः १५ श ल्यश्चदशभिर्बाणैस्त्रिभिर्दुःशासनस्तथा ॥ दुर्योधनस्तुविंशत्याशकुनिश्चापिपंचभिः १६ पांचाल्यंत्वरयाऽविध्यन्सर्वएवमहारथाः ॥ सविद्धःसप्तभिर्वीरैर्द्रो णस्यार्थेमहाहवे १७ सर्वानसंभ्रमाद्राजन्प्रत्यविद्धचत्रिभिस्त्रिभिः ॥ द्रोणंद्रौणिंचकर्णंचविव्याधचतवात्मजम् १८ तेभिन्नाधन्विनातेनधृष्टद्युम्नंपुनर्मृधे ॥ वि व्यधुःपंचभिस्तूर्णमेकैकोरथिनांवरः १९ द्रुमसेनस्तुसंक्रुद्धोराजन्विव्याधपत्रिणा ॥ त्रिभिश्चान्यैःशरैस्तूर्णंतिष्ठतिष्ठेतिचाब्रवीत् २० सतुतंप्रतिविव्याधात्रि भिस्तीक्ष्णैरजिह्मगैः ॥ स्वर्णपुंखैःशिलाधौतैःप्राणांतकरणैर्युधि २१ भल्लेनान्येनतुपुनःसुवर्णोज्ज्वलकुंडलम् ॥ निचकर्तशिरःकायाद्द्रुमसेनस्यवीर्यवान् २२ तच्छिरोन्यपतद्भूमौसंदष्टौष्ठपुटंरणे ॥ महावातसमुद्धूतंपक्वंतालफलंयथा २३ तान्सविद्ध्वापुनर्योधान्वीरःसुनिशितैःशरैः ॥ राधेयस्याच्छिनद्भल्लैःकार्मुकंचि त्रयोधिनः २४ नतुतन्ममृषेकर्णोधनुषश्छेदनंतथा ॥ निकर्तनमिवात्युग्रंलांगूलस्यमहाहरिः २५

१० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ हरिः सिंहः २५

२६ षड्रथर्षभाः दुर्योधनदुःशासनद्रोणकर्णशल्यशकुनयः २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२

सोऽन्यद्धनुः समादाय क्रोधरक्तेक्षणः श्वसन् ॥ अभ्यद्रवच्छरौघैस्तं धृष्टद्युम्नं महाबलम् २६ दृष्ट्वा कर्णं तु संरब्धं ते वीराः षड्रथर्षभाः ॥ पांचाल्यपुत्रं त्वरिताः परिवव्रुर्जिघांसया २७ षण्णां योधप्रवीराणां तावकानां पुरस्कृतम् ॥ मृत्योरास्यमनुप्राप्तं धृष्टद्युम्नममंस्महि २८ एतस्मिन्नेव काले तु दाशार्हो विकिरञ्छरान् ॥ धृष्टद्युम्नं पराक्रांतं सात्यकिः प्रत्यपद्यत २९ तमायांतं महेष्वासं सात्यकिं युद्धदुर्मदम् ॥ राधेयो दशभिर्बाणैः प्रत्यविध्यदजिह्मगैः ३० तं सात्यकिर्महाराज विव्याध दशभिः शरैः ॥ पश्यतां सर्ववीराणां मा गास्तिष्ठेति चाब्रवीत् ३१ स सात्यकेस्तु बलिनः कर्णस्य च महात्मनः ॥ आसीत्समागमो राजन्बलिवासवयोरिव ३२ त्रासयन्रथघोषेण क्षत्रियान्क्षत्रियर्षभः ॥ राजीवलोचनं कर्णं सात्यकिः प्रत्यविध्यत ३३ कंपयन्निव घोषेण धनुषो वसुधां बली ॥ सूतपुत्रो महाराज सात्यकिं प्रत्ययोधयत् ३४ विपाठकर्णिनाराचैर्वत्सदंतैः क्षुरैरपि ॥ कर्णः शरशतैश्चापि शैनेयं प्रत्यविद्धचत ३५ तथैव युद्धचमानोऽपि वृष्णीनां प्रवरो युधि ॥ अभ्यवर्षच्छरैः कर्णं तद्युद्धमभवत्समम् ३६ तावकाश्च महाराज कर्णपुत्रश्च दंशितः सात्यकिं विव्यधुस्तूर्णं समंतान्निशितैः शरैः ३७ अस्त्रैरस्त्राणि संवार्य तेषां कर्णस्य चाविभो ॥ अविध्यत्सात्यकिः क्रुद्धो वृषसेनं स्तनांतरे ३८ तेन बाणेन निर्विद्धो वृषसेनो विशांपते ॥ न्यपतत्स रथे मूढो धनुरुत्सृज्य वीर्यवान् ३९ ततः कर्णो हतं मत्वा वृषसेनं महारथम् ॥ पुत्रशोकाभिसंतप्तः सात्यकिं प्रत्यपीडयत् ४० पीड्यमानस्तु कर्णेन युयुधानो महारथः ॥ विव्याध बहुभिः कर्णं त्वरमाणः पुनःपुनः ४१ स कर्णं दशभिर्विद्ध्वा वृषसेनं च सप्तभिः ॥ सहस्तावापधनुषी तयोश्चिच्छेद सात्वतः ४२ तावन्ये धनुषी सज्ये कृत्वा शत्रुभयंकरे ॥ युयुधानमविध्येतां समंतान्निशितैः शरैः ४३ वर्तमाने तु संग्रामे तस्मिन्वीरवरक्षये ॥ अतीव शुश्रुवे राजन्गांडीवस्य महास्वनः ४४ श्रुत्वा तु रथनिर्घोषं गांडीवस्य च निःस्वनं ॥ सूतपुत्रोऽब्रवीद्राजन्दुर्योधनमिदं वचः ४५ एष सर्वांश्चमूं हत्वा मुख्यांश्चैव नरर्षभान् ॥ पौरवांश्च महेष्वासो विक्षिपन्नुत्तमं धनुः ४६ पार्थो विजयते तत्र गांडीवनिनदो महान् ॥ श्रूयते रथघोषश्च वासवस्येव नर्दतः ४७ करोति पांडवो व्यक्तं कर्मौपयिकमात्मनः ॥ एषा विदार्यते राजन्बहुधा भारती चमूः ४८ विप्रकीर्णान्यनेकानि नहि तिष्ठंति कर्हिचित् ॥ वातेनेव समुद्धूतमभ्रजालं विदीर्यते ४९ सव्यसाचिनमासाद्य भिन्ना नौरिव सागरे ॥ द्रवतां योधमुख्यानां गांडीवप्रेषितैः शरैः ५० विद्धानां शतशो राजन्श्रूयते निःस्वनो महान् ॥ शृणु दुंदुभिनिर्घोषमर्जुनस्य रथं प्रति ५१ निशीथे राजशार्दूल स्तनयित्नोरिवांबरे ॥ हाहाकाररवांश्चैव सिंहनादांश्च पुष्कलान् ५२ शृणु शब्दान्बहुविधानर्जुनस्य रथं प्रति ॥ अयं मध्ये स्थितोऽस्माकं सात्यकिः सात्वतां वरः ५३ इह चेल्लभ्यते लक्ष्यं कृत्स्नान्जेष्यामहे परान् ॥ एष पांचालराजस्य पुत्रो द्रोणेन संगतः ५४

४३ । ४४ । ४५ । ४६ । ४७ औपयिकं युक्तम् ४८ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ इह सात्यकिरूपं लक्ष्यं लभ्यते चेत् अयं वशीक्रियते चेदित्यर्थः ५४

सात्यकिधृष्टद्युम्नौपांडवसेनायांसारभूताविभमन्युवद्बहुभिर्मिलित्वाहंतव्याविरयाह सात्यकिमित्यादिना ५५ । ५६ । ५७ । ५८ । ५९ माधवोमधुवंशजःसात्यकिः ६० । ६१ । ६२ । ६३ । ६४

सर्वतःसंवृतोयोधैःशूरैश्चरथसत्तमैः ॥ सात्यकिंयदिहन्यामधृष्टद्युम्नंचपार्षतम् ५५ असंशयंमहाराजध्रुवोनोविजयोभवेत् ॥ सौभद्रवदिमौवीरौपरिवार्यमहारथौ ५६ प्रयतामोमहाराजनिहंतुंवृष्णिपार्षतौ ॥ सव्यसाचीपुरोऽभ्येतिद्रोणानीकायभारत ५७ संसक्तंसात्यकिंज्ञात्वाबहुभिःकुरुपुंगवैः ॥ तत्रगच्छंतुबहवःप्रवरारथसत्तमाः ५८ यावत्पार्थोनजानातिसात्यकिंबहुभिर्वृतम् ॥ तेत्वरध्वंतथाशूराःशराणांमोक्षणेभृशम् ५९ यथात्विहव्रजत्येषपरलोकायमाधवः ॥ तथाकुरुमहाराजसुनीत्यासुप्रयुक्तया ६० कर्णस्यमतमास्थायपुत्रस्तेप्राहसौबलम् ॥ यथेंद्रःसमरेराजन्प्राहविष्णुंयशस्विनम् ६१ वृतःसहस्रैर्दशभिर्गजानामनिवर्तिनाम् ॥ रथैश्चदशसाहस्रैस्तूर्णंयाहिधनंजयम् ६२ दुःशासनोदुर्विषहःसुबाहुर्दुःप्रधर्षणः ॥ एतेत्वामनुयास्यंतिपत्तिभिर्बहुभिर्वृताः ६३ जहिकृष्णौमहाबाहोधर्मराजंचमातुल ॥ नकुलंसहदेवंचभीमसेनंतथैवच ६४ देवानामिवदेवेंद्रेजयाशात्वयिमेस्थिता ॥ जहिमातुलकौंतेयानसुरानिवपावकिः ६५ एवमुक्तोययौपार्थान्पुत्रेणतवसौबलः ॥ महत्यासेनयासार्धंसहपुत्रैश्चतेविभो ६६ प्रियार्थंतवपुत्राणांदिधक्षुःपांडुनंदनान् ॥ ततःप्रववृतेयुद्धंतावकानांपरैःसह ६७ प्रयातेसौबलेराजन्पांडवानामनीकिनीम् ॥ बलेनमहतायुक्तःसूतपुत्रस्तुसात्वतम् ६८ अभ्ययात्त्वरितोयुद्धेकिरन्शरशतान्बहून् ॥ तथैवपार्थिवाःसर्वेसात्यकिंपर्यवारयन् ६९ भारद्वाजस्ततोगत्वाधृष्टद्युम्नरथंप्रति ॥ महद्युद्धंतदासीत्तुद्रोणस्यनिशिभारत ॥ धृष्टद्युम्नेनवीरेणपंचालैश्चसहाद्भुतम् ७० ॥ इतिश्रीमहाभारतेद्रोणपर्वणिघटोत्कचवधपर्वणि रात्रियुद्धेसंकुलयुद्धेसप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥ ॥ ध ॥ ॥ संजयउवाच ॥ ततस्तेप्राद्रवन्सर्वेत्वरितायुद्धदुर्मदाः ॥ अमृष्यमाणाःसंरब्धायुयुधानरथंप्रति १ तेरथैःकल्पितैराजन्हेमरूप्यविभूषितैः ॥ सादिभिश्चगजैश्चैवपरिवव्रुःसमंततः २ अथैनंकोष्ठकीकृत्यसर्वतस्तेमहारथाः ॥ सिंहनादांस्ततश्चक्रुस्तर्जयंतिस्मसात्यकिं ३ तेऽभ्यवर्षञ्छरैस्तीक्ष्णैःसात्यकिंसत्यविक्रमम् ॥ त्वरमाणामहावीरामाधवस्यवधैषिणः ४ तान्दृष्ट्वाऽऽपततस्तूर्णंशैनेयःपरवीरहा ॥ प्रत्यगृह्णान्महाबाहुःप्रमुंचन्विशिखान्बहून् ५ तत्रवीरोमहेष्वासःसात्यकिर्युद्धदुर्मदः ॥ निचकर्तशिरांस्युग्रैःशरैःसन्नतपर्वभिः ६ हस्तिहस्तान्हयग्रीवाबाहूनपिचसायुधान् ॥ क्षुरप्रैःशातयामासतावकानांसमाधवः ७ पतितैश्चामरैश्चैवश्वेतच्छत्रैश्चभारत ॥ बभूवधरणीपूर्णानक्षत्रैर्द्यौरिवप्रभो ८ एतेषांयुयुधानेनयुध्यतांयुधिभारत ॥ बभूवतुमुलःशब्दःप्रेतानांक्रंदतामिव ९ तेनशब्देनमहतापूरिताऽभूद्वसुंधरा ॥ रात्रिःसमभवच्चैवतीव्ररूपाभयावहा १० दीर्यमाणंबलंदृष्ट्वायुयुधानशराहतम् ॥ श्रुत्वाचविपुलंनादंनिशीथेलोमहर्षणे ११

पावकिःस्कंदः ६५ । ६६ । ६७ । ६८ । ६९ । ७० ॥ इतिद्रोणपर्वणिटीकायांसप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥ ततइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११

सुतस्तवाब्रवीद्राजन्सारथिंरथिनांवरः ॥ यत्रैषशब्दस्तत्राश्वांश्चोदयेतिपुनःपुनः १२ तेनसंचोद्यमानस्तुततस्तांस्तुरगोत्तमान् ॥ सूतःसंचोदयामासयुयुधान
रथंप्रति १३ ततोदुर्योधनःक्रुद्धोदृढधन्वाजितक्लमः ॥ शीघ्रहस्तश्चित्रयोधीयुयुधानमुपाद्रवत् १४ ततःपूर्णायतोत्सृष्टैःशरैःशोणितभोजनैः ॥ दुर्योधनंद्वाद
शभिर्माधवःप्रत्यविध्यत १५ दुर्योधनस्तेनतथापूर्वमेवार्दितःशरैः ॥ शैनेयंदशभिर्बाणैःप्रत्यविध्यदमर्षितः १६ ततःसमभवद्युद्धंतुमुलंभरतर्षभ ॥ पंचाला
नांचसर्वेषांभरतानांचदारुणम् १७ शैनेयस्तुरणेक्रुद्धस्तवपुत्रंमहारथम् ॥ सायकानामशीत्यातुविव्याधोरसिभारत १८ ततोऽस्यवाहान्समरेशरैर्निन्येयमक्ष
यम् ॥ सारथिंचरथात्तूर्णंपातयामासपत्रिणा १९ हताश्वेतुरथेतिष्ठन्पुत्रस्तवविशांपते ॥ मुमोचनिशितान्बाणान्शैनेयस्यरथंप्रति २० शरान्पंचाशतांस्तां
स्तुशैनेयःकृतहस्तवत् ॥ चिच्छेदसमरेराजन्प्रेषितांस्तनयेनते २१ अथापरेणभल्लेनमुष्टिदेशेमहद्धनुः ॥ चिच्छेदतरसायुद्धेतवपुत्रस्यमाधवः २२ विरथो
विधनुष्कश्चसर्वलोकेश्वरःप्रभुः ॥ आरुरोहरथंतूर्णंभास्वरंकृतवर्मणः २३ दुर्योधनेपरावृत्तेशैनेयस्तववाहिनीम् ॥ द्रावयामासविशिखैर्निशामध्येविशांपते २४
शकुनिश्चार्जुनंराजन्परिवार्यसमंततः ॥ रथैरनेकसाहस्रैर्गजैश्चापिसहस्रशः २५ तथाहयसहस्रैश्चनानाशस्त्रैरवाकिरत् ॥ तेमहास्त्राणिसर्वाणिविकिरंतोऽर्जुनंप्र
ति २६ अर्जुनंयोधयंतिस्मक्षत्रियाःकालचोदिताः ॥ तान्यर्जुनःसहस्राणिरथवारणवाजिनाम् २७ प्रत्यवारयदायस्तःप्रकुर्वन्विपुलंक्षयम् ॥ ततस्तुसमरे
शूरःशकुनिःसौबलस्तदा २८ विव्याधनिशितैर्बाणैरर्जुनंप्रहसन्निव ॥ पुनश्चैवशतेनास्यसंरुरोधमहारथम् २९ तमर्जुनस्तुविंशत्याविव्याधयुधिभारत ॥ अ
थेतरान्महेष्वासांस्त्रिभिस्त्रिभिरविध्यत ३० निवार्यतान्बाणगणैर्युधिराजन्धनंजयः ॥ जघानतावकान्योधान्वज्रपाणिरिवासुरान् ३१ भुजैश्छिन्नैर्महीपालह
स्तिहस्तोपमैर्मृधे ॥ समाकीर्णामहीभातिपंचास्यैरिवपन्नगैः ३२ शिरोभिःसाकिरीटैश्चसुनसैश्चारुकुंडलैः ॥ संदष्टौष्ठपुटैःक्रुद्धैस्तथैवोद्वृत्तलोचनैः ३३ निष्क
चूडामणिधरैःक्षत्रियाणांप्रियंवदैः ॥ पंकजैरिवविन्यस्तैःपर्वतैर्विबभौमही ३४ कृत्वातत्कर्मबीभत्सुरुग्रमुग्रपराक्रमः ॥ विव्याधशकुनिंभूयःपंचभिर्नतपर्वभिः ३५
अताडयदुलूकंचत्रिभिरेवतथाशरैः ॥ उलूकस्तुतथाविद्धोवासुदेवमताडयत् ३६ ननादचमहानादंपूरयन्निवमेदिनीम् ॥ अर्जुनःशकुनेश्चापंसायकैराच्छिनद्रणे
३७ निन्येचचतुरोवाहान्यमस्यसदनंप्रति ॥ ततोरथादवप्लुत्यसौबलोभरतर्षभ ३८ उलूकस्यरथंतूर्णमारुरोहविशांपते ॥ तावेकरथमारूढौपितापुत्रौमहा
रथौ ३९ पार्थंसिषिचतुर्बाणैर्गिरिंमेघाविवांबुभिः ॥ तौतुविद्धामहाराजपांडवोनिशितैःशरैः ४० विद्रावयंस्तवचमूंशतशोव्यधमच्छरैः ॥ अनिलेनयथा
ऽभ्राणिविच्छिन्नानिसमंततः ४१ विच्छिन्नानितथाराजन्बलान्यासन्विशांपते ॥ तद्बलंभरतश्रेष्ठवध्यमानंतदानिशि ४२

४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ ॥ इतिद्रोणपर्वणिटीकायामेकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥ ॥ ७ ॥ ॥ विद्रुतमिति १ । २ । ३

प्रदुद्रावदिशःसर्वावीक्षमाणंभयार्दितम् ॥ उत्सृज्यवाहान्समरेचोदयंतस्तथाऽपरे ४३ संभ्रांताःपर्यधावंततस्मिंस्तमसिदारुणे ॥ विजित्यसमरेयोधांस्तावकान् भरतर्षभ ४४ दध्मतुर्मुदितौशंखौवासुदेवधनंजयौ ॥ धृष्टद्युम्नोमहाराजद्रोणंविद्ध्वात्रिभिःशरैः ४५ चिच्छेदधनुषस्तूर्णंज्यांशरेणशितेनह ॥ तन्निधायधनुर्भू मौद्रोणःक्षत्रियमर्दनः ४६ आददेऽन्यद्धनुःशूरोवेगवत्सारवत्तरम् ॥ धृष्टद्युम्नंततोद्रोणोविद्ध्वासप्तभिराशुगैः ४७ सारथिंपंचभिर्बाणैराजान्विव्याधसंयुगे ॥ तं निवार्यशरैस्तूर्णंधृष्टद्युम्नोमहारथः ४८ व्यधमत्कौरवींसेनामासुरींमघवानिव ॥ वध्यमानेबलेतस्मिंस्तवपुत्रस्यमारिष ४९ प्रावर्ततनदीघोराशोणितौघतरं गिणी ॥ उभयोःसेनयोर्मध्येनराश्वद्विपवाहिनी ५० यथावैतरणीराजन्यमराजपुरंप्रति ॥ द्रावयित्वातुतत्सैन्यंधृष्टद्युम्नःप्रतापवान् ५१ अभ्यराजततेजस्वी शक्रोदेवगणेष्विव ॥ अथदध्मुर्महाशंखान्धृष्टद्युम्नशिखंडिनौ ५२ यमौचयुयुधानश्चपांडवश्चवृकोदरः ॥ जित्वारथसहस्राणितावकानांमहारथाः ५३ सिंह नादरवांश्चक्रुःपांडवाजितकाशिनः ॥ पश्यतस्तवपुत्रस्यकर्णस्यचरणोत्कटाः ॥ तथाद्रोणस्यशूरस्यद्रौणेश्चैवविशांपते ५४ ॥ इतिश्रीमहाभारतेद्रोणपर्वणि घटोत्कचवधपर्वणिरात्रियुद्धेसंकुलयुद्धेएकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥ ७ ॥ संजयउवाच ॥ विद्रुतंस्वबलंदृष्ट्वावध्यमानंमहात्मभिः ॥ क्रोधेनमह ताऽऽविष्टःपुत्रस्तवविशांपते १ अभ्येत्यसहसाकर्णंद्रोणंचजयतांवरम् ॥ अमर्षवशमापन्नोवाक्यज्ञोवाक्यमब्रवीत् २ भवद्भ्यामिहसंग्रामःक्रुद्धाभ्यांसंप्रवर्तितः ॥ आहवेनिहतंदृष्ट्वासैंधवंसव्यसाचिना ३ निहन्यमानांपांडुनांबलेनममवाहिनीम् ॥ भूत्वातद्विजयेशक्तावशक्ताविवपश्यतः ४ यद्यहंभवतोस्त्याज्योनवाच्यो ऽस्मितदैवहि ॥ आवांपांडुसुतान्संख्येजेष्यावइतिमानदौ ५ तदैवाहंवचःश्रुत्वाभवद्भ्यामनुसंमतम् ॥ नाकरिष्यमिदंपार्थैर्वैरंयोधविनाशनम् ६ यदिनाहंप रित्याज्योभवद्भ्यांपुरुषर्षभौ ॥ युध्यतामनुरूपेणविक्रमेणसुविक्रमौ ७ वाक्प्रतोदेनतौवीरौप्रणुन्नौतनयेनते ॥ प्रावर्तयेतांसंग्रामंघट्टिताविवपन्नगौ ८ ततस्तौरथिनांश्रेष्ठौसर्वलोकधनुर्धरौ ॥ शैनेयप्रमुखान्पार्थानभिदुद्रुवतूरणे ९ तथैवसहिताःपार्थाःसर्वसैन्येनसंवृताः ॥ अभ्यवर्ततवीरौनर्दमानौमुहुर्मुहुः १० अथद्रोणोमहेष्वासोदशभिःशिनिपुंगवम् ॥ अविध्यत्त्वरितंक्रुद्धःसर्वशस्त्रभृतांवरः ११ कर्णश्चदशभिर्बाणैःपुत्रश्चतवसप्तभिः ॥ दशभिर्वृषसेनश्चसौबल श्चापिसप्तभिः १२ एतेकौरवसंक्रंदेशैनेयंपर्यवाकिरन् ॥ दृष्ट्वाचसमरेद्रोणंनिघ्नंतंपांडवींचमूम् १३ विव्यधुःसोमकास्तूर्णंसमंताच्छरवृष्टिभिः ॥ तत्रद्रोणो ऽहरत्प्राणान्क्षत्रियाणांविशांपते १४ रश्मिभिर्भास्करोराजंस्तमांसिवसमंततः ॥ द्रोणेनवध्यमानानांपंचालानांविशांपते १५ शुश्रुवेतुमुलःशब्दःक्रोशतामि तरेतरम् ॥ पुत्रानन्येपितॄनन्येभ्रातॄनन्येचमातुलान् १६

४ । ५ । ६ । ७ घट्टितौमर्दितौ ८ । ९ । १० । ११ । १२ संक्रंदेयुद्धे १३ । १४ । १५ । १६

१७ । १८ । १९ । २० । २१ । २२ । २३ सात्यकीइतिद्वितीयांतम् २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१

भागिनेयान्वयस्यांश्चतथासंबंधिबांधवान् ॥ उत्सृज्योत्सृज्यगच्छंतित्वरिताजीवितेप्सवः १७ अपरेमोहितामोहात्तमेवाभिमुखाययुः ॥ पांडवानांरणेयोधाः परलोकंगताःपरे १८ सातथापांडवीसेनापीडचमानामहात्मना ॥ निशिसंप्राद्रवद्राजन्नुत्सृज्योल्काःसहस्रशः १९ पश्यतोभीमसेनस्यविजयस्याच्युतस्यच यमयोर्धर्मपुत्रस्यपार्षतस्यचपश्यतः २० तमसासंवृतेलोकेनप्राज्ञायतकिंचन ॥ कौरवाणांप्रकाशेनदृश्यंतेविद्रुताःपरे २१ द्रवमाणंतुतत्सैन्यंद्रोणकर्णौमहारथौ ॥ जघ्नतुःपृष्ठतोराजन्किरंतौसायकान्बहून् २२ पंचालेषुप्रभग्नेषुक्षीयमाणेषुसर्वतः ॥ जनार्दनोदीनमनाःप्रत्यभाषतफाल्गुनम् २३ द्रोणकर्णौमहेष्वासावेतौपार्षतसात्यकी ॥ पंचालांश्चैवसहितौजघ्नतुःसायकैर्भृशम् २४ एतयोःशरवर्षेणप्रभग्नानोमहारथाः ॥ वार्यमाणाअपिकौंतेयपृतनानावतिष्ठते २५ तांतुविद्रवतींदृष्ट्वाऊचतुःकेशवार्जुनौ ॥ माविद्रवतवित्रस्ताभयंत्यजतपांडवाः २६ तावावांसर्वसैन्यैश्चव्यूढैःसम्यगुदायुधैः ॥ द्रोणंचसूतपुत्रंचप्रयतावःप्रबाधितुम् २७ एतौहिबलिनौशूरौकृतास्त्रौजितकाशिनौ ॥ उपेक्षितौतवबलंनाशयेतांनिशामिमाम् २८ तयोःसंवदतोरेवंभीमकर्मामहाबलः ॥ आयाद्वृकोदरःशीघ्रंपुनरावर्त्यवाहिनीम् २९ वृकोदरमथायांतंदृष्ट्वातत्रजनार्दनः ॥ पुनरेवाब्रवीद्राजन्हर्षयन्निवपांडवम् ३० एषभीमोरणश्लाघीवृतःसोमकपांडवैः ॥ अभ्यवर्ततवेगेनद्रोणकर्णौमहारथौ ३१ एतेनसहितोयुध्यपंचालैश्चमहारथैः ॥ आश्वासनार्थंसैन्यानांसर्वेषांपांडुनंदन ३२ ततस्तौपुरुषव्याघ्रावुभौमाधवपांडवौ ॥ द्रोणकर्णौसमासाद्यधिष्ठितौरणमूर्धनि ३३ ॥ संजयउवाच ॥ ततस्तत्पुनरावृत्तंयुधिष्ठिरबलंमहत् ॥ ततोद्रोणश्चकर्णश्चपरान्ममृदतुर्युधि ३४ ससंप्रहारस्तुमुलोनिशिप्रत्यभवन्महान् ॥ यथासागरयोराजंश्चंद्रोदयविवृद्धयोः ३५ ततउत्सृज्यपाणिभ्यांप्रदीपांस्तववाहिनी ॥ युयुधेपांडवैःसार्धमुन्मत्तवदसंकुला ३६ रजसातमसाचैवसंवृतेभृशदारुणे ॥ केवलंनामगोत्रेणप्रायुध्यंतजयैषिणः ३७ अश्रूयंतहिनामानिश्राव्यमाणानिपार्थिवैः ॥ प्रहरद्भिर्महाराजस्वयंवरइवाहवे ३८ निःशब्दमासीत्सहसापुनःशब्दोमहानभूत ॥ क्रुद्धानांयुध्यमानानांजयतांजयतामपि ३९ यत्रयत्रस्मदृश्यंतेप्रदीपाःकुरुसत्तम ॥ तत्रतत्रस्मशूरास्तेनिपतंतिपतंगवत् ४० तथासंयुध्यमानानांविगाढाऽसीन्महानिशा ॥ पांडवानांचराजेंद्रकौरवाणांचसर्वशः ॥ ४१ ॥ तिश्रीमहाभारतेद्रोणपर्वणिघटोत्कचवधपर्वणिरात्रियुद्धेसंकुलयुद्धेद्विसप्तत्यधिकशततमोऽध्यायः १७२ ॥ ७ ॥ ॥ संजयउवाच ॥ ॥ ततःकर्णोरणेदृष्ट्वापार्षतंपरवीरहा ॥ आजघानोरसिशरैर्दशभिर्मर्मभेदिभिः १ प्रतिविव्याधतंतूर्णंधृष्टद्युम्नोऽपिमारिष ॥ दशभिःसायकैर्हृष्टस्तिष्ठतिष्ठेतिचाब्रवीत् २ तावन्योन्यंशरैःसंख्येसंछाद्यसुमहारथैः ॥ पुनःपूर्णायतोत्सृष्टैर्विव्यधातेपरस्परम् ३ ॥ इतिद्रोणपर्वणिटीकायांद्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥ ॥ ७ ॥ ॥ ततइति १ । २ । ३

४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ आयस्तःप्रयत्नवान् १३ । १४ । १५ । १६ । १७ । १८ अतिभयात्तृणचलनमात्रेणापिकर्णंप्राप्तंमेनिरे १९ । २० । २१ । २२ । २३ । २४

ततःपंचालमुख्यस्यधृष्टद्युम्नस्यसंयुगे ॥ सारथिंचतुरश्चाश्वान्कर्णोविव्याधसायकैः ४ कार्मुकप्रवरंचापिप्राचिच्छेदशितैःशरैः ॥ सारथिंचास्यभल्लेनरथनीडाद
पातयत् ५ धृष्टद्युम्नस्तुविरथोहताश्वोहतसारथिः ॥ गृहीत्वापरिघंघोरंकर्णस्याश्वानपीपिषत् ६ विद्धश्चबहुभिस्तेनशरैराशीविषोपमैः ॥ ततोयुधिष्ठिरानी
कंपद्भ्यामेवान्वपद्यत ७ आरुरोहरथंचापिसहदेवस्यमारिष ॥ प्रयातुकामःकर्णायवारितोधर्मसूनुना ८ कर्णस्तुसुमहातेजाःसिंहनादविमिश्रितम् ॥ धनुःशब्दं
महच्चक्रेदध्मौतारेणचांबुजम् ९ दृष्ट्वाविनिर्जितंयुद्धेपार्षतंतेमहारथाः ॥ अमर्षवशमापन्नाःपंचालाःसहसोमकाः १० सूतपुत्रवधार्थायशस्त्राण्यादायसर्वशः ॥ प्र
ययुःकर्णमुद्दिश्यमृत्युंकृत्वानिवर्तनम् ११ कर्णस्यापिरथेवाहानन्यान्सूतोऽभ्ययोजयत् ॥ शंखवर्णान्महावेगान्सैंधवान्साधुवाहिनः १२ लब्धलक्षस्तुराधेयः
पंचालानांमहारथान् ॥ अभ्यपीडयदायस्तःशरैर्मेघइवाचलम् १३ सापीड्यमानाकर्णेनपंचालानांमहाचमूः ॥ संप्राद्रवत्सुसंत्रस्तासिंहेनेवार्दितामृगी १४
पतितास्तुरगेभ्यश्चगजेभ्यश्चमहीतले ॥ रथेभ्यश्चनरास्तूर्णमदृश्यंतततस्ततः १५ धावमानस्ययोधस्यक्षुरप्रैःसमहामृधे ॥ बाहूचिच्छेदवैकर्णःशिरश्चैवस
कुंडलम् १६ ऊरूचिच्छेदचान्यस्यगजस्थस्यविशांपते ॥ वाजिपृष्ठगतस्यापिभूमिष्ठस्यचमारिष १७ नाज्ञासिषुर्धावमानाबहवश्चमहारथाः ॥ संछिन्ना
न्यात्मगात्राणिवाहनानिचसंयुगे १८ तेवध्यमानाःसमरेपंचालाःसृंजयैःसह ॥ तृणप्रस्पंदनाच्चापिसूतपुत्रंस्ममेनिरे १९ अपिस्वंसमरेयोधंधावमानंविचेतसम् ॥
कर्णमेवाभ्यमन्यंततततोभीताद्रवंतिते २० तान्यनीकानिभग्नानिद्रवमाणानिभारत ॥ अभ्यद्रवद्द्रुतंकर्णःपृष्ठतोविकिरञ्छरान् २१ अवेक्षमाणास्त्वन्योन्यं
सुसंमूढाविचेतसः ॥ नाशक्नुवन्नवस्थातुंकाल्यमानामहात्मना २२ कर्णेनाभ्याहताराजन्पंचालाःपरमेषुभिः ॥ द्रोणेनचदिशःसर्वावीक्षमाणाःप्रदुद्रुवुः २३ त
तोयुधिष्ठिरोराजास्वसैन्यंप्रेक्ष्यविद्रुतम् ॥ अपयानेमनःकृत्वाफाल्गुनंवाक्यमब्रवीत् २४ पश्यकर्णंमहेष्वासंधनुष्पाणिमवस्थितम् ॥ निशीथेदारुणेकालेतपं
तमिवभास्करम् २५ कर्णसायकनुन्नानांक्रोशतामेषनिःस्वनः ॥ अनिशंश्रूयतेपार्थत्वद्बंधूनामनाथवत् २६ यथाविसृजतश्चास्यसंदधानस्यचाशुगान् ॥ प
श्यामिनांतरंपार्थक्षपयिष्यतिनोध्रुवम् २७ यदत्रानंतरंकार्यंप्राप्तकालंचपश्यसि ॥ कर्णस्यवधसंयुक्तंतत्कुरुष्वधनंजय २८ एवमुक्तोमहाराजपार्थःकृष्णम
थाब्रवीत् ॥ भीतःकुंतीसुतोराजाराधेयस्यातिविक्रमात् २९ एवंगतेप्राप्तकालंकर्णानीकेपुनःपुनः ॥ भवान्व्यवस्यतुक्षिप्रंद्रवतेहिवरूथिनी ३० द्रोणसायक
नुन्नानांभग्नानांमधुसूदन ॥ कर्णेनत्रास्यमानानामवस्थानंनविद्यते ३१ पश्यामिचतथाकर्णंविचरंतमभीतवत् ॥ द्रवमाणान्रथोदारान्किरंतंनिशितैःशरैः ३२ नैनं
शक्ष्यामिसंसोढुंचरंतंरणमूर्धनि ॥ प्रत्यक्षंवृष्णिशार्दूलपादस्पर्शमिवोरगः ३३ सभवांस्तत्रयात्वाशुयत्रकर्णोमहारथः ॥ अहमेनंहनिष्यामिमांवैषमधुसूदन ३४

२५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४

श्रीवासुदेवउवाच ॥ पश्यामिकर्णंकौंतेयदेवराजमिवाहवे ॥ विचरंतंनरव्याघ्रमतिमानुषविक्रमम् ३५ नैतस्यान्योऽस्तिसंग्रामेप्रत्युद्याताधनंजय ॥ ऋतेत्वां पुरुषव्याघ्रराक्षसाद्वाघटोत्कचात् ३६ नतुतावदहंमन्येप्राप्तकालंतवानघ ॥ समागमंमहाबाहोसूतपुत्रेणसंयुगे ३७ दीप्यमानामहोल्केवतिष्ठत्यस्यहिवासवी ॥ त्वदर्थंहिमहाबाहोसूतपुत्रेणसंयुगे ३८ रक्ष्यतेशक्तिरेषाहिरौद्रंरूपंबिभर्तिच ॥ घटोत्कचस्तुराधेयंप्रत्युद्यातुमहाबलः ३९ सहिभीमेनबलिनाजातःसुरपराक्रमः ॥ तस्मिन्नस्त्राणिदिव्यानिराक्षसान्यासुराणिच ४० सततंचानुरक्तोवोहितैषीचघटोत्कचः ॥ विजेष्यतिरणेकर्णमितिमेनात्रसंशयः ४१ एवमुक्तोमहाबाहुःपार्थःपुष्करलोचनः ॥ आजुहावाथतद्रक्षस्तच्चासीत्प्रादुरग्रतः ४२ कवचीसशरःखड्गीसधन्वाचविशांपते ॥ अभिवाद्यततःकृष्णंपांडवंचधनंजयम् ॥ अब्रवीच्चतदाकृष्णमयमस्म्यनुशाधिमाम् ४३ ततस्तंमेघसंकाशंदीप्तास्यंदीप्तकुंडलम् ॥ अभ्यभाषतहैडिंबिंदाशार्हःप्रहसन्निव ४४ ॥ वासुदेवउवाच ॥ घटोत्कचविजानीहियत्त्वांवक्ष्यामिपुत्रक ॥ प्राप्तोविक्रमकालोऽयंतवनान्यस्यकस्यचित् ४५ सभवान्मज्जमानानांबंधूनांत्वंप्लवोभव ॥ विविधानितवास्त्राणिसंतिमायाचराक्षसी ४६ पश्यकर्णेनहैडिंबेपांडवानामनीकिनी ॥ काल्यमानायथागावःपालेनरणमूर्धनि ४७ एषकर्णोमहेष्वासोमतिमान्दृढविक्रमः ॥ पांडवानामनीकेषुनिहंतिक्षत्रियर्षभान् ४८ किरंतःशरवर्षाणिमहांतिदृढधन्विनः ॥ नशक्नुवंत्यवस्थातुंपीड्यमानाःशरार्चिषा ४९ निशीथेसूतपुत्रेणशरवर्षेणपीडिताः ॥ एतेद्रवंतिपंचालाःसिंहेनेवार्दितामृगाः ५० एतस्यैवंप्रवृद्धस्यसूतपुत्रस्यसंयुगे ॥ निषेद्धाविद्यतेनान्यस्त्वामृतेभीमविक्रम ५१ सत्वंकुरुमहाबाहोकर्णयुक्तमिहात्मनः ॥ मातुलानांपितॄणांचतेजसोऽस्त्रबलस्यच ५२ एतदर्थंहिहैडिंबेपुत्रानिच्छंतिमानवाः ॥ कथंनस्तारयेद्दुःखात्सत्वंतारयबांधवान् ५३ इच्छंतिपितरःपुत्रान्स्वार्थहेतोर्घटोत्कच ॥ इहलोकात्परेलोकेतारयिष्यंतियेहिताः ५४ तवह्यत्रबलंभीमंमायाश्चतवदुस्तराः ॥ संग्रामेयुध्यमानस्यसततंभीमनंदन ५५ पांडवानांप्रभग्नानांकर्णेननिशिसायकैः ॥ मज्जतांधार्तराष्ट्रेषुभवपारंपरंतप ५६ रात्रौहिराक्षसाभूयोभवंत्यमितविक्रमाः ॥ बलवंतःसुदुर्धर्षाःशूराविक्रांतचारिणः ५७ जहिकर्णंमहेष्वासंनिशीथेमाययारणे ॥ पार्थाद्रोणंवधिष्यंतिधृष्टद्युम्नपुरोगमाः ५८ ॥ संजयउवाच ॥ केशवस्यवचःश्रुत्वाबीभत्सुरपिराक्षसम् ॥ अभ्यभाषतकौरव्यघटोत्कचमरिंदमम् ५९ घटोत्कचभवांश्चैवदीर्घबाहुश्चसात्यकिः ॥ मतौमेसर्वसैन्येषुभीमसेनश्चपांडवः ६० तद्भवान्यातुकर्णेनद्वैरथंयुध्यतांनिशि ॥ सात्यकिःपृष्ठगोपस्तेभविष्यतिमहारथः ६१ जहिकर्णंरणेशूरंसात्वतेनसहायवान् ॥ यथेंद्रस्तारकंपूर्वंस्कंदेनसहजघ्निवान् ६२ ॥ ॥ घटोत्कचउवाच ॥ ॥ अलमेवास्मिकर्णायद्रोणायालंचभारत ॥ अन्येषांक्षत्रियाणांचकृतास्त्राणांमहात्मनाम् ६३

६८ ॥ इतिद्रोणपर्वणिटीकायांषट्षष्ट्यधिकशततमोऽध्यायः ॥ १७३ ॥ ॥ दृष्ट्वेति १ । २ । ३ । ४ । ५ । ६ । ७ अपचितिं निष्कृतिम् ८ । ९ । १० । ११ । १२ । १३ । १४

अद्यदास्यामिसंग्रामंसूतपुत्रायतंनिशि ॥ यंजनाःसंप्रवक्ष्यंतियावद्भूमिर्धरिष्यति ६४ नचात्रशूरान्मोक्ष्यामिनभीतान्नकृतांजलीन् ॥ सर्वानेववधिष्यामिरा क्षसंधर्ममास्थितः ६५ ॥ संजयउवाच ॥ एवमुक्त्वामहाबाहुर्हैडिंबिर्वरवीरहा ॥ अभ्ययात्तुमुलेकर्णंतवसैन्यंविभीषयन् ६६ तमापतंतंसंक्रुद्धंदीप्तास्यं दीप्तमूर्धजम् ॥ प्रहसन्पुरुषव्याघ्रःप्रतिजग्राहसूतजः ६७ तयोःसमभवद्युद्धंकर्णराक्षसयोर्मृधे ॥ गर्जतोराजशार्दूलशक्रप्रह्लादयोरिव ६८ ॥ इतिश्रीमहाभार तेद्रोणपर्वणिघटोत्कचवधपर्वणिरात्रियुद्धेघटोत्कचप्रोत्साहनेत्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥ छ ॥ संजयउवाच ॥ दृष्ट्वाघटोत्कचंराजन्सूत पुत्ररथंप्रति ॥ आयांतंतुतथायुक्तंजिघांसुंकर्णमाहवे १ अब्रवीत्तत्रपुत्रस्तेदुःशासनमिदंवचः ॥ एतद्रक्षोरणेतूर्णंदृष्ट्वाकर्णस्यविक्रमम् २ अभियातिद्रुतंक र्णंतद्वारयमहारथम् ॥ वृतःसैन्येनमहतायाहियत्रमहाबलः ३ कर्णोवैकर्तनोयुद्धेराक्षसेनयुयुत्सति ॥ रक्षकर्णंरणेयत्तोवृतःसैन्येनमानद ४ माकर्णंराक्षसोघो रःप्रमादान्नाशयिष्यति ॥ एतस्मिन्नंतरेराजन्जटासुरसुतोबली ५ दुर्योधनमुपागम्यप्राहप्रहरतांवरः ॥ दुर्योधनतवामित्रान्प्रख्यातान्युद्धदुर्मदान् ६ पांड वान्हंतुमिच्छामित्वयाऽऽज्ञप्तःसहानुगान् ॥ जटासुरोममपितारक्षसांग्रामणीःपुरा ७ प्रयुज्यकर्मरक्षोघ्नंक्षुद्रैःपार्थैर्निपातितः ॥ तस्यापचितिमिच्छामिशत्रुशो णितपूजया ॥ शत्रुमांसैश्चराजेंद्रमामनुज्ञातुमर्हसि ८ तमब्रवीत्ततोराजाप्रीयमाणःपुनःपुनः ॥ द्रोणकर्णादिभिःसार्धंपर्याप्तोऽहंद्विषद्वधे ९ त्वंतुगच्छमयाऽ ज्ञप्तोजहियुद्धेघटोत्कचम् ॥ राक्षसंक्रूरकर्माणंरक्षोमानुषसंभवम् १० पांडवानांहितंनित्यंहस्त्यश्वरथघातिनम् ॥ वैहायसगतंयुद्धेप्रेषयेर्यमसादनम् ११ तथेत्यु क्त्वामहाकायःसमाहूयघटोत्कचम् ॥ जाटासुरिर्भैमसेनिंनानाशस्त्रैरवाकिरत् १२ अलंबुषंचकर्णंचकुरुसैन्यंचदुस्तरं ॥ हैडिंबिःप्रममाथैकोमहावातोऽबुदानिव १३ ततोमायाबलंदृष्ट्वारक्षस्तूर्णमलंबुषः ॥ घटोत्कचंशरव्रातैर्नानालिंगैःसमार्पयत् १४ विद्धाचबहुभिर्बाणैर्भैमसेनिंमहाबलः ॥ व्यद्रावयच्छरव्रातैःपांड वानामनीकिनीम् १५ तेनविद्राव्यमाणानिपांडुसैन्यानिभारत ॥ निशीथेविप्रकीर्यंतेवातनुन्नाघनाइव १६ घटोत्कचशरैर्नुन्नातथैवतववाहिनी ॥ निशीथे प्राद्रवद्राजन्नुत्सृज्योल्काःसहस्रशः १७ अलंबुषस्ततःक्रुद्धोभैमसेनिंमहामृधे ॥ आजघ्नेदशभिर्बाणैस्तोत्रैरिवमहाद्विपम् १८ तिलशस्तस्यसंवाहंसूतंसर्वायुधा निच ॥ घटोत्कचःप्रचिच्छेदप्रणदंश्चातिदारुणम् १९ ततःकर्णंशरव्रातैःकुरूनन्यान्सहस्रशः ॥ अलंबुषंचाभ्यवर्षन्मेघोमेरुमिवाचलम् २० ततःसंचुक्षुभेसैन्यं कुरूणांराक्षसार्दितम् ॥ उपर्युपरिचान्योन्यंचतुरंगंममर्द्द २१ जाटासुरिर्महाराजविरथोहतसारथिः ॥ घटोत्कचंरणेक्रुद्धोमुष्टिनाऽभ्यहनद्दृढम् २२ मुष्टिना ऽभ्याहतस्तेनप्रचचालघटोत्कचः ॥ क्षितिकंपेयथाशैलःसवृक्षस्तृणगुल्मवान् २३ १५ । १६ । १७ । १८ । १९ । २० । २१ २२ । २३

२४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१।३२ । ३३ ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ निष्ठांनाशम् ४२ । ४३ । ४४ । ४५

ततःसपरिघाभेनद्विट्संघघ्नेनबाहुना ॥ जाटासुरिंभैमसेनिरवधीन्मुष्टिनाभृशम् २४ तंप्रमथ्यततःक्रुद्धस्तूर्णंहैडिंबिराक्षिपत् ॥ दोर्भ्यामिंद्रध्वजाभाभ्यांनि ष्पिपेषचभूतले २५ जाटासुरिर्मोक्षयित्वाआत्मानंचघटोत्कचात् ॥ पुनरुत्थायवेगेनघटोत्कचमुपाद्रवत् २६ अलंबुषोऽपिविक्षिप्यसमुत्क्षिप्यचराक्षसम् ॥ घटोत्कचंरणेरोषान्निष्पिपेषचभूतले २७ तयोःसमभवद्युद्धंगर्जतोरतिकाययोः ॥ घटोत्कचालंबुषयोस्तुमुलंलोमहर्षणम् २८ विशेषयंतावन्योन्यंमायाभि रतिमायिनौ ॥ युयुधातेमहावीर्याविंद्रवैरोचनाविव २९ पावकांबुनिधीभूत्वापुनर्गरुडतक्षकौ ॥ पुनर्मेघमहावातौपुनर्वज्रमहाचलौ ३० पुनःकुंजरशार्दूलौ पुनःस्वर्भानुभास्करौ ॥ एवंमायाशतसृजावन्योन्यवधकांक्षिणौ ३१ भृशंचित्रमयुध्येतामलंबुषघटोत्कचौ ॥ परिघैश्चगदाभिश्चप्रासमुद्गरपट्टिशैः ३२ मुस लैःपर्वताग्रैश्चतावन्योन्यंविजघ्नतुः ॥ हयाभ्यांचगजाभ्यांचरथाभ्यांचपदातिभिः ३३ युयुधातेमहामायौराक्षसप्रवरौयुधि ॥ ततोघटोत्कचोराजन्नलंबुषवधे प्सया ३४ उत्पपातभृशंक्रुद्धःश्येनवन्निपपातच ॥ गृहीत्वाचमहाकायंराक्षसेंद्रमलंबुषम् ३५ उद्यम्यन्यवधीद्भूमौमयंविष्णुरिवाहवे ॥ ततोघटोत्कचःखड्ग मुद्गृह्याद्भुतदर्शनम् ३६ रौद्रस्यकायाद्विशिरोभीमंविकृतदर्शनम् ॥ स्फुरतस्तस्यसमरेनदतश्चातिभैरवम् ३७ निचकर्तमहाराजशत्रोरमितविक्रमः ॥ शिर स्तत्त्रापिसंगृह्यकेशेषुरुधिरोक्षितम् ३८ ययौघटोत्कचस्तूर्णंदुर्योधनरथंप्रति ॥ अभ्येत्यचमहाबाहुःस्मयमानःसराक्षसः ३९ शिरोरथेऽस्यनिक्षिप्यविकृता ननमूर्धजम् ॥ प्राणदद्भैरवंनादंप्रावृषीवबलाहकः ४० अब्रवीच्चततोराजन्दुर्योधनमिदंवचः ॥ एषतेनिहतोबंधुस्त्वयादृष्टोऽस्यविक्रमः ४१ पुनर्द्रष्टासिकर्ण स्यनिष्ठामेतांतथाऽऽत्मनः ॥ स्वधर्ममर्थकामंचत्रितयंयोऽभिवांच्छति ४२ रिक्तपाणिर्नपश्येतराजानंब्राह्मणंस्त्रियम् ॥ तिष्ठस्वतावत्सुप्रीतोयावत्कर्णंवधा म्यहम् ४३ एवमुक्त्वाततःप्रायात्कर्णंप्रतिनरेश्वर ॥ किरञ्छरगणांस्तीक्ष्णान्रुषितोरणमूर्धनि ४४ ततःसमभवद्युद्धंघोररूपंभयानकम् ॥ विस्मापनंमहारा जनरराक्षसयोर्मृधे ४५ ॥ इतिश्रीमहाभारतेद्रोणपर्वणि घटोत्कच० रात्रियुद्धेअलंबुषवधेचतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥ धृतराष्ट्रउवाच ॥ यत्तद्वैकर्तनःकर्णोराक्षसश्चघटोत्कचः ॥ निशीथेसमसज्जेतांतद्युद्धमभवत्कथम् १ कीदृशंचाभवद्रूपंतस्यघोरस्यरक्षसः ॥ रथश्चकीदृशस्तस्यहयाःसर्वायुधानि च २ किंप्रमाणाहयास्तस्यरथकेतुर्धनुस्तथा ॥ कीदृशंवर्मचैवास्यशिरस्त्राणंचकीदृशम् ३ पृष्टस्त्वमेतदाचक्ष्वकुशलोह्यसिसंजय ॥ संजयउवाच ॥ लोहि ताक्षोमहाकायस्ताम्रास्योनिम्नितोदरः ४ ऊर्ध्वरोमाहरिश्मश्रुःशंकुकर्णोमहाहनुः ॥ आकर्णदारितास्यश्चतीक्ष्णदंष्ट्रःकरालवान् ५ सुदीर्घताम्रजिह्वोष्ठोलंबभ्रूः स्थूलनासिकः ॥ नीलांगोलोहितग्रीवोगिरिवर्ष्माभयंकरः ६

॥ इतिद्रोणपर्वणिटीकायांचतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥ ॥ ७ ॥

यदिति १ । २ वर्ष्मेतिपाठेशरीरम् ३ निम्नितोदरः निम्नितंपृष्ठवंशसंलग्नमशनहीनस्येवोदरंयस्येत्यर्थः ४ करालवान्उन्नतदंतचतुष्कः । ४ । ५ ।

विकचश्चासावुद्धृद्धपिंडोदढांगःकोमूर्धायस्यसविकचोद्वृद्धपिंडकः पाठांतरेविकंटविकतेउद्वृद्धेदढेपिंडकेजंघोर्ध्वंप्रदेशौयस्यसविकटोद्वृद्धपिंडकः ७ स्थूलस्फिक्शिथिलोपचयः स्फिक्प्रदेशेपव
शिथिलः श्लथउपचयोवृद्धिर्यस्य पाठांतरेशिखिलःशिखावान्उपचयोलङ्घाटप्रांतोयस्येत्यर्थः । अंगदीतिसाहचर्याद्धस्ताभरणीकटकमुद्रिकादिमान् ८ । ९ । १० । ११ नल्वोहस्तचतुःशतम्

महाकायोमहाबाहुर्महाशीर्षोमहाबलः ॥ विकृतःपरुषस्पर्शोविकचोद्वृद्धपिंडकः ७ स्थूलस्फिग्गूढनाभिश्चशिथिलोपचयोमहान् ॥ तथैवहस्ताभरणीमहामायोंऽगदीतथा ८ उरसाधारयन्निष्कमग्निमालांयथाऽचलः ॥ तस्यहेममयंचित्रंबहुरूपांगशोभितम् ९ तोरणप्रतिमंशुभ्रंकिरीटंमूर्ध्न्यशोभत ॥ कुंडलेबालसूर्याभेमालांहेममयींशुभाम् १० धारयन्विपुलंकांस्यंकवचंचमहाप्रभम् ॥ किंकिणीशतनिर्घोषंरक्तध्वजपताकिनम् ११ ऋक्षचर्मावनद्धांगंनल्वमात्रंमहारथम् ॥ सर्वायुधवरोपेतमास्थितंध्वजमालिनम् १२ अष्टचक्रसमायुक्तंमेघगंभीरनिःस्वनम् ॥ मत्तमातंगसंकाशालोहिताक्षाविभीषणाः १३ कामवर्णजवायुक्ताबलवंतःशतंहयाः ॥ वहंतोराक्षसंघोरंवालवंतोजितश्रमाः १४ विपुलाभिःसटाभिस्तेहेषमाणामुहुर्मुहुः ॥ राक्षसोऽस्यविरूपाक्षःसूतोदीप्तास्यकुंडलः १५ रश्मिभिःसूर्यरश्म्याभैःसंजग्राहहयान्रणे ॥ सतेनसहितस्तस्थावरुणेनयथारविः १६ संसक्तइवचाभ्रेणयथाद्रिर्महतामहान् ॥ दिवःस्पृक्सुमहान्केतुःस्यंदनेऽस्यसमुच्छ्रितः १७ रक्तोत्तमांगःक्रव्यादोगृध्रःपरमभीषणः ॥ वासवाशनिनिर्घोषंदढज्यमतिविक्षिपन् १८ व्यक्तंकिष्कुपरीणाहंद्वादशारत्निकार्मुकम् ॥ रथाक्षमात्रैरिषुभिःसर्वाःप्रच्छादयन्दिशः १९ तस्यांवीरापहारिण्यांनिशायांकर्णमभ्ययात् ॥ तस्यविक्षिपतश्चापंरथेविष्टभ्यतिष्ठतः २० अश्रूयतधनुर्घोषोविस्फूर्जितमिवाशनेः ॥ तेनवित्रास्यमानानितवसैन्यानिभारत २१ समकंपंतसर्वाणिसिंधोरिवमहोर्मयः ॥ तमापतंतंसंप्रेक्ष्यविरूपाक्षंविभीषणम् २२ उत्स्मयन्निवराधेयस्त्वरमाणोऽभ्यवारयत् ॥ ततःकर्णोऽभ्ययादेनमस्यन्नस्यंतमंतिकात् २३ मातंगइवमातंगंयूथर्षभमिवर्षभः ॥ ससन्निपातस्तुमुलस्तयोरासीद्विशांपते २४ कर्णराक्षसयोराजन्निंद्रशंबरयोरिव ॥ तौप्रगृह्यमहावेगेधनुषीभीमनिःस्वने २५ प्राच्छादयेतामन्योन्यंतक्षमाणौमहेषुभिः ॥ ततःपूर्णायतोत्सृष्टैरिषुभिर्नतपर्वभिः २६ न्यवारयेतामन्योन्यंकांस्येनिर्भिद्यवर्मणी ॥ तौनखैरिवशार्दूलौदंतैरिवमहाद्विपौ २७ रथशक्तिभिरन्योन्यंविशिखैश्चततक्षतुः ॥ संछिंदंतौचगात्राणिसंदधानौचसायकान् २८ दहंतौचशरोल्काभिर्दुष्प्रेक्ष्यौचबभूवतुः ॥ तौतुविक्षतसर्वांगौरुधिरौघपरिप्लुतौ २९ विभ्राजेतांयथावारिस्रवंतौगैरिकाचलौ ॥ तौशराग्रविनुन्नांगौनिर्भिंदंतौपरस्परम् ३० नाकंपयेतामन्योन्यंयतमानौमहाद्युती ॥ तत्प्रवृत्तंनिशायुद्धंचिरंसममिवाभवत् ३१ प्राणयोर्दीव्यतोराजन्कर्णराक्षसयोर्मृधे ॥ तस्यसंदधतस्तीक्ष्णाञ्छरांश्चासक्तमस्यतः ३२ १२ । १३ वालाः स्कंधवालाः केसराणीतियावत् १४ । १५ । १६ । १६ । १७ । १८ किष्कुर्हस्तस्तन्मितः

परीणाहोविस्तारोयस्य अरत्निर्निरष्टमांशःकरः १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ रथशक्तिभिः रथाक्षमात्रैरितिप्रागुक्तैः रथाक्षतुल्यैरित्यर्थः । ‘ रथःस्यंदनदेहयोः ’
इतिकोशाद्देहानुकूलशक्तिमद्भिरितिवा २८ । २९ । ३० । ३१ तस्यघटोत्कचस्य आसक्तमन्योन्यसंसक्तंयथास्यात्तथाशरानस्यतः आशक्तमितिपाठेयावच्छक्ति आर्षश्चप्रत्ययःसमासांतः ३२

धनुर्घोषेणवित्रस्ताःस्वेपरेचतदाऽभवन् ॥ घटोत्कचंयदाकर्णोविशेषयतिनोनृप ३३ ततःप्रादुष्करोद्दिव्यमस्त्रमस्त्रविदांवरः ॥ कर्णेनसंधितंदृष्ट्वादिव्यमस्त्रंघ
टोत्कचः ३४ प्रादुश्चक्रेमहामायांराक्षसींपांडुनंदनः ॥ शूलमुद्गरधारिण्याशैलपादपहस्तया ३५ रक्षसांघोररूपाणांमहत्यासेनयावृतः ॥ तमुद्यतमहाचापं
दृष्ट्वातेव्यथितानृपाः ३६ भूतांतकमिवायांतंकालदंडोग्रधारिणम् ॥ घटोत्कचप्रयुक्तेनसिंहनादेनभीषिताः ३७ प्रसुस्रुवुर्गजामूत्रंविव्यथुश्चनराभृशम् ॥ त
तोऽश्मवृष्टिरत्युग्रामहत्यासीत्समंततः ३८ अर्धरात्रेऽधिकबलैर्विमुक्तारक्षसांबलैः ॥ आयसानिचचक्राणिभुशुंड्यःशक्तितोमराः ३९ पतंत्यविरलाःशूलाःशत
घ्न्यःपट्टिशास्तथा ॥ तदुग्रमतिरौद्रंचदृष्ट्वायुद्धंनराधिप ४० पुत्रास्तवयोधाश्चव्यथिताविप्रदुद्रुवुः ॥ तत्रैकोऽस्त्रबलश्लाघीकर्णोमानीनविव्यथे ४१ व्यधम
च्चशरैर्मायांतांघटोत्कचनिर्मिताम् ॥ मायायांतुप्रहीणायाममर्षाच्चघटोत्कचः ४२ विससर्जशरान्घोरान्सूतपुत्रंतआविशन् ॥ ततस्तेरुधिराभ्यक्ताभित्त्वाक
र्णंमहाहवे ४३ विविशुर्धरणींबाणाःसंक्रुद्धाइवपन्नगाः ॥ सूतपुत्रस्तुसंक्रुद्धोलघुहस्तःप्रतापवान् ४४ घटोत्कचमतिक्रम्यबिभेददशभिःशरैः ॥ घटोत्कचोविनि
र्भिन्नःसूतपुत्रेणमर्मसु ४५ चक्रंदिव्यंसहस्रारमगृह्णाद्व्यथितोभृशम ॥ क्षुरांतंबालसूर्याभंमणिरत्नविभूषितम् ४६ चिक्षेपाधिरथेःक्रुद्धोभैमसेनिर्जिघांसया ॥
प्रविद्धमतिवेगेनविक्षिप्तंकर्णसायकैः ४७ अभाग्यस्येवसंकल्पस्तन्मोघमपतद्भुवि ॥ घटोत्कचस्तुसंक्रुद्धोदृष्ट्वाचक्रंनिपातितम् ४८ कर्णंप्राच्छादयद्बाणैःस्व
र्भानुरिवभास्करम् ॥ सूतपुत्रस्त्वसंभ्रांतोरुद्रोपेंद्रेंद्रविक्रमः ४९ घटोत्कचरथंतूर्णंछादयामासपत्रिभिः ॥ घटोत्कचेनक्रुद्धेनगदाहेमांगदातदा ५० क्षिप्ताभ्रा
म्यशरैःसाऽपिकर्णेनाभ्याहताऽपतत् ॥ ततोंऽतरिक्षमुत्पत्यकालमेघइवोन्नदन् ५१ प्रववर्षमहाकायोद्रुमवर्षंनभस्तलात् ॥ ततोमायाविनंकर्णोभीमसेनसुतंदिवि
५२ मार्गणैरभिविव्याधघनंसूर्यइवांशुभिः ॥ तस्यसर्वान्हयान्हत्वासंछिद्यशतधारथम् ५३ अभ्यवर्षच्छरैःकर्णःपर्जन्यइववृष्टिमान् ॥ नचास्यासीदनिर्भि
न्नंगात्रेद्व्यंगुलमंतरम् ५४ सोऽदृश्यतमुहूर्तेनश्वाविच्छललतोयथा ॥ नहयान्नरथंतस्यनध्वजंनघटोत्कचम् ५५ दृष्टवंतःस्मसमरेशरौघैरभिसंवृतम् ॥ सतुक
र्णस्यतद्दिव्यमस्त्रमस्त्रेणशातयन् ५६ मायायुद्धेनमायावीसूतपुत्रमयोधयत् ॥ सोयोधयत्तदाकर्णंमाययालाघवेनच ५७ अलक्ष्यमाणानिदिविशरजालानिचा
पतन् ॥ भैमसेनिर्महामायोमाययाकुरुसत्तम ५८ विचचारमहाकायोमोहयान्निवभारत ॥ सतुकृत्वाविरूपाणिवदनान्यशुभानिच ५९ अग्रसत्सूतपुत्रस्यदिव्या
न्यस्त्राणिमायया ॥ पुनश्चापिमहाकायःसंछिन्नःशतधारणे ६० गतसत्त्वोनिरुत्साहःपतितःखाद्व्यदृश्यत ॥ तंहतंमन्यमानाःस्मप्राणदन्कुरुपुंगवाः ६१ अथ
देहैर्नवैरन्यैर्दिक्षुसर्वास्वदृश्यत ॥ पुनश्चापिमहाकायःशतशीर्षःशतोदरः ६२ व्यदृश्यतमहाबाहुर्मैनाकइवपर्वतः ॥ अंगुष्ठमात्रोभूत्वाचपुनरेवसराक्षसः ६३

६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७ । ८८ । ८९ । ९० । ९१

सागरोर्मिरिवोद्भूतस्तिर्यगूर्ध्वमवर्तत ॥ वसुधां दारयित्वा च पुनरप्सु न्यमज्जत ६४ अदृश्यत तदा तत्र पुनरुन्मज्जितोऽन्यतः ॥ सोऽभ्रवत्तीर्यं पुनस्तस्थौ रथे हेमप
रिष्कृते ६५ क्षितिं खं च दिशश्चैव माययाऽभ्येत्य दंशितः ॥ गत्वा कर्णरथाभ्याशं व्यचरत्कुंडलाननः ६६ प्राह वाक्यमसंभ्रांतः सूतपुत्रं विशांपते ॥ तिष्ठेदानीं क्व
मे जीवन्सूतपुत्र गमिष्यसि ६७ युद्धश्रद्धामहं तेऽद्य विनेष्यामि रणाजिरे ॥ इत्युक्त्वा रोषताम्राक्षं रक्षः क्रूरपराक्रमम् ६८ उत्पपातांतरिक्षं च जहास च सुविस्तरम् ॥
कर्णमभ्यहनच्चैव गजेंद्रमिव केसरी ६९ रथाक्षमात्रैरिषुभिरभ्यवर्षद्घटोत्कचः ॥ रथिनामृषभं कर्णं धाराभिरिव तोयदः ७० शरवृष्टिं च तां कर्णो दूरात्प्राप्तामशातयत् ॥
दृष्ट्वा च विहतां मायां कर्णेन भरतर्षभ ७१ घटोत्कचस्ततो मायां ससर्जांतर्हितः पुनः ॥ सोऽभवद्गिरिरत्युच्चः शिखरैस्तरुसंकटैः ७२ शूलप्रासासिमुसलजलप्रस्रवणो
महान् ॥ तमंजनचयप्रख्यं कर्णो दृष्ट्वा महीधरम् ७३ प्रपातैरायुधान्युग्राण्युद्वहंतं न चुक्षुभे ॥ स्मयन्निव ततः कर्णो दिव्यमस्त्रमुदैरयत् ७४ ततः सोऽस्त्रेण शैलेंद्रो
विक्षिप्तो वै व्यनश्यत ॥ ततः स तोयदो भूत्वा नीलः सेंद्रायुधो दिवि ७५ अश्मवृष्टिभिरत्युग्रः सूतपुत्रमवाकिरत ॥ अथ संधाय वायव्यमस्त्रमस्त्रविदां वरः ७६ व्य
धमत्कालमेघं तं कर्णो वैकर्तनो वृषः ॥ समार्गणगणैः कर्णो दिशः प्रच्छाद्य सर्वशः ७७ जघानास्त्रं महाराज घटोत्कचसमीरितम् ॥ ततः प्रहस्य समरे भैमसेनिर्महाबलः
७८ प्रादुश्चक्रे महामायां कर्णं प्रति महारथम् ॥ स दृष्ट्वा पुनरायांतं रथेन रथिनां वरम् ७९ घटोत्कचमसंभ्रांतं राक्षसैर्बहुभिर्वृतम् ॥ सिंहशार्दूलसदृशैर्मत्तमातंगवि
क्रमैः ८० गजस्थैश्च रथस्थैश्च वाजिपृष्ठगतैस्तथा ॥ नानाशस्त्रधरैर्घोरैर्नानाकवचभूषणैः ८१ वृतं घटोत्कचं क्रूरैर्मरुद्भिरिव वासवम् ॥ दृष्ट्वा कर्णो महेष्वासो योध
यामास राक्षसम् ८२ घटोत्कचस्ततः कर्णं विद्ध्वा पंचभिराशुगैः ॥ ननाद भैरवं नादं भीषयन्सर्वपार्थिवान् ८३ भूयश्चांजलिकेनाथ समार्गणगणं महत् ॥ कर्णह
स्तस्थितं चापं चिच्छेदाशु घटोत्कचः ८४ अथान्यद्धनुरादाय दृढं भारसहं महत् ॥ विचकर्ष बलात्कर्ण इंद्रायुधमिवोच्छ्रितम् ८५ ततः कर्णो महाराज प्रेषयामास
सायकान् ॥ सुवर्णपुंखाञ्छत्रुघ्नान्खेचरान्राक्षसान्प्रति ८६ तद्बाणैरर्दितं यूथं रक्षसां पीनवक्षसाम् ॥ सिंहेनेवार्दितं वन्यं गजानामाकुलं कुलम् ८७ विधम्य रा
क्षसान्बाणैः साश्वसूतगजान्विभुः ॥ ददाह भगवान्वह्निर्भूतानीव युगक्षये ८८ स हत्वा राक्षसीं सेनां शुशुभे सूतनंदनः ॥ पुरेव त्रिपुरं दग्ध्वा दिवि देवो महेश्वरः ८९
तेषु राजसहस्रेषु पांडवेयेषु मारिष ॥ नैनं निरीक्षितुमपि कश्चिच्छक्नोति पार्थिव ९० ऋते घटोत्कचाद्राजन्राक्षसेंद्रान्महाबलात् ॥ भीमवीर्यबलोपेतात्
क्रुद्धाद्वैवस्वतादिव ९१ तस्य क्रुद्धस्य नेत्राभ्यां पावकः समजायत ॥ महोल्काभ्यां यथा राजन्सार्चिषः स्नेहबिंदवः ९२ तलं तलेन संहत्य संदश्य दशनच्छ
दम् ॥ रथमास्थाय च पुनर्मायया निर्मितं तदा ९३

उल्काभ्यां सर्जरसमिश्रोल्मुकाभ्यां ततो हि दीप्तस्य सर्जरसस्य कणाः स्नेहत्वात् सार्चिषः पतंतीति प्रसिद्धं ९२ । ९३

९४ । ९५ । ९६ । ९१ । ९७ । ९८ । ९९ । १०० । १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । ११० । ११ । १२ । १२ । १३ । ११४ ॥ इतिद्रोणपर्वणिटीकायांपंचसप्तत्यधिकशततमो

युक्तंगजनिभैर्वाहैःपिशाचवदनैःखरैः ॥ ससूतमब्रवीत्क्रुद्धःसूतपुत्रायमांवह ९४ सययौघोररूपेणरथेनरथिनांवरः ॥ द्वैरथंसूतपुत्रेणपुनरेवविशांपते ९५ सचिक्षेपपुनःक्रुद्धःसूतपुत्रायराक्षसः ॥ अष्टचक्रांमहाघोरामशनिंरुद्रनिर्मिताम् ९६ द्वियोजनसमुत्सेधांयोजनायामविस्तराम् ॥ आयसींनिशितांशूलैःक दंबमिवकेसरैः ९७ तामवप्लुत्यजग्राहकर्णोन्यस्यमहद्धनुः ॥ चिक्षेपचैनांतस्यैवस्यंदनात्सोऽवपुप्लुवे ९८ साश्वसूतध्वजंयानंभस्मकृत्वामहाप्रभा ॥ विवेशवसु धांभित्वासुरास्तत्रविसिस्मियुः ९९ कर्णंतुसर्वभूतानिपूजयामासुरंजसा ॥ यदवप्लुत्यजग्राहदेवसृष्टांमहाशनिम् १०० एवंकृत्वारणेकर्णआरुरोहरथंपुनः ॥ ततो मुमोचनाराचान्सूतपुत्रःपरंतपः १ अशक्यंकर्तुमन्येनसर्वभूतेषुमानद ॥ यदकार्षीत्तदाकर्णःसंग्रामेभीमदर्शने २ सहन्यमानोनाराचैर्धाराभिरिवपर्वतः ॥ गंध र्वनगराकारःपुनरंतरधीयत ३ एवंसवैमहाकायोमाययालाघवेनच ॥ अस्त्राणितानिदिव्यानिजघानरिपुसूदनः ४ निहन्यमानेष्वस्त्रेषुमाययातेनरक्षसा ॥ अ संभ्रांतस्तदाकर्णस्तद्रक्षःप्रत्ययुध्यत १०५ ततःक्रुद्धोमहाराजभैमसेनिर्महाबलः ॥ चकारबहुधाऽऽत्मानंभीषयाणोमहारथान् ६ ततोदिग्भ्यःसमापेतुःसिंह व्याघ्रतरक्षवः ॥ अग्निजिह्वाश्वभुजगाविहगाश्चाप्ययोमुखाः ७ सकीर्यमाणोविशिखैःकर्णचापच्युतैःशरैः ॥ नागराडिवदुष्प्रेक्ष्यस्तत्रैवांतरधीयत ८ राक्षसा श्वपिशाचाश्चयातुधानास्तथैवच ॥ शालावृकाश्चबहवोवृकाश्वविकृताननाः ९ तेकर्णंक्षपयिष्यंतःसर्वतःसमुपाद्रवन् ॥ अथैनंवाग्भिरुग्राभिस्त्रासयांचक्रिरेत दा ११० उद्यतैर्बहुभिर्घोरैरायुधैःशोणितोक्षितैः ॥ तेषामनेकैरेकैकंकर्णोविव्याधसायकैः ११ प्रतिहत्यतुतांमायांदिव्येनास्त्रेणराक्षसीम् ॥ आजघानहयान स्यशरैःसन्नतपर्वभिः १२ तेभग्नाविक्षतांगाश्वभिन्नपृष्ठाश्चसायकैः ॥ वसुधामन्वपद्यंतपश्यतस्तस्यराक्षसः १३ सभग्नमायोहैडिंबिःकर्णंवैकर्तनंतदा ॥ एष तेविदधेमृत्युमित्युक्त्वांऽतरधीयत ११४ ॥ इतिश्रीम० द्रो० घटोत्कचवधपर्वणिरात्रियुद्धेकर्णघटोत्कचयुद्धेपंचसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥ ॥

॥ संजयउवाच ॥ तस्मिंस्तथावर्तमानेकर्णराक्षसयोर्मृधे ॥ अलायुधोराक्षसेंद्रोवीर्यवानभ्यवर्तत १ महत्यासेनयायुक्तोदुर्योधनमुपागमत् ॥ राक्षसानांविरू पाणांसहस्रैःपरिवारितः २ नानारूपधरैर्वीरैःपूर्ववैरमनुस्मरन् ॥ तस्यज्ञातिर्हिविक्रांतोब्राह्मणादोबकोहतः ३ किर्मीरश्चमहातेजाहिडिंबश्चसखातदा ॥ सदी र्घकालाध्युषितंपूर्ववैरमनुस्मरन् ४ विज्ञायैतन्निशायुद्धंजिघांसुर्भीममाहवे ॥ समत्तइवमातंगःसंक्रुद्धइवचोरगः ५ दुर्योधनमिदंवाक्यमब्रवीद्युद्धलालसः ॥ वि दितंतेमहाराजयथाभीमेनराक्षसाः ६ हिडिंबबककिर्मीरानिहताममबांधवाः ॥ परामर्शश्चकन्यायाहिडिंबायाःकृतःपुरा ७ किमन्यद्राक्षसानन्यानस्मांश्चपरि भूयह ॥ तमहंसगणंराजन्सवाजिरथकुंजरम् ८

ऽध्यायः ॥ १७५ ॥ ७ ॥ तस्मिंस्तथेति स्पष्टार्थोऽध्यायः १ । २ । ३ । ४ । ५ । ६ । ७ । ८

९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ ॥ इतिद्रोणपर्वणिटीकायांषट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥ ॥ ७ ॥ ॥ तमिति १ । २ । ३

हैडिंबिंचसहामात्यंहंतुमभ्यागतःस्वयम् ॥ अद्यकुंतीसुतान्सर्वान्वासुदेवपुरोगमान् ९ हत्वासंभक्षयिष्यामिसर्वैरनुचरैःसह ॥ निवारयबलंसर्वंवयंयोत्स्यामपां डवान् १० तस्यैतद्वचनंश्रुत्वाहृष्टोदुर्योधनस्तदा ॥ प्रतिगृह्याब्रवीद्वाक्यंभ्रातृभिःपरिवारितः ११ त्वांपुरस्कृत्यसगणंवयंयोत्स्यामहेपरान् ॥ नहिवैरांतमन सःस्थास्यंतिममसैनिकाः १२ एवमस्त्वितिराजानमुक्त्वाराक्षसपुंगवः ॥ अभ्ययात्त्वरितोभैमिंसहितःपुरुषादकैः १३ दीप्यमानेनवपुषारथेनादित्यवर्चसा ॥ तादृशेनैवराजेंद्रयादृशेनघटोत्कचः १४ तस्याप्यतुलनिर्घोषोबहुतोरणचित्रितः ॥ ऋक्षचर्मावनद्धांगोनल्वमात्रोमहारथः १५ तस्यापितुरगाःशीघ्राहस्ति कायाःखरस्वनाः ॥ शतंयुक्तामहाकायामांसशोणितभोजनाः १६ तस्यापिरथनिर्घोषोमहामेघरवोपमः ॥ तस्यापिसुमहच्चापंदृढज्यंकनकोज्ज्वलम् १७ त स्याप्यक्षसमाबाणारुक्मपुंखाःशिलाशिताः ॥ सोऽपिवीरोमहाबाहुर्यथैवसघटोत्कचः १८ तस्यापिगोमायुबलाभिगुप्तोबभूवकेतुर्ज्वलनार्कतुल्यः ॥ सचापिरू पेणघटोत्कचस्यश्रीमत्तमोव्याकुलदीपितास्यः १९ दीप्तांगदोदीप्तकिरीटमालीबद्धस्रगुष्णीषनिबद्धखड्गः ॥ गदीभुशुंडीमुसलीहलीचशरासनीवारणतुल्यव र्ष्मा २० रथेनतेनानलवर्चसातदाविद्रावयन्पांडववाहिनींताम् ॥ रराजसंख्येपरिवर्तमानोविद्युन्मालीमेघइवांतरिक्षे २१ तेचापिसर्वेप्रवरानरेंद्रामहाबलाव र्मिणश्चर्मिणश्च ॥ हर्षान्वितायुयुधुस्तस्यराजन्समंततःपांडवयोधवीराः २२ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिघटोत्कचवधपर्वणिरात्रियुद्धेअलायुधयुद्धेषट्स प्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥ ॥ संजयउवाच ॥ तमागतमभिप्रेक्ष्यभीमकर्माणमाहवे ॥ हर्षमाहारयांचक्रुःकुरवःसर्वएवते १ तथैवतवपु त्रास्तेदुर्योधनपुरोगमाः ॥ अप्लवाःप्लवमासाद्यतर्तुकामाइवार्णवम् २ पुनर्जातमिवात्मानंमन्वानाःपुरुषर्षभाः ॥ अलायुधंराक्षसेंद्रंस्वागतेनाभ्यपूजयन् ३ तस्मिंस्त्वमानुषेयुद्धेवर्तमानेमहाभये ॥ कर्णराक्षसयोर्नक्तंदारुणप्रतिदर्शने ४ उपप्रैक्षंतपंचालाःस्मयमानाःसराजकाः ॥ तथैवतावकाराजन्वीक्षमाणास्तत स्ततः ५ चुक्रुशुर्नेदमस्तीतिद्रोणद्रौणिकृपादयः ॥ तत्कर्मदृष्ट्वासंभ्रांताहैडिंबस्यरणाजिरे ६ सर्वमाविग्नमभवद्धाहाभूतमचेतनम् ॥ तवसैन्यंमहाराजनिराशं कर्णजीविते ७ दुर्योधनस्तुसंप्रेक्ष्यकर्णमार्तिपरांगतम् ॥ अलायुधंराक्षसेंद्रंसमाहूयेदमब्रवीत् ८ एषवैकर्तनःकर्णोहैडिंबेनसमागतः ॥ कुरुतेकर्मसुमहद्यदस्यौ पयिकंमृधे ९ पश्यैतान्पार्थिवान्शूरान्निहतान्भैमसेनिना ॥ नानाशस्त्रैरभिहतान्पादपानिवदंतिना १० तवैषभागःसमरेराजमध्येमयाकृतः ॥ त वैवानुमतेवीरतंविक्रम्यनिबर्हय ११ पुरावैकर्तनंकर्णमेषपापोघटोत्कचः ॥ मायाबलंसमाश्रित्यकर्षयत्यरिकर्शन १२ एवमुक्तःसराज्ञातुराक्षसोभीम विक्रमः ॥ तथेत्युक्त्वामहाबाहुर्घटोत्कचमुपाद्रवत् १३ ४ । ५ इदमस्मत्सैन्यम ६ । ७ । ८ । ९ । १० । ११ । १२ । १३

१४ । १५ । १६ । १७ । १८ । १९ । २० ।२१ । २२ । २३ । २४ । २५। २६ । २७ । २८ । २९ । ३० ।३१ । ३२ । ३३ । ३४। ३५ । ३६ । ३७ । ३८ । ३९ ।४०। ४१। ४२। ४३।.४४

ततःकर्णसमुत्सृज्यभैमसेनिरपिप्रभो ॥ प्रत्यमित्रमुपायांतमर्दयामासमार्गणैः १४ तयोःसमभवद्युद्धंक्रुद्धयोराक्षसेंद्रयोः ॥ मत्तयोर्वासिताहेतोर्द्विपयोरिवकानने १५ रक्षसाविप्रमुक्तस्तुकर्णोऽपिरथिनांवरः ॥ अभ्यद्रवद्भीमसेनंरथेनादित्यवर्चसा १६ तमायांतमनादृत्यदृष्ट्वाग्रस्तंघटोत्कचम् ॥ अलायुधेनसमरेसिंहेनेव गवांपतिम् १७ रथेनादित्यवपुषाभीमःप्रहरतांवरः ॥ किरञ्छरौघान्प्रययावलायुधरथंप्रति १८ तमायांतमभिप्रेक्ष्यसतदाऽलायुधःप्रभो ॥ घटोत्कचंसमुत्सृज्यभीमसेनंसमाह्वयत् १९ तंभीमःसहसाऽभ्येत्यराक्षसांतकरःप्रभो ॥ सगणंराक्षसेंद्रंतंशरवर्षैरवाकिरत् २० तथैवालायुधोराजन्शिलाधौतैरजिह्मगैः ॥ अभ्यवर्षतकौंतेयंपुनःपुनररिंदम २१ तथातेराक्षसाःसर्वेभीमसेनमुपाद्रवन् ॥ नानाप्रहरणाभीमास्त्वत्सुतानांजयैषिणः २२ सताड्यमानोबहुभिर्भीमसेनोमहाबलः ॥ पंचभिःपंचभिःसर्वांस्तानविध्याच्छितैःशरैः २३ तेवध्यमानाभीमेनराक्षसाःक्रूरबुद्धयः ॥ विनेदुस्तुमुलान्नादान्दुद्रुवुस्तेदिशोदश २४ तांस्त्रास्यमानान्भीमेनदृष्ट्वारक्षोमहाबलम् ॥ अभिदुद्राववेगेनशरैश्चैनमवाकिरत् २५ तंभीमसेनःसमरेतीक्ष्णाग्रैरक्षिणोच्छरैः ॥ अलायुधस्तुतानस्तान्भीमेनविशिखान्रणे २६ चिच्छेदकांश्चित्समरेत्वरयाकांश्चिदग्रहीत् ॥ सतंदृष्ट्वाराक्षसेंद्रंभीमोभीमपराक्रमः २७ गदांचिक्षेपवेगेनवज्रपातोपमांतदा ॥ तामापतंतींवेगेन गदांज्वालाकुलांततः २८ गदयाताडयामाससागदाभीममाव्रजत् ॥ सराक्षसेंद्रंकौंतेयःशरवर्षैरवाकिरत् २९ तानप्यस्याकरोन्मोघान्राक्षसोनिशितैःशरैः ॥ तेचापिराक्षसाःसर्वेरजन्यांभीमरूपिणः ३० शासनाद्राक्षसेंद्रस्यनिजघ्नूरथकुंजरान् ॥ पंचालाःसृंजयाश्चैववाजिनःपरमद्विपाः ३१ नशांतिंलेभिरेतत्रराक्षसैर्भृशपीडिताः ॥ तंतुदृष्ट्वामहाघोरंवर्तमानंमहाहवम् ३२ अब्रवीत्पुंडरीकाक्षोधनंजयमिदंवचः ॥ पश्यभीमंमहाबाहुंराक्षसेंद्रवशंगतम् ३३ पदमस्यानुगच्छत्वंमाविचारयपांडव ॥ धृष्टद्युम्नःशिखंडीचयुधामन्यूत्तमौजसौ ३४ सहितौद्रौपदेयाश्चकर्णंयांतुमहारथाः ॥ नकुलःसहदेवश्चयुयुधानश्चवीर्यवान् ३५ इतरान्राक्षसान्घ्नंतुशासनात्तवपांडव ॥ त्वमपीमांमहाबाहोचमूंद्रोणपुरस्कृताम् ३६ वारयस्वनरव्याघ्रमहद्धिभयमागतम् ॥ एवमुक्तेतुकृष्णेनयथोद्दिष्टामहारथाः ३७ जग्मुर्वैकर्तनंकर्णंराक्षसांश्चैवतान्रणे ॥ अथपूर्णायतोत्सृष्टैःशरैराशीविषोपमैः ३८ धनुश्चिच्छेदभीमस्यराक्षसेंद्रःप्रतापवान् ॥ हयांश्चास्यशितैर्बाणैःसारथिंचमहाबलः ३९ जघानमिषतःसंख्येभीमसेनस्यराक्षसः ॥ सोऽवतीर्यरथोपस्थाद्धताश्वोहतसारथिः ४० तस्मैगुर्वींगदांघोरांविनदन्नुत्ससर्जह ॥ ततस्तांभीमनिर्घोषामापतंतींमहागदाम् ४१ गदयाराक्षसोघोरोनिजघाननना दच ॥ तद्दृष्ट्वाराक्षसेंद्रस्यघोरंकर्मभयावहम् ४२ भीमसेनःप्रहृष्टात्मागदामाशुपरामृशत् ॥ तयोःसमभवद्युद्धंतुमुलंनररक्षसोः ४३ गदानिपातसंह्रादैर्भुवंकंपयतोर्भृशम् ॥ गदाविमुक्तौतौभूयःसमासाद्येतरेतरम् ४४

मुष्टिभिर्वज्रसंहादैरन्योन्यमभिजघ्नतुः ॥ रथचक्रैर्युगैरक्षैरधिष्ठानैरुपस्करैः ४५ यथासन्नमुपादायनिजघ्नतुरमर्षणौ ॥ तौविक्षरंतौरुधिरंसमासाद्येतरेतरम् ४६ मत्ताविवमहानागौचकृषातेपुनःपुनः ॥ तदपश्यद्धृषीकेशःपांडवानांहितेरतः ४७ सभीमसेनरक्षार्थंहैडिंबिंपर्यचोदयत् ४८ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिघटोत्कचवधपर्वणिरात्रियुद्धे अलायुधयुद्धे सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ संदृश्यसमरेभीमंरक्षसाग्रस्तमंतिकात् ॥ वासुदेवोऽब्रवीद्राजन्घटोत्कचमिदंवचः १ पश्यभीमंमहाबाहोरक्षसाग्रस्तमाहवे ॥ पश्यतांसर्वसैन्यानांतवचैवमहाद्युते २ सकर्णंत्वंसमुत्सृज्यराक्षसेंद्रमलायुधम् ॥ जहिक्षिप्रंमहाबाहोपश्चात्कर्णंवधिष्यसि ३ सवार्ष्णेयवचःश्रुत्वाकर्णमुत्सृज्यवीर्यवान् ॥ युयुधेराक्षसेंद्रेणबकभ्रात्राघटोत्कचः ४ तयोःसुतुमुलंयुद्धंबभूवनिशिरक्षसोः ॥ अलायुधस्यचैवोग्रंहैडिंबेश्चापिभारत ५ अलायुधस्ययोधांश्चराक्षसान्भीमदर्शनान् ॥ वेगेनापततःशूरान्प्रगृहीतशरासनान् ६ आतायुधःसुसंक्रुद्धोयुयुधानोमहारथः ॥ नकुलःसहदेवश्चचिच्छिदुर्निशितैःशरैः ७ सर्वांश्चसमरेराजन्किरीटीक्षत्रियर्षभान् ॥ परिचिक्षेपबीभत्सुःसर्वतःप्रकिरञ्छरान् ८ कर्णश्चसमरेराजन्व्यद्रावयतपार्थिवान् ॥ धृष्टद्युम्नशिखंडयादीन्पंचालानांमहारथान् ९ तान्वध्यमानान्दृष्ट्वाऽथभीमोभीमपराक्रमः ॥ अभ्ययात्त्वरितःकर्णंविशिखान्प्रकिरन्रणे १० ततस्तेऽप्याययुर्हत्वाराक्षसान्यत्रसूतजः ॥ नकुलःसहदेवश्चसात्यकिश्चमहारथः ११ तेकर्णंयोधयामासुःपंचालाद्रोणमेवतु ॥ अलायुधस्तुसंक्रुद्धोघटोत्कचमरिंदमम् ॥ परिघेणातिकायेनताडयामासमूर्धनि १२ सतुतेनप्रहारेणभैमसेनिर्महाबलः ॥ ईषन्मूर्छितमात्मानमस्तंभयतवीर्यवान् १३ ततोदीप्ताग्निसंकाशांशतघंटामलंकृताम् ॥ चिक्षेपतस्मैसमरेगदांकांचनभूषिताम् १४ साहयांश्चरथंचास्यसारथिंचमहास्वना ॥ चूर्णयामासवेगेनविसृष्टाभीमकर्मणा १५ सभग्नहयचक्राक्षाद्विशीर्णध्वजकूबरात् ॥ उत्पपातरथात्तूर्णंमायामास्थायराक्षसीम् १६ ससमास्थायमायांतुववर्षरुधिरंबहु ॥ विद्युद्विभ्राजितंचासीत्तुमुलाभ्राकुलंनभः १७ ततोवज्रनिपाताश्चसाशनिस्तनयित्नवः ॥ महांश्चटचटाशब्दस्तत्रासीच्चमहाहवे १८ तांप्रेक्ष्यमहतींमायांराक्षसोराक्षसस्यच ॥ ऊर्ध्वमुत्पत्यहैडिंबिस्तांमायांमाययाऽवधीत् १९ सोऽभिवीक्ष्यहतांमायांमाययाविमाययैवहि ॥ अश्मवर्षंसुतुमुलंविससर्जघटोत्कचे २० अश्मवर्षंसतंघोरंशरवर्षेणवीर्यवान् ॥ दिशुविध्वंसयामासतदद्भुतमिवाभवत् २१ ततोनानाप्रहरणैरन्योन्यमभिवर्षताम् ॥ आयसैःपरिघैःशूलैर्गदामुसलमुद्गरैः २२ पिनाकैःकरवालैश्चतोमरप्रासकंपनैः ॥ नाराचैर्निशितैर्भल्लैःशरैश्चक्रैःपरश्वधैः ॥ अयोगुडैर्भिंदिपालैर्गोशीर्षोलूखलैरपि २३ उत्पाटितैर्महाशाखैर्विविधैर्जगतीरुहैः ॥ शमीपीलुकदंबैश्चचंपकैश्चैवभारत २४ इंगुदैर्बदरीभिश्चकोविदारैश्चपुष्पितैः ॥ पलाशैश्चारिमेदैश्चप्लक्षन्यग्रोधपिप्पलैः २५

२१ । २७ हरींद्रयोः सिंहमुख्ययोः २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० ॥ इतिद्रोणपर्वणिटीकायामष्टषष्टयधिकशत

महद्भिःसमरेतस्मिन्नन्योन्यमभिजघ्नतुः ॥ विपुलैःपर्वताग्रैश्चनानाधातुभिराचितैः २६ तेषांशब्दोमहानासीद्वज्राणांभिद्यतामिव ॥ युद्धंसमभवद्घोरंभैम्यला युधयोर्नृप २७ हरींद्रयोर्यथाराजन्वालिसुग्रीवयोःपुरा ॥ तौयुद्ध्वाविविधैर्घोरैरायुधैर्विशिखैस्तथा ॥ प्रगृह्यचशितौखड्गावन्योन्यमभिपेततुः २८ तावन्यो न्यमभिद्रुत्यकेशेषुसुमहाबलौ ॥ भुजाभ्यांपर्यगृह्णीतांमहाकायौमहाबलौ २९ तौस्विन्नगात्रौप्रस्वेदंसुस्रुवातेजनाधिप ॥ रुधिरंचमहाकायावतिवृष्टाविवांबुदौ ३० अथाभिपत्यवेगेनसमुद्भ्राम्यचराक्षसम् ॥ बलेनाक्षिप्यहैडिंबिश्चकर्तास्यशिरोमहत् ३१ सोऽपहृत्यशिरस्तस्यकुंडलाभ्यांविभूषितम् ॥ तदासुतुमुलं नादंननादसुमहाबलः ३२ हतंदृष्ट्वामहाकायंबकज्ञातिमरिंदमम् ॥ पंचालाःपांडवाश्चैवसिंहनादान्विनेदिरे ३३ ततोभेरीसहस्राणिशंखानामयुतानिच ॥ अवादयन्पांडवेयाराक्षसेनिहतेयुधि ३४ अतीवसानिशातेषांबभूवविजयावहा ॥ विद्योतमानाविबभौसमंताद्दीपमालिनी ३५ अलायुधस्यतुशिरोभैमसेनि र्महाबलः ॥ दुर्योधनस्यप्रमुखेचिक्षेपगतचेतसः ३६ अथदुर्योधनोराजादृष्ट्वाहतमलायुधम् ॥ बभूवपरमोद्विग्नःसहसैन्येनभारत ३७ तेनह्यस्यप्रतिज्ञातं भीमसेनमहंयुधि ॥ हंतेतिस्वयमागम्यस्मरतावैरमुत्तमम् ३८ ध्रुवंसतेनहंतव्यइत्यमन्यतपार्थिवः ॥ जीवितंचिरकालंहिभ्रातृणांचाप्यमन्यत ३९ सतंदृष्ट्वा विनिहतंभीमसेनात्मजेनवै ॥ प्रतिज्ञांभीमसेनस्यपूर्णामेवाभ्यमन्यत ४० ॥ ॥ इति श्रीमहाभारतेद्रोणपर्वणि घ०रात्रियुद्धेअलायुधवधेअष्टसप्तत्यधिकश ततमोऽध्यायः ॥ १७८ ॥ ॥ संजयउवाच ॥ निहत्यालायुधंरक्षःप्रहृष्टात्माघटोत्कचः ॥ ननादविविधान्नादान्वाहिन्याःप्रमुखेतव १ तस्यतंतुमुलंशब्दं श्रुत्वाकुंजरकंपनम् ॥ तावकानांमहाराजभयमासीत्सुदारुणम् २ आलायुधविषक्तंतुभैमसेनिंमहाबलम् ॥ दृष्ट्वाकर्णोमहाबाहुःपंचालान्समुपाद्रवत् ३ दश भिर्दशभिर्बाणैर्धृष्टद्युम्नशिखंडिनौ ॥ दृढैःपूर्णायतोत्सृष्टैर्बिभेदनतपर्वभिः ४ ततःपरमनाराचैर्युधामन्यूत्तमौजसौ ॥ सात्यकिंचरथोदारंकंपयामासमार्गणैः ५ तेषामप्यस्यतांसंख्येसर्वेषांसव्यदक्षिणम् ॥ मंडलान्येवचापानिव्यदृश्यंतजनाधिप ६ तेषांज्यातलनिर्घोषोरथनेमिस्वनश्चह ॥ मेघानामिवघर्मांतेबभूव तुमुलोनिशि ७ ज्यानेमिघोषस्तनयित्नुमान्वैधनुस्तडिन्मंडलकेतुशृंगः ॥ शरौघवर्षाकुलवृष्टिमांश्चसंग्राममेघःसबभूवराजन् ८ तदद्भुतंशैलइवाप्रकंपोवर्षंमहा शैलसमानसारः ॥ विध्वंसयामासरणेनरेंद्रवैकर्तनःशत्रुगणावमर्दी ९ ततोऽतुलैर्वज्रनिपातकल्पैःशितैःशरैःकांचनचित्रपुंखैः ॥ शत्रून्व्यपोहत्समरेमहात्मावै कर्तनःपुत्रहितेरतस्ते १० संछिन्नभिन्नध्वजिनश्चकेचित्केचिच्छरैरर्दितभिन्नदेहाः ॥ केचिद्विसूताविहयाश्चकेचिद्वैकर्तनेनाशुकृताबभूवुः ११ अविंदमानास्त्व थशर्मसंख्येयौधिष्ठिरंतेबलमभ्यपद्यन् ॥ तान्प्रेक्ष्यभग्नान्विमुखीकृतांश्चघटोत्कचोरोषमतीवचक्रे १२

तमोऽध्यायः ॥ १७८ ॥ ॥ ७ ॥ ॥ निहत्येति १ । २ । ३ । ४ । ५ । ६ । ७ केतुशृंगं ध्वजशिखरं । 'शृंगंप्रभुत्वेशिखरे'इति मेदिनी ८ । ९ । १० । ११ । १२

१३ । १४ तिर्यग्गताभिरिषुपंक्तिभिरितिशेषः १५ । १६ । १७ । १८ । १९ प्रतिपन्नं कर्तव्यत्वेनज्ञातमनुष्ठितंच २० । २१ । २२ अदृश्यतअदृश्यत २३ । २४ । २५ । २६

आस्थायतंकांचनरत्नचित्रंरथोत्तमंसिंहवत्संननाद ॥ वैकर्तनंकर्णमुपेत्यचापिविव्याधवज्रप्रतिमैःपृषत्कैः १३ तौकर्णिनाराचशिलीमुखैश्चनालीकदंडासनव
त्सदंतैः ॥ वराहकर्णैःसविपाठशृंगैःक्षुरप्रवर्षैश्चविनेदतुःखम् १४ तद्बाणधारावृतमंतरिक्षंतिर्यग्गताभिःसमरेरराज ॥ सुवर्णपुंखज्वलितप्रभाभिर्विचित्रपु
ष्पाभिरिवस्रजाभिः १५ समाहितावप्रतिमप्रभावावन्योन्यमाजघ्नतुरुत्तमास्त्रैः ॥ तयोर्हिवीरोत्तमयोर्नकश्चिद्ददर्शतस्मिन्समरेविशेषम् १६ अतीवतच्चित्रमतु
ल्यरूपंबभूवयुद्धंरविभीमसून्वोः ॥ समाकुलंशस्त्रनिपातघोरंदिवीवराह्वंशुमतोःप्रमत्तम् १७ ॥ संजयउवाच ॥ घटोत्कचंयदाकर्णोनविशेषयतेनृप ॥ ततः
प्रादुश्चकारोग्रमस्त्रमस्त्रविदांवरः १८ तेनास्त्रेणावधीत्तस्यरथंसहयसारथिम् ॥ विरथश्चापिहैडिंबिःक्षिप्रमंतरधीयत १९ ॥ धृतराष्ट्रउवाच ॥ तस्मिन्नंतर्हिते
तूर्णंकूटयोधिनिराक्षसे ॥ मामकैःप्रतिपन्नंयत्तन्ममाचक्ष्वसंजय २० ॥ संजयउवाच ॥ अंतर्हितंराक्षसेंद्रंविदित्वासंप्राक्रोशन्कुरवःसर्वएव ॥ कथंनायंराक्षसः
कूटयोधीहन्यात्कर्णंसमरेदृश्यमानः २१ ततःकर्णोलघुचित्रास्त्रयोधीसर्वादिशःप्रावृणोद्बाणजालैः ॥ नवैकिंचित्प्रापततत्रभूतंतमोभूतेसायकैरंतरिक्षे २२
नैवाददानोनचसंदधानोनचेषुधींस्पृश्यमानःकराग्रैः ॥ अदृश्यदैलाघवात्सूतपुत्रःसर्वंबाणैश्छादयानोऽतरिक्षम् २३ ततोमायांदारुणामंतरिक्षेघोरां
भीमांविहितांराक्षसेन ॥ अपश्यामलोहिताभ्रप्रकाशांदेदीप्यंतीमग्निशिखामिवोग्राम् २४ ततस्तस्यांविद्युतःप्रादुरासन्नुल्काश्चापिज्वलिताःकौरवेंद्र ॥ घो
षश्चास्याःप्रादुरासीत्सुघोरःसहस्रशोनदतांदुंदुभीनाम् २५ ततःशराःप्रापतनरुक्मपुंखाःशक्त्यृष्टिप्रासमुसलान्यायुधानि ॥ परश्वधास्तैलधौताश्चखड्गाः
प्रदीप्ताग्रास्तोमराःपट्टिशाश्च २६ मयूखिनःपरिघालोहबद्धागदाश्चित्राःशितधाराश्चशूलाः ॥ गुर्व्योगदाहेमपट्टावनद्धाःशतघ्न्यश्चप्रादुरासन्समंतात् २७
महाशिलाश्चापतंस्तत्रतत्रसहस्रशःसाशनयश्चवज्राः ॥ चक्राणिचानेकशतक्षुराणिप्रादुर्बभूवुर्ज्वलनप्रभाणि २८ तांशक्तिपाषाणपरश्वधानांप्रासासिवज्राश
निमुद्गराणाम् ॥ वृष्टिंविशालांज्वलितांपतंतींकर्णःशरौघैर्नशशाकहंतुम् २९ शराहतानांपततांहयानांवज्राहतानांचतथागजानाम् ॥ शिलाहतानांचम
हारथानांमहान्निनादःपततांबभूव ३० सुभीमनानाविधशस्त्रपातैर्घटोत्कचेनाभिहतंसमंतात् ॥ दौर्योधनंतैबलमार्तरूपमावर्तमानंददृशेभ्रमत्तत् ३१ हाहाकृतं
संपरिवर्तमानंसंलीयमानंचविषण्णरूपम् ॥ तेत्वार्यभावात्पुरुषप्रवीराःपराङ्मुखानोबभूवुस्तदानीम् ३२ तांराक्षसींभीमरूपांसुघोरांवृष्टिंमहाशस्त्रमयीं
पतंतीम् ॥ दृष्ट्वाबलौघांश्चनिपात्यमानान्महद्भयंतवपुत्रान्विवेश ३३ शिवाश्चवैश्वानरदीप्तजिह्वाःसुभीमनादाःशतशोनदंतीः ॥ रक्षोगणान्नर्दतश्चा
पिवीक्ष्यनरेंद्रयोधाव्यथिताबभूवुः ३४

२७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४

३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ उरसाहार्दबलेन ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५



तेदीप्तजिह्वानलतीक्ष्णदंष्ट्राविभीषणाःशैलनिकाशकायाः ॥ नभोगताःशक्तिविषक्तहस्तामेघाव्यमुंचन्निववृष्टिमुग्राम् ३५ तैराहतास्तेशरशक्तिशूलैर्गदाभिरुग्रैःप रिघैश्चदीप्तैः ॥ वज्रैःपिनाकैरशनिप्रहारैःशतघ्निचक्रैर्मथिताश्चपेतुः ३६ शूलाभुशुंडचोऽश्मगुडाःशतघ्न्यःस्थूलाश्चकार्ष्णायसपट्टनद्धाः ॥ तेऽवाकिरंस्तवपुत्रस्य सैन्यंततोरौद्रंकश्मलंप्रादुरासीत् ३७ विकीर्णान्त्राविहतैरुत्तमांगैःसंभग्नांगाःशिशियरेतत्रशूराः ॥ छिन्नाहयाःकुंजराश्चापिभग्नाःसंचूर्णिताश्चैवरथाःशिलाभिः ३८ एवंमहच्छस्त्रवर्षंसृजंतस्तेयातुधानाभुविघोररूपाः ॥ मायाःसृष्टास्तत्रघटोत्कचेननामुंचन्वैयाचमानंनभीतम् ३९ तस्मिन्घोरेकुरुवीरावमर्देकालोत्सृष्टेक्ष त्रियाणामभावे ॥ तेवैभग्नाःसहसाव्यद्रवंतप्राक्रोशंतःकौरवाःसर्वएव ४० पलायध्वंकुरवोनैतदस्तिसेंद्रादेवाघ्नंतिनःपांडवार्थे ॥ तथातेषांमज्जतांभारतानांत स्मिन्द्वीपःसूतपुत्रोबभूव ४१ तस्मिन्संक्रंदेतुमुलेवर्तमानेसैन्येभग्नेलीयमानेकुरूणाम् ॥ अनीकानांप्रविभागेप्रकाशेनाज्ञायंतेकुरवोनेतरेच ४२ निर्मर्यादेवि द्रवेघोररूपेसर्वादिशःप्रेक्षमाणाःस्मशून्याः ॥ तांशस्त्रवृष्टिमुरसागाहमानंकर्णंस्मैकंतत्रराजन्नपश्यन् ४३ ततोबाणैराववृणोदंतरिक्षंदिव्यांमायांयोधयन्राक्षस स्य ॥ ह्रीमान्कुर्वन्दुष्करंचार्यकर्मनैवामुह्यत्संयुगेसूतपुत्रः ४४ ततोभीताःसमुदैक्षंतकर्णंराजन्सर्वेसैंधवबाल्हिकाश्च ॥ असंमोहंपूजयंतोऽस्यसंख्येसंपश्यं तोविजयंराक्षसस्य ४५ तेनोत्सृष्टाचक्रयुक्ताशतघ्नीसमंसर्वांश्चतुरोऽश्वाञ्जघान ॥ तेजानुभिर्जगतीमन्वपद्यन्गतासवोनिर्दशनाक्षिजिह्वाः ४६ ततोहता श्वादवरुह्ययानादंतर्मनाःकुरुषुप्राद्रवत्सु ॥ दिव्येचास्त्रेमाययावध्यमानेनैवामुह्यच्चिंतयन्प्राप्तकालम् ४७ ततोऽब्रुवन्कुरवःसर्वएवकर्णंदृष्ट्वाघोररूपांचमायाम् ॥ शक्त्यारक्षोजहिकर्णाद्यतूर्णंनश्यंत्येतेकुरवोधार्तराष्ट्राः ४८ करिष्यतःकिंचनोभीमपार्थौतपंतमेनंजहिपापंनिशीथे ॥ योनःसंग्रामाद्घोररूपाद्विमुंचेत्सनः पार्थान्सबलान्योधयेत ४९ तस्मादेनंराक्षसंघोररूपंशक्त्याजहित्वंदत्तयावासवेन ॥ माकौरवाःसर्वएवेंद्रकल्पारात्रियुद्धेकर्णनेशुःसयोधाः ५० सवध्य मानोरक्षसावैनिशीथेदृष्ट्वाराजंस्त्रास्यमानंबलंच ॥ महच्छ्रुत्वानिनदंकौरवाणांमतिंदध्रेशक्तिमोक्षायकर्णः ५१ सवैक्रुद्धःसिंहइवात्यमर्षीनामर्षयन्प्रतिघातंरणे ऽसौ ॥ शक्तिंश्रेष्ठांवैजयंतीमसह्यांसमाददेतस्यवधंचिकीर्षन् ५२ याऽसौराजन्निहितावर्षपूगान्वधायाजौसत्कृताफाल्गुनस्य ॥ यांवैप्रादात्सूतपुत्रायशक्रः शक्तिंश्रेष्ठांकुंडलाभ्यांनिमाय ५३ तांवैशक्तिंलेलिहानांप्रदीप्तांपाशैर्युक्तामंतकस्येवजिह्वाम् ॥ मृत्योःस्वसारंज्वलितामिवोल्कांवैकर्तनःप्राहिणोद्राक्षसाय ५४ तामुत्तमांपरकायावहंत्रींदृष्ट्वाशक्तिंबाहुसंस्थांज्वलंतीम् ॥ भीतंरक्षोविप्रदुद्रावराजन्कृत्वाऽऽत्मानंविंध्यतुल्यप्रमाणम् ५५

५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ ॥ इतिद्रोणपर्वणिटीकायामूनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥ ७ ॥ हैडिंबिमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८

दृष्ट्वाशक्तिंकर्णबाह्वंतरस्थांनेदुर्भूतान्यंतरिक्षेनरेंद्र ॥ ववुर्वातास्तुमुलाश्चापिराजन्सनिर्घाताचाशनिर्गांजगाम ५६ सातांमायांभस्मकृत्वाज्वलंतीभित्त्वागाढंहृदयंराक्षसस्य ॥ ऊर्ध्वंययौदीप्यमानानिशायांनक्षत्राणामंतराण्याविवेश ५७ सनिर्भिन्नोविविधैरस्त्रपूगैर्दिव्यैर्नागैर्मानुषैराक्षसैश्च ॥ नदन्नादान्विविधान्भैरवांश्चप्राणानिष्टांस्त्याजितःशक्रशक्त्या ५८ इदंचान्यच्चित्रमाश्चर्यरूपंचकारासौकर्मशत्रुक्षयाय ॥ तस्मिन्कालेशक्तिनिर्भिन्नमर्माबभौराजन्शैलमेघप्रकाशः ५९ ततोंऽतरिक्षादपतद्गतासुःसराक्षसेंद्रोभुवि भिन्नदेहः ॥ अवाक्शिराःस्तब्धगात्रोविजिह्वोघटोत्कचोमहदास्थायरूपम् ६० सतद्रूपंभैरवंभीमकर्माभीमंकृत्वाभैमसेनिःपपात ॥ हतोऽप्येवंतवसैन्यैकदेशमपोथयत्स्वेनदेहेनराजन् ६१ पतद्रक्षःस्वेनकायेनतूर्णमतिप्रमाणेनविवर्धताच ॥ प्रियंकुर्वन्पांडवानांगतासुरक्षौहिणींतववतूर्णंजघान ६२ ततोमिश्राःप्राणदन्सिंहनादैर्भेर्यःशंखामुरजाश्चानकाश्च ॥ दग्धांमायांनिहतंराक्षसंचदृष्ट्वाहृष्टाःप्राणदन्कौरवेयाः ६३ ततःकर्णःकुरुभिःपूज्यमानोयथाशक्रोवृत्रवधेमरुद्भिः ॥ अन्वारूढस्तवपुत्रस्ययानंहृष्टश्चापिप्राविशत्तत्स्वसैन्यम् ६४ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिघटोत्कचवधपर्वणिरात्रियुद्धेघटोत्कचवधेऊनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ हैडिंबिंनिहतंदृष्ट्वाविशीर्णमिवपर्वतम् ॥ बभूवुःपांडवाःसर्वेशोकबाष्पाकुलेक्षणाः १ वासुदेवस्तुहर्षेणमहताऽभिपरिप्लुतः ॥ ननादसिंहनादंवैपर्यष्वजतफाल्गुनम् २ सविनद्यमहानादमभीषून्सन्नियम्यच ॥ ननर्तहर्षसंवीतोवातोद्धूतइवद्रुमः ३ ततःपरिष्वज्यपुनःपार्थमास्फोट्यचासकृत् ॥ रथोपस्थगतोधीमान्प्राणदत्पुनरच्युतः ४ प्रहृष्टमनसंज्ञात्वावासुदेवंमहाबलः ॥ अर्जुनोऽथाब्रवीद्राजन्नातिहृष्टमनाइव ५ अतिहर्षोऽयमस्थानेतवाद्यमधुसूदन ॥ शोकस्थानेतुसंप्राप्तेहैडिंबस्यवधेनतु ६ विमुखानीहसैन्यानिहतंदृष्ट्वाघटोत्कचम् ॥ वयंचभृशमुद्विग्नाहैडिंबेस्तुनिपातनात् ७ नैतत्कारणमल्पंहिभविष्यतिजनार्दन ॥ तदद्यशंसमेपृष्टःसत्यंसत्यवतांवर ८ यद्येतन्नरहस्यंतेवक्तुमर्हस्यरिंदम ॥ धैर्यस्यवैकृतंब्रूहित्वमद्यमधुसूदन ९ समुद्रस्येवसंशोषंमेरोरिवविसर्पणम् ॥ तथैतदद्यमन्येऽहंतवकर्मजनार्दन १० ॥ वासुदेवउवाच ॥ अतिहर्षमिमंप्राप्तंशृणुमेत्वंधनंजय ॥ अतीवमनसःसद्यःप्रसादकरमुत्तमम् ११ शक्तिंघटोत्कचेनेमांव्यंसयित्वामहाद्युते ॥ कर्णंनिहतमेवाजौविद्धिसद्योधनंजय १२ शक्तिहस्तंपुनःकर्णंकोलोकेऽस्तिपुमानिह ॥ यएनमभितस्तिष्ठेत्कार्तिकेयमिवाहवे १३ दिष्ट्याऽपनीतकवचोदिष्ट्याऽपहृतकुंडलः ॥ दिष्ट्यासाव्यंसिताशक्तिरमोघाऽस्यघटोत्कचे १४ यदिहिस्यात्सकवचस्तथैवस्यात्सकुंडलः ॥ सामरानपिलोकांस्त्रीनेकःकर्णोजयेद्रणे १५ वासवोवाकुबेरोवावरुणोवाजलेश्वरः ॥ यमोवानोत्सहेत्कर्णंरणेप्रतिसमासितुम् १६

धैर्यस्यवैकृतंअस्मत्पक्षक्षयेणतवहर्षोऽस्मद्धैर्यविनाशकइत्यर्थः ९ । १० । ११ । १२ । १३ । १४ । १५ । १६

१७ । १८ । १९ । २० । २१ कुंडलाभ्यांनिमायविनिमयंकृत्वा २२ । २३ वृषोधर्मप्रधानः २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ ॥ इतिद्रोणपर्वणिटीकायामशी

गांडीवमुद्यम्यभवांश्चक्रंचाहंसुदर्शनम् ॥ नशक्तौस्वोरणेजेतुंतथायुक्तंनरर्षभम् १७ त्वद्धितार्थंतुशक्रेणमायापहृतकुंडलः ॥ विहीनकवचश्चायंकृतःपरपुरंजयः १८ उत्कृत्यकवचंयस्मात्कुंडलेविमलेचते ॥ प्रादाच्छक्रायकर्णोवैतेनवैकर्तनःस्मृतः १९ आशीविषइवक्रुद्धोजृंभितोमंत्रतेजसा ॥ तथाऽद्यभातिकर्णोमेशांतज्वालइवानलः २० यदाप्रभृतिकर्णायशक्तिर्दत्तामहात्मना ॥ वासवेनमहाबाहोक्षिप्तायाऽसौघटोत्कचे २१ कुंडलाभ्यांनिमायाथदिव्येनकवचेनच ॥ तांप्राप्यामन्यतवृषःसततंत्वांहतंरणे २२ एवंगतेऽपिशक्योऽयंहंतुंनान्येनकेनचित् ॥ ऋतेत्वांपुरुषव्याघ्रशपेसत्येनचानघ २३ ब्रह्मण्यःसत्यवादीचतपस्वीनियतव्रतः ॥ रिपुष्वपिदयावांश्चतस्मात्कर्णोवृषःस्मृतः २४ युद्धशौंडोमहाबाहुर्नित्योद्यतशरासनः ॥ केसरीववनेनर्दन्मातंगइवयूथपान् २५ विमदान्रथशार्दूलान्कुरुतेरणमूर्धनि ॥ मध्यंगतइवादित्योयोनशक्योनिरीक्षितुम् २६ त्वदीयैःपुरुषव्याघ्रयोधमुख्यैर्महात्मभिः ॥ शरजालसहस्रांशुःशरदीवदिवाकरः २७ तपांतेजलदोयद्वच्छरधाराःक्षरन्मुहुः ॥ दिव्यास्त्रजलदःकर्णःपर्जन्यइववृष्टिमान् २८ त्रिदशैरपिचास्याद्भिःशरवर्षैसमंततः ॥ अशक्यस्तदयंजेतुंस्रवद्भिर्मांसशोणितम् २९ कवचेनविहीनश्चकुंडलाभ्यांचपांडव ॥ सोऽद्यमानुषतांप्राप्तोविमुक्तःशक्रदत्तया ३० एकोहियोगोऽस्यभवेद्वधायाच्छिद्रेह्येनंस्वप्रमतःप्रमत्तम् ॥ कृच्छ्रप्राप्तंरथचक्रेविमग्नेहन्याःपूर्वंत्वंतुसंज्ञांविचार्य ३१ नह्युद्यतास्त्रंयुधिहन्यादजय्यमप्येकवीरोबलभित्सवज्रः ॥ जरासंधश्चेदिराजोमहात्मामहाबाहुश्चैकलव्योनिषादः ३२ एकैकशोनिहताःसर्वएतेयोगैस्तैस्तैस्त्वद्धितार्थंमयैव ॥ अथापरेनिहताराक्षसेंद्राहिडिंबकिर्मीरबकप्रधानाः ॥ अलायुधःपरचक्रावमर्दीघटोत्कचश्चोग्रकर्मातरस्वी ३३ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिघटोत्कचवधपर्वणिरात्रियुद्धेघटोत्कचवधेश्रीकृष्णहर्षेअशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

अर्जुनउवाच ॥ कथमस्मद्धितार्थंतेकैश्चयोगैर्जनार्दन ॥ जरासंधप्रभृतयोघातिताःपृथिवीश्वराः १ ॥ वासुदेवउवाच ॥ जरासंधश्चेदिराजोनैषादिश्चमहाबलः ॥ यदिस्युर्नहताःपूर्वमिदानींस्युर्भयंकराः २ दुर्योधनस्तानवश्यंवृणुयाद्रथसत्तमान् ॥ तेऽस्मासुनित्यविद्विष्टाःसंश्रयेयुश्चकौरवान् ३ तेहिवीरामहेष्वासाःकृतास्त्रादृढयोधिनः ॥ धार्तराष्ट्रचमूंकृत्स्नांरक्षेयुरमराइव ४ सूतपुत्रोजरासंधश्चेदिराजोनिषादजः ॥ सुयोधनंसमाश्रित्यजयेयुःपृथिवीमिमाम् ५ योगैरपिहतायैस्तेतन्मेशृणुधनंजय ॥ अजय्याहिविनायोगैर्मृधेतेदैवतैरपि ६ एकैकोहिपृथक्तेषांसमस्तांसुरवाहिनीम् ॥ योधयेत्समरेपार्थलोकपालाभिरक्षिताम् ७ जरासंधोहिरुषितोरौहिणेयप्रधर्षितः ॥ अस्मद्वधार्थंचिक्षेपगदांवैसर्वघातिनीम् ८

त्यधिकशततमोऽध्यायः ॥ १८० ॥ ॥ ७ ॥ ॥ कथमिति योगैरुपायैः १ । २ । ३ । ४ । ५ । ६ । ७ । ८

९ । १० । ११ । १२ । १३ । १४ सगदयागदासांहितयाराक्षस्याविनाभूतः अयंभावः । गदयैवसदुर्जयः कदाचिज्जितश्चेत्पुनाराक्षस्यासंधातुंशक्यइत्युभयनाशेनजरासंधोनष्ट

सीमंतमिवकुर्वाणांनभसःपावकप्रभाम् ॥ अदृश्यतापतंतीसाशक्रमुक्तायथाऽशनिः ९ तामापतंतींदृष्ट्वैवगदांरोहिणिनंदनः ॥ प्रतिघातार्थमस्त्रंवैस्थूणाकर्णमवा सृजत् १० अस्त्रवेगप्रतिहतासागदाप्रापतद्भुवि ॥ दारयंतीधरांदेवींकंपयंतीवपर्वतान् ११ तत्रसाराक्षसीघोराजरानाम्नीसुविक्रमा ॥ संदधेसाहिसंजातंजरा संधमरिंदमम् १२ द्वाभ्यांजातोहिमातृभ्यामर्धदेहःपृथक्पृथक् ॥ जरयासंधितोयस्माज्जरासंधस्ततोऽभवत् १३ सातुभूमिंगतापार्थहतासमुतबांधवा ॥ गदया तेनचास्त्रेणस्थूणाकर्णेनराक्षसी १४ विनाभूतःसगदयाजरासंधोमहामृधे ॥ निहतोभीमसेनेनपश्यतस्तेधनंजय १५ यदिहिस्याद्गदापाणिर्जरासंधःप्रताप वान् ॥ सेंद्रादेवानतंहंतुंरणेशक्तानरोत्तम १६ त्वद्धितार्थंचनैषादिरंगुष्ठेनवियोजितः ॥ द्रोणेनाचार्यकंकृत्वाछद्मनासत्यविक्रमः १७ सतुबद्धांगुलित्राणोनै षादिर्दृढविक्रमः ॥ अतिमानीवनचरोबभौरामइवापरः १८ एकलव्यंहिसांगुष्ठमशक्तादेवदानवाः ॥ सराक्षसोरगाःपार्थविजेतुंयुधिकर्हिचित १९ किमुमानुष मात्रेणशक्यःस्यात्प्रतिवीक्षितुम् ॥ दृढमुष्टिःकृतीनित्यमस्यमानोदिवानिशम् २० त्वद्धितार्थंतुसमयाहतःसंग्राममूर्धनि ॥ चेदिराजश्चविक्रांतःप्रत्यक्षंनिहत स्तव २१ सचाप्यशक्यःसंग्रामेजेतुंसर्वसुरासुरैः ॥ वधार्थंतस्यजातोऽहमन्येषांचसुरद्विषाम् २२ त्वत्सहायोनरव्याघ्रलोकानांहितकाम्यया ॥ हिडिंबबक किर्मीराभीमसेनेनपातिताः २३ रावणेनसमप्राणाब्रह्मयज्ञविनाशनाः ॥ हतस्तथैवमायावीहैडिंबेनाप्यलायुधः २४ हैडिंबश्चाप्युपायेनशक्त्याकर्णेनघातितः ॥ यदिह्येनंनाहनिष्यत्कर्णःशक्त्यामहामृधे २५ मयावध्योभविष्यत्सभैमसेनिर्घटोत्कचः ॥ मयाननिहतःपूर्वमेषयुष्मत्प्रियेप्सया २६ एषहिब्राह्मणद्वेषीयज्ञद्वेषीचरा क्षसः ॥ धर्मस्यलोप्तापापात्मातस्मादेषनिपातितः २७ व्यंसिताचाप्युपायेनशक्रदत्तामयाऽनघ ॥ येहिधर्मस्यलोप्तारोवध्यास्तेममपांडव २८ धर्मसंस्था पनार्थंहिप्रतिज्ञैषाममाव्यया ॥ ब्रह्मसत्यंदमःशौचंधर्मोह्रीःश्रीर्धृतिःक्षमा २९ यत्रतत्ररमेनित्यमहंसत्येनतेशपे ॥ नविषादस्त्वयाकार्यःकर्णंवैकर्तनंप्रति ३० उपदेक्ष्याम्युपायंतेयेनतंप्रसहिष्यसि ॥ सुयोधनंचापिरणेहनिष्यतिवृकोदरः ३१ तस्यापिचवधोपायंवक्ष्यामितवपांडव ॥ वर्धतेतुमुलस्त्वेषशब्दःपरचमूं प्रति ३२ विद्रवंतिचसैन्यानित्वदीयानिदिशोदश ॥ लब्धलक्ष्याहिकौरव्याविधमंतिचमूंतव ॥ दहत्येषचवःसैन्यंद्रोणःप्रहरतांवरः ३३ ॥ ॥ इति श्रीमहाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि रात्रियुद्धे कृष्णवाक्ये एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥ ॥ ॥ छ ॥ ॥ ॥ छ ॥ ॥

इति १५ । १६ । १७ १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ व्यंसिताव्यर्थीकृताशक्तिरितिशेषः २८ । २९ । ३० । ३१ । ३२ ३३ ॥ ॥ इतिद्रोणपर्वणिटीकायामेकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥ ॥ ॥ छ ॥ ॥ ॥ छ ॥ ॥ ॥ छ ॥ ॥ ॥ छ ॥

एकवीरवधेइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० एतत्मकृवशक्त्यार्ज्जुनहननम् ११ । १२ । १३ । १४ । १५ । १६ एषकृत्स्नः जयंप्रतिअर्जुनस्येत्यर्थः १७



धृतराष्ट्रउवाच ॥ एकवीरवधेमोघाशक्तिःसूतात्मजेयदा ॥ कस्मात्सर्वान्समुत्सृज्यसतांपार्थेनमुक्तवान् १ तस्मिन्हतेहताहिस्युःसर्वेपांडवसृंजयाः ॥ एकवीर वधेकस्माद्युद्धेनजयमादधे २ आहूतोननिवर्तेयमितितस्यमहाव्रतम् ॥ स्वयंमार्गयितव्यःसमूतपुत्रेणफाल्गुनः ३ ततोद्वैरथमानीयफाल्गुनंशक्रदत्तया ॥ जघाननवृषःकस्मात्तन्ममाचक्ष्वसंजय ४ नूनंबुद्धिविहीनश्चाप्यसहायश्चमेसुतः ॥ शत्रुभिर्व्यंसितःपापःकथंनुसजयेदरीन् ५ याह्यस्यपरमाशक्तिर्जयस्यच परायणम् ॥ साशक्तिर्वासुदेवेनव्यंसिताचघटोत्कचे ६ कुणेर्यथाहस्तगतंह्रियेत्फलंबलीयसा ॥ तथाशक्तिरमोघासामोघीभूताघटोत्कचे ७ यथावराहस्य शुनश्चयुध्यतोस्तयोरभावेश्वपचस्यलाभः ॥ मन्येविद्वन्वासुदेवस्यतद्वद्युद्धेलाभःकर्णहैडिंबयोर्वै ८ घटोत्कचोयदिहन्याद्धिकर्णंपरोलाभःसभवेत्पांडवानाम् ॥ वैकर्तनोवायदितंनिहन्यात्तथाऽपिकृत्यंशक्तिनाशात्कृतंस्यात् ९ इतिप्राज्ञःप्रज्ञयैतद्विचिंत्यघटोत्कचंसूतपुत्रेणयुद्धे ॥ अघातयद्वासुदेवोनृसिंहःप्रियंकुर्वन्पां डवानांहितंच १० ॥ संजयउवाच ॥ एतच्चिकीर्षितंज्ञात्वाकर्णस्यमधुसूदनः ॥ नियोजयामासतदाद्वैरथेराक्षसेश्वरम् ११ घटोत्कचंमहावीर्यंमहाबुद्धिर्जना र्दनः ॥ अमोघायाविघातार्थंराजन्दुर्मंत्रितेतव १२ तदैवकृतकार्याहिवयंस्यामकुरूद्वह ॥ नरक्षेद्यदिकृष्णस्तंपार्थंकर्णान्महारथात् १३ साश्वध्वजरथःसंख्ये धृतराष्ट्रपतेद्भुवि ॥ विनाजनार्दनंपार्थोयोगानामीश्वरंप्रभुम् १४ तैस्तैरुपायैर्बहुभीरक्ष्यमाणःसपार्थिव ॥ जयत्यभिमुखःशत्रून्पार्थःकृष्णेनपालितः १५ स विशेषात्त्वमोघायाःकृष्णोऽरक्षतपांडवम् ॥ हन्यात्क्षिप्रंहिकौंतेयंशक्तिर्वृक्षमिवाशनिः १६ ॥ धृतराष्ट्रउवाच ॥ विरोधीचकुमंत्रीचप्राज्ञमानीममात्मजः ॥ य स्यैषसमतिक्रांतोवधोपायोजयंप्रति १७ सवाकर्णोमहाबुद्धिःसर्वशस्त्रभृतांवरः ॥ नमुक्तवान्कथंसूततामममोघांधनंजये १८ तवापिसमतिक्रांतमेतद्गावल्गणे कथम् ॥ एतमर्थंमहाबुद्धेयत्त्वयानावबोधितः १९ ॥ संजयउवाच ॥ दुर्योधनस्यशकुनेर्ममदुःशासनस्यच ॥ रात्रौरात्रौभवत्येषानित्यमेवसमर्थना २० श्वः सर्वसैन्यानुत्सृज्यजहिकर्णधनंजयम् ॥ प्रेष्यवत्पांडुपंचालानुपभोक्ष्यामहेततः २१ अथवानिहतेपार्थेपांडवान्यतमंततः ॥ स्थापयेद्यादिवार्ष्णेयस्तस्मात्कृ ष्णोहिहन्यताम् २२ कृष्णोहिमूलंपांडूनांपार्थःस्कंधइवोद्गतः ॥ शाखाइवेतरेपार्थाःपंचालाःपत्रसंज्ञिताः २३ कृष्णाश्रयाःकृष्णबलाःकृष्णनाथाश्चपांडवाः ॥ कृष्णःपरायणंचैषांज्योतिषामिवचंद्रमाः २४ तस्मात्पर्णानिशाखाश्चस्कंधंचोत्सृज्यसूतज ॥ कृष्णंहिविद्धिपांडूनांमूलंसर्वत्रसर्वदा २५ हन्याद्यदिहिदाशार्हं कर्णोयादवनंदनम् ॥ कृत्स्नावसुमतीराजन्वशेतस्यनसंशयः २६ यदिहिसनिहतःशयीतभूमौयदुकुलपांडवनंदनोमहात्मा ॥ ननुतववसुधानरेंद्रसर्वागिरि समुद्रवनावशंव्रजेत २७

१८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

२८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ निरग्नयोऽग्निंविनामुखहीनाइवेत्यर्थः ३८ । ३९ अहमेवेत्यादिग्रंथोभगवतोभक्तपक्षपातित्वप्रदर्शनार्थोनकेवल

सातुबुद्धिःकृताप्येवंजाग्रतित्रिदशेश्वरे ॥ अप्रमेयेहृषीकेशेयुद्धकालेऽप्यमुह्यत २८ अर्जुनंचापिराधेयात्सदारक्षतिकेशवः ॥ नह्येनमैच्छत्प्रमुखेसौतेःस्थाप
यितुंरणे २९ अन्यांश्चास्मैरथोदारानुपास्थापयदच्युतः ॥ अमोघांतांकथंशक्तिंमोघांकुर्यामितिप्रभो ३० यश्चैवंरक्षतेपार्थंकर्णात्कृष्णोमहामनाः ॥ आत्मा
नंसकथंराजन्नरक्षेत्पुरुषोत्तमः ३१ परिचिंत्यतुपश्यामिचक्रायुधमरिंदमम् ॥ नसोऽस्तित्रिषुलोकेषुयोजयेतजनार्दनम् ३२ ॥ संजयउवाच ॥ ततःकृष्णं
महाबाहुंसात्यकिःसत्यविक्रमः ॥ पप्रच्छरथशार्दूलःकर्णंप्रतिमहारथः ३३ अयंचप्रत्ययःकर्णेशक्तिश्चामितविक्रमा ॥ किमर्थंसूतपुत्रेणनमुक्ताफाल्गुनेतुसा
३४ ॥ वासुदेवउवाच ॥ दुःशासनश्चकर्णश्चशकुनिश्चससैंधवः ॥ सततंमंत्रयंतिस्मदुर्योधनपुरोगमाः ३५ कर्णकर्णमहेष्वासरणेऽमितपराक्रम ॥ नान्यस्य
शक्तिरेषातेमोक्तव्याजयतांवर ३६ ऋतेमहारथात्कर्णकुंतीपुत्राद्धनंजयात् ॥ सहितेषामतियशादेवानामिववासवः ३७ तस्मिन्विनिहतेपार्थेपांडवाःसृंजयैः
सह ॥ भविष्यंतिगतात्मानःसुराइवनिरग्नयः ३८ तथेतिचप्रतिज्ञातंकर्णेनशिनिपुंगव ॥ हृदिनित्यंचकर्णस्यवधोगांडीवधन्वनः ३९ अहमेवतुराधेयंमोहया
मियुधांवर ॥ ततोनावासृजच्छक्तिंपांडवेश्वेतवाहने ४० फाल्गुनस्यहिसामृत्युरितिचिंतयतोऽनिशम् ॥ नानिद्रानचमेहर्षोमनसोऽस्तियुधांवर ४१ घटो
त्कचेव्यंसितांतुदृष्ट्वातांशिनिपुंगव ॥ मृत्योरास्यांतरान्मुक्तंपश्याम्यद्यधनंजयम् ४२ नपितानचमेमातानयूयंभ्रातरस्तथा ॥ नचप्राणास्तथारक्ष्यायथा
बीभत्सुराहवे ४३ त्रैलोक्यराज्याद्यत्किंचिद्भवेदन्यत्सुदुर्लभम् ॥ नेच्छेयंसात्वताहंतद्विनापार्थंधनंजयम् ४४ अतःप्रहर्षःसुमहान्युयुधानाद्यमेऽभवत् ॥
मृतंप्रत्यागतमिवदृष्ट्वापार्थंधनंजयम् ४५ अतश्चप्रहितोयुद्धेमयाकर्णायराक्षसः ॥ नह्यन्यःसमरेरात्रौशक्तःकर्णप्रबाधितुम् ४६ ॥ संजयउवाच ॥ इतिसा
त्यकयेप्राहतदादेवकिनंदनः ॥ धनंजयहितेयुक्तस्तत्प्रियेसततंरतः ४७ ॥ इतिश्रीमहाभारतेद्रोणपर्वणि घटोत्कचवधपर्वणिरात्रियुद्धेकृष्णवाक्येद्व्यशीत्याधि
कशततमोऽध्यायः ॥ १८२ ॥ ॥ छ ॥ ॥ धृतराष्ट्रउवाच ॥ कर्णदुर्योधनादीनांशकुनेःसौबलस्यच ॥ अपनीतंमहत्ताततवचैवविशेषतः १
यदिजानीथतांशक्तिमेकघ्नींसततंरणे ॥ अनिवार्यामसह्यांचदेवैरपिसवासवैः २ साकिमर्थंतुकर्णेनप्रवृत्तेसमरेपुरा ॥ नदेवकीसुतेमुक्ताफाल्गुनेवाऽपिसंजय ३
॥ संजयउवाच ॥ संग्रामाद्विनिवृत्तानांसर्वेषांनोविशांपते ४ रात्रौकुरुकुलश्रेष्ठमंत्रोऽयंसमजायत ॥ प्रभातमात्रेश्वोभूतेकेशवायार्जुनायवा ॥ शक्तिरेषाहि
मोक्तव्याकर्णकर्णेतिनित्यशः ५

मर्जुनार्थइतिभावः ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ हितेआमुष्मिकेश्रेयसि प्रियेऐहिकेकल्याणे
४७ ॥ इतिद्रोणपर्वणिटीकायांद्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥ कर्णेति महज्जयालंबनममोघशक्तिरूपमितिशेषः अपनीतंनाशितं महदपनीतंअन्यायइतिवा १ । २ । ३ । ४ । ५

५ । ६ । ७ । ८ । ९ । १० दुष्प्रणीतेन दुर्नयेन ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८।२९।३०।३१।३२।३३।३४

ततःप्रभातसमयेराजन्कर्णस्यदैवतैः ॥ अन्येषांचैवयोधानांसाबुद्धिर्नाश्यतेपुनः ६ दैवमेवपरंमन्येयत्कर्णोहस्तसंस्थया ॥ नजघानरणेपार्थंकृष्णंवादेवकी
सुतम् ७ तस्यहस्तस्थिताशक्तिःकालरात्रिरिवोद्यता ॥ दैवोपहतबुद्धित्वान्नतांकर्णोविमुक्तवान् ८ कृष्णेवादेवकीपुत्रेमोहितोदैवमायया ॥ पार्थेवाशक्रकल्पे
वैवधार्थंवासवींप्रभो ९ ॥ ॥ धृतराष्ट्रउवाच ॥ ॥ दैवेनोपहतायूयंस्वबुद्ध्याकेशवस्यच ॥ गताहित्वासवीहत्वातृणभूतंघटोत्कचम् १० कर्णश्चममपुत्रा
श्चसर्वेचान्येचपार्थिवाः ॥ तेनवैदुष्प्रणीतेनगतावैवस्वतक्षयम् ११ भूयएवतुमेशंसयथायुद्धमवर्तत ॥ कुरूणांपांडवानांचहैडिंबेनिहतेतदा १२ येचते
ऽभ्यद्रवन्द्रोणंव्यूढानीकाःप्रहारिणः ॥ सृंजयाःसहपंचालैस्तेऽप्यकुर्वन्कथंरणम् १३ सौमदत्तेर्वधाद्द्रोणमायांतंसैंधवस्यच ॥ अमर्षाज्जीवितंत्यक्त्वागाहमानं
वरूथिनीम् १४ जृंभमाणमिवव्याघ्रंव्यात्ताननमिवांतकम् ॥ कथंप्रत्युद्ययुर्द्रोणमस्यंतंपांडुसृंजयाः १५ आचार्यंयेचतेऽरक्षन्दुर्योधनपुरोगमाः ॥ द्रौणि
कर्णकृपास्ताततेवाकुर्वन्किमाहवे १६ भारद्वाजंजिघांसंतौसव्यसाचिवृकोदरौ ॥ समार्च्छन्मामकायुद्धेकथंसंजयशंसमे १७ सिंधुराजवधेनेमेघटोत्कचवधेन
ते ॥ अमर्षिताःसुसंक्रुद्धारणंचक्रुःकथंनिशि १८ ॥ संजयउवाच ॥ हतेघटोत्कचेराजन्कर्णेननिशिराक्षसे ॥ प्रणदत्सुचहृष्टेषुतावकेषुयुयुत्सुषु १९ आपत
त्सुचवेगेनवध्यमानेबलेऽपिच ॥ विगाढायांरजन्यांचराजादैन्यंपरंगतः २० अब्रवीच्चमहाबाहुर्भीमसेनमिदंवचः ॥ आवारयमहाबाहोधार्तराष्ट्रस्यवाहिनीम्
२१ हैडिंबेश्चैवघातेनमोहोमामाविशन्महान् ॥ एवंभीमंसमादिश्यस्वरथेसमुपाविशत् २२ अश्रुपूर्णमुखोराजानिःश्वसंश्चपुनःपुनः ॥ कश्मलंप्राविशद्घोरंदृ
ष्ट्वाकर्णस्यविक्रमम् २३ तंतथाव्यथितंदृष्ट्वाकृष्णोवचनमब्रवीत् ॥ माव्यथांकुरुकौंतेयनैतत्त्वय्युपपद्यते २४ वैक्लव्यंभरतश्रेष्ठयथाप्राकृतपूरुषे ॥ उत्तिष्ठ
राजन्युध्यस्ववहगुर्वींधुरंविभो २५ त्वयिवैक्लव्यमापन्नेसंशयोविजयेभवेत् ॥ श्रुत्वाकृष्णस्यवचनंधर्मराजोयुधिष्ठिरः २६ विमृज्यनेत्रेपाणिभ्यांकृष्णंवचनम
ब्रवीत् ॥ विदितामेमहाबाहोधर्माणांपरमागतिः २७ ब्रह्महत्याफलंतस्ययःकृतंनावबुध्यते ॥ अस्माकंहिवनस्थानांहैडिंबेनमहात्मना २८ बालेनापिसताते
नकृतंसाह्यंजनार्दन ॥ अस्त्रहेतोर्गतंज्ञात्वापांडवंश्वेतवाहनम् २९ असौकृष्णमहेष्वासःकाम्यकेमामुपास्थितः ॥ उषितश्चसहास्माभिर्यावन्नासीद्धनंजयः ३०
गंधमादनयात्रायांदुर्गेभ्यश्चस्मतारिताः ॥ पांचालीचपरिश्रांतापृष्ठेनोढामहात्मना ३१ आरंभाच्चैवयुद्धानांयदेषकृतवान्प्रभो ॥ मदर्थंदुष्करंकर्मकृतंतेनम
हाहवे ३२ स्वभावाद्याचमेप्रीतिःसहदेवेजनार्दन ॥ सैवमेपरमाप्रीतीराक्षसेंद्रेघटोत्कचे ३३ भक्तश्चमेमहाबाहुःप्रियोऽस्याहंप्रियश्चमे ॥ तेनविंदामिवार्ष्णे
यकश्मलंशोकतापितः ३४

३५ एतत्सैन्यप्रमर्दितं एतयोःसैन्याभ्यांप्रमर्दितामितिविग्रहः ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१

पश्यसैन्यानिवार्ष्णेयद्राव्यमाणानिकौरवैः ॥ द्रोणकर्णौतुसंयत्तौपश्ययुद्धेमहारथौ ३५ निशीथेपांडवंसैन्यमेतत्सैन्यप्रमर्दितम् ॥ गजाभ्यामिवमत्ताभ्यांय थानलवनंमहत् ३६ अनादृत्यबलंबाह्वोर्भीमसेनस्यमाधव ॥ चित्रास्त्रतांचपार्थस्यविक्रमंतिस्मकौरवाः ३७ एषद्रोणश्चकर्णश्चराजाचैवसुयोधनः ॥ निहत्य राक्षसंयुद्धेहृष्टानर्दंतिसंयुगे ३८ कथंवाऽस्मासुजीवत्सुत्वयिचैवजनार्दन ॥ हैडिंबिःप्राप्तवान्मृत्युंसूतपुत्रेणसंगतः ३९ कदर्थीकृत्यनःसर्वान्पश्यतःसव्यसाचि नः ॥ निहतोराक्षसःकृष्णभैमसेनिर्महाबलः ४० यदाऽभिमन्युर्निहतोधार्तराष्ट्रैर्दुरात्मभिः ॥ नासीत्तत्ररणेकृष्णसव्यसाचीमहारथः ४१ निरुद्धाश्चवयंसर्वेसैंध वेनदुरात्मना ॥ निमित्तमभवद्द्रोणःसपुत्रस्तत्रकर्मणि ४२ उपदिष्टोवधोपायःकर्णस्यगुरुणास्वयम् ॥ व्यायच्छतश्चखड्गेनद्विधाखड्गंचकारह ४३ व्यसनेवर्त मानस्यकृतवर्मानृशंसवत् ॥ अश्वान्जघानसहसातथोभौपार्ष्णिसारथी ४४ तथेतरेमहेष्वासाःसौभद्रंयुध्यपातयन् ॥ अल्पेचकारणेकृष्णहतोगांडीवधन्वना ४५ सैंधवोयादवश्रेष्ठतच्चनातिप्रियंमम ॥ यदिशत्रुवधोन्याय्योभवेत्कुर्तुंहिपांडवैः ४६ कर्णद्रोणौरणपूर्वंहंतव्यावितिमेमतिः ॥ एतौहिमूलंदुःखानामस्मा कंपुरुषर्षभ ४७ एतौरणेसमासाद्यसमाश्वस्तःसुयोधनः ॥ यत्रवध्योभवेद्द्रोणःसूतपुत्रश्चसानुगः ४८ तत्रावधीन्महाबाहुःसैंधवंदूरवासिनम् ॥ अवश्यंतुम याकार्यःसूतपुत्रस्यनिग्रहः ४९ ततोयास्याम्यहंवीरस्वयंकर्णजिघांसया ॥ भीमसेनोमहाबाहुर्द्रोणानीकेनसंगतः ५० एवमुक्त्वाययौतूर्णंत्वरमाणोयुधिष्ठि रः ॥ सविस्फार्यमहच्चापंशंखंप्रध्माप्यभैरवम् ५१ ततोरथसहस्रेणगजानांचशतैस्त्रिभिः ॥ वाजिभिःपंचसाहस्रैःपंचालैःसप्रभद्रकैः ५२ वृतःशिखंडीत्वरि तोराजानंपृष्ठतोऽन्वयात् ॥ ततोभेरीःसमाजघ्नुःशंखान्दध्मुश्चदंशिताः ५३ पंचालाःपांडवाश्चैवयुधिष्ठिरपुरोगमाः ॥ ततोऽब्रवीन्महाबाहुर्वासुदेवोधनंज यम् ५४ एषप्रयातित्वरितःक्रोधाविष्टोयुधिष्ठिरः ॥ जिघांसुःसूतपुत्रस्यतस्योपेक्षानयुज्यते ५५ एवमुक्त्वाहृषीकेशःशीघ्रमश्वानचोदयत् ॥ दूरंप्रयांतंरा जानमन्वगच्छज्जनार्दनः ५६ तंदृष्ट्वासहसायांतंसूतपुत्रजिघांसया ॥ शोकोपहतसंकल्पंदह्यमानमिवाग्निना ५७ अभिगम्याब्रवीद्व्यासोधर्मपुत्रंयुधिष्ठि रम् ॥ व्यासउवाच ॥ कर्णमासाद्यसंग्रामेदिष्ट्याजीवतिफाल्गुनः ५८ सव्यसाचिवधाकांक्षीशक्तिंरक्षितवान्हिसः ॥ नचागाद्द्वैरथंजिष्णुर्दिष्ट्यातेनमहारणे ५९ सृजेतांस्पर्धिनावेतौदिव्यान्यस्त्राणिसर्वशः ॥ वध्यमानेषुचास्त्रेषुपीडितःसूतनंदनः ६० वासवींसमरेशक्तिंध्रुवंमुंचेद्युधिष्ठिर ॥ ततोभवेत्तेव्यसनंघोरंभर तसत्तम ६१ दिष्ट्यारक्षोहतंयुद्धेसूतपुत्रेणमानद ॥ वासवींकारणंकृत्वाकालेनोपहतोह्यसौ ६२ तवैवकारणाद्रक्षोनिहतंतातसंयुगे ॥ माक्रुधोभरतश्रेष्ठमाच शोकेमनःकृथाः ६३ ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३

६४ । ६५ । ६६ । ६७ ॥ इतिद्रोणपर्वणिटीकायांत्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥ ॥ व्यासेनैवमितितत्तोदुर्योधनइतिचाध्यायी स्पष्टार्थौ १ । २ । ३ । ४ । ५ । ६ । ७ । ८

प्राणिनामिहसर्वेषामेषानिष्ठायुधिष्ठिर ॥ भ्रातृभिःसहितःसर्वैःपार्थिवैश्चमहात्मभिः ६४ कौरवान्समरेराजन्प्रतियुध्यस्वभारत ॥ पंचमेदिवसेतातपृथिवीतेभ
विष्यति ६५ नित्यंचपुरुषव्याघ्रधर्ममेवानुचिंतय ॥ आनृशंस्यंतपोदानंक्षमासत्यंचपांडव ६६ सेवेथाःपरमप्रीतोयतोधर्मस्ततोजयः ॥ इत्युक्त्वापांडवं
व्यासस्तत्रैवांतरधीयत ६७ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिघटोत्कचवधपर्वणिरात्रियुद्धेव्यासवाक्येत्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥ ४ ॥ समाप्तं
चघटोत्कचवधपर्व ॥ अथद्रोणवधपर्व ॥ ॥ संजयउवाच ॥ व्यासेनैवमथोक्तस्तुधर्मराजोयुधिष्ठिरः ॥ स्वयंकर्णवधाद्वीरोनिवृत्तोभरतर्षभ १ घटोत्कचेतुनिहते
सूतपुत्रेणतांनिशाम् ॥ दुःखामर्षवशंप्राप्तोधर्मराजोयुधिष्ठिरः २ दृष्ट्वाभीमेनमहतींवार्यमाणांचमूंतव ॥ धृष्टद्युम्नमुवाचेदंकुंभयोनिंनिवारय ३ त्वंहिद्रो
णविनाशायसमुत्पन्नोहुताशनात् ॥ सशरःकवचीखड्गीधन्वीचपरतापनः ४ अभिद्रवरणेहृष्टोमाचतेभीःकथंचन ॥ जनमेजयःशिखंडीचदौर्मुखिश्चयशो
धरः ५ अभिद्रवंतुसंहृष्टाःकुंभयोनिंसमंततः ॥ नकुलःसहदेवश्चद्रौपदेयाःप्रभद्रकाः ६ द्रुपदश्चविराटश्चपुत्रभ्रातृसमन्वितौ ॥ सात्यकिःकेकयाश्चैवपांडवश्च
धनंजयः ७ अभिद्रवंतुवेगेनकुंभयोनिवधेप्सया ॥ तथैवरथिनःसर्वेहस्त्यश्वंयच्चकिंचन ८ पदाताश्चरणेद्रोणंपातयंतुमहारथम् ॥ तथाऽऽज्ञप्तास्तुतेसर्वेपांड
वेनमहात्मना ९ अभ्यद्रवंतवेगेनकुंभयोनिवधेप्सया ॥ आगच्छतस्तान्सहसासर्वोद्योगेनपांडवान् १० प्रतिजग्राहसमरेद्रोणःशस्त्रभृतांवरः ॥ ततोदुर्योधनो
राजासर्वोद्योगेनपांडवान् ११ अभ्यद्रवत्सुसंक्रुद्धइच्छन्द्रोणस्यजीवितम् ॥ ततःप्रववृतेयुद्धंश्रांतवाहनसैनिकम् १२ पांडवानांकुरूणांचगर्जतामितरेत
रम् ॥ निद्रांधास्तेमहाराजपरिश्रांताश्चसंयुगे १३ नाभ्यपद्यंतसमरेकांचिच्चेष्टांमहारथाः ॥ त्रियामारजनीचैषाघोररूपाभयानका १४ सहस्रयामप्रतिमा
बभूवप्राणहारिणी ॥ वध्यतांचतथातेषांक्षतानांचविशेषतः १५ अर्धरात्रिःसमाजज्ञेनिद्रांधानांविशेषतः ॥ सर्वेह्यासन्निरुत्साहाःक्षत्रियादीनचेतसः १६
तवचैवपरेषांचगतास्त्राविगतेषवः ॥ तेतदापारयंतश्चह्रीमंतश्चविशेषतः १७ स्वधर्ममनुपश्यंतोनजहुःस्वामनीकिनीम् ॥ अस्त्राण्यन्येसमुत्सृज्यनिद्रांधाःशेर
तेजनाः १८ रथेष्वन्येगजेष्वन्येहयेष्वन्येचभारत ॥ निद्रांधानोबुबुधिरेकांचिच्चेष्टांनराधिप १९ तानन्येसमरेयोधाःप्रेषयंतोयमक्षयम् ॥ स्वप्नायमानांस्त्वप
रेपरानितिविचेतसः २० आत्मानंसमरेजघ्नुःस्वानेवचपरानपि ॥ नानावाचोविमुंचंतोनिद्रांधास्तेमहारणे २१ अस्माकंचमहाराजपरेभ्योबहवोजनाः ॥
योद्धव्यमितितिष्ठंतोनिद्रासंरक्तलोचनाः २२ संसर्पंतोरणेकेचिन्निद्रांधास्तेतथाऽपरान् ॥ जघ्नुःशूरारणेशूरांस्तस्मिंस्तमसिदारुणे २३ हन्यमानमथात्मा
नंपरेभ्योबहवोजनाः ॥ नाभ्यजानंतसमरेनिद्रयामोहिताभृशम् २४ ९ । १० । ११ । १२ १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ २३ । २४

तेषामेतादृशींचेष्टांविज्ञायपुरुषर्षभः ॥ उवाचवाक्यंबीभत्सुरुच्चैःसन्नादयन्दिशः २५ श्रांताभवंतोनिद्रांधाःसर्वएवसवाहनाः ॥ तमसाचावृतेसैन्येरजसाबहु
लेनच २६ तेयूयंयदिमन्यध्वमुपारमतसैनिकाः ॥ निमीलयतचात्रैवरणभूमौमुहूर्तकम् २७ ततोविनिद्राविश्रांताश्चंद्रमस्युदितेपुनः ॥ संसाधयिष्यथा
न्योन्यंसंग्रामंकुरुपांडवाः २८ तद्वचःसर्वधर्मज्ञाधार्मिकस्यविशांपते ॥ अरोचयंतसैन्यानितथाचान्योन्यमब्रुवन् २९ चुक्रुशुःकर्णकर्णेतितथादुर्योधनेतिच ॥
उपारमतपांडूनांविरताहिवरूथिनी ३० तथाविक्रोशमानस्यफाल्गुनस्यततस्ततः ॥ उपारमतपांडूनांसेनातवचभारत ३१ तामस्यवाचंदेवाश्चऋषय
श्चमहात्मनः ॥ सर्वसैन्यानिचाक्षुद्रांप्रहृष्टाःप्रत्यपूजयन् ३२ तत्संपूज्यवचोऽक्रूरंसर्वसैन्यानिभारत ॥ मुहूर्तमस्वपन्राजन्श्रांतानिभरतर्षभ ३३ सातुसं
प्राप्यविश्रामंध्वजिनीतवभारत ॥ सुखमाप्तवतीवीरमर्जुनंप्रत्यपूजयत् ३४ त्वयिवेदास्तथाऽस्त्राणित्वयिबुद्धिपराक्रमौ ॥ धर्मस्त्वयिमहाबाहोदयाभूतेषु
चानघ ३५ यच्चाश्वस्तास्तवेच्छामःशर्मपार्थतदस्तुते ॥ मनसश्चप्रियानर्थान्वीराक्षिप्रमवाप्नुहि ३६ इतितेतंनरव्याघ्रंप्रशंसंतोमहारथाः ॥ निद्रयासमवा
क्षिप्तास्तूष्णीमासन्विशांपते ३७ अश्वपृष्ठेषुचाप्यन्येरथनीडेषुचापरे ॥ गजस्कंधगताश्चान्येशेरतेचापरेक्षितौ ३८ सायुधाःसगदाश्चैवसखड्गाःसपरश्वधाः ॥
सप्रासकवचाश्चान्येनराःसुप्ताःपृथक्पृथक् ३९ गजास्तेपन्नगाभोगैर्हस्तैर्भूरेणुगुंठितैः ॥ निद्रांधावसुधांचक्रुर्घ्राणनिःश्वासशीतलाम् ४० सुप्ताःशुशुभिरे
तत्रनिःश्वसंतोमहीतले ॥ विकीर्णागिरयोयद्वन्निःश्वसद्भिर्महोरगैः ४१ समांचविषमांचक्रुःखुराग्रैर्विक्षतांमहीम् ॥ हयाःकांचनयोक्त्रास्तेकेसरालंबिभिर्युगैः ४२
सुषुपुस्तत्रराजेंद्रयुक्तावाहेषुसर्वशः ॥ एवंहयाश्चनागाश्चयोधाश्चभरतर्षभ ॥ युद्धाद्विरम्यसुषुपुःश्रमेणमहतान्विताः ४३ तत्तथानिद्रयामग्नमबोधंप्रास्व
पत्कृशम् ॥ कुशलैःशिल्पिभिर्न्यस्तंपटेचित्रमिवाद्भुतम् ४४ तेक्षत्रियाःकुंडलिनोयुवानःपरस्परंसायकविक्षतांगाः ॥ कुंभेषुलीनाःसुषुपुर्गजानांकुचेषुलग्नाइव
कामिनीनाम् ४५ ततःकुमुदनाथेनकामिनीगंडपांडुना ॥ नेत्रानंदेनचंद्रेणमाहेंद्रीदिगलंकृता ४६ दशशताक्षककुब्दरीनिःसृतःकिरणकेसरभासुरपिंजरः ॥
तिमिरवारणयूथविदारणःसमुदियादुदयाचलकेसरी ४७ हरवृषोत्तमगात्रसमद्युतिःस्मरशरासनपूर्णसमप्रभः ॥ नववधूस्मितचारुमनोहरःप्रविसृतःकुमुदाकर
बांधवः ४८ ततोमुहूर्ताद्भगवान्पुरस्ताच्छशलक्षणः ॥ अरुणंदर्शयामासग्रसन्ज्योतिःप्रभांप्रभुः ४९ अरुणस्यतुतस्यानुजातरूपसमप्रभम् ॥ रश्मिजालं
महच्चंद्रोमंदंमंदमवासृजत् ५० उत्सारयंतःप्रभयातमस्तेचंद्ररश्मयः ॥ पर्यगच्छञ्छनैःसर्वादिशःखंचक्षितिंतथा ५१ ततोमुहूर्ताद्भुवनंज्योतिर्भूतमिवाभ
वत् ॥ अप्रख्यमप्रकाशंचजगामाशुतमस्तथा ५२ प्रतिप्रकाशितेलोकेदिवाभूतेनिशाकरे ॥ विचेरुर्नविचेरुश्चराजन्नक्तंचरास्ततः ५३

५४ । ५५ । ५६ ॥ इतिद्रोणपर्वणिटीकायांचतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥ ७ ॥ ततइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६

बोध्यमानंतुतत्सैन्यंराजंश्चंद्रस्यरश्मिभिः ॥ बुबुधेशतपत्राणांवनंसूर्यांशुभिर्यथा ५४ यथाचंद्रोदयोद्भूतःक्षुभितःसागरोऽभवत् ॥ तथाचंद्रोदयोद्भूतःसबभूव बलार्णवः ५५ ततःप्रववृते युद्धंपुनरेवविशांपते ॥ लोकेलोकविनाशायपरंलोकमभीप्सताम् ५६ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिद्रोणवधपर्वणिरात्रियुद्धेसैन्य निद्रायांचतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥ ॥ संजयउवाच ॥ ततोदुर्योधनोद्रोणमभिगम्याब्रवीदिदम् ॥ अमर्षवशमापन्नोजनयन्हर्षतेजसी १ ॥ दुर्योधनउवाच ॥ नमर्षणीयाःसंग्रामेविश्रमंतःश्रमान्विताः ॥ सपत्नाग्लानमनसोलब्धलक्षाविशेषतः २ यत्तुमर्षितमस्माभिर्भवतःप्रियकाम्यया ॥ तएते परिविश्रांताःपांडवाबलवत्तराः ३ सर्वथापरिहीनाःस्मतेजसाचबलेनच ॥ भवतापाल्यमानास्तेविवर्धंतेपुनःपुनः ४ दिव्यान्यस्त्राणिसर्वाणिब्राह्मादीनिचया निह ॥ तानिसर्वाणितिष्ठंतिभवत्येवविशेषतः ५ नपांडवेयानवयंनान्येलोकेधनुर्धराः ॥ युध्यमानस्यतेतुल्याःसत्यमेतद्ब्रवीमिते ६ ससुरासुरगंधर्वानिमाँल्लो कान्द्विजोत्तम ॥ सर्वास्त्रविद्भवान्हन्याद्दिव्यैरस्त्रैर्नसंशयः ७ सभवान्मर्षयत्येतांस्त्वत्तोभीतान्विशेषतः ॥ शिष्यत्वंवापुरस्कृत्यममवामंदभाग्यताम् ८ ॥ संजयउवाच ॥ एवमुद्धर्षितोद्रोणःकोपितश्चसुतेनते ॥ समन्युरब्रवीद्राजन्दुर्योधनमिदंवचः ९ स्थविरःसन्परंशक्त्याघटेदुर्योधनाहवे ॥ अतःपरंमयाकार्यंक्षु द्रंविजयगृद्धिना १० अनस्त्रविदयंसर्वोहंतव्योऽस्त्रविदाजनः ॥ यद्भवान्मन्यतेचापिशुभंवायदिवाऽशुभम् ११ तद्वैकर्ताऽस्मिकौरव्यवचनात्तवनान्यथा ॥ नि हत्यसर्वपंचालान्युद्धेकृत्वापराक्रमम् १२ विमोक्ष्येकवचंराजन्सत्येनायुधमालभे ॥ मन्यसेयच्चकौंतेयमर्जुनंश्रांतमाहवे १३ तस्यवीर्यंमहाबाहोशृणुसत्येनकौ रव ॥ तंनदेवानगंधर्वानयक्षानचराक्षसाः १४ उत्सहंतेरणेजेतुंकुपितंसव्यसाचिनम् ॥ खांडवेयेनभगवान्प्रत्युद्यातःसुरेश्वरः १५ सायकैर्वारितश्चापिवर्ष माणोमहात्मना ॥ यक्षानागास्तथादैत्यायेचान्येबलगर्विताः १६ निहताःपुरुषेंद्रेणतच्चापिविदितंतव ॥ गंधर्वाघोषयात्रायांचित्रसेनादयोजिताः १७ यूयं तैर्ह्रियमाणाश्चमोक्षिताद्दृढधन्वना ॥ निवातकवचाश्चापिदेवानांशत्रवस्तथा १८ सुरैरवध्याःसंग्रामेतेनवीरेणनिर्जिताः ॥ दानवानांसहस्राणिहिरण्यपुरवा सिनाम् १९ विजिग्येपुरुषव्याघ्रःसशक्योमानुषैःकथम् ॥ प्रत्यक्षंचैवतेसर्वंयथाबलमिदंतव २० क्षपितंपांडुपुत्रेणचेष्टतांनोविशांपते ॥ संजयउवाच ॥ तंतदाऽभिप्रशंसंतमर्जुनंकुपितस्तदा २१ द्रोणंतवसुतोराजन्पुनरेवेदमब्रवीत् ॥ अहंदुःशासनःकर्णःशकुनिर्मातुलश्चमे २२ हनिष्यामोऽर्जुनंसंख्येद्विधाकृत्वा ऽद्यभारतीम् ॥ तस्यतद्वचनंश्रुत्वाभारद्वाजोहसन्निव २३ अन्ववर्ततराजानंस्वस्तितेऽस्त्वितिचाब्रवीत् ॥ कोहिगांडीवधन्वानंज्वलंतमिवतेजसा २४ अक्षयंक्षपयेत्कश्चित्क्षत्रियःक्षत्रियर्षभम् ॥ तंनवित्तपतिर्नेंद्रोनयमोनजलेश्वरः २५ १७ । १८ । १९ । १६ । १७ । १८ । १९ । २० । २१ २२ । २३ । २४ । २५

२६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ ॥ इतिद्रोणपर्वणिटीकायांपंचाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥ ॥ ७ ॥ ॥ त्रिभागमात्रशे

नासुरोरगरक्षांसिक्षपयेयुःसहायुधम् ॥ मूढास्त्वेतानिभाषंतेयानीमान्यात्थभारत २६ युद्धेह्यर्जुनमासाद्यस्वस्तिमान्कोव्रजेद्गृहान् ॥ त्वंतुसर्वाभिशंकित्वान्नि
ष्ठुरःपापनिश्चयः २७ श्रेयसस्त्वाद्धितेयुक्तांस्ततद्वक्तुमिहेच्छसि ॥ गच्छत्वमपिकौंतेयमात्मार्थंजाहेमाचिरम् २८ त्वमप्याशंससेयोद्धुंकुलजःक्षत्रियोह्यसि ॥
इमान्किंक्षत्रियान्सर्वान्घातयिष्यस्यनागसः २९ त्वमस्यमूलंवैरस्यतस्मादासादयार्जुनम् ॥ एषतेमातुलःप्राज्ञःक्षत्रधर्ममनुव्रतः ३० दुर्द्यूतदेवीगांधारेप्रयात्व
र्जुनमाहवे ॥ एषोऽक्षकुशलोजिह्मोद्यूतकृत्कितवःशठः ३१ देविताानिकृतिप्रज्ञोयुधिजेष्यतिपांडवान् ॥ त्वयाकथितमत्यर्थंकर्णेनसहहृष्टवत् ३२ असकृच्छून्य
वन्मोहाद्धृतराष्ट्रस्यशृण्वतः ॥ अहंचतातकर्णश्चभ्रातादुःशासनश्चमे ३३ पांडुपुत्रान्हनिष्यामःसहिताःसमरेत्रयः ॥ इतितेकत्थमानस्यश्रुतंसंसादिसंसदि ३४
अनुतिष्ठप्रतिज्ञांतांसत्यवाग्भवतैःसह ॥ एषतेपांडवःशत्रुरविशंकोऽग्रतःस्थितः ३५ क्षत्रधर्ममवेक्षस्वश्लाघ्यस्तववधोजयात् ॥ दत्तंभुक्तमधीतंचप्राप्तमैश्व
र्यमीप्सितम् ३६ कृतकृत्योऽनृणश्चासिमाभैर्युध्यस्वपांडवम् ॥ इत्युक्त्वासमरेद्रोणोन्यवर्ततयतःपरे ॥ द्वैधीकृत्यततःसेनांयुद्धंसमभवत्तदा ३७ ॥ इतिश्रीम
हाभारतेद्रोणपर्वणिद्रोणवधपर्वणि द्रोणदुर्योधनभाषणेपंचाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ त्रिभागमात्रशेषायांरात्र्यांयु
द्धमवर्तत ॥ कुरूणांपांडवानांचसंहृष्टानांविशांपते १ अथचंद्रप्रभांमुष्णन्नादित्यस्यपुरःसरः ॥ अरुणोऽभ्युदयांचक्रेताम्रीकुर्वन्निवांबरम् २ प्राच्यांदिशिस
हस्रांशोररुणेनारुणीकृतम् ॥ तापनीयंयथाचक्रंभ्राजतेरविमंडलम् ३ ततोरथाश्वांश्चमनुष्ययानान्युत्सृज्यसर्वेकुरुपांडुयोधाः ॥ दिवाकरस्याभिमुखंजपंतः
संध्यागताःप्रांजलयोबभूवुः ४ ततोद्वैधीकृतेसैन्येद्रोणःसोमकपांडवान् ॥ अभ्यद्रवत्सपंचालान्दुर्योधनपुरोगमः ५ द्वैधीकृतान्कुरून्दृष्ट्वामाधवोऽर्जुनमब्रवीत् ॥
सपत्नान्सव्यतःकृत्वाअपसव्यमिमंकुरु ६ समाधवमनुज्ञायकुरुष्वेतिधनंजयः ॥ द्रोणकर्णौमहेष्वासौसव्यतःपर्यवर्तत ७ अभिप्रायंतुकृष्णस्यज्ञात्वापरपुरंज
यः ॥ आजिशीर्षगतंपार्थंभीमसेनोऽभ्युवाचह ८ ॥ भीमसेनउवाच ॥ अर्जुनार्जुनबीभत्सोशृणुष्वैतद्वचोमम ॥ यदर्थंक्षत्रियासूतेतस्यकालोऽयमागतः ९
अस्मिंश्चेदागतेकालेश्रेयोनप्रतिपत्स्यसे ॥ असंभावितरूपस्त्वंसुनृशंसंकरिष्यसि १० सत्यश्रीधर्मयशसांवीर्येणानृण्यमाप्नुहि ॥ भिंध्यनीकंयुधांश्रेष्ठअपस
व्यमिमान्कुरु ११ ॥ ॥ संजयउवाच ॥ ॥ ससव्यसाचीभीमेनचोदितःकेशवेनच ॥ कर्णद्रोणावतिक्रम्यसमंतात्पर्यवारयत् १२ तमाजिशीर्षे
मायांतंदहंतंक्षत्रियर्षभान् ॥ पराक्रांतंपराक्रम्ययतंतःक्षत्रियपुंगवाः १३

षायांमुहूर्तत्रयावशिष्टायां तत्रसूर्योदयोत्तरंत्रयोदश्यांद्रोणस्यनाशः त्रयोदश्यां
शुक्लायायुद्धारंभस्य 'हेमंतेप्रथमेमासेशुक्लपक्षेत्रयोदशीं ॥ प्रवृत्तंभारतंयुद्धम्' इतिभारतसाविञ्यामुक्तस्यचोपपत्तिःसितष्वति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३

१४ । १५ । १६ । १७ । १८ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४

नाशक्नुवन्वारयितुंवर्धमानमिवानलम् ॥ अथदुर्योधनःकर्णःशकुनिश्चापिसौबलः १४ अभ्यवर्षञ्छरव्रातैःकुंतीपुत्रंधनंजयम् ॥ तेषामस्त्राणिसर्वेषामुत्तमास्त्रविदां वरः १५ कदर्थीकृत्यराजेंद्रशरवर्षैरवाकिरत् ॥ अस्त्रैरस्त्राणिसंवार्यलघुहस्तोजितेंद्रियः १६ सर्वानविध्यन्निशितैर्दशभिर्दशभिःशरैः ॥ उद्धूतारजसोवृष्टिःशरवृष्टि स्तथैवच १७ तमश्चघोरंशब्दश्चतदासमभवन्महान् ॥ नद्यौर्नभूमिर्नदिशःप्राज्ञायंततथागते १८ सैन्येनरजसामूढंसर्वमंधमिवाभवत् ॥ नैवतेनवयंराजन्प्रा ज्ञासिष्मपरस्परम् १९ उद्देशेनहितेनस्मसमयुध्यंतपार्थिवाः ॥ विरथारथिनोराजन्समासाद्यपरस्परम् २० केशेषुसमसज्जंतकवचेषुभुजेषुच ॥ हताश्वाहत सूताश्चनिश्चेष्टारथिनोहताः २१ जीवंतइवतत्रस्मव्यदृश्यंतभयार्दिताः ॥ हतान्गजान्समाश्लिष्यपर्वतानिववाजिनः २२ गतसत्वाव्यदृश्यंततथैवसहसादि भिः ॥ ततस्त्वभ्यवसृत्यैवसंग्रामादुत्तरांदिशम् २३ आतिष्ठदाहवेद्रोणोविधूमोऽग्निरिवज्वलन् ॥ तमाजिशीर्षादेकांतमपक्रांतंनिशम्यतु २४ समकंपंतसैन्यानि पांडवानांविशांपते ॥ भ्राजमानंश्रियायुक्तंज्वलंतमिवतेजसा २५ द्रोणंदृष्ट्वापरेत्रेसुश्चेरुर्मम्लुश्चभारत ॥ आह्वयंतंपरानीकंप्रभिन्नमिववारणम् २६ नैनमाशंसि रेजेतुंदानवावासवंयथा ॥ केचिदासन्निरुत्साहाःकेचित्क्रुद्धामनस्विनः २७ विस्मिताश्चाभवन्केचित्केचिदासन्नमर्षिताः ॥ हस्तैर्हस्ताग्रमपरेप्रत्यपिंषन्नराधिपाः २८ अपरेदशनैरोष्ठानदशन्क्रोधमूर्छिताः ॥ व्याक्षिपन्नायुधान्यन्येममृदुश्चापरेभुजान् २९ अन्येचान्वपतन्द्रोणंत्यक्तात्मानोमहौजसः ॥ पंचालास्तुविशेषे णद्रोणसायकपीडिताः ३० समसज्जंतराजेंद्रसमरेभृशवेदनाः ॥ ततोविराटद्रुपदौद्रोणंप्रतिययूरणे ३१ तथाचरंतंसंग्रामेभृशंसमरदुर्जयम् ॥ द्रुपदस्यततः पौत्रास्त्रयएवविशांपते ३२ चेदयश्चमहेष्वासाद्रोणमेवाभ्ययुर्युधि ॥ तेषांद्रुपदपौत्राणांत्रयाणांनिशितैःशरैः ३३ त्रिभिर्द्रोणोऽहरत्प्राणांस्तेहतान्यपतन्भुवि ॥ ततोद्रोणोऽजयद्युद्धेचेदिकैकेयसृंजयान् ३४ मत्स्यांश्चैवाजयत्कृत्स्नान्भारद्वाजोमहारथान् ॥ ततस्तुद्रुपदःक्रोधाच्छरवर्षमवासृजत् ३५ द्रोणंप्रतिमहाराज विराटश्चैवसंयुगे ॥ तन्निहत्येषुवर्षंतुद्रोणःक्षत्रियमर्दनः ३६ तौशरैश्छादयामासविराटद्रुपदावुभौ ॥ द्रोणेनच्छाद्यमानौतुक्रुद्धौसंग्राममूर्धनि ३७ द्रोणंशरैर्वि व्यधतुःपरमंक्रोधमास्थितौ ॥ ततोद्रोणोमहाराजक्रोधामर्षसमन्वितः ३८ भल्लाभ्यांभृशतीक्ष्णाभ्यांचिच्छेदधनुषीतयोः ॥ ततोविराटःकुपितःसमरेतोमरा न्दश ३९ दशचिक्षेपचशरान्द्रोणस्यवधकांक्षया ॥ शक्तिंचद्रुपदोघोरामायसींस्वर्णभूषिताम् ४० चिक्षेपभुजगेंद्राभांक्रुद्धोद्रोणरथंप्रति ॥ ततोभल्लैःसुनि शितैश्छित्त्वातांस्तोमरान्दश ४१ शक्तिंकनकवैदूर्यांद्रोणश्चिच्छेदसायकैः ॥ ततोद्रोणःसुपीताभ्यांभल्लाभ्यामरिमर्दनः ४२ द्रुपदंचविराटंचप्रेषयामासमृ त्यवे ॥ हतेविराटेद्रुपदेकेकयेषुतथैवच ४३ तथैवचेदिमत्स्येषुपंचालेषुतथैवच ॥ हतेषुत्रिषुवीरेषुद्रुपदस्यचनमृषु ४३

शशापशपथंकृतवान् ४५ इष्टापूर्तात्तथाक्षात्रादिति इष्टंयागहोमादि आपूर्तंक्षेत्रारामादि क्षात्रंद्रुपदकुलोत्पन्नत्वात् ब्राह्मण्यंयाजोपयाजयोर्ब्राह्मणयोस्तपसाब्राह्मणरूपादग्नेश्वजातत्वात्
एतत्सर्वंतस्यनश्यतु यस्यशत्रुर्द्रोणोनमुच्येतमरणंनप्राप्नुयात् यंवामांवाद्रोणोयदिपराभवेदिति ४६ । ४७ । ४८ । ४९ । ५० । ५१ अवस्थितमरिमुकर्तिर्यंशपथंशपित्वाऽपिकः

द्रोणस्यकर्मतद्दृष्ट्वाकोपदुःखसमन्वितः ॥ शशापरथिनांमध्येधृष्टद्युम्नोमहामनाः ४५ इष्टापूर्तात्तथाक्षात्राद्ब्राह्मण्याच्चसनश्यतु ॥ द्रोणोयस्याद्यमुच्येत यंवाद्रोणःपराभवेत् ४६ इतितेषांप्रतिश्रुत्यमध्येसर्वधनुष्मताम् ॥ आयाद्द्रोणंसहानीकःपांचाल्यःपरवीरहा ४७ पंचालास्त्वेकतोद्रोणमभ्यघ्नन्पांडवैःसह ॥ दुर्योधनश्चकर्णश्चशकुनिश्चापिसौबलः ४८ सोदर्याश्चयथामुख्यास्तेऽरक्षन्द्रोणमाहवे ॥ रक्ष्यमाणंतथाद्रोणंसर्वैस्तैस्तुमहारथैः ४९ यतमानास्तुपंचालान शेकुःप्रतिवीक्षितुम् ॥ तत्राक्रुध्यद्भीमसेनोधृष्टद्युम्नस्यमारिष ५० सएनंवाग्भिरुग्राभिस्ततक्षपुरुषर्षभः ॥ भीमसेनउवाच ॥ द्रुपदस्यकुलेजातःसर्वास्त्रेष्वस्त्रवित्तमः ५१ कःक्षत्रियोमन्यमानःप्रेक्षेतारिमवस्थितम् ॥ पितृपुत्रवधंप्राप्यपुमान्कःपरिपालयेत् ५२ विशेषतस्तुशपथंशपित्वाराजसंसदि ॥ एषवैश्वानरइवसमिद्धःस्वेनतेजसा ५३ शरचापेंधनोद्रोणःक्षत्रंदहतितेजसा ॥ पुराकरोतिनिःशेषांपांडवानामनीकिनीम् ५४ स्थिताःपश्यतमेकर्मद्रोणमेवव्रजाम्यहम् ॥ इत्युक्त्वाप्राविशत्क्रुद्धोद्रोणानिकंवृकोदरः ५५ शरैःपूर्णायतोत्सृष्टैर्द्रावयंस्तववाहिनीम् ॥ धृष्टद्युम्नोऽपिपांचाल्यःप्रविश्यमहतींचमूम् ५६ आससादरणेद्रोणंतदासीत्तुमुलंमहत् ॥ नैवनस्तादृशंयुद्धंदृष्टपूर्वंनचश्रुतम् ५७ यथासूर्योदयेराजन्समुत्पिंजोऽभवन्महान् ॥ संसक्तान्येवचादृश्यन्रथवृंदानिमारिष ५८ हतानिचविकीर्णानिशरीराणिशरीरिणाम् ॥ केचिदन्यत्रगच्छंतःपथिचान्यैरुपद्रुताः ५९ विमुखाःपृष्ठतश्चान्येताड्यंतेपार्श्वतःपरे ॥ तथासंसक्तयुद्धंतदभवद्भृशदारुणम् ॥ अथसंध्यागतःसूर्यःक्षणेनसमपद्यत ६० ॥ इतिश्रीमहाभारतेद्रोणपर्वणिद्रोणवधपर्वणि संकुलयुद्धेषडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥ ॥ संजयउवाच ॥ तेतथैवमहाराजदंशितारणमूर्धनि ॥ संध्यागतंसहस्रांशुमादित्यमुपतस्थिरे १ उदितेतुसहस्रांशौतप्तकांचनसप्रभे ॥ प्रकाशितेषुलोकेषुपुनर्युद्धमवर्तत २ द्वंद्वानितत्रयान्यासन्संसक्तानिपुरोदयात् ॥ तान्येवाभ्युदितेसूर्येसमसज्जंतभारत ३ रथैर्हयाहयैर्नागाःपादातैश्चापिकुंजराः ॥ हयैर्हयाःसमाजग्मुःपादाताश्चपदातिभिः ४ रथारथैरिभैर्नागास्तथैवभरतर्षभ ॥ संसक्ताश्चवियुक्ताश्चयोधाःसंन्यपतन्रणे ५ तेरात्रौकृतकर्माणःश्रांताःसूर्यस्यतेजसा ॥ क्षुत्पिपासापरीतांगाःविसंज्ञाबहवोऽभवन् ६ शंखभेरीमृदंगानांकुंजराणांचगर्जताम् ॥ विस्फारितविकृष्टानांकार्मुकाणांचकूजताम् ७ शब्दःसमभवद्राजन्दिविस्पृग्भरतर्षभ ॥ द्रवतांचपदातीनांशस्त्राणांपततामपि ८ हयानांहेषतांचापिरथानांचनिवर्तताम् ॥ क्रोशतांगर्जतांचैवतदासीत्तुमुलंमहत् ९

परिपालयेत्कस्तद्धननंनकुर्यादपितुसर्वोऽपितद्धननंकुर्यादेवेतिसार्धःश्लोकः ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० ॥ इति द्रोणपर्वणि टीकायां षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥ ॥ ७ ॥ ॥ तेतथैवेति सहस्रांशुंविकीर्णकरसहस्रंउदेष्यंतमित्यर्थः आदित्यंसूर्यम् १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९

१० । ११ स्वेकौरवाःस्वान्स्वभृत्यान्परेपांडवाःस्वान्स्वभृत्यान् स्वेइत्यनुवर्तते परेषांपांडवानांस्वान्स्वेकौरवाःपरेषांपांडवानांपरान्कौरवान्परेपांडवाजघ्नुरित्यन्वयः परेषामित्युभयत्रसं बध्यते स्वपरविभागोवक्तुःसंजयस्यानुरोधात् १२ वीरेति निज्यंतेप्रक्षाल्यंतेवासांसियेषुतेप्रदेशानेजनानि तेषुयथावाससांराशयोभवंत्येवमुद्यतानांप्रतिकूलंपिष्टानांचखड्गानांराशयःप्रत्यदृ

विद्वद्धस्तुमुलःशब्दोद्यामगच्छन्महांस्तदा ॥ नानायुधनिकृत्तानांचेष्टतामातुरःस्वनः १० भूमावश्रूयतमहांस्तदासीत्कृपणंमहत् ॥ पततांपात्यमानानांपत्त्य श्वरथदंतिनाम् ११ तेषुसर्वेष्वनीकेषुव्यतिषक्तेष्वनेकशः ॥ स्वेस्वान्जघ्नुःपरेस्वांश्चस्वान्परेषांपरेपरान् १२ वीरबाहुविसृष्टाश्चयोधेषुचगजेषुच ॥ राशयः प्रत्यदृश्यंतवाससांनिजनेष्विव १३ उद्यतप्रतिपिष्टानांखड्गानांवीरबाहुभिः ॥ सएवशब्दस्तद्रूपोवाससांनिज्यतामिव १४ अर्धासिभिस्तथाखड्गैस्तोमरैःसप रश्वधैः ॥ निकृष्टयुद्धंसंसक्तंमहदासीत्सुदारुणम् १५ गजाश्वकायप्रभवांनरदेहप्रवाहिनीम् ॥ शस्त्रमत्स्यसुसंपूर्णांमांसशोणितकर्दमाम् १६ आर्तनादस्वन वर्तीपताकाशस्त्रफेनिलाम् ॥ नदींप्रावर्तयन्वीराःपरलोकौघगामिनीम् ॥ शरशक्त्यर्दिताःक्लांतारात्रिमूढाल्पचेतसः ॥ विष्टभ्यसर्वगात्राणिव्यतिष्ठन्गजवा जिनः १८ बाहुभिःकवचैश्छिन्नैःशिरोभिश्चारुकुंडलैः ॥ युद्धोपकरणैश्चान्यैस्तत्रतत्रचकाशिरे १९ क्रव्यादसंघैराकीर्णंमृतैरर्धमृतैरपि ॥ नासीद्रथपथस्तत्र सर्वमायोधनंप्रति २० मज्जत्सुचक्रेषुरथान्सत्वमास्थायवाजिनः ॥ कथंचिदवहन्श्रांतावेपमानाःशरार्दिताः २१ कुलसत्वबलोपेतावाजिनोवारणोपमाः ॥ वि ह्वलंतूर्णमुद्भ्रांतंसभयंभारतातुरम् २२ बलमासीत्तदासर्वमृतेद्रोणार्जुनावुभौ ॥ तावेवास्तांनिलयनंतावार्तायनमेवच २३ तावेवान्येसमासाद्यजग्मुर्वैवस्वतक्ष यम् ॥ आविग्नमभवत्सर्वंकौरवाणांमहद्बलम् २४ पंचालानांचसंसक्तंनप्राज्ञायतकिंचन ॥ अंतकाक्रीडसदृशंभीरूणांभयवर्धनम् २५ पृथिव्यांराजवंश्या नामुत्थितेमहतिक्षये ॥ नतत्रकर्णंद्रोणंवानार्जुनंनयुधिष्ठिरम् २६ नभीमसेनंनयमौनपांचाल्यंनसात्यकिम् ॥ नचदुःशासनंद्रौणिंनदुर्योधनसौबलौ २७ न कृपंमद्रराजंचकृतवर्माणमेवच ॥ नचान्यान्नैवचात्मानंनक्षितिंनदिशस्तथा २८ पश्यामराजन्संसक्तान्सैन्येनरजसाऽऽवृतान् ॥ संभ्रांतेतुमुलेघोरेरजोमेघेस मुत्थिते २९ द्वितीयामिवसंप्राप्ताममन्यंतनिशांतदा ॥ नज्ञायंतेकौरवेयानपंचालानपांडवाः ३० नदिशोद्यौर्नचोर्वीचनसमंविषमंतथा ॥ हस्तसंस्पर्शमाप न्नान्परानप्यथवास्वकान् ३१ न्यपातयंस्तदायुद्धेनराःस्मविजयैषिणः ॥ उद्धूतत्वात्तुरजसःप्रसेकाच्छोणितस्यच ३२ प्राशाम्यतरजोभौमंशीघ्रत्वादनिलस्य च ॥ तत्रनागाहयायोधारथिनोऽथपदातयः ३३ पारिजातवनानीवव्यरोचन्रुधिरोक्षिताः ॥ ततोदुर्योधनःकर्णोद्रोणोदुःशासनस्तथा ३४ पांडवैःसमस ज्जंतचतुर्भिश्चतुरोरथाः ॥ दुर्योधनःसहभ्रात्रायमाभ्यांसमसज्जत ३५ वृकोदरेणराधेयोभारद्वाजेनचार्जुनः ॥ तद्घोरंमहदाश्चर्यंसर्वेप्रैक्षंतसर्वतः ३६

इयंत निज्यतांक्षालनैरुद्यम्योद्यम्यशिलायांस्फाल्यमानानां श्लोकद्वयम् १३ । १४ अर्धासिभिरेकधारैः १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ निलयनमाश्रयः आर्तायनमार्ता नांभयवारणंस्वीयानां शत्रूणांतुतावेवमृत्युकराविस्यर्थः २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ चतुरश्चत्वारः भ्रात्रादुःशासनेन ३५ । ३६

३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ ॥ इतिद्रोणपर्वणिटीकायांसप्ताशीत्यधिकशततमो

रथर्षभाणामुग्राणांसन्निपातममानुषम् ॥ रथमार्गैर्विचित्रैस्तैर्विचित्ररथसंकुलम् ३७ अपश्यन्रथिनोयुद्धंविचित्रंचित्रयोधिनाम् ॥ यतमानाःपराक्रांताःपर
स्परजिगीषवः ३८ जीमूताइववर्मांतेशरवर्षैरवाकिरन् ॥ तेरथान्सूर्यसंकाशानास्थिताःपुरुषर्षभाः ३९ अशोभंतयथामेघाःशारदाश्चलविद्युतः ॥ योधास्ते
तुमहाराजक्रोधामर्षसमन्विताः ४० स्पर्धिनश्चमहेष्वासाःकृतयत्नाधनुर्धराः ॥ अभ्यगच्छंस्तथान्योन्यंमत्तागजवृषाइव ४१ ननूनंदेहभेदोऽस्तिकालेराज
न्ननागते ॥ यत्रसर्वेनयुगपद्व्यशीर्यंतमहारथाः ४२ बाहुभिश्चरणैश्छिन्नैःशिरोभिश्चसकुंडलैः ॥ कार्मुकैर्विशिखैःप्रासैःखड्गैःपरशुपट्टिशैः ४३ नालीकैःक्षुद्र
नाराचैर्नखरैःशक्तितोमरैः ॥ अन्यैश्चविविधाकारैर्धौतैःप्रहरणोत्तमैः ४४ विचित्रैर्विविधाकारैःशरीरावरणैरपि ॥ विचित्रैश्चरथैर्भग्नैर्हतैश्चगजवाजिभिः ४५
शून्यैश्चैवनगाकारैर्हतयोधध्वजैरथैः ॥ अमनुष्यैर्हयैस्त्रस्तैःकृष्यमाणैस्ततस्ततः ४६ वातायमानैरसकृद्धतवीरैरलंकृतैः ॥ व्यजनैःकंकटैश्चैवध्वजैश्चविनि
पातितैः ४७ छत्रैराभरणैर्वस्त्रैर्माल्यैश्चसुसुगंधिभिः ॥ हारैःकिरीटैर्मुकुटैरुष्णीषैःकिंकिणीगणैः ४८ उरस्थैर्मणिभिर्निष्कैश्चूडामणिभिरेवच ॥ आसीदायोधनं
तत्रनभस्तारागणैरिव ४९ ततोदुर्योधनस्यासीन्नकुलेनसमागमः ॥ अमर्षितेनक्रुद्धस्यक्रुद्धेनामर्षितस्यच ५० अपसव्यंचकाराथमाद्रीपुत्रस्तवात्मजम् ॥
किरञ्छरशतैर्हृष्टस्तत्रनादोमहानभूत् ५१ अपसव्यंकृतंसंख्ये भ्रातृव्येनात्यमर्षिणा ॥ नामृष्यततमप्याजौप्रतिचक्रेऽपसव्यतः ५२ पुत्रस्तवमहाराजरा
जादुर्योधनोद्रुतम् ॥ ततःप्रतिचिकीर्षंतमपसव्यंतुतेसुतम् ५३ न्यवारयततेजस्वीनकुलश्चित्रमार्गवित् ॥ ससर्वतोनिवार्यैनंशरजालेनपीडयन् ५४ विमुखं
नकुलश्चक्रेतत्सैन्याःसमपूजयन् ॥ तिष्ठतिष्ठेतिनकुलोबभाषेतनयंतव ॥ संस्मृत्यसर्वदुःखानितवदुर्मंत्रितंचतत् ५५ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिद्रोणवध
पर्वणि नकुलयुद्धेसप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥ ॥ संजयउवाच ॥ ततोदुःशासनःक्रुद्धःसहदेवमुपाद्रवत् ॥ रथवेगेनतीव्रेणकंपयन्निवमेदिनीम्
१ तस्यापततएवाशुभल्लेनामित्रकर्शनः ॥ माद्रीपुत्रःशिरोयंतुःसशिरस्त्राणमच्छिनत् २ नैनंदुःशासनःसूतंनापिकश्चनसैनिकः ॥ कृतोत्तमांगमाशुत्वात्सहदेवे
नबुद्धवान् ३ यदात्वसंग्रहीतत्वात्प्रयांत्यश्वायथासुखम् ॥ ततोदुःशासनःसूतंबुबुधेगतचेतसम् ४ सहयान्सन्निगृह्याजौस्वयंहयविशारदः ॥ युयुधेर
थिनांश्रेष्ठोलघुचित्रंचसुष्ठुच ५ तदस्यापूजयन्कर्मस्वेपरेचापिसंयुगे ॥ हतसूतरथेनाजौव्यचरद्यदभीतवत् ६ सहदेवस्तुतानश्वांस्तीक्ष्णैर्बाणैरवाकिरत् ॥
पीड्यमानाःशरैश्चाशुप्राद्रवंस्ततस्ततः ७ सरश्मिषुविषक्तत्वादुत्ससर्जशरासनम् ॥ धनुषाकर्मकुर्वंस्तुरश्मींश्चपुनरुत्सृजत् ८ छिद्रेष्वेतेषुतंबाणैर्मा
द्रीपुत्रोऽभ्यवाकिरत् ॥ परीप्संस्त्वत्सुतंकर्णस्तदंतरमवापतत् ९ वृकोदरस्ततःकर्णंत्रिभिर्भल्लैःसमाहितः ॥ आकर्णपूर्णैरभ्यघ्नन्बाह्वोरुरसिचानदत् १०

ऽध्यायः ॥ १८७ ॥ ॥ ७ ॥ ॥ ७ ॥ तवइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०

सनिवृत्तस्ततःकर्णःसंघट्टितइवोरगः ॥ भीममावारयामासविकिरन्निशिताञ्छरान् ११ ततोऽभूत्तुमुलंयुद्धंभीमराधेययोस्तदा ॥ तौवृषाविवनर्दंतौविवृत्तन
यनावुभौ १२ वेगेनमहताऽन्योन्यंसंरब्धावभिपेततुः ॥ अभिसंश्लिष्टयोस्तत्रतयोराहवशौंडयोः १३ विच्छिन्नशरपातत्वाद्गदायुद्धमवर्तत ॥ गदयाभीमसेन
स्तुकर्णस्यरथकूबरम् १४ बिभेदशतधाराजंस्तदद्भुतमिवाभवत् ॥ ततोभीमस्यराधेयोगदामाविध्यवीर्यवान् १५ अवासृजद्रथेतांतुबिभेदगदयागदाम् ॥ ततो
भीमःपुनर्गुर्वींचिक्षेपाधिरथेर्गदाम् १६ तांगदांबहुभिःकर्णःसुपंखैःसुप्रवेजितैः ॥ प्रत्यविध्यत्पुनश्चान्यैःसाभीमंपुनराव्रजत् १७ व्यालीवमंत्राभिहताकर्णबाणै
रभिद्रुता ॥ तस्याःप्रतिनिपातेनभीमस्यविपुलोध्वजः १८ पपातसारथिश्चास्यमुमोहचगदाहतः ॥ सकर्णंसायकानष्टौव्यसृजत्क्रोधमूर्च्छितः १९ तै
स्तस्यनिशितैस्तीक्ष्णैर्भीमसेनोमहाबलः ॥ चिच्छेदपरवीरघ्नःप्रहसन्निवभारत २० ध्वजंशरासनंचैवशरावापंचभारत ॥ कर्णोऽप्यन्यद्धनुर्गृह्यहेमपृष्ठं
दुरासदं २१ ततःपुनस्तुराधेयोहयानस्यरथेषुभिः ॥ ऋक्षवर्णान्जघानाशुतथोभौपार्ष्णिसारथी २२ सविपन्नरथोभीमोनकुलस्याप्लुतोरथं ॥ हरिर्यथागिरेः
शृंगंसमाक्रामदरिंदमः २३ तथाद्रोणार्जुनौचित्रमयुध्येतांमहारथौ ॥ आचार्यशिष्यौराजेंद्रकृतप्रहरणौयुधि २४ लघुसंधानयोगाभ्यांरथयोश्चरणेनच ॥
मोहयंतौमनुष्याणांचक्षूंषिचमनांसिच २५ उपारमंततेसर्वेयोधाभरतसत्तम ॥ अदृष्टपूर्वंपश्यंतस्तद्युद्धंगुरुशिष्ययोः २६ विचित्रान्पृतनामध्येरथमार्गानु
दीर्यतौ ॥ अन्योन्यमपसव्यंचकर्तुंवीरौतदेषतुः २७ पराक्रमंतयोर्योधाददृशुस्तेसुविस्मिताः ॥ तयोःसमभवद्युद्धंद्रोणपांडवयोर्महत् २८ आमिषार्थेमहारा
जगगनेश्येनयोरिव ॥ यद्यच्चकारद्रोणस्तुकुंतीपुत्रजिगीषया २९ तत्तत्प्रतिजघानाशुप्रहसंस्तस्यपांडवः ॥ यदाद्रोणोनशक्नोतिपांडवंस्मविशेषितुम् ३०
ततःप्रादुश्चकारास्त्रमस्त्रमार्गविशारदः ॥ ऐंद्रंपाशुपतंत्वाष्ट्रंवायव्यमथवारुणम् ३१ मुक्तंमुक्तंद्रोणचापात्तज्जघानधनंजयः ॥ अस्त्राण्यस्त्रैर्यदातस्यविधिवद्धंतिपां
डवः ३२ ततोऽस्त्रैःपरमैर्दिव्यैर्द्रोणःपार्थमवाकिरत् ॥ यद्यदस्त्रंसपार्थायप्रयुंक्तेविजिगीषया ३३ तस्यतस्यविघातायतत्तद्धिकुरुतेऽर्जुनः ॥ सवध्यमानेष्व
स्त्रेषुदिव्येष्वपियथाविधि ३४ अर्जुनेनार्जुनंद्रोणोमनसैवाभ्यपूजयत् ॥ मेनेचात्मानमधिकंपृथिव्यामधिभारत ३५ तेनशिष्येणसर्वेभ्यःशस्त्रविद्भ्यःपरंतपः ॥
वार्यमाणस्तुपार्थेनतथामध्येमहात्मनः ३६ यतमानोऽर्जुनंप्रीत्याप्रत्यवारयदुत्स्मयन् ॥ ततोंऽतरिक्षेदेवाश्चगंधर्वाश्चसहस्रशः ३७ ऋषयःसिद्धसंघाश्चव्य
तिष्ठंतदिदृक्षया ॥ तदप्सरोभिराकीर्णंयक्षगंधर्वसंकुलम् ३८ श्रीमदाकाशमभवद्भूयोमेघाकुलंयथा ॥ तत्रस्मांतर्हितावाचोव्यचरंतपुनःपुनः ३९ द्रोणपार्थ
स्तवोपेताव्यश्रूयंतनराधिप ॥ विसृज्यमानेष्वस्त्रेषुज्वालयत्सुदिशोदश ४०

४१ । ४२ । ४३ । ४४ ज्ञानमेकस्थमिति आचार्योज्ञानस्यशौर्यस्यचावधिरित्यर्थः अर्जुनस्तुयोगेनबलेनचाधिकः कृष्णसारथिगांडीवदिव्यरथध्वजबुद्धयादिभिर्यौवनेनचयुक्तत्वात् । तथाच योगबलाभ्यामाचार्यसाम्यंप्राप्तइत्यर्थः ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ पारमवधिः आर्षक्लीबत्वं अन्यतरेणेतिशेषः गम्यतेप्राप्यतेअन्योन्ययुद्धे ततस्तदा संकुलयुद्धमनियतयोधं

अब्रुवंस्तत्रसिद्धाश्चऋषयश्चसमगताः ॥ नैवेदंमानुषंयुद्धंनासुरंनचराक्षसम् ४१ नदैवंनचगांधर्वंब्राह्मंध्रुवमिदंपरम् ॥ विचित्रमिदमाश्चर्यंननोदृष्टंनचश्रुतम् ४२ अतिपांडवमाचार्योद्रोणंचाप्यतिपांडवः ॥ नानयोरंतरंशक्यंद्रष्टुमन्येनकेनचित् ४३ यदिरुद्रोद्विधाकृत्वयुध्येतात्मानमात्मना ॥ तत्रशक्योपमाकर्तुमन्यत्रतुनविद्यते ४४ ज्ञानमेकस्थमाचार्येज्ञानंयोगश्चपांडवे ॥ शौर्यमेकस्थमाचार्येबलंशौर्यंचपांडवे ४५ नेमौशक्यौमहेष्वासौयुद्धेक्षपयितुंपरैः ॥ इच्छमानौपुनरिमौहन्येतांसामरंजगत् ४६ इत्यब्रुवन्महाराजदृष्ट्वातौपुरुषर्षभौ ॥ अंतर्हितानिभूतानिप्रकाशानिचसर्वशः ४७ ततोद्रोणोब्राह्ममस्त्रंप्रादुश्चक्रेमहामतिः ॥ संतापयन्रणेपार्थंभूतान्यंतर्हितानिच ४८ ततश्चचालपृथिवीसपर्वतवनद्रुमा ॥ ववौचविषमोवायुःसागराश्चापिचुक्षुभुः ४९ ततस्त्रासोमहानासीत्कुरुपांडवसेनयोः ॥ सर्वेषांचैवभूतानामुद्यतेऽस्त्रेमहात्मना ५० ततःपार्थोऽप्यसंभ्रांतस्तदस्त्रंप्रतिजघ्निवान् ॥ ब्रह्मास्त्रेणैवराजेंद्रततःसर्वमशीशमत् ५१ यदानगम्यतेपारंतयोरन्यतरस्यवा ॥ ततःसंकुलयुद्धेनतद्युद्धंव्याकुलीकृतम् ५२ नाज्ञायतततःकिंचित्पुनरेवविशांपते ॥ प्रवृत्तेतुमुलेयुद्धेद्रोणपांडवयोर्मृधे ५३ शरजालैःसमाकीर्णेमेघजालैरिवांबरे ॥ नापतच्चततःकश्चिदंतरिक्षचरस्तदा ५४ ॥ ॥ इति श्रीमहाभारतेद्रोणपर्वणि द्रोणवधपर्वणि संकुलयुद्धेअष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥ ॥ ध ॥ ॥ संजयउवाच ॥ तस्मिंस्तथावर्तमानेगजाश्वनरसंक्षये ॥ दुःशासनोमहाराजधृष्टद्युम्नमयोधयत् १ सतुरुक्मरथासक्तोदुःशासनशरार्दितः ॥ अमर्षात्तवपुत्रस्यशरैर्वाहानवाकिरत् २ क्षणेनसरथस्तस्यसध्वजःसहसारथिः ॥ नादृश्यतमहाराजपार्षतस्यशरैश्चितः ३ दुःशासनस्तुराजेंद्रपांचाल्यस्यमहात्मनः ॥ नाशकत्प्रमुखेस्थातुंशरजालप्रपीडितः ४ सतुदुःशासनंबाणैर्विमुखीकृत्यपार्षतः ॥ किरञ्छरसहस्राणिद्रोणमेवाभ्ययाद्रणे ५ अभ्यपद्यतहार्दिक्यःकृतवर्मात्वनंतरम् ॥ सोदर्याणांत्रयश्चैवतएनंपर्यवारयन् ६ तंयमौपृष्ठतोऽन्वैतांरक्षंतौपुरुषर्षभौ ॥ द्रोणायाभिमुखंयांतंदीप्यमानमिवानलम् ७ संप्रहारमकुर्वंस्तेसर्वेचसुमहारथाः ॥ अमर्षिताःसत्त्ववंतःकृत्वामरणमग्रतः ८ शुद्धात्मानःशुद्धवृत्ताराजन्स्वर्गपुरस्कृताः ॥ आर्यंयुद्धमकुर्वंतपरस्परजिगीषवः ९ शुक्लाभिजनकर्माणोमतिमंतोजनाधिप ॥ धर्मयुद्धमयुध्यंतप्रेप्संतोगतिमुत्तमाम् १० नतत्रासीदधर्मिष्ठमशस्तंयुद्धमेवच ॥ नात्रकर्णीननालीकोनलिप्तोनचबस्तिकः ११

युद्धं ५२ । ५३ नापतत् बाणैरंतरिक्षस्यपूरितत्वादितिभावः ५४ ॥ इतिद्रोणपर्वणिटीकायामष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥ ॥ तस्मिन्निति १ । २ । ३ । ४ । ५ त्रयोधृष्टद्युम्नोऽन्यौद्वौच ६ । ७ । ८ । ९ शुक्लःशुद्धोऽभिजनोवंशोयेषांते स्वयंशोधितकर्माणश्च १० अशस्तमप्रशस्यं प्रशस्यत्वमाह नात्रेति कर्णीविलोमकंटकद्वययुक्तः सहिउद्ध्रियमाणोऽन्त्राण्युद्धरति । नालीकोऽल्पत्वाद्देहमग्नःसन्दुरुद्धरः । नलिप्तोविषेणेतिशेषः । बस्तिकःशल्यदंडसंधौशिथिलस्तस्योद्धरणेशल्यंबास्तिमध्येमज्जातिदंडमात्रंनिःसरति ११

सूचीकर्णिसजातीयोबहुकंटकः कपिशस्तुल्योमर्कटास्थिमयोवेतिप्राञ्चः कर्ष्णायसमयः सद्यदृढेऽप्याघातेंऽतर्बहुप्रविशति । 'कपिशस्त्रिषुश्यामे' इतिमेदिनी । गवास्थिजोगजास्थिजस्तन्मय

नसूचीकपिशोनैवनगवास्थिर्गजास्थिजः ॥ इषुरासीन्नसंश्लिष्टोनपूतिर्नचजिह्मगः १२ ऋजून्येवविशुद्धानिसर्वेशस्त्राण्यधारयन् ॥ सुयुद्धेनपरांल्लोकानीप्संतः कीर्तिमेवच १३ तदासीत्तुमुलंयुद्धंसर्वदोषविवर्जितम् ॥ चतुर्णांतवयोधानांतैस्त्रिभिःपांडवैःसह १४ धृष्टद्युम्नस्तुतान्दृष्ट्वातवराजन्नरथर्षभान् ॥ यमाभ्यांवारितान्वीराञ्छीघ्रास्त्रोद्रोणमभ्ययात् १५ निवारितास्तुतेवीरास्तयोःपुरुषसिंहयोः ॥ समसज्जंतचत्वारोवाताःपर्वतयोरिव १६ द्वाभ्यांद्वाभ्यांयमौसार्धंरथाभ्यांरथपुंगवौ ॥ समासक्तौततोद्रोणंधृष्टद्युम्नोऽभ्यवर्तत १७ दृष्ट्वाद्रोणायपांचाल्यंव्रजंतंयुद्धदुर्मदम् ॥ यमाभ्यांतांश्चसंसक्तांस्तदंतरमुपाद्रवत् १८ दुर्योधनोमहाराजकिरञ्छोणितभोजनान् ॥ तंसात्यकिःशीघ्रतरंपुनरेवाभ्यवर्तत १९ तौपरस्परमासाद्यसमीपेकुरुमाधवौ ॥ हसमानौनृशार्दूलावभीतौसमसज्जताम् २० बाल्यवृत्तानिसर्वाणिप्रीयमाणौविचिंत्यतौ ॥ अन्योन्यंप्रेक्षमाणौचस्मयमानौपुनःपुनः २१ अथदुर्योधनोराजासात्यकिंसमभाषत ॥ प्रियंसखायंसततंगर्हयन्वृत्तमात्मन २२ धिक्क्रोधंधिक्सखेलोभंधिङ्मोहंधिगमर्षितम् ॥ धिगस्तुक्षात्रमाचारंधिगस्तुबलमौरसम् २३ यत्रमामभिसंधत्सेत्वांचाहंशिनिपुंगव ॥ त्वंहिप्राणैःप्रियतरोममाहंचसदातव २४ स्मरामितानिसर्वाणिबाल्यवृत्तानियानिनौ ॥ तानिसर्वाणिजीर्णानिसांप्रतंनोरणाजिरे २५ किमन्यत्क्रोधलोभाभ्यांयुद्धमेवाद्यसात्वत ॥ तंतथावादिनंतत्रसात्यकिःप्रत्यभाषत २६ प्रहसन्विशिखांस्तीक्ष्णानुद्यम्यपरमास्त्रवित् ॥ नेयंसभाराजपुत्रनाचार्यस्यनिवेशनम् २७ यत्रक्रीडितमस्माभिस्तदाराजन्समागतैः ॥ ॥ दुर्योधनउवाच ॥ ॥ क्वसाक्रीडागताऽस्माकंबाल्येवैशिनिपुंगव २८ क्वचयुद्धमिदंभूयःकालोहिदुरतिक्रमः ॥ किंनुनोविद्यतेकृत्यंधनेनधनलिप्सया २९ यत्रयुद्धामहेसर्वेधनलोभात्समागताः ॥ ॥ संजयउवाच ॥ ॥ तंतथावादिनंतत्रराजानंमाधवोऽब्रवीत् ३० एवंवृत्तंसदाक्षात्रंयुध्यंतीहगुरूनपि ॥ यदितेऽहंप्रियोराजञ्जहिमांमाचिरंकृथाः ३१ त्वत्कृतेसुकृताँल्लोकान्गच्छेयंभरतर्षभ ॥ यातेशक्तिर्बलंयच्चतत्क्षिप्रंमयिदर्शय ३२ नेच्छामितदहंद्रष्टुंमित्राणांव्यसनंमहत् ॥ इत्येवंव्यक्तमाभाष्यप्रतिभाष्यचसात्यकिः ३३ अभ्ययात्तूर्णमव्यग्रोदयांनाकुरुतात्मनि ॥ तमायांतंमहाबाहुंप्रत्यगृण्हात्तवात्मजः ३४ शरैश्चावाकिरद्राजञ्शैनेयंतनयस्तव ॥ ततःप्रववृतेयुद्धंकुरुमाधवसिंहयोः ३५ अन्योन्यंक्रुद्धयोर्घोरंयथाद्विरदसिंहयोः ॥ ततःपूर्णायतोत्सृष्टैःसात्वतंयुद्धदुर्मदम् ३६ दुर्योधनःप्रत्यविध्यत्कुपितोदशभिःशरैः ॥ तंसात्यकिःप्रत्यविध्यत्तथैवावाकिरच्छरैः ३७ पंचाशतापुनश्चाजौत्रिंशतादशभिश्चह ॥ सात्यकिंतुरणेराजन्प्रहसंस्तनयस्तव ३८

फलकश्चबाणोविषलिप्तवज्ज्ञेयः । श्लिष्टोद्विशल्यः क्षतद्वयकरत्वाद्धेयः । पूतिर्मलिनशल्यः सोऽपिक्षतपोषकश्चर्चितोवा । जिह्मगोऽन्यल्लक्ष्यत्वेनप्रदर्श्यान्यत्रपातितः १२ । १३ । १४ १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८

३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६२

आकर्णपूर्णैर्निशितैर्विव्याधात्रिंशताशरैः ॥ ततोऽस्यसशरंचापंक्षुरप्रेणद्विधाऽच्छिनत् ३९ सोऽन्यत्कार्मुकमादायलघुहस्तस्ततोदृढम् ॥ सात्यकिर्व्यसृजच्चा पिशरश्रेणींसुतस्यते ४० तामापतंतींसहसाशरश्रेणींजिघांसया ॥ चिच्छेदबहुधाराजाततउच्चुक्रुशुर्जनाः ४१ सात्यकिंचत्रिसप्तत्यापीडयामासवेगितः ॥ स्वर्णपुंखैःशिलाधौतैराकर्णापूर्णनिःसृतैः ४२ तस्यसंदधतश्चेषुंसंहितेषुचकार्मुकम् ॥ आच्छिनत्सात्यकिस्तूर्णंशरैश्चैवाप्यवीविधत् ४३ सगाढविद्धोव्यथि तःप्रत्यपायाद्रथांतरे ॥ दुर्योधनोमहाराजदाशार्हशरपीडितः ४४ समाश्वस्यतुपुत्रस्तेसात्यकिंपुनरभ्ययात् ॥ विसृजन्निषुजालानियुयुधानरथंप्रति ४५ तथैवसात्यकिर्बाणान्दुर्योधनरथंप्रति ॥ सततंविसृजन्राजंस्तत्संकुलमवर्तत ४६ तत्रेषुभिःक्षिप्यमाणैःपतद्भिश्चशरीरिषु ॥ अग्नेरिवमहाकक्षेःशब्दःसमभव न्महान् ४७ तयोःशरसहस्रैश्चसंछन्नंवसुधातलम् ॥ अगम्यरूपंचशरैराकाशंसमपद्यत ४८ तत्राप्यधिकमालक्ष्यमाधवंरथसत्तमम् ॥ क्षिप्रमभ्यपतत्कर्णःप रीप्संस्तनयंतव ४९ नतुतंमर्षयामासभीमसेनोमहाबलः ॥ सोऽभ्ययात्त्वरितःकर्णंविसृजन्सायकान्बहून् ५० तस्यकर्णःशितान्बाणान्प्रतिहन्यहसन्निव ॥ धनुःशरांश्चचिच्छेदसूतंचाभ्याहनच्छरैः ५१ भीमसेनस्तुसंक्रुद्धोगदामादायपांडवः ॥ ध्वजंधनुश्चसूतंचसंममर्दाहवेरिपोः ५२ रथचक्रंचकर्णस्यबभंजसम हाबलः ॥ भग्नचक्रेरथेतिष्ठदकंपःशैलराडिव ५३ एकचक्रंरथंतस्यतमूहुःसुचिरंहयाः ॥ एकचक्रमिवार्कस्यरथंसप्तहयायथा ५४ अमृष्यमाणःकर्णस्तुभीम सेनमयुध्यत ॥ विविधैरिषुजालैश्चनानाशस्त्रैश्चसंयुगे ५५ भीमसेनस्तुसंक्रुद्धःसूतपुत्रमयोधयत् ॥ तस्मिंस्तथावर्तमानेक्रुद्धोधर्मसुतोऽब्रवीत् ५६ पंचाला नांनरव्याघ्रान्मत्स्यांश्चपुरुषर्षभान् ॥ येनःप्राणाःशिरोयेचयेनोयोधामहारथाः ५७ तएतेधार्तराष्ट्रेषुविषक्ताःपुरुषर्षभाः ॥ किंतिष्ठतयथामूढाःसर्वेविगतचे तसः ५८ तत्रगच्छतयत्रैतेयुध्यंतेमामकारथाः ॥ क्षत्रधर्मंपुरस्कृत्यसर्वएवगतज्वराः ५९ जयंतोवध्यमानाश्चगतिमिष्टांगमिष्यथ ॥ जित्वावाबहुभिर्यज्ञैर्य जध्वंभूरिदक्षिणैः ६० हतावादेवसाद्भूत्वालोकान्प्राप्स्यथपुष्कलान् ॥ तेराज्ञाचोदितावीरायोत्स्यमानामहारथाः ६१ क्षात्रधर्मंपुरस्कृत्यत्वरिताद्रोणमभ्य युः ॥ पंचालास्त्वेकतोद्रोणमभ्यघ्नन्निशितैःशरैः ६२ भीमसेनपुरोगाश्चाप्येकतःपर्यवारयन् ॥ आसंस्तुपांडुपुत्राणांत्रयोजिह्मामहारथाः ६३ यमौचभीमसे नश्चप्राक्रोशंस्तेधनंजयम् ॥ अभिद्रवार्जुनक्षिप्रंकुरून्द्रोणादपानुद ६४ ततएनंहनिष्यंतिपंचालाहतरक्षिणम् ॥ कौरवेयांस्ततःपार्थःसहसासमुपाद्रवत् ६५ पंचालानेवतुद्रोणोधृष्टद्युम्नपुरोगमान् ॥ ममर्दुस्तरसावीराःपंचमेऽहनिभारत ६६ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिद्रोणवधपर्वणि संकुलयुद्धेऊननवत्य धिकशततमोऽध्यायः ॥ १८९ ॥ संजयउवाच ॥ पंचालानांततोद्रोणोऽप्यकरोत्कदनंमहत् ॥ यथाक्रुद्धोरणेशक्रोदानवानांक्षयंपुरा १

६३ । ६४ । ६५ । ६६ ॥ इतिद्रोणपर्वणिटीकायामूननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥ ॥ ७ ॥ ॥ पंचालानामिति १

द्रोणास्त्रेणमहाराजवध्यमानाःपरेयुधि ॥ नात्रसंतरणेद्रोणात्सत्त्ववंतोमहारथाः २ युध्यमानामहाराजपंचालाःसृंजयास्तथा ॥ द्रोणमेवाभ्ययुर्युद्धेयोधयंतोम
हारथाः ३ तेषांतुच्छाद्यमानानांपंचालानांसमंततः ॥ अभवद्भैरवोनादोवध्यतांशरवृष्टिभिः ४ वध्यमानेषुसंग्रामेपंचालेषुमहात्मना ॥ उदीर्यमाणेद्रोणास्त्रे
पांडवान्भयमाविशत् ५ दृष्ट्वाऽश्वनरयोधानांविपुलंचक्षयंयुधि ॥ पांडवेयामहाराजनाशशंसुर्जयंतदा ६ कच्चिद्द्रोणोननःसर्वान्क्षपयेत्परमास्त्रवित् ॥ समिद्धः
शिशिरापायेदहन्कक्षमिवानलः ७ नचैनंसंयुगेकश्चित्समर्थःप्रतिवीक्षितुम् ॥ नचैनमर्जुनोजातुप्रतियुध्येतधर्मवित् ८ त्रस्तान्कुंतीसुतान्दृष्ट्वाद्रोणसायकपी
डितान् ॥ मतिमाञ्छ्रेयसेयुक्तःकेशवोऽर्जुनमब्रवीत् ९ नैषयुद्धेनसंग्रामेजेतुंशक्यःकथंचन ॥ सधनुर्धन्विनांश्रेष्ठोदेवैरपिसवासवैः १० न्यस्तशस्त्रस्तुसंग्रामे
शक्योहंतुंभवेन्नृभिः ॥ आस्थीयतांजयेयोगोधर्ममुत्सृज्यपांडवाः ११ यथानसंयुगेसर्वान्नहन्याद्रुक्मवाहनः ॥ अश्वत्थाम्निहतेनैषयुध्येदितिमतिर्मम १२ तं
हतंसंयुगेकश्चिदस्मैशंसतुमानवः ॥ एतन्नारोचयद्राजन्कुंतीपुत्रोधनंजयः १३ अन्येत्वरोचयन्सर्वेकृच्छ्रेणतुयुधिष्ठिरः ॥ ततोभीमोमहाबाहुरनीकेस्वेमहा
गजम् १४ जघानगदयाराजन्नश्वत्थामानमित्युत ॥ परप्रमथनंघोरंमालवस्येंद्रवर्मणः १५ भीमसेनस्तुसव्रीडमुपेत्यद्रोणमाहवे ॥ अश्वत्थामाहतइतिशब्द
मुच्चैश्चकारह १६ अश्वत्थामेतिहिगजःख्यातोनाम्नाहतोऽभवत् ॥ कृत्वामनसितंभीमोमिथ्याव्याहृतवांस्तदा १७ भीमसेनवचःश्रुत्वाद्रोणस्तत्परमाप्रियम् ॥
मनसासन्नगात्रोऽभूद्यथासैकतमंभसि १८ शंकमानःसतन्मिथ्यावीर्यज्ञःस्वसुतस्यवै ॥ हतःसइतिचश्रुत्वानैवधैर्यादकंपत १९ सलब्ध्वाचेतनांद्रोणःक्षणेनैवस
माश्वसत् ॥ अनुचिंत्यात्मनःपुत्रमविषह्यमरातिभिः २० सपार्षतमभिद्रुत्यजिघांसुर्मृत्युमात्मनः ॥ अवाकिरत्सहस्रेणतीक्ष्णानांकंकपत्रिणाम् २१ तंविंशति
सहस्राणिपंचालानांनरर्षभाः ॥ तथाचरंतंसंग्रामेसर्वतोऽवाकिरञ्छरैः २२ शरैस्तैराचितंद्रोणंनापश्याममहारथम् ॥ भास्करंजलदैरुद्धंवर्षास्विवविशांपते
२३ विधूयतान्बाणगणान्पंचालानांमहारथः ॥ प्रादुश्चक्रेततोद्रोणोब्राह्ममस्त्रंपरंतपः २४ वधायतेषांशूराणांपंचालानाममर्षितः ॥ ततोव्यरोचतद्रोणोविनि
घ्नन्सर्वसैनिकान् २५ शिरांस्यपातयच्चापिपंचालानांमहामृधे ॥ तथैवपरिघाकारान्बाहून्कनकभूषणान् २६ तेवध्यमानाःसमरेभारद्वाजेनपार्थिवाः ॥ मेदि
न्यामन्वकीर्यंतवातनुन्नाइवद्रुमाः २७ कुंजराणांचपततांहयौघानांचभारत ॥ अगम्यरूपापृथिवीमांसशोणितकर्दमा २८ हत्वाविंशतिसाहस्रान्पंचालानांरथव्र
जान् ॥ अतिष्ठदाहवेद्रोणोविधूमोऽग्निरिवज्वलन् २९ तथैवचपुनःक्रुद्धोभारद्वाजःप्रतापवान् ॥ वसुदानस्यभल्लेनशिरःकायादपाहरत् ३० पुनःपंचशतान्मत्स्यान्
षट्सहस्रांश्चसृंजयान् ॥ हस्तिनामयुतंहत्वाजघानाश्वायुतंपुनः ३१ क्षत्रियाणामभावायदृष्ट्वाद्रोणमवस्थितम् ॥ ऋषयोऽभ्यागतास्तूर्णंहव्यवाहपुरोगमाः ३२

३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ ॥ ॥ इतिद्रोणपर्वणिटीकायांनवत्यधिकशत

विश्वामित्रोजमदग्निर्भरद्वाजोऽथगौतमः ॥ वसिष्ठःकश्यपोऽत्रिश्चब्रह्मलोकंनिनीषवः ३३ सिकताःपृश्नयोगर्गावालखिल्याःमरीचिपाः ॥ भृगवोंऽगिरसश्चैवसू
क्ष्माश्चान्येमहर्षयः ३४ तएनमब्रुवन्सर्वेद्रोणमाहवशोभिनम् ॥ अधर्मतःकृतंयुद्धंसमयोनिधनस्यते ३५ न्यस्यायुधंरणेद्रोणसमीक्षास्मानवस्थितान् ॥ ना
तःक्रूरतरंकर्मपुनःकर्तुमिहार्हसि ३६ वेदवेदांगविदुषःसत्यधर्मरतस्यते ॥ ब्राह्मणस्यविशेषेणतवैतन्नोपपद्यते ३७ त्यजायुधममोघेषोतिष्ठवर्त्मनिशाश्वते ॥
परिपूर्णश्चकालस्तेवस्तुंलोकेऽद्यमानुषे ३८ ब्रह्मास्त्रेणत्वयादग्धाअनस्त्रज्ञानराभुवि ॥ यदेतदीदृशंविप्रकृतंकर्मनसाधुतत् ३९ न्यस्यायुधंरणेविप्रद्रोणमात्वं
चिरंकृथाः ॥ मापापिष्ठतरंकर्मकरिष्यसिपुनर्द्विज ४० इतितेषांवचःश्रुत्वाभीमसेनवचश्चतत् ॥ धृष्टद्युम्नंचसंप्रेक्ष्यरणेसविमनाऽभवत् ४१ संदिह्यमानोव्य
थितःकुंतीपुत्रंयुधिष्ठिरम् ॥ अहतंवाहतंवेतिपप्रच्छसुतमात्मनः ४२ स्थिराबुद्धिर्हिद्रोणस्यनपार्थोवक्ष्यतेऽनृतम् ॥ त्रयाणामपिलोकानामैश्वर्यार्थेकथंचन
४३ तस्मात्तंपरिपप्रच्छनान्यंकंचिद्द्विजर्षभः ॥ तस्मिंस्तस्यहिसत्याशाबाल्यात्प्रभृतिपांडवे ४४ ततोनिष्पांडवामुर्वीकरिष्यंतंयुधांपतिम् ॥ द्रोणंज्ञात्वा
धर्मराजंगोविंदोव्यथितोब्रवीत् ४५ यद्यर्धदिवसंद्रोणोयुध्यतेमन्युमास्थितः ॥ सत्यंब्रवीमितेसेनाविनाशंसमुपैष्यति ४६ सभवांस्त्रातुनोद्रोणात्सत्याज्ज्या
योऽनृतंवचः ॥ अनृतंजीवितस्यार्थेवदन्नस्पृश्यतेऽनृतैः ४७ तयोःसंवदतोरेवंभीमसेनोऽब्रवीदिदम् ४८ श्रुत्वैवंतुमाहाराजवधोपायंमहात्मनः ॥ गाहमान
स्यतेसेनांमालवस्येंद्रवर्मणः ४९ अश्वत्थामेतिविख्यातोगजःशक्रगजोपमः ॥ निहतोयुधिविक्रम्यततोऽहंद्रोणमब्रुवम् ५० अश्वत्थामाहतोब्रह्मन्निवर्तस्वाह
वादिति ॥ नूनंनाश्रद्दधद्वाक्यमेषमेपुरुषर्षभः ५१ सत्वंगोविंदवाक्यानिमानयस्वजयैषिणः ॥ द्रोणायनिहतंशंसराजन्शारद्वतीसुतम् ५२ त्वयोक्तोनैवयुध्ये
तजातुराजन्द्विजर्षभः ॥ सत्यवान्हित्रिलोकेऽस्मिन्भवान्ख्यातोजनाधिप ५३ तस्यतद्वचनंश्रुत्वाकृष्णवाक्यप्रचोदितः ॥ भावित्वाच्चमहाराजवक्तुंसमुपचक्र
मे ५४ तमतथ्यभयेमग्नोजयेसक्तोयुधिष्ठिरः ॥ अव्यक्तमब्रवीद्राजन्हतःकुंजरइत्युत ५५ तस्यपूर्वंरथःपृथ्व्याश्चतुरंगुलमुच्छ्रितः ॥ बभूवैवंचतेनोक्तेतस्य
वाहाःस्पृशन्महीम् ५६ युधिष्ठिरात्तुतद्वाक्यंश्रुत्वाद्रोणोमहारथः ॥ पुत्रव्यसनसंतप्तोनिराशोजीवितेऽभवत् ५७ आगस्कृतमिवात्मानंपांडवानांमहात्मनाम् ॥
ऋषिवाक्येनमन्वानःश्रुत्वाचनिहतंसुतम् ५८ विचेताःपरमोद्विग्नोधृष्टद्युम्नमवेक्ष्यच ॥ योद्धुंनाशक्नुवद्राजन्यथापूर्वमरिंदमः ५९ ॥ इतिश्रीमहाभारतेद्रोणप
र्वणि द्रोणवधप० युधिष्ठिरासत्यकथनेनवत्यधिकशततमोऽध्यायः ॥ १९० ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ तंदृष्ट्वापरमोद्विग्नंशोकोपहतचेतसम् ॥
पंचालराजस्यसुतोधृष्टद्युम्नःसमाद्रवत् १

यइष्टामनुजेंद्रेणद्रुपदेनमहामखे ॥ लब्धोद्रोणविनाशायसमिद्धाद्धव्यवाहनात् २ सधनुर्जैत्रमादायघोरंजलदनिःस्वनम् ॥ दृढज्यमजरंदिव्यंशरंचाशीविषो
पमम् ३ संदधेकार्मुकेतस्मिंस्ततस्तमनलोपमम् ॥ द्रोणंजिघांसुःपांचाल्योमहाज्वालमिवानलम् ४ तस्यरूपंशरस्यासीद्धनुर्ज्यामंडलांतरे ॥ द्योततोभा
स्करस्येवघनांतेपरिवेषिणः ५ पार्षतेनपरामृष्टंज्वलंतमिवतद्धनुः ॥ अंतकालमनुप्राप्तंमेनिरेवीक्ष्यसैनिकाः ६ तमिषुंसंहतंतेनभारद्वाजःप्रतापवान् ॥ दृ
ष्ट्वाऽमन्यतदेहस्यकालपर्यायमागतम् ७ ततःप्रयत्नमातिष्ठदाचार्यस्तस्यवारणे ॥ नचास्यास्त्राणिराजेंद्रप्रादुरासन्महात्मनः ८ तस्यत्वहानिचत्वारिक्षपा
चैकाऽस्यतोगता ॥ तस्यचान्हस्त्रिभागेनक्षयंजग्मुःपतत्रिणः ९ सशरक्षयमासाद्यपुत्रशोकेनचार्दितः ॥ विविधानांचदिव्यानामस्त्राणामप्रसादतः १० उत्स्र
ष्टुकामःशस्त्राणिऋषिवाक्यप्रचोदितः ॥ तेजसापूर्यमाणश्चयुयुधेनयथापुरा ११ भूयश्चान्यत्समादायदिव्यमांगिरसंधनुः ॥ शरांश्चब्रह्मदंडाभान्धृष्टद्युम्नमयो
धयत् १२ ततस्तंशरवर्षेणमहतासमवाकिरत् ॥ व्यशातयच्चसंक्रुद्धोधृष्टद्युम्नममर्षणम् १३ शरांश्चशतधातस्यद्रोणश्चिच्छेदसायकैः ॥ ध्वजंधनुश्चनिशि
तैःसारथिंचाप्यपातयत् १४ धृष्टद्युम्नःप्रहस्यान्यत्पुनरादायकार्मुकम् ॥ शितेनचैनंबाणेनप्रत्यविध्यत्स्तनांतरे १५ सोऽतिविद्धोमहेष्वासोऽसंभ्रांतइवसंयुगे ॥
भल्लेनशितधारेणचिच्छेदास्यपुनर्धनुः १६ यच्चास्यबाणविकृतंधनूंषिचविशांपते ॥ सर्वंचिच्छेददुर्धर्षोगदांखड्गंचवर्जयन् १७ धृष्टद्युम्नंचविव्याधनवभिर्नि
शितैःशरैः ॥ जीवितांतकरःक्रुद्धःक्रुद्धरूपःपरंतप १८ धृष्टद्युम्नोऽथतस्याश्वान्स्वरथाश्वैर्महारथः ॥ व्यामिश्रयदमेयात्माब्राह्ममस्त्रमुदीरयन् १९ तेमिश्राबह्व
शोभंतजवनावातरंहसः ॥ पारावतसवर्णाश्चशोणाश्चभरतर्षभ २० यथासविद्युतोमेघानदंतोजलदागमे ॥ तथारेजुर्महाराजमिश्रितारणमूर्धनि २१ ईषाबंधं
चक्रबंधंरथबंधंतथैवच ॥ प्राणाशयदमेयात्माधृष्टद्युम्नस्यसद्विजः २२ सच्छिन्नधन्वापांचाल्योनिकृतध्वजसारथिः ॥ उत्तमामापदंप्राप्यगदांवीरःपरामृ
शत् २३ तामस्यविशिखैस्तीक्ष्णैःक्षिप्यमाणांमहारथः ॥ निजघानशरैर्द्रोणःक्रुद्धःसत्यपराक्रमः २४ तांतुदृष्ट्वानरव्याघ्रोद्रोणेननिहतांशरैः ॥ विमलंखड्ग
मादत्तशतचंद्रंचभानुमत् २५ असंशयंतथाभूतःपांचाल्यःसाध्वमन्यत ॥ वधमाचार्यमुख्यस्यप्राप्तकालंमहात्मनः २६ ततःस्वरथनीडस्थःस्वरथस्यरथेषया ॥
अगच्छदसिमुद्यम्यशतचंद्रंचभानुमत् २७ चिकीर्षुर्दुष्करंकर्मधृष्टद्युम्नोमहारथः ॥ इयेषवक्षोभेत्तुंसभारद्वाजस्यसंयुगे २८ सोऽतिष्ठद्युगमध्येवैयुगसन्नहनेषुच ॥
जघनार्धेषुचाश्वानांतत्सैन्याःसमपूजयन् २९ तिष्ठतोयुगपालीषुशोणानप्यधितिष्ठतः ॥ नापश्यदंतरंद्रोणस्तदद्भुतमिवाभवत् ३० क्षिप्रंश्येनस्यचरतोयथै
वामिषगृद्धिनः ॥ तद्वदासीदभीसारोद्रोणपार्षतयोरणे ३१ तस्यपारावतानश्वान्रथशक्त्यापराभिनत् ॥ सर्वानेकैकशोद्रोणोरक्तानश्वान्विवर्जयन् ३२

३३ । ३४ । ३५ । ३६ । ३७ खड्गंचर्मचधारयन् भ्रांतादित्रयोदशविधंसंचरणंदर्शयामासेतिसंबंधः 'मंडलाकारतःखड्गभ्रामणंभ्रांतमुच्यते ॥ तदेवबाहुमुद्यम्यकृतमुद्भ्रांतमीरितम् ॥१॥ भ्रामणंस्व स्यपरितःखड्गस्याविद्धमुच्यते ॥ परप्रयुक्तशस्त्रस्यवारणार्थमिदंत्रयं ॥२॥ शत्रोराक्रमणार्थायगमनंस्वाप्लुतंमतं ॥ खड्गस्याग्रेणतद्देहस्पर्शनंप्रसृतंमतं ॥३॥ वंचयित्वारिपोःशस्त्रपातनंगदितंसृतं ॥ परिवृत्तंभवेच्छत्रोर्वामदक्षिणभागतः ॥ ४ ॥ पश्चात्पदापसरणंनिवृत्तंसंप्रचक्षते ३८ अन्योन्यताडनंप्राहुःसंपातमुभयोरपि ॥ ५ ॥ आधिक्यमात्मनोयत्तत्समुदीर्णमुदीरितम् ॥ अंगप्रत्यं

तेहतान्यपतन्भूमौधृष्टद्युम्नस्यवाजिनः ॥ शोणास्तुपर्यमुच्यंतरथबंधाद्विशांपते ३३ तान्हयान्निहतान्दृष्ट्वाद्विजाग्र्येणसपार्षतः ॥ नामृष्यतयुधांश्रेष्ठोया ज्ञसेनिर्महारथः ३४ विरथःसगृहीत्वातुखड्गंखड्गभृतांवरः ॥ द्रोणमभ्यपतद्राजन्वैनतेयइवोरगम् ३५ तस्यरूपंबभौराजन्भारद्वाजंजिघांसतः ॥ यथारूपं पुराविष्णोर्हिरण्यकशिपोर्वधे ३६ सतदाविविधान्मार्गान्प्रवरांश्चैकविंशतिम् ॥ दर्शयामासकौरव्यपार्षतोविचरन्रणे ३७ भ्रांतमुद्भ्रांतमाविद्धमाप्लुतंप्रसृतं सृतम् ॥ परिवृत्तंनिवृत्तंचखड्गंचर्मचधारयन् ३८ संपातंसमुदीर्णंचदर्शयामासपार्षतः ॥ भारतंकौशिकंचैवसात्वतंचैवशिक्षया ३९ दर्शयन्व्यचरद्युद्धेद्रोण स्यांतचिकीर्षया ॥ चरतस्तस्यतान्मार्गान्विचित्रान्खड्गचर्मिणः ४० व्यस्मयंतरणेयोधादेवताश्चसमागताः ॥ ततःशरसहस्रेणशतचंद्रमपातयत् ४१ ४१ चर्मखड्गंचसंबाधेधृष्टद्युम्नस्यसद्विजः ॥ येतुवैतस्तिकानामशराआसन्नयोधिनः ४२ निकृष्टयुद्धेद्रोणस्यनान्येषांसंतितेशराः ॥ ऋतेशारद्वतात्पार्था द्द्रौणेर्वैकर्तनात्तथा ४३ प्रद्युम्नयुयुधानाभ्यामभिमन्योश्चभारत ॥ अथास्येषुंसमाधत्तदृढंपरमसंमतम् ४४ अंतेवासिनमाचार्योजिघांसुःपुत्रसंमितम् ॥ तं शरैर्दशभिस्तीक्ष्णैश्चिच्छेदशिनिपुंगवः ४५ पश्यतस्तवपुत्रस्यकर्णस्यचमहात्मनः ॥ ग्रस्तमाचार्यमुख्येनधृष्टद्युम्नममोचयत् ४६ चरंतंरथमार्गेषुसात्य किंसत्यविक्रमम् ॥ द्रोणकर्णांतरगतंकृपस्यापिचभारत ४७ अपश्येतांमहात्मानौविष्वक्सेनधनंजयौ ॥ अपूजयेतांवार्ष्णेयंब्रुवाणौसाधुसाध्विति ४८ दि व्यान्यस्त्राणिसर्वेषांयुधिनिघ्नंतमच्युतम् ॥ अभिपत्यततःसेनांविष्वक्सेनधनंजयौ ४९ धनंजयस्ततःकृष्णमब्रवीत्पश्यकेशव ॥ आचार्यरथमुख्यानांमध्ये क्रीडन्मधूद्वहः ५० आनंदयतिमांभूयःसात्यकिःपरवीरहा ॥ माद्रीपुत्रौचभीमंचराजानंचयुधिष्ठिरम् ५१ यच्छिक्षयाऽनुद्धतःसन्रणेचरतिसात्यकिः ॥ महार थानुपक्रीडन्वृष्णीनांकीर्तिवर्धनः ५२ तमेतेप्रतिनंदंतिसिद्धाःसैन्याश्चविस्मिताः ॥ अजय्यंसमरेदृष्ट्वासाधुसाध्वितिसात्यकिम् ॥ योधाश्चोभयतःसर्वेकर्मभिः समपूजयन् ५३ ॥ इतिश्रीमहाभारतेद्रोणपर्वणि द्रोणवधपर्वणिसंकुलयुद्धेएकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥ ॥ संजयउवाच ॥ सात्वतस्य तुतत्कर्मदृष्ट्वादुर्योधनादयः ॥ शैनेयंसर्वतःक्रुद्धावारयामासुरंजसा १ कृपकर्णौचसमरेपुत्राश्चतवमारिष ॥ शैनेयंत्वरयाऽभ्येत्यविनिघ्नन्निशितैःशरैः २

गदेशेषुभ्रामणंभारतंस्मृतं ॥ ६ ॥ विचित्रखड्गसंचारदर्शनंकौशिकंस्मृतं ॥ निलीयचर्मणिक्षेपोयदसेःसात्वतंहितत्' ॥ ७ ॥ ३९ । ४० । ४१ संबाधेरणसंकटे वैतस्तिकाः वितस्तिप्रमाणाः ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ ॥ इतिद्रोणपर्वणिटीकायामेकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥ ॥ सात्वतस्येति १ । २

३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ एषोहीतिसंधिरार्षः १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ ब्रह्मवादानांवेदतुल्यानांवचनानां द्वितीयार्थेषष्ठीश्रुत्वेतिशेषः

युधिष्ठिरस्ततोराजामाद्रीपुत्रौचपांडवौ ॥ भीमसेनश्चबलवान्सात्यकिंपर्यवारयन् ३ कर्णश्चशरवर्षेणगौतमश्चमहारथः ॥ दुर्योधनादयस्तेचशैनेयंपर्यवारयन् ४ तांवृष्टिंसहसाराजन्नुत्थितांघोररूपिणीम् ॥ वारयामासशैनेयोयोधयंस्तान्महारथान् ५ तेषामस्त्राणिदिव्यानिसंहितानिमहात्मनाम् ॥ वारयामासविधिवद्दिव्यैरस्त्रैर्महामृधे ६ क्रूरमायोधनंजज्ञेतस्मिन्राजसमागमे ॥ रुद्रस्येवहिक्रुद्धस्यनिघ्नतस्तान्पशून्पुरा ७ हस्तानामुत्तमांगानांकार्मुकाणांचभारत ॥ छत्राणांचापविद्धानांचामराणांचसंचयैः ८ राशयःस्मव्यदृश्यंततत्रतत्ररणाजिरे ॥ भग्नचक्रैरथैश्चापिपातितैश्चमहाध्वजैः ९ सादिभिश्चहतैःशूरैःसंकीर्णावसुधाऽभवत् ॥ बाणपातनिकृत्तास्तुयोधास्तेकुरुसत्तम १० चेष्टंतोविविधाश्चेष्टाव्यदृश्यंतमहाहवे ॥ वर्तमानेतथायुद्धेघोरेदेवासुरोपमे ११ अब्रवीत्क्षत्रियांस्तत्रधर्मराजोयुधिष्ठिरः ॥ अभिद्रवतसंयत्ताःकुंभयोनिंमहारथाः १२ एषोहिपार्षतोवीरोभारद्वाजेनसंगतः ॥ घटतेचयथाशक्तिभारद्वाजस्यनाशने १३ यादृशानिहिरूपाणिदृश्यंतेऽस्यमहारणे ॥ अद्यद्रोणंरणेक्रुद्धोघातयिष्यतिपार्षतः १४ तेयूयंसहिताभूत्वायुध्यध्वंकुंभसंभवम् ॥ युधिष्ठिरसमाज्ञप्ताःसृंजयानांमहारथाः १५ अभ्यद्रवंतसंयत्ताभारद्वाजजिघांसवः ॥ तान्समापततःसर्वान्भारद्वाजोमहारथः १६ अभ्यवर्ततवेगेनमर्तव्यमितिनिश्चितः ॥ प्रयातेसत्यसंधेतुसमकंपतमेदिनी १७ ववुर्वाताःसनिर्घातास्त्रासयानावरूथिनीम् ॥ पपातमहतिचोल्काआदित्यान्निश्चरंत्युत १८ दीपयंतीउभेसेनेशंसंतीवमहद्भयम् ॥ जज्वलुश्चैवशस्त्राणिभारद्वाजस्यमारिष १९ रथाःस्वनंतिचात्यर्थंहयाश्चाश्रूण्यवासृजन् ॥ हतौजाइवचाप्यासीद्भारद्वाजोमहारथः २० प्रास्फुरन्नयनंचास्यवामबाहुस्तथैवच ॥ विमनाश्चाभवद्युद्धेदृष्ट्वापार्षतमग्रतः २१ ऋषीणांब्रह्मवादानांस्वर्गस्यगमनंप्रति ॥ सुयुद्धेनततःप्राणानुत्स्रष्टुमुपचक्रमे २२ ततश्चतुर्दिशंसैन्यैर्द्रुपदस्याभिसंवृतः ॥ निर्दहन्क्षत्रियव्रातान्द्रोणःपर्यचरद्रणे २३ हत्वाविंशतिसाहस्रान्क्षत्रियानरिमर्दनः ॥ दशायुतानिकरिणामवधीद्विशिखैःशितैः २४ सोऽतिष्ठदाहवेयत्तोविधूमोऽग्निरिवज्वलन् ॥ क्षत्रियाणामभावायब्राह्ममस्त्रंसमास्थितः २५ पांचाल्यंविरथंभीमोहतसर्वायुधंबली ॥ सुविषण्णंमहात्मानंत्वरमाणःसमभ्ययात् २६ ततःस्वरथमारोप्यपांचाल्यमरिमर्दनः ॥ अब्रवीदभिसंप्रेक्ष्यद्रोणमस्यंतमंतिकात् २७ नत्वदन्यइहाचार्यंयोद्धुमुत्सहतेपुमान् ॥ त्वरस्वप्राग्वधायैवत्वयिभारःसमाहितः २८ सतथोक्तोमहाबाहुःसर्वभारसहंधनुः ॥ अभिपत्याददेक्षिप्रमायुधप्रवरंदृढम् २९ संरब्धश्चशरानस्यन्द्रोणंदुर्वारणंरणे ॥ विवारयिषुराचार्यंशरवर्षैरवाकिरत् ३० तौन्यवारयतांश्रेष्ठौसंरब्धौरणशोभिनौ ॥ उदीरयेतांब्राह्माणिदिव्यान्यस्त्राण्यनेकशः ३१ समहास्त्रैर्महाराजद्रोणमाच्छादयद्रणे ॥ निहत्यसर्वाण्यस्त्राणिभारद्वाजस्यपार्षतः ३२

२२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२

३३ । ३४। ३५ । ३६। ३७ । ३८ ।३९ । ४०। ४१ । ४२ । ४३ ।४४ ।४५ ।४६ ।४७ ।४८ ।४९ । ५० मुखमिति उरमुरः अग्रतःअधरहनोरग्रेणविष्टभ्य हृदिधारणंविषयाणांस्मरणंनिक्षिप्य

सवसातीन्शिबींश्चैवबाह्लीकान्कौरवानपि ॥ रक्षिष्यमाणान्संग्रामेद्रोणंव्यधमदच्युतः ३३ धृष्टद्युम्नस्तथाराजन्गभस्तिभिरिवांशुमान् ॥ बभौप्रच्छादयन्नाशाः शरजालैःसमंततः ३४ तस्यद्रोणोधनुश्छित्वाविद्ध्वाचैनंशिलीमुखैः ॥ मर्माण्यभ्यहनद्भूयःसव्यथांपरमामगात् ३५ ततोभीमोदृढक्रोधोद्रोणस्याश्लिष्यतंरथम् ॥ शनकैरिवराजेंद्रद्रोणंवचनमब्रवीत् ३६ यदिनामनयुध्येरन्शिक्षिताब्रह्मबंधवः ॥ स्वकर्मभिरसंतुष्टानस्मक्षत्रंक्षयंव्रजेत् ३७ अहिंसांसर्वभूतेषुधर्मंज्यायस्तरंविदुः ॥ तस्यचब्राह्मणोमूलंभवांश्चब्रह्मवित्तमः ३८ श्वपाकवन्म्लेच्छगणान्हत्वाचान्यान्पृथग्विधान् ॥ अज्ञानान्मूढवद्ब्रह्मन्पुत्रदारधनेप्सया ३९ एकस्यार्थेबहून्हत्वापुत्रस्याधर्मविद्यया ॥ स्वकर्मस्थान्विकर्मस्थोनव्यपत्रपसेकथम् ४० यस्यार्थेशस्त्रमादायमपेक्ष्यचजीवसि ॥ सचाद्यपतितःशेतेपृष्ठेनावेदितस्तव ४१ धर्मराजस्यतद्वाक्यंनाभिशंकितुमर्हसि ॥ एवमुक्तस्ततोद्रोणोभीमेनोत्सृज्यतद्धनुः ४२ सर्वाण्यस्त्राणिधर्मात्माहातुकामोऽभ्यभाषत ॥ कर्ण कर्णमहेष्वासकृपदुर्योधनेतिच ४३ संग्रामेक्रियतांयत्नोब्रवीम्येषपुनःपुनः ॥ पांडवेभ्यःशिवंवोऽस्तुशस्त्रमभ्युत्सृजाम्यहम् ४४ इतितत्रमहाराजप्राक्रोशद्द्रौणिमेवच ॥ उत्सृज्यचरणेशस्त्रंरथोपस्थेनिविश्यच ४५ अभयंसर्वभूतानांप्रददौयोगमीयिवान् ॥ तस्यतच्छिद्रमाज्ञायधृष्टद्युम्नःप्रतापवान् ४६ सशरंतद्धनुर्घोरंसंन्यस्याथरथेततः ॥ खड्गीरथादवप्लुत्यसहसाद्रोणमभ्ययात् ४७ हाहाकृतानिभूतानिमानुषाणीतराणिच ॥ द्रोणंतथागतंदृष्ट्वाधृष्टद्युम्नवशंगतम् ४८ हाहाकारंभृशंचक्रुरहोधिगितिचाब्रुवन् ॥ द्रोणोऽपिशस्त्राण्युत्सृज्यपरमंसांख्यमास्थितः ४९ तथोक्त्वायोगमास्थायज्योतिर्भूतोमहातपाः ॥ पुराणंपुरुषंविष्णुंजगाममनसापरम् ५० मुखंकिंचित्समुन्नाम्यविष्टभ्यउरमग्रतः॥ निमीलिताक्षःसत्वस्थोनिक्षिप्यहृदिधारणम् ५१ ओमित्येकाक्षरंब्रह्मज्योतिर्भूतोमहातपाः ॥ स्मरित्वादेवदेवेशमक्षरंपरमंप्रभुम् ५२ दिवमाक्रामदाचार्यःसाक्षात्सद्भिर्दुराक्रमाम् ॥ द्वौसूर्याविविनोबुद्धिरासीत्तस्मिंस्तथागते ५३ एकाग्रमिवचासीच्चज्योतिर्भिःपूरितंनमः ॥ समपद्यतचार्काभेभारद्वाजदिवाकरे ५४ निमेषमात्रेणचतज्ज्योतिरंतरधीयत ॥ आसीत्किलकिलाशब्दःप्रहृष्टानांदिवौकसाम् ५५ ब्रह्मलोकगतेद्रोणेधृष्टद्युम्नेचमोहिते ॥ वयमेवतदाऽद्राक्ष्मपंचमानुषयोनयः ५६ योगयुक्तंमहात्मानंगच्छंतंपरमांगतिम् ॥ अहंधनंजयःपार्थोभारद्वाजस्यचात्मजः ५७ वासुदेवश्चवार्ष्णेयोधर्मपुत्रश्चपांडवः ॥ अन्येतुसर्वेनापश्यन्भारद्वाजस्यधीमतः ५८ महिमानंमहाराजयोगयुक्तस्यगच्छतः ॥ ब्रह्मलोकंमहद्दिव्यंदेवगुह्यंहितत्परम् ५९ गतिंपरमिकांप्राप्तमजायंतोनृयोनयः ॥ नापश्यन्गच्छमानंहितंसार्धमृषिपुंगवैः ६०

निरस्य अतएवसत्वस्थःरजस्तमोमलशून्येशुद्धेसत्वेस्फटिककल्पे स्थितः तत्रस्थितोभूत्वाओंभिस्यनेनप्रतीकेनएकाक्षरंवासुदेवाख्यंब्रह्मस्मरित्वास्मृत्वातद्बलेनाचार्योदिवमाक्रामदितिसार्धयोर्द्वयोःसंबंधः ५१ । ५२ । ५३। ५४ । ५५। ५६।५७ । ५८। ५९ ।६०

६१ । ६२ । ६३ अशीतीनांपंचकमस्यास्तीतिविग्रहः चतुःशतवार्षिकइत्यर्थः यद्वातत्कालोचितस्यपुरुषायुषस्यविंशत्यात्मकस्यभागत्रयोनवयस्कइत्यर्थः ६४ । ६५ । ६६ । ६७ । ६८ । ६९

आचार्ययोगमास्थायब्रह्मलोकमरिंदमम् ॥ वितुन्नांगंशरव्रातैर्न्यस्तायुधमसृक्क्षरम् ६१ धिक्कृतःपार्षतस्तंतुसर्वभूतैःपरामृशत् ॥ तस्यमूर्धानमालंब्यगत सत्वस्यदेहिनः ६२ किंचिदब्रुवतःकायाद्विचकर्तासिनाशिरः ॥ हर्षेणमहतायुक्तोभारद्वाजेनिपातिते ६३ सिंहनादरवंचक्रेभ्रामयन्खड्गमाहवे ॥ आकर्णपलि तश्यामोवयसाऽशीतिपंचकः ६४ त्वत्कृतेव्यचरत्संख्येसतुषोडशवर्षवत् ॥ उक्तवांश्चमहाबाहुःकुंतीपुत्रोधनंजयः ६५ जीवंतमानयाचार्यंमावधीर्द्रुपदात्मज ॥ नहंतव्योनहंतव्यइतितेसैनिकाश्चह ६६ उत्क्रोशन्नर्जुनश्चैवसानुक्रोशस्तमाव्रजत् ॥ क्रोशमानेऽर्जुनेचैवपार्थिवेषुचसर्वशः ६७ धृष्टद्युम्नोऽवधीद्द्रोणंरथतल्पे नरर्षभम् ॥ शोणितेनपरिक्लिन्नोरथाद्भूमिमथापतत् ६८ लोहितांगइवादित्योदुर्धर्षःसमपद्यत ॥ एवंतंनिहतंसंख्येददृशेसैनिकोजनः ६९ धृष्टद्युम्नस्तुतद्राज न्भारद्वाजशिरोऽहरत् ॥ तावकानांमहेष्वासःप्रमुखेतत्समाक्षिपत् ७० तेतुदृष्ट्वाशिरोराजन्भारद्वाजस्यतावकाः ॥ पलायनकृतोत्साहादुद्रुवुःसर्वतोदिशम् ७१ द्रोणस्तुदिवमास्थायनक्षत्रपथमाविशत् ॥ अहमेवतदाऽद्राक्षंद्रोणस्यनिधनंनृप ७२ ऋषेःप्रसादात्कृष्णस्यसत्यवत्याःसुतस्यच ॥ विधूमामिहसंयांतीमुल्कां प्रज्वलितामिव ७३ अपश्यामदिवंस्तब्ध्वागच्छंतंतंमहाद्युतिम् ॥ हतेद्रोणेनिरुत्साहाःकुरुपांडवसृंजयाः ७४ अभ्यद्रवन्महावेगास्ततःसैन्यंव्यदीर्यत ॥ नि हताहतभूयिष्ठाःसंग्रामेनिशितैःशरैः ७५ तावकानिहतेद्रोणेगतासवइवाभवन् ॥ पराजयमथावाप्यपरत्रचमहद्भयम् ७६ उभयेनैवतेहीनानाविंदन्धृतिमात्म नः ॥ अन्विच्छंतःशरीरंतुभारद्वाजस्यपार्थिवाः ७७ नान्वगच्छन्महाराजकबंधायुतसंकुले ॥ पांडवास्तुजयंलब्ध्वापरत्रचमहद्यशः ७८ बाणशंखरवां श्चक्रुःसिंहनादांश्चपुष्कलान् ॥ भीमसेनस्ततोराजन्धृष्टद्युम्नश्चपार्षतः ७९ वरूथिन्यामनृत्येतांपरिष्वज्यपरस्परम् ॥ अब्रवीच्चतदाभीमःपार्षतंशत्रुताप नम् ८० भूयोऽहंत्वांविजयिनंपरिष्वज्यामिपार्षत ॥ सूतपुत्रेहतेपापेधार्तराष्ट्रेचसंयुगे ८१ एतावदुक्त्वाभीमस्तुहर्षेणमहतायुतः ॥ बाहुशब्देनपृथिवींकंप यामासपांडवः ८२ तस्यशब्देनवित्रस्ताःप्राद्रवंस्तावकायुधि ॥ क्षत्रधर्मंसमुत्सृज्यपलायनपरायणाः ८३ पांडवास्तुजयंलब्ध्वाहृष्टाह्यासन्विशांपते ॥ अ रिक्षयंचसंग्रामेतेनतेसुखमाप्नुवन् ८४ ॥इतिश्रीमहाभारतेद्रोणपर्वणिद्रोणवधपर्वणि द्रोणवधेद्विनवत्यधिकशततमोऽध्यायः ॥१९२॥ समाप्तंचद्रोणवधपर्व ॥ ॥ अथनारायणास्त्रमोक्षपर्व ॥ ॥ संजयउवाच ॥ ततोद्रोणेहतेराजन्कुरवःशस्त्रपीडिताः ॥ हतप्रवीराविध्वस्ताभृशंशोकपरायणाः १ उदीर्णांश्चपरान्दृष्ट्वाकंप मानाःपुनःपुनः ॥ अश्रुपूर्णेक्षणास्त्रस्तादीनास्त्वासन्विशांपते २ विचेतसोहतोत्साहाःकश्मलाभिहतौजसः ॥ आर्तस्वरेणमहतापुत्रंतेपर्यवारयन् ३

७० । ७१ । ७२ । ७३ । ७४ । ७५ परत्रचमहद्भयमिति पलायनस्यपरलोकविरुद्धत्वात् ७६ उभयेनलोकद्वयेनहीनारहिताः ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ ॥ इतिद्रोणपर्वणिटीकायांद्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥ ॥ ७ ॥ ॥ ततइति १ । २ । ३

रजस्वलावेपमानावीक्षमाणादिशोदश ॥ अश्रुकंठायथादैत्याहिरण्याक्षेपुराहते ४ सतैःपरिवृतोराजात्रस्तैःक्षुद्रमृगैरिव ॥ अशक्नुवन्नवस्थातुमपायात्तनयस्त
व ५ क्षुत्पिपासापरिम्लानास्तेयोधास्तवभारत ॥ आदित्येनेवसंतप्ताभृशंविमनसोऽभवन् ६ भास्करस्येवपतनंसमुद्रस्येवशोषणम् ॥ विपर्यासंयथामेरोर्वास
वस्येवनिर्जयम् ७ अमर्षणीयंतद्दृष्ट्वाभारद्वाजस्यपातनम् ॥ त्रस्तरूपतराराजन्कौरवाःप्राद्रवन्भयात् ८ गांधारराजःशकुनिस्त्रस्तस्त्रस्ततरैःसह ॥ हतंरु
क्मरथंश्रुत्वाप्राद्रवत्सहितोरथैः ९ वरूथिनींवेगवतींविद्रुतांसपताकिनीम् ॥ परिगृह्यमहासेनांसूतपुत्रोऽपयाद्भयात् १० रथनागाश्वकलिलांपुरस्कृत्यतुवाहि
नीम् ॥ मद्राणामीश्वरःशल्योवीक्ष्यमाणोऽपयाद्भयात् ११ हतप्रवीरैर्भूयिष्ठैर्ध्वजैर्बहुपताकिभिः ॥ वृतःशारद्वतोऽगच्छत्कष्टंकष्टमितिब्रुवन् १२ भोजानीकेन
शिष्टेनकलिंगारट्टबाह्लिकैः ॥ कृतवर्मावृतोराजन्प्रायात्सुजवनैर्हयैः १३ पदातिगणसंयुक्तस्त्रस्तोराजन्भयार्दितः ॥ उलूकःप्राद्रवत्तत्रदृष्ट्वाद्रोणंनिपातितम् १४
दर्शनीयोयुवाचैवशौर्येणकृतलक्षणः ॥ दुःशासनोभृशोद्विग्नःप्राद्रवद्गजसंवृतः १५ रथानामयुतंगृह्यत्रिसाहस्रंचदंतिनाम् ॥ वृषसेनोययौतूर्णंदृष्ट्वाद्रोणंनिपाति
तम् १६ गजाश्वरथसंयुक्तोवृतश्चैवपदातिभिः ॥ दुर्योधनोमहाराजप्रायात्तत्रमहारथः १७ संशप्तकगणान्गृह्यहतशेषान्किरीटिना ॥ सुशर्माप्राद्रवद्राजन्दृष्ट्वा
द्रोणंनिपातितम् १८ गजान्रथान्समारुह्यव्युदस्यचहयान्जनाः ॥ प्राद्रवन्सर्वतःसंख्येदृष्ट्वारुक्मरथंहतम् १९ त्वरयंतःपितॄनन्येभ्रातॄनन्येऽथमातुलान् ॥
पुत्रानन्येवयस्यांश्चप्राद्रवन्कुरवस्तदा २० चोदयंतश्चसैन्यानिस्वस्रीयांश्चतथाऽपरे ॥ संबंधिनस्तथाऽन्येचप्राद्रवंतदिशोदश २१ प्रकीर्णकेशाविध्वस्ता
नद्वावेकत्रधावतः ॥ नेदमस्तीतिमन्वानाहतोत्साहाहतौजसः २२ उत्सृज्यकवचानन्येप्राद्रवंस्तावकाविभो ॥ अन्योन्यंतेसमाक्रोशन्सैनिकाभरतर्षभ २३
तिष्ठतिष्ठेतिनचतेस्वयंतत्रावतस्थिरे ॥ धुर्यानुन्मुच्यचरथाद्धतसूतात्स्वलंकृतान् ॥ अधिरुह्यहयान्योधाःक्षिप्रंपद्भिरचोदयन् २४ द्रवमाणेतथासैन्येत्रस्त
रूपेहतौजसि ॥ प्रतिस्रोतइवग्राहोद्रोणपुत्रःपरानियात् २५ तस्यासीत्सुमहद्युद्धंशिखंडिप्रमुखैर्गणैः ॥ प्रभद्रकैश्चपंचालैश्चेदिभिश्चसकेकयैः २६ हत्वाबहु
विधाःसेनाःपांडूनांयुद्धदुर्मदः ॥ कथंचित्संकटान्मुक्तोमत्तद्विरदविक्रमः २७ द्रवमाणंबलंदृष्ट्वापलायनकृतक्षणम् ॥ दुर्योधनंसमासाद्यद्रोणपुत्रोऽब्रवीदिदम्
२८ किमियंद्रवतेसेनात्रस्तरूपेवभारत ॥ द्रवमाणांचराजेंद्रनावस्थापयसेरणे २९ त्वंचापिनयथापूर्वंप्रकृतिस्थोनराधिप ॥ कर्णप्रभृतयश्चेमेनावतिष्ठंति
पार्थिव ३० अन्येष्वपिचयुद्धेषुनैवसेनाद्रवत्तदा ॥ कच्चित्क्षेमंमहाबाहोतवसैन्यस्यभारत ३१ कस्मिन्निदंहतेराजन्रथसिंहेबलंतव ॥ एतामवस्थांसंप्राप्तंतन्म
माचक्ष्वकौरव ३२ तत्तुदुर्योधनःश्रुत्वाद्रोणपुत्रस्यभाषितम् ॥ घोरमप्रियमाख्यातुंनाशक्नोत्पार्थिवर्षभः ३३

भिन्नानौरिवतेपुत्रोमग्नःशोकमहार्णवे ॥ बाष्पेणापिहितोदृष्ट्वाद्रोणपुत्रंरथेस्थितम् ३४ ततःशारद्वतंराजासव्रीडमिदमब्रवीत् ॥ शंसात्रभद्रंतेसर्वंयथासैन्यमि
दंद्रुतम् ३५ अथशारद्वतोराजन्नार्तिमाच्छंन्पुनःपुनः ॥ शशंसद्रोणपुत्रायययथाद्रोणोनिपातितः ३६ ॥ कृपउवाच ॥ वयंद्रोणंपुरस्कृत्यपृथिव्यांप्रवरंरथम् ॥
प्रावर्तयामसंग्रामंपंचालैरेवकेवलम् ३७ ततःप्रवृत्तेसंग्रामेविमिश्राःकुरुसोमकाः ॥ अन्योन्यमभिगर्जंतःशस्त्रैर्देहानपातयन् ३८ वर्तमानेतथायुद्धेक्षीयमाणेषु
संयुगे ॥ धार्तराष्ट्रेषुसंक्रुद्धःपितातेऽस्त्रमुदैरयत् ३९ ततोद्रोणोब्राह्ममस्त्रंविकुर्वाणोनरर्षभः ॥ व्यहनच्छात्रवान्भल्लैःशतशोऽथसहस्रशः ४० पांडवाःकेकयाम
त्स्याःपंचालाश्चविशेषतः ॥ संख्येद्रोणरथंप्राप्यव्यनशन्कालचोदिताः ४१ सहस्रंनरसिंहानांद्विसाहस्रंचदंतिनाम् ॥ द्रोणोब्रह्मास्त्रयोगेनप्रेषयामासमृत्यवे
४२ आकर्णपलितश्यामोवयसाऽशीतिपंचकः ॥ रणेपर्यचरद्द्रोणोवृद्धःषोडशवर्षवत् ४३ क्लिश्यमानेषुसैन्येषुवध्यमानेषुराजसु ॥ अमर्षवशमापन्नाःपंचाला
विमुखाऽभवन् ४४ तेषुकिंचित्प्रभग्नेषुविमुखेषुसपत्नजित् ॥ दिव्यमस्त्रंविकुर्वाणोबभूवार्कइवोदितः ४५ समध्यंप्राप्यपांडूनांशररश्मिःप्रतापवान् ॥ मध्यंग
तइवादित्योदुष्प्रेक्ष्यस्तेपिताऽभवत् ४६ तेदह्यमानाद्रोणेनसूर्येणेवविराजता ॥ दग्धवीर्यानिरुत्साहाबभूवुर्गतचेतसः ४७ तान्दृष्ट्वापीडितान्बाणैर्द्रोणेनम
धुसूदनः ॥ जयैषीपांडुपुत्राणामिदंवचनमब्रवीत् ४८ नैषजातुनरैःशक्योजेतुंशस्त्रभृतांवरः ॥ अपिवृत्रहणासंख्येरथयूथपयूथपः ४९ तेयूयंधर्ममुत्सृज्यज
यंरक्षतपांडवाः ॥ यथावःसंयुगेसर्वान्नहन्याद्रुक्मवाहनः ५० अश्वत्थाम्निहतेनैषयुध्येदितिमतिर्मम ॥ हतंतंसंयुगेकश्चिदाख्यात्वस्मैमृषानरः ५१ एतन्नारोच
यद्वाक्यंकुंतीपुत्रोधनंजयः ॥ अरोचयंस्तुसर्वेऽन्येकृच्छ्रेणतुयुधिष्ठिरः ५२ भीमसेनस्तुसव्रीडमब्रवीत्पितरंतव ॥ अश्वत्थामाहतइतितंनाबुध्यततेपिता ५३
सशंकमानस्तन्मिथ्याधर्मराजमपृच्छत ॥ हतंवाऽप्यहतंवाऽऽजौत्वांपितापुत्रवत्सलः ५४ तमतथ्यभयेमग्नोजयेसक्तोयुधिष्ठिरः ॥ अश्वत्थामानमायोधेहतं
दृष्ट्वामहागजम् ५५ भीमेनगिरिवर्ष्माणंमालवस्येंद्रवर्मणः ॥ उपसृत्यतदाद्रोणमुच्चैरिदमुवाचह ५६ यस्यार्थेशस्त्रमादत्सेयमवेक्ष्यचजीवसि ॥ पुत्रस्तेदयि
तोनित्यंसोऽश्वत्थामानिपातितः ५७ शेतेविनिहतोभूमौवनेसिंहशिशुर्यथा ५८ जानन्नप्यनृतस्याथदोषान्सद्विजसत्तमम् ॥ अव्यक्तमब्रवीद्राजाहतःकुंजर
इत्युत ५९ सत्वांनिहतमाक्रंदेश्रुत्वासंतापतापितः ॥ नियम्यदिव्यान्यस्त्राणिनायुध्यतयथापुरा ६० तंदृष्ट्वापरमोद्विग्नंशोकातुरमचेतसम् ॥ पांचालराज
स्यसुतःक्रूरकर्मासमाद्रवत् ६१ तंदृष्ट्वाविहितंमृत्युंलोकतत्त्वविचक्षणः ॥ दिव्यान्यस्त्राण्यथोत्सृज्यरणेप्रायमुपाविशत् ६२ ततोऽस्यकेशान्सव्येनगृहीत्वापा
णिनातदा ॥ पार्षतःक्रोशमानानांवीराणामाच्छिनच्छिरः ६३

६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० ॥ इतिद्रोणपर्वणिटीकायांत्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥ ॥ ७ ॥ ॥ अधर्मेणेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०

नहंव्योनहंतव्यइतितेसर्वतोऽब्रुवन् ॥ तथैवचार्जुनोवाहादवरुह्यैनमाद्रवत् ६४ उद्यम्यत्वरितोबाहुंब्रुवाणश्चपुनःपुनः ॥ जीवंतमानयाचार्यमाऽवधीरितिध र्मवित् ॥ ६५ तथानिवार्यमाणनकौरवैरर्जुनेनच ॥ हतएवनृशंसेनपितातवनरर्षभ ६६ सैनिकाश्चततःसर्वेप्राद्रवंतभयार्दिताः ॥ वयंचापिनिरुत्साहाहतेपि तरितेऽनघ ६७ ॥ संजयउवाच ॥ तच्छ्रुत्वाद्रोणपुत्रस्तुनिधनंपितुराहवे ॥ क्रोधमाहारयत्तीव्रंपदाहतइवोरगः ६८ ततःक्रुद्धोरणेद्रौणिर्भृशंजज्वालमारिष ॥ यथेंधनंमहत्प्राप्यप्राज्वलद्धव्यवाहनः ६९ तलंतलेननिष्पिष्यदंतैर्दंतानुपास्पृशत ॥ निःश्वसन्नुरगोयद्वल्लोहिताक्षोऽभवत्तदा ७० ॥ इतिश्रीमहाभारतेद्रो णपर्वणिनारायणास्त्रमोक्षपर्वण्यश्वत्थामक्रोधेत्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ धृतराष्ट्रउवाच ॥ अधर्मेणहतंश्रुत्वाधृ ष्टद्युम्नेनसंजय ॥ ब्राह्मणंपितरंवृद्धमश्वत्थामाकिमब्रवीत् १ मानवंवारुणाग्नेयंब्राह्ममस्त्रंचवीर्यवान् ॥ ऐंद्रंनारायणंचैवयस्मिन्नित्यंप्रतिष्ठितम् २ तमधर्मेणधर्मि ष्ठंधृष्टद्युम्नेनसंयुगे ॥ श्रुत्वानिहतमाचार्यंसोऽश्वत्थामाकिमब्रवीत् ३ येनरामादवाप्येहधनुर्वेदंमहात्मना ॥ प्रोक्तान्यस्त्राणिदिव्यानिपुत्रायगुणकांक्षिणा ४ ए कमेवहिलोकेऽस्मिन्नात्मनोगुणवत्तरम् ॥ इच्छंतिपुरुषाःपुत्रंलोकेनान्यंकथंचन ५ आचार्याणांभवंत्येवरहस्यानिमहात्मनाम् ॥ तानिपुत्रायवाद्युःशिष्यायवा नुगतायवा ६ सशिष्यःप्राप्यतत्सर्वंसविशेषंचसंजय ॥ शूरःशारद्वतीपुत्रःसंख्येद्रोणादनंतरः ७ रामस्यतुसमःशस्त्रेपुरंदरसमोयुधि ॥ कार्तवीर्यसमोवीर्येबृह स्पतिसमोमतौ ८ महीधरसमःस्थैर्येतेजसाऽग्निसमोयुवा ॥ समुद्रइवगांभीर्येक्रोधेचाशीविषोपमः ९ सरथीप्रथमोलोकेदृढधन्वाजितक्लमः ॥ शीघ्रोऽनिलइवा क्रंदेचरन्क्रुद्धइवांतकः १० अस्यतायेनसंग्रामेधरण्यभिनिपीडिता ॥ योनव्यथतिसंग्रामेवीरःसत्यपराक्रमः ११ वेदस्नातोव्रतस्नातोधनुर्वेदेचपारगः ॥ महो दधिरिवाक्षोभ्योरामोदाशरथिर्यथा १२ तमधर्मेणधर्मिष्ठंधृष्टद्युम्नेनसंयुगे ॥ श्रुत्वानिहतमाचार्यमश्वत्थामाकिमब्रवीत् १३ धृष्टद्युम्नस्ययोमृत्युःसृष्टस्तेनम हात्मना ॥ यथाद्रोणस्यपांचाल्योयज्ञसेनसुतोऽभवत् १४ तंनृशंसेनपापेनक्रूरेणादीर्घदर्शिना ॥ श्रुत्वानिहतमाचार्यमश्वत्थामाकिमब्रवीत् १५ ॥ इतिश्रीमहा भारतेद्रोणपर्वणिनारायणास्त्रमोक्षपर्वणिधृतराष्ट्रप्रश्नेचतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥ ॥ संजयउवाच ॥ छद्मनानिहतंश्रुत्वापितरंपापकर्म णा ॥ बाष्पेणापूर्यतद्रौणीरोषेणचनरर्षभ १ तस्यक्रुद्धस्यराजेंद्रवपुर्दीप्तमदृश्यत ॥ अंतकस्येवभूतानिजिहीर्षोःकालपर्यये २ अश्रुपूर्णेततोनेत्रेव्यपमृ ज्यपुनःपुनः ॥ उवाचकोपान्निःश्वस्यदुर्योधनमिदंवचः ३ पितामममयथाक्षुद्रैर्न्यस्तशस्त्रोनिपातितः ॥ धर्मध्वजवतापापंकृतंतद्विदितंमम ४

११ । १२ । १३ । १४ । १५ ॥ इतिद्रोणपर्वणिटीकायांचतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥ ॥ ७ ॥ ॥ छद्मनेति १ । २ । ३ धर्मध्वजवतादांभिकेन तवअनृतवचनरूपंपापम् ४

अनार्यंनीचयोग्यंकर्म धर्मपुत्रस्येत्युपालंभः ५ । ६ । ७ । ८ । ९ बाल्येनचापलेन १० विधर्मकाणिधर्मविरुद्धानि ११ अनुबंधंफलम् १२ पांडवश्चानुबंधंद्रष्टेत्यनुषज्यते १३ । १४ । १५

अनार्यंसुनृशंसंचधर्मपुत्रस्यमेश्रुतम् ॥ युद्धेष्वपिप्रवृत्तानांध्रुवंजयपराजयौ ५ द्वयमेतद्भवेद्राजन्वधस्तत्रप्रशस्यते ॥ न्यायवृत्तोवधोयस्तुसंग्रामेयुध्यतोभवेत् ६ नसदुःखायभवतितथादृष्टोहिसाद्विजैः ॥ गतःसवीरलोकायपितामममनसंशयः ७ नशोच्यःपुरुषव्याघ्रयस्तदानिधनंगतः ॥ यत्तुधर्मप्रवृत्तःसन्केशग्रहणमाप्तवान् ८ पश्यतांसर्वसैन्यानांतन्मेमर्माणिकृंतति ॥ मयिजीवतियत्तातःकेशग्रहमवाप्तवान् ९ कथमन्येकरिष्यंतिपुत्रेभ्यःपुत्रिणःस्पृहाम् ॥ कामात्क्रोधादविज्ञानाद्धर्षाद्बाल्येनवापुनः १० विधर्मकाणिकुर्वंतितथापरिभवंतिच ॥ तदिदंपार्षतेनेहमहदाधर्मिकंकृतम् ११ अवज्ञायचमांनूनंनृशंसेनदुरात्मना ॥ तस्यानुबंधंद्रष्टाऽसौधृष्टद्युम्नःसुदारुणम् १२ अकार्यंपरमंकृत्वामिथ्यावादीचपांडवः ॥ योह्यसौछद्मनाऽऽचार्यंशस्त्रंसंन्यासयत्तदा १३ तस्याद्यधर्मराजस्यभूमिःपास्यतिशोणितम् ॥ शपेसत्येनकौरव्यइष्टापूर्तेनचैवह १४ अहत्वासर्वपंचालान्जीवेयंनकथंचन ॥ सर्वोपायैर्यतिष्यामिपंचालानामहंवधे १५ धृष्टद्युम्नंचसमरेहंताऽहंपापकारिणम् ॥ कर्मणायेनतेनेहमृदुनादारुणेनच १६ पंचालानांवधंकृत्वाशांतिंलब्धाऽस्मिकौरव ॥ यदर्थंपुरुषव्याघ्रपुत्रानिच्छंतिमानवाः १७ प्रेत्यचेहचसंप्राप्तांस्त्रायंतेमहतोभयात् ॥ पित्रातुममसाऽवस्थाप्राप्तानिर्बंधुनायथा १८ मयिशैलप्रतीकाशेपुत्रेशिष्येचजीवति ॥ धिङ्ममास्त्राणिदिव्यानिधिग्बाहूधिक्पराक्रमम् १९ यंस्मद्रोणःसुतंप्राप्यकेशग्रहमवाप्तवान् ॥ सतथाऽहंकरिष्यामियथाभारतसत्तम २० परलोकगतस्यापिभविष्याम्यनृणःपितुः ॥ आर्येणहिनवक्तव्याकदाचित्स्तुतिरात्मनः २१ पितुर्वधममृष्यंस्तुवक्ष्याम्यद्येहपौरुषम् ॥ अद्यपश्यंतुमेवीर्यंपांडवाःसजनार्दनाः २२ मृद्नतःसर्वसैन्यानियुगांतमिवकुर्वतः ॥ नहिदेवानगंधर्वानासुरानचराक्षसाः २३ अद्यशक्तारणेजेतुंरथस्थंमांनरर्षभाः ॥ मदन्योनास्तिलोकेऽस्मिन्नर्जुनाद्वाऽस्त्रवित्क्वचित् २४ अहंहिज्वलतांमध्येमयूखानामिवांशुमान् ॥ प्रयोक्तादेवसृष्टानामस्त्राणांपृतनागतः २५ भृशमिष्वसनाद्यमप्रयुक्तामहाहवे ॥ दर्शयंतःशरावीर्यंप्रमथिष्यंतिपांडवान् २६ अद्यसर्वादिशोराजन्धाराभिरिवसंकुलाः ॥ आवृताःपत्रिभिस्तीक्ष्णैर्द्रष्टारोमामकैरिह २७ विकिरञ्छरजालानिसर्वतोभैरवस्वनान् ॥ शत्रून्निपातयिष्यामिमहावातइवद्रुमान् २८ नहिजानातिबीभत्सुस्तदस्त्रंनजनार्दनः ॥ नभीमसेनोनयमौनचराजायुधिष्ठिरः २९ नपार्षतोदुरात्माऽसौनशिखंडीनसात्यकिः ॥ यदिदंमयिकौरव्यसकल्पंसनिवर्तनम् ३० नारायणायमेपित्राप्रणम्यविधिपूर्वकम् ॥ उपहारःपुरादत्तोब्रह्मरूपउपस्थितः ३१ तंस्वयंप्रतिगृह्याथभगवान्सवरंददौ ॥ वव्रेपितामेपरममस्त्रंनारायणंततः ३२ अथैनमब्रवीद्राजन्भगवान्देवसत्तमः ॥ भवितात्वत्समोनान्यःकश्चिद्युधिनरःक्वचित् ३३ नत्विदंसहसाब्रह्मन्प्रयोक्तव्यंकथंचन ॥ नह्येतदस्त्रमन्यत्रवधाच्छत्रोर्निवर्तते ३४

१६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ मयूखानांमयूखवतां २५ २६ । २७ । २८ । २९ कल्यःप्रयोगः निवर्तनमुपसंहारः ३० ब्रह्मरूपोवेदरूपः वैदिकैर्मंत्रैःस्तुतवानित्यर्थः उपस्थितइतितदन्यस्योपहारस्यतदानीमभावोदर्शितः ३१ । ३२ । ३३ । ३४

३५ रथस्यैवविसर्जनंशस्त्राणामपिविसर्जनंच प्रयाचतांमावधीरितियाचमानानां शरणस्यगमनंत्वमेवशरणंनइतिकीर्तनंच ३६ पीडितःपीडितंशस्त्रांतरेणबाधितं पुंस्त्वमार्षं ३७ । ३८ । ३९

नचैतच्छक्यतेज्ञातुंकेनवध्येदितिप्रभो ॥ अवध्यमपिहन्याद्धितस्मान्नैतत्प्रयोजयेत ३५अथसंख्येरथस्यैवशस्त्राणांचविसर्जनम् ॥ प्रयाचतांचशत्रूणांगमनंशरणस्यच ३६ एतेप्रशमनेयोगामहास्त्रस्यपरंतप ॥ सर्वथापीडितोहिंस्यादवध्यान्पीडयन्रणे ३७ तज्जग्राहपितामह्यमब्रवीच्चैवसप्रभुः ॥ त्वंवधिष्यसिसर्वाणिशस्त्रवर्षाण्यनेकशः ३८ अनेनास्त्रेणसंग्रामेतेजसाचज्वलिष्यसि ॥ एवमुक्त्वासभगवान्दिवमाचक्रमेप्रभुः ३९ एतन्नारायणादस्त्रंतत्प्राप्तंपितृबंधुना ॥ तेनाहंपांडवांश्चैवंपंचालान्मत्स्यकेकयान् ४० विद्रावयिष्यामिरणेशचीपतिरिवासुरान् ॥ यथायथाऽहमिच्छेयंतथाभूत्वाशराभम ४१ निपतेयुःसपत्नेषुविक्रमत्स्वपिभारत ॥ यथेष्टमश्मवर्षेणप्रवर्षिष्येरणेस्थितः ४२ अयोमुखैश्वविहगैर्द्रावयिष्येमहारथान् ॥ परश्वधांश्चनिशितानुत्स्रक्ष्येऽहमसंशयम् ४३ सोऽहंनारायणास्त्रेमहताशत्रुतापनः ॥ शत्रून्विध्वंसयिष्यामिकदर्थीकृत्यपांडवान् ४४ मित्रब्रह्मगुरुद्रोहीजाल्मकःसुविगर्हितः ॥ पांचालापसदश्चाद्यनमेजीवन्विमोक्ष्यते ४५ तच्छ्रुत्वाद्रोणपुत्रस्यपर्यवर्ततवाहिनी ॥ ततःसर्वेमहाशंखान्दध्मुःपुरुषसत्तमाः ४६ भेरीश्चाभ्यहनन्हृष्टाडिंडिमांश्चसहस्रशः ॥ तथाननादवसुधाखुरनेमिप्रपीडिता ४७ सशब्दस्तुमुलःखंद्यांपृथिवींचव्यनादयत् ॥ तंशब्दंपांडवाःश्रुत्वापर्जन्यनिनदोपमम् ४८ समेत्यरथिनांश्रेष्ठाःसहिताश्चाप्यमंत्रयन् ॥ तथोक्त्वाद्रोणपुत्रस्तुवार्युपस्पृश्यभारत ४९ प्रादुश्चकारतद्दिव्यमस्त्रंनारायणंतदा ५० ॥ इतिश्रीमहाभारतेद्रोणपर्वणिनारायणास्त्रमोक्षपर्वण्यश्वत्थामक्रोधेपंचनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ प्रादुर्भूतेततस्तस्मिन्नस्त्रेनारायणेप्रभो ॥ प्रावात्सपृषतोवायुरनभ्रेस्तनयित्नुमान् १ चचालपृथिवीचापिचुक्षुभेचमहोदधिः ॥ प्रतिस्रोतःप्रवृत्ताश्चगंतुंतत्रसमुद्रगाः २ शिखराणिव्यशीर्यंतगिरीणांतत्रभारत ॥ अपसव्यंमृगाश्चैवपांडुसेनांप्रचक्रिरे ३ तमसाचावकीर्यंतसूर्यश्चकलुषोऽभवत् ॥ संपतंतिचभूतानिक्रव्यादानिप्रहृष्टवत् ४ देवदानवगंधर्वास्त्रस्तास्त्वासन्विशांपते ॥ कथंकथाऽभवत्तीव्राद्दृष्ट्वातद्व्याकुलंमहत् ५ व्यथिताःसर्वराजानस्त्रस्ताश्चासन्विशांपते ॥ तद्दृष्ट्वाघोररूपंवैद्रौणेरस्त्रंभयावहम् ६ ॥ धृतराष्ट्रउवाच ॥ निवर्तितेषुसैन्येषुद्रोणपुत्रेणसंयुगे ॥ भृशंशोकाभितप्तेनपितुर्वधममृष्यता ७ कुरूनापततोदृष्ट्वाधृष्टद्युम्नस्यरक्षणे ॥ कोमंत्रःपांडवेष्वासीतन्ममाचक्ष्वसंजय ८ ॥ संजयउवाच ॥ प्रागेवविद्रुतान्दृष्ट्वाधार्तराष्ट्रान्युधिष्ठिरः ॥ पुनश्चतुमुलंशब्दंश्रुत्वाऽर्जुनमथाब्रवीत ९ ॥ युधिष्ठिरउवाच ॥ आचार्येनिहतेद्रोणेधृष्टद्युम्नेनसंयुगे ॥ निहतेवज्रहस्तेनयथावृत्रेमहासुरे १० नाशंसंतोजयंयुद्धेदीनात्मानोधनंजय ॥ आत्मत्राणेमतिंकृत्वाप्राद्रवन्कुरवोरणात् ११

पितृबंधुनामया ४० । ४१ । ४२ । ४३ । ४४ जाल्मकोमूर्खः ४५ । ४६ । ४७ । ४८ । ४९ । ५० ॥ इतिद्रोणपर्वणिटीकायांपंचनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥ ॥ ७ ॥ ॥
प्रादुरिति सपृषतःसजलबिंदुः अनभ्रेअभ्रहीनकाले १ । २ । ३ । ४ कथंकथा कथंकर्तव्यंकथंकर्तव्यमित्येवंशब्दः ५ । ६ । ७ रक्षणेमंत्रःकआसीदितिसंबंधः ८ । ९ । १० । ११

१२ । भग्ननीडैरिति स्पार्हैरितिपाठेऽतिस्पृहणीयैः १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ यस्मिन्निति दशशतमित्यनेनसर्वगोध

केचिद्भ्रांतैरथैस्तूर्णंनिहतैःपार्ष्णियंतृभिः ॥ विपताकध्वजच्छत्रैःपार्थिवाःशीर्णकूबरैः १२ भग्ननीडैराकुलाश्वैःप्रारुह्यान्यान्विचेतसः ॥ भीताःपादैर्हयान्के चित्त्वरयंतःस्वयंरथान् १३ भग्नाक्षयुगचक्रैश्चव्याकृष्यंतसमंततः ॥ रथान्विशीर्णानुत्सृज्यपद्भिःकेचिच्चविद्रुताः १४ हयपृष्ठगताश्चान्येकृष्यंतेऽर्धच्युतास नाः ॥ गजस्कंधेषुसंस्यूतानाराचैश्चलितासनाः १५ शरार्तैर्विद्रुतैर्नागैर्हृताःकेचिद्दिशोदश ॥ विशस्त्रकवचाश्चान्येवाहनेभ्यःक्षितिंगताः १६ संछिन्नानेमि भिश्चैवमृदिताश्चहयद्विपैः ॥ क्रोशंतस्तातपुत्रेतिपलायंतेपरेभयात् १७ नाभिजानंतिचान्योन्यंकश्मलाभिहतौजसः ॥ पुत्रान्पितॄन्सखीन्भ्रातॄन्समारोप्यदृ ढक्षतान् १८ जलेनक्लेदयंत्यन्येविमुच्यकवचान्यपि ॥ अवस्थांतादृशींप्राप्यहतेद्रोणेद्रुतंबलम् १९ पुनरावर्तितंकेनयदिजानासिशंसमे ॥ हयानांहेषतांशब्दः कुंजराणांचबृंहताम् २० रथनेमिस्वनैश्चात्रविमिश्रःश्रूयतेमहान् ॥ एतेशब्दाभृशंतीव्राःप्रवृत्ताःकुरुसागरे २१ मुहुर्मुहुरुदीर्यंतेकंपयंत्यपिमामकान् ॥ यएष तुमुलःशब्दःश्रूयतेलोमहर्षणः २२ सेंद्रानप्येषलोकांस्त्रीन्ग्रसेदितिमतिर्मम ॥ मन्येवज्रधरस्यैषनिनादोभैरवस्वनः २३ द्रोणहतेकौरवार्थंव्यक्तमभ्येतिवास नः ॥ प्रहृष्टरोमकूपाश्चसंविग्नारथपुंगवाः २४ धनंजयगुरुंश्रुत्वातत्रनादंसुभीषणम् ॥ कएषकौरवान्दीर्णानवस्थाप्यमहारथः २५ निवर्तयतियुद्धार्थंमृधेदेवे श्वरोयथा ॥ अर्जुनउवाच ॥ उद्यम्यात्मानमुग्रायकर्मणेवीर्यमास्थिताः २६ धमंतिकौरवाःशंखान्यस्यवीर्यंसमाश्रिताः ॥ यत्रतेसंशयोराजन्न्यस्तशस्त्रेगुरौह ते २७ धार्तराष्ट्रानवस्थाप्यकएषनदतीतिहि ॥ ह्रीमंतंतंमहाबाहुंमत्तद्विरदगामिनम् २८ व्याघ्रास्यमुग्रकर्माणंकुरूणामभयंकरम् ॥ यस्मिन्जातेददौद्रोणोग वांदशशतंधनम् २९ ब्राह्मणेभ्योमहार्हेभ्यःसोऽश्वत्थामैषगर्जति ॥ जातमात्रेणवीरेणयेनोच्चैःश्रवसायथा ३० हेषताकंपिताभूमिर्लोकाश्चसकलास्त्रयः ॥ त च्छ्रुत्वांऽतर्हितंभूतंनामतस्याकरोत्तदा ३१ अश्वत्थामेतिसोऽद्यैषशूरोनदतिपांडव ॥ योद्यनाथइवाक्रम्यपार्षतेनहतस्तथा ३२ कर्मणासुनृशंसेनतस्यनाथो व्यवस्थितः ॥ गुरुंमेयत्रपांचाल्यःकेशपक्षेपरामृशत् ३३ तन्नजातुक्षमेद्द्रौणिर्जानन्पौरुषमात्मनः ॥ उपचीर्णोगुरुर्मिथ्याभवताराज्यकारणात् ३४ धर्मज्ञेन सतानामसोऽधर्मःसुमहान्कृतः ॥ चिरंस्थास्यतिचाकीर्तिस्त्रैलोक्येसचराचरे ३५ रामेवालिवधाद्यद्वदेवंद्रोणेनिपातिते ॥ सर्वधर्मोपपन्नोऽयंसमेशिष्यश्च पांडवः ३६ नायंवदतिमिथ्येतिप्रत्ययंकृतवांस्त्वयि ॥ ससत्यकंचुकंनामप्रविष्टेनततोऽनृतम् ३७ आचार्यउक्तोभवताहतःकुंजरइत्युत ॥ ततःशस्त्रंसमुत्सृज्य निर्ममोगतचेतनः ३८ आसीत्सुविह्वलोराजन्यथादृष्टस्त्वयाविभुः ॥ सतुशोकसमाविष्टोविमुखःपुत्रवत्सलः ३९ शाश्वतंधर्ममुत्सृज्यगुरुःशस्त्रेणघातितः ॥ न्यस्तशस्त्रमधर्मेणघातयित्वागुरुंभवान् ४०

नंददावितिज्ञेयं अन्यथाएकधेन्वर्थंद्रुपदंप्रतिद्रोणगमनस्यासंभवः । यद्वा

भाविनींसंपदमभिलक्ष्यैतद्दानंद्रष्टव्यं पुत्रोत्पत्तिकालेतस्यनिर्धनत्वोक्तेः २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ सत्यकंचुकंसत्याभासमनृतम् ३७ । ३८ । ३९ । ४०

४१ । ४२। ४३ । ४४ सौहार्दाद्धर्मतोगुरुत्वाद्वा द्विगुणःपितुरित्यर्थः ४५ ।४६ । ४७। ४८ । ४९ ।५० । ५१ । ५२। ५३ ॥ इतिद्रोणपर्वणिटीकायांषण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

रक्षत्विदानींसामात्योयदिशक्तोऽसिपार्षतम् ॥ ग्रस्तमाचार्यपुत्रेणक्रुद्धेनहतबंधुना ४१ सर्वेवयंपरित्रातुंनशक्ष्यामोऽद्यपार्षतम् ॥ सौहार्दंसर्वभूतेषुयःकरोत्य
तिमानुषः ॥ सोऽद्यकेशग्रहंश्रुत्वापितुर्धक्ष्यतिनोरणे ४२ विक्रोशमानेहिमयिभृशमाचार्यगृद्धिनि ॥ अपाकीर्यस्वयंधर्मंशिष्येणनिहतोगुरुः ४३ यदागतं
वयोभूयःशिष्टमल्पतरंचनः ॥ तस्येदानींविकारोऽयमधर्मोऽयंकृतोमहान् ४४ पितेवनित्यंसौहार्दात्पितेवहिचधर्मतः ॥ सोऽल्पकालस्यराज्यस्यकारणाद्धा
तितोगुरुः ४५ धृतराष्ट्रेणभीष्मायद्रोणायचविशांपते ॥ विसृष्टापृथिवीसर्वासहपुत्रैश्चतत्परैः ४६ संप्राप्यतादृशींवृत्तिंसत्कृतःसततंपरैः ॥ अवृणीतसदा
पुत्रान्मामेवाभ्यधिकंगुरुः ४७ अवेक्षमाणस्त्वांमांचन्यस्तास्त्रश्चाहवेहतः ॥ नत्वेनंयुध्यमानंवैहन्यादपिशतक्रतुः ४८ तस्याचार्यस्यवृद्धस्यद्रोहोनित्योप
कारिणः ॥ कृतोह्यनार्यैरस्माभीराज्यार्थेलुब्धबुद्धिभिः ४९ अहोबतमहत्पापंकृतंकर्मसुदारुणम् ॥ यद्राज्यसुखलोभेनद्रोणोऽयंसाधुघातितः ५० पुत्रान्भ्रातॄ
न्पितॄन्दारान्जीवितंचैववासविः ॥ त्यजेत्सर्वंममप्रेम्णाजानात्येवंहिमेगुरुः ५१ समयाराज्यकामेनहन्यमानोह्युपेक्षितः ॥ तस्मादर्वाक्शिराराजन्प्राप्तोऽस्मि
नरकंप्रभो ५२ ब्राह्मणंवृद्धमाचार्यंन्यस्तशस्त्रंमहामुनिम् ॥ घातयित्वाऽद्यराज्यार्थेमृतंश्रेयोनजीवितम् ५३ ॥ ॥ इतिश्रीमहाभारतेद्रोणपर्वणि नाराय
णास्त्रमोक्षपर्वणि अर्जुनवाक्ये षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥ ॥ संजयउवाच ॥ अर्जुनस्यवचःश्रुत्वानोचुस्तत्रमहारथाः ॥ अप्रियंवाप्रि
यंवाऽपिमहाराजधनंजयम् १ ततःक्रुद्धोमहाबाहुर्भीमसेनोऽभ्यभाषत ॥ कुत्सयन्निवकौंतेयमर्जुनंभरतर्षभ २ मुनिर्यथाऽऽरण्यगतोभाषतेधर्मसंहितम् ॥ न्य
स्तदंडोयथापार्थब्राह्मणःसंशितव्रतः ३ क्षतत्राताक्षताज्जीवन्क्षंतास्त्रीष्वपिसाधुषु ॥ क्षत्रियःक्षितिमाप्नोतिक्षिप्रंधर्मंयशःश्रियः ४ सभवान्क्षत्रियगुणैर्युक्तः
सर्वैःकुलोद्वहः ॥ अविपश्चिद्यथावाचंव्याहरन्नाद्यशोभसे ५ पराक्रमस्तेकौंतेयशक्रस्येवशचीपतेः ॥ नचातिवर्तसेधर्मंवेलामिवमहोदधिः ६ नपूजयेत्त्वांकोन्व
द्ययत्त्रयोदशवार्षिकम् ॥ अमर्षंपृष्ठतःकृत्वाधर्ममेवाभिकांक्षसे ७ दिष्ट्याताततमनस्तेऽद्यस्वधर्ममनुवर्तते ॥ आनृशंस्येचतेदिष्ट्याबुद्धिःसततमच्युत ८ यत्तु
धर्मप्रवृत्तस्यहृतंराज्यमधर्मतः ॥ द्रौपदीचपरामृष्टासभामानीयशत्रुभिः ९ वनंप्रव्राजिताश्चास्मवल्कलाजिनवाससः ॥ अनर्हमाणास्तंभावंत्रयोदशसमाः
परैः १० एतान्यमर्षस्थानानिमर्षितानिमयाऽनघ ॥ क्षत्रधर्मप्रसक्तेनसर्वमेतदनुष्ठितम् ११ तमधर्ममपाकृष्टंस्मृत्वाऽद्यसहितस्त्वया ॥ सानुबंधान्हनिष्या
मिक्षुद्रान्राज्यहरानहम् १२ त्वयाहिकथितंपूर्वंयुद्धायाभ्यागतावयम् ॥ घटामहेयथाशक्तित्वंतुनोऽद्यजुगुप्ससे १३ धर्ममन्विच्छसिज्ञातुंमिथ्यावचनमेवते ॥
भयार्दितानामस्माकंवाचामर्माणिकृंतसि १४

अर्जुनस्येति सांगावेदाइतिचाध्यायौ स्पष्टार्थौ १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४

वपन्व्रणेक्षारमिवक्षतानांशत्रुकर्शन ॥ विदीर्यंतेमेहृदयंत्वयावाक्शल्यपीडितम् १५ अधर्ममेनंविपुलंधार्मिकःसन्नबुध्यसे ॥ यत्त्वमात्मानमस्मांश्चप्रशंस्यात्र
प्रशंससि १६ वासुदेवेस्थितेचापिद्रोणपुत्रंप्रशंससि ॥ यःकलांशोडशींपूर्णांधनंजयनतेऽर्हति १७ स्वयमेवात्मनोदोषान्ब्रुवाणःकिन्नलज्जसे ॥ दारयेयंमहीं
क्रोधाद्विकिरेयंचपर्वतान् १८ आविध्यैतांगदांगुर्वींभीमांकांचनमालिनीम् ॥ गिरिप्रकाशान्क्षितिजान्भंजेयमनिलोयथा १९ द्रावयेयंशरैश्चापिसेंन्द्रान्देवा
न्समागतान् ॥ सराक्षसगणान्पार्थसासुरोरगमानवान् २० सत्वमेवंविधंजानन्भ्रातरंमांनरर्षभ ॥ द्रोणपुत्राद्भयंकर्तुंनार्हस्यमितविक्रम २१ अथवातिष्ठबी
भत्सोसहसर्वैःसहोदरैः ॥ अहमेनंगदापाणिर्जेष्याम्येकोमहाहवे २२ ततःपांचालराजस्यपुत्रःपार्थमथाब्रवीत् ॥ संक्रुद्धमिवनर्दंतंहिरण्यकशिपुर्हरिम् २३
॥ धृष्टद्युम्नउवाच ॥ बीभत्सोविप्रकर्माणिविदितानिमनीषिणाम् ॥ याजनाध्यापनेदानंतथायज्ञप्रतिग्रहौ २४ षष्ठमध्ययनंनामतेषांकस्मिन्प्रतिष्ठितः ॥
हतोद्रोणोमयाह्येवंकिंमांपार्थविगर्हसे २५ अपक्रांतःस्वधर्माच्चक्षात्रधर्मंव्यपाश्रितः ॥ अमानुषेणहंत्यस्मानस्त्रेणक्षुद्रकर्मकृत् २६ तथामायांप्रयुंजा
नमसह्यंब्राह्मणब्रुवम् ॥ माययैवनिहन्याद्योनयुक्तंपार्थतत्रकिम् २७ तस्मिंस्तथामयाशस्तेयदिद्रौणायनीरुषा ॥ कुरुतेभैरवंनादंतत्रकिंममहीयते २८
नचाद्भुतमिदंमन्येयद्द्रौणिर्युद्धसंज्ञया ॥ घातयिष्यतिकौरव्यान्परित्रातुमशक्नुवन् २९ यच्चमांधार्मिकोभूत्वाब्रवीषिगुरुघातिनम् ॥ तदर्थमहमुत्पन्नःपांचाल्य
स्यसुतोऽनलात् ३० यस्यकार्यमकार्यंवायुध्यतःस्यात्समंरणे ॥ तंकथंब्राह्मणंब्रूयाःक्षत्रियंवाधनंजय ३१ योह्यनस्त्रविदोहन्याद्ब्रह्मास्त्रैःक्रोधमूर्छितः ॥ सर्वो
पायैर्नसकथंवध्यःपुरुषसत्तमः ३२ विधर्मिणंधर्मविद्भिःप्रोक्तंतेषांविषोपमम् ॥ जानन्धर्मार्थतत्त्वज्ञकिंमामर्जुनगर्हसे ३३ नृशंसःसमयाऽऽक्रम्यरथएवनिपा
तितः ॥ तन्मामनिंद्यंबीभत्सोकिमर्थंनाभिनंदसे ३४ कालानलसमंपार्थज्वलनार्कविषोपमम् ॥ भीमद्रोणशिरश्छिन्नंनप्रशंससिमेकथम् ३५ योऽसौममैवना
न्यस्यबांधवान्युधिजघ्निवान् ॥ छित्त्वाऽपितस्यमूर्धानंनैवास्मिविगतज्वरः ३६ तच्चमेकृंततेमर्मयन्नतस्यशिरोमया ॥ निषादविषयेक्षिप्तंजयद्रथशिरोयथा ३७
अथावधश्चशत्रूणामधर्मःश्रूयतेऽर्जुन ॥ क्षत्रियस्यहिधर्मोऽयंहन्याद्धन्येतवापुनः ३८ सशत्रुर्निहतःसंख्येमयाधर्मेणपांडव ॥ यथात्वयाहतःशूरोभगदत्तःपितुःस
खा ३९ पितामहंरणेहत्वामन्यसेधर्ममात्मनः ॥ मयाशत्रौहतेकस्मात्पापेधर्मंनमन्यसे ४० संबंधावनतंपार्थनमांत्वंवक्तुमर्हसि ॥ स्वगात्रकृतसोपानंनिषण्ण
मिवदंतिनम् ४१ क्षमामितेसर्वमेववाग्व्यतिक्रममर्जुन ॥ द्रौपद्याद्रौपदेयानांकृतेनान्येनहेतुना ४२ कुलक्रमागतंवैरंममाचार्येणविश्रुतम् ॥ तथाजानात्ययं
लोकोनयूयंपांडुनंदनाः ४३

४४ ॥ इतिद्रोणपर्वणिटीकायांसप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥ ॥ ४ ॥ ॥ सांगाइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५

नानृतीपांडवोज्येष्ठोनाहंवाऽधार्मिकोऽर्जुन ॥ शिष्यद्रोहीहतःपापोयुध्यस्वविजयस्तव ४४ ॥ इतिश्रीमहाभारतेद्रोणपर्वणिनारायणास्त्रमोक्षपर्वणि धृष्टद्युम्न
वाक्येसप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥ ४ ॥ धृतराष्ट्रउवाच ॥ सांगावेदायथान्यायंयेनाधीतामहात्मना ॥ यस्मिन्साक्षाद्धनुर्वेदोह्रीनिषेवेप्रति
ष्ठितः १ यस्यप्रसादात्कुर्वंतिकर्माणिपुरुषर्षभाः ॥ अमानुषाणिसंग्रामेदेवैरसुकराणिच २ तस्मिन्नाक्रुश्यतिद्रोणेसमक्षंपापकर्मणा ॥ नीचात्मनानृशंसेनक्षु
द्रेणगुरुघातिना ३ नामर्षंतत्रकुर्वंतिधिक्क्षात्रंधिगमर्षितान् ॥ पार्थाःसर्वेचराजानःपृथिव्यांयेधनुर्धराः ४ श्रुत्वाकिमाहुःपांचाल्यंतन्ममाचक्ष्वसंजय ॥
॥ संजयउवाच ॥ श्रुत्वाद्रुपदपुत्रस्यतावाचःक्रूरकर्मणः ५ तूष्णींबभूवूराजानःसर्वएवविशांपते ॥ अर्जुनस्तुकटाक्षेणजिह्मंविप्रेक्ष्यपार्षतम् ६ सबाष्पमतिनिः
श्वस्यधिग्धिगित्येवचाब्रवीत् ॥ युधिष्ठिरश्चभीमश्चयमौकृष्णस्तथाऽपरे ७ आसन्सुव्रीडिताराजन्सात्यकिस्त्वब्रवीदिदम् ॥ नेहास्तिपुरुषःकश्चिद्यइमंपाप
पूरुषम् ८ भाषमाणमकल्याणंशीघ्रंहन्यान्नराधमम् ॥ एतेत्वांपांडवाःसर्वेकुत्सयंतिविवित्सया ९ कर्मणातेनपापेनश्वपाकंब्राह्मणाइव ॥ एतत्कृत्वामहत्पापं
निंदितःसर्वसाधुभिः १० नलज्जसेकथंवक्तुंसमितिंप्राप्यशोभनाम् ॥ कथंचशतधाजिह्वानतेमूर्धाचदीर्यते ११ गुरुमाक्रोशतःक्षुद्रनचाधर्मेणपात्यसे ॥ वाच्य
स्त्वमसिपार्थैश्चसर्वैश्चांधकवृष्णिभिः १२ यत्कर्मकलुषंकृत्वाश्लाघसेजनसंसदि ॥ अकार्यंतादृशंकृत्वापुनरेवगुरुंक्षिपन् १३ वध्यस्त्वंनत्वयार्थोऽस्तिमुहूर्तमपि
जीवता ॥ कस्त्वेतद्व्यवसेदार्यस्त्वदन्यःपुरुषाधम १४ निगृह्यकेशेषुवधंगुरोर्धर्मात्मनःसतः ॥ सप्तावरेतथापूर्वेबांधवास्तेनिमज्जिताः १५ यशसाचपरित्य
क्तास्त्वांप्राप्यकुलपांसनम् ॥ उक्तवांश्चापियत्पार्थेभीष्मंप्रतिनरर्षभ १६ तथांऽतोविहितस्तेनस्वयमेवमहात्मना ॥ तस्यापितवसोदर्योनिहंतापापकृत्तमः १७
नान्यःपांचालपुत्रेभ्योविद्यतेभुविपापकृत् ॥ सचापिसृष्टःपित्रातेभीष्मस्यांतकरःकिल १८ शिखंडीरक्षितस्तेनसचमृत्युर्महात्मनः ॥ पंचालाश्चलिताधर्मा
त्क्षुद्रामित्रगुरुद्रुहः १९ त्वांप्राप्यसहसोदर्यंधिक्कृतंसर्वसाधुभिः ॥ पुनश्चेदीदृशींवाचंमत्समीपेवदिष्यसि २० शिरस्तेपोथयिष्यामिगदयावज्रकल्पया ॥ त्वांचब्र
ह्महणंदृष्ट्वाजनःसूर्यमवेक्षते २१ ब्रह्महत्याहितेपापंप्रायश्चित्तार्थमात्मनः ॥ पांचालकसुदुर्वृत्तममैवगुरुमग्रतः २२ गुरोर्गुरुंचभूयोऽपिक्षिपन्नैवहिलज्जसे ॥ तिष्ठ
तिष्ठसहस्वैकंगदापातमिमंमम २३ तवचापिसहिष्येऽहंगदापातानेनेकशः ॥ सात्वतेनैवमाक्षिप्तःपार्षतःपरुषाक्षरम् २४ सरब्धंसात्यकिंप्राहसंक्रुद्धःप्रहसन्निव
॥ धृष्टद्युम्नउवाच ॥ श्रूयतेश्रूयतेचेतिक्षम्यतेचेतिमाधव २५ सदाऽनार्योशुभःसाधुंपुरुषंक्षेप्तुमिच्छति ॥ क्षमाप्रशस्यतेलोकेनतुपापोऽर्हतिक्षमाम् २६ क्ष
मावंतंहिपापात्माजितोऽयमितिमन्यते ॥ सत्वंक्षुद्रसमाचारोनीचात्मापापनिश्चयः २७ १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

आकेशाग्रान्नखाग्राच्चवक्तव्योवक्तुमिच्छसि ॥ यःसभूरिश्रवाश्छिन्नभुजःप्रायगतस्त्वया २८ वार्यमाणेनहिहतस्ततःपापतरंनुकिम् ॥ गाहमानोमयाद्रोणोदि
व्येनास्त्रेणसंयुगे २९ विसृष्टशस्त्रोनिहतःकिंतत्रक्रूरदुष्कृतम् ॥ अयुध्यमानंयस्त्वाजौतथाप्रायगतंमुनिम् ३० छिन्नबाहुंपरैर्हन्यात्सात्यकेसकथंवदेत् ॥ निह
त्यत्वांपदाभूमौसविकर्षतिवीर्यवान् ३१ किंतदानिहंस्येनंभूत्वापुरुषसत्तमः ॥ त्वयापुनरनार्येणपूर्वंपार्थेननिर्जितः ३२ यदातदाहतःशूरःसौमदत्तिःप्रताप
वान् ॥ यत्रयत्रतुपांडूनांद्रोणोद्रावयतेचमूम् ३३ किरञ्छरसहस्राणितत्रतत्रप्रयाम्यहम् ॥ सत्वमेवंविधंकृत्वाकर्मचांडालवत्स्वयम् ३४ वक्तुमर्हसिवक्तव्यः
कस्मात्त्वंपरुषाण्यथ ॥ कर्तात्वंकर्मणोह्यस्यनाहंवृष्णिकुलाधम ३५ पापानांचत्वमावासःकर्मणांमापुनर्वद ॥ जोषमास्स्वनमांभूयोवक्तुमर्हस्यतःपरम् ३६ अ
धरोत्तरमेतद्धियन्मांत्वंवक्तुमर्हसि ॥ अथवक्ष्यसिमांमौर्ख्याद्भूयःपरुषमीदृशम् ३७ गमयिष्यामिबाणैस्त्वांयुधिवैवस्वतक्षयम् ॥ नचैवंमूर्खधर्मेणकेवलेनैवशक्य
ते ३८ तेषामपिह्यधर्मेणचेष्टितंशृणुयादृशम् ॥ वंचितःपांडवःपूर्वमधर्मेणयुधिष्ठिरः ३९ द्रौपदीचपरिक्लिष्टातथाऽधर्मेणसात्यके ॥ प्रव्राजितावनंसर्वेपांड
वाःसहकृष्णया ४० सर्वस्वमपकृष्टंचतथाऽधर्मेणबालिश ॥ अधर्मेणापकृष्टश्चमद्रराजःपरैरितः ४१ अधर्मेणतथाबालःसौभद्रोविनिपातितः ॥ इतोऽप्यध
र्मेणहतोभीष्मःपरपुरंजयः ४२ भूरिश्रवाह्यधर्मेणत्वयाधर्मविदाहतः ॥ एवंपरैराचरितंपांडवेयैश्चसंयुगे ४३ रक्षमाणैर्जयंवीरैर्धर्मज्ञैरपिसात्वत ॥ दुर्ज्ञेयःसपरो
धर्मस्तथाऽधर्मश्चदुर्विदः ४४ युध्यस्वकौरवैःसार्धंमागाःपितृनिवेशनम् ॥ संजयउवाच ॥ एवमादीनिवाक्यानिक्रूराणिपरुषाणिच ४५ श्रावितःसात्यकिः
श्रीमानाकंपितइवाभवत् ॥ तच्छ्रुत्वाक्रोधताम्राक्षःसात्यकिस्त्वाददेगदाम् ४६ विनिःश्वस्ययथासर्पःप्रणिधायरथेधनुः ॥ ततोऽभिपत्यपांचाल्यंसंरंभेणेदम
ब्रवीत् ४७ नत्वांवक्ष्यामिपरुषंहनिष्येत्वांवधक्षमम् ॥ तमापतंतंसहसामहाबलममर्षणम् ४८ पांचाल्यायाभिसंक्रुद्धमंतकायांतकोपमम् ॥ चोदितोवासुदेवे
नभीमसेनोमहाबलः ४९ अवप्लुत्यरथात्तूर्णंबाहुभ्यांसमवारयत् ॥ द्रवमाणंतथाक्रुद्धंसात्यकिंपांडवोबली ५० प्रस्पंदमानमादायजगामबलेनबलात् ॥ स्थि
त्वाविष्टभ्यचरणौभीमेनाशिनिपुंगवः ५१ निगृहीतःपदेषष्ठेबलेनबलिनांवरः ॥ अवरुह्यरथात्तूर्णंध्रियमाणंबलीयसा ५२ उवाचश्लक्ष्णयावाचासहदेवोविशांपते ॥
अस्माकंपुरुषव्याघ्रमित्रमन्यन्नविद्यते ५३ परमंधकवृष्णिभ्यःपंचालेभ्यश्चमारिष ॥ तथैवांधकवृष्णीनांतथैवचविशेषतः ५४ कृष्णस्यचतथाऽस्मत्तोमित्र
मन्यन्नविद्यते ॥ पंचालानांचवार्ष्णेयसमुद्रांतांविचिन्वताम् ५५ नान्यदस्तिपरंमित्रंयथापांडववृष्णयः ॥ सभवानीदृशंमित्रंमन्यतेचयथाभवान् ५६ भवंतश्चय
थाऽस्माकंभवतांचतथावयम् ॥ सएवंसर्वधर्मज्ञामित्रधर्ममनुस्मरन् ५७ नियच्छमन्युंपांचाल्यात्प्रशाम्यशिनिपुंगव ॥ पार्षतस्यक्षमत्वंवैक्षमतांपार्षतश्चते ५८

५९ । ६० । ६० ।६१। ६२। ६३ ।६४ । ६५।६६ ।६७ ।६८ ॥ इतिद्रोणपर्वणिटीकायामष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥ ततइति १ ।२ ।३ । ४।५ । ६। ७ । ८ । ९ ।१० ।११ ।१२

वयंक्षमयितारश्चकिमन्यत्रशमाद्भवेत् ॥ प्रशाम्यमानेशैनेयेसहदेवेनमारिष ५९ पांचालराजस्यसुतःप्रहसन्निदमब्रवीत् ॥ मुंचमुंचाशिनेःपौत्रंभीमयुद्धमदान्वितम् ६० आसादयतुमामेषधराधरमिवानिलः ॥ यावदस्याशितैर्बाणैःसंरंभंविनयाम्यहम् ६१ युद्धश्रद्धांचकौंतेयजीवितंचास्यसंयुगे ॥ किंनुशक्यंमयाकर्तुंकार्यंयदिदमुद्यतम् ६२ सुमहत्पांडुपुत्राणामायांत्येतेहिकौरवाः ॥ अथवाफाल्गुनःसर्वान्वारयिष्यतिसंयुगे ६३ अहमप्यस्यमूर्धानंपातयिष्यामिसायकैः ॥ मन्यतेच्छिन्नबाहुंमांभूरिश्रवसमाहवे ६४ उत्सृजैनमहंचैनमेषवामांहनिष्यति ॥ शृण्वन्पांचालवाक्यानिसात्यकिःसर्पवच्छ्वसन् ६५ भीमबाह्वंतरेसक्तोविस्फुरत्यनिशंबली ॥ तौवृषाविवनर्दंतौबलिनौबाहुशालिनौ ६६ त्वरयावासुदेवश्चधर्मराजश्चमारिष ॥ यत्नेनमहतावीरौवारयामासतुस्ततः ६७ निवार्यपरमेष्वासौकोपसंरक्तलोचनौ ॥ युयुत्सूनपरान्संख्येप्रतीयुःक्षत्रियर्षभाः ६८ ॥ इतिश्रीमहामहाभारतेद्रोणपर्वणिनारायणास्त्रमोक्षपर्वणि धृष्टद्युम्नसात्यकिक्रोधेअष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥ ७ ॥ संजयउवाच ॥ ततःसकदनंचक्रेरिपूणांद्रोणनंदनः ॥ युगांतेसर्वभूतानांकालसृष्टइवांतकः १ ध्वजद्रुमंशस्त्रशृंगंहतनागमहाशिलम् ॥ अश्वकिंपुरुषाकीर्णंशरासनलतावृतम् २ क्रव्यादपक्षिसंघुष्टंभूतयक्षगणाकुलम् ॥ निहत्यशात्रवान्भल्लैःसोऽचिनोद्देहपर्वतम् ३ ततोवेगेनमहताविनद्यसनरर्षभः ॥ प्रतिज्ञांश्रावयामासपुनरेवतवात्मजम् ४ यस्माद्युध्यंतमाचार्यंधर्मकंचुकमास्थितः ॥ मुंचशस्त्रमितिप्राहकुंतीपुत्रोयुधिष्ठिरः ५ तस्मात्संपश्यतस्तस्यद्रावयिष्यामिवाहिनीम् ॥ विद्राव्यसर्वान्हंताऽस्मिजाल्मंपांचाल्यमेवतु ६ सर्वानेतान्हनिष्यामियदियोत्स्यंतिमांरणे ॥ सत्यंतेप्रतिजानामिपरिवर्तयवाहिनीम् ७ तच्छ्रुत्वातवपुत्रस्तुवाहिनींपर्यवर्तयत् ॥ सिंहनादेनमहताव्यपोह्यसुमहद्भयम् ८ ततःसमागमोराजन्कुरुपांडवसेनयोः ॥ पुनरेवाभवत्तीव्रःपूर्णसागरयोरिव ९ संरब्धाहिस्थिरीभूताद्रोणपुत्रेणकौरवाः ॥ उदग्राःपांडुपंचालाद्रोणस्यनिधनेनच १० तेषांपरमहृष्टानांजयमात्मनिपश्यताम् ॥ संरब्धानांमहावेगःप्रादुरासीद्विशांपते ११ यथाशिलोच्चयेशैलःसागरैःसागरोयथा ॥ प्रतिहन्येतराजेंद्रतथाऽऽसन्कुरुपांडवाः १२ ततःशंखसहस्राणिभेरीणामयुतानिच ॥ अवादयंतसंहृष्टाःकुरुपांडवसैनिकाः १३ यथानिर्मथ्यमानस्यसागरस्यतुनिःस्वनः ॥ अभवत्तवसैन्यस्यसुमहानद्भुतोपमः १४ प्रादुश्चक्रेततोद्रौणिरस्त्रंनारायणंतदा ॥ अभिसंधायपांडूनांपंचालानांचवाहिनीम् १५ प्रादुरासंस्ततोबाणादीप्ताग्राःखेसहस्रशः ॥ पांडवान्क्षपयिष्यंतोदीप्तास्याःपन्नगाइव १६ तेदिशःखंचसैन्यंचसमावृण्वन्महाहवे ॥ मुहूर्ताद्भास्करस्येवलोकेराजन्गभस्तयः १७ तथापरेद्योतमानाज्योतींषीवामलांबरे ॥ प्रादुरासन्महाराजकार्ष्णायसमयागुडाः १८ चतुश्चक्राद्विचक्राश्चशतघ्न्योबहुलागदाः ॥ चक्राणिचक्षुरांतानिमंडलानीवभास्वतः १९ १३। १४। १५।१६ ।१७।१८। १९

२० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ अस्माभिरस्मदीयैर्विदुरादिभिर्निवार्यमाणेननिषेध्यमानेनापि तद्वनमनुगंतुंप्रवेष्टुमेषिता

शस्त्राकृतिभिराकीर्णमतीवपुरुषर्षभ ॥ दृष्ट्वांऽतरिक्षमाविग्राःपांडुपंचालसृंजयाः २० यथायथाह्ययुध्यंतपांडवानांमहारथाः ॥ तथातथातदस्त्रंवैव्यवर्धतज नाधिप २१ वध्यमानास्तदाऽस्त्रेणतेननारायणेनवै ॥ दह्यमानाऽनलेनेवसर्वतोऽभ्यर्दितारणे २२ यथाहिशिशिरापायेदहेत्कक्षंहुताशनः ॥ तथातदस्त्रंपां डूनांददाहध्वजिनींप्रभो २३ आपूर्यमाणेनास्त्रेणसैन्येक्षीयतिचप्रभो ॥ जगामपरमंत्रासंधर्मपुत्रोयुधिष्ठिरः २४ द्रवमाणंतुतत्सैन्यंदृष्ट्वाविगतचेतनम् ॥ म ध्यस्थतांचपार्थस्यधर्मपुत्रोऽब्रवीदिदम् २५ धृष्टद्युम्नपलायस्वसहपांचालसेनया ॥ सात्यकेत्वंचगच्छस्ववृष्ण्यंधकवृतोमहान् २६ वासुदेवोऽपिधर्मात्माकरि ष्यत्यात्मनःक्षमम् ॥ श्रेयोह्युपदिशत्येषलोकस्यकिमुतात्मनः २७ संग्रामस्तुनकर्तव्यःसर्वसैन्यान्ब्रवीमिवः ॥ अहंहिसहसोदर्यैःप्रवेक्ष्येहव्यवाहनम् २८ भीष्मद्रोणार्णवंतीर्त्वासंग्रामेभीरुदुस्तरे ॥ विमज्जिष्यामिसलिलेसगणोद्रौणिगोष्पदे २९ कामःसंपद्यतामस्यबीभत्सोराशुमांप्रति ॥ कल्याणवृत्तिराचार्योम यायुधिनिपातितः ३० येनबालःससौभद्रोयुद्धानामविशारदः ॥ समर्थैर्बहुभिःक्रूरैर्घातितोनाभिपालितः ३१ येनविब्रुवतीप्रश्नंतथाकृष्णासभांगता ॥ उ पेक्षितासपुत्रेणदासभावंनियच्छती ३२ जिघांसुर्धार्तराष्ट्रश्चश्रांतेष्वन्येषुफाल्गुनः ॥ कवचेनतथागुप्तोरक्षार्थंसैंधवस्यच ३३ येनब्रह्मास्त्रविदुषापंचालाः सत्यजिन्मुखाः ॥ कुर्वाणामज्जयेयत्नंसमूलाविनिपातिताः ३४ येनप्रव्राज्यमानाश्चराज्याद्वयमधर्मतः ॥ निवार्यमाणेनास्माभिरनुगंतुंतदेषिताः ३५ योऽ सावत्यंतमस्मासुकुर्वाणःसौहृदंपरम् ॥ हतस्तदर्थेमरणंगमिष्यामिसबांधवः ३६ एवंब्रुवतिकौंतेयेदाशार्हस्त्वरितस्ततः ॥ निवार्यसैन्यंबाहुभ्यामिदंवचनम ब्रवीत् ३७ शीघ्रंन्यस्यतशस्त्राणिवाहेभ्यश्चावरोहत ॥ एषयोगोऽत्रविहितःप्रतिषेधेमहात्मना ३८ द्विपाश्वस्यंदनेभ्यश्चक्षितिंसर्वेऽवरोहत ॥ एवमेतन्नवो हन्यादस्त्रंभूमौनिरायुधान् ३९ यथायथाहियुध्यंतेयोधाह्यस्त्रमिदंप्रति ॥ तथातथाभवंत्येतेकौरवाबलवत्तराः ४० निक्षेप्स्यंतिचशस्त्राणिवाहनेभ्योवरुह्यये ॥ तान्नैतदस्त्रंसंग्रामेनिहनिष्यतिमानवान् ४१ यस्त्वेतत्प्रतियोत्स्यंतिमनसाऽपीहकेचन ॥ निहनिष्यतितान्सर्वान्रसातलगतानपि ४२ तेवचस्तस्यतच्छ्रुत्वा वासुदेवस्यभारत ॥ ईषुःसर्वेसमुत्स्रष्टुंमनोभिःकरणेनच ४३ ततउत्स्रष्टुकामांस्तानस्त्राण्यालक्ष्यपांडवः ॥ भीमसेनोऽब्रवीद्राजन्निदंसंहर्षयन्वचः ४४ नकथं चनशस्त्राणिमोक्तव्यानीहकेनचित् ॥ अहमावारयिष्यामिद्रोणपुत्रास्त्रमाशुगैः ४५ गदयाप्यनयागुर्व्याहेमविग्रहयारणे ॥ कालवत्प्रहरिष्यामिद्रौणेरस्त्रंविशा तयन् ४६ नहिमेविक्रमेतुल्यःकश्चिदस्तिपुमानिह ॥ यथैवसवितुस्तुल्यंज्योतिरन्यन्नविद्यते ४७

अनुमतानुप्रतिषिद्धाइत्यर्थः ३५ सौहृदंकुर्वाणाइतिसानुशयम ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७

पश्यतेमौहिमेबाहूनागराजकरोपमौ ॥ समर्थौपर्वतस्यापिशैशिरस्यनिपातने ४८ नागायतसमप्राणोह्यहमेकोनरेष्विह ॥ शक्रोयथाऽप्रतिद्वंद्वोदिविदेवेषु
विश्रुतः ४९ अद्यपश्यतमेवीर्यंबाह्वोःपीनांसयोर्युधि ॥ ज्वलमानस्यदीप्तस्यद्रौणेरस्त्रस्यवारणे ५० यदिनारायणास्त्रस्यप्रतियोद्धानविद्यते ॥ अद्यैतत्प्र
तियोत्स्यामिपश्यत्सुकुरुपांडुषु ५१ अर्जुनार्जुनबीभत्सोनन्यस्यंगांडिवंत्वया ॥ शशांकस्येवतेपंकोनैर्मल्यंपातयिष्यति ५२ ॥ अर्जुनउवाच ॥ भीमना
रायणास्त्रेमेगोषुचब्राह्मणेषुच ॥ एतेषुगांडिवंन्यस्यमेतद्धिव्रतमुत्तमम् ५३ एवमुक्तस्ततोभीमोद्रोणपुत्रमरिंदमम् ॥ अभ्ययान्मेघघोषेणरथेनादित्यवर्च
सा ५४ सएनमिषुजालेनलघुत्वाच्छीघ्रविक्रमः ॥ निमेषमात्रेणासाद्यकुंतीपुत्रोऽभ्यवाकिरत् ५५ ततोद्रौणिःप्रहस्यैनंद्रवंतमभिभाष्यच ॥ अवाकिरत्प्रदी
प्ताग्रैःशरैस्तैरभिमंत्रितैः ५६ पन्नगैरिवदीप्तास्यैर्वमद्भिर्ज्वलनंरणे ॥ अवकीर्णोऽभवत्पार्थःस्फुलिंगैरिवकांचनैः ५७ तस्यरूपमभूद्राजन्भीमसेनस्यसंयुगे ॥
खद्योतैरावृतस्येवपर्वतस्यदिनक्षये ५८ तदस्त्रंद्रोणपुत्रस्यतस्मिन्प्रतिसमस्यति ॥ अवर्धतमहाराजयथाग्निरनिलोद्धतः ५९ विवर्धमानमालक्ष्यतदस्त्रंभी
मविक्रमम् ॥ पांडुसैन्यमृतेभीमंसुमहद्भयमाविशत् ६० ततःशस्त्राणितेसर्वेसमुत्सृज्यमहीतले ॥ अवारोहन्रथेभ्यश्चहस्त्यश्वेभ्यश्चसर्वशः ६१ तेषुनिक्षिप्त
शस्त्रेषुवाहनेभ्यश्च्युतेषुच ॥ तदस्त्रवीर्यंविपुलंभीममूर्धन्यथापतत् ६२ हाहाकृतानिभूतानिपांडवाश्चविशेषतः ॥ भीमसेनमपश्यंततेजसासंवृतंतथा ६३
॥ इति श्रीमहाभारतेद्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि पांडवसैन्यास्त्रत्यागेनवनवत्यधिकशततमोऽध्यायः ॥ १९९ ॥ ॥ संजयउवाच ॥ भीमसेनं
समाकीर्णंदृष्ट्वाऽस्त्रेणधनंजयः ॥ तेजसःप्रतिघातार्थंवारुणेनसमावृणोत् १ नालक्षयतत्कश्चिद्वारुणास्त्रेणसंवृतम् ॥ अर्जुनस्यलघुत्वाच्चसंवृतत्वाच्चतेजसः २
साश्वसूतरथोभीमोद्रोणपुत्रास्त्रसंवृतः ॥ अग्नावग्निरिवन्यस्तोज्वालामालीसुदुर्दृशः ३ यथारात्रिक्षयेराजन्ज्योतींष्यस्तगिरिंप्रति ॥ समापेतुस्तथाबाणाभी
मसेनरथंप्रति ४ सहिभीमोरथश्चास्यहयाःसूतश्चमारिष ॥ संवृताद्रोणपुत्रेणपावकांतर्गताऽभवन् ५ यथाजग्ध्वाजगत्कृत्स्नंसमयेसचराचरम् ॥ गच्छेद्वह्नि
र्विभोरास्यंतथास्त्रंभीममावृणोत् ६ सूर्यमग्निःप्रविष्टःस्याद्यथाचाग्निंदिवाकरः ॥ तथाप्रविष्टंततेजोनप्राज्ञायतपांडवम् ७ विकीर्णमस्त्रंतदृष्ट्वातथाभीमरथंप्र
ति ॥ उदीर्यमाणंद्रौणिंचनिष्प्रतिद्वंद्वमाहवे ८ सर्वसैन्यंचपांडूनांन्यस्तशस्त्रमचेतनम् ॥ युधिष्ठिरपुरोगांश्चविमुखांस्तान्महारथान् ९ अर्जुनोवासुदेवश्चत्व
रमाणौमहाद्युती ॥ अवप्लुत्यरथाद्वीरौभीममाद्रवतांततः ११ ततस्तद्रोणपुत्रस्यतेजोस्त्रबलसंभवम् ॥ विगाह्यतौसुबलिनौमाययाविशतांतथा ११ न्यस्त
शस्त्रौततस्तौतुनादहत्सास्त्रजोऽनलः ॥ वारुणास्त्रप्रयोगाच्चवीर्यवत्त्वाच्चकृष्णयोः १२

ततश्चकृषतुर्भीमंसर्वशस्त्रायुधानिच ॥ नारायणास्त्रशांत्यर्थंनरनारायणौबलात् १३ आकृष्यमाणःकौंतेयोनदत्येवमहारवम् ॥ वर्धतेचैवतद्घोरंद्रोणेरस्त्रंसुदुर्जयम् १४ तमब्रवीद्वासुदेवःकिमिदंपांडुनंदन ॥ वार्यमाणोऽपिकौंतेययद्युद्धान्ननिवर्तसे १५ यदियुद्धेनजेयाःस्युरिमेकौरवनंदनाः ॥ वयमप्यत्रयुध्येमतथाचेमेनरर्षभाः १६ रथेभ्यस्त्ववतीर्णाःस्मसर्वएवाहितावकाः ॥ तस्मात्त्वमपिकौंतेयरथात्तूर्णमपाक्रम १७ एवमुक्त्वातुतंकृष्णोरथाद्भूमिमवर्तयत् ॥ निश्वसंतंयथानागंक्रोधसंरक्तलोचनम् १८ यदाऽपकृष्टःसरथान्न्यासितश्चायुधंभुवि ॥ ततोनारायणास्त्रंतत्प्रशांतंशत्रुतापनम् १९ ॥ संजयउवाच ॥ तस्मिन्प्रशांतेविधिनातेनतेजसिदुःसहे ॥ बभूवुर्विमलाःसर्वादिशःप्रदिशएवच २० प्रववुश्चशिवावाताःप्रशांतामृगपक्षिणः ॥ वाहनानिचहृष्टानिप्रशांतेऽस्त्रेसुदुर्जये २१ व्यपोढेचततोघोरेतस्मिंस्तेजसिभारत ॥ बभौभीमोनिशापायेधीमान्सूर्यइवोदितः २२ हतशेषंबलंतत्तुपांडवानामातिष्ठत ॥ अस्त्रव्युपरमाद्धृष्टंतवपुत्रजिघांसया २३ व्यवस्थितेबलेतस्मिन्नस्त्रेप्रतिहतेतथा ॥ दुर्योधनोमहाराजद्रोणपुत्रमथाब्रवीत् २४ अश्वत्थामन्पुनःशीघ्रमस्त्रमेतत्प्रयोजय ॥ अवस्थिताहिपंचालाःपुनरेतेजयैषिणः २५ अश्वत्थामातथोक्तस्तुतवपुत्रेणमारिष ॥ सुदीनमभिनिःश्वस्यराजानमिदमब्रवीत् २६ नैतदावर्ततेराजन्नस्त्रंद्विर्नोपपद्यते ॥ आवृत्तंहिनिवर्तेतप्रयोक्तारंनसंशयः २७ एषचास्त्रप्रतीघातंवासुदेवःप्रयुक्तवान् ॥ अन्यथाविहितःसंख्येवधःशत्रोर्जनाधिप २८ पराजयोवामृत्युर्वाश्रेयान्मृत्युर्नर्निर्जयः ॥ विजिताश्चारयोह्येतेशस्त्रोत्सर्गान्मृतोपमाः २९ ॥ दुर्योधनउवाच ॥ आचार्यपुत्रयद्येतद्द्विरस्त्रंनप्रयुज्यते ॥ अन्यैर्गुरुघ्नावध्यंतामस्त्रैरस्त्रविदांवर ३० त्वयिशस्त्राणिदिव्यानित्र्यंबकेचामितौजसि ॥ इच्छतोनहितेमुच्येत्संक्रुद्धोहिपुरंदरः ३१ ॥ धृतराष्ट्रउवाच ॥ तस्मिन्नस्त्रेप्रतिहतेद्रोणेचोपधिनाहते ॥ तथादुर्योधनेनोक्तोद्रौणिःकिमकरोत्पुनः ३२ दृष्ट्वापार्थांश्चसंग्रामेयुद्धायसमुपस्थितान् ॥ नारायणास्त्रनिर्मुक्तांश्चरतःपृतनामुखे ३३ ॥ संजयउवाच ॥ जानन्पितुःसनिधनंसिंहलांगूलकेतनः ॥ सक्रोधोभयमुत्सृज्यसोऽभिदुद्रावपार्षतम् ३४ अभिद्रुत्यचविंशत्याक्षुद्रकाणांनरर्षभ ॥ पंचभिश्चातिवेगेनविव्याधपुरुषर्षभः ३५ धृष्टद्युम्नस्ततोराजन्ज्वलंतमिवपावकम् ॥ द्रोणपुत्रंत्रिषष्ट्याथाराजन्विव्याधपत्रिणाम् ३६ सारथिंचास्यविंशत्यास्वर्णपुंखैःशिलाशितैः ॥ हयांश्चचतुरोऽविध्यच्चतुर्भिर्निशितैःशरैः ३७ विद्ध्वाविद्ध्वानदद्द्रौणिंकंपयन्निवमेदिनीम् ॥ आददेसर्वलोकस्यप्राणानिवमहारणे ३८ पार्षतस्तुबलीराजन्कृतास्त्रःकृतनिश्चयः ॥ द्रौणिमेवाभिदुद्रावमृत्युंकृत्वानिवर्तनम् ३९ ततोबाणमयंवर्षंद्रोणपुत्रस्यमूर्धनि ॥ अवासृजदमेयात्मापांचाल्योरथिनांवरः ४० तंद्रौणिःसमरेक्रुद्धंछादयामासपत्रिभिः ॥ विव्याधचैनंदशभिःपितुर्वधमनुस्मरन् ४१

४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१

द्वाभ्यांचसुविसृष्टाभ्यांक्षुराभ्यांध्वजकार्मुके ॥ छित्त्वापांचालराजस्यद्रौणिरन्यैःसमार्दयत् ४२ व्यश्वसूतरथंचैनंद्रौणिश्चक्रेमहाहवे ॥ तस्यचानुचरान्सर्वान्
क्रुद्धःप्राद्रावयच्छरैः ४३ ततःप्रदुद्रुवेसैन्यंपंचालानांविशांपते ॥ संभ्रांतरूपमार्तंचनपरस्परमैक्षत ४४ दृष्ट्वातुविमुखान्योधान्धृष्टद्युम्नंचपीडितम् ॥ शैने
योऽचोदयत्तूर्णंरथंद्रौणिरथंप्रति ४५ अष्टभिर्निशितैर्बाणैरश्वत्थामानमार्दयत् ॥ विंशत्यापुनराहत्यनानारूपैरमर्षणः ४६ विव्याधचतथासूतंचतुर्भिश्चतुरो
हयान् ॥ धनुर्ध्वजंचसंयत्तश्चिच्छेदकृतहस्तवत् ४७ ससाश्वंव्यधमच्चापिरथंहेमपरिष्कृतम् ॥ हृदिविव्याधसमरेत्रिंशतासायकैर्भृशम् ४८ एवंसपीडितोरा
जन्नश्वत्थामामहाबलः ॥ शरजालैःपरिवृतःकर्तव्यंनान्वपद्यत ४९ एवंगतेगुरोःपुत्रेतवपुत्रोमहारथः ॥ कृपकर्णादिभिःसार्धंशरैःसात्वतमावृणोत् ५० दुर्यो
धनस्तुविंशत्याकृपःशारद्वतस्त्रिभिः ॥ कृतवर्माऽथदशभिःकर्णःपंचाशताशरैः ५१ दुःशासनःशतेनैववृषसेनश्चसप्तभिः ॥ सात्यकिंविव्यधुस्तूर्णंसमंतान्निशि
तैःशरैः ५२ ततःससात्यकीराजन्सर्वानेवमहारथान् ॥ विरथान्विमुखांश्चैवक्षणेनैवाकरोन्नृप ५३ अश्वत्थामातुसंप्राप्यचेतनांभरतर्षभ ॥ चिंतयामासदुःखा
र्तोनिःश्वसंश्चपुनःपुनः ५४ अथोरथांतरंद्रौणिःसमारुह्यपरंतपः ॥ सात्यकिंवारयामासकिरन्शरशतान्बहून् ५५ तमापतंतंसंप्रेक्ष्यभारद्वाजसुतंरणे ॥ वि
रथंविमुखंचैवपुनश्चक्रेमहारथः ५६ ततस्तेपांडवाराजन्दृष्ट्वासात्यकिविक्रमम् ॥ शंखशब्दान्भृशंचक्रुःसिंहनादांश्चनेदिरे ५७ एवंतंविरथंकृत्वासात्यकिःस
त्यविक्रमः ॥ जघानवृषसेनस्यत्रिसाहस्रान्महारथान् ५८ अयुतंदंतिनांसार्धंकृपस्यनिजघानसः ॥ पंचायुतानिचाश्वानांशकुनेर्निजघानह ५९ ततोद्रो
णिर्महाराजरथमारुह्यवीर्यवान् ॥ सात्यकिंप्रतिसंक्रुद्धःप्रययौतद्वधेप्सया ६० पुनस्तमागतंदृष्ट्वाशैनेयोनिशितैःशरैः ॥ अदारयत्क्रूरतरैःपुनःपुनररिंदम ६१
सोऽतिविद्धोमहेष्वासोनानालिंगैरमर्षणः ॥ युयुधानेनवैद्रौणिःप्रहसन्वाक्यमब्रवीत् ६२ शैनेयाभ्युपपत्तिंतेजानाम्याचार्यघातिनि ॥ नचैनंत्रास्यसिमयाग्र
स्तमात्मानमेवच ६३ शपेऽऽत्मनाऽहंशैनेयसत्येनतपसातथा ॥ अहत्वासर्वपंचालान्यदिशांतिमहंलभे ६४ यद्बलंपांडवेयानांवृष्णीनामपियद्बलम् ॥ क्रियतां
सर्वमेवेहनिहनिष्यामिसोमकान् ६५ एवमुक्त्वार्करश्म्याभंसुतीक्ष्णंतंशरोत्तमम् ॥ व्यसृजत्सात्वतेद्रौणिर्वज्रंवृत्रेयथाहरिः ६६ सतंनिर्भिद्यतेनास्तःसायकः
सशरावरम् ॥ विवेशवसुधांभित्त्वाश्वसन्बिलमिवोरगः ६७ सभिन्नकवचःशूरस्तोत्रार्दितइवाद्विपः ॥ विमुच्यसशरंचापंभूरिव्रणपरिस्रवः ६८ सीदन्रुधिरासि
क्तश्चरथोपस्थउपाविशत् ॥ सूतेनापहृतस्तूर्णंद्रोणपुत्राद्रथांतरम् ६९ अथान्येनसुपुंखेनशरेणानतपर्वणा ॥ आजघानभ्रुवोर्मध्येधृष्टद्युम्नंपरंतपः ७०
सपूर्वमतिविद्धश्चभृशंपश्चाच्चपीडितः ॥ससादाथचपांचाल्योऽव्यपाश्रयतचध्वजम् ७१

तंनागमिवसिंहेनदृष्ट्वाराजन्शरार्दितम् ॥ जवेनाभ्यद्रवञ्छूराःपंचपांडवतोरथाः ७२ किरीटीभीमसेनश्चवृद्धक्षत्रश्चपौरवः ॥ युवराजश्चचेदीनांमालवश्चसुदर्शनः ७३ एतेहाहाकृताःसर्वेप्रगृहीतशरासनाः ॥ वीरंद्रौणायनिंवीराःसर्वतःपर्यवारयन् ७४ तेविंशतिपदेयत्तागुरुपुत्रममर्षणम् ॥ पंचभिःपंचभिर्बाणैरभ्यघ्नन्सर्वतःसमम् ७५ आशीविषाभैर्विंशत्यापंचभिस्तुशितैःशरैः ॥ चिच्छेदयुगपद्द्रौणिःपचविंशतिसायकान् ७६ सप्तभिस्तुशितैर्बाणैःपौरवंद्रौणिरार्दयत् ॥ मालवंत्रिभिरेकेनपार्थंषड्भिर्वृकोदरम् ७७ ततस्तेविव्यधुःसर्वेद्रौणिंराजन्महारथाः ॥ युगपच्चपृथक्चैवरुक्मपुंखैःशिलाशितैः ७८ युवराजश्चविंशत्याद्रौणिंविव्याधपत्रिभिः ॥ पार्थश्चपुनरष्टाभिस्तथासर्वेत्रिभिस्त्रिभिः ७९ ततोऽर्जुनंषड्भिरथाजघानद्रौणायनिर्दशभिर्वासुदेवम् ॥ भीमंदशार्धैर्युवराजंचतुर्भिर्द्वाभ्यांद्वाभ्यांमालवंपौरवंच ८० सूतंविद्धाभीमसेनस्यषड्भिर्द्वाभ्यांविद्धाकार्मुकंचध्वजंच ॥ पुनःपार्थंशरवर्षेणविद्धाद्रौणिर्घोरंसिंहनादंननाद ८१ तस्यास्यतस्तान्निशितान्पीतधारान्द्रौणेःशरान्पृष्ठतश्चाग्रतश्च ॥ धरावियद्यौःप्रदिशोदिशश्चच्छन्नाबाणैरभवन्घोररूपैः ८२ आसन्नस्यस्वरथंतीव्रतेजाःसुदर्शनस्येंद्रकेतुप्रकाशौ ॥ भुजौशिरश्चेंद्रसमानवीर्यस्त्रिभिःशरैर्युगपत्संचकर्त ८३ सपौरवंरथशक्त्यानिहत्यच्छित्वारथंतिलशश्चास्यबाणैः ॥ छित्वाचबाहूवरचंदनाक्तौभल्लेनकायाच्छिरउच्चकर्त ८४ युवानमिंदीवरदामवर्णंचेदिप्रभुंयुवराजंप्रसह्य ॥ बाणैस्त्वरावान्प्रज्वलिताग्निकल्पैर्विद्धाप्रादान्मृत्यवेसाश्वसूतम् ८५ मालवंपौरवंचैवयुवराजंचचेदिपम् ॥ दृष्ट्वासमक्षंनिहतंद्रोणपुत्रेणपांडवः ८६ भीमसेनोमहाबाहुःक्रोधमाहारयत्परम् ॥ ततःशरशतैस्तीक्ष्णैःसंक्रुद्धाशीविषोपमैः ८७ छादयामाससमरेद्रोणपुत्रंपरंतपः ॥ ततोद्रौणिर्महातेजाःशरवर्षंनिहत्यतम् ८८ विव्याधनिशितैर्बाणैर्भीमसेनममर्षणः ॥ ततोभीमोमहाबाहुर्द्रौणेर्युधिमहाबलः ८९ क्षुरप्रेणधनुश्छित्वाद्रौणिंविव्याधपत्रिणा ॥ तदपास्यधनुश्छिन्नंद्रोणपुत्रोमहामनाः ९० अन्यत्कार्मुकमादायभीमंविव्याधपत्रिभिः ॥ तौद्रौणिभीमौसमरेपराक्रांतौमहाबलौ ९१ अवर्षतांशरवर्षंवृष्टिमंताविवांबुदौ ॥ भीमनामांकिताबाणाःस्वर्णपुंखाःशिलाशिताः ९२ द्रौणिंसंछादयामासुर्घनौघाइवभास्करम् ॥ तथैवद्रौणिनिर्मुक्तैर्भीमःसन्नतपर्वभिः ९३ अवाकीर्यतसक्षिप्रंशरैःशतसहस्रशः ॥ सच्छाद्यमानःसमरेद्रौणिनारणशालिना ९४ नविव्यथेमहाराजतदद्भुतमिवाभवत् ॥ ततोभीमोमहाबाहुःकार्तस्वरविभूषितान् ९५ नाराचान्दशसंप्रैषीद्यमदंडनिभाञ्छितान् ॥ तेजत्रुदेशमासाद्यद्रोणपुत्रस्यमारिष ९६ निर्भिद्यविविशुस्तूर्णंवल्मीकमिवपन्नगाः ॥ सोऽतिविद्धोभृशंद्रौणिःपांडवेनमहात्मना ९७ ध्वजयष्टिंसमासाद्यन्यमीलयतलोचने ॥ समुहूर्तात्पुनःसंज्ञांलब्ध्वाद्रौणिर्नराधिप ९८ क्रोधंपरममातस्थौसमरेरुधिरोक्षितः ॥ दृढंसोऽभिहतस्तेनपांडवेनमहात्मना ९९ वेगंचक्रेमहाबाहुर्भीमसेनरथंप्रति ॥ ततआकर्णपूर्णानांशराणांतिग्मतेजसाम् १००

शतमाशीविषाभानांप्रेषयामासभारत ॥ भीमोऽपिसमरश्लाघीतस्यवीर्यमचिंतयत् १०१ तूर्णंप्रासृजदुग्राणिशरवर्षाणिपांडवः ॥ ततोद्रौणिर्महाराजच्छित्वा
ऽस्यविशिखैर्धनुः २ आजघानोरसिक्रुद्धःपांडवंनिशितैःशरैः ॥ ततोऽन्यद्धनुरादायभीमसेनोह्यमर्षणः ३ विव्याधनिशितैर्बाणैर्द्रौणिंपंचभिराहवे ॥ जीमू
ताविवघर्मांतेतौशरौघप्रवर्षिणौ ४ अन्योन्यक्रोधताम्राक्षौछादयामासतुर्युधि ॥ तलशब्दैस्ततोघोरैस्त्रासयंतौपरस्परम् ५ अयुध्येतांसुसंरब्धौकृतप्रतिकृतै
षिणौ ॥ ततोविस्फार्यसुमहच्चापंरुक्मविभूषितम् ६ भीमंप्रैक्षतसद्रौणिःशरानस्यंतमंतिकात् ॥ शरद्यहर्मध्यगतोदीप्तार्चिरिवभास्करः ७ आददानस्यवि
शिखान्संदधानस्यचाशुगान् ॥ विकर्षतोमुंचतश्चनांतरंददृशुर्जनाः ८ अलातचक्रप्रतिमंतस्यमंडलमायुधम् ॥ द्रौणेरासीन्महाराजबाणान्विसृजतस्तदा ९
धनुश्च्युताःशरास्तस्यशतशोऽथसहस्रशः ॥ आकाशेप्रत्यदृश्यंतशलभानामिवायतीः ११० तेतुद्रौणिविनिर्मुक्ताःशराहेमविभूषिताः ॥ अजस्रमन्वकीर्यंत
घोराभीमरथंप्रति ११ तत्राद्भुतमपश्यामभीमसेनस्यविक्रमम् ॥ बलंवीर्यंप्रभावंचव्यवसायंचभारत १२ तांसमेघादिवोद्भूतांबाणवृष्टिंसमंततः ॥ जलवृष्टिं
महाघोरांतपांतइवचिंतयन् १३ द्रोणपुत्रवधप्रेप्सुर्भीमोभीमपराक्रमः ॥ अमुंचच्छरवर्षाणिप्रावृषीवबलाहकः १४ तद्रुक्मपृष्ठंभीमस्यधनुर्घोरंमहारणे ॥ विकृ
ष्यमाणंविबभौशक्रचापमिवापरम् १५ तस्माच्छराःप्रादुरासंञ्छतशोऽथसहस्रशः ॥ संछादयंतःसमरेद्रौणिमाहवशोभिनम् १६ तयोर्विसृजतोरेवंशरजाला
निमारिष ॥ वायुरप्यंतराराजन्नाशक्नोत्प्रतिसर्पितुम् १७ तथाद्रौणिर्महाराजशरान्हेमविभूषितान् ॥ तैलधौतान्प्रसन्नाग्रान्प्राहिणोद्वधकांक्षया १८ तानंत
रिक्षेविशिखैस्त्रिधैकैकमशातयत् ॥ विशेषयन्द्रोणसुतंतिष्ठतिष्ठेतिचाब्रवीत् १९ पुनश्चशरवर्षाणिघोराण्युग्राणिपांडवः ॥ व्यसृजद्बलवान्क्रुद्धोद्रोणपुत्रवधेप्स
या १२० ततोऽस्त्रमाययातूर्णंशरवृष्टिंनिवार्यताम् ॥ धनुश्चिच्छेदभीमस्यद्रोणपुत्रोमहास्त्रवित् २१ शरैश्चैनंसुबहुभिःक्रुद्धःसंख्येपराभिनत् ॥ सच्छिन्नधन्वा
बलवान्रथशक्तिंसुदारुणाम् २२ वेगेनाविध्यचिक्षेपद्रोणपुत्ररथंप्रति ॥ तामापतंतींसहसामहोल्काभांशितैःशरैः २३ चिच्छेदसमरेद्रौणिर्दर्शयन्पाणिलाघ
वम् ॥ एतस्मिन्नंतरेभीमोदृढमादायकार्मुकम् २४ द्रौणिंविव्याधविशिखैःस्मयमानोवृकोदरः ॥ ततोद्रौणिर्महाराजभीमसेनस्यसारथिम् २५ ललाटेदारया
मासशरेणानतपर्वणा ॥ सोऽतिविद्धोबलवताद्रोणपुत्रेणसारथिः २६ व्यामोहमगमद्राजन्रश्मीनुत्सृज्यवाजिनः ॥ ततोऽश्वाःप्राद्रवंस्तूर्णंमोहितेरथसारथौ
२७ भीमसेनस्यराजेंद्रपश्यतांसर्वधन्विनाम् ॥ तंदृष्ट्वाप्रद्रुतैरश्वैरपकृष्टंरणाजिरात् २८ दध्मौप्रमुदितःशंखंबृहंतमपराजितः ॥ ततःसर्वेचपंचालाभीमसे
नश्चपांडवः २९ धृष्टद्युम्नरथंत्यक्त्वाभीताःसंप्राद्रवन्दिशः ॥ तान्प्रभग्नांस्ततोद्रौणिःपृष्ठतोविकिरन्शरान् १३०

१३१ ॥ इतिद्रोणपर्वणिटीकायांद्विशततमोऽध्यायः ॥ २०० ॥ ॥ ७ ॥ ॥ यथाशिवमयोविष्णुरेवंविष्णुमयंजगदितिस्मृतौदार्ष्टांतिकंजगतोविष्णुमयत्वंपूर्वयोःपर्वणोर्विष्णोर्विश्वरूपप्रकाशनेन व्याख्यातं । अथदृष्टांतीकृतंविष्णोःशिवमयत्वंव्याचिख्यासुःशतरुद्रियमाभरते । तदुपोद्धातत्वेनाश्वत्थामास्त्राभिभवंतावद्दर्शयति तत्प्रभग्नंबलंदृष्ट्वेत्यादिना १ ततस्तेतव २ सोमकाव

अभ्यवर्ततवेगेनकालयन्पांडुवाहिनीम् ॥ तेवध्यमानाःसमरेद्रोणपुत्रेणपार्थिवाः ॥ द्रोणपुत्रभयाद्राजन्दिशःसर्वाश्वभेजिरे १३१ ॥ इतिश्रीमहाभारतेद्रोणपर्वणि नारायणास्त्रमोक्षपर्वण्यश्वत्थामपराक्रमे द्विशततमोऽध्यायः ॥ २०० ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ तत्प्रभग्नंबलंदृष्ट्वाकुंतीपुत्रोधनंजयः ॥ न्यवारयदमेयात्माद्रोणपुत्रजयेप्सया १ ततस्तेसैनिकाराजन्नैवतत्रावतस्थिरे ॥ संस्थाप्यमानायत्नेनगोविंदेनार्जुनेनच २ एकएवचबीभत्सुःसोमकावयवैः सह ॥ मत्स्यैरन्यैश्चसंधायकौरवान्संन्यवर्तत ३ ततोद्रुतमतिक्रम्यसिंहलांगूलकेतनम् ॥ सव्यसाचीमहेष्वासमश्वत्थामानमब्रवीत् ४ याशक्तिर्यच्चविज्ञानंयद्वीर्यंयच्चपौरुषम् ॥ धार्तराष्ट्रेषुयाप्रीतिर्द्वेषोऽस्मासुचयश्चते ५ यच्चभूयोऽस्तितेजस्तेतत्सर्वंमयिदर्शय ॥ सएवद्रोणहंतातेदर्पंछेत्स्यतिपार्षतः ६ कालानलसमप्रख्यंद्विषतामंतकोपमम् ॥ समासादयपांचाल्यंमांचापिसहकेशवम् ॥ दर्पंनाशयिताऽस्म्यद्यतवोद्वृत्तस्यसंयुगे ७ ॥ धृतराष्ट्रउवाच ॥ आचार्यपुत्रोमानार्होबलवांश्चापिसंजय ॥ प्रीतिर्धनंजयेचास्यप्रियश्चापिमहात्मनः ८ नभूतपूर्वंबीभत्सोर्वाक्यंपरुषमीदृशम् ॥ अथकस्मात्सकौंतेयःसखायंरूक्षमुक्तवान् ९ ॥ संजयउवाच ॥ युवराजेहतेचैववृद्धक्षत्रेचपौरवे ॥ इष्वस्त्रविधिसंपन्नेमालवेचसुदर्शने १० धृष्टद्युम्नेसात्यकौचभीमेचापिपराजिते ॥ युधिष्ठिरस्यतैर्वाक्यैर्मर्मण्यपिचघट्टिते ११ अंतर्भेदेचसंजातेदुःखंसंस्मृत्यचप्रभो ॥ अभूतपूर्वोबीभत्सोर्दुःखान्मन्युरजायत १२ तस्मादनर्हमश्लीलमप्रियंद्रौणिमुक्तवान् ॥ मान्यमाचार्यतनयंरूक्षंकापुरुषंयथा १३ एवमुक्तःश्वसन्क्रोधान्महेष्वासतमोनृप ॥ पार्थेनपरुषंवाक्यंसर्वमर्मभिदागिरा १४ द्रौणिश्चुकोपपार्थायकृष्णायचविशेषतः ॥ सतुयत्तोरथेस्थित्वावार्युपस्पृश्यवीर्यवान् १५ देवैरपिसुदुर्धर्षमस्त्रमाग्नेयमाददे ॥ दृश्यादृश्यानरिगणानुद्दिश्याचार्यनंदनः १६ सोऽभिमंत्र्यशरंदीप्तंविधूममिवपावकम् ॥ सर्वतःक्रोधमाविश्यचिक्षेपपरवीरहा १७ ततस्तुमुलमाकाशेशरवर्षमजायत ॥ पावकार्चिःपरीतंतत्पार्थमेवाभिपुप्लुवे १८ उल्काश्चगगनात्पेतुर्दिशश्चनचकाशिरे ॥ तमश्चसहसारौद्रंचमूमवततारताम् १९ रक्षांसिचपिशाचाश्चविनेदुरतिसंगताः ॥ ववुश्चाशिशिरावाताःसूर्योनैवततापच २० वायसाश्चापिचाक्रंदन्दिक्षुसर्वासुभैरवं ॥ रुधिरंचापिवर्षंतोविनेदुस्तोयदादिवि २१ पक्षिणःपशवोगावोविनेदुश्चापिसुव्रताः ॥ परमंप्रयतात्मानोनशांतिमुपलेभिरे २२ भ्रांतसर्वमहाभूतमावर्तितदिवाकरं ॥ त्रैलोक्यमभिसंतप्तंज्वराविष्टमिवाभवत् २३ अस्त्रतेजोभिसंतप्तानागाभूमिशयास्तथा ॥ निःश्वसंतःसमुत्पेतुस्तेजोघोरंमुमुक्षवः २४

यवैःसोमकानामवयवरूपैर्मांडलिकैः ३ । ४ । ५ । ६ उद्वृत्तस्यउच्छास्त्रवर्तिनः ७ । ८ । ९ युवराजेचेदिपतौ १० । ११ अंतर्भेदेहृदयवैक्लव्ये दुःखंपुत्रवधादिजम् १२ अश्लीलंजुगुप्सितं अप्रियंपरुषम् १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ प्रयतात्मानोयोगिनोऽपिसमाधिच्युताबभूवुरित्यर्थः २२ आवर्तितदिवाकरंविश्वंसर्वभ्रमतीवेत्यमन्यतेत्यर्थः २३ । २४

२५ । २६ । २७ । २८ त्रेसुःशब्दंचक्रुः यथावनेइतिसंबंधः २९ । ३० । ३१ युगांतेप्रलये संवर्तकःसंहारकः ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ तमोनुदौचंद्रसूर्यौ ४० । ४१ । ४२

जलजानिचसत्त्वानिदह्यमानानिभारत ॥ नशांतिमुपजग्मुर्हितप्यमानैर्जलाशयैः २५ दिग्भ्यःप्रदिग्भ्यःखाद्भूमेःसर्वतःशरवृष्टयः ॥ उच्चावचानिपेतुर्वैगरुडानिलरंहसः २६ तैःशरैर्द्रोणपुत्रस्यवज्रवेगैःसमाहताः ॥ प्रदग्धारिपवःपेतुरग्निदग्धाइवद्रुमाः २७ दह्यमानामहानागाःपेतुरुर्व्यांसमंततः ॥ नदंतोभैरवान्नादान्जलदोपमनिःस्वनान् २८ अपरेप्रद्रुतानागाभयत्रस्ताविशांपते ॥ त्रेसुर्दिशोयथापूर्वंवनेदावाग्निसंवृताः २९ द्रुमाणांशिखराणीवदावदग्धानिमारिष ॥ अश्ववृंदान्यदृश्यंतरथवृंदानिभारत ३० अपतंतरथौघाश्चतत्रतत्रसहस्रशः ॥ तत्सैन्यंभयसंविग्नंददाहयुधिभारत ३१ युगांतेसर्वभूतानिसंवर्तकइवानलः ॥ दृष्ट्वातुपांडवींसेनांदह्यमानांमहाहवे ३२ प्रहृष्टास्तावकाराजन्सिंहनादान्विनेदिरे ॥ ततस्तूर्यसहस्राणिनानालिंगानिभारत ३३ तूर्णमाजघ्निरेहृष्टास्तावकाजितकाशिनः ॥ कृत्स्नाह्यक्षौहिणीराजन्सव्यसाचीचपांडवः ३४ तमसासंवृतेलोकेनादृश्यंतमहाहवे ॥ नैवनस्तादृशंराजन्दृष्टपूर्वंनचश्रुतम् ३५ यादृशंद्रोणपुत्रेणसृष्टमस्त्रममर्षिणा ॥ अर्जुनस्तुमहाराजब्राह्ममस्त्रमुदैरयत् ३६ सर्वास्त्रप्रतिघातार्थंविहितंपद्मयोनिना ॥ ततोमुहूर्तादिवतत्तमोव्युपशशाम ह ३७ प्रववौचानिलःशीतोदिशश्चविमलाबभुः ॥ तत्राद्भुतमपश्यामकृत्स्नामक्षौहिणींहताम् ३८ अनभिज्ञेयरूपांचप्रदग्धामस्त्रतेजसा ॥ ततोवीरौमहेष्वासौविमुक्तौकेशवार्जुनौ ३९ सहितौप्रत्यदृश्येतांनभसीवतमोनुदौ ॥ ततोगांडीवधन्वाचकेशवश्चाक्षतावुभौ ४० सपताकध्वजहयःसानुकर्षवरायुधः ॥ प्रबभौसरथोयुक्तस्तावकानांभयंकरः ४१ ततःकिलकिलाशब्दःशंखभेरीस्वनैःसह ॥ पांडवानांप्रहृष्टानांक्षणेनसमजायत ४२ हताविति तयोरासीत्सेनयोरुभयोर्मतिः ॥ तरसाऽभ्यागतौदृष्ट्वासहितौकेशवार्जुनौ ४३ तावक्षतौप्रमुदितौदध्मतुर्वारिजोत्तमौ ॥ दृष्ट्वाप्रमुदितान्पार्थांस्त्वदीयाव्यथिताभृशम् ४४ विमुक्तौचमहात्मानौदृष्ट्वाद्रौणिःसुदुःखितः ॥ मुहूर्तंचिंतयामासकिंन्वेतदितिमारिष ४५ चिंतयित्वातुराजेंद्रध्यानशोकपरायणः ॥ निःश्वसन्दीर्घमुष्णंचविमनाश्चाभवत्ततः ४६ ततोद्रौणिर्धनुस्त्यक्त्वारथात्प्रस्कंद्यवेगितः ॥ धिग्धिक्सर्वमिदंमिथ्येत्युक्त्वासंप्राद्रवद्रणात् ४७ ततःस्निग्धांबुदाभासंवेदावासमकल्मषम् ॥ वेदव्यासंसरस्वत्यावासंव्यासंददर्श ह ४८ तंद्रौणिरग्रतोदृष्ट्वास्थितंकुरुकुलोद्वहम् ॥ सन्नकंठोऽब्रवीद्वाक्यमभिवाद्यसुदीनवत् ४९ भोभोमायायदृच्छावानविद्मःकिमिदंभवेत् ॥ अस्त्रंत्विदंकथंमिथ्याममकश्चव्यतिक्रमः ५० अधरोत्तरमेतद्वालोकानांवापराभवः ॥ यदिमौजीवतःकृष्णौकालोहिदुरतिक्रमः ५१ नासुरानचगंधर्वानपिशाचानराक्षसाः ॥ नसर्पायक्षपतगानमनुष्याःकथंचन ५२ उत्सहंतेऽन्यथाकर्तुमेतदस्त्रंमयेरितम् ॥ तदिदंकेवलंहत्वाशांतमक्षौहिणींज्वलत् ५३

तयोर्विषये ४३ । ४४ । ४५ । ४६ । ४७ वेदानांव्यासंशाखाप्रशाखाभेदेन।विभाजकं सरस्वत्या अंगोपवेदस्मृत्यादिरूपाया आवासं व्यासमितिपाठविस्तारम् ४८ कुरवोधृतराष्ट्राद्यास्तेषांकुलोद्वहम् ४९ मायानष्टयोरप्यनष्टत्वेनदर्शनं यदृच्छा अस्त्रशक्तेरनियमः ५० अधरोत्तरंविपरीतम् ५१ । ५२ । ५३

५४ । ५५ । ५६ । ५७ शिशिरंगिरिंहिमाचलम् ५८। ५९। ६० ब्रह्मभूतोब्रह्मवदस्यंतंनिर्लेपः ईश्वरंनिमित्तं योनिमुपादानं पातिपालयितारम् ६१ । ६२ ईशानानांब्रह्मादीनामपिवृषभंश्रेष्ठं कप र्दिनंजटाजूटवंतं चेकितानंचेतयंतं परांप्रकृष्टांयोनिमधिष्ठानं विष्ठतःस्थावरस्यगच्छतोजंगमस्य ६३ दुर्वारणंदुर्निषेधं दुर्दर्शंविरूपाक्षं तिग्ममन्युंतीव्रकोपंदुष्टेषु । प्रचेतसमुदाराचित्तंसाधुषु ६४







सर्वघातिमयामुक्तमस्त्रंपरमदारुणम् ॥ केनेमौमर्त्यधर्माणौनावधीत्केशवार्जुनौ ५४ एतत्प्रब्रूहिभगवन्मयापृष्टोयथातथम् ॥ श्रोतुमिच्छामितत्त्वेनसर्वमेतन्म हामुने ५५ ॥ व्यासउवाच ॥ महांतमेवमर्थंमांयंत्वंपृच्छसिविस्मयात् ॥ तंप्रवक्ष्यामितेसर्वंसमाधायमनःशृणु ५६ योऽसौनारायणोनामपूर्वेषामपिपूर्वजः ॥ अजायतचकार्यार्थंपुत्रोधर्मस्यविश्वकृत् ५७ सतपस्तीव्रमातस्थेशिशिरंगिरिमास्थितः ॥ ऊर्ध्वबाहुर्महातेजाज्वलनादित्यसन्निभः ५८ षष्टिंवर्षसहस्राणिता वंत्येवशतानिच ॥ अशोषयत्तदाऽऽत्मानंवायुभक्षोंऽबुजेक्षणः ५९ अथापरंतपस्तप्त्वाद्विस्ततोऽन्यत्पुनर्महत् ॥ द्यावापृथिव्योर्विवरंतेजसासमपूरयत् ६० सतेनतपसातातब्रह्मभूतोयदाऽभवत् ॥ ततोविश्वेश्वरंयोनिंविश्वस्यजगतःपतिम् ६१ ददर्शभृशदुर्धर्षंसर्वैर्देवैरभिष्टुतम् ॥ अणीयांसमणुभ्यश्चबृहद्भ्यश्चबृहत्त मम् ६२ रुद्रमीशानवृषभंहरंशंभुंकपर्दिनम् ॥ चेकितानंपरांयोनिंतिष्ठतोगच्छतश्चह ६३ दुर्वारणंदुर्दर्शंतिग्ममन्युंमहात्मानंसर्वहरंप्रचेतसम् ॥ दिव्यंचा पमिषुधीचाददानंहिरण्यवर्माणमनंतवीर्यम् ६४ पिनाकिनंवज्रिणंदीप्तशूलंपरश्वधिनंगदिनंचायतासिम् ॥ शुभ्रंजटिलंमुसलिनंचंद्रमौलिंव्याघ्राजिनंपरिघिणं दंडपाणिम् ६५ शुभांगदंनागयज्ञोपवीतंविश्वैर्गणैःशोभितंभूतसंघैः ॥ एकीभूतंतपसासन्निधानंवयोतिगैःसुष्टुतमिष्टवाग्भिः ६६ जलंदिशंखंक्षितिंचंद्रसूर्यौ तथावाय्वग्नीप्रमिमाणंजगच्च ॥ नालंद्रष्टुंयंजनाभिन्नवृत्ताब्रह्मद्विषघ्नममृतस्ययोनिम् ६७ यंपश्यंतिब्राह्मणाःसाधुवृत्ताःक्षीणेपापेमनसावीतशोकाः ॥ तंनिष्प तंतंतपसाधर्ममीड्यंतद्भक्त्याविश्वरूपंददर्श ॥ दृष्ट्वाचैनंवाङ्मनोबुद्धिदेहैःसंहृष्टात्मामुमुदेवासुदेवः ६८ अक्षमालापरिक्षिप्तंज्योतिषांपरमंनिधिम् ॥ ततो नारायणोदृष्ट्वाववंदेविश्वसंभवम् ६९ वरदंपृथुचार्वंग्यापार्वत्यासहितंप्रभुम् ॥ क्रीडमानंमहात्मानंभूतसंघगणैर्वृतम् ७० अजमीशानमव्यक्तंकारणात्मानमच्यु तम् ॥ अभिवाद्याथरुद्रायसद्योंऽधकनिपातिने ॥ पद्माक्षस्तंविरूपाक्षमभितुष्टावभक्तिमान् ७१ ॥ श्रीनारायणउवाच ॥ त्वत्संभूताभूतकृतोवरेण्यगोप्ता रोऽस्यभुवनस्यादिदेव ॥ आविश्येमांधरणींयेऽभ्यरक्षन्पुरापुराणींतवदेवसृष्टिम् ७२ सुरासुरान्नागरक्षःपिशाचान्नरान्सुपर्णानथगंधर्वयक्षान् ॥ पृथग्विधा न्भूतसंघांश्चविश्वांस्त्वत्संभूतान्विद्मसर्वांस्तथैव ॥ ऐंद्रंयाम्यंवारुणंवैतपाल्यंपैत्रंत्वाष्ट्रंकर्मसौम्यंचतुभ्यम् ७३

परश्वधिनंपरश्वधवंतम् ६५ वयोतिगैःवृद्धैः ६६ जगत्प्रमिमाणंपरिमापयंतंकालं यंभिन्नवृत्तादुराचाराद्रष्टुंनालं यतोब्रह्मद्विषघ्नं अमृतस्यमोक्षस्ययोनिंकारणम् ६७ ददर्शवासुदेवइत्युत्तरे णसंबंधः ६८ । ६९ । ७० । ७१ भूतकृतःप्रजापतयः हेवरेण्यमोक्षकामैर्वरणीय ७२ ऐंद्रमिंद्रदैवत्यंकर्म तुभ्यंत्वदर्थमेव सर्वेषांदेवानांनाम्नात्वमेवतर्पणीयइत्यर्थः ७३

आकाशइतिलुप्तविभक्तिकं स्वाद्यंरसः ब्रह्मवेदाःयज्ञाश्च स्थास्नुस्थावरं चरिष्णुजंगमं ७४ अद्भ्यःसमुद्रेभ्यस्तोकावर्षबिंदवः संक्षयेप्रलयेएकार्णवे सायुज्यमैक्यं ७५ रूपंज्योतिरितिद्वाभ्यांश्लोकाभ्यांसर्वस्यब्रह्मप्रभवत्वंब्रह्मप्रलयत्वंचोक्तमिहसर्वस्मादन्यद्ब्रह्मणोरूपंविविनक्ति दिव्येति दिविहार्दाकाशेभवौदिव्यौशुद्धाशुद्धासत्त्वप्रधानायांमूलप्रकृतौमायाविद्याख्यायांचित्प्रतिबिंबाविति यावत् तौचतावावृतौदिव्यावृतावीश्वरजीवौ । अथापिमानसौमनस्येवशास्तृशास्यभावेनाभिव्यक्तौद्वौसुपर्णौपक्षिवदुपाध्यसंगिनौ तयोरधिष्ठेयाःसप्तपिप्पलाअश्वत्थाः वाचाशाखाःवाङ्मात्रेण शाखावत्खेआकाशेशेरतेतेशाखाः शाखाःखशयाइतियास्कः । वाचारंभणंविकारइतिश्रुतेरनृताइत्यर्थः महदहंकारपंचतन्मात्राख्याः प्रकृतीमानसौप्रागुक्तौताभ्यांसहैकादश तथादशेंद्रियाणि तेषामेकादशानांगोप्तारः गोप्तेतिपाठेएकवचनमार्षं तानिहिसंसारजाश्वत्थमूलावासनावर्धयंति केतेदश येपुरंपांचभौतिकंशरीरंधारयंतितेभ्यश्चपड्भिःशतेरन्यःपरमात्मासप्तविंशस्त्वमसीत्यर्थः

रूपंज्योतिःशब्दआकाशवायुःस्पर्शःस्वाद्यंसलिलंगंधउर्वी ॥ कालोब्रह्माब्रह्मचब्राह्मणाश्चत्वत्संभूतंस्थास्नुचरिष्णुचेदम् ७४ अद्भ्यःस्तोकायांतियथापृथक्तां मिश्चैक्यंसंक्षयेयांतिभूयः ॥ एवंविद्वान्प्रभवंचाप्ययंचमत्वाभूतानांतवसायुज्यमेति ७५ दिव्यावृतौमानसौद्वौसुपर्णौवाचाशाखाःपिप्पलाःसप्तगोपाः ॥ दशाप्यन्येयेपुरंधारयंतित्वयासृष्टास्त्वंहितेभ्यःपरोहि ७६ भूतंभव्यंभविताचाप्यधृष्यंत्वत्संभूताभुवनानीहविश्वा ॥ भक्तंचमांभजमानंभजस्वमारीरिषोमामहिताहितेन ७७ आत्मानंत्वामात्मनोनन्यबोधंविद्वानेवंगच्छतिब्रह्मशुक्रम् ॥ अस्तौषंत्वांतवसंमानमिच्छन्विचिन्वन्वैसदृशंदेववर्य ॥ सुदुर्लभान्देहिवरान्ममेष्टानभिष्टुतःप्रविकार्षीश्चमायाम् ७८ ॥ व्यासउवाच ॥ तस्मैवरानचिंत्यात्मानीलकंठःपिनाकधृक् ॥ अर्हतेदेवमुख्यायप्रायच्छदृषिसंस्तुतः ७९ ॥ श्रीभगवानुवाच ॥ मत्प्रसादान्मनुष्येषुदेवगंधर्वयोनिषु ॥ अप्रमेयबलात्मात्वंनारायणभविष्यसि ८० नचत्वांप्रसहिष्यंतिदेवासुरमहोरगाः ॥ नपिशाचानगंधर्वानयक्षानचराक्षसाः ८१ नसुपर्णास्तथानागानचविश्वेवियोनिजाः ॥ नकश्चित्त्वांचदेवोपिसमरेषुविजेष्यति ८२ नशस्त्रेणनवज्रेणनाग्निनानचवायुना ॥ नचार्द्रेणनशुष्केणत्रसेनस्थावरेणच ८३ कश्चित्तवरुजांकर्तामत्प्रसादात्कथंचन ॥ अपिचैसमरंगत्वाभविष्यसिममाधिकः ८४ एवमेतेवरालब्धाःपुरस्ताद्विद्धिशौरिणा ॥ सएषदेवश्चरतिमाययामोहयन्जगत् ८५ तस्यैवतपसाजातंनरंनामममहामुनिम् ॥ तुल्यमेतेनदेवेनतंजानीह्यर्जुनंसदा ८६

७७ भूतमिति संभूतासंभूतानिविश्वाविश्वानि उभयत्रसुपश्छांदसोड्डादेशः भजस्वइष्टकामपूरणेनपालय मारीरिषःमाहिंसीर्माकेनअहिताहितेन अहितानांकामादीनामाहितमाधानंप्रवेशोतासिप्रवेशनंतेनेत्यर्थः ७७ आत्मानमिति आत्मनोजीवस्यआत्मानंनिरुपाधिस्वरूपंप्रत्यक्त्वं अतएवानन्यबोधंनास्तिअन्योऽहंकारादिर्बोधोयस्मिंस्तमनन्यबोधं अनन्यभावमितिपाठेऽपिसएवार्थः एतादृशंत्वांविद्वान् शुक्रमुपाध्यसंपर्कान्निरवद्यंब्रह्मगच्छतिप्राप्नोत्युपाधिप्रहाणेन अर्हंतुअहंकारविशिष्टस्तववशंमोःसंमानमर्चनंकर्तुमिच्छंस्त्वामस्तौषंस्तुतवानस्मि कीदृशं सदृशंस्तुतियोग्यं त्वां विचिन्वन्नन्वेषयन् स्ववृषमितिपाठेस्वधर्मरूपंस्वधर्मप्राप्यं हेदेववर्यईशस्यापित्वंदुरधिगमइत्यर्थः मायांचप्रविकार्षीःप्रकर्षेणविकृतवानसि तांमामुद्दिश्यमाप्रविकार्षीरित्यनुषंगेणान्वयः ७८ अर्हतेयोग्याय ऋषिणानारायणेनसंस्तुतः ७९ । ८० । ८१ वियोनिजाःसिंहव्याघ्रादयः ८२ त्रसेनजंगमेन ८३ गत्वाप्राप्य ८४ । ८५ । ८६

पूर्वंदेवानांब्रह्मविष्णुरुद्राणांमध्येएतौविष्णुरूपिणावृषीनरनारायणौपरमोचितावत्यंततपःसंपन्नौ ८७। ८८ देववत्नारायणवत् अवाकर्षःअवमतंकृशंकृतवानासि आत्मानंशरीरम् ८९ शुभ्रंदीप्तिमत् ९०। ९१ तयोर्नरनारायणयोः अथापि तवतयोश्चविशेषहेतुंशृण्वित्याह ताभ्यामिति लिंगेसूक्ष्मशरीरे अर्चायांप्रतिमायां अयंभावः। 'चतुर्णांसन्निधानेनयत्फलंतद्दशाश्वतं॥ द्वयोस्तु सन्निधानेनशाश्वतंप्राप्यतेपदम्'इति दक्षस्मृतेः। प्रतिमायांशिवार्चकस्यआत्ममनइंद्रियविषयाणांचतुर्णांसान्निध्यमस्ति। लिंगेतदर्चकस्यतुआत्ममनसोर्द्वयोरेव सान्निध्यमस्तीतितयोरर्चकत्वमात्म्येऽपिप्रकारभेदात्फलभेदमागतेति ९२ लिंगार्चनादेवसर्वंब्रह्मेतिजानातीत्याह सर्वेति ज्ञात्वाशास्त्रात् पूर्वंज्ञात्वापश्चादनुभवेनापिजानातीत्यर्थः अतएवकृष्णेआत्मयोगाख्यं

तावेतौपूर्वदेवानांपरमोपचितावृषी॥ लोकयात्राविधानार्थंसंजायेतेयुगेयुगे ८७ तथैवकर्मणाकृत्स्नंमहतस्तपसोऽपिच॥ तेजोमन्युंचबिभ्रंस्त्वंजातोरौद्रोमहामते ८८ सभवान्देववत्प्राज्ञोज्ञात्वाभवमयंजगत्॥ अवाकर्षस्त्वमात्मानंनियमैस्तत्प्रियेप्सया ८९ शुभ्रमत्रहविःकृत्वामहापुरुषविग्रहम्॥ ईजिवांस्त्वंजपैर्होमैरुपहारैश्चमानद ९० सतथापूज्यमानस्तेपूर्वदेहेऽप्यतूतुषत्॥ पुष्कलांश्चवरान्प्रादात्तवविद्वन्हृदिस्थितान् ९१ जन्मकर्मतपोयोगास्तयोस्तवचपुष्कलाः॥ ताभ्यांलिंगेऽर्चितोदेवस्त्वयाऽर्चायांयुगेयुगे ९२ सर्वरूपंभवंज्ञात्वालिंगेयोऽर्चयतिप्रभुम्॥ आत्मयोगाश्चतस्मिन्वैशास्त्रयोगाश्चशाश्वताः ९३ एवंदेवायजंतोहिसिद्धाश्चपरमर्षयः॥ प्रार्थयंतेपरंलोकेस्थाणुमेकंससर्वकृत् ९४ सएषरुद्रभक्तश्चकेशवोरुद्रसंभवः॥ कृष्णएवहियष्टव्योयज्ञैश्चैवसनातनः ९५ सर्वभूतभवंज्ञात्वालिंगमर्चतियःप्रभोः॥ तस्मिन्नभ्यधिकांप्रीतिंकरोतिवृषभध्वजः ९६ ॥ संजयउवाच॥ तस्यतद्वचनंश्रुत्वाद्रोणपुत्रोमहारथः॥ नमश्चकाररुद्रायबहुमेनेचकेशवम् ९७ हृष्टरोमाचवश्यात्मासोऽभिवाद्यमहर्षये॥ वरूथिनीमभिप्रेक्ष्यह्यवहारमकारयत् ९८ ततःप्रत्यवहारोऽभूत्पांडवानांविशांपते॥ कौरवाणांचदीनानांद्रोणेयुधिनिपातिते ९९ युद्धंकृत्वादिनान्पंचद्रोणोहत्वावरूथिनीम्॥ ब्रह्मलोकंगतोराजन्ब्राह्मणोवेदपारगः १००॥ इतिश्रीमहाभारतेद्रोणपर्वणिनारायणास्त्रमोक्षपर्वणिव्यासवाक्येशतरुद्रीयेएकाधिकद्विशततमोऽध्यायः॥ २०१॥ ॥ छ॥ ॥ धृतराष्ट्रउवाच॥ तस्मिन्नतिरथेद्रोणेनिहतेपार्षतेनवै॥ मामकाःपांडवाश्चैवकिमकुर्वन्नतःपरम् १॥ संजयउवाच॥ तस्मिन्नतिरथेद्रोणेनिहतेपार्षतेनवै॥ कौरवेषुचभग्नेषुकुंतीपुत्रोधनंजयः २ दृष्ट्वासुमहदाश्चर्यमात्मनोविजयावहम्॥ यदृच्छायामतंव्यासंपप्रच्छभरतर्षभ ३॥ अर्जुनउवाच॥ संग्रामेन्यहनंशत्रूञ्शरौघैर्विमलैरहम्॥ अग्रतोलक्षयेयांतंपुरुषंपावकप्रभम् ४ ज्वलंतंशूलमुद्यम्ययांदिशंप्रतिपद्यते॥ तस्यांदिशिविदीर्यंतेशत्रवोमेमहामुने ५ तेनभग्नानरीन्सर्वान्मद्भग्रान्मन्यतेजनः॥ तेनभग्नानिसैन्यानिपृष्ठतोऽनुव्रजाम्यहम् ६

जीवब्रह्मैक्यविज्ञानं शास्त्रयोगाख्यंपरोक्षज्ञानंचतत्कारणीभूतंपुष्कलमस्तीत्याह आत्मेति ९३। ९४ कृष्णःभक्तानांसहेतुकंसंसारंकर्षतीतियोगात्सएवाराध्यः ९५। ९६। ९७। ९८ महर्षयेव्यासाय ९९। १००॥ इति द्रोणपर्वणिटीकायामेकाधिकद्विशततमोऽध्यायः॥ २०१॥ ॥ छ॥ ॥ तदेवंविष्णोःशिवमयत्वंव्याख्याय विष्णुत्राणात्तन्मयस्यजगतस्त्राणमपिशिवमेवकर्मेत्युक्तं। तस्मिन्नित्यतआरभ्यपर्वसमाप्तिपर्यंतस्यग्रंथस्यतात्पर्यमपिभूभारावतारहेतुरपिशिवएवेति १। २ यदृच्छयादैवेन ३ न्यहनंशत्रूनित्यत्र निघ्नतःशत्रूनितिपाठेशरौघैःशत्रून्निघ्नतोममाग्रतोयांतंपुरुषमहंलक्षयेइत्यन्वयः ४। ५। ६

७ । ८ प्रजानांसर्गस्थित्यंतकर्तृत्वेनपतीनांब्रह्मविष्णुरुद्राणांप्रथयितारंकारणमित्यर्थः तैजसंस्वार्थेताद्धितः चिन्मात्ररूपं पुरुषंसर्वपूर्षुशरीरगुहासुशयानं अतएवप्रभुमंतर्यामित्वेनशास्तारं भुवनंद्यौः भूःपृथिवी भुवमंतरिक्षं त्रैलोक्यशरीरमित्यर्थः देवंद्योतमानं सर्वलोकेश्वरं प्रभुमितिराजवद्बहिःस्थित्वाऽपिनियमयंतमित्यर्थः ९ ईशानमनन्याधिपतिं वरदंश्रेष्ठानामपिखंडयितारं भुवनेश्वरंभुवनव्यापिनम् १० जटिलंशिखिनमितिरूपभेदाभिप्रायेणविशेषणद्वयंयोज्यम् ११ जगत्प्रीतिंजगदानंदकरं अधीश्वरंईश्वरादप्यधिकंनिरुपाधिचिन्मात्रमित्यर्थः १२ जगद्योनिंजगद्बीजमितिजगतांमातृपितृरूपम् १३ विश्वनरंविश्वस्यनेतारं भूतस्यभव्यस्यभवस्यवर्तमानस्योद्भवम् १४ योगंकर्मयोगादिरूपं योगेश्वरंयोगिनामीशं योगानांफलप्रदंवा

भगवंस्तन्ममाचक्ष्वकोवैसपुरुषोत्तमः ॥ शूलपाणिर्मयादृष्टस्तेजसासूर्यसन्निभः ७ नपद्भ्यांस्पृशतेभूमिंनचशूलंविमुंचति ॥ शूलाच्छूलसहस्राणिनिष्पेतुस्तस्यतेजसा ८ ॥ व्यासउवाच ॥ प्रजापतीनांप्रथमंतैजसंपुरुषंप्रभुम् ॥ भुवनंभूर्भुवंदेवंसर्वलोकेश्वरंप्रभुम् ९ ईशानंवरदंपार्थदृष्टवानसिशंकरम् ॥ तंगच्छशरणंदेवंवरदंभुवनेश्वरम् १० महादेवंमहात्मानमीशानंजटिलंविभुम् ॥ त्र्यक्षंमहाभुजंरुद्रंशिखिनंचीरवाससम् ११ महादेवंहरंस्थाणुंवरदंभुवनेश्वरम् ॥ जगत्प्रधानमजितंजगत्प्रीतिमधीश्वरम् १२ जगद्योनिंजगद्बीजंजयिनंजगतोगतिम् ॥ विश्वात्मानंविश्वसृजंविश्वमूर्तिंयशस्विनम् १३ विश्वेश्वरंविश्वनरंकर्मणामीश्वरंप्रभुम् ॥ शंभुंस्वयंभुंभूतेशंभूतभव्यभवोद्भवम् १४ योगंयोगेश्वरंसर्वंसर्वलोकेश्वरेश्वरम् ॥ सर्वश्रेष्ठंजगच्छ्रेष्ठंवरिष्ठंपरमेष्ठिनम् १५ लोकत्रयविधातारमेकंलोकत्रयाश्रयम् ॥ शुद्धात्मानंभवंभीमंशशांककृतशेखरम् १६ शाश्वतंभूधरंदेवंसर्ववागीश्वरेश्वरम् ॥ सुदुर्जयंजगन्नाथंजन्ममृत्युजरातिगम् १७ ज्ञानात्मानंज्ञानगम्यंज्ञानश्रेष्ठंसुदुर्विदम् ॥ दातारंचैवभक्तानांप्रसादविहितान्वरान् १७ तस्यपारिषदादिव्यारूपैर्नानाविधैर्विभोः ॥ वामनाजटिलामुंडाह्रस्वग्रीवामहोदराः १९ महाकायामहोत्साहामहाकर्णास्तथापरे ॥ आननैर्विकृतैःपादैःपार्थवेषैश्चवैकृतैः २० ईदृशैःसमहादेवःपूज्यमानोमहेश्वरः ॥ सशिवस्तातते जस्वीप्रसादाद्यातितेऽग्रतः २१ तस्मिन्घोरेसदापार्थसंग्रामेलोमहर्षणे ॥ द्रौणिकर्णकृपैर्गुप्तांमहेष्वासैःप्रहारिभिः २२ कस्तांसेनांतदापार्थमनसाऽपिप्रधर्षयेत् ॥ ऋतेदेवान्महेष्वासाद्बहुरूपान्महेश्वरात् २३ स्थातुमुत्सहतेकश्चिन्नतस्मिन्नग्रतःस्थिते ॥ नहिभूतंसमंतेनत्रिषुलोकेषुविद्यते २४ गंधेनापिहिसंग्रामेतस्यक्रुद्धस्यशत्रवः ॥ विसंज्ञाहतभूयिष्ठावेपंतिचपतंतिच २५ तस्मैनमस्तुकुर्वंतोदेवास्तिष्ठंतिवैदिवि ॥ येचान्येमानवालोकेयेचस्वर्गजितोनराः २६ येभक्तावरदंदेवंशिवंरुद्रमुमापतिम् ॥ अनन्यभावेनसदासर्वेशंसमुपासते २७ इहलोकेसुखंप्राप्यतेयांतिपरमांगतिम् ॥ नमस्कुरुष्वकौंतेयतस्मैशांतायवैसदा २८ रुद्रायशितिकंठायकनिष्ठायसुवर्चसे ॥ कपर्दिनेकरालायहर्यक्षवरदायच २९

सर्वंसर्वात्मकम् १५ । १६ सुदुर्जयमत्यंतंदुष्प्रापमनधिकारिभिः १७ ज्ञानात्मानंज्ञानस्वरूपं ज्ञानगम्यंपरविद्याप्राप्यं ज्ञानश्रेष्ठंचिन्मात्ररूपत्वेनैवप्रशस्यतमं अतएवसुदुर्विदमविषयत्वाद्दुर्ज्ञेयं १८ पारिषदागणाः १९ । २० । २१ । २२ प्रधर्षयेदभिभवेत् २३ । २४ । २५ । २६ भक्ताःभजंतइतिभक्ताः २७ नमस्करणंप्रह्वीभावस्तंकुरुष्व शितिकंठायनीलग्रीवाय कनिष्ठायसूक्ष्मायेतिमाध्वः कनीदीप्तौ दीप्ततमाय २८ हर्यक्षःपिंगाक्षःकुबेरः २९

याम्यायथामकर्त्रेकालाय अव्यक्तकेशायअव्यक्तंमायाशबलंकेशवद्रश्मिमात्रंयस्य सद्वृत्तेभक्तेशंकरायसुखकराय ३० मुंडाययजमानमूर्तित्वात् कृशायतपोनिष्ठत्वात् उत्तारणायसंसारादि तिशेषः रंहसेवेगवते ३१ सर्वेअयाः शुभावहाविधयःप्रियायस्यतस्मैसर्वायप्रियाय प्रियवाससेसोमाय वाससःसोमदैवत्यत्वात् उष्णीषिणेशिरोवेष्टनवते मीढुषेवृष्टिकर्त्रे ३२ गिरिशायपर्व तशायिने चीरंवल्कलं हिरण्यबाहवेसुवर्णालंकृतभुजाय ३३ । ३४ वृक्षैर्वृश्चनयोग्यैर्देहैरावृतकायायआच्छादितस्वरूपाय मध्यमायअंतर्यामिणे स्रुवहस्तायअध्वर्यवे भार्गवायरामाय ३५ मुंजोवल्कलंतृणतंतवोवातन्मयवाससे ३६ । ३७ अव्यग्रमनाकुलम् ३८ कपर्दिनंजटाजूटवंतं वृषावर्तंवृषाणांश्रेष्ठानांब्रह्मादीनामावर्तयितारं तानपिभ्रामयंतंमाययेत्यर्थः वृषनाभंसर्वलोकाश्रयत्वे नप्रशस्ततमगर्भं वृषध्वजंनंदिवाहनं वृषदर्पंवृषःसमर्थस्त्रैलोक्यसंहारक्षमोदर्पोऽहंकारोयस्यतं वृषस्यधर्मस्यपतिं तत्फलप्रदातृत्वेनवृषोधर्मएवपरापररूपोविश्ववपुःशृंगभूतउन्नतरोयस्यतं अत

याम्यायाव्यक्तकेशायसद्वृत्तेशंकरायच ॥ काम्यायहरिनेत्रायस्थाणवेपुरुषायच ३० हरिकेशायमुंडायकृशायोत्तारणायच ॥ भास्करायसुतीर्थायदेवदेवायरंहसे ३१ बहुरूपायसर्वायप्रियायप्रियवाससे ॥ उष्णीषिणेसुवक्त्रायसहस्राक्षायमीढुषे ३२ गिरिशायप्रशांतायपतयेचीरवाससे ॥ हिरण्यबाहवेराजन्नुग्रायपतयेदि शाम् ३३ पर्जन्यपतयेचैवभूतानांपतयेनमः ॥ वृक्षाणांपतयेचैवगवांचपतयेनमः ३४ वृक्षैरावृतकायायसेनान्येमध्यमायच ॥ स्रुवहस्तायदेवायधन्वि नेभार्गवायच ३५ बहुरूपायविश्वस्यपतयेमुंजवाससे ॥ सहस्रशिरसेचैवसहस्रनयनायच ३६ सहस्रबाहवेचैवसहस्रचरणायच ॥ शरणंगच्छकौंतेयवरदंभुव नेश्वरम् ३७ उमापतिंविरूपाक्षंदक्षयज्ञनिबर्हणम् ॥ प्रजानांपतिमव्यग्रंभूतानांपतिमव्ययम् ३८ कपर्दिनंवृषावर्तंवृषनाभंवृषध्वजम् ॥ वृषदर्पंवृषपतिं वृषशृंगंवृषर्षभम् ३९ वृषांकंवृषभोदारंवृषभंवृषभेक्षणम् ॥ वृषायुधंवृषशरंवृषभूतंवृषेश्वरम् ४० महोदरंमहाकायंद्वीपिचर्मनिवासिनम् ॥ लोकेशंवरदंमुंडं ब्रह्मण्यंब्राह्मणप्रियम् ४१ त्रिशूलपाणिंवरदंखड्गचर्मधरंप्रभुम् ॥ पिनाकिनंखड्गधरंलोकानांपतिमीश्वरम् ४२ प्रपद्येशरणंदेवंशरण्यंचीरवाससम् ॥ नमस्त स्मैसुरेशाययस्यवैश्रवणःसखा ४३ सुवाससेनमस्तुभ्यंसुव्रतायसुधन्विने ॥ धनुर्धरायदेवायप्रियधन्वायधन्विने ४४ धन्वंतरायधनुषेधन्वाचार्यायतेनमः ॥ उग्रायुधायदेवायनमःसुरवरायच ४५ नमोऽस्तुबहुरूपायनमोऽस्तुबहुधन्विने ॥ नमोऽस्तुस्थाणवेनित्यंनमस्तस्मैतपस्विने ४६ नमोस्तुत्रिपुरघ्नायभगघ्नाय चैवनमः ॥ वनस्पतीनांपतयेनराणांपतयेनमः ४७ मातॄणांपतयेचैवगणानांपतयेनमः ॥ गवांचपतयेनित्यंयज्ञानांपतयेनमः ४८

एवंवृषर्षभं वृषाणांफलवर्षिणामिंद्रादीनामृषभंश्रेष्ठम् ३९ वृषोबलीवर्दोंकेध्वजेयस्यतंवृषांकं वृषभोदारंवृषभेषुधर्मेणभासमानेषुउदारंबहुफलप्रदं अतएववृषभंवृषेणधर्मेणनिमित्तेनभानंसाक्षात्का रोयस्यतं वृषभंयोगधर्मैकगम्यं वृषभेक्षणंस्पष्टार्थं वृषायुधंश्रेष्ठप्रहरणं वृषोविष्णुःशरोबस्यतंवृषशरं वृषभूतंधर्मैकवपुषं वृषस्यदक्षयज्ञस्येश्वरंनियंतारम् ४० महदनेककोटिब्रह्मांडाश्रयभूतमुदरं यस्यतंमहोदरं महाकायंत्रैलोक्यशरीरं द्वीपिचर्मनिवासिनंव्याघ्रचर्मणानितरांछादितम् ४१ खड्गधरं खड्गमात्रधरम् ४२ । ४३ सुधन्विनेशोभनाधन्विनोधनुर्धराःपार्षदाअस्यसंतितस्मै स्वयम पिधनुर्धरायअतएवप्रियधन्वायधनुःप्रियाय धन्वधनुःप्रेरकत्वेनास्यास्तीतितस्मैबाणाय ४४ धन्वंतरायधनुषिअंतरेमध्येऽस्तीतिधन्वंतरंमौर्वीतद्रूपाय संधिरार्षः धनुषेधनुःस्वरूपाय धन्वाचा र्यायधनुर्वेदगुरवे ४५ । ४६ भगघ्नायभगनेत्रभिदे ४७ । ४८

४९ । ५० । ५१ गुहागताःपातालगताअपीत्यर्थः नसुखमेधंतीत्युक्तंतदेवाह दक्षस्येत्यादिना । ५२ । ५३ । ५४ । ५५ । ५६ तमसासंवृतानप्राकाशंतनप्राज्ञायंत ५७ चक्रुर्ऋषयइतिसंबंधः
५८ पूषाणंपूषणम् ५९ नत्रालीनाःसंतोनिश्चक्रमुर्यज्ञदेशादपक्रांताः देवानांलीनानामपिविषायेतिशेषः ६० तंशरान्मुंचंतमितिशेषः ६१ । ६२ । अतिकोपेनअतिक्रांतकोपेनशांतेनेत्यर्थः

अपांचपतयेनित्यंदेवानांपतयेनमः ॥ पूष्णोदंतविनाशायत्र्यक्षायवरदायच ४९ नीलकंठायपिंगायस्वर्णकेशायवैनमः॥ कर्माणियानिदिव्यानिमहादेवस्यधीमतः ५० तानितेकीर्तयिष्यामियथाप्रज्ञंयथाश्रुतम् ॥ नसुरानासुरालोकेनगंधर्वानराक्षसाः ५१ सुखमेधंतिकुपितेतस्मिन्नपिगुहागताः ॥ दक्षस्ययजमानस्यविधिवत्संभृतंपुरा ५२ विव्याधकुपितोयज्ञंनिर्दयस्त्वभवत्तदा ॥ धनुषाबाणमुत्सृज्यसघोषंविननादच ५३ तेनशर्मकुतःशांतिंलेभिरेस्मसुरास्तदा ॥ विद्रुतेसहसायज्ञेकुपितेचमहेश्वरे ५४ तेनज्यातलघोषेणसर्वेलोकाःसमाकुलाः॥ बभूवुरवशगाःपार्थनिपेतुश्चसुरासुराः ५५ आपश्चुक्षुभिरेसर्वाश्चकंपेचवसुंधरा॥ पर्वताश्चव्यशीर्यंतदिशोनागाश्चमोहिताः ५६ अंधेनतमसालोकानप्राकाशंतसंवृताः ॥ जघ्निवान्सहसूर्येणसर्वेषांज्योतिषांप्रभाः ५७ चुक्षुभुर्भयभीताश्चशांतिंचक्रुस्तथैवच ॥ ऋषयःसर्वभूतानामात्मनश्चसुखैषिणः ५८ पूषाणमभ्यद्रवतशंकरःप्रहसन्निव ॥ पुरोडाशंभक्षयतोदशनान्वैव्यशातयत् ५९ ततोनिश्चक्रमुर्देवावेपमानानताःस्मते ॥ पुनश्चसंदधेदीप्तान्देवानांनिशितान्शरान् ६० सधूमान्सस्फुलिंगांश्चविद्युत्तोयदसन्निभान् ॥ तंदृष्ट्वातुसुराःसर्वेप्रणिपत्यमहेश्वरम् ६१ रुद्रस्ययज्ञभागंचविशिष्टंतेत्वकल्पयन् ॥ भयेनत्रिदशाराजञ्छरणंचप्रपेदिरे ६२ तेनचैवातिकोपेनसयज्ञःसंधितस्तदा ॥ भग्नाश्चापिसुराआसन्भीताश्चाद्यापितंप्रति ६३ असुराणांपुराण्यासंस्त्रीणिवीर्यवतांदिवि ॥ आयसंराजतंचैवसौवर्णपरमंमहत् ६४ सौवर्णंकमलाक्षस्यतारकाक्षस्यराजतम् ॥ तृतीयंतुपुरंतेषांविद्युन्मालिनआयसम् ६५ नशक्तस्तानिमघवान्भेत्तुंसर्वायुधैरपि ॥ अथसर्वेसुरारुद्रंजग्मुःशरणमर्दिताः ६६ तेतमूचुर्महात्मानंसर्वेदेवाःसवासवाः ॥ ब्रह्मदत्तवराह्येतेघोरास्त्रिपुरवासिनः ६७ पीडयंत्यधिकंलोकंयस्मातेवरदर्पिताः ॥ त्वदृतेदेवदेवेशनान्यःशक्तःकथंचन ६८ हंतुंदैत्यान्महादेवजहितांस्त्वंसुरद्विषः ॥ रुद्ररौद्राभविष्यंतिपशवःसर्वकर्मसु ६९ निपातयिष्यसेचैतानसुरान्भुवनेश्वर ॥ सतथोक्तस्तथेत्युक्त्वादेवानांहितकाम्यया ७० गंधमादनविंध्यौचकृत्वावंशध्वजौहरः ॥ पृथ्वींससागरवनांरथंकृत्वातुशंकरः ७१ अक्षंकृत्वातुनागेंद्रंशेषंनामत्रिलोचनः ॥ चक्रेकृत्वातुचंद्रार्कौदेवदेवःपिनाकधृक् ७२ अणीकृत्वैलपत्रंचपुष्पदंतंचत्र्यंबकः ॥ यूपंकृत्वातुमलयमवनाहंचतक्षकम् ७३ योक्त्रांगानिचसत्वानिकृत्वाशर्वःप्रतापवान् ॥ वेदान्कृत्वाऽथचतुरश्चतुरश्वान्महेश्वरः ७४

ततःप्रभृतिपूर्वंभग्नाःसंतोऽद्यापिभीताःसंतीत्यर्थः ६३ । ६४ । ६५ । ६७ । ६८ । ६९ । ७० वंशध्वजौअल्पौध्वजौपार्श्वद्वयस्थौ महाध्वजस्तुमेरुरितिवक्ष्यते ७१ । ७२ अणीयुगांतबंधनेद्वौ नागौ यूपंयुगं अवनाहंत्रिवेणुयुगबंधनरज्जुम् ७३ योक्त्राणिअंगानिचाकर्षादीनि सत्वानिसरीसृपपर्वतादीनिच ७४

उपवेदान् आयुर्वेदधनुर्वेदगांधर्ववेदपाश्चिमाम्नायान् खलीनान् कडीयालीतिप्रसिद्धान् गायत्रीसावित्र्यौप्रग्रहंरश्मीन् ७५।७६ वाजाभ्यांपक्षाभ्यांपक्षयोरित्यर्थः ७७ विद्युतविद्युतं निश्राणांनिशितम् ७८। ७९ स्थानंस्थीयतेऽस्मिन्निति योगाद्व्यूहम् ८० स्थाणुरचलः समेतानिसमसूत्रगतानि ८१ त्रिपर्वणात्रीणिविष्णुवायुवैवस्वताख्यानि शरपक्षपुंखरूपाणिपर्वाणियस्यतेनात्रिशल्येन गार्हपत्यदक्षिणाग्न्याहवनीयरूपाग्नित्रयशल्येन ८२ पुराणीत्यादिसार्धः पूर्वंदक्षयज्ञविध्वंसनमुक्तंतस्यतात्पर्यमीश्वरेऽनार्तोयज्ञोविध्वंसते । ततश्चयज्ञकर्तारऋत्विजश्चनश्यंतीत्युक्तं तेनेश्वर

उपवेदान्खलीनांश्चकृत्वालोकत्रयेश्वरः ॥ गायत्रींप्रग्रहंकृत्वासावित्रींचमहेश्वरः ७५ कृत्वोंकारंप्रतोदंचब्रह्माणंचैवसारथिम् ॥ गांडीवंमंदरंकृत्वागुणंकृत्वातु वासुकिम् ७६ विष्णुंशरोत्तमंकृत्वाशल्यमग्निंतथैवच ॥ वायुंकृत्वाऽथवाजाभ्यांपुंखेवैवस्वतंयमम् ७७ विद्युत्कृत्वाऽथनिश्राणंमेरुंकृत्वाचवैध्वजम् ॥ आरुह्य सरथंदिव्यंसर्वदेवमयंशिवः ७८ त्रिपुरस्यवधार्थायस्थाणुःप्रहरतांवरः ॥ असुराणामंतकरःश्रीमानतुलविक्रमः ७९ स्तूयमानःसुरैःपार्थऋषिभिश्चतपोधनैः ॥ स्थानंमाहेश्वरंकृत्वादिव्यमप्रतिमंप्रभुः ८० अतिष्ठत्स्थाणुभूतःससहस्रंपरिवत्सरान् ॥ यदात्रीणिसमेतानिअंतरिक्षेपुराणिच ८१ त्रिपर्वणात्रिशल्येनतदा तानिबिभेदसः ॥ पुराणिनचतंशेकुर्दानवाःप्रतिवीक्षितुम् ८२ शरंकालाग्निसंयुक्तंविष्णुसोमसमायुतम् ॥ पुराणिदग्धवंतंतंदेवीयाताप्रवीक्षितुम् ८३ बालमंकगतंकृत्वास्वयंपंचशिखंपुनः ॥ उमाजिज्ञासमानावैकोऽयमित्यब्रवीत्सुरान् ८४ असूयतश्चशक्रस्यवज्रेणप्रहरिष्यतः ॥ बाहुंसवज्रंतंतस्यक्रुद्धस्यास्तंभयत्प्रभुः ८५ प्रहस्यभगवांस्तूर्णंसर्वलोकेश्वरोविभुः ॥ ततःसस्तंभितभुजःशक्रोदेवगणैर्वृतः ८६ जगामससुरस्तूर्णंब्रह्माणंप्रभुमव्ययम् ॥ तेतंप्रणम्यशिरसा प्रोचुःप्रांजलयस्तदा ८७ किमप्यंकगतंब्रह्मपार्वत्याभूतमद्भुतम् ॥ बालरूपधरंदृष्ट्वानास्माभिरभिलक्षितः ८८ तस्मात्त्वांप्रष्टुमिच्छामोनिर्जितायेनवैवयम् ॥ अयुध्यताहिबालेनलीलयासपुरंदराः ८९ तेषांतद्वचनंश्रुत्वाब्रह्माब्रह्मविदांवरः ॥ ध्यात्वासशंभुंभगवान्बालंचामिततेजसम् ९० उवाचभगवान्ब्रह्माशक्रादींश्चसुरोत्तमान् ॥ चराचरस्यजगतःप्रभुःसभगवान्हरः ९१ तस्मात्परतरंनान्यत्किंचिदस्तिमहेश्वरात् ॥ योदृष्टोह्युमयासार्धंयुष्माभिरमितद्युतिः ९२ सपार्वत्याःकृतेशर्वःकृतवान्बालरूपताम् ॥ तेमयासहितायूयंप्रापद्यध्वंतमेवहि ९३ सएषभगवान्देवःसर्वलोकेश्वरःप्रभुः ॥ नसंबुबुधिरेचैनंदेवास्तंभुवनेश्वरम् ९४ सप्रजापतयःसर्वेबालार्कसदृशप्रभम् ॥ अथाभ्येत्यततोब्रह्मादृष्ट्वासचमहेश्वरम् ९५

प्रीत्यर्थंकर्माणिकार्याणीतिदर्शितं । ततस्त्रिपुरवधउक्तस्तस्यतात्पर्यंस्थूलसूक्ष्मकारणानित्रीणिशरीराणिपुराणिक्रमाद्भद्धुर्मीत्यल्पसुखकरत्वाभ्यांमोहमयत्वेनचसौवर्णराजतायसानि । कामादयोऽसुराः । शमादयोदेवास्तेषांप्रीतिकरोरुद्रआत्माशरीरंपृथिव्यारूयंरथमास्थायतस्यचालकेचंद्रसूर्यौचक्रेमनश्चक्षुश्चीचक्रे । वेदाश्वगम्यस्थानप्रापकत्वेनहयाः । शरोविष्ण्वधिष्ठितासूक्ष्मबुद्धिस्तदैकाग्र्येणशरीरत्रयभेदेतुर्येब्रह्मणिसाक्षात्कृतेसतिकामादयोनश्यंतिफलभूताश्चशमादयोवर्धंते । तेषुचवर्धमानेषुरुद्रोबालवद्रागद्वेषशून्योब्रह्मविद्यापरनाम्न्याउमायावशगोभवतीत्येतदत्रप्रदर्श्यते ८३। ८४ असूयतश्चशक्रस्येत्यादितात्पर्यंब्रह्मभूतंद्विषंतःकर्मठास्तेनयोगमहिम्नानिर्जिताःसंतस्तमेवशरणंगच्छंतीति ८५। ८६। ८७। ८८। ८९। ९०। ९१। ९२। ९३। ९४। ९५

गतिः पालकः परायणंलयस्थानम् ९६ भवउत्पत्तिकारणं ९७ ईशःशिक्षकः नाथोनायकः पतिःपालकः ९८ । ९९ । १०० । १ सवैरुद्रइत्यादिनापुनरेवसार्वात्म्यमुच्यते २ । ३ । ४ । ५ । ६
७ । ८ । ९ । ११० । ११ । १२ । १३ । १४ । १५ द्वेतनूइत्युक्तेतनूपुनर्व्याख्याति तस्यदेवस्येति वडवामुखाख्याघोरातनुः १६ एषचैवेति अघोराश्मशानाख्याकाशी । 'यातेरुद्राशिवातनूरघोराऽपापकाशिनी' इतिलिंगादपापस्यब्रह्मणःप्रकाशकत्वात् । एतच्चान्यत्राप्यविमुक्ताख्यांतामेवप्रकृत्याम्नातं । अत्रहिजंतोःप्राणेषूत्क्रममाणेषुरुद्रस्तारकंब्रह्मव्याचष्टेयेनासावमृतीभूत्वामोक्षी

अयंश्रेष्ठइतिज्ञात्वाववंदेतंपितामहः ॥ ब्रह्मोवाच ॥ त्वंयज्ञोभुवनस्यास्यत्वंगतिस्त्वंपरायणम् ९६ त्वंभवस्त्वंमहादेवस्त्वंधामपरमंपदम् ॥ त्वयासर्वमिदंव्याप्तंजगत्स्थावरजंगमम् ९७ भगवन्भूतभव्येशलोकनाथजगत्पते ॥ प्रसादंकुरुशक्रस्यत्वयाक्रोधार्दितस्यवै ९८ ॥ व्यासउवाच ॥ पद्मयोनिवचःश्रुत्वाततःप्रीतोमहेश्वरः ॥ प्रसादाभिमुखोभूत्वाअट्टहासमथाकरोत् ९९ ततःप्रसादयामासुरुमांरुद्रंचतेसुराः ॥ अभवच्चपुनर्बाहुर्यथाप्रकृतिवज्रिणः १०० तेषांप्रसन्नोभगवान्सपत्नीकोवृषध्वजः ॥ देवानांत्रिदशश्रेष्ठोदक्षयज्ञविनाशनः १ सवैरुद्रःसचशिवःसोऽग्निःसर्वश्चसर्ववित् ॥ सचेंद्रश्चैववायुश्चसोऽश्विनौचसविद्युतः २ सभवःसचपर्जन्योमहादेवःसनातनः ॥ सचंद्रमाःसचेशानःससूर्योवरुणश्चसः ३ सकालःसोऽंतकोमृत्युःसयमोरात्र्यहानितु ॥ मासार्धमासाऋतवःसंध्येसंवत्सरश्चसः ४ धाताचसविधाताचविश्वात्माविश्वकर्मकृत् ॥ सर्वासांदेवतानांचधारयत्यवपुर्वपुः ५ सर्वदेवैःस्तुतोदेवःसैकधाबहुधाचसः ॥ शतधासहस्रधाचैवभूयःशतसहस्रधा ६ द्वेतनूतस्यदेवस्यवेदज्ञाब्राह्मणाविदुः ॥ घोराचान्याशिवाचान्यातेतनूबहुधापुनः ७ घोरातुयातुधानस्यसोऽग्निर्विष्णुःसभास्करः ॥ सौम्यातुपुनरेवास्यआपोज्योतींषिचंद्रमाः ८ वेदाःसांगोपनिषदःपुराणाध्यात्मनिश्चयाः ॥ यदत्रपरमंगुह्यंसवैदेवोमहेश्वरः ९ ईदृशश्चमहादेवोभूयांश्चभगवानजः ॥ नहिसर्वेमयाशक्यावक्तुंभगवतोगुणाः ११० अपिवर्षसहस्रेणसततंपांडुनंदन ॥ सर्वैर्ग्रहैर्गृहीतान्वैसर्वपापसमन्वितान् ११ समोचयतिसुप्रीतःशरण्यःशरणागतान् ॥ आयुरारोग्यमैश्वर्यंवित्तंकामांश्चपुष्कलान् १२ सददातिमनुष्येभ्यःसचैवाक्षिपतेपुनः ॥ सेंद्रादिषुचदेवेषुतस्यचैश्वर्यमुच्यते १३ सचैवव्यापृतोलोकेमनुष्याणांशुभाशुभे ॥ ऐश्वर्याच्चैवकामानामीश्वरश्चसउच्यते १४ महेश्वरश्चमहतांभूतानामीश्वरश्चसः ॥ बहुभिर्बहुधारूपैर्विश्वंव्याप्नोतिवैजगत् १५ तस्यदेवस्ययद्वक्त्रंसमुद्रेतदधिष्ठितम् ॥ वडवामुखेतिविख्यातंपिबत्तोयमयंहविः १६ एषचैवश्मशानेषुदेवोवसतिनित्यशः ॥ यजंत्येनंजनास्तत्रवीरस्थानइतीश्वरम् ११७

भवति । तस्मादविमुक्तमेवनिषेवेताविमुक्तंनविमुंचेदिति । तत्रश्मशानेकाश्यांएनंरुद्रंजनाउपासकायजंतिआराधयंति एतदपितत्रैवश्रुतं । यएषोऽनंतोऽव्यक्तआत्मासोऽविमुक्तउपास्यःसोऽविमुक्तेप्रतिष्ठितइति । वीरस्थानेवीराणांषड्वर्गजयिनांसंन्यासिनांस्थानेअविमुक्ते यथोक्तंयतीन्प्रकृत्यस्मृतिषु । 'अष्टौमासान्विहारःस्याद्वार्षिकांश्चतुरोवसेत् । अविमुक्तेप्रविष्टानांविहारोनैवविद्यते' इति । नचात्रश्मशानशब्दार्थोलोकप्रसिद्धोग्रहीतुंयुक्तः तस्याशुचित्वेनयागभूमित्वासंभवेनयजंत्येनंजनास्तत्रेतिवाक्यशेषविरोधात् । नचवीरस्थानेइत्युक्तेरसुराणांनिंद्यमार्गजुषांतदपियजनस्थानमितिवाच्यं । आनुशासनिकेउमामहेश्वरसंवादेश्मशानसदृशंपवित्रंस्थानंत्रैलोक्येनास्तीतिमहेश्वरवचसैवस्थापितत्वात् तस्मान्महाश्मशानमितिलोकप्रसिद्धेः पवित्रंदेवयजनस्थानं

श्मशानाख्यंवाराणस्येव । अत्रैवसंवर्तादीनामज्ञातवासोजाबालादौश्रूयमाणोदानधर्मेषुमैत्रेयभिक्षायामाश्वमेधिकेसंवर्तमरुत्तीयेचोपबृंहितइतिसर्वमनवद्यम् १७ अस्येति चादघोराणि १८ निरुच्यंते 'ऐश्वर्याच्चैवकामानामीश्वरश्चसउच्यते ॥ महेश्वरश्चमहतांभूतानामीश्वरश्चसः' इत्येवंजातीयकैःश्लोकैर्व्याख्यायंते १९ शतरुद्रियं 'नमस्तेरुद्रमन्यव' इतियाजुषःप्रपाठकः । उपस्थानंरुद्रोपस्थानमंत्रभूतम् १२० कामानांदिव्यानांमानुषाणांचसप्रभुर्दाता विभुर्व्यापकः विश्वंव्याप्नोतिकनककुंडलवदनत्वाकाशवद्विभुमात्रंनापिप्रधानवत् २१ यतःप्रभुरीश्वरश्चेतन इतियावत् ज्येष्ठंप्रशस्ततमंत्रिविधपरिच्छेदशून्यं भूतंनित्यसिद्धं एषएवप्रथमःप्रजापतिः २२ पशून्जीवान्अत्रपातिपालयति पिबातिसादरंपश्यति शोषयतिवेत्यर्थानभिप्रेत्यद्वयंतस्यपातेः पतिशब्दउत्पन्नस्तेनपशुपतिशब्दस्याप्यर्थत्रयमित्यग्रेविज्ञेयम् २३ ब्रह्मचर्येणदिव्यत्वादयथास्थितत्वाच्चलिंगमित्यप्यस्यनाम आलिंगत्ययंप्रपंचंसत्तास्फूर्तिप्रदानेनालिंगत्येनंप्रपंचः प्र

अस्यदीप्तानिरूपाणिघोराणिचबहूनिच ॥ लोकेयान्यस्यपूज्यंतेमनुष्याःप्रवदंतिच ११८ नामधेयानिलोकेषुबहून्यस्ययथार्थवत् ॥ निरुच्यंतेमहत्वाच्चविभुत्वात्कर्मणस्तथा १९ वेदेचास्यसमाम्नातंशतरुद्रियमुत्तमम् ॥ नाम्नाचानंतरुद्रेतिह्युपस्थानंमहात्मनः २० सकामानांप्रभुर्देवोयेदिव्यायेचमानुषाः ॥ सविभुःसप्रभुर्देवोविश्वंव्याप्नोतिवैमहत् २१ ज्येष्ठंभूतंवदंत्येनंब्राह्मणामुनयस्तथा ॥ प्रथमोह्येषदेवानांमुखादस्यानलोऽभवत् २२ सर्वथायत्पशून्पातितैश्चयद्रमतेपुनः ॥ तेषामधिपतिर्यच्चतस्मात्पशुपतिःस्मृतः २३ दिव्यंचब्रह्मचर्येणलिंगमस्ययथास्थितम् ॥ महयत्येषलोकांश्चमहेश्वरइतिस्मृतः २४ ऋषयश्चैवदेवाश्चगंधर्वाप्सरसस्तथा ॥ लिंगमस्यार्चयंतिस्मतच्चाप्यूर्ध्वंसमास्थितम् २५ पूज्यमानेततस्तस्मिन्मोदतेसमहेश्वरः ॥ सुखीप्रीतश्चभवतिप्रहृष्टश्चैवशंकरः २६ यदस्यबहुधारूपंभूतभव्यभवत्स्थितम् ॥ स्थावरंजंगमंचैवबहुरूपस्ततःस्मृतः २७ एकाक्षोजाज्वलन्नास्तेसर्वतोक्षिमयोऽपिवा ॥ क्रोधाद्यश्चाविशल्लोकांस्तस्मात्सर्वइतिस्मृतः २८ धूम्ररूपंचयत्तस्यधूर्जटिस्तेनचोच्यते ॥ विश्वेदेवाश्चयत्तस्मिन्विश्वरूपस्ततःस्मृतः २९ तिस्रोदेवीर्यदाचैवभजतेभुवनेश्वरः ॥ द्यामपःपृथिवींचैवत्र्यंबकश्चततःस्मृतः १३० समेधयतियन्नित्यंसर्वार्थान्सर्वकर्मसु ॥ शिवमिच्छन्मनुष्याणांतस्मादेषशिवःस्मृतः १३१

लीयमानइतिहेतोरयंलिंगपदवाच्यः दिव्यत्वादसंगत्वाद्यथास्थितत्वात्कूटस्थत्वाच्चप्रधानादन्यत्वमित्यर्थः महयन्पूजयन्सचासौईश्वरश्चेतिमहेश्वरः २४ लिंगयतिसर्वान्कामान्गमयति अतःसर्वोत्कृष्टत्वादूर्ध्वंऊर्ध्वत्वाच्चऋष्यादीनामर्च्यं लिंगतिभकसमर्पितंपत्रपुष्पादिगच्छतिप्राप्नोतीत्यनेनहेतुनालिंगमित्युत्तरस्यार्थः २५ । २६ भवंवर्तमानम् २७ एकमक्ष्यस्यवह्निमयंजाज्वलदत्यंतंदीप्तमास्तेयत्रप्रविष्टंसर्वंतत्तादात्म्यंप्राप्नोतीत्यनेनसरंत्येनंभूतानीतित्रासरत्वयंसर्वाणिभूतान्यनंतलोचनत्वादितिवासर्वः जाज्वलन्नित्यस्यैवविवरणंक्रोधादिति शर्वइतिताल्व्यादिपाठेऽपिशृणोतिहिनस्तीतिशर्वइतिनिर्वचनम् २८ धूम्रःक्रोधवतीजटिःस्वरूपमस्येतिविग्रहेवर्णलोपाद्धूर्जटिरित्याह धूम्रेति रूपशब्दोदेववाचीत्यभिप्रेत्याह विश्वेइति २९ त्रैलोक्यंभजतेपालयतीतित्र्यंबकइत्याह तिस्रइति ३० समेधयतीति यस्माद्धनादिवर्धनेनलोकानांशिवंकरस्तस्माच्छिवइत्यर्थः १३१

महांतिपुरुषभेदेनबहुत्वाद्विभुत्वाद्वाव्यापकाख्यानिदेवशब्दितानींद्रियाण्यस्येतिवामहतोविश्वस्यदेवोराजावामहादेवइत्याभिप्रेत्याह सहस्रेति १३२ सईक्षांचक्रेसप्राणमसृजत्प्राणाच्छ्रद्धामित्यादिनाश्रुतौईक्षणकर्ताईश्वरोमहानुक्तः प्राणोजीवोपाधिस्तेनजीवउक्तः श्रद्धादिकंजीवस्यलिंगशरीरंचरमंकार्यं तत्रमहतईशात्प्रागुपाध्यस्पृष्टेनरूपेणततउपहितेनसाक्षिरूपेणतदुपाध्यभिमानिनाकर्त्रादिरूपेणचास्थितोऽपिस्थितलिंगःअविक्रियस्वरूपतयातिष्ठतीतियोगात्स्थाणुरित्युच्यतइत्याह महदिति ३३ सूर्याचंद्रमसोरित्यग्नेरप्युपलक्षणं रुचोदीप्तयः त्र्यक्षे सूर्यचंद्राग्निनेत्रे व्योम्निकेशारश्मयोयस्येतिविग्रहः ३४ । ३५ । ३६ । ३७ । ३८ शरीरेषुविषमैर्दशविधैरूपैस्तिष्ठतीतिविषमस्थः प्राणिनांदेहाभिमानिनांसर्वेषांसमःप्रियस्वात् नह्यात्मनिकदाचिदप्यप्रियत्वंकस्यापिदृष्टंसएषशिवएववायुरूपीप्राणापानादिभेदेनविषमस्थेषुपुण्यपापिषुशरीरिषुजीवेषुस्थितःसर्वसमइत्यर्थः ३९ विग्रहंप्रतिमाम् ४० ऊरुभ्यामित्यादिश्लोकत्रयेणपुनस्तनूद्वयंविभजते ऊरुभ्यामिति तत्राद्यश्लोकेऽग्निरितिभोक्ता सोमइतिचभोग्यमुच्यते अत्रमुखबाहूरुपादेभ्योजाताश्चत्वारोवर्णाःकर्मफलभूतवृष्ट्यादिचारेणसमस्तप्राणिक

सहस्राक्षोऽयुताक्षोवासर्वतोक्षिमयोऽपिवा ॥ यच्चविश्वंमहत्पातिमहादेवस्ततःस्मृतः १३२ महत्पूर्वंस्थितोयच्चप्राणोत्पत्तिस्थितश्चयत ॥ स्थितलिंगश्चयन्नित्यंतस्मात्स्थाणुरितिस्मृतः ३३ सूर्याचंद्रमसोर्लोकेप्रकाशंतेरुचश्चयाः ॥ ताःकेशसंज्ञितास्त्र्यक्षेव्योमकेशस्ततःस्मृतः ३४ भूतंभव्यंभविष्यंचसर्वंजगदशेषतः ॥ भवएवततोयस्माद्भूतभव्यभवोद्भवः ३५ कपिःश्रेष्ठइतिप्रोक्तोधर्मश्चवृषउच्यते ॥ सदेवदेवोभगवान्कीर्त्यतेऽतोवृषाकपिः ३६ ब्रह्माणमिंद्रंवरुणंयमंधनदमेवच ॥ निगृह्यहरतेयस्मात्तस्माद्धरइतिस्मृतः ३७ निमीलिताभ्यांनेत्राभ्यांबलाद्देवोमहेश्वरः ॥ ललाटेनेत्रमसृजत्तेनत्र्यक्षःसउच्यते ३८ विषमस्थःशरीरेषुसमश्चप्राणिनामिह ॥ सवायुर्विषमस्थेषुप्राणोऽपानःशरीरिषु ३९ पूजयेद्विग्रहंयस्तुलिंगंचापिमहात्मनः ॥ लिंगंपूजयितानित्यंमहतींश्रियमश्नुते १४० ऊरुभ्यामर्धमाग्नेयंसोमाऽर्धंचशिवातनुः ॥ आत्मनोऽर्धंतथाचाग्निःसोमोर्धंपुनरुच्यते ४१ तैजसीमहतीदीप्तादेवेभ्योऽस्यशिवातनुः ॥ भास्वतीमानुषेष्वस्यतनुर्घोराऽग्निरुच्यते ४२ ब्रह्मचर्यंचरत्येषशिवायाऽस्यतनुस्तया ॥ याऽस्यघोरतरामूर्तिःसर्वानत्तितयेश्वरः १४३

५९

ल्याणकरत्वाद्रुद्रस्यशिवातनुरित्युच्यते तत्रऊरुशब्देनतदारभ्याधस्तनःप्रदेशउच्यतेतत्रार्धंमाग्नेयंपरिशेषादर्धंसोमः वैश्योभोक्ताशूद्रोभोज्यइत्यर्थः आत्मनोरुद्रस्य तथाचऊरुभ्यामुपर्यर्धंशिरोभागोब्राह्मणोऽग्निर्भोक्ता परिशेषादर्धंबाहुभागःक्षत्रियःसोमोभोज्यं तथापुनरप्येतदुच्यते अर्धमाग्नेयमर्धंसोमइति तेनब्रह्मक्षत्रेभोक्तारौ वैश्यशूद्रौभोज्यौ तथाचभोक्त्राभोज्यंरक्ष्यंभोज्येनचभोक्तावर्धनीयइति तथाचचातुर्वर्ण्यंत्रैलोक्यस्थितिहेतुत्वादात्मनोरुद्रस्यशिवातनुरित्यर्थः ४१ तैजसीति 'नहवैदेवाअश्नंतिनपिबंत्येतदेवामृतंदृष्ट्वातृप्यंति'इतिश्रुतेर्देवानांभोग्यासोमरूपाऽस्याशिवातनुःस्वर्गेऽस्ति तथाभुविमानुषेषुघोराभोक्त्रीजठराग्निरूपासर्वानर्थनिदानभूताऽस्तीतिभावः ४२ ब्रह्मचर्यमिति एषमानुषस्तयातन्वाब्रह्मचर्यंचरति याऽस्याशिवातनुर्दैवीसंपद्दशमदमादिरूपासर्वानर्थनिदानंघोरतराकामक्रोधादिरूपायाऽस्यशिवस्यमूर्तिस्तयासर्वानत्ति क्रोधाद्याविष्टोहिपित्रादीनपिहिनस्तीतिप्रसिद्धम् १४३

एवमस्यैवकारयितृत्वादयमेवाराध्योऽस्माद्भेतव्यमित्याशयेनाह यन्निर्दहतीति निर्दहत्यग्निवत् तीक्ष्णःशस्त्रवत् उग्रोयमवत् प्रतापवान्कालवच्चभूत्वासर्वान्रोदयतिरुणद्धिवासर्वग्रासित्वाद्रुद्रइत्युच्यते अयमेवभयकृद्भयनाशनश्चेत्याराधनीयोनतुहेलनीयइतिभावः ४४ । ४५ । ४६ । ४७ । ४८ । ४९ चतुर्विधंशुद्धशबलसूत्रविराड्भेदेन भगवद्रूपस्यचातु



यन्निर्दहतियत्तीक्ष्णोयदुग्रोयत्प्रतापवान् ॥ मांसशोणितमज्जादोयततोरुद्रउच्यते १४४ एषदेवोमहादेवोयोऽसौपार्थतवाग्रतः ॥ संग्रामेशात्रवान्निघ्नंस्त्वयादृष्टःपिनाकधृक् ४५ सिंधुराजवधार्थायप्रतिज्ञातेत्वयाऽनघ ॥ कृष्णेनदर्शितःस्वप्नेयस्तुशैलेंद्रमूर्धनि ४६ एषवैभगवान्देवःसंग्रामेयातितेऽग्रतः ॥ येनदत्तानितेस्त्राणियैस्त्वयादानवाहताः ४७ धन्यंयशस्यमायुष्यंपुण्यंवेदैश्चसंमितम् ॥ देवदेवस्यतेपार्थव्याख्यातंशतरुद्रियम् ४८ सर्वार्थसाधनंपुण्यंसर्वकिल्बिषनाशनम् ॥ सर्वपापप्रशमनंसर्वदुःखभयापहम् ४९ चतुर्विधमिदंस्तोत्रंयःशृणोतिनरःसदा ॥ विजित्यशत्रून्सर्वान्सरुद्रलोकेमहीयते १५० चरितंमहात्मनोनित्यंसांग्रामिकमिदंस्मृतम् ॥ पठन्वैशतरुद्रीयंशृण्वंश्चसततोत्थितः ५१ भक्तोविश्वेश्वरंदेवंमानुषेषुचयःसदा ॥ वरान्कामान्सलभतेप्रसन्नेत्र्यंबकेनरः ५२ गच्छयुद्ध्यस्वकौंतेयनतवास्तिपराजयः ॥ यस्यमंत्रीचगोप्ताचपार्श्वस्थोहिजनार्दनः ५३ ॥ संजयउवाच ॥ एवमुक्त्वार्जुनंसंख्येपराशरसुतस्तदा ॥ जगामभरतश्रेष्ठयथागतमरिंदम ५४ युद्धंकृत्वामहद्घोरंपंचाहानिमहाबलः ॥ ब्राह्मणोनिहतोराजन्ब्रह्मलोकमवाप्तवान् ५५ स्वधीतेयत्फलंवेदेतदस्मिन्नपिपर्वणि ॥ क्षत्रियाणामभीरूणांयुक्तमत्रमहद्यशः ५६ यइदंपठतेपर्वशृणुयाद्वाऽपिनित्यशः ॥ समुच्यतेमहापापैःकृतैर्घोरैश्चकर्मभिः ५७ यज्ञावाप्तिर्ब्राह्मणस्येहनित्यंघोरेयुद्धेक्षत्रियाणांयशश्च ॥ शेषौवर्णौकाममिष्टंलभेतेपुत्रान्पौत्रान्नित्यमिष्टांस्तथैव १५८ ॥ इतिश्रीमहाभारतेशतसाहस्र्यांसंहितायांवैयासक्यांद्रोणपर्वणिनारायणास्त्रमोक्षपर्वणिद्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥ ॥ ७ ॥ ॥ समाप्तंनरायणास्त्रमोक्षपर्व ॥ ॥ द्रोणपर्वसमाप्तम् ॥ अस्यानंतरंकर्णपर्वभविष्यति तस्यायमाद्यःश्लोकः ॥ ॥ वैशंपायनउवाच ॥ ततोद्रोणेहतेराजन्दुर्योधनमुखान्नृपाः ॥ भृशमुद्विग्नमनसोद्रोणपुत्रमुपाद्रवन् १

र्विध्यात्स्तोत्रमप्यस्यचतुर्विधम् ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । १५८ ॥ ॥ इति द्रोणपर्वणि द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥ ॥ ७ ॥

अत्र पर्वणि आदिपर्वोक्ताध्यायश्लोकसंख्यातो न्यूनाधिकत्वं लेखकादिप्रमादादेव बोध्यम् ॥

॥ श्रीगणेशायनमः ॥ ॥ नरनारायणौनत्वाप्राचीनाचार्यवर्त्मना ॥ कर्णपर्वार्थविद्योतीभावदीपोवितन्यते ॥ १ ॥ ननुविराटादिपर्वचतुष्टयतात्पर्यंक्रमेणार्थलुब्धानामर्थःसेवयानीत्याकपट पूर्वकेणकुलवृद्धवधेननृशंसानृतपूर्वकेणमहागुरुवधेनचसिध्यतीत्युक्तं तावतैवार्थनिरूपणंसमाप्तं । अतःपरंकाममोक्षावेवनिरूपणीयावितिकर्णपर्वादित्रयंनारंभणीयमितिचेत्सत्यं । यथाधर्मार्थौनिरूपितौएवंधर्माभासोऽर्थाभासश्चनिरूपणीयःपरिहाराय । एवमधर्मानर्थौअधर्माभासानर्थाभासौचनिरूपणीयौहानायोपादानायच तदर्थमुत्तरग्रंथःकाममोक्षयोःप्रागावश्यकः । तत्र चोरेभ्यःकार्पटिकमार्गमुपदिशतःसत्यवादिनःसत्यवदनंधर्माभासएवमविचार्यघ्राणचक्षुःराक्षसंघ्नतोव्याधस्यहिंस्रश्वमधर्माभासः । तथाशोकहेतुनाकुलक्षयेणप्राप्तोऽर्थोऽर्थाभासः । सुप्तानांहन

॥ श्रीकृष्णायनमः ॥ ॥ श्रीवेदव्यासायनमः ॥ ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींचैवततोजयमुदीरयेत् ॥ १ ॥ वैशंपायनउवाच ॥ ततोद्रोणेहतेराजन्दुर्योधनमुखान्नृपाः ॥ भृशमुद्विग्नमनसोद्रोणपुत्रमुपागमन् १ तेद्रोणमनुशोचंतःकश्मलाभिहतौजसः ॥ पर्युपासंतशोकार्तास्ततःशारद्वतीसुतम् २ तेमुहूर्तंसमाश्वस्यहेतुभिःशास्त्रसंमितैः ॥ रात्र्यागमेमहीपालाःस्वानिवेश्मानिभेजिरे ३ तेवेश्मस्वपिकौरव्यपृथ्वीशानाप्नुवन्सुखम् ॥ चिंतयंतःक्षयंतीव्रंदुःखशोकसमन्विताः ४ विशेषतःसूतपुत्रोराजाचैवसुयोधनः ॥ दुःशासनश्चशकुनिःसौबलश्चमहाबलः ५ उषितास्तेनिशांतांतुदुर्योधननिवेशने ॥ चिंतयंतःपरिक्लेशान्पांडवानांमहात्मनाम् ६ यत्तद्द्यूतेपरिक्लिष्टाकृष्णाचानायितासभाम् ॥ तत्स्मरंतोऽनुशोचंतोभृशमुद्विग्नचेतसः ७ तथातुसंचिंतयतांतान्क्लेशान्द्यूतकारितान् ॥ दुःखेनक्षणदाराजन्जगामाब्दशतोपमा ८ ततःप्रभातेविमलेस्थितादिष्टस्यशासने ॥ चक्रुरावश्यकंसर्वेविधिदृष्टेनकर्मणा ९ तेकृत्वाऽवश्यकार्याणिसमाश्वस्यचभारत ॥ योगमाज्ञापयामासुर्युद्धायचविनिर्ययुः १० कर्णंसेनापतिंकृत्वाकृतकौतुकमंगलाः ॥ पूजयित्वाद्विजश्रेष्ठान्दधिपात्रघृताक्षतैः ११ गोभिरश्वैश्चनिष्कैश्चवासोभिश्चमहाधनैः ॥ वंद्यमानाजयाशीर्भिःसूतमागधवंदिभिः १२ तथैवपांडवाराजन्कृतपूर्वाह्णिकक्रियाः ॥ शिबिरान्निर्ययुस्तूर्णंयुद्धायकृतनिश्चयाः १३ ततःप्रववृतेयुद्धंतुमुलंलोमहर्षणम् ॥ कुरूणांपांडवानांचपरस्परजयैषिणाम् १४ तयोर्द्वौदिवसौयुद्धंकुरुपांडवसेनयोः ॥ कर्णेसेनापतौराजन्बभूवाद्भुतदर्शनं १५ ततःशत्रुक्षयंकृत्वासुमहांतंरणेवृषः ॥ पश्यतांधार्तराष्ट्राणांफाल्गुनेननिपातितः १६ ततस्तुसंजयःसर्वंगत्वानागपुरंद्रुतम् ॥ आचष्टधृतराष्ट्राययद्वृत्तंकुरुजांगले १७ ॥ जनमेजयउवाच ॥ आपगेयंहतंश्रुत्वाद्रोणंचापिमहारथम् ॥ आजगामपरामार्तिंवृद्धोराजांबिकासुतः १८

नमधर्मः । तत्कृतोऽश्वत्थाम्नोऽभिभवोऽनर्थः । शरणागतस्वसैनिकत्राणार्थमन्यायेनापिकृतोब्रह्मवधोनइतरब्रह्मवधवदनर्थोऽपित्वनर्थाभासएव । नचतेनब्रह्महामवेदित्यातताायिवधेदोषाभावस्मरणात् । इत्येषामर्थानांनिरूपणार्थउत्तरःसंदर्भः । आख्यायिकातुसुखप्रतिपत्त्यर्था । तस्मादिदमपिपर्वत्रयमावश्यकमेव । ततोद्रोणेहतेराजन्निति १ कश्मलाभिहतौजसः तीव्रशोकाभिघातजन्यामोहेननिरस्तसामर्थ्याः शारद्वतीसुतंद्रौणिम् २ समाश्वस्यसावधानाभूत्वा रात्र्यागमेप्रदोषकाले ३ पृथ्वीशाराजानः क्षयं भूतंभाविनंचचिंतयंतःपरामृशंतः ४ । ५ । ६ । ७ क्लेशान्कचग्रहणादीन् क्षणदारात्रिः ८ आवश्यकंनित्यकृत्यम् ९ योगंसंनहनम् १० । ११ निष्कैः सुवर्णहारैः । महाधनैर्बहुमूल्यैः । वंद्यमानाः स्तूयमानाः । सूतावंशानुक्रमविदः । मागधाः पाणिस्वनिकाः । बंदिनः स्तुतिपाठकाः १२ । १३ । १४ । १५ वृषःकर्णः पश्यतांअनादरेषष्ठी १६ । १७ । १८

१

१९ सममन्यतसम्यगवद्यतवान् २० दुर्मरंदुःखेनापिमर्तुमशक्यंस्वेच्छया २१ । २२ तन्मरणंदुष्करंमन्ये २३ । २४ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेप्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥
हतेइति १ क्षयंगृहम् २ । ३ हाकष्टमितिखेदातिशयसूचकंवाक्यमुक्त्वापश्चाद्वचनंवक्तव्यमाददे ४ आस्तेतिष्ठति ५ । ६ । ७ । ८ । ९ । १० दंशितानांसन्नद्धानां वसुसंभवोवसूनामंशेभ्यः

सश्रुत्वानिहतंकर्णंदुर्योधनहितैषिणम् ॥ कथंद्विजवरप्राणानधारयतदुःखितः १९ यस्मिन्जयाशांपुत्राणांसममन्यतपार्थिवः ॥ तस्मिन्हतेसकौरव्यःकथंप्राणानधारयत् २० दुर्मरंतदहंमन्येनृणांकृच्छ्रेऽपिवर्तताम् ॥ यत्रकर्णंहतंश्रुत्वानात्यजज्जीवितंनृपः २१ तथाशांतनवंवृद्धंब्रह्मन्बाह्लीकमेवच ॥ द्रोणंचसोमदत्तंचभूरिश्रवसमेवच २२ तथैवचान्यान्सुहृदःपुत्रान्पौत्रांश्चपातितान् ॥ श्रुत्वायन्नाजहात्प्राणांस्तन्मन्येदुष्करंद्विज २३ एतन्मेसर्वमाचक्ष्वविस्तरेणमहामुने ॥ नहितृप्यामिपूर्वेषांशृण्वानश्चरितंमहत् २४ ॥ इतिश्रीम० कर्णपर्वणि जनमेजयवाक्यंनामप्रथमोऽध्यायः ॥ १ ॥ छ ॥ वैशंपायनउवाच ॥ हतेकर्णेमहाराजनिशिगावल्गणिस्तदा ॥ दीनोययौनागपुरमश्वैर्वातसमैर्जवे १ सहास्तिनपुरंगत्वाभृशमुद्विग्नचेतनः ॥ जगामधृतराष्ट्रस्यक्षयंप्रक्षीणबांधवम् २ सतमुद्वीक्ष्यराजानंकश्मलाभिहतौजसम् ॥ ववंदेप्रांजलिर्भूत्वामूर्ध्नापादौनृपस्यह ३ संपूज्यचयथान्यायंधृतराष्ट्रंमहीपतिम् ॥ हाकष्टमितिचोक्त्वासततोवचनमाददे ४ संजयोऽहंक्षितिपतेकच्चिदास्तेसुखंभवान् ॥ स्वदोषैरापदंप्राप्यकच्चिन्नाद्यविमुह्यति ५ हितान्युक्तानिविदुरद्रोणगांगेयकेशवैः ॥ अगृहीतान्यनुस्मृत्यकच्चिन्नकुरुषेव्यथाम् ६ रामनारदकण्वाद्यैर्हितमुक्तंसभातले ॥ नगृहीतमनुस्मृत्यकच्चिन्नकुरुषेव्यथाम् ७ सुहृदस्त्वद्धितेयुक्तान्भीष्मद्रोणमुखान्परैः ॥ निहतान्युधिसंस्मृत्यकच्चिन्नकुरुषेव्यथाम् ८ तमेवंवादिनंराजासूतपुत्रंकृतांजलिम् ॥ सुदीर्घमथनिःश्वस्यदुःखार्तइदमब्रवीत् ९ ॥ धृतराष्ट्रउवाच ॥ आपगेयेहतेशूरेदिव्यास्त्रवतिसंजय ॥ द्रोणेचपरमेष्वासेभृशंमेव्यथितंमनः १० योरथानांसहस्राणिदंशितानांदशैवतु ॥ अहन्यहनितेजस्वीनिजघ्नेवसुसंभवः ११ तंहतंयज्ञसेनस्यपुत्रेणेहाशिखंडिना ॥ पांडवेयाभिगुप्तेनश्रुत्वामेव्यथितंमनः १२ भार्गवःप्रददौयस्मैपरमास्त्रंमहाहवे ॥ साक्षाद्रामेणयोबाल्येधनुर्वेदउपाकृतः १३ यस्यप्रसादात्कौंतेयाराजपुत्रामहारथाः ॥ महारथत्वंसंप्राप्तास्तथान्येवसुधाधिपाः १४ तंद्रोणंनिहतंश्रुत्वाधृष्टद्युम्नेनसंयुगे ॥ सत्यसंधंमहेष्वासंभृशंमेव्यथितंमनः १५ ययोर्लोकेपुमानस्त्रेनसमोऽस्तिचतुर्विधे ॥ तौद्रोणभीष्मौश्रुत्वातुहतौमेव्यथितंमनः १६ त्रैलोक्येयस्यचास्त्रेषुनपुमान्विद्यतेसमः ॥ तंद्रोणंनिहतंश्रुत्वाकिमकुर्वतमामकाः १७ संशप्तकानांचबलेपांडवेनमहात्मना ॥ धनंजयेनविक्रम्यगमितेयमसादनम् ॥ नारायणास्त्रेचहतेद्रोणपुत्रस्यधीमतः १८ विप्रद्रुतेष्वनीकेषुकिमकुर्वतमामकाः ॥ विप्रद्रुतानहंमन्येनिमग्नान्शोकसागरे १९

संभूतः ११ । १२ भार्गवोरामः यस्मैभीष्माय धनुर्वेदउपाकृतः स्वीकृतःशिष्यत्वेन १३ यस्यद्रोणस्य १४ सत्यसंधमवितथप्रतिज्ञम् १५ चतुर्विधे मुक्तंबाणादि । अमुक्तंखड्गादि । यंत्रमुक्तंगोलादि । मुक्तामुक्तंसोपसंहारमस्त्रम् १६ । १७ गमितेसतिकिमकुर्वतेत्युत्तरेणसंबंधः १८ निमग्नानपिद्रवमानान् जीवितेप्सयाचेष्टांकुर्वाणानित्युत्तरत्रसंबंधः १९

२० । २१ : २२ । २३ दिष्टेदैवोपाहते अभाविनःसुखस्यप्राप्तौभाविनोदुःखस्यप्राप्तौवाबुधोनव्यथते तद्विपर्यंदैवानहृष्यतीत्यर्थः २४ दिष्टमवश्यंभावि २५ ॥ इतिकर्णप० नी० भारतभावदीपे द्वितीयोऽध्याय ॥ २ ॥ हतेइति अस्वस्थमुखाःदीनवदनाः १ । २ ऊर्ध्वंमूर्ध्नगमनमेवनत्वधोवस्थानं ३ । ४ हस्तस्थानांभ्रंशोऽरिष्टसूचकउक्तएवंबद्धानांबंधशैथिल्यमपीत्याह तानीति

प्लवमानान्हतेद्रोणेसन्ननौकानिवार्णवे ॥ दुर्योधनस्यकर्णस्यभोजस्यकृतवर्मणः २० मद्रराजस्यशल्यस्यद्रौणेश्चैवकृपस्यच ॥ मत्पुत्रस्यचशेषस्यतथाऽन्येषां चसंजय २१ विप्रद्भुतेष्वनीकेषुमुखवर्णोऽभवत्कथम् ॥ एतत्सर्वंयथावृत्तंतथागावल्गणेमम २२ आचक्ष्वपांडवेयानांमामकानांचविक्रमम् ॥ संजयउवाच ॥ तवा पराधाद्यद्वृत्तंकौरवेयेषुमारिष २३ तच्छ्रुत्वामाव्यथांकार्षीर्दिष्टेनव्यथतेबुधः ॥ यस्मादभावीभावीवाभवेदर्थोनरंप्रति ॥ अप्राप्तौतस्यवाप्राप्तौनकश्चिद्व्यथतेबुधः २४ ॥ धृतराष्ट्रउवाच ॥ नव्यथाऽभ्यधिकाकाचिद्विद्यतेममसंजय ॥ दिष्टमेतत्पुरामन्येकथयस्वयथेच्छकम् २५ ॥ इतिश्रीमहाभारतेकर्णपर्वणिधृतराष्ट्र संजयसंवादेद्वितीयोऽध्यायः ॥ २ ॥ ॥ संजयउवाच ॥ हतेद्रोणेमहेष्वासेतवपुत्रामहारथाः ॥ बभूवुरस्वस्थमुखाविषण्णागतचेतसः १ अवाङ्मुखाः शस्त्रभृतःसर्वएवविशांपते ॥ अवेक्षमाणाःशोकार्त्तानाभ्यभाषन्परस्परम् २ तान्दृष्ट्वाव्यथिताकारान्सैन्यानितवभारत ॥ ऊर्ध्वमेवनिरैक्षंतदुःखत्रस्तान्यने कशः ३ शस्त्राण्येषांतुराजेंद्रशोणिताक्तानिसर्वशः ॥ प्राभ्रश्यंतकराग्रेभ्योदृष्ट्वाद्रोणंहतंयुधि ४ तानिबद्धान्यरिष्टानिलंबमानानिभारत ॥ अदृश्यंतमहारा जनक्षत्राणियथादिवि ५ तथातुस्तिमितंदृष्ट्वागतसत्वमवस्थितम् ॥ बलंतवमहाराजराजादुर्योधनोऽब्रवीत् ६ भवतांबाहुवीर्यंहिसमाश्रित्यमयायुधि ॥ पांड वेयाःसमाहूतायुद्धंचेदंप्रवर्तितम् ७ तदिदंनिहतेद्रोणेविषण्णमिवलक्ष्यते ॥ युध्यमानाश्चसमरेयोधावध्यंतिसर्वशः ८ जयोवापिवधोवापियुध्यमानस्यसंयुगे ॥ भवेत्किमत्रचित्रंवैयुध्यध्वंसर्वतोमुखाः ९ पश्यध्वंचमहात्मानंकर्णंवैकर्तनंयुधि ॥ प्रचरंतंमहेष्वासंदिव्यैरस्त्रैर्महाबलम् १० यस्यवैयुधिसंत्रासात्कुंतीपुत्रोधनं जयः ॥ निवर्त्ततेसदामंदःसिंहात्क्षुद्रमृगोयथा ११ येननागायुतप्राणोभीमसेनोमहाबलः ॥ मानुषेणैवयुद्धेनतामवस्थांप्रवेशितः १२ येनदिव्यास्त्रविच्छूरोमा यावीसघटोत्कचः ॥ अमोघयारणेशक्त्यानिहतोभैरवंनदन् १३ तस्यदुर्वारवीर्यस्यसत्यसंधस्यधीमतः ॥ बाह्वोर्द्रविणमक्षय्यमद्यद्रक्ष्यथसंयुगे १४ द्रोणपु त्रस्यविक्रांतंराधेयस्यैवचोभयोः ॥ पश्यंतुपांडुपुत्रास्तेविष्णुवासवयोरिव १५ सर्वएवभवंतश्चशक्ताःप्रत्येकशोऽपिवा ॥ पांडुपुत्रान्रणेहंतुंससैन्यान्किमुसं हताः ॥ वीर्यवंतःकृतास्त्राश्चद्रक्ष्यथाद्यपरस्परम् १६ ॥ संजयउवाच ॥ एवमुक्त्वाततःकर्णंचक्रेसेनापतिंतदा ॥ तवपुत्रोमहावीर्योभ्रातृभिःसहितोऽनघ १७ सैनापत्यमथावाप्यकर्णोराजन्महारथः ॥ सिंहनादंविनद्योच्चैःप्रायुध्यतरणोत्कटः १८

दिविस्थितानिपतमानानिनक्षत्राणीवाधोमुखान्यदृश्यंतेत्यर्थः ५ स्तिमितंस्तब्धं यतोगतसत्वमुद्विग्नचित्तम् ६ । ७ वध्यंतिवध्यंतेपरैरितिशेषः ८ किमत्रचित्रंक्षणंपांडवैर्जितंचेन्नैतदाश्चर्यं ९ अस्माकमसकृज्जयोजातइत्याहपश्यध्वमित्यादिना १० । ११ तांद्रोणपर्वप्रसिद्धां १२ । १३ द्रविणंबलं १४ । १५ द्रक्ष्यथदर्शयिष्यथ १६ । १७ । १८

१९ अग्रेपुंखेषुसंसक्ताःप्रेर्यमाणस्यशरस्याग्रेणपुंखेषुप्रेरितेषुपुंखेनसंसक्ताइषुधाराः पूर्वोत्तरेषुसंधानादविच्छिन्नप्रवाहाइत्यर्थः २० पीडयित्वाहत्वेत्यनेककर्तृकेऽपिक्त्वाप्रत्ययश्छांदसः अन्येभ्योपि दृश्यंतेइतिवनिबंतंत्राशब्दद्वयं दृशिग्रहणादाद्येतुगपि पीडयन्नानिघ्नन्निितिवार्थः २१ ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपेतृतीयोऽध्यायः ॥ ३॥ एतदिति १ विह्वलः चलनासमर्थः काष्ठ

सस्रृंजयानांसर्वेषांपंचालानांचमारिष ॥ केकयानांविदेहानांचकारकदनंमहत् १९ तस्येषुधाराःशतशःप्रादुरासञ्छरासनात् ॥ अग्रेपुंखेषुसंसक्तायथाभ्रमरपं क्तयः २० सपीडयित्वापंचालान्पांडवांश्चतरस्विनः ॥ हत्वासहस्रशोयोधानर्जुनेननिपातितः २१ ॥ इति श्रीमहाभारतेकर्णपर्वणि संजयवाक्यंनामतृ तीयोऽध्यायः ॥ ३ ॥ ॥ ४ ॥ ॥ वैशंपायनउवाच ॥ एतच्छ्रुत्वामहाराजधृतराष्ट्रोंऽबिकासुतः ॥ शोकस्यांतमपश्यन्वैहतंमेनेसुयोधनम् १ विह्वलःपतितोभूमौनष्टचेताइवद्विपः ॥ तस्मिन्निपतितेभूमौविह्वलेराजसत्तमे २ आर्तनादोमहानासीत्स्त्रीणांभरतसत्तम ॥ सशब्दःपृथिवींकृत्स्नांपूरयामास सर्वशः ३ शोकार्णवेमहाघोरेनिमग्नाभरतस्त्रियः ॥ रुरुदुर्दुःखशोकार्ताभृशमुद्विग्नचेतसः ४ राजानंचसमासाद्यगांधारीभरतर्षभ ॥ निःसंज्ञापतिताभूमौसर्वा ण्यंतःपुराणिच ५ ततस्ताःसंजयोराजन्समाश्वासयदातुराः ॥ मुह्यमानाःसुबहुशोमुंचंत्योवारिनेत्रजम् ६ समाश्वस्ताःस्त्रियस्तास्तुवेपमानामुहुर्मुहुः ॥ कद ल्यइववातेनधूयमानाःसमंततः ७ राजानंविदुरश्चापिप्रज्ञाचक्षुषमीश्वरम् ॥ आश्वासयामासतदासिंचंस्तोयेनकौरवम् ८ सलब्ध्वाशनकैःसंज्ञांताश्चदृष्ट्वा स्त्रियोनृपः ॥ उन्मत्तइवराजेंद्रस्थितस्तूष्णींविशांपते ९ ततोध्यात्वाचिरंकालंनिःश्वस्यचपुनःपुनः ॥ स्वान्पुत्रान्गर्हयामासबहुमेनेचपांडवान् १० गर्हयं श्चात्मनोबुद्धिंशकुनेःसौबलस्यच ॥ ध्यात्वातुसुचिरंकालंवेपमानोमुहुर्मुहुः ११ संस्तभ्यचमनोभूयोराजाधैर्यसमन्वितः ॥ पुनर्गावल्गणिंसूतंपर्यपृच्छतसं जयम् १२ यत्त्वयाकथितंवाक्यंश्रुतंसंजयतन्मया ॥ कच्चिद्दुर्योधनःसूतनगतोवैयमक्षयम् १३ जयेनिराशःपुत्रोमेसततंजयकामुकः ॥ ब्रूहिसंजयतत्त्वेन पुनरुक्तांकथामिमाम् १४ एवमुक्तोऽब्रवीत्सूतोराजानंजनमेजय ॥ हतोवैकर्तनोराजन्सहपुत्रैर्महारथः १५ भ्रातृभिश्चमहेष्वासैःसूतपुत्रैस्तनुत्यजैः ॥ दुःशासनश्चनिहतःपांडवेनयशस्विना ॥ पीतंचरुधिरंकोपाद्भीमसेनेनसंयुगे १६ ॥ इतिश्रीमहाभारतेकर्णपर्वणि धृतराष्ट्रशोकोनाम चतुर्थोऽध्यायः ॥ ४ ॥ ॥ वैशंपायनउवाच ॥ ॥ इतिश्रुत्वामहाराजधृतराष्ट्रोंऽबिकासुतः ॥ अब्रवीत्संजयंसूतंशोकसंविग्नमानसः १ दुष्प्रणीतेनमेतातपुत्रस्यादीर्घजीविनः ॥ हतंवैकर्तनंश्रुत्वाशोकोमर्माणिकृंतति २ तस्यमेसंशयंछिंधिदुःखपारंतितीर्षतः ॥ कुरूणांसृंजयानांचकेचजीवंतिकेमृताः ३

वत्पतितः २ । ३ । ४ अंतःपुराणिस्त्रियः ५ । ६ कदल्यइववेपमानाआसन्निितिशेषः ७ । ८ दृष्ट्वामनसैवात्मप्रत्ययेनदुःखवतीर्ज्ञात्वा ९ । १० । ११ । १२ 'जीवन्नरोभद्रशतानिपश्येत्' इतिम नसिनिधायाह यत्त्वयेति १३ जयेइति इष्टवियोगमात्रेणदशरथादिर्मृतः अस्यतुजयेनैराश्यमधिकंमरणकारणमस्तीतिभावः उक्तांसंक्षेपेण पुनर्ब्रूहिविस्तरेण १४ । १५ । १६ ॥ इतिकर्णपर्वणि नीलकंठीये भारतभावदीपेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ५ ॥ ॥ इतीति १ दुष्प्रणीतेनदुर्नयेनअदीर्घजीविनोल्पायुषः ममैवदुर्नीत्यापुत्रोमरणोन्मुखःकृतइतिभावः २ । ३

हत्वानिघ्नन् ४ निहत्यैवदुर्द्धर्षइत्यन्वयः जातइतिशेषः ५ हतोगतःपरलोकमितिशेषः एवमग्रेऽपियोज्यम् ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५

संजयउवाच ॥ हतःशांतनवोराजन्दुराधर्षःप्रतापवान् ॥ हत्वापांडवयोधानामर्बुदंदशभिर्दिनैः ४ तथाद्रोणोमहेष्वासःपंचालानांरथव्रजान् ॥ निहत्ययुधि दुर्धर्षःपश्चाद्रुक्मरथोहतः ॥ ५ हतशेषस्यभीष्मेणद्रोणेनचमहात्मना ॥ अर्धंनिहत्यसैन्यस्यकर्णोवैकर्त्तनोहतः ६ विविंशतिर्महाराजराजपुत्रोमहाबलः ॥ आनर्त्तयोधाञ्शतशोनिहत्यनिहतोरणे ७ तथापुत्रोविकर्णस्तेक्षत्रव्रतमनुस्मरन् ॥ क्षीणवाहायुधःशूरःस्थितोऽभिमुखतःपरान् ८ घोररूपान्परिक्लेशान्दुर्योधनकृतान्बहून् ॥ प्रतिज्ञांस्मरताचैवभीमसेनेनपातितः ९ विंदानुविंदावावंत्यौराजपुत्रौमहारथौ ॥ कृत्वात्वसुकरंकर्मगतौवैवस्वतक्षयम् १० सिंधुराष्ट्रमुखानीहदशराष्ट्राणियानिह ॥ वशेतिष्ठंतिवीरस्ययःस्थितस्तवशासने ११ अक्षौहिणीर्दशैकांचविनिर्जित्यशितैःशरैः ॥ अर्जुनेनहतोराजन्महावीर्योजयद्रथः १२ तथादुर्योधनसुतस्तरस्वीयुद्धदुर्मदः ॥ वर्तमानःपितुःशास्त्रेसौभद्रेणनिपातितः १३ तथादौःशासनिःशूरोबाहुशालीरणोत्कटः ॥ द्रौपदेयेनसंगम्यगमितोयमसादनम् १४ किरातानामधिपतिःसागरानूपवासिनाम् ॥ देवराजस्यधर्मात्माप्रियोबहुमतःसखा १५ भगदत्तोमहीपालःक्षत्रधर्मरतःसदा ॥ धनंजयेनविक्रम्यगमितोयमसादनम् १६ तथाकौरवदायादोन्यस्तशस्त्रोमहायशाः ॥ हतोभूरिश्रवाराजन्शूरःसात्यकिनायुधि १७ श्रुतायुरपिचांबष्ठःक्षत्रियाणांधुरंधरः ॥ चरन्नभीतवत्संख्येनिहतःसव्यसाचिना १८ तवपुत्रःसदाऽमर्षीकृतास्त्रोयुद्धदुर्मदः ॥ दुःशासनोमहाराजभीमसेनेनपातितः १९ यस्यराजन्गजानीकंबहुसाहस्रमद्भुतम् ॥ सुदक्षिणःससंग्रामेनिहतःसव्यसाचिना २० कोसलानामधिपतिर्हत्वाबहुमतान्परान् ॥ सौभद्रेणेहविक्रम्यगमितोयमसादनम् २१ बहुशोयोधयित्वातुभीमसेनंमहारथम् ॥ चित्रसेनस्तवसुतोभीमसेनेनपातितः २२ मद्रराजात्मजःशूरःपरेषांभयवर्द्धनः ॥ असिचर्मधरःश्रीमान्सौभद्रेणनिपातितः २३ समःकर्णस्यसमरेयःसकर्णस्यपश्यतः ॥ वृषसेनोमहातेजाःशीघ्रास्त्रोदृढविक्रमः २४ अभिमन्योर्वधंश्रुत्वाप्रतिज्ञामपिचात्मनः ॥ धनंजयेनविक्रम्यगमितोयमसादनम् २५ नित्यंप्रसक्तवैरोयःपांडवैःपृथिवीपतिः ॥ विश्राव्यवैरंपार्थेनश्रुतायुःसनिपातितः २६ शल्यपुत्रस्तुविक्रांतःसहदेवेनमारिष ॥ हतोरुक्मरथोराजन्भ्रातामातुलजोयुधि २७ राजाभगिरथोवृद्धोबृहत्क्षत्रश्चकेकयः ॥ पराक्रमंतौविक्रांतौनिहतौवीर्यवत्तरौ २८ भगदत्तसुतोराजन्कृतप्रज्ञोमहाबलः ॥ श्येनवच्चरतासंख्येनकुलेननिपातितः २९ पितामहस्तवतथाबाह्लीकःसहबाह्लिकैः ॥ निहतोभीमसेनेनमहाबलपराक्रमः ३० जयत्सेनस्तथाराजन्जारासंधिर्महाबलः ॥ मागधोनिहतःसंख्येसौभद्रेणमहात्मना ३१ पुत्रस्तेदुर्मुखोराजन्दुःसहश्चमहारथः ॥ गदयाभीमसेनेननिहतौशूरमानिनौ ३२

१६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२

३३ । ३४ । ३५ । ३६ । ३७ । ३८ अपावृतकवीराः अपगतमावृतकं कुत्सितं संग्रामात्परावर्तनं येषां ते संशप्तकसहचरा गोपालकाः ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ खरबंधुरयानवान्

दुर्मर्षणोदुर्विषहोदुर्जयश्चमहारथः ॥ कृत्वात्वसुकरंकर्मगतावैवस्वतक्षयम् ३३ उभौकलिंगवृषकौभ्रातरौयुद्धदुर्मदौ ॥ कृत्वाचासुकरंकर्मगतौवैवस्वतक्षयम् ३४ सचिवोवृषवर्मातिशूरःपरमवीर्यवान् ॥ भीमसेनेनविक्रम्यगमितोयमसादनम् ३५ तथैवपौरवोराजानागायुतबलोमहान् ॥ समरेपांडुपुत्रेणनिहतःसव्यसाचिना ३६ वसातयोमहाराजद्विसाहस्राःप्रहारिणः ॥ शूरसेनाश्चविक्रांताःसर्वेयुधिनिपातिताः ३७ अभीषाहाःकवचिनःप्रहरंतोरणोत्कटाः ॥ शिबयश्चरथोदाराःकालिंगसहिताहताः ३८ गोकुलेनित्यसंवृद्धायुद्धेपरमकोपनाः ॥ तेऽपावृत्तकवीराश्चनिहताःसव्यसाचिना ३९ श्रेणयोबहुसाहस्राःसंशप्तकगणाश्चये ॥ तेसर्वेपार्थमासाद्यगतावैवस्वतक्षयम् ४० स्यालौतवमहाराजराजानौवृषकाचलौ ॥ त्वदर्थमतिविक्रांतौनिहतौसव्यसाचिना ४१ उग्रकर्मामहेष्वासोनामतःकर्मतस्तथा ॥ शाल्वराजोमहाबाहुर्भीमसेनेनपातितः ४२ ओघवांश्चमहाराजबृहंतःसहितौरणे ॥ पराक्रमंतौमित्रार्थेगतौवैवस्वतक्षयम् ४३ तथैवरथिनांश्रेष्ठःक्षेमधूर्तिर्विशांपते ॥ निहतोगदयाराजन्भीमसेनेनसंयुगे ४४ तथाराजन्महेष्वासोजलसंधोमहाबलः ॥ सुमहत्कदनंकृत्वाहतःसात्यकिनारणे ४५ अलंबुषोराक्षसेंद्रःखरबंधुरयानवान् ॥ घटोत्कचेनविक्रम्यगमितोयमसादनम् ४६ राधेयःसूतपुत्रश्चभ्रातरश्चमहारथाः ॥ केकयाःसर्वशश्चापिनिहताःसव्यसाचिना ४७ मालवामद्रकाश्चैवद्राविडाश्चोग्रकर्मिणः ॥ यौधेयाश्चललित्थाश्चक्षुद्रकाश्चाप्युशीनराः ४८ मावेल्लकास्तुंडिकेराःसावित्रीपुत्रकाश्चये ॥ प्राच्योदीच्याःप्रतीच्याश्चदाक्षिणात्याश्चमारिष ४९ पत्तीनांनिहताःसंघाहयानांप्रयुतानिच ॥ रथव्रजाश्चनिहताहताश्चवरवारणाः ५० सध्वजाःसायुधाःशूराःसवर्मांबरभूषणाः ॥ कालेनमहताऽऽयस्ताःकुशलैर्येचवर्धिताः ५१ तेहताःसमरेराजन्पार्थेनाक्लिष्टकर्मणा ॥ अन्येतथाऽमितबालाःपरस्परवधैषिणः ५२ एतेचान्येचबहवोराजानःसगणारणे ॥ हताःसहस्रशोराजन्यन्मांत्वंपरिपृच्छसि ५३ एवमेषक्षयोवृत्तःकर्णार्जुनसमागमे ॥ महेंद्रेणयथावृत्रोयथारामेणरावणः ५४ यथाकृष्णेननरकोमुरुश्चनरकारिणा ॥ कार्तवीर्यश्चरामेणभार्गवेणयथाहतः ५५ सज्ञातिबांधवःशूरःसमरेयुद्धदुर्मदः ॥ रणेकृत्वामहद्युद्धंघोरंत्रैलोक्यमोहनम् ५६ यथास्कंदेनमहिषोयथारुद्रेणचांधकः ॥ तथाऽर्जुनेनसहतोद्वैरथेयुद्धदुर्मदः ५७ सामात्यबांधवोराजन्कर्णःप्रहरतांवरः ॥ जयाशाधार्तराष्ट्राणांवैरस्यचमुखंयतः ५८ तीर्णस्तत्पांडवोराजन्यत्पुरानावबुध्यसे ॥ उच्यमानोमहाराजबंधुभिर्हितकांक्षिभिः ५९

खरंतीक्ष्णंबंधुरंरम्यंयानंविद्यतेयस्य खरैर्गर्दभैर्बंधुरंयानमस्यास्तीतिसः गर्दभसंयुतरथवान्वा ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ कृष्णेननरकारिणानरकोमुरुश्चयथेत्यन्वयः ५५ । ५६ कर्णस्तथाहतइत्यनुकृष्यते ५७ । ५८ । ५९

६० ॥ इतिक० नी०भा०भा० पंचमोऽध्यायः ॥ ५ ॥ ७ ॥ आख्याताइति १ । २ ३ । ४ । ५ । ६ । ७ षड्भिर्द्रोणद्रौणिशल्यकर्णकृपकृतवर्मभिः परमकैरथैर्महामात्रैर्मुख्यैः अशक्नुवद्भिरेकैक

तदिदंसमनुप्राप्तंव्यसनंसुमहात्ययम् ॥ पुत्राणांराज्यकामानांत्वयाराजन्हितैषिणा ॥ अहितान्येवचीर्णानितेषांतत्फलमागतम् ६० ॥ इतिश्रीमहाभारतेक
र्णपर्वणिसंजयवाक्येपंचमोऽध्यायः ॥ ५ ॥ ॥ ७ ॥ ॥ धृतराष्ट्रउवाच ॥ आख्यातामामकास्तातनिहतायुधिपांडवैः ॥ हतांश्चपांडवेयानांमामके
र्ब्रूहिसंजय १ ॥ संजयउवाच ॥ कुंतयोयुधिविक्रांतामहासत्वामहाबलाः ॥ सानुबंधाःसहामात्यागांगेयेननिपातिताः २ नारायणाबलभद्राःशूराश्चशतशोऽ
परे ॥ अनुरक्ताश्चवीरेणभीष्मेणयुधिपातिताः ३ समःकिरीटिनासंख्येवीर्येणचबलेनच ॥ सत्यजित्सत्यसंधेनद्रोणेननिहतोयुधि ४ पंचालानांमहेष्वासाःसर्वे
युद्धविशारदाः ॥ द्रोणेनसहसंगम्यगतावैवस्वतक्षयम् ५ तथाविराटद्रुपदौवृद्धौसहसुतौनृपौ ॥ पराक्रमंतौमित्रार्थेद्रोणेननिहतौरणे ६ योबालएवसमरेसंमि
तःसव्यसाचिना ॥ केशवेनचदुर्धर्षोबलदेवेनवाविभो ७ परेषांकदनंकृत्वामहारथविशारदः ॥ परिवार्यमहामात्रैःषड्भिःपरमकैरथैः ८ अशक्नुवद्भिर्बीभत्सुमभि
मन्युर्निपातितः ॥ कृतंतंविरथंवीरंक्षत्रधर्मेव्यवस्थितम् ९ दौःशासनिर्महाराजसौभद्रंहतवान्रणे ॥ सपत्नानांनिहंताचमहत्यासेनयावृतः १० अंबष्ठस्यसुतः
श्रीमान्मित्रहेतोःपराक्रमन् ॥ आसाद्यलक्ष्मणंवीरंदुर्योधनसुतंरणे ११ सुमहत्कदनंकृत्वागतोवैवस्वतक्षयम् ॥ बृहंतःसुमहेष्वासःकृतास्त्रोयुद्धदुर्मदः १२दुःशा
सनेनविक्रम्यगमितोयमसादनम् ॥ मणिमानदंडधारश्चराजानौयुद्धदुर्मदौ १३ पराक्रमंतौमित्रार्थेद्रोणेनयुधिपातितौ ॥ अंशुमानभोजराजस्तुसहसैन्योमहा
रथः १४ भारद्वाजेनविक्रम्यगमितोयमसादनम् ॥ सामुद्रिश्चित्रसेनश्चसहपुत्रेणभारत १५ समुद्रसेनेनबलाद्गमितोयमसादनम् ॥ अनूपवासीनीलश्चव्याघ्रदत
श्चवीर्यवान् १६ अश्वत्थाम्नाविकर्णेनगमितोयमसादनम ॥ चित्रायुधश्चित्रयोधीकृत्वाचकदनंमहत् १७ चित्रमार्गेणविक्रम्यविकर्णेनहतोमृधे ॥ वृकोदरसमोयु
द्धेवृतःकैकेययोधिभिः १८ कैकेयेनचविक्रम्यभ्राताभ्रात्रानिपातितः ॥ जनमेजयोगदायोधीपार्वतीयःप्रतापवान् १९ दुर्मुखेनमहाराजतवपुत्रेणपातितः ॥ रो
चमानौनरव्याघ्रौरोचमानौग्रहाविव २० द्रोणेनयुगपद्राजन्दिवंसंप्रापितौशरैः ॥ नृपाश्चप्रतियुध्यंतःपराक्रांताविशांपते २१ कृत्वानसुकरंकर्मगतावैवस्वतक्ष
यम् ॥ पुरुजित्कुंतिभोजश्चमातुलौसव्यसाचिनः २२ संग्राममनिर्जितांल्लोकानगमितौद्रोणसायकैः ॥ अभिभूःकाशिराजश्चकाशिकैर्बहुभिर्वृतः २३वसुदानस्यपुत्रे
णन्यासितोदेहमाहवे ॥ अमितौजायुधामन्युरुत्तमौजाश्चवीर्यवान् २४ निहत्यशतशःशूरानस्मदीयैर्निपातिताः ॥ मित्रवर्माचपांचाल्यःक्षत्रधर्माचभारत २५
द्रोणेनपरमेष्वासौगमितौयमसादनम्॥शिखंडितनयोयुद्धेक्षत्रदेवोयुधांपतिः२६लक्ष्मणेनहतोराजंस्तवपौत्रेणभारत॥सुचित्रश्चित्रवर्माचपितापुत्रौमहारथौ२७

इयेनहंतुमितिशेषः ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ रोचमानौएकनामानौभ्रातरौ २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

२८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेषष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ मामकस्येति हतोत्सेकस्यकेदारान्प्रतिप्रापितोदकस्यक्षुद्रसरसइवावशेषंनपश्यामि ककुदेप्रधानपुरुषसमूहेभीष्मद्रोणकर्णरूपेमृदितेनाशितेसति १ असतितुच्छे २ शतंशतंसहस्रदशकं आर्षोविभक्तिव्यत्ययः कुंजराणामयुतेनतुल्यंबाह्वोर्बलंयस्यतस्यापिवधंनमृष्यामीतिनअपितुमृष्याम्येव । मृत्युजयिनोभीष्मस्यक्षात्रब्राह्मोभयबलवतोद्रोणस्यचवधंकुर्वतांपरेषांकर्णवधस्त्वेषत्करत्वादितिभावः ३ । ४ मृताःमृतप्रा

प्रचरंतौमहावीरौद्रोणेननिहतौरणे ॥ वार्धक्षेमिर्महाराजसमुद्रइवपर्वणि २८ आयुधक्षयमासाद्यप्रशांतिपरमांगतः ॥ सेनाबिंदुसुतःश्रेष्ठःशस्त्रवान्प्रवरोयुधि २९ बाह्लिकेनमहाराजकौरवेंद्रेणपातितः ॥ धृष्टकेतुर्महाराजचेदीनांप्रवरोरथः ३० कृत्वानसुकरंकर्मगतोवैवस्वतक्षयम् ॥ तथासत्यधृतिर्वीरःकृत्वाकदनमाहवे ३१ पांडवार्थेपराक्रांतोगमितोयमसादनम् ॥ सेनाबिंदुःकुरुश्रेष्ठःकृत्वाकदनमाहवे ३२ पुत्रस्तुशिशुपालस्यसुकेतुःपृथिवीपतिः ॥ निहत्यशात्रवान्संख्ये द्रोणेननिहतोयुधि ३३ तथासत्यधृतिर्वीरोमदिराश्वश्चवीर्यवान् ॥ सूर्यदत्तश्चविक्रांतोनिहतोद्रोणसायकैः ३४ श्रेणिमांश्चमहाराजयुध्यमानःपराक्रमी ॥ कृत्वान सुकरंकर्मगतोवैवस्वतक्षयम् ३५ तथैवयुधिविक्रांतोमागधःपरमास्त्रवित् ॥ भीष्मेणनिहतोराजञ्शेतेऽद्यपरवीरहा ३६ विराटपुत्रःशंखस्तुउत्तरश्चमहारथः ॥ कुर्वंतौसुमहत्कर्मगतौवैवस्वतक्षयम् ३७ वसुदानश्चकदनंकुर्वाणोऽतीवसंयुगे ॥ भारद्वाजेनविक्रम्यगमितोयमसादनम् ३८ एतेचान्येचबहवःपांडवानांमहारथाः ॥ हताद्रोणेनविक्रम्ययन्मांत्वंपरिपृच्छसि ३९ ॥ इतिश्रीमहाभारतेकर्णपर्वणिसंजयवाक्येषष्ठोऽध्यायः ॥ ६ ॥ ॥ धृतराष्ट्रउवाच ॥ मामकस्यास्यसैन्यस्यहतोत्सेकस्यसंजय ॥ अवशेषंनपश्यामिककुदेमृदितेसति १ तौहिवीरौमहेष्वासौमदर्थेकुरुसत्तमौ ॥ भीष्मद्रोणौहतौश्रुत्वानार्थोवैजीवितेऽस्ति २ नचशोचामिराधेयंहतमाहवशोभनम् ॥ यस्यबाह्वोर्बलंतुल्यंकुंजराणांशतंशतम् ३ हतप्रवरसैन्यंमेयथाशंससिसंजय ॥ अहतानपिमेशंसकेत्रऽजीवंतिकेचन ४ एतेषुहिमृतेष्वद्ययेत्वयापरिकीर्तिताः ॥ येऽपिजीवंतितेसर्वेमृताइतिमतिर्मम ५ ॥ संजयउवाच ॥ यस्मिन्महास्त्राणिसमर्पितानिचित्राणिशुभ्राणिचतुर्विधानि ॥ दिव्यानिराजन्विहितानिचैवद्रोणेनवीरेद्विजसत्तमेन ६ महारथःकृतिमान्क्षिप्रहस्तोदृढायुधोदृढमुष्टिर्दृढेषुः ॥ सवीर्यवान्द्रोणपुत्रस्तरस्वीव्यवस्थितो योद्धुकामस्त्वदर्थे ७ आनर्तवासीहृदिकात्मजोऽसौमहारथःसात्वतानांवरिष्ठः ॥ स्वयंभोजःकृतवर्माकृतास्त्रोव्यवस्थितोयोद्धुकामस्त्वदर्थे ८ आर्तायनिःसमदुष्प्रकंप्यःसेनाग्रणीःप्रथमस्तावकानाम् ॥ यःस्वस्रीयान्पांडवेयान्विसृज्यसत्यांवाचंस्वांचिकीर्षुस्तरस्वी ९

याः ५ चित्राणिअनेकनानायुधप्रसवक्षमाणि शुभ्राणिदीप्तिमंति चतुर्विधानिदृढदूरसूक्ष्मशब्दवेधीनि विहितानिधनुर्वेदोदितानि । चित्रशुभ्रदिव्यविहितान्येववाचतुर्विधानि । अत्रविहितानिकृत्रिमाणीतिप्राञ्चः । अस्त्रांतरनिवर्त्यमाग्नेयादि । नतिमात्रनिवर्त्यनारायणास्त्रादि । प्रयोक्तृनिवर्त्यंब्रह्मशिरआदि । सर्वथाऽप्यनिवर्त्यंपाशुपतादि । एवंचतुर्विधानिवीरेनिहितानिसमर्पितानि ६ कृतिमान्अवंध्ययत्नः ७ । ८ आर्तायनिःशल्यः स्वस्रीयान्भागिनेयान् । उभयोरेवभागिनेयत्वेऽपिलिंगसमवायात्सर्वेषांभागिनेयत्वम् ९

१० । ११ । १२ । १३ । १४ । १५ । १६ । १७ क्षणभोजीशीघ्रभोजी १८ । १९ नागपत्तिप्रयायीनागैःपत्तिभिश्चप्रयातुंशीलमस्य नागरथप्रयायीतिपाठांतरम् २० । २१ । २२ । २३

तेजोवधंसूतपुत्रस्यसंख्येप्रतिश्रुत्याजातशत्रोःपुरस्तात् ॥ दुराधर्षःशक्रसमानवीर्यःशल्यःस्थितोयोद्धुकामस्त्वदर्थे १० आजानेयैःसैंधवैःपार्वतीयैर्नदीजकांबोजवनायुजैश्च ॥ गांधारराजःस्वबलेनयुक्तोव्यवस्थितोयोद्धुकामस्त्वदर्थे ११ शारद्वतोगौतमश्चापिराजन्महाबाहुर्बहुचित्रास्त्रयोधी ॥ धनुश्चित्रंसुमहद्भारसाहंव्यवस्थितोयोद्धुकामःप्रगृह्य १२ महारथःकेकयराजपुत्रःसदश्वयुक्तंचपताकिनंच ॥ रथंसमारुह्यकुरुप्रवीरव्यवस्थितोयोद्धुकामस्त्वदर्थे १३ तथासुतस्तेज्वलनार्कवर्णंरथंसमास्थायकुरुप्रवीरः ॥ व्यवस्थितःपुरुमित्रोनरेंद्रव्यभ्रेसूर्योभ्राजमानोयथाखे १४ दुर्योधनोनागकुलस्यमध्येव्यवस्थितःसिंहइवावभासे ॥ रथेनजांबूनदभूषणेनव्यवस्थितःसमरेयोत्स्यमानः १५ सराजमध्येपुरुषप्रवीरोरराजजांबूनदचित्रवर्मा ॥ पद्मप्रभोवह्निरिवाल्पधूमोमेघांतरेसूर्यइवप्रकाशः १६ तथासुषेणोऽप्यसिचर्मपाणिस्तवात्मजःसत्यसेनश्चवीरः ॥ व्यवस्थितौचित्रसेनेनसार्धंहृष्टात्मानौसमरेयोद्धुकामौ १७ ह्रीनिषेवोभारतराजपुत्रउग्रायुधःक्षणभोजीसुदर्शः ॥ जारासंधिःप्रथमश्चादृढश्चचित्रायुधःश्रुतवर्माजयश्च १८ शलश्चसत्यव्रतदुःशलौचव्यवस्थिताःसहसैन्यानराग्र्याः ॥ कैतव्यानामधिपःशूरमानीरणेरणेशत्रुहाराजपुत्रः १९ रथीहयीनागपत्तिप्रयायीव्यवस्थितोयोद्धुकामस्त्वदर्थे ॥ वीरःश्रुतायुश्चधृतायुधश्चचित्रांगदश्चित्रसेनश्चवीरः २० व्यवस्थितायोद्धुकामानराग्र्याःप्रहारिणोमानिनःसत्यसंधाः ॥ कर्णात्मजःसत्यसंधोमहात्माव्यवस्थितःसमरेयोद्धुकामः २१ अथापरौकर्णसुतौवरास्त्रौव्यवस्थितौलघुहस्तौनरेंद्र ॥ महद्बलंदुर्भिदमल्पवीर्यैःसमन्वितौयोद्धुकामौत्वदर्थे २२ एतैश्चमुख्यैरपरैश्चराजन्योधप्रवीरैरमितप्रभावैः ॥ व्यवस्थितोनागकुलस्यमध्येयथामहेंद्रःकुरुराजोजयाय २३ ॥ धृतराष्ट्रउवाच ॥ आख्याताजीवमानायेपरेसैन्यायथायथम् ॥ इतीदमवगच्छामिव्यक्तमर्थाभिपतितः २४ ॥ वैशंपायनउवाच ॥ एवंब्रुवन्नेवतदाधृतराष्ट्रोंऽबिकासुतः ॥ हतप्रवीरंविध्वस्तंकिंचिच्छेषंस्वकंबलम् २५ श्रुत्वाव्यामोहमागच्छच्छोकव्याकुलितेंद्रियः ॥ मुह्यमानोऽब्रवीच्चापिमुहूर्तंतिष्ठसंजय २६ व्याकुलंमेमनस्तातश्रुत्वासुमहदप्रियम् ॥ मनोमुह्यतिचांगानिनचशक्नोमिधारितुम् २७ इत्येवमुक्त्वावचनंधृतराष्ट्रोंऽबिकासुतः ॥ भ्रांतचित्तस्ततःसोऽथबभूवजगतीपतिः २८ ॥ इतिश्रीमहाभारतेकर्णपर्वणिसंजयवाक्यंनामसप्तमोऽध्यायः ॥ ७ ॥ जनमेजयउवाच ॥ श्रुत्वाकर्णंहतंयुद्धेपुत्रांश्चैवनिपातितान् ॥नरेंद्रःकिंचिदाश्वस्तोद्विजश्रेष्ठकिमब्रवीत् १ प्राप्तवान्परमंदुःखंपुत्रव्यसनजंमहत् ॥ तस्मिन्यदुक्तवान्कालेतन्ममाचक्ष्वपृच्छतः २



सैन्याःसेनामर्हंतितेराजानः यथायथंपक्षद्वयेऽपिजीवमानाआख्याताः । इदंभाविजयपराजयादिकंइत्यनेनपक्षद्वयबलतोलनेनव्यक्तंस्पष्टमभिगच्छामिजाजामि अर्थाभिपातितःफलोपपादितः । तेनजयोमदीयानांनास्तीतिनिश्चिनोमीतिभावः २४ । २५ । २६ अंगानिचक्षुरादीनिमनश्चमुह्यति २७ । २८ ॥ इतिकर्णप० नी० भा० भा० सप्तमोऽध्यायः ॥ ७ ॥ ७ ॥ श्रुत्वेति १ । २

३ भार्गवस्यरामस्य शुक्रस्यवा ४ । ५ । ६ कर्णस्यवधंसंचिंत्यमनस्यालोच्यइदंकृत्स्नंजगत्स्वसैन्यंवानास्तीतिसंचिंत्यनिश्चित्यविललापेतितृतीयेनसंबंधः ७ प्राणिनांअवध्यात्कर्णादन्येषां तृणतुल्यानांमंदत्वादल्पवीर्यत्वात् इतिअनेनैवप्रकारेणविनाशनंस्यादपीतिहेतोःआशयेचेतसिधम्यमानइवविस्रस्तांगः । यथाभ्राष्ट्रेधम्यमानःपाषाणादिःशीर्यतेतद्वद्विशीर्णइत्यर्थः ८ । ९ । १०

वैशंपायनउवाच ॥ श्रुत्वाकर्णस्यनिधनमश्रद्धेयमिवाद्भुतम् ॥ भूतसंमोहनंभीमंमेरोःसंसर्पणंयथा २ चित्तमोहमिवायुक्तंभार्गवस्यमहामतेः ॥ पराजयमिवेंद्रस्यद्विषद्भ्योभीमकर्मणः ४ दिवःप्रपतनंभानोरुर्व्यामिवमहाद्युते ॥ संशोषणमिवाचिंत्यंसमुद्रस्याक्षयांभसः ५ महीवियद्दिगंबूनांसर्वनाशमिवाद्भुतम् ॥ कर्मणोरिववैफल्यमुभयोःपुण्यपापयोः ६ संचिंत्यनिपुणंबुद्ध्याधृतराष्ट्रोजनेश्वरः ॥ नेदमस्तीतिसंचिंत्यकर्णस्यसमरेवधम् ७ प्राणिनामेवमन्येषांस्यादपीतिविनाशनम् ॥ शोकाग्निनादह्यमानोधम्यमानइवाशये ८ विस्रस्तांगःश्वसन्दीनोहाहेत्युक्त्वासुदुःखितः ॥ विललापमहाराजधृतराष्ट्रोंऽबिकासुतः ९ ॥ धृतराष्ट्रउवाच ॥ संजयाधिरथिर्वीरःसिंहद्विरदविक्रमः ॥ वृषभप्रतिमस्कंधोवृषभाक्षगतिस्वरः १० वृषभोवृषभस्येवयोयुद्धेननिवर्त्तते ॥ शत्रोरपिमहेंद्रस्यवज्रसंहननोयुवा ११ यस्यज्यातलशब्देनशरवृष्टिरवेणच ॥ रथाश्वनरमातंगानावतिष्ठंतिसंयुगे १२ यमाश्रित्यमहाबाहुंद्विषत्संघजयकांक्षया ॥ दुर्योधनोऽकरोद्वैरंपांडुपुत्रैर्महारथैः १३ सकथंरथिनांश्रेष्ठःकर्णःपार्थेनसंयुगे ॥ निहतःपुरुषव्याघ्रःप्रसह्यासह्यविक्रमः १४ योनामन्यतवैनित्यमच्युतंचधनंजयम् ॥ नवृष्णीन्सहितानन्यान्स्वबाहुबलदर्पितः १५ शार्ङ्गगांडीवधन्वानौसहितावपराजितौ ॥ अहंदिव्याद्रथादेकःपातयिष्यामिसंयुगे १६ इतियःसततंमंदमवोचल्लोभमोहितम् ॥ दुर्योधनमवाचीनंराज्यकामुकमातुरम् १७ योऽजयत्सर्वकांबोजानावंत्यान्केकयैःसह ॥ गांधारान्मद्रकान्मत्स्यांस्त्रिगर्तांस्तंगणाञ्शकान् १८ पंचालांश्चविदेहांश्चकुलिंदान्काशिकोसलान् ॥ सुह्मानंगांश्चवंगांश्चनिषादान्पुंड्रचीरकान् १९ वत्सान्कलिंगांस्तरलानश्मकानृषिकानपि ॥ जित्वैतान्समरेवीरश्चक्रेबलिभृतःपुरा २० शरव्रातैःसुनिशितैःसुतीक्ष्णैःकंकपत्रिभिः ॥ दुर्योधनस्यवृद्ध्यर्थंराधेयोरथिनांवरः २१ दिव्यास्त्रविन्महातेजाःकर्णोवैकर्तनोवृषः ॥ सेनागोपश्चसकथंशत्रुभिःपरमास्त्रवित् २२ घातितःपांडवैःशूरैःसमरेवीर्यशालिभिः ॥ वृषोमहेंद्रोदेवेषुवृषःकर्णोनरेष्वपि २३ तृतीयमन्यंलोकेषुवृषंनैवानुशुश्रुम ॥ उच्चैःश्रवावरोऽश्वानांराज्ञांवैश्रवणोवरः २४ वरोमहेंद्रोदेवानांकर्णःप्रहरतांवरः ॥ योजितःपार्थिवैःशूरैःसमर्थैर्वीर्यशालिभिः २५ दुर्योधनस्यवृद्ध्यर्थंकृत्स्नामुर्वीमथाजयत् ॥ यंलब्ध्वामागधोराजासांत्वमानोऽथसौहृदैः २६ अरौत्सीत्पार्थिवंक्षत्रमृतेयादवकौरवान् ॥ तंश्रुत्वानिहतंकर्णंद्वैरथेसव्यसाचिना २७ शोकार्णवेनिमग्नोऽहंभिन्नानौरिवसागरे ॥ तंवृषंनिहतंश्रुत्वाद्वैरथेरथिनांवरम् २९ शोकार्णवेनिमग्नोऽहमप्लवःसागरेयथा ॥ ईदृशैर्यद्यहंदुःखैर्नविनश्यामिसंजय २९

नविवर्त्ततेइतिच्छेदः ११ । १२ । १३ । १४ । १५ । १६ अवाचीनंचिंतयाऽधोमुखम् १७ । १८ । १९ । २० । २१ । २२ जलवर्षित्वाद्देवेषुमहेंद्रोवृषः । धनवर्षित्वान्मनुष्येषुकर्णोवृषः २३ तृतीयमेवमभितोवृष्टिकर्त्तारंवृषम् २४ अजितइतिच्छेदः योजितोनियोजितोमयेतिवा २५ यमिति मागधोऽप्यस्यैवबलेनबलवानितिभावः २६ । २७ । २८ अप्लवः नौकाहीनः २९

३० । ३१ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेअष्टमोऽध्यायः ॥ ८ ॥ ॥ ९ ॥ श्रियेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ दुःखाद्भीष्मद्रोणवधजात् दुःखंचव्यस
नंचतदुभयं दुःखंकर्णवधजं व्यसनंशेषनाशजम् १२ तदेवाह भीष्मेत्यादिना १३ पार्थंपारप्रदंनौकास्थानीयम् १४ । १५ । १६ । १७ प्रतिमानंध्वजभूतम् १८ यथापंगो

वज्राद्दृढतरंमन्येहृदयंममदुर्भिदम् ॥ ज्ञातिसंबंधिमित्राणामिमंश्रुत्वापराभवम् ३० कोमदन्यःपुमाँल्लोकेनजह्यात्सूतजीवितम् ॥ विषमग्निंप्रपातंचपर्वताग्राद
हंवृणे ॥ नहिशक्ष्यामिदुःखानिसोढुंकष्टानिसंजय ३१ ॥ इतिश्रीमहाभारतेकर्णपर्वणिधृतराष्ट्रवाक्येऽष्टमोऽध्यायः ॥ ८ ॥ ९ ॥ संजयउवाच ॥ श्रियाकु
लेनयशसातपसाचश्रुतेनच ॥ त्वामद्यसंतोमन्यंतेययातिमिवनाहुषम् १ श्रुतेमहर्षिप्रतिमःकृतकृत्योऽसिपार्थिव ॥ पर्यवस्थापयात्मानंमाविषादेमनःकृथाः २
॥ धृतराष्ट्रउवाच ॥ दैवमेवपरंमन्येधिक्पौरुषमनर्थकम् ॥ यत्रशालप्रतीकाशःकर्णोऽहन्यतसंयुगे ३ हत्वायुधिष्ठिरानीकंपंचालानांरथव्रजान् ॥ प्रताप्य
शरवर्षेणदिशःसर्वामहारथः ४ मोहयित्वारणेपार्थान्वज्रहस्तइवासुरान् ॥ सकथंनिहतःशेतेवायुरुग्णइवद्रुमः ५ शोकस्यांतंनपश्यामिपारंजलनिधेरिव ॥ चिं
तामेवर्धतेऽतीवमुमूर्षाचापिजायते ६ कर्णस्यनिधनंश्रुत्वाविजयंफाल्गुनस्यच ॥ अश्रद्धेयमहंमन्येवधंकर्णस्यसंजय ७ वज्रसारमयंनूनंहृदयंदुर्भिदंमम ॥
यच्छ्रुत्वापुरुषव्याघ्रंहतंकर्णंनदीर्यते ८ आयुर्नूनंसुदीर्घंमेविहितंदैवतैःपुरा ॥ यत्रकर्णंहतंश्रुत्वाजीवामीहसुदुःखितः ९ धिग्जीवितमिदंचैवसुहृद्धीनस्यसंजय ॥
अद्यचाहंदशामेतांगतःसंजयगर्हिताम् १० कृपणंवर्तयिष्यामिशोच्यःसर्वस्यमंदधीः ॥ अहमेवपुराभूत्वासर्वलोकस्यसत्कृतः ११ परिभूतःकथंसूतपरैःशक्ष्या
मिजीवितुम् ॥ दुःखात्सुदुःखव्यसनंप्राप्तवानस्मिसंजय १२ भीष्मद्रोणवधेनैवकर्णस्यचमहात्मनः ॥ नावशेषंप्रपश्यामिसूतपुत्रेहतेयुधि १३ सहिपार्थंमहा
नासीत्पुत्राणांममसंजय ॥ युद्धेह्यनिहतःशूरोविसृजन्सायकान्बहून् १४ कोहिमेजीवितेनार्थस्तमृतेपुरुषर्षभम् ॥ रथादाधिरथिर्नूनंन्यपतत्सायकार्दितः १६
पर्वतस्येवाशिखरंवज्रपाताद्विदारितम् ॥ सशेतेपृथिवींनूनंशोभयन्रुधिरोक्षितः १५ मातंगइवमत्तेनद्विपेंद्रेणनिपातितः ॥ योबलंधार्तराष्ट्राणांपांडवानांय
तोभयम् १७ सोऽर्जुनेनहतःकर्णःप्रतिमानंधनुष्मताम् ॥ सहिवीरोमहेष्वासोमित्राणामभयंकरः १८ शेतेविनिहतोवीरोदेवेंद्रेणइवाचलः ॥ पंगोरिवाध्वगम
नंदरिद्रस्येवकामितम् १९ दुर्योधनस्यचाकूतंतृषितस्येवविप्रुषः ॥ अन्यथाचिंतितंकार्यमन्यथातत्तुजायते २० अहोनुबलवद्दैवंकालश्चदुरतिक्रमः ॥ प
लायमानःकृपणोदीनात्मादीनपौरुषः २१ कच्चिद्विनिहतःसुतपुत्रोदुःशासनोमम ॥ कच्चिन्नदीनाचरितंकृतवांस्तातसंयुगे २२ कच्चिन्नानिहतःशूरोयथाऽन्ये
क्षत्रियर्षभाः ॥ युधिष्ठिरस्यवचनंमायुध्यस्वेतिसर्वदा २३ दुर्योधनोनाभ्यगृह्णान्मूढःपथ्यमिवौषधम् ॥ शरतल्पेशयानेनभीष्मेणसुमहात्मना २४ पानीयं
याचितःपार्थःसोऽविध्यन्मेदिनीतलम् ॥ जलस्यधारांजनितांदृष्ट्वापांडुसुतेनच २५

रध्वगमनंदुर्घटमेवंदुर्योधनस्याकूतमभिप्रायोदुर्घटः
तृषितस्यविप्रुषोजलबिंदवोयथातृष्णोपशमायनभवंति एवंदुर्योधनचेष्टितमपीष्टसिद्धयर्थंनपर्याप्तमित्यर्थः १९ । २० दीनपौरुषःनष्टपराक्रमः २१ । २२ अन्येक्षुद्राः २३ । २४ । २५

२६ । २७ । २८ । २९ ताड्यमानाःताडयंतः ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ अप्रतियुद्धयंतंशिखंडिनाप्रतियुद्धमनंगीकुर्वाणम् ३७ द्रौपदिनाद्रुपदपुत्रेणधृष्टद्युम्नेन ३८ । ३९ । ४०

अब्रवीत्समहाबाहुस्तातसंशाम्यपांडवैः ॥ प्रशमाद्धिभवेच्छांतिर्मदंतंयुद्धमस्तुवः २६ भ्रातृभावेनपृथिवींभुंक्ष्वपांडुसुतैःसह ॥ अकुर्वन्वचनंतस्यनूनंशोचतिपुत्रकः २७ तदिदंसमनुप्राप्तंवचनंदीर्घदर्शिनः ॥ अहंतुनिहतामात्योहतपुत्रश्चसंजय २८ द्यूततःकृच्छ्रमापन्नोलूनपक्षइवद्विजः ॥ यथाहिशकुनिंगृह्यच्छित्वापक्षौचसंजय २९ विसर्जयंतिसंहृष्टास्ताडयमानाःकुमारकाः ॥ लूनपक्षतयातस्यगमनंनोपपद्यते ३० तथाहमपिसंप्राप्तोलूनपक्षइवद्विजः ॥ क्षीणःसर्वार्थहीनश्चनिर्ज्ञातिर्बंधुवर्जितः ॥ कांदिशंप्रतिपत्स्यामिदीनःशत्रुवशंगतः ३१ ॥ वैशंपायनउवाच ॥ इत्येवंधृतराष्ट्रोऽथविलप्यबहुदुःखितः ॥ प्रोवाचसंजयंभूयःशोकव्याकुलमानसः ३२ ॥ धृतराष्ट्रउवाच ॥ योऽजयत्सर्वकांबोजानंबष्ठान्केकयैःसह ॥ गांधारांश्चाविदेहांश्चजित्वाकार्यार्थमाहवे ३३ दुर्योधनस्यवृद्ध्यर्थंयोऽजयत्पृथिवींप्रभुः ॥ सजितःपांडवैःशूरैःसमरेबाहुशालिभिः ३४ तस्मिन्हतेमहेष्वासेकर्णेयुधिकिरीटिना ॥ केवीराःपर्यतिष्ठंतत्तन्ममाचक्ष्वसंजय ३५ कच्चिन्नैकःपरित्यक्तःपांडवैर्निहतोरणे ॥ उक्तंत्वयापुरातातयथावीरोनिपातितः ३६ भीष्ममप्रतियुद्ध्यंतंशिखंडीसायकोत्तमैः ॥ पातयामाससमरेसर्वशस्त्रभृतांवरम् ३७ तथाद्रौपदिनाद्रोणोन्यस्तसर्वायुधोयुधि ॥ युक्तयोगोमहेष्वासःशरैर्बहुभिराचितः ३८ निहतःखड्गमुद्यम्यधृष्टद्युम्नेनसंजय ॥ अंतरेणहतावेतौछलेनचविशेषतः ३९ अश्रौषमहमेतद्वैभीष्मद्रोणौनिपातितौ ॥ भीष्मद्रोणौहिसमरेनहन्यादवज्रभृत्स्वयम् ४० न्यायेनयुध्यमानौहितद्वैसत्यंब्रवीमिते ॥ कर्णंत्वस्यंतमस्त्राणिदिव्यानिचबहूनिच ४१ कथमिंद्रोपमंवीरंमृत्युर्युद्धेसमस्पृशत् ॥ यस्यविद्युत्प्रभांशक्तिंदिव्यांकनकभूषणाम् ४२ प्रायच्छद्द्विषतांहंत्रींकुंडलाभ्यांपुरंदरः ॥ यस्यसर्पमुखोदिव्यःशरःकांचनभूषणः ४३ अशेतनिहतःपत्रीचंदनैररिसूदनः ॥ भीष्मद्रोणमुखान्वीरान्योऽवमन्येमहारथान् ४४ जामदग्न्यान्महाघोरंब्राह्ममस्त्रमशिक्षत ॥ यश्चद्रोणमुखान्दृष्ट्वाविमुखानर्दितान्शरैः ४५ सौभद्रस्यमहाबाहुर्व्यधमत्कार्मुकंशितैः ॥ यश्चनागायुतप्राणंवज्ररंहसमच्युतम् ४६ विरथंसहसाकृत्वाभीमसेनमथाहसत् ॥ सहदेवंचनिर्जित्यशरैःसन्नतपर्वभिः ४७ कृपयाविरथंकृत्वानाहनद्धर्मवित्तया ॥ यश्चमायासहस्राणिविकुर्वाणंजयैषिणम् ४८ घटोत्कचंराक्षसेंद्रंशक्रशक्त्यानिजघ्निवान् ॥ एतांश्चदिवसान्यस्ययुद्धेभीतोधनंजयः ४९ नागमद्द्वैरथंवीरःसकथंनिहतोरणे ॥ संशप्तकानांयोधायेआह्वयंतसदाऽन्यतः ५० एतान्हत्वाहनिष्यामिपश्चाद्वैकर्तनंरणे ॥ इतिव्यपदिशन्पार्थोवर्जयन्सूतजंरणे ५१ सकथंनिहतोवीरःपार्थेनपरवीरहा ॥ रथभंगोनचेत्तस्यधनुर्वानव्यशीर्यत ५२ नचेदस्त्राणिनिर्णेशुःसकथंनिहतःपरैः ॥ कोहिशक्तोरणेकर्णंविधुन्वानंमहद्धनुः ५३

४१ । ४२ कुंडलाभ्यांसकवचाभ्यामर्थे तादर्थ्येचतुर्थी ४३ अवमन्येअवमेने ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ रथेति रथभंगाद्यभावेतस्यमृत्युर्भवेदितिभावः ५२ । ५३

५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ प्रतीपंप्रातिभट्येनअभिधावद्भिःसर्वदिग्भ्यःसमागतैः ६८ अधिरथेःआधिरथपुत्रस्यसोमसूर्यसाहचर्या

विमुंचंतंशरान्घोरान्दिव्यान्यस्त्राणिचाहवे ॥ जेतुंपुरुषशार्दूलंशार्दूलमिववेगिनम् ५४ ध्रुवंतस्यधनुर्छिन्नंरथोवापिमहीं गतः ॥ अस्त्राणिवाप्रणष्टानियथाशंससि मेहतम् ५५ नह्यन्यदपिपश्यामिकारणंतस्यनाशने ॥ नहन्मिफाल्गुनंयावत्तावत्पादौनधावये ५६ इतियस्यमहाघोरंव्रतमासीन्महात्मनः ॥ यस्यभीतोरणे निद्रांधर्मराजोयुधिष्ठिरः ५७ त्रयोदशसमानित्यंनाभजत्पुरुषर्षभः ॥ यस्यवीर्यवतोवीर्यमुपाश्रित्यमहात्मनः ५८ ममपुत्रःसभांभार्यांपांडूनांनीतवान्बलात ॥ तत्रापिचसभामध्येपांडवानांचपश्यताम् ५९ दासभार्येतिपांचालीमब्रवीत्कुरुसन्निधौ ॥ नसंतिपतयःकृष्णेसर्वेषंढातिलैःसमाः ६० उपातिष्ठस्वभर्तारमन्यंवा वरवर्णिनि ॥ इत्येवंयःपुरावाचोरूक्षाःसंश्रावयन्रुषा ६१ सभायांसूतजःकृष्णांसकथंनिहतःपरैः ॥ यदिभीष्मोरणश्लाघीद्रोणोवायुधिदुर्मदः ६२ नहनिष्य तिकौंतेयान्पक्षपातात्सुयोधन ॥ सर्वानेवहनिष्यामिव्येतुतेमानसोज्वरः ६३ किंकरिष्यतिगांडीवमक्षय्यौचमहेषुधी ॥ स्निग्धचंदनदिग्धस्यमच्छरस्याभि धावतः ६४ सनूनमृषभस्कंधोह्यर्जुनेनकथंहतः ॥ यश्चगांडीवमुक्तानांस्पर्शमुग्रमचिंतयन् ६५ अपतिर्ह्यसिकृष्णेतिब्रुवन्पार्थानवैक्षत ॥ यस्यनासीद्भयंपा र्थैःसपुत्रैःसजनार्दनैः ६६ स्वबाहुबलमाश्रित्यमुहूर्तमपिसंजय ॥ तस्यनाहंवधंमन्येदेवैरपिसवासवैः ६७ प्रतीपमभिधावद्भिःकिंपुनस्तातपांडवैः ॥ नहि ज्यांसंस्पृशानस्यतलत्रेवापिगृह्णतः ६८ पुमानाधिरथेःस्थातुंकश्चित्प्रमुखतोऽर्हति ॥ अपिस्यान्मेदिनीहीनासोमसूर्यप्रभांऽशुभिः ६९ नवधःपुरुषेंद्रस्यसंयु गेष्वपलायिनः ॥ येनमंदःसहायेनभ्रात्रादुःशासनेनच ७० वासुदेवस्यदुर्बुद्धिःप्रत्याख्यानमरोचत ॥ सनूनंवृषभस्कंधंकर्णंदृष्ट्वानिपातितम् ७१ दुःशासनंच निहतंमन्येशोचतिपुत्रकः ॥ हतंवैकर्तनंश्रुत्वाद्वैरथेसव्यसाचिना ७२ जयतःपांडवान्दृष्ट्वाकिंस्विद्दुर्योधनोऽब्रवीत ॥ दुर्मर्षणंहतंदृष्ट्वावृषसेनंचसंयुगे ७३ प्रभ ग्नंचबलंदृष्ट्वावध्यमानंमहारथैः ॥ पराङ्मुखांश्चराज्ञस्तुपलायनपरायणान् ७४ विद्रुतान्रथिनोदृष्ट्वामन्येशोचतिपुत्रकः ॥ अनेयश्चाभिमानीचदुर्बुद्धिरजि तेंद्रियः ७५ हतोत्साहंबलंदृष्ट्वाकिंस्विद्दुर्योधनोऽब्रवीत् ॥ स्वयंवैरंमहत्कृत्वावार्यमाणःसुहृद्गणैः ७६ प्रधनेहतभूयिष्ठैःकिंस्विद्दुर्योधनोऽब्रवीत ॥ भ्रातरंनिह तंदृष्ट्वाभीमसेनेनसंयुगे ७७ रुधिरेपीयमानेचकिंस्विद्दुर्योधनोऽब्रवीत् ॥ सहगांधारराजेनसभायांयदभाषत ७८ कर्णोऽर्जुनंरणेहंताहतेतस्मिन्किमब्रवीत ॥ द्यूतंकृत्वापुराहृष्टोवंचयित्वाचपांडवान् ७९ शकुनिःसौबलस्तातहतेकर्णेकिमब्रवीत ॥ कृतवर्मामहेष्वासःसात्वतानांमहारथः ८०

त्मकर्षेणभातीतियोग्याद्यप्रभावह्निस्तेषांत्रयाणामंशुभिर्मयूखैः ६९ मंदोदुर्योधनः ७० । ७१ । ७२ । ७३ प्राङ्मुखानितिपाठेनिवर्तितमुखान् प्रत्यङ्मुखाःकौरवायादिपलायंतेतदाप्राङ्मुखा एवभवंतीत्यर्थः ७४ अनेयःअशिक्षणीयःयतोऽभिमानीविद्वत्त्वाभिमानीअतएवदुर्बुद्धिःहितमजानन् ७५ । ७६ प्रधनेरणे ७७ । ७८ । ७९ । ८०

८१ । ८२ । ८३ । ८४ । ८५ कानिवाक्यनीतिशेषः ८६ । ८७ । ८८ । ८९ । ९० प्रत्युदीयुःकथमितिशेषः ९१ । ९२ हतोत्सेधस्यविनष्टोत्कर्षस्य ९३ । ९४ । ९५ । ९६ । ९७ ॥ इतिक

हतंवैकर्तनंदृष्ट्वाहार्दिक्यःकिमभाषत ॥ ब्राह्मणाःक्षत्रियावैश्यायस्यशिक्षामुपासते ८१ धनुर्वेदंचिकीर्षंतोद्रोणपुत्रस्यधीमतः ॥ युवारूपेणसंपन्नोदर्शनीयोमहायशाः ८२ अश्वत्थामाहतेकर्णेकिमभाषतसंजय ॥ आचार्योयोधनुर्वेदेगौतमोरथसत्तमः ८३ कृपःशारद्वतस्तातहतेकर्णेकिमब्रवीत् ॥ मद्रराजोमहेष्वासःशल्यःसमितिशोभनः ८४ दृष्ट्वाविनिहतंकर्णंसारथ्येरथिनांवरः ॥ किमभाषतसौवीरोमद्राणामधिपोबली ८५ दृष्ट्वाविनिहतंसर्वेयोधावारणदुर्जयाः ॥ येचकेचनराजानःपृथिव्यांयोद्धुमागताः ॥ वैकर्तनंहतंदृष्ट्वाकान्यभाषंतसंजय ८६ द्रोणेतुनिहतेवीरेरथव्याघ्रेनरर्षभे ॥ केवामुखमनीकानामासन्संजयभागशः ८७ मद्रराजःकथंशल्योनियुक्तोरथिनांवरः ॥ वैकर्तनस्यसारथ्येतन्ममाचक्ष्वसंजय ८८ केऽरक्षन्दक्षिणंचक्रंसूतपुत्रस्ययुध्यतः ॥ वामंचक्रंररक्षुर्वाकेवावीरस्यपृष्ठतः ८९ केकर्णंनजहुःशूराःकेक्षुद्राःप्राद्रवंस्ततः ॥ कथंचवःसमेतानांहतःकर्णोमहारथः ९० पांडवाश्चस्वयंशूराःप्रत्युदीयुर्महारथाः ॥ सृजंतःशरवर्षाणिवारिधाराइवांबुदाः ९१ सचसर्पमुखोदिव्योमहेषुप्रवरस्तदा ॥ व्यर्थःकथंसमभवत्तन्ममाचक्ष्वसंजय ९२ मामकस्यास्यसैन्यस्यहतोत्सेधस्यसंजय ॥ अवशेषंनपश्यामिककुदेमृदितेसति ९३ तौहिवीरौमहेष्वासौमदर्थेत्यक्तजीवितौ ॥ भीष्मद्रोणौहतौश्रुत्वाकोन्वर्थोजीवितेनमे ९४ पुनःपुनर्नमृष्यामिहतंकर्णंचपांडवैः ॥ यस्यबाह्वोर्बलंतुल्यंकुंजराणांशतंशतैः ९५ द्रोणेहतेचयद्वृत्तंकौरवाणांपरैःसह ॥ संग्रामेनरवीराणांतन्ममाचक्ष्वसंजय ९६ यथाकर्णश्चकौंतेयैःसहयुद्धमयोजयत् ॥ तथाचद्विषतांहंतारणेशांतस्तदुच्यताम् ९७ ॥ इतिश्रीम०भा०कर्णपर्वणिधृतराष्ट्रप्रश्नेनवमोऽध्यायः ॥ ९ ॥ ॥ संजयउवाच ॥ हतेद्रोणेमहेष्वासेतस्मिन्नहनिभारत ॥ कृतेचमोघसंकल्पेद्रोणपुत्रेमहारथे १ द्रवमाणेमहाराजकौरवाणांबलार्णवे ॥ व्यूह्यपार्थःस्वकंसैन्यमतिष्ठद्भ्रातृभिर्वृतः २ तमवस्थितमाज्ञायपुत्रस्तेभरतर्षभ ॥ विद्रुतंस्वबलंदृष्ट्वापौरुषेणन्यवारयत् ३ स्वमनीकमवस्थाप्यबाहुवीर्यमुपाश्रितः ॥ युद्ध्वाचसुचिरंकालंपांडवैःसहभारत ४ लब्धलक्षैःपरैर्हृष्टैर्व्यायच्छद्भिश्चिरंतदा ॥ संध्याकालंसमासाद्यप्रत्यहारमकारयत् ५ कृत्वावहारंसैन्यानांप्रविश्यशिबिरंस्वकम् ॥ कुरवःसुहितंमंत्रंमंत्रयांचक्रिरेमिथः ६ पर्यंकेषुपरार्ध्येषुस्पर्ध्यास्तरणवत्सुच ॥ वरासनेषूपविष्टाःसुखशय्यास्विवामराः ७ ततोदुर्योधनोराजासाम्नापरमवल्गुना ॥ तानाभाष्यमहेष्वासान्प्राप्तकालमभाषत ८ मतंमतिमतांश्रेष्ठाःसर्वेप्रब्रूतमाचिरम् ॥ एवंगतेतुकिंकार्यंकिंचकार्यतरंनृपाः ९ ॥ संजयउवाच ॥ एवमुक्तेनरेंद्रेणनरसिंहायुयुत्सवः ॥ चक्रुर्नानाविधाश्चेष्टाःसिंहासनगतास्तदा १०

र्णपर्वणिनीलकंठीयेभारतभावदीपेनवमोऽध्यायः ॥ ९ ॥ हतेद्रोणइति १ । २ स्वबलंप्रतिविद्रुतंद्रवंतंदृष्ट्वा ३ । ४ लब्धलक्षैःप्राप्तजयैःव्यायच्छद्भिःयतमानैःप्रत्यहारंप्रत्यवहारं प्रत्याहारमिति वापाठः ५ । ६ पर्यंकेष्वेववरासनेनषु ७ साम्नाप्रियवचसा परमवल्गुनाऽतिमधुरेण ८ कार्यंतरंआवश्यकतरंयत्कार्यंकर्तव्यंपरंमतंसंमतंतत्प्रब्रूत ९ चेष्टाःशौर्याभिनयरूपाःभुजास्फालनाद्याः १०

निशाम्यआलोच्य वर्चसंच्छादसहत्व् ११ रागःस्वामिभक्तिः योगोदेशकालादिसंपत्तिः दाक्ष्यंबलं नयोनीतिः १२। १३। १४ सर्वार्थैःरागादिभिःसुनीतैः दैवमनुलोम्यतेऽनुकूलंक्रियतेनकेवलंरागा
द्यपेक्षयादैवस्यप्राबल्यमपितुदैवापेक्षयाऽपिसुप्रणीताःरागादयःप्रबलाइत्यर्थः १५ । १६ । १७ बहुमतींबाहुल्यवतींअतिशयितामितियावत् १८ । १९ शुभंवचःश्रुत्वामनःसमवस्थाप्यसमावा

तेषांनिशाम्येंगितानियुद्धेप्राणानजुहूषताम् ॥ समुद्वीक्ष्यमुखंराज्ञोबालार्कसमवर्चसम् ११ आचार्यपुत्रोमेधावीवाक्यज्ञोवाक्यमाददे ॥ रागोयोगस्तथादाक्ष्यंन
यश्चेत्यर्थसाधकाः १२ उपायाःपंडितैःप्रोक्तास्तेतुदैवमुपाश्रिताः ॥ लोकप्रवीरायेऽस्माकंदेवकल्पामहारथाः १३ नीतिमंतस्तथायुक्तादक्षारक्ताश्चतेहताः ॥
नत्वेवकार्यंनैराश्यमस्माभिर्विजयंप्रति १४ सुनीतैरिहसर्वार्थैर्दैवमप्यनुलोम्यते ॥ तेवयंप्रवरंनृणांसर्वैर्गुणगणैर्युतम् १५ कर्णमेवाभिषेक्ष्यामःसैनापत्येनभारत ॥
कर्णसेनापतिंकृत्वाप्रमथिष्यामहेरिपून् १६ एषह्यतिबलःशूरःकृतास्त्रोयुद्धदुर्मदः ॥ वैवस्वतइवासह्यःशक्तोजेतुंरणेरिपून् १७ एतदाचार्यतनयाच्छ्रुत्वाराजं
स्तवात्मजः ॥ आशांबहुमतींचक्रेकर्णंप्रतिसवैतदा १८ हतेभीष्मेचद्रोणेचकर्णोजेष्यतिपांडवान् ॥ तामाशांहृदयेकृत्वासमाश्वस्यचभारत १९ ततोदुर्योध
नःप्रीतःप्रियंश्रुत्वाऽस्यतद्वचः ॥ प्रीतिसत्कारसंयुक्तंतथ्यमात्महितंशुभम् २० स्वंमनःसमवस्थाप्यबाहुवीर्यमुपाश्रितः ॥ दुर्योधनोमहाराजराधेयमिदमब्र
वीत् २१ कर्णजानामितेवीर्यंसौहृदंपरमंमयि ॥ तथापित्वांमहाबाहोप्रवक्ष्यामिहितंवचः २२ श्रुत्वायथेष्टंचकुरुवीरयत्तवरोचते ॥ भवान्प्राज्ञतमोनित्यंममचैव
परागतिः २३ भीष्मद्रोणावतिरथौहतौसेनापतीमम ॥ सेनापतिर्भवानस्तुताभ्यांद्रविणवत्तरः २४ वृद्धौचतौमहेष्वासौसापेक्षौचधनंजये ॥ मानितौचमया
वीरौराधेयवचनात्तव २५ पितामहस्त्वसंप्रेक्ष्यपांडुपुत्रान्महारणे ॥ रक्षितास्तातभीष्मेणदिवसानिदशैवतु २६ न्यस्तशस्त्रेचभवतिहतोभीष्मःपितामहः ॥ शिखं
डिनंपुरस्कृत्यफाल्गुनेनमहाहवे २७ हतेतस्मिन्महेष्वासेशरतल्पगतेतथा ॥ त्वयोक्तेपुरुषव्याघ्रद्रोणोह्यासीत्पुरःसरः २८ तेनापिरक्षिताःपार्थाःशिष्यत्वा
दितिमेमतिः ॥ सचापिनिहतोवृद्धोधृष्टद्युम्नेनसत्वरम् २९ निहताभ्यांप्रधानाभ्यांताभ्यांनमितविक्रम ॥ त्वत्समंसमरेयोधंनान्यंपश्यामिचिंतयन् ३० भवा
नेवतुनःशक्तोविजयायनसंशयः ॥ पूर्वंमध्येचपश्चाच्चतथैवविहितंहितम् ३१ सभवान्धुर्यवत्संख्येधुरमुद्वोढुमर्हति ॥ अभिषेचयसैन्यान्येस्वयमात्मानमात्मना
३२ देवतानांयथास्कंदःसेनानीःप्रभुरव्ययः ॥ तथाभवानिमांसेनांधार्तराष्ट्रींबिभर्तुवै ३३ जहिशत्रुगणान्सर्वान्महेंद्रोदानवानिव ॥ अवस्थितंरणेदृष्ट्वापांडवा
स्त्वांमहारथाः ३४ द्रविष्यंतिचपंचालाविष्णुंदृष्ट्वेवदानवाः ॥ तस्मात्त्वंपुरुषव्याघ्रप्रकर्षेतांमहाचमूम् ३५ भवत्यवस्थितेयत्तेपांडवामंदचेतसः ॥ द्रविष्यंति
सहामात्याःपंचालाःसृंजयाश्चह ३६ यथाह्यभ्युदितःसूर्यःप्रतपन्स्वेनतेजसा ॥ व्यपोहतितमस्तीव्रंतथाशत्रून्प्रतापय ३७

याब्रवीदितिद्वयोःसंबंधः २० । २१ । २२ । २३ ताभ्यांसकाशात्द्रविणवत्तरःबलवत्तरः २४ । २५ । २६ । २७ । २८ । २९ ताभ्यामपिनामितःसम्यक्ज्ञातोविक्रमोयस्य ३० विहितंत्वयेति
शेषः ३१ सैनान्येसेनानीत्वेसैनापत्ये ३२ । ३३ । ३४ । ३५ । ३६ । ३७

३८ कर्णमेवंतदाऽब्रवीत् दुर्योधनइतिशेषः नसंयुयुत्सतियुद्धेच्छामपिनकरिष्यतिकिंपुनर्युद्धमितिभावः ३९ । ४० । ४१ । ४२ । ४३ शातकुंभमयैःसौवर्णैर्माहेयैर्महीमयैश्चकुंभैः ४४ विषाणैर्द्विपस्यगजस्यदंतमयैःपात्रैःखड्गस्यगंडकस्यमहर्षभस्यगवयस्यचशृंगैः । विषाणंदंतशृंगयोरितिविश्वः । द्विपखड्गमहर्षभीयैरितितद्धितलोपआर्षः ४५ । ४६ । ४७ । ४८ । ४९ । ५० नहीति

॥ संजयउवाच ॥ आशाबलवतीराजन्पुत्रस्यतवयाऽभवत् ॥ हतेभीष्मेचद्रोणेचकर्णोजेष्यतिपांडवान् ३८ तामाशांहृदयेकृत्वाकर्णमेवंतदाऽब्रवीत् ॥ सूतपुत्रनतेपार्थःस्थित्वाऽग्रेसंयुयुत्सति ३९ ॥ कर्णउवाच ॥ उक्तमेतन्मयापूर्वंगांधारेतवसन्निधौ ॥ जेष्यामिपांडवान्सर्वान्सपुत्रान्सजनार्दनान् ४० सेनापतिर्भविष्यामितवाहंनात्रसंशयः ॥ स्थिरोभवमहाराजजितान्विद्धिचपांडवान् ४१ ॥ संजयउवाच ॥ एवमुक्तोमहाराजततोदुर्योधनोनृपः ॥ उत्तस्थौराजभिःसार्द्धंदेवैरिवशतक्रतुः ४२ सैनापत्येनसत्कर्तुंकर्णंस्कंदमिवामराः ॥ ततोऽभिषिषिचुःकर्णंविधिदृष्टेनकर्मणा ४३ दुर्योधनमुखाराजन्राजानोविजयैषिणः ॥ शातकुंभमयैःकुंभैर्माहेयैश्चाभिमंत्रितैः ४४ तोयपूर्णैर्विषाणैश्चद्विपखड्गमहर्षभैः ॥ मणिमुक्तायुतैश्चान्यैःपुण्यगंधैस्तथौषधैः ४५ औदुंबरेसुखासीनमासनेक्षौमसंवृते ॥ शास्त्रदृष्टेनविधिनासंभारैश्चसुसंभृतैः ४६ ब्राह्मणाःक्षत्रियावैश्यास्तथाशूद्राश्चसंमताः ॥ तुष्टुवुस्तंमहात्मानमभिषिक्तंवरासने ४७ ततोऽभिषिक्तेराजेंद्रनिष्कैर्गोभिर्धनेनच ॥ वाचयामासविप्राग्र्यान्राधेयःपरवीरहा ४८ जयपार्थान्सगोविंदान्सानुगांस्तान्महामृधे ॥ इतितंबंदिनःप्राहुर्द्विजाश्चपुरुषर्षभम् ४९ जहिपार्थान्सपंचालान्राधेयविजयायनः ॥ उद्यन्निवसदाभानुस्तमांस्युग्रैर्गभस्तिभिः ५० नह्यलंत्वद्विसृष्टानांशराणांवैसकेशवाः ॥ उलूकाःसूर्यरश्मीनांज्वलतामिवदर्शने ५१ नहिपार्थाःसपंचालाःस्थातुंशक्तास्तवाग्रतः ॥ आत्तशस्त्रस्यसमरेमहेंद्रस्येवदानवाः ५२ अभिषिक्तस्तुराधेयःप्रभयासोऽमितप्रभः ॥ अत्यरिच्यतरूपेणदिवाकरइवापरः ५३ सैनापत्येतुराधेयमभिषिच्यसुतस्तव ॥ अमन्यततदाऽऽत्मानंकृतार्थंकालचोदितः ५४ कर्णोपिराजन्संप्राप्यसैनापत्यमरिंदमः ॥ योगमाज्ञापयामाससूर्यस्योदयनंप्रति ५५ तवपुत्रैर्वृतःकर्णःशुशुभेतत्रभारत ॥ देवैरिवयथास्कंदःसंग्रामेतारकामये ५६ ॥ इतिश्रीमहाभारतेकर्णपर्वणिकर्णाभिषेकेदशमोऽध्यायः ॥ १० ॥

॥ धृतराष्ट्रउवाच ॥ सैनापत्यंतुसंप्राप्यकर्णोवैकर्तनस्तदा ॥ तथोक्तश्चस्वयंराज्ञास्निग्धंभ्रातृसमंवचः १ योगमाज्ञाप्यसेनानामादित्येऽभ्युदितेतदा ॥ अकरोत्किंमहाप्राज्ञस्तन्ममाचक्ष्वसंजय २ ॥ संजयउवाच ॥ कर्णस्यमतमाज्ञायपुत्रास्तेभरतर्षभ ॥ योगमाज्ञायामासुर्नंदितूर्यपुरःसरम् ३ महत्यपररात्रेचतवसैन्यस्यमारिष ॥ योगोयोगेतिसहसाप्रादुरासीन्महास्वनः ४ कल्पतांनागमुख्यानांरथानांचवरूथिनाम् ॥ सन्नह्यतांनराणांचवाजिनांचविशांपते ५ क्रोशतांचैवयोधानांत्वरितानांपरस्परम् ॥ बभूवतुमुलःशब्दोदिवस्पृक्सुमहांस्ततः ६

शराणांदर्शनेऽपिनालंकिमुतस्पर्शेइत्यर्थः ५१ । ५२ । ५३ । ५४ । ५५ । ५६ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेदशमोऽध्यायः ॥ १० ॥ ॥ ७ ॥ ॥ सैनेति १ । २ नंदितूर्यमानंदवाद्यम् ३ । ४ कल्पतांसंनह्यमानानांवरूथिनां सन्नह्यतांनराणां सन्नह्यमानानांगजादीनांचक्ष्वेदोबभूवेतिद्वयोःसंबंधः ५ । ६

श्वेतेत्यादिविशेषणद्वयंरथेनेत्यस्य ७ । ८ अभिपताकेनवायोःप्रातिकूल्यादभिमुखपताकेनएतत्पराजयसूचकम् ९ । १० निघ्नन्निघ्नंतं घ्नंतमितिवापाठः ११ । १२ । १३ । १४ । १५ । १६

ततःश्वेतपताकेनबलाकावर्णवाजिना ॥ हेमपृष्ठेनधनुषानागकक्षेणकेतुना ७ तूणीरशतपूर्णेनसगदेनवरूथिना ॥ शतघ्नीकिंकिणीशक्तिशूलतोमरधारिणा ८ कार्मुकैरुपपन्नेनविमलादित्यवर्चसा ॥ रथेनाभिपताकेनसूतपुत्रोऽभ्यदृश्यत ९ धमापयन्वारिजंराजन्हेमजालविभूषितम् ॥ विधुन्वानोमहच्चापंकार्तस्वरविभूषितम् १० दृष्ट्वाकर्णंमहेष्वासंरथस्थंरथिनांवरम् ॥ भानुमंतमिवोद्यंतंतमोनिघ्नन्दुरासदम् ११ नभीष्मव्यसनंकेचिन्नापिद्रोणस्यमारिष ॥ नान्येषांपुरुषव्याघ्रमेनिरेतत्रकौरवाः १२ ततस्तुत्वरयन्योधान्शंखशब्देनमारिष ॥ कर्णोनिष्कर्षयामासकौरवाणांमहद्बलम् १३ व्यूहंव्यूह्यमहेष्वासोमकरंशत्रुतापनः ॥ प्रत्युद्ययौतथाकर्णःपांडवान्विजिगीषया १४ मकरस्यतुतुंडेवैकर्णोराजन्व्यवस्थितः ॥ नेत्राभ्यांशकुनिःशूरउलूकश्चमहारथः १५ द्रोणपुत्रस्तुशिरसिग्रीवायांसर्वसोदराः ॥ मध्येदुर्योधनोराजाबलेनमहतावृतः १६ वामपादेतुराजेंद्रकृतवर्माव्यवस्थितः ॥ नारायणबलैर्युक्तोगोपालैर्युद्धदुर्मदैः १७ पादेतुदक्षिणेराजन्गौतमःसत्यविक्रमः ॥ त्रिगर्तैःसुमहेष्वासैर्दाक्षिणात्यैश्चसंवृतः १८ अनुपादेतुयोवामस्तत्रशल्योव्यवस्थितः ॥ महत्यासेनयासार्द्धंमद्रदेशसमुत्थया १९ दक्षिणेतुमहाराजसुषेणःसत्यसंगरः ॥ वृतोरथसहस्रेणदंतिनांचत्रिभिःशतैः २० पुच्छेह्यास्तांमहावीर्यौभ्रातरौपार्थिवौतदा ॥ चित्रश्चचित्रसेनश्चमहत्यासेनयावृतौ २१ तथाप्रयातेराजेंद्रकर्णेनरवरोत्तमे ॥ धनंजयमभिप्रेक्ष्यधर्मराजोऽब्रवीदिदम् २२ पश्यपार्थयथासेनाधार्तराष्ट्रीहसंयुगे ॥ कर्णेनविहितावीरगुप्तावीरैर्महारथैः २३ हतवीरतमाह्येषांधार्तराष्ट्रीमहाचमूः ॥ फल्गुशेषामहाबाहोतृणैस्तुल्यामतामम २४ एकोह्यत्रमहेष्वासःसूतपुत्रोविराजते ॥ सदेवासुरगंधर्वैःसकिन्नरमहोरगैः २५ चराचरैस्त्रिभिर्लोकैर्योऽजय्योरथिनांवरः ॥ तंहत्वाऽद्यमहाबाहोविजयस्तवफाल्गुन २६ उद्धृतश्चभवेच्छल्योममद्वादशवार्षिकः ॥ एवंज्ञात्वामहाबाहोव्यूहंव्यूहयथेच्छसि २७ भ्रातुरेतद्वचःश्रुत्वापांडवःश्वेतवाहनः ॥ अर्धचंद्रेणव्यूहेनप्रत्यव्यूहततांचमूम् २८ वामपार्श्वेतुतस्याथभीमसेनोव्यवस्थितः ॥ दक्षिणेचमहेष्वासोधृष्टद्युम्नोव्यवस्थितः २९ मध्येव्यूहस्यराजातुपांडवश्चधनंजयः ॥ नकुलःसहदेवश्चधर्मराजस्यपृष्ठतः ३० चक्ररक्षौतुपांचाल्यौयुधामन्यूत्तमौजसौ ॥ नार्जुनंजहतुर्युद्धेपाल्यमानौकिरीटिना ३१ शेषान्नृपतयोवीराःस्थिताव्यूहस्यदंशिताः ॥ यथाभागंयथोत्साहंयथायत्नंचभारत ३२ एवमेतन्महाव्यूहंव्यूह्यभारतपांडवाः ॥ तावकाश्चमहेष्वासायुद्धायैवमनोदधुः ३३ दृष्ट्वाव्यूढांतवचमूंसूतपुत्रेणसंयुगे ॥ निहतान्पांडवान्मेनेधार्तराष्ट्रःसबांधवः ३४ तथैवपांडवींसेनांव्यूढांदृष्ट्वायुधिष्ठिरः ॥ धार्तराष्ट्रान्हतान्मेनेसकर्णान्वैजनाधिपः ३५ ततःशंखाश्चभेर्यश्चपणवानकदुंदुभिः ॥ डिंडिमाश्चाप्यहन्यंतझर्झराश्चसमंततः ३६

१७ । १८ अनुपादेपादस्थानस्यापिपश्चाद्भागे १९ दक्षिणेअनुपादे २० । २१ । २२ । २३ । २४ । २५ । २६ व्यूहरचय २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६

३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ ॥ इतिकर्णपर्वणिनैलकंठीयेभारतभावदीपेएकादशोऽध्यायः ॥ ११ ॥ तेसेनेइति प्रगृह्यत्वाभावश्छांदसः १ देहानांपाप्मनामसूनांचनाशनान् २

सेनयोरुभयोराजन्प्रावाद्यंतमहास्वनाः ॥ सिंहनादश्चसंजज्ञेशूराणांजयगृद्धिनाम् ३७ हयहेषितशब्दाश्चवारणानांचबृंहताम् ॥ रथनेमिस्वनाश्चोग्राःसंबभूवुर्जनाधिप ३८ नद्रोणव्यसनंकश्चिज्जानीतेतत्रभारत ॥ दृष्ट्वाकर्णमहेष्वासंमुखेव्यूहस्यदंशितम् ३९ उभेसैन्येमहाराजप्रहृष्टनरसंकुले ॥ योद्धुकामेस्थितेराजन्हंतुमन्योन्यमोजसा ४० तत्रयत्तौसुसंरब्धौदृष्ट्वाऽन्योन्यंव्यवस्थितौ ॥ अनीकमध्येराजेंद्रचेरतुःकर्णपांडवौ ४१ नृत्यमानेचतेसेनेसमेयातांपरस्परम् ॥ तेषांपक्षैःप्रपक्षैश्चनिर्जग्मुस्तेयुयुत्सवः ४२ ततःप्रववृतेयुद्धंनरवारणवाजिनाम् ॥ रथानांचमहाराजअन्योऽन्यमभिनिघ्नताम् ४३ ॥ इतिश्रीमहाभारतेकर्णपर्वणिव्यूहनिर्माणेएकादशोऽध्यायः ॥ ११ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ तेसेनेऽन्योन्यमासाद्यप्रहृष्टाश्वनरद्विपे ॥ बृहत्यौसंप्रजह्रातेदेवासुरसमप्रभे १ ततोनररथाश्वेभैःपत्तयश्चोग्रविक्रमाः ॥ संप्रहारान्भृशंचक्रुर्देहपाप्मासुनाशनान् २ पूर्णचंद्रार्कपद्मानांकांतिभिर्गंधतःसमैः ॥ उत्तमांगैर्नृसिंहानांनृसिंहास्तस्तरुर्महीम् ३ अर्धचंद्रैस्तथाभल्लैःक्षुरप्रैरसिपट्टिशैः ॥ परश्वधैश्चाप्यकृंतन्नुत्तमांगानियुध्यताम् ४ व्यायतायतबाहूनांव्यायतायतबाहुभिः ॥ बाहवःपातितारेजुर्धरण्यांसायुधांगदैः ५ तैःस्फुरद्भिर्महीभातिरक्तांगुलितलैस्तथा ॥ गरुडप्रहितैरुग्रैःपंचास्यैरुरगैरिव ६ द्विरदस्यंदनाश्वेभ्यःपेतुर्वीराद्विषद्धताः ॥ विमानेभ्योयथाक्षीणेपुण्येस्वर्गसदस्तथा ७ गदाभिरन्येगुर्वीभिःपरिघैर्मुसलैरपि ॥ पोथिताःशतशःपेतुर्वीरावीरतरैरणे ८ रथारथैर्विमथितामत्तामत्तैर्द्विपाद्विपैः ॥ सादिनःसादिभिश्चैवतस्मिन्परमसंकुले ९ रथैर्नरारथानागैरश्वारोहाश्चपत्तिभिः ॥ अश्वारोहैःपदाताश्चनिहतायुधिशेरते १० रथाश्वपत्तयोनागैरथाश्वेभाश्चपत्तिभिः ॥ रथपत्तिद्विपाश्चाश्वैरथैश्चापिनरद्विपाः ११ रथाश्वेभनराणांतुनराश्वेभरथैःकृतम् ॥ पाणिपादैश्चशस्त्रैश्चरथैश्चकदनंमहत् १२ तथातास्मिन्बलेशूरैर्वध्यमानेहतेऽपिच ॥ अस्मानभ्याययुःपार्थावृकोदरपुरोगमाः १३ धृष्टद्युम्नःशिखंडीचद्रौपदेयाःप्रभद्रकाः ॥ सात्यकिश्चेकितानश्चद्राविडैःसैनिकैःसह १४ वृताव्यूहेनमहतापांड्याश्चोलाःसकेरलाः ॥ व्यूढोरस्कादीर्घभुजाःप्रांशवःपृथुलोचनाः १५ आपीडिनोरक्तदंतामत्तमातंगविक्रमाः ॥ नानाविरागवसनागंधचूर्णावचूर्णिताः १६ बद्धासयःपाशहस्तावारणप्रतिवारणाः ॥ समानमृत्यवोराजन्नात्यजंतपरस्परम् १७ कलापिनश्चापहस्तादीर्घकेशाःप्रियंवदाः ॥ पत्तयःसादिनश्चान्येघोररूपपराक्रमाः १८ अथापरेपुनःशूराश्चेदिपंचालकेकयाः ॥ कारूषाःकोसलाःकांच्यामागधाश्चापिदुद्रुवुः १९ तेषांरथाश्वनागाश्चप्रवराश्चोग्रपत्तयः ॥ नानावाद्यधरैर्हृष्टानृत्यंतिचहसंतिच २० तस्यसैन्यस्यमहतोमहामात्रवरैर्वृतः ॥ मध्येवृकोदरोऽभ्यायात्त्वदीयान्नागधूर्गतः २१

पूर्णचंद्रार्काणांकांतिभिःसमैःपद्मानांगंधतःसमैस्तस्तरुःआस्तीर्णवंतः ३ । ४ व्यायताःपुष्टाः आयताःदीर्घाः ५ प्रहितैर्निरस्तैः ओहाकृत्यागे ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ १५ आपीडिनः भूषावंतः नानापृथक्विविधरागाणिवसनानियेषांतेविरागवसनाः १६ । १७ । १८ । १९ । २० महामात्रवरैरितिपाठेश्रेष्ठरथैः गजधूर्गतःगजस्कंधगतः २१

उदयाग्राद्रिभवनं उदयाद्रेरग्रभवनं अग्राद्रीत्यग्रशब्दस्यपूर्वनिपातआर्षः उदयनामाअग्राद्रिःपूर्वपर्वतः सएवभवनमितिवा । उदयाग्रात्रिभवनमितिपाठे उदयाचलस्याग्रेशृंगे अत्रेरर्कभूत
स्यभवनम् २२ शारदस्यशरदाउपलक्षितस्य २३ चारुमौलिः रम्यकिरीटः २४ द्विपस्थितोद्विपारूढः प्रमनाःप्रकृष्टमनाः प्रमनस्तरंप्रसन्नतरमनस्कम् २५ । २६ । २७ । २८ । २९ । ३०
विनेदतुःसन्निहितौबभूवतुर्ववृषतुरित्यर्थः ३१ अपरैस्तोमरैरेव ३२ सभीमसेनोमेघैःसप्तसप्तिरिवांशुमान् यथामेघांतर्हितस्यसूर्यस्यमरीचयोरश्मिरूपेणसर्वतःप्रचरंति एवंरश्मिस्थानीयास्तो

सनागप्रवरोऽत्युग्रोविधिवत्कल्पितोबभौ ॥ उदयाग्राद्रिभवनंयथाऽभ्युदितभास्करम् २२ तस्यायसंवर्मवरंवररत्नविभूषितम् ॥ ताराव्याप्तस्यनभसःशारदस्य
समात्विषम् २३ सतोमरव्यग्रकरश्चारुमौलिःस्वलंकृतः ॥ चरन्मध्यंदिनार्काभस्तेजसाव्यदहाद्रिपून २४ तंदृष्ट्वाद्विरदंदूरात्क्षेमधूर्त्तिर्द्विपास्थितः ॥ आह्वयन्न
भिदुद्रावप्रमनाःप्रमनस्तरम् २५ तयोःसमभवद्युद्धंद्विपयोरुग्ररूपयोः ॥ यदृच्छयाद्रुमवतोर्महापर्वतयोरिव २६ संसक्तनागौतौवीरौतोमरैरितरेतरम् ॥ बल
वत्सूर्यरश्म्याभैर्भित्वाऽन्योन्यंविनेदतुः २७ व्यपसृत्यतुनागाभ्यांमंडलानिविचेरतुः ॥ प्रगृह्यचोभौधनुषीजघ्नतुर्वैपरस्परम् २८ क्ष्वेडितास्फोटितरवैर्बा
णशब्दैस्तुसर्वतः ॥ तौजनंहर्षयंतौचसिंहनादंप्रचक्रतुः २९ समुद्यतकराभ्यांतौद्विपाभ्यांकृतिनावुभौ ॥ वातोद्धूतपताकाभ्यांयुयुधातेमहाबलौ ३० ताव
न्योन्यस्यधनुषीछित्त्वाऽन्योन्यंविनेदतुः ॥ शक्तितोमरवर्षेणप्रावृण्मेघाविवांबुभिः ३१ क्षेमधूर्त्तिस्तदाभीमंतोमरेणस्तनांतरे ॥ निर्बिभेदातिवेगेनषड्भिश्चा
प्यपरैर्नदन् ३२ सभीमसेनःशुशुभेतोमरैरंगमाश्रितैः ॥ क्रोधदीप्तवपुर्मेघैःसप्तसप्तिरिवांशुमान् ३३ ततोभास्करवर्णाभमंजोगतिमयस्मयम् ॥ ससर्जतोमरं
भीमःप्रत्यमित्राययत्नवान् ३४ ततःकुलूताधिपतिश्चापमानम्यसायकैः ॥ दशभिस्तोमरंभित्त्वाषष्ट्याविव्याधपांडवम् ३५ अथकार्मुकमादायभीमोजल
दनिःस्वनम् ॥ रिपोरभ्यर्दयन्नागमुन्नदन्पांडवःशरैः ३६ सशरौघार्दितोनागोभीमसेनेनसंयुगे ॥ गृह्यमाणोऽपिनातिष्ठद्वातोद्धूतइवांबुदः ३७ तमभ्यधाव
द्विरदंभीमोभीमस्यनागराट् ॥ महावातेरितंमेघंवातोद्धूतइवांबुदः ३८ सन्निवार्यात्मनोनागंक्षेमधूर्त्तिःप्रतापवान् ॥ विव्याधाभिद्रुतंबाणैर्भीमसेनस्यकुंजरम्
३९ ततःसाधुविसृष्टेनक्षुरेणानतपर्वणा ॥ छित्त्वाशरासनंशत्रोर्नागमामित्रमार्दयत् ४० ततःक्रुद्धोरणेभीमंक्षेमधूर्त्तिःपराभिनत् ॥ जघानचास्याद्विरदंनाराचैःसर्व
मर्मसु ४१ सपपातमहानागोभीमसेनस्यभारत ॥ पुरानागस्यपतनादवप्लुत्यास्थितोमहीम् ४२ तस्यभीमोऽपिद्विरदंगदयासमपोथयत् ॥ तस्मात्प्रमथि
तान्नागात्क्षेमधूर्त्तिमवप्लुतम् ४३ उद्यतायुधमायांतंगदयाऽहनद्वृकोदरः ॥ सपपातहतःसासिर्व्यसुस्तमभितोद्विपम् ४४ वज्रप्रभग्नमचलंसिंहोवज्रहतोयथा ॥
तंहतंनृपतिंदृष्ट्वाकुलूतानांयशस्करम् ॥ प्राद्रवद्व्यथितासेनात्वदीयाभरतर्षभ ४५ ॥ इति श्रीमहाभारते कर्णपर्वणि क्षेमधूर्त्तिवधेद्वादशोऽध्यायः ॥ १२ ॥

मराः ३३ अंजोगतिंऋजुगतिम् ३४ । ३५ । ३६ गृह्यमाणःनिगृह्यमाणःक्षेमधूर्तिना ३७ । ३८ । ३९ आमित्रंशत्रुसंबंधिनं सामित्रमितिपाठांतरम् ४० । ४१ । ४२ । ४३ अहन् हत
वान् हतोगदयाशकलीकृतः अतएवअभितोद्विपंद्विपस्याभितःपपात ४४ । ४५ ॥ ॥ इति कर्णपर्वणि नीलकंठीयेभारतभावदीपे द्वादशोऽध्यायः ॥ १२ ॥ ॥ ७ ॥ ॥ ७ ॥

ततइति १ । २ । ३ । ४ । ५ द्रौणिमभ्यद्रवत् ६ । ७ । ८ कृपेणयुयुधेइतिशेषः ९ माद्रीपुत्रःसुतंतवेत्यस्यव्याख्यादुःशासनमिति १० । ११ । १२ । १३ । १४ । १५ । १६

॥ संजयउवाच ॥ ततःकर्णोमहेष्वासःपांडवानामनीकिनीम् ॥ जघानसमरेशूरःशरैःसन्नतपर्वभिः १ तथैवपांडवाराजंस्तवपुत्रस्यवाहिनीम् ॥ कर्णस्यप्रमुखेक्रुद्धानिजघ्नुस्तेमहारथाः २ कर्णोऽपिराजन्समरेव्यहनत्पांडवींचमूम् ॥ नाराचैरर्करश्म्याभैःकर्मारपरिमार्जितैः ३ तत्रभारतकर्णेननाराचैस्ताडितागजाः ॥ नेदुःसेदुश्चमम्लुश्चबभ्रमुश्चदिशोदश ४ वध्यमानेबलेतस्मिन्सूतपुत्रेणमारिष ॥ नकुलोऽभ्यद्रवत्तूर्णंसूतपुत्रंमहारणे ५ भीमसेनस्तथाद्रौणिंकुर्वाणंकर्मदुष्करम् ॥ विंदानुविंदौकैकेयौसात्यकिःसमवारयत् ६ श्रुतकर्माणमायांतंचित्रसेनोमहीपतिः ॥ प्रतिविंध्यस्तथाचित्रंचित्रकेतनकार्मुकम् ७ दुर्योधनस्तुराजानंधर्मपुत्रंयुधिष्ठिरम् ॥ संशप्तकगणान्क्रुद्धोह्यभ्यधावद्धनंजयः ८ धृष्टद्युम्नःकृपेणाथतस्मिन्वीरवरक्षये ॥ शिखंडीकृतवर्माणंसमासादयदच्युतम् ९ श्रुतकीर्तिस्तथाशल्यंमाद्रीपुत्रःसुतंतव ॥ दुःशासनंमहाराजसहदेवःप्रतापवान् १० कैकेयौसात्यकिंयुद्धेशरवर्षेणभास्वता ॥ सात्यकिःकैकेयौचापिच्छादयामासभारत ११ तावेनंभ्रातरौवीरौजघ्नतुर्हृदयेभृशम् ॥ विषाणाभ्यांयथानागौप्रतिनागंमहावने १२ शरसंभिन्नवर्माणौतावुभौभ्रातरौरणे ॥ सात्यकिंसत्यकर्माणंराजन्विव्यधतुःशरैः १३ तौसात्यकिर्महाराजप्रहसन्सर्वतोदिशः ॥ छादयञ्छरवर्षेणवारयामासभारत १४ वार्यमाणौततस्तौहिशैनेयशरवृष्टिभिः ॥ शैनेयस्यरथंतूर्णंछादयामासतुःशरैः १५ तयोस्तुधनुषीचित्रेछित्त्वाशौरिर्महायशाः ॥ अथतौसायकैस्तीक्ष्णैर्वारयामाससंयुगे १६ अथान्येधनुषीचित्रेप्रगृह्यचमहाशरान् ॥ सात्यकिंछादयंतौतौचेरतुर्लघुसुष्ठुच १७ ताभ्यांमुक्तामहाबाणाःकंकबर्हिणवाससः ॥ द्योतयंतोदिशःसर्वाःसंपेतुःस्वर्णभूषणाः १८ बाणांधकारमभवत्तयोराजन्महामृधे ॥ अन्योन्यस्यधनुश्चैवचिच्छिदुस्तेमहारथाः १९ ततःक्रुद्धोमहाराजसात्वतोयुद्धदुर्मदः ॥ धनुरन्यत्समादायसज्यंकृत्वाचसंयुगे २० क्षुरप्रेणसुतीक्ष्णेनअनुविंदाशिरोऽहरत् ॥ अपतत्तच्छिरोराजन्कुंडलोपाचितंमहत् २१ शंबरस्यशिरोयद्वन्निहतस्यमहारणे ॥ शोचयन्केकयान्सर्वान्जगामाशुवसुंधराम् २२ तंदृष्ट्वानिहतंशूरंभ्रातातस्यमहारथः ॥ सज्यमन्यद्धनुःकृत्वाशैनेयंपर्यवारयत् २३ सषष्ट्यासात्यकिंविद्ध्वास्वर्णपुंखैःशिलाशितैः ॥ ननादबलवन्नादंतिष्ठतिष्ठेतिचाब्रवीत् २४ सात्यकिंचततस्तूर्णंकेकयानांमहारथः ॥ शरैरनेकसाहस्रैर्बाह्वोरुरसिचार्पयत् २५ सशरैःक्षतसर्वांगःसात्यकिःसत्यविक्रमः ॥ रराजसमरेराजन्सपुष्पइवकिंशुकः २६ सात्यकिःसमरेविद्धःकैकेयेनमहात्मना ॥ कैकेयंपंचविंशत्याविव्याधप्रहसन्निव २७ तावन्योन्यस्यसमरेसंछिद्यधनुषीशुभे ॥ हत्वाचसारथीतूर्णंहयांश्चरथिनांवरौ २८ विरथावसियुद्धायसमाजग्मतुराहवे ॥ शतचंद्रचितेगृह्यचर्मणीसुभुजौतथा २९

लघुशीघ्रं सुष्ठुशोभनम् १७ । १८ । १९ । २० उपाचितमलंकृतम् २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९

३० । ३१ । ३२ ।३३ ।३४ अपहस्तेनतिर्यग्घस्तेन ३५ । ३६ । ३७ । ३८ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेत्रयोदशोऽध्यायः ॥ १३ ॥ श्रुतकर्मेति १ अभिसारोऽभिसाराधिपतिं

विरोचेतांमहारंगेनिस्त्रिंशवरधारिणौ ॥ यथादेवासुरेयुद्धेजंभशक्रौमहाबलौ ३० मंडलानिततस्तौतुविचरंतौमहारणे ॥ अन्योन्यमभितस्तूर्णंसमाजग्मतुरा
हवे ३१ अन्योन्यस्यवधेचैवचक्रतुर्यत्नमुत्तमम् ॥ कैकेयस्यद्विधाचर्मततश्चिच्छेदसात्वतः ३२ सात्यकेस्तुतथैवासौचर्मचिच्छेदपार्थिवः ॥ चर्मच्छित्वातु
कैकेयस्तारागणशतैर्वृतम् ३३ चचारमंडलान्येवगतप्रत्यागतानिच ॥ तंचरंतंमहारंगेनिस्त्रिंशवरधारिणम् ३४ अपहस्तेनचिच्छेदशैनेयस्त्वरयाऽन्वितः ॥
सवर्माकेकयोराजन्द्विधाछिन्नोमहारणे ३५ निपपातमहेष्वासोवज्राहतइवाचलः ॥ तंनिहत्यरणेशूरःशैनेयोरथसत्तमः ३६ युधामन्युरथंतूर्णमारुरोहपरंतपः ॥
ततोऽन्यंरथमास्थायविधिवत्कल्पितंपुनः ३७ केकयानांमहत्सैन्यंव्यधमत्सात्यकिःशरैः ॥ साबध्यमानासमरेकेकयानांमहाचमूः ॥ तमुत्सृज्यरणेशत्रुंप्रदुद्रा
वदिशोदश ३८ ॥ इतिश्रीमहाभारतेकर्णपर्वणिविंदानुविंदवधेत्रयोदशोऽध्यायः ॥ १३ ॥ संजयउवाच ॥ श्रुतकर्माततोराजंश्चित्रसेनंमहीपतिम् ॥ आज
घ्नेसमरेक्रुद्धःपंचाशद्भिःशिलीमुखैः १ अभिसारस्तुतंराजन्नवभिर्नतपर्वभिः ॥ श्रुतकर्माणमाहत्यसूतंविव्याधपंचभिः २ श्रुतकर्माततःक्रुद्धश्चित्रसेनंचमूमुखे ॥
नाराचेनसुतीक्ष्णेनमर्मदेशेसमार्पयत् ३ सोऽतिविद्धोमहाराजनाराचेनमहात्मना ॥ मूर्छामभिययौवीरःकश्मलंचाविवेशह ४ एतस्मिन्नंतरेचैनंश्रुतकीर्तिर्महा
यशाः ॥ नवत्याजगतीपालंछादयामासपत्रिभिः ५ प्रतिलभ्यततःसंज्ञांचित्रसेनोमहारथः ॥ धनुश्चिच्छेदभल्लेनतंचविव्याधसप्तभिः ६ सोऽन्यत्कार्मुकमा
दायवेगघ्नंरुक्मभूषितम् ॥ चित्ररूपधरंचक्रेचित्रसेनंशरोर्मिभिः ७ सशरैश्चित्रितोराजाचित्रमाल्यधरोयुवा ॥ युवेवसमरेऽशोभद्गोष्ठीमध्येस्वलंकृतः ८ श्रु
तकर्माणमथवैनाराचेनस्तनांतरे ॥ बिभेदतरसाशूरस्तिष्ठतिष्ठेतिचाब्रवीत् ९ श्रुतकर्माऽपिसमरेनाराचेनसमर्पितः ॥ सुस्रावरुधिरंतत्रगैरिकार्द्रइवाचलः १०
ततःसरुधिराक्तांगोरुधिरेणकृतच्छविः ॥ रराजसमरेवीरःसपुष्पइवकिंशुकः ११ श्रुतकर्माततोराजन्शत्रुणासमभिद्रुतः ॥ शत्रुसंवारणंक्रुद्धोद्विधाचिच्छेदका
र्मुकम् १२ अथैनंछिन्नधन्वानंनाराचानांशतैस्त्रिभिः ॥ छादयन्समरेराजन्विव्याधचसुपत्रिभिः १३ ततोऽपरेणभल्लेनतीक्ष्णेनानिशितेनच ॥ जहारसशिर
स्त्राणंशिरस्तस्यमहात्मनः १४ तच्छिरोन्यपतद्भूमौचित्रसेनस्यदीप्तिमत् ॥ यदृच्छयायथाचंद्रश्च्युतःस्वर्गान्महीतलम् १५ राजानंनिहतंदृष्ट्वातेऽभिसारं
तुमारिष ॥ अभ्यद्रवंतवेगेनचित्रसेनस्यसैनिकाः १६ ततःक्रुद्धोमहेष्वासस्तत्सैन्यंप्राद्रवच्छरैः ॥ अंतकालेयथाक्रुद्धःसर्वभूतानिप्रेतराट् १७

श्चित्रसेनः आहत्यसंताड्य २ । ३ मूर्च्छाअर्धनिद्रांकश्मलमचित्तत्वं ४ एनंश्रुतकर्माणं ५ तंश्रुतकर्माणं ६ । ७ सशरैरिति गोष्ठीगोयूथपःसांडोमहोक्षः सयथाशृंगादावलंकृतएवंसश
रैरलंकृतइत्यर्थः ८ । ९ । १० कृतच्छविः आहितशोभः ११ । १२ सुपत्रिभिः शोभनपुंखवद्भिर्नाराचानांशतैः १३ । १४ । १५ । १६ प्रेतराड्यमः १७

दावोदावाग्निस्तेनदग्धाः १८ । १९ । २० । २१ । २२ स्वर्णघंटांसुवर्णमयघंटान्विताम् २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ गात्रावरणंकवचम् ३२ । ३३ । ३४ । ३५



तेवध्यमानाःसमरेतवपौत्रेणधन्विना ॥ व्यद्रवंतदिशस्तूर्णंदावदग्धाइवद्विपाः १८ तांस्तुविद्रवतोदृष्ट्वानिरुत्साहान्द्विषज्जये ॥ द्रावयन्निषुभिस्तीक्ष्णैःश्रुतकर्माव्यरोचत १९ प्रतिविंध्यस्ततश्चित्रंभित्त्वापंचाभिराशुगैः ॥ सारथिंचत्रिभिर्विद्ध्वाध्वजमेकेषुणाऽपिच २० तंचित्रोनवभिर्भल्लैर्बाह्वोरुरसिचार्पयत् ॥ स्वर्णपुंखैःप्रसन्नाग्रैःकंकबर्हिणवाजितैः २१ प्रतिविंध्योधनुश्छित्त्वातस्यभारतसायकैः ॥ पंचभिर्निशितैर्बाणैरथैनंसाहिजाघ्निवान् २२ ततःशक्तिंमहाराजस्वर्णघंटांदुरासदाम् ॥ प्राहिणोत्तवपौत्रायघोरामग्निशिखामिव २३ तामापतंतींसहसामहोल्काप्रतिमांतदा ॥ द्विधाचिच्छेदसमरेप्रतिविंध्योहसन्निव २४ सापपातद्विधाछिन्नाप्रतिविंध्यशरैःशितैः ॥ युगांतेसर्वभूतानित्रासयंतीयथाऽशनिः २५ शक्तिंतांप्रहतांदृष्ट्वाचित्रोगृह्यमहागदाम् ॥ प्रतिविंध्यायचिक्षेपरुक्मजालविभूषिताम् २६ साजघानहयांस्तस्यसारथिंचमहारणे ॥ रथंप्रमृद्यवेगेनधरणीमन्वपद्यत २७ एतस्मिन्नेवकालेतुरथादाप्लुत्यभारत ॥ शक्तिंचिक्षेपचित्रायस्वर्णदंडामलंकृताम् २८ तामापतंतींजग्राहचित्रोराजन्महामनाः ॥ ततस्तामेवचिक्षेपप्रतिविंध्यायपार्थिवः २९ समासाद्यरणेशूरंप्रतिविंध्यंमहाप्रभा ॥ निर्भिद्यदक्षिणंबाहुंनिपपातमहीतले ॥ पतिताभासयच्चैवतंदेशमशनिर्यथा ३० प्रतिविंध्यस्ततोराजंस्तोमरंहेमभूषितम् ॥ प्रेषयामाससंक्रुद्धश्चित्रस्यवधकांक्षया ३१ सतस्यगात्रावरणंभित्त्वाहृदयमेवच ॥ जगामधरणींतूर्णंमहोरगइवाशयम् ३२ सपपाततदाराजातोमरेणसमाहतः ॥ प्रसार्यविपुलौबाहूपीनौपरिघसन्निभौ ३३ चित्रंसंप्रेक्ष्यनिहतंतावकारणशोभिनः ॥ अभ्यद्रवंतवेगेनप्रतिविंध्यंसमंततः ३४ सृजंतोविविधान्बाणाञ्शतघ्नीश्चसकिंकिणीः ॥ तमवच्छादयामासुःसूर्यमभ्रगणाइव ३५ तान्विधम्यमहाबाहुःशरजालेनसंयुगे ॥ व्यद्रावयत्तवचमूंवज्रहस्तइवासुरीम् ३६ तेवध्यमानाःसमरेतावकाःपांडवैर्नृप ॥ विप्रकीर्यंतसहसावातनुन्नाघनाइव ३७ विप्रद्रुतेबलेतस्मिन्वध्यमानेसमंततः ॥ द्रौणिरेकोऽभ्ययात्तूर्णंभीमसेनंमहाबलम् ३८ ततःसमागमोघोरोबभूवसहसातयोः ॥ यथादेवासुरेयुद्धेवृत्रवासवयोरिव ३९ ॥ इतिश्रीमहाभारतेकर्णपर्वणिचित्रवधेचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ संजयउवाच ॥ भीमसेनंततोद्रौणीराजन्विव्याधपत्रिणा ॥ परयात्वरयायुक्तोदर्शयन्नस्त्रलाघवम् १ अथैनंपुनराजघ्नेनवत्यानिशितैःशरैः ॥ सर्वमर्माणिसंप्रेक्ष्यमर्मज्ञोलघुहस्तवत् २ भीमसेनःसमाकीर्णोद्रौणिनानिशितैःशरैः ॥ रराजसमरेराजन्रश्मिवानिवभास्करः ३ ततःशरसहस्रेणसुप्रयुक्तेनपांडवः ॥ द्रोणपुत्रमवच्छाद्यसिंहनादममुंचत ४ शरैःशरांस्ततोद्रौणिःसंवार्ययुधिपांडवम् ॥ ललाटेऽभ्याहनद्राजन्नाराचेनस्मयन्निव ५ ललाटस्थंततोबाणंधारयामासपांडवः ॥ यथाशृंगंवनेदृप्तःखड्गोधारयतेनृप ६

३६ । ३७ । ३८ । ३९ ॥ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ भीमेति १ । २ । ३ । ४ । ५ खड्गोगंडकः ६

७ । ८ । ९ । १० । ११ । १२ कृतप्रतिकृतेअन्योन्यास्त्रप्रतिघाते १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ ईषतुः इच्छांचक्रतुः २२ । २३ । २४ । २५ उल्कानामन्यो

ततोद्रौणिंरणेभीमोयतमानंपराक्रमी ॥ त्रिभिर्विव्याधनाराचैर्ललाटेविस्मयान्निव ७ ललाटस्थैस्ततोबाणैर्ब्राह्मणोऽसौव्यशोभत ॥ प्रावृषीवयथासिक्तस्त्रिशृंगः
पर्वतोत्तमः ८ ततःशरशतैर्द्रौणिरर्दयामासपांडवम् ॥ नचैनंकंपयामाससमातरिश्वेवपर्वतम् ९ तथैवपांडवोयुद्धेद्रौणिंशरशतैःशितैः ॥ नाकंपयतसंहृष्टोवा
र्योघइवपर्वतम् १० तावन्योन्यंशरैर्घोरैश्छादयानौमहारथौ ॥ रथचर्यगतौवीरौशुशुभातेबलोत्कटौ ११ आदित्याविवसंदीप्तौलोकक्षयकरावुभौ ॥ स्वरश्मि
भिरिवान्योन्यंतापयंतौशरोत्तमैः १२ ततःप्रतिकृतेयत्नंकुर्वाणौतौमहारणे ॥ कृतप्रतिकृतेयत्तौशरसंघैरभीतवत् १३ व्याघ्राविवचसंग्रामेचेरतुस्तौनरोत्तमौ ॥
शरदंष्ट्रौदुराधर्षौचापवक्त्रौभयंकरौ १४ अभूतांतावदृश्यौचशरजालैःसमंततः ॥ मेघजालैरिवच्छन्नौगगनेचंद्रभास्करौ १५ चकाशेतेमुहूर्तेनततस्तावप्य
रिंदमौ ॥ विमुक्तावभ्रजालेनअंगारकबुधाविव १६ अथतत्रैवसंग्रामेवर्तमानेसुदारुणे ॥ अपसव्यंततश्चक्रेद्रौणिस्तत्रवृकोदरम् १७ किरञ्छरशतैरुग्रैर्धाराभि
रिवपर्वतम् ॥ नतुतन्ममृषेभीमःशत्रोर्विजयलक्षणम् १८ प्रतिचक्रेततोराजन्पांडवोऽप्यपसव्यतः ॥ मंडलानांविभागेषुगतप्रत्यागतेषुच १९ बभूवतुमुलं
युद्धंतयोःपुरुषसिंहयोः ॥ चरित्वाविविधान्मार्गान्मंडलस्थानमेवच २० शरैःपूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ॥ अन्योन्यस्यवधेचैवचक्रतुर्यत्नमुत्तमम्
२१ ईषतुर्विरथंचैवकर्तुमन्योन्यमाहवे ॥ ततोद्रौणिर्महास्त्राणिप्रादुश्चक्रेमहारथः २२ तान्यस्त्रैरेवसमरेप्रतिजघ्नेऽथपांडवः ॥ ततोघोरंमहाराजअस्त्रयुद्धमव
र्तत २३ ग्रहयुद्धंयथाघोरंप्रजासंहरणेह्यभूत् ॥ तेबाणाःसमसज्जंतमुक्तास्ताभ्यांतुभारत २४ द्योतयंतोदिशःसर्वास्तवसैन्यंसमंततः ॥ बाणसंघैर्वृतंघोरमा
काशंसमपद्यत २५ उल्कापातावृतंयुद्धंप्रजानांसंक्षयेनृप ॥ बाणाभिघातात्संजज्ञेतत्रभारतपावकः २६ सविस्फुलिंगोदीप्तार्चिर्योऽदहद्वाहिनीद्वयम् ॥ त
त्रसिद्धामहाराजसंपतंतोऽब्रुवन्वचः २७ युद्धानामतिसर्वेषांयुद्धमेतदितिप्रभो ॥ सर्वयुद्धानिचैतस्यकलांनार्हंतिषोडशीम् २८ नेदृशंचपुनर्युद्धंभविष्यति
कदाचन ॥ अहोज्ञानेनसंपन्नावुभौब्राह्मणक्षत्रियौ २९ अहोशौर्येणसंपन्नावुभौचोग्रपराक्रमौ ॥ अहोभीमबलोभीमएतस्यचकृतास्त्रता ३० अहोवीर्यस्यसा
रत्वमहोसौष्ठवमेतयोः ॥ स्थितावेतौहिसमरेकालांतकयमोपमौ ३१ रुद्रौद्वाविवसंभूतौयथाद्वाविवभास्करौ ॥ यमौवापुरुषव्याघ्रौघोररूपावुभौरणे ३२ इ
तिवाचःस्मश्रूयंतेसिद्धानांवैमुहुर्मुहुः ॥ सिंहनादश्चसंजज्ञेसमेतानांदिवौकसाम् ३३ अद्भुतंचाप्यचिंत्यंचदृष्ट्वाकर्मतयोरणे ॥ सिद्धचारणसंघानांविस्मयःसम
पद्यत ३४ प्रशंसंतितदादेवाःसिद्धाश्चपरमर्षयः ॥ साधुद्रौणेमहाबाहोसाधुभीमेतिचाब्रुवन् ३५ तौशूरौसमरेराजन्परस्परकृतागसौ ॥ परस्परमुदीक्षे
तांक्रोधादुद्वृत्यचक्षुषी ३६

न्याभिमुखंपःवास्त्वैराहतमिवेतिलुप्तोपमा २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६

दावोदावाग्निस्तेनदग्धाः १८ । १९ । २० । २१ । २२ स्वर्णघंटासुवर्णमयघंटान्विताम् २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ गात्रावरणंकवचम् ३२ । ३३ । ३४ । ३५



तेवध्यमानाःसमरेतवपौत्रेणधन्विना ॥ व्यद्रवंतदिशस्तूर्णंदावदग्धाइवद्विपाः १८ तांस्तुविद्रवतोदृष्ट्वानिरुत्साहान्द्विषज्जये ॥ द्रावयान्निषुभिस्तीक्ष्णैःश्रुतकर्माव्यरोचत १९ प्रतिविंध्यस्ततश्चित्रंभित्त्वापंचभिराशुगैः ॥ सारथिंचत्रिभिर्विद्ध्वाध्वजमेकेषुणाऽपिच २० तंचित्रोनवभिर्भल्लैर्बाह्वोरुरसिचार्पयत् ॥ स्वर्णपुंखैःप्रसन्नाग्रैःकंकबर्हिणवाजितैः २१ प्रतिविंध्योधनुश्छित्त्वातस्यभारतसायकैः ॥ पंचभिर्निशितैर्बाणैरथैनंसाहिजाघ्निवान् २२ ततःशक्तिंमहाराजस्वर्णघंटांदुरासदाम् ॥ प्राहिणोत्तवपौत्रायघोरामग्निशिखामिव २३ तापापतंतींसहसामहोल्काप्रतिमांतदा ॥ द्विधाचिच्छेदसमरेप्रतिविंध्योहसन्निव २४ सापपातद्विधाछिन्नाप्रतिविंध्यशरैःशितैः ॥ युगांतेसर्वभूतानित्रासयंतीयथाऽशनिः २५ शक्तिंतांप्रहतांदृष्ट्वाचित्रोगृह्यमहागदाम् ॥ प्रतिविंध्यायचिक्षेपरुक्मजालविभूषिताम् २६ साजघानहयांस्तस्यसारथिंचमहारणे ॥ रथंप्रमृद्यवेगेनधरणीमन्वपद्यत २७ एतस्मिन्नेवकालेतुरथादाप्लुत्यभारत ॥ शक्तिंचिक्षेपचित्रायस्वर्णदंडामलंकृताम् २८ तामापतंतींजग्राहचित्रोराजन्महामनाः ॥ ततस्तामेवचिक्षेपप्रतिविंध्यायपार्थिवः २९ समासाद्यरणेशूरंप्रतिविंध्यंमहाप्रभा ॥ निर्भिद्यदक्षिणंबाहुंनिपपातमहीतले ॥ पतिताभासयच्चैवतंदेशमशनिर्यथा ३० प्रतिविंध्यस्ततोराजंस्तोमरंहेमभूषितम् ॥ प्रेषयामाससंक्रुद्धश्चित्रस्यवधकांक्षया ३१ सतस्यगात्रावरणंभित्त्वाहृदयमेवच ॥ जगामधरणींतूर्णंमहोरगइवाशयम् ३२ सपपाततदाराजातोमरेणसमाहतः ॥ प्रसार्यविपुलौबाहूपीनौपरिघसन्निभौ ३३ चित्रंसंप्रेक्ष्यनिहतंतावकारणशोभिनः ॥ अभ्यद्रवंतवेगेनप्रतिविंध्यंसमंततः ३४ सृजंतोविविधान्बाणाञ्शतघ्नीश्चसकिंकिणीः ॥ तमवच्छादयामासुःसूर्यमभ्रगणाइव ३५ तान्विधम्यमहाबाहुःशरजालेनसंयुगे ॥ व्यद्रावयत्तवचमूंवज्रहस्तइवासुरीम् ३६ तेवध्यमानाःसमरेतावकाःपांडवैर्नृप ॥ विप्रकीर्यंतसहसावातनुन्नाघनाइव ३७ विप्रद्रुतेबलेतस्मिन्वध्यमानेसमंततः ॥ द्रौणिरेकोऽभ्ययात्तूर्णंभीमसेनंमहाबलम् ३८ ततःसमागमोघोरोबभूवसहसातयोः ॥ यथादेवासुरेयुद्धेवृत्रवासवयोरिव ३९ ॥ इतिश्रीमहाभारतेकर्णपर्वणिचित्रवधेचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ संजयउवाच ॥ भीमसेनंततोद्रौणीराजन्विव्याधपत्रिणा ॥ परयात्वरयायुक्तोदर्शयन्नस्त्रलाघवम् १ अथैनंपुनराजघ्नेनवत्यानिशितैःशरैः ॥ सर्वमर्माणिसंप्रेक्ष्यमर्मज्ञोलघुहस्तवत् २ भीमसेनःसमाकीर्णोद्रौणिनानिशितैःशरैः ॥ रराजसमरेराजन्रश्मिवानिवभास्करः ३ ततःशरसहस्रेणसुप्रयुक्तेनपांडवः ॥ द्रोणपुत्रमवच्छाद्यसिंहनादममुंचत ४ शरैःशरांस्ततोद्रौणिःसंवार्ययुधिपांडवम् ॥ ललाटेऽभ्याहनद्राजन्नाराचेनस्मयन्निव ५ ललाटस्थंततोबाणंधारयामासपांडवः ॥ यथाशृंगंवनेदृप्तःखड्गोधारयतेनृप ६

३६ । ३७ । ३८ । ३९ ॥ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ भीमेति १ । २ । ३ । ४ । ५ खड्गोमंडकः ६

७ । ८ । ९ । १० । ११ । १२ कृतप्रतिकृतेअन्योन्यास्त्रप्रतिघाते १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ ईषतुः इच्छांचक्रतुः २२ । २३ । २४ । २५ उल्कानामन्यो

ततोद्रौणिंरणेभीमोयतमानंपराक्रमी ॥ त्रिभिर्विव्याधनाराचैर्ललाटेविस्मयन्निव ७ ललाटस्थैस्ततोबाणैर्ब्राह्मणोऽसौव्यशोभत ॥ प्रावृषीवयथासिक्तस्त्रिशृंगः पर्वतोत्तमः ८ ततःशरशतैर्द्रौणिरर्दयामासपांडवम् ॥ नचैनंकंपयामाससमातरिश्वेवपर्वतम् ९ तथैवपांडवोयुद्धेद्रौणिंशरशतैःशितैः ॥ नाकंपयतसंहृष्टोवा र्योघइवपर्वतम् १० तावन्योन्यंशरैर्घोरैश्छादयानौमहारथौ ॥ रथवर्यगतौवीरौशुशुभातेबलोत्कटौ ११ आदित्याविवसंदीप्तौलोकक्षयकरावुभौ ॥ स्वरश्मि भिरिवान्योन्यंतापयंतौशरोत्तमैः १२ ततःप्रतिकृतेयत्नंकुर्वाणौतौमहारणे ॥ कृतप्रतिकृतेयत्तौशरसंघैरभीतवत् १३ व्याघ्राविवचसंग्रामेचेरतुस्तौनरोत्तमौ ॥ शरदंष्ट्रौदुराधर्षौचापवक्त्रौभयंकरौ १४ अभूतांतावदृश्यौचशरजालैःसमंततः ॥ मेघजालैरिवच्छन्नौगगनेचंद्रभास्करौ १५ चकाशेतेमुहूर्तेनततस्तावप्य रिंदमौ ॥ विमुक्तावभ्रजालेनअंगारकबुधाविव १६ अथतत्रैवसंग्रामेवर्तमानेसुदारुणे ॥ अपसव्यंततश्चक्रेद्रौणिस्तत्रवृकोदरम् १७ किरञ्छरशतैरुग्रैर्धाराभि रिवपर्वतम् ॥ नतुतन्ममृषेभीमःशत्रोर्विजयलक्षणम् १८ प्रतिचक्रेततोराजन्पांडवोऽप्यपसव्यतः ॥ मंडलानांविभागेषुगतप्रत्यागतेषुच १९ बभूवतुमुलं युद्धंतयोःपुरुषसिंहयोः ॥ चरित्वाविविधान्मार्गान्मंडलस्थानमेवच २० शरैःपूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ॥ अन्योन्यस्यवधेचैवचक्रतुर्यत्नमुत्तमम् २१ ईषतुर्विरथंचैवकर्तुमन्योन्यमाहवे ॥ ततोद्रौणिर्महास्त्राणिप्रादुश्चक्रेमहारथः २२ तान्यस्त्रैरेवसमरेप्रतिजघ्नेऽथपांडवः ॥ ततोघोरंमहाराजअस्त्रयुद्धमव र्तत २३ ग्रहयुद्धंयथाघोरंप्रजासंहरणेह्यभूत ॥ तेबाणाःसमसज्जंतमुक्तास्ताभ्यांतुभारत २४ द्योतयंतोदिशःसर्वास्तवसैन्यंसमंततः ॥ बाणसंघैर्वृतंघोरमा काशंसमपद्यत २५ उल्कापातावृतंयुद्धंप्रजानांसंक्षयेनृप ॥ बाणाभिघातात्संजज्ञेतत्रभारतपावकः २६ सविस्फुलिंगोदीप्तार्चिर्योऽदहद्वाहिनीद्वयम् ॥ त त्रसिद्धामहाराजसंपतंतोऽब्रुवन्वचः २७ युद्धानामतिसर्वेषांयुद्धमेतदितिप्रभो ॥ सर्वयुद्धानिचैतस्यकलांनार्हंतिषोडशीम् २८ नेदृशंचपुनर्युद्धंभविष्यति कदाचन ॥ अहोज्ञानेनसंपन्नावुभौब्राह्मणक्षत्रियौ २९ अहोशौर्येणसंपन्नावुभौचोग्रपराक्रमौ ॥ अहोभीमबलोभीमएतस्यचकृतास्त्रता ३० अहोवीर्यस्यसा रत्वमहोसौष्ठवमेतयोः ॥ स्थितावेतौहिसमरेकालांतकयमोपमौ ३१ रुद्रौद्वाविवसंभूतौयथाद्वाविवभास्करौ ॥ यमौवापुरुषव्याघ्रौघोररूपावुभौरणे ३२ इ तिवाचःस्मश्रूयंतेसिद्धानांवैमुहुर्मुहुः ॥ सिंहनादश्चसंजज्ञेसमेतानांदिवौकसाम् ३३ अद्भुतंचाप्यचिंत्यंचदृष्ट्वाकर्मतयोरणे ॥ सिद्धचारणसंघानांविस्मयःसम पद्यत ३४ प्रशंसंतितदादेवाःसिद्धाश्चपरमर्षयः ॥ साधुद्रौणेमहाबाहोसाधुभीमेतिचाब्रुवन् ३५ तौशूरौसमरेराजन्परस्परकृतागसौ ॥ परस्परमुदीक्षे तांक्रोधादुद्वृत्यचक्षुषी ३६

न्याभिमुखंपाताःस्तैराहतमिवेतिहुताोपमा २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६

तथैवदशनच्छदौक्रोधात्संदष्टोष्ठौ ३७ । ३८ । ३९ । ४० । ४१ तौबाणौभृशाहताविति हेतोः शराभ्यामग्रभागाभ्यांतयोस्तदीययोरथयोरुपस्थेमुख्यदेशेरथनीडइतियावत् ४२ । ४३
४४ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेपंचदशोऽध्यायः ॥ १५ ॥ ॥ ७ ॥ ॥ यथेति १ । २ । ३ । ४ । ५ । ६ । ७ सरत्नान् रत्नांगुलीयकादियुक्तान् । सरत्नानिति



क्रोधरक्तेक्षणौतौतुक्रोधात्प्रस्फुरिताधरौ ॥ क्रोधात्संदष्टदशनौतथैवदशनच्छदौ ३७ अन्योन्यंछादयंतौस्मशरवृष्ट्यामहारथौ ॥ शरांबुधारौसमरेशस्त्रविद्युत्प्रकाशिनौ ३८ तावन्योन्यंध्वजंविद्धासारथिंचमहारणे ॥ अन्योन्यस्यहयान्विद्धाबिभिदातेपरस्परम् ३९ ततःक्रुद्धौमहाराजबाणौगृह्यमहाहवे ॥ उभौचिक्षिपतुस्तूर्णमन्योन्यस्यवधैषिणौ ४० तौसायकौमहाराजद्योतमानौचमूमुखे ॥ आजघ्नतुःसमासाद्यवज्रवेगौदुरासदौ ४१ तौपरस्परवेगाच्चशराभ्यांचभृशाहतौ ॥ निपेततुर्महावीर्यौरथोपस्थेतयोस्तदा ४२ ततस्तुसारथिर्ज्ञात्वाद्रोणपुत्रमचेतनम् ॥ अपोवाहरणाद्राजन्सर्वसैन्यस्यपश्यतः ४३ तथैवपांडवंराजन्विह्वलंतंमुहुर्मुहुः ॥ अपोवाहरथेनाजौसारथिःशत्रुतापनम् ४४ ॥ इतिश्रीमहाभारतेकर्णपर्वणिअश्वत्थामभीमसेनयोर्युद्धेपंचदशोऽध्यायः ॥ १५ ॥

॥ धृतराष्ट्रउवाच ॥ यथासंशप्तकैःसार्धमर्जुनस्याभवद्रणः ॥ अन्येषांचमहीपानांपांडवैस्तद्ब्रवीहिमे १ अश्वत्थाम्नस्तुयद्युद्धमर्जुनस्यचसंजय ॥ अन्येषांचमहीपानांपांडवैस्तद्ब्रवीहिमे २ संजयउवाच ॥ शृणुराजन्यथावृत्तंसंग्रामंब्रुवतोमम ॥ वीराणांशत्रुभिःसार्धंदेहपाप्मासुनाशनम् ३ पार्थःसंशप्तकबलंप्रविश्यार्णवसन्निभम् ॥ व्यक्षोभयदमित्रघ्नोमहावातइवार्णवम् ४ शिरांस्युन्मथ्यवीराणांशितैर्भल्लैर्धनंजयः ॥ पूर्णचंद्राभवक्त्राणिस्वक्षिभ्रूदशनानिच ५ संतस्तारक्षितिंक्षिप्रंविनालैर्नलिनैरिव ॥ सुवृत्तानायतान्पुष्टान्चंदनागुरुभूषितान् ६ सायुधान्सतलत्रांश्चपंचास्योरगसन्निभान् ॥ बाहून्क्षुरैरमित्राणांचिच्छेदसमरेऽर्जुनः ७ धुर्यान्धुर्यैतरान्सूतान्ध्वजांश्चापानिसायकान् ॥ पाणीन्सरत्नानसकृद्भल्लैश्चिच्छेदपांडवः ८ रथान्द्विपान्हयांश्चैवसारोहानर्जुनोयुधि ॥ शरैरनेकसाहस्रैर्निन्येराजन्यमक्षयम् ९ तंप्रवीराःसुसंरब्धानर्दमानाइवर्षभाः ॥ वासितार्थमिवक्रुद्धमभिद्रुत्यमदोत्कटाः १० निघ्नंतमभिजघ्नुस्तंशरैःशृंगैरिवर्षभाः ॥ तस्यतेषांचतद्युद्धमभवल्लोमहर्षणम् ११ त्रैलोक्यविजयेयद्वद्दैत्यानांसहवज्रिणा ॥ अस्त्रैरस्त्राणिसंवार्यद्विषतांसर्वतोऽर्जुनः १२ इषुभिर्बहुभिस्तूर्णंविद्ध्वाप्राणान्जहारसः ॥ छिन्नत्रिवेणुचक्राक्षान्हतयोधान्ससारथीन् १३ विध्वस्तायुधतूणीरान्समुन्मथितकेतनान् ॥ संछिन्नयोक्त्ररश्मीकान्विवरूथान्विकूबरान् १४ विस्रस्तबंधुरयुगान्विस्रस्ताक्षप्रमंडलान् ॥ रथान्विशकलीकुर्वन्महाभ्राणिवमारुतः १५ विस्मापयन्प्रेक्षणीयंद्विषतांभयवर्धनम् ॥ महारथसहस्रस्यसमंकर्माकरोज्जयः १६

पाठे रत्निः कूर्परादाकनिष्ठांतःकरस्तत्सहितान्पाणीन् ८ । ९ सुसंरब्धाइत्यत्रसुसंमर्दाइतिपाठे शोभनःस्वर्गदःसंमर्दोयेषांतथाभूताः वासितापुष्पवतीगौस्तदर्थम् १० । ११ । १२
छिन्नेति त्रिवेणुः उभयतःकाष्ठद्वयसहितोधूर्दंडः अक्षश्चक्राधारदंडः १३ योक्त्राणिबंधनरज्जवः रश्मयःप्रग्रहाः विवरूथान्रथगुप्तिरहितान् कूबरस्त्रिवेणोरग्रभागः १४ बंधुरंरथतल्पः
युगंधूरग्रकाष्ठं अक्षप्रमंडलंरथनीडाक्षयोःसंधानकाष्ठजातं विशकलीकुर्वन्विशेषेणशकलीकुर्वन् १५ । १६

१७ चंद्रादीनांकांत्यादीन्यथासंख्यंबिभ्रतुः १८ । १९ । २० अमित्रभाः कराकारमग्रफलकंयेषांतान् अमित्रघ्नकरान् २१ अर्हंपूजयितुंयोग्यम् २२ । अनंतरं २३ । २४ प्रथमम् २५ । २६

सिद्धदेवर्षिसंघाश्चचारणाश्चापितुष्टुवुः ॥ देवदुंदुभयोनेदुःपुष्पवर्षाणिचापतन् १७ केशवार्जुनयोर्मूर्ध्निप्राहवाक्चाशरीरिणी ॥ चंद्राग्न्यनिलसूर्याणांकांतिदीप्तिबलद्युतीः १८ यौसदाबिभ्रतुर्वीराविमौतौकेशवार्जुनौ ॥ ब्रह्मेशानाविवाजय्यौवीरावेकरथेस्थितौ १९ सर्वभूतवरौवीरौनरनारायणाविमौ ॥ इत्येतन्महदाश्चर्यंदृष्ट्वाश्रुत्वाचभारत २० अश्वत्थामासुसंयत्तःकृष्णावभ्यद्रवद्रणे ॥ अथपांडवमस्यंतममित्रघ्नकराञ्छरान् २१ सेषुणापाणिनाऽऽहूयप्रहसन्द्रौणिरब्रवीत ॥ यदिमांमन्यसेवीरप्राप्तमर्हमिहातिथिम् २२ ततःसर्वात्मनात्वद्ययुद्धातिथ्यंप्रयच्छमे ॥ एवमाचार्यपुत्रेणसमाहूतोयुयुत्सया २३ बहुमेनेऽर्जुनोऽऽत्मानमितिचाहजनार्दनम् ॥ संशप्तकाश्चमेवध्याद्रौणिराह्वयतेचमाम् २४ यदत्रानंतरंप्राप्तंशंसमेतद्धिमाधव ॥ आतिथ्यकर्माभ्युत्थायदीयतांयदिमन्यसे २५ एवमुक्तोऽवहत्पार्थंकृष्णोद्रोणात्मजांतिके ॥ जैत्रेणविधिनाऽऽहूतंवायुरिंद्रमिवाध्वरे २६ तमामंत्र्यैकमनसंकेशवोद्रौणिमब्रवीत ॥ अश्वत्थामन्स्थिरोभूत्वाप्रहराशुसहस्वच २७ निर्वेष्टुंभर्तृपिंडंहिकालोऽयमुपजीविनाम् ॥ सूक्ष्मोविवादोविप्राणांस्थूलौक्षात्रौजयाजयौ २८ यामभ्यर्थयसेमोहाद्दिव्यांपार्थस्यसत्क्रियाम् ॥ तामाप्तुमिच्छन्युध्यस्वास्थिरोभूत्वाऽद्यपांडवम् २९ इत्युक्तोवासुदेवेनतथेत्युक्त्वाद्विजोत्तमः ॥ विव्याधकेशवंषष्ट्यानाराचैरर्जुनंत्रिभिः ३० तस्यार्जुनःसुसंक्रुद्धस्त्रिभिर्बाणैःशरासनम् ॥ चिच्छेदचान्यदादत्तद्रौणिर्घोरतरंधनुः ३१ सज्यंकृत्वानिमेषाद्धविव्याधार्जुनकेशवौ ॥ त्रिभिःशतैर्वासुदेवंसहस्रेणचपांडवम् ३२ ततःशरसहस्राणिप्रयुतान्यर्बुदानिच ॥ ससृजेद्रौणिरायस्तःसंस्तभ्यचरणेऽर्जुनम् ३३ इषुधेर्धनुषश्चैवज्यायाश्चैवाथमारिष ॥ बाह्वोःकराभ्यामुरसोवदनघ्राणनेत्रतः ३४ कर्णाभ्यांशिरसोंगेभ्योलोमवर्मभ्यएवच ॥ रथध्वजेभ्यश्चशरानिष्पेतुर्ब्रह्मवादिनः ३५ शरजालेनमहताविद्ध्वामाधवपांडवौ ॥ ननादमुदितोद्रौणिर्महामेघौघनिःस्वनम् ३६ तस्यतंनिनदंश्रुत्वापांडवोऽच्युतमब्रवीत ॥ पश्यमाधवदौरात्म्यंगुरुपुत्रस्यमांप्रति ३७ वधंप्राप्तौमन्यतेनौप्रावेश्यशरवेश्मनि ॥ एषोऽस्मिहन्मिसंकल्पंशिक्षयाचबलेनच ३८ अश्वत्थाम्नःशरानस्तांश्छित्त्वैकैकंत्रिधात्रिधा ॥ व्यधमद्भरतश्रेष्ठोनीहारमिवमारुतः ३९ ततःसंशप्तकान्भूयःसाश्वसूतरथद्विपान् ॥ ध्वजपत्तिगणानुग्रैर्बाणैर्विव्याधपांडवः ४० येयेददृशिरेतत्रयद्यद्रूपास्तदाजनाः ॥ तेतेतत्रशरैर्व्याप्तंमेनिरेऽऽत्मानमात्मना ४१ तेगांडीवप्रमुक्तास्तुनानारूपाःपतत्रिणः ॥ क्रोशेसाग्रेस्थितान्घ्नंतिद्विपांश्चपुरुषान्रणे ४२ भल्लैश्छिन्नाःकराःपेतुःकरिणांमदवर्षिणाम् ॥ यथावनेपरशुभिर्निकृत्ताःसुमहाद्रुमाः ४३ पश्चात्तुशैलवत्पेतुस्तेगजाःसहसादिभिः ॥ वज्रिवज्रप्रमथितायथैवाद्रिचयास्तथा ४४

२७ । २८ । २९ । ३० । ३१ । ३२ आयस्तोयत्नवान् ३३ । ३४ इषुधिप्रभृतिभ्यःशराःपेतुर्लोमभ्योऽपिवर्मभ्योपिनिष्पेतुस्तत्रहेतुर्ब्रह्मवादिनःयोगबलवत्तइत्यर्थः ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४

४५ । ४६ । ४७ महत्तरशैलेंशिलासमूहोयस्मिन्तंमहाशैलंपर्वतमिव ४८ । ४९ पांडवेबाणीत्यत्र कांडकोशानितिपाठे बाणानांकोशभूतान्निषंगानभ्यवेदयत् ५० । ५१ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेषोडशोऽध्यायः ॥ १६ ॥ ॥ ७ ॥ ॥ ततइति नक्षत्रमभितःनक्षत्रंलक्षीकृत्य १ विमार्गस्थौवक्रातिचारगौ २ । ३ कृष्णौकृष्णार्जुनौ आसतुःदीपयांचक्रतुः ४ सर्वतोधारं

गंधर्वनगराकारान्रथांश्चैवसुकल्पितान् ॥ विनीतैर्जवनैर्युक्तानास्थितान्युद्धदुर्मदैः ४५ शरैर्विंशकलीकुर्वन्नमित्रानभ्यवीवृषत् ॥ स्वलंकृतानश्वसादीन्पत्तींश्चाहनद्धनंजयः ४६ धनंजययुगांतार्कःसंशप्तकमहार्णवम् ॥ व्यशोषयत्तदुःशोषंतीक्ष्णैःशरगभस्तिभिः ४७ पुनर्द्रौणिंमहाशैलंनाराचैर्वज्रसन्निभैः ॥ निर्बिभेदमहावेगैस्त्वरन्वज्रीवपर्वतम् ४८ तमाचार्यसुतःक्रुद्धःसाश्वयंतारमाशुगैः ॥ युयुत्सुरागमद्योद्धुंपार्थस्थानच्छिनच्छरान् ४९ ततःपरमसंक्रुद्धःपांडवेस्त्राण्यवासृजत् ॥ अश्वत्थामाऽभिरूपायगृहानतिथयेयथा ५० अथसंशप्तकांस्त्यक्त्वापांडवोद्रौणिमभ्ययात् ॥ अपांक्तेयानिवत्यक्त्वादातापांक्तेयमर्थिनम् ५१ ॥ इति श्रीमहाभारतेकर्णपर्वणिअश्वत्थामार्जुनसंवादेषोडशोऽध्यायः ॥ १६ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ ततःसमभवद्युद्धंशुक्रांगिरसवर्चसोः ॥ नक्षत्रमभितोव्योम्निशुक्रांगिरसयोरिव १ संतापयंतावन्योन्यंदीप्तैःशरगभस्तिभिः ॥ लोकत्रासकरावास्तांविमार्गस्थौग्रहाविव २ ततोऽविध्यद्भ्रुवोर्मध्येनाराचेनार्जुनोभृशम् ॥ सतेनविबभौद्रौणिरूर्ध्वरश्मिर्यथारविः ३ अथकृष्णौशरशतैरश्वत्थाम्नाऽर्दितौभृशम् ॥ स्वरश्मिजालविकचौयुगांतार्काविवासतुः ४ ततोऽर्जुनःसर्वतोधारमस्त्रमवासृजद्वासुदेवेऽभिभूते ॥ द्रोणायनिंचाभ्यहनत्पृषत्कैर्वज्राग्निवैवस्वतदंडकल्पैः ५ सकेशवंचार्जुनंचातितेजाविव्याधमर्मस्वतिरौद्रकर्मा ॥ बाणैःसुयुक्तैरतितीव्रवेगैर्यैराहतोमृत्युरपिव्यथेत ६ द्रौणेरिषूनर्जुनःसन्निवार्यव्यायच्छतस्ताद्विगुणैःसपुंखैः ॥ तंसाश्वसूतध्वजमेकवीरमावृत्यसंशप्तकसैन्यमार्च्छत् ७ धनूंषिबाणानिषुधीर्धनुर्ज्याःपाणीन्भुजान्पाणिगतंचशस्त्रम् ॥ छत्राणिकेतूंस्तुरगानरथेषांवस्त्राणिमाल्यान्यथभूषणानि ८ चर्माणिवर्माणिमनोरमाणिप्रियाणिसर्वाणिशिरांसिचैव ॥ चिच्छेदपार्थोद्विषतांसुयुक्तैर्बाणैःस्थितानामपराङ्मुखानाम् ९ सुकल्पिताःस्यंदनवाजिनागाःसमास्थितायत्नकृतैर्नृवीरैः ॥ पार्थेरितैर्बाणशतैर्निरस्तास्तैरेवसार्धंनृवरानिपेतुः १० पद्मार्कपूर्णेंदुनिभाननानिकिरीटमाल्याभरणोज्ज्वलानि ॥ भल्लार्धचंद्रक्षुरकर्तितानिप्रपेतुरुर्व्यांनृशिरांस्यजस्रम् ११ अथद्विपैर्देवरिपुद्विपाभैर्देवारिदर्पापहमत्युदग्रम् ॥ कलिंगवंगांगनिषादवीराजिघांसवःपांडवमभ्यधावन् १२ तेषांद्विपानांनिचकर्तपार्थोवर्माणिचर्माणिकरान्नियंतॄन् ॥ ध्वजान्पताकाश्चततःप्रपेतुर्वज्राहतानीवगिरेःशिरांसि १३ तेषुप्रभग्नेषुगुरोस्तनूजंबाणैःकिरीटीनवसूर्यवर्णैः ॥ प्रच्छादयामासमहाभ्रजालैर्वायुःसमुद्यंतमिवांशुमंतम् १४ ततोऽर्जुनेषूनिषुभिर्निरस्यद्रौणिःशितैरर्जुनवासुदेवौ ॥ प्रच्छादयित्वादिविचंद्रसूर्यौननादसोंऽभोदइवातपांते १५

सर्वतोऽस्त्रधारावर्षकं वज्रकल्पैःअमोघैः अग्निकल्पैःदाहकैः वैवस्वतदंडकल्पैःप्राणहरैः ५ । ६ व्यायच्छतोयतमानस्य आर्च्छत्गतवान् ७ । ८ । ९ सुकल्पिताःसुसन्नद्धाः यत्नकृतैःकृतयत्नैः तैरेवबाणैरेव देवरिपुश्चासौद्विपश्चेतिगजासुरतुल्यैरित्यर्थः १२ करान्शुंडाः १३ । १४ । १५

तंअश्वत्थामानं तान्तदन्यान् तैःकृतंबाणांधकारंकृत्वाछित्वा कृतीच्छेदने १५ संस्यूताःअन्योन्यंसंघट्टितः १७।१८ समासत्रिंधेनसमग्रधनुर्वेदविदा १९ अक्रियावानप्रतिकाररहितः २०। २१
अविकर्णैःअविकर्णतुल्याग्रैः २२ अंगिरसांअंगिरोगोत्राणांमध्ये २३। २४। २५ ओघनादिनाजलौघवन्नादवता २६ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेसप्तदशोऽध्यायः ॥ १७ ॥

तमर्जुनस्तांश्चपुनस्त्वदीयानभ्यार्दितस्तैरभिमृत्यशस्त्रैः॥बाणांधकारंसहसैवकृत्वाविव्याधसर्वानिषुभिःसुपुंखैः १६ नाप्याददत्संदधन्नैवमुंचन्बाणान्रयेऽदृश्यतस
व्यसाची ॥ रथांश्चनागांस्तुरगान्पदातीन्संस्यूतदेहान्ददृशुर्हतांश्च १७ संधायनाराचवरान्दशाशुद्रौणिस्त्वरन्नेकमिवोत्ससर्ज ॥ तेषांचपंचार्जुनमभ्यविध्य
न्पंचाच्युतंनिर्बिभिदुःसुपुंखाः १८ तैराहतौसर्वमनुष्यमुख्यावसृक्स्रवंतौधनदेंद्रकल्पौ ॥ समासविद्येनतथाभिभूतौहतौरणेतावितिमेनिरेऽन्ये १९ अथार्जुनं
प्राहदशार्हनाथःप्रमाद्यसेकिंजहियोधमेतम् ॥ कुर्याद्धिदोषंसमुपेक्षितोऽयंकष्टोभवेद्व्याधिरिवाक्रियावान् २० तथेतिचोक्त्वाऽच्युतमप्रमादीद्रौणिंप्रयत्नादिषुभिस्त
तक्ष ॥ भुजौवरौचंदनसारदिग्धौवक्षःशिरोऽथाप्रतिमौतथोरू २१ गांडीवमुक्तैःकुपितोविकर्णैर्द्रौणिंशरैःसंयतिनिर्बिभेद ॥ छित्वातुरश्मींस्तुरगानविध्य
त्तेतंरणाद्दूहुरतीवदूरम् २२ सतैर्हतोवातजवैस्तुरंगैर्द्रौणिर्दृढंपार्थशराभिभूतः ॥ इयेषनावृत्यपुनस्तुयोद्धुंपार्थेनसार्द्धंमतिमान्विमृश्य ॥ जानञ्जयंनियतंवृ
ष्णिवीरेधनंजयेचांगिरसांवरिष्ठः २३ नियम्यसहयान्द्रौणिःसमाश्वास्यचमारिष ॥ रथाश्वनरसंबाधंकर्णस्यप्राविशद्बलम् २४ प्रतीपकारिणिरणादश्वत्थाम्नि
हृतेहयैः ॥ मंत्रौषधिक्रियायोगैर्व्याधौदेहादिवाहृते २५ संशप्तकानभिमुखौप्रयातौकेशवार्जुनौ ॥ वातोद्धूतपताकेनस्यंदनेनौघनादिना २६ ॥ इतिश्रीमहा
भारतेकर्णपर्वणिअश्वत्थामपराजयेसप्तदशोऽध्यायः ॥ १७ ॥ ॥ संजयउवाच ॥ अथोत्तरेणपांडूनांसेनायांध्वनिरुत्थितः ॥ रथनागाश्वपत्तीनांदंडधा
रेणवध्यताम् १ निवर्तयित्वातुरथंकेशवोऽर्जुनमब्रवीत् ॥ वाहयन्नेवतुरगान्गरुडानिलरंहसः २ मागधोऽप्यतिविक्रांतोद्विरदेनप्रमाथिना ॥ भगदत्तादनवरः
शिक्षयाचबलेनच ३ एनंहत्वानिहंताऽसिपुनःसंशप्तकानिति ॥ वाक्यांतेप्रापयत्पार्थंदंडधारांतिकंप्रति ४ समागधानांप्रवरोंकुशग्रहेग्रहेप्रसह्योविकचोयथा
ग्रहः ॥ सपत्नसेनांप्रममाथदारुणोमहींसमग्रांविकचोयथाग्रहः ५ सुकल्पितंदानवनागसन्निभंमहाभ्रनिर्ह्रादममित्रमर्दनम् ॥ रथाश्वमातंगगणान्सहस्रशःसमा
स्थितोहंतिशरैर्नरानपि ६ रथानधिष्ठायसवाजिसारथीन्नरांश्चपादैर्द्विरदोव्यपोथयत् ॥ द्विपांश्चपद्भ्यांमृदेकरेणद्विपोतमोहंतिचकालचक्रवत् ७ नरांस्तुका
र्ष्णायसवर्मभूषणान्निपात्यसाश्वान्पिपात्तिभिःसह ॥ व्यपोथयद्दंतिवरेणशुष्मिणासशब्दवत्स्थूलनलंयथातथा ८

अथेति उत्तरेणउत्तरतः वध्यतांवध्यमानानाम् १। २ अनवरःअहीनः ३। ४ अंकुशग्रहेअंकुशधारणेहस्तियुद्धेइत्यर्थः ग्रहेआदित्यादिग्रहसमूहेयुद्धपरिग्रहेचअप्रसह्यःविकचःकचोपल
क्षितशिरोरहितःकेतुरूपीग्रहइवाविकचोदिस्त्तीर्णोग्रहोधूमकेतुरूपीउत्पातग्रहः ५ दानवनामसन्निभंगजासुरोपमं गजमित्यर्थात्समास्थितःसहंतीत्यन्वयः ६ रथान्पादैरधिष्ठायाक्रम्यममृदेमर्द
यामासेत्युत्तरार्द्धस्यानुकर्षः। एवंकरेणशुंडयानरादीनपेथयदिति। एवंद्विपोहंतिरथादीनित्यर्थात् ७ शुष्मिणाबलवता स्थूलंशुषिरंनलंतृणविशेषम् ८

संकुलेरणदेशेइतिसामर्थ्यात्ज्ञेयं ९।१० सगुणेषुकार्मुकंमौर्वीबाणसहितंधनुः निर्यंतृन्नियंतारं ११ 'घनाघनोघातुकमत्तदंतिनोः'इतिविश्वः १२ सहैवयुगपत् १३। १४ चरन्गच्छन्भ्रमन्भ्रांतिंप्राप्नुवन्नतएवप्रस्खलितांतरः मध्येस्खलन्नित्यर्थः सनियंतृकः महामात्रसहितःपपात तथापातयोग्यंयथास्यात्तथारुग्णःपीडितोयथेंद्रभूवःपपातेतिपृथगन्वयः १५ इंद्रावरजंविष्णुं

अथाऽर्जुनोज्यातलनेमिनिःस्वनैर्मृदंगभेरीबहुशंखनादिते ॥ रथाश्वमातंगसहस्रसंकुलेरथोत्तमेनाभ्यपतद्द्विपोत्तमम् ९ ततोऽर्जुनंद्वादशभिःशरोत्तमैर्जनार्दनंषोडशभिःसमार्पयन् ॥ सदंडधारस्तुरगांस्त्रिभिस्त्रिभिस्ततोननादप्रजहासचासकृत् १० ततोऽस्यपार्थःसगुणेषुकार्मुकंचकर्तभल्लैर्ध्वजमप्यलंकृतम् ॥ पुनर्नियंतॄन्सहपादगोप्तृंस्ततःसचुक्रोधगिरिव्रजेश्वरः ११ ततोऽर्जुनंभिन्नकटेनदंतिनाघनाघनेनानिलतुल्यवर्चसा ॥ अतीवचुक्षोभयिषुर्जनार्दनंधनंजयंचाभिजघानतोमरैः १२ अथास्यबाहूद्विपहस्तसन्निभौशिरश्चपूर्णेंदुनिभाननंत्रिभिः ॥ क्षुरैःप्रचिच्छेदसहैवपांडवस्ततोद्विपंबाणशतैःसमार्पयत् १३ सपार्थबाणैस्तपनीयभूषणैःसमाचितःकांचनवर्मभृद्द्विपः ॥ तथाचकाशेनिशिपर्वतोयथादावाग्निनाप्रज्वलितौषधिद्रुमः १४ सवेदनार्तोऽम्बुदनिःस्वनोनदंश्चरन्भ्रमन्प्रस्खलितांतरोऽद्रवत् ॥ पपातरुग्णःसनियंतृकस्तथायथागिरिर्वज्रविदारितस्तथा १५ हिमावदातेनसुवर्णमालिनाहिमाद्रिकूटप्रतिमेनदंतिना ॥ हतेरणेभ्रातरिदंडआव्रजज्जिघांसुरिंद्रावरजंधनंजयम् १६ सतोमरैरर्ककरप्रभैस्त्रिभिर्जनार्दनंपंचभिरर्जुनंशितैः ॥ समर्पयित्वाविननादनर्दयंस्ततोऽस्यबाहूनिचकर्तपांडवः १७ क्षुरप्रकृत्तौसुभृशंसतोमरौशुभांगदौचंदनरूषितौभुजौ ॥ गजात्पतंतौयुगपद्विरेजतुर्यथाद्रिशृंगात्पतितौमहोरगौ १८ तथाऽर्धचंद्रेणहतंकिरीटिनापपातदंडस्यशिरःक्षितिंद्विपात् ॥ सशोणितार्द्रोनिपतन्विरेजेदिवाकरोस्तादिवपश्चिमांदिशम् १९ अथद्विपंश्वेतवराभ्रसन्निभंदिवाकरांशुप्रतिमैःशरोत्तमैः ॥ बिभेदपार्थःसपातनादयन्हिमाद्रिकूटंकुलिशाहतंयथा २० ततोऽपरेतत्प्रतिमागजोत्तमाजिगीषवःसंयतिसव्यसाचिना ॥ तथाकृतास्तेचयथैवतौद्विपौततःप्रभग्नंसुमहाद्रिपोर्बलम् २१ गजारथाश्वाःपुरुषाश्चसंघशःपरस्परघ्नाःपरिपेतुराहवे ॥ परस्परंप्रस्खलिताःसमाहिताभृशंनिपेतुर्बहुभाषिणोहताः २२ अथार्जुनंस्वेपरिवार्यसैनिकाःपुरंदरंदेवगणाइवाब्रुवन् ॥ अभैष्मयस्मान्मरणादिवप्रजाःस्ववीरदिष्ट्यानिहतस्त्वयारिपुः २३ नचेदरक्षिष्यइमंजनंभयाद्द्विषद्भिरेवंबलिभिःप्रपीडितम् ॥ तथाभविष्यद्द्विषतांप्रमोदनंयथाहतेष्वेष्विहनोऽरिसूदन २४ इतीवभूयश्चसुहृद्भिरीडितानिशम्यवाचःसुमनास्ततोऽर्जुनः ॥ यथानुरूपंप्रतिपूज्यतंजनंजगामसंशप्तकसंघहापुनः २५ ॥ इतिश्रीमहाभारतेकर्णपर्वणिदंडवधेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ संजयउवाच ॥ प्रत्यागत्यपुनर्जिष्णुर्जघ्नेसंशप्तकान्बहून् ॥ वक्रातिवक्रगमनादंगारकइवग्रहः १ पार्थबाणहताराजन्नराश्वरथकुंजराः ॥ विचेलुर्बभ्रमुर्नेशुःपेतुर्मम्लुश्चभारत २

कृष्णमित्यर्थः धनंजयंचजिघांसुर्दंडआव्रजत् दंतिनासहेतिशेषः १६ नर्दयन्शब्दंकारयन् १७। १८ अस्तात्अस्ताचलात् १९। २० गजोत्तमाः महागजारूढाः तौदंडधारतद्भ्रात्रोर्द्विपौसाध्यक्षौकृत्तौछिन्नौ तथातेऽपिकृत्ताश्छिन्नाः २१। २२। २३। २४। २५ ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपे अष्टादशोऽध्यायः ॥ १८ ॥ प्रत्येति १। २

धुर्यान्श्रेष्ठान्धुर्यगतान्वाहान्वाहादीन् अमित्रवीराणांचिच्छेदेतिद्वयोः संबंधः ३ । ४ वासितार्थेस्त्रीनिमित्तं । 'वासिताकारिणीनार्योर्वासितंसुरभीकृते' इतिविश्वः । यथास्वयंवरस्थां स्त्रियंप्राप्तुंवृषभाश्चअवृषभाश्चतेषांयूथं वृषभाद्वृषभंश्रेष्ठाश्रेष्ठयोधकुलमहंपूर्विकयानिपततिएवंयुद्धेऽर्जुनंप्राप्तुंराजानइत्यर्थः । वासितंअतिश्रेष्ठंराज्यादिकंवावस्तु ५ । ६ तस्यउग्रायुधसुतस्य

धुर्यान्धुर्यगतान्सूतान्ध्वजांश्चापानिसायकान् ॥ पाणीन्पाणिगतंशस्त्रंबाहूनपिशिरांसिच ३ भल्लैःक्षुरैरर्धचंद्रैर्वत्सदंतैश्चपांडवः ॥ चिच्छेदामित्रवीराणांसम रेप्रतियुध्यताम् ४ वासितार्थेयुयुत्संतोवृषभावृषभंयथा ॥ निपतंत्यर्जुनंशूराःशतशोऽथसहस्रशः ५ तेषांतस्यचतद्युद्धमभवल्लोमहर्षणम् ॥ त्रैलोक्यविजये याहग्दैत्यानांसहवज्रिणा ६ तमविध्यात्त्रिभिर्बाणैर्दंदशूकैरिवाहिभिः ॥ उग्रायुधसुतस्तस्यशिरःकायादपाहरत् ७ तेऽर्जुनंसर्वतःक्रुद्धानानाशस्त्रैरवीवृषन् ॥ मरु द्भिःप्रेरितामेघाहिमवंतमिवोष्णगे ८ अस्त्रैरस्त्राणिसंवार्यद्विषतांसर्वतोऽर्जुनः ॥ सम्यगस्तैःशरैःसर्वानाहितानहनद्बहून् ९ छिन्नत्रिवेणुसंघातान्हताश्वान्पार्ष्णि सारथीन् ॥ विस्रस्तहस्ततूणीरान्विचक्ररथकेतनान् १० संछिन्नरश्मियोक्त्राक्षान्व्यनुकर्षयुगान्रथान् ॥ विध्वस्तसर्वसन्नाहान्बाणैश्चक्रेऽर्जुनस्तदा ११ ते रथास्तत्रविध्वस्ताःपरार्ध्याभांत्यनेकशः ॥ धनिनामिववेश्मानिहतान्यग्न्यनिलांबुभिः १२ द्विपाःसंभिन्नमर्माणोवज्राशनिसमैःशरैः ॥ पेतुर्गिर्यग्रवेश्मानि वज्रपाताग्निभिर्यथा १३ सारोहास्तुरगाःपेतुर्बहवोऽर्जुनताडिताः ॥ निर्जिह्वांत्राःक्षितौक्षीणारुधिरार्द्राःसुदुर्दृशः १४ नराश्वनागानाराचैःसंस्यूताःसव्यसा चिना ॥ बभ्रमुश्चस्खलुःपेतुर्नेदुर्मम्लुश्चमारिष १५ अनेकैश्चशिलाधौतैर्वज्राशनिविषोपमैः ॥ शरैर्निजघ्निवान्पार्थोमहेंद्रइवदानवान् १६ महार्हवर्माभरणा नानारूपांबरायुधाः ॥ सरथाःसध्वजावीराहताःपार्थेनशेरते १७ विजिताःपुण्यकर्माणोविशिष्टाभिजनश्रुताः ॥ गताःशरीरैर्वसुधामूर्जितैःकर्मभिर्दिवम् १८ अथार्जुनंरथवरंत्वदीयाःसमभिद्रवन् ॥ नानाजनपदाध्यक्षाःसगणाजातमन्यवः १९ उह्यमानारथाश्वेभैःपत्तयश्चजिघांसवः ॥ समभ्यधावन्नस्यंतोविविधं क्षिप्रमायुधम् २० तदायुधमहावर्षमुक्तंयोधमहांबुदैः ॥ व्यधमन्निशितैर्बाणैःक्षिप्रमर्जुनमारुतः २१ साश्वपत्तिद्विपरथंमहाशस्त्रौघसंप्लवम् ॥ सहसासंतितीर्षं तंपार्थंशस्त्रास्त्रसेतुना २२ अथाब्रवीद्वासुदेवःपार्थंकिंक्रीडसेऽनघ ॥ संशप्तकान्प्रमथ्यैनांस्ततःकर्णवधेत्वर २३ तथेत्युक्त्वाऽर्जुनःकृष्णंशिष्टान्संशप्तकांस्तदा ॥ आक्षिप्यशस्त्रेणबलाद्दैत्यानिंद्रइवावधीत् २४ आददत्संदधन्नेषून्दृष्टःकैश्चिद्रणेऽर्जुनः ॥ विमुंचन्वाशरान्शीघ्रंदृश्यतेऽवहितैरपि २५ आश्चर्यमितिगोविंदःस ममन्यतभारत ॥ हंसांशुगौरास्तेसेनांहंसाःसरइवाविशन् २६ ततःसंग्राममभूमिंचवर्तमानेजनक्षये ॥ अवेक्षमाणोगोविंदःसव्यसाचिनमब्रवीत् २७ एषपार्थमहा रौद्रोवर्ततेभरतक्षयः ॥ पृथिव्यांपार्थिवानांवैदुर्योधनकृतेमहान् २८

अपाहरदर्जुनइतिशेषः ७ उष्णगेग्रीष्मेगतेसतिप्रावृषीत्यर्थः । उष्णोग्रीष्मोगतोऽतीतोयत्रसउष्णगःकालविशेषइतिविग्रहः ८ अस्तैःक्षिप्तैः ९ । १० अनुकर्षःरथाधस्थंदारु ११ । १२ १३ निर्जिह्वांत्राःनिर्गताजिह्वाःअंत्राणिचयेषांते १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८

॥ १५ ॥

पश्यभारतचापानिरुक्मपृष्ठानिधन्विनाम् ॥ महतांचापविद्धानिकलापानिषुधींस्तथा २९ जातरूपमयैःपुंखैःशरांश्चनतपर्वणः ॥ तैलधौतांश्चनाराचान्विमुक्तानिवपन्नगान् ३० आकीर्णांस्तोमरांश्चापिविचित्रान्हेमभूषितान् ॥ चर्माणिचापविद्धानिरुक्मपृष्ठानिभारत ३१ सुवर्णविकृतान्प्रासान्शक्तीःकनकभूषिताः ॥ जांबूनदमयैःपट्टैर्बद्धाश्चविपुलागदाः ३२ जातरूपमयीश्चर्ष्टीःपट्टिशान्हेमभूषितान् ॥ दंडैःकनकचित्रैश्चविप्रविद्धान्परश्वधान् ३३ परिघान्भिंदिपालांश्चभुशुंडीःकुणपानपि ॥ अयस्कुंतांश्चपतितान्मुसलानिगुरूणिच ३४ नानाविधानिशस्त्राणिप्रगृह्यजयगृद्धिनः ॥ जीवंतइवदृश्यंतेगतसत्वास्तरस्विनः ३५ गदाविमथितैर्गात्रैर्मुसलैर्भिन्नमस्तकान् ॥ गजवाजिरथैःक्षुण्णान्पश्ययोधान्सहस्रशः ३६ मनुष्यगजवाजीनांशरशक्त्यृष्टितोमरैः ॥ निस्त्रिंशैःपट्टिशैःप्रासैर्नखरैर्लगुडैरपि ३७ शरीरैर्बहुधाछिन्नैःशोणितौघपरिप्लुतैः ॥ गतासुभिरमित्रघ्नसंवृतारणभूमयः ३८ बाहुभिश्चंदनादिग्धैःसांगदैःशुभभूषणैः ॥ सतलत्रैःसकेयूरैर्भातिभारतमेदिनी ३९ सांगुलित्रैर्भुजाग्रैश्चविप्रविद्धैरलंकृतैः ॥ हस्तिहस्तोपमैश्छिन्नैरूरुभिश्चतरस्विनाम् ४० बद्धचूडामणिवरैःशिरोभिश्चसकुंडलैः ॥ रथांश्चबहुधाभग्नान्हेमकिंकिणिनःशुभान् ४१ अश्वांश्चबहुधापश्यशोणितेनपरिप्लुतान् ॥ अनुकर्षानुपासंगान्पताकाविविधान्ध्वजान् ४२ योधानांचमहाशंखान्पांडुरांश्चप्रकीर्णकान् ॥ निरस्तजिह्वान्मातंगान्शयानान्पर्वतोपमान् ४३ वैजयंतीर्विचित्राश्चहतांश्चगजयोधिनः ॥ वारणानांपरिस्तोमान्संयुक्तानेककंबलान् ४४ विपाटितविचित्राश्चरूपचित्राःकुथास्तथा ॥ भिन्नाश्चबहुधाघंटाःपतद्भिश्चूर्णितागजैः ४५ वैदूर्यमणिदंडांश्चपतितांश्चांकुशान्भुवि ॥ अश्वानांचयुगापीडान्रत्नचित्रानुरश्छदान् ४६ विद्धाःसादिध्वजाग्रेषुसुवर्णविकृताःकुथाः ॥ विचित्रान्मणिचित्रांश्चजातरूपपरिष्कृतान् ४७ अश्वास्तरपरिस्तोमान्रांकवान्पतितान्भुवि ॥ चूडामणीन्नरेंद्राणांविचित्राःकांचनस्रजः ४८ छत्राणिचापविद्धानिचामरव्यजनानिच ॥ चंद्रनक्षत्रभासैश्चवदनैश्चारुकुंडलैः ४९ क्लृप्तश्मश्रुभिराकीर्णांपूर्णचंद्रनिभैर्महीम् ॥ कुमुदोत्पलपद्मानांखंडैःफुल्लंयथासरः ५० तथामहीभृतांवक्त्रैःकुमुदोत्पलसन्निभैः ॥ तारागणाविचित्रस्यनिर्मलेंदुद्युतित्विषः ५१ पश्येमांनभसस्तुल्यांशरन्नक्षत्रमालिनीम् ॥ एतत्तवैवानुरूपंकर्मार्जुनमहाहवे ५२ दिविवादेवराजस्यत्वयायत्कृतमाहवे ॥ एवंतांदर्शयन्कृष्णोयुद्धभूमिंकिरीटिने ५३ गच्छन्नेवाशृणोच्छब्दंदुर्योधनबलेमहत् ॥ शंखदुंदुभिनिर्घोषंभेरीपणवनिःस्वनम् ५४ रथाश्वगजनादांश्चशस्त्रशब्दांश्चदारुणान् ॥ प्रविश्यतद्बलंकृष्णस्तुरगैर्वातवेगितैः ५५ पांड्येनाभ्यर्दितंसैन्यंत्वदीयंवीक्ष्यविस्मितः ॥ सहिनानाविधैर्बाणैरिष्वस्त्रप्रवरोयुधि ५६ न्यहनद्द्विषतांपूगान्गतासून्अंतकोयथा ॥ गजवाजिमनुष्याणांशरीराणिशितैःशरैः ५७

९८ ॥ ॥ इति कर्णपर्वणि नीलकंठीये भारतभावदीपे एकोनविंशोऽध्यायः ॥ १९ ॥ ॥ ७ ॥ ॥ प्रोक्त इति १ । २ । ३ । ४ । ५ पराभूतः प्रकोपितः ६ । ७ । ८ । ९ सपांड्यः ऽन्य
सूनकरो दितिद्वयोः संबंधः १० । ११ । १२ । १३ । १४ मुष्टिश्लिष्टायतज्यं मुष्टिदेशे श्लिष्टा च आयता च ज्या यस्य तत्तथा एकस्मिन्नेव क्षणे यद्धनुर्मंडलाकारं चिपिटाकारं च दृश्यत इति भावः १५
वर्षतः मत्तः १६ प्रमथसे प्रमथ्नासि १७ सस्यहा अतिवृष्ट्या धान्यहा ह्रादी गर्जन् १८ । १९ ताडितः द्रौणिना मलयवत्कृत्रिमो ध्वजो यस्य मलयध्वज इति प्रवीरस्यैव नामांतरं वा २० । २१

भित्त्वा प्रहरतां श्रेष्ठो विदेहासून्पातयत् ॥ शस्त्रप्रवीरैरस्त्राणि नानाशस्त्राणि सायकैः ॥ छित्त्वा तानवधीच्छत्रून्पांड्यः शक्र इवासुरान् ९८ ॥ इति श्रीमहाभारते कर्णपर्वणि संकुलयुद्धे एकोनविंशोऽध्यायः ॥ १९ ॥ ॥ ७ ॥ ॥ धृतराष्ट्र उवाच ॥ प्रोक्तस्त्वया पूर्वमेव प्रवीरो लोकविश्रुतः ॥ न त्वस्य कर्म संग्रामे त्वया संजय कीर्तितम् १ तस्य विस्तरशो ब्रूहि प्रवीरस्याद्य विक्रमम् ॥ शिक्षां प्रभावं वीर्यं च प्रमाणं दर्पमेव च २ ॥ संजय उवाच ॥ भीष्मद्रोणकृपद्रौणिकर्णार्जुनजनार्दनान् ॥ समाप्तविद्यान्धनुषि श्रेष्ठान्यान्मन्यसे रथान् ३ योऽक्षिपति वीर्येण सर्वानेतान्महारथान् ॥ नमेने चात्मना तुल्यं कंचिदेव नरेश्वरम् ४ तुल्यतां द्रोणभीष्माभ्यामात्मनो यो न मृष्यते ॥ वासुदेवार्जुनाभ्यां च न्यूनतां नैच्छतात्मनि ५ स पांड्यो नृपतिश्रेष्ठः सर्वशस्त्रभृतां वरः ॥ कर्णस्यानीकमहनत्पराभूत इवांतकः ६ तदुदीर्णरथाश्वं च पत्तिप्रवरसंकुलम् ॥ कुलालचक्रवद्भ्रांतं पांड्येनाभ्याहतं बलात् ७ व्यश्वसूतध्वजरथान्विप्रविद्धायुधद्विपान् ॥ सम्यगस्तैः शरैः पांड्यो वायुर्मेघानिवाक्षिपत् ८ द्विरदान्द्विरदारोहान्विपताकायुधध्वजान् ॥ सपादरक्षानहनद्वज्रेणाद्रीनिवाद्रिहा ९ सशक्तिप्रासतूणीरानश्वारोहान्हयानपि ॥ पुलिंदखसबाह्लीकनिषादांध्रककुंतलान् १० दाक्षिणात्यांश्च भोजांश्च शूरान्संग्रामकर्कशान् ॥ विशस्त्रकवचान्बाणैः कृत्वा चैवाकरोद्व्यसून् ११ चतुरंगं बलं बाणैर्निघ्नंतं पांड्यमाहवे ॥ दृष्ट्वा द्रौणिरसंभ्रांतमसंभ्रांतस्ततोऽभ्ययात् १२ आभाष्य चैनं मधुरमभीतं तमभीतवत् ॥ प्राह प्रहरतां श्रेष्ठः स्मितपूर्वं समाह्वयत् १३ राजन्कमलपत्राक्ष विशिष्टाभिजनश्रुत ॥ वज्रसंहननप्रख्य प्रख्यातबलपौरुष १४ मुष्टिश्लिष्टायतज्यं च व्यायताभ्यां महद्धनुः ॥ दोर्भ्यां विस्फारयन्भासि महाजलदवत्कृशम् १५ शरवर्षैर्महावेगैरमित्रानभिवर्षतः ॥ मदन्यं नानुपश्यामि प्रतिवीरं तवाहवे १६ रथद्विरदपत्त्यश्वानेकः प्रमथसे बहून् ॥ मृगसंघानिवारण्ये विभीर्भीमबलो हरिः १७ महता रथघोषेण दिवं भूमिं च नादयन् ॥ वर्षांते सस्यहा मेघो भासि ह्रादीव पार्थिव १८ संस्पृशानः शरांस्तीक्ष्णांस्तूणादाशीविषोपमान् ॥ मयैवैकेन युध्यस्व त्र्यंबकेनांधको यथा १९ एवमुक्तस्तथेत्युक्त्वा प्रहरेति च ताडितः ॥ कर्णिना द्रोणतनयं विव्याध मलयध्वजः २० मर्मभेदिभिरत्युग्रैर्बाणैराग्निशिखोपमैः ॥ स्मयन्नभ्यहनद्द्रौणिः पांड्यमाचार्यसत्तमः २१ ततोऽपरान्सुतीक्ष्णाग्रान्नाराचान्मर्मभेदिनः ॥ गत्या दशम्या संयुक्तानश्वत्थामाऽप्यवासृजत् २२

गत्या दशम्या । 'उन्मुख्याभिमुखी तिर्यङ्मंदा गोमूत्रिका ध्रुवा ॥ स्खलिता यमकाक्रांता क्रुष्टा तीव्रगती विंदुः' । शिरोहृदयपार्श्वदेशस्पृशास्तिस्रः । मंदा ईषद्भिन्नत्वक् गोमूत्रिका वक्रनिकृंतनी सव्यापसव्यगामिनी । ध्रुवा नियमेन लक्ष्यभेदिनी । स्खलिता लक्ष्यच्युता । यमकाक्रांता लक्ष्यं भित्त्वाऽसकृन्निर्गता । क्रुष्टा लक्ष्यैकदेशस्य बाह्यादेर्हंत्री तिनवगतयः । दशमी गतिस्तु विरसा सहद्दूरपातिनी क्रुष्टा नाम तया गत्या प्रक्षिप्तान् पिशरान् नवसंख्याकान्नवभिः शरैश्छिनदिति संबंधः २२

२३ । २४ । २५ । २६ । २७ । २८ पूषानुजः पर्जन्यः पूषात्मजइतिपाठेऽपिसएवार्थः वृष्टेःसूर्यप्रभवत्वदर्शनात् २९ अष्टवृषभवाह्यानिअष्टौशकटानियदायुधसंभारंऊहुःवहंतितत्सर्वम ह्नोऽष्टमभागेनयामार्धेनक्षीणमित्यर्थः ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ हतेश्वरोयःकश्चित् तंपांड्यं ४० मलयध्वजः पांड्यस्तंयदृच्छयागलंवारणंसमभ्यति

तान्शरानच्छिनत्पांड्योनवभिर्निशितैःशरैः ॥ चतुर्भिरर्दयच्चाश्वानाशुतेव्यसवोऽभवन् २३ अथद्रोणसुतस्येषूंस्तांश्छित्वानिशितैःशरैः ॥ धनुर्ज्यांवि ततांपांड्यश्चिच्छेदादित्यतेजसः २४ दिव्यंधनुरथाधिज्यंकृत्वाद्रौणिरमित्रहा ॥ प्रेक्ष्यचाशुरथेयुक्तान्नरैरन्यान्हयोत्तमान् २५ ततःशरसहस्राणिप्रेषयामास वैद्विजः ॥ इषुसंबाधमाकाशमकरोद्दिशएवच २६ ततस्तानस्यतःसर्वान्द्रौणेर्बाणान्महात्मनः ॥ जानानोऽप्यक्षयान्पांड्योऽशातयत्पुरुषर्षभः २७ प्रयुक्तां स्तान्प्रयत्नेनच्छित्त्वाद्रौणेरिपूनरिः ॥ चक्ररक्षौरणेतस्यप्राणुदन्निशितैःशरैः २८ अथारेर्लाघवंदृष्ट्वामंडलीकृतकार्मुकः ॥ प्रास्यद्द्रोणसुतोबाणान्वृष्टिंपूषा नुजोयथा २९ अष्टावष्टगवान्यूहुःशकटानियदायुधम् ॥ अह्नस्तदष्टभागेनद्रौणिश्चिक्षेपमारिष ३० तमंतकमिवक्रुद्धमंतकस्यांतकोपमम् ॥ येयेददृशिरेत त्रविसंज्ञाःप्रायशोऽभवन् ३१ पर्जन्यइवघर्मांतेवृष्ट्यासाद्रिद्रुमांमहीम् ॥ आचार्यपुत्रस्तांसेनांबाणवृष्ट्याऽभ्यवीवृषत् ३२ द्रौणिपर्जन्यमुक्तांतांबाणवृष्टिंसु दुःसहाम् ॥ वायव्यास्त्रेणसंक्षिप्यमुदापांड्यानिलोऽनुदत् ३३ तस्यनानदतःकेतुंचंदनागुरुरूषितम् ॥ मलयप्रतिमंद्रौणिश्छित्वाऽश्वांश्चतुरोऽहनत् ३४ सूतमेकेषुणाहत्वामहाजलदनिःस्वनम् ॥ धनुश्छित्वाऽर्धचंद्रेणतिलशोव्यधमद्रथम् ३५ अस्त्रैरस्त्राणिसंवार्यच्छित्त्वासर्वायुधानिच ॥ प्राप्तमप्यहितंद्रौणि र्नजघानरणेप्सया ३६ एतस्मिन्नंतरेकर्णोगजानीकमुपाद्रवत् ॥ द्रावयामाससतदापांडवानांमहद्बलम् ३७ विरथान्रथिनश्चक्रेगजानश्वांश्चभारत ॥ गजा न्बहुभिरानर्छच्छरैःसन्नतपर्वभिः ३८ अथद्रौणिर्महेष्वासःपांड्यंशत्रुनिबर्हणम् ॥ विरथंरथिनांश्रेष्ठंनाहनद्युद्धकांक्षया ३९ हतेश्वरोदंतिवरःसुकल्पितस्त्व राभिसृष्टःप्रतिशब्दगोबली ॥ तमाद्रवद्द्रौणिशराहतस्त्वरन्जवेनकृत्वाप्रतिहस्तिगर्जितम् ४० तंवारणंवारणयुद्धकोविदोद्विपोत्तमंपर्वतसानुसन्निभम् ॥ सम भ्यतिष्ठन्मलयध्वजस्त्वरन्यथाद्रिशृंगंहरिरुन्नदंस्तथा ४१ सतोमरंभास्कररश्मिवर्चसंबलास्त्रसर्गोत्तमयत्नमन्युभिः ॥ ससर्जशीघ्रंपरिपीडयन्गजगुरोःसुताया द्रिपतीश्वरोनदन् ४२ मणिप्रवेकोत्तमवज्रहाटकैरलंकृतंचांशुकमाल्यमौक्तिकैः ॥ हतोहतोऽसीत्यसकृन्मुदानदन्पराहनद्द्रौणिवरांगभूषणम् ४३ तदर्कचंद्र ग्रहपावकत्विषंभृशातिपातात्पतितंविचूर्णितम् ॥ महेंद्रवज्राभिहतंमहास्वनंयथाद्रिशृंगंधरणीतलेतथा ४४ ततःप्रजज्वालपरेणमन्युनापादाहतोनागपतिर्य थातथा ॥ समाददेचांतकदंडसन्निभानिषूनमित्रार्तिकरांश्चतुर्दश ४५ द्विपस्यपादाग्रकरान्सपंचभिर्नृपस्यबाहूचशिरोऽथचात्रिभिः ॥ जघानषाड्भिःषडनुत्तम त्विषःसपांड्यराजानुचरान्महारथान् ४६

छत् ४१ बलेनास्त्रसर्गेयउत्तमो यत्नस्तेनमन्युनाचवैः परिपीडयन्नंकुशेनकोपयन्नद्रिपतिर्मलयस्तस्येश्वरःपांड्यः ४२ द्रौणेर्वरांगभूषणंकिरीटंतोमरेणपराहनत् ४३ । ४४ इषून्समाददेद्रौणिरितिशेषः ४५ । ४६

४७ । ४८ चतुरश्चतुरंशः एवंसगजोदशधाभक्तोयथादशहविष्कायामिष्टौपिष्टपिंडोदशधाक्रियतेतथेत्यर्थः ४९ पांड्योऽश्वादीन् पादशःप्रदायखंडयित्वाप्रशांतोद्रौणिबाणैरितिशेषः यथास्वधां प्रेतशरीररूपंहविःप्राप्यपितृप्रियोज्वलनःश्मशानाग्निर्जलेनशाम्यतितद्वदित्यर्थः ५० समाप्तविद्यंसम्यगाप्तविद्यं समाप्तकर्माणंकृतकृत्यम् ५१ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेविंशो

सुदीर्घवृत्तौवरचंदनोक्षितौसुवर्णमुक्तामणिवज्रभूषणौ ॥ भुजौधरायांपतितौनृपस्यतौविचेष्टतुस्तार्क्ष्यहताविवोरगौ ४७ शिरश्चतत्पूर्णशशिप्रभाननंसरोषताम्रायतनेत्रमुन्नसम् ॥ क्षितावपिभ्राजतितत्सकुंडलंविशाखयोर्मध्यगतःशशीयथा ४८ सतुद्विपःपंचभिरुत्तमेषुभिःकृतःषडंशश्चतुरोनृपस्त्रिभिः ॥ कृतोदशांशःकुशलेनयुध्यतायथाहविस्तद्दशदैवतंतथा ४९ सपादशोराक्षसभोजनान्बहून्प्रदायपांड्योऽश्वमनुष्यकुंजरान् ॥ स्वधामिवाप्यज्वलनःपितृप्रियस्ततःप्रशांतःसलिलप्रवाहतः ५० समाप्तविद्यंतुगुरोःसुतंनृपःसमाप्तकर्माणमुपेत्यतेसुतः ॥ सुहृद्वृतोत्यर्थमपूजयन्मुदाजितेबलौविष्णुमिवामरेश्वरः ५१ ॥ इतिश्रीमहाभारतेकर्णपर्वणिपांड्यवधेविंशोऽध्यायः ॥ २० ॥ ॥ ५ ॥ ॥ धृतराष्ट्रउवाच ॥ पांड्येहतेकिमकरोदर्जुनोयुधिसंजय ॥ एकवीरेणकर्णेनद्राविते षुपरेषुच १ समाप्तविद्योबलवान्युक्तोवीरःसपांडवः ॥ सर्वभूतेष्वनुज्ञातःशंकरेणमहात्मना २ तस्मान्महद्भयंतीव्रममित्रघ्नाद्धनंजयात् ॥ सयत्तत्राकरोत्पार्थस्तन्ममाचक्ष्वसंजय ३ ॥ संजयउवाच ॥ हतेपांड्येऽर्जुनंकृष्णस्त्वरन्नाहवचोहितम् ॥ पश्यामिनाहंराजानमपयातांश्चपांडवान् ४ निवृत्तैश्चपुनःपार्थैर्भग्नंशत्रुबलंमहत् ॥ अश्वत्थाम्नश्चसंकल्पाद्धताःकर्णेनसृंजयाः ५ तथाऽश्वरथनागानांकृतंचकदनंमहत् ॥ सर्वमाख्यातवान्वीरोवासुदेवःकिरीटिने ६ एतच्छ्रुत्वाचदृष्ट्वाचभ्रातुर्घोरंमहद्भयम् ॥ वाहयाश्वान्हृषीकेशक्षिप्रमित्याहपांडवः ७ ततःप्रायाद्धृषीकेशोरथेनाप्रतियोधिना ॥ दारुणश्चपुनस्तत्रप्रादुरासीत्समागमः ८ ततःपुनःसमाजग्मुरभीताःकुरुपांडवाः ॥ भीमसेनमुखाःपार्थाःसूतपुत्रमुखावयम् ९ ततःप्रवावृतेभूयःसंग्रामोराजसत्तम ॥ कर्णस्यपांडवानांचयमराष्ट्रविवर्धनः १० धनूंषिबाणान्परिघानसिपट्टिशतोमरान् ॥ मुसलानिभुशुंडीश्चसशक्त्यृष्टिपरश्वधान् ११ गदाःप्रासान्शितान्कुंतान्भिंदिपालान्महांकुशान् ॥ प्रगृह्यक्षिप्रमापेतुःपरस्परजिघांसया १२ बाणज्यातलशब्देनद्यांदिशःप्रदिशोवियत् ॥ पृथिवींनेमिघोषेणनादयंतोऽभ्ययुःपरान् १३ तेनशब्देनमहतासंहृष्टाश्चक्रुराहवम् ॥ वीरावीरैर्महाघोरकलहांततितीर्षवः १४ ज्यातलत्रधनुःशब्दःकुंजराणांचबृंहताम् ॥ पादातानांचपततांनृणांनादोमहानभूत् १५ तालशब्दांश्चविविधान्शूराणांचाभिगर्जताम् ॥ श्रुत्वातत्रभृशंत्रेसुःपेतुर्मम्लुश्चसैनिकाः १६ तेषांनिनदतांचैवशस्त्रवर्षंचमुंचताम् ॥ बहूनाधिरथिर्वीरःप्रममाथेषुभिःपरान् १७ पंचपंचालवीराणांरथान्दशचपंचच ॥ साश्वसूतध्वजान्कर्णःशरैर्निन्येयमक्षयम् १८ योधमुख्यामहावीर्याःपांडूनांकर्णमाहवे ॥ शीघ्रास्त्रास्तूर्णमावृत्यपरिवव्रुःसमंततः १९

६

ऽध्यायः ॥ २० ॥ ॥ ५ ॥ -॥ पांड्यइति १ अनुज्ञात स्त्वमजय्योभविष्यसीत्यनुगृहीतः २ । ३ राजानंयुधिष्ठिरम् ४ । ५ । ६ भ्रातुर्युधिष्ठिरस्य ७ । ८ । ९ । १० । ११ । १२ द्यांस्वर्गं वियदंतरिक्षम् १३ । १४ । १५ । १६ । १७ । १८ । १९

अंडजैर्जलपक्षिभिः सारसादिभिराकीर्णां व्याप्ताम् २० अवस्कंद्य निपत्य उन्मथ्य मार्गाद्विच्याव्य दूरे इत्यर्थः २१।२२ असुमथनैः असवः प्राणा उन्मथ्यंते यैस्तैः मौर्व्या मौर्वीच्युतैः शरैर्बाणैस्तलत्रं ज्याघातवारणस्थाने न्यहनत् यथा तैः शरं संधातुं न शक्नुवंति तथा चकारेत्यर्थः २३ । २४ । २५ व्यायच्छमानेषु यतमानेषु २६ । २७ । २८ विमस्तिष्केक्षणायुधाः मस्तिष्कं शिरोभागस्थमांसपिंडः २९

ततः कर्णो द्विषत्सेनां शरवर्षैर्विलोडयन् ॥ विजगाहांडजाकीर्णां पद्मिनीमिव यूथपः २० द्विषन्मध्यमवस्कंद्य राधेयो धनुरुत्तमम् ॥ विधुन्वानः शितैर्बाणैः शिरांस्युन्मथ्य पातयत् २१ चर्मवर्माणि संछिन्नान्यपतन्भुवि देहिनाम् ॥ विषेहुर्नास्य संस्पर्शं द्वितीयस्य पतत्त्रिणः २२ वर्मदेहासुमथनैर्धनुषः प्रच्युतैः शरैः ॥ मौर्व्या तलत्रे न्यहनत्कशया वाजिनो यथा २३ पांडुसृंजयपंचालाञ्शरगोचरमागतान् ॥ ममर्द तरसा कर्णः सिंहो मृगगणानिव २४ ततः पांचालराजश्च द्रौपदेयाश्च मारिष ॥ यमौ च युयुधानश्च सहिताः कर्णमभ्ययुः २५ तेषु व्यायच्छमानेषु कुरुपंचालपांडुषु ॥ प्रियानसून्रणे त्यक्त्वा योधा जघ्नुः परस्परम् २६ सुसन्नद्धाः कवचिनः सशिरस्त्राणभूषणाः ॥ गदाभिर्मुसलैश्चान्ये परिघैश्च महाबलाः २७ समभ्यधावंत भृशं कालदंडैरिवोद्यतैः ॥ नर्दंतश्चाह्वयंतश्च प्रवल्गंतश्च मारिष २८ ततो निजघ्नुरन्योन्यं पेतुश्चान्योन्यताडिताः ॥ वमंतो रुधिरं गात्रैर्विमस्तिष्केक्षणायुधाः २९ दंतपूर्णैः सरुधिरैर्वक्त्रैर्दाडिमसन्निभैः ॥ जीवंत इव चाप्येके तस्थुः शस्त्रोपबृंहिताः ३० परश्वधैश्चाप्यपरे पट्टिशैरसिभिस्तथा ॥ शक्तिभिर्भिंदिपालैश्च नखरप्रासतोमरैः ३१ ततक्षुश्चिच्छिदुश्चान्ये बिभिदुश्चिक्षिपुस्तथा ॥ संचकर्तुश्च जघ्नुश्च क्रुद्धा रणमहार्णवे ३२ पेतुरन्योन्यनिहता व्यसवो रुधिरोक्षिताः ॥ क्षरंतः सुरसं रक्तं प्रकृत्ताश्चंदना इव ३३ रथै रथा विनिहता हस्तिभिश्चापि हस्तिनः ॥ नरैर्नरा हताः पेतुरश्वाश्चाश्वैः सहस्रशः ३४ ध्वजाः शिरांसि च्छत्राणि द्विपहस्ता नृणां भुजाः ॥ क्षुरैर्भल्लार्धचंद्रैश्च च्छिन्नाः पेतुर्महीतले ३५ नरांश्च नागान्सरथान्हयान्ममृदुराहवे ॥ अश्वारोहैर्हताः शूराश्छिन्नहस्ताश्च दंतिनः ३६ सपताकाध्वजाः पेतुर्विशीर्णा इव पर्वताः ॥ पत्तिभिश्च समाप्लुत्य द्विरदाः स्यंदनास्तथा ३७ हताश्च हन्यमानाश्च पतिताश्चैव सर्वशः ॥ अश्वारोहाः समासाद्य त्वरिताः पत्तिभिर्हताः ३८ सादिभिः पत्तिसंघाश्च निहता युधि शेरते ॥ मृदितानीव पद्मानि प्रम्लाना इव च स्रजः ॥ हतानां वदनान्यासन्गात्राणि च महाहवे ३९ रूपाण्यत्यर्थकांतानि द्विरदाश्वनृणां नृप ॥ समुन्नानीव वस्त्राणि ययुर्दुर्दर्शतां पराम् ४० ॥ इति श्रीमहाभारते कर्णपर्वणि संकुलयुद्धे एकविंशोऽध्यायः ॥ २१ ॥ ॥ ७ ॥ ॥ संजय उवाच ॥ हस्तिभिस्तु महामात्रास्तव पुत्रेण चोदिताः ॥ धृष्टद्युम्नं जिघांसंतः क्रुद्धाः पार्षतमभ्ययुः १ प्राच्याश्च दाक्षिणात्याश्च प्रवरा गजयोधिनः ॥ अंगा वंगाश्च पुंड्राश्च मागधास्ताम्रलिप्तकाः २

३० परश्वधैस्ततक्षुः । पट्टिशैरसिभिश्च चिच्छिदुः । शक्तिभिर्बिभिदुः । भिंदिपालैश्चिक्षिपुः । नखरैः संचकर्तुः । प्रासतोमरैर्जघ्नुः ३१ । ३२ सुरसं स्निग्धं प्रकृत्ताश्छिन्नाश्चंदनाः रक्तचंदनाः ३३ । ३४ । ३५ । ३६ समाप्लुत्य संमुखमुत्प्लुत्य ३७ । ३८ पद्मानीव वदनानि स्रज इव गात्राणि ३९ समुन्नानि क्षारक्लिन्नानि मलिनानि ४० ॥ इति कर्णपर्वणि नीलकंठीये भारतभावदीपे एकविंशोऽध्यायः ॥ २१ ॥ हस्तिभिरिति १ । २

३ । ४ पार्ष्णिःपादस्यपश्चाद्भागः । अंगुष्ठःप्रसिद्धः । अंकुशःप्रतोदः । पार्ष्ण्यंकुशःअंगुष्ठांकुशश्चेतिद्वौकेवलांकुशश्चतेः ५ । ६ प्रच्छाद्यमानंप्रदृष्टद्युम्नम् ७ । ८ । ९ । १० । ११ । १२

मेकलाःकोशलामद्रादशार्णानिषधास्तथा ॥ गजयुद्धेषुकुशलाःकलिंगैःसहमारत ३ शरतोमरनाराचैर्वृष्टिमंतइवांबुदाः ॥ सिषिचुस्तेततःसर्वेपांचालबलमा हवे ४ तान्संमिमर्दिषून्नागानपार्ष्ण्यंगुष्ठांकुशैर्भृशम् ॥ चोदितान्पार्षतोबाणैर्नाराचैरम्यवीवृषत ५ एकैकंदशमिःषड्भिरष्टाभिरपिमारत ॥ द्विरदानभिवि व्याधक्षिप्तैर्गिरिनिभान्शरैः ६ प्रच्छाद्यमानंद्विरदैर्मेघैरिवदिवाकरम् ॥ प्रययुःपांडुपंचालानदंतोनिशितायुधाः ७ तान्नागानभिवर्षतोज्यातंत्रीतलना दितैः ॥ वीरनृत्यंप्रनृत्यंतःशूरतालप्रचोदितैः ॥ नकुलःसहदेवश्चद्रौपदेयाःप्रभद्रकाः ८ सात्यकिश्चशिखंडीचचेकितानश्चवीर्यवान् ॥ समंतात्सिषिचुर्गिरा मेघास्तोयैरिवाचलान् ९ तेम्लेच्छैःप्रेषितानागानरानश्वान्रथानपि ॥ हस्तैराक्षिप्यममृदुःपद्भिश्चाप्यतिमन्यवः १० बिभिदुश्चविषाणाग्रैःसमाक्षिप्यचाचि क्षिपुः ॥ विषाणलग्नाश्चाप्यन्येपरिपेतुर्विभीषणाः ११ प्रमुखेवर्तमानंतुद्विपमंगस्यसात्यकिः ॥ नाराचेनोग्रवेगेनभित्त्वामर्माण्यपातयत् १२ तस्यावार्जितका यस्यद्विरदादुत्पतिष्यतः ॥ नाराचेनाहनद्वक्षःसात्यकिःसोऽपतद्भुवि १३ पुंड्रस्यापततोनागंचलंतमिवपर्वतम् ॥ सहदेवःप्रयत्नास्तैर्नाराचैरहनात्रिभिः १४ विपताकंवियंतारंविवर्मध्वजजीवितम् ॥ तंकृत्वाद्विरदंभूयःसहदेवोंऽगमभ्ययात् १५ सहदेवंतुनकुलोवारयित्वांगमार्दयत् ॥ नाराचैर्यमदंडाभैस्त्रिभिर्नागंशते नतम् १६ दिवाकरकरप्रख्यानंगश्चिक्षेपतोमरान् ॥ नकुलायशतान्यष्टौत्रिधैकैकंतुसोऽच्छिनत् १७ तथाऽर्धचंद्रेणशिरस्तस्याचिच्छेदपांडवः ॥ सपपात हतोम्लेच्छस्तेनैवसहदंतिना १८ अथांगपुत्रेनिहतेहस्तिशिक्षाविशारदे ॥ अंगाःकुद्धामहामात्रानागैर्नकुलमभ्ययुः १९ चलत्पताकैःसुमुखैर्हेमकक्षातनुच्छ दैः ॥ मिमर्दिषंतस्त्वरिताःप्रदीप्तैरिवपर्वतैः २० मेकलोत्कलकालिंगानिषधास्ताम्रलिप्तकाः ॥ शरतोमरवर्षाणिविमुंचंतोजिघांसवः २१ तैश्छाद्यमानंनकु लंदिवाकरमिवांबुदैः ॥ परिपेतुःसुसंरब्धाःपांडुपंचालसोमकाः २२ ततस्तदभवद्युद्धंरथिनांहस्तिभिःसह ॥ सृजतांशरवर्षाणितोमरांश्चसहस्रशः २३ नागा नांप्रास्फुटन्कुंभामर्माणिविविधानिच ॥ दंताश्चैवातिविद्धानांनाराचैर्भूषणानिच २४ तेषामष्टौमहानागांश्चतुःषष्ट्यासुतेजनैः ॥ सहदेवोजघानाशुतेऽपतन् सहसादिभिः २५ अंजोगतिभिरायम्यप्रयत्नाद्धनुरुत्तमम् ॥ नाराचैरहनन्नागान्नकुलःकुलनंदनः २६ ततःपांचालशैनेयौद्रौपदेयाःप्रभद्रकाः ॥ शिखंडीच महानागान्सिषिचुःशरवृष्टिभिः २७ तेपांडुयोधांबुधरैःशत्रुद्विरदपर्वताः ॥ बाणवर्षैर्हताःपेतुर्वज्रवर्षैरिवाचलाः २८ एवंहत्वातवगजांस्तेपांडुरथकुंजराः ॥ द्रुतांसेनामवैक्षंतभिन्नकूलामिवापगाम् २९ तांतेसेनांसमालोडचपांडुपुत्रस्यसैनिकाः ॥ विक्षोभयित्वाचपुनःकर्णसमभिदुद्रुवुः ३० ॥ ॥ इतिश्रीमहाभा रतेकर्णपर्वणिसंकुलयुद्धेद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ ध ॥

आवर्जितःप्रहारवंचनेनरक्षितःकायोयेनतस्य

१३ । १४ । १५ । १६ । १७ । १८ । १९ २० । २१ । २२ । २३ । २४ । २५ । २६ २० । २८ । २९ । ३० ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेद्वाविंशोऽध्यायः ॥ २२ ॥

॥ संजयउवाच ॥ सहदेवंतथाक्रुद्धंदहंतंतववाहिनीम् ॥ दुःशासनोमहाराजभ्राताभ्रातरमभ्ययात् १ तौसमेतौमहायुद्धेदृष्ट्वातत्रमहारथाः ॥ सिंहनादरवांश्च कुर्वासांस्याद्‌धुवुश्चह २ ततोभारतक्रुद्धेनतवपुत्रेणधन्विना ॥ पांडुपुत्रस्त्रिभिर्बाणैर्वक्षस्यभिहतोबली ३ सहदेवस्ततोराजन्नाराचेनतवात्मजम् ॥ विद्ध्वाविव्याधसप्तत्यासारथिंचत्रिभिःशरैः ४ दुःशासनस्ततश्चापंछित्वाराजन्महाहवे ॥ सहदेवंत्रिसप्तत्याबाह्वोरुरसिचार्पयत् ५ सहदेवस्तुसंक्रुद्धःखड्गंगृह्यमहाहवे ॥ आविध्यप्रासृजत्तूर्णंतवपुत्ररथंप्रति ६ समार्गणगुणंचापंछित्वातस्यमहानसिः ॥ निपपाततततोभूमौच्युतःसर्पइवांबरात् ७ अथान्यद्धनुरादायसहदेवःप्रतापवान् ॥ दुःशासनायचिक्षेपबाणमंतकरंततः ८ तमापतंतंविशिखंयमदंडोपमत्विषम् ॥ खड्गेनशितधारेणद्विधाचिच्छेदकौरवः ९ ततस्तंनिशितंखड्गमाविध्ययुधिसत्वरः ॥ धनुश्चान्यत्समादायशरंजग्राहवीर्यवान् १० तमापतंतंसहसानिस्त्रिंशंनिशितैःशरैः ॥ पातयामाससमरेसहदेवोहसन्निव ११ ततोबाणांश्चतुःषष्टिंतवपुत्रोमहारणे ॥ सहदेवरथंतूर्णंप्रेषयामासभारत १२ तान्शरान्समरेराजन्वेगेनापततोबहून् ॥ एकैकंपंचभिर्बाणैःसहदेवोन्यकृंतत १३ संनिवार्यमहाबाणांस्तवपुत्रेणप्रेषितान् ॥ अथास्मैसुबहून्बाणान्प्रेषयामाससंयुगे १४ तान्बाणांस्तवपुत्रोऽपिच्छित्त्वैकैकंत्रिभिःशरैः ॥ ननादसुमहानादंदारयाणोवसुंधराम् १५ ततोदुःशासनोराजन्विद्ध्वापांडुसुतंरणे ॥ सारथिंनवभिर्बाणैर्माद्रेयस्यसमार्पयत् १६ ततःक्रुद्धोमहाराजसहदेवःप्रतापवान् ॥ समाधत्तशरंघोरंमृत्युकालांतकोपमम् १७ विकृष्यबलवच्चापंतवपुत्रायसोऽसृजत् ॥ सतंनिर्भिद्यवेगेनभित्त्वाचकवचंमहत् १८ प्राविशद्धरणींराजन्वल्मीकमिवपन्नगः ॥ ततःसंमुमुहेराजंस्तवपुत्रोमहारथः १९ मूढंचैनंसमालोक्यसारथिस्त्वरितोरथम् ॥ अपोवाहभृशंत्रस्तोवध्यमानःशितैःशरैः २० पराजित्यरणेतंतुकौरव्यंपांडुनंदनः ॥ दुर्योधनबलंदृष्ट्वाप्रममाथसमंततः २१ पिपीलिकपुटंराजन्यथामृद्नन्नरोरुषा ॥ तथासाकौरवीसेनामृदितातेनभारत २२ ॥ ॥ इति श्रीमहाभारते कर्णपर्वणि सहदेवदुःशासनयुद्धे त्रयोविंशोऽध्यायः ॥ २३ ॥

॥ संजयउवाच ॥ नकुलंरभसंयुद्धेद्रावयंतंवरूथिनीम् ॥ कर्णोवैकर्तनोराजन्वारयामासवैरुषा १ नकुलस्तुततःकर्णंप्रहसन्निदमब्रवीत् ॥ चिरस्यबतदृष्टोऽहंदैवतैःसौम्यचक्षुषा २ पश्यमांत्वंरणेपापचक्षुर्विषयमागतम् ॥ त्वंहिमूलमनर्थानांवैरस्यकलहस्यच ३ त्वद्दोषात्कुरवःक्षीणाःसमासाद्यपरस्परम् ॥ त्वामद्यसमरेहत्वाकृतकृत्योऽस्मिविज्वरः ४ एवमुक्तःप्रत्युवाचनकुलंसूतनंदनः ॥ सदृशंराजपुत्रस्यधन्विनश्चविशेषतः ५ प्रहरस्वचमेवीरपश्यामस्तवपौरुषम् ॥ कर्मकृत्वारणेशूरततःकथितुमर्हसि ६

७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६

अनुक्त्वासमरेतातशूरायुध्यंतिशक्तितः ॥ प्रयुध्यस्वमयाशक्त्याहानिष्येदर्पमेवते ७ इत्युक्त्वाप्राहरत्तूर्णंपांडुपुत्रायसूतजः ॥ विव्याधचैनंसमरेत्रिसप्तत्याशिली
मुखैः ८ नकुलस्तुततोविद्धःसूतपुत्रेणभारत ॥ अशीत्याऽऽशीविषप्रख्यैःसूतपुत्रमविध्यत ९ तस्यकर्णोधनुश्छित्त्वास्वर्णपुंखैःशिलाशितैः ॥ त्रिंशतापर
मेष्वासःशरैःपांडवमर्दयत् १० तेतस्यकवचंभित्त्वापपुःशोणितमाहवे ॥ आशीविषायथानागाभित्त्वागांसलिलंपपुः ११ अथान्यद्धनुरादायहेमपृष्ठंदुरास
दम् ॥ कर्णंविव्याधसप्तत्यासारथिंचत्रिभिःशरैः १२ ततःक्रुद्धोमहाराजनकुलःपरवीरहा ॥ क्षुरप्रेणसुतीक्ष्णेनकर्णस्यधनुराच्छिनत् १३ अथैनंछिन्नधन्वानं
सायकानांशतैस्त्रिभिः ॥ आजघ्नेप्रहसन्वीरःसर्वलोकमहारथम् १४ कर्णमभ्यर्दितंदृष्ट्वापांडुपुत्रेणमारिष ॥ विस्मयंपरमंजग्मूरथिनःसहदैवतैः १५ अथान्य
द्धनुरादायकर्णोवैकर्त्तनस्तदा ॥ नकुलंपंचभिर्बाणैर्जत्रुदेशेसमार्पयत् १६ तत्रस्थैरथतैर्बाणैर्माद्रीपुत्रोव्यरोचयत् ॥ स्वरश्मिभिरिवादित्योभुवनेविसृजन्प्र
भाम् १७ नकुलस्तुततःकर्णंविद्ध्वासप्तभिराशुगैः ॥ अथास्यधनुषःकोटिंपुनश्चिच्छेदमारिष १८ सोऽन्यत्कार्मुकमादायसमरेवेगवत्तरम् ॥ नकुलस्यततो
बाणैःसमंताच्छादयद्दिशः १९ संछाद्यमानःसहसाकर्णचापच्युतैःशरैः ॥ चिच्छेदसशरांस्तूर्णंशरैरेवमहारथः २० ततोबाणमयंजालंविततंव्योम्निदृश्यते ॥
खद्योतानामिवव्रातैःसंपतद्भिर्यथानभः २१ तैर्विमुक्तैःशरशतैश्छादितंगमनंतदा ॥ शलभानांयथाव्रातैस्तद्वदासीद्विशांपते २२ तेशराहेमविकृताः
संपतंतोमुहुर्मुहुः ॥ श्रेणीकृताव्यकाशंतक्रौंचाःश्रेणीकृताइव २३ बाणजालावृतेव्योम्निच्छादितेचदिवाकरे ॥ नस्मसंपततेभूम्यांकिंचिदप्यंतरिक्षमम् २४
निरुद्धेतत्रमार्गेचशरसंघैःसमंततः ॥ व्यरोचेतांमहात्मानौकालसूर्याविवोदितौ २५ कर्णचापच्युतैर्बाणैर्वध्यमानास्तुसोमकाः ॥ अवालीयंतराजेंद्रवेदनार्त्ता
भृशार्दिताः २६ नकुलस्यतथाबाणैर्हन्यमानाचमूस्तव ॥ व्यशीर्यतदिशोराजन्वातनुन्नाइवांबुदाः २७ तेसेनेहन्यमानेतुताभ्यांदिव्यैर्महाशरैः ॥ शरपातम
पाक्रम्यतस्थतुःप्रेक्षिकेतदा २८ प्रोत्सारितजनेतस्मिन्कर्णपांडवयोःशरैः ॥ अविध्येतांमहात्मानावन्योन्यंशरवृष्टिभिः २९ विदर्शयंतौदिव्यानिशस्त्राणि
बलमूर्धनि ॥ छादयंतौचसहसापरस्परवधैषिणौ ३० नकुलेनशरामुक्ताःकंकबर्हिणवाससः ॥ सूतपुत्रमवच्छाद्यव्यतिष्ठंतयथांऽबरे ३१ तथैवसूतपुत्रेणप्रे
षिताःपरमाहवे ॥ पांडुपुत्रमवच्छाद्यव्यतिष्ठंवांबरेशराः ३२ शरवेश्मप्रविष्टौतौददृशातेनकैश्चन ॥ सूर्याचंद्रमसौराजन्छाद्यमानौघनैरिव ३३ ततःक्रुद्धो
रणेकर्णःकृत्वाघोरतरंवपुः ॥ पांडवंछादयामाससमंताच्छरवृष्टिभिः ३४ सोऽतिच्छन्नोमहाराजसूतपुत्रेणपांडवः ॥ नचकारव्यथांराजन्भास्करोजलदैर्यथा
३५ ततःप्रहस्याधिरथिःशरजालानिमारिष ॥ प्रेषयामाससमरेशतशोऽथसहस्रशः ३६

एकच्छायमभूत्सर्वंतस्यबाणैर्महात्मनः ॥ अभ्रच्छायेवसंजज्ञेसंपतद्भिःशरोत्तमैः ३७ ततःकर्णोमहाराजधनुश्छित्वामहात्मनः ॥ सारथिंपातयामासरथनीडा
द्धसन्निव ३८ ततोऽश्वांश्चतुरश्चास्यचतुर्भिर्निशितैःशरैः ॥ यमस्यभवनंतूर्णंप्रेषयामासभारत ३९ अथास्यतंरथंदिव्यंतिलशोव्यधमच्छरैः ॥ पताकांचक्र
क्षांश्चगदांखड्गंचमारिष ४० शतचंद्रंचतच्चर्मसर्वोपकरणानिच ॥ हताश्वोविरथश्चैवविवर्माचविशांपते ४१ अवतीर्यरथात्तूर्णंपरिघंगृह्यधिष्ठितः ॥
तमुद्यतंमहाघोरंपरिघंतस्यसूतजः ४२ व्यहनत्सायकैराजन्सतीक्ष्णैर्भारसाधनैः ॥ व्यायुधंचैनमालक्ष्यशरैःसन्नतपर्वभिः ४३ आर्पयद्बहुभिःकर्णोनचैनंसम
पीडयत् ॥ सहन्यमानःसमरेकृतास्त्रेणबलीयसा ४४ प्राद्रवत्सहसाराजन्नकुलोव्याकुलेंद्रियः ॥ तमभिद्रुत्यराधेयःप्रहसन्वैपुनःपुनः ४५ सज्यमस्यधनुःकंठे
व्यवासृजतभारत ॥ ततःसशुशुभेराजन्कंठासक्तमहाधनुः ४६ परिवेषमनुप्राप्तोयथास्याद्व्योम्निचंद्रमाः ॥ यथैवचासितोमेघःशक्रचापेनशोभितः ४७ तमब्र
वीत्ततःकर्णोव्यर्थंव्याहृतवानसि ॥ वदेदानींपुनर्हृष्टोवध्यमानःपुनःपुनः ४८ मायोत्सीःकुरुभिःसार्धंबलवद्भिश्चपांडव ॥ सदृशैस्तातयुध्यस्वव्रीडांमाकुरुपांड
व ४९ गृहंवागच्छमाद्रेययत्रवाकृष्णफाल्गुनौ ॥ एवमुक्त्वामहाराजव्यसर्जयततंतदा ५० वधप्राप्तंतुतंशूरोनाहनद्धर्मवित्तदा ॥ स्मृत्वाकुंत्यावचोराजंस्ततए
नंव्यसर्जयत् ५१ विसृष्टःपांडवोराजन्सूतपुत्रेणधन्विना ॥ व्रीडन्निवजगामाथयुधिष्ठिररथंप्रति ५२ आरुरोहरथंचापिसूतपुत्रप्रतापितः ॥ निःश्वसन्दुःख
संततःकुंभस्थइवपन्नगः ५३ तंविजित्याथकर्णोऽपिपंचालांस्त्वरितोययौ ॥ रथेनातिपताकेनचंद्रवर्णहयेनच ५४ तत्राक्रंदोमहानासीत्पांडवानांविशांपते ॥
दृष्ट्वासेनापतिंयांतंपंचालानांरथव्रजान् ५५ तत्राकरोन्महाराजकदनंसूतनंदनः ॥ मध्यंप्राप्तेदिनकरेचक्रवद्विचरन्प्रभुः ५६ भग्नचक्रैरथैःकैश्चिच्छिन्नध्वजप
ताकिभिः ॥ हताश्वैर्हतसूतैश्चभग्नाक्षैश्चैवमारिष ५७ ह्रियमाणानपश्यामपंचालानांरथव्रजान् ॥ तत्रतत्रचसंभ्रांताविचेरुरथकुंजराः ५८ दावाग्निपरिदग्धां
गायथैवस्युर्महावने ॥ भिन्नकुंभार्द्ररुधिराश्छिन्नहस्ताश्चवारणाः ५९ छिन्नगात्रावराश्चैवच्छिन्नवालधयोऽपरे ॥ छिन्नाभ्राणीवसंपेतुर्हन्यमानामहात्मना ६०
अपरेत्रासितानागानाराचशरतोमरैः ॥ तमेवाभिमुखंजग्मुःशलभाइवपावकम् ६१ अपरेनिष्टनंतश्चव्यदृश्यंतमहाद्विपाः ॥ क्षरंतःशोणितंगात्रैर्नगाइवजल
स्रवाः ६२ उरश्छदैर्वियुक्ताश्चवालबंधैश्चवाजिनः ॥ राजतैश्चतथाकांस्यैःसौवर्णैश्चैवभूषणैः ६३ हीनाश्चाभरणैश्चैवखलीनैश्चविवर्जितान् ॥ चामरैश्चकुथाभि
श्चतूणीरैःपतितैरपि ६४ निहतैःसादिभिश्चैवशूरैराहवशोभितैः ॥ अपश्यामरणेतत्रभ्राम्यमाणान्हयोत्तमान् ६५ प्रासैःखड्गैश्चरहितानृष्टिभिश्चापिभारत ॥
हयसादीनपश्यामकंचुकोष्णीषधारिणः ६६ निहतान्वध्यमानांश्चवेपमानांश्चभारत ॥ नानांगावयवैर्हीनांस्तत्रतत्रैवभारत ६७ ६५ । ६६ । ६७

६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेचतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ ७ ॥ ॥ ७ ॥

रथान्हेमपरिष्कारान्संयुक्तान्जवनैर्हयैः ॥ भ्राम्यमाणानपश्यामहतेषुरथिषुद्रुतम् ६८ भग्नाक्षकूबरान्कांश्चिद्भग्नचक्रांश्चभारत ॥ विपताकध्वजांश्चान्यान्छिन्नेषादंडबंधुरान् ६९ विहतान्रथिनस्तत्रधावमानांस्ततस्ततः ॥ सूतपुत्रशरैस्तीक्ष्णैर्हन्यमानान्विशांपते ७० विशस्त्रांश्चतथैवान्यान्सशस्त्रांश्चहतान्बहून् ॥ तारकाजालसंच्छन्नान्वरघंटाविशोभितान् ७१ नानावर्णविचित्राभिःपताकाभिरलंकृतान् ॥ वारणाननुपश्यामधावमानान्समंततः ७२ शिरांसिबाहूनूरूंश्चछिन्नानन्यांस्तथैवच ॥ कर्णचापच्युतैर्बाणैरपश्यामसमंततः ७३ महान्व्यतिकरोरौद्रोयोधानामन्वपद्यत ॥ कर्णसायकनुन्नानांयुध्यतांचशितैःशरैः ७४ तेवध्यमानाःसमरेसूतपुत्रेणसृंजयाः ॥ तमेवाभिमुखंयांतिपतंगाइवपावकम् ७५ तंदहंतमनीकानितत्रतत्रमहारथम् ॥ क्षत्रियावर्जयामासुर्युगांताग्निमिवोल्बणम् ७६ हतशेषास्तुयेवीराःपंचालानांमहारथाः ॥ तान्प्रभग्नान्द्रुतान्वीरःपृष्ठतोविकिरञ्छरैः ७७ अभ्यधावततेजस्वीविशीर्णकवचध्वजान् ॥ तापयामासतान्बाणैःसूतपुत्रोमहाबलः ॥ मध्यंदिनमनुप्राप्तोभूतानीवतमोनुदः ७८ ॥ इतिश्रीमहाभारतेकर्णपर्वणिकर्णयुद्धेचतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ संजयउवाच ॥ युयुत्सुंतवपुत्रस्यद्रावयंतंबलंमहत् ॥ उलूकोन्यपतत्तूर्णंतिष्ठतिष्ठेतिचाब्रवीत् १ युयुत्सुश्चततोराजन्शितधारेणपत्रिणा ॥ उलूकंताडयामासवज्रेणेन्द्रमहाबलम् २ उलूकस्तुततःक्रुद्धस्तवपुत्रस्यसंयुगे ॥ क्षुरप्रेणधनुश्छित्वाताडयामासकर्णिना ३ तदपास्यधनुश्छिन्नंयुयुत्सुर्वेगवत्तरम् ॥ अन्यदादत्तसुमहच्चापंसंरक्तलोचनः ४ शाकुनिंतुततःषष्ट्याविव्याधभरतर्षभ ॥ सारथिंत्रिभिरानर्छत्तंचभूयोऽन्यविध्यत ५ उलूकस्तंतुविंशत्याविद्ध्वास्वर्णविभूषितैः ॥ अथास्यसमरेक्रुद्धोध्वजंचिच्छेदकांचनम् ६ सच्छिन्नयष्टिःसुमहान्शीर्यमाणोमहाध्वजः ॥ पपातप्रमुखेराजन्युयुत्सोःकांचनध्वजः ७ ध्वजमुन्मथितंदृष्ट्वायुयुत्सुःक्रोधमूर्च्छितः ॥ उलूकंपंचभिर्बाणैराजघानस्तनांतरे ८ उलूकस्तस्यसमरेतैलधौतेनमारिष ॥ शिरश्चिच्छेदभल्लेनयंतुर्भरतसत्तम ९ तच्छिन्नमपतद्भूमौयुयुत्सोःसारथेस्तदा ॥ तारारूपंयथाचित्रंनिपपातमहीतले १० जघानचतुरोश्वांश्चतंचविव्याधपंचभिः ॥ सोऽतिविद्धोबलवताप्रत्यपायाद्रथांतरम् ११ तंनिर्जित्यरणेराजन्नुलूकस्त्वरितोययौ ॥ पंचालान्सृंजयांश्चैवविनिघ्नन्निशितैःशरैः १२ शतानीकंमहाराजश्रुतकर्मासुतस्तव ॥ व्यश्वसूतरथंचक्रेनिमेषार्धादसंभ्रमः १३ हताश्वेतुरथेतिष्ठन्शतानीकोमहारथः ॥ गदांचिक्षेपसंक्रुद्धस्तवपुत्रस्यमारिष १४ साकृत्वास्यंदनंभस्महयांश्चैवससारथीन् ॥ पपातधरणींतूर्णंदारयंतीवभारत १५ तावुभौविरथौवीरौकुरूणांकीर्तिवर्धनौ ॥ व्यपाक्रमेतांयुद्धात्तुप्रेक्षमाणौपरस्परम् १६

युयुत्सुमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६

१७ । १८ । १९ ।२० । २१ । २२। २३ । २४ ।२५ । २६। २७ ।२८ ।२९ । ३० मंडलानिभ्रांतमुद्भ्रांतमित्यादीन्मार्गान् अनुलोमविलोमभेदेनद्विगुणतयाचतुर्दश ३१ । ३२। ३३ । ३४। ३५

पुत्रस्तुतवसंभ्रांतोविविंशोरथमारुहत् ॥ शतानीकोऽपित्वरितःप्रतिविंध्यरथंगतः १७ सुतसोमंतुशकुनिर्विद्ध्वातुनिशितैःशरैः ॥ नाकंपयतसंक्रुद्धोवार्योघइवपर्वतम् १८ सुतसोमस्तुतंदृष्ट्वापितुरत्यंतवैरिणम् ॥ शरैरनेकसाहस्रैश्छादयामासभारत १९ तान्शरान्शकुनिस्तूर्णंचिच्छेदान्यैःपतत्रिभिः ॥ लघ्वस्त्रश्चित्रयोधीचजितकाशीचसंयुगे २० निवार्यसमरेचापिशरांस्तान्निशितैःशरैः ॥ आजघानसुसंक्रुद्धःसुतसोमंत्रिभिःशरैः २१ तस्याश्वान्केतनंसूतंतिलशोव्यधमच्छरैः ॥ स्यालस्तवमहाराजततउच्चुक्रुशुर्जनाः २२ हताश्वोविरथश्चैवच्छिन्नकेतुश्चमारिष ॥ धन्वीधनुर्वरंगृह्यरथाद्भूमावतिष्ठत २३ व्यसृजत्सायकांश्चैवस्वर्णपुंखान्शिलाशितान् ॥ छादयामाससमरेतवस्यालस्यतंरथम् २४ शलभानामिवव्रातान्शरव्रातान्महारथः ॥ रथोपगान्समीक्ष्यैवंविव्यथेनैवसौबलः २५ प्रममाथशरांस्तस्यशरव्रातैर्महायशाः ॥ तत्रातुष्यंतयोधाश्चसिद्धाश्चापिदिविस्थिताः २६ सुतसोमस्यतत्कर्मदृष्ट्वाश्रद्धेयमद्भुतम् ॥ रथस्थंशकुनिंयस्तुपदातिःसमयोधयत् २७ तस्यतीक्ष्णैर्महावेगैर्भल्लैःसन्नतपर्वभिः ॥ व्यहनत्कार्मुकंराजंस्तूणीरांश्चैवसर्वशः २८ सच्छिन्नधन्वाविरथःखड्गमुद्यम्यचानदत् ॥ वैडूर्योत्पलवर्णाभंदंतिदंतमयत्सरुम् २९ भ्राम्यमाणंततस्तंतुविमलांबरवर्चसम् ॥ कालदंडोपमंमेनेसुतसोमस्यधीमतः ३० सोऽचरत्सहसाखड्गीमंडलानिसहस्रशः ॥ चतुर्दशमहाराजशिक्षाबलसमन्वितः ३१ भ्रांतमुद्भ्रांतमाविद्धमाप्लुतंविप्लुतंसृतम् ॥ संपातसमुदीर्णंचदर्शयामाससंयुगे ३२ सौबलस्तुततस्तस्यशरांश्चिक्षेपवीर्यवान् ॥ तानापततएवाशुचिच्छेदपरमासिना ३३ ततःक्रुद्धोमहाराजसौबलःपरवीरहा ॥ प्राहिणोत्सुतसोमायशरानाशीविषोपमान् ३४ चिच्छेदतांस्तुखड्गेनशिक्षयाचबलेनच ॥ दर्शयन्लाघवंयुद्धेतार्क्ष्यतुल्यपराक्रमः ३५ तस्यसंचरतोराजन्मंडलावर्तनेतदा ॥ क्षुरप्रेणसुतीक्ष्णेनखड्गंचिच्छेदसुप्रभम् ३६ सच्छिन्नःसहसाभूमौनिपपातमहानसिः ॥ अर्धमस्यस्थितंहस्तेसुत्सरोस्तत्रभारत ३७ छिन्नमाज्ञायनिस्त्रिंशमवप्लुत्यपदानिषट् ॥ प्राविध्यततत‍ःशेषंसुतसोमोमहारथः ३८ तच्छित्त्वासगुणंचापंरणेतस्यमहात्मनः ॥ पपातधरणींतूर्णंस्वर्णवज्रविभूषितम् ३९ सुतसोमस्ततोऽगच्छ्रुतकीर्तेर्महारथम् ॥ सौबलोऽपिधनुर्गृह्यघोरमन्यत्सुदुर्जयम् ४० अभ्ययात्पांडवानीकंनिघ्नन्शत्रुगणान्बहून् ॥ तत्रनादोमहानासीत्पांडवानांविशांपते ४१ सौबलंसमरेदृष्ट्वाविचरंतमभीतवत् ॥ तान्यनीकानिदृप्तानिशस्त्रवंतिमहांतिच ४२ द्राव्यमाणान्यदृश्यंतसौबलेनमहात्मना ॥ यथादैत्यचमूंराजन्देवराजोममर्दह ॥ तथैवपांडवींसेनांसौबलेयोव्यनाशयत् ४३ ॥ इतिश्रीमहाभारतेकर्णपर्वणिसुतसोमसौबलयुद्धेपंचविंशोऽध्यायः ॥ २५ ॥ ॥ ६ ॥ ॥ ६ ॥



मंडलानामावर्तनेअनुलोमविलोमाभ्यासे ३६ अस्यअतेः सुत्सरोःशोभनमुष्टेः ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेपंचविंशोऽध्यायः ॥ २५ ॥

घ्रष्टेति । शरभोष्टपादःसिंहघातीपशुपक्षिशरीरोनृसिंहवत्तद्यात्मा १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९

॥ संजयउवाच ॥ धृष्टद्युम्नंकृपोराजन्वारयामाससंयुगे ॥ यथादृष्ट्वावनेसिंहंशरभोवारयेद्युधि १ निरुद्धःपार्षतस्तेनगौतमेनबलीयसा ॥ पदात्पदंविचलितुंना शकत्तत्रभारत २ गौतमस्यरथंदृष्ट्वाधृष्टद्युम्नरथंप्रति ॥ वित्रेसुःसर्वभूतानिक्षयंप्राप्तंचमेनिरे ३ तत्रावोचन्विमनसोरथिनःसादिनस्तथा ॥ द्रोणस्यनिधना नूनंसंक्रुद्धोद्विपदांवरः ४ शारद्वतोमहातेजादिव्यास्त्रविदुदारधीः ॥ अपिस्वास्तिभवेदद्यधृष्टद्युम्नस्यगौतमात् ५ अपीयंवाहिनीकृत्स्नामुच्येतमहतोभयात् ॥ अप्ययंब्राह्मणःसर्वान्नोहन्यात्समागतान् ६ यादृशंदृश्यतेरूपमंतकप्रतिमंभृशम् ॥ गमिष्यत्यद्यपदवींभारद्वाजस्यगौतमः ७ आचार्यःक्षिप्रहस्तश्चविजयी चसदायुधि ॥ अस्त्रवान्वीर्यसंपन्नःक्रोधेनचसमान्वितः ८ पार्षतश्चमहायुद्धेविमुखोऽद्याभिलक्ष्यते ॥ इत्येवंविविधावाचस्तावकानांपरैःसह ९ व्यश्रूयंतमहारा जतयोस्तत्रसमागमे ॥ विनिःश्वस्यततःक्रोधात्कृपःशारद्वतोनृप १० पार्षतंचार्दयामासनिश्चेष्टंसर्वमर्मसु ॥ सहन्यमानःसमरेगौतमेनमहात्मना ११ कर्तव्यं नस्मजानातिमोहेनमहतावृतः ॥ तमब्रवीत्ततोयंताकच्चित्क्षेमंतुपार्षत १२ ईदृशंव्यसनंयुद्धेनतेदृष्टंमयाक्वचित् ॥ दैवयोगात्तुतेबाणानापतन्मर्मभेदिनः १३ प्रेषिताद्द्विजमुख्येनमर्माण्युद्दिश्यसर्वतः ॥ व्यावर्तयेरथंतूर्णंनदीवेगमिवार्णवात् १४ अवध्यंब्राह्मणंमन्येयेनतेविक्रमोहतः ॥ धृष्टद्युम्नस्ततोराजन्शनकैरब्रवीद्व चः १५ मुह्यतेमेमनस्तातगात्रस्वेदश्चजायते ॥ वेपथुश्चशरीरेमेरोमहर्षश्चसारथे १६ वर्जयन्ब्राह्मणंयुद्धेशनैर्याहियतोऽर्जुनः ॥ अर्जुनंभीमसेनंवासमरेप्राप्य सारथे १७ क्षेममद्यभवेदेवमेषामेनैष्ठिकीमतिः ॥ ततःप्रायान्महाराजसारथिस्त्वरयन्हयान् १८ यतोभीमोमहेष्वासोयुयुधेतवसैनिकैः ॥ प्रद्रुतंचरथंदृष्ट्वाधृष्ट द्युम्नस्यमारिष १९ किरन्शरशतान्येवगौतमोऽनुययौतदा ॥ शंखंचपूरयामासमुहुर्मुहुररिंदमः २० पार्षतंत्रासयामासमहेंद्रोनमुचिंयथा ॥ शिखंडिनंतुसम रेभीष्ममृत्युंदुरासदम् २१ हार्दिक्योवारयामासस्मयन्निवमुहुर्मुहुः ॥ शिखंडीतुसमासाद्यहृदिकानांमहारथम् २२ पंचभिर्निशितैर्भल्लैर्जत्रुदेशेसमाहनत् ॥ कृ तवर्मातुसंक्रुद्धोभित्त्वाषष्ट्याप‍तत्रिभिः २३ धनुरेकेनचिच्छेदहसन्राजन्महारथः ॥ अथान्यद्धनुरादायद्रुपदस्यात्मजोबली २४ तिष्ठतिष्ठेतिसंक्रुद्धोहार्दिक्यं प्रत्यभाषत ॥ ततोऽस्यनवतिंबाणान्रुक्मपुंखान्सुतेजनान् २५ प्रेषयामासराजेंद्रतेऽस्याभ्रश्यंतवर्मणः ॥ वितथांस्तान्समालक्ष्यपतितांश्चमहीतले २६ क्षुरप्रेणसुतीक्ष्णेनकार्मुकंचिच्छिदेभृशम् ॥ अथैनंछिन्नधन्वानंभग्नशृंगमिवर्षभम् २७ अशीत्यामार्गणैःक्रुद्धोबाह्वोरुरसिचार्पयत् ॥ कृतवर्मातुसंक्रुद्धोमार्गणैः क्षतविक्षतः २८ ववामरुधिरंगात्रैःकुंभवक्त्रादिवोदकम् ॥ रुधिरेणपरिक्लिन्नःकृतवर्मात्वराजत २९

२० । २१ । २२ । २३ । २४ । २५ वर्मणःवर्मप्राप्यअभ्रश्यंतभ्रष्टाः वर्मनचिच्छिदुरित्यर्थः २६ । २७ । २८ ववामवांतवान् २९

३० । ३१ । ३२ । ३३ पार्षतं शिखंडिनम् ३४ । ३५ । ३६ । ३७ । ३८ ॥ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेषड्विंशोऽध्यायः ॥ २६ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ श्वेतेति १



वर्षेणक्लेदितोराजन्यथागैरिकपर्वतः ॥ अथान्यद्धनुरादायसमार्गणगुणंप्रभुः ३० शिखंडिनंबाणगणैःस्कंधदेशेऽभ्यताडयत् ॥ स्कंधदेशस्थितैर्बाणैःशिखंडी तुव्यराजत ३१ शाखाप्रशाखाविपुलःसुमहान्पादपोयथा ॥ तावन्योन्यंभृशंविद्धारुधिरेणसमुक्षितौ ३२ अन्योन्यशृंगाभिहतौरेजतुर्वृषभाविव ॥ अन्यो न्यस्यवधेयत्नंकुर्वाणौतौमहारथौ ३३ रथाभ्यांचेरतुस्तत्रमंडलानिसहस्रशः ॥ कृतवर्मामहाराजपार्षतंनिशितैःशरैः ३४ रणेविव्याधसप्तत्यास्वर्णपुंखैःशिला शितैः ॥ ततोऽस्यसमरेबाणंभोजःप्रहरतांवरः ३५ जीवितांतकरंघोरंव्यसृजत्त्वरयाऽन्वितः ॥ सतेनाभिहतोराजन्मूर्छामाशुसमाविशत् ३६ ध्वजयष्टिंचस हसाशिश्रियेकश्मलावृतः ॥ अपोवाहरणात्तूर्णंसारथीरथिनांवरम् ३७ हार्दिक्यशरसंतप्तंनिःश्वसंतंपुनःपुनः ॥ पराजितेततःशूरेद्रुपदस्यात्मजेप्रभो ॥ व्य द्रवत्पांडवीसेनावध्यमानासमंततः ३८ ॥ ॥ इति श्रीमहाभारते कर्णपर्वणि संकुलयुद्धे षड्विंशोऽध्यायः ॥ २६ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ श्वेताश्वोऽथमहाराजव्यधमत्तावकंबलम् ॥ यथावायुःसमासाद्यतूलराशिंसमंततः १ प्रत्युद्ययुस्त्रिगर्तास्तंशिबयःकौरवैःसह ॥ शाल्वाःसंशप्तकाश्चैवनारायणब लंचतत् २ सत्यसेनश्चंद्रदेवोमित्रदेवःश्रुतंजयः ॥ सौश्रुतिश्चित्रसेनश्चमित्रवर्माचभारत ३ त्रिगर्तराजःसमरेभ्रातृभिःपरिवारितः ॥ पुत्रैश्चैवमहेष्वासैर्नाना शस्त्रविशारदैः ४ व्यसृजंतशरव्रातान्किरंतोऽर्जुनमाहवे ॥ अभ्यवर्तंतसहसावार्योघाइवसागरम् ५ तेत्वर्जुनंसमासाद्ययोधाःशतसहस्रशः ॥ अगच्छन्नवि लयंसर्वेताक्ष्र्यंदृष्ट्वेवपन्नगाः ६ तेहन्यमानाःसमरेनाजहुःपांडवंरणे ॥ हन्यमानामहाराजशलभाइवपावकम् ७ सत्यसेनस्त्रिभिर्बाणैर्विव्याधयुधिपांडवम् ॥ मि त्रदेवस्त्रिषष्ट्याचतुचंद्रसेनस्तुसप्तभिः ८ मित्रवर्मात्रिसप्तत्यासौश्रुतिश्चापिसप्तभिः ॥ शत्रुंजयस्तुविंशत्यासुशर्मानवभिःशरैः ९ सविद्धोबहुभिःसंख्येप्रतिविव्या धतान्नृपान् ॥ सौश्रुतिंसप्तभिर्विद्ध्वासत्यसेनंत्रिभिःशरैः १० शत्रुंजयंचविंशत्याचंद्रदेवंतथाऽष्टभिः ॥ मित्रदेवंशतेनैवश्रुतसेनंत्रिभिःशरैः ११ नवभिर्मित्रवर्मा णंसुशर्माणंतथाऽष्टभिः ॥ शत्रुंजयंचराजानंहत्वातत्रशिलाशितैः १२ सौश्रुतेःसशिरस्त्राणंशिरःकायादपाहरत् ॥ त्वरितश्चंद्रदेवंचशरैर्निन्येयमक्षयम् १३ तथेतरान्महाराजयतमानान्महारथान् ॥ पंचभिःपंचभिर्बाणैरेकैकंप्रत्यवारयत् १४ सत्यसेनस्तुसंक्रुद्धस्तोमरंव्यसृजन्महत् ॥ समुद्दिश्यरणेकृष्णं सिंहनादंननादच १५ सनिर्भिद्यभुजंसव्यंमाधवस्यमहात्मनः ॥ अयस्मयोहेमदंडोजगाममधरणींतदा १६ माधवस्यतुविद्धस्यतोमरेणमहारणे ॥ प्रतोदःप्रापत द्धस्ताद्रश्मयश्चविशांपते १७ वासुदेवंविभिन्नांगंदृष्ट्वापार्थोधनंजयः ॥ क्रोधमाहारयत्तीव्रंकृष्णंचेदमुवाचह १८ प्रापयाश्वान्महाबाहोसत्यसेनंप्रतिप्रभो ॥ यावदेनंशरैस्तीक्ष्णैर्नयामियमसादनम् १९

२ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९

२० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ ध्वजादीनांशब्दोऽश्रूयतेतिषष्ठेनान्वयः २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ हस्त्यश्वंचास्यतःछिंदतःस्त्रा

प्रतोदंगृह्यसोऽन्यतुरश्मीनपियथापुरा ॥ वाहयामासतानश्वान्सत्यसेनरथंप्रति २० विष्वक्सेनंतुनिर्भिन्नंदृष्ट्वापार्थोधनंजयः ॥ सत्यसेनंशरैस्तीक्ष्णैर्वाराय त्वामहारथः २१ ततःसुनिशितैर्भल्लैराज्ञस्तस्यमहच्छिरः ॥ कुंडलोपचितंकायाच्चकर्तपृतनांतरे २२ तन्निकृत्यशितैर्बाणैर्मित्रवर्माणमाक्षिपत् ॥ वत्सदंतेनतीक्ष्णेनसारथिंचास्यमारिष २३ ततःशरशतैर्भूयःसंशप्तकगणान्बली ॥ पातयामाससंक्रुद्धःशतशोऽथसहस्रशः २४ ततोरजतपुंखेनराजन्शीर्षंमहात्मनः ॥ मित्रसेनस्याचिच्छेदक्षुरप्रेणमहारथः २५ सुशर्माणंसुसंक्रुद्धोजत्रुदेशेसमाहनत् ॥ ततःसंशप्तकाःसर्वेपरिवार्यधनंजयम् २६ शस्त्रौघैर्ममृदुःक्रुद्धानादयंतोदिशोदश ॥ अभ्यर्दितस्तुतैर्जिष्णुःशक्रतुल्यपराक्रमः २७ ऐंद्रमस्त्रममेयात्माप्रादुश्चक्रेमहारथः ॥ ततःशरसहस्राणिप्रादुरासन्विशांपते २८ ध्वजानांछिद्यमानानांकार्मुकाणांचमारिष ॥ रथानांसपताकानांतूणीराणांयुगैःसह २९ अक्षाणामथचक्राणांयोक्त्राणांरश्मिभिःसह ॥ कूबराणांवरूथानांपृषत्कानांचसंयुगे ३० अश्वानांपततांचापिप्रासानामृष्टिभिःसह ॥ गदानांपरिघाणांचशक्तितोमरपट्टिशैः ३१ शतघ्नीनांसचक्राणांभुजानांचोरुभिःसह ॥ कंठसूत्रांगदानांचकेयूराणांचमारिष ३२ हाराणामथनिष्काणांतनुत्राणांचभारत ॥ छत्राणांव्यजनानांचशिरसांमुकुटैःसह ३३ अश्रूयतमहान्शब्दस्तत्रतत्रविशांपते ॥ सकुंडलानिस्वक्षीणिपूर्णचंद्रनिभानिच ३४ शिरांस्युर्व्यामदृश्यंतताराजालमिवांबरे ॥ सुस्रग्वीणिसुवासांसिचंदनेनोक्षितानिच ३५ शरीराणिव्यदृश्यंतानिहतानांमहीतले ॥ गंधर्वनगराकारंघोरमायोधनंतदा ३६ निहतैराजपुत्रैश्चक्षत्रियैश्चमहाबलैः ॥ हस्तिभिःपतितैश्चैवतुरंगैश्चाभवन्मही ३७ अगम्यरूपासमरेविशीर्णैरिवपर्वतैः ॥ नासीच्चक्रपथस्तत्रपांडवस्यमहात्मनः ३८ निघ्नतःशात्रवान्भल्लैर्हस्त्यश्वंचास्यतोमहत् ॥ स्वानुगाइवसीदंतिरथचक्राणिमारिष ३९ चरतस्तस्यसंग्रामेतस्मिन्लोहितकर्दमे ॥ सीदमानानिचक्राणिसमूहुस्तुरगाभृशम् ४० श्रमेणमहतायुक्तामनोमारुतरंहसः ॥ वध्यमानंतुतत्सैन्यंपांडुपुत्रेणधन्विना ४१ प्रायशोविमुखंसर्वंनावतिष्ठतभारत ॥ तान्जित्वासमरेजिष्णुःसंशप्तकगणान्बहून् ॥ विरराजतदापार्थोविधूमोऽग्निरिवज्वलन् ४२ ॥ इतिश्रीमहाभारतेकर्णपर्वणिसंशप्तकजये सप्तविंशोऽध्यायः ॥ २७ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ युधिष्ठिरंमहाराजविसृजंतंशरान्बहून् ॥ स्वयंदुर्योधनोराजाप्रत्यगृह्णादभीतवत् १ तमापतंतंसहसातवपुत्रंमहारथम् ॥ धर्मराजोद्रुतंविद्ध्वातिष्ठतिष्ठेतिचाब्रवीत् २ सतुतंप्रतिविव्याधनवभिर्निशितैःशरैः ॥ सारथिंचास्यभल्लेनभृशंक्रुद्धोऽभ्यताडयत् ३

तुगाइव यथास्वस्मिन्नष्टेऽनुचराःसीदंत्येवंरथानांभंगंदृष्ट्वाचक्राणिनश्यंत्यक्षभंगादितिभावः । आतंकादिवेतिपाठेचिंतयेवेत्युपचारः ३९ सीदमानानिपंकमज्जनात् ४० । ४१ । ४२ ॥ इति क०नी०भा०सप्तविंशोऽध्यायः ॥ २७ ॥ ॥ ७ ॥ युधिष्ठिरमिति १ । २ । ३

४।५।६।७।८।९।१०।११।१२।१३।१४।१५।१६।१७।१८।१९।२०।२१।२२।२३ आभरणमवबद्धुः अवगत्यहृतवंतः २४ निमित्तंजयहेतुं महातोग

ततोयुधिष्ठिरोराजन्स्वर्णपुंखान्शिलीमुखान् ॥ दुर्योधनायचिक्षेपत्रयोदशशिलाशितान् ४ चतुर्भिश्चतुरोवाहांस्तस्यहत्वामहारथः ॥ पंचमेनशिरःकायात्सा रथेश्वसमाक्षिपत् ५ षष्ठेनतुध्वजंराज्ञःसप्तमेनतुकार्मुकम् ॥ अष्टमेनतथाखड्गंपातयामासभूतले ६ पंचभिर्नृपतिंचापिधर्मराजोऽर्दयद्भृशम् ॥ हताश्वात्तुरथा त्तस्मादवप्लुत्यसुतस्तव ७ उत्तमंव्यसनंप्राप्तोभूमावेवावतिष्ठत ॥ तंतुकृच्छ्रगतंदृष्ट्वाकर्णद्रौणिकृपादयः ८ अभ्यवर्ततसहसापरीप्संतोनराधिपम् ॥ अथपां डुसुताःसर्वेपरिवार्ययुधिष्ठिरम् ९ अन्वयुःसमरेराजंस्ततोयुद्धमवर्तत ॥ ततस्तूर्यसहस्राणिप्रावाद्यंतमहामृधे १० ततःकिलकिलाशब्दाःप्रादुरासन्महीपते ॥ यत्राभ्यगच्छन्समरेपंचालाःकौरवैःसह ११ नरानरैःसमाजग्मुर्वारणावरवारणैः ॥ रथाश्वरथिभिःसार्धंहयाश्वहयसादिभिः १२ द्वंद्वान्यासन्महाराजप्रेक्षणी यानिसंयुगे ॥ विविधान्यप्यचिंत्यानिशस्त्रवंत्युत्तमानिच १३ तेशूराःसमरेसर्वेचित्रंलघुचसुष्ठुच ॥ अयुध्यंतमहावेगाःपरस्परवधैषिणः १४ अन्योन्यंसमरे जघ्नुर्योधव्रतमनुष्ठिताः ॥ नहितेसमरंचक्रुःपृष्ठतोवैकथंचन १५ मुहूर्तमेवतद्युद्धमासीन्मधुरदर्शनम् ॥ ततउन्मत्तवद्राजन्निर्मर्यादमवर्तत १६ रथीनागंसमा साद्यदारयन्निशितैःशरैः ॥ प्रेषयामासकालायशरैःसन्नतपर्वभिः १७ नागाहयान्समासाद्यविक्षिपंतोबहून्रणे ॥ दारयामासुरत्युग्रंतत्रतत्रतदातदा १८ हया रोहाश्वबहवःपरिवार्यहयोत्तमान् ॥ तलशब्दरवांश्चक्रुःसंपतंतस्ततस्ततः १९ धावमानांस्ततस्तांस्तुद्रवमाणान्महागजान् ॥ पार्श्वतःपृष्ठतश्चैवनिजघ्नुर्हय सादिनः २० विद्राव्यचबहूनश्वान्नागाराजन्मदोत्कटाः ॥ विषाणैश्चापरेजघ्नुर्ममृदुश्चापरेभृशम् २१ साश्वारोहांश्चतुरगान्विषाणैर्विव्यधूरुषा ॥ अपरेचि क्षिपुर्वेगात्प्रगृह्यातिबलास्तदा २२ पादातैराहतानागाविवरेषुसमंततः ॥ चक्रुरार्तस्वरंघोरंदुद्रुवुश्चदिशोदश २३ पदातीनांतुसहसाप्रद्रुतानांमहाहवे ॥ उ त्सृज्यभरणंतूर्णमवब्रूरणाजिरे २४ निमित्तंमन्यमानास्तुपरिणाम्यमहागजाः ॥ जगृहुर्बिभिदुश्चैवचित्राण्याभरणानिच २५ तांस्तुतत्रप्रसक्तान्वैपरिवार्यप दातयः ॥ हस्त्यारोहान्निजघ्नुस्तेमहावेगाबलोत्कटाः २६ अपरेहस्तिभिर्हस्तैःखंविक्षिप्तामहाहवे ॥ निपतंतोविषाणाग्रैर्भृशंविद्धाःसुशिक्षितैः २७ अपरेसह साग्रह्यविषाणैरेवसूदिताः ॥ सेनांतरंसमासाद्यकेचित्तत्रमहागजैः २८ क्षुण्णगात्रामहाराजविक्षिप्यचपुनःपुनः ॥ अपरेव्यजनानीवविभ्राम्यनिहतामृधे २९ पुरःसराश्वनागानामपरेषांविशांपते ॥ शरीराण्यतिविद्धानितत्रतत्ररणाजिरे ३० प्रतिमानेषुकुंभेषुदंतवेष्टेषुचापरे ॥ निगृहीताभृशंनागाःप्रासतोमरशक्ति भिः ३१ निगृह्यचगजाःकेचित्पार्श्वस्थैर्भृशदारुणैः ॥ रथाश्वसादिभिस्तत्रसंभिन्नान्यपतन्भुवि ३२

जा येषांतेमहागजागजारोहाजगृहुर्हस्तिभिर्ग्राहयामासुः परिणाम्यहास्तिनमितिशेषः बिभिदुश्चशत्रून्मनैरेव २५ । २६ । २७ । २८ । २९ । ३० प्रतिमानेषुगजदंतांतरालेषु प्रासैःकुंभेषुतोमरै र्दंतवेष्टेषु शक्तिभिश्चनिगृहीताः 'प्रतिमानंप्रतिच्छायागजदंतांतरालयोः' इतिमेदिनी ३१ । ३२

३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेऽष्टाविंशोऽध्यायः ॥ २८ ॥ ॥ ७ ॥

सहयाःसादिनस्तत्रतोमरेणमहामृधे ॥ भूमावमृद्नन्वेगेनसचर्माणंपदातिनम् ३३ तथासावरणान्कांश्चित्तत्रतत्रविशांपते ॥ रथान्नागाःसमासाद्यपरिगृह्यचमारिष ३४ व्याक्षिपन्सहसातत्रघोररूपेभयानके ॥ नाराचैर्निहताश्चापिगजाःपेतुर्महाबलाः ३५ पर्वतस्येवशिखरंवज्ररुग्णंमहीतले ॥ योधायोधान्समासाद्यमुष्टिभिर्व्यहनन्युधि ३६ केशेष्वन्योन्यमाक्षिप्यचिक्षिपुर्बिभिदुश्चह ॥ उद्यम्यचभुजानन्येनिक्षिप्यचमहीतले ३७ पदाचोरःसमाक्रम्यस्फुरतोऽपाहरच्छिरः ॥ पततश्चापरोराजन्विजहारासिनाशिरः ३८ जीवतश्चतथैवान्यःशस्त्रंकायेन्यमज्जयत् ॥ मुष्टियुद्धंमहच्चासीद्योधानांतत्रभारत ३९ तथाकेशग्रहश्चोग्रोबाहुयुद्धंचभैरवम् ॥ समासक्तस्यचान्येनअविज्ञातस्तथाऽपरः ४० जहारसमरेप्राणान्नानाशस्त्रैरनेकधा ॥ संसक्तेषुचयोधेषुवर्तमानेचसंकुले ४१ कबंधान्युत्थितानिस्युःशतशोऽथसहस्रशः ॥ शोणितैःसिच्यमानानिशस्त्राणिकवचानिच ४२ महारागानुरक्तानिवस्त्राणीवचकाशिरे ॥ एवमेतन्महद्युद्धंदारुणंशस्त्रसंकुलम् ४३ उन्मत्तगंगाप्रतिमंशब्देनापूरयज्जगत् ॥ नैवस्वेनपरेराजन्विज्ञायंतेशरातुराः ४४ योद्धव्यमितियुध्यंतेराजानोजयगृद्धिनः ॥ स्वान्स्वेजघ्नुर्महाराजपरांश्चैवसमागतान् ४५ उभयोःसेनयोर्वीरैर्व्याकुलंसमपद्यत ॥ रथैर्भग्नैर्महाराजवारणैश्चनिपातितैः ४६ हयैश्चपतितैस्तत्रनरैश्चविनिपातितैः ॥ अगम्यरूपापृथिवीक्षणेनसमपद्यत ४७ क्षणेनासीन्महीपालक्षतजौघप्रवर्तिनी ॥ पंचालानहनत्कर्णस्त्रिगर्तांश्चधनंजयः ४८ भीमसेनःकुरून्राजन्हस्त्यनीकंचसर्वशः ॥ एवमेषक्षयोवृत्तःकुरुपांडवसेनयोः ॥ अपराह्णेगतेसूर्येकांक्षतांविपुलंयशः ४९ ॥ इतिश्रीमहाभारतेकर्णपर्वणिसंकुलयुद्धेऽष्टाविंशोऽध्यायः ॥ २८ ॥ ७ ॥

॥ धृतराष्ट्रउवाच ॥ अतितीव्राणिदुःखानिदुःसहानिबहूनिच ॥ त्वत्तोऽहंसंजयाश्रौषंपुत्राणांचैवसंक्षयम् १ यथात्वंमेकथयसेयथायुद्धमवर्तत ॥ नसंतिसूतकौरव्याइतिमेनिश्चितामतिः २ दुर्योधनश्चविरथःकृतस्तत्रमहारथः ॥ धर्मपुत्रःकथंचक्रेतस्यवानृपतिःकथम् ३ अपराह्णेकथंयुद्धमभवल्लोमहर्षणम् ॥ तन्ममाचक्ष्वतत्त्वेनकुशलोह्यसिसंजय ४ ॥ संजयउवाच ॥ संसक्तेषुतुसैन्येषुवध्यमानेषुभागशः ॥ रथमन्यंसमास्थायपुत्रस्तवविशांपते ५ क्रोधेनमहतायुक्तःसविषोभुजगोयथा ॥ दुर्योधनःसमालक्ष्यधर्मराजंयुधिष्ठिरम् ६ प्रोवाचसूतंत्वरितोयाहियाहीतिभारत ॥ तत्रमांप्रापयक्षिप्रंसारथेयत्रपांडवः ७ ध्रियमाणातपत्रेणराजाराजतिदंशितः ॥ ससूतश्चोदितोराज्ञाराज्ञःस्यंदनमुत्तमम् ८ युधिष्ठिरस्याभिमुखंप्रेषयामाससंयुगे ॥ ततोयुधिष्ठिरःक्रुद्धःप्रभिन्नइवकुंजरः ९ सारथिंचोदयामासयाहियत्रसुयोधनः ॥ तौसमाजग्मतुर्वीरौभ्रातरौरथसत्तमौ १०

अतीवि १ । २ विरथःकृतइत्युक्तंतत्रयुद्धेधर्मपुत्रःकथंतंविरथंचक्रे तस्यतंचनृपतिर्दुर्योधनःकथमयुध्यतेतिशेषः ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०

११ । १२ अपविद्धत्यक्त्वा १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ सर्वपारसवीं सर्वविनाशिनीं गौरादिः । 'तिरस्कारविनाशेषवर्णुंसिपारसवःपुमान्' इतिमेदिनी २३

समेत्यचमहावीरौसंरब्धौयुद्धदुर्मदौ ॥ ववर्षतुर्महेष्वासौशरैरन्योन्यमाहवे ११ ततोदुर्योधनोराजाधर्मशीलस्यमारिष ॥ शिलाशितेनभल्लेनधनुश्चिच्छेदसंयु गे १२ तंनामृष्यतसंक्रुद्धोह्यवमानंयुधिष्ठिरः ॥ अपविध्यधनुश्छिन्नंक्रोधसंरक्तलोचनः १३ अन्यत्कार्मुकमादायधर्मपुत्रश्चमूमुखे ॥ दुर्योधनस्याचिच्छेदध्व जंकार्मुकमेवच १४ अथान्यद्धनुरादायप्राविध्यतयुधिष्ठिरम् ॥ तावन्योन्यंसुसंक्रुद्धौशस्त्रवर्षाण्यमुंचताम् १५ सिंहाविवसुसंरब्धौपरस्परजिगीषया ॥ ज घ्नतुस्तौरणेऽन्योऽन्यंनर्दमानौवृषाविव १६ अंतरंमार्गमाणौचचेरतुस्तौमहारथौ ॥ ततःपूर्णायतोत्सृष्टैःशरैस्तौतुक्षतव्रणौ १७ विरेजतुर्महाराजकिंशुकावि वपुष्पितौ ॥ ततोराजन्विमुंचंतौसिंहनादान्मुहुर्मुहुः १८ तलयोश्चतथाशब्दान्धनुषश्चमहाहवे ॥ शंखशब्दवरांश्चैवचक्रतुस्तौनरेश्वरौ १९ अन्योन्यंतौम हाराजपीडयांचक्रतुर्भृशम् ॥ ततोयुधिष्ठिरोराजापुत्रंतवशरैस्त्रिभिः २० आजघानोरसिक्रुद्धोवज्रवेगैर्दुरासदैः ॥ प्रतिविव्याधतंतूर्णंतवपुत्रोमहीपतिः २१ पं चभिर्निशितैर्बाणैःस्वर्णपुंखैःशिलाशितैः ॥ ततोदुर्योधनोराजाशक्तिंचिक्षेपभारत २२ सर्वपारसवींतीक्ष्णांमहोल्काप्रतिमांतदा ॥ तामापतंतींसहसाधर्मरा जःशितैःशरैः २३ त्रिभिश्चिच्छेदसहसातंचविव्याधपंचभिः ॥ निपपातततःसाऽथस्वर्णदंडामहास्वना २४ निपतंतीमहोल्केवऽपराजच्छिखिसन्निभा ॥ श क्तिंविनिहतांदृष्ट्वापुत्रस्तवविशांपते २५ नवभिर्निशितैर्भल्लैर्निजघानयुधिष्ठिरम् ॥ सोतिऽविद्धोबलवताशत्रुणाशत्रुतापनः २६ दुर्योधनंसमुद्दिश्यबाणंजग्रा हसत्वरः ॥ समाधत्तचतंबाणंधनुर्मध्येमहाबलः २७ चिक्षेपचमहाराजततःक्रुद्धःपराक्रमी ॥ सतुबाणःसमासाद्यतवपुत्रंमहारथम् २८ व्यामोहयतराजानंधर णींचददारह ॥ ततोदुर्योधनःक्रुद्धोगदामुद्यम्यवेगितः २९ विधित्सुःकलहस्यातंधर्मराजमुपाद्रवत् ॥ तमुद्यतगदंदृष्ट्वादंडहस्तमिवांतकम् ३० धर्मराजोमहा शक्तिंप्राहिणोत्तवसूनवे ॥ दीप्यमानांमहावेगांमहोल्कांज्वलितामिव ३१ रथस्थःसतयाविद्धोवर्मभित्त्वास्तनांतरे ॥ भृशंसंविग्नहृदयःपपातचमुमोहच ३२ भीम स्तमाहचततःप्रतिज्ञामनुचिंतयन् ॥ नायंवध्यस्तवनृपइत्युक्तःसन्यवर्तत ३३ ततस्त्वरितमागम्यकृतवर्मातवात्मजम् ॥ प्रत्यपद्यतराजानंनिमग्नंव्यस नार्णवे ३४ गदामादायभीमोऽपिहेमपट्टपरिष्कृताम् ॥ अभिदुद्राववेगेनकृतवर्माणमाहवे ३५ एवंतदभवद्युद्धंत्वदीयानांपरैःसह ॥ अपराह्णेमहाराजकांक्षतां विजयंयुधि ३६ ॥ इतिश्रीमहाभारतेकर्णपर्वणिसंकुलयुद्धेएकोनत्रिंशोऽध्यायः ॥ २९ ॥ छ ॥ संजयउवाच ॥ ततःकर्णंपुरस्कृत्यत्वदीयायुद्धदुर्मदाः ॥ पुन रावृत्यसंग्रामंचक्रुर्देवासुरोपमम् १ द्विरदनररथाश्वशंखशब्दैःपरिहृषिताविविधैश्चशस्त्रपातैः ॥ द्विरदरथपदातिसादिसंघाःपरिकुपिताभिमुखाःप्रजघ्निरेते २

२४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपेएकोनत्रिंशोऽध्यायः ॥ २९ ॥ ॥ ततइति १ । २

३ । ४ । ५ । ६ । ७ लवणजलः क्षारसमुद्रः ८ त्रिदशवरावरजोपमं विष्णुतुल्यम् ९ । १० । ११ । १२ तृतावागतौ १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३

शितपरश्वधसासिपट्टिशैरिषुभिरनेकविधैश्वसूदिताः ॥ द्विरदरथहयामहाहवेवरपुरुषैः पुरुषाश्ववाहनैः ३ कमलदिनकरेंदुसन्निभैःसितदशनैःसुमुखाक्षिनासिकैः ॥ रुचिरमुकुटकुंडलैर्महीपुरुषशिरोभिरुपस्तृताबभौ ४ परिघमुसलशक्तितोमरैर्नखरभुशुंडिगदाशतैर्हताः ॥ द्विरदनरहयाःसहस्रशोरुधिरनदीप्रवहास्तदाऽभवन् ५ प्रहतरथनराश्वकुंजरंप्रतिभयदर्शनमुल्बणव्रणम् ॥ तदहितहतमाबभौबलंपितृपतिराष्ट्रमिवप्रजाक्षये ६ अथतवनरदेवसैनिकास्तवचसुताःसुरसूनुसन्निभाः ॥ अमितबलपुरःसरारणेकुरुवृषभाःशिनिपुत्रमभ्ययुः ७ तदतिरुधिरभीममाबभौपुरुषवराश्वरथद्विपाकुलम् ॥ लवणजलसमुद्धतस्वनंबलमसुरामरसैन्यसप्रभम् ८ सुरपतिसमविक्रमस्ततस्त्रिदशवरावरजोपमंयुधि ॥ दिनकरकिरणप्रभैःपृषत्कैरवितनयोऽभ्यहनाच्छिनिप्रवीरम् ९ तमपिसरथवाजिसारथिंशिनिवृषभोविविधैःशरैस्त्वरन् ॥ भुजगविषसमप्रभैरणेपुरुषवरंसमवास्तृणोत्तदा १० शिनिवृषभशरैर्निपीडितंतवसुहृदोवसुषेणमभ्ययुः ॥ त्वरितमतिरथारथर्षभंद्विरदरथाश्वपदातिभिःसह ११ तदुदधिनिभमाद्रवद्बलंत्वरिततरैःसमभिद्रुतंपरैः ॥ द्रुपदसुतमुखैस्तदाऽभवत्पुरुषरथाश्वगजक्षयोमहान् १२ अथपुरुषवरौकृताह्निकौभवमभिपूज्ययथाविधिप्रभुम् ॥ अरिवधकृतनिश्चयौद्रुतंतवबलमर्जुनकेशवौसृतौ १३ जलदनिनदनिःस्वनंरथंपवनविधूतपताककेतनम् ॥ सितहयमुपयांतमंतिकंकृतमनसोददृशुस्तदाऽरयः १४ अथविस्फार्यगांडीवंरथेनृत्यन्निवार्जुनः ॥ शरसंबाधमकरोत्खंदिशःप्रदिशस्तथा १५ रथान्विमानप्रतिमान्मज्जयन्सायुधध्वजान् ॥ ससारथींस्तदाबाणैरभ्राणीवानिलोऽवधीत् १६ गजान्गजप्रयंतॄंश्ववैजयंत्यायुधध्वजान् ॥ सादिनोऽश्वांश्चपत्तींश्वशरैर्निन्येयमक्षयम् १७ तमंतकमिवक्रुद्धमनिवार्यमहारथम् ॥ दुर्योधनोऽभ्ययादेकोनिघ्नन्बाणैरजिह्मगैः १८ तस्यार्जुनोधनुःसूतमश्वान्केतुंचसायकैः ॥ हत्वासप्तभिरेकेनच्छत्रंचिच्छेदपत्रिणा १९ नवमंचसमाधायव्यसृजत्प्राणघातिनम् ॥ दुर्योधनायेषुवरंतंद्रौणिःसप्तधाऽच्छिनत् २० ततोद्रौणेर्धनुश्छित्वाहत्वाचाश्वरथान्शरैः ॥ कृपस्यापितदत्युग्रंधनुश्चिच्छेदपांडवः २१ हार्दिक्यस्यधनुश्छित्वाध्वजंचाश्वांस्तदाऽवधीत् ॥ दुःशासनस्येष्वसनंछित्वाराधेयमभ्यययात् २२ अथसात्यकिमुत्सृज्यत्वरन्कर्णोऽर्जुनंत्रिभिः ॥ विद्ध्वाविव्याधविंशत्याकृष्णंपार्थंपुनःपुनः २३ नग्लानिरासीत्कर्णस्याक्षिपतःसायकान्बहून् ॥ रणेविनिघ्नतःशत्रून्क्रुद्धस्येवशतक्रतोः २४ अथसात्यकिरागत्यकर्णंविद्ध्वाशितैःशरैः ॥ नवत्यानवभिश्चोग्रैःशतेनपुनरार्पयत् २५ ततःप्रवीराःपार्थानांसर्वेकर्णमपीडयन् ॥ युधामन्युःशिखंडीचद्रौपदेयाःप्रभद्रकाः २६ उत्तमौजायुयुत्सुश्चयमौपार्षतएवच ॥ चेदिकारूषमत्स्यानांकैकयानांचयद्बलम् २७ चेकितानश्चबलवान्धर्मराजश्चसुव्रतः ॥ एतेरथाश्वद्विरदैःपत्तिभिश्चोग्रविक्रमैः २८ परिवार्यरणेकर्णंनानाशस्त्रैरवाकिरन् ॥ भाषंतोवाग्भिरुग्राभिःसर्वेकर्णवधेधृताः २९

२४ । २५ । २६ । २७ । २८ । २९

३० । ३१ । ३२ । ३३ । ३४ । ३५ निष्कैवल्यंनिश्चितंकैवल्यंमरणंयस्मिंस्तत्तथा ३६ प्रत्यपद्यतप्रविष्टः ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपे त्रिंशोऽध्यायः ॥ ३० ॥ ॥ ७ ॥ स्वेनच्छंदेनइच्छया आततायिनःशस्त्रपाणेः १ मद्रांसुमद्रां बलिभृतःकरदान् २ । ३ अरक्षतघोषयात्रायां भरतान्दुर्योधनादीन् ४

तांशस्त्रवृष्टिंबहुधाकर्णश्छित्त्वाशितैःशरैः ॥ अपोवाहास्त्रवीर्येणद्रुमभंक्त्वेवमारुतः ३० रथिनःसमहामात्रान्गजानश्वान्ससादिनः ॥ पत्तिव्रातांश्चसंक्रुद्धोनिघ्नन्कर्णोऽभ्यदृश्यत ३१ तद्वध्यमानंपांडूनांबलंकर्णास्त्रतेजसा ॥ विशस्त्रपत्रदेहासुप्रायआसीत्पराङ्मुखम् ३२ अथकर्णास्त्रमस्त्रेणप्रतिहत्यार्जुनःस्मयन् ॥ दिशंखंचैवभूमिंचप्रावृणोच्छरवृष्टिभिः ३३ मुसलानीवसंपेतुःपरिघाइवचेषवः ॥ शतघ्न्यइवचाप्यन्येवज्राण्युग्राणिचापरे ३४ तैर्वध्यमानंतत्सैन्यंसपत्त्यश्वरथद्विपम् ॥ निमीलिताक्षमत्यर्थंबभ्रामचननादच ३५ निष्कैवल्यंतदायुद्धंप्रापुरश्वनरद्विपाः ॥ हन्यमानाःशरैरार्तास्तदाभीताःप्रदुद्रुवुः ३६ त्वदीयानांतदायुद्धेसंसक्तानांजयैषिणाम् ॥ गिरिमस्तंसमासाद्यप्रत्यपद्यतभानुमान् ३७ तमसाचमहाराजरजसाचविशेषतः ॥ नकिंचित्प्रत्यपश्यामशुभंवायदिवाऽशुभम् ३८ तेत्रस्यंतोमहेष्वासारात्रियुद्धस्यभारत ॥ अपयानंततश्चक्रुःसहिताःसर्वयोधिभिः ३९ कौरवेष्वपयातेषुतदाराजन्दिनक्षये ॥ जयंसुमनसःप्राप्यपार्थाःस्वाशिबिरंययुः ४० वादित्रशब्दैर्विविधैःसिंहनादैःसगर्जितैः ॥ परानुपहसंतश्चस्तुवंतश्चाच्युतार्जुनौ ४१ कृतेऽवहारेतैर्वीरैःसैनिकाःसर्वएवते ॥ आशीर्वाचःपांडवेषुप्रायुंजंतनरेश्वराः ४२ ततःकृतेऽवहारेचप्रहृष्टास्तत्रपांडवाः ॥ निशायांशिबिरंगत्वान्यवसंतनरेश्वराः ४३ ततोरक्षःपिशाचाश्चश्वापदाश्चैवसंघशः ॥ जग्मुरायोधनंघोरंरुद्रस्याक्रीडसन्निभम् ४४ ॥ इतिश्रीमहाभारते कर्णपर्वणिप्रथमेयुद्धदिवसेत्रिंशोऽध्यायः ॥ ३० ॥ ॥ धृतराष्ट्रउवाच ॥ स्वेनच्छंदेननःसर्वानवधीद्व्यक्तमर्जुनः ॥ नह्यस्यसमरेमुच्येदंतकोप्याततायिनः १ पार्थश्चैकोऽहरद्भद्रामेकश्चाग्निमतर्पयत् ॥ एकश्चेमांमहींजित्वाचक्रेबलिभृतोनृपान् २ एकोनिवातकवचानहनद्दिव्यकार्मुकः ॥ एकःकिरातरूपेणस्थितंशर्वमयोधयत् ३ एकोह्यरक्षद्भरतानेकोभवमतोषयत् ॥ तेनैकेनजिताःसर्वेमहीपाह्युग्रतेजसा ४ नतेनिंद्याःप्रशस्यास्तेयत्तेचक्रुर्ब्रवीहितत् ॥ ततोदुर्योधनःसूतपश्चात्किमकरोत्तदा ५ ॥ संजयउवाच ॥ हतप्रहतविध्वस्ताविवर्मायुधवाहनाः ॥ दीनस्वरादूयमानामानिनःशत्रुनिर्जिताः ६ शिबिरस्थाःपुनर्मंत्रंमंत्रयंतिस्मकौरवाः ॥ भग्नदंष्ट्राहतविषाःपादाक्रांताइवोरगाः ७ तानब्रवीत्ततःकर्णःक्रुद्धःसर्पइवश्वसन् ॥ करंकरेणनिष्पीड्यप्रेक्षमाणस्तवात्मजम् ८ यत्तोदृढश्चदक्षश्चधृतिमानर्जुनस्तदा ॥ संबोधयतिचाप्येनंयथाकालमधोक्षजः ९ सहसाऽस्त्रविसर्गेणवयंतेनाद्यवंचिताः ॥ श्वस्त्वहंतस्यसंकल्पंसर्वंहंतामहीपते १० एवमुक्तस्तथेत्युक्त्वासोऽनुजज्ञेनृपोत्तमान् ॥ तेऽनुज्ञातानृपाःसर्वेस्वानिवेश्मानिभेजिरे ११

तेअस्मदीयानानिंद्याः तेशब्दस्याभ्यासाद्वाक्यत्रयमिदं तथादुर्योधनोऽपिननिंद्यः अपितुततःविस्तृतः तादृशंशत्रुंप्राप्यख्यातिंगतइत्यर्थः ५ हतास्ताडिताः प्रहताश्छिन्नावयवाः विध्वस्ताः वाहनेभ्योऽधःपातिताः ६ । ७ । ८ । ९ सहसाअकस्मात् १० । ११

१२ मतेस्थितेनेतिशेषः प्रतीपकर्त्तारंशत्रूणांछेत्तारं प्रवीरंप्रकृष्टंवीरं १३ । १४ आत्ययिकेषुप्राणसंकटेषु १५ । १६ अप्यपश्यतआपिःप्रश्ने १७ । १८ । १९ मत्तःकर्णाश्रयेणमूढः भाविनाशानवधानात् २० । २१ । २२ । २३ निष्ठाविपाकः २४ । २५ कर्णश्चनीतिमानितिमन्यतइतिपूर्वेणान्वयः २६ । २७ स्त्रीमध्यमिवगाहंते सेनांमृद्नंतीत्यर्थः निमित्तानिद्यूतादीनि धर्मिष्ठानीति

सुखोषितास्तांरजनींहृष्टायुद्धायनिर्ययुः ॥ तेऽपश्यन्विहितंव्यूहंधर्मराजेनदुर्जयम् १२ प्रयत्नात्कुरुमुख्येनबृहस्पत्युशनोमते ॥ अथप्रतीपकर्तारंप्रवीरंपरवीरहा १३ सस्मारवृषभस्कंधंकर्णंदुर्योधनस्तदा ॥ पुरंदरसमंयुद्धेमरुद्गणसमंबले १४ कार्तवीर्यसमंवीर्येकर्णंराज्ञोऽगमन्मनः ॥ सर्वेषांचैवसैन्यानांकर्णमेवागमन्मनः ॥ सूतपुत्रंमहेष्वासंबंधुमात्ययिकेष्विव १५ ॥ धृतराष्ट्रउवाच ॥ ततोदुर्योधनःसूतपश्चात्किमकरोत्तदा ॥ यद्वोऽगमन्मनोमंदाःकर्णंवैकर्तनंप्रति १६ अप्यपश्यतराधेयंशीतार्तइवभास्करम् ॥ कृतेऽवहारेसैन्यानांप्रवृत्तेचरणेपुनः १७ कथंवैकर्तनःकर्णस्तत्रायुध्यतसंजय ॥ कथंचपांडवाःसर्वेयुयुधुस्तत्रसूतजम् १८ कर्णोह्येकोमहाबाहुर्हन्यात्पार्थान्ससृंजयान् ॥ कर्णस्यभुजयोर्वीर्यंशक्रविष्णुसमंयुधि १९ तस्यशस्त्राणिघोराणिविक्रमश्चमहात्मनः ॥ कर्णमाश्रित्यसंग्रामेमत्तोदुर्योधनोनृपः २० दुर्योधनंततोदृष्ट्वापांडवेनभृशार्दितम् ॥ पराक्रांतान्पांडुसुतान्दृष्ट्वाचापिमहारथः २१ कर्णमाश्रित्यसंग्राममेमंदोदुर्योधनःपुनः ॥ जेतुमुत्सहतेपार्थान्सपुत्रान्सहकेशवान् २२ अहोबतमहद्दुःखंयत्रपांडुसुतान्रणे ॥ नातरद्रभसःकर्णोदैवंनूनंपरायणम् २३ अहोद्यूतस्यनिष्ठेयंघोरासंप्रतिवर्तते ॥ अहोतीव्राणिदुःखानिदुर्योधनकृतान्यहम् २४ सोढाघोराणिबहुशःशल्यभूतानिसंजय ॥ सौबलंचतदातातनीतिमानितिमन्यते २५ कर्णश्चरभसोनित्यंराजातंचाप्यनुव्रतः ॥ यदेवंवर्तमानेषुमहायुद्धेषुसंजय २६ अश्रौषंनिहतान्पुत्रान्नित्यमेवविनिर्जितान् ॥ नपांडवानांसमरेकश्चिदस्तिनिवारकः २७ स्त्रीमध्यमिवगाहंतेदैवंतुबलवत्तरम् ॥ ॥ संजयउवाच ॥ राजन्पूर्वंनिमित्तानिधर्मिष्ठानिविचिंतय २८ अतिक्रांतंहियःकार्यंपश्चाच्चिंतयतेनरः ॥ तच्चास्यनभवेत्कार्यंचिंतयाचविनश्यति २९ तदिदंतवकार्यंतुदूरप्राप्तंविजानता ॥ नकृतंयत्त्वयापूर्वंप्राप्ताप्राप्तविचारणम् ३० उक्तोसिबहुधाराजन्मायुध्यस्वेतिपांडवैः ॥ गृह्णीषेनचतन्मोहाद्वचनंचविशांपते ३१ त्वयापापानिघोराणिसमाचीर्णानिपांडुषु ॥ त्वत्कृतेवर्ततेघोरःपार्थिवानांजनक्षयः ३२ तत्त्विदानीमतिक्रांतंमाशुचोभरतर्षभ ॥ शृणुसर्वंयथावृत्तंघोरंवैशसमुच्यत ३३ प्रभातायांरजन्यांतुकर्णोराजानमभ्ययात् ॥ समेत्यचमहाबाहुर्दुर्योधनमथाब्रवीत ३४ ॥ कर्णउवाच ॥ अद्यराजन्समेष्यामिपांडवेनयशस्विना ॥ निहनिष्यामितंवीरंसवामांनिहनिष्यति ३५ बहुत्वान्ममकार्याणांतथापार्थस्यभारत ॥ नाभूत्समागमोराजन्ममचैवार्जुनस्यच ३६ इदंतुमेयथाप्रज्ञंशृणुवाक्यंविशांपते ॥ अनिहत्यरणेपार्थंनाहमेष्यामिभारत ३७ हतप्रवीरेसैन्येऽस्मिन्नयिचावस्थितेयुधि ॥ अभियास्यतिमांपार्थःशक्रशक्तिविनाकृतम् ३८

सोपालंभं विरुद्धानीत्यर्थः २८ । २९ कार्यंराज्यलाभाख्यंदूरप्राप्तंअत्यंतदुर्लभं यद्यतोविजानताऽपित्वयाप्राप्ताप्राप्तविचारणंयुक्तायुक्तपरीक्षणंनकृतमित्यन्वयः ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३७ शक्रशक्तीति स्वस्यार्जुनवधेसामर्थ्याभावंद्योतयति ३८

श्रेयस्करमात्मत्राणकरंवीर्यसमानमितिशेषः ३९ कार्यस्यकर्तव्यस्यपरकीयस्यभेदेविनाशे लाघवेशैघ्र्ये सौष्टवेकौशले ४० प्राणेशारीरबले । शौर्येमानसबले । विज्ञानेअस्त्रशिक्षायाम् ।
विक्रमेफलोपधानेऽस्त्राणां । निमित्तज्ञानयोगेलक्ष्यसंबंधावधारणे ४१ महामात्रंश्रेष्ठंविजयाख्यंनामप्रसिद्धम् ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ सिद्धिर्मोक्षः आत्मवतो

ततःश्रेयस्करंयच्चतन्निबोधजनेश्वर ॥ आयुधानांचमेवीर्यंदिव्यानामर्जुनस्यच ३९ कार्यस्यमहतोभेदेलाघवेदूरपातने ॥ सौष्ठवेचास्त्रपातेचसव्यसाचीनमत्स
मः ४० प्राणेशौर्येऽथविज्ञानेविक्रमेचापिभारत ॥ निमित्तज्ञानयोगेचसव्यसाचीनमत्समः ४१ सर्वायुधमहामात्रंविजयंनामतद्धनुः ॥ इंद्रार्थंप्रियकामेननिर्मि
तंविश्वकर्मणा ४२ येनदैत्यगणान्राजन्जितवान्वैशतक्रतुः ॥ यस्यघोषेणदैत्यानांव्यामुह्यंतदिशोदश ४३ तद्भार्गवायप्रायच्छच्छक्रःपरमसंमतम् ॥ तद्दि
व्यंभार्गवोमह्यमददद्धनुरुत्तमम् ४४ तेनयोत्स्येमहाबाहुमर्जुनंजयतांवरम् ॥ यथेंद्रःसमरेसर्वान्दैतेयान्वैसमागतान् ४५ धनुर्घोरंरामदत्तंगांडीवात्तद्विशिष्य
ते ॥ त्रिस्सप्तकृत्वःपृथिवीधनुषायेननिर्जिता ४६ धनुषोह्यस्यकर्माणिदिव्यानिप्राहभार्गवः ॥ तद्रामोह्यददन्मह्यंतेनयोत्स्यामिपांडवम् ४७ अद्यदुर्योध
नाहंत्वांनंदयिष्येसबांधवम् ॥ निहत्यसमरेवीरमर्जुनंजयतांवरम् ४८ सपर्वतवनद्वीपाहतवीरासंसागरा ॥ पुत्रपौत्रप्रतिष्ठातेभविष्यत्यद्यपार्थिव ४९ ना
शक्यंविद्यतेमेऽद्यत्वत्प्रियार्थंविशेषतः ॥ सम्यग्धर्मानुरक्तस्यसिद्धिरात्मवतोयथा ५० नहिमांसमरेसोढुंसशक्तोऽग्निंतरुर्यथा ॥ अवश्यंतुमयावाच्यंयेनहीनोऽ
स्मिफाल्गुनात् ५१ ज्यातस्यधनुषोदिव्यातथाऽक्षय्येमहेषुधी ॥ सारथिस्तस्यगोविंदोममतादृङ्नविद्यते ५२ तस्यदिव्यंधनुश्रेष्ठंगांडीवमजितंयुधि ॥ वि
जयंचमहद्दिव्यंममापिधनुरुत्तमम् ५३ तत्राहमधिकःपार्थाद्धनुषातेनपार्थिव ॥ येनचाप्यधिकोवीरःपांडवस्तन्निबोधमे ५४ रश्मिग्राहश्चदाशार्हःसर्वलोकन
मस्कृतः॥ अग्निदत्तश्चवैदिव्योरथःकांचनभूषणः ५५ अच्छेद्यःसर्वतोवीरवाजिनश्चमनोजवाः ॥ ध्वजश्चदिव्योद्युतिमान्वानरोविस्मयंकरः ५६ कृष्णश्चस्रष्टाजग
तोरथंतमभिरक्षति ॥ एतैर्द्रव्यैरहंहीनोयोद्धुमिच्छामिपांडवम् ५७ अयंतुसदृशःशौरेःशल्यःसमितिशोभनः ॥ सारथ्यंयदिमेकुर्याद्ध्रुवस्तेविजयोभवेत् ५८
तस्यमेसारथिःशल्योभवत्वसुकरःपरैः ॥ नाराचान्गार्ध्रपत्रांश्चशकटानिवहंतुमे ५९ रथाश्चमुख्याराजेंद्रयुक्तावाजिभिरुत्तमैः ॥ आयांतुपश्चात्सततंमामेवभ
रतर्षभ ६० एवमभ्याधिकःपार्थाद्भविष्यामिगुणैरहम् ॥ शल्योऽप्यभ्यधिकःकृष्णादर्जुनादपिचाप्यहम् ६१ यथाऽश्वहृदयंवेददाशार्हःपरवीरहा ॥ तथाश
ल्योविजानीतेहयज्ञानंमहारथः ६२ बाहुवीर्येसमोनास्तिमद्रराजस्यकश्चन ॥ तथाऽस्त्रेमत्समोनास्तिकश्चिदेवधनुर्धरः ६३ तथाशल्यसमोनास्तिहयज्ञानेहि
कश्चन ॥ सोऽयमभ्यधिकःकृष्णाद्भविष्यतिरथोमम ६४ एवंकृतेरथस्थोऽहंगुणैरभ्यधिकोऽर्जुनात् ॥ भवेयुधिजयेयंचफाल्गुनंकुरुसत्तम ६५

जितचित्तस्य ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ शल्यःकृष्णतुल्यः बाणशकटबहुलतयाबाणानामक्षय्यत्वंज्ञेयं एवंबह्वश्वत्वेनदिग्राश्वजयइत्याहअथमित्यादिना
५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ भवेमवेयं भवेदितिपाठःप्रामादिकः ६५

६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेएकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ ७ ॥ ॥ पुत्रइति । विनयेननत्या प्रणयात्प्रकृष्टात्न्यायात्

समुद्यातुंनशक्ष्यंतिदेवाअपिसवासवाः ॥ एतत्कृतंमहाराजत्वयेच्छामिपरंतप ६६ क्रियतामेषकामोमेमावःकालोऽत्यगादयम् ॥ एवंकृतेकृतंसह्यंसर्वकामैर्भ
विष्यति ६७ ततोद्रक्ष्यासिसंग्रामेयत्करिष्यामिभारत ॥ सर्वथापांडवान्संख्येविजेष्येवैसमागतान् ६८ नहिमेसमरेशक्ताःसमुद्यातुंसुरासुराः ॥ किमुपांडुसुता
राजन्रणेमानुषयोनयः ६९ ॥ संजयउवाच ॥ एवमुक्तस्तवसुतःकर्णेनाहवशोभिना ॥ संपूज्यसंप्रहृष्टात्माततोराधेयमब्रवीत् ७० ॥ दुर्योधनउवाच ॥ एव
मेतत्करिष्यामियथात्वंकर्णमन्यसे ॥ सोपासंगारथाःसाश्वाःस्वनुयास्यंतिसंयुगे ७१ नाराचान्गार्ध्रपत्रांश्चशकटानिवहंतुते ॥ अनुयास्यामकर्णत्वांवयंसर्वेच
पार्थिवाः ७२ ॥ संजयउवाच ॥ एवमुक्त्वामहाराजतवपुत्रःप्रतापवान् ॥ अभिगम्याब्रवीद्राजामद्रराजमिदंवचः ७३ ॥ इतिश्रीमहाभारतेकर्णपर्वणिकर्णदुर्यो
धनसंवादेएकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ पुत्रस्तवमहाराजमद्रराजंमहारथम् ॥ विनयेनोपसंगम्यप्रणयाद्वाक्यमब्रवीत् १ स
त्यव्रतमहाभागद्विषतांतापवर्धन ॥ मद्रेश्वररणेशूरपरसैन्यभयंकर २ श्रुतवानसिकर्णस्यब्रुवतोवदतांवर ॥ यथानृपतिसिंहानांमध्येत्वांवरयेस्वयम् ३ तत्त्वा
मप्रतिवीर्याद्यशत्रुपक्षक्षयावह ॥ मद्रेश्वरप्रयाचेऽहंशिरसाविनयेनच ४ तस्मात्पार्थविनाशार्थंहितार्थंममचैवहि ॥ सारथ्यंरथिनांश्रेष्ठप्रणयात्कर्तुमर्हसि
५ त्वयियंतरिराधेयोविद्विषोमेविजेष्यते ॥ अभीषूणांहिकर्णस्यग्रहीताऽन्योनविद्यते ६ ऋतेहित्वांमहाभागवासुदेवसमंयुधि ॥ सपाहिसर्वथाकर्णंयथा
ब्रह्मामहेश्वरम् ७ यथाचसर्वथापत्सुवार्ष्णेयःपातिपांडवम् ॥ तथामद्रेश्वराद्यत्वंराधेयंप्रतिपालय ८ भीष्मोद्रोणःकृपःकर्णोभवान्भोजश्चवीर्यवान् ॥
शकुनिःसौबलोद्रौणिरहमेवचनोबलम् ९ एवमेषकृतोभागोनवधापृथिवीपते ॥ नचभागोऽत्रभीष्मस्यद्रोणस्यचमहात्मनः १० ताभ्यामतीत्यतौभागौ
निहताममशत्रवः ॥ वृद्धौहितौमहेष्वासौछलेननिहतौयुधि ११ कृत्वानसुकरंकर्मगतौस्वर्गमितोऽनघ ॥ तथाऽन्येपुरुषव्याघ्राःपरैर्विनिहतायुधि १२
अस्मदीयाश्चबहवःस्वर्गायोपगतारणे ॥ त्यक्त्वाप्राणान्यथाशक्तिचेष्टांकृत्वाचपुष्कलाम् १३ तदिदंहतभूयिष्ठंबलंममनराधिप ॥ पूर्वमप्यल्पकैःपार्थैर्हतंकि
मुतसांप्रतम् १४ बलवंतोमहात्मानःकौंतेयाःसत्यविक्रमाः ॥ बलंशेषंनहन्युर्मेयथातत्कुरुपार्थिव १५ हतवीरमिदंसैन्यंपांडवैःसमरेविभो ॥ कर्णोह्येकोमहाबा
हुरस्मत्प्रियहितेरतः १६ भवांश्चपुरुषव्याघ्रसर्वलोकमहारथः ॥ शल्यकर्णोऽर्जुनेनाद्ययोद्धुमिच्छतिसंयुगे १७ तस्मिन्जयाशाविपुलामद्रराजनराधिप ॥
तस्याभीषुग्रहवरोनान्योऽस्तिभुविकश्चन १८ पार्थस्यसमरेकृष्णोयथाऽभीषुग्रहोवरः ॥ तथात्वमपिकर्णस्यरथेभीषुग्रहोभव १९

युक्तियुक्तइत्यर्थः १ । २ । ३ । ४ । ५ अभीषूणांहयरश्मीनाम् ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९

२० । २१ । २२ । २३ । २४ । २५ । २६ । २७ त्रातुत्रायतां २८ । २९ । ३० । ३१ विश्रब्धंनिःशंकंयथास्तात्तथा ३२ । ३३ । ३४ । ३५ निधायत्वत्कृतमपमानमितिशेषः प्रवर्त्तेतस्यक्तु

तेनयुक्तोरणेपार्थोरक्ष्यमाणश्चपार्थिव ॥ यानिकर्माणिकुरुतेप्रत्यक्षाणितथैवतत् २० पूर्वंनःसमरेह्येवमवधीदर्जुनोरिपून् ॥ इदानींविक्रमोह्यस्यकृष्णेनसहितस्यच २१ कृष्णेनसहितःपार्थोधार्त्तराष्ट्रींमहाचमूम् ॥ अहन्यहनिमद्रेशद्रावयन्दृश्यतेयुधि २२ भागोऽवशिष्टःकर्णस्यतवचैवमहाद्युते ॥ तंभागंसहकर्णेनयुगपन्नाशयाद्यहि २३ अरुणेनयथासार्द्धंतमःसूर्योऽव्यपोहति ॥ तथाकर्णेनसहितोजहिपार्थंमहाहवे २४ उद्यंतौचयथासूर्यौबालसूर्यसमप्रभौ ॥ कर्णशल्यौरणेदृष्ट्वाविद्रवंतुमहारथाः २५ सूर्यारुणौयथादृष्ट्वातमोनश्यतिमारिष ॥ तथानश्यंतुकौंतेयाःसपंचालाःसमृंजयाः २६ रथिनांप्रवरःकर्णोयंतॄणांप्रवरोभवान् ॥ संयोगोयुवयोर्लोकेनाभून्नचभविष्यति २७ यथासर्वास्ववस्थासुवार्ष्णेयःपातिपांडवम् ॥ तथाभवान्परित्रातुकर्णंवैकर्त्तनंरणे २८ त्वयासारथिनाह्येषअप्रधृष्यो भविष्यति ॥ देवतानामपिरणेसशक्राणांमहीपते ॥ किंपुनःपांडवेयानांमाविशंकीर्वचोमम २९ ॥ संजयउवाच ॥ दुर्योधनवचःश्रुत्वाशल्यःक्रोधसमन्वितः ॥ त्रिशिखांभ्रुकुटिंकृत्वाधुन्वन्हस्तौपुनःपुनः ३० क्रोधरक्तेमहानेत्रेपरिवृत्त्यमहाभुजः ॥ कुलैश्वर्यश्रुतबलैर्दृप्तःशल्योऽब्रवीदिदम् ३१ ॥ शल्यउवाच ॥ अवमन्यसिगांधारेध्रुवंचपरिशंकसे ॥ यन्मांब्रवीषिविश्रब्धंसारथ्यंक्रियतामिति ३२ अस्मत्तोऽभ्यधिकंकर्णंमन्यमानःप्रशंससि ॥ नचाहंयुधिराधेयंगणयेतुल्यमात्मनः ३३ आदिश्यतामभ्यधिकोममांशःपृथिवीपते ॥ तमहंसमरेजित्वागमिष्यामियथागतम् ३४ अथवाऽप्येकएवाहंयोत्स्यामिकुरुनंदन ॥ पश्यवीर्यंममाद्यत्वंसंग्रामेदहतोरिपून् ३५ यथाभिमानंकौरव्यनिधायहृदयेपुमान् ॥ अस्मद्विधःप्रवर्त्तेतमामांत्वमभिशंकिथाः ३६ युधिवाऽप्यवमानोमेनकर्तव्यःकथंचन ॥ पश्यपीनौममभुजौवज्रसंहननोपमौ ३७ धनुःपश्यचमेचित्रंशरांश्चाशीविषोपमान् ॥ रथंपश्यचमेक्लृप्तंसदश्वैर्वातवेगितैः ३८ गदांचपश्यगांधारेहेमपट्टविभूषिताम् ॥ दारयेयंमहींक्रुद्धोविकिरेयंचपर्वतान् ३९ शोषयेयंसमुद्रांश्चतेजसास्वेनपार्थिव ॥ तंमामेवंविधंराजन्समर्थमरिनिग्रहे ४० कस्माद्युनक्षिसारथ्येनीचस्याधिरथेरणे ॥ नमामधुरिराजेंद्रनियोक्तुंत्वमिहार्हसि ४१ नहिपापीयसःश्रेयान्भूत्वाप्रेष्यत्वमुत्सहे ॥ योह्यभ्युपगतंप्रीत्यागरीयांसंवशेस्थितम् ४२ वशेपापीयसोधत्तेतत्पापमधरोत्तरम् ॥ ब्रह्मणाब्राह्मणाःसृष्टामुखात्क्षत्रंचबाहुतः ४३ ऊरुभ्यामसृजद्वैश्यान्शूद्रान्पद्भ्यामितिश्रुतिः ॥ तेभ्योवर्णविशेषाश्चप्रतिलोमानुलोमजाः ४४ अथान्योन्यस्यसंयोगाच्चातुर्वर्ण्यस्यभारत ॥ गोप्तारःसंग्रहीतारोदातारःक्षत्रियाःस्मृताः ४५ याजनाध्यापनैर्विप्राविशुद्धैश्चप्रतिग्रहैः ॥ लोकस्यानुग्रहार्थायस्थापिताब्राह्मणाभुवि ४६

मितिशेषः ३६।३७।३८।३९।४० अधुरिनीचेकर्मणि ४१ पापीयसःनीचयोनेःप्रेष्यत्वंदास्यत्वंकर्तुमितिशेषः ४२ वशेआज्ञायां अधरोत्तरंनीचोच्चयोर्वैपरीत्यकरणजंमहत्पापं ४३।४४। ४५ । ४६

४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ ऋतमिति ऋतमेवायनमाश्रयोयेषांतेऋतायनास्तेषांगोत्रापत्यमार्तायनिस्त्वम् ५६ । ५७ । ५८ । ५९ । ६० । ६१ मद्रेश्वरेत्य

कृषिश्चपाशुपाल्यंचविशांदानंचधर्मतः ॥ ब्रह्मक्षत्रविशांशूद्राविहिताःपरिचारकाः ४७ ब्रह्मक्षत्रस्यविहिताःसूतावैपरिचारकाः ॥ नक्षत्रियोवैसूतानांशृणुयाच्च कथंचन ४८ अहंमूर्धाभिषिक्तोहिराजर्षिकुलजोनृपः ॥ महारथःसमाख्यातःसेव्यःस्तुत्यश्चबंदिनाम् ४९ सोऽहमेतादृशोभूत्वानेहारिबलसूदनः ॥ सूतपु त्रस्यसंग्रामेसारथ्यंकर्तुमुत्सहे ५० अवमानमहंप्राप्यनयोत्स्यामिकथंचन ॥ आपृच्छेत्वाऽद्यगांधारेगमिष्यामिगृहायवै ५१ ॥ संजयउवाच ॥ एवमुक्त्वाम हाराजशल्यःसमितिशोभनः ॥ उत्थायप्रययौतूर्णंराजमध्यादमर्षितः ५२ प्रणयाद्बहुमानाच्चतंनिगृह्यसुतस्तव ॥ अब्रवीन्मधुरंवाक्यंसाम्नासर्वार्थसाधकम् ५३ यथाशल्यविजानीषेएवमेतदसंशयम् ॥ अभिप्रायस्तुमेकाश्चित्तंनिबोधजनेश्वर ५४ नकर्णोऽभ्यधिकस्त्वत्तोनशंकेत्वांचपार्थिव ॥ नहिमद्रेश्वरोराजाकु र्याद्यदनृतंभवेत् ५५ ऋतमेवहिपूर्वास्तेवदंतिपुरुषोत्तमाः ॥ तस्मादार्तायनिःप्रोक्तोभवानितिमतिर्मम ५६ शल्यभूतस्तुशत्रूणांयस्मात्त्वंयुधिमानद ॥ त स्माच्छल्योहितेनामकथ्यतेपृथिवीतले ५७ यदेतद्व्याहृतंपूर्वंभवताभूरिदक्षिण ॥ तदेवकुरुधर्मज्ञमदर्थंयद्यदुच्यते ५८ नचत्वत्तोहिराधेयोनचाहमपिवीर्य वान् ॥ वृणेहंत्वांहयाग्र्याणांयंतारमिहसंयुगे ५९ मन्येचाभ्यधिकंशल्यगुणैःकर्णंधनंजयात् ॥ भवंतंवासुदेवाच्चलोकोऽयमितिमन्यते ६० कर्णोह्यभ्यधिकः पार्थादस्त्रैरेवनरर्षभ ॥ भवानभ्यधिकःकृष्णादश्वज्ञानेबलेतथा ६१ यथाऽश्वहृदयंवेदवासुदेवोमहामनाः ॥ द्विगुणंत्वंतथावेत्सिमद्रराजेश्वरात्मज ६२ ॥ शल्यउवाच ॥ यन्मांब्रवीषिगांधारेमध्येसैन्यस्यकौरव ॥ विशिष्टंदेवकीपुत्रात्प्रीतिमानस्म्यहंत्वयि ६३ एषसारथ्यमातिष्ठेराधेयस्ययशस्विनः ॥ युध्य तःपांडवाग्र्येणयथात्वंवीरमन्यसे ६४ समयश्चहिमेवीरकश्चिद्वैकर्तनंप्रति ॥ उत्सृजेयंयथाश्रद्धमहंवाचोऽस्यसन्निधौ ६५ ॥ संजयउवाच ॥ तथेतिराजन्पु त्रस्तेसहकर्णेनभारत ॥ अब्रवीन्मद्रराजस्यमतंभरतसत्तम ६६ ॥ इतिश्रीमहाभारतेकर्णपर्वणि शल्यसारथ्येद्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ ७ ॥ ॥ दुर्योधनउवाच ॥ भूयएवतुमद्रेशयत्तेवक्ष्यामितच्छृणु ॥ यथापुरावृत्तमिदंयुद्धेदेवासुरेविभो १ यदुक्तवान्पितुर्मह्यंमार्कंडेयोमहानृषिः ॥ तदशेषेणब्रुवतो ममराजर्षिसत्तम २ निबोधमनसाचात्रनतेकार्याविचारणा ॥ देवानामसुराणांचपरस्परजिगीषया ३ बभूवप्रथमोराजन्संग्रामस्तारकामयः ॥ निर्जिताश्चत दादैत्यादैवतैरितिनःश्रुतम् ४ निर्जितेषुचदैत्येषुतारकस्यसुतास्त्रयः ॥ ताराक्षःकमलाक्षश्चविद्युन्मालीचपार्थिव ५

श्वोत्पत्तिदेशजत्वाद्विशेषेणतद्गुणाभिज्ञत्वंसूच्यते ६२ । ६३ । ६४ वाचउत्सृजेयं ताःअनेनक्षंतव्याइतिभावः ६५ । ६६ ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपेद्वात्रिंशोऽध्यायः ॥ ३२ ॥
भूयइति १ पितुःपुरतः मह्यंमम २ । ३ तारकामयःतारकासुरएवामयोरोगवत्पराभवहेतुर्यत्रसतथा ४ । ५

६ दमेनबाह्येंद्रियजयेन तपसाचित्तस्यैकाग्र्येण नियमेनशौचादिना समाधिनाअव्युत्थानेन ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ चक्रस्थंआज्ञावशं यथेष्टसंचारी

तपउग्रंसमास्थायनियमेपरमेऽस्थिताः ॥ तपसाकर्षयामासुर्देहान्स्वान्शत्रुतापन ६ दमेनतपसाचैवनियमेनसमाधिना ॥ तेषांपितामहःप्रीतोवरदःप्रददौ वरम् ७ अवध्यत्वंचतेराजन्सर्वभूतस्यसर्वदा ॥ सहितावरयामासुःसर्वलोकपितामहम् ८ तानब्रवीत्तदादेवोलोकानांप्रभुरीश्वरः ॥ नास्तिसर्वामरत्वंवैनिव र्तध्वमितोऽसुराः ९ अन्यंवरंवृणीध्वंवैयादृशंसंप्ररोचते ॥ ततस्तेसहिताराजन्संप्रधार्यासकृत्प्रभुम् १० सर्वलोकेश्वरंवाक्यंप्रणम्येदमथाब्रुवन् ॥ अस्मभ्यं त्वंवरंदेवसंप्रयच्छपितामह ११ वयंपुराणित्रीण्येवसमास्थायमहीमिमाम् ॥ विचरिष्यामलोकेऽस्मिंस्त्वत्प्रसादपुरस्कृताः १२ ततोवर्षसहस्रेतुसमेष्यामःपर स्परम् ॥ एकीभावंगमिष्यंतिपुराण्येतानिचानघ १३ समागतानिचैतानियोहन्याद्भगवंस्तदा ॥ एकेषुणादेववरःसनोमृत्युर्भविष्यति १४ एवमस्त्विति तान्देवःप्रत्युक्त्वाप्राविशद्दिवम् ॥ तेतुलब्धवराःप्रीताःसंप्रधार्यपरस्परम् १५ पुरत्रयविसृष्टयर्थंमयंवव्रुर्महासुरम् ॥ विश्वकर्माणमजरंदैत्यदानवपूजितम् ॥ १६ ततोमयःस्वतपसाचक्रेधीमान्पुराणिच ॥ त्रीणिकांचनमेकंवैरौप्यंकार्ष्णायसंतथा १७ कांचनंदिवितत्रासीदंतरिक्षेचराजतम् ॥ आयसंचाभवद्भौमंचक्र स्थंपृथिवीपते १८ एकैकंयोजनशतंविस्तारायामतःसमम् ॥ गृहाट्टालकसंयुक्तंबहुप्राकारतोरणम् १९ गृहप्रवरसंबाधमसंबाधमहापथम् ॥ प्रासादैर्विवि धैश्चापिद्वारैश्चैवोपशोभितम् २० पुरेषुचाभवन्राजन्राजानोवैपृथक्पृथक् ॥ कांचनंतारकाक्षस्यचित्रमासीन्महात्मनः २१ राजतंकमलाक्षस्यविद्युन्मालि नआयसम् ॥ त्रयस्तेदैत्यराजानस्त्रींल्लोकानस्त्रतेजसा २२ आक्रम्यतस्थुरूचुश्चकश्चनामप्रजापतिः ॥ तेषांदानवमुख्यानांप्रयुतान्यर्बुदानिच २३ कोट्य श्चाप्रतिवीराणांसमाजग्मुस्ततस्ततः ॥ मांसाशिनःसुदृप्ताश्चसुरैर्विनिकृताःपुरा २४ महदैश्वर्यमिच्छंतस्त्रिपुरंदुर्गमाश्रिताः ॥ सर्वेषांचपुनश्चैषांसर्वयोगवहो मयः २५ तमाश्रित्यहितेसर्वेवर्तयंतेऽकुतोभयाः ॥ योहियन्मनसाकामंदध्यौत्रिपुरसंश्रयः २६ तस्मैकाममयस्तंतंविदधेमाययातदा ॥ तारकाक्षसुतोवीरोह रिर्नाममहाबलः २७ तपस्तेपेपरमकंयेनातुष्यत्पितामहः ॥ संतुष्टमवृणोद्देववापीभवतुनःपुरे २८ शस्त्रैर्विनिहतायत्रक्षिप्ताःस्युर्बलवत्तराः ॥ सतुलब्ध्वावरं वीरस्तारकाक्षसुतोहरिः २९ ससृजेतत्रवापींतांमृतानांजीविनींप्रभो ॥ येनरूपेणदैत्यस्तुयेनवेषेणचैवह ३० मृतस्तस्यांपरिक्षिप्तस्तादृशेनैवजज्ञिवान् ॥ तांप्राप्यतेपुनस्तांस्तुलोकान्सर्वान्बबाधिरे ३१ महतातपसासिद्धाःसुराणांभयवर्धनाः ॥ नतेषामभवद्राजन्क्षयोयुद्धेकदाचन ३२ ततस्तेलोभमोहाभ्याम भिभूताविचेतसः ॥ निर्ह्रीकाःसंस्थिताःसर्वेस्थापिताःसमलूलुपन् ३३ विद्राव्यसगणान्देवांस्तत्रतत्रतदातदा ॥ विचेरुःस्वेनकामेनवरदानेनदर्पिताः ३४

त्यर्थः । चक्रस्थमित्यत्रतृतीयमितिपाठःप्रामादिकः १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४

३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ आदित्यादेवाः ४५ । ४६ । ४७ उग्राभीरक्षोघ्नीभिः आर्षंण्यात्रं आत्मनाअनौपाधिकेन ४८ आत्मनोमनसः योगंसर्ववृत्तिनिरोधं सांख्यंसम्यक्ख्यापनं आत्मनोजडवर्गात्पृथग्ग्रहणं आत्मामनः वशेआज्ञायाम् ४९ । ५० भगवंतंषाड्गुण्यैश्वर्यवंतं एकमपिते 'तंयथायथोपासत'इतिश्रुतेर्यथाभावनं शिवविष्णुरु

देवोद्यानानिसर्वाणिप्रियाणिचदिवौकसाम् ॥ ऋषीणामाश्रमान्पुण्यान्रम्यान्जनपदांस्तथा ३५ व्यनाशयन्नमर्यादादानवादुष्टचारिणः ॥ पीडचमानेषुलोकेषुततःशक्रोमरुद्वृतः ३६ पुराण्यायोधयांचक्रेवज्रपातैःसमंततः ॥ नाशकत्तान्यभेद्यानियदाभेत्तुंपुरंदरः ३७ पुराणिवरदत्तानिधात्रातेननराधिप ॥ तदाभीतःसुरपतिर्मुक्तातानिपुराण्यथ ३८ तैरेवविबुधैःसार्धंपितामहमरिंदम ॥ जगामाथतदाख्यातुंविप्रकारंसुरेतरैः ३९ सतत्त्वंसर्वमाख्यायशिरोभिःसंप्रणम्य च ॥ वधोपायमपृच्छंतभगवंतांपितामहम् ४० श्रुत्वातद्भगवान्देवोदेवानिदमुवाचह ॥ ममापिसोऽपराध्नोतियोयुष्माकमसौम्यकृत ४१ असुराहिदुरात्मानः सर्वएवसुरद्विषः ॥ अपराध्यंतिसततंयेयुष्मान्पीडयंत्युत ४२ अहंहितुल्यःसर्वेषांभूतानांनात्रसंशयः ॥ अधार्मिकास्तुहंतव्याइतिमेव्रतमाहितम् ४३ एकेषुणाविभेद्यानितानिदुर्गाणिनान्यथा ॥ नचस्थाणुमृतेशक्तोभेत्तुमेकेषुणापुरः ४४ तेयूयंस्थाणुमीशानंजिष्णुमक्लिष्टकारिणम् ॥ योद्धारंवृणुतादित्याःसतान् हंतासुरेतरान् ४५ इतितस्यवचःश्रुत्वादेवाःशक्रपुरोगमाः ॥ ब्रह्माणमग्रतःकृत्वावृषांकंशरणंययुः ४६ तपोनियममास्थायगृणंतोब्रह्मशाश्वतम् ॥ ऋषिभिः सहधर्मज्ञाभवंसर्वात्मनागताः ४७ तुष्टुवुर्वाग्भिरुग्राभिर्भयेष्वभयदंनृप ॥ सर्वात्मानंमहात्मानंयेनाप्तंसर्वमात्मना ४८ तपोविशेषैर्विविधैर्योगंयोवेदचात्मनः ॥ यःसांख्यमात्मनोवेत्तियस्यचात्मावशेसदा ४९ तंतेददृशुरीशानंतेजोराशिमुमापतिम् ॥ अनन्यसदृशंलोकेभगवंतमकल्मषम् ५० एकंचभगवंतंतेनानारूपमकल्पयन् ॥ आत्मनःप्रतिरूपाणिरूपाण्यथमहात्मनि ५१ परस्परस्यचापश्यन्सर्वेपरमविस्मिताः ॥ सर्वभूतमयंदृष्ट्वातमजंजगतःपतिम् ५२ देवाब्रह्मर्षयश्चैवशिरोभिर्धरणींगताः ॥ तान्स्वस्तिवादेनाभ्यर्च्यसमुत्थाप्यचशंकरः ५३ ब्रूतब्रूतेतिभगवान्स्मयमानोऽभ्यभाषत ॥ त्र्यंबकेणाभ्यनुज्ञातास्ततस्ते स्वस्थचेतसः ५४ नमोनमोनमस्तेऽस्तुप्रभोइत्यब्रुवन्वचः ॥ नमोदेवाधिदेवायधन्विनेवनमालिने ५५ प्रजापतिमखघ्नायप्रजापतिभिरीड्यते ॥ नमःस्तुतायस्तुत्यायस्तूयमानायशंभवे ५६ विलोहितायरुद्रायनीलग्रीवायशूलिने ॥ अमोघायमृगाक्षायप्रवरायुधयोधिने ५७ अर्हायचैवशुद्धायक्षयायक्रथनाय च ॥ दुर्वारणायकाथायब्रह्मणेब्रह्मचारिणे ५८ ईशानायाप्रमेयायनियंत्रेचर्मवाससे ॥ तपोरतायपिंगायव्रतिनेकृत्तिवाससे ५९ कुमारपित्रेत्र्यक्षायप्रवरायुधधारिणे ॥ प्रपन्नार्तिविनाशायब्रह्मद्विट्संघघातिने ६० वनस्पतीनांपतयेनराणांपतयेनमः ॥ गवांचपतयेनित्यंयज्ञानांपतयेनमः ६१

ब्रह्मादिवेषेणनानारूपमकल्पयन् । आत्मनश्चित्तस्यप्रतिरूपाणिसंकल्पानुसारीणिप्रतिबिंबानिवा । परस्परस्यचेतिईश्वरस्वरूपेसर्वेआत्मानंपरांश्चापश्यन्निति सार्धश्लोकएकंवाक्यम् ५१ ५२ । ५३ । ५४ । ५५ ईड्यतेईड्यमानाय कर्मणीदमपौरुषम् ५६ । ५७ क्रथनायहिंस्राय ५८ । ५९ । ६० । ६१

भजस्वइष्टैःकामैःपूरयस्व ६२ व्येतुव्यपगच्छतु ६३ ॥ ॥ इति कर्णपर्वणि नीलकंठीये भारतभावदीपे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ ७ ॥ ॥ पित्रिति अभयेइतिच्छेदः १ । २ वधेनिमित्ते प्रत्यरिःप्रतिकूलःशत्रुः ३ । ४ ऐधत अवर्धत तेप्रसिद्धावयंशरणंगतास्त्वामितिशेषः ५ । ६ संहताएकीभूतायूयम् ७ तेषांतेजोऽस्मत्तेजस्तोद्विगुणंदृष्टमेवेत्यर्थः ८ । ९ । १० । ११ अर्धतेजसः १२ । १३ महतासर्वातिशायिनाबलेनदीव्यतिप्रकाशतेइतिमहादेवः १४ । १५ मूर्तीस्तेजोमात्राः समाधायएकीकृत्य १६ विहितंअपूर्वंज्ञापितंयथातथैवविश्वकर्मणाकृतम्

नमोऽस्तुतेससैन्यायत्र्यंबकायामितौजसे ॥ मनोवाक्कर्मभिर्देवत्वांप्रपन्नान्भजस्वनः ६२ ततःप्रसन्नोभगवान्स्वागतेनाभिनंद्यच ॥ प्रोवाचव्येतुवस्त्रासोब्रूत किंकरवाणिवः ६३ ॥ ॥ इतिश्रीमहाभारतेकर्णपर्वणित्रिपुराख्यानेत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ ७ ॥ ॥ दुर्योधनउवाच ॥ पितृदेवर्षिसंघेभ्योऽभयेदत्तेमहात्मना ॥ सत्कृत्यशंकरंप्राहब्रह्मालोकहितंवचः १ तवातिसर्गाद्देवेशप्राजापत्यमिदंपदम् ॥ मयाऽधितिष्ठतादत्तोदानवेभ्योमहान्वरः २ताननतिक्रांतमर्यादान्नान्यःसंहर्तुमर्हति ॥ त्वामृतेभूतभव्येशत्वंह्येषांप्रत्यरिर्वधे ३ सत्वंदेवप्रपन्नानांयाचतांचदिवौकसाम् ॥ कुरुप्रसादंदेवेशदानवान्जहिशंकर ४ त्वत्प्रसादाज्जगत्सर्वंसुखमैधतमानद ॥ शरण्यस्त्वंहिलोकेशतेवयंशरणंगताः ५ ॥ स्थाणुरुवाच ॥ हंतव्याःशत्रवःसर्वेयुष्माकमितिमेमतिः ॥ नत्वेकउत्सहेहंतुंबलस्थाहिसुरद्विषः ६ तेयूयंसंहताःसर्वेमदीयेनार्धतेजसा ॥ जयध्वंयुधितान्शत्रून्संहताहिमहाबलाः ७ ॥ देवाऊचुः ॥ अस्मत्तेजोबलंयावत्तावद्द्विगुणमाहवे ॥ तेषामितिहिमन्यामोदृष्टतेजोबलाहिते ८ ॥ श्रीभगवानुवाच ॥ वध्यास्तेसर्वतःपापायेयुष्मास्वपराधिनः ॥ ममत्तेजोबलार्धेनसर्वान्निघ्नतशात्रवान् ९ ॥ देवाऊचुः ॥ बिभर्तुंभवतोर्धंतुनशक्ष्यामोमहेश्वर ॥ सर्वेषांनोबलार्धेनत्वमेवजहिशात्रवान् १० ॥ श्रीभगवानुवाच ॥ यदिशक्तिर्नवःकाचिद्बिभर्तुंमामकंबलम् ॥ अहमेतान्हनिष्यामियुष्मत्तेजोर्धबृंहितः ११ ततस्तथेतिदेवेशस्तैरुक्तोराजसत्तम ॥ अर्धमादायसर्वेषांतेजसाऽभ्यधिकोऽभवत् १२ सतुदेवोबलेनासीत्सर्वेभ्योबलवत्तरः ॥ महादेवइतिख्यातस्ततःप्रभृतिशंकरः ,१३ ततोऽब्रवीन्महादेवोधनुर्बाणधरोह्यहम् ॥ हनिष्यामिरथेनाजौतान्रिपून्वोदिवौकसः १४ तेयूयंमेरथंचैवधनुर्बाणंतथैवच ॥ पश्यध्वंयावदद्यैतान्पातयामिमहीतले १५ ॥ देवाऊचुः ॥ मूर्तीःसर्वाःसमाधायत्रैलोक्यस्यततस्ततः ॥ रथंतेकल्पयिष्यामोदेवेश्वरसुवर्चसम् १६ तथैवबुद्ध्याविहितंविश्वकर्मकृतंशुभम् ॥ ततोविबुधशार्दूलास्तेरथंसमकल्पयन् १७ विष्णुंसोमंहुताशंचतस्येषुंसमकल्पयन् ॥ शृंगमग्निर्बभूवास्यभल्लःसोमोविशांपते १८ कुड्मलश्चाभवद्विष्णुस्तस्मिन्निषुवरेतदा २० रथंवसुधरांदेवींविशालपुरमालिनीम् ॥ सपर्वतवनद्वीपांचक्रुर्भूतधरांतदा ॥ मंदरःपर्वतश्चाक्षोजंघातस्यमहानदी २० दिशश्चप्रदिशश्चैवपरिवारोरथस्यतु ॥ ईषानक्षत्रवंशश्चयुगःकृतयुगोऽभवत् २१

१७ शृंगंशृंगाकारखाटिकायुक्तंकांडं भल्लःशल्यः कुड्मलस्तस्याग्रभागस्तस्यैवतीक्ष्णभागः । 'सोमःशल्योविष्णुरुतेजनम्'इतिश्रुतेः १८ । १९ अक्षश्चक्राधारदंडः जंघाअक्षाधारकाष्ठं महानदी गंगा २० ईषायुगाक्षसंधानांत्रिवेणुमयंकाष्ठं युगोधुर्ययोजनदंडः २१

कूबरोयुगंधरः अपस्करंपश्चात्काष्ठं भुजगोत्तमःशेषः अधिष्ठानेचक्रे अधिष्ठानेचक्राधारौ । 'अधिष्ठानंपुरेचक्रेप्रभावेध्यासनेऽपिच' इतिमेदिनी २२ अक्षंबंधनपाशसमुदायःसमुद्रः जलमयत्वेन चिक्कणत्वात् परिष्करःचक्ररक्षादिः २३ सिंधुर्यमुनाख्यानदी तिसृभिस्त्रिवेणुस्थानीयाभिःसहितमाकाशंधुरंधूर्भागः उपस्करोबंधादिसामग्री २४ अनुकर्षंरथाधःस्थितंदारु वरूथंरथगुप्तिम् २५ धर्मादयस्त्रिवेणुसदृशाबंधुरंरथतल्पम् २६ पूर्वंहिमवद्विंध्यपर्वतौचक्रत्वेनोक्तावत्रसूर्यचंद्रौचक्रत्वेनदृष्टावतश्चतुश्चक्रोरथइतिगम्यते । अतःसमुद्रोऽप्यक्षांतरमितिकृज्जुरेवार्थः । पूर्वपक्षःपूर्वांगंरात्रिः अपरःपक्षोऽपरांगमहः २७ । २८ द्यांद्वितीयंयुगंचतुश्चक्रत्वाद्रथस्य संवर्त्तकबलाहकान्युगचर्माणिधुर्यस्कंधयुगयोरंतरस्थानिकशिपूनि २९ वालबंधनाअश्वकेसरबंधना ३० नभस्तलंचर्म

कूबरश्चरथस्यासीद्वासुकिर्भुजगोत्तमः ॥ अपस्करमधिष्ठानेहिमवान्विंध्यपर्वतः ॥ उदयास्ताववधिष्ठानेगिरीचक्रुःसुरोत्तमाः २२ समुद्रमक्षमसृजन्दानवालयमुत्तमम् ॥ सप्तर्षिमंडलंचैवरथस्यासीत्परिष्करः २३ गंगासरस्वतीसिंधुर्धुरमाकाशमेवच ॥ उपस्करोरथस्यासन्नापःसर्वाश्चनिम्नगाः २४ अहोरात्रंकलाश्चैवकाष्ठाश्चऋतवस्तथा ॥ अनुकर्षंग्रहादीप्तावरूथंचापितारकाः २५ धर्मार्थकामंसंयुक्तंत्रिवेणुंदारुबंधुरम् ॥ ओषधीर्वीरुधश्चैवघंटाःपुष्पफलोपगाः २६ सूर्याचंद्रमसौकृत्वाचक्रेरथवरोत्तमे ॥ पक्षौपूर्वापरौतत्रकृतेरात्र्यहनीशुभे २७ दशनागपतीनीषांधृतराष्ट्रमुखांस्तदा ॥ योक्राणिचक्रुर्नागांश्चनिःश्वसंतोमहोरगान् २८ द्यांयुगंयुगचर्माणिसंवर्तकबलाहकान् ॥ कालपृष्ठोऽथनहुषःकर्कोटकधनंजयौ २९ इतरेचाभवन्नागाहयानांवालबंधनाः ॥ दिशश्चप्रदिशश्चैवरश्मयोरथवाजिनाम् ३० संध्यांधृतिंचमेधांचस्थितिंसन्नतिमेवच ॥ ग्रहनक्षत्रताराभिश्चर्मचित्रंनभस्तलम् ३१ सुरांबुप्रेतवित्तानांपतीन्लोकेश्वरान्हयान् ॥ सिनीवालीमनुमतिंकुहूंराकांचसुव्रताम् ३२ योक्राणिचक्रुर्वाहानांरोहकांस्तत्रकंटकान् ॥ धर्मःसत्यंतपोऽर्थश्चविहितास्तत्ररश्मयः ३३ अधिष्ठानंमनश्चासीत्परिरथ्यासरस्वती ॥ नानावर्णाश्चचित्राश्चपताकाःपवनेरिताः ३४ विद्युदिंद्रधनुर्नद्धंरथंदीप्तंव्यदीपयन् ॥ वषट्कारःप्रतोदोऽभूद्गायत्रीशीर्षबंधना ३५ योयज्ञेविहितःपूर्वमीशानस्यमहात्मनः ॥ संवत्सरोधनुस्तद्वैसावित्रीज्यामहास्वना ३६ दिव्यंचवर्मविहितंमहार्हंरत्नभूषितम् ॥ अभेद्यंविरजस्कंवैकालचक्रबहिष्कृतम् ३७ ध्वजयष्टिरभून्मेरुःश्रीमान्कनकपर्वतः ॥ पताकाश्चाभवन्मेघास्ताडिद्भिःसमलंकृताः ३८ रेजुरध्वर्युमध्यस्थाज्वलंतइवपावकाः ॥ कृप्तंतुतंरथंदृष्ट्वाविस्मितादेवताऽभवन् ३९ सर्वलोकस्यतेजांसिदृष्ट्वैकस्थानिमारिष ॥ युक्तंनिवेदयामासुर्देवास्तस्मैमहात्मने ४० एवंतस्मिन्महाराजकल्पितेरथसत्तमे ॥ देवैर्मनुजशार्दूलद्विषतामभिमर्दने ४१ स्वान्यायुधानिमुख्यानिन्यदधाच्छंकरोरथे ॥ ध्वजयष्टिंवियत्कृत्वास्थापयामासगोवृषम् ४२



रथस्यबाह्यमावरणं तच्चसंध्यादिभिर्ग्रहादिभिश्चचित्रम् ३१ सिनीवालींपूर्वाममावास्यां अनुमतिंपूर्वपौर्णमासीं कुहूमुत्तरामावास्यां राकामुत्तरांपौर्णमासीं ३२ रोहकान्सिनीवाल्याद्याधिष्ठातॄन्पित्रादीन् कंटकान्प्रकीलकान् धर्मादयस्तत्रकंटकेषुरश्मयः ३३ मनःअधिष्ठानंरथाधारभूः मनोमयोरथइत्यर्थः परिरथ्याप्रचारमार्गः सरस्वतीवाग्देवीकल्पितःशब्दमात्रशरीरइत्यर्थः ३४ । ३५ । ३६ । ३७ । ३८ अध्वर्यूणामृत्विजांमध्येस्थिताः पावकाःधिष्ण्यगाः ३९ । ४० । ४१ गोवृषंध्वजत्वेनस्थापयामास ४२

परिस्कंदाःपार्श्वगोपाः ४३ । ४४ । ४५ । ४६ छायांपूर्वोक्तांसावित्रींशब्दब्रह्मरूपत्वादात्मनस्तुल्याम् ४७ । ४८ । ४९ धनुर्ज्याकालरात्रिरूपातस्याःसंस्पर्शनसेहिरे तेऽसुराः ५० तिग्म

ब्रह्मदंडःकालदंडोरुद्रदंडस्तथाज्वरः ॥ परिस्कंदारथस्यासन्सर्वतोदिशमुद्यताः ४३ अथर्वांगिरसावास्तांचक्ररक्षौमहात्मनः ॥ ऋग्वेदःसामवेदश्चपुराणंच पुरःसराः ४४ इतिहासयजुर्वेदौपृष्ठरक्षौबभूवतुः ॥ दिव्यावाचश्चविद्याश्चपरिपार्श्वचराःस्थिताः ४५ स्तोत्रादयश्चराजेंद्रवषट्कारस्तथैवच ॥ ओंकार श्चमुखेराजन्नतिशोभाकरोऽभवत् ४६ विचित्रमृतुभिःषड्भिःकृत्वासंवत्सरंधनुः ॥ छायामेवात्मनश्चक्रेधनुर्ज्यामक्षयांरणे ४७ कालोहिभगवानरुद्रस्तस्यसंव त्सरोधनुः ॥ तस्माद्रौद्रीकालरात्रिर्ज्याकृताधनुषोऽजरा ४८ इषुश्चाप्यभवद्विष्णुर्ज्वलनःसोमएवच ॥ अग्नीषोमौजगत्कृत्स्नंवैष्णवंचोच्यतेजगत् ४९ वि ष्णुश्चात्माभगवतोभवस्यामिततेजसः ॥ तस्माद्धनुर्ज्यासंस्पर्शनाविषेहुर्हरस्यते ५० तस्मिन्शरेतिग्ममन्युंमुमोचासह्यमीश्वरः ॥ भृग्वंगिरोमन्युभवंक्रोधा ग्निमतिदुःसहम् ५१ सनीललोहितोधूम्रःकृत्तिवासाऽभयंकरः ॥ आदित्यायुतसंकाशस्तेजोज्वालावृतोज्वलन् ५२ दुश्च्यावच्यावनोजेताहंताब्रह्मद्विषांहरः ॥ नित्यंत्राताचहंताचधर्माधर्माश्रितान्नरान् ५३ प्रमाथिभिर्भीमबलैर्भीमरूपैर्मनोजवैः ॥ विभातिभगवान्स्थाणुस्तैरेवात्मगुणैर्वृतः ५४ तस्यांगानिसमाश्रित्य स्थितंविश्वमिदंजगत् ॥ जंगमाजंगमंराजन्शुशुभेऽद्भुतदर्शनम् ५५ दृष्ट्वातुतंरथंयुक्तंकवचीसशरासनी ॥ बाणमादायतंदिव्यंसोमविष्णवग्निसंभवम् ५६ त स्यराजंस्तदादेवाःकल्पयांचक्रिरेप्रभो ॥ पुण्यगंधवहंराजन्श्वसनंदेवसत्तमम् ५७ तमास्थायमहादेवस्त्रासयन्दैवतान्यपि ॥ आरुरोहतदायत्तःकंपयन्निवमे दिनीम् ५८ तमारुरुक्षुंदेवेशंतुष्टुवुःपरमर्षयः ॥ गंधर्वादेवसंघाश्चतथैवाप्सरसांगणाः ५९ ब्रह्मर्षिभिःस्तूयमानोवंद्यमानश्चबंदिभिः ॥ तथैवाप्सरसांवृंदैर्नृत्य द्भिर्नृत्यकोविदैः ६० सशोभमानोवरदःखड्गीबाणीशरासनी ॥ हसन्निवाब्रवीद्देवान्सारथिःकोभविष्यति ६१ तमब्रुवन्देवगणायंभवान्संनियोक्ष्यते ॥ सभविष्य तिदेवेशसारथिस्तेनसंशयः ६२ तानब्रवीत्पुनर्देवोमत्तःश्रेष्ठतरोहियः ॥ तंसारथिंकुरुध्वंमेस्वयंसंचिंत्यमाचिरम् ६३ एतच्छ्रुत्वाततोदेवावाक्यमुक्तंमहात्म ना ॥ गत्वापितामहंदेवाःप्रसाद्येदंवचोऽब्रुवन् ६४ यथात्वत्काथितंदेवत्रिदशारिविनिग्रहे ॥ तथाचकृतमस्माभिःप्रसन्नोनोवृषध्वजः ६५ रथश्चविहितोऽस्मा भिर्विचित्रायुधसंवृतः ॥ सारथिंचनजानीमःकःस्यात्तस्मिन्रथोत्तमे ६६ तस्माद्विधीयतांकश्चित्सारथिर्देवसत्तम ॥ सफलांतांगिरंदेवकर्तुमर्हसिनोविभो ६७ एवमस्मासुहिपुराभगवन्नुक्तवानसि ॥ हितकर्ताऽस्मिभवतामितितत्कर्तुमर्हसि ६८ सदेवयुक्तोरथसत्तमोनोदुराधरोद्रावणःशात्रवाणाम् ॥ पिनाकपाणिर्वि हितोऽत्रयोद्धाविभीषयन्दानवानुद्यतोऽसौ ६९

मन्युंतीक्ष्णसंकल्पं ५१ अभयमितिच्छेदः संधिरार्षः ५२ । ५३ तैरथादिभूतैरात्मगुणैरात्मनोभोक्तुर्मणभूतैर्भोग्यैः ५४ । ५५ बाणमादायस्थितंदृष्ट्वादेवास्तस्यानुकूलंजयावहंश्वसनंकल्पयांचक्रि रेइत्यन्वयः ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९

तथैववेदाश्चतुरोहयाग्र्याधरासशैलाचरथोमहात्मनः ॥ नक्षत्रवंशानुगतोवरूथीहरोयोद्धासारथिर्नाभिलक्ष्यः ७० तत्रसारथिरेष्टव्यःसर्वैरेतैर्विशेषवान् ॥ तत्प्र
तिष्ठोरथोदेवहयायोद्धातथैवच ७१ कवचानिसशस्त्राणिकार्मुकंचपितामह ॥ त्वामृतेसारथिंतत्रनान्यंपश्यामहेवयम् ७२ त्वंहिसर्वगुणैर्युक्तोदैवतेभ्योऽधिकः
प्रभो ॥ सरथंतूर्णमारुह्यसंयच्छपरमान्हयान् ७३ जयायत्रिदिवेशानांवधायत्रिदशद्विषाम् ॥ इतितेशिरसागत्वात्रिलोकेशंपितामहम् ॥ देवाःप्रसादयामासुः
सारथ्यायेतिनःश्रुतम् ७४ ॥ पितामहउवाच ॥ नात्रकिंचिन्मृषावाक्यंयदुक्तंत्रिदिवौकसः ॥ संयच्छामिहयानेषयुध्यतोवैकपर्दिनः ॥ ततःसभगवान्देवो
लोकस्रष्टापितामहः ७५ सारथ्येकल्पितोदेवैरीशानस्यमहात्मनः ॥ तस्मिन्नारोहतिक्षिप्रंस्यंदनेलोकपूजिते ७६ शिरोभिरगमन्भूमिंतेहयावातरंहसः ॥
आरुह्यभगवान्देवोदीप्यमानःस्वतेजसा ७७ अभीषून्हिप्रतोदंचसंजग्राहपितामहः ॥ ततउत्थायभगवांस्तान्हयाननिलोपमान् ७८ बभाषेचतदास्थाणुमा
रोहेतिसुरोत्तमः ॥ ततस्तमिषुमादायविष्णुसोमाग्निसंभवम् ७९ आरुरोहतदास्थाणुर्धनुषाकंपयन्परान् ॥ तमारूढंतुदेवेशंतुष्टुवुःपरमर्षयः ८० गंधर्वादे
वसंघाश्चतथैवाप्सरसांगणाः ॥ सशोभमानोवरदःखड्गीबाणीशरासनी ८१ प्रदीपयन्रथेतस्थौत्रीन्लोकान्स्वेनतेजसा ॥ ततोभूयोऽब्रवीद्देवोदेवानिंद्रपुरोग
मान् ८२ नहन्यादितिकर्तव्योनशोकोवःकथंचन ॥ हतानित्येवजानीतबाणेनानेनचासुरान् ८३ तेदेवाःसत्यमित्याहुर्निहताइतिचाब्रुवन् ॥ नचतद्वचनंमि
थ्यायदाहभगवान्प्रभुः ८४ इतिसंचिंत्यवैदेवाःपरांतुष्टिमवाप्नुवन् ॥ ततःप्रयातोदेवेशःसर्वैर्देवगणैर्वृतः ८५ रथेनमहताराजन्नुपमानास्तियस्यह ॥ स्वैश्चपा
रिषदैर्देवःपूज्यमानोमहायशाः ८६ नृत्यद्भिरपरैश्चैवमांसभक्षैर्दुरासदैः ॥ धावमानैःसमंताच्चतर्जमानैःपरस्परम् ८७ ऋषयश्चमहाभागास्तपोयुक्तामहा
गुणाः ॥ आशंसुर्वैजनादेवामहादेवस्यसर्वशः ८८ एवंप्रयातेदेवेशेलोकानामभयंकरे ॥ तुष्टमासीज्जगत्सर्वंदेवताश्चनरोत्तम ८९ ऋषयस्तत्रदेवेशंस्तुवंतोबहु
भिःस्तवैः ॥ तेजश्चास्मैवर्धयंतोराजन्नासन्पुनःपुनः ९० गंधर्वाणांसहस्राणिप्रयुतान्यर्बुदानिच ॥ वादयंतिप्रयाणेऽस्यवाद्यानिविविधानिच ९१ ततोऽधि
रूढेवरदेप्रयातेचासुरान्प्रति ॥ साधुसाध्वितिविश्वेशःस्मयमानोऽभ्यभाषत ९२ याहिदेवयतोदैत्याश्चोदयाश्वानतंद्रितः ॥ पश्यबाह्वोर्बलंमेऽद्यनिघ्नतःशा
त्रवान्रणे ९३ ततोऽश्वांश्चोदयामासमनोमारुतरंहसः ॥ येनतत्त्रिपुरंराजन्दैत्यदानवरक्षितम् ९४ पिबद्भिरिवचाकाशंतैर्हयैर्लोकपूजितैः ॥ जगामभगवान्
क्षिप्रंजयायत्रिदिवौकसाम् ९५ प्रयातेरथमास्थायत्रिपुराभिमुखेभवे ॥ ननादसुमहानादंवृषभःपूरयन्दिशः ९६ वृषभस्यास्यनिनदंश्रुत्वाभयकरंमहत् ॥
विनाशमगमंस्तत्रतारकाःसुरशत्रवः ९७ अपरेऽवस्थितास्तत्रयुद्धायाभिमुखास्तदा ॥ ततःस्थाणुर्महाराजशूलधृक्क्रोधमूर्छितः ९८

त्रस्तानिसर्वभूतानित्रैलोक्यंभूःप्रकंपते ॥ निमित्तानिचघोराणितत्रसंदधतःशरम् ९९ तस्मिन्सोमाग्निविष्णूनांक्षोभेणब्रह्मरुद्रयोः ॥ सरथोधनुषःक्षोभाद
तीवह्यवसीदति १०० ततोनारायणस्तस्माच्छरभागाद्विनिःसृतः ॥ वृषरूपंसमास्थायउज्जहारमहारथम् १०१ सीदमानेरथेचैवनर्दमानेषुशत्रुषु ॥ ससं
भ्रमात्तुभगवान्नादंचक्रेमहाबलः २ वृषभस्यस्थितोमूर्ध्निहयपृष्ठेचमानद ॥ तदासभगवान्रुद्रोनिरैक्षद्दानवंपुरम् ३ वृषभस्यास्थितोरुद्रोहयस्यचनरोत्तम ॥
स्तनांस्तदाऽशातयतखुरांश्चैवद्विधाकरोत् ४ ततःप्रभृतिभद्रंतेगवांद्वैधीकृताःखुराः ॥ हयानांचस्तनाराजंस्तदाप्रभृतिनाभवन् ५ पीडितानांबलवतारु
द्रेणाद्भुतकर्मणा ॥ अथाधिज्यंधनुःकृत्वाशर्वःसंधायतंशरम् ६ युक्त्वापाशुपतास्त्रेणत्रिपुरंसमचिंतयत् ॥ तस्मिन्स्थितेमहाराजरुद्रेविधृतकार्मुके ७ पुराणि
तानिकालेनजग्मुरेवैकतांतदा ॥ एकीभावंगतेचैवत्रिपुरत्वमुपागते ८ बभूवतुमलोहर्षोदेवतानांमहात्मनाम् ॥ ततोदेवगणाःसर्वेसिद्धाश्चपरमर्षयः ९ जयेति
वाचोमुमुचुःसंस्तुवंतोमहेश्वरम् ॥ ततोऽग्रतःप्रादुरभूत्त्रिपुरंनिघ्नतोऽसुरान् ११० अनिर्देश्योग्रवपुषोदेवस्यासह्यतेजसः ॥ सतद्विकृष्यभगवान्दिव्यंलोके
श्वरोधनुः ११ त्रैलोक्यसारंतमिषुंमुमोचत्रिपुरंप्रति ॥ उत्सृष्टेवैमहाभागतस्मिन्निषुवरेतदा १२ महानार्तस्वरोह्यासीत्पुराणांपततांभुवि ॥ तान्सोऽसुरग
णान्दग्ध्वाप्राक्षिपत्पश्चिमार्णवे १३ एवंतुत्रिपुरंदग्धंदानवाश्चाप्यशेषतः ॥ महेश्वरेणक्रुद्धेनत्रैलोक्यस्यहितैषिणा १४ सचात्मक्रोधजोवह्निर्हाहेत्युक्त्वानिवा
रितः ॥ माकार्षीर्भस्मसाल्लोकानितित्र्यक्षोऽब्रवीच्चतम् १५ ततःप्रकृतिमापन्नादेवालोकास्त्वथर्षयः ॥ तुष्टुवुर्वाग्भिरग्र्याभिःस्थाणुमप्रतिमौजसम् १६ तेऽनु
ज्ञाताभगवताजग्मुःसर्वेयथागतम् ॥ कृतकामाःप्रयत्नेनप्रजापतिमुखाःसुराः १७ एवंसभगवान्देवोलोकस्रष्टामहेश्वरः ॥ देवासुरगणाध्यक्षोलोकानांविदधे
शिवम् १८ यथैवभगवान्ब्रह्मालोकधातापितामहः ॥ सारथ्यमकरोत्तत्ररुद्रस्यपरमोऽव्ययः १९ तथाभवानपिक्षिप्रंरुद्रस्येवपितामहः ॥ संयच्छतुहयान
स्यराधेयस्यमहात्मनः २० त्वंहिकृष्णाच्चकर्णाच्चफाल्गुनाच्चविशेषतः ॥ विशिष्टोराजशार्दूलनास्तितत्रविचारणा २१ युद्धेह्ययंरुद्रकल्पस्त्वंचब्रह्मसमो
नये ॥ तस्माच्छक्तोभवान्जेतुंमच्छत्रूंस्तानिवासुरान् २२ यथाशल्याद्यकर्णोऽयंश्वेताश्वंकृष्णसारथिम् ॥ प्रमथ्यहन्यात्कौंतेयंतथाशीघ्रंविधीयताम् २३
त्वयिमद्रेशराज्याशाजीविताशातथैवच ॥ विजयश्चतथैवाद्यकर्णसाचिव्यकारितः २४ त्वयिकर्णश्चराज्यंचवयंचैवप्रतिष्ठिताः ॥ विजयश्चैवसंग्रामेसंयच्छाद्य
हयोत्तमान् २५ इमंचाप्यपरंभूयइतिहासंनिबोधमे ॥ पितुर्ममसकाशेयद्ब्राह्मणःप्राहधर्मवित् २६ श्रुत्वाचैतद्वचश्चित्रंहेतुकार्यार्थसंहितम् ॥ कुरुशल्यविनि
श्चित्यमाभूदत्रविचारणा २७ भार्गवाणांकुलेजातोजमदग्निर्महायशाः ॥ तस्यरामेतिविख्यातःपुत्रस्तेजोगुणान्वितः २८

सतीव्रंतपआस्थायप्रसादयितवान्भवम् ॥ अस्त्रहेतोःप्रसन्नात्मानियतःसंयतेंद्रियः २९ तस्यतुष्टोमहादेवोभक्त्याचप्रशमेनच ॥ हृद्गतंचास्यविज्ञायदर्शया
मासशंकरः ॥ महेश्वरउवाच ॥ रामतुष्टोऽस्मिभद्रंतेविदितंमेतवेप्सितम् ॥ कुरुष्वपूतमात्मानंसर्वमेतदवाप्स्यसि ३० दास्यामितेतदाऽस्त्राणियदापूतो
भविष्यसि ॥ अपात्रमसमर्थंचदहंत्यस्त्राणिभार्गव ३१ इत्युक्तोजामदग्न्यस्तुदेवदेवेनशूलिना ॥ प्रत्युवाचमहात्मानंशिरसाऽवनतःप्रभुम् ३२ यदाजानाति
देवेशःपात्रंमामस्त्रधारणे ॥ तदाशुश्रूषवेऽस्त्राणिभवान्मेदातुमर्हति ३३ ॥ दुर्योधनउवाच ॥ ततःसतपसाचैवदमेननियमेनच ॥ पूजोपहारबलिभिर्होममंत्र
पुरस्कृतैः ३४ आराधयितवान्शर्वंबहून्वर्षगणांस्तदा ॥ प्रसन्नश्चमहादेवोभार्गवस्यमहात्मनः ३५ अब्रवीत्तस्यबहुशोगुणान्देव्याःसमीपतः ॥ भक्तिमानेष
सततंमयिरामोदृढव्रतः ३६ एवंतस्यगुणान्प्रीतोबहुशोऽकथयत्प्रभुः ॥ देवतानांपितॄणांचसमक्षमरिसूदन ३७ एतस्मिन्नेवकालेतुदैत्याह्यासन्महाबलाः ॥
तैस्तदादर्पमोहाद्यैरबाध्यंतदिवौकसः ३८ ततःसंभूयविबुधास्तान्हंतुंकृतनिश्चयाः ॥ चक्रुःशत्रुवधेयत्नंनशेकुर्जेतुमेवतान् ३९ अभिगम्यततोदेवामहेश्वर
मुमापतिम् ॥ प्रासादयंस्तदाभक्त्याजहिशत्रुगणानिति ४० प्रतिज्ञायततोदेवोदेवतानांरिपुक्षयम् ॥ रामंभार्गवमाहूयसोऽभ्यभाषतशंकरः ४१ रिपून्भार्ग
वदेवानांजहिसर्वान्समागतान् ॥ लोकानांहितकामार्थंमत्प्रीत्यर्थंतथैवच ४२ एवमुक्तःप्रत्युवाचत्र्यंबकंवरदंप्रभुम् ॥ रामउवाच ॥ काशक्तिर्ममदेवेशअकृता
स्त्रस्यसंयुगे ४३ निहंतुंदानवान्सर्वान्कृतास्त्रान्युद्धदुर्मदान् ॥ महेश्वरउवाच ॥ गच्छत्वंमदनुज्ञातोनिहनिष्यसिशात्रवान् ४४ विजित्यचरिपून्सर्वान्गुणान्प्रा
प्स्यसिपुष्कलान् ॥ एतच्छ्रुत्वातुवचनंप्रतिगृह्यचसर्वशः ४५ रामःकृतस्वस्त्ययनःप्रययौदानवान्प्रति ॥ अब्रवीद्देवशत्रूंस्तान्महादर्पबलान्वितान् ४६ मम
युद्धंप्रयच्छध्वंदैत्यायुद्धमदोत्कटाः ॥ प्रेषितोदेवदेवेनवोविजेतुंमहासुराः ४७ इत्युक्ताभार्गवेणाथदैत्यायुद्धंप्रचक्रमुः ॥ सतान्निहत्यसमरेदैत्यान्भार्गवनंदनः
४८ वज्राशनिसमस्पर्शैःप्रहारैरेवभार्गवः ॥ सदानवैःक्षततनुर्जामदग्न्योद्विजोत्तमः ४९ संस्पृष्टःस्थाणुनासद्योनिर्व्रणःसमजायत ॥ प्रीतश्चभगवान्देवःकर्मणा
तेनतस्यवै ५० वरान्प्रादाद्बहुविधान्भार्गवायमहात्मने ॥ उक्तश्चदेवदेवेनप्रीतियुक्तेनशूलिना ५१ निपातात्तवशस्त्राणांशरीरेयाऽभवद्रुजा ॥ तयातेमानुषं
कर्मव्यपोढंभृगुनंदन ५२ गृहाणास्त्राणिदिव्यानिमत्सकाशाद्यथेप्सितम् ॥ दुर्योधनउवाच ॥ ततोऽस्त्राणिसमस्तानिवरांश्चमनसेप्सितान् ५३ लब्ध्वाबहु
विधान्रामःप्रणम्यशिरसाभवम् ॥ अनुज्ञांप्राप्यदेवेशाज्जगामसमहातपाः ५४ एवमेतत्पुरावृत्तंतदाकथितवानृषिः ॥ भार्गवोऽपिददौदिव्यंधनुर्वेदंमहात्मने
५५ कर्णायपुरुषव्याघ्रसुप्रीतेनांतरात्मना ॥ वृजिनंहिभवेत्किंचित्तद्यदिकर्णस्यपार्थिव ५६

१७ । १८ । १९ । ६० । ६१ । ६२ ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ ॥ ७ ॥ एवमिति १ । २ । ३ । ४ नरसिंहयोःकृष्णार्जुनयोः अतस्तयोः



नास्मैह्यस्त्राणिदिव्यानिप्रादास्यद्भृगुनंदनः ॥ नापिसूतकुलेजातंकर्णमन्येकथंचन १५७ देवपुत्रमहंमन्येक्षत्रियाणांकुलोद्भवम् ॥ विसृष्टमवबोधार्थंकुलस्ये तिमतिर्मम ५८ सर्वथानह्ययंशल्यकर्णःसूतकुलोद्भवः ॥ सकुंडलंसकवचंदीर्घबाहुंमहारथम् ५९ कथमादित्यसदृशंमृगीव्याघ्रंजनिष्यति ॥ यथाह्यस्यभुजौ पीनौनागराजकरोपमौ १६० वक्षःपश्यविशालंचसर्वशत्रुनिबर्हणम् ॥ नत्वेषप्राकृतःकश्चित्कर्णोवैकर्तनोनृपः ६१ महात्माह्येषराजेंद्ररामशिष्यःप्रतापवान् १६२ ॥ इतिश्रीमहाभारतेकर्णपर्वणि त्रिपुरवधोपाख्याने चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ ॥ ७ ॥ ॥ दुर्योधनउवाच ॥ एवंसभगवान्देवःसर्वलोकपि तामहः ॥ सारथ्यमकरोत्तत्रब्रह्मारुद्रोऽभवद्रथी १ रथिनोऽभ्यधिकोवीरकर्तव्योरथसारथिः ॥ तस्मात्त्वंपुरुषव्याघ्रनियच्छतुरगान्युधि २ यथादेवगणैस्त त्रवृतोयत्नात्पितामहः ॥ तथाऽस्माभिर्भवान्यत्नात्कर्णादभ्यधिकोवृतः ३ यथादेवैर्महाराजईश्वरादधिकोवृतः ॥ तथाभवानपिक्षिप्रंरुद्रस्येवपितामहः ४ नियच्छतुरगान्युद्धेराधेयस्यमहाद्युते ॥ शल्यउवाच ॥ मयाऽप्येतन्नरश्रेष्ठबहुशोनरसिंहयोः ५ कथ्यमानंश्रुतंदिव्यमाख्यानमतिमानुषम् ॥ यथाचचक्रे सारथ्यंभवस्यप्रपितामहः ६ यथाऽसुराश्चनिहताइषुणैकेनभारत ॥ कृष्णस्यचापिविदितंसर्वमेतत्पुराह्यभूत् ७ यथापितामहोजज्ञेभगवान्सारथिस्तदा ॥ अनागतमतिक्रांतंवेदकृष्णोऽपितत्त्वतः ८ एतदर्थंविदित्वाऽपिसारथ्यमुपजग्मिवान् ॥ स्वयंभूरिवरुद्रस्यकृष्णःपार्थस्यभारत ९ यदिहन्याच्चकौंतेयंसूतपु त्रःकथंचन ॥ दृष्ट्वापार्थंहिनिहतंस्वयंयोत्स्यतिकेशवः १० शंखचक्रगदापाणिर्धक्ष्यतेतववाहिनीम् ॥ नचापितस्यकुद्धस्यवार्ष्णेयस्यमहात्मनः ११ स्था स्यतेप्रत्यनीकेषुकश्चिदत्रनृपस्तव ॥ संजयउवाच ॥ तंतथाभाषमाणंतुमद्रराजमरिंदमः १२ प्रत्युवाचमहाबाहुरदीनात्मासुतस्तव ॥ मावमंस्थामहाबाहो कर्णंवैकर्तनंरणे १३ सर्वशस्त्रभृतांश्रेष्ठंसर्वशास्त्रार्थपारगम् ॥ यस्यज्यातलनिर्घोषंश्रुत्वाभयकरंमहत् १४ पांडवेयानिसैन्यानिविद्रवंतिदिशोदश ॥ प्रत्यक्षंते महाबाहोयथारात्रौघटोत्कचः १५ मायाशतानिकुर्वाणोहतोमायापुरस्कृतः ॥ नचातिष्ठतबीभत्सुःप्रत्यनीकेकथंचन १६ एतांश्चदिवसान्सर्वान्भयेनमहता वृतः ॥ भीमसेनश्चबलवान्धनुष्कोट्याऽभिचोदितः १७ उक्तश्चसंज्ञयाराजन्मूढऔदरिकोयथा ॥ माद्रीपुत्रौतथाशूरौयेनजित्वामहारणे १८ कमप्यर्थंपुरस्कृ त्यनहतौयुधिमारिष ॥ येनवृष्णिप्रवीरस्तुसात्यकिःसात्वतांवरः १९निर्जित्यसमरेशूरोविरथश्चबलात्कृतः ॥ सृंजयाश्चेतरेसर्वेधृष्टद्युम्नपुरोगमाः २० असकृन्निर्जि ताःसंख्येस्मयमानेनसंयुगे ॥ तंकथंपांडवायुद्धेविजेष्यंतिमहारथम् २१ योहन्यात्समरेकुद्धोवज्रहस्तंपुरंदरम् ॥ त्वंचसर्वास्त्रविद्वीरःसर्वविद्यास्त्रपारगः २२

साम्यंममकीर्तिंकरमेवेतिभावः । सुरसिंहयोरितिपाठेरुद्रपितामहयोः ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२

२३ । २४ । २५ किमर्थमिति सारथ्यमात्रंप्रतिज्ञायप्रातिभट्यंचेत्कृष्णःकुर्यात्तर्हित्वंयुध्यस्वतद्वन्मिथ्याप्रतिज्ञोनभविष्यसीतिभावः २६ पदवीमानृण्यम् २७ । २८ । २९ । ३० । ३१

बाहुवीर्येणतेतुल्यःपृथिव्यांनास्तिकश्चन ॥ त्वंशल्यभूतःशत्रूणामविषह्यःपराक्रमे २३ ततस्त्वमुच्यसेराजन्शल्यइत्यरिसूदन ॥ तवबाहुबलंप्राप्यनशेकुः सर्वसात्वताः २४ तवबाहुबलाद्राजन्किंतुकृष्णोबलाधिकः ॥ यथाहिकृष्णेनबलंधार्यंवैफाल्गुनेहते २५ तथाकर्णात्ययीभावेत्वयाधार्यंमहद्बलम् ॥ किमर्थंस मरेसैन्यंवासुदेवोऽन्यवारयत् २६ किमर्थंचभवान्सैन्यंनहनिष्यातिमारिष ॥ त्वत्कृतेपदवींगंतुमिच्छेयंयुधिमारिष ॥ सोदराणांचवीराणांसर्वेषांचमहीक्षि ताम् २७ ॥ शल्यउवाच ॥ यन्मांब्रवीषिगांधारेअग्रेसैन्यस्यमानद ॥ विशिष्टंदेवकीपुत्रात्प्रीतिमानस्म्यहंत्वयि २८ एषसारथ्यमातिष्ठेराधेयस्ययशस्वि नः ॥ युध्यतःपांडवाग्र्येणयथात्वंवीरमन्यसे २९ समयश्चहिमेवीरकश्चिद्वैकर्तनंप्रति ॥ उत्सृजेयंयथाश्रद्धमहंवाचोऽस्यसन्निधौ ३० ॥ संजयउवाच ॥ तथेतिराजन्पुत्रस्तेसहकर्णेनमारिष ॥ अब्रवीन्मद्रराजानंसर्वक्षत्रस्यसन्निधौ ३१ सारथ्यस्याभ्युपगमाच्छल्येनाश्वासितस्तदा ॥ दुर्योधनस्तदाहृष्टःकर्णं तमभिषस्वजे ३२ अब्रवीच्चपुनःकर्णंस्तूयमानःसुतस्तव ॥ जहिपार्थान्रणेसर्वान्महेंद्रोदानवानिव ३३ सशल्येनाभ्युपगतेहयानांसंनियच्छने ॥ कर्णोहृष्टम नाभूयोदुर्योधनमभाषत ३४ नातिहृष्टमनाह्येषमद्रराजोऽभिभाषते ॥ राजन्मधुरयावाचापुनरेनंब्रवीहिवै ३५ ततोराजामहाप्राज्ञःसर्वास्त्रकुशलोबली ॥ दुर्यो धनोऽब्रवीच्छल्यंमद्रराजंमहीपातिम् ३६ पूरयन्निवघोषेणमेघगंभीरयागिरा ॥ शल्यकर्णोऽर्जुनेनाद्ययोद्धव्यमितिमन्यते ३७ तस्यत्वंपुरुषव्याघ्रनियच्छ तुरगान्युधि ॥ कर्णोहत्वेतरान्सर्वान्फाल्गुनंहंतुमिच्छति ३८ तस्याभीषुग्रहेराजन्प्रयाचेत्वांपुनःपुनः ॥ पार्थस्यसचिवःकृष्णोयथाऽभीषुग्रहोवरः ॥ तथा त्वमपिराधेयंसर्वतःपरिपालय ३९ ॥ ॥ संजयउवाच ॥ ॥ ततःशल्यःपरिष्वज्यसुतंतेवाक्यमब्रवीत् ॥ दुर्योधनममित्रघ्नंप्रीतोमद्राधिपस्तदा ४० ॥ शल्यउवाच ॥ एवंचेन्मन्यसेराजन्गांधारेप्रियदर्शन ॥ तस्मात्तेयत्प्रियंकिंचित्तत्सर्वंकरवाण्यहम् ४१ यत्रास्मिभरतश्रेष्ठयोग्यःकर्मणिकर्हिचित् ॥ तत्रस र्वात्मनायुक्तोवक्ष्येकार्यंपरंतप ४२ यत्तुकर्णमहंब्रूयांहितकामःप्रियाप्रिये ॥ ममतत्क्षमतांसर्वंभवान्कर्णश्चसर्वशः ४३ ॥ कर्णउवाच ॥ ईशानस्ययथाब्रह्माय थापार्थस्यकेशवः ॥ तथानित्यंहितेयुक्तोमद्रराजभवस्वनः ४४ ॥ शल्यउवाच ॥ आत्मनिंदाऽऽत्मपूजाचपरनिंदापरस्तवः ॥ अनाचरितमार्याणांवृत्तमेत च्चतुर्विधम् ४५ यत्तुविद्वन्प्रवक्ष्यामिप्रत्ययार्थमहंतव ॥ आत्मनःस्तवसंयुक्तंतन्निबोधयथातथम् ४६ अहंशक्रस्यसारथ्येयोग्योमातलिवत्प्रभो ॥ अप्र मादात्प्रयोगाच्चज्ञानविद्याचिकित्सनैः ४७



३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ वक्ष्ये वोढाऽस्मि ४२ । ४३ । ४४ आत्मनिंदापरस्तवावपिश्रेयसांनिंद्यौकिमुतात्मपूजापरनिंदे तदुभयमहंकरोमीतिभावः ४५ । ४६ अप्रमादोऽवधानं प्रयोगोऽश्वप्रेरणं ज्ञानमार्गाभिदोषावेक्षणं विद्यातत्परिहारज्ञानं चिकित्सनंदोषपरिहारसामर्थ्यम् ४७

४८ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपे पंचात्रिंशोऽध्यायः ॥ ३५ ॥ अयमिति १ हरिहयैरिंद्रतुरगैर्युक्तंरथं २ । ३ अध्युषितेप्रातःकाले ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२

ततःपार्थेनसंग्रामेयुध्यमानस्यतेऽनघ ॥ वाहयिष्यामितुरगान्विज्वरोभवसूतज ४८ ॥ ॥ इतिश्रीमहाभारतेकर्णपर्वणि शल्यसारथ्यस्वीकारे पंचत्रिंशो ऽध्यायः ॥ ३५ ॥ ॥ ध ॥ ॥ दुर्योधनउवाच ॥ अयंतेकर्णसारथ्यंमद्रराजःकरिष्यति ॥ कृष्णादभ्यधिकोयंतादेवेशस्येवमातलिः १ यथाहरि हयैर्युक्तंसंगृह्णातिसमातलिः ॥ शल्यस्तथातवाद्यायंसंयंतारथवाजिनाम् २ योधेत्वयिरथस्थेचमद्रराजेचसारथौ ॥ रथश्रेष्ठोध्रुवंसंख्येपार्थानभिभविष्यति ३ ॥ संजयउवाच ॥ ततोदुर्योधनोभूयोमद्रराजंतरास्विनम् ॥ उवाचराजन्संग्रामेऽध्युषितेपर्युपस्थिते ४ कर्णस्ययच्छसंग्राममेमद्रराजहयोत्तमान् ॥ त्वया ऽभिगुप्तोराधेयोविजेष्यतिधनंजयम् ५ इत्युक्तोरथमास्थायतथेतिप्राहभारत ॥ शल्येऽभ्युपगतेकर्णःसारथिंसुमनाऽब्रवीत ६ त्वंसूतस्यंदनंमह्यंकल्पयेत्य सकृत्त्वरन् ॥ ततोजैत्रंरथवरंगंधर्वनगरोपमम् ७ विधिवत्कल्पितंभद्रंजयेत्युक्त्वान्यवेदयत ॥ तंरथंरथिनांश्रेष्ठःकर्णोऽभ्यर्च्ययथाविधि ८ संपादितंब्रह्मवि दापूर्वमेवपुरोधसा ॥ कृत्वाप्रदक्षिणंयत्नादुपस्थायचभास्करम् ९ समीपस्थंमद्रराजमारोहत्वमथाब्रवीत् ॥ ततःकर्णस्यदुर्धर्षंस्यंदनप्रवरंमहत १० आरुरो हमहातेजाःशल्यःसिंहइवाचलम् ॥ ततःशल्याश्रितंदृष्ट्वाकर्णःस्वंरथमुत्तमम् ११ अध्यातिष्ठद्यथांऽभोदंविद्युद्वंतंदिवाकरः ॥ तावेकरथमारूढावादित्याग्निसम त्विषौ १२ अभ्राजेतांयथामेघंसूर्याग्नीसहितौदिवि ॥ संस्तूयमानौतौवीरौतदाऽऽस्तांद्युतिमत्तमौ १३ ऋत्विक्सदस्यैरिंद्राग्नीस्तूयमानाविवाध्वरे ॥ सश ल्यसंगृहीताश्वेरथेकर्णःस्थितोबभौ १४ धनुर्विस्फारयन्घोरंपरिवेषीवभास्करः ॥ आस्थितःसरथश्रेष्ठंकर्णःशरगभस्तिमान् १५ प्रबभौपुरुषव्याघ्रोमंदर स्थइवांशुमान् ॥ तंरथस्थंमहाबाहुंयुद्धायामितजेजसम् १६ दुर्योधनस्तुराधेयमिदंवचनमब्रवीत ॥ अकृतंद्रोणभीष्माभ्यांदुष्करंकर्मसंयुगे १७ कुरुष्वाधि रथेवीरमिषतांसर्वधन्विनाम् ॥ मनोगतंममह्यासीद्भीष्मद्रोणौमहारथौ १८ अर्जुनंभीमसेनंचनिहंताराविति ध्रुवम् ॥ ताभ्यांयदकृतंवीरवीरकर्ममहामृधे १९ तत्कर्मकुरुराधेयवज्रपाणिरिवापरः ॥ गृहाणधर्मराजंवाजहिवात्वंधनंजयम् २० भीमसेनंचराधेयमाद्रीपुत्रौयमावपि ॥ जयश्चतेऽस्तुभद्रंतेप्रयाहिपुरुषर्षभ २१ पांडुपुत्रस्यसैन्यानिकुरुसर्वाणिभस्मसात ॥ ततस्तूर्यसहस्राणिभेरीणामयुतानिच २२ वाद्यमानान्यरोचंतमेघशब्दोयथादिवि ॥ प्रतिगृह्यतुतद्वाक्यं रथस्थोरथसत्तमः २३ अभ्यभाषतराधेयःशल्यंयुद्धविशारदम् ॥ चोदयाश्वान्महाबाहोयावद्धन्मिधनंजयम् २४ भीमसेनंयमौचोभौराजानंचयुधिष्ठिरम् ॥ अद्यपश्यतुमेशल्यबाहुवीर्यंधनंजयः २५ अस्यतःकंकपत्राणांसहस्राणिशतानिच ॥ अद्यक्षेप्स्याम्यहंशल्यशरान्परमतेजनान् २६ पांडवानांविनाशाय दुर्योधनजयायच ॥ शल्यउवाच ॥ सूतपुत्रकथंनुत्वंपांडवानवमन्यसे २७

१३ । १४ । १५ । १६ । १७ । १८ । १९ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

२८ ।२९ ।३० । ३१। ३२ । ३३ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेषट्त्रिंशोऽध्यायः ॥ ३६ ॥ दृष्ट्वेति १ हरस्विनामश्वादीनां २। ३ ववाशशब्दंचकार रेरासेतिपाठेऽपिसएवार्थः

सर्वास्त्रज्ञान्महेष्वासान्सर्वानेवमहाबलान् ॥ अनिवर्तिनोमहाभागानजय्यान्सत्यविक्रमान् २८ अपिसंतनयेयुर्येभयंसाक्षाच्छतक्रतोः ॥ यदाश्रोष्यासिनिर्घोषं विस्फूर्जितमिवाशनेः २९ राधेयगांडिवस्याजौतदानैवंवदिष्यसि ॥ यदाद्रक्ष्यसिभीमेनकुंजरानीकमाहवे ३० विशीर्णदंतंनिहतंतदानैवंवदिष्यसि ॥ यदा द्रक्ष्यसिसंग्रामेधर्मपुत्रंयमौतथा ३१ शितैःपृषत्कैःकुर्वाणानभ्रच्छायामिवांबरे ॥ अस्यतःक्षिण्वतश्चारीन्लघुहस्तान्दुरासदान् ॥ पार्थिवानपिचान्यांस्त्वंत दानैवंवदिष्यसि ३२ ॥ संजयउवाच ॥ अनादृत्यतुतद्वाक्यंमद्रराजेनभाषितम् ॥ याहीत्येवाब्रवीत्कर्णोमद्रराजंतरस्विनम् ३३ ॥ इति श्रीमहाभारते क र्णपर्वणि शल्यसंवादेषट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥ संजयउवाच ॥ दृष्ट्वाकर्णंमहेष्वासंयुयुत्सुंसमवस्थितम् ॥ चुक्रुशुःकुरवःसर्वेहृष्टरूपाःसमंततः १ ततोदुंदुभिनिर्घोषैर्भेरीणांनिनदेनच ॥ बाणशब्दैश्चविविधैर्गर्जितैश्चतरस्विनाम् २ निर्ययुस्तावकायुद्धेमृत्युंकृत्वानिवर्तनम् ॥ प्रयातेतुततःकर्णेयोधेषु मुदितेषुच ३ चचालपृथिवीराजन्ववाशचसुविस्तरम् ॥ निःसरंतोव्यदृश्यंतसूर्यात्सप्तमहाग्रहाः ४ उल्कापाताश्चसंजज्ञुर्दिशांदाहास्तथैवच ॥ शुष्काश न्यश्चसंपेतुर्ववुर्वाताश्चभैरवाः ५ मृगपक्षिगणाश्चैवपृतनांबहुशस्तव ॥ अपसव्यंतदाचक्रुर्वेदयंतोमहाभयम् ६ प्रथितस्यचकर्णस्यनिपेतुस्तुरगाभुवि ॥ अ स्थिवर्षंचपतितमंतरिक्षाद्भयानकम् ७ जज्वलुश्चैवशस्त्राणिध्वजाश्चैवचकंपिरे ॥ अश्रूणिचव्यमुंचंतवाहनानिविशांपते ८ एतेचान्येचबहवउत्पातास्तत्र दारुणाः ॥ समुत्पेतुर्विनाशायकौरवाणांसुदारुणाः ९ नचतान्गणयामासुःसर्वेदैवेनमोहिताः ॥ प्रस्थितंसूतपुत्रंचजयेत्यूचुर्नराधिपाः ॥ निर्जितान्पांडवां श्चैवमेनिरेतत्रकौरवाः १० ततोरथस्थःपरवीरहंताभीष्मद्रोणावतिवीर्यौसमीक्ष्य ॥ समुज्ज्वलन्भास्करपावकाभोवैकर्तनोऽसौरथकुंजरोनृप ११ सशल्यमाभा ष्यजगादवाक्यंपार्थस्यकर्मातिशयंविचिंत्य ॥ मानेनदर्पेणविदह्यमानःक्रोधेनदीप्यन्निवनिःश्वसंश्च १२ नाहंमहेंद्रादपिवज्रपाणेःक्रुद्धाद्बिभेम्यायुधवान्रथस्थः ॥ दृष्ट्वाहिभीष्मप्रमुखाञ्शयानानतीवमांह्यस्थिरताजहाति १३ महेंद्रविष्णुप्रतिमावनिंदितौरथाश्वनागप्रवरप्रमाथिनौ ॥ अवध्यकल्पौनिहतौयदापरैस्ततो नमेऽप्यस्तिरणेऽद्यसाध्वसम् १४ समीक्ष्यसंख्येऽतिबलान्नराधिपान्ससूतमातंगरथान्परैर्हतान् ॥ कथंनसर्वानहितान्रणेऽवधीन्महास्त्रविद्ब्राह्मणपुंगवोगुरुः १५ सतंस्मरन्द्रोणमहंमहाहवेब्रवीमिसत्यंकुरवोनिबोधत ॥ नवामदन्यःप्रसहेद्रणेऽर्जुनंसमागतंमृत्युमिवोग्ररूपिणम् १६ शिक्षाप्रसादश्चबलंधृतिश्चद्रोणेमहा स्त्राणिचसंनतिश्च ॥ सचेदगान्मृत्युवशंमहात्मासर्वानन्यानातुरानद्यमन्ये १७

निःसरंतोयुद्धार्थमितिशेषः सूर्यात्सूर्यमारभ्य सूर्यादयोऽन्योन्यंयुध्यंतीत्यर्थः ४ । ५ । ६ । ७ । ८ । ९ । १० भीष्मद्रोणौअतिक्रांतंवीर्यंययोस्तावतिवीर्यौसमीक्ष्यस्वकृत्यमालोच्यजगादे त्युत्तरेणान्वयः ११ आभाष्यमोशल्यइतिसंबोध्य १२ अस्थिरताजहातीत्यचंचलोस्मीत्यर्थः १३ ततोऽपिमेऽद्यसाध्वसंभयंनास्तीतियोजना १४।१५।१६ आतुरानासन्नमृत्यून् १७

विद्यांजानीयां भावंश्वोऽहंस्थास्यामीतिनिश्चयं १८ अस्त्रादीनिमनुष्यस्यसुखायवर्तितुंनालमितिसंबंधः १९ उशनोःउशनसोः उपास्तउपातिष्ठत त्रातुमितिशेषः अस्त्रमस्त्रादि २० संप्रा
कुष्टेसम्यगाक्रोशवंति पराभूतेनिरस्ते धार्तराष्ट्रेधृतराष्ट्रपुत्रसंबंधिनि पौरुषेयत्ने २१। २२ द्रोणपथाद्रोणपथेन २३ तेषांभीष्मादीनांमध्येनगमिष्यामीतिनापितुगमिष्याम्येवेत्यर्थः संग्रामातप



नेहध्रुवंकिंचिदपिप्रचिंतयन्नविद्यांलोकेकर्मणोदैवयोगात् ॥ सूर्योदयेकोहिविमुक्तसंशयोभावंकुर्वीताद्यगुरौनिपातिते १८ ननूनमस्त्राणिबलंपराक्रमःक्रियाःसुनी
तंपरमायुधानिवा ॥ अलंमनुष्यस्यसुखायवर्तितुंतथाहियुद्धेनिहतःपरैर्गुरुः १९ हुताशनादित्यसमानतेजसंपराक्रमेविष्णुपुरंदरोपमम् ॥ नयेबृहस्पत्युशनोः
सदासमंनचैनमस्त्रंतदुपास्तदुःसहम् २० संप्राकुष्टेरुदितस्त्रीकुमारेपराभूतेपौरुषेधार्तराष्ट्रे ॥ मयाकृत्यमितिजानामिशल्यप्रयाहितस्माद्द्विषतामनीकम् २१
यत्रराजापांडवःसत्यसंधोव्यवस्थितोभीमसेनार्जुनौच ॥ वासुदेवःसात्यकिःसृंजयाश्चयमौचकस्तान्नविषहेन्मदन्यः २२ तस्मात्क्षिप्रंमद्रपतेप्रयाहिरणेपंचाला
न्पांडवान्सृंजयांश्च ॥ तान्वाहनिष्यामिसमेत्यसंख्येयास्यामिवाद्रोणपथायमाय २३ नत्वेवाहंगमिष्यामिमध्येतेषांशूराणामितिमांशल्यविद्धि ॥ मित्रद्रोहो
मर्षणीयोनमेऽयंत्यक्त्वाप्राणाननुयास्यामिद्रोणम् २४ प्राज्ञस्यमूढस्यचजीवितांतेनास्तिप्रमोक्षोंतकसत्कृतस्य ॥ अतोविद्वन्नभियास्यामिपार्थान्दिष्टंनश
क्यंव्यतिवर्तितुंवै २५ कल्याणवृत्तःसततंहिराजावैचित्रवीर्यस्यसुतोममासीत् ॥ तस्यार्थसिद्ध्यर्थमहंत्यजामिप्रियान्भोगान्दुस्त्यजंजीवितंच २६ वैयाघ्रचर्मा
णमकूजनाक्षंहेमत्रिकोशंरजतत्रिवेणुम् ॥ रथप्रबर्हंतुरगप्रबर्हैर्युक्तंप्रादान्मह्यमिमंहिरामः २७ धनूंषिचित्राणिनिरीक्ष्यशल्यध्वजान्गदाःसायकांश्चोग्ररूपान् ॥
असिंचदीप्तंपरमायुधंचशंखंचशुभ्रंस्वनवंतमुग्रम् २८ पताकिनंवज्रनिपातनिःस्वनंसिताश्वयुक्तंशुभतूणशोभितम् ॥ इमंसमास्थायरथंरथर्षभंरणेहनिष्या
म्यहमर्जुनंबलात् २९ तंचेन्मृत्युःसर्वहरोऽभिरक्षेत्सदाऽप्रमत्तःसमरेपांडुपुत्रम् ॥ तंवाहनिष्यामिरणेसमेत्ययास्यामिवाभीष्ममुखोयमाय ३० यमवरुणकुबेर
वासवावायदियुगपत्सगणामहाहवे ॥ जुगुपिषवइहाद्यपांडवंकिंबहुनासहतैर्जयामितम् ३१ ॥ संजयउवाच ॥ इतिरणरभसस्यकत्थतस्तदुतनिशम्यवचःस
मद्रराट् ॥ अवहसदवमन्यवीर्यवान्प्रतिषिषेधचजगादचोत्तरम् ३२ ॥ शल्यउवाच ॥ विरमविरमकर्णकत्थनादतिरभसोऽप्यतिवाचमुक्तवान् ॥ क्वहि
नरवरोधनंजयःक्वपुनरहोपुरुषाधमोभवान् ३३ यदुसदनमुपेंद्रपालितंत्रिदशमिवामरराजरक्षितम् ॥ प्रसभमतिविलोड्यकोहरेत्पुरुषवरावरजामृतेऽर्जुनात्
३४ त्रिभुवनविभुमीश्वरेश्वरंकइहपुमान्भवमाह्वयेद्युधि ॥ मृगवधकलहेकृतेऽर्जुनात्सुरपतिवीर्यसमप्रभावतः ३५

लायनेहिमित्रस्यदुर्योधनस्यद्रोहःकृतःस्यात्तच्चासह्यम् २४ जीवितांतेआयुषःसमाप्तौ प्रमोक्षोमृत्युनिवर्तनं २५। २६ वैयाघ्रचर्माणंव्याघ्रचर्मपरिवृतं २७। २८। २९ अप्रमत्तइतिच्छेदः
भीष्ममुखोभीष्माभिमुखः ३० जुगुपिषवोगोप्तुमिच्छवः ३१ रणरभसस्यरणोत्कटस्य ३२ अतिरभसोऽपित्वमतिवाचंस्वसामर्थ्यादधिकां ३३ पुरुषवरस्यकृष्णस्यावरजाकनीयसीसुभद्रा ३४।३५

३६ स्मरसीति विषमं छंदः ३७ खचरगणान् गंधर्वान् ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ श्वेतयुजा श्वेताश्वयुजा ४५ ॥ इति कर्णपर्वणि नीलकंठीये भारतभावदीपे सप्तत्रिंशो ऽध्यायः ॥ ३७ ॥ ॥ ७ ॥ प्रयाणेइति १ । २ अभिमन्येत अल्पमित्यवजानीत ३ । ४ । ५ अंजनकेशीभिः कृष्णकेशीभिरश्वतरीभिर्युवतीभिर्वा युक्तं ६ हस्तिषड्गवं हस्तिषट्कं

असुरसुरमहोरगान्नरान्गरुडपिशाचसयक्षराक्षसान् ॥ इषुभिरजयदग्निगौरवात्स्वभिलषितंचहविर्ददौजयः ३६ स्मरसिननुयदापरैर्हृतःसचधृतराष्ट्रसुतोऽपि मोक्षितः ॥ दिनकरसदृशैःशरोत्तमैर्युधाकुरुषुबहून्विनिहत्यतानरीन् ३७ प्रथममपिपलायितेत्वयिप्रियकलहाधृतराष्ट्रसूनवः ॥ स्मरसिननुयदाप्रमोचिताः खचरगणानवजित्यपांडवैः ३८ समुदितबलवाहनाःपुनःपुरुषवरेणजिताःस्थगोग्रहे ॥ सगुरुगुरुसुताःसभीष्मकाःकिमुनजितःसतदात्वयाऽर्जुनः ३९ इदमपर मुपस्थितंपुनस्तवनिधनायसुयुद्धमद्यवै ॥ यदिनरिपुभयात्पलायसेसमरगतोऽद्यहतोऽसिसूतज ४० ॥ संजयउवाच ॥ इतिबहुपरुषंप्रभाषतिप्रमनसिमद्र पतौरिपुस्तवम् ॥ भृशमभिरुषितःपरंतपःकुरुपृतनापतिराहमद्रपम् ४१ ॥ कर्णउवाच ॥ भवतुभवतुकिंविकत्थसेननुममतस्यहियुद्धमुद्यतम् ॥ यदिसजयति मामिहाहवेततइदमस्तुसुकत्थितंतव ४२ ॥ संजयउवाच ॥ एवमस्त्वितिमद्रेशउक्त्वानोत्तरमुक्तवान् ॥ याहिशल्येतिचाप्येनंकर्णःप्राहयुयुत्सया ४३ सरथः प्रययौशत्रून्श्वेताश्वःशल्यसारथिः ॥ निघ्नन्नमित्रान्समरेतमोघ्नन्सवितायथा ४४ ततःप्रायात्प्रीतिमान्वैरथेनवैयाघ्रेणश्वेतयुजाऽथकर्णः ॥ सचालोक्यध्व जिनींपांडवानांधनंजयंत्वरयापर्यपृच्छत् ४५ ॥ इतिश्रीमहाभारते कर्णपर्वणिकर्णशल्यसंवादे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ प्रयाणेचततःकर्णोहर्षयन्वाहिनींतव ॥ एकैकंसमरेदृष्ट्वापांडवान्पर्यपृच्छत १ योमामद्यमहात्मानंदर्शयेच्छ्वेतवाहनम् ॥ तस्मैदद्यामभिप्रेतंधनंयन्मनसेच्छ ति २ नचेत्तदभिमन्येततस्मैदद्यामहंपुनः ॥ शकटंरत्नसंपूर्णंयोमेब्रूयाद्धनंजयम् ३ नचेत्तदभिमन्येतपुरुषोऽर्जुनदर्शिवान् ॥ शतंदद्यांगवांतस्मैनैत्यकंकां स्यदोहनम् ४ शतंग्रामवरांश्चैवदद्यामर्जुनदर्शिने ॥ तथातस्मैपुनर्दद्यांश्वेतमश्वतरीरथम् ५ युक्तमंजनकेशीभिर्योमेब्रूयाद्धनंजयम् ॥ नचेत्तदभिमन्येतपु रुषोऽर्जुनदर्शिवान् ६ अन्यंवास्मैपुनर्दद्यांसौवर्णंहस्तिषड्गवम् ॥ तथाऽप्यस्मैपुनर्दद्यांस्त्रीणांशतमलंकृतम् ७ श्यामानांनिष्ककंठीनांगीतवाद्यविपश्चि ताम् ॥ नचेत्तदभिमन्येतपुरुषोऽर्जुनदर्शिवान् ८ तस्मैदद्यांशतंनागान्शतंग्रामान्शतंरथान् ॥ सुवर्णस्यचमुख्यस्यहयाग्र्याणांशतंशतान् ९ ऋद्ध्या गुणैःसुदांतांश्चधुर्यवाहान्सुशिक्षितान् ॥ तथासुवर्णशृंगीणांगोधेनूनांचतुःशतम् १०

'हस्तिषड्गवमिच्छंतिवीराःषट्केचदंतिनाम्'इतिप्राञ्चः अन्यंवासौवर्णरथमितिशेषः हस्तितुल्याःषड्गावउक्षाणोयस्मिन्तंषड्हस्तिनएवगोत्ववद्वोढारोयस्यतादृशम् ७ श्यामानामप्रजातानां निष्कमुरोभूषणम् ८ शतंशतान् दशसहस्राणि ९ ऋद्ध्या पुष्ट्या सुदांतान् विनीतान् धुर्यवाहान् रथोद्वहनक्षमान् १०

११ भांडमाभरणम् १२ । १३ । १४ । १५ अपरांतेषुपश्चिमकच्छेषु १६ । १७ प्रत्यग्रत्रयसामभिनवयौवनानाम् १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ प्लवमानंमर्यादाम् २६



दद्यांतस्मैसवत्सानांयोमेब्रूयाद्धनंजयम् १ नचेत्तदभिमन्येतपुरुषोऽर्जुनदर्शिवान् ११ अन्यदस्मैवरंदद्यांश्वेतान्पंचशतानहयान् ॥ हेमभांडपरिच्छन्नान्सुमृष्टमणिभूषणान् १२ सुदांतानपिचैवाहंदद्यामष्टादशापरान् ॥ रथंचशुभ्रंसौवर्णंदद्यांतस्मैस्वलंकृतम् १३ युक्तंपरमकांबोजैर्योमेब्रूयाद्धनंजयम् ॥ नचेत्तदभिमन्येतपुरुषोऽर्जुनदर्शिवान् १४ अन्यदस्मैवरंदद्यांकुंजराणांशतानिषट् ॥ कांचनैर्विविधैर्भांडैराच्छन्नान्हेममालिनः १५ उत्पन्नानपरांतेषुविनीतान्हस्तिशिक्षकैः ॥ नचेत्तदभिमन्येतपुरुषोऽर्जुनदर्शिवान् १६ अन्यदस्मैवरंदद्यांवैश्यग्रामांश्चतुर्दश ॥ सुस्फीतान्धनसंयुक्तान्प्रत्यासन्नवनोदकान् ॥ अकुतोभयान्सुसंपन्नान्राजभोज्यांश्चतुर्दश १७ दासीनांनिष्ककंठीनांमागधीनांशतंतथा ॥ प्रत्यग्रवयसांदद्यांयोमेब्रूयाद्धनंजयम् १८ नचेत्तदभिमन्येतपुरुषोऽर्जुनदर्शिवान् ॥ अन्यंतस्मैवरंदद्यांयमसौकामयेत्स्वयम् १९ पुत्रदारान्विहारांश्चयदन्यद्वित्तमस्तिमे ॥ तच्चतस्मैपुनर्दद्यांयद्यच्चमनसेच्छति २० हत्वाचसहितौकृष्णौतयोर्वित्तानिसर्वशः ॥ तस्मैदद्यामहंयोमेप्रब्रूयात्केशवार्जुनौ २१ एतावाचःसुबहुशःकर्णउच्चारयन्युधि ॥ दध्मौसागरसंभूतंसुस्वरंशंखमुत्तमम् २२ तावाचःसूतपुत्रस्यतथायुक्तानिशम्यतु ॥ दुर्योधनोमहाराजसंहृष्टःसानुगोऽभवत् २३ ततोदुंदुभिनिर्घोषोमृदंगानांचसर्वशः ॥ सिंहनादःसवादित्रःकुंजराणांचनिःस्वनः २४ प्रादुरासीत्तदाराजन्सैन्येषुपुरुषर्षभ ॥ योधानांसंप्रहृष्टानांतथासमभवत्स्वनः २५ तथाप्रहृष्टेसैन्येतुप्लवमानंमहारथम् ॥ विकत्थमानंचतदाराधेयमरिकर्षणम् ॥ मद्रराजःप्रहस्येदंवचनंप्रत्यभाषत २६ ॥ इतिश्रीमहाभारतेकर्णपर्वणिकर्णावलेपेऽष्टत्रिंशोऽध्यायः ॥ ३८ ॥ ॥ ॥ ॥ शल्यउवाच ॥ मासूतपुत्रदानेनसौवर्णंहस्तिषड्गवम् ॥ प्रयच्छपुरुषायाद्यद्रक्ष्यसित्वंधनंजयम् १ बाल्यादिहत्वंत्यजसिवसुवैश्रवणोयथा ॥ अयत्नेनैवराधेयद्रष्टास्यद्यधनंजयम् २ परासृजसियद्वित्तंकिंचित्त्वंबहुमूढवत् ॥ अपात्रदानेयेदोषास्तान्मोहान्नावबुध्यसे ३ यत्त्वंप्रेरयसेवित्तंबहुतेनखलुत्वया ॥ शक्यंबहुविधैर्यज्ञैर्यष्टुंसूतयजस्वतैः ४ यच्चप्रार्थयसेहंतुंकृष्णौमोहात्तृथैवतत् ॥ नहिशुश्रुमसंमर्देक्रोष्ट्रासिंहौनिपातितौ ५ अप्रार्थितंप्रार्थयसेसुहृदोनहिसंतिते ॥ येत्वांनिवारयंत्याशुप्रपतंतंहुताशने ६ कार्याकार्यंनजानीषेकालपक्वोऽस्यसंशयम् ॥ बह्वबद्धमकर्णीयंकोहिब्रूयाज्जिजीविषुः ७ समुद्रतरणंदोर्भ्यांकंठेबद्ध्वायथाशिलाम् ॥ गिर्यग्राद्वानिपतनंतादृक्तववचिकीर्षितम् ८ सहितःसर्वयोधैस्त्वंव्यूढानीकैःसुरक्षितः ॥ धनंजयेनयुध्यस्वश्रेयश्चेत्प्राप्तुमिच्छसि ९ हितार्थंधार्तराष्ट्रस्यब्रवीमित्वांनहिंसया ॥ श्रद्धस्वैवंमयाप्रोक्तंयदितेऽस्तिजिजीविषा १०

॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेअष्टात्रिंशोऽध्यायः ॥ ३८ ॥ ॥ ॥ मासूतेति १ वसुवित्तं द्रष्टासिद्रक्ष्यसि २ परासृजसित्यजसि ३ । ४ । ५ । ६ अबद्धमनर्थकंअकर्णीयम नाकर्णनीयम् ७ । ८ सहितोयुध्यस्वनत्वेकाकी ९ एवंश्रद्धस्वयदिजिजीविषातेऽस्त्यन्यथामरिष्यसि १०

११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ भोगीसर्पः पातेपतनार्थं २३ झषैर्मीनैरासमंताद्युतंझषायुतं अष्ठवःजाहुभ्यामित्यर्थः २४ दुंदुभिग्रीवंदुंदुभिस्वन

कर्णउवाच ॥ स्वबाहुवीर्यमाश्रित्यप्रार्थयाम्यर्जुनंरणे ॥ त्वंतुमित्रमुखःशत्रुर्मांभीषयितुमिच्छसि ११ नमामस्मादभिप्रायात्कश्चिदद्यनिवर्तयेत् ॥ अपींद्रोव ज्रमुद्यम्यकिमुमर्त्यःकथंचन १२ ॥ संजयउवाच ॥ इतिकर्णस्यवाक्यांतेशल्यःप्राहोत्तरंवचः ॥ चुकोपायिषुरत्यर्थंकर्णंमद्रेश्वरःपुनः १३ यदावैत्वांफाल्गुन वेगयुक्ताज्याचोदिताहस्तवताविसृष्टाः ॥ अन्वेतारःकंकपत्राःशिताग्रास्तदातप्स्यस्यर्जुनस्यानुयोगात् १४ यदादिव्यंधनुरादायपार्थःप्रतापयन्पृतनांसव्य साची ॥ त्वांमर्दयिष्यन्निशितैःपृषत्कैस्तदापश्चात्तप्स्यसेसूतपुत्र १५ बालश्चंद्रंमातुरंकेशयानोयथाकश्चित्प्रार्थयतेऽपहर्तुम् ॥ तद्वन्मोहाद्द्योतमानंरथस्थं संप्रार्थयस्यर्जुनंजेतुमद्य १६ त्रिशूलमाश्रित्यसुतीक्ष्णधारंसर्वाणिगात्राणिविघर्षसित्वम् ॥ सुतीक्ष्णधारोपमकर्मणात्वंयुयुत्ससेयोऽर्जुनेनाद्यकर्ण १७ क्रुद्धंसिं हंकेसरिणंबृहंतंबालोमूढःक्षुद्रमृगस्तरस्वी ॥ समाह्वयेत्तद्वदेतत्तवाद्यसमाह्वानंसूतपुत्रार्जुनस्य १८ मासूतपुत्राह्वयराजपुत्रंमहावीर्यंकेसरिणंयथैव ॥ वनेशृगालः पिशितेनतृप्तोमापार्थमासाद्यविनंक्ष्यसित्वम् १९ ईषादंतंमहानागंप्रभिन्नकरटामुखम् ॥ शशकोह्वयसेयुद्धेकर्णपार्थंधनंजयम् २० बिलस्थंकृष्णसर्पंत्वंबा ल्यात्काष्ठेनविध्यसि ॥ महाविषंपूर्णकोपंयत्पार्थंयोद्धुमिच्छसि २१ सिंहंकेसरिणंक्रुद्धमतिक्रम्याभिनर्दसे ॥ शृगालइवमूढस्त्वंनृसिंहंकर्णपांडवम् २२ सुपर्णं पतगश्रेष्ठंवैनतेयंतरस्विनम् ॥ भोगीवाह्वयसेपातेकर्णपार्थंधनंजयम् २३ सर्वांभसांनिधिंभीमंमूर्तिमंतंझषायुतम् ॥ चंद्रोदयेविवर्धंतमप्लवःसंस्तितीर्षसि २४ ऋषभंदुंदुभिग्रीवंतीक्ष्णशृंगंप्रहारिणम् ॥ वत्सआह्वयसेयुद्धेकर्णपार्थंधनंजयम् २५ महामेघंमहाघोरंदर्दुरःप्रतिनर्दसि ॥ कामतोयप्रदंलोकेनरपर्जन्यमर्जु नम् २६ यथाचस्वगृहस्थःश्वाव्याघ्रंवनगतंभषेत् ॥ तथात्वंभषसेकर्णनरव्याघ्रंधनंजयम् २७ शृगालोऽपिवनेकर्णशशैःपरिवृतोवसन् ॥ मन्यतेसिंहमात्मानं यावत्सिंहंनपश्यति २८ तथात्वमपिराधेयसिंहमात्मानमिच्छसि ॥ अपश्यन्शत्रुदमनंनरव्याघ्रंधनंजयम् २९ व्याघ्रंत्वंमन्यसेऽऽत्मानंयावत्कृष्णौनपश्य सि ॥ समास्थितावेकरथेसूर्याचंद्रमसाविव ३० यावद्गांडीवघोषंत्वंनशृणोषिमहाहवे ॥ तावदेवत्वयाकर्णशक्यंवक्तुंयथेच्छसि ३१ रथशब्दधनुःशब्दैर्नादयंतं दिशोदश ॥ नर्दंतमिवशार्दूलंदृष्ट्वाक्रोष्टाभविष्यसि ३२ नित्यमेवशृगालस्त्वंनित्यंसिंहोधनंजयः ॥ वीरप्रद्वेषणान्मूढतस्मात्क्रोष्टेवलक्ष्यसे ३३ यथाऽऽखुःस्या द्विडालश्चश्वाव्याघ्रश्चबलाबले ॥ यथाशृगालःसिंहश्चयथाचशशकुंजरौ ३४ यथाऽनृतंचसत्यंचयथाचापिविषामृते ॥ तथात्वमपिपार्थश्चप्रख्यातावात्म कर्मभिः ३५ ॥ इतिश्रीमहाभारतेकर्णपर्वणि कर्णशल्याधिक्षेपे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ ७ ॥ ॥ ७ ॥



कंठम् २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ ७ ॥ ॥ ७ ॥

अधीति वाक्शल्यरवादेवायंशल्यनामेतिनिश्चिन्वन् १ । २ । ३ । ४ । ५ । ६ आहियःसर्पमयः ७ । ८ नास्येयं नक्षिपेयम ९ । १० । ११ । १२ सुजातंशोभनंजन्म १३ मोतौएकसूत्रे

॥ संजयउवाच ॥ अधिक्षिप्तस्तुराधेयःशल्येनामिततेजसा ॥ शल्यमाहसुसंक्रुद्धोवाक्शल्यमवधारयन् १ ॥ कर्णउवाच ॥ गुणान्गुणवतांशल्यगुणवान्वेत्तिनागुणः ॥ त्वंतुशल्यगुणैर्हीनःकिंज्ञास्यसिगुणागुणम् २ अर्जुनस्यमहास्त्राणिक्रोधंवीर्यंधनुःशरान् ॥ अहंशल्याभिजानामिविक्रमंचमहात्मनः ३ तथाकृष्णस्यमहात्म्यमृषभस्यमहीक्षिताम् ॥ यथाऽहंशल्यजानामिनत्वंजानासितत्तथा ४ एवमेवात्मनोवीर्यमहंवीर्यंचपांडवे ॥ जानन्नेवाह्वयेयुद्धेशल्यगांडीवधारिणम् ५ अस्तिवाऽयमिषुःशल्यसुपुंखोरक्तभोजनः ॥ एकतूणीशयःपत्रीसुधौतःसमलंकृतः ६ शेतेचंदनचूर्णेषुपूजितोबहुलाःसमाः ॥ आहेयोविषवानुग्रोनराश्वद्विपसंघहा ७ घोररूपोमहारौद्रस्तनुत्रास्थिविदारणः ॥ निर्भिंद्यांयेनरुष्टोहमपिमेरुंमहागिरिम् ८ तमहंजातुनास्येयमन्यस्मिन्फाल्गुनादृते ॥ कृष्णाद्वादेवकीपुत्रात्सत्यंचापिशृणुष्वमे ९ तेनाहमिषुणाशल्यवासुदेवधनंजयौ ॥ योत्स्येपरमसंक्रुद्धस्तत्कर्मसदृशंमम १० सर्वेषांवृष्णिवीराणांकृष्णेलक्ष्मीःप्रतिष्ठिता ॥ सर्वेषांपांडुपुत्राणांजयःपार्थेप्रतिष्ठितः ११ उभयंतुसमासाद्यकोनिवर्तितुमर्हति ॥ तावेतौपुरुषव्याघ्रौसमेतौस्यंदनेस्थितौ १२ मामेकमभिसंयातौसुजातंपश्यशल्यमे ॥ पितृष्वसामातुलजौभ्रातरावपराजितौ १३ मणीसूत्रइवप्रोतौद्रष्टासिनिहतौमया ॥ अर्जुनेगांडिवंकृष्णेचक्रंतार्क्ष्यकपिध्वजौ १४ भीरूणांत्रासजननंशल्यहर्षकरंमम ॥ त्वंतुदुष्प्रकृतिर्मूढोमहायुद्धेष्वकोविदः १५ भयावदीर्णःसंत्रासादबद्धंबहुभाषसे ॥ संस्तौषितौतुकेनापिहेतुनात्वंकुदेशज १६ तौहत्वासमरेहंतात्वामद्यसहबांधवम् ॥ पापदेशजदुर्बुद्धेक्षुद्रक्षत्रियपांसन १७ सुहृद्भूत्वारिपुःकिंमांकृष्णाभ्यांभीषयिष्यसि ॥ तौवामामद्यहंतारौहनिष्येवाऽपितावहम् १८ नाहंबिभेमिकृष्णाभ्यांविजानन्नात्मनोबलम् ॥ वासुदेवसहस्रंवाफाल्गुनानांशतानिवा १९ अहमेकोहनिष्यामिजोषमास्वकुदेशज ॥ स्त्रियोबालाश्चवृद्धाश्चप्रायःक्रीडागताजनाः २० यागाथाःसंप्रगायंतिकुर्वंतोऽध्ययनंयथा ॥ तागाथाःशृणुमेशल्यमद्रकेषुदुरात्मसु २१ ब्राह्मणैःकथिताःपूर्वंयथावद्राजसन्निधौ ॥ श्रुत्वाचैकमनामूढक्षमवाब्रूहिचोत्तरम् २२ मित्रध्रुङ्मद्रकोनित्यंयोनोद्वेष्टिसमद्रकः ॥ मद्रकेसंगतंनास्तिक्षुद्रवाक्येनराधमे २३ दुरात्मामद्रकोनित्यंनित्यमानृतिकोऽनृजुः ॥ यावदंत्यंहिदौरात्म्यंमद्रकेष्वितिनःश्रुतम् २४ पितापुत्रश्चमाताचश्वश्रूश्वशुरमातुलाः ॥ जामातादुहिताभ्रातानप्ताऽन्येतेचबांधवाः २५ वयस्याभ्यागताश्चान्येदासीदासंचसंगतम् ॥ पुंभिर्विमिश्रानार्यश्चज्ञाताज्ञाताःस्वयेच्छया २६

मणीइवप्रेमसंबद्धौ १४ त्रासजननमितिसमुदायापेक्षयासामान्येननिर्देशः १५ । १६ । १७ । १८ । १९ जोषंतूष्णीं आस्वतिष्ठ क्रीडागताःलीलयाआगताः २० मद्रकेषुकुत्सितेषुमद्रदेशेषु २१ । २२ । २३ अनृतेनचरतीत्यानृतिकः यावदंत्यंअंत्यजपर्यंतं मरणावधीतिवा २४ । २५ पुंभिःपुरुषैःविमिश्राःसंगताः इच्छयामैथुनिनोऽज्ञातवत्ज्ञातावाअप्यविगीताइत्यर्थः २६

येषांमद्रकाणांसक्तुमिश्रितमत्स्याशिनां सीधुमद्यम् २७ । २८ । २९ मद्रकेषुसंसृष्टंनष्टं एवंगांधारकेषुशौचंनष्टंभवेत् ३० राजायाजकोयस्यतस्मिन्याज्येहविर्नष्टंभवेत् ३१ यथैवेति यथामद्रकैःसंगतंकृत्वापततियथावामद्रकेसंगतंनास्ति हेवृश्चिकत्वयातेविषंहतमित्युत्तरेणसंबंधः यद्येतत्सत्यंतर्हितवविषंनश्यत्विति मंत्रेणसर्वथाविषंनश्यतीत्यर्थः ३२ मयेत्यात्मानुभवसिद्धमिदमिति

येषांगृहेष्वशिष्टानांसक्तुमत्स्याशिनांतथा ॥ पीत्वासीधुसगोमांसंक्रंदंतिचहसंतिच २७ गायंतिचाप्यबद्धानिप्रवर्त्तंतेचकामतः ॥ कामप्रलापिनोऽन्योन्यंतेषुधर्मःकथंभवेत् २८ मद्रकेष्ववलिप्तेषुप्रख्याताशुभकर्मसु ॥ नापिवैरंनसौहार्दंमद्रकेणसमाचरेत् २९ मद्रकेसंगतंनास्तिमद्रकोहिसदामलः ॥ मद्रकेषुचसंसृष्टंशौचंगांधारकेषुच ३० राजयाजकयाज्येचनष्टंदत्तंहविर्भवेत् ॥ शूद्रसंस्कारकोविप्रोयथायातिपराभवम् ३१ यथाब्रह्मद्विषोनित्यंगच्छंतीहपराभवम् ॥ यथैवसंगतंकृत्वानरःपततिमद्रकैः ३२ मद्रकेसंगतंनास्तिहतंवृश्चिकतेविषम् ॥ आथर्वणेनमंत्रेणयथाशांतिःकृतामया ३३ इतिवृश्चिकदष्टस्यविषवेगहतस्यच ॥ कुर्वंतिभेषजंप्राज्ञाःसत्यंतच्चापिदृश्यते ३४ एवंविद्वन्जोषमास्वशृणुचात्रोत्तरंवचः ॥ वासांस्युत्सृज्यनृत्यंतिस्त्रियोयामद्यमोहिताः ३५ मैथुनेऽसंयताश्चापियथाकामवराश्चताः ॥ तासांपुत्रःकथंधर्मंमद्रकोवक्तुमर्हति ३६ यास्तिष्ठंत्यःप्रमेहंतियथैवोष्ट्रदशेरकाः ॥ तासांविभ्रष्टधर्माणांनिर्लज्जानांततस्ततः ३७ त्वंपुत्रस्तादृशीनांहिधर्मंवक्तुमिहेच्छसि ॥ सुवीरकंयाच्यमानामद्रिकाकर्षतिस्फिचौ ३८ प्रदातुकामावचनमिदंवदतिदारुणम् ॥ मामांसुवीरकंकश्चिद्याचतांदयितंमम ३९ पुत्रंदद्यांपतिंदद्यांनतुदद्यांसुवीरकम् ॥ गौर्योबृहत्योनिर्ह्रीकामद्रिकाःकंबलावृताः ४० घस्मरानष्टशौचाश्चप्रायइत्यनुशुश्रुम ॥ एवमादिमयाऽन्यैर्वाशक्यंवक्तुंभवेद्बहु ४१ आकेशाग्रान्नखाग्राच्चवक्तव्येषुकुकर्मसु ॥ मद्रकाःसिंधुसौवीराधर्मंविद्युःकथंत्विह ४२ पापदेशोद्भवाम्लेच्छाधर्माणामविचक्षणाः ॥ एषमुख्यतमोधर्मःक्षत्रियस्येतिनःश्रुतम् ४३ यदाजौनिहतःशेतेसद्भिःसमभिपूजितः ॥ आयुधानांसांपरायेयन्मुच्येयमहंततः ४४ ममैषप्रथमःकल्पोनिधनेस्वर्गमिच्छतः ॥ सोऽयंप्रियःसखाचास्मिधार्तराष्ट्रस्यधीमतः ४५ तदर्थेहिममप्राणायच्चमेविद्यतेवसु ॥ व्यक्तंत्वमप्युपाहितःपांडवैःपापदेशज ४६ यथाचामित्रवत्सर्वंत्वमस्मासुप्रवर्त्तसे ॥ कामंनखलुशक्योऽहंत्वद्विधानांशतैरपि ४७ संग्रामाद्विमुखःकर्तुंधर्मज्ञइवनास्तिकैः ॥ सारंगइवघर्मार्तःकामंविलपशुष्यच ४८ नाहंभीषयितुंशक्यःक्षत्रवृत्तेव्यवस्थितः ॥ तनुत्यजांनृसिंहानामाहवेष्वनिवर्तिनाम् ४९ यागतिर्गुरुणाप्रोक्तापुरारामेणतांस्मरे ॥ तेषांत्राणार्थमुद्युक्तंवधार्थंद्विषतामपि ५० विद्धिमामास्थितंवृत्तंपौरूरवसमुत्तमम् ॥ नतद्भूतंप्रपश्यामित्रिषुलोकेषुमद्रप ५१

द्योतयति ३३ । ३४ । ३५ यथाकामंवरयंतिताः असंयताइतिच्छेदः तासांपुत्रःसंकरजातइत्यर्थः ३६ प्रमेहंतिमूत्रयंते दशेरकाःगर्दभाः ३७ सुवीरकंकांजिकं स्फिचौकटिप्रोथौ ३८ । ३९ निर्ह्रीकाःनिर्लज्जाः ४० घस्मराःबहुभक्षकाः ४१ वक्तव्येषुगर्हणीयेषु ४२ । ४३ सांपरायेसमूहेसंग्रामेइत्यर्थः मुच्येयंजीवितमितिशेषः ४४ । ४५ उपहितःउपजप्तः ४६ । ४७ । ४८ । ४९ तेषांधार्तराष्ट्राणाम् ५० । ५१

५२ हत्वाअर्जुनेनघातयित्वा मित्रप्रतीक्षया।मित्रकार्यवेक्षणेनचादुर्योधनस्य तयोरेवोभयोः ५३ अपवादोनिंदातितिक्षाचतैस्त्रिभिर्हेतुभिः ५४ । ५५ । ५६ ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपे चत्वारिंशोऽध्यायः ॥ ४० ॥ ७ ॥ मारिषहेराजन् १ । २ वृषःमहोक्षः ३ । ४ । ५ । ६ । ७ आयुधस्यास्तिनवेतिज्ञानंपरिज्ञानं रुतंजयपराजयसूचकं अतिभारोदुर्वहत्वम् ८

योमामस्मादभिप्रायाद्वारयेदितिमेमतिः ॥ एवंविद्वन्जोषमास्वत्रासात्किंबहुभाषसे ५२ नत्वांहत्वाप्रदास्यामिक्रव्याद्भ्योमद्रकाधम ॥ मित्रप्रतीक्षयाशल्यधृतराष्ट्रस्यचोभयोः ५३ अपवादतितिक्षाभिस्त्रिभिरेतैर्हिजीवसि ॥ पुनश्चेदीदृशंवाक्यंमद्रराजवदिष्यसि ५४ शिरस्तेपातयिष्यामिगदयावज्रकल्पया ॥ श्रोतारस्त्विदमद्येहद्रष्टारोवाकुदेशज ५५ कर्णंवाजघ्नतुःकृष्णौकर्णोवापिजघानतौ ॥ एवमुक्त्वातुराधेयःपुनरेवविशांपते ॥ अब्रवीन्मद्रराजानंयाहियाहीत्यसंभ्रमम् ५६ ॥ इतिश्रीम० क० प० कर्णमद्राधिपसंवादेचत्वारिंशोऽध्यायः ॥ ४० ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ मारिषाधिरथेःश्रुत्वावाचोयुद्धाभिनंदिनः ॥ शल्योऽब्रवीत्पुनःकर्णंनिदर्शनामिदंवचः १ जातोऽहंयज्वनांवंशेसंग्रामेष्वनिवर्तिनाम् ॥ राज्ञांमूर्धाभिषिक्तानांस्वयंधर्मपरायणः २ यथैवमत्तोमद्येनत्वंतथालक्ष्यसेवृष ॥ तथाऽद्यत्वांप्रमाद्यंतंचिकित्सेयंसुहृत्तया ३ इमांकाकोपमांकर्णप्रोच्यमानांनिबोधमे ॥ श्रुत्वायथेष्टंकुर्यास्त्वंनिहीनकुलपांसन ४ नाहमात्मनिकिंचिद्वैकिल्बिषंकर्णसंस्मरे ॥ येनमांत्वंमहाबाहोहंतुमिच्छस्यनागसम् ५ अवश्यंतुमयावाच्यंबुद्ध्यतात्वद्धिताहितम् ॥ विशेषतोरथस्थेनराज्ञश्चैवहितैषिणा ६ समंचविषमंचैवरथिनश्चबलाबलम् ॥ श्रमःखेदश्चसततंहयानांरथिनासह ७ आयुधस्यपरिज्ञानंरुतंचमृगपक्षिणाम् ॥ भारश्चाप्यतिभारश्चशल्यानांचप्रतिक्रिया ८ अस्त्रयोगश्चयुद्धंचनिमित्तानितथैवच ॥ सर्वमेतन्मयाज्ञेयंरथस्यास्यकुटुंबिना ९ अतस्त्वांकथयेकर्णनिदर्शनमिदंपुनः ॥ वैश्यःकिलसमुद्रांतेप्रभूतधनधान्यवान् १० यज्वादानपतिःक्षांतःस्वकर्मस्थोऽभवच्छुचिः ॥ बहुपुत्रःप्रियापत्यःसर्वभूतानुकंपकः ११ राज्ञोधर्मप्रधानस्यराष्ट्रेवसतिनिर्भयः ॥ पुत्राणांतस्यबालानांकुमाराणांयशस्विनाम् १२ काकोबहूनामभवदुच्छिष्टकृतभोजनः ॥ तस्मैसदाप्रयच्छंतिवैश्यपुत्राःकुमारकाः १३ मांसोदनंदधिक्षीरंपायसंमधुसर्पिषी ॥ सचोच्छिष्टभृतःकाकोवैश्यपुत्रैःकुमारकैः १४ सदृशान्पक्षिणोदृप्तःश्रेयसश्चाधिचिक्षिपे ॥ अथहंसाःसमुद्रांतेकदाचिदतिपातिनः १५ गरुडस्यगतौतुल्याश्चक्रांगाहृष्टचेतसः ॥ कुमारकास्तदाहंसान्दृष्ट्वाकाकमथाब्रुवन् १६ भवानेवविशिष्टोहिपतत्रिभ्योविहंगम ॥ प्रतार्यमाणस्तैःसर्वैरल्पबुद्धिभिरंडजः १७ तद्वचःसत्यमित्येवमौर्ख्याद्दर्पाच्चमन्यते ॥ तान्सोऽभिपत्यजिज्ञासुःकएषांश्रेष्ठभागिति १८ उच्छिष्टदर्पितःकाकोबहूनांदूरपातिनाम् ॥ तेषांयंप्रवरंमेनेहंसानांदूरपातिनाम् १९ तमाह्वयतदुर्बुद्धिःपतावइतिपक्षिणम् ॥ तच्छ्रुत्वाप्राहसन्हंसायेतत्रासन्समागताः २०

निमित्तानिदिव्यांतरिक्षभौमानि ग्रहाद्यानुकूल्यप्रातिकूल्यादीनि ९ निदर्शनंदृष्टांतम् १० । ११ । १२ । १३ । १४ अतिपातिनःगत्यतिशयगामिनः १५ चक्रांगाःमानसचारिणः १६ पतत्रिभ्योऽन्येभ्यःप्रतार्यमाणोऽन्यथाप्रत्याय्यमानः १७ श्रेष्ठभाक्श्रेष्ठंअंगंभजते १८ । १९ पतावःगच्छावः २०

२१ दूरपातेनदूरगमनेन २२ । २३ पतितापतिष्यासि कत्थनःगुणश्लाघी २४ पतितास्मिपतिष्यामि २५ पातानांशतमेकंगणयति उड्डीनमित्यादिना । 'उड्डीनमूर्ध्वंगमनमवडीनमधोगतिः ॥ प्रडीनंसर्वतोयानंडीनंगमनमात्रकम् ॥ निडीनंशनकैर्यानंसंडीनंललितंगतम् ॥ तिर्यग्डीनंगतंप्राहुस्तिरःप्रचरणंबुधाः ॥ तान्याशाभेदभिन्नानिचत्वारिप्रतिजानते' ॥ तानितिर्यक्डीनानि २६ 'विडंबितंविडीनंस्यात्परिडीनंतुसर्वतः ॥ पश्चाद्गतिःपराडीनंस्वर्गंगंतुसुडीनकम् ॥ आभिमुख्येनगमनमभिडीनंप्रचक्षते ॥ यानंमहाडीनमाहुःपवित्रामूर्जितांगतिम् ॥ निर्डीनंनिश्चलंयानंप्रचंडमति डीनकम्' ॥ विडंबितंमल्लवदुड्डीयोड्डीयगमनम् २७ अवरोहोऽवडीनंस्यात्प्रडीनंचित्रमुच्यते ॥ गत्यालऌितयापूर्वमुपक्रम्यसमंततः ॥ परिक्रम्यप्रपतनंसंडीनंडीनडीनकम् ॥ संडीनोड्डीनडीनंस्या

भाषतोबहुकाकस्यबलिनःपततांवराः ॥ इदमूचुःस्मचक्रांगावचःकाकंविहंगमाः २१ ॥ हंसाऊचुः ॥ वयंहंसाश्चरामेमांपृथिवींमानसौकसः ॥ पक्षिणांचवयं नित्यंदूरपातेनपूजिताः २२ कथंहंसंनुबालिनंचक्रांगंदूरपातिनम् ॥ काकोभूत्वानिपतनेसमाह्वयसिदुर्मते २३ कथंत्वंपतिताकाकसहास्माभिर्ब्रवीहितत् ॥ अ थहंसवचोमूढःकुत्सयित्वापुनःपुनः ॥ प्रजगादोत्तरंकाकःकत्थनोजातिलाघवात् २४ ॥ काकउवाच ॥ शतमेकंचपातानांपतितास्मिनसंशयः ॥ शतयोजन मेकैकंविचित्रंविविधंतथा २५ उड्डीनमवडीनंचप्रडीनंडीनमेवच ॥ निडीनमथसंडीनंतिर्यक्डीनगतानिच २६ विडीनंपरिडीनंचपराडीनंसुडीनकम् ॥ अ भिडीनंमहाडीनंनिर्डीनमतिडीनकम् २७ अवडीनंप्रडीनंचसंडीनंडीनडीनकम् ॥ संडीनोड्डीनडीनंचपुनर्डीनविडीनकम् २८ संपातंसमुदीषंचततोऽन्यद्व्य तिरिक्तकम् ॥ गतागतंप्रतिगतंबह्वीश्चनिकुलीनकाः २९ कर्तास्मिमिषतांवोऽद्यततोद्रक्ष्यथमेबलम् ॥ तेषामन्यतमेनाहंपतिष्यामिविहायसम् ३० प्रदि शध्वंयथान्यायंकेनहंसाःपताम्यहम् ॥ तेवैध्रुवंविनिश्चित्यपतध्वंमयासह ३१ पातैरेभिःखलुखगाःपतितुंखेनिराश्रये ॥ एवमुक्तेतुकाकेनप्रहस्यैकोविहंग मः ३२ उवाचकाकंराधेयवचनंतन्निबोधमे ॥ हंसउवाच ॥ शतमेकंचपातानांत्वंकाकपतिताध्रुवम् ३३ एकमेवतुयंपातंविदुःसर्वेविहंगमाः ॥ तमहंपतिता काकनान्यंजानामिकंचन ३४ पतत्वमपिताम्राक्षयेनपातेनमन्यसे ॥ अथकाकाःप्रजहसुर्येतत्रासन्समागताः ३५ कथमेकेनपातेनहंसःपातशतंजयेत् ॥ ए केनैवशतस्यैषपातेनाभिपतिष्यति ३६ हंसस्यपतितंकाकोबलवानाशुविक्रमः ॥ प्रपेततुःस्पर्धयाचततस्तौहंसवायसौ ३७ एकपातीचचक्रांगःकाकःपातश तेनच ॥ पतितावाऽथचक्रांगःपतितावाथवायसः ३८ विसिस्मापयिषुःपातैराचक्षाणोऽत्मनःक्रियाः ॥ अथकाकस्यचित्राणिपतितानिमुहुर्मुहुः ३९ दृष्ट्वाप्र मुदिताःकाकाविनेदुरधिकैःस्वरैः ॥ हंसांश्चावहसंतिस्मप्रावदन्नप्रियाणिच ४०

त्तदेवोर्ध्वप्रकल्पनात् । गतौमत्यंतरोद्भेदोभवेड्डीनविडीनकम्' २८ 'क्षणात्संगत्यनिष्क्रम्यपक्षसंपातमुच्यते ॥ ऊर्ध्वाधोगतिसंभेदःसमुदीषंप्रचक्षते ॥ संकल्प्यपक्षगमनमुक्रम्यतेऽव्यतिरिक्तकम् ॥ षड्विंशतिरमीभेदाःपातानामिहदर्शिताः ॥ महाडीनंविहायैषांपाता नांत्रिविधागतिः ॥ गतंतत्रयथोद्दिष्टमागतंपुनरागमः ॥ प्रत्यावृत्तिःप्रतिगतिरितिषड्सप्ततिःस्मृताः ॥ तेषांनिपाताःकथ्यंतेप्रत्येकंपंचविंशतिः' ॥ निकुलीनकाःनिपाताः २९ मिषतांपश्यताम् ३० केनपातेन पतध्वंनेतिशिरश्चालनेननकिंनपतध्वमपितुपतध्वमेवेतिकाकूक्त्यापरिहासः संपतध्वमितिवापाठः ३१ ।३२ । ३३ एकंमुख्यम् ३४ । ३५ एकेनपातेन ३६ ।३७ । ३८ । ३९ । ४०

४१ । ४२ इदमब्रुवन्काकाइत्यर्थात् ४३ । ४४ । ४५ । ४६ नभसआकाशात् ४७ गांभीर्यात्गहनत्वाद्दिगंबरांभसःदिशएवांबरमावरणंयस्यतादृशमंभोयस्येत्याकाशोपमा समुद्रस्य

उत्पत्योत्पत्यचमुहुर्मुहूर्तमितिचेतिच ॥ वृक्षाग्रेभ्यःस्थलेभ्यश्चनिपतंत्युत्पतंतिच ४१ कुर्वाणाविविधान्रावानाशंसंतोजयंतथा ॥ हंसस्तुमृदुनैकेनविक्रांतुमु
पचक्रमे ४२ प्रत्यहीयतकाकाच्चमुहूर्तमिवमारिष ॥ अवमन्यचहंसांस्तानिदंवचनमब्रुवन् ४३ योऽसावुत्पतितोहंसःसोऽसावेवंप्रहीयते ॥ अथहंसःसतच्छ्रुत्वा
प्रापतत्पश्चिमांदिशम् ४४ उपर्युपरिवेगेनसागरंमकरालयम् ॥ ततोभीःप्राविशत्काकंतदातत्रविचेतसम् ४५ द्वीपद्रुमानपश्यंतंनिपातार्थेश्रमान्वितम् ॥
निपतेयंक्वनुश्रांतइतितस्मिन्जलार्णवे ४६ अविषह्यःसमुद्रोहिबहुसत्वगणालयः ॥ महासत्वशतोद्भासीनभसोऽपिविशिष्यते ४७ गांभीर्याद्धिसमुद्रस्यनविशे
षंहिसूतज ॥ दिगंबरांभसःकर्णसमुद्रस्थाविदुर्जनाः ४८ विदूरपातात्तोयस्यकिंपुनःकर्णवायसः ॥ अथहंसोऽप्यतिक्रम्यमुहूर्तमितिचेतिच ४९ अवेक्षमाण
स्तंकाकंनाशकद्व्यपसर्पितुम् ॥ अतिक्रम्यचचक्रांगःकाकंतंसमुदैक्षत ५० यावद्गत्वापतत्येषकाकोमामितिचिंतयन् ॥ ततःकाकोभृशंश्रांतोहंसमभ्यागमत्तदा
५१ तंतथाहीयमानंतुहंसोदृष्ट्वाऽब्रवीदिदम् ॥ उज्जिहीर्षुर्निमज्जंतंस्मरन्सत्पुरुषव्रतम् ५२ ॥ हंसउवाच ॥ बहूनिपतितानित्वमाचक्षाणोमुहुर्मुहुः ॥ पात
स्यव्याहरंश्चेदंननोगुह्यंप्रभाषसे ५३ किंनामपतितंकाकयत्त्वंपतसिसांप्रतम् ॥ जलंस्पृशसिपक्षाभ्यांतुंडेनचपुनःपुनः ५४ प्रब्रूहिकतमेतत्रपातेवर्तसिवा
यस ॥ एह्येहिकाकशीघ्रंत्वमेषत्वांप्रतिपालये ५५ ॥ शल्यउवाच ॥ सपक्षाभ्यांस्पृशन्नार्तस्तुंडेनचजलंतदा ॥ दृष्टोहंसेनदुष्टात्मन्निदंहंसंततोऽब्रवीत् ५६
अपश्यन्नंभसःपारंनिपतंश्चश्रमान्वितः ॥ पातवेगप्रमथितोहंसंकाकोऽब्रवीदिदम् ५७ वयंकाकाःकुतोनामचरामःकाकवाशिकाः ॥ हंसप्राणैःप्रपद्येत्वामुदकां
तंनयस्वमाम् ५८ सपक्षाभ्यांस्पृशन्नार्तस्तुंडेनचमहार्णवे ॥ काकोदृढपरिश्रांतःसहसानिपपातह ५९ सागरांभसितंदृष्ट्वापतितंदीनचेतसम् ॥ म्रियमाणमि
दंकाकंहंसोवाक्यमुवाचह ६० शतमेकंचपातानांपताम्यहमनुस्मर ॥ श्लाघमानस्त्वमात्मानंकाकभाषितवानसि ६१ सत्वमेकशतंपातंपतन्नभ्यधिकोमया ॥
कथमेवंपरिश्रांतःपतितोऽसिमहार्णवे ६२ प्रत्युवाचततःकाकःसीदमानइदंवचः ॥ उपरिष्ठंतदाहंसमभिवीक्ष्यप्रसादयन् ६३ ॥ काकउवाच ॥ उच्छिष्टदर्पितोहं
समन्येत्मानंसुपर्णवत् ॥ अवमन्यबहूंश्चाहंकाकानन्यांश्चपक्षिणः ६४ प्राणैर्हंसप्रपद्येत्वांद्वीपांतंप्रापयस्वमाम् ॥ यद्यहंस्वस्तिमान्हंसस्वंदेशंप्राप्नुयांविभो ६५
नकंचिदवमन्येऽहमापदोमांसमुद्धर ॥ तमेवंवादिनंदीनंविलपंतमचेतनम् ६६ काककाकेतिवाशंतंनिमज्जंतंमहार्णवे ॥ कृपयाऽऽदायहंसस्तंजलक्लिन्नंसुदुर्दशम् ६७

संबंधिनस्तोयस्य ४८ । ४९ अपसर्पितुंत्यक्तुमगंतुंदयावशत्वान्नाशकद् ५० मामनुलक्ष्येतिशेषः ५१ । ५२ । ५३ । ५४ । ५५ दुष्टात्मन्नितिकर्णसंबोधनं ५६ । ५७ काकवाशिकाः काकाइति
वाशंतःशब्दंकुर्वंतः ५८ । ५९ । ६० । ६१ । ६२ । ६३ त्मानंआत्मानम् ६४ । ६५ । ६६ । ६७

६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७ ॥ ॥ इति कर्णपर्वणि नीलकंठीये भारतभावदीपे

पद्भ्यामुत्क्षिप्यवेगेनपृष्ठमारोपयच्छनैः ॥ आरोप्यपृष्ठंहंसस्तंकाकंतूर्णंविचेतनम् ६८ आजगामपुनर्द्वीपंस्पर्धयापेततुर्यतः ॥ संस्थाप्यतंचापिपुनःसमा श्वास्यचखेचरम् ६९ गतोयथेप्सितंदेशंहंसोमनइवाशुगः ॥ एवमुच्छिष्टपुष्टःसकाकोहंसपराजितः ७० बलंवीर्यंमहत्कर्णत्यक्त्वाक्षांतिमुपागतः ॥ उच्छि ष्टभोजनःकाकोयथावैश्यकुलेपुरा ७१ एवंत्वमुच्छिष्टभृतोधार्तराष्ट्रैर्नसंशयः ॥ सदृशान्श्रेयसश्चापिसर्वान्कर्णावमन्यसे ७२ द्रोणद्रौणिकृपैर्गुप्तोभीष्मेणा न्यैश्चकौरवैः ॥ विराटनगरेपार्थमेकंकिंनावधीस्तदा ७३ यत्रव्यस्ताःसमस्ताश्चनिर्जिताःस्थकिरीटिना ॥ सृगालाइवसिंहेनक्वतेवीर्यमभूत्तदा ७४ भ्रात रंनिहतंदृष्ट्वासमरेसव्यसाचिना ॥ पश्यतांकुरुवीराणांप्रथमंत्वंपलायितः ७५ तथाद्वैतवनेकर्णगंधर्वैःसमभिद्रुतः ॥ कुरून्समग्रानुत्सृज्यप्रथमंत्वंपलायितः ७६ हत्वाजित्वाचगंधर्वांश्चित्रसेनमुखान्रणे ॥ कर्णदुर्योधनंपार्थःसभार्यंसममोक्षयत् ७७ पुनःप्रभावःपार्थस्यपौराणःकेशवस्यच ॥ कथितःकर्णरामेणसभायां राजसंसदि ७८ सततंचत्वमश्रौषीर्वचनंद्रोणभीष्मयोः ॥ अवध्यौवदतःकृष्णौसान्निधौचमहीक्षिताम् ७९ कियत्तत्तत्प्रवक्ष्यामियेनयेनधनंजयः ॥ त्वत्तो तिरिक्तःसर्वेभ्योभूतेभ्योब्राह्मणोयथा ८० इदानीमेवद्रष्टासिप्रधानेस्यंदनेस्थितौ ॥ पुत्रंचवसुदेवस्यकुंतीपुत्रंचपांडवम् ८१ यथाश्रयतचक्रांगंवायसोबुद्धि मास्थितः ॥ तथाश्रयस्ववार्ष्णेयंपांडवंचधनंजयम् ८२ यदात्वंयुधिविक्रांतौवासुदेवधनंजयौ ॥ द्रष्टास्येकरथेकर्णतदानैवंवदिष्यसि ८३ यदाशरशतैःपा र्थोदर्पंतववधिष्यति ॥ तदात्वमंतरंद्रष्टाआत्मनश्चार्जुनस्यच ८४ देवासुरमनुष्येषुप्रख्यातौयौनरोत्तमौ ॥ तौमाऽवमंस्थामौख्यात्त्वंखद्योतइवरोचनौ ८५ सूर्याचंद्रमसौयद्वत्तद्वदर्जुनकेशवौ ॥ प्राकाश्येनाभिविख्यातौत्वंतुखद्योतवन्नृषु ८६ एवंविद्वन्माऽवमंस्थाःसूतपुत्राच्युतार्जुनौ ॥ नृसिंहौतौमहात्मानौजो षमास्वविकत्थने ८७ ॥ इति श्रीमहाभारतेकर्णपर्वणि कर्णशल्यसंवादेहंसकाकीयोपाख्याने एकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ॥ संजयउवाच ॥ मद्राधिपस्याधिरथिर्महात्मावचोनिशम्याप्रियमप्रतीतः ॥ उवाचशल्यंविदितंममैतद्यथाविधावर्जुनवासुदेवौ १ शौरेरथंवाहयतोऽर्जुनस्यबलंमहास्त्राणिचपां डवस्य ॥ अहंविजानामियथावदद्यपरोक्षभूतंतवतत्तुशल्य २ तौचाप्यहंशस्त्रभृतांवरिष्ठौव्यपेतभीर्योधयिष्यामिकृष्णौ ॥ संतापयत्यभ्यधिकंतुरामाच्छापो ऽद्यमांब्राह्मणसत्तमाच्च ३ अवसंवैब्राह्मणच्छद्मनाहंरामेपुरादिव्यमस्त्रंचिकीर्षुः ॥ तत्रापिमेदेवराजेनविघ्नोहितार्थिनाफाल्गुनस्यैवशल्य ४ कृतोविभेदेनममो रुमेत्यप्रविश्यकीटस्यतनुंविरूपाम् ॥ ममोरुमेत्यप्रबिभेदकीटःसुप्तेगुरौतत्रशिरोनिधाय ५ उरुप्रभेदाच्चमहान्बभूवशरीरतोमेघनशोणितौघः ॥ गुरोर्भया च्चापिनचेलिवानहंततोविबुद्धोददृशेसविप्रः ६ एकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ॥ ७ ॥ ॥ मद्रेति १ । २ । ३ । ४ । ५ चेलिवान्चालितवान् ६

१३

७ सूतापधौ सूतत्वपिधाननिमित्तं कर्मकालेस्वप्रतिज्ञारक्षणकाले ८ पर्याप्तं समाप्तं विस्मृतमित्यर्थः ९ । १० । ११ अस्त्रंततोरामदत्तादस्त्रादन्यत्प्रतिपन्नंप्राप्तंअहिबाणाख्यमित्यर्थः १२

सधैर्ययुक्तंप्रसमीक्ष्यमांवैनत्वंविप्रःकोऽसिसत्यंवदेति ॥ तस्मैतदाऽऽत्मानमहंयथावदाख्यातवान्सूतवदेत्यशल्य ७ समांनिशम्याथमहातपस्वीसंशप्तवान्रोष परीतचेताः ॥ सूतोपधावाप्तमिदंतवास्त्रंनकर्मकालेप्रतिभास्यतित्वाम् ८ अन्यत्रतस्मात्तवमृत्युकालादब्राह्मणेब्रह्मनहिध्रुवंस्यात् ॥ तदद्यपर्याप्तमतीवचास्त्र मस्मिन्संग्रामेतुमुलेऽतीवभीमे ९ योऽयंशल्यभरतेषूपपन्नःप्रकर्षणःसर्वहरोतिभीमः ॥ सोभिमन्येक्षात्रियाणांप्रवीरान्प्रतापिताबलवान्वैविमर्दः १० शल्योग्र धन्वानमहंवरिष्ठंतरस्विनंभीममसह्यवीर्यम् ॥ सत्यप्रतिज्ञंयुधिपांडवेयंधनंजयंमृत्युमुखंनयिष्ये ११ अस्त्रंततोन्यत्प्रतिपन्नमद्ययेनक्षेप्स्येसमरेशत्रुपूगान् ॥ प्रतापिनंबलवंतंकृतास्त्रंतमुग्रधन्वानममितौजसंच १२ क्रूरंशूरंरौद्रममित्रसाहंधनंजयंसंयुगेऽहंहनिष्ये ॥ अपांपतिर्वेगवानप्रमेयोनिमज्जयिष्यन्बहुलाःप्रजाश्च १३ महावेगंसंकुरुतेसमुद्रोवेलाचैनंधारयत्यप्रमेयम् ॥ प्रमुंचंतंबाणसंघानमेयान्मर्मच्छिदोवीरहणःसुपत्रान् १४ कुंतीपुत्रंयत्रयोत्स्यामियुद्धेज्याकर्षतामुत्तम मद्यलोके ॥ एवंबलेनातिबलंमहास्त्रंसमुद्रकल्पंसुदुरापमुग्रम् १५ शरौघिणंपार्थिवान्मज्जयंतंवेलेवपार्थमिषुभिःसंसहिष्ये ॥ अद्याहवेयस्यनतुल्यमन्यंमन्ये मनुष्यंधनुराददानम् १६ सुरासुरान्युधिवैयोजयेतनाद्यमेपश्ययुद्धंसुघोरम् ॥ अतीवमानीपांडवोयुद्धकामोह्यमानुषैरेष्यतिमेमहास्त्रैः १७ तस्यास्त्रमस्त्रैः प्रतिहत्यसंख्येबाणोत्तमैःपातयिष्यामिपार्थम् ॥ सहस्ररश्मिप्रतिमंज्वलंतंदिशश्चसर्वाःप्रतपंतमुग्रम् १८ तमोनुदंमेघइवातिमात्रंधनंजयंछादयिष्यामिबा णैः ॥ वैश्वानरंधूमशिखंज्वलंतंतेजस्विनंलोकमिमंदहंतम् १९ पर्जन्यभूतःशरवर्षैर्यथाग्निंतथापार्थंशमयिष्यामियुद्धे ॥ आशीविषंदुर्धरमप्रमेयंसुतीक्ष्णदंष्ट्रंज्व लनप्रभावम् २० क्रोधप्रदीप्तंत्वहितंमहांतंकुंतीपुत्रंशमयिष्यामिभल्लैः ॥ प्रमाथिनंबलवंतंप्रहारिणंप्रभंजनंमातरिश्वानमुग्रम् २१ युद्धेसहिष्येहिमवानिवाचलो धनंजयंकुद्धममृष्यमाणम् ॥ विशारदंरथमार्गेषुशक्तंधुर्यंनित्यंसमरेषुप्रवीरम् २२ लोकेवरंसर्वधनुर्धराणांधनंजयंसंयुगेसंसहिष्ये ॥ अद्याहवेयस्यनतुल्यमन्यं न्येमनुष्यंधनुराददानम् २३ सर्वामिमांयःपृथिवींविजिग्येतेनप्रयोद्धास्मिसमेत्यसंख्ये ॥ यःसर्वभूतानिसदैवकानिप्रस्थेऽजयत्खांडवेसव्यसाची २४ कोजी वितंरक्षमाणोहितेनयुयुत्सेद्वैमानुषोमामृतेऽन्यः ॥ मानीकृतास्त्रःकृतहस्तयोगोदिव्यास्त्रविच्छ्वेतहयःप्रमाथी २५ तस्याहमद्यातिरथस्यकायाच्छिरोहरिष्या मिशितैःपृषत्कैः ॥ योत्स्याम्येनंशल्यधनंजयंवैमृत्युंपुरस्कृत्यरणेजयंवा २६ अन्योहिनह्येकरथेनमर्त्योयुध्येतयःपांडवमिंद्रकल्पम् ॥ तस्याहवेपौरुषंपांडव स्यब्रूयांहृष्टःसमितौक्षत्रियाणाम् २७ किंत्वंमूर्खःप्रसभंमूढचेताममावोचःपौरुषंफाल्गुनस्य ॥ अप्रियोयःपुरुषोनिष्ठुरोहिक्षुद्रःक्षेप्ताक्षमिणश्चाक्षमावान् २८

१३ । १४ । १५ । १६ मेमांप्रति एष्यति १७ अस्त्रैरस्त्रतुल्यैः १८ । १९ । २० । २१ । २२ । २३ खांडवेखांडवदाहे २४ । २५ । २६ । २७ । २८

२९ आर्जवेकर्तव्येसति ३० अहंसिद्धिंकांक्षमाणोऽस्मित्वंतुतन्मन्यसेयत्रएेकांतंवंसख्यंनास्ति अस्मत्पक्षीयोऽप्यन्यत्रस्नेहवानसीत्यर्थः तदेवाह मित्रमिति मिंदयतिमेदयतिवास्नेहार्थो ऽिमदेर्मिदेर्वामित्रमितिरूपं नंदतेरित्यत्रमदतेरितिपाठः मदीहर्षइत्यस्यवारूपं मादयतितर्पयतीतिवा मादयतेर्मित्रमिदतेस्त्राणार्थस्यवामिदेरिदंरूपं नंदयतेःप्रीयतेःसंत्रायतेर्वाऽर्थेवर्त्त मानस्यमिदेर्मित्रमितिवार्थः मिनुतेमानंकरोतिसर्वंहितमस्यसंगृह्णातीतिवा मोदतेऽस्यसुखेनेतिवामित्रमित्येतेऽर्थामयिसंतीत्यर्थः ३१ शत्रुरिति शदेःशातनार्थात्शास्तेःशासनार्थाद्वश्य

हन्यामहंत्वाद्दशानांशतानिक्षमाम्यहंक्षमयाकालयोगात् ॥ अवोचस्त्वंपांडवार्थेप्रियाणिप्रधर्षयन्मांमूढवत्पापकर्मन् २९ मयार्जवेजिह्ममतिर्हतस्त्वंमित्रद्रोहीसात्पदंहिमैत्रम् ॥ कालस्त्वयंप्रत्युपयातिदारुणोदुर्योधनोयुद्धमुपागमद्यत् ३० अस्यार्थसिद्धिंत्वभिकांक्षमाणस्तन्मन्यसेयत्रनैकांत्यमस्ति ॥ मित्रंमिदेर्नंदतेःप्रीयतेर्वासंत्रायतेर्मिनुतेर्मोदतेर्वा ३१ ब्रवीमितेसर्वमिदंममास्तितच्चापिसर्वंममवेत्तिराजा ॥ शत्रुःशदेःशासतेर्वाश्यतेर्वाशृणातेर्वाश्वसतेःसीदतेर्वा ३२ उपसर्गाद्बहुधासूदतेश्चप्रायेणसर्वंत्वयितच्चमह्यम् ॥ दुर्योधनार्थंतवचाप्रियार्थंयशोर्थमात्मार्थमपीश्वरार्थम् ३३ तस्मादहंपांडववासुदेवौयोत्स्येयत्नात्कर्मतत्पश्यमेऽद्य ॥ अस्त्राणिपश्याद्यममोत्तमानिब्राह्माणिदिव्यान्यथमानुषाणि ३४ आसादयिष्याम्यहमुग्रवीर्यंद्विपोद्विपंमत्तमिवातिमत्तः ॥ अस्त्रंब्राह्मंमनसायुद्धचजेयंक्षेप्स्येपार्थायाप्रमेयंजयाय ॥ तेनापिमेनैवमुच्येतयुद्धेनचेत्पतेद्विषमेमेऽद्यचक्रम् ३५ वैवस्वताद्दंडहस्ताद्वरुणाद्वापिपाशिनः ॥ सगदाद्वाधनपतेःसवज्राद्वाऽपिवासवात् ॥ अन्यस्मादपिकस्माच्चिदमित्रादाततायिनः ३६ इतिशल्यविजानीहियथानाहंबिभेम्यतः ॥ तस्मान्नमेभयंपार्थान्नापिचैवजनार्दनात् ३७ सहयुद्धंहिमेताभ्यांसांपरायेभविष्यति ॥ कदाचिद्विजयस्याहमस्त्रहेतोरटन्नृप ३८ अज्ञानाद्विक्षिपन्बाणान्घोररूपानभयानकान् ॥ होमधेन्वावत्समस्यप्रमत्तइषुणाऽहनम् ३९ चरंतंविजनेशल्यततोऽनुव्याजहारमाम् ॥ यस्मात्त्वयाप्रमत्तेनहोमधेन्वाहतःसुतः ४० श्वभ्रेतेपततांचक्रमितिमांब्राह्मणोऽब्रवीत् ॥ युध्यमानस्यसंग्रामेप्राप्तस्यैकायनंभयम् ४१ तस्माद्बिभेमिबलवद्ब्राह्मणव्याहृतादहम् ॥ एतेहिसोमराजानईश्वराःसुखदुःखयोः ४२ अदांतस्मैगोसहस्रंबलीवर्दांश्चषट्शतान् ॥ प्रसादंनलभेशल्यब्राह्मणान्मद्रकेश्वर ४३ ईषादंतानसप्तशतान्दासीदासशतानिच ॥ ददतोद्विजमुख्योमेप्रसादंनचकारसः ४४ कृष्णानांश्वेतवत्सानांसहस्राणिचतुर्दश ॥ आहरंनलभेतस्मात्प्रसादंद्विजसत्तमात् ४५ ऋद्धंगृहंसर्वकामैर्यच्चमेवसुकिंचन ॥ तत्सर्वमस्मैसत्कृत्यप्रयच्छामिनचेच्छति ४६

तेस्तनूकरणार्थात्शृणातेर्हिंसार्थात्श्वसतेरुच्छ्वासार्थाद्दंतर्भावितण्यर्थात्सीदतेःसूदतेर्वादंत्यस्थानेतालव्यस्योपसर्जनात्शत्रुरितिशब्दउत्पन्नस्तदर्थश्चसर्वस्त्वय्यस्तीत्यर्थः ३२ दुर्योधनस्यतवममचप्रीतिर्जयलाभेनयशसश्चप्राप्तिस्त्रयाणामपिईश्वरप्रीतिःस्वधर्माचरणेनेत्यर्थः ३३ अस्त्राणीति कालेऽस्त्रंनप्रतिभास्यतीतिपूर्वमुक्तंाऽप्यावेशात्स्वस्यविद्यमानामस्त्रसंपदमभिमेत्याह ब्राह्माणिब्रह्मशिरआदीनि दिव्यानिऐंद्रवारुणगांधर्वादीनि । मानुषाणिभौमानिदिव्यधनुरादीनि ३४ अस्त्रमिति यत्पादे हिप्रसिद्धंक्षेप्स्येतर्हिनैवमुच्येतशत्रुःपरंतुयदिचक्रंविषमेनपतेदित्ययमपिद्वितीयोदोषोदर्शितः ३५ । ३६ । ३७ । ३८ अहनंहतवानस्मि ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६

४७ । ४८ समाप्नुहि शापमनुभवस्वेत्यर्थः ४९ । ५० ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपेद्वाचत्वारिंशोऽध्यायः ॥ ४२ ॥ ॥ ७ ॥ ततः अनंतरंशल्येनवक्तव्यंवचःसंनिवार्य स्वयमेवाहेत्यर्थः १ । २ । ३ । ४ । ५ । ६ सखिभावःसारथ्येनोपकारकत्वं सौहार्दमदीयाक्षमा मित्रस्यदुर्योधनस्यभावःइष्टसिद्धिःहेतुरित्यर्थः ७ एतदेवत्रयंव्याचष्टेराज्ञश्चेत्यादिना ८

ततोऽब्रवीन्मांयाचंतमपराधंप्रयत्नतः ॥ व्याहृतंयन्मयासूततत्तथानतदन्यथा ४७ अनृतोक्तंप्रजांहन्यात्ततःपापमवाप्नुयाम् ॥ तस्माद्धर्माभिरक्षार्थंनानृतं वक्तुमुत्सहे ४८ मात्वंब्रह्मगतिंहिंस्याःप्रायश्चित्तंकृतंत्वया ॥ मद्वाक्यंनानृतंलोकेकश्चित्कुर्यात्समाप्नुहि ४९ इत्येतत्तेमयाप्रोक्तंक्षिप्तेनापिसुहृतया ॥ जानामि त्वांविक्षिपंतंजोषमास्वोत्तरंशृणु ५० ॥ इतिश्रीमहाभारतेकर्णपर्वणि कर्णशल्यसंवादेद्वाचत्वारिंशोऽध्यायः ॥ ४२ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ ततःपुनर्महाराजमद्रराजमरिंदमः ॥ अभ्यभाषतराधेयःसंनिवार्योत्तरंवचः १ यत्त्वंनिदर्शनार्थंमांशल्यजल्पितवानसि ॥ नाहंशक्यस्त्वयावाचाविभीषयितु माहवे २ यदिमांदेवताःसर्वायोधयेयुःसवासवाः ॥ तथापिमेभयंनस्यात्किमुपार्थात्सकेशवात् ३ नाहंभीषयितुंशक्योवाङ्मात्रेणकथंचन ॥ अन्यंजानीहियः शक्यस्त्वयाभीषयितुंरणे ४ नीचस्यबलमेतावत्पारुष्यंयत्त्वमात्थमाम् ॥ अशक्तोमद्गुणान्वक्तुंवल्गसेबहुदुर्मते ५ नहिकर्णःसमुद्भूतोभयार्थमिहमद्रक ॥ विक्र मार्थमहंजातोयशोर्थंचतथाऽऽत्मनः ६ सखिभावेनसौहार्दान्मित्रभावेनचैवहि ॥ कारणैस्त्रिभिरेतैस्त्वंशल्यजीवसिसांप्रतम् ७ राज्ञश्चधार्तराष्ट्रस्यकार्यंसुमह दुद्यतम् ॥ मयितच्चाहितंशल्यतेनजीवसिमेक्षणम् ८ कृतश्चसमयःपूर्वंक्षंतव्यंविप्रियंतव ॥ ऋतेशल्यसहस्रेणविजयेयमहंपरान् ॥ मित्रद्रोहस्तुपापीयानिति जीवसिसांप्रतम् ९ ॥ इतिश्रीमहाभारतेकर्णपर्वणिकर्णशल्यसंवादे त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ ॥ शल्यउवाच ॥ ननुप्रलापाःकर्णतेयान्ब्रवीषि परान्प्रति ॥ ऋतेकर्णसहस्रेणशक्याजेतुंपरेयुधि १ ॥ संजयउवाच ॥ तथाब्रुवंतंपरुषंकर्णोमद्राधिपंतदा ॥ परुषंद्विगुणंभूयःप्रोवाचाप्रियदर्शनम् २ ॥ कर्णउवाच ॥ इदंतुतेत्वमेकाग्रःशृणुमद्रजनाधिप ॥ संनिधौधृतराष्ट्रस्यप्रोच्यमानंमयाश्रुतम् ३ देशांश्चविविधांश्चित्रान्पूर्ववृत्तांश्चपार्थिवान् ॥ ब्राह्मणाः कथयंतिस्मधृतराष्ट्रनिवेशने ४ तत्रवृद्धःपुरावृत्ताःकथाःकश्चिद्द्विजोत्तमः ॥ वाहीकदेशंमद्रांश्चकुत्सयन्वाक्यमब्रवीत् ५ बहिष्कृताहिमवतागंगयाचबहि ष्कृताः ॥ सरस्वत्यायमुनयाकुरुक्षेत्रेणचाप्रिय ६ पंचानांसिंधुषष्ठानांनदीनांयेऽतराश्रिताः ॥ तान्धर्मबाह्यानशुचीन्वाहीकानपिवर्जयेत् ७ गोवर्धनोनाम वटःसुभद्रंनामचत्वरम् ॥ एतद्राजकुलद्वारमाकुमारात्स्मराम्यहम् ८ कार्येणात्यर्थगूढेनवाहीकेषूषितंमया ॥ ततएषांसमाचारःसंवासाद्विदितोमम ९

कृतइति शल्यसहस्रतुल्योऽहमेवास्मीत्यर्थः ९ ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपेत्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ ॥ ७ ॥ नन्विति कर्णसहस्रेणविनाऽपिपरेजेतुंशक्याः मयेतिशेषः कर्णसहस्रतुल्योऽहमेकएवास्मीतिभावः १ भूयःद्विगुणंअधिकगुणम् २ । ३ । ४ । ५ । ६ पंचानांवक्ष्यमाणानां सिंधुःषष्ठीयासांअंतरमवकाशमाश्रिताः ७ गोवर्धनः गवांछेदनस्थानं सुभद्रंचत्वरंसुराभांडाश्रयभूतं एतदुभयंराजकुलस्यराजगृहद्वारस्योपलक्षणम् ८ । ९

वृत्तंचारित्रम् १० धानाभ्रष्टयवाः गौड्यासवंसुराविशेषं वाटयंयवान्नंक्रीतान्नंवा । 'वाटोवृत्तौचमार्गेचवरंडेगान्नभेदयोः' इतिविश्वः स्वार्थेण्वत्र आशिनःभक्षणशीलाः ११ वप्रेषुप्राकारभित्तिषु १२ अवगीतैःभगलिंगादिविगीतशब्दैः अनावृताःस्वपरपुरुषविवेकहीनाः कामचारायथेष्टचारिण्यः १३ सूक्तानिविनोदवचनानि हेहतेभोलिंगताडितेइत्याक्रोशेद्वित्वं संधिश्छांदसः स्वामिहते

शाकलंनामनगरमापगानामनिम्नगा ॥ जर्तिकानामवाहीकास्तेषांवृत्तंसुनिंदितम् १० धानागौड्यासवंपीत्वागोमांसंलशुनैःसह ॥ अपूपमांसवाट्यानामाशिनः शीलवर्जिताः ११ गायंत्यथचनृत्यंतिस्त्रियोमत्ताविवाससः ॥ नगरागारवप्रेषुबहिर्माल्यानुलेपनाः १२ मत्तावगीतैर्विविधैःखरोष्ट्रनिनदोपमैः ॥ अनावृतामैथुनेताःकामचाराश्चसर्वशः १३ आहुरन्योन्यसूक्तानिप्रब्रुवाणामदोत्कटाः ॥ हेहतेहेहतेत्येवंस्वामिभर्तृहतेतिच १४ आक्रोशंत्यःप्रनृत्यंतिव्रात्याःपर्वस्वसंयताः ॥ तासांकिलावलिप्तानांनिवसन्कुरुजांगले १५ कश्चिद्वाहीकदुष्टानांनातिहृष्टमनाजगौ ॥ सानूनंबृहतीगौरीसूक्ष्मकंबलवासिनी १६ मामनुस्मरतीशेतेवाहीकंकुरुजांगले ॥ शतद्रुकामहंतीर्त्वातांचरम्यामिरावतीम् १७ गत्वास्वदेशंद्रक्ष्यामिस्थूलशंखाःशुभाःस्त्रियः ॥ मनःशिलोज्ज्वलापांग्योगौर्यस्त्रिककुदांजनाः १८ कंबलाजिनसंवीताःक्रंदंत्यःप्रियदर्शनाः ॥ मृदंगानकशंखानांमर्दलानांचनिःस्वनैः १९ खरोष्ट्राश्वतरैश्चैवमत्तायास्यामहेसुखम् ॥ शमीपीलुकरीराणांवनेषुसुखवर्त्मसु २० अपूपान्सक्तुपिंडांश्चप्राश्नंतोमथितान्वितान् ॥ पथिसुप्रबलाभूत्वाकदासंपततोऽध्वगान् २१ चेलापहारंकुर्वाणास्ताडयिष्यामभूयसः ॥ एवंशीलेषुव्रात्येषुवाहिकेषुदुरात्मसु २२ कश्चेतयानोनिवसेन्मुहूर्तमपिमानवः ॥ ईदृशाब्राह्मणेनोक्तावाहीकामोघचारिणः २३ येषांषड्भागहर्तात्वमुभयोःशुभपापयोः ॥ इत्युक्त्वाब्राह्मणःसाधुरुत्तरंपुनरुक्तवान् २४ वाहीकेष्वविनीतेषुप्रोच्यमानंनिबोधतत् ॥ तत्रस्मराक्षसीगीतिःसदाकृष्णचतुर्दशीम् २५ नगरेशाकलेस्फीतेआहत्यनिशिदुंदुभिम् ॥ कदावाहेयिकागाथाःपुनर्गास्यामिशाकले २६ गव्यस्यतृप्तामांसस्यपीत्वागौडंसुरासवम् ॥ गौरीभिःसहनारीभिर्बृहतीभिःस्वलंकृता २७ पलांडुगंडूषयुतान्खादंतीचैडकान्बहून् ॥ वाराहंकौक्कुटंमांसंगव्यंगार्दभमौष्ट्रिकम् २८ ऐडंचयेनखादंतितेषांजन्मनिरर्थकम् ॥ इतिगायंतियेमत्ताःसीधुनाशाकलाश्चये २९ सबालवृद्धाःक्रंदंतस्तेषुधर्मःकथंभवेत् ॥ इतिशल्यविजानीहिहंतभूयोब्रवीमिते ३० यदन्योऽप्युक्तवानस्मान्ब्राह्मणःकुरुसंसदि ॥ पंचनद्योवहंत्येतायत्रपीलुवनान्युत ३१ शतद्रुश्चविपाशाचतृतीयैरावतीतथा ॥ चंद्रभागावितस्ताचसिंधुषष्ठाबहिर्गिरेः ३२ आरट्टानामतेदेशानष्टधर्मानतान्व्रजेत् ॥ व्रात्यानांदासमीयानांवाहीकानामयज्वनाम् ३३

भर्त्रहतेइतिचतद्वत् १४ पर्वसुउत्सवदिनेषु आक्रोशंत्यःगालयंत्यः तासांपतिरितिशेषः १५ । १६ । १७ । १८ । १९ खरादियानैः २० मथितंतक्रम् २१ भूयसः बहून् २२ । २३ । २४ । २५ वहोवृषभस्तस्येदंवधपर्ववाहंतत्रोचितावाहेयिकागाथागीतीः २६ । २७ खादंतीबलिरूपान्एडकान्मेषान् वाराहंविड्वराहजं २८ शाकलाःशाकलपुरवासिनः २९ । ३० । ३१ गिरेर्हिमाद्रेः ३२ व्रात्यानामुपनयनादिसंस्कारहीनानां दासमीयानांदसमदेशोद्भवानां दासंग्रहशूद्रंभिमत्तेमानयंतिमैथुनार्थिन्यस्तादासम्यस्तज्जानादासमीयानांवा ३३

३४ कुंडेषुमहोदरपात्रेषु ३५ । ३६ सर्वमन्नमदनीयंक्षीरंचभोजनंयेषांते ३७ । ३८ युगंधरेनगरेऔष्ट्रादिकमपिक्षीरंपीयते भक्ष्याभक्ष्यविवेकाभावात्तत्रावश्यमभक्ष्यभक्षणमापतत्येव एवमच्युतस्थलेनग रेउषितस्यागम्यागमनमवश्यंभावितादृशानामेवतत्रसत्वात् ३९ भूतिलयेहिचंडालब्राह्मणसाधारणएकोजलाशयस्तत्र चस्नातःकथंस्वर्गंगच्छेन्नकथंचिदित्यर्थः ४० द्यहमित्येकरात्रवासेनदोषइत्यर्थः ४१ । ४२ कारस्करादयोदेशाः ४३ एकरात्रशयीएकरात्रशायिनंब्राह्मणमितिद्वितीयार्थेप्रथमा ४४ । ४५ । ४६ । ४७ ॥ इतिकर्णपर्वणिनीलकंठीये भारतभा

नदेवाःप्रतिगृह्णंतिपितरोब्राह्मणास्तथा ॥ तेषांप्रणष्टधर्माणांवाहीकानामितिश्रुतिः ३४ ब्राह्मणेनतथाप्रोक्तंविदुषासाधुसंसदि ॥ काष्ठकुंडेषुवाहीकामृन्मयेषुचभुंजते ३५ सक्तुमद्यावलिप्तेषुश्वावलीढेषुनिर्घृणाः ॥ आविकंचौष्ट्रिकंचैवक्षीरंगार्दभमेवच ३६ तद्विकारांश्चवाहीकाःखादंतिचपिबंतिच ॥ पुत्रसंकरिणोजाल्माःसर्वान्नक्षीरभोजनाः ३७ आरट्टानामवाहीकावर्जनीयाविपश्चिता ॥ हंतशल्यविजानीहिहंतभूयोब्रवीमिते ३८ यदन्योऽप्युक्तवान्मह्यंब्राह्मणःकुरुसंसदि ॥ युगंधरेपयःपीत्वाप्रोष्यचाप्यच्युतस्थले ३९ तद्वद्भूतिलयेस्नात्वाकथंस्वर्गंगमिष्यति ॥ पंचनद्योवहंत्येतायत्रानिःसृत्यपर्वतात् ४० आरट्टानामवाहीकानतेष्वार्योद्व्यहंवसेत् ॥ वहिश्चनामहीकश्चविपाशायांपिशाचकौ ४१ तयोरपत्यंवाहीकानैषासृष्टिःप्रजापतेः ॥ तेकथंविविधान्धर्मान्ज्ञास्यंतेहीनयोनयः ४२ कारस्करान्माहिषकान्कालिंगान्केरलांस्तथा ॥ कर्कोटकान्वीरकांश्चदुर्धर्मांश्चविवर्जयेत् ४३ इतितीर्थानुसर्तारंराक्षसीकाचिदब्रवीत् ॥ एकरात्रशयीमेहेमहोलूखलमेखला ४४ आरट्टानामतेदेशावाहीकंनामतज्जलम् ॥ ब्राह्मणापसदायत्रतुल्यकालाःप्रजापतेः ४५ वेदानतेषांवेद्यश्चयज्ञायजनमेवच ॥ व्रात्यानांदासमीयानामन्नंदेवानभुंजते ४६ प्रस्थलामद्रगांधाराआरट्टानामतःखशाः ॥ वसातिसिंधुसौवीराइतिप्रायोऽतिकुत्सिताः ४७ ॥ इतिश्रीम० क० प० कर्णशल्यसंवादेचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ॥ कर्णउवाच ॥ हंतशल्यविजानीहिहंतभूयोब्रवीमिते ॥ उच्यमानंमयासम्यक्त्वमेकाग्रमनाःशृणु १ ब्राह्मणःकिलनोगेहमध्यगच्छत्पुराऽतिथिः ॥ आचारंतत्रसंप्रेक्ष्यप्रीतोवचनमब्रवीत् २ मयाहिमवतःशृंगमेकेनाध्युषितंचिरम् ॥ दृष्टाश्चबहवोदेशानानाधर्मसमावृताः ३ नचकेनचधर्मेणविरुध्यंतेप्रजाइमाः ॥ सर्वंहितेब्रुवन्धर्मंयदुक्तंवेदपारगैः ४ अटतातुततोदेशान्नानाधर्मसमाकुलान् ॥ आगच्छतामहाराजवाहीकेषुनिशामितम् ५ तत्रवैब्राह्मणोभूत्वाततोभवतिक्षत्रियः ॥ वैश्यःशूद्रश्चवाहीकस्ततोभवतिनापितः ६ नापितश्चततोभूत्वापुनर्भवतिब्राह्मणः ॥ द्विजोभूत्वाचतत्रैवपुनर्दासोऽभिजायते ७ भवंत्येककुलेविप्राःप्रसृष्टाःकामचारिणः ॥ गांधारामद्रकाश्चैववाहीकाश्चाल्पचेतसः ८

वदीपे चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ॥ ७ ॥ ॥ हंतेति १ । २ । ३ इमाअनुभूतपूर्वाःप्रजाः केनचकेनाप्यर्थकामादिनानिमित्तेनधर्मेणसहनविरुध्यंते नकेनचिद्धर्मेणेतिपाठेकेनाप्यधर्मेणैतानविरुध्यंते नकंचिदप्यधर्मंकृत्वाशास्त्रेणविरुध्यंतेइत्यर्थः ४ निशामितंश्रुतम् ५ ब्राह्मणोभूत्वेत्यादितज्जातीयकर्माचरणनिबंधनम् ६ । ७ कुलेएकएवविप्रोभवत्यन्येभ्रातरःप्रसृष्टाःसंकीर्णक्रियाइत्यर्थः ८

तत्रवाहीकेषु धर्मसंकरकारकोविपर्ययःश्रुतइतिलिंगंविपरिणेयं विपर्ययोविहितवैपरीत्यं ९ । १० । ११ बंधक्योवेश्याः पंचमेव्यभिचारेबंधक्यः १२ नचैवेति उत्तरत्रेदंबंधकीत्वंसर्वत्रानुवर्त्यते यस्मादमातुर्धनंदुहिताहरतिपितुःपुत्रइतिनियमात् यद्यपिपुत्रीपुत्रश्चद्वावपिजारजौतथापिपितृत्वइवमातृत्वेविसंवादाभावाद्दौहित्रएवरिक्थहारीभवतिनपुत्रइतिभावः यतस्तेभगिनीश्चैवापत्यानिजनयंतिनस्वदारेष्वतस्तेषांभागिनेयाभागहराइतिव्याख्यानंप्राचां १३ । १४ असंतश्चात्संतश्चवर्तंते परंतुवाह्यनयाद्दतेवाहीकनीतिंविना तत्रकेवलमसंतएववर्तंतेइत्यर्थः १५ । १६

एतन्मयाश्रुतंतत्रधर्मसंकरकारकम् ॥ कृत्स्नामटित्वापृथिवींवाहीकेषुविपर्ययः ९ हंतशल्यविजानीहिहंतभूयोब्रवीमिते ॥ यदप्यन्योऽब्रवीद्वाक्यंवाहीकानांच कुत्सितम् १० सतीपुराहृताकाचिदारट्टात्किलदस्युभिः ॥ अधर्मतश्चोपयातासातानभ्यशपत्ततः ११ बालांबंधुमतींयन्मामधर्मेणोपगच्छथ ॥ तस्मान्नार्योभविष्यंतिबंधक्योवैकुलस्यच १२ नचैवास्मात्प्रमोक्षध्वंघोरात्पापान्नराधमाः ॥ तस्मात्तेषांभामहराभागिनेयानसूनवः १३ कुरवःसहपंचालाःशाल्वामत्स्याःसनैमिषाः ॥ कोसलाःकाशपौंड्राश्चकालिंगामागधास्तथा १४ चेदयश्चमहाभागाधर्मंजानंतिशाश्वतम् ॥ नानादेशेष्वसंतश्चप्रायोवाह्यनयादृते १५ आमत्स्येभ्यःकुरुपंचालदेश्याआनैमिषाच्चेदयोयेऽविशिष्टाः ॥ धर्मंपुराणमुपजीवंतिसंतोमद्रादृतेपांचनदांश्चजिह्मान् १६ एवंविद्वान्धर्मकथासुराजंस्तूष्णींभूतोजडवच्छल्यभूयः ॥ त्वंतस्यगोप्ताचजनस्यराजाषड्भागहर्ताशुभदुष्कृतस्य १७ अथवादुष्कृतस्यत्वंहर्तातेषामरक्षिता ॥ रक्षितापुण्यभाग्राजाप्रजानांत्वंह्यपुण्यभाक् १८ पूज्यमानेपुराधर्मेसर्वदेशेषुशाश्वते ॥ धर्मंपांचनदंदृष्ट्वाधिगित्याहपितामहः १९ व्रात्यानांदासमीयानांकृतेऽप्यशुभकर्मणाम् ॥ ब्रह्मणानिंदितेधर्मेसत्वंलोकेकिमब्रवीः २० इतिपांचनदंधर्ममवमेनेपितामहः ॥ स्वधर्मस्थेषुवर्णेषुसोऽप्येतान्नाभ्यपूजयत् २१ हंतशल्यविजानीहिहंतभूयोब्रवीमिते ॥ कल्माषपादःसरसिनिमज्जन्राक्षसोऽब्रवीत् २२ क्षत्रियस्यमलंभैक्ष्यंब्राह्मणस्याव्रतंमलम् ॥ मलंपृथिव्यावाहीकाःस्त्रीणांमद्रस्त्रियोमलम् २३ निमज्जमानमुद्धृत्यकश्चिद्राजानिशाचरम् ॥ अपृच्छत्तेनचाख्यातंप्रोक्तवांस्तन्निबोधमे २४ मानुषाणांमलंम्लेच्छाम्लेच्छानामौष्ट्रिकामलम् ॥ औष्ट्रिकाणांमलंषंढाःषंढानांराजयाजकाः २५ राजयाजकयाज्यानांमद्रकाणांचयन्मलम् ॥ तद्भवेद्वैतवमलंयद्यस्मान्नविमुंचसि २६ इतिरक्षोपसृष्टेषुविषवीर्यहतेषुच ॥ राक्षसंभैषजंप्रोक्तंसंसिद्धवचनोत्तरम् २७ ब्राह्मंपंचालाःकौरवेयास्तुधर्म्यंसत्यंमत्स्याःशूरसेनाश्चयज्ञम् ॥ प्राच्यादासावृषलादाक्षिणात्याःस्तेनावाहीकाःसंकरावैसुराष्ट्राः २८

१७ । १८ पूज्यमानेप्रशस्यमाने १९ कृतेकृतयुगेऽपिधर्मे वाहीकानामितिशेषः सवाहीकस्त्वम् २० नाभ्यपूजयत्नप्रशंसितवान् २१ । २२ । २३ । २४ म्लेच्छाःपापरताधर्माधर्मविचारहीनाः 'म्लेच्छःपापरतेजातिभेदेस्यादपभाषणे' इतिविश्वः 'उष्ट्रिकामृत्तिकाभांडभेदेऽपिकरभस्त्रियाम्' इतिविश्वः औष्ट्रिकःस्नेहभांडजीवीतैलिकइत्यर्थः षंढाःवर्षवराः राजयाजकाःक्षत्रियस्ययाज्यास्तेषामपियाज्याः राजपुरोहितयाज्यावा २५ । २६ रक्षोपसृष्टेषुरक्षसाउपद्रुतेषु राक्षसंरक्षसांनाशकमिदंराक्षसम् २७ ब्राह्मंवेदसमूहं धर्म्यंधर्मादनपेतंकर्मभानयंतीतिशेषः प्राच्यादासाःशूद्रधर्माणः दाशाइतिपाठेमत्स्यजीविनः वृषंधर्मंलांतिआददतेतेवृषलाः धर्मसंग्रहपराः धर्मद्रोहिणइतिवा २८

बहिर्गेहं रात्रिचर्याप्रच्छन्नं चौर्यपारदार्यादि २९ आपांचाल्येभ्योधर्मज्ञाः उदीच्याद्यास्तुस्वयंधर्मस्वरूपमजानंतोऽपिशिष्टानुगामिनइत्यर्थः आरट्टास्तूभयभ्रष्टाइतिभावः ३० प्राचीमि त्यत्रजातवेदइत्यनेनाग्नेयीसहिताप्राचीदेवानामाश्रयादक्षिणापितॄणांतत्रैवश्राद्धादिधर्मोदृश्यते ३१ एवं प्रतीचींवरुणः उदीचींसोम इति कुबेरेशानयोर्ग्रहणं परिशेषान्नैर्ऋत्यांवा यव्यांचवाहीकाश्रयायांनैर्ऋतास्त्वादृशावातूलाश्चसंतीत्यर्थः ३२ तथारक्षइति हिमवतोऽप्यप्रशस्यजनाश्रयत्वमुक्तं गंधमादनस्तुभोगलोलुपानांगुह्यकादीनामाश्रयः ३३ एवमपि

कृतघ्नतापरवित्तापहारोमद्यपानंगुरुदारावमर्दः ॥ वाक्पारुष्यंगोवधोरात्रिचर्याबहिर्गेहपरवस्त्रोपभोगः २९ येषांधर्मस्तान्प्रतिनास्त्यधर्मोह्यारट्टानांपंचनदा न्धिगस्तु ॥ आपांचाल्येभ्यःकुरवोनैमिषाश्चमत्स्याश्चैतेप्यथजानंतिधर्मम् ॥ अथोदीच्याश्चांगकामागधाश्चशिष्टान्धर्मानुपजीवंतिवृद्धाः ३० प्राचींदि शंश्रितादेवाजातवेदःपुरोगमाः ॥ दक्षिणांपितरोगुप्तांयमेनशुभकर्मणा ३१ प्रतीचींवरुणःपातिपालयानःसुरान्बली ॥ उदीचींभगवान्सोमोब्राह्मणैःसहरक्ष ति ३२ तथारक्षःपिशाचाश्चहिमवंतंनगोत्तमम् ॥ गुह्यकाश्चमहाराजपर्वतंगंधमादनम् ३३ ध्रुवःसर्वाणिभूतानिविष्णुःपातिजनार्दनः ॥ इंगितज्ञाश्चमगधाः प्रेक्षितज्ञाश्चकोसलाः ३४ अर्धोक्ताःकुरुपंचालाःशाल्वाःकृत्स्नानुशासनाः ॥ पार्वतीयाश्चविषमायथैवशिबयस्तथा ३५ सर्वज्ञायवनाराजन्शूराश्चैवविशेषतः ॥ म्लेच्छाःस्वसंज्ञानियतानानुक्तमितरेजनाः ३६ प्रतिरथास्तुवाहीकानचकेचनमद्रकाः ॥ सत्वमेतादृशःशल्यनोत्तरंवक्तुमर्हसि ॥ पृथिव्यांसर्वदेशानांमद्रकी मलमुच्यते ३७ सीधोःपानंगुरुतल्पावमर्दोभ्रूणहत्यापरवित्तापहारः ॥ येषांधर्मस्तान्प्रतिनास्त्यधर्मआरट्टजान्पंचनदान्धिगस्तु ३८ एतज्ज्ञात्वाजोषमा स्वप्रतीपंमास्मवैकृथाः ॥ मात्वांपूर्वमहंहत्वाहनिष्येकेशवार्जुनौ ३९॥ शल्यउवाच ॥ आतुराणांपरित्यागःस्वदारसुतविक्रयः ॥ अंगेप्रवर्ततेकर्णयेषामधिपति र्भवान् ४० रथातिरथसंख्यायांयत्त्वांभीष्मस्तदाऽब्रवीत् ॥ तान्विदित्वाऽऽत्मनोदोषान्निर्मन्युर्भवमाक्रुधः ४१ सर्वत्रब्राह्मणाःसंतिसंतिसर्वत्रक्षत्रियाः ॥ वैश्याः शूद्रास्तथाकर्णस्त्रियःसाध्व्यश्चसुव्रताः ४२ रमंतेचोपहासेनपुरुषाःपुरुषैःसह ॥ अन्योन्यमवरक्षंतोदेशेदेशेसमैथुनाः ४३ परवाच्येषुनिपुणःसर्वोभवतिसर्वदा ॥ आत्मवाच्यंनजानीतेजानन्नपिचमुह्यति ४४ सर्वत्रसंतिराजानःस्वंस्वंधर्ममनुव्रताः ॥ दुर्मनुष्यान्निगृह्णंतिसंतिसर्वत्रधार्मिकाः ४५ नकर्णदेशसामान्यात्सर्वःपापं निषेवते ॥ यादृशाःस्वस्वभावेनदेवाअपिनतादृशाः ४६ ॥ संजयउवाच ॥ ततोदुर्योधनोराजाकर्णशल्याववारयत् ॥ सखिभावेनराधेयंशल्यंस्वांजलयकेनच ४७

सवाहीकान्सनैर्ऋतान्देशान्विष्णुःपातिपर्जन्यवत् नदेशांतरेष्विववाहीकेषुविशेषतोदेवतानुग्रहोदृश्यतइत्यभिप्रायः अतएवतेषांमौढ्यंवर्णयति इंगितज्ञाश्चेति ३४ विषमाः दुःखसाध्याः ३५ सर्वंजानंतोऽपियवनाम्लेच्छाश्चस्वसंज्ञायांस्वीयैःकृतोयोधर्मसंकेतस्तत्रैवनियताः वैदिकंधर्मंनमानयंतीत्यर्थः । इतरेत्वनुक्तंहितंनावबुध्यंते ३६ प्रतिरथाःहितवादिनिप्रातिकूलाः गुरुद्रो हिणइत्यर्थः तादृशश्चत्वंहितोपदेष्टारंमांनिंदसीत्यर्थः ३७ । ३८ प्रतीपंप्रतिकूलं तेजोवधाख्यम ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ देवाअपीति वृत्तेनदेवानप्यति क्रामंतीत्यर्थः ४६ स्वांजलयकेनस्वस्यअंजलिकर्मणा ४७

ततोनिवारितःकर्णोधार्तराष्ट्रेणमारिष ॥ कर्णोऽपिनोत्तरंप्राहशल्योऽप्यभिमुखःपरान् ॥ ततःप्रहस्यराधेयःपुनर्याहीत्यचोदयत् ४८ ॥ ॥ इतिश्रीमहाभारतेकर्णपर्वणि कर्णशल्यसंवादे पंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ ततःपरानीकसहंव्यूहमप्रतिमंकृतम् ॥ समीक्ष्यकर्णःपार्थानांधृष्टद्युम्नाभिरक्षितम् १ प्रययौरथघोषेणसिंहनादरवेणच ॥ वादित्राणांचनिनदैःकंपयन्निवमेदिनीम् २ वेपमानइवक्रोधाद्युद्धशौंडःपरंतपः ॥ प्रतिव्यूह्यमहातेजायथावद्भरतर्षभ ३ व्यधमत्पांडवींसेनामासुरींमघवानिव ॥ युधिष्ठिरंचाभ्यहनदपसव्यंचकारह ४ ॥ धृतराष्ट्रउवाच ॥ कथंसंजयराधेयःप्रत्यव्यूहतपांडवान् ॥ धृष्टद्युम्नमुखान्सर्वान्भीमसेनाभिरक्षितान् ५ सर्वानेवमहेष्वासानजय्यानमरैरपि ॥ केचप्रपक्षौपक्षौवाममसैन्यस्यसंजय ६ प्रविभज्ययथान्यायंकथंवासमवस्थिताः ॥ कथंपांडुसुताश्चापिप्रत्यव्यूहंतमामकान् ७ कथंचैवमहद्युद्धंप्रावर्ततसुदारुणम् ॥ क्वचबीभत्सुरभवद्यत्कर्णोऽयाद्युधिष्ठिरम् ८ कोह्यर्जुनस्यसान्निध्येशक्तोऽभ्येतुंयुधिष्ठिरम् ॥ सर्वभूतानियोह्येकःखांडवेजितवान्पुरा ॥ कस्तमन्यस्तुराधेयात्प्रतियुद्ध्येज्जिजीविषुः ९ ॥ संजयउवाच ॥ शृणुव्यूहस्यरचनामर्जुनश्चयथागतः ॥ परिवार्यनृपंस्वंस्वंसंग्रामश्चाभवद्यथा १० कृपःशारद्वतोराजन्मागधाश्चतरस्विनः ॥ सात्वतःकृतवर्माचदक्षिणंपक्षमाश्रिताः ११ तेषांप्रपक्षेशकुनिरुलूकश्चमहारथः ॥ सादिभिर्विमलप्रासैस्तवानीकमरक्षताम् १२ गांधारिभिरसंभ्रांतैःपार्वतीयैश्चदुर्जयैः ॥ शलभानामिववातैःपिशाचैरिवदुर्दृशैः १३ चतुर्विंशत्सहस्राणिरथानामनिवर्तिनाम् ॥ संशप्तकायुद्धशौंडावामंपार्श्वमपालयन् १४ समन्वितास्तवसुतैःकृष्णार्जुनजिघांसवः ॥ तेषांप्रपक्षाःकांबोजाःशकाश्चयवनैःसह १५ निदेशात्सूतपुत्रस्यसरथाःसाश्वपत्तयः ॥ आह्वयंतोऽर्जुनंतस्थुःकेशवंचमहाबलम् १६ मध्येसेनामुखेकर्णोऽप्यवातिष्ठतदंशितः ॥ चित्रवर्मांगदःस्रग्वीपालयन्वाहिनीमुखम् १७ रक्षमाणैःसुसंरब्धैःपुत्रैःशस्त्रभृतांवरः ॥ वाहिनींप्रमुखेवीरःसंप्रकर्षन्नशोभत १८ अभ्यवर्तन्महाबाहुःसूर्यवैश्वानरप्रभः ॥ महाद्विपस्कंधगतःपिंगाक्षःप्रियदर्शनः १९ दुःशासनोवृतःसैन्यैःस्थितोव्यूहस्यपृष्ठतः ॥ तमन्वयान्महाराजस्वयंदुर्योधनोनृपः २० चित्राश्वैश्चित्रसन्नाहैःसोदर्यैरभिरक्षितः ॥ रक्ष्यमाणोमहावीर्यैःसहितैर्मद्रकेकयैः २१ अशोभतमहाराजदेवैरिवशतक्रतुः ॥ अश्वत्थामाकुरूणांचयेप्रवीरामहारथाः २२ नित्यमत्ताश्चमातंगाःशूरैर्म्लेंच्छैःसमन्विताः ॥ अन्वयुस्तद्रथानीकंक्षरंतइवतोयदाः २३ तेध्वजैर्वैजयंतीभिर्ज्वलद्भिःपरमायुधैः ॥ सादिभिश्चास्थितारेजुर्द्रुमवंतइवाचलाः २४ तेषांपदातिनागानांपादरक्षाःसहस्रशः ॥ पट्टिशासिधराःशूराबभूवुरनिवर्तिनः २५ सादिभिःस्यंदनैर्नागैरधिकंसमलंकृतैः ॥ सव्यूहराजोविबभौदेवासुरचमूपमः २६ बार्हस्पत्यःसुविहितोनायकेनविपश्चिता ॥ नृत्यतीवमहाव्यूहःपरेषांभयमादधत् २७

२८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३७ अग्निरिति योऽयंवैश्वानरोविश्वस्यनेताअग्निःसब्रह्माब्राह्मणःप्रजापतिमुखोद्भवत्वसाम्यात् सएवइंदुः उनत्तीतिव्युत्पत्तेर्जलार्धी शःसोमरसश्च सएवसप्तिताम्श्वत्वंगतः । 'वारुणोवाअश्वः' इतिश्रुतेःसोमोऽप्यश्वत्वेनस्तूयते अत्यंमृजंतिकलशेदशक्षिपइत्यादौ अत्यंअश्वं कलशेद्रोणकलशे क्षिपोंऽगुलयःतमश्वंदेवाब्रा ह्मणाश्चविदुःसएकएव देवश्चतुर्धाऽऽत्मानंव्यूह्यार्जुनरथंवाहयतीत्यर्थः ब्रह्मेद्धइतिपाठेब्राह्मणावेदेनइद्धःस्तुत्याप्रदीप्तःसएवाश्वत्वंगतइत्यर्थः ३८ एवमश्वान्स्तुत्वारथंस्तौति ब्रह्मेति ३९ । ४०

तस्यपक्षप्रपक्षेभ्योनिष्पतंतियुयुत्सवः ॥ हस्त्यश्वरथमातंगाःप्रावृषीवबलाहकाः २८ ततःसेनामुखेकर्णंदृष्ट्वाराजायुधिष्ठिरः ॥ धनंजयममित्रघ्नमेकवीरमुवाचह २९ पश्यार्जुनमहाव्यूहंकर्णेनविहितंरणे ॥ युक्तंपक्षैःप्रपक्षैश्चपरानीकंप्रकाशते ३० तदेतद्वैसमालोक्यप्रत्यमित्रंमहद्बलम् ॥ यथानाभिभवत्यस्मांस्तथानीतिर्विधीयताम् ३१ एवमुक्तोऽर्जुनोराज्ञाप्रांजलिर्नृपमब्रवीत् ॥ यथाभवानाहतथातत्सर्वंनतदन्यथा ३२ यस्त्वस्यविहितोघातस्तंकरिष्यामिभारत ॥ प्रधानवधएवास्यविनाशस्तंकरोम्यहम् ३३ ॥ युधिष्ठिरउवाच ॥ तस्मात्त्वमेवराधेयंभीमसेनःसुयोधनम् ॥ वृषसेनंचनकुलःसहदेवोऽपिसौबलम् ३४ दुःशासनंशतानीकोहार्दिक्यंशिनिपुंगवः ॥ धृष्टद्युम्नोद्रोणसुतंस्वयंयोत्स्याम्यहंकृपम् ३५ द्रौपदेयाधार्तराष्ट्रान्नशिष्टान्सहशिखंडिना ॥ तेतेचतांस्तानहितानस्माकंघ्नंतुमामकाः ३६ ॥ संजयउवाच ॥ इत्युक्तोधर्मराजेनतथेत्युक्त्वाधनंजयः ॥ व्यादिदेशस्वसैन्यानिस्वयंचागाच्चमूमुखम् ३७ अग्निर्वैश्वानरःपूर्वोब्रह्मेंदुःसप्तितांगतः ॥ तस्माद्यःप्रथमंजातस्तंदेवाब्राह्मणाविदुः ३८ ब्रह्मेशानेंद्रवरुणान्क्रमशोयोऽवहत्पुरा ॥ तमाद्यंरथमास्थायप्रयातौकेशवार्जुनौ ३९ अथतंरथमायांतंदृष्ट्वात्यद्भुतदर्शनम् ॥ उवाचाधिरथिंशल्यःपुनस्तंयुद्धदुर्मदम् ४० अयंसरथआयातःश्वेताश्वःकृष्णसारथिः ॥ दुर्वारःसर्वसैन्यानांविपाकःकर्मणामिव ४१ निघ्नन्नमित्रान्कौंतेयोयंकर्णपरिपृच्छसि ॥ श्रूयतेतुमुलःशब्दोयथामेघस्वनोमहान् ४२ ध्रुवमेतौमहात्मानौवासुदेवधनंजयौ ॥ एषरेणुःसमुद्भूतोदिवमावृत्यतिष्ठति ४३ चक्रनेमिप्रणुन्नेवकंपतेकर्णमेदिनी ॥ प्रवात्येषमहावायुरभितस्तववाहिनीम् ४४ क्रव्यादाव्याहरंत्येतेमृगाःक्रंदंतिभैरवम् ॥ पश्यकर्णमहाघोरंभयदंलोमहर्षणम् ४५ कबंधंमेघसंकाशंभानुमावृत्यसंस्थितम् ॥ पश्ययूथैर्बहुविधैर्मृगाणांसर्वतोदिशम् ४६ बलिभिर्दृप्तशार्दूलैरादित्योमिनिरीक्ष्यते ॥ पश्यकंकांश्चगृध्रांश्चसमवेतान्सहस्रशः ४७ स्थितानभिमुखान्घोरानन्योन्यमभिभाषतः ॥ रंजिताश्चामरायुक्तास्तवकर्णमहारथे ४८ प्रवराःप्रज्वलंत्येतेध्वजश्चैवप्रकंपते ॥ सवेपथून्हयान्पश्यमहाकायान्महाजवान् ४९ प्लवमानान्दर्शनीयानाकाशेगरुडानिव ॥ ध्रुवमेषुनिमित्तेषुभूमिमाश्रित्यपार्थिवाः ५० स्वप्स्यंतिनिहताःकर्णशतशोऽथसहस्रशः ॥ शंखानांतुमुलःशब्दःश्रूयतेलोमहर्षणः ५१ आनकानांचराधेयमृदंगानांचसर्वशः ॥ बाणशब्दान्बहुविधान्नराश्वगजवाजिनाम् ५२



अयंसरथःकौंतेयआयातइतिद्वयोःसंबंधः ४१ शब्दोरथस्येतिशेषः ४२ । ४३ प्रवातीत्यादिपराजयलक्षणमाह तेजोभंगार्थमेव ४४ । ४५ कबंधकेतुं मृगादिभिरादित्यावेक्षणंक्रियमाणंमृत्युसूचकम् ४६ । ४७ चामराऽरथेऽवलंबंतोरथाक्षचक्रयोःसंघर्षजैःस्फुलिंगैर्ज्वलंतीत्यर्थः ४८ । ४९ । ५० । ५१ । ५२

ज्यातलत्रेषुकर्णानिनिपाठेकर्णोवाद्यविशेषः तेषांध्वनीन् शिल्पिनोरंजकाः ५३ । ५४ । ५५ । ५६ । ५७ । ५८ अघवर्धनोदुःखस्यवर्धयिता ५९ । ६० । ६१ । ६२

ज्यातलत्रेषुशब्दांश्चशृणुकर्णमहात्मनाम् ॥ हेमरूप्यप्रसृष्टानांवाससांशिल्पिनिर्मिताः ५३ नानावर्णारथेभांतिश्वसनेनप्रकंपिताः ॥ सहेमचंद्रतारार्काःपताकाःकिंकिणीयुताः ५४ पश्यकर्णार्जुनस्यैताःसौदामन्यइवांबुदे ॥ ध्वजाःकणकणाथंतेवातेनाभिसमीरिताः ५५ विभ्राजंतिरथेकर्णविमानेदेवतेयथा ॥ सपताकारथाश्चैतेपंचालानांमहात्मनाम् ५६ पश्यकुंतीसुतंवीरंबीभत्सुमपराजितम् ॥ प्रधर्षयितुमायांतंकपिप्रवरकेतनम् ५७ एषध्वजाग्रेपार्थस्यप्रेक्षणीयःसमंततः ॥ दृश्यतेवानरोभीमोद्विषतामघवर्धनः ५८ एतच्चक्रंगदाशार्ङ्गंशंखःकृष्णस्यधीमतः ॥ अत्यर्थंभ्राजतेकृष्णेकौस्तुभस्तुमणिस्ततः ५९ एषशार्ङ्गगदापाणिर्वासुदेवोऽतिवीर्यवान् ॥ वाहयन्नेतितुरगान्पांडुरान्वातरंहसः ६० एतत्कूजतिगांडीवंविकृष्टंसव्यसाचिना ॥ एतेहस्तवतामुक्ताघ्नंत्यमित्रान्शिताःशराः ६१ विशालायतताम्राक्षैःपूर्णचंद्रनिभाननैः ॥ एषाभूःकीर्यतेराज्ञांशिरोभिरपलायिनाम् ६२ एतेसुपरिघाकाराःपुण्यगंधानुलेपनाः ॥ उद्यतायुधशौंडानांपात्यंतेसायुधाभुजाः ६३ निरस्तनेत्रजिव्हाश्चवाजिनःसहसादिभिः ॥ पतिताःपात्यमानाश्चक्षितौक्षीणाश्चशेरते ६४ एतेपर्वतशृंगाणांतुल्यरूपाहताद्विपाः ॥ संछिन्नभिन्नाःपार्थेनप्रचरंत्यद्रयोयथा ६५ गंधर्वनगराकारारथाहतनरेश्वराः ॥ विमानानीवपुण्यानिस्वर्गिणांनिपतंत्यमी ६६ व्याकुलीकृतमत्यर्थंपश्यसैन्यंकिरीटिना ॥ नानामृगसहस्राणांयूथंकेसरिणायथा ६७ घ्नंत्येतेपार्थिवान्वीराःपांडवाःसमभिद्रुताः ॥ नागाश्वरथपत्त्यौघांस्तावकान्समभिघ्नतः ६८ एषसूर्यइवांभोदैश्छन्नःपार्थोनदृश्यते ॥ ध्वजाग्रंदृश्यतेत्वस्यज्याशब्दश्चापिश्रूयते ६९ अद्यद्रक्ष्यासितंवीरंश्वेताश्वंकृष्णसारथिम् ॥ निघ्नंतंशत्रवान्संख्येयंकर्णपरिपृच्छसि ७० अद्यतौपुरुषव्याघ्रौलोहिताक्षौपरंतपौ ॥ वासुदेवार्जुनौकर्णद्रष्टास्येकरथेस्थितौ ७१ सारथिर्यस्यवार्ष्णेयोगांडीवंयस्यकार्मुकम् ॥ तंचेद्धंताऽसिराधेयत्वंनोराजाभविष्यसि ७२ एषसंशप्तकाहूतस्तानेवाभिमुखोगतः ॥ करोतिकदनंचैषांसंग्रामेद्विषतांबली ७३ इतिब्रुवाणंमद्रेशंकर्णःप्राहातिमन्युना ॥ पश्यसंशप्तकैःक्रुद्धैःसर्वतःसमभिद्रुतः ७४ एषसूर्यइवांभोदैश्छन्नःपार्थोनदृश्यतेः ॥ एतदंतोऽर्जुनःशल्यनिमग्नोयोधसागरे ७५ ॥ शल्यउवाच ॥ वरुणंकोंऽभसाहन्यादिंधनेनचपावकम् ॥ कोवाऽनिलंनिगृह्णीयात्पिबेद्वाकोमहार्णवम् ७६ ईदृग्रूपमहंमन्येपार्थस्ययुधिनिग्रहम् ॥ नहिशक्योऽर्जुनोजेतुंयुधिसेंद्रैःसुरासुरैः ७७ अथवापरितोषस्तेवाचोक्त्वासुमनाभव ॥ नसशक्योयुधाजेतुमन्यंकुरुमनोरथम् ७८ बाहुभ्यामुद्धरेद्भूमिंदहेत्क्रुद्धइमाःप्रजाः ॥ पातयेत्रिदिवाद्देवान्योऽर्जुनंसमरेजयेत् ७९ पश्यकुंतीसुतंवीरंभीममक्लिष्टकारिणम् ॥ प्रभासंतंमहाबाहुंस्थितंमेरुमिवापरम् ८०

६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८०

८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७ ॥ इति कर्णपर्वणि नीलकंठीये भारतभावदीपे षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥ ४७ ॥ तथेति १ । २ । ३ । ४ । ५ । ६



अमर्षीनित्यसंरब्धश्चिरंवैरमनुस्मरन् ॥ एषभीमोजयप्रेप्सुर्युधितिष्ठतिवीर्यवान् ८१ एषधर्मभृतांश्रेष्ठोधर्मराजोयुधिष्ठिरः ॥ तिष्ठत्यसुकरःसंख्येपरैःपरपुरंजयः ८२ एतौचपुरुषव्याघ्रावश्विनाविवसोदरौ ॥ नकुलःसहदेवश्चतिष्ठतोयुधिदुर्जयौ ८३ अमीस्थितास्द्रौपदेयाःपंचपंचाचलाइव ॥ व्यवस्थितायोद्धुकामाःसर्वेऽर्जुनसमायुधि ८४ एतेद्रुपदपुत्राश्चधृष्टद्युम्नपुरोगमाः ॥ स्फीताःसत्यजितोवीरास्तिष्ठंतिपरमौजसः ८५ असाविंद्रइवासह्यःसात्यकिःसात्वतांवरः ॥ युयुत्सुरुपयात्यस्मान्क्रुद्धांतकसमःपुरः ८६ इतिसंवदतोरेवतयोःपुरुषसिंहयोः ॥ तेसेनेसमसज्जेतांगंगायमुनवद्भृशम् ८७ ॥ इतिश्रीमहाभारते कर्णपर्वणि कर्णशल्यसंवादे षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥ ७ ॥ ॥ धृतराष्ट्रउवाच ॥ तथाव्यूढेष्वनीकेषुसंसक्तेषुचसंजय ॥ संशप्तकान्कथंपार्थोगतःकर्णश्चपांडवान् १ एतद्विस्तरशोयुद्धंप्रब्रूहिकुशलोह्यसि ॥ नहितृप्यामिवीराणांशृण्वानोविक्रमान्रणे २ ॥ संजयउवाच ॥ तदास्थितमवज्ञायप्रत्यमित्रबलंमहत् ॥ अव्यूहतार्जुनोव्यूहंपुत्रस्यतवदुर्नये ३ तत्सादिनागकलिलंपदातिरथसंकुलम् ॥ धृष्टद्युम्नमुखंव्यूहमशोभतमहद्बलम् ४ पारावतसवर्णाश्वश्चंद्रादित्यसमद्युतिः ॥ पार्षतःप्रबभौधन्वीकालोविग्रहवानिव ५ पार्षतंत्वभ्यगुपुःसर्वेद्रौपदेयायुयुत्सवः ॥ दिव्यवर्मायुधधराःशार्दूलसमविक्रमाः ६ सानुगादीप्तवपुषश्चंद्रंतारागणाइव ॥ अथव्यूढेष्वनीकेषुप्रेक्ष्यसंशप्तकान्रणे ७ क्रुद्धोऽर्जुनोऽभिदुद्राववव्याक्षिपन्गांडिवंधनुः ॥ अथसंशप्तकाःपार्थमभ्यधावन्वधैषिणः ८ विजयेधृतसंकल्पामृत्युंकृत्वाऽनिवर्तनम् ॥ तन्नराश्वौघबहुलंमत्तनागरथाकुलम् ९ पत्तिमच्छूरवीरौघंद्रुतमर्जुनमार्दयत् ॥ ससंप्रहारस्तुमुलस्तेषामासीत्किरीटिना १० तस्यैवनःश्रुतोयादृङ्निवातकवचैःसह ॥ रथानश्वान्ध्वजान्नागान्पत्तीन्रणगतानपि ११ इषून्धनूंषिखड्गांश्चचक्राणिचपरश्वधान् ॥ सायुधानुद्यतान्बाहून्विविधान्यायुधानिच १२ चिच्छेदद्विषतांपार्थःशिरांसिचसहस्रशः ॥ तस्मिन्सैन्यमहावर्तेपातालतलसन्निभे १३ निमग्नंतंरथंमत्वानेदुःसंशप्तकास्तथा ॥ सपुनस्तानरीन्हत्वापुनरुत्तरतोऽवधीत् १४ दक्षिणेनचपश्चाच्चक्रुद्धोरुद्रःपशूनिव ॥ अथपंचालचेदीनांसृंजयानांचमारिष १५ त्वदीयैःसहसंग्रामआसीत्परमदारुणः ॥ कृपश्चकृतवर्माचशकुनिश्चापिसौबलः १६ हृष्टसेनाःसुसंरब्धारथानीकप्रहारिणः ॥ कोसलैःकाश्यमत्स्यैश्चकारूषैःकेकयैरपि १७ शूरसेनैःशूरवरैर्युयुधुर्युद्धदुर्मदाः ॥ तेषामंतकरंयुद्धंदेहपाप्मासुनाशनं १८ क्षत्रविट्शूद्रवीराणांधर्म्यंस्वर्ग्यंयशस्करम् ॥ दुर्योधनोऽथसहितोभ्रातृभिर्भरतर्षभ १९ गुप्तःकुरुप्रवीरैश्चमद्राणांचमहारथैः ॥ पांडवैःसहपंचालैश्चेदिभिःसात्यकेनच २० युध्यमानंरणेकर्णंकुरुवीरोऽभ्यपालयत् ॥ कर्णोऽपिनिशितैर्बाणैर्विनिहत्यमहाचमूम् २१

७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ क्षत्रविट्शूद्रवीराणामित्यनेनब्राह्मणादन्येषांसर्वेषांश्रेयस्करमित्यर्थः १९ । २० । २१

२२ युक्कायोजयित्वा २३ ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥ ७ ॥ ॥ यत्तदिति अभ्येत्ययदकरोत्तन्ममाचक्ष्वेत्यन्वयः १ । २ । ३ । ४ । ५

प्रमृद्यचरथश्रेष्ठान्युधिष्ठिरमपीडयत् ॥ विवस्त्रायुधदेहासून्कृत्वाशत्रून्सहस्रशः २२ युक्कास्वर्गयशोभ्यांचस्वेभ्योमुदमुदावहत् ॥ एवंमारिषसंग्रामोनरवाजि
गजक्षयः ॥ कुरूणांसृंजयानांचदेवासुरसमोऽभवत् २३ ॥ इतिश्रीमहाभारतेकर्णपर्वणिसंकुलयुद्धे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ धृतराष्ट्रउवाच ॥ यत्तत्प्र
विश्यपार्थानांसैन्यंकुर्वन्जनक्षयम् ॥ कर्णोराजानमभ्येत्यतन्ममाचक्ष्वसंजय १ केचप्रवीराःपार्थानांयुधिकर्णमवारयन् ॥ कांश्चप्रमथ्याधिरथिर्युधिष्ठिरमपी
डयत् २ ॥ संजयउवाच ॥ धृष्टद्युम्नमुखान्पार्थान्दृष्ट्वाकर्णोव्यवस्थितान् ॥ समभ्यधावत्त्वरितःपंचालाञ्छत्रुकर्षिणः ३ तंतूर्णमभिधावंतंपंचालाजितकाशि
नः ॥ प्रत्युद्ययुर्महात्मानंहंसाइवमहार्णवम् ४ ततःशंखसहस्राणांनिःस्वनोहृदयंगमः ॥ प्रादुरासीदुभयतोभेरीशब्दश्चदारुणः ५ नानाबाणनिपाताश्चद्विपा
श्वरथनिःस्वनः ॥ सिंहनादश्चवीराणामभवद्दारुणस्तदा ६ साद्रिद्रुमार्णवाभूमिःसवातांबुदमंबरम् ॥ सार्केंदुग्रहनक्षत्राद्यौश्चव्यक्तंविघूर्णिता ७ इतिभूतानि
तंशद्बंमेनिरेतेचविव्यथुः ॥ यानिचाप्यल्पसत्वानिप्रायस्तानिमृतानिच ८ अथकर्णोभृशंक्रुद्धःशीघ्रमस्त्रमुदीरयन् ॥ जघानपांडवींसेनामासुरींमघवानिव ९
सपांडवबलंकर्णःप्रविश्यविसृजञ्छरान् ॥ प्रभद्रकाणांप्रवरानहनत्सप्तसप्ततिम् १० ततःसुपुंखैर्निशितैरथश्रेष्ठोरथेषुभिः ॥ अवधीत्पंचविंशत्यापंचालान्पंच
विंशतिम् ११ सुवर्णपुंखैर्नाराचैःपरकायविदारणैः ॥ चेदिकानवधीद्वीरःशतशोऽथसहस्रशः १२ तंतथासमरेकर्मकुर्वाणमतिमानुषम् ॥ परिवव्रुर्महाराजपंचा
लानांरथव्रजाः १३ ततःसंधायविशिखान्पंचभारतदुःसहान् ॥ पंचालानवधीत्पंचकर्णोवैकर्तनोवृषः १४ भानुदेवंचित्रसेनंसेनाबिंदुंचभारत ॥ तपनंशूरसे
नंचपंचालानहनद्रणे १५ पंचालेषुचशूरेषुवध्यमानेषुसायकैः ॥ हाहाकारोमहानासीत्पंचालानांमहाहवे १६ परिवव्रुर्महाराजपंचालानांरथादश ॥ पुनरेवच
तान्कर्णोजघानाशुपतत्रिभिः १७ चक्ररक्षौतुकर्णस्यपुत्रौमारिषदुर्जयौ ॥ सुषेणःसत्यसेनश्चत्यक्त्वाप्राणानयुध्यताम् १८ पृष्ठगोप्तातुकर्णस्यज्येष्ठःपुत्रोमहार
थः ॥ वृषसेनःस्वयंकर्णंपृष्ठतःपर्यपालयत् १९ धृष्टद्युम्नःसात्यकिश्चद्रौपदेयावृकोदरः ॥ जनमेजयःशिखंडीचप्रवीराश्चप्रभद्रकाः २० चेदिकेकयपंचालाय
मौमत्स्याश्चदंशिताः ॥ समभ्यधावन्राधेयंजिघांसंतःप्रहारिणम् २१ तएनंविविधैःशस्त्रैःशरधाराभिरेवच ॥ अभ्यवर्षन्विमर्दंतंप्रावृषीवांबुदागिरिम् २२ पि
तरंतुपरीप्संतःकर्णपुत्राःप्रहारिणः ॥ त्वदीयाश्चापरेराजन्वीरावीरानवारयन् २३ सुषेणोभीमसेनस्यच्छित्त्वाभल्लेनकार्मुकम् ॥ नाराचैःसप्तभिर्विद्ध्वाहृदिभीमं
ननादह २४ अथान्यद्धनुरादायसुदृढंभीमविक्रमः ॥ सज्जंवृकोदरःकृत्वासुषेणस्याच्छिनद्धनुः २५ विव्याधचैनंदशभिःक्रुद्धोनृत्यन्निवेषुभिः ॥ कर्णंचतूर्णंवि
व्याधत्रिसप्तत्याशितैःशरैः २६ ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ विमर्दंतंविमृद्नंतं २२ । २३ । २४ । २५ । २६

भानुसेनंचदशभिःसाश्वसूतायुधध्वजम् ॥ पश्यतांसुहृदांमध्येकर्णपुत्रमपातयत् २७ क्षुरप्रणुन्नंततस्यशिरश्चंद्रनिभाननम् ॥ शुभदर्शनमेवासीन्नालभ्रष्टमि
वांबुजम् २८ हत्वाकर्णसुतंभीमस्तावकान्पुनरार्दयत् ॥ कृपहार्दिक्ययोश्छित्त्वाचापौतावप्यथार्दयत् २९ दुःशासनंत्रिभिर्विद्ध्वाशकुनिंषड्भिरायसैः ॥ उलू
कंचपतत्रिंचचकारविरथावुभौ ३० सुषेणंचहतोऽसीतिब्रुवन्नादत्तसायकम् ॥ तमस्यकर्णश्चिच्छेदत्रिभिश्चैनमताडयत् ३१ अथान्यंपरिजग्राहसुपर्वाणंसुतेज
नम् ॥ सुषेणायासृजद्भीमस्तमप्यस्याच्छिनद्वृषः ३२ पुनःकर्णस्त्रिसप्तत्याभीमसेनमथेषुभिः ॥ पुत्रंपरीप्सन्विव्याधक्रूरंक्रूरैर्जिघांसया ३३ सुषेणस्तुधनुर्गृह्य
भारसाधनमुत्तमम् ॥ नकुलंपंचभिर्बाणैर्बाह्वोरुरसिचार्पयत् ३४ नकुलस्तंतुविंशत्याविद्ध्वाभारसहैर्दृढैः ॥ ननादबलवन्नादंकर्णस्यभयमादधत् ३५ तंसुषेणो
महाराजविद्ध्वादशभिराशुगैः ॥ चिच्छेदचधनुःशीघ्रंक्षुरप्रेणमहारथः ३६ अथान्यद्धनुरादायनकुलःक्रोधमूर्छितः ॥ सुषेणंनवभिर्बाणैर्वारयामाससंयुगे ३७ स
तुबाणैर्दिशोराजन्नाच्छाद्यपरवीरहा ॥ आजघ्नेसारथिंचास्यसुषेणंचततस्त्रिभिः ३८ चिच्छेदचास्यसुदृढंधनुर्भल्लैस्त्रिभिस्त्रिधा ॥ अथान्यद्धनुरादायसुषेणः
क्रोधमूर्छितः ३९ आविध्यन्नकुलंषष्ट्याचासहदेवंचसप्तभिः ॥ तद्युद्धंसुमहद्घोरमासीद्देवासुरोपमम् ४० निघ्नतांसायकैस्तूर्णमन्योन्यस्यवधंप्रति ॥ सात्यकिर्वृ
षसेनस्यसूतंहत्वात्रिभिःशरैः ४१ धनुश्चिच्छेदभल्लेनजघानाश्वांश्वसप्तभिः ॥ ध्वजमेकेषुणोन्मथ्यात्रिभिस्तंहृद्यताडयत् ४२ अथावसन्नःस्वरथेमुहूर्तात्पुनरु
त्थितः ॥ सरणेयुयुधानेनविसूताश्वरथध्वजः ४३ कृतोजिघांसुःशैनेयंखड्गचर्मधृगभ्ययात् ॥ तस्यचापततःशीघ्रंवृषसेनस्यसात्यकिः ४४ वाराहकर्णैर्दशभिर
विध्यदसिचर्मणी ॥ दुःशासनस्तुतंदृष्ट्वाविरथंव्यायुधंकृतम् ४५ आरोप्यस्वरथंतूर्णमपोवाहरणातुरम् ॥ अथान्यंरथमास्थायवृषसेनोमहारथः ४६ द्रौपदे
यांस्त्रिसप्तत्यायुयुधानंचपंचभिः ॥ भीमसेनंचतुःषष्ट्यासहदेवंचपंचभिः ४७ नकुलंत्रिंशताबाणैःशतानीकंचसप्तभिः ॥ शिखंडिनंचदशभिर्धर्मराजंशतेनच
४८ एतांश्चान्यांश्चराजेंद्रप्रवीरान्जयगृद्धिनः ॥ अभ्यर्दयन्महेष्वासःकर्णःपुत्रोविशांपते ४९ कर्णस्ययुधिदुर्धर्षस्ततःपृष्ठमपालयत् ॥ दुःशासनंचशैनेयोन
वैर्नवभिरायसैः ५० विसूताश्वरथंकृत्वाललाटेत्रिभिरार्पयत् ॥ सत्वन्यंरथमास्थायविधिवत्कल्पितंपुनः ५१ युयुधेपांडुभिःसार्धंकर्णस्याप्याययन्बलम् ॥ धृ
ष्टद्युम्नस्ततःकर्णमविध्यद्दशभिःशरैः ५२ द्रौपदेयास्त्रिसप्तत्यायुयुधानस्तुसप्तभिः ॥ भीमसेनश्चतुःषष्ट्यासहदेवश्चसप्तभिः ५३ नकुलस्त्रिंशताबाणैःशतानीक
स्तुसप्तभिः ॥ शिखंडीदशभिर्वीरोधर्मराजःशतेनतु ५४ एतेचान्येचराजेंद्रप्रवीराजयगृद्धिनः ॥ अभ्यर्दयन्महेष्वासंसूतपुत्रंमहामृधे ५५ तान्सूतपुत्रोविशि
खैर्दशभिर्दशभिःशरैः ॥ रथेनानुचरन्वीरःप्रत्यविध्यदरिंदमः ५६ तत्रास्त्रवीर्यंकर्णस्यलाघवंचमहात्मनः ॥ अपश्यामसहाभागतदद्भुतमिवाभवत् ५७

५८ । ५९ । ६० विवरमंतरंददुः प्रभूताइत्यर्थः ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ ॥ इति कर्णपर्वणि नीलकंठीये भारतभावदीपे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥ ७ ॥

नह्यादददानंददृशुःसंदधानंचसायकान् ॥ विमुंचंतंचसंरंभाददपश्यंतहतानरीन् ५८ द्यौर्वियद्भूर्दिशश्चैवप्रपूर्णानिशितैःशरैः ॥ अरुणाभ्रावृताकारंतस्मिन्देशे बभौवियत् ५९ नृत्यन्निवहिराधेयश्चापहस्तःप्रतापवान् ॥ यैर्विद्धःप्रत्यविद्धचत्तानेकैकंत्रिगुणैःशरैः ६० शतैश्चदशभिश्चैतान्पुनर्विद्ध्वाननादच ॥ साश्वसू तरथाश्छन्नास्ततस्तेविवरंददुः ६१ तान्प्रमथ्यमहेष्वासान्राधेयःशरवृष्टिभिः ॥ गजानीकमसंबाधंप्राविशच्छत्रुकर्शनः ६२ सरथांस्त्रिशतंहत्वाचेदीनामानि वर्तिनाम् ॥ राधेयोनिशितैर्बाणैस्ततोऽभ्यार्छद्युधिष्ठिरम् ६३ ततस्तेपांडवाराजञ्छिखंडीचससात्यकिः ॥ राधेयात्पारिरक्षंतोराजानंपर्यवारयन् ६४ तथैव तावकाःसर्वेकर्णंदुर्वारणंरणे ॥ यत्ताःशूरामहेष्वासाःपर्यरक्षंतसर्वशः ६५ नानावादित्रघोषाश्चप्रादुरासन्विशांपते ॥ सिंहनादश्चसंजज्ञेशूराणामभिगर्जताम् ६६ ततःपुनःसमाजग्मुरभीताःकुरुपांडवाः ॥ युधिष्ठिरमुखाःपार्थाःसूतपुत्रमुखावयम् ६७ ॥ ॥ इति श्रीमहाभारते कर्णपर्वणि संकुलयुद्धे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ विदार्यकर्णस्तांसेनांयुधिष्ठिरमथाद्रवत् ॥ रथहस्त्यश्वपत्तीनांसहस्रैःपरिवारितः १ नानायुधस हस्राणिप्रेरितान्यरिभिर्वृषः ॥ छित्त्वाबाणशतैरुग्रैस्तानविध्यदसंभ्रमात् २ निचकर्तशिरांस्येषांबाहूनूरूंश्चसूतजः ॥ तेहतावसुधांपेतुर्भग्नाश्चान्येविदुद्रुवुः ३ द्राविडास्तुनिषादास्तुपुनःसात्यकिचोदिताः ॥ अभ्यद्रवन्जिघांसंतःपत्तयःकर्णमाहवे ४ तेविबाहुशिरस्त्राणाःप्रहताःकर्णसायकैः ॥ पेतुःपृथिव्यांयुगप च्छिन्नंशालवनंयथा ५ एवंयोधशतान्याजौसहस्राण्ययुतानिच ॥ हतानीयुर्महींदेहैर्यशसाऽपूरयन्दिशः ६ अथवैकर्तनंकर्णंरणेक्रुद्धमिवांतकम् ॥ रुरुधु पांडुपं चालाव्याधिंमंत्रौषधैरिव ७ सतान्प्रमृद्याभ्यपतत्पुनरेवयुधिष्ठिरम् ॥ मंत्रौषधिक्रियातीतोव्याधिरत्युल्बणोयथा ८ सराजगृद्धिभीरुद्धःपांडुपंचालकेकयैः ॥ नाशकत्तानतिक्रांतुंमृत्युर्ब्रह्मविदोयथा ९ ततोयुधिष्ठिरःकर्णमदूरस्थंनिवारितम् ॥ अब्रवीत्परवीरघ्नंक्रोधसंरक्तलोचनः १० कर्णकर्णवृथादृष्टेसूतपुत्रवचःश्रृणु ॥ सदास्पर्धसिसंग्रामेफाल्गुनेनतरस्विना ११ तथाऽस्मान्बाधसेनित्यंधार्तराष्ट्रमतोऽस्थितः ॥ यद्बलंयच्चतेवीर्यंप्रद्वेषोयस्तुपांडषु १२ तत्सर्वंदर्शयस्वाद्यपौरुषं महदास्थितः ॥ युद्धश्रद्धांचतेऽद्याहंविनेष्यामिमहाहवे १३ एवमुक्त्वामहाराजकर्णंपांडुसुतस्तदा ॥ सुवर्णपुंखैर्दशभिर्विव्याधायस्मयैःशरैः १४ तंसूतपुत्रो दशभिःप्रत्यविद्धचदरिंदमः ॥ वत्सदंतैर्महेष्वासःप्रहसन्निवभारत १५ सोऽवज्ञायतुनिर्विद्धःसूतपुत्रेणमारिष ॥ प्रजज्वालततःक्रोधाद्धविषेवहुताशनः १६ ज्वालामालापरिक्षिप्तोराज्ञोदेहोऽव्यदृश्यत ॥ युगांतेदग्धुकामस्यसंवर्ताग्नेरिवापरः १७

विदार्येति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७

१८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ पुरुषेंद्रस्य युधिष्ठिरस्य ४० । ४१

ततोविस्फार्यसुमहच्चापंहेमपरिष्कृतम् ॥ समाधत्ताशितंबाणंगिरीणामपिदारणम् १८ ततःपूर्णायतोत्कृष्टंयमदंडनिभंशरम् ॥ मुमोचत्वरितोराजासूतपुत्रजिघांसया १९ सतुवेगवतामुक्तोबाणोवज्राशनिस्वनः ॥ विवेशसहसाकर्णंसव्येपार्श्वेमहारथम् २० सतुतेनप्रहारेणपीडितःप्रमुमोहवै ॥ स्रस्तगात्रोमहाबाहुर्धनुरुत्सृज्यस्यंदने २१ गतासुरिवनिश्चेताःशल्यस्याभिमुखोऽपतत् ॥ राजाऽपिभूयोनाजघ्नेकर्णंपार्थहितेप्सया २२ ततोहाहाकृतंसर्वंधार्तराष्ट्रबलंमहत् ॥ विवर्णमुखभूयिष्ठंकर्णंदृष्ट्वातथागतम् २३ सिंहनादश्चसंजज्ञेक्ष्वेलाःकिलकिलास्तथा ॥ पांडवानांमहाराजदृष्ट्वाराज्ञःपराक्रमम् २४ प्रतिलभ्यतुराधेयःसंज्ञांनातिचिरादिव ॥ दध्रेराजविनाशायमनःक्रूरपराक्रमः २५ सहेमविकृतंचापंविस्फार्यविजयंमहत् ॥ अवाकिरदमेयात्मापांडवंनिशितैःशरैः २६ ततःक्षुराभ्यांपांचाल्यौचक्ररक्षौमहात्मनः ॥ जघानचंद्रदेवंचदंडधारंचसंयुगे २७ तावुभौधर्मराजस्यप्रवीरौपरिपार्श्वतः ॥ रथाभ्याशेचकाशेतेचंद्रस्येवपुनर्वसू २८ युधिष्ठिरःपुनःकर्णमविद्ध्यत्त्रिंशताशरैः ॥ सुषेणंसत्यसेनंचत्रिभिस्त्रिभिरताडयत् २९ शल्यंनवत्याविव्याधत्रिसप्तत्याचसूतजम् ॥ तांस्तस्यगोप्तॄन्विव्याधत्रिभिस्त्रिभिरजिह्मगैः ३० ततःप्रहस्याधिरथिर्विधुन्वानःसकार्मुकम् ॥ भित्त्वाभल्लेनराजानंविद्ध्वाषष्ट्याऽनदत्तदा ३१ ततःप्रवीराःपांडूनामभ्यधावन्नमर्षिताः ॥ युधिष्ठिरंपरीप्संतःकर्णमभ्यर्दयञ्छरैः ३२ सात्यकिश्चेकितानश्चयुयुत्सुःपांड्यएवच ॥ धृष्टद्युम्नःशिखंडीचद्रौपदेयाःप्रभद्रकाः ३३ यमौचभीमसेनश्चशिशुपालस्यचात्मजः ॥ कारूषामत्स्यशेषाश्चकेकयाःकाशिकोसलाः ३४ एतेचत्वरितावीरावसुषेणमताडयन् ॥ जनमेजयश्चपांचाल्यःकर्णंविव्याधसायकैः ३५ वाराहकर्णनाराचैर्नालीकैर्निशितैःशरैः ॥ वत्सदंतैर्विपाठैश्चक्षुरप्रैश्चटकामुखैः ३६ नानाप्रहरणैश्चोग्रैरथहस्त्यश्वसादिभिः ॥ सर्वतोऽभ्यद्रवत्कर्णंपरिवार्यजिघांसया ३७ सपांडवानांप्रवरैःसर्वतःसमभिद्रुतः ॥ उदीरयन्ब्राह्ममस्त्रंशरैरापूरयन्दिशः ३८ ततःशरमहाज्वालोवीर्योष्माकर्णपावकः ॥ निर्दहन्पांडववनंवीरःपर्यचरद्रणे ३९ ससंधायमहास्त्राणिमहेष्वासोमहामनाः ॥ प्रहस्यपुरुषेंद्रस्यशरैश्चिच्छेदकार्मुकम् ४० ततःसंधायनवतिंनिमेषान्नतपर्वणाम् ॥ बिभेदकवचंराज्ञोरणेकर्णःशितैःशरैः ४१ तद्वर्महेमविकृतंरत्नचित्रंबभौपतत् ॥ सविद्युदभ्रंसवितुःश्लिष्टंवातहतंयथा ४२ तदंगात्पुरुषेंद्रस्यभ्रष्टंवर्मव्यरोचत ॥ रत्नैरलंकृतंचित्रैर्व्यभ्रंनिशियथानभः ४३ छिन्नवर्माशरैःपार्थोरुधिरेणसमुक्षितः ॥ ततःसर्वायसींशक्तिंचिक्षेपाधिरथिंप्रति ४४ तांज्वलंतीमिवाकाशेशरैश्चिच्छेदसप्तभिः ॥ साछिन्नाभूमिमगमन्महेष्वासस्यसायकैः ४५ ततोबाह्वोर्ललाटेचहृदिचैवयुधिष्ठिरः ॥ चतुर्भिस्तोमरैःकर्णंताडयित्वाऽनदन्मुदा ४६ उद्भिन्नरुधिरःकर्णःक्रुद्धःसर्पइवश्वसन् ॥ ध्वजंचिच्छेदभल्लेनत्रिभिर्विव्याधपांडवम् ४७

४२ । ४३ । ४४ । ४५ । ४६ । ४७

इषुधीचास्यचिच्छेदरथंचातिलशोऽच्छिनत् ॥ कालवालास्तुयेपार्थदंतवर्णाऽवहन्हयाः ५८ तैर्युक्तंरथमास्थायप्रायाद्राजापराङ्मुखः ॥ एवंपार्थोऽभ्युपा
यात्सानिहतःपार्ष्णिसारथिः ४९ अशक्नुवन्प्रमुखतःस्थातुंकर्णस्यदुर्मनाः ॥ अभिद्रुत्यतुराधेयःपांडुपुत्रंयुधिष्ठिरम् ५० वज्रच्छत्रांकुशैर्मत्स्यैर्ध्वजकूर्मांबुजा
दिभिः ॥ लक्षणैरुपपन्नेनपांडुनापांडुनंदनम् ५१ पवित्रीकर्तुमात्मानंस्कंधेसंस्पृश्यपाणिना ॥ ग्रहीतुमिच्छन्सबलात्कुंतीवाक्यंचसोऽस्मरत् ५२ तंशल्यः
प्राहमाकर्णगृहीथाःपार्थिवोत्तमम् ॥ गृहीतमात्रोहत्वात्वांमाकरिष्यतिभस्मसात् ५३ अब्रवीत्प्रहसन्राजन्कुत्सयन्निवपांडवम् ॥ कथंनामकुलेजातःक्षत्रधर्मेव्य
वस्थितः ५४ प्रजह्यात्समरंभीतःप्राणान्रक्षन्महाहवे ॥ नभवान्क्षत्रधर्मेषुकुशलोहीतिमेमतिः ५५ ब्राह्मेबलेभवान्युक्तःस्वाध्यायेयज्ञकर्मणि ॥ मास्मयुद्धचस्व
कौंतेयमास्मवीरान्समासदः ५६ माचैतानप्रियंब्रूहिमावैव्रजमहारणम् ॥ वक्तव्यामारिषान्येतुनवक्तव्यास्तुमादृशाः ५७ मादृशान्विब्रुवन्युद्धेएतदन्यच्चल
प्स्यसे ॥ स्वगृहंगच्छकौंतेययत्रतौकेशवार्जुनौ ५८ नहित्वांसमरेराजन्हन्यात्कर्णःकथंचन ॥ एवमुक्त्वाततःपार्थंविसृज्यचमहाबलः ५९ न्यहनत्पांडवींसेनां
वज्रहस्तइवासुरीम् ॥ ततोऽपायाद्द्रुतंराजन्व्रीडन्निवनरेश्वरः ६० अथापयातंराजानंमत्वाऽन्वीयुस्तमच्युतम् ॥ चेदिपांडवपंचालाःसात्यकिश्चमहारथः
६१ द्रौपदेयास्तथाशूरामाद्रीपुत्रौचपांडवौ ॥ ततोयुधिष्ठिरानीकंदृष्ट्वाकर्णःपराङ्मुखम् ६२ कुरुभिःसहितोवीरःप्रहृष्टःपृष्ठतोऽन्वगात् ॥ भेरीशंखमृदंगा
नांकार्मुकाणांचनिःस्वनः ६३ बभूवधार्तराष्ट्राणांसिंहनादरवस्तथा ॥ युधिष्ठिरस्तुकौरव्यरथमारुह्यसत्वरम् ६४ श्रुतकीर्तेर्महाराजदृष्टवान्कर्णविक्रमम् ॥
काल्यमानंबलंदृष्ट्वाधर्मराजोयुधिष्ठिरः ६५ स्वान्योधानब्रवीत्क्रुद्धोनिघ्नतैतान्किमासत ॥ ततोराज्ञाऽभ्यनुज्ञाताःपांडवानांमहारथाः ६६ भीमसेनमुखाः
सर्वेपुत्रांस्तेप्रत्युपाद्रवन् ॥ अभवत्तुमुलःशब्दोयोधानांतत्रभारत ६७ रथहस्त्यश्वपत्तीनांशस्त्राणांचततस्ततः ॥ उत्तिष्ठतप्रहरतप्रैताभिपततेतिच ६८
इतिब्रुवाणाह्यन्योन्यंजघ्नुर्योधामहारणे ॥ अभ्रच्छायेवतत्रासीच्छरवृष्टिभिरंबरे ६९ समावृतैर्नरवरैर्निघ्नद्भिरितरेतरम् ॥ विपताकध्वजच्छत्राव्यश्वसूतायु
धारणे ७० व्यंगांगावयवापेतुःक्षितौक्षीणाःक्षितीश्वराः ॥ प्रवणादिवशैलानांशिखराणिद्विपोत्तमाः ७१ सारोहानिहताःपेतुर्वज्रभिन्नाइवाद्रयः ॥ छिन्नभिन्न
विपर्यस्तैर्वर्मालंकारभूषणैः ७२ सारोहास्तुरगाःपेतुर्हतवीराःसहस्रशः ॥ विप्रविद्धायुधाश्चैवविरथाश्चरथैर्हताः ७३ प्रतिवीरैश्चसंमर्देपत्तिसंघाःसहस्रशः ॥
विशालायतताम्राक्षैःपद्मेंदुसदृशाननैः ७४ शिरोभिर्युद्धशौंडानांसर्वतःसंवृतामही ॥ यथाभुवितथाव्योम्निनिःस्वनंशुश्रुवुर्जनाः ७५ विमानैरप्सरःसंघैर्गीतवा
दित्रनिःस्वनैः ॥ हतानभिमुखान्वीरान्वीरैःशतसहस्रशः ७६ आरोप्यारोप्यगच्छंतिविमानेष्वप्सरोगणाः ॥ तद्दृष्ट्वामहदाश्चर्यंप्रत्यक्षंस्वर्गलिप्सया ७७

७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७ । ८८ । ८९ । ९० । ९१ । ९२ ॥ इति कर्णपर्वणि नीलकंठीये भारतभावदीपे ऊनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ तानिति १



प्रहृष्टमनसः शूराः क्षिप्रंजघ्नुःपरस्परम् ॥ रथिनोरथिभिःसार्धंचित्रंयुयुधुराहवे ७८ पत्तयःपत्तिभिर्नागाःसहनागैर्हयैर्हयाः ॥ एवंप्रवृत्तेसंग्रामेगजवाजिनरक्षये ७९ सैन्येनरजसावृत्तेस्वेस्वान्जघ्नुःपरेपरान् ॥ कचाकचियुद्धमासीद्दंतादंतिनखानखि ८० मुष्टियुद्धंनियुद्धंचदेहपाप्मासुनाशनम् ॥ तथावर्ततिसंग्रामेगजवाजिनरक्षये ८१ नराश्वनागदेहेभ्यःप्रसृतालोहितापगा ॥ गजाश्वनरदेहान्साव्युवाहपतितान्बहून् ८२ नराश्वगजसंबाधेनराश्वगजसादिनाम् ॥ लोहितोदामहाघोरामांसशोणितकर्दमा ८३ नराश्वगजदेहानांवहंतीभीरुभीषणा ॥ तस्याःपारमपारंचव्रजंतिविजयैषिणः ८४ गाधेनचोत्प्लवंतश्चनिमज्योन्मज्यचापरे ॥ तेतुलोहितदिग्धांगारक्तवर्मायुधांबराः ८५ सस्नुस्तस्यांपपुश्चास्यांमम्लुश्चभरतर्षभ ॥ रथानश्वान्नरान्नागानायुधाभरणानिच ८६ वसनान्यथवर्माणिवध्यमानान्हतानपि ॥ भूमिंखंद्यांदिशश्चैवप्रायःपश्यामलोहितम् ८७ लोहितस्यतुगंधेनस्पर्शेनचरसेनच ॥ रूपेणचातिरक्तेनशब्देनचविसर्पता ८८ विषादःसुमहानासीत्प्रायःसैन्यस्यभारत ॥ तत्तुविप्रहतंसैन्यंभीमसेनमुखास्तदा ८९ भूयःसमाद्रवन्वीराःसात्यकिप्रमुखास्तदा ॥ तेषामापततांवेगमविषह्यंनिरीक्ष्यच ९० पुत्राणांतेमहासैन्यमासीद्राजन्पराङ्मुखम् ॥ तत्प्रकीर्णरथाश्वेभंनरवाजिसमाकुलम् ९१ विध्वस्तवर्मकवचंप्रविद्धायुधकार्मुकम् ॥ व्यद्रवत्तावकंसैन्यंलोड्यमानंसमंततः ॥ सिंहार्दितमिवारण्येयथागजकुलंतथा ९२ ॥ इतिश्रीमहाभारतेकर्णपर्वणि संकुलयुद्धेऊनपंचाशत्तमोऽध्यायः ॥ ४९ ॥

॥ संजयउवाच ॥ तानभिद्रवतोदृष्ट्वापांडवांस्तावकंबलम् ॥ दुर्योधनोमहाराजवारयामाससर्वशः १ योधांश्चस्वबलंचैवसमंताद्भरतर्षभ ॥ क्रोशतस्तवपुत्रस्यनस्मराजन्न्यवर्तत २ ततःपक्षःप्रपक्षश्चशकुनिश्चापिसौबलः ॥ तदासशस्त्राःकुरवोभीममभ्यद्रवन्रणे ३ कर्णोऽपिदृष्ट्वाद्रवतोधार्तराष्ट्रान्सराजकान् ॥ मद्रराजमुवाचेदंयाहिभीमरथंप्रति ४ एवमुक्तश्चकर्णेनशल्योमद्राधिपस्तदा ॥ हंसवर्णान्हयानग्र्यान्प्रैषीद्यत्रवृकोदरः ५ तेप्रेरितामहाराजशल्येनाहवशोभिना ॥ भीमसेनरथंप्राप्यसमसज्जंतवाजिनः ६ दृष्ट्वाकर्णंसमायांतंभीमःक्रोधसमन्वितः ॥ मतिंचक्रेविनाशायकर्णस्यभरतर्षभ ७ सोऽब्रवीत्सात्यकिंवीरंधृष्टद्युम्नंचपार्षतम् ॥ यूयंरक्षतराजानंधर्मात्मानंयुधिष्ठिरम् ८ संशयान्महतोमुक्तंकथंचित्प्रेक्षतोमम ॥ अग्रतोमेकृतोराजाछिन्नसर्वपरिच्छदः ९ दुर्योधनस्यप्रीत्यर्थंराधेयेनदुरात्मना ॥ अंतमद्यगमिष्यामितस्यदुःखस्यपार्षत १० हंताऽस्म्यद्यरणेकर्णंसवामांनिहनिष्यति ॥ संग्रामेणसुघोरेणसत्यमेतद्ब्रवीमिते ११ राजानमद्यभवतांन्यासभूतंददानिवै ॥ तस्यसंरक्षणेसर्वैयतध्वंविगतज्वराः १२ एवमुक्त्वामहाबाहुःप्रायादाधिरथिंप्रति ॥ सिंहनादेनमहतासर्वाःसन्नादयन्दिशः १३ दृष्ट्वात्वरितमायांतंभीमंयुद्धाभिनंदिनम् ॥ सूतपुत्रमथोवाचमद्राणामीश्वरोविभुः १४

१ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४

१५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ किंकरोद्यतदंडेन करेणोद्यतोदंडोयेनतेनमृत्युनासमः किंशब्दउपमार्थे २४ । २५ । २६ । २७ । २८

॥ शल्यउवाच ॥ पश्यकर्णमहाबाहुंसंक्रुद्धंपांडुनंदनम् ॥ दीर्घकालार्जितंक्रोधंमोक्तुकामंत्वयिध्रुवम् १५ ईदृशंनास्यरूपंमेदृष्टपूर्वंकदाचन ॥ अभिमन्यौहते कर्णराक्षसेचघटोत्कचे १६ त्रैलोक्यस्यसमस्तस्यशक्तःक्रुद्धोनिवारणे ॥ बिभर्तिसदृशंरूपंयुगांताग्निसमप्रभम् १७ ॥ संजयउवाच ॥ इतिब्रुवतिराधेयंम द्राणामीश्वरेनृप ॥ अभ्यवर्ततवैकर्णंक्रोधदीप्तोवृकोदरः १८ अथागतंतुसंप्रेक्ष्यभीमंयुद्धाभिनंदिनम् ॥ अब्रवीद्वचनंशल्यंराधेयःप्रहसन्निव १९ यदुक्तंवचनं मेऽद्यत्वयामद्रजनेश्वर ॥ भीमसेनंप्रतिविभोतत्सत्यंनात्रसंशयः २० एषशूरश्ववीरश्चक्रोधनश्ववृकोदरः ॥ निरपेक्षःशरीरेचप्राणतश्चबलाधिकः २१ अज्ञा तवासंवसताविराटनगरेतदा ॥ द्रौपद्याःप्रियकामेनकेवलंबाहुसंश्रयात् २२ गूढभावंसमाश्रित्यकीचकःसगणोहतः ॥ सोऽद्यसंग्रामशिरसिसन्नद्धःक्रोधमूर्छितः २३ किंकरोद्यतदंडेनमृत्युनाऽपिव्रजेद्रणम् ॥ चिरकालाभिलषितोममायंतुमनोरथः २४ अर्जुनंसमरेहन्यांमांवाहन्याद्धनंजयः ॥ समेकदाचिदद्यैवभवेद्भीम समागमात् २५ निहतेभीमसेनेवायदिवाविरथीकृते ॥ अभियास्यतिमांपार्थस्तन्मेसाधुभविष्यति २६ अत्रयन्मन्यसेप्राप्तंतच्छीघ्रंसंप्रधारय ॥ एतच्छ्रु त्वातुवचनंराधेयस्यामितौजसः २७ उवाचवचनंशल्यःसूतपुत्रंतथागतम् ॥ अभियाहिमहाबाहोभीमसेनंमहाबलम् २८ निरस्यभीमसेनंतुततःप्राप्स्य सिफाल्गुनम् ॥ यस्तेकामोऽभिलषितश्चिरात्प्रभृतिहृद्गतः २९ सवैसंपत्स्यतेकर्णसत्यमेतद्ब्रवीमिते ॥ एवमुक्तेततःकर्णःशल्यंपुनरभाषत ३० हंताऽहमर्जु नंसंख्येमांवाहन्याद्धनंजयः ॥ युद्धेमनःसमाधाययाहियत्रवृकोदरः ३१ ॥ संजयउवाच ॥ ततःप्रायाद्रथेनाशुशल्यस्तत्रविशांपते ॥ यत्रभीमोमहेष्वासोव्य द्रावयतवाहिनीम् ३२ ततस्तूर्यनिनादश्चभेरीणांचमहास्वनः ॥ उदतिष्ठच्चराजेंद्रकर्णभीमसमागमे ३३ भीमसेनोऽथसंक्रुद्धस्तस्यसैन्यंदुरासदम् ॥ नारा चैर्विमलैस्तीक्ष्णैर्दिशःप्राद्रावयद्बली ३४ ससन्निपातस्तुमुलोघोररूपोविशांपते ॥ आसीद्रौद्रोमहाराजकर्णपांडवयोर्मृधे ३५ ततोमुहूर्ताद्राजेंद्रपांडवःकर्ण माद्रवत् ॥ समापतंतंसंप्रेक्ष्यकर्णोवैकर्तनोवृषः ३६ आजघानसुसंक्रुद्धोनाराचेनस्तनांतरे ॥ पुनश्चैनममेयात्माशरवर्षैरवाकिरत् ३७ सविद्धःसूतपुत्रेणच्छा दयामासपत्रिभिः ॥ विव्याधनिशितैःकर्णंनवभिर्नतपर्वभिः ३८ तस्यकर्णोधनुर्मध्येद्विधाचिच्छेदपत्रिभिः ॥ अथैनंछिन्नधन्वानंप्रत्यविध्यत्स्तनांतरे ३९ नाराचेनसुतीक्ष्णेनसर्वावरणभेदिना ॥ सोऽन्यत्कार्मुकमादायसूतपुत्रंवृकोदरः ४० राजन्मर्मसुमर्मज्ञोविव्याधनिशितःशरैः ॥ ननादबलवन्नादंकं पयन्निवरोदसी ४१ तंकर्णःपंचविंशत्यानाराचेनसमार्पयत् ॥ मदोत्कटंवनेदृप्तमुल्काभिरिवकुंजरम् ४२ ततःसायकभिन्नांगःपांडवःक्रोधमूर्छितः ॥ संरंभामर्ष ताम्राक्षःसूतपुत्रवधेप्सया ४३

२९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३

४४ । ४५ । ४६ । ४७ । ४८ । ४९ ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपेपंचाशत्तमोऽध्यायः ॥ ५० ॥ ॥ ७ ॥ सुदुष्करमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०

सकार्मुकेमहावेगंभारसाधनमुत्तमम् ॥ गिरीणामपिभेत्तारंसायकंसमयोजयत् ४४ विकृष्यबलवच्चापमाकर्णादतिमारुतिः ॥ तंमुमोचमहेष्वासःक्रुद्धःकर्णजिघांसया ४५ सविसृष्टोबलवताबाणोवज्राशनिस्वनः ॥ अदारयद्रणेकर्णंवज्रवेगोयथाऽचलम् ४६ सभीमसेनाभिहतःसूतपुत्रःकुरूद्वह ॥ निषसादरथोपस्थेविसंज्ञःपृतनापतिः ४७ ततोमद्राधिपोदृष्ट्वाविसंज्ञंसूतनंदनम् ॥ अपोवाहरथेनाजौकर्णमाहवशोभिनम् ४८ ततःपराजितेकर्णेधार्तराष्ट्रीमहाचमूम् ॥ व्यद्रावयद्भीमसेनोयथेंद्रोदानवान्पुरा ४९ ॥ इतिश्रीमहाभारतेकर्णपर्वणिकर्णापयानेपंचाशत्तमोऽध्यायः ॥ ५० ॥ धृतराष्ट्रउवाच ॥ सुदुष्करमिदंकर्मकृतंभीमेनसंजय ॥ येनकर्णोमहाबाहूरथोपस्थेनिपातितः १ कर्णोह्येकोरणेहंतापांडवान्सृंजयैःसह ॥ इतिदुर्योधनःसूतप्राब्रवीन्मांमुहुर्मुहुः २ पराजितंतुराधेयंदृष्ट्वाभीमेनसंयुगे ॥ ततःपरंकिमकरोत्पुत्रोदुर्योधनोमम ३ ॥ संजयउवाच ॥ विमुखंप्रेक्ष्यराधेयंसूतपुत्रंमहाहवे ॥ पुत्रस्तवमहाराजसोदर्यान्समभाषत ४ शीघ्रंगच्छतभद्रंवोराधेयंपरिरक्षत ॥ भीमसेनभयागाधेमज्जंतंव्यसनार्णवे ५ तेतुराज्ञासमादिष्टाभीमसेनंजिघांसवः ॥ अभ्यवर्ततसंक्रुद्धाःपतंगाःपावकंयथा ६ श्रुतर्वादुर्धरःक्राथोविवित्सुर्विकटःसमः ॥ निषंगीकवचीपाशीतथानंदोपनंदकौ ७ दुष्प्रधर्षःसुबाहुश्चवातवेगसुवर्चसौ ॥ धनुर्ग्राहोदुर्मदश्चजलसंधःशलःसहः ८ एतेरथैःपरिवृतावीर्यवंतोमहाबलाः ॥ भीमसेनंसमासाद्यसमंतात्पर्यवारयन् ९ तेव्यमुंचञ्छरव्रातान्नानालिंगान्समंततः ॥ सतैरभ्यर्द्यमानस्तुभीमसेनोमहाबलः १० तेषामापततांक्षिप्रंसुतानांतेजनाधिप ॥ रथैःपंचदशैःसार्द्धंपंचाशदहनद्रथान् ११ विवित्सोस्तुततःक्रुद्धोभल्लेनापाहरच्छिरः ॥ भीमसेनोमहाराजतत्पपातहतंभुवि १२ सकुंडलशिरस्त्राणंपूर्णचंद्रोपमंतथा ॥ तंदृष्ट्वानिहतंशूरंभ्रातरःसर्वतःप्रभो १३ अभ्यद्रवंतसमरेभीमंभीमपराक्रमम् ॥ ततोऽपराभ्यांभल्लाभ्यांपुत्रयोस्तेमहाहवे १४ जहारसमरेप्राणान्भीमोभीमपराक्रमः ॥ तौधरामनुपद्येतांवातरुग्णाविवद्रुमौ १५ विकटश्चसहश्चोभौदेवपुत्रोपमौनृप ॥ ततस्तुत्वरितोभीमःक्राथंनिन्येयमक्षयम् १६ नाराचेनसुतीक्ष्णेनसहतोन्यपतद्भुवि ॥ हाहाकारस्ततस्तीव्रःसंबभूवजनेश्वर १७ वध्यमानेषुवीरेषुतवपुत्रेषुधन्विषु ॥ तेषांसुलुलितेसैन्येपुनर्भीमोमहाबलः १८ नंदोपनंदौसमरेप्रैषयद्यमसादनम् ॥ ततस्तेप्राद्रवन्भीताःपुत्रास्तेविह्वलीकृताः १९ भीमसेनंरणेदृष्ट्वाकालांतकयमोपमम् ॥ पुत्रांस्तेनिहतान्दृष्ट्वासूतपुत्रःसुदुर्मनाः २० हंसवर्णान्हयान्भूयःप्रैषयद्यत्रपांडवः ॥ तेप्रेषितामहाराजमद्रराजेनवाजिनः २१ भीमसेनरथंप्राप्यसमसज्जंतवेगिताः ॥ ससन्निपातस्तुमुलोघोररूपोविशांपते २२ आसीद्रौद्रोमहाराजकर्णपांडवयोर्मृधे ॥ दृष्ट्वाममममहाराजतौसमेतौमहारथौ २३ आसीद्बुद्धिःकथंयुद्धमेतदद्यभविष्यति ॥ ततोभीमोरणश्लाघीछादयामासपत्रिभिः २४

११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४

२५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ हरींद्रयोर्वानरेंद्रयोर्वालिसुग्रीवयोरित्यर्थः ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१

कर्णंरणेमहाराजपुत्राणांतवपश्यताम् ॥ ततःकर्णोभृशंक्रुद्धोभीमंनवभिरायसैः २५ विव्याधपरमास्त्रज्ञोभल्लैःसंनतपर्वभिः ॥ आहतःसमहाबाहुर्भीमोभीमपरा
क्रमः २६ आकर्णपूर्णैर्विशिखैःकर्णंविव्याधसप्तभिः ॥ ततःकर्णोमहाराजआशीविषइवश्वसन् २७ शरवर्षेणमहताछादयामासपांडवम् ॥ भीमोऽपितंशरव्रातै
श्छादयित्वामहारथम् २८ पश्यतांकौरवेयाणांविननर्दमहाबलः ॥ ततःकर्णोभृशंक्रुद्धोदृढमादायकार्मुकम् २९ भीमंविव्याधदशभिःकंकपत्रैःशिलाशितैः ॥
कार्मुकंचास्यचिच्छेदभल्लेननिशितेनच ३० ततोभीमोमहाबाहुर्हेमपट्टविभूषितम् ॥ परिघंघोरमादायमृत्युदंडमिवापरम् ३१ कर्णस्यनिधनाकांक्षीचिक्षेपा
तिबलोनदन् ॥ तमापतंतंपरिघंवज्राशनिसमस्वनम् ३२ चिच्छेदबहुधाकर्णःशरैराशीविषोपमैः ॥ ततःकार्मुकमादायभीमोदृढतरंतदा ३३ छादयामासवि
शिखैःकर्णंपरबलार्दनम् ॥ ततोयुद्धमभूद्घोरंकर्णपांडवयोर्मृधे ३४ हरींद्रयोरिवमुहुःपरस्परवधैषिणोः ॥ ततःकर्णोमहाराजभीमसेनंत्रिभिःशरैः ३५ आकर्णमू
लंविव्याधदृढमायम्यकार्मुकम् ॥ सोऽतिविद्धोमहेष्वासःकर्णेनबलिनांवरः ३६ घोरमादत्तविशिखंकर्णकायावदारणम् ॥ तस्यभित्त्वातनुत्राणंभित्त्वाकायंचसा
यकः ३७ प्राविशद्धरणींराजन्वल्मीकमिवपन्नगः ॥ सतेनातिप्रहारेणव्यथितोविह्वलन्निव ३८ संचचालरथेकर्णःक्षितिकंपेयथाऽचलः ॥ ततःकर्णोमहाराजरो
षामर्षसमन्वितः ३९ पांडवंपंचविंशत्यानाराचानांसमार्पयत् ॥ आजघ्नेबहुभिर्बाणैर्ध्वजमेकेषुणाऽहनत् ४० सारथिंचास्यभल्लेनप्रेषयामासमृत्यवे ॥ छित्त्वा
चकार्मुकंतूर्णंपांडवस्याशुपत्रिणा ४१ ततोमुहूर्ताद्राजेंद्रनातिकृच्छ्राद्धसन्निव ॥ विरथंभीमकर्माणंभीमंकर्णश्चकारह ४२ विरथोभरतश्रेष्ठप्रहसन्ननिलोपमः ॥
गदांगृह्यमहाबाहुरपतत्स्यंदनोत्तमात् ४३ अवप्लुत्यचवेगेनतवसैन्यंविशांपते ॥ व्यधमद्गदयाभीमःशरन्मेघानिवानिलः ४४ नागान्सप्तशतान्राजन्नीषादंता
न्प्रहारिणः ॥ व्यधमत्सहसाभीमःक्रुद्धरूपःपरंतपः ४५ दंतवेष्टेषुनेत्रेषुकुंभेषुचकटेषुच ॥ मर्मस्वपिचमर्मज्ञस्तान्नागानवधीद्बली ४६ ततस्तेप्राद्रवन्भीताः
प्रतीपंप्रहिताःपुनः ॥ महामात्रैस्तमावव्रुर्मेघाइवदिवाकरम् ४७ तान्ससप्तशतान्नागान्सारोहायुधकेतनान् ॥ भूमिष्ठोगदयाजघ्नेवज्रेणेंद्रइवाचलान् ४८ ततः
सुबलपुत्रस्यनागानतिबलान्पुनः ॥ पोथयामासकौंतेयोद्विपंचाशदरिंदमः ४९ तथारथशतंसाग्रंपत्तींश्चशतशोऽपरान् ॥ न्यहनत्पांडवोयुद्धेतापयंस्तववाहि
नीम् ५० प्रताप्यमानंसूर्येणभीमेनचमहात्मना ॥ तवसैन्यंसंचुकोचचर्माग्नावाहितंयथा ५१ तेभीमभयसंत्रस्तास्तावकाभरतर्षभ ॥ विहायसमरेभीमंदु
द्रुवुर्वैदिशोदश ५२ रथाःपंचशताश्चान्येह्रादिनश्चर्मवर्मिणः ॥ भीममभ्यद्रवन्घ्नंतःशरपूगैःसमंततः ५३ तान्सपंचशतान्वीरान्सपताकध्वजायुधान् ॥
पोथयामासगदयाभीमोविष्णुरिवासुरान् ५४ ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० ५१ । ५२ । ५३ । ५४

५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८०

ततःशकुनिनिर्दिष्टाःसादिनःशूरसंमताः ॥ त्रिसाहस्राऽभ्ययुर्भीमंशक्त्यृष्टिप्रासपाणयः ५५ प्रत्युद्गम्यजवेनाशुसाश्वारोहांस्तदाऽरिहा ॥ विविधान्विचरन्मार्गान्गदयासमपोथयत् ५६ तेषामासीन्महाञ्छब्दस्ताडितानांचसर्वशः ॥ अश्मभिर्विध्यमानानांनगानामिवभारत ५७ एवंसुबलपुत्रस्यत्रिसाहस्रान्हयोत्तमान् ॥ हत्वाऽन्यंरथमास्थायक्रुद्धोराधेयमभ्ययात् ५८ कर्णोऽपिसमरेराजन्धर्मपुत्रमरिंदमम् ॥ सशरैश्छादयामाससारथिंचाप्यपातयत् ५९ ततःसंप्रद्रुतःसंख्येरथंदृष्ट्वामहारथः ॥ अन्वधावत्किरन्बाणैःकंकपत्रैरजिह्मगैः ६० राजानमभिधावंतंशरैरावृत्यरोदसी ॥ क्रुद्धःप्रच्छादयामासशरजालेनमारुतिः ६१ संनिवृत्तस्ततस्तूर्णंराधेयःशत्रुकर्शनः ॥ भीमंप्रच्छादयामाससमंतान्निशितैःशरैः ६२ भीमसेनरथव्यग्रंकर्णंभारतसात्यकिः ॥ अभ्यर्दयदमेयात्मापार्ष्णिग्रहणकारणात् ६३ अभ्यवर्ततकर्णस्तमर्दितोऽपिशरैर्भृशम् ॥ तावन्योन्यंसमासाद्यवृषभौसर्वधन्विनाम् ६४ विसृजंतौशरान्दीप्तान्विभ्राजेतांमनस्विनौ ॥ ताभ्यांवियतिराजेंद्रविततंभीमदर्शनम् ६५ क्रौंचपृष्ठारुणंरौद्रंबाणजालंव्यदृश्यत ॥ नैवसूर्यप्रभाराजन्नदिशःप्रदिशस्तथा ६६ प्राज्ञासिष्मवयंतेवाशरैर्मुक्तैःसहस्रशः ॥ मध्याह्नेतपतोराजन्भास्करस्यमहाप्रभाः ६७ हृताःसर्वाःशरौघैस्तैःकर्णपांडवयोस्तदा ॥ सौबलंकृतवर्माणंद्रौणिमाधिरथिंकृपम् ६८ संसक्तान्पांडवैर्दृष्ट्वानिवृत्ताःकुरवःपुनः ॥ तेषामापततांशब्दस्तीव्रआसीद्विशांपते ६९ उद्धृतानांयथावृष्टयाचासागराणांभयावहः ॥ तेसेनेभृशसंसक्तेदृष्ट्वाऽन्योन्यंमहाहवे ७० हर्षेणमहतायुक्तेपरिगृह्यपरस्परम् ॥ ततःप्रववृतेयुद्धंमध्यंप्राप्तेदिवाकरे ७१ तादृशंनकदाचिद्धिदृष्टपूर्वंनचश्रुतम् ॥ बलौघस्तुसमासाद्यबलौघंसहसारणे ७२ उपासर्पतवेगेनवार्योघइवसागरम् ॥ आसीन्निनादःसुमहान्बाणौघानांपरस्परम् ७३ गर्जतांसागरौघाणांयथास्यान्निःस्वनोमहान् ॥ तेतुसेनेसमासाद्यवेगवत्यौपरस्परम् ७४ एकीभावमनुप्राप्तेनद्याविवसमागमे ॥ ततःप्रववृतेयुद्धंघोररूपंविशांपते ७५ कुरूणांपांडवानांचलिप्सतांसुमहद्यशः ॥ शूराणांगर्जतांतत्रह्यविच्छेदकृतागिरः ७६ श्रूयंतेविविधाराजन्नामान्युद्दिश्यभारत ॥ यस्ययद्धिरणेव्यंगंपितृतोमातृतोऽपिवा ७७ कर्मतःशीलतोवाऽपिसतच्छ्रावयतेयुधि ॥ तान्दृष्ट्वासमरेशूरांस्तर्जमानान्परस्परम् ७८ अभवन्मेमतीराजन्नैषामस्तीतिजीवितम् ॥ तेषांदृष्ट्वातुक्रुद्धानांवपूंष्यमिततेजसाम् ७९ अभवन्मेभयंतीव्रंकथमेतद्भविष्यति ॥ ततस्तेपांडवाराजन्कौरवाश्चमहारथाः ८० ततक्षुःसायकैस्तीक्ष्णैर्निघ्नंतोहिपरस्परम् ८१ ॥ इतिश्रीमहाभारतेकर्णपर्वणि संकुलयुद्धेएकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ॥ संजयउवाच ॥ क्षत्रियास्तेमहाराजपरस्परवधैषिणः ॥ अन्योन्यंसमरेजघ्नुःकृतवैराःपरस्परम् १

८१ ॥ इति कर्णपर्वणि नीलकंठीये भारतभावदीपे एकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ॥ ॥ ७ ॥ ॥ ॥ क्षत्रियाइति १

२ । ३ वृष्टयः वृष्टयः ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ नगनिभोपमाः नगेषुनितरांभांतितेनगनिभाःपर्वतोत्तमास्तेउपमायेषामित्यर्थः १८ । १९

रथौघाश्चहयौघाश्चनरौघाश्चसमंततः ॥ गजौघाश्चमहाराजसंसक्ताश्चपरस्परम् २ गदानांपरिघाणांचकणपानांचक्षिप्यताम् ॥ प्रासानांभिंदिपालानांभुशुं
डीनांचसर्वशः ३ संपातंचानुपश्यामसंग्रामेभृशदारुणे ॥ शलभाइवसंपेतुःशरवृष्टयःसमंततः ४ नागान्नागाःसमासाद्यव्यधमंतपरस्परम् ॥ हयाहयांश्चसम
रेरथिनोरथिनस्तथा ५ पत्तयःपत्तिसंघांश्चहयसंघांश्चपत्तयः ॥ पत्तयोरथमातंगान्रथाहस्त्यश्चमेवच ६ नागाश्चसमरेत्र्यंगंममृदुःशीघ्रगान्नृप ॥ वध्यतांतत्र
शूराणांक्रोशतांचपरस्परम् ७ घोरमायोधनंजज्ञेपशूनांवैशसंयथा ॥ रुधिरेणसमास्तीर्णाभातिभारतमेदिनी ८ शक्रगोपगणाकीर्णाप्रावृषीवयथाधरा ॥ यथा
वावाससीशुक्लेमहारंजनरंजिते ९ बिभृयाद्युवतीश्यामातद्वदासीद्वसुंधरा ॥ मांसशोणितचित्रेवशातकुंभमयीवच १० भिन्नानांचोत्तमांगानांबाहूनांचोरुभिः
सह ॥ कुंडलानांप्रवृद्धानांभूषणानांचभारत ११ निष्काणामथशूराणांशरीराणांचधन्विनाम् ॥ चर्मणांसपताकानांसंघास्तत्रापतन्भुवि १२ गजागजान्स
मासाद्यविषाणैरार्दयन्नृप ॥ विषाणाभिहतास्तत्रभ्राजंतेद्विरदास्तथा १३ रुधिरेणावसिक्तांगागैरिकप्रस्रवाइव ॥ यथाभ्राजंतिस्यंदंतःपर्वताधातुमंडिताः १४
तोमरान्गसादिभिर्मुक्तान्प्रतीपानास्थितान्बहून् ॥ हस्तैर्विचेरुस्तेनागाबभंजुश्चापरेतथा १५ नाराचैश्छिन्नवर्माणोभ्राजंतिस्मगजोत्तमाः ॥ हिमागमेयथारा
जन्व्यभ्राइवमहीधराः १६ शरैःकनकपुंखैश्चाचित्रारेजुर्गजोत्तमाः ॥ उल्काभिःसंप्रदीप्ताग्राःपर्वताइवभारत १७ केचिदभ्याहतानागैर्नागानगनिभोपमाः ॥
विनेशुःसमरेतस्मिन्पक्षवंतइवाद्रयः १८ अपरेप्राद्रवन्नागाःशल्यार्त्ताव्रणपीडिताः ॥ प्रतिमानैश्चकुंभैश्चपेतुरुर्व्यांमहाहवे १९ विनेदुःसिंहवच्चान्येनदंतोभैर
वान्रवान् ॥ बभ्रमुर्बहवोराजंश्चुक्रुशुश्चापरेगजाः २० हयाश्चनिहताबाणैर्हैमभांडविभूषिताः ॥ निषेदुश्चैवमम्लुश्चबभ्रमुश्चादिशोदश २१ अपरेकृष्यमाणाश्च
विचेष्टंतोमहीतले ॥ भावान्बहुविधांश्चक्रुस्ताडिताःशरतोमरैः २२ नरास्तुनिहताभूमौकूजंतस्तत्रमारिष ॥ दृष्ट्वाचबांधवानन्येपितॄनन्येपितामहान् २३
धावमानान्परांश्चान्येदृष्ट्वाऽन्येतत्रभारत ॥ गोत्रनामानिख्यातानिशशंसुरितरेतरम् २४ तेषांछिन्नामहाराजभुजाःकनकभूषणाः ॥ उद्वेष्टंतेविचेष्टंते
पतंतेचोत्पतंतिच २५ निपतंतितथैवान्येस्फुरंतिचसहस्रशः ॥ वेगांश्चान्येरणेचक्रुःपंचास्याइवपन्नगाः २६ तेभुजाभोगिभोगाभाश्चंदनाक्ताविशां
पते ॥ लोहितार्द्राभृशंरेजुस्तपनीयध्वजाइव २७ वर्तमानेतथाघोरेसंकुलेसर्वतोदिशम् ॥ अविज्ञाताःस्मयुध्यंतेविनिघ्नंतःपरस्परम् २८ भौमेनरजसा
कीर्णेशस्त्रसंपातसंकुले ॥ नैवस्वेनपरेराजन्व्यज्ञायंततमोवृताः २९ तथातदभवद्युद्धंघोररूपंभयानकम् ॥ लोहितोदामहानद्यःप्रसस्रुस्तत्रचासकृत् ३०
शीर्षपाषाणसंछन्नाःकेशशैवलशाद्वलाः ॥ अस्थिमीनसमाकीर्णाधनुःशरगदोडुपाः ३१

२० । २१ । २२ । २३ । २४ । २५ । २६
२७ । २८ । २९ । ३० धनुःशरगदाएवभास्वरत्वादुडुवन्नक्षत्रसदृशीःपांतीत्युडुपाः धनुरादिवदुडुपःशोभायासांवाइतिवा । 'उडुपस्तुप्लवेचंद्रेप्रतापेस्वेदतेजसोः । शोभायांच'इतिविश्वः ३१

मांसशोणितपंकिन्योघोररूपाःसुदारुणाः ॥ नदीःप्रवर्तयामासुःशोणितौघविवर्धिनीः ३२ भीरुवित्रासकारिण्यःशूराणांहर्षवर्धनाः ॥ तानद्योघोररूपा
स्तुनयंत्योयमसादम् ३३ अवगाढान्मज्जयंत्यःक्षत्रस्याजनयन्भयम् ॥ क्रव्यादानांनरव्याघ्रनर्दतांतत्रतत्रह ३४ घोरमायोधनंजज्ञेप्रेतराजपुरोपमम् ॥ उ
त्थितान्यगणेयानिकबंधानिसमंततः ३५ नृत्यंतिवैभूतगणाःसुतृप्तामांसशोणितैः ॥ पीत्वाचशोणितंतत्रवसांपीत्वाचभारत ३६ मेदोमज्जावसामत्तास्तृ
प्तामांसस्यचैवह ॥ धावमानाःस्मदृश्यंतेकाकगृध्रबकास्तथा ३७ शूरास्तुसमरेराजन्भयंत्यक्त्वासुदुस्त्यजम् ॥ योधव्रतसमाख्याताश्चक्रुःकर्माण्यभीतवत् ३८
शरशक्तिसमाकीर्णेक्रव्यादगणसंकुले ॥ व्यचरंतरणेशूराःख्यापयंतःस्वपौरुषम् ३९ अन्योन्यंश्रावयंतिस्मनामगोत्राणिभारत ॥ पितृनामानिचरणेगोत्रना
मानिवाविभो ४० श्रावयाणाश्चबहवस्तत्रयोधाविशांपते ॥ अन्योन्यमवमृद्नंतःशक्तितोमरपट्टिशैः ४१ वर्तमानेतथायुद्धेघोररूपेसुदारुणे ॥ व्यषीदत्कौ
रवीसेनाभिन्नानौरिवसागरे ४२ ॥ इतिश्रीमहाभारते कर्णपर्वणिसंकुलयुद्धे द्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ ॥ ५ ॥ ॥ संजयउवाच ॥ वर्तमानेतथा
युद्धेक्षत्रियाणांनिमज्जने ॥ गांडीवस्यमहाघोषःश्रूयतेयुधिमारिष १ संशप्तकानांकदनमकरोद्यत्रपांडवः ॥ कोसलानांतथाराजन्नारायणबलस्यच २ संशप्त
कास्तुसमरेशरवृष्टीःसमंततः ॥ अपातयन्पार्थमूर्ध्निजयगृद्धाःप्रमन्यवः ३ तावृष्टीःसहसाराजंस्तरसाधारयन्प्रभुः ॥ व्यगाहतरणेपार्थोविनिघ्नन्रथिनांवरान्
४ विगाह्यतद्रथानीकंकंकपत्रैःशिलाशितैः ॥ आससादततःपार्थःसुशर्माणंवरायुधम् ५ सतस्यशरवर्षाणिववर्षरथिनांवरः ॥ तथासंशप्तकाश्चैवपार्थंबाणैःस
मार्पयन् ६ सुशर्मातुततःपार्थंविद्धादशभिराशुगैः ॥ जनार्दनंत्रिभिर्बाणैरहनद्दक्षिणेभुजे ७ ततोऽपरेणभल्लेनकेतुंविव्याधमारिष ॥ सवानरवरोराजन्विश्वक
र्मकृतोमहान् ८ ननादसुमहानादंभीषयाणोजगर्जच ॥ कपेस्तुनिनदंश्रुत्वासंत्रस्तातववाहिनी ९ भयंविपुलमाधायनिश्चेष्टासमपद्यत ॥ ततःसाशुशुभेसेना
निश्चेष्टावस्थितानृप १० नानापुष्पसमाकीर्णंयथाचैत्ररथंवनम् ॥ प्रतिलभ्यततःसंज्ञांयोधास्तेकुरुसत्तम ११ अर्जुनंसिषिचुर्बाणैःपर्वतंजलदाइव ॥ परिव
व्रुस्ततःसर्वेपांडवस्यमहारथम् १२ निगृह्यतंप्रचुक्रुशुर्वध्यमानाःशितैःशरैः ॥ तेहयान्रथचक्रेचरथेषांचापिमारिष १३ निग्रहीतुमुपाक्रामन्क्रोधाविष्टाःसमं
ततः ॥ निगृह्यतंरथंतस्ययोधास्तेतुसहस्रशः १४ निगृह्यबलवत्सर्वेसिंहनादमथानदन् ॥ अपरेजगृहुश्चैवकेशवस्यमहाभुजौ १५ पार्थमन्येमहाराजरथस्थं
जगृहुर्मुदा ॥ केशवस्तुततोबाहूविधुन्वन्रणमूर्धनि १६ पातयामासतान्सर्वान्दुष्टहस्तीवहस्तिपान् ॥ ततःक्रुद्धोरणेपार्थःसंवृतस्तैर्महारथैः १७



१ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७

१८ । १९ । २० । २१ । । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६

निगृहीतंरथंदृष्ट्वाकेशवंचाप्यभिद्रुतम् ॥ रथारूढांस्तुसुबहून्पदातींश्चाप्यपातयत् १८ आसन्नांश्चतथायोधान्शरैरासन्नयोधिभिः ॥ छादयामाससमरेकेश
वंचेदमब्रवीत् १९ पश्यकृष्णमहाबाहोसंशप्तकगणान्बहून् ॥ कुर्वाणंदारुणंकर्मवध्यमानान्सहस्रशः २० रथबंधमिमंघोरंपृथिव्यांनास्तिकश्चन ॥ यःसहेतपु
माँल्लोकेमदन्योयदुपुंगव २१ इत्येवमुक्त्वाबीभत्सुर्देवदत्तमथाधमत् ॥ पांचजन्यंचकृष्णोऽपिपूरयन्निवरोदसी २२ तंतुशंखस्वनंश्रुत्वासंशप्तकवरूथिनी ॥ सं
चचालमहाराजवित्रस्ताचाद्रवद्भृशम् २३ पादबंधंततश्चक्रेपांडवःपरवीरहा ॥ नागमस्त्रंमहाराजसंप्रकीर्यमुहुर्मुहुः २४ तेबद्धाःपादबंधेनपांडवेनमहात्मना ॥
निश्चेष्टाश्चाभवन्राजन्नश्ममसारमयाइव २५ निश्चेष्टांस्तुततोयोधानवधीत्पांडुनंदनः ॥ यथेंद्रःसमरेदैत्यांस्तारकस्यवधेपुरा २६ तेवध्यमानाःसमरेमुमुचु
स्तंरथोत्तमम् ॥ आयुधानिचसर्वाणिविस्रष्टुमुपचक्रमुः २७ तेबद्धाःपादबंधेननशेकुश्चेष्टितुंनृप ॥ ततस्तानवधीत्पार्थःशरैःसन्नतपर्वभिः २८ सर्वेयोधाहि
समरेभुजगैर्वेष्टिताऽभवन् ॥ यानुद्दिश्यरणेपार्थःपादबंधंचकारह २९ ततःसुशर्माराजेंद्रगृहीतांवीक्ष्यवाहिनीम् ॥ सौपर्णमस्त्रंत्वरितःप्रादुश्चक्रेमहारथः ३०
ततःसुपर्णाःसंपेतुर्भक्षयंतोभुजंगमान् ॥ तेवैविदुद्रुवुर्नागादृष्ट्वातान्खचरान्नृप ३१ बभौबलंतद्विमुक्तंपादबंधाद्विशांपते ॥ मेघवृंदाद्यथामुक्तोभास्करस्ताप
यन्प्रजाः ३२ विप्रमुक्तास्तुतेयोधाःफाल्गुनस्यरथंप्रति ॥ ससृजुर्बाणसंघांश्चशस्त्रसंघांश्चमारिष ३३ विविधानिचशस्त्राणिप्रत्यविध्यंतसर्वशः ॥ तांमहास्त्रम
यींवृष्टिंसंछिद्यशरवृष्टिभिः ३४ न्यवधीच्चततोयोधान्वासविःपरवीरहा ॥ सुशर्मातुततोराजन्बाणेनानतपर्वणा ३५ अर्जुनंहृदयेविद्ध्वाविव्याधान्यैस्त्रिभिः
शरैः ॥ सगाढविद्धोव्यथितोरथोपस्थउपाविशत् ३६ ततउच्चुकुशुःसर्वेहतःपार्थइतिस्मह ॥ ततःशंखनिनादाश्चभेरीशब्दाश्चपुष्कलाः ३७ नानावादित्रनि
नदाःसिंहनादाश्चजज्ञिरे ॥ प्रतिलभ्यततःसंज्ञांश्वेताश्वःकृष्णसारथिः ३८ ऐंद्रमस्त्रममेयात्माप्रादुश्चक्रेत्वरान्वितः ॥ ततोबाणसहस्राणिसमुत्पन्नानिमारिष
३९ सर्वदिक्षुव्यदृश्यंतनिघ्नंतितववाहिनीम् ॥ हयान्रथांश्चसमरेशस्त्रैःशतसहस्रशः ४० वध्यमानेततःसैन्येभयंसुमहदाविशत् ॥ संशप्तकगणानांचगोपालानां
चभारत ४१ नहितत्रपुमान्कश्चिद्योर्जुनंप्रत्यविध्यत ॥ पश्यतांतत्रवीराणामहन्यतबलंतव ४२ हन्यमानमपश्यंश्चनिश्चेष्टंसपराक्रमे ॥ अयुतंतत्रयोधानां
हत्वापांडुसुतोरणे ४३ व्यभ्राजतमहाराजविधूमोग्निरिवज्वलन् ॥ चतुर्दशसहस्राणियानिशिष्टानिभारत ४४ रथानामयुतंचैवत्रिसाहस्राश्चदंतिनः ॥ ततः
संशप्तकाभूयःपरिवव्रुर्धनंजयम् ४५ मर्तव्यमितिनिश्चित्यजयंवाऽप्यनिवर्तनम् ॥ तत्रयुद्धंमहच्चासीत्तावकानांविशांपते ॥ शूरेणबलिनासार्धंपांडवेनकिरीटि
ना ४६ ॥ इतिश्रीमहा० कर्णप० संकुलयुद्धेत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ छ ॥ ॥ इतिकर्णपर्वणिनैलकंठीयेभारतभावदीपे त्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ छ ॥

॥ संजयउवाच ॥ कृतवर्माकृपौद्रौणिःसूतपुत्रश्चमारिष ॥ उलूकःसौबलश्चैवराजाचसहसोदरैः १ सीदमानांचमूंदृष्ट्वापांडुपुत्रभयार्दिताम् ॥ समुज्जन्हुःसवे
गेनभिन्नांनावमिवार्णवे २ ततोयुद्धमतीवासीन्मुहूर्त्तमिवभारत ॥ भीरूणांत्रासजननंशूराणांहर्षवर्धनम् ३ कृपेणशरवर्षाणिप्रतिमुक्तानिसंयुगे ॥ सृंजयांश्छा
दयामासुःशलभानांव्रजाइव ४ शिखंडीचततःक्रुद्धोगौतमंत्वरितोययौ ॥ ववर्षशरवर्षाणिसमंताद्द्विजपुंगवम् ५ कृपस्तुशरवर्षंतद्विनिहत्यमहास्त्रवित् ॥ शि
खंडिनंरणेक्रुद्धोविव्याधदशभिःशरैः ६ ततःशिखंडीकुपितःशरैःसप्तभिराहवे ॥ कृपंविव्याधकुपितंकंकपत्रैरजिह्मगैः ७ ततःकृपःशरैस्तीक्ष्णैःसोऽतिविद्धोम
हारथः ॥ व्यश्वसूतरथंचक्रेशिखंडिनमथोद्विजः ८ हताश्वात्तुततोयानादवप्लुत्यमहारथः ॥ खड्गंचर्मतथागृह्यसत्वरंब्राह्मणंययौ ९ तमापतंतंसहसाशरैःसन्न
तपर्वभिः ॥ छादयामाससमरेतदद्भुतमिवाभवत् १० तत्राद्भुतमपश्यामशिलानांप्लवनंयथा ॥ निश्चेष्टस्तद्रणेराजञ्छिखंडीसमतिष्ठत ११ कृपेणच्छादितंदृ
ष्ट्वान्नृपोत्तमशिखंडिनम् ॥ प्रत्युद्ययौकृपंतूर्णंधृष्टद्युम्नोमहारथः १२ धृष्टद्युम्नंततोयांतंशारद्वतरथंप्रति ॥ प्रतिजग्राहवेगेनकृतवर्मामहारथः १३ युधिष्ठिर
मथायांतंशारद्वतरथंप्रति ॥ सपुत्रंसहसैन्यंचद्रोणपुत्रोन्यवारयत् १४ नकुलंसहदेवंचत्वरमाणौमहारथौ ॥ प्रतिजग्राहतेपुत्रःशरवर्षेणवारयन् १५ भीमसेनं
करूषांश्चकेकयान्सहसृंजयैः ॥ कर्णोवैकर्तनोयुद्धेवारयामासभारत १६ शिखंडिनस्ततोबाणान्कृपःशारद्वतोयुधि ॥ प्राहिणोत्त्वरयायुक्तोदिधक्षुरिवमारिष
१७ तान्छरान्प्रेषितांस्तेनसमंतात्स्वर्णभूषितान् ॥ चिच्छेदखड्गमाविध्यभ्रामयंश्चपुनःपुनः १८ शतचंद्रंचतच्चर्मगौतमस्तस्यभारत ॥ व्यधमत्सायकैस्तू
र्णंततउच्चुक्रुशुर्जनाः १९ सविचर्मामहाराजखड्गपाणिरुपाद्रवत् ॥ कृपस्यवशमापन्नोमृत्योरास्यमिवातुरः २० शारद्वतशरैर्ग्रस्तंक्लिश्यमानंमहाबलः ॥ चि
त्रकेतुसुतोराजन्सुकेतुस्त्वरितोययौ २१ विकिरन्ब्राह्मणंयुद्धेबहुभिर्निशितैःशरैः ॥ अभ्यापतदमेयात्मागौतमस्यरथंप्रति २२ दृष्ट्वाचयुक्तंतंयुद्धेब्राह्मणंचरित
व्रतम् ॥ अपयातस्ततस्तूर्णंशिखंडीराजसत्तम २३ सुकेतुस्तुततोराजन्गौतमंनवभिःशरैः ॥ विद्ध्वाविव्याधसप्तत्यापुनश्चैनंत्रिभिःशरैः २४ अथास्यसश
रंचापंपुनश्चिच्छेदमारिष ॥ सारथिंचशरेणास्यभृशंमर्मस्वताडयत् २५ गौतमस्तुततःक्रुद्धोधनुर्गृह्यनवंदृढम् ॥ सुकेतुंत्रिंशताबाणैःसर्वमर्मस्वताडयत् २६
सविह्वलितसर्वांगःप्रचचालरथोत्तमे ॥ भूमिकंपेयथावृक्षश्चचालकंपितोभृशम् २७ चलतस्तस्यकायात्तुशिरोज्वलितकुंडलम् ॥ सोष्णीषंसशिरस्त्राणंक्षुरप्रे
णव्यपातयत् २८ तच्छिरःप्रापतद्भूमौश्येनाहृतमिवामिषम् ॥ ततोऽस्यकायोवसुधांपश्चात्प्रापतदच्युतं २९ तस्मिन्हतेमहाराजत्रस्तास्तस्यपुरोगमाः ॥
गौतमंसमरेत्यक्त्वादुद्रुवुस्तेदिशोदश ३० धृष्टद्युम्नंतुसमरेसंनिवार्यमहारथः ॥ कृतवर्माऽब्रवीद्धृष्टस्तिष्ठतिष्ठेतिभारत ३१

तदभूत्तुमुलंयुद्धंवृष्णिपार्षतयोरणे ॥ अमिषार्थेयथायुद्धंश्येनयोःक्रुद्धयोर्नृप ३२ धृष्टद्युम्नस्तुसमरेहार्दिक्यंनवभिःशरैः ॥ आजघानोरसिक्रुद्धःपीडयन्हृदिका त्मजम् ३३ कृतवर्मातुसमरेपार्षतेनदृढायतः ॥ पार्षतंसरथंसाश्वंछादयामाससायकैः ३४ सरथश्छादितोराजन्धृष्टद्युम्नोनदृश्यते ॥ मेघैरिवपरिच्छन्नोभास्क रोजलधारिभिः ३५ विधूयतंबाणगणंशरैःकनकभूषणैः ॥ व्यरोचतरणेराजन्धृष्टद्युम्नःकृतव्रणः ३६ ततस्तुपार्षतःक्रुद्धःशस्त्रवृष्टिंसुदारुणाम् ॥ कृतवर्माणमा साद्यव्यसृजत्पृतनापतिः ३७ तामापतंतींसहसाशस्त्रवृष्टिंसुदारुणाम् ॥ शरैरनेकसाहस्रैर्हार्दिक्योऽवारयद्युधि ३८ दृष्ट्वातुवारितांयुद्धेशस्त्रवृष्टिंदुरासदाम् ॥ कृत वर्माणमासाद्यवारयामासपार्षतः ३९ सारथिंचास्यतरसाप्राहिणोद्यमसादनम् ॥ भल्लेनाशितधारेणसहतःप्रापतद्रथात् ४० धृष्टद्युम्नस्तुबलवान्जित्वाशत्रुंमहा बलम् ॥ कौरवान्समरेतूर्णंवारयामाससायकैः ४१ ततस्तेतावकायोधाधृष्टद्युम्नमुपाद्रवन् ॥ सिंहनादरवंकृत्वाततोयुद्धमवर्तत ४२ ॥ इतिश्रीम० भा० क० प० संकुलयुद्धेचतुष्पंचाशत्तमोऽध्यायः ॥ ५४ ॥ ७ ॥ संजयउवाच ॥ द्रौणिर्युधिष्ठिरंदृष्ट्वाशैनेयेनाभिरक्षितम् ॥ द्रौपदेयैस्तथाशूरैरभ्यवर्ततहृष्टवत् १ किरन्निषुगणान्घोरान्स्वर्णपुंखाञ्शिलाशितान् ॥ दर्शयन्विविधान्मार्गाञ्शिक्षाश्चलघुहस्तवत् २ ततःखंपूरयामासशरैर्दिव्यास्त्रमंत्रितैः ॥ युधिष्ठिरंचसमरेप रिवार्यमहास्त्रवित् ३ द्रौणायनिशरच्छन्नंनप्राज्ञायतकिंचन ॥ बाणभूतमभूत्सर्वमायोधनशिरोमहत् ४ बाणजालंदिविच्छन्नंस्वर्णजालाविभूषितम् ॥ शुशुभे भरतश्रेष्ठवितानमिवधिष्ठितम् ५ तेनच्छन्नंनभोराजन्बाणजालेनभास्वता ॥ आभ्रच्छायेवसंजज्ञेबाणरुद्धेनभस्तले ६ तत्राश्चर्यमपश्यामबाणभूतेतथाविधे ॥ नस्मसंपततेभूतंकिंचिद्देवांतरिक्षगम् ७ सात्यकिर्यतमानस्तुधर्मराजश्चपांडवः ॥ तथेतराणिसैन्यानिनस्मचक्रुःपराक्रमम् ८ लाघवंद्रोणपुत्रस्यदृष्ट्वातत्रम हारथाः ॥ व्यस्मयंतमहाराजनचैनंप्रत्युदीक्षितुम् ९ शेकुस्तेसर्वराजानस्तपंतमिवभास्करम् ॥ वध्यमानेततःसैन्येद्रौपदेयामहारथाः १० सात्यकिर्धर्मराजश्च पंचालाश्चापिसंगताः ॥ त्यक्त्वामृत्युभयंघोरंद्रौणायनिमुपाद्रवन् ११ सात्यकिःसप्तविंशत्याद्रौणिंविद्धाशिलीमुखैः ॥ पुनर्विव्याधनाराचैःसप्तभिःस्वर्णभूषितैः १२ युधिष्ठिरस्त्रिसप्तत्याप्रतिविंध्यश्चसप्तभिः ॥ श्रुतकर्मात्रिभिर्बाणैःश्रुतकीर्तिश्चसप्तभिः १३ सुतसोमस्तुनवभिःशतानीकश्चसप्तभिः ॥ अन्येचबहवःशूरावि व्यधुस्तंसमंततः १४ सतुक्रुद्धस्ततोराजन्नाशीविषइवश्वसन् ॥ सात्यकिंपंचविंशत्याप्राविध्यतशिलीमुखैः १५ श्रुतकीर्तिंचनवभिःसुतसोमंचपंचभिः ॥ अष्टभिःश्रुतकर्माणंप्रतिविंध्यंत्रिभिःशरैः १६ शतानीकंचनवभिर्धर्मपुत्रंचपंचभिः ॥ तथेतरांस्ततःशूरान्द्वाभ्यांद्वाभ्यामताडयत् १७ श्रुतकीर्तेस्तथाचापं चिच्छेदनिशितैःशरैः ॥ अथान्यद्धनुरादायश्रुतकीर्तिर्महारथः १८

१९ २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपेपंचपंचाशत्त

द्रौणायनिंत्रिभिर्विद्धाविव्याधान्यैःशितैःशरैः ॥ ततोद्रौणिर्महाराजशरवर्षेणमारिष १९ छादयामासतत्सैन्यंसमंताद्भरतर्षभ ॥ ततःपुनरमेयात्माधर्मराजस्य कार्मुकं२० द्रौणिश्चिच्छेदविहसन्विव्याधचशरैस्त्रिभिः ॥ ततोधर्मसुतोराजन्प्रगृह्यान्यन्महद्धनुः२१ द्रौणिंविव्याधसप्तत्याबाह्वोरुरसिचार्पयत् ॥ सात्यकिस्तुत तःक्रुद्धोद्रोणेःप्रहरतोरणे २२ अर्धचंद्रेणतीक्ष्णेनधनुश्छित्वाऽनदद्भृशं ॥ छिन्नधन्वाततोद्रौणिःशक्त्याशक्तिमतांवरः २३ सारथिंपातयामासशैनेयस्यरथा द्द्रुतम् ॥ अथान्यद्धनुरादायद्रोणपुत्रःप्रतापवान् २४ शैनेयंशरवर्षेणच्छादयामासभारत ॥ तस्याश्वाःप्रद्रुताःसंख्येपतितेरथसारथौ २५ तत्रतत्रैवधावंतः समदृश्यंतभारत ॥ युधिष्ठिरपुरोगास्तुद्रौणिंशस्त्रभृतांवरं २६ अभ्यवर्षंतवेगेनविसृजंतःशिताञ्छरान् ॥ आगच्छमानांस्तान्दृष्ट्वाक्रुद्धरुपान्परंतपः २७ प्रह सन्प्रतिजग्राहद्रोणपुत्रोमहारणे ॥ ततःशरशतज्वालःसेनाकक्षंमहारथः २८ द्रौणिर्ददाहसमरेकक्षमग्निर्यथावने ॥ तद्बलंपांडुपुत्रस्यद्रोणपुत्रप्रतापितम् २९ चुक्षुभेभरतश्रेष्ठतिमिनेवनदीमुखम् ॥ दृष्ट्वाचैवमहाराजद्रोणपुत्रपराक्रमम् ३० निहतान्मेनिरेसर्वान्पांडून्द्रोणसुतेनवै ॥ युधिष्ठिरस्तुत्वरितोद्रोणशिष्योमहा रथः ३१ अब्रवीद्द्रोणपुत्रायरोषामर्षसमन्वितः ॥ नैवनामतवप्रीतिर्नैवनामकृतज्ञता ३२ यतस्त्वंपुरुषव्याघ्रमामेवाद्यजिघांससि ॥ ब्राह्मणेनतपःकार्यंदानम ध्ययनंतथा ३३ क्षत्रियेणधनुर्नाम्यंसभवान्ब्राह्मणब्रुवः ॥ मिषतस्तेमहाबाहोयुधिजेष्यामिकौरवान् ३४ कुरुष्वसमरेकर्मब्रह्मबंधुरसिध्रुवं ॥ एवमुक्तोमहाराज द्रोणपुत्रःस्मयन्निव ३५ युक्तंतत्त्वंचसंचिंत्यनोत्तरंकिंचिदब्रवीत् ॥ अनुक्त्वाचततःकिंचिच्छरवर्षेणपांडवम् ३६ छादयामाससमरेक्रुद्धोंऽतकइवप्रजाः ॥ स च्छाद्यमानस्तुतदाद्रोणपुत्रेणमारिष ३७ पार्थोऽपयातःशीघ्रंवैविहायमहतींचमूम् ॥ आपयातेततस्तस्मिन्धर्मपुत्रेयुधिष्ठिरे ३८ द्रोणपुत्रस्ततोराजन्प्रत्यगा त्समहामनाः ॥ ततोयुधिष्ठिरोराजंस्त्यक्त्वाद्रौणिंमहाहवे ॥ प्रययौतावकंसैन्यंयुक्तःक्रूरायकर्मणे ३९ ॥ इतिश्रीमहाभारतेकर्णपर्वणिपार्थापयानेपंचपंचाशत्तमो ऽध्यायः ॥ ५५ ॥ संजयउवाच ॥ भीमसेनंचपांचाल्यंचेदिकेकयसंवृतम् ॥ वैकर्तनःस्वयंरुद्ध्वावारयामाससायकैः १ ततस्तुचेदिकारूषान्सृंजयांश्चमहार थान् ॥ कर्णोजघानसमरेभीमसेनस्यपश्यतः २ भीमसेनस्ततःकर्णंविहायरथसत्तमम् ॥ प्रययौकौरवंसैन्यंकक्षमग्निरिवज्वलन् ३ सूतपुत्रोऽपिसमरेपंचालान्के कयांस्तथा ॥ सृंजयांश्चमहेष्वासान्निजघानसहस्रशः ४ संशप्तकेषुपार्थश्चकौरवेषुवृकोदरः ॥ पंचालेषुतथाकर्णःक्षयंचक्रुर्महारथाः ५ तेक्षत्रियादह्यमानास्त्रि भिस्तैःपावकोपमैः ॥ जग्मुर्विनाशंसमरेराजन्दुर्मंत्रितेतव ६ ततोदुर्योधनःक्रुद्धोनकुलंनवभिःशरैः ॥ विव्याधभरतश्रेष्ठचतुरश्चास्यवाजिन ७ ततःपुनरमे यात्मातवपुत्रोजनाधिप ॥ क्षुरेणसहदेवस्यध्वजंचिच्छेदकांचनम् ८ मोऽध्यायः ॥ ५५ ॥ ॥ ७ ॥ भीमसेनमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८

९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५

नकुलस्तुततःक्रुद्धस्तवपुत्रंचसप्तभिः ॥ जघानसमरेराजन्सहदेवश्चपंचभिः ९ तावुभौभरतश्रेष्ठौज्येष्ठौसर्वधनुष्मताम् ॥ विव्याधोरसिसंक्रुद्धःपंचभिःपंचभिः
शरैः १० ततोऽपराभ्यांभल्लाभ्यांधनुषीसमकृंतत ॥ यमयोःसहसाराजन्विव्याधचात्रिसप्तभिः ११ तावन्येधनुषीश्रेष्ठेशक्रचापनिभेशुभे ॥ प्रगृह्यरेजतुःशूरौदे
वपुत्रसमौयुधि १२ ततस्तौरभसौयुद्धेभ्रातरौभ्रातरंयुधि ॥ शरैर्ववृषतुर्घोरैर्महामेघौयथाऽचलम् १३ ततःक्रुद्धोमहाराजतवपुत्रोमहारथः ॥ पांडुपुत्रौमहे
ष्वासौवारयामासपत्रिभिः १४ धनुर्मंडलमेवास्यदृश्यतेयुधिभारत ॥ सायकाश्चैवदृश्यंतेनिश्चरंतःसमंततः १५ आच्छादयन्दिशःसर्वाःसूर्यस्येवांशवोयथा ॥
बाणभूतेततस्तस्मिन्संछन्नेचनभस्तले १६ यमाभ्यांददृशेरूपंकालांतकयमोपमम् ॥ पराक्रमंतुतंदृष्ट्वातवसूनोर्महारथाः १७ मृत्योरुपांतिकंप्राप्तौमाद्रीपु
त्रौस्ममेनिरे ॥ ततःसेनापतीराजन्पांडवस्यमहारथः १८ पार्षतःप्रययौतत्रयत्रराजासुयोधनः ॥ माद्रीपुत्रौततःशूरौव्यतिक्रम्यमहारथौ १९ धृष्टद्युम्नस्तव
सुतंवारयामाससायकैः ॥ तमविध्यदमेयात्मातवपुत्रोह्यमर्षणः २० पांचाल्यंपंचविंशत्याप्रहसन्पुरुषर्षभः ॥ ततःपुनरमेयात्मातवपुत्रोह्यमर्षणः २१ विद्धान
नादपांचाल्यंषष्ट्याचपंचभिरेवच ॥ तथाऽस्यसशरंचापंहस्तावापंचमारिष २२ क्षुरप्रेणसुतीक्ष्णेनराजाचिच्छेदसंयुगे ॥ तदपास्यधनुश्छिन्नंपांचाल्यःशत्रुक
र्शनः २३ अन्यदादत्तवेगेनधनुर्भारसहंनवम् ॥ प्रज्वलन्निववेगेनसंरंभाद्रुधिरेक्षणः २४ अशोभतमहेष्वासोधृष्टद्युम्नःकृतव्रणः ॥ सपंचदशनाराचान्श्वसतःप
न्नगानिव २५ जिघांसुर्भरतश्रेष्ठंधृष्टद्युम्नोव्यपासृजत् ॥ तेवर्महेमविकृतंभित्त्वाराज्ञःशिलाशिताः २६ विविशुर्वसुधांवेगात्कंकबर्हिणवाससः ॥ सोऽतिविद्धोम
हाराजपुत्रस्तेऽतिव्यराजत २७ वसंतकालेसुमहान्प्रफुल्लइवकिंशुकः ॥ सच्छिन्नवर्मानाराचप्रहारैर्जर्जरीकृतः २८ धृष्टद्युम्नस्यभल्लेनक्रुद्धश्चिच्छेदकार्मुकम् ॥
अथैनंछिन्नधन्वानंत्वरमाणोमहीपतिः २९ सायकैर्दशभिराजन्भ्रुवोर्मध्येसमार्पयत् ॥ तस्यतेऽशोभयन्वक्त्रंकर्मारपरिमार्जिताः ३० प्रफुल्लंपंकजंयद्वद्भ्रमराम
धुलिप्सवः ॥ तदपास्यधनुश्छिन्नंधृष्टद्युम्नोमहामनाः ३१ अन्यदादत्तवेगेनधनुर्भल्लांश्चषोडश ॥ ततोदुर्योधनस्याश्वान्हत्वासूतंचपंचभिः ३२ धनुश्चिच्छे
दभल्लेनजातरूपपरिष्कृतम् ॥ रथंसोपस्करंछत्रंशक्तिंखड्गंगदांध्वजम् ३३ भल्लैश्चिच्छेददशभिःपुत्रस्यतवपार्षतः ॥ तपनीयांगदंचित्रंनागंमणिमयंशुभम्
३४ ध्वजंकुरुपतेश्छिन्नंददृशुःसर्वपार्थिवाः ॥ दुर्योधनंतुविरथंछिन्नवर्मायुधंरणे ३५ भ्रातरःपर्यरक्षंतसोदराभरतर्षभ ॥ तमारोप्यरथेराजन्दंडधारोजनाधिपः
३६ अपाहरदसंभ्रांतोधृष्टद्युम्नस्यपश्यतः ॥ कर्णस्तुसात्यकिंजित्वाराजगृद्धिर्महाबलः ३७ द्रोणहंतारमुग्रेषुंससाराभिमुखोरणे ॥ तंपृष्ठतोऽभ्ययात्तूर्णंशै
नेयोवितुदञ्शरैः ३८ वारणंजघनोपांतेविषाणाभ्यामिवाद्विपः ॥ सभारतमहानासीद्योधानांसुमहात्मनाम् ३९ कर्णपार्षतयोर्मध्येत्वदीयानांमहारणः ॥
नपांडवानांनास्माकंयोधःकश्चित्पराङ्मुखः ४०

३६ । ३७ । ३८ । ३९ । ४०

प्रत्यदृश्यततःकर्णःपंचालांस्त्वरितोययौ ॥ तस्मिन्क्षणेनरश्रेष्ठगजवाजिजनक्षयः ४१ प्रादुरासीद्भयतोराजन्मध्यगतेऽहनि ॥ पंचालास्तुमहाराजत्वरिता
विजिगीषवः ४२ तेसर्वेऽभ्यद्रवन्कर्णंपतत्रिणइवद्रुमम् ॥ तांस्तथाऽधिरथिःक्रुद्धोयतमानान्मनस्विनः ४३ विचिन्वन्निवबाणौघैःसमासादयदग्रगान् ॥ व्याघ्र
केतुंसुशर्माणंचित्रंचोग्रायुधंजयम् ४४ शुक्लंचरोचमानंचसिंहसेनंजदुर्जयम् ॥ तेवीरारथमार्गेणपरिवव्रुर्नरोत्तमम् ४५ सृजंतंसायकान्क्रुद्धंकर्णमाहवशोभिनम् ॥
युध्यमानांस्तुतान्दूरान्मनुजेंद्रप्रतापवान् ४६ अष्टाभिरष्टौराधेयोऽभ्यर्दयन्निशितैःशरैः ॥ अथापरान्महाराजसूतपुत्रःप्रतापवान् ४७ जघानबहुसाहस्रान्
योधान्युद्धविशारदान् ॥ जिष्णुंचजिष्णुकर्माणंदेवापिंभद्रमेवच ४८ दंडंचराजन्समरेचित्रंचित्रायुधंहरिम् ॥ सिंहकेतुंरोचमानंशलभंचमहारथम् ४९ निज
घानसुसंक्रुद्धश्चेदीनांचमहारथान् ॥ तेषामाददतःप्राणानासीदाधिरथेर्वपुः ५० शोणिताभ्युक्षितांगस्यरुद्रस्येवोर्जितंमहत् ॥ तत्रभारतकर्णेनमातंगास्ता
डिताःशरैः ५१ सर्वतोऽभ्यद्रवन्भीताःकुर्वंतोमहदाकुलम् ॥ निपेतुरुर्व्यांसमरेकर्णसायकताडिताः ५२ कुर्वंतोविविधान्नादान्वज्रनुन्नाइवाचलाः ॥ गजवाजि
मनुष्यैश्चनिपतद्भिःसमंततः ५३ रथैश्चाधिरथेमार्गेसमास्तीर्यतमेदिनी ॥ नैवंभीष्मोनचद्रोणोनान्येयुधिचतावकाः ५४ चक्रुःस्मतादृशंकर्मयादृशंवैकृतंर
णे ॥ सूतपुत्रेणनागेषुहयेषुचरथेषुच ५५ नरेषुचमहाराजकृतंस्मकदनंमहत् ॥ मृगमध्येयथासिंहोदृश्यतेनिर्भयश्चरन् ५६ पंचालानांतथामध्येकर्णोऽचर
दभीतवत् ॥ यथामृगगणांस्त्रस्तान्सिंहोद्रावयतेदिशः ५७ पंचालानांरथव्रातान्कर्णोव्यद्रावयत्तथा ॥ सिंहास्यंचयथाप्राप्यनजीवंतिमृगाःक्वचित् ५८ तथा
कर्णमनुप्राप्यनाजिजीवुर्महारथाः ॥ वैश्वानरंयथाप्राप्यप्रतिदह्यंतिवैजनाः ५९ कर्णाग्निनावनेतद्वद्दग्धाभारतसृंजयाः ॥ कर्णेनचेदिकैकेयपंचालेषुचभारत
६० विश्राव्यनामनिहताबहवःशूरसंमताः ॥ ममचासीन्मतीराजन्दृष्ट्वाकर्णस्यविक्रमम् ६१ नैकोप्याधिरथेर्जीवन्पांचाल्योमोक्ष्यतेयुधि ॥ पंचालान्व्यधम
त्संख्येसूतपुत्रःपुनःपुनः ६२ पंचालानथनिघ्नंतंकर्णंदृष्ट्वामहारणे ॥ अभ्यधावत्सुसंक्रुद्धोधर्मराजोयुधिष्ठिरः ६३ धृष्टद्युम्नश्चराधेयंद्रौपदेयाश्चमारिष ॥ प
रिवव्रुरमित्रघ्नंशतशश्चापरेजनाः ६४ शिखंडीसहदेवश्चनकुलोनाकुलिस्तथा ॥ जनमेजयःशिनेर्नप्ताबहवश्चप्रभद्रकाः ६५ एतेपुरोगमाभूत्वाधृष्टद्युम्नश्चसंयु
गे ॥ कर्णमस्यंतमिष्वस्त्रैर्विचेरुरमितौजसः ६६ तांस्तत्राधिरथिःसंख्येचेदिपंचालपांडवान् ॥ एकोबहूनभ्यपतद्गरुत्मान्पन्नगानिव ६७ तैःकर्णस्याभवद्यु
द्धंघोररूपंविशांपते ॥ तादृग्यादृक्पुरावृत्तंदेवानांदानवैःसह ६८ तान्समेतान्महेष्वासान्शरवर्षौघवर्षिणः ॥ एकोव्यधमदव्यग्रस्तमांसीवदिवाकरः ६९
भीमसेनस्तुसंसक्तेराधेयेपांडवैःसह ॥ सर्वतोऽभ्यहनत्क्रुद्धोयमदंडनिभैःशरैः ॥ वाह्लीकान्केकयान्मत्स्यान्वासात्यान्मद्रसैंधवान् ७०

एकःसंख्येमहेष्वासोयोधयन्बव्हशोभत ॥ तत्रमर्मसुभीमेननाराचैस्ताडितागजाः ७१ प्रपतंतोहतारोहाःकंपयंतिस्ममेदिनीम् ॥ वाजिनश्चहतारोहाःपत्तय
श्चगतासवः ७२ शेरतेयुधिनिर्भिन्नावमंतोरुधिरंबहु ॥ सहस्रशश्चरथिनःपातिताःपतितायुधाः ७३ तेक्षताःसमदृश्यंतभीमभीतागतासवः ॥ रथिभिःसादि
भिःसूतैःपादातैर्वाजिभिर्गजैः ७४ भीमसेनशरैश्छिन्नैराच्छन्नावसुधाऽभवत् ॥ तत्स्तंभितमिवातिष्ठद्भीमसेनभयार्दितम् ७५ दुर्योधनबलंसर्वंनिरुत्साहंकृत
व्रणम् ॥ निश्चेष्टंतुमुलंदीनंबभौतस्मिन्महारणे ७६ प्रसन्नसलिलेकालेयथास्यात्सागरोनृप ॥ तद्वत्तवबलंतद्वैनिश्चलंसमवस्थितम् ७७ मन्युवीर्यबलोपेतं
दर्पात्प्रत्यवरोपितम् ॥ अभवत्तवपुत्रस्यतत्सैन्यंनिष्प्रभंतदा ७८ तद्बलंभरतश्रेष्ठवध्यमानंपरस्परम् ॥ रुधिरौघपरिक्लिन्नंरुधिरार्द्रंबभूवह ७९ जगामभरत
श्रेष्ठवध्यमानंपरस्परम् ॥ सूतपुत्रोरणेक्रुद्धःपांडवानामनीकिनीम् ८० भीमसेनःकुरूंश्चापिद्रावयंतौविरेजतुः ॥ वर्तमानेतथारौद्रेसंग्रामेऽद्भुतदर्शने ८१
निहत्यपृतनामध्येसंशप्तकगणान्बहून् ॥ अर्जुनोजयतांश्रेष्ठोवासुदेवमथाब्रवीत् ८२ प्रभग्नंबलमेतद्धियोत्स्यमानंजनार्दन ॥ एतेद्रवंतिसगणाःसंशप्तकमहा
रथाः ८३ अपारयंतोमद्बाणान्सिंहशब्दंमृगाइव ॥ दीर्यतेचमहत्सैन्यंसृंजयानांमहारणे ८४ हस्तिकक्षोह्यसौकृष्णःकेतुःकर्णस्यधीमतः ॥ दृश्यतेराजसैन्य
स्यमध्येविचरतोमुदा ८५ नचकर्णंरणेशक्ताजेतुमन्येमहारथाः ॥ जानीतेहिभवान्कर्णंवीर्यवंतंपराक्रमे ८६ तत्रयाहियतःकर्णोद्रावयत्येषनोबलम् ॥ वर्जयि
त्वारणेयाहिसूतपुत्रंमहारथम् ८७ एतन्मेरोचतेकृष्णयथावातवरोचते ॥ एतच्छ्रुत्वावचस्तस्यगोविंदःप्रहसन्निव ८८ अब्रवीदर्जुनंतूर्णंकौरवान्जहिपां
डव ॥ ततस्तवमहासैन्यंगोविंदप्रेरिताहयाः ८९ हंसवर्णाःप्रविविशुर्वहंतःकृष्णपांडवौ ॥ केशवप्रेरितैरश्वैःश्वेतैःकांचनभूषणैः ९० प्रविशद्भिस्तवबलंचतु
र्दिशमभिद्यत ॥ मेघस्तानितनिर्ह्रादःसरथोवानरध्वजः ९१ चलत्पताकस्तांसेनांविमानंद्यामिवाविशत् ॥ तौविदार्यमहासेनांप्रविष्टौकेशवार्जुनौ ९२ क्रुद्धौसं
रंभरक्ताक्षौविभ्राजेतांमहाद्युती ॥ युद्धशौंडौसमाहूतावागतौतौरणाध्वरम् ९३ यज्वभिर्विधिनाहूतौमखेदेवाविवाश्विनौ ॥ क्रुद्धौतौतुनरव्याघ्रौयोगवंतौबभू
वतुः ९४ तलशब्देनरुषितौयथानागौमहावने ॥ विगाह्यतुरथानीकमश्वसंघांश्चफाल्गुनः ९५ व्यचरत्पृतनामध्येपाशहस्तइवांतकः ॥ तंदृष्ट्वायुधिविक्रांतं
सेनायांतवभारत ९६ संशप्तकगणान्भूयःपुत्रस्तेसमचूचुदत् ॥ ततोरथसहस्रेणद्विरदानांत्रिभिःशतैः ९७ चतुर्दशसहस्रैस्तुतुरगाणांमहाहवे ॥ द्वाभ्यांशतस
हस्राभ्यांपदातीनांचधन्विनां ९८ शूराणांलब्धलक्षाणांविदितानांसमंततः ॥ अभ्यवर्तंतकौंतेयंछादयंतोमहारथाः ९९ शरवर्षैर्महाराजसर्वतःपांडुनंदनम् ॥
संच्छाद्यमानःसमरेशरैःपरबलार्दनः १०० दर्शयन्रौद्रमात्मानंपाशहस्तइवांतकः ॥ निघ्नन्संशप्तकान्पार्थःप्रेक्षणीयतरोऽभवत् १

१०२।३।४।५।६।७।८।९।१०।११।१२।१३।१४।१५।१६।१७।१८।१९ किंकरवद्दंडंबिभर्ति किंकरनामानंवादंडंबिभर्तिसः १२०

ततोविद्युत्प्रभैर्बाणैःकार्तस्वरविभूषितैः ॥ निरंतरमिवाकाशमासीच्छन्नंकिरीटिना १०२ किरीटिभुजनिर्मुक्तैःसंपतद्भिर्महाशरैः ॥ समाच्छन्नंबभौसर्वंकाद्रवेयैरिव प्रभो ३ रुक्मपुंखान्प्रसन्नाग्रान्छरान्सन्नतपर्वणः ॥ अवासृजदमेयात्मादिक्षुसर्वासुपांडवः ४ महीवियद्दिशःसर्वाःसमुद्रागिरयोऽपिवा ॥ स्फुटंतीतिजनाजज्ञुः पार्थस्यतलनिःस्वनात् ५ हत्वादशसहस्राणिपार्थिवानांमहारथः ॥ संशप्तकानांकौंतेयःप्रत्यक्षंस्वरितोऽभ्ययात् ६ प्रत्यक्षंचसमासाद्यपार्थःकांबोजरक्षितम् ॥ प्रममाथबलाद्बाणैर्दानवानिववासवः ७ प्रचिच्छेदाशुभल्लेनाद्विषतामाततायिनाम् ॥ शस्त्रंपाणिंतथाबाहुंतथापिचशिरांस्युत ८ अंगांगावयवैश्छिन्नैर्व्यायुधास्तेऽपतन्भुवि ॥ विष्वग्वाताभिसंभग्नाबहुशाखाइवद्रुमाः ९ हस्त्यश्वरथपत्तीनांव्रातान्निघ्नंतमर्जुनम् ॥ सुदक्षिणादवरजःशरवृष्ट्याऽभ्यवीवृषत् ११० तस्यास्यतोऽर्धचंद्राभ्यांबाहूपरिघसन्निभौ ॥ पूर्णचंद्राभवक्त्रंचक्षुरेणाभ्यहरच्छिरः ११ सपपाततदोवाहात्सुलोहितपरिस्रवः ॥ मनःशिलागिरेःशृंगंवज्रेणेवावदारितम् १२ सुदक्षिणादवरजंकांबोजंददृशुर्हतम् ॥ प्रांशुंकमलपत्राक्षमत्यर्थंप्रियदर्शनम् १३ कांचनस्तंभसदृशंभिन्नंहेमगिरिंयथा ॥ ततोऽभवत्पुनर्युद्धंघोरमत्यर्थमद्भुतम् १४ नानावस्थाश्चयोधानांबभूवुस्तत्रयुद्ध्यताम् ॥ एकेषुनिहतैरश्वैःकांबोजैर्यवनैःशकैः १५ शोणिताक्तैस्तदारक्तंसर्वमासीद्विशांपते ॥ रथैर्हताश्वसूतैश्चहतारोहैश्ववाजिभिः १६ द्विरदैश्चहतारोहैर्महामात्रैर्हतद्विपैः ॥ अन्योन्येनमहाराजकृतोघोरोजनक्षयः १७ तस्मिन्प्रपक्षेपक्षेचनिहतेसव्यसाचिना ॥ अर्जुनंजयतांश्रेष्ठंत्वरितोद्रौणिरभ्ययात् १८ विधुन्वानोमहच्चापंकार्तस्वरविभूषितम् ॥ आददानःशरान्घोरान्स्वरश्मीनिवभास्करः १९ क्रोधामर्षविवृत्तास्योलोहिताक्षोबभौबली ॥ अंतकालेयथाक्रुद्धोमृत्युःकिंकरदंडभृत् १२० ततःप्रासृजदुग्राणिशरवर्षाणिसंघशः ॥ तैर्विसृष्टैर्महाराजव्यद्रवत्पांडवीचमूः २१ सदृष्ट्वैवतुदाशार्हंस्यंदनस्थंविशांपते ॥ पुनःप्रासृजदुग्राणिशरवर्षाणिमारिष २२ तैःपतद्भिर्महाराजद्रौणिमुक्तैःसमंततः ॥ संछादितौरथस्थौताबुभौकृष्णधनंजयौ २३ ततःशरशतैस्तीक्ष्णैरश्वत्थामाप्रतापवान् ॥ निश्चेष्टौताबुभौयुद्धेकृत्वामाधवपांडवौ २४ हाहाकृतमभूत्सर्वंस्थावरंजंगमंतथा ॥ चराचरस्यगोप्तारौदृष्ट्वासंछादितौशरैः २५ सिद्धचारणसंघाश्चसंपेतुस्तेसमंततः ॥ चिंतयंतोभवेदद्यलोकानांस्वस्त्यपीतिच २६ नमयातादृशोराजन्दृष्टपूर्वःपराक्रमः ॥ संग्रामेयादृशोद्रौणेःकृष्णौसंछादयिष्यतः २७ द्रौणेस्तुधनुषःशब्दमहितत्रासनंरणे ॥ अश्रौषंबहुशोराजन्सिंहस्यनिनदोयथा २८ ज्याचास्यचरतोयुद्धेसव्यदक्षिणमस्यतः ॥ विद्युदंबुदमध्यस्थाभ्राजमानेवसाऽभवत् २९ सतथाक्षिप्रकारीचदृढहस्तश्चपांडवः ॥ प्रमोहंपरमंगत्वाप्रेक्ष्यतंद्रोणजंततः ३० विक्रमंविहतंमेनेआत्मनःसमहायशाः ॥ तस्यास्यसमरेराजन्वपुरासीत्सुदुर्दृशम् ३१ द्रौणिपांडवयोरेवंवर्तमानेमहारणे ॥ वर्धमानेचराजेंद्रद्रोणपुत्रेमहाबले ३२

२१।२२।२३।२४।२५।२६।२७।२८।२९।३०।३१।३२

३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेषट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥ ॥ ७ ॥ ॥

हीयमानेचकौंतेयेकृष्णेरोषःसमाविशत् ॥ सरोषान्निःश्वसन्राजन्निर्दहन्निवचक्षुषा ३३ द्रौणिंह्यपश्यत्संग्रामेफाल्गुनंचमुहुर्मुहुः ॥ ततःक्रुद्धोऽब्रवीत्कृष्णःपार्थंसप्रणयंतदा ३४ अत्यद्भुतमिदंपार्थतवपश्यामिसंयुगे ॥ अतिशेतेहियत्रत्वांद्रोणपुत्रोऽद्यभारत ३५ कच्चिद्वीर्यंयथापूर्वंभुजयोर्वाबलंतव ॥ कच्चित्तेगांडिवंहस्तेरथेतिष्ठसिचार्जुन ३६ कच्चित्कुशलिनोबाहूमुष्टिर्वानव्यशीर्यत ॥ उदीर्यमाणंहिरणेपश्यामिद्रौणिमाहवे ३७ गुरुपुत्रइतिह्येनंमानयन्भरतर्षभ ॥ उपेक्षांकुरुमापार्थनायंकालउपेक्षितुम् ३८ एवमुक्तस्तुकृष्णेनगृह्यभल्लांश्चतुर्दश ॥ त्वरमाणस्त्वराकालेद्रौणेर्धनुरथाच्छिनत् ३९ ध्वजंछत्रंपताकांश्चरथंशक्तिंगदांतथा ॥ जत्रुदेशेचसुभृशंवत्सदंतैरताडयत् ४० समूर्छांपरमांगत्वाध्वजयष्टिंसमाश्रितः ॥ तंविसंज्ञंमहाराजशत्रुणाभृशपीडितम् ४१ अपोवाहरणात्सूतोरक्षमाणोधनंजयात् ॥ एतस्मिन्नेवकालेचविजयःशत्रुतापनः ४२ व्यहनत्तावकंसैन्यंशतशोऽथसहस्रशः ॥ पश्यतस्तस्यवीरस्यतवपुत्रस्यभारत ४३ एवमेषक्षयोवृत्तस्तावकानांपरैःसह ॥ क्रूरोविशसनोघोरोराजन्दुर्मंत्रितेतव ४४ संशप्तकांश्चकौंतेयःकुरूंश्चापिवृकोदरः ॥ वसुषेणश्चपंचालान्क्षणेनव्यधमद्रणे ४५ वर्तमानेतथारौद्रेराजन्वीरवरक्षये ॥ उत्थितान्यगणेयानिकबंधानिसमंततः ४६ युधिष्ठिरोऽपिसंग्रामेप्रहारैर्गाढवेदनः ॥ क्रोशमात्रमपक्रम्यतस्थौभरतसत्तम ४७ ॥ इतिश्रीमहाभारतेकर्णपर्वणिसंकुलयुद्धेषट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ दुर्योधनस्ततःकर्णमुपेत्यभरतर्षभ ॥ अब्रवीन्मद्रराजंचतथैवान्यांश्चपार्थिवान् १ यदृच्छयैतत्संप्राप्तंस्वर्गद्वारमपावृतम् ॥ सुखिनःक्षत्रियाःकर्णलभंतेयुद्धमीदृशम् २ सदृशैःक्षत्रियैःशूरैःशूराणांयुध्यतांयुधि ॥ इष्टंभवतिराधेयतदिदंसमुपास्थितम् ३ हत्वाचपांडवान्युद्धेस्फीतामुर्वीमवाप्स्यथ ॥ निहतावापरैर्युद्धेवीरलोकमवाप्स्यथ ४ दुर्योधनस्यतच्छ्रुत्वावचनंक्षत्रियर्षभाः ॥ हृष्टानादानुदक्रोशन्वादित्राणिचसर्वशः ५ ततःप्रमुदितेतस्मिन्दुर्योधनबलेतदा ॥ हर्षयंस्तावकान्योधान्द्रौणिर्वचनमब्रवीत् ६ प्रत्यक्षंसर्वसैन्यानांभवतांचापिपश्यताम् ॥ न्यस्तशस्त्रोममपिताधृष्टद्युम्नेनपातितः ७ सतेनाहममर्षेणमित्रार्थेचापिपार्थिवाः ॥ सत्यंवःप्रतिजानामितद्वाक्यंमेनिबोधत ८ धृष्टद्युम्नमहत्वाऽहंनविमोक्ष्यामिदंशनम् ॥ अनृतायांप्रतिज्ञायांनाहंस्वर्गमवाप्नुयाम् ९ अर्जुनोभीमसेनश्चयोधोयोरक्षितारणे ॥ धृष्टद्युम्नस्यतंसंख्येनिहनिष्यामिसायकैः १० एवमुक्तेततःसर्वासहिताभारतीचमूः ॥ अभ्यद्रवतकौंतेयांस्तथातेचापिपांडवाः ११ ससंनिपातोरथयूथपानांबभूवराजन्नतिभीमरूपः ॥ जनक्षयःकालयुगांतकल्पःप्रावर्ततताग्रेकुरुसृंजयानाम् १२ ततःप्रवृत्तेयुधिसंप्रहारेभूतानिसर्वाणिसदैवतानि ॥ आसन्समेतानिसहाप्सरोभिर्दिदृक्षमाणानिनरप्रवीरान् १३

दुर्योधनइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० पांडवाअपिकौरवानभ्यद्रवंतेतिशेषः ११ कालयुगांतोमहाप्रलयः १२ । १३

स्वकर्मअभिमुख्येनप्रहारसहनादि उद्वहतोनिर्वोढॄन् १४ समीरणःसिषेवेत्यन्वयः परस्परंघ्नंतितेपरस्परेणमारिताइत्यर्थः १५ । १६ । १७ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेसप्त

दिव्यैश्चमाल्यैर्विविधैश्चगंधैर्दिव्यैश्चरत्नैर्विविधैर्नराग्र्यान् ॥ रणेस्वकर्मोद्वहतःप्रवीरानवाकिरन्नप्सरसःप्रहृष्टाः १४ समीरणस्तांश्चनिषेव्यगंधान्निसिषेवसर्वानपि योधमुख्यान् ॥ निषेव्यमाणास्त्वनिलेनयोधाःपरस्परघ्नाधरणींनिपेतुः १५ सादिव्यमाल्यैरवकीर्यमाणासुवर्णपुंखैश्चशरैर्विचित्रैः ॥ नक्षत्रसंघैरिवचित्रिता द्यौःक्षितिर्बभौयोधवरैर्विचित्रा १६ ततोंऽतरिक्षादपिसाधुवादैर्वादित्रघोषैःसमुदीर्यमाणः ॥ ज्याघोषनेमिस्वननादचित्रःसमाकुलःसोऽभवत्संप्रहारः ॥ १७ ॥ इतिश्रीमहाभारतेकर्णपर्वणिअश्वत्थामप्रतिज्ञायांसप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ ॥ छ ॥ संजयउवाच ॥ एवमेषमहानासीत्संग्रामःपृथिवीक्षिताम् ॥ क्रुद्धेऽर्जुनेतथाकर्णेभीमसेनेचपांडवे १ द्रोणपुत्रंपराजित्यजित्वाचान्याम्महारथान् ॥ अब्रवीदर्जुनोराजन्वासुदेवमिदंवच २ पश्यकृष्णमहाबाहोद्रवंतींपांडवीं चमूम् ॥ कर्णंपश्यचसंग्रामेकालयंतंमहारथान् ३ नचपश्यामिदाशार्हधर्मराजंयुधिष्ठिरम् ॥ नापिकेतुर्युधांश्रेष्ठधर्मराजस्यदृश्यते ४ त्रिभागश्चावशिष्टोऽयंदि वसस्यजनार्दन ॥ नचमांधार्तराष्ट्रेषुकश्चिद्युध्यतिसंयुगे ५ तस्मात्त्वंमत्प्रियंकुर्वन्याहियत्रयुधिष्ठिरः ॥ दृष्ट्वाकुशलिनंयुद्धेधर्मपुत्रंसहानुजम् ६ पुनर्योद्धाऽस्मि वार्ष्णेयशत्रुभिःसहसंयुगे ॥ ततःप्रायाद्रथेनाशुबीभत्सोर्वचनाद्धरिः ७ यतोयुधिष्ठिरोराजासृंजयाश्चमहारथाः ॥ अयुध्यंस्तावकैःसार्धंमृत्युंकृत्वानिवर्तनम् ८ ततःसंग्रामभूमिंतांवर्तमानेजनक्षये ॥ अवेक्षमाणोगोविंदःसव्यसाचिनमब्रवीत् ९ पश्यपार्थमहारौद्रोवर्ततेभरतक्षयः ॥ पृथिव्यांक्षत्रियाणांवैदुर्योधनकृतेम हान् १० पश्यभारतचापानिरुक्मपृष्ठानिधन्विनाम् ॥ मृतानामपविद्धानिकलापांश्चमहाधनान् ११ जातरूपमयैःपुंखैःशरांश्चानतपर्वणः ॥ तैलधौतांश्च नाराचान्निर्मुक्तान्पन्नगानिव १२ हस्तिदंतत्सरून्खड्गान्जातरूपपरिष्कृतान् ॥ वर्माणिचापविद्धानिरुक्मगर्भाणिभारत १३ सुवर्णविकृतान्प्रासान्शक्तीः कनकभूषणाः ॥ जांबूनदमयैःपट्टैर्बद्धाश्चविपुलागदाः १४ जातरूपमयीश्चर्ष्टीःपट्टिशान्हेमभूषणान् ॥ दंडैःकनकचित्रैश्चविप्रविद्धान्परश्वधान् १५ अयःकुं तांश्चपतितान्मुसलानिगुरूणिच ॥ शतघ्नीःपश्यचित्राश्चविपुलान्परिघांस्तथा १६ चक्राणिचापविद्धानितोमरांश्चमहारणे ॥ नानाविधानिशस्त्राणिप्रगृह्य जयगृद्धिनः १७ जीवंतइवदृश्यंतेगतसत्वास्तरास्विनः ॥ गदाविमथितैर्गात्रैर्मुसलैर्भिन्नमस्तकान् १८ गजवाजिरथक्षुण्णान्पश्ययोधान्सहस्रशः ॥ मनुष्यहय नागानांशरशक्त्यृष्टिपट्टिशैः १९ परिघैरायसैर्घोरैरयस्कुंतैःपरश्वधैः ॥ शरीरैर्बहुभिश्छिन्नैःशोणितौघपरिप्लुतैः २० गतासुभिरमित्रघ्नसंवृतारणभूमयः ॥ बा हुभिश्चंदनादिग्धैःसांगदैर्हेमभूषितैः २१ सतलत्रैःसकेयूरैर्भातिभारतमेदिनी ॥ सांगुलित्रैर्भुजाग्रैश्चविप्रविद्धैरलंकृतैः २२

पंचाशत्तमोऽध्यायः ॥ ५७ ॥ ॥ छ ॥ ॥ एवमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२

२३ । २४ किंकिणिनः किंकिणीमंतः व्रीह्यादित्वादिनिः २५ । २६ प्रकीर्णकान्चामरान् 'प्रकीर्णकंचामरेस्याद्विस्तरेनातुरंगमे' इतिमेदिनी २७ । २८ । २९ । ३० । ३१ । ३२

हस्तिहस्तोपमैश्छिन्नैरूरुभिश्चतरस्विनाम् ॥ बद्धचूडामणिवरैःशिरोभिश्चसकुंडलैः २३ पतितैर्ऋषभाक्षाणांविराजतिवसुंधरा ॥ कबंधैःशोणितादिग्धैश्छिन्नगात्रशिरोधरैः २४ भूर्भातिभरतश्रेष्ठशांतार्चिभिरिवाग्निभिः ॥ रथांश्चबहुधाभग्नान्हेमकिंकिणिनःशुभान् २५ वाजिनश्चहतान्पश्यनिष्कीर्णांत्रान्शराहतान् ॥ अनुकर्षानुपासंगान्पताकाविविधध्वजान् २६ रथिनांचमहाशंखान्पांडुरांश्चप्रकीर्णकान् ॥ निरस्तजिह्वान्मातंगान्शयानान्पर्वतोपमान् २७ वैजयतीर्विचित्राश्चहतांश्चगजवाजिनः ॥ वारणानांपरिस्तोमांस्तथैवाजिनकंबलान् २८ विपाटितविचित्रांश्चरूप्यचित्रान्कुथांकुशान् ॥ भिन्नाश्चबहुधाघंटामहद्भिःपतितैर्गजैः २९ वैदूर्यदंडांश्चशुभान्पतितानंकुशान्भुवि ॥ बद्धाःसादिभुजाग्रेषुसुवर्णविकृताःकशाः ३० विचित्रमणिचित्रांश्चजातरूपपरिष्कृतान् ॥ अश्वास्तरपरिस्तोमान्रांकवान्पतितान्भुवि ३१ चूडामणीन्नरेंद्राणांविचित्राःकांचनस्रजः ॥ छत्राणिवापविद्धानिचामरव्यजनानिच ३२ चंद्रनक्षत्रभासैश्चवदनैश्चारुकुंडलैः ॥ क्लृप्तश्मश्रुभिरत्यर्थंवीराणांसमलंकृतैः ३३ वदनैःपश्यसंछन्नांमहींशोणितकर्दमाम् ॥ सजीवांश्चापरान्पश्यकूजमानान्समंततः ३४ उपास्यमानान्बहुशोन्यस्तशस्त्रैर्विशांपते ॥ ज्ञातिभिःसहितांस्तत्ररोदमानैर्मुहुर्मुहुः ३५ व्युत्क्रांतानपरान्योधांश्छादयित्वातरस्विनः ॥ पुनर्युद्धायगच्छंतिजयगृद्धाःप्रमन्यवः ३६ अपरेतत्रतत्रैवपरिधावंतिमानवाः ॥ ज्ञातिभिःपतितैःशूरैर्याच्यमानास्तथोदकम् ३७ जलार्थंचगताःकेचिन्निष्प्राणाबहवोऽर्जुन ॥ सन्निवृत्ताश्चतेशूरास्तान्वैदृष्ट्वाविचेतसः ३८ जलंत्यक्त्वाप्रधावंतिक्रोशमानाःपरस्परम् ॥ जलंपीत्वामृतान्पश्यपिबतोऽन्यांश्चमारिष ३९ परित्यज्यप्रियानन्येबांधवान्बांधवप्रियाः ॥ व्युत्क्रांताःसमदृश्यंततत्रतत्रमहारणे ४० तथाऽपरान्नरश्रेष्ठसंदष्टौष्ठपुटान्पुनः ॥ भ्रुकुटीकुटिलैर्वक्त्रैःप्रेक्षमाणान्समंततः ४१ एवंब्रुवंस्तदाकृष्णोययौयत्रयुधिष्ठिरः ॥ अर्जुनश्चापिनृपतेर्दर्शनार्थंमहारणे ४२ याहियाहीतिगोविंदंमुहुर्मुहुरचोदयत् ॥ तांयुद्धभूमिंपार्थस्यदर्शयित्वाचमाधवः ४३ त्वरमाणस्ततःकृष्णःपार्थमाहशनैरिदम् ॥ पश्यपांडवराजानमुपयातांश्चपार्थिवान् ४४ कर्णंपश्यमहारंगेज्वलंतमिवपावकम् ॥ असौभीममहेष्वासःसन्निवृत्तोरणंप्रति ४५ तमेतेविनिवर्ततेधृष्टद्युम्नपुरोगमाः ॥ पंचालसृंजयानांचपांडवानांचयेमुखम् ४६ निवृत्तैश्चपुनःपार्थैर्भग्नंशत्रुबलंमहत् ॥ कौरवान्द्रवतोह्येषकर्णोरोधयतेऽर्जुन ४७ अंतकप्रतिमोवेगेशक्रतुल्यपराक्रमः ॥ असौगच्छतिकौरव्यद्रौणिःशस्त्रभृतांवरः ४८ तमेवप्रद्रुतंसंख्येधृष्टद्युम्नोमहारथः ॥ अनुप्रयातिसंग्रामेहतान्पश्यचसृंजयान् ४९ सर्वमाहसुदुर्धर्षोवासुदेवःकिरीटिने ॥ ततोराजन्महाघोरःप्रादुरासीन्महारणः ५०

३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५०

सिंहनादरवाश्चैवप्रादुरासन्समागमे ॥ उभयोःसेनयोराजन्मृत्युंकृत्वानिवर्तनम् ५१ एवमेषक्षयोवृत्तःपृथिव्यांपृथिवीपते ॥ तावकानांपरेषांचराजन्दुर्मंत्रिते तव ५२ ॥ इतिश्रीमहाभारतेकर्णपर्वणि वासुदेववाक्ये अष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ ॥ संजयउवाच ॥ ततःपुनःसमाजग्मुरभीताःकुरुसृंजयाः ॥ युधिष्ठिरमुखाःपार्थाःसूतपुत्रमुखावयम् १ ततःप्रववृतेभीमःसंग्रामोलोमहर्षणः ॥ कर्णस्यपांडवानांचयमराष्ट्रविवर्धनः २ तस्मिन्प्रवृत्तेसंग्रामेतुमुलेशोणितोदके ॥ संशप्तकेषुशूरेषुार्कींचीच्छिष्टेषुभारत ३ धृष्टद्युम्नोमहाराजसहितःसर्वराजभिः ॥ कर्णमेवाभिदुद्रावपांडवाश्चमहारथाः ४ आगच्छमानांस्तान्संख्ये प्रहृष्टान्विजयैषिणः ॥ दधारैकोरणेकर्णोजलौघानिवपर्वतः ५ समासाद्यतुतेकर्णंव्यशीर्यंतमहारथाः ॥ यथाऽचलंसमासाद्यवार्योघाःसर्वतोदिशम् ६ तयोरासीन्महाराजसंग्रामोलोमहर्षणः ॥ धृष्टद्युम्नस्तुराधेयंशरेणानतपर्वणा ७ ताडयामाससमरेतिष्ठतिष्ठेतिचाब्रवीत् ॥ विजयंचधनुःश्रेष्ठंविधुन्वानोमहारथः ८ पार्षतस्यधनुश्छित्त्वाशरांश्चाशीविषोपमान् ॥ ताडयामाससंक्रुद्धःपार्षतंनवभिःशरैः ९ तेवर्महेमविकृतंभित्त्वातस्यमहात्मनः ॥ शोणिताक्ताव्यराजंतशक्रगोपाइवानघ १० तदपास्यधनुश्छिन्नंधृष्टद्युम्नोमहारथः ॥ अथान्यद्धनुरादायशरांश्चाशीविषोपमान् ११ कर्णंविव्याधसप्तत्याशरैःसन्नतपर्वभिः ॥ तथैवराजन्कर्णोऽपिपार्षतंशत्रुतापनम् १२ छादयामाससमरेशरैराशीविषोपमैः ॥ द्रोणशत्रुर्महेष्वासोविव्याधनिशितैःशरैः १३ तस्यकर्णोमहाराजशरंकनकभूषणम् ॥ प्रेषयामाससंक्रुद्धोमृत्युदंडमिवापरम् १४ तमापतंतंसहसाघोररूपंविशांपते ॥ चिच्छेदशतधाराजञ्शैनेयःकृतहस्तवत् १५ दृष्ट्वाविनिहतंबाणंशरैःकर्णोविशांपते ॥ सात्यकिंशरवर्षेणसमंतात्पर्यवारयत् १६ विव्याधचैनंसमरेनाराचैस्तत्रसप्तभिः ॥ तंप्रत्यविध्यच्छैनेयःशरैर्हेमपरिष्कृतैः १७ ततोयुद्धंमहाराजचक्षुःश्रोत्रभयानकम् ॥ आसीद्घोरंचचित्रंचप्रेक्षणीयंसमंततः १८ सर्वेषांतत्रभूतानांलोमहर्षोऽभ्यजायत ॥ तद्दृष्ट्वासमरेकर्मकर्णशैनेययोर्नृप १९ एतस्मिन्नंतरेद्रौणिरभ्ययात्सुमहाबलम् ॥ पार्षतंशत्रुदमनंशत्रुवीर्यासुनाशनम् २० अभ्यभाषतसंक्रुद्धोद्रौणिःपरपुरंजयः ॥ तिष्ठतिष्ठाद्यब्रह्मघ्नमेजीवन्विमोक्ष्यसे २१ इत्युक्त्वासुभृशंवीरंशीघ्रकृन्निशितैःशरैः ॥ पार्षतंछादयामासघोररूपैःसुतेजनैः २२ यतमानंपरंशक्त्यायतमानोमहारथः ॥ यथाहिसमरेद्रोणःपार्षतंवीक्ष्यमारिष २३ तथाद्रौणिंरणेदृष्ट्वापार्षतःपरवीरहा ॥ नातिहृष्टमनाभूत्वामन्यतेमृत्युमात्मनः २४ सज्ञात्वासमरेऽऽत्मानंशस्त्रेणावध्यमेवतु ॥ जवेनाभ्याययौद्रौणिंकालःकालमिवक्षये २५ द्रौणिस्तुदृष्ट्वाराजेंद्रधृष्टद्युम्नमवस्थितम् ॥ क्रोधेननिःश्वसन्वीरःपार्षतंसमुपाद्रवत् २६ तावन्योन्यंतुदृष्ट्वैवसंरंभंजग्मतुःपरम् ॥ अथाब्रवीन्महाराजद्रोणपुत्रःप्रतापवान् २७ १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

२८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८

धृष्टद्युम्नंसमीपस्थंत्वरमाणोविशांपते ॥ पंचालापसदाद्यत्वांप्रेषयिष्यामिमृत्यवे २८ पापंहियत्त्वयाकर्मघ्नताद्रोणंपुराकृतम् ॥ अद्यत्वांतप्स्यतेतद्वैयथानकुशलंतथा २९ अरक्ष्यमाणःपार्थेनयदितिष्ठसिसंयुगे ॥ नापक्रामसिवामूढसत्यमेतद्ब्रवीमिते ३० एवमुक्तःप्रत्युवाचधृष्टद्युम्नःप्रतापवान् ॥ प्रतिवाक्यंसएवासिर्मामकोदास्यतेतव ३१ येनैवतेपितुर्दत्तंयतमानस्यसंयुगे ॥ यदितावन्मयाद्रोणोनिहतोब्राह्मणब्रुवः ३२ त्वामिदानींकथंयुद्धेनहनिष्यामिविक्रमात् ॥ एवमुक्त्वामहाराजसेनापतिरमर्षणः ३३ निशितेनातिबाणेनद्रौणिंविव्याधपार्षतः ॥ ततोद्रौणिःसुसंक्रुद्धःशरैःसंनतपर्वभिः ३४ आच्छदयद्दिशोराजन्धृष्टद्युम्नस्यसंयुगे ॥ नैवांतरिक्षंनदिशोनापियोधाःसमंततः ३५ दृश्यंतेवैमहाराजशरैश्छन्नाःसहस्रशः ॥ तथैवपार्षतोराजन्द्रौणिमाहवशोभिनं ३६ शरैःसंछादयामाससूतपुत्रस्यपश्यतः ॥ राधेयोऽपिमहाराजपंचालान्सहपांडवैः ३७ द्रौपदेयान्युधामन्युंसात्यकिंचमहारथम् ॥ एकःसंवारयामासप्रेक्षणीयःसमंततः ३८ धृष्टद्युम्नस्तुसमरेद्रौणेश्चिच्छेदकार्मुकम् ॥ तदपास्यधनुर्द्रौणिरन्यदादायकार्मुकम् ३९ वेगवान्समरेघोरेशरांश्चाशीविषोपमान् ॥ सपार्षतस्यराजेंद्रधनुःशक्तिंगदांध्वजम् ४० हयान्सूतंरथंचैवनिमेषाद्व्यधमच्छरैः ॥ सच्छिन्नधन्वाविरथोहताश्वोहतसारथिः ४१ खड्गमादत्तविपुलंशतचंद्रंचभानुमत् ॥ द्रौणिस्तदपिराजेंद्रभल्लैःक्षिप्रंमहारथः ४२ चिच्छेदसमरेवीरःक्षिप्रहस्तोदृढायुधः ॥ रथादनवरूढस्यतदद्भुतमिवाभवत् ४३ धृष्टद्युम्नंहिविरथंहताश्वंछिन्नकार्मुकम् ॥ शरैश्चबहुधाविद्धमस्त्रैश्चशकलीकृतम् ४४ नाशक्नुद्भरतश्रेष्ठयतमानोमहारथः ॥ तस्यांतमिषुभीराजन्यदाद्रौणिर्नजग्मिवान् ४५ अथत्यक्त्वाधनुर्वीरःपार्षतंत्वरितोऽन्वगात् ॥ आसीदाप्लवतोवेगस्तस्यराजन्महात्मनः ४६ गरुडस्येवपततोजिघृक्षोःपन्नगोत्तमं ॥ एतस्मिन्नेवकालेतुमाधवोऽर्जुनमब्रवीत् ४७ पश्यपार्थयथाद्रौणिःपार्षतस्यवधंप्रति ॥ यत्नंकरोतिविपुलंहन्याच्चैनंनसंशयः ४८ तंमोचयमहाबाहोपार्षतंशत्रुकर्शन ॥ द्रौणेरास्यमनुप्राप्तंमृत्योरास्यगतंयथा ४९ एवमुक्त्वामहाराजवासुदेवःप्रतापवान् ॥ प्रैषयत्तुरगांस्तत्रयत्रद्रौणिर्व्यवस्थितः ५० तेहयाश्चंद्रसंकाशाःकेशवेनप्रचोदिताः ॥ आपिबंतइवव्योमजग्मुर्द्रौणिरथंप्राति ५१ दृष्ट्वाऽऽयातौमहावीर्यावुभौकृष्णधनंजयौ ॥ धृष्टद्युम्नवधेयत्नंचक्रेराजन्महाबलः ५२ विकृष्यमाणंदृष्ट्वैवधृष्टद्युम्नंनरेश्वर ॥ शरांश्चिक्षेपवैपार्थोद्रौणिंप्रतिमहाबलः ५३ तेशराहेमविकृतागांडीवप्रेषिताभृशम् ॥ द्रौणिमासाद्यविविशुर्वल्मीकमिवपन्नगाः ५४ सविद्धस्तैःशरैर्घोरैर्द्रोणपुत्रःप्रतापवान् ॥ उत्सृज्यसमरेराजन्पांचाल्यममितौजसम् ५५ रथमारुरुहेवीरोधनंजयशरार्दितः ॥ प्रगृह्यचधनुःश्रेष्ठंपार्थंविव्याधसायकैः ५६ एतस्मिन्नंतरेवीरःसहदेवोजनाधिप ॥ अपोवाहरथेनाजौपार्षतंशत्रुतापनम् ५७

४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७

५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ ॥ इतिक० प० नी० भा० भा० ऊनषष्टितमोऽध्यायः ॥ ५९ ॥ एतस्मिन्निति १ । २ । ३ । ४ । ५ नरोत्तमंवदान्यं रत्नोत्तम

अर्जुनोऽपिमहाराजद्रौणिंविव्याधपत्रिभिः ॥ तंद्रोणपुत्रःसंक्रुद्धोबाह्वोरुरसिचार्पयत् ५८ क्रोधितस्तुरणेपार्थोनाराचंकालसंमितम् ॥ द्रोणपुत्रायचिक्षेपकाल दंडमिवापरम् ५९ ब्राह्मणस्यांसदेशेसनिपपातमहाद्युतिः ॥ सविह्वलोमहाराजशरवेगेनसंयुगे ६० निषसादरथोपस्थेवैक्लव्यंचपरंययौ ॥ ततःकर्णोमहाराजव्या क्षिपद्विजयंधनुः ६१ अर्जुनंसमरेक्रुद्धःप्रेक्षमाणोमुहुर्मुहुः ॥ द्वैरथंचापिपार्थेनकामयानोमहारणे ६२ विह्वलंतंतुवीक्ष्याथद्रोणपुत्रंचसारथिः ॥ अपोवाहरथेना जौत्वरमाणोरणाजिरात् ६३ अथोत्कुष्टंमहाराजपंचालैर्जितकाशिभिः ॥ मोक्षितंपार्षतंदृष्ट्वाद्रोणपुत्रंचपीडितम् ६४ वादित्राणिचदिव्यानिप्रावाद्यंतसहस्रशः ॥ सिंहनादांश्चचक्रुस्तेदृष्ट्वासंरब्ध्येतदद्भुतम् ६५ एवंकृत्वाऽब्रवीत्पार्थोवासुदेवंधनंजयः ॥ याहिसंशप्तकान्कृष्णकार्यमेतत्परंमम ६६ ततःप्रयातोदाशार्हःश्रुत्वापांड वभाषितम् ॥ रथेनातिपताकेनमनोमारुतरंहसा ६७ ॥ इतिश्रीम० भा० क० प० द्रौण्यपयानेऊनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥ संजयउवाच ॥ एत स्मिन्नंतरेकृष्णःपार्थंवचनमब्रवीत् ॥ दर्शयन्निवकौंतेयंधर्मराजंयुधिष्ठिरम् १ एषपांडवतेभ्राताधार्तराष्ट्रैर्महाबलैः ॥ जिघांसुभिर्महेष्वासैर्द्रुतंपार्थोऽनुसार्यते २ तंचानुयांतिसंरब्धाःपंचालायुद्धदुर्मदाः ॥ युधिष्ठिरंमहात्मानंपरीप्संतोमहाबलाः ३ एषदुर्योधनःपार्थरथानीकेनदंशितः ॥ राजासर्वस्यलोकस्यराजानमनुधा वति ४ जिघांसुःपुरुषव्याघ्रभ्रातृभिःसहितोबली ॥ आशीविषसमस्पर्शैःसर्वयुद्धविशारदैः ५ एतेजिघृक्षवोयांतिद्विपाश्वरथपत्तयः ॥ युधिष्ठिरंधार्तराष्ट्रानरोत्तम मिवार्थिनः ६ पश्यसात्वतभीमाभ्यांनिरुद्धाधिष्ठिताःपुनः ॥ जिहीर्षवोऽमृतंदैत्याःशक्राग्निभ्यामिवासकृत् ७ एतेबहुत्वात्त्वरिताःपुनर्गच्छंतिपांडवम् ॥ समुद्र मिववार्योघाःप्रावृट्कालेमहारथाः ८ नदंतःसिंहनादांश्चधमंतश्चापिवारिजान् ॥ बलवंतोमहेष्वासाविधुन्वंतोधनूंषिच ९ मृत्योर्मुखगतंमन्येकुंतीपुत्रंयुधिष्ठिरम् ॥ हुतमग्नौचकौंतेयंदुर्योधनवशंगतम् १० यथाविधमनीकंतुधार्तराष्ट्रस्यपांडव ॥ नास्यशक्रोऽपिमुच्येतसंप्राप्तोबाणगोचरम् ११ दुर्योधनस्यवीरस्यशरौघान्शीघ्र मस्यतः ॥ संक्रुद्धस्यांतकस्येवकोवेगंसंसहेद्रणे १२ दुर्योधनस्यवीरस्यद्रौणेःशारद्वतस्यच ॥ कर्णस्यचेषुवेगोवैपर्वतानपिशातयेत् १३ कर्णेनचकृतोराजाविमु खःशत्रुतापनः ॥ बलवाँल्लघुहस्तश्चकृतीयुद्धविशारदः १४ राधेयःपांडवश्रेष्ठंशक्तःपीडयितुंरणे ॥ सहितोधृतराष्ट्रस्यपुत्रैःशूरैर्महाबलैः १५ तस्यैभिर्युध्यमान स्यसंग्रामेसंशितात्मनः ॥ अन्यैरपिचपार्थस्यकृतंकर्ममहारथैः १६ उपवासकृशोराजाब्रह्मश्रेष्ठोभरतसत्तमः ॥ ब्राह्मेबलेस्थितोह्येषनक्षात्रेहिबलेविभुः १७ कर्णेनचा भियुक्तोऽयंभूपतिःशत्रुतापनः ॥ संशयंसमनुप्राप्तःपांडवोवैयुधिष्ठिरः १८

मितिपाठे कांचनं तद्धिउत्कृष्टानामध्येऽप्युत्तमम् ६ जिहीर्षवोयुधिष्ठिरंहर्तुमिच्छंतः निरुद्धाःसंतोऽपिअधिष्ठिताः ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ तस्ययुधिष्ठिरस्यकर्म कर्तव्यंपराजयाख्यंएभिर्दुर्योधनादिभिःकृतंनिष्पादितम् १६ तत्रहेतुः ब्राह्मेबलेक्षमायां क्षात्रेबलेनिष्ठुरत्वे १७ । १८

१९ । २० हतनाशयतेतिकर्णश्चोदयतीतिसंबंधः २१ स्थूणाकर्णोगंधर्वस्तस्यास्त्रंस्थूणाकर्णं गांधर्वेंद्रजालमयंतत् २२ निषेव्यश्चिकित्सकैराराध्यः सन्निषण्णइतिपाठेअवसन्नः २३ । २४ । २५

नजीवतिमहाराजोमन्येपार्थयुधिष्ठिरः ॥ यद्भीमसेनःसहतेसिंहनादममर्षणः १९ नर्दतांधार्तराष्ट्राणांपुनःपुनररिंदमः ॥ धमतांचमहाशंखान्संग्रामेजितकाशि नाम् २० युधिष्ठिरंपांडवेयंहंतेतिभरतर्षभ ॥ संचोदयत्यसौकर्णोधार्तराष्ट्रान्महाबलान् २१ स्थूणाकर्णेंद्रजालेनपार्थपाशुपतेनच ॥ प्रच्छादयंतिराजानंशस्त्रजा लैर्महारथाः २२ आतुरोहिकृतोराजासंनिषेव्यश्चभारत ॥ यथैनमनुवर्ततेपंचालाःसहपांडवैः २३ त्वरमाणास्त्वराकालेसर्वशस्त्रभृतांवराः ॥ मज्जंतमिवपाताले बलिनोऽप्युज्जिहीर्षवः २४ नकेतुर्दृश्यतेराज्ञःकर्णेननिहतःशरैः ॥ पश्यतोर्यमयोःपार्थसात्यकेश्चशिखंडिनः २५ धृष्टद्युम्नस्यभीमस्यशतानीकस्यवाविभो ॥ पं चालानांचसर्वेषांचेदीनांचैवभारत २६ एषकर्णोरणेपार्थपांडवानामनीकिनीम् ॥ शरैर्विध्वंसयतिवैनलिनीमिवकुंजरः २७ एतेद्रवंतिरथिनस्त्वदीयाःपांडुनंद न ॥ पश्यपश्ययथापार्थगच्छंत्येतेमहारथाः २८ एतेभारतमातंगाःकर्णेनाभिहताःशरैः ॥ आर्तनादान्विकुर्वाणाविद्रवंतिदिशोदश २९ रथानांद्रवतेवृंदमेतच्चै वसमंततः ॥ द्राव्यमाणंरणेपार्थकर्णेनामित्रकर्षिणा ३० हस्तिकक्ष्यांरणेपश्यचरंतींतत्रतत्रह ॥ रथस्थंसूतपुत्रस्यकेतुंकेतुमतांवर ३१ असौधावतिराधेयो भीमसेनरथंप्रति ॥ किरन्शरशतान्येवविनिघ्नंस्तववाहिनीम् ३२ एतान्पश्यचपंचालान्द्राव्यमाणान्महारथान् ॥ शक्रेणेवयथादैत्यान्हन्यमानान्महाहवे ३३ एषकर्णोरणेजित्वापंचालान्पांडुसृंजयान् ॥ दिशोविप्रेक्षतेसर्वास्त्वदर्थमितिमेमतिः ३४ पश्यपार्थधनुःश्रेष्ठंविकर्षन्साधुशोभते ॥ शत्रूंजित्वायथाशक्रोदेवसंघैःस मावृतः ३५ एतेनर्दंतिकौरव्यादृष्ट्वाकर्णस्यविक्रमम् ॥ त्रासयंतोरणेपांडून्सृंजयांश्चसमंततः ३६ एषसर्वात्मनापांडूंस्त्रासयित्वामहारणे ॥ अभिभाषतिराधेयः सर्वसैन्यानिमानद ३७ अभिद्रवतभद्रंवोद्रुतंद्रवतकौरवाः ॥ यथाजीवन्नवःकश्चिन्मुच्येतयुधिसृंजयः ३८ तथाकुरुतसंयत्तावयंयास्यामपृष्ठतः ॥ एवमुक्त्वागतो ह्येषपृष्ठतोविकिरञ्छरान् ३९ पश्यकर्णंरणेपार्थश्वेतच्छत्रविराजितम् ॥ उदयंपर्वतंयद्वच्छशांकेनाभिशोभितम् ४० पूर्णचंद्रनिकाशेनमूर्ध्निच्छत्रेणभारत ॥ ध्रियमाणेनसमरेश्रीमच्छतशलाकिना ४१ एषत्वांप्रेक्षतेकर्णःसकटाक्षंविशांपते ॥ उत्तमंजवमास्थायध्रुवमेष्यतिसंयुगे ४२ पश्यह्येनंमहाबाहोविधुन्वानंमह द्धनुः ॥ शरांश्चाशीविषाकारान्विसृजंतंमहारणे ४३ असौनिवृत्तोराधेयोदृश्यतेवानरध्वजम् ॥ प्रार्थयन्समरेपार्थत्वयासहपरंतप ४४ वधायचात्मनोऽभ्येतिदी प्तास्यंशलभोयथा ॥ कर्णमेकाकिनंदृष्ट्वारथानीकेनभारत ४५ रिरक्षिषुःसुसंवृत्तोधार्तराष्ट्रोनिवर्तते ॥ सर्वैःसहैभिर्दुष्टात्मावध्यतांचप्रयत्नतः ४६ त्वयायश श्चराज्यंचसुखंचोत्तममिच्छता ॥ अदीनयोर्विश्रुतयोर्युवयोर्योत्स्यमानयोः ४७

२६ । २७ । २८ । २९ । ३० हस्तिकक्ष्यांकेतुमितिसंबंधः ३१ ३२ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० छत्रेणोपलक्षितः ४१ । ४२ । ४३ प्रार्थयन्युद्धमितिशेषः ४४ । ४५ । ४६ युवयोः कर्णार्जुनयोः ४७

देवासुरेपार्थमृधेदेवदानवयोरिव ॥ पश्यंतुकौरवाःसर्वेतवपार्थपराक्रमम् ४८ त्वांचदृष्ट्वाऽतिसंरब्धंकर्णंचभरतर्षभ ॥ असौदुर्योधनःक्रुद्धोनोत्तरंप्रतिपद्यते ४९ आ
त्मानंचकृतात्मानंसमीक्ष्यभरतर्षभ ॥ कृतागसंचराधेयंधर्मात्मनियुधिष्ठिरे ॥ प्रतिपद्यस्वकौंतेयप्राप्तकालमनंतरम् ५० आर्यायुद्धेमतिंकृत्वाप्रत्येहिरथयूथपम्
पंचह्येतानिमुख्यानिरथानांरथसत्तम ५१ शतान्यायांतिसमरेबलिनांतिग्मतेजसाम् ॥ पंचनागसहस्राणिद्विगुणावाजिनस्तथा ५२ अभिसंहत्यकौंतेयपदाति
प्रयुतानिच ॥ अन्योन्यरक्षितंवीरबलंत्वामभिवर्तते ५३ द्रोणपुत्रंपुरस्कृत्यतच्छीघ्रंसंनिषूदय ॥ निकृत्यैतद्रथानीकंबलिनंलोकविश्रुतम् ५४ सूतपुत्रंमहेष्वा
संदर्शयात्मानमात्मना ॥ उत्तमंजवमास्थायप्रत्येहिभरतर्षभ ५५ असौकर्णःसुसंरब्धःपंचालानभिधावति ॥ केतुमस्यहिपश्यापिधृष्टद्युम्नरथंप्रति ५६ समुपैष्य
तिपंचालानितिमन्येपरंतप ॥ आचचक्षेप्रियंपार्थतवेदंभरतर्षभ ५७ राजाऽसौकुशलीश्रीमान्धर्मपुत्रोयुधिष्ठिरः ॥ असौभीमोमहाबाहुःसन्निवृत्तश्चमूमुखे ५८
वृतःसंजयसैन्येनशैनेयेनचभारत ॥ वध्यंतएतेसमरेकौरवानिशितैःशरैः ५९ भीमसेनेनकौंतेयपंचालैश्चमहात्मभिः ॥ सेनाहिधार्तराष्ट्रस्यविमुखाविक्षरद्व्रणा ६०
विप्रधावतिवेगेनभीमस्याभिहताशरैः ॥ विपन्नसस्यैवमहीरुधिरेणसमुक्षिता ६१ भारतीभरतश्रेष्ठसेनाकृपणदर्शना ॥ निवृत्तंपश्यकौंतेयभीमसेनंयुधांपतिम् ६२
आशीविषमिवक्रुद्धंद्रावयंतंवरूथिनीम् ॥ पीतरक्तासितसितास्ताराचंद्रार्कमंडिताः ६३ पताकाविप्रकीर्यंतेछत्राण्येतानिचार्जुन ॥ सौवर्णाराजताश्चैवतैजसाश्च
पृथग्विधाः ६४ केतवोऽभिनिपात्यंतेहस्त्यश्वंचप्रकीर्यते ॥ रथेभ्यःप्रपतंत्येतेरथिनोविगतासवः ६५ नानावर्णैर्हताबाणैःपंचालैरपलायिभिः ॥ निर्मनुष्यान्ग
जानश्वान्रथांश्चैवधनंजय ६६ समाद्रवंतिपंचालाधार्तराष्ट्रांस्तरस्विनः ॥ विमृद्नंतिनरव्याघ्राभीमसेनबलाश्रयात् ६७ बलंपरेषांदुर्द्धर्षास्त्यक्त्वाप्राणानरिंदम ॥
एतेनर्दंतिपंचालाध्मापयंतिचवारिजान् ६८ अभिद्रवंतिचरणेमृद्नंतःसायकैःपरान् ॥ पश्यस्वैषांचमाहात्म्यंपंचालाहिपराक्रमात् ६९ धार्तराष्ट्रान्विनिघ्नंतिक्रु
द्धाःसिंहाइवद्विपान् ॥ शस्त्रमाच्छिद्यशत्रूणांसायुधानांनिरायुधाः ७० तेनैवैतानमोघास्त्रानिघ्नंतिचनदंतिच ॥ शिरांस्येतानिपात्यंतेशत्रूणांबाहवोपिच ७१ र
थनागहयावीरायशस्याःसर्वएवच ॥ सर्वतश्चाभिपन्नैषाधार्तराष्ट्रीमहाचमूः ७२ पंचालैर्मानसादेत्यहंसैर्गंगेववेगितैः ॥ सुभृशंचपराक्रांताःपंचालानांनिवारणे ७३
कृपकर्णादयोवीराऋषभाणामिवर्षभाः ॥ भीमास्त्रेणसुनिर्भग्नान्धार्तराष्ट्रान्महारथान् ७४ धृष्टद्युम्नमुखावीराघ्नंतिशत्रून्सहस्रशः ॥ पंचालेष्वभिभूतेषुद्वि
षद्भिरपर्भीर्नदन् ७५ शत्रुपक्षमवस्कंद्यशरानस्यतिमारुतिः ॥ विषण्णभूयिष्ठतराधार्तराष्ट्रीमहाचमूः ७६ रथाश्चैतेसुवित्रस्ताभीमसेनभयार्दिताः ॥
पश्यभीमेननाराचैर्भिन्नानागाःपतंत्यमी ७७

वज्रिवज्राहतानीवशिखराणिधराभृताम् ॥ भीमसेनस्यनिर्विद्धाबाणैःसन्नतपर्वभिः ७८ स्वान्यनीकानिमृद्नंतोद्रवंत्येतेमहागजाः ॥ अभिजानीहिभीमस्यसिंह नादंसुदुःसहम् ७९ नदतोऽर्जुनसंग्रामेवीरस्यजितकाशिनः ॥ एषनैषादिरभ्येतिद्विपमुख्येनपांडवम् ८० जिघांसुस्तोमरैःक्रुद्धोदंडपाणिरिवांतकः ॥ सतोम रावस्यभुजौछिन्नौभीमेनगर्जतः ८१ तीक्ष्णैरग्निरविप्रख्यैर्नाराचैर्दशभिर्हतः ॥ हत्वैनंपुनरायातिनागानन्यान्प्रहारिणः ८२ पश्यनीलांबुदनिभान्महामात्रैरधि ष्ठितान् ॥ शक्तितोमरसंघातैर्विनिघ्नंतंवृकोदरम् ८३ सप्तसप्तचनागांस्तान्वैजयंतीश्वसध्वजाः ॥ निहत्यनिशितैर्बाणैश्छिन्नाःपार्थाग्रजेनते ८४ दशभिर्दशभि श्चैकोनाराचैर्निहतोगजः ॥ नचासौधार्तराष्ट्राणांश्रूयतेनिनदस्तथा ८५ पुरंदरसमेक्रुद्धेनिवृत्तेभरतर्षभ ॥ अक्षौहिण्यस्तथातिस्रोधार्तराष्ट्रस्यसंहताः ॥ क्रुद्धेन भीमसेनेननरसिंहेनवारिताः ८६ नशक्नुवंतिवैपार्थंपार्थिवाःसमुदीक्षितुम् ॥ मध्यंदिनगतंसूर्यंयथादुर्बलचक्षुषः ८७ एतेभीमस्यसंत्रस्ताःसिंहस्येवेतरेमृगाः ॥ शरैःसंत्रासिताःसंख्येनलभंतेसुखंक्वचित् ८८ ॥ संजयउवाच ॥ एतच्छ्रुत्वामहाबाहुर्वासुदेवाद्धनंजयः ॥ भीमसेनेनतत्कर्मकृतंदृष्ट्वासुदुष्करम् ८९ अर्जुनोव्य धमच्छिष्टानहितान्निशितैःशरैः ॥ तेवध्यमानाःसमरेसंशप्तकगणाःप्रभो ९० प्रभग्नाःसमरेभीतादिशोदशमहाबलाः ॥ शक्रस्यातिथितांगत्वाविशोकाह्यभवं स्तदा ९१ पार्थश्चपुरुषव्याघ्रःशरैःसन्नतपर्वभिः ॥ जघानधार्तराष्ट्रस्यचतुर्विधबलांचमूम् ९२ ॥ इतिश्रीमहाभारतेकर्णपर्वणि कृष्णार्जुनसंवादेषष्टितमो ऽध्यायः ॥ ६० ॥ ॥ धृतराष्ट्रउवाच ॥ निवृत्तेभीमसेनेचपांडवेचयुधिष्ठिरे ॥ वध्यमानेबलेचापिमामकेपांडुसृंजयैः १ द्रवमाणेबलौघेचनिरानंदेमुहुर्मुहुः ॥ किमकुर्वंतकुरवस्तन्ममाचक्ष्वसंजय २ ॥ संजयउवाच ॥ दृष्ट्वाभीमंमहाबाहुंसूतपुत्रःप्रतापवान् ॥ क्रोधरक्तेक्षणोराजन्भीमसेनमुपाद्रवत् ३ तावकंतुबलंदृष्ट्वा भीमसेनात्पराङ्मुखम् ॥ यत्नेनमहताराजन्पर्यवस्थापयद्बली ४ व्यवस्थाप्यमहाबाहुस्तवपुत्रस्यवाहिनीम् ॥ प्रत्युद्ययौतदाकर्णःपांडवान्युद्धदुर्मदान् ५ प्रत्यु द्ययुस्तुराधेयंपांडवानांमहारथाः ॥ धुन्वानाःकार्मुकाण्याजौविक्षिपंतश्चसायकान् ६ भीमसेनःशिनेर्नप्ताशिखंडीजनमेजयः ॥ धृष्टद्युम्नश्चबलवान्सर्वेचापिप्रभद्रकाः ७ जिघांसंतोनरव्याघ्राःसमंतात्तववाहिनीम् ॥ अभ्यद्रवंतसंक्रुद्धाःसमरेजितकाशिनः ८ तथैवतावकाराजन्पांडवानामनीकिनीम् ॥ अभ्यद्रवंतत्वरिताजिघांसं तोमहारथाः ९ रथनागाश्वकलिलंपत्तिध्वजसमाकुलम् ॥ बभूवपुरुषव्याघ्रसैन्यमद्भुतदर्शनम् १० शिखंडीचययौकर्णंधृष्टद्युम्नःसुतंतव ॥ दुःशासनंमहाराजमहत्या सेनयावृतम् ११ नकुलोवृषसेनंतुचित्रसेनंयुधिष्ठिरः ॥ उलूकंसमरेराजन्सहदेवःसमभ्ययात् १२ सात्यकिःशकुनिंचापिद्रौपदेयाश्चकौरवान् ॥ अर्जुनंचरणेयत्तो द्रोणपुत्रोमहारथः १३

युधामन्युंमहेष्वासंगौतमोऽभ्यपतद्रणे ॥ कृतवर्माचबलवानुत्तमौजसमाद्रवत् १४ भीमसेनःकुरून्सर्वान्पुत्रांश्चतवमारिष ॥ सहानीकान्महाबाहुरेकएवन्यवारयत् १५ शिखंडीतुततःकर्णंविचरंतमभीतवत् ॥ भीष्महंतामहाराजवारयामासपत्रिभिः १६ प्रतिरुद्धस्ततःकर्णोरोषात्प्रस्फुरिताधरः ॥ शिखंडिनंत्रिभिर्बाणैर्भ्रुवोर्मध्येऽभ्यताडयत् १७ धारयंस्तुसतान्बाणान्शिखंडीबह्वशोभत ॥ राजतःपर्वतोयद्वत्त्रिभिःशृंगैरिवोत्थितैः १८ सोऽतिविद्धोमहेष्वासःसूतपुत्रेणसंयुगे ॥ कर्णंविव्याधसमरेनवत्यानिशितैःशरैः १९ तस्यकर्णोहयान्हत्वासारथिंचत्रिभिःशरैः ॥ उन्ममाथध्वजंचास्यक्षुरप्रेणमहारथः २० हताश्वात्तुततोयानादवप्लुत्य महारथः ॥ शक्तिंचिक्षेपकर्णायसंक्रुद्धःशत्रुतापनः २१ तांछित्त्वासमरेकर्णस्त्रिभिर्भारतसायकैः ॥ शिखंडिनमथाविध्यन्नवभिर्निशितैःशरैः २२ कर्णचापच्युतान्बाणान्वर्जयंस्तुनरोत्तमः ॥ अपयातस्ततस्तूर्णंशिखंडीभृशविक्षतः २३ ततःकर्णोमहाराजपांडुसैन्यान्यशातयत् ॥ तूलराशिंसमासाद्ययथावायुर्महाबलः २४ धृष्टद्युम्नोमहाराजतवपुत्रेणपीडितः ॥ दुःशासनंत्रिभिर्बाणैःप्रत्यविध्यत्स्तनांतरे २५ तस्यदुःशासनोबाहुंसव्यंविव्याधमारिष ॥ सतेनरुक्मपुंखेनभल्लेनानतपर्वणा २६ धृष्टद्युम्नस्तुनिर्विद्धःशरंघोरममर्षणः ॥ दुःशासनायसंक्रुद्धःप्रेषयामासभारत २७ आपतंतंमहावेगंधृष्टद्युम्नसमीरितम् ॥ शरैश्चिच्छेदपुत्रस्तेत्रिभिरेवविशांपते २८ अथापरैःसप्तदशैर्भल्लैःकनकभूषणैः ॥ धृष्टद्युम्नंसमासाद्यबाह्वोरुरसिचार्पयत् २९ ततःसपार्षतःक्रुद्धोधनुश्चिच्छेदमारिष ॥ क्षुरप्रेणसुतीक्ष्णेनततउच्चुक्रुशुर्जनाः ३० अथान्यद्धनुरादायपुत्रस्तेप्रहसन्निव ॥ धृष्टद्युम्नंशरव्रातैःसमंतात्पर्यवारयत् ३१ तवपुत्रस्यतेदृष्ट्वाविक्रमंसुमहात्मनः ॥ व्यस्मयंतरणेयोधाःसिद्धाश्चाप्सरसांगणाः ३२ धृष्टद्युम्नंनपश्यामघटमानंमहाबलम् ॥ दुःशासनेनसंरुद्धंसिंहेनेवमहागजम् ३३ ततःसरथनागाश्वाःपंचालाःपांडुपूर्वज ॥ सेनापतिंपरीप्संतोरुरुधुस्तनयंतव ३४ ततःप्रववृतेयुद्धंतावकानांपरैःसह ॥ घोरंप्राणभृतांकालेभीमरूपंपरंतप ३५ नकुलंवृषसेनस्तुभित्त्वापंचभिरायसैः ॥ पितुःसमीपेतिष्ठन्वैत्रिभिरन्यैरविध्यत ३६ नकुलस्तुततःशूरोवृषसेनंहसन्निव ॥ नाराचेनसुतीक्ष्णेनविव्याधहृदयेभृशम् ३७ सोऽतिविद्धोबलवताशत्रुणाशत्रुकर्षण ॥ शत्रुंविव्याधविंशत्यासचतंपंचभिःशरैः ३८ ततःशरसहस्रेणताबुभौपुरुषर्षभौ ॥ अन्योन्यमाच्छादयतामथोऽभज्यतवाहिनी ३९ सदृष्ट्वाप्रद्रुतांसेनांधार्तराष्ट्रस्यसूतजः ॥ निवारयामासबलादनुसृत्यविशांपते ४० निवृत्तेतुततःकर्णेनकुलःकौरवान्ययौ ॥ कर्णपुत्रस्तुसमरेहित्वानकुलमेवतु ४१ जुगोपचक्रंत्वरितोराधेयस्यैवमारिष ॥ उलूकस्तुरणेक्रुद्धःसहदेवेनवारितः ४२ तस्याश्वांश्चतुरोहत्वासहदेवःप्रतापवान् ॥ सारथिंप्रेषयामासयमस्यसदनंप्रति ४३

उलूकस्तु ततो यानादवप्लुत्य विशांपते ॥ त्रिगर्तानां बलं तूर्णं जगाम पितृनंदनः ४४ सात्यकिः शकुनिं विद्ध्वा विंशत्या निशितैः शरैः ॥ ध्वजं चिच्छेद भल्लेन सौबलस्य हसन्निव ४५ सौबलस्तस्य समरे क्रुद्धो राजन्प्रतापवान् ॥ विदार्य कवचं भूयो ध्वजं चिच्छेद कांचनम् ४६ तथैनं निशितैर्बाणैः सात्यकिः प्रत्यविध्यत ॥ सारथिं च महाराज त्रिभिरेव समार्पयत् ४७ अथास्य वाहांस्त्वरितः शरैर्निन्ये यमक्षयम् ॥ ततोऽवप्लुत्य सहसा शकुनिर्भरतर्षभ ४८ आरुरोह रथं तूर्णमुलूकस्य महात्मनः ॥ अपोवाहाथ शीघ्रं स शैनेयाद्युद्धशालिनः ४९ सात्यकिस्तु रणे राजंस्तावकानामनीकिनीम् ॥ अभिदुद्राव वेगेन ततोऽनीकमभज्यत ५० शैनेयशरसंछन्नं तव सैन्यं विशांपते ॥ भेजे दश दिशस्तूर्णं न्यपतच्च गतासुवत् ५१ भीमसेनं तव सुतो वारयामास संयुगे ॥ तं तु भीमो मुहूर्तेन व्यश्वसूतरथध्वजम् ५२ चक्रे लोकेश्वरं तत्र तेनातुष्यंत वै जनाः ॥ ततोऽपायान्नृपस्तत्र भीमसेनस्य गोचरात् ५३ कुरुसैन्यं ततः सर्वं भीमसेनमुपाद्रवत् ॥ तत्र नादो महानासीद्भीमसेनं जिघांसताम् ५४ युधामन्युः कृपं विद्ध्वा धनुरस्याशु चिच्छिदे ॥ अथान्यद्धनुरादाय कृपः शस्त्रभृतां वरः ५५ युधामन्योर्ध्वजं सूतं छत्रं चापातयत्क्षितौ ॥ ततोऽपायाद्रथेनैव युधामन्युर्महारथः ५६ उत्तमौजाश्च हार्दिक्यं भीमं भीमपराक्रमम् ॥ छादयामास सहसा मेघो वृष्ट्येव पर्वतम् ५७ तद्युद्धमासीत्सुमहद्घोररूपं परंतप ॥ यादृशं न मया युद्धं दृष्टपूर्वं विशांपते ५८ कृतवर्मा ततो राजन्नुत्तमौजसमाहवे ॥ हृदि विव्याध सहसा रथोपस्थ उपाविशत् ५९ सारथिस्तमपोवाह रथेन रथिनां वरम् ॥ कुरुसैन्यं ततः सर्वं भीमसेनमुपाद्रवत् ६० दुःशासनः सौबलश्च गजानीकेन पांडवम् ॥ महता परिवार्यैव क्षुद्रकैरभ्यताडयत् ६१ ततो भीमः शरशतैर्दुर्योधनममर्षणम् ॥ विमुखीकृत्य तरसा गजानीकमुपाद्रवत् ६२ तमापतंतं सहसा गजानीकं वृकोदरः ॥ दृष्ट्वैव सुभृशं क्रुद्धो दिव्यमस्त्रमुदैरयत् ६३ गजैर्गजानभ्यहनद्वज्रेणेंद्र इवासुरान् ॥ ततोंऽतरिक्षं बाणौघैः शलभैरिव पादपम् ६४ छादयामास समरे गजान्निघ्नन्वृकोदरः ॥ ततः कुंजरयूथानि समेतानि सहस्रशः ६५ व्यधमत्तरसा भीमो मेघसंघानिवानिलः ॥ सुवर्णजालापिहिता मणिजालैश्च कुंजराः ६६ रेजुरभ्यधिकं संख्ये विद्युत्वंत इवांबुदाः ॥ ते वध्यमाना भीमेन गजा राजन्विदुद्रुवुः ६७ केचिद्विभिन्नहृदयाः कुंजरा न्यपतन्भुवि ॥ पतितैर्निपतद्भिश्च गजैर्हेमविभूषितैः ६८ अशोभत मही तत्र विशीर्णैरिव पर्वतैः ॥ दीप्ताभै रत्नवद्भिश्च पतितैर्गजयोधिभिः ६९ रराज भूमिः पतितैः क्षीणपुण्यैरिव ग्रहैः ॥ ततो भिन्नकटा नागा भिन्नकुंभकरास्तथा ७० दुद्रुवुः शतशः संख्ये भीमसेनशराहताः ॥ केचिद्वमंतो रुधिरं भयार्ताः पर्वतोपमाः ७१ व्यद्रवञ्छरविद्धांगा धातुचित्रा इवाचलाः ॥ महाभुजगसंकाशौ चंदनागुरुरूषितौ ७२ अपश्यं भीमसेनस्य धनुर्विक्षिपतो भुजौ ॥ तस्य ज्यातलनिर्घोषं श्रुत्वाऽशनिसमस्वनम् ७३

७४ ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपेएकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ ७ ॥ ॥ ततइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३

विमुंचंतःशकृन्मूत्रंगजाःप्राद्रुदुवुर्भृशम् ॥ भीमसेनस्यतत्कर्मराजन्नेकस्यधीमतः ॥ निघ्नतःसर्वभूतानिरुद्रस्येवचनिर्बभौ ७४ ॥ इतिश्रीमहाभारतेकर्णपर्वणि संकुलयुद्धेएकषष्टितमोऽध्यायः ॥ ६१ ॥ संजयउवाच ॥ ततःश्वेताश्वसंयुक्तेनारायणसमाहिते ॥ तिष्टन्रथवरेश्रीमानर्जुनःसमपद्यत १ तद्बलंनृपतिश्रेष्टतावकंवि जयोरणे ॥ व्यक्षोभयदुदीर्णाश्वंमहोदधिमिवानिलः २ दुर्योधनस्तवसुतःप्रमत्तेश्वेतवाहने ॥ अभ्येत्यसहसाक्रुद्धःसैन्यार्धेनाभिसंवृतः ३ पर्यवारयदायांतंयुधिष्ठिरम मर्षणम् ॥ क्षुरप्राणांत्रिसप्तत्याततोऽविध्यतपांडवं ४ अक्रुध्यतभृशंतत्रकुंतीपुत्रोयुधिष्ठिरः ॥ सभल्लांस्त्रिंशतस्तूर्णंतवपुत्रेन्यवेशयत् ५ ततोऽधावंतकौरव्याजिघृक्षं तोयुधिष्टिरं ॥ दुष्टभावान्परान्ज्ञात्वासमवेतामहारथाः ६ आजग्मुस्तंपरीप्संतःकुंतीपुत्रंयुधिष्टिरं ॥ नकुलःसहदेवश्चधृष्टद्युम्नश्चपार्षतः ७ अक्षौहिण्यापरिवृता स्तेऽभ्यधावन्युधिष्टिरं ॥ भीमसेनश्चसमरेमृद्नंस्तवमहारथान् ८ अभ्यधावदभिप्रेप्सूराजानंशत्रुभिर्वृतम् ॥ तांस्तुसर्वान्महेष्वासान्वैकर्तनोनृप ९ शरवर्षे णमहताप्रत्यवारयदागतान् ॥ शरौघान्विसृजंतस्तेप्रेरयंतश्चतोमरान् १० नशेकुर्यत्नवंतोऽपिराधेयंप्रतिवीक्षितुं ॥ तांश्चसर्वान्महेष्वासान्सर्वशस्त्रास्त्रपारगः ११ महताशरवर्षेणराधेयःप्रत्यवारयत् ॥ दुर्योधनंचविंशत्याशीघ्रमस्त्रमुदीरयन् १२ अविध्यत्तूर्णमभ्येत्यसहदेवःप्रतापवान् ॥ सविद्धःसहदेवेनरराजाचलसन्निभः १३ प्रभिन्नइवमातंगोरुधिरेणपरिप्लुतः ॥ दृष्ट्वातवसुतंतत्रगाढविद्धंसुतेजनैः १४ अभ्यधावद्दृढंक्रुद्धोराधेयोरथिनांवरः ॥ दुर्योधनंतथादृष्ट्वाशीघ्रमस्त्रमुदैरयत् १५ तेनयौधिष्टिरंसैन्यमवधीत्पार्षतंतथा ॥ ततोयौधिष्टिरंसैन्यंवध्यमानंमहात्मना १६ सहसाप्राद्रवद्राजन्सूतपुत्रशरार्दितम् ॥ विविधाविशिखास्तत्रसंपतंतः परस्परम् १७ फलैःपुंखान्समाजघ्नुःसूतपुत्रधनुश्च्युताः ॥ अंतरिक्षेशरौघाणांपततांचपरस्परम् १८ संघर्षेणमहाराजपावकःसमजायत ॥ ततोदशदिशः कर्णःशलभैरिवयायिभिः १९ अभ्यघ्नंस्तरसाराजन्शरैःपरशरीरगैः ॥ रक्तचंदनसंदिग्धौमणिहेमविभूषितौ २० बाहूव्यत्यक्षिपत्कर्णःपरमास्त्रंविदर्शयन् ॥ ततःसर्वादिशोराजन्सायकैर्विप्रमोहयन् २१ अपीडयद्भृशंकर्णोधर्मराजंयुधिष्ठिरम् ॥ ततःक्रुद्धोमहाराजधर्मपुत्रोयुधिष्ठिरः २२ निशितैरिषुभिःकर्णंपंचाशद्भिः समार्पयत् ॥ बाणांधकारमभवत्तद्युद्धंघोरदर्शनम् २३ हाहाकारोमहानासीत्तावकानांविशांपते ॥ वध्यमानेतदासैन्येधर्मपुत्रेणमारिष २४ सायकैर्विविधैस्तीक्ष्णैः कंकपत्रैःशिलाशितैः ॥ भल्लैरनेकैर्विविधैःशक्त्यृष्टिमुसलैरपि २५ यत्रयत्रसधर्मात्मादुष्टांदृष्टिंव्यसर्जयत् ॥ तत्रतत्रव्यशीर्यंततावकाभरतर्षभ २६ कर्णोऽपिभृश संक्रुद्धोधर्मराजंयुधिष्ठिरम् ॥ नाराचैरर्धचंद्रैश्चवत्सदंतैश्चसंयुगे २७ अमर्षीक्रोधनश्चैवरोषप्रस्फुरिताननः ॥ सायकैरप्रमेयात्मायुधिष्ठिरमभिद्रवत् २८

१४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८

युधिष्ठिरश्चापिसतंस्वर्णपुंखैःशितैःशरैः ॥ प्रहसन्निवतंकर्णःकंकपत्रैःशिलाशितैः २९ उरस्यविध्यद्राजानंत्रिभिर्भल्लैश्चपांडवम् ॥ सपीडितोभृशंतेनधर्मराजो युधिष्ठिरः ३० उपविश्यरथोपस्थेसूतंयाहीत्यचोदयत् ॥ अक्रोशंततःसर्वेधार्तराष्ट्राःसराजकाः ३१ गृह्णीध्वमितिराजानमभ्यधावंतसर्वशः ॥ ततःशताः सप्तदशकेकयानांप्रहारिणाम् ३२ पंचालैःसहिताराजन्धार्तराष्ट्रान्न्यवारयन् ॥ तस्मिन्सुतुमुलेयुद्धेवर्तमानेजनक्षये ३३ दुर्योधनश्चभीमश्चसमेयातांमहाबलौ ३४ ॥ इतिश्रीमहाभारतेकर्णपर्वणि संकुलयुद्धेद्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ संजयउवाच ॥ कर्णोऽपिशरजालेनकेकयानांमहारथान् ॥ व्यधमत्प रमेष्वासानग्रतःपर्यवस्थितान् १ तेषांप्रयतमानानांराधेयस्यनिवारणे ॥ रथान्पंचशतान्कर्णःप्राहिणोद्यमसादनम् २ अविषह्यंततोदृष्ट्वाराधेयंयुधियोधि नः ॥ भीमसेनमुपागच्छन्कर्णबाणप्रपीडिताः ३ रथानीकंविदार्यैवशरजालैरनेकधा ॥ कर्णएकरथेनैवयुधिष्ठिरमुपाद्रवत् ४ सेनानिवेशमार्छंतंमार्गणैःक्षत विक्षतम् ॥ यमयोर्मध्यगंवीरंशनैर्यांतंविचेतसम् ५ समासाद्यतुराजानंदुर्योधनहितेप्सया ॥ सूतपुत्रस्त्रिभिस्तीक्ष्णैर्विव्याधपरमेषुभिः ६ तथैवराजाराधेयं प्रत्यविध्यत्स्तनांतरे ॥ शरैस्त्रिभिश्चयंतारंचतुर्भिश्चतुरोहयान् ७ चक्ररक्षौतुपार्थस्यमाद्रीपुत्रौपरंतपौ ॥ तावप्यधावतांकर्णंराजानंमावधीरिति ८ तौपृथक्श रवर्षाभ्यांराधेयमभ्यवर्षताम् ॥ नकुलःसहदेवश्चपरमंयत्नमास्थितौ ९ तथैवतौप्रत्यविध्यत्सूतपुत्रःप्रतापवान् ॥ भल्लाभ्यांशितधाराभ्यांमहात्मानावरिंदमौ १० दंतवर्णांस्तुराधेयोनिजघानमनोजवान् ॥ युधिष्ठिरस्यसंग्रामेकालवालान्हयोत्तमान् ११ ततोऽपरेणभल्लेनशिरस्त्राणमपातयत् ॥ कौंतेयस्यमहेष्वासःप्रहसन्निव सूतजः १२ तथैवनकुलस्यापिहयान्हत्वाप्रतापवान् ॥ ईषांधनुश्चचिच्छेदमाद्रीपुत्रस्यधीमतः १३ तौहताश्वौहतरथौपांडवौभृशविक्षतौ ॥ भ्रातरावारुरुह तुःसहदेवरथंतदा १४ तौदृष्ट्वामातुलस्तत्रविरथौपरवीरहा ॥ अभ्यभाषतराधेयंमद्रराजोऽनुकंपया १५ योद्धव्यमद्यपार्थेनफाल्गुनेनत्वयासह ॥ किमर्थंध र्मराजेनयुध्यसेभृशरोषितः १६ क्षीणशस्त्रास्त्रकवचःक्षीणबाणोविबाणधिः ॥ श्रांतसारथिवाहश्चच्छन्नोऽस्त्रैररिभिस्तथा १७ पार्थमासाद्यराधेयउपहास्योभवि ष्यसि ॥ एवमुक्तोऽपिकर्णस्तुमद्रराजेनसंयुगे १८ तथैवकर्णःसंरब्धोयुधिष्ठिरमताडयत् ॥ शरैस्तीक्ष्णैःपराविध्यमाद्रीपुत्रौचपांडवौ १९ प्रहस्यसमरेकर्ण श्चकारविमुखंशरैः ॥ ततःशल्यःप्रहस्येदंकर्णंपुनरुवाचह २० रथस्थमतिसंरब्धंयुधिष्ठिरवधेधृतं ॥ यदर्थंधार्तराष्ट्रेणसततंमानितोभवान् २१ तंपार्थंजहिरा धेयकिंतेहत्वायुधिष्ठिरम् ॥ शंखयोर्ध्मायतोःशब्दःसुमहानेषकृष्णयोः २२ श्रूयतेचापघोषोऽयंप्रावृषीवांबुदस्यह ॥ असौनिघ्नन्रथोदारानर्जुनःशरवृष्टिभिः २३

२४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपे त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ ७ ॥ ॥ ७ ॥



सर्वांग्रसतिनःसेनांकर्णपश्यैनमाहवे ॥ पृष्ठरक्षौचशूरस्ययुधामन्यूत्तमौजसौ २४ उत्तरंचास्यवैशूरश्चक्रंरक्षतिसात्यकिः ॥ धृष्टद्युम्नस्तथाचास्यचक्रंरक्षातिदाक्षिणम् २५ भीमसेनश्चवैराज्ञाधार्तराष्ट्रेणयुध्यते ॥ यथानहन्यात्तंभीमःसर्वेषांनोऽद्यपश्यताम् २६ तथाराधेयक्रियतांराजामुच्येतनोयथा ॥ पश्यैनंभीमसेनेनग्रस्तमाहवशोभीनम् २७ यदित्वाऽऽसाद्यमुच्येतविस्मयःसुमहान्भवेत् ॥ परित्राह्येनमभ्येत्यसंशयंपरमंगतम् ॥ किंनुमाद्रीसुतौहत्वाराजानंचयुधिष्ठिरम् २८ इतिशल्यवचःश्रुत्वाराधेयःपृथिवीपते ॥ दृष्ट्वादुर्योधनंचैवभीमग्रस्तंमहाहवे २९ राजगृद्धीभृशंचैवशल्यवाक्यप्रचोदितः ॥ अजातशत्रुमुत्सृज्यमाद्रीपुत्रौचपांडवौ ३० तवपुत्रंपरित्रातुमभ्यधावतवीर्यवान् ॥ मद्रराजप्रणुदितैरश्वैराकाशगैरिव ३१ गतेकर्णेतुकौंतेयःपांडुपुत्रोयुधिष्ठिरः ॥ अपायाज्जवनैरश्वैःसहदेवश्चमारिष ३२ ताभ्यांससहितस्तूर्णंव्रीडन्निवनरेश्वरः ॥ प्राप्यसेनानिवेशंचमार्गणैःक्षतविक्षतः ३३ अवतीर्णोरथात्तूर्णमाविशच्छयनंशुभम् ॥ अपनीतशल्यसुभृशंहृच्छल्याभिनिपीडितः ३४ सोऽब्रवीद्भ्रातरौराजामाद्रीपुत्रौमहारथौ ॥ अनीकंभीमसेनस्यपांडवावाशुगच्छताम् ३५ जीमूतइवनर्दंस्तुयुध्यतेसवृकोदरः ॥ ततोऽन्यंरथमास्थायनकुलोरथपुंगवः ३६ सहदेवश्वतेजस्वीभ्रातरौशत्रुकर्षणौ ॥ तुरगैरग्र्यरंहोभिर्यात्वाभीमस्यशुष्मिणौ ॥ अनीकैःसहितौतत्रभ्रातरौसमवस्थितौ ३७ ॥ इतिश्रीमहाभारतेकर्णपर्वणिधर्मापयानेत्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ द्रौणिस्तुरथवंशेनमहतापरिवारितः ॥ अपतत्सहसाराजन्यत्रपार्थोऽव्यवस्थितः १ तमापतंतंसहसाशूरःशौरिसहायवान् ॥ दधारसहसापार्थोवेलेवमकरालयम् २ ततःक्रुद्धोमहाराजद्रोणपुत्रःप्रतापवान् ॥ अर्जुनंवासुदेवंचच्छादयामाससायकैः ३ अवच्छन्नौततःकृष्णौदृष्ट्वातत्रमहारथः ॥ विस्मयंपरमंगत्वाप्रैक्षंतकुरवस्तदा ४ अर्जुनस्तुततोदिव्यमस्त्रंचक्रेहसन्निव ॥ तदस्त्रंवारयामासब्राह्मणोयुधिभारत ५ यद्यद्धिव्याक्षिपद्युद्धेपांडवोऽस्त्रजिघांसया ॥ तत्तदस्त्रंमहेष्वासोद्रोणपुत्रोव्यशानयत् ६ अस्त्रयुद्धेततोराजन्वर्तमानेमहाभये ॥ अपश्यामरणेद्रौणिंव्यात्ताननमिवांतकम् ७ सदिशःप्रदिशश्चैवच्छादयित्वाजिह्मगैः ॥ वासुदेवंत्रिभिर्बाणैरविध्यद्दक्षिणेभुजे ८ ततोऽर्जुनोहयान्हत्वासर्वांस्तस्यमहात्मनः ॥ चकारसमरेभूमिंशोणितौघतरंगिणीम् ९ सर्वलोकवहांरौद्रांपरलोकवहांनदीम् ॥ सरथात्रथिनःसर्वान्पार्थचापच्युतैःशरैः १० द्रौणेरपहतान्संख्येददृशुःसचतांतथा ॥ प्रावर्तयन्महाघोरांनदींपरवहांतदा ११ तयोस्तुव्याकुलेयुद्धेद्रौणेःपार्थस्यदारुणे ॥ अमर्यादंयोधयंतःपर्यधावंतपृष्ठतः १२ रथैर्हताश्वसूतैश्चहतारोहैश्चवाजिभिः ॥ द्विरदैश्चहतारोहैर्महामात्रैर्हतद्विपैः १३



द्रौणिरिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ द्रौणेःसंबंधिनोरथिनःशरैरपहतान्ददृशुरित्युत्तरश्लोकेनसंबंधः लोकाइतिशेषः १० । ११ । १२ । १३

१४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२

पार्थेनसमरेराजन्कृतोघोरोजनक्षयः ॥ निहताराथिनःपेतुःपार्थचापच्युतैःशरैः १४ हयाश्वपर्यधावंतमुक्तयोक्त्रास्ततस्ततः ॥ तदृष्ट्वाकर्मपार्थस्यद्रौणिराहव
शोभिनः १५ अर्जुनंजयतांश्रेष्ठंत्वरितोऽभ्येत्यवीर्यवान् ॥ विधुन्वानोमहच्चापंकार्तस्वरविभूषितम् १६ अवाकिरत्ततोद्रौणिःसमंतान्निशितैःशरैः ॥ भूयोऽर्जु
नंमहाराजद्रौणिरायम्यपत्रिणा १७ वक्षोदेशेभृशंपार्थंताडयामासनिर्दयम् ॥ सोऽतिविद्धोरणेतेनद्रोणपुत्रेणभारत १८ गांडीवधन्वाप्रसभंशरवर्षैरुदारधीः ॥
संछाद्यसमरेद्रौणिंचिच्छेदास्यचकार्मुकम् १९ सच्छिन्नधन्वापरिघंवज्रस्पर्शसमंयुधि ॥ आदायचिक्षेपतदाद्रोणपुत्रःकिरीटिने २० तमापतंतंपरिघंजां
बूनदपरिष्कृतम् ॥ चिच्छेदसहसाराजन्प्रहसन्निवपांडवः २१ सपपाततदाभूमौनिकृत्तःपार्थसायकैः ॥ विकीर्णःपर्वतोराजन्यथावज्रेणताडितः २२ ततःक्रु
द्धोमहाराजद्रोणपुत्रोमहारथः ॥ ऐंद्रेणचास्त्रवेगेनबीभत्सुंसमवाकिरत् २३ तस्येंद्रजालावततंसमीक्ष्यपार्थोराजन्गांडिवमाददेसः ॥ ऐंद्रंजालंप्रत्यहरत्तरस्वी
वरास्त्रमादायमहेंद्रसृष्टम् २४ विदार्यतज्जालमथेंद्रमुक्तंपार्थस्ततोद्रौणिरथंक्षणेन ॥ प्रच्छादयामासततोऽभ्युपेत्यद्रौणिस्तदापार्थशराभिभूतः २५ विगा
ह्यतांपांडवबाणवृष्टिंशरैःपरंनामततःप्रकाश्य ॥ शतेनकृष्णंसहसाऽभ्यविद्धत्त्रिभिःशतैरर्जुनंक्षुद्रकाणाम् २६ ततोऽर्जुनःसायकानांशतेनगुरोःसुतंमर्मसु
निर्बिभेद ॥ अश्वांश्वसूतंचतथाधनुर्ज्यामवाकिरत्पश्यतांतावकानाम् २७ सविद्ध्वामर्मसुद्रौणिंपांडवःपरवीरहा ॥ सारथिंचास्यभल्लेनरथनीडादपातयत्
२८ ससंगृह्यस्वयंवाहान्कृष्णौप्राच्छादयच्छरैः ॥ तत्राद्भुतमपश्यामद्रौणेराशुपराक्रमम् २९ प्रायच्छत्तुरगान्यच्चफाल्गुनंचाप्ययोधयत् ॥ तदस्यसमरेरा
जन्सर्वेयोधाअपूजयन् ३० ततःप्रहस्यबीभत्सुर्द्रोणपुत्रस्यसंयुगे ॥ क्षिप्रंरश्मीनथाश्वानांक्षुरप्रैश्चिच्छिदेजयः ३१ प्राद्रवंस्तुरगास्तेतुशरवेगप्रपीडिताः ॥
ततोऽभून्निनदोघोरस्तवसैन्यस्यभारत ३२ पांडवास्तुजयंलब्ध्वातवसैन्यंसमाद्रवन् ॥ समंतान्निशितान्बाणान्विमुंचंतोजयैषिणः ३३ पांडवैस्तुमहाराज
धार्तराष्ट्रीमहाचमूः ॥ पुनःपुनरथोवीरैःसंयुगेजितकाशिभिः ३४ पश्यतांतेमहाराजपुत्राणांचित्रयोधिनाम् ॥ शकुनेःसौबलेयस्यकर्णस्यचविशांपते ३५
वार्यमाणामहासेनापुत्रैस्तवजनेश्वर ॥ नचातिष्ठतसंग्रामेपीड्यमानासमंततः ३६ ततोयोधैर्महाराजपलायद्भिःसमंततः ॥ अभवद्व्याकुलंभीतंपुत्राणांतेमहद्ब
लम् ३७ तिष्ठतिष्ठेतिचततःसूतपुत्रस्यजल्पतः ॥ नावतिष्ठतिसासेनावध्यमानामहात्मभिः ३८ अथोत्क्रुष्टंमहाराजपांडवैर्जितकाशिभिः ॥ धार्तराष्ट्रबलं
दृष्ट्वाविद्रुतंवैसमंततः ३९ ततोदुर्योधनःकर्णमब्रवीत्प्रणयादिव ॥ पश्यकर्णमहासेनापंचालैरर्दिताभृशम् ४० त्वयितिष्ठतिसंत्रासात्पलायनपरायणा ॥ एत
ज्ज्ञात्वामहाबाहोकुरुप्राप्तमरिंदम ४१ सहस्राणिचयोधानांत्वामेवपुरुषोत्तम ॥ क्रोशंतिसमरेवीरद्राव्यमाणानिपांडवैः ४२

॥६३॥

४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ कर्णंप्रतिलक्षीकृत्यपलायितुंनपश्यामिनिषिद्धत्वात् ६३

एतच्छ्रुत्वाऽपिराधेयोदुर्योधनवचोमहान् ॥ मद्रराजमिदंवाक्यमब्रवीत्प्रहसन्निव ४३ पश्यमेभुजयोर्वीर्यमस्त्राणांचजनेश्वर ॥ अद्यहन्मिरणेसर्वान्पंचालान्पांडुभिःसह ४४ वाहयाश्वान्नरव्याघ्रभद्रेणैवनसंशयः ॥ एवमुक्त्वामहाराजसूतपुत्रःप्रतापवान् ४५ प्रगृह्यविजयंवीरोधनुःश्रेष्ठंपुरातनम् ॥ सज्यंकृत्वामहाराजसंगृह्यचपुनःपुनः ४६ सन्निवार्यचयोधान्ससत्येनशपथेनच ॥ प्रायोजयदमेयात्माभार्गवास्त्रंमहाबलः ४७ ततोराजन्सहस्राणिप्रयुतान्यर्बुदानिच ॥ कोटिशश्चशरास्तीक्ष्णानिरगच्छन्महामृधे ४८ ज्वलितैस्तैःशरैर्घोरैःकंकबर्हिणवाजितैः ॥ संछन्नापांडवीसेनानप्राज्ञायतकिंचन ४९ हाहाकारोमहानासीत्पंचालानांविशांपते ॥ पीडितानांबलवताभार्गवास्त्रेणसंयुगे ५० निपतद्भिर्गजैराजन्नश्वैश्चापिसहस्रशः ॥ रथैश्चापिनरव्याघ्रनरैश्चैवसमंततः ५१ प्राकंपतमहीराजन्निहतैस्तैःसमंततः ॥ व्याकुलंसर्वमभवत्पांडवानांमहद्बलम् ५२ कर्णस्त्वेकोयुधांश्रेष्ठोविधूमइवपावकः ॥ दहन्शत्रून्नरव्याघ्रशुशुभेसपरंतपः ५३ तेवध्यमानाःकर्णेनपंचालाश्चेदिभिःसह ॥ तत्रतत्रव्यमुह्यंतवनदाहेयथाद्विपाः ५४ चुक्रुशुश्चनरव्याघ्रयथाव्याघ्रानरोत्तमाः ॥ तेषांतुक्रोशतामासीद्भीतानांरणमूर्द्धनि ५५ धावतांचततोराजंस्त्रस्तानांचसमंततः ॥ आर्तनादोमहांस्तत्रभूतानामिवसंप्लवे ५६ वध्यमानांस्तुतान्दृष्ट्वासूतपुत्रेणमारिष ॥ वित्रेसुःसर्वभूतानितिर्यग्योनिगतान्यपि ५७ तेवध्यमानाःसमरेसूतपुत्रेणसृंजयाः ॥ अर्जुनंवासुदेवंचक्रोशंतिचमुहुर्मुहुः ५८ प्रेतराजपुरेयद्वत्प्रेतराजंविचेतसः ॥ श्रुत्वातुनिनदंतेषांवध्यतांकर्णसायकैः ५९ अथाब्रवीद्वासुदेवंकुंतीपुत्रोधनंजयः ॥ भार्गवास्त्रंमहाघोरंदृष्ट्वातत्रसमीरितम् ६० पश्यकृष्णमहाबाहोभार्गवास्त्रस्यविक्रमम् ॥ नैतदस्त्रंहिसमरेशक्यंहंतुंकथंचन ६१ सूतपुत्रंचसंरब्धंपश्यकृष्णमहारणे ॥ अंतकप्रतिमंवीर्येकुर्वाणंकर्मदारुणम् ६२ अभीक्ष्णंचोदयन्नश्वान्प्रेक्षतेमांमुहुर्मुहुः ॥ नचपश्यामिसमरेकर्णंप्रतिपलायितुम् ६३ जीवन्प्राप्नोतिपुरुषःसंख्येजयपराजयौ ॥ मृतस्यतुहृषीकेशभंगएवकुतोजयः ६४ एवमुक्तस्तुपार्थेनकृष्णोमतिमतांवरम् ॥ धनंजयमुवाचेदंप्राप्तकालमरिंदमम् ६५ कर्णेनहिदृढंराजाकुंतीपुत्रःपरिक्षितः ॥ तंदृष्ट्वाऽऽश्वास्यचपुनःकर्णंपार्थवधिष्यसि ६६ एवमुक्त्वापुनःप्रायाद्द्रष्टुमिच्छन्युधिष्ठिरम् ॥ श्रमेणग्राहयिष्यंश्चयुद्धेकर्णंविशांपते ६७ ततोधनंजयोद्रष्टुंराजानंबाणपीडितम् ॥ रथेनप्रययौक्षिप्रंसंग्रामात्केशवाज्ञया ६८ गच्छन्नेवतुकौंतेयोधर्मराजदिदृक्षया ॥ सैन्यमालोकयामासनापश्यत्तत्रचाग्रजम् ६९ युद्धंकृत्वातुकौंतेयोद्रोणपुत्रेणभारत ॥ दुःसहंवज्रिणासंख्येपराजित्यगुरोःसुतम् ७० ॥ इतिश्रीमहाभारतेकर्णपर्वणिधर्मराजशोधनेचतुःषष्टितमोऽध्यायः ॥ ६४ ॥ ॥ ॥ ॥

६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपेचतुःषष्टितमोऽध्यायः ॥ ६४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

द्रौणिमिति ततोग्रधन्वाविस्तारितोग्रचापः १ अनेकान्बहून् २ उवाचतंपप्रच्छ ३ । ४ । ५ । ६ । ७ । ८ गोष्ठात्स्थानात् ९ । १० । ११ भ्रातुर्वचःश्रुत्वातदेवसत्यंवचोनारायणंप्रति

संजयउवाच ॥ द्रौणिंपराजित्यततोग्रधन्वाकृत्वामहद्दुष्करंशूरकर्म ॥ आलोकयामासततःस्वसैन्यंधनंजयःशत्रुभिरप्रधृष्यः १ अयुध्यमानान्पृतनामुखस्था
नशूरःशूरान्हर्षयन्सव्यसाची ॥ पूर्वप्रहारैर्मथितान्प्रशंसन्स्थितान्महात्मासरथाननेकान् २ अपश्यमानस्तुकिरीटमालीयुधिष्ठिरंभ्रातरमाजमीढम् ॥ उवाच
भीमंतरसाऽभ्युपेत्यराज्ञःप्रवृत्तिंत्विहकुत्रराजा ३ ॥ भीमसेनउवाच ॥ अपयातइतोराजाधर्मपुत्रोयुधिष्ठिरः॥ कर्णबाणाभितप्तांगोयादिजीवेत्कथंचन ४ ॥ अर्जु
नउवाच ॥ तस्माद्भवान्शीघ्रमितःप्रयातुराज्ञःप्रवृत्त्यैकुरुसत्तमस्य ॥ नूनंसविद्धोऽतिभृशंपृषत्कैःकर्णेनराजाशिबिरंगतोऽसौ ५ यःसंप्रहारैर्निशितैःपृषत्कैर्द्रो
णेनविद्धोऽतिभृशंतरस्वी ॥ तस्थौसतत्रापिजयप्रतीक्षोद्रोणोऽपियावन्नहतःकिलासीत् ६ ससंशयंगमितःपांडवाग्र्यःसंख्येऽद्यकर्णेनमहानुभावः ॥ ज्ञातुंप्रयाह्या
शुतमद्यभीमस्थास्याम्यहंशत्रुगणान्निरुद्ध्य ७ ॥ भीमसेनउवाच ॥ त्वमेवजानीहिमहानुभावराज्ञःप्रवृत्तिंभरतर्षभस्य ॥ अहंहियद्यर्जुनयाम्यमित्रावदंतिमांभी
तइतिप्रवीराः ८ ततोऽब्रवीदर्जुनोभीमसेनंसंशप्तकाःप्रत्यनीकस्थितामे ॥ एतानहत्वाऽद्यमयानशक्यमितोऽपयातुंरिपुसंघगोष्ठात् ९ अथाब्रवीदर्जुनंभीमसेनः
स्ववीर्यमासाद्यकुरुप्रवीर ॥ संशप्तकान्प्रतियोत्स्यामिसंख्येसर्वानहंयाहिधनंजयत्वम् १० तद्भीमसेनस्यवचोनिशम्यसुदुष्करंभ्रातुरमित्रमध्ये ॥ संशप्तकानी
कमसह्यमेकःसुदुष्करंधारयामीतिपार्थः ११ उवाचनारायणमप्रमेयंकपिध्वजःसत्यपराक्रमस्य ॥ श्रुत्वावचोभ्रातुरदीनसत्वस्तदाऽहवेसत्यवचोमहात्मा ॥ द्रष्टुं
कुरुश्रेष्ठमभिप्रयास्यन्प्रोवाचवृष्णिप्रवरंतदानीम् १२ ॥अर्जुनउवाच ॥ चोदयाश्वान्हृषीकेशविहायैतद्बलार्णवम् ॥ अजातशत्रुंराजानंद्रष्टुमिच्छामिकेशव १३
॥ संजयउवाच ॥ ततोहयान्सर्वदाशार्हमुख्यःप्रचोदयन्भीममुवाचचेदम् ॥ नैतच्चित्रंतवकर्माद्यभीमयास्याम्यहंजहिपार्थारिसंघान् १४ ततोययौहृषीकेशो
यत्रराजायुधिष्ठिरः ॥ शीघ्राच्छीघ्रतरंराजन्वाजिभिर्गरुडोपमैः १५ प्रत्यनीकेव्यवस्थाप्यभीमसेनमरिंदमम् ॥ संदिश्यचैतंराजेंद्रयुद्धंप्रतिवृकोदरम् १६
ततस्तुगत्वापुरुषप्रवीरौराजानमासाद्यशयानमेकम् ॥ रथादुभौप्रत्यवरुह्यतस्माद्ववंदतुर्धर्मराजस्यपादौ १७ तंदृष्ट्वापुरुषव्याघ्रंक्षेमिणंपुरुषर्षभम् ॥ मुदा
ऽभ्युपगतौकृष्णावश्विनाविववासवम् १८ तावभ्यनंदद्राजाऽपिविवस्वानश्विनाविव ॥ हतेमहासुरेजंभेशक्रविष्णूयथागुरुः १९ मन्यमानोहतंकर्णंधर्मराजो
युधिष्ठिरः ॥ हर्षगद्गदयावाचाप्रीतःप्राहपरंतपः २० ॥ संजयउवाच ॥ अथोपयातौपृथुलोहिताक्षौशराचितांगौरुधिरप्रदिग्धौ ॥ समीक्ष्यसेनाग्रनरप्रवीरौ
युधिष्ठिरोवाक्यमिदंबभाषे २१ महासत्वौहितौदृष्ट्वासहितौकेशवार्जुनौ ॥ हतमाधिरथिंमेनेसंख्येगांडीवधन्वना २२

कपिध्वजउवाचेत्यन्वयः १२ । १३ । १४ । १५ प्रत्यनीकेशत्रुसैन्यसमीपे १६ । १७ । १८ । १९ । २० । २१ । २२

२३ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेपंचषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ ७ ॥ स्वागतमिति भोअच्युतार्जुनौयुवयोर्दर्शनंमेगाढंप्रियं कुशलमितिपाठेयुवयोःकुशलंयत्तन्मेगाढंप्रियमिति योज्यं १ अरिष्टाभ्यांशुभाभ्यां २ । ३ अनुज्ञातमनुगृहीतं ४ । ५ । ६ अनलानिलयोरितिक्रमात्तेजोबलाभ्यां ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ मरणेउपस्थितेसतियातः

तावभ्यनंदत्कौंतेयःसाम्नापरमवल्गुना ॥ स्मितपूर्वममित्रघ्नंपूजयन्भरतर्षभ २३ ॥ इतिश्रीमहाभारतेकर्णपर्वणियुधिष्ठिरंप्रतिकृष्णार्जुनागमेपंचषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ ७ ॥ युधिष्ठिरउवाच ॥ स्वागतंदेवकीमातःस्वागतंतेधनंजय ॥ प्रियंमेदर्शनंगाढंयुवयोरच्युतार्जुनौ १ अक्षताभ्यामरिष्टाभ्यांहतः कर्णोमहारथः ॥ आशीविषसमंयुद्धेसर्वशस्त्रविशारदम् २ अग्रगंधार्तराष्ट्राणांसर्वेषांशर्मवर्मच ॥ रक्षितंवृषसेनेनसुषेणेनचधन्विना ३ अनुज्ञातंमहावीर्यंरामेणास्त्रेसुदुर्जयम् ॥ अग्र्यंसर्वस्यलोकस्यरथिनंलोकविश्रुतम् ४ त्रातारंधार्तराष्ट्राणांगंतारंवाहिनीमुखे ॥ हंतारंपरसैन्यानाममित्रगणमर्दनम् ५ दुर्योधनहितेयुक्तमस्मद्दुःखायचोद्यतम् ॥ अप्रधृष्यंमहायुद्धेदेवैरपिसवासवैः ६ अनलानिलयोस्तुल्यंतेजसाचबलेनच ॥ पातालमिवगंभीरंसुहृदांनंदवर्धनम् ७ अंतकंममित्रणांहत्वाकर्णंमहामृधे ॥ दिष्ट्यायुवामनुप्राप्तौजित्वाऽसुरमिवामरौ ८ घोरंयुद्धमदीनेनमयाह्यद्याच्युतार्जुनौ ॥ कृतंतेनांतकेनेवप्रजाःसर्वाजिघांसता ९ तेनकेतुश्चमेच्छिन्नोहतौचपार्ष्णिसारथी ॥ हतवाहस्ततश्चास्मियुयुधानस्यपश्यतः १० धृष्टद्युम्नस्ययमयोर्वीरस्यचशिखंडिनः ॥ पश्यतांद्रौपदेयानांपंचालानांचसर्वशः ११ एतान्जित्वामहावीर्यःकर्णःशत्रुगणान्बहून् ॥ जितवान्मांमहाबाहोयतमानोमहारणे १२ अभिसृत्यचमांयुद्धेपरुषाण्युक्तवान्बहु ॥ तत्रतत्रयुधांश्रेष्ठपरिभूयनसंशयः १३ भीमसेनप्रभावात्तुयज्जीवामिधनंजय ॥ बहुनात्रकिमुक्तेननाहंतत्सोढुमुत्सहे १४ त्रयोदशाहंवर्षाणियस्माद्भीतोधनंजय ॥ नस्मनिद्रांलभेरात्रौनचाहनिसुखंक्वचित् १५ तस्यद्वेषेणसंयुक्तःपरिदह्येधनंजय ॥ आत्मनोमरणेयातोवाध्रीणसइवद्विपः १६ तस्यायमगमत्कालश्चिंतयानस्यमेचिरम् ॥ कथंकर्णोमयाशक्योयुद्धेक्षपयितुंभवेत् १७ जाग्रत्स्वपंश्चकौंतेयकर्णमेवसदाह्यहम् ॥ पश्यामितत्रतत्रैवकर्णभूतमिदंजगत् १८ यत्रयत्रहिगच्छामिकर्णाद्भीतोधनंजय ॥ तत्रतत्रहिपश्यामिकर्णमेवाग्रतःस्थितम् १९ सोऽहंतेनैववीरेणसमरेष्वपलायिना ॥ सहयःसरथःपार्थजित्वाजीवन्विसर्जितः २० कोनुमेजीवितेनार्थोराज्येनार्थोभवेत्पुनः ॥ ममैवंविक्षतस्याद्यकर्णेनाहवशोभिना २१ नप्राप्तपूर्वंयद्भीष्मात्कृपाद्द्रोणाच्चसंयुगे ॥ तत्प्राप्तमद्यमेयुद्धेसूतपुत्रान्महारथात् २२ सत्वांपृच्छामिकौंतेययथाऽद्यकुशलंतथा ॥ तन्ममाचक्ष्वकात्स्न्र्येनतयथाकर्णोहतस्त्वया २३ शक्रतुल्यबलोयुद्धेयमतुल्यःपराक्रमे ॥ रामतुल्यस्तथाऽस्त्रेणसकथंवैनिषूदितः २४ महारथःसमाख्यातःसर्वयुद्धविशारदः ॥ धनुर्धराणांप्रवरःसर्वेषामेकपूरुषः २५

पलायितोस्मि वाध्रीणसोमेषविशेषः यस्यनासापुटयोर्वध्रीसदंशचर्मभवति द्विपोद्वाभ्यावक्त्रकर्णाभ्यांपिबतीति द्विजइतिपाठे'कृष्णग्रीवोरक्तशिराःश्वेतपक्षोविहंगमः । सवैवाध्रीणसःप्रोक्तोयाज्ञिकैःपितृकर्मणि' इतिप्राञ्चः १५ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५

२६ । २७ । २८ । २९ । ३० अयंसूतपुत्रः ३१ । ३२ । ३३ । ३४ विहंगैर्बाणैः ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ बाणेभ्यः समर्पितेनकर्णबाणैरत्यंतंमविद्धेनेत्यर्थः

पूजितोधृतराष्ट्रेणसपुत्रेणविशांपते ॥ त्वदर्थमेवराधेयःसकथंनिहतस्त्वया २६ धार्तराष्ट्रोहियोधेषुसर्वेष्वेवसदाऽर्जुन ॥ तवमृत्युंरणेकर्णंमन्यतेपुरुषर्षभ २७
सत्वयापुरुषव्याघ्रकथंयुद्धेनिषूदितः ॥ तन्ममाचक्ष्वकौंतेययथाकर्णोहतस्त्वया २८ युध्यमानस्यचशिरःपश्यतांसुहृदांहतम् ॥ त्वयापुरुषशार्दूलसिंहेनेव
यथारुरोः २९ यःपर्युपासीत्प्रदिशोदिशश्चत्वांसूतपुत्रःसमरेपरीप्सन् ॥ दित्सुःकर्णःसमरेहस्तिषड्गवंसहीदानींकंकपत्रैःसुतीक्ष्णैः ३० त्वयारणेनिहतःसूतपुत्रः
कच्चिच्छेतेभूमितलेदुरात्मा ॥ प्रियश्चमेपरमोवैकृतोऽयंत्वयारणेसूतपुत्रंनिहत्य ३१ यःसर्वतःपर्यपतत्त्वदर्थेसदाऽर्चितोगर्वितःसूतपुत्रः ॥ सशूरमानीसमरेस
मेत्यकच्चित्त्वयानिहतःसंयुगेऽसौ ३२ रौक्मंवरंहस्तिगजाश्वयुक्तंरथंप्रदित्सुर्यःपरेभ्यस्त्वदर्थे ॥ सदारणेस्पर्धतेयःसपापःकच्चित्त्वयानिहतस्तातयुद्धे ३३ यो
सौसदाशूरमदेनमत्तोविकत्थतेसंसदिकौरवाणाम् ॥ प्रियोऽत्यर्थंतस्यसुयोधनस्यकच्चित्सपापोनिहतस्त्वयाऽद्य ३४ कच्चित्समागम्यधनुःप्रयुक्तस्त्वत्प्रेषितैर्लो
हितांगैर्विहंगैः ॥ शेतेसपापःसुविभिन्नगात्रःकच्चिद्भग्नौधार्तराष्ट्रस्यबाहू ३५ योऽसौसदाश्लाघतेराजमध्येदुर्योधनंहर्षयन्दर्पपूर्णः ॥ अहंहंताफाल्गुनस्येतिमोहा
त्कच्चिद्वचस्तस्यनवैतथातत् ३६ नाहंपादौधावयिष्येकदाचिद्यावत्स्थितःपार्थइत्यल्पबुद्धेः ॥ व्रतंतस्यैतत्सर्वदाशक्रसूनोकच्चित्त्वयानिहतःसोद्यकर्णः ३७
योऽसौकृष्णामब्रवीद्दुष्टबुद्धिःकर्णःसभायांकुरुवीरमध्ये ॥ किंपांडवांस्त्वंनजहासिकृष्णेसुदुर्बलान्पतितान्हीनसत्वान् ३८ योऽसौकर्णःप्रत्यजानात्त्वदर्थेनाहंहत्वा
सहकृष्णेनपार्थम् ॥ इहोपयातेतिसपापबुद्धिःकच्चिच्छेतेशरसंभिन्नगात्रः ३९ कच्चित्संग्रामोविदितोवैतवायंसमागमेसृंजयकौरवाणाम् ॥ यत्रावस्थामीदृशींप्रा
पितोऽहंकच्चित्त्वयासोऽद्यहतोदुरात्मा ४० कच्चित्त्वयातस्यसुमंदबुद्धेर्गांडीवमुक्तैर्विशिखैर्ज्वलद्भिः ॥ सकुंडलंभानुमदुत्तमांगंकायात्कृत्तंयुधिसव्यसाचिन् ४१
यत्तन्मयाबाणसमर्पितेनध्यातोऽसिकर्णस्यवधायवीर ॥ तन्मेत्वयाकच्चिदमोघमद्यध्यानंकृतंकर्णनिपातनेन ४२ यद्दर्पपूर्णःससुयोधनोऽस्मानुदीक्षतेकर्णसमा
श्रयेण ॥ कच्चित्त्वयासोऽद्यसमाश्रयोऽस्यभग्नःपराक्रम्यसुयोधनस्य ४३ योनःपुराषंढतिलानवोचत्सभामध्येकौरवाणांसमक्षम् ॥ सदुर्मतिःकच्चिदुपेत्यसंख्येत्व
याहतःसूतपुत्रोह्यमर्षी ४४ यःसूतपुत्रःप्रहसन्दुरात्मापुराऽब्रवीन्निर्जितांसौबलेन ॥ स्वयंप्रसह्यानययाज्ञसेनीमपीहकच्चित्सहतस्त्वयाऽद्य ४५ यःशस्त्रभृच्छ्रेष्ठ
तमःपृथिव्यांपितामहंव्याक्षिपदल्पचेताः ॥ संख्यायमानोऽर्द्धरथःसकच्चित्त्वयाहतोऽद्याधिरथिर्महात्मन् ४६ अमर्षजंनिकृतिसमीरणेरितंहृदिस्थितंज्वलन
मिमंसदामम ॥ हतोमयासोऽद्यसमेत्यकर्णइतिब्रुवन्प्रशमयसेऽद्यफाल्गुन ४७

४२ । ४३ । ४४ । ४५ । ४६ । ४७

४८ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेषट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ तद्धर्मेति १ खगमान्बाणान् २ । ३ वध्यतांवध्यमानानांकौरवाणामुज्जिहीर्षांउद्धर्तुमिच्छामकार्षीत् ४ । ५

ब्रवीहिमेदुर्लभमेतदद्यकथंत्वयानिहतःसूतपुत्रः ॥ अनुध्यायेत्वांसततंप्रवीरवृत्रेहतेऽसौभगवानिवेंद्रः ४८ ॥ इतिश्रीमहाभारतेकर्णपर्वणियुधिष्ठिरवाक्येषट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ संजयउवाच ॥ तद्धर्मशीलस्यवचोनिशम्यराज्ञःक्रुद्धस्यातिरथोमहात्मा ॥ उवाचदुर्धर्षमदीनसत्त्वंयुधिष्ठिरंजिष्णुरनंतवीर्यः १ ॥ अर्जुनउवाच ॥ संशप्तकैर्युध्यमानस्यमेऽद्यसेनाग्रयायीकुरुसैन्येषुराजन् ॥ आशीविषाभान्खगमान्प्रमुंचन्द्रौणिःपुरस्तात्सहसाऽभ्यतिष्ठत् २ दृष्ट्वारथंमेघरवंममैवसमस्तसेनावरणेऽभ्यतिष्ठत् ॥ तेषामहंपंचशतानिहत्वाततोद्रौणिमगमंपार्थिवाग्र्य ३ समांसमासाद्यनरेंद्रयत्तःसमभ्ययात्सिंहमिवद्विपेंद्रः ॥ अकार्षीच्चरथिनामुज्जिहीर्षांमहाराजवध्यतांकौरवाणाम् ४ ततोरणेभारतदुष्प्रकंप्यआचार्यपुत्रःप्रवरःकुरूणाम् ॥ मामर्दयामासशितैःपृषत्कैर्जनार्दनंचैवविषाग्निकल्पैः ५ अष्टागवामष्टशतानिबाणान्मयाप्रयुद्धस्यवहंतितस्य ॥ तांस्तेनमुक्तानहमस्यबाणैर्व्यनाशयंवायुरिवाभ्रजालम् ६ ततोऽपरान्बाणसंघाननेकानाकर्णपूर्णायतविप्रमुक्तान् ॥ ससर्जशिक्षास्त्रबलप्रयत्नैस्तथायथाप्राप्टृषिकालमेघः ७ नैवाददानंनचसंदधानंजानिमिहेकतरेणास्यतीति ॥ वामेनवायादिवादक्षिणेनसद्रोणपुत्रःसमरेपर्यवर्तत ८ तस्याततंमंडलमेवसज्यंप्रदृश्यतेकार्मुकंद्रोणसूनोः ॥ सोऽविध्यन्मांपंचभिर्द्रोणपुत्रःशितैःशरैःपंचभिर्वासुदेवम् ९ अहंहितंत्रिंशताव्रजकल्पैःसमार्दयंनिमिषस्यांतरेण ॥ क्षणात्स्वाविल्समरूपोबभूवसमार्दितोमद्विसृष्टैःपृषत्कैः १० सविक्षरन्रुधिरंसर्वगात्रैरथानीकंसूतसूनोर्विवेश ॥ मयाभिभूतान्सैनिकानांप्रबर्हानसौप्रपश्यन्रुधिरप्रदिग्धान् ११ ततोऽभिभूतंयुधिवीक्ष्यसैन्यंवित्रस्तयोधंद्रुतवाजिनागम् ॥ पंचाशतारथमुख्यैःसमेत्यकर्णस्त्वरन्मामुपायात्प्रमाथी १२ तान्सूदयित्वाऽहमपास्यकर्णंद्रष्टुंभवंतंत्वरयाभियातः ॥ सर्वेपंचालाह्युद्विजंतेस्मकर्णंदृष्ट्वागावःकेसरिणंयथैव १३ मृत्योरास्यंव्यात्तमिवाभिपद्यप्रभद्रकाःकर्णमासाद्यराजन् ॥ रथांस्तुतान्सप्तशतान्निमग्नांस्तदाकर्णःप्राहिणोन्मृत्युसद्म १४ नचाप्यभूत्क्लांतमनाःसराजन्यावन्नास्मान्दृष्टवान्सूतपुत्रः ॥ श्रुत्वातुत्वांतेनदृष्टंसमेतमश्वत्थाम्नापूर्वतरंक्षतंच १५ मन्येकालमपयानस्यराजन्क्रूरात्कर्णात्तेऽहमचिंत्यकर्मन् ॥ मयाकर्णस्यास्त्रमिदंपुरस्तात्युद्धेदृष्टंपांडवचित्ररूपम् १६ नह्यन्ययोद्धाविद्यतेसृंजयानांमहारथंयोद्यसहेतकर्णम् ॥ शैनेयोमेसात्यकिश्चक्ररक्षौधृष्टद्युम्नश्चापितथैवराजन् १७ युधामन्युश्चोत्तमौजाश्चशूरौपृष्ठतोमारक्षतांराजपुत्रौ ॥ रथप्रवीरेणमहानुभावद्विषत्सैन्येवर्ततादुस्तरेण १८ समेत्याहंसूतपुत्रेणसंख्येवृत्रेणवज्रीवनरेंद्रमुख्य ॥ योत्स्याम्यहंभारतसूतपुत्रमस्मिन्संग्रामेयदिवैदृश्यतेऽद्य १९ आयाहिपश्याद्ययुयुत्समानंमांसूतपुत्रस्यरणेजयाय ॥ महर्षभस्येवमुखंप्रपन्नाःप्रभद्रकाःकर्णमभिद्रवंति २०

अष्टौगावोयस्मिंस्तदष्टागवंशकटंतेषामष्टागवां अष्टअष्टसंख्यानिशकटानि तुडभावआर्षः शतानिबाणान्अनेकशतसंख्यान्वहंति ६।७।८।९। १०।११ ।१२ ।१३।१४।१५। १६।१७।१८।१९।२०

२१ । २२ । २३ ॥ इति कर्णपर्वणि नीलकंठीये भारतभावदीपे सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ छ ॥ ॥ श्रुत्वाकर्णमिति स्पष्टार्थोष्टषष्टितमः १ । २ । ३ । ४ । ५ । ६ । ७ । ८

षट्साहस्राभारतराजपुत्राःस्वर्गायलोकायरणेनिमग्नाः ॥ कर्णंनचेदद्यनिहन्मिराजन्सबांधवंयुध्यमानंप्रसह्य २१ प्रतिश्रुत्याकुर्वतोवैगतिर्याकष्टायातातामहंरा
जसिंह ॥ आमंत्रयेत्वांब्रूहिजयंरणेमेपुराभीमंधार्तराष्ट्राग्रसंते २२ सौतिंहनिष्यामिनरेंद्रसिंहसैन्यंतथाशत्रुगणांश्चसर्वान् २३ ॥ इति श्रीम० कर्ण० अर्जु
नवाक्येसप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ छ ॥ ॥ संजयउवाच ॥ श्रुत्वाकर्णंकल्पमुदारवीर्यंक्रुद्धःपार्थःफाल्गुनस्यामितौजाः ॥ धनंजयंवाक्य
मुवाचचेदंयुधिष्ठिरःकर्णशराभितप्तः १ विप्रद्रुतातातचमूस्त्वदीयातिरस्कृताचाद्ययथानसाधु ॥ भीतोभीमंत्यज्यचायास्तथात्वंयन्नाशकःकर्णमथोनिहंतुम्
२ स्नेहस्त्वयापार्थकृतःपृथायागर्भंसमाविश्यययथानसाधु ॥ त्यक्त्वारणेयदपायाःसभीमंयन्नाशकःसूतपुत्रंनिहंतुम् ३ यत्तद्वाक्यंद्वैतवनेत्वयोक्तंकर्णंहंता
ऽस्म्येकरथेनसत्यम् ॥ त्यक्त्वातंवैकथमद्यापयातःकर्णाद्भीतोभीमसेनंविहाय ४ इदंयदिद्वैतवनेऽप्यवक्षःकर्णंयोद्धुंनप्रशक्ष्येनृपेति ॥ वयंततःप्राप्तकालंचस
र्वेकृत्यानुपैष्यामतथैवपार्थ ५ मयिप्रतिश्रुत्यवधंहितस्यनवैकृतंतच्चतथैववीर ॥ आनीयनःशत्रुमध्यंसकस्मात्समुत्क्षिप्यस्थंडिलेप्रत्यपिंष्ठाः ६ अप्याशिष्म
वयमर्जुनत्वयियियासवोबहुकल्याणमिष्टम् ॥ तन्नःसर्वंविफलंराजपुत्रफलार्थिनांविफलइवातिपुष्पः ७ प्रच्छादितंबडिशमिवामिषेणसंछादितंगरलमिवाशने
न ॥ अनर्थकंमेदर्शितवानसित्वंराज्यार्थिनोराज्यरूपंविनाशम् ८ त्रयोदशेमाहिसमाःसदावयंत्वामन्वजीविष्मधनंजयाशया ॥ कालेवर्षंदेवमिवोप्तबीजंतन्नः
सर्वान्नरकेत्वंन्यमज्जः ९ यत्तत्पृथांवागुवाचांतरिक्षेसप्ताहजातेत्वयिमंदबुद्धौ ॥ जातःपुत्रोवासवविक्रमोऽयंसर्वान्शूरान्शात्रवान्जेष्यतीति १० अयंजेताखां
डवेदेवसंघान्सर्वाणिभूतान्यपिचोत्तमौजाः ॥ अयंजेतामद्रकलिंगकेकयानयंकुरून्राजमध्येनिहंता ११ अस्मात्परोनोभविताधनुर्धरोनैनंभूतःकिंचनजातुजे
ता ॥ इच्छन्नयंसर्वभूतानिकुर्याद्वशेवशीसर्वसमाप्तविद्यः १२ कांत्याशशांकस्यजवेनवायोःस्थैर्येणमेरोःक्षमयापृथिव्याः ॥ सूर्यस्यभासाधनदस्यलक्ष्म्याशौर्ये
णशक्रस्यबलेनविष्णोः १३ तुल्योमहात्मातवकुंतिपुत्रोजातोऽदितेर्विष्णुरिवारिहंता ॥ स्वेषांजयायद्विषतांवधायख्यातोऽमितौजाःकुलतंतुकर्ता १४ इत्यंतरि
क्षेशतशृंगमूर्ध्नितपस्विनांशृण्वतांवागुवाच ॥ एवंविधंतच्चनाभूत्तथाचदेवापिनूनमनृतंवदंति १५ तथापरेषामृषिसत्तमानांश्रुत्वागिरःपूजयतांसदात्वाम् ॥
नसंनतिंप्रैमिसुयोधनस्यनत्वांजानाम्याधिरथेर्भयार्तम् १६ पूर्वंयदुक्तंहिसुयोधनेननफाल्गुनःप्रमुखेस्थास्यतीति ॥ कर्णस्ययुद्धेहिमहाबलस्यमौर्ख्यात्तुत
न्नावबुद्धंमयाऽसीत् १७ तेनाद्यतप्स्येभृशमप्रमेयंयच्छत्रुवर्गेनरकंप्रविष्टः ॥ तदेववाच्योऽस्मिननुत्वयाऽहंनयोत्स्येऽहंसूतपुत्रंकथंचित् १८ ततोनाहंसृंजया
न्केकयांश्चसमानयेयंसुहृदोरणाय ॥ एवंगतेकिंचमयाऽद्यशक्यंकार्यंकर्तुंविग्रहेसूतजस्य १९ ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९

तथैवराज्ञश्चसुयोधनस्ययेवापिमांयोद्धुकामाःसमेताः ॥ धिगस्तुमञ्जीवितमद्यकृष्णयोऽहंवशंसूतपुत्रस्ययातः २० मध्येकुरूणांसुहृदांचमध्येयेचाप्यन्ये योद्धुकामाःसमेताः ॥ यदिस्मजीवेत्सभवेन्निहंतामहारथानांप्रवरोरथोत्तमः ॥ तवाभिमन्युस्तनयोऽद्यपार्थनचास्मिगंतासमरेपराभवम् २१ अथापिजीवेत्स मरेघटोत्कचस्तथापिनाहंसमरेपराङ्मुखः ॥ ममह्यभाग्यानिपुराकृतानिपापानिनूनंबलवंतियुद्धे २२ तृणंचकृत्वासमरेभवंततंततोऽहमेवंनिकृतोदुरात्मना ॥ वैकर्तनेनैवतथाकृतोऽहंयथाह्यशक्तःक्रियतेह्यबांधवः २३ आपद्गतंकश्चनयोविमोक्षेत्सबांधवःस्नेहयुक्तंसुहृच्च ॥ एवंपुराणामुनयोवदंतिधर्मःसदासद्भिरनुष्ठि तश्च २४ त्वष्ट्राकृतंवाहमकूजनाक्षंशुभंसमास्थायकपिध्वजंतम् ॥ खड्गंगृहीत्वाहेमपट्टानुबद्धंधनुश्चेदंगांडिवंतालमात्रम् २५ सकेशवेनोह्यमानःकथंत्वंकर्णा द्भीतोव्यपयातोऽसिपार्थ ॥ धनुश्चतत्केशवायप्रयच्छयंताभविष्यस्त्वंरणेकेशवस्य २६ तदाहनिष्यत्केशवःकर्णमुग्रंमरुत्पतिर्वृत्रमिवात्तवज्रः ॥ राधेयमेतंय दिनाद्यशक्तश्चरंतमुग्रंप्रतिबाधनाय २७ प्रयच्छान्यस्मैगांडिवमेतदद्यत्वत्तोयोस्त्रैरभ्यधिकोवानरेंद्रः ॥ अस्मान्नैवंपुत्रदारैर्विहीनान्सुखाद्भ्रष्टान्राज्यनाशाच्च भूयः २८ द्रष्टालोकःपतितानप्यगाधेपापैर्जुष्टेनरकेपांडवेय ॥ मासेऽपतिष्यःपंचमेत्वंसुकृच्छ्रेनवागर्भेआभविष्यःपृथायाः २९ यत्तेश्रेयोराजपुत्राभविष्यन्न चेत्संग्रामादपयानंदुरात्मन् ॥ धिग्गांडीवंधिक्चतेबाहुवीर्यमसंख्येयान्बाणगणांश्चधिक्ते ॥ धिक्तेकेतुंकेसरिणःसुतस्यकृशानुदत्तंचरथंचधिक्ते ३० ॥ इति श्रीमहाभारते कर्णपर्वणि युधिष्ठिरक्रोधवाक्येअष्टषष्टितमोऽध्यायः ॥ ६८ ॥

॥ संजयउवाच ॥ युधिष्ठिरेणैवमुक्तःकौंतेयःश्वेतवाहनः ॥ असिंजग्रा हसंक्रुद्धोजिघांसुर्भरतर्षभम् १ तस्यकोपंसमुद्वीक्ष्यचित्तज्ञःकेशवस्तदा ॥ उवाचकिमिदंपार्थगृहीतःखड्गइत्युत २ नहिपश्यामियोद्धव्यंत्वयाकिंचिद्धनंज य ॥ तेग्रस्ताधार्तराष्ट्राहिभीमसेनेनधीमता ३ अपयातोऽसिकौंतेयराजाद्रष्टव्यइत्यपि ॥ सराजाभवताद्दष्टःकुशलीचयुधिष्ठिरः ४ सदृष्ट्वानृपशार्दूलंशार्दू लसमविक्रमम् ॥ हर्षकालेचसंप्राप्तेकिमिदंमोहकारितम् ५ नतंपश्यामिकौंतेययस्तेवध्योभविष्यति ॥ प्रहर्तुमिच्छसेकस्मात्किंवातोचित्तविभ्रमः ६ कस्मा द्भवान्महाखड्गंपरिगृह्णातिसत्वरः ॥ तत्त्वांपृच्छामिकौंतेयकिमिदंतेचिकीर्षितम् ७ परामृशसियत्क्रुद्धःखड्गमद्भुतविक्रम ॥ एवमुक्तस्तुकृष्णेनप्रेक्षमाणोयु धिष्ठिरम् ॥ अर्जुनःप्राहगोविंदंक्रुद्धःसर्पइवश्वसन् ॥ अन्यस्मैदेहिगांडीवमितिमांयोऽभिचोदयेत् ९ भिंद्यामहंतस्यशिरइत्युपांशुव्रतंमम ॥ तदुक्तंममचाने नराज्ञाऽमितपराक्रम १० समक्षंतवगोविंदनतत्क्षंतुमिहोत्सहे ॥ तस्मादेनंवधिष्यामिराजानंधर्मभीरुकम् ११ प्रतिज्ञांपालयिष्यामिहत्वैनंनरसत्तमम् ॥ एतदर्थंमयाखड्गोगृहीतोयदुनंदन १२

॥६९॥

॥६४॥

१ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२

१२ । १४ । १५ भवान्यत्संरंभमगात्तत्कालेन अकालेइत्यर्थः १६ । १७ कर्तुमयोग्यानांकर्मणांसंयोगंकर्तुंयोग्यानामपिअक्रियाणांनिषिद्धाक्रियाणांसंयोगंयःकरोतिसपुरुषाधमइत्याह अकार्याणामिति १८ उपस्थिताःशिष्यैरनुसृतागुरवः १९ । २० सुखंअनधीत्येत्यर्थःश्रुतेनशास्त्रेण २१ यत्भवान्धर्मंरक्षतितदवज्ञानात्अधर्ममेवधर्ममनुषेइत्यर्थः यतःप्राणिनांवधंदोषकरंइत्ये

सोऽहंयुधिष्ठिरंहत्वासत्यस्यानृण्यतांगतः ॥ विशोकोविज्वरश्चापिभविष्यामिजनार्दन १३ किंवात्वंमन्यसेप्राप्तमस्मिन्कालउपस्थिते ॥ त्वमस्यजगतस्तातवेत्थ सर्वंगतागतम् १४ तत्तथाप्रकरिष्यामियथामांवक्ष्यतेभवान् ॥ संजयउवाच ॥ धिग्धिगित्येवगोविंदःपार्थमुक्त्वाऽब्रवीत्पुनः १५ ॥ कृष्णउवाच ॥ इदानींपार्थ जानामिनवृद्धाःसेवितास्त्वया ॥ कालेनपुरुषव्याघ्रसंरंभंयद्भवानगात् १६ नहिधर्मविभागज्ञःकुर्यादेवंधनंजय ॥ यथात्वंपांडवाद्येहधर्मभीरुरपंडितः १७ अकार्या णांक्रियाणांचसंयोगंयःकरोतिवै ॥ कार्याणामक्रियाणांचसपार्थपुरुषाधमः १८ अनुसृत्यतुयेधर्मंकथयेयुरुपस्थिताः ॥ समासविस्तरविदांनतेषांवेत्सिनिश्चयम् १९ अनिश्चयज्ञोहिनरःकार्याकार्यविनिश्चये ॥ अवशोमुह्यतेपार्थयथात्वंमूढएवतु २० नहिकार्यमकार्यंवासुखंज्ञातुंकथंचन ॥ श्रुतेनज्ञायतेसर्वंतच्चत्वंनावबुध्यसे २१ अविज्ञानाद्भवान्यच्चधर्मंरक्षतिधर्मवित् ॥ प्राणिनांत्ववधंपार्थधार्मिकोनावबुध्यसे २२ प्राणिनामवधस्तातसर्वज्यायान्मतोमम ॥ अनृतांवावदेद्वाचंनतुहिंस्यात्कथं चन २३ सकथंभ्रातरंज्येष्ठंराजानंधर्मकोविदम् ॥ हन्याद्भवान्नरश्रेष्ठप्राकृतोऽन्यःपुमानिव २४ अयुध्यमानस्यवधस्तथाऽशत्रोश्चमानद ॥ पराङ्मुखस्यद्रवतः शरणंचापिगच्छतः २५ कृतांजलेःप्रपन्नस्यप्रमत्तस्यतथैवच ॥ नवधःपूज्यतेसद्भिस्तच्चसर्वंगुरौतव २६ त्वयाचैवंव्रतंपार्थबालेनेवकृतंपुरा ॥ तस्मादधर्मसंयुक्तं मौर्ख्यात्कर्मव्यवस्यसि २७ सगुरुंपार्थकस्मात्त्वंहंतुकामोऽभिधावसि ॥ असंप्रधार्यधर्माणांगतिंसूक्ष्मांदुरत्ययाम् २८ इदंधर्मरहस्यंचतववक्ष्यामिपांडव ॥ यद्ब्रू यात्तवभीष्मोहिपांडवोवायुधिष्ठिरः २९ विदुरोवातथाक्षत्ताकुंतीवाऽपियशस्विनी ॥ तत्तेवक्ष्यामितत्त्वेननिबोधैतद्धनंजय ३० सत्यस्यवदितासाधुर्नसत्याद्विद्यते परम् ॥ तत्त्वेनैवसुदुर्ज्ञेयंपश्यसत्यमनुष्ठितम् ३१ भवेत्सत्यमवक्तव्यंवक्तव्यमनृतंभवेत् ॥ यत्रानृतंभवेत्सत्यंसत्यंचाप्यनृतंभवेत् ३२ विवाहकालेरतिसंप्रयोगे प्राणात्ययेसर्वधनापहारे ॥ विप्रस्यचार्थेह्यनृतंवदेतपंचानृतान्याहुरपातकानि ३३सर्वस्वस्यापहारेतुवक्तव्यमनृतंभवेत् ॥ तत्रानृतंभवेत्सत्यंसत्यंचाप्यनृतंभवेत्॥ तादृशंपश्यतेबालोयस्यसत्यमनुष्ठितम् ३४ भवेत्सत्यमवक्तव्यंनवक्तव्यमनुष्ठितम् ॥ सत्यानृतेविनिश्चित्यततोभवतिधर्मवित् ३५ किमाश्चर्यंकृतप्रज्ञःपुरुषोऽ पिसुदारुणः ॥ सुमहत्प्राप्नुयात्पुण्यंबलाकोंधवधादिव ३६ किमाश्चर्यंपुनर्मूढोधर्मकामोह्यपंडितः ॥ सुमहत्प्राप्नुयात्पापमापगास्विवकौशिकः ३७

२२

तन्नावबुध्यसे २२ । २३ । २४ अशत्रोःअशातनीयस्यअवध्यस्य २५ । २६ । २७ । २८ । २९ । ३० सत्यंतत्त्वेनयाथातथ्येनसुदुर्ज्ञेयंपश्य क्वचित्सत्यमप्यधर्मायभवतीत्यर्थः ३१ । ३२ । ३३ यस्ययेनहेतुनासत्यमेवसत्यतयाअनुष्ठितंतादृशमेवपश्यतिसत्यवादितयातेनहेतुनाबालःअज्ञः ३४ । ३५ । ३६ । ३७

३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ तपस्वीनःतपस्विनामिनःश्रेष्ठः ४६ ।४७ । ४८ । ४९ । ५० ।५१ । ५२ । ५३ श्वभ्रमिवनरकमिव अपृष्टाप्रश्नमकृत्वाऽर्हति तत्रधर्माधर्मयो स्तत्त्वेनिश्चेतव्येलक्षणस्यउद्देशःवचनंभविष्यति ५४ क्वचित्तर्केणापिधर्मस्वरूपंनिर्णेयमित्याह दुष्करमिति ५५ नप्रत्यसूयामिनदूषयामि अनुमानतोऽपिधर्मोज्ञेयइत्याशयेनाह नचेति लक्षणो देशमाहप्रभवेति ५६ अहिंसैवधारणाद्धर्मइत्याहाहिंसार्थायेति ५७ । ५८ न्यायेन 'संतोषंजनयेत्प्राज्ञस्तदेवेश्वरपूजनम्' इत्यादिवाक्यावष्टंभेनान्योन्यसुखहेतुत्वात्पारदार्यादिकमपिधर्मइति

॥ अर्जुनउवाच ॥ आचक्ष्वभगवन्नेतद्यथाविंद्याम्यहंतथा ॥ बलाकस्यानुसंबंधंनदीनांकौशिकस्यच ३८ ॥ वासुदेवउवाच ॥ पुराव्याधोऽभवत्कश्चिद्बलाकोनाम भारत ॥ यात्रार्थंपुत्रदारस्यमृगान्हंतिनकामतः ३९ वृद्धौचमातापितरौबिभर्त्यन्यांश्चसंश्रितान् ॥ स्वधर्मनिरतोनित्यंसत्यवागनसूयकः ४० सकदाचिन्मृगं लिप्सुर्नाभ्यविंदन्मृगंक्वचित ॥ अपःपिबंतंददृशेश्वापदंघ्राणचक्षुषम् ४१ अदृष्टपूर्वमपितत्सत्वंतेनहतंतदा ॥ अंधेहतेततोव्योम्नःपुष्पवर्षंपपातच ४२ अप्सरो गीतवादित्रैर्नादितंचमनोरमम् ॥ विमानमगमत्स्वर्गान्मृगव्याधनिनीषया ४३ तद्भूतंसर्वभूतानामभावायकिलार्जुन ॥ तपस्तप्त्वावरंप्राप्तंकृतमंधंस्वयंभुवा ४४ तद्धत्वासर्वभूतानामभावकृतनिश्चयम् ॥ ततोबलाकःस्वरगादेवंधर्मःसुदुर्विदः ४५ कौशिकोप्यभवद्विप्रस्तपस्वीनोबहुश्रुतः ॥ नदीनांसंगमेग्रामाददूरात्सकिलाव सत् ४६ सत्यंमयासदावाच्यमितितस्याभवद्व्रतम् ॥ सत्यवादीतिविख्यातःसतदाऽऽसीद्धनंजय ४७ अथदस्युभयात्केचित्तदातद्वनमाविशन् ॥ तत्रापिदस्यवः क्रुद्धास्तानमार्गंतयत्नतः ४८ अथकौशिकमभ्येत्यप्राहुस्तेसत्यवादिनम् ॥ कतमेनपथायाताभगवन्बहवोजनाः ४९ सत्येनपृष्टःप्रब्रूहियदितान्वेत्थशंसनः ॥ सपृष्टःकौशिकःसत्यंवचनंतानुवाचह ५० बहुवृक्षलतागुल्ममेतद्वनमुपाश्रिताः ॥ इतितान्ख्यापयामासतेभ्यस्तत्त्वंसकौशिकः ५१ ततस्तेतान्समासाद्यक्रूरा जघ्नुरितिश्रुतिः ॥ तेनाधर्मेणमहतावाग्दुरुक्तेनकौशिकः ५२ गतःसकष्टंनरकंसूक्ष्मधर्मेष्वकोविदः ॥ यथाचाल्पश्रुतोमूढोधर्माणामविभागवित् ५३ वृद्धानपृ ष्ट्वासंदेहंमहच्छ्वभ्रमिवार्हति ॥ तत्रतेलक्षणोद्देशःकश्चिदेवंभविष्यति ५४ दुष्करंपरमंज्ञानंतर्केणानुव्यवस्यति ॥ श्रुतेर्धर्मइतिह्येकेवदंतिबहवोजनाः ५५ तत्ते नप्रत्यसूयामिनचसर्वंविधीयते ॥ प्रभवार्थायभूतानांधर्मप्रवचनंकृतम् ५६ यत्स्यादहिंसासंयुक्तंसधर्मइतिनिश्चयः ॥ अहिंसार्थायहिंस्राणांधर्मप्रवचनंकृतम् ५७ धारणाद्धर्ममित्याहुर्धर्मोधारयतेप्रजाः ॥ यत्स्याद्धारणसंयुक्तंसधर्मइतिनिश्चयः ५८ येन्यायेनजिहीर्षंतोधर्ममिच्छंतिकर्हिचित् ॥ अकूजनेनमोक्षं वानानुकूजेत्कथंचन ५९ अवश्यंकूजितव्येवाशंकेरन्नप्यकूजतः ॥ श्रेयस्तत्रानृतंवक्तुंतत्सत्यमविचारितम् ६०

वदंतोधर्मापहारमिच्छंतितेअकूजनेनवेदशब्दराहित्येनतद्विरुद्धंधर्मंमोक्षंवावेदबाह्यमिच्छंतितान्प्रतिनानुकूजेत्तैःसहसंवादमपिनकुर्यादसंभाष्यास्ते तेनवेदा विरोधेसतियदन्यस्यसुखकरंतद्धर्म इत्यर्थः ५९ यत्रतुधर्मसंदेहेवेदशब्दोनास्तिनापिलौकिकीयुक्तिरस्तितत्रकिंकर्तव्यमित्याशंक्याह अवश्यमिति यत्रब्राह्मणस्तेनरवेनज्ञातस्तत्रेतरेषांस्तेनोऽयमस्तिनोवेतिसंशयेपक्षद्वयेपिऽ हिंसाप्राप्तौ मौनमेवाश्रयेत्तमौनेनाप्यासिद्धौअनृतमपिवदेदित्यर्थः ६०

यइति कार्येभ्यःयत्किंचित्कार्यमनस्युद्दिश्यव्रतंकृत्वातस्यव्रतस्यनानाअन्येनप्रकारेणोपपादनंकरोति सदांभिकोव्रतफलंनाप्नोतीत्यर्थः ६१ । ६२ । ६३ तेभ्यःस्तेनेभ्यःपीडयेन्नरकंप्रापयेत्
६४ । ६५ । ६६ । ६७ । ६८ अविदितमितिच्छेदः ६९ । ७० अनुग्रहंअवधेनप्रतिज्ञारक्षणम् ७१ । ७२ तूबरकःबहुभोजनः ७३ तंहन्यामिति स्थातानमस्थास्येएनसामुक्तोऽपि

यःकार्येभ्योव्रतंकृत्वातस्यनानोपपादयेत् ॥ नतत्फलमवाप्नोतिएवमाहुर्मनीषिणः ६१ प्राणात्ययेविवाहेवासर्वज्ञातिवधात्यये ॥ नर्मण्यभिप्रवृत्तेवानचप्रोक्तंमृषा भवेत् ६२ अधर्मनात्रपश्यंतिधर्मतत्त्वार्थदर्शिनः ॥ यस्तेनैःसहसंबंधान्मुच्यतेशपथैरपि ६३ श्रेयस्तत्रानृतंवक्तुंतत्सत्यमविचारितम् ॥ नचतेभ्योधनंदेयंशक्ये सतिकथंचन ६४ पापेभ्योहिधनंदत्तंदातारमपिपीडयेत् ॥ तस्माद्धर्मार्थमनृतमुक्त्वानानृतभाग्भवेत् ६५ एषतेलक्षणोद्देशोमयोद्दिष्टोयथाविधि ॥ यथाधर्मंयथाबुद्धिमयाऽद्यवैहितार्थिना ६६ एतच्छ्रुत्वाब्रूहिपार्थयदिवध्योयुधिष्ठिरः ॥ ॥ अर्जुनउवाच ॥ ॥ यथाब्रूयान्महाप्राज्ञोयथाब्रूयान्महामतिः ६७ हितंचैव यथाऽस्माकंतथैतद्वचनंतव ॥ भवान्मातृसमोऽस्माकंतथापितृसमोऽपिच ६८ गतिश्चपरमाकृष्णत्वमेवचपरायणम् ॥ नहितेत्रिषुलोकेषुविद्यतेऽविदितंक्वचित् ६९ तस्माद्भवान्परंधर्मंवेदसर्वंयथातथम् ॥ अवध्यंपांडवंमन्येधर्मराजंयुधिष्ठिरम् ७० अस्मिंस्तुममसंकल्पेब्रूहिकिंचिदनुग्रहम् ॥ इदंवापरमत्रैवशृणुहृत्स्थंविवक्षितम् ७१ जानासिदाशार्हममव्रतंत्वंयोमांब्रूयात्कश्चनमानुषेषु ॥ अन्यस्मैत्वंगांडिवंदेहिपार्थत्वत्तोऽस्त्रैर्वावीर्यतोवाविशिष्टः ७२ हन्यामहंकेशवतंप्रसह्यभीमोहन्यात्तूबरकेतिचोक्तः ॥ तन्मेराजाप्रोक्तवांस्तेसमक्षंधनुर्देहीत्यसकृद्वृष्णिवीर ७३ तंहन्यांचेत्केशवजीवलोकेस्थातानाहंकालमप्यल्पमात्रम् ॥ ध्यात्वानूनंह्येनसाचापिमुक्तोवधंराज्ञोभ्रष्टवीर्योविचेताः ७४ यथाप्रतिज्ञाममलोकबुद्धोभवेत्सत्याधर्मभृतांवरिष्ठ ॥ यथाजीवेत्पांडवोऽहंचकृष्णतथाबुद्धिंदातुमप्यर्हसित्वम् ७५ ॥ वासुदेवउवाच ॥ राजाश्रांतोविक्षतोदुःखितश्चकर्णेनसंख्येनिशितैर्बाणसंघैः ॥ यश्चानिशंसूतपुत्रेणवीरशरैर्भृशंताडितोयुध्यमानः ७६ अतस्त्वमेतेनसरोषमुक्तोदुःखान्वितेनेदमयुक्तरूपम् ॥ अकोपितोह्येषयदिस्मसंख्येकर्णंनहन्यादितिचाब्रवीत्सः ७७ जानातितंपांडवएषचापिपापंलोकेकर्णमसह्यमन्यैः ॥ ततस्त्वमुक्तोभृशरोषितेनराज्ञासमक्षंपरुषाणिपार्थ ७८ नित्योद्युक्तेसततंचाप्रसह्येकर्णेद्यूतंह्यद्यरणेनिबद्धम् ॥ तस्मिन्हतेकुरवोनिर्जिताःस्युरेवंबुद्धिःपार्थिवेधर्मपुत्रे ७९ ततोवधंनार्हतिधर्मपुत्रस्त्वयाप्रतिज्ञाऽर्जुनपालनीया ॥ जीवन्नयंयेनमृतोभवेद्धितन्मेनिबोधेहतवानुरूपम् ८० यदामानंलभतेमाननार्हस्तदासवैजीवतिजीवलोके ॥ यदावमानंलभतेमहांतंतदाजीवन्मृतइत्युच्यतेसः ८१ संमानितःपार्थिवोऽयंसदैवत्वयाचभीमेनतथायमाभ्याम् ॥ वृद्धैश्चलोकेपुरुषैश्चशूरैस्तस्यापमानंकलयाप्रयुंक्ष्व ८२

कृतप्रायश्चित्तोपिनस्थास्येइत्यर्थः किंकृत्वाराज्ञोवधंध्यात्वा ७४ । ७५ । ७६ । ७७ समक्षंआवयोरितिशेषः ७८ कर्णेपणीकृते द्यूतंयुद्धरूपम् ७९ । ८० । ८१ । ८२

अत्र भवंतं मान्यं त्वमिति ब्रूहि तावतैव तद्वधः कृतो भवतीत्यर्थः ८३ एवं पूज्यावमानरूपं संयोगं आत्मना ऽनुष्ठितं कुरुष्व ८४ तत्र मानमाह अथर्वेति ८५ यत् गुरुस्त्वमिति प्रोक्तस्तत् अवधेन शस्त्र पातनं अंतरेणैव वधः वधकरं भवतीत्यर्थः ८६ अयुक्तमेवं त्वत्तो वधं वेत्स्यते अनेनाहं हत इति ज्ञास्यतीत्यर्थः समं वैषम्यपरिहारम् ८७ । ८८ ॥ इति क० प० नी० भा० भा० ऊनसप्ततितमोऽध्यायः ॥ ६९ ॥

त्वमित्यत्रभवंतंहिब्रूहिपार्थयुधिष्ठिरम् ॥ त्वमित्युक्तोहिनिहतोगुरुर्भवतिभारत ८३ एवमाचरकौंतेयधर्मराजेयुधिष्ठिरे ॥ अधर्मयुक्तंसंयोगंकुरुष्वैनंकुरूद्वह ८४ अथर्वांऽगिरसीह्येषाश्रुतीनामुत्तमाश्रुतिः ॥ अविचार्यैवकार्यैषाश्रेयस्कामैर्नरैःसदा ८५ अवधेनवधःप्रोक्तोयद्गुरुस्त्वमितिप्रभुः ॥ तद्ब्रूहित्वंयन्मयोक्तंधर्मराजस्य धर्मवित् ८६ वधंह्ययंपांडवधर्मराजस्त्वत्तोऽयुक्तंवेत्स्यतेचैवमेषः ॥ ततोऽस्यपादावभिवाद्यपश्चात्समंब्रूयाःसांत्वयित्वाचपार्थम् ८७ भ्राताप्राज्ञस्तवकोपंनजातु कुर्याद्राजाधर्ममवेक्ष्यचापि ॥ मुक्तोऽनृताद्भ्रातृवधाच्चपार्थहृष्टःकर्णंत्वंजहिसूतपुत्रम् ८८ ॥ ॥ इति श्रीमहाभारते कर्णपर्वणि कृष्णार्जुनसंवादे ऊनसप्तति तमोऽध्यायः ॥ ६९ ॥ ॥ संजयउवाच ॥ इत्येवमुक्तस्तुजनार्दनेनपार्थःप्रशस्याथसुहृद्वचस्तत् ॥ ततोऽब्रवीदर्जुनोधर्मराजमनुक्तपूर्वंपरुषंप्रसह्य १ ॥ अर्जुनउवाच ॥ मात्वंराजन्व्याहरव्याहरस्वयस्तिष्ठसेक्रोशमात्रेरणाद्वै ॥ भीमस्तुमामर्हतिगर्हणाययोयुध्यतेसर्वलोकप्रवीरैः २ कालेहिशत्रून्परिपीड्यसंख्ये हत्वाचशूरान्पृथिवीपतींस्तान् ॥ रथप्रधानोत्तमनागमुख्यान्सादिप्रवेकानमितांश्ववीरान् ३ यःकुंजराणामधिकंसहस्रंहत्वानदंस्तुमुलंसिंहनादम् ॥ कांबोजाना मयुतंपार्वतीयान्मृगान्सिंहोविनिहत्येवचाजौ ४ सुदुष्करंकर्मकरोतिवीरःकर्तुंयथानार्हसित्वंकदाचित् ॥ रथादवप्लुत्यगदांपरामृशंस्तयानिहंत्यश्वरथद्विपान्रणे ५ वरासिनावाजिरथाश्वकुंजरांस्तथारथांगैर्धनुषादहत्यरीन् ॥ प्रमृह्यपद्भ्यामहितान्निहंतिपुनस्तुदोर्भ्यांशतमन्युविक्रमः ६ महाबलोवैश्रवणांतकोपमःप्रसह्यहंताद्वि षतामनीकिनीम् ॥ सभीमसेनोऽर्हतिगर्हणांमेनत्वंनित्यंरक्ष्यसेयःसुहृद्भिः ७ महारथान्नागवरान्हयांश्वपदातिमुख्यानपिचप्रमथ्य ॥ एकोभीमोधार्तराष्ट्रेषुमग्नः सगामुपालब्धुमरिंदमोऽर्हति ८ कलिंगवंगांगनिषादमागधान्सदामदान्नीलबलाहकोपमान् ॥ निहंतियःशत्रुगणाननेकान्ससमामुपालब्धुमरिंदमोऽर्हति ९ सयुक्त मास्थायरथंहिकालेधनुर्विधुन्वन्शरपूर्णमुष्टिः ॥ सृजत्यसौशरवर्षाणिवीरोमहाहवेमेघइवांबुधाराः १० शतान्यष्टौवारणानामवश्यंविशाशितैःकुंभकराग्रहस्तैः ॥ भीमेनाजौनिहतान्यद्यबाणैःसमांक्रूरंवक्तुमर्हत्यरिघ्नः ११ बलंतुवाचिद्विजसत्तमानांक्षात्रंबुधाबाहुबलंवदंति ॥ त्वंवाग्बलोभारतनिष्ठुरश्चत्वमेवमांवेत्थयथाऽबलोहम् १२ यतेहनित्यंतवकर्तुमिष्टंदारैःसुतैर्जीवितेनात्मनाच ॥ एवंयन्मांवाग्विशिखेनहंसित्वत्तःसुखंनवयंविद्मकिंचित् १३ मांमावमंस्थाद्रौपदीतल्पसंस्थोमहारथा न्प्रतिहन्मित्वदर्थे ॥ तेनाभिशंकीभारतनिष्ठुरोऽसित्वत्तःसुखंनाभिजानामिकिंचित् १४ प्रोक्तःस्वयंसत्यसंधेनमृत्युस्तवाप्रियार्थंनरदेवयुद्धे ॥ वीरःशिखंडीद्रौपदो ऽसौमहात्मामयाऽभिगुप्तेनहतश्चतेन १५

इत्येवमिति । व्याहर व्याहरस्वबचनं क्रोशमात्रेन तिष्ठसे अपितु ततोऽपि दूरे इत्यर्थः १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ सत्यसंधेन भीष्मेण १५

१६ । १७ । १८ । १९ । २० । २१ । २२ अनुतेपे अनुतापंप्राप्तवान् उद्ववर्हकोशान्निष्कासितवान् २३ । २४ । २५ । २६ । २७ आत्मनस्तवादात्महत्या परहत्यास्यकुत्सनादित्यध्याय

नचाभिनंदामितवाधिराज्यंयतस्त्वमक्षेष्वहितायसक्तः ॥ स्वयंकृत्वापापमनार्यजुष्टमस्माभिर्वातर्तुमिच्छस्यरीँस्त्वम् १६ अक्षेषुदोषाबहवोविधर्माःश्रुतास्त्वया
सहदेवोऽब्रवीद्यान् ॥ तान्नैषित्वंत्यक्तुमसाधुजुष्टांस्तेनस्मसर्वेनिरयंप्रपन्नाः १७ सुखंत्वत्तोनाभिजानीमकिंचिद्यतस्त्वमक्षैर्देवितुंसंप्रवृत्तः ॥ स्वयंकृत्वाव्यसनंपांड
वत्वमस्मांस्तीव्राःश्रावयस्यद्यवाचः १८ शेतेऽस्माभिर्निहताशत्रुसेनाछिन्नैर्गात्रैर्भूमितलेनदंती ॥ त्वयाहितत्कर्मकृतंनृशंसंयस्माद्दोषःकौरवाणांवधश्च १९ हता
उदीच्यानिहताःप्रतीच्यानष्टाःप्राच्यादाक्षिणात्याविशस्ताः ॥ कृतंकर्माप्रतिरूपंमहद्भिस्तेषांयोधैरस्मदीयैश्चयुद्धे २० त्वंदेवितात्वत्कृतेराज्यनाशस्त्वत्संभवंनो
व्यसनंनरेंद्र ॥ माऽस्मान्क्रूरैर्वाक्प्रतोदैस्तुदंस्त्वंभूयोराजन्कोपयेस्त्वल्पभाग्यः २१ ॥ संजयउवाच ॥ एतावाचःपरुषाःसव्यसाचीस्थिरप्रज्ञःश्रावयित्वातु
रूक्षाः ॥ बभूवासौविमनाधर्मभीरुःकृत्वाप्राज्ञःपातकंकिंचिदेवम् २२ तदाऽनुतेपेसुरराजपुत्रोविनिःश्वसंश्चासिमथोद्ववर्ह ॥ तमाहकृष्णःकिमिदंपुनर्भवान्विको
शमाकाशनिभंकरोत्यसिम् २३ ब्रवीहिमांत्वंपुनरुत्तरंवचस्तथाप्रवक्ष्याम्यहमर्थसिद्धये ॥ इत्येवमुक्तःपुरुषोत्तमेनसुदुःखितःकेशवमर्जुनोऽब्रवीत् २४ अहंहनिष्ये
स्वशरीरमेवप्रसह्ययेनाहितमाचरंवै ॥ निशम्यतत्पार्थवचोऽब्रवीदिदंधनंजयंधर्मभृतांवरिष्ठः २५ राजानमेनंत्वमितीदमुक्त्वाकिंकश्मलंप्राविशःपार्थघोरम् ॥ त्वं
चात्मानंहंतुमिच्छस्यरिघ्ननेदंसद्भिःसेवितंवैकिरीटिन् २६ धर्मात्मानंभ्रातरंज्येष्ठमद्यखड्गेनचैनंयदिहन्यान्नृवीर ॥ धर्माद्भीतस्तत्कथंनामतेस्यात्किंचोत्तरंवाऽक
रिष्यस्त्वमेव २७ सूक्ष्मोधर्मोदुर्विदश्चापिपार्थविशेषतोऽज्ञैःप्रोच्यमानंनिबोध ॥ हत्वाऽऽत्मानमात्मनाप्राप्नुयास्त्वंवधाद्भ्रातुर्नरकंचातिघोरम् २८ ब्रवीहिवाचा
द्यगुणानिहात्मनस्तथाहतात्माभवितासिपार्थ ॥ तथाऽस्तुकृष्णेत्यभिनंद्यतद्वचोधनंजयःप्राहधनुर्विनाम्य २९ युधिष्ठिरंधर्मभृतांवरिष्ठंशृणुष्वराजन्नितिशक्र
सूनुः ॥ नमादृशोऽन्योनरदेवविद्यतेधनुर्धरोदेवमृतेपिनाकिनम् ३० अहंहितेनानुमतेमहात्माक्षणेनहन्यांसचराचरंजगत् ॥ मयाहिराजन्सदिगीश्वरादिशोविजित्य
सर्वाभवतःकृतावशे ३१ सराजसूयश्चसमाप्तदक्षिणःसभाचदिव्याभवतोममौजसा ॥ पाणौपृषत्कानिशितामैवधनुश्चसज्यंविततंसबाणम् ३२ पादौचमेसरथौ
सध्वजौचनमादृशंयुद्धगतंजयंति ॥ हताउदीच्यानिहताःप्रतीच्याःप्राच्यानिरस्तादाक्षिणात्याविशस्ताः ३३ संशप्तकानांकिंचिदेवास्तिशिष्टंसर्वस्यसैन्यस्यहतं
मयार्धम् ॥ शेतेमयानिहताभारतीयंचमूराजन्देवचमूप्रकाशा ३४ येचास्त्रज्ञास्तानहंहन्मिचास्त्रैस्तस्माल्लोकानेषकरोमिभस्म ॥ जैत्रंरथंभीममास्थायकृष्ण
यावःशीघ्रंसूतपुत्रंनिहंतुम् ३५ राजाभवत्वद्यसुनिर्वृतोऽयंकर्णरणेनाशयिताऽस्मिबाणैः ॥ इत्येवमुक्त्वापुनराहपार्थोयुधिष्ठिरंधर्मभृतांवरिष्ठम् ३६

तात्पर्यम् २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६

३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० ॥ इतिकर्णपर्वणिनीलकंठीयेभारत



अद्यापुत्रास्सूतमाताभवित्रीकुंतीवाथोवामयातेनवापि ॥ सत्यंवदाम्यद्यनकर्णमाजौशरैरहत्वाकवचंविमोक्ष्ये ३७ ॥ संजयउवाच ॥ इत्येवमुक्त्वापुनरेवपार्थोयुधिष्ठि
रंधर्मभृतांवरिष्ठम् ॥ विमुच्यशस्त्राणिधनुर्विसृज्यकोशेचखड्गंविनिधायतूर्णम् ३८ सव्रीडयानम्रशिराःकिरीटीयुधिष्ठिरंप्रांजलिरभ्युवाच ॥ प्रसीदराजन्क्षमयन्म
योक्तंकालेभवान्वेत्स्यतितन्नमस्ते ३९ प्रसाद्यराजानममित्रसाहंस्थितोऽब्रवीच्चैवपुनःप्रवीरः ॥ नेदंचिरात्क्षिप्रमिदंभविष्यत्यावर्ततेसाध्वभियामिचैनम् ४० या
म्येषभीमंसमरात्प्रमोक्तुंसर्वात्मनासूतपुत्रंचहंतुम् ॥ तवप्रियार्थंममजीवितंहिब्रवीमिसत्यंतदवेहिराजन् ४१ इतिप्रयास्यन्नुपसंगृह्यपादौसमुत्थितोदीप्ततेजाःकिरीटी॥
एतच्छ्रुत्वापांडवोधर्मराजोभ्रातुर्वाक्यंपरुषंफाल्गुनस्य ४२ उत्थायतस्माच्छयनादुवाचपार्थंततोदुःखपरीतचेताः॥ कृतंमयापार्थयथानसाधुयेनप्राप्तंव्यसनंवःसु
घोरम् ४३ तस्माच्छिरश्छिंधिममेदमद्यकुलांतकस्याधमपूरुषस्य ॥ पापस्यपापव्यसनान्वितस्यविमूढबुद्धेरलसस्यभीरोः ४४ वृद्धावमंतुःपरुषस्यचैवकिंतेचि
रंमेह्यनुसृत्यरूक्षम् ॥ गच्छाम्यहंवनमेवाद्यपापःसुखंभवान्वर्ततांमद्विहीनः ४५ योग्योराजाभीमसेनोमहात्माक्लीबस्यवाममकिंराज्यकृत्यम् ॥ नचापिशक्तःपरु
षाणिसोढुंपुनस्तवेमानिरुषान्वितस्य ४६ भीमोऽस्तुराजाममजीवितेननकार्यमद्यावमतस्यवीर ॥ इत्येवमुक्त्वासहसोत्पपातराजाततस्तच्छयनंविहाय ४७ इ
येषनिर्गंतुमथोवनायतंवासुदेवःप्रणतोऽभ्युवाच ४८ राजन्विदितमेतद्वैयथागांडीवधन्वनः ॥ प्रतिज्ञासत्यसंधस्यगांडीवंप्रतिविश्रुता ॥ ब्रूयाद्यएवंगांडीवमन्यस्मै
देयमित्युत ४९ वध्योस्यसपुमाँल्लोकेत्वयाचोक्तोऽयमीदृशम् ॥ ततःसत्यांप्रतिज्ञांतांपार्थेनप्रतिरक्षता ५० मच्छंदादवमानोऽयंकृतस्तवमहीपते ॥ गुरूणामव
मानोहिवधइत्यभिधीयते ५१ तस्मात्त्वंवैमहाबाहोममपार्थस्यचोभयोः ॥ व्यतिक्रममिमंराजन्सत्यसंरक्षणंप्रति ५२ शरणंत्वांमहाराजप्रपन्नौस्वउभावपि ॥ क्षं
तुमर्हसिमेराजन्प्रणतस्याभियाचतः ५३ राधेयस्याद्यपापस्यभूमिःपास्यतिशोणितम् ॥ सत्यंतेप्रतिजानामिहतंविद्ध्यद्यसूतजम् ५४ यस्येच्छसिवधंतस्यगत
मप्यस्यजीवितम् ॥ इतिकृष्णवचःश्रुत्वाधर्मराजोयुधिष्ठिरः ५५ ससंभ्रमंहृषीकेशमुत्थाप्यप्रणतंतदा ॥ कृतांजलिस्ततोवाक्यमुवाचानंतरंवचः ५६ एवमेवय
थाऽऽत्थत्वमस्त्येषोऽतिक्रमोमम ॥ अनुनीतोऽस्मिगोविंदतारितश्चास्मिमाधव ५७ मोचिताव्यसनाद्घोराद्वयमद्यत्वयाऽच्युत ॥ भवंतंनाथमासाद्यह्यावांव्य
सनसागरात् ५८ घोरादद्यसमुत्तीर्णावुभावज्ञानमोहितौ ॥ त्वद्बुद्धिप्लवमासाद्यदुःखशोकार्णवाद्वयम् ५९ समुत्तीर्णाःसहामात्याःसनाथाःस्मत्वयाऽच्युत ६०
॥ इतिश्रीमहाभारतेकर्णपर्वणियुधिष्ठिरसमाश्वासनेसप्ततितमोऽध्यायः ॥ ७० ॥ ॥ ७१ ॥ ॥ संजयउवाच ॥ धर्मराजस्यतच्छ्रुत्वाप्रीतियुक्तंवचस्ततः ॥
पार्थंप्रोवाचधर्मात्मागोविंदोयदुनंदनः १

भावदीपे सप्ततितमोऽध्यायः ॥ ७० ॥ ॥ ७१ ॥ ॥ धर्मराजस्येतिस्पष्टार्थः १

२ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ पद्भ्यांपादयोः १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३०

( इतिस्मकृष्णवचनात्प्रत्युच्चार्ययुधिष्ठिरम् ॥ बभूवविमनाःपार्थःकिंचित्कृत्वेवपातकम् २ ततोऽब्रवीद्वासुदेवःप्रहसन्निवपांडवम् ॥ कथंनामभवेदेतद्यदित्वं पार्थधर्मजम् ३ असिनातीक्ष्णधारेणहन्याधर्मेव्यवस्थितम् ॥ त्वमित्युक्त्वाऽथराजानमेवंकश्मलमाविशः ४ हत्वातुनृपतिंपार्थआकरिष्यःकिमुत्तरम् ॥ एवंहि दुर्विदोधर्मोमंदप्रज्ञैर्विशेषतः ५ सभवान्धर्मभीरुत्वाद्ध्रुवमैष्यन्महत्तमः ॥ नरकंघोररूपंचभ्रातुर्ज्येष्ठस्यवैवधात् ) ६ सत्वंधर्मभृतांश्रेष्ठंराजानंधर्मसंहितम् ॥ प्र सादयकुरुश्रेष्ठमेतदत्रमतंमम ७ प्रसाद्यभक्त्याराजानंप्रीतेचैवयुधिष्ठिरे ॥ प्रयावस्त्वरितौयोद्धुंसूतपुत्ररथंप्रति ८ हत्वातुसमरेकर्णंत्वमद्यनिशितैःशरैः ॥ विपुलांप्रीतिमाधत्स्वधर्मपुत्रस्यमानद ९ एतदत्रमहाबाहोप्राप्तकालंमतंमम ॥ एवंकृतेकृतंचैवतवकार्यंभविष्यति १० ततोऽर्जुनोमहाराजलज्जयावैसमन्वि तः ॥ धर्मराजस्यचरणौप्रपद्याशिरसानतः ११ उवाचभरतश्रेष्ठंप्रसीदेतिपुनःपुनः ॥ क्षमस्वराजन्यत्प्रोक्तंधर्मकामेनभीरुणा १२ दृष्ट्वातुपातितंपद्भ्यांधर्म राजोयुधिष्ठिरः ॥ धनंजयममित्रघ्नंरुदंतंभरतर्षभ १३ उत्थाप्यभ्रातरंराजाधर्मराजोधनंजयम् ॥ समाश्लिष्यचसस्नेहंप्ररुरोदमहीपतिः १४ रुदित्वासुचिरं कालंभ्रातरौसुमहाद्युती ॥ कृतशौचौमहाराजप्रीतिमंतौबभूवतुः १५ ततआश्लिष्यतंप्रेम्णामूर्ध्निचाघ्रायपांडवः ॥ प्रीत्यापरमयायुक्तोविस्मयंश्चपुनःपुनः ॥ अब्रवीत्तंमहेष्वासंधर्मराजोधनंजयम् १६ कर्णेनमेमहाबाहोसर्वसैन्यस्यपश्यतः ॥ कवचंचध्वजंचैवधनुःशक्तिर्हयाःशराः १७ शरैःकृत्तामहेष्वासयतमानस्य संयुगे ॥ सोऽहंज्ञात्वारणेतस्यकर्मदृष्ट्वाचफाल्गुन १८ व्यवसीदामिदुःखेननचमेजीवितंप्रियम् ॥ नचेदद्यहितंवीरंनिहनिष्यसिसंयुगे १९ प्राणानेवपरित्य क्ष्येजीवितार्थोहिकोमम ॥ एवमुक्तःप्रत्युवाचविजयोभरतर्षभ २० सत्येनतेशपेराजन्प्रसादेनतथैवच ॥ भीमेनचनरश्रेष्ठयमाभ्यांचमहीपते २१ यथाद्यसमरे कर्णंहनिष्यामिहतोऽपिवा ॥ महीतलेपतिष्यामिसत्येनायुधमालभे २२ एवमाभाष्यराजानमब्रवीन्माधवंवचः ॥ अद्यकर्णंरणेकृष्णसूदयिष्येनसंशयः २३ तवबुद्ध्याहिभद्रंतेवधस्तस्यदुरात्मनः ॥ एवमुक्तोब्रवीत्पार्थंकेशवोराजसत्तम २४ शक्तोऽसिभरतश्रेष्ठहंतुंकर्णंमहाबलम् ॥ एषचापिहिमेकामोनित्यमेवम हारथ २५ कथंभवात्रणेकर्णंनिहन्यादितिसत्तम ॥ भूयश्चोवाचमतिमान्माधवोधर्मनंदनम् २६ युधिष्ठिरेमंबीभत्सुंत्वंसांत्वयितुमर्हसि ॥ अनुज्ञातुंचकर्णस्य वधायाद्यदुरात्मनः २७ श्रुत्वाह्यहमयंचैवत्वांकर्णशरपीडितम् ॥ प्रवृत्तिंज्ञातुमायाताविहावांपांडुनंदन २८ दिष्ट्याऽसिराजन्नहतोदिष्ट्यानग्रहणंगतः ॥ परिसांत्वयबीभत्सुंजयमाशाधिचानघ २९ ॥ युधिष्ठिरउवाच ॥ एह्येहिपार्थबीभत्सोमांपरिष्वज्यपांडव ॥ वक्तव्यमुक्तोस्मिहितंत्वयाक्षांतंचतन्मया ३०

१ ( ) चिन्हस्थाः श्लोकाः लिखितपुस्तकेनसंति । २ पार्थइतिपाठः

३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेएकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ प्रसाद्येति

अहंत्वामनुजानामिजहिकर्णंधनंजय ॥ मन्युंचमाकृथाःपार्थयन्मयोक्तोऽसिदारुणम् ३१ ॥ संजयउवाच ॥ ततोधनंजयोराजन्शिरसाप्रणतस्तदा ॥ पादौ जग्राहपाणिभ्यांभ्रातुर्ज्येष्ठस्यमारिष ३२ तमुत्थाप्यततोराजापरिष्वज्यचपीडितम् ॥ मूर्ध्न्युपाघ्रायचैवैनमिदंपुनरुवाचह ३३ धनंजयमहाबाहोमानितोऽस्मिदृढंत्वया ॥ महात्म्यंविजयंचैवंभूयःप्राप्नुहिशाश्वतम् ३४ ॥ अर्जुनउवाच ॥ अद्यतंपापकर्माणंसानुबंधंरणेशरैः ॥ नयाम्यंतंसमासाद्यराधेयंबलगर्वितम् ३५ येनत्वंपीडितोबाणैर्दृढमायम्यकार्मुकम् ॥ तस्याद्यकर्मणःकर्णःफलमाप्स्यातिदारुणम् ३६ अद्यत्वामनुपश्यामिकर्णंहत्वामहीपते ॥ सभाजयितुमाक्रंदादिति सत्यंब्रवीमिते ३७ नाहत्वाविनिवर्त्तिष्येकर्णमद्यरणाजिरात् ॥ इतिसत्येनतेपादौस्पृशामिजगतीपते ३८ ॥ संजयउवाच ॥ इतिब्रुवाणंसुमनाःकिरीटिनंयुधिष्ठिरःप्राहवचोबृहत्तरम् ॥ यशोऽक्षयंजीवितमीप्सितंतेजयंसदावीर्यमरिक्षयंतदा ३९ प्रयाहिवृद्धिंचदिशंतुदेवतायथाऽहमिच्छामितवास्तुतत्तथा ॥ प्रयाहिशीघ्रंजहिकर्णमाहवेपुरंदरोवृत्रमिवात्मवृद्धये ४० ॥ इतिश्रीमहाभारतेकर्णपर्वणिअर्जुनप्रतिज्ञायांएकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ संजयउवाच ॥ प्रसाद्य धर्मराजानंप्रहृष्टेनांतरात्मना ॥ पार्थःप्रोवाचगोविंदंसूतपुत्रवधोद्यतः १ कल्पतांमेरथोभूयोयुज्यंतांचहयोत्तमाः ॥ आयुधानिचसर्वाणिसज्जंतांमेमहारथे २ उपावृत्ताश्चतुरगाःशिक्षिताश्चाश्वसादिभिः ॥ रथोपकरणैःसज्जाउपायांतुत्वरान्विताः ३ प्रयाहिशीघ्रंगोविंदसूतपुत्रजिघांसया ॥ एवमुक्तोमहाराजफाल्गुनेनमहात्मना ४ उवाचदारुकंकृष्णःकुरुसर्वंयथाऽब्रवीत् ॥ अर्जुनोभरतश्रेष्ठश्रेष्ठःसर्वधनुष्मताम् ५ आज्ञप्तस्त्वथकृष्णेनदारुकोराजसत्तम ॥ योजयामाससरथंवैयाघ्रंशत्रुतापनम् ६ सज्जंनिवेदयामासपांडवस्यमहात्मनः ॥ युक्तंतुतंरथंदृष्ट्वादारुकेणमहात्मना ७ अपृच्छ्यधर्मराजनंब्राह्मणान्स्वस्तिवाच्यच ॥ सुमंगलस्वस्त्ययनमारुरोहरथोत्तमम् ८ तस्यराजामहाप्राज्ञोधर्मराजोयुधिष्ठिरः ॥ आशिषोऽयुंक्तसततःप्रायात्कर्णरथंप्रति ९ तमायांतंमहेष्वासंदृष्ट्वाभूतानिभारत ॥ निहतंमेनिरेकर्णंपांडवेनमहात्मना १० बभूवुर्विमलाःसर्वादिशोराजन्समंततः ॥ चाषाश्चशतपत्राश्चक्रौंचाश्चैवजनेश्वर ११ प्रदक्षिणमकुर्वंततदावैपांडुनंदनम् ॥ बहवःपक्षिणोराजन्पुन्नामानःशुभाःशिवाः १२ त्वरयंतोऽर्जुनंयुद्धेहृष्टरूपाववाशिरे ॥ कंकागृध्राबकाःश्येनावायसाश्चविशांपते १३ अग्रतस्तस्यगच्छंतिमांसहेतोर्भयानकाः ॥ निमित्तानिचधन्यानिपांडवस्यशशंसिरे १४ विनाशमरिसैन्यानांकर्णस्यचवधंप्रति ॥ प्रयातस्याथपार्थस्यमहान्स्वेदोव्यजायत १५ चिंताचविपुलाजज्ञेकथंचेदंभविष्यति ॥ ततोगांडीवधन्वानमब्रवीन्मधुसूदनः ॥ दृष्ट्वापार्थंतथायांतंचिंतापरिगतंतदा १६

१ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६

१७ । १८ । १९। २० । २१। २२ । २३ ।२४ । २५। २६ ।२७ । २८ । २९ अष्टरत्निरित्यस्यविवरणंमहाबाहुर्व्यूढोरस्कइति तथाहि सर्वस्यपुरुषस्यव्याममात्रंदैर्घ्यं तच्चपंचहस्तंविंशत्यधिक शतांगुलं रत्निस्त्वेकविंशत्यंगुलः अष्टानांरत्नीनामष्टषष्ट्यधिकंशतमंगुलानिचभवंति आजानुबाहुपुरुषस्यव्याममष्टरत्निमितंभवति अष्टाचत्वारिंशदंगुलातत्रवृद्धिः तत्रापि पंचमांशेनवक्ष

॥ वासुदेवउवाच ॥ गांडीवधन्वन्संग्रामेयेत्वयाधनुषाजिताः ॥ नतेषांमानुषोजेतात्वदन्यइहविद्यते १७ दृष्टाहिबहवःशूराःशक्रतुल्यपराक्रमाः ॥ त्वांप्राप्यस मरेशूरंतेगताःपरमांगतिम् १८ कोहिद्रोणंचभीष्मंचभगदत्तंचमारिष ॥ विंदानुविंदावावंत्यौकांबोजंचसुदक्षिणम् १९ श्रुतायुषंमहावीर्यमच्युतायुषमेवच ॥ प्रत्युद्गम्यभवेत्क्षेमीयोनस्यात्त्वमिवप्रभो २० तवह्यस्त्राणिदिव्यानिलाघवंबलमेवच ॥ असंमोहश्चयुद्धेषुविज्ञानस्यचसंनतिः २१ वेधःपातश्चलक्षेषुयोगश्चैव तथाऽर्जुन ॥ भवान्देवान्सगंधर्वान्हन्यात्सहचराचरान् २२ पृथिव्यांतुरणेपार्थनयोद्धात्वत्समःपुमान् ॥ धनुर्ग्राहाहियेकेचित्क्षत्रियायुद्धदुर्मदाः २३ आदेवात्त्व त्समंतेषांनपश्यामिशृणोमिच ॥ ब्रह्मणाचप्रजाःसृष्टागांडीवंचमहद्धनुः २४ येनत्वंयुध्यसेपार्थतस्मान्नास्तित्वयासमः ॥ अवश्यंतुमयावाच्यंयत्पथ्यंतवपांड व २५ माऽवमंस्थामहाबाहोकर्णमाहवशोभिनम् ॥ कर्णोहिबलवान्दृप्तःकृतास्त्रश्चमहारथः २६ कृतीचचित्रयोधीचदेशकालस्यकोविदः ॥ बहुनाऽत्रकिमुक्तेन संक्षेपाच्छृणुपांडव २७ त्वत्समंत्वद्विशिष्टंवाकर्णंमन्येमहारथम् ॥ परमंयत्नमास्थायत्वयावध्योमहाहवे २८ तेजसावह्निसदृशोवायुवेगसमोजवे ॥ अंतकप्रतिमः क्रोधेसिंहसंहननोबली २९ अष्टरत्निर्महाबाहुर्व्यूढोरस्कःसुदुर्जयः ॥ अभिमानीचशूरश्चप्रवीरःप्रियदर्शनः ३० सर्वयोधगुणैर्युक्तोमित्राणामभयंकरः ॥ सत तंपांडवद्वेषीधार्तराष्ट्रहितेरतः ३१ सर्वैरवध्योराधेयोदेवैरपिसवासवैः ॥ ऋतेत्वामितिमेबुद्धिस्तदद्यजहिसूतजम् ३२ देवैरपिहिसंयत्तैर्बिभ्रद्भिर्मांसशोणितम् ॥ अशक्यःसरथोजेतुंसर्वैरपियुयुत्सुभिः ३३ दुरात्मानंपापवृत्तंनृशंसंदुष्टप्रज्ञंपांडवेयेषुनित्यम् ॥ हीनस्वार्थंपांडवेयैर्विरोधेहत्वाकर्णंनिश्चितार्थोभवाद्य ३४ तं सूतपुत्रंरथिनांवरिष्ठंनिष्कालिकंकालवशंनयाद्य ॥ तंसूतपुत्रंरथिनांवरिष्ठंहत्वाप्रीतिंधर्मराजेकुरुष्व ३५ जानामितेपार्थवीर्यंयथावद्दुर्वारणीयंचसुरासुरैश्च ॥ सदावजानातिहिपांडुपुत्रानसौदर्पात्सूतपुत्रोदुरात्मा ३६ आत्मानंमन्यतेवीरंयेनपापसुयोधनः ॥ तमद्यमूलंपापानांजहिसौतिंधनंजय ३७ खड्गजिह्वंधनुरा स्यंशरदंष्ट्रंतरस्विनम् ॥ दृप्तंपुरुषशार्दूलंजहिकर्णंधनंजय ३८ अहंत्वामनुजानामिवीर्येणचबलेनच ॥ जहिकर्णंरणेशूरंमातंगमिवकेसरी ३९ यस्यवीर्येणवीर्यंते धार्तराष्ट्रोऽवमन्यते ॥ तमद्यपार्थसंग्रामेकर्णंवैकर्तनंजहि ४० ॥ इतिश्रीमहाभारतेकर्णपर्वणिकृष्णार्जुनसंवादेद्विसप्ततितमोऽध्यायः ॥ ७२ ॥ ॥ ६ ॥
॥ संजयउवाच ॥ ततःपुनरमेयात्माकेशवोऽर्जुनमब्रवीत् ॥ कृतसंकल्पमायांतंवधेकर्णस्यभारत १

सिविशालता शेषमंसादारभ्यबाह्वोर्वृद्धिरितिज्ञेयम् ३० ३२ । ३३ । ३४ निष्कालिकंनिर्गतःकालयिताजेताऽस्येतितम् ३५ । ३६ । ३७ । ३८ । ३९ । ४० ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपे द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ ततइति १

२ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ यदित्वंत्राता न भवेस्तर्हि तद्धार्तराष्ट्रं बलं कोऽनुप्रतीयादितिसंबंधः २३

अद्यसप्तदशाहानिवर्तमानस्यभारत ॥ विनाशस्यातिघोरस्यनरवारणवाजिनाम् २ भूत्वाहिविपुलासेनातावकानांपरैःसह ॥ अन्योन्यंसमरंप्राप्यकिंचिच्छेषा विशांपते ३ भूत्वावैकौरवाःपार्थप्रभूतगजवाजिनः ॥ त्वांवैशत्रुंसमासाद्यविनष्टारणमूर्धनि ४ एतेतेपृथिवीपालाःसृंजयाश्चसमागताः ॥ त्वांसमासाद्यदुर्धर्षंपांडवाश्चव्यवस्थिताः ५ पंचालैःपांडवैर्मत्स्यैःकारूषैश्चेदिभिःसह ॥ त्वयागुप्तैरमित्रघ्नैःकृतःशत्रुगणक्षयः ६ कोहिशक्तोरणेजेतुंकौरवांस्तातसंयुगे ॥ अन्यत्रपांडवान्युद्धेत्वयागुप्तान्महारथान् ७ शक्तस्त्वंहिरणेजेतुंससुरासुरमानुषान् ॥ त्रीन्लोकान्समरेयुक्तान्किंपुनःकौरवंबलम् ८ भगदत्तंचराजानंकोऽन्यःशक्तस्त्वयाविना ॥ जेतुंपुरुषशार्दूलयोऽपिस्याद्वासवोपमः ९ तथेमांविपुलांसेनांगुप्तांपार्थत्वयाऽनघ ॥ नशेकुःपार्थिवाःसर्वेचक्षुर्भिरपिवीक्षितुम् १० तथैवसततंपार्थरक्षिताभ्यांत्वयारणे ॥ धृष्टद्युम्नशिखंडिभ्यांभीष्मद्रोणौनिपातितौ ११ कोहिशक्तोरणेपार्थभारतानांमहारथौ ॥ भीष्मद्रोणौयुधाजेतुंशक्रतुल्यपराक्रमौ १२ कोहिशांतनवंभीष्मंद्रोणंवैकर्तनंकृपम् ॥ द्रौणिंचसौमदत्तिंचकृतवर्माणमेवच १३ सैंधवंमद्रराजानंराजानंचसुयोधनम् ॥ वीरान्कृतास्त्रान्समरेसर्वानेवानिवर्तिनः १४ अक्षौहिणीपतीनुग्रान्संहतान्युद्धदुर्मदान् ॥ त्वामृतेपुरुषव्याघ्रजेतुंशक्तःपुमानिह १५ श्रेण्यश्चबहुलाःक्षीणाःप्रदीर्णाश्वरथद्विपाः ॥ नानाजनपदाश्चोग्राःक्षत्रियाणाममर्षिणाम् १६ गोवासदासमीयानांवसातीनांचभारत ॥ प्राच्यानांवाटधानानांभोजानांचाभिमानिनाम् १७ उदीर्णाश्वगजासेनासर्वक्षत्रस्यभारत ॥ त्वांसमासाद्यनिधनंगताभीमंचभारत १८ उग्राश्चभीमकर्माणस्तुषारायवनाःखशाः ॥ दार्वाभिसारादरदाःशकामाठरतंगणाः १९ आंध्रकाश्चपुलिंदाश्चकिराताश्चोग्रविक्रमाः ॥ म्लेच्छाश्चपर्वतीयाश्चसागरानूपवासिनः २० संरंभिणोयुद्धशौंडाबलिनोदंडपाणयः ॥ एतेसुयोधनस्यार्थेसंरब्धाःकुरुभिःसह २१ नशक्यायुधिनिर्जेतुंत्वदन्येनपरंतप ॥ धार्तराष्ट्रमुदग्रंहिव्यूढंदृष्ट्वामहद्बलम् २२ यदित्वंनभवेस्त्राताप्रतीयात्कोनुमानवः ॥ तत्सागरमिवोद्भूतंरजसासंवृतंबलम् २३ विदार्यपांडवैःक्रुद्धैस्त्वयागुप्तैर्हतंविभो ॥ मागधानामधिपतिर्जयत्सेनोमहाबलः २४ अद्यसप्तैवचाहानिहतःसंख्येऽभिमन्युना ॥ ततोदशसहस्राणिगजानांभीमकर्मणाम् २५ जघानगदयाभीमस्तस्यराज्ञःपरिच्छदम् ॥ ततोऽन्येऽभिहतानागारथाश्चशतशोबलात् २६ तदेवंसमरेपार्थवर्तमानेमहाभये ॥ भीमसेनंसमासाद्यत्वांचपांडवकौरवाः २७ सवाजिरथमातंगामृत्युलोकमितोगताः ॥ तथासेनामुखेतत्रनिहतेपार्थपांडवैः २८ भीष्मःप्रासृजदुग्राणिशरजालानिमारिष ॥ सचेदिकाशिपंचालान्करूषान्मत्स्यकेकयान् २९ शरैःप्रच्छाद्यनिधनमनयत्परमास्त्रवित् ॥ तस्यचापच्युतैर्बाणैःपरदेहविदारणैः ३० पूर्णमाकाशमभवद्रुक्मपुंखैरजिह्मगैः ॥ हन्याद्रथसहस्राणिएकैकेनैवमुष्टिना ३१

२४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१

३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ त्वांहीति क्षणेनसर्वंभस्मीकर्तुंसमर्थत्वांप्राप्यएकाहान्नश्यमानंक्षत्रयुक्तं

लक्षंनरद्विपान्हत्वासमेतान्समहाबलान् ॥ गत्यादशम्यातेगत्वाजघ्नुर्वाजिरथद्विपान् ३२ हित्वानवगतीर्दुष्टाःसबाणानाहवेऽव्यजन् ॥ दिनानिदशभीष्मेणानिघ्न
तातावकंबलम् ३३ शून्याःकृतारथोपस्थाहताश्वगजवाजिनः ॥ दर्शयित्वाऽऽत्मनोरूपंरुद्रोपेंद्रसमंयुधि ३४ पांडवानामनीकानिप्रगृह्यासौव्यशातयत् ॥
विनिघ्नन्पृथिवीपालांश्चेदिपंचालकेकयान् ३५ अदहत्पांडवींसेनांरथाश्वगजसंकुलाम् ॥ मज्जंतमप्लवेमंदमुज्जिहीर्षुःसुयोधनम् ३६ तथाचरंतंसमरेतपंतमि
वभास्करम् ॥ पदातिकोटिसाहस्राःप्रवरायुधपाणयः ३७ नशेकुःसृंजयाद्रष्टुंतथैवान्येमहीक्षितः ॥ विचरंतंतथातंतुसंग्रामेजितकाशिनम् ३८ सर्वोद्यमेन
महतापांडवान्समभिद्रवत् ॥ सतुविद्राव्यसमरेपांडवान्सृंजयानपि ३९ एकएवरणेभीष्मएकवीरत्वमागतः ॥ तंशिखंडीसमासाद्यत्वयागुप्तोमहाव्रतम् ४०
जघानपुरुषव्याघ्रंशरैःसन्नतपर्वभिः ॥ सएषपतितःशेतेशरतल्पेपितामहः ४१ त्वांप्राप्यपुरुषव्याघ्रंवृत्रःप्राप्येववासवम् ॥ द्रोणःपंचदिनान्युग्रोविधम्यरि
पुवाहिनीम् ४२ कृत्वाव्यूहमभेद्यंचपातयित्वामहारथान् ॥ जयद्रथस्यसमरेकृत्वारक्षांमहारथः ४३ अंतकप्रतिमश्चोग्रोरात्रियुद्धेऽदहत्प्रजाः ॥ दग्ध्वायो
धाञ्छरैर्वीरोभारद्वाजःप्रतापवान् ४४ धृष्टद्युम्नंसमासाद्यसगतःपरमांगतिम् ॥ यदिवाऽद्यभवान्युद्धेसूतपुत्रमुखान्रथान् ४५ नावारयिष्यःसंग्रामेनस्मद्रोणो
व्यनंक्ष्यत ॥ भवतातुबलंसर्वंधार्तराष्ट्रस्यवारितम् ४६ ततोद्रोणोहतोयुद्धेपार्षतेनधनंजय ॥ एवंवाकोरणेकुर्यात्त्वदन्यःक्षत्रियोयुधि ४७ यादृशंतेकृतंपार्थ
जयद्रथवधंप्रति ॥ निवार्यसेनांमहतींहत्वाशूरांश्चपार्थिवान् ४८ निहतःसैंधवोराजात्वयाऽस्त्रबलतेजसा ॥ आश्चर्यंसिंधुराजस्यवधंजानंतिपार्थिवाः ४९
अनाश्चर्यंहितत्त्वत्तस्त्वंहिपार्थमहारथः ॥ त्वांहिप्राप्यरणेक्षत्रमेकाहादितिभारत ५० नश्यमानमहंयुक्तंमन्येयमितिमेमतिः ॥ सेयंपार्थचमूर्घोराधार्तराष्ट्रस्य
संयुगे ५१ हतसर्वस्ववीराहिभीष्मद्रोणौयदाहतौ ॥ शीर्णप्रवरयोधाद्यहतवाजिरथद्विपा ५२ हीनासूर्येंदुनक्षत्रैर्द्यौरिवाभातिभारती ॥ विध्वस्ताहिरणेपार्थ
सेनेयंभीमविक्रम ५३ आसुरीवपुरासेनाशक्रस्येवपराक्रमैः ॥ तेषांहतावशिष्टास्तुसंतिपंचमहारथाः ५४ अश्वत्थामाकृतवर्माकर्णोमद्राधिपःकृपः ॥ तांस्त्व
मद्यनरव्याघ्रहत्वापंचमहारथान् ५५ हतामित्रःप्रयच्छोर्वींराज्ञेसद्वीपपत्तनाम् ॥ साकाशजलपातालांसपर्वतमहावनाम् ५६ प्राप्नोत्वमितवीर्यश्रीरद्यपार्थो
वसुंधराम् ॥ एतांपुराविष्णुरिवहत्वादैतेयदानवान् ५७ प्रयच्छमेदिनींराज्ञेशक्रायैवहरिर्यथा ॥ अद्यमोदंतुपंचालानिहतेष्वरिषुत्वया ॥ विष्णुनानिहतेष्वे
वदानवेयेषुदेवताः ५८ यदिवाद्विपदांश्रेष्ठंद्रोणंमानयतोगुरुम् ॥ अश्वत्थाम्निकृपातेऽस्तिकृपेवाऽऽचार्यगौरवात् ५९

बलवत्तरंमन्येयंजानीयां क्षणेननाश्यमपिपूर्णैकाहपर्यंतंरथायित्वादितिभावः सार्द्धः ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९

अत्यंतापचितान्बंधून्मानयन्मातृबांधवान् ॥ कृतवर्माणमासाद्यननैष्यसियमक्षयम् ६० भ्रातरंमातुरासाद्यशल्यंमद्रजनाधिपम् ॥ यदित्वमरविंदाक्षदयावा
न्नजिघांससि ६१ इमंपापमतिंक्षुद्रमत्यंतंपांडवान्प्रति ॥ कर्णमद्यनरश्रेष्ठजह्याःसुनिशितैःशरैः ६२ एततेसुकृतंकर्मनात्रकिंचनयुज्यते ॥ वयमप्यनुजानी
मोनात्रदोषोऽस्तिकश्चन ६३ दहनेयत्सपुत्रायानिशिमातुस्तवानघ ॥ द्यूतार्थेयच्चयुष्मासुप्रावर्ततसुयोधनः ६४ तस्यसर्वस्यदुष्टात्माकर्णोवैमूलमित्युत ॥
कर्णाद्धिमन्यतेत्राणंनित्यमेवसुयोधनः ६५ ततोमामपिसंरब्धोनिग्रहीतुंप्रचक्रमे ॥ स्थिराबुद्धिर्नरेंद्रस्यधार्तराष्ट्रस्यमानद ६६ कर्णःपार्थान्रणेसर्वान्विजे
ष्यतिनसंशयः ॥ कर्णमाश्रित्यकौंतेयधार्तराष्ट्रेणविग्रहः ६७ रोचितोभवतासार्धंजानताऽपिबलंतव ॥ कर्णोहिभाषतेनित्यमहंपार्थान्समागतान् ६८ वासुदे
वंचदाशार्हंविजेष्यामिमहारथम् ॥ प्रोत्साहयन्दुरात्मानंधार्तराष्ट्रंसुदुर्मतिम् ६९ समितौगर्जतेकर्णस्तमद्यजहिभारत ॥ यच्चयुष्मासुपापंवैधार्तराष्ट्रःप्रयुक्त
वान् ७० तत्रसर्वत्रदुष्टात्माकर्णःपापमतिर्मुखम् ॥ यच्चतद्धार्तराष्ट्रस्यक्रूरैःषड्भिर्महारथैः ७१ अपश्यंनिहतंवीरंसौभद्रमृषभेक्षणम् ॥ द्रोणद्रौणिकृपान्वीरा
न्कर्षयंतंनरर्षभान् ७२ निर्मनुष्यांश्चमातंगान्विरथांश्चमहारथान् ॥ व्यश्वारोहांश्चतुरगान्पत्तीन्व्यायुधजीविनः ७३ कुर्वंतमृषभस्कंधंकुरुवृष्णियशस्क
रम् ॥ विधमंतमनीकानिव्यथयंतंमहारथान् ७४ मनुष्यवाजिमातंगान्प्राहिण्वंतंयमक्षयम् ॥ शरैःसौभद्रमायांतंदहंतामिववाहिनीम् ७५ तन्मेदहतिगात्रा
णिसखेसत्येनतेशपे ॥ यत्तत्रापिचदुष्टात्माकर्णोऽभ्यद्रुह्यतप्रभो ७६ अशक्नुवंश्चाभिमन्योःकर्णःस्थातुंरणेऽग्रतः ॥ सौभद्रशरनिर्भिन्नोविसंज्ञःशोणितोक्षितः
७७ निःश्वसन्क्रोधसंदीप्तोविमुखःसायकार्दितः ॥ अपयानकृतोत्साहोनिराशश्चापिजीविते ७८ तस्थौसुविह्वलःसंख्येप्रहारजनितश्रमः ॥ अथद्रोणस्यस
मरेतत्कालसदृशंतदा ७९ श्रुत्वाकर्णोवचःक्रूरंततश्चिच्छेदकार्मुकम् ॥ ततश्छिन्नायुधंतेनरणेपंचमहारथाः ८० तंचैवनिकृतिप्रज्ञाःप्राहरञ्छरवृष्टिभिः ॥
तस्मिन्विनिहतेवीरेसर्वेषांदुःखमाविशत् ८१ प्राहसत्सतुदुष्टात्माकर्णःसचसुयोधनः ॥ यच्चकर्णोऽब्रवीत्कृष्णांसभायांपरुषंवचः ८२ प्रमुखेपांडवेयानांकुरू
णांचनृशंसवत् ॥ विनष्टाःपांडवाःकृष्णेशाश्वतंनरकंगताः ८३ पतिमन्यंपृथुश्रोणिवृणीष्वमृदुभाषिणि ॥ एषात्वंधृतराष्ट्रस्यदासीभूतानिवेशनम् ८४ प्रवि
शारालपक्ष्माक्षिनसंतिपतयस्तव ॥ नपांडवाःप्रभवंतितवकृष्णेकथंचन ८५ दासभार्याचपांचालिस्वयंदासीचशोभने ॥ अद्यदुर्योधनोह्येकःपृथिव्यांनृपतिः
स्मृतः ८६ सर्वेचास्यमहीपालायोगक्षेममुपासते ॥ पश्येदानींयथाभद्रेविनष्टाःपांडवाःसमम् ८७ अन्योन्यंसमुदीक्षंतेधार्तराष्ट्रस्यतेजसा ॥ व्यक्तंषंढतिला
ह्येतेनपुरेवनिमज्जिताः ८८ प्रेष्यवच्चापिराजानमुपस्थास्यंतिकौरवम् ॥ इत्युक्तवानधर्मज्ञस्तदापरमदुर्मतिः ८९

९०।९१।९२ ।९३।९४।९५ ।९६।९७।९८।९९।१००।१।२ ।३।४। ५।६ ।७। ८।९ ।११०।११।१२। १३। १४।१५ ।१६।१७ ।११८

पापःपापवचःकर्णःशृण्वदस्तवभारत ॥ अद्यपापस्यतद्वाक्यंसुवर्णविकृताःशराः ९० शमयंतुशिलाधौतास्त्वयाऽस्ताजीवितच्छिदः ॥ यानिचान्यानिदु
ष्टात्मापापानिकृतवांस्त्वयि ९१ तानद्यजीवितंचास्यशमयंतुशरास्तव ॥ गांडीवप्रहितान्घोरानद्यगात्रैःस्पृशञ्छरान् ९२ कर्णःस्मरतुदुष्टात्मावचनंद्रोणभी
ष्मयोः ॥ सुवर्णपुंखानाराचाःशत्रुघ्नावैद्युतप्रभाः ९३ त्वयाऽस्तास्तस्यवर्माणिभित्त्वापास्यंयातिशोणितम् ॥ उग्रास्त्वद्भुजनिर्मुक्तामर्मभित्त्वामहाशराः ९४
अद्यकर्णंमहावेगाःप्रेषयंतुयमक्षयम् ॥ अद्यहाहाकृतादीनाविषण्णास्त्वच्छरार्दिताः ९५ प्रपतंतंरथात्कर्णंपश्यंतुवसुधाधिपाः ॥ अद्यशोणितसंमग्नंशयानंप
तितंभुवि ॥ अपविद्धायुधंकर्णंदीनाःपश्यंतुबांधवाः ९६ हस्तिकक्षोमहानस्यभल्लेनोन्मथितस्त्वया ॥ प्रकंपमानःपततुभूमावपिरथध्वजः ९७ त्वयाशरश
तैश्छिन्नंरथंहेमविभूषितम् ॥ हतयोधाश्वमुत्सृज्यभीतःशल्यःपलायताम् ९८ त्वंचेत्कर्णसुतंपार्थसूतपुत्रस्यपश्यतः ॥ प्रतिज्ञाऽवारणार्थायनिहनिष्यासिसा
यकैः ९९ हतंकर्णस्तुतंदृष्ट्वाप्रियंपुत्रंदुरात्मवान् ॥ स्मरतांद्रोणभीष्माभ्यांवचःक्षत्तुश्चमानद १०० ततःसुयोधनोदृष्ट्वाहतमाधिरथिंत्वया ॥ निराशोजीविते
त्वद्यराज्येचैवभवत्वरिः १ एतेद्रवंतिपंचालावध्यमानाःशितैःशरैः ॥ कर्णेनभरतश्रेष्ठपांडवानुज्जिहीर्षवः २ पंचालान्द्रौपदेयांश्चधृष्टद्युम्नशिखंडिनौ ॥ धृष्ट
द्युम्नतनूजांश्चशतानीकंचनाकुलिम् ३ नकुलंसहदेवंचदुर्मुखंजनमेजयम् ॥ सुधर्माणंसात्यकिंचविद्धिकर्णवशंगतान् ४ अभ्याहतानांकर्णेनपंचालानामसौ
रणे ॥ श्रूयतेनिनदोघोरस्त्वद्बंधूनांपरंतप ५ नत्वेवभीताःपंचालाःकथंचित्स्युःपराङ्मुखाः ॥ नहिमृत्युंमहेष्वासागणयंतिमहारणे ६ यएकःपांडवींसेनांश
रौघैःसमवेष्टयत् ॥ तंसमासाद्यपंचालाभीष्मान्नासन्पराङ्मुखाः ७ तेकथंकर्णमासाद्यविद्रवेयुर्महारथाः ॥ यस्त्वेकःसर्वपंचालानहन्यहानिनाशयन् ८ काल
वच्चरतेवीरःपंचालानांरथव्रजे ॥ तमप्यासाद्यसमरेमित्रार्थेमित्रवत्सलाः ९ तथाज्वलंतमस्त्राग्निंगुरुंसर्वधनुष्मताम् ॥ निर्दहंतंचसमरेदुर्धर्षंद्रोणमोजसा ११०
तेनित्यमुदिताजेतुंमृधेशत्रूनरिंदम ॥ नजात्वाधिरथेर्भीताःपंचालाःस्युःपराङ्मुखाः ११ तेषामापततांशूरःपंचालानांतरस्विनाम् ॥ आदत्तासून्शरैःकर्णः
पतंगानामिवानलः १२ एतेद्रवंतिपंचालाद्राव्यंतेयोधिभिर्ध्रुवम् ॥ कर्णेनभरतश्रेष्ठपश्यपश्यतथाकृतान् १३ तांस्तथाभिमुखान्वीरान्मित्रार्थेत्यक्तजीवि
तान् ॥ क्षयंनयतिराधेयःपंचालाञ्छतशोरणे १४ तद्भारतमहेष्वासानगाधेमज्जतोऽप्लवे ॥ कर्णार्णवेप्लवोभूत्वापंचालांस्त्रातुमर्हसि १५ अस्त्रंहिरामात्कर्णेन
भार्गवादृषिसत्तमात् ॥ यदपात्तंमहाघोरंतस्यरूपमुदीर्यते १६ तापनंसर्वसैन्यानांघोररूपंसुदारुणम् ॥ समावृत्यमहासेनांज्वलंतंस्वेनतेजसा १७ एतेचरं
तिसंग्रामेकर्णचापच्युताःशराः ॥ भ्रमराणामिवव्रातास्तापयंतिस्मतावकान् ११८

२४

११९ । १२० । १२१ । १२२ । १२३ । १२४ । १२५ ॥ ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपे त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ ॥ ७ ॥ ॥ सकेशवस्येति १ । २ । ३

एतेद्रवंतिपंचालादिक्षुसर्वासुभारत ॥ कर्णास्त्रंसमरेप्राप्यदुर्निवार्यमनात्मभिः १९ एषभीमोदृढक्रोधोवृतःपार्थसमंततः ॥ सृंजयैर्योधयन्कर्णंपीड्यतेनिशितैः शरैः १२० पांडवान्सृंजयांश्चैवपंचालांश्चवभारत ॥ हन्यादुपेक्षितःकर्णोरोगोदेहमिवागतः २१ नान्यंत्वत्तोहिपश्यामियोधंयौधिष्ठिरेबले ॥ यःसमासाद्यराधेयंस्वस्तिमानाव्रजेद्गृहम् २२ तमद्यनिशितैर्बाणैर्विनिहत्यनरर्षभ ॥ यथाप्रतिज्ञंपार्थत्वंकृत्वाकीर्तिमवाप्नुहि २३ त्वंहिशक्तोरणेजेतुंसकर्णानपिकौरवान् ॥ नान्योयुधियुधांश्रेष्ठसत्यमेतद्ब्रवीमिते २४ एतत्कृत्वामहत्कर्महत्वाकर्णंमहारथम् ॥ कृतार्थःसफलःपार्थसुखीभवनरोत्तम १२५ ॥ इतिश्रीमहाभारते कर्णपर्वणिकृष्णवाक्ये त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ ॥ संजयउवाच ॥ सकेशवस्यबीभत्सुःश्रुत्वाभारतभाषितम् ॥ विशोकःसंप्रहृष्टश्चक्षणेनसमपद्यत १ ततोज्यामभिमृज्याशुव्याक्षिपद्गांडिवंधनुः ॥ दध्रेकर्णविनाशायकेशवंचाभ्यभाषत २ त्वयानाथेनगोविंदध्रुवएवजयोमम ॥ प्रसन्नोयस्यमेऽद्यत्वंलोकेभूतभविष्यकृत् ३ त्वत्सहायोह्यहंकृष्णत्रीँल्लोकान्वैसमागतान् ॥ प्रापयेयंपरंलोकंकिमुकर्णंमहाहवे ४ पश्यामिद्रवतींसेनांपंचालानांजनार्दन ॥ पश्यामिकर्णंसमरेविचरंतमभीतवत् ५ भार्गवास्त्रंचपश्यामिज्वलंतंकृष्णसर्वशः ॥ सृष्टंकर्णेनवार्ष्णेयशक्रेणेवयथाऽशनिम् ६ अयंखलुससंग्रामोयत्रकर्णंमयाहतम् ॥ कथयिष्यंतिभूतानियावद्भूमिर्धरिष्यति ७ अद्यकृष्णविकर्णामेकर्णंनेष्यंतिमृत्यवे ॥ गांडीवमुक्ताःक्षिण्वंतोममहस्तप्रचोदिताः ८ अद्यराजाधृतराष्ट्रःस्वांबुद्धिमवमंस्यते ॥ दुर्योधनमराज्यार्हंययाराज्येऽभ्यषेचयत् ९ अद्यराज्यात्सुखाच्चैवश्रियोराष्ट्रात्तथापुरात् ॥ पुत्रेभ्यश्चमहाबाहोधृतराष्ट्रोविमोक्ष्यति १० गुणवंतांहियोद्वेष्टिनिर्गुणंकुरुतेप्रभुम् ॥ सशोचतिनृपःकृष्णक्षिप्रमेवागतेक्षये ११ यथाचपुरुषःकश्चिच्छित्त्वाचाम्रवणंमहत् ॥ फलंदृष्ट्वाभृशंदुःखीभविष्यतिजनार्दन ॥ सूतपुत्रेहतेत्वद्यनिराशोभविताप्रभुः १२ अद्यदुर्योधनोराज्याज्जीविताच्चनिराशकः ॥ भविष्यतिहतेकर्णेकृष्णसत्यंब्रवीमिते १३ अद्यदृष्ट्वामयाकर्णंशरैर्विशकलीकृतम् ॥ स्मरतांतववाक्यानिशमंप्रतिजनेश्वरः १४ अद्यासौसौबलःकृष्णग्लहान्जानातुवैशरान् ॥ दुरोदरंचगांडीवंमंडलंचरथंप्रति १५ अद्यकुंतीसुतस्याहंदृढंराज्ञःप्रजागरम् ॥ व्यपनेष्यामिगोविंदहत्वाकर्णंशितैःशरैः १६ अद्यकुंतीसुतोराजाहतेसूतसुतेमया ॥ सुप्रहृष्टमनाःप्रीतश्चिरंसुखमवाप्स्यति १७ अद्यचाहमनाधृष्यंकेशवाप्रतिमंशरम् ॥ उत्स्रक्ष्यामीहयःकर्णंजीविताद्भ्रंशयिष्यति १८ यस्यचैतद्व्रतंमह्यंवधेकिलदुरात्मनः ॥ पादौनधावयेतावद्यावद्धन्यांनफाल्गुनम् १९

४ । ५ ज्वलंतं पुंस्त्वमार्षम् ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ स्मरतांस्मरतु १४ मंडलंद्यूतेशारीस्थापनपट्टं दुरोदरंपाशम् १५ । १६ । १७ । १८ । १९

२० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८

मृषाकृत्वाव्रतंतस्यपापस्यमधुसूदन ॥ पातयिष्येरथात्कायंशरैःसन्नतपर्वभिः २० योऽसौरणेनरंनान्यंपृथिव्यामनुमन्यते ॥ तस्याद्यसूतपुत्रस्यभूमिःपास्य
तिशोणितम् २१ अपतिर्ह्यसिकृष्णेतिसूतपुत्रोयदब्रवीत् ॥ धृतराष्ट्रमतेकर्णःश्लाघमानःस्वकान्गुणान् २२ अनृतंतत्करिष्यंतिमामकानिशिताःशराः ॥
आशीविषाइवक्रुद्धास्तस्यपास्यंतिशोणितम् २३ मयाहस्तवतामुक्तानाराचाविद्युतत्विषः ॥ गांडीवसृष्टादास्यंतिकर्णस्यपरमांगतिम् २४ अद्यतप्स्यतिरा
धेयःपांचालींयत्तदाब्रवीत् ॥ सभामध्येवचःक्रूरंकुत्सयन्पांडवान्प्रति २५ येवैषंढतिलास्तत्रभविताराेऽद्यतेतिलाः ॥ हतेवैकर्तनेकर्णेसूतपुत्रेदुरात्मनि २६
अहंवःपांडुपुत्रेभ्यस्त्रास्यामीतियदब्रवीत् ॥ धृतराष्ट्रसुतान्कर्णःश्लाघमानोऽऽत्मनोगुणान् ॥ अनृतंतत्करिष्यंतिमामकानिशिताःशराः २७ उद्योगःपांडु
पुत्राणांसमाप्तिमुपयास्यति ॥ हंताऽहंपांडवान्सर्वान्सपुत्रानितियोऽब्रवीत् २८ तमद्यकर्णंहंताऽस्मिमिषतांसर्वधन्विनाम् ॥ यस्यवीर्यंसमाश्रित्यधार्तराष्ट्रोमहा
मनाः २९ अवामन्यतदुर्बुद्धिर्नित्यमस्मान्दुरात्मवान् ॥ हत्वाऽहंकर्णमाजौहितोषयिष्यामिभ्रातरम् ३० शरान्नानाविधान्मुक्त्वात्रासयिष्यामिशात्रवान् ॥
आकर्णमुक्तैरिषुभिर्यमराष्ट्रविवर्धनैः ३१ भूमिंशोभांकरिष्यामिपातितैरथकुंजरैः ॥ तत्राहंवैमहासंख्येसंपन्नंयुद्धदुर्मदम् ३२ अद्यकर्णमहंघोरंसूदयिष्यामिसाय
कैः ॥ अद्यकर्णेहतेकृष्णधार्तराष्ट्राःसराजकाः ३३ विद्रवंतुदिशोभीताःसिंहत्रस्तामृगाइव ॥ अद्यदुर्योधनोराजाआत्मानंचानुशोचताम् ३४ हतेकर्णेमयासंख्ये
सपुत्रेससुहृज्जने ॥ अद्यकर्णंहतंदृष्ट्वाधार्तराष्ट्रोऽत्यमर्षणः ३५ जानातुमांरणेकृष्णप्रवरंसर्वधन्विनाम् ॥ सपुत्रपौत्रंसामात्यंसभृत्यंचनिराशिषम् ३६ अद्यरा
ज्येकरिष्यामिधृतराष्ट्रंजनेश्वरम् ॥ अद्यकर्णस्यचक्रांगाःक्रव्यादाश्चपृथग्विधाः ३७ शरैश्छिन्नानिगात्राणिविचरिष्यंतिकेशव ॥ अद्यराधासुतस्याहंसं
ग्रामेमधुसूदन ३८ शिरश्छेत्स्यामिकर्णस्यमिषतांसर्वधन्विनाम् ॥ अद्यतीक्ष्णैर्विपाठैश्चक्षुरैश्चमधुसूदन ३९ रणेछेत्स्यामिगात्राणिराधेयस्यदुरात्मनः ॥
अद्यराजामहत्कृच्छ्रंसंत्यक्ष्यतियुधिष्ठिरः ४० संतापंमानसंवीरश्चिरसंभृतमात्मनः ॥ अद्यकेशवराधेयमहंहत्वासबांधवम् ४१ नंदयिष्यामिराजानंधर्म
पुत्रंयुधिष्ठिरम् ॥ अद्याहमनुगान्कृष्णकर्णस्यकृपणान्युधि ४२ हंताज्वलनसंकाशैःशरैःसर्पविषोपमैः ॥ अद्याहंहेमकवचैराबद्धमणिकुंडलैः ४३ संस्तरिष्या
मिगोविंदवसुधांवसुधाधिपैः ॥ अद्याभिमन्योःशत्रूणांसर्वेषांमधुसूदन ४४ प्रमथिष्यामिगात्राणिशिरांसिचशितैःशरैः ॥ अद्यनिर्धार्तराष्ट्रांचभ्रात्रेदास्या
मिमेदिनीम् ४५ निरर्जुनांवापृथिवींकेशवानुचरिष्यसि ॥ अद्याहमनृणःकृष्णभविष्यामिधनुर्भृताम् ४६ कोपस्यचकुरूणांचशराणांगांडिवस्यच ॥
अद्यदुःखमहंमोक्ष्येत्रयोदशसमार्जितम् ४७ हत्वाकर्णंरणेकृष्णशंबरंमघवानिव ॥ अद्यकर्णेहतेयुद्धेसोमकानांमहारथाः ४८

४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ ५८ ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपे चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ ॥ ७ ॥ समागमेइति ।

कृतंकार्यंचमन्यंतामित्रकार्येप्सवोयुधि ॥ ममचैवकथंप्रीतिःशैनेयस्याद्यमाधव ४९ भविष्यतिहतेकर्णेमयिचापिजयाधिके ॥ अहंहत्वारणेकर्णंपुत्रंचास्यम हारथं ५० प्रीतिंदास्यामिभीमस्ययमयोःसात्यकस्यच ॥ धृष्टद्युम्नशिखंडिभ्यांपंचालानांचमाधव ५१ अद्यानृण्यंगमिष्यामिहत्वाकर्णंमहाहवे ॥ अद्यपश्यं तुसंग्रामेधनंजयममर्षणं ५२ युध्यंतंकौरवान्संख्येघातयंतंचसूतजम् ॥ भवत्सकाशेवक्ष्येचपुनरेवात्मसंस्तवम् ५३ धनुर्वेदेमत्समोनास्तिलोकेपराक्रमेवाममकोऽ स्तितुल्यः ॥ कोवाऽप्यन्योमत्समोऽस्तिक्षमावांस्तथाक्रोधेसदृशोऽन्योनमेऽस्ति ५४ अहंधनुष्मानसुरासुरांश्चसर्वाणिभूतानिचसंगतानि ॥ स्वबाहुवीर्या द्गमयेपराभवंमत्पौरुषंविद्धिपरंपरेभ्यः ५५ शरार्चिषागांडिवेनाहमेकःसर्वान्कुरून्बाह्लिकांश्चाभिहत्य ॥ हिमात्ययेकक्षगतोयथाग्निस्तथादहेयंसगणान्प्रसह्य ५६ पाणौपृषत्कालिखितामभैतेधनुश्चादिव्यंविततंसबाणम् ॥ पादौचमेसरथौसध्वजौचनमादृशंयुद्धगतंजयंति ५७ इत्येवमुक्त्वार्जुनएकवीरःक्षिप्रंरिपुघ्नःक्षतजोप माक्षः ॥ भीमंमुमुक्षुःसमरेप्रयातःकर्णस्यकायाच्छिरोजिहीर्षुः ५८ ॥ इतिश्रीमहाभारतेकर्णपर्वणिअर्जुनवाक्येचतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ ॥ ७ ॥

॥ धृतराष्ट्रउवाच ॥ समागमेपांडवसृंजयानांमहाभयेमामकानामगाधे ॥ धनंजयेतातरणाययातेकर्णेनतद्युद्धमथोऽत्रकीदृक् १ ॥ संजयउवाच ॥ तेषामनीका निबृहद्ध्वजानिरणेसमृद्धानिसमागतानि ॥ गर्जंतिभेरीनिनदोन्मुखानिनादैर्यथामेघगणास्तपांते २ महागजाभ्राकुलमस्त्रतोयंवादित्रनेमीतलशब्दवच्च ॥ हिरण्य चित्रायुधविद्युतंचशरासिनाराचमहास्त्रधारम् ३ तद्भीमवेगंरुधिरौघवाहिखड्गाकुलंक्षत्रियजीवघाति ॥ अनार्तवंक्रूरमनिष्टवर्षंबभूवतत्संहरणंप्रजानाम् ४ एकं रथंसंपरिवार्यमृत्युंनयंत्यनेकेचरथाःसमेताः ॥ एकस्तथैकंरथिनंरथाग्र्यांस्तथारथश्चापिरथाननेकान् ५ रथंससूतंसहयंचकंचित्कश्चिद्रथीमृत्युवशंनिनाय ॥ निनायचाप्येकगजेनकश्चिद्रथान्बहून्मृत्युवशेतथाऽश्वान् ६ रथान्ससूतान्सहयान्गजांश्चसर्वानरीन्मृत्युवशंशरौघैः ॥ निन्येहयांश्चैवतथाससादीन्पदातिसंघां श्चतथैवपार्थः ७ कृपःशिखंडीचरणेसमेतौदुर्योधनंसात्यकिरध्यगच्छत् ॥ श्रुतस्तथाद्रोणपुत्रेणसार्धंयुधामन्युश्चित्रसेनेनसार्धम् ८ कर्णस्यपुत्रंतुरथीसुषेणंस मागतंसृंजयश्चोत्तमौजाः ॥ गांधारराजंसहदेवःक्षुधार्तोमहर्षभंसिंहइवाभ्यधावत् ९ शतानीकोनाकुलिःकर्णपुत्रंयुवायुवानंवृषसेनंशरौघैः ॥ समार्पयत्कर्ण पुत्रश्चशूरःपांचालेयंशरवर्षैरनेकैः १० रथर्षभःकृतवर्माणमार्छन्माद्रीपुत्रोनकुलश्चित्रयोधी ॥ पंचालानामधिपोयाज्ञसेनिःसेनापतिःकर्णमार्छत्ससैन्यम् ११ दुःशासनोभारतभारतीचसंशप्तकानांपृतनासमृद्धा ॥ भीमंरणेशस्त्रभृतांवरिष्ठंभीमंसमार्छत्तमसह्यवेगम् १२

समागमे कर्णेनसहकीदृग्युद्धमभूदितिशेषः १ । २ । ३ । ४ । ५ । ६ । ७ । । ८ । ९ पांचालेयं पांचालीतनयं नाकुलिं १० । ११ । १२

१३ । १४ । १५ । १६ । १७ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपे पंचसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥ ७ ॥ अथेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२

कर्णात्मजंतत्रजघानवीरस्तथाऽच्छिनच्चोत्तमौजाःप्रसह्य ॥ तस्योत्तमांगंनिपपातभूमौनिनादयद्गांनिनदेनखंच १३ सुषेणशीर्षंपतितंपृथिव्यांविलोक्यकर्णो थतदार्तरूपः ॥ क्रोधाद्धयांस्तस्यरथंध्वजंचबाणैःसुधारैर्निशितैरकंतत् १४ सतूत्तमौजानिशितैःपृषत्कैर्विव्याधखड्गेनचभास्वरेण ॥ पार्ष्णिग्रहांश्चैवकृपस्य हत्वाशिखंडिवाहंसततोऽध्यरोहत् १५ कृपंतुदृष्ट्वाविरथंरथस्थोनैच्छच्छरैस्ताडयितुंशिखंडी ॥ तंद्रौणिरावार्यरथंकृपस्यसमुज्जह्रेपंकगतांयथागाम् १६ हिर ण्यवर्मानिशितैःपृषत्कैस्तवात्मजानामनिलात्मजोवै ॥ अतापयत्सैन्यमतीवभीमःकालेशुचौमध्यगतोयथार्कः १७ ॥ इतिश्रीमहाभारतेकर्णपर्वणि संकुलद्वंद्व युद्धेपंचसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ अथत्विदानींतुमुलेविमर्देद्विषाद्भिरेकोबहुभिःसमावृतः ॥ महारणेसारथिमित्युवाचभी मश्चमूंवाहयधार्तराष्ट्रीम् १ त्वंसारथेयाहिजवेनवाहैर्नयाम्येतान्धार्तराष्ट्रान्यमाय ॥ संचोदितोभीमसेनेनचैवंससारथिःपुत्रबलंत्वदीयम् २ प्रायात्ततःसत्वरमुग्र वेगोयतोभीमस्तद्बलंगंतुमैच्छत् ॥ ततोऽपरेनागरथाश्वपत्तिभिःप्रत्युद्ययुस्तंकुरवःसमंतात् ३ भीमस्यवाहाग्र्यमुदारवेगंसमंततोबाणगणैर्निजघ्नुः ॥ ततःशरा नापततोमहात्माचिच्छेदबाणैस्तपनीयपुंखैः ४ तेवैनिपेतुस्तपनीयपुंखाद्विधात्रिधाभीमशरैर्निकृत्ताः ॥ ततोराजन्नगरथाश्वयूनांभीमाहतानांनरराजमध्ये ५ घोरोनिनादःप्रबभौनरेंद्रवज्राहतानामिवपर्वतानाम् ॥ तेवध्यमानाश्चनरेंद्रमुख्यानिर्भिद्यंतोभीमशरप्रवेकैः ६ भीमंसमंतात्समरेऽभ्यरोहन्वृक्षंशकुंताइवपुष्प हेतोः ॥ ततोऽभियातेतवसैन्येसभीमःप्रादुश्चक्रेवेगमनंतवेगः ७ यथांतकालेक्षपयन्दिधक्षुर्भूतांतकृत्कालइवात्तदंडः ॥ तस्यातिवेगस्यरणेऽतिवेगंनाशक्नुवन्वा रयितुंत्वदीयाः ८ व्यात्ताननस्यापततोयथैवकालस्यकालेहरतःप्रजावै ९ ततोबलंभारतभारतानांप्रदह्यमानंसमरेमहात्मना ९ भीतंदिशोऽकीर्यतभीमनुन्नंमहा निलेनाभ्रगणायथैव ॥ ततोधीमान्सारथिमब्रवीद्बलीसभीमसेनःपुनरेवहृष्टः १० सूताभिजानीहिस्वकान्परान्वारथान्ध्वजांश्चापततःसमेतान् ॥ युद्धयन्नह्यहंना भिजानामिकिंचिन्मासैन्यंस्वंछादयिष्येपृषत्कैः ११ अरीन्विशोकाभिनिरीक्ष्यसर्वतोरथोध्वजाग्राणिधुनोतिमेभृशम् ॥ राजाऽऽतुरोनागमद्यत्किरीटीबहूनिदुः खान्यभियातोऽस्मिसूत १२ एतद्दुःखंसारथेधर्मराजोयन्मांहित्वायातवाञ्शत्रुमध्ये ॥ नैनंजीवंनाप्यजानाम्यजीवंबीभत्सुंवातन्ममाद्यातिदुःखम् १३ सोऽहं द्विषत्सैन्यमुदग्रकल्पंविनाशयिष्येपरमप्रतीतः ॥ एतन्निहत्याजिमध्येसमेतंप्रीतोभविष्यामिसहत्वयाऽद्य १४ सर्वांस्तूणान्सायकानामवेक्ष्यकिंशिष्टंस्यात्साय कानांरथेमे ॥ कावाजातिःकिंप्रमाणंचतेषांज्ञात्वाव्यक्तंतत्समाचक्ष्वसूत १५ ॥ विशोकउवाच ॥ षण्मार्गणानामयुतानिवीरक्षुराश्चभल्लाश्चतथाऽयुताख्याः ॥ नाराचानांद्वेसहस्रेचवीरत्रीण्येवचप्रदराणांसपार्थ १६

१३ । १४ । १५ प्रदराबाणविशेषाः १६

अस्त्यायुधंपांडवेयावशिष्टंनयद्वहेच्छकटंषड्गवीयम् ॥ एतद्विद्वन्मुंचसहस्रशोऽपिगदासिबाहुद्रविणंचतेऽस्ति १७ प्रासाश्चमुद्गराःशक्तयस्तोमराश्चमाभैषी
स्त्वंसंक्षयादायुधानाम् १८ ॥ भीमसेनउवाच ॥ सूताद्यैनंपश्यभीमप्रयुक्तैःसंछिंदद्भिःपार्थिवानांसुवेगैः ॥ छन्नंबाणैराहवंघोररूपंनष्टादित्यंमृत्युलोकेनतु
ल्यम् १९ अद्यैतद्वैविदितंपार्थिवानांभविष्यतिह्याकुमारंचसूत ॥ निमग्नोवासमरेभीमसेनएकःकुरून्वासमरेऽव्यजैषीत् २० सर्वेसंख्येकुरवोनिष्पतंतुमांवालो
काःकीर्तयंत्वाऽऽकुमारम् ॥ सर्वानेकस्तानहंपातयिष्येतेवासर्वेभीमसेनंतुदंतु २१ आशास्तारःकर्मचाप्युत्तमंयेतन्मेदेवाःकेवलंसाधयंतु ॥ आयात्विहाद्यार्जुनः
शत्रुघातीशक्रस्तूर्णंयज्ञइवोपहूतः २२ ईक्षस्वैतांभारतींदीर्यमाणामेतेकस्माद्विद्रवंतेनरेंद्राः ॥ व्यक्तंधीमान्सव्यसाचीनराग्र्यःसैन्यंह्येतच्छादयत्याशुबाणैः
२३ पश्यध्वजांश्चद्रवतोविशोकनागान्हयान्पत्तिसंघांश्चसंख्ये ॥ रथान्विकीर्णान्शरशक्तिताडितान्पश्यस्वैतान्रथिनश्चैवसूत २४ आपूर्यतेकौरवी
चाप्यभीक्ष्णंसेनाह्यसौसुभृशंहन्यमाना ॥ धनंजयस्याशनितुल्यवेगैर्ग्रस्ताशरैःकांचनबर्हिजालैः २५ एतेद्रवंतिस्मरथाश्वनागाःपदातिसंघानतिमर्द
यंतः ॥ संमुह्यमानाःकौरवाःसर्वएवद्रवंतिनागाइवदाहभीताः २६ हाहाकृताश्चैवरणेविशोकमुंचंतिनादान्विपुलान्गजेंद्राः २७ ॥ विशोकउवाच ॥
किंभीमनैनंत्वमिहाशृणोषिविस्फारितंगांडिवस्यातिघोरम् ॥ क्रुद्धेनपार्थेनविकृष्यतोऽद्यकच्चिन्नेमौतवकर्णौविनष्टौ २८ सर्वेकामाःपांडवतेसमृद्धाःकपिर्ह्यसौ
दृश्यतेहस्तिसैन्ये ॥ नीलाद्घनाद्विद्युतमुच्चरंतींतथापश्यविस्फुरंतींधनुर्ज्याम् २९ कपिर्ह्यसौवीक्षतेसर्वतोवैध्वजाग्रमारुह्यधनंजयस्य ॥ वित्रासयन्रिपुसं
घान्विमर्देबिभेम्यस्मादात्मनैवाभिवीक्ष्य ३० विभ्राजतेचातिमात्रंकिरीटंविचित्रमेतच्चधनंजयस्य ॥ दिवाकराभोमणिरेषदिव्योविभ्राजतेचैवकिरीटसंस्थः
३१ पार्श्वेभीमंपांडुराभ्रप्रकाशंपश्यस्वशंखंदेवदत्तंसुघोषम् ॥ अभीषुहस्तस्यजनार्दनस्यविगाहमानस्यचमूंपरेषाम् ३२ रविप्रभंवज्रनाभंक्षुरांतंपार्श्वे
स्थितंपश्यजनार्दनस्य ॥ चक्रंयशोवर्धनंकेशवस्यसदार्चितंयदुभिःपश्यवीर ३३ महाद्विपानांसरलद्रुमोपमाःकरानिकृत्ताःप्रपतंत्यमीक्षुरैः ॥ किरीटिनाते
नपुनःससादिनःशरैर्निकृत्ताःकुलिशैरिवाद्रयः ३४ तथैवकृष्णस्यचपांचजन्यंमहार्हमेतंद्विजराजवर्णम् ॥ कौंतेयपश्योरसिकौस्तुभंचजाज्वल्यमानंविजयां
स्रजंच ३५ ध्रुवंरथाग्र्यःसमुपैतिपार्थोविद्रावयन्सैन्यमिदंपरेषाम् ॥ सिताभ्रवर्णैरसितप्रयुक्तैर्हयैर्महार्हैरथिनांवरिष्ठः ३६ रथान्हयान्पत्तिगणांश्चसायकैर्विदा
रितान्पश्यपतंत्यमीयथा ॥ तवानुजेनामरराजतेजसामहावनानीवसुपर्णवायुना ३७ चतुःशतान्पश्यरथानिमान्हतान्सवाजिसूतान्समरेकिरीटिना ॥
महेषुभिःसप्तशतानिदंतिनांपदातिसादींश्चरथाननेकशः ३८

कृष्णप्रयुक्तैः ३६ । ३७ । ३८

३९ । ४० ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥ ॥ ७ ॥ ॥ ७ ॥ श्रुत्वेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११

अयंसमभ्येतितवातिकंबलीनिघ्नन्कुरूंश्चित्रइवग्रहोऽर्जुनः ॥ सम्पद्धकामोऽसिहतास्तवाहिताबलंतवायुश्चचिरायवर्धताम् ३९ ॥ भीमसेनउवाच ॥ ददानि
तेग्रामवरांश्चतुर्दशप्रियाख्यानेसारथसुप्रसन्नः ॥ दासीशतंचापिरथांश्चविंशतिंयदर्जुनंवेदयसेविशोक ४० ॥ इतिश्रीमहाभारतेकर्णपर्वणिभीमसेनविशोकसं
वादेषट्सप्ततितमोऽध्यायः ॥ ७६ ॥ ॥ संजयउवाच ॥ श्रुत्वातुरथनिर्घोषंसिंहनादंचसंयुगे ॥ अर्जुनःप्राहगोविंदंशीघ्रंनोदयवाजिनः १ अर्जुनस्यवचः
श्रुत्वागोविंदोऽर्जुनमब्रवीत् ॥ एषगच्छामिसुक्षिप्रंयत्रभीमोऽव्यवस्थितः २ तंयांतमश्वैर्हिमशंखवर्णैःसुवर्णमुक्तामणिजालनद्धैः ॥ जंभंजिघांसुंप्रगृहीतवज्रंजया
यदेवेंद्रमिवोग्रमन्युं ३ रथाश्वमातंगपदातिसंघाबाणस्वनैर्नेमिखुरस्वनैश्च ॥ संनादयंतोवसुधांदिशश्चक्रुद्धान्नसिंहाजयमभ्युदीयुः ४ तेषांचपार्थस्यचमारिषासी
द्देहासुपापक्षपणंसुयुद्धं ॥ त्रैलोक्यहेतोरसुरैर्यथाऽऽसीद्देवस्यविष्णोर्जयतांवरस्य ५ तैरस्तमुच्चावचमायुधंतदेकःप्रचिच्छेदकिरीटमाली ॥ क्षुरार्धचंद्रैर्निशि
तैश्चभल्लैःशिरांसितेषांबहुधाचबाहून् ६ छत्राणिवालव्यजनानिकेतूनश्वान्रथान्पत्तिगणान्द्विपांश्च ॥ तेपेतुरुर्व्यांबहुधाविरूपावातप्रणुन्नानियथावनानि
७ सुवर्णजालावततामहागजाःसवैजयंतीध्वजयोधकल्पिताः ॥ सुवर्णपुंखैरिषुभिःसमाचिताश्चकाशिरेप्रज्वलितायथाऽचलाः ८ विदार्यनागाश्वरथान्धनं
जयःशरोत्तमैर्वासववज्रसन्निभैः ॥ द्रुतंययौकर्णजिघांसयातथायथामरुत्वान्बलभेदनेपुरा ९ ततःसपुरुषव्याघ्रस्तवसैन्यमरिंदमः ॥ प्रविवेशमहाबाहुर्मकरः
सागरंयथा १० तंदृष्टास्तावकाराजन्रथपत्तिसमन्विताः ॥ गजाश्वसादिबहुलाःपांडवंसमुपाद्रवन् ११ तेषामापततांपार्थमारावःसुमहानभूत् ॥ सागरस्येवक्षुब्ध
स्ययथास्यात्सलिलस्वनः १२ तेतुतंपुरुषव्याघ्रंव्याघ्राइवमहारथाः ॥ अभ्यद्रवंतसंग्रामेत्यक्त्वाप्राणकृतंभयम् १३ तेषामापततांतत्रशरवर्षाणिमुंचताम् ॥
अर्जुनोव्यधमत्सैन्यंमहावातोघनानिव १४ तेऽर्जुनंसहितामूत्वारथवंशैःप्रहारिणः ॥ अभियायमहेष्वासाविव्यधुर्निशितैःशरैः १५ ततोऽर्जुनःसहस्राणिर
थवारणवाजिनाम् ॥ प्रेषयामासविशिखैर्यमस्यसदनंप्रति १६ तेवध्यमानाःसमरेपार्थचापच्युतैःशरैः ॥ तत्रतत्रस्मलीयंतेभयेजातेमहारथाः १७ तेषांचतुः
शतान्वीरान्यतमानान्महारथान् ॥ अर्जुनोनिशितैर्बाणैरनयद्यमसादनम् १८ तेवध्यमानाःसमरेनानालिंगैःशितैःशरैः ॥ अर्जुनंसमभित्यज्यदुद्रुवुर्वैदिशोदश
१९ तेषांशब्दोमहानासीद्द्रवतांवाहिनीमुखे ॥ महौघस्येवजलधेर्गिरिमासाद्यदीर्यतः २० तांतुसेनांभृशंविद्धाद्रावयित्वाऽर्जुनःशरैः ॥ प्रायादभिमुखः
पार्थःसूतानीकंहिमारिष २१ तस्यशब्दोमहानासीत्परानभिमुखस्यवै ॥ गरुडस्येवपततःपन्नगार्थेयथापुरा २२ तंतुशब्दमभिश्रुत्यभीमसेनोमहाबलः ॥
बभूवपरमप्रीतःपार्थदर्शनलालसः २३

१२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३

२४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७

श्रुत्वैवपार्थमायांतंभीमसेनःप्रतापवान् ॥ त्यक्त्वाप्राणान्महाराजसेनांतवममर्दह २४ सवायुवीर्यप्रतिमोवायुवेगसमोजवे ॥ वायुवद्व्यचरद्भीमोवायुपुत्रःप्रताप
वान् २५ तेनार्द्यमानाराजेंद्रसेनातवविशांपते ॥ व्यभ्रश्यतमहाराजाभिन्नानौरिवसागरे २६ तांतुसेनांतदाभीमोदर्शयन्पाणिलाघवम् ॥ शरैरवचकर्तोग्रैःप्रेष
यिष्यन्यमक्षयं २७ तत्रभारतभीमस्यबलंदृष्ट्वाऽतिमानुषम् ॥ व्यभ्रमंतरणेयोधाःकालस्येवयुगक्षये २८ तथार्दितान्भीमबलान्भीमसेनेनभारत ॥ दृष्ट्वादुर्यो
धनोराजाइदंवचनमब्रवीत् २९ सैनिकांश्चमहेष्वासान्योधांश्चभरतर्षभ ॥ समादिशन्रणेसर्वान्हतभीममितिस्मह ३० तस्मिन्हतेहतंमन्येपांडुसैन्यमशेषतः ॥
प्रतिगृह्यचतामाज्ञांतवपुत्रस्यपार्थिवाः ३१ भीमंप्रच्छादयामासुःशरवर्षैःसमंततः ॥ गजाश्वबहुलाराजन्नराश्चजयगृद्धिनः ३२ रथेस्थिताश्चराजेंद्रपरिवव्रु
र्वृकोदरम् ॥ सतैःपरिवृतःशूरैःशूरोराजन्समंततः ३३ शुशुभेभरतश्रेष्ठोनक्षत्रैरिवचंद्रमाः ॥ परिवेषीयथासोमःपरिपूर्णोविराजते ३४ सरराजतथासंख्येदर्श
नीयोनरोत्तमः ॥ निर्विशेषोमहाराजयथाहिविजयस्तथा ३५ तस्यतेपार्थिवाःसर्वेशरवृष्टिंसमासृजन् ॥ क्रोधरक्तेक्षणाःशूराहंतुकामावृकोदरम् ३६ तांविदार्य
महासेनांशरैःसन्नतपर्वभिः ॥ निश्चक्रामरणाद्भीमोमत्स्योजालादिवांभसि ३७ हत्वादशसहस्राणिगजानामनिवर्तिनाम् ॥ नृणांशतसहस्रेद्वेद्वेशतेचैवभारत
३८ पंचचाश्वसहस्राणिरथानांशतमेवच ॥ हत्वाप्रास्यंदयद्भीमोनदींशोणितवाहिनीम् ३९ शोणितोदांरथावर्तांहस्तिग्राहसमाकुलाम् ॥ नरमीनाश्वनक्रांतां
केशशैवलशाद्वलाम् ४० संछिन्नभुजनागेंद्रांबहुरत्नापहारिणीम् ॥ ऊरुग्राहांमज्जपंकांशीर्षोपलसमावृताम् ४१ धनुःकाशांशरावापांगदापरिघकेतनाम् ॥
हंसछत्रध्वजोपेतामुष्णीषवरफेनिलाम् ४२ हारपद्माकरांचैवभूमिरेणूर्मिमालिनीम् ॥ आर्यवृत्तवतींसंख्येसुतरांभीरुदुस्तराम् ४३ योधग्राहवतींसंख्येवहंतीं
पितृसादनम् ॥ क्षणेनपुरुषव्याघ्रःप्रावर्तयतनिम्नगाम् ४४ यथावैतरणीमुग्रांदुस्तरामकृतात्मभिः ॥ तथादुस्तरणींघोरांभीरूणांभयवर्धनीम् ४५ यतोयतः
पांडवेयःप्रविष्टोरथसत्तमः ॥ ततस्ततोऽघातयतयोधान्शतसहस्रशः ४६ एवंदृष्ट्वाकृतंकर्मभीमसेनेनसंयुगे ॥ दुर्योधनोमहाराजशकुनिंवाक्यमब्रवीत् ४७
जयमातुलसंग्रामेभीमसेनंमहाबलम् ॥ अस्मिन्जितेजितंमन्येपांडवेयंमहाबलम् ४८ ततःप्रायान्महाराजसौबलेयःप्रतापवान् ॥ रणायमहतेयुक्तोभ्रातृभिः
परिवारितः ४९ ससमासाद्यसंग्रामेभीमंभीमपराक्रमम् ॥ वारयामासतंवीरोवेलेवमकरालयम् ५० संन्यवर्ततभीमोवार्यमाणःशितैःशरैः ॥ शकुनि
स्तस्यराजेंद्रवामपार्श्वेस्तनांतरे ५१ प्रेषयामासनाराचान्रुक्मपुंखान्शिलाशितान् ॥ वर्मभित्वातुतेघोराःपांडवस्यमहात्मनः ५२ न्यमज्जंतमहाराजकं
कबर्हिणवाससः ॥ सोऽतिविद्धोरणेभीमःशरंरुक्मविभूषितम् ५३

४८ । ४९ । ५० । ५१ । ५२ । ५३

५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ ॥ इतिकर्णपर्वाणि

प्रेषयामाससरुषासौबलंप्रतिभारत ॥ तमार्यातंशरंघोरंशकुनिःशत्रुतापनः ५४ चिच्छेदसप्तधाराजन्कृतहस्तोमहाबलः ॥ तस्मिन्निपतितेभूमौभीमःक्रुद्धोविशांपते ५५ धनुश्चिच्छेदभल्लेनसौबलस्यहसन्निव ॥ तदपास्यधनुश्छिन्नंसौबलेयःप्रतापवान् ५६ अन्यदादायवेगेनधनुर्भल्लांश्चषोडश ॥ तैस्तस्यतुमहाराजभल्लैःसन्नतपर्वभिः ५७ द्वाभ्यांससारथिंह्यार्छद्भीमंसप्तभिरेवच ॥ ध्वजमेकेनचिच्छेदद्वाभ्यांछत्रंविशांपते ५८ चतुर्भिश्चतुरोवाहान्विव्याधसुबलात्मजः ॥ ततःक्रुद्धोमहाराजभीमसेनःप्रतापवान् ५९ शक्तिंचिक्षेपसमरेरुक्मदंडामयस्मयीम् ॥ साभीमभुजनिर्मुक्तानागजिह्वेवचंचला ६० निपपातरणेतूर्णंसौबलस्यमहात्मनः ॥ ततस्तामेवसंगृह्यशक्तिंकनकभूषणाम् ६१ भीमसेनायचिक्षेपक्रुद्धरूपोविशांपते ॥ सानिर्भिद्यभुजंसव्यंपांडवस्यमहात्मनः ६२ निपपाततदाभूमौयथाविद्युन्नभश्च्युता ॥ अथोत्क्रुष्टंमहाराजधार्तराष्ट्रैःसमंततः ६३ नतुतंममृषेभीमःसिंहनादंतरस्विनाम् ॥ अन्यद्गृह्यधनुःसज्यंत्वरमाणोमहाबलः ६४ मुहूर्तादिवराजेंद्रच्छादयामाससायकैः ॥ सौबलस्यबलंसंख्येत्यक्त्वाऽऽत्मानंमहाबलः ६५ तस्याश्वांश्चतुरोहत्वासूतंचैवविशांपते ॥ ध्वजंचिच्छेदभल्लेनत्वरमाणःपराक्रमी ६६ हताश्वंरथमुत्सृज्यत्वरमाणोनरोत्तमः ॥ तस्थौविस्फारयंश्चापंक्रोधरक्तेक्षणःश्वसन् ६७ शरैश्चबहुधाराजन्भीममार्छत्समंततः ॥ प्रतिहत्यतुवेगेनभीमसेनःप्रतापवान् ६८ धनुश्चिच्छेदसंक्रुद्धोविव्याधचाशितैःशरैः ॥ सोऽतिविद्धोबलवताशत्रुणाशत्रुकर्शनः ६९ निपपाततदाभूमौकिंचित्प्राणोनराधिपः ॥ ततस्तंविह्वलंज्ञात्वापुत्रस्तवविशांपते ७० अपोवाहरथेनाजौभीमसेनस्यपश्यतः ॥ रथस्थेतुनरव्याघ्रेधार्तराष्ट्राःपराङ्मुखाः ७१ प्रदुद्रुवुर्दिशोभीताभीमाज्जातेमहाभये ॥ सौबलेनिर्जितेराजन्भीमसेनेनधन्विना ७२ भयेनमहताऽऽविष्टःपुत्रोदुर्योधनस्तव ॥ अपायाज्जवनैरश्वैःसापेक्षोमातुलंप्रति ७३ पराङ्मुखंतुराजानंदृष्ट्वासैन्यानिभारत ॥ विप्रजग्मुःसमुत्सृज्यद्वैरथानिसमंततः ७४ तान्दृष्ट्वाविद्रुतान्सर्वान्धार्तराष्ट्रान्पराङ्मुखान् ॥ जवेनाभ्यापतद्भीमःकिरन्शरशतान्बहून् ७५ तेवध्यमानाभीमेनधार्तराष्ट्राःपराङ्मुखाः ॥ कर्णमासाद्यसमरेस्थिताराजन्समंततः ७६ सहितेषांमहावीर्योद्वीपोऽभूत्सुमहाबलः ॥ भिन्ननौकायथाराजन्द्वीपमासाद्यनिर्वृताः ७७ भवंतिपुरुषव्याघ्रनाविकाःकालपर्यये ॥ तथाकर्णसमासाद्यतावकाःपुरुषर्षभ ७८ समाश्वस्ताःस्थिताराजन्संप्रहृष्टाःपरस्परम् ॥ समाजग्मुश्चयुद्धायमृत्युंकृत्वानिवर्तनम् ७९ ॥ इतिश्रीमहाभारतेकर्णपर्वणि शकुनिपराजये सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ ॥ ॥ धृतराष्ट्रउवाच ॥ ॥ ततोभग्नेषुसैन्येषुभीमसेनेनसंयुगे ॥ दुर्योधनोऽब्रवीत्किंनुसौबलोवाऽपिसंजय १

नीलकंठीये भारतभावदीपे सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ततइति १

कर्णोवाजयतांश्रेष्ठोयोधावामामकायुधि ॥ कृपोवाकृतवर्मावाद्रौणिर्दुःशासनोऽपिवा २ अत्यद्भुतमहंमन्येपांडवेयस्यविक्रमम् ॥ यदेकःसमरेसर्वान्योधयामाससमा
मकान् ३ यथाप्रतिज्ञंयोधानांराधेयःकृतवानपि ॥ कुरूणामथसर्वेषांकर्णःशत्रुनिषूदनः ४ शर्मवर्मप्रतिष्ठाचजीविताशाचसंजय ॥ तत्प्रभग्नंबलंदृष्ट्वाकौंतेयेनामि
तौजसा ५ राधेयोवाप्याधिरथिःकर्णःकिमकरोद्युधि ॥ पुत्रावाममदुर्धर्षौराजानौवामहारथाः ॥ एतन्मेसर्वमाचक्ष्वकुशलोह्यसिसंजय ६ ॥ संजयउवाच ॥ अ
पराह्णेमहाराजसूतपुत्रःप्रतापवान् ॥ जघानसोमकान्सर्वान्भीमसेनस्यपश्यतः ७ भीमोऽप्यतिबलःसैन्यंधार्तराष्ट्रंव्यपोथयत् ॥ अथकर्णोऽब्रवीच्छल्यंपंचाला
न्प्रापयस्वमाम् ८ द्राव्यमाणंबलंदृष्ट्वाभीमसेनेनधीमता ॥ यंतारमब्रवीत्कर्णःपंचालानेवमांवह ९ मद्रराजस्ततःशल्यःश्वेतानश्वान्महाजवान् ॥ प्राहिणोच्चेदि
पंचालान्करूषांश्चमहाबलः १० प्रविश्यचमहत्सैन्यंशल्यःपरबलार्दनः ॥ न्ययच्छत्तुरगान्हृष्टोयत्रयत्रैच्छदग्रणीः ११ तंरथंमेघसंकाशंवैयाघ्रपरिवारणम् ॥ सं
दृश्यपांडुपंचालास्त्रस्ताह्यासन्विशांपते १२ ततोरथस्यनिनदःप्रादुरासीन्महारणे ॥ पर्जन्यसमनिर्घोषःपर्वतस्येवदीर्यतः १३ ततःशरशतैस्तीक्ष्णैःकर्णआक
र्णनिःसृतैः ॥ जघानपांडवबलंशतशोऽथसहस्रशः १४ तत्तथासमरेकर्मकुर्वाणमपराजितम् ॥ परिवव्रुर्महेष्वासाःपांडवानांमहारथाः १५ तंशिखंडीचभीमश्चधृ
ष्टद्युम्नश्चपार्षतः ॥ नकुलःसहदेवश्चद्रौपदेयाश्चसात्यकिः १६ परिवव्रुर्जिघांसंतोराधेयंशरवृष्टिभिः ॥ सात्यकिस्तुतदाकर्णंविंशत्यानिशितैःशरैः १७ अता
डयद्रणेशूरोजत्रुदेशेनरोत्तमः ॥ शिखंडीपंचविंशत्याधृष्टद्युम्नश्चसप्तभिः १८ द्रौपदेयाश्चतुःषष्ट्यासहदेवश्चसप्तभिः ॥ नकुलश्चशतेनाजौकर्णंविव्याधसायकैः १९
भीमसेनस्तुराधेयंनवत्यानतपर्वणाम् ॥ विव्याधसमरेक्रुद्धोजत्रुदेशेमहाबलः २० अथप्रहस्याधिरथिर्व्याक्षिपद्धनुरुत्तमम् ॥ मुमोचनिशितान्बाणान्पीडयन्सुम
हाबलः २१ तान्प्रत्यविध्यद्राधेयःपंचभिःपंचभिःशरैः ॥ सात्यकेस्तुधनुश्छित्त्वाध्वजंचभरतर्षभ २२ तंतथानवभिर्बाणैराजघानस्तनांतरे ॥ भीमसेनंततःक्रुद्धो
विव्याधत्रिंशताशरैः २३ सहदेवस्यभल्लेनध्वजंचिच्छेदमारिष ॥ सारथिंचत्रिभिर्बाणैराजघानपरंतपः २४ विरथान्द्रौपदेयांश्चचकारभरतर्षभ ॥ अक्ष्णोर्नि
मेषमात्रेणतदद्भुतमिवाभवत् २५ विमुखीकृत्यतान्सर्वान्शरैःसन्नतपर्वभिः ॥ पंचालानहनच्छूरांश्चेदीनांचमहारथान् २६ तेवध्यमानाःसमरेचेदिमत्स्याविशां
पते ॥ कर्णमेकमभिद्रुत्यशरसंघैःसमार्पयन् २७ तान्जघानशितैर्बाणैःसूतपुत्रोमहारथः ॥ तेवध्यमानाःसमरेचेदिमत्स्याविशांपते २८ प्राद्रवंतरणेभीताःसिं
हत्रस्तामृगाइव ॥ एतदत्यद्भुतंकर्मदृष्टवानस्मिभारत २९ यदेकःसमरेशूरान्सूतपुत्रःप्रतापवान् ॥ यतमानान्परंशक्त्यायोधयानांश्चधन्विनः ३० पांडवेया
न्महाराजशरैर्वारितवान्रणे ॥ तत्रभारतकर्णस्यलाघवेनमहात्मनः ३१ तुतुषुर्देवताःसर्वाःसिद्धाश्चसहचारणैः ॥ अपूजयन्महेष्वासाधार्तराष्ट्रानरोत्तमम् ३२

कर्णरथवरश्रेष्ठंश्रेष्ठंसर्वधनुष्मताम् ॥ ततःकर्णोमहाराजददाहरिपुवाहिनीम् ३३ कक्षमिद्धोयथावह्निर्निदाघेज्वलितोमहान् ॥ तेवध्यमानाःकर्णेनपांडवेयास्तत
स्ततः ३४ प्राद्रवंतरणेभीताःकर्णंदृष्ट्वामहारथम् ॥ तत्राक्रंदोमहानासीत्पंचालानांमहारणे ३५ वध्यतांसायकैस्तीक्ष्णैःकर्णचापवरच्युतैः ॥ तेनशब्देनवित्रस्ता
पांडवानांमहाचमूः ३६ कर्णमेकंरणेयोधंमेनिरेतत्रशात्रवाः ॥ तत्राद्भुतंपुनश्चक्रेराधेय शत्रुकर्शनः ३७ यदेनंपांडवाःसर्वेनशेकुरभिवीक्षितुम् ॥ यथौघःपर्वतश्रेष्ठ
मासाद्याभिप्रदीर्यते ३८ तथातत्पांडवंसैन्यंकर्णमासाद्यदीर्यते ॥ कर्णोऽपिसमरेराजन्विधूमोऽग्निरिवज्वलन् ३९ दहंस्तस्थौमहाबाहुःपांडवानांमहाचमूम् ॥ शि
रांसिचमहाराजकर्णांश्चैवसकुंडलान् ४० बाहूंश्ववीरोवीराणांचिच्छेदलघुचेषुभिः ॥ हस्तिदंतत्सरून्खड्गान्ध्वजान्शक्तीर्हयान्गजान् ४१ रथांश्वविविधान्राजन्प
ताकाव्यजनानिच ॥ अक्षंचयुगयोक्त्राणिचक्राणिविविधानिच ४२ चिच्छेदबहुधाकर्णोयोधव्रतमनुष्ठितः ॥ तत्रभारतकर्णेननिहतैर्गजवाजिभिः ४३ अगम्यरू
पापृथिवीमांसशोणितकर्दमा ॥ विषमंचसमंचैवहतैरश्वपदातिभिः ४४ रथैश्चकुंजरैश्चैवनप्राज्ञायतकिंचन ॥ नापिस्वेनपरेयोधाःप्राज्ञायंतपरस्परम् ४५ घोरे
शरांधकारेतुकर्णास्त्रेचविजृंभिते ॥ राधेयचापनिर्मुक्तैःशरैःकांचनभूषणैः ४६ संछादितामहाराजपांडवानांमहारथाः ॥ तेपांडवेयाःसमरेराधेयेनपुनःपुनः ४७
अभज्यंतमहाराजयतमानामहारथाः ॥ मृगसंघान्यथाक्रुद्धःसिंहोद्रावयतेवने ४८ पंचालानांरथश्रेष्ठान्द्रावयन्शात्रवांस्तथा ॥ कर्णस्तुसमरेयोधांस्त्रासयन्सुमहा
यशाः ४९ कालयामासतत्सैन्यंयथापशुगणान्वृकः ॥ दृष्ट्वातुपांडवींसेनांधार्तराष्ट्राःपराङ्मुखीम् ५० तत्राजग्मुर्महेष्वासारुवंतोभैरवान्रवान् ॥ दुर्योधनोहिराजें
द्रमुदापरमयायुतः ५१ वादयामाससंहृष्टोनानावाद्यानिसर्वशः ॥ पंचालाऽपिमहेष्वासाभग्नास्तत्रनरोत्तमाः ५२ न्यवर्ततयथाशूरंमृत्युंकृत्वानिवर्तनम् ॥ तान्नि
वृत्तान्रणेशूरान्राधेयःशत्रुतापनः ५३ अनेकशोमहाराजबभंजपुरुषर्षभः ॥ तत्रभारतकर्णेनपंचालाविंशतीरथाः ५४ निहताःसायकैःक्रोधाच्चेदयश्वपरंशताः ॥ कृ
त्वाशून्यान्रथोपस्थान्वाजिपृष्ठांश्वभारत ५५ निर्मनुष्यान्गजस्कंधान्पादातांश्चैवविद्रुतान् ॥ आदित्यइवमध्याह्नेदुर्निरीक्ष्यःपरंतपः ५६ कालांतकवपुः
शूरःसूतपुत्रोऽभ्यराजत ॥ एवमेतन्महाराजनरवाजिरथद्विपान् ५७ हत्वातस्थौमहेष्वासःकर्णोऽरिगणसूदनः ॥ यथाभूतगणान्हत्वाकालस्तिष्ठेन्महाब
लः ५८ तथाससोमकान्हत्वातस्थावेकोमहारथः ॥ तत्राद्भुतमपश्यामपंचालानांपराक्रमम् ५९ वध्यमानाऽपियत्कर्णंनाजहूरणमूर्धनि ॥ राजादुः
शासनश्चैवकृपःशारद्वतस्तथा ६० अश्वत्थामाकृतवर्माशकुनिश्चमहाबलः ॥ न्यहनन्पांडवींसेनांशतशोऽथसहस्रशः ६१ कर्णपुत्रौतुराजेंद्रभ्रातरौसत्य
विक्रमौ ॥ निजघ्नातेबलंक्रुद्धौपांडवानामितस्ततः ६२

६३ । ६४ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेअष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ ॥ ७ ॥ अर्जुनइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५



तत्रयुद्धंमहच्चासीत्क्रूरंविशसनंमहत् ॥ तथैवपांडवाःशूराधृष्टद्युम्नशिखंडिनौ ६३ द्रौपदेयाश्चसंक्रुद्धाअभ्यघ्नंस्तावकंबलम् ॥ एवमेषक्षयोवृत्तःपांडवानांतत स्ततः ॥ तावकानामपिरणेभीमंप्राप्यमहाबलम् ६४ ॥ इतिश्रीमहाभारतेकर्णपर्वणिसंकुलयुद्धे अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ ॥ ७ ॥ ॥ संजयउ वाच ॥ अर्जुनस्तुमहाराजहत्वासैन्यंचतुर्विधम् ॥ सूतपुत्रंचसंक्रुद्धंदृष्ट्वाचैवमहारणे १ शोणितोदांमहींकृत्वामांसमज्जास्थिपंकिलाम् ॥ मनुष्यशीर्षपाषाणांह स्त्यश्वकृतरोधसम् २ शूरास्थिचयसंकीर्णांकाकगृध्रानुनादिताम् ॥ छत्रहंसप्लवोपेतांवीरवृक्षापहारिणीम् ३ हारपद्माकरवतीमुष्णीषवरफेनिलां ॥ धनुःशरध्व जोपेतांनरक्षुद्रकपालिनीम् ४ चर्मवर्मभ्रमोपेतांरथोडुपसमाकुलाम् ॥ जयैषिणांचसुतरांभीरूणांचसुदुस्तराम् ५ नदींप्रावर्तयित्वाचबीभत्सुःपरवीरहा ॥ वा सुदेवमिदंवाक्यमब्रवीत्पुरुषर्षभः ६ ॥ अर्जुनउवाच ॥ एषकेतूरणेकृष्णसूतपुत्रस्यदृश्यते ॥ भीमसेनादयश्चैतेयोधयंतिमहारथम् ७ एतेद्रवंतिपंचालाःकर्ण त्रस्ताजनार्दन ॥ एषदुर्योधनोराजाश्वेतच्छत्रेणधार्यता ८ कर्णेनभग्नान्पंचालान्द्रावयन्बहुशोभते ॥ कृपश्चकृतवर्माचद्रौणिश्चैवमहारथः ९ एतेरक्षंतिरा जानंसूतपुत्रेणरक्षिताः ॥ अवध्यमानास्तेऽस्माभिर्घातयिष्यंतिसोमकान् १० एषशल्योरथोपस्थेरश्मिसंचारकोविदः ॥ सूतपुत्ररथंकृष्णवाहयन्बहुशोभ ते ११ तत्रमेबुद्धिरुत्पन्नावाहयात्रमहारथम् ॥ नाहत्वासमरेकर्णंनिवर्तिष्येकथंचन १२ राधेयोह्यन्यथापार्थान्सृंजयांश्चमहारथान् ॥ निःशेषान्समरेकुर्यात्प श्यतांनोजनार्दन १३ ततःप्रायाद्रथेनाशुकेशवस्तववाहिनीम् ॥ कर्णप्रतिमहेष्वासंद्वैरथेसव्यसाचिना १४ प्रयातश्चमहाबाहुःपांडवानुज्ञयाहरिः ॥ आश्वास यन्रथेनैवपांडुसैन्यानिसर्वशः १५ रथघोषःससंग्रामेपांडवेयस्यसंबभौ ॥ वासवाशनितुल्यस्यमेघौघस्येवमारिष १६ महतारथघोषेणपांडवःसत्यविक्रमः ॥ अभ्ययादप्रमेयात्मानिर्जयंस्तववाहिनीम् १७ तमायांतंसमीक्ष्यैवश्वेताश्वंकृष्णसारथिम् ॥ मद्रराजोऽब्रवीत्कर्णंकेतुंदृष्ट्वामहात्मनः १८ अयंसरथआया तिश्वेताश्वःकृष्णसारथिः ॥ निघ्नन्नमित्रान्समरेयंकर्णपरिपृच्छसि १९ एषतिष्ठतिकौंतेयःसंस्पृशन्गांडिवंधनुः ॥ तंहनिष्यसिचेदद्यतन्नःश्रेयोभविष्यति २० धनुर्ज्याचंद्रतारांकापताकाकिंकिणीयुता ॥ पश्यकर्णार्जुनस्यैषासौदामन्यंबरेयथा २१ एषध्वजाग्रेपार्थस्यप्रेक्षमाणःसमंततः ॥ दृश्यतेवानरोभीमोवीराणांभ यवर्धनः २२ एतच्चक्रंगदाशंखःशार्ङ्गंकृष्णस्यचप्रभो ॥ दृश्यतेपांडवरथेवाहयानस्यवाजिनः २३ एतत्कूजतिगांडीवंविसृष्टंसव्यसाचिना ॥ एतेहस्तवता मुक्ताघ्नंत्यमित्रान्शिताःशरा' २४ विशालायतताम्राक्षैःपूर्णचंद्रनिभाननैः ॥ एषाभूःकीर्यतेराज्ञांशिरोभिरपलायिनाम् २५ एतेपरिघसंकाशाःपुण्यगंधानुले पनाः ॥ उद्वृतारणशूराणांपात्यंतेसायुधाभुजाः २६

१६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६

निरस्तजिह्वानेत्रांतावाजिनःसहसादिभिः ॥ पतिताःपात्यमानाश्चक्षितौक्षीणाविशेरते २७ एतेपर्वतशृंगाणांतुल्याहैमवतागजाः ॥ संछिन्नकुंभाःपार्थेनप्रपंत
त्यद्रयोयथा २८ गंधर्वनगराकारायथावातेनरेश्वराः ॥ विमानादिवपुण्यांतेस्वर्गिणोनिपतंत्यमी २९ व्याकुलीकृतमत्यर्थंपरसैन्यंकिरीटिना ॥ नानामृगसह
स्राणांयूथंकेसरिणायथा ३० त्वामभिप्रेप्सुरायातिकर्णनिघ्नन्वरान्रथान् ॥ असह्यमानोराधेयतंयाहिप्रतिभारत ३१ एषाविदीर्यतेसेनाधार्तराष्ट्रीसमंततः ॥
अर्जुनस्यभयात्तूर्णंनिघ्नतःशात्रवान्बहून् ३२ वर्जयन्सर्वसैन्यानित्वरतेहिधनंजयः ॥ त्वदर्थमितिमन्येऽहंयथास्योदीर्यतेवपुः ३३ नह्यवस्थास्यतेपार्थोयुयु
त्सुःकेनचित्सह ॥ त्वामृतेक्रोधदीप्तोहिपीड्यमानेवृकोदरे ३४ विरथंधर्मराजंतुदृष्ट्वासुदृढविक्षतम् ॥ शिखंडिनंसात्यकिंचधृष्टद्युम्नंचपार्षतम् ३५ द्रौपदेया
न्युधामन्युमुत्तमौजसमेवच ॥ नकुलंसहदेवंचभ्रातरौद्वौसमीक्ष्यच ३६ सहसैकरथःपार्थस्त्वामभ्येतिपरंतपः ॥ क्रोधरक्तेक्षणःक्रुद्धोजिघांसुःसर्वपार्थिवान् ३७
त्वरितोऽभिपतत्यस्मांस्त्यक्त्वासैन्यान्यसंशयम् ॥ त्वंकर्णप्रतियाह्येनंनास्त्यन्योहिधनुर्धरः ३८ नतंपश्यामिलोकेऽस्मिंस्त्वत्तोह्यन्यंधनुर्धरम् ॥ अर्जुनंसमरेक्रु
द्धंयोवेलामिवधारयेत् ३९ नचास्यरक्षांपश्यामिपार्श्वतोनचपृष्ठतः ॥ एकएवाभियातित्वांपश्यसाफल्यमात्मनः ४० त्वंहिकृष्णौरणेशक्तःसंसाधयितुमाहवे ॥
तवैवभारोराधेयप्रत्युद्याहिधनंजयम् ४१ समानोह्यसिभीष्मेणद्रोणद्रौणिकृपेणच ॥ सव्यसाचिनमायांतंनिवारयमहारणे ४२ लेलिहानंयथासर्पंगर्जंतमृष
भंयथा ॥ वनस्थितंयथाव्याघ्रंजहिकर्णधनंजयम् ४३ एतेद्रवंतिसमरेधार्तराष्ट्रामहारथाः ॥ अर्जुनस्यभयात्तूर्णंनिरपेक्षाजनाधिपाः ४४ द्रवतामथतेषांतुना
न्योऽस्तियुधिमानवः ॥ भयहायोभवेद्वीरस्त्वामृतेसूतनंदन ॥ एतेत्वांकुरवःसर्वेद्वीपमासाद्यसंयुगे ४५ धिष्ठिताःपुरुषव्याघ्रत्वत्तःशरणकांक्षिणः ॥ वैदेहांब
ष्ठकांबोजास्तथानग्नजितस्त्वया ४६ गांधाराश्चययाधृत्याजिताःसंख्येसुदुर्जयाः ॥ तांधृतिंकुरुराधेयततःप्रत्येहिपांडवम् ४७ वासुदेवंचवार्ष्णेयंप्रीयमाणंकि
रीटिना ॥ प्रत्युद्याहिमहाबाहोपौरुषेमहतिस्थितः ४८ ॥ कर्णउवाच ॥ प्रकृतिस्थोऽसिमेशल्यइदानींसंमतस्तथा ॥ प्रतिभासिमहाबाहोमाभैषीस्त्वंधनंज
यात् ४९ पश्यबाह्वोर्बलंमेऽद्यशिक्षितस्यचपश्यमे ॥ एकोऽद्यनिहनिष्यामिपांडवानांमहाचमूम् ५० कृष्णौचपुरुषव्याघ्रततःसत्यंब्रवीमिते ॥ नाहं
त्वायुधितौवीरौव्यपयास्येकथंचन ५१ शिष्येवानिहतस्ताभ्यामनित्योहिरणेजयः ॥ कृतार्थोऽद्यभविष्यामिहत्वावाऽप्यथवाहतः ५२ ॥ शल्यउवाच ॥
अजय्यमेनंप्रवदंतियुद्धेमहारथाःकर्णरथप्रवीरम् ॥ एकाकिनंकिमुकृष्णाभिगुप्तंविजेतुमेनंकइहोत्सहेत ५३ ॥ कर्णउवाच ॥ नैतादृशोजातुबभूवलोकेरथो
त्तमोयावदुपश्रुतंनः ॥ तमीदृशंप्रतियोत्स्यामिपार्थंमहाहवेपश्यचपौरुषंमे ५४

२६

रणेचरत्येषरथप्रवीरःसितैर्हयैःकौरवराजपुत्रः ॥ सवाऽद्यमांनेष्यतिकृच्छ्रमेतत्कर्णस्यांतादेतदंतास्तुसर्वं ५५ अस्वेदिनौराजपुत्रस्यहस्ताववेपमानौजातकिणौ बृहंतौ ॥ दृढायुधःकृतिमान्क्षिप्रहस्तोनपांडवेयेनसमोऽस्तियोधः ५६ गृह्णात्यनेकानपिकंकपत्रानेकंयथातान्प्रतियोज्यचाशु ॥ तेक्रोशमात्रेनिपतंत्यमोघाः कस्तेनयोधोऽस्तिसमःपृथिव्याम् ५७ अतोषयत्खांडवेयोहुताशंकृष्णद्वितीयोऽतिरथस्तरस्वी ॥ लेभेचक्रंयत्रकृष्णोमहात्माधनुर्गांडिवंपांडवःसव्यसाची ५८ श्वेताश्वयुक्तंचसुघोषमुग्रंरथंमहाबाहुरदीनसत्वः ॥ महेषुधीचाक्षयेदिव्यरूपेशस्त्राणिदिव्यानिचहव्यवाहात् ५९ तथेंद्रलोकेनिजघानदैत्यानसंख्येयान्कालकेयांश्चसर्वान् ॥ लेभेशंखंदेवदत्तंस्मतत्रकोनामतेनाभ्यधिकःपृथिव्याम् ६० महादेवंतोषयामासयोऽस्त्रैःसाक्षात्सुयुद्धेनमहानुभावः ॥ लेभेततःपाशुपतंसुघोरंत्रैलोक्यसंहारकरंमहास्त्रम् ६१ पृथक्पृथग्लोकपालाःसमेतादद्दुर्महास्त्राण्यप्रमेयाणिसंख्ये ॥ यैस्तान्जघानाशुरणेनृसिंहःसकालकेयानसुरान्समेतान् ६२ तथाविराटस्यपुरेसमेतान्सर्वानस्मानेकरथेनजित्वा ॥ जहारतद्गोधनमाजिमध्येवस्त्राणिचादत्तमहारथेभ्यः ६३ तमीदृशंवीर्यगुणोपपन्नंकृष्णद्वितीयंपरमंनृपाणाम् ॥ तमाह्वयन्साहसमुत्तमंवैजानेस्वयंसर्वलोकस्यशल्य ६४ अनंतवीर्येणचकेशवेननारायणेनाप्रतिमेनगुप्तः ॥ वर्षायुतैर्यस्यगुणानशक्यावक्तुंसमेतैरपिसर्वलोकैः ६५ महात्मनःशंखचक्रासिपाणेर्विष्णोर्जिष्णोर्वसुदेवात्मजस्य ॥ भयंचमेजायतेसाध्वसंचदृष्ट्वाकृष्णावेकरथेसमेतौ ६६ अतीवपार्थोयुधिकार्मुकिभ्योनारायणश्चाप्रतिचक्रयुद्धे ॥ एवंविधौपांडववासुदेवौचलेत्स्वदेशाद्धिमवान्नकृष्णौ ६७ उभौहिशूरौबलिनौदृढायुधौमहारथौसंहननोपपन्नौ ॥ एतादृशौफाल्गुनवासुदेवौकोऽन्यःप्रतीयान्मदृतेतौतुशल्य ६८ मनोरथोयस्तुममाद्यतस्यमद्रेशयुद्धंप्रतिपांडवस्य ॥ नैतच्चिरादाशुभविष्यतीदमत्यद्भुतंचित्रमतुल्यरूपम् ६९ एतौचहत्वायुधिपातयिष्येमांवाऽपिकृष्णौनिहनिष्यतोऽद्य ॥ इतिब्रुवन्शल्यममित्रहंताकर्णोरणेमेघइवोन्ननाद ७० अभ्येत्यपुत्रेणतवाभिनंदितःसमेत्यचोवाचकुरुप्रवीरम् ॥ कृपंचभोजंचमहाभुजावुभौतथैवगांधारपतिंसहानुजम् ७१ गुरोःसुतंचावरजंतथात्मनःपदातिनोऽथद्विपसादिनश्चतान् ॥ निरुध्यताभिद्रवताच्युतार्जुनौश्रमेणसंयोजयताशुसर्वशः ७२ यथाभवद्भिर्भृशविक्षतावुभौसुखेनहन्यामहमद्यभूमिपाः ॥ तथेतिचोक्त्वात्वरिताःस्मतेऽर्जुनंजिघांसवोवीरतराःसमाययुः ७३ शरैश्चजघ्नुर्युधितंमहारथाधनंजयंकर्णनिदेशकारिणः ॥ नदीनदंभूरिजलोमहार्णवोयथातथातान्समरेऽर्जुनोऽग्रसत् ७४ नसंदधानोनतथाशरोत्तमान्प्रमुंचमानोरिपुभिःप्रदृश्यते ॥ धनंजयास्त्रैस्तुशरैर्विदारिताहतानिपेतुर्नरवाजिकुंजराः ७५ शरार्चिषंगांडिवचारुमंडलंयुगांतसूर्यप्रतिमानतेजसम् ॥ नकौरवाःशेकुरुदीक्षितुंजयंयथारविंव्याधितचक्षुषोजनाः ७६

शरोत्तमान्संप्रहितान्महारथैश्चिच्छेदपार्थःप्रहसञ्छरौघैः ॥ भूयश्चतानहनद्बाणसंघान्गांडीवधन्वाऽऽयतपूर्णमंडलम् ७७ यथोग्ररश्मिःशुचिशुक्रमध्यगःसुखं
विवस्वान्हरतेजलौघान् ॥ तथाऽर्जुनोबाणगणान्निरस्यददाहसेनांतवपार्थिवेंद्र ७८ तमभ्यधावद्विसृजन्कृपःशरांस्तथैवभोजस्तवचात्मजःस्वयम् ॥ महारथो
द्रोणसूतश्चसायकैरवाकिरंस्तोयधरायथाऽचलम् ७९ जिघांसुभिस्तान्कुशलःशरोत्तमान्महाहवेसंप्रहितान्प्रयत्नतः ॥ शरैःप्रचिच्छेदसपांडवस्त्वरन्पराभि
नद्वक्षसिचेषुभिस्त्रिभिः ८० सगांडिवव्यायतपूर्णमंडलस्तपन्रिपूनर्जुनभास्करोबभौ ॥ शरोग्ररश्मिःशुचिशुक्रमध्यगोयथैवसूर्यःपरिवेषवांस्तथा ८१ अथा
ग्र्यबाणैर्दशभिर्धनंजयंपराभिनद्द्रोणसुतोऽच्युतंत्रिभिः ॥ चतुर्भिरश्वांश्चतुरःकपिंततःशरैश्चनाराचवरैरवाकिरत् ८२ तथाऽपितंप्रस्फुरदात्तकार्मुकंत्रिभिःशरैर्यंतृ
शिरःक्षुरेण ॥ हयांश्चतुर्भिश्चपुनस्त्रिभिर्ध्वजंधनंजयोद्रौणिरथादपातयत् ८३ सरोषपूर्णोमणिवज्रहाटकैरलंकृतंतक्षकभोगवर्चसम् ॥ महाधनंकार्मुकमन्यदाददे
यथामहाहिप्रवरंगिरेस्तटात् ८४ स्वमायुधंचोपनिकीर्यभूतलेधनुश्चकृत्वासगुणंगुणाधिकः ॥ समार्दयत्तावजितौनरोत्तमौशरोत्तमैर्द्रौणिरविध्यदंतिकात् ८५ कृप
श्चभोजश्चतवात्मजश्चतेशरैरनेकैर्युधिपांडवर्षभम् ॥ महारथाःसंयुगमूर्धनिस्थितास्तमोनुदंवारिधराइवापतन् ८६ कृपस्यपार्थःसशरंशरासनंहयान्ध्वजान्सारथि
मेवपत्रिभिः ॥ समार्पयद्बाहुसहस्रविक्रमस्तथाययथावज्रधरःपुराबलेः ८७ सपार्थबाणैर्विनिपातितायुधोध्वजावमर्देचकृतेमहाहवे ॥ कृतःकृपोबाणसहस्रयंत्रितो
यथाऽऽपगेयःप्रथमंकिरीटिना ८८ शरैःप्रचिच्छेदतवात्मजस्यध्वजंधनुश्चप्रचकर्तनर्दतः ॥ जघानचाश्वान्कृतवर्मणःशुभान्ध्वजंचचिच्छेदततःप्रतापवान् ८९
सवाजिसूतेष्वसनान्सकेतनान्जघाननागाश्वरथांस्त्वरंश्चसः ॥ ततःप्रकीर्णंसुमहद्बलंतवप्रदारितंसेतुरिवांभसायथा ९० ततोऽर्जुनस्याशुरथेनकेशवश्चकारश
त्रूनपसव्यमातुरान् ॥ ततःप्रयातंत्वरितंधनंजयंशतक्रतुंवृत्रनिजघ्नुषंयथा ९१ समन्वधावन्पुनरुत्थितैर्ध्वजैरथैःसुयुक्तैरपरेयुयुत्सवः ॥ अथाभिसृत्यप्रतिवार्य
तानरीन्धनंजयस्याभिमुखंमहारथाः ९२ शिखंडिशैनेययमाःशितैःशरैर्विदारयंतोव्यनदन्सुभैरवम् ॥ ततोऽभिजघ्नुःकुपिताःपरस्परंशरैस्तदांजोगतैभिः
सुतेजनैः ९३ कुरुप्रवीराःसहसृंजयैर्यथाऽसुराःपुरादेवगणैस्तथाऽऽहवे ॥ जयेप्सवःस्वर्गमनायचोत्सुकाःपतंतिनागाश्वरथाःपरंतप ९४ जगर्जुरुच्चैर्बलवच्च
विव्यधुःशरैःसुमुक्तैरितरेतरंपृथक् ॥ शरांधकारेतुमहात्मभिःकृतेमहामृधेयोधवरैःपरस्परम् ॥ चतुर्दिशोवैविदिशश्चपार्थिवप्रभाचसूर्यस्यतमोवृताऽभवत् ९५
॥ इतिश्रीमहाभारते कर्णपर्वणिसंकुलयुद्धे ऊनाशीतितमोऽध्यायः ॥ ७९ ॥ ॥ ॥ ॥ ॥

राजन्निति १।२। ३।४।५ ।६।७ ।८।९। १०।११। १२। १३।१४ ।१५। १६ ।१७ विनिर्दहन्नित्यत्राडभावआर्षः १८ । १९। २० ।२१ । २२ । २३। २४ । २५ ।२६ ।२७ । २८। २९ । ३० । ३१

॥ संजयउवाच ॥ राजन्कुरूणांप्रवरैर्बलैर्भीममभिद्रुतम् ॥ भज्जंतमिवकौंतेयमुज्जिहीर्षुर्धनंजयः १ विमृद्यसूतपुत्रस्यसेनांभारतसायकैः ॥ प्राहिणोन्मृत्युलो
कायपरवीरान्धनंजयः २ ततोऽस्यांबरमाश्रित्यशरजालानिभागशः ॥ अदृश्यंततथाऽन्येचनिजघ्नुस्तववाहिनीम् ३ सपक्षिसंघाचरितमाकाशंपूरयन्शरैः ॥
धनंजयोमहाबाहुःकुरूणामंतकोऽभवत् ४ ततोभल्लैःक्षुरप्रैश्चनाराचैर्विमलैरपि ॥ गात्राणिप्राच्छिनत्पार्थःशिरांसिचचकर्तह ५ छिन्नगात्रैर्विकवचैर्विशिरस्कैः
समंततः ॥ पातितैश्चपतद्भिश्चयोधैरासीत्समावृता ६ धनंजयशराभ्यस्तैःस्यंदनाश्वरथद्विपैः ॥ संछिन्नभिन्नविध्वस्तैर्व्यंगांगावयवैःस्तृता ७ सुदुर्गमासुवि
षमाघोराऽत्यर्थंसुदुर्दृशा ॥ रणभूमिरभूद्राजन्महावैतरणीयथा ८ ईषाचक्राक्षभग्नैश्चव्यश्वैःसाश्वैश्चयुध्यताम् ॥ससूतैर्हतसूतैश्चरथैःस्तीर्णाऽभवन्मही ९ सु
वर्णवर्णसन्नाहैर्योधैःकनकभूषणैः ॥ आस्थिताःकृतवर्माणोभद्रानित्यमदाद्विपाः १० क्रुद्धाःक्रूरैर्महामात्रैःपाष्ण्यंगुष्ठप्रचोदिताः ॥ चतुःशताःशरवरैर्हताःपेतुः
किरीटिना ११ पर्यस्तानीवशृंगाणिससृद्धानिमहागिरेः ॥ धनंजयशराभ्यस्तैःस्तीर्णाभूर्वरवारणैः १२ समंताज्जलदप्रख्यान्वारणान्मदवर्षिणः ॥ अभिपेदे
ऽर्जुनरथोघनान्भिंदन्निवांशुभान् १३ हतैर्गजमनुष्याश्वैर्भिन्नैश्चबहुधारथैः ॥ विशस्त्रयंत्रकवचैर्युद्धशौंडैर्गतासुभिः १४ अपविद्धायुधैर्मार्गःस्तीर्णोऽभूत्फाल्गु
नेनवै ॥ व्यस्फारयच्चगांडीवंसुमहद्भैरवारवम् १५ घोरवज्रविनिष्पेषंस्तनयित्नुरिवांबरे ॥ ततःप्रादीर्यतचमूर्धनंजयशराहता १६ महावातसमाविद्धामहा
नौरिवसागरे ॥ नानारूपाःप्राणहराःशरागांडिवचोदिताः १७ अलातोल्काशनिप्रख्यास्तवसैन्यंविनिर्दहन् ॥ महागिरौवेणुवनंनिशिप्रज्वलितंयथा १८ त
थातवमहासैन्यंप्रास्फुरच्छरपीडितम् ॥ संपिष्टदग्धविध्वस्तंतवसैन्यंकिरीटिना १९ कृतंप्रविहतंबाणैःसर्वतःप्रद्रुतंदिशः ॥ महावनेमृगगणादावाग्नित्रासिता
यथा २० कुरवःपर्यवर्ततनिर्दग्धाःसव्यसाचिना ॥ उत्सृज्यचमहाबाहुंभीमसेनंतथारणे २१ बलंकुरूणामुद्विग्नंसर्वमासीत्पराङ्मुखम् ॥ ततःकुरुषुभग्नेषुबीभ
त्सुरपराजितः २२ भीमसेनंसमासाद्यमुहूर्तंसोऽभ्यवर्तत ॥ समागम्यचभीमेनमंत्रयित्वाचफाल्गुनः २३ विशल्यमरुजंचास्मैकथयित्वायुधिष्ठिरम् ॥ भीम
सेनाभ्यनुज्ञातस्ततःप्रायाद्धनंजयः २४ नादयन्रथघोषेणपृथिवींद्यांचभारत ॥ ततःपरिवृतोवीरैर्दशभिर्योधपुंगवैः २५ दुःशासनादवरजैस्तवपुत्रैर्धनंजयः ॥
तेतमभ्यर्दयन्बाणैरुल्काभिरिवकुंजरम् २६ आततेष्वसनाःशूरानृत्यंतइवभारत ॥ अपसव्यांस्तुतांश्चक्रेरथेनमधुसूदनः २७ नियुक्तान्हिसतान्मेनेयमायाशुकि
रीटिना ॥ ततस्तेप्राद्रवन्शूराःपराङ्मुखरथेऽर्जुने २८ तेषामापततांकेतूनश्वांश्चापानिसायकान् ॥ नाराचैरर्धचंद्रैश्चक्षिप्रंपार्थोन्यपातयत् २९ अथान्यैर्दश
भिर्भल्लैःशिरांस्येषामपातयत् ॥ रोषसंरक्तनेत्राणिसंदष्टौष्ठानिभूतले ३० तानिवक्त्राणिविबभुःकमलानीवभूरिशः ॥ तांस्तुभल्लैर्महावेगैर्दशभिर्दशकौरवान् ३१

३२ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपेअशीतितमोऽध्यायः ॥ ८० ॥ ॥ छ ॥ ॥ तमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६

रुक्मांगदान्रुक्मपुंखैर्हत्वाप्रायादमित्रहा ३२ ॥ इतिश्रीमहाभारतेकर्णपर्वणि संकुलयुद्धेअशीतितमोऽध्यायः ॥ ८० ॥ ॥ छ ॥ ॥ संजयउवाच ॥ तं
प्रयांतंमहावेगैरश्वैःकपिवरध्वजम् ॥ युद्धायाभ्यद्रवन्वीराःकुरूणांनवतीरथाः १ कृत्वासंशप्तकाघोरंशपथंपारलौकिकम् ॥ परिवव्रुर्नरव्याघ्रानरव्याघ्रंरणेऽर्जु
नम् २ कृष्णःश्वेतान्महावेगानश्वान्कांचनभूषणान् ॥ मुक्ताजालप्रतिच्छन्नान्प्रैषीत्कर्णरथंप्रति ३ ततःकर्णरथंयांतमरिघ्नंतंधनंजयम् ॥ बाणवर्षैरभिघ्नंतःसं
शप्तकरथाययुः ४ त्वरमाणांस्तुतान्सर्वान्ससूतेष्वसनध्वजान् ॥ जघाननवतिंवीरानर्जुनोनिशितैःशरैः ५ तेऽपतंतहताबाणैर्नानारूपैःकिरीटिना ॥ स
विमानायथासिद्धाःस्वर्गात्पुण्यक्षयेतथा ६ ततःसरथनागाश्वाःकुरवःकुरुसत्तमम् ॥ निर्भयाभरतश्रेष्ठमभ्यवर्तंतफाल्गुनम् ७ तदायस्तमनुष्याश्वमुदीर्णवर
वारणम् ॥ पुत्राणांतेमहासैन्यंसमरौत्सीद्धनंजयम् ८ शक्त्यृष्टितोमरप्रासैर्गदानिस्त्रिंशसायकैः ॥ प्राच्छादयन्महेष्वासाःकुरवःकुरुनंदनम् ९ तामंतरिक्षेविततां
शस्त्रवृष्टिंसमंततः ॥ व्यधमत्पांडवोबाणैस्तमःसूर्यइवांशुभिः १० ततोम्लेच्छाःस्थितामत्तैस्त्रयोदशशतैर्गजैः ॥ पार्श्वतोऽभ्यहनन्पार्थंतवपुत्रस्यशासनात्
११ कर्णिनालीकनाराचैस्तोमरप्रासशक्तिभिः ॥ मुसलैर्भिंदिपालैश्चरथस्थंपार्थमार्दयन् १२ तांशस्त्रवृष्टिमतुलांद्विपहस्तैःप्रवेरिताम् ॥ चिच्छेदनिशितै
र्भल्लैरर्धचंद्रैश्चफाल्गुनः १३ अथतान्द्विरदान्सर्वान्नानालिंगैःशरोत्तमैः ॥ सपताकध्वजारोहान्गिरीन्वज्रैरिवाहनत् १४ तेहेमपुंखैरिषुभिरर्दिताहेममालिनः ॥
हताःपेतुर्महानागाःसाग्निज्वालाइवाद्रयः १५ ततोगांडीवनिर्घोषोमहानासीद्विशांपते ॥ स्तनतांकूजतांचैवमनुष्यगजवाजिनाम् १६ कुंजराश्चहताराजन्
दुद्रुवुस्तेसमंततः ॥ अश्वाश्चपर्यधावंतहतारोहादिशोदश १७ रथाहीनामहाराजरथिभिर्वाजिभिस्तथा ॥ गंधर्वनगराकाराद्दृश्यंतेस्मसहस्रशः १८ अश्वा
रोहामहाराजधावमानाइतस्ततः ॥ तत्रतत्रैवदृश्यंतेनिहताःपार्थसायकैः १९ तस्मिन्क्षणेपांडवस्यबाह्वोर्बलमदृश्यत ॥ यत्सादिनोवारणांश्चरथाश्चैकोऽज
यद्युधि २० ततस्त्र्यंगेणमहताबलेनभरतर्षभ ॥ दृष्ट्वापरिवृतंराजन्भीमसेनःकिरीटिनम् २१ हतावशेषानुत्सृज्यत्वदीयान्कतिचिद्रथान् ॥ जवेनाभ्यद्रवद्राजन्
धनंजयरथंप्रति २२ ततस्तत्प्राद्रवत्सैन्यंहतभूयिष्ठमातुरम् ॥ दृष्ट्वाऽर्जुनंतदाभीमोजगामभ्रातरंप्रति २३ हतावशिष्टांस्तुरगानर्जुनेनमहाबलान् ॥ भीमोऽव्य
धमदश्रांतोगदापाणिर्महाहवे २४ कालरात्रिमिवात्युग्रांनरनागाश्वभोजनां ॥ प्राकाराट्टपुरद्वारदारणीमतिदारुणां २५ ततोगदांनृनागाश्वेष्वाशुभीमोऽभ्यवा
सृजत् ॥ साजघानबहूनश्वानश्वारोहांश्चमारिष २६ कार्ष्णायसतनुत्राणान्नरानश्वांश्चपांडवः ॥ पोथयामासगदयासशब्दंतेऽपतन्हताः २७ दंतैर्दशंतोवसु
धांशेरतेक्षतजोक्षिताः ॥ भग्नमूर्धास्थिचरणाःक्रव्यादगणभोजनाः २८

असृङ्मांसवसाभिश्चदृप्तामभ्यागतागदा ॥ अस्थीन्यप्यश्नतीतस्थौकालरात्रीवदुर्दृशा २९ सहस्राणिदशाश्वानांहत्वापत्तींश्चभूयसः ॥ भीमोऽभ्यधावत्सं
क्रुद्धोगदापाणिरितस्ततः ३० गदापाणिंततोभीमंदृष्ट्वाभारततावकाः ॥ मेनिरेसमनुप्राप्तंकालदंडोद्यतंयमम् ३१ समत्तइवमातंगःसंक्रुद्धःपांडुनंदनः ॥ प्रवि
वेशगजानीकंमकरःसागरंयथा ३२ विगाह्यचगजानीकंप्रगृह्यमहतींगदाम् ॥ क्षणेनभीमःसंक्रुद्धस्तन्निन्येयमसादनम् ३३ गजान्सकंकटान्मत्तान्सारोहान्सपता
किनः ॥ पततःसमपश्यामसपक्षान्पर्वतानिव ३४ हत्वातुतद्गजानीकंभीमसेनोमहाबलः ॥ पुनःस्वरथमास्थायपृष्ठतोऽर्जुनमभ्ययात् ३५ हतंपराङ्मुखप्रायं
निरुत्साहंपरंबलं ॥ व्यालंबतमहाराजप्रायशःशस्त्रवेष्टितं ३६ विलंबमानंतत्सैन्यमप्रगल्भमवस्थितम् ॥ दृष्ट्वाप्राच्छादयद्बाणैरर्जुनःप्राणतापनैः ३७ नराश्व
रथमातंगायुधिगांडीवधन्वना ॥ शरव्रातैश्चितारेजुःकदंबाइवकेसरैः ३८ ततःकुरूणामभवदार्तनादोमहान्नृप ॥ नराश्वनागासुहरैर्वध्यतामर्जुनेषुभिः ३९
हाहाकृतंभृशंत्रस्तंलीयमानंपरस्परम् ॥ अलातचक्रवत्सैन्यंतदाऽभ्रमततावकम् ४० ततस्तद्युद्धमभवत्कुरूणांसुमहद्बलैः ॥ नह्यत्रासीदनिर्भिन्नोरथःसादीहयो
गजः ४१ आदीप्तमिवतत्सैन्यंशरैश्छिन्नतनुच्छदं ॥ आसीत्सुशोणितक्लिन्नंफुल्लाशोकवनंयथा ४२ तंदृष्ट्वाकुरवस्तत्रविक्रांतंसव्यसाचिनम् ॥ निराशाःसमपद्यं
तसर्वेकर्णस्यजीविते ४३ अविषह्यंतुपार्थस्यशरसंपातमाहवे ॥ मत्वान्यवर्तन्कुरवोजितागांडीवधन्वना ४४ तेहित्वासमरेकर्णंवध्यमानाश्चसायकैः ॥ प्रदुद्रुवु
र्दिशोभीताश्चुक्रुशुश्चापिसूतजं ४५ अभ्यद्रवततान्पार्थःकिरन्शरशतान्बहून् ॥ हर्षयन्पांडवान्योधान्भीमसेनपुरोगमान् ४६ पुत्रास्तुतेमहाराजजग्मुःकर्ण
रथंप्रति ॥ अगाधेमज्जतांतेषांद्वीपःकर्णोऽभवत्तदा ४७ कुरवोहिमहाराजनिर्विषाःपन्नगाइव ॥ कर्णमेवोपलीयंतभयाद्गांडीवधन्वनः ४८ यथासर्वाणिभूता
निमृत्योर्भीतानिमारिष ॥ धर्ममेवोपलीयंतेकर्मवंतिहियानिच ४९ तथाकर्णंमहेष्वासंपुत्रास्तवनराधिप ॥ उपालीयंतसंत्रासात्पांडवस्यमहात्मनः ५० तान्
शोणितपरिक्लिन्नान्विषमस्थान्शरातुरान् ॥ माभैष्टेत्यब्रवीत्कर्णोह्यभीतोमामितेतिच ५१ संभग्नंहिबलंदृष्ट्वाबलात्पार्थेनतावकम् ॥ धनुर्विस्फारयन्कर्णस्तस्थौ
शत्रुजिघांसया ५२ तान्प्रद्रुतान्कुरून्दृष्ट्वाकर्णःशस्त्रभृतांवरः ॥ संचिंतयित्वापार्थस्यवधेदध्रेमनःश्वसन् ५३ विस्फार्यसुमहच्चापंततश्चाधिरथिर्वृषः ॥ पंचा
लान्पुनराधावत्पश्यतःसव्यसाचिनः ५४ ततःक्षणेनक्षितिपाःक्षतजप्रतिमेक्षणाः ॥ कर्णंववर्षुर्बाणौघैर्यथामेघामहीधरम् ५५ ततःशरसहस्राणिकर्ण
मुक्तानिमारिष ॥ व्ययोजयंतपंचालान्प्राणैःप्राणभृतांवर ५६ तत्रशब्दोमहानासीत्पंचालानांमहामते ॥ वध्यतांसूतपुत्रेणमित्रार्थेमित्रगृद्धिना ५७
॥ इतिश्रीमहाभारतेकर्णपर्वणिसंकुलयुद्धेएकाशीतितमोऽध्याय ॥ ८१ ॥ ॥ ७ ॥ ॥ इति कर्णपर्वणिनीलकंठीये भारतभावदीपे एकाशीतितमोऽध्यायः ॥ ८१ ॥

॥ संजयउवाच ॥ ततःकर्णःकुरुषुप्रद्रुतेषुवरूथिनाश्वेतहयेनराजन् ॥ पांचालपुत्रान्व्यधमत्सूतपुत्रोमहेषुभिर्वातइवाभ्रसंघान् १ सूतंरथादंजलिकैर्निपात्यजघान चाश्वान्जनमेजयस्य ॥ शतानीकंसुतसोमंचभल्लैरवाकिरद्धनुषीचाप्यकृंतत् २ धृष्टद्युम्नंनिर्बिभेदाथषड्भिर्जघानाश्वांस्तरसातस्यसंख्ये ॥ हत्वाचाश्वान्सात्यकेः सूतपुत्रःकैकेयपुत्रंन्यवधीद्विशोकम् ३ तमभ्यधावन्निहतेकुमारेकैकेयसेनापतिरुग्रकर्मा ॥ शरैर्विधुन्वन्भृशमुग्रवेगैःकर्णात्मजंचाप्यहनत्प्रसेनम् ४ तस्यार्धचंद्रै स्त्रिभिरुच्चकर्तप्रहस्यबाहूचशिरश्चकर्णः ॥ सस्यंदनाद्गामगमद्गतासुःपरश्वधैःशालइवावरुग्णः ५ हताश्वमंजोगतिभिःप्रसेनःशिनिप्रवीरंनिशितैःपृषत्कैः ॥ प्रच्छा द्यनृत्यन्निवकर्णपुत्रःशैनेयबाणाभिहतःपपात ६ पुत्रेहतेक्रोधपरीतचेताःकर्णःशिनीनामृषभंजिघांसुः ॥ हतोऽसिशैनेयइतिब्रुवन्सव्यवासृजद्बाणममित्रसाहम् ७ तमस्यचिच्छेदशरंशिखंडीत्रिभिस्त्रिभिश्चप्रतुतोदकर्णम् ॥ शिखंडिनःकार्मुकंचध्वजंचच्छित्त्वाक्षुराभ्यांन्यपतत्सुजातः ८ शिखंडिनंषड्भिरविध्यदुग्रोधार्ष्टद्युम्नेःस शिरश्चोच्चकर्त ॥ तथाऽभिनत्सुतसोमंशरेणसुसंशितेनाधिरथिर्महात्मा ९ अथाक्रंदेतुमुलेवर्तमानेधार्ष्टद्युम्नेनिहतेतत्रकृष्णः ॥ अपांचाल्यंक्रियतेयाहिपार्थकर्णंजही त्यब्रवीद्राजसिंह १० ततःप्रहस्याशुनरप्रवीरोरथंरथेनाधिरथेर्जगाम ॥ भयेतेषांत्राणमिच्छन्सुबाहुरभ्याहतानांरथयूथपेन ११ विस्फार्यगांडीवमथोग्रघोषंज्यया समाहत्यतलेभृशंच ॥ बाणांधकारंसहसैवकृत्वाजघाननागाश्वरथध्वजांश्च १२ प्रतिश्रुतःप्राचरदंतरिक्षेगुहागिरिणामपतन्वयांसि ॥ यन्मंडलज्येनविजृंभमाणो रौद्रेमुहूर्तेऽभ्यपतत्किरीटी १३ तंभीमसेनोऽनुययौरथेनपृष्ठेरक्षन्पांडवमेकवीरः ॥ तौराजपुत्रौत्वरितौरथाभ्यांकर्णाययातावरिभिर्विषक्तौ १४ तत्रांतरेसुमहान्सूत पुत्रश्चक्रेयुद्धंसोमकान्संप्रमृद्य ॥ रथाश्वमातंगगणान्जघानप्रच्छादयामासशरैर्दिशश्च १५ तमुत्तमौजाजनमेजयश्चक्रुद्धौयुधामन्युशिखंडिनौच ॥ कर्णंबिभेदुःस हिताःपृषत्कैःसन्नर्दमानाःसहपार्षतेन १६ तेपंचपंचालरथप्रवीरावैकर्तनंकर्णमभिद्रवंतः ॥ तस्माद्रथाच्च्यावयितुंनशेकुर्धैर्यात्कृतात्मानमिवेंद्रियार्थाः १७ तेषां धनूंषिध्वजवाजिसूतांस्तूर्णंपताकाश्चनिकृत्यबाणैः ॥ तान्पंचभिस्त्वभ्यहनत्पृषत्कैःकर्णस्ततःसिंहइवोन्ननाद १८ तस्यास्यतस्तानभिनिघ्नतश्चज्याबाणहस्त स्यधनुःस्वनेन ॥ साद्रिद्रुमास्यात्पृथिवीविशीर्णेत्यतीवमत्वाजनताव्यषीदत् १९ सशक्रचापप्रतिमेनधन्वनाभृशायतेनाधिरथिःशरान्सृजन् ॥ बभौरणेदीप्त मरीचिमंडलोयथांशुमालीपरिवेषवांस्तथा २० शिखंडिनंद्वादशभिःपराभिनच्छितैःशरैःषड्भिरथोत्तमौजसम् ॥ त्रिभिर्युधामन्युमविध्यदाशुगैस्त्रिभिस्त्रिभिःसो मकपार्षतात्मजौ २१ पराजिताःपंचमहारथास्तुतेमहाहवेसूतसुतेनमारिष ॥ निरुद्यमास्तस्थुरमित्रनंदनायथेंद्रियार्थाऽऽत्मवतापराजिताः २२ निमज्जतस्ता नथकर्णसागरेविपन्ननावोवणिजोयथार्णवे ॥ उद्दध्रिरेनौभिरिवार्णवाद्रथैःसुकल्पितैर्द्रौपदिजाःस्वमातुलान् २३

२४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ ॥ इतिकर्णपर्वणि नीलकंठीये भारतभावदीपे द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ ॥ ७ ॥ ॥

ततःशिनीनामृषभःशितैःशरैर्निकृत्यकर्णप्रहितानिषूनबहून् ॥ विदार्यकर्णंनिशितैरयस्मयैस्तवात्मजंज्येष्ठमविध्यदष्टभिः २४ कृपोऽथभोजश्चतवात्मजस्तथास्वयं चकर्णोनिशितैरताडयत् ॥ सतैश्चतुर्भिर्युयुधेयदूत्तमोदिगीश्वरैर्दैत्यपतिर्यथातथा २५ समाततेनेष्वसनेनकूजताभृशायतेनामितबाणवर्षिणा ॥ बभूवदुर्धर्षतरः ससात्यकिःशरन्नभोमध्यगतोयथारविः २६ पुनःसमास्थायरथान्सुदंशिताःशिनिप्रवीरंजुगुपुःपरंतपाः ॥ समेत्यपंचालमहारथारणेमरुद्गणाःशक्रमिवारिनिग्रहे २७ ततोऽभवद्युद्धमतीवदारुणंतवाहितानांतवसैनिकैःसह ॥ रथाश्वमातंगविनाशनंतथायथासुराणामसुरैःपुराऽभवत् २८ रथाद्विपावाजिपदातयस्तथाभवंति नानाविधशस्त्रवेष्टिताः ॥ परस्परेणाभिहताश्चचस्खलुर्विनेदुरार्ताव्यसवोऽपतंस्तथा २९ तथागतंभीममभीस्तवात्मजःससारराजावरजःकिरन्शरैः ॥ तमभ्यधा वत्त्वरितोवृकोदरोमहारुरुंसिंहइवाभिपेदिवान् ३० ततस्तयोर्युद्धमतीवदारुणंप्रदीव्यतोःप्राणदुरोदरंद्वयोः ॥ परस्परेणाभिनिविष्टरोषयोरुदग्रयोःशंबरशक्रयो र्यथा ३१ शरैःशरीरार्तिकरैःसुतेजनैर्निजघ्नतुस्तावितरेतरंभृशम् ॥ सकृत्प्रभिन्नाविववासितांतरेमहागजौमन्मथसक्तचेतसौ ३२ तवात्मजस्याथवृकोदरस्त्व रन्धनुःक्षुराभ्यांध्वजमेवचाच्छिनत् ॥ ललाटमप्यस्यबिभेदपत्रिणाशिरश्चकायात्प्रजहारसारथेः ३३ सराजपुत्रोऽन्यदवाप्यकार्मुकंवृकोदरंद्वादशभिःपराभिनत् ॥ स्वयंनियच्छंस्तुरगानजिह्मगैःशरैश्चभीमंपुनरप्यवीवृषत् ३४ ततःशरंसूर्यमरीचिसप्रभंसुवर्णवज्रोत्तमरत्नभूषितम् ॥ महेंद्रवज्राशनिपातदुःसहंमुमोचभीमांग विदारणक्षमम् ३५ सतेननिर्विद्धतनुर्वृकोदरोनिपातितःस्रस्ततनुर्गतासुवत् ॥ प्रसार्यबाहूरथवर्यमाश्रितःपुनःससंज्ञामुपलभ्यचानदत् ३६ ॥ इतिश्रीमहाभारते कर्णपर्वणि दुःशासनभीमसेनयुद्धेद्व्यशीतितमोऽध्यायः ॥ ८२ ॥ ॥ संजयउवाच ॥ तत्राकरोद्दुष्करंराजपुत्रोदुःशासनस्तुमुलंयुद्ध्यमानः ॥ चिच्छेदभी मस्यधनुःशरेणषड्भिःशरैःसारथिमप्यविध्यत् १ सतत्कृत्वाराजपुत्रस्तरस्वीविव्याधभीमंनवभिःपृषत्कैः ॥ ततोऽभिनद्बहुभिःक्षिप्रमेववरेषुभिर्भीमसेनंमहात्मा २ ततःक्रुद्धोभीमसेनस्तरस्वीशक्तिंचोग्रांप्राहिणोत्तेसुताय ॥ तामापतंतींसहसाऽतिघोरांदृष्ट्वासुतस्तेज्वलितामिवोल्काम् ३ आकर्णपूर्णैरिषुभिर्महात्माचिच्छेदपुत्रो दशभिःपृषत्कैः ॥ दृष्ट्वातुतत्कर्मकृतंसुदुष्करंप्रापूजयन्सर्वयोधाःप्रहृष्टाः ४ अथाशुभीमंचशरेणभूयोगाढंसविव्याधसुतस्त्वदीयः ॥ चुक्रोधभीमःपुनराशुतस्मैभृशं प्रजज्वालरुषाऽभिवीक्ष्य ५ विद्धोऽस्मिवीराशुभृशंत्वयाऽद्यसहस्वभूयोऽपिगदाप्रहारम् ॥ उक्त्वैवमुच्चैःकुपितोऽथभीमोजग्राहतांभीमगदांवधाय ६ उवाचचा द्याहमहंदुरात्मन्पास्यामितेशोणितमाजिमध्ये ॥ अथैवमुक्तस्तनयस्तवोग्रांशक्तिंवेगात्प्राहिणोन्मृत्युरूपाम् ७ आविध्यभीमोऽपिगदांसुघोरांविचिक्षिपेरो षपरीतमूर्तिः ॥ सातस्यशक्तिंसहसाविरुज्यपुत्रंतवाजौताडयामासमूर्ध्नि ८ तत्रेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८

९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१

सविक्षरन्नागइवप्रभिन्नोगदामस्मैतुमुलेप्राहिणोद्वै ॥ तयाऽहरद्दशधन्वंतराणिदुःशासनंभीमसेनःप्रसह्य ९ तयाहतःपतितोवेपमानोदुःशासनोगदयावेगवत्या ॥ विध्वस्तवर्माभरणांबरस्रक्विचेष्टमानोभृशवेदनातुरः १० हयाःससूता।निहतानरेंद्रचूर्णीकृतश्चास्यरथःपतंत्या ॥ दुःशासनंपांडवाःप्रेक्ष्यसर्वेहृष्टाःपंचालाःसिंहनादानमुंचन् ११ तंपातयित्वाऽथवृकोदरोऽथजगर्जहर्षेणविनादयन्दिशः ॥ नादेनतेनाखिलपार्श्ववर्तिनोमूर्छाकुलाःपतितास्त्वाजमीढ १२ भीमोऽपिवेगादवतीर्ययानाद्दुःशासनंवेगवानभ्यधावत् ॥ ततःस्मृत्वाभीमसेनस्तरस्वीसापत्नकंयत्प्रयुक्तंसुतैस्ते १३ तस्मिन्सुघोरेतुमुलेवर्तमानेप्रधानभूयिष्ठतरैःसमंतात् ॥ दुःशासनंतत्रसमीक्ष्यराजन्भीमोमहाबाहुरचिंत्यकर्मा १४ स्मृत्वाऽथकेशग्रहणंचदेव्यावस्त्रापहारंचरजस्वलायाः ॥ अनागसोभर्तृपराङ्मुखायादुःखानिदत्तान्यपिविप्रचिंत्य १५ जज्वालक्रोधादथभीमसेनआज्यप्रसिक्तोहियथाहुताशः ॥ तत्राहकर्णंचसुयोधनंचकृपंद्रौणिंकृतवर्माणमेव १६ निहन्मिदुःशासनमद्यपापंसंरक्ष्यतामद्यसमस्तयोधाः ॥ इत्येवमुक्त्वासहसाऽभ्यधावन्निहंतुकामोऽतिबलस्तरस्वी १७ तथातुविक्रम्यरणेवृकोदरोमहागजंकेसरिकोयथैव ॥ निगृह्यदुःशासनमेकवीरःसुयोधनस्याधिरथेःसमक्षम् १८ रथादवप्लुत्यगतःसभूमौयत्नेनतस्मिन्प्रणिधायचक्षुः ॥ असिंसमुद्यम्यसितंसुधारंकंठेपदाऽऽक्रम्यचवेपमानम् १९ उवाचतद्गौरितियद्ब्रुवाणोहृष्टोवदेःकर्णसुयोधनाभ्याम् ॥ येराजसूयावभृथेपवित्राजाताःकचायाज्ञसेन्यादुरात्मन् २० तेपाणिनाकतरेणावकृष्टास्तद्ब्रूहित्वांपृच्छतिभीमसेनः ॥ श्रुत्वातुतद्भीमवचःसुघोरंदुःशासनोभीमसेनंनिरीक्ष्य २१ जज्वालभीमंसतदास्मयेनसंशृण्वतांकौरवसोमकानाम् ॥ उक्तस्तदाजौसतथासरोषंजगादभीमंपरिवर्तनेत्रः २२ अयंकरिकराकारःपीनस्तनविमर्दनः ॥ गोसहस्रप्रदाताचक्षत्रियांतकरःकरः २३ अनेनयाज्ञसेन्यामेभीमकेशाविकर्षिताः ॥ पश्यतांकुरुमुख्यानांयुष्माकंचसभासदाम् २४ एवंत्वसौराजसुतंनिशम्यब्रुवंतमाजौविनिपीड्यवक्षः ॥ भीमोबलात्तंप्रतिगृह्यदोर्भ्यांमुच्चैर्ननादाथसमस्तयोधान् २५ उवाचयस्यास्तिबलंसरक्षत्वसौभवेदद्यनिरस्तबाहुः ॥ दुःशासनंजीवितंप्रोत्सृजंतमाक्षिप्ययोधांस्तरसामहाबलः २६ एवंक्रुद्धोभीमसेनःकरेणउत्पाटयामासभुजंमहात्मा ॥ दुःशासनंतेनसवीरमध्येजघानवज्राशनिसंनिभेन २७ उत्कृत्यवक्षःपतितस्यभूमावथापिबच्छोणितमस्यकोष्णम् ॥ ततोनिपात्यास्यशिरोऽपकृत्यतेनासिनातवपुत्रस्यराजन् २८ सत्यांचिकीर्षुर्मतिमान्प्रतिज्ञांभीमोऽपिबच्छोणितमस्यकोष्णम् ॥ आस्वाद्यचास्वाद्यचवीक्षमाणःक्रुद्धोहिचैनंनिजगादवाक्यम् २९ स्तन्यस्यमातुर्मधुसर्पिषोर्वामाध्वीकपानस्यचसत्कृतस्य ॥ दिव्यस्यवातोयरसस्यपानात्पयोदधिभ्यांमथिताच्चमुख्यात् ३० अन्यानिपानानिचयानिलोकेसुधामृतस्वादुरसानितेभ्यः ॥ सर्वेभ्यएवाभ्यधिकोरसोऽयंममाद्यचास्याहितलोहितस्य ३१

३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ ॥ इतिकर्ण

अथाहमीमः पुनरुग्रकर्मा दुःशासनं क्रोधपरीतचेताः ॥ गतासुमालोक्य विहस्य सुस्वरं किं वा कुर्यां मृत्युना रक्षितोऽसि ३२ एवं ब्रुवाणं पुनराद्रवंतमास्वाद्यमानंतमतिप्र
हृष्टम् ॥ ये भीमसेनं ददृशुस्तदानीं भयेन तेऽपि व्यथिता निपेतुः ३३ ये चापि नासन्व्यथिता मनुष्यास्तेषां करेभ्यः पतितं हि शस्त्रम् ॥ भयाच्च संचुकुशुरस्वरैस्ते निमीलि
ताक्षा ददृशुः समंततः ३४ तं तत्र भीमं ददृशुः समंताद्दौःशासनं तद्रुधिरं पिबंतम् ॥ सर्वेऽपलायंत भयाभिपन्ना नैव मनुष्योऽयमिति ब्रुवाणाः ३५ तस्मिन्कृते भीमसेने
न रूपे दृष्ट्वा जनाः शोणितं पीयमानम् ॥ संप्राद्रवंश्चित्रसेनेन सार्धं भीमं रक्षो भाषमाणा भयार्ताः ३६ युधामन्युं प्रद्रुतं चित्रसेनं सहानीकस्त्वभ्ययाद्राजपुत्रः ॥ विव्याध
चैनं निशितैः पृषत्कैर्व्यपेतभीः सप्तभिराशुमुक्तैः ३७ संक्रांतभोग इव लेलिहानो महोरगः क्रोधविषं सिसृक्षुः ॥ निवृत्त्य पांचालजमभ्यविध्यत्त्रिभिः शरैः सारथिमस्य ष
ड्भिः ३८ ततः सुपुंखेन सुयंत्रितेन सुसंशिताग्रेण शरेण शूरः ॥ आकर्णमुक्तेन समाहितेन युधामन्युस्तस्य शिरो जहार ३९ तस्मिन्हते भ्रातरि चित्रसेने क्रुद्धः कर्णः पौरु
षं दर्शयानः ॥ व्यद्रावयत्पांडवानामनीकं प्रत्युद्यातो नकुलेनामितौजाः ४० भीमोऽपि हत्वा तत्रैव दुःशासनममर्षणम् ॥ पूरयित्वांजलिं भूयो रुधिरस्योग्रनिःस्वनः ४१
शृण्वतां लोकवीराणामिदं वचनमब्रवीत् ॥ एष ते रुधिरं कंठात्पिबामि पुरुषाधम ४२ ब्रूहीदानीं तु संहृष्टः पुनर्गौरिति गौरिति ॥ ये तदाऽस्मान्प्रनृत्यंति पुनर्गौरिति गौ
रिति ४३ तान्वयं प्रतिनृत्यामः पुनर्गौरिति गौरिति ॥ प्रमाणकोट्यां शयनं कालकूटस्य भोजनम् ४४ दंशनं चाहिभिः कृष्णैर्दाहं च जतुवेश्मनि ॥ द्यूतेन राज्यहरणम
रण्ये वसतिश्च या ४५ द्रौपद्याः केशपक्षस्य ग्रहणं च सुदारुणम् ॥ इष्वस्त्राणि च संग्रामेष्वसुखानि च वेश्मनि ४६ विराटभवने यश्च क्लेशोऽस्माकं पृथग्विधः ॥ शकुनेर्धा
र्तराष्ट्रस्य राधेयस्य च मंत्रिते ४७ अनुभूतानि दुःखानि तेषां हेतुस्त्वमेव हि ॥ दुःखान्येतानि जानीमो न सुखानि कदाचन ॥ धृतराष्ट्रस्य दौरात्म्यात्सपुत्रस्य सदा व
यम् ४८ इत्युक्त्वा वचनं राजन्जयं प्राप्य वृकोदरः ॥ पुनराह महाराज स्मयंस्तौ केशवार्जुनौ ४९ असृग्दिग्धो विस्रवल्लोहितास्यः क्रुद्धोऽत्यर्थं भीमसेनस्तरस्वी ॥
दुःशासने यद्रणे संश्रुतं मे तद्वै सत्यं कृतमद्येह वीरौ ५० अत्रैव दास्याम्यपरं द्वितीयं दुर्योधनं यज्ञपशुं विशस्य ॥ शिरो मृदित्वा च पदा दुरात्मनः शांतिं लप्स्ये कौरवाणां
समक्षम् ५१ एतावदुक्त्वा वचनं प्रहृष्टो ननाद चोच्चै रुधिरार्द्रगात्रः ॥ ननर्द चैवातिबलो महात्मा वृत्रं निहत्येव सहस्रनेत्रः ५२ ॥ इति श्रीमहाभारते कर्णपर्वणि दुःशा
सनवधे त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ ॥ ॥ ॥ संजय उवाच ॥ दुःशासने तु निहते तव पुत्रा महारथाः ॥ महाक्रोधविषा वीराः समरेष्वपलायिनः १ दश रा
जन्महावीर्या भीमं प्राच्छादयञ्शरैः ॥ निषंगी कवची पाशी दंडधारो धनुर्धरः २ अलोलुपः सहः षंढो वातवेग सुवर्चसौ ॥ एते समेत्य सहिता भ्रातृव्यसनकर्शिताः ३

पर्वणि नीलकंठे भारतभावदीपे त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ ॥ ७ ॥ ॥ दुःशासन इति १ । २ । ३

४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९

भीमसेनंमहाबाहुंमार्गणैःसमवारयन् ॥ सवार्यमाणोविशिखैःसमंतात्तैर्महारथैः ४ भीमःक्रोधाग्निरक्ताक्षःक्रुद्धःकालइवाबभौ ॥ तांस्तुभल्लैर्महावेगैर्दशभिर्दशभार
तान् ५ रुक्मांगदान्रुक्मपुंखैःपार्थोनिन्येयमक्षयम् ॥ हतेषुतेषुवीरेषुप्रदुद्रावबलंतव ६ पश्यतःसूतपुत्रस्यपांडवस्यभयार्दितं ॥ ततःकर्णोमहाराजप्रविवेश
महद्भयम् ७ दृष्ट्वाभीमस्यविक्रांतमंतकस्यप्रजास्विव ॥ तस्यत्वाकारभावज्ञःशल्यःसमितिशोभनः ८ उवाचवचनंकर्णंप्राप्तकालमरिंदमम् ॥ माव्यथांकुरुराधेय
नैवंत्वय्युपपद्यते ९ एतेद्रवंतिराजानोभीमसेनभयार्दिताः ॥ दुर्योधनश्चसंमूढोभ्रातृव्यसनकर्शितः १० दुःशासनस्यरुधिरेपीयमानेमहात्मना ॥ व्यापन्नचेतस
श्चैवशोकोपहतचेतसः ११ दुर्योधनमुपासंतेपरिवार्यसमंततः ॥ कृपप्रभृतयश्चैतेहतशेषाःसहोदराः १२ पांडवालब्धलक्षाश्चधनंजयपुरोगमाः ॥ त्वामेवाभिमुखाः
शूरायुद्धायसमुपस्थिताः १३ सत्वंपुरुषशार्दूलपौरुषेणसमास्थितः ॥ क्षत्रधर्मंपुरस्कृत्यप्रत्युद्याहिधनंजयम् १४ भारोहिधार्तराष्ट्रेणत्वयिसर्वःसमाहितः ॥ तमु
द्वहमहाबाहोयथाशक्तियथाबलम् १५ जयेस्याद्विपुलाकीर्तिर्ध्रुवःस्वर्गःपराजये ॥ वृषसेनश्चराधेयसंक्रुद्धस्तनयस्तव १६ त्वयिमोहंसमापन्नेपांडवानभिधावति ॥
एतच्छ्रुत्वातुवचनंशल्यस्यामिततेजसः ॥ हृदिचावश्यकंभावंचक्रेयुद्धायसुस्थिरम् १७ ततःक्रुद्धोवृषसेनोऽभ्यधावदवस्थितंप्रमुखेपांडवंतम् ॥ वृकोदरंकाल
मिवात्तदंडंगदाहस्तंयोधयंतंत्वदीयान् १८ तमभ्यधावन्नकुलःप्रवीरोरोषादमित्रंप्रतुदन्पृषत्कैः ॥ कर्णस्यपुत्रंसमरेप्रहृष्टंपुराजिघांसुर्मघवेवजंभम् १९ ततोध्वजं
स्फाटिकचित्रकंचुकंचिच्छेदवीरोनकुलःक्षुरेण ॥ कर्णात्मजस्येष्वसनंचचित्रंभल्लेनजांबूनदचित्रनद्धम् २० अथान्यदादायधनुःसशीघ्रंकर्णात्मजःपांडवमभ्यवि
ध्यत् ॥ दिव्यैरस्त्रैरभ्यवर्षच्चसोऽपिकर्णस्यपुत्रोनकुलंकृतास्त्रः २१ शराभिघाताच्चरुषाचराजन्स्वयाचभासाऽस्त्रसमीरणाच्च ॥ जज्वालकर्णस्यसुतोऽतिमात्रमिद्धो
यथाऽऽज्याहुतिभिर्हुताशः २२ कर्णस्यपुत्रोनकुलस्यराजन्सर्वानश्वानक्षिणोदुत्तमास्त्रैः ॥ वनायुजान्वैनकुलस्यशुभ्रानुदग्रगान्हेमजालावनद्धान् २३ ततोहता
श्वादवरुह्ययानादादायचर्मामलरुक्मचंद्रम् ॥ आकाशसंकाशमसिंप्रगृह्यदोधूयमानःखगवच्चचार २४ ततोंऽतरिक्षेचरथाश्वनागंचिच्छेदतूर्णंनकुलश्चित्रयोधी ॥
तेप्रापतन्नसिनागांविशस्तायथाश्वमेधेपशवःशमित्रा २५ द्विसाहस्राःपातितायुद्धशौंडानानादेश्याःसुभृताःसत्यसंधाः ॥ एकेनसंख्येनकुलेनकृत्ताजयेप्सुना
ऽनुत्तमचंदनांगाः २६ तमापतंतंनकुलंसोऽभिपत्यसमंततःसायकैःप्रत्यविद्धचत् ॥ सतुद्यमानोनकुलःपृषत्कैर्विव्याधवीरंसचुकोपविद्धः २७ महाभयेरक्ष्य
माणोमहात्माभ्रात्राभीमेनाकरोत्तत्रभीमम् ॥ तंकर्णपुत्रोव्यधमंतमेकंनराश्वमातंगरथाननेकान् २८ क्रीडंतमष्टादशभिःपृषत्कैर्विव्याधवीरंनकुलंसरोषः ॥
सतेनविद्धोऽतिभृशंतरस्वीमहाहवेवृषसेनेनराजन् २९

३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपे चतुरशीतितमोऽध्यायः ॥ ८४ ॥ ॥ नकुलमिति १



क्रुद्धेनयावन्समरेजिघांसुःकर्णात्मजंपांडुसुतोनृवीरः ॥ वितत्यपक्षौसहसाऽऽपतंतंश्येनंयथैवामिषलुब्धमाजौ ३० अवाकिरद्वृषसेनस्ततस्तंशितैःशरैर्नकुलमुदारवीर्यं ॥ सतान्मोघांस्तस्यकुर्वन्शरौघान्चचारमार्गान्नकुलश्चित्ररूपान् ३१ अथास्यतूर्णंचरतोनरेंद्रखड्गेनचित्रंनकुलस्यतस्य ॥ महेषुभिर्व्यधमत्कर्णपुत्रोमहाहवेचर्मसहस्रतारम् ३२ तंचायसंनिशितंतीक्ष्णधारंविकोशमुग्रंगुरुभारसाहम् ॥ द्विषच्छरीरांतकरंसुघोरमाधुन्वतःसर्पमिवोग्ररूपम् ३३ क्षिप्रंशरैःषड्भिरमित्रसाहश्चकर्तखड्गंनिशितैःसुवेगैः ॥ पुनश्चदीप्तैर्निशितैःपृषत्कैःस्तनांतरेगाढमथाभ्यविद्धयत् ३४ कृत्वातुतद्दुष्करमार्यजुष्टमन्यैर्नरैःकर्मरणेमहात्मा ॥ ययौरथंभीमसेनस्यराजन्शराभितप्तोनकुलस्त्वरावान् ३५ सभीमसेनस्यरथंहताश्वोमाद्रीसुतःकर्णसुताभितप्तः ॥ आपुप्लुवेसिंहइवाचलाग्रंसंप्रेक्ष्यमाणस्यधनंजयस्य ३६ ततःक्रुद्धोवृषसेनोमहात्माववर्षताविषुजालेनवीरः ॥ महारथावेकरथेसमेतौशरैःप्रभिंदन्निवपांडवेयौ ३७ तस्मिन्रथेनिहतेपांडवस्यक्षिप्रंचखड्गेविशिखैर्निकृत्ते ॥ अन्येचसंहत्यकुरुप्रवीरास्ततोन्यघ्नन्शरवर्षैरुपेत्य ३८ तौपांडवेयौपरितःसमेतान्संहूयमानाविवहव्यवाहौ ॥ भीमार्जुनौवृषसेनायक्रुद्धौववर्षतुःशरवर्षंसुघोरम् ३९ अथाब्रवीन्मारुतिःफाल्गुनंचपश्यस्वैनंनकुलंपीड्यमानम् ॥ अयंचनोबाधतेकर्णपुत्रस्तस्माद्भवान्प्रत्युपयातुकार्ष्णिम् ४० सतन्निशम्यैववचःकिरीटीरथंसमासाद्यवृकोदरस्य ॥ अथाब्रवीन्नकुलोवीक्ष्यवीरमुपागतंशातयशीघ्रमेनम् ४१ इत्येवमुक्तःसहसाकिरीटीभ्रात्रासमक्षंनकुलेनसंख्ये ॥ कपिध्वजंकेशवसंगृहीतंप्रैषीदुदग्रोवृषसेनायवाहम् ४२ ॥ इतिश्रीमहाभारतेकर्णपर्वणि वृषसेनयुद्धेनकुलपराजये चतुरशीतितमोऽध्यायः ॥ ८४ ॥ ॥ संजयउवाच ॥ नकुलमथविदित्वाछिन्नबाणासनासिंविरथमरिशरार्तंकर्णपुत्रास्त्रभग्नम् ॥ पवनधुतपताकाह्रादिनोवल्गिताश्वावरपुरुषनियुक्तास्तेरथैःशीघ्रमीयुः १ द्रुपदसुतवरिष्ठाःपंचशैनेयषष्ठाद्रुपददुहितृपुत्राःपंचचामित्रसाहाः ॥ द्विरदरथनराश्वान्सूदयंतस्त्वदीयान्भुजगपतिनिकाशैर्मार्गणैरात्तशस्त्राः २ अथतवरथमुख्यास्तान्प्रतीयुस्त्वरंतःकृपहृदिकसुतौचद्रौणिदुर्योधनौच ॥ शकुनिसुतवृकौचक्राथदेवावृधौचद्विरदजलदघोषैःस्यंदनैःकार्मुकैश्च ३ तवनृपरथिवीरास्तान्दशैकंचवीरान्नृवरशरवराग्रैस्ताडयंतोभ्यरुंधन् ॥ नवजलदसवर्णैर्हस्तिभिस्तानुदीयुर्गिरिशिखरनिकाशैर्भीमवेगैःकुलिंदाः ४ सुकल्पिताहैमवतामदोत्कटारणाभिकामैःकृतिभिःसमास्थिताः ॥ सुवर्णजालैर्विततावभुर्गजास्तथायथाखेजलदाःसविद्युतः ५ कुलिंदपुत्रोदशभिर्महायसैःकृपंससूताश्वमपीडयद्भृशम् ॥ ततःशरद्वत्सुतसायकैर्हतःसहैवनागेनपपातभूतले ६ कुलिंदपुत्रावरजस्तुतोमरैर्दिवाकरांशुप्रतिमैरयस्मयैः ॥ रथंचविक्षोभ्यननादनर्दतस्ततोऽस्यगांधारपतिःशिरोऽहरत् ७ ततःकुलिंदेषुहतेषुतेष्वथप्रहृष्टरूपास्तवतेमहारथाः ॥ भृशंप्रदध्मुर्लवणांबुसंभवान्परांश्चबाणासनपाणयोऽभ्ययुः ८

२ । ३ । ४ । ५ । ६ । ७ । ८

अथाभवद्युद्धमतीवदारुणंपुनःकुरूणांसहपांडुसृंजयैः ॥ शरासिशक्त्यृष्टिमदापरश्वधैर्नराश्वनागासुहरंभृशाकुलम् ९ रथाश्वमातंगपदातिभिस्ततःपरस्परंवि
प्रहताःपतन्क्षितौ ॥ यथासविद्युत्स्तनिताबलाहकाःसमाहतादिग्भ्यइवोग्रमारुतैः १० ततःशतानीकमतान्महागजांस्तथारथान्पत्तिगणांश्चतान्बहून् ॥ ज
घानभोजस्तुहयानथाऽऽपतन्क्षणाद्विशस्ताःकृतवर्मणःशरैः ११ अथापरेद्रौणिहतामहाद्विपास्त्रयःससर्वायुधयोधकेतनाः ॥ निपेतुरुर्व्यांव्यसवोनिपातिता
स्तथायथावज्रहतामहाचलाः १२ कुलिंदराजावरजादनंतरःस्तनांतरेपत्रिवरैरताडयत् ॥ तवात्मजंतस्यतवात्मजःशरैःशितैःशरीरंव्यहनद्द्विपंचतम् १३
सनागराजःसहराजसूनुनापपातरक्तंबहुसर्वतःक्षरन् ॥ महेंद्रवज्रप्रहतोऽबुदागमेयथाजलंगैरिकपर्वतस्तथा १४ कुलिंदपुत्रप्रहितोऽपरोद्विपःक्राथंससूताश्वरथं
व्यपोथयत् ॥ ततोऽपतत्क्राथशराभिघातितःसहेश्वरोवज्रहतोयथागिरिः १५ रथीद्विपस्थेनहतोऽपतच्छरैःक्राथाधिपःपर्वतजेनदुर्जयः ॥ सवाजिसूतेष्वसन
ध्वजस्तथायथामहावातहतोमहाद्रुमः १६ वृकोद्विपस्थंगिरिराजवासिनंभृशंशरैर्द्वादशभिःपराभिनत् ॥ ततोवृकंसाश्वरथंमहाद्विपोद्रुतंचतुर्भिश्चरणैर्व्यपोथ
यत् १७ सनागराजःसनियंतृकोऽपतत्तथाहतोबभ्रुसुतेषुभिर्भृशम् ॥ सचापिदेवावृधसूनुरर्दितःपपातनुन्नःसहदेवसूनुना १८ विषाणगात्रावरयोधपातिनाग
जेनहंतुंशकुनिंकुलिंदजः ॥ जगामवेगेनभृशार्दयंश्चतंततोऽस्यगांधारपतिःशिरोऽहरत् १९ ततःशतानीकहतामहागजाहयारथाःपत्तिगणाश्चतावकाः ॥ सुप
र्णवातप्रहतायथोरगास्तथागतागांविवशाविचूर्णिताः २० ततोऽभ्यविद्ध्यद्बहुभिःशितैःशरैःकलिंगपुत्रोनकुलात्मजंस्मयन् ॥ ततोऽस्यकोपाद्विचकर्तनाकु
लिःशिरःक्षुरेणांबुजसन्निभाननम् २१ ततःशतानीकमविध्यदायसैस्त्रिभिःशरैःकर्णसुतोऽर्जुनंत्रिभिः ॥ त्रिभिश्चभीमंनकुलंचसप्तभिर्जनार्दनंद्वादशभिश्चसायकैः
२२ तदस्यकर्मातिमनुष्यकर्मणःसमीक्ष्यहृष्टाःकुरवोऽभ्यपूजयन् ॥ पराक्रमज्ञास्तुधनंजयस्ययेहुतोऽयमग्राविितितेतुमेनिरे २३ ततःकिरीटीपरवीरघातीह
ताश्वमालोक्यनरप्रवीरः ॥ माद्रीसुतंनकुलंलोकमध्येसमीक्ष्यकृष्णंभृशविक्षतंच २४ समभ्यधावद्वृषसेनमाहवेससूतजस्यप्रमुखेस्थितस्तदा ॥ तमापतंतंन
रवीरमुग्रंमहाहवेबाणसहस्रधारिणम् २५ अभ्यापतत्कर्णसुतोमहारथंयथामहेंद्रंनमुचिःपुरातथा ॥ ततोद्भुतंचैकशरेणपार्थंशितेनविद्धायुधिकर्णपुत्रः २६ न
नादनादंसुमहानुभावोविद्ध्वेवशक्रंनमुचिःसवीरः ॥ पुनःसपार्थंवृषसेनउग्रैर्बाणैरविद्ध्यद्भुजमूलेतुसव्ये २७ तथैवकृष्णंनवभिःसमार्दयत्पुनश्चपार्थंदशभिर्ज
घान ॥ पूर्वंयथावृषसेनप्रयुक्तैरभ्याहतःश्वेतहयःशरैस्तैः २८ संरंभमीषद्गमितोवधायकर्णात्मजस्याथमनःप्रदध्रे ॥ ततःकिरीटीरणमूर्ध्निकोपात्कृत्वात्रिशा
खांभ्रुकुटिंललाटे २९ मुमोचतूर्णंविशिखान्महात्मावधेप्सतःकर्णसुतस्यसंख्ये ॥ आरक्तनेत्रोंतकशत्रुहंताउवाचकर्णंभृशमुत्स्मयंस्तदा ३०

३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ ॥ इति कर्णपर्वणि नीलकंठीये भारतभावदीपे पंचाशीतितमोऽध्यायः ॥ ८५ ॥ ॥ ७ ॥ ॥ तमायांतमिति १ । २ । ३ । ४

दुर्योधनंद्रौणिमुखांश्चसर्वानहंरणेवृषसेनंतमुग्रम् ॥ संपश्यतःकर्णतवाद्यसंख्येनयामिलोकंनिशितैःपृषत्कैः ३१ ऊनंचतावद्विजनावदंतिसर्वैर्भवद्भिर्मम सूनुर्हतोऽसौ ॥ एकोरथोमद्विहीनस्तरस्वीअहंहनिष्येभवतांसमक्षम् ३२ संरक्ष्यतांरथसंस्थाःसुतोऽयमहंहनिष्येवृषसेनमुग्रम् ॥ पश्चाद्वधिष्येत्वामपिसंप्रमूढमहंहनिष्येऽर्जुनआजिमध्ये ३३ तमद्यमूलंकलहस्यसंख्येदुर्योधनापाश्रयजातदर्पम् ॥ त्वामद्यहंताऽस्मिरणेप्रसह्यअस्यैवहंतायुधिभीमसेनः ३४ दुर्योधनस्याधमपूरुषस्ययस्यानयादेषमहान्क्षयोऽभवत् ॥ सएवमुक्त्वाविनिमृज्यचापंलक्ष्यंहिकृत्वावृषसेनमाजौ ३५ ससर्जबाणान्विशिखान्महात्मावधायराजन्कर्णसुतस्य संख्ये ॥ विव्याधचैनंदशभिःपृषत्कैर्मर्मस्वशंकंप्रहसन्किरीटी ३६ चिच्छेदचास्येष्वसनंभुजौचक्षुरैश्चतुर्भिर्निशितैःशिरश्च ॥ सपार्थबाणाभिहतःपपातरथाद्विबाहुर्विशिराधरायाम् ३७ सुपुष्पितोवृक्षवरोऽतिकायोवातेरितःशालइवाद्रिशृंगात् ॥ संप्रेक्ष्यबाणाभिहतंपतंतंरथात्सुतंसूतजःक्षिप्रकारी ३८ रथंरथेनाशुजगामरोषात्किरीटिनःपुत्रवधाभितप्तः ॥ ततःसमक्षंस्वसुतंविलोक्यकर्णोहतंश्वेतहयेनसंख्ये ॥ संरंभमागम्यपरंमहात्माकृष्णार्जुनौसहसैवाभ्यधावत् ३९ ॥ इतिश्रीमहाभारतेकर्णपर्वणि वृषसेनवधेपंचाशीतितमोऽध्यायः ॥ ८५ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ तमायांतमभिप्रेक्ष्यवेलोद्धूतमिवार्णवम् ॥ गर्जंतंसुमहाकायंदुर्निवारंसुरैरपि १ अर्जुनंप्राहदाशार्हःप्रहस्यपुरुषर्षभः ॥ अयंसरथआयातिश्वेताश्वःशल्यसारथिः २ येनतेसहयोद्धव्यंस्थिरोभवधनंजय ॥ पश्यचैनंसमायुक्तंरथंकर्णस्यपांडव ३ श्वेतवाजिसमायुक्तंयुक्तंराधासुतेनच ॥ नानापताकाकलिलंकिंकिणीजालमालिनम् ४ उह्यमानमिवाकाशेविमानंपांडुरैर्हयैः ॥ ध्वजंचपश्यकर्णस्यनागकक्षंमहात्मनः ५ आखंडलधनुःप्रख्यमुल्लिखंतमिवांबरम् ॥ पश्यकर्णंसमायांतंधार्तराष्ट्रप्रियैषिणम् ६ शरधाराविमुंचंतंधारासारमिवांबुदम् ॥ एषमद्रेश्वरोराजारथाग्रेपर्यवस्थितः ७ नियच्छतिहयानस्यराधेयस्यामितौजसः ॥ शृणुदुंदुभिनिर्घोषंशंखशब्दंचदारुणम् ८ सिंहनादांश्चविविधान्शृणुपांडवसर्वतः ॥ अंतर्धायमहाशब्दान्कर्णेनामिततेजसा ९ दोधूयमानस्यभृशंधनुषःशृणुनिःस्वनम् ॥ एतेदीर्यंतिसगणाःपंचालानांमहारथाः १० दृष्ट्वाकेसरिणंक्रुद्धंमृगाइवमहावने ॥ सर्वयत्नेनकौंतेयहंतुमर्हसिसूतजम् ११ नहिकर्णशरानन्यःसोढुमुत्सहतेनरः ॥ सदेवासुरगंधर्वांस्त्रींल्लोकान्सचराचरान् १२ त्वंहिजेतुंरणेशक्तस्तथैवविदितंमम ॥ भीममुग्रंमहात्मानंत्र्यक्षंशर्वंकपर्दिनम् १३ नशक्ताद्रष्टुमीशानंकिंपुनर्योधितुंप्रभुम् ॥ त्वयासाक्षान्महादेवःसर्वभूतशिवःशिवः १४ युद्धेनाराधितःस्थाणुर्देवाश्चवरदास्तव ॥ तस्यपार्थप्रसादेनदेवदेवस्यशूलिनः १५ जहिकर्णंमहाबाहोनमुचिंवृत्रहायथा ॥ श्रेयस्तेऽस्तुसदापार्थयुद्धेजयमवाप्नुहि १६

५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १

॥ अर्जुनउवाच ॥ ध्रुवएवजयःकृष्णममनास्त्यत्रसंशयः ॥ सर्वलोकगुरुर्यस्त्वंतुष्टोऽसिमधुसूदन १७ चोदयाश्वान्हृषीकेशरथंममहारथ ॥ नाहत्वासमरेकर्णं निवर्तिष्यतिफाल्गुनः १८ अद्यकर्णंहतंपश्यमच्छरैःशकलीकृतम् ॥ मांवाद्रक्ष्यसिगोविंदकर्णेननिहतंशरैः १९ उपस्थितमिदंघोरंयुद्धंत्रैलोक्यमोहनम् ॥ यज्जनाःकथयिष्यंतियावद्भूमिर्धरिष्यति २० एवंब्रुवंस्तदापार्थःकृष्णमक्लिष्टकारिणम् ॥ प्रत्युद्ययौरथेनाशुगजंप्रतिगजोयथा २१ पुनरप्याहतेजस्वीपार्थःकृष्णमरिंदम ॥ चोदयाश्वान्हृषीकेशकालोयमतिवर्तते ॥ एवमुक्तस्तदातेनपांडवेनमहात्मना २२ जयेनसंपूज्यसपांडवंतदाप्रचोदयामासहयान्मनोजवान् ॥ सपांडुपुत्रस्यरथोमनोजवःक्षणेनकर्णस्यरथाग्रतोऽभवत् २३ ॥ इतिश्रीमहाभारतेकर्णपर्वणिकर्णार्जुनद्वैरथेवासुदेववाक्येषडशीतितमोऽध्यायः ॥ ८६ ॥ ७ ॥

॥ संजयउवाच ॥ वृषसेनंहतंदृष्ट्वाशोकामर्षसमन्वितः ॥ पुत्रशोकोद्भवंवारिनेत्राभ्यांसमवासृजत् १ रथेनकर्णस्तेजस्वीजगामाभिमुखोरिपुम् ॥ युद्धायामर्षताम्राक्षःसमाहूयधनंजयम् २ तौरथौसूर्यसंकाशौवैयाघ्रपरिवारितौ ॥ समेतौददृशुस्तत्रद्वाविवार्कौसमुद्गतौ ३ श्वेताश्वौपुरुषौदिव्यावास्थितावरिमर्दनौ ॥ शुशुभातेमहात्मानौचंद्रादित्यौयथादिवि ४ तौदृष्ट्वाविस्मयंजग्मुःसर्वसैन्यानिमारिष ॥ त्रैलोक्यविजयेयत्ताविंद्रवैरोचनाविव ५ रथज्यातलनिर्ह्रादैर्बाणसिंहरवैस्तथा ॥ तौरथावभ्यधावंतौसमालोक्यमहीक्षिताम् ६ ध्वजौचदृष्ट्वासंसक्तौविस्मयःसमपद्यत ॥ हस्तिकक्षंचकर्णस्यवानरंचकिरीटिनः ७ तौरथौसंप्रसक्तौतुदृष्ट्वाभारतपार्थिवाः ॥ सिंहनादरवांश्चक्रुःसाधुवादांश्चपुष्कलान् ८ दृष्ट्वाचद्वैरथंताभ्यांतत्रयोधाःसहस्रशः ॥ चक्रुर्बाहुस्वनांश्चैवतथाचैलावधूननम् ९ आजघ्नुःकुरवस्तत्रवादित्राणिसमंततः ॥ कर्णंप्रहर्षयिष्यंतःशंखान्दध्मुश्चसर्वशः १० तथैवपांडवाःसर्वेहर्षयंतोधनंजयम् ॥ तूर्यशंखनिनादेनदिशःसर्वाव्यनादयन् ११ क्ष्वेडितास्फोटितोत्कुष्टैस्तुमुलंसर्वतोऽभवत् ॥ बाहुशब्दैश्चशूराणांकर्णार्जुनसमागमे १२ तौदृष्ट्वापुरुषव्याघ्रौरथस्थौरथिनांवरौ ॥ प्रगृहीतमहाचापौशरशक्तिध्वजायुतौ १३ वर्मिणौबद्धनिस्त्रिंशौश्वेताश्वौशंखशोभितौ ॥ तूणीरवरसंपन्नौद्वावप्येतौसुदर्शनौ १४ रक्तचंदनदिग्धांगौसमदौगोवृषाविव ॥ चापविद्युद्ध्वजोपेतौशस्त्रसंपत्तियोधिनौ १५ चामरव्यजनोपेतौश्वेतच्छत्रोपशोभितौ ॥ कृष्णशल्यरथोपेतौतुल्यरूपौमहारथौ १६ सिंहस्कंधौदीर्घभुजौरक्ताक्षौहेममालिनौ ॥ सिंहस्कंधप्रतीकाशौव्यूढोरस्कौमहाबलौ ॥ अन्योन्यवधमिच्छंतावन्योन्यजयकांक्षिणौ १७ अन्योन्यमभिधावंतौगोष्ठेगोवृषभाविव ॥ प्रभिन्नाविवमातंगौसुसंरब्धाविवाचलौ १८ आशीविषशिशुप्रख्यौयमकालांतकोपमौ ॥ इंद्रवृत्राविवक्रुद्धौसूर्यचंद्रसमप्रभौ १९ महाग्रहाविवक्रुद्धौयुगांतायसमुत्थितौ ॥ देवगर्भौदेवबलौदेवतुल्यौचरूपतः २० यदृच्छयासमायातौसूर्याचंद्रमसौयथा ॥ बलिनौसमरेदृप्तौनानाशस्त्रधरौयुधि २१ 

२२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ व्यालमृगाःशशमृगाः ४५ । ४६ । ४७ । ४८



तौदृष्ट्वापुरुषव्याघ्रौशार्दूलाविवधिष्ठितौ ॥ बभूवपरमोहर्षस्तावकानांविशांपते २२ संशयःसर्वभूतानांविजयेसमपद्यत ॥ समेतौपुरुषव्याघ्रौप्रेक्ष्यकर्णधनंजयौ २३ उभौवरायुधधरावुभौरणकृतश्रमौ ॥ उभौचबाहुशब्देननादयंतौनभस्तलम् २४ उभौविश्रुतकर्माणौपौरुषेणबलेनच ॥ उभौचसदृशौयुद्धेशंबरामरराजयोः २५ कार्तवीर्यसमौचोभौतथादाशरथेःसमौ ॥ विष्णुवीर्यसमौचोभौतथाभवसमौयुधि २६ उभौश्वेतहयौराजन्रथप्रवरवाहिनौ ॥ सारथीप्रवरौचैवतयोरास्तांमहारणे २७ ततोदृष्ट्वामहाराजराजमानौमहारथौ ॥ सिद्धचारणसंघानांविस्मयःसमपद्यत २८ तवपुत्रास्ततःकर्णंसबलाभरतर्षभ ॥ परिवव्रुर्महात्मानंक्षिप्रमाहवशोभिनम् २९ तथैवपांडवाहृष्टाधृष्टद्युम्नपुरोगमाः ॥ परिवव्रुर्महात्मानंपार्थमप्रतिमंयुधि ३० तावकानांरणेकर्णोग्लहोह्यासीद्विशांपते ॥ तथैवपांडवेयानांग्लहःपार्थोऽभवत्तदा ३१ तएवसभ्यास्तत्रासन्प्रेक्षकाश्चाभवन्स्मते ॥ तत्रैषांग्लहमानानांध्रुवौजयपराजयौ ३२ ताभ्यांद्यूतंसमासक्तंविजयायेतरायच ॥ अस्माकंपांडवानांचस्थितानांरणमूर्धनि ३३ तौतुस्थितौमहाराजसमरेयुद्धशालिनौ ॥ अन्योन्यंप्रतिसंरब्धावन्योन्यवधकांक्षिणौ ३४ तावुभौप्रजिहीर्षंताविंद्रवृत्राविवप्रभो ॥ भीमरूपधरावास्तांमहाधूमाविवग्रहौ ३५ ततोंऽतरिक्षेसाक्षेपाविवादाभरतर्षभ ॥ मिथोभेदाश्चभूतानामासन्कर्णार्जुनांतरे ३६ व्यश्रूयंतमिथोभिन्नाःसर्वलोकास्तुमारिष ॥ देवदानवगंधर्वाःपिशाचोरगराक्षसाः ३७ प्रतिपक्षग्रहंचक्रुःकर्णार्जुनसमागमे ॥ द्यौरासीत्सूतपुत्रस्यपक्षेमातेवधिष्ठिता ३८ भूमिर्धनंजयस्यासीन्मातेवजयकांक्षिणी ॥ गिरयःसागराश्चैवनद्यश्चसजलास्तथा ३९ वृक्षाश्चौषधयश्चैवव्याश्रयंतपरस्परम् ॥ असुरायातुधानाश्चगुह्यकाश्चपरंतप ४० तेकर्णंसमपद्यंतहृष्टारूपाःसमंततः ॥ मुनयश्चारणाःसिद्धावैनतेयावयांसिच ४१ रत्नानिनिधयःसर्वेवेदाश्चाख्यानपंचमाः ॥ सोपवेदोपनिषदःसरहस्याःससंग्रहाः ४२ वासुकिश्चित्रसेनश्चतक्षकोमणिकस्तथा ॥ सर्पाश्चैवतथासर्वेकाद्रवेयाश्चसान्वयाः ४३ विषवंतोमहाराजनागाश्चार्जुनतोऽभवन् ॥ ऐरावताःसौरभेयावैशालेयाश्चभोगिनः ४४ एतेऽभवन्नर्जुनतःक्षुद्रसर्पाश्चकर्णतः ॥ ईहामृगाव्यालमृगामांगल्याश्चमृगद्विजाः ४५ पार्थस्यविजयेराजन्सर्वएवाभिसंसृताः ॥ वसवोमरुतःसाध्यारुद्राविश्वेऽश्विनौतथा ४६ अग्निरिंद्रश्चसोमश्चपवनोऽथदिशोदश ॥ धनंजयस्यतेपक्षेआदित्याःकर्णतोऽभवन् ४७ विशःशूद्राश्चसूताश्चयेचसंकरजातयः ॥ सर्वशस्तेमहाराजराधेयमभजंस्तदा ४८ देवास्तुपितृभिःसार्धंसगणाःसपदानुगाः ॥ यमोवैश्रवणश्चैववरुणश्चयतोऽर्जुनः ४९ ब्रह्मक्षत्रंचयज्ञाश्चदक्षिणाश्चार्जुनंश्रिताः ॥ प्रेताश्चैवपिशाचाश्चक्रव्यादाश्चमृगांडजाः ५० राक्षसाःसहयादोभिःश्वसृगालाश्चकर्णतः ॥ देवब्रह्मनृपर्षीणांगणाःपांडवतोऽभवन् ५१ तुंबुरुप्रमुखाराजन्गंधर्वाश्चयतोऽर्जुनः ॥ राधेयाःसहैमोनयागंधर्वाप्सरसांगणाः ५२

४९ । ५० । ५१ । ५२

ईहामृगाःपक्षिगणाद्विपाश्वरथपत्तिभिः ॥ उह्यमानास्तथामेघैर्वायुनाचमनीषिणः ९३ दिदृक्षवःसमाजग्मुःकर्णार्जुनसमागमम् ॥ देवदानगंधर्वानागयक्षाःपत
त्रिणः ९४ महर्षयोवेदविदःपितरश्चस्वधाभुजः ॥ तपोविद्यास्तथौषध्योनानारूपबलान्विताः ९५ अंतरिक्षेमहाराजविनदंतोऽवतस्थिरे ॥ ब्रह्माब्रह्मर्षि
भिःसार्धंप्रजापतिभिरेवच ९६ भवश्चैवस्थितोयानेदिव्यंतंदेशमागमत् ॥ समेतौतौमहात्मानौदृष्ट्वाकर्णधनंजयौ ९७ अर्जुनोजयतात्कर्णमितिशक्रोऽब्रवीत्
दा ॥ जयतामर्जुनंकर्णइतिसूर्योऽभ्यभाषत ९८ हत्वाऽर्जुनंममसुतःकर्णोजयतुसंयुगे ॥ हत्वाकर्णंजयत्वद्यममपुत्रोधनंजयः ९९ इतिसूर्यस्यचैवासीद्विवादो
वासवस्यच ॥ पक्षसंस्थितयोस्तत्रतयोर्विबुधसिंहयोः ॥ द्वैपक्ष्यमासीद्देवानामसुराणांचभारत ६० समेतौतौमहात्मानौदृष्ट्वाकर्णधनंजयौ ॥ अकंपंतत्रयोलोकाः
सहदेवर्षिचारणाः ६१ सर्वेदेवगणाश्चैवसर्वभुतानियानिच ॥ यतःपार्थस्ततोदेवायतःकर्णस्ततोऽसुराः ६२ रथयूथपयोःपक्षौकुरुपांडववीरयोः ॥ दृष्ट्वाप्रजाप
तिंदेवाःस्वयंभुवमचोदयन् ६३ कोऽनयोर्विजयीदेवकुरुपांडवयोधयोः ॥ समोऽस्तुविजयोदेवएतयोर्नरसिंहयोः ६४ कर्णार्जुनविवादेनसर्वंसंशयितंजगत् ॥
स्वयंभोब्रूहिनस्तथ्यमेतयोर्विजयंप्रभो ६५ स्वयंभोब्रूहितद्वाक्यंसमोऽस्तुविजयोऽनयोः ॥ तदुपश्रुत्यमघवाप्रणिपत्यपितामहं ६६ व्यज्ञापयतदेवेशमिदंम
तिमतांवरः ॥ पूर्वंभगवताप्रोक्तंकृष्णयोर्विजयोध्रुवः ६७ तत्तथास्तुनमस्तेऽस्तुप्रसीदभगवन्मम ॥ ब्रह्मेशानावथोवाक्यमूचतुस्त्रिदशेश्वरम् ६८ विजयो
ध्रुवमेवास्यविजयस्यमहात्मनः ॥ खांडवेयेनहुतभुक्तोषितःसव्यसाचिना ६९ स्वर्गंचसमनुप्राप्यसाहाय्यंशक्रतेकृतम् ॥ कर्णश्चदानवःपक्षअतःकार्यःपराजयः
७० एवंकृतेभवेत्कार्यंदेवानामेवनिश्चितम् ॥ आत्मकार्यंचसर्वेषांगरीयस्त्रिदशेश्वर ७१ महात्माफाल्गुनश्चापिसत्यधर्मरतःसदा ॥ विजयस्तस्यनियतंजाय
तेनात्रसंशयः ७२ तोषितोभगवान्येनमहात्मावृषभध्वजः ॥ कथंवातस्यनजयोजायतेशतलोचन ७३ यस्यचक्रेस्वयंविष्णुःसारथ्यंजगतःप्रभुः ॥ मनस्वी
बलवान्शूरःकृतास्त्रोऽथतपोधनः ७४ बिभर्तिचमहातेजाधनुर्वेदमशेषतः ॥ पार्थःसर्वगुणोपेतोदेवकार्यमिदंयतः ७५ क्लिश्यंतेपांडवानित्यंवनवासादिभिर्भृ
शम् ॥ संपन्नस्तपसाचैवपर्याप्तःपुरुषर्षभः ७६ अतिक्रमेच्चमाहात्म्याद्दिष्टमप्यर्थपर्ययम् ॥ अतिक्रांतेचलोकानामभावोनियतंभवेत् ७७ नविद्यतेव्यवस्थानं
क्रुद्धयोःकृष्णयोःक्वचित् ॥ स्रष्टारौजगतश्चैवसततंपुरुषर्षभौ ७८ नरनारायणावेतौपुराणावृषिसत्तमौ ॥ अनियम्यौनियंतारावेतौतस्मात्परंतपौ ७९ नैतयो
स्तुसमःकश्चिद्दिविवामानुषेषुवा ॥ अनुगम्यास्त्रयोलोकाःसहदेवर्षिचारणैः ८० सर्वदेवगणाश्चापिसर्वभूतानियानिच ॥ अनयोस्तुप्रभावेनवर्ततेनिखिलंजगत्
८१ कर्णोलोकानयंमुख्यानाप्नोतुपुरुषर्षभः ॥ कर्णोवैकर्तनःशूरोविजयस्त्वस्तुकृष्णयोः ८२ व्यवस्थानंमर्यादा ७८ । ७९ । ८० । ८१ । ८२

वसूनांसमलोकत्वंमरुतांवासमाप्नुयात् ॥ सहितोद्रोणभीष्माभ्यांनाकलोकेवाप्नुयात् ८३ इत्युक्तोदेवदेवाभ्यांसहस्राक्षोऽब्रवीद्वचः ॥ आमंत्र्यसर्वभूतानिब्रह्मे
शानानुशासनम् ८४ श्रुतंभवद्भ्यांयत्प्रोक्तंभगवद्भ्यांजगद्धितं ॥ तत्तथानान्यथातद्धितिष्ठध्वंविगतज्वराः ८५ इतिश्रुत्वेंद्रवचनंसर्वभूतानिमारिष ॥ विस्मि
तान्यभवन्राजन्पूजयांचक्रिरेतदा ८६ व्यसृजंश्चसुगंधीनिपुष्पवर्षाणिहर्षिताः ॥ नानारूपाणिविबुधादेवतूर्याण्यवादयन् ८७ दिदृक्षवश्चाप्रतिमंद्वैरथंनर
सिंहयोः ॥ देवदानवगंधर्वाःसर्वएवावतस्थिरे ८८ रथौतयोःश्वेतहयौदिव्यौयुक्तौमहात्मनोः ॥ यौतौकर्णार्जुनौराजन्प्रहृष्टौव्यवतिष्ठताम् ८९ समागतालो
कवीराःशंखान्दध्मुःपृथक्पृथक् ॥ वासुदेवार्जुनौवीरौकर्णशल्यौचभारत ९० तद्भीरुसंत्रासकरंयुद्धंसमभवत्तदा ॥ अन्योन्यस्पर्धिनोरुग्रंशक्रशंबरयोरिव ९१
तयोर्ध्वजौवीतमलौशुशुभातेरथेस्थितौ ॥ राहुकेतूयथाऽऽकाशेउदितौजगतःक्षये ९२ कर्णस्याशीविषनिभारत्नसारमयीदृढा ॥ पुरंदरधनुःप्रख्याहस्तिक
क्ष्याविराजते ९३ कपिश्रेष्ठस्तुपार्थस्यव्यादितास्यइवांतकः ॥ दंष्ट्राभिर्भीषयन्भाभिर्दुर्निरीक्ष्योरविर्यथा ९४ युद्धाभिलाषुकोभूत्वाध्वजोगांडीवधन्वनः ॥
कर्णध्वजमुपातिष्ठत्स्वस्थानाद्वेगवान्कपिः ९५ उत्पपातमहावेगःकक्ष्यामभ्याहनत्तदा ॥ नखैश्चदशनैश्चैवगरुडःपन्नगंयथा ९६ साकिंकिणीकाभरणाकालपाशो
पमाऽऽयसी ॥ अभ्यद्रवत्सुसंरब्धाहस्तिकक्ष्याऽथतंकपिं ९७ तयोर्घोरतरेयुद्धेद्वैरथेद्यूतआहिते ॥ प्राकुर्वतांध्वजौयुद्धंपूर्वंपूर्वतरंतदा ९८ हयाहयानभ्य
हेषन्स्पर्धमानाःपरस्परम् ॥ अविध्यत्पुंडरीकाक्षःशल्यंनयनसायकैः ९९ शल्यश्चपुंडरीकाक्षंतथैवाभिसमैक्षत ॥ तत्राजयद्वासुदेवःशल्यंनयनसायकैः
१०० कर्णंचाप्यजयद्दृष्ट्याकुंतीपुत्रोधनंजयः ॥ अथाब्रवीत्सूतपुत्रःशल्यमाभाष्यसस्मितम् १ यदिपार्थोरणेहन्यादद्यमामिहकर्हिचित् ॥ किंकरिष्यसिसंग्रामे
शल्यसत्यमथोच्यताम् २ ॥ शल्यउवाच ॥ यदिकर्णरणेहन्यादद्यत्वांश्वेतवाहनः ॥ उभावेकरथेनाहंहन्यांमाधवपांडवौ ३ ॥ संजयउवाच ॥ एवमेवतु
गोविंदमर्जुनःप्रत्यभाषत ॥ तंप्रहस्याब्रवीत्कृष्णःसत्यंपार्थमिदंवचः ४ पतेद्दिवाकरःस्थानाच्छुष्येदपिमहोदधिः ॥ शैत्यमग्निरियान्नत्वांहन्यात्कर्णोधनंजय
५ यदिचैतत्कथंचित्स्याल्लोकपर्यासनंभवेत् ॥ हन्यांकर्णंतथाशल्यंबाहुभ्यामेवसंयुगे ६ इतिकृष्णवचःश्रुत्वाप्रहसन्कपिकेतनः ॥ अर्जुनःप्रत्युवाचेदंकृष्णम
क्लिष्टकारिणम् ७ ममतावदपर्याप्तौकर्णशल्यौजनार्दन ॥ सपताकध्वजंकर्णंसशल्यरथवाजिनम् ८ सच्छत्रकवचंचैवसशक्तिशरकार्मुकम् ॥ द्रष्टाऽस्यद्यरणे
कृष्णशरैश्छिन्नमनेकधा ९ अद्यैवसरथंसाश्वंसशक्तिकवचायुधम् ॥ संचूर्णितमिवारण्येपादपंदंतिनायथा ११० अद्यराधेयभार्याणांवैधव्यंसमुपस्थितम् ॥
ध्रुवंस्वप्नेष्वनिष्टानिताभिर्दृष्टानिमाधव ११ द्रष्टाऽसिध्रुवमद्यैवविधवाःकर्णयोषितः ॥ नहिमेशाम्यतेमन्युर्यदनेनपुराकृतम् ११२

११३ । १४ । १५ । १६ । ११७ ॥ इतिकं० नी० भा० भा० सप्ताशीतितमोऽध्यायः ॥ ८७ ॥ ॥ ७ ॥ ॥ ७ ॥ तदिति १ । २ द्विषतःशत्रून् ३ । ४ । ५ । ६ एकोपुरुष्यौ

कृष्णांसमागतांदृष्ट्वामूढेनादीर्घदर्शिना ॥ अस्मांस्तथाऽवहसताक्षिपताचपुनःपुनः ११३ अद्यद्रष्टाऽसिगोविंदकर्णमुन्माथितंमया ॥ वारणेनेवमत्तेनपुष्पितं जगतीरुहम् १४ अद्यतामधुरावाचःश्रोताऽसिमधुसूदन ॥ दिष्ट्याजयसिवार्ष्णेयइतिकर्णेनिपातिते १५ अद्याभिमन्युजननींप्रहृष्टःसांत्वयिष्यसि ॥ कुंतीं पितृष्वसारंचप्रहृष्टःसन्जनार्दन १६ अद्यबाष्पमुखींकृष्णांसांत्वयिष्यसिमाधव ॥ वाग्भिश्चामृतकल्पाभिर्धर्मराजंचपांडवम् ११७ ॥ इतिश्रीमहाभारतेकर्ण पर्वणि कर्णार्जुनसमागमेद्वैरथेसप्ताशीतितमोऽध्यायः ॥ ८७ ॥ ॥ संजयउवाच ॥ तद्देवनागासुरसिद्धयक्षैर्गंधर्वरक्षाप्सरसांचसंघैः ॥ ब्रह्मर्षिराजर्षिसुपर्णजुष्टं बभौवियद्विस्मयनीयरूपम् १ नानद्यमानंनिनदैर्मनोज्ञैर्वादित्रगीतस्तुतिनृत्यहासैः ॥ सर्वेऽतरिक्षंददृशुर्मनुष्याःखस्थाश्चतद्विस्मयनीयरूपम् २ ततःप्रहृष्टाःकुरुपांडुयोधावादित्रशंखस्वनसिंहनादैः ॥ विनादयंतोवसुधांदिशश्चस्वनेनसर्वान्द्विषतोनिजघ्नुः ३ नराश्वमातंगरथैःसमाकुलंशरासिशक्त्यृष्टिनिपातदुःसहम् ॥ अभीरुजुष्टंहतदेहसंकुलंरणाजिरंलोहितमाबभौतदा ४ बभूवयुद्धंकुरुपांडवानांयथासुराणामसुरैःसहाभवत् ॥ तथाप्रवृत्तेतुमुलेसुदारुणेधनंजयस्याधिरथेश्चसायकैः ५ दिशश्चसैन्यंचशितैरजिह्मगैःपरस्परंप्रावृणुतांसुदंशितैः ॥ ततस्त्वदीयाश्चपरेचसायकैःकृतेंऽधकारेददृशुर्नकिंचन ६ भयातुराएकरथौसमाश्रयंस्ततोऽभवत्त्वद्भुतमेवसर्वतः ॥ ततोऽस्त्रमस्त्रेणपरस्परंतौविधूयवाताविवपूर्वपश्चिमौ ७ घनांधकारेविततेतमोनुदौयथोदितौतद्वदतीवरेजतुः ॥ नचाभिसर्तव्यमितिप्रचोदिताःपरेत्वदीयाश्चतथाऽवतस्थिरे ८ महारथौतौपरिवार्यसर्वतःसुरासुराःशंबरवासवाविव ॥ मृदंगभेरीपणवानकस्वनैःसर्सिंहनादैर्नदतुर्नरोत्तमौ ९ शशांकसूर्याविवमेघनिःस्वनैर्विरेजतुस्तौपुरुषर्षभौतदा ॥ महाधनुर्मंडलमध्यगावुभौसुवर्चसौबाणसहस्रदीधिती १० दिधक्षमाणौसचराचरंजगद्युगांतसूर्याविवदुःसहौरणे ॥ उभावजेयावहितांतकावुभावुभौजिघांसूकृतिनौपरस्परम् ११ महाहवेवीतभयौसमीयतुर्महेंद्रजंभाविवकर्णपांडवौ ॥ ततोमहास्त्राणिमहाधनुर्धरौविमुंचमानाविषुभिर्भयानकैः १२ नराश्वनागानमितान्निजघ्नतुःपरस्परंचापिमहारथौनृप ॥ ततोविसस्रुःपुनरर्दितानरानरोत्तमाभ्यांकुरुपांडवाश्रयाः १३ सनागपत्त्यश्वरथादिशोदशतथायथासिंहहतावनौकसः ॥ ततस्तुदुर्योधनभोजसौबलाःकृपेणशारद्वतसूनुनासह १४ महारथाःपंचधनंजयाच्युतौशरैःशरीरार्तिकरैरताडयन् ॥ धनूंषितेषामिषुधीन्ध्वजान्हयान्रथांश्चसूतांश्चधनंजयःशरैः १५ समंप्रमथ्याशुपरान्समंततःशरोत्तमैर्द्वादशभिश्चसूतजम् ॥ अथाभ्यधावंस्त्वरिताःशतंरथाःशतंगजाश्चार्जुनमाततायिनः १६ शकास्तुषारायवनाश्चसादिनःसहैवकांबोजवरैर्जिघांसवः ॥ वरायुधान्पाणिगतैःशरैःसहक्षुरैर्न्यकृंतन्प्रपतन्शिरांसिच १७

रथौरथिनौकर्णार्जुनौ एकोत्वतौरथौवेतिविग्रहः ७ तमोनुदौसूर्यचंद्रौ नचअभिसर्तव्यंनापयातव्यमितिनिषेधेनमचोदिताःप्रेरिताः ८ । ९ । १० । ११ । १२ विसस्रुःविमद्रुताः १३ पंचैवावशिष्टाइत्याह ततइति १४ । १५ । १६ । १७

२९

१८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ निसर्गतइतिसहजमित्रत्वोपपादनं साम्नाप्रीत्या प्रसन्नेराज्यार्धदानेनहितंअर्जुनकोपशमनेनेतिचतुर्धा

हयांश्चनागांश्चरथांश्चयुध्यतोधनंजयःशत्रुगणानक्षितौक्षिणोत् ॥ ततोंऽतरिक्षेसुरतूर्यनिःस्वनाःससाधुवादाहृषितैःसमीरिताः १८ निपेतुरप्युत्तमपुष्पवृष्टयः सुगंधिगंधाःपवनेरिताःशुभाः ॥ तदद्भुतंदेवमनुष्यसाक्षिकंसमीक्ष्यभूतानिविसिस्मियुस्तदा १९ तवात्मजःसूतसुतश्चनव्यथांनविस्मयंजग्मतुरेकनिश्चयौ ॥ अथाब्रवीद्द्रोणसुतस्तवात्मजंकरंकरेणप्रतिपीडयसांत्वयन् २० प्रसीददुर्योधनशाम्यपांडवैरलंविरोधेनधिगस्तुविग्रहम् ॥ हतोगुरुर्ब्रह्मसमोमहास्त्रवित्तथैवभीष्मप्रमुखामहारथाः २१ अहंत्ववध्योममचापिमातुलःप्रशाधिराज्यंसहपांडवैश्चिरम् ॥ धनंजयःशाम्यतिवारितोमयाजनार्दनोनैवविरोधमिच्छति २२ युधिष्ठिरेभूतहितेरतःसदावृकोदरस्तद्वशगस्तथायमौ ॥ त्वयातुपार्थैश्चकृतेचसंविदेप्रजाःशिवंप्राप्नुयुरिच्छयातव २३ व्रजंतुशेषाःस्वपुराणिबांधवानिवृत्तयुद्धाश्चभवंतुसैनिकाः ॥ नचेद्वचःश्रोष्यसिमेनराधिपध्रुवंप्रतप्स्यसिहतोऽरिभिर्युधि २४ इदंचदृष्टंजगतासहत्वयाकृतंयदेकेनाकिरीटमालिना ॥ यथानकुर्याद्बलभिन्नचांतकोनचापिधाताभगवान्नयक्षराट् २५ अतोऽपिभूयान्स्वगुणैर्धनंजयोनचातिवर्तिष्यतिमेवचोऽखिलम् ॥ तवानुयात्रांचसदाकरिष्यतिप्रसीदराजेंद्रशमंत्वमाप्नुहि २६ ममापिमानःपरमःसदात्वयिब्रवीम्यतस्त्वांपरमाच्चसौहृदात् ॥ निवारयिष्यामिचकर्णमप्यहंयदाभवान्सप्रणयोभविष्यति २७ वदंतिमित्रंसहजंविचक्षणास्तथैवसाम्नाचधनेनचार्जितम् ॥ प्रतापतश्चोपनतंचतुर्विधंतदस्तिसर्वंतवपांडवेषु २८ निसर्गतस्तेतववीरबांधवाःपुनश्चसाम्नासमवाप्नुहिप्रभो ॥ त्वयिप्रसन्नेयदिमित्रतांगतेहितंकृतंस्याज्जगतस्त्वयाऽतुलम् २९ सएवमुक्तःसुहृदावचोहितंविचिंत्यनिःश्वस्यचदुर्मनाऽब्रवीत् ॥ यथाभवानाहसखेतथैवतन्ममापिविज्ञापयतोवचःशृणु ३० निहत्यदुःशासनमुक्तवान्वचःप्रसह्यशार्दूलवदेषदुर्मतिः ॥ वृकोदरस्तद्धृदयेममास्थितंनतत्परोक्षंभवतःकुतःशमः ३१ नचापिकर्णंप्रसहेद्रणेऽर्जुनोमहागिरिंमेरुमिवोग्रमारुतः ॥ नचाश्वसिष्यंतिपृथात्मजामयिप्रसह्यवैरंबहुशोविचिंत्य ३२ नचापिकर्णंगुरुपुत्रसंयुगादुपारमेत्यर्हसिवक्तुमच्युत ॥ श्रमेणयुक्तोमहताऽद्यफाल्गुनस्तमेषकर्णःप्रसभंहनिष्यति ३३ तमेवमुक्त्वाऽप्यनुनीयचासकृत्तवात्मजःस्वाननुशास्तिसैनिकान् ॥ समाहिताऽभिद्रवताहितान्ममसबाणहस्ताःकिमुजोषमासत ३४ ॥ इतिश्रीम० कर्णप० अश्वत्थामवाक्यंअष्टाशीतितमोऽध्यायः ॥ ८८ ॥ ॥ ध ॥ ॥ संजयउवाच ॥ तौशंखभेरीनिनदेसमृद्धेसमीयतुःश्वेतहयौनराग्र्यौ ॥ वैकर्तनःसूतपुत्रोऽर्जुनश्चदुर्मंत्रितेतवपुत्रस्यराजन् १ यथागजौहैमवतौप्रभिन्नौप्रवृद्धदंताविववासितार्थे ॥ तथासमाजग्मतुरुग्रवीर्यौधनंजयश्चाधिरथिश्चवीरौ २ बलाहकेनेवमहाबलाहकोयदृच्छयावागिरिणायथागिरिः ॥ तथाधनुर्ज्यातलनेमिनिःस्वनैःसमीयतुस्ताविषुवर्षवर्षिणौ ३

पक्षोऽपिविद्वत्तः २९ । ३० वचो दुर्योधनस्यहतस्यशिरः पदाताडयिष्यामीत्येवंरूपं ३१ यथाऽर्जुनःकर्णंनप्रसहेत्तदपिभवतःपरोक्षंनेतिपूर्वेणान्वयः ३२ । ३३ । ३४ ॥ इतिक० नी० भा० अष्टाशीतितमोऽध्यायः ॥ ८८ ॥ ताविति १ । २ । ३

४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ केतार्थैस्थानार्थनीडेपक्षिगणाइवदेहेबाणालियंतइत्यर्थः १९ संधान्बाणसंधान् १६ । १७ । १८ । १९ । २० । २१ । २२ । २३

प्रवृद्धशृंगद्रुमवीरुदोषधीप्रवृद्धनानाविधनिर्झरौकसौ ॥ यथाऽचलावाचलितौमहाबलौतथामहास्त्रैरितरेतरंहतः ४ ससन्निपातस्तुतयोर्महानभूत्सुरेशवैरोचन
योर्यथापुरा ॥ शरैर्विनुन्नांगनियंतृवाहयोःसुदुःसहोऽन्यैःकटुशोणितोदकः ५ प्रभूतपद्मोत्पलमत्स्यकच्छपौमहाह्रदौपक्षिगणैरिवावृतौ ॥ सुसन्निकृष्टावनिलो
द्धतौयथातथारथौतौध्वजिनौसमीयतुः ६ उभौमहेंद्रस्यसमानविक्रमावुभौमहेंद्रप्रतिमौमहारथौ ॥ महेंद्रवज्रप्रतिमैश्चसायकैर्महेंद्रवृत्राविवसंप्रजघ्नतुः ७
सनागपत्त्यश्वरथेशुभेबलेविचित्रवर्माभरणांबरायुधे ॥ चकंपतुर्विस्मयनीयरूपेवियद्गताश्चार्जुनकर्णसंयुगे ८ भुजाःसवस्त्रांगुलयःसमुच्छ्रिताःससिंहनादैर्हृ
षितैर्दिदृक्षुभिः ॥ यदर्जुनोमत्तइवद्विपोद्विपंसमभ्ययादाधिरथिंजिघांसया ९ उदक्रोशन्सोमकास्तत्रपार्थंपुरःसराश्चार्जुनभिंधिकर्णम् ॥ छिंध्यस्यमूर्धानमलं
चिरेणश्रद्धांचराज्याद्धृतराष्ट्रसूनोः १० तथाऽस्माकंबहवस्तत्रयोधाःकर्णंतथायाहियाहीत्यवोचन् ॥ जह्यर्जुनंकर्णशरैःसुतीक्ष्णैःपुनर्वनंयांतुचिरायपार्थाः ११
तथाकर्णःप्रथमंतत्रपार्थंमहेषुभिर्दशभिःप्रत्यविध्यत् ॥ तंचार्जुनःप्रत्यविध्यच्छिताग्रैःकक्षांतरेदशभिःसंप्रहस्य १२ परस्परंतौविशिखैःसुपुंखैस्ततक्षतुःसूत
पुत्रोऽर्जुनश्च ॥ परस्परंतौबिभिदुर्विमर्देसुभीममभ्यापततुश्चहृष्टौ १३ ततोऽर्जुनःप्रासृजदुग्रधन्वाभुजावुभौगांडिवंचानुमृज्य ॥ नाराचनालीकवराहकर्णान्क्षु
रांस्तथासांजलिकार्धचंद्रान् १४ तेसर्वतःसमकीर्यंतराजन्पार्थेषवःकर्णरथंविशंतः ॥ अवाङ्मुखाःपक्षिगणादिनांतेविशंतिकेतार्थमिवाशुवृक्षम् १५ यानर्जुनःस
भ्रुकुटीकटाक्षंकर्णायराजन्नसृजज्जितारिः ॥ तान्सायकैर्ग्रसतेसूतपुत्रःक्षिप्तान्क्षिप्तान्पांडवस्याशुसंघान् १६ ततोऽस्त्रमाग्नेयममित्रसाधनंमुमोचकर्णायमहेंद्रसूनुः ॥
भूम्यंतरिक्षेचदिशोऽर्कमार्गंप्रावृत्यदेहोऽस्यबभूवदीप्तः १७ योधाश्चसर्वेज्वलितांबराभृशंप्रदुद्रुवुस्तत्रविदग्धवस्त्राः ॥ शब्दश्चघोरोऽतिबभूवतत्रयथावनेवेणुवन
स्यदह्यतः १८ तद्वीक्ष्यकर्णोज्वलनास्त्रमुद्यतंसवारुणंतत्प्रशमार्थमाहवे ॥ समुत्सृजन्सूतसुतःप्रतापवान्सतेनवह्निंशमयांबभूव १९ बलाहकौघश्चदिशस्तर
स्वीचकारसर्वास्तिमिरेणसंवृताः ॥ ततोधरित्रीधरतुल्यरोधसःसमंततोवैपरिवार्यवारिणा २० तैश्चातिवेगात्सतथाविधोऽपिनीतःशमंवह्निरतिप्रचंडः ॥ बला
हकैरेवदिगंतराणिव्याप्तानिसर्वाणियथानभश्च २१ तथाचसर्वास्तिमिरेणवैदिशोमेघैर्वृतानप्रदृश्येतकिंचित् ॥ अथापोवाह्याभ्रसंघान्समस्तान्वायव्यास्त्रेणाप
ततःसकर्णात् २२ ततोऽप्यस्त्रंदयितंदेवराज्ञःप्रादुश्चक्रेवज्रमतिप्रभावम् ॥ गांडीवंज्यांविशिखांश्चानुमंत्र्यधनंजयःशत्रुभिरप्रधृष्यः २३ ततःक्षुरप्रांजलिकार्ध
चंद्रानालीकनाराचवराहकर्णाः ॥ गांडीवतःप्रादुरासन्सुतीक्ष्णाःसहस्रशोवज्रसमानवेगाः २४ तेकर्णमासाद्यमहाप्रभावाःसुतेजनागार्ध्रपत्राःसुवेगाः ॥ गात्रेषु
सर्वेषुहयेषुचापिशरासनेयुगचक्रेध्वजेच २५ निर्भिद्यतूर्णंविविशुःसुतीक्ष्णास्ताक्ष्यंत्रस्ताभूमिमिवोरगास्ते ॥ शराचितांगोरुधिरार्द्रगात्रःकर्णस्तदारोषविवृत्त
नेत्रः २६ दृढज्यमानाम्यसमुद्रघोषंप्रादुश्चक्रेभार्गवास्त्रंमहात्मा ॥ महेंद्रशस्त्राभिमुखान्विमुक्तांश्छित्त्वाकर्णःपांडवस्येषुसंघान् २७ २४ । २५ । २६ । २७

२८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ आत्मनोनरस्यचावनारा

तस्यास्त्रमस्त्रेणनिहत्यसोऽथजघानसंख्येरथनागपत्तीन् ॥ अमृष्यमाणश्चमहेंद्रकर्मामहारणेभार्गवास्त्रप्रतापात् २८ पंचालानांप्रवराश्चापियोधान्क्रोधाविष्टःसूतपुत्रस्तरस्वी ॥ बाणैर्विव्याधाहवेसुप्रमुक्तैःशिलाशितैरुक्मपुंखैःप्रसह्य २९ तत्पंचालाःसोमकाश्चापिराजन्कर्णेनाजौपीड्यमानाःशरौघैः ॥ क्रोधाविष्टाविव्यधुस्तंसमंतात्तीक्ष्णैर्बाणैःसूतपुत्रंसमेताः ३० तान्सूतपुत्रोनिजघानबाणैःपंचालानांरथनागाश्वसंघान् ॥ अभ्यर्दयद्बाणगणैःप्रसह्यविद्धाहर्षात्संगरेसूतपुत्रः ३१ तेभिन्नदेहाव्यसवोनिपेतुःकर्णेषुभिर्भूमितलेस्वनंतः ॥ क्रुद्धेनसिंहेनयथेभयूथामहावनेभीमबलेनतद्वत् ३२ पंचालानांप्रवरान्संनिहत्यप्रसह्ययोधानखिलानदीनः ॥ ततःसराजन्विरराजकर्णोयथांऽबरेभास्करउग्ररश्मिः ३३ कर्णस्यमत्वातुजयंत्वदीयाःपरांमुदंसिंहनादांश्चचक्रुः ॥ सर्वेह्यमन्यंतभृशाहतौचकर्णेनकृष्णाविितिकौरवेंद्र ३४ तत्तादृशंप्रेक्ष्यमहारथस्यकर्णस्यवीर्यंचपरैरसह्यम् ॥ दृष्ट्वाचकर्णेनधनंजयस्यतथाऽऽजिमध्येनिहतंतदस्त्रम् ३५ ततस्त्वमर्षीक्रोधसंदीप्तनेत्रोवातात्मजःपाणिनापाणिमाच्छंत् ॥ भीमोऽब्रवीदर्जुनंसत्यसंधममर्षितोनिःश्वसन्जातमन्युः ३६ कथंनुपापोऽयमपेतधर्मःसूतात्मजःसमरेऽद्यप्रसह्य ॥ पंचालानांयोधमुख्याननेकान्निजघ्निवांस्तवजिष्णोसमक्षम् ३७ पूर्वंदेवैरजितंकालकेयैःसाक्षात्स्थाणोर्बाहुसंस्पर्शमेत्य ॥ कथंनुत्वांसूतपुत्रःकिरीटिन्नयेषुभिर्दशभिःप्रागविध्यत् ३८ त्वयाक्षिप्तांश्चाग्रसद्बाणसंघानाश्चर्यमेतत्प्रतिभातिमेऽद्य ॥ कृष्णापरिक्लेशमनुस्मरत्वंयथाऽब्रवीत्षंढतिलान्स्मवाचः ३९ रूक्षाःसुतीक्ष्णाश्चहिपापबुद्धिःसूतात्मजोऽयंगतभीर्दुरात्मा ॥ संस्मृत्यसर्वंतदिहाद्यपापंजह्याशुकर्णंयुधिसव्यसाचिन् ४० कस्मादुपेक्षांकुरुषेकिरीटिन्नुपेक्षितुंनायमिहाद्यकालः ॥ ययाधृत्यासर्वभूतान्यजैषीर्ग्रासंददत्खांडवेपावकाय ४१ तयाधृत्यासूतपुत्रंजहित्वमहंचैनंगदयापोथयिष्ये ॥ अथाब्रवीद्वासुदेवोऽपिपार्थंदृष्ट्वारथेषून्प्रतिहन्यमानान् ४२ अमीमृदत्सर्वथातेऽद्यकर्णोह्यस्त्रैरस्त्रंकिमिदंभोकिरीटिन् ॥ सवीरकिंमुह्यसिनावधत्सेनदंत्येतेकुरवःसंप्रहृष्टाः ४३ कर्णपुरस्कृत्यविदुर्हिसर्वेतवास्त्रमस्त्रैर्विनिपात्यमानम् ॥ ययाधृत्यानिहतंतामसास्त्रंयुगेयुगेराक्षसाश्चापिघोराः ४४ दंभोद्भवाश्चासुराश्चाहवेषुतयाधृत्याजहिकर्णंत्वमद्य ॥ अनेनचास्यक्षुरनेमिनाऽद्यसंछिंधिमूर्धानमरेःप्रसह्य ४५ मयाविसृष्टेनसुदर्शनेनवज्रेणशक्रोनमुचेरिवारेः ॥ किरातरूपीभगवान्सुधृत्यात्वयामहात्मापरितोषितोऽभूत् ४६ तांत्वंपुनर्वीरधृतिंगृहीत्वासहानुबंधंजहिसूतपुत्रम् ॥ ततोमहींसागरमेखलांत्वंसपत्तनांग्रामवतींसमृद्धाम् ४७ प्रयच्छराज्ञेनिहतारिसंघांयशश्चपार्थातुलमाप्नुहित्वम् ॥ सएवमुक्तोऽतिबलोमहात्माचकारबुद्धिंहिवधायसौतेः ४८ सचोदितोभीमजनार्दनाभ्यांस्मृत्वातथाऽऽत्मानमवेक्ष्यसर्वम् ॥ इहात्मनश्चागमनेविदित्वाप्रयोजनंकेशवमित्युवाच ४९

यणस्यचइहभूमौप्रयोजनंभूभारावतरणंविदित्वास्मृत्वा ४९

५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२

प्रादुष्करोम्येषमहास्त्रमुग्रंशिवायलोकस्यवधायसौतेः ॥ तन्मेऽनुजानातुभवान्सुराश्चब्रह्माभवोवेदविदश्चसर्वे ५० इत्युच्यदेवंसतुसव्यसाचीनमस्कृत्वाब्रह्मणे
सोऽमितात्मा ॥ तदुत्तमंब्राह्ममसह्यमस्त्रंप्रादुश्चक्रेमनसायाद्विधेयम् ५१ तदस्यहत्वाविरराजकर्णोमुक्त्वाशरान्मेघइवांबुधाराः ॥ समीक्ष्यकर्णेनकिरीटिनस्तु
तथाऽऽजिमध्येनिहतंतदस्त्रम् ५२ ततोऽमर्षीबलवान्क्रोधदीप्तोभीमोऽब्रवीदर्जुनंसत्यसंधम् ॥ ननुत्वाऽऽहुर्वेदितारंमहास्त्रंब्राह्मंविधेयंपरमंजनास्तत ५३
तस्मादन्यद्योजयसव्यसाचिन्नितिस्मोक्तोयोजयत्सव्यसाची ॥ ततोदिशःप्रदिशश्चापिसर्वाःसमावृणोत्सायकैर्भूरितेजाः ५४ गांडीवमुक्तैर्भुजगैरिवोग्रैर्दिवाकरां
शुप्रतिमैर्ज्वलद्भिः ॥ सृष्टास्तुबाणाभरतर्षभेणशतंशतानिवसुवर्णपुंखाः ५५ प्राच्छादयन्कर्णरथंक्षणेनयुगांतवन्ह्यर्ककरप्रकाशाः ॥ ततश्चशूलानिपरश्वधा
निचक्राणिनाराचशतानिचैव ५६ निश्चक्रमुर्घोरतराणियोधास्ततोह्यहन्यंतसमंततोऽपि ॥ छिन्नंशिरःकस्यचिदाजिमध्येपपातयोधस्यपरस्यकायात् ५७
भयेनसोऽप्याशुपपातभूमावन्यःप्रणष्टःपतितंविलोक्य ॥ अन्यस्यसासिर्निपपातकृत्तोयोधस्यबाहुःकरिहस्ततुल्यः ५८ अन्यस्यसव्यःसहवर्मणाचक्षुरप्रकृ
त पतितोधरण्याम् ॥ एवंसमस्तानपियोधमुख्यान्विध्वंसयामासकिरीटमाली ५९ शरैःशरीरांतकरैःसुघोरैर्दौर्योधनंसैन्यमशेषमेव ॥ वैकर्तनेनापितथाऽऽ
जिमध्येसहस्रशोबाणगणाविसृष्टाः ६० तेघोषिणःपांडवमभ्युपेयुःपर्जन्यमुक्ताइववारिधाराः ॥ ततःसकृष्णंचकिरीटिनंचवृकोदरंचाप्रतिमप्रभावः ६१ त्रिभि
स्त्रिभिर्भीमबलोनिहत्यननादघोरंमहतास्वरेण ॥ सकर्णबाणाभिहतःकिरीटीभीमंतथाप्रेक्ष्यजनार्दनंच ६२ अमृष्यमाणःपुनरेवपार्थःशरान्दशाष्टौचसमुद्ववर्ह ॥
सकेतुमेकेनशरेणविद्ध्वाशल्यंचतुर्भिस्त्रिभिरेवकर्णम् ६३ ततःसमुक्तैर्दशभिर्जघानसभापतिंकांचनवर्मनद्धम् ॥ सराजपुत्रोविशिराविबाहुर्विवाजिसूतोविधनु
र्विकेतुः ६४ हतोरथाग्रादपतत्सरुग्णःपरश्वधैःशालइवावकृत्तः ॥ पुनश्चकर्णंत्रिभिरष्टाभिश्चद्वाभ्यांचतुर्भिर्दशभिश्चविद्ध्वा ६५ चतुःशतान्द्विरदान्सायुधान्वै
हत्वारथानष्टशतान्जघान ॥ सहस्रशोश्वांश्चपुनःससादीनष्टौसहस्राणिचपत्तिवीरान् ६६ कर्णंससूतंसरथंसकेतुमदृश्यमंजोगतिभिःप्रचक्रे ॥ अथाक्रोशन्कुरवो
वध्यमानाधनंजयेनाधिरथिंसमंतात् ६७ मुंचाभिविध्यार्जुनमाशुकर्णबाणैःपुराहंतिकुरून्समग्रान् ॥ सचोदितःसर्वयत्नेनकर्णोमुमोचबाणान्सुबहूनभीक्ष्णम्
६८ तेपांडुपंचालगणान्निजघ्नुर्मर्मच्छिदःशोणितपांसुदिग्धाः ॥ तावुत्तमौसर्वधनुर्धराणांमहाबलौसर्वसपत्नसाहौ ६९ निजघ्नतुश्चाहितसैन्यमुग्रमन्योन्यम
प्यस्त्रविदौमहास्त्रैः ॥ अथोपयातस्त्वरितोदिदृक्षुर्मंत्रौषधीभिर्निरुजोविशल्यः ७० कृतःसुहृद्भिर्भिषजांवरिष्ठैर्युधिष्ठिरस्तत्रसुवर्णवर्मा ॥ तथोपयातंयुधिधर्म
राजंदृष्ट्वामुदासर्वभूतान्यनंदन् ७१ राहोर्विमुक्तंविमलंसमग्रंचंद्रंयथैवाभ्युदितंतथैव ॥ दृष्ट्वातुमुख्यावथयुध्यमानौदिदृक्षवःशूरवरावरिघ्नौ ७२

७२।७४।७५।७६।७७ ७८।७९।८०।८१।८२।८३ ।८४।८५।८६ ।८७।८८ स्नात्वेत्यनेन पातालगंगायास्तलंमाप्यतदभिघातेन परावृत्ता इत्यर्थः ८९ तक्षकपुत्रपक्षा इति ते सर्पबाणाः अश्वसेनप्रयुक्ताः

कर्णंचपार्थंचविलोकयंतःखस्थामहीस्थाश्चजनाऽवतस्थुः ॥ सकार्मुकज्यातलसंनिपातःसुमुक्तबाणस्तुमुलोबभूव ७३ ग्रतोस्तथान्योन्यमिषुप्रवेकैर्धनंजयस्याधिरथेश्चतत्र ॥ ततोधनुर्ज्यासहसाऽतिकृष्टासुघोषमाच्छिद्यतपांडवस्य ७४ तस्मिन्क्षणेपांडवंसूतपुत्रःसमाचिनोत्क्षुद्रकाणांशतेन ॥ निर्मुक्तसर्पप्रतिमैरभीक्ष्णंतैलप्रधौतैःखगपत्रवाजैः ७५ षष्ट्याबिभेदाशुचवासुदेवमनंतरंफाल्गुनमष्टभिश्च ॥ पूषात्मजोमर्मसुनिर्बिभेदमरुत्सुतंचायुतशःशराग्र्यैः ७६ कृष्णंचपार्थंचतथाध्वजंचपार्थानुजान्सोमकान्पातयंश्च ॥ प्राच्छादयंस्तेविशिखैःपृषत्कैर्जीमूतसंघानभसीवसूर्यं ७७ आगच्छतस्तान्विशिखैरनेकैर्व्यर्थंभयत्सूतपुत्रंकृतास्त्रः ॥ तैरस्तमस्त्रंविनिहत्यसर्वंजघानतेषांरथवाजिनागान् ७८ तथातुसैन्यप्रवरांश्चराजन्नभ्यर्दयन्मार्गणैःसूतपुत्रः ॥ तेभिन्नदेहाव्यसवोनिपेतुःकर्णेषुभिर्भूमितलेस्वनंतः ७९ सिंहेनक्रुद्धेनयथाऽश्वयूथ्यामहाबलाभीमबलेनतद्वत् ॥ पुनश्चपंचालवरास्तथाऽन्येतदंतरेकर्णधनंजयाभ्यां ८० प्रस्कंदंतोबलिनासाधुमुक्तैःकर्णेनबाणैर्निहताःप्रसह्य ॥ जयंमत्वाविपुलंवैत्वदीयास्तलान्निजघ्नुःसिंहनादांश्चनेदुः ८१ सर्वेह्यमन्यंतवशेकृतौतौकर्णेनकृष्णावितितेविमर्दे ॥ ततोधनुर्ज्यामवनाम्यशीघ्रंशरानस्तानाधिरथेर्विधम्य ८२ सुसंरब्धःकर्णशरक्षतांगोरणेपार्थःकौरवान्प्रत्यगृह्णात् ॥ ज्यांचानुमृज्याभ्यहनत्तलत्रेबाणांधकारंसहसाचचक्रे ८३ कर्णंचशल्यंचकुरूंश्चसर्वान्बाणैरविध्यत्प्रसभंकिरीटी ॥ नपक्षिणोबभ्रमुरंतरिक्षेतदामहास्त्रेणकृतेऽधकारे ८४ वायुर्वियत्स्थैरीरितोभूतसंघैरुवाहदिव्यःसुरभिस्तदानीं ॥ शल्यंचपार्थोदशभिःपृथत्कैर्भृशंतनुत्रेप्रहसन्नविध्यत् ८५ ततःकर्णंद्वादशभिःसुमुक्तैर्विध्वापुनःसप्तभिरभ्यविद्धचत् ॥ सपार्थबाणासनवेगमुक्तैर्दृढाहतःपत्रिभिरुग्रवेगैः ८६ विभिन्नगात्रःक्षतजोक्षितांगःकर्णोबभौरुद्रइवाततेषुः ॥ प्रक्रीडमानोऽथश्मशानमध्येरौद्रेमुहूर्तेरुधिरार्द्रगात्रः ८७ ततस्त्रिभिस्तंत्रिदशाधिपोपमंशरैर्बिभेदाधिरथिर्धनंजयम् ॥ शरांश्चपंचज्वलितानिवोरगान्प्रवेशयामासजिघांसयाऽच्युतम् ८८ तेवर्मभित्त्वापुरुषोत्तमस्यसुवर्णचित्रान्यपतन्सुमुक्ताः ॥ वेगेनगामाविविशुःसुवेगाःस्नात्वाचकर्णाद्विमुखाःप्रतीयुः ८९ तान्पंचभल्लैर्दशभिःसुमुक्तैस्त्रिधात्रिधैकैकमथोच्चकर्त ॥ धनंजयास्त्रैर्न्यपतन्पृथिव्यांमहाहयस्तक्षकपुत्रपक्षाः ९० ततःप्रजज्वालकिरीटमालीक्रोधेनकक्षंप्रदहन्निवाग्निः ॥ तथाविनुन्नांगमवेक्ष्यकृष्णंसर्वेषुभिःकर्णभुजप्रसृष्टैः ९१ सकर्णमाकर्णविकृष्टसृष्टैःशरैःशरीरांतकरैर्ज्वलद्भिः ॥ मर्मस्वविध्यत्सचचालदुःखाद्दैवादवातिष्ठतधैर्यबुद्धिः ९२ ततःशरौघैःप्रदिशोदिशश्चरवेःप्रभाकर्णरथश्चराजन् ॥ अदृश्यमासीत्कुपितेधनंजयेतुषारनीहारवृतंयथानभः ९३ सचक्ररक्षानथपादरक्षान्पुरःसरान्पृष्ठगोपांश्चसर्वान् ॥ दुर्योधनेनानुमतानरिघ्नःसमुद्यतान्सरथान्सारभूतान् ९४ द्विसाहस्रान्समरेसव्यसाचीकुरुप्रवीरानृषभःकुरूणां ॥ क्षणेनसर्वान्सरथाश्वसूतान्निनायराजन्क्षयमेकवीरः ९५ ९०।९१।९२।९३।९४।९५

९६ । ९७ ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपे ऊननवतितमोऽध्यायः ॥ ८९ ॥ ॥ ७ ॥ ततइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४

ततोपलायंतविहायकर्णंतवात्मजाःकुरवोयेऽवशिष्टाः ॥ हतानपाकीर्यशरक्षतांश्चलालप्यमानांस्तनयान्पितॄंश्च ९६ ससर्वतःप्रेक्ष्यदिशोविशून्याभयावदीर्णैः कुरुभिर्विहीनः ॥ नविव्यथेभारततत्रकर्णःप्रहृष्टएवार्जुनमभ्यधावत् ९७ ॥ इतिश्रीमहाभारतेकर्णपर्वणिकर्णार्जुनद्वैरथेऊननवतितमोऽध्यायः ॥ ८९ ॥ ७ ॥ ॥ संजयउवाच ॥ ततःप्रयाताःशरपातमात्रमवस्थिताःकुरवोभिन्नसेनाः ॥ विद्युत्प्रकाशंददृशुःसमंताद्धनंजयास्त्रंसमुदीर्यमाणम् १ तदर्जुनास्त्रंग्रसतिस्म कर्णोवियद्गतंघोरतरैःशरैस्तत् ॥ क्रुद्धेनपार्थेनभृशाभिसृष्टंवधायकर्णस्यमहाविमर्दे २ उदीर्यमाणंस्मकुरून्दहंतंसुवर्णपुंखैर्विशिखैर्ममर्द ॥ कर्णस्त्वमोघेष्वसनं दृढज्यंविस्फारयित्वाविसृजञ्छरौघान् ३ रामादुपात्तेनमहामहिम्नाह्याथर्वणेनारिविनाशनेन ॥ तदर्जुनास्त्रंव्यधमद्दहंतंकर्णस्तुबाणैर्निशितैर्महात्मा ४ ततोविमर्दःसुमहान्बभूवतत्रार्जुनस्याधिरथेश्चराजन् ॥ अन्योन्यमासादयतोःपृषत्कैर्विषाणघातैर्द्विपयोरिवोग्रैः ५ तत्रास्त्रसंघातसमावृतंतदाबभूवराजंस्तुमुलंस्म सर्वतः ॥ तत्कर्णपार्थौशरवृष्टिसंघैर्निरंतरंचक्रतुरंबरंतदा ६ ततोजालंबाणमयंमहांतंसर्वेऽद्राक्षुःकुरवःसोमकाश्च ॥ नान्यंचभूतंददृशुस्तदातेबाणांधकारेतुमुलेऽथकिंचित् ७ तौसंदधानावनिशंचराजन्समस्यंतौचापिशराननेकान् ॥ संदर्शयेतांयुधिमार्गान्विचित्रान्धनुर्धरौतौविविधैःकृतास्त्रैः ८ तयोरेवंयुद्ध्यतोराजिमध्येसूतात्मजोऽभूदधिकःकदाचित् ॥ पार्थःकदाचित्त्वधिकःकिरीटीवीर्यास्त्रमायाबलपौरुषेण ९ दृष्ट्वातयोस्तंयुधिसंप्रहारंपरस्परस्यांतरमीक्षमाणयोः ॥ घोरंतयोर्दुर्विषहंरणेऽन्यैर्योधाःसर्वेविस्मयमभ्यगच्छन् १० ततोभूतान्यंतरिक्षस्थितानितौकर्णपार्थौप्रशशंसुर्नरेंद्र ॥ भोःकर्णसाध्वर्जुनसाधुचेतिवियत्सुवाणीश्रूयतेसर्वतोऽपि ११ तस्मिन्विमर्देरथवाजिनागैस्तदाऽभिघातैर्दलितेहिभूतले ॥ ततस्तुपातालतलेशयानोनागोऽश्वसेनःकृतवैरोऽर्जुनेन १२ राजंस्तदाखांडवदाहमुक्तोविवेशकोपाद्वसुधातलेयः ॥ अथोत्पपातोर्ध्वगतिर्जवेनसंदृश्यकर्णार्जुनयोर्विमर्दम् १३ अयंहिकालोऽस्यदुरात्मनोवैपार्थस्यवैरप्रतियातनाय ॥ संचिंत्यतूर्णंप्रविवेशचैवकर्णस्यराजन्शररूपधारी १४ ततोऽस्त्रसंघातसमाकुलंतदाबभूवजन्यंविततांशुजालं ॥ तत्कर्णपार्थौशरसंघवृष्टिभिर्निरंतरंचक्रतुरंबरंतदा १५ तद्बाणजालैकमयंमहांतंसर्वेऽत्रसन्कुरवःसोमकाश्च ॥ नान्यत्किंचिद्ददृशुःसंपतद्वैबाणांधकारेतुमुलेऽतिमात्रम् १६ ततस्तौपुरुषव्याघ्रौसर्वलोकधनुर्धरौ ॥ त्यक्तप्राणौरणेवीरौयुद्धश्रममुपागतौ ॥ समुत्क्षेपैर्वीक्ष्यमाणौसिक्तौचंदनवारिणा १७ सवालव्यजनैर्दिव्यैर्दिविस्थैरप्सरोगणैः ॥ शक्रसूर्यकराब्जाभ्यांप्रमार्जितमुखावुभौ १८ कर्णोऽथपार्थंनविशेषयद्यदाभृशंचपार्थेनशराभितप्तः ॥ ततस्तुवीरःशरविक्षतांगोदध्रेमनोह्येकशयस्यतस्य १९ ततोरिपुघ्नंसमधत्त कर्णःसुसंचितंसर्पमुखंज्वलंतम् ॥ रौद्रंशरंसन्नतमुग्रधौतंपार्थार्थमत्यर्थचिराभिगुप्तम् २०

१५ बाणजालैकमयं दृष्टेतिशेषः १६ । १७ । १८ । १९ । २०

२१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ अयेति मूर्ध्नः सकाशात् व्यालास्त्रस्य सर्गश्चोत्तमयत्नश्च मन्युश्च तैः प्रयुक्तेन शरेणोत्तमगात्रभूषणमुत्तमांगभूषणं

सदार्चितं चंदनचूर्णशायितं सुवर्णतूणीरशयं महार्चिषम् ॥ आकर्णपूर्णं च विकृष्य कर्णः पार्थोन्मुखः संदधे चोत्तमौजाः २१ प्रदीप्तमैरावतवंशसंभवं शिरोजिहीर्षुर्युधि सव्यसाचिनः ॥ ततः प्रजज्वाल दिशो नभश्च उल्काश्च घोराः शतशः प्रपेतुः २२ तस्मिंस्तु नागे धनुषि प्रयुक्ते हाहाकृता लोकपालाः सशक्राः ॥ न चापि तं बुबुधे सूतपुत्रो बाणे प्रविष्टं योगबलेन नागम् २३ दशशतनयनोऽहिं दृश्य बाणे प्रविष्टं निहत इति सुतो मे स्रस्तगात्रो बभूव ॥ जलजकुसुमयोनिः श्रेष्ठभावो जितात्मा त्रिदशपतिमवोचन्मा व्यथिष्ठा जयेऽश्रीः २४ ततोऽब्रवीन्मद्रराजो महात्मा दृष्ट्वा कर्णं प्रहितेषुं तमुग्रम् ॥ न कर्ण ग्रीवामिषुरेष लप्स्यते समीक्ष्य संधत्स्व शरं शिरोघ्नम् २५ अथाऽब्रवीत्क्रोधसंरक्तनेत्रो मद्राधिपं सूतपुत्रस्तरस्वी ॥ न संधत्ते द्विः शरं शल्य कर्णो न मादृशा जिह्मयुद्धा भवंति २६ इतीदमुक्त्वा विससर्ज तं शरं प्रयत्नतो वर्षगणाभिपूजितम् ॥ हतोऽसि वै फाल्गुन इत्यधिक्षिपन्नुवाच चोच्चैर्गिरमूर्जितां वृषः २७ स सायकः कर्णभुजप्रसृष्टो हुताशनार्कप्रतिमः सुघोरः ॥ गुणच्युतः कर्णधनुःप्रमुक्तो वियद्गतः प्राज्वलदंतरिक्षे २८ तं प्रेक्ष्य दीप्तं युधि माधवस्तु त्वरान्वितं सत्वरयैव लीलया ॥ पदा विनिष्पिष्य रथोत्तमं स प्रावेशयत्पृथिवीं किंचिदेव २९ क्षितिं गता जानुभिस्तेऽथ वाहा हेमच्छन्नाश्चंद्रमरीचिवर्णाः ॥ ततोंऽतरिक्षे सुमहान्निनादः संपूजनार्थं मधुसूदनस्य ३० दिव्याश्च वाचः सहसा बभूवुर्दिव्यानि पुष्पाण्यथ सिंहनादाः ॥ तस्मिंस्तथा वै धरणीं निमग्ने रथे प्रयत्नान्मधुसूदनस्य ३१ ततः शरः सोऽभ्यहनत्किरीटं तस्येंद्रदत्तं सुदृढं च धीमतः ॥ अथार्जुनस्योत्तमगात्रभूषणं धरावियद्द्योसलिलेषु विश्रुतम् ३२ व्यालास्त्रसर्गोत्तमयत्नमन्युभिः शरेण मूर्ध्नः प्रजहार सूतजः ॥ दिवाकरेंदुज्वलनप्रभत्विषं सुवर्णमुक्तामणिवज्रभूषितम् ३३ पुरंदरार्थं तपसा प्रयत्नतः स्वयं कृतं यद्विभुना स्वयंभुवा ॥ महार्हरूपं द्विषतां भयंकरं बिभर्तुरत्यर्थसुखं सुगंधिनम् ३४ जिघांसते देवरिपून्सुरेश्वरः स्वयं ददौ यत्सुमनाः किरीटिने ॥ हरांबुपाखंडलवित्तगोप्तृभिः पिनाकपाशाशनिसायकोत्तमैः ३५ सुरोत्तमैरप्यविषह्यमर्दितुं प्रसह्य नागेन जहार यद्वृषः ॥ स दुष्टभावो वितथप्रतिज्ञः किरीटमत्यद्भुतमर्जुनस्य ३६ नागो महार्हं तपनीयचित्रं पार्थोत्तमांगात्प्रहरत्तरस्वी ॥ तद्धेमजालावततं सुघोषं जाज्वल्यमानं निपपात भूमौ ३७ तदुत्तमेषून्मथितं विषाग्निना प्रदीप्तमर्चिष्मदथो क्षितौ प्रियम् ॥ पपात पार्थस्य किरीटमुत्तमं दिवाकरोऽस्तादिव रक्तमंडलः ३८ स वै किरीटं बहुरत्नभूषितं जहार नागोऽर्जुनमूर्धतो बलात् ॥ गिरेः सुजातांकुरपुष्पितद्रुमं महेंद्रवज्रः शिखरोत्तमं यथा ३९ मही वियद्द्यौः सलिलं च वायुना प्रसह्य सुग्रं विनिघूर्णितं यथा ॥ अतीव शब्दो भुवनेषु वै तदा जनाऽध्यवस्यन्व्यथिताश्च चस्खलुः ४० विना किरीटं शुशुभे स पार्थः श्यामो युवा नील इवोच्चशृंगः ॥ ततः समुद्ग्रथ्य सितेन वाससा स्वमूर्धजानव्यथितस्तदाऽर्जुनः ॥ विभासितः सूर्यमरीचिना दृढं शिरोगतेनोदयपर्वतो यथा ४१

प्रजहारेति द्वयोः संबंधः ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१

गोकर्णामुकुटंजहारेत्यन्वयः अर्जुनस्यमुकुटहरणमपिमहत्कर्मेतिसूचयन्मुकुटंविशिनष्टि गविचक्षुषिकर्णोयस्याःसागोकर्णा चक्षुःश्रवाःसर्पिणी अर्जुनेनखांडवेनिहतासतीइहनिमित्तभूतातस्य मुकुटमेवजहारहृतवतीनतुशिरः । कथंहतायाहननंनिमित्तत्वमतआह सुमुखीकृतेनइषुणागोपुत्रसंप्रेषिता संधिरविवक्षितत्वान्नभवति शोभनंपुत्रजीवनकरंमुखंयस्याःसासुमुखी साहिपुत्रं निगीर्यदह्यमानात्खांडवादुत्पतंतीशिरोदेशेअर्जुनेनाच्छिन्नासतीस्वयंमृतापुत्रंचरक्षितवती।त्यादिपर्वण्युपाख्यायते कृतेनस्वयंनिर्मितेनपुत्रेणत्राते नइषुणाइषुभावंगतेन । आत्मावैपुत्रनामासी तिश्रुतेरिष्वाकारपुत्ररूपेणसंपन्नासती गोमतोरश्मिमतोऽर्कस्यपुत्रेणकर्णेनप्रेषिता । इषुणेतीत्थंभावेतृतीया । गोपुत्रेतिमतुब्लोपआर्षः । किंकृत्वामुकुटंजहारेत्यतआह सुव्यक्तगोऽग्रमंगोगतकं दृष्ट्वा सुव्यक्ताः अतिशयेनाविर्भूतागावोरश्मयस्तेजइतियावत् सुव्यक्तैर्गोभिरंशुभिश्चप्रकर्षेणभासमानंनिरतिशयतेजोबलमर्जुनं । गोगतकंगोशब्देनहयरश्मीनांप्रदेशोलक्ष्यते तत्रगतंविद्यमानं कंशिरोयस्यतं अर्जुनस्यग्रीवादेशंकर्णेनलक्षीकृतंविज्ञाय भगवतास्वभारेणाश्वेषुजानुभ्यामवनींगमितेषुरश्मिभिःसमसूत्रदेशेऽर्जुनस्याशिरोदृष्ट्वाऽपिवेगातिशयात्स्वयंनीचीभवितुमशक्तासती।तद्दे

गोकर्णासुमुखीकृतेनइषुणागोपुत्रसंप्रेषितागोशब्दात्मजभूषणंसुविहितंसुव्यक्तगोऽग्रप्रभम् ॥ दृष्ट्वागोगतकंजहारमुकुटंगोशब्दगोपूरिवैगोकर्णासनमर्दनश्चनयया वप्राप्यमृत्योर्वशम् ४२ ससायकःकर्णभुजप्रसृष्टोहुताशनार्कप्रतिमोमहार्हः ॥ महोरगःकृतवैरोर्जुनेनकिरीटमाहत्यततोव्यतयात् ४३ तंचापिदग्ध्वातपनीयचि त्रंकिरीटमाकृष्यतदर्जुनस्य ॥ इयेषगंतुंपुनरेवतूर्णंदृष्टश्चकर्णेनततोऽब्रवीत्तम् ४४ मुक्तस्त्वयाऽहंत्वसमीक्ष्यकर्णशिरोहृतंयन्नमयाऽर्जुनस्य ॥ समीक्ष्यमांमुंचरणे त्वमाशुहंताऽस्मिशत्रुंतवचात्मनश्च ४५ सएवमुक्तोयुधिसूतपुत्रस्तमब्रवीत्कोभवानुग्ररूपः ॥ नागोऽब्रवीद्विद्धिकृतागसंमांपार्थेनमातुर्वधजातवैरम् ४६ यदिस्व यंवज्रधरोऽस्यगोप्तातथाऽपियातापितृराजवेश्मनि ॥ कर्णउवाच ॥ ननागकर्णोऽद्यरणेपरस्यबलंसमास्थायजयंबुभूषेत ४७ नसंदध्यांद्विःशरंचैवनागयद्यर्जुना नांशतमेवहन्याम् ॥ तमाहकर्णःपुनरेवनागंतदाऽऽजिमध्येरविसूनुसत्तमः ४८ व्यालास्त्रसर्गोत्तमयत्नमन्युभिर्हताऽस्मिपार्थंसुसुखीव्रजत्वम् ॥ इत्येवमुक्तोयुधि नागराजःकर्णेनरोषादसहंस्तस्यवाक्यम् ४९ स्वयंप्रायात्पार्थवधायराजन्कृत्वास्वरूपंविजिघांसुरुग्रः ॥ ततःकृष्णःपार्थमुवाचसंख्येमहोरगंकृतवैरंजहित्वम् ५० सएवमुक्तोमधुसूदनेनगांडीवधन्वारिपुवीर्यसाहः ॥ उवाचकोह्येषममाद्यनागःस्वयंयआयाद्गरुडस्यवक्त्रम् ५१ ॥ कृष्णउवाच ॥ योऽसौत्वयाखांडवेचित्रभानुसं तर्पयाणेनधनुर्धरेण ॥ वियद्गतोजननीगुप्तदेहोमत्वैकरूपंनिहताऽस्यमाता ५२

शस्थंमुकुटंजहारेत्यर्थः । गोशब्दात्मजभूषणंसुविहितमिति गौःपृथिवीतयाशब्द्यतेगो शब्दाअदितिः । इयंवाअदितिरितिपृथिव्याअदितेर्निर्देशात् तस्याआत्मजस्येंद्रस्यभूषणंसुविहितंवेधसेतिशेषः तथाचात्रैवोक्तं । 'पुरंदरार्थंतपसाप्रयत्नतःस्वयंकृतंयद्विविनास्वयंभुवा'इति । कीं दृशंमुकुटं वैनिश्चितंप्रसिद्धंवा गोशब्दगोपुरि गोभिःरश्मिभिःशब्द्यतेरश्मिमानितिकथ्यतइतिसूर्यस्तस्यैवभुवनगर्भव्यापिनोगावःकिरणास्तैर्भुवनंपूरयितुंशीलमस्यतत्तथा सूर्यसमप्रभमित्यर्थः । ननुचेतनाधिष्ठितोबाणःपुनरेत्यार्जुनंकुतोनहतवानित्यतआह गोकर्णासनमर्दनश्चनययावप्राप्यमृत्योर्वशमिति गोकर्णःसर्पःपुनरर्जुनंहंतुमिच्छंतमसनेनबाणक्षेपेणमर्दयतियःसतथाभूतोऽर्जुनश्च तमेवसर्पमनवाप्यमृत्योर्वशंनययौ सर्पस्यपुनरागमनंवधश्चात्रैवकीर्त्यते । 'गौनांऽऽदित्येबलीवर्देक्रतुभेदर्षिभेदयोः ॥ स्त्रीतुस्याद्दिशिभारत्यांभूमौचसुरभावपि ॥ नृस्त्रियोःस्वगवज्रांबुरश्मिदृ ग्बाणलोमसु'इतिकोशः ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ कर्णेनवाक्यमुक्तःसंस्तद्वाक्यमसहन्नसहमानःस्वयंप्रायादित्युत्तरेणान्वयः ४९ । ५० । ५१ । ५२

महोल्कामितिपाठेइवेत्यध्याहृत्ययोज्यं ५३ । ५४ गतेगमिते विभुःसमर्थः ५५ बर्हिणांबर्हाएवपत्राणांपक्षाःसंजातायेषांतैर्बर्हिणबर्हवाजितैः ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३

सएषतद्वैरमनुस्मरन्वैत्वांप्रार्थयत्यात्मवधायनूनम् ॥ नभश्च्युतांप्रज्वलितामिवोल्कांपश्यैनमायांतममित्रसाह ५३ ॥ संजयउवाच ॥ ततःसाजिष्णुःपरिवृत्यरोषाच्चिच्छेदषड्भिर्निशितैःसुधारैः ॥ नागंवियत्तिर्यगिवोत्पतंतंसच्छिन्नगात्रोनिपपातभूमौ ५४ गतेचतस्मिन्भुजगेकिरीटिनास्वयंविभुःपार्थिवभूतलादथ ॥ समुज्जहाराशुपुनःपतंतंरथंभुजाभ्यांपुरुषोत्तमस्ततः ५५ तस्मिन्मुहूर्तेदशभिःपृषत्कैःशिलाशितैर्बर्हिणबर्हवाजितैः ॥ विव्याधकर्णःपुरुषप्रवीरोधनंजयंतिर्यगवेक्षमाणः ५६ ततोऽर्जुनोद्वादशभिःसुमुक्तैर्वराहकर्णैर्निशितैःसमर्प्य ॥ नाराचमाशीविषतुल्यवेगमाकर्णपूर्णायतमुत्ससर्ज ५७ सचित्रवर्मेषुवरोविदार्यप्राणान्निरस्यन्निवसाधुमुक्तः ॥ कर्णस्यपीत्वारुधिरंविवेशवसुंधरांशोणितदिग्धवाजः ५८ ततोवृषोबाणनिपातकोपितोमहोरगोदंडविघट्टितोयथा ॥ तदाऽऽशुकारीव्यसृजच्छरोत्तमान्महाविषःसर्पइवोत्तमंविषम् ५९ जनार्दनंद्वादशभिःपराभिनन्नवैर्नवत्याचशरैस्तथाऽर्जुनम् ॥ शरेणघोरेणपुनश्चपांडवंविदार्यकर्णोव्यनदज्जहासच ६० तमस्यहर्षममृष्येनपांडवोबिभेदमर्माणिततोऽस्यमर्मवित् ॥ परःशतैःपत्रिभिरिंद्रविक्रमस्तथायथेंद्रोबलमोजसारणे ६१ ततःशराणांनवतिंतदाऽर्जुनःससर्जकर्णेऽतकदंडसंनिभाम् ॥ तैःपत्रिभिर्विद्धतनुःसविव्यथेतथायथावज्रविदारितोऽचलः ६२ मणिप्रवेकोत्तमवज्रहाटकैरलंकृतंचास्यवरांगभूषणम् ॥ प्रविद्धमुर्व्यांनिपपातपत्रिभिर्धनंजयेनोत्तमकुंडलेऽपिच ६३ महाधनंशिल्पिवरैःप्रयत्नतःकृतंयदस्योत्तमवर्मभास्वरम् ॥ सुदीर्घकालेनततोऽस्यपांडवःक्षणेनबाणैर्बहुधाव्यशातयत् ६४ सतंविवर्माणमथोत्तमेषुभिःशितैश्चतुर्भिःकुपितःपराभिनत् ॥ सविव्यथेऽत्यर्थमरिप्रताडितोयथाऽऽतुरःपित्तकफानिलज्वरैः ६५ महाधनुर्मंडलनिःसृतैःशितैःक्रियाप्रयत्नप्रहितैर्बलेनच ॥ ततक्षकर्णंबहुभिःशरोत्तमैर्बिभेदमर्मस्वपिचार्जुनस्त्वरन् ६६ दृढाहतःपत्रिभिरुग्रवेगैःपार्थेनकर्णोविविधैःशिताग्रैः ॥ बभौगिरिर्गैरिकधातुरक्तःक्षरन्प्रपातैरिवरक्तमंभः ६७ ततोऽर्जुनःकर्णमवक्रगैर्नवैःसुवर्णपुंखैःसुदृढैरयस्मयैः ॥ यमाग्निदंडप्रतिमैःस्तनांतरेपराभिनत्क्रौंचमिवाद्रिमग्निजः ६८ ततःशरावापमपास्यसूतजोधनुश्चतच्छक्रशरासनोपमम् ॥ ततोरथस्थःसमुमोहचस्खलन्प्रशीर्णमुष्टिःसुभृशाहतःप्रभो ६९ नचार्जुनस्तंव्यसनेतदेषिवान्निहंतुमार्यःपुरुषव्रतेस्थितः ॥ ततस्तमिंद्रावरजःसुसंभ्रमादुवाचकिंपांडवहेप्रमाद्यसे ७० नैवाहितानांसततंविपाश्चितःक्षणंप्रतीक्षंत्यपिदुर्बलीयसाम् ॥ विशेषतोऽरीन्व्यसनेषुपंडितोनिहत्यधर्मंचयशश्चविंदते ७१ तदेकवीरंतवचाहितंसदात्वरस्वकर्णंसहसाऽभिमर्दितुम् ॥ पुरासमर्थःसमुपेतिसूतजोभिंधित्वमेनंनमुचिंयथाहरिः ७२ ततस्तदेवेत्यभिपूज्यसत्वरंजनार्दनंकर्णमविध्यदर्जुनः ॥ शरोत्तमैःसर्वकुरूत्तमस्त्वरंस्तथायथाशंबरहापुराबलिम् ७३ साश्वंतुकर्णंसरथंकिरीटीसमाचिनोद्धारतवत्सदंतैः ॥ प्रच्छादयामासदिशश्चबाणैःसर्वप्रयत्नात्तपनीयपुंखैः ७४ ६४ । ६५ । ६६ । ६७ अग्निजःकार्तिकेयः ६८ । ६९ ईषिवान्मनसिकृतवान् ७० । ७१ । ७२ । ७३ । ७४

७१ । ७६ । ७७ । ७८ । ७९ । ८० कालइति हेनृप कर्णवधंअभिलक्ष्येतिशेषः ब्रुवाणोवक्ता ८१ वामंचक्रंग्रसते नृवीरेत्यत्राचित्सौतेरितिपाठेग्रसतेआत्तेचनतुनिगीर्णमुद्रमंतीत्यर्थः ८२

सवत्सदंतैःपृथुपीनवक्षाःसमाचितःसोऽधिरथिर्विभाति ॥ सुपुष्पिताशोकपलाशशाल्मलिर्यथाऽचलश्चंदनकाननायुतः ७५ शरैःशरीरेबहुभिःसमर्पितैर्विभातिकर्णःसमरेविशांपते ॥ महीरुहैराचितसानुकंदरोयथागिरींद्रःस्फुटकर्णिकारवान् ७६ सबाणसंघान्बहुधाव्यवासृजन्विभातिकर्णःशरजालरश्मिवान् ॥ सलोहितोरक्तगभस्तिमंडलोदिवाकरोऽस्ताभिमुखोयथातथा ७७ बाह्वंतरादाधिरथेर्विमुक्तान्बाणान्महाहीनिवदीप्यमानान् ॥ व्यध्वंसयन्नर्जुनबाहुमुक्ताःशराःसमासाद्यदिशःशिताग्राः ७८ ततःसकर्णःसमवाप्यधैर्यंबाणान्विमुंचन्कुपिताहिकल्पान् ॥ विव्याधपार्थंदशभिःपृषत्कैःकृष्णंचषड्भिःकुपिताहिकल्पैः ७९ ततःकिरीटीभृशमुग्रनिःस्वनंमहाशरंसर्पविषानलोपमम् ॥ अयस्मयंरौद्रमहास्त्रसंभृतंमहाहवेक्षेप्तुमनामहामतिः ८० कालोह्यदृश्योनृपविप्रकोपान्निदर्शयन्कर्णवधंब्रुवाणः ॥ भूमिस्तुचक्रंग्रसतीत्यवोचत्कर्णस्यतस्मिन्वधकालआगते ८१ ततस्तदस्त्रंमनसःप्रनष्टंयद्भार्गवोऽस्मैप्रददौमहात्मा ॥ चक्रंचवामंग्रसतेभूमिरस्यप्राप्तेतस्मिन्वधकालेनृवीर ८२ ततोरथोघूर्णितवान्नरेंद्रशापात्तदाब्राह्मणसत्तमस्य ॥ ततश्चक्रमपतत्तस्यभूमौसविह्वलःसमरेसूतपुत्रः ८३ सवेदिकश्चैत्यइवातिमात्रःसुपुष्पितोभूमितलेनिमग्नः ॥ घूर्णेरथेब्राह्मणस्याभिशापाद्रामादुपात्तेत्वविभातिचास्त्रे ८४ छिन्नेशरेसर्पमुखेचघोरेपार्थेनतस्मिन्विषसादकर्णः ॥ अमृष्यमाणोव्यसनानितानिहस्तौविधुन्वन्सविगर्हमाणः ८५ धर्मप्रधानंकिलपातिधर्मइत्यब्रुवन्धर्मविदःसदैव ॥ वयंचधर्मेप्रयतामनित्यंचर्तुंयथाशक्तियथाश्रुतंच ८६ सचापिनिघ्नातिनपातिभक्तान्मन्येननित्यंपरिपातिधर्मः ॥ एवंब्रुवन्प्रस्खलिताश्वसूतोविचाल्यमानोऽर्जुनबाणपातैः ॥ मर्माभिघाताच्छिथिलःक्रियासुपुनःपुनर्धर्ममसौजगर्हे ८७ ततःशरैर्भीमतरैरविध्यात्त्रिभिराहवे ॥ हस्तेकृष्णंतथापार्थमभ्यविध्यच्चसप्तभिः ८८ ततोऽर्जुनःसप्तदशतिग्मवेगानजिह्मगान् ॥ इंद्राशनिसमान्घोरानसृजत्पावकोपमान् ८९ निर्भिद्यतेभीमवेगाह्यपतन्पृथिवीतले ॥ कंपितात्माततःकर्णःशक्त्याचेष्टामदर्शयत् ९० बलेनाथससंस्तभ्यब्रह्मास्त्रंसमुदैरयत् ॥ ऐंद्रंततोऽर्जुनश्चापितंदृष्ट्वाभ्युपमंत्रयत् ९१ गांडीवंज्यांचबाणांश्चसोऽनुमंत्र्यपरंतपः ॥ व्यसृजच्छरवर्षाणिवर्षाणीवपुरंदरः ९२ ततस्तेजोमयाबाणारथात्पार्थस्यनिःसृताः ॥ प्रादुरासन्महावीर्याःकर्णस्यरथमंतिकात् ९३ तान्कर्णस्त्वग्रतोन्यस्तान्मोघांश्चक्रेमहारथः ॥ ततोऽब्रवीद्वृष्णिवीरस्तस्मिन्नस्त्रेविनाशिते ९४ विसृजास्त्रंपरंपार्थराधेयोग्रसतेशरान् ॥ ततोब्रह्मास्त्रमत्युग्रंसंमंत्र्यसमयोजयत् ९५ छादयित्वाततोबाणैःकर्णंप्रत्यस्यदर्जुनः ॥ ततःकर्णःशितैर्बाणैर्ज्यांचिच्छेदसुतेजनैः ९६ द्वितीयांचतृतीयांचचतुर्थींपंचमींतथा ॥ षष्ठीमथास्यचिच्छेदसप्तमींचतथाष्टमीम् ९७

८३ चैत्यः सवेदिकोग्रामसूचकोमहाद्रुमः ८४ । ८५ । ८६ । ८७ । ८८ । ८९ । ९० अभ्युपमंत्रयत् गांडीवमित्युत्तरान्वयि ९१ । ९२ । ९३ । ९४ । ९५ प्रत्यस्यत् प्रतिप्राक्षिपत् ९६ । ९७

९८ । ९९ । १०० । १ अभ्यसपुनःपुनःअस्त्रंआतिष्ठव्रजमेरयेत्यब्रवीदितियोजना २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । ११६ ॥ इतिक° नी° भा°





नवमींदशमींचास्यतथाचैकादशींवृषः ॥ ज्याशतंशतसंधानःसकर्णोनावबुध्यते ९८ ततोज्यांविनिधायान्यामभिमंत्र्यचपांडवः ॥ शरैरवाकिरत्कर्णंदीप्यमानैरिवाहिभिः ९९ तस्यज्याच्छेदनंकर्णोज्यावधानंचसंयुगे ॥ नान्वबुध्यतशीघ्रत्वात्तदद्भुतमिवाभवत् १०० अस्त्रैरस्त्राणिसंवार्यप्रनिघ्नन्सव्यसाचिनः ॥ चक्रेचाप्यधिकंपार्थात्स्ववीर्यमतिदर्शयन् १ ततःकृष्णोऽर्जुनंदृष्ट्वाकर्णास्त्रेणचपीडितम् ॥ अभ्यस्येत्यब्रवीत्पार्थमातिष्ठास्त्रंव्रजेतिच २ ततोऽग्निसदृशंघोरंशरंसर्पविषोपमम् ॥ अश्मसारमयंदिव्यमभिमंत्र्यपरंतपः ३ रौद्रमस्त्रंसमाधायक्षेप्तुकामःकिरीटवान् ॥ ततोऽग्रसन्महीचक्रंराधेयस्यतदानृप ४ ततोऽवतीर्यराधेयोरथादाशुसमुद्यतः ॥ चक्रंभुजाभ्यामालंब्यसमुत्क्षेप्तुमियेषसः ५ सप्तद्वीपावसुमतीसशैलवनकानना ॥ गीर्णचक्रासमुत्क्षिप्ताकर्णेनचतुरंगुलम् ६ ग्रस्तचक्रस्तुराधेयःक्रोधादश्रूण्यवर्तयत् ॥ अर्जुनंवीक्ष्यसंरब्धमिदंवचनमब्रवीत् ७ भोभोपार्थमहेष्वासमुहूर्तंपरिपालय ॥ यावच्चक्रमिदंग्रस्तमुद्धरामिमहीतलात् ८ सव्यंचक्रंमहीग्रस्तंदृष्ट्वादैवादिदंमम ॥ पार्थकापुरुषाचीर्णमभिसंधिंविसर्जय ९ नत्वंकापुरुषाचीर्णंमार्गमास्थातुमर्हसि ॥ ख्यातस्त्वमसिकौंतेयविशिष्टोरणकर्मसु ११० विशिष्टतरमेवत्वंकर्तुमर्हसिपांडव ॥ प्रकीर्णकेशेविमुखेब्राह्मणेऽथकृतांजलौ ११ शरणागतेन्यस्तशस्त्रेयाचमानेतथाऽर्जुन ॥ अबाणेभ्रष्टकवचेभ्रष्टभग्नायुधेतथा १२ नविमुंचंतिशस्त्राणिशूराःसाधुव्रतेस्थिताः ॥ त्वंचशूरतमोलोकेसाधुवृत्तश्चपांडव १३ अभिज्ञोयुद्धधर्माणांवेदांतावभृथाप्लुतः ॥ दिव्यास्त्रविदमेयात्माकार्तवीर्यसमोयुधि १४ यावच्चक्रमिदंग्रस्तमुद्धरामिमहाभुज ॥ नमांरथस्थोभूमिष्ठंविकलंहंतुमर्हसि १५ नवासुदेवात्त्वत्तोवापांडवेयबिभेम्यहम् ॥ त्वंहिक्षत्रियदायादोमहाकुलविवर्धनः ॥ अतस्त्वांप्रब्रवीम्येषमुहूर्तंक्षमपांडव ११६ ॥ इतिश्रीमहाभारते कर्णपर्वणि कर्णरथचक्रग्रसनेनवतितमोऽध्यायः ॥ ९० ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ तमब्रवीद्वासुदेवोरथस्थोराधेयदिष्ट्यास्मरसीहधर्मं ॥ प्रायेणनीचाव्यसनेषुमग्नानिंदंतिदैवंकुकृतंनतुस्वम् १ यद्द्रौपदीमेकवस्त्रांसभायामानाययेस्त्वंचसुयोधनश्च ॥ दुःशासनःशकुनिःसौबलश्चनतेकर्णप्रत्यभात्तत्रधर्मः २ यदासभायांराजानमनक्षज्ञंयुधिष्ठिरम् ॥ अजैषीच्छकुनिर्ज्ञानात्क्वतेधर्मस्तदागतः ३ वनवासेव्यतीतेचकर्णवर्षेत्रयोदशे ॥ नप्रयच्छसियद्राज्यंक्वतेधर्मस्तदागतः ४ यद्भीमसेनंसर्पैश्चविषयुक्तैश्चभोजनैः ॥ आचरस्त्वन्मतेराजाक्वतेधर्मस्तदागतः ५ यद्वारणावतेपार्थान्सुप्तान्जतुगृहेतदा ॥ आदीपयस्त्वंराधेयक्वतेधर्मस्तदागतः ६ यदारजस्वलांकृष्णांदुःशासनवशेस्थिताम् ॥ सभायांप्राहसःकर्णक्वतेधर्मस्तदागतः ७ यदनार्यैःपुराकृष्णांक्लिश्यमानामनागसम् ॥ उपप्रेक्षसिराधेयक्वतेधर्मस्तदागतः ८ विनष्टाःपांडवाःकृष्णेशाश्वतंनरकंगताः ॥ पतिमन्यंवृणीष्वेतिवदंस्त्वंगजगामिनीम् ९

भा° नवतितमोऽध्यायः ॥ ९० ॥ ॥ तमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९

उपप्रेक्षसिराधेयक्वतेधर्मस्तदागतः ॥ राज्यलुब्धःपुनःकर्णसमाह्वयांसेपांडवान् १० यदाशकुनिमाश्रित्यक्वतेधर्मस्तदागतः ॥ यदाऽभिमन्युंबहवोयुद्धेजघ्नुर्महा
रथाः ॥ परिवार्यरणेबालंक्वतेधर्मस्तदागतः ११ यद्येषधर्मस्तत्रनविद्यतेहिकिंसर्वथातालुविशोषणेन १२ अद्येहधर्म्याणिविधत्स्वसूततथापिजीवन्नविमोक्ष्यसे
हि ॥ नलोह्यक्षैर्निर्जितैःपुष्करेणपुनर्यशोराज्यमवापवीर्यात् १३ प्राप्तास्तथापांडवाबाहुवीर्यात्सर्वैःसमेताःपरिवृत्तलोभाः ॥ निहत्यशत्रून्समरेप्रवृद्धान्ससोम
काराज्यमवाप्नुयुस्ते १४ तथागताधार्तराष्ट्राविनाशंधर्माभिगुप्तैःसततंनृसिंहैः ॥ संजयउवाच ॥ एवमुक्तस्तदाकर्णोवासुदेवेनभारत १५ लज्जयाऽवनतोभू
त्वानोत्तरंकिंचिदुक्तवान् ॥ क्रोधात्प्रस्फुरमाणौष्ठोधनुरुद्यम्यभारत १६ योधयामासवैपार्थंमहावेगपराक्रमः ॥ ततोऽब्रवीद्वासुदेवःफाल्गुनंपुरुषर्षभम् १७
दिव्यास्त्रेणैवनिर्भिद्यपातयस्वमहाबल ॥ एवमुक्तस्तुदेवेनक्रोधमागात्तदाऽर्जुनः १८ मन्युमभ्याविशद्घोरंस्मृत्वातत्तुधनंजयः ॥ तस्यक्रुद्धस्यसर्वेभ्यःस्रोतोभ्य
स्तेजसोऽर्चिषः १९ प्रादुरासंस्तदाराजंस्तदद्भुतमिवाभवत् ॥ तत्समीक्ष्यततःकर्णोब्रह्मास्त्रेणधनंजयम् २० अभ्यवर्षत्पुनर्यत्नमकरोद्रथसर्जने ॥ ब्रह्मास्त्रेणै
वतंपार्थोववर्षशरवृष्टिभिः २१ तदस्त्रमस्त्रेणावार्यप्रजहारचपांडवः ॥ ततोऽन्यदस्त्रंकौंतेयोदयितंजातवेदसः २२ मुमोचकर्णमुद्दिश्यतत्प्रजज्वालतेजसा ॥ वा
रुणेनततःकर्णःशमयामासपावकम् २३ जीमूतैश्चदिशःसर्वाश्चक्रेतिमिरदुर्दिनाः ॥ पांडवेयस्त्वसंभ्रांतोवायव्यास्त्रेणवीर्यवान् २४ अपोवाहतदाभ्राणिराधेयस्य
प्रपश्यतः ॥ ततःशरंमहाघोरंज्वलंतमिवपावकम् २५ आददेपांडुपुत्रस्यसूतपुत्रोजिघांसया ॥ योज्यमानेततस्तस्मिन्बाणेधनुषिपूजिते २६ चचालपृथि
वीराजन्सशैलवनकानना ॥ ववौसशर्करोवायुर्दिशश्चरजसाऽऽवृताः २७ हाहाकारश्चसंजज्ञेसुराणांदिविभारत ॥ तमिषुंसंधितंदृष्ट्वासूतपुत्रेणमारिष २८ वि
षादंपरमंजग्मुःपांडवादीनचेतसः ॥ ससायकःकर्णभुजप्रमुक्तःशक्राशनिप्रख्यरुचिःशिताग्रः २९ भुजांतरंप्राप्यधनंजयस्यविवेशवल्मीकमिवोरगोत्तमः ॥ स
गाढविद्धःसमरेमहात्माविघूर्णमानःश्लथहस्तगांडिवः ३० चचालबीभत्सुरमित्रमर्दनःक्षितेःप्रकंपेचयथाऽचलोत्तमः ॥ तदंतरंप्राप्यवृषोमहारथोरथांगमुर्व्यांगत
मुज्जिहीर्षुः ३१ रथादवप्लुत्यनिगृह्यदोर्भ्यांशशाकदैवान्नमहाबलोऽपि ॥ ततःकिरीटीप्रतिलभ्यसंज्ञांजग्राहबाणंयमदंडकल्पम् ३२ ततोऽर्जुनःप्रांजलिकंमहा
त्मातातोऽब्रवीद्वासुदेवोऽपिपार्थम् ॥ छिंध्यस्यमूर्धानमरेःशरेणनयावदारोहतिवैरथंवृषः ३३ तथैवसंपूज्यसतद्वचःप्रभोस्ततःशरंप्रज्वलितंप्रगृह्य ॥ जघानक
क्षाममलार्कवर्णांमहारथेरथचक्रेविमग्ने ३४ तंहस्तिकक्षाप्रवरंचकेतुंसुवर्णमुक्तामणिवज्रपृष्ठम् ॥ ज्ञानप्रकर्षोत्तमशिल्पियुक्तैःकृतंसुरूपंतपनीयचित्रम् ३५
जयास्पदंतवसैन्यस्यानित्यमामित्रवित्रासनमीडयरूपम् ॥ विख्यातमादित्यसमंस्मलोकेत्विषासमंपावकभानुचंद्रैः ३६

ततःक्षुरप्रेणसुसंशितेनसुवर्णपुंखेनहुताग्निवर्चसा ॥ श्रियाज्वलंतंध्वजमुन्ममाथमहारथस्याधिरथेःकिरीटी ३७ यशश्चदर्पश्चतथाप्रियाणिसर्वाणिकार्याणिच
तेनकेतुना ॥ साकंकुरूणांहृदयानिचापतन्बभूवहाहेतिचनिःस्वनोमहान् ३८ दृष्ट्वाध्वजंपातितमाशुकारिणाकुरुप्रवीरेणनिकृत्तमाहवे ॥ नाशंसिरेसूतपुत्रस्य
सर्वेजयंतदाभारतयेत्वदीयाः ३९ अथत्वरन्कर्णवधायपार्थोमहेंद्रवज्रानलदंडसन्निभम् ॥ आददचाथांजलिकंनिषंगात्सहस्ररश्मेरिवरश्मिमुत्तमम् ४० मर्म
च्छिदंशोणितमांसदिग्धंवैश्वानरार्कप्रतिमंमहार्हम् ॥ नराश्वनागासुहरंत्र्यरत्निंषड्वाजमंजोगतिमुग्रवेगम् ४१ सहस्रनेत्राशनितुल्यवीर्यंकालानलंव्यात्तमिवाति
घोरम् ॥ पिनाकनारायणचक्रसन्निभंभयंकरंप्राणभृतांविनाशनम् ४२ जग्राहपार्थःसशरंप्रहृष्टोयोदेवसंघैरपिदुर्निवार्यः ॥ संपूजितोयःसततंमहात्मादेवासुरा
न्योविजयन्महेषुः ४३ तंवैप्रमृष्टंप्रसमीक्ष्ययुद्धेचचालसर्वंसचराचरंजगत् ॥ स्वस्तिजगत्स्यादृषयःप्रचुक्रुशुस्तमुद्यतंप्रेक्ष्यमहाहवेषुम् ४४ ततस्तुतंवैशरम
प्रमेयंगांडीवधन्वाधनुषिव्ययोजयत् ॥ युक्त्वामहास्त्रेणपरेणचापंविकृष्यगांडीवमुवाचसत्वरम् ४५ अयंमहास्त्रप्रहितोमहाशरःशरीरहृच्चासुहरश्चदुर्हृदः ॥ तपो
ऽस्तितप्तंगुरवश्चतोषितामयायदीष्टंसुहृदांश्रुतंतथा ४६ अनेनसत्येननिहंत्वयंशरःसुसंश्रितःकर्णमरिंममोर्जितम् ॥ इत्यूचिवांस्तंप्रमुमोचबाणंधनंजयःकर्णव
धायघोरम् ४७ कृत्यामथर्वांगिरसीमिवोग्रांदीप्तामसह्यांयुधिमृत्युनापि ॥ ब्रुवन्किरीटीतमतिप्रहृष्टोह्ययंशरोमेविजयावहोऽस्तु ४८ जिघांसुरर्केंदुसमप्रभावःकर्णं
मयाऽस्तोनयतांयमाय ॥ तेनेषुवर्येणकिरीटमालीप्रहृष्टरूपोविजयावहेन ४९ जिघांसुरर्केंदुसमप्रभेणचक्रेविषक्तंरिपुमाततायी ॥ तथाविमुक्तोबलिनाऽर्कतेजाः
प्रज्वालयामासदिशोनभश्च ॥ ततोऽर्जुनस्तस्यशिरोजहारवृत्रस्यवज्रेणयथामहेंद्रः ५० शरोत्तमेनांजलिकेनराजंस्तदामहास्त्रप्रतिमंत्रितेन ॥ पार्थोऽपराह्णेशि
रउच्चकर्तवैकर्तनस्याथमहेंद्रसूनुः ५१ तत्प्रापतच्चांजलिकेनाच्छिन्नमपास्यकायोनिपपातपश्चात् ॥ तदुद्यतादित्यसमानतेजसंशरन्नभोमध्यगभास्करोपमं ५२
वरांगमुर्व्यामपतच्चमूमुखेदिवाकरोऽस्ताद्रिवरक्तमंडलः ॥ ततोऽस्यदेहंसततंसुखोचितंसुरूपमत्यर्थमुदारकर्मणः ५३ परेणकृच्छ्रेणशिरःसमत्यजद्गृहंमहर्धीवसुसं
गमीश्वरः ॥ शरैर्विभिन्नंव्यसुतत्सुवर्चसःपपातकर्णस्यशरीरमुच्छ्रितम् ५४ स्रवद्व्रणंगैरिकतोयविस्रवंगिरेर्यथावज्रहतंमहाशिरः ॥ देहात्तुकर्णस्यनिपातितस्यते
जःसूर्यंखंवितत्याविवेश ५५ तदद्भुतंसर्वमनुष्ययोधाःसंदृष्टवंतोनिहतेस्मकर्णे ॥ ततःशंखान्पांडवादध्मुरुच्चैर्दृष्ट्वाकर्णंपातितंफाल्गुनेन ५६ तथैवकृष्णश्चधनं
जयश्चहृष्टौयमौदध्मतुर्वारिजातौ ॥ तंसोमकाःप्रेक्ष्यहतंशयानंसैन्यैःसार्धंसिंहनादान्प्रचक्रुः ५७ तूर्याणिसंजघ्नुरतीवहृष्टावासांसिचैवादुधुवुर्भुजांश्च ॥ संवर्धयंतश्च
नरेंद्रयोधापार्थंसमाजग्मुरतीवहृष्टाः ५८ बलान्विताश्चापरेह्यप्यनृत्यन्नन्योन्यमाश्लिष्यनदंतऊचुः ॥ दृष्ट्वातुकर्णंभुविवाविपन्नंकृत्तंरथात्सायकैरर्जुनस्य ५९

६० । ६१ । ६२ अपराह्णेदिवसस्यपश्चिमेभागेअपरंचरमंअह्नः मरणदिनमस्य ६३ । ६४ । ६५ । ६६ । ६७ ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपे एकनवतितमोऽध्यायः ॥ ९१ ॥

महानिलेनाद्रिमिवापविद्धंयज्ञावसानेऽग्निमिवप्रशांतम् ॥ रराजकर्णस्यशिरोनिकृत्तमस्तंगतंभास्करस्येवबिंबम् ६० शरैराचितसर्वांगःशोणितौघपरिप्लुतः ॥ विभातिदेहःकर्णस्यस्वरश्मिभिरिवांशुमान् ६१ प्रताप्यसेनामामित्रींदीप्तैःशरगभस्तिभिः ॥ बलिनार्जुनकालेननीतोऽस्तंकर्णभास्करः ६२ अस्तंगच्छन् यथाऽऽदित्यःप्रभामादायगच्छति ॥ तथाजीवितमादायकर्णस्येषुर्जगामसः ॥ अपराह्णेऽपराह्णोऽस्यसूतपुत्रस्यमारिष ६३ छिन्नमंजलिकेनाजौसोत्सेधमपतच्छिरः ॥ उपर्युपरिसैन्यानामस्यशत्रोस्तदंजसा ॥ शिरःकर्णस्यसोत्सेधमिषुःसोऽप्यहरद्द्रुतम् ६४ कर्णंतुशूरंपतितंपृथिव्यांशराचितंशोणितदिग्धगात्रम् ॥ दृष्ट्वाशयानंभुविमद्रराजश्छिन्नध्वजेनाथययौरथेन ६५ हतेकर्णेकुरवःप्राद्रवंतभयार्दितागाढविद्धाश्चसंख्ये ॥ अवेक्षमाणामुहुरर्जुनस्यध्वजंमहांतंवपुषाज्वलंतम् ६६ सहस्रनेत्रप्रतिमानकर्मणःसहस्रपत्रप्रतिमाननंशुभम् ॥ सहस्ररश्मिर्दिनसंक्षयेयथातथाऽपतत्कर्णशिरोवसुंधराम् ६७ ॥ इतिश्रीम० क० कर्णवधेएकनवतितमोऽध्यायः ॥ ९१ ॥ संजयउवाच ॥ शल्यस्तुकर्णार्जुनयोर्विमर्देबलानिदृष्ट्वामृदितानिबाणैः ॥ ययौहतेचाधिरथौपदानुगेरथेनसंछिन्नपरिच्छदेन १ निपातितस्यंदनवाजिनागंबलंचदृष्ट्वाहतसूतपुत्रम् ॥ दुर्योधनोऽश्रुप्रतिपूर्णनेत्रोदीनोमुहुर्निःश्वसंश्चार्तरूपः २ कर्णंतुशूरंपतितंपृथिव्यांशराचितंशोणितदिग्धगात्रम् ॥ यदृच्छयासूर्यमिवावनिस्थंदिदृक्षवःसंपरिवार्यतस्थुः ३ प्रहृष्टवित्रस्तविषण्णविस्मितास्तथाऽपरेशोकहताइवाभवन् ॥ परेत्वदीयाश्चपरस्परेणयथायथैषांप्रकृतिस्तथाऽभवन् ४ प्रविद्धवर्माभरणांबरायुधंधनंजयेनाभिहतंमहौजसम् ॥ निशाम्यकर्णंकुरवःप्रदुद्रुवुर्हतर्षभागावइवाजनेवने ५ भीमश्चभीमेनतदास्वनेननादंकृत्वारोदसीकंपयानः ॥ आस्फोटयन्वल्गतेनृत्यतेचहतेकर्णेत्रासयन्धार्तराष्ट्रान् ६ तथैवराजन्सोमकाःसृंजयाश्चशंखान्दध्मुःसस्वजुश्चापिसर्वे ॥ परस्परंक्षत्रियाहृष्टरूपाःसूतात्मजेवैनिहतेतदानीम् ७ कृत्वाविमर्दंमहदर्जुनेनकर्णोहतःकेसरिणेवनागः ॥ तीर्णाप्रतिज्ञापुरुषर्षभेणवैरस्यांतंगतवांश्चापिपार्थः ८ मद्राधिपश्चापिविमूढचेतास्तूर्णंरथेनापकृतध्वजेन ॥ दुर्योधनस्यांतिकमेत्यराजन्सबाष्पदुःखाद्वचनंबभाषे ९ विशीर्णनागाश्वरथप्रवीरंबलंत्वदीयंयमराष्ट्रकल्पम् ॥ अन्योन्यमासाद्यहतंमहद्भिर्नराश्वनागैर्गिरिकूटकल्पैः १० नैतादृशंभारतयुद्धमासीद्यथातुकर्णार्जुनयोर्बभूव ॥ ग्रस्तौहिकर्णेनसमेत्यकृष्णावन्येचसर्वेतवशत्रवोये ११ दैवंध्रुवंपार्थवशात्प्रवृत्तंयत्पांडवान्पातिहिनास्तिचास्मान् ॥ तवार्थसिद्ध्यर्थकरास्तुसर्वेप्रसह्यवीरानिहताद्विषद्भिः १२ कुबेरवैवस्वतवासवानांतुल्यप्रभावान्नृपतेसुवीराः ॥ वीर्येणशौर्येणबलेनतेजसातैस्तैस्तुयुक्ताविविधैर्गुणौघैः १३ अवध्यकल्पानिहतानरेंद्रास्तवार्थकामायुधिपांडवेयैः ॥ तान्माशुचोभारतदिष्टमेतत्पर्याश्वसत्वंनसदाऽस्तिसिद्धिः १४

शल्यइति रथेनग्रस्तचक्रेणहेतुनापदानुगेपदचारिणि १ । २ । ३ प्रहृष्टाअर्जुनादयः वित्रस्ताभीरवः विषण्णाःशत्रवः विस्मिताःप्रेक्षकाः ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४

१५ ॥ इतिकर्णपर्वणिनीलकंठीये भारतभावदीपे द्विनवतितमोऽध्यायः ॥ ९२ ॥ तस्मिन्निति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७

एतद्वचोमद्रपतेर्निशम्यस्वंचाप्यनीतंमनसानिरीक्ष्य ॥ दुर्योधनोदीनमनाविसंज्ञःपुनःपुनर्न्यश्वसदार्तरूपः १५ ॥ इतिश्रीमहाभारतेकर्णपर्वणि शल्यप्रत्यागमनेद्विनवतितमोऽध्यायः ॥ ९२ ॥ ॥ ध ॥ ॥ धृतराष्ट्रउवाच ॥ तस्मिंस्तुकर्णार्जुनयोर्विमर्देदग्धस्यरौद्रेऽहनिविद्रुतस्य ॥ बभूवरूपंकुरुसृंजयानांबलस्यबाणोन्मथितस्यकीदृक् १ ॥ संजयउवाच ॥ शृणुराजन्नवहितोयथावृत्तोमहाक्षयः ॥ घोरोमनुष्यदेहानामाजौचगजवाजिनाम् २ यत्रकर्णेहतेपार्थःसिंहनादमथाकरोत् ॥ तदातवसुतान्राजन्नाविवेशमहद्भयम् ३ नसंधातुमनीकानिनचैवाशुपराक्रमे ॥ आसीद्बुद्धिर्हतेकर्णेतवयोधस्यकर्हिचित् ४ वणिजोनाविभिन्नायामगाधेविप्लवेयथा ॥ अपारेपारमिच्छंतोहतेद्वीपेकिरीटिना ५ सूतपुत्रेहतेराजन्वित्रस्ताःशस्त्रविक्षताः ॥ अनाथानाथमिच्छंतोमृगाःसिंहैरिवार्दिताः ६ भग्नशृंगाइवृषायद्वद्भग्नदंष्ट्राइवोरगाः ॥ प्रत्यपायामसायाह्नेनिर्जिताःसव्यसाचिना ७ हतप्रवीराविध्वस्तानिकृत्तानिशितैःशरैः ॥ सूतपुत्रेहतेराजन्पुत्रास्तेदुद्रुवुर्भयात् ८ विस्रस्तयंत्रकवचाःकांदिग्भूताविचेतसः ॥ अन्योन्यमवमृद्नंतोवीक्ष्यमाणाभयार्दिताः ९ मामेवनूनंबीभत्सुर्मामेवचवृकोदरः ॥ अभियातीतिमन्वानाःपेतुर्मम्लुश्चसंभ्रमात् १० हयानन्येगजानन्येरथानन्येमहारथाः ॥ आरुह्यजवसंपन्नाःपदातीन्प्रजहुर्भयात् ११ कुंजरैःस्यंदनाःक्षुण्णाःसादिनश्चमहारथैः ॥ पदातिसंघाश्चाश्वौघैःपलायद्भिर्भयार्दितैः १२ व्यालतस्करसंकीर्णेसार्थहीनायथावने ॥ सूतपुत्रेहतेराजंस्तवयोधास्तथाऽभवन् १३ हतारोहायथानागाश्छिन्नहस्तायथानराः ॥ सर्वेपार्थमयंलोकंसंपश्यंतोभयार्दिताः १४ संप्रेक्ष्यद्रवतःसर्वान्भीमसेनभयार्दितान् ॥ दुर्योधनोऽथस्वंसूतंहाहाकृत्वेदमब्रवीत् १५ नातिक्रमेच्चमांपार्थोधनुष्पाणिमवस्थितम् ॥ जघनेसर्वसैन्यानांशनैरश्वान्प्रचोदय १६ युध्यमानंहिकौंतेयंहनिष्यामिनसंशयः ॥ नोत्सहेन्मामतिक्रांतुंवेलामिवमहोदधिः १७ अद्यार्जुनंसगोविंदंमानिनंचवृकोदरम् ॥ अन्यान्शिष्टांस्तथाशत्रून्कर्णस्यानृण्यमाप्नुयाम् १८ तच्छ्रुत्वाकुरुराजस्यशूरार्यसदृशंवचः ॥ सूतोहेमपरिच्छन्नान्शनैरश्वानचोदयत् १९ रथाश्वनागहीनास्तुपादातास्तवमारिष ॥ पंचविंशतिसाहस्रायुद्धायैवव्यवस्थिताः २० तान्भीमसेनःसंक्रुद्धोधृष्टद्युम्नश्चपार्षतः ॥ बलेनचतुरंगेणसंवृत्याजघ्नतुःशरैः २१ प्रत्ययुध्यंतसमरेभीमसेनंसपार्षतम् ॥ पार्थपार्षतयोश्चान्येजगृहुस्तत्रनामनी २२ अक्रुध्यतरणेभीमस्तैस्तदापर्यवस्थितैः ॥ सोऽवतीर्यरथात्तूर्णंगदापाणिरयुध्यत २३ नतान्रथस्थोभूमिष्ठान्धर्मापेक्षीवृकोदरः ॥ योधयामासकौंतेयोभुजवीर्यव्यपाश्रयः २४ जातरूपपरिच्छन्नांप्रगृह्यमहतींगदाम् ॥ अवधीत्तावकान्सर्वान्दंडपाणिरिवांतकः २५ पदातिनोऽपिसंत्यक्त्वाप्रियंजीवितमात्मनः ॥ भीममभ्यद्रवन्संख्येपतंगाज्वलनंयथा २६ आसाद्यभीमसेनंतुसंरब्धायुद्धदुर्मदाः ॥ विनेशुःसहसादृष्ट्वाभूतग्रामाइवांतकम् २७ १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

श्येनवद्विचरन्भीमोगदाहस्तोमहाबलः ॥ पंचविंशतिसाहस्रांस्तावकानवपोथयत् २८ हत्वातत्पुरुषानीकंभीमःसत्यपराक्रमः ॥ धृष्टद्युम्नंपुरस्कृत्यतस्थौतत्र
महाबलः २९ धनंजयोरथानीकमभ्यवर्ततवीर्यवान् ॥ माद्रीपुत्रौतुशकुनिंसात्यकिश्चमहारथः ३० जवेनाभ्यपतन्हृष्टाघ्नंतोदौर्योधनंबलम् ॥ तस्याश्वसादी
न्सुबहूंस्तेनिहत्यशितैःशरैः ३१ समभ्यधावंस्त्वरितास्तत्रयुद्धमभून्महत् ॥ धनंजयोऽपिचाभ्येत्यरथानीकंतवप्रभो ३२ विश्रुतंत्रिषुलोकेषुगांडीवंविक्षिपद्धनुः
॥ कृष्णसारथिमायांतंदृष्ट्वाश्वेतहयंरथम् ३३ अर्जुनंचापियोद्धारंत्वदीयाःप्राद्रवन्भयात् ॥ विप्रहीणरथाश्चैवशरैश्चपरिकर्षिताः ३४ पंचविंशतिसाहस्राः
कालमार्छन्पदातयः ॥ हत्वातान्पुरुषव्याघ्रःपंचालानांमहारथः ३५ पुत्रःपांचालराजस्यधृष्टद्युम्नोमहामनाः ॥ भीमसेनंपुरस्कृत्यनचिरात्प्रत्यदृश्यत ३६
महाधनुर्धरःश्रीमानमित्रगणतापनः ॥ पारावतसवर्णाश्वंकोविदारमयध्वजम् ३७ धृष्टद्युम्नंरणेदृष्ट्वात्वदीयाःप्राद्रवन्भयात् ॥ गांधारराजंशीघ्रास्त्रमनुसृत्ययश
स्विनौ ३८ नचिराद्प्रत्यदृश्येतांमाद्रीपुत्रौससात्यकी ॥ चेकितानःशिखंडीचद्रौपदेयाश्चमारिष ३९ हत्वात्वदीयंसुमहत्सैन्यंशंखांस्तथाऽधमन् ॥ तेसर्वेता
वकान्प्रेक्ष्यद्रवतोऽपिपराङ्मुखान् ४० अभ्यवर्ततसंरब्धान्वृषान्जित्वायथावृषाः ॥ सेनावशेषंतंदृष्ट्वातवसैन्यस्यपांडवः ४१ व्यवस्थितःसव्यसाचीचुक्रो
धबलवान्नृप ॥ धनंजयोरथानीकमभ्यवर्ततवीर्यवान् ४२ विश्रुतंत्रिषुलोकेषुव्याक्षिपद्गांडिवंधनुः ॥ ततएनान्शरव्रातैःसहसासमवाकिरत् ४३ तमसासंवृते
नाथनस्मार्किंचिद्व्यदृश्यत ॥ अंधकारीकृतेलोकेरजोभूतेमहीतले ४४ योधाःसर्वेमहाराजतावकाःप्राद्रवन्भयात् ॥ संभज्यमानेसैन्येतुकुरुराजोविशांपते ४५
परानभिमुखांश्चैवसुतस्तेसमुपाद्रवत् ॥ ततोदुर्योधनःसर्वानाजुहावाथपांडवान् ४६ युद्धायभरतश्रेष्ठदेवानिवपुराबलिः ॥ तएनमभिगर्जंतःसहिताःसमुपाद्र
वन् ४७ नानाशस्त्रभृतःक्रुद्धाभर्त्सयंतोमुहुर्मुहुः ॥ दुर्योधनोऽप्यसंभ्रांतस्तान्रणेनिशितैःशरैः ४८ तत्रावधीत्ततःक्रुद्धःशतशोऽथसहस्रशः ॥ तत्सैन्यंपांडवे
यानांयोधयामाससर्वतः ४९ तत्राद्भुतमपश्यामतवपुत्रस्यपौरुषम् ॥ यदेकःसहितान्सर्वान्रणेऽयुध्यतपांडवान् ५० ततोऽपश्यन्महात्मासस्वसैन्यंभृशदुः
खितम् ॥ ततोऽवस्थाप्यराजेंद्रकृतबुद्धिस्तवात्मजः ५१ हर्षयन्निवतान्योधानिदंवचनमब्रवीत् ॥ नतंदेशंप्रपश्यामियत्रयाताभयार्दिताः ५२ गतानांयत्रवै
मोक्षःपांडवात्किंगतेनवः ॥ अल्पंचबलमेतेषांकृष्णौचभृशविक्षतौ ५३ अद्यसर्वान्हनिष्यामिध्रुवोहिविजयोभवेत् ॥ विप्रयातांस्तुवोभिन्नान्पांडवाःकृतकि
ल्बिषान् ५४ अनुसृत्यवधिष्यंतिश्रेयान्नःसमरेवधः ॥ सुखंसांग्रामिकोमृत्युःक्षत्रधर्मेणयुध्यताम् ५५ मृतोदुःखंनजानीतेप्रेत्यचानंत्यमश्नुते ॥ शृणुध्वंक्षत्रियाः
सर्वेयावंतःस्थसमागताः ५६ यदाशूरंचभीरुंचमारयत्यंतकोयमः ॥ कोनमूढोनयुध्येतमादृशःक्षत्रियव्रतः ५७

५८ । ५९ । ६० ॥ इतिकर्णपर्वणिनीलकंठीयेभारतभावदीपे त्रिनवतितमोऽध्यायः ॥ ९३ ॥ दृष्ट्वेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६

द्विषतोभीमसेनस्यक्रुद्धस्यवशमेष्यथ ॥ पितामहैराचरितंनधर्मंहातुमर्हथ ५८ नह्यधर्मोऽस्तिपापीयान्क्षत्रियस्यपलायनात् ॥ नयुद्धधर्माच्छ्रेयोहिपंथाःस्व र्गस्यकौरवाः ॥ अचिरेणहतालोकान्सद्योयोधाःसमश्नुत ५९ ॥ संजयउवाच ॥ एवंब्रुवतिपुत्रेतेसैनिकाभृशविक्षताः ॥ अनवेक्ष्यैवतद्वाक्यंप्राद्रवन्सर्वतो दिशः ६० ॥ इतिश्रीमहाभारतेकर्णपर्वणि कौरवसैन्यपलायनेत्रिनवतितमोऽध्यायः ॥ ९३ ॥ ॥ ४ ॥ ॥ संजयउवाच ॥ दृष्ट्वातुसैन्यंपरिवृत्यमानंपु त्रेणतेमद्रपतिस्तदानीम् ॥ संत्रस्तरूपःपरिमूढचेतादुर्योधनंवाक्यमिदंबभाषे १ ॥ शल्यउवाच ॥ पश्येदमुग्रंनरवाजिनागैरायोधनंवीरशतैःसुपूर्णम् ॥ म हीधराभैःपतितैश्चनागैःसकृत्प्रभिन्नैःशरभिन्नदेहैः २ सविह्वलद्भिश्चगतासुभिश्चप्रध्वस्तवर्मायुधचर्मखड्गैः ॥ वज्रापविद्धैरिवचाचलोत्तमैर्विभिन्नपाषाणमहाद्रु मौषधैः ३ प्रविद्धघंटांकुशतोमरध्वजैःसहेमजालैरुधिरौघसंप्लुतैः ॥ शरावभिन्नैःपतितैस्तुरंगमैःश्वसद्भिरार्तैःक्षतजंवमद्भिः ४ दीनंस्तनद्भिःपरिवृत्तनेत्रैर्महींद शद्भिःकृपणंनदद्भिः ॥ तथाऽपविद्धैर्गजवाजियोधैर्बलापविद्धैरथवीरसंघैः ५ मंदासुभिश्चैवगतासुभिश्चनराश्वनागैश्चरथैश्चमर्दितैः ॥ मंदांशुभिश्चैवमहीमहाहवे नूनंयथावैतरणीविभाति ६ गजैर्निकृत्तैर्वरहस्तगात्रैरुद्वेपमानैःपतितैःपृथिव्याम् ॥ विशीर्णदंतैःक्षतजंवमद्भिःस्फुरद्भिरार्तैःकरुणंनदद्भिः ७ निकृत्तचक्रेषुयुगैः सयोक्त्रुभिःप्रविद्धतूणीरपताककेतुभिः ॥ सुवर्णजालावततैर्भृशाहतैर्महारथौघैर्जलदैरिवावृता ८ यशस्विभिर्नागरथाश्वयोधिभिःपदातिभिश्चाभिमुखैर्हतैःपरैः ॥ विशीर्णवर्माभरणांबरायुधैर्वृताप्रशांतैरिवतावकैर्मही ९ शरप्रहाराभिहतैर्महाबलैरवेक्षमाणैःपतितैःसहस्रशः ॥ दिवश्च्युतैर्भूरतिदीप्तिमद्भिर्नक्तंग्रहैर्द्यौरमलप्रदी प्तैः १० प्रनष्टसंज्ञैःपुनरुच्छ्वसद्भिर्महीबभूवानुगतैरिवार्चिभिः ॥ कर्णार्जुनाभ्यांशरभिन्नगात्रैर्हतैःप्रवीरैःकुरुसृंजयानाम् ११ शरास्तुकर्णार्जुनबाहुमुक्ताविदार्य नागाश्वमनुष्यदेहान् ॥ प्राणान्निरस्याशुमहींप्रतीयुर्महोरगावासमिवाभिनम्राः १२ हतैर्मनुष्याश्वगजैश्चसंख्येशरापविद्धैश्चरथैर्नरेंद्र ॥ धनंजयस्याधिरथे श्चमार्गणैरगम्यरूपावसुधाबभूव १३ रथैर्वरेषून्मथितैःसुकल्पैःसयोधशस्त्रैश्चवरायुधैर्ध्वजैः ॥ विशीर्णयोक्त्रैर्विनिकृत्यबंधनैर्निकृत्तचक्राक्षयुगात्रिवेणुभिः १४ विमुक्तशस्त्रैश्चतथाव्युपस्करैर्हतानुकर्षैर्विनिषंगबंधनैः ॥ प्रभग्ननीडैर्मणिहेमभूषितैःस्तृतामहीद्यौरिवशारदैर्घनैः १५ विकृष्यमाणैर्जवनैस्तुरंगमैर्हतेश्वरैराजर थैःसुकल्पितैः ॥ मनुष्यमातंगरथाश्वराशिभिर्द्रुतंव्रजंतोबहुधाविचूर्णिताः १६ सहेमपट्टाःपरिघापरश्वधाशिताश्चशूलामुसलानिमुद्गराः ॥ पेतुश्चखड्गा विमलाविकोशागदाश्चजांबूनदपट्टनद्धाः १७ चापानिरुक्मांगदभूषणानिशराश्चकार्तस्वरचित्रपुंखाः ॥ ऋष्टयश्चपीताविमलाविकोशाःप्रासाश्चदंडैःकनकाव भासैः १८ छत्राणिवालव्यजनानिशंखाश्छिन्नापविद्धाश्चस्रजोविचित्राः ॥ कुथाःपताकांबरभूषणानिकिरीटमालामुकुटाश्चशुभ्राः १९ प्रकीर्णकाविप्रकीर्णा श्चराजन्प्रवालमुक्तातरलाश्चहाराः ॥ आपीडकेयूरवरांगदानिग्रैवेयनिष्काःससुवर्णसूत्राः २०

१७ । १८ । १९ । २० । २१

२१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७

मण्युत्तमावज्रसुवर्णमुक्तारत्नानिचोच्चावचमंगलानि ॥ गात्राणिचात्यंतसुखोचितानिशिरांसिचेंदुप्रतिमाननानि २१ देहांश्चभोगांश्चपरिच्छदांश्चत्यक्त्वामनो
ज्ञानिसुखानिचैव ॥ स्वधर्मनिष्ठांमहतीमवाप्यव्याप्याशुलोकानयशसागतास्ते २२ निवर्तदुर्योधनयांतुसैनिकाव्रजस्वराजन्शिबिरायमानद ॥ दिवाकरोऽ
प्येषविलंबतेप्रभोपुनस्त्वमेवात्रनरेंद्रकारणम् २३ इत्येवमुक्त्वाविरराामशल्योदुर्योधनंशोकपरीतचेताः ॥ हाकर्णहाकर्णइतिब्रुवाणमार्तंविसंज्ञंभृशमश्रुनेत्रम् २४
तंद्रोणपुत्रप्रमुखानरेंद्राःसर्वेसमाश्वास्यमुहुःप्रयांति ॥ निरीक्षमाणामुहुरर्जुनस्यध्वजंमहांतंयशसाज्वलंतम् २५ नराश्वमातंगशरीरजेनरक्तेनसिक्तांचतथैवभू
मिम् ॥ रक्तांबरस्रक्तपनीययोगान्नारींप्रकाशामिवसर्वगम्याम् २६ प्रच्छन्नरूपांरुधिरेणराजन्रौद्रेमुहूर्तेऽतिविराजमाने ॥ नैवावतस्थुःकुरवःसमीक्ष्यप्रव्राजि
तादेवलोकायसर्वे २७ वधेनकर्णस्यतुदुःखितास्तेहाकर्णहाकर्णइतिब्रुवाणाः ॥ द्रुतंप्रयाताःशिबिराणिराजन्दिवाकरंरक्तमवेक्षमाणाः २८ गांडीवमुक्तैस्तुसुवर्ण
पुंखैःशिलाशितैःशोणितदिग्धवाजैः ॥ शरैश्चितांगोयुधिभातिकर्णोहतोऽपिसन्सूर्यइवांशुमाली २९ कर्णस्यदेहंरुधिरावसिक्तंभक्तानुकंपीभगवान्विवस्वान् ॥
स्पृष्ट्वांऽशुभिर्लोहितरक्तरूपःसिष्णासुरभ्येतिपरंसमुद्रम् ३० इतीवसंचिंत्यसुरर्षिसंघाःसंप्रस्थितायांतियथानिकेतनम् ॥ संचिंतयित्वाजनताविसस्रुर्यथासुखं
खंचमहीतलंच ३१ तदद्भुतंप्राणभृतांभयंकरंनिशाम्ययुद्धंकुरुवीरमुख्ययोः ॥ धनंजयस्याधिरथेश्चविस्मिताःप्रशंसमानाःप्रययुस्तदाजनाः ३२ शरसंकृत्तवर्मा
णंरुधिरोक्षितवाससम् ॥ गतासुमपिराधेयंनैवलक्ष्मीर्विमुंचति ३३ तप्तजांबूनदनिभंज्वलनार्कसमप्रभम् ॥ जीवंतमिवतंशूरंसर्वभूतानिमेनिरे ३४ हतस्यापि
महाराजसूतपुत्रस्यसंयुगे ॥ वित्रेसुःसर्वतोयोधाःसिंहस्येवेतरेमृगाः ३५ हतोऽपिपुरुषव्याघ्रजीववानिवलक्ष्यते ॥ नाभवद्विकृतिःकाचिद्धतस्यापिमहात्म
नः ३६ चारुवेषधरंवीरंचारुमौलिशिरोधरम् ॥ तन्मुखंसूतपुत्रस्यपूर्णचंद्रसमद्युति ३७ नानाभरणवान्राजंस्तप्तजांबूनदांगदः ॥ हतोवैकर्तनःशेतेपादपोऽ
कुरवानिव ३८ कनकोत्तमसंकाशोज्वलन्निवविभावसुः ॥ सशांतःपुरुषव्याघ्रपार्थसायकवारिणा ३९ यथाहिज्वलनोदीप्तोजलमासाद्यशाम्यति ॥ कर्णाग्निः
समरेतद्वत्पार्थमेघेनशामितः ४० आहृत्यचयशोदीप्तंसुयुद्धेनात्मनोभुवि ॥ विसृज्यशरवर्षाणिप्रताप्यचदिशोदश ४१ सपुत्रःसमरेकर्णःसशांतःपार्थतेजसा ॥
प्रताप्यपांडवान्सर्वान्पंचालांश्चास्त्रतेजसा ४२ वर्षित्वाशरवर्षेणप्रताप्यरिपुवाहिनीम् ॥ श्रीमानिवसहस्रांशुर्जगत्सर्वंप्रताप्यच ४३ हतोवैकर्तनःकर्णःसपुत्रः
सहवाहनः ॥ अर्थिनांपक्षिसंघस्यकल्पवृक्षोनिपातितः ४४ ददानीत्येवयोऽवोचन्ननास्तीत्यर्थितोऽर्थिभिः ॥ साद्भिःसदासत्पुरुषःसहतोद्वैरथेवृषः ४५ यस्यब्राह्म
णसात्सर्वंवित्तमासीन्महात्मनः ॥ नादेयंब्राह्मणेष्वासीद्यस्यस्वमपिजीवितम् ४६ सदास्त्रीणांप्रियोनित्यंदाताचैवमहारथः ॥ सवैपार्थास्त्रनिर्दग्धोगतःपरमिकांगतिम् ४७

यमाश्रित्याकरोद्वैरंपुत्रस्तेसगतोदिवम् ॥ आदायतवपुत्राणांजयाशांशर्मवर्मच ४८ हतेकर्णेसरितोनप्रसस्रुर्जगामचास्तंसविता दिवाकरः ॥ ग्रहश्चतिर्यग्ज्वलनार्कवर्णःसोमस्यपुत्रोऽभ्युदियायतिर्यक् ४९ नभःपफालेवननादचोर्वीववुश्चवाताःपरुषाःसुघोराः ॥ दिशोबभूवुर्ज्वलिताःसधूमामहार्णवाःसस्वनुश्चुक्षुभुश्च ५० सकाननाश्चाद्रिचयाश्चकंपिरेप्रविव्यथुर्भूतगणाश्चसर्वे ॥ बृहस्पतिःसंपरिवार्यरोहिणींबभूवचंद्रार्कसमोविशांपते ५१ हतेतुकर्णेविदिशोऽपिजज्वलुस्तमोवृताद्यौर्विचचालभूमिः ॥ पपातचोल्काज्वलनप्रकाशानिशाचराश्चाप्यभवन्प्रहृष्टाः ५२ शशिप्रकाशाननमर्जुनोयदाक्षुरेणकर्णस्यशिरोन्यपातयत् ॥ तदांऽतरिक्षेसहसैवशब्दोबभूवहाहेतिसुरैर्विमुक्तः ५३ सदेवगंधर्वमनुष्यपूजितंनिहत्यकर्णंरिपुमाहवेऽर्जुनः ॥ रराजराजन्परमेणवर्चसायथापुरावृत्रवधेशतक्रतुः ५४ ततोरथेनांबुदवृंदनादिनाशरन्नभोमध्यदिनाकरार्चिषा ॥ पताकिनाभीमनिनादकेतुनाहिमेंदुशंखस्फटिकावभासिना ५५ महेंद्रवाहप्रतिमेनतावुभौमहेंद्रवीर्यप्रतिमानपौरुषौ ॥ सुवर्णमुक्तामणिवज्रविद्रुमैरलंकृतावप्रतिमेनरंहसा ५६ नरोत्तमौकेशवपांडुनंदनौतदाहितावग्निदिवाकराविव ॥ रणाजिरेवीतभयौविरेजतुःसमानयानाविवविष्णुवासवौ ५७ ततोधनुर्ज्यातलबाणनिःस्वनैःप्रसह्यकृत्वाचरिपून्हतप्रभान् ॥ संछादयित्वातुकुरून्शरोत्तमैःकपिध्वजःपक्षिवरध्वजश्च ५८ हृष्टौततस्तावमितप्रभावौमनांस्यरीणामवदारयंतौ ॥ सुवर्णजालावततौमहास्वनौहिमावदातौपरिगृह्यपाणिभिः ॥ चुचुंबतुःशंखवरौनृणांवरौवरान्नाम्यांयुगपच्चदध्मतुः ५९ पांचजन्यस्यनिर्घोषोदेवदत्तस्यचोभयोः ॥ पृथिवींचांतरिक्षंचदिशश्चैवान्वनादयत् ६० वित्रस्ताश्चाभवन्सर्वेकौरवाराजसत्तम ॥ शंखशब्देनतेनाथमाधवस्यार्जुनस्यच ६१ तौशंखशब्देननिनादयंतौवनानिशैलान्सरितोगुहाश्च ॥ वित्रासयंतौतवपुत्रसेनांयुधिष्ठिरंनंदयतांवरिष्ठौ ६२ ततःप्रयाताःकुरवोजवेनश्रुत्वैवशंखस्वनमीर्यमाणम् ॥ विहायमद्राधिपतिंपतिंचदुर्योधनंभारतभारतानाम् ६३ महाहवेतंबहुरोचमानंधनंजयंभूतगणाःसमेताः ॥ तदाऽन्वमोदंतजनार्दनंचदिवाकरावभ्युदितौयथैव ६४ समाचितौकर्णशरैःपरंतपावुभौव्यभातांसमरेऽच्युतार्जुनौ ॥ तमोनिहत्याभ्युदितौयथामलौशशांकसूर्यौदिविरश्मिमालिनौ ६५ विहायतान्बाणगणानथागतौसुहृद्वृतावप्रतिमानविक्रमौ ॥ सुखंप्रविष्टौशिबिरंस्वमीश्वरौसदस्यहूताविवविष्णुवासवौ ६६ तौदेवगंधर्वमनुष्यचारणैर्महर्षिभिर्यक्षमहोरगैरपि ॥ जयाभिवृद्ध्यापरयाभिपूजितौहतेतुकर्णेपरमाहवेतदा ६७ यथानुरूपंप्रतिपूजितावुभौप्रशस्यमानौस्वकृतैर्गुणौघैः ॥ ननंदतुस्तौससुहृद्गणौतदाबलिंनियम्येवसुरेशकेशवौ ६८ ॥ इतिश्रीमहाभारतेकर्णपर्वणि रणभूमिवर्णनंनामचतुर्नवतितमोऽध्यायः ॥ ९४ ॥ छ ॥



॥ संजयउवाच ॥ हतेवैकर्तनेराजन्कुरवोभयपीडिताः ॥ वीक्षमाणादिशःसर्वाःपर्यापेतुःसहस्रशः १

२ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ ॥ इति कर्णपर्वणि नीलकंठीये भारतभावदीपे पंचनवतितमोऽध्यायः ॥ ९५ ॥ ॥ छ ॥ ॥

कर्णंतुनिहतंदृष्ट्वाशत्रुभिःपरमाहवे ॥ भीतादिशोव्यकीर्यंततावकाःक्षतविक्षताः २ ततोऽवहारंचक्रुस्तेयोधाःसर्वेसमंततः ॥ निवार्यमाणाश्चोद्विग्नास्तावका
भृशदुःखिताः ३ तेषांतन्मतमाज्ञायपुत्रोदुर्योधनस्तव ॥ अवहारंततश्चक्रेशल्यस्यानुमतेनृप ४ कृतवर्मारथैस्तूर्णंवृतोभारततावकैः ॥ नारायणावशेषैश्च
शिबिरायैवदुद्रुवे ५ गांधाराणांसहस्रेणशकुनिःपरिवारितः ॥ हतमाधिरथिंदृष्ट्वाशिबिरायैवदुद्रुवे ६ कृपःशारद्वतोराजन्नागानीकेनभारत ॥ महामेघनिभे
नाशुशिबिरायैवदुद्रुवे ७ अश्वत्थामाततःशूरोविनिःश्वस्यपुनःपुनः ॥ पांडवानांजयंदृष्ट्वाशिबिरायैवदुद्रुवे ८ संशप्तकावशिष्टेनबलेनमहतावृतः ॥ सुशर्माऽ
पिययौराजन्वीक्ष्यमाणोभयार्दितः ९ दुर्योधनोऽपिनृपतिर्हतसर्वस्वबांधवः ॥ ययौशोकसमाविष्टश्चिंतयन्विमनाबहु १० छिन्नध्वजेनशल्यस्तुरथेनरथिनां
वरः ॥ प्रययौशिबिरायैववीक्ष्यमाणोदिशोदश ११ ततोऽपरेसुबहवोभारतानांमहारथाः ॥ प्राद्रवंतभयत्रस्ताह्रियाऽऽविष्टाविचेतसः १२ असृक्क्षरंतःसो
द्विग्नावेपमानास्तथाऽऽतुराः ॥ कुरवोदुद्रुवःसर्वेदृष्ट्वाकर्णंनिपातितम् १३ प्रशंसंतोऽर्जुनंकेचित्केचित्कर्णंमहारथाः ॥ व्यद्रवंतदिशोभीताःकुरवःकुरुसत्तम
१४ तेषांयोधसहस्राणांतावकानांमहामृधे ॥ नासीत्तत्रपुमान्कश्चिद्योयुद्धायमनोदधे १५ हतेकर्णेमहाराजनिराशाःकुरवोऽभवन् ॥ जीवितेष्वपिराज्येषुदारे
षुचधनेषुच १६ तान्समानीयपुत्रस्तेयत्नेनमहताविभुः ॥ निवेशायमनोदध्रेदुःखशोकसमन्वितः १७ तस्याज्ञांशिरसायोधाःपरिगृह्यविशांपते ॥ विवर्णवद
नाराजन्न्यविशंतमहारथाः १८ ॥ इतिश्रीमहाभारते कर्णपर्वणिशिबिरप्रयाणे पंचनवतितमोऽध्यायः ॥ ९५ ॥ ॥ छ ॥ ॥ संजयउवाच ॥ तथानिपातिते
कर्णेपरसैन्येचविद्रुते ॥ आश्लिष्यपार्थंदाशार्होहर्षाद्वचनमब्रवीत् १ हतोवज्रभृताद्वृत्रस्त्वयाकर्णोधनंजय ॥ वृत्रकर्णवधंघोरंकथयिष्यंतिमानवाः २ वज्रेणनि
हतोवृत्रःसंयुगेभूरितेजसा ॥ त्वयातुनिहतःकर्णोधनुषानिशितैःशरैः ३ तमिमंविक्रमंलोकेप्रथितंतेयशस्करम् ॥ निवेदयावःकौंतेयकुरुराजस्यधीमतः ४ वधं
कर्णस्यसंग्रामेदीर्घकालचिकीर्षितम् ॥ निवेद्यधर्मराजायत्वमानृण्यंगमिष्यसि ५ वर्तमानेमहायुद्धेतवकर्णस्यचोभयोः ॥ द्रष्टुमायोधनंपूर्वमागतोधर्मनंदनः
६ भृशंतुगाढविद्धत्वान्नाशकत्स्थातुमाहवे ॥ ततःसशिबिरंगत्वास्थितवान्पुरुषर्षभः ७ तथेत्युक्तःकेशवस्तुपार्थेनयदुपुंगवः ॥ पर्यावर्तयदव्यग्रोरथंरथवरस्य
तम् ८ एवमुक्त्वाऽर्जुनंकृष्णःसैनिकानिदमब्रवीत् ॥ परानभिमुखायत्तास्तिष्ठध्वंभद्रमस्तुवः ९ धृष्टद्युम्नंयुधामन्युंमाद्रीपुत्रौवृकोदरम् ॥ युयुधानंचगोविंद
इदंवचनमब्रवीत् १० यावदावेद्यतेराज्ञेहतःकर्णोऽर्जुनेनवै ॥ तावद्भवद्भिर्यत्तैस्तुभवितव्यंनराधिपैः ११ सतैःशूरैरनुज्ञातोययौराजनिवेशनम् ॥ पार्थमादा
यगोविंदोददर्शचयुधिष्ठिरम् १२

तथेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२

शयानंराजशार्दूलंकांचनेशयनोत्तमे ॥ अगृह्णीतांचमुदितौचरणौपार्थिवस्यतौ १३ तयोःप्रहर्षमालक्ष्यहर्षादश्रूण्यवर्तयत ॥ राधेयंनिहतंमत्वासमुत्तस्थौयु
धिष्ठिरः १४ उवाचचमहाबाहुःपुनःपुनररिंदमः ॥ वासुदेवार्जुनौप्रेम्णाताबुभौपरिषस्वजे १५ ततस्तैतद्यथावृत्तंवासुदेवःसहार्जुनः ॥ कथयामासकर्णस्यनि
धनंयदुपुंगवः १६ ईषदुत्स्मयमानस्तुकृष्णोराजानमब्रवीत् ॥ युधिष्ठिरंहतामित्रंकृतांजलिरथाच्युतः १७ दिष्ट्यागांडीवधन्वाचपांडवश्चवृकोदरः ॥ त्वं
चापिकुशलीराजन्माद्रीपुत्रौचपांडवौ १८ मुक्तावीरक्षयादस्मात्संग्रामाल्लोमहर्षणात् ॥ क्षिप्रमुत्तरकालानिकुरुकार्याणिपांडव १९ हतोवैकर्तनोराजन्सूतपु
त्रोमहारथः ॥ दिष्ट्याजयसिराजेंद्रदिष्ट्यावर्धसिभारत २० यस्तुद्यूतजितांकृष्णांप्राहसत्पुरुषाधमः ॥ तस्याद्यसूतपुत्रस्यभूमिःपिबतिशोणितम् २१ शेते
ऽसौशरपूर्णांगःशत्रुस्तेकुरुपुंगव ॥ तंपश्यपुरुषव्याघ्रविभिन्नंबहुभिःशरैः २२ हतामित्रामिमामुर्वीमनुशाधिमहाभुज ॥ यत्तोभूत्वासहास्माभिर्भुंक्ष्वभोगांश्चपु
ष्कलान् २३ ॥ संजयउवाच ॥ इतिश्रुत्वावचस्तस्यकेशवस्यमहात्मनः ॥ धर्मपुत्रःप्रहृष्टात्मादाशार्हंवाक्यमब्रवीत् २४ दिष्ट्यादिष्ट्येतिराजेंद्रवाक्यंचेदमु
वाचह ॥ नैतच्चित्रंमहाबाहोत्वयिदेवकिनंदन २५ त्वयासारथिनापार्थोयत्नवानहनच्चतम् ॥ नतच्चित्रंमहाबाहोयुष्मद्बुद्धिप्रसादजम् २६ प्रगृह्यचकुरुश्रेष्ठसांग
दंदक्षिणंभुजम् ॥ उवाचधर्मभृत्पार्थउभौतौकेशवार्जुनौ २७ नरनारायणौदेवौकथितौनारदेनमे ॥ धर्मात्मानौमहात्मानौपुराणावृषिसत्तमौ २८ असकृच्चापि
मेधावीकृष्णद्वैपायनोमम ॥ कथामेतांमहाभागकथयामासतत्त्ववित् २९ तवकृष्णप्रसादेनपांडवोऽयंधनंजयः ॥ जिगायाभिमुखःशत्रून्नचासीद्विमुखःक्वचित्
३० जयश्चैवध्रुवोऽस्माकंनत्वस्माकंपराजयः ॥ यदात्वंयुधिपार्थस्यसारथ्यमुपजग्मिवान् ३१ भीष्मोद्रोणश्चकर्णश्चमहात्मागौतमःकृपः ॥ अन्येचबहवःशूराये
चतेषांपदानुगाः ३२ त्वद्बुद्ध्यानिहतेकर्णेहतागोविंदसर्वथा ॥ इत्युक्त्वाधर्मराजस्तुरथंहेमविभूषितम् ३३ श्वेतवर्णैर्हयैर्युक्तंकालवालैर्मनोजवैः ॥ आस्थायपुरुष
व्याघ्रःस्वबलेनाभिसंवृतः ३४ प्रययौसमहाबाहुर्द्रष्टुमायोधनंतदा ॥ कृष्णार्जुनाभ्यांवीराभ्यामनुमंत्र्यततःप्रियं ३५ अभाषमाणस्तौवीराबुभौमाधवफाल्गुनौ ॥
सददर्शरणेकर्णंशयानंपुरुषर्षभम् ३६ यथाकदंबकुसुमंकेसरैःसर्वतोवृतम् ॥ चितंशरशतैःकर्णंधर्मराजोददर्शसः ३७ गंधतैलावसिक्ताभिःकांचनीभिःसहस्रशः॥
दीपिकाभिःकृतोद्योतंपश्यंतेवैवृषंतदा ३८ संछिन्नभिन्नकवचंबाणैश्चविदलीकृतम् ॥ सपुत्रंनिहतंदृष्ट्वाकर्णंराजायुधिष्ठिरः ३९ संजातप्रत्ययोऽतीववीक्ष्यचैवं
पुनःपुनः ॥ प्रशशंसनरव्याघ्राबुभौमाधवपांडवौ ४० अद्यराजास्मिगोविंदपृथिव्यांभ्रातृभिःसह ॥ त्वयानाथेनवीरेणविदुषापरिपालितः ४१ हतंश्रुत्वानरव्या
घ्रंराधेयमतिमानिनम् ॥ निराशोऽद्यदुरात्माऽसौधार्तराष्ट्रोभविष्यति ४२ जीवितेचैवराज्येचहतेराधात्मजेरणे ॥ त्वत्प्रसादाद्वयंचैवकृतार्थाःपुरुषर्षभ ४३

४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ ॥ इतिश्रीमहाभारतेकर्णपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥

दिष्ट्याजयसिगोविंददिष्ट्याशत्रुर्निपातितः ॥ दिष्ट्यागांडीवधन्वाचविजयीपांडुनंदनः ४४ त्रयोदशसमास्तीर्णाजागरेणसुदुःखिताः ॥ स्वप्स्यामोऽद्यसुखंरात्रौत्वत्प्रसादान्महाभुज ४५ एवंसबहुशोराजाप्रशशंसजनार्दनम् ॥ अर्जुनंचकुरुश्रेष्ठंधर्मराजोयुधिष्ठिरः ४६ ॥ संजयउवाच ॥ दृष्ट्वाचनिहतंकर्णंसपुत्रंपार्थसायकैः ॥ पुनर्जातमिवात्मानंमेनेचसमहीपतिः ४७ समेत्यचमहाराजकुंतीपुत्रंयुधिष्ठिरम् ॥ हर्षयंतिस्मराजानंहर्षयुक्तामहारथाः ४८ नकुलःसहदेवश्चपांडवश्चवृकोदरः ॥ सात्यकिश्चमहाराजवृष्णीनांप्रवरोरथः ४९ धृष्टद्युम्नःशिखंडीचपांडुपंचालसृंजयाः ॥ पूजयंतिस्मकौंतेयंनिहतेसूतनंदने ५० तेवर्धयित्वानृपतिंधर्मात्मानंयुधिष्ठिरम् ॥ जितकाशिनोलब्धलक्ष्यायुद्धशौंडाःप्रहारिणः ५१ स्तुवंतस्तवयुक्ताभिर्वाग्भिःकृष्णौपरंतपौ ॥ जग्मुःस्वशिबिरायैवमुदायुक्तामहारथाः ५२ एवमेषक्षयोवृत्तःसुमहाँल्लोमहर्षणः ॥ तवदुर्मंत्रितेराजन्किमर्थमनुशोचसि ५३ ॥ वैशंपायनउवाच ॥ श्रुत्वैतदप्रियंराजाधृतराष्ट्रोंऽबिकासुतः ॥ पपातभूमौनिश्चेष्टश्छिन्नमूलइवद्रुमः ५४ तथासापतितादेवीगांधारीदीर्घदर्शिनी ॥ शुशोचबहुलालापैःकर्णस्यनिधनंयुधि ५५ तांपर्यगृह्णाद्विदुरोनृपतिंसंजयस्तथा ॥ पर्याश्वासयतांचैवतावुभावेवभूमिपम् ५६ तथैवोत्थापयामासुर्गांधारींकुरुयोषितः ॥ सदैवपरमंमत्वाभवितव्यंचपार्थिवः ५७ परांपीडांसमाश्रित्यनष्टचित्तोमहातपाः ॥ चिंताशोकपरीतात्मानजज्ञेमोहपीडितः ॥ ससमाश्वासितोराजातूष्णीमासीद्विचेतनः ५८ इमंमहायुद्धमखंमहात्मनोर्धनंजयस्याधिरथेश्चयःपठेत् ॥ ससम्यगिष्टस्यमखस्ययत्फलंतदाप्नुयात्संश्रवणाच्चभारत ५९ मखोहिविष्णुर्भगवान्सनातनोवदंतितद्वाग्न्यनिलेंदुभानवः ॥ अतोऽनसूयुःशृणुयात्पठेच्चयःससर्वलोकानुचरःसुखीभवेत् ६० तांसर्वदाभक्तिमुपागतानराःपठंतिपुण्यांवरसंहितामिमाम् ॥ धनेनधान्येनयशसाचमानुषानंदंतितेनात्रविचारणास्ति ६१ अतोऽनसूयुःशृणुयात्सदातुवैनरःससर्वाणिसुखानिचाप्नुयात् ॥ विष्णुःस्वयंभूर्भगवान्भवश्चतुष्यंतितेतस्यनरोत्तमस्य ६२ वेदावाप्तिर्ब्राह्मणस्येहदृष्टारणेबलंक्षत्रियाणांजयोयुधि ॥ धनज्येष्ठाश्चापिभवंतिवैश्याःशूद्राऽऽरोग्यंप्राप्नुवंतीहसर्वे ६३ तथैवविष्णुर्भगवान्सनातनःसचात्रदेवःपरिकीर्त्यतेयतः ॥ ततःसकामाल्लँभतेसुखीनरोमहामुनेस्तस्यवचोऽर्चितंयथा ६४ कपिलानांसवत्सानांवर्षमेकंनिरंतरम् ॥ योदद्यात्सुकृतंतद्विश्रवणात्कर्णपर्वणः ६५ ॥ इतिश्रीमहाभारतेशतसाहस्र्यांवैयासिक्यांकर्णपर्वणियुधिष्ठिरहर्षेषण्णवतितमोऽध्यायः ॥ ९६ ॥ ॥ कर्णपर्वसमाप्तम् ॥ ॥ ॥ ८ ॥

अतःपरंशल्यपर्वभविष्यति तस्यायमाद्य श्लोकः ॥ जनमेजयउवाच ॥ एवंनिपातितेकर्णेसमरेसव्यसाचिना ॥ अल्पावशिष्टाःकुरवःकिमकुर्वतवैद्विज ॥ १ ॥

॥ अत्रादिपर्वोक्ताध्यायसंख्यावैषम्यंच लिपिकरप्रमादादेवबोध्यम् ॥

॥ इति श्रीमहाभारते कर्णपर्व समाप्तम् ॥

॥ श्रीगणेशायनमः ॥ उक्तासंगतिःकर्णपर्वादौ एवंनिपातितइति उद्यमंपलायनंत्राचक्रुरितिप्रष्टुरभिप्रायः अल्पाःअवशिष्टाइतिच्छेदः अत्राकारलोपआर्षः १ तत्राद्वितीयमेवमस्त्वाह उदीर्यमा णमिति पांडवबलस्योत्कर्षंदृष्ट्वाकिंप्रापद्यतपलायनमेवास्यश्रेयइतिभावः २ । ३ कृत्स्नसैन्यवधेनदुर्योधनःपलायनमेवकृतवानित्याह ततःकर्णेहतेइत्यादिना प्राङ्मुखःप्राद्रवद्भयादित्यंते

॥ श्रीगणेशायनमः ॥ ॥ श्रीवेदव्यासायनमः ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींचैवततोजयमुदीरयेत् ॥ १ ॥ जनमेजयउवाच ॥ एवंनिपातितेकर्णेसमरेसव्यसाचिना ॥ अल्पाऽवशिष्टाःकुरवःकिमकुर्वतवैद्विज १ उदीर्यमाणंचबलंदृष्ट्वाराजासुयोधनः ॥ पांडवैःप्राप्तकालंचकिंप्रापद्यतकौरवः २ एतदिच्छाम्यहंश्रोतुंतदाचक्ष्वद्विजोत्तम ॥ नहितृप्यामिपूर्वेषांशृण्वानश्चरितंमहत् ३ ॥ वैशंपायनउवाच ॥ ततःकर्णेहतेराजन्धार्त्तराष्ट्रःसुयोधनः ॥ भृशंशोकार्णवेमग्नोनिराशःसर्वतोऽभवत् ४ हाकर्णहाकर्णइतिशोचमानःपुनःपुनः ॥ कृच्छ्रात्स्वशिबिरंप्रायाद्धतशेषैर्नृपैःसह ५ ससमाश्वास्यमानोऽपिहेतुभिःशास्त्रनिश्चितैः ॥ राजभिर्नालभच्छर्मसूतपुत्रवधंस्मरन् ६ सदैवंबलवन्मत्वाभवितव्यंचपार्थिवः ॥ संग्रामेनिश्चयंकृत्वापुनर्युद्धायनिर्ययौ ७ शल्यंसेनापतिंकृत्वाविधिवद्राजपुंगवः ॥ रणायनिर्ययौराजाहतशेषैर्नृपैःसह ८ ततःसुतुमुलंयुद्धंकुरुपांडवसेनयोः ॥ बभूवभरतश्रेष्ठदेवासुररणोपमम् ९ ततःशल्योमहाराजकृत्वाकदनमाहवे ॥ ससैन्योऽथसमध्याह्नेधर्मराजेनघातितः १० ततोदुर्योधनोराजाहतबंधूरणाजिरात् ॥ अपसृत्यह्रदंघोरंविवेशरिपुजाद्भयात् ११ अथापराह्णेतस्याह्नःपरिवार्यसुयोधनः ॥ ह्रदादाहूययुद्धायभीमसेनेनपातितः १२ तस्मिन्हतेमहेष्वासेहतशिष्टास्त्रयोरथाः ॥ संरंभान्निशिराजेंद्रजघ्नुःपांचालसोमकान् १३ ततःपूर्वाह्णसमयेशिबिरादेत्यसंजयः ॥ प्रविवेशपुरींदीनोदुःखशोकसमन्वितः १४ सप्रविश्यपुरींसूतोभुजावुच्छ्रित्यदुःखितः ॥ वेपमानस्ततोराज्ञःप्रविवेशनिकेतनम् १५ रुरोदचनरव्याघ्रहाराजन्निितिदुःखितः ॥ अहोबतविनष्टाःस्मनिधनेनमहात्मनः १६ विधिश्चबलवानत्रपौरुषंतुनिरर्थकम् ॥ शक्रतुल्यबलाःसर्वेयथाऽवध्यंतपांडवैः १७ दृष्ट्वैवचपुरेराजन्जनःसर्वःससंजयम् ॥ क्लेशेनमहतायुक्तंसर्वतोराजसत्तम १८ रुरोदचभृशोद्विग्नोहाराजन्निितिविस्वरम् ॥ आकुमारंनरव्याघ्रतत्रतत्रसमंततः १९ आर्तनादंततश्चक्रेश्रुत्वाविनिहतंनृपम् ॥ धावतश्चाप्यपश्यामस्तत्रतान्पुरुषर्षभान् २० नष्टचित्तानिवोन्मत्तान्शोकेनभृशपीडितान् ॥ तथासविह्वलःसूतःप्रविश्यनृपतिक्षयम् २१ ददर्शनृपतिश्रेष्ठंप्रज्ञाचक्षुषमीश्वरम् ॥ तथाचासीनमनघंसमंतात्परिवारितम् २२ स्नुषाभिर्भरतश्रेष्ठगांधार्याविदुरेणच ॥ तथान्यैश्चसुहृद्भिश्चज्ञातिभिश्चहितैषिभिः २३ तमेवचार्थंध्यायंतंकर्णस्यनिधनंप्रति ॥ रुदन्नेवाब्रवीद्वाक्यंराजानंजनमेजय २४ नातिहृष्टमनाःसूतोवाक्यसंदिग्धयागिरा ॥ संजयोऽहंनरव्याघ्रनमस्तेभरतर्षभ २५ मद्राधिपोहतःशल्यःशकुनिःसौबलस्तथा ॥ उलूकःपुरुषव्याघ्रकैतव्योदृढविक्रमः २६

नग्रंथेन ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ एवंसर्वान्घातयित्वापलायनेदुर्यशोलब्ध्वाऽपिमरणमेवप्रापेत्याह अथेति अपराण्हेअहरर्धे १२ । १३ ततःरात्रिवृत्तदर्शनानंतरं १४ । १५ १६ । १७ जनःरुरोदेतिद्वयोरन्वयः १८ । १९ अपश्यामः अडागमोविसर्गोवाआर्षः वैशंपायनवाक्यमिदम् २० । २१ । २२ । २३ । २४ वाक्येनवचनेनसंदिग्धयावाक्यसंदिग्धया २५ । २६

संशप्तकाहताःसर्वेकांबोजाश्वशकैःसह ॥ म्लेच्छाश्वपार्वतीयाश्वयवनाविनिपातिताः २७ प्राच्याहतामहाराजदाक्षिणात्याश्वसर्वशः ॥ उदीच्याश्वहताःसर्वेप्रतीच्याश्वनरोत्तमाः २८ राजानोराजपुत्राश्वसर्वेतेनिहतान्नृप ॥ दुर्योधनोहतोराजायथोक्तंपांडवेनह २९ भग्नसक्थोमहाराजशेतेपांसुषुरूषितः ॥ धृष्टद्युम्नोमहाराजशिखंडीचापराजितः ३० उत्तमौजायुधामन्युस्तथाराजन्प्रभद्रकः ॥ पंचालाश्वनरव्याघ्रचेदयश्वनिषूदिताः ३१ तवपुत्राहताःसर्वेद्रौपदेयाश्वभारत ॥ कर्णपुत्रोहतःशूरोवृषसेनःप्रतापवान् ३२ नराविनिहताःसर्वेगजाश्वविनिपातिताः ॥ रथिनश्वनरव्याघ्रहयाश्वनिहतायुधि ३३ किंचिच्छेषंचशिबिरंतावकानांकृतंप्रभो ॥ पांडवानांकुरूणांचसमासाद्यपरस्परम् ३४ प्रायःस्त्रीशेषमभवज्जगत्कालेनमोहितम् ॥ सप्तपांडवतःशेषाधार्तराष्ट्रास्त्रयोरथाः ३५ तेचैवभ्रातरःपंचवासुदेवोऽथसात्यकिः ॥ कृपश्चकृतवर्माचद्रौणिश्चजयतांवरः ३६ तथाऽप्येतेमहाराजरथिनोनृपसत्तम ॥ अक्षौहिणीनांसर्वासांसमेतानांजनेश्वर ३७ एतेशेषामहाराजसर्वेऽन्येनिधनंगताः ॥ कालेननिहतंसर्वंजगद्वैभरतर्षभ ३८ दुर्योधनंवैपुरतःकृत्वावैरंचभारत ॥ वैशंपायनउवाच ॥ एतच्छ्रुत्वावचःक्रूरंधृतराष्ट्रोजनेश्वरः ३९ निपपातसराजेंद्रोगतसत्वोमहीतले ॥ तस्मिन्निपतितेभूमौविदुरोऽपिमहायशाः ४० निपपातमहाराजशोकव्यसनकर्शितः ॥ गांधारीचनृपश्रेष्ठसर्वाश्वकुरुयोषितः ४१ पतिताःसहसाभूमौश्रुत्वाक्रूरंवचस्तदा ॥ निःसंज्ञंपतितंभूमौतदाऽऽसीद्राजमंडलम् ४२ प्रलापयुक्तंमहतिचित्रन्यस्तंपटेयथा ॥ कृच्छ्रेणतुततोराजाधृतराष्ट्रोमहीपतिः ४३ शनैरलभतप्राणान्पुत्रव्यसनकर्शितः ॥ लब्ध्वातुसनृपःसंज्ञांवेपमानःसुदुःखितः ४४ उदीक्ष्यचदिशःसर्वाःक्षत्तारंवाक्यमब्रवीत् ॥ विद्वन्क्षत्तर्महाप्राज्ञत्वंगतिर्भरतर्षभ ४५ ममानाथस्यसुभृशंपुत्रैर्हीनस्यसर्वशः ॥ एवमुक्त्वाततोभूतोविसंज्ञोनिपपातह ४६ तंतथापतितंदृष्ट्वाबांधवायेऽस्यवैच ॥ शीतैस्तेसिषिचुस्तोयैर्विव्यजुर्व्यजनैरपि ४७ सतुदीर्घेणकालेनप्रत्याश्वस्तोनराधिपः ॥ तूष्णींदध्यौमहीपालःपुत्रव्यसनकर्शितः ४८ निःश्वसन्जिह्मगइवकुंभक्षिप्तोविशांपते ॥ संजयोप्यरुदत्तत्रदृष्ट्वाराजानमातुरम् ४९ तथासर्वाःस्त्रियश्चैवगांधारीचयशस्विनी ॥ ततोदीर्घेणकालेनविदुरंवाक्यमब्रवीत् ५० धृतराष्ट्रोनरश्रेष्ठमुह्यमानोमुहुर्मुहुः ॥ गच्छंतुयोषितःसर्वागांधारीचयशस्विनी ५१ तथेमेसुहृदःसर्वेभ्राम्यतेमेमनोभृशम् ॥ एवमुक्तस्ततःक्षत्ताताःस्त्रियोभरतर्षभ ५२ विसर्जयामासशनैर्वेपमानःपुनःपुनः ॥ निश्चक्रमुस्ततःसर्वाःस्त्रियोभरतसत्तम ५३ सुहृदश्चतथासर्वेदृष्ट्वाराजानमातुरम् ॥ ततोनरपतिंतूर्णंलब्धसंज्ञंपरंतप ५४ अवेक्ष्यसंजयोदीनंरोदमानंभृशातुरम् ॥ प्रांजलिर्निःश्वसंतंचतंनरेंद्रंमुहुर्मुहुः ॥ समाश्वासयतक्षत्तावचसामधुरेणच ५५ ॥ ॥ इति श्रीमहाभारतेशल्यपर्वणिधृतराष्ट्रप्रमोहेप्रथमोऽध्यायः ॥ १ ॥

५१ । ५२ । ५३ । ५४ । ५५ ॥ इतिशल्यपर्वणिनीलकंठीयेभारतभावदीपेप्रथमोऽध्यायः ॥ १ ॥ ॥ ७ ॥

विसृष्टास्त्विति १ सधूममिवअत्युष्णमित्यर्थः २ पांडवाः क्षेमिणइत्येकंदुःखं स्वीयाश्चसर्वेनिहताइत्यपरं तेद्वेआहद्वाभ्यां अहोइति ३ । ४ वयःएतावत्कालपर्यंतंप्रौढत्वम् ५ । ६ । ७ । ८ । ९

वैशंपायनउवाच ॥ विसृष्टास्त्वथनारीषुधृतराष्ट्रोंऽबिकासुतः ॥ विललापमहाराजदुःखाद्दुःखांतरंगतः १ सधूममिवनिःश्वस्यकरौधुन्वन्पुनःपुनः ॥ विचिंत्यचमहाराजवचनंचेदमब्रवीत् २ ॥ धृतराष्ट्रउवाच ॥ अहोबतमहद्दुःखंयदहंपांडवान्रणे ॥ क्षेमिणश्चाव्ययांश्चैवत्वत्तःसूतशृणोमिवै ३ वज्रसारमयंनूनंहृदयंसुदृढंमम॥ यच्छ्रुत्वानिहतान्पुत्रान्दीर्यतेनसहस्रधा ४ चिंतयित्वावयस्तेषांबालक्रीडांचसंजय ॥ हतान्पुत्रानशेषेणदीर्यतेमेभृशंमनः ५ अनेत्रत्वाद्यदेतेषांनमेरूपनिदर्शनम् ॥ पुत्रस्नेहकृताप्रीतिर्नित्यमेतेषुधारिता ६ बालभावमतिक्रम्ययौवनस्थांश्चतानहम् ॥ मध्यप्राप्तांस्तथाश्रुत्वाहृष्टआसंतदाऽनघ ७ तानद्यनिहतान्श्रुत्वाहतैश्वर्यान्हतौजसः ॥ नलभेयंक्वचिच्छांतिंपुत्राधिभिरभिद्रुतः ८ एह्येहिपुत्रराजेंद्रममानाथस्यसांप्रतम् ॥ त्वयाहीनोमहाबाहोकांनुयास्याम्यहंगतिम् ९ कथंत्वंपृथिवीपालांस्त्यक्त्वातातसमागतान् ॥ शेषेविनिहतोभूमौप्राकृतःकुनृपोयथा १० गतिर्भूत्वामहाराजज्ञातीनांसुहृदांतथा ॥ अंधंवृद्धंचमांवीरविहायक्वनुयास्यसि ११ साकृपासाचतेप्रीतिःसाचराजन्सुमानिता ॥ कथंविनिहतःपार्थैःसंयुगेष्वपराजितः १२ कोनुमामुत्थितंवीरताततातेतिवक्ष्यति ॥ महाराजेतिसततंलोकनाथेतिचासकृत् १३ परिष्वज्यचमांकंठेस्नेहेनक्लिन्नलोचनः ॥ अनुशाधीतिकौरव्यतत्साधुवदमेवचः १४ ननुनामाहमश्रौषंवचनंतवपुत्रक ॥ भूयसीममपृथ्वीयंयथापार्थस्यनोतथा १५ भगदत्तःकृपःशल्यआवंत्योऽथजयद्रथः ॥ भूरिश्रवाःसोमदत्तोमहाराजश्चबाह्लिकः १६ अश्वत्थामाचभोजश्चमागधश्चमहाबलः ॥ बृहद्बलश्चकाशीशःशकुनिश्चापिसौबलः १७ म्लेच्छाश्चशतसाहस्राःशकाश्चयवनैःसह ॥ सुदक्षिणश्चकांबोजस्त्रिगर्त्ताधिपतिस्तथा १८ भीष्मःपितामहश्चैवभारद्वाजोऽथगौतमः ॥ श्रुतायुश्चायुतायुश्चशतायुश्चापिवीर्यवान् १९ जलसंधोऽथार्ष्यशृंगीराक्षसश्चाप्यलायुधः ॥ अलंबुषोमहाबाहुःसुबाहुश्चमहारथः २० एतेचान्येचबहवोराजानोराजसत्तम ॥ मदर्थमुद्यताःसर्वेप्राणांस्त्यक्त्वाधनानिच २१ तेषांमध्येस्थितोयुद्धेभ्रातृभिःपरिवारितः ॥ योधयिष्याम्यहंपार्थान्पंचालांश्चैवसर्वशः २२ चेदींश्चनृपशार्दूलद्रौपदेयांश्चसंयुगे ॥ सात्यकिंकुंतिभोजंचराक्षसंचघटोत्कचम् २३ एकोऽप्येषांमहाराजसमर्थःसन्निवारणे ॥ समरेपांडवेयानांसंक्रुद्धोह्यभिधावताम् २४ किंपुनःसहितावीराःकृतवैराश्चपांडवैः ॥ अथवासर्वएवैतेपांडवस्यानुयायिभिः २५ योत्स्यंतेसहराजेंद्रहनिष्यंतिचतान्मृधे ॥ कर्णएकोमयासार्द्धंनिहनिष्यतिपांडवान् २६ ततोनृपतयोवीराःस्थास्यंतिममशासने ॥ यश्चतेषांप्रणेतावैवासुदेवोमहाबलः २७ नससंनह्यतेराजन्नितिमामब्रवीद्वचः ॥ तस्याथवदतःसूतबहुशोममसन्निधौ २८ शक्तितोह्यनुपश्यामिनिहतान्पांडवान्रणे ॥ तेषांमध्येस्थितायत्रहन्यंतेममपुत्रकाः २९

प्राकृतोनीचः कुनृपःकुत्सितान्नरान्पातीतिनीचपरिजनइत्यर्थः १० । ११ । १२ । १३ तत्प्रागुक्तंस.धुनथास्याचथामेमाप्रतिवदपुनरितिशेषः १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९

व्यायच्छमानाःसमरेकिमन्यद्भागधेयतः ॥ भीष्मश्चनिहतोयत्रलोकनाथःप्रतापवान् ३० शिखंडिनंसमासाद्यमृगेंद्रइवजंबुकम् ॥ द्रोणश्चब्राह्मणोयत्रसर्वशस्त्रास्त्र
पारगः ३१ निहतःपांडवैःसंख्येकिमन्यद्भागधेयतः ॥ कर्णश्चनिहतःसंख्येदिव्यास्त्रज्ञोमहाबलः ३२ भूरिश्रवाहतोयत्रसोमदत्तश्चसंयुगे ॥ बाह्लिकश्चमहाराजकिं
मन्यद्भागधेयतः ३३ भगदत्तोहतोयत्रगजयुद्धविशारदः ॥ जयद्रथश्चनिहतःकिमन्यद्भागधेयतः ३४ सुदक्षिणोहतोयत्रजलसंधश्चपौरवः ॥ श्रुतायुश्चायुतायुश्च
किमन्यद्भागधेयतः ३५ महाबलस्तथापांड्यःसर्वशस्त्रभृतांवरः ॥ निहतःपांडवैःसंख्येकिमन्यद्भागधेयतः ३६ बृहद्बलोहतोयत्रमागधश्चमहाबलः ॥ उग्रायुध
श्चविक्रांतःप्रतिमानंधनुष्मताम् ३७ आवंत्योनिहतोयत्रत्रैगर्तश्चजनाधिपः ॥ संशप्तकाश्चनिहताःकिमन्यद्भागधेयतः ३८ अलंबुषस्तथाराजन्राक्षसश्चाप्यला
युधः ॥ आर्ष्यशृंगिश्चनिहतःकिमन्यद्भागधेयतः ३९ नारायणाहतायत्रगोपालायुद्धदुर्मदाः ॥ म्लेच्छाश्चबहुसाहस्राःकिमन्यद्भागधेयतः ४० शकुनिःसौबलो
यत्रकैतव्यश्चमहाबलः ॥ निहतःसबलोवीरःकिमन्यद्भागधेयतः ४१ एतेचान्येचबहवःकृतास्त्रायुद्धदुर्मदाः ॥ राजानोराजपुत्राश्चशूराःपरिघबाहवः ४२ निह
ताबहवोयत्रकिमन्यद्भागधेयतः ॥ यत्रशूरामहेष्वासाःकृतास्त्रायुद्धदुर्मदाः ४३ बहवोनिहताःसूतमहेंद्रसमविक्रमाः ॥ नानादेशसमावृत्ताःक्षत्रियायत्रसंजय ४४
निहताःसमरेसर्वेकिमन्यद्भागधेयतः ॥ पुत्राश्चमेविनिहताःपौत्राश्चैवमहाबलाः ४५ वयस्याभ्रातरश्चैवकिमन्यद्भागधेयतः ॥ भागधेयसमायुक्तोध्रुवमुत्पद्यतेनरः
४६ यस्तुभाग्यसमायुक्तःसशुभंप्राप्नुयान्नरः ॥ अहंवियुक्तस्तैर्भाग्यैःपुत्रैश्चैवेहसंजय ४७ कथमद्यभविष्यामिवृद्धःशत्रुवशंगतः ॥ नान्यदत्रपरंमन्येवनवासादृतेप्र
भो ४८ सोऽहंवनंगमिष्यामिनिर्बंधुर्ज्ञातिसंक्षये ॥ नहिमेऽन्यद्भवेच्छ्रेयोवनाभ्युपगमादृते ४९ इमामवस्थांप्राप्तस्यलूनपक्षस्यसंजय ॥ दुर्योधनोहतोयत्रशल्य
श्चनिहतोयुधि ५० दुःशासनोविविंशश्चविकर्णश्चमहाबलः ॥ कथंहिभीमसेनस्यश्रोष्येऽहंशब्दमुत्तमम् ५१ एकेनसमरेयेनहतंपुत्रशतंमम ॥ असकृद्वदतस्तस्य
दुर्योधनवधेनच ५२ दुःखशोकाभिसंतप्तोनश्रोष्येपरुषागिरः ॥ वैशंपायनउवाच ॥ एवंवृद्धश्चसंतप्तःपार्थिवोहतबांधवः ५३ मुहुर्मुहुर्मुह्यमानःपुत्राधिभिरभिद्रु
तः ॥ विलप्यसुचिरंकालंधृतराष्ट्रोंऽबिकासुतः ५४ दीर्घमुष्णंसनिःश्वस्यचिंतयित्वापराभवम् ॥ दुःखेनमहताराजन्संतप्तोभरतर्षभः ५५ पुनर्गावल्गणिंसूतंपर्य
पृच्छद्यथातथम् ॥ धृतराष्ट्रउवाच ॥ भीष्मद्रोणौहतौश्रुत्वासूतपुत्रंचघातितम् ५६ सेनापतिंप्रणेतारंकिमकुर्वतमामकाः ॥ यंयंसेनाप्रणेतारंयुधिकुर्वंतिमाम
काः ५७ अचिरेणैवकालेनतंतंनिघ्नंतिपांडवाः ॥ रणमूर्ध्निहतोभीष्मःपश्यतांवःकिरीटिना ५८ एवमेवहतोद्रोणःसर्वेषामेवपश्यताम् ॥ एवमेवहतःकर्णःसूतपुत्रः
प्रतापवान् ५९ सराजकानांसर्वेषांपश्यतांवःकिरीटिना ॥ पूर्वमेवाहमुक्तोवैविदुरेणमहात्मना ६० ५८ । ५९ । ६०

सम्यगवेक्ष्यनिपुणंविभाव्यापिमूढास्तथाभूतंतद्वचःकेचिन्नपश्यंतीत्युत्तरेणसंबंधः ६१ तथाभूतंयथार्थम् ६२ । ६२। ६३ । ६४। ६५ । ६६ । ६७ । ६८ ।६९ । ७० ॥ इतिशल्यपर्वणिनीलकंठीये

दुर्योधनापराधेनप्रजेयंविनशिष्यति ॥ केचिन्नसम्यक्पश्यंतिमूढाःसम्यगवेक्ष्यच ६१ तदिदंममूढस्यतथाभूतंवचःस्मतत् ॥ यदब्रवीत्सधर्मात्माविदुरोदीर्घद
र्शिवान् ॥ तत्तथासमनुप्राप्तंवचनंसत्यवादिनः ६२ दैवोपहतचित्तेनयन्मयानकृतंपुरा ॥ अनयस्यफलंतस्यब्रूहिगावल्गणेपुनः ६३ कोवामुखमनीकानामासी
त्कर्णेनिपातिते ॥ अर्जुनंवासुदेवंचकोवाप्रत्युद्ययौरथी ६४ केऽरक्षन्दक्षिणंचक्रंमद्रराजस्यसंयुगे ॥ वामंचयोद्धुकामस्यकेवावीरस्यपृष्ठतः ६५ कथंचवःसमेता
नांमद्रराजोमहारथः ॥ निहतःपांडवैःसंख्येपुत्रोवाममसंजय ६६ ब्रूहिसर्वंयथातत्त्वंभरतानांमहाक्षयम् ॥ यथाचनिहतःसंख्येपुत्रोदुर्योधनोमम ६७ पंचालाश्च
यथासर्वेनिहताःसपदानुगाः ॥ धृष्टद्युम्नःशिखंडीचद्रौपद्याःपंचचात्मजाः ६८ पांडवाश्चयथामुक्तास्तथोभौमाधवौयुधि ॥ कृपश्चकृतवर्माचभारद्वाजस्यचात्म
जाः ६९ यद्यथायादृशंचैवयुद्धंवृत्तंचसांप्रतम् ॥ अखिलंश्रोतुमिच्छामिकुशलोह्यसिसंजय ७० ॥ इतिश्रीमहाभारते शल्यपर्वणि धृतराष्ट्रविलापेद्वितीयोऽ
ध्यायः ॥ २ ॥ ॥ संजयउवाच ॥ शृणुराजन्नवहितोयथावृत्तोमहान्क्षयः ॥ कुरूणांपांडवानांचसमासाद्यपरस्परम् १ निहतेसूतपुत्रेतुपांडवेनमहात्मना ॥
विद्रुतेषुचसैन्येषुसमानीतेषुचासकृत् २ घोरेमनुष्यदेहानामाजौनरवरक्षये ॥ यत्तत्कर्णेहतेपार्थःसिंहनादमथाकरोत् ३ तदातवसुतान्राजन्प्राविशत्सुमहद्भ
यम् ॥ नसंधातुमनीकानिनचैवाथपराक्रमे ४ आसीद्बुद्धिर्हतेकर्णेतवयोधस्यकस्यचित् ॥ वणिजोनाविभिन्नायामगाधेविप्लवाइव ५ अपारेपारमिच्छंतोहतेद्वीपे
किरीटिना ॥ सूतपुत्रेहतेराजन्वित्रस्ताःशरविक्षताः ६ अनाथानाथमिच्छंतोमृगाःसिंहार्दिताइव ॥ भग्नशृंगाइववृषाःशीर्णदंष्ट्राइवोरगाः ७ प्रत्युपायामसायां
ह्नेनिर्जिताःसव्यसाचिना ॥ हतप्रवीराविध्वस्तानिकृत्तानिशितैःशरैः ८ सूतपुत्रेहतेराजन्पुत्रास्तेप्राद्रवंस्ततः ॥ विध्वस्तकवचाःसर्वेकांदिशीकाविचेतसः ९
अन्योन्यमभिनिघ्नंतोवीक्षमाणाभयादिशः ॥ मामेवनूनंबीभत्सुर्मामेवचवृकोदरः १० अभियातीतिमन्वानाःपेतुर्मम्लुश्चभारत ॥ अश्वानन्येगजानन्येरथानन्ये
महारथाः ११ आरुह्यजवसंपन्नाःपादातान्प्रजहुर्भयात् ॥ कुंजरैःस्यंदनाभग्नाःसादिनश्चमहारथैः १२ पदातिसंघाश्चाश्वौघैःपलायद्भिर्भृशंहताः ॥ व्यालतस्कर
संकीर्णेसार्थहीनायथावने १३ तथात्वदीयानिहतेसूतपुत्रेतदाऽभवन् ॥ हतारोहास्तथानागाश्छिन्नहस्तास्तथापरे १४ सर्वंपार्थमयंलोकमपश्यन्वैभयार्दिताः ॥
तान्प्रेक्ष्यद्रवतःसर्वान्भीमसेनभयार्दितान् १५ दुर्योधनोऽथस्वंसूतंहाहाकृत्वैवमब्रवीत् ॥ नातिक्रमिष्यतेपार्थोधनुष्पाणिमवस्थितम् १६ जघनेयुद्धचमानंमां
तूर्णमश्वान्प्रचोदय ॥ समरेयुद्धचमानंहिकौंतेयोमांधनंजयः १७ नोत्सहेताप्यतिक्रांतुंवेलामिवमहार्णवः ॥ अद्यार्जुनंसगोविंदंमानिनंचवृकोदरम् १८

भारतभावदीपे द्वितीयोऽध्यायः ॥ २ ॥ शृण्विति १ समानीतेषु युद्धोन्मुखीकृतेषु २।३ ।४।५ ।६। ७। ८।९। १० ।११ । १२ ।१३ ।१४। १५ ।१६ जवनेअंते प्राणपणेनयुध्यंतमित्यर्थः १७ । १८

निहत्यशिष्टान्शत्रूंश्चकर्णस्यानृण्यमाप्नुयाम् ॥ तच्छ्रुत्वाकुरुराजस्यशूरार्यसदृशंवचः १९ सूतोहेमपरिच्छन्नान्शनैरश्वानचोदयत् ॥ गजाश्वरथहीनास्तुपादाता
श्चैवमारिष २० पंचविंशतिसाहस्राःप्राद्रवन्शनकैरिव ॥ तान्भीमसेनःसंक्रुद्धोधृष्टद्युम्नश्चपार्षतः २१ बलेनचतुरंगेणपरिक्षिप्याहनच्छरैः ॥ प्रत्ययुध्यंस्तुतेसर्वे
भीमसेनंसपार्षतम् २२ पार्थपार्षतयोश्चान्येजगृहुस्तत्रनामनी ॥ अक्रुद्ध्यतरणेभीमस्तैर्मृधेप्रत्यवस्थितैः २३ सोऽवतीर्यरथात्तूर्णंगदापाणिरयुध्यत ॥ नतान्
रथस्थोभूमिष्ठान्धर्मापेक्षीवृकोदरः २४ योधयामासकौंतेयोभुजवीर्यमुपाश्रितः ॥ जातरूपपरिच्छन्नांप्रगृह्यमहतींगदाम् २५ न्यवधीत्तावकान्सर्वान्दंडपाणि
रिवांतकः ॥ पदातयोहिसंरब्धास्त्यक्तजीवितबांधवाः २६ भीममभ्यद्रवन्संख्येपतंगाइवपावकम् ॥ आसाद्यभीमसेनंतेसंरब्धायुद्धदुर्मदाः २७ विनेदुःसहसा
दृष्ट्वाभूतग्रामाइवांतकम् ॥ श्येनवद्व्यचरत्भीमःखड्गेनगदयातथा २८ पंचविंशतिसाहस्रांस्तावकानांव्यपोथयत् ॥ हत्वातत्पुरुषानीकंभीमःसत्यपराक्रमः २९
धृष्टद्युम्नंपुरस्कृत्यपुनस्तस्थौमहाबलः॥धनंजयोरथानीकमन्वपद्यतवीर्यवान् ३० माद्रीपुत्रौचशकुनिंसात्यकिश्चमहाबलः॥ जवेनाभ्यपतन्हृष्टाघ्नंतोदौर्योधनंबलम्
३१ तस्याश्ववाहान्सुबहूंस्तेनिहत्यशितैःशरैः ॥ तमन्वधावंस्त्वरितास्तत्रयुद्धमवर्तत ३२ ततोधनंजयोराजन्रथानीकमगाहत ॥ विश्रुतंत्रिषुलोकेषुगांडीवं
व्याक्षिपन्धनुः ३३ कृष्णसारथिमायांतंदृष्ट्वाश्वेतहयंरथम् ॥ अर्जुनंचापियोद्धारंत्वदीयाःप्राद्रवन्भयात् ३४ विप्रहीणरथाश्वाश्चशरैश्चपरिवारिताः ॥ पंचविंश
तिसाहस्राःपार्थमार्छन्पदातयः ३५ हत्वातत्पुरुषानीकंपंचालानांमहारथः ॥ भीमसेनंपुरस्कृत्यनचिरात्प्रत्यदृश्यत ३६ महाधनुर्धरःश्रीमानमित्रगणमर्दनः ॥
पुत्रःपंचालराजस्यधृष्टद्युम्नोमहायशाः ३७ पारावतसवर्णाश्वंकोविदारवरध्वजम् ॥ धृष्टद्युम्नंरणेदृष्ट्वात्वदीयाः द्रवन्भयात् ३८ गांधारराजंशीघ्रास्त्रमनुसृत्ययश
स्विनौ ॥ अचिरात्प्रत्यदृश्येतांमाद्रीपुत्रौससात्यकी ३९ चेकितानःशिखंडीचद्रौपदेयाश्चमारिष ॥ हत्वात्वदीयंसुमहत्सैन्यंशंखानथाधमन् ४० तेसर्वेतावकान्प्रे
क्ष्यद्रवतोवैपराङ्मुखान् ॥ अभ्यधावंतनिघ्नंतोवृषान्जित्वावृषाइव ४१ सेनावशेषंतंदृष्ट्वातवपुत्रस्यपांडवः॥ अवस्थितंसव्यसाचीचुक्रोधबलवन्नृप: ४२ ततएनंशरै
राजन्सहसासमवाकिरत् ॥ रजसाचोद्गतेनाथनस्मकिंचनदृश्यते ४३ अंधकारीकृतेलोकेशरीभूतेमहीतले ॥ दिशःसर्वामहाराजतावकाःप्राद्रवन्भयात् ४४ भज्यमा
नेषुसर्वेषुकुरुराजोविशांपते ॥ परेषामात्मनश्चैवसैन्येतेसमुपाद्रवत् ४५ ततोदुर्योधनःसर्वानाजुहावाथपांडवान् ॥ युद्धायभरतश्रेष्ठदेवानिवपुराबलिः ४६ तएनमभि
गर्जंतंसहिताःसमुपाद्रवन् ॥ नानाशस्त्रसृजःक्रुद्धाभर्त्सयंतोमुहुर्मुहुः ४७ दुर्योधनोऽप्यसंभ्रांतस्तानरीन्व्यधमच्छरैः ॥ तत्राद्भुतमपश्यामतवपुत्रस्यपौरुषम् ४८
यदेनंपांडवाःसर्वेनशेकुरतिवर्तितुं ॥ नातिदूरापयातंचकृतबुद्धिःपलायने ४९ दुर्योधनःस्वकंसैन्यमपश्यद्भृशविक्षतं ॥ ततोऽवस्थाप्यराजेंद्रकृतबुद्धिस्तवात्मजः५०

५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ ॥ इतिश॰नी॰भा॰भा॰तृतीयोऽध्यायः ॥ ३ ॥ पतितानिति १ अप्रख्यातिमित्यत्रप्रत्याख्यातिमितिपाठेऽपितुल्योऽर्थः २ भृशेत्यत्र

हर्षयान्निवतान्योधांस्ततोवचनमब्रवीत् ॥ नतंदेशंप्रपश्यामिपृथिव्यांपर्वतेषुच ५१ यत्रयातान्नवोहन्युःपांडवाःकिंसृतेनवः ॥ स्वल्पंचैवबलंतेषांकृष्णौचभृशवि
क्षतौ ५२ यदिसर्वेऽत्रतिष्ठामोध्रुवंनोविजयोभवेत् ॥ विप्रयातांस्तुवोभिन्नान्पांडवाःकृतकिल्बिषान् ५३ अनुसृत्यहनिष्यंतिश्रेयोनःसमरेवधः ॥ सुखःसांग्रामिको
मृत्युःक्षत्रधर्मेणयुध्यताम् ५४ मृतोदुःखंनजानीतेप्रेत्यचानंत्यमश्नुते ॥ शृण्वंतुक्षत्रियाःसर्वेयावंतोऽत्रसमागताः ५५ द्विषतोभीमसेनस्यवशमेष्यथविद्रुताः ॥
पितामहैराचरितंनधर्मंहातुमर्हथ ५६ नान्यत्कर्मास्तिपापीयःक्षत्रियस्यपलायनात् ॥ नयुद्धधर्माच्छ्रेयान्हिपंथाःस्वर्गस्यकौरवाः ५७ सुचिरेणार्जितांल्लोकान्स
द्योयुद्धात्समश्नुते ॥ तस्यतद्वचनंराज्ञःपूजयित्वामहारथाः ५८ पुनरेवाभ्यवर्ततक्षत्रियाःपांडवान्प्रति ॥ पराजयममृष्यंतःकृतचित्ताश्चविक्रमे ५९ ततःप्रववृते
युद्धंपुनरेवसुदारुणम् ॥ तावकानांपरेषांचदेवासुररणोपमम् ६० युधिष्ठिरपुरोगांश्चसर्वसैन्येनपांडवान् ॥ अन्वधावन्महाराजपुत्रोदुर्योधनस्तव ६१ ॥ इतिश्रीम
हाभारतेशल्यपर्वणिकौरवसैन्यापयानेतृतीयोऽध्यायः ॥ ३ ॥ ॥ संजयउवाच ॥ पतितान्रथनीडांश्चरथांश्चापिमहात्मनाम् ॥ रणेचनिहतान्नागान्दृष्ट्वापत्तींश्च
मारिष १ आयोधनंचातिघोरंरुद्रस्याक्रीडसन्निभम् ॥ अप्रख्यातिंगतानांतुराज्ञांशतसहस्रशः २ विमुखेतवपुत्रेतुशोकोपहतचेतसि ॥ भृशोद्विग्नेषुसैन्येषुदृष्ट्वापा
र्थस्यविक्रमम् ३ ध्यायमानेषुसैन्येषुदुःखंप्राप्तेषुभारत ॥ बलानांमथ्यमानानांश्रुत्वानिनदमुत्तमम् ४ अभिज्ञानंनरेंद्राणांविक्षतंप्रेक्ष्यसंयुगे ॥ कृपाविष्टःकृपोरा
जन्वयःशीलसमन्वितः ५ अब्रवीत्तत्रतेजस्वीसोऽभिसृत्यजनाधिपम् ॥ दुर्योधनंमन्युवशाद्वाक्यंवाक्यविशारदः ६ दुर्योधननिबोधेदंयत्त्वांवक्ष्यामिकौरव ॥ श्रु
त्वाकुरुमहाराजयदितेरोचतेऽनघ ७ नयुद्धधर्माच्छ्रेयान्वैपंथाराजेंद्रविद्यते ॥ यंसमाश्रित्ययुद्ध्यंतेक्षत्रियाःक्षत्रियर्षभ ८ पुत्रोभ्रातापिताचैवस्वस्रीयोमातुलस्तथा ॥
संबंधिबांधवाश्चैवयोद्ध्याक्षत्रजीविना ९ वधेचैवपरोधर्मस्तथाऽधर्मःपलायने ॥ तेस्मघोरांसमापन्नाजीविकांजीवितार्थिनः १० तदत्रप्रतिवक्ष्यामिकिंचिदेवहि
तंवचः ॥ हतेभीष्मेचद्रोणेचकर्णेचैवमहारथे ११ जयद्रथेचनिहतेतवभ्रातृषुचानघ ॥ लक्ष्मणेतवपुत्रेचकिंशेषंपर्युपास्महे १२ येषुभारंसमासाद्यराज्येमतिमकु
र्महि ॥ तेसंत्यज्यतनूर्याताःशूराब्रह्मविदांगतिम् १३ वयंत्विहविनाभूताःगुणवद्भिर्महारथैः ॥ कृपणंवर्तयिष्यामपातयित्वानृपान्बहून् १४ सर्वैरथचजीवद्भिर्बीभ
त्सुरपराजितः ॥ कृष्णनेत्रोमहाबाहुर्देवैरपिदुरासदः १५ इंद्रकार्मुकतुल्याभमिंद्रकेतुमिवोच्छ्रितम् ॥ वानरंकेतुमासाद्यसंचचालमहाचमूः १६ सिंहनादाच्चभी
मस्यपांचजन्यस्वनेनच ॥ गांडीवस्यचनिर्घोषात्संहृष्यंतिमनांसिनः १७

२

दृशेतिपाठेदृशादृङ्मात्रेण ३ । ४ । ५ मन्युवशाद्दुर्योधनस्यदैन्यवशात् ६ । ७ । ८
९ । १० । ११ । १२ । १३ । १४ कृष्णोनेत्रंनेतायस्यसतथा १५ । १६ संहृष्यंतिसंहरिष्यंति इडभावआर्षः मनांसिआत्मानंसंहरिष्यंतिमूढानिभविष्यंतीत्यर्थः संमुह्यंतीतिपाठांतरम् १७

१८। १९। २०। २१। २२। २३। २४। २५। २६ वर्तमानस्यसंग्रामस्याभितोवध्यतांवध्यमानानांच अद्यसप्तदशाहानिजातानीत्यन्वयः जातानीतिशेषः २७। २८

चरंतीवमहाविद्युन्मुष्णंतीनयनप्रभाम् ॥ अलातमिवचाविद्धंगांडीवंसमदृश्यत १८ जांबूनदविचित्रंचधूयमानंमहद्धनुः ॥ दृश्यतेदिक्षुसर्वासुविद्युदभ्रघनेष्विव १९ श्वेताश्ववेगसंपन्नाःशशिकाशसमप्रभाः ॥ पिबंतइवचाकाशंरथेयुक्तास्तुवाजिनः २० उह्यमानाश्चकृष्णेनवायुनेवबलाहकाः ॥ जांबूनदविचित्रांगावहंतेचार्जुनंरणे २१ तावकंतद्बलंराजन्नर्जुनोस्त्रविशारदः ॥ गहनंशिशिरेकक्षंददाहाग्निरिवोल्बणः २२ गाहमानमनीकानिमहेंद्रसदृशप्रभम् ॥ धनंजयमपश्यामचतुर्दंष्ट्रमिवद्विपम् २३ विक्षोभयंतंसेनांतेत्रासयंतंचपार्थिवान् ॥ धनंजयमपश्यामनलिनीमिवकुंजरम् २४ त्रासयंतंतथायोधान्धनुर्घोषेणपांडवम् ॥ भूयएनमपश्यामसिंहंमृगगणानिव २५ सर्वलोकमहेष्वासौवृषभौसर्वधन्विनाम् ॥ आमुक्तकवचौकृष्णौलोकमध्येविचेरतुः २६ अद्यसप्तदशाहानिवर्तमानस्यभारत ॥ संग्रामस्यातिघोरस्यवध्यतांचाभितोयुधि २७ वायुनेवविधूतानितवसैन्यानिसर्वतः ॥ शरदंभोदजालानिव्यशीर्यंतसमंततः २८ तांनावमिवपर्यस्तांवातधूतांमहार्णवे ॥ तवसेनांमहाराजसव्यसाचीव्यकंपयत् २९ क्वनुतेसूतपुत्रोऽभूत्क्वनुद्रोणःसहानुगः ॥ अहंक्वचक्वचात्मातेहार्दिक्यश्चतथाक्वनु ३० दुःशासनश्चतेभ्राताभ्रातृभिःसहितःक्वनु ॥ बाणगोचरसंप्राप्तंप्रेक्ष्यचैवजयद्रथम् ३१ संबंधिनस्तेभ्रातृंश्चसहायान्मातुलांस्तथा ॥ सर्वान्विक्रम्यमिषतोलोकमाक्रम्यमूर्धनि ३२ जयद्रथोहतोराजन्किंनुशेषमुपास्महे ॥ कोहीहसपुमानस्तियोविजेष्यतिपांडवम् ३३ तस्यचास्त्राणिदिव्यानिविविधानिमहात्मनः ॥ गांडीवस्यचनिर्घोषोधैर्याणिहरतेहिनः ३४ नष्टचंद्रायथारात्रिःसेनेयंहतनायका ॥ नागभग्नद्रुमाशुष्कानदीवाकुलतांगता ३५ ध्वजिन्यांहतनेत्रायांयथेष्टंश्वेतवाहनः ॥ चरिष्यतिमहाबाहुःकक्षेष्वग्निरिवज्वलन् ३६ सात्यकेश्चैववयोवेगोभीमसेनस्यचोभयोः ॥ दारयेच्चगिरीन्सर्वान्शोषयेच्चैवसागरान् ३७ उवाचवाक्यंयद्भीमःसभामध्येविशांपते ॥ कृतंतत्सफलंतेनभूयश्चैवकरिष्यति ३८ प्रमुखस्थेतदाकर्णेबलंपांडवरक्षितम् ॥ दुरासदंतदागुप्तंव्यूढंगांडीवधन्वना ३९ युष्माभिस्तानिचीर्णाणियान्यसाधूनिसाधुषु ॥ अकारणकृतान्येवतेषांवःफलमागतम् ४० आत्मनोऽर्थेत्वयालोकोयत्नतःसर्वआहृतः ॥ सतेसंशयितस्तातआत्माचभरतर्षभ ४१ रक्षदुर्योधनात्मानमात्मासर्वस्यभाजनम् ॥ भिन्नेहिभाजनेतातादिशोगच्छतितद्गतम् ४२ हीयमानेनवैसंधिःपर्येष्टव्यःसमेनवा ॥ विग्रहोवर्धमानेनमतिरेषाबृहस्पतेः ४३ तेवयंपांडुपुत्रेभ्योहीनाःस्मबलशक्तितः ॥ तदत्रपांडवैःसार्धंसंधिंमन्येक्षमंप्रभो ४४ नजानीतेहियःश्रेयःश्रेयसश्चावमन्यते ॥ सक्षिप्रंभ्रश्यतेराज्यान्नचश्रेयोऽनुविंदते ४५ प्रणिपत्यहिराजानंराज्यंयदिलभेमहि ॥ श्रेयःस्यान्नतुमौढ्येनराजन्गंतुःपराभवम् ४६ वैचित्रवीर्यवचनात्कृपाशीलोयुधिष्ठिरः ॥ विनियुंजीतराज्येत्वांगोविंदवचनेनच ४७

२९। ३०। ३१। ३२। ३३। ३४। ३५। ३६। ३७। ३८। ३९। ४०। ४१। ४२। ४३। ४४। ४५। ४६। ४७

असंशयंगतवैरमित्यर्थः ४८ । ४९ । ५० । ५१ ॥ इतिशल्यपर्वणिनीलकंठीयेभारतभावदीपेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ७ ॥ ॥ एवमुक्तस्ततोराजेतिस्पष्टार्थः १ । २ । ३ । ४ । ५ । ६ ७

यद्ब्रूयाद्धिहृषीकेशोराजानमपराजितम् ॥ अर्जुनंभीमसेनंचसर्वेकुर्युरसंशयम् ४८ नातिक्रमिष्यतेकृष्णोवचनंकौरवस्यतु ॥ धृतराष्ट्रस्यमन्येऽहंनापिकृष्णस्यपांडवः ४९ एतत्क्षेममहंमन्येनचपार्थैश्चविग्रहम् ॥ नत्वांब्रवीमिकार्पण्यान्नप्राणपरिरक्षणात् ५० पथ्यंराजन्ब्रवीमित्वांतत्परासुःस्मरिष्यासि ॥ इतिवृद्धोविलप्यैतत्कृपःशारद्वतोवचः ॥ दीर्घमुष्णंचनिःश्वस्यशुशोचचमुमोहच ५१ ॥ इतिश्रीमहाभारते शल्यपर्वणिकृपवाक्ये चतुर्थोऽध्यायः ॥ ४ ॥ ॥ संजयउवाच ॥ एवमुक्तस्ततोराजागौतमेनतपस्विना ॥ निःश्वस्यदीर्घमुष्णंचतूष्णींमासीद्विशांपते १ ततोमुहूर्तंसध्यात्वाधार्तराष्ट्रोमहामनाः ॥ कृपंशारद्वतंवाक्यमित्युवाचपरंतपः २ यत्किंचित्सुहृदावाच्यंतत्सर्वंश्रावितोह्यहम् ॥ कृतंचभवतासर्वंप्राणान्संत्यज्ययुध्यता ३ गाहमानमनीकानियुध्यमानंमहारथैः ॥ पांडवैरतितेजोभिर्लोकस्त्वामनुदृष्टवान् ४ सुहृदायदिदंवाक्यंभवताश्रावितोह्यहम् ॥ नमांप्रीणातितत्सर्वंमुमूर्षोरिवभेषजम् ५ हेतुकारणसंयुक्तंहितंवचनमुत्तमम् ॥ उच्यमानंमहाबाहोनमेविप्राग्र्यरोचते ६ राज्याद्विनिकृतोऽस्माभिःकथंसोस्मासुविश्वसेत् ॥ अक्षद्यूतेचनृपतिर्जितोऽस्माभिर्महाधनः ७ सकथंममवाक्यानिश्रद्दध्याद्भूयएवतु ॥ तथादौत्येनसंप्राप्तःकृष्णःपार्थहितेरतः ८ प्रलब्धश्चहृषीकेशस्तच्चकर्माविचारितम् ॥ सचमेवचनंब्रह्मन्कथमेवाभिमन्यते ९ विललापचयत्कृष्णासभामध्येसमेयुषी ॥ नतन्मर्षयतेकृष्णोनराज्यहरणंतथा १० एकप्राणावुभौकृष्णावन्योन्यमभिसंश्रितौ ॥ पुरायच्छ्रुतमेवासीदद्यपश्यामितत्प्रभो ११ स्वस्रीयंनिहतंश्रुत्वादुःखंस्वपितिकेशवः ॥ कृतागसोवयंतस्यसमदर्थंकथंक्षमेत् १२ अभिमन्योर्विनाशेननशर्मलभतेऽर्जुनः ॥ सकथंमद्धितेयत्नंप्रकरिष्यतियाचितः १३ मध्यमःपांडवस्तीक्ष्णोभीमसेनोमहाबलः ॥ प्रतिज्ञातंचतेनोग्रंभज्येतापिनसंनमेत् १४ उभौतौबद्धनिस्त्रिंशावुभौचाबद्धकंकटौ ॥ कृतवैरावुभौवीरौयमावपियमोपमौ १५ धृष्टद्युम्नःशिखंडीचकृतवैरौमयासह ॥ तौकथंमद्धितेयत्नंकुर्यातांद्विजसत्तम १६ दुःशासनेनयत्कृष्णाएकवस्त्रारजस्वला ॥ परिक्लिष्टासभामध्येसर्वलोकस्यपश्यतः १७ तथाविवसनांदीनांस्मरंत्यद्यापिपांडवाः ॥ ननिवारयितुंशक्याःसंग्रामात्तेपरंतपाः १८ यदाचद्रौपदीक्लिष्टामद्विनाशायदुःखिता ॥ स्थंडिलेनित्यदाशेतेयावद्वैरस्ययातनम् १९ उग्रंतेपेतपःकृष्णाभर्तृणामर्थसिद्धये ॥ निक्षिप्यमानंदर्पंचवासुदेवसहोदरा २० कृष्णायाःप्रेष्यवद्भूत्वाशुश्रूषांकुरुतेसदा ॥ इतिसर्वंसमुन्नद्धंननिर्वातिकथंचन २१ अभिमन्योर्विनाशेनससंधेयःकथंमया ॥ कथंचराजाभुक्त्वेमांपृथिवींसागरांबराम् २२ पांडवानांप्रसादेनभोक्ष्येराज्यमहंकथम् ॥ उपर्युपरिराज्ञांवैज्वलित्वाभास्करोयथा २३ युधिष्ठिरंकथंपश्चादनुयास्यामिदासवत् ॥ कथंभुक्त्वास्वयंभोगान्दत्वादायांश्चपुष्कलान् २४ कृपणंवर्तयिष्यामिकृपणैःसहजीविकाम् ॥ नाभ्यसूयामितेवाक्यमुक्तंस्निग्धंहितंत्वया २५ , ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५

२६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ ॥ इतिशल्यप

नतुसंधिमहंमन्येप्राप्तकालंकथंचन ॥ सुनीतमनुपश्यामिसुयुद्धेनपरंतप २६ नायंक्लीबयितुंकालःसंयोद्धुंकालएवनः ॥ इष्टंमेबहुभिर्यज्ञैर्दत्ताविप्रेषुदक्षिणाः २७ प्राप्ताःकामाःश्रुतावेदाःशत्रूणांमूर्ध्निचास्थितम् ॥ भृत्यामेसुभृतास्तातदीनश्चाभ्युद्धृतोजनः २८ नोत्सहेऽद्यद्विजश्रेष्ठपांडवान्वक्तुमीदृशम् ॥ जितानिपरराष्ट्राणि स्वराष्ट्रमनुपालितम् २९ भुक्ताश्चविविधाभोगास्त्रिवर्गःसेवितोमया ॥ पितॄणांगतमानृण्यंक्षत्रधर्मस्यचोभयोः ३० नध्रुवंसुखमस्तीतिकुतोराष्ट्रंकुतोयशः ॥ इह कीर्तिर्विधातव्यासाचयुद्धेननान्यथा ३१ गृहेयत्क्षत्रियस्यापिनिधनंतद्विगर्हितम् ॥ अधर्मःसुमहानेषयच्छय्यामरणंगृहे ३२ अरण्येयोविमुच्येतसंग्रामेवातनुंनरः ॥ क्रतूनाहृत्यमहतोमहिमानंसगच्छति ३३ कृपणंविलपन्नार्तोजरयाऽभिपरिप्लुतः ॥ म्रियतेरुदतांमध्येज्ञातीनांनसपूरुषः ३४ त्यक्त्वातुविविधान्भोगान्प्राप्तानांपरमांगतिम् ॥ अपीदानींसुयुद्धेनगच्छेयंयत्सलोकताम् ३५ शूराणामार्यवृत्तानांसंग्रामेष्वनिवर्तिनाम् ॥ धीमतांसत्यसंधानांसर्वेषांक्रतुयाजिनाम् ३६ शस्त्रावभृथपूतानांध्रुवंवासस्त्रिविष्टपे ॥ मुदानूनंप्रपश्यंतियुद्धेह्यप्सरसांगणाः ३७ पश्यंतिनूनंपितरःपूजितान्सुरसंसदि ॥ अप्सरोभिःपरिवृतान्मोदमानांस्त्रिविष्टपे ३८ पंथानममरैर्यातंशूरैश्चैवानिवर्तिभिः ॥ अपितत्संगतंमार्गंवयमप्यारुहेमहि ३९ पितामहेनवृद्धेनतथाऽऽचार्येणधीमता ॥ जयद्रथेनकर्णेनतथादुःशासनेनच ४० घटमानामदर्थेस्मिन्हताःशूराजनाधिपाः ॥ शेरतेलोहिताक्तांगाःसंग्रामेशरविक्षताः ४१ उत्तमास्त्रविदःशूरायथोक्तक्रतुयाजिनः ॥ त्यक्त्वाप्राणान्यथान्यायमिंद्रसद्मसुधिष्ठिताः ४२ तैःस्वयंरचितोमार्गोदुर्गमोहिपुनर्भवेत् ॥ संपतद्भिर्महावेगैर्यास्यद्भिरिहसद्गतिम् ४३ येमदर्थेहताःशूरास्तेषांकृतमनुस्मरन् ॥ ऋणंतत्प्रतिमुंजानोनराज्येमनआदधे ४४ घातयित्वावयस्यांश्चभ्रातॄनथपितामहान् ॥ जीवितंयदिरक्षेयंलोकोमांगर्हयेद्ध्रुवम् ४५ कीदृशंचभवेद्राज्यंममहीनस्यबंधुभिः ॥ सखिभिश्चविशेषेणप्रणिपत्यचपांडवम् ४६ सोऽहमेतादृशंकृत्वाजगतोऽस्यपराभवम् ॥ सुयुद्धेनततःस्वर्गंप्राप्स्यामिनतदन्यथा ४७ एवंदुर्योधनेनोक्तंसर्वेसंपूज्यतद्वचः ॥ साधुसाध्वितिराजानंक्षत्रियाःसंबभाषिरे ४८ पराजयमशोचंतःकृतचित्ताश्चविक्रमे ॥ सर्वेसुनिश्चितायोद्धुमुदग्रमनसोऽभवन् ४९ ततोवाहान्समाश्वास्यसर्वेयुद्धाभिनंदिनः ॥ ऊनेद्वियोजनेगत्वाप्रत्यतिष्ठंतकौरवाः ५० आकाशेविद्रुमेपुण्येप्रस्थेहिमवतःशुभे ॥ अरुणांसरस्वतींप्राप्यपपुःसस्नुश्चतेजलम् ५१ तवपुत्रकृतोत्साहाःपर्यवर्तंततेततः ॥ पर्यवस्थाप्यचात्मानमन्योन्येनपुनस्तदा ॥ सर्वेराजन्न्यवर्तंतक्षत्रियाःकालचोदिताः ५२ इतिश्रीमहाभारतेशल्यपर्वणिदुर्योधनवाक्येपंचमोऽध्यायः ॥ ५ ॥

॥ संजयउवाच ॥ अथहैमवतेप्रस्थेस्थित्वायुद्धाभिनंदिनः ॥ सर्वएवमहायोधास्तत्रतत्रसमागताः १ शल्यश्चचित्रसेनश्चशकुनिश्चमहारथः ॥ अश्वत्थामाकृपश्चैवकृतवर्माचसात्वतः २

वैणिनीलकंठीये भारतभावदीपे पंचमोऽध्यायः ॥ ५ ॥ ॥ ६ ॥ अथेति प्रस्थेशिखरे १ । २

ततस्तत्र ३।४।५।६ सर्वेषांयुद्धगतानांविविधानांभावानामभिप्रायाणांज्ञं सर्वयुद्धविभावज्ञं ७ स्वंगंशोभनांगं ८ स्थाणोःसंबंधिनोवृषस्य ९ अर्चिषाज्योतिषातुल्यंतुल्यतेजसम् अर्चिषाआदित्य
स्यतुल्यमितिवा १० ।११ ।१२ ।१३ दशांगं । 'व्रतंप्राप्तिर्धृतिःपुष्टिःस्मृतिःक्षेपोऽरिभेदनं ॥ चिकित्सोद्दीपनं कृष्टिरिष्वस्त्रंस्याद्दशांगकं । दीक्षाशिक्षाऽऽत्मरक्षाचएतत्साधनमेवच ॥ धनुर्वेदस्य

सुषेणोऽरिष्टसेनश्चधृतसेनश्चवीर्यवान् ॥ जयत्सेनश्चराजानस्तेरात्रिमुषितास्ततः ३ रणेकर्णेहतेवीरेत्रासिताजितकाशिभिः ॥ नालभन्शर्मतेपुत्राहिमवंतमृतेगि
रिम् ४ तेऽब्रुवन्सहितास्तत्रराजानंशल्यसन्निधौ ॥ कृतयत्नारणेराजन्संपूज्यविधिवत्तदा ५ कृत्वासेनाप्रणेतारंपरांस्त्वंयोद्धुमर्हसि ॥ येनाभिगुप्ताःसंग्रामेजयेमा
सुहृदोवयम् ६ ततोदुर्योधनःस्थित्वारथेरथवरोत्तमम् ॥ सर्वयुद्धविभावज्ञमंतकप्रतिमंयुधि ७ स्वंगंप्रच्छन्नशिरसंकंबुग्रीवंप्रियंवदम् ॥ व्याकोशपद्मपत्राक्षंव्याघ्रा
स्यंमेरुगौरवम् ८ स्थाणोर्वृषस्यसदृशंस्कंधनेत्रगतिस्वरैः ॥ पुष्टश्लिष्टायतभुजंसुविस्तीर्णवरोरसम् ९ बलेजवेचसदृशमरुणानुजवातयोः ॥ आदित्यस्यार्चिषा
तुल्यंबुद्ध्याचोशनसासमम् १० कांतिरूपमुखैश्वर्यैस्त्रिभिश्चंद्रमसासमम् ॥ कांचनोपलसंघातैःसदृशंश्लिष्टसंधिकम् ११ सुवृत्तोरुकटीजंघंसुपादंस्वंगुलीनखम् ॥
स्मृत्वास्मृत्वैवतुगुणान्धात्रायत्नाद्विनिर्मितम् १२सर्वलक्षणसंपन्नंनिपुणंश्रुतिसागरम् ॥ जेतारंतरसाऽरीणामजेयमरिभिर्बलात् १३ दशांगंयश्चतुष्पादमिष्वस्त्रंवेद
तत्त्वतः ॥ सांगांस्तुचतुरोवेदान्सम्यगाख्यानपंचमान् १४ आराध्यत्र्यंबकंयत्नाद्व्रतैरुग्रैर्महातपाः ॥ अयोनिजायामुत्पन्नोद्रोणेनायोनिजेनयः १५ तमप्रतिम
कर्माणंरूपेणाप्रतिमंभुवि ॥ पारगंसर्वविद्यानांगुणार्णवमनिंदितम् १६ तमभ्येत्यात्मजस्तुभ्यमश्वत्थामानमब्रवीत् ॥ यंपुरस्कृत्यसहितायुधिजेष्यामपांडवान् १७
गुरुपुत्रोऽद्यसर्वेषामस्माकंपरमागतिः ॥ भवांस्तस्मान्नियोगात्तेकोऽस्तुसेनापतिर्मम १८ ॥ द्रौणिरुवाच ॥ अयंकुलेनरूपेणतेजसायशसाश्रिया ॥ सर्वैर्गुणैःसमु
दितःशल्योनोऽस्तुचमूपतिः १९ भागिनेयान्निजांस्त्यक्त्वाकृतज्ञोऽस्मानुपागतः ॥ महासेनोमहाबाहुर्महासेनइवापरः २० एनंसेनापतिंकृत्वानृपतिंनृपसत्तम ॥
शक्यःप्राप्तुंजयोऽस्माभिर्देवैःस्कंदमिवाजितम् २१ तथोक्तेद्रोणपुत्रेणसर्वएवनराधिपाः ॥ परिवार्यस्थिताःशल्यंजयशब्दांश्चचक्रिरे २२ युद्धायचमतिंचक्रुरावेशं
चपरंययुः॥ ततोदुर्योधनोभूमौस्थित्वारथवरेस्थितम् २३ उवाचप्रांजलिर्भूत्वाद्रोणभीष्मसमंरणे ॥ अयंसकालःसंप्राप्तोमित्राणांमित्रवत्सल २४ यत्रमित्रममित्रं
वापरीक्षंतेबुधाजनाः ॥ सभवानस्तुनःशूरःप्रणेतावाहिनीमुखे २५ रणंयातेचभवतिपांडवामंदचेतसः ॥ भविष्यंतिसहामात्याःपंचालाश्चनिरुद्यमाः २६ दुर्यो
धनवचःश्रुत्वाशल्योमद्राधिपस्तदा ॥ उवाचवाक्यंवाक्यज्ञोराजानंराजसन्निधौ २७ ॥ शल्यउवाच ॥ यत्तुमांमन्यसेराजन्कुरुराजकरोमितत् ॥ त्वत्प्रियार्थंहिमे
सर्वंप्राणाराज्यंधनानिच २८ ॥ दुर्योधनउवाच ॥ सैनापत्येनवरयेत्वामहंमातुलातुलम् ॥ सोऽस्मान्पाहियुधांश्रेष्ठस्कंदोदेवानिवाहवे २९ अभिषिच्यस्वराजेंद्रदे
वानामिवपावकिः ॥ जहिशत्रून्रणेवीरमहेंद्रोदानवानिव ३० ॥ इतिश्रीमहाभारतेशल्यपर्वणिशल्यदुर्योधनसंवादेषष्ठोऽध्यायः ॥ ६ ॥ चत्वारएतेपादाः प्रकीर्तिताः'

१४।१५।१६ तुभ्यंतव १७।१८।१९ महासेनइव कार्तिकेयइव महतीसेनायस्यसमहासेनः २०।२१ ।२२। २३।२४। २५।२६ ।२७।२८। २९।३० ॥ इतिशल्यपर्वणि नी०भा०षष्ठोऽध्यायः ॥ ६ ॥

एतच्छ्रुत्वेति १ । २ । ३ । ४ नतरिष्यंतीत्यत्रनभविष्यंतीतिपाठेयंप्राप्यनभविष्यंतिमारिष्यंतीत्यध्याहृत्ययोज्यम् ५ । ६ क्लिष्टरूपःपराजयनिश्चयात् ७ । ८ कुष्टाआहूताः







॥ संजयउवाच ॥ एतच्छ्रुत्वावचोराज्ञोमद्रराजःप्रतापवान् ॥ दुर्योधनंतदाराजन्वाक्यमेतदुवाचह १ दुर्योधनमहाबाहोशृणुवाक्यविदांवर ॥ यावेतौमन्यसेकृष्णौ रथस्थौरथिनांवरौ २ नमेतुल्यावुभावेतौबाहुवीर्येकथंचन ॥ उद्यतांपृथिवींसर्वांससुरासुरमानवाम् ३ योधयेयंरणमुखेसंक्रुद्धःकिमुपांडवान् ॥ विजेष्यामिरणेपार्थान्सोमकांश्चसमागतान् ४ अहंसेनाप्रणेतातेभविष्यामिनसंशयः ॥ तंचव्यूहंविधास्यामिनतरिष्यंतियंपरे ५ इतिसत्यंब्रवीम्येषदुर्योधननसंशयः ॥ एवमुक्तस्ततोराजामद्राधिपतिमंजसा ६ अभ्यषिंचतसेनायामध्येभरतसत्तम ॥ विधिनाशास्त्रदृष्टेनक्लिष्टरूपोविशांपते ७ अभिषिक्तेततस्तस्मिन्सिंहनादोमहानभूत् ॥ तवसैन्येऽभ्यवाद्यंतवादित्राणिचभारत ८ कुष्टाश्चासंस्तथायोधामद्रकाश्चमहारथाः ॥ तुष्टुवुश्चैवराजानंशल्यमाहवशोभिनम् ९ जयराजंश्चिरंजीवजहिशत्रून्समागतान् ॥ तवबाहुबलंप्राप्यधार्तराष्ट्रामहाबलाः १० निखिलाःपृथिवींसर्वांप्रशासंतुहतद्विषः ॥ त्वंहिशक्तोरणेजेतुंससुरासुरमानवान् ११ मर्त्यधर्माणइहतुकिमुसृंजयसोमकान् ॥ एवंसंपूज्यमानस्तुमद्राणामधिपोबली १२ हर्षंप्रापतदावीरोदुरापमकृतात्मभिः ॥ शल्यउवाच ॥ अद्यचाहंरणेसर्वान्पंचालान्सहपांडवैः १३ निहनिष्यामिवाराजन्स्वर्गंयास्यामिवाहतः ॥ अद्यपश्यंतुमांलोकाविचरंतमभीतवत् १४ अद्यपांडुसुताःसर्वेवासुदेवःससात्यकिः ॥ पंचालाश्चेदयश्चैवद्रौपदेयाश्चसर्वशः १५ धृष्टद्युम्नःशिखंडीचसर्वेचापिप्रभद्रकाः ॥ विक्रमंममपश्यंतुधनुषश्चमहद्बलम् १६ लाघवंचास्त्रवीर्यंचभुजयोश्चबलंयुधि ॥ अद्यपश्यंतुमेपार्थाःसिद्धाश्चसहचारणैः १७ यादृशंमेबलंबाह्वोःसंपदस्त्रेषुयाचमे ॥ अद्यमेविक्रमंदृष्ट्वापांडवानांमहारथाः १८ प्रतीकारपराभूत्वाचेष्टंतांविविधाःक्रियाः ॥ अद्यसैन्यानिपांडूनांद्रावयिष्येसमंततः १९ द्रोणभीष्मावतिविभोसूतपुत्रंचसंयुगे ॥ विचरिष्येरणेयुध्यन्प्रियार्थंतवकौरव २० ॥ संजयउवाच ॥ अभिषिक्तेतथाशल्येतवसैन्येषुमानद ॥ नकर्णव्यसनंकिंचिन्मेनिरेतत्रभारत २१ हृष्टाःसुमनसश्चैवबभूवुस्तत्रसैनिकाः ॥ मेनिरेनिहतान्पार्थान्मद्रराजवशंगतान् २२ प्रहर्षंप्राप्यसेनातुतावकीभरतर्षभ ॥ तांरात्रिमुषितासुप्ताहर्षचित्ताचसाऽभवत् २३ सैन्यस्यतवतंशब्दंश्रुत्वाराजायुधिष्ठिरः ॥ वार्ष्णेयमब्रवीद्वाक्यंसर्वक्षत्रस्यपश्यतः २४ मद्रराजःकृतःशल्योधार्तराष्ट्रेणमाधव ॥ सेनापतिर्महेष्वासःसर्वसैन्येषुपूजितः २५ एतज्ज्ञात्वायथाभूतंकुरुमाधवयत्क्षमम् ॥ भवान्नेताचगोप्ताचविधत्स्वयदनंतरम् २६ तमब्रवीन्महाराजवासुदेवोजनाधिपम् ॥ आर्तायनिमहंजानेयथातत्त्वेनभारत २७ वीर्यवांश्चमहातेजामहात्माचविशेषतः ॥ कृतीचचित्रयोधीचसंयुक्तोलाघवेनच २८ यादृग्भीष्मस्तथाद्रोणोयादृक्कर्णश्चसंयुगे ॥ तादृशस्तद्विशिष्टोवामद्रराजोमतोमम २९





९ । १० । ११ मर्त्यधर्माणःमर्त्यधर्मणः १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९

युद्ध्यमानस्यतस्याहंचिंतयानश्वभारत ॥ योद्धारंनाधिगच्छामितुल्यरूपंजनाधिप ३० शिखंड्यर्जुनभीमानांसात्वतस्यचभारत ॥ धृष्टद्युम्नस्यचतथाबलेना
भ्यधिकोरणे ३१ मद्रराजोमहाराजःसिंहद्विरदविक्रमः ॥ विचरिष्यत्यभीःकालेकालःक्रुद्धःप्रजास्विव ३२ तस्याद्यनप्रपश्यामिप्रतियोद्धारमाहवे ॥ त्वामृतेपु
रुषव्याघ्रशार्दूलसमविक्रमम् ३३ सदेवलोकेकृत्स्नेस्मिन्नान्यस्त्वत्तःपुमान्भवेत् ॥ मद्रराजंरणेक्रुद्धंयोहन्यात्कुरुनंदन ३४ अहन्यहनियुध्यंतंक्षोभयंतंबलंतव ॥
तस्माज्जहिरणेशल्यंमघवानिवशंबरं ३५ अजेयश्चाप्यसौवीरोधार्तराष्ट्रेणसत्कृतः ॥ तवैवहिजयोनूनंहतेमद्रेश्वरेयुधि ३६ तस्मिन्हतेहतंसर्वंधार्तराष्ट्रबलंमहत् ॥
एतच्छ्रुत्वामहाराजवचनंममसांप्रतम् ३७ प्रत्युद्याहिरणेपार्थमद्रराजंमहारथम् ॥ जहिचैनंमहाबाहोवासवोनमुचिंयथा ३८ नचैवात्रदयाकार्यामातुलोऽयंममे
तिवै ॥ क्षत्रधर्मंपुरस्कृत्यजहिमद्रजनेश्वरम् ३९ द्रोणभीष्मार्णवंतीर्त्वाकर्णपातालसंभवम् ॥ मानिमज्जस्वसगणःशल्यमासाद्यगोष्पदम् ४० यच्चतेतपसोवीर्यंय
च्चक्षात्रंबलंतव ॥ तद्दर्शयरणेसर्वंजहिचैनंमहारथम् ४१ एतावदुक्त्वावचनंकेशवःपरवीरहा ॥ जगामशिबिरंसायंपूज्यमानोऽथपांडवैः ४२ केशवेतुतदायातेधर्म
पुत्रोयुधिष्ठिरः ॥ विसृज्यसर्वान्भ्रातॄंश्चपंचालानथसोमकान् ४३ सुष्वापरजनींतांतुविशल्यइवकुंजरः ॥ तेचसर्वेमहेष्वासाःपंचालाःपांडवास्तथा ४४ कर्णस्य
निधनेहृष्टाःसुषुपुस्तांनिशांतदा ॥ गतज्वरंमहेष्वासंतीर्णपारंमहारथम् ४५ बभूवपांडवेयानांसैन्यंचमुदितंनृप ॥ सूतपुत्रस्यनिधनेजयंलब्ध्वाचमारिष ४६
॥ इतिश्रीमहाभारतेशल्यपर्वणिशल्यसैनापत्याभिषेकेसप्तमोऽध्यायः ॥ ७ ॥ ॥ संजयउवाच ॥ व्यतीतायांरजन्यांतुराजादुर्योधनस्तदा ॥ अब्रवीत्तावका
न्सर्वान्सन्नह्यंतांमहारथाः १ राज्ञश्चमतमाज्ञायसमनह्यतसाचमूः ॥ अयोजयन्रथांस्तूर्णंपर्यधावंस्तथाऽपरे २ अकल्प्यंतचमातंगाःसमनह्यंतपत्तयः ॥ रथाना
स्तरणोपेतांश्चक्रुरन्येसहस्रशः ३ वादित्राणांचनिनदःप्रादुरासीद्विशांपते ॥ अयोधनार्थंयोधानांबलानांचाप्युदीर्यताम् ४ ततोबलानिसर्वाणिसेनाशिष्टानि
भारत ॥ प्रस्थितानिव्यदृश्यंतमृत्युंकृत्वानिवर्तनम् ५ शल्यंसेनापतिंकृत्वामद्रराजंमहारथाः ॥ प्रविभज्यबलंसर्वमनीकेषुव्यवस्थिताः ६ ततःसर्वेसमागम्य
पुत्रेणतवसैनिकाः ॥ कृपश्चकृतवर्माचद्रौणिःशल्योऽथसौबलः ७ अन्येचपार्थिवाःशेषाःसमयंचक्रुरादृताः ॥ ननएकेनयोद्धव्यंकथंचिदपिपांडवैः ८ योह्येकः
पांडवैर्युध्येद्योवायुद्ध्यंतमुत्सृजेत् ॥ सपंचभिर्भवेद्युक्तःपातकैश्चोपपातकैः ९ अन्योन्यंपरिरक्षद्भिर्योद्धव्यंसहितैश्चह ॥ एवंतेसमयंकृत्वासर्वेतत्रमहारथाः १०
मद्रराजंपुरस्कृत्यतूर्णमभ्यद्रवन्परान् ॥ तथैवपांडवाराजन्व्यूह्यसैन्यंमहारणे ११ अभ्ययुःकौरवान्राजन्योत्स्यमानाःसमंततः ॥ तद्बलंभरतश्रेष्ठक्षुब्धार्णवस
मस्वनम् १२ समुद्धूतार्णवाकारमुद्धूतरथकुंजरम् ॥ धृतराष्ट्रउवाच ॥ द्रोणस्यचैवभीष्मस्यराधेयस्यचमेश्रुतम् १३ ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३

पातनंशंसमेभूयःशल्यस्याथसुतस्यमे ॥ कथंरणेहतःशल्योधर्मराजेनसंजय १४ भीमेनचमहाबाहुःपुत्रोदुर्योधनोमम ॥ संजयउवाच ॥ क्षयंमनुष्यदेहानांत
थानागाश्वसंक्षयम् १५ शृणुराजन्स्थिरोभूत्वासंग्रामंशंसतोमम ॥ आशाबलवतीराजन्पुत्राणांतेऽभवत्तदा १६ हतेद्रोणेचभीष्मेचसूतपुत्रेचपातिते ॥ श
ल्यःपार्थान्रणेसर्वान्निहनिष्यतिमारिष १७ तामाशांहृदयेकृत्वासमाश्वस्यचभारत ॥ मद्रराजंचसमरेसमाश्रित्यमहारथम् १८ नाथवंतंतदाऽऽत्मानममन्यंतसु
तास्तव ॥ यदाकर्णेहतेपार्थाःसिंहनादंप्रचक्रिरे १९ तदातुतावकान्राजन्नाविवेशमहद्भयम् ॥ तान्समाश्वास्ययोधांस्तुमद्रराजःप्रतापवान् २० व्यूह्यव्यूहंम
हाराजसर्वतोभद्रमृद्धिमत् ॥ प्रत्युद्ययौरणेपार्थान्मद्रराजःप्रतापवान् २१ विधुन्वन्कार्मुकंचित्रंभारघ्नंवेगवत्तरम् ॥ रथप्रवरमास्थायसैंधवाश्वंमहारथः २२ त
स्यसूतोमहाराजरथस्थोऽशोभयद्रथम् ॥ सतेनसंवृतोवीरोरथेनामित्रकर्षणः २३ तस्थौशूरोमहाराजपुत्राणांतेभयप्रणुत् ॥ प्रयाणेमद्रराजोऽभून्मुखंव्यूह
स्यदंशितः २४ मद्रकैःसहितोवीरैःकर्णपुत्रैश्चदुर्जयैः ॥ सव्येभूत्कृतवर्माचत्रिगर्तैःपरिवारितः २५ गौतमोदक्षिणेपार्श्वेशकैश्चयवनैःसह ॥ अश्वत्थामापृष्ठतो
भूत्कांबोजैःपरिवारितः २६ दुर्योधनोऽभवन्मध्येरक्षितःकुरुपुंगवैः ॥ हयानीकेनमहतासौबलश्चापिसंवृतः २७ प्रययौसर्वसैन्येनकैतव्यश्चमहारथः ॥ पांड
वाश्चमहेष्वासाव्यूह्यसैन्यमरिंदमाः २८ त्रिधाभूतामहाराजतवसैन्यमुपाद्रवन् ॥ धृष्टद्युम्नःशिखंडीचसात्यकिश्चमहारथः २९ शल्यस्यवाहिनींहंतुमभिदुद्रुवुरा
हवे ॥ ततोयुधिष्ठिरोराजास्वेनानीकेनसंवृतः ३० शल्यमेवाभिदुद्रावजिघांसुर्भरतर्षभः ॥ हार्दिक्यंचमहेष्वासमर्जुनःशत्रुसैन्यहा ३१ संशप्तकगणांश्चैववेगि
तोऽभिविदुद्रुवे ॥ गौतमंभीमसेनोवैसोमकाश्चमहारथाः ३२ अभ्यद्रवंतराजेंद्रजिघांसंतःपरान्युधि ॥ माद्रीपुत्रौतुशकुनिमुलूकंचमहारथम् ३३ ससैन्यौसह
सैन्यौतावुपतस्थतुराहवे ॥ तथैवायुतशोयोधास्तावकाःपांडवान्रणे ३४ अभ्यवर्तंतसंक्रुद्धाविविधायुधपाणयः ॥ धृतराष्ट्रउवाच ॥ हतेभीष्मेमहेष्वासेद्रोणे
कर्णेमहारथे ३५ कुरुष्वल्पावशिष्टेषुपांडवेषुचसंयुगे ॥ सुसंरब्धेषुपार्थेषुपराक्रांतेषुसंजय ३६ मामकानांपरेषांचाकिंशिष्टमभवद्बलम् ॥ संजयउवाच ॥ य
थावयंपरेराजन्युद्धायसमुपस्थिताः ३७ यावच्चासीद्बलंशिष्टंसंग्रामेतन्निबोधमे ॥ एकादशसहस्राणिरथानांभरतर्षभ ३८ दशदंतिसहस्राणिसप्तचैवशतानिच ॥
पूर्णेशतसहस्रेद्वेहयानांतत्रभारत ३९ पत्तिकोट्यस्तथातिस्रोबलमेतत्तवाभवत् ॥ रथानांषट्सहस्राणिषट्सहस्राश्चकुंजराः ४० दशचाश्वसहस्राणिपत्तिकोटी
चभारत ॥ एतद्बलंपांडवानामभवच्छेषमाहवे ४१ एतएवसमाजग्मुर्युद्धायभरतर्षभ ॥ एवंविभज्यराजेंद्रमद्रराजवशेस्थिताः ४२ पांडवान्प्रत्युदीयुस्तेज
यगृद्धाःप्रमन्यवः ॥ तथैवपांडवाःशूराःसमरेजितकाशिनः ४३ उपयातानरव्याघ्राःपंचालाश्चयशस्विनः ॥ इमेतेचबलौघेनपरस्परवधैषिणः ४४ ४१। ४२ ।४३। ४४

४५ ॥ इतिशल्यपर्वणिनीलकंठीये भारतभावदीपेअष्टमोऽध्यायः ॥ ८ ॥ ॥ ७ ॥ ॥ ततइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३

उपयातानरव्याघ्राःपूर्वांसंध्यांप्रतिप्रभो ॥ ततःप्रववृतेयुद्धंघोररूपंभयानकम् ॥ तावकानांपरेषांचनिघ्नतामितरेतरम् ४५ ॥ इतिश्रीमहाभारतेशल्यपर्वणिव्यूहनिर्माणेअष्टमोऽध्यायः ॥ ८ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ ततःप्रववृतेयुद्धंकुरूणांभयवर्धनम् ॥ सृंजयैःसहराजेंद्रघोरंदेवासुरोपमम् १ नराराथगजौघाश्वसादिनश्चसहस्रशः ॥ वाजिनश्चपराक्रांताःसमाजग्मुःपरस्परम् २ गजानांभीमरूपाणांद्रवतांनिःस्वनोमहान् ॥ अश्रूयतयथाकालेजलदानांनभस्तले ३ नागैरभ्याहताःकेचित्सरथारथिनोऽपतन् ॥ व्यद्रवंतरणेवीराद्राव्यमाणामदोत्कटैः ४ हयौघान्पादरक्षांश्चरथिनस्तत्राशेक्षिताः ॥ शरैःसंप्रेषयामासुःपरलोकायभारत ५ सादिनःशिक्षिताराजन्परिवार्यमहारथान् ॥ विचरंतोरणेऽभ्यघ्नन्प्रासशक्त्यृष्टिभिस्तथा ६ धन्विनःपुरुषाःकेचित्परिवार्यमहारथान् ॥ एकंबहवआसाद्यप्रययुर्यमसादनम् ७ नागान्रथवरांश्चान्येपरिवार्यमहारथाः ॥ सांतरायोधिनंजघ्नुर्द्रवमाणंमहारथम् ८ तथाचरथिनंक्रुद्धंविकिरंतंशरान्बहून् ॥ नागाजघ्नुर्महाराजपरिवार्यसमंततः ९ नागोनागमभिद्रुत्यरथीचरथिनंरणे ॥ शक्तितोमरनाराचैर्निजघ्नेतत्रभारत १० पादातानवमृद्नंतोरथवारणवाजिनः ॥ रणमध्येव्यदृश्यंतकुर्वंतोमहदाकुलम् ११ हयाश्चपर्यधावंतचामरैरुपशोभिताः ॥ हंसाहिमवतःप्रस्थेपिबंतइवमेदिनीम् १२ तेषांतुवाजिनांभूमिःखुरैश्चित्राविशांपते ॥ अशोभतयथानारीकरजैःक्षतविक्षता १३ वाजिनांखुरशब्देनरथनेमिस्वनेनच ॥ पत्तीनांचापिशब्देननागानांबृंहितेनच १४ वादित्राणांचघोषेणशंखानांनिनदेनच ॥ अभवन्नादिताभूमिर्निर्घातैरिवभारत १५ धनुषांकूजमानानांशस्त्रौघानांचदीप्यताम् ॥ कवचानांप्रभाभिश्चनप्राज्ञायतकिंचन १६ बहवोबाहवश्छिन्नानागराजकरोपमाः ॥ उद्वेष्टंतेविचेष्टंतेवेगंकुर्वंतिदारुणम् १७ शिरसांचमहाराजपततांधरणीतले ॥ च्युतानामिवतालेभ्यस्तालानांश्रूयतेस्वनः १८ शिरोभिःपतितैर्भातिरुधिराद्रैर्वसुंधरा ॥ तपनीयनिभैःकालेनलिनैरिवभारत १९ उद्वृत्तनयनैस्तैस्तुगतसत्वैःसुविक्षतैः ॥ व्यभ्राजतमहीराजन्पुंडरीकैरिवावृता २० बाहुभिश्चंदनादिग्धैःसकेयूरैर्महाधनैः ॥ पतितैर्भातिराजेंद्रमहाशक्रध्वजैरिव २१ ऊरुभिश्चनरेंद्राणांविनिकृत्तैर्महाहवे ॥ हस्तिहस्तोपमैरन्यैःसंवृतंतद्रणांगनम् २२ कबंधशतसंकीर्णंछत्रचामरसंकुलम् ॥ सेनावनंतच्छुशुभेवनंपुष्पाचितंयथा २३ तत्रयोधामहाराजविचरंतोह्यभीतवत् ॥ दृश्यंतेरुधिराक्तांगाःपुष्पिताइवकिंशुकाः २४ मातंगाश्चाप्यदृश्यंतशरतोमरपीडिताः ॥ पतंतस्तत्रतत्रैवच्छिन्नाभ्रसदृशारणे २५ गजानीकंमहाराजवध्यमानंमहात्मभिः ॥ व्यदीर्यतदिशःसर्वावातनुन्नाघनाइव २६ तेगजाघनसंकाशाःपेतुरुर्व्यांसमंततः ॥ वज्रनुन्नाइवबभुःपर्वतायुगसंक्षये २७ हयानांसादिभिःसार्धंपतितानांमहीतले ॥ राशयःस्मप्रदृश्यंतेगिरिमात्रास्ततस्ततः २८ संजज्ञेरणभूमौतुपरलोकवहानदी ॥ शोणितोदारथावर्ताध्वजवृक्षाऽस्थिशर्करा २९

२४ । २५ । २६ । २७ तालानांतालफलानाम् २८ । २९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९

३० । ३१ । ३२ । ३३ । ३४ नानिवर्त्तिरेनविवर्तिताः ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ ॥ इतिशल्यपर्वणिनीलकंठीयेभारतभावदीपेनवमोऽ





भुजनक्राधनुःस्रोताहस्तिशैलाहयोपला ॥ मेदोमज्जाकर्दमिनीछत्रहंसागदोडुपा ३० कवचोष्णीषसंछन्नापताकारुचिरद्रुमा ॥ चक्रचक्रावलीजुष्टात्रिवेणुदंडकावृता ३१ शूराणांहर्षजननीभीरूणांभयवर्धनी ॥ प्रावर्ततनदीरौद्राकुरुसृंजयसंकुला ३२ तांनदींपरलोकायवहंतीमतिभैरवाम् ॥ तेरुर्वाहननौभिस्तेशूराःपरिघबाहवः ३३ वर्तमानेतदायुद्धेनिर्मर्यादेविशांपते ॥ चतुरंगक्षयेघोरेपूर्वेदेवासुरोपमे ३४ व्याक्रोशन्बांधवानन्येतत्रतत्रपरंतप ॥ क्रोशद्भिर्दयितैरन्येभयार्तानानिवर्त्तिरे ३५ निर्मर्यादेतथायुद्धेवर्तमानेभयानके ॥ अर्जुनोभीमसेनश्चमोहयांचक्रतुःपरान् ३६ सावध्यमानामहतीसेनातवनराधिप ॥ अमुह्यत्तत्रतत्रैवयोषिन्मदवशादिव ३७ मोहयित्वाचतांसेनांभीमसेनधनंजयौ ॥ दध्मतुर्वारिजौतत्रसिंहनादांश्चचक्रतुः ३८ श्रुत्वैवतुमहाशब्दंधृष्टद्युम्नशिखंडिनौ ॥ धर्मराजंपुरस्कृत्यमद्रराजमभिद्रुतौ ३९ तत्राश्चर्यमपश्यामघोररूपंविशांपते ॥ शल्येनसंगताःशूरायदयुद्ध्यंतभागशः ४० माद्रीपुत्रौतुरभसौकृतास्त्रौयुद्धदुर्मदौ ॥ अभ्ययातांत्वरायुक्तौजिगीषंतौपरंतप ४१ ततोन्यवर्ततबलंतावकंभरतर्षभ ॥ शरैःप्रणुन्नंबहुधापांडवैर्जितकाशिभिः ४२ वध्यमानाचमूःसातुपुत्राणांप्रेक्षतांतव ॥ भेजेदिशोमहाराजप्रणुन्नाशरवृष्टिभिः ४३ हाहाकारोमहान्जज्ञेयोधानांतत्रभारत ॥ तिष्ठतिष्ठेतिचाप्यासीद्द्रावितानांमहात्मनाम् ४४ क्षत्रियाणांसहान्योन्यंसंयुगेजयमिच्छताम् ॥ प्राद्रवन्नेवसंभग्नाःपांडवैस्तवसैनिकाः ४५ त्यक्त्वायुद्धेप्रियान्पुत्रान्भ्रातॄनथपितामहान् ॥ मातुलान्भागिनेयांश्चवयस्यानपिभारत ४६ हयान्द्विपांस्त्वरयंतोयोधाजग्मुःसमंततः ॥ आत्मत्राणकृतोत्साहास्तावकाभरतर्षभ ४७ ॥ इतिश्रीमहाभारतेशल्यपर्वणिसंकुलयुद्धेनवमोऽध्यायः ॥ ९ ॥

॥संजयउवाच॥तत्प्रभग्नंबलंदृष्ट्वामद्रराजःप्रतापवान् ॥ उवाचसारथिंतूर्णंचोदयाश्वान्महाजवान् १ एषतिष्ठतिवैराजापांडुपुत्रोयुधिष्ठिरः॥ छत्रेणाध्रियमाणेनपांडुरेणविराजता २ अत्रमांप्रापयक्षिप्रंपश्यमेसारथेबलम् ॥ नसमर्थोहिमेपार्थःस्थातुमद्यपुरोयुधि ३ एवमुक्तस्ततःप्रायान्मद्रराजस्यसारथिः ॥ यत्रराजासत्यसंधोधर्मपुत्रोयुधिष्ठिरः ४ प्रापतत्तच्चसहसापांडवानांमहद्बलम् ॥ दधारैकोरणेशल्योवेलोद्वृत्तमिवार्णवम् ५ पांडवानांबलौघस्तुशल्यमासाद्यमारिष ॥ व्यतिष्ठततदायुद्धेसिंधोर्वेगइवाचलम् ६ मद्रराजंतुसमरेदृष्ट्वायुद्धायधिष्ठितम् ॥ कुरवःसन्यवर्ततमृत्युंकृत्वानिवर्तनम् ७ तेषुराजन्निवृत्तेषुव्यूढानीकेषुभागशः ॥ प्रावर्ततमहारौद्रःसंग्रामःशोणितोदकः ८ समार्छच्चित्रसेनंतुनकुलोयुद्धदुर्मदः ॥ तौपरस्परमासाद्यचित्रकार्मुकधारिणौ ९ मेघाविवयथोद्वृत्तौदक्षिणोत्तरवर्षिणौ ॥ शरतोयैःसिषिचतुस्तौपरस्परमाहवे १० नांतरंतत्रपश्यामिपांडवस्येतरस्यच ॥ उभौकृतास्त्रौबलिनौरथचर्याविशारदौ ११ परस्परवधेयत्तौछिद्रान्वेषणतत्परौ ॥ चित्रसेनस्तुभल्लेनपीतेननिशितेनच १२

ध्यायः ॥ ९ ॥ तत्प्रभग्नमितिअध्यायःस्पष्टार्थः १ । २ । ३ । ४ । ५ । ६ । ७ । ८ चित्रसेनःकर्णपुत्रः ९ । १० । ११ । १२

१९ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३

नकुलस्यमहाराजमुष्टिदेशेऽच्छिनद्धनुः ॥ अथैनंछिन्नधन्वानंरुक्मपुंखैःशिलाशितैः १३ त्रिभिःशरैरसंभ्रांतोललाटेवैसमार्पयत् ॥ हयांश्चास्यशरैस्तीक्ष्णैःप्रे
षयामासमृत्यवे १४ तथाध्वजंसारथिंचत्रिभिस्त्रिभिरपातयत् ॥ सशत्रुभुजनिर्मुक्तैर्ललाटस्थैस्त्रिभिःशरैः १५ नकुलःशुशुभेराजंस्त्रिशृंगइवपर्वतः ॥ सच्छिन्नध
न्वाविरथःखड्गमादायचर्मच १६ रथादवातरद्वीरःशैलाग्रादिवकेसरी ॥ पद्भ्यामापततस्तस्यशरवृष्टिंसमासृजत् १७ नकुलोऽप्यग्रसत्तांवैचर्मणालघुविक्रमः ॥
चित्रसेनरथंप्राप्यचित्रयोधीजितश्रमः १८ आरुरोहमहाबाहुःसर्वसैन्यस्यपश्यतः ॥ सकुंडलंसमुकुटंसुनसंस्वायतेक्षणम् १९ चित्रसेनशिरःकायादपाहरत
पांडवः ॥ सपपातरथोपस्थेदिवाकरसमद्युतिः २० चित्रसेनंविशस्तंतुदृष्ट्वातत्रमहारथाः ॥ साधुवादस्वनांश्चक्रुःसिंहनादांश्चपुष्कलान् २१ विशस्तंभ्रातरंदृ
ष्ट्वाकर्णपुत्रौमहारथौ ॥ सुषेणःसत्यसेनश्चमुंचंतौविविधान्शरान् २२ ततोऽभ्यधावतांतूर्णंपांडवंरथिनांवरम् ॥ जिघांसंतौयथानागंव्याघ्रौराजन्महावने २३
तावभ्यधावतांतीक्ष्णौद्वावप्येनंमहारथम् ॥ शरौघान्सम्यगस्यंतौजीमूतौसलिलंयथा २४ सशरैःसर्वतोविद्धःप्रहृष्टइवपांडवः ॥ अन्यत्कार्मुकमादायरथमारु
ह्यवेगवान् २५ अतिष्ठत्तरणेवीरःक्रुद्धरूपइवांतकः ॥ तस्यतौभ्रातरौराजन्शरैःसन्नतपर्वभिः २६ रथंविशकलीकर्तुंसमारब्धौविशांपते ॥ ततःप्रहस्यनकुल
श्चतुर्भिश्चतुरोरणे २७ जघाननिशितैर्बाणैःसत्यसेनस्यवाजिनः ॥ ततःसंधायनाराचंरुक्मपुंखंशिलाशितम् २८ धनुश्चिच्छेदराजेंद्रसत्यसेनस्यपांडवः ॥
अथान्यंरथमास्थायधनुरादायचापरम् २९ सत्यसेनःसुषेणश्चपांडवंपर्यधावताम् ॥ अविध्यत्तावसंभ्रांतौमाद्रीपुत्रःप्रतापवान् ३० द्वाभ्यांद्वाभ्यांमहाराजश
राभ्यांरणमूर्धनि ॥ सुषेणस्तुततःक्रुद्धःपांडवस्यमहद्धनुः ३१ चिच्छेदप्रहसन्युद्धेक्षुरप्रेणमहारथः ॥ अथान्यद्धनुरादायनकुलःक्रोधमूर्च्छितः ३२ सुषेणंपं
चभिर्विद्ध्वाध्वजमेकेनचिच्छिदे ॥ सत्यसेनस्यसधनुर्हस्तावापंचमारिष ३३ चिच्छेदतरसायुद्धेततउच्चुक्रुशुर्जनाः ॥ अथान्यद्धनुरादायवेगघ्नंभारसाधनम्
३४ शरैःसंछादयामाससमंतात्पांडुनंदनम् ॥ सन्निवार्यतुतान्बाणान्नकुलःपरवीरहा ३५ सत्यसेनंसुषेणंचद्वाभ्यांद्वाभ्यामविध्यत ॥ तावेनंप्रत्यविध्येतांपृथक्
पृथगजिह्मगैः ३६ सारथिंचास्यराजेंद्रशितैर्विव्यधतुःशरैः ॥ सत्यसेनोरथेषांतुनकुलस्यधनुस्तथा ३७ पृथक्शराभ्यांचिच्छेदकृतहस्तःप्रतापवान् ॥ सर
थेऽतिरथस्तिष्ठन्रथशक्तिंपरामृशत् ३८ स्वर्णदंडामकुंठाग्रांतैलधौतांसुनिर्मलाम् ॥ लेलिहानामिवविभोनागकन्यांमहाविषाम् ३९ समुद्यम्यचचिक्षेपसत्यसे
नस्यसंयुगे ॥ सातस्यहृदयंसंख्येबिभेदचतथानृप ४० सपपातरथाद्भूमिंगतसत्वोऽल्पचेतनः॥ भ्रातरंनिहतंदृष्ट्वासुषेणःक्रोधमूर्छितः ४१ अभ्यवर्षच्छरैस्तूर्णं
पादातंपांडुनंदनम् ॥ चतुर्भिश्चतुरोवाहान्ध्वजंछित्वाचपंचभिः ४२ त्रिभिर्वैसारथिंहत्वाकर्णपुत्रोननादह ॥ नकुलंविरथंदृष्ट्वाद्रौपदेयोमहारथम् ४३

४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ ॥ इतिशल्यपर्वणिनीलकंठीये



सुतसोमोऽभिदुद्रावपरीप्सन्पितरंरणे ॥ ततोऽधिरुह्यनकुलःसुतसोमस्यतंरथम् ४४ शुशुभेभरतश्रेष्ठोगिरिस्थइवकेसरी ॥ अन्यत्कार्मुकमादायसुषेणंसमयोधयत् ४५ तावुभौशरवर्षाभ्यांसमासाद्यपरस्परम् ॥ परस्परवधेयत्नंचक्रतुःसुमहारथौ ४६ सुषेणस्तुततःक्रुद्धःपांडवंविशिखैस्त्रिभिः ॥ सुतसोमंतुविंशत्याबाह्वोरुरसिचार्पयत् ४७ ततःक्रुद्धोमहाराजनकुलःपरवीरहा ॥ शरैस्तस्यदिशःसर्वाश्छादयामासवीर्यवान् ४८ ततोगृहीत्वातीक्ष्णाग्रमर्धचंद्रंसुतेजनम् ॥ सुवेगवंतंचिक्षेपकर्णपुत्रायसंयुगे ४९ तस्यतेनाशिरःकायाज्जहारनृपसत्तम ॥ पश्यतांसर्वसैन्यानांतदद्भुतमिवाभवत् ५० सहतःप्रापतद्राजन्नकुलेनमहात्मना ॥ नदीवेगादिवारुग्णस्तीरजःपादपोमहान् ५१ कर्णपुत्रवधंदृष्ट्वानकुलस्यचविक्रमम् ॥ प्रदुद्रावभयात्सेनातावकीभरतर्षभ ५२ तांतुसेनांमहाराजमद्रराजःप्रतापवान् ॥ अपालयद्रणेशूरःसेनापतिररिंदमः ५३ विभीस्तस्थौमहाराजव्यवस्थाप्यचवाहिनीम् ॥ सिंहनादंभृशंकृत्वाधनुःशब्दंचदारुणम् ५४ तावकाःसमरेराजन्रक्षितादृढधन्वना ॥ प्रत्युद्ययुश्चतांस्तेतुसमंताद्विगतव्यथाः ५५ मद्रराजंमहेष्वासंपरिवार्यसमंततः ॥ स्थिताराजन्महासेनायोद्धुकामासमंततः ५६ सात्यकिर्भीमसेनश्चमाद्रीपुत्रौचपांडवौ ॥ युधिष्ठिरंपुरस्कृत्यह्रीनिषेवमरिंदमम् ५७ परिवार्यरणेवीराःसिंहनादंप्रचक्रिरे ॥ बाणशंखरवांस्तीव्रान्क्ष्वेडाश्चविविधादधुः ५८ तथैवतावकाःसर्वेमद्राधिपतिमंजसा ॥ परिवार्यसुसंरब्धाःपुनर्युद्धमरोचयन् ५९ ततःप्रववृतेयुद्धंभीरूणांभयवर्धनम् ॥ तावकानांपरेषांचमृत्युंकृत्वानिवर्तनम् ६० यथादेवासुरंयुद्धंपूर्वमासीद्विशांपते ॥ अभीतानांतथाराजन्यमराष्ट्रविवर्धनम् ६१ ततःकपिध्वजोराजन्हत्वासंशप्तकान्रणे ॥ अभ्यद्रवततांसेनांकौरवींपांडुनंदनः ६२ तथैवपांडवाःसर्वेधृष्टद्युम्नपुरोगमाः ॥ अभ्यधावंततांसेनांविसृजंतःशितान्शरान् ६३ पांडवैरवकीर्णानांसंमोहःसमजायत ॥ नचजज्ञुस्त्वनीकानिदिशोवाविदिशस्तथा ६४ आपूर्यमाणानि[illegible]तैःशरैःपांडवचोदितैः ॥ हतप्रवीराविध्वस्तावार्यमाणासमंततः ६५ कौरव्यवध्यतचमूःपांडुपुत्रैर्महारथैः ॥ तथैवपांडवंसैन्यंशरैराजन्समंततः ६६ रणेऽहन्यतपुत्रैस्तेशतशोऽथसहस्रशः ॥ तेसेनेभृशसंतप्तेवध्यमानेपरस्परम् ६७ व्याकुलेसमपद्येतांवर्षासुसरिताविव ॥ आविवेशततस्तीव्रंतावकानांमहद्भयम् ॥ पांडवानांचराजेंद्रतथाभूतेमहाहवे ६८ ॥ इतिश्रीमहाभारतेशल्यपर्वणिसंकुलयुद्धेदशमोऽध्यायः ॥ १० ॥ संजयउवाच ॥ तस्मिन्विलुलितेसैन्येवध्यमानेपरस्परम् ॥ द्रवमाणेषुयोधेषुविद्रवत्सुचदंतिषु १ कूजतांस्तनतांचैवपदातीनांमहाहवे ॥ निहतेषुमहाराजहयेषुबहुधातदा २ प्रक्षयेदारुणेघोरेसंहारेसर्वदेहिनाम् ॥ नानाशस्त्रसमावायेव्यतिषक्तरथद्विपे ३ हर्षणेयुद्धशौंडानांभीरूणांभयवर्धने ॥ गाहमानेषुयोधेषुपरस्परवधैषिषु ४ प्राणादानेमहाघोरेवर्तमानेदुरोदरे ॥ संग्रामेघोररूपेतुयमराष्ट्रविवर्द्धने ५ भारतभावदीपेदशमोऽध्यायः ॥ १० ॥ तस्मिन्निति १ । २ । ३ । ४ । ५

१ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ भूभुजामिति सर्वभूभुजांकृत्स्नपृथ्वीपतीनांपांडुपुत्राणांपांडवानांचरमंविलोमगणनयाप्रथमंयुधिष्ठिरमभिलक्ष्यशुक्रभौमबुधाःसप्तमस्था

पांडवास्तावकंसैन्यंव्यधमन्निशितैःशरैः ॥ तथैवतावकायोधाजघ्नुःपांडवसैनिकान् ६ तस्मिंस्तथावर्त्तमानेयुद्धेभीरुभयावहे ॥ पूर्वाह्णेचापिसंप्राप्तेभास्करोद यनंप्रति ७ लब्धलक्षाःपरेराजन्रक्षितास्तुमहात्मना ॥ अयोधयंस्तवबलंमृत्युंकृत्वानिवर्त्तनम् ७ बलिभिःपांडवैर्दृप्तैर्लब्धलक्षैःप्रहारिभिः ॥ कौरव्यसीदत्पृ तनामृगीवाग्निसमाकुला ९ तांदृष्ट्वासीदतींसेनांपंकेगामिवदुर्बलाम् ॥ उज्जिहीर्षुस्तदाशल्यःप्रायात्पांडुसुतान्प्रति १० मद्रराजःसुसंक्रुद्धोगृहीत्वाधनुरुत्तमम् ॥ अभ्यद्रवतसंग्रामेपांडवानाततायिनः ११ पांडवाअपिभूपालसमरेजितकाशिनः ॥ मद्रराजंसमासाद्यबिभिदुर्निशितैःशरैः १२ ततःशरशतैस्तीक्ष्णैर्मद्रराजो महारथः ॥ अर्दयामासतांसेनांधर्मराजस्यपश्यतः १३ प्रादुरासन्निमित्तानिनानारूपाण्यनेकशः ॥ चचालशब्दंकुर्वाणामहीचापिसपर्वता १४ सदंडशूला दीप्ताग्रादीर्यमाणाःसमंततः ॥ उल्काभूमिंदिवःपेतुराहत्यरविमंडलम् १५ मृगाश्चमहिषाश्चापिपक्षिणश्चविशांपते ॥ अपसव्यंतदाचक्रुःसेनांतेबहुशोनृप १६ भृगुसूनुधरापुत्रौशशिजेनसमन्वितौ ॥ चरमंपांडुपुत्राणांपुरस्तात्सर्वभूभुजाम् १७ शस्त्राग्रेष्वभवज्ज्वालानेत्राण्याहत्यवर्षती ॥ शिरःस्वलीयंतभृशंकाकोलूका श्चकेतुषु १८ ततस्तद्युद्धमत्युग्रमभवत्सहचारिणाम् ॥ तथासर्वाण्यनीकानिसन्निपत्यजनाधिप १९ अभ्ययुःकौरवाराजन्पांडवानामनीकिनीम् ॥ शल्यस्तुश रवर्षेणवर्षन्निवसहस्रदृक् २० अभ्यवर्षतधर्मात्माकुंतीपुत्रंयुधिष्ठिरम् ॥ भीमसेनंशरैश्चापिरुक्मपुंखैःशिलाशितैः २१ द्रौपदेयांस्तथासर्वान्माद्रीपुत्रौचपांड वौ ॥ धृष्टद्युम्नंचशैनेयंशिखंडिनमथापिच २२ एकैकंदशभिर्बाणैर्विव्याधसमहाबलः ॥ ततोऽसृजद्बाणवर्षंघर्मांतेमघवानिव २३ ततःप्रभद्रकाराजन्सोमकाश्च सहस्रशः ॥ पतिताःपात्यमानाश्चदृश्यंतेशल्यसायकैः २४ भ्रमराणामिवव्राताःशलभानामिवव्रजाः ॥ ह्रादिन्यइवमेघेभ्यःशल्यस्यन्यपतन्शराः २५ द्विरदा स्तुरगाश्चार्त्ताःपत्तयोरथिनस्तथा ॥ शल्यस्यबाणैरपतन्बभ्रमुर्व्यनदंस्तदा २६ आविष्टइवमद्रेशोमन्युनापौरुषेणच ॥ प्राच्छादयदरीन्संख्येकालसृष्टइवांत कः २७ विनर्दमानोमद्रेशोमेघह्रादोमहाबलः ॥ साबध्यमानाशल्येनपांडवानामनीकिनी २८ अजातशत्रुंकौंतेयमभ्यधावद्युधिष्ठिरम् ॥ तांसंमर्द्यततःसंख्ये लघुहस्तःशितैःशरैः २९ बाणवर्षेणमहतायुधिष्ठिरमताडयत् ॥ तमापतंतंपत्त्यश्वैःक्रुद्धोराजायुधिष्ठिरः ३० अवारयच्छरैस्तीक्ष्णैर्महाद्विपमिवांकुशैः ॥ तस्य शल्यःशरंघोरंमुमोचाशीविषोपमम् ३२ सनिर्भिद्यमहात्मानंवेगेनाभ्यपतन्नगाम् ॥ ततोवृकोदरःक्रुद्धःशल्यंविव्याधसप्तभिः ३२ पंचभिःसहदेवस्तुनकुलोद शभिःशरैः ॥ द्रौपदेयाश्चशत्रुघ्नंशूरमार्तायनिंशरैः ३३ अभ्यवर्षन्महाराजमेघाइवमहीधरम् ॥ ततोदृष्ट्वावार्यमाणंशल्यंपार्थैःसमंततः ३४ कृतवर्माकृपश्चैव संक्रुद्धावभ्यधावताम् ॥ उलूकश्चमहावीर्यःशकुनिश्चापिसौबलः ३५

नेबलावहाःआसन् एतच्चसर्वभूभुजामितिफलस्यजनकमित्यर्थः १७

आहत्यस्पष्टंवर्षतीभुविपतंती कर्षतांविपाठेआहत्यबलेनकर्षयंती १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५

समागम्याथशनकैरश्वत्थामामहाबलः ॥ तवपुत्राश्चकात्स्न्र्येनजुगुपुःशल्यमाहवे ३६ भीमसेनंत्रिभिर्विद्ध्वाकृतवर्माशिलीमुखैः ॥ बाणवर्षेणमहताक्रुद्धरूपमवा रयत् ३७ धृष्टद्युम्नंततःक्रुद्धोबाणवर्षैरपीडयत् ॥ द्रौपदेयांश्चशकुनिर्यमौचद्रौणिरभ्ययात् ३८ दुर्योधनोयुधांश्रेष्ठआहवेकेशवार्जुनौ ॥ समभ्ययादुग्रतेजाःश रैश्चाप्यहनद्बली ३९ एवंद्वंद्वशतान्यासंस्त्वदीयानांपरैःसह ॥ घोररूपाणिचित्राणितत्रतत्रविशांपते ४० ऋक्षवर्णाञ्जघानाश्वान्भोजोभीमस्यसंयुगे ॥ सो ऽवतीर्यरथोपस्थाद्धताश्वात्पांडुनंदनः ४१ कालोदंडमिवोद्यम्यगदापाणिरयुध्यत ॥ प्रमुखेसहदेवस्यजघानाश्वान्समद्रराट् ४२ ततःशल्यस्यतनयंसहदेवो ऽसिनाऽवधीत् ॥ गौतमःपुनराचार्योधृष्टद्युम्नमयोधयत् ४३ असंभ्रांतमसंभ्रांतोयत्नवान्यत्नवत्तरम् ॥ द्रौपदेयांस्तथावीरानेकैकंदशभिःशरैः ४४ अविद्धय दाचार्यसुतोनातिक्रुद्धोहसन्निव ॥ पुनश्चभीमसेनस्यजघानाश्वांस्तथाऽऽहवे ४५ सोऽवतीर्यरथात्तूर्णंहताश्वःपांडुनंदनः ॥ कालोदंडमिवोद्यम्यगदांक्रुद्धोम हाबलः ४६ पोथयामासतुरगान्रथंचकृतवर्मणः ॥ कृतवर्मात्ववप्लुत्यरथात्तस्मादपाक्रमत् ४७ शल्योऽपिराजन्संक्रुद्धोनिघ्नन्सोमकपांडवान् ॥ पुनरेवशितैर्बा णैर्युधिष्ठिरमपीडयत् ४८ तस्यभीमोरणेक्रुद्धःसंदश्यदशनच्छदम् ॥ विनाशायाभिसंधायगदामादायवीर्यवान् ४९ यमदंडप्रतीकाशांकालरात्रिमिवोद्यताम् ॥ गजवाजिमनुष्याणांदेहांतकरणीमति ५० हेमपट्टपरिक्षिप्तामुल्कांप्रज्वलितामिव ॥ शैक्यांव्यालीमिवात्युग्रांवज्रकल्पामयोमयीम् ५१ चंदनागुरुपंकाक्तांप्र मदामीप्सितामिव ॥ वसामेदोपदिग्धांगींजिह्वांवैवस्वतीमिव ५२ पटुघंटाशतरवांवासवीमशनीमिव ॥ निर्मुक्ताशीविषाकारांपृक्तांगजमदैरपि ५३ त्रासनींसर्व भूतानांस्वसैन्यपरिहर्षिणीम् ॥ मनुष्यलोकेविख्यातांगिरिशृंगविदारणीम् ५४ ययाकैलासभवनेमहेश्वरसखंबली ॥ आह्वयामासयुद्धायभीमसेनोमहाबलः ५५ ययामायामयान्दृप्तान्सुबहून्धनदालये ॥ जघानगुह्यकान्क्रुद्धोनदन्पार्थोमहाबलः ५६ निवार्यमाणोबहुभिर्द्रौपद्याःप्रियमास्थितः ॥ तांवज्रमणिरत्नौघक ल्माषांवज्रगौरवाम् ५७ समुद्यम्यमहाबाहुःशल्यमभ्यपतद्रणे ॥ गदयायुद्धकुशलस्तयादारुणनादया ५८ पोथयामासशल्यस्यचतुरोऽश्वान्महाजवान् ॥ त तःशल्योरणेक्रुद्धःपीनेवक्षसितोमरम् ५९ निचखाननदन्वीरोवर्मभित्वाचसोऽभ्ययात् ॥ वृकोदरस्त्वसंभ्रांतस्तमेवोद्धृत्यतोमरम् ६० यंतारंमद्रराजस्यनिर्बि भेदततोहृदि ॥ सभिन्नवर्मारुधिरंवमन्वित्रस्तमानसः ६१ पपाताभिमुखोदीनोमद्रराजस्त्वपाक्रमत् ॥ कृतप्रतिकृतंदृष्ट्वाशल्योविस्मितमानसः ६२ गदामाश्रि त्यधर्मात्माप्रत्यमित्रमवैक्षत ॥ ततःसुमनसःपार्थाभीमसेनमपूजयन् ॥ तेदृष्ट्वाकर्मसंग्रामेघोरमक्लिष्टकर्मणः ६३ ॥ इतिश्रीमहाभारतेशल्यपर्वणिभीमसेनशल्य युद्धेएकादशोऽध्यायः ॥ ११ ॥

कुबेरम् ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ ॥ इतिशल्यपर्वणि नीलकंठीये भारतभावदीपे एकादशोऽध्यायः ॥ ११ ॥

संजयउवाच ॥ पतितंप्रेक्ष्ययंतारंशल्यःसर्वायसींगदाम् ॥ आदायतरसाराजंस्तस्थौगिरिरिवाचलः १ तंदीप्तमिवकालाग्निंपाशहस्तमिवांतकम् ॥ सशृंग
मिवकैलासंसवज्रमिववासवम् २ सशूलमिवहर्यक्षंवनेमत्तमिवद्विपम् ॥ जवेनाभ्यपतद्भीमःप्रगृह्यमहतींगदाम् ३ ततःशंखप्रणादश्चतूर्याणांचसहस्रशः ॥ सिंह
नादश्चसंजज्ञेशूराणांहर्षवर्धनः ४ प्रेक्षंतःसर्वतस्तौहियोधायोधमहाद्विपौ ॥ तावकाश्चापरेचैवसाधुसाध्वित्यपूजयन् ५ नहिमद्राधिपादन्योरामाद्वायदुनंद
नात् ॥ सोढुमुत्सहतेवेगंभीमसेनस्यसंयुगे ६ तथामद्राधिपस्यापिगदावेगंमहात्मनः ॥ सोढुमुत्सहतेनान्योयोधोयुधिवृकोदरात् ७ तौवृषाविवनर्दंतौमंडला
निविचेरतुः ॥ आवर्तितौगदाहस्तौमद्रराजवृकोदरौ ८ मंडलावर्तमार्गेषुगदाविहरणेषुच ॥ निर्विशेषमभूद्युद्धंतयोःपुरुषसिंहयोः ९ तप्तहेममयैःशुभ्रैर्बभूवभय
वर्धिनी ॥ अग्निज्वालैरिवाबद्धापट्टैःशल्यस्यसागदा १० तथैवचरतोमार्गान्मंडलेषुमहात्मनः ॥ विद्युदभ्रप्रतीकाशाभीमस्यशुशुभेगदा ११ ताडितामद्ररा
जेनभीमस्यगदयागदा ॥ दह्यमानेवखेराजन्साऽसृजत्पावकार्चिषः १२ तथाभीमेनशल्यस्यताडितागदयागदा ॥ अंगारवर्षंमुमुचेतदद्भुतमिवाभवत् १३ दंतै
रिवमहानागौशृंगैरिवमहर्षभौ ॥ तोत्रैरिवतदान्योन्यंगदाग्राभ्यांनिजघ्नतुः १४ तौगदाभिहतैर्गात्रैःक्षणेनरुधिरोक्षितौ॥ प्रेक्षणीयतरावास्तांपुष्पिताविवकिंशुकौ
१५ गदयामद्रराजस्यसव्यदक्षिणमाहतः ॥ भीमसेनोमहाबाहुर्नचचालाचलोयथा १६ तथाभीमगदावेगैस्ताड्यमानोमुहुर्मुहुः ॥ शल्योनविव्यथेराजन्दं
तिनेवमहागिरिः १७ शुश्रुवेदिक्षुसर्वासुतयोःपुरुषसिंहयोः ॥ गदानिपातसंह्रादोवज्रयोरिवनिःस्वनः १८ निवृत्त्यतुमहावीर्यौसमुच्छ्रितमहागदौ ॥ पुनरंतर
मार्गस्थौमंडलानिविचेरतुः १९ अथाभ्येत्यपदान्यष्टौसन्निपातोऽभवत्तयोः ॥ उद्यम्यलोहदंडाभ्यामतिमानुषकर्मणोः २० पोथयंतौतदान्योन्यंमंडलानिवि
चेरतुः ॥ क्रियाविशेषंकृतिनौदर्शयामासतुस्तदा २१ अथोद्यम्यगदेघोरेसशृंगाविवपर्वतौ ॥ तावाजघ्नतुरन्योन्यंमंडलानिविचेरतुः २२ क्रियाविशेषकृतिनौर
णभूमितलेऽचलौ ॥ तौपरस्परसंरंभाद्गदाभ्यांसुभृशाहतौ २३ युगपत्पेततुर्वीरावुभाविंद्रध्वजाविव ॥ उभयोःसेनयोर्वीरास्तदाहाहाकृतोऽभवन् २४ भृशंमर्मा
ण्यभिहतावुभावास्तांसुविह्वलौ ॥ ततःस्वरथमारोप्यमद्राणामृषभंरणे २५ अपोवाहकृपःशल्यंतूर्णमायोधनादथ ॥ क्षीबवद्विह्वलत्वात्तुनिमेषात्पुनरुत्थितः
२६ भीमसेनोगदापाणिःसमाह्वयतमद्रपम् ॥ ततस्तुतावकाःशूरानानाशस्त्रसमायुताः २७ नानावादित्रशब्देनपांडुसेनामयोधयन् ॥ भुजावुच्छ्रित्यशस्त्रंच
शब्देनमहताततः २८ अभ्यद्रवन्महाराजदुर्योधनपुरोगमाः ॥ तदनीकमभिप्रेक्ष्यततस्तेपांडुनंदनाः २९ प्रययुःसिंहनादेनदुर्योधनपुरोगमान् ॥ तेषामाप
ततांतूर्णंपुत्रस्तेभरतर्षभ ३० प्रासेनचेकितानंवैविव्याधहृदयेभृशम् ॥ सपपातरथोपस्थेतवपुत्रेणताडितः ३१ २६ । २७ । २८ । २९ । ३० । ३१

रुधिरौघपरिक्लिन्नःप्रविश्यविपुलंतमः॥ चेकितानंहतंदृष्ट्वापांडवेयामहारथाः ३२ असक्तमभ्यवर्षंतशरवर्षाणिभागशः ॥ तावकानामनीकेषुपांडवाजितकाशिनः
३३ व्यचरंतमहाराजप्रेक्षणीयाःसमंततः ॥ कृपश्चकृतवर्माचसौबलश्चमहारथः ३४ अयोधयन्धर्मराजंमद्रराजपुरस्कृताः ॥ भारद्वाजस्यहंतारंभूरिवीर्यपराक्र
मम् ३५ दुर्योधनोमहाराजधृष्टद्युम्नमयोधयत् ॥ त्रिसाहस्रास्तथाराजंस्तवपुत्रेण वोदिताः ३६ अयोधयंतविजयंद्रोणपुत्रपुरस्कृताः ॥ विजयेधृतसंकल्पाःस
मरेत्यक्तजीविताः ३७ प्राविशंस्तावकाराजन्हंसाइवमहत्सरः ॥ ततोयुद्धमभूद्धोरंपरस्परवधैषिणाम् ३८ अन्योन्यवधसंयुक्तमन्योन्यप्रीतिवर्धनम् ॥ तस्मि
न्प्रवृत्तेसंग्रामेराजन्वीरवरक्षये ३९ अनिलेनेरितंघोरमुत्तस्थौपार्थिवंरजः ॥ श्रवणान्नामधेयानांपांडवानांचकीर्तनात् ४० परस्परंविजानीमोयदयुद्ध्यन्नभी
तवत् ॥ तद्रजःपुरुषव्याघ्रशोणितेनप्रशामितम् ४१ दिशश्चविमलाजातास्तस्मिंस्तमसिनाशिते ॥ तथाप्रवृत्तेसंग्रामेघोररूपेभयानके ४२ तावकानांपरेषां
चनासीत्कश्चित्पराङ्मुखः ॥ ब्रह्मलोकपराभूत्वापार्थयंतोजयंयुधि ४३ सुयुद्धेनपराक्रांतानराःस्वर्गमभीप्सवः ॥ भर्तृपिंडविमोक्षार्थंभर्तृकार्यविनिश्चिताः ४४
स्वर्गसंसक्तमनसोयोधायुयुधिरेतदा ॥ नानारूपाणिशस्त्राणिविसृजंतोमहारथाः ४५ अन्योन्यमभिगर्जंतःप्रहरंतःपरस्परम् ॥ हतविध्यतगृह्णीतप्रहरध्वंनिकृं
तत ४६ इतिस्मवाचःश्रूयंतेतवतेषांचवैबले ॥ ततःशल्योमहाराजधर्मपुत्रंयुधिष्ठिरम् ४७ विव्याधनिशितैर्बाणैर्हंतुकामोमहारथम् ॥ तस्यपार्थोमहाराज
नाराचान्वैचतुर्दश ४८ मर्माण्युद्दिश्यमर्मज्ञोनिचखानहसन्निव ॥ आवार्यपांडवंबाणैर्हंतुकामोमहाबलः ४९ विव्याधसमरेक्रुद्धोबहुभिःकंकपत्रिभिः ॥ अथभूयो
महाराजशरेणानतपर्वणा ५० युधिष्ठिरंसमाजघ्नेसर्वसैन्यस्यपश्यतः ॥ धर्मराजोऽपिसंक्रुद्धोमद्रराजंमहायशाः ५१ विव्याधनिशितैर्बाणैःकंकबर्हिणवाजितैः ॥
चंद्रसेनंचसप्तत्यासूतंचनवभिःशरैः ५२ द्रुमसेनंचतुःषष्ट्यानिजघानमहारथः ॥ चक्ररक्षेहतेशल्यःपांडवेनमहात्मना ५३ निजघानततोराजंश्चेदीन्वैपंच
विंशतिम् ॥ सात्यकिंपंचविंशत्याभीमसेनंचपंचभिः ५४ माद्रीपुत्रौशतेनाजौविव्याधनिशितैःशरैः ॥ एवंविचरतस्तस्यसंग्रामेराजसत्तम ५५ संप्रेषयच्छिता
न्पार्थःशरानाशीविषोपमान् ॥ ध्वजाग्रंचास्यसमरेकुंतीपुत्रोयुधिष्ठिरः ५६ प्रमुखेवर्तमानस्यभल्लेनापहरद्रथात् ॥ पांडुपुत्रेणवैतस्यकेतुंछिन्नंमहात्मना ५७
निपतंतमपश्यामगिरिशृंगमिवाहतम् ॥ ध्वजंनिपातितंदृष्ट्वापांडवंचव्यवस्थितम् ५८ संक्रुद्धोमद्रराजोऽभूच्छरवर्षंमुमोचह ॥ शल्यःसायकवर्षेणपर्जन्यइवनृ
ष्टिमान् ५९ अभ्यवर्षदमेयात्माक्षत्रियान्क्षत्रियर्षभः ॥ सात्यकिंभीमसेनंचमाद्रीपुत्रौचपांडवौ ६० एकैकंपंचभिर्विद्ध्वायुधिष्ठिरमपीडयत् ॥ ततोबाणमयं
जालंविततंपांडवोरसि ६१ अपश्यामममहाराजमेघजालमिवोद्गतम् ॥ तस्यशल्योरणेक्रुद्धःशरैःसन्नतपर्वभिः ६२

१३ ॥ इतिशल्यपर्वणिनीलकंठीयेभारतभावदीपेद्वादशोऽध्यायः ॥ १२ ॥ ॥ ७ ॥ ॥ पीडितैइति १ तंशल्यमेकंबहुभिःपीड्यमानंदृष्ट्वासिद्धाःप्रहर्षिताआसन्नितिसंबंधः २ साधुवादोजज्ञेअर्था

दिशःसंछादयामासप्रदिशश्चमहारथः ॥ ततोयुधिष्ठिरोराजाबाणजालेनपीडितः ॥ बभूवाद्भुतविक्रांतोजंभोवृत्रहणायथा ९३ ॥ इतिश्रीमहाभारतेशल्यपर्वणिसंकुलयुद्धेद्वादशोऽध्यायः ॥ १२ ॥ ॥ संजयउवाच ॥ पीडितेधर्मराजेतुमद्रराजेनमारिष ॥ सात्यकिर्भीमसेनश्चमाद्रीपुत्रौचपांडवौ १ परिवार्यरथैःशल्यंपीडयामासुराहवे ॥ तमेकंबहुभिर्दृष्ट्वापीड्यमानंमहारथैः २ साधुवादोमहाञ्जज्ञेसिद्धाश्चासन्प्रहर्षिताः ॥ आश्चर्यमित्यभाषंतमुनयश्चापिसंगताः ३ भीमसेनोरणेशल्यंशल्यभूतंपराक्रमे ॥ एकेनाविद्ध्वाबाणेनपुनर्विव्याधसप्तभिः ४ सात्यकिश्चशतेनैनंधर्मपुत्रपरीप्सया ॥ मद्रेश्वरमवाकीर्यसिंहनादमथानदत् ५ नकुलःपंचभिश्चैनंसहदेवश्चपंचभिः ॥ विद्ध्वातंतुपुनस्तूर्णंततोविव्याधसप्तभिः ६ सतुशूरोरणेयत्तःपीडितस्तैर्महारथैः ॥ विकृष्यकार्मुकंघोरंवेगघ्नंभारसाधनम् ७ सात्यकिंपंचविंशत्याशल्योविव्याधमारिष ॥ भीमसेनंतुसप्तत्यानकुलंसप्तभिस्तथा ८ ततःसविशिखंचापंसहदेवस्यधन्विनः ॥ छित्त्वाभल्लेनसमरेविव्याधैनंत्रिसप्तभिः ९ सहदेवस्तुसमरेमातुलंभूरिवर्चसम् ॥ सज्यमन्यद्धनुःकृत्वापंचभिःसमताडयत् १० शरैराशीविषाकारैर्ज्वलज्ज्वलनसन्निभैः ॥ सारथिंचास्यसमरेशरेणानतपर्वणा ११ विव्याधभृशसंक्रुद्धस्तंवैभूयस्त्रिभिःशरैः ॥ भीमसेनस्तुसप्तत्यासात्यकिर्नवभिःशरैः १२ धर्मराजस्तथाषष्ट्यागात्रेशल्यंसमार्पयत् ॥ ततःशल्योमहाराजनिर्विद्धस्तैर्महारथैः १३ सुस्रावरुधिरंगात्रैर्गैरिकंपर्वतोयथा ॥ तांश्चसर्वान्महेष्वासान्पंचभिःपंचभिःशरैः १४ विव्याधतरसाराजंस्तदद्भुतमिवाभवत् ॥ ततोऽपरेणभल्लेनधर्मपुत्रस्यमारिष १५ धनुश्चिच्छेदसमरेसज्यंससुमहारथः ॥ अथान्यद्धनुरादायधर्मपुत्रोयुधिष्ठिरः १६ साश्वसूतध्वजरथंशल्यंप्राच्छादयच्छरैः ॥ सच्छाद्यमानःसमरेधर्मपुत्रस्यसायकैः १७ युधिष्ठिरमथाविध्यद्दशभिर्निशितैःशरैः ॥ सात्यकिस्तुततःक्रुद्धोधर्मपुत्रेशरार्दिते १७ मद्राणामधिपंशूरंशरैर्विव्याधपंचभिः ॥ ससात्यकेःप्रचिच्छेदक्षुरप्रेणमहद्धनुः १९ भीमसेनमुखांस्तांश्चत्रिभिस्त्रिभिरताडयत् ॥ तस्यक्रुद्धोमहाराजसात्यकिःसत्यविक्रमः २० तोमरंप्रेषयामासस्वर्णदंडंमहाधनम् ॥ भीमसेनोऽथनाराचंज्वलंतमिवपन्नगम् २१ नकुलःसमरेशक्तिंसहदेवोगदांशुभाम् ॥ धर्मराजःशतघ्नींचजिघांसुःशल्यमाहवे २२ तानापततएवाशुपंचानांवैभुजच्युतान् ॥ वारयामाससमरेशस्त्रसंघैःसमद्रराट् २३ सात्यकिप्रहितंशल्योभल्लैश्चिच्छेदतोमरम् ॥ प्रहितंभीमसेनेनशरंकनकभूषणम् २४ द्विधाचिच्छेदसमरेकृतहस्तःप्रतापवान् ॥ नकुलप्रेषितांशक्तिंहेमदंडांभयावहाम् २५ गदांचसहदेवेनशरौघैःसमवारयत् ॥ शराभ्यांचशतघ्नींतांराज्ञश्चिच्छेदभारत २६ पश्यतांपांडुपुत्राणांसिंहनादंननादच ॥ नामृष्यत्तत्रशैनेयःशत्रोर्विजयमाहवे २७

दिसिद्धानाम् ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ सहदेवेनप्रेषितामितिपूर्वस्मात्संबध्यते २६ । २७

अथान्यद्धनुरादायसात्यकिःक्रोधमूर्छितः ॥ द्वाभ्यांमद्रेश्वरंविद्ध्वासारथिंचत्रिभिःशरैः २८ ततःशल्योरणेराजन्सर्वांस्तान्दशभिःशरैः ॥ विव्याधभृशसंक्रु
द्धस्तोत्रैरिवमहाद्विपान् २९ तेवार्यमाणाःसमरेमद्रराज्ञामहारथाः ॥ नशेकुःसंमुखेस्थातुंतस्यशत्रुनिषूदनः ३० ततोदुर्योधनोराजादृष्ट्वाशल्यस्यविक्रमम् ॥
निहतान्पांडवान्मेनेपंचालानथसृंजयान् ३१ ततोराजन्महाबाहुर्भीमसेनःप्रतापवान् ॥ संत्यज्यमनसाप्राणान्मद्राधिपमयोधयत् ३२ नकुलःसहदेवश्चसात्य
किश्चमहारथाः ॥ परिवार्यतदाशल्यंसमंताद्व्याकिरन्शरैः ३३ सचतुर्भिर्महेष्वासैःपांडवानांमहारथैः ॥ वृतस्तान्योधयामासमद्रराजःप्रतापवान् ३४ तस्यध
र्मसुतोराजन्क्षुरप्रेणमहाहवे ॥ चक्ररक्षंजघानाशुमद्रराजस्यपार्थिवः ३५ तस्मिंस्तुनिहतेशूरेचक्ररक्षेमहारथे ॥ मद्रराजोऽपिबलवान्सैनिकानावृणोच्छरैः ३६
समावृतांस्ततस्तांस्तुराजन्वीक्ष्यस्वसैनिकान् ॥ चिंतयामाससमरेधर्मपुत्रोयुधिष्ठिरः ३७ कथंनुसमरेशक्यंतन्माधववचोमहत् ॥ नहिक्रुद्धोरणेराजन्क्षपयेत
बलंमम ३८ ततःसरथनागाश्वाःपांडवाःपांडुपूर्वज ॥ मद्रराजंसमासेदुःपीडयंतःसमंततः ३९ नानाशस्त्रौघबहुलांशस्त्रवृष्टिंसमुद्यताम् ॥ व्यधमत्समरेराजा
महाभ्राणीवमारुतः ४० ततःकनकपुंखांतांशल्यक्षिप्तांवियद्गताम् ॥ शरवृष्टिमपश्यामशलभानामिवायतिम् ४१ तेशरामद्रराजेनप्रेषितारणमूर्धनि ॥ संप
तंतःस्मदृश्यंतेशलभानांव्रजाइव ४२ मद्रराजधनुर्मुक्तैःशरैःकनकभूषणैः ॥ निरंतरमिवाकाशंसंबभूवजनाधिप ४३ नपांडवानांनास्माकंतत्रकिंचिद्व्यदृश्य
त ॥ बाणांधकारेमहतिकृतेतत्रमहाहवे ४४ मद्रराजेनबलिनालाघवाच्छरवृष्टिभिः ॥ चाल्यमानंतुतंदृष्ट्वापांडवानांबलार्णवम् ४५ विस्मयंपरमंजग्मुर्देवगंधर्व
दानवाः ॥ सतुतान्सर्वतोयत्तान्शरैःसंछाद्यमारिष ४६ धर्मराजमवच्छाद्यसिंहवद्व्यनदन्मुहुः ॥ तेच्छन्नाःसमरेतेनपांडवानांमहारथाः ४७ नाशक्नुवंस्तदायु
द्धेप्रत्युद्यातुंमहारथम् ॥ धर्मराजपुरोगास्तुभीमसेनमुखारथाः ॥ नजहुःसमरेशूरंशल्यमाहवशोभिनम् ४८ ॥ इतिश्रीमहाभारतेशल्यपर्वणिशल्ययुद्धेत्रयोद
शोऽध्यायः ॥ १३ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ अर्जुनोद्रौणिनाविद्धोयुद्धेबहुभिरायसैः ॥ तस्यचानुचरैःशूरैस्त्रिगर्तानांमहारथैः १ द्रौणिंविव्याधस
मरेत्रिभिरेवशिलीमुखैः ॥ तथेतरान्महेष्वासान्द्वाभ्यांद्वाभ्यांधनंजयः २ भूयश्चैवमहाराजशरवर्षैरवाकिरत् ॥ शरकंटकितास्तेतुतावकाभरतर्षभ ३ नजहुःपार्थ
मासाद्यताड्यमानाःशितैःशरैः ॥ अर्जुनंरथवंशेनद्रोणपुत्रपुरोगमाः ४ अयोधयंतसमरेपरिवार्यमहारथाः ॥ तैस्तुक्षिप्ताःशराराजन्कार्तस्वरविभूषिताः ५ अर्जु
नस्यरथोपस्थंपूरयामासुरंजसा ॥ तथाकृष्णौमहेष्वासौवृषभौसर्वधन्विनाम् ६ शरैर्वीक्ष्यविनुन्नांगौप्रहृष्टायुद्धदुर्मदाः ॥ कूबरंरथचक्राणिईषायोक्त्राणिवाविभो ७

८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ ।। २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३९

युगंचैवानुकर्षंचशरभूतमभूत्तदा ॥ नैतादृशंदृष्टपूर्वंराजन्नैवचनःश्रुतम् ८ यादृशंतत्रपार्थस्यतात्वकाःसंप्रचक्रिरे ॥ सरथःसर्वतोभातिचित्रपुंखैःशितैःशरैः ९
उल्काशतैःसंप्रदीप्तंविमानमिवभूतले ॥ ततोऽर्जुनोमहाराजशरैःसन्नतपर्वभिः १० अवाकिरत्तांपृतनांमेघोवृष्ट्येवपर्वतम् ॥ तेवध्यमानाःसमरेपार्थनामांकितैः
शरैः ११ पार्थभूतममन्यंतप्रेक्षमाणास्तथाविधम् ॥ कोपोद्भूतशरज्वालोधनुःशब्दानिलोमहान् १२ सैन्येंधनंददाहाशुतावकंपार्थपावकः ॥ चक्राणांपततां
चापियुगानांचधरातले १३ तूणीराणांपताकानांध्वजानांचरथैःसह ॥ ईषाणामनुकर्षाणांत्रिवेणूनांचभारत १४ अक्षाणामथयोक्राणांप्रतोदानांचसर्वशः ॥
शिरसांपततांचापिकुंडलोष्णीषधारिणाम् १५ भुजानांचमहाभागस्कंधानांचसमंततः ॥ छत्राणांव्यजनैःसार्धंमुकुटानांचराशयः १६ समदृश्यंतपार्थस्यरथ
मार्गेषुभारत ॥ ततःक्रुद्धस्यपार्थस्यरथमार्गेविशांपते १७ अगम्यरूपापृथिवीमांसशोणितकर्दमा ॥ भीरूणांत्रासजननीशूराणांहर्षवर्धिनी १८ बभूवभरतश्रेष्ठ
रुद्रस्याक्रीडनंयथा ॥ हत्वातुसमरेपार्थःसहस्रेद्वेपरंतपः १९ रथानांसवरूथानांविधूमोऽग्निरिवज्वलन् ॥ यथाहिभगवानग्निर्जगद्दग्ध्वाचराचरम् २० विधूमो
दृश्यतेराजंस्तथापार्थोधनंजयः ॥ द्रौणिस्तुसमरेदृष्ट्वापांडवस्यपराक्रमम् २१ रथेनातिपताकेनपांडवंप्रत्यवारयत् ॥ तावुभौपुरुषव्याघ्रौतावुभौधन्विनांवरौ
२२ समीयतुस्तदाऽन्योन्यंपरस्परवधैषिणौ ॥ तयोरासीन्महाराजबाणवर्षंसुदारुणम् २३ जीमूतयोर्यथावृष्टिस्तपांतेभरतर्षभ ॥ अन्योन्यस्पर्धिनौतौतु
शरैःसन्नतपर्वभिः २४ ततक्षतुस्तदाऽन्योन्यंशृंगाभ्यांवृषभाविव ॥ तयोर्युद्धंमहाराजचिरंसममिवाभवत् २५ शस्त्राणांसंगमश्चैवघोरस्तत्राभवत्पुनः ॥ ततोऽ
र्जुनंद्वादशभीरुक्मपुंखैःसुतेजनैः २६ वासुदेवंचदशभिर्द्रौणिर्विव्याधभारत ॥ ततःप्रहर्षाद्बीभत्सुर्व्याक्षिपद्गांडिवंधनुः २७ मानयित्वामुहूर्तंतुगुरुपुत्रंमहाहवे ॥
व्यश्वसूतरथंचक्रेसव्यसाचीपरंतपः २८ मृदुपूर्वंततश्चैनंपुनःपुनरताडयत् ॥ हताश्वेतुरथेतिष्ठन्द्रोणपुत्रस्त्वयस्मयम् २९ मुसलंपांडुपुत्रायाचिक्षेपपरिघोप
मम् ॥ तमापतंतंसहसाहेमपट्टविभूषितम् ३० चिच्छेदसप्तधावीरःपार्थःशत्रुनिबर्हणः ॥ सच्छिन्नंमुसलंदृष्ट्वाद्रौणिःपरमकोपनः ३१ आददेपरिघंघोरंनगेंद्र
शिखरोपमम् ॥ चिक्षेपचैवपार्थायद्रौणिर्युद्धविशारदः ३२ तमंतकमिवक्रुद्धंपरिघंप्रेक्ष्यपांडवः ॥ अर्जुनस्त्वरितोजघ्नेपंचभिःसायकोत्तमैः ३३ सच्छिन्नः
पतितोभूमौपार्थबाणैर्महाहवे ॥ दारयन्पृथिवींद्राणांमनांसीवचभारत ३४ ततोऽपरैस्त्रिभिर्भल्लैर्द्रौणिंविव्याधपांडवः ॥ सोऽतिविद्धोबलवतापार्थेनसु
महात्मना ३५ नाकंपततदाद्रौणिःपौरुषेस्वेव्यवस्थितः ॥ सुरथंचततोराजन्भारद्वाजोमहारथम् ३६ अवाकिरच्छरव्रातैःसर्वक्षत्रस्यपश्यतः ॥ ततः
स्तुसुरथोऽप्याजौपंचालानांमहारथः ३७ रथेनमेघघोषेणद्रौणिमेवाभ्यधावत ॥ विकर्षन्वैधनुःश्रेष्ठंसर्वभारसहंदृढम् ३८

५

ज्वलनाशीविषनिभैःशरैश्चैनमवाकिरत् ॥ सुरथंततःक्रुद्धमापतंतंमहारथम् ३९ चुकोपसमरेद्रौणिर्दंडाहतइवोरगः ॥ त्रिशिखांभ्रुकुटींकृत्वासृक्किणीपरिसंलिहन् ४० उद्वीक्ष्यसुरथंरोषाद्धनुर्ज्यामवमृज्यच ॥ मुमोचतीक्ष्णंनाराचंयमदंडोपमद्युतिम् ४१ सतस्यहृदयंभित्त्वाप्रविवेशातिवेगितः ॥ शक्राशनिरिवोत्सृष्टो विदार्यधरणीतलम् ४२ ततःसपतितोभूमौनाराचेनसमाहतः ॥ वज्रेणचयथाशृंगंपर्वतस्येवदीर्यतः ४३ तस्मिन्विनिहतेवीरेद्रोणपुत्रःप्रतापवान् ॥ आरुरोहरथंतूर्णंतमेवरथिनांवरः ४४ ततःसज्जोमहाराजद्रौणिराहवदुर्मदः ॥ अर्जुनंयोधयामाससंशप्तकवृतोरणे ४५ तत्रयुद्धंमहच्चासीदर्जुनस्यपरैःसह ॥ मध्यंदिनगतेसूर्येयमराष्ट्रविवर्धनम् ४६ तत्राश्चर्यमपश्यामदृष्ट्वातेषांपराक्रमम् ॥ यदेकोयुगपद्वीरान्समयोधयदर्जुनः ४७ विमर्दःसुमहानासीदेकस्यबहुभिःसह ॥ शतक्रतोर्यथापूर्वंमहत्यादैत्यसेनया ४८ ॥ इतिश्रीमहाभारतेशल्यपर्वणिसंकुलयुद्धेचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ७ ॥ ॥ संजयउवाच ॥ दुर्योधनोमहाराजधृष्टद्युम्नश्चपार्षतः ॥ चक्रतुःसुमहद्युद्धंशरशक्तिसमाकुलम् १ तयोरासन्महाराजशरधाराःसहस्रशः ॥ अंबुदानांयथाकालेजलधाराःसमंततः २ राजाचपार्षतंविद्धाशरैःपंचभिराशुगैः ॥ द्रोणहंतारमुग्रेषुंपुनर्विव्याधसप्तभिः ३ धृष्टद्युम्नस्तुसमरेबलवान्दृढविक्रमः ॥ सप्तत्याविशिखानांवैदुर्योधनमपीडयत् ४ पीडितंवीक्ष्यराजानंसोदर्याभरतर्षभ ॥ महत्यासेनयासार्धंपरिवव्रुःस्मपार्षतम् ५ सतैःपरिवृतःशूरःसर्वतोऽतिरथैर्भृशम् ॥ व्यचरत्समरेराजन्दर्शयन्नस्त्रलाघवम् ६ शिखंडीकृतवर्माणंगौतमंचमहारथम् ॥ प्रभद्रकैःसमायुक्तोयोधयामासधन्विनौ ७ तत्रापिसुमहद्युद्धंघोररूपंविशांपते ॥ प्राणान्संत्यजतांयुद्धेप्राणद्यूताभिदेवने ८ शल्यःसायकवर्षाणिविमुंचन्सर्वतोदिशम् ॥ पांडवान्पीडयामाससात्यकिवृकोदरान् ९ तथातौतुयमौयुद्धेयमतुल्यपराक्रमौ ॥ योधयामासराजेंद्रवीर्येणास्त्रबलेनच १० शल्यसायकनुन्नानांपांडवानांमहामृधे ॥ त्रातारंनाध्यगच्छंतकेचित्तत्रमहारथाः ११ ततस्तुनकुलःशूरोधर्मराजेप्रपीडिते ॥ अभिदुद्राववेगेनमातुलंमाद्रनंदनः १२ संछाद्यसमरेवीरंनकुलःपरवीरहा ॥ विव्याधचैनंदशभिःस्मयमानःस्तनांतरे १३ सर्वपारसवैर्बाणैःकर्मारपरिमार्जितैः ॥ स्वर्णपुंखैःशिलाधौतैर्धनुर्यंत्रप्रचोदितैः १४ शल्यस्तुपीडितस्तेनस्वस्रीयेणमहात्मना ॥ नकुलंपीडयामासपत्रिभिर्नतपर्वभिः १५ ततोयुधिष्ठिरोराजाभीमसेनोऽथसात्यकिः ॥ सहदेवश्चमाद्रेयोमद्रराजमुपाद्रवन् १६ तानापततएवाशुपूरयाणान्रथस्वनैः ॥ दिशश्चविदिशश्चैवकंपयानांश्चमेदिनीम् १७ प्रतिजग्राहसमरेसेनापतिरमित्रजित् ॥ युधिष्ठिरंत्रिभिर्विद्धाभीमसेनंचपंचभिः १८ सात्यकिंचशतेनाजौसहदेवंत्रिभिःशरैः ॥ ततस्तुसशरंचापंनकुलस्यमहात्मनः १९ मद्रेश्वरःक्षुरप्रेणतदामारिषचिच्छिदे ॥ तदशीर्यतविच्छिन्नंधनुःशल्यस्यसायकैः २० ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०

अथान्यद्धनुरादायमाद्रीपुत्रोमहारथः ॥ मद्रराजरथंतूर्णंपूरयामासपत्रिभिः २१ युधिष्ठिरस्तुमद्रेशंसहदेवश्चमारिष ॥ दशभिर्दशभिर्बाणैरुरस्येनमविध्य
ताम् २२ भीमसेनस्तुतंषष्ट्यासात्यकिर्दशभिःशरैः ॥ मद्रराजमभिद्रुत्यजघ्नतुःकंकपत्रिभिः २३ मद्रराजस्ततःक्रुद्धःसात्यकिंनवभिःशरैः ॥ विव्याधभूयःस
प्तत्याशराणांनतपर्वणाम् २४ अथास्यसशरंचापंमुष्टौचिच्छेदमारिष ॥ हयांश्चचतुरःसंख्येप्रेषयामासमृत्यवे २५ विरथंसात्यकिंकृत्वामद्रराजोमहारथः ॥ वि
शिखानांशतेनैनमाजघानसमंततः २६ माद्रीपुत्रौचसंरब्धौभीमसेनंचपांडवम् ॥ युधिष्ठिरंचकौरव्यविव्याधदशभिःशरैः २७ तत्राद्भुतमपश्याममद्रराज
स्यपौरुषम् ॥ यदेनंसहिताःपार्थानाभ्यवर्तंतसंयुगे २८ अथान्यंरथमास्थायसात्यकिःसत्यविक्रमः ॥ पीडितान्पांडवान्दृष्ट्वामद्रराजवशंगतान् २९ अभिदु
द्राववेगेनमद्राणामधिपंबलात् ॥ आपतंतंरथंतस्यशल्यःसमितिशोभनः ३० प्रत्युद्ययौरथेनैवमत्तोमत्तमिवद्विपम् ॥ ससन्निपातस्तुमुलोबभूवाद्भुतदर्शनः
३१ सात्यकेश्चैवशूरस्यमद्राणामधिपस्यच ॥ यादृशोवैपुरावृत्तःशंबरामरराजयोः ३२ सात्यकिःप्रेक्ष्यसमरेमद्रराजमवस्थितम् ॥ विव्याधदशभिर्बाणैस्तिष्ठ
तिष्ठेतिचाब्रवीत् ३३ मद्रराजस्तुसुभृशंविद्धस्तेनमहात्मना ॥ सात्यकिंप्रतिविव्याधचित्रपुंखैःशितैःशरैः ३४ ततःपार्थामहेष्वासाःसात्वताभिसृतंनृपम् ॥
अभ्यवर्तन्रथैस्तूर्णंमातुलंवधकांक्षया ३५ ततआसीत्परामर्दस्तुमुलःशोणितोदकः ॥ शूराणांयुध्यमानानांसिंहानामिवनर्दताम् ३६ तेषामासन्महाराज
व्यतिक्षेपःपरस्परम् ॥ सिंहानामामिषेप्सूनांकूजतामिवसंयुगे ३७ तेषांबाणसहस्रौघैराकीर्णावसुधाऽभवत् ॥ अंतरिक्षंचसहसाबाणभूतमभूत्तदा ३८ शरां
धकारंसहसाकृतंतेनसमंततः ॥ अभ्रच्छायेवसंजज्ञेशरैर्मुक्तैर्महात्मभिः ३९ तत्रराजन्शरैर्मुक्तैर्निर्मुक्तैरिवपन्नगैः ॥ स्वर्णपुंखैःप्रकाशद्भिर्व्यरोचंतदिशस्तदा ४०
तत्राद्भुतंपरंचक्रेशल्यःशत्रुनिबर्हणः ॥ यदेकःसमरेशूरोयोधयामासवैबहून् ४१ मद्रराजभुजोत्सृष्टैःकंकबर्हिणवाजितैः ॥ संपतद्भिःशरैर्घोरैरवाकीर्यतमेदिनी ४२
तत्रशल्यरथंराजन्विचरंतंमहाहवे ॥ अपश्यामयथापूर्वंशक्रस्यासुरसंक्षये ४३ ॥ इतिश्रीमहाभारतेशल्यपर्वणिसंकुलयुद्धेपंचदशोऽध्यायः ॥ १५ ॥ ७ ॥
॥संजयउवाच ॥ ततःसैन्यास्तवविभोमद्रराजपुरस्कृताः ॥ पुनरभ्यद्रवन्पार्थान्वेगेनमहतारणे १ पीडितास्तावकाःसर्वेप्रधावंतोरणोत्कटाः ॥ क्षणेनचैवपा
र्थांस्तेबहुत्वात्समलोडयन् २ तेवध्यमानाःसमरेपांडवानावतस्थिरे ॥ निवार्यमाणाभीमेनपश्यतोःकृष्णयोस्तदा ३ ततोधनंजयःक्रुद्धःकृपंसहपदानुगैः ॥ अ
वाकिरच्छरौघेणकृतवर्माणमेवच ४ शकुनिंसहदेवस्तुसहसैन्यमवाकिरत् ॥ नकुलःपार्श्वतःस्थित्वामद्रराजमवैक्षत ५ द्रौपदेयानरेंद्रांश्चभूयिष्ठान्समवारयन् ॥
द्रोणपुत्रंचपांचाल्यःशिखंडीसमवारयत् ६ भीमसेनस्तुराजानंगदापाणिरवारयत् ॥ शल्यंतुसहसैन्येनकुंतीपुत्रोयुधिष्ठिरः ७ ततइति १ । २ । ३ । ४ । ५ । ६ । ७

ततःसमभवत्सैन्यंसंसक्तंतत्रतत्रह ॥ तावकानांपरेषांचसंग्रामेष्वनिवर्तिनाम् ८ तत्रपश्याम्यहंकर्मशल्यस्यातिमहद्रणे ॥ यदेकःसर्वसैन्यानिपांडवानामयो
धयत् ९ व्यदृश्यततदाशल्योयुधिष्ठिरसमीपतः ॥ रणेचंद्रमसोऽभ्याशेशनैश्वरइवग्रहः १० पीडयित्वातुराजानंशरैराशीविषोपमैः ॥ अभ्यधावत्पुनर्भीमंश
रवर्षैरवाकिरत् ११ तस्यतल्लाघवंदृष्ट्वातथैवचकृतास्त्रताम् ॥ अपूजयन्ननीकानिपरेषांतावकानिच १२ पीड्यमानास्तुशल्येनपांडवाभृशविक्षताः ॥ प्राद्रवं
तरणंहित्वाक्रोशमानेयुधिष्ठिरे १३ वध्यमानेष्वनीकेषुमद्रराजेनपांडवः ॥ अमर्षवशमापन्नोधर्मराजोयुधिष्ठिरः १४ ततःपौरुषमास्थायमद्रराजमताडयत् ॥
जयोवास्तुवधोवाऽस्तुकृतबुद्धिर्महारथः १५ समाहूयाब्रवीत्सर्वान्भ्रातॄन्कृष्णंचमाधवम् ॥ भीष्मोद्रोणश्चकर्णश्चयेचान्येपृथिवीक्षितः १६ कौरवार्थेपराक्रां
ताःसंग्रामेनिधनंगताः ॥ यथाभागंयथोत्साहंभवंतःकृतपौरुषाः. १७ भागोवशिष्टएकोऽयंममशल्योमहारथः ॥ सोहमद्ययुधाजेतुमाशंसेमद्रकाधिपम् १८
तत्रयन्मानसंमह्यंतत्सर्वंनिगदामिवः ॥ चक्ररक्षाविमौवीरौममामाद्रवतीसुतौ १९ अजेयौवासवेनापिसमरेशूरसंमतौ ॥ साध्विमौमातुलंयुद्धेक्षत्रधर्मपुरस्कृतौ
२० मदर्थेप्रतियुद्ध्येतांमानार्हौसत्यसंगरौ ॥ मांवाशल्योरणेहंतातंवाऽहंभद्रमस्तुवः २१ इतिसत्यामिमांवाणींलोकवीरानिबोधत ॥ योत्स्येऽहंमातुलेनाद्य
क्षात्रधर्मेणपार्थिवाः २२ स्वमंशमभिसंधायविजयायेतरायच ॥ तस्यमेऽप्यधिकंशस्त्रंसर्वोपकरणानिच २३ संसज्जंतुरथेक्षिप्रंशास्त्रवद्रथयोजकाः ॥ शैनेयो
दक्षिणंचक्रंधृष्टद्युम्नस्तथोत्तरम् २४ पृष्ठगोपोभवत्वद्यममपार्थोधनंजयः ॥ पुरःसरोममाद्यास्तुभीमःशस्त्रभृतांवरः २५ एवमभ्यधिकःशल्याद्भविष्यामिमहा
मृधे ॥ एवमुक्तास्तथाचक्रुस्तदाराज्ञःप्रियैषिणः २६ ततःप्रहर्षःसैन्यानांपुनरासीत्तदामृधे ॥ पंचालानांसोमकानांमत्स्यानांचविशेषतः २७ प्रतिज्ञांतां
दाराजाकृत्वामद्रेशमभ्ययात् ॥ ततःशंखांश्चभेरीश्चशतशश्चैवपुष्कलान् २८ अवादयंतपंचालाःसिंहनादांश्चनेदिरे ॥ तेऽभ्यधावंतसंरब्धामद्रराजंतरस्विनम्
२९ महताहर्षजेनाथनादेनकुरुपुंगवाः ॥ ह्रादेनगजघंटानांशंखानांनिनदेनच ३० तूर्यशब्देनमहतानादयंतश्चमेदिनीम् ॥ तान्प्रत्यगृह्णात्पुत्रस्तेमद्रराज
श्चवीर्यवान् ३१ महामेघानिवबहूञ्शैलावस्तोदयावुभौ ॥ शल्यस्तुसमरश्लाघीधर्मराजमरिंदमम् ३२ ववर्षशरवर्षेणशंबरंमघवाइव ॥ तथैवकुरुराजोऽपि
प्रगृह्यरुचिरंधनुः ३३ द्रोणोपदेशान्विविधान्दर्शयानोमहामनाः ॥ ववर्षशरवर्षाणिचित्रंलघुचसुष्ठुच ३४ नचास्यविवरंकश्चिद्ददर्शचरतोरणे ॥ तावुभौ
विविधैर्बाणैस्ततक्षातेपरस्परम् ३५ शार्दूलावामिषप्रेप्सूपराक्रांताविवाहवे ॥ भीमस्तुतवपुत्रेणयुद्धशौंडेनसंगतः ३६ पांचाल्यःसात्यकिश्चैवमाद्रीपुत्रौच
पांडवौ ॥ शकुनिप्रमुखान्वीरान्प्रत्यगृह्णन्समंततः ३७ तदासीत्तुमुलंयुद्धंपुनरेवजयैषिणाम् ॥ तावकानांपरेषांचराजन्दुर्मंत्रितेतव ३८

३९ । ४० । ४१ रथशक्त्या रथस्थयाशक्त्या ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६०

दुर्योधनस्तुभीमस्यशरेणानतपर्वणा ॥ चिच्छेदादिश्यसंग्रामेध्वजंहेमपरिष्कृतम् ३९ सकिंकिणीकजालेनमहताचारुदर्शनः ॥ पपातरुचिरःसंख्येभीमसेन स्यपश्यतः ४० पुनश्चास्यधनुश्चित्रंगजराजकरोपमम् ॥ क्षुरेणशितधारेणप्रचकर्तनराधिपः ४१ सच्छिन्नधन्वातेजस्वीरथशक्त्यासुतंतव ॥ बिभेदोरसि विक्रम्यसरथोपस्थआविशत् ४२ तस्मिन्मोहमनुप्राप्तेपुनरेववृकोदरः ॥ यंतुरेवशिरःकायात्क्षुरप्रेणाहरत्तदा ४३ हतसूताहयास्तस्यरथमादायभारत ॥ व्य द्रवंतादिशोराजन्हाहाकारस्तदाऽभवत् ४४ तमभ्यधावत्त्राणार्थंद्रोणपुत्रोमहारथः ॥ कृपश्चकृतवर्माचपुत्रंतेऽपिपरीप्सवः ४५ तस्मिन्विलुलितेसैन्येत्रस्ता स्तस्यपदानुगाः ॥ गांडीवधन्वाविस्फार्यधनुस्तानहनच्छरैः ४६ युधिष्ठिरस्तुमद्रेशमभ्यधावदमर्षितः ॥ स्वयंसन्नोदयन्नश्वान्दंतवर्णान्मनोजवान् ४७ त त्राश्चर्यमपश्यामकुंतीपुत्रेयुधिष्ठिरे ॥ पुराभूत्वामृदुर्दांतोयत्तदादारुणोऽभवत् ४८ विवृताक्षश्चकौंतेयोवेपमानश्चमन्युना ॥ चिच्छेदयोधान्निशितैःशरैःशत सहस्रशः ४९ यांयांप्रत्युद्ययौसेनांतांतांज्येष्ठःसपांडवः ॥ शरैरपातयद्राजन्गिरीन्वज्रैरिवोत्तमैः ५० साश्वसूतध्वजरथान्रथिनःपातयन्बहून् ॥ अक्रीडदे कोबलवान्पवनस्तोयदानिव ५१ साश्वारोहांश्चतुरगान्पत्तींश्चैवसहस्रधा ॥ व्यपोथयतसंग्रामेक्रुद्धोरुद्रःपशूनिव ५२ शून्यमायोधनंकृत्वाशरवर्षैःसमंततः ॥ अभ्यद्रवतमद्रेशंतिष्ठशल्येतिचाब्रवीत् ५३ तस्यतच्चरितंदृष्ट्वासंग्रामेभीमकर्मणः ॥ वित्रेसुस्तावकाःसर्वेशल्यस्त्वेनंसमभ्ययात् ५४ ततस्तौभृशसंक्रुद्धौप्र ध्मायसलिलोद्भवौ ॥ समाहूयतदान्योन्यंभर्त्सयंतौसमीयतुः ५५ शल्यस्तुशरवर्षेणपीडयामासपांडवम् ॥ मद्रराजंतुकौंतेयःशरवर्षैरवाकिरत् ५६ अदृ श्येतांतदाराजन्कंकपत्रिभिराचितौ ॥ उद्भिन्नरुधिरौशूरौमद्रराजयुधिष्ठिरौ ५७ पुष्पितौशुशुभातेवैवसंतेकिंशुकौयथा ॥ दीप्यमानौमहात्मानौप्राणद्यूतेन दुर्मदौ ५८ दृष्ट्वासर्वाणिसैन्यानिनाध्यवस्यंस्तयोर्जयम् ॥ हत्वामद्राधिपंपार्थोभोक्ष्यतेऽद्यवसुंधराम् ५९ शल्योवापांडवंहत्वादद्याद्दुर्योधनायगाम् ॥ इतीव निश्चयोनाभूद्योधानांतत्रभारत ६० प्रदक्षिणमभूत्सर्वंधर्मराजस्ययुध्यतः ॥ ततःशरशतंशल्योमुमोचाथयुधिष्ठिरे ६१ धनुश्चास्यशिताग्रेणबाणेननिरकं तत ॥ सोऽन्यत्कार्मुकमादायशल्यंशरशतैस्त्रिभिः ६२ अविध्यत्कार्मुकंचास्यक्षुरेणनिरकृंतत ॥ अथास्यनिजघानाश्वांश्चतुरोनतपर्वभिः ६३ द्वाभ्यामति शिताग्राभ्यामुभौतत्पार्ष्णिसारथी ॥ ततोस्यदीप्यमानेनपीतेननिशितेनच ६४ प्रमुखेवर्तमानस्यभल्लेनापाहरद्ध्वजम् ॥ ततःप्रभग्नंतत्सैन्यंदौर्योधनमरिंदम ६५ ततोमद्राधिपंद्रौणिरभ्यधावत्तथाकृतम् ॥ आरोप्यचैनंस्वरथेत्वरमाणःप्रदुद्रुवे ६६

६१ । ६२ । ६३ । ६४ । ६५ । ६६

६७ । ६८ ॥ इतिशल्यपर्वणिनीलकंठीये भारतभावदीपेषोडशोऽध्यायः ॥ १६ ॥ ॥ अथेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८





मुहूर्तमिवतौगत्वानर्दमानेयुधिष्ठिरे ॥ स्थित्वाततोमद्रपतिरन्यंस्यंदनमास्थितः ६७ विधिवत्कल्पितंशुभ्रंमहांबुदनिनादिनम् ॥ सज्जयंत्रोपकरणंद्विषतांलोमह र्षणम् ६८ ॥ इतिश्रीमहाभारतेशल्यपर्वणिशल्ययुधिष्ठिरयुद्धेषोडशोऽध्यायः ॥ १६ ॥ ॥ संजयउवाच ॥ अथान्यद्धनुरादायबलवान्वेगवत्तरम् ॥ यु धिष्ठिरंमद्रपतिर्भित्त्वासिंहइवानदत् १ ततःसशरवर्षेणपर्जन्यइववृष्टिमान् ॥ अभ्यवर्षदमेयात्माक्षत्रियंक्षत्रियर्षभः २ सात्यकिंदशभिर्विद्ध्वाभीमसेनंत्रिभिःश रैः ॥ सहदेवंत्रिभिर्विद्ध्वायुधिष्ठिरमपीडयत् ३ तांस्तानन्यान्महेष्वासान्साश्वान्सरथकूबरान् ॥ अर्दयामासविशिखैरुल्काभिरिवकुंजरान् ४ कुंजरान्कुंजरा रोहानश्वानश्वप्रयायिनः ॥ रथांश्चरथिनःसार्धंजघानरथिनांवरः ५ बाहूंश्चिच्छेदतरसासायुधान्केतनानिच ॥ चकारचमहींयोधैस्तीर्णांवेदींकुशैरिव ६ तथातमरिसैन्यानिघ्नंतंमृत्युमिवांतकम् ॥ परिवव्रुर्भृशंक्रुद्धाःपांडुपंचालसोमकाः ७ तंभीमसेनश्चशिनेश्चनप्तामाद्र्याश्चपुत्रौपुरुषप्रवीरौ ॥ समागतंभीमब लेनराज्ञापर्याप्तमन्योन्यमथाह्वयंत ८ ततस्तुशूराःसमरेनरेंद्रंनरेश्वरंप्राप्ययुधांवरिष्ठम् ॥ आवार्यचैनंसमरेनृवीराजघ्नुःशरैःपत्रिभिरुग्रवेगैः ९ संरक्षितोभीमसे नेनराजामाद्रीसुताभ्यामथमाधवेन ॥ मद्राधिपंपत्रिभिरुग्रवेगैःस्तनांतरेधर्मसुतोनिजघ्ने १० ततोरणेतावकानांरथौघाःसमीक्ष्यमद्राधिपतिंशरार्तम् ॥ पर्या वव्रुःप्रवरास्तेसुसज्जादुर्योधनस्यानुमतेपुरस्तात् ११ ततोद्रुतंमद्रजनाधिपोरणेयुधिष्ठिरंसप्तभिरभ्यविद्ध्यत् ॥ तंचापिपार्थोनवभिःपृषत्कैर्विव्याधराजंस्तुमु लेमहात्मा १२ आकर्णपूर्णायतसंप्रयुक्तैःशरैस्तदासंयतितैलधौतैः ॥ अन्योन्यमाच्छादयतांमहारथौमद्राधिपश्चापियुधिष्ठिरश्च १३ ततस्तुतूर्णंसमरेमहा रथौपरस्परस्यांतरमीक्षमाणौ ॥ शरैर्भृशंविव्यधतुर्नृपोत्तमौमहाबलौशत्रुभिरप्रधृष्यौ १४ तयोर्धनुर्ज्यातलनिःस्वनोमहान्महेंद्रवज्राशनितुल्यनिःस्वनः ॥ परस्परंबाणगणैर्महात्मनोःप्रवर्षतोर्मद्रपपांडुवीरयोः १५ तौचेरतुर्व्याघ्रशिशुप्रकाशौमहावनेष्वामिषगृद्धिनाविव ॥ विषाणिनौनागवराविवोभौततक्षतुःसंय तिजातदर्पौ १६ ततस्तुमद्राधिपतिर्महात्मयुधिष्ठिरंभीमबलंप्रसह्य ॥ विव्याधवीरंहृदयेऽतिवेगंशरेणसूर्याग्निसमप्रभेण १७ ततोऽतिविद्धोऽथयुधिष्ठिरोऽपि सुसंप्रयुक्तेनशरेणराजन् ॥ जघानमद्राधिपतिंमहात्मामुदंचलेभेऋषभःकुरूणाम् १८ ततोमुहूर्तादिवपार्थिवेंद्रोलब्ध्वासंज्ञांक्रोधसंरक्तनेत्रः ॥ शतेनपार्थंत्व रितोजघानसहस्रनेत्रप्रतिमप्रभावः १९ त्वरंस्ततोधर्मसुतोमहात्माशल्यस्यकोपान्नवभिःपृषत्कैः ॥ भित्त्वाह्युरस्तपनीयंचवर्मजघानषड्भिस्त्वपरैःपृषत्कैः २० ततस्तुमद्राधिपतिःप्रहृष्टोधनुर्विकृष्यव्यसृजन्पृषत्कान् ॥ द्वाभ्यांशराभ्यांचतथैवराज्ञश्चिच्छेदचापंकुरुपुंगवस्य २१ नवंततोऽन्यत्समरेप्रगृह्यराजाधनुर्घो रतरंमहात्मा ॥ शल्यंतुविव्याधशरैःसमंताद्यथामहेंद्रोनमुचिंशिताग्रैः २२ ततस्तुशल्योनवभिःपृषत्कैर्भीमस्यराज्ञश्चयुधिष्ठिरस्य ॥ निकृत्यरौक्मेपटुवर्म णीतयोर्विदारयामासभुजौमहात्मा २३





१९ । २० । २१ । २२ । २३

२४ । २५ । २६ संहननीयोदृढसंधिकोमध्योयस्यतस्मात्कायात् २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ कर्मयुद्धरूपं अवशिष्टंरवस्यभागंचनिशम्यालोच्यशल्य

ततोऽपरेणज्वलनार्कतेजसाक्षुरेणराज्ञोधनुरुन्ममाथ ॥ कृपश्चतस्यैवजघानसूतंषाड्भिःशरैःसोऽभिमुखःपपात २४ मद्राधिपश्चापियुधिष्ठिरस्यशरैश्चतुर्भिर्निजघा नवाहान् ॥ वाहांश्चहत्वाव्यकरोन्महात्मायोधक्षयंधर्मसुतस्यराज्ञः २५ तथाकृतेराजनिभीमसेनोमद्राधिपस्याथततोमहात्मा ॥ छित्त्वाधनुर्वेगवताशरेणद्वाभ्या मविध्यत्सुभृशंनरेंद्रम् २६ तथाऽपरेणास्यजहारयंतुःकायाच्छिरःसंहननीयमध्यात् ॥ जघानचाश्वांश्चतुरःसुशीघ्रंतथाभृशंकुपितोभीमसेनः २७ तमग्रणीःसर्व धनुर्धराणामेकंचरंतंसमरेऽतिवेगम् ॥ भीमःशतेनव्यकिरच्छराणांमाद्रीपुत्रःसहदेवस्तथैव २८ तैःसायकैर्मोहितंवीक्ष्यशल्यंभीमःशरैरस्यचकर्तवर्म ॥ सभीमसे नेननिकृत्तवर्मामद्राधिपश्चर्मसहस्रतारम् २९ प्रगृह्यखड्गंचरथान्महात्माप्रस्कंद्यकुंतीसुतमभ्यधावत ॥ छित्त्वारथेषांनकुलस्यसोऽथयुधिष्ठिरंभीमबलोऽभ्यधावत ३० तंचापिराजानमथोत्पतंतंक्रुद्धंयथैवांतकमापतंतम् ॥ धृष्टद्युम्नोद्रौपदेयाःशिखंडीशिनेश्चनप्तासहसापरीयुः ३१ अथास्यचर्माप्रतिमंन्यकृंतद्भीमोमहात्मान वभिःपृषत्कैः ॥ खड्गंचभल्लैर्निचकर्तमुष्टौनदन्प्रहृष्टस्तवसैन्यमध्ये ३२ तत्कर्मभीमस्यसमीक्ष्यहृष्टास्तेपांडवानांप्रवरारथौघाः ॥ नादंचचक्रुर्भृशमुत्स्मयंतःशंखां श्चदध्मुःशशिसन्निकाशान् ३३ तेनाथशब्देनविभीषणेनतथाऽभितप्तंबलमप्रहृष्यम् ॥ कांदिग्भूतंरुधिरेणोक्षितांगंविसंज्ञकल्पंचतदाविषण्णम् ३४ समद्रराजःस हसाविकीर्णोभीमाग्रगैःपांडवयोधमुख्यैः ॥ युधिष्ठिरस्याभिमुखंजवेनसिंहोयथामृगहेतोःप्रयातः ३५ सधर्मराजोनिहताश्वसूतःक्रोधेनदीप्तोज्वलनप्रकाशः ॥ दृ ष्ट्वाचमद्राधिपतिंस्मतूर्णंसमभ्यधावत्तमरिंबलेन ३६ गोविंदवाक्यंत्वरितंविचिंत्यदध्रेमतिंशल्यविनाशनाय ॥ सधर्मराजोनिहताश्वसूतोरथेतिष्ठन्शक्तिमेवाभ्यकां क्षत् ३७ तच्चापिशल्यस्यनिशम्यकर्ममहात्मनोभागमथावशिष्टम् ॥ कृत्वामनःशल्यवधेमहात्मायथोक्तमिंद्रावरजस्यचक्रे ३८ सधर्मराजोमणिहेमदंडांजग्राहश क्तिंकनकप्रकाशाम् ॥ नेत्रेचदीप्तेसहसाविवृत्यमद्राधिपंक्रुद्धमनानिरैक्षत् ३९ निरीक्षितोऽसौनरदेवराज्ञापूतात्मनानिर्हृतकल्मषेण ॥ आसीन्नयद्भस्मसान्मद्र राजस्तदद्भुतंमेप्रतिभातिराजन् ४० ततस्तुशक्तिंरुचिरोग्रदंडांमणिप्रवेकोज्ज्वलितांप्रदीप्ताम् ॥ चिक्षेपवेगात्सुभृशंमहात्मामद्राधिपायप्रवरःकुरूणाम् ४१ दी प्तामथैनांप्रहितांबलेनसविस्फुलिंगांसहसाऽऽपतंतीम् ॥ प्रैक्षंतसर्वेकुरवःसमेतादिवोयुगांतेमहतीमिवोल्काम् ४२ तांकालरात्रीमिवपाशहस्तांयमस्यधात्रीमिवचो ग्ररूपाम् ॥ सब्रह्मदंडप्रतिमाममोघांससर्जयत्तोयुधिधर्मराजः ४३ गंधस्रगग्र्यासनपानभोजनैरभ्यर्चितांपांडुसुतैःप्रयत्नात् ॥ सांवर्तकाग्निप्रतिमांज्वलंतींकृत्या मथर्वांगिरसीमिवोग्राम् ४४ ईशानहेतोःप्रतिनिर्मितांतांत्वष्ट्रारिपूणामसुदेहभक्ष्याम् ॥ भूम्यंतरिक्षादिजलाशयानिप्रसह्यभूतानिनिहंतुमीशाम् ४५

वधेमनःकृत्वाइंद्रावरजस्यकृष्णस्ययथोक्तंवचनंचक्रेइत्यन्वयः ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ अंतरिक्षादीत्यादिनाऽग्निवायू ४५

४६ । ४७ । ४८ । ४९ तोयमिवसुप्रवेशांगां अप्रसक्ताअप्रतिहता नृपतेःशल्यस्य ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५



घंटापताकांमणिवज्रनालांवैडूर्यचित्रांतपनीयदंडाम् ॥ त्वष्ट्राप्रयत्नान्नियमेनक्लृप्तांब्रह्मद्विषामंतकरीममोघाम् ४६ बलप्रयत्नादधिरूढवेगांमंत्रैश्चघोरैरभिमंत्र्ययत्नात् ॥ ससर्जमार्गेणचतांपरेणवधायमद्राधिपतेस्तदानीम् ४७ हतोऽसिपापेत्यभिगर्जमानोरुद्रोंऽधकायांतकरंयथेषुम् ॥ प्रसार्यबाहुंसुदृढंसुपाणिंक्रोधेननृत्यन्निवधर्मराजः ४९ तांसर्वशक्त्याप्रहितांसुशक्तिंयुधिष्ठिरेणाप्रतिवार्यवीर्याम् ॥ प्रतिग्रहायाभिननर्दशल्यःसम्यग्घुतामग्निरिवाज्यधाराम् ४९ सातस्यमर्माणिविदार्यशुभ्रमुरोविशालंचतथैवभित्त्वा ॥ विवेशगांतोयमिवाप्रसक्तायशोविशालंनृपतेर्दहंती ५० नासाक्षिकर्णास्यविनिःसृतेनप्रस्यंदताचव्रणसंभवेन ॥ संसिक्तगात्रोरुधिरेणसोऽभूत्क्रौंचोयथास्कंदहतोमहाद्रिः ५१ प्रसार्यबाहूचरथाद्गतोगांसंछिन्नवर्माकुरुनंदनेन ॥ महेंद्रवाहप्रतिमोमहात्मावज्राहतंशृंगमिवाचलस्य ५२ बाहूप्रसार्याभिमुखोधर्मराजस्यमद्रराट् ॥ ततोनिपतितोभूमाविंद्रध्वजइवोच्छ्रितः ५३ सतथाभिन्नसर्वांगोरुधिरेणसमुक्षितः ॥ प्रत्युद्गतइवप्रेम्णाभूम्यासनरपुंगवः ५४ प्रियययाकांतयाकांतःपतमानइवोरसि ॥ चिरंभुक्त्वावसुमतींप्रियांकांतामिवप्रभुः ५५ सर्वैरंगैःसमाश्लिष्यप्रसुप्तइवचाभवत् ॥ धर्म्येधर्मात्मनायुद्धेनिहतेधर्मसूनुना ५६ सम्यग्घुतइवस्विष्टःप्रशांतोग्निरिवाध्वरे ॥ शक्त्याविभिन्नहृदयंविप्रविद्धायुधध्वजम् ५७ संशांतमपिमद्रेशंलक्ष्मीर्नैवविमुंचति ॥ ततोयुधिष्ठिरश्चापमादायेंद्रधनुष्प्रभम् ५८ व्यधमद्द्विषतःसंख्येखगराडिवपन्नगान् ॥ देहान्सुनिशितैर्भल्लैरिपूणांनाशयन्क्षणात् ५९ ततःपार्थस्यबाणौघैरावृताःसैनिकास्तव ॥ निमीलिताक्षाःक्षिण्वंतोभृशमन्योन्यमर्दिताः ६० क्षरंतोरुधिरंदेहैर्विपन्नायुधजीविताः ॥ ततःशल्येनिपतितेमद्रराजानुजोयुवा ६१ भ्रातुस्तुल्योगुणैःसर्वैरथीपांडवमभ्ययात् ॥ विव्याधचनरश्रेष्ठोनाराचैर्बहुभिस्त्वरन् ६२ हतस्यापचितिंभ्रातुश्चिकीर्षुर्युद्धदुर्मदः ॥ तंविव्याधाशुगैःषड्भिर्धर्मराजस्त्वरन्निव ६३ कार्मुकंचास्यचिच्छेदक्षुराभ्यांध्वजमेवच ॥ ततोऽस्यदीप्यमानेनसुदृढेनशितेनच ६४ प्रमुखेवर्तमानस्यभल्लेनापाहरच्छिरः ॥ सकुंडलंतद्ददृशेपतमानंशिरोरथात् ६५ पुण्यक्षयमनुप्राप्यपतन्स्वर्गादिवच्युतः ॥ तस्यापकृत्तशीर्षंतुशरीरंपतितंरथात् ६६ रुधिरेणावसिक्तांगंदृष्ट्वासैन्यमभज्यत ॥ विचित्रकवचेतस्मिन्हतेमद्रनृपानुजे ६७ हाहाकारंत्वकुर्वाणाःकुरवोऽभिप्रदुद्रुवुः ॥ शल्यानुजंहतंदृष्ट्वातावकास्त्यक्तजीविताः ६८ वित्रेसुःपांडवभयाद्रजोध्वस्तास्तदाभृशम् ॥ तांस्तथाभज्यमानांस्तुकौरवान्भरतर्षभ ६९ शिनेर्नप्ताकिरन्बाणैरभ्यवर्ततसात्यकिः ॥ तमायांतंमहेष्वासंदुष्प्रसह्यंदुरासदम् ७० हार्दिक्यस्त्वरितोराजन्प्रत्यगृह्णाद्भीतवत् ॥ तौसमेतौमहात्मानौवार्ष्णेयौवरवाजिनौ ७१ हार्दिक्यःसात्यकिश्चैवसिंहाविवबलोत्कटौ ॥ इषुभिर्विमलाभासैश्छादयंतौपरस्परम् ७२

स्वर्गात्स्वर्गसुखाच्च्युतोभ्रष्टः अतएवपतन्नतस्मादेव ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२

अर्चिर्भिरिवसूर्यस्यादिवाकरसमप्रभौ ॥ चापमार्गबलोद्भूतान्मार्गणान्वृष्णिसिंहयोः ७३ आकाशगानपश्यामपतंगानिवशीघ्रगान् ॥ सात्यकिंदशभिर्विद्धाहयां
श्चास्यात्रिभिःशरैः ७४ चापमेकेनाचिच्छेदहार्दिक्योनतपर्वणा ॥ तन्निकृत्तंधनुःश्रेष्ठमपास्यशिनिपुंगवः ७५ अन्यदादत्तवेगेनवेगवत्तरमायुधम् ॥ तदादायधनुः
श्रेष्ठंवरिष्ठःसर्वधन्विनाम् ७६ हार्दिक्यंदशभिर्बाणैःप्रत्यविध्यत्स्तनांतरे ॥ ततोरथंयुगेषांचच्छित्वाभल्लैःसुसंयतैः ७७ अश्वांस्तस्यावधीत्तूर्णमुभौचपार्ष्णिसार
थी ॥ ततस्तंविरथंदृष्ट्वाकृपःशारद्वतःप्रभो ७८ अपोवाहततःक्षिप्रंरथमारोप्यवीर्यवान् ॥ मद्रराजेहतेराजन्विरथेकृतवर्मणि ७९ दुर्योधनबलंसर्वंपुनरासीत्परा
ङ्मुखम् ॥ तत्परेनान्वबुध्यंतसैन्येनरजसाऽऽवृते ८० बलंतुहतभूयिष्ठंतत्तदासीत्पराङ्मुखम् ॥ ततोमुहूर्तात्तेऽपश्यन्रजोभौमंसमुत्थितम् ८१ विविधैःशोणि
तस्रावैःप्रशांतंपुरुषर्षभ ॥ ततोदुर्योधनोदृष्ट्वाभग्नंस्वबलमंतिकात् ८२ जवेनापततःपार्थानेकःसर्वानवारयत् ॥ पांडवान्सरथान्दृष्ट्वाधृष्टद्युम्नंचपार्षतम् ८३ आ
नर्तंचदुराधर्षंशितैर्बाणैरवारयत् ॥ तंपरेनाभ्यवर्तंतमर्त्यामृत्युमिवागतम् ८४ अथान्यंरथमास्थायहार्दिक्योपिन्यवर्तत ॥ ततोयुधिष्ठिरोराजात्वरमाणोमहा
रथः ८५ चतुर्भिर्निजघानाश्वान्पत्रिभिःकृतवर्मणः ॥ विव्याधगौतमंचापिषड्भिर्भल्लैःसुतेजनैः ८६ अश्वत्थामाततोराज्ञाहताश्वंविरथीकृतम् ॥ तमपोवाह
हार्दिक्यंस्वरथेनयुधिष्ठिरात् ८७ ततःशारद्वतःषड्भिःप्रत्यविद्धद्युधिष्ठिरम् ॥ विव्याधचाश्वान्निशितैस्तस्याष्टाभिःशिलीमुखैः ८८ एवमेतन्महाराजयुद्धशेषम
वर्तत ॥ तवदुर्मंत्रितेराजन्सहपुत्रस्यभारत ८९ तस्मिन्महेष्वासधरेविशस्तेसंग्राममध्येकुरुपुंगवेन ॥ पार्थाःसमेताःपरमप्रहृष्टाःशंखान्प्रदध्मुर्हतमीक्ष्यशल्यम्
९० युधिष्ठिरंचप्रशशंसुराजौपुराकृतेवृत्रवधेयथेंद्रम् ॥ चक्रुश्चनानाविधवाद्यशब्दान्निनादयंतोवसुधांसमेताः ९१ ॥ इतिश्रीमहाभारतेशल्यपर्वणिशल्यवधेस
प्तदशोऽध्यायः ॥ १७ ॥ ॥ ॥ संजयउवाच ॥ शल्येऽथनिहतेराजन्मद्रराजपदानुगाः ॥ रथाःसप्तशतावीरानिर्ययुर्महतोबलात् १ दुर्योधनस्तुद्विरदमारुह्या
चलसन्निभम् ॥ छत्रेणध्रियमाणेनवीज्यमानश्चचामरैः २ नगंतव्यंनगंतव्यमितिमाद्रानवारयत् ॥ दुर्योधनेनतेवीरावार्यमाणाःपुनःपुनः ३ युधिष्ठिरंजिघांसंतः
पांडूनांप्राविशन्बलम् ॥ तेतुशूरामहाराजकृतचित्ताश्चयोधने ४ धनुःशब्दंमहत्कृत्वासहायुध्यंतपांडवैः ॥ श्रुत्वाचनिहतंशल्यंधर्मपुत्रंचपीडितम् ५ मद्रराजप्रि
येयुक्तैर्मद्रकाणांमहारथैः ॥ आजगामततःपार्थोगांडीवंविक्षिपन्धनुः ६ पूरयन्रथघोषेणदिशःसर्वामहारथः ॥ ततोऽर्जुनश्चभीमश्चमाद्रीपुत्रौचपांडवौ ७ सात्य
किश्चनरव्याघ्रोद्रौपदेयाश्चसर्वशः ॥ धृष्टद्युम्नःशिखंडीचपंचालाःसहसोमकैः ८ युधिष्ठिरंपरीप्संतःसमंतात्पर्यवारयन् ॥ तेसमंतात्परिवृताःपांडवाःपुरुषर्षभाः ९

॥१७॥ ॥१८॥

क्षोभयंतिस्मतांसेनांमकराःसागरंयथा ॥ वृक्षानिवमहावाताःकंपयंतिस्मतावकान् १० पुरोवातेनगंगेवक्षोभ्यमाणामहानदी ॥ अक्षोभ्यततदाराजन्पांडूनांध्वजि
नीततः ११ प्रस्कंद्यसेनांमहतींमहात्मानोमहारथाः ॥ बहवश्चुक्रुशुस्तत्रक्कसराजायुधिष्ठिरः १२ भ्रातरोवास्यतेशूराद्दश्यंतेनेहकेनच ॥ धृष्टद्युम्नोऽथशैनेयोद्रौपदे
याश्वसर्वशः १३ पंचालाश्चमहावीर्याःशिखंडीचमहारथः ॥ एवंतान्वादिनःशूरान्द्रौपदेयामहारथाः १४ अभ्यघ्नन्युयुधानश्चमद्रराजपदानुगान् ॥ चक्रैर्विमथि
तैःकेचित्केचिच्छिन्नैर्महाध्वजैः १५ तेदृश्यंतेऽपिसमरेतावकानिहताःपरैः ॥ आलोक्यपांडवान्युद्धेयोधाराजन्समंततः १६ वार्यमाणाययुर्वेगात्पुत्रेणतवभारत ॥
दुर्योधनश्चतान्वीरान्वारयामाससांत्वयन् १७ नचास्यशासनंकेचित्तत्रचक्रुर्महारथाः ॥ ततोगांधारराजस्यपुत्रःशकुनिरब्रवीत् ॥ दुर्योधनंमहाराजवचनंवचनम
क्षमः ॥ किंनःसंप्रेक्षमाणानांमद्राणांहन्यतेबलम् १९ नयुक्तमेतत्समरेत्वयितिष्ठतिभारत ॥ सहितैश्चापियोद्धव्यमित्येषसमयःकृतः २० अथकस्मात्परानेवघ्नतो
मर्षयसेनृप ॥ दुर्योधनउवाच ॥ वार्यमाणामयापूर्वंनैतेचक्रुर्वचोमम २१ एतेविनिहताःसर्वेप्रस्कन्नाःपांडुवाहिनीम् ॥ शकुनिरुवाच ॥ नभर्तुःशासनंवीरारणेकु
र्वंत्यमर्षिताः २२ अलंक्रोद्धुमथैतेषांनायंकालउपेक्षितुम् ॥ यामःसर्वेचसंभूयसवाजिरथकुंजराः २३ परित्रातुंमहेष्वासान्मद्रराजपदानुगान् ॥ अन्योन्यंपरिरक्षा
मोयत्नेनमहतानृप २४ एवंसर्वेऽनुसंचिंत्यप्रययुर्यत्रसैनिकाः ॥ संजयउवाच ॥ एवमुक्तस्तदाराजाबलेनमहतावृतः २५ प्रययौसिंहनादेनकंपयन्निवमेदिनीम् ॥
हतविद्ध्यतगृह्णीतप्रहरध्वंनिकृंतत २६ इत्यासीत्तुमुलःशब्दस्तवसैन्यस्यभारत ॥ पांडवास्तुरणेदृष्ट्वामद्रराजपदानुगान् २७ सहितानभ्यवर्तंतगुल्ममास्थाय
मध्यमम् ॥ तेमुहूर्ताद्रणेवीराहस्ताहस्तिविशांपते २८ निहताःप्रत्यदृश्यंतमद्रराजपदानुगाः ॥ ततोनःसंप्रयातानांहतामद्रास्तरस्विनः २९ हृष्टाःकिलकिलाश
ब्दमकुर्वन्सहिताःपरे ॥ उत्थितानिकबंधानिसमदृश्यंतसर्वशः ३० पपातमहतीचोल्कामध्येनादित्यमंडलम् ॥ रथैर्भग्नैर्युगाक्षैश्चनिहतैश्चमहारथैः ३१ अश्वैर्निप
तितैश्चैवसंछन्नाऽभूद्वसुंधरा ॥ वातायमानैस्तुरगैर्युगासक्तैस्ततस्ततः ३२ अदृश्यंतमहाराजयोधास्तत्ररणाजिरे ॥ भग्नचक्रान्रथान्केचिदहरंस्तुरगारणे ३३
रथार्धंकेचिदादायदिशोदशविबभ्रमुः ॥ तत्रतत्रव्यदृश्यंतयोक्त्रैःश्लिष्टाःस्मवाजिनः ३४ रथिनःपतमानाश्चदृश्यंतेस्मनरोत्तमाः ॥ गगनात्प्रच्युताःसिद्धाःपुण्याना
मिवसंक्षये ३५ निहतेषुचशूरेषुमद्रराजानुगेषुवै ॥ अस्मानापततश्चापिदृष्ट्वापार्थामहारथाः ३६ अभ्यवर्त्तंतवेगेनजयगृद्धाःप्रहारिणः ॥ बाणशब्दरवान्कृत्वा
विमिश्रान्शंखनिःस्वनैः ३७ अस्मांस्तुपुनरासाद्यलब्धलक्षाःप्रहारिणः ॥ शरासनानिधुन्वानाःसिंहनादान्प्रचुक्रुशुः ३८ ततोहतमभिप्रेक्ष्यमद्रराजबलंमहत् ॥
मद्रराजंचसमरेदृष्ट्वाशूरंनिपातितम् ३९

४० ॥ इति शल्यपर्वणिनीलकंठीये भारतभावदीपे अष्टादशोऽध्यायः ॥ १८ ॥ पातिते इति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६

दुर्योधनबलंसर्वंपुनरासीत्पराङ्मुखम् ॥ वध्यमानंमहाराजपांडवैर्जितकाशिभिः ॥ दिशोभेजेऽथसंभ्रांतंभ्रामितंदृढधन्विभिः ४० ॥ इतिश्रीमहाभारतेशल्यपर्वणि संकुलयुद्धेअष्टादशोऽध्यायः ॥ १८ ॥ संजयउवाच ॥ पातितेयुधिदुर्धर्षेमद्रराजेमहारथे ॥ तावकास्तवपुत्राश्चप्रायशोविमुखाऽभवन् १ वणिजोनाविभिन्नायांयथा ऽगाधेप्लवेऽर्णवे ॥ अपारेपारमिच्छंतोहतेशूरेमहात्मना ॥ मद्रराजेमहाराजवित्रस्ताःशरविक्षताः २ अनाथानाथमिच्छंतोमृगाःसिंहार्दिताइव ॥ वृषायथाभग्न शृंगाःशीर्णदंतायथागजाः ३ मध्याह्नेप्रत्यपायामनिर्जिताऽजातशत्रुणा ॥ नसंधातुमनीकानिनचराजन्पराक्रमे ४ आसीद्बुद्धिर्हतेशल्येभूयोयोधस्यकस्यचित् ॥ भीष्मेद्रोणेचनिहतेसूतपुत्रेचभारत ५ यद्दुःखंतवयोधानांभयंचासीद्विशांपते ॥ तद्भयंसचनःशोकोभूयएवाभ्यवर्तत ६ निराशाश्चजयेतास्मिन्हतेशल्येमहारथे ॥ हतप्रवीराविध्वस्तानिकृत्ताश्चशितैःशरैः ७ मद्रराजेहतेराजन्योधास्तेप्राद्रवन्भयात् ॥ अश्वानन्येगजानन्येरथानन्येमहारथाः ८ आरुह्यजवसंपन्नाःपादाताः प्राद्रवंस्तथा ॥ द्विसाहस्राश्चमातंगागिरिरूपाःप्रहारिणः ९ संप्राद्रवन्हतेशल्येअंकुशांगुष्ठनोदिताः ॥ तेरणाद्भरतश्रेष्ठतावकाःप्राद्रवन्दिशः १० धावतश्चाप्य पश्यामश्वसमानान्शराहतान् ॥ तान्प्रभग्नान्द्रुतान्दृष्ट्वाहतोत्साहान्पराजितान् ११ अभ्यवर्तंतपंचालाःपांडवाश्चजयैषिणः ॥ बाणशब्दरवाश्चापिसिंहनादाश्च पुष्कलाः १२ शंखशब्दश्चशूराणांदारुणःसमपद्यत ॥ दृष्ट्वातुकौरवंसैन्यंभयत्रस्तंप्रविद्रुतम् १३ अन्योन्यंसमभाषंतपंचालाःपांडवैःसह ॥ अद्यराजासत्यधृति र्हतामित्रोयुधिष्ठिरः १४ अद्यदुर्योधनोहीनोदीप्तायानृपतिश्रियः ॥ अद्यश्रुत्वाहतंपुत्रंधृतराष्ट्रोजनेश्वरः १५ विह्वलःपतितोभूमौकिल्बिषंप्रतिपद्यतां ॥ अद्यजा नातुकौंतेयंसमर्थंसर्वधन्विनां १६ अद्यात्मानंचदुर्मेधागर्हयिष्यतिपापकृत् ॥ अद्यक्षत्तुर्वचःसत्यंस्मरतांब्रुवतोहितम् १७ अद्यप्रभृतिपार्थंचप्रेष्यभूतइवाचरन् ॥ विजानातुनृपोदुःखंयत्प्राप्तंपांडुनंदनैः १८ अद्यकृष्णस्यमाहात्म्यंविजानातुमहीपतिः ॥ अद्यार्जुनधनुर्घोषंघोरंजानातुसंयुगे १९ अस्त्राणांचबलंसर्वंबाह्वोश्चब लमाहवे ॥ अद्यज्ञास्यतिभीमस्यबलंघोरंमहात्मनः २० हतेदुर्योधनेयुद्धेशक्रेणेवासुरेबले ॥ यत्कृतंभीमसेनेनदुःशासनवधेतदा २१ नान्यःकर्ताऽस्तिलोकेऽस्मि न्नृतेभीमान्महाबलात् ॥ अद्यज्येष्ठस्यजानीतांपांडवस्यपराक्रमम् ॥ मद्रराजंहतंश्रुत्वादेवैरपिसुदुःसहम् ॥ अद्यज्ञास्यतिसंग्रामेमाद्रीपुत्रौसुदुःसहौ २३ निह तेसौबलेवीरेप्रवीरेषुचसर्वशः ॥ कथंजयोनतेषांस्याद्येषांयोद्धाधनंजयः २४ सात्यकिर्भीमसेनश्चधृष्टद्युम्नश्चपार्षतः ॥ द्रौपद्यास्तनयाःपंचमाद्रीपुत्रौचपांडवौ २५ शिखंडीचमहेष्वासोराजाचैवयुधिष्ठिरः ॥ येषांचजगतोनाथोनाथःकृष्णोजनार्दनः २६ कथंतेषांजयोनस्याद्येषांधर्मोव्यपाश्रयः ॥ भीष्मंद्रोणंचकर्णंचमद्रराजानमेवच २७

१७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

तथाऽन्यान्नृपतीन्वीरान्शतशोऽथसहस्रशः ॥ कोऽन्यःशक्तोरणेजेतुमृतेपार्थाद्युधिष्ठिरात् २८ यस्यनाथोहृषीकेशःसदासत्ययशोनिधिः ॥ इत्येवंवदमानास्तेहर्षे
णमहतायुताः २९ प्रभग्नांस्तावकान्योधान्संहृष्टाःपृष्ठतोऽन्वयुः ॥ धनंजयोरथानीकमभ्यवर्ततवीर्यवान् ३० माद्रीपुत्रौचशकुनिंसात्यकिश्चमहारथः ॥ तान्प्रे
क्ष्यद्रवतःसर्वान्भीमसेनभयार्दितान् ३१ दुर्योधनस्तदासूतमब्रवीद्विजयायच ॥ मामतिक्रमतेपार्थोधनुष्पाणिमवस्थितम् ३२ जघनेसर्वसैन्यानांममाश्वान्प्र
तिपादय ॥ जघनेयुध्यमानंहिकौंतेयोमांसमंततः ३३ नोत्सहेदभ्यतिक्रांतुंवेलामिवमहोदधिः ॥ पश्यसैन्यंमहत्सूतपांडवैःसमभिद्रुतम् ३४ सैन्यरेणुंसमुद्भूतंपश्य
स्वैनंसमंततः ॥ सिंहनादांश्चबहुशःशृणुघोरान्भयावहान् ३५ तस्माद्याहिशनैःसूतजघनंपरिपालय ॥ मयिस्थितेचसमरेनिरुद्धेषुचपांडुषु ३६ पुनरावर्ततेतूर्णं
मामकंबलमोजसा ॥ तच्छ्रुत्वातवपुत्रस्यशूरार्यसदृशंवचः ३७ सारथिर्हेमसंछन्नान्शनैरश्वानचोदयत् ॥ गजाश्वरथिभिर्हीनास्त्यक्तात्मानःपदातयः ३८ एकविं
शतिसाहस्राःसंयुगायावतस्थिरे ॥ नानादेशसमुद्भूतानानानगरवासिनः ३९ अवस्थितास्तदायोधाःप्रार्थयंतोमहद्यशः ॥ तेषामापततांतत्रसंहृष्टानांपरस्परम्
४० संमर्दःसुमहान्जज्ञेघोररूपोभयानकः ॥ भीमसेनस्तदाराजन्धृष्टद्युम्नश्चपार्षतः ४१ बलेनचतुरंगेणनानादेश्यानवारयत् ॥ भीममेवाभ्यवर्ततरणेऽन्येतुपदा
तयः ४२ प्रक्ष्वेड्यास्फोट्यसंहृष्टावीरलोकंयियासवः ॥ आसाद्यभीमसेनंतुसंरब्धायुद्धदुर्मदाः ४३ धार्तराष्ट्राविनेदुर्हिनान्यामकथयन्कथां ॥ परिवार्यरणेभीमंनि
जघ्नुस्तेसमंततः ४४ सवध्यमानःसमरेपदातिगणसंवृतः ॥ नचचालततःस्थानान्मैनाकइवपर्वतः ४५ तेतुक्रुद्धामहाराजपांडवस्यमहारथम् ॥ निग्रहीतुंप्रवृत्ता
हियोधांश्चान्यानवारयत् ४६ अक्रुध्यतरणेभीमस्तैस्तदापर्यवस्थितैः ॥ सोवतीर्यरथात्तूर्णंपदातिःसमवस्थितः ४७ जातरूपप्रतिच्छन्नांप्रगृह्यमहतींगदाम् ॥
अवधीत्तावकान्योधान्दंडपाणिरिवांतकः ४८ विप्रहीणरथाश्वांस्तानवधीत्पुरुषर्षभः ॥ एकविंशतिसाहस्रान्पदातीन्समपोथयत् ४९ हत्वातत्पुरुषानीकंभीमःसत्य
पराक्रमः ॥ धृष्टद्युम्नंपुरस्कृत्यनचिरात्प्रत्यदृश्यत ५० पादातानिहताभूमौशिश्यिरेरुधिरोक्षिताः ॥ संभग्नाइववातेनकर्णिकाराःसुपुष्पिताः ५१ नानाशस्त्रसमा
युक्तानानाकुंडलधारिणः ॥ नानाजात्याहतास्तत्रनानादेशसमागताः ५२ पताकाध्वजसंछन्नंपदातीनांमहद्बलम् ॥ निकृत्तंविबभौरौद्रंघोररूपंभयावहम् ५३
युधिष्ठिरपुरोगाश्चसहसैन्यमहारथाः ॥ अभ्यधावन्महात्मानंपुत्रंदुर्योधनंतव ५४ तेसर्वेतावकान्दृष्ट्वामहेष्वासान्पराङ्मुखान् ॥ नात्यवर्तंततेपुत्रंवेलेवमकराल
यम् ५५ तदद्भुतमपश्यामतवपुत्रस्यपौरुषम् ॥ यदेकंसहिताःपार्थानशेकुरतिवर्तितुम् ५६ नातिदूरापयातंतुकृतबुद्धिंपलायने ॥ दुर्योधनःस्वकंसैन्यमब्रवी
त्कृशविक्षतम् ५७ नतंदेशंप्रपश्यामिपृथिव्यांपर्वतेषुच ॥ यत्रयातान्नवाहन्युःपांडवाःकिंसृतेनवः ५८

५९ ।६० । ६१। ६२। ६३ । ६४। ६५। ६६ ।६७ ६८ । ६९ ॥ इतिशल्यपर्वणि नीलकंठीये भारतभावदीपे ऊनविंशोऽध्यायः ॥ १९ ॥ सन्निवृते इति १ । २ । ३ । ४ पुरापूर्वं वज्रधरस्य

अल्पंचबलमेतेषांकृष्णौचभृशविक्षतौ ॥ यदिसर्वेऽत्रतिष्ठामोध्रुवंनोविजयोभवेत् ५९ विप्रयातांस्तुवोभिन्नान्पांडवाःकृतविप्रियाः ॥ अनुसृत्यहनिष्यंतिश्रेयान्नः समरेवधः ६० शृण्वंतुक्षत्रियाःसर्वेयावंतोऽत्रसमागताः ॥ यदाशूरंचभीरुंचमारयत्यंतकःसदा ६१ कोनमूढोनयुध्येतपुरुषःक्षत्रियोध्रुवम् ॥ श्रेयोनोभीमसेनस्य क्रुद्धस्याभिमुखेस्थितम् ६२ सुखःसांग्रामिकोमृत्युःक्षत्रधर्मेणयुध्यतां ॥ मर्त्येनावश्यमर्तव्यंगृहेष्वपिकदाचन ६३ युध्यतःक्षत्रधर्मेणमृत्युरेषसनातनः ॥ हत्वेह सुखमाप्नोतिहतःप्रेत्यमहत्फलम् ६४ नयुद्धधर्माच्छ्रेयान्वैपंथाःस्वर्गस्यकौरवाः ॥ अचिरेणैवतॉंल्लोकान्हतोयुद्धेसमश्नुते ६५ श्रुत्वातद्वचनंतस्यपूजयित्वाचपार्थिवाः ॥ पुनरेवाभ्यवर्तंतपांडवानाततायिनः ६६ तानापततएवाशुव्यूढानीकाःप्रहारिणः ॥ प्रत्युद्ययुस्तदापार्थाजयगृद्धाःप्रमन्यवः ६७ धनंजयोरथेनाजावभ्यवर्तंतवीर्यवान् ॥ विश्रुतंत्रिषुलोकेषुव्याक्षिपन्गांडिवंधनुः ६८ माद्रीपुत्रौचशकुनिंसात्यकिश्चमहाबलः ॥ जवेनाभ्यपतन्हृष्टायत्तावैतावकंबलम् ६९ ॥ इति श्रीमहाभारतेशल्यपर्वणिसंकलयुद्धेएकोनविंशोऽध्यायः ॥ १९ ॥ ॥ संजयउवाच ॥ सन्निवृत्तेजनौघेतुशाल्वोम्लेच्छगणाधिपः ॥ अभ्यवर्ततसंक्रुद्धःपांडवानां महद्बलम् १ आस्थायसुमहानागंप्रभिन्नंपर्वतोपमम् ॥ दृप्तमैरावतप्रख्यममित्रगणमर्दनम् २ योऽसौमहान्भद्रकुलप्रसूतःसुपूजितोधार्तराष्ट्रेणनित्यम् ॥ सुकल्पितःशास्त्रविनिश्चयज्ञैःसदोपवाह्यःसमरेषुराजन् ३ तमास्थितोराजवरोबभूवयथोदयस्थःसविताक्षपांते ॥ सतेननागप्रवरेणराजन्नभ्युद्ययौपांडुसुतान्समेतान् ४ सितैःपृषत्कैर्विददारवेगैर्महेंद्रवज्रप्रतिमैःसुघोरैः ॥ ततःशरान्वैसृजतोमहारणेयोधांश्चराजन्नयतोयमालयम् ५ नास्यांतरंददृशुःस्वेपरेवायथापुरावज्रधरस्यदैत्याः ॥ ऐरावणस्थस्यचमूविमर्देदैत्याःपुरावासवस्येवराजन् ६ तेपाण्डवाःसोमकाःसृंजयाश्चतमेकनागंददृशुःसमंतात् ॥ सहस्रशोवैविचरंतमेकंयथामहेंद्रस्यगजंसमीपे ७ संद्राव्यमाणंतुबलंपरेषांपरीतकल्पंविबभौसमंततः ॥ नैवावतस्थेसमरेभृशंभयाद्विमृद्यमानंतुपरस्परंतदा ८ ततःप्रभग्नासहसामहाचमूःसापांडवीतेननराधिपेन ॥ दिशश्चतस्रःसहसाविधाविताग़जेंद्रवेगंतमपारयंती ९ दृष्ट्वाचतांवेगवतींप्रभग्नांसर्वेत्वदीयायुधियोधमुख्याः ॥ अपूजयंस्तेतुनराधिपंतंदध्मुश्चशंखान्शशिसन्निकाशान् १० श्रुत्वानिनादंत्वथकौरवाणांहर्षाद्विमुक्तंसहशंखशब्दैः ॥ सेनापतिःपांडवसृंजयानांपांचालपुत्रोममृषेनकोपात् ११ ततस्तुतंवैद्विरदंमहात्माप्रत्युद्ययौत्वरमाणोजयाय ॥ जंभोयथाशक्रसमागमेवैनागेंद्रमैरावणमिंद्रवाह्यम् १२ तमापतंतंसहसातुदृष्ट्वापांचालपुत्रंयुधिराजसिंहः ॥ तंवैद्विपंप्रेषयामासतूर्णंवधायराजन्द्रुपदात्मजस्य १३ सतंद्विपेंद्रंसहसाऽऽपतंतमविध्यदग्निप्रतिमैःपृषत्कैः ॥ कर्मारधौतैर्निशितैर्ज्वलद्भिर्नाराचमुख्यैस्त्रिभिरुग्रवेगैः १४

ऐरावणस्थस्यवासवस्य पुराप्रथमेचमूविमर्देदैत्याअदैत्यादेवाश्चयथाअंतरंनददृशुस्तथास्वेपरेवास्यशाल्वस्यांतरंनददृशुरित्यन्वयः इवशब्दोवाक्यालंकारे ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४

१५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ ॥ इतिशल्यपर्वणिनीलकंठीयेभारतभावदीपे विंशतितमोऽध्यायः ॥ २० ॥ ॥ ७ ॥

ततोऽपरान्पंचशतान्महात्मानाराचमुख्यान्विससर्जकुंभे ॥ सतैस्तुविद्धःपरमद्विपोरणेतदापराहृत्यभृशंप्रदुद्रुवे १५ तंनागराजंसहसाप्रणुन्नंविद्राव्यमाणंविनिव
र्त्यशाल्वः ॥ तोत्रांकुशैःप्रेषयामासतूर्णंपंचालराजस्यरथंप्रदिश्य १६ दृष्ट्वाऽऽपतंतंसहसातुनागंधृष्टद्युम्नःस्वरथाच्छीघ्रमेव ॥ गदांप्रगृह्योग्रजवेनवीरोभूमिंप्रपन्नो
भयविह्वलांगः १७ सतंरथंहेमविभूषितांगंसाश्वंससूतंसहसाविमृद्य ॥ उत्क्षिप्यहस्तेननदन्महाद्विपोविपोथयामासवसुंधरातले १८ पांचालराजस्यसुतंचदृष्ट्वातदा
र्दितंनागवरेणतेन ॥ तमभ्यधावत्सहसाजवेनभीमःशिखंडीचशिनेश्चनप्ता १९ शरैश्चवेगंसहसानिगृह्यतस्याभितोव्यापततोगजस्य ॥ ससंगृहीतोरथिभिर्गजो
वैचचालतैर्वार्यमाणश्चसंख्ये २० ततःपृषत्कान्प्रववर्षराजासूर्योयथारश्मिजालंसमंतात् ॥ तैराशुगैर्वध्यमानारथौघाःप्रदुद्रुवुःसहितास्तत्रतत्र २१ तत्कर्मशाल्व
स्यसमीक्ष्यसर्वेपांचालपुत्रानृपसृंजयाश्च ॥ हाहाकारैर्नादयंतिस्मयुद्धेद्विपंसमंताद्रुरुधुर्नराग्र्याः २२ पांचालपुत्रस्त्वरितस्तुशूरोगदांप्रगृह्याचलशृंगकल्पाम् ॥ स
संभ्रमंभारतशत्रुघातीजवेनवीरोऽनुससारनागम् २३ ततस्तुनागंधरणीधराभंमदंस्रवंतंजलदप्रकाशम् ॥ गदांसमाविद्ध्यभृशंजघानपंचालराजस्यसुतस्तरस्वी २४
सभिन्नकुंभःसहसाविनद्यमुखात्प्रभूतंक्षतजंविमुंचन् ॥ पपातनागोधरणीधराभःक्षितिप्रकंपाच्चलितोयथाद्रिः २५ निपात्यमानेतुतदागजेंद्रेहाहाकृतेतवपुत्रस्य
सैन्ये ॥ सशाल्वराजस्यशिनिप्रवीरोजहारभल्लेनशिरःशितेन २६ हृतोत्तमांगोयुधिसात्वतेनपपातभूमौसहनागराज्ञा ॥ यथाद्रिशृंगंसुमहत्प्रणुन्नंवज्रेणदेवाधिप
चोदितेन २७ ॥ इतिश्रीमहाभारतेशल्यपर्वणिशाल्ववधेविंशतितमोध्यायः ॥ २० ॥ ॥ संजयउवाच ॥ तस्मिंस्तुनिहतेशूरेशाल्वेसमितिशोभने ॥ तवा
भज्यद्बलंवेगाद्वातेनेवमहाद्रुमः १ तत्प्रभग्नंबलंदृष्ट्वाकृतवर्मामहारथः ॥ दधारसमरेशूरःशत्रुसैन्यंमहाबलः २ सन्निवृत्तास्तुतेशूरादृष्ट्वासात्वतमाहवे ॥ शैलोपमंस्थि
रंराजन्कीर्यमाणंशरैर्युधि ३ ततःप्रववृतेयुद्धंकुरूणांपांडवैःसह ॥ निवृत्तानांमहाराजमृत्युंकृत्वानिवर्तनम् ४ तत्राश्चर्यमभूद्युद्धंसात्वतस्यपरैःसह ॥ यदेकोवारया
मासपांडुसेनांदुरासदाम् ५ तेषामन्योन्यसुहृदांकृतेकर्मणिदुष्करे ॥ सिंहनादःप्रहृष्टानांदिविस्पृक्सुमहानभूत् ६ तेनशब्देनवित्रस्तान्पंचालान्भरतर्षभ ॥ शिने
र्नप्तामहाबाहुरभ्यपद्यतसात्यकिः ७ ससमासाद्यराजानंक्षेमधूर्तिंमहाबलम् ॥ सप्तभिर्निशितैर्बाणैरनयद्यमसादनम् ८ तमायांतंमहाबाहुंप्रवपंतंशितान्शरान् ॥
जवेनाभ्यपतद्धीमान्हार्दिक्यःशिनिपुंगवम् ९ सात्वतौचमहावीर्यौधन्विनौरथिनांवरौ ॥ अन्योन्यमभिधावेतांशस्त्रप्रवरधारिणौ १० पांडवाःसहपंचालायो
धाश्चान्येनृपोत्तमाः ॥ प्रेक्षकाःसमपद्यंततयोर्घोरेसमागमे ११ नाराचैर्वत्सदंतैश्चवृष्ण्यंधकमहारथौ ॥ अभिजघ्नतुरन्योन्यंप्रहृष्टाविवकुंजरौ १२

तस्मिन्निति १ । २ सात्वतंकृतवर्माणम् ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२

१३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ ॥ इतिशल्यपर्वणिनीलकंठीयेभार

चरंतौविविधान्मार्गान्हार्दिक्यशिनिपुंगवौ ॥ मुहुरंतर्दधातेतौबाणवृष्ट्याचपरस्परम् १३ चापवेगबलोद्धूतान्मार्गणान्वृष्णिसिंहयोः ॥ आकाशेसमपश्यामपतंगानि
वशीघ्रगान् १४ तमेकंसत्यकर्माणमासाद्यहृदिकात्मजः ॥ अविध्यान्निशितैर्बाणैश्चतुर्भिश्चतुरोहयान् १५ सदीर्घबाहुःसंक्रुद्धस्तोत्रार्दितइवद्विपः ॥ अष्टभिःकृतव
र्माणमविद्धत्परमेषुभिः १६ ततःपूर्णायतोत्सृष्टैःकृतवर्माशिलाशितैः ॥ सात्यकिंत्रिभिराहत्यधनुरेकेनचिच्छिदे १७ निकृत्तंतद्धनुःश्रेष्ठमपास्यशिनिपुंगवः ॥
अन्यदादत्तवेगेनशैनेयःसशरंधनुः १८ तदादायधनुःश्रेष्ठंवरिष्ठःसर्वधन्विनाम् ॥ आरोप्यचधनुःशीघ्रंमहावीर्योमहाबलः १९ अमृष्यमाणोधनुषश्छेदनंकृतवर्मणा ॥
कुपितोऽतिरथःशीघ्रंकृतवर्माणमभ्ययात् २० ततःसुनिशितैर्बाणैर्दशभिःशिनिपुंगवः ॥ जघानसूतंचाश्वांश्चध्वजंचकृतवर्मणः २१ ततोराजन्महेष्वासःकृतवर्माम
हारथः ॥ हताश्वसूतंसंप्रेक्ष्यरथंहेमपरिष्कृतं २२ रोषेणमहताऽऽविष्टःशूलमुद्यम्यमारिष ॥ चिक्षेपभुजवेगेनजिघांसुःशिनिपुंगवम् २३ तच्छूलंसात्वतोह्याजौनिर्भि
द्यनिशितैःशरैः ॥ चूर्णितंपातयामासमोहयन्निवमाधवम् २४ ततोऽपरेणभल्लेनहृद्येनंसमताडयत् ॥ युयुधेयुयुधानेनहताश्वोहतसारथिः २५ कृतवर्माकृतस्तेनध
रणीमन्वपद्यत ॥ तस्मिन्सात्यकिनावीरेद्वैरथेविरथीकृते २६ समपद्यतसर्वेषांसैन्यानांसुमहद्भयम् ॥ पुत्रस्यतवचात्यर्थंविषादःसमजायत २७ हतसूतेहताश्वेतु
विरथेकृतवर्मणि ॥ हताश्वंचसमालक्ष्यहतसूतमरिंदम २८ अभ्यधावत्कृपोराजन्जिघांसुःशिनिपुंगवम् ॥ तमारोप्यरथोपस्थेमिषतांसर्वधन्विनाम् २९ अपो
वाहमहाबाहुंतूर्णमायोधनादपि ॥ शैनेयेऽधिष्ठितेराजन्विरथेकृतवर्मणि ३० दुर्योधनबलंसर्वंपुनरासीत्पराङ्मुखम् ॥ तत्परेनान्वबुध्यंतसैन्येनरजसाऽऽवृताः
३१ तावकाःप्रद्रुताराजन्दुर्योधनमृतेनृपम् ॥ दुर्योधनस्तुसंप्रेक्ष्यभग्नंस्वबलमंतिकात् ३२ जवेनाभ्यपतत्तूर्णंसर्वांश्चैकोन्यवारयत् ॥ पांडूंश्चसर्वान्संक्रुद्धोधृष्टद्युम्नंच
पार्षतम् ३३ शिखंडिनंद्रौपदेयान्पंचालानांचयेगणाः ॥ केकयान्सोमकांश्चैवसृंजयांश्चैवमारिष ३४ असंभ्रमंदुराधर्षःशितैर्बाणैरवाकिरत् ॥ अतिष्ठदाहवेयत्तः
पुत्रस्तवमहाबलः ३५ यथायज्ञेमहानग्निर्मंत्रपूतःप्रकाशवान् ॥ तथादुर्योधनोराजासंग्रामेसर्वतोऽभवत् ३६ तंपरेनाभ्यवर्त्तंतमर्त्यामृत्युमिवाहवे ॥ अथान्यंरथ
मास्थायहार्दिक्यःसमपद्यत ३७ ॥ इतिश्रीमहाभारतेशल्यपर्वणि सात्यकिकृतवर्मयुद्धेएकविंशोऽध्यायः ॥ २१ ॥ संजयउवाच ॥ पुत्रस्तुतेमहाराजरथस्थोर
थिनांवरः ॥ दुरुत्सहोबभौयुद्धेयथारुद्रःप्रतापवान् १ तस्यबाणसहस्रैस्तुप्रच्छन्नाह्यभवन्मही ॥ परांश्चसिषिचेबाणैर्धाराभिरिवपर्वतान् २ नचसोऽस्तिपुमान्क
श्चित्पांडवानांबलार्णवे ॥ हयोगजोरथोवाऽपियःस्याद्बाणैरविक्षतः ३ यंयंहिसमरेयोधंप्रपश्यामिविशांपते ॥ ससबाणैश्चितोऽभूद्वैपुत्रेणतवभारत ४ यथासैन्ये
नरजसासमुद्धूतेनवाहिनी ॥ प्रत्यदृश्यतसंछन्नातथाबाणैर्महात्मनः ५

तभा॰ वदी॰ पेएकविंशोऽध्यायः ॥ २१ ॥ ॥ पुत्रइति १ । २ । ३ । ४ । ५

बाणभूतामपश्यामपृथिवींपृथिवीपते ॥ दुर्योधनेनप्रकृतांक्षिप्रहस्तेनधन्विना ६ तेषुयोधसहस्रेषुतावकेषुपरेषुच ॥ एकोदुर्योधनोह्यासीत्पुमानितिमतिर्मम ७ तत्राद्भुतमपश्यामतवपुत्रस्यविक्रमम् ॥ यदेकंसहिताःपार्थानाभ्यवर्त्ततभारत ८ युधिष्ठिरंशतेनाजौविव्याधभरतर्षभ ॥ भीमसेनंचसप्तत्यासहदेवंचपंचभिः ९ नकुलंचचतुःषष्ट्याधृष्टद्युम्नंचपंचभिः ॥ सप्तभिर्द्रौपदेयांश्चत्रिभिर्विव्याधसात्यकिम् १० धनुश्चिच्छेदभल्लेनसहदेवस्यमारिष ॥ तदपास्यधनुश्छिन्नंमाद्रीपुत्रःप्रतापवान् ११ अभ्यद्रवतराजानंप्रगृह्यान्यन्महद्धनुः ॥ ततोदुर्योधनंसंख्येविव्याधदशभिःशरैः १२ नकुलस्तुततोवीरोराजानंनवभिःशरैः ॥ घोररूपैर्महेष्वासोविव्याधचननादच १३ सात्यकिश्चैवराजानंशरेणानतपर्वणा ॥ द्रौपदेयास्त्रिसप्तत्याधर्मराजश्चपंचभिः १४ अशीत्याभीमसेनश्चशरैराजानमार्पयन् ॥ समंतात्कीर्यमाणस्तुबाणसंघैर्महात्मभिः १५ नचचालमहाराजसर्वसैन्यस्यपश्यतः ॥ लाघवंसौष्ठवंचापिवीर्यंचापिमहात्मनः १६ अतिसर्वाणिभूतानिददृशुःसर्वमानवाः ॥ धार्त्तराष्ट्राहिराजेंद्रयोधास्तुस्वल्पमंतरम् १७ अपश्यमानाराजानंपर्यवर्त्ततदंशिताः ॥ तेषामापततांघोरस्तुमुलःसमपद्यत १८ क्षुब्धस्यहिसमुद्रस्यप्रावृट्कालेयथास्वनः ॥ समासाद्यरणेतेतुराजनमपराजितम् १९ प्रत्युद्ययुर्महेष्वासाःपांडवानाततायिनः ॥ भीमसेनंरणेक्रुद्धोद्रोणपुत्रोन्यवारयत् २० नानाबाणैर्महाराजप्रमुक्तैःसर्वतोदिशम् ॥ नाज्ञायंतरणेवीरानदिशःप्रदिशःकुतः २१ तावुभौक्रूरकर्माणावुभौभारतदुःसहौ ॥ घोररूपमयुध्येतांकृतप्रतिकृतैषिणौ २२ त्रासयंतौदिशःसर्वाज्याक्षेपकठिनत्वचौ ॥ शकुनिस्तुरणेवीरोयुधिष्ठिरमपीडयत् २३ तस्याश्वांश्चतुरोहत्वासुबलस्यसुतोविभो ॥ नादंचकारबलवत्सर्वसैन्यानिकोपयन् २४ एतस्मिन्नंतरेवीरंराजानमपराजितम् ॥ अपोवाहरथेनाजौसहदेवःप्रतापवान् २५ अथान्यंरथमास्थायधर्मपुत्रोयुधिष्ठिरः ॥ शकुनिंनवभिर्विद्ध्वापुनर्विव्याधपंचभिः २६ ननादचमहानादंप्रवरःसर्वधन्विनाम् ॥ तद्युद्धमभवच्चित्रंघोररूपंचमारिष २७ प्रेक्षतांप्रीतिजननंसिद्धचारणसेवितम् ॥ उलूकस्तुमहेष्वासंनकुलंयुद्धदुर्मदम् २८ अभ्यद्रवदमेयात्माशरवर्षैःसमंततः ॥ तथैवनकुलःशूरःसौबलस्यसुतंरणे २९ शरवर्षेणमहतासमंतात्पर्यवारयत् ॥ तौतत्रसमरेवीरौकुलपुत्रौमहारथौ ३० योधयंतावपश्येतांकृतप्रतिकृतैषिणौ ॥ तथैवकृतवर्माणंशैनेयःशत्रुतापनः ३१ योधयन्शुशुभेराजन्बलिंशक्रइवाहवे ॥ दुर्योधनोधनुश्छित्वाधृष्टद्युम्नस्यसंयुगे ३२ अथैनंछिन्नधन्वानंविव्याधनिशितैःशरैः ॥ धृष्टद्युम्नोऽपिसमरेप्रगृह्यपरमायुधम् ३३ राजानंयोधयामासपश्यतांसर्वधन्विनाम् ॥ तयोर्युद्धंमहच्चासीत्संग्रामेभरतर्षभ ३४ प्रभिन्नयोर्यथासक्तंमत्तयोर्वरहस्तिनोः ॥ गौतमस्तुरणेक्रुद्धोद्रौपदेयान्महाबलान् ३५ विव्याधबहुभिःशूरःशरैःसन्नतपर्वभिः ॥ तस्यतैरभवद्युद्धमिंद्रियैरिवदेहिनः ३६ घोररूपमसंवार्यंनिर्मर्यादमवर्त्तत ॥ तेचसंपीडयामासुरिंद्रियाणीवबालिशम् ३७

३८ । ३९ । ४० । ४१ । ४२ पत्त्रंवाहनं ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ ॥ इतिशल्यपर्वणिनीलकंठीयेभारतभावदीपेद्वाविंशोऽध्यायः ॥ २२ ॥ वर्तमानेइति १ । २ । ३ । ४ । ५

सचतान्प्रतिसंरब्धःप्रत्ययोधयदाहवे ॥ एवंचित्रमभूद्युद्धंतस्यतैःसहभारत ३८ उत्थायोत्थायहियथादेहिनामिंद्रियैर्विभो ॥ नराश्चैवनरैःसार्धंदंतिनोदंतिभिस्त था ३९ हयाहयैःसमासक्तारथिनोरथिभिःसह ॥ संकुलंचाभवद्भूयोघोररूपंविशांपते ४० इदंचित्रमिदंघोरमिदंरौद्रमितिप्रभो ॥ युद्धान्यासन्महाराजघोराणि चबहूनिच ४१ तेसमासाद्यसमरेपरस्परमरिंदमाः ॥ व्यनदंश्चैवजघ्नुश्चसमासाद्यमहाहवे ४२ तेषांपत्रसमुद्भूतंरजस्तीव्रमदृश्यत ॥ वातेनचोद्धतंराजन्धावद्भि श्चाश्वसादिभिः ४३ रथनेमिसमुद्भूतंनिःश्वासैश्चापिदंतिनाम् ॥ रजःसंध्याभ्रकलिलंदिवाकरपथंययौ ४४ रजसातेनसंपृक्तोभास्करोनिष्प्रभःकृतः ॥ संछादिता ऽभवद्भूमिस्तेचशूरामहारथाः ४५ मुहूर्तादिवसंवृत्तंनीरजस्कंसमंततः ॥ वीरशोणितसिक्तायांभूमौभरतसत्तम ४६ उपाशाम्यत्ततस्तीव्रंतद्रजोघोरदर्शनम् ॥ त तोऽपश्यमहंभूयोद्वंद्वयुद्धानिभारत ४७ यथाप्राणंयथाश्रेष्ठंमध्याह्नेवैसुदारुणम् ॥ वर्मणांतत्रराजेंद्रव्यदृश्यंतोज्ज्वलाःप्रभाः ४८ शब्दश्चतुमुलःसंख्येशराणांपतता मभूत् ॥ महावेणुवनस्येवदह्यमानस्यपर्वते ४९ ॥ इतिश्रीमहाभारतेशल्यपर्वणिसंकुलयुद्धेद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ संजयउवाच ॥ वर्तमानेतदायुद्धे घोररूपेभयानके ॥ अभज्यतबलंतत्रतवपुत्रस्यपांडवैः १ तांस्तुयत्नेनमहतासन्निवार्यमहारथान् ॥ पुत्रस्तेयोधयामासपांडवानामनीकिनीम् २ निवृत्ताःसहसायो धास्तवपुत्रजयैषिणः ॥ सन्निवृत्तेषुतेष्वेवंयुद्धमासीत्सुदारुणम् ३ तावकानांपरेषांचदेवासुररणोपमम् ॥ परेषांतवसैन्येवानासीत्कश्चित्पराङ्मुखः ४ अनुमानेन युध्यंतेसंज्ञाभिश्चपरस्परम् ॥ तेषांक्षयोमहानासीद्युध्यतामितरेतरम् ५ ततोयुधिष्ठिरोराजाक्रोधेनमहतायुतः ॥ जिगीषमाणःसंग्रामेधार्तराष्ट्रान्सराजकान् ६ त्रिभिःशारद्वतंविद्ध्वारुक्मपुंखैःशिलाशितैः ॥ चतुर्भिर्निजघानाश्वान्नाराचैःकृतवर्मणः ७ अश्वत्थामातुहार्दिक्यमपोवाहयशस्विनम् ॥ अथशारद्वतोऽष्टाभिःप्र त्यविध्यद्युधिष्ठिरम् ८ ततोदुर्योधनोराजारथान्सप्तशतान्रणे ॥ प्रैषयद्यत्रराजाऽसौधर्मपुत्रोयुधिष्ठिरः ९ तेरथारथिभिर्युक्तामनोमारुतरंहसः ॥ अभ्यद्रवंतसंग्रामे कौंतेयस्यरथंप्रति १० तेसमंतान्महाराजपरिवार्ययुधिष्ठिरम् ॥ अदृश्यंसायकैश्चक्रुर्मेघाइवदिवाकरम् ११ तेदृष्ट्वाधर्मराजानंकौरवेयैस्तथाकृतम् ॥ ना मृष्यंतसुसंरब्धाःशिखंडीप्रमुखारथाः १२ रथैरश्ववरैर्युक्तैःकिंकिणीजालसंवृतैः ॥ आजग्मुरथरक्षंतःकुंतीपुत्रंयुधिष्ठिरम् १३ ततःप्रववृतेरौद्रःसंग्रामः शोणितोदकः ॥ पांडवानांकुरूणांचयमराष्ट्रविवर्धनः १४ रथान्सप्तशतान्हत्वाकुरूणामाततायिनाम् ॥ पांडवाःसहपंचालैःपुनरेवाभ्यवारयन् १५ त त्रयुद्धंमहच्चासीत्तवपुत्रस्यपांडवैः ॥ नचतत्तादृशंदृष्टंनैवचापिपरिश्रुतम् १६ वर्तमानेतदायुद्धेनिर्मर्यादेसमंततः ॥ वध्यमानेषुयोधेषुतावकेष्वितरेषुच १७ विनदत्सुचयोधेषुशंखवर्यैश्चपूरितैः ॥ उत्कुष्टैःसिंहनादैश्चगर्जितैश्चैवधन्विनाम् १८ ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८

अतिप्रवृत्तेयुद्धेचच्छिद्यमानेषुमर्मसु ॥ धावमानेषुयोधेषुजयगृद्धिषुमारिष १९ संहारेसर्वतोजातेपृथिव्यांशोकसंभवे ॥ बह्वीनामुत्तमस्त्रीणांसीमंतोद्धरणेतथा २० निर्मर्यादेमहायुद्धेवर्त्तमानेसुदारुणे ॥ प्रादुरासन्विनाशायतदोत्पाताःसुदारुणाः २१ चचालशब्दंकुर्वाणासपर्वतवनामही ॥ सदंडाःसोल्मुकाराजन्कीर्यमाणाःसमंततः २२ उल्काःपेतुर्दिवोभूमावाहत्यरविमंडलम् ॥ विष्वग्वाताःप्रादुरासन्नीचैःशर्करवर्षिणः २३ अश्रूणिमुमुचुर्नागावेपथुंचास्पृशन्भृशम् ॥ एतान्घोराननाहत्यसमुत्पातान्सुदारुणान् २४ पुनर्युद्धायसंयत्ताःक्षत्रियास्तस्थुरव्यथाः ॥ रमणीयेकुरुक्षेत्रेपुण्येस्वर्गंयियासवः २५ ततोगांधारराजस्यपुत्रःशकुनिरब्रवीत् ॥ युद्धचध्वमग्रतोयावत्पृष्ठतोहन्मिपांडवान् २६ ततोनःसंप्रयातानांमद्रयोधास्तरस्विनः ॥ हृष्टाःकिलकिलाशब्दमकुर्वंतपरेतथा २७ अस्मांस्तुपुनरासाद्यलब्धलक्षादुरासदाः ॥ शरासनानिधुन्वंतःशरवर्षरवाकिरन् २८ ततोहतंपरैस्तत्रमद्रराजबलंतदा ॥ दुर्योधनबलंदृष्ट्वापुनरासीत्पराङ्मुखम् २९ गांधारराजस्तुपुनर्वाक्यमाहततोबली ॥ निवर्तध्वमधर्मज्ञायुध्यध्वंकिंसृतेनवः ३० अनीकंदशसाहस्रमश्वानांभरतर्षभ ॥ आसीद्गांधारराजस्यविशालप्रासयोधिनाम् ३१ बलेनतेनविक्रम्यवर्तमानेजनक्षये ॥ पृष्ठतःपांडवानीकमभ्यघ्नन्निशितैःशरैः ३२ तदभ्रमिववातेनक्षिप्यमाणंसमंततः ॥ अभज्यतमहाराजपांडूनांसुमहद्बलम् ३३ ततोयुधिष्ठिरःप्रेक्ष्यभग्नंस्वबलमंतिकात् ॥ अभ्यनोदयदव्यग्रःसहदेवंमहाबलम् ३४ असौसुबलपुत्रोनोजघनंपीड्यदंशितः ॥ सैन्यानिसूदयत्येषपश्यपांडवदुर्मतिम् ३५ गच्छत्वंद्रौपदेयैश्चशकुनिंसौबलंजहि ॥ रथानीकमहंधक्ष्येपंचालसहितोऽनघ ३६ गच्छंतुकुंजराःसर्वेवाजिनश्चसहत्वया ॥ पादाताश्चत्रिसाहस्राःशकुनिंतैर्वृतोजहि ३७ ततोगजाःसप्तशताश्चापपाणिभिरास्थिताः ॥ पंचचाश्वसहस्राणिसहदेवश्चवीर्यवान् ३८ पादाताश्चत्रिसाहस्राद्रौपदेयाश्चसर्वशः ॥ रणेह्यभ्यद्रवंस्तेतुशकुनिंयुद्धदुर्मदम् ३९ ततस्तुसौबलोराजन्नभ्यतिक्रम्यपांडवान् ॥ जघानपृष्ठतःसेनांजयगृद्धःप्रतापवान् ४० अश्वारोहास्तुसंरब्धाःपांडवानांतरस्विनाम् ॥ प्राविशन्सौबलानीकमभ्यतिक्रम्यतान्रथान् ४१ तेतत्रसादिनःशूराःसौबलस्यमहद्बलम् ॥ रणमध्येऽव्यतिष्ठंतशरवर्षैरवाकिरन् ४२ तदुद्यतगदाप्रासमकापुरुषसेवितम् ॥ प्रावर्ततमहद्युद्धंराजन्दुर्मंत्रितेतव ४३ उपारमंतज्याशब्दाःप्रेक्षकारथिनोऽभवन् ॥ नहिस्वेषांपरेषांवाविशेषःप्रत्यदृश्यत ४४ शूरबाहुविसृष्टानांशक्तीनांभरतर्षभ ॥ ज्योतिषामिवसंपातमपश्यन्कुरुपांडवाः ४५ ऋष्टिभिर्विमलाभिश्चतत्रतत्रविशांपते ॥ संपतंतीभिराकाशमावृतंबह्वशोभत ४६ प्रासानांपततांराजन्रूपमासीत्समंततः ॥ शलभानामिवाकाशेतदाभरतसत्तम ४७ रुधिरोक्षितसर्वांगाविप्रविद्धैर्नियंतृभिः ॥ हयाःपरिपतंतिस्मशतशोथसहस्रशः ४८ अन्योन्यंपरिपिष्टाश्चसमासाद्यपरस्परम् ॥ आविक्षताःस्मदृश्यंतेवमंतोरुधिरंमुखैः ४९

ततोऽभवत्तमोघोरंसैन्येनरजसाऽऽवृते ॥ तानपाक्रमतोऽद्राक्षंतस्माद्देशादरिंदम ५० अश्वान्राजन्मनुष्यांश्चरजसासंवृतेसति ॥ भूमौनिपतिताश्चान्येवमं
तोरुधिरंबहु ५१ केशाकेशिसमालग्नानशेकुश्चेष्टितुंनराः ॥ अन्योन्यमश्वपृष्ठेभ्योविकर्षंतोमहाबलाः ५२ मल्लाइवसमासाद्यनिजघ्नुरितरेतरम् ॥ अश्वैश्चव्य
पकृष्यंतबहवोऽत्रगतासवः ५३ भूमौनिपतिताश्चान्येबहवोविजयैषिणः ॥ तत्रतत्रव्यदृश्यंतपुरुषा शूरमानिनः ५४ रक्तोक्षितैश्छिन्नभुजैरवकृष्टशिरोरुहैः॥
व्यदृश्यतमहीकीर्णाशतशोऽथसहस्रशः ५५ दूरंनशक्यंतत्रासीद्गंतुमश्वेनकेनचित् ॥ साश्वारोहैर्हतैरश्वैरावृतेवसुधातले ५६ रुधिरोक्षितसन्नाहैरात्तशस्त्रैरुदा
युधैः ॥ नानाप्रहरणैर्घोरैःपरस्परवधैषिभिः ५७ सुसन्निकृष्टैःसंग्रामेहतभूयिष्ठसैनिकैः ॥ समुहूर्तंततोयुद्धासौबलोऽथविशांपते ५८ षट्साहस्रैर्हयैःशिष्टैरपा
याच्छकुनिस्ततः ॥ तथैवपांडवानीकंरुधिरेणसमुक्षितम् ५९ षट्साहस्रैर्हयैःशिष्टैरपायाच्छ्रांतवाहनम् ॥ अश्वारोहाश्चपांडूनामब्रुवन्रुधिरोक्षिताः ६० सु
सन्निकृष्टेसंग्रामेभूयिष्ठेत्यक्तजीविताः ॥ नहिशक्यंरथैर्योद्धुंकुतएवमहागजैः ६१ रथानेवरथायांतुकुंजराःकुंजरानपि ॥ प्रतियातोहिशकुनिःस्वमनीकमवस्थितः
६२ नपुनःसौबलोराजायुद्धमभ्यागमिष्यति ॥ ततस्तुद्रौपदेयाश्चतेचमत्तामहाद्विपाः ६३ प्रययुर्यत्रपांचाल्योधृष्टद्युम्नोमहारथः ॥ सहदेवोऽपिकौरव्यरजो
मेघेसमुत्थिते ६४ एकाकीप्रययौतत्रयत्रराजायुधिष्ठिरः॥ ततस्तेषुप्रयातेषुशकुनिःसौबलःपुनः ६५ पार्श्वतोऽभ्यहनत्क्रुद्धोधृष्टद्युम्नस्यवाहिनीम् ॥ तत्पुनस्तुमु
लंयुद्धंप्राणांस्त्यक्त्वाऽभ्यवर्तत ६६ तावकानांपरेषांचपरस्परवधैषिणाम् ॥ तेचान्योन्यमवैक्षंततस्मिन्वीरसमागमे ६७ योधाःपर्यपतन्राजन्शतशोऽथसह
स्रशः ॥ असिभिश्छिद्यमानानांशिरसांलोकसंक्षये ६८ प्रादुरासीन्महान्शब्दस्तालानांपततामिव ॥ विमुक्तानांशरीराणांछिन्नानांपततांभुवि ६९ सायुधा
नांचबाहूनामूरूणांचविशांपते ॥ आसीत्कटकटाशब्दःसुमहाँल्लोमहर्षणः ७० निघ्नंतोनिशितैःशस्त्रैर्भ्रातॄन्पुत्रान्सखीनपि ॥ योधाःपरिपतंतिस्मयथाऽऽमि
षकृतेखगाः ७१ अन्योन्यंप्रतिसंरब्धाःसमासाद्यपरस्परम् ॥ अहंपूर्वमहंपूर्वमितिनिघ्नन्सहस्रशः ७२ संघातेनासनभ्रष्टैरश्वारोहैर्गतासुभिः ॥ हयाःपरिपतं
तिस्मशतशोऽथसहस्रशः ७३ स्फुरतांप्रतिपिष्टानामश्वानांशीघ्रगामिनाम् ॥ स्तनतांचमनुष्याणांसन्नद्धानांविशांपते ७४ शक्त्यृष्टिप्रासशब्दश्चतुमुलःसम
पद्यत ॥ भिंदतांपरमर्माणिराजन्दुर्मंत्रितेतव ७५ श्रमाभिभूताःसंरब्धाःश्रांतवाहाःपिपासवः ॥ विक्षताश्चशितैःशस्त्रैरभ्यवर्तंततावकाः ७६ मत्तारुधिरगंधेनब
हवोऽत्रविचेतसः ॥ जघ्नुःपरान्स्वकांश्चैवप्राप्तान्प्राप्ताननंतरान् ७७ बहवश्चगतप्राणाःक्षत्रियाजयगृद्धिनः ॥ भूमावभ्यपतन्राजन्शरवृष्टिभिरावृताः ७८ वृकगृ
ध्रशृगालानांतुमुलेमोदनेऽहनि ॥ आसीद्बलक्षयोघोरस्तवपुत्रस्यपश्यतः ७९ नराश्वकायैःसंछन्नाभूमिरासीद्विशांपते ॥ रुधिरोदकचित्राचभीरूणांभयवर्धिनी ८०

८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७ । ८८ । ८९ । ९० । ९१ । ९२ ॥ इति शल्यपर्वणि नैलकंठीये भारतभावदीपे त्रयोविंशोऽध्यायः ॥ २३ ॥ तस्मिन्निति १ । २ । ३ । ४ । ५ । ६ । ७ । ८



असिभिः पट्टिशैः शूलैस्तक्षमाणाः पुनः पुनः ॥ तावकाः पांडवेयाश्च नन्यवर्तंत भारत ८१ प्रहरंतो यथाशक्ति यावत्प्राणस्य धारणम् ॥ योधाः परिपतंति स्म वमंतो रुधिरं व्रणैः ८२ शिरो गृहीत्वा केशेषु कबंधः स्म प्रदृश्यते ॥ उद्यम्य च शितं खड्गं रुधिरेण परिप्लुतम् ८३ तथोत्थितेषु बहुषु कबंधेषु नराधिप ॥ तथा रुधिरगंधेन योधाः कश्मलमाविशन् ८४ मंदीभूते ततः शब्दे पांडवानां महद्बलम् ॥ अल्पावशिष्टैस्तुरगैरभ्यवर्तत सौबलः ८५ ततोऽभ्यधावंस्त्वरिताः पांडवा जयगृद्धिनः ॥ पदातयश्च नागाश्च सादिनश्चोद्यतायुधाः ८६ कोष्ठकीकृत्य चाप्येनं परिक्षिप्य च सर्वशः ॥ शस्त्रैर्नानाविधैर्जघ्नुर्युद्धपारं तितीर्षवः ८७ त्वदीयास्तांस्तु संप्रेक्ष्य सर्वतः समभिद्रुतान् ॥ रथाश्वपत्तिद्विरदाः पांडवानभिदुद्रुवुः ८८ केचित्पदातयः पद्भिर्मुष्टिभिश्च परस्परम् ॥ निजघ्नुः समरे शूराः क्षीणशस्त्रास्ततोऽपतन् ८९ रथेभ्यो रथिनः पेतुर्द्विपेभ्यो हस्तिसादिनः ॥ विमानेभ्यो दिवो भ्रष्टाः सिद्धाः पुण्यक्षयादिव ९० एवमन्योन्यमायत्ता योधा जग्मुर्महाहवे ॥ पितॄन्भ्रातॄन्वयस्यांश्च पुत्रानपि तथाऽपरे ९१ एवमासीदमर्यादं युद्धं भरतसत्तम ॥ प्रासासिबाणकलिलं वर्तमाने सुदारुणे ९२ ॥ इति श्री० श० संकुलयुद्धे त्रयोविंशोऽध्यायः ॥ २३ ॥

॥ संजय उवाच ॥ तस्मिन्शब्दे मृदौ जाते पांडवैर्निहते बले ॥ अश्वैः सप्तशतैः शिष्टैरुपावर्तत सौबलः १ स यात्वा वाहिनीं तूर्णमब्रवीत्त्वरयन्युधि ॥ युध्यध्वमिति संहृष्टाः पुनः पुनररिंदमाः २ अपृच्छत्क्षत्रियांस्तत्र क्व नु राजा महाबलः ॥ शकुनेस्तद्वचः श्रुत्वा तमूचुर्भरतर्षभ ३ असौ तिष्ठति कौरव्यो रणमध्ये महाबलः ॥ यत्रैतत्सुमहच्छत्रं पूर्णचंद्रसमप्रभम् ४ यत्रैते सतनुत्राणा रथास्तिष्ठंति दंशिताः ॥ यत्रैष तुमुलः शब्दः पर्जन्यनिनदोपमः ५ तत्र गच्छ द्रुतं राजंस्ततो द्रक्ष्यसि कौरवम् ॥ एवमुक्तस्तु तैर्योधैः शकुनिः सौबलस्तदा ६ प्रययौ तत्र यत्रासौ पुत्रस्तव नराधिप ॥ सर्वतः संवृतो वीरैः समरेचित्रयोधिभिः ७ ततो दुर्योधनं दृष्ट्वा रथानीकेऽव्यवस्थितम् ॥ सरथांस्तावकान्सर्वान्हर्षयन्शकुनिस्ततः ८ दुर्योधनमिदं वाक्यं हृष्टरूपो विशांपते ॥ कृतकार्यमिवात्मानं मन्यमानोऽब्रवीन्नृपम् ९ जहि राजन्रथानीकमश्वाः सर्वे जिता मया ॥ नात्यक्त्वा जीवितं संख्ये शक्यो जेतुं युधिष्ठिरः १० हते तस्मिन्रथानीके पांडवेनाभिपालिते ॥ गजानेतान्हनिष्यामः पदातींश्चेतरांस्तथा ११ श्रुत्वा तु वचनं तस्य तावका जयगृद्धिनः ॥ जवेनाभ्यपतन्हृष्टाः पांडवानामनीकिनीम् १२ सर्वे विवृततूणीराः प्रगृहीतशरासनाः ॥ शरासनानि धुन्वानाः सिंहनादान्प्रणेदिरे १३ ततो ज्यातलनिर्घोषः पुनरासीद्विशांपते ॥ प्रादुरासीच्छराणां च सुमुक्तानां सुदारुणः १४ तान्समीपगतान्दृष्ट्वा जवेनोद्यतकार्मुकान् ॥ उवाच देवकीपुत्रं कुंतीपुत्रो धनंजयः १५ चोदयाश्वानसंभ्रांतः प्रविशैतद्बलार्णवम् ॥ अंतमद्य गमिष्यामि शत्रूणां निशितैः शरैः १६ अष्टादश दिनान्यद्य युद्धस्यास्य जनार्दन ॥ वर्तमानस्य महतः समासाद्य परस्परं १७ अनंतकल्पा ध्वजिनी भूत्वा ह्येषां महात्मनाम् ॥ क्षयमद्य गता युद्धे पश्य दैवं यथाविधम् १८ ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८

१९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ ।२८ । २९ । ३० । ३१ । ३२ । ३३ । ३४। ३५ ।३६ । ३७ । ३८ । ३९ पापकंप्रचरिष्यति आचरिष्यतिधार्तराष्ट्रइतिशेषः ४० । ४१

समुद्रकल्पंचबलंधार्त्तराष्ट्रस्यमाधव ॥ अस्मानासाद्यसंजातंगोष्पदोपममच्युत १९ हतेभीष्मेतुसंदध्याच्छिवंस्यादिहमाधव ॥ नचतत्कृतवान्मूढोधार्तराष्ट्रः
सुबालिशः २० उक्तंभीष्मेणयद्वाक्यंहितंतथ्यंचमाधव ॥ तच्चापिनासौकृतवान्वीतबुद्धिःसुयोधनः २१ तस्मिंस्तुतुमुलेभीष्मेप्रच्युतेधरणीतले ॥ नजानेका
रणंकिंतुयेनयुद्धमवर्त्तत २२ मूढांस्तुसर्वथामन्येधार्त्तराष्ट्रान्सुबालिशान् ॥ पतितेशांतनोःपुत्रेयेऽकार्षुःसंयुगंपुनः २३ अनंतरंचनिहतेद्रोणेब्रह्मविदांवरे ॥ रा
धेयेचविकर्णेचनैवाशाम्यतवैशसम् २४ अल्पावशिष्टेसैन्येऽस्मिन्सूतपुत्रेचपातिते ॥ सपुत्रेवैनरव्याघ्रेनैवाशाम्यतवैशसम् २५ श्रुतायुषिहतेवीरेजलसंधेच
पौरवे ॥ श्रुतायुधेचनृपतौनैवाशाम्यतवैशसम् २६ भूरिश्रवसिशल्येचशाल्वेचैवजनार्दन ॥ आवंत्येषुचवीरेषुनैवाशाम्यतवैशसम् २७ जयद्रथेचनिहतेरा
क्षसेचाप्यलायुधे ॥ बाल्हिकेसोमदत्तेचनैवाशाम्यतवैशसम् २८ भगदत्तेहतेशूरेकांबोजेचसुदारुणे ॥ दुःशासनेचनिहतेनैवाशाम्यतवैशसम् २९ दृष्ट्वाविनि
हतान्शूरान्पृथङ्मांडलिकान्नृपान् ॥ बलिनश्चरणेकृष्णनैवाशाम्यतवैशसम् ३० अक्षौहिणीपतीन्दृष्ट्वाभीमसेननिपातितान् ॥ मोहाद्वायदिवालोभान्नैवाशा
म्यतवैशसम् ३१ कोनुराजकुलेजातःकौरवेयोविशेषतः ॥ निरर्थकंमहद्वैरंकुर्यादन्यःसुयोधनात् ३२ गुणतोऽभ्यधिकान्ज्ञात्वाबलतःशौर्यतोपिवा ॥ अमूढः
कोनुयुद्ध्येतजानन्प्राज्ञोहिताहितम् ३३ यन्नतस्यमनोह्यासीत्त्वयोक्तस्यहितंवचः ॥ प्रशमेपांडवैःसार्धंसोन्यस्यशृणुयात्कथम् ३४ येनशांतनवोवीरोद्रोणो
विदुरएवच ॥ प्रत्याख्याताःशमस्यार्थेकिंनुतस्याद्यभेषजम् ३५ मौर्ख्याद्येनपितावृद्धःप्रत्याख्यातोजनार्दन ॥ तथामाताहितंवाक्यंभाषमाणाहितैषिणी
३६ प्रत्याख्याताह्यसत्कृत्यसकस्मैरोचयेद्वदन् ॥ कुलांतकरणोव्यक्तंजातएषजनार्दन ३७ तथाऽस्यदृश्यतेचेष्टानीतिश्चैवविशांपते ॥ नैषदास्यतिनोराज्य
मितिमेमतिरच्युत ३८ उक्तोहंबहुशस्तातविदुरेणमहात्मना ॥ नजीवन्दास्यतेभागंधार्त्तराष्ट्रस्तुमानद ३९ यावत्प्राणाधरिष्यंतिधार्त्तराष्ट्रस्यदुर्मतेः ॥ तावु
युष्मास्वपापेषुप्रचरिष्यतिपापकम् ४० नचयुक्तोन्यथाजेतुमृतेयुद्धेनमाधव ॥ इत्यब्रवीत्सदामांहिविदुरःसत्यदर्शनः ४१ तत्सर्वमद्यजानामिव्यवसायंदुरात्म
नः ॥ यदुक्तंवचनंतेनाविदुरेणमहात्मना ४२ योहिश्रुत्वावचःपथ्यंजामदग्न्याद्यथातथम् ॥ अवामन्यतदुर्बुद्धिर्ध्रुवंनाशमुखेस्थितः ४३ उक्तंहिबहुशःसिद्धैर्जा
तमात्रेसुयोधने ॥ एनंप्राप्यदुरात्मानंक्षयंक्षत्रंगमिष्यति ४४ तदिदंवचनंतेषांनिरुक्तंवैजनार्दन ॥ क्षयंयाताहिराजानोदुर्योधनकृतेभृशम् ४५ सोद्यसर्वान्
रणेयोधान्निहनिष्यामिमाधव ॥ क्षत्रियेषुहतेष्वाशुशून्येचशिबिरेकृते ४६ वधायचात्मनोस्माभिःसंयुगंरोचयिष्यति ॥ तदंतंहिभवेद्वैरमनुमानेनमाधव
४७ एवंपश्यामिवार्ष्णेयचिंतयन्प्रज्ञयास्वया ॥ विदुरस्यचवाक्येनचेष्टयाचदुरात्मनः ४८

४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८

तस्मायाहिचमूंवीरयावद्धन्मिशितैःशरैः ॥ दुर्योधनंमहाबाहोबाहिनींचास्यसंयुगे ४९ क्षेममद्यकरिष्यामिधर्मराजस्यमाधव ॥ हत्वैतद्दुर्बलंसैन्यंधार्तराष्ट्रस्य पश्यतः ५० ॥ संजयउवाच ॥ अभीषुहस्तोदाशार्हस्तथोक्तःसव्यसाचिना ॥ तद्बलौघममित्राणामभीतःप्राविशद्बलात् ५१ कुंतखड्गशरैर्घोरैःशक्तिकंटकसं कुलम् ॥ गदापरिघपंथानंरथनागमहाद्रुमम् ५२ हयपत्तिलताकीर्णंगाहमानोमहायशाः ॥ व्यचरत्तत्रगोविंदोरथेनातिपताकिना ५३ तेहयाःपांडुराराजन्व हंतोर्जुनमाहवे ॥ दिक्षुसर्वास्वदृश्यंतदाशार्हेणप्रचोदिताः ५४ ततःप्रायाद्रथेनाजौसव्यसाचीपरंतपः ॥ किरन्शरशतांस्तीक्ष्णान्वारिधाराघनोयथा ५५ प्रा दुरासीन्महान्शब्दःशराणांनतपर्वणाम् ॥ इषुभिश्छाद्यमानानांसमरेसव्यसाचिना ५६ असज्जंतस्तनुत्रेषुशरौघाःप्रापतन्भुवि ॥ इंद्राशनिसमस्पर्शागांडीवप्रे षिताःशराः ५७ नरान्नागान्समाहत्यहयांश्चापिविशांपते ॥ अपतंतरणेबाणाःपतंगाइवघोषिणः ५८ आसीत्सर्वमवच्छन्नंगांडीवप्रेषितैःशरैः ॥ नप्राज्ञायंतस मरेदिशोवाप्रदिशोपिवा ५९ सर्वमासिज्जगत्पूर्णंपार्थनामांकितैःशरैः ॥ रुक्मपुंखैस्तैलधौतैःकर्मारपरिमार्जितैः ६० तेदह्यमानाःपार्थेनपावकेनेवकुंजराः ॥ पार्थंनप्रजहुर्वीरावध्यमानाःशितैःशरैः ६१ शरचापधरःपार्थःप्रज्वलन्निवभास्करः ॥ ददाहसमरेयोधान्कक्षमग्निरिवज्वलन् ६२ यथावनांतेवनपैर्विसृष्टःकक्षं दहेत्कृष्णगतिःसुघोषः ॥ भूरिद्रुमंशुष्कलतावितानंभृशंसमृद्धोज्वलनःप्रतापी ६३ एवंसनाराचगणप्रतापीशरार्चिरुच्चावचतिग्मतेजाः ॥ ददाहसर्वांतवपुत्रसे नाममृष्यमाणस्तरसातरस्वी ६४ तस्येषवःप्राणहराःसुमुक्तानासज्जन्वैवर्मसुरुक्मपुंखाः ॥ नचद्वितीयंप्रमुमोचबाणंनरेहयेवापरमद्विपेवा ६५ अनेकरूपाकृ तिभिर्हिबाणैर्महारथानीकमनुप्रविश्य ॥ सएवएकस्तवपुत्रसेनांजघानदैत्यानिववज्रपाणिः ६६ ॥ इतिश्रीमहाभारतेशल्यपर्वणि संकुलयुद्धेचतुर्विंशो ऽध्यायः ॥ २४ ॥ ॥ ४ ॥ ॥ संजयउवाच ॥ पश्यतांयतमानानांशूराणामनिवर्तिनाम् ॥ संकल्पमकरोन्मोघंगांडीवेनधनंजयः १ इंद्राशनिसमस्प र्शानविषह्यान्महौजसः ॥ विसृजन्दृश्यतेबाणान्धारामुंचन्निवांबुदः २ तत्सैन्यंभरतश्रेष्ठवध्यमानंकिरीटिना ॥ संप्रदुद्राववसंग्रामात्तवपुत्रस्यपश्यतः ३ पितॄन् भ्रातॄन्परित्यज्यवयस्यानपिचापरे ॥ हतधुर्यारथाःकेचिद्धतसूतास्तथाऽपरे ४ भग्नाक्षयुगचक्रेषाःकेचिदासन्विशांपते ॥ अन्येषांसायकाःक्षीणास्तथाऽन्येबा णपीडिताः ५ अक्षतायुगपत्केचित्प्राद्रवन्भयपीडिताः ॥ केचित्पुत्रानुपादायहतभूयिष्ठबांधवाः ६ विचुक्रुशुःपितॄंस्त्वन्येसहायानपरेपुनः ॥ बांधवांश्चनर व्याघ्रभ्रातॄन्संबंधिनस्तथा ७ दुद्रुवुःकेचिदुत्सृज्यतत्रतत्रविशांपते ॥ बहवोऽत्रभृशंविद्धामुह्यमानामहारथाः ८ निःश्वसंतिस्मदृश्यंतेपार्थबाणहतानराः ॥ ता नन्येरथमारोप्यह्याश्वास्यचमुहूर्तकम् ९ विश्रांताश्चवितृष्णाश्चपुनर्युद्धायजग्मिरे ॥ तानपास्यगताःकेचित्पुनरेवयुयुत्सवः १० २।३। ४। ५। ६ ।७। ८। ९। १०

११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७

कुर्वंतस्तवपुत्रस्यशासनंयुद्धदुर्मदाः ॥ पानीयमपरेपीत्वापर्याश्वास्यचवाहनम् ११ वर्माणिचसमारोप्यकेचिद्भरतसत्तम ॥ समाश्वास्यापरेभ्रातॄन्निक्षिप्याशि
बिरेऽपिच १२ पुत्रानन्येपितॄनन्येपुनर्युद्धमरोचयन् ॥ सञ्जयित्वारथान्केचिद्यथामुख्यंविशांपते १३ आप्लुत्यपांडवानीकंपुनर्युद्धमरोचयन् ॥ तेशूराःकिं
किणीजालैःसमाच्छन्नाबभासिरे १४ त्रैलोक्यविजयेयुक्तायथादैतेयदानवाः ॥ आगम्यसहसाकेचिद्रथैःस्वर्णविभूषितैः १५ पांडवानामनीकेषुधृष्टद्युम्नमयोध
यन् ॥ धृष्टद्युम्नोऽपिपांचाल्यःशिखंडीचमहारथः १६ नाकुलिस्तुशतानीकोरथानीकमयोधयन् ॥ पांचाल्यस्तुततःक्रुद्धःसैन्येनमहतावृतः १७ अभ्यद्रव
त्सुसंक्रुद्धस्तावकान्हंतुमुद्यतः ॥ ततस्त्वापततस्तस्यतवपुत्रोजनाधिप १८ बाणसंघाननेकान्वैप्रेषयामासभारत ॥ धृष्टद्युम्नस्ततोराजंस्तवपुत्रेणधन्विना
१९ नाराचैरर्धनाराचैर्बहुभिःक्षिप्रकारिभिः ॥ वत्सदंतैश्चबाणैश्चकर्मारपरिमार्जितैः २० अश्वांश्चचतुरोहत्वाबाह्वोरुरसिचार्पयत् ॥ सोतिविद्धोमहेष्वासस्तो
त्रार्दितइवद्विपः २१ तस्याश्वांश्चतुरोबाणैःप्रेषयामासमृत्यवे ॥ सारथेश्चास्यभल्लेनाशिरःकायादपाहरत् २२ ततोदुर्योधनोराजापृष्ठमारुह्यवाजिनः ॥ अपा
क्रामद्धतरथोनातिदूरमरिंदमः २३ दृष्ट्वातुहतविक्रांतंस्वमनीकंमहाबलः ॥ तवपुत्रोमहाराजप्रययौयत्रसौबलः २४ ततोरथेषुभग्नेषुत्रिसाहस्रामहाद्विपाः ॥
पांडवान्रथिनःसर्वान्समंतात्पर्यवारयन् २५ तेवृताःसमरेपंचगजानीकेनभारत ॥ अशोभंतमहाराजग्रहाव्याप्ताघनैरिव २६ ततोऽर्जुनोमहाराजलब्धलक्षो
महाभुजः ॥ विनिर्ययौरथेनैवश्वेताश्वःकृष्णसारथिः २७ तैःसमंतात्परिवृतःकुंजरैःपर्वतोपमैः ॥ नाराचैर्विमलैस्तीक्ष्णैर्गजानीकमयोधयत् २८ तत्रैकबाण
निहतानपश्याममहागजान् ॥ पतितान्पात्यमानांश्चनिर्भिन्नान्सव्यसाचिना २९ भीमसेनस्तुतान्दृष्ट्वानागान्मत्तगजोपमः ॥ करेणादायमहतींगदामभ्यपतद्ब
ली ३० अथाप्लुत्यरथात्तूर्णंदंडपाणिरिवांतकः ॥ तमुद्यतगदंदृष्ट्वापांडवानांमहारथम् ३१ वित्रेसुस्तावकाःसैन्याः शकृन्मूत्रेचसुस्रुवुः ॥ आविग्नंचबलंसर्वंग
दाहस्तेवृकोदरे ३२ गदयाभीमसेनेनभिन्नकुंभान्रजस्वलान् ॥ धावमानानपश्यामकुंजरान्पर्वतोपमान् ३३ प्राद्रवन्कुंजरास्तेतुभीमसेनगदाहताः ॥ पेतु
रार्तस्वरंकृत्वाछिन्नपक्षाइवाद्रयः ३४ प्रभिन्नकुंभांस्तुबहून्द्रवमाणानितस्ततः ॥ पतमानांश्चसंप्रेक्ष्यवित्रेसुस्तवसैनिकाः ३५ युधिष्ठिरोऽपिसंक्रुद्धोमाद्रीपु
त्रौचपांडवौ ॥ गार्ध्रपत्रैःशितैर्बाणैर्निन्युर्वैयमसादनम् ३६ धृष्टद्युम्नस्तुसमरेपराजित्यनराधिपम् ॥ अपक्रांतेतवसुतेहयपृष्ठंसमाश्रिते ३७ दृष्ट्वाचपांडवान्स
र्वान्कुंजरैःपरिवारितान् ॥ धृष्टद्युम्नोमहाराजसहसासमुपाद्रवत् ३८ पुत्रःपंचालराजस्यजिघांसुःकुंजरान्ययौ ॥ अदृष्ट्वातुरथानीकेदुर्योधनमरिंदमम् ३९ अ
श्वत्थामाकृपश्चैवकृतवर्माचसात्वतः ॥ अपृच्छन्क्षत्रियांस्तत्रक्वनुदुर्योधनोगतः ४० तेपश्यमानाराजानंवर्तमानेजनक्षये ॥ मन्वानानिहतंतत्रतवपुत्रंमहारथाः
४१ विवर्णवदनाभूत्वापर्यपृच्छंततेसुतम् ॥ आहुःकेचिद्धतेसूतेप्रयातोयत्रसौबलः ४२

३८ । ३९ । ४० । ४१ । ४२

४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ ६४ । ६५ ॥ इतिशल्यपर्वणिनीलकंठीयेभारत

हित्वापंचालराजस्यतदनीकंदुरुत्सहम् ॥ अपरेत्वब्रुवंस्तत्रक्षत्रियाभृशविक्षताः ४३ दुर्योधनेनकिंकार्यंद्रक्ष्यध्वंयदिजीवति ॥ युद्ध्यध्वंसहिताःसर्वेकिंवोराजा करिष्यति ४४ तेक्षत्रियाःक्षतैर्गात्रैर्हतभूयिष्ठवाहनाः ॥ शरैःसंपीड्यमानास्तुनातिव्यक्तमथाऽब्रुवन् ४५ इदंसर्वंबलंहन्मोयेनस्मपरिवारिताः ॥ एतेसर्वेग जान्हत्वाउपयांतिस्मपांडवाः ४६ श्रुत्वातुवचनंतेषामश्वत्थामामहाबलः ॥ भित्त्वापांचालराजस्यतदनीकंदुरुत्सहम् ४७ कृपश्चकृतवर्माचप्रययौयत्रसौब लः ॥ रथानीकंपरित्यज्यशूराःसुदृढधन्विनः ४८ ततस्तेषुप्रयातेषुधृष्टद्युम्नपुरस्कृताः ॥ आययुःपांडवाराजन्विनिघ्नंतःस्मतावकान् ४९ दृष्ट्वातुतानापत तःसंप्रहृष्टान्महारथान् ॥ पराक्रांतास्ततोवीरानिराशाजीवितेतदा ५० विवर्णमुखभूयिष्ठमभवत्तावकंबलम् ॥ परिक्षीणायुधान्दृष्ट्वातानहंपरिवारितान् ५१ राजन्बलेनव्यंगेनत्यक्त्वाजीवितमात्मनः ॥ आत्मनापंचमोऽयुद्ध्यंपांचालस्यबलेनह ५२ तस्मिन्देशेव्यवस्थाययत्रशारद्वतःस्थितः ॥ संप्रद्रुतावयंपंचाकि रीटिशरपीडिताः ५३ धृष्टद्युम्नंमहारौद्रंतत्रनाभूद्रणोमहान् ॥ जितास्तेनवयंसर्वेव्यपयामरणाततः ५४ अथापश्यंसात्यकिंतमुपायांतंमहारथम् ॥ रथैश्च तुःशतैर्वीरोमामभ्यद्रवदाहवे ५५ धृष्टद्युम्नादहंमुक्तःकथंचिच्छ्रांतवाहनात् ॥ पतितोमाधवानीकंदुष्कृतीनरकंयथा ५६ तत्रयुद्धमभूद्घोरंमुहूर्तमतिदारु णम् ॥ सात्यकिस्तुमहाबाहुर्ममहत्वापरिच्छदम् ५७ जीवग्राहमगृह्णान्मांमूर्छितंपतितंभुवि ॥ ततोमुहूर्तादिवतद्गजानीकमविध्यत ५८ गदयाभीमसेनेन नाराचैरर्जुनेनच ॥ अभिपिष्टैर्महानागैःसमंतात्पर्वतोपमैः ५९ नातिप्रासिद्धैवगतिःपांडवानामजायत ॥ रथमार्गंततश्चक्रेभीमसेनोमहाबलः ६० पांडवानां महाराजव्यपाकर्षन्महागजान् ॥ अश्वत्थामाकृपश्चैवकृतवर्माचसात्वतः ६१ अपश्यंतोरथानीकेदुर्योधनमरिंदमम् ॥ राजानंमृगयामासुस्तवपुत्रंमहारथम् ६२ परित्यज्यचपांचाल्यंप्रयातायत्रसौबलः ॥ राज्ञोऽदर्शनसंविग्नावर्तमानेजनक्षये ६३ ॥ इतिश्रीमहाभारतेशल्यपर्वणिदुर्योधनापयानेपंचविंशोऽध्यायः ॥ २५ ॥ ध ॥ ॥ संजयउवाच ॥ गजानीकेहतेतस्मिन्पाण्डुपुत्रेणभारत ॥ वध्यमानेबलेचैवभीमसेनेनसंयुगे १ चरंतंचतथादृष्ट्वाभीमसेनमरिंदमम् ॥ दंडहस्तंयथाक्रुद्धमंतकंप्राणहारिणम् २ समेत्यसमरेराजन्हतशेषाःसुतास्तव ॥ अदृश्यमानेकौरव्येपुत्रेदुर्योधनेतव ३ सोदर्याःसहिताभूत्वाभीमसेनमुपाद्र वन् ॥ दुर्मर्षणःश्रुतांतश्चजैत्रोभूरिबलोरविः ४ जयत्सेनःसुजातश्चतथादुर्विषहोऽरिहा ॥ दुर्विमोचननामाचदुष्प्रधर्षस्तथैवच ५ श्रुतर्वाचमहाबाहुःसर्वेयुद्ध विशारदाः ॥ इत्येतेसहिताभूत्वातवपुत्राःसमंततः ६ भीमसेनमभिद्रुत्यरुरुधुःसर्वतोदिशम् ॥ ततोभीमोमहाराजस्वरथंपुनरास्थितः ७ मुमोचनिशिता न्बाणान्पुत्राणांतवमर्मसु ॥ तेकीर्यमाणाभीमेनपुत्रास्तवमहारणे ८ भावदीपेपंचविंशतितमोऽध्यायः ॥ २५ ॥ ॥ गजानीकइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८

भीमसेनमुपासेदुःप्रवणादिवकुंजरम् ॥ ततःक्रुद्धोरणेभीमःशिरोदुर्मर्षणस्यह ९ क्षुरप्रेणप्रमथ्याशुपातयामासभूतले ॥ ततोऽपरेणभल्लेनसर्वावरणभेदिना १०
श्रुतांतमवधीद्भीमस्तवपुत्रंमहारथः ॥ जयत्सेनंततोविद्धानाराचेनहसन्निव ११ पातयामासकौरव्यंरथोपस्थादरिंदमः ॥ सपपातरथाद्राजनभूमौतूर्णममा
रच १२ श्रुतर्वातुततोभीमंक्रुद्धोविव्याधमारिष ॥ शतेनगृध्रवाजानांशराणांनतपर्वणाम् १३ ततःक्रुद्धोरणेभीमोजैत्रंभूरिबलंरविम् ॥ त्रीनेतांस्त्रिभिरान
र्च्छद्विषाग्निप्रतिमैःशरैः १४ तेहतान्यपतन्भूमौस्यंदनेभ्योमहारथाः ॥ वसंतेपुष्पशबलानिकृत्ताइवाकिंशुकाः १५ ततोऽपरेणभल्लेनतीक्ष्णेनचपरंतपः ॥
दुर्विमोचनमाहत्यप्रेषयामासमृत्यवे १६ सहतःप्रापतद्भूमौस्वरथाद्राथिनांवरः ॥ गिरेस्तुकूटजोभग्नोमारुतेनेवपादपः १७ दुष्प्रधर्षंततश्चैवसुजातंचसुतंतव ॥
एकैकंन्यहनत्संख्येद्वाभ्यांद्वाभ्यांचमूमुखे १८ तौशिलीमुखविद्धांगौपेततूरथसत्तमौ ॥ ततःपतंतंसमरेअभिवीक्ष्यसुतंतव १९ भल्लेनपातयामासभीमोदुर्वि
षहंरणे ॥ सपपातहतोवाहात्पश्यतांसर्वधान्विनाम् २० दृष्ट्वातुनिहतान्भ्रातृन्बहूनेकेनसंयुगे ॥ अमर्षवशमापन्नःश्रुतर्वाभीममभ्ययात् २१ विक्षिपन्सुमह
च्चापंकार्तस्वरविभूषितम् ॥ विसृजन्सायकांश्चैवविषाग्निप्रतिमान्बहून् २२ सतुराजन्धनुश्छित्वापांडवस्यमहामृधे ॥ अथैनंछिन्नधन्वानंविंशत्यासमवाकिरत्
२३ ततोऽन्यद्धनुरादायभीमसेनोमहाबलः ॥ अवाकिरत्तवसुतंतिष्ठतिष्ठेतिचाब्रवीत् २४ महदासीत्तयोर्युद्धंचित्ररूपंभयानकम् ॥ यादृशंसमरेपूर्वंजंभ
वासवयोर्युधि २५ तयोस्तत्रशितैर्मुक्तैर्यमदंडनिभैःशरैः ॥ समाच्छन्नाधरासर्वाखंदिशोविदिशस्तथा २६ ततःश्रुतर्वासंक्रुद्धोधनुरादायसायकैः ॥ भीमसेनं
रणेराजन्बाह्वोरुरसिचार्पयत् २७ सोऽतिविद्धोमहाराजतवपुत्रेणधन्विना ॥ भीमःसंचुक्षुभेक्रुद्धःपर्वणीवमहोदधिः २८ ततोभीमोरुषाऽऽविष्टःपुत्रस्यतवमा
रिष ॥ सारथिंचतुरश्वाश्वान्शरैर्निन्येयमक्षयम् २९ विरथंतंसमालक्ष्यविशिखैर्लोमवाहिभिः ॥ अवाकिरदमेयात्मादर्शयन्पाणिलाघवम् ३० श्रुतर्वाविरथो
राजन्नाददेखड्गचर्मणी ॥ अथास्याददतःखड्गंशतचंद्रंचभानुमत् ३१ क्षुरप्रेणशिरःकायात्पातयामासपांडवः ॥ छिन्नोत्तमांगस्यततःक्षुरप्रेणमहात्मना ३२
पपातकायःसरथाद्वसुधामनुनादयन् ॥ तस्मिन्निपतितेवीरेतावकाभयमोहिताः ३३ अभ्यद्रवंतसंग्रामेभीमसेनंयुयुत्सवः ॥ तानापततएवाशुहतशेषाद्बला
र्णवात् ३४ दंशितान्प्रतिजग्राहभीमसेनःप्रतापवान् ॥ तेतुतंवैसमासाद्यपरिवव्रुःसमंततः ३५ ततस्तुसंवृतोभीमस्तावकान्निशितैःशरैः ॥ पीडयामासता
न्सर्वान्सहस्राक्षइवासुरान् ३६ ततःपंचशतान्हत्वासवरूथान्महारथान् ॥ जघानकुंजरानीकंपुनःसप्तशतंयुधि ३७ हत्वाशतसहस्राणिपत्तीनांपरमेषुभिः ॥
वाजिनांचशतान्यष्टौपांडवःस्मविराजते ३८ भीमसेनस्तुकौंतेयोहत्वायुद्धेसुतांस्तव ॥ मेनेकृतार्थमात्मानंसफलंजन्मचप्रभो ३९

९

४० । ४१ । ४२ ॥ इतिशल्यपर्वणिनीलकंठीये भारतभावदीपे षड्विंशोऽध्यायः ॥ २६ ॥ दुर्योधनइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ १३ । १४ । १५ । १६ । १७

तंतथायुद्ध्यमानंचविनिघ्नंतंचतावकान् ॥ ईक्षितुंनोत्सहंतेस्मतवसैन्यानराधिप ४० विद्राव्यचकुरून्सर्वांस्तांश्चहत्वापदानुगान् ॥ दोर्भ्यांशब्दंततश्चक्रेत्रासयानोमहाद्विपान् ४१ हतभूयिष्ठयोधातुतवसेनाविशांपते ॥ किंचिच्छेषामहाराजकृपणंसमपद्यत ४२ ॥ इतिश्रीमहाभारतेशल्यपर्वणिएकादशधार्त्तराष्ट्रवधेषड्विंशोऽध्यायः ॥ २६ ॥ ॥ संजय उवाच ॥ दुर्योधनोमहाराजसुदर्शश्चापितेसुतः ॥ हतशेषौतदासंख्येवाजिमध्येव्यवस्थितौ १ ततोदुर्योधनंदृष्ट्वावाजिमध्येव्यवस्थितम् ॥ उवाचदेवकीपुत्रःकुंतीपुत्रंधनंजयम् २ शत्रवोहतभूयिष्ठाज्ञातयःपरिपालिताः ॥ गृहीत्वासंजयंचासौनिवृत्तःशिनिपुंगवः ३ परिश्रांतश्चनकुलःसहदेवश्चभारत ॥ योधयित्वारणेपापान्धार्त्तराष्ट्रान्सहानुगान् ४ दुर्योधनमभित्यज्यत्रयएतेव्यवस्थिताः ॥ कृपश्चकृतवर्माचद्रौणिश्चैवमहारथः ५ असौतिष्ठतिपांचाल्यःश्रियापरमयायुतः ॥ दुर्योधनबलंहत्वासहसर्वैःप्रभद्रकैः ६ असौदुर्योधनःपार्थवाजिमध्येव्यवस्थितः ॥ छत्रेणाध्रियमाणेनप्रेक्षमाणोमुहुर्मुहुः ७ प्रतिव्यूह्यबलंसर्वंरणमध्येव्यवस्थितः ॥ एनंहत्वाशितैर्बाणैःकृतकृत्योभविष्यसि ८ गजानीकंहतंदृष्ट्वात्वांचप्राप्तमरिंदम ॥ यावन्नविद्रवंत्येतेतावज्जहिसुयोधनम् ९ यातुकश्चित्तुपांचाल्यंक्षिप्रमागम्यतामिति ॥ परिश्रांतबलस्तातनैषमुच्येतकिल्बिषी १० हत्वातवबलंसर्वंसंग्रामेधृतराष्ट्रजः ॥ जितान्पांडुसुतान्मत्वारूपंधारयतेमहत् ११ निहतंस्वबलंदृष्ट्वापीडितंचापिपांडवैः ॥ ध्रुवमेष्यतिसंग्रामेवधायैवात्मनोनृपः १२ एवमुक्तःफाल्गुनस्तुकृष्णंवचनमब्रवीत् ॥ धृतराष्ट्रसुताःसर्वेहताभीमेनमाधव १३ यावेतावास्थितौकृष्णतावद्यनभविष्यतः ॥ हतोभीष्मोहतोद्रोणःकर्णोवैकर्तनोहतः १४ मद्रराजोहतःशल्योहतःकृष्णजयद्रथः ॥ हयाःपंचशताःशिष्टाःशकुनेःसौबलस्यच १५ रथानांतुशतेशिष्टेद्वेएवतुजनार्दन ॥ दंतिनांचशतंसाग्रंत्रिसाहस्राःपदातयः १६ अश्वत्थामाकृपश्चैवत्रिगर्ताधिपतिस्तथा ॥ उलूकःशकुनिश्चैवकृतवर्माचसात्वतः १७ एतद्बलमभूच्छेषंधार्त्तराष्ट्रस्यमाधव ॥ मोक्षोननूनंकालात्तुविद्यतेभुविकस्यचित् १८ तथाविनिहतेसैन्येपश्यदुर्योधनंस्थितम् ॥ अद्याह्नाहिमहाराजोहतामित्रोभविष्यति १९ नहिमेमोक्ष्यतेकश्चित्परेषामिहचिंतये ॥ येत्वद्यसमरंकृष्णनहास्यंतिमदोत्कटाः २० तान्वैसर्वान्हनिष्यामियद्यपिस्युर्नमानुषाः ॥ अद्ययुद्धेसुसंक्रुद्धोदीर्घंराज्ञःप्रजागरम् २१ अपनेष्यामिगांधारंघातयित्वाशितैःशरैः ॥ निकृत्यावैदुराचारोयानिरत्नानिसौबलः २२ सभायामहरद्द्यूतेपुनस्तान्यहराम्यहम् ॥ अद्यताअपिरोत्स्यंतिसर्वानागपुरेस्त्रियः २३ श्रुत्वापतींश्चपुत्रांश्चपांडवैर्निहतान्युधि ॥ समाप्तमद्यवैकर्मसर्वंकृष्णभविष्यति २४ अद्यदुर्योधनोदीप्तांश्रियंप्राणांश्चमोक्ष्यति ॥ नापयातिभयात्कृष्णसंग्रामाद्यदिचेन्मम २५ निहतंविद्धिवार्ष्णेयधार्त्तराष्ट्रंसुबालिशम् ॥ ममह्येतदशक्तंवैवाजिवृंदमरिंदम २६ १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६

सोढुंन्यातलनिर्घोषंयाहियावन्निहन्म्यहम् ॥ एवमुक्तस्तुदाशार्हःपांडवेनयशस्विना २७ अचोदयद्धयान्राजन्दुर्योधनबलंप्रति ॥ तदनीकमभिप्रेक्ष्यत्रयः
सज्जामहारथाः २८ भीमसेनोऽर्जुनश्चैवसहदेवश्चमारिष ॥ प्रययुःसिंहनादेनदुर्योधनजिघांसया २९ तान्प्रेक्ष्यसहितान्सर्वान्जवेनोद्यतकार्मुकान् ॥ सौबलो
ऽभ्यद्रवद्युद्धेपांडवानाततायिनः ३० सुदर्शनस्तवसुतोभीमसेनंसमभ्ययात् ॥ सुशर्माशकुनिश्चैवयुयुधातेकिरीटिना ३१ सहदेवंतवसुतोहयपृष्ठगतोऽभ्यया
त् ॥ ततोहियत्नतःक्षिप्रंतवपुत्रोजनाधिप ३२ प्रासेनसहदेवस्यशिरसिप्राहरद्भृशम् ॥ सोऽपाविशद्रथोपस्थेतवपुत्रेणताडितः ३३ रुधिराप्लुतसर्वांगआशी
विषइवश्वसन् ॥ प्रतिलभ्यततःसंज्ञांसहदेवोविशांपते ३४ दुर्योधनंशरैस्तीक्ष्णैःसंक्रुद्धःसमवाकिरत् ॥ पार्थोऽपियुधिविक्रम्यकुंतीपुत्रोधनंजयः ३५ शूराणा
मश्वपृष्ठेभ्यःशिरांसिनिचकर्तह ॥ तदनीकंतदापार्थोव्यधमद्बहुभिःशरैः ३६ पातयित्वाहयान्सर्वांस्त्रिगर्तानांरथान्ययौ ॥ ततस्तेसहिताभूत्वात्रिगर्तानांमहा
रथाः ३७ अर्जुनंवासुदेवंचशरवर्षैरवाकिरन् ॥ सत्यकर्माणमाक्षिप्यक्षुरप्रेणमहायशाः ३८ ततोऽस्यस्यंदनस्येषांचिच्छिदेपांडुनंदनः ॥ शिलाशितेनचविभो
क्षुरप्रेणमहायशाः ३९ शिरश्चिच्छेदसहसातप्तकुंडलभूषणम् ॥ सत्येषुमथचादत्तयोधानांमिषतांतव ४० यथासिंहोवनेराजन्मृगंपरिबुभुक्षितः ॥ तंनिहत्य
ततःपार्थःसुशर्माणंत्रिभिःशरैः ४१ विद्धातानहनत्सर्वान्रथान्रुक्मविभूषितान् ॥ ततःप्रायात्त्वरन्पार्थोदीर्घकालंसुसंभृतम् ४२ मुंचन्क्रोधविषंतीक्ष्णंप्रस्थ
लाधिपतिंप्रति ॥ तमर्जुनःपृषत्कानांशतेनभरतर्षभ ४३ पूरयित्वाततोवाहान्प्राहरत्तस्यधन्विनः ॥ ततःशरंसमादाययमदंडोपमंतदा ४४ सुशर्माणंसमुद्दि
श्यचिक्षेपाशुहसन्निव ॥ सशरःप्रेषितस्तेनक्रोधदीप्तेनधन्विना ४५ सुशर्माणंसमासाद्यबिभेदहृदयंरणे ॥ सगतासुर्महाराजपपातधरणीतले ४६ नंदयन्पांड
वान्सर्वान्व्यथयंश्चापितावकान् ॥ सुशर्माणंरणेहत्वापुत्रानस्यमहारथान् ४७ सप्तचाष्टौचत्रिंशच्चसायकैरनयत्क्षयम् ॥ ततोऽस्यनिशितैर्बाणैःसर्वान्हत्वापदा
नुगान् ४८ अभ्यगाद्भारतींसेनांहतशेषांमहारथः ॥ भीमस्तुसमरेक्रुद्धःपुत्रंतवजनाधिप ४९ सुदर्शनमदृश्यंतंशरैश्चक्रेहसन्निव ॥ ततोऽस्यप्रहसन्क्रुद्धःशिरः
कायादपाहरत् ५० क्षुरप्रेणसुतीक्ष्णेनसहतःप्रापतद्भुवि ॥ तस्मिंस्तुनिहतेवीरेततस्तस्यपदानुगाः ५१ परिवव्रूरणेभीमंकिरंतोविविधान्शरान् ॥ ततस्तुनि
शितैर्बाणैस्तवानीकंवृकोदरः ५२ इंद्राशनिसमस्पर्शैःसमंतात्पर्यवाकिरत् ॥ ततःक्षणेनतद्भीमोन्यहनद्भरतर्षभ ५३ तेषुतूत्साद्यमानेषुसेनाध्यक्षामहार
थाः ॥ भीमसेनंसमासाद्यततोऽयुद्ध्यंतभारत ५४ सतान्सर्वान्शरैर्घोरैरवाकिरतपांडवः ॥ तथैवतावकाराजन्पांडवेयान्महारथान् ५५ शरवर्षेणमहतासमं
तात्पर्यवारयन् ॥ व्याकुलंतदभूत्सर्वंपांडवानांपरैःसह ५६

५७ ॥ इतिशल्यपर्वणि नीलकंठीये भारतभावदीपे सप्तविंशोऽध्यायः ॥ २७ ॥ तस्मिन्निति १ । २ । ३ । ४ । ५ । ६ रणेवीरशब्दविशिष्टे ७ । ८ । ९ । १० । ११ । १२ । १३ । १४



तावकानांचसमरेपांडवेयैर्युयुत्सताम् ॥ तत्रयोधास्तदापेतुःपरस्परसमाहताः ॥ उभयोःसेनयोराजन्संशोचंतऽस्मबांधवान् ५७ ॥ इतिश्रीमहाभारतेशल्यपर्वणिसुशर्मवधेसप्तविंशोऽध्यायः ॥ २७ ॥ ॥ संजयउवाच ॥ तस्मिन्प्रवृत्तेसंग्रामेगजवाजिनरक्षये ॥ शकुनिःसौबलोराजन्सहदेवंसमभ्ययात् १ ततोस्यापततस्तूर्णंसहदेवःप्रतापवान् ॥ शरौघान्प्रेषयामासपतंगानिवशीघ्रगान् २ उलूकश्चरणेभीमंविव्याधदशभिःशरैः ॥ शकुनिश्चमहाराजभीमंविद्ध्वात्रिभिःशरैः ३ सायकानांनवत्यावैसहदेवमवाकिरत् ॥ तेशूराःसमरेराजन्समासाद्यपरस्परम् ४ विव्यधुर्निशितैर्बाणैःकंकबर्हिणवाजितैः ॥ स्वर्णपुंखैःशिलाधौतैराकर्णप्रहितैःशरैः ५ तेषांचापभुजोत्सृष्टाशरवृष्टिर्विशांपते ॥ आच्छादयद्दिशःसर्वाधाराइवपयोमुचः ६ ततःक्रुद्धोरणेभीमःसहदेवश्चभारत ॥ चेरतुःकदनंसंख्येकुर्वंतौसुमहाबलौ ७ ताभ्यांशरशतैश्छन्नंतद्बलंतवभारत ॥ सांधकारमिवाकाशमभवत्तत्रतत्रह ८ अश्वैर्विपरिधावद्भिःशरच्छन्नैर्विशांपते ॥ तत्रतत्रवृतोमार्गोविकर्षद्भिर्हतान्बहून् ९ निहतानांहयानांचसहैवहयसादिभिः ॥ वर्मभिर्विनिकृत्तैश्चप्रासैश्छिन्नैश्चमारिष १० ऋष्टिभिःशक्तिभिश्चैवसासिप्रासपरश्वधैः ॥ संछन्नापृथिवीजज्ञेकुसुमैःशबलाइव ११ योधास्तत्रमहाराजसमासाद्यपरस्परम् ॥ व्यचरंतरणेक्रुद्धाविनिघ्नंतःपरस्परम् १२ उद्वृत्तनयनैरोषात्संदष्टौष्ठपुटैर्मुखैः ॥ सकुंडलैर्महीच्छन्नापद्मकिंजल्कसन्निभैः १३ भुजैश्छिन्नैर्महाराजनागराजकरोपमैः ॥ सांगदैःसतनुत्रैश्चसासिप्रासपरश्वधैः १४ कबंधैरुत्थितैश्छिन्नैर्नृत्यद्भिश्चापरैर्युधि ॥ क्रव्यादगणसंछन्नाघोराऽभूत्पृथिवीविभो १५ अल्पावशिष्टेसैन्येतुकौरवेयान्महाहवे ॥ प्रहृष्टाःपांडवाभूत्वानिन्यिरेयमसादनम् १६ एतस्मिन्नंतरेशूरःसौबलेयःप्रतापवान् ॥ प्रासेनसहदेवस्यशिरसिप्राहरद्भृशम् १७ सविह्वलोमहाराजरथोपस्थउपाविशत् ॥ सहदेवंतथादृष्ट्वाभीमसेनःप्रतापवान् १८ सर्वसैन्यानिसंक्रुद्धोवारयामासभारत ॥ निर्बिभेदचनाराचैःशतशोऽथसहस्रशः १९ विनिर्भिद्याकरोच्चैवसिंहनादमरिंदमः ॥ तेनशब्देनवित्रस्ताःसर्वेसहयवारणाः २० प्राद्रवन्सहसाभीताःशकुनेश्चपदानुगाः ॥ प्रभग्नानथतान्दृष्ट्वाराजादुर्योधनोऽब्रवीत् २१ निवर्तध्वमधर्मज्ञायुध्यध्वंकिंसृतेनवः ॥ इहकीर्तिंसमाधायप्रेत्यलोकान्समश्नुते २२ प्राणान्जहातियोधीरोयुद्धेपृष्ठमदर्शयन् ॥ एवमुक्तास्तुतेराज्ञासौबलस्यपदानुगाः २३ पांडवानभ्यवर्ततमृत्युंकृत्वानिवर्तनम् ॥ द्रवद्भिस्तत्रराजेंद्रकृतःशब्दोऽतिदारुणः २४ क्षुब्धसागरसंकाशाःक्षुभिताःसर्वतोऽभवन् ॥ तांस्ततःपुरतोदृष्ट्वासौबलस्यपदानुगान् २५ प्रत्युद्ययुर्महाराजपांडवाविजयोद्यताः ॥ प्रत्याश्वस्यचदुर्धर्षःसहदेवोविशांपते २६ शकुनिंदशभिर्विद्ध्वाहयांश्चास्यत्रिभिःशरैः ॥ धनुश्चिच्छेदचशरैःसौबलस्यहसन्निव २७ अथान्यद्धनुरादायशकुनिर्युद्धदुर्मदः ॥ विव्याधनकुलंषष्ट्याभीमसेनंचसप्तभिः २८ १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८

उलूकोऽपिमहाराजभीमंविव्याधसप्तभिः ॥ सहदेवंचसप्तत्यापरीप्सन्पितरंरणे २९ तंभीमसेनःसमरेविव्याधनवभिःशरैः ॥ शकुनिंचचतुःषष्ट्यापार्श्वस्थांश्च
त्रिभिस्त्रिभिः ३० तेहन्यमानाभीमेननाराचैस्तैलपायितैः ॥ सहदेवंरणेकुद्धाश्छादयन्शरवृष्टिभिः ३१ पर्वतंवारिधाराभिःसविद्युतइवांबुदाः ॥ ततोऽस्यापत
तःशूरःसहदेवःप्रतापवान् ३२ उलूकस्यमहाराजभल्लेनापहरच्छिरः ॥ सजगामरथाद्भूमिंसहदेवेनपातितः ३३ रुधिराप्लुतसर्वांगोनंदयन्पांडवान्युधि ॥ पुत्रं
तुनिहतंदृष्ट्वाशकुनिस्तत्रभारत ३४ साश्रुकंठोविनिःश्वस्यक्षत्तुर्वाक्यमनुस्मरन् ॥ चिंतयित्वामुहूर्तंससबाष्पपूर्णेक्षणःश्वसन् ३५ सहदेवंसमासाद्यत्रिभिर्विव्या
धसायकैः ॥ तानपास्यशरान्मुक्तान्शरसंघैःप्रतापवान् ३६ सहदेवोमहाराजधनुश्चिच्छेदसंयुगे ॥ छिन्नेधनुषिराजेंद्रशकुनिःसौबलस्तदा ३७ प्रगृह्यविपुलं
खड्गंसहदेवायप्राहिणोत् ॥ तमापतंतंसहसाघोररूपंविशांपते ३८ द्विधाचिच्छेदसमरेसौबलस्यहसन्निव ॥ असिंदृष्ट्वातथाच्छिन्नंप्रगृह्यमहतींगदाम् ३९ प्रा
हिणोत्सहदेवायसामोघान्यपतद्भुवि ॥ ततःशक्तिंमहाघोरांकालरात्रीमिवोद्यताम् ४० प्रेषयामाससंक्रुद्धःपांडवंप्रतिसौबलः ॥ तामापतंतींसहसाशरैःकनकभू
षणैः ४१ त्रिधाचिच्छेदसमरेसहदेवोहसन्निव ॥ सापपातत्रिधाच्छिन्नाभूमौकनकभूषणा ४२ शीर्यमाणायथादीप्तागगनाद्वैशतह्रदा ॥ शक्तिंविनिहतांदृष्ट्वासौब
लंचभयार्दितम् ४३ दुद्रुवुस्तावकाःसर्वेभयेजातेससौबलाः ॥ अथोत्क्रुष्टंमहच्चासीत्पांडवैर्जितकाशिभिः ४४ धार्तराष्ट्रास्ततःसर्वेप्रायशोविमुखाऽभवन् ॥ ता
न्वैविमनसोदृष्ट्वामाद्रीपुत्रःप्रतापवान् ४५ शरैरनेकसाहस्रैर्वारयामाससंयुगे ॥ ततोगांधारकैर्गुप्तंपुष्टैरश्वैर्जयेप्सितम् ४६ आससादरणेयांतंसहदेवोऽथसौबलम् ॥
स्वमंशमवशिष्टंतंसंस्मृत्यशकुनिंनृप ४७ रथेनकांचनांगेनसहदेवःसमभ्ययात् ॥ अधिज्यंबलवत्कृत्वाव्याक्षिपन्सुमहद्धनुः ४८ ससौबलमभिद्रुत्यगार्ध्रपत्रैःशि
लाशितैः ॥ भृशमभ्यहनत्क्रुद्धस्तोत्रैरिवमहाद्विपम् ४९ उवाचचैनंमेधावीविगृह्यस्मारयन्निव ॥ क्षत्रधर्मेस्थिरोभूत्वायुध्यस्वपुरुषोभव ५० यत्तदाहृष्यसेमूढ
ग्लहन्नक्षैःसभातले ॥ फलमद्यप्रपश्यस्वकर्मणस्तस्यदुर्मते ५१ निहतास्तेदुरात्मानोयेऽस्मानवहसन्पुरा ॥ दुर्योधनःकुलांगारःशिष्टस्त्वंचास्यमातुलः ५२ अ
द्यतेनिहनिष्यामिक्षुरेणोन्मथितंशिरः ॥ वृक्षात्फलमिवाविद्धंलगुडेनप्रमाथिना ५३ एवमुक्त्वामहाराजसहदेवोमहाबलः ॥ संक्रुद्धोरणशार्दूलोवेगेनाभिजगाम
तम् ५४ अभिगम्यसुदुर्धर्षःसहदेवोयुधांपतिः ॥ विकृष्यबलवच्चापंक्रोधेनप्रज्वलन्निव ५५ शकुनिंदशभिर्विद्ध्वाचतुर्भिश्चास्यवाजिनः ॥ छत्रंध्वजंधनुश्चा
स्यच्छित्वासिंहइवानदत् ५६ छिन्नध्वजधनुश्छत्रःसहदेवेनसौबलः ॥ कृतोविद्धश्चबहुभिःसर्वमर्मसुसायकैः ५७ ततोभूयोमहाराजसहदेवःप्रतापवान् ॥ शकु
नेःप्रेषयामासशरवृष्टिंदुरासदाम् ५८ ततस्तुक्रुद्धःसुबलस्यपुत्रोमाद्रीसुतंसहदेवंविमर्दे ॥ प्रासेनजांबूनदभूषणेनजिघांसुरेकोऽभिपपातशीघ्रम् ५९

॥२७॥

६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ ॥ इतिशल्यपर्वणिनीलकंठीये भारतभावदीपेअष्टाविंशोऽध्यायः ॥ २८ ॥ ततःक्रुद्धइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०



माद्रीसुतस्तस्यसमुद्यतंतंप्रासंसुवृत्तौचभुजौरणाग्रे ॥ भल्लैस्त्रिभिर्युगपत्संचकर्तननादचोच्चैस्तरसाऽऽजिमध्ये ६० तस्याशुकारीसुसमाहितेनसुवर्णपुंखेनदृढा यसेन ॥ भल्लेनसर्वावरणातिगेनशिरःशरीरात्प्रममाथभूयः ६१ शरेणकार्तस्वरभूषितेनदिवाकराभेणसुसंहितेन ॥ हृतोत्तमांगोयुधिपांडवेनपपातभूमौसुबलस्य पुत्रः ६२ सतच्छिरोवेगवताशरेणसुवर्णपुंखेनशिलाशितेन ॥ प्रावेरयत्कुपितःपांडुपुत्रोयत्तत्कुरूणामनयस्यमूलम् ६३ भुजौसुवृत्तौप्रचकर्तवीरःपश्चात्कबंधं रुधिरावसिक्तम् ॥ विस्पंदमानंनिपपातघोरंरथोत्तमात्पार्थिवपार्थिवस्य ६४ हृतोत्तमांगंशकुनिंसमीक्ष्यभूमौशयानंरुधिरार्द्रगात्रम् ॥ योधास्त्वदीयाभयन ष्टसत्वादिशःप्रजग्मुःप्रगृहीतशस्त्राः ६५ प्रविद्रुताःशुष्कमुखाविसंज्ञागांडीवघोषेणसमाहताश्च ॥ भयार्दिताभग्नरथाश्वनागाःपदातयश्चैवसधार्तराष्ट्राः ६६ त तोरथाच्छकुनिंपातयित्वामुदान्विताभारतपांडवेयाः ॥ शंखान्प्रदध्मुःसमरेऽतिहृष्टाःसकेशवाःसैनिकान्हर्षयंतः ६७ तंचापिसर्वेप्रतिपूजयंतोहृष्टाब्रुवाणाःस हदेवमाजौ ॥ दिष्ट्याहतोनैकृतिकोमहात्मासहात्मजोवीररणेत्वयेति ६८ ॥ इतिश्रीम० श० शकुन्युलूकवधेअष्टाविंशोऽध्यायः ॥ २८ ॥ अथह्रदप्रवेशपर्व ॥ ॥ संजयउवाच ॥ ततःक्रुद्धामहाराजसौबलस्यपदानुगाः ॥ त्यक्त्वाजीवितमाक्रंदेपांडवान्पर्यवारयन् १ तानर्जुनःप्रत्यगृह्णात्सहदेवोजयेधृतः ॥ भीमसेनश्चतेजस्वी क्रुद्धाशीविषदर्शनः २ शक्त्यृष्टिप्रासहस्तानांसहदेवंजिघांसताम् ॥ संकल्पमकरोन्मोघंगांडीवेनधनंजयः ३ संगृहीतायुधान्बाहून्योधानामभिधावताम् ॥ भ ल्लैश्चिच्छेदबीभत्सुःशिरांस्यपिहयानपि ४ तेहयाःप्रत्यपद्यंतवसुधांविगतासवः ॥ चरतालोकवीरेणप्रहताःसव्यसाचिना ५ ततोदुर्योधनोराजादृष्ट्वास्वबलसं क्षयम् ॥ हतशेषान्समानीयक्रुद्धोरथगणान्बहून् ६ कुंजरांश्चहयांश्चैवपादातांश्चसमंततः ॥ उवाचसहितान्सर्वान्धार्तराष्ट्रइदंवचः ७ समासाद्यरणेसर्वान्पांडवा न्ससुहृद्गणान् ॥ पांचाल्यंचापिसबलंहत्वाशीघ्रंन्यवर्तत ८ तस्यतेशिरसागृह्यवचनंयुद्धदुर्मदाः ॥ अभ्युद्ययूरणेपार्थांस्तवपुत्रस्यशासनात् ९ तानभ्यापत तःशीघ्रंहतशेषान्महारणे ॥ शरैराशीविषाकारैःपांडवाःसमवाकिरन् १० तत्सैन्यंभरतश्रेष्ठमुहूर्तेनमहात्मभिः ॥ अवध्यतरणंप्राप्यत्रातारंनाभ्यविंदत ११ प्रति ष्ठमानंतुभयान्नावतिष्ठतिदंशितम् ॥ अश्वैर्विपरिधावद्भिःसैन्येनरजसावृते १२ नप्राज्ञायंतसमरेदिशश्चप्रदिशस्तथा ॥ ततस्तुपांडवानीकान्निःसृत्यबहवोज नाः १३ अभ्यघ्नंस्तावकान्युद्धेमुहूर्तादिवभारत ॥ ततोनिःशेषमभवत्तत्सैन्यंतवभारत १४ अक्षौहिण्यःसमेतास्तुतवपुत्रस्यभारत ॥ एकादशहतायुद्धेताः प्रभोपांडुसृंजयैः १५ तेषुराजसहस्रेषुतावकेषुमहात्मसु ॥ एकोदुर्योधनोराजन्नदृश्यतभृशंक्षतः १६ ततोवीक्ष्यदिशःसर्वादृष्ट्वाशून्यांचमेदिनीम् ॥ विहीनःस र्वयोधैश्चपांडवान्वीक्ष्यसंयुगे १७ मुदितान्सर्वतःसिद्धान्नर्दमानान्समंततः ॥ बाणशब्दरवांश्चैवश्रुत्वातेषांमहात्मनाम् १८ ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८

॥२७॥

दुर्योधनोमहाराजकश्मलेनाभिसंवृतः ॥ अपयानेमनश्चक्रेविहीनबलवाहनः १९ ॥ धृतराष्ट्रउवाच ॥ निहतेमामकेसैन्येनिःशेषेशिबिरेकृते ॥ पांडवानांबलेसू
तर्किंनुशेषमभूत्तदा २० एतन्मेपृच्छतोब्रूहिकुशलोह्यसिसंजय ॥ यच्चदुर्योधनोमंदःकृतवांस्तनयोमम २१ बलक्षयंतथादृष्ट्वासएकःपृथिवीपतिः ॥ संजयउ
वाच ॥ रथानांद्वेसहस्रेतुसप्तनागशतानिच २२ पंचचाश्वसहस्राणिपत्तीनांचशतंशताः ॥ एतच्छेषमभूद्राजन्पांडवानांमहद्बलम् २३ परिगृह्यहियद्युद्धेधृष्ट
द्युम्नोव्यवस्थितः ॥ एकाकीभरतश्रेष्ठततोदुर्योधनोनृपः २४ नापश्यत्समरेकंचित्सहायंरथिनांवरः ॥ नर्दमानान्परान्दृष्ट्वास्वबलस्यचसंक्षयम् २५ तथा
दृष्ट्वामहाराजएकःसपृथिवीपतिः ॥ हतंस्वहयमुत्सृज्यप्राङ्मुखःप्राद्रवद्भयात् २६ एकादशचमूभर्तापुत्रोदुर्योधनस्तव ॥ गदामादायतेजस्वीपदातिःप्रस्थि
तोह्रदम् २७ नातिदूरंततोगत्वापद्भ्यामेवनराधिपः ॥ सस्मारवचनंक्षत्तुर्धर्मशीलस्यधीमतः २८ इदंनूनंमहाप्राज्ञोविदुरोदृष्टवान्पुरा ॥ महद्वैशसमस्माकं
क्षत्रियाणांचसंयुगे २९ एवंविचिंतयानस्तुप्रविविक्षुर्ह्रदंनृपः ॥ दुःखसंतप्तहृदयोदृष्ट्वाराजन्बलक्षयम् ३० पांडवास्तुमहाराजधृष्टद्युम्नपुरोगमाः ॥ अभ्यद्रवं
तसंक्रुद्धास्तवराजन्बलंप्रति ३१ शक्तिऋष्टिप्रासहस्तानांबलानामभिगर्जताम् ॥ संकल्पमकरोन्मोघंगांडीवेनधनंजयः ३२ तान्हत्वानिशितैर्बाणैःसामात्यान्स
हबंधुभिः ॥ रथेश्वेतहयेतिष्ठन्नर्जुनोबह्वशोभत ३३ सुबलस्यहतेपुत्रेसवाजिरथकुंजरे ॥ महावनमिवच्छिन्नमभवत्तावकंबलम् ३४ अनेकशतसाहस्रेबलेदुर्योधन
स्यह ॥ नान्योमहारथोराजन्जीवमानोव्यदृश्यत ३५ द्रोणपुत्राद्दृतेवीरात्तथैवकृतवर्मणः ॥ कृपाच्चगौतमाद्राजन्पार्थिवाच्चतवात्मजात् ३६ धृष्टद्युम्नस्तुमांदृ
ष्ट्वाहसन्सात्यकिमब्रवीत् ॥ किमनेनगृहीतेननानेनार्थोऽस्तिजीवता ३७ धृष्टद्युम्नवचःश्रुत्वाशिनेर्नप्तामहारथः ॥ उद्यम्यनिशितंखड्गंहंतुंमामुद्यतस्तदा ३८ त
मागम्यमहाप्राज्ञःकृष्णद्वैपायनोऽब्रवीत् ॥ मुच्यतांसंजयोजीवन्नहंतव्यःकथंचन ३९ द्वैपायनवचःश्रुत्वाशिनेर्नप्ताकृतांजलिः ॥ ततोमामब्रवीन्मुक्त्वास्वस्ति
संजयसाधय ४० अनुज्ञातस्त्वहंतेनन्यस्तवर्मानिरायुधः ॥ प्रातिष्ठंयेननगरंसायाह्नेरुधिरोक्षितः ४१ क्रोशमात्रमपक्रांतंगदापाणिमवस्थितम् ॥ एकंदुर्यो
धनंराजन्नपश्यंभृशविक्षतम् ४२ सतुमामश्रुपूर्णाक्षोनाशक्नोदभिवीक्षितुम् ॥ उपप्रैक्षतमांदृष्ट्वातथादीनमवस्थितम् ४३ तंचाहमपिशोचंतंदृष्ट्वैकाकिन
माहवे ॥ मुहूर्तंनाशकंवक्तुमतिदुःखपरिप्लुतः ४४ ततोऽस्मैतदहंसर्वमुक्तवान्ग्रहणंतदा ॥ द्वैपायनप्रसादाच्चजीवतोमोक्षमाहवे ४५ समुहूर्तमिवध्यात्वाप्र
तिलभ्यचचेतनाम् ॥ भ्रातॄंश्चसर्वसैन्यानिपर्यपृच्छतमांततः ४६ तस्मैतदहमाचक्षेसर्वंप्रत्यक्षदर्शिवान् ॥ भ्रातॄंश्चनिहतान्सर्वान्सैन्यंचविनिपातितम्
४७ त्रयःकिलरथाःशिष्टास्तावकानांनराधिप ॥ इतिप्रस्थानकालेमांकृष्णद्वैपायनोऽब्रवीत् ४८

सदीर्घमिवनिःश्वस्यप्रत्यवेक्ष्यपुनःपुनः ॥ असौमांपाणिनास्पृष्ट्वापुत्रस्तेपर्यभाषत ४९ त्वदन्योनेहसंग्रामेकश्चिज्जीवतिसंजय ॥ द्वितीयंनेहपश्यामिससहाया
श्चपांडवाः५० ब्रूयाःसंजयराजानंप्रज्ञाचक्षुषमीश्वरम् ॥ दुर्योधनस्तवसुतःप्रविष्टोह्रदमित्युत ५१ सुहृद्भिस्तादृशैर्हीनःपुत्रैर्भ्रातृभिरेवच॥ पांडवैश्चहृतेराज्ये
कोनुजीवेतमादृशः ५२ आचक्षीथाःसर्वमिदंमांचमुक्तंमहाहवात् ॥ अस्मिंस्तोयह्रदेगुप्तंजीवंतंभृशविक्षतम् ५३ एवमुक्त्वामहाराजप्राविशत्तंमहाह्रदम् ॥ अ
स्तंभयततोयंचमाययामनुजाधिपः ५४ तस्मिन्ह्रदंप्रविष्टेतुत्रीन्रथान्श्रांतवाहनान् ॥ अपश्यंसहितानेकस्तंदेशंसमुपेयुषः ५५ कृपंशारद्वतंवीरंद्रौणिंचर
थिनांवरम् ॥ भोजंचकृतवर्माणंसहितान्शरविक्षतान् ५६ तेसर्वेमामभिप्रेक्ष्यतूर्णमश्वानचोदयन् ॥ उपयायतुमामूचुर्दिष्ट्याजीवसिसंजय ५७ अपृच्छंश्चैव
मांसर्वेपुत्रंतवजनाधिपम् ॥ कच्चिद्दुर्योधनोराजासनोजीवतिसंजय ५८ आख्यातवानहंतेभ्यस्तदाकुशलिनंनृपम् ॥ तच्चैवसर्वमाचक्षंयन्मांदुर्योधनोऽब्रवीत्
५९ ह्रदंचैवाहमाचक्षंयंप्रविष्टोनराधिपः ॥ अश्वत्थामातुतद्राजन्निशम्यवचनंमम ६० तंह्रदंविपुलंप्रेक्ष्यकरुणंपर्यदेवयत् ॥ अहोधिङ्नसजानातिजीवतोऽ
स्मान्नराधिपः ६१ पर्याप्ताहिवयंतेनसहयोधयितुंपरान् ॥ तेतुतत्रचिरंकालंविलप्यचमहारथाः ६२ प्राद्रवन्रथिनांश्रेष्ठादृष्ट्वापांडुसुतान्रणे ॥ तेतुमांरथमारो
प्यकृपस्यसुपरिष्कृतम् ६३ सेनानिवेशमाजग्मुर्हतशेषास्त्रयोरथाः ॥ तत्रगुल्माःपरित्रस्ताःसूर्येचास्तमितेसति ६४ सर्वेविचुक्रुशुःश्रुत्वापुत्राणांतवसंक्ष
यम् ॥ ततोवृद्धामहाराजयोषितांरक्षिणोनराः ६५ राजदारानुपादायप्रययुर्नगरंप्रति ॥ तत्रविक्रोशमानानांरुदतीनांचसर्वशः ६६ प्रादुरासीन्महान्शब्दः
श्रुत्वातद्बलसंक्षयम् ॥ ततस्तायोषितोराजन्रुदत्योवैमुहुर्मुहुः ६७ कुरर्यइवशब्देननादयंत्योमहीतलम् ॥ आजघ्नुःकरजैश्चापिपाणिभिश्चशिरांस्युत ६८
लुलुचुश्चतदाकेशान्क्रोशंत्यस्तत्रतत्रह ॥ हाहाकारविनादिन्योविनिघ्नंत्यउरांसिच ६९ शोचंत्यस्तत्ररुरुदुःक्रंदमानाविशांपते ॥ ततोदुर्योधनामात्याःसा
श्रुकंठाभृशातुराः ७० राजदारानुपादायप्रययुर्नगरंप्रति ॥ वेत्रव्यासक्तहस्ताश्चद्वाराध्यक्षाविशांपते ७१ शयनीयानिशुभ्राणिस्पर्ध्यास्तरणवंतिच ॥ स
मादाययुयुस्तूर्णंनगरंदाररक्षिणः ७२ आस्थायाश्वतरीयुक्तान्स्यंदनानपरेपुनः ॥ स्वान्स्वान्दारानुपादायप्रययुर्नगरंप्रति ७३ अदृष्टपूर्वायानार्योभास्क
रेणापिवेश्मसु ॥ ददृशुस्तामहाराजजनायाताःपुरंप्रति ७४ ताःस्त्रियोभरतश्रेष्ठसौकुमार्यसमन्विताः ॥ प्रययुर्नगरंतूर्णंहतस्वजनबांधवाः ७५ आगोपा
लाविपालेभ्योद्रवंतोनगरंप्रति ॥ ययुर्मनुष्याःसंभ्रांताभीमसेनभयार्दिताः ७६ अपिचैषांभयंतीव्रंपार्थेभ्योऽभूत्सुदारुणम् ॥ प्रेक्षमाणास्तदाऽन्योन्यमाधा
वन्नगरंप्रति ७७ तस्मिंस्तथावर्तमानेविद्रवेभृशदारुणे ॥ युयुत्सुःशोकसंमूढःप्राप्तकालमचिंतयत् ७८

७९ । ८० । ८१ । ८२ ८३ । ८४ । ८५ । ८६ । ८७ । ८८ । ८९ । ९० । ९१ । ९२ । ९३ । ९४ । ९५ । ९६ । ९७ । ९८ । ९९ । १०० । १ । २ । ३ । ४ । १०५ ॥ इतिशल्यपर्वणि

जितोदुर्योधनःसंख्येपांडवैर्भीमविक्रमैः ॥ एकादशचमूभर्त्ताभ्रातरश्चास्यसूदिताः ७९ हताश्चकुरवःसर्वेभीष्मद्रोणपुरःसराः ॥ अहमेकोविमुक्तस्तुभाग्ययो
गाद्यदृच्छया ८० विद्रुतानिचसर्वाणिशिबिराणिसमंततः ॥ इतस्ततःपलायंतेहतनाथाहतौजसः ८१ अदृष्टपूर्वादुःखार्त्ताभयव्याकुललोचनाः ॥ हरिणा
इववित्रस्तावीक्षमाणादिशोदश ८२ दुर्योधनस्यसाचिवायेकेचिदवशेषिताः ॥ राजदारानुपादायप्रययुर्नगरंप्रति ८३ प्राप्तकालमहंमन्येप्रवेशंतैःसहप्रभो ॥
युधिष्ठिरमनुज्ञायभीमसेनंतथैवच ८४ एतमर्थंमहाबाहुरुभयोःसन्यवेदयत् ॥ तस्यप्रीतोभवद्राजानित्यंकरुणवेदिता ८५ परिष्वज्यमहाबाहुर्वैश्यापुत्रंव्यस
र्जयत् ॥ ततःसरथमास्थायद्रुतमश्वानचोदयत् ८६ संवाहयितवांश्चापिराजदारान्पुरंप्रति ॥ तैश्चैवसहितःक्षिप्रमस्तंगच्छतिभास्करे ८७ प्रविष्टोहास्तिन
पुरंबाष्पकंठोऽश्रुलोचनः ॥ अपश्यतमहाप्राज्ञंविदुरंसाश्रुलोचनम् ८८ राज्ञःसमीपान्निष्क्रांतंशोकोपहतचेतसम् ॥ तमब्रवीत्सत्यधृतिःप्रणतंत्वग्रतःस्थि
तम् ८९ दिष्ट्याकुरुक्षयेऽस्मिन्वृत्तेअस्मिंस्त्वंपुत्रजीवसि ॥ विनाराज्ञःप्रवेशाद्वैकिमसित्वमिहागतः ९० एतद्वैकारणंसर्वंविस्तरेणनिवेदय ॥ युयुत्सुरुवाच ॥ नि
हतेशकुनौतत्रसज्ञातिसुतबांधवे ९१ हतशेषपरीवारोराजादुर्योधनस्ततः ॥ स्वकंसहयमुत्सृज्यप्राङ्मुखःप्राद्रवद्भयात् ९२ अपक्रांतेतुनृपतौस्कंधावारानि
वेशनात् ॥ भयव्याकुलितंसर्वंप्राद्रवन्नगरंप्रति ९३ ततोराज्ञःकलत्राणिभ्रातॄणांचास्यसर्वतः ॥ वाहनेषुसमारोप्यअध्यक्षाःप्राद्रवन्भयात् ९४ ततोहंसमनु
ज्ञाप्यराजानंसहकेशवम् ॥ प्रविष्टोहास्तिनपुरंरक्षन्लोकान्प्रधावितान् ९५ एतच्छ्रुत्वातुवचनंवैश्यापुत्रेणभाषितम् ॥ प्राप्तकालमितिज्ञात्वाविदुरःसर्वधर्म
वित् ९६ अपूजयदमेयात्मायुयुत्सुंवाक्यमब्रवीत् ॥ प्राप्तकालमिदंसर्वंब्रुवताभरतक्षये ९७ रक्षितःकुलधर्मश्चसानुक्रोशतयात्वया ॥ दिष्ट्यात्वामिहसंग्रामा
दस्माद्वीरक्षयात्पुरम् ९८ समागतमपश्यामहंशुमंतमिवप्रजाः ॥ अंधस्यनृपतेर्यष्टिर्लुब्धस्यादीर्घदर्शिनः ९९ बहुशोयाच्यमानस्यदैवोपहतचेतसः ॥ त्व
मेकोव्यसनार्तस्यप्रियसेपुत्रसर्वथा १०० अद्यत्वमिहविश्रांतःश्वोऽभिगंतायुधिष्ठिरम् ॥ एतावदुक्त्वावचनंविदुरःसाश्रुलोचनः १ युयुत्सुंसमनुप्राप्यप्रविवेश
नृपक्षयम् ॥ पौरजानपदैर्दुःखाद्धाहेतिभृशनादितम् २ निरानंदंगतश्रीकंहतारामभिवाशयम् ॥ शून्यरूपमपध्वस्तंदुःखाद्दुःखतरोऽभवत् ३ विदुरःसर्वध
र्मज्ञोविक्लवेनांतरात्मना ॥ विवेशनगरेराजन्निःश्वासञ्शनैःशनैः ४ युयुत्सुरपितांरात्रिंस्वगृहेन्यवसत्तदा ॥ वंद्यमानःस्वकैश्चापिनाभ्यनंदत्सुदुःखितः ॥ चिं
तयानःक्षयंतीव्रंभरतानांपरस्परम् १०५ ॥ इतिश्रीमहाभारतेशल्यपर्वणि हृदप्रवेशपर्वणिएकोनत्रिंशोऽध्यायः ॥ २९ ॥ ॥ ७ ॥ ॥ समाप्तंचहृद
प्रवेशपर्व ॥ अतःपरंगदायुद्धपर्व ॥ ॥ ७ ॥ ॥ ७ ॥

नीलकंठीये भारतभावदीपेएकोनत्रिंशोऽध्यायः ॥ २९ ॥ ॥ ७ ॥ ॥ ७ ॥

हतेषुसर्वसैन्येषुपांडुपुत्रैरणाजिरेइत्यारभ्य शोकसंविग्नमनसाश्चिताध्यानपराऽभवन्नित्यंतःशल्यपर्वशेषोगदापर्वाख्यस्तस्यतात्पर्यं सर्वनाशेऽपिजीवितंदुस्त्यजं पराभूतमपिशत्रुंशूरानत्यजं

॥ धृतराष्ट्रउवाच ॥ हतेषुसर्वसैन्येषुपांडुपुत्रैरणाजिरे ॥ ममसैन्यावशिष्टास्तेकिमकुर्वतसंजय १ कृतवर्माकृपश्चैवद्रोणपुत्रश्चवीर्यवान् ॥ दुर्योधनश्चमंदात्मारा
जाकिमकरोत्तदा २ ॥ संजयउवाच ॥ संप्राद्रवत्सुदारेषुक्षत्रियाणांमहात्मनाम् ॥ विद्रुतेशिबिरेशून्येभृशोद्विग्नास्त्रयोरथाः ३ निशम्यपांडुपुत्राणांतदावैजाये
नांस्वनम् ॥ विद्रुतंशिबिरंदृष्ट्वासायाह्नेराजगृद्धिनः ४ स्थानंनारोचयंस्तत्रततस्तेह्रदमभ्ययुः ॥ युधिष्ठिरोऽपिधर्मात्माभ्रातृभिःसहितोरणे ५ हृष्टःपर्यचर
द्राजन्दुर्योधनवधेप्सया ॥ मार्गमाणास्तुसंक्रुद्धास्तवपुत्रंजयैषिणः ६ यत्नतोऽन्वेषमाणास्तेनैवापश्यन्जनाधिपम् ॥ सहितीव्रेणवेगेनगदापाणिरपाक्रमत्
७ तंह्रदंप्राविशच्चापिविष्टभ्यापःस्वमायया ॥ यदातुपांडवाःसर्वेसुपरिश्रांतवाहनाः ८ ततःस्वशिबिरंप्राप्यव्यतिष्ठंतससैनिकाः ॥ ततःकृपश्चद्रौणिश्चकृत
वर्माचसात्वतः ९ सन्निविष्टेषुपार्थेषुप्रयातास्तंह्रदंशनैः ॥ तेतंह्रदंसमासाद्ययत्रशेतेजनाधिपः १० अभ्यभाषंतदुर्धर्षंराजानंसुप्तमंभसि ॥ राजन्नुत्तिष्ठयु
द्धचस्वसहास्माभिर्युधिष्ठिरम् ११ जित्वावापृथिवींभुंक्ष्वहतोवास्वर्गमाप्नुहि ॥ तेषामपिबलंसर्वंहतंदुर्योधनत्वया १२ प्रतिविद्धाश्चभूयिष्ठंयेशिष्टास्तत्रसैनि
काः ॥ नतेवेगंविषहितुंशक्तास्तवविशांपते १३ अस्माभिरपिगुप्तस्यतस्मादुत्तिष्ठभारत ॥ ॥ दुर्योधनउवाच ॥ ॥ दिष्ट्यापश्यामिवोमुक्तानीदृशात्पुरुष
क्षयात् १४ पांडुकौरवसंमर्दाज्जीवमानान्नरर्षभान् ॥ विजेष्यामोवयंसर्वेविश्रांताविगतक्लमाः १५ भवंतश्चपरिश्रांतावयंचभृशविक्षताः ॥ उदीर्णंचबलंतेषांते
नयुद्धंनरोचये १६ नत्वेतदद्भुतंवीरोयद्वोमहदिदंमनः ॥ अस्मासुचपराशक्तिर्नतुकालःपराक्रमे १७ विश्रम्यैकांनिशामद्यभवद्भिःसहितोरणे ॥ प्रतियोत्स्या
म्यहंशत्रून्श्वोनमेऽस्त्यत्रसंशयः १८ ॥ संजयउवाच ॥ एवमुक्तोऽब्रवीद्द्रौणीराजानंयुद्धदुर्मदम् ॥ उ[illegible]राजन्भद्रंतेविजेष्यामोवयंपरान् १९ इष्टापूर्तेनदाने
नसत्येनचजयेनच ॥ शपेराजन्यथाह्यद्यनिहनिष्यामिसोमकान् २० मास्मयज्ञकृतांप्रीतिमाप्नुयां[illegible]नोचिताम् ॥ यदीमांरजनींव्युष्टांनहिहन्मिपरान्रणे
२१ नाहत्वासर्वपांचालान्विमोक्ष्येकवचंविभो ॥ इतिसत्यंब्रवीम्येतत्तन्मेशृणुजनाधिप २२ तेष[illegible]षमाणेषुव्याधास्तंदेशमाययुः ॥ मांसभारपरिश्रांताः
पानीयार्थंयदृच्छया २३ तेहिनित्यंमहाराजभीमसेनस्यलुब्धकाः ॥ मांसभारानुपाजह्रुर्भक्त्[illegible]परमयाविभो २४ तेतत्राधिष्ठितास्तेषांसर्वंतद्वचनंरहः ॥
दुर्योधनवचश्चैवशुश्रुवुःसंगतामिथः २५ तेपिसर्वेमहेष्वासाअयुद्धार्थिनिकौरवे ॥ निर्बंधंपरमं[illegible]कुस्तदावैयुद्धकांक्षिणः २६ तांस्तथासमुदीक्ष्याथकौरवाणां
महारथान् ॥ अयुद्धमनसंचैवराजानंस्थितमंभसि २७ तेषांश्रुत्वाचसंवादंराज्ञश्चसलिलेसत[illegible] ॥ व्याधाभ्यजानन्राजेंद्रसलिलस्थंसुयोधनम् २८

दीतिच १ ।२ ।३ ।४ ।५ ।६ ।७ ।८ ।९ । १० ।११ ।१२ ।१३ ।१४ । १५ ।१६ ।१७ १८ । १९ । २० यज्ञकृतांप्रीतिं यज्ञादिजस्यपुण्यस्यफलं २१। २२ । २३।२४ । २५ । २६ । २७ । २८

२९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ नष्टमदइयत्वंगतं लीनमित्यर्थः ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२



तेपूर्वंपांडुपुत्रेणपृष्टाह्यासन्सुतंतव ॥ यदृच्छोपगतास्तत्रराजानंपरिमार्गता २९ ततस्ते[illegible]ंडुपुत्रस्यस्मृत्वातद्भाषितंतदा ॥ अन्योन्यमब्रुवन्राजन्मृगव्याधाःशनैरिव ३० दुर्योधनंख्यापयामोधनंदास्यतिपांडवः ॥ अव्यक्तमिहनःख्यातोह्रदेदुर्यो[illegible]नृपः ३१ तस्माद्गच्छामहेसर्वेयत्रराजायुधिष्ठिरः ॥ आख्यातुंसलिलेसुप्तंदुर्योधनममर्षणम् ३२ धृतराष्ट्रात्मजंतस्मैभीमसेनायधीमते ॥ शयानंसलिलेसर्वे[illegible]यामोधनुर्भृते ३३ सनोदास्यतिसुप्रीतोधनानिबहुलान्युत ॥ किंनोमांसेनशुष्केणपरिक्लिष्टेनशोषिणा ३४ एवमुक्त्वातुतेव्याधाःसंप्रहृष्टाधनार्थिनः ॥ मां[illegible]रानुपादायप्रययुःशिबिरंप्रति ३५ पांडवाऽपिमहाराजलब्धलक्षाःप्रहारिणः ॥ अपश्यमानाःसमरेदुर्योधनमवस्थितम् ३६ निकृतेस्तस्यपापस्यतेपारं[illegible]प्सवः ॥ चारान्संप्रेषयामासुःसमंतात्तद्रणाजिरे ३७ आगम्यतुततःसर्वेनष्टंदुर्योधनंनृपम् ॥ न्यवेदयंतसहिताधर्मराजस्यसैनिकाः ३८ तेषांतद्वचनं[illegible]चाराणांभरतर्षभ ॥ चिंतामभ्यगमत्तीव्रांनिशश्वासच पार्थिवः ३९ अथस्थितानांपांडूनांदीनानांभरतर्षभ ॥ तस्माद्देशादपक्रम्यत्वरितालुब्धकाविभो ४[illegible] आजग्मुःशिबिरंहृष्टादृष्ट्वादुर्योधनंनृपम् ॥ वार्यमाणाःप्रविष्टाश्चभीमसेनस्यपश्यतः ४१ तेतुपांडवमासाद्यभीमसेनंमहाबलम् ॥ तस्मैतत्सर्वमाचख्युर्यद्वृत्तंयच्चवैश्रुतम् ४२ ततोवृकोदरोराजन्दत्वातेषांधनंबहु ॥ धर्मराजायतत्सर्वमाचचक्षेपरंतपः ४३ असौदुर्योधनोराजन्विज्ञातोममलुब्धकैः ॥ संस्तभ्यसलिलंशेतेयस्यार्थेपरितप्यसे ४४ तद्वचोभीमसेनस्यप्रियंश्रुत्वाविशांपते ॥ अजातशत्रुःकौंतेयोहृष्टोऽभूत्सहसोदरैः ४५ तंचश्रुत्वामहेष्वासंप्रविष्टंसलिलह्रदे ॥ क्षिप्रमेवततोऽगच्छन्पुरस्कृत्यजनार्दनं ४६ ततःकिलकिलाशब्दःप्रादुरासीद्विशांपते ॥ पांडवानांप्रहृष्टानांपंचालानांचसर्वशः ४७ सिंहनादांस्ततश्चक्रुःक्ष्वेडाश्चभरतर्षभ ॥ त्वरिताःक्षत्रियाराजन्जग्मुर्द्वैपायनंह्रदम् ४८ ज्ञातःपापोधार्तराष्ट्रोदृष्टश्चेत्यसकृद्रणे ॥ प्राक्रोशन्सोमकास्तत्रहृष्टरूपाःसमंततः ४९ तेषामाशुप्रयातानांरथानांतत्रवेगिनाम् ॥ बभूवतुमुलःशब्दोदिवस्पृक्पृथिवीपते ५० दुर्योधनंपरीप्संतस्तत्रतत्रयुधिष्ठिरम् ॥ अन्वयुस्त्वरितास्तेवैराजानंश्रांतवाहनाः ५१ अर्जुनोभीमसेनश्चमाद्रीपुत्रौचपांडवौ ॥ धृष्टद्युम्नश्चपांचाल्यःशिखंडीचापराजितः ५२ उत्तमौजायुधामन्युःसात्यकिश्चमहारथः ॥ पंचालानांचयेशिष्टाद्रौपदेयाश्चभारत ५३ हयाश्चसर्वेनागाश्चशतशश्चपदातयः ॥ ततःप्राप्तोमहाराजधर्मराजःप्रतापवान् ५४ द्वैपायनह्रदंघोरंयत्रदुर्योधनोऽभवत् ॥ शीतामलजलंहृद्यंद्वितीयमिवसागरम् ५५ माययासलिलंस्तभ्ययत्राभूत्तेस्थितःसुतः ॥ अत्यद्भुतेनविधिनादैवयोगेनभारत ५६ सलिलांतर्गतःशेतेदुर्दर्शःकस्यचित्प्रभो ॥ मानुषस्यमनुष्येंद्रगदाहस्तोजनाधिपः ५७ ततोदुर्योधनोराजासलिलांतर्गतोवसन् ॥ शुश्रुवेतुमुलंशब्दंजलदोपमनिःस्वनम् ५८ युधिष्ठिरश्चराजेंद्रतंह्रदंसहसोदरैः ॥ आजगाममहाराजतवपुत्रवधायवै ५९

५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९

६० । ६१ अपयास्यामहेत्वदन्वेषणभिया ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ ॥ इतिशल्यपर्वांतरगतगदापर्वणि नीलकंठीये भारतभावदीपे त्रिंशोऽध्यायः ॥ ३० ॥ ॥ ७ ॥

महताशंखनादेनरथनेमिस्वनेनच ॥ ऊर्ध्वंधुन्वन्महारेणुंकंपयंश्चापिमेदिनीम् ६० यौधिष्ठिरस्यसैन्यस्यश्रुत्वाशब्दंमहारथाः ॥ कृतवर्माकृपोद्रौणीराजानमिदमब्रुवन् ६१ इमेह्यायांतिसंहृष्टाःपांडवाजितकाशिनः ॥ अपयास्यामहेतावदनुजानातुनोभवान् ६२ दुर्योधनस्तुतच्छ्रुत्वातेषांतत्रतरस्विनाम् ॥ तथेत्युक्त्वाह्रदंतंवैमायया‌ऽस्तंभयत्प्रभो ६३ तेत्वनुज्ञाप्यराजानंभृशंशोकपरायणाः ॥ जग्मुर्दूरंमहाराजकृपप्रभृतयोरथाः ६४ तेगत्वादूरमध्वानंन्यग्रोधंप्रेक्ष्यमारिष ॥ न्यविशंतभृशंश्रांताश्चिंतयंतोनृपंप्रति ६५ विष्टभ्यसलिलंसुप्तोधार्तराष्ट्रोमहाबलः ॥ पांडवाश्चापिसंप्राप्तास्तंदेशंयुद्धमीप्सवः ६६ कथंनुयुद्धंभविताकथंराजाभविष्यति ॥ कथंनुपांडवाराजन्प्रतिपत्स्यंतिकौरवम् ६७ इत्येवंचिंतयानास्तुरथेभ्योश्वान्विमुच्यते ॥ तत्रासांचक्रिरेराजन्कृपप्रभृतयोरथाः ६८ ॥ इतिश्रीमहाभारतेशल्यपर्वांतर्गतगदापर्वणित्रिंशोऽध्यायः ॥ ३० ॥ ॥ संजयउवाच ॥ ततस्तेष्वपयातेषुरथेषुत्रिषुपांडवाः ॥ तेह्रदंप्रत्यपद्यंतयत्रदुर्योधनोऽभवत् १ आसाद्यचकुरुश्रेष्ठतदाद्वैपायनंह्रदम् ॥ स्तंभितंधार्तराष्ट्रेणदृष्ट्वातंसलिलाशयम् २ वासुदेवमिदंवाक्यमब्रवीत्कुरुनंदनः ॥ पश्येमांधार्तराष्ट्रेणमायामप्सुप्रयोजिताम् ३ विष्टभ्यसलिलंशेतेनास्यमानुषतोभयम् ॥ दैवींमायामिमांकृत्वासलिलांतर्गतोह्ययम् ४ निकृत्यानिकृतिप्रज्ञोनमेजीवन्विमोक्ष्यते ॥ यद्यस्यसमरेसाह्यंकुरुतेवज्रभृत्स्वयम् ५ तथाप्येनंहतंयुद्धेलोकाद्रक्ष्यंतिमाधव ॥ वासुदेवउवाच ॥ मायाविनइमांमायांमाययाजहिभारत ६ मायावीमाययावध्यःसत्यमेतद्युधिष्ठिर ॥ क्रियाभ्युपायैर्बहुभिर्मायामप्सुप्रयोज्यच ७ जहित्वंभरतश्रेष्ठमायात्मानंसुयोधनम् ॥ क्रियाभ्युपायैरिंद्रेणनिहतादैत्यदानवाः ८ क्रियाभ्युपायैर्बहुभिर्बलिर्बद्धोमहात्मना ॥ क्रियाभ्युपायैर्बहुभिर्हिरण्याक्षोमहासुरः ९ हिरण्यकशिपुश्चैवक्रिययैवनिषूदितौ ॥ वृत्रश्चनिहतोराजन्क्रिययैवनसंशयः १० तथापौलस्त्यतनयोरावणोनामराक्षसः ॥ रामेणनिहतोराजन्सानुबंधःसहानुगः ११ क्रिययायोगमास्थायतथात्वमपिविक्रम ॥ क्रियाभ्युपायैर्निहतौमयाराजन्पुरातनौ १२ तारकश्चमहादैत्योविप्रचित्तिश्चवीर्यवान् ॥ वातापिरिल्वलश्चैवत्रिशिराश्चतथाविभो १३ सुंदोपसुंदावसुरौक्रिययैवनिषूदितौ ॥ क्रियाभ्युपायैरिंद्रेणत्रिदिवंभुज्यतेविभो १४ क्रियाबलवतीराजन्नान्यत्किंचिद्युधिष्ठिर ॥ दैत्याश्चदानवाश्चैवराक्षसाःपार्थिवास्तथा १५ क्रियाभ्युपायैर्निहताःक्रियांतस्मात्समाचर ॥ संजयउवाच ॥ इत्युक्तोवासुदेवेनपांडवःसंशितव्रतः १६ जलस्थंतंमहाराजतवपुत्रंमहाबलम् ॥ अभ्यभाषतकौंतेयःप्रहसन्निवभारत १७ सुयोधनकिमर्थोऽयमारंभोऽप्सुकृतस्त्वया ॥ सर्वंक्षत्रंघातयित्वास्वकुलंचविशांपते १८

ततइति १ । २ । ३ । ४ । ५ जीवितेप्सुंदुर्योधनंविज्ञायकदाचिद्राज्यार्धंयुधिष्ठिरस्तस्मैदास्यतीत्याशंक्यभगवांस्तंबोधयतिदुर्योधनवधार्थी मायाविनइत्यादिना क्रियाभ्युपायैः शत्रुक्रियानुरूपैःप्रतीकारैर्धर्म्यैरधर्म्यैर्वेत्यर्थः एतेवृछलकारिणश्छलेनैवहंतव्याइतिभावः ६ । ७ । ८ । ९ । १० । ११ विक्रमविक्रमंकुरुष्व १२ । १३ । १४ । १५ । १६ । १७ । १८

११

१९ । २० । २१ । २२ । २३ अयुद्धंयुद्धवर्जनंअवस्थानंविशेषेणावस्थानंराज्येवास्वर्गेवास्थितिर्व्यवस्थानंतदभावश्चैतद्द्वयंक्षत्रियस्यनधर्मइत्यर्थः २४ । २५ । २६ । २७ ब्रूहीति हेशूरेतिसाधिक्षेपसंबोधनं यथावृत्त्यानिमित्तभूतया वानप्रस्थत्वेनवान्यस्तशस्त्रत्वेनवाक्लीबत्वेनवा त्वंसंगरंत्यजासितांवृत्तिंब्रूहि नत्वंवानप्रस्थोऽसिराज्यार्थित्वात् नापिन्यस्तशस्त्रोगदाधा



जलाशयंप्रविष्टोऽद्यवांछन्जीवितमात्मनः ॥ उत्तिष्ठराजन्युध्यस्वसहास्माभिःसुयोधन १९ सतेदर्पोनरश्रेष्ठसचमानःक्वतेगतः ॥ यस्त्वंसंस्तभ्यसलिलंभीतोरा जन्व्यवस्थितः २० सर्वेत्वांशूरइत्येवंजनाजल्पंतिसंसदि ॥ व्यर्थंतद्भवतोमन्येशौर्यंसलिलशायिनः २१ उत्तिष्ठराजन्युध्यस्वक्षत्रियोऽसिकुलोद्भवः ॥ कौरवेयो विशेषेणकुलंजन्मचसंस्मर २२ सकथंकौरवेवंशेप्रशंसन्जन्मचात्मनः ॥ युद्धाद्भीतस्ततस्तोयंप्रविश्यप्रतितिष्ठसि २३ अयुद्धमव्यवस्थानंनैषधर्मःसनातनः ॥ अनार्यजुष्टमस्वर्ग्यंरणेराजन्पलायनम् २४ कथंपारमगत्वाहियुद्धेत्वंवैजिजीविषुः ॥ इमान्निपतितान्दृष्ट्वापुत्रान्भ्रातॄन्पितॄंस्तथा २५ संबंधिनोवयस्यांश्चमा तुलान्बांधवांस्तथा ॥ घातयित्वाकथंतातह्रदेतिष्ठसिसांप्रतम् २६ शूरमानीनशूरस्त्वंमृषावदसिभारत ॥ शूरोऽहमितिदुर्बुद्धेसर्वलोकस्यशृण्वतः २७ नाहिशूराः पलायंतेशत्रून्दृष्ट्वाकथंचन ॥ ब्रूहिवात्वंययावृत्त्याशूरत्यजसिसंगरम् २८ सत्वमुत्तिष्ठयुध्यस्वविनीयभयमात्मनः ॥ घातयित्वासर्वसैन्यंभ्रातॄंश्चैवसुयोधन २९ नेदानींजीवितेबुद्धिःकार्याधर्मचिकीर्षया ॥ क्षत्रधर्ममुपाश्रित्यत्वद्विधेनसुयोधन ३० यत्तुकर्णमुपाश्रित्यशकुनिंचापिसौबलम् ॥ अमर्त्यइवसंमोहात्त्वमात्मानं नबुद्धवान् ३१ तत्पापंसुमहत्कृत्वाप्रतियुध्यस्वभारत ॥ कथंहित्वद्विधोमोहाद्रोचयेतपलायनम् ३२ क्वतेतत्पौरुषंयातंक्वचमानःसुयोधन ॥ क्वचविक्रांतताया ताक्वचविस्फूर्जितंमहत् ३३ क्वतेकृतास्त्रतायाताकिंचशेषेजलाशये ॥ सत्वमुत्तिष्ठयुध्यस्वक्षत्रधर्मेणभारत ३४ अस्मांस्तुवापराजित्यप्रशाधिपृथिवीमिमाम् ॥ अथवानिहतोऽस्माभिर्भूमौस्वप्स्यसिभारत ३५ एषतेपरमोधर्मःसृष्टोधात्रामहात्मना ॥ तंकुरुष्वयथातथ्यंराजाभवमहारथ ३६ ॥ संजयउवाच ॥ एवमुक्तो महाराजधर्मपुत्रेणधीमता ॥ सलिलस्थस्तवसुतइदंवचनमब्रवीत् ३७ ॥ दुर्योधनउवाच ॥ नैतच्चित्रंमहाराजयद्भीःप्राणिनमाविशेत् ॥ नचप्राणयाद्भीतोव्यपया तोऽस्मिभारत ३८ अरथश्चानिषंगीचानिहतःपार्ष्णिसारथिः ॥ एकश्चाप्यगणःसंख्येप्रत्याश्वासमरोचयम् ३९ नप्राणहेतोर्नभयान्नविषादाद्विशांपते ॥ इदमंभः प्रविष्टोऽस्मिश्रमात्त्विदमनुष्ठितम् ४० त्वंचाश्वसिहिकौंतेययेचाप्यनुगतास्तव ॥ अहमुत्थायवःसर्वान्प्रतियोत्स्यामिसंयुगे ४१ ॥ युधिष्ठिरउवाच ॥ आश्व स्ताएवसर्वेस्मचिरंत्वांमृगयामहे ॥ तदिदानींसमुत्तिष्ठयुध्यस्वेहसुयोधन ४२ हत्वावासमरेपार्थान्स्फीतंराज्यमवाप्नुहि ॥ निहतोवारणेऽस्माभिर्वीरलोकमवाप्स्य सि ४३ ॥ दुर्योधनउवाच ॥ यदर्थंराज्यमिच्छामिकुरूणांकुरुनंदन ॥ तइमेनिहताःसर्वेभ्रातरोमेजनेश्वर ४४

रित्वात्परिशेषात् क्लीबोऽस्मीतिमाभाषस्वयुद्धंकु र्विंतिभावः २८ विनीयत्यक्त्वा २९ । ३० । ३१ । ३२ पौरुषंयत्नःविक्रांतताशौर्यं विस्फूर्जितंगर्जनं ३३ । ३४ । ३५ । ३६ । ३७ नैतदितिप्राणेनरक्षितव्येनहेतुनामीर्भयंमामांमनुष्यमाविशेदि तिब्रुवन्नैतच्चित्रमपितुप्राणिनांस्वाभाविकोयंधर्मः परंतुमय्येतन्नास्तीत्याह नचेति ३८।३९ प्राणहेतोर्जीवितार्थित्वात् भयात्बंधनादित्रासात् विषादात्शोकाभिभूतत्वात् ४०।४१। ४२।४३।४४

शिबिरंसमनुप्राप्यकुरुराजस्यपांडवाः ॥ अवतेरुर्महाराजरथेभ्योरथसत्तमाः ७ ततोगांडीवधन्वानमभ्यभाषतकेशवः ॥ स्थितःप्रियहितेनित्यमतीवभरतर्षभ
८ अवरोपयगांडीवमक्षय्यौचमहेषुधी ॥ अथाहमवरोक्ष्यामिपश्चाद्भरतसत्तम ९ स्वयंचैवावरोहत्वमेतच्छ्रेयस्तवानघ ॥ तच्चाकरोत्तथावीरःपांडुपुत्रोधनंजयः १०
अथपश्चात्ततःकृष्णोरश्मीनुत्सृज्यवाजिनाम् ॥ अवारोहतमेधावीरथाद्गांडीवधन्वनः ११ अथावतीर्णेभूतानामीश्वरेसुमहात्मनि ॥ कपिरंतर्दधेदिव्योध्वजोगांडी
वधन्वनः १२ सदग्धोद्रोणकर्णाभ्यांदिव्यैरस्त्रैर्महारथः ॥ अनादीप्ताग्निनाह्याशुप्रजज्वालमहीपते १३ सोपासंगःसरश्मिश्चसाश्वःसयुगबंधुरः ॥ भस्मीभूतोऽपत
द्भूमौरथोगांडीवधन्वनः १४ तंतथाभस्मभूतंतुदृष्ट्वापांडुसुताःप्रभो ॥ अभवन्विस्मिताराजन्नर्जुनश्चेदमब्रवीत् १५ कृतांजलिःसप्रणयंप्रणिपत्याभिवाद्यह ॥ गो
विंदकस्माद्भगवन्रथोदग्धोऽयमग्निना १६ किमेतन्महदाश्चर्यमभवद्यदुनंदन ॥ तन्मेब्रूहिमहाबाहोश्रोतव्यंयदिमन्यसे १७ ॥वासुदेवउवाच॥ अस्त्रैर्बहुविधैर्दग्धः
पूर्वमेवायमर्जुन ॥ मदधिष्ठितत्वात्समरेनविशीर्णःपरंतप १८ इदानींतुविशीर्णोऽयंदग्धोब्रह्मास्त्रतेजसा ॥ मयाविमुक्तःकौंतेयत्वय्यद्यकृतकर्मणि १९ ईषदुत्स्मय
मानस्तुभगवान्केशवोऽरिहा ॥ परिष्वज्यचराजानंयुधिष्ठिरमभाषत २० दिष्ट्याजयसिकौंतेयदिष्ट्यातेशत्रवोजिताः ॥ दिष्ट्यागांडीवधन्वाचभीमसेनश्चपांडवः
२१ त्वंचापिकुशलीराजन्माद्रीपुत्रौचपांडवौ ॥ मुक्तावीरक्षयादस्मात्संग्रामान्निहतद्विषः २२ क्षिप्रमुत्तरकालानिकुरुकार्याणिभारत ॥ उपयातमुपप्लव्यंसहगां
डीवधन्वना २३ आनीयमधुपर्कंमांयत्पुरात्वमवोचथाः ॥ एषभ्रातासखाचैवतवकृष्णधनंजयः २४ रक्षितव्योमहाबाहोसर्वास्वापत्स्वितिप्रभो ॥ तवचैव
ब्रुवाणस्यतथेत्येवाहमब्रुवम् २५ ससव्यसाचीगुप्तस्तेविजयीचजनेश्वर ॥ भ्रातृभिःसहराजेंद्रशूरःसत्यपराक्रमः २६ मुक्तोवीरक्षयादस्मात्संग्रामाल्लोमहर्षणात् ॥
एवमुक्तस्तुकृष्णेनधर्मराजोयुधिष्ठिरः २७ हृष्टरोमामहाराजप्रत्युवाचजनार्दनम् ॥ युधिष्ठिरउवाच ॥ प्रमुक्तंद्रोणकर्णाभ्यांब्रह्मास्त्रमरिमर्दन २८ कस्त्व
दन्यःसहेत्साक्षादपिवज्रीपुरंदरः ॥ भवतस्तुप्रसादेनसंशप्तकगणाजिताः २९ महारणगतःपार्थोयच्चनासीत्पराङ्मुखः ॥ तथैवचमहाबाहोपर्यायैर्बहुभिर्मया
३० कर्मणामनुसंतानंतेजसश्चगतीःशुभाः ॥ उपप्लव्येमहर्षिर्मेकृष्णद्वैपायनोऽब्रवीत् ३१ यतोधर्मस्ततःकृष्णोयतःकृष्णस्ततोजयः ॥ इत्येवमुक्तेतेवीराःशिबिरं
तवभारत ३२ प्रविश्यप्रत्यपद्यंतकोशरत्नर्धिसंचयान् ॥ रजतंजातरूपंचमणीनथचमौक्तिकान् ३३ भूषणान्यथमुख्यानिकंबलान्यजिनानिच ॥ दासीदासमसं
ख्येयंराज्योपकरणानिच ३४ तेप्राप्यधनमक्षय्यंत्वदीयंभरतर्षभ ॥ उदक्रोशन्महाभागानरेंद्रविजितारयः ३५ तेतुवीराःसमाश्वस्यवाहनान्यवमुच्यच ॥
अतिष्ठंतमुहुःसर्वेपांडवाःसात्यकिस्तथा ३६ अथाब्रवीन्महाराजवासुदेवोमहायशाः ॥ अस्माभिर्मंगलार्थायवस्तव्यंशिबिराद्बहिः ३७

३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ ॥ इतिशल्यपर्वांतर्गतगदापर्वणिनीलकंठीयेभारतभावदीपेद्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ ७ ॥ ॥ किमर्थमिति

तथेत्युक्त्वाहितेसर्वेपांडवाःसात्यकिस्तथा ॥ वासुदेवेनसहितामंगलार्थंबहिर्ययुः ३८ तेसमासाद्यसरितंपुण्यामोघवतींनृप ॥ न्यवसन्नथतांरात्रिंपांडवाहतशत्रवः ३९ युधिष्ठिरस्ततोराजाप्राप्तकालमचिंतयत् ॥ तत्रतेगमनंप्राप्तंरोचतेतवमाधव ४० गांधार्याःक्रोधदीप्तायाःप्रशमार्थमरिंदम ॥ हेतुकारणयुक्तैश्चवाक्यैःकालसमीरितैः ४१ क्षिप्रमेवमहाभागगांधारींप्रशमिष्यसि ॥ पितामहश्चभगवान्व्यासस्तत्रभविष्यति ४२ ततःसंप्रेषयामासुर्यादवंनागसाह्वयम् ॥ सचप्रायाज्जवेनाशु वासुदेवःप्रतापवान् ४३ दारुकंरथमारोप्ययेनराजांबिकासुतः ॥ तमूचुःसंप्रयास्यंतंशैब्यसुग्रीववाहनम् ४४ प्रत्याश्वासयगांधारींहतपुत्रांयशस्विनीम् ॥ सप्रायात्पांडवैरुक्तस्तत्पुरंसात्वतांवरः ४५ आससादततःक्षिप्रंगांधारींनिहतात्मजाम् ४६ ॥ इतिश्रीमहाभारते शल्यपर्वांतर्गत गदापर्वणि वासुदेवप्रेषणेद्विषष्टितमोऽध्यायः ॥ ६२ ॥

॥ जनमेजयउवाच ॥ किमर्थंद्विजशार्दूलधर्मराजोयुधिष्ठिरः ॥ गांधार्याःप्रेषयामासवासुदेवंपरंतपम् १ यदापूर्वंगतःकृष्णःशमार्थंकौरवान्प्रति ॥ नचतंलब्धवान्कामंततोयुद्धमभूदिदम् २ निहतेषुतुयोधेषुहतेदुर्योधनेतदा ॥ पृथिव्यांपांडवेयस्यनिःसपत्नेकृतेयुधि ३ विद्रुतेशिबिरेशून्येप्राप्तेयशसिचोत्तमे ॥ किंनुतत्कारणंब्रह्मन्येनकृष्णोगतःपुनः ४ नचैतत्कारणंब्रह्मन्नल्पंविप्रतिभातिमे ॥ यत्रागमदमेयात्मास्वयमेवजनार्दनः ५ तत्त्वतोवैसमाचक्ष्वसर्वमध्वर्युसत्तम ॥ यच्चात्रकारणंब्रह्मन्कार्यस्यास्यविनिश्चये ६ ॥ वैशंपायनउवाच ॥ त्वद्युक्तोऽयमनुप्रश्नोयन्मांपृच्छसिपार्थिव ॥ तत्तेऽहंसंप्रवक्ष्यामियथावद्भरतर्षभ ७ हतंदुर्योधनंदृष्ट्वाभीमसेनेनसंयुगे ॥ व्युत्क्रम्यसमयंराजन्धार्तराष्ट्रंमहाबलम् ८ अन्यायेनहतंदृष्ट्वागदायुद्धेनभारत ॥ युधिष्ठिरंमहाराजमहद्भयमथाविशत् ९ चिंतयानोमहाभागांगांधारींतपसान्विताम् ॥ घोरेणतपसायुक्तांत्रैलोक्यमपिसादहेत् १० तस्यचिंतयमानस्यबुद्धिःसमभवत्तदा ॥ गांधार्याःक्रोधदीप्तायाःपूर्वंप्रशमनंभवेत् ११ साहिपुत्रवधंश्रुत्वाकृतमस्माभिरीदृशम् ॥ मानसेनाग्निनाक्रुद्धाभस्मसान्नःकरिष्यति १२ कथंदुःखमिदंतीव्रंगांधारीसंप्रशक्ष्यति ॥ श्रुत्वाविनिहतंपुत्रंछलेनाजिह्मयोधिनम् १३ एवंविचिंत्यबहुधाभयशोकसमन्वितः ॥ वासुदेवमिदंवाक्यंधर्मराजोऽभ्यभाषत १४ तवप्रासादाद्गोविंदराज्यंनिहतकंटकम् ॥ अप्राप्यंमनसाऽपीदंप्राप्तमस्माभिरच्युत १५ प्रत्यक्षंमेमहाबाहोसंग्रामेलोमहर्षणे ॥ विमर्दःसुमहान्प्राप्तस्त्वयायादवनंदन १६ त्वयादेवासुरेयुद्धेवधार्थममरद्विषाम् ॥ यथासाह्यंपुरादत्तंहताश्चविबुधद्विषः १७ साह्यंतथामहाबाहोदत्तमस्माकमच्युत ॥ सारथ्येनचवार्ष्णेयभवताहिष्ठितावयम् १८ यदिनत्वंभवेन्नाथःफाल्गुनस्यमहारणे ॥ कथंशक्योरणेजेतुंभवेदेषबलार्णवः १९ गदाप्रहाराविपुलाःपरिघैश्चापिताडनम् ॥ शक्तिभिर्भिंदिपालैश्चतोमरैःसपरश्वधैः २०

१ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०

२१ । २२ । २३ । २४ । २५ । २६ । २७ हेतुकारणसंयुक्तैःहेतवोदृष्टाअपराधाःकारणानिअदृष्टान्यवश्यंभावीमितैर्युक्तानितैः २८ । २९ । ३० । ३१ । ३२ प्रायादगच्छत् ३३ । ३४

अस्मत्कृतेत्वयाकृष्णवाचःसुपरुषाःश्रुताः ॥ शस्त्राणांचनिपातावैवज्रस्पर्शोपमारणे २१ तेचतेसफलाजाताहतेदुर्योधनेऽच्युत ॥ तत्सर्वंनयथानश्येत्पुनःकृष्ण तथाकुरु २२ संदेहदोलांप्राप्तंनश्चेतःकृष्णजयेसति ॥ गांधार्याहिमहाबाहोक्रोधंबुद्ध्यस्वमाधव २३ साहिनित्यंमहाभागातपसोग्रेणकर्शिता ॥ पुत्रपौत्रवधंश्रुत्वा ध्रुवंनःसंप्रधक्ष्यति २४ तस्याःप्रसादनंवीरप्राप्तकालंमतंमम ॥ कश्चतांक्रोधताम्राक्षींपुत्रव्यसनकर्शिताम् २५ वीक्षितुंपुरुषःशक्तस्त्वामृतेपुरुषोत्तम ॥ तत्रमे गमनंप्राप्तंरोचतेतवमाधव २६ गांधार्याःक्रोधदीप्तायाःप्रशमार्थमरिंदम ॥ त्वंहिकर्ताविकर्ताचलोकानांप्रभवाव्ययः २७ हेतुकारणसंयुक्तैर्वाक्यैःकालसमीरितैः ॥ क्षिप्रमेवमहाबाहोगांधारींशमयिष्यसि २८ पितामहश्चभगवान्कृष्णस्तत्रभविष्यति ॥ सर्वथातेमहाबाहोगांधार्याःक्रोधनाशनम् २९ कर्तव्यंसात्वतांश्रेष्ठपांडवानां हितार्थिना ॥ धर्मराजस्यवचनंश्रुत्वायदुकुलोद्वहः ३० आमंत्र्यदारुकंप्राहरथःसज्जोविधीयताम् ॥ केशवस्यवचःश्रुत्वात्वरमाणोऽथदारुकः ३१ न्यवेदयद्रथंसज्जंके शवायमहात्मने ॥ तंरथंयादवश्रेष्ठःसमारुह्यपरंतपः ३२ जगामहास्तिनपुरंत्वरितःकेशवोविभुः ॥ ततःप्रायान्महाराजमाधवोभगवान्रथी ३३ नागसाह्वयमा साद्यप्रविवेशचवीर्यवान् ॥ प्रविश्यनगरंवीरोरथघोषेणनादयन् ३४ विदितंधृतराष्ट्रस्यसोऽवतीर्यरथोत्तमात् ॥ अभ्यगच्छददीनात्माधृतराष्ट्रनिवेशनम् ३५ पूर्वं चाभिगतंतत्रसोऽपश्यदृषिसत्तमम् ॥ पादौप्रपीड्यकृष्णस्यराज्ञश्चापिजनार्दनः ३६ अभ्यवादयदव्यग्रोगांधारींचापिकेशवः ॥ ततस्तुयादवश्रेष्ठोधृतराष्ट्रमधोक्ष जः ३७ पाणिमालंब्यराजेंद्रसुस्वरंप्ररुरोदह ॥ समुहूर्तादिवोत्सृज्यबाष्पंशोकसमुद्भवम् ३८ प्रक्षाल्यवारिणानेत्रेह्याचम्यचयथाविधि ॥ उवाचप्रस्तुतंवाक्यंधृतरा ष्ट्रमरिंदमः ३९ नतेऽस्त्यविदितंकिंचिद्वृद्धस्यतवभारत ॥ कालस्यचयथावृत्तंतत्तेसुविदितंप्रभो ४० यदिदंपांडवैःसर्वैस्तवचित्तानुरोधिभिः ॥ कथंकुलक्षयोन स्यात्तथाक्षत्रस्यभारत ४१ भ्रातृभिःसमयंकृत्वाक्षांतवान्धर्मवत्सलः ॥ द्यूतच्छलजितैःशुद्धैर्वनवासोह्युपागतः ४२ अज्ञातवासचर्याचनानावेषसमावृतैः ॥ अ न्येचबहवःक्लेशास्त्वशक्तैरिवसर्वदा ४३ मयाचस्वयमागम्ययुद्धकालउपस्थिते ॥ सर्वलोकस्यसान्निध्येग्रामांस्त्वंपंचयाचितः ४४ त्वयाकालोपसृष्टेनलोभतोनाप वर्जिताः ॥ तवापराधान्नृपतेसर्वंक्षत्रंक्षयंगतम् ४५ भीष्मेणसोमदत्तेनबाल्हीकेनकृपेणच ॥ द्रोणेनचसपुत्रेणविदुरेणचधीमता ४६ याचितस्त्वंशमंनित्यंनचत त्कृतवानसि ॥ कालोपहतचित्ताहिसर्वेमुह्यंतिभारत ४७ यथामूढोभवान्पूर्वमस्मिन्नर्थेसमुद्यते ॥ किमन्यत्कालयोगाद्धिदिष्टमेवपरायणम् ४८ माचदोषान्महा प्राज्ञपांडवेषुनिवेशय ॥ अल्पोऽप्यतिक्रमोनास्तिपांडवानांमहात्मनाम् ४९ धर्मतोन्यायतश्चैवस्नेहतश्चपरंतप ॥ एतत्सर्वंतुविज्ञायह्यात्मदोषकृतंफलम् ५०

३५ कृष्णस्यव्यासस्य ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५०

५१।५२।५३।५४।५५।५६।५७।५८।५९।६०।६१।६२।६३।६४।६५।६६।६७।६८।६९।७०।७१।७२।७३।७४।७५

असूयांपांडुपुत्रेषुनभवान्कर्तुमर्हति ॥ कुलंवंशश्चपिंडाश्चयच्चपुत्रकृतंफलम् ५१ गांधार्यास्तववैनाथपांडवेषुप्रतिष्ठितम् ॥ त्वंचैवकुरुशार्दूलगांधारीचयशस्विनी ५२ माशुचोनरशार्दूलपांडवान्प्रतिकिल्बिषम् ॥ एतत्सर्वमनुध्यायआत्मनश्चव्यतिक्रमम् ५३ शिवेनपांडवान्पाहिनमस्तेभरतर्षभ ॥ जानासिचमहाबाहोधर्मराजस्ययात्वयि ५४ भक्तिर्भरतशार्दूलस्नेहश्चापिस्वभावतः ॥ एतच्चकदनंकृत्वाशत्रूणामपकारिणाम् ५५ दह्यतेसादिवारात्रौनचशर्माधिगच्छति ॥ त्वांचैवनरशार्दूलगांधारींचयशस्विनीम् ५६ सशोचन्नरशार्दूलःशांतिंनैवाधिगच्छति ॥ ह्रियाचपरयाऽऽविष्टोभवंतंनाधिगच्छति ५७ पुत्रशोकाभिसंतप्तंबुद्धिव्याकुलितेंद्रियम् ॥ एवमुक्त्वामहाराजधृतराष्ट्रंयदूत्तमः ५८ उवाचपरमंवाक्यंगांधारींशोककर्शिताम् ॥ सौबलेयिनिबोधत्वंयत्त्वांवक्ष्यामितच्छृणु ५९ त्वत्समानास्तिलोकेऽस्मिन्नद्यसीमंतिनीशुभे ॥ जानासिचयथाराज्ञिसभायांममसान्निधौ ६० धर्मार्थसहितंवाक्यमुभयोःपक्षयोर्हितम् ॥ उक्तवत्यसिकल्याणिनचतेतनयैःकृतम् ६१ दुर्योधनस्त्वयाचोक्तोजयार्थीपरुषंवचः ॥ शृणुमूढवचोमह्यंयतोधर्मस्ततोजयः ६२ तदिदंसमनुप्राप्तंतववाक्यंनृपात्मजे ॥ एवंविदित्वाकल्याणिमास्मशोकेमनःकृथाः ६३ पांडवानांविनाशायमातेबुद्धिःकदाचन ॥ शक्ताचासिमहाभागेपृथिवींसचराचराम् ६४ चक्षुषाक्रोधदीप्तेननिर्दग्धुंतपसोबलात ॥ वासुदेववचःश्रुत्वागांधारीवाक्यमब्रवीत् ६५ एवमेतन्महाबाहोयथावदसिकेशव ॥ आधिभिर्दह्यमानायामतिःसंचालितामम ६६ सामेव्यवस्थिताश्रुत्वातववाक्यंजनार्दन ॥ राज्ञस्त्वंधस्यवृद्धस्यहतपुत्रस्यकेशव ६७ त्वंगतिःसहितैर्वीरैःपांडवैर्द्विपदांवर ॥ एतावदुक्त्वावचनंमुखंप्रच्छाद्यवाससा ६८ पुत्रशोकाभिसंतप्तागांधारीप्ररुरोदह ॥ ततएनांमहाबाहुःकेशवःशोककर्शिताम् ६९ हेतुकारणसंयुक्तैर्वाक्यैराश्वासयत्प्रभुः ॥ समाश्वास्यचगांधारींधृतराष्ट्रंचमाधवः ७० द्रौणिसंकल्पितंभावमवबुद्ध्यचकेशवः ॥ ततस्त्वरितउत्थायपादौमूर्ध्नाप्रणम्यच ७१ द्वैपायनस्यराजेंद्रततःकौरवमब्रवीत् ॥ आपृच्छेत्वांकुरुश्रेष्ठमाचशोकेमनःकृथाः ७२ द्रौणेःपापोऽस्त्यभिप्रायस्तेनास्मिसहसोत्थितः ॥ पांडवानांवधेरात्रौबुद्धिस्तेनप्रदर्शिता ७३ एतच्छ्रुत्वातुवचनंगांधार्यासहितोऽब्रवीत् ॥ धृतराष्ट्रोमहाबाहुःकेशवंकेशिसूदनम् ७४ शीघ्रंगच्छमहाबाहोपांडवान्परिपालय ॥ भूयस्त्वयासमेष्यामिक्षिप्रमेवजनार्दन ७५ प्रायात्ततस्तुत्वरितोदारुकेणसहाच्युतः ॥ वासुदेवेगतेराजन्धृतराष्ट्रंजनेश्वरम् ७६ आश्वासयदमेयात्माव्यासोलोकनमस्कृतः ॥ वासुदेवोऽपिधर्मात्माकृतकृत्योजगामह ७७ शिबिरंहास्तिनपुराद्दिदृक्षुःपांडवान्नृप ॥ आगम्यशिबिरंरात्रौसोऽभ्यगच्छतपांडवान् ॥ तच्चतेभ्यःसमाख्यायसहितस्तैःसमाहितः ७८ ॥ इतिश्रीमहाभारते शल्यपर्वांतर्गतगदापर्वणि धृतराष्ट्रगांधारीसमाश्वासनेत्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ छ ॥

७६।७७।७८॥ इतिशल्यपर्वांतर्गतगदापर्वणिनीलकंठीये भारतभावदीपे त्रिषष्टितमोऽध्यायः॥ ६३ ॥ ॥ छ ॥

अधिष्ठितइति शौटीरःशूरः सएवशौटीर्यमात्मानंमन्यतेशौटीर्यमानी १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६

॥ धृतराष्ट्रउवाच ॥ अधिष्ठितःपदामूर्ध्निभग्नसक्थोमहीँगतः ॥ शौटीर्यमानीपुत्रोमेकिमभाषतसंजय १ अत्यर्थंकोपनोराजाजातवैरश्चपांडुषु ॥ व्यसनंपरमं प्राप्तःकिमाहपरमाहवे २ ॥ संजयउवाच ॥ शृणुराजन्प्रवक्ष्यामियथावृत्तंनराधिप ॥ राज्ञायदुक्तंभग्नेनतस्मिन्व्यसनआगते ३ भग्नसक्थोनृपोराजन्पांसुनासो ऽवगुंठितः ॥ यमयन्मूर्धजांस्तत्रवीक्ष्यचैवदिशोदश ४ केशान्नियम्ययत्नेननिःश्वसन्नुरगोयथा ॥ संरंभाश्रुपरीताभ्यांनेत्राभ्यामभिवीक्ष्यमाम् ५ बाहूधरण्यां निष्पिष्यसुदुर्मत्तइवद्विपः ॥ प्रकीर्णान्मूर्धजान्धुन्वन्दंतैर्दंतानुपस्पृशन् ६ गर्हयन्पांडवंज्येष्ठंनिःश्वस्येदमथाब्रवीत् ॥ भीष्मेशांतनवेनाथेकर्णेशस्त्रभृतांवरे ७ गौतमेशकुनौचापिद्रोणेचास्त्रभृतांवरे ॥ अश्वत्थाम्नितथाशल्येशूरेचकृतवर्मणि ८ इमामवस्थांप्राप्तोऽस्मिकालोहिदुरतिक्रमः ॥ एकादशचमूभर्तासोहमे तांदशांगतः ९ कालंप्राप्यमहाबाहोनकश्चिदतिवर्तते ॥ आख्यातव्यंमदीयानांयेऽस्मिन्जीवंतिसंयुगे १० यथाऽहंभीमसेनेनव्युत्क्रम्यसमयंहतः ॥ बहूनिसुनृशंसानिकृतानिखलुपांडवैः ११ भूरिश्रवसिकर्णेचभीष्मेद्रोणेचश्रीमति ॥ इदंचाकीर्तिजंकर्मनृशंसैःपांडवैःकृतम् १२ येनतेसत्सुनिर्वेदं गमिष्यंतिहिमेमतिः ॥ काप्रीतिःसत्त्वयुक्तस्यकृत्वोपाधिकृतंजयम् १३ कोवासमयभेत्तारंबुधःसंमंतुमर्हति ॥ अधर्मेणजयंलब्ध्वाकोनुहृष्येतपंडितः १४ यथासंहृष्यतेपापःपांडुपुत्रोवृकोदरः ॥ किंनुचित्रमितस्त्वद्यभग्नसक्थस्ययन्मम १५ क्रुद्धेनभीमसेनेनपादेनमृदितंशिरः ॥ प्रतपंतंश्रियाजुष्टंवर्तमानंचबं धुषु १६ एवंकुर्यान्नरोयोहिसवैसंजयपूजितः ॥ अभिज्ञौयुद्धधर्मस्यममभातापिताचमे १७ तौहिसंजयदुःखार्तौविज्ञाप्यौवचनाद्धिमे ॥ इष्टंभृत्याभृताः सम्यग्भूःप्रशास्तासमागरा १८ मूर्ध्निस्थितममित्राणांजीवतामेवसंजय ॥ दत्तादायायथाशक्तिमित्राणांचप्रियंकृतम् १९ अमित्राबाधिताःसर्वेकोनुस्वंततरो मया ॥ मानिताबांधवाःसर्वेवश्यःसंपूजितोजनः २० त्रितयंसेवितंसर्वंकोनुस्वंततरोमया ॥ आज्ञप्तंनृपमुख्येषुमानःप्राप्तःसुदुर्लभः २१ आजानेयैस्तथा यातंकोनुस्वंततरोमया ॥ यातानिपरराष्ट्राणिनृपाभुक्ताश्चदासवत् २२ प्रियेभ्यःप्रकृतंसाधुकोनुस्वंततरोमया ॥ अधीतंविधिवद्दत्तंप्राप्तमायुर्निराम यम् २३ स्वधर्मेणजितालोकाःकोनुस्वंततरोमया ॥ दिष्ट्यानाहंजितःसंख्येपरान्प्रेष्यवदाश्रितः २४ दिष्ट्यामेविपुलालक्ष्मीर्मृतेत्वन्यगताविभो ॥ यदिष्टंक्षत्रबंधूनांस्वधर्ममनुतिष्ठताम् २५ निधनंतन्मयाप्राप्तंकोनुस्वंततरोमया ॥ दिष्ट्यानाहंपरावृत्तोवैरात्प्राकृतवज्जितः २६ दिष्ट्यानविमतिंकांचिद्भ जित्वातुपराजितः ॥ सुप्तंवाथप्रमत्तंवायथाहन्याद्विषेणवा २७ एवंव्युत्क्रांतधर्मेणव्युत्क्रम्यसमयंहतः ॥ अश्वत्थामामहाभागःकृतवर्माचसात्वतः २८

१७ । १८ । १९ मयामत्तः २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८

२९ वार्तिकान् वार्ताहारिणः ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ चार्वाकोब्राह्मणवेषधारीराक्षसः ३८ अपचितिंप्रतीकारं ३९ । ४० । ४१ । ४२ । ४३ ॥ इतिशल्यपर्वांतर्गतग

कृपःशारद्वतश्चैववक्तव्यावचनान्मम ॥ अधर्मेणप्रवृत्तानांपांडवानामनेकशः २९ विश्वासंसमयघ्नानांनयूयंगंतुमर्हथ ॥ वार्तिकांश्चाब्रवीद्राजापुत्रस्तेसत्यवि
क्रमः ३० अधर्माद्भीमसेनेननिहतोऽहंयथारणे ॥ सोहंद्रोणंस्वर्गगतंकर्णशल्यावुभौतथा ३१ वृषसेनंमहावीर्यंशकुनिंचापिसौबलम् ॥ जलसंधंमहावीर्यंभग
दत्तंचपार्थिवम् ३२ सोमदत्तंमहेष्वासंसैंधवंचजयद्रथम् ॥ दुःशासनपुरोगांश्चभ्रातॄनात्मसमांस्तथा ३३ दौःशासनिंचविक्रांतंलक्ष्मणंचात्मजावुभौ ॥ एतां
श्चान्यांश्चसुबहून्मदीयांश्चसहस्रशः ३४ पृष्ठतोऽनुगमिष्यामिसार्थहीनोयथाऽध्वगः ॥ कथंभ्रातॄन्हतान्श्रुत्वाभर्तारंचस्वसामम ३५ रोरूयमाणादुःखार्ता
दुःशलासाभविष्यति ॥ स्नुषाभिःप्रस्नुषाभिश्चवृद्धोराजापितामम ३६ गांधारीसहितश्चैवकांगतिंप्रतिपत्स्यति ॥ नूनंलक्ष्मणमाताऽपिहतपुत्राहतेश्वरा ३७
विनाशंयास्यतिक्षिप्रंकल्याणीपृथुलोचना ॥ यदिजानातिचार्वाकःपरिव्राड्वाग्विशारदः ३८ करिष्यतिमहाभागोध्रुवंचापचितिंमम ॥ समंतपंचकेपुण्येत्रिषु
लोकेषुविश्रुते ३९ अहंनिधनमासाद्यलोकान्प्राप्स्यामिशाश्वतान् ॥ ततोजनसहस्राणिबाष्पपूर्णानिमारिष ४० प्रलापंनृपतेःश्रुत्वाव्यद्रवंतादिशोदश ॥
ससागरवनाघोरापृथिवीसचराचरा ४१ चचालाथसनिर्ह्रादादिशश्चैवाविलाभवन् ॥ तेद्रोणपुत्रमासाद्ययथावृत्तंन्यवेदयन् ४२ व्यवहारंगदायुद्धेपार्थिवस्य
चपातनम् ॥ तदाख्यायततःसर्वेद्रोणपुत्रस्यभारत ॥ ध्यात्वाचसुचिरंकालंजग्मुरार्तायथागतम् ४३ ॥ इतिश्रीमहाभारतेशल्यपर्वांतर्गतगदापर्वणिदुर्योधन
विलापेचतुःषष्टितमोऽध्यायः ॥ ६४ ॥ ॥ संजयउवाच ॥ वार्तिकाणांसकाशात्तुश्रुत्वादुर्योधनंहतम् ॥ हतशिष्टास्ततोराजन्कौरवाणांमहारथाः १ विनिर्भि
न्नाःशितैर्बाणैर्गदातोमरशक्तिभिः ॥ अश्वत्थामाकृपश्चैवकृतवर्माचसात्वतः २ त्वरिताजवनैरश्वैरायोधनमुपागमन् ॥ तत्रापश्यन्महात्मानंधार्तराष्ट्रंनिपा
तितम् ३ प्रभग्नंवायुवेगेनमहाशालंयथावने ॥ भूमौविचेष्टमानंतंरुधिरेणसमुक्षितम् ४ महागजमिवारण्येव्याधेनविनिपातितम् ॥ विवर्तमानंबहुशो
रुधिरौघपरिप्लुतम् ५ यदृच्छयानिपतितंचक्रमादित्यगोचरम् ॥ महावातसमुत्थेनसंशुष्कमिवसागरम् ६ पूर्णचंद्रमिवव्योम्नितुषारावृतमंडलम् ॥
रेणुध्वस्तंदीर्घभुजंमातंगमिवविक्रमे ७ वृतंभूतगणैर्घोरैःक्रव्यादैश्चसमंततः ॥ यथाधनंलिप्समानैर्भृत्यैर्नृपतिसत्तमम् ८ भ्रुकुटीकृतवक्त्रांतंक्रोधादु
द्वृत्तचक्षुषम् ॥ सामर्षंतंनरव्याघ्रंव्याघ्रंनिपतितंयथा ९ तेतंदृष्ट्वामहेष्वासंभूतलेपतितंनृपम् ॥ मोहमभ्यागमन्सर्वेकृपप्रभृतयोरथाः १० अवतीर्य
रथेभ्यश्चप्राद्रवन्राजसन्निधौ ॥ दुर्योधनंचसंप्रेक्ष्यसर्वेभूमावुपाविशन् ११ ततोद्रौणिर्महाराजबाष्पपूर्णेक्षणःश्वसन् ॥ उवाचभरतश्रेष्ठंसर्वलोकेश्वरेश्वरम्
१२ ननूनंविद्यतेसत्यंमानुषेकिंचिदेवहि ॥ यत्रत्वंपुरुषव्याघ्रशेषेपांसुषुरूषितः १३

दापर्वणिनीलकंठीये भारतभावदीपेचतुःषष्टितमोऽध्यायः ॥ ६४ ॥ वार्तिकाणामिति १ । २ । ३ । ४ । ५ चक्रमादित्यगोचरंसूर्यमंडलमिवेतिलुप्तोपमा ६ । ७ । ९ । १० । ११ । १२ । १३

१४ । १५ । १६ । १७ । १८ कारणांतरेअदृष्टरूपेसति तेनदृष्टसामग्रीवैयर्थ्यंजायतइतिभावः १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८

भूत्वाहिनृपतिःपूर्वंसमाज्ञाप्यचमेदिनीम् ॥ कथमेकोऽद्यराजेंद्रतिष्ठसेनिर्जनेवने १४ दुःशासनंनपश्यामिनापिकर्णंमहारथम् ॥ नापितान्सुहृदःसर्वान्किमिदं भरतर्षभ १५ दुःखंनूनंकृतांतस्यगतिंज्ञातुंकथंचन ॥ लोकानांचभवान्यत्रशेषेपांसुपुरूषितः १६ एषमूर्धाभिषिक्तानामग्रेगत्वापरंतपः ॥ सतृणंग्रसतेपांसुंप श्यकालस्यपर्ययम् १७ क्वतेतदमलंछत्रंव्यजनंक्वचपार्थिव ॥ साचतेमहतीसेनाक्वगतापार्थिवोत्तम १८ दुर्विज्ञेयागतिर्नूनंकार्याणांकारणांतरे ॥ यद्वैलोकगुरुर्भू त्वाभवानेतांदशांगतः १९ अध्रुवासर्वमर्त्येषुश्रीरुपालक्ष्यतेभृशम् ॥ भवतोव्यसनंदृष्ट्वाशक्रविस्पर्धिनोभृशम् २० तस्यतद्वचनंश्रुत्वादुःखितस्यविशेषतः ॥ उ वाचराजन्पुत्रस्तेप्राप्तकालमिदंवचः २१ विमृज्यनेत्रेपाणिभ्यांशोकजंबाष्पमुत्सृजन् ॥ कृपादीन्सतदावीरान्सर्वानेवनराधिपः २२ ईदृशोलोकधर्मोऽयंधात्रानि र्दिष्टउच्यते ॥ विनाशःसर्वभूतानांकालपर्यायमागतः २३ सोऽयंमांसमनुप्राप्तःप्रत्यक्षंभवतांहियः ॥ पृथिवींपालयित्वाऽहमेतांनिष्ठामुपागतः २४ दिष्ट्यानाहंप रावृत्तोयुद्धेकस्यांचिदापदि ॥ दिष्ट्याऽहंनिहतःपापैश्छलेनैवविशेषतः २५ उत्साहश्चकृतोनित्यंमयादिष्ट्यायुयुत्सता ॥ दिष्ट्याचास्मिन्हतोयुद्धेनिहतज्ञातिबां धवः २६ दिष्ट्याचवोऽहंपश्यामिमुक्तानस्माज्जनक्षयात् ॥ स्वस्तियुक्तांश्चकल्यांश्चतन्मेप्रियमनुत्तमम् २७ माभवंतोऽत्रतप्यंतांसौहृदान्निधनेनमे ॥ यदिवेदाः प्रमाणंवोजितालोकामयाऽक्षयाः २८ मन्यमानःप्रभावंचकृष्णस्यामिततेजसः ॥ तेननच्यावितश्चाहंक्षत्रधर्मात्स्वनुष्ठितात् २९ समयासमनुप्राप्तोनारिमशो च्यःकथंचन ॥ कृतंभवद्भिःसदृशमनुरूपमिवात्मनः ३० यतितंविजयेनित्यंदैवंतुदुरतिक्रमम् ॥ एतावदुक्त्वावचनंबाष्पव्याकुललोचनः ३१ तूष्णींबभूवराजेंद्र रुजाऽसौविह्वलोभृशम् ॥ तथानुदृष्ट्वाराजानंबाष्पशोकसमन्वितम् ३२ द्रौणिःक्रोधेनजज्वालयथावह्निर्जगत्क्षये ॥ सचक्रोधसमाविष्टःपाणौपाणिंनिपीड्यच ३३ बाष्पविह्वलयावाचाराजानमिदमब्रवीत् ॥ पितामेनिहतःक्षुद्रैःसुनृशंसेनकर्मणा ३४ नतथातेनतप्यामियथाराजंस्त्वयाऽद्यवै ॥ शृणुचेदंवचोमह्यंसत्येनवदतःप्र भो ३५ इष्टापूर्तेनदानेनधर्मेणसुकृतेनच ॥ अद्याहंसर्वपंचालान्वासुदेवस्यपश्यतः ३६ सर्वोपायैर्हिनेष्यामिप्रेतराजनिवेशनम् ॥ अनुज्ञांतुमहाराजभवान्मे दातुमर्हति ३७ इतिश्रुत्वातुवचनंद्रोणपुत्रस्यकौरवः ॥ मनसःप्रीतिजननंकृपंवचनमब्रवीत् ३८ आचार्यशीघ्रंकलशंजलपूर्णंसमानय ॥ सतद्वचनमाज्ञायरा ज्ञोब्राह्मणसत्तमः ३९ कलशंपूर्णमादायराज्ञोंऽतिकमुपागमत् ॥ तमब्रवीन्महाराजपुत्रस्तवविशांपते ४० ममाज्ञयाद्विजश्रेष्ठद्रोणपुत्रोऽभिषिच्यताम् ॥ सैनाप त्येनभद्रंतेममचेदिच्छसिप्रियम् ४१ राज्ञोनियोगाद्योद्धव्यंब्राह्मणेनविशेषतः ॥ वर्तताक्षत्रधर्मेणह्येवंधर्मविदोविदुः ४२

२९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२

४३ । ४४ । ४५ । ४६ ॥ ॥ इति शल्यपर्वांतर्गतगदापर्वणि नीलकंठीये भारतभावदीपे पंचषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥



राज्ञस्तुवचनंश्रुत्वाकृपःशारद्वतस्तथा ॥ द्रौणिंराज्ञोनियोगेनसैनापत्येऽभ्यषेचयत् ४३ सोऽभिषिक्तोमहाराजपरिष्वज्यन्नृपोत्तमम् ॥ प्रययौसिंहनादेनदिशःसर्वा विनादयन् ४४ दुर्योधनोऽपिराजेंद्रशोणितेनपरिप्लुतः ॥ तांनिशांप्रतिपेदेऽथसर्वभूतभयावहाम् ४५ अपक्रम्यतुतेतूर्णंतस्मादायोधनान्नृप ॥ शोकसंविग्नमनस श्चिंताध्यानपराभवन् ४६ ॥ ॥ इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां शल्यपर्वांतर्गतगदापर्वणि अश्वत्थामसैनापत्याभिषेके पंचषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ ॥ ॥ समाप्तं गदापर्व शल्यपर्वच ॥ ॥ अतःपरं सौप्तिकंपर्व भविष्यति ॥ ॥ तस्यायमाद्यः श्लोकः ॥

॥ संजयउवाच ॥ ॥ ततस्तेसहितावीराःप्रयातादक्षिणामुखाः ॥ उपास्तमनवेलायांशिबिराभ्याशमागताः ॥ १ ॥ ॥ ॥ ॥ ॥

॥ अत्राप्यादिपर्वोक्ताध्यायसंख्यावैषम्यं श्लोकसंख्यावैषम्यं च लिपिकरप्रमादादिना द्रष्टव्यम् ॥

॥ श्रीगणेशायनमः ॥ वेदव्यासायनमः ॥ पूर्वस्मिन्पर्वण्यथार्थीकुटुंबनाशमनुस्वयमपिनश्यतीत्युक्तं इदानींपरधर्मानुगोब्राह्मणस्तद्धर्मेष्वपिनिंद्यतमंकर्मकरोतीत्युच्यते ततस्तेसहितावीराइत्या
दिनासौप्तिकपर्वणि ततःदुर्योधनेनसैनापत्येऽश्वत्थाम्नोऽभिषेकानंतरं तेअश्वत्थामकृपाचार्यकृतवर्माणःशिबिरःभ्याशंशिबिरनिकटस्थंदेशंआसाद्यवाहान्विमुच्यन्यविशंतेतियोजना १ । २ । ३

॥ श्रीगणेशायनमः ॥ श्रीवेदव्यासायनमः ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींचैवततोजयमुदीरयेत् १ ॥ संजयउवाच ॥ ततस्तेसहितावी
राःप्रयातादक्षिणामुखाः ॥ उपास्तमनवेलायांशिबिराभ्याशमागताः १ विमुच्यवाहांस्त्वरिताभीताःसमभवंस्तदा ॥ गहनंदेशमासाद्यप्रच्छन्नान्यविशंतते २ से
नानिवेशमभितोनातिदूरमवस्थिताः ॥ निकृत्तानिशितैःशस्त्रैःसमंतात्क्षतविक्षताः ३ दीर्घमुष्णंचनिःश्वस्यपांडवानेवाचिंतयन् ॥ श्रुत्वाचनिनदंघोरंपांडवानांज
यैषिणाम् ४ अनुसारभयाद्भीताःप्राङ्मुखाःप्राद्रवन्पुनः ॥ तेमुहूर्तात्ततोगत्वाश्रांतवाहाःपिपासिताः ५ नामृष्यंतमहेष्वासाःक्रोधामर्षवशंगताः ॥ राज्ञोवधेनसं
तप्तामुहूर्त्तंसमवस्थिताः ६ ॥ धृतराष्ट्रउवाच ॥ अश्रद्धेयमिदंकर्मकृतंभीमेनसंजय ॥ यत्सनागायुतप्राणःपुत्रोममनिपातितः ७ अवध्यःसर्वभूतानांवज्रसंहननोयु
वा ॥ पांडवैःसमरेपुत्रोनिहतोममसंजय ८ नदिष्टमभ्यतिक्रांतुंशक्यंगावल्गणेनरैः ॥ यत्समेत्यरणेपार्थैःपुत्रोममनिपातितः ९ अद्रिसारमयंनूनंहृदयंममसंजय॥
हतंपुत्रशतंश्रुत्वायन्नदीर्णंसहस्रधा १० कथंहिवृद्धमिथुनंहतपुत्रंभविष्यति ॥ नह्यहंपांडवेयस्यविषयेवस्तुमुत्सहे ११ कथंराज्ञःपिताभूत्वास्वयंराजाचसंजय ॥ प्रे
ष्यभूतःप्रवर्त्तेयंपांडवेयस्यशासनात् १२ आज्ञाप्यपृथिवींसर्वांस्थित्वामूर्द्धनिसंजय ॥ येनपुत्रशतंपूर्णमेकेननिहतंमम १३ कृतंसत्यंवचस्तस्यविदुरस्यमहात्म
नः ॥ अकुर्वतावचस्तेनममपुत्रेणसंजय १४ कथमस्यभविष्यामिप्रेष्यभूतोदुरंतकृत् ॥ कथंभीमस्यवाक्यानिश्रोतुंशक्ष्यामिसंजय १५ अधर्मेणहतेतातपुत्रेदुर्यो
धनेमम ॥ कृतवर्माकृपोद्रौणिःकिमकुर्वतसंजय १६ ॥ संजयउवाच ॥ गत्वातुतावकाराजन्नातिदूरमवस्थिताः ॥ अपश्यंतवनंघोरंनानाद्रुमलतावृतम् १७ ते
मुहूर्तंतुविश्रम्यलब्धतोयैर्हयोत्तमैः ॥ सूर्यास्तमनवेलायांसमासेदुर्महद्वनम् १८ नानामृगगणैर्जुष्टंनानापक्षिगणावृतम् ॥ नानाद्रुमलताच्छन्नंनानाव्यालनिषेवि
तम् १९ नानातोयैःसमाकीर्णंनानापुष्पोपशोभितम् ॥ पद्मिनीशतसंछन्नंनीलोत्पलसमायुतम् २० प्रविश्यतद्वनंघोरंवीक्षमाणाःसमंततः ॥ शाखासहस्रसंछन्नं
न्यग्रोधंददृशुस्ततः २१ उपेत्यतुतदाराजन्न्यग्रोधंतेमहारथाः ॥ ददृशुर्द्विपदांश्रेष्ठाःश्रेष्ठंतंवैवनस्पतिम् २२ तेऽवतीर्यरथेभ्यश्चविप्रमुच्यचवाजिनः ॥ उपस्पृ
श्ययथान्यायंसंध्यामन्वासतप्रभो २३ ततोऽस्तंपर्वतश्रेष्ठमनुप्राप्तेदिवाकरे ॥ सर्वस्यजगतोधात्रीशर्वरीसमपद्यत २४ ग्रहनक्षत्रताराभिःसंपूर्णाभिरलंकृतम् ॥ न
भोंशुकमिवाभातिप्रेक्षणीयंसमंततः २५ इच्छयातेप्रवल्गंतियेसत्वारात्रिचारिणः ॥ दिवाचराश्चयेसत्वास्तेनिद्रावशमागताः २६

४ अनुसारःपृष्ठगमनं प्राद्रवन्नितिपुनर्वाहान्योजयित्वेतिगम्यते ५ नामृष्यंतपिपासामपिनपरामृष्टवंतः राज्ञोःदुर्योधनस्य ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७
१८ । १९ । २० । २१ २२ अन्वासतउपासितवंतः २३ । २४ अलंकृतंरजतबिंदुचित्रितं अंशुकंवस्त्रम् २५ । २६

२७ । २८ । २९ । ३० । ३१ शयनोपेतौप्रागिति शेषः ३२ । ३३ । ३४ । ३५ पर्यणामयन् परिणीतवंतआसन् ३६ । ३७ हर्यक्षंहरिन्मणिनिभलोचनं घोणानासा नखरस्तीक्ष्णनखः ३८ । ३९

रात्रिंचराणांसत्वानांनिर्घोषोऽभूत्सुदारुणः ॥ क्रव्यादाश्चप्रमुदिताघोराप्राप्ताचशर्वरी २७ तस्मिन्रात्रिमुखेघोरेदुःखशोकसमन्विताः ॥ कृतवर्माकृपोद्रौणिरुपो पविविशुःसमम् २८ तत्रोपविष्टाःशोचंतोन्यग्रोधस्यसमीपतः ॥ तमेवार्थमतिक्रांतंकुरुपांडवयोःक्षयम् २९ निद्रयाचपरीतांगानिषेदुर्धरणीतले ॥ श्रमेणसुदृढं युक्ताविक्षताविविधैःशरैः ३० ततोनिद्रावशंप्राप्तौकृपभोजौमहारथौ ॥ सुखोचितावदुःखार्हौनिषण्णौधरणीतले ३१ तौतुसुप्तौमहाराजश्रमशोकसमन्वितौ ॥ महार्हशयनोपेतौभूमावेवह्यनाथवत् ३२ क्रोधामर्षवशंप्राप्तोद्रोणपुत्रस्तुभारत ॥ नवैस्मसजगामाथनिद्रांसर्पइवश्वसन् ३३ नलेभेसतुनिद्रां वैदह्यमानोहिमन्यु ना ॥ वीक्षांचक्रेमहाबाहुस्तद्वनंघोरदर्शनम् ३४ वीक्षमाणोवनोद्देशंनानासत्वैर्निषेवितम् ॥ अपश्यतमहाबाहुर्न्यग्रोधंवायसैर्युतम् ३५ तत्रकाकसहस्राणितांनि शांपर्यणामयन् ॥ सुखंस्वपंतिकौरव्यपृथक्पृथगुपाश्रयाः ३६ सुप्तेषुतेषुकाकेषुविश्रब्धेषुसमंततः ॥ सोऽपश्यत्सहसायांतमुलूकंघोरदर्शनम् ३७ महास्वनंमहा कायंहर्यक्षंबभ्रुपिंगलम् ॥ सुदीर्घघोणानखरंसुपर्णमिववेगितम् ३८ सोऽथशब्दंमृदुंकृत्वालीयमानइवांडजः ॥ न्यग्रोधस्यततःशाखांप्रार्थयामासभारत ३९ स न्निपत्यतुशाखायांन्यग्रोधस्यविहंगमः ॥ सुप्तान्जघानसुबहून्वायसान्वायसांतकः ४० केषांचिदच्छिनत्पक्षान्शिरांसिचचकर्तह ॥ चरणांश्चैवकेषांचिद्बभंजचरणा युधः ४१ क्षणेनाहनद्बलवान्येऽस्यदृष्टिपथेस्थिताः ॥ तेषांशरीरावयवैःशरीरैश्चविशांपते ४२ न्यग्रोधमंडलंसर्वंसंछन्नंसर्वतोऽभवत् ॥ तांस्तुहत्वाततःकाकान्कौ शिकोमुदितोऽभवत् ४३ प्रतिकृत्ययथाकामंशत्रूणांशत्रुसूदनः ॥ तद्दृष्ट्वासोपधंकर्मकौशिकेनकृतंनिशि ४४ तद्भावेकृतसंकल्पोद्रौणिरेकोऽन्वचिंतयत् ॥ उपदेशः कृतोऽनेनपक्षिणाममसंयुगे ४५ शत्रूणांक्षपणेयुक्तःप्राप्तःकालश्चमेमतः ॥ नाद्यशक्यामयाहंतुंपांडवाजितकाशिनः ४६ बलवंतःकृतोत्साहाःप्राप्तलक्षाःप्रहारि णः ॥ राज्ञःसकाशात्तेषांतुप्रतिज्ञातोवधोमया ४७ पतंगाग्निसमांवृत्तिमास्थायात्मविनाशिनीम् ॥ न्यायतोयुध्यमानस्यप्राणत्यागोनसंशयः ४८ छद्मनाचभवे त्सिद्धिःशत्रूणांचक्षयोमहान् ॥ ततःसंशयितादर्थाद्योऽर्थोनिःसंशयोभवेत् ४९ तंजनाबहुमन्यंतेयेचशास्त्रविशारदाः ॥ यच्चाप्यत्रभवेद्वाक्यंगर्हितंलोकनिंदितम् ५०कर्त्तव्यंतन्मनुष्येणक्षत्रधर्मेणवर्तता ॥ निंदितानिचसर्वाणिकुत्सितानिपदेपदे ५१ सोपधानिकृतान्येवपांडवैरकृतात्मभिः ॥ अस्मिन्नर्थेपुरागीताःश्रूयंतेधर्मचिं तकैः ५२ श्लोकान्यायमवेक्षद्भिस्तत्त्वार्थास्तत्त्वदर्शिभिः ॥ परिश्रांतेविदीर्णेवाभुंजानेवाऽपिशत्रुभिः ५३ प्रस्थानेवाप्रवेशेवाप्रहर्त्तव्यंरिपोर्बलम् ॥ निद्रार्तमर्धरात्रे चतथानष्टप्रणायकम् ५४ भिन्नयोधंबलंयच्चद्विधायुक्तंचयद्भवेत् ॥ इत्येवंनिश्चयंचक्रेसुप्तानांनिशिमारणे ५५

४० । ४१ । ४२ । ४३ सोपधंसकपटम् ४४ तद्भावेकपटभावेउपदेशइति । दुर्जनाचरितंमार्गमप्रमाणंकुर्वतेखलाः ॥ विश्वस्तान्हिंसितुंद्रौणिरुलूकमकरोद्गुरुम् ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५

५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ ॥ इतिसौप्तिकपर्वणिनीलकंठीयेभारतभावदीपेप्रथमोऽध्यायः ॥ १ ॥ ७ ॥ श्रुतंतइति १ दैवेआसमंतात्बद्धाः पुरुषकारेनिहीनतयाबद्धाः तेनदैवंप्रधानंपुरुषकारउपसर्जनमित्युक्तंभवति २ । ३ । ४ वर्षन्किंफलंनसाधयतेऽपितुसाधयत्येव कृषिंविनाऽपिवनेचराःकेवलंपर्जन्येनजीवंतिनतुकृषी

पांडूनांसहपांचालैर्द्रौणपुत्रःप्रतापवान् ॥ सक्रूरांमतिमास्थायविनिश्चित्यमुहुर्मुहुः ५६ सुप्तौप्राबोधयत्तौतुमातुलंभोजमेवच ॥ तौप्रबुद्धौमाहात्मानौकृपभोजौमहाबलौ ५७ नोत्तरंप्रतिपद्येतांतत्रयुक्तंह्रियावृतौ ॥ समुहूर्तमिवध्यात्वाबाष्पविह्वलमब्रवीत् ५८ हतोदुर्योधनोराजाएकवीरोमहाबलः ॥ यस्यार्थेवैरमस्माभिरासक्तंपांडवैःसह ५९ एकाकीबहुभिःक्षुद्रैराहवेशुद्धविक्रमः ॥ पातितोभीमसेनेनएकादशचमूपतिः ६० वृकोदरेणक्षुद्रेणसुनृशंसमिदंकृतम् ॥ मूर्धाभिषिक्तस्यशिरःपादेनपरिमृद्नता ६१ विनर्दंतिचपंचालाःक्ष्वेलंतिचहसंतिच ॥ धमंतिशंखाञ्शतशोहृष्टाघ्नंतिचदुंदुभीन् ६२ वादित्रघोषस्तुमुलोविमिश्रःशंखनिःस्वनैः ॥ अनिलेनेरितोघोरोदिशःपूरयतीवह ६३ अश्वानांहेषमाणानांगजानांचैवबृंहताम् ॥ सिंहनादश्चशूराणांश्रूयतेसुमहानयम् ६४ दिशंप्राचींसमाश्रित्यहृष्टानांगच्छतांभृशम् ॥ रथनेमिस्वनाश्चैवश्रूयंतेलोमहर्षणाः ६५ पांडवैर्धार्तराष्ट्राणांयदिदंकदनंकृतम् ॥ वयमेवत्रयःशिष्टाअस्मिन्महतिवैशसे ६६ केचिन्नागशतप्राणाःकेचित्सर्वास्त्रकोविदाः ॥ निहताःपांडवेयैस्तेमन्येकालस्यपर्ययम् ६७ एवमेतेनभाव्यंहिनूनंकार्येणतत्त्वतः ॥ यथाह्यस्येदृशीनिष्ठाकृतकार्येऽपिदुष्करे ६८ भवतोस्तुयदिप्रज्ञानमोहादपनीयते ॥ व्यापन्नेस्मिन्महत्यर्थेयन्नःश्रेयस्तदुच्यताम् ६९ ॥ इतिश्रीमहाभारते सौप्तिकेपर्वणि द्रौणिमंत्रणायांप्रथमोऽध्यायः ॥ १ ॥ ॥ ७ ॥

॥ कृपउवाच ॥ श्रुतंतेवचनंसर्वंयद्यदुक्तंत्वयाविभो ॥ ममापितुवचःकिंचिच्छृणुष्वाद्यमहाभुज १ आबद्धामानुषाःसर्वेनिबद्धाःकर्मणोर्द्वयोः ॥ दैवेपुरुषकारेचपरंताभ्यांनविद्यते २ नहिदैवेनसिध्यंतिकार्याण्येकेनसत्तम ॥ नचापिकर्मणैकेनद्वाभ्यांसिद्धिस्तुयोगतः ३ ताभ्यामुभाभ्यांसर्वार्थानिबद्धाअधमोत्तमाः ॥ प्रवृत्ताश्चैवदृश्यंतेनिवृत्ताश्चैवसर्वशः ४ पर्जन्यःपर्वतेवर्षन्किंनुसाधयतेफलम् ॥ कृष्टेक्षेत्रेतथावर्षन्किंनसाधयतेफलम् ५ उत्थानंचाप्यदैवस्यह्यनुत्थानंचदैवतम् ॥ व्यर्थंभवतिसर्वत्रपूर्वस्तत्रविनिश्चयः ६ सुवृष्टेचयथादेवेसम्यक्क्षेत्रेचकर्षिते ॥ बीजंमहागुणंभूयात्तथासिद्धिर्हिमानुषी ७ तयोर्दैवंविनिश्चित्यस्वयंचैवप्रवर्तते ॥ प्राज्ञाःपुरुषकारेतुवर्ततेदाक्ष्यमाश्रिताः ८ ताभ्यांसर्वेहिकार्यार्थामनुष्याणांनरर्षभ ॥ विचेष्टंतःस्मदृश्यंतेनिवृत्तास्तुतथैवच ९ कृतःपुरुषकारश्चसोऽपिदैवेनसिध्यति ॥ तथाऽस्यकर्मणःकर्तुरभिनिर्वर्ततेफलम् १०

वलाःकेवलयाकृष्याजीवंतिएवंपुरुषकारोदैवमपेक्षतेदैवंतुनातीवपुरुषकारापेक्षमितिभावः ५ एतदेवाह उत्थानमिति दैवस्यप्रधानस्योत्थानंपुरुषकारोव्यर्थंभवतितथाऽनुत्थानमुत्थानहीनंदैवमपिव्यर्थमितिपक्षद्वयंसर्वत्रव्यवस्यति तत्रपूर्वएवपक्षःश्रेयानित्यर्थः ६ द्वयोरानुकूल्यंश्रेष्ठतरमित्याह सुवृष्टइति ७ दैवंबलवदितिशेषः यतःस्वयमपिपुरुषकारंविनाऽपिप्रवर्तते फलंदातुमितिशेषः । तर्हिकिंपुरुषकारेणेत्याशंक्याह प्राज्ञाइति पुरुषापराधनिवृत्तिमात्रंतत्फलमित्यर्थः ८ विचेष्टंतः प्रवृत्तादृश्यंते लोकदृष्टयेत्यर्थः ९ । १०

११ । १२ कर्माकृत्वादुःखंपश्येदित्यपिप्रायशोस्ति १३ दुर्दर्शौदुर्लभौ चेष्टावान्नलभतेनिश्चेष्टोनलभतइत्युत्सर्गमात्रमित्यर्थः १० । १५ यदिति दक्षोनिंद्यतांनयातीतिभावः १६ अदक्षस्तुपर प्रयत्नार्जितेनजीवन्नपिभोक्तुमेवायंसमर्थोनार्जयितुमितिनिंद्यतइत्याहकृत्वेति १७ एतवद्दैवदाक्ष्ययोःसाहित्यं अन्यथातयोरन्यतरालंबनेन १८ एतदेवस्पष्टयतिहीनमिति पुरुषकारेणहीनं

उत्थानंचमनुष्याणांदक्षाणांदैववर्जितम् ॥ अफलंदृश्यतेलोकेसम्यगप्युपपादितम् ११ तत्रालसामनुष्याणांयेभवंत्यमनस्विनः ॥ उत्थानंतेविगर्हंतिप्राज्ञानांतन्न रोचते १२ प्रायशोहिकृतंकर्मनाफलंदृश्यतेभुवि ॥ अकृत्वाचपुनर्दुःखंकर्मपश्येन्महाफलम् १३ चेष्टामकुर्वन्लभतेयदिकिंचिद्यदृच्छया ॥ योवानलभतेकृत्वादु र्दशातावुभावपि १४ शक्नोतिजीवितुंदक्षोनालसःसुखमेधते ॥ दृश्यंतेजीवलोकेऽस्मिन्दक्षाःप्रायोहितैषिणः १५ यदिदक्षःसमारंभात्कर्मणोनाश्नुतेफलम् ॥ ना स्यवाच्यंभवेत्किंचिल्लब्धव्यंवाऽधिगच्छति १६ अकृत्वाकर्मयोलोकेफलंविंदतिविष्ठितः ॥ सतुवक्तव्यतांयातिद्वेष्योभवतिभूयशः १७ एवमेतदनादृत्यवर्ततेय स्त्वतोऽन्यथा ॥ सकरोत्यात्मनोनर्थानेषबुद्धिमतांनयः १८ हीनंपुरुषकारेणयदि दैवेनवापुनः ॥ कारणाभ्यामथैताभ्यामुत्थानमफलंभवेत् १९ हीनंपुरुषकारे णकर्मत्विहनसिद्ध्यति ॥ दैवतेभ्योनमस्कृत्ययस्त्वर्थान्सम्यगीहते २० दक्षोदाक्षिण्यसंपन्नोनसमोघैर्विहन्यते ॥ सम्यगीहापुनरियंयोवृद्धानुपसेवते २१ आपृ च्छतिचयच्छ्रेयःकरोतिचाहितंवचः ॥ उत्थायोत्थायहिसदाप्रष्टव्यावृद्धसंमताः २२ तेस्मयोगेपरंमूलंतन्मूलासिद्धिरुच्यते ॥ वृद्धानांवचनंश्रुत्वायोऽभ्युत्थानंप्र योजयेत् २३ उत्थानस्यफलंसम्यक्तदासलभतेऽचिरात् ॥ रागात्क्रोधाद्भयाल्लोभाद्योऽर्थानीहितिमानवः २४ अनीशश्चावमानीचसशीघ्रंभ्रश्यतेश्रियः ॥ सोऽयं दुर्योधनेनार्थोलुब्धेनादीर्घदर्शिना २५ असमर्थःसमारब्धोमूढत्वादविचिंतितः ॥ हितबुद्धीननादृत्यसंमंत्र्यासाधुभिःसह २६ वार्यमाणोऽकरोद्वैरंपांडवैर्गुणवत्तरैः ॥ पूर्वमप्यतिदुःशीलोनधैर्यंकर्तुमर्हति २७ तपत्यर्थेविपन्नेहिमित्राणांनकृतंवचः ॥ अनुवर्तामहेयत्तुतंवयंपापपूरुषम् २८ अस्मानप्यनयस्तस्मात्प्राप्तोऽयंदारुणो महान् ॥ अनेनतुममाद्यापिव्यसनेनोपतापिता २९ बुद्धिश्चिंतयतेकिंचित्स्वंश्रेयोनावबुद्ध्यते ॥ मुह्यतातुमनुष्येणप्रष्टव्याःसुहृदोजनाः ३० तत्रा स्यबुद्धिर्विनयस्तत्रश्रेयश्चपश्यति ॥ ततोस्यमूलंकार्याणांबुद्ध्यानिश्चित्यवैबुधाः ३१ तेऽत्रपृष्टायथाब्रूयुस्तत्कर्तव्यंतथाभवेत् ॥ तेवयंधृतराष्ट्रंचगांधारीं चसमेत्यह ३२ उपपृच्छामहेगत्वाविदुरंचमहामतिम् ॥ तेपृष्टास्तुवदेयुर्यच्छ्रेयोनःसमनंतरम् ३३ तदस्माभिःपुनःकार्यमितिमेनैष्ठिकीमतिः ॥ अनारंभात्तुकार्याणांनार्थःसंपद्यतेक्वचित् ३४

दैवोत्थानमफलमेवंदैवहीनंपुरुषकारस्योत्थानमपितस्मात्द्वाभ्यामप्युत्थातव्यमित्यर्थः १९ कर्मदैवं फलितमाह दैवतेभ्यइति २० ईहांविवृणोति सम्यगिति २१ । २२ योगेअलब्धलाभे २३ । २४ अनीशःअजितचित्तः अवमानीपरमवजानन् २५ । २६ । २७ तपतिसंतापंप्रामोति भीमेनभग्नोरुःसन् २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४

३५ ॥ इतिसौप्तिकेपर्वणिनीलकंठीयेभारतभावदीपेद्वितीयोऽध्यायः ॥ २ ॥ ॥ ७ ॥ ॥ कृपस्येति १ । २ । ३ सर्वात्मानमित्यत्रसर्वःआत्मानमितिच्छेदःसंधिरार्षः ४ । ५ योगेसमुदाये ६ । ७ । ८ । ९ । १० । ११ हेभोजहेकृतवर्मन्न एकमेवसंबोधयन्नकृपस्यवचसिअनादरंसूचयति १२ अकृतधर्मत्वात् अवसरानुरोधात्इदानींममशांतिबुद्धिर्नरोचतेइत्यर्थः १३ । १४ । १५

कृतेपुरुषकारेतुयेषांकार्यंनसिद्ध्यति ॥ दैवेनोपहतास्तेतुनात्रकार्याविचारणा ३५ ॥ इतिश्रीमहाभारतेसौप्तिकेपर्वणिद्रौणिकृपसंवादेद्वितीयोऽध्यायः ॥ २ ॥
॥ संजयउवाच ॥ कृपस्यवचनंश्रुत्वाधर्मार्थसहितंशुभम् ॥ अश्वत्थामामहाराजदुःखशोकसमन्वितः १ दह्यमानस्तुशोकेनप्रदीप्तेनाग्निनायथा ॥ क्रूरंमनस्ततः कृत्वाताबुभौप्रत्यभाषत २ पुरुषेपुरुषेबुद्धिर्यायाभवतिशोभना ॥ तुष्यंतिचपृथक्सर्वेप्रज्ञयातेस्वयास्वया ३ सर्वोहिमन्यतेलोकआत्मानंबुद्धिमत्तरम् ॥ सर्वस्यात्माबहुमतःसर्वाऽऽत्मानंप्रशंसति ४ सर्वस्यहिस्वकाप्रज्ञासाधुवादेप्रतिष्ठिता ॥ परबुद्धिंचनिंदंतिस्वांप्रशंसंतिचासकृत् ५ कारणांतरयोगेनयोगेयेषांसमागतिः ॥ अन्योन्येनचतुष्यंतिबहुमन्यंतिचासकृत् ६ तस्यैवतुमनुष्यस्यसासाबुद्धिस्तदातदा ॥ कालयोगेविपर्यासंप्राप्यान्योन्यंविपद्यते ७ विचित्रत्वात्तुचित्तानांमनुष्याणांविशेषतः ॥ चित्तवैक्लव्यमासाद्यसासाबुद्धिःप्रजायते ८ यथाहिवैद्यःकुशलोज्ञात्वाव्याधिंयथाविधि ॥ भैषज्यंकुरुतेयोगात्प्रशमार्थमितिप्रभो ९ एवंकार्यस्ययोगार्थंबुद्धिंकुर्वंतिमानवाः॥प्रज्ञयाहिस्वयायुक्तास्तांचनिंदंतिमानवाः१०अन्ययायौवनेमर्त्योबुद्ध्याभवतिमोहितः ॥ मध्येऽन्ययाजरायांतुसोऽन्यांरोचयतेमतिं ११ व्यसनंवामहाघोरंसमृद्धिंचापितादृशीम् ॥ अवाप्यपुरुषोभोजकुरुतेबुद्धिवैकृतम् १२ एकस्मिन्नेवपुरुषेसासाबुद्धिस्तदातदा ॥ भवत्यकृतधर्मत्वात्सातस्यैवनरोचते १३ निश्चित्यतुयथाप्रज्ञंयांमतिंसाधुपश्यति ॥ तयाप्रकुरुतेभावंसातस्योद्योगकारिका १४ सर्वोहिपुरुषोभोजसाध्वेतदितिनिश्चितः ॥ कर्तुमारभतेप्रीतोमरणादिषुकर्मसु १५ सर्वेहिबुद्धिमाज्ञायप्रज्ञांवापिस्वकांनराः ॥ चेष्टंतेविविधांचेष्टांहितमित्येवजानते १६ उपजाताव्यसनजायेयमद्यमतिर्मम ॥ युवयोस्तांप्रवक्ष्यामिममशोकविनाशिनीं १७ प्रजापतिःप्रजाःसृष्ट्वाकर्मतासुविधायच ॥ वर्णेवर्णेसमाधत्तेह्येकैकंगुणभाग्गुणम् १८ ब्राह्मणेवेदमग्र्यंतुक्षत्रियेतेजउत्तमम् ॥ दाक्ष्यंवैश्येचशूद्रेचसर्ववर्णानुकूलताम् १९ अदांतोब्राह्मणोऽसाधुर्निस्तेजाःक्षत्रियोऽधमः ॥ अदक्षोनिंद्यतेवैश्यःशूद्रश्चप्रतिकूलवान् २० सोऽस्मिजातःकुलेश्रेष्ठेब्राह्मणानांसुपूजिते ॥ मंदभाग्यतयाऽस्म्येतंक्षत्रधर्ममनुष्ठितः २१ क्षत्रधर्मंविदित्वाऽहंयदिब्राह्मण्यमाश्रितः ॥ प्रकुर्यांसुमहत्कर्मनमेतत्साधुसंमतम् २२ धारयंश्चधनुर्दिव्यंदिव्यान्यस्त्राणिचाहवे ॥ पितरंनिहतंदृष्ट्वाकिंनुवक्ष्यामिसंसदि २३ सोऽहमद्ययथाकामंक्षत्रधर्ममुपास्यतम् ॥ गंताऽस्मिपदवींराज्ञःपितुश्चापिमहात्मनः २४ अद्यस्वप्स्यंतिपांचालाविश्वस्ताजितकाशिनः ॥ विमुक्तयुग्यकवचाहर्षेणचसमन्विताः २५

१६ । १७ । १८ । १९ । २० । २१ विदित्वाआश्रित्यय दिब्राह्मण्यंसंश्रितःसन्शमादिरूपंसुमहत्कर्मप्रकुर्यांतन्मेसाधुसंमतंन अवलंबितस्यचक्षत्रधर्मस्यनिर्वाहोऽवश्यंकर्तव्यइत्यर्थः २२ । २३ गंतास्मिगमिष्यामि पदवीमानृण्यम् २४ । २५

२६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ ॥ इतिसौप्तिकेपर्वणिनीलकंठीयेभारतभावदीपेतृतीयोऽध्यायः ॥ ३ ॥ ॥ ७ ॥ ॥ दिष्टचेति १ । । ३



जयंमत्वाऽऽत्मनश्चैवश्रांताव्यायामकर्षिताः ॥ तेषांनिशिप्रसुप्तानांसुस्थानांशिबिरेस्वके २६ अवस्कंदंकरिष्यामिशिबिरस्याद्यदुष्करम् ॥ तानवस्कंद्यशिबिरे प्रेतभूतविचेतसः २७ सूदयिष्यामिविक्रम्यमघवानिवदानवान् ॥ अद्यतान्सहितान्सर्वान्धृष्टद्युम्नपुरोगमान् २८ सूदयिष्यामिविक्रम्यकक्षंदीप्तइवानलः ॥ निहत्यचैवपांचालान्शांतिंलब्धाऽस्मिसत्तम २९ पांचालेषुभविष्यामिसूदयन्नद्यसंयुगे ॥ पिनाकपाणिःसंक्रुद्धःस्वयंरुद्रःपशुष्विव ३० अद्याहंसर्वपांचालान्निहत्यचनिकृष्यच ॥ अर्दयिष्यामिसंहृष्टोरणेपाडुसुतांस्तथा ३१ अद्याहंसर्वपंचालैःकृत्वाभूमिंशरीरिणीम् ॥ प्रहृत्यैकैकशस्तेषुभविष्याम्यनृणःपितुः ३२ दुर्योधनस्यकर्णस्यभीष्मसैंधवयोरपि ॥ गमयिष्यामिपांचालान्पदवीमद्यदुर्गमाम् ३३ अद्यपांचालराजस्यधृष्टद्युम्नस्यवैनिशि ॥ नचिरात्प्रमथिष्यामिपशोरिवशिरोबलात् ३४ अद्यपांचालपांडूनांशयितानात्मजान्निशि ॥ खड्गेननिशितेनाजौप्रमथिष्यामिगौतम ३५ अद्यपांचालसेनांतांनिहत्यनिशिसौप्तिके ॥ कृतकृत्यःसुखीचैवभविष्यामिमहामते ३६ ॥ इतिश्रीमहाभारतेसौप्तिकेपर्वणिद्रौणिमंत्रणायांतृतीयोऽध्यायः ॥ ३ ॥ कृपउवाच ॥ दिष्टयातेप्रतिकर्तव्येमतिर्जातेयमच्युत ॥ नत्वांवारयितुंशक्तोवज्रपाणिरपिस्वयम् १ अनुयास्यावहेत्वांतुप्रभातेसहितावुभौ ॥ अद्यरात्रौविश्रमस्वविमुक्तकवचध्वजः २ अहंत्वामनुयास्यामिकृतवर्माचसात्वतः ॥ परानभिमुखंयांतंरथावास्थायदंशितौ ३ आवाभ्यांसहितःशत्रून्श्वोनिहंतासमागमे ॥ विक्रम्यरथिनांश्रेष्ठपांचालान्सपदानुगान् ४ शक्तस्त्वमसिविक्रम्यविश्रमस्वनिशामिमाम् ॥ चिरंतेजाग्रतस्तातस्वपतावन्निशामिमाम् ५ विश्रांतश्चविनिद्रश्चस्वस्थचित्तश्चमानद ॥ समेत्यसमरेशत्रून्वधिष्यसिनसंशयः ६ नहित्वांरथिनांश्रेष्ठंप्रगृहीतवरायुधं ॥ जेतुमुत्सहतेशश्वदपिदेवेषुवासवः ७ कृपेणसहितंयांतंगुप्तंचकृतवर्मणा ॥ कोद्रौणिंयुधिसंरब्धंयोधयेदपिदेवराट् ८ तेवयंनिशिविश्रांताविनिद्राविगतज्वराः ॥ प्रभातायांरजन्यांवैनिहनिष्यामशात्रवान् ९ तवह्यस्त्राणिदिव्यानिममचैवनसंशयः ॥ सात्वतोऽपिमहेष्वासोनित्यंयुद्धेषुकोविदः १० तेवयंसहितास्तातसर्वान्शत्रून्समागतान् ॥ प्रसह्यसमरेहत्वाप्रीतिंप्राप्स्यामपुष्कलाम् ११ विश्रमस्वत्वमव्यग्रःस्वपचेमांनिशांसुखम् ॥ अहंचकृतवर्माचत्वांप्रयांतंनरोत्तमम् १२ अनुयास्यावसहितौधन्विनौपरतापनौ ॥ रथिनंत्वरयायांतंरथमास्थायदंशितौ १३ सगत्वाशिबिरंतेषांनामविश्राव्यचाहवे ॥ ततःकर्ताऽसिशत्रूणांयुद्ध्यतांकदनंमहत् १४ कृत्वाचकदनंतेषांप्रभातेविमलेऽहनि ॥ विहरस्वयथाशक्रःसूदयित्वामहासुरान् १५ त्वंहिशक्तोरणेजेतुंपांचालानांवरूथिनीम् ॥ दैत्यसेनामिवक्रुद्धःसर्वदानवसूदनः १६ मयात्वांसहितंसंख्येगुप्तंचकृतवर्मणा ॥ नसहेतविभुःसाक्षाद्वज्रपाणिरपिस्वयम् १७

निहंतानिहनिष्यसि ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७

१८ । १९ । २० । २१ २२ चतुर्थआतुरादीनांचतुर्णांमध्येएकोभागःअमर्षः मेममस्वप्नंअह्लादञ्‌ इतिनाशयेत् तस्मात्स्वप्नेऽयुक्तंतन्नयुज्यते अनुस्मरन्अनुस्मरतः नशाम्यतिअमर्षइत्यर्थः

नचाहंसमरेतातकृतवर्मानचैवहि ॥ अनिर्जित्यरणेपांडून्नचयास्यामिकर्हिचित् १८ हत्वाचसमरेक्रुद्धान्पंचालान्पांडुभिःसह ॥ निवर्त्तिष्यामहेसर्वेहतावास्वर्गगावयम् १९ सर्वोपायैःसहायास्तेप्रभातेवयमाहवे ॥ सत्यमेतन्महाबाहोप्रब्रवीमितवानघ २० एवमुक्तस्ततोद्रौणिर्मातुलेनाहितंवच ॥ अब्रवीन्मातुलंराजन्क्रोधसंरक्तलोचनः २१ आतुरस्यकुतोनिद्रानरस्यामर्षितस्यच ॥ अर्थांश्चिंतयतश्चापिकामयानस्यवापुनः ॥ तदिदंसमनुप्राप्तंपश्यमेऽद्यचतुष्टयम् २२ पश्यभागचतुर्थोमेस्वप्नमह्नायनाशयेत् ॥ किंनामदुःखंलोकेऽस्मिन्पितुर्वधमनुस्मरन् २३ हृदयंनिर्दहन्मेऽद्यरात्र्यहानिनशाम्यति ॥ यथाचनिहतःपापैःपितामम विशेषतः २४ प्रत्यक्षमपितेसर्वंतन्मेमर्माणिकृंतति ॥ कथंहिमादृशोलोकेमुहूर्तमपिजीवति २५ द्रोणोहतेतियद्वाचःपंचालानांशृणोम्यहम् ॥ धृष्टद्युम्नमहत्त्वातुनाहंजीवितुमुत्सहे २६ समेपितुर्वधाद्वध्यःपांचालायेचसंगताः ॥ विलापोभग्नसक्थस्ययस्तुराज्ञोमयाश्रुतः २७ सपुनर्हृदयंकस्यक्रूरस्यापिननिर्दहेत् ॥ कस्यह्यकरुणस्यापिनेत्राभ्यामश्रुनाव्रजेत् २८ नृपतेर्भग्नसक्थस्यश्रुत्वातादृग्वचःपुनः ॥ यश्चायंमित्रपक्षोमेमयिजीवतिनिर्जितः २९ शोकंमेवर्धयत्येषवारिवेगइवार्णवम् ॥ एकाग्रमनसोमेऽद्यकुतोनिद्राकुतःसुखम् ३० वासुदेवार्जुनाभ्यांचतानहंपरिरक्षितान् ॥ अविषह्यतमान्मन्येमहेंद्रेणापिसत्तम ३१ नचापिशक्तःसंयंतुंकोपमेतंसमुत्थितम् ॥ तंनपश्यामिलोकेऽस्मिन्योमांकोपान्निवर्त्तयेत् ३२ तथैवनिश्चिताबुद्धिरेषासाधुमताामम ॥ वार्तिकैःकथ्यमानस्तुमित्राणांमेपराभवः ३३ पांडवानांचविजयोहृदयंदहतीवमे ॥ अहंतुकदनंकृत्वाशत्रूणामद्यसौप्तिके ॥ ततोविश्रमिताचैवस्वप्ताचविगतज्वरः ३४ ॥ इतिश्रीमहाभारतेसौप्तिकेपर्वणिद्रौणिमंत्रणायांचतुर्थोऽध्यायः ॥ ४ ॥ ॥ कृपउवाच ॥ शुश्रूषुरपिदुर्मेधाःपुरुषोऽनियतेंद्रियः ॥ नालंवेदयितुंकृत्स्नौधर्मार्थावितिमेमतिः १ तथैवतावन्मेधावीविनयंयोनशिक्षते ॥ नचकिंचनजानातिसोऽपिधर्मार्थनिश्चयम् २ चिरंह्यपिजडःशूरःपंडितंपर्युपास्यहि ॥ नसधर्मान्विजानातिदर्वीसूपरसानिव ३ मुहूर्त्तमपितंप्राज्ञःपंडितंपर्युपास्यहि ॥ क्षिप्रंधर्मान्विजानातिजिह्वासूपरसानिव ४ शुश्रूषुस्त्वेवमेधावीपुरुषोनियतेंद्रियः ॥ जानीयादागमान्सर्वान्ग्राह्यंचनविरोधयेत् ५ अनेयस्त्ववमानीयोदुरात्मापापपूरुषः ॥ दिष्टमुत्सृज्यकल्याणंकरोतिबहुपापकम् ६ नाथवंतंतुसुहृदःप्रतिषेधंतिपातकात् ॥ निवर्त्ततेतुलक्ष्मीवान्नालक्ष्मीवान्निवर्त्तते ७ यथाह्युच्चावचैर्वाक्यैःक्षिप्तचित्तोनियम्यते ॥ तथैवसुहृदाशक्योनशक्यस्त्ववसीदति ८ तथैवसुहृदंप्राज्ञंकुर्वाणंकर्मपापकम् ॥ प्रज्ञाःसंप्रतिषेधंतियथाशक्तिपुनःपुनः ९ सकल्याणेमनःकृत्वानियम्यात्मानमात्मना ॥ कुरुमेवचनंतातयेनपश्चान्नतप्यसे १०

सार्द्धश्लोकः २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ स्वप्तास्वप्स्यामि ३४ ॥ इतिसौप्तिकेपर्वणिनीलकंठीये भारतभावदीपेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ५ ॥ ॥

शुश्रूषुरिति दुर्मेधाःमूढः अनियतेतिच्छेदः १ । २ । ३ । ४ । ५ अनेयःसन्मार्गंनेतुमशक्यःदिष्टमुपदिष्टं ६ । ७ । ८ । ९ । १०

११।१२।१३ अप्लवेइतिच्छेदः १४।१५।१६।१७ विदलीकृतःदलितः १८ प्रत्यक्षामिति दुष्टोदौष्ट्येनैववर्जेतव्यइत्यर्थः १९।२०।२१।२२ अधर्मेणनाभेरधस्तात्प्रहारेण २३।२४ वार्तिकाणां वार्ता

नवधःपूज्यतेलोकेसुप्तानामिहधर्मतः ॥ तथैवापास्तशस्त्राणांविमुक्तरथवाजिनाम् ११ येचब्रूयुस्तवास्मीतियेचस्युःशरणागताः ॥ विमुक्तमूर्धजायेचयेचा पिहतवाहनाः १२ अद्यस्वप्स्यंतिपंचालाविमुक्तकवचाविभो ॥ विश्वस्तारजनींसर्वेप्रेताइवविचेतसः १३ यस्तेषांतदवस्थानांद्रुह्येतपुरुषोऽनृजुः ॥ व्यक्तं सनरकेमज्जेदगाधेविपुलेऽप्लुवे १४ सर्वास्त्रविदुषांलोकेश्रेष्ठस्त्वमसिविश्रुतः ॥ नचतेजातुलोकेस्मिन्सुसूक्ष्ममपिकिल्बिषम् १५ त्वंपुनःसूर्यसंकाशःश्वोभूत उदितेरवौ ॥ प्रकाशेसर्वभूतानांविजेतायुधिशात्रवान् १६ असंभावितरूपंहित्वयिकर्मविगर्हितम् ॥ शुक्लेरक्तमिवन्यस्तंभवेदितिमतिर्मम १७ ॥ अश्वत्थामो वाच ॥ एवमेवयथाऽऽत्थत्वंमातुलेहनसंशयः ॥ तैस्तुपूर्वमयंसेतुःशतधाविदलीकृतः १८ प्रत्यक्षंभूमिपालानांभवतांचापिसन्निधौ ॥ न्यस्तशस्त्रोममपिता धृष्टद्युम्नेनपातितः १९ कर्णश्चपतितेचक्रेरथस्यरथिनांवरः ॥ उत्तमेव्यसनेमग्नोहतोगांडीवधन्वना २० तथाशांतनवोभीष्मोन्यस्तशस्त्रोनिरायुधः ॥ शिखं डिनंपुरस्कृत्यहतोगांडीवधन्वना २१ भूरिश्रवामहेष्वासस्तथाप्रायगतोरणे ॥ क्रोशतांभूमिपालानांयुयुधानेनपातितः २२ दुर्योधनश्चभीमेनसमेत्यगदयार णे॥पश्यतांभूमिपालानामधर्मेणनिपातितः २३ एकाकीबहुभिस्तत्रपरिवार्यमहारथैः ॥ अधर्मेणनरव्याघ्रोभीमसेनेनपातितः २४ विलापोभग्नसक्थस्ययोमेरा ज्ञःपरिश्रुतः ॥ वार्तिकाणांकथयतांसमेमर्माणिकृंतति २५ एवंचाधर्मिकाःपापाःपांचालाभिन्नसेतवः ॥ तानेवंभिन्नमर्यादान्किंभवान्नविगर्हति २६ पितृहंतॄनहं हत्वापांचालान्निशिसौप्तिके ॥ कामंकीटःपतंगोवाजन्मप्राप्यभवामिवै २७ त्वरेचाहमनेनाद्ययदिदंमेचिकीर्षितम् ॥ तस्यमेत्वरमाणस्यकुतोनिद्राकुतःसुखम् २८ नसजातःपुमाँल्लोकेकश्चिन्नसभविष्यति ॥ योमेव्यावर्तयेदेतांवधेतेषांकृतांमतिं २९ ॥ संजयउवाच॥ एवमुक्त्वामहाराजद्रोणपुत्रःप्रतापवान्॥ एकांतेयो जयित्वाश्वान्प्रायादभिमुखःपरान् ३० तमब्रूतांमहात्मानौभोजशारद्वतावुभौ ॥ किमर्थंस्यंदनोयुक्तःकिंचकार्यंचिकीर्षितम् ३१ एकसार्थंप्रयातौस्वस्त्वयासह नरर्षभ ॥ समदुःखसुखौचापिनावांशंकितुमर्हसि ३२ अश्वत्थामातुसंक्रुद्धःपितुर्वधमनुस्मरन् ॥ ताभ्यांतथ्यंतथाऽऽचख्यौयदस्यात्मचिकीर्षितम् ३३ हत्वा शतसहस्राणियोधानांनिशितैःशरैः ॥ न्यस्तशस्त्रोममपिताधृष्टद्युम्नेनपातितः ३४ तंतथैवहनिष्यामिन्यस्तधर्माणमद्यवै ॥ पुत्रंपांचालराजस्यपापंपापेन कर्मणा ३५ कथंचनिहतःपापःपांचाल्यःपशुवन्मया ॥ शस्त्रेणविजिताँल्लोकान्नाप्नुयादितिमेमतिः ३६ क्षिप्रंसन्नद्धकवचौसखड्गावात्तकार्मुकौ ॥ मामास्थाय प्रतीक्षेतांरथवर्यौपरंतपौ ३७ इत्युक्त्वारथमास्थायप्रायादभिमुखःपरान् ॥ तमन्वगात्कृपोराजन्कृतवर्माचसात्वतः ३८

हराणां २५ । २६ । २७ । २८ । २९ । ३० । ३१ एकसार्थंप्रयातौस्वःएकसाहित्येनप्रयत्नवंतौस्वः अस्तेर्लटउत्तमस्यद्विवचनम् ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८

३९ । ४० इतिसौप्तिकेपर्वणिनीलकंठीये भारतभावदीपेपंचमोध्यायः ॥ ५ ॥ ॥ द्वारदेशेइति १ । २ । ३ । ४ बद्धाःमहासर्पाःअंगदरूपायेनतं अग्निज्वालाव्याप्तमुखंकुद्धमित्यर्थः ५

तेप्रयाताव्यरोचंतपरानभिमुखास्त्रयः ॥ हूयमानायथायज्ञेसमिद्धाहव्यवाहनाः ३९ ययुश्चशिबिरंतेषांसंप्रसुप्तजनंविभो ॥ द्वारदेशंतुसंप्राप्यद्रौणिस्तस्थौ महारथः ४० ॥ इतिश्रीमहाभारतेसौप्तिकेपर्वणिद्रौणिगमनेपंचमोध्यायः ॥ ५ ॥ ॥ ॥ ॥ धृतराष्ट्रउवाच ॥ द्वारदेशेततोद्रौणिमवस्थितमवेक्ष्य तौ ॥ अकुर्वतांभोजकृपौकिंसंजयवदस्वमे १ ॥ संजयउवाच ॥ कृतवर्माणमामंत्र्यकृपंचसमहारथः ॥ द्रौणिर्मन्युपरीतात्माशिबिरद्वारमागमत् २ तत्रभूतं महाकायंचंद्रार्कसदृशद्युतिम् ॥ सोऽपश्यद्द्वारमाश्रित्यतिष्ठंतंलोमहर्षणम् ३ वसानंचर्मवैयाघ्रंमहारुधिरविस्रवम् ॥ कृष्णाजिनोत्तरासंगंनागयज्ञोपवीतिनम् ४ बाहुभिःस्वायतैःपीनैर्नानाप्रहरणोद्यतैः ॥ बद्धांगदमहासर्पंज्वालामालाकुलाननम् ५ दंष्ट्राकरालवदनंव्यादितास्यंभयानकम् ॥ नयनानांसहस्रैश्चविचित्रैरभिभूषितम् ६ नैवतस्यवपुःशक्यंप्रवक्तुंवेषएवच ॥ सर्वथातुतदालक्ष्यस्फुटेयुरपिपर्वताः ७ तस्यास्यनासिकाभ्यांचश्रवणाभ्यांचसर्वशः ॥ तेभ्यश्चाक्षिसहस्रेभ्यःप्रादुरासन्महार्चिषः ८ तथातेजोमरीचिभ्यःशंखचक्रगदाधराः ॥ प्रादुरासन्हृषीकेशाःशतशोऽथसहस्रशः ९ तदत्यद्भुतमालोक्यभूतंलोकभयंकरम् ॥ द्रौणिरव्यथितोदिव्यैरस्त्रवर्षैरवाकिरत् १० द्रौणिमुक्तांच्छरांस्तांस्तुतद्भूतंमहदग्रसत् ॥ उदधेरिववार्योघान्पावकोवडवामुखः ११ अग्रसत्तांस्तथाभूतंद्रौणिनाप्रहितान्शरान् ॥ अश्वत्थामातुसंप्रेक्ष्यशरौघांस्तान्निरर्थकान् १२ रथशक्तिंमुमोचास्मैदीप्तामग्निशिखामिव ॥ सातमाहत्यदीप्ताग्रारथशक्तिरदीर्यत १३ युगांतेसूर्यमाहत्यमहोल्केवदिवच्युता ॥ अथहेमत्सरुंदिव्यंखड्गमाकाशवर्चसम् १४ कोशात्समुद्बबर्हाशुबिलाद्दीप्तमिवोरगम् ॥ ततःखड्गवरंधीमानभूतायप्राहिणोत्तदा १५ सतदासाद्यभूतंवैविलयंनकुलवद्ययौ ॥ ततःसकुपितोद्रौणिरिंद्रकेतुनिभांगदाम् १६ ज्वलंतींप्राहिणोत्तस्मैभूतंतामपिचाग्रसत् ॥ ततः सर्वायुधाभावेवीक्षमाणस्ततस्ततः १७ अपश्यत्कृतमाकाशमनाकाशंजनार्दनैः ॥ तदद्भुततमंदृष्ट्वाद्रोणपुत्रोनिरायुधः १८ अब्रवीदतिसंतप्तःकृपवाक्यमनुस्मरन् ॥ ब्रुवतामप्रियंपथ्यंसुहृदांनशृणोतियः १९ सशोचत्यापदंप्राप्ययथाऽहमतिवर्त्यतौ ॥ शास्त्रदृष्टानविद्वान्यःसमतीत्यजिघांसति २० सपथःप्रच्युतोधर्मात्कुपथेप्रतिहन्यते ॥ गोब्राह्मणनृपस्त्रीषुसख्युर्मातुर्गुरोस्तथा २१ हीनप्राणजडांधेषुसुप्तभीतोत्थितेषुच ॥ मत्तोन्मत्तप्रमत्तेषुनशस्त्राणिचपातयेत् २२ इत्येवंगुरुभिःपूर्वमुपदिष्टंनृणांसदा ॥ सोऽहमुत्क्रम्यपंथानंशास्त्रदृष्टंसनातनम् २३ अमार्गेणैवमारभ्यघोरामापदमागतः ॥ तांचापदंघोरतरांप्रवदंतिमनीषिणः २४ यदुद्यम्यमहत्कृत्यंभयादपिनिवर्त्तते ॥ अशक्तश्चैवतत्कर्तुंकर्मशक्तिबलादिह २५ नहिदैवाद्गरीयोवैमानुषंकर्मकथ्यते ॥ मानुष्यंकुर्वतःकर्मयदिदैवान्नसिध्यति २६

नयनानांसहस्रैरित्यनेनालौकिकत्वंदर्शितम् । ६ । ७ । ८ । ९ । १० । ११ । १२ रथशक्तिंचक्रं १३ युगांतेमिथुनराशिंरतेअतिदीप्तम् १४ । १५ । १६ । १७ अनाकाशंनिरवकाशं १८ । १९ अतिवर्त्यंअतिक्रम्य तौतयोःकृपकृतवर्मणोर्वाक्यमितिशेषः शास्त्रदृष्टान्अवध्यत्वेनशास्त्रेज्ञातान्समतीत्यशास्त्रमुल्लंघ्य २० । २१ । २२ । २३ । २४ । २५ । २६

२७ । २८ । २९ । ३० । ३१ । ३२ देवानत्यगात् देवेभ्योऽधिकः ३३ । ३४ ॥ इतिसौप्तिकेपर्वणिनीलकंठीये भारतभावदीपेषष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ एवमिति १ । २

सपथःप्रच्युतोधर्माद्विपदंप्रतिपद्यते ॥ प्रतिज्ञानंह्यविज्ञानंप्रवदंतिमनीषिणः २७ यदारभ्यक्रियांकांचिद्भयादिहनिवर्तते ॥ तदिदंदुष्प्रणीतेनभयंमांसमुपस्थितम् २८ नहिद्रोणसुतःसंख्येनिवर्तेतकथंचन ॥ इदंचसुमहद्भूतंदैवदंडमिवोद्यतम् २९ नचैतदभिजानामिचिंतयन्नपिसर्वथा ॥ ध्रुवंयेयमधर्मेमेप्रवृत्ता कलुषामतिः ३० तस्याःफलमिदंघोरंप्रतिघातायकल्पते ॥ तदिदंदैवविहितंममसंख्येनिवर्तनम् ३१ नान्यत्रदैवादुद्यंतमिहशक्यंकथंचन ॥ सोऽहमद्यमहादेवंप्रपद्येशरणंविभुम् ३२ दैवदंडमिमंघोरंसहिमेनाशयिष्यति ॥ कपर्दिनंदेवदेवमुमापतिमनामयम् ३३ कपालमालिनंरुद्रंभगनेत्रहरंहरम् ॥ सहिदेवोत्यगाद्देवांस्तपसाविक्रमेणच ॥ तस्माच्छरणमभ्येमिगिरिशंशूलपाणिनम् ३४ ॥ इतिश्रीमहाभारतेसौप्तिकेपर्वणिद्रौणिचिंतायांषष्ठोऽध्यायः ॥ ६ ॥ ॥

॥ संजयउवाच ॥ एवंसंचिंतयित्वातुद्रोणपुत्रोविशांपते ॥ अवतीर्यरथोपस्थाद्देवेशंप्रणतःस्थितः १ ॥ द्रौणिरुवाच ॥ उग्रंस्थाणुंशिवंरुद्रंशर्वमीशानमीश्वरम् ॥ गिरिशंवरदंदेवंभवभावनमीश्वरम् २ शितिकंठमजंशुक्रंदक्षक्रतुहरंहरम् ॥ विश्वरूपंविरूपाक्षंबहुरूपमुमापतिं ३ श्मशानवासिनंदृप्तंमहागणपतिंविभुम् ॥ खट्वांगधारिणंरुद्रंजटिलंब्रह्मचारिणम् ४ मनसासुविशुद्धेनदुष्करेणाल्पचेतसा ॥ सोऽहमात्मोपहारेणयक्ष्येत्रिपुरघातिनम् ५ स्तुतंस्तुत्यंस्तूयमानममोघंकृत्तिवाससम् ॥ विलोहितंनीलकंठमसह्यंदुर्निवारणम् ६ शक्रंब्रह्मसृजंब्रह्मब्रह्मचारिणमेवच ॥ व्रतवंतंतपोनिष्ठमनंतंतपतांगतिम् ७ बहुरूपंगणाध्यक्षंत्र्यक्षंपारिषदप्रियम् ॥ धनाध्यक्षंक्षितिमुखंगौरीहृदयवल्लभम् ८ कुमारपितरंपिंगंगोवृषोत्तमवाहनम् ॥ तनुवाससमत्युग्रमुमाभूषणतत्परम् ९ परंपरेभ्यःपरमंपरंयस्मान्नविद्यते ॥ इष्वस्त्रोत्तमभर्तारंदिगंतंदेशरक्षिणम् १० हिरण्यकवचंदेवंचंद्रमौलिविभूषणम् ॥ प्रपद्येशरणंदेवंपरमेणसमाधिना ११ इमांचेदापदंघोरांतराम्यद्यसुदुष्कराम् ॥ सर्वभूतोपहारेणयक्ष्येऽहंशुचिनाशुचिम् १२ इतितस्यव्यवसितंज्ञात्वायोगात्सुकर्मणः ॥ पुरस्तात्कांचनीवेदीप्रादुरासीन्महात्मनः १३ तस्यांवेद्यांतदाराजंश्चित्रभानुरजायत ॥ सदिशोविदिशःखंचज्वालाभिरिवपूरयन् १४ दीप्तास्यनयनाश्चात्रनैकपादशिरोभुजाः ॥ रत्नचित्रांगदधराःसमुद्यतकरास्तथा १५ द्वीपशैलप्रतीकाशाःप्रादुरासन्महागणाः ॥ श्ववराहोष्ट्ररूपाश्चहयगोमायुगोमुखाः १६ ऋक्षमार्जारवदनाव्याघ्रद्वीपिमुखास्तथा ॥ काकवक्त्राःप्लवमुखाःशुकवक्त्रास्तथैवच १७ महाजगरवक्त्राश्चहंसवक्त्राःशितप्रभाः ॥ दार्वाघाटमुखाश्चापिचाषवक्त्राश्चभारत १८ कूर्मनक्रमुखाश्चैवशिशुमारमुखास्तथा ॥ महामकरवक्त्राश्चतिमिवक्त्रास्तथैवच १९ हरिवक्त्राःक्रौंचमुखाःकपोतेभमुखास्तथा ॥ पारावतमुखाश्चैवमद्गुवक्त्रास्तथैवच २० पाणिकर्णाःसहस्राक्षास्तथैवचमहोदराः ॥ निर्मांसाःकाकवक्त्राश्चश्येनवक्त्राश्चभारत २१

३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ प्लवमुखाः मंडूकवक्त्राः १७ दार्वाघाटःपक्षिविशेषः १८ । १९ । २० । २१

२२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ बृहंतःशेफाःमेढ्राणि अंडाःवृषणाः पिंडिकाःजानुनोरधःपश्चाद्भागश्च येषांते बृहच्छेफांडपिंडि

तथैवाशिरसोराजन्नृक्षवक्त्राश्चभारत ॥ प्रदीप्तनेत्रजिह्वाश्चज्वालावर्णास्तथैवच २२ ज्वालाकेशाश्चराजेंद्रज्वलद्रोमचतुर्भुजाः ॥ मेषवक्त्रास्तथैवान्येतथाछागमु खान्नृप २३ शंखाभाःशंखवक्त्राश्चशंखवर्णास्तथैवच ॥ शंखमालापरिकराःशंखध्वनिसमस्वनाः २४ जटाधराःपंचशिखास्तथामुंडाःकृशोदराः ॥ चतुर्दंष्ट्राश्च तुर्जिह्वाःशंकुकर्णाःकिरीटिनः २५ मौंजीधराश्चराजेंद्रतथाकुंचितमूर्धजाः ॥ उष्णीषिणोमुकुटिनश्चारुवक्त्राःस्वलंकृताः २६ पद्मोत्पलापीडधरास्तथामुकुटधा रिणः ॥ माहात्म्येनचसंयुक्ताःशतशोऽथसहस्रशः २७ शतघ्नीवज्रहस्ताश्चतथामुसलपाणयः ॥ भुशुंडीपाशहस्ताश्चदंडहस्ताश्चभारत २८ पृष्ठेषुबद्धेषुधयाश्चित्र बाणोत्कटास्तथा ॥ सध्वजाःसपताकाश्चसघंटाःसपरश्वधाः २९ महापाशोद्यतकरास्तथालगुडपाणयः ॥ स्थूणाहस्ताःखड्गहस्ताःसर्पोच्छ्रितकिरीटिनः ३० महासर्पांगदधराश्चित्राभरणधारिणः ॥ रजोध्वजाःपंकदिग्धाःसर्वेशुक्लांबरस्रजः ३१ नीलांगाःपिंगलांगाश्चमुंडवक्त्रास्तथैवच ॥ भेरीशंखमृदंगांश्चझर्झरानकगो मुखान् ३२ अवादयन्पारिषदाःप्रहृष्टाःकनकप्रभाः ॥ गायमानास्तथैवान्येनृत्यमानास्तथाऽपरे ३३ लंघयंतःप्लवंतश्चवल्गंतश्चमहारथाः ॥ धावंतोजवनामुंडाः पवनोद्धूतमूर्धजाः ३४ मत्ताइवमहानागाविनदंतोमुहुर्मुहुः ॥ सुभीमाघोररूपाश्चशूलपट्टिशपाणयः ३५ नानाविरागवसनाश्चित्रमाल्यानुलेपनाः ॥ रत्नचित्रां गदधराःसमुद्यतकरास्तथा ३६ हंतारोद्विषतांशूराःप्रसह्यासह्यविक्रमाः ॥ पातारोऽसृग्वसौघानांमांसांत्रकृतभोजनाः ३७ चूडालाःकर्णिकाराश्चप्रहृष्टाःपिठरोद राः ॥ अतिहृस्वातिदीर्घाश्चप्रलंबाश्चातिभैरवाः ३८ विकटाःकाललंबोष्ठाबृहच्छेफांडपिंडिकाः ॥ महार्हनानाविकटामुंडाश्चजटिलाःपरे ३९ सार्केंदुग्रहनक्षत्रांद्यां कुर्युस्तेमहीतले ॥ उत्सहेरंश्चयेहंतुंभूतग्रामंचतुर्विधम् ४० येचवीतभयानित्यंहरस्यभ्रुकुटीसहाः ॥ कामकारकरानित्यंत्रैलोक्यस्येश्वरेश्वराः ४१ नित्यानंद प्रमुदितावागीशावीतमत्सराः ॥ प्राप्याष्टगुणमैश्वर्यंयेनयास्यंतिविस्मयम् ४२ येषांविस्मयतेनित्यंभगवान्कर्मभिर्हरः ॥ मनोवाक्कर्मभिर्युक्तैर्नित्यमाराधितश्चयैः ४३ मनोवाक्कर्मभिर्भक्तान्पातिपुत्रानिवौरसान् ॥ पिबंतोऽसृग्वसाश्चान्येक्रुद्धाब्रह्मद्विषांसदा ४४ चतुर्विधात्मकंसोमंयेपिबंतिचसर्वदा ॥ श्रुतेनब्रह्मचर्येणतपसा चदमेनच ४५ येसमाराध्यशूलांकंभवसायुज्यमागताः ॥ यैरात्मभूतैर्भगवान्पार्वत्याचमहेश्वरः ४६ महाभूतगणैर्भुक्तेभूतभव्यभवत्प्रभुः ॥ नानावादित्रहासितक्ष्वे डितोत्कुष्टगर्जितैः ४७ संत्रासयंतस्तेविश्वमश्वत्थामानमभ्ययुः ॥ संस्तुवंतोमहादेवंभाःकुर्वाणाःसुवर्चसः ४८ विवर्धयिषवोद्रौणेर्महिमानंमहात्मनः ॥ जिज्ञासमा नास्तत्तेजःसौप्तिकंचदिदृक्षवः ४९ भीमोग्रपरिघालातशूलपट्टिशपाणयः ॥ घोररूपाःसमाजग्मुर्भूतसंघाःसमंततः ५०

काः ३९ । ४० । ४१ । ४२ । ४३ । ४४ चतुर्विधात्मकंसोमं अन्नरूपं लतारसरूपं अमृतरूपं चंद्रमंडलरूपंचक्रमादध्यात्माधिपज्ञाधिदैवाधिलोकस्थदेवतारूपाइत्यर्थः ४५ । ४६ । ४७ । ४८ । ४९ । ५०

५१ । ५२ । ५३ ततःसौम्येनसोमदैवत्येनमंत्रेण । 'आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं । भवावाजस्यसंगथे' इत्यनेनमंत्रेणआत्मानंशरीरंउपहारंहविष्यंउपाहरत्उपसादितवान् मंत्रार्थस्तु हेसोम त्वंआप्यायस्व कथं तेत्वांप्रतिविश्वतःसर्वात्मनावृष्ण्यंवृष्णेरीश्वरस्याविर्भावस्थानंशरीरंएतप्राविशतु ततश्चतेनशरीरेणाप्यायितस्त्वंसंगथेसंग्रामेवाजस्यवीर्यस्यदाताभव कर्मणिषष्ठी वाजं

जनयेयुर्भयंयेस्मत्रैलोक्यस्यापिदर्शनात् ॥ तान्प्रेक्षमाणोऽपिव्यथांनचकारमहाबलः ५१ अथद्रौणिर्धनुष्पाणिर्बद्धगोधांगुलित्रवान् ॥ स्वयमेवात्मनात्मानमुपहारमुपाहरत् ५२ धनूंषिसमिधस्तत्रपवित्राणिसिताःशराः ॥ हविरात्मवतश्चात्मातस्मिन्भारतकर्मणि ५३ ततःसौम्येनमंत्रेणद्रोणपुत्रःप्रतापवान् ॥ उपहारंमहामन्युरथात्मानमुपाहरत् ५४ तंरुद्रंरौद्रकर्माणंरौद्रैःकर्मभिरच्युतम् ॥ अभिष्टुत्यमहात्मानमित्युवाचकृतांजलिः ५५ ॥ द्रौणिरुवाच ॥ इममात्मानमद्याहंजातमांगिरसेकुले ॥ स्वग्नौजुहोमिभगवन्प्रतिगृह्णीष्वमांबलिं ५६ भवद्भक्त्यामहादेवपरमेणसमाधिना ॥ अस्यामापदिविश्वात्मन्नुपाकुर्मितवाग्रतः ५७ त्वयिसर्वाणिभूतानिसर्वभूतेषुचासिवै ॥ गुणानांहिप्रधानानामेकत्वंत्वयितिष्ठति ५८ सर्वभूताश्रयविभोहविर्भूतमवस्थितम् ॥ प्रतिगृहाणमांदेवयद्यशक्याःपरेमया ५९ इत्युक्त्वाद्रौणिरास्थायतांवेदींदीप्तपावकाम् ॥ संत्यज्यात्मानमारुह्यकृष्णवर्त्मन्युपाविशत् ६० तमूर्ध्वबाहुंनिश्चेष्टंदृष्ट्वाहविरुपस्थितम् ॥ अब्रवीद्भगवान्साक्षान्महादेवोहसन्निव ६१ सत्यशौचार्जवत्यागैस्तपसानियमेनच ॥ क्षांत्याभक्त्याचधृत्याचबुद्ध्याचवचसातथा ६२ यथावदहमाराद्धःकृष्णेनाक्लिष्टकर्मणा ॥ तस्मादिष्टतमःकृष्णादन्योममनविद्यते ६३ कुर्वतातातसंमानंत्वांचजिज्ञासतामया ॥ पांचालाःसहसागुप्तामायाश्चबहुशःकृताः ६४ कृतस्तस्यैवसंमानःपांचालान्रक्षतामया ॥ अभिभूतास्तुकालेननैषामद्यास्तिजीवितम् ६५ एवमुक्त्वामहात्मानंभगवानात्मनस्तनुम् ॥ आविवेशददौचास्मैविमलंखड्गमुत्तमम् ६६ अथाविष्टोभगवताभूयोजज्वालतेजसा ॥ वेगवांश्चाभवद्युद्धेदेवसृष्टेनतेजसा ६७ तमदृश्यानिभूतानिरक्षांसिचसमाद्रवन् ॥ अभितःशत्रुशिबिरंयांतंसाक्षादिवेश्वरम् ६८ ॥ इतिश्रीमहाभारतेसौप्तिकेपर्वणिद्रौणिकृतशिवार्चनेसप्तमोऽध्यायः ॥ ७ ॥ ॥ ७ ॥

॥ धृतराष्ट्रउवाच ॥ तथाप्रयातेशिबिरंद्रोणपुत्रेमहारथे ॥ कच्चित्कृपश्चभोजश्चभयार्तौनव्यवर्तताम् १ कच्चिन्नवारितौक्षुद्रैरक्षिभिर्नोपलक्षितौ ॥ असह्यमितिमन्वानौननिवृत्तौमहारथौ २ कच्चिदुन्मथ्यशिबिरंहत्वासोमकपांडवान् ॥ दुर्योधनस्यपदवींगतौपरमिकांरणे ३ पंचालैर्निहतौवीरौकच्चित्सुस्वपतांक्षितौ ॥ कच्चित्ताभ्यांकृतंकर्मतन्ममाचक्ष्वसंजय ४ ॥ संजयउवाच ॥ तस्मिन्प्रयातेशिबिरंद्रोणपुत्रेमहात्मनि ॥ कृपश्चकृतवर्माचशिबिरद्वार्यतिष्ठताम् ५ अश्वत्थामातुतौदृष्ट्वायत्नवंतौमहारथौ ॥ प्रहृष्टःशनकैराजन्निदंवचनमब्रवीत् ६ यत्तौभवंतौपर्याप्तौसर्वक्षत्रस्यनाशने ॥ किंपुनर्योधशेषस्यप्रसुप्तस्यविशेषतः ७

भवप्रापय भूमाप्राप्तानित्यस्यरूपं ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३।६४ । ६५ । ६६ । ६७ । ६८ ॥ इतिसौप्तिकेपर्वणिनीलकंठीयेभारतभावदीपेसप्तमोऽध्यायः॥ ७ ॥
तथेति १ कच्चिन्नोपलक्षितावित्यत्रकाचिदित्यावर्त्तते २ । ३ पांचालैःपूर्वंनिहतौसंतौस्वपतांकच्चित्कोपात्स्वपतांपंचालानांकर्मप्रख्यातांभ्यांकाच्चित्कृतमितिसंबंधः ४ । ५ । ६ । ७

वंपुत्रांप्राप्येतिशेषः ८।९ उद्देशज्ञोधृष्टद्युम्नस्थलज्ञः १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ पादाष्ठीलैःपादग्रंथिभिः पार्ष्णिघातैरित्यर्थः २४

अहंप्रवेक्ष्येशिबिरंचरिष्यामिचकालवत् ॥ यथानकश्चिदपिवांजीवन्मुच्येतमानवः ८ तथाभवद्भर्थांकार्यंस्यादितिमेनिश्चितामतिः ॥ इत्युक्त्वाप्राविशद्द्रौणिःपार्थानांशिबिरंमहत् ९ अद्वारेणाभ्यवस्कंद्यविहायभयमात्मनः ॥ सप्रविश्यमहाबाहुरुद्देशज्ञश्चतस्यह १० धृष्टद्युम्नस्यनिलयंशनकैरभ्युपागमत् ॥ तेतुकृत्वामहत्कर्मश्रांताश्चबलवद्रणे ११ प्रसुप्ताश्चैवविध्वस्ताःसमेत्यपरिधाविताः ॥ अथप्रविश्यतद्वेश्मधृष्टद्युम्नस्यभारत १२ पांचाल्यंशयनेद्रौणिरपश्यत्सुप्तमंतिकात् ॥ क्षौमावदातेमहतिस्पर्द्ध्यास्तरणसंवृते १३ माल्यप्रवरसंयुक्तेधूपैश्चूर्णश्चवासिते ॥ तंशयानंमहात्मानंविस्रब्धमकुतोभयम् १४ प्राबोधयतपादेनशयनस्थंमहीपते ॥ संबुध्यचरणस्पर्शादुत्थायरणदुर्मदः १५ अभ्यजानादमेयात्माद्रोणपुत्रंमहारथम् ॥ तमुत्पतंतंशयनादश्वत्थामामहाबलः १६ केशेष्वालभ्यपाणिभ्यांनिष्पिपेषमहीतले ॥ सबलंतेननिष्पिष्टःसाध्वसेनचभारत १७ निद्रयाचैवपांचाल्योनाशकच्चेष्टितुंतदा ॥ तमाक्रम्यपदाराजन्कंठेचोरसिचोभयोः १८ नदंतंविस्फुरंतंचपशुमारममारयत् ॥ तुदन्नखैस्तुसद्रौणिंनातिव्यक्तमुदाहरत् १९ आचार्यपुत्रशस्त्रेणजहिमांमाचिरंकृथाः ॥ त्वत्कृतेसुकृताँल्लोकान्गच्छेयंद्विपदांवर २० एवमुक्त्वातुवचनंविररामपरंतपः ॥ सुतःपंचालराजस्यआक्रांतोबलिनाभृशम् २१ तस्याव्यक्तांतुतांवाचंसंश्रुत्यद्रौणिरब्रवीत् ॥ आचार्यघातिनांलोकानसंतिकुलपांसन २२ तस्माच्छस्त्रेणनिधनंनत्वमर्हसिदुर्मते ॥ एवंब्रुवाणस्तंवीरंसिंहोमत्तमिवद्विपम् २३ मर्मस्वभ्यवधीत्क्रुद्धःपादाष्ठीलैःसुदारुणैः ॥ तस्यवीरस्यशब्देनमार्यमाणस्यवेश्मनि २४ अबुध्यंतमहाराजस्त्रियोयेचास्यरक्षिणः ॥ तेदृष्ट्वाधर्षयंतंतमतिमानुषविक्रमम् २५ भूतमेवाध्यवस्यंतोनस्मप्रव्याहरन्भयात् ॥ तंतुतेनाभ्युपायेनगमयित्वायमक्षयम् २६ अध्यतिष्ठततेजस्वीरथंप्राप्यसुदर्शनम् ॥ सतस्यभवनाद्राजन्निष्क्रम्यानादयन्दिशः २७ रथेनशिबिरंप्रायाज्जिघांसुर्द्विषतोबली ॥ अपक्रांतेततस्तस्मिन्द्रोणपुत्रेमहारथे २८ सहितैरक्षिभिःसर्वैःप्राणेदुर्योषितस्तदा ॥ रांजानंनिहतंदृष्ट्वाभृशंशोकपरायणाः २९ व्याक्रोशन्क्षत्रियाःसर्वेधृष्टद्युम्नस्यभारत ॥ तासांतुतेनशब्देनसमीपेक्षत्रियर्षभाः ३० क्षिप्रंचसमनह्यंतकिमेतदितिचाब्रुवन् ॥ स्त्रियस्तुराजन्वित्रस्ताभारद्वाजंनिरीक्ष्यताः ३१ अब्रुवन्दीनकंठेनक्षिप्रमाद्रवतेतिवै ॥ राक्षसोवामनुष्योवानैनंजानीमहेवयम् ३२ हत्वापांचालराजानंरथमारुह्यतिष्ठति ॥ ततस्तेयोधमुख्याश्चसहसापर्यवारयन् ३३ सतानापततःसर्वान्रुद्रास्त्रेणव्यपोथयत् ॥ धृष्टद्युम्नंचहत्वासतांश्चैवास्यपदानुगान् ३४ अपश्यच्छयनेसुप्तमुत्तमौजसमंतिके ॥ तमप्याक्रम्यपादेनकंठेचोरसितेजसा ३५ तथैवमारयामासविनर्दंतमरिंदमम् ॥ युधामन्युश्चसंप्राप्तोमत्वातंरक्षसाहतम् ३६ गदामुद्यम्यवेगेनहृदिद्रौणिमताडयत् ॥ तदभिद्रुत्यजग्राहक्षितौचैनमपातयत् ३७

२५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७

३८ । ३९ । ४०।४१ । ४२ तैश्छिन्नगात्रैर्विस्फुरद्भिस्तेषां शरीरादुच्छलद्भी रक्तबिंदुभिरित्यर्थः असेः शोणितार्द्रस्योद्यमनान्मुष्टिद्वारा लोहितधारा बाहुमूलमायाति यत्रासिः क्षिप्यते ततोऽपिस्था



विस्फुरंतं च पशुवत्तथैवैनममारयत् ॥ तथा स वीरो हत्वा तं ततोऽन्यान्समुपाद्रवत् ३८ संसुप्तानेव राजेंद्र तत्र तत्र महारथान् ॥ स्फुरतो वेपमानांश्च शमितेव पशून्मखे ३९ ततो निस्त्रिंशमादाय जघानान्यान्पृथक्पृथक् ॥ भागशो विचरन्मार्गानसियुद्धविशारदः ४० तथैव गुल्मे संप्रेक्ष्य शयानान्मध्यगौल्मिकान् ॥ श्रांतान्व्यस्तायुधान्सर्वान्क्षणेनैव व्यपोथयत् ४१ योधानश्वान्द्विपांश्चैव प्राच्छिनत्स वरासिना ॥ रुधिरोक्षितसर्वांगः कालसृष्ट इवांतकः ४२ विस्फुरद्भिश्च तैर्द्रौणिर्निस्त्रिंशस्योद्यमेन च ॥ आक्षेपणेन चैवासेस्त्रिधा रक्तोक्षितोऽभवत् ४३ तस्य लोहितरक्तस्य दीप्तखड्गस्य युध्यतः ॥ अमानुष इवाकारो बभौ परमभीषणः ४४ ये त्वजाग्रंत कौरव्य तेऽपि शब्देन मोहिताः ॥ निरीक्ष्यमाणा अन्योन्यं दृष्ट्वा दृष्ट्वा प्रविव्यथुः ४५ तद्रूपं तस्य ते दृष्ट्वा क्षत्रियाः शत्रुकर्षिणः ॥ राक्षसं मन्यमानास्तं नयनानि न्यमीलयन् ४६ स घोररूपो व्यचरत्कालवच्छिबिरे ततः ॥ अपश्यद्द्रौपदीपुत्रानवशिष्टांश्च सोमकान् ४७ तेन शब्देन वित्रस्ता धनुर्हस्ता महारथाः ॥ धृष्टद्युम्नं हतं श्रुत्वा द्रौपदेया विशांपते ४८ अवाकिरञ्छरव्रातैर्भारद्वाजमभीतवत् ॥ ततस्तेन निनादेन संप्रबुद्धाः प्रभद्रकाः ४९ शिलीमुखैः शिखंडी च द्रोणपुत्रं समार्दयन् ॥ भारद्वाजः स तान्दृष्ट्वा शरवर्षाणि वर्षतः ५० ननाद बलवन्नादं जिघांसुस्तान्महारथान् ॥ ततः परमसंक्रुद्धः पितुर्वधमनुस्मरन् ५१ अवरुह्य रथोपस्थात्त्वरमाणोऽभिदुद्रुवे ॥ सहस्रचंद्रविमलं गृहीत्वा चर्म संयुगे ५२ खड्गं च विमलं दिव्यं जातरूपपरिष्कृतम् ॥ द्रौपदेयानभिद्रुत्य खड्गेन व्यधमद्बली ५३ ततः स नरशार्दूलः प्रतिविंध्यं महाहवे ॥ कुक्षिदेशेऽवधीद्राजन्स हतोऽन्यपतद्भुवि ५४ प्रासेन विद्ध्वा द्रौणिं तु सुतसोमः प्रतापवान् ॥ पुनश्चासिं समुद्यम्य द्रोणपुत्रमुपाद्रवत् ५५ सुतसोमस्य सासिं तं बाहुं छित्त्वा नरर्षभ ॥ पुनरप्याहनत्पार्श्वे स भिन्नहृदयोऽपतत् ५६ नाकुलिस्तु शतानीको रथचक्रेण वीर्यवान् ॥ दोर्भ्यामुत्क्षिप्य वेगेन वक्षस्येनमताडयत् ५७ अताडयच्छतानीकं मुक्तचक्रं द्विजस्तु सः ॥ स विह्वलो ययौ भूमिं ततोऽस्यापाहरच्छिरः ५८ श्रुतकर्मा तु परिघं गृहीत्वा समताडयत् ॥ अभिद्रुत्य ययौ द्रौणिं सव्ये स फलके भृशम् ५९ स तु तं श्रुतकर्माणमास्ये जघ्ने वरासिना ॥ स हतोऽन्यपतद्भूमौ विमूढो विकृताननः ६० तेन शब्देन वीरस्तु श्रुतकीर्तिर्महारथः ॥ अश्वत्थामानमासाद्य शरवर्षैरवाकिरत् ६१ तस्यापि शरवर्षाणि चर्मणा प्रतिवार्य सः ॥ सकुंडलं शिरः कायाद्भ्राजमानमुपाहरत् ६२ ततो भीष्मनिहंतारं सह सर्वैः प्रभद्रकैः ॥ अहनत्सर्वतो वीरं नानाप्रहरणैर्बली ६३ शिलीमुखेन चान्येन भ्रुवोर्मध्ये समार्पयत् ॥ स तु क्रोधसमाविष्टो द्रोणपुत्रो महाबलः ६४ शिखंडिनं समासाद्य द्विधा चिच्छेद सोऽसिना ॥ शिखंडिनं ततो हत्वा क्रोधाविष्टः परंतपः ६५

नाद्रक्तबिंदवः उच्छलंति तैस्त्रिभिः प्रकारैरेव रक्तोक्षितो न तु स्वदेहस्यान्येन प्रहारादित्यर्थः

४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । फलकेऽताडयदित्यन्वयः ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५

६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ पांडुसृंजयान्पांडवसंबंधिनःसृंजयान् पांडोर्गोत्रापत्यानिसृंजयाश्चतान्वा ८० । ८१ । ८२ । ८३

प्रभद्रकगणान्सर्वानभिदुद्राववेगवान् ॥ यच्चशिष्टंविराटस्यबलंतुभृशमाद्रवत् ६३ द्रुपदस्यचपुत्राणांपौत्राणांसुहृदामपि ॥ चकारकदनंघोरंदृष्ट्वादृष्ट्वामहाबलः
६७ अन्यानन्यांश्चपुरुषानभिसृत्याभिसृत्यच ॥ न्यकृंतदसिनाद्रौणिरसिमार्गविशारदः ६८ कालींरक्तास्यनयनांरक्तमाल्यानुलेपनाम् ॥ रक्तांबरधरामेकांपाश
हस्तांकुटुंबिनीम् ६९ ददृशुःकालरात्रिंतेगायमानामवस्थिताम् ॥ नराश्वकुंजरान्पाशैर्बद्ध्वाघोरैःप्रतस्थुषी ७० वहंतींविविधान्प्रेतान्पाशबद्धान्विमूर्धजान् ॥
तथैवचसदाराजन्न्यस्तशस्त्रान्महारथान् ७१ स्वप्नेसुप्तान्नयंतींतांरात्रिष्वन्यासुमारिष ॥ ददृशुर्योधमुख्यास्तेघ्नंतंद्रौणिंचसर्वदा ७२ यतःप्रभृतिसंग्रामःकुरु
पांडवसेनयोः ॥ ततःप्रभृतितांकन्यामपश्यन्द्रौणिमेवच ७३ तांस्तुदैवहतान्पूर्वंपश्चाद्द्रौणिर्न्यपातयत् ॥ त्रासयन्सर्वभूतानिविनदन्भैरवान्रवान् ७४ तदनु
स्मृत्यतेवीरादर्शनंपूर्वकालिकम् ॥ इदंतदित्यमन्यंतदैवेनोपनिपीडिताः ७५ ततस्तेननिनादेनप्रत्यबुद्ध्यंतधन्विनः ॥ शिबिरेपांडवेयानांशतशोथसहस्रशः ७६
सोच्छिनत्कस्यचित्पादौजघनंचैवकस्यचित् ॥ कांश्चिद्बिभेदपार्श्वेषुकालसृष्टइवांतकः ७७ अत्युग्रप्रतिपिष्टैश्चनदद्भिश्चभृशोत्कटैः ॥ गजाश्वमथितैश्चान्यैर्मही
कीर्णाऽभवत्प्रभो ७८ क्रोशतांकिमिदंकोऽयंकःशब्दःकिंनुकिंकृतम् ॥ एवंतेषांतथाद्रौणिरंतकःसमपद्यत ७९ अपेतशस्त्रसन्नाहान्संनद्धान्पांडुसृंजयान् ॥ प्राहि
णोन्मृत्युलोकायद्रौणिःप्रहरतांवरः ८० ततस्तच्छस्त्रवित्रस्ताउत्पतंतोभयातुराः ॥ निद्रांधानष्टसंज्ञाश्चतत्रतत्रनिलिल्यिरे ८१ ऊरुस्तंभगृहीताश्चकश्मला
भिहतौजसः ॥ विनदंतोभृशंत्रस्ताःसमासीदन्परस्परम् ८२ ततोरथंपुनर्द्रौणिरास्थितोभीमनिःस्वनम् ॥ धनुष्पाणिःशरैरन्यान्प्रेषयद्वैयमक्षयम् ८३ पुनरुत्प
ततश्चापिदूरादपिनरोत्तमान् ॥ शूरान्संपततश्चान्यान्कालरात्र्यैन्यवेदयत् ८४ तथैवस्यंदनाग्रेणप्रमथन्सविधावति ॥ शरवर्षैश्चविविधैरवर्षच्छात्रवांस्ततः ८५
पुनश्चसुविचित्रेणशतचंद्रेणचर्मणा ॥ तेनचाकाशवर्णेनतथाऽचरतसोऽसिना ८६ तथासशिबिरंतेषांद्रौणिराहवदुर्मदः ॥ व्यक्षोभयतराजेंद्रमहाह्रदमिवद्विपः
८७ उत्पेतुस्तेनशब्देनयोधाराजन्विचेतसः ॥ निद्रार्ताश्चभयार्ताश्चव्यधावंतततस्ततः ८८ विस्वरंचुक्रुशुश्चान्येबह्वबद्धंतथाऽवदन् ॥ नचस्मप्रत्यपद्यंतशस्त्रा
णिवसनानिच ८९ विमुक्तकेशाश्चाप्यन्येनाभ्यजानन्परस्परम् ॥ उत्पतंतोऽपतन्श्रांताःकेचित्तत्राभ्रमंस्तदा ९० पुरीषमसृजन्केचित्केचिन्मूत्रंप्रसुस्रुवुः ॥
बंधनानिचराजेंद्रसंछिद्यतुरगाद्विपाः ९१ समंपर्यपतंश्चान्येकुर्वंतोमहदाकुलम् ॥ तत्रकेचिन्नराभीताव्यलीयंतमहीतले ९२ तथैवतान्निपतितानपिंषन्ग
जवाजिनः ॥ तस्मिंस्तथावर्तमानेरक्षांसिपुरुषर्षभ ९३ हृष्टानिव्यनदन्नुच्चैर्मुदाभरतसत्तम ॥ सशब्दःपूरितोराजन्भूतसंघैर्मुदायुतैः ९४ अपूरयद्दिशःसर्वा
दिवंचातिमहान्स्वनः ॥ तेषामार्तरवंश्रुत्वावित्रस्तागजवाजिनः ९५ ८४ । ८५ । ८६ । ८७ । ८८ । ८९ । ९० । ९१ । ९२ । ९३ । ९४ । ९५

३

९६ । ९७ । ९८ अभंजन्गात्राण्यनमयन् अमृद्रन्परस्परंमर्दितवंतः ९९ अपिषन् अपिंषन् १०० । १ कांदिशीकाः भयद्रुताः २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । ११० । ११ । १२ । १३ । १४

मुक्ताःपर्यपतन्राजन्मृद्नंतःशिबिरेजनम् ॥ तैस्तत्रपरिधावद्भिश्चरणोदीरितंरजः ९६ अकरोच्छिबिरेतेषांरजन्यांद्विगुणंतमः ॥ तस्मिंस्तमसिसंजातेप्रमूढाः सर्वतोजनाः ९७ नाजानन्पितरःपुत्रान्भ्रातॄन्भ्रातरएवच ॥ गजोगजानतिक्रम्यनिर्मनुष्याहयाहयान् ९८ अताडयंस्तथाऽभंजंस्तथाऽमृद्नंश्चभारत ॥ ते भग्नाःप्रपतंतिस्मनिघ्नंतश्चपरस्परम् ९९ न्यपातयंस्तथाचान्यान्पातयित्वातदाऽपिषन् ॥ विचेतसःसनिद्राश्चतमसाचावृतानराः १०० जघ्नुःस्वानेवतत्रा थकालेनैवप्रचोदिताः ॥ त्यक्त्वाद्वाराणिचद्वास्थास्तथागुल्मानिगौल्मिकाः १ प्राद्रवंतयथाशक्तिकांदिशीकाविचेतसः ॥ विप्रनष्टाश्चतेऽन्योन्यंनाजानंततथा विभो २ क्रोशंतस्तातपुत्रेतिदैवोपहतचेतसः ॥ पलायतांदिशःस्तेषांस्वानप्युत्सृज्यबांधवान् ३ गोत्रनामभिरन्योन्यमाक्रंदंततनोजनाः ॥ हाहाकारंचकु र्वाणाःपृथिव्यांशेरतेपरे ४ तान्बुद्ध्वारणमध्येऽसौद्रोणपुत्रोन्यवारयत् ॥ तत्रापरेवध्यमानामुहुर्मुहुरचेतसः ५ शिबिरान्निष्पतंतिस्मक्षत्रियाभयपीडिताः ॥ तांस्तुनिष्पतितांस्त्रस्तान्शिबिराज्जीवितैषिणः ६ कृतवर्माकृपश्चैवद्वारदेशेनिजघ्नतुः ॥ विस्रस्तयंत्रकवचान्मुक्तकेशान्कृतांजलीन् ७ वेपमानान्क्षितौभीता न्नैवकांश्चिदमुच्यताम् ॥ नामुच्यततयोःकश्चिन्निष्क्रांतःशिबिराद्बहिः ८ कृपश्चैवमहाराजहार्दिक्यश्चैवदुर्मतिः ॥ भूयश्चैवचिकीर्षंतौद्रोणपुत्रस्यतौप्रियम् ९ त्रिषुदेशेषुददतुःशिबिरस्यहुताशनम् ॥ ततःप्रकाशेशिबिरेखड्गेनपितृनंदनः ११० अश्वत्थामामहाराजव्यचरत्कृतहस्तवत् ॥ कांश्चिदापततोवीरान परांश्चैवधावतः ११ व्ययोजयतखड्गेनप्राणैर्द्विजवरोत्तमः ॥ कांश्चिद्योधान्सखड्गेनमध्येसंछिद्यवीर्यवान् १२ अपातयद्द्रोणपुत्रःसंरब्धस्तिलकांडवत् ॥ नि नदद्भिर्भृशायस्तैर्नराश्वद्विरदोत्तमैः १३ पतितैरभवत्कीर्णामेदिनीभरतर्षभ ॥ मानुषाणांसहस्रेषुहतेषुपतितेषुच १४ उदतिष्ठन्कबंधानिबहून्युत्थायचाप तन् ॥ सायुधान्सांगदान्बाहून्विचकर्तशिरांसिच १५ हस्तिहस्तोपमानूरून्हस्तान्पादांश्चभारत ॥ पृष्ठच्छिन्नान्पार्श्वच्छिन्नान्शिरश्छिन्नांस्तथाऽपरान् १६ समहात्माऽकरोद्द्रौणिःकांश्चिच्चापिपराङ्मुखान् ॥ मध्यदेशेनरानन्यांश्चिच्छेदान्यांश्चकर्णतः १७ अंसदेशेनिहत्यान्यान्कायेप्रावेशयच्छिरः ॥ एवंविचर तस्तस्यनिघ्नतःसुबहून्नरान् १८ तमसारजनीघोराबभौदारुणदर्शना ॥ किंचित्प्राणैश्चपुरुषैर्हतैश्चान्यैःसहस्रशः १९ बहुनाचगजाश्वेनभूरभूद्भीमदर्शना ॥ यक्षरक्षःसमाकीर्णैरथाश्वद्विपदारुणे १२० क्रुद्धेनद्रोणपुत्रेणसंछन्नाःप्रापतन्भुवि ॥ भ्रातॄनन्येपितॄनन्येपुत्रानन्येविचुक्रुशुः २१ केचिदूचुर्नतत्क्रुद्धैर्धार्तराष्ट्रैः कृतंरणे ॥ यत्कृतंनःप्रसुप्तानांरक्षोभिःक्रूरकर्मभिः २२ असान्निध्याद्धिपार्थानामिदंवःकदनंकृतम् ॥ नचासुरैर्नगंधर्वैर्नयक्षैर्नचराक्षसैः २३ शक्योविजेतुंकौं तेयोगोप्तायस्यजनार्दनः ॥ ब्रह्मण्यःसत्यवाग्दांतःसर्वभूतानुकंपकः २३ नचसुप्तंप्रमत्तंवान्यस्तशस्त्रंकृतांजलिम् ॥ धावंतंमुक्तकेशंवाहंतिपार्थोधनंजयः २५

१५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५

२६ । २७ । २८ । २९ । १३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ मृशाशिताःभृशंसंतर्पिताः । ईत्यपाठेअसगतिर्दीप्त्यादानेष्वित्यस्यवारूपं मृशमुद्दीपिताइत्यर्थः ३९ विडु

तदिदंनःकृतंघोरंरक्षोभिःक्रूरकर्मभिः ॥ इतिलालप्यमानाःस्मशेरतेबहवोजनाः २६ स्तनतांचमनुष्यणामपरेषांचकूजताम् ॥ ततोमुहूर्तात्प्राशाम्यत्सशब्द स्तुमुलोमहान् २७ शोणितव्यतिषिक्तायांवसुधायांचभूमिप ॥ तद्रजस्तुमुलंघोरंक्षणेनांतरधीयत २८ सचेष्टमानानुद्विग्नान्निरुत्साहान्सहस्रशः ॥ न्यपात यन्नरान्क्रुद्धःपशून्पशुपतिर्यथा २९ अन्योन्यंसंपरिष्वज्यशयानान्द्रवतोऽपरान् ॥ संलीनान्युध्यमानांश्चसर्वान्द्रौणिरपोथयत् १३० दह्यमानाहुताशेनव ध्यमानाश्चतेनते ॥ परस्परंतदायोधाननयद्यमसादनम् ३१ तस्यारजन्यास्त्वर्धेनपांडवानांमहद्बलम् ॥ गमयामासराजेंद्रद्रौणिर्यमनिवेशनम् ३२ निशा चराणांसत्वानांरात्रिःसाहर्षवर्द्धिनी ॥ आसीन्नरगजाश्वानांरौद्रीक्षयकरीभृशम् ३३ तत्रादृश्यंतरक्षांसिपिशाचाश्चपृथग्विधाः ॥ खादंतोनरमांसानिपिबंतः शोणितानिच ३४ करालाःपिंगलाश्चैवशैलदंतारजस्वलाः ॥ जटिलादीर्घशंखाश्चपंचपादामहोदराः १३५ पश्चादंगुलयोरूक्षाविरूपाभैरवस्वनाः ॥ घंटाजा लावसक्ताश्चनीलकंठाविभीषणाः ३६ सपुत्रदारासुक्रूराःसुदुर्दर्शाःसुनिर्घृणाः ॥ विविधानिचरूपाणितत्रादृश्यंतरक्षसाम् ३७ पीत्वाचशोणितंहृष्टाःप्रानृत्य न्गणशोपरे ॥ इदंपरमिदंमेध्यमिदंस्वाद्वितिचाब्रुवन् ३८ मेदोमज्जास्थिरक्तानांवसानांचभृशाशिताः ॥ परेमांसानिखादंतःक्रव्यादामांसजीविनः ३९ वसाश्चैवा परेपीत्वापर्यधावन्विकुक्षिकाः ॥ नानावक्रास्तथारौद्राःक्रव्यादाःपिशिताशनाः १४० अयुतानिचतत्रासन्प्रयुतान्यर्बुदानिच ॥ रक्षसांघोररूपाणांमहतांक्रू रकर्मणाम् ४१ मुदितानांवितृप्तानांतस्मिन्महतिवैशसे ॥ समेतानिबहून्यासन्भूतानिचजनाधिप ४२ प्रत्यूषकालेशिबिरात्प्रतिगंतुमियेषसः ॥ नृशोणिताव सिक्तस्यद्रौणेरासीदसित्सरुः ४३ पाणिनासहसंश्लिष्टएकीभूतइवप्रभो ॥ दुर्गमांपदवींगत्वाविरराजजनक्षये ४४ युगांतेसर्वभूतानिभस्मकृत्वेवपावकः ॥ यथा प्रतिज्ञंतत्कर्मकृत्वाद्रौणायनिःप्रभो ४५ दुर्गमांपदवींगच्छन्पितुरासीद्गतज्वरः ॥ यथैवसंसुप्तजनेशिबिरेप्राविशन्निशि ४६ तथैवहत्वानिःशब्देनिश्चक्रामनरर्ष भः ॥ निष्क्रम्यशिबिरात्तस्मात्ताभ्यांसंगम्यवीर्यवान् ४७ आचख्यौकर्मतत्सर्वंहृष्टःसंहर्षयन्विभो ॥ तावथाचख्यतुस्तस्मैप्रियंप्रियकरौतदा ४८ पांचालान्सृं जयांश्चैवविनिकृत्तान्सहस्रशः ॥ प्रीत्याचोच्चैरुदक्रोशंस्तथैवास्फोटयंस्तलान् ४९ एवंविधाहिसारात्रिःसोमकानांजनक्षये ॥ प्रसुप्तानांप्रमत्तानामासीत्सुभृशदारु णा १५० असंशयंहिकालस्यपर्यायोदुरतिक्रमः ॥ तादृशानिहतायत्रकृत्वाऽस्माकंजनक्षयम् ५१ ॥ धृतराष्ट्रउवाच ॥ प्रागेवसुमहत्कर्मद्रौणिरेतन्महारथः ॥ नाकरोदीदृशंकस्मान्मत्पुत्रविजयेधृतः ५२ अथकस्माद्धतेक्षुद्रंकर्मेदंकृतवानसौ ॥ द्रोणपुत्रोमहात्मासतन्मेशंसितुमर्हसि ५३ संजयउवाच ॥ तेषांनूनंभयान्ना सौकृतवान्कुरुनंदन ॥ असान्निध्याद्धिपार्थानांकेशवस्यचधीमतः ५४ विकाःविपुलकुक्षयः १४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५.

९५ । । ९६ ९७ । ९८ । १९९ ॥ इतिसौप्तिकेपर्वणिनीलकंठीये भारतभावदीपेअष्टमोऽध्यायः ॥ ८ ॥ ॥ ७ ॥ ॥ तेहत्वेति १ । २ । ३ । ४ चिखादिषून्भक्षयितुमिच्छून्





सात्यकेश्चापिकर्मेदंद्रोणपुत्रेणसाधितम् ॥ कोहितेषांसमक्षंतान्हन्यादपिमरुत्पतिः ९५ एतदीदृशकंवृत्तंराजन्सुप्तजनेविभो ॥ ततोजनक्षयंकृत्वापांडवानां महात्ययम् ९६ दिष्ट्यादिष्ट्यैवचान्योन्यंसमेत्योचुर्महारथाः ॥ पर्यष्वजत्ततोद्रौणिस्ताभ्यांसंप्रतिनंदितः ९७ इदंहर्षात्तुसुमहदादंदेवाक्यमुत्तमम् ॥ पांचालानिहताःसर्वेद्रौपदेयाश्चसर्वशः ९८ सोमकामत्स्यशेषाश्चसर्वेविनिहतामया ॥ इदानींकृतकृत्याःस्मयामतत्रैवमाचिरम् ॥ यदिजीवतिनोराजातस्मैशंसामहेवयम् १९९ ॥ इतिश्रीमहाभारतेसौप्तिकेपर्वणि रात्रियुद्धेपांचालादिवधेऽष्टमोऽध्यायः ॥ ८ ॥

॥ संजयउवाच ॥ तेहत्वासर्वपांचालान्द्रौपदेयांश्चसर्वशः ॥ आगच्छन्सहितास्तत्रयत्रदुर्योधनोहतः १ गत्वाचैनमपश्यंतकिंचित्प्राणंजनाधिपम् ॥ ततोरथेभ्यःप्रस्कंद्यपरिवव्रुस्तवात्मजम् २ तंभग्नसक्थंराजेंद्रकृच्छ्रप्राणमचेतसम् ॥ वमंतंरुधिरंवक्त्रादपश्यन्वसुधातले ३ वृतंसमंताद्बहुभिःश्वापदैर्घोरदर्शनैः ॥ शालावृकगणैश्चैवभक्षयिष्यद्भिरंतिकात् ४ निवारयंतंकृच्छ्रात्तान्श्वापदांश्चचिखादिषून् ॥ विचेष्टमानंमह्यांचसुभृशंगाढवेदनम् ५ तंशयानंतथादृष्ट्वाभूमौसुरुधिरोक्षितम् ॥ हतशिष्टास्त्रयोवीराःशोकार्ताःपर्यवारयन् ६ अश्वत्थामाकृपश्चैवकृतवर्माचसात्वतः ॥ तैस्त्रिभिःशोणितादिग्धैर्निःश्वसद्भिर्महारथैः ७ शुशुभेसवृतोराजावेदीत्रिभिरिवाग्निभिः ॥ तेतंशयानंसंप्रेक्ष्यराजानमतथोचितम् ८ अविषह्येनदुःखेनततस्तेरुरुदुस्त्रयः ॥ ततस्तुरुधिरंहस्तैर्मुखान्निर्मृज्यतस्यहि ॥ रणेराज्ञःशयानस्यकृपणंपर्यदेवयन् ९ ॥ कृपउवाच ॥ नदैवस्यातिभारोऽस्तियदयंरुधिरोक्षितः ॥ एकादशचमूभर्ताशेतेदुर्योधनोहतः १० पश्यचामीकराभस्यचामीकरविभूषिताम् ॥ गदांगदाप्रियस्येमांसमीपेपतितांभुवि ११ इयमेनंगदाशूरंनजहातिरणेरणे ॥ स्वर्गायापिव्रजंतंहिनजहातियशस्विनम् १२ पश्येमांसहवीरेणजांबूनदविभूषिताम् ॥ शयानांशयनेहर्म्येभार्यांप्रीतिमतीमिव १३ योऽयंमूर्धाभिषिक्तानामग्रेजातःपरंतपः ॥ सहतोग्रसतेपांसून्पश्यकालस्यपर्ययम् १४ येनाजौनिहताभूमावशेरतहतद्विषः ॥ सभूमौनिहतःशेतेकुरुराजःपरैरयम् १५ भयान्नमंतिराजानोयस्यस्मशतसंघशः ॥ सवीरशयनेशेतेक्रव्याद्भिःपरिवारितः १६ उपासतद्विजाःपूर्वमर्थहेतोर्यमीश्वरम् ॥ उपासतेचतंह्यद्यक्रव्यादामांसहेतवः १७







५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ मांसहेतवःमांसार्थिनः १७

१८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९

॥ संजयउवाच ॥ तंशयानंकुरुश्रेष्ठंततोभरतसत्तम ॥ अश्वत्थामासमालोक्यकरुणंपर्यदेवयत् १८ आहुस्त्वांराजशार्दूलमुख्यंसर्वधनुष्मताम् ॥ धनाध्यक्षोप
मंयुद्धेशिष्यंसंकर्षणस्यच १९ कथंविवरमद्राक्षीद्भीमसेनस्तवानघ ॥ बलिनंकृतिनंनित्यंसचपापात्मवान्नृप २० कालोनूनंमहाराजलोकेऽस्मिन्बलवत्तरः ॥
पश्यामोनिहतंत्वांचभीमसेनेनसंयुगे २१ कथंत्वांसर्वधर्मज्ञंक्षुद्रःपापोवृकोदरः ॥ निकृत्याहतवान्मंदोनूनंकालोदुरत्ययः २२ धर्मयुद्धेह्यधर्मेणसमाहूयौजसामृधे ॥
गदयाभीमसेनेननिर्भग्नेसक्थिनीतव २३ अधर्मेणहतस्याजौमृद्यमानंपदाशिरः ॥ यउपेक्षितवान्क्षुद्रंधिक्कृष्णंधिग्युधिष्ठिरम् २४ युद्धेष्वपवदिष्यंतियोधा
नूनंवृकोदरम् ॥ यावत्स्थास्यंतिभूतानिनिकृत्याह्यसिपातितः २५ ननुरामोऽब्रवीद्राजंस्त्वांसदायदुनंदनः ॥ दुर्योधनसमोनास्तिगदयाइतिवीर्यवान् २६
श्लाघतेत्वांहिवार्ष्णेयोराजन्संसत्सुभारत ॥ सशिष्योममकौरव्योगदायुद्धइतिप्रभो २७ यांगतिंक्षत्रियस्याहुःप्रशस्तांपरमर्षयः ॥ हतस्याभिमुखस्याजौप्रा
प्तस्त्वमसितांगतिम् २८ दुर्योधननशोचामित्वामहंपुरुषर्षभ ॥ हतपुत्रौतुशोचामिगांधारींपितरंचते २९ भिक्षुकौविचरिष्येतेशोचंतौपृथिवीमिमाम् ॥ धि
गस्तुकृष्णंवार्ष्णेयमर्जुनंचापिदुर्मतिम् ३० धर्मज्ञमानिनौयौत्वांवध्यमानमुपेक्षताम् ॥ पांडवाश्चापितेसर्वेकिंवक्ष्यंतिनराधिप ३१ कथंदुर्योधनोऽस्माभिर्हतइ
त्यनपत्रपाः ॥ धन्यस्त्वमसिगांधारेयस्त्वमायोधनेहतः ३२ प्रायशोऽभिमुखःशत्रून्धर्मेणपुरुषर्षभ ॥ हतपुत्राहिगांधारीनिहतज्ञातिबांधवा ३३ प्रज्ञाचक्षुश्च
दुर्धर्षःकांगतिंप्रतिपत्स्यते ॥ धिगस्तुकृतवर्माणंमांकृपंचमहारथम् ३४ येवयंनगताःस्वर्गंत्वांपुरस्कृत्यपार्थिवम् ॥ दातारंसर्वकामानांरक्षितारंप्रजाहितम्
३५ यद्वयंनानुगच्छामस्त्वांधिगस्मान्नराधमान् ॥ कृपस्यतववीर्येणममचैवपितुश्चमे ३६ सभृत्यानांनरव्याघ्ररत्नवंतिगृहाणिच ॥ तवप्रसाददस्माभिःसमित्रैःसह
बांधवैः ३७ अवाप्ताःक्रतवोमुख्याबहवोभूरिदक्षिणाः ॥ कुतश्चापीदृशंपापाःप्रवर्तिष्यामहेवयम् ३८ यादृशेनपुरस्कृत्यत्वंगतःसर्वपार्थिवान् ॥ वयमेवत्रयो
राजन्नगच्छंतंपरमांगतिम् ३९ यद्वैत्वांनानुगच्छामस्तेनधक्ष्यामहेवयम् ॥ तत्स्वर्गहीनाहीनार्थाःस्मरंतःसुकृतस्यते ४० किंनामतद्भवेत्कर्मयेनत्वांनव्रजा
मवै ॥ दुःखंनूनंकुरुश्रेष्ठचरिष्याममहीमिमाम् ४१ हीनानांनस्त्वयाराजन्कुतःशांतिःकुतःसुखम् ॥ गत्वैवतुमहाराजसमेत्यचमहारथान् ४२ यथाज्येष्ठंयथा
श्रेष्ठंपूजयेर्वचनान्मम ॥ आचार्यंपूजयित्वाचकेतुंसर्वधनुष्मताम् ४३ हतंमयाद्यशंसेथाधृष्टद्युम्नंनराधिप ॥ परिष्वजेथाराजानंबाल्हिकंसुमहारथम् ४४
सैंधवंसोमदत्तंचभूरिश्रवसमेवच ॥ तथापूर्वगतानन्यान्स्वर्गेपार्थिवसत्तमान् ४५ अस्मद्वाक्यात्परिष्वज्यसंपृच्छेस्त्वमनामयम् ४६ ॥ संजयउवाच ॥ इत्ये
वमुक्त्वाराजानंभग्नसक्थमचेतनम् ॥ अश्वत्थामासमुदीक्ष्यपुनर्वचनमब्रवीत् ४७ धक्ष्यामहेभस्मीभवेम ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७

४८ । ४९ । ५० । ५१ । ५२ । ५३ नमेऽकरोदिति । पापःकंठगतप्राणोऽप्यमिनंदतिपापिनं ॥ द्रौणिंप्रसुप्तबालघ्नंपांसुमुकुरुराडिव ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ ६२

दुर्योधनजीवसित्वंवाक्यंश्रोत्रसुखंशृणु ॥ सप्तपांडवतःशेषाधार्तराष्ट्रास्त्रयोवयम् ४८ तेचैवभ्रातरःपंचवासुदेवोऽथसात्यकिः ॥ अहंचकृतवर्माचकृपःशारद्व
तस्तथा ४९ द्रौपदेयाहताःसर्वेधृष्टद्युम्नस्यचात्मजाः ॥ पांचालानिहताःसर्वेमत्स्यशेषंचभारत ५० कृतेप्रतिकृतंपश्यहतपुत्राहिपांडवाः ॥ सौप्तिकेशिबिरं
तेषांहतंसनरवाहनम् ५१ मयाचपापकर्माऽसौधृष्टद्युम्नोमहीपते ॥ प्रविश्यशिबिरंरात्रौपशुमारेणमारितः ५२ दुर्योधनस्तुतांवाचंनिशम्यमनसःप्रियाम् ॥
प्रतिलभ्यपुनश्चेतइदंवचनमब्रवीत् ५३ नमेऽकरोत्तद्गांगेयोनकर्णोनचतेपिता ॥ यत्त्वयाकृपभोजाभ्यांसहितेनाद्यमेकृतम् ५४ सचसेनापतिःक्षुद्रोहतःसार्धं
शिखंडिना ॥ तेनमन्येमघवतासममात्मानमद्यवै ५५ स्वस्तिप्राप्नुतभद्रंवःस्वर्गेनःसंगमःपुनः ॥ इत्येवमुक्त्वातूष्णींसकुरुराजोमहामनाः ५६ प्राणानुपासृ
जद्वीरःसुहृदांदुःखमुत्सृजन् ॥ अपाक्रामाद्दिवंपुण्यांशरीरंक्षितिमाविशत् ५७ एवंतेनिधनंयातःपुत्रोदुर्योधनोनृप ॥ अग्रेयात्वारणेशूरःपश्चाद्विनिहतःपरैः
५८ तथैवतेपरिष्वक्ताःपरिष्वज्यचतेनृपम् ॥ पुनःपुनःप्रेक्षमाणाःस्वकानारुरुहूरथान् ५९ इत्येवंद्रोणपुत्रस्यनिशम्यकरुणांगिरम् ॥ प्रत्यूषकालेशोकार्त्तः
प्राद्रवन्नगरंप्रति ६० एवमेषक्षयोवृत्तःकुरुपांडवसेनयोः ॥ घोरोविशसनोरौद्रोराजन्दुर्मंत्रितेतव ६१ तवपुत्रेगतेस्वर्गंशोकार्तस्यममानघ ॥ ऋषिदत्तंप्रन
ष्टंतद्दिव्यदर्शित्वमद्यवै ६२ ॥ वैशंपायनउवाच ॥ इतिश्रुत्वासनृपतिःपुत्रस्यनिधनंतदा ॥ निःश्वस्यदीर्घमुष्णंचततश्चिंतापरोऽभवत् ६३ ॥ इतिश्रीमहा
भारतेसौप्तिकेपर्वणिदुर्योधनप्राणत्यागेनवमोऽध्यायः ॥ ९ ॥ ७ ॥ अथैषीकपर्व ॥ वैशंपायनउवाच ॥ तस्यांरात्र्यांव्यतीतायांधृष्टद्युम्नस्यसारथिः ॥ शशं
सधर्मराजायसौप्तिकेकदनंकृतम् १ ॥ सूतउवाच ॥ द्रौपदेयाहताराजन्द्रुपदस्यात्मजैःसह ॥ प्रमत्तानिशिविश्वस्ताःस्वपंतःशिबिरेस्वके २ कृतवर्मणानृशं
सेनगौतमेनकृपेणच ॥ अश्वत्थाम्नाचपापेनहतंवःशिबिरंनिशि ३ एतैर्नरगजाश्वानांप्रासशक्तिपरश्वधैः ॥ सहस्राणिनिकृंतद्भिर्निःशेषंतेबलंकृतम् ४ छिद्य
मानस्यमहतोवनस्येवपरश्वधैः ॥ शुश्रुवेसुमहान्शब्दोबलस्यतवभारत ५ अहमेकोऽवशिष्टस्तुतस्मात्सैन्यान्महामते ॥ मुक्तःकथंचिद्धर्मात्मन्व्यग्राच्चकृत
वर्मणः ६ तच्छ्रुत्वावाक्यमशिवंकुंतीपुत्रोयुधिष्ठिरः ॥ पपातमह्यांदुर्धर्षःपुत्रशोकसमन्वितः ७ पतंतंतमतिक्रम्यपरिजग्राहसात्यकिः ॥ भीमसेनोऽर्जुनश्चैव
माद्रीपुत्रौचपांडवौ ८ लब्धचेतास्तुकौंतेयःशोकविह्वलयागिरा ॥ जित्वाशत्रून्जितःपश्चात्पर्यदेवयदार्त्तवत् ९ दुर्विदागतिरर्थानामपियेदिव्यचक्षुषः ॥ जी
यमानाजयंत्यन्येजयमानावयंजिताः १० हत्वाभ्रातॄन्वयस्यांश्चपितॄन्पुत्रान्सुहृद्गणान् ॥ बंधूनमात्यान्पौत्रांश्चजित्वासर्वान्जितावयम् ११

६३ ॥ इतिसौप्तिकेपर्वणिनीलकंठीयेभारतभावदीपेनवमोऽध्यायः ॥ ९ ॥ ७ ॥ जयेनहर्षतामनुपदमेवशोकमयेप्रवर्तेवेइतिदर्शयन्नैषीकमारभतेतस्यामिति १ । २ । ३ । ४ । ५ । ६ । ७
अतिक्रम्यधैर्यमर्यादांत्यक्त्वापतंतम् ८ । ९ अन्येशत्रवः जयमानाः जयंतः जितानांजयो जयतांपराजयःफलतोऽभूदितिमहदाश्चर्यमित्यर्थः १० । ११

१२ । १३ । १४ । १५ येऽमुंचंतमुक्ताः कर्णस्यकर्णात् प्रमादादस्मत्कृतादसान्निध्यात् १६ । १७ । १८ । १९ इषुत्राणिनानाविधानिशस्त्राणिचतेषांहोमःप्रक्षेपोयत्रतंतनुत्रनाना
अनर्थोह्यर्थसंकाशस्तथाऽनर्थोऽर्थदर्शनः ॥ जयोऽयमजयाकारोजयस्तस्मात्पराजयः १२ यज्जित्वातप्यतेपश्चादापन्नइवदुर्मतिः ॥ कथंमन्येतविजयंततो
जिततरःपरैः १३ येषामर्थायपापंस्याद्विजयस्यसुहृद्वधैः ॥ निर्जितैरप्रमत्तैर्हिविजिताजितकाशिनः १४ कर्णिनालीकदंष्ट्रस्यखड्गजिह्वस्यसंयुगे ॥ चापव्या
त्तस्यरौद्रस्यज्यातलस्वननादिनः १५ क्रुद्धस्यनरसिंहस्यसंग्रामेष्वपलायिनः ॥ येऽव्यमुंचंतकर्णस्यप्रमादात्तइमेहताः १६ रथह्रदंशरवर्षोर्मिमंतंरत्नाचितंवाह
नवाजियुक्तम् ॥ शक्त्यृष्टिमीनध्वजनागनक्रंशरासनावर्तमहेषुफेनम् १७ संग्रामचंद्रोदयवेगवेलंद्रोणार्णवंज्यातलनेमिघोषम् ॥ येतेरुरुच्चावचशस्त्रनौभिस्ते
राजपुत्रानिहताःप्रमादात् १८ नहिप्रमादात्परमस्तिकश्चिद्वधोनराणामिहजीवलोके ॥ प्रमत्तमर्थाहिनरंसमंतात्त्यजंत्यनर्थाश्चसमाविशंति १९ ध्वजोत्तमाग्रो
च्छ्रितधूमकेतुंशरार्चिषंकोपमहासमीरम् ॥ महाधनुर्ज्यातलनेमिघोषंतनुत्रनानाविधशस्त्रहोमम् २० महाचमूकक्षदवाभिपन्नंमहाहवेभीष्ममयाग्निदाहम् ॥
येसेहुरात्तायुधतीक्ष्णवेगंतेराजपुत्रानिहताःप्रमादात् २१ नहिप्रमत्तेननरेणशक्यंविद्यातपःश्रीर्विपुलंयशोवा ॥ पश्याप्रमादेननिहत्यशत्रून्सर्वान्महेंद्रंसुखमेध
मानम् २२ इंद्रोपमान्पार्थिवपुत्रपौत्रान्पश्याविशेषेणहतान्प्रमादात् ॥ तीर्त्वासमुद्रंवणिजःसमृद्धामग्नाःकुनद्यामिवहेलमानाः २३ अमर्षितैर्येनिहताःशया
नानिःसंशयंतेत्रिदिवंप्रपन्नाः ॥ कृष्णांतुशोचामिकथंनुसाध्वीशोकार्णवंसाऽद्यविशत्यभीता २४ भ्रातॄंश्चपुत्रांश्चहतान्निशम्यपांचालराजंपितरंचवृद्धम् ॥ ध्रुवं
विसंज्ञापतितापृथिव्यांसाशोष्यतेशोककृशांगयष्टिः २५ तच्छोकजंदुःखमपारयंतीकथंभविष्यत्युचितासुखानाम् ॥ पुत्रक्षयभ्रातृवधप्रणुन्नाप्रदह्यमानेनहुता
शनेन २६ इत्येवमार्तःपरिदेवयन्सराजाकुरूणांनकुलंबभाषे ॥ गच्छानयैनामिहमंदभाग्यांसमातृपक्षामितिराजपुत्रीम् २७ माद्रीसुतस्तत्परिगृह्यवाक्यंध
र्मेणधर्मप्रतिमस्यराज्ञः ॥ ययौरथेनालयमाशुदेव्याःपंचालराजस्यचयत्रदाराः २८ प्रस्थाप्यमाद्रीसुतमाजमीढःशोकार्दितस्तैःसहितःसुहृद्भिः ॥ रोरूयमा
णःप्रययौसुतानामायोधनंभूतगणानुकीर्णम् २९ सतत्प्रविश्याशिवमुग्ररूपंददर्शपुत्रान्सुहृदःसखींश्च ॥ भूमौशयानान्रुधिरार्द्रगात्रान्विभिन्नदेहान्प्रहृतोत्त
मांगान् ३० सतांस्तुदृष्ट्वाभृशमार्तरूपोयुधिष्ठिरोधर्मभृतांवरिष्ठः ॥ उच्चैःप्रचुक्रोशचकौरवाग्र्यःपपातचोर्व्यांसगणोविसंज्ञः ३१ ॥ इ० म० सौ० ऐ० युधिष्ठिर
शिबिरप्रवेशेदशमोऽध्यायः ॥ १० ॥ वैशंपायनउवाच ॥ सदृष्ट्वानिहतान्संख्येपुत्रान्पौत्रान्सखींस्तथा ॥ महादुःखपरीतात्माबभूवजनमेजय १ ततस्तस्य
महान्शोकःप्रादुरासीन्महात्मनः ॥ स्मरतःपुत्रपौत्राणांभ्रातॄणांस्वजनस्यह २ तमश्रुपरिपूर्णाक्षंवेपमानमचेतसम् ॥ सुहृदोभृशसंविग्नाःसांत्वयांचक्रिरेतदा ३
विधशस्त्रहोमम् २० भीष्ममयंभीष्मप्रधानमग्निदाहंभीष्मरूपेणाग्निनादाहमित्यर्थः तेसेहिरेसोढवंतः २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९
३० । ३१ ॥ इतिसौप्तिकेपर्वणि नीलकंठीये भारतभावदीपे दशमोऽध्यायः ॥ १० ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ सदृष्ट्वेति १ । २ । ३

४ । ५ । ६ । ७ । ८ । ९ दिष्ट्येति पुत्रनाशापेक्षया राज्यप्राप्तिसुखंत्वमहदित्याधिक्षेपः १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४



ततस्तस्मिन्क्षणेकल्पोरथेनादित्यवर्चसा ॥ नकुलःकृष्णयासार्धमुपायात्परमार्तया ४ उपप्लव्यंगतासातुश्रुत्वासुमहदप्रियम् ॥ तदाविनाशंसर्वेषांपुत्राणांव्य थिताऽभवत् ५ कंपमानेवकदलीवातेनाभिसमीरिता ॥ कृष्णाराजानमासाद्यशोकार्तान्यपतद्भुवि ६ बभूववदनंतस्याःसहसाशोककर्षितम् ॥ फुल्लपद्मपलाशा क्ष्यास्तमोग्रस्तइवांशुमान् ७ ततस्तांपतितांदृष्ट्वासंरंभीसत्यविक्रमः ॥ बाहुभ्यांपरिजग्राहसमुत्पत्यवृकोदरः ८ सासमाश्वासितातेनभीमसेनेनभामिनी ॥ रुदतीपांडवंकृष्णासाहिभारतमब्रवीत् ९ दिष्ट्याराजन्नवाप्येमामखिलांभोक्ष्यसेमहीम् ॥ आत्मजान्क्षत्रधर्मेणसंप्रदाययमायवै १० दिष्ट्यात्वंकुशलीपार्थ मत्तमातंगगामिनीम् ॥ अवाप्यपृथिवींकृत्स्नांसौभद्रंनस्मरिष्यसि ११ आत्मजान्क्षत्रधर्मेणश्रुत्वाशूरान्निपातितान् ॥ उपप्लव्येमयासार्धंदिष्ट्यात्वंनस्मरिष्य सि १२ प्रसुप्तान्वधंश्रुत्वाद्रौणिनापापकर्मणा ॥ शोकस्तपतिमांपार्थहुताशनइवाश्रयम् १३ तस्यपापकृतोद्रौणेर्नचेदद्यत्वयारणे ॥ ह्रियतेसानुबंधस्ययु धिविक्रम्यजीवितम् १४ इहैवप्रायमासिष्येतन्निबोधतपांडवाः ॥ नचेत्फलमवाप्नोतिद्रौणिःपापस्यकर्मणः १५ एवमुक्त्वाततःकृष्णापांडवंप्रत्युपाविशत् ॥ युधिष्ठिरंयाज्ञसेनीधर्मराजंयशस्विनी १६ दृष्ट्वोपविष्टांराजर्षिःपांडवोमहिषींप्रियाम् ॥ प्रत्युवाचसधर्मात्माद्रौपदींचारुदर्शनाम् १७ धर्म्यंधर्मेणधर्मज्ञेप्राप्तास्ते निधनंशुभे ॥ पुत्रास्तेभ्रातरश्चैवतान्नशोचितुमर्हसि १८ सकल्याणिवनंदुर्गंदूरंद्रौणिरितोगतः ॥ तस्यत्वंपातनंसंख्येकथंज्ञास्यसिशोभने १९ द्रौपद्युवाच ॥ द्रोणपुत्रस्यसहजोमणिःशिरसिमेश्रुतः ॥ निहत्यसंख्येतंपापंपश्येयंमणिमाहृतम् २० राजन्शिरसितंकृत्वाजीवेयमितिमेमतिः ॥ इत्युक्त्वापांडवंकृष्णाराजा नंचारुदर्शना २१ भीमसेनमथागत्यपरमंवाक्यमब्रवीत् ॥ त्रातुमर्हसिमांभीमक्षत्रधर्ममनुस्मरन् २२ जहितंपापकर्माणंशंबरंमघवानिव ॥ नहितेविक्रमेतुल्यः पुमानस्तीहकश्चन २३ श्रुतंतत्सर्वलोकेषुपरमव्यसनेयथा ॥ द्वीपोऽभूस्त्वंहिपार्थानांनगरेवारणावते २४ हिडिंबदर्शनेचैवतथात्वमभवोगतिः ॥ तथावि राटनगरेकीचकेनभृशार्दिताम् २५ मामप्युद्धृतवान्कृच्छ्रात्पौलोमींमघवानिव ॥ यथैतान्यकृथाःपार्थमहाकर्माणिवैपुरा २६ तथाद्रौणिममित्रघ्नंविनिहत्यसुखी भव ॥ तस्याबहुविधंदुःखंनिशम्यपरिदेवितम् २७ नचामर्षतकौंतेयोभीमसेनोमहाबलः ॥ सकांचनविचित्रांगमारुरोहमहारथम् २८ आदायरुचिरंचित्रंस मार्गणगुणंधनुः ॥ नकुलंसारथिंकृत्वाद्रोणपुत्रवधेधृतः २९ विस्फार्यसशरंचापंतूर्णमश्वानचोदयत् ॥ तेहयाःपुरुषव्याघ्रचोदितावातरंहसः ३० वेगेनत्वरि ताजग्मुर्हरयःशीघ्रगामिनः ॥ शिबिरात्स्वाद्गृहीत्वासरथस्यपदमच्युतः ३१ ॥ इतिश्रीमहाभारते सौप्तिकेपर्वणि ऐषीकेपर्वणि द्रौणिवधार्थं भीमसेनगमने एकादशोऽध्यायः ११

२५ । २६ । २७ । २८ । २९ । ३० पदंगमनमार्गचिन्हं गृहीत्वाऽऽलक्ष्य ३१ ॥ इतिसौप्तिकेपर्वणिनीलकंठीये भारतभावदीपे एकादशोऽध्यायः ॥ ११ ॥

तस्मिन्निति १ आक्रंदेसंग्रामे २ । ३ । ४ । ५ । ६ । ७ । ८ स्थातास्थास्यसि ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ मेमह्यंदातुमिच्छसितेन

॥ वैशंपायनउवाच ॥ तस्मिन्प्रयातेदुर्धर्षेयदूनामृषभस्ततः ॥ अब्रवीत्पुंडरीकाक्षःकुंतीपुत्रंयुधिष्ठिरम् १ एषपांडवतेभ्रातापुत्रशोकपरायणः ॥ जिघांसुर्द्रौ
णिमाक्रंदेएकएवाभिधावति २ भीमःप्रियस्तेसर्वेभ्योभ्रातृभ्योभरतर्षभ ॥ तंकृच्छ्रगतमद्यत्वंकस्मान्नाभ्युपपद्यसे ३ यत्तदाऽऽचष्टपुत्रायद्रोणःपरपुरंजयः ॥
अस्त्रंब्रह्मशिरोनामदहेतपृथिवीमपि ४ तन्महात्मामहाभागःकेतुःसर्वधनुष्मताम् ॥ प्रत्यपादयदाचार्यःप्रीयमाणोधनंजयम् ५ तंपुत्रोप्येकएवैनमन्वयाचदम
र्षणः ॥ ततःप्रोवाचपुत्रायनातिहृष्टमनाइव ६ विदितंचापलंह्यासीदात्मजस्यदुरात्मनः ॥ सर्वधर्मविदाचार्यःसोऽन्वशात्स्वसुतंततः ७ परमापद्गतेनापिन
स्मतात्वयारणे ॥ इदमस्त्रंप्रयोक्तव्यंमानुषेषुविशेषतः ८ इत्युक्तवान्गुरुःपुत्रंद्रोणःपश्चादथोक्तवान् ॥ नत्वंजातुसतांमार्गेस्थातेतिपुरुषर्षभ ९ सतदाज्ञाय
दुष्टात्मापितुर्वचनमप्रियम् ॥ निराशःसर्वकल्याणैःशोकात्पर्यचरन्महीम् १० ततस्तदाकुरुश्रेष्ठवनस्थेत्वयिभारत ॥ अवसद्द्वारकामेत्यवृष्णिभिःपरमार्चितः
११ सकदाचित्समुद्रांतेवसन्द्वारवतीमनु ॥ एकएकंसमागम्यमामुवाचहसन्निव १२ यत्तदुग्रंतपःकृष्णचरन्सत्यपराक्रमः ॥ अगस्त्याद्भारताचार्यःप्रत्यपद्य
तमेपिता १३ अस्त्रंब्रह्मशिरोनामदेवगंधर्वपूजितम् ॥ तदद्यमयिदाशार्हयथापितरितथा १४ अस्मत्तस्तदुपादायदिव्यमस्त्रंयदूत्तम ॥ ममाप्यस्त्रंप्रयच्छ
त्वंचक्रंरिपुहणंरणे १५ सराजन्प्रीयमाणेनमयाऽप्युक्तःकृतांजलिः ॥ याचमानःप्रयत्नेनमत्तोऽस्त्रंभरतर्षभ १६ देवदानवगंधर्वमनुष्यपतगोरगाः ॥ नसमाममम
वीर्यस्यशतांशेनापिपिंडिताः १७ इदंधनुरियंशक्तिरिदंचक्रमियंगदा ॥ यद्यदिच्छसिचेदस्त्रंमत्तस्तत्तद्ददामिते १८ यच्छक्नोषिसमुद्यंतुंप्रयोक्तुमपिवारणे ॥
तद्गृहाणविनाऽस्त्रेणयन्मेदातुमभीप्ससि १९ ससुनाभंसहस्रारंवज्रनाभमयस्मयम् ॥ वव्रेचक्रंमहाभागोमत्तःस्पर्धन्मयासह २० गृहाणचक्रमित्युक्तोमयातुतद
नंतरम् ॥ जग्राहोत्पत्यसहसाचक्रंसव्येनपाणिना २१ नचैनमशकत्स्थानात्संचालयितुमप्युत ॥ अथैनंदक्षिणेनापिग्रहीतुमुपचक्रमे २२ सर्वयत्नबलेनापि
गृह्णन्नेवमिदंततः ॥ ततःसर्वबलेनापियदैनंनशशाकह २३ उद्यंतुंवाचालयितुंद्रौणिःपरमदुर्मनाः ॥ कृत्वायत्नंपरिश्रांतःसन्यवर्ततभारत २४ निवृत्तमनसंत
स्मादभिप्रायाद्विचेतसम् ॥ अहमामंत्र्यसंविग्नमश्वत्थामानमब्रुवम् २५ यःसदैवमनुष्येषुप्रमाणंपरमंगतः ॥ गांडीवधन्वाश्वेताश्वःकपिप्रवरकेतनः २६ यःसाक्षा
द्देवदेवेशंशितिकंठमुमापतिम् ॥ द्वंद्वयुद्धेपराजिष्णुस्तोषयामासशंकरम् २७ यस्मात्प्रियतरोनास्तिममान्यपुरुषोभुवि ॥ नादेयंयस्यमेकिंचिदपिदाराःसु
तास्तथा २८ तेनापिसुहृदाब्रह्मन्पार्थेनाक्लिष्टकर्मणा ॥ नोक्तपूर्वमिदंवाक्यंयस्त्वंमामभिभाषसे २९ ब्रह्मचर्यंमहद्घोरंतीर्त्वाद्वादशवार्षिकम् ॥ हिमवत्पार्श्व
मास्थाययोमयातपसार्जितः ३०

विनाऽपिगृहाण त्वदीयेऽस्त्रेममेच्छानास्तीतिभावः १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३०

समानव्रतचारिण्यांरुक्मिण्यांयोऽन्वजायत ॥ सनत्कुमारस्तेजस्वीप्रद्युम्नोनाममेसुतः ३१ तेनाप्येतन्महद्दिव्यंचक्रमप्रतिमंरणे ॥ नप्रार्थितमभून्मूढयादिदंप्रार्थितंत्वया ३२ रामेणातिबलेनैतन्नोक्तपूर्वंकदाचन ॥ नगदेननसांबेनयादिदंप्रार्थितंत्वया ३३ द्वारकावासिभिश्चान्यैर्वृष्ण्यंधकमहारथैः ॥ नोक्तपूर्वमिदंजातुयदिदंप्रार्थितंत्वया ३४ भारताचार्यपुत्रस्त्वंमानितःसर्वयादवैः ॥ चक्रेणरथिनांश्रेष्ठकंनुतातयुयुत्ससे ३५ एवमुक्तोमयाद्रौणिर्मामिदंप्रत्युवाचह ॥ प्रयुज्यभवतेपूजांयोत्स्येकृष्णत्वयासह ३६ प्रार्थितंमेमयाचक्रंदेवदानवपूजितम् ॥ अजेयःस्यामितिविभोसत्यमेतद्ब्रवीमिते ३७ त्वत्तोऽहंदुर्लभंकाममनवाप्यैवकेशव ॥ प्रतियास्यामिगोविंदशिवेनाभिवदस्वमाम् ३८ एतत्सुभीमंभीमानामृषभेणत्वयाधृतम् ॥ चक्रमप्रतिचक्रेणभुविनान्योऽभिपद्यते ३९ एतावदुक्त्वाद्रौणिर्मांयुग्यानश्वान्धनानिच ॥ आदायोपययौकालेरत्नानिविविधानिच ४० ससंरंभीदुरात्माचचपलःक्रूरएवच ॥ वेदचास्त्रंब्रह्मशिरस्तस्माद्रक्ष्योवृकोदरः ४१ ॥ इतिश्रीमहाभारते सौप्तिकेपर्वणिऐषीकेपर्वणि युधिष्ठिरकृष्णसंवादेद्वादशोऽध्यायः ॥ १२ ॥ ॥ वैशंपायनउवाच ॥ एवमुक्त्वायुधांश्रेष्ठःसर्वयादवनंदनः ॥ सर्वायुधवरोपेतमारुरोहरथोत्तमम् १ युक्तंपरमकांबोजैस्तुरगैर्हेममालिभिः ॥ आदित्योदयवर्णस्यधुरंरथवरस्यतु २ दक्षिणामवहच्छैब्यःसुग्रीवःसव्यतोऽभवत् ॥ पार्ष्णिवाहौतुतस्यास्तांमेघपुष्पबलाहकौ ३ विश्वकर्मकृतादिव्यारत्नधातुविभूषिता ॥ उच्छ्रितेवरथेमायाध्वजयष्टिरदृश्यत ४ वैनतेयःस्थितस्तस्यांप्रभामंडलरश्मिवान् ॥ तस्यसत्यवतःकेतुर्भुजगारिरदृश्यत ५ अथारोहद्धृषीकेशःकेतुःसर्वधनुष्मताम् ॥ अर्जुनःसत्यकर्माचकुरुराजोयुधिष्ठिरः ६ अशोभेतांमहात्मानौदाशार्हमभितःस्थितौ ॥ रथस्थंशार्ङ्गधन्वानमश्विनाविववासवम् ७ तावुपारोप्यदाशार्हःस्यंदनंलोकपूजितम् ॥ प्रतोदेनजवोपेतान्परमाश्वानचोदयत् ८ तेहयाःसहसोत्पेतुर्गृहीत्वास्यंदनोत्तमम् ॥ आस्थितंपांडवेयाभ्यांयदूनामृषभेणच ९ वहतांशार्ङ्गधन्वानमश्वानांशीघ्रगामिनाम् ॥ प्रादुरासीन्महान्शब्दःपक्षिणांपततामिव १० तेसमार्च्छन्नरव्याघ्राःक्षणेनभरतर्षभ ॥ भीमसेनंमहेष्वासंसमनुद्रुत्यवेगिताः ११ क्रोधदीप्तंतुकौंतेयंद्विषदर्थेसमुद्यतम् ॥ नाशक्नुवन्वारयितुंसमेत्यापिमहारथाः १२ सतेषांप्रेक्षतामेवश्रीमतांदृढधन्विनाम् ॥ ययौभागीरथीतीरंहरिभिर्भृशवेगितैः १३ यत्रस्मश्रूयतेद्रौणिःपुत्रहंतामहात्मनाम् ॥ सददर्शमहात्मानमुदकांतेयशस्विनम् १४ कृष्णद्वैपायनंव्यासमासीनमृषिभिःसह ॥ तंचैवक्रूरकर्माणंघृताक्तंकुशचीरिणम् १५ रजसाध्वस्तमासीनंददर्शद्रौणिमंतिके ॥ तमभ्यधावत्कौंतेयःप्रगृह्यसशरंधनुः १६ भीमसेनोमहाबाहुस्तिष्ठतिष्ठेतिचाब्रवीत् ॥ सदृष्ट्वाभीमधन्वानंप्रगृहीतशरासनम् १७ भ्रातरौपृष्ठतश्चास्यजनार्दनरथेस्थितौ ॥ व्यथितात्माऽभवद्द्रौणिःप्राप्तंचेदममन्यत १८ सतद्दिव्यमदीनात्मापरमास्त्रमचिंतयत् ॥ जग्राहचसचैषीकांद्रौणिःसव्येनपाणिना १९

२० अपांडवायपांडवानामभावाय २१ । २२ ॥ इतिसौप्तिकेपर्वणिनीलकंठीये भारतभावदीपे त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ७ ॥ इंगितेनेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०

सतामापदमासाद्यदिव्यमस्त्रमुदैरयत् ॥ अमृष्यमाणस्ताञ्छूरान्दिव्यायुधवरान्स्थितान् २० अपांडवायेतिरुषाव्यसृजद्दारुणंवचः ॥ इत्युक्काराजशार्दूलद्रो
णपुत्रःप्रतापवान् २१ सर्वलोकप्रमोहार्थंतदस्त्रंप्रमुमोचह ॥ ततस्तस्यामिषीकायांपावकःसमजायत ॥ प्रधक्ष्यन्निवलोकांस्त्रीन्कालांतकयमोपमः २२ ॥ इति
श्रीमहाभारतेसौप्तिकेपर्वणिऐषीकेपर्वणिब्रह्मशिरोस्त्रत्यागेत्रयोदशोऽध्यायः ॥ १३ ॥ वैशंपायनउवाच ॥ इंगितेनैवदाशार्हस्तमभिप्रायमादितः ॥ द्रौणेर्बुद्ध्वा
महाबाहुरर्जुनंप्रत्यभाषत १ अर्जुनार्जुनयद्दिव्यमस्त्रंतेहृदिवर्त्तते ॥ द्रोणोपादिष्टंतस्यायंकालःसंप्रतिपांडव २ भ्रातॄणामात्मनश्चैवपरित्राणायभारत ॥ विसृजै
तत्त्वमप्याजावस्त्रमस्त्रनिवारणम् ३ केशवेनैवमुक्तोऽथपांडवःपरवीरहा ॥ अवातरद्रथात्तूर्णंप्रगृह्यसशरंधनुः ४ पूर्वमाचार्यपुत्रायततोऽनंतरमात्मने ॥ भ्रातृ
भ्यश्चैवसर्वेभ्यःस्वस्तीत्युक्कापरंतपः ५ देवताभ्योनमस्कृत्यगुरुभ्यश्चैवसर्वशः ॥ उत्ससर्जाशिवंध्यायन्नस्त्रमस्त्रेणशाम्यताम् ६ ततस्तदस्त्रंसहसासृष्टंगांडीव
धन्वना ॥ प्रजज्वालमहार्चिष्मद्युगांतानलसन्निभम् ७ तथैवद्रोणपुत्रस्यतदस्त्रंतिग्मतेजसः ॥ प्रजज्वालमहाज्वालंतेजोमंडलसंवृतम् ८ निर्घाताबहवश्चा
सन्पेतुरुल्काःसहस्रशः ॥ महद्भयंचभूतानांसर्वेषांसमजायत ९ सशब्दमभवद्व्योमज्वालामालाकुलंभृशम् ॥ चचालचमहीकृत्स्नासपर्वतवनद्रुमा १० तेत्वस्त्रते
जसीलोकांस्तापयंतीव्यवस्थिते ॥ महर्षीसहितौतत्रदर्शयामासतुस्तदा ११ नारदःसर्वभूतात्माभरतानांपितामहः ॥ उभौशमयितुंवीरौभारद्वाजधनंजयौ
१२ तौमुनीसर्वधर्मज्ञौसर्वभूतहितैषिणौ ॥ दीप्तयोरस्त्रयोर्मध्येस्थितौपरमतेजसौ १३ तदंतरमथाधृष्यावुपगम्ययशस्विनौ ॥ आस्तामृषिवरौतत्रज्वलिता
विवपावकौ १४ प्राणभृद्भिरनाधृष्यौदेवदानवसंमतौ ॥ अस्त्रतेजःशमयितुंलोकानांहितकाम्यया १५ ॥ ऋषीऊचतुः ॥ नानाशस्त्रविदःपूर्वेयेऽप्यतीतामहा
रथाः ॥ नैतदस्त्रंमनुष्येषुतैःप्रयुक्तंकथंचन ॥ किमिदंसाहसंवीरौकृतवंतौमहात्ययम् १६ ॥ इतिश्रीमहाभारते सौप्तिकेपर्वणि ऐषीकेपर्वणि अर्जुनास्त्रत्यागेच
तुर्दशोऽध्यायः ॥ १४ ॥ ५ ॥ वैशंपायनउवाच ॥ दृष्ट्वैवनरशार्दूलतावग्निसमतेजसौ ॥ संजहारशरंदिव्यंत्वरमाणोधनंजयः १ उवाचभरतश्रेष्ठतावृषीप्रांज
लिस्तदा ॥ प्रमुक्तमस्त्रमस्त्रेणशाम्यतामितिवैमया २ संहृतेपरमास्त्रेऽस्मिन्सर्वानस्मानशेषतः ॥ पापकर्माध्रुवंद्रौणिःप्रधक्ष्यत्यस्त्रतेजसा ३ यदत्रहितमस्मा
कंलोकानांचैवसर्वथा ॥ भवंतौदेवसंकाशौतथासंमंतुमर्हतः ४ इत्युक्कासंजहारास्त्रंपुनरेवधनंजयः ॥ संहारोदुष्करस्तस्यदेवैरपिहिसंयुगे ५ विसृष्टस्यरणेत
स्यपरमास्त्रस्यसंग्रहे ॥ अशक्तःपांडवादन्यःसाक्षादपिशतक्रतुः ६ ब्रह्मतेजोद्भवंतद्धिविसृष्टमकृतात्मना ॥ नशक्यमावर्त्तयितुंब्रह्मचारिव्रतादृते ७

११ । १२ । १३ । १४ । १५ । १६ ॥ इतिसौप्तिकेपर्वणिनीलकंठीये भारतभावदीपे चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ५ ॥ ॥ दृष्ट्वेति १ । २ । ३ । ४ । ५ । ६ । ७

 आवर्त्तयतेउपसंहराति एतेनार्जुनस्यास्त्रमुपसंहरतश्चीर्णब्रह्मचर्यत्वंख्याप्यते ८। ९। १०। ११। १२ । १३। १४। १५। १६ अंतकायांतायस्वार्थेकः १७ । १८। १९। २०। २१। २२ 





अचीर्णब्रह्मचर्योयःसृष्ट्वाऽऽवर्त्तयतेपुनः ॥ तदस्त्रंसानुबंधस्यमूर्धानंतस्यकृंतति ७ ब्रह्मचारीव्रतीचापिदुरवापमवाप्यतत ॥ परमव्यसनार्तोऽपिनार्जुनोऽस्त्रंव्य मुंचत ९ सत्यव्रतधरःशूरोब्रह्मचारीचपांडवः ॥ गुरुवर्तीचतेनास्त्रंसंजहारार्जुनःपुनः १० द्रौणिरप्यथसंप्रेक्ष्यताहृषीपुरतःस्थितौ ॥ नशशाकपुनर्घोरमस्त्रं संहर्तुमोजसा ११ अशक्तःप्रतिसंहारेपरमास्त्रस्यसंयुगे ॥ द्रौणिर्दीनमनाराजन्द्वैपायनमभाषत १२ उत्तमव्यसनार्तेनप्राणत्राणमभीप्सुना ॥ मयैतदस्त्रमुत्सृष्टंभी



मसेनभयान्मुने १३ अधर्मश्चकृतोऽनेनधार्तराष्ट्रंजिघांसता ॥ मिथ्याचारेणभगवन्भीमसेनेनसंयुगे १४ अतःसृष्टमिदंब्रह्मन्मयाऽस्त्रमकृतात्मना ॥ तस्यभूयो द्यसंहारंकर्तुंनाहमिहोत्सहे १५ निसृष्टंहिमयादिव्यमेतदस्त्रंदुरासदम् ॥ अपांडवायेतिमुनेवह्नितेजोऽनुमंत्र्यवै १६ तदिदंपांडवेयानामंतकायाभिसंहितम् ॥ अद्यपांडुसुतान्सर्वान्जीविताद्भ्रंशयिष्यति १७ कृतंपापमिदंब्रह्मन्रोषाविष्टेनचेतसा ॥ वधमाशास्यपार्थानांमयास्त्रंसृजतारणे १८ ॥ व्यासउवाच ॥ अस्त्रं ब्रह्मशिरस्तातविद्वान्पार्थोधनंजयः ॥ उत्सृष्टवान्नरोषेणननाशायतवाहवे १९ अस्त्रमस्त्रेणतुरणेतवसंशमयिष्यता ॥ विसृष्टमर्जुनेनेदंपुनश्चप्रतिसंहृतम् २० ब्रह्मास्त्रमप्यवाप्यैवदुपदेशात्पितुस्तव ॥ क्षत्रधर्मान्महाबाहुर्नाकंपतधनंजयः २१ एवंधृतिमतःसाधोःसर्वास्त्रविदुषःसतः ॥ सभ्रातृबंधोःकस्मात्त्वंवधमस्याचि कीर्षसि २२ अस्त्रंब्रह्मशिरोयत्रपरमास्त्रेणवध्यते ॥ समाद्वादशपर्जन्यस्तद्राष्ट्रंनाभिवर्षति २३ एतदर्थंमहाबाहुःशक्तिमानपिपांडवः ॥ नविहन्यातदस्त्रंतुप्रजा हितचिकीर्षया २४ पांडवास्त्वंचराष्ट्रंचसदासंरक्ष्यमेवहि ॥ तस्मात्संहरदिव्यंत्वमस्त्रमेतन्महाभुज २५ अरोषस्तवचैवास्तुपार्थाःसंतुनिरामयाः ॥ नह्यध र्मेणराजर्षिःपांडवोजेतुमिच्छति २६ मणिंचैवप्रयच्छाद्ययस्तेशिरसितिष्ठति ॥ एतदादायतेप्राणान्प्रतिदास्यंतिपांडवाः २७ ॥ द्रौणिरुवाच ॥ पांडवैर्या निरत्नानियच्चान्यत्कौरवैर्धनम् ॥ अवाप्तामिहतेभ्योऽयंमणिर्ममविशिष्यते २८ यमाबध्यभयंनास्तिशस्त्रव्याधिक्षुधाश्रयम् ॥ देवेभ्योदानवेभ्योवानागेभ्यो वाकथंचन २९ नचरक्षोगणभयंनतस्करभयंतथा ॥ एवंवीर्योमणिरयंनमेत्याज्यःकथंचन ३० यत्तुमेभगवानाहतन्मेकार्यमनंतरम् ॥ अयंमणिरयंचाहमीषि कातुपतिष्यति ३१ गर्भेषुपांडवेयानाममोघंचैतदुत्तमम् ॥ नचशक्तोऽस्मिभगवन्संहर्तुंपुनरुद्यतम् ३२ एतदस्त्रमतश्चैवगर्भेषुविसृजाम्यहम् ॥ नचवाक्यं भगवतोनकरिष्येमहामुने ३३ ॥ व्यासउवाच ॥ एवंकुरुनचान्यातुबुद्धिःकार्यात्वयाऽनघ ॥ गर्भेषुपांडवेयानांविसृज्यैतदुपारम ३४ ॥ वैशंपायनउवाच ॥ ततःपरममस्त्रंतुद्रौणिरुद्यतमाहवे ॥ द्वैपायनवचःश्रुत्वागर्भेषुप्रमुमोचह ३५ ॥ इतिश्रीमहाभारतेसौप्तिकेपर्वणि ऐषिकेपर्वणिब्रह्मशिरोस्त्रस्यपांडवेयगर्भप्रवे शनेपंचदशोऽध्यायः ॥ १५ ॥



२३। २४। २५ । २६ । २७ । २८। २९। ३०। ३१ । ३२। ३३। ३४। ३५ ॥ इतिसौप्तिकेपर्वणिनीलकंठीये भारतभावदीपेपंचदशोऽध्यायः ॥ १५ ॥

तदेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० संविदंसंलापं ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ प्रायोपेतांमरणार्थयोनियमस्तेनोपेतां २२

॥ वैशंपायनउवाच ॥ तदाऽऽज्ञायहृषीकेशोविसृष्टंपापकर्मणा ॥ हृष्यमाणइदंवाक्यंद्रौणिंप्रत्यब्रवीत्तदा १ विराटस्यसुतांपूर्वंस्नुषांगांडीवधन्वनः ॥ उपप्लव्यगतां दृष्ट्वाव्रतवान्ब्राह्मणोऽब्रवीत् २ परिक्षीणेषुकुरुषुपुत्रस्तवभविष्यति ॥ एतदस्यपरिक्षित्त्वंगर्भस्थस्यभविष्यति ३ तस्यतद्वचनंसाधोःसत्यमेतद्भविष्यति ॥ परि क्षिद्भविताह्येषांपुनर्वंशकरःसुतः ४ एवंब्रुवाणंगोविंदंसात्वतांप्रवरंतदा ॥ द्रौणिःपरमसंरब्धःप्रत्युवाचेदमुत्तरम् ५ नैतदेवंयथात्थत्वंपक्षपातेनकेशव ॥ वचनंपुंड रीकाक्षनचमद्वाक्यमन्यथा ६ पतिष्यातितदस्त्रंहिगर्भेतस्यामयोद्यतम् ॥ विराटदुहितुःकृष्णयंत्वंरक्षितुमिच्छसि ७ ॥ श्रीभगवानुवाच ॥ अमोघःपरमास्त्रस्य पातस्तस्यभविष्यति ॥ सतुगर्भोमृतोजातोदीर्घमायुरवाप्स्यति ८ त्वांतुकापुरुषंपापंविदुःसर्वेमनीषिणः ॥ असकृत्पापकर्माणंबालजीवितघातकम् ९ तस्मा त्त्वमस्यपापस्यकर्मणःफलमाप्नुहि ॥ त्रीणिवर्षसहस्राणिचरिष्यसिमहीमिमाम् १० अप्राप्नुवन्क्वचित्कांचित्संविदंजातुकेनचित् ॥ निर्जनानसहायस्त्वंदेशान्प्रवि चरिष्यसि ११ भवित्रीनहितेक्षुद्रजनमध्येषुसंस्थितिः ॥ पूयशोणितगंधीचदुर्गकांतारसंश्रयः १२ विचरिष्यसिपापात्मासर्वव्याधिसमन्वितः ॥ वयःप्राप्यपरि क्षितुवेदव्रतमवाप्यच १३ कृपाच्छारद्वताच्छूरःसर्वास्त्राण्युपपत्स्यते ॥ विदित्वापरमास्त्राणिक्षत्रधर्मव्रतेस्थितः १४ षष्टिंवर्षाणिधर्मात्मावसुधांपालयिष्यति ॥ इतश्चोर्ध्वंमहाबाहुःकुरुराजोभविष्यति १५ परिक्षिन्नामनृपतिर्मिषतस्तेसुदुर्मते ॥ अहंतंजीवयिष्यामिदग्धंशस्त्राग्नितेजसा ॥ पश्यमेतपसोवीर्यंसत्यस्यचनरा धम १६ ॥ व्यासउवाच ॥ यस्मादनादृत्यकृतंत्वयाऽस्मान्कर्मदारुणम् ॥ ब्राह्मणस्यसतश्चैवयस्मात्तेवृत्तमीदृशम् १७ तस्माद्यद्देवकीपुत्रउक्तवानुत्तमंवचः ॥ असंशयंतेतद्भाविक्षत्रधर्मस्त्वयाऽऽश्रितः १८ ॥ अश्वत्थामोवाच ॥ सहैवभवताब्रह्मंस्थास्यामिपुरुषेष्विह ॥ सत्यवागस्तुभगवानयंचपुरुषोत्तमः १९ ॥ वैशंपायन उवाच ॥ प्रदायाथमणिंद्रौणिःपांडवानांमहात्मनाम् ॥ जगामविमनास्तेषांसर्वेषांपश्यतांवनम् २० पांडवाश्चापिगोविंदंपुरस्कृत्यहतद्विषः ॥ कृष्णद्वैपायनंचै वनारदंचमहामुनिं २१ द्रोणपुत्रस्यसहजंमणिमादायसत्वराः ॥ द्रौपदीमभ्यधावंतप्रायोपेतांमनस्विनीं २२ ॥ वैशंपायनउवाच ॥ ततस्तेपुरुषव्याघ्राःसदश्वैरनि लोपमैः ॥ अभ्ययुःसहदाशार्हाःशिबिरंपुनरेवहि २३ अवतीर्यरथेभ्यस्तुत्वरमाणामहारथाः ॥ ददृशुर्द्रौपदींकृष्णामार्तामार्ततराःस्वयम् २४ तामुपेत्यनिरानंदांदुः खशोकसमन्विताम् ॥ परिवार्यव्यतिष्ठंतपांडवाःसहकेशवाः २५ ततोराज्ञाऽभ्यनुज्ञातोभीमसेनोमहाबलः ॥ प्रददौतंमणिंदिव्यंवचनंचेदमब्रवीत् २६ अयंभद्रे तवमणिःपुत्रहंतुर्जितःसते ॥ उत्तिष्ठशोकमुत्सृज्यक्षात्रधर्ममनुस्मर २७ प्रयाणेवासुदेवस्यशमार्थमसितेक्षणे ॥ यान्युक्तानित्वयाभीरुवाक्यानिमधुघातिनि २८

२३ कृष्णामश्वत्थाम्नःपराभवेन आर्तांपुत्रादेःशोकेन २४ । २५ । २६ । २७ मधुघातिनिमधुदैत्यहंतरि २८

२९ । ३० । ३१ विवक्षतांवक्तुमिच्छतांवाच्याःनिंद्याःनैवस्म ३२ । ३३ । ३४ । ३५ । ३६ । ३७ ॥ इतिसौप्तिकेपर्वणिनीलकंठीयेभारतभावदीपेषोडशोऽध्यायः ॥ १६ ॥ हतेष्विति १ । २ ३ । ४ । ५ । ६ । ७ । ८ 'तरतिशोकमात्मवित्' इतिश्रुतेर्युधिष्ठिरादीनांशोकमपनिनीषुरात्मज्ञानमाह आदिरिति यथाकनकंकुंडलादेरादिर्मध्यमंतश्चैवंरुद्रोऽपिजगतइत्यर्थः । तर्हिसांख्याभि





नैवमेपतयःसंतिनपुत्राभ्रातरोनच ॥ नवैत्वमितिगोविंदशममिच्छतिराजनि २९ उक्तवत्यसितीव्राणिवाक्यानिपुरुषोत्तमम् ॥ क्षत्रधर्मानुरूपाणितानिसंस्म र्तुमर्हसि ३० हतोदुर्योधनःपापोराज्यस्यपरिपंथिकः ॥ दुःशासनस्यरुधिरंपीतंविस्फुरतोमया ३१ वैरस्यगतमानृण्यंनस्मवाच्याविवक्षताम् ॥ जित्वामुक्तो द्रोणपुत्रोब्राह्मण्याद्गौरवेणच ३२ यशोऽस्यपतितंदेविशरीरंत्ववशेषितम् ॥ वियोजितश्चमणिनाभ्रंशितश्चायुधंभुवि ३३ ॥ द्रौपद्युवाच ॥ केवलानृण्यमाप्ताऽ स्मिगुरुपुत्रोगुरुर्मम ॥ शिरस्येतंमणिंराजाप्रतिबध्नातुभारत ३४ तंगृहीत्वाततोराजाशिरस्येवाकरोत्तदा ॥ गुरोरुच्छिष्टमित्येवद्रौपद्यावचनादपि ३५ ततोदि व्यंमणिवरंशिरसाधारयन्प्रभुः ॥ शुशुभेसतदाराजासचंद्रइवपर्वतः ३६ उत्तस्थौपुत्रशोकार्त्ताततःकृष्णामनस्विनी ॥ कृष्णंचापिमहाबाहुःपरिपप्रच्छधर्मराट् ३७ ॥ इतिश्रीमहाभारतेसौप्तिकेपर्वणि ऐषिकेपर्वणिद्रौपदीसांत्वनायांषोडशोऽध्यायः ॥ १६ ॥ ॥ वैशंपायनउवाच ॥ हतेषुसर्वसैन्येषुसौप्तिकेतैरथैस्त्रिभिः ॥ शोचन्युधिष्ठिरोराजादाशार्हमिदमब्रवीत् १ कथंनुकृष्णपापेनक्षुद्रेणाकृतकर्मणा ॥ द्रौणिनानिहताःसर्वेममपुत्रामहारथाः २ तथाकृतास्त्रविक्रांतासहस्रशतयोधि नः ॥ द्रुपदस्यात्मजाश्चैवद्रोणपुत्रेणपातिताः ३ यस्यद्रोणोमहेष्वासोनप्रादादाहवेमुखम् ॥ निजघ्नेरथिनांश्रेष्ठंधृष्टद्युम्नंकथंनुसः ४ किंनुतेनकृतंकर्मतथायुक्तंनर र्षभ ॥ यदेकःसमरेसर्वानवधीन्नोगुरोःसुतः ५ ॥ श्रीभगवानुवाच ॥ नूनंसदेवदेवानामीश्वरेश्वरमव्ययम् ॥ जगामशरणंद्रौणिरेकस्तेनावधीद्बहून् ६ प्रसन्नोहि महादेवोदद्यादमरतामपि ॥ वीर्यंचगिरिशोदद्याद्येनेंद्रमपिशातयेत् ७ वेदाहंहिमहादेवंतत्त्वेनभरतर्षभ ॥ यानिचास्यपुराणानिकर्माणिविविधानिच ८ आदिरे षहिभूतानांमध्यमंतश्चभारत ॥ विचेष्टतेजगच्चेदंसर्वमस्यैवकर्मणा ९ एवंसिसृक्षुर्भूतानिददर्शप्रथमंविभुः ॥ पितामहोऽब्रवीच्चैनंभूतानिसृजमाचिरम् १० हरि केशस्तथेत्युक्त्वाभूतानांदोषदर्शिवान् ॥ दीर्घकालंतपस्तेपेमग्नोंऽभसिमहातपाः ११ सुमहांतंततःकालंप्रतीक्ष्यैनंपितामहः ॥ स्रष्टारंसर्वभूतानांससर्जमनसाऽपरम् १२ सोऽब्रवीत्पितरंदृष्ट्वागिरिशंसुप्तमंभसि ॥ यदिमेनाग्रजोऽस्त्यन्यस्ततःस्रक्ष्याम्यहंप्रजाः १३ तमब्रवीत्पितानास्तित्वदन्यःपुरुषोऽग्रजः ॥ स्थाणुरेषजलेमग्नो विस्रब्धःकुरुवैकृतम् १४ भूतान्यन्वसृजत्सप्तदक्षादींस्तुप्रजापतीन् ॥ यैरिमंव्यकरोत्सर्वंभूतग्रामंचतुर्विधम् १५

मतप्रधानवदचेतनःस्यादित्याशंक्याह विचेष्टतइति । 'कोह्येवान्यात्कःप्राण्यात् । यदेषआकाशआनंदोनस्यात्' इतिश्रुतेः प्राणापानचेष्टाऽपीश्वराधीनाकिमुतमरणमारणादिरितिसर्वस्ये श्वराधीनत्वात्नकृताकृताभ्यांपुरुषेणसंतापःकार्यइतिभावः ९ नकेवलंवयमेवास्यकर्मणाचेष्टांकुर्मोऽपितुब्रह्मादयोऽपीत्याहएवमित्यादिना प्रथमंरुद्रंतमोमयं विभुस्त्रिगुणमयईश्वरः १० । ११ अपरंचतुर्मुखंरजोमयं १२ । १३ वैकृतंविकारं १४ । १५

१६ त्रातुरक्षतु १७ । १८ । १९ २० लिंगंप्रसवसामर्थ्यं मेढ्रूपेण अविध्यत भूमौपातितवान् एतदेवपूजितंतस्सर्वसिद्धिप्रदमास्तिकानांभविष्यतीत्यभिप्रायेण २१ । २२ । २३ । २४ तपसेति मे मत्तपसाजलवासरूपेणप्रजार्थमन्नंजातंअन्नादन्नमित्येवंरूपेणओषध्योबीजांकुरसंतानक्रमेणपरिवर्त्तंते एवमेवान्नाद्रेतोद्वाराप्रजाश्चपरिवर्ततेऽतःप्रवाहरूपेणसृष्टिस्थितिकार्ययोर्निर्वाहेसातत्येनप्र वृत्तेकिमीश्वरेणेत्यभिप्रायेणलिंगेऽमाहतेसतिईश्वरस्तिरोधानंप्राप्तवानित्यर्थः २५ । २६ ॥ इतिसौप्तिकेपर्वणिनीलकंठीयेभारतभावदीपे सप्तदशोऽध्यायः ॥ १७ ॥ ॥ ७ ॥ ॥ ७ ॥
ततइति ईश्वरातिरोधानानंतरंदेवयुगेकृतयुगेविनाऽपीश्वराराधनंप्रजाःस्वाभाविकैरेवशमदमादिभिःकृतकृत्याअभूवन् अतीतेतुदेवयुगेनिरीश्वरास्ताःकेवलेनकर्मणैवफलसिद्धिमिच्छंत्योयज्ञ

ताःसृष्टमात्राःक्षुधिताःप्रजाःसर्वाःप्रजापतिम् ॥ विभक्षयिषवोराजन्सहसाप्राद्रवंस्तदा १६ समक्ष्यमाणस्त्राणार्थीपितामहमुपाद्रवत् ॥ आभ्योमांभगवांस्त्रातुवृ त्तिरासांविधीयताम् १७ ततस्ताभ्योददावन्नमोषधीःस्थावराणिच ॥ जंगमानिचभूतानिदुर्बलानिबलीयसाम् १८ विहितान्नाःप्रजास्तास्तुजग्मुःसृष्टायथाग तम् ॥ ततोववृधिरेराजन्प्रीतिमत्यःस्वयोनिषु १९ भूतग्रामेविवृद्धेतुतुष्टेलोकगुरावपि ॥ उदतिष्ठज्जलाज्ज्येष्ठःप्रजाश्चेमाददर्शसः २० बहुरूपाःप्रजासृष्टाविवृद्धा श्चस्वतेजसा ॥ चुक्रोधभगवान्रुद्रोलिंगंस्वंचाप्यविध्यत २१ तत्प्रविद्धंतथाभूमौतथैवप्रत्यतिष्ठत ॥ तमुवाचाव्ययोब्रह्मावचोभिःशमयन्निव २२ किंकृतंसलिले शर्वचिरकालस्थितेनते ॥ किमर्थंचेदमुत्पाद्यलिंगंभूमौप्रवेशितम् २३ सोऽब्रवीज्जातसंरंभस्तथालोकगुरुर्गुरुम् ॥ प्रजाःसृष्टाःपरेणेमाःकिंकरिष्याम्यनेनवै २४ तपसाऽधिगतंचान्नंप्रजार्थंमेपितामह ॥ ओषध्यःपरिवर्त्तेरन्यथैवंसततंप्रजाः २५ एवमुक्त्वासुसंक्रोधोजगामविमनाभवः ॥ गिरेर्मुंजवतःपादंतपस्तप्तुंमहातपाः २६ ॥ इतिश्रीमहाभारतेसौप्तिकेपर्वणि ऐषीकेपर्वणि युधिष्ठिरकृष्णसंवादेसप्तदशोऽध्यायः ॥ १७ ॥ ॥ ७ ॥ ॥ श्रीभगवानुवाच ॥ ततोदेवयुगेऽतीतेदेवावै समकल्पयन् ॥ यज्ञंवेदप्रमाणेनविधिवद्यष्टुमीप्सवः १ कल्पयामासुरथतेसाधनानिहवींषिच ॥ भागार्हादेवताश्चैवयज्ञियंद्रव्यमेवच २ तावैरुद्रमजानंत्योया थातथ्येनदेवताः ॥ नाकल्पयंतदेवस्यस्थाणोर्भागंनराधिप ३ सोऽकल्प्यमानेभागेतुकृत्तिवासामखेऽमरैः ॥ ततःसाधनमन्विच्छन्धनुरादौससर्जह ४ लोकयज्ञः क्रियायज्ञोगृहयज्ञःसनातनः ॥ पंचभूतनृयज्ञश्चजज्ञेसर्वमिदंजगत् ५ लोकयज्ञैर्नृयज्ञैश्चकपर्दीविदधेधनुः ॥ धनुःसृष्टमभूत्तस्यपंचकिष्कुप्रमाणतः ६

मकल्पयन् १ । २ रुद्रंईश्वरंयज्ञस्यफलदातारम् ३ ‘योवाएतदक्षरंगार्ग्यविदित्वाऽस्मिँल्लोकेयजतिजुहोतिददातितपस्तप्यतेऽन्तवदेवास्यतद्भवति’ इतिश्रुतेरीश्वराराधनहीनोयज्ञोऽन्तवा नित्येतद्दर्शयतिआख्यायिकामुखेनैवसोऽकल्प्यमानेइत्यादिना साधनंयज्ञनाशकम् ४ लोकयज्ञोलोकेषणासर्वोमांसाधुमेवजानात्विातिवासनारूपः । क्रियायज्ञः गर्भाधानादिसंस्काररूपः । गृहयज्ञःपत्नीसाध्याग्निहोत्रादिः । पंचभूतनृयज्ञःपंचभूतानांगुणैःशब्दादिभिर्यानृणांप्रीतिस्तद्रूपः विषयजंसुखमित्यर्थः । एतैरेवचतुर्भिर्यज्ञैःसर्वंजगत्सृष्टम् ५ तत्रमध्यमयोःशास्त्रोक्तयोर्यज्ञयो र्नाशार्थंप्रथमचरमयज्ञाभ्यामीश्वरोधनुःकृतवान् किष्कुर्हस्तः पंचहस्तंपंचविषयप्रमाणं लोकवासनादेहवासनाचशब्दादिविषयपंचकात्परतोनास्तीत्यर्थः ६

वषट्कारसंज्ञेनगृहयज्ञेनतेउभेवासनेकिंचित्संकोचंगच्छतइतिसतस्यवासनाद्वयरूपस्यधनुषोज्यास्थानीयः यानितुयज्ञांगानिचत्वारिअर्थित्वंसमर्थत्वंविद्वत्त्वंशास्त्रेणपर्युदस्तत्वंचतानितस्यधनुषः लोकदेहवासनारूपस्यसन्नहनेदार्ढ्यायअभवन् ७ यतःयज्ञांगानिलोकेषणादौविनियुक्तानिमूढैस्ततोहेतोःमहादेवःक्रुद्धोयज्ञंजघानेत्यादिस्पष्टार्थम् ८। ९। १०। ११। १२ रौद्रेणअहंकारेणदर्पेण वाऽहमेवयज्वादाताविज्ञातेत्येवरूपेण यज्ञोयज्ञात्पूर्वंअपक्रांतंमुख्याद्विविदिषंतियज्ञेनेत्यादिशास्त्रोक्तादात्मविविदिषाख्यात्फलात्भ्रष्टः १३ किंचित्कालंफलंभुंजानोदिवियजमानरूपेणव्यराजत तथापितेनकालात्मनारुद्रेणान्वीयमानःसन् ततोऽप्यपक्रांतः स्वर्गात्च्युतोऽभूदित्यर्थः १४ अपक्रांतेयज्ञेयज्ञफलेभुक्तेसतिव्रीह्यादौगर्भवासादौचजातेयज्ञपतौ सुरान् इंद्रियाणि संज्ञानप्रत्यभात्मूढान्यभूवन् । हेयोपादेयविवेकशून्यान्यभूवन्नित्यर्थः १५ ऽयंबकइति त्रीणिश्रवणमनननिदिध्यासनानिअंबकानिगमकानियस्यसपरमेश्वरः सवितुर्यज्ञप्रसोतुर्देहस्य । बाहूकर्मकरणहेतू ।

वषट्कारोऽभवज्ज्यातुधनुषस्तस्यभारत ॥ यज्ञांगानिचचत्वारितस्यसंनहनेऽभवन् ७ ततःक्रुद्धोमहादेवस्तदुपादायकार्मुकम् ॥ आजगामाथतत्रैवयत्रदेवाः समीजिरे ८ तमात्तकार्मुकंदृष्ट्वाब्रह्मचारिणमव्ययम् ॥ विव्यथेपृथिवीदेवीपर्वताश्चचकंपिरे ९ नववौपवनश्चैवनाग्निर्जज्वालवैधितः ॥ व्यभ्रमच्चापिसंविग्नंदिवि नक्षत्रमंडलम् १० नबभौभास्करश्चापिसोमःश्रीमुक्तमंडलः ॥ तिमिरेणाकुलंसर्वमाकाशंचाभवद्वृतम् ११ अभिभूतास्ततोदेवाविषयान्नप्रजज्ञिरे ॥ नप्रत्यभाच्चयज्ञःसदेवतास्त्रेसिरेतथा १२ ततःसयज्ञंविव्याधरौद्रेणहृदिपत्रिणा ॥ अपक्रांतस्ततोयज्ञोमृगोभूत्वासपावकः १३ सतुतेनैवरूपेणदिव्यंप्राप्यव्यराजत ॥ अन्वीयमानोरुद्रेणयुधिष्ठिरनभस्तले १४ अपक्रांतेततोयज्ञेसंज्ञानप्रत्यभात्सुरान् ॥ नष्टसंज्ञेषुदेवेषुनप्राज्ञायतकिंचन १५ त्र्यंबकःसवितुर्बाहूभगस्यनयनेतथा ॥ पूष्णश्चदशनान्क्रुद्धोधनुष्कोट्याव्यशातयत् १६ प्राद्रवंततोदेवायज्ञांगानिचसर्वशः ॥ केचित्तत्रैवघूर्णंतोगतासवइवाभवन् १७ सतुविद्राव्यतत्सर्वंशितिकंठोऽवहस्यच ॥ अवष्टभ्यधनुष्कोटिंरुरोधविबुधांस्ततः १८ ततोवागमरैरुक्ताज्यांतस्यधनुषोऽच्छिनत् ॥ अथतत्सहसाराजंश्छिन्नज्यंविस्फुरद्धनुः १९ ततोविधनुषंदेवा देवश्रेष्ठमुपागमन् ॥ शरणंसहयज्ञेनप्रसादंचाकरोत्प्रभुः २० ततःप्रसन्नोभगवान्स्थाप्यकोपंजलाशये ॥ सजलंपावकोभूत्वाशोषयत्यनिशंप्रभो २१ भगस्यनयनेचैवबाहूचसवितुस्तथा ॥ प्रादात्पूष्णश्चदशनान्पुनर्यज्ञांश्चपांडव २२

तथाभगस्यनेत्रेमनसःसंकल्पौअहमिदंकरिष्येअहमिदंनकरिष्येइत्येवंरूपौविहितप्रतिषिद्धरूपौ । पूष्णोदशनान्वागिंद्रियस्थानानिमंत्रांश्चेत्यर्थः । एतानिसर्वाणिधनुष्कोट्यापूर्वोक्तयालोकेषणयादेहेषणयाव्यशातयत् १६। १७ एवंयज्ञेनष्टेऽपिधनुष्कोटिमपिपुण्याभावात्पूर्वोक्तांरुरोधततोलोकदेहयोरपिरंजनंकुंठितमभूदित्यर्थः १८ ततोऽमरैरुक्तावाक्विविदिषंतियज्ञेनेतिपूर्वोक्तादेववाणी ज्यांश्रौतयज्ञरूपां धनुषःपूर्वोक्तवासनाद्वयात्मकात् अच्छिनत् दूरीचकार निष्कामंईश्वरप्रीत्यर्थंयज्ञंकारितवतीत्यर्थः १९ विधनुषंकाम्यकर्महीनंदेवमात्मानंदेवाइंद्रियाण्युपागमन् चित्तशुद्ध्यतिशयादात्मवश्यान्यभूवन् । ततश्चईश्वरस्तैःशरणीकृतःप्रसन्नोऽभूत् २० कोपंरजस्तमोरूपं जलाशयेमूढचित्ते २१ ततःसात्विकोयज्ञःप्रवृत्तइत्याह भगस्येति पूर्ववदित्यर्थः २२

सर्वाणिहर्वीषिसर्दाणिकर्माणिइश्वरार्पितान्येवाकुर्वन्नित्यर्थः २३ । २४ । २५ फलितमाह नतदिति ईश्वरस्यवशेसर्वमितिज्ञात्वाशोकंमाकार्षीरितिभावः २६ ॥ इतिसौप्तिकेपर्वणिनील

ततःसुस्थमिदंसर्वंबभूवपुनरेवहि ॥ सर्वाणिचहवींष्यस्यदेवाभागमकल्पयन् २३ तस्मिन्क्रुद्धेऽभवत्सर्वमसुस्थंभुवनंप्रभो ॥ प्रसन्नेचपुनःसुस्थंप्रसन्नोऽस्यचवीर्यवान् २४ ततस्तेनिहताःसर्वेतवपुत्रामहारथाः ॥ अन्येचबहवःशूराःपांचालस्यपदानुगाः २५ नतन्मनसिकर्तव्यंनचतद्द्रौणिनाकृतम् ॥ महादेवप्रसादेनकुरुकार्यमनंतरम् २६ ॥ इतिश्रीमहाभारते शतसाहस्र्यांसंहितायां वैयासिक्यां सौप्तिकैषीकपर्वणिअष्टादशोऽध्यायः ॥ १८ ॥ ॥ ॥ ॥ ७ ॥ ॥ ऐषीकंपर्वसमाप्तम् ॥ ॥ पर्वद्वयमिदंसंलग्नम् ॥ ॥ अस्यानंतरंस्त्रीपर्वभविष्यति तस्यायमाद्यःश्लोकः ॥ ॥ जनमेजयउवाच ॥ ॥ हतेदुर्योधनेचैवहतेसैन्येचसर्वशः ॥ ॥ धृतराष्ट्रोमहाराजश्रुत्वाकिमकरोन्मुने ॥ १ ॥

कंठीयेभारतभावदीपे अष्टादशोऽध्यायः ॥ १८ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ समाप्तमिदंसौप्तिकंपर्व ॥

॥ अथ श्रीमहाभारते स्त्रीपर्वप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ एवंतत्त्वदृष्ट्याशोकोनकर्तव्यइत्युक्तं लोकदृष्ट्याऽपिसनकार्यइत्याह हतेदुर्योधनेचैवेत्यादिनाऽध्यायेनैकेन १ । २ अन्योन्यंकारितात्पांडवानांगर्भेब्रह्मशिरोऽस्त्रंपत
त्वित्यश्वत्थाम्नाशापोदत्तः । सहस्रंवर्षाणिगलत्कुष्ठोभविष्यसीत्यश्वत्थाम्नःकृष्णेनशापोदत्तइत्यर्थः ३ । ४ । ५ । ६ शून्याराजभिर्हीना केवलाउपरतोत्सवा ७ आनुपूर्व्येणेति आदौहता

॥ श्रीगणेशायनमः ॥ ॥ श्रीवेदव्यासायनमः ॥ ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींचैवततोजयमुदीरयेत् १ ॥ जनमेजयउवाच ॥ हते
दुर्योधनेचैवहतेसैन्येचसर्वशः ॥ धृतराष्ट्रोमहाराजश्रुत्वाकिमकरोन्मुने १ तथैवकौरवोराजाधर्मपुत्रोमहामनाः ॥ कृपप्रभृतयश्चैवकिमकुर्वततेत्रयः २ अश्वत्था
म्नःश्रुतंकर्मशापादन्योन्यकारितात् ॥ वृत्तांतमुत्तरंब्रूहियदभाषतसंजयः ३ वैशंपायनउवाच ॥ हतेपुत्रशतेदीनंछिन्नशाखमिवद्रुमम् ॥ पुत्रशोकाभिसंतप्तंधृतरा
ष्ट्रंमहीपतिम् ४ ध्यानमूकत्वमापन्नंचिंतयासमभिप्लुतम् ॥ अभिगम्यमहाराजसंजयोवाक्यमब्रवीत् ५ किंशोचसिमहाराजनास्तिशोकेसहायता ॥ अक्षौहि
ण्योहताश्चाष्टौदशचैवविशांपते ६ निर्जनेयंवसुमतीशून्यासंप्रतिकेवला ॥ नानादिग्भ्यःसमागम्यनानादेश्यानराधिपाः ७ सहैवतवपुत्रेणसर्वेवैनिधनंगताः ॥
पितॄणांपुत्रपौत्राणांज्ञातीनांसुहृदांतथा ॥ गुरूणांचानुपूर्व्येणप्रेतकार्याणिकारय ८ ॥ वैशंपायनउवाच ॥ तच्छ्रुत्वाकरुणंवाक्यंपुत्रपौत्रवधार्दितः ॥ पपा
तभुविदुर्धर्षोवाताहतइवद्रुमः ९ ॥ धृतराष्ट्रउवाच ॥ हतपुत्रोहतामात्योहतसर्वसुहृज्जनः ॥ दुःखंनूनंभविष्यामिविचरन्पृथिवीमिमाम् १० किंनुबंधुविहीनस्य
जीवितेनममाद्यवै ॥ लूनपक्षस्यइवमेजराजीर्णस्यपक्षिणः ११ हृतराज्योहतबंधुर्हतचक्षुश्चवैतथा ॥ नभ्राजिष्येमहाप्राज्ञक्षीणरश्मिरिवांशुमान् १२ नकृतंसु
हृदांवाक्यंजामदग्न्यस्यजल्पतः ॥ नारदस्यचदेवर्षेःकृष्णद्वैपायनस्यच १३ सभामध्येतुकृष्णेनयच्छ्रेयोऽभिहितंमम ॥ अलंवैरेणतेराजन्पुत्रःसंगृह्यतामिति
१४ तच्चवाक्यमकृत्वाऽहंभृशंतप्यामिदुर्मतिः ॥ नहिश्रोताऽस्मिभीष्मस्यधर्मयुक्तंप्रभाषितम् १५ दुर्योधनस्यचतथावृषभस्येवनर्दतः ॥ दुःशासनवधंश्रुत्वाकर्ण
स्यचविपर्ययं १६ द्रोणसूर्योपरागंचहृदयंमेविदीर्यते ॥ नस्मराम्यात्मनःकिंचित्पुरासंजयदुष्कृतम् १७ यस्येदंफलमद्येहमयामूढेनभुज्यते ॥ नूनंव्यपकृतंकिंचिन्म
यापूर्वेषुजन्मसु १८ येनमांदुःखभागेषुधाताकर्मसुयुक्तवान् ॥ परिणामश्चवयसःसर्वबंधुक्षयश्चमे १९ सुहृन्मित्रविनाशश्चदैवयोगादुपागतः ॥ कोऽन्योऽस्तिदुःखितत
रोमत्तोऽन्योहिपुमान्भुवि २० तन्ममाद्यैवपश्यंतुपांडवाःसंशितव्रताः ॥ विवृतंब्रह्मलोकस्यदीर्घमध्वानमास्थितम् २१ ॥ वैशंपायनउवाच ॥ तस्यलालप्यमानस्य
बहुशोकंवितन्वतः ॥ शोकापहंनरेंद्रस्यसंजयोवाक्यमब्रवीत् २२ शोकंराजन्व्यपनुदश्रुतास्तेवेदनिश्चयाः ॥ शास्त्रागमाश्चविविधावृद्धेभ्योनृपसत्तम २३ सृंजये
पुत्रशोकार्तेयदूचुर्मुनयःपुरा ॥ यथायौवनजंदर्पमास्थितेतेसुतेनृप २४ नत्वयासुहृदांवाक्यंब्रुवतामवधारितम् ॥ स्वार्थश्चनकृतःकश्चिल्लुब्धेनफलगृद्धिना २५

नामादावेव पश्चाद्धतानांपश्चादेवेतिपौर्वापर्येण प्रेतानांपरेतानां कार्याणिपारलौकिकानिकर्माणि ८ । ९ दुःखंयथास्यात्तथाभविष्यामि १० । ११ । १२ । १३ । १४ श्रोताऽस्मिश्रुतवानास्मि
१५ विपर्ययं विनाशम् १६ । १७ । १८ । १९ । २० तन्मामिति अद्यैवप्राणत्यागंकरिष्यामीत्यर्थः २१ वितन्वतः विरचयतः २२ । २३ । २४ । २५

अवृत्तेतिच्छेदः २६ । २७ शल्यश्चमंत्रीतिपूर्वेणान्वयः २८ । २९ । ३० ब्रुवन्दुर्योधनआसीदितिशेषः ३१ । ३२ । ३३ । ३४ । ३५ । ३६ प्रपातंपर्वताग्राद्भ्रंशम् ३७ परंमोक्षं ३८ ३९ । ४० । ४१ । ४२ दहंतिशोकाइत्यर्थात् मन्युंदैन्यं 'मन्युर्दैन्येक्रतौक्रुधि'इत्यमरः । आत्मानंचित्तं आत्मनाधैर्येणधारय प्राणान्मात्याक्षीरित्यर्थः ४३ । ४४ ॥ इतिस्त्रीपर्वणिनीलकंठीये

असिनैवैकधारेणस्वबुद्ध्यातुविचेष्टितम् ॥ प्रायशोऽवृत्तसंपन्नाःसततंपर्युपासिताः २६ यस्यदुःशासनोमंत्रीराधेयश्चदुरात्मवान् ॥ शकुनिश्चैवदुष्टात्माचित्रसेनश्चदुर्मतिः २७ शल्यश्चयेनवैसर्वंशल्यभूतंकृतंजगत् ॥ कुरुवृद्धस्यभीष्मस्यगांधार्याविदुरस्यच २८ द्रोणस्यचमहाराजकृपस्यचशरद्वतः ॥ कृष्णस्यचमहाबाहोनारदस्यचधीमतः २९ ऋषीणांचतथाऽन्येषांव्यासस्यामिततेजसः ॥ नकृतंतेनवचनंतवपुत्रेणभारत ॥ नधर्मःसत्कृतःकश्चिन्नित्यंयुद्धमभीप्सता ३० अल्पबुद्धिरहंकारीनित्यंयुद्धमितिब्रुवन् ॥ क्रूरोदुर्मर्षणोनित्यमसंतुष्टश्चवीर्यवान् ३१ श्रुतवानसिमेधावीसत्यवांश्चैवनित्यदा ॥ नमुह्यंतीदृशाःसंतोबुद्धिमंतोभवादृशाः ३२ नधर्मःसत्कृतःकश्चित्तवपुत्रेणमारिष ॥ क्षपिताःक्षत्रियाःसर्वेशत्रूणांवर्धितंयशः ३३ मध्यस्थोहित्वमप्यासीर्नक्षमंकिंचिदुक्तवान् ॥ दुर्धरेणत्वयाभारस्तुलयानसमंधृतः ३४ आदावेवमनुष्येणवर्तितव्यंयथाक्षमं ॥ यथानातीतमर्थंवैपश्चात्तापेनयुज्यते ३५ पुत्रगृद्ध्यात्वयाराजन्प्रियंतस्यचिकीर्षितम् ॥ पश्चात्तापमिमंप्राप्तोनत्वंशोचितुमर्हसि ३६ मधुयःकेवलंदृष्ट्वाप्रपातंनानुपश्यति ॥ सभ्रष्टोमधुलोभेनशोचत्येवंयथाभवान् ३७ अर्थान्नशोचन्प्राप्नोतिनशोचन्विंदतेफलं ॥ नशोचन्श्रियमाप्नोतिनशोचन्विंदतेपरं ३८ स्वयमुत्पादयित्वाऽग्निंवस्त्रेणपरिवेष्टयन् ॥ दह्यमानोमनस्तापंभजतेनसपंडितः ३९ त्वयैवससुतेनायंवाक्यवायुसमीरितः ॥ लोभाज्येनचसंसिक्तोज्वलितःपार्थपावकः ४० तस्मिन्समिद्धेपतिताःशलभाइवतेसुताः ॥ तान्वैशराग्निनिर्दग्धान्नत्वंशोचितुमर्हसि ४१ यच्चाश्रुपातात्कलिलंवदनंवहसेनृप ॥ अशास्त्रदृष्टमेतद्धिनप्रशंसंतिपंडिताः ४२ विस्फुलिंगाइवह्येतान्दहंतिकिलमानवान् ॥ जहीहिमन्युंबुद्ध्यावैधारयात्मानमात्मना ४३ ॥ वैशंपायनउवाच ॥ एवमाश्वासितस्तेनसंजयेनमहात्मना ॥ विदुरोभूयएवाहबुद्धिपूर्वंपरंतपः ४४ ॥ इतिश्रीमहाभारतेस्त्रीपर्वणिजलप्रदानिकपर्वणिविशोककरणेप्रथमोऽध्यायः ॥ १ ॥

॥ वैशंपायनउवाच ॥ ततोऽमृतसमैर्वाक्यैर्ह्लादयन्पुरुषर्षभम् ॥ वैचित्रवीर्यंविदुरोयदुवाचनिबोधतत् १ ॥ विदुरउवाच ॥ उत्तिष्ठराजन्किंशेषेधारयात्मानमात्मना ॥ एषावैसर्वसत्वानांलोकेश्वरपरागतिः २ सर्वेक्षयांतानिचयाःपतनांताःसमुच्छ्रयाः ॥ संयोगाविप्रयोगांतामरणांतंचजीवितम् ३ यदाशूरंचभीरुंचयमःकर्षतिभारत ॥ तत्किंनयोत्स्यंतिहितेक्षत्रियाःक्षत्रियर्षभ ४ अयुध्यमानोम्रियतेयुध्यमानश्चजीवति ॥ कालंप्राप्यमहाराजनकश्चिदतिवर्तते ५ अभावादीनिभूतानिभावमध्यानिभारत ॥ अभावनिधनान्येवतत्रकापरिदेवना ६

भारतभावदीपे प्रथमोऽध्यायः ॥ १ ॥ ततइति १ एषामरणांता अतउत्तिष्ठशोकंत्यज २।३ ।४। ५ 'भावांतरमभावोहिकयाचित्तुव्यपेक्षया' इतिन्यायेनकृत्स्नप्रपंचस्याभावोब्रह्मतदादीनिभावोनामरूपात्मकतातन्मध्यानि तथाऽभावनिधनानीति तथाच । 'आदावंतेचयन्नास्तिवर्तमानेऽपितत्तथा' इतिन्यायेनमध्येऽप्यभावभूतानांतेषांस्वप्नेष्वप्रतीयमानानामिवनाशेव्यर्थःशोकइत्यर्थः ६

सांसिद्धिकेस्वभावसिद्धे ७ । ८ संवर्तयतिस्ववशंनयति ९ तत्रगामिनांपरत्रगमनशीलानांयस्यकालउपस्थितःसोऽग्रेप्रयाति १० । ११ । १२ । अदर्शनादज्ञानात् १३ नोऽस्माकंक्षत्रियाणां

नशोचन्मृतमन्वेतिनशोचन्म्रियतेनरः ॥ एवंसांसिद्धिकेलोकेकिमर्थमनुशोचसि ७ कालःकर्षतिभूतानिसर्वाणिविविधान्युत ॥ नकालस्यप्रियःकश्चिन्नद्वेष्यःकुरुसत्तम ८ यथावायुस्तृणाग्राणिसंवर्तयतिसर्वशः ॥ तथाकालवशंयांतिभूतानिभरतर्षभ ९ एकसार्थप्रयातानांसर्वेषांतत्रगामिनाम् ॥ यस्यकालःप्रयात्यग्रेतत्रकापरिदेवना १० नचाप्येतान्हतान्युद्धेराजन्शोचितुमर्हसि ॥ प्रमाणंयदिशास्त्राणिगतास्तेपरमांगतिम् ११ सर्वेस्वाध्यायवंतोहिसर्वेचचरितव्रताः ॥ सर्वेचाभिमुखाःक्षीणास्तत्रकापरिदेवना १२ अदर्शनादापतिताःपुनश्चादर्शनंगताः ॥ नैतेतवनतेषांत्वंतत्रकापरिदेवना १३ हतोऽपिलभतेस्वर्गंहत्वाचलभतेयशः ॥ उभयंनोबहुगुणंनास्तिनिष्फलतारणे १४ तेषांकामदुघान्लोकानिंद्रःसंकल्पयिष्यति ॥ इंद्रस्यातिथयोह्येतेभवंतिभरतर्षभ १५ नयज्ञैर्दक्षिणावद्भिर्नतपोभिर्नविद्यया ॥ स्वर्गंयांतियथामर्त्यायथाशूरारणेहताः १६ शरीराग्निषुशूराणांजुहुवुस्तेशराहुतीः ॥ हूयमानान्शरांश्चैवसेहुस्तेजस्विनोमिथः १७ एवंराजंस्तवाचक्षेस्वर्ग्यंपंथानमुत्तमम् ॥ नयुद्धादधिकंकिंचित्क्षत्रियस्येहविद्यते १८ क्षत्रियास्तेमहात्मानःशूराःसमितिशोभनाः ॥ आशिषःपरमाःप्राप्तानशोच्याःसर्वएवहि १९ आत्मानमात्मनाऽऽश्वास्यमाशुचःपुरुषर्षभ ॥ नाद्यशोकाभिभूतस्त्वंकायमुत्स्रष्टुमर्हसि २० मातापितृसहस्राणिपुत्रदारशतानिच ॥ संसारेष्वनुभूतानिकस्यतेकस्यवावयम् २१ शोकस्थानसहस्राणिभयस्थानशतानिच ॥ दिवसेदिवसेमूढमाविशंतिनपंडितम् २२ नकालस्यप्रियःकश्चिन्नद्वेष्यःकुरुसत्तम ॥ नमध्यस्थःक्वचित्कालःसर्वंकालःप्रकर्षति २३ कालःपचतिभूतानिकालःसंहरतेप्रजाः ॥ कालःसुप्तेषुजागर्तिकालोहिदुरतिक्रमः २४ अनित्यंयौवनंरूपंजीवितंद्रव्यसंचयः ॥ आरोग्यंप्रियसंवासोगृद्ध्येदेषुनपंडितः २५ नजानपदिकंदुःखमेकःशोचितुमर्हसि ॥ अप्यभावेनयुज्येततच्चास्यननिवर्तते २६ अशोचन्प्रतिकुर्वीतयदिपश्येत्पराक्रमम् ॥ भैषज्यमेतद्दुःखस्ययदेतन्नानुचिंतयेत् २७ चिंत्यमानंहिनव्येतिभूयश्चापिप्रवर्धते ॥ अनिष्टसंप्रयोगाच्चविप्रयोगात्प्रियस्यच २८ मानुषामानसैर्दुःखैर्दह्यंतेचाल्पबुद्धयः ॥ नार्थोनधर्मोनसुखंयदेतदनुशोचसि २९ नचनापैतिकार्यार्थात्त्रिवर्गाच्चैवहीयते ॥ अन्यामन्यांधनावस्थांप्राप्यवैशेषिकींनराः ॥ असंतुष्टाःप्रमुह्यंतिसंतोषंयांतिपंडिताः ३० प्रज्ञयामानसंदुःखंहन्याच्छारीरमौषधैः ॥ एतद्विज्ञानसामर्थ्यंनबालैःसमतामियात् ३१ शयानंचानुशेतेहितिष्ठंतंचानुतिष्ठति ॥ अनुधावतिधावंतंकर्मपूर्वकृतंनरम् ३२ यस्यांयस्यामवस्थायांयत्करोतिशुभाशुभम् ॥ तस्यांतस्यामवस्थायांतत्फलंसमुपाश्नुते ३३

१४ । १५ । १६ । १७ । आचक्षेकथयामि १८ । १९ दीर्घमध्वानमास्थितंमांपांडवाअद्यैवपश्यंतुइत्युक्तंतत्राह आत्मानमिति कायंदेहं कार्यमित्यपिपाठः २० । २१ । २२ । २३ । २४ २५ जानपदिकंसर्वसाधारणं अभावेनमरणेन तच्चदुःखंच २६ । २७ । २८ । २९ कार्यार्थान्नापैतीति नापित्वपैत्येव ३० । ३१ । ३२ अवस्थायांयौवनादिरूपायाम् ३३

येनेति स्थूलेनदेहेनकृतंतत्तेनैवभुज्यते मनःकृतंचेत्तेनैवभुज्यतेस्वप्नादौ ३४ अपकृतस्यायथार्थस्य ३५ । ३६ मूलंशरीरम् ३७ ॥ इतिस्त्रीपर्वणिनीलकंठीयेभारतभावदीपेद्वितीयोऽध्यायः ॥ २ ॥
सुभाषितैरिति १ । २ शांतिंचित्तस्योपरतिम् ३ शांतौहेतुर्लोकस्यअशाश्वतत्वज्ञानमित्याह अशाश्वतमिति ४ यदेति पितृवनंमृत्युम् ५ यदिमरणमात्राद्विमुच्यतेतर्हिदेहशोषणंकिमर्थंक्रियतइ
त्याहनिर्मांसैरिति तत्रपरलोके तेषांमृतानां परेतपास्विनः तस्मान्मरणानंतरमपिविषमगतिरस्त्येवेत्यर्थः ६ येनहेतुनाअदृष्टरूपेणकुलेनरूपेणचविशेषणंप्राप्नोतिसोऽदृष्टरूपोहेतुःसर्वत्रकार्येऽस्ती

येनयेनशरीरेणयद्यत्कर्मकरोतियः ॥ तेनतेनशरीरेणतत्फलंसमुपाश्नुते ३४ आत्मैवह्यात्मनोबंधुरात्मैवरिपुरात्मनः ॥ आत्मैवह्यात्मनःसाक्षीकृतस्यापकृतस्य
च ३५ शुभेनकर्मणासौख्यंदुःखंपापेनकर्मणा ॥ कृतंभवतिसर्वत्रनाकृतंविद्यतेक्वचित् ३६ नहिज्ञानविरुद्धेषुबह्वपायेषुकर्मसु ॥ मूलघातिषुसज्जंतेबुद्धिमंतोभव
द्विधाः ३७ ॥ इतिश्रीमहाभारतेस्त्रीपर्वणिजलप्रदानिकपर्वणि धृतराष्ट्रविशोककरणेद्वितीयोऽध्यायः ॥ २ ॥ ॥ ध ॥ ॥ धृतराष्ट्रउवाच ॥
सुभाषितैर्महाप्राज्ञशोकोऽयंविगतोमम ॥ भूयएवतुवाक्यानिश्रोतुमिच्छामितत्वतः १ अनिष्टानांचसंसर्गादिष्टानांचविसर्जनात् ॥ कथंहिमानसैर्दुःखैःप्रमुच्यंते
तुपंडिताः २ ॥ विदुरउवाच ॥ यतोयतोमनोदुःखात्सुखाद्वापिप्रमुच्यते ॥ ततस्ततोनियम्यैतच्छांतिंविंदेतवैबुधः ३ अशाश्वतमिदंसर्वंचिंत्यमानंनरर्षभ ॥
कदलीसन्निभोलोकःसारोह्यस्यनविद्यते ४ यदाप्राज्ञाश्चमूढाश्चधनवंतोऽथनिर्धनाः ॥ सर्वेपितृवनंप्राप्यस्वपंतिविगतज्वराः ५ निर्मांसैरस्थिभूयिष्ठैर्गात्रैःस्नायु
निबंधिभिः ॥ किंविशेषंप्रपश्यंतितत्रतेषांपरेजनाः ६ येनप्रत्यवगच्छेयुःकुलरूपविशेषणम् ॥ कस्मादन्योन्यमिच्छंतिविप्रलब्धधियोनराः ७ गृहाणीवहिम
र्त्यानामाहुर्देहानिपंडिताः ॥ कालेनविनियुज्यंतेसत्वमेकंतुशाश्वतम् ८ यथाजीर्णमजीर्णंवावस्त्रंत्यक्त्वातुपूरुषः ॥ अन्यद्रोचयतेवस्त्रमेवंदेहाःशरीरिणाम् ९ वैचि
त्रवीर्यसाध्यंहिदुःखंवायदिवासुखम् ॥ प्राप्नुवंतीहभूतानिस्वकृतेनैवकर्मणा १० कर्मणाप्राप्यतेस्वर्गःसुखंदुःखंचभारत ॥ ततोवहतितंभारमवशःस्ववशोऽपिवा
११ यथाचमृन्मयंभांडंचक्रारूढंविपद्यते ॥ किंचित्प्रक्रियमाणंवाकृतमात्रमथापिवा १२ छिन्नंवाप्यवरोप्यंतमवतीर्णमथापिवा ॥ आर्द्रंवाऽप्यथवाशुष्कंपच्यमा
नमथापिवा १३ उत्तार्यमाणमापाकादुद्धृतंचापिभारत ॥ अथवापरिभुज्यंतमेवंदेहाःशरीरिणाम् १४ गर्भस्थोवाप्रसूतोवाऽप्यथवादिवसांतरः ॥ अर्धमासगतोवा
ऽपिमासमात्रगतोऽपिवा १५ संवत्सरगतोवाऽपिद्विसंवत्सरएववा ॥ यौवनस्थोऽथमध्यस्थोवृद्धोवाऽपिविपद्यते १६ प्राक्कर्मभिस्तुभूतानिभवंतिनभवंतिच ॥ ए
वंसांसिद्धिकेलोकेकिमर्थमनुतप्यसे १७ यथातुसलिलंराजन्क्रीडार्थमनुसंतरत् ॥ उन्मज्जेच्चनिमज्जेच्चकिंचित्सत्वंनराधिप १८ एवंसंसारगहनेउन्मज्जननिमज्जने ॥
कर्मभोगेनबध्यंतेक्लिश्यंतेचाल्पबुद्धयः १९

तिपूर्वकर्माधीनेषुपुत्रादिसंयोगवियोगेषुनशोकादिकंयुक्तमि
तिभावः ७ सत्वंलिंगशरीरं शाश्वतंमोक्षपर्यंतंस्थायित्वात् ८ । ९ । १० । ११ । १२ अवरोप्यंतंअवरोप्यमाणम् १३ आपाकात्कुलालकृतात्पात्रपाककूटात् १४ । १५ । १६ । १७ । १८ । १९

२० ॥ इतिश्रीपर्वणिनीलकंठीयेभारतभावदीपेतृतीयोऽध्यायः ॥ ३ ॥ कथमिति १ जन्मप्रभृतिशुक्रशोणितसंयोगादारभ्य क्रियागर्भवृद्धिरूपाउपलक्ष्यते कलिलंशुक्रशोणितसंयोगः । एकरात्रोषितंकलिलंभवतिपंचरात्राद्बुद्बुदइत्यादिशास्त्राद्गम्यते । तत्रकलिलेवसतेजीवइतिशेषः । किंचिदंतरंपूर्वदिनापेक्षयावृद्ध्यवस्थाभेदेनअल्पेनपरिमाणांतरेण २ पंचमेमासेअतीतेअवयवाभिव्यक्तेपिंडेवासंचैतन्यस्याविर्भावंअकल्पयत् पूर्वंचैतन्यसत्तामात्रंपंचमेऽतीतेतुषष्ठेआविर्भावइतिविशेषः । ततःसदशमासाभ्यंतरेसंपूर्णोगर्भोजायते ३।४। ५ तस्माद्योनिद्वारात्संसारात्संसारंप्राप्य ६

तेतुप्राज्ञाःस्थिताःसत्वेसंसारेऽस्मिन्हितैषिणः ॥ समागमज्ञाभूतानांतेयांतिपरमांगतिम् २० ॥ इतिश्रीम० स्त्रीप० जलप्रदानिकप० विशोककरणेतृतीयोऽध्यायः ॥ ३ ॥ ॥ धृतराष्ट्रउवाच ॥ कथंसंसारगहनंविज्ञेयंवदतांवर ॥ एतदिच्छाम्यहंश्रोतुंतत्त्वमाख्याहिपृच्छतः १ ॥ विदुरउवाच ॥ जन्मप्रभृतिभूतानांक्रियासर्वोपलक्ष्यते ॥ पूर्वमेवेहकलिलेवसतेकिंचिदंतरम् २ ततःसपंचमेऽतीतेमासेवासमकल्पयत् ॥ ततःसर्वांगसंपूर्णोगर्भोवैसतुजायते ३ अमेध्यमध्येवसतिमांसशोणितलेपने ॥ ततस्तुवायुवेगेनऊर्ध्वपादोह्यधःशिराः ४ योनिद्वारमुपागम्यबहून्क्लेशान्समृच्छति ॥ योनिसंपीडनाच्चैवपूर्वकर्मभिरन्वितः ५ तस्मान्मुक्तःससंसारादन्यान्पश्यत्युपद्रवान् ॥ ग्रहास्तमनुगच्छंतिसारमेयाइवामिषम् ६ ततःप्राप्तोत्तरेकालेव्याधयश्चापितंतथा ॥ उपसर्पंतिजीवंतंबध्यमानंस्वकर्मभिः ७ तंबद्धमिंद्रियैःपाशैःसंगस्वादुभिरावृत्तम् ॥ व्यसनान्यपिवर्तंतेविविधानिनराधिप ८ बध्यमानश्चतैर्भूयोनैवतृप्तिमुपैतिसः ॥ तदानावैतिचैवायंप्रकुर्वन्साध्वसाधुवा ९ तथैवपरिरक्षंतियेध्यानपरिनिष्ठिताः ॥ अयंनबुद्ध्यतेतावद्यमलोकमथागतम् १० यमदूतैर्विकृष्यंश्चमृत्युंकालेनगच्छति ॥ वाग्घीनस्यचयन्मात्रमिष्टानिष्टंकृतंमुखे ॥ भूयएवात्मनाऽऽत्मानंबध्यमानमुपेक्षते ११ अहोविनिकृतोलोकोलोभेनचवशीकृतः ॥ लोभक्रोधभयोन्मत्तोनात्मानमवबुध्यते १२ कुलीनत्वेचरमतेदुष्कुलीनान्विकुत्सयन् ॥ धनदर्पेणदृप्तश्चदरिद्रान्परिकुत्सयन् १३ मूर्खानितिपरानाहनात्मानंसमवेक्षते ॥ दोषान्क्षिपतिचान्येषांनात्मानंशास्तुमिच्छति १४ यदाप्राज्ञाश्चमूर्खाश्चधनवंतश्चनिर्धनाः ॥ कुलीनाश्चाकुलीनाश्चमानिनोऽथाप्यमानिनः १५ सर्वेपितृवनंप्राप्ताःस्वपंतिविगतत्वचः ॥ निर्मांसैरस्थिभूयिष्ठैर्गात्रैःस्नायुनिबंधनैः १६ विशेषंनप्रपश्यंतितत्रतेषांपरेजनाः ॥ येनप्रत्यवगच्छेयुःकुलरूपविशेषणं १७ यदासर्वेसमंन्यस्ताःस्वपंतिधरणितले ॥ कस्मादन्योन्यमिच्छंतिप्रलब्धुमिहदुर्बुधाः ॥ प्रत्यक्षंचपरोक्षंचयोनिशम्यश्रुतिंत्विमां १८ अध्रुवेजीवलोकेऽस्मिन्योधर्ममनुपालयन् ॥ जन्मप्रभृतिवर्तेतप्राप्नुयात्परमांगतिम् १९

७संगःविषयसंगःस्वादुर्येषांतैः ८ । ९ यद्यपिमूढःपापंनावैति तथाऽपिध्यानपरिनिष्ठितास्ततस्तथैवयथाशास्त्रमात्मानंपरिरक्षंत्येव १० तस्यैवंयमदूतैर्नीयमानस्यवाग्घीनस्यसर्वेंद्रियाविकलस्ययन्मात्रंयत्किंचिदिष्टानिष्टंपुण्यंपापंतन्मुखेप्रथमंकृतंभवति तत्रापिपुण्यफलंभुंजानोविषयेषुयोगादात्मानंबध्यमानंगर्भवासादिनापात्यमानंउपेक्षतेनतुस्वहितंकामयते ११।१२।१३।१४।१५विगतत्वचःआच्छादनहीनाः१६तस्यनास्तिक्यमनुवदतियेनेत्यादिना १७ यदेतिसार्धःपरमतानुवादः प्रत्यक्षादितःसर्वेसर्वाणिभूतानिसमंतुल्यंस्वपंतिक्रमिविट्भस्मभावंगच्छंतितदाऽन्योन्यंप्रलब्धुंविप्रलब्धुंकस्विग्यजमानंदेहिअमुंलोकंप्राप्स्यसीतिप्रतारयितुंदुर्बुधाःदुष्पंडिताइच्छंतिदेहरूपस्यात्मनोनष्टत्वात् आमुष्मिकफलवचनमनर्थकंस्यादितिभावः १८ वर्तेतपरमार्थसाधनव्यापारंकुर्यात् १९

पंथानोमार्गान् द्वितीयार्थेप्रथमा अन्यान्गतिमार्गान्मोक्षयते किंतुऊर्ध्वमार्गमेवप्रापयति २० ॥ इतिस्त्रीपर्वणिनीलकंठीयेभारतभावदीपेचतुर्थोऽध्यायः ॥ ४ ॥ यदिदंधर्मगहनमित्यध्यायस्य विवरणंउत्तराध्यायेनक्रियतेअहोखलुमहदुःखमित्यादिना १ । २ द्वाभ्यामविद्याकर्मभ्यांजायतइतिद्विजःजंतुः वनंसंसारः क्रव्यादाव्याधयः ३ महान्स्वनोदुःखशब्दोयैस्तैः सिंहादिभिर्व्याधिभिः ४ । ५ । ६ । ७ वागुराः विषयतृष्णादिवासनाः ८ । ९ । १० । ११ विलग्नः तत्रैवाभिमानवान् १२ ऊर्ध्वपादोह्यधःशिराः स्वर्गच्युतः संसारमनुसृतः १३ नागंकालसर्पंवीनाहोमु

एवंसर्वंविदित्वावैयस्तत्त्वमनुवर्तते ॥ सप्रमोक्षयतेसर्वान्पंथानोमनुजेश्वर २० ॥ इतिश्रीमहाभारतेस्त्रीपर्वणिजलप्रदानिकपर्वणिविशोककरणेचतुर्थोऽध्यायः ॥४॥ धृतराष्ट्रउवाच ॥ यदिदंधर्मगहनंबुद्ध्यासमनुगम्यते ॥ तद्विविस्तरतःसर्वंबुद्धिमार्गंप्रशंसमे १ ॥ विदुरउवाच ॥ अत्रतेवर्तयिष्यामिनमस्कृत्वास्वयंभुवे ॥ यथासंसारगहनंवदंतिपरमर्षयः २ कश्चिन्महतिकांतारेवर्तमानोद्विजःकिल ॥ महद्दुर्गमनुप्राप्तोवनंक्रव्यादसंकुलम् ३ सिंहव्याघ्रगजर्क्षौघैरतिघोरंमहास्वनैः ॥ पिशितादैरतिभयैर्महोग्राकृतिभिस्तथा ४ समंतात्संपरिक्षिप्तंयत्स्मदृष्ट्वात्रसेद्यमः ॥ तदस्यदृष्ट्वाहृदयमुद्वेगमगमत्परम् ५ अभ्युच्छ्रयंचरोम्णांवैविक्रियाश्चपरंतप ॥ सतद्वनंव्यनुसरन्संप्रधावन्नितस्ततः ६ वीक्षमाणोदिशःसर्वाशरणंक्वभवेदिति ॥ सतेषांछिद्रमन्विच्छन्प्रद्रुतोभयपीडितः ७ नचनिर्यातिवैदूरंनवातैर्विप्रमोच्यते ॥ अथापश्यद्वनंघोरंसमंताद्वागुरावृतम् ८ बाहुभ्यांसंपरिक्षिप्तंस्त्रियापरमघोरया ॥ पंचशीर्षधरैर्नागैःशैलैरिवसमुन्नतैः ९ नभःस्पृशैर्महावृक्षैःपरिक्षिप्तंमहावनम् ॥ वनमध्येचतत्राभूदुदपानःसमावृतः १० वल्लीभिस्तृणच्छन्नाभिर्दृढाभिरभिसंवृतः ॥ पपातसद्विजस्तत्रनिगूढेसलिलाशये ११ विलग्नश्चाभवत्तस्मिन्लतासंतानसंकुले ॥ पनसस्ययथाजातंवृंतबद्धंमहाफलम् १२ सतथालंबतेतत्रह्यूर्ध्वपादोह्यधःशिराः ॥ अथतत्रापिचान्योऽस्यभूयोजातउपद्रवः १३ कूपमध्येमहानागमपश्यतमहाबलम् ॥ कूपवीनाहवेलायामपश्यतमहागजम् १४ षड्वक्त्रंकृष्णशुक्लंचद्विषट्कपदचारिणम् ॥ क्रमेणपरिसर्पंतंवल्लीवृक्षसमावृतम् १५ तस्यचापिप्रशाखासुवृक्षशाखावलंबिनः ॥ नानारूपामधुकराघोररूपाभयावहाः १६ आसतेमधुसंवृत्यपूर्वमेवनिकेतजाः ॥ भूयोभूयःसमीहंतेमधूनिभरतर्षभ १७ स्वादनीयानिभूतानांयैर्बालोविप्रकृष्यते ॥ तेषांमधूनांबहुधाधाराप्रस्रवतेतदा १८ आलंबमानःसपुमान्धारांपिबतिसर्वदा ॥ नचास्यतृष्णाविरतापिबमानस्यसंकटे १९ अभीप्सतितदानित्यमतृप्तःसपुनःपुनः ॥ नचास्यजीवितेराजन्निर्वेदःसमजायत २० तत्रैवचमनुष्यस्यजीविताशाप्रतिष्ठिता ॥ कृष्णाश्वेताश्वतंवृक्षंकुट्टयंतिचमूषिकाः २१

खवंधनं तस्यस्वदेहकूपप्रच्छादकस्यमरणकारणस्यक्रोधलोभादेर्वेलायांसंवत्सराख्यःकालगजःपरिवर्तते तंतिरोधातुंसहायोभवति १४ षड्ऋतवःवक्त्राणियस्यतं कृष्णशुक्लंकृष्णशुक्लपक्षमयं द्विषट्काः द्वादशपादामासायस्य वल्लीजीविताशा वृक्ष आयुर्जीवितकालः १५ प्रशाखासुबाल्ययौवनाद्यवस्थासु मधुकराःकामरसार्थिनइंद्रियगणाः १६ मधुकामान्संवृत्यसंगृह्य निकेताःसंधिग्रहास्तज्जाःसमीहंतेइंद्रियमधुकाराः १७ इंद्रियतृष्णयाजीवोपिनष्टव्यतीत्याह तेषामिति १८ । १९ । २० तत्रैवकामसुखे कृष्णाःश्वेताश्चमूषिकाःरात्र्यहानि वृक्षंकुट्टयंतिआयुःक्षिण्वंति २१

व्यालैःदुष्टमतंगजादितुल्यैर्व्याधिभिः स्त्रियाजरया नागेनमृत्युसर्पेण कुंजरेणसंवत्सराख्येनकालेन २२ वृक्षप्रपातोमरणं मधुलोभाद्विषयसुखासक्तेः २३ । २४ इतिस्त्रीपर्वणिनीलकंठीये भारत

व्यालैश्ववनदुर्गांतेस्त्रियाचपरमोग्रया ॥ कूपाधस्ताच्चनागेनवीनाहेकुंजरेनच २२ वृक्षप्रपाताच्चभयंमूषिकेभ्यश्चपंचमम् ॥ मधुलोभान्मधुकरैःषष्ठमाहुर्महद्भयम् २३ एवंसवसतेतत्रक्षिप्तःसंसारसागरे ॥ नचैवजीविताशायांनिर्वेदमुपगच्छति २४ ॥ इतिश्रीमहाभारतेस्त्रीपर्वणिजलप्रदानिकप० विशोककरणेपंचमोऽध्यायः ॥ ५ ॥ धृतराष्ट्रउवाच ॥ अहोखलुमहद्दुःखंकृच्छ्रवासश्चतस्यह ॥ कथंतस्यरतिस्तत्रतुष्टिर्वावदतांवर १ सदेशःक्वनुयत्रासौवसतेधर्मसंकटे ॥ कथंवासविमुच्येतनरस्तस्मान्महाभयात् २ एतन्मेसर्वमाचक्ष्वसाधुचेष्टामहेतदा ॥ कृपामेमहतीजातातस्याभ्युद्धरणेनहि ३ ॥ विदुरउवाच ॥ उपमानमिदंराजन्मोक्षविद्भिरुदाहृतम् ॥ सुकृतंविंदतेयेनपरलोकेषुमानवः ४ उच्यतेयत्तुकांतारंमहासंसारएवसः ॥ वनंदुर्गंहियच्चैतत्संसारगहनंहितत् ५ येचतेकथितान्व्यालाव्याधयस्तेप्रकीर्तिताः ॥ यासानारीबृहत्काया अध्यतिष्ठततत्रवै ६ तामाहुस्तुजरांप्राज्ञारूपवर्णविनाशिनीम् ॥ यस्तत्रकूपोनृपतेसतुदेहःशरीरिणाम् ७ यस्तत्रवसतेऽधस्तान्महाहिःकालएवसः ॥ अंतकःसर्वभूतानांदेहिनांसर्वहार्यसौ ८ कूपमध्येचयाजातावल्लीयत्रसमानवः ॥ प्रतानेलंबतेलग्नोजीविताशाशरीरिणाम् ९ सयस्तुकूपवीनाहेतंवृक्षंपरिसर्पति ॥ षड्वक्त्रःकुंजरोराजन्सतुसंवत्सरःस्मृतः १० मुखानिऋतवोमासाःपादाद्वादशकीर्तिताः ॥ येतुवृक्षंनिकृंतंतिमूषिकाःपन्नगास्तथा ११ रात्र्यहानितुतान्याहुर्भूतानांपरिचिंतकाः ॥ येतेमधुकरास्तत्रकामास्तेपरिकीर्तिताः १२ यास्तुताबहुशोधाराःस्रवंतिमधुनिस्रवम् ॥ तांस्तुकामरसान्विद्याद्यत्रमज्जंतिमानवाः १३ एवंसंसारचक्रस्यपरिवृत्तिंविदुर्बुधाः ॥ येनसंसारचक्रस्यपाशांश्छिंदंतिवैबुधाः १४ ॥ इतिश्रीमहाभारतेस्त्रीपर्वणिजलप्रदानिकप० विशोककरणेषष्ठोऽध्यायः ॥ ६ ॥ धृतराष्ट्रउवाच ॥ अहोऽभिहितमाख्यानंभवतातत्त्वदर्शिना ॥ भूयएवतुमेहर्षःश्रुत्वावागमृतंतव १ ॥ विदुरउवाच ॥ श्रृणुभूयःप्रवक्ष्यामिमार्गस्यैतस्यविस्तरम् ॥ यच्छ्रुत्वाविप्रमुच्यंतेसंसारेभ्योविचक्षणाः २ यथातुपुरुषोराजन्दीर्घमध्वानमास्थितः ॥ क्वचित्क्वचिच्छ्रमाच्छ्रांतःकुरुतेवासमेववा ३ एवंसंसारपर्यायेगर्भवासेषुभारत ॥ कुर्वंतिदुर्बुधावासंमुच्यंतेतत्रपंडिताः ४ तस्मादध्वानमेवैतमाहुःशास्त्रविदोजनाः ॥ यत्तुसंसारगहनंवनमाहुर्मनीषिणः ५ सोऽयंलोकसमावर्तोमर्त्यानांभरतर्षभ ॥ चराणांस्थावराणांचनगृध्येत्तत्रपंडितः ६ शारिरामानसाश्चैवमर्त्यानांयेतुव्याधयः ॥ प्रत्यक्षाश्चपरोक्षाश्चतेव्यालाःकथिताबुधैः ७ क्लिश्यमानाश्चतैर्नित्यंवार्यमाणाश्चभारत ॥ स्वकर्मभिर्महाव्यालैर्नोद्विजंत्यल्पबुद्धयः ८

भावदीपेपंचमोऽध्याय ॥ ५ ॥ ॥ ७ ॥ अहोखल्वितिस्पष्टार्थः १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ येनेति येननिर्वेदेनपाशांश्छिंदंति १४ ॥ इतिस्त्रीपर्वणिनीलकंठीये भारतभावदीपेषष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ अहोऽभिहितमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८

९ । १० । ११ निधयः कालस्य कर्तव्यार्थसाधकाः अभिलिखितानि सर्वतो वयसा आयुषा सुखदुःखजराव्याधिभिः कर्मणा अदृष्टरूपेणन्यस्तानि १२ सत्त्वंबुद्धिः कर्मबुद्धिर्मनः । 'मनःप्रग्रहमेवच' इति श्रुतेः १३ यःसंघाताभिमानीभोक्ता वेगमनुधावति कर्ममार्गप्रवृत्तिमनुसरति परिवर्ततेभ्रमति १४ यःसंयतःसंयमीसंयच्छतेतानिंद्रियाश्वान्संयमवेसननिवर्तते संसारेमृतःसन्नपुनरावर्तते १५

अथापितैर्विमुच्येतव्याधिभिःपुरुषोनृप ॥ आवृणोत्येवतंपश्चाज्जरारूपविनाशिनी ९ शब्दरूपरसस्पर्शैर्गंधैश्चविविधैरपि ॥ मज्जमांसमहापंकेनिरालंबेसमंततः १० संवत्सराश्चमासाश्चपक्षाहोरात्रसंधयः ॥ क्रमेणास्योपयुंजंतिरूपमायुस्तथैवच ११ एतेकालस्यनिधयोनैतान्जानंतिदुर्बुधाः ॥ धात्राभिलिखितान्याहुःसर्वभूतानिकर्मणा १२ रथःशरीरंभूतानांसत्त्वमाहुस्तुसारथिम् ॥ इंद्रियाणिहयानाहुःकर्मबुद्धिस्तुरश्मयः १३ तेषांहयानांयोवेगंधावतामनुधावति ॥ सतुसंसारचक्रेऽस्मिंश्चक्रवत्परिवर्तते १४ यस्तान्संयमतेबुद्ध्यासंयतोननिवर्तते ॥ येतुसंसारचक्रेऽस्मिंश्चक्रवत्परिवर्तिते १५ भ्रममाणानमुह्यंतिसंसारेनभ्रमंतिते ॥ संसारेभ्रमतांराजन्दुःखमेतद्धिजायते १६ तस्मादस्यनिवृत्त्यर्थंयत्नमेवाचरेद्बुधः ॥ उपेक्षानात्रकर्तव्याशतशाखःप्रवर्धते १७ यतेंद्रियोनरोराजन्क्रोधलोभनिराकृतः ॥ संतुष्टःसत्यवादीयःसशांतिमधिगच्छति १८ याम्यमाहूरथंह्येनंमुह्यंतेयेनदुर्बुधाः ॥ सचैतत्प्राप्नुयाद्राजन्यत्त्वंप्राप्तोनराधिप १९ अनुतर्षुलमेवैतद्दुःखंभवतिमारिष ॥ राज्यनाशंसुहृन्नाशंसुतनाशंचभारत ॥ साधुःपरमदुःखानांदुःखभैषज्यमाचरेत् २० ज्ञानौषधमवाप्येहदूरपारंमहौषधम् ॥ छिंद्याद्दुःखमहाव्याधिंनरःसंयतमानसः २१ नविक्रमोनचाप्यर्थोनामित्रंनसुहृज्जनः ॥ तथोन्मोचयतेदुःखाद्यथाऽऽत्मास्थिरसंयमः २२ तस्मान्मैत्रंसमास्थायशीलमापद्यभारत ॥ दमस्त्यागोऽप्रमादश्चतेत्रयोब्रह्मणोहयाः २३ शीलरश्मिसमायुक्तःस्थितोयोमानसेरथे ॥ त्यक्त्वामृत्युभयंराजन्ब्रह्मलोकंसगच्छति २४ अभयंसर्वभूतेभ्योयोददातिमहीपते ॥ सगच्छतिपरंस्थानंविष्णोःपदमनामयम् २५ नतत्क्रतुसहस्रेणनोपवासैश्चनित्यशः ॥ अभयस्यचदानेनयत्फलंप्राप्नुयान्नरः २६ नह्यात्मनःप्रियतरंकिंचिद्भूतेषुनिश्चितम् ॥ अनिष्टंसर्वभूतानांमरणंनामभारत २७ तस्मात्सर्वेषुभूतेषुदयाकार्याविपश्चिता ॥ नानामोहसमायुक्ताबुद्धिजालेनसंवृताः २८ असूक्ष्मदृष्टयोमंदाभ्राम्यंतेतत्रतत्रह ॥ सुसूक्ष्मदृष्टयोराजन्व्रजंतिब्रह्मशाश्वतम् २९ इतिश्रीमहाभारतेस्त्रीपर्वणिजलप्रदानिकप०विशोककरणेसप्तमोऽध्यायः ॥ ७ ॥ ध्र ॥ वैशंपायनउवाच ॥ विदुरस्यतुतद्वाक्यंनिशम्यकुरुसत्तमः ॥ पुत्रशोकाभिसंतप्तःपपातभुविमूर्च्छितः १ तंतथापतितंभूमौनिःसंज्ञंप्रेक्ष्यबांधवाः ॥ कृष्णद्वैपायनश्चैवक्षत्ताचविदुरस्तथा २

जीवंतोऽपिताहृशानमुह्यंतिनभ्रमंतियोनिचक्रे १६ शतशाखःसंसारवृक्षः १७ क्रोधलोभौनिराकृतौयेनसः याम्यंयमलोकप्रापकंसंसारगहनं १९ अनुतर्षुं ऊंतृष्णाशीलंलक्षीकृत्य २० दूरपारंब्रह्मज्ञानं २१ स्थिराःपुनर्निवर्तितुमसमर्थः संयमस्तुच्छविषयेभ्यइंद्रियपरावृत्तिर्यस्यतादृशः आत्मास्त्रयं २२ ब्रह्मणःब्रह्मलोकस्यप्रापकाइतिशेषः २३ । २४ । २५ । २६ । २७ । २८ । २९ इतिस्त्रीपर्वणिनीलकंठीयेभारतभावदीपेसप्तमोऽध्यायः ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥ विदुरस्येति १ । २

३।४।५।६।७।८।९।१०।११।१२।१३।१४।१५।१६।१७।१८।१९।२०।२१।२२।२३।२४।२५।२६।२७।२८।२९।३०।३१।३२

संजयःसुहृदश्चान्येद्वाःस्थायेचास्यसंमताः ॥ जलेनसुखशीतेनतालवृंतैश्चभारत ३ परस्पर्शुश्चकरैर्गात्रंवीज्यमानश्चयत्नतः ॥ आश्वास्यतुचिरंकालंधृतराष्ट्रं
तथागतम् ४ अथदीर्घस्यकालस्यलब्धसंज्ञोमहीपतिः ॥ विललापचिरंकालंपुत्राधिभिरभिप्लुतः ५ धिगस्तुखलुमानुष्यंमानुषेषुपरिग्रहे ॥ यतोमूलानिदुः
खानिसंभवंतिमुहुर्मुहुः ६ पुत्रनाशेऽर्थनाशेचज्ञातिसंबंधिनामथ ॥ प्राप्यतेसुमहद्दुःखंविषाग्निप्रतिमंविभो ७ येनदह्यंतिगात्राणियेनप्रज्ञाविनश्यति ॥ येना
भिभूतःपुरुषोमरणंबहुमन्यते ८ तदिदंव्यसनंप्राप्तंमयाभाग्यविपर्ययात् ॥ तस्यांतंनाधिगच्छामिकृतेप्राणविमोक्षणात् ९ तथैवाहंकरिष्यामिअद्यैवद्विजस
त्तम ॥ इत्युक्त्वातुमहात्मानंपितरंब्रह्मवित्तमम् १० धृतराष्ट्रोऽभवन्मूढःसशोकंपरमंगतः ॥ अभूच्चतूष्णींराजाऽसौध्यायमानोमहीपते ११ तस्यतद्वचनंश्रुत्वा
कृष्णद्वैपायनःप्रभुः ॥ पुत्रशोकाभिसंतप्तंपुत्रंवचनमब्रवीत् १२ ॥ व्यासउवाच ॥ धृतराष्ट्रमहाबाहोयत्त्वांवक्ष्यामितच्छृणु ॥ श्रुतवानसिमेधावीधर्मार्थकुश
लःप्रभो १३ नतेऽस्त्यविदितंकिंचिद्वेदितव्यंपरंतप ॥ अनित्यतांहिमर्त्यानांविजानासिनसंशयः १४ अध्रुवेजीवलोकेचस्थानेवाशाश्वतेसति ॥ जीवितेमर
णांतेचकस्माच्छोचसिभारत १५ प्रत्यक्षंतवराजेंद्रवैरस्यास्यसमुद्भवः ॥ पुत्रंतेकारणंकृत्वाकालयोगेनकारितः १६ अवश्यंभवितव्येचकुरूणांवैशसेनृप ॥
कस्माच्छोचसितान्शूरान्गतान्परमिकांगतिम् १७ जानताचमहाबाहोविदुरेणमहात्मना ॥ यतितंसर्वयत्नेनशमंप्रतिजनेश्वर १८ नचदैवकृतोमार्गःशक्यो
भूतेनकेनचित् ॥ घटताऽपिचिरंकालंनियंतुमितिमेमतिः १९ देवतानांहियत्कार्यंमयाप्रत्यक्षतःश्रुतम् ॥ तत्तेहंसंप्रवक्ष्यामियथास्थैर्यंभवेत्तव २० पुराऽहंत्व
रितोयातःसभामैंद्रींजितक्लमः ॥ अपश्यंतत्रचतदासमवेतान्दिवौकसः २१ नारदप्रमुखाश्चापिसर्वेदेवर्षयोऽनघ ॥ तत्रचापिमयादृष्टापृथिवीपृथिवीपते २२
कार्यार्थमुपसंप्राप्तादेवतानांसमीपतः ॥ उपगम्यतदाधात्रीदेवानाहसमागतान् २३ यत्कार्यंममयुष्माभिर्ब्रह्मणःसदनेतदा ॥ प्रतिज्ञातंमहाभागास्तच्छीघ्रंसं
विधीयताम् २४ तस्यास्तद्वचनंश्रुत्वाविष्णुर्लोकनमस्कृतः ॥ उवाचवाक्यंप्रहसन्पृथिवींदेवसंसदि २५ धृतराष्ट्रस्यपुत्राणांयस्तुज्येष्ठःशतस्यवै ॥ दुर्योधन
इतिख्यातःसतेकार्यंकरिष्यति २६ तंचप्राप्यमहीपालंकृतकृत्याभविष्यसि ॥ तस्यार्थेपृथिवीपालाःकुरुक्षेत्रंसमागताः २७ अन्योन्यंघातयिष्यंतिदृढैःशस्त्रैः
प्रहारिणः ॥ ततस्तेभवितादेविभारस्ययुधिनाशनम् २८ गच्छशीघ्रंस्वकंस्थानंलोकान्धारयशोभने ॥ यएषतेसुतोराजन्लोकसंहारकारणात् २९ कलेरंशः
समुत्पन्नोगांधार्याजठरेनृप ॥ अमर्षीचपलश्चापिक्रोधनोदुष्प्रसाधनः ३० दैवयोगात्समुत्पन्नाभ्रातरश्चास्यतादृशाः ॥ शकुनिर्मातुलश्चैवकर्णश्चपरमःसखा
३१ समुत्पन्नाविनाशार्थंपृथिव्यांसहितानृपाः ॥ यादृशोजायतेराजातादृशोऽस्यजनोभवेत् ३२

३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ ॥ इतिस्त्रीपर्वणिनीलकंठीये भारतभावदीपे



अधर्मोधर्मतांयातिस्वामीचेद्धार्मिकोभवेत् ॥ स्वामिनोगुणदोषाभ्यांभृत्याःस्युर्नात्रसंशयः ३३ दुष्टंराजानमासाद्यगतास्तेतनयान्नृप ॥ एतमर्थंमहाबाहो नारदोवेदतत्त्ववित् ३४ आत्मापराधात्पुत्रास्तेविनष्टाःपृथिवीपत ॥ मातान्शोचस्वराजेंद्रनहिशोकेऽस्तिकारणम् ३५ नहितेपांडवाःस्वल्पमपराध्यंतिभा रत ॥ पुत्रास्तवदुरात्मानोयैरियंघातितामही ३६ नारदेनचभद्रंतेपूर्वमेवनसंशयः ॥ युधिष्ठिरस्यसमितौराजसूयेनिवेदितम् ३७ पांडवाःकौरवाःसर्वेसमा साद्यपरस्परम् ॥ नभविष्यंतिकौंतेययत्तेकृत्यंतदाचर ३८ नारदस्यवचःश्रुत्वातदाऽशोचंतपांडवाः ॥ एवंतसर्वमाख्यातंदेवगुह्यंसनातनम् ३९ कथंतेशो कनाशःस्यात्प्राणेषुचदयाप्रभो ॥ स्नेहश्चपांडुपुत्रेषुज्ञात्वादैवकृतंविधिम् ४० एषचार्थोमहाबाहोपूर्वमेवमयाश्रुतः ॥ कथितोधर्मराजस्यराजसूयेक्रतूत्तमे ४१ यतितंधर्मपुत्रेणमयागुह्यनिवेदिते ॥ अविग्रहेकौरवाणांदैवंतुबलवत्तरम् ४२ अनतिक्रमणीयोहिविधीराजन्कथंचन ॥ कृतांतस्यतुभूतेनस्थावरेणचरेणच ४३ भवान्धर्मपरोयत्रबुद्धिश्रेष्ठश्चभारत ॥ मुह्यतेप्राणिनांज्ञात्वागतिंचागतिमेवच ४४ त्वांतुशोकेनसंततंमुह्यमानंमुहुर्मुहुः ॥ ज्ञात्वायुधिष्ठिरोराजाप्राणान पिपरित्यजेत् ४५ कृपालुर्नित्यशोवीरस्तिर्यग्योनिगतेष्वपि ॥ सकथंत्वयिराजेंद्रकृपांनैवकरिष्यति ४६ ममचैवनियोगेनविधेश्चाप्यनिवर्तनात् ॥ पांडवा नांचकारुण्यात्प्राणान्धारयभारत ४७ एवंतेवर्तमानस्यलोकेकीर्तिर्भविष्यति ॥ धर्मार्थःसुमहांस्ताततप्तंस्याच्चतपश्चिरात् ४८ पुत्रशोकंसमुत्पन्नंहुताशंज्व लितंयथा ॥ प्रज्ञांभसामहाभागनिर्वापयसदासदा ४९ ॥ वैशंपायनउवाच ॥ तच्छ्रुत्वातस्यवचनंव्यासस्यामिततेजसः ॥ मुहूर्तंसमनुध्यायन्धृतराष्ट्रोऽभ्य भाषत ५० महताशोकजालेनप्रणुन्नोस्मिद्विजोत्तम ॥ नात्मानमवबुध्यामिमुह्यमानोमुहुर्मुहुः ५१ इदंतुवचनंश्रुत्वातवदेवनियोगजम् ॥ धारयिष्याम्यहंप्राणा न्घटिष्येनतुशोचितुम् ५२ एतच्छ्रुत्वातुवचनंव्यासःसत्यवतीसुतः ॥ धृतराष्ट्रस्यराजेंद्रतत्रैवांतरधीयत ५३ ॥ इतिश्रीमहाभारतेस्त्रीपर्वणिजलप्रदानिकप० धृतराष्ट्रविशोककरणेअष्टमोऽध्यायः ॥ ८ ॥ ७ ॥ ॥ जनमेजयउवाच ॥ गतेभगवतिव्यासेधृतराष्ट्रोमहीपतिः ॥ किमचेष्टतविप्रर्षेतन्मेव्याख्यातुमर्हसि १ तथैवकौरवोराजाधर्मपुत्रोमहामनाः ॥ कृपप्रभृतयश्चैवकिमकुर्वततेत्रयः २ अश्वत्थाम्नःश्रुतंकर्मशापश्चान्योन्यकारितः ॥ वृत्तांतमुत्तरंब्रूहियदभाषतसंजयः ३ ॥ वैशंपायनउवाच ॥ हतेदुर्योधनेचैवहतेसैन्येचसर्वशः ॥ संजयोविगतप्रज्ञोधृतराष्ट्रमुपस्थितः ४ ॥ संजयउवाच ॥ आगम्यनानादेशेभ्योनानाजनप देश्वराः ॥ पितृलोकंगताराजन्सर्वेतवसुतैःसह ५ याच्यमानेनसततंतवपुत्रेणभारत ॥ घातितापृथिवीसर्वावैरस्यांतंविधित्सता ६ पुत्राणामथपौत्राणांपितॄ णांचमहीपते ॥ आनुपूर्व्येणसर्वेषांप्रेतकार्याणिकारय ७ ॥ वैशंपायनउवाच ॥ तच्छ्रुत्वावचनंघोरंसंजयस्यमहीपतिः ॥ गतासुरिवनिश्चेष्टोन्यपतत्पृथिवीतले ८

॥ ९ ॥

अष्टमोऽध्यायः ॥ ८ ॥ ॥ ७ ॥ गतेइति १ । २ । ३ विगतप्रज्ञःव्यासदत्तंदिव्यज्ञानंयस्यसविगतप्रज्ञः ४ । ५ । ६ । ७ । ८

९ । १० शोकस्यातिगाढत्वात्पुनर्विदुरेणोक्तं अभावादीनीत्यादि ११ । १२ । १३ । १४ संवर्तयतिवर्तुलयति कंपयतिवा १५ । १६ । १७ । १८ । १९ । २० आचक्षेकथयामि २१ । २२

तंशयानमुपागम्यपृथिव्यांपृथिवीपतिम् ॥ विदुरःसर्वधर्मज्ञइदंवचनमब्रवीत् ९ उत्तिष्ठराजन्किंशेषेमाशुचोभरतर्षभ ॥ एषावैसर्वसत्वानांलोकेश्वरपरागतिः १० अभावादीनिभूतानिभावमध्यानिभारत ॥ अभावनिधनान्येवतत्रकापरिदेवना ११ नशोचन्मृतमन्वेतिनशोचन्म्रियतेनरः ॥ एवंसांसिद्धिकेलोकेकिमर्थ मनुशोचसि १२ अयुध्यमानोम्रियतेयुध्यमानस्तुजीवति ॥ कालंप्राप्यमहाराजनकश्चिदतिवर्तते १३ कालःकर्षतिभूतानिसर्वाणिविविधानिच ॥ नकाल स्यप्रियःकश्चिन्नद्वेष्यःकुरुसत्तम १४ यथावायुस्तृणाग्राणिसंवर्तयतिसर्वतः ॥ तथाकालवशंयांतिभूतानिभरतर्षभ १५ एकसार्थप्रयातानांसर्वेषांतत्रगामि नाम् ॥ यस्यकालःप्रयात्यग्रेतत्रकापरिदेवना १६ यांश्चापिनिहतान्युद्धेराजंस्त्वमनुशोचसि ॥ नशोच्याहिमहात्मनःसर्वेतेत्रिदिवंगताः १७ नयज्ञैर्दक्षि णावद्भिर्नतपोभिर्नविद्यया ॥ तथास्वर्गमुपायांतियथाशूरास्तनुत्यजः १८ सर्वेवेदविदःशूराःसर्वेसुचरितव्रताः ॥ सर्वेचाभिमुखाःक्षीणास्तत्रकापरिदेवना १९ शरीराग्निषुशूराणांजुहुवुस्तेशराहुतीः ॥ हूयमानान्शरांश्चैवसेहुरुत्तमपूरुषाः २० एवंराजंस्तवाचक्षेस्वर्ग्यंपंथानमुत्तमम् ॥ नयुद्धादधिकंकिंचित्क्षत्रियस्ये हविद्यते २१ क्षत्रियास्तेमहात्मानःशूराःसमितिशोभनाः ॥ आशिषंपरमांप्राप्तानशोच्याःसर्वएवहि २२ आत्मनाऽऽत्मानमाश्वास्यमाशुचःपुरुषर्षभ ॥ नाद्य शोकाभिभूतस्त्वंकार्यमुत्स्रष्टुमर्हसि २३ ॥ ॥ इति श्रीमहाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि विदुरवाक्ये नवमोऽध्यायः ॥ ९ ॥ ॥ वैशंपायनउवाच ॥ विदुरस्यतुतद्वाक्यंश्रुत्वातुपुरुषर्षभः ॥ युज्यतांयानमित्युक्त्वापुनर्वचनमब्रवीत् १ ॥ धृतराष्ट्रउवाच ॥ शीघ्रमानयगांधारींसर्वाश्चभरतस्त्रियः ॥ वधूंकुंतीमुपा दाययाश्चान्यास्तत्रयोषितः २ एवमुक्त्वासधर्मात्माविदुरंधर्मवित्तमम् ॥ शोकविप्रहतज्ञानोयानमेवान्वपद्यत ३ गांधारीपुत्रशोकार्ताभर्तुर्वचननोदिता ॥ सहकुं त्यायतोराजासहस्त्रीभिरुपाद्रवत् ४ ताःसमासाद्यराजानंभृशंशोकसमन्विताः ॥ आमंत्र्यान्योन्यमीयुःस्मभृशमुच्चुक्रुशुस्ततः ५ ताःसमाश्वासयत्क्षत्ताताभ्यश्चार्त तरःस्वयम् ॥ अश्रुकंठीःसमारोप्यततोऽसौनिर्ययौपुरात् ६ ततःप्रणादःसंजज्ञेसर्वेषुकुरुवेश्मसु ॥ आकुमारंपुरंसर्वमभवच्छोककर्शितम् ७ अदृष्टपूर्वायानार्यःपुरादे वगणैरपि ॥ पृथग्जनेनदृश्यंतेतास्तदानिहतेश्वराः ८ प्रकीर्यकेशान्सुशुभान्भूषणान्यवमुच्यच ॥ एकवस्त्रधरानार्यःपरिपेतुरनाथवत् ९ श्वेतपर्वतरूपेभ्योगृहे भ्यस्तास्त्वपाक्रमन् ॥ गुहाभ्यइवशैलानांपृषत्योहतयूथपाः १० तान्युदीर्णानिनारीणांतदावृंदान्यनेकशः ॥ शोकार्तान्यद्रवन्राजन्किशोरीणामिवांगने ११

कार्यअवश्यकर्तव्यमुदकदानादि । २३ ॥ ॥ इति स्त्रीपर्वणिनीलकंठीये भारतभावदीपेनवमोऽध्यायः ॥ ९ ॥ ॥ ७ ॥ ॥ विदुरस्येति १ । २ । ३ । ४ । ५ समारोप्यवाहने ष्वितिशेषः ६ । ७ । ८ । ९ पृषत्यश्चित्रहरिण्यः १० किशोरीणांअश्वशावकीनां ‘ किशोरोऽश्वस्यशावकः ’ इति मेदिनी । अंगनेनृत्यशिक्षाभूमौ ११

११ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० ॥ इति स्त्रीपर्वणिनीलकंठीयेभारतभावदीपेदशमोऽध्यायः ॥ १० ॥ ॥ ७ ॥ ॥ क्रोशमात्रमिति १ । २ । ३ । ४ । ५

प्रगृह्यबाहून्क्रोशंत्यःपुत्रान्भ्रातॄन्पितॄनपि ॥ दर्शयंतिवताहस्मयुगांतेलोकसंक्षयम् १२ विलपंत्योरुदंत्यश्चधावमानास्ततस्ततः ॥ शोकेनोपहतज्ञानाःकर्तव्यं नप्रजज्ञिरे १३ व्रीडांजग्मुःपुरायाःस्मसखीनामपियोषितः ॥ ताएकवस्त्रानिर्लज्जाःश्वश्रूणांपुरतोऽभवन् १४ परस्परंसुसूक्ष्मेषुशोकेष्वाश्वासयंस्तदा ॥ ताः शोकविह्वलाराजन्नवैक्षंतपरस्परम् १५ ताभिःपरिवृतोराजारुदतीभिःसहस्रशः ॥ निर्ययौनगराद्दीनस्तूर्णमायोधनंप्रति १६ शिल्पिनोवणिजोवैश्याःसर्वकर्मोपजीविनः ॥ तेपार्थिवंपुरस्कृत्यनिर्ययुर्नगराद्बहिः १७ तासांविक्रोशमानानामार्तानांकुरुसंक्षये ॥ प्रादुरासीन्महाञ्शब्दोव्यथयन्भुवनान्युत १८ युगांतकाले संप्राप्तेभूतानांदह्यतामिव ॥ अभावःस्यादयंप्राप्तइतिभूतानिमेनिरे १९ भृशमुद्विग्नमनसस्तेपौराःकुरुसंक्षये ॥ प्राक्रोशंतमहाराजस्वनुरक्तास्तदाभृशम् २० ॥ इति श्रीमहाभारतेस्त्रीपर्वणिजलप्रदानिकपर्वणि धृतराष्ट्रनिर्गमने दशमोऽध्यायः ॥ १० ॥ ॥ वैशंपायनउवाच ॥ क्रोशमात्रंततोगत्वाददृशुस्तान्महारथान् ॥ शारद्वतंकृपंद्रौणिंकृतवर्माणमेवच १ तेतुदृष्ट्वैवराजानंप्रज्ञाचक्षुषमीश्वरम् ॥ अश्रुकंठाविनिःश्वस्यरुदंतमिदमब्रुवन् २ पुत्रस्तवमहाराजकृत्वाकर्मसुदुष्करम् ॥ गतःसानुचरोराजन्शक्रलोकंमहीपते ३ दुर्योधनबलान्मुक्तावयमेवत्रयोरथाः ॥ सर्वमन्यत्परिक्षीणंसैन्यंतेभरतर्षभ ४ इत्येवमुक्त्वाराजानंकृपःशारद्वतस्ततः ॥ गांधारींपुत्रशोकार्तामिदंवचनमब्रवीत् ५ अभीतायुध्यमानास्तेघ्नंतःशत्रुगणान्बहून ॥ वीरकर्माणिकुर्वाणाःपुत्रास्तेनिधनंगताः ६ ध्रुवंसंप्राप्यलोकांस्तेनिर्मलाञ्शस्त्रनिर्जितान् ॥ भास्वरंदेहमास्थायविहरंत्यमराइव ७ नहिकश्चिद्धिशूराणांयुद्ध्यमानःपराङ्मुखः ॥ शस्त्रेणनिधनंप्राप्तोनचकश्चित्कृतांजलिः ॥ ८ एवंतांक्षत्रियस्याहुःपुराणाःपरमांगतिम् ॥ शस्त्रेणनिधनंसंख्येतन्नशोचितुमर्हसि ९ नचापिशत्रवस्तेषामृद्ध्यंतेराज्ञिपांडवाः ॥ शृणुयत्कृतमस्माभिरश्वत्थामपुरोगमैः १० अधर्मेणहतंश्रुत्वाभीमसेनेनतेसुतम् ॥ सुप्तंशिबिरमासाद्यपांडूनांकदनंकृतम् ११ पंचालानिहताःसर्वेधृष्टद्युम्नपुरोगमाः ॥ द्रुपदस्यात्मजाश्चैवद्रौपदेयाश्चपातिताः १२ तथाविशसनंकृत्वापुत्रशत्रुगणस्यते ॥ प्राद्रवामरणेस्थातुंनहिशक्यामहेत्रयः १३ तेहिशूरामहेष्वासाःक्षिप्रमेष्यंतिपांडवाः ॥ अमर्षवशमापन्नावैरंप्रतिजिहीर्षवः १४ तेहतानात्मजाञ्श्रुत्वाप्रमत्ताःपुरुषर्षभाः ॥ निरीक्षंतःपदंशूराःक्षिप्रमेवयशस्विनि १५ तेषांतुकदनंकृत्वासंस्थातुंनोत्सहामहे ॥ अनुजानीहिनोराज्ञिमाचशोकेमनःकृथाः १६ राजंस्त्वमनुजानीहिधैर्यमातिष्ठचोत्तमम् ॥ दिष्टांतंपश्यचापित्वंक्षात्रंधर्मंचकेवलम् १७ इत्येवमुक्त्वाराजानंकृत्वाचाभिप्रदक्षिणम् ॥ कृपश्चकृतवर्माचद्रोणपुत्रश्चभारत १८ अवेक्षमाणाराजानंधृतराष्ट्रंमनीषिणम् ॥ गंगामनुमहाराजतूर्णमश्वानचोदयन् १९

६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ दिष्टांतंमरणम् १७ । १८ । १९

२० । २१ । २२ । २३ तदनंतरंकृपाचार्यकृतवर्मभ्यांवियोगानंतरम् २४ ॥ इतिस्त्रीपर्वणिनीलकंठीये भारतभावदीपेएकादशोऽध्यायः ॥ ११ ॥ ॥ हतेष्विति १ । २ । ३ । ४ । ५

अपक्रम्यतुतेराजन्सर्वएवमहारथाः ॥ आमंत्र्यान्योन्यमुद्विग्नास्त्रिधातेप्रययुस्तदा २० जगामहास्तिनपुरंकृपःशारद्वतस्तदा ॥ स्वमेवराष्ट्रंहार्दिक्योद्रौणि र्व्यासाश्रमंययौ २१ एवंतेप्रययुर्वीरावीक्षमाणाःपरस्परम् ॥ भयार्ताःपांडुपुत्राणामागस्कृत्वामहात्मनाम् २२ समेत्यवीराराजानंतदात्वनुदितेरवौ ॥ विप्र जग्मुर्महात्मानोयथेच्छकमरिंदमाः २३ समासाद्याथवैद्रौणिंपांडुपुत्रामहारथाः ॥ व्यजयंस्तेरणेराजन्विक्रम्यतदनंतरम् २४ ॥ इतिश्रीमहाभारतेस्त्रीप र्वणिजलप्रदानिकपर्वणिकृपद्रौणिभोजदर्शनेएकादशोऽध्यायः ॥ ११ ॥ ॥ वैशंपायनउवाच ॥ हतेषुसर्वसैन्येषुधर्मराजोयुधिष्ठिरः ॥ शुश्रुवेपितरंवृ द्धंनिर्यातंगजसाह्वयात् १ सोऽभ्ययात्पुत्रशोकार्तःपुत्रशोकपरिप्लुतम् ॥ शोचमानंमहाराजभ्रातृभिःसहितस्तदा २ अन्वीयमानोवीरेणदाशार्हेणमहात्मना ॥ युयुधानेनचतथातथैवचयुयुत्सुना ३ तमन्वगात्सुदुःखार्ताद्रौपदीशोककर्शिता ॥ सहपांचालयोषिद्भिर्यास्तत्रासन्समागताः ४ सगंगामनुवृंदानिस्त्रीणांभरत सत्तम ॥ कुररीणामिवार्तानांक्रोशंतीनांददर्शह ५ ताभिःपरिवृतोराजाक्रोशंतीभिःसहस्रशः ॥ ऊर्ध्वबाहुभिरार्ताभीरुदतीभिःप्रियाप्रियैः ६ क्वनुधर्मज्ञता राज्ञःक्वनुसाऽद्यानृशंसता ॥ यच्चावधीत्पितॄन्भ्रातॄन्गुरुपुत्रान्सखीनपि ७ घातयित्वाकथंद्रोणंभीष्मंचापिपितामहम् ॥ मनस्तेऽभून्महाबाहोहत्वाचापिज यद्रथम् ८ किंनुराज्येनतेकार्यंपितॄन्भ्रातॄनपश्यतः ॥ अभिमन्युंचदुर्धर्षंद्रौपदेयांश्चभारत ९ अतीत्यतामहाबाहुःक्रोशंतीःकुररीरिव ॥ ववंदेपितरंज्येष्ठं धर्मराजोयुधिष्ठिरः १० ततोऽभिवाद्यपितरंधर्मेणामित्रकर्षणः ॥ न्यवेदयंतनामानिपांडवास्तेऽपिसर्वशः ११ तमात्मजांतकरणंपितापुत्रवधार्दितः ॥ अ प्रीयमाणःशोकार्तःपांडवंपरिषस्वजे १२ धर्मराजंपरिष्वज्यसांत्वयित्वाचभारत ॥ दुष्टात्माभीममन्वैच्छद्दिधक्षुरिवपावकः १३ सकोपपावकस्तस्यशोकवा युसमीरितः ॥ भीमसेनमयंदावंदिधक्षुरिवदृश्यते १४ तस्यसंकल्पमाज्ञायभीमंप्रत्यशुभंहरिः ॥ भीममाक्षिप्यपाणिभ्यांप्रददौभीममायसम् १५ प्रागेवतुम हाबुद्धिर्बुद्ध्वातस्येंगितंहरिः ॥ संविधानंमहाप्राज्ञस्तत्रचक्रेजनार्दनः १६ तंगृहीत्वैवपाणिभ्यांभीमसेनमयस्मयम् ॥ बभंजबलवान्राजामन्यमानोवृकोदरम् १७ नागायुतबलप्राणःसराजाभीममायसम् ॥ भंक्त्वाविमथितोरस्कःसुस्रावरुधिरंमुखात् १८ ततःपपातमेदिन्यांतथैवरुधिरोक्षितः ॥ प्रपुष्पिताग्रशिखरः पारिजातइवद्रुमः १९ पर्यगृह्णाच्चतंविद्वान्सूतोगावल्गणिस्तदा ॥ मैवमित्यब्रवीच्चैनंशमयन्सांत्वयन्निव २० सतुकोपंसमुत्सृज्यगतमन्युर्महामनाः ॥ हाहा भीमेतिचुक्रोशनृपःशोकसमन्वितः २१ तंविदित्वागतक्रोधंभीमसेनवधार्दितम् ॥ वासुदेवोवरःपुंसामिदंवचनमब्रवीत् २२ माशुचोधृतराष्ट्रत्वंनैषभीमस्त्वया हतः ॥ आयसीप्रतिमाह्येषात्वयानिष्पातिताविभो २३

प्रियाप्रियैःपांडवानांप्रियाःअभिमन्युप्रभृतयः अप्रियाःदुर्योधनादयःतैर्हेतुभिःक्रोशंतीभिरिति संबंधः ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ आक्षिप्य निवार्य आयसंलोहमयं १५ संविधानमायसस्यभीमस्यनिर्माणं १६ । १७ । १८ । १९ । २० । २१ । २२ । २३

२४ । २५ । २६ । २७ पुत्रेति धर्मादपकृतमालिंगनच्छलेनभीमवधःकर्तव्यइत्याशया १८ वृकोदरेणअहताअपिनजीवेयुः गतायुषांतेषांनिमित्तांतरेणापिनाशावश्यंभावादितिभावः २९ । ३० ॥ इतिस्त्रीपर्वणिनीलकंठीये भारतभावदीपेद्वादशोऽध्यायः ॥ १२ ॥ ॥ ततइति १ । २ । ३ मतस्कृथाःतन्नकृतवानासि अडभावआर्षः ४ । ५ । ६ श्रेयोहिताहितेउच्यमानोनगृह्णीतइत्य



त्वांक्रोधवशमापन्नंविदित्वाभरतर्षभ ॥ मयाऽपकृष्टःकौंतेयोमृत्योर्दंष्ट्रांतरंगतः २४ नहितेराजशार्दूलबलेतुल्योऽस्तिकश्चन ॥ कःसहेतमहाबाहोबाह्वोर्विग्रहणंनरः २५ यथांतकमनुप्राप्यजीवन्कश्चिन्नमुच्यते ॥ एवंबाह्वंतरंप्राप्यतवजीवेन्नकश्चन २६ तस्मात्पुत्रेणयातेऽसौप्रतिमाकारिताऽऽयसी ॥ भीमस्यसेयंकौरव्यतवैवोपहृतामया २७ पुत्रशोकाभिसंतप्तंधर्मादपकृतंमनः ॥ तवराजेंद्रतेनत्वंभीमसेनंजिघांससि २८ नत्वेतत्तेक्षमंराजन्हन्यास्त्वंयद्वृकोदरम् ॥ नहिपुत्रामहाराजजीवेयुस्तेकथंचन २९ तस्माद्यत्कृतमस्माभिर्मन्यमानैःक्षमंप्रति ॥ अनुमन्यस्वतत्सर्वंमाचशोकेमनःकृथाः ३० ॥ इतिश्रीमहाभारतेस्त्रीपर्वणिजलप्रदानिकपर्वणिआयसभीमभंगेद्वादशोऽध्यायः ॥ १२ ॥ ॥ वैशंपायनउवाच ॥ ततएनमुपातिष्ठन्शौचार्थंपरिचारिकाः ॥ कृतशौचंपुनश्चैनंप्रोवाचमधुसूदनः १ राजन्नधीतावेदास्तेशास्त्राणिविविधानिच ॥ श्रुतानिचपुराणानिराजधर्माश्चकेवलाः २ एवंविद्वान्महाप्राज्ञःसमर्थःसन्बलाबले ॥ आत्मापराधात्कस्मात्त्वंकुरुषेकोपमीदृशम् ३ उक्तवांस्त्वांतदैवाहंभीष्मद्रोणौचभारत ॥ विदुरःसंजयश्चैववाक्यंराजन्नतत्कृथाः ४ सवार्यमाणोनास्माकमकार्षीर्वचनंतदा ॥ पांडवानधिकाञ्जानन्बलेशौर्येचकौरव ५ राजाहियःस्थिरप्रज्ञःस्वयंदोषानवेक्षते ॥ देशकालविभागंचपरंश्रेयःसविंदति ६ उच्यमानस्तुयःश्रेयोगृह्णीतेनोहिताहिते ॥ आपदःसमनुप्राप्यसशोचत्यनयेस्थितः ७ ततोऽन्यवृत्तमात्मानंसमवेक्षस्वभारत ॥ राजंस्त्वंह्यविधेयात्मादुर्योधनवशेस्थितः ८ आत्मापराधादापन्नस्तत्किंभीमंजिघांससि ॥ तस्मात्संयच्छकोपंत्वंस्वमनुस्मरदुष्कृतम् ९ यस्तुतांस्पर्धयाक्षुद्रःपांचालीमानयत्सभाम् ॥ सहतोभीमसेनेनवैरंप्रतिजिहीर्षता १० आत्मनोऽतिक्रमंपश्यपुत्रस्यचदुरात्मनः ॥ यदनागसिपांडूनांपरित्यागस्त्वयाकृतः ११ ॥ वैशंपायनउवाच ॥ एवमुक्तःसकृष्णेनसर्वंसत्यंजनाधिप ॥ उवाचदेवकीपुत्रंधृतराष्ट्रोमहीपतिः १२ एवमेतन्महाबाहोयथावदसिमाधव ॥ पुत्रस्नेहस्तुबलवान्धैर्यान्मांसमचालयत् १३ दिष्ट्यातुपुरुषव्याघ्रोबलवान्सत्यविक्रमः ॥ त्वद्गुप्तोनागमत्कृष्णभीमोबाह्वंतरंमम १४ इदानींत्वहमव्यग्रोगतमन्युर्गतज्वरः ॥ मध्यमंपांडवंवीरंद्रष्टुमिच्छामिमाधव १५ हतेषुपार्थिवेंद्रेषुपुत्रेषुनिहतेषुच ॥ पांडुपुत्रेषुवैशर्मप्रीतिश्चाप्यवतिष्ठते १६ ततःसभीमंचधनंजयंचमाद्र्याश्चपुत्रौपुरुषप्रवीरौ ॥ पस्पर्शगात्रैःप्ररुदन्सुगात्रानाश्वास्यकल्याणमुवाचचैतान् १७ ॥ इतिश्रीम० स्त्री० जलप्रदानिकप० धृतराष्ट्रकोपविमोचने पांडवपरिष्वंगोनामत्रयोदशोऽध्यायः ॥ १३ ॥

न्वयः ७ । ८ । ९ । १० अनागसिअपराधाभावेपरित्यागोराज्याप्रदानेनतिरस्कारः ११ । १२ । १३ । १४ । १५ । १६ । १७ ॥ इतिस्त्री० नीलकंठीये भारतभावदीपेत्रयोदशोऽध्यायः ॥ १३ ॥

धृतराष्ट्रेति १ । २ । ३ । ४ । ५ कल्पवादीहितवादी ६ एतद्वचःपांडवान्शत्रुमुद्यतंवाक्यम् ७ । ८ । ९ नचास्यतांतामितिपाठे अस्यपनंदुर्योधनंतोषमाणायाआशीर्वचनेनतोषयंत्यास्तेतववर्ता

॥ वैशंपायनउवाच ॥ धृतराष्ट्राभ्यनुज्ञातास्ततस्तेकुरुपांडवाः ॥ अभ्ययुर्भ्रातरःसर्वेगांधारींसहकेशवाः १ ततोज्ञात्वाहतामित्रंयुधिष्ठिरमुपागतम् ॥ गांधारीपुत्रशोकार्ताशप्तुमैच्छदनिंदिता २ तस्याःपापमभिप्रायंविदित्वापांडवान्प्रति ॥ ऋषिःसत्यवतीपुत्रःप्रागेवसमबुध्यत ३ सगंगायामुपस्पृश्यपुण्यगंधिपयःशुचि ॥ तंदेशमुपसंपेदेपरमर्षिर्मनोजवः ४ दिव्येनचक्षुषापश्यन्मनसातद्गतेनच ॥ सर्वप्राणभृतांभावंसतत्रसमबुध्यत ५ सस्नुषामब्रवीत्कालेकल्यवादीमहातपाः ॥ शापकालमवाक्षिप्यशमकालमुदीरयन् ६ नकोपःपांडवेकार्योगांधारिशममाप्नुहि ॥ वचोनिगृह्यतामेतच्छृणुचेदंवचोमम ७ उक्ताऽस्यष्टादशाहानिपुत्रेणजयमिच्छता ॥ शिवमाशास्वमेमातर्युध्यमानस्यशत्रुभिः ८ सातथायाच्यमानात्वंकालेकालेजयैषिणा ॥ उक्तवत्यसिगांधारियतोधर्मस्ततोजयः ९ नचाप्यतीतांगांधारिवाचंतेवितथामहम् ॥ स्मरामितोषमाणायास्तथाप्रणिहिताह्यसि १० विग्रहेतुमुलेराज्ञांगत्वापारमसंशयम् ॥ जितंपांडुसुतैर्युद्धेनूनंधर्मस्ततोऽधिकः ११ क्षमाशीलापुराभूत्वासाऽद्यनक्षमसेकथम् ॥ अधर्मंजहिधर्मज्ञेयतोधर्मस्ततोजयः १२ स्वंचधर्मंपरिस्मृत्यवाचंचोक्तांमनस्विनि ॥ कोपंसंयच्छगांधारिमैवंभूःसत्यवादिनि १३ ॥ गांधार्युवाच ॥ भगवन्नाभ्यसूयामिनैतानिच्छामिनश्यतः ॥ पुत्रशोकेनतुबलान्मनोविह्वलतीवमे १४ यथैवकुंत्याकौंतेयारक्षितव्यास्तथामया ॥ तथैवधृतराष्ट्रेणरक्षितव्यामयायथा १५ दुर्योधनापराधेनशकुनेःसौबलस्यच ॥ कर्णदुःशासनाभ्यांचकृतोऽयंकुरुसंक्षयः १६ नापराध्यतिबीभत्सुर्नचपार्थोवृकोदरः ॥ नकुलःसहदेवश्चनैवजातुयुधिष्ठिरः १७ युध्यमानाहिकौरव्याःकृतमानाःपरस्परम् ॥ निहताःसहिताश्चान्यैस्तत्रनास्त्यप्रियंमम १८ किंतुकर्मकरोद्भीमोवासुदेवस्यपश्यतः ॥ दुर्योधनंसमाहूयगदायुद्धेमहामनाः १९ शिक्षयाभ्यधिकंज्ञात्वाचरंतंबहुधारणे ॥ अधोनाभ्याःप्रहृतवांस्तन्मेकोपमवर्धयत् २० कथंनुधर्मंधर्मज्ञैःसमुद्दिष्टंमहात्मभिः ॥ त्यजेयुराहवेशूराःप्राणहेतोःकथंचन २१ ॥ इतिश्रीमहाभारतेस्त्रीपर्वणि जलप्रदानिकपर्वणि गांधारीसांत्वनायांचतुर्दशोऽध्यायः ॥ १४ ॥

॥ वैशंपायनउवाच ॥ तच्छ्रुत्वावचनंतस्याभीमसेनोऽथभीतवत् ॥ गांधारींप्रत्युवाचेदंवचःसानुनयंतदा १ अधर्मोयदिवाधर्मस्त्रासात्तत्रमयाकृतः ॥ आत्मानंत्रातुकामेनतन्मेत्वंक्षंतुमर्हसि २ नहियुद्धेनपुत्रस्तेधर्म्येणसमहाबलः ॥ नशक्यःकेनचिद्धंतुमतोविषममाचरम् ३ अधर्मेणजितःपूर्वंतेनचापियुधिष्ठिरः ॥ निकृताश्चसदैवस्मततोविषममाचरम् ४ सैन्यस्यैकोऽवशिष्टोऽयंगदायुद्धेनवीर्यवान् ॥ मांहत्वानहरेद्राज्यमितिवैतत्कृतंमया ५ राजपुत्रींचपांचालीमेकवस्त्रांरजस्वलाम् ॥ भवत्याविदितंसर्वमुक्तवान्यत्सुतस्तव ६

तांवाचंवितथांनस्मरामीत्यन्वयः १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ कृतमानाःकृताहंकाराः १८ । १९ । २० । २१ ॥ इतिस्त्रीपर्वणिनीलकंठीये भारतभावदीपेचतुर्दशोऽध्यायः ॥ १४ ॥ तदिति १ । २ । ३ । ४ । ५ उक्तवान्नहितेपतयःसंतीत्यादि ६

असंगृह्यानुसंहृत्य ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ अंतोष्ठात् अधरोष्ठात्उपरिनगतमित्यर्थः दंतोष्ठादित्यपपाठः १६ वृषसेनेनकर्णपुत्रेण १७ । १८ । १९ । २० किंचित्कमपि

सुयोधनमसंगृह्यनशक्याभूःससागरा ॥ केवलाभोक्तुमस्माभिरतश्चैतत्कृतंमया ७ तथाऽप्याप्रियमस्माकंपुत्रस्तेसमुपाचरत् ॥ द्रौपद्यायत्सभामध्येसव्यमूरुमदर्शयत् ८ तदैववध्यःसोऽस्माकंदुराचारश्चतेसुतः ॥ धर्मराजाज्ञयाचैवस्थिताःस्मसमयेतदा ९ वैरमुद्दीपितंराज्ञिपुत्रेणतवतन्महत् ॥ क्लेशिताश्चवनेनित्यंततएतत्कृतंमया १० वैरस्यास्यगताःपारंहत्वादुर्योधनंरणे ॥ राज्यंयुधिष्ठिरःप्राप्तोवयंचगतमन्यवः ११ ॥ गांधार्युवाच ॥ नतस्यैषवधस्तातयत्प्रशंससिमेसुतम् ॥ कृतवांश्चापितत्सर्वंयदिदंभाषसेमयि १२ हताश्वेनकुलेयत्तुवृषसेनेनभारत ॥ अपिबःशोणितंसंख्येदुःशासनशरीरजम् १३ सद्भिर्विगर्हितंघोरमनार्यजनसेवितम् ॥ क्रूरंकर्माकृथास्तस्मात्तदयुक्तंवृकोदर १४ ॥ भीमसेनउवाच ॥ अन्यस्यापिनपातव्यंरुधिरंकिंपुनःस्वकम् ॥ यथैवात्मातथाभ्राताविशेषोनास्तिकश्चन १५ रुधिरंनव्यतिक्रामदंतोष्ठादंबमाशुचः ॥ वैवस्वतस्तुतद्वेदहस्तौमेरुधिरोक्षितौ १६ हताश्वंनकुलंदृष्ट्वावृषसेनेनसंयुगे ॥ भ्रातॄणांसंप्रहृष्टानांत्रासःसंजनितोमया १७ केशपक्षपरामर्शेद्रौपद्याद्यूतकारिते ॥ क्रोधाद्यदब्रुवंचाहंतच्चमेहृदिवर्तते १८ क्षत्रधर्माच्च्युतोराज्ञिभवेयंशाश्वतीःसमाः ॥ प्रतिज्ञांतामनिस्तीर्यततस्तत्कृतवानहम् १९ नमामर्हसिगांधारिदोषेणपरिशंकितुम् ॥ अनिगृह्यपुरापुत्रानस्मास्वनपकारिषु ॥ अधुनाकिंनुदोषेणपरिशंकितुमर्हसि २० ॥ गांधार्युवाच ॥ वृद्धस्यास्यशतंपुत्रान्निघ्नंस्त्वमपराजितः ॥ कस्मान्नशेषयेःकिंचिद्येनाल्पमपराधितम् २१ संतानमावयोस्तातवृद्धयोर्हृतराज्ययोः ॥ कथमंधद्वयस्यास्ययष्टिरेकानवर्जिता २२ शेषेह्यवस्थितेतातपुत्राणामंतकेत्वयि ॥ नमेदुःखंभवेदेतद्यदित्वंधर्ममाचरेः २३ ॥ वैशंपायनउवाच ॥ एवमुक्त्वातुगांधारीयुधिष्ठिरमपृच्छत ॥ क्वसराजेतिसक्रोधापुत्रपौत्रवधार्दिता २४ तामभ्यगच्छद्राजेंद्रोवेपमानःकृतांजलिः ॥ युधिष्ठिरस्त्विदंतत्रमधुरंवाक्यमब्रवीत् २५ पुत्रहंतानृशंसोऽहंतवदेवियुधिष्ठिरः ॥ शापार्हःपृथिवीनाशेहेतुभूतःशपस्वमाम् २६ नहिमेजीवितेनार्थोनराज्येनधनेनवा ॥ तादृशान्सुहृदोहत्वामूढस्यास्यसुहृद्द्रुहः २७ तमेवंवादिनंभीतंसंनिकर्षगतंतदा ॥ नोवाचकिंचिद्गांधारीनिःश्वासपरमाभृशम् २८ तस्यावनतदेहस्यपादयोर्निपतिष्यतः ॥ युधिष्ठिरस्यनृपतेर्धर्मज्ञादीर्घदर्शिनी २९ अंगुल्यग्राणिददृशेदेवीपट्टांतरेणसा ॥ ततःसकुनखीभूतोदर्शनीयनखोनृपः ३० तंदृष्ट्वाचार्जुनोऽगच्छद्वासुदेवस्यपृष्ठतः ॥ एवंसंचेष्टमानांस्तानितश्चेतश्चभारत ३१ गांधारीविगतक्रोधासांत्वयामासमातृवत् ॥ तयातेसमनुज्ञातामातरंवीरमातरम् ३२ अभ्यगच्छंतसहिताःपृथांपृथुलवक्षसः ॥ चिरस्यदृष्ट्वापुत्रान्सापुत्राधिभिरभिप्लुता ३३ बाष्पमाहारयद्देवीवस्त्रेणावृत्यवैमुखम् ॥ ततोबाष्पंसमुत्सृज्यसहपुत्रैस्तदापृथा ३४ अपश्यदेतान्शस्त्रौघैर्बहुधाक्षतविक्षतान् ॥ सातानेकैकशःपुत्रान्संस्पृशंतीपुनःपुनः ३५ अन्वशोचतदुःखार्ताद्रौपदींचहतात्मजाम् ॥ रुदतीमथपांचालींददर्शपतितांभुवि ३६

नशेषयेःशेषमेकमपिनरक्षितवानासि २१ नवर्जितावधकालेनत्यक्ता २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ कुनखीभूतोहस्तदेशइतिशेषः ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६

३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ वांआवाम् ४४ ॥ इतिस्त्रीपर्वणिनीलकंठीये भारतभावदीपे पंचदशोऽध्यायः ॥ १५ ॥ ॥ ७ ॥ एवमिति अवकर्तनंयुद्धस्थानम् १ । २

॥ द्रौपद्युवाच ॥ आर्येपुत्राःक्वतेसर्वेसौभद्रसहितागताः ॥ नत्वांतेऽद्याभिगच्छंतिचिरंदृष्ट्वातपस्विनीम् ३७ किंनुराज्येनवैकार्यंविहीनायाःसुतैर्मम ॥ तांसमाश्वास
यामासपृथापृथुललोचना ३८ उत्थाप्ययाज्ञसेनींतुरुदतींशोककर्शिताम् ॥ तयैवसहिताचापिपुत्रैरनुगतानृप ३९ अभ्यगच्छतगांधारीमार्तामार्ततरास्वयम् ॥
॥ वैशंपायनउवाच ॥ तामुवाचाथगांधारीसहवध्वायशस्विनीम् ४० मैवंपुत्रीतिशोकार्तापश्यमामपिदुःखिताम् ॥ मन्येलोकविनाशोऽयंकालपर्यायनोदितः ४१
अवश्यभावीसंप्राप्तःस्वभावाल्लोमहर्षणः ॥ इदंतत्समनुप्राप्तंविदुरस्यवचोमहत् ४२ असिद्धानुनयेकृष्णेयदुवाचमहामतिः ॥ तस्मिन्नपरिहार्येऽर्थेव्यतीतेचाविशे
षतः ४३ माशुचोनहिशोच्यास्तेसंग्रामेनिधनंगताः ॥ यथैवाहंतथैवत्वंकोवामाश्वासयिष्यति ॥ ममैवह्यपराधेनकुलमग्र्यंविनाशितम् ४४ ॥ इतिश्रीमहाभारते
स्त्रीपर्वणिजलप्रदानिकप० पृथापुत्रदर्शनेपंचदशोऽध्यायः ॥ १५ ॥ समाप्तंजलप्रदानिकंपर्व ॥ अथस्त्रीविलापपर्व ॥ ॥ वैशंपायनउवाच ॥ एवमुक्त्वातुगांधारी
कुरूणामवकर्तनम् ॥ अपश्यत्तत्रतिष्ठंतीसर्वंदिव्येनचक्षुषा १ पतिव्रतामहाभागासमानव्रतचारिणी ॥ उग्रेणतपसायुक्तासततंसत्यवादिनी २ वरदानेनकृष्ण
स्यमहर्षेःपुण्यकर्मणः ॥ दिव्यज्ञानबलोपेताविविधंपर्यदेवयत् ३ ददर्शसाबुद्धिमतीदूरादपियथांतिके ॥ रणाजिरंनृवीराणामद्भुतंलोमहर्षणम् ४ अस्थिकेशवसा
कीर्णंशोणितौघपरिप्लुतम् ॥ शरीरैर्बहुसाहस्रैर्विनिकीर्णंसमंततः ५ गजाश्वरथयोधानामावृतंरुधिराविलैः ॥ शरीरैरशिरस्कैश्चविदेहैश्चशिरोगणैः ६ गजाश्वनर
नारीणांनिःस्वनैरभिसंवृतम् ॥ सृगालबककाकोलकंककाकनिषेवितम् ७ रक्षसांपुरुषादानांमोदनंकुररकुलम् ॥ अशिवाभिःशिवाभिश्चनादितंगृध्रसेवितम् ८
ततोव्यासाभ्यनुज्ञातोधृतराष्ट्रोमहीपतिः ॥ पांडुपुत्राश्चतेसर्वेयुधिष्ठिरपुरोगमाः ९ वासुदेवंपुरस्कृत्यहतबंधुंचपार्थिवम् ॥ कुरुस्त्रियःसमासाद्यजग्मुरायोधनंप्र
ति १० समासाद्यकुरुक्षेत्रंताःस्त्रियोनिहतेश्वराः ॥ अपश्यंतहतांस्तत्रपुत्रान्भ्रातॄन्पितॄन्पतीन् ११ क्रव्यादैर्भक्ष्यमाणान्वैगोमायुबलवायसैः ॥ भूतैःपिशाचैर
क्षोभिर्विविधैश्चनिशाचरैः १२ रुद्राक्रीडनिभंदृष्ट्वातदाविशसनंस्त्रियः ॥ महार्हेभ्योऽथयानेभ्योविक्रोशंत्योनिपेतिरे १३ अदृष्टपूर्वंपश्यंत्योदुःखार्ताभरतस्त्रियः ॥
शरीरेष्वस्खलन्नन्याःपतंत्यश्चापराभुवि १४ श्रांतानांचाप्यनाथानांनासीत्काचनचेतना ॥ पांचालकुरुयोषाणांकृपणंतदभून्महत् १५ दुःखोपहतचित्ताभिःसमं
तादनुनादितम् ॥ दृष्ट्वाऽऽयोधनमत्युग्रंधर्मज्ञासुबलात्मजा १६ ततःसापुंडरीकाक्षमामंत्र्यपुरुषोत्तमम् ॥ कुरूणांवैशसंदृष्ट्वाइदंवचनमब्रवीत् १७ पश्यैताःपुंडरी
काक्षस्नुषामेनिहतेश्वराः ॥ प्रकीर्णकेशाःक्रोशंतीःकुररीरिवमाधव १८ अमूस्त्वभिसमागम्यस्मरंत्योभर्तृजान्गुणान् ॥ पृथगेवाभिधावंत्यःपुत्रान्भ्रातॄन्पितॄन्पतीन् १९

३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९

२० । २१ । २२ । २३ । २४ । २५ पंचानांभूतानांपृथिव्यादीनां कुरुपंचालवधात्क्रूरत्वंपांचभौतिकंजगन्नष्टमितिभावः २६ । २७ । २८ । २९ । ३० शयनानिआस्तीर्यंतिशेषः ३१।३२।३३

वीरसूभिर्महाराजहतपुत्राभिरावृतम् ॥ क्वचिच्चवीरपत्नीभिर्हतवीराभिरावृतम् २० शोभितंपुरुषव्याघ्रैःकर्णभीष्माभिमन्युभिः ॥ द्रोणद्रुपदशल्यैश्चज्वलद्भिरिवपावकैः २१ कांचनैःकवचैर्निष्कैर्मणिभिश्चमहात्मनाम् ॥ अंगदैर्हस्तकेयूरैःस्रग्भिश्चसमलंकृतम् २२ वीरबाहुविसृष्टाभिःशक्तिभिःपरिघैरपि ॥ खड्गैश्चविविधैस्तीक्ष्णैःसशरैश्चशरासनैः २३ क्रव्यादसंघैर्मुदितैस्तिष्ठद्भिःसहितैःक्वचित् ॥ क्वचिदाक्रीडमानैश्चशयानैश्चापरैःक्वचित् २४ एतदेवंविधंवीरसंपश्यायोधनंविभो ॥ पश्यमानाहिदह्यामिशोकेनाहंजनार्दन २५ पंचालानांकुरूणांचविनाशेमधुसूदन ॥ पंचानामपिभूतानामहंवधमचिंतयम् २६ तान्सुपर्णाश्चगृध्राश्चकर्षयंत्यसृगुक्षिताः ॥ विगृह्यचरणैर्गृध्राभक्षयंतिसहस्रशः २७ जयद्रथस्यकर्णस्यतथैवद्रोणभीष्मयोः ॥ अभिमन्योर्विनाशंचकश्चिंतयितुमर्हति २८ अवध्यकल्पान्निहतान्गतसत्वानचेतसः ॥ गृध्रकंकवटश्येनश्वसृगालादनीकृतान् २९ अमर्षवशमापन्नान्दुर्योधनवशेस्थितान् ॥ पश्येमान्पुरुषव्याघ्रान्संशांतान्पावकानिव ३० शयानायेपुरासर्वेमृदूनिशयनानिच ॥ विपन्नास्तेऽद्यवसुधांविवृतामधिशेरते ३१ बंदिभिःसततंकालेस्तुवद्भिरभिनंदिताः ॥ शिवानाम शिवाघोराःशृण्वंतिविविधागिरः ३२ येपुराशेरतेवीराःशयनेषुयशस्विनः ॥ चंदनागुरुदिग्धांगास्तेऽद्यपांसुषुशेरते ३३ तेषामाभरणान्येतेगृध्रगोमायुवायसाः ॥ आक्षिपंतिशिवाघोराःविनदंत्यःपुनःपुनः ३४ बाणान्विनिशितान्पीतान्निस्त्रिंशान्विमलागदाः ॥ युद्धाभिमानिनःसर्वेजीवंतइवबिभ्रति ३५ सुरूपवर्णाबहवःक्रव्यादैरवघट्टिताः ॥ ऋषभप्रतिरूपाश्चशेरतेहरितस्रजः ३६ अपरेपुनरालिंग्यगदाःपरिघबाहवः ॥ शेरतेऽभिमुखाःशूरादयिताइवयोषितः ३७ बिभ्रतःकवचान्यन्येविमलान्यायुधानिच ॥ नधर्षयंतिक्रव्यादाजीवंतीतिजनार्दन ३८ क्रव्यादैःकृष्यमाणानामपरेषांमहात्मनाम् ॥ शातकौंभ्यःस्रजश्चित्राविप्रकीर्णाःसमंततः ३९ एतेगोमायवोभीमानिहतानांयशस्विनाम् ॥ कंठांतरगतान्हारानाक्षिपंतिसहस्रशः ४० सर्वेष्वपररात्रेषुयाननंदंतबंदिनः ॥ स्तुतिभिश्चपरार्ध्याभिरुपचारैश्चशिक्षिताः ४१ तानिमाःपरिदेवंतिदुःखार्ताःपरमांगनाः ॥ कृपणंवृष्णिशार्दूलदुःखशोकार्दिताभृशम् ४२ रक्तोत्पलवनानीवविभांतिरुचिराणिच ॥ मुखानिपरमस्त्रीणांपरिशुष्काणिकेशव ४३ रुदितादिरताह्येताध्यायंत्यःसपरिच्छदाः ॥ कुरुस्त्रियोऽभिगच्छंतितेनतेनैवदुःखिताः ४४ एतान्यादित्यवर्णानितपनीयनिभानिच ॥ रोषरोदनताम्राणिवक्त्राणिकुरुयोषिताम् ४५ श्यामानांवरवर्णानांगौरीणामेकवाससाम् ॥ दुर्योधनवरस्त्रीणांपश्यवृंदानिकेशव ४६ आसामपरिपूर्णार्थंनिशम्यपरिदेवितम् ॥ इतरेतरसंक्रंदान्नविजानंतियोषितः ४७ एतादीर्घमिवोच्छ्वस्यविक्रुश्यचविलप्यच ॥ विस्पंदमानादुःखेनवीराजहतिजीवितम् ४८

३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ एताःशोचंतीरभिलक्ष्येतिशेषः ४८

४९ । ५० । । ५१ । ५२ । ५३ विजग्धान् भक्षितान् ५४ । ५५ । ५६ । ५७ । ५७ । ५९ । ६० । ६१ इतिस्त्रीपर्वणिनीलकंठीये भारतभावदीपे षोडशोऽध्यायः ॥ १६ ॥ ७ ॥

बह्वयोदृष्ट्वाशरीराणिक्रोशंतिविलपंतिच ॥ पाणिभिश्चापराघ्नंतिशिरांसिमृदुपाणयः ४९ शिरोभिःपतितैर्हस्तैःसर्वांगैर्यूथशःकृतैः ॥ इतरेतरसंपृक्तैराकीर्णा भातिमेदिनी ५० विशिरस्कानथोकायान्दृष्ट्वाह्येतानिनिंदितान् ॥ मुह्यंत्यनुगतानार्योविदेहाअशिरांसिच ५१ शिरःकायेनसंधायप्रेक्षमाणाविचेतसः ॥ अप श्यंत्योपरंतत्रनेदमस्येतिदुःखिताः ५२ बाहूरुचरणानन्यान्विशिखोन्मथितान्पृथक् ॥ संदधत्योऽसुखाविष्टामूर्छंत्येताःपुनःपुनः ५३ उत्कृत्यशिरसश्चान्या न्विजग्धान्मृगपक्षिभिः ॥ दृष्ट्वाकाश्चिन्नजानंतिभर्तृन्भरतयोषितः ५४ पाणिभिश्चापराघ्नंतिशिरांसिमधुसूदन ॥ प्रेक्ष्यभ्रातृन्पितृन्पुत्रान्पतींश्चनिहतान्परैः ५५ बाहुभिश्चसखड्गैश्चशिरोभिश्चसकुंडलैः ॥ अगम्यकल्पापृथिवीमांसशोणितकर्दमा ५६ बभूवभरतश्रेष्ठप्राणिभिर्गतजीवितैः ॥ नदुःखेषूचिताःपूर्वंदुःखं गाहंत्यनिंदिताः ५७ भ्रातृभिःपतिभिःपुत्रैरुपाकीर्णांवसुंधरा ॥ यूथानीवकिशोरीणांसुकेशीनांजनार्दन ५८ स्नुषाणांधृतराष्ट्रस्यपश्यवृंदान्यनेकशः ॥ इतो दुःखतरंकिंनुकेशवप्रतिभातिमे ५९ यदिमाःकुर्वतेसर्वारूपमुच्चावचंस्त्रियः ॥ नूनमाचरितंपापंमयापूर्वेषुजन्मसु ६० यापश्यामिहतान्पुत्रान्पौत्रान्भ्रातृं श्चमाधव ॥ एवमार्ताविलपतीसमाभाष्यजनार्दनम् ॥ गांधारीपुत्रशोकार्तादर्दशनिहतंसुतम् ६१ ॥ इतिश्रीमहाभारतेस्त्रीपर्वणिस्त्रीविलापपर्वणिआयोधनदर्श नेषोडशोऽध्यायः ॥ १६ ॥ ॥ वैशंपायनउवाच ॥ दुर्योधनंहतंदृष्ट्वागांधारीशोककर्शिता ॥ सहसान्यपतद्भूमौछिन्नेवकदलीवने १ सातुलब्ध्वापुनःसंज्ञांवि क्रुश्यचविलप्यच ॥ दुर्योधनमभिप्रेक्ष्यशयानंरुधिरोक्षितम् २ परिष्वज्यचगांधारीकृपणंपर्यदेवयत् ॥ हाहापुत्रेतिशोकार्ताविललापाकुलेंद्रिया ३ सुगूढजत्रु विपुलंहारनिष्कविभूषितम् ॥ वारिणानेत्रजेनोरःसिंचंतीशोकतापिता ४ समीपस्थंहृषीकेशमिदंवचनमब्रवीत् ॥ उपस्थितेऽस्मिन्संग्रामेज्ञातीनांसंक्षयेविभो ५ मामयंप्राहवार्ष्णेयप्रांजलिर्नृपसत्तमः ॥ अस्मिन्ज्ञातिसमुद्धर्षेजयमंबाब्रवीतुमे ६ इत्युक्तेजानतीसर्वमहंस्वंव्यसनागमम् ॥ अब्रुवंपुरुषव्याघ्रयतोधर्मस्त तोजयः ७ यथाचयुध्यमानस्त्वंनवैमुह्यासिपुत्रक ॥ ध्रुवंशस्त्रजितान्लोकान्प्राप्स्यस्यमरवत्प्रभो ८ इत्येवमब्रुवंपूर्वंनैनंशोचामिवैप्रभो ॥ धृतराष्ट्रंतुशोचामिकृप णंहतबांधवम् ९ अमर्षणंयुधांश्रेष्ठंकृतास्त्रंयुद्धदुर्मदम् ॥ शयानंवीरशयनेपश्यमाधवमेसुतम् १० योऽयंमूर्धावसिक्तानामग्रेयातिपरंतपः ॥ सोऽयंपांसुषुशेते ऽद्यपश्यकालस्यपर्ययम् ११ ध्रुवंदुर्योधनोवीरोगतिंसुलभतांगतः ॥ तथाह्यभिमुखःशेतेशयनेवीरसेविते १२ यंपुरापर्युपासीनारमयंतिवरस्त्रियः ॥ तंवीर शयनेसुप्तंरमयंत्यशिवाःशिवाः १३ यंपुरापर्युपासीनारमयंतिमहीक्षितः ॥ महीतलस्थंनिहतंगृध्रास्तंपर्युपासते १४ यंपुराव्यजनैरम्यैरुपवीजंतियोषितः ॥ तमद्यपक्षव्यजनैरुपवीजंतिपक्षिणः १५ एषशेतेमहाबाहुर्बलवान्सत्यविक्रमः ॥ सिंहेनेवद्विपःसंख्येभीमसेनेनपातितः १६

दुर्योधनमिति १ । २ । ३ । ४ । ५ । ६ ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६

१७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ पंचशाखाभ्यांपंचांगुलिभ्यांपाणिभ्यां ३० । ३१ । ३२ । ३३ इतिस्त्रीपर्वणि

पश्यदुर्योधनंकृष्णशयानंरुधिरोक्षितम् ॥ निहतंभीमसेनेनगदांसंमृज्यभारत १७ अक्षौहिणीर्महाबाहुर्दशचैकांचकेशव ॥ आनयद्यःपुरासंख्येसोऽनयान्निधनं गतः १८ एषदुर्योधनःशेतेमहेष्वासोमहाबलः ॥ शार्दूलइवसिंहेनभीमसेनेनपातितः ॥ विदुरंह्यवमन्यैषपितरंचैवमंदभाक् ॥ बालोवृद्धावमानेनमंदोमृत्युव शंगतः २० निःसपत्नामहीयस्यत्रयोदशसमाःस्थिता ॥ सशेतेनिहतोभूमौपुत्रोमेपृथिवीपतिः २१ अपश्यंकृष्णपृथिवींधार्तराष्ट्रानुशासिताम् ॥ पूर्णांहस्ति गवाश्वैश्चवार्ष्णेयनतुतच्चिरम् २२ तामेवाद्यमहाबाहोपश्याम्यन्यानुशासिताम् ॥ हीनांहस्तिगवाश्वेनकिंनुजीवामिमाधव २३ इदंकष्टतरंपश्यपुत्रस्यापि वधान्मम ॥ यदिमाःपर्युपासंतेहतान्शूरान्रणेस्त्रियः २४ प्रकीर्णकेशांसुश्रोणींदुर्योधनशुभांकगाम् ॥ रुक्मवेदीनिभांपश्यकृष्णलक्ष्मणमातरम् २५ नूनमे षापुराबालाजीवमानेमहीभुजे ॥ भुजावाश्रित्यरमतेसुभुजस्यमनस्विनी २६ कथंतुशतधानेदंहृदयंममदीर्यते ॥ पश्यंत्यानिहतंपुत्रंपुत्रेणसहितंरणे २७ पुत्रं रुधिरसंसिक्तमुपजिघ्रत्यनिंदिता ॥ दुर्योधनंतुवामोरूःपाणिनापरिमार्जती २८ किंनुशोचतिभर्तारंपुत्रंचैषामनस्विनी ॥ तथाह्यवस्थिताभातिपुत्रंचाप्यभि वीक्ष्यसा २९ स्वशिरःपंचशाखाभ्यामभिहत्यायतेक्षणा ॥ पतत्युरसिवीरस्यकुरुराजस्यमाधव ३० पुंडरीकनिभाभातिपुंडरीकांतरप्रभा ॥ मुखंविमृज्यपु त्रस्यभर्तुश्चैवतपस्विनी ३१ यदिसत्यागमाःसंतियदिवैश्रुतयस्तथा ॥ ध्रुवंलोकानवाप्तोऽयंनृपोबाहुबलार्जितान् ३२ ॥ इतिश्रीमहाभारतेस्त्रीपर्वणिस्त्रीविलाप पर्वणिदुर्योधनदर्शनेसप्तदशोऽध्यायः ॥ १७ ॥ ॥ गांधार्युवाच ॥ पश्यमाधवपुत्रान्मेशतसंख्यान्जितक्लमान् ॥ गदयाभीमसेनेनभूयिष्ठंनिहतान्रणे १ इदं दुःखतरंमेऽद्ययदिमामुक्तमूर्धजाः ॥ हतपुत्रारणेबालाःपरिधावंतिमेस्नुषाः २ प्रासादतलचारिण्यश्चरणैर्भूषणान्वितैः ॥ आपन्नायत्स्पृशंतीमांरुधिरार्द्रांवसुं धराम् ३ कृच्छ्राद्उत्सारयंतिस्मगृध्रगोमायुवायसान् ॥ दुःखेनार्ताविघूर्णंत्योमत्ताइवचरंत्युत ४ एषाऽन्यात्वनवद्यांगीकरसंमितमध्यथा ॥ घोरमायोधनंदृष्ट्वा निपतत्यतिदुःखिता ५ दृष्ट्वामेपार्थिवसुतामेतांलक्ष्मणमातरम् ॥ राजपुत्रीमहाबाहोमनोनह्युपशाम्यति ६ भ्रातॄंश्चान्याःपितॄंश्चान्याःपुत्रांश्चनिहतान् भुवि ॥ दृष्ट्वापरिपतंत्येताःप्रगृह्यसुमहाभुजान् ७ मध्यमानांतुनारीणांवृद्धानांचापराजित ॥ आक्रंदंहतबंधूनांदारुणेवैशसेशृणु ८ रथनीडानिदेहांश्चहता नांगजवाजिनाम् ॥ आश्रित्यश्रममोहार्ताःस्थिताःपश्यमहाभुज ९ अन्यांचापहृतंकायाच्चारुकुंडलमुन्नसम् ॥ स्वस्यबंधोःशिरःकृष्णगृहीत्वापश्यतिष्ठतीम् १० पूर्वजातिकृतंपापंमन्येनाल्पमिवानघ ॥ एताभिर्निरवद्याभिर्मयाचैवाल्पमेधया ११ यदिदंधर्मराजेनपातितंनोजनार्दन ॥ नहिनाशोऽस्तिवार्ष्णेयक र्मणोःशुभपापयोः ॥ प्रत्यग्रवयसःपश्यदर्शनीयकुचाननाः १२

नीलकंठीये भारतभावदीपेसप्तदशोऽध्यायः ॥ १७ ॥ ॥ ७ ॥ ॥ पश्येति १ । २ । ३ । ४ करसंमितध्यमामुष्टिप्रमितमध्या ५ । ६ । ७ । ८ । ९ । १० । ११ । १२

१३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । [illegible] । २५ । २६ । २७ । २८ ॥ इतिस्त्रीपर्वणिनीलकंठीयेभारतभावदीपेअष्टादशोऽध्यायः ॥ १८ ॥ ॥ ७ ॥

कुलेषुजाताह्रीमत्यःकृष्णपक्ष्माक्षिमूर्धजाः १३ हंसगद्गदभाषि[illegible]खशोकप्रमोहिताः ॥ सारस्यइवरवाशंत्यःपतिताःपश्यमाधव १४ फुल्लपद्मप्रकाशानिपुंडरीकाक्षयोषिताम् ॥ अनवद्यानिवक्राणितापयत्येषरश्मिवान् १५ ईर्षूणांममपुत्राणांवासुदेवावरोधनम् ॥ मत्तमातंगदर्पाणांपश्यंत्यद्यपृथग्जनाः १६ शतचंद्राणिचर्माणिध्वजांश्चादित्यवर्चसः ॥ रौक्माणिचैववर्माणिनिष्कानपिचकांचनान् १७ शीर्षत्राणानिचेतानिपुत्राणांमेमहीतले ॥ पश्यदीप्तानिगोविंदपावकान्सुहुतानिव १८ एषदुःशासनःशेतेशूरेणामित्रघातिना ॥ पीतशोणितसर्वांगोयुधिभीमेनपातितः १९ गदयाभीमसेनेनपश्यमाधवमेसुतम् ॥ द्यूतक्लेशाननुस्मृत्यद्रौपदीनोदितेनच २० उक्ताह्यनेनपांचालीसभायांद्यूतनिर्जिता ॥ प्रियंचिकीर्षताभ्रातुःकर्णस्यचजनार्दन २१ सहैवसहदेवेननकुलेनार्जुनेनच ॥ दासीभूताऽसिपांचालिक्षिप्रंप्रविशनोगृहान् २२ ततोऽहमब्रुवंकृष्णतदादुर्योधनंनृपम् ॥ मृत्युपाशपरिक्षिप्तंशकुनिंपुत्रवर्जय २३ निबोधैनंसुदुर्बुद्धिंमातुलंकलहप्रियम् ॥ क्षिप्रमेनंपरित्यज्यपुत्रशाम्यस्वपांडवैः २४ नबुद्ध्यसेत्वंदुर्बुद्धेभीमसेनममर्षणम् ॥ वाङ्नाराचैस्तुदंस्तीक्ष्णैरुल्काभिरिवकुंजरम् २५ तानेवंरहसिक्रुद्धोवाक्शल्यानवधारयन् ॥ उत्ससर्जविषंतेषुसर्पोगोवृषभेष्विव २६ एषदुःशासनःशेतेविक्षिप्यविपुलौभुजौ ॥ निहतोभीमसेनेनसिंहेनेवमहागजः २७ अत्यर्थमकरोद्रौद्रंभीमसेनोऽत्यमर्षणः ॥ दुःशासनस्ययत्क्रुद्धोऽपिबच्छोणितमाहवे २८ ॥ इतिश्री० स्त्री० स्त्रीविलापप० गांधारीवाक्येअष्टादशोऽध्यायः ॥ १८ ॥

गांधार्युवाच ॥ एषमाधवपुत्रोमेविकर्णःप्राज्ञसंमतः ॥ भूमौविनिहतःशेतेभीमेनशतधाकृतः १ गजमध्येहतःशेतेविकर्णोमधुसूदन ॥ नीलमेघपरिक्षिप्तःशरदीवनिशाकरः २ अस्यचापग्रहेणैवपाणिःकृतकिणोमहान् ॥ कथंचिच्छिद्यतेगृध्रैरत्तुकामैस्तलत्रवान् ३ अस्यभार्याऽऽमिषप्रेप्सून्गृध्रकाकांस्तपस्विनी ॥ वारयत्यनिशंबालानचशक्नोतिमाधव ४ युवावृंदारकःशूरोविकर्णःपुरुषर्षभ ॥ सुखोषितःसुखार्हश्चशेतेपांसुषुमाधव ५ कर्णिनालीकनाराचैर्भिन्नमर्माणमाहवे ॥ अद्यापिनजहात्येनंलक्ष्मीर्भरतसत्तमम् ६ एषसंग्रामशूरेणप्रतिज्ञांपालयिष्यता ॥ दुर्मुखोऽभिमुखःशेतेहतोऽरिगणहारणे ७ तस्यैतद्वदनंकृष्णश्वापदैरर्धभक्षितम् ॥ विभात्यभ्यधिकंतातसप्तम्यामिवचंद्रमाः ८ शूरस्यहिरणेकृष्णपश्याननमथेदृशम् ॥ सकथंनिहतोऽमित्रैःपांसून्ग्रसतिमेसुतः ९ यस्याहवमुखेसौम्यस्थातानैवोपपद्यते ॥ सकथंदुर्मुखोऽमित्रैर्हतोविबुधलोकजित् १० चित्रसेनंहतंभूमौशयानंमधुसूदन ॥ धार्तराष्ट्रमिमंपश्यप्रतिमानंधनुष्मताम् ११ तंचित्रमाल्याभरणंयुवत्यःशोककर्षिताः ॥ क्रव्यादसंघैःसहितारुदत्यःपर्युपासते १२ स्त्रीणांरुदितनिर्घोषःश्वापदानांचगर्जितम् ॥ चित्ररूपमिदंकृष्णविचित्रंप्रतिभातिमे १३ युवावृंदारकोनित्यंप्रवरस्त्रीनिषेवितः ॥ विविंशतिरसौशेतेध्वस्तःपांसुषुमाधव १४

एषमाधवेतिस्पष्टार्थः १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४

शरसंकृत्तवर्माणंवीरंविशसनेहतम् ॥ परिवार्यासतेगृध्राःपश्यकृष्णविविंशतिम् १५ प्रविश्यसमरेशूरःपांडवानामनीकिनीम् ॥ सवीरशयनेशेतेपरःसत्पुरुषोचिते १६ स्मितोपपन्नंसुनसंसुभ्रुताराधिपोपमम् ॥ अतीवशुभ्रंवदनंकृष्णपश्यविविंशतेः १७ एनंहिपर्युपासंतेबहुधावरयोषितः ॥ क्रीडंतमिवगंधर्वंदेवकन्याःसहस्रशः १८ हंतारंपरसैन्यानांशूरंसमितिशोभनम् ॥ निवर्हणममित्राणांदुःसहंविषहेतकः १९ दुःसहस्यैतदाभातिशरीरंसंवृतंशरैः ॥ गिरिरात्मगतैःफुल्लैःकर्णिकारैरिवाचितः २० शातकौंभ्यास्रजाभातिकवचेनचभास्वता ॥ अग्निनेवगिरिःश्वेतोगतासुरपिदुःसहः २१ ॥ इतिश्रीमहाभारते स्त्रीपर्वणिस्त्रीविलापपर्वणि गांधारीवाक्ये एकोनविंशोऽध्यायः ॥ १९ ॥ ॥ गंधार्युवाच ॥ अध्यर्धगुणमाहुर्यंबलेशौर्येचकेशव ॥ पित्रात्वयाचदाशार्हदृप्तंसिंहमिवोत्कटम् १ योबिभेदचमूमेकोममपुत्रस्यदुर्भिदाम् ॥ सभूत्वामृत्युरन्येषांस्वयंमृत्युवशंगतः २ तस्योपलक्षयेकृष्णकार्ष्णेरमिततेजसः ॥ अभिमन्योर्हतस्यापिप्रभानैवोपशाम्यति ३ एषाविराटदुहितास्नुषागांडीवधन्वनः ॥ आर्ताबालंपतिंवीरंदृष्ट्वाशोचत्यनिंदिता ४ तमेषाहिसमागम्यभार्याभर्तारमंतिके ॥ विराटदुहिताकृष्णपाणिनापरिमार्जति ५ तस्यवक्त्रमुपाघ्रायसौभद्रस्यमनस्विनी ॥ विबुद्धकमलाकारंकंबुवृत्तशिरोधरम् ६ काम्यरूपवतीचैषापरिष्वजतिभामिनी ॥ लज्जमानापुराचैनंमाध्वीकमदमूर्छिता ७ तस्यक्षतजसंदिग्धंजातरूपपरिष्कृतम् ॥ विमुच्यकवचंकृष्णशरीरमभिवीक्षते ८ अवेक्षमाणातंबालाकृष्णत्वामभिभाषते ॥ अयंतेपुंडरीकाक्षसदृशाक्षोनिपातितः ९ बलेवीर्येचसदृशस्तेजसाचैवतेऽनघ ॥ रूपेणचतथाऽत्यर्थंशेतेभुविनिपातितः १० अत्यंतंसुकुमारस्यरांकवाजिनशायिनः ॥ कच्चिदद्यशरीरंतेभूमौनपरितप्यते ११ मातंगभुजवर्ष्माणौज्याक्षेपकठिनत्वचौ ॥ कांचनांगदिनौशेतेनिक्षिप्यविपुलौभुजौ १२ व्यायम्यबहुधानूनंसुखसुप्तःश्रमादिव ॥ एवंविलपतीमार्तांनहिमामभिभाषसे १३ नस्मराम्यपराधंतेकिंमांनप्रतिभाषसे ॥ ननुमांत्वंपुरादुरादभिवीक्ष्याभिभाषसे १४ नस्मराम्यपराधंमेकिंमांनप्रतिभाषसे ॥ आर्यामार्यसुभद्रांत्वमिमांश्चत्रिदशोपमान् १५ पितॄन्मांचैवदुःखार्तांविहायक्वगमिष्यसि ॥ तस्यशोणितदिग्धान्वैकेशानुद्यम्यपाणिना १६ उत्संगेवक्त्रमाधायजीवंतामिवपृच्छति ॥ स्वस्त्रीयंवासुदेवस्यपुत्रंगांडीवधन्वनः १७ कथंत्वांरणमध्यस्थंजघ्नुरेतेमहारथाः ॥ धिगस्तुक्रूरकर्तॄंस्तान्कृपकर्णजयद्रथान् १८ द्रोणद्रोणायनीचोभौयैरहंविधवाकृता ॥ रथर्षभाणांसर्वेषांकथमासीत्तदामनः १९ बालंत्वांपरिवार्यैकंममदुःखायजघ्नुषाम् ॥ कथंनुपांडवानांचपंचालानांतुपश्यताम् २० त्वंवीरनिधनंप्राप्तोनाथवान्सन्ननाथवत् ॥ [illegible]बहुभिराक्रंदेनिहतंत्वांपितातव २१ वीरःपुरुषशार्दूलःकथंजीवतिपांडवः ॥ नराज्यलाभोविपुलःशत्रूणांचपराभवः २२



८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२

२३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ व[illegible]शस्ताकृतिः । 'वपुःक्षिबिंतर्नांशस्ताकृतावपि' इतिमे[illegible]नो ३४ । ३५ ॥ इतिस्त्रीपर्वणिनीलकंठीयेभारतभावदीपेविंशतित

प्रीतिंधास्यतिपार्थानांत्वामृतेपुष्करेक्षण ॥ तवशस्त्रजितांल्लोकान्धर्मेणचदमेनच २३ क्षिप्रमन्वागमिष्यामितत्रमांप्रतिपालय ॥ दुर्मरंपुनरप्राप्तेकालेभवतिकेनचित् २४ यदहंत्वांरणेदृष्ट्वाहतंजीवामिदुर्भगा ॥ कामिदानींनरव्याघ्रश्लक्ष्णयास्मितयागिरा २५ पितृलोकेसमेत्यान्यांमामिवामंत्रयिष्यसि ॥ नूनमप्सरसांस्वर्गेमनांसिप्रमथिष्यसि २६ परमेणचरूपेणगिराचस्मितपूर्वया ॥ प्राप्यपुण्यकृतांल्लोकानप्सरोभिःसमेयिवान् २७ सौभद्रविहरन्कालेस्मरेथाःसुकृतानिमे ॥ एतावानिहसंवासोविहितस्तेमयासह २८ षण्मासान्सप्तमेमासित्वंवीरनिधनंगतः ॥ इत्युक्तवचनामेतामपकर्षंतिदुःखिताम् २९ उत्तरांमोघसंकल्पांमत्स्यराजकुलस्त्रियः ॥ उत्तरामपकृष्यैनामार्तामार्ततराःस्वयम् ३० विराटंनिहतंदृष्ट्वाक्रोशंतिविलपंतिच ॥ द्रोणास्त्रशरसंकृत्तंशयानंरुधिरोक्षितम् ३१ विराटंवितुदंत्येतेगृध्रगोमायुवायसाः ॥ वितुद्यमानंविहगैर्विराटमसितेक्षणाः ३२ नशक्नुवंतिविहगान्निवारयितुमातुराः ॥ आसामातपतप्तानामायासेनचयोषिताम् ३३ श्रमेणचविवर्णानांवक्त्राणांविप्लुतंवपुः ॥ उत्तरंचाभिमन्युंचकांबोजंचसुदक्षिणम् ३४ शिशूनेतान्हतान्पश्यलक्ष्मणंचसुदर्शनम् ॥ आयोधनशिरोमध्येशयानंपश्यमाधव ३५ ॥ इतिश्रीमहाभारतेस्त्रीपर्वणिस्त्रीविलापप०गांधारीवाक्येविंशतितमोऽध्यायः ॥ २० ॥ ॥ गांधार्युवाच ॥ एषवैकर्तनःशेतेमहेष्वासोमहारथः ॥ ज्वलितानलवत्संख्येसंशांतःपार्थतेजसा १ पश्यवैकर्तनंकर्णंनिहत्यातिरथान्बहून् ॥ शोणितौघपरीतांगंशयानंपतितंभुवि २ अमर्षीदीर्घरोषश्चमहेष्वासोमहाबलः ॥ रणेविनिहतःशेतेशूरोगांडीवधन्वना ३ यंस्मपांडवसंत्रासान्ममपुत्रामहारथाः ॥ प्रायुध्यंतपुरस्कृत्यमातंगाइवयूथपम् ४ शार्दूलमिवसिंहेनसमरेसव्यसाचिना ॥ मातंगमिवमत्तेनमातंगेननिपातितम् ५ समेताःपुरुषव्याघ्रनिहतंशूरमाहवे ॥ प्रकीर्णमूर्धजाःपत्न्योरुदत्यःपर्युपासते ६ उद्विग्नःसततंयस्माद्धर्मराजोयुधिष्ठिरः ॥ त्रयोदशसमानिद्रांचिंतयन्नाध्यगच्छत ७ अनाधृष्यःपरैर्युद्धेशत्रुभिर्मघवानिव ॥ युगांताग्निरिवार्चिष्मान्हिमवानिवनिश्चलः ८ सभूत्वाशरणंवीरोधार्तराष्ट्रस्यमाधव ॥ भूमौविनिहतःशेतेवातभग्नइवद्रुमः ९ पश्यकर्णस्यपत्नींत्वंवृषसेनस्यमातरम् ॥ लालप्यमानांकरुणंरुदतींपतितांभुवि १० आचार्यशापोऽनुगतोध्रुवंत्वांयदग्रसच्चक्रमिदंधरित्री ॥ ततःशरेणापहृतंशिरस्तेधनंजयेनाहवशोभिनायुधि ११ हाहाधिगेषापतिताविसंज्ञासमीक्ष्यजांबूनदबद्धकक्षम् ॥ कर्णंमहाबाहुमदीनसत्वंसुषेणमातारुदतीभृशार्ता १२ अल्पावशेषोऽपिकृतोमहात्माशरीरभक्षैःपरिभक्षयद्भिः ॥ द्रष्टुंननःप्रीतिकरःशशीवकृष्णस्यपक्षस्यचतुर्दशाहे १३ सावर्तमानापतितापृथिव्यामुत्थायदीनापुनरेवचैषा ॥ कर्णस्यवक्त्रंपरिजिघ्रमाणारोरूयतेपुत्रवधाभितप्ता १४ ॥ इतिश्रीमहाभारतेस्त्रीपर्वणि स्त्रीविलापपर्वणिकर्णदर्शनोनामैकविंशतितमोऽध्यायः ॥ २१ ॥

मोऽध्यायः ॥ २० ॥ एषवैकर्तनइति आवंत्यंभीमसेनेनेतिचस्पष्टार्थौएकविंशद्वाविंशौ १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ ॥ इतिस्त्रीपर्वणिनीलकंठीयेभारतभावदीपेएकविंशोऽध्यायः ॥ २१ ॥

आवंत्यमिति १ । २ । ३ । ४ । ५ । ६ वार्धक्षत्रिर्जयद्रथः ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ ॥ ॥ इति स्त्रीपर्वणि नीलकंठीये भारतभावदीपे द्वावि



॥१२॥

॥ गांधार्युवाच ॥ आवंत्यंभीमसेनेनभक्षयंतिनिपातितम् ॥ गृध्रगोमायवःशूरंबहुबंधुमबंधुवत् १ तंपश्यकदनंकृत्वाशूराणांमधुसूदन ॥ शयानंवीरशयनेरुधिरेणसमुक्षितम् २ तंसृगालाश्वकंकाश्चक्रव्यादाश्चपृथग्विधाः ॥ तेनतेनविकर्षंतिपश्यकालस्यपर्ययम् ३ शयानंवीरशयनेशूरमाक्रंदकारिणम् ॥ आवंत्यमभितोनार्योरुदत्यःपर्युपासते ४ प्रातिपेयंमहेष्वासंहतंभल्लेनबाह्लिकम् ॥ प्रसुप्तमिवशार्दूलंपश्यकृष्णमनस्विनम् ५ अतीवमुखवर्णोऽस्यनिहतस्यापिशोभते ॥ सोमस्येवाभिपूर्णस्यपौर्णमास्यांसमुद्यतः ६ पुत्रशोकाभितप्तेनप्रतिज्ञांचाभिरक्षता ॥ पाकशासनिनासंख्येवार्धक्षत्रिर्निपातितः ७ एकादशचमूर्भित्त्वारक्ष्यमाणंमहात्मना ॥ सत्यंचिकीर्षतापश्यहतमेनंजयद्रथम् ८ सिंधुसौवीरभर्तारंदर्पपूर्णंमनस्विनम् ॥ भक्षयंतिशिवागृध्राजनार्दनजयद्रथम् ९ संरक्ष्यमाणंभार्याभिरनुरक्ताभिरच्युत ॥ भीषयंत्योविकर्षंतिगहनंनिम्नमंतिकात् १० तमेताःपर्युपासंतेरक्ष्यमाणंमहाभुजम् ॥ सिंधुसौवीरभर्तारंकांबोजयवनस्त्रियः ११ यदाकृष्णामुपादायप्राद्रवत्केकयैःसह ॥ तदैववध्यःपांडूनांजनार्दनजयद्रथः १२ दुःशलांमानयद्भिस्तुयदामुक्तोजयद्रथः ॥ कथमद्यनतांकृष्णमानयंतिस्मतेपुनः १३ सैषाममसुताबालाविलपंतीचदुःखिता ॥ आत्मनाहंतिचात्मानमाक्रोशंतीचपांडवान् १४ किंनुदुःखतरंकृष्णपरंममभविष्यति ॥ यत्सुताविधवाबालास्नुषाश्चनिहतेश्वराः १५ हाहाधिग्दुःशलांपश्यवीतशोकभयामिव ॥ शिरोभर्तुरनासाद्यधावमानामितस्ततः १६ वारयामासयःसर्वान्पांडवान्पुत्रगृद्धिनः ॥ सहत्वाविपुलाःसेनाःस्वयंमृत्युवशंगतः १७ तंमत्तमिवमातंगंवीरंपरमदुर्जयम् ॥ परिवार्यरुदंत्येताःस्त्रियश्चंद्रोपमाननाः १८ ॥ इतिश्रीमहाभारतेस्त्रीपर्वणिस्त्रीविलापे गांधारीवाक्येद्वाविंशोऽध्यायः ॥ २२ ॥

॥२३॥

॥ गांधार्युवाच ॥ एषशल्योहतःशेतेसाक्षान्नकुलमातुलः ॥ धर्मज्ञेनहतस्तातधर्मराजेनसंयुगे १ यस्त्वयास्पर्धतेनित्यंसर्वत्रपुरुषर्षभ ॥ सएषनिहतःशेतेमद्रराजोमहाबलः २ येनसंगृह्णतातातरथमाधिरथेर्युधि ॥ जयार्थंपांडुपुत्राणांयदातेजोवधःकृतः ३ अहोधिक्पश्यशल्यस्यपूर्णचंद्रसुदर्शनम् ॥ मुखंपद्मपलाशाक्षंकाकैरादष्टमव्रणम् ४ अस्यचामीकराभस्यतप्तकांचनसप्रभा ॥ आस्याद्विनिःसृताजिह्वाभक्ष्यतेकृष्णपक्षिभिः ५ युधिष्ठिरेणनिहतंशल्यंसमितिशोभनम् ॥ रुदत्यःपर्युपासंतेमद्रराजंकुलांगनाः ६ एताःसुसूक्ष्मवसनामद्रराजंनरर्षभम् ॥ क्रोशंत्योऽथसमासाद्यक्षत्रियाःक्षत्रियर्षभम् ७ शल्यंनिपतितंनार्यःपरिवार्याभितःस्थिताः ॥ वासितागृष्टयःपंकेपरिमग्नमिवद्विपम् ८ शल्यंशरणदंशूरंपश्येमंवृष्णिनंदन ॥ शयानंवीरशयनेशरैर्विशकलीकृतम् ९ एषशैलालयोराजाभगदत्तःप्रतापवान् ॥ गजांकुशधरःश्रीमान्शेतेभुविनिपातितः १० यस्यरुक्ममयीमालाशिरस्येषाविराजते ॥ श्वापदैर्भक्ष्यमाणस्यशोभयंतीवमूर्धजान् ११

॥१२॥

शोऽध्यायः ॥ २२ ॥ ॥ एषइति १ । २ । ३ । ४ । ५ । ६ । ७ वासिताःकरिण्यः गृष्टयःसकृत्प्रसूताः ८ । ९ । १० । ११

अहिनाद्वप्रातुरेण १२ । १३ भीष्मकृद्भयंकरकर्मकृत् १४ । १५ । १६ । १७ । १८ । १९ शास्त्रमाज्ञाय २० निर्णयेपारावर्येण परावरौपरलोकेहलोकौ तद्विषयेणज्ञानेन तत्त्वज्ञानबलेनप्राणा

एतेनकिलपार्थस्ययुद्धमासीत्सुदारुणम् ॥ रोमहर्षणमत्युग्रंशक्रस्यत्वहिनायथा १२ योधयित्वामहाबाहुरेषपार्थंधनंजयम् ॥ संशयंगमयित्वाचकुंतीपुत्रेणपा
तितः १३ यस्यनास्तिसमोलोकेशौर्येवीर्येचकश्चन ॥ सएषनिहतःशेतेभीष्मोभीष्मकृदाहवे १४ पश्यशांतनवंकृष्णशयानंसूर्यवर्चसम् ॥ युगांतइवकालेन
पतितंसूर्यमंबरात् १५ एषतप्त्वारणेशत्रून्शस्त्रतापेनवीर्यवान् ॥ नरसूर्योऽस्तमभ्येतिसूर्योऽस्तमिवकेशव १६ शरतल्पगतंभीष्ममूर्ध्वरेतसमच्युतम् ॥ श
यानंवीरशयनेपश्यशूरनिषेविते १७ कर्णिनालीकनाराचैरास्तीर्यशयनोत्तमम् ॥ आविश्यशेतेभगवान्स्कंदःशरवणंयथा १८ अतूलपूर्णंगांगेयस्त्रिभिर्बाणैःस
मन्वितम् ॥ उपाधायोपधानाग्र्यंदत्तंगांडीवधन्वना १९ पालयानःपितुःशास्त्रमूर्ध्वरेतामहायशाः ॥ एषशांतनवःशेतेमाधवाप्रतिमोयुधि २० धर्मात्मातात
सर्वज्ञःपारावर्येणनिर्णये ॥ अमर्त्यइवमर्त्यःसन्नेषप्राणानधारयत् २१ नास्तियुद्धेकृतीकश्चिन्नविद्वान्नपराक्रमी ॥ यत्रशांतनवोभीष्मःशेतेऽद्यनिहतःशरैः २२
स्वयमेतेनशूरेणपृच्छमानेनपांडवैः ॥ धर्मज्ञेनाहवेमृत्युरादिष्टःसत्यवादिना २३ प्रनष्टःकुरुवंशश्चपुनर्येनसमुद्धृतः ॥ सगतःकुरुभिःसार्धंमहाबुद्धिःपराभवम्
२४ धर्मेषुकुरवःकंनुपरिप्रक्ष्यंतिमाधव ॥ गतेदेवव्रतेस्वर्गंदेवकल्पेनरर्षभे २५ अर्जुनस्यविनेतारमाचार्यंसात्यकेस्तथा ॥ तंपश्यपतितंद्रोणंकुरूणांगुरुमुत्त
मम् २६ अस्त्रंचतुर्विधंवेदयथैवत्रिदशेश्वरः ॥ भार्गवोवामहावीर्यस्तथाद्रोणोऽपिमाधव २७ यस्यप्रसादाद्बीभत्सुःपांडवःकर्मदुष्करम् ॥ चकारसहतःशेतेनैन
मस्त्राण्यपालयन् २८ यंपुरोधायकुरवआह्वयंतिस्मपांडवान् ॥ सोऽयंशस्त्रभृतांश्रेष्ठोद्रोणःशस्त्रैःपरिक्षतः २९ यस्यनिर्दहतःसेनांगतिरग्नेरिवाभवत् ॥ सभूमौ
निहतःशेतेशांतार्चिरिवपावकः ३० धनुर्मुष्टिरशीर्णश्चहस्तावापश्चमाधव ॥ द्रोणस्यनिहतस्यापिदृश्यतेजीवतोयथा ३१ वेदायस्माच्चचत्वारःसर्वाण्यस्त्राणि
केशव ॥ अनपेतानिवैशूराद्यथैवादौप्रजापतेः ३२ वंदनार्हाविमौतस्यबंदिभिर्वंदितौशुभौ ॥ गोमायवोविकर्षंतिपादौशिष्यशतार्चितौ ३३ द्रोणंद्रुपदपुत्रेणनि
हतंमधुसूदन ॥ कृपीकृपणमन्वास्तेदुःखोपहतचेतना ३४ तांपश्यरुदतीमार्तांमुक्तकेशीमधोमुखीम् ॥ हतंपतिमुपासंतींद्रोणंशस्त्रभृतांवरम् ३५ बाणैर्भिन्न
तनुत्राणंधृष्टद्युम्नेनकेशव॥उपास्तेवैमृधेद्रोणंजटिलाब्रह्मचारिणी ३६प्रेतकृत्येचयततेकृपीकृपणमातुरा॥हतस्यसमरेभर्तुःसुकुमारीयशस्विनी३७ अग्नीनाधाय
विधिवच्चितांप्रज्वाल्यसर्वतः॥द्रोणमाधायगायंतित्रीणिसामानिसामगाः ३८कुर्वंतिचचितामेतेजटिलाब्रह्मचारिणः॥धनुर्भिःशक्तिभिश्चैवरथनीडैश्चमाधव३९शरै
श्चविविधैरन्यैर्धक्ष्यतेभूरितेजसम्॥इतिद्रोणंसमाधायशंसंतिचरुदंतिच ४० सामभिस्त्रिभिरंतस्थैरनुशंसंतिचापरे ॥ अग्नावग्निंसमाधायद्रोणंहुत्वाहुताशने ४१

नधारयदित्यर्थः २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ धक्ष्यद्धक्ष्यत्ति ४० । ४१

४२ ॥ इतिस्त्रीपर्वणिनीलकंठीयेभारतभावदीपेत्रयोविंशोऽध्यायः ॥ २३ ॥ सोमदत्तसुतमितिस्पष्टार्थश्चतुर्विंशः १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ बीभत्सुरातीनि



भारत॰

गच्छंत्यभिमुखागंगांद्रोणशिष्याद्विजातयः ॥ अपसव्यांचितिंकृत्वापुरस्कृत्यकृपींचते ४२ ॥ इतिश्रीमहाभारतेस्त्रीपर्वणिस्त्रीवि॰ गांधारीवचनेत्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ गांधार्युवाच ॥ सोमदत्तसुतंपश्ययुयुधानेनपातितम् ॥ वितुद्यमानंविहगैर्बहुभिर्माधवांतिके १ पुत्रशोकाभिसंतप्तःसोमदत्तोजनार्दन ॥ युयुधानंमहेष्वासंगर्हयन्निवदृश्यते २ असौहिभूरिश्रवसोमाताशोकपरिप्लुता ॥ आश्वासयतिभर्तारंसोमदत्तमनिंदिता ३ दिष्ट्यानैनंमहाराजदारुणंभरतक्षयम् ॥ कुरुसंक्रंदनंघोरंयुगांतमनुपश्यसि ४ दिष्ट्यायूपध्वजंपुत्रंवीरंभूरिसहस्रदम् ॥ अनेकक्रतुयज्वानंनिहतंनानुपश्यसि ५ दिष्ट्यास्नुषाणामाक्रंदेघोरंविलपितंबहु ॥ नशृणोषिमहाराजसारसीनामिवार्णवे ६ एकवस्त्रार्धसंवीताःप्रकीर्णासितमूर्धजाः ॥ स्नुषास्तेपरिधावंतिहतापत्याहतेश्वराः ७ श्वापदैर्भक्ष्यमाणंत्वमहोदिष्ट्यानपश्यसि ॥ छिन्नबाहुंनरव्याघ्रमर्जुनेननिपातितम् ८ शलंविनिहतंसंख्येभूरिश्रवसमेवच ॥ स्नुषाश्चविविधाःसर्वादिष्ट्यानाद्येहपश्यसि ९ दिष्ट्यातत्कांचनंछत्रंयूपकेतोर्महात्मनः ॥ विनिकीर्णंरथोपस्थेसौमदत्तेर्नपश्यसि १० अमूस्तुभूरिश्रवसोभार्याःसात्यकिनाहतम् ॥ परिवार्यानुशोचंतिभर्तारमसितेक्षणाः ११ एताविलप्यकरुणंभर्तृशोकेनकर्शिताः ॥ पतंत्यभिमुखाभूमौकृपणंबतकेशव १२ बीभत्सुरतिबीभत्संकर्मेदमकरोत्कथम् ॥ प्रमत्तस्ययदच्छैत्सीद्बाहुंशूरस्ययज्वनः १३ ततःपापतरंकर्मकृतवानपिसात्यकिः ॥ यस्मात्प्रायोपविष्टस्यप्राहार्षीत्संशितात्मनः १४ एकोद्वाभ्यांहतःशेषेत्वमधर्मेणधार्मिक ॥ किंनुवक्ष्यतिवैसत्सुगोष्ठीषुचसभासुच १५ अपुण्यमयशस्यंचकर्मेदंसात्यकिःस्वयम् ॥ इतियूपध्वजस्यैताःस्त्रियःक्रोशंतिमाधव १६ भार्यायूपध्वजस्यैषाकरसंमितमध्यमा ॥ कृत्वोत्संगेभुजंभर्तुःकृपणंपरिदेवति १७ अयंसहंताशूराणांमित्राणामभयप्रदः ॥ प्रदातागोसहस्राणांक्षत्रियांतकरःकरः १८ अयंसरसनोत्कर्षीपीनस्तनविमर्दकः ॥ नाभ्यूरुजघनस्पर्शीनीवीविस्रंसनःकरः १९ वासुदेवस्यसान्निध्येपार्थेनाक्लिष्टकर्मणा ॥ युध्यतःसमरेऽन्येनप्रमत्तस्यनिपातितः २० किंनुवक्ष्यसिसंसत्सुकथासुचजनार्दन ॥ अर्जुनस्यमहत्कर्मस्वयंवासकिरीटभृत् २१ इत्येवंगर्हयित्वैषातूष्णीमास्तेवरांगना ॥ तामेतामनुशोचंतिसपत्न्यःस्वामिवस्नुषाम् २२ गांधारराजःशकुनिर्बलवान्सत्यविक्रमः ॥ निहतःसहदेवेनभागिनेयेनमातुलः २३ यःपुराहेमदंडाभ्यांव्यजनाभ्यांस्मवीज्यते ॥ सएषपक्षिभिःपक्षैःशयानउपवीज्यते २४ यःस्वरूपाणिकुरुतेशतशोऽथसहस्रशः ॥ तस्यमायाविनोमायादग्धाःपांडवतेजसा २५ माययानिकृतिप्रज्ञोजितवान्योयुधिष्ठिरम् ॥ सभायांविपुलंराज्यंसपुनर्जीवितंजितः २६ शकुंताःशकुनिंकृष्णसमंतात्पर्युपासते ॥ कैतवंममपुत्राणांविनाशायोपशिक्षितम् २७

मलकर्म अतिबीभत्सं अतिगर्हितम् १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

२८ । २९ । ३० ॥ इति स्त्रीपर्वणि नैलकंठीये भारतभावदीपे चतुर्विंशोऽध्यायः ॥ २४ ॥ ७ ॥ ॥ कांबोजमिति कांबोजास्तरणं कंबलविशेषः १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९

एतेनैतन्महद्वैरं प्रसक्तं पांडवैः सह ॥ वधाय मम पुत्राणामात्मनः सगणस्य च २८ यथैव मम पुत्राणां लोकाः शस्त्रजिताः प्रभो ॥ एवमस्यापि दुर्बुद्धेर्लोकाः शस्त्रेण वै जिताः २९ कथं चनायं तत्रापि पुत्रान्मे भ्रातृभिः सह ॥ विरोधयेद्दृजुप्रज्ञानन्नृजुर्मधुसूदन ३० ॥ इति श्रीमहाभारते स्त्रीपर्वणि स्त्रीवि॰ गांधारीवाक्ये चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ गांधार्युवाच ॥ ॥ कांबोजं पश्य दुर्धर्षं कांबोजास्तरणोचितम् ॥ शयानमृषभस्कंधं हतं पांसुषु माधव १ यस्य क्षतजसंदिग्धौ बाहू चंदनभूषितौ ॥ अवेक्ष्य करुणं भार्या विलपत्यतिदुःखिता २ इमौ तौ परिघप्रख्यौ बाहू शुभतलांगुली ॥ ययोर्विवरमापन्नां न रतिर्मां पुराऽजहात् ३ कां गतिं तु गमिष्यामि त्वया हीना जनेश्वर ॥ हतबंधुरनाथा च वेपंती मधुरस्वरा ४ आतपे क्लाम्यमानानां विविधानामिव स्रजाम् ॥ क्लांतानामपि नारीणां न श्रीर्जहाति वै तनूः ५ शयानमभितः शूरं कालिंगं मधुसूदन ॥ पश्य दीप्तांगदयुगप्रतिनद्धमहाभुजम् ६ मागधानामधिपतिं जयत्सेनं जनार्दन ॥ आवार्य सर्वतः पत्न्यः प्ररुदंत्यः सुविह्वलाः ७ आसामायतनेत्राणां सुस्वराणां जनार्दन ॥ मनःश्रुतिहरो न[ा]दो मनो मोहयतीव मे ८ प्रकीर्णवस्त्राभरणा रुदत्यः शोककर्शिताः ॥ स्वास्तीर्णशयनोपेता मागध्यः शेरते भुवि ९ कोसलानामधिपतिं राजपुत्रं बृहद्बलम् ॥ [भ]र्तारं परिवार्यैताः पृथक्प्ररुदिताः स्त्रियः १० अस्य गात्रगतान्बाणान्कार्ष्णिबाहुबलार्पितान् ॥ उद्धरंत्यसुखाविष्टा मूर्छमानाः पुनः पुनः ११ आसां स[र्वा]नवद्यानामातपेन परिश्रमात् ॥ प्रम्लाननलिनाभानि भांति वक्त्राणि माधव १२ द्रोणेन निहताः शूराः शेरते रुचिरांगदाः ॥ धृष्टद्युम्नसुताः सर्वे शिशवो हेममालिनः १३ रथाग्न्यगारं चापार्चिं शरशक्तिगदेंधनम् ॥ द्रोणमासाद्य निर्दग्धाः शलभा इव पावकम् १४ तथैव निहताः शूराः शेरते रुचिरांगदाः ॥ द्रोणेनाभिमुखाः सर्वे भ्रातरः पंच केकयाः १५ तप्तकांचनवर्माणस्तालध्वजरथव्रजाः ॥ भासयंति महीं भासा ज्वलिता इव पावकाः १६ द्रोणेन द्रुपदं संख्ये पश्य माधव पातितम् ॥ महाद्विपमिवारण्ये सिंहेन महता हतम् १७ पांचालराज्ञो विमलं पुंडरीकाक्ष पांडुरम् ॥ आतपत्रं समाभाति शरदीव निशाकरः १८ एतास्तु द्रुपदं वृद्धं स्नुषा भार्याश्च दुःखिताः ॥ दग्ध्वा गच्छंति पांचाल्यं राजानमपसव्यतः १९ धृष्टकेतुं महात्मानं चेदिपुंगवमंगनाः ॥ द्रोणेन निहतं शूरं हरंति हृतचेतसः २० द्रोणास्त्रमभिहत्यैष विमर्दे मधुसूदन ॥ महेष्वासो हतः शेते नद्या हत इव द्रुमः २१ एष चेदिपतिः शूरो धृष्टकेतुर्महारथः ॥ शेते विनिहतः संख्ये हत्वा शत्रून्सहस्रशः २२ वितुद्यमानं विहगैस्तं भार्याः पर्युपाश्रिताः ॥ चेदिराजं हृषीकेश हतं सबलबांधवम् २३ दाशार्हपुत्रजं वीरं शयानं सत्यविक्रमम् ॥ आरोप्यांके रुदंत्येताश्चेदिराजवरांगनाः २४ अस्य पुत्रं हृषीकेश सुवक्त्रं चारुकुंडलम् ॥ द्रोणेन समरे पश्य निकृत्तं बहुधा शरैः २५

१० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ दाशार्हपुत्रजमित्यत्र पुत्र्यामपि पुत्रशब्दः २४ । २५

पितरमिति पितृपदस्यावृत्तिः शोकाकुलत्वान्नदोषाय २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ तयोर्भीष्मविदुरयोः दर्शनमनागतावेक्षणं ३६ । ३७ । ३८ । ३९

पितरंनूनमाजिस्थंयुध्यमानंपरैःसह ॥ नाजहात्पितरंवीरमद्यापिमधुसूदन २६ एवंममापिपुत्रस्यपुत्रःपितरमन्वगात ॥ दुर्योधनंमहाबाहोलक्ष्मणः परवीरहा २७ विंदानुविंदावावंत्यौपतितौपश्यमाधव ॥ हिमांतेपुष्पितौशालौमरुतागलिताविव २८ कांचनांगदवर्माणौबाणखड्गधनुर्धरौ ॥ ऋषभप्रति रूपाक्षौशयानौविमलस्रजौ २९ अवध्याःपांडवाःकृष्णसर्वएवत्वयासह ॥ येमुक्ताद्रोणभीष्माभ्यांकर्णाद्वैकर्तनात्कृपात ३० दुर्योधनाद्द्रोणसुतात्सैंधवाच्च जयद्रथात ॥ सोमदत्ताद्विकर्णाच्चशूराच्चकृतवर्मणः ३१ येहन्युःशस्त्रवेगेनदेवानपिनरर्षभाः ॥ तइमेनिहताःसंख्येपश्यकालस्यपर्ययम् ३२ नातिभारोऽस्तिदै वस्यध्रुवंमाधवकश्चन ॥ यदिमेनिहताःशूराःक्षत्रियैःक्षत्रियर्षभाः ३३ तदैवनिहताःकृष्णममपुत्रास्तरास्विनः ॥ यदैवाकृतकामस्त्वमुपप्लव्यंगतःपुनः ३४ शांतनोश्चैवपुत्रेणप्राज्ञेनविदुरेणच ॥ तदैवोक्ताऽस्मिमास्नेहंकुरुष्वात्मसुतेष्विति ३५ तयोर्हिदर्शनंनैतन्मिथ्याभवितुमर्हति ॥ अचिरेणैवमेपुत्राभस्मीभूता जनार्दन ३६ ॥ वैशंपायनउवाच ॥ इत्युक्त्वान्यपतद्भूमौगांधारीशोकमूर्छिता ॥ दुःखोपहतविज्ञानाधैर्यमुत्सृज्यभारत ३७ ततःकोपपरीतांगीपुत्रशोकपरिप्लु ता ॥ जगामशौरिंदोषेणगांधारीव्यथितेंद्रिया ३८ ॥ गांधार्युवाच ॥ पांडवाधार्तराष्ट्राश्चदग्धाःकृष्णपरस्परं ॥ उपेक्षिताविनश्यंतस्त्वयाकस्माज्जनार्दन ३९ शक्तेनबहुभृत्येनविपुलेतिष्ठताबले ॥ उभयत्रसमर्थेनश्रुतवाक्येनचैवह ४० इच्छतोपेक्षितोनाशःकुरूणांमधुसूदन ॥ यस्मात्त्वयामहाबाहोफलंतस्मादवाप्नुहि ४१ पतिशुश्रूषयायन्मेतपःकिंचिदुपार्जितम् ॥ तेनत्वांदुरवापेनशप्स्येचक्रगदाधरम् ४२ यस्मात्परस्परंघ्नंतोज्ञातयःकुरुपांडवाः ॥ उपेक्षितास्तेगो विंदतस्माज्ज्ञातीन्वधिष्यसि ४३ त्वमप्युपस्थितेवर्षेषट्त्रिंशेमधुसूदन ॥ हतज्ञातिर्हतामात्योहतपुत्रोवनेचरः ४४ अनाथवदविज्ञातोलोकेष्वनभिलक्षितः ॥ कुत्सितेनाभ्युपायेननिधनंसमवाप्स्यसि ४५ तवाप्येवंहतसुतानिहतज्ञातिबांधवाः ॥ स्त्रियःपरिपतिष्यंतियथैताभरतस्त्रियः ४६ ॥ वैशंपायनउवाच ॥ तच्छ्रुत्वावचनंघोरंवासुदेवोमहामनाः ॥ उवाचदेवींगांधारीमीषदभ्युत्स्मयन्निव ४७ जानेऽहमेतदप्येवंचीर्णंचरसिक्षत्रिये ॥ दैवादेवविनश्यंति वृष्णयोनात्रसंशयः ४८ संहर्तावृष्णिचक्रस्यनान्योमद्विद्यतेशुभे ॥ अवध्यास्तेनरैरन्यैरपिवादेवदानवैः ४९ परस्परकृतंनाशंयतःप्राप्स्यंतियादवाः ॥ इत्युक्तवतिदाशार्हेपांडवास्त्रस्तचेतसः ॥ बभूवुर्भृशसंविग्नानिराशाश्चापिजीविते ५० ॥ इतिश्रीमहाभारतेस्त्रीपर्वणि स्त्रीविलापपर्वणि गांधारीशापदाने पंचविंशोऽध्यायः ॥ २५ ॥ ॥ ७ ॥ ॥ समाप्तंचस्त्रीविलापपर्व ॥

४० । ४१ । ४२ । ४३ । ४३ । ४५ तवापीति । अनिरस्तःपरध्वंसोयातिशक्तमुपेक्षकं ॥ कुलध्वंसप्रसूता विंगांधार्याइवकेशवं ४६ अभ्युत्स्मयन्नीषद्धसन् ४७ चीर्णंचरसिमदनुष्ठितमेवानु तिष्ठसि स्वतपोनाशार्थमितिभावः ४८ । ४९ । ५० ॥ इतिस्त्रीपर्वणिनीलकंठीये भारतभावदीपे पंचविंशोऽध्यायः ॥ २५ ॥ ॥ ७ ॥

उत्तिष्ठेति १ दुष्कृतंदुराचरितंस्वकीयं २ वैरप्रियंपुरुषं वैरपुरुषं ३ द्रौपूर्वांपरदुःखद्वयरूपौ ४ तपोरूपायार्थायोत्पन्नंतपोर्थीयं .. द्विषावधा.. मित्रगर्भंधत्ते अन्यातुजयार्थीयंकीर्त्यर्थाद्यर्थीयमपां

॥ अथश्राद्धपर्व ॥ श्रीभगवानुवाच ॥ उत्तिष्ठोत्तिष्ठगांधारिमाचशोकेमनःकृथाः ॥ तवैवह्यपराधेनकु..निधनंगताः १ यत्त्वंपुत्रंदुरात्मानमीर्षुमत्यंतमानिनम् ॥
दुर्योधनंपुरस्कृत्यदुष्कृतंसाधुमन्यसे २ निष्ठुरंवैरपुरुषंवृद्धानांशासनातिगं ॥ कथमात्मकृतंदोषंम..याधातुमिहेच्छसि ३ मृतंवायदिवानष्टंयोऽतीतमनुशोचति
दुःखेनलभतेदुःखंद्वावनर्थौप्रपद्यते ४ तपोर्थीयंब्राह्मणीधत्तगर्भंगौर्वोढारंधावितारंतुरंगी ॥ शूद्राद..संपशुपालंचवैश्यावधार्थीयंक्षात्रियाराजपुत्री ५ ॥ वैशंपायन
उवाच ॥ तच्छुत्वावासुदेवस्यपुनरुक्तंवचोऽप्रियं ॥ तूष्णींबभूवगांधारीशोकव्याकुललोचना ६ ..ृतराष्ट्रस्तुराजर्षिर्निगृह्याबुद्धिजंतमः ॥ पर्यपृच्छतधर्मज्ञो
धर्मराजंयुधिष्ठिरं ७ जीवतांपरिमाणज्ञःसैन्यानामसिपांडव ॥ हतानांयदिजानीषेपरिमाणंवदस्वमे .. ८ ॥ युधिष्ठिरउवाच ॥ दशायुतानामयुतंसहस्राणिचविंश
तिः ॥ कोट्यःषष्टिश्चषट्चैवह्यस्मिन्राजन्मृधेहताः ९ अलक्षितानांवीराणांसहस्राणिचतुर्दश ॥ दश..न्यानिराजेंद्रशतंषष्टिश्चपंचच १० ॥ धृतराष्ट्रउवाच ॥
युधिष्ठिरगतिंकांतेगताःपुरुषसत्तम ॥ आचक्ष्वमेमहाबाहोसर्वज्ञोह्यसिमेमतः ११ ॥ युधिष्ठिरउवाच ॥ यै..र्हुतानिशरीराणिहृष्टैःपरमसंयुगे ॥ देवराजसमान्लोकान्
गतास्तेसत्यविक्रमाः १२ येत्वहृष्टेनमनसामर्तव्यमितिभारत ॥ युद्धचमानाहताःसंख्येगंधर्वैःसहसंगताः .. ३ येचसंग्राममभूमिष्ठायाचमानाःपराङ्मुखाः ॥ शस्त्रेण
निधनंप्राप्तागतास्तेगुह्यकान्प्रति १४ पात्यमानाःपरैर्येतुहीयमानानिरायुधाः ॥ ह्रीनिषेवामहात्मानःपरा..भिमुखारणे १५ छिद्यमानाःशितैःशस्त्रैःक्षत्रधर्मपरा
यणाः ॥ गतास्तेब्रह्मसदनंनमेऽत्रास्तिविचारणा १६ येत्वत्रनिहताराजन्नंतरायोधनंप्रति ॥ यथाकथंचित्पु..षास्तेगतास्तूत्तरान्कुरून् १७ ॥ धृतराष्ट्रउवाच ॥
केनज्ञानबलेनैवंपुत्रपश्यसिसिद्धवत् ॥ तन्मेवदमहाबाहोश्रोतव्यंयदिवैमया १८ ॥ युधिष्ठिरउवाच ॥ ..देशाद्भवतःपूर्वंवनेविचरतामया ॥ तीर्थयात्राप्रसंगे
नसंप्राप्तोऽयमनुग्रहः १९ देवर्षिर्लोमशोदृष्टस्ततःप्राप्तोस्म्यनुस्मृतिम् ॥ दिव्यंचक्षुरपिप्राप्तंज्ञानयोगेन..पुरा २० ॥ धृतराष्ट्रउवाच ॥ अनाथानांजनानां
चसनाथानांचभारत ॥ कच्चित्तेषांशरीराणिधक्ष्यसेविधिपूर्वकम् २१ नयेषामस्तिसंस्कर्तानचयेऽत्राहिता..यः ॥ वयंचकस्यकुर्यामोबहुत्वात्तातकर्मणाम् २२
यान्सुपर्णाश्चगृध्राश्चविकर्षंतियतस्ततः ॥ तेषांतुकर्मणालोकाभविष्यंतियुधिष्ठिर २३ ॥ वैशंपायनउवाच ॥ एवमुक्तोमहाराजकुंतीपुत्रोयुधिष्ठिरः ॥ आ
दिदेशसुधर्माणंधौम्यंसूतंचसंजयम् २४ विदुरंचमहाबुद्धिंयुयुत्सुंचैवकौरवम् ॥ इंद्रसेनमुखांश्चैवभृत्यान्सूतांश्चसर्वशः २५ भवंतःकारयंत्वेषांप्रेतकार्याण्यशे
षतः ॥ यथाचानाथवत्किंचिच्छरीरंनविनश्यति २६ शासनाद्धर्मराजस्यक्षत्तासूतश्चसंजयः ॥ सुधर्माधौम्यसहितइंद्रसेनादयस्तथा २७

तिमात्रः १ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ सुधर्माणंदुर्योधनपुरोहितं २४ । २५ । २६ । २७

२८।२९।३०।३१।३२।३३।३४।३५।३६।३७।३८।३९।४०।४१।४२ स्नेहपाचितैः स्नेहसंयुक्तैः ४३।४४॥ इतिस्त्रीपर्वणिनीलकंठीये भा०

चंदनागुरुकाष्ठानितथाकालीयकान्युत ॥ घृतंतैलंचगंधांश्चक्षौमाणिवसनानिच २८ समाहृत्यमहार्हाणिदारूणांचैवसंचयान् ॥ रथांश्चमृदितांस्तत्रनानाप्रहरणानिच २९ चिताःकृत्वाप्रयत्नेनयथामुख्यान्नराधिपान् ॥ दाहयामासुरव्यग्राःशास्त्रदृष्टेनकर्मणा ३० दुर्योधनंचराजानंभ्रातृंश्चास्यशताधिकान् ॥ शल्यंशलंचराजानंभूरिश्रवसमेवच ३१ जयद्रथंचराजानमभिमन्युंचभारत ॥ दौःशासनिंलक्ष्मणंचधृष्टकेतुंचपार्थिवम् ३२ बृहंतंसोमदत्तंचसृंजयांश्चशताधिकान् ॥ राजानंक्षेमधन्वानंविराटद्रुपदौतथा ३३ शिखंडिनंचपांचाल्यंधृष्टद्युम्नंचपार्षतम् ॥ युधामन्युंचविक्रांतमुत्तमौजसमेवच ३४ कौसल्यंद्रौपदेयांश्चशकुनिंचापिसौबलम् ॥ अचलंवृषकंचैवभगदत्तंचपार्थिवम् ३५ कर्णंवैकर्तनंचैवसहपुत्रममर्षणम् ॥ केकयांश्चमहेष्वासांस्त्रिगर्तांश्चमहारथान् ३६ घटोत्कचंराक्षसेंद्रंबकभ्रातरमेवच ॥ अलंबुषंराक्षसेंद्रंजलसंधंचपार्थिवम् ३७ एतांश्चान्यांश्चसुबहून्पार्थिवांश्चसहस्रशः ॥ घृतधाराहुतैर्दीप्तैःपावकैःसमदाहयन् ३८ पितृमेधाश्चकेषांचित्प्रावर्तंतमहात्मनाम् ॥ सामभिश्चाप्यगायंततेऽन्वशोचंतचापरैः ३९ साम्नामृचांचनादेनस्त्रीणांचरुदितस्वनैः ॥ कश्मलंसर्वभूतानांनिशायांसमपद्यत ४० तेविधूमाःप्रदीप्ताश्चदीप्यमानाश्चपावकाः ॥ नभसीवान्वदृश्यंतग्रहास्तन्वभ्रसंवृताः ४१ येचाप्यनाथास्तत्रासन्नानादेशसमागताः ॥ तांश्चसर्वान्समानाय्यराशीन्कृत्वासहस्रशः ४२ चित्वादारुभिरव्यग्रैःप्रभूतैःस्नेहपाचितैः ॥ दाहयामासतान्सर्वान्विदुरोराजशासनात् ४३ कारयित्वाक्रियास्तेषांकुरुराजोयुधिष्ठिरः ॥ धृतराष्ट्रंपुरस्कृत्यगंगामभिमुखोऽगमत् ४४ ॥ इतिश्रीमहाभा०स्त्री०श्राद्धपर्वणिकुरूणामौर्ध्वदेहिकेषड्विंशोऽध्यायः ॥ २६ ॥ ॥ वैशंपायनउवाच ॥ तेसमासाद्यगंगांतुशिवांपुण्यजलोचिताम् ॥ ह्रदिनींचप्रसन्नांचमहारूपांमहाबलाम् १ भूषणान्युत्तरीयाणिवेष्टनान्यवमुच्यच ॥ ततःपितृणांभ्रातॄणांपौत्राणांस्वजनस्यच २ पुत्राणामार्यकाणांचपतीनांचकुरुस्त्रियः ॥ उदकंचक्रिरेसर्वारुदत्योभृशदुःखिताः ३ सुहृदांचापिधर्मज्ञाःप्रचक्रुःसलिलक्रियाः ॥ उदकेक्रियमाणेतुवीराणांवीरपत्निभिः ४ सूपतीर्थाभवद्गंगाभूयोविप्रससारच ॥ तन्महोदधिसंकाशंनिरानंदमनुत्सवम् ५ वीरपत्नीभिराकीर्णंगंगातीरमशोभत ॥ ततःकुंतीमहाराजसहसाशोककर्शिता ६ रुदतीमंदयावाचापुत्रान्वचनमब्रवीत् ॥ यःसवीरोमहेष्वासोरथयूथपयूथपः ७ अर्जुनेनजितःसंख्येवीरलक्षणलक्षितः ॥ यंसूतपुत्रंमन्यध्वंराधेयमितिपांडवाः ८ योव्यराजच्चमूमध्येदिवाकरइवप्रभुः ॥ प्रत्ययुध्यतवःसर्वान्पुरायःसपदानुगान् ९ दुर्योधनबलंसर्वंयःप्रकर्षन्व्यरोचत ॥ यस्यनास्तिसमोवीर्येपृथिव्यामपिपार्थिवः १० योऽवृणीतयशःशूरःप्राणैरपिसदाभुवि ॥ कर्णस्यसत्यसंधस्यसंग्रामेष्वपलायिनः ११

षड्विंशोऽध्यायः ॥ २६ ॥ ॥ ७ ॥ तेसमासाद्येति १ वेष्टनानिउष्णीषकटिबंधनादीनि २।३।४ सूपतीर्थाशोभनजलावतरणमार्गा ५।६।७।८।९।१०।११

।१३ भवन्नभवन् अडमावश्चार्थः २४ । २५ । २६ । २७ । २८ । २९ । २० । २१ । २२ । २३ नेहस्मेति कर्णभ्रातृ

ध्वमुदकंतस्यभ्रातुरक्लिष्टकर्मणः ॥ सहिवः पूर्वजोभ्राताभास्करान्मय्यजायत १२ कुंडलीकवची

१३ कर्णमेवानुशोचंतोभूयः क्लांततराऽभवन् ॥ ततःसपुरुषव्याघ्रः कुंतीपुत्रोयुधिष्ठिरः १४

महाग्रहः १५ तलशब्दानुनादितोमहारथमहाह्रदः ॥ यस्येषुपातमासाद्यनान्यस्तिष्ठेद्धनंज

ापेनतापिताःसर्वतोवयम् १७ तमग्निमिववस्त्रेणकथंछादितवत्यासि ॥ यस्यबाहुबलंनित्यं

॥ भूमिपानांचसर्वेषांबलंबलवतांवरः १९ नान्यंकुंतीसुतात्कर्णादगृह्णाद्रथिनांरथी ॥ सनःप्र

कमम् ॥ अहोभवत्यामंत्रस्यगूहनेनवयंहताः २१ निधनेनहिकर्णस्यपीडितास्तुसबांधवाः ॥

कुरूणांपतनेनच ॥ ततःशतगुणंदुःखमिदंमामस्पृशद्भृशम् २३ कर्णमेवानुशोचामिदह्याम्यग्ना

नचेदंवैशसंघोरंकौरवांतकरंभवेत् ॥ एवंविलप्यबहुलंधर्मराजोयुधिष्ठिरः २५ व्यरुदच्छनकैरा

र्वशः २६ अभितोयाःस्थितास्तत्रतस्मिन्नुदककर्मणि ॥ ततआनाययामासकर्णस्यसपरिच्छदाः

भिःसहधर्मात्माप्रेतकृत्यमनंतरम् २८ चकारविधिवद्धीमान्धर्मराजोयुधिष्ठिरः ॥ पापेनासौमया

भविष्यति ॥ इत्युक्त्वासतुगंगायाउत्ततारकुलेंद्रियः ॥ भ्रातृभिःसहितःसर्वैर्गंगातीरमुपेयिवान्

ीपर्वणिकर्णगूढजत्वकथनेसप्तविंशोऽध्यायः ॥ २७ ॥ ॥ ॥ समाप्तमिदंस्त्रीपर्व ॥ अतःप

उवाच ॥ कृतोदकास्तेसुहृदांसर्वेषांपांडुनंदनाः ॥ विदुरोधृतराष्ट्रश्चसर्वाश्चभरतस्त्रियः ॥ १ ॥

दित्यर्थः २४ । २५ । २६ । २७ । २८ । २९ । ३० ॥ इतिश्रीमहाभारतेशतसाहस्र्यांसंहिता

रिसूनोःश्रीनीलकंठकृतौभारतभावदीपे स्त्रीपर्वार्थप्रका.शे सप्तविंशोऽध्यायः ॥ २७ ॥ ॥ ७ ॥

॥ अस्मिन्पर्वणि आदिपर्वोक्ताध्यायपर्वश्लोकसंख्यावैषम्यं लिपिकरप्रमादादिना बोध्यम् ॥

तिसतिवदनुसारिणामस्माकमपिदुर्लभंन...

ादिवाकरसमप्रभः ॥ श्रुत्वातुपांडवाःसर्वेमातुर्वचनमा

चमातरंवीरोनिःश्वसन्निवपन्नगः ॥ यःशरोर्मिर्ध्वजावर्तोम

ाव् १६ कथंपुत्रोभवत्याःसदेवगर्भःपुराऽभवत्

र्तराष्ट्रैरुपासितम् १८ उपासितंयथाऽस्माभि

थमजोभ्रातासर्वशस्त्रभृतांवरः २० असूततं

अभिमन्योर्विनाशेनद्रौपदेयवधेनच २२

वाहितः ॥ नेहस्मकिंचिदप्राप्यंभवे

श्चकारास्योदकंप्रभुः ॥ ततोवि

२७ स्त्रियःकुरुपतिर्धीमान्भ्रातु

श्रेष्ठोभ्राताज्ञातिर्निपातितः २९

३० ॥ इतिश्रीमहाभारतेशतसाह

रशांतिपर्वभविष्यति ॥ तस

॥ ७ ॥

यां वैयासिक्यांश्रीमत्पदवा

॥ ७

